THE

# YOGAVĀSIṢṬHA

OF

## VĀLMĪKI

With the commentary Vāsiṣṭhamahārāmāyaṇa-tātparyaprakās'a.

**Part I.**

(Containing Vairāgya, Mumukṣuvyavahāra, Utpatti, Sthiti and Upas'ama.)



EDITED BY

WĀSUDEV LAXMAṆ ŚĀSTRĪ PAṆŚĪKAR

**Third Edition.**

REVISED AND RE-EDITED BY

NĀRĀYAṆ RĀM ĀCHĀRYA "KĀVYATĪRTHA"

With the co-operation of S'āstrīmaṇḍal.

PUBLISHED BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA-SĀGAR" PRESS,

BOMBAY.

1937.

*Price 7 Rupees.*





श्रीमद्वाल्मीकिमहर्षिप्रणीतः

# योगवासिष्ठः ।

श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशाख्यव्याख्यासहितः ।

( प्रथमो भागः १ )

वैराग्य–मुमुक्षुव्यवहार–उत्पत्ति–स्थिति–उपशमाख्यपञ्चप्रकरणयुतः ।

पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा

पूर्वसंस्कृतस्यास्य

तृतीयं संस्करणं

"काव्यतीर्थ" इत्युपाध्यलङ्कृत-आचार्येत्युपाभिध-

रामात्मजनारायणशर्मणा

शास्त्रिमण्डलसाहाय्येन सुपरिष्कृतम् ।

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये निर्णयसागराख्यमुद्रणालये मुद्रापयित्वा च प्रकाशितम् ।

शाकः १८५९, सन १९३७.

मूल्यं ७ रूप्यकाः ।



# प्रथमसंस्करणस्य प्रस्तावः ।



सत्यं ज्ञानमनन्तमेकमजरं नित्यं विभुं शाश्वतं प्रत्यग्ब्रह्मरसायनं सुखघनं पूर्णं परं पावनम् ।
स्वात्मज्योतिरनादिमध्यनिधनं मायाविलासैर्मुहुर्विश्वाकारमपास्तमायमभयं वन्दे विशुद्धं पदम् ॥

अथ जगदिदमनादिमहामोहनिशासुप्तमनवरतदुःस्वप्नभ्रमपरम्पराकल्पिते जन्मजरामयमरणहर्षामर्षशोकाद्यनर्थसंकटसहस्रसंकुले ग्रहातिग्रहव्याघ्रभीषणे तापत्रितयदावानलज्वालमालाकुले षडूर्मिजालेऽरिषड्वर्गव्याधवध्यमानप्राणिनिकाये संसारमहारण्ये मोमुह्यमानं विवेकान्धं प्रबोधोपायदौर्लभ्यात्समुद्वीक्ष्य शास्त्रभानूदयेन तत्प्रबोधनाय भगवतः पद्मजन्मनः शासनात्स्वतश्च प्रवर्तमानः परमकारुणिको भगवान्वाल्मीकिः श्रीरामचन्द्रमहोदयविविधचित्रपवित्रचरित्रपूर्णं **पूर्वरामायणं,** आत्मानात्मविवेचनपूर्वकतासाक्षात्कारगर्भमुत्तररामायणमिति निबन्धद्वयरूपं महानिबन्धमाविश्चकार ।

ननु क्षीणरागादिदोषस्त्रैवर्णिकश्रेत्स संन्यासपूर्वकवेदान्तश्रवण एवाधिकारी। पूर्वकाण्डानुष्ठानस्य चित्तशुद्धिद्वारोत्तरकाण्डाधिकारप्रापकत्वस्य 'तमेतं वेदानुवचनेन' इत्यादिश्रुतिसिद्धत्वात्। नचात्रात्रैवर्णिकस्याधिकारः। तस्य 'नावेदविन्मनुते तं बृहन्तम्' इत्यधिकारनिषेधात् तस्मान्नात्राधिकारी सुलभ इति चेत्। न स्मार्तकर्मवदुपपत्तेः । यथा त्रैवर्णिकस्य त्रेताग्निसाध्ये कर्मण्यधिकारेऽप्यनाहिताग्निसाधारणः स्मार्तकर्माधिकारोऽस्त्येव तथा श्रौतज्ञानाधिकारिणोऽप्यसंन्यासिमुमुक्षुसाधारणोऽस्मिन्नपि ग्रन्थेऽस्त्यधिकारः अज्ञानावधिकश्च। अस्यापि स्मृतिवद्वेदोपबृंहणत्वात्। तथा चोक्तम्—**'वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना॥'** इति। तत्र पूर्वकाण्डस्य श्रीरामचरितकथाव्याजेनोपबृंहणं षट्काण्डं सोत्तरं पूर्वरामायणम् । उत्तरकाण्डस्य षट्प्रकरणमिदं सोत्तरमिति । यथा केषुचित्स्मार्तकर्मसु स्त्रीशूद्रसाधारणोऽधिकारस्तथास्यापि श्रवणे पुराणवत् 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः', 'जनश्च शूद्रोऽपि महत्त्वमीयात्' इत्यादिवचनलिङ्गात् । 'नावेदविन्मनुते तं बृहन्तम्', 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिवचनं त्ववेदविदः श्रौतज्ञानानधिकारपरमिति केचित्। अपरोक्षज्ञानापरपर्यायमित्यन्ये। वेदपूर्वकत्वप्राशस्त्यपरमित्यपरे। सर्वथाप्यस्त्येवान्येषामपि पौराणिकसाधारणे ज्ञानेऽधिकारः 'स हि सर्वैर्विजिज्ञास्य आत्मा वर्णैस्तथाऽऽश्रमैः' इत्यादिवचनेभ्यः । तत्र श्रौतज्ञाने पूर्वकाण्डोक्तधर्मानुष्ठानजन्या चित्तशुद्धिरिवेहापि पूर्वरामायणोपदर्शितस्वस्ववर्णाश्रमोचितनिष्कामधर्मानुष्ठानजा चित्तशुद्धिर्जिज्ञासोत्पादनद्वारा हेतुरिति पूर्वोत्तररामायणयोर्हेतुहेतुमद्भावसंगतिः। तथाचेदमुत्तररामायणापरपर्यायमखिलवेदान्तसिद्धान्तगर्भं श्रीमद्वसिष्ठमहर्षिश्रीरामचन्द्रसंवादरूपेण जगति **योगवासिष्ठसंज्ञया** वरीवर्ति।

इदमीया विषयप्रतिपादनसरणिरित्थम्—अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसंबन्धिनी माया। तस्यां चित्प्रतिबिम्ब ईश्वरः। तस्या एवावरणविक्षेपशक्तिमदविद्याभिधानेषु परिच्छिन्नानन्तप्रदेशेषु चित्प्रतिबिम्बो जीव इति **केचित्** । 'जीवेशावाभासेन करोति', 'माया चाविद्या च स्वयमेव भवति' इति श्रुतिसिद्धौ मूलप्रकृतेस्त्रिगुणात्मिकायाः द्वौ रूपभेदौ । रजस्तमोनभिभूतशुद्धसत्त्वप्रधाना माया, तदभिभूतमलिनसत्त्वप्रधानाऽविद्येति मायाविद्याभेदं परिकल्पयित्वा मायाप्रतिबिम्ब ईश्वरोऽविद्याप्रतिबिम्बो जीव इति **केचिद्वर्णयन्ति** । एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन मायाशब्दितेश्वरोपाधिः । आवरणप्राधान्येनाविद्याऽज्ञानशब्दिता जीवोपाधिरिति **केचित्**। 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्रुतिमनुसृत्याविद्यायां चित्प्रतिबिम्ब ईश्वरः अन्तःकरणे चित्प्रतिबिम्बो जीव इति **केचित्** । एवमुक्तेष्वेतेषु जीवेश्वरयोः प्रतिबिम्बविशेषत्वपक्षेषु यद्बिम्बस्थानीयं ब्रह्म तन्मुक्तप्राप्यम् । **अन्ये तु** जीव ईश्वरः शुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय वस्तुत एकस्यैवाकाशस्य घटाकाश–जलाकाश–महाकाश–मेघाकाशभेदाच्चातुर्विध्यमिवैकस्यैव चैतन्यस्य कूटस्थ–जीव–ब्रह्म–ईश्वरभेदेन चातुर्विध्यं परिकल्प्य धीवासनोपरक्ताज्ञानोपाधिरीश्वरः, अन्तःकरणोपाधिर्जीव इति दर्शयन्ति । **अन्ये तु** 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति स्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागो नोभयोरपि प्रतिबिम्बभावेनोपाधिद्वयमन्तरेणो-

भयोः प्रतिबिम्बत्वायोगात् । तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वर इति । स च प्रतिबिम्बभूतो जीव एवाविद्योपाधिक एकमेव तदज्ञानं तदज्ञानकल्पितं च सर्वं जगत्तस्य स्वप्नदर्शनवद्यावदविद्यं सर्वो व्यवहारः बद्धमुक्तव्यवस्थापि नास्ति जीवस्यैकत्वात् । शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितमिति वर्णयन्ति । **परे तु** रूपानुपहितप्रतिबिम्बो न युक्तः । सुतरां नीरूपे ।

ननु नीरूपस्य गगनस्य जलादौ प्रतिबिम्बानुभवान्नीरूपस्य न प्रतिबिम्ब इति नास्ति नियम इति चेन्न । आलोकप्रतिबिम्बे गगनप्रतिबिम्बत्वव्यवहारस्य भ्रममात्रमूलकत्वात् । ध्वनिधर्माणामुदात्तादिस्वराणां संनिधिमात्रेण व्यञ्जकतया वर्णेष्वारोपोपपत्त्या वर्णप्रतिबिम्बोपाधिकत्वकल्पनाया निष्प्रमाणकत्वेन ध्वनौ वर्णप्रतिबिम्बत्ववादोऽप्ययुक्तः । तस्माच्चाक्षुषस्यैव चाक्षुष एव प्रतिबिम्ब इति नियमस्य न क्वापि भङ्गोऽस्ति । चन्दनखण्डादिप्रतिबिम्बे चाक्षुषगुणानामेवानुभवात्, तदाघ्राणेऽपि सौरभाननुभवाच्च मुखादिप्रतिबिम्बेऽपि चाक्षुषगुणानामेवोपलम्भो न तु मुखोच्चारितशब्दस्य । ननु गुहादिषु प्रतिध्वनिरूपस्य ध्वनिप्रतिबिम्बस्योपलम्भ इति चेन्न । पञ्चीकरणप्रक्रियायां दुन्दुभिसमुद्रदावानलझंझामारुतादिध्वनीनां पृथिव्यादिशब्दत्वेन प्रतिध्वनेरेवाकाशगुणत्वात्तस्यान्यशब्दप्रतिबिम्बत्वानुपपत्तेः । नच वर्णात्मकप्रतिशब्दस्य पूर्ववर्णप्रतिबिम्बत्वमिति वाच्यम् । मूलध्वनिवदेव प्रतिध्वनेरपि वर्णाभिव्यञ्जकत्वोपपत्तेः । तस्माद् घटाकाशवदन्तःकरणाद्यवच्छिन्नं चैतन्यं जीवः, तदनवच्छिन्न ईश्वर इति । नचैवं 'यो विज्ञाने तिष्ठन्विज्ञानमन्तरो यमयति' इत्यादिश्रुत्या ईश्वरस्यान्तर्यामिभावेन विकारान्तरावस्थानबोधकया विरोधः, ब्रह्माण्डान्तर्वर्तितत्तदन्तःकरणोपाधिभिस्तदन्तर्वर्तिचैतन्यस्य सर्वात्मना जीवभावेनावच्छेदात् तदवच्छेदरहितचैतन्यात्मकस्येश्वरस्य ब्रह्माण्डान्तःसत्त्वानापत्तेः । प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्र द्विगुणीकृत्य वृत्तिरुपपद्यत इति वाच्यम् । अविद्याश्रयत्वान्तःकरणसंवलितत्वाद्युपाधिकाज्जीवादविद्याविषयत्वान्तःकरणासंवलितत्वाद्युपाधिकस्यान्तर्यामिणो भेदेनावस्थानस्योपपत्त्या श्रुतिविरोधाभावात् । प्रतिबिम्बपक्षे तु अन्तर्यामिब्राह्मणस्यासामञ्जस्यं बहिस्थपाषाणादिवज्जलान्तर्वर्तिपाषाणादेः जले प्रतिबिम्बादर्शनादुपाध्यनन्तर्गतस्यैव चैतन्यस्य प्रतिबिम्ब इत्यवश्याङ्गीकर्तव्यत्वेन बिम्बभूतस्य विकारान्तरावस्थानायोगात् । एकत्र द्विगुणीकृत्य वृत्तिरित्यपि न । 'षडस्माकमनादयः' इति सिद्धान्ते जीवेश्वरभिन्नत्वेनाभ्युपगतस्य जीवादिसर्वप्रपञ्चविवर्ताधिष्ठानत्वेन सर्वगतस्य शुद्धचैतन्यस्याप्यन्तःकरणे सत्त्वस्यावर्जनीयत्वेन जीवोऽन्तर्यामी शुद्धचैतन्यं चेति एकत्र त्रिगुणीकृत्य वृत्तेरुपपादनीयत्वापत्तेः । नचावच्छेदपक्षे 'यथा स्वयंज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' 'अतएव चोपमा सूर्यकादिवत्' इति श्रुतिसूत्रविरोध इति वाच्यम् । भाष्यकारैरेव 'अतएव' इति सूत्रं व्याख्याय, सूर्यादिवदात्मनः प्रतिबिम्बो न युज्यते इति तदाक्षेपकत्वेन 'अम्बुवदग्रहणात्तु न तथात्वम्' इति सूत्रं व्याख्याय, 'ततो वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' इति सूत्रेण उक्तानुपपत्त्या आत्मनः प्रतिबिम्बनमनुपपन्नमित्यङ्गीकृत्यैव श्रुतिषु सूर्यादिप्रतिबिम्बोपादानस्य तात्पर्यान्तरवर्णनपरताया उक्तत्वात् । **तथाच भाष्यम्**—'यत एव चायमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमा दीयते शास्त्रेषु 'यथा ह्ययं ज्योतिः' इत्यादि । 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इति चैवमादिषु । अत्र प्रत्यवस्थीयते—न जलसूर्यकादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात् सूर्यादिभ्यो मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशम् । मूर्तं च जलं गृह्यते । तत्र युक्तः सूर्यादिप्रतिबिम्बोदयो न त्वात्मा मूर्तो न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः सर्वगतत्वात्सर्वानन्यत्वाच्च । तस्मादयुक्त उक्तोऽयं दृष्टान्त इति । अत्र प्रतिविधीयते—युक्त एव त्वयं दृष्टान्तो विवक्षितांशसंभवात् । नहि दृष्टान्तदार्ष्टान्तिकयोः कंचित्कचिद्विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते । सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । नचेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम् । शास्त्रप्रणीतस्य त्वस्य प्रयोजकमात्र-

मुपन्यस्यते किं पुनरत्र विवक्षितं सारूप्यमिति । तदुच्यते वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यते इत्येवं जलधर्मानुविधायि भवति, नतु परमार्थतः सूर्यस्य तथात्वमस्ति । एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान्वृद्धिह्रासादीनेवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोध' इति ।

बृहदारण्यकभाष्येऽपि 'स एष इहानखाग्रेभ्यः' इति वाक्यव्याख्यानावसरे सर्वगतस्यात्मनः कः प्रवेशो नामेति विमृश्य प्रतिबिम्बनं प्रवेश इति पक्षं विप्रकृष्टदेशाद्यभावेनैव दूषयित्वा देहादावात्मन उपलभ्यमानत्वं प्रवेशः । नहि पाषाणादाविव देहादावात्मनोऽनुपलब्धिरस्तीति प्रवेशपदार्थस्यान्यथोपपादनेन प्रतिबिम्बपक्षदूषणं स्थिरीकृतम् । तैत्तिरीयकभाष्येऽपि 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति वाक्ये प्रवेशविचारावसरे जलसूर्यकादिप्रतिबिम्बवत्प्रवेशः स्यादिति चेन्न । अपरिच्छिन्नत्वादमूर्तत्वाच्च परिच्छिन्नस्य मूर्तस्यान्यस्यान्यत्र प्रसादः स्वाभाविके जलादौ सूर्यकादिप्रतिबिम्बोदयः स्यात् । नत्वात्मनोऽमूर्तत्वादाकाशादिकारणस्यात्मनो व्यापकत्वात्तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्त इति प्रतिबिम्बभावेन प्रवेशनिराकरणं भाष्यकृद्भिः कृतम् । एवंच प्रतिबिम्बपक्षे श्रुतिसूत्रभाष्यविरोधोऽवच्छेदपक्षे तु तदभाव इति । अस्मिन्पक्षे श्रुतिसूत्रभाष्यानुग्रहोऽप्यस्ति । तथाहि 'घटसंवृतमाकाशं नीयमाने यथा घटे । घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥' इति जीवस्य नभोपमशब्देन घटसंवृताकाशतुल्यमभिधायिन्या श्रुत्याऽवच्छिन्नचैतन्यस्यैव जीवरूपत्वमुक्तम् । 'अंशो नानाव्यपदेशात्' इति सूत्रेण जीव ईश्वरस्यांशो भवितुमर्हति यथाग्नेर्विस्फुलिङ्गोंऽश इवांशः । नहि निरवयवस्य मुख्योंऽशः संभवति कस्मात्पुनर्निरवयवत्वात्स एव न भवति 'नानाव्यपदेशात्' । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवमादिको भेदनिर्देशो नासति भेदे संभवतीति भाष्येण च जीवचैतन्यस्य घटाकाशवदन्तःकरणावच्छिन्नत्वरूपमंशत्वं विवक्षितम् । यद्यपि 'आभास एव च' इति सूत्रेण 'आभास एवैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः' इति तद्भाष्येण च प्रतिबिम्बपक्षे उक्त इति प्रतिभाति, तथापि परमाप्तयोः सूत्रकारभाष्यकारयोरेकत्र जीवस्य प्रतिबिम्बत्वस्वीकारोऽन्यत्र तन्निराकरणं च, न संभवतीति किंचिदनुरोधेन कस्मिंश्चिद्व्याख्यातव्ये प्रतिबिम्बत्वनिराकरणस्य युक्तियुक्तत्वेन 'आभास' इति सूत्रे भाष्यकृद्भिरपि श्रुत्योपपत्त्या प्रतिबिम्बत्वस्यासमर्थितत्वात्, तदेव सूत्रं तद्भाष्यं च वृद्धिह्रासभाक्त्वमिति सूत्रोक्तन्यायात् । अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते एवं नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्ध इति तदधिकरणभाष्ये प्रतिबिम्बस्य दृष्टान्तत्वेनोक्तत्वाच्च प्रतिबिम्बसादृश्यप्रतिपादनपरं व्याख्येयम् । तस्मात्प्रतिबिम्बासंभवादवच्छेदपक्षे विरोधाभावात्साधकस्य सत्त्वाच्च अवच्छेद्यचैतन्यस्य प्रतिबिम्बपक्षेऽपि संमतत्वेनोभयसंप्रतिपन्नत्वेन लाघवात्तस्यैव जीवत्वकल्पनौचित्यात् । सर्वगतस्य चैतन्यस्यान्तःकरणादिनावच्छेदोऽवश्यंभावीत्यावश्यकत्वादवच्छेदो जीव इति । स चानेकः अन्तःकरणादीनां नानाभूतानां जीवोपाधित्वाभ्युपगमात् । 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व एत आत्मानो व्युच्चरन्ति' इत्यादिश्रुतेः प्रतिषेधादिति चेन्न । 'शारीरादि'त्यधिकरणे बद्धमुक्तत्वप्रतिपादकभाष्यस्य नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्ध इति 'आभास' इति सूत्रस्थस्य सच स्वात्मभूतानिव घटाकाशस्थानीयानविद्योपस्थापितनामरूपकृतकार्यकरणसंघातानुरोधिनो जीवाख्यान्विज्ञानात्मनः प्रतीष्टे इति 'तदनन्यत्वमि'त्यधिकरणस्थस्य जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखभुक् प्रतिशरीरं प्रविभक्त इति जीवात्मनामुत्पत्तिप्रलयावुच्येते इति नात्मेत्यधिकरणस्थस्य च भाष्यस्य 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यादिस्मृतेः । 'एवं जीवाश्रिता भावा भवभावनयोदिताः । ब्रह्मणः कलिताकाराल्लक्षशोऽप्यथ कोटिशः ॥ असंख्याताः पुरा जाता जायन्ते चापि चाद्य भो । उत्पतिष्यन्ति चैवाम्बुकणौघा इव निर्झरात् ॥ स्ववासनावशावेशादाशाविवशतां गताः । दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥ भ्रमन्तस्तत्र केचित्केचिद्भूतभवोद्भवाः । वर्तमान-

भवाः केचित्केचित्त्वभवतां गताः ॥ जीवन्मुक्ता भ्रमन्तीह केचित्कल्याणभाजनाः। चिरमुक्ताः स्थिताः केचिन्नूनं परिणताः परे॥ केचिच्चिरेण कालेन भविष्यन्मुक्तयः शिवाः। केचिद्विशन्ति चिद्भावाः केवलीभावमात्मनः॥' केवलीभावं कैवल्यमित्यादि इतिहासस्य चास्मिन्पक्ष एवाञ्जस्यं नत्वेकजीववादे। नच नानाजीववादेऽपि ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते इत्यर्थेन बृहदारण्यकभाष्यप्रतिपादितेन विरोध इति शङ्क्यम्। तद्भाष्यप्रतिपादितस्य ब्रह्मैव स्वाविद्यया नानान्तःकरणभावेन परिणतया नानाजीवभावं प्राप्य संसरति स्वविद्यया मुच्यत इत्यभिप्रायकत्वोपपत्तेः। नच जीवत्वोपाधिभूताया अविद्याया एकत्वाज्जीवैक्यसिद्धिरिति वाच्यम्। 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुत्या अविद्याया नानात्वाभ्युपगमात्। तदेकत्वश्रुत्यादीनां जात्यभिप्रायकत्वोपपत्तेः। अविद्याया एकत्वेऽपि 'कार्योपाधिरयं जीवः' इति श्रुत्यनुसारेणान्तःकरणानामेव जीवत्वोपाधित्वोपगमसंभवाच्च। अविद्याया नानात्वपक्षे विनिगमकाभावादनेकतन्त्वारब्धपटतुल्यः सर्वाविद्याकृतः प्रपञ्च इत्येके! तत्तदज्ञानकृतप्रातिभासिकरजतवत्तत्तदविद्याकृतो वियदादिप्रपञ्चः प्रतिपुरुषं भिन्न ऐक्यप्रत्ययस्तु शुक्तिरूप्यैक्यप्रत्ययवदित्यन्ये। जीवाश्रितादविद्यानिचयाद्भिन्ना परमेश्वराश्रिता मायैव प्रपञ्चकारणं जीवानामविद्यास्तु आवरणमात्रे प्रातिभासिकसृष्टौ चोपयुज्यन्ते। 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः' इत्यादिवचने मायापदं जीवचैतन्ये संसारघटिकाऽविद्यापरमित्यपरे। इत्यादयः सर्वे सिद्धान्ता ब्रह्मज्ञानपरा एव। तत्सिद्धं न ह्येतादृशतत्त्वज्ञानमन्तरा प्राणिनो निरतिशयसुखभाक्त्वेन मुक्ता भूयासुरिति सिद्धं च सर्वथा सर्वदा सर्वैर्योगवासिष्ठसदृशं अद्वैतवेदान्तशास्त्रमादरणीयं परिशीलनीयं चाहर्दिवमिति।

नच मुक्तानामपि वसिष्ठभीष्मप्रभृतीनामपरोक्षज्ञानिनां पुनर्देहान्तरश्रवणात्केवलज्ञानोत्पत्तिसमय एवाल्पज्ञानां मुक्तिर्भवतीति कथमुपपद्यते। अतो ज्ञानव्यतिरिक्तमुपायान्तरं किंचित्कर्तव्यमिति वाच्यम्। शास्त्रप्रामाण्यादेव तदुपपत्तेः। 'ब्रह्म वेद ब्रह्मैव भवति', 'तरति शोकमात्मवित्' इत्यादिश्रुतिभिर्ज्ञानोत्पत्तिसमकालमेव मुक्तिप्रतिपादनात्। तदुक्तं शेषेण—तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम्। ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः॥' इति। वसिष्ठादीनां त्वाधिकारिकपुरुषत्वेन यावदधिकारं प्रारब्धवेगप्रयुक्तशापादिना स्वीकृतावान्तरदेहपातेऽपि तद्देहभाविभोग्यस्य निवारयितुमशक्यत्वात् प्रारब्धस्य विनाभोगेन क्षयानुपपत्तेः। 'यावदधिकारमवस्थितिराधिकारिकाणां' इति भगवद्व्यासैर्विशेषितत्वात्। अस्मदादीनां च प्रारब्धकर्मणोऽनेकदेहारम्भकत्वसंभवेऽपि चरमदेहं विना परोक्षनानोत्पत्तेरसंभवात्। वामदेवे तथा दृष्टत्वात्। अन्यथा गर्भस्थस्य श्रवणाद्यभावेन ज्ञानोत्पत्त्यनुपपत्तेः। ननु ज्ञानिनामपि स्वप्नावस्थायां देहान्तरस्वीकारान्मुक्तानामपि पुनर्देहान्तरस्वीकारः किं न स्यादिति चेन्न। 'कण्ठे स्वप्नं समाविशत्' इत्यादिवाक्येषु कण्ठानिर्गमनाभावश्रवणात् देहान्तरप्राप्तेस्तु तदनादरप्रतिपत्ताविलत्र देहान्निर्गमनश्रवणाद्वैषम्यम्। तदुक्तं स्कान्दे—

'यस्मिन्देहे दृढं ज्ञानमपरोक्षं विजायते। तद्देहपातपर्यन्तमेव संसारदर्शनम्॥
पुरापि नास्ति संसारदर्शनं परमार्थतः। कथं तद्दर्शनं देहविनाशादूर्ध्वमुच्यते॥
तस्माद्ब्रह्मात्मविज्ञानं दृढं चरमविग्रहे। जायते मुक्तिदं ज्ञानं प्रसादादेव मुच्यते॥' इति।

इत्यादयः सर्वे वेदान्तसिद्धान्ताः योगवासिष्ठाख्येऽस्मिन्महानिबन्धे नैकशो विलसन्त्येवेत्यास्तां पिष्टपेषणायितेन प्रशस्तप्रशंसनचापलेन।

एतच्छोधनावसरे प्राचीनहस्ताक्षरविलसितं पाङ्कं प्रायः शुद्धं पुस्तकं पण्डित-ज्येष्ठाराम-मुकुन्दजीनां ग्रन्थसंग्रहालयान्महता प्रयत्नेन तेभ्यः संपादितमेकम्, अपरं च ग. कृ. मुद्रणालयाङ्कितमेकमित्युभयोः संयोजनेन यावन्मनीषमकार्यस्य संस्करणम्। अथाप्यत्र मानुषशेमुषीसुलभमवशिष्टं स्खलितं "शैवलं किल विहाय केवलं निर्मलं किमु नु पीयते जलम्" इति न्यायेन परमकारुणिका विद्वांसः शोधयित्वादृत्यानुगृह्णन्त्वित्याशासे—

विद्वदेकान्तवशंवदः पणशीकरोपाह्वो
वासुदेवशर्मा।

# तृतीयसंस्करणस्य प्रस्तावना ॥

सदभयनिजपूर्णानन्दसंवित्प्रतिष्ठम् यदिह निजमहिम्ना विश्वरूपाणि बिभ्रत् ।
विहरति च विमोहात्तेषु नानात्मबुद्ध्या श्रुतिविदितसतत्त्वं तत्परं ब्रह्म वन्दे ॥

अथ लोकाः सर्वेपीमेऽनादिसंसारसागरतरङ्गाकुला अनाद्यविद्याविभ्रान्तचेतसो वस्तुतः स्वयमभिन्ना अपि शरीरादिद्वयभेदेन संजातमोहमुग्धा अहंत्वंचेत्यादिशब्दजालैर्मत्स्यादिवत्प्रत्यहमाकृष्यमाणा इतस्ततो भ्रान्त्वापि कंचित्समाश्रयमलभमानाः शास्त्रविद्भिः कृतानि शास्त्राण्यालोड्यापि केषांचन दुरवगाहत्वात् केषांचन विप्रतीपबुद्धिग्रथितत्वादपरेषां चातीव सूत्ररूपत्वादिष्टसिद्धिलेशमप्यनवगतवन्तः शनैः शनैः पङ्कस्तम्भ इव दुर्विगाहसंसारतलं निविविशिरे । दृष्ट्वैतच्च सौलभ्यामोदपूर्णम्, विशदीकृतदृष्टान्ताद्युपायम्, अरिषड्वर्गजयसाधनीभूतम्, प्रपञ्चप्रपञ्चास्यकृतशरव्यम्, विशेषतः कामिन्याद्याकर्षकवस्तुभिर्मोमुह्यमानानां ज्ञानलवदुर्विदग्धानां ध्वान्तान्तःपूर्णहृदब्जानि भानुमिव विकासयत् श्रीमद्रामायणं विरचितवान् तत्रभवान् दयाविष्टचेताः परमकारुणिको भगवान् वाल्मीकिमहर्षिः ।

श्रीजैमिनिकृतपूर्वमीमांसानिर्माणचातुरीसंतुष्टचेतसाऽपि व्यासमहामुनिना निखिलानां प्राणिनां पारमार्थिकं श्रेयः पूर्वमीमांसासंपर्कमात्रेणापश्यता यथोत्तरमीमांसोपदिष्टा तद्वदेव रामायणाध्ययनमात्रेण शुद्धान्तःकरणानां मुमुक्षूणां कर्तव्यपथमुपदिदिक्षुर्भगवान् योगवासिष्ठमररचत् । तच्चेदं पूर्वोत्तरमीमांसावत् ऋषिप्रणीतरामायणद्वयं दुस्तरसंसारसागरोत्तरणाय सेतुरिव कोऽस्य उपयोगः, कथमध्येयं, कश्चाधिकारीति शङ्काव्याकुलचेतसां व्याहरणीयमेव किञ्चिदिति ।

ननु स्वाध्यायानन्तर्यस्य 'अथातो ब्रह्मजिज्ञासा' इति सूत्रघटकाथशब्दार्थत्वाभावेप्यधीतवेदवेदाङ्गानामेव ब्रह्मविचारः साधनचतुष्टयसंपन्नानां नान्येषां वेदाध्ययनानधिकारिणाम् । पुराणेतिहासादिषु शूद्रादीनां वेदानधिकारिणां ब्रह्मज्ञानाप्तिवर्णनं त्वर्थवाद एव । केषांचन विदुरादीनां मोक्षोपवर्णनं तु जन्मान्तरे मुक्तानां प्रारब्धकर्मपरिशेषाच्छूद्रादिशरीरपरिग्रहेपि न विरुध्यते । एवं च स्वाध्यायाध्ययनं विना न ब्रह्मविद्यायामधिकार इति । त्रैवर्णिकानां च कर्मणा संप्राप्तान्तःशुद्धिमतां वेदान्तशास्त्राध्ययनमात्रेण सिद्धेः कोऽस्य उपयोगः पुनरुक्तिर्वा वेदान्तशास्त्रस्येयमिति चेन्न, परपदावाप्तिर्हि न केवलं श्रवणमात्रेण सिद्ध्यति, न वा केवलकर्माचरणेनापि—इति शतश उद्घोषितं तत्र तत्र श्रीमद्भगवत्पादाचार्यैः ।

ननु वेदाध्ययनेऽपि स्त्रीशूद्रादीनामधिकारो नास्तीति कथमुपपद्यते । याज्ञे कर्मणि दंपत्योः सहाधिकारित्वेन स्त्रीणाम् 'निषादस्थपतिन् याजये'दित्यत्र लाघवात्सर्वशास्त्रकृत्संमतकर्मधारयाश्रयणेन निषादादीनामप्यधिकारित्वेन स्वीकारात् धर्मजिज्ञासाधिकारे संपन्ने कर्मणा समाहितचेतसां सुलभ एव ब्रह्मजिज्ञासाधिकार इति । 'जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते' इत्यादिवचनैश्च यं कंचनमप्युपनीय कर्माधिकारित्वं ततश्च ज्ञानाधिकारित्वं संपद्यत इति 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यादिशास्त्राणि विद्वांसमलभमानानि अविद्वांसमेवाधिकृत्य विद्यामन्तरेणानुष्ठानासंभवात् विद्यामाक्षिपन्त्यविशेषाच्चतुरो वर्णानधिकुर्युः । एवं च चातुर्वर्णिकानामपि ब्रह्मविद्यायामधिकार इति चेत् । न 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्' इत्यादिशास्त्रैरुपनीतास्त्रैवर्णिकाः किमस्माभिः कार्यमित्यपेक्षायां तत्सन्निधौ 'स्वाध्यायोऽध्येतव्य' इत्यनिर्दिष्टकर्तृकं विधीयमानमध्ययनं कर्तारमपेक्षते । तत्रापेक्षासन्निधियोग्यत्वैरेवं निश्चीयते—त्रैवर्णिकैरेवोपनीतैरक्षरग्रहणेनाध्ययनादिपरम्परयाऽर्थज्ञानं कर्तव्यम्, अर्थज्ञानसंपन्नश्च विद्वान् तत्र तत्र 'अग्निहोत्रं जुहुया'दित्यादिविधावधिकारीति नेतरेषामत्र चञ्चुप्रवेशः । अध्ययनं चात्रार्थज्ञानार्थमिति स्वीकारे स्तोभादीनामनर्थकानामध्ययनं कथमर्थज्ञानार्थं स्यादिति न भ्रमितव्यम्, गीतिकालोपलक्षकत्वेनैव तेषामर्थवत्त्वोपपत्तेः । अध्ययनोपात्तेन स्वाध्यायेन यच्छक्नुयात्तत्कुर्यादित्येकया वचनव्यक्त्या सर्वेषां यथासामर्थ्यं विनियोगकल्पनात् । अनारभ्याधीतस्याप्यध्ययनविधेः सामर्थ्यात्क्रत्वर्थत्वोपपत्तेः । यावद्धि फलवत्कर्मानुष्ठानोपयोगिज्ञानोपायतया सामर्थ्येन किञ्चित्कल्पयितुमारभ्यते तावत् 'स्वाध्यायोऽध्येतव्य' इति प्रत्यक्षया श्रुत्याऽध्ययनमेव तदुपायत्वेन विधीयते । लिङ्गतः शीघ्रं प्रवृत्तेः, उपनयनप्रक्रमाधीतत्वाच्च ॥ 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यादिवचनैरुपनयनस्याचार्यकरणार्थत्वमेव स्यादित्यपि न कल्पनीयम् । यथा 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोती'ति यूपपरिव्याणं यूपार्थम्, द्वितीयानिर्देशात्सन्निधानाच्च नोपाकरणार्थं तथोपनयनमपि माणवकसंस्कारार्थं नाध्यापनार्थम् । संस्कृतश्च बटुरध्ययनाधिकारीति उपनयनमध्ययनार्थमेव । एवं च 'वसन्ते ब्राह्मणमुपनयीत' इत्या-

द्विवचनैरध्ययनाधिकारिणस्त्रैवर्णिका एवेति ब्रह्मजिज्ञासायामपि त एवाधिकारिण इति नो विवादः ॥ 'रथकारोऽग्नीनादधीते' त्यादिवचनै रथकारादीनामधिकारोऽध्ययनविधावित्यपि न 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधेर्वसन्ते ब्राह्मण इत्यादिभिः शान्ताकाङ्क्षस्य रथकारादीनामध्ययनाधिकारविधानेऽसामर्थ्यात्; तानि तु वचनानि तादृङ्मात्रेणैव विद्याकल्पनेन चरितार्थानीति नैतत्परोक्षं तद्विदाम्। 'जन्मना जायत' इत्यादिवचनानि तु उपनयनात्प्राक् त्रैवर्णिकानां शूद्रसमत्वं कल्पयन्ति इति शूद्रपदं शूद्रसदृशे लाक्षणिकमित्येव। अन्यथा 'वसन्ते ब्राह्मणमुपनयीते'ति ब्राह्मणादिपदवैयर्थ्यापत्तेः ॥ ननु कर्मणि त्रैवर्णिकानामेवाधिकारेपि ब्रह्मजिज्ञासायां 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादिवचनैः समुपजातवैराग्याणां चातुर्वर्णिकानामप्यधिकार इति सांप्रतम्। तथा च पुराणादिपूपवर्णितविदुरादिकथानामर्थवादकल्पनाक्लेशोपि न, आधुनिकानामप्युदरंभरिणामुन्मत्तचरिताचरणानां विचारात्मकधर्माचारिणो वयमिति प्रब्रुवाणानां धर्मध्वजिनामप्युपपत्तिरुपपन्नेति न शङ्कनीयम्। न वयं कर्माधिकारिणात्त्रैवर्णिकानामेव ब्रह्मजिज्ञासायामधिकार इति ब्रूमः, किंतु तत्करणेन विशुद्धाशयानां समुपजातवैराग्याणामेवात्राधिकार इति 'यदहरेव विरजे'दित्येतत्स्वरसतः संगच्छेत। तत्तत्कालावच्छिन्नवैराग्यजनिर्यद्यप्युपपद्येतेतरकारणजालैः परं चराचरमात्रेपु तानि न विरागमुत्पादयितुमर्हन्तीत्यविवादमेव कर्माचरणस्य वैराग्योत्पादने कारणत्वम्। ततश्च कर्माधिकारिणां साधनचतुष्टयसंपन्नानामेव ब्रह्मविद्यायामधिकारो नेतरेषाम्। तदेतदाह—"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः। तथैव ज्ञानकर्मभ्यां जायते परमं पदम् ॥ केवलात्कर्मणो ज्ञानान्न हि मोक्षोऽभिजायते। किंतूभाभ्यां भवेन्मोक्षः साधनं तूभयं विदुः ॥" इति। 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन'। 'अलब्धज्ञानदृष्टीनां क्रियामात्रं परायणम्। यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ'। 'नावेदविन्मनुते तं बृहन्तम्'। इति च।

ननु वेदान्तादिशास्त्रे धर्माचरणेन विशुद्धाशयानां मनुष्याणामेवात्राधिकार इति संप्राप्तम्, ततश्च देवानामप्यत्रानधिकारः स्यात्। स्याच्च 'तमात्मानं विविदिषन्तौ सुरासुरराजाविन्द्रविरोचनौ समित्पाणी प्रजापतिं वरिवसितुमाजग्मतुः। आगत्य द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः ॥' इत्यादिवचनैरिन्द्रादिदेवतानां ब्रह्मावाप्तिवर्णनविरोधः। देवादीनां विग्रहाद्यभावेन इन्द्रियाद्यर्थसन्निकर्षजायाः प्रमाणादिवृत्तेरनुपपत्तेरविद्वत्तया सामर्थ्याभावेन अधिकाराभावः सुस्पष्टः। इति चेत्पूर्ववदेवात्रसमाधीयते वृद्धैः—न खलु विधिवत् गुरुमुखाद्गृह्यमाणो वेदः फलवत्कर्मब्रह्मावबोधहेतुः, अपि तु अध्ययनोत्तरकालं निगमनिरुक्तव्याकरणादिविदितपदतदर्थसंगतेरधिगतशाब्दन्यायतत्त्वस्य पुंसः स्मर्यमाणः। स च मनुष्याणामिह जन्मनीव देवानां प्राचि भवे विधिवदधीत आम्नाय इह जन्मनि स्मर्यमाणः। 'न देवानां देवतान्तराभावात्' इत्यादिना देवतानां ऋषीणां वा कर्मानधिकारित्वेपि ब्रह्मविद्यायामधिकारो नास्तीति वादो निराकृतस्तत्रभवता भगवता भाष्यकृता, विदुषांवरैश्चानेकैरिति चर्वितचर्वणं परिहरामः। ये तु देवादीनां विग्रहाभावेनाशक्तित्वमुपपादयन्ति ते "तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे, इन्द्रो वृत्राणि जिघ्नते, जगृभ्माते दक्षिणमिन्द्रहस्तम्, अद्धीन्द्र पिब च प्रस्थितस्य, तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति, तस्मै प्रीता इषमूर्जं च यच्छन्ति" इत्यादिश्रुतिभागेन प्रतिपादितं देवतानां शरीरवत्त्वम्, इन्द्रियवत्त्वम्, दातृप्रतिगृहीतृत्वमवलोक्यांशुमालिप्रतापदारितरक्षोगण इव, भूतादिविभीषिकास्मरणमात्रेण मोमुह्यमानप्राकृतजन इव दिशो यान्तीति नाधिकं प्रयत्यतेऽस्माभिः। वचनान्येतान्यर्थवाद इत्युक्तिस्तु 'मुखमस्तीति वक्तव्य'मितिवदुपेक्षणीयैव।

ननु निश्चितेऽप्येवमर्थे त्रैवर्णिकानामेवास्मिन्नधिकार इत्यायातम्, ततश्च नास्य विशेष उपयोग इति चेन्न 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इति स्मृतेः पुराणादिश्रवणे शूद्रस्याप्यधिकारसंभवात् श्रावकस्य ब्राह्मणस्यैतत्प्रकरणाधीनशास्त्रार्थज्ञानेन कौशलाच्छूद्रस्योद्धार्यता। कीटादीनामपि कदाचिद्ब्राह्मणादिभावं प्राप्स्यतामुद्धरिष्यमाणता। यथा त्रैवर्णिकस्यत्रेताग्निसाध्ये कर्मण्यधिकारेऽनाहिताग्निसाधारणः स्मार्तकर्माधिकारोऽस्त्येव तथा श्रौतज्ञानाधिकारिणोऽप्यसंन्यासिमुमुक्षुसाधारणोस्मिन्नपि ग्रन्थेऽस्त्यधिकारः। अज्ञानावधिकश्च, अस्यापि स्मृतिवद्वेदोपबृंहणत्वात्। तच्च—'वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥' इत्यादिभिः प्रतीयते। स हि सर्वैर्विजिज्ञास्य आत्मा वर्णैस्तथाश्रमैरित्यादिवचनैर्यथा केषुचित्स्मार्तकर्मसु स्त्रीशूद्रसाधारणोऽधिकारः, तथाऽस्यापि ग्रन्थस्याध्ययनश्रवणे तेषामधिकारः पुराणवत्, अतश्च 'जनश्च शूद्रोपि महत्त्वमीयात्' इत्याद्युपपद्यते। तदाह भगवान् 'अहं बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः। नात्यन्तमज्ञो नोत ज्ञः सोस्मिन् शास्त्रेऽधिकारवान्' ॥ एवं च संसारसागरमुत्तितीर्षुः शूद्रोप्यधिकारीति ग्रन्थस्यास्यातीवोपादेयता प्रतिपाद्यते।

अत्रायमप्रस्तुतकथाप्रचारो न स्यात् यदस्मिञ्छास्त्रे भगवता वाल्मीकिमहर्षिणा द्वैतमेव प्रतिपादितं, विशिष्टाद्वैतं वा, अद्वैतं वेति कथंकारं ब्रह्मणः प्रतिपादनशैली चेति। [illegible] भूमी ऋषिभिश्चान्यैश्च कणाददिगम्बरमतानु-

यायिभिश्च परां कोटिमुपवर्णयद्भिर्भिन्नभिन्न इव पन्थाः प्रकाश्यते तत्रैतत्कारणं विद्मः। एकवृन्तगतफलद्वयन्यायेनैकेनैव प्रयत्नविशेषेण सुखावाप्तिर्दुःखध्वंसश्च साध्यो भवेत् ,तत्र कर्तव्याकर्तव्यकुशलानां विदुषां स्वस्वज्ञानशक्त्यनुसारेण क्रियाशक्त्यनुसारेण च प्रयत्नविशेषः प्रतीयते; न हि सर्वं वस्तु सर्वैर्ज्ञायत इत्यस्ति नियमः। अतश्चात्यन्तिकसुखावाप्तये प्रयतिष्यमाणानां चार्वाकादीनां मते ईश्वरसत्ताभावः। प्रत्यक्षप्रमाणातिरिक्तप्रमाणानाश्रयत्वात्प्रत्यक्षप्रमाणानुपलभ्यत्वाच्च। ईश्वरसत्ताभावस्वीकारे बीजादङ्कुराद्युत्पत्तौ कारणं मृज्जलसान्निध्यं स्वभावश्च, स्वभावस्वीकारे कर्तारं विना नानुपपत्तिः। यद्येवमीश्वरो न कश्चनेति स्वीकारे सदसत्कर्मणां साध्वसाधुफलप्रदाता न स्यात्ततश्च समाने प्रयत्ने कथं विशेषः सुखदुःखयोरिति चेल्लौकिकस्य कर्मणः फलप्रदाता लौकिकेश्वरो भूपतिरेव। स च भोजादिराजराडिव सदसद्विवेचनपटुः सत्कर्मणः फलं मनोरथादिपूरणेन प्रदत्ते। दुष्कर्मणश्चौर्यादेश्चोरान् शासयतीत्यादिना सुस्पष्टमेव। अलौकिककर्मणां यज्ञदानतपःप्रभृतीनां फलं तु नास्त्येव, जातमात्रस्य प्राणिनः सुखदुःखानुभवस्तु घुणाक्षरन्यायेन स्वभावेन वेति। न तु तत्रालौकिकफलविशेषः; तच्च–त्रयो वेदस्य कर्तारो भण्ड-धूर्त-निशाचराः। 'जर्भरी-तुर्फरीत्यादि पण्डितानां वचः स्मृतम्'। इत्यादिनोद्घुष्यमाणानां 'विनायकं प्रकुर्वाणो रचयामास वानर'मितिवज्ज्ञेयं वस्तुविपरिणयतां नास्तिकशिरोमणीनामुपेक्षैवानुपेक्षणीयेति तत्त्वजिज्ञासूनां निश्चय इत्यस्मिन् विषये मौनं समाश्रयामः।

एवं च प्रत्यक्षातिरिक्तप्रमाणानाश्रयत्वं चार्वाकाणामेव; तदन्ये बौद्धाः सर्वज्ञबुद्धमेवेश्वरं मन्यन्ते, ते च तदिदं सर्वं दुःखं दुःखायतनं दुःखसाधनं चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं समाश्रयेत्, तदुभयनिरोधः, तदनन्तरं च विमलज्ञानोदयः स एव मुक्तिः। तन्निरोधोपायमार्गस्तत्त्वज्ञानम्। ते हि चेतनं न स्वीकुर्वन्ति—उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां धर्माणां धर्मता धर्मस्थितिता धर्मनियामकता च प्रतीत्यसमुत्पादानुलोमता। यस्मिन् सति यदुत्पद्यते यस्मिन्नसति यन्नोत्पद्यते तत्तस्य कारणस्य कार्यमिति धर्मस्य कार्यस्य कारणानतिक्रमेण स्थितिः। यथा बीजादङ्कुरः अङ्कुरात्काण्डं काण्डान्नालो नालाद्गर्भः ततः शूकं ततः पुष्पं ततः फलम्। न चात्र बाह्ये समुदाये कारणं बीजादिकार्यमङ्कुरादि वा चेतयते; अहमङ्कुरं निर्वर्तयामि–इति नात्र कश्चिच्चेतन इति। तदेतत्सर्वं 'न हि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः कुलालादिभिरश्वादिभिर्वाऽनधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते' इत्यादिना तत्र तत्र खण्डितत्वान्न तदुपपादनं विदुषां सन्तोषावहमिति काकदन्तपरीक्षावदलमिति सुभृशं रोचयामहे। एवं च श्रुतिप्रामाण्यविरोधाविरोधेन द्विविधशास्त्रकाराणां मध्ये चार्वाकबौद्धदिगम्बरकापालिकादयः श्रुतिप्रामाण्ये विवदन्तो नास्तिकाः पराहतप्राया इति॥

ये श्रुतिप्रामाण्यविषयेऽविरुद्धास्ते तार्किकाश्चैवं मन्यन्ते–'आत्मन आकाशः संभूत' इति श्रुतिरात्मन आकाशोऽभिव्यक्त इति प्रकथयति। यत आकाशं नित्यं निरवयवत्वादित्याद्यनुमानेन तस्य नित्यत्वे प्रसाधिते सम्भूत इत्येतद्विरुध्येत, अतस्तल्लक्षणयाऽभिव्यक्तिपरम्। "यतो वा इमानि भूतानि जायन्ते" इत्यादीन्यपि एवंप्रायाण्येव। जगत् सकर्तृकं कृतिजन्यत्वात् घटादिवदित्याद्यनुमानेन परमेश्वरे कर्तृत्वे सिद्धे 'द्यावाभूमी जनयन् देव एक' इत्यादिका श्रुतिः पश्चादेव तमर्थमनुभावयितुं समर्था। शब्दो ह्यैतिह्यमात्रेण स्वार्थमभिधत्ते इति श्रुतमात्रः शब्दस्तावतैव कथं श्रोतॄणां चेतस्यर्थानुभावकः स्यात्। अनुमानं तु प्रत्यक्षादिदृष्टान्तप्रदर्शनेन सूक्ष्ममप्यर्थमनुग्राहयितुं शक्नोति, तथा च सूलकारणरूपस्य सूक्ष्मार्थस्य बुद्ध्यावारोहणं तर्केणैवेति। जगदुत्पत्तिविषयेपि लोके घटादीनि सावयवद्रव्याणि संयोगादिसंबन्धविशेषाश्रितैः कपालाद्यवयवद्रव्यैर्निर्मीयन्ते इति प्रत्यक्षम्। ततश्चैवमनुमीयते यत्किञ्चित्सावयवद्रव्यं तत्सर्वमपि तदारम्भकावयवैरारब्धम्। स चावयवावयविभावः परमाणुपर्यन्तं विश्रान्तिमेति। यदा चादृष्टादिवशाद्विभागात्मकं कर्म उदेति तदा परमाणुपर्यन्तं पृथिव्यादीनां विभागो भवति स एव प्रलयकालः। यदा च परमाणुष्वदृष्टविशेषात्संयोगाद्यनुकूलं कर्म उदेति, ततो द्व्यणुकादिना पृथिव्यादिसंसारजातमुत्पद्यते, एवमेव शरीरं, एवं सर्वमिदं जगदणुभ्यः संभवतीत्येतत् तर्केणोपनतमपि युक्तिविधुरमेव। तथाहि–श्रुत्यपेक्षयाऽनुमानस्य प्राथम्यमिति यदुच्यते तत् जगतः किञ्चित्कारणमस्तीत्येवं निश्चये सत्येव तादृशं कार्यकारणमुपजीव्य कार्यमुखेन कारणं बोधयतोऽनुमानस्य प्रामाण्यसंचारः। जन्यं क्षित्यङ्कुरादिकं दृष्ट्वा तत्स्वाभाविकमेव तथाविधमभूत् अथवा कश्चित्तादृशमकरोदिति संदेहस्य 'द्यावाभूमी जनयन् देव एक' इत्यादि श्रुतिमन्तरेणापगमाभावात्। एतमेव चार्थं श्रुतिः स्वयमेवाभिव्यनक्ति–'नावेदविन्मनुते तं बृहन्तम्', 'अवेदवित्तं महान्तं'श्रुतिमन्तरेण केवलेनानुमानादिना न जानातीत्यर्थः। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिनापि श्रवणानन्तरं मननार्थमनुमानस्यैवाश्रयणं ध्वनयति। यच्च तार्किकैः परमाणूनां संयोगादिवशाज्जन्यते पृथिव्यादीति यदुच्यते तदपि विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः। कर्मवतां

कपालादीनां संयोगदर्शनात् । कर्मणश्च कार्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम् । अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात् । अभ्युपगमेपि यदि प्रयत्नोभिघातादिर्वा यथादृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत । तस्यासंभवान्नैवाणुष्वाद्यं कर्म स्यात्, न हि तस्यामवस्थायामात्मगुणः प्रयत्नः संभवति, शरीराभावात् । अपि चाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वानुभयस्वभावा वाऽभ्युपगम्यन्ते गत्यन्तराभावात्, तत्र संभाव्यते प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात्प्रलयाभावप्रसंगः । निवृत्तिस्वभावत्वेपि नित्यमेव वृत्तेर्भावात्सर्गाभावप्रसंग इत्याद्युक्तिप्रचारैराचार्यैरेव सुस्पष्टं खण्ड्यत इति ततोऽवसेयं सुधीभिः ।

यत्किल भूतभौतिकानां मूलकारणं तद्रूपादिमान् परमाणुर्नित्य इति तैरभ्युपेयते तस्य चेद्रूपादिमत्त्वमभ्युपेयेत परमाणुनित्यत्वविरुद्धे स्थौल्यानित्यत्वे प्रसज्येयाताम् । सोयं प्रसंग एकधर्माभ्युपगमे धर्मान्तरस्य, नियतप्राप्तिर्हि प्रसंगलक्षणम् । तदनेन प्रसंगेन जगत्कारणप्रसिद्धये प्रवृत्तं साधनं रूपादिमन्नित्यपरमाणुसिद्धेः प्रच्याव्य ब्रह्मगोचरतां नीयते इति किमेभिस्तर्ककर्कशमतिभिस्तार्किकैः ।

अथात्र सांख्याः—प्रधानं यैराश्रीयते प्रधानं चाचेतनम् । तच्चाचेतनमपि पुरुषविमोक्षार्थं प्रयतते तत्–'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य' इत्यादिदृष्टान्तादिसाधनैर्विशदीकृतम् । यद्यत्र चेतनं प्रधानं स्यात्तदा प्राणिनां दुःखनिवृत्त्यर्थं तस्य प्रवृत्तिरुपकल्पनीया स्यात् इत्याक्षिप्यते चेत्समर्थस्य चेतनस्य प्रधानस्य प्राणिनां दुःखानुद्गम एव प्रथमं कार्यमित्यापतेत्, कारुण्यादिना प्राणिनां दुःखाभावार्थं चेतनमेव प्रवर्तेत, नाचेतनमिति कल्पनापेक्षया तेनैव कारुण्येन प्राणिनां दुःखानुत्पत्तिरेव गरीयसीति चेतनेन भवदीयप्रधानेन प्रथमतस्तदेव कर्तव्यमिति लाघवं स्यात् 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायात् । अत एवाचेतनं प्रधानं तैः स्वीक्रियते वेदविहितकर्माचरणेन फलं त्ववश्यम्भावीति स्वीकारादास्तिका एव ते, प्रमाणान्यपि प्रत्यक्षानुमानशब्दरूपाणि त्रीण्येव तैरभिमतानि, उपमानं च न स्वीक्रियते, यतो ये तार्किकयूथ्या 'समाख्यासंबन्धप्रतिपत्तिरुपमानार्थ' इति न्यायवार्तिकमनुसरन्तो यथा गौस्तथा गवय इति श्रुतातिदेशवचनस्य ग्रामीणस्य कानने गोसमानं पिण्डमालोकमानस्य नूनमयमसौ गवयपदाभिधेयो यः पुरारण्यकेन गोसदृशो गवय इत्युपदिष्ट इति या प्रमितिरुपजायते तत्करणमुपमानमित्येवमुपमानक्लृप्तं निरूपयन्ति तान् शिथिलयितुं योपि गवयशब्दो गोसदृशस्य वाचक इत्ययं प्रत्ययः, सोपि गवयपदं गोसदृशपिण्डवाचकं लक्षणागुणवृत्त्योरसद्भावे सति वृद्धैस्तत्र प्रयुज्यमानत्वात् गोत्वे प्रयुज्यमानगोपदवदित्यनुमानमपि समर्थं स्यात् । अनुपलब्धिरपि न प्रमाणान्तरम् । सतोभावरूपात्प्रधानादेः सदनागतावस्थया कारणे विद्यमानमेव कारकव्यापारेणाभिव्यज्यते इत्यर्थकं 'सतः सज्जायत' इति सिद्धान्तस्वीकारेण सूक्ष्मरूपेणावस्थानं नाशः स्थूलरूपेणावस्थानमुत्पत्तिरितिस्वीकारात् । एतेन 'द्यावाभूमी जनयन्देव एक' इत्यादीनि श्रुतिवचनानि अभिव्यक्तिपराण्येवेति तार्किकवत्सि द्धान्तः सांख्यानाम् ।

तदेतत्सर्वमापातरमणीयमेव । नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किञ्चिद्विशिष्टपुरुषार्थनिर्वर्तनसमर्थान् विकारान्विरचयद्दृष्टम् । गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते । तथेदं जगदखिलं नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादिनानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभाविततमैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत्कथमचेतनं प्रधानं रचयेत्, लोष्टपाषाणादिष्वदृष्टत्वात् । मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते तद्वत्प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसंग इति विदुषामामोदावहमेव चेतनाधिष्ठितत्वं प्रत्याहृतं भगवत्पूज्यपादैः । यदि तावदचेतनं प्रधानमनधिष्ठितं चेतनेन, प्रवर्तते स्वभावत एवेति साध्यते तदयुक्तं समन्वयादेर्हेतोश्चेतनानधिष्ठितत्वेन मृत्सुवर्णादौ दृष्टान्तधर्मिणि व्याप्तेरुपलब्धेर्विरुद्धत्वात् । न हि मृत्सुवर्णदार्वादयः कुलालहेमकाररथकारादिभिरनधिष्ठिताः कुम्भरुचकरथाद्युपाददते तस्मात्कृतकत्वमिव नित्यत्वसाधनाय प्रयुक्तं साध्यविरुद्धेन व्याप्तं विरुद्धम्— इति अनुमानस्यापि नावकाशोऽचेतने ॥

भगवान् वाल्मीकिरपि चेतनमेव प्रधानं स्वीकुरुते तदाह—''चितेश्चित्त्वं जगद्विद्धि नाजगच्चित्त्वमस्ति हि । अजगत्वादचित्त्वात् भानाद्भेदो जगत् कुतः ॥ प्रधानशक्तिनियमः सुप्रतिष्ठो न चेन्नचेत् । तत्फलं शक्त्यधीनत्वान्नेहितानां क्वचिन्नचेत् ॥ जगच्चित्पुष्पसौगन्ध्यं चित्तताप्रफलं जगत् । चित्सत्तैव जगत्सत्ता जगत्सत्तैव चिद्वपुः ॥ गगन इव सुशून्यभेदमस्ति त्रिभुवनमङ्ग महाचितोऽन्तरस्थाः । परमपदमयं समस्तदृश्यं त्विदमिति निश्चयवान् भवानुभूतेः ॥'' इति । उत्पत्तिविनाशावपि भगवता स्पष्टं प्रतिपादितावित्याविर्भावतिरोभावरूपौ स्वीकृतौ इति ''देहे जाते न जातोऽसि देहे नष्टे

न नश्यसि । त्वमात्मन्यकलङ्कात्मा देहस्त्वं न कश्चन ॥ विनाशिनि विनष्टेऽस्मिन् देहे स्वां स्थितिमागते । विनश्यामीति यः खेदी तं धिगस्त्वन्धचेतसम् ॥ आधाराधेययोरेकनाशे नान्यस्य नष्टता । यथा तथा शरीरादिनाशे नात्मनि नष्टता ॥" इत्यादिग्रन्थेन सुस्पष्टमेवाभिहितमिति नावकाशोनेकक्लिष्टकल्पनानाम् ।

अथ आकीटपतङ्गं मोक्ष इत्यभ्युद्धिरते जनाः स मोक्षः किंस्वरूपः । किं आत्यन्तिकसुखात्मक एव सः । उत आत्यन्तिकदुःखनिवृत्तिरेव मोक्ष इति । तत्र केवलसुखात्मक एव स इति कल्पयितुं न शक्यते । यदि च कल्प्येत आत्मनो व्यतिरिक्तं सुखमपि तत्र नित्य एव पदार्थः परिकल्पितः स्यात् । सुखप्रदातुः कस्य च नातिरिक्तस्यापेक्षयिष्यमाणत्वात् । तथा च द्वैतमेव सर्वथोपपादितं स्यात्, प्रतिपादितं चाद्वैतमेव तत्रभवद्भिर्वाल्मीकिमहर्षिभिरित्यग्रे सुस्पष्टं विवेचयिष्यामः ॥ ननु आत्यन्तिकसुखस्वरूपत्वे मोक्षस्य स्वीक्रियमाणेपि यदि तत्रात्यन्तिकी दुःखनिवृत्तिर्न स्यात्तर्हि लेशतोपि तत्र दुःखसत्तासत्त्वेन न सुखस्यान्तिकत्वं स्यादिति केचिदाहुः । तदेतत्प्रस्तावनाप्रसरमीक्षमाणानां केवलं बुद्धिलाघवमेवेत्यविस्तरः । यदि आत्यन्तिकसुखरूपत्वमेव मोक्षस्वरूपं विवृणुमस्तत्र दुःखलेशसम्भावनमयुक्तम् । यथा राज्ञः प्रासादात्पुरतो यावद्वनं सरला नूत्ना सरणिर्विधेयेत्याज्ञप्ते मध्ये गृहाणि सन्ति कथं मार्गो नेय इत्याकुलचेतसां मन्त्रिणां यद्वत्कौशलं तद्वदेवेदमपि । व्यवहारेपि यदि आत्यन्तिकराजसंमाननेच्छोराकस्मिको लाभो मानस्य स्यात् तत्र दुःखस्य सत्त्वेपि सुखस्य प्राबल्येन कञ्चित्कालं सुखमेव प्रतीयते न दुःखस्य लेशोपि तद्वदात्यन्तिकसुखरूपे मोक्षे सुखस्य प्राबल्याद्दुःखाननुभवेन दुःखात्यन्ताभावेन मोक्षस्य विशेषयिष्यमाणत्वं विफलमेव स्यादित्यलं परदोषाविष्करणेन । यदि च दुःखाभावो मोक्ष इति गृह्येत तदा सुखरूपस्य वस्तुनः स्वीकाराभावान्न द्वैतापत्तिः । नापि सुखप्रदातृवत्कश्चनातिरिक्तोपेक्ष्यत इति द्वैतसम्भावनापि नेति चेन्न । अभावग्रहणे प्रतियोगिज्ञानं सर्वशास्त्रकृत्सम्मतमिति दुःखज्ञानं तस्मिन् पक्षेऽत्यन्तमावश्यकं स्यात् । स्याच्च लौकिकानां सुखसंविग्ने चेतसि पूर्वानुभूतदुःखस्मरणमात्रेण यथा क्षणमुद्वेगस्तथा मोक्षावस्थायां दुःखस्मरणमात्रेणापि तदनुभवः । एवं च नैतन्मोक्षलक्षणं विदुषामामोदावहं वस्तुप्रसाधकं चेति मन्यमानेन भगवता–'न मोक्षो नभसः पृष्ठे न पाताले न भूतले । मोक्षो हि चेतो विमलं सम्यक् ज्ञानविबोधितम् ॥ सकलाशास्वसंसक्त्या यत्स्वयं चेतसः क्षयः । स मोक्षनाम्ना कथितस्तत्त्वज्ञैरात्मदर्शिभि"रिति मोक्षलक्षणमकारि । स चायं मोक्षो न दुःखाभावस्वरूपः, नापि आत्यन्तिकसुखरूपः किंतु प्रबोध एव मोक्ष इति मोक्षस्पष्टप्रतिपत्तिश्चैभिः श्लोकैः कृताऽऽविरास्ते–"न जायते न म्रियते नादत्ते नाभिवाञ्छति । न मुक्तो न च बद्धोऽयमात्मा सर्वस्य सर्वदा ॥ अनादित्वान्न जातोऽयमजातत्वान्न नश्यति । आत्मात्मव्यतिरिक्तं तु नाभिवाञ्छत्यसंभवात् ॥ दिक्कालाद्यनवच्छेदान्न बद्धोऽयं कदाचन । बन्धाभावे क्व मुक्तिः स्यात् अमोक्षस्तेन संस्थितः ॥ अयं मोक्षस्त्वयं बद्धः पेलवां कलनामिति । परित्यज्य महात्यागी सत्त्वमेव भवाभव ॥" इति । यादृशं जीवस्वरूपवर्णनं वेदान्तशास्त्रे प्रथितमास्ते तथैव जीवनानात्वपक्षो जीवैक्यपक्षश्चेति द्वावप्यभिमतावेव भगवत इति जीववर्णनप्रस्तावे स्फुटं प्रतिपाद्यते–"इतश्चेतश्च नीयन्ते जीवा वासनया स्वया । चिरं तदपि जीविन्या धूर्त्या धाव्येव बालकाः ॥ एवं स्वरूपं जीवस्य बृहदारण्यकादिषु । बहुधा बहुषु प्रोक्तं वेदान्तेषु किलानघ ॥" इत्यादिग्रन्थेन । द्वैतनिषेधप्रदर्शनमपि कण्ठतः समुद्घोषितं भगवत्पादैः–"द्वैतं यथा नास्ति चिदात्मजीवयोस्तथैव भेदोस्ति न जीवचित्तयोः । यथैव भेदोस्ति न जीवचित्तयोस्तथैव भेदोस्ति न देहकर्मणोः ॥"इति । एतेन द्वैतमेवात्र प्रतिपादितं विशिष्टाद्वैतं वेति निराकृतप्रायमेव । एवमेतच्छास्त्रं प्रणयनवता भगवता बहूपकृतमित्यत्र नास्ति विवादः । आत्मानात्मविवेकविषयश्चायं शास्त्रकृद्भिस्तट्टीकाकारैश्च काठिन्यं प्रापितः, अलसानां स्वादुकामानामतीव दुरूहः, शास्त्राध्ययनदुःखानुभवापेक्षया वरं संसारक्लेशोपीति मन्यमानानां सुरुचिरसरसकथाप्रवाहरूपेण अलसमुखपतितपक्वजम्बूफलमिव क्रमान्मोक्षपथप्रापकः सरलोऽयं नूत्नः पन्थाः सुकोमलः समुदित इति सुप्रसिद्धमेतत् ।

ग्रन्थकारश्चायं महर्षिः कदाविरासीदित्येतस्मिन् विषये न मे वाक् प्रसरतीत्युल्लेख एवोल्लेखनीयः । आदिकवित्वप्रसिद्धिश्चास्य विद्यमानवाङ्मयनिर्माणादनर्वाचीनत्वमेव प्रथयति । "कविर्विनतरुं त्यक्त्वा तर्वन्तरमिवास्थितः । पुनस्तदपि संत्यज्य गच्छत्यन्यदपि क्षणात् ॥" इत्यादिश्लोकाशयेन "वासांसि जीर्णानि" इतिश्लोकाशयोऽसंभिन्न इति गीताश्लोकसादृश्यं तत्र तत्र समुपलभ्यते । उत्पत्तिप्रकरणस्थ "तच्चित्तास्तद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च तन्नित्यं तुष्यन्ति च रमन्ति च ॥" इति श्लोकश्च "मच्चित्ता मद्गतप्राणा" इति गीतास्थश्लोकमनुकरोत्येव । "यस्मान्नोद्विजते लोकः" "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव", "अहमेवेति सर्वत्र यः पश्यति स पश्यति" इत्यादिश्लोकसादृश्यं बहूपलभ्यत इति गीता योगवसिष्ठमनुकरोति तद्वैनामिति परिनिष्ठितबुद्धिभिरेव सुनिश्चेयम् ॥ कथावर्णनसंवादोभयनयोर्दृश्यते यदा हि तारुण्यभूषणभूषितः समग्रराज्यश्रीरपि तां नैवारोढुमैच्छत् जगदेकनाथो दशरथतनयो लक्ष्मणावरजस्तदा वसिष्ठविश्वामित्राभ्यां प्रतिबोधितः सुरकर्मासुरनाशनं प्रारेभे । यथैव हि श्रीकृष्णप्रतिबोधितोऽर्जुनः समराय प्रवृत्तः । आभ्यां ग्रन्थरत्नाभ्यां वेदान्ताध्ययनेन संसारपराङ्मुख एव भवति जीव इत्यज्ञानामाक्षेपोपि निरस्यते । सुख-

हृद्यदृष्टान्तादिभिर्गूढमप्यात्मतत्त्वं वस्तु यथास्मिन् ग्रन्थे हस्तामलकमिव दरीदृश्यते तथा नैवान्यत्रेत्यसर्वविदां धाष्टर्य-मप्यस्माकं ग्रन्थदर्शनपारवश्यमेव मुखरीकरोतीति क्षन्तव्यं तत्त्वविद्भिः।

अथास्मिन् प्रसंगे रामायणमेवादौ विरचितवान् महर्षिरुतैतं व्यररचदेककर्तृकमेवैतद्ग्रन्थरत्नद्वयं न वेत्युभयमपि विचारणं नाप्रासंगिकं स्यात्। यद्युभयमप्येतद्रत्नद्वयमेकेनैव कविना प्रणीतमपि परस्परस्मिन्नोल्लेख अन्योन्ययोरित्येत-न्नैतच्चित्रं शब्दब्रह्मज्ञस्य मुनेः। कथाप्रसंगतो ह्येतन्निर्णेतुं शक्यं यत् दशरथाभिपालितो लक्ष्मणाग्रजन्मा विनश्वरमेतच्चरा-चरं दृष्ट्वा विमनस्को यदा यौवराज्यमपि नारोढुमैच्छत् तदा श्रीकृष्णोर्जुनमिव कुलगुरुर्भगवान् वसिष्ठः प्राबोधयदधीत-विद्यं युवराजं रामचन्द्रम्। रामायणं तु ततः पश्चात् इति—"प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवान् ऋषिः। चकार चरितं कृत्स्नं विचित्रपदमर्थवत्॥ कृत्वा तु तन्महाप्राज्ञः सभविष्यसहोत्तरं। चिन्तयामास को न्वेतत्प्रयुञ्जीयादिति प्रभुः॥ तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः। अगृहीतां ततः पादौ मुनिवेषौ कुशीलवौ॥" एभी रामायणश्लोकै-र्निवृत्तवनवासस्य प्रभोः पुत्रजन्मानन्तरमेवैतच्चरितमिति—अनयोः पूर्वापरीभावः सुस्पष्टं विज्ञेय इत्यतो विस्तरभया-न्नान्यतोदृष्टिं संचारयामः।

एककर्तृकमेतन्न वेति विशये न प्रसिद्धिमात्रं विदुषामामोदावहं स्यात् यद्यन्यन्नकिंचिदुपलभ्येत। उपलभ्यते चात्र भाषासादृश्यं, रचनासाम्यमलङ्कारवैशिष्ट्यं च। यथैवायं कविकुलशिरोमणिश्चरितवर्णनप्रस्तावे सुललितां वाणीं प्रादुरकरोत्तथैव ब्रह्मवर्णनसमयेपि। सादृश्यमनयोर्यत्र वर्णनप्रस्तावः समः समायाति तत्र सुरुचिरं प्रतिभातीति स्पष्टं तद्विदाम्। वसन्तवर्षाशरच्छिशिरर्तूनां वर्णनं रामायणे तत्तत्स्थलविशेषे यादृशं प्रतिभाति तादृशमेवास्मिन् ग्रन्थेप्युपलभ्यते तत्तत एवावगन्तव्यं सुधीभिः॥ भगवान् वाल्मीकी रामायणे सादृश्यविशिष्टमुपमाद्यलङ्कारं प्रायः प्रायुक्तं। उपमा-लङ्कारो हि प्रियस्तत्रभवतः। सा चेयं रीतिरस्मिन्नपि ग्रन्थे विशेषतो दरीदृश्यते। प्रसादसादृश्यमप्यभिन्नमनयोरित्येतत्स-हृदयैरेवाकलनीयम्। ग्रन्थप्रकाशकाज्ञामनुपालयद्भिरस्माभिर्मर्यादाभङ्गभिया नैतदुदाहरणैर्वितन्यते। एवं च वाल्मीकि-प्रोक्तमेतद्ग्रन्थद्वयमिति स्वीकारे वाल्मीकेरनन्तरं जायमानस्य भगवतोऽर्जुनस्य च कथाप्रपञ्चः कथमत्र वक्तुं शक्यः। सर्वथाऽयमर्जुनकथाविस्तारः श्रीमद्भगवद्गीतामनुकरोत्येवेति "न जायते म्रियते" (स० ५२।३६), "य एनं वेत्ति हन्तारम्" (स० ५२।३७), "कायेन मनसा बुद्ध्या" (स० ५३।९), "मन्मना भव मद्भक्तो" (स० ५३।३४), "निर्मानमोहा जितसंगदोषा" (स० ५३।६६) इत्यादिश्लोकानुपूर्व्यभेदेन ज्ञायते। अन्ये च श्लोकाः श्लोकार्धाश्चरणाश्च बहुशोऽप्येकरूपा एवेति अयं तामनुकरोति सार्वेनमिति इतिहासविद्भिरेव विनिर्णेयम्। आपाततः संगतिरेवं संगमयितुं शक्या यत् "भविष्यति कदा ब्रह्मन् सोऽर्जुनः पाण्डुनन्दनः। कीदृशीं च हरिस्तस्य कथयिष्यत्यसक्तताम्॥" इति भवि-ष्यद्विषयकोऽयं प्रश्नस्तादृगेवेदमुत्तरं चेति न पूर्वापरीभावविपर्ययः। "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इति वृद्धवचनमपि दिव्यज्ञानेनोपदृष्टाऽर्जुनकथापि वाल्मीकिना पूर्वं प्रोक्तेति समर्थयति। भगीरथादिकथाप्रसंगेनापि एककर्तृ-कमेतद्द्वयमित्यनुमीमहे यतो गङ्गावतरणकथा सविस्तरेऽप्यस्मिन् ग्रन्थे सूत्ररूपैर्द्वित्रिश्लोकैरवसितप्राया। तामेवानुपपत्तिं परिबुद्ध्येव भगवान् श्रीमद्रामायणे सविस्तरां तां प्रोवाच॥ श्रीमच्छङ्कराचार्यचरणा ब्रह्मप्रतिपादनसमयेऽनादिरूपाम-विद्यां यादृशीं प्रोचुः स प्रकारो नापरिचितो वेदान्तविदाम्। भगवता तु निर्वाणप्रकरणस्योत्तरार्धे "अचेत्यचिन्मयं विश्वं विष्वगाभाति चिन्नभः। अत्र चिच्चेतनं चेदं चेत्यमप्येवमात्मकम्" इत्यादिना अविद्यास्वरूपं प्रावोचि। चित्स्वरूपमेवैत-त्सर्वमविद्यावशात्पृथिव्यादिस्वरूपेण भासते। तस्या निवृत्तौ नातिरिक्तं किंचित् "कुतः पृथ्व्यादयः केन के नाम कथ-मुत्थिताः। चिद्व्योमेत्थमिदं शान्तं प्रकचत्यात्मनात्मनि॥" इत्यादिना प्रदर्श्यते॥

एतच्च सुललितमध्यायात्मकं वर्णनं भगवतोपवर्णितमविद्यास्वरूपाकलनायातीवोपयोगीति ततोऽवधार्यं सुधीभिः। परं चैतत्सुस्पष्टं स्यात्तद्विदां यदाचार्यपादैरविद्यास्वरूपं व्याकृतं ततो नातिभिन्नमेतदिति आचार्यपादाविष्कृताविद्या निर्मू-लेति वदतां नव्यानां मतमेव निर्मूलमिति।

सोऽयं वैराग्य–मुमुक्षुव्यवहार–उत्पत्ति–स्थिति–उपशमरूपपञ्चप्रकरणयुतः **पूर्वो भागः**। तत्र **वैराग्यप्रकरणे** श्रीमल्लक्ष्मणावरजस्य तीर्थयात्रासमनन्तरं वैराग्यं समजनि–इत्यवर्णयद् ग्रन्थकारः। द्वितीये च **मुमुक्षुव्यवहारप्रक-रणे** कथं मयाऽज्ञेनाल्पमतिना ब्रह्मज्ञानसमं दुष्करमध्यवसातुं शक्यमिति शङ्कां स्वयमेव समर्थ्य यच्छ्रवणेन पङ्गुरपि महागिरिमुल्लङ्घयेदित्येतादृशं–"सारेण पुरुषार्थेन स्वेनैव गरुडध्वजः। कश्चिदेव पुमानेव पुरुषोत्तमतां गतः॥ पौरुषेणैव यत्नेन ललनावलिताकृतिः। शरीरी कश्चिदेवेह गतश्चन्द्रार्धचूडताम्॥" "आलस्यं यदि न भवेज्जगत्यनर्थः को न स्याद्बहु-धनको बहुश्रुतो वा। आलस्यादियमवनिः ससागरान्ता संपूर्णा नरपशुभिश्च निर्धनैश्च॥" इति वचनजातं प्रवर्तयता

महामुनिना किमिव नोपकृतम् । उत्पत्तिप्रकरणं च विविधानेकविधदृष्टान्तविशालं अविद्याद्यनेकजिज्ञास्यपदार्थोपबृंहितम् । ब्रह्मस्वरूपवर्णनप्रोल्लासितं ब्रह्मणः सकाशादेवेदं सर्वमपि समुत्पद्यते नान्यः कर्ताऽस्य दृश्यस्येति सिद्धान्तं—"कटकाङ्गदकेयूरयुक्तयः कनकादिव । सर्वा एवोत्थिता राम ब्रह्मणो जीवराशयः ॥" इत्यादिग्रन्थरत्नैः स्थिरयति ॥ चतुर्थे च स्थितिप्रकरणे संसारोत्पत्तिस्थितिप्रदर्शयिता भगवता ब्रह्मैवेदं सर्वं जगदिति—"ब्रह्म सर्वमिदं विश्वं विश्वातीतं च तत्पदम् । वस्तुतस्तु जगन्नास्ति सर्वं ब्रह्मैव केवलम् ॥" इत्यादिभिरुपदिश्यते । उपशमप्रकरणं चान्तिमं संसार-मोक्षस्वरूप-स्वात्मविचार-वैराग्य-मुक्तामुक्तविचाराद्यनेकरत्नोत्तमपरिष्कृतं द्वितीयसागरमिव—"अथापदं प्राप्य सुसंपदं वा महामतिः स्वप्रकृतं स्वभावम् । जहाति नो मन्दरवेल्लितोपि शौक्ल्यं यथा क्षीरमयाम्बुराशिः ॥" इत्युपदिशति ।

द्वितीये भागे पूर्वोत्तरार्धयुतं निर्वाणप्रकरणमेवाविरकार्षीत्तत्रभवान् वल्मीकजन्मा कविसार्वभौमः । तदेतदतिनिगूढविषयमपि कविवरवाक्पाटवीपेशलतया जडधियामप्युद्बोधकरमतिहृद्यैर्नूत्नैश्च दृष्टान्तीभूतकथाभिर्विशदीकृतान्तर्भागं सुकोमलतया रामायणमप्यतिशेत इत्यत्र न कोऽपि शङ्कालेशावतारः ॥

निर्वाणप्रकरणेऽप्यस्मिन् यत्र सांसारिकाणां शिक्षाप्रदस्थलं समुपैति तत्र नोदास्ते भगवान् । समुपजातवैराग्यो राजा शिखिध्वजः संपन्नमपि राज्यं यदा त्यक्तुमैच्छत् तदा मणिकाचदृष्टान्तेन हस्तिहस्तिपककथोपोद्बलितेन पुनः प्रत्यवस्थाप्यते । प्रसंगश्चायं कश्चनैकः पुमान् तपश्चरन्नग्रे सिद्धमभीष्टं चिन्तामणिमवलोक्य संजातहर्षोऽभाग्यस्य ममायं कुतो मणिः स्याद्दृश्यते चायं मणिरिति शङ्काहतात्मा "अयं मणिर्मणिर्नायं मणिश्चेत्तद्भवेन्न सः । स्पृशामि न स्पृशाम्येनं कदाचित् स्पर्शतो व्रजेत् ॥" इति वदन्मणिमस्पृशन्नेवावतस्थे । एवं बहुसमयेऽतीते हेलयोज्झितश्चिन्तामणिरुड्डीय तत्स्थाने काचमणिः प्रादुरभूत् । पूर्वं चिन्तामणिगमनात्खिन्नः स पुमान् दग्धमणिं तमादाय "सर्वं चिन्तामणेरस्मात् प्राप्यते किं धनैरिह" इति मन्यमानो देशान्तरं दुर्गतिं च ययौ । वरमद्य कपोतः श्वो मायूरात् इतिवद्यदि पूर्वोपस्थापितश्चिन्तामणिस्तेन गृहीतः स्यात्तदा नेयमापत्तिरापन्ना स्यात् ॥ अपरश्च—अतिगहने विन्ध्यवने कश्चनैको हस्ती हस्तिपकेन लोहजालेन निगडितः स्वर्गार्गलमसुर इव महायूथपयूथपश्चायं दिनत्रयेण जालं बभञ्ज । यावत्सजालं भिनत्ति स तावदेव परमोच्चतराद्वृक्षाग्रात्तन्मस्तकेऽवतर्तुमुदपतद्धस्तिपकः सदैवदुर्विलसितेन करिणोऽग्रे न्यपतत् । पुरःपतितस्यास्य दलने किमिव पौरुषं ममेति कलयन् रिपुमपि तं न जघान । विततं सेतुमुत्सार्याम्भसो विपुलौघ इव सजालं भङ्क्त्वाऽतिगहनं वनं ययौ । गते गजे तेनैव समं व्यथां त्यक्त्वा समुत्थितो हस्तिपको यत्नाद्गुल्मकान्तरितं तं पुनरप्यन्वियेष । परया राजसामग्र्या खातवलयादि कृत्वा पुनस्तं बबन्ध गजम् । कथाद्वयेऽप्यस्मिन् समागतं समयमतिक्रम्यान्यत्रान्वेषणपरो मूर्ख एव भवति तत्—"मौर्ख्यादागामिनं कालं वर्तमानक्रियाक्रमैः । अशोधयन्नरो दुःखं याति विन्ध्यगजो यथा ॥" इत्यादिनोपदिशति भगवान् ।

निर्वाणप्रकरणे मुक्तैः कर्मपरित्यागः कर्तव्यो न वेति विचारो नितरां शोभामापादयेत् इत्यत्र न वितर्कशङ्कावसरप्रसरः । ते च मुक्ता ज्ञानेनाप्लावितान्तःकरणाः समदृष्टयो न कर्मफलभाजो भवन्ति । न च कर्माकरणेपि शास्त्राज्ञोल्लङ्घनाघमुपयान्ति । कर्म च चित्तशुद्धिद्वारा मोक्षार्थमेव समाश्रीयते । स च मोक्षो हस्तगतो मुक्तानामिति तैः किमर्थं प्रयत्येत कथं च ते विधिनिषेधार्हा भविष्यन्ति ।

आचार्यचरणा ह्यस्मिन् विषये यत्प्रतिपादयन्ति न तत्परोक्षं सुधियाम् । केचिच्च ज्ञानोत्तरमप्यवश्यमेव कर्म कर्तव्यमिति प्रतिपादयन्ति । तेषां ह्ययमाशयः—कर्म आचरितवतां पुंसां कालान्तरेणोदिते ज्ञानभास्करे परेषामुपदेशार्थत्वात् ज्ञानिनः प्रवृत्तिनिवृत्तिनियोगानर्हत्वेन निवृत्तेरनुपपादनाच्च तत्त्यागः कथमुपपद्येत । एवं च ज्ञानोत्तरं कर्मावश्यं कर्तव्यमित्येके । सर्वसंन्यासादेव मोक्ष इत्यपरे "अभिवाञ्छेन्न मरणमभिवाञ्छेन्न जीवितम् । यथाप्राप्तसमाचारो विचरेदविहिंसकः ॥ हेयोपादेयदृष्टी द्वे यस्य क्षीणे हि तस्य वै । क्रियात्यागेन कोऽर्थः स्यात्क्रियासंश्रयणेन वा ॥" इत्यादिना भगवान् महर्षिः संन्यासाभावेपि मोक्षमुपपादयति । अवश्यमेव कर्म इत्याग्रहाभावं प्रतिपादयति च ॥ "असंसक्तमनो यस्य स तीर्णो भवसागरात् । शुभाशुभाः क्रिया नित्यं कुर्वन् परिहरन्नपि ॥ पुनरेति न संसारमसंसक्तमना मुनिः ॥" इति परमनिष्कर्षो भगवतः ॥

ननु "पुस्तकी भवति पण्डित" इत्यादीनि वृद्धवचनान्युपलभ्यन्ते केवलपुस्तकमात्रसंग्रहणेन केवलवाचनेन वा गुरूपदिष्टं विना कथमध्येतुं शक्यं शास्त्रम् । गुरवश्च यत्र तत्र नोपलभ्यन्ते इति मुमुक्षूणामपि बहूनां संकुचित एवायं पन्था इति चेन्न । गुरोरभावेऽपि पुनः पुनः शास्त्रमभ्यसतां जनानां केवलवाचनादपि ज्ञानं भवति । उत्तरोत्तरवाचनेन च पूर्वैः पूर्वो ग्रन्थः सरलतां समायाति । तदेतत्—"कारणं मौर्ख्यमेवास्य तच्चास्मादेव शास्त्रतः । किञ्चित्संस्कृतबुद्धीनां वाचितादेव शाम्यति ॥ अबुद्धमुत्तरग्रन्थात्पूर्वं पूर्वं हि बुध्यते ॥" इत्यादिना गुरूनुपसर्तुं लज्जमानानामपि न स संकुचितः पन्थेत्यादिना प्रोत्साहयत्यलसान् वाल्मीकिमहर्षिः ॥

तस्यास्य ग्रन्थस्य सटीकं संस्करणद्वयमद्यावधि प्राचीकशन् निर्णयसागराधिपतयः श्रेष्ठिवराः । तृतीयं संस्करणमिदं इदानीं समुपह्रियते पण्डितमण्डलीमुदर्थं गीर्वाणगिराविष्कृतप्राचीनग्रन्थततिप्रकाशनबद्धादरैस्तदधिपतिभिः श्रीमद्भिः पाण्डुरङ्गश्रेष्ठिभिरिति महान्त उपकारभरा विद्वत्कुलस्याकिञ्चनस्य । द्वितीयसंस्करणप्रदर्शनेन यदुत्खातबहुलभूमिषु रथेन सञ्चरामो वयमितीव बुद्धिः समुपजायते, खेदश्च तत्रत्यवर्णसंधिविच्छेदाद्यशुद्धिबाहुल्यदर्शनैः । तृतीयं चैतत्संस्करणं पुस्तकसंस्कारकुशलैः पण्डितवरैः आचार्यशास्त्रिमहोदयैरादर्शपुस्तकसाहाय्यसम्पादनेन महतायासेन च वाचकमण्डली-खेदं प्रमार्जयद्भिरेव संपादितमिति नैतच्चित्रं निर्गलिताशुद्धिकमेवाविरास्त इति । ग्रन्थस्यास्य प्रस्तावनालेखनकर्मणि आचार्यशास्त्रिभिर्नियुक्ता वयं धुरि नियुक्तदम्य इवासामर्थ्यं समर्थयन्तोपि विद्वज्जनसेवासमयैकपक्षपातेनास्य ग्रन्थस्य संस्करणे शास्त्रिमहोदयकृतभूरिपरिश्रमभरावलोकनेनैव च नाधिकाराभावं समर्थयामः । तस्यास्य समुद्योगविशेषस्य सफलीकरणं विद्वदधीनमेवेति ते नोनुगृह्णीयुरिति संप्रार्थयाम इति

प्रमाणप्रमेयाधिगतजनविधेयः

**शास्त्राचार्यो भार्गवशास्त्री ।**



यो विचारयति प्राज्ञो न स भूयोऽभिजायते ॥ ३
अस्मिन्रामायणे रामकथोपायान्महाबलान् ।
एतांस्तु प्रथमं कृत्वा पुराहमरिमर्दन ॥ ४
शिष्यायास्मि विनीताय भरद्वाजाय धीमते ।
एकाग्रो दत्तवांस्तस्मै मणिमब्धिरिवार्थिने ॥ ५
तत एते कथोपाया भरद्वाजेन धीमता ।
कस्मिंश्चिन्मेरुगहने ब्रह्मणोऽग्र उदाहृताः ॥ ६
अथास्य तुष्टो भगवान्ब्रह्मा लोकपितामहः ।
वरं पुत्र गृहाणेति तमुवाच महाशयः ॥ ७

भरद्वाज उवाच ।

भगवन्भूतभव्येश वरोऽयं मेऽद्य रोचते ।
येनेयं जनता दुःखान्मुच्यते तदुदाहर ॥ ८

श्रीब्रह्मोवाच ।

गुरुं वाल्मीकिमत्राशु प्रार्थयस्व प्रयत्नतः ।
तेनेदं यत्समारब्धं रामायणमनिन्दितम् ॥ ९
तस्मिञ्छ्रुते नरो मोहात्समग्रात्संतरिष्यति ।
सेतुनेवाम्बुधेः पारमपारगुणशालिना ॥ १०

श्रीवाल्मीकिरुवाच ।

इत्युक्त्वा स भरद्वाजं परमेष्ठी मदाश्रमम् ।
अभ्यागच्छत्समं तेन भरद्वाजेन भूतकृत् ॥ ११
तूर्णं संपूजितो देवः सोऽर्घ्यपाद्यादिना मया ।
अवोचन्मां महासत्त्वः सर्वभूतहिते रतः ॥ १२
रामस्वभावकथनादस्माद्वरमुने त्वया ।
नोद्वेगात्स परित्याज्य आसमाप्तेरनिन्दितात् ॥ १३
ग्रन्थेनानेन लोकोऽयमस्मात्संसारसंकटात् ।
समुत्तरिष्यति क्षिप्रं पोतेनेवाशु सागरात् ॥ १४
वक्तुं तदेवमेवार्थमहमागतवानयम् ।
कुरु लोकहितार्थं त्वं शास्त्रमित्युक्तवानजः ॥ १५
मम पुण्याश्रमात्तस्मात्क्षणादन्तर्द्धिमागतः ।
मुहूर्ताभ्युत्थितः प्रोच्चैस्तरङ्ग इव वारिणः ॥ १६
तस्मिन्प्रयाते भगवत्यहं विस्मयमागतः ।
पुनस्तत्र भरद्वाजमपृच्छं स्वस्थया धिया ॥ १७

त्मना ॥' इति । तत्र पूर्वकाण्डस्य रामचरितकथाव्याजेनोपबृंहणं षट्काण्डं सोत्तरं पूर्वरामायणम्, उत्तरकाण्डस्य षट्प्रकरणमिदं सोत्तरमिति। यथाच केषुचित्स्मार्तकर्मसु स्त्रीशूद्रसाधारणोऽधिकारस्तथास्यापि श्रवणे पुराणवत् । 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः', 'जनश्च शूद्रोऽपि महत्त्वमीयात्' इत्यादिवचनलिङ्गात् । 'नावेदविन्मनुते तं बृहन्तं', 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिवचनं त्ववेदविदः श्रौतज्ञानानधिकारपरमिति केचित् । अपरोक्षज्ञानापर्यवसानपरमित्यन्ये । वेदपूर्वकत्वप्राशस्त्यपरमित्यपरे । सर्वथाप्यस्त्येवान्येषामपि पौराणिकसाधारणे ज्ञानेऽधिकारः 'स हि सर्वैर्विजिज्ञास्य आत्मा वर्णैस्तथाऽऽश्रमैः' इत्यादिवचनेभ्यः । तत्र श्रौतज्ञाने पूर्वकाण्डोक्तधर्मानुष्ठानजन्या चित्तशुद्धिरिवेहापि पूर्वरामायणोपदर्शितस्वस्ववर्णाश्रमोचितनिष्कामधर्मानुष्ठानजा चित्तशुद्धिर्जिज्ञासोत्पादनद्वारा हेतुरिति पूर्वोत्तररामायणयोर्हेतुहेतुमद्भावसंगतिं दर्शयन्सर्वानर्थनिवृत्तिरूपं प्रयोजनान्तरमाह—**कथोपायानि**ति । कथा एव धर्मतत्त्वज्ञानानुष्ठानेश्वरप्रपत्तिषु ज्ञानाधिकारप्रापकेषूपायो यस्मिन् ग्रन्थे स पूर्वरामायणग्रन्थः कथोपायः । काण्डभेदाभिप्रायं बहुवचनम् । तानादौ विचार्य तदर्थानुष्ठानप्राप्ताधिकारः सन्योऽधिकारीमान्वक्ष्यमाणषट्प्रकरणरूपान्मोक्षोपायान्विचारयति प्राज्ञः प्रज्ञाप्लुष्टकामकर्मवासनाऽज्ञानबीजः स भूयो नाभिजायते जन्मादिदुःखभाङ् न भवति । विमुच्यत इत्यर्थः ॥ ३ ॥ अस्मिन्सांप्रतिके षट्पञ्चाशत्सहस्रसंमिते रामायणे अनादिकालाभ्यस्तरागादिदोषोच्छेदक्षमत्वान्महाबलान् रामकथारूपांश्चतुर्विंशतिसहस्रमितान्षट्काण्डानहं कृत्वेत्युत्तरेण संबन्धः ॥ ४ ॥ शिष्यविशेषणान्यधिकारसंपत्तिद्योतकानि । एक ऐवाग्रो ग्रहणधारणप्रचारपटुः प्रधानशिष्यो यस्य स तथा । अनुग्रहप्रेमसमाहितचित्तो वा । अर्थिन इति भरद्वाजस्यापि विशेषणम् ॥ ५ ॥ एते मत्तः प्राप्ताः पूर्वरामायणरूपाः । उदाहृताः कीर्तिताः ॥ ६ ॥ वरव्याजेन जगदुद्धारसाधनं मोक्षशास्त्रं करणीयमिति महानाशयोऽभिप्रायो यस्य स तथा ॥७॥ भूतं पूर्वमुत्पन्नम् । भव्यमुत्पत्स्यमानम् । अथ पूर्वरामायणार्थानुष्ठानजन्यचित्तपरिशुद्धिकाले । जनता अधिकारिजनसमूहः ॥ ८ ॥ अत्रास्मिन् पृष्टेऽर्थे । यद्यस्मात्समारब्धं नतु कृत्स्नं कृतम् ॥ ९ ॥ श्रुते अर्थात्कृत्स्नसिद्ध्यनन्तरमिति गम्यते । 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति' इत्यादिस्मृतिप्रसिद्धानन्तगुणशालिना ॥ १० ॥ ११ ॥ यद्यपि सृष्टौ रजःप्रधानस्तथापि जगदुद्धारोद्भूतकरुणत्वान्महासत्त्वः सत्त्वगुणसंपन्नोऽतएव सर्वभूतहिते रतः ॥ १२ ॥ ल्यब्लोपे पञ्चमी । रामस्वभावकथनं प्रस्तुत्येत्यर्थः । उद्वेगाद्विस्तृतग्रन्थनिर्माणक्लेशप्रयुक्तात्स ग्रन्थ आसमाप्तेर्न परित्याज्यः । अवश्यं समग्रो निर्मातव्य इति यावत् ॥ १३ ॥ संसारसंकटादित्यपादानपञ्चम्या समुत्तीर्णस्यात्यन्तिकं संसारविश्लेषं दर्शयति । क्षिप्रं क्षेपः प्रेरणं तत्स्वभावेन पोतेन । व्यत्ययेन प्रथमा । अन्यथा आशुपदेन पुनरुक्त्यापत्तेः । 'क्षिप्रपोतेन' इति पाठश्चेन्न कापि चिन्ता । आशु ज्ञानोदयसमकालमेव । ननु पोतेन सागरसमुत्तरणमेवाप्रसिद्धमिति कथं दृष्टान्तः । एवं तर्हि सागरे पतितस्य पोतेनोद्धरणमेवात्र समुत्तरणं विवक्षितं आशुपदस्वारस्यात् । अतएवापादानपञ्चम्येव कृतेति ॥ १४ ॥ तत्तस्माद्धेतोर्भरद्वाजद्वारा आज्ञासंदेशसंभवेऽप्येवमर्थं वक्तुमयं जगन्मान्योऽहमेवागतवानिति संबन्धः ॥ १५ ॥ ब्रह्मपादस्पर्शेन पुण्यतमत्वमाश्रमस्य ॥१६॥ स्वस्थया धियेत्युक्तेः पूर्वं ब्रह्मागमनहर्षविस्मयव्यग्रचित्तत्वाद्ब्रह्म-

१ शिष्यायास्मै इति पाठः.

२ दवाम्भ इति पाठः.

किमेतद्ब्रह्मणा प्रोक्तं भरद्वाज वदाशु मे ।
इत्युक्तेन पुनः प्रोक्तं भरद्वाजेन तेन मे ॥ १८

भरद्वाज उवाच ।

एतदुक्तं भगवता यथा रामायणं कुरु ।
सर्वलोकहितार्थाय संसारार्णवतारकम् ॥ १९
मह्यं च भगवन्ब्रूहि कथं संसारसंकटे ।
रामो व्यवहृतो ह्यस्मिन्भरतश्च महामनाः ॥ २०
शत्रुघ्नो लक्ष्मणश्चापि सीता चापि यशस्विनी ।
रामानुयायिनस्ते वा मन्त्रिपुत्रा महाधियः ॥ २१
निर्दुःखितां यथैते नु प्राप्तास्तद्ब्रूहि मे स्फुटम् ।
तथैवाहं भविष्यामि ततो जनतया सह ॥ २२
भरद्वाजेन राजेन्द्र वदेत्युक्तोऽस्मि सादरम् ।
तदा कर्तुं विभोराज्ञामहं वक्तुं प्रवृत्तवान् ॥ २३
शृणु वत्स भरद्वाज यथापृष्टं वदामि ते ।
श्रुतेन येन संमोहमलं दूरे करिष्यसि ॥ २४
तथा व्यवहर प्राज्ञ यथा व्यवहृतः सुखी ।
सर्वासंसक्तया बुद्ध्या रामो राजीवलोचनः ॥ २५
लक्ष्मणो भरतश्चैव शत्रुघ्नश्च महामनाः ।
कौसल्या च सुमित्रा च सीता दशरथस्तथा ॥ २६
कृतास्त्रश्चाऽविरोधश्च बोधपारमुपागताः ।
वसिष्ठो वामदेवश्च मन्त्रिणोऽष्टौ तथेतरे ॥ २७
धृष्टिर्जयन्तो भासश्च सत्यो विजय एव च ।
विभीषणः सुषेणश्च हनुमानिन्द्रजित्तथा ॥ २८
एतेऽष्टौ मन्त्रिणः प्रोक्ताः समनीरागचेतसः ।
जीवन्मुक्ता महात्मानो यथाप्राप्तानुवर्तिनः ॥ २९
एतैर्यथा हुतं दत्तं गृहीतमुषितं स्मृतम् ।
तथा चेद्वर्तसे पुत्र मुक्त एवासि संकटात् ॥ ३०

अपारसंसारसमुद्रपाती
　लब्ध्वा परां युक्तिमुदारसत्त्वः ।
न शोकमायाति न दैन्यमेति
　गतज्वरस्तिष्ठति नित्यतृप्तः ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे सूत्रपातनको नाम द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ३

भरद्वाज उवाच ।

जीवन्मुक्तस्थितिं ब्रह्मन्कृत्वा राघवमादितः ।
क्रमात्कथय मे नित्यं भविष्यामि सुखी यथा ॥ १

---

वाक्यमर्थतो नैवधारितमिति गम्यते । अतएवापृच्छमित्याह ॥ १७ ॥ १८ ॥ यथा पूर्वं कथोपायरामायणं कृतं तथा मोक्षोपायरामायणमिति शेषः ॥१९॥ राम कथं व्यवहृतो व्यवहृतवान् किमङ्ग शोचन्नितरवदुत जीवन्मुक्तवत् ॥ २० ॥ चकाराद्दशरथपरिग्रहः । चकारोऽपिशब्दद्वयं च तत्परिवारसमुच्चयार्थम्॥२१॥ स्फुटं मद्बोधपर्यवसितम् । जनतया त्वदुपदेशश्रवणकृतार्थजनसमूहेन ॥ २२ ॥ सादरमुपायनाहरणोपगमनप्रणतिप्रार्थनायादरसहितम् ॥ २३ ॥ संमोह आत्मतत्त्वापरिज्ञानं तद्रूपं मलं पङ्कम् । अलमिति वा छेदः ॥ २४ ॥ असंसक्तया मिथ्येति निश्चयादनभिनिविष्टया ॥ २५ ॥ महामना अपरिच्छिन्नवस्तुनिवेशात्तथाविधचित्तः । चकाराः पूर्ववत् ॥ २६ ॥ कृतास्त्राविरोधौ रामसखायौ । बोधपारं चरमं बोधं यदुत्तरं बोद्धव्यान्तरापरिशेषः ॥ २७ ॥ सत्यो यथार्थवक्ता । इन्द्रजिदयमन्य एव सुग्रीवामात्यः ॥ २८ ॥ अन्तः समनीरागचेतसो बहिस्तु यथाप्रारब्धं प्राप्तमनुवर्तमानाः ॥२९॥ हुतं दत्तमिति श्रौतस्मार्तकर्मोपलक्षणम् । गृहीतमुषितमिति तत्तत्कालोचितलौकिकसव्यवहारोपलक्षणम् । स्मृतमित्युभयगोचरपूर्वापरप्रतिसंधानोपलक्षणम् ॥३०॥ युक्तिं तत्त्वनिश्चयादन्तः समरसत्वम् । उदारसत्त्वो दृढीकृतोत्कृष्टज्ञानबलः । इष्टवियोगजं दुःखं शोकः, दीनः कृपणस्तद्भावो दैन्यम्, तयोर्मूलमभिमानज्वरः स गतो यस्य । निरतिशयानन्दात्मना स्थितः सन्नित्यतृप्तः ॥३१॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे सूत्रपातनको नाम द्वितीयः सर्गः ॥ २ ॥

दृश्यसंमार्जनोपायो वासनाभेदलक्षणम् ।
रामस्य तीर्थयात्रा च विस्तरेणात्र वर्ण्यते ॥ १ ॥

यथा रामादयो जीवन्मुक्ता व्यवहृतवन्तस्तथा त्वं व्यवहरेत्युक्तो जीवन्मुक्तस्थितिप्राप्त्युपायं रामस्य तत्प्राप्तिक्रमोपवर्णनश्रवणद्वारैव जिज्ञासमानो भरद्वाजः पृच्छति—**जीवन्मुक्तेति** । राघवमादितः कृत्वा वर्ण्यत्वेन प्रधानीकृत्य जीवन्मुक्तस्थितिं कथयेति संबन्धः । अथवा राघवं क्रमाज्जीवन्मुक्तस्थितिं जीवन्मुक्तावस्थं कृत्वा कल्पयित्वा मे आदितः कथय । यथा येन क्रमेणाहं नित्यं सुखी भविष्यामीति संबन्धः । अथवा राघवं संवादकथायामादितः प्रष्टृत्वेन वसिष्ठं च वक्तृत्वेन कृत्वेत्यर्थः । तथाच जनकयाज्ञवल्क्यौ कल्पयित्वा यथा श्रुतिः स्वयमेव संवादकथया तत्त्वं बोधयति तथा त्वमपि बोधयेत्यर्थः । तथाचात्र तत्त्वज्ञत्वेन कल्पितानां दशरथादीनां पूर्वरामायणे मूढचर्यामुक्त्यभावदर्शने नित्यमुक्तस्य च रामस्य 'तस्य ह न देवाश्च नाभूत्या ईशते' इत्यादिश्रुति-

---

१ निर्दुःखितां यथैते तु इति पाठः. २ [illegible] इति पाठः. ३ तावधारयम् इति पाठः. ४ प्रकारेणाहम् इति पाठः.

श्रीवाल्मीकिरुवाच ।

भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
अपुनःस्मरणं मन्ये साधो विस्मरणं वरम् ॥ २
दृश्यात्यन्ताभावबोधं विना तन्नानुभूयते ।
कदाचित्केनचिन्नाम स्वबोधोऽन्विष्यतामतः ॥ ३
स चेह संभवत्येव तदर्थमिदमाततम् ।
शास्त्रमाकर्णयसि चेत्तत्त्वमाप्स्यसि नान्यथा ॥ ४
जगद्भ्रमोऽयं दृश्योऽपि नास्त्येवेत्यनुभूयते ।
वर्णो व्योम्न इवाखेदाद्विचारेणामुनाऽनघ ॥ ५
दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ६
अन्यथा शास्त्रगर्तेषु लुठतां भवतामिह ।
भवत्यकृत्रिमाज्ञानां कल्पैरपि न निर्वृतिः ॥ ७
अशेषेण परित्यागो वासनानां य उत्तमः ।
मोक्ष इत्युच्यते ब्रह्मन्स एव विमलक्रमः ॥ ८
क्षीणायां वासनायां तु चेतो गलति सत्वरम् ।
क्षीणायां शीतसंतत्यां ब्रह्मन्हिमकणो यथा ॥ ९
अयं वासनया देहो ध्रियते भूतपञ्जरः ।
तनुनान्तर्निविष्टेन मुक्तौघस्तन्तुना यथा ॥ १०
वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।

---

विरुद्धशापनिमित्ताज्ञत्वादिवर्णने च न क्षतिः; अनादेर्जीवस्य ब्रह्माभेदबोधनाय श्रुतौ ब्रह्मण एव कार्योपाधिप्रवेशेनागन्तुकजीवभावकल्पनवदविरोधोपपत्तेः ॥ १ ॥ एवं वाल्मीकिः पृष्टो लक्षणस्वरूपसाधनफलैर्जीवन्मुक्तिस्थितिं विस्तरेण विवक्षुः प्रथमं सुखप्रतिपत्तये संक्षिप्य मुक्तिलक्षणस्वरूपे दर्शयति—**भ्रमस्येति** । हे साधो, आकाशे नैल्यवदत्यन्तासंभावितस्य कल्पनया जातस्य जागतस्य जगतः संबन्धिनोऽध्यासलक्षणस्य भ्रमस्य तन्मूलाविद्यावासनोच्छेदेनापुनःस्मरणं यथा भवति तथा विस्मरणं यत्तदेव वरं सर्वोत्कृष्टं मुक्तिलक्षणं स्वरूपं च मन्ये । प्रमाणानुभवाभ्यां निश्चितवानस्मीत्यर्थः । यद्यपि परोक्षज्ञानिनोऽपि सुषुप्तौ निर्विकल्पसमाधौ च दृश्यविस्मरणमस्ति तथापि तन्नापुनःस्मरणम् । अथवा पुनः स्मर्यते येनान्तःकरणेन तत्पुनःस्मरणं न विद्यते यस्मिंस्तत्तथा विस्मरणं स्मरणाभावः । द्वैतप्रतिभासमात्राभावोपलक्षणमेतत् । अथवा विस्मरणमिव विस्मरणम् । यथा विस्मृतविषयस्य सत्येवानुभवितर्यप्रतीतिस्तथा सत्येव चैतन्ये दृश्याप्रतीतिरित्यर्थः । तर्हि किं परमार्थसत्यस्यैव दृश्यस्य सांख्याभिमतमुक्ताविवाप्रतीतिमात्रं तन्नेत्याह—**भ्रमस्येति** । अध्यस्तस्येत्यर्थः । कथं तस्य भ्रमत्वं संस्काराजन्यत्वादित्याशङ्क्याह—**जागतस्येति** । पूर्वपूर्वजगद्व्यवहारजन्यसंस्कारपरिनिष्ठितस्येत्यर्थः । ननु तर्हि दोषजत्वाभावान्निरधिष्ठानत्वाच्च न भ्रमत्वमित्याशङ्क्याह—**आकाशवर्णवज्जातस्येति** । यथा दूरत्वाविमर्शदोषजत्वादाकाशवर्णभ्रमस्तद्वदविद्यादोषाद्ब्रह्मणि जगद्भ्रम इत्यर्थः । तथा चात्यन्तिकदृश्योच्छेदस्तल्लक्षणं, तदुपलक्षितचिन्मात्रावस्थितिः स्वरूपमित्यर्थः ॥ २ ॥ मन्ये इत्यनेन तयोः स्वानुभवसिद्धत्वं दर्शितम् । तर्ह्यस्माभिस्तत्कुतो नानुभूयते तत्राह—**दृश्येति** । दृश्यस्यात्यन्ताभावबोधो बाधस्तं विना । तत् उक्तं लक्षणं स्वरूपं च । अननुभवस्य कालतो देशतश्च व्यापकत्वप्रदर्शनाय कदाचित्केनचिदिति । दृश्यबाधस्तर्हि केन हेतुना तमाह—**स्वबोध इति** । सर्वजगदधिष्ठानप्रत्यगभिन्नात्मतत्त्वसाक्षात्कारादेव स इत्यतस्तत्साक्षात्कारोऽन्विष्यताम् । उपायेन साध्यतामित्यर्थः ॥ ३ ॥ तर्हि तस्य क उपायस्तत्राह—**स चेति** । इहास्मिञ्शास्त्रे अधिगते सतीति शेषः । आकर्णयसि चेत् । यावत्तन्निर्णयमिति शेषः ॥ ४ ॥ उक्तमर्थमेव स्फुटतरमाह—**जगदिति** द्वाभ्याम् । अमुना एतद्ग्रन्थोपदर्शितेन ॥ ५ ॥ अनुभूयत इत्युक्तोऽनुभवः किमात्मचैतन्यमेवोतान्यः । न तावदन्यः । चिद्व्यतिरिक्तस्य जडतया विषयतया चानुभवत्वायोगात् । आत्मैव चेत्स पूर्वमेवास्तीति किं शास्त्रेणेत्याशङ्क्याह—**दृश्यमिति** । सत्यमात्मैवानुभवस्तथाप्यसौ दृश्यसहकृतो न तदनुभवः किंतु मनसो वृत्तिरूपेणात्मतत्त्वसाक्षात्कारबोधेनाविद्यानाशात्तदुपादानकदृश्यमार्जनं दृश्यं कालत्रयेऽपि नास्तीत्येवंरूपं संपन्नं चेन्नित्यसिद्धात्मरूपापि परा निर्वाणनिर्वृतिस्तस्मात्तत्त्वज्ञानादुत्पन्नेव भवतीति केवलस्तद्वारा स्वरूपभूतोऽप्यनुभवः शास्त्रफलमित्यर्थः ॥ ६ ॥ ननु शास्त्रान्तरोपदर्शितोपायैरेव मुक्तिः किं न स्यात्तत्राह—**अन्यथेति** । उक्तोपायापरिग्रहे अकृत्रिमा अजन्या अनादिरज्ञा अज्ञानं येषां अनात्मशास्त्रगर्तेषु लुठतां रागान्धपतनहेतुगर्तप्रायतत्तच्छास्त्रबोधितोपायैरैहिकामुष्मिकविषयासक्त्या प्रवर्तमानानां, अतएव तदुपभोगाय पुनःपुनरिह संसारे भवतां जन्म गृह्णतां पुरुषापसदानामनन्तैर्ब्रह्मकल्पैरपि निर्वृतिर्विश्रान्तिसुखं नास्ति । अनाद्यज्ञानस्य ज्ञानातिरिक्तसाधनसहस्रैरप्यनिवृत्तेरिति भावः ॥ ७ ॥ ननु उपासनाद्युपायान्तरसाध्याः सालोक्यादयोऽन्येऽपि मोक्षाः प्रसिद्धास्तैस्तेषां कथं न निर्वृतिस्तत्राह—**अशेषेणेति** । वासनानां जन्मबीजानामशेषेण यः परित्यागो मूलोच्छेदेनात्यन्तोच्छेदः स मुख्यो मोक्षः । मुचधातोर्बन्धनिवृत्तौ रूढत्वाद्वासनानामेव मुख्यबन्धत्वात्सालोक्यादौ तदभावान्मोक्षशब्दो गौण इति स मुख्य एव विमलैर्विगताविद्यादिमलैः क्रम्यते नान्यैः । कर्मभिरुपासनैः श्रवणादिभिश्च दिनेदिने चित्तवैमल्यमेव सर्ववासनाक्षयान्तं साधनक्रमो यस्य तथाविध इति वार्थः ॥ ८ ॥ ननु वासनापगमेऽपि तद्धेतोर्मनसः सत्त्वात्पुनर्वासना उत्पत्स्यन्ते ततो बन्धोऽपि स्यादित्याशङ्क्याह—**क्षीणायामिति** । मनसो वासनापुञ्जरूपत्वादित्यर्थः ॥ ९ ॥ मनसि नष्टेऽपि स्थूलदेह एव बन्धः स्थास्यतीत्याशङ्क्याह—**अयमिति** । भूतपञ्जरो भूतसमुदायारब्धः, भूतानां प्राणिपक्षिणां पञ्जरस्थानीयो वा । तथाच वासनाक्षये[1] सोऽपि निवर्तेत इत्यर्थः ॥ १० ॥ एवमुपोद्घातेन

---

१ सर्ववासनाक्षये इति पाठः.

मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी ॥ ११
अज्ञानसुघनाकारा घनाहंकारशालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥ १२
पुनर्जन्माङ्कुरं त्यक्त्वा स्थिता संभृष्टबीजवत् ।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥ १३
अपुनर्जन्मकरणी जीवन्मुक्तेषु देहिषु ।
वासना विद्यते शुद्धा देहे चक्र इव भ्रमः ॥ १४
ये शुद्धवासना भूयो न जन्मानर्थभाजनम् ।
ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥ १५
जीवन्मुक्तिपदं प्राप्तो यथा रामो महामतिः ।
तत्तेऽहं शृणु वक्ष्यामि जरामरणशान्तये ॥ १६
भरद्वाज महाबुद्धे रामक्रममिमं शुभम् ।
शृणु वक्ष्यामि तेनैव सर्वं ज्ञास्यसि सर्वदा ॥ १७
विद्यागृहाद्विनिष्क्रम्य रामो राजीवलोचनः ।
दिवसान्यनयद्गेहे लीलाभिरकुतोभयः ॥ १८
अथ गच्छति काले तु पालयत्यवनिं नृपे ।
प्रजासु वीतशोकासु स्थितासु विगतज्वरम् ॥ १९
तीर्थपुण्याश्रमश्रेणीर्द्रष्टुमुत्कण्ठितं मनः ।
रामस्याभूद्भृशं तत्र कदाचिद्गुणशालिनः ॥ २०
राघवश्चिन्तयित्वैवमुपेत्य चरणौ पितुः ।
हंसः पद्माविव नवौ जग्राह नखकेसरौ ॥ २१

श्रीराम उवाच ।

तीर्थानि देवसद्मानि वनान्यायतनानि च ।
द्रष्टुमुत्कण्ठितं तात ममेदं नाथ मानसम् ॥ २२
तदेतामर्थितां पूर्वां सफलां कर्तुमर्हसि ।
न सोऽस्ति भुवने नाथ त्वया योऽर्थी न मानितः ॥ २३
इति संप्रार्थितो राजा वसिष्ठेन समं तदा ।
विचार्यामुञ्चदेवैनं रामं प्रथममर्थिनम् ॥ २४
शुभे नक्षत्रदिवसे भ्रातृभ्यां सह राघवः ।
मङ्गलालंकृतवपुः कृतस्वस्त्ययनो द्विजैः ॥ २५
वसिष्ठप्रहितैर्विप्रैः शास्त्रज्ञैश्च समन्वितः ।
स्निग्धैः कतिपयैरेव राजपुत्रवरैः सह ॥ २६
अम्बाभिर्विहिताशीर्भिरालिङ्ग्यालिङ्ग्य भूषितः ।
निरगात्स्वगृहात्तस्मात्तीर्थयात्रार्थमुद्यतः ॥ २७

---

परां मुक्तिमुपवर्ण्य प्रस्तुतां जीवन्मुक्तिं विवक्षुस्तदर्थं वासनाद्वैविध्यमाह—**वासने**ति ॥ ११ ॥ तत्र मलिनां लक्षयति—**अज्ञाने**ति । वासनाबीजानां प्ररोहे अज्ञानं सुक्षेत्रं तस्मिन्सुघनाकारा विषयानुसंधानाभ्यासोपचिताकारा वासना बीजम् । रागद्वेषादिभिरुपचितत्वात् घनो निबिडोऽहंकार उपसेचकः क्षेत्रिकस्तेन हि सा वर्ध्यमाना संतन्यमाना च शालते शोभते ॥ १२ ॥ शुद्धां लक्षयति—**पुन**रिति । यथा बीजान्तः सूक्ष्मा अङ्कुराः सन्त एव कालजलादिसंबन्धादाविर्भवन्ति तथा वासनान्तर्भाविजन्मपरम्पराः सत्य एव कामकर्मादिनिमित्तवशादाविर्भवन्ति । अत्यन्तासतो जन्मायोगात्तत्र तत्त्वज्ञानेनाविद्याक्षेत्रदाहेनान्तर्गतजन्माङ्कुरनाशेऽपि स्वपरप्रारब्धेन प्रतिबद्धा भृष्टबीजवद्देहधारणमात्रप्रयोजना वासना शिष्यते सा शुद्धेत्यर्थः ॥ १३ ॥ उक्तमेवार्थं स्फुटयति—**अपुन**रिति । **देहिष्वि**ति । देहधारणकार्येण तेष्वपि वासनासद्भावोऽनुमीयत इति भावः ॥ १४ ॥ फलेन सह प्रस्तुतां जीवन्मुक्तिमाश्रयेण लक्षयति—**य** इति । तथाच तत्त्वज्ञानप्लुष्टजन्माङ्कुरशक्तिकवासनामात्रधृतशरीरत्वं जीवन्मुक्तलक्षणं फलितम् ॥ १५ ॥ तत्साधननिरूपणं प्रतिजानीते—**जीवन्मुक्ती**ति । तथाविधं जीवन्मुक्तिपदं रामो यथा येन साधनक्रमेण प्राप्तस्तद्वक्ष्यामि । जरामरणोपलक्षितसर्वानर्थनिवृत्तिस्तत्फलमित्यर्थः ॥ १६ ॥ उक्तार्थमेव स्फुटयन्फलान्तरमाह—**भरद्वाजे**ति । एकविज्ञानेन सर्वविज्ञानमपि तत्फलमित्यर्थः ॥ १७ ॥ विद्यागृहाद्ब्रह्मचर्याश्रमोचितगुरुकुलवासाद्विनिष्क्रम्येत्यर्थात्सर्वविद्यास्थानग्रहणोत्तरमिति गम्यते । नास्ति कुतोऽपि भयं यस्य स तथोक्तः ॥ १८ ॥ विगतज्वरमिति सौराज्यात्प्रजानां ज्वरादिपीडापि नास्ति, किं वाच्यमन्याः पीडा न सन्तीति द्योतनार्थम् ॥ १९ ॥ रामस्य मनस्तीर्थपुण्याश्रमश्रेणीर्द्रष्टुमुत्कण्ठितमभूदिति संबन्धः । पूर्वश्लोकस्थसप्तम्यन्तानामप्यत्रैवान्वयः ॥२०॥ नन्वध्यात्मशास्त्रेऽस्मिंस्तीर्थयात्रोपवर्णनस्य वक्ष्यमाणमृगयोपवर्णनस्य च कः संबन्धः । नच रामचरित्रत्वादेवात्रोपवर्णनम्, रामजन्मादेरप्यत्रैव वर्णनीयत्वापत्तेः पूर्वरामायणवैयर्थ्याच्चेति चेदत्रोच्यते । कथोपायान्विचार्येत्यत्र स्वस्ववर्णोचितयज्ञादिकर्मजन्या चित्तशुद्धिर्ब्रह्मविद्याधिकारे उपयुज्यत इत्युक्तम् । यस्तु वयोविद्याद्यसंपत्त्या यज्ञाद्यनुष्ठातुमक्षमस्तस्य तीर्थयात्रादिनापि यज्ञादिफलचित्तशुद्ध्याधिकारः सिध्यति । 'एते भौमाम्मया यज्ञास्तीर्थरूपेण निर्मिताः' इति वचनादिति सूचनाय तीर्थयात्रोपवर्णनम् । अतएव हि न रामं वृद्धवयस्कं परिकल्प्यात्मजिज्ञासोपवर्णनं कृतमुक्तार्थसूचनानापत्तेः । मृगयोपवर्णनं तु दृष्टकौतुकदर्शनोत्कण्ठाया अप्यात्मजिज्ञासाप्रतिबन्धकत्वात्, यदि तत्कौतुकानुभवमन्तरेण सोत्कण्ठा नापैति तर्हि तदनुभूयैव वा तदसारतानिश्चयेन तदुत्कण्ठामपोह्य निष्प्रत्यूहं श्रवणादिप्रतिष्ठो भवेदिति विशेषबोधनार्थमिति सर्वं समञ्जसम् । राघव एवमुक्तमर्थं चिन्तयित्वा पितुश्चरणौ जग्राह । जीवत्पितृकस्य पितृसंनिधौ पित्राज्ञापूर्वमेव धर्माधिकारादिति भावः ॥ २१ ॥ नाथेति स्वस्य पारतन्त्र्यसूचनार्थम् ॥ २२ ॥ पूर्वां प्राथमिकीम् । न मानितः अभिलषितार्थसंपादनेन न संतोषितः ॥ २३ ॥ अमुञ्चदेव न पुत्रविश्लेषदुःखान्नानुमेने ॥२४॥२५॥२६॥२७॥

---

१ ध्रियते इति पाठः. २ मुक्तिपदे इति पाठः. ३ शुद्धां तां लक्षयति इति पाठः. ४ शक्तिकत्वाद्वासना इति पाठः. ५ शुद्धावधिकार इति पाठः

निर्गतः स्वपुरात्पौरैस्तूर्यघोषेण वादितः ।
पीयमानः पुरस्त्रीणां नेत्रैर्भृङ्गौघभङ्गुरैः ॥ २८
ग्रामीणललनालोलहस्तपद्मापनोदितैः ।
लाजवर्षैर्विकीर्णात्मा हिमैरिव हिमाचलः ॥ २९
आवर्जयन्विप्रगणान्परिशृण्वन्प्रजाशिषः ।
आलोकयन्दिगन्तांश्च परिचक्राम जाङ्गलान् ॥ ३०
अथारभ्य स्वकात्तस्मात्क्रमात्कोशलमण्डलात् ।
स्नानदानतपोध्यानपूर्वकं स ददर्श ह ॥ ३१
नदीतीराणि पुण्यानि वनान्यायतनानि च ।
जङ्गलानि जनान्तेषु तटान्यब्धिमहीभृताम् ॥ ३२
मन्दाकिनीमिन्दुनिभां कालिन्दीं चोत्पलामलाम् ।
सरस्वतीं शतद्रूं च चन्द्रभागामिरावतीम् ॥ ३३
वेणीं च कृष्णवेणीं च निर्विन्ध्यां सरयूं तथा ।
चर्मण्वतीं वितस्तां च विपाशां बाहुदामपि ॥ ३४
प्रयागं नैमिषं चैव धर्मारण्यं गयां तथा ।
वाराणसीं श्रीगिरिं च केदारं पुष्करं तथा ॥ ३५
मानसं च क्रमसरस्तथैवोत्तरमानसम् ।
वडवावदनं चैव तीर्थवृन्दं स सादरम् ॥ ३६
अग्नितीर्थं महातीर्थमिन्द्रद्युम्नसरस्तथा ।
सरांसि सरितश्चैव तथा नदह्रदावलीम् ॥ ३७
स्वामिनं कार्तिकेयं च शालग्रामं हरिं तथा ।
स्थानानि च चतुःषष्टिं हरेरथ हरस्य च ॥ ३८
नानाश्चर्यविचित्राणि चतुरब्धितटानि च ।
विन्ध्यमन्दरकुञ्जांश्च कुलशैलस्थलानि च ॥ ३९
राजर्षीणां च महतां ब्रह्मर्षीणां तथैव च ।
देवानां ब्राह्मणानां च पावनानाश्रमाञ्छुभान् ॥ ४०
भूयोभूयः स बभ्राम भ्रातृभ्यां सह मानदः ।
चतुर्ष्वपि दिगन्तेषु सर्वानेव महीतटान् ॥ ४१
अमरकिंनरमानवमानितः
समवलोक्य महीमखिलामिमाम् ।
उपययौ स्वगृहं रघुनन्दनो
विहृतदिक् शिवलोकमिवेश्वरः ॥ ४२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे तीर्थयात्राकरणं नाम तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ४

श्रीवाल्मीकिरुवाच ।
रामः पुष्पाञ्जलिव्रातैर्विकीर्णः पुरवासिभिः ।
प्रविवेश गृहं श्रीमाञ्जयन्तो विष्टपं यथा ॥ १
प्रणनामाथ पितरं वसिष्ठं भ्रातृबान्धवान् ।
ब्राह्मणान्कुलवृद्धांश्च राघवः प्रथमागतः ॥ २
सुहृद्भिर्भ्रातृभिश्चैव पित्रा द्विजगणेन च ।
मुहुरालिङ्गिताचारो राघवो न ममौ मुदा ॥ ३
तस्मिन्गृहे दाशरथेः प्रियप्रकथनैर्मिथः ।
जुघूर्णुर्मधुरैराशा मृदुवंशस्वनैरिव ॥ ४
बभूवाथ दिनान्यष्टौ रामागमन उत्सवः ।
सुखं मत्तजनोन्मुक्तकलकोलाहलाकुलः ॥ ५
उवास स सुखं गेहे ततः प्रभृति राघवः ।

भृङ्गौघभङ्गुरैर्भ्रमरसमूहवच्चञ्चलैः । अर्थात्कुसुमेष्विति गम्यते ॥ २८ ॥ अपनोदितैः प्रेरितैः ॥ २९ ॥ आवर्जयन्दानमानादिना वशीकुर्वन् । जाङ्गलान्येव जाङ्गलान् जीर्णारण्यानि ॥ ३० ॥ ददर्शेत्यस्य पावनानाश्रमाञ्छुभानित्यन्ते सर्वत्र संबन्धः ॥ ३१ ॥ आयतनानि देवमुन्यायतनानि । जनान्तेषु लक्षणया जनपदान्तेषु ॥ ३२ ॥ ३३ ॥ वेणीं केवलाम् । कृष्णवेणीं कृष्णया संभिन्नां ताम् ॥ ३४ ॥ श्रीगिरिं श्रीशैलम् ॥ ३५ ॥ क्रमप्राप्तं सरः । वडवावदनं हयग्रीवतीर्थम् ॥ ३६ ॥ महातीर्थमितीन्द्रद्युम्नसरोविशेषणम् ॥ ३७ ॥ ३८ ॥ कुञ्जाँल्लतागृहान् । कुलशैला हिमवदादयः ॥ ३९ ॥ चकारोऽनुक्ततत्तत्स्थानसमुच्चयार्थः ॥ ४० ॥ भूयोभूय इति पूर्वदृष्टानामपि परावृत्तौ संनिहितानां कौतुकान्महिमातिशयप्रकटनाय वा भूयो गमनम् ॥ ४१ ॥ तत्रतत्र संनिहितैरमरादिभिर्मानितः पूजितो रघुनन्दनोऽखिलां जम्बूद्वीपात्मिकां महीं सम्यगवलोक्य स्वगृहमयोध्यामुपययाविति संबन्धः । ईश्वरः शिवः ॥ ४२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे तीर्थयात्राकरणं नाम तृतीयः सर्गः ॥ ३ ॥

तीर्थयात्रागतस्यात्र सुहृदानन्दनं गृहे ।
रामस्याखेटचर्यादिव्यवहारश्च वर्ण्यते ॥ १ ॥

राम इति । व्रातैः समूहैर्मङ्गलाचारार्थं विकीर्णः । विष्टपं त्रिविष्टपम् । नामैकदेशे नामग्रहणात् ॥ १ ॥ प्रथमागतः प्रथमप्रवासादागतः ॥ २ ॥ मुहुः आलिङ्गितस्य तेषु समुचितमभिवादप्रियाभिलाषाद्याचरणं यस्य स तथोक्तः । न ममौ, स्वदेह इति शेषः । हर्षेणोत्फुल्ल इति भावः ॥ ३ ॥ तस्मिन् दशरथगृहे । दाशरथेः रामस्य । प्रियकथनैः प्रियवाक्यैः । आनन्दिता जना इति शेषः । मिथोऽन्योन्यं दिशो जुघूर्णुर्बभ्रमुर्दिशिदिशि भ्रान्तवन्तः । हर्षकृतव्यामोहाद्दिग्भ्रमं प्रापुरिति वार्थः । दृष्टान्तेऽप्येवम् । अथवा दिक्शब्देन तत्रस्था जना लक्ष्यन्ते । दाशरथेः प्रियकथाभिरुपलक्षिता मिथः समवेता उत्सवविशेषे मृदुवंशस्वनैः क्रीडन्त इव बभ्रमुरित्यर्थः ॥ ४ ॥ मत्तैर्हृष्टैर्जनैरुत्कृष्टतया मुक्तः कलो गम्भीरो यः कोलाहलस्तेन आकुलो व्याप्तः ॥ ५ ॥ इतस्ततो दृष्टान् देशाचारानित-

१ र्मातृभिश्चैव इति पाठः.

वर्णयन्विविधाकारान्देशाचारानितस्ततः ॥ ६
प्रातरुत्थाय रामोऽसौ कृत्वा संध्यां यथाविधि ।
सभासंस्थं ददर्शेन्द्रसमं स्वपितरं तथा ॥ ७
कथाभिः सुविचित्राभिः स वसिष्ठादिभिः सह ।
स्थित्वा दिनचतुर्भागं ज्ञानगर्भाभिरादतः ॥ ८
जगाम पित्रानुज्ञातो महत्या सेनया वृतः ।
वराहमहिषाकीर्णं वनमाखेटकेच्छया ॥ ९
तत आगत्य सदने कृत्वा स्नानादिकं क्रमम् ।
समित्रबान्धवो भुक्त्वा निनाय ससुहृन्निशाम् ॥ १०
एवंप्रायदिनाचारो भ्रातृभ्यां सह राघवः ।
आगत्य तीर्थयात्रायाः समुवास पितुर्गृहे ॥ ११
नृपतिसंव्यवहारमनोज्ञया
सुजनचेतसि चन्द्रिकयानया ।
परिनिनाय दिनानि स चेष्टया
स्तुतसुधारसपेशलयाऽनघ ॥ १२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे दिवसव्यवहारनिरूपणं नाम चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ५

श्रीवाल्मीकिरुवाच ।

अथोनषोडशे वर्षे वर्तमाने रघूद्वहे ।
रामानुयायिनि तथा शत्रुघ्ने लक्ष्मणेऽपि च ॥ १
भरते संस्थिते नित्यं मातामहगृहे सुखम् ।
पालयत्यवनिं राज्ञि यथावदखिलामिमाम् ॥ २
जन्यत्रार्थं च पुत्राणां प्रत्यहं सह मन्त्रिभिः ।
कृतमन्त्रे महाप्राज्ञे तज्ज्ञे दशरथे नृपे ॥ ३
कृतायां तीर्थयात्रायां रामो निजगृहे स्थितः ।
जगामानुदिनं कार्श्यं शरदीवामलं सरः ॥ ४
कुमारस्य विशालाक्षं पाण्डुतां मुखमाददे ।
पाकफुल्लदलं शुक्लं सालिमालमिवाम्बुजम् ॥ ५
कपोलतलसंलीनपाणिः पद्मासनस्थितः ।
चिन्तापरवशस्तूष्णीमव्यापारो बभूव ह ॥ ६
कृशाङ्गश्चिन्तया युक्तः खेदी परमदुर्मनाः ।
नोवाच कस्यचित्किंचिल्लिपिकर्मार्पितोपमः ॥ ७
खेदात्परिजनेनासौ प्रार्थ्यमानः पुनः पुनः ।
चकाराह्निकमाचारं परिम्लानमुखाम्बुजः ॥ ८
एवंगुणविशिष्टं तं रामं गुणगणाकरम् ।
आलोक्य भ्रातरावस्य तामेवावयतुर्दशाम् ॥ ९
तथा तेषु तनूजेषु खेदवत्सु कृशेषु च ।
सपत्नीको महीपालश्चिन्ताविवशतां ययौ ॥ १०
का ते पुत्र घना चिन्तेत्येवं रामं पुनः पुनः ।
अपृच्छत्स्निग्धया वाचा नैवाकथयदस्य सः ॥ ११

स्ततो वर्णयन्निति वा सुखमुवासेत्यन्वयः ॥ ६ ॥ प्रातरित्यादि वीप्साभिप्रायम् । तथेति पूर्वश्लोकोक्तसमुच्चयार्थम् ॥ ७ ॥ स रामो वसिष्ठादिभिः सह स्थित्वा अनुरूपाभिः कथाभिरादतः सन् दिनचतुर्भागम् । अत्यन्तसंयोगे द्वितीया । दिनस्य चतुर्थभागे इत्यर्थः । आखेटकेच्छया वनं जगामेत्युत्तरेणान्वयः ॥ ८ ॥ आखेटकं मृगया ॥ ९ ॥ १० ॥ मृगयादीनामनित्यत्वद्योतनाय प्रायेति । भ्रातृभ्यां लक्ष्मणशत्रुघ्नाभ्याम् ॥ ११ ॥ हे अनघेति राज्ञो भरद्वाजस्य वा संबोधनम् । स रामो नृपतीनां राज्ञां समुचितेन व्यवहारेण मनोज्ञया मनोहरया सुजनानां चेतसि चन्द्रिकावदाह्लादिकया अतएव स्तुता प्रशस्ता सुधारसवत्पेशला चतुरा च या तथाविधया । 'स्नुते'ति 'स्रुते'ति वा पाठे क्षरिता या सुधा तद्द्रसेन माधुर्येण पेशलयाऽनया पूर्वोक्तया चेष्टया दिनानि परिनिनायातिवाहयामास ॥ १२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे दिवसव्यवहारनिरूपणं नाम चतुर्थः सर्गः ॥ ४ ॥

रामस्य काये कार्श्यादि निर्वेदादिह वर्ण्यते ।
राज्ञस्तद्धेतुजिज्ञासा वसिष्ठोक्तेरुपक्रमः ॥ १ ॥

इत्थं श्रीरामस्य चित्तशुद्ध्युपायानुष्ठानचर्यामुपवर्ण्य तत्फलवैराग्यादिसाधनसंपत्तिं विवक्षुरुपक्रमते—अथेति । ऊने चतुर्थांशेन षोडशे वर्षे वर्तमाने रामः कार्श्यं जगामेति चतुर्थेन संबन्धः । रघूद्वहे इति व्यवहितस्य राज्ञः, संनिहितस्य शत्रुघ्नस्य लक्ष्मणस्य वा विशेषणं नतु रामपरामर्शि । रामः कार्श्यं जगामेत्यनेनानन्वयापत्तेः । 'लक्षणहेत्वोः–' इति शानचो विषये आश्रयभेदमन्तरेण भावस्य भावान्तरालक्षकत्वे भावलक्षणसप्तम्यनुपपत्तेः ॥ १ ॥ भरत इति । इत एव पूर्वरामायणानुक्तमपि विना शत्रुघ्नं भरतस्य मातामहगृहगमनं विवाहात्प्रागागमनं च कल्प्यते । नित्यमित्यनेनापि पूर्वमपि बहुवारं तत्र भरतगमनमवस्थानं चासीदिति गम्यते ॥ २ ॥ जनीं वधूं वहन्तीति जन्यास्तांस्त्रायते वस्त्रालंकारादिभिरिति जन्यत्रो विवाहस्तदर्थम् । ॥ ३ ॥ कार्श्यादीनि निर्वेदचिन्तादुःखलिङ्गानि वर्ण्यन्ते ॥ ४ ॥ विशालाक्षत्वविशिष्टस्योपमानाय सालिमालमिति ॥ ५ ॥ अव्यापारो निश्चेष्टः ॥ ६ ॥ लिपिकर्मार्पितश्चित्रलिखित उपमा यस्य ॥ ७ ॥ आह्निकं अहन्यवश्यकर्तव्यम् ॥ ८ ॥ गुणगणाकरं तं राममेवं पूर्वोक्तचिन्तादिभिर्गुणैर्विशेषणैर्विशिष्टमालोक्येत्यन्वयः ॥ ९ ॥ १० ॥ नाकथयदेव । कथनप्रयोजना-

१ तामेवावापतुः इति पाठः. २ दादीह इति पाठः. ३ जिज्ञासोर्वसिष्ठोक्तेः इति पाठः.

न किंचित्तात मे दुःखमसित्युक्त्वा पितुरङ्कगः ।
रामो राजीवपत्राक्षस्तूष्णीमेव स्म तिष्ठति ॥ १२
ततो दशरथो राजा रामः किं खेदवानिति ।
अपृच्छत्सर्वकार्यज्ञं वसिष्ठं वदतां वरम् ॥ १३
इत्युक्तश्चिन्तयित्वा स वसिष्ठमुनिना नृपः ।
अस्त्यत्र कारणं श्रीमन्मा राजन्दुःखमस्तु ते ॥ १४
कोपं विषादकलनां विततं च हर्षं
नाल्पेन कारणवशेन वहन्ति सन्तः ।
सर्गेण संहृतिजवेन विना जगत्यां
भूतानि भूप न महान्ति विकारवन्ति ॥ १५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे कार्श्यनिवेदनं नाम पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ६

श्रीवाल्मीकिरुवाच ।
इत्युक्ते मुनिनाथेन संदेहवति पार्थिवे ।
खेदवत्यास्थिते मौनं किंचित्कालप्रतीक्षणे ॥ १
परिखिन्नासु सर्वासु राज्ञीषु नृपसद्मसु ।
स्थितासु सावधानासु रामचेष्टासु सर्वतः ॥ २
एतस्मिन्नेव काले तु विश्वामित्र इति श्रुतः ।
महर्षिरभ्यगाद्द्रष्टुं तमयोध्यानराधिपम् ॥ ३
तस्य यज्ञोऽथ रक्षोभिस्तथा विलुलुपे किल ।
मायावीर्यबलोन्मत्तैर्धर्मैककार्यस्य धीमतः ॥ ४
रक्षार्थं तस्य यज्ञस्य द्रष्टुमैच्छत्स पार्थिवम् ।
नहि शक्नोत्यविघ्नेन समाप्तुं स मुनिः क्रतुम् ॥ ५
ततस्तेषां विनाशार्थमुद्यतस्तपसां निधिः ।
विश्वामित्रो महातेजा अयोध्यामभ्यगात्पुरीम् ॥ ६
स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह ।
शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम् ॥ ७
तस्य तद्वचनं श्रुत्वा द्वाःस्था राजगृहं ययुः ।
संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ॥ ८
ते गत्वा राजसदनं विश्वामित्रमृषिं ततः ।
प्राप्तमावेदयामासुः प्रतीहाराः पतेस्तदा ॥ ९
अथास्थानगतं भूपं राजमण्डलमालिनम् ।
समुपेत्य त्वरायुक्तो याष्टीकोऽसौ व्यजिज्ञपत् ॥ १०
देव द्वारि महातेजा बालभास्करभासुरः ।
ज्वालारुणजटाजूटः पुमाञ्छ्रीमानवस्थितः ॥ ११
सभासुरपताकान्तं साश्वेभपुरुषायुधम् ।
कृतवांस्तं प्रदेशं यस्तेजोभिः कीर्णकाञ्चनम् ॥ १२
वीक्ष्यमाणे तु याष्टीके निवेदयति राजनि ।
विश्वामित्रो मुनिः प्राप्त इत्यनुद्धतया गिरा ॥ १३
इति याष्टीकवचनमाकर्ण्य नृपसत्तमः ।

---

सिद्धिनिश्चयादिति भावः ॥ ११ ॥ न[1] दुःखं त्वया परिहर्तुं शक्यमित्याशय इति नानृतवादिता । तिष्ठति स्म तस्थौ । स्मयोगाल्लिङ्विषये लट् ॥ १२ ॥ किंनिमित्तमिति शेषः ॥ १३ ॥ इति पृष्टेन वसिष्ठमुनिना स नृप इति एवं प्रकारेण उक्तः । तदेवाह— अस्त्यत्रेत्यादिनार्धेनोत्तरश्लोकसहितेन । रामचिन्तायाः शुभोदर्कत्वसूचनाय श्रीमन्निति संबोधनम् ॥१४॥ सन्तः अल्पेन कारणवशेन कोपं विषादकलनां च न वहन्ति । यथा महान्ति भूतानि पृथिव्यादीनि सर्गेण सृष्टिफलवशेन संहारवेगेन च विना न विकारवन्ति नोपचयापक्षयविकारं भजन्ते ॥ १५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे कार्श्यनिवेदनं नाम पञ्चमः सर्गः ॥ ५ ॥

विश्वामित्रागमो राज्ञा विधिवत्पूजनं मुनेः ।
राज्ञः प्रहर्षात्कार्यस्य प्रतिज्ञा चात्र वर्ण्यते ॥ १ ॥

मुनिनाथेन वसिष्ठेन । इति उक्तप्रकारेण । सामान्याकारेणेत्यर्थः । अतएव पार्थिवे विशेषेण संदेहवति सति[2] निर्णयाय कश्चित्कालो यस्य तत्किंचित्कालं प्रतीक्षणं यस्य तथाभूते सति ॥ १ ॥ राज्ञीषु नृपसद्मसु स्थितास्विति संबन्धः । राज्ञीभेदात्सद्मभेदः प्रसिद्ध इति बहुवचनम् । चेष्टाविशेषलिङ्गैर्निर्वेदकारणपरिज्ञानाय सावधानासु ॥ २ ॥ एतस्मिन्निति । यद्यपि भावलक्षणसप्तमीभिरेव कालविशेषो लभ्यते तथापि लोकदृष्ट्या अनवसरे विश्वामित्रागमनमिति सूचनाय विशिष्य काले इत्युपादानम् । श्रुतो विश्रुतः ॥ ३ ॥ धर्म एव कार्योऽवश्यकर्तव्यो यस्य तथाभूतस्य यज्ञस्तथा विलुलुपे यथा स तं नराधिपमभ्यगादिति पूर्वेण, पार्थिवं द्रष्टुमैच्छदित्युत्तरेण वा संबन्धः ॥ ४ ॥ समाप्तुं समापयितुं, सम्यगासमाप्तेः प्राप्तुं वा ॥ ५ ॥ उद्यत उद्युक्तः ॥६॥ आख्यात । राज्ञे इति शेषः ॥७॥ विलम्बे शापभयात्संभ्रान्तमनसः ॥८॥ सीदति निषीदत्यस्मिन्निति सदनं सभास्थानम् । प्रतीहारा द्वारपालाः । पतेर्बहिर्द्वास्थस्य स्वस्वामिनः, सभाद्वास्थस्य वा याष्टीकस्य । 'गतिबुद्धि–' इति कर्मण एव शेषत्वविवक्षया षष्ठी ॥ ९ ॥ असौ द्वास्थैर्निवेदितार्थो याष्टीको यष्टिप्रहरणः । 'शक्तियष्ट्योरीकक्' ॥ १० ॥ महातेजा महाप्रभावः । कान्त्या तु बालभास्कर इव भासुरः । तदुपपादनाय ज्वालारुणेति । श्रीमांस्तपोलक्ष्मीवान् ॥ ११ ॥ तं राजद्वारप्रदेशमूर्ध्वतः सभासुरपताकान्तं परितश्च साश्वेभपुरुषायुधम् । कीर्णकाञ्चनं व्याप्तसौवर्णमिव पिङ्गलम् ॥ १२ ॥ विश्वामित्रो मुनिः प्राप्त इत्यनुद्धतया गिरा राजनि राजानं प्रति निवेदयति विज्ञापनं कुर्वाणे याष्टीके वीक्ष्यमाणे तु दृष्टमात्रे सति स राजसत्तमः प्रोत्तस्थावित्युत्तरेण संबन्धः ॥१३॥ किमनवधार्यैव, नेत्याह— इति याष्टीकवचनमाकर्ण्येति । सामन्ता अल्पदेशाधीश्वराः ।

---

[1] नेति क्वचिन्न लभ्यते. [2] सतीति क्वचिन्न लभ्यते.

स समन्त्री ससामन्तः प्रोत्तस्थौ हेमविष्टरात् ॥ १४
पदातिरेव सहसा राज्ञां वृन्देन मालितः ।
वसिष्ठवामदेवाभ्यां सह सामन्तसंस्तुतः ॥ १५
जगाम तंत्र यत्रासौ विश्वामित्रो महामुनिः ।
ददर्श मुनिशार्दूलं द्वारभूमाववस्थितम् ॥ १६
केनापि कारणेनोर्वीतलमर्कमुपागतम् ।
ब्राह्मेण तेजसाक्रान्तं क्षात्रेण च महौजसा ॥ १७
जराजरठया नित्यं तपःप्रसररूक्षया ।
जटावल्या वृतस्कन्धं ससंध्याभ्रमिवाचलम् ॥ १८
उपशान्तं च कान्तं च दीप्तमप्रतिघाति च ।
निभृतं चोर्जिताकारं दधानं भास्वरं वपुः ॥ १९
पेशलेनातिभीमेन प्रसन्नेनाकुलेन च ।
गम्भीरेणातिपूर्णेन तेजसा रञ्जितप्रभम् ॥ २०
अनन्तजीवितदशासखीमेकामनिन्दिताम् ।
धारयन्तं करे श्लक्ष्णां कुण्डीमम्लानमानसम् ॥ २१
करुणाक्रान्तचेतस्त्वात्प्रसन्नैर्मधुराक्षरैः ।
वीक्षणैरमृतेनेव संसिञ्चन्तमिमाः प्रजाः ॥ २२
युक्तयज्ञोपवीताङ्गं धवलप्रोन्नतभ्रुवम् ।
अनन्तं विस्मयं चान्तः प्रयच्छन्तमिवेक्षितुः ॥ २३
मुनिमालोक्य भूपालो दूरादेवानताकृतिः ।
प्रणनाम गलन्मौलिमणिमानितभूतलम् ॥ २४
मुनिरप्यवनीनाथं भास्वानिव शतक्रतुम् ।
तत्राभिवादयांचक्रे मधुरोदारया गिरा ॥ २५
ततो वसिष्ठप्रमुखाः सर्व एव द्विजातयः ।
स्वागतादिक्रमेणैनं पूजयामासुराहृताः ॥ २६

दशरथ उवाच ।

अशङ्कितोपनीतेन भास्वता दर्शनेन ते ।
साधो स्वनुगृहीताः स्मो रविणेवाम्बुजाकराः ॥ २७
यदनादि यदक्षुण्णं यदपायविवर्जितम् ।
तदानन्दसुखं प्राप्तं मया त्वद्दर्शनान्मुने ॥ २८
अद्य वर्तामहे नूनं धन्यानां धुरि धर्मतः ।
भवदागमनस्येमे यद्वयं लक्ष्यमागताः ॥ २९
एवं प्रकथयन्तोऽत्र राजानोऽथ महर्षयः ।
आसनेषु सभास्थानमासाद्य समुपाविशन् ॥ ३०
स दृष्ट्वा मालितं लक्ष्म्या भीतस्तमृषिसत्तमम् ।
प्रहृष्टवदनो राजा स्वयमर्घ्यं न्यवेदयत् ॥ ३१
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ।
प्रदक्षिणं प्रकुर्वन्तं राजानं पर्यपूजयत् ॥ ३२
स राज्ञा पूजितस्तेन प्रहृष्टवदनस्तदा ।
कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥ ३३
वसिष्ठेन समागम्य प्रहस्य मुनिपुंगवः ।
यथार्हं चार्चयित्वैनं पप्रच्छानामयं ततः ॥ ३४
क्षणं यथार्हमन्योन्यं पूजयित्वा समेत्य च ।
ते सर्वे हृष्टमनसो महाराजनिवेशने ॥ ३५
यथोचितासनगता मिथः संवृद्धतेजसः ।
परस्परेण पप्रच्छुः सर्वेऽनामयमादरात् ॥ ३६

विष्टरात्सिंहासनात् ॥ १४ ॥ मालितो वेष्टितः । स राजसत्तमो वसिष्ठवामदेवाभ्यां सह जगामेत्युत्तरेणान्वयः ॥ १५ ॥ यत्र विश्वामित्रो महामुनिस्तत्रासौ जगामेति संबन्धः ॥ १६ ॥ तपःपराक्रमाभिव्यञ्जकवैलक्षण्याभ्यामोजस्तेजसोर्भेदः ॥ १७ ॥ जराजरठया वयःप्रकर्षपलितया ॥ १८ ॥ दीप्तं तेजःप्रकर्षाद्दुर्दर्शम् । उपशान्तं सौम्यम् । अप्रतिघाति अप्रधृष्यम् । कान्तं प्रियदर्शनम् । ऊर्जितः प्रगल्भ आकारोऽवयवसंनिवेशो यस्य तत्तथोक्तम् । निभृतं विनयोपपन्नम् । भास्वरं कान्तिमत् । 'भास्कर'मिति पाठे सूर्यसदृशम् । देवपथादित्वात्कनो लुप् । विशेषणान्युभयत्र योज्यानि ॥ १९ ॥ पेशलेन दृष्टिमनःप्रीणनचतुरेण । अतिभीमेन भयानकेन । आकुलेन प्रकर्षाच्चलता । गम्भीरेण अनाकलनीयेन । अतिपूर्णेनापरिच्छेद्येन । आश्रयसंवलितं तेजः बहिःप्रसृता प्रभा । तेजःप्रकर्षवैलक्षण्यानुविधायित्वात्प्रभाप्रकर्षवैलक्षण्यानां तदनुरूपा सा तेन रञ्जितेवेति तथोक्तिः ॥ २० ॥ अनन्तजीवितदशा चिरजीवितदशा तस्याः सखीं चिरपरिगृहीतामित्यर्थः । श्लक्ष्णां स्निग्धाम् । कुण्डीं कमण्डलुम् । अम्लानं प्रसन्नं मानसं मनो यस्य ॥ २१ ॥ मधुराण्यक्षराणि संभाषणानि येषु । मधुराभाषणसहितैरित्यर्थः ॥ २२ ॥ युक्तानि वयःप्रकर्षानुरूपाणि यज्ञोपवीतान्यङ्गे यस्य तम् ॥ २३ ॥ दूरादालोक्य पूर्वमेवानताकृतिर्भूपालो मुनिं प्रणनामेति संबन्धः । अन्त्यं पदं क्रियाविशेषणम् ॥ २४ ॥ अभिवादयांचक्रे सद्भुतमाशीर्भिः प्रत्यभिवादयामासेत्यर्थः ॥ २५ ॥ पूजयामासुः प्रशशंसुः । आहृता आदरयुक्ताः ॥ २६ ॥ अशङ्कितोपनीतेनावितर्कितोपगतेन । ते इति कर्मणि कर्तरि वा षष्ठी ॥ २७ ॥ अनुग्रहमेव भाविभाग्यानुरूपं रूपयन्निरूपयति—**यदि**ति । अनादिकारणरहितम् । अनेनोत्पत्तिवृद्धिविपरिणामानां निरासः । अक्षुण्णमनपक्षयम् । अपायेन विनाशेन च विवर्जितम् । औपाधिकैः स्वांशसुखलवैः सर्वानानन्दयतीत्यानन्दं यत्परमपुरुषार्थसुखं प्रसिद्धं तदेव प्राप्तमित्यर्थः ॥ २८ ॥ धन्यानां कृतार्थानां धुरि अग्रस्थाने । लक्ष्यम् । भावप्रधानो निर्देशः । लक्ष्यताम् ॥ २९ ॥ एवं दशरथोक्तप्रकारेणैव राजानो महर्षयश्च प्रकथयन्तः अथ सभास्थानमासाद्य आसनेषु समुपाविशन्नित्यन्वयः ॥ ३० ॥ लक्ष्म्या तपोलक्ष्म्या भीतः अर्घ्यार्थस्योदकस्याप्यन्यद्वारा आहरणेऽपराधशङ्कया स्वयमेवाहृत्यार्घ्यं न्यवेदयदित्यर्थः ॥ ३१ ॥ पर्यपूजयत्प्रशशंस ॥ ३२ ॥ कुशलं देहमन्त्रिभृत्यादिषु । अव्ययं कोशेषु ॥ ३३ ॥ एवं वसिष्ठमर्चयित्वा यथार्हं शिष्यमृगपक्ष्यादिष्वनामयं पप्रच्छेत्यर्थः ॥ ३४ ॥ अन्योन्यं समेत्य पूजयित्वा च यथोचितासनगताः सन्तोऽनामयं पप्रच्छुरित्युत्तरेण संबन्धः ॥ ३५ ॥ ३६ ॥

१ यत्र तत्रासौ इति पाठः.

उपविष्टाय तस्मै स विश्वामित्राय धीमते ।
पाद्यमर्घ्यं च गां चैव भूयोभूयो न्यवेदयत् ॥ ३७
अर्चयित्वा तु विधिवद्विश्वामित्रमभाषत ।
प्राञ्जलिः प्रयतो वाक्यमिदं प्रीतमना नृपः ॥ ३८
यथाऽमृतस्य संप्राप्तिर्यथा वर्षमवर्षके ।
यथान्धस्येक्षणप्राप्तिर्भवदागमनं तथा ॥ ३९
यथेष्टदारसंपर्कात्पुत्रजन्माऽप्रजावतः ।
स्वप्नदृष्टार्थलाभश्च भवदागमनं तथा ॥ ४०
यथेप्सितेन संयोग इष्टस्यागमनं यथा ।
प्रणष्टस्य यथा लाभो भवदागमनं तथा ॥ ४१
यथा हर्षो नभोगत्या मृतस्य पुनरागमात् ।
तथा त्वदागमाद्ब्रह्मन्स्वागतं ते महामुने ॥ ४२
ब्रह्मलोकनिवासो हि कस्य न प्रीतिमावहेत् ।
मुने तवागमस्तद्वत्सत्यमेव ब्रवीमि ते ॥ ४३
कश्च ते परमः कामः किं च ते करवाण्यहम् ।
पात्रभूतोऽसि मे विप्र प्राप्तः परमधार्मिकः ॥ ४४
पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि भगवन्मया ॥ ४५
गङ्गाजलाभिषेकेण यथा प्रीतिर्भवेन्मम ।
तथा त्वद्दर्शनात्प्रीतिरन्तः शीतयतीव माम् ॥ ४६
विगतेच्छाभयक्रोधो वीतरागो निरामयः ।
इदमत्यद्भुतं ब्रह्मन्यद्भवान्मामुपागतः ॥ ४७
शुभक्षेत्रगतं चाहमात्मानमपकल्मषम् ।
चन्द्रबिम्ब इवोन्मग्नं वेद्वेद्य विदांवर ॥ ४८
साक्षादिव ब्रह्मणो मे तवाभ्यागमनं मतम् ।
पूतोऽस्म्यनुगृहीतश्च तवाभ्यागमनान्मुने ॥ ४९
त्वदागमनपुण्येन साधो यदनुरञ्जितम् ।
अद्य मे सफलं जन्म जीवितं तत्सुजीवितम् ॥ ५०
त्वामिहाभ्यागतं दृष्ट्वा प्रतिपूज्य प्रणम्य च ।
आत्मन्येव नमाम्यन्तर्दृष्ट्वेन्दुं जलधिर्यथा ॥ ५१
यत्कार्यं येन वार्थेन प्राप्तोऽसि मुनिपुङ्गव ।
कृतमित्येव तद्विद्धि मान्योऽसीति सदा मम ॥ ५२
स्वकार्ये न विमर्शं त्वं कर्तुमर्हसि कौशिक ।
भगवन्नास्त्यदेयं मे त्वयि यत्प्रतिपद्यते ॥ ५३
कार्यस्य न विचारं त्वं कर्तुमर्हसि धर्मतः ।
कर्ता चाहमशेषं ते दैवतं परमं भवान् ॥ ५४
इदमतिमधुरं निशम्य वाक्यं
श्रुतिसुखमात्मविदा विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टं
मुनिवृषभः परमं जगाम हर्षम् ॥ ५५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे विश्वामित्राभ्यागमनं नाम षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ७

श्रीवाल्मीकिरुवाच ।
तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १
सदृशं राजशार्दूल तवैवैतन्महीतले ।

---

आद्येन चकारेणानुक्तगन्धपुष्पवस्त्रालंकारादेः समुच्चयः । द्वितीयेन दक्षिणाफलताम्बूलादेः । तेषां च बहुविधत्वाद्भूयोभूय इति ॥ ३७ ॥ प्रयतः पवित्रः । इदं वक्ष्यमाणम् ॥ ३८ ॥ यथायोगं मर्त्यस्य कर्षकस्येति च शेषः ॥ ३९ ॥ अर्थलाभो दरिद्रस्येति शेषः ॥ ४० ॥ ईप्सितेन चिराभिलषितेन मणिमन्त्राभ्युदयादिना । इष्टस्य प्रियतमस्य पुत्रभ्रात्रादेः । दूरादिति शेषः ॥ ४१ ॥ त्वदागमाद्धर्ष इत्यनुषज्यते ॥४२॥४३॥ प्रथमः प्रश्नः प्रदेयविषयः । द्वितीयः कर्तव्यसेवाविषयः ॥ ४४ ॥ पूजापात्रत्वमेवोपपादयति—**पूर्व**मिति । तपसा ब्रह्मर्षित्वमनुप्राप्त इति संबन्धः ॥ ४५ ॥ शीतयति तापशान्त्या सुखयति । मुख्यार्थाभेदोत्प्रेक्षार्थ इवशब्दः ॥ ४६ ॥ इच्छादीनां परोपसर्पणहेतुत्वं प्रसिद्धम् । विषयस्नेहातिशयो विषयाकारेण चित्तस्य रञ्जनाद्रागः ॥ ४७ ॥ देवर्षिजुष्टस्थानानामेव क्षेत्रत्वात्त्वत्संनिधानाद्गृहमपि तथेति भावः । अतएवापकल्मषमपगतपापं अतएव धर्मोत्कर्षादमृतमयचन्द्रमण्डलप्राप्त्या तत्रोन्मिग्नमिवेत्युत्प्रेक्षा ॥४८॥ धर्मेण पूतः यशोभ्युदयाभ्यामनुगृहीतः ॥ ४९ ॥ तदेव स्फुटयति—**त्वद**िति ॥ ५० ॥ पुण्यहर्षाभ्यामभिवृद्धत्वादात्मनि शरीरे प्रस्थान्तः खारीव न संमामीत्यर्थः । जलधिर्वेलासीम्नोरिति शेषः ॥ ५१ ॥ सदा मान्योऽसीति हेतोस्तदुभयं कृतमित्येव विद्धि ॥ ५२ ॥ अन्यैः कर्तुमशक्यमपि करिष्याम्येव दातुमशक्यमपि दास्याम्येव । यद्यस्माद्दीयमानं वस्तु त्वयि त्वादृशे सत्पात्रे प्रतिपद्यते । प्रतिपत्तिलाभेन सार्थकं भवतीति भावः ॥ ५३ ॥ उत्साहातिशयात्पूर्वार्धोक्तमेव पुनराह—**कार्यस्ये**ति । लोभादिहेतुकत्वं वारयति—**धर्मतः कर्ते**ति ॥५४॥ आत्मविदा स्वतपःप्रभावाभिज्ञेन । गुणैर्विशिष्टमिति वाक्यविशेषणम् ॥५५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे विश्वामित्राभ्यागमनं नाम षष्ठः सर्गः ॥ ६ ॥

राज्ञः प्रशंसाथ मुनेर्यज्ञविघ्ननिवेदनम् ।
रक्षोवधाय रामस्य याच्ञा चात्रोपवर्ण्यते ॥ १ ॥

अद्भुतविस्तरं आश्चर्यार्थविस्तारयुक्तम् ॥ १ ॥ सदृशं युक्तम् ।

महावंशप्रसूतस्य वसिष्ठवशवर्तिनः ॥ २
यत्तु मे हृद्गतं वाक्यं तस्य कार्यविनिर्णयम्।
कुरु त्वं राजशार्दूल धर्मं समनुपालय ॥ ३
अहं धर्मं समातिष्ठे सिद्ध्यर्थं पुरुषर्षभ।
तस्य विघ्नकरा घोरा राक्षसा मम संस्थिताः ॥ ४
यदा यदा तु यज्ञेन यजेऽहं विबुधव्रजान्।
तदा तदा तु मे यज्ञं विनिघ्नन्ति निशाचराः ॥ ५
बहुशो विहिते तस्मिन्मया राक्षसनायकाः।
अकिरंस्ते महीं यागे मांसेन रुधिरेण च ॥ ६
अवधूते तथाभूते तस्मिन्यागकदम्बके।
कृतश्रमो निरुत्साहस्तस्माद्देशादुपागतः ॥ ७
न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव।
तथाभूतं हि तत्कर्म न शापस्तस्य विद्यते ॥ ८
ईदृशी यज्ञदीक्षा सा मम तस्मिन्महाक्रतौ।
त्वत्प्रसादादविघ्नेन प्रापयेयं महाफलम् ॥ ९
त्रातुमर्हसि मामार्तं शरणार्थिनमागतम्।
अर्थिनां यन्निराशत्वं सत्तमेऽभिभवो हि सः ॥ १०
तवास्ति तनयः श्रीमान्दृप्तशार्दूलविक्रमः।
महेन्द्रसदृशो वीर्ये रामो रक्षोविदारणः ॥ ११
तं पुत्रं राजशार्दूल रामं सत्यपराक्रमम्।
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥ १२
शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा।
राक्षसा येऽपकर्तारस्तेषां मूर्धविनिग्रहे ॥ १३
श्रेयश्चास्य करिष्यामि बहुरूपमनन्तकम्।
त्रयाणामपि लोकानां येन पूज्यो भविष्यति ॥ १४
न च ते राममासाद्य स्थातुं शक्ता निशाचराः।
क्रुद्धं केसरिणं दृष्ट्वा वनेरण[1] इवैणकाः ॥ १५
तेषां न चान्यः काकुत्स्थाद्योद्धुमुत्सहते पुमान्।
ऋते केसरिणः क्रुद्धान्मत्तानां करिणामिव ॥ १६
वीर्योत्सिक्ता हि ते पापाः कालकूटोपमा रणे।
खरदूषणयोर्भृत्याः कृतान्ताः कुपिता इव ॥ १७
रामस्य राजशार्दूल सहिष्यन्ते न सायकान्।
अनारतगता धारा जलदस्येव पांसवः ॥ १८
न च पुत्रकृतं स्नेहं कर्तुमर्हसि पार्थिव।
न तदस्ति जगत्यस्मिन्यन्न देयं महात्मनाम् ॥ १९
हन्त नूनं विजानामि हतांस्तान्विद्धि राक्षसान्।
नह्यस्मदादयः प्राज्ञाः संदिग्धे संप्रवृत्तयः ॥ २०
अहं वेद्मि महात्मानं रामं राजीवलोचनम्।
वसिष्ठश्च महातेजा ये चान्ये दीर्घदर्शिनः ॥ २१
यदि धर्मो महत्त्वं च यशस्ते मनसि स्थितम्।
तन्मह्यं समभिप्रेतमात्मजं दातुमर्हसि ॥ २२
दशरात्रश्च मे यज्ञो यस्मिन्रामेण राक्षसाः।
हन्तव्या विघ्नकर्तारो मम यज्ञस्य वैरिणः ॥ २३
अत्राप्यनुज्ञां काकुत्स्थ ददतां तव मन्त्रिणः।
वसिष्ठप्रमुखाः सर्वे तेन रामं विसर्जय ॥ २४

---

तत्र हेतुगर्भे विशेषणे। वंशप्रभावाद्गुरुप्रभावाच्चेत्यर्थः ॥२॥ हृद्गतं विवक्षितं तस्य कार्यविनिर्णयं तत्संबन्धिकर्तव्यार्थनिश्चयं कुरु, प्रथममिति शेषः। तत्कदाचिदधर्म्यं चेदशक्यमित्याशङ्क्याह—**धर्म**मिति ॥३॥ तदेवाह—**अह**मित्यादिना। धर्मं यज्ञं। समातिष्ठे आरभे ॥४॥ विबुधव्रजान्देवसङ्घान् ॥५॥ विहितेऽनुष्ठिते ॥६॥ अवधूते विघ्नैर्निरस्ते। यागकदम्बके यज्ञसमूहे ॥७॥ ननु शापेनैव ते कुतो न निरस्तास्तत्राह—**नचे**ति ॥८॥ ईदृशी क्रोधशापाद्ययोग्या। प्रापयेयम्। स्वार्थे णिच्। प्राप्नुयाम् ॥९॥ सत्तमे साधुतमे। 'सत्तम' इति पाठे तु संबोधनम्। अभिभवस्तिरस्कारः अर्थात्सत्तमानाम्। ऐकपद्यं वा ॥१०॥ उत्तरत्र तमिति दर्शनादत्र य इत्यध्याहार्यम्। विशेषणानि विवक्षितार्थोपपादकानि ॥ ११ ॥ सत्यपराक्रममभोघपराक्रमम्। काकपक्षौ कर्णमूलशिखे क्षत्रियाचारसिद्धे ॥ १२ ॥ नन्वकृतास्त्रो बालोऽयं कथं शक्तस्तत्राह—**शक्त** इति। गुप्तो रक्षितः। अपकर्तारो यज्ञस्य लोकस्येति वा शेषः। मूर्धविनिग्रहे शिरश्छेदे ॥ १३ ॥ श्रेयोऽस्त्रविद्याप्रदानरूपम्। अस्त्रभेदाद्बहुरूपं प्रभावतस्त्वनन्तकमनवधिकम् ॥१४॥ स्थातुम्। पुर इति शेषः। वनेरणे वनोद्भूते ईरणाख्ये तृणे। तस्य पेलवतया मृगत्राणाक्षमत्वात्। रणे इति वा छेदः ॥१५॥ ननु मद्भृत्यैर्मया वा ते निग्राह्या इति राजाभिसंधिमालक्ष्याह—**तेषां चे**ति। काकुत्स्थात्प्रकृताद्रामात् ॥ १६ ॥ तत्कुतस्तत्राह—**वीर्ये**ति। उत्सिक्ता गर्विताः। न केवलं स्वबलेनैव किंतु स्वामिबलेनापीत्याह—**खरे**ति ॥ १७ ॥ तर्हि रामस्यापि ते कथं साध्यास्तत्राह—**रामस्ये**ति। अनारतगता अविरतनिर्गताः। यथा दृष्ट्यभिभवे क्षमा अपि पांसवो न वृष्ट्यभिभवे क्षमास्तद्वदित्यर्थः ॥१८॥ भवतु तथा, तथापि पुत्रो दुस्त्यजः पितृभिरित्याशङ्क्याह—**नचे**ति। मम पुत्रोऽयमिति प्राकृतं स्नेहमनुरागम्। तत्कुतस्तत्राह—**न तदि**ति। तथाहि। शिबिदधीच्यलर्कप्रभृतयः स्वदेहचक्षुराद्यपि ददुरिति भावः ॥ १९ ॥ नात्रापायशङ्कापि किन्तु विजयाभ्युदय एवेत्याह—**हन्ते**ति। नूनमिति निश्चये। विजानामि तपसेति शेषः। त्वमपि विद्धि। मद्वचसेति शेषः। तदेव द्रढयति—**नही**ति ॥२०॥ महान्तं जीवोपाध्यपरिच्छिन्नमात्मानम्। ईश्वरमित्यर्थः। प्रभावतो वा महात्मानम्। वसिष्ठश्च वेत्तीति विपरिणामेनानुषङ्गः। एवमुत्तरत्रापि। दीर्घदर्शिनो योगसिद्ध्या व्यवहितविप्रकृष्टदर्शनशीलाः ॥ २१ ॥ धर्मो महत्त्वं यशश्च रक्ष्यमिति मनसि ते स्थितं यदि तत्तर्हि। समभिप्रेतं प्रियतममित्यात्मजविशेषणं, सम्यगभिप्रेतमध्यवसितं यथा भवतीति क्रियाविशेषणं वा ॥ २२ ॥ दशरात्रो दशाहोरात्रसाध्यः ॥ २३ ॥ अत्रास्मिन्नर्थे तव मन्त्रिणः सर्वे वसिष्ठप्रमुखा अपीति संबन्धः। तेन तेषामनुज्ञादानेन ॥ २४ ॥

---

१ वनेरिण इति पाठः.

२ वनेरिणे वनोद्भूते ईरिणाख्ये इति पाठः.

नात्येति कालः कालज्ञ यथायं मम राघव ।
तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ॥ २५
कार्यमण्वपि काले तु कृतमेत्युपकारताम् ।
महदप्युपकारोऽपि रिक्ततामेत्यकालतः ॥ २६
इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ।
विरराम महातेजा विश्वामित्रो मुनीश्वरः ॥ २७
श्रुत्वा वचो मुनिवरस्य महानुभाव-
स्तूष्णीमतिष्ठदुपपन्नपदं स वक्तुम् ।
नो युक्तियुक्तकथनेन विनैति तोषं
धीमानपूरितमनोऽभिमतश्च लोकः ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे विश्वामित्रवाक्यं नाम सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ८

वाल्मीकिरुवाच ।
तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
मुहूर्तमासीन्निश्चेष्टः सदैन्यं चेदमब्रवीत् ॥ १
ऊनषोडशवर्षोऽयं रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २
इयमक्षौहिणी पूर्णा यस्याः पतिरहं प्रभो ।
तया परिवृतो युद्धं दास्यामि पिशिताशिनाम् ॥ ३
इमे हि शूरा विक्रान्ता भृत्या मन्त्रविशारदाः ।
अहं चैषां धनुष्पाणिर्गोप्ता समरमूर्धनि ॥ ४
एभिः सहैव वीराणां महेन्द्रमहतामपि ।
ददामि युद्धं मत्तानां करिणामिव केसरी ॥ ५
बालो रामस्त्वनीकेषु न जानाति बलाबलम् ।
अन्तःपुरादृते दृष्टा नानेनान्या रणावनिः ॥ ६
न शस्त्रैः परमैर्युक्तो न च युद्धविशारदः ।
नवास्त्रैः शूरकोटीनां तज्ज्ञः समरभूमिषु ॥ ७
केवलं पुष्पखण्डेषु नगरोपवनेषु च ।
उद्यानवनकुञ्जेषु सदैव परिशीलनम् ॥ ८
विहर्तुमेष जानाति सह राजकुमारकैः ।
कीर्णपुष्पोपहारासु स्वकास्वजिरभूमिषु ॥ ९
अद्य त्वतितरां ब्रह्मन्मम भाग्यविपर्ययात् ।
हिमेनेव हि पद्माभः संपन्नो हरिणः कृशः ॥ १०
नात्तुमन्नानि शक्नोति न विहर्तुं गृहावनिम् ।
अन्तःखेदपरीतात्मा तूष्णीं तिष्ठति केवलम् ॥ ११
सदारः सहभृत्योऽहं तत्कृते मुनिनायक ।
शरदीव पयोवाहो नूनं निःसारतां गतः ॥ १२
ईदृशोऽसौ सुतो बाल आधिनाऽथ वशीकृतः ।

कालो यज्ञाङ्गभूतो वसन्तादिर्यथा नात्येतीति संबन्धः ॥ २५ ॥ अभिलषितसाधनानुग्रह उपकारस्तद्भावम् । महद्बहुवित्तव्यायाससाध्यमपि कार्यं फलरिक्ततामेति । संपन्नफलत्वेनोपकारोऽपि प्रीतिरिक्ततामेतीत्यर्थः ॥ २६ ॥ मुनिवाक्यमुपसंहरति—इत्येवमिति ॥ २७ ॥ उपपन्नानि युक्तियुक्तानि पदानि प्रसिद्धानि, वचनार्हवस्तूनि वा यस्मिन्कर्मणि तत्तथा । ननु शक्यमुच्यतां किमुपपत्तिचिन्तयेति तत्राह—**धीमा**निति । लोको मनोरथपूर्त्यापि तुष्यति धीमांस्तु तत्पूर्तावपि युक्तियुक्तकथनेन विना न तुष्यतीति युक्तोपपत्तिचिन्तेति भावः ॥ २८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे विश्वामित्रवाक्यं नाम सप्तमः सर्गः ॥ ७ ॥

स्नेहाद्राज्ञोऽत्र रामस्य युद्धायोग्यत्ववर्णनम् ।
रावणादिबलं ज्ञात्वा विषादश्चोपवर्ण्यते ॥ १ ॥

उपपन्नतरोत्तरालाभान्निश्चेष्टः । पूर्वोक्तरामदशानुसंधानात्प्रतिज्ञातार्थासामर्थ्यान्मुनिवचनस्य च दुरुल्लङ्घ्यत्वात्सदैन्यम् । इदं वक्ष्यमाणम् ॥ १ ॥ किंचिदूनः षोडशो वर्षोऽस्येति त्रिपदबहुव्रीहिः । युद्धयोग्यतैव नास्ति, राक्षसैः सह तु सुतरामिति भावः ॥२॥ तर्हि किं व्यर्थः प्रयासो नेत्याह—**इय**मिति । अक्षौहिणीलक्षणं तु 'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी दशानीकिन्य(न्यो१)क्षौहिणी' इत्यमरसिंहेनैव भारतादिप्रसिद्धं संगृह्योक्तम् ॥३॥ अत्र युद्धे । गोप्ता रक्षकः ॥४॥ महेन्द्रादपि महताम् ॥५॥ नन्वनेन रणावनिर्न दृष्टेत्येव वक्तव्ये अन्येति विशेषणवैयर्थ्यम् । एवं तर्हि पुरस्यान्तरन्तःपुरमित्यव्ययीभावः । पुरमध्ये खुरलीक्रीडार्थकल्पितरणावनेरन्यावनिर्न दृष्टेत्यर्थः ॥ ६ ॥ धृत्वा यैः प्रहियते तानि शस्त्राणि । क्षिप्त्वा यैः प्रहियते तान्यस्त्राणि । शूरकोटीनां समरभूमिष्विति संबन्धः । तज्ज्ञो युद्धज्ञः । वैशारद्यं दूरे, ज्ञानमप्यस्य नास्तीति भावः ॥ ७ ॥ परिशीलनम् । अस्येति शेषः । पुंलिङ्गपाठे तु परिमितं शीलनमस्येति बहुव्रीहिः ॥ ८ ॥ कीर्णपुष्पाण्येवोपहाराः पूजा यासु । स्वकासु स्वीयासु । अजिरभूमिषु चत्वरस्थलेषु ॥ ९ ॥ अतितरामित्यस्य पद्मभ्यन्तेन हरिणः कृश इत्याभ्यां च संबन्धः । हरिणः पाण्डुरः । तत्र दृष्टान्तः । पद्मैः पद्मया वा आभातीति पद्माभस्तदाकारः । 'आतश्चोपसर्गे' इति कः । सः । हिमेन तुषारेणेव ॥१०॥ विहर्तुं संचरितुम् । क्रीडितुमिति तु न । अकर्मकत्वापत्तेः ॥ ११ ॥ तत्कृते तन्निमित्तम् । निःसारतां निरुत्साहबलतां निःसुखतां वा ॥१२॥ ईदृश इति शरीरेण, बाल इति वयसा, आधिना वशीकृत इति तुष्टादिना च तस्याशक्तता प्रेषणानर्हता च दर्शिता ।

१ अत्र इति पाठः.

कथं ददामि तं तुभ्यं योद्धुं सह निशाचरैः ॥ १३
अपि बालाङ्गनासङ्गादपि साधो सुधारसात् ।
राज्यादपि सुखायैव पुत्रस्नेहो महामते ॥ १४
ये दुरन्ता महारम्भास्त्रिषु लोकेषु खेददाः ।
पुत्रस्नेहेन सन्तोऽपि कुर्वते तानसंशयम् ॥ १५
असवोऽथ धनं दारास्त्यज्यन्ते मानवैः सुखम् ।
न पुत्रो मुनिशार्दूल स्वभावो ह्येष जन्तुषु ॥ १६
राक्षसाः क्रूरकर्माणः कूटयुद्धविशारदाः ।
रामस्तान्योधयत्वितथं युक्तिरेवातिदुःसहा ॥ १७
विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ।
जीवितुं जीविताकाङ्क्षी न रामं नेतुमर्हसि ॥ १८
नववर्षसहस्राणि मम जातस्य कौशिक ।
दुःखेनोत्पादितास्त्वेते चत्वारः पुत्रका मया ॥ १९
प्रधानभूतस्तेष्वेव रामः कमललोचनः ।
तं विनेह त्रयोऽप्यन्ये धारयन्ति न जीवितम् ॥ २०
स एव रामो भवता नीयते राक्षसान्प्रति ।
यदि तत्पुत्रहीनं त्वं मृतमेवाशु विद्धि माम् ॥ २१
चतुर्णामात्मजानां हि प्रीतिरत्रैव मे परा ।
ज्येष्ठं धर्ममयं तस्मान्न रामं नेतुमर्हसि ॥ २२
निशाचरबलं हन्तुं मुने यदि तवेप्सितम् ।
चतुरङ्गसमायुक्तं मया सह बलं नय ॥ २३

किंवीर्या राक्षसास्ते तु कस्य पुत्राः कथं च ते ।
कियत्प्रमाणाः के चैव इति वर्णय मे स्फुटम् ॥ २४
कथं तेन प्रकर्तव्यं तेषां रामेण रक्षसाम् ।
मामकैर्बालकैर्ब्रह्मन्मया वा कूटयोधिनाम् ॥ २५
सर्वं मे शंस भगवन्यथा तेषां महारणे ।
स्थातव्यं दुष्टभाग्यानां वीर्योत्सिक्ता हि राक्षसाः ॥ २६
श्रूयते हि महावीर्यो रावणो नाम राक्षसः ।
साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः ॥ २७
स चेत्तव मखे विघ्नं करोति किल दुर्मतिः ।
तत्संग्रामे न शक्ताः स्मो वयं तस्य दुरात्मनः ॥ २८
काले काले पृथग्ब्रह्मन्भूरिवीर्यविभूतयः ।
भूतेष्वभ्युदयं यान्ति प्रलीयन्ते च कालतः ॥ २९
अद्यास्मिंस्तु वयं काले रावणादिषु शत्रुषु ।
न समर्थाः पुरः स्थातुं नियतेरेष निश्चयः ॥ ३०
तस्मात्प्रसादं धर्मज्ञ कुरु त्वं मम पुत्रके ।
मम चैवाल्पभाग्यस्य भवान्हि परदैवतम् ॥ ३१
देवदानवगन्धर्वा यक्षाः पतगपन्नगाः ।
न शक्ता रावणं योद्धुं किं पुनः पुरुषा युधि ॥ ३२
महावीर्यवतां वीर्यमादत्ते युधि राक्षसः ।
तेन सार्धं न शक्ताः स्म संयुगे तस्य बालकैः ॥ ३३
अयमन्यतमः कालः पेलवीकृतसज्जनः ।

तत्रापि योद्धुं, तदपि निशाचरैः सह सुतरामयुक्त इति भावः ॥ १३ ॥ ननु धर्मलिप्सोस्तव किं तद्विरोधिना पुत्रस्नेहेनेत्याशङ्क्याह—**अपी**ति । उक्तसुखान्येव हि धर्मफलं तानि पुत्रसुखं नातिशेरत इति भावः ॥ १४ ॥ दुरन्तास्त्रिरसाध्यास्तपःक्लेशास्तान् । सन्तो धार्मिका अपि ॥ १५ ॥ सुखं त्यज्यत इति विपरिणामेनानुषङ्गः ॥ १६ ॥ इत्थं पूर्वोक्तप्रकारेण स्थितो रामः, इत्थमीदृशी युक्तिरिति वा ॥ १७ ॥ रामे नीते राक्षसवधो न संभावितः प्रत्युत सपुत्रस्य ममैव वधस्त्वया संपादितः स्यादित्याह चतुर्भिः—**विप्रयुक्त** इति । तथाच यज्ञधर्मापेक्षया तव महानधर्मः स्यादिति भावः ॥ १८ ॥ ननु 'षष्टिवर्षसहस्राणि जातस्य मम कौशिक' इति पूर्वरामायणे उक्तं कथं तद्विरुद्धमत्रोच्यते । सत्यम् । अतो न यथाश्रुतोऽन्वयः, किंतु नववर्षसहस्राणि पुत्रकाम्ययोपलक्षितस्य जातस्य मम दुःखेन दुःखसाध्येनाश्वमेधपुत्रेष्ट्यादिना चत्वार उत्पादिता इति ॥ १९ ॥ तेषु राम एव प्रधानभूतो यथा शरीरेषु प्राणः । अतएव तेषां प्रियतमः । किं ततस्तत्राह—**तं विने**ति ॥ २० ॥ यस्य नयने त्रयाणामन्येषामपि मरणं स तादृशो राम एव मृत्युरूपान्राक्षसान्प्रति नीयते भवतेति चतुर्भिरपि हीनं मां मृतमेव विद्धीत्यर्थः ॥ २१ ॥ चतुर्णां मरणादिति किं वाच्यम्, एकस्य रामस्य नयनमात्रेणापि स्वमृत्युः संभावित इत्यभिप्रेत्याह—**चतुर्णा**मिति । धर्ममयं धर्मप्रचुरम् ॥ २२ ॥ यदि रामं न नयामि तदा कथं कार्यसिद्धिस्तत्राह—**निशाचरे**ति । हस्त्यश्वरथपादातैश्चतुरङ्गं बलं सैन्यम् ॥ २३ ॥ 'अपरिज्ञाय नास्कन्दे'दिति परबलं जिज्ञासुः पृच्छति—**किंवीर्या** इति । कथं च ते वर्तन्त इति शेषः । कियत्प्रमाणाः संख्यापरिमाणेन । के चैव नामतः ॥ २४ ॥ प्रकर्तव्यं प्रतिकर्तव्यम् । 'प्रहर्तव्यम्' इति पाठे स्पष्टम् ॥ २५ ॥ वीर्येणोत्सिक्ता ऊर्जिताः । हि प्रसिद्धाः ॥ २६ ॥ तदेव स्फुटयति—**श्रूयत** इति ॥ २७ ॥ किलेति संभावने । स चेत् शंसेति संबन्धः । तर्तर्हि ॥ २८ ॥ तत्कुतस्तत्राह—**काले** इति । **पृथ**गिति । कदाचित्केषुचिदेवेति व्यवस्थयेत्यर्थः । वीर्याणि विभूतयश्चेति द्वन्द्वगर्भकर्मधारयः ॥ २९ ॥ किं ततस्तत्राह—**अद्ये**ति । अस्मिन्काले न समर्थास्तत्राप्यत्र सुतरामित्याशयः । नियतेर्दैवस्य । ईश्वरस्येति यावत् ॥ ३० ॥ अनुकम्प्यः पुत्रः पुत्रकस्तस्मिन् । अर्थिमनोरथसमर्थनासमर्थत्वादल्पभाग्यस्य ॥ ३१ ॥ ननु कुतस्तवेदृशमधैर्यं तत्राह—**देवे**ति । पुरुषा मनुष्याः ॥ ३२ ॥ महतां पूज्यतमानां वीर्यवतामिन्द्रादीनामपि आदत्ते अपहरतीव । राक्षसो रावणः । संयुगे योद्धुमिति शेषः । येन सह वयं न शक्ताः स्म तस्य बालकैः किं शक्यमिति शेषः । अथवा तस्य बालकैरिन्द्रजित्प्रभृतिभिः सहापि न शक्ताः स्म इति पूर्वेण संबन्धः ॥ ३३ ॥ अशक्तौ हेत्वन्तरमाह—**अय**मिति । पेलवीकृता निर्बलीकृताः सज्जना येन सः । राघवः स्वयमेव वार्धकेन यतो

राघवोऽपि गतो दैन्यं यतो वार्धकजर्जरः ॥ ३४
अथवा लवणं ब्रह्मन्यज्ञघ्नं तं मधोः सुतम् ।
कथयत्वसुरप्रख्यं नैव मोक्ष्यामि पुत्रकम् ॥ ३५
सुन्दोपसुन्दयोश्चैव पुत्रौ वैवस्वतोपमौ ।
यज्ञविघ्नकरौ ब्रूहि न ते दास्यामि पुत्रकम् ॥ ३६
अथ नेष्यसि चेद्ब्रह्मंस्तद्धतोऽस्म्यहमेव ते ।
अन्यथा तु न पश्यामि शाश्वतं जयमात्मनः ॥ ३७

इत्युक्त्वा मृदु वचनं रघूद्वहोऽसौ
कल्लोले मुनिमतसंशये निमग्नः ।
नाज्ञासीत्क्षणमपि निश्चयं महात्मा
प्रोद्वीचाविव जलधौ स मुह्यमानः ॥ ३८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे दशरथवाक्यं नामाष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ९

वाल्मीकिरुवाच ।

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलेक्षणम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १
करिष्यामीति संश्रुत्य प्रतिज्ञां हातुमर्हसि ।
स भवान्केसरी भूत्वा मृगतामिव वाञ्छसि ॥ २
राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ।
न कदाचन जायन्ते शीतांशोरुष्णरश्मयः ॥ ३
यदि त्वं न क्षमो राजन्गमिष्यामि यथागतम् ।
हीनप्रतिज्ञ[1] काकुत्स्थ सुखी भव सबान्धवः ॥ ४

वाल्मीकिरुवाच ।

तस्मिन्कोपपरीतेऽथ विश्वामित्रे महात्मनि ।
चचाल वसुधा कृत्स्ना सुरांश्च भयमाविशत् ॥ ५
क्रोधाभिभूतं विज्ञाय जगन्मित्रं महामुनिम् ।
धृतिमान्सुव्रतो धीमान्वसिष्ठो वाक्यमब्रवीत् ॥ ६

वसिष्ठ उवाच ।

इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः ।
भवान्दशरथः श्रीमांस्त्रैलोक्यगुणभूषितः ॥ ७
धृतिमान्सुव्रतो भूत्वा न धर्मं हातुमर्हसि ।
त्रिषु लोकेषु विख्यातो धर्मेण यशसा युतः ॥ ८
स्वधर्मं प्रतिपद्यस्व न धर्मं हातुमर्हसि ।
मुनेस्त्रिभुवनेशस्य वचनं कर्तुमर्हसि ॥ ९
करिष्यामीति संश्रुत्य तत्ते राजन्नकुर्वतः ।
इष्टापूर्तं हरेद्धर्मं तस्माद्रामं विसर्जय ॥ १०
इक्ष्वाकुवंशजातोऽपि स्वयं दशरथोऽपि सन् ।

जर्जरः शिथिलः । अथवा राघवो रामो वृद्धक एव वार्धकः स इव जर्जरः ॥३४॥ अथवेति कल्पान्तरे । यज्ञघ्नं तवेति शेषः । कथयतु भवानिति शेषः । असुरप्रख्यं दैत्यसदृशं दैत्याद्राक्षस्यामुत्पन्नत्वात् । शैवशूलबलेन तस्याजय्यत्वान्मान्धातृमृत्युत्वाच्च नैवेत्यवधारणम् ॥३५॥ अथवेत्यनुषज्यते । सुन्दोपसुन्दपुत्रौ मारीचसुबाहू ॥ ३६ ॥ अदत्तमपि रामं तपोबलान्नेष्याम्येवेति चेत्तत्राह—अथेति । ते त्वया । तत्तर्हि उक्तकल्पे । कर्तुरेव शेषत्वविवक्षया षष्ठी । एवकारो राक्षसव्यावृत्त्यर्थः । अन्यथा अमृत्वा तु । शाश्वतं निश्चितम् ॥ ३७ ॥ असौ रघूद्वहो दशरथो मुनेरभिमते रामप्रेषणे राक्षसवधे च संशये कर्तव्यमथवा न कर्तव्यं, सेत्स्यत्यथवा न सेत्स्यतीत्यादिरूपे कल्लोले महोर्मिजाले निमग्न इव क्षणं सुखं निश्चयमपि नाज्ञासीत् । यतः स प्रोद्वीचौ जलधौ मुह्यमान इवासीदिति शेषः ॥ ३८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे दशरथवाक्यं नामाष्टमः सर्गः ॥ ८ ॥

विश्वामित्रस्य कोपोऽत्र तत्तपोस्त्रबलोक्तिभिः ।
वसिष्ठेन शनै राज्ञः समाधानं च वर्ण्यते ॥ १ ॥

स्नेहेन पर्याकुले व्याकुले ईक्षणे नेत्रे यस्मिंस्तुल्यकालतया तत्तथाभूतं वचनं श्रुत्वेत्यर्थः ॥ १ ॥ संश्रुत्य अङ्गीकृत्य । स प्रसिद्धो भवान्पूज्यः, त्वमित्यध्याहार्यम् । अन्यथा मध्यमपुरुषद्वयानुपपत्तेः ॥ २ ॥ राघवाणां कुलस्यायं विपर्ययोऽनृतवादलक्षणोऽयुक्तः । तदेव व्यतिरेकन्यासेन समर्थयति—नेति ॥३॥ न क्षमो न समर्थः ॥ ४ ॥ परीते व्याप्ते । महात्मनि तपोमाहात्म्यशालिनि । पत्युरपराधादपराधिधारणापराधाद्वा मामेव शप्स्यतीति भयाद्वसुधा चचाल । किमन्यमेव तपसा रावणादिहन्तारं स्रक्ष्यति स चास्मानपि जेष्यतीति सुरान्भयमाविशत् । चादन्यानपि ॥ ५ ॥ जगन्मित्रं विश्वामित्रम् । विश्वस्य मित्रं विश्वामित्र इति तन्नामार्थप्रसिद्धेः[2] । 'मित्रे चर्षौ' इति पूर्वपदस्य दीर्घः । यद्यपि वसिष्ठोऽपि कोपेनैव तत्कोपप्रतीकारे समर्थस्तथापि न चुक्रोध । यतोऽसौ धृत्यादिमानिति भावः ॥ ६ ॥ त्रैलोक्येऽपि ये गुणवतां गुणाः प्रसिद्धास्तैः सर्वैर्भूषितः ॥ ७ ॥ प्रतिज्ञापालनं व्रतं तच्छोभनं यस्य तथाविध एतावन्तं कालं भूत्वेत्यर्थः । भवच्छब्दमध्यमपुरुषौ पूर्ववत् । धर्मेण यशसा च युत इति त्रिषु लोकेषु विख्यातः ॥ ८ ॥ स्वस्य स्वानां च धर्मं प्रतिज्ञापालनं प्रतिपद्यस्व । त्रिष्वपि भुवनेष्वभिलषितसंपादने ईष्ट इति त्रिभुवनेशस्तस्य ॥ ९ ॥ तत् हरेदित्यन्वयः ॥ १० ॥ 'यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः' इति न्यायात्प्रजामर्यादापालनायापि प्रतिज्ञाऽवश्यं पालनीयेत्याह—इक्ष्वा-

१ हीनप्रतिज्ञः इति पाठः.

२ 'विश्वस्य ह वै मित्रं विश्वामित्र आस' इति श्रुतिः.

न पालयसि चेद्वाक्यं कोऽपरः पालयिष्यति ॥ ११
युष्मदादिप्रणीतेन व्यवहारेण जन्तवः ।
मर्यादां न विमुञ्चन्ति तां न हातुं त्वमर्हसि ॥ १२
गुप्तं पुरुषसिंहेन ज्वलनेनामृतं यथा ।
कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ॥ १३
एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याऽधिको लोके तपसां च परायणम् ॥ १४
एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये सचराचरे ।
नैतदन्यः पुमान्वेत्ति न च वेत्स्यति कश्चन ॥ १५
न देवा नर्षयः केचिन्नासुरा न च राक्षसाः ।
न नागा यक्षगन्धर्वाः समेताः सदृशा मुनेः ॥ १६
अस्त्रमस्मै कृशाश्वेन परैः परमदुर्जयम् ।
कौशिकाय पुरा दत्तं यदा राज्यं समन्वगात् ॥ १७
ते हि पुत्राः कृशाश्वस्य प्रजापतिसुतोपमाः ।
एनमन्वचरन्वीरा दीप्तिमन्तो महौजसः ॥ १८
जया च सुप्रभा चैव दाक्षायण्यौ सुमध्यमे ।
तयोस्तु यान्यपत्यानि शतं परमदुर्जयम् ॥ १९
पञ्चाशतं सुताञ्जज्ञे जया लब्धवरा पुरा ।
वधार्थं सुरसैन्यानां ते क्षमाः कामचारिणः ॥ २०
सुप्रभा जनयामास पुत्रान्पञ्चाशतं परान् ।
संघर्षान्नाम दुर्धर्षान्दुराकारान्बलीयसः ॥ २१
एवंवीर्यो महातेजा विश्वामित्रो जगन्मुनिः ।
न रामगमने बुद्धिं विक्लवां कर्तुमर्हसि ॥ २२

अस्मिन्महासत्त्वतमे मुनीन्द्रे
स्थिते समीपे पुरुषस्य साधौ ।
प्राप्तेऽपि मृत्यावमरत्वमेति
मा दीनतां गच्छ यथा विमूढः ॥ २३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे वसिष्ठसमाश्वासनं नाम नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः १०

वाल्मीकिरुवाच ।
तथा वसिष्ठे ब्रुवति राजा दशरथः सुतम् ।
संप्रहृष्टमना राममाजुहाव सलक्ष्मणम् ॥ १

दशरथ उवाच ।
प्रतिहार महाबाहुं रामं सत्यपराक्रमम् ।
सलक्ष्मणमविघ्नेन पुण्यार्थं शीघ्रमानय ॥ २

किंति द्वाभ्याम् । न पालयसि अन्यथीकरोषि चेत् ॥ ११ ॥ प्रणीतेन प्रवर्तितेन । जन्तवो जन्तुसदृशा अज्ञा अपि ॥ १२ ॥ पुरुषसिंहेन पुरुषश्रेष्ठेन विश्वामित्रेण । ज्वलनेनेति । इन्द्रनिलयेऽवस्थितममृतं परितः प्राकारभूतेनाग्निना रक्ष्यत इति प्रसिद्धम् । कृतास्त्रं शिक्षितास्त्रम् । शक्ष्यन्ति धर्षयितुमिति शेषः ॥ १३ ॥ उक्तार्थोपपत्तये विश्वामित्रप्रभावं प्रपञ्चयति—एष इति । परं अयनं स्थानम् ॥ १४ ॥ सचराचरे प्रसिद्धमिति शेषः, सचराचरे अन्यो न वेत्तीत्युत्तरान्वयि वा ॥ १५ ॥ न सदृशाः प्रभावेणेति शेषः । नन्विदं कथं संगच्छतां भृगवङ्गिरोऽगस्त्यप्रभृतीनां महर्षीणां ब्रह्मादीनां देवानां च प्रत्येकमपि न्यूनप्रभावत्वानुपपत्तेरिति चेदेवं तर्हि तत्त्वदृशाऽस्य ब्रह्मभावमन्येषामाभिमानिकं परिच्छिन्नभावमभिप्रेत्येदमुच्यत इत्यदोषः । नच ब्रह्मभावेनापि तेषामेतत्साद्दश्यम् । तत्र भेदाभावेन तद्घटितस्य तस्यायोगात् । तथाच श्रुतिः—'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति' इति ॥ १६ ॥ कृशाश्वेन जनितमिति शेषः । दत्तं तपसा तोषितेन रुद्रेणेति शेषः । प्रसिद्धमिदं पूर्वरामायणे ॥ १७ ॥ ते अस्त्रदेवाः । प्रजापतिसुतो रुद्रस्तदुपमाः संहारे । वीरा विक्रान्ताः । ओजः शत्रुनिजयसामर्थ्यम् । एनं विश्वामित्रं तपःप्रभावेण वशीकृतत्वादन्वचरन्ननुचरवत्सेवन्ते । भूतकालो न विवक्षितः ॥ १८ ॥ तेषु प्रधानानाह—जयेत्यादिना । दाक्षायण्यौ दक्षकन्ये ॥ १९ ॥ तान्विभज्य दर्शयति—पञ्चाशतमिति । लब्धवरा पतिशुश्रूषयेति शेषः । सुरसैन्यानामिति कर्तरि षष्ठी । अतो योग्यतया असुरवध एव लभ्यते ॥ २० ॥ संघर्षान्परास्त्राभिभवनशीलत्वात्तदाख्यान् । दुराकारांस्तीक्ष्णाकारान् ॥ २१ ॥ जगत्सर्वं मनुते योगबलात्साक्षात्पश्यति तच्छीलो जगन्मुनिः । अतएव रामविजयमपि भाविनं दृष्ट्वैव समागत इति न बुद्धिवैक्लव्यं युक्तमिति भावः ॥ २२ ॥ तदेव द्रढयन्नाह—अस्मिन्निति । सत्त्वं प्रभावः । पुरुषस्य साधारणस्यापि । अमरत्वमेति अर्थात्स पुरुषः । तथाच साधारणपुरुषस्याप्येतत्संनिधानमात्रेणापि यत्र प्राप्तादपि मृत्योर्न भयं प्रत्युतामरत्वप्राप्तिस्तत्र महाप्रभावस्य रामस्य गोप्तरि तस्मिन्क्षुद्रेभ्यो राक्षसेभ्यो भयमत्यन्तमसंभावितमिति मूढवन्मा विषीदेत्यर्थः ॥ २३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे वसिष्ठसमाश्वासनं नाम नवमः सर्गः ॥ ९ ॥

राज्ञात्र प्रहितो गत्वा याष्टीको रामचेष्टितम् ।
विज्ञाय पुनरागत्य राज्ञे कृत्स्नं न्यवेदयत् ॥ १ ॥

तथेति । उक्तिफलस्य संप्रहर्षस्य परगामित्वाद्भूनः परस्मैपदम् । हेतौ शता ॥ १ ॥ अविघ्नेन पुण्यार्थं निर्विघ्नं मुनेर्यज्ञसिद्ध्यर्थम् । अथवा सत्यवचनपरिपालनरूपे महापुण्ये पूर्वोपस्थितमिथ्याशोकवद्विलम्बेनान्योऽपि विघ्नो मा भूदित्यभिप्रेत्यैव-

इति राज्ञा विसृष्टोऽसौ गत्वान्तःपुरमन्दिरम् ।
मुहूर्तमात्रेणागत्य समुवाच महीपतिम् ॥ ३
देव दोर्दलिताशेषरिपो रामः स्वमन्दिरे ।
विमनाः संस्थितो रात्रौ षट्पदः कमले यथा ॥ ४
आगच्छासि क्षणेनेति वक्ति ध्यायति चैकतः ।
न कस्यचिच्च निकटे स्थातुमिच्छति खिन्नधीः ॥ ५
इत्युक्तस्तेन भूपालस्तं रामानुचरं जनम् ।
सर्वमाश्वासयामास पप्रच्छ च यथाक्रमम् ॥ ६
कथं कीदृग्विधो राम इति पृष्टो महीभृता ।
रामभृत्यजनः खिन्नो वाक्यमाह महीपतिम् ॥ ७
देहयष्टिमिमां देव धारयन्त इमे वयम् ।
खिन्नाः खेदे परिम्लानतनौ रामे सुते तव ॥ ८
रामो राजीवपत्राक्षो यतःप्रभृति चागतः ।
सविप्रस्तीर्थयात्रायास्ततःप्रभृति दुर्मनाः ॥ ९
यत्नप्रार्थनयास्माकं निजव्यापारमाह्निकम् ।
सोऽयमाम्लानवदनः[1] करोति न करोति वा ॥ १०
स्नानदेवार्चनादानभोजनादिषु दुर्मनाः ।
प्रार्थितोऽपि हि नातृप्तेरश्नात्यशनमीश्वरः ॥ ११
लोलान्तःपुरनारीभिः कृतदोलाभिरङ्गणे ।
नच क्रीडति लीलाभिर्धाराभिरिव चातकः ॥ १२
माणिक्यमुकुलप्रोता केयूरकटकावलिः ।
नानन्दयति तं राजन्द्यौः पातविषयं यथा ॥ १३
क्रीडद्वधूविलोकेषु वहत्कुसुमवायुषु ।
लतावलयगेहेषु भवत्यतिविषादवान् ॥ १४
यद्द्रव्यमुचितं स्वादु पेशलं चित्तहारि च ।
बाष्पपूर्णेक्षण इव तेनैव परिखिद्यते ॥ १५
किमिमा दुःखदायिन्यः प्रस्फुरन्तीः पुराङ्गनाः ।
इति नृत्तविलासेषु[2] कामिनीः परिनिन्दति ॥ १६
भोजनं शयनं यानं विलासं स्नानमासनम् ।
उन्मत्तचेष्टित इव नाभिनन्दत्यनिन्दितम् ॥ १७
किं संपदा किं विपदा किं गेहेन किमिङ्गितैः ।
सर्वमेवासदित्युक्त्वा[3] तूष्णीमेकोऽवतिष्ठते ॥ १८
नोदेति परिहासेषु न भोगेषु निमज्जति ।
न च तिष्ठति कार्येषु मौनमेवावलम्बते ॥ १९
विलोलालकवल्लर्यो हेलावलितलोचनाः ।
नानन्दयन्ति तं नार्यो मृग्यो वनतरुं यथा ॥ २०
एकान्तेषु दिगन्तेषु तीरेषु विपिनेषु च ।
रतिमायात्यरण्येषु विक्रीत इव जन्तुषु ॥ २१
वस्त्रपानाशनादानपराङ्मुखतया तया ।
परिव्राड्धर्मिणं भूप सोऽनुयाति तपस्विनम् ॥ २२
एक एव वसन्देशे जनशून्ये जनेश्वर ।
न हसत्येकया बुद्ध्या न गायति न रोदिति ॥ २३

---

मुक्तम् । शीघ्रपदेनाप्येतदेव द्योत्यते ॥ २ ॥ विसृष्टः प्रेषितः । अन्तःपुरान्तस्थं राममन्दिरम् ॥ ३ ॥ विमनाः विषण्णमनाः ॥ ४ ॥ क्षणो घटिकायाः षष्ठो भागः । एकत इति वक्तीत्यनेनापि संबध्यते । उक्तिर्वाङ्मात्रेण न मनःपूर्वकं, मुख्यं तु ध्यायत्येवेति भावः ॥ ५ ॥ तं प्रतीहारेण सह रामसमाचारनिवेदनायागतं रामानुचरं जनमनाश्वस्ता न सम्यङ्निवेदयेयुरित्याश्वासयामास ॥ ६ ॥ एकः क्रियायाः प्रश्नः, अपरः कार्श्यविषादावस्थानाम् ॥ ७ ॥ यष्टिमिव कृशं देहं देहयष्टिम् । खिन्ना दुःखिताः । तथाच यद्द्रष्टॄणामप्येतादृशो खेदकार्श्ये तस्य ते किं वाच्ये इति भावः ॥ ८ ॥ राजीवं कमलम् । यतो यस्माद्दिनात्प्रभृत्यागतस्तिष्ठतीति पदमध्याहार्यम् । अन्यथा आगमनस्य प्रात्यहिकत्वाभावेनाधिकरणातिरिक्तारम्भकालानपेक्षत्वेन प्रथमस्य प्रभृतीति पदस्य वैयर्थ्यात् । यदा आगतस्ततःप्रभृतीत्येतावतैव सिद्धेः । स्थितेस्तु प्रात्यहिकत्वाद्दौर्मनस्यवदस्त्येवाधिकरणकालातिरिक्तारम्भकालापेक्षेति न तद्वैयर्थ्यमिति ॥ ९ ॥ आह्निकं निजव्यापारं भोजनादि । न करोति वेत्यनास्थाद्योतनाय ॥ १० ॥ देवार्चना च दानं चेति वा, देवार्चनं च आदानं चेति वा विग्रहः ॥ ११ ॥ नारीभिः सहेति शेषः । दोला प्रेङ्खोलिका । अङ्गणे क्रीडाचत्वरे । यथा वर्षधाराभिः सह ता उपभुञ्जानश्चातकः क्रीडति तथा न क्रीडति चेत्यन्वयः ॥ १२ ॥ मुकुलाकारैर्माणिक्यैः प्रोता खचिता । द्यौः स्वर्गः । पातविषयमासन्नपतनं स्वर्गिणम् ॥ १३ ॥ क्रीडन्तीभिर्वधूभिर्विलोक्यन्त इति वा, क्रीडन्तीनां वधूनां विविधं लोकनानि लोका यत्रेति वा पदभेदे । क्रीडद्वधूनां विलोका एवेषवो बाणास्त इव वहन्तः कुसुमवायवो यत्रेत्येकपद्ये विग्रहः । लतानां वलयनं वेष्टनं वलयस्तत्संबन्धिषु गेहेषु । कुञ्जेष्वित्यर्थः ॥ १४ ॥ उचितमुपभोगे लोकशास्त्राविरुद्धम् । पेशलं चतुरम् । चित्तहारि मनोहरम् ॥ १५ ॥ प्रस्फुरन्तीर्हावभावलावण्यविलासादिभिः शोभमाना नृत्यन्तीर्वा दृष्ट्वा किं, यतो दुःखदायिन्य इति निन्दतीति योजना । 'प्रस्फुरन्ति' इति पाठ ऋजुः ॥ १६ ॥ शयनमासनमित्यधिकरणे ल्युटौ अन्ये करणे ल्युटः । विलसन्ति येन यस्मिन्वा तम् । अनिन्दितं निर्दोषम् । इदं सर्वविशेषणम् ॥ १७ ॥ इङ्गितैर्मनोरथैः । असत् असारम् ॥ १८ ॥ उदेति हृष्यति । निमज्जति सज्जते । कार्येष्वारम्भेषु न तिष्ठत्यास्थां न करोति ॥ १९ ॥ अलकेषु वल्लर्यः पुष्परत्नादिमञ्जर्यो विलोला यासां ताः । हेलाः श्रृङ्गारभावजाश्चेष्टाः । मृगीपक्षे अलका इव पुष्पमञ्जर्यः । हेलयेव चलितलोचनाश्चपलेक्षणाः ॥ २० ॥ विपिनेष्वरण्येषु । जन्तुषु जन्तुसदृशेषु पामरेषु । दैवाद्विक्रीतो मनुष्यो यथा एकान्तादिष्वेव रतिं बध्नाति तद्वत् ॥ २१ ॥ तया प्रसिद्धया । परिव्राजां ये धर्मा अपरिग्रहादयस्तद्वन्तं परिव्राजमेव अनुयाति अनुकरोति ॥ २२ ॥ एकया मुख्यया ॥ २३ ॥

---

१ 'सायमम्लान' इति पाठः.

२ 'नृत्यविलासेषु' इति पाठः. ३ 'त्युक्त्या' इति पाठः.

बद्धपद्मासनः शून्यमना वामकरस्थले ।
कपोलतलमाधाय केवलं परितिष्ठति ॥ २४
नाभिमानमुपादत्ते नच वाञ्छति राजताम् ।
नोदेति नास्तमायाति सुखदुःखानुवृत्तिषु ॥ २५
न विद्मः किमसौ याति किं करोति किमीहते ।
किं ध्यायति किमायाति कथं किमनुधावति ॥ २६
प्रत्यहं कृशतामेति प्रत्यहं याति पाण्डुताम् ।
विरागं प्रत्यहं याति शरदन्त इव द्रुमः ॥ २७
अनुयातौ तथैवैतौ राजञ्छत्रुघ्नलक्ष्मणौ ।
तादृशावेव तस्यैव प्रतिबिम्बाविव स्थितौ ॥ २८
भृत्यै राजभिरम्बाभिः संपृष्टोऽपि पुनः पुनः ।
उक्त्वा न किंचिदेवेति तूष्णीमास्ते निरीहितः ॥ २९
आपातमात्रहृद्येषु मा भोगेषु मनः कृथाः ।
इति पार्श्वगतं भव्यमनुशास्ति सुहृज्जनम् ॥ ३०
नानाविभवरम्यासु स्त्रीषु गोष्ठीगतासु च ।
पुरस्थितमिवास्नेहो नाशमेवानुपश्यति ॥ ३१
नीतमायुरनायासपदप्राप्तिविवर्जितैः ।
चेष्टितैरिति काकल्या भूयोभूयः प्रगायति ॥ ३२
सम्राडिति पार्श्वस्थं वदन्तमनुजीविनम् ।
प्रलपन्तमिवोन्मत्तं हसत्यन्यमना मुनिः ॥ ३३
न प्रोक्तमाकर्णयति ईक्षते न पुरोगतम् ।
करोत्यवज्ञां सर्वत्र सुसमेत्यापि वस्तुनि ॥ ३४

अप्याकाशसरोजिन्या अप्याकाशमहावने ।
इत्थमेतन्मन इति विस्मयोऽस्य न जायते ॥ ३५
कान्तामध्यगतस्यापि मनोऽस्य मदनेषवः ।
न भेदयन्ति दुर्भेद्यं धारा इव महोपलम् ॥ ३६
आपदामेकमावासमभिवाञ्छसि किं धनम् ।
अनुशिष्येति सर्वस्वमर्थिने संप्रयच्छति ॥ ३७
इयमापदियं संपदित्येवं कल्पनामयः ।
मनसोऽभ्युदितो मोह इति श्लोकान्प्रगायति ॥ ३८
हा हतोऽहमनाथोऽहमित्याक्रन्दपरोऽपि सन् ।
न जनो याति वैराग्यं चित्रमित्येव वक्त्यसौ ॥ ३९
रघुकाननशालेन रामेण रिपुघातिना ।
भृशमित्थं स्थितेनैव वयं खेदमुपागताः ॥ ४०
न विद्मः किं महाबाहो तस्य तादृशचेतसः ।
कुर्मः कमलपत्राक्ष गतिरत्र हि नो भवान् ॥ ४१
राजानमथवा विप्रमुपदेष्टारमग्रतः ।
हसत्यज्ञमिवाव्यग्रः सोऽवधीरयति प्रभो ॥ ४२
यदेवेदमिदं स्फारं जगन्नाम यदुत्थितम् ।
नैतद्वस्तु नचैवाहमिति निर्णीय संस्थितः ॥ ४३
नारौ नात्मनि नो मित्रे न राज्ये न च मातरि ।
न संपदा न विपदा तस्यास्था न विभो बहिः ॥ ४४
निरस्तास्थो निराशोऽसौ निरीहोऽसौ निरास्पदः ।
न मूढो न च मुक्तोऽसौ तेन तप्यामहे भृशम् ॥ ४५

तर्हि तत्र किं करोति तत्राह—बद्धेति । शून्यं परमार्थालम्बनेन मनो यस्य सः परितिष्ठति । ध्यायन्नित्यर्थाल्लभ्यते ॥२४॥ उदयास्तमयावत्र प्रसादविषादौ । सुखदुःखानुवृत्तिष्विष्टानिष्टसंयोगेषु ॥ २५ ॥ ईहते इच्छति । अनुधावत्यनुसरति ॥ २६ ॥ विरागं वैराग्यम् । द्रुमपक्षे वैवर्ण्यं रूपतामिति यावत् ॥ २७ ॥ अनुयातौ स्नेहादनुसृतौ । अर्थाद्राममिति गम्यते । तादृशावेव यादृशो रामः ॥ २८ ॥ न किंचिदित्युक्तेस्तैः परिहर्तुं शक्यं किंचिन्नास्तीति रामाशयः । निरीहितः स्वाभिप्रायव्यञ्जकचेष्टाशून्यः ॥ २९ ॥ आपतनमापातो विषयेन्द्रियसंयोगः । मात्रपदात्परिणामकटुता द्योत्यते । भवतीति भव्यो विवेकी तं ननु सर्वम् ॥ ३० ॥ गोष्ठी विलासस्थानम् ॥ ३१ ॥ प्राप्तिविवर्जितैः पुरुषैः । चेष्टितैर्बहिःप्रवृत्तिभिः । नीतं वृथेति शेषः । प्राप्तिविवर्जितैश्चेष्टितैरिति सामानाधिकरण्यं वा । अस्मिन्कल्पे नीतं मयेति शेषः । काकल्या मधुरास्फुटया वाचा ॥ ३२ ॥ 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्'। अन्यमना इति । सम्यक्स्वप्रकाशतया राजत इति सम्राट् परमात्मेत्यर्थान्तरे मनो यस्येत्यर्थः । तस्य चापरिज्ञानान्मुनिस्तत्पर्यालोचनपरः । स्वाभिमतानाशासनादसाराशासनाच्चोपेक्षाहासौ ॥ ३३ ॥ सर्वत्र वस्तुनि सुसमेत्य गुणतः फलतश्च शोभनं स्वानुरूपं तत्प्राप्यापि ॥ ३४ ॥ ननु गुणाद्युत्कर्षाद्विस्मययोग्ये वस्तुनि विस्मय एवोचितः कथं तत्रावज्ञा तत्राह—अपीति ।

यस्मिन्मनसि बाह्यवस्तुगोचरो विस्मयः स्यात्तन्मन एव इत्थम् । ईदृशविस्मयास्पदमित्यर्थः । कथम् । यत आकाशरूपे आकाशस्थिते वा महारण्ये तादृशकमलिन्या सदृशमिति शेषः । द्वावपिशब्दावसंभावनाद्वयद्योतकौ । यथा आकाशेऽरण्यमरण्ये च कमलिन्यत्यन्तमसंभाविता तथा आत्मनि मनो मनसि च विस्मय इति निश्चयादस्य बाह्यवस्तुनि विस्मयो न जायत इति भावः ॥ ३५ ॥ न भेदयन्ति न भिन्दन्ति । प्रेषणाध्यारोपाण्णिच् । धारा जलधाराः ॥ ३६ ॥ आवासं निवासस्थानम् । अर्थिने याचकाय ॥ ३७ ॥ कल्पनामयः कल्पनाप्रचुरः । मोहो भ्रमः ॥ ३८ ॥ आक्रन्दपरः । इष्टवियोगादिति शेषः । तथा चान्वयव्यतिरेकाभ्यां रागादिदुःखमिति पश्यन्नपीति भावः ॥ ३९ ॥ रघुपदेन रघुवंशो लक्ष्यते । शालो वृक्षविशेषः प्रसिद्धः । एवकारो हेत्वन्तरव्यावृत्तये ॥४०॥ किं कुर्मः, शोकापनयार्थमिति शेषः ॥ ४१ ॥ ननु नीतिज्ञैः संव्यवहारोपदेशेनास्य मोहोऽपनीयतां तत्राह—**राजान**मिति । उपदेष्टारं राजनीतिव्यवहारानिति शेषः । अवधीरयत्यनभिनन्दनेन तिरस्करोतीव ॥४२॥ यातीति यत् गत्वरम् । नश्वरमेवेत्यर्थः । इदमिदं बहुविधं बहिर्दृष्टिगम्यम् । स्फारं विस्तीर्णम् । वसतीति वस्तु सदैकरूपम् । अहमिति बुद्धिगम्यं च नैवं वस्तु किंत्वन्यादृशमेवेति निर्णीय तज्जिज्ञासुः संस्थितः ॥४३॥ विषये पञ्च सप्तम्यः । विषयस्यैव हेतुत्वविवक्षया द्वे तृतीये । बहिःशब्देन सामान्योक्तस्यैव पूर्वः प्रपञ्चः ॥ ४४ ॥ स्वपराधीन-

किं धनेन किमम्बाभिः किं राज्येन किमीहया ।
इति निश्चयवानन्तः प्राणत्यागपरः स्थितः ॥ ४६
भोगेऽप्यायुषि राज्येषु मित्रे पितरि मातरि ।
परमुद्वेगमायातश्चातकोऽवग्रहे यथा ॥ ४७
इति तोके समायातां शाखाप्रसरशालिनीम् ।
आपत्तामलमुद्धर्तुं समुदेतु दयापरः ॥ ४८
तस्य तादृक्स्वभावस्य समग्रविभवान्वितम् ।
संसारजालमाभोगि प्रभो प्रतिविषायते ॥ ४९
ईदृशः स्यान्महासत्त्वः क इवास्मिन्महीतले ।
प्रकृते व्यवहारे तं यो निवेशयितुं क्षमः ॥ ५०
मनसि मोहमपास्य महामनाः
सकलमार्तितमः किल साधुताम् ।
सफलतां नयतीह तमो हरन्
दिनकरो भुवि भास्करतामिव ॥ ५१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे राघवविषादो नाम दशमः सर्गः ॥ ५ ॥

---

## एकादशः सर्गः ११

विश्वामित्र उवाच ।

एवं चेत्तन्महाप्राज्ञा भवन्तो रघुनन्दनम् ।
इहानयन्तु त्वरिता हरिणं हरिणा इव ॥ १
एष मोहो रघुपतेर्नापद्भ्यो न च रागतः ।
विवेकवैराग्यवतो बोध एव महोदयः ॥ २
इहायातु क्षणाद्रामं इह चैव वयं क्षणात् ।
मोहं तस्यापनेष्यामो मारुतोऽद्रेर्घनं यथा ॥ ३
एतस्मिन्मार्जिते युक्त्या मोहे स रघुनन्दनः ।
विश्रान्तिमेष्यति पदे तस्मिन्वयमिवोत्तमे ॥ ४
सत्यतां मुदितां प्रज्ञां विश्रान्तिमपतापताम् ।
पीनतां वरवर्णत्वं पीतामृत इवैष्यति ॥ ५
निजां च प्रकृतामेव व्यवहारपरम्पराम् ।
परिपूर्णमना मान्य आचरिष्यत्यखण्डितम् ॥ ६
भविष्यति महासत्त्वो ज्ञातलोकपरावरः ।

---

विषयत्वाभ्यामास्थाशयोर्भेदः । विशेषाभावादेव निरीहो निरिच्छः बाह्यविषये चेत्, अन्तर्हि दुःखहेत्वभावात्कुतोऽसौ दुःखी तत्राह—**निरास्पद** इति । यतोऽयमलब्धात्मविश्रान्तिरित्यर्थः । न मूढो विवेकित्वात् । नच मुक्तो विश्रान्त्यनुदयात् ॥४५॥ **प्राणत्यागपर** इति । रागादिदोषाणामेव जन्मबीजत्वात्तद्रहितस्य मम प्राणापगमादेव मुक्तिः सेत्स्यतीति तदाशय इति भावः ॥ ४६ ॥ अवग्रहे वर्षप्रतिबन्धे ॥ ४७ ॥ तोके पुत्रे चिन्ताकार्श्यादिशाखानां प्रसरेण प्रतानेन शालिनीं विस्तीर्णां । आपत्तामापत्ताम् । आर्षत्वाल्लकारलोपः । यद्वा आपद्यत इत्यापत् आपन्नस्तद्भावम् । अथवा आपत् तां इति च्छेदः । इति तोके आपदिति व्यवहितेन संबन्धः । द्वितीयान्तानि पूर्वाणि तामित्यस्य विशेषणानि । उद्धर्तुमुन्मूलयितुं समुदेतु सम्यगुद्युक्तोऽस्तु भवानिति शेषः ॥४८॥ आभोगि कृत्रिमवेषवत् । वेषः कृत्रिम आभोगः । प्रतिविषायते प्रतिकूलविषवदाचरति ॥ ४९ ॥ एवंभूतं तं यः प्रकृते व्यवहारे निवेशयितुं क्षमः स ईदृशो महासत्त्वो महाबलः क इव स्यात् । न कोऽपीत्यर्थः । इवेत्यनर्थको निपातः । अथवा त्वां विनेति शेषः । त्वमिव यो भवति स एव क्षमः स्यादिति भावः ॥ ५० ॥ आर्तिलक्षणानि तमांसि विवेकप्रतिरोधकानि यस्मात्तथाविधं सकलं [1]मोहं रामस्य मनसि अपास्य इहास्मिन् रामे विषये स्वीयां साधुतामुपदेशसमर्थतां यः सफलतां नयति स तादृशो महामनाः क इव स्यादिति पूर्वेण संबन्धः । तत्र दृष्टान्तः—तमो हरन्सन् दिनकरो भुवि विषये यथा स्वकीयां भास्करतां सफलतां नयति तद्वत् ॥ ५१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे राघवविषादो नाम दशमः सर्गः ॥ १० ॥

**विश्वामित्राज्ञया रामस्यानीतस्य सभान्तरे ।**
**राज्ञाश्वासनमाध्यादिबीजप्रश्नश्च वर्ण्यते ॥ १ ॥**

एवमुक्तप्रकारेण निर्विण्णो दुःखितो मोहितश्चेत्तस्मिन्विषये महाप्राज्ञाः परीक्षणकुशला भवन्तः । हरिणं यूथपतिं । हरिणास्तदनुयायिनो मृगाः ॥ १ ॥ आपद्भ्यो रागतो वा यो जडीभावः स एव मोहः । अयं तु विवेकादिमतो बोधफलत्वाद्बोध एवेति महोदय एवेत्यर्थः ॥ २ ॥ क्षणशब्दौ शीघ्रमित्यर्थे । इहैव चेत्यन्वयः । द्वितीय इहशब्द आगमनदेश एव मोहापनयनद्योतनार्थः । घनं मेघम् ॥ ३ ॥ ननु मोहेऽपनीतेऽपि तस्य का सिद्धिस्तत्राह—**एतस्मिन्नि**ति । तस्मिन्नुपस्थिते 'तद्विष्णोः परमं पदम्' इति श्रुतिप्रसिद्धे उत्तमे पदे स्वात्मनि ॥ ४ ॥ सत्यतामबाधितवस्तुताम् । मुदितां मुदितताम् । तलोपश्छान्दसः । परमानन्दरूपताम् । प्रज्ञां अपरिच्छिन्नज्ञानरूपताम् । मुदि आनन्दाविर्भावे सति तां प्रसिद्धां प्रज्ञामिति वा । पीतामृतपक्षे श्रुत्युक्तस्य धर्मफलस्य प्रत्यक्षीकरणाद्यथार्थतां स्वर्गसुखितां देवज्ञानसंपन्नतां चेति क्रमादर्थः । पीनतां वरवर्णत्वं शरीरे ॥ ५ ॥ ननु व्यवहारस्याविद्यकत्वप्रसिद्धेश्छत्रापाये छायापाय इव तदपायोऽपि स्यात्, स त्वनिष्टः प्रजानां तत्राह—**निजा**मिति । निजां स्ववर्णाश्रमोचिताम् । प्रकृतामुपक्रान्ताम् । यद्यपि परिपूर्णकामस्तथापि जीवता सर्वव्यवहारस्य दुस्त्यजत्वादवश्यमुपादेये व्यवहारे प्रकृतत्यागेऽन्योपादाने च हेत्वभावात्स्वचरितग्राहिजनानुग्राहकत्वाच्च निजामेव व्यवहारपरम्परामविच्छिन्नमाचरिष्यतीत्यर्थः ॥ ६ ॥ ननु तामाचरंस्तत्रासज्जेत, ततः पूर्ववत्सुखदुःखदशा-

---

[1] मोहशब्दस्य नपुंसकत्वं चिन्त्यम्.

सुखदुःखदशाहीनः समलोष्टाश्मकाञ्चनः ॥ ७
इत्युक्ते मुनिनाथेन राजा संपूर्णमानसः ।
प्राहिणोद्रामसानेतुं भूयो दूतपरम्पराम् ॥ ८
एतावताथ कालेन रामो निजगृहासनात् ।
पितुः सकाशमागन्तुमुत्थितोऽर्क इवाचलात् ॥ ९
वृतः कतिपयैर्भृत्यैर्भ्रातृभ्यां च जगाम ह ।
तत्पुण्यं स्वपितुः स्थानं स्वर्गं सुरपतेरिव ॥ १०
दूरादेव ददर्शासौ रामो दशरथं तदा ।
वृतं राजसमूहेन देवौघेनेव वासवम् ॥ ११
वसिष्ठविश्वामित्राभ्यां सेवितं पार्श्वयोर्द्वयोः ।
सर्वशास्त्रार्थतज्ज्ञेन मन्त्रिवृन्देन मालितम् ॥ १२
चारुचामरहस्ताभिः कान्ताभिः समुपासितम् ।
ककुब्भिरिव मूर्ताभिः संस्थिताभिर्यथोचितम् ॥ १३
वसिष्ठविश्वामित्राद्यास्तथा दशरथादयः ।
ददृशू राघवं दूरादुपायान्तं गुहोपमम् ॥ १४
सत्त्वावष्टब्धगर्भेण शैत्येनेव हिमाचलम् ।
श्रितं सकलसेव्येन गम्भीरेण स्फुटेन च ॥ १५
सौम्यं समं शुभाकारं विनयोदारमानसम् ।
कान्तोपशान्तवपुषं परस्यार्थस्य भाजनम् ॥ १६
समुद्यद्यौवनारम्भं वृद्धोपशमशोभनम् ।
अनुद्विग्नमनानन्दं पूर्णप्रायमनोरथम् ॥ १७

विचारितजगद्यात्रं पवित्रगुणगोचरम् ।
महासत्त्वैकलोभेन गुणैरिव समाश्रितम् ॥ १८
उदारमार्यमापूर्णमन्तःकरणकोटरम् ।
अविक्षुभितया वृत्त्या दर्शयन्तमनुत्तमम् ॥ १९
एवङ्गुणगणाकीर्णो दूरादेव रघूद्वहः ।
परिमेयस्मिताच्छाच्छस्वहाराम्बरपल्लवः ॥ २०
प्रणनाम चलच्चारुचूडामणिमरीचिना ।
शिरसा वसुधाकम्पलोलदेवाचलश्रिया ॥ २१
एवं मुनीन्द्रे ब्रुवति पितुः पादाभिवन्दनम् ।
कर्तुमभ्याजगामाथ रामः कमललोचनः ॥ २२
प्रथमं पितरं पश्चान्मुनी मान्यैकमानितौ ।
ततो विप्रांस्ततो बन्धूंस्ततो गुरुगणान्सुहृत् ॥ २३
जग्राह च ततो दृष्ट्या मनाङ्मूर्ध्ना तथा गिरा ।
राजलोकेन विहितां तां प्रणामपरम्पराम् ॥ २४
विहिताशीर्मुनिभ्यां तु रामः सुसममानसः ।
आससाद पितुः पुण्यं समीपं सुरसुन्दरः ॥ २५
पादाभिवन्दनपरं तमथासौ महीपतिः ।
शिरस्यभ्यालिलिङ्गाशु चुचुम्ब च पुनःपुनः ॥ २६
शत्रुघ्नं लक्ष्मणं चैव तथैव परवीरहा ।
आलिलिङ्ग घनस्नेहो राजहंसोऽम्बुजे यथा ॥ २७
उत्सङ्गे पुत्र तिष्ठेति वदत्यथ महीपतौ ।

वानपि स्यान्नेत्याह—**भविष्यतीति** । सत्त्वं मननादिजं ज्ञानदार्ढ्यबलम् । परं कारणतत्त्वमवरं कार्यतत्त्वम् । लोके तदुभयं ज्ञातं येन । अथवा लोकानां प्राणिनां परं परमपुरुषार्थरूपमवरं सांसारिकभ्रमणरूपं च विवेकतो ज्ञातं येन । अथवा लोकात्मा विराट् परमव्याकृतं अवरं हिरण्यगर्भाख्यं च परमार्थतो ब्रह्मैव न पृथगस्तीति ज्ञातं येन । अतएवानासक्तौ समलोष्टाश्मकाञ्चनः सुखदुःखादिहीनश्चेत्यर्थः ॥ ७ ॥ भूय इत्युक्ते वसिष्ठवचनात्प्राक् प्रतीहारादन्येऽपि दूताः प्रेषिता एवेति गम्यते ॥ ८ ॥ अथ प्रतीहारगमनानन्तरं निजगृहासनादुत्थितो राम एतावता मुनिसंवादपरिमितेन कालेन स्वपितुः स्थानं जगामेत्युत्तरेण संबन्धः ॥९॥ वसिष्ठविश्वामित्रादिमहर्षिजुष्टत्वात्पुण्यम् ॥ १० ॥ ॥ ११ ॥ सेवितं प्रियहितमधुरोक्तिभिर्लालितम् । सर्वाञ्शास्त्रार्थांस्तन्वन्ति लोके विस्तारयन्तीति सर्वशास्त्रार्थततस्तथाविधाश्च ते ज्ञाश्च ये मन्त्रिणस्तेषां वृन्देन ॥१२॥ ककुब्भिर्दिग्भिः॥१३॥ उप समीपे आयान्तम् । गुहः कार्तिकेयः ॥ १४ ॥ कीदृशं ददृशुस्तदाह—**सत्त्वे**त्यादिपञ्चभिः । शीतस्तापोपशमनेनाह्लादकस्तुषारश्च तद्भावः शैत्यं तेन हिमाचलमिव श्रितम् । शैत्यस्यैव सत्त्वेत्यादीनि चत्वारि श्लिष्टानि विशेषणानि । सत्त्वेन शान्तिविवेकहेतुना, सत्त्वगुणेन प्राणिनिकायेन च व्याप्तान्तरेण । सकलैः पूर्णैः, कलासहितचन्द्रेण च सेवितुं योग्येन । गम्भीरेणानवगाह्यान्तेन स्फुटेन व्यक्तेन चेति यथोचितं संबन्धः ॥ १५ ॥ सौम्यं प्रियदर्शनम् । सममन्यूनानतिरिक्ताङ्गम् । कान्तं मनोहरम् । उपशान्तमनुग्रम् । परस्यार्थस्य पुरुषार्थस्य ॥ १६ ॥ सम्यगुद्यन्यौवनारम्भो यस्य तम् । वृद्धवदुपशमेन शोभनम् । अनुद्विग्नमविवेकापगमात् । अनानन्दमप्राप्तपरमानन्दम् ॥१७॥ जगद्यात्रा संसारगतिः । पवित्राणां गुणानां, पवित्रगुणानां पुरुषाणां वा गोचरं विषयम् । गुणैः सर्वैर्महासत्त्वैकलोभेनैव सम्यगाश्रितम् ॥ १८ ॥ अविक्षुभितया वृत्त्या स्थित्या सर्वसाधनसंपत्तावपि तत्त्वबोधविश्रान्त्यभावादीषत्पूर्णमन्तःकरणस्य कोटरं छिद्रमिव स्थितं मनोरथं दर्शयन्तं सूचयन्तम् । अनुत्तममिति रामविशेषणं वा ॥ १९ ॥ रघूद्वहः प्रणनामेत्युत्तरेणान्वयः । अम्बरमेव पल्लवोऽम्बरपल्लवः परिमेयौ स्मितमिवाच्छाच्छौ स्वीयौ हाराम्बरपल्लवौ यस्य सः ॥ २० ॥ चूडामणिः शिरोरत्नम् । देवाचलः सुमेरुः ॥२१॥ एवं सर्गादिश्लोकसप्तकोक्तप्रकारेण मुनीन्द्रे विश्वामित्रे ब्रुवति सति अथ रामः पितुः पादाभिवन्दनं कर्तुमभ्याजगामेति संबन्धः ॥ २२ ॥ मुनी वसिष्ठविश्वामित्रौ । मान्यैरपि मुख्यतया मानितौ । सुहृत् शोभनहृदयो रामः ॥ २३ ॥ मनाङ्नम्रेण मूर्ध्नेति तदुचितेषु विनयसूचनाय ॥२४॥ सुसममानसः आशीरर्थलाभालाभयोः ॥ २५ ॥ शिरसि आघ्रायेति शेषः । अभ्यालिलिङ्ग अभिमुखमालिङ्गितवान् ॥ २६ ॥ यथा रामं तथैव । राजहंसोऽम्बुजे यथेति चुम्बने दृष्टान्तः ॥ २७ ॥ उत्सङ्गे अङ्के । अंशुके वस्त्रे ।

१ शाश्वेलस्याग्रे तेषां इना इत्यस्ति चेद्युक्तम्.

भूमौ परिजनास्तीर्णे सोऽङ्शुकेऽथ न्यविक्षत ॥ २८

राजोवाच ।

पुत्र प्राप्तविवेकस्त्वं कल्याणानां च भाजनम् ।
जडवज्जीर्णया बुद्ध्या खेदायात्मा न दीयताम् ॥ २९
वृद्धविप्रगुरुप्रोक्तं त्वादृशेनानुतिष्ठता ।
पदमासाद्यते पुण्यं न मोहमनुधावता ॥ ३०
तावदेवाऽऽपदो दूरे तिष्ठन्ति परिपेलवाः ।
यावदेव न मोहस्य प्रसरः पुत्र दीयते ॥ ३१

श्रीवसिष्ठ उवाच ।

राजपुत्र महाबाहो शूरस्त्वं विजितास्त्वया ।
दुरुच्छेदा दुरारम्भा अप्यमी विषयारयः ॥ ३२
किमतज्ज्ञ इवाज्ञानां योग्ये व्यामोहसागरे ।
विनिमज्जसि कल्लोलबहुले जाड्यशालिनि ॥ ३३

विश्वामित्र उवाच ।

चलन्नीलोत्पलव्यूहसमलोचनलोलताम् ।
ब्रूहि चेतःकृतां त्यक्त्वा हेतुना केन मुह्यसि ॥ ३४
किंनिष्ठाः के च ते केन कियन्तः कारणेन ते ।
आधयः प्रविलुम्पन्ति मनो गेहमिवाखवः ॥ ३५
मन्ये नानुचितानां त्वमाधीनां पदमुत्तमम् ।
आपत्सु चाऽप्रयोज्यं ते निहीना अपि चाधयः ॥ ३६
यथाभिमतमाशु त्वं ब्रूहि प्राप्स्यसि चानघ ।
सर्वमेव पुनर्येन मेत्स्यन्ते त्वां तु नाधयः ॥ ३७
इत्युक्तमस्य सुमते रघुवंशकेतु-
राकर्ण्य वाक्यमुचितार्थविलासगर्भम् ।
तत्याज खेदमभिगर्जति वारिवाहे
बर्ही यथा त्वनुमिताभिमतार्थसिद्धिः ॥ ३८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे राघवसमाश्वासनं नामैकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः १२

वाल्मीकिरुवाच ।

इति पृष्टो मुनीन्द्रेण समाश्वस्य च राघवः ।
उवाच वचनं चारु परिपूर्णार्थमन्थरम् ॥ १

श्रीराम उवाच ।

भगवन्भवता पृष्टो यथावदधुनाऽखिलम् ।
कथयाम्यहमज्ञोऽपि को लङ्घयति सद्वचः ॥ २

न्यविक्षत उपाविशत् ॥२८॥ जडवदविवेकिवत् । जीर्णया शिथिलया । खेदाय दैन्याय । आत्मा जीवः ॥ २९ ॥ वृद्धैः पित्रादिभिः । गुरुभिराचार्यैः । प्रजापालनधर्मसाधनत्वात्पुण्यं पदं राजस्थानं स्वर्गादि च अनुधावतानुसरता ॥ ३० ॥ असन्निहिता दूरे तिष्ठन्ति नोपसर्पन्ति । सन्निहितास्तु परिपेलवाः सर्वतो लघीयस्यस्तिष्ठन्ति न कार्यक्षमा इत्यर्थः । मोहस्य प्रसरे तु तद्विपरीता भवन्तीत्यर्थः ॥ ३१ ॥ त्वमेव शूरो यतस्त्वया विषयारयो विजिताः । प्रसिद्धा अरयो दुरुच्छेदा एव न ते खेन दुःखेनारभ्यन्ते । विषयारयस्तु खेनैव संपादिता दुःखान्तरपरम्परारम्भका दुरुच्छेदाश्चेति भावः ॥ ३२ ॥ एवंभूतोऽपि त्वमज्ञानां योग्ये व्यामोहसागरे अतज्ज्ञ इवानात्मज्ञ इव किं निमज्जसि । कल्लोला बृहत्तरङ्गा विक्षेपकाः । जाड्यं मौढ्यमावरणम् ॥ ३३ ॥ चलता नीलोत्पलसमूहेन समां लोचनयोर्लोलतां चञ्चलताम् । चेतो व्यग्रचित्तं तेन कृताम् । केन हेतुना विमुह्यसि भ्राम्यसि । तव भ्रान्तिहेतुः क इत्यर्थः ॥ ३४ ॥ आधयो मानसव्यथा मनः परिलुम्पन्ति विषादयन्ति । कस्मिन्निष्ठा समाप्तिर्येषां ते । कस्मिन्कामे संपन्ने शाम्यन्तीत्यर्थः । अथवा किमाश्रिताः, के चेति तत्स्वरूपप्रश्नः । केनेति तन्निमित्तप्रश्नः । कियन्त इति तद्विभागप्रश्नः । कारणेनेति केनेत्यनेन संबध्यते । गेहं गृहं आखनन्तीत्याखवो मूषकाः ॥ ३५ ॥ [illegible]

त्वादयो जगति प्रसिद्धा एव ते कुतः पृच्छयन्ते तत्राह-**मन्य** इति । सत्यं प्रसिद्धाः, त्वं तु तेषामनुचितानामुत्तममुचितं पदं स्थानं न भवसि । आपन्नो दरिद्रो वा तत्पदं स्यात् । ते तव च आपत्सु अप्रयोज्यं प्रतीकार्यं नास्ति । पितृप्रभावेणैव सर्वापदां निरस्तत्वात् । अपिच ते आधयो निहीनाः स्वत एव निरस्ताः । सर्वसौभाग्यसंपन्नतया पूर्णत्वादिति भावः ॥ ३६ ॥ अभिमतमनतिक्रम्य यथाभिमतम् । अभिमतार्थमप्रच्छाद्येत्यर्थः । अनघेति हेतुगर्भम् । सर्वमेवाभिमतं प्राप्स्यसीति संबन्धः । येनाभिमतलाभेन पुनराधयस्त्वां न मेत्स्यन्ते ॥ ३७ ॥ सुमतेर्विश्वामित्रस्य इति उक्तमुचितानां स्वाभिलाषानुरूपाणामर्थानां विलासः प्रकाशो गर्भे तात्पर्ये यस्य तथाविधं वाक्यं निशम्य रघुवंशकेतुः श्रीरामः अनुमिताभिमतार्थसिद्धिः सन् खेदं तत्याजेति संबन्धः । वारिवाहे मेघे । बर्ही मयूरः ॥ ३८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे राघवसमाश्वासनं नामैकादशः सर्गः ॥ ११ ॥

भोगानां दुःखरूपत्वं विषयादेरसत्यता ।
संपदामप्यनर्थत्वमित्याद्यत्रोपवर्ण्यते ॥ १ ॥

समाश्वस्य सम्यगाश्वासं प्राप्य । परिपूर्णार्थगौरवादिव मन्थरं मन्दप्रवृत्तमतएव चारु ॥ १ ॥ **को लङ्घयतीति** । तथाच [illegible] वदामि नतु धार्ष्ट्येनेति भावः ॥ २ ॥

अहं तावदयं जातो निजेऽस्मिन्पितृसद्मनि ।
क्रमेण वृद्धिं संप्राप्तः प्राप्तविद्यश्च संस्थितः ॥ ३
ततः सदाचारपरो भूत्वाहं मुनिनायक ।
विहृतस्तीर्थयात्रार्थमुर्वीमम्बुधिमेखलाम् ॥ ४
एतावताथ कालेन संसारास्थामिमां हरन् ।
समुद्भूतो मनसि मे विचारः सोऽयमीदृशः ॥ ५
विवेकेन परीतात्मा तेनाहं तदनु स्वयम् ।
भोगनीरसया बुद्ध्या प्रविचारितवानिदम् ॥ ६
किंनामेदं बत सुखं येयं संसारसंततिः ।
जायते मृतये लोको म्रियते जननाय च ॥ ७
अस्थिराः सर्व एवेमे सचराचरचेष्टिताः ।
आपदां पतयः पापा भावा विभवभूमयः ॥ ८
अयःशलाकासदृशाः परस्परमसङ्गिनः ।
श्लिष्यन्ते केवलं भावा मनःकल्पनया स्वया ॥ ९
मनःसमायत्तमिदं जगदाभोगि दृश्यते ।
मनश्चासदिवाभाति केन स्म परिमोहिताः ॥ १०
असतैव वयं कष्टं विकृष्टा मूढबुद्धयः ।
मृगतृष्णाम्भसा दूरे वने मुग्धमृगा इव ॥ ११
न केनचिच्च विक्रीता विक्रीता इव संस्थिताः ।
बत मूढा वयं सर्वे जानाना अपि शाम्बरम् ॥ १२
किमेतेषु प्रपञ्चेषु भोगा नाम सुदुर्भगाः ।
मुधैव हि वयं मोहात्संस्थिता बद्धभावनाः ॥ १३
आ ज्ञातं बहुकालेन व्यर्थमेव वयं वने ।
मोहे निपतिता मुग्धाः श्वभ्रे मुग्धा मृगा इव ॥ १४
किं मे राज्येन किं भोगैः कोऽहं किमिदमागतम् ।
यन्मिथ्यैवास्तु तन्मिथ्या कस्य नाम किमागतम् ॥ १५
एवं विमृशतो ब्रह्मन्सर्वेष्वेव ततो मम ।
भावेष्वरतिरायाता पथिकस्य मरुष्विव ॥ १६
तदेतद्भगवन्ब्रूहि किमिदं परिणश्यति ।
किमिदं जायते भूयः किमिदं परिवर्धते ॥ १७

इत्थं विनयोक्त्या मुनिं वशीकृत्य स्ववृत्तानुवादव्याजेन धर्मानुष्ठानजन्यचित्तशुद्ध्या विवेकवैराग्याभ्यां विचारोदयं स्वस्य दर्शयति—**अहं तावदि**त्यादिचतुर्भिः ॥ ३ ॥ विहृतः संचरितवान् । गत्यर्थत्वात्कर्तरि क्तः ॥ ४ ॥ ईदृशो वक्ष्यमाणलक्षणः ॥ ५ ॥ भोगेषु रसो रागस्तच्छून्यया ॥ ६ ॥ किंनाम सुखम् । न किंचिदित्यर्थः । संततिर्विस्तारः । असुखत्वमेवोपपादयति—**जायत** इति । 'मृतिबीजं भवेज्जन्म जन्मबीजं भवेन्मृतिः' इति वचनादिति भावः ॥ ७ ॥ नन्वस्तु तथा तथाप्यन्तराले विभवभूमिषु सुखमनुभूयत एवेति तत्राह—**अस्थिरा** इति । चराणां प्रवृत्तिनिवृत्त्यधीनसाधनसाध्या, अचराणां तु दैवोपपन्नसाधनायत्तेत्युभयविधा भोगप्रवृत्तिरूपलक्षणचेष्टितसहिता अपि विभवभूमयो वैभवसमयमात्रस्थितिका भावा विषयाः स्रक्चन्दनान्नपानादयो न सुखदाः, यतोऽस्थिराः । अलाभवियोगकालयोर्दुःखदा इत्यर्थः । तत्राप्युपभोगकाले तेभ्यः सुखमाशङ्क्याह—**आपदां पतय** इति । पतयः स्वामिनः । श्रेष्ठा इति यावत् । रागादिदोषोपजननेन परमापत्प्रापकत्वात्तद्रूपा एवेत्यर्थः । अनिषिद्धा एवं, निषिद्धास्तु पापा अपि पापजनकत्वात् । तथाच विषसंपृक्तान्नसदृशत्वात्तद्भोगे सुखमिति नास्ति संसारे सुखमिति सिद्धमिति भावः ॥ ८ ॥ यदि न ते सुखदास्तर्हि कथं सुखकारकत्वेन परस्परं संबध्यन्ते तत्राह—**अय** इति । सर्वेऽपि भावाः स्वतो लोहशलाकाः सूच्यादय इव परस्परमसङ्गिनः संबन्धशून्या एव परंतु अनया ममेदं भोगसाधनमनेनेत्थमिदं करिष्यामीत्यादिमनःकल्पनया केवलं क्रियाकारकादिभावेन श्लिष्यन्ते संबध्यन्ते । तथैवान्वयव्यतिरेकदर्शनादित्यर्थः ॥ ९ ॥ न केवलं भावानां संबन्धमात्रं मनोधीनं किंतु जन्मस्थितिप्रकाशभङ्गा अपीति सर्वांशे मनोधीनमेव जगदित्याह—**मन** इति । तर्हि मन एव सुखसाधनमस्तु, नेत्याह—**मन** इति । असच्छून्यमिव विवेके आभाति । तथाच न ततोऽपि सुखसिद्धिरिति वयमेतावन्तं कालं केन सुखं स्यादिति मोहिताः स्मः ॥ १० ॥ अतः परिशेषाद्भ्रान्तिरेवेयमिति दर्शयति—**असतैवे**ति । संसारे सुखतत्साधनयोरसत्त्वादेवेत्यर्थः । कष्टं यथा स्यात्तथा विकृष्टा आकृष्टाः । दार्ष्टान्तिके मृगतृष्णाम्भःसदृश्या सुखाशयेति गम्यते । मुग्धमृगा मूढहरिणाः ॥ ११ ॥ संस्थिताः पैरवशा इत्यर्थः । जानाना अभिज्ञंमन्या अपि वयं मूढा एव । शाम्बरं शम्बरसंबन्धि । मायेयमिति भावः ॥ १२ ॥ भोगा विषयसुखलवाः किंनाम । दृष्टनष्टस्वभावत्वाद्दुरन्तदुःखबीजत्वाच्च दौर्भाग्यरूपा एव न पुरुषार्थ इति भावः । यैर्वयं मुधा व्यर्थमेव बद्धा इति भावना भ्रान्तिर्येषां ते तथाभूताः संस्थिताः ॥ १३ ॥ आ इति स्मरणाभिलापे । बहुकालेन ज्ञातम् । किं तदाह—**व्यर्थमेव मोहे निपतिता** इति । वने श्वभ्रे वनान्तर्गतगर्ते ॥ १४ ॥ कोऽहम्, इदं दृश्यजातं किंस्वरूपम्, किमर्थं चागतम्, राज्येन च मे किम्, भोगैश्च किम्, किमिदं सर्वं मिथ्यैवोत किंचित्सत्यमपि । तत्र किं दृष्टिः सत्योर्तें दृश्यम् । तत्र यन्मिथ्यैव तदेव मिथ्यास्तु नतु वैपरीत्यम् । तस्य मिथ्यात्वे कस्य किमागतम् । न कापि क्षतिरिति भावः ॥ १५ ॥ एवं किंनामेदमित्यादिनवश्लोकोक्तप्रकारेण विमृशतो विचारयतः । अरतिर्वैरस्यम् । मरुषु निर्जलभूमिषु ॥ १६ ॥ एवं स्वस्य विचारोत्पत्तिप्रकारमुपवर्ण्य प्रष्टव्यांशं दर्शयति—**तदेतदि**त्यादिपञ्चभिः । तत्तस्मादिमर्शे असारत्वात्तत्रादौ विनाशोत्पत्तिविकारस्वरूपमसंभावितमिव मन्यमानः पृच्छति—**किमिद**मित्यादिना । इदं सत्यतया सर्वानुभवप्रमाणसिद्धं दृश्यं परिणश्यति सर्वात्मना असदिवापद्यते तत्किं सतोऽसत्त्वविरोधात्, यद्यसदेवेति कश्चिद्ब्रूयात्तर्हि भूयो जायते सत्त्वमापद्यते तदिदं किं सत्त्वा-

१ केन स्मः इति पाठः. २ साधनोपपत्तेरुभय इति पाठः. ३ पारवश्यादित्यर्थः इति पाठः. ४ सत्योत असत्या इति पाठः.

राहुदंष्ट्रा विवेकेन्दोः सौजन्याम्भोजचन्द्रिका ॥ १५
इन्द्रायुधवदालोलनानारागमनोहरा ।
लोला तडिदिवोत्पन्नध्वंसिनी च जडाश्रया ॥ १६
चापलावजितारण्यनकुली नकुलीनजा ।
विप्रलम्भनतात्पर्यजितोग्रमृगतृष्णिका ॥ १७
लहरीवैकरूपेण पदं क्षणमकुर्वती ।
चला दीपशिखेवातिदुर्ज्ञेयगतिगोचरा ॥ १८
सिंहीव विग्रहव्यग्रकरीन्द्रकुलपोथिनी ।
खड्गधारेव शिशिरा तीक्ष्णतीक्ष्णाशयाश्रया ॥ १९
नानयापहृतार्थिन्या दुराधिपरिलीनया ।
पश्याम्यभव्यया लक्ष्म्या किंचिद्दुःखादृते सुखम् २०
दूरेणोत्सारिताऽलक्ष्म्या पुनरेव तमादरात् ।
अहो बताश्लिष्यतीव निर्लज्जा दुर्जना सदा ॥ २१
मनोरमा कर्षति चित्तवृत्तिं
कदर्थसाध्या क्षणभङ्गुरा च ।
व्यालावलीगात्रविवृत्तदेहा
श्वभ्रोत्थिता पुष्पलतेव लक्ष्मीः ॥ २२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे लक्ष्मीनिराकरणं नाम त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः १४

श्रीराम उवाच ।

आयुः पल्लवकोणाग्रलम्बाम्बुकणभङ्गुरम् ।
उन्मत्तमिव संत्यज्य यात्यकाण्डे शरीरकम् ॥ १
विषयाशीविषासङ्गपरिजर्जरचेतसाम् ।
अप्रौढात्मविवेकानामायुरायासकारणम् ॥ २
ये तु विज्ञातविज्ञेया विश्रान्ता वितते पदे ।
भावाभावसमाश्वासमायुस्तेषां सुखायते ॥ ३
वयं परिमिताकारपरिनिष्ठितनिश्चयाः ।
संसाराभ्रतडित्पुञ्जे मुने नायुषि निर्वृताः ॥ ४
युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ।
ग्रथनं च तरङ्गाणामास्था[3] नायुषि युज्यते ॥ ५
पेलवं शरदीवाभ्रमस्नेह इव दीपकः ।
तरङ्गक इवालोलं गतमेवोपलक्ष्यते ॥ ६
तरङ्गं प्रतिबिम्बेन्दुं तडित्पुञ्जं नभोम्बुजम् ।
ग्रहीतुमास्थां बध्नामि न त्वायुषि हतस्थितौ ॥ ७
अविश्रान्तमनाः शून्यमायुराततमीहते ।
दुःखायैव विमूढोऽन्तर्गर्भमश्वतरी यथा ॥ ८
संसारसंसृतावस्यां फेनोऽस्मिन्सर्गसागरे ।

---

स्तद्वत् । 'चन्द्रायुध'मिति पाठेऽप्यर्धचन्द्रवद्वक्रमायुधमिन्द्रायुधमेव। आलोला अचिरस्थायिनो रागा वर्णाः । जडा मूर्खाः । त एव प्रायः श्रीमन्तो दृश्यते ॥ १६ ॥ चापलेनावमत्य जिता अरण्यनकुल्यो यया । नकुलीनजा दौष्कुलेया । नशब्दोऽयं नतु नञ् । विप्रलम्भनतात्पर्यं प्रतारणानुकूल्यम् । मृगतृष्णाया उग्रता ग्रीष्मे प्रसिद्धा ॥ १७ ॥ एकरूपेण क्षणमपि पदं स्थानकार्यमवस्थानमकुर्वती । सदा क्षयवृद्धिस्वभावत्वात् । दुर्ज्ञेया गतिरतर्कितदुर्दशा गोचरो यस्याः ॥ १८ ॥ विग्रहव्यग्रा युद्धोत्सुकजनास्त एव करीन्द्राः । स्वयं च तीक्ष्णा तीक्ष्णाशयान्क्रूरहृदयानाश्रयते च । कर्मधारये पूर्वतीक्ष्णापदस्य पुंवद्भावः ॥१९॥ अपहृतैः परस्वैरर्थवत्या अपहृतान्वा मृत्युना अर्थयते वाञ्छति तच्छीलया । दुराधयः परिलीनाः प्रच्छन्नाश्चोरवद्यस्याम् । आहिताग्न्यादित्वकल्पनात्परनिपातः ॥ २० ॥ तमिति परामर्शायसेति लभ्यते । तथाच यस्य पुरुषस्य अलक्ष्म्या सपत्न्येव स्वयं दूरेणोत्सारिता तमेव चिरं सपत्न्योपभुक्तं पुनरादरादाश्लिष्यतीवेयं न मानवती किंतु निर्लज्जेत्यर्थः ॥ २१ ॥ कुत्सितोऽर्थः पतनमरणादिर्यस्मादिति कदर्थः साहसं तेन साध्या लभ्या । व्यालावलीगात्रैर्विवृत्तदेहा वेष्टितशरीरा । श्वभ्रे जीर्णकूपादिगर्ते ॥ २२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे लक्ष्मीनिराकरणं नाम त्रयोदशः सर्गः ॥ १३ ॥

व्याधिरोगजराग्रस्तं कामादिकलुषीकृतम् ।
जीवितं यौवनं चायुरिह मूर्खस्य निन्द्यते ॥ १ ॥

श्रीरिवायुरपि न सुखायेत्याह—**आयुरि**त्यादिना । पल्लवस्य कोणः प्रान्तभागस्तस्याप्यग्रे लम्बमानोऽम्बुकणो हिमजलबिन्दुरिव भङ्गुरमस्थिरम् । उन्मत्तमिति प्रथमान्तमायुरुपमानं द्वितीयान्तं शरीरोपमानं वा । अकाण्डेऽनवसरे । कुत्सायामनुकम्पायां च कन् ॥ १ ॥ विषयलक्षणैः सर्पैरासङ्गेन सर्वतः शिथिलितचित्तानाम् । न विद्यते प्रौढ आत्मनि विवेको येषां पुरुषाणाम् ॥ २ ॥ किं ब्रह्मविदामप्येवं, नेत्याह—**ये त्विति** । वितते पदे अपरिच्छिन्ने वस्तुनि । भावाभावयोर्लाभालाभयोः सम आश्वासश्चित्तसमाधानं यस्य तत् ॥ ३ ॥ परिमिताकारे देहादौ परिनिष्ठित एतावदेवात्मरूपमिति सिद्धो निश्चयो येषाम् । निर्वृताः सुखिताः ॥ ४ ॥ आस्था विश्वासः ॥ ५ ॥ पेलवमल्पम् । अस्नेहो निस्तैलः । आयुरिति विपरिणामेन [4]व्यवहितेन वा संबध्यते ॥ ६ ॥ हतस्थितौ अस्थिरे ॥ ७ ॥ आत्यन्तिकतृष्णोपरमो मनसो विश्रान्तिः । शून्यं व्यर्थमित्यर्थः । आततं विस्तीर्णम् । ईहते इच्छति । अश्वाद्गर्दभ्यामुत्पन्ना अश्वतरी । तस्या उदरविदारणेनैव गर्भनिर्गमनं प्रसिद्धम् ॥ ८ ॥ अस्यां

---

१ पातिनी इति पाठः. २ दृते यथा इति पाठः.

३ मास्थायुषि न युज्यते इति पाठः. ४ व्यवहितं वा इति पाठः. ५ संसृतावस्था इति पाठः.

श्रीराम उवाच ।

इयमस्मिन्स्थितोदारा संसारे परिकल्पिता ।
श्रीर्मुने परिमोहाय सापि नूनं कदर्थदा ॥ १
उल्लासबहुलानन्तकल्लोलानलमाकुलान् ।
जडान्प्रवहति स्फारान्प्रावृषीव तरङ्गिणी ॥ २
चिन्तादुहितरो बह्व्यो भूरिदुर्ललितैधिताः ।
चञ्चलाः प्रभवन्त्यस्यास्तरङ्गाः सरितो यथा ॥ ३
एषा हि पदमेकत्र न निबध्नाति दुर्भगा ।
दग्धेवानियताचारमितश्चेतश्च धावति ॥ ४
जनयन्ती परं दाहं परामृष्टाङ्गिका सती ।
विनाशमेव धत्तेऽन्तर्दीपलेखेव कज्जलम् ॥ ५
गुणागुणविचारेण विनैव किल पार्श्वगम् ।
राजप्रकृतिवन्मूढा दुरारूढाऽवलम्बते ॥ ६
कर्मणा तेनतेनैषा विस्तारमनुगच्छति ।
दोषाशीविषवेगस्य यत्क्षीरं विस्तरायते ॥ ७
तावच्छीतमृदुस्पर्शाः परे स्वे च जने जनाः ।
वात्ययेव हिमं यावच्छ्रिया न परुषीकृताः ॥ ८
प्राज्ञाः शूराः कृतज्ञाश्च पेशला मृदवश्च ये ।
पांसुमुष्ट्येव मणयः श्रिया ते मलिनीकृताः ॥ ९
न श्रीः सुखाय भगवन्दुःखायैव हि वर्धते ।
गुप्ता विनाशनं धत्ते मृतिं विषलता यथा ॥ १०
श्रीमानजननिन्द्यश्च शूरश्चाप्यविकत्थनः ।
समदृष्टिः प्रभुश्चैव दुर्लभाः पुरुषास्त्रयः ॥ ११
एषा हि विषमा दुःखभोगिनां गहना गुहा ।
घनमोहगजेन्द्राणां विन्ध्यशैलमहातटी ॥ १२
सत्कार्यपद्मरजनी दुःखकैरवचन्द्रिका ।
सुदृष्टिदीपिकावात्या कल्लोलौघतरङ्गिणी ॥ १३
संभ्रमाभ्रादिपदवी विषादविषवर्धिनी ।
केदारिका विकल्पानां खेदायभयभोगिनी ॥ १४
हिमं वैराग्यवल्लीनां विकारोलूकयामिनी ।

---

या प्रिया सर्वमूढानां या भोगानर्थदा सदा ।
दोषैर्बहुविधैः सा श्रीरासर्गान्तं विनिन्द्यते ॥ १ ॥

इत्थं विषयाणामसारानर्थतां प्रतिपाद्य विषयसंपादनमूलश्रियोऽपि तथाविधतां प्रतिपादयितुमुपक्रमते—इयमित्यादिना । अस्मिन्संसारे स्थिता अनपगता सती बहुतरसुखहेतुत्वादुदारा उत्कृष्टेति परिकल्पिता । मूढजनैरिति शेषः । वस्तुतस्तु सापि परिमोहायैव नूनम् । यतो वधबन्धनरकादिकदर्थना एव कदर्थास्तान् ददाति न सुखलेशमपीति भावः । प्राप्ता परिमोहायाप्राप्ता वियुक्ता वा कदर्थदेति वा, कुत्सितानर्थान् धनानि ददाति न विवेकमिति वा कदर्थदा ॥ १ ॥ उल्लासैरुत्साहैर्बहुला अनन्ताः कल्लोला मनोरथपरम्परा येषां तान् स्फारान्बहून् जडान्मूर्खान् प्रवहति पारवश्यमापाद्याकर्षति । तरङ्गिणीपक्षे ऊर्ध्वं लासो नाट्यं तेन बहुलानुपचितानन्तान्कल्लोलांस्तरङ्गान् जडान्मलिनान् वहति धारयति ॥ २ ॥ अस्याः श्रियश्चिन्तालक्षणा दुहितरः पुत्र्यः प्रभवन्ति । दुर्ललितैर्दुष्टचेष्टितैरेधिता वर्धिताः ॥ ३ ॥ यथा काचिद्दुर्भगा मोहाद्वह्निं पदा आस्कन्द्य दग्धा सती एकत्र पदं न निबध्नाति पादं न स्थापयति किंत्वनियतचेष्टं यथा स्यात्तथा इतश्चेतश्च धावति, तथा श्रीरपि पदं स्थानं अनियताचारं शास्त्रविहिताचरणशून्यं पुरुषं प्राप्येति शेषः ॥ ४ ॥ व्ययापहारादिना परामृष्टैकदेशा परं दाहं जनयन्ती श्रीमत इत्यर्थः । अन्तः मध्ये । अकाण्ड एवेत्यर्थः । विनाशं स्वस्याः स्वोपभोक्तुर्वा । दीपलेखापक्षे परामृष्टाङ्गिका स्पृष्टावयवा । विनाशस्य तमोनिष्ठत्वद्योतनाय कज्जलदृष्टान्तः ॥ ५ ॥ दुरारूढा दुःखेन संपादितापि न गुणवतां धार्मिकाणामेवोपभोगाय भवति किंतु गुणागुणविचारेण विना यं कंचित्संनिहितमवलम्बते । यथा राज्ञां प्रकृतिः स्वभावः । बहुधा मूढा राजानो न धार्मिकैर्गुणवद्भिः सह स्निह्यन्ति किंतु येनकेनचित्संनिहितेन सहेति प्रसिद्धम् ॥ ६ ॥ यस्य कर्मणः क्षीरं फलं धनराज्यलाभादिलोभहिंसानृतादिदोषसर्पवेगानां विस्ताराय भवति तेनतेनैव युद्धद्यूतवाणिज्यादिकर्मणैषा श्रीर्विस्तारमधिगच्छति न यागदानादिना । प्रत्युत तेषां व्ययहेतुत्वादित्यर्थः ॥ ७ ॥ शीतमृदुस्पर्शपदेन दयादाक्षिण्यस्नेहाद्युपलक्ष्यते । वातसमूहो वात्या । परुषीकृता दुःसहीकृताः ॥ ८ ॥ तदेव स्पष्टयति—**प्राज्ञा** इति । स्पष्टम् ॥ ९ ॥ गुप्ता रक्षिता विनाशनं विनाशसाधनं धत्ते संपादयति । मृतिं मरणम् ॥ १० ॥ ननु श्रीमन्तोऽपि धार्मिका यशस्विनश्च केचिद्दृश्यन्ते तत्राह—**श्रीमानिति** । स्पष्टम् ॥ ११ ॥ दुःखलक्षणानां भोगिनां सर्पाणाम् ॥ १२ ॥ सत्कार्याणि पुण्यकर्माणि तल्लक्षणपद्मानां रजनी रात्रिः । संकोचहेतुरित्यर्थः । एवं दुःखकैरवाणां चन्द्रिका विकासहेतुः । सुदृष्टिर्दयादृष्टिः परमार्थदृष्टिर्वा तद्रूपदीपिकाया वात्या वातसमूहः । कल्लोलौघयुक्ता तरङ्गिणीव । अस्या अपि दीपप्रशमनहेतुत्वस्य रूढत्वान्न विशेषणवैयर्थ्यम् । युग्मरूपकम् ॥ १३ ॥ संभ्रमो भयं भ्रान्तिश्च तद्रूपाणामभ्राणामादिपदवी प्रथममार्गः पुरोवातादिः । केदारिका क्षेत्रभक्तिर्विकल्पसस्यानाम् । खेदः आयो लाभो यस्य तथाविधस्य भयस्य जनने भोगिनी सर्पिणी भयभोगवती । खेदायेति पृथक्पदं वा ॥ १४ ॥ विकाराश्चित्तविकाराः कामादयः ॥ १५ ॥ इन्द्रायुधं शक्रधनु-

---

१ परिक्षीणाङ्गका सती इति पाठः. २ तेनैव इति पाठः. ३ जनः इति पाठः. ४ परुषीकृतः इति पाठः. ५ कैरवं शुभ्रकमलम्. ६ सकामपुण्यवशार्थं कंचित् इति पाठः. ७ कृतः इत्युभयत्रैकवचनं क्वचित्.

राहुदंष्ट्रा विवेकेन्दोः सौजन्याम्भोजचन्द्रिका ॥ १५
इन्द्रायुधवदालोलनानारागमनोहरा ।
लोला तडिदिवोत्पन्नध्वंसिनी च जडाश्रया ॥ १६
चापलावजितारण्यनकुली नकुलीनजा ।
विप्रलम्भनतात्पर्यजितोग्रमृगतृष्णिका ॥ १७
लहरीवैकरूपेण पदं क्षणमकुर्वती ।
चला दीपशिखेवातिदुर्ज्ञेयगतिगोचरा ॥ १८
सिंहीव विग्रहव्यग्रकरीन्द्रकुलपोथिनी ।
खड्गधारेव शिशिरा तीक्ष्णतीक्ष्णाशयाश्रया ॥ १९
नानयापहृतार्थिन्या दुराधिपरिलीनया ।
पश्याम्यभव्यया लक्ष्म्या किंचिद्दुःखाद्दते सुखम् २०
दूरेणोत्सारिताऽलक्ष्म्या पुनरेव तमादरात् ।
अहो बताश्लिष्यतीव निर्लज्जा दुर्जना सदा ॥ २१
मनोरमा कर्षति चित्तवृत्तिं
कदर्थसाध्या क्षणभङ्गुरा च ।
व्यालावलीगात्रविवृत्तदेहा
श्वभ्रोत्थिता पुष्पलतेव लक्ष्मीः ॥ २२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे लक्ष्मीनिराकरणं नाम त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः १४

श्रीराम उवाच ।

आयुः पल्लवकोणाग्रलम्बाम्बुकणभङ्गुरम् ।
उन्मत्तमिव संत्यज्य यात्यकाण्डे शरीरकम् ॥ १
विषयाशीविषासङ्गपरिजर्जरचेतसाम् ।
अप्रौढात्मविवेकानामायुरायासकारणम् ॥ २
ये तु विज्ञातविज्ञेया विश्रान्ता वितते पदे ।
भावाभावसमाश्वासमायुस्तेषां सुखायते ॥ ३
वयं परिमिताकारपरिनिष्ठितनिश्चयाः ।
संसाराभ्रतडित्पुञ्जे मुने नायुषि निर्वृताः ॥ ४
युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ।
ग्रथनं च तरङ्गाणामास्था नायुषि युज्यते ॥ ५
पेलवं शरदीवाभ्रमस्नेह इव दीपकः ।
तरङ्गक इवालोलं गतमेवोपलक्ष्यते ॥ ६
तरङ्गं प्रतिबिम्बेन्दुं तडित्पुञ्जं नभोम्बुजम् ।
ग्रहीतुमास्थां बध्नामि न त्वायुषि हतस्थितौ ॥ ७
अविश्रान्तमनाः शून्यमायुराततमीहते ।
दुःखायैव विमूढोऽन्तर्गर्भमश्वतरी यथा ॥ ८
संसारसंसृतावस्यां फेनोऽस्मिन्सर्गसागरे ।

त्वद्वत् । 'चन्द्रायुध'मिति पाठेऽप्यर्धचन्द्रवद्वक्रमायुधमिन्द्रायुधमेव। आलोला अचिरस्थायिनो रागा वर्णाः। जडा मूर्खाः। त एव प्रायः श्रीमन्तो दृश्यते ॥ १६ ॥ चापलेनावमत्य जिता अरण्यनकुल्यो यया । नकुलीनजा दौष्कुलेया । नशब्दोऽयं नतु नञ् । विप्रलम्भनतात्पर्यं प्रतारणानुकूल्यम् । मृगतृष्णाया उग्रता ग्रीष्मे प्रसिद्धा ॥ १७ ॥ एकरूपेण क्षणमपि पदं स्थानकार्यमवस्थानमकुर्वती । सदा क्षयवृद्धिस्वभावत्वात् । दुर्ज्ञेया गतिरतर्कितदुर्दशा गोचरो यस्याः ॥ १८ ॥ विग्रहव्यग्रा युद्धोत्सुकजनास्त एव करीन्द्राः । स्वयं च तीक्ष्णा तीक्ष्णाशयान्क्रूरहृदयानाश्रयते च । कर्मधारये पूर्वतीक्ष्णापदस्य पुंवद्भावः ॥१९॥ अपहृतैः परस्वैरर्थवत्या अपहृतान्वा मृत्युना अर्थयते वाञ्छति तच्छीलया । दुराधयः परिलीनाः प्रच्छन्नाश्चौरवयस्याम् । आहिताग्न्यादित्वकल्पनात्परनिपातः ॥ २० ॥ तमिति परामर्शाद्यस्येति लभ्यते । तथाच यस्य पुरुषस्य अलक्ष्म्या सपत्न्येव स्वयं दूरेणोत्सारिता तमेव चिरं सपत्न्योपभुक्तं पुनरादरादाश्लिष्यतीवेयं न मानवती किंतु निर्लज्जेत्यर्थः ॥ २१ ॥ कुत्सितोऽर्थः पतनमरणादिर्यस्मादिति कदर्थः साहसं तेन साध्या लभ्या । व्यालावलीगात्रैर्विवृत्तदेहा वेष्टितशरीरा । श्वभ्रे जीर्णकूपादिगर्ते ॥ २२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे लक्ष्मीनिराकरणं नाम त्रयोदशः सर्गः ॥ १३ ॥

व्याधिरोगजराग्रस्तं कामादिकलुषीकृतम् ।
जीवितं यौवनं चायुरिह मूर्खस्य निन्द्यते ॥ १ ॥

श्रीरिवायुरपि न सुखायेत्याह—**आयुरि**त्यादिना । पल्लवस्य कोणः प्रान्तभागस्तस्याप्यग्रे लम्बमानोऽम्बुकणो हिमजलबिन्दुरिव भङ्गुरमस्थिरम् । उन्मत्तमिति प्रथमान्तमायुरुपमानं द्वितीयान्तं शरीरोपमानं वा । अकाण्डेऽनवसरे । कुत्सायामनुकम्पायां च कन् ॥ १ ॥ विषयलक्षणैः सर्पैरासङ्गेन सर्वतः शिथिलितचित्तानाम् । न विद्यते प्रौढ आत्मनि विवेको येषां पुरुषाणाम् ॥ २ ॥ किं ब्रह्मविदामप्येवं, नेत्याह—**ये त्विति** । वितते पदे अपरिच्छिन्ने वस्तुनि । भावाभावयोर्लाभालाभयोः सम आश्वासश्चित्तसमाधानं यस्य तत् ॥ ३ ॥ परिमिताकारे देहादौ परिनिष्ठित एतावदेवात्मरूपमिति सिद्धो निश्चयो येषाम् । निर्वृताः सुखिताः ॥ ४ ॥ आस्था विश्वासः ॥ ५ ॥ पेलवमल्पम् । अस्नेहो निस्तैलः । आयुरिति विपरिणामेन व्यवहितेन वा संबध्यते ॥ ६ ॥ हतस्थितौ अस्थिरे ॥ ७ ॥ आत्यन्तिकतृष्णोपरमो मनसो विश्रान्तिः । शून्यं व्यर्थमित्यर्थः । आततं विस्तीर्णम् । ईहते इच्छति । अश्वाद्गर्दभ्यामुत्पन्ना अश्वतरी । तस्या उदरविदारणेनैव गर्भनिर्गमनं प्रसिद्धम् ॥ ८ ॥ अस्यां

१ पातिनी इति पाठः. २ हृते यथा इति पाठः.

३ मास्थायुषि न युज्यते इति पाठः. ४ व्यवहितं वा इति पाठः. ५ संसृतेव सर्गे इति पाठः.

कायवल्ल्यामम्भसो ब्रह्मञ्जीवितं मे न रोचते ॥ ९
प्राप्यं संप्राप्यते येन भूयो येन न शोच्यते ।
पराया निर्वृतेः स्थानं यत्तज्जीवितमुच्यते ॥ १०
तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ।
स जीवति मनो यस्य मननेन न जीवति ॥ ११
जातास्त एव जगति जन्तवः साधुजीविताः ।
ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः ॥ १२
भारोऽविवेकिनः शास्त्रं भारो ज्ञानं च रागिणः ।
अशान्तस्य मनो भारो भारोऽनात्मविदो वपुः ॥ १३
रूपमायुर्मनो बुद्धिरहंकारस्तथेहितम् ।
भारो भारधरस्येव सर्वं दुःखाय दुर्धियः ॥ १४
अविश्रान्तमनापूर्णमापदां परमास्पदम् ।
नीडं रोगविहङ्गानामायुरायासनं दृढम् ॥ १५
प्रत्यहं खेदमुत्सृज्य शनैरलमनारतम् ।
आखुनेव जरच्छ्वभ्रं कालेन विनिहन्यते ॥ १६
शरीरबिलविश्रान्तैर्विषदाहप्रदायिभिः ।
रोगैरापीयते रौद्रैर्व्यालैरिव वनानिलः ॥ १७
प्रस्नुवानैरविच्छेदं तुच्छैरन्तरवासिभिः ।
दुःखैरावृश्च्यते क्रूरैर्घुणैरिव जरद्द्रुमः ॥ १८
नूनं निगरणायाशु घनगर्धमनारतम् ।
आखुर्मार्जारकेणेव मरणेनावलोक्यते ॥ १९
गन्धादिगुणगर्भिण्या शून्ययाऽशक्तिवेश्यया ।
अन्नं महाशनेनेव जरया परिजीर्यते ॥ २०
दिनैः कतिपयैरेव परिज्ञाय गतादरम् ।
दुर्जनः सुजनेनेव यौवनेनावमुच्यते ॥ २१
विनाशसुहृदा नित्यं जरामरणबन्धुना ।
रूपं खिङ्गवरेणेव कृतान्तेनाभिलष्यते ॥ २२
स्थिरतया सुखभासितया तया
सततमुज्झितमुत्तमफल्गु च ।
जगति नास्ति तथा गुणवर्जितं
मरणभाजनमायुरिदं यथा ॥ २३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे जीवितगर्हा नाम चतुर्दशः सर्गः ॥ १४ ॥

---

## पञ्चदशः सर्गः १५

श्रीराम उवाच ।
मुधैवाभ्युत्थितो मोहान्मुधैव परिवर्धते ।
मिथ्यामयेन भीतोऽस्मि दुरहंकारशत्रुणा ॥ १
अहंकारवशादेव दोषकोशकदर्थताम् ।

संसारसंसृतौ संसारसंभ्रमणे प्रसिद्धा कायवल्ली देहलता सर्गसागरे आम्भसो जलविकारभूतः फेन एव अत्यन्तास्थिरत्वात् । अतोऽस्मिन् जीवितं जीवनं मे न रोचत इत्यर्थः ॥ ९ ॥ प्राप्यमवश्यं प्राप्तुं योग्यं परमपुरुषार्थरूपम् । निर्वृतेर्जीवन्मुक्तिसुखस्य ॥ १० ॥ मननेन मननफलेन तत्त्वबोधेन वासनाक्षयेण वा न जीवति तुच्छीभवति ॥ ११ ॥ त एव साधुजीविताः प्रशस्यजीवना जाता इति संबन्धः । जरठाश्चिरजीविनोऽपि गर्दभवदप्रशस्यजीवनाः । अशुचिदेहात्मबुद्धेरिति भावः ॥ १२ ॥ भारो भार इव व्यर्थश्रमहेतुः । ज्ञानं च ज्ञानमपि यत्सर्वश्रमनिवारकत्वेन प्रसिद्धं किमन्यदिति भावः ॥ १३ ॥ ईहितं चेष्टितम् । भारशब्दार्थं स्वयमेवाह—**भारधरस्येवे**त्यादिना ॥१४॥ विश्रान्तिः सर्वश्रमनिवृत्तिः । आपूर्तिः पूर्णकामता । आयासनं श्रमसाधनम् ॥ १५ ॥ प्रत्यहमित्यस्य खेदमुत्सृज्येत्यनेनैव निराकाङ्क्षीकरणादनारतमित्यस्य न वैयर्थ्यम् । विनिहन्यते आयुरित्यर्थः ॥ १६ ॥ विषवद्दाहप्रदानशीलैः । आपीयते आयुरिति शेषः । व्यालैः सर्पैः ॥१७॥ प्रस्नुवानैः क्षरद्भिः पूयरक्तमलादि । घुणपक्षे रजांसि । दुःखै रोगादिदुःखैः आसमन्ताद्वृश्च्यते च्छिद्यते । 'आघृष्यत' इति पाठेऽप्ययमेवार्थः । घुणाः काष्ठकीटकाः ॥ १८ ॥ निगरणं ग्रसनम् । घनगर्धं प्रचुराभिलाषं यथा स्यात्तथा ॥ १९ ॥ जरया वेश्यया अशक्ति क्षीणबलं यथा स्यात्तथा परिजीर्यते आयुः पुरुषो वा । तत्र दृष्टान्तः । महाशनेन बह्वाशिनान्नमिवेति ॥ २० ॥ यौवनस्यादरः पुरुषार्थोपयोजनं तद्रहितं परिज्ञाय । गतादरमिति क्रियाविशेषणं वा । दुर्जन इति यावन्न परिज्ञायते तावदेव सुजनैराद्रियत इति प्रसिद्धम् ॥२१॥ खिङ्गवरो विटश्रेष्ठः । रूपं सौन्दर्यमिव । अभिलष्यते आयुः पुरुषो वा ॥ २२ ॥ तया जीवन्मुक्तप्रसिद्धया सुखभासितया स्थिरतया च सततमुज्झितं त्यक्तमुत्तमफल्गु अतितुच्छं गुणवर्जितं च यथेदमायुस्तथा जगत्यन्यन्नास्तीति संबन्धः ॥ २३ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे जीवितगर्हा नाम चतुर्दशः सर्गः ॥ १४ ॥

सर्वानर्थसमारम्भमूलस्तम्भोऽत्र निन्द्यते ।
ममताव्रततेर्मूलमहंकारो विशेषतः ॥ १ ॥

एवमहंकारस्यापि न सुखहेतुता प्रत्युत सर्वदोषाणामभिमानमूलत्वादनर्थत्वमेवेति विस्तरेण दर्शयति—**मुधैवे**त्यादिना । मोहादज्ञानान्निमित्तान्मुधा व्यर्थमेवाहंकारोऽभ्युत्थितो व्यर्थमेव च परितो वर्धते न ततः पुरुषार्थोऽस्तीत्यर्थः । तस्योपादानमपि मोह एवेति दर्शयति—**मिथ्यामयेने**ति । आमयेनेति वा च्छेदः । अहंकाराख्येन शत्रुणा शातनशीलेन रोगेणेति तदर्थः ॥ १ ॥ विविधाः साध्यसाधनफलवृत्तिलक्षणा आकारा यस्य स तथा-

१ राघृष्यते इति पाठः. २ जरसा इति पाठः.

ददाति दीनदीनानां संसारो विविधाकृतिः ॥ २
अहंकारवशादापदहंकाराद्दुराधयः ।
अहंकारवशादीहा त्वहंकारो ममामयः ॥ ३
तमहंकारमाश्रित्य परमं चिरवैरिणम् ।
न भुञ्जे न पिबाम्यम्भः किमु भोगान्भुजे मुने ॥ ४
संसाररजनी दीर्घा माया मनसि मोहिनी ।
ततोऽहंकारदोषेण किरातेनेव वागुरा ॥ ५
यानि दुःखानि दीर्घाणि विषमाणि महान्ति च ।
अहंकारात्प्रसूतानि तान्यगात्खदिरा इव ॥ ६
शमेन्दुसैंहिकेयास्यं गुणपद्महिमाशनिम् ।
साम्यमेघशरत्कालमहंकारं त्यजाम्यहम् ॥ ७
नाहं रामो न मे वाञ्छा भावेषु न च मे मनः ।
शान्त आसितुमिच्छामि स्वात्मनीव जिनो यथा ॥ ८
अहंकारवशाद्यद्यन्मया भुक्तं हुतं कृतम् ।
सर्वं तत्तदवस्त्वेव वस्त्वहंकाररिक्तता ॥ ९
अहमित्यस्ति चेद्ब्रह्मन्नहमापदि दुःखितः ।
नास्ति चेत्सुखितस्तस्मादनहंकारिता वरम् ॥ १०
अहंकारं परित्यज्य मुने शान्तमनस्तया ।
अवतिष्ठे गतोद्वेगो भोगौघो भङ्गुरास्पदः ॥ ११
ब्रह्मन्यावदहंकारवारिदः परिजृम्भते ।
तावद्धिकासमायाति तृष्णाकुटजमञ्जरी ॥ १२
अहंकारघने शान्ते तृष्णा नवतडिल्लता ।
शान्तदीपशिखावृत्त्या क्वापि यात्यतिसत्वरम् ॥ १३
अहंकारमहाविन्ध्ये मनोमत्तमहागजः ।
विस्फूर्जति घनास्फोटैः स्तनितैरिव वारिदः ॥ १४
इह देहमहारण्ये घनाहंकारकेसरी ।
योऽयमुल्लसति स्फारस्तेनेदं जगदाततम् ॥ १५
तृष्णातन्तुलवप्रोता बहुजन्मपरम्परा ।
अहंकारोग्रखिन्नेन कण्ठे मुक्तावली कृता ॥ १६
पुत्रमित्रकलत्रादितन्त्रमन्त्रविवर्जितम् ।
प्रसारितमनेनेह मुनेऽहंकारवैरिणा ॥ १७
प्रमार्जितेऽहमित्यस्मिन्पदे स्वयमपि द्रुतम् ।
प्रमार्जिता भवन्त्येते सर्व एव दुराधयः ॥ १८
अहमित्यम्बुदे शान्ते शनैश्च शमशातिनी ।
मनोगगनसंमोहमिहिका क्वापि गच्छति ॥ १९
निरहंकारवृत्तेर्मे मौर्ख्याच्छोकेन सीदतः ।
यत्किंचिदुचितं ब्रह्मंस्तदाख्यातुमिहार्हसि ॥ २०

सर्वापदां निलयमध्रुवमन्तरस्थ-
मुन्मुक्तमुत्तमगुणेन न संश्रयामि ।
यत्नादहंकृतिपदं परितोऽतिदुःखं
शेषेण मां समनुशाधि महानुभाव ॥ २१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे अहंकारजुगुप्सा नाम पञ्चदशः सर्गः ॥ १५ ॥

---

विधः संसारः[४]अनादिकालादारभ्य जन्ममरणनरकाद्यनन्तदुःखपरम्परामनुभूयापि पुनःपुनस्तद्धेतून्सुखलवानायाससहस्रैरपि लिप्समानत्वाद्दीनेभ्योऽपि दीनानां विषयलम्पटानां रागद्वेष[५]दुर्व्यसनादिदोषलक्षणेषु कोशगृहेषु सद्व्यवहारानुपयोगात्कदर्थतां कुत्सितधनभावं ददाति संपादयति यत्तदहंकारवशादेवेत्यर्थः ॥ २ ॥ तत्फलमेव दिक्प्रदर्शनेन प्रपञ्चयति—**अहंकारवशा-दिति**। आपत् शारीरदुःखम्। आधयो मानसदुःखानि। ईहा रागो दुश्चेष्टा वा। मम आमयो रोगः। 'मनोमय' इति पाठेऽपि लुप्तैकदेशः, मनस आमयो मनोविकार इति वार्थः ॥ ३ ॥ भुजे भुञ्जे। विकरणलोपश्छान्दसः। 'भजे' इति वा पाठः ॥४॥ संसारलक्षणतमिस्रायां दीर्घा आयता वागुरा मृगबन्धनी ॥५॥ विषमाणि दुरुत्तराणि। अगात्पर्वतात्। खदिरा वृक्षविशेषाः ॥६॥ सैंहिकेयो राहुः। हिममशनिरिवेत्युपमितसमासः। साम्यं समदर्शिता स एव सर्वभूतेषु दयावर्षित्वान्मेघः ॥७॥ अहंकारत्यागे देहाभिमानममतादयः स्वयमेव शाम्यन्तीति दर्शयति—**नाहमि-ति**। शान्तो निर्वैरः। स्वात्मनीव आत्मौपम्येन सर्वभूतानि पश्यन्नित्यर्थः। जिनो बुद्धः। स यथा अहिंसापरस्तद्वत्। 'निन्द्येष्वपि गुणो ग्राह्यः' इति न्यायेन जिनोदाहरणम्। 'जित' इति वा पाठः ॥ ८ ॥ अवस्तु तुच्छमसारं वा ॥ ९ ॥ १० ॥ उद्वेगानामशान्तमनोमूलत्वात्तच्छान्त्या गतोद्वेगः। ननु भोगसंपत्तिभिरेव कुतो न तथा स्यात्तत्राह—**भोगौघ** इति। भङ्गुरो देहेन्द्रियविषयाद्यधीनः। तथाच तत्तदेकैकभङ्गेऽप्युद्वेगप्रसक्तिर्दुर्वारेति भावः ॥ ११ ॥ अहंकार [६]एव विवेकज्योतिर्गणतिरोधायकत्वाद्वारिदः। परितो जृम्भते गात्राणि विस्तारयति ॥ १२ ॥ वृत्तिरत्र तुल्यशीलता ॥ १३॥ स्तब्धत्वदुर्विनामत्वाभ्यां विन्ध्यसाम्यम्। विस्फूर्जति गर्जति। घनैरास्फोटैर्युद्धोत्साहैः, घनानां निबिडशिलादीनामास्फोटनध्वनिभिर्वा ॥ १४ ॥ स्फारस्तैस्तैर्गर्वहेतुभिरुपचितः। जगदाततं सुकृतदुष्कृतादिबीजोपचयेन विस्तारितम्। 'सहीदमन्नं धियाधिया जनयते कर्मभिः' इति श्रुतेरिति भावः ॥ १५ ॥ लव एकदेशः। जन्मपरम्परा देहपरम्परा। खिन्नो विटः ॥ १६ ॥ पुत्रमित्रादिरूपं तन्त्रमन्त्रविवर्जितं वशीकरणोन्मादादिसाधनमिति शेषः। लौकिकयौक्तिकोपायस्तन्त्रम् ॥१७॥ प्रमार्जिते मूलोच्छेदेन निरस्ते ॥ १८॥ अहंकारोच्छेदस्य मन्दाधिकारिणां चिरसाधनाभ्यासप्रबोधसाध्यत्वा-

---

१ नाहंकारात्परो रिपुः इति पाठः. २ सिंहिकेयास्यमिति पाठः, सिंहिकेयो=राहुः; वृद्ध्यभावश्छान्दसः. ३ वरा इति पाठः. ४ कालमारभ्य इति पाठः. ५ दुर्वासनादि इति पाठः. ६ पवेति [illegible]

# षोडशः सर्गः १६

श्रीराम उवाच ।

दोषैर्जर्जरतां याति सत्कार्यादार्यसेवनात् ।
वातान्तःपिच्छलववच्चेतश्चलति चञ्चलम् ॥ १
इतश्चेतश्च सुव्यग्रं व्यर्थमेवाभिधावति ।
दूराद्दूरतरं दीनं ग्रामे कौलेयको यथा ॥ २
न प्राप्नोति क्वचित्किंचित्प्राप्तैरपि महाधनैः ।
नान्तः संपूर्णतामेति करण्डक इवाम्बुभिः ॥ ३
नित्यमेव मुने शून्यं कदाशावागुरावृतम् ।
न मनो निर्वृतिं याति मृगो यूथादिव च्युतः ॥ ४
तरङ्गतरलां वृत्तिं दधदालूनशीर्णताम् ।
परित्यज्य क्षणमपि हृदये याति न स्थितिम् ॥ ५
मनो मननविक्षुब्धं दिशो दश विधावति ।
मन्दराहननोद्भूतं क्षीरार्णवपयो यथा ॥ ६
कल्लोलकलितावर्तं मायामकरमालितम् ।
न निरोद्धुं समर्थोऽस्मि मनोमयमहार्णवम् ॥ ७
भोगदूर्वाङ्कुराकाङ्क्षी श्वभ्रपातमचिन्तयन् ।
मनोहरिणको ब्रह्मन्दूरं विपरिधावति ॥ ८
न कदाचन मे चेतः स्वामालूनविशीर्णताम् ।
त्यजत्याकुलया वृत्त्या चञ्चलत्वमिवार्णवः ॥ ९
चेतश्चञ्चलया वृत्त्या चिन्तानिचयचञ्चुरम् ।
धृतिं बध्नाति नैकत्र पञ्जरे केसरी यथा ॥ १०
मनो मोहरथारूढं शरीरात्समतासुखम् ।
हरत्यपहतोद्वेगं हंसः क्षीरमिवाम्भसः ॥ ११
अनल्पकल्पनातल्पे विलीनाश्चित्तवृत्तयः ।
मुनीन्द्र न प्रबुध्यन्ते तेन तप्येऽहमाकुलः ॥ १२
क्रोडीकृतदृढग्रन्थितृष्णासूत्रे स्थितात्मना ।
विहगो जालकेनेव ब्रह्मन्बद्धोऽस्मि चेतसा ॥ १३
संततामर्षधूमेन चिन्ताज्वालाकुलेन च ।

च्छनैरित्युक्तम् । मुख्याधिकारिणां शीघ्रमपीति समुच्चयाय चकारः । शमशातनी शान्तिनिकृन्तनी । मनोगगनस्था मोहमिहिका महाभ्रान्तिनीहारपटली ॥ १९ ॥ २० ॥ एवमहंकारं तत्प्रयुक्तानर्थं तदुच्छेदफलं चोपवर्ण्य स्वस्य तत्त्यागप्रयुक्तां श्रवणाधिकारसंपत्तिं वदन्नुपदेशं प्रार्थयते—**सर्वापदा**मिति । अन्तरस्थं हृदयस्थम् । उत्तमगुणेन शान्त्यादिनोन्मुक्तम् । अहंकृतिरूपं पदं लक्ष्म लाञ्छनमित्यर्थः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । यत्नाद्विवेकदार्ढ्यात् । शेषेणावशिष्टेन संपाद्येन सह मामनुशाध्युपदिश । आत्मतत्त्वमिति शेषः ॥२१॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे अहङ्कारजुगुप्सा नाम पञ्चदशः सर्गः ॥ १५ ॥

इह चित्तमनोदोषा विस्तरेणोपपत्तिभिः ।
रामेण संप्रकाश्यन्ते दृष्टान्तैश्चापि भूरिभिः ॥ १ ॥

अहंकारवच्चित्तमनसोरपि न सुखहेतुता किंतु दुःखहेतुतैवेत्याह—**दोषै**रित्यादिना । ल्यब्लोपे पञ्चम्यौ । 'महत्सेवां द्वारमाहुर्विमुक्तेः' इति वचनात्सद्भिर्मुमुक्षुभिरवश्यं कर्तव्यमार्यसेवनं विहायेत्यर्थः । दोषैः कामादिभिर्जर्जरतां शैथिल्यं पुरुषार्थसाधनापटुत्वमिति यावत् । वातान्तर्वायुप्रवाहमध्ये पिच्छलववद्वर्हाग्रवच्चलति । यतश्चञ्चलम्, चपलस्वभावमित्यर्थः । मनसोऽपि प्राणवाताधीनं चलनमिति वक्ष्यति ॥१॥ तदेव सदृष्टान्तं दर्शयति—**इतश्चे**ति । युक्तायुक्तविमर्शमन्तरेणेत्यर्थः । सुव्यग्रमतिव्याकुलम् । क्वापि स्वपूर्तिहेत्वलाभाद्दीनम् । कौलेयकः सारमेयः ॥ २ ॥ वंशवेत्रादिशलाकारचितो वस्त्राद्याधानपात्रविशेषः करण्डकः॥३॥ शून्यं स्वतो विषयतश्च । सजातीयानां तिरश्चां समूहो यूथः ॥४॥ स्थूलावयवानां विभाग आलूनता । सूक्ष्माणां तु स [1]शीर्णता । कर्मधारयात्तल् ॥ ५ ॥ मननैर्विषयग्रहणसंधानैर्विक्षुब्धं विविधक्षोभं प्राप्तम् ॥ ६ ॥ कल्लोलसदृशैर्भोगलाभोत्साहैः कलितावर्तं संपादितमज्जनानुकूलभ्रमणम् । मायाः परवञ्चनोपायास्त एव क्रूरत्वान्मकराः ॥ ७ ॥ श्वभ्रपातं नरकगर्तपातम् ॥ ८ ॥ आलूनविशीर्णता व्याख्याता ॥ ९ ॥ चञ्चुरमतिचपलम् । चरतेर्यङन्तात्पचाद्यचि 'यङोऽचि च' इति यङ्लुकि 'चरफलोश्च' इत्यभ्यासस्य नुक् 'उत्परस्यातः' इत्युत्वम् । धृतिं धैर्यम् । स्वत एव चपलस्वभावं चिन्तानिचयेन चाल्यमानं तु सुतरामिति बलान्निरुध्यमानमपि धैर्यं न बध्नातीत्यर्थः ॥ १० ॥ उत्कर्षापकर्षयोरुपाधिकल्पितत्वात्परमार्थतः सर्वभूतेष्वात्मन एकरूपता । सैव तथा जीवन्मुक्तैरनुभूयमाना समता सुखमित्युच्यते । सा च मनसो मोहरथानारोहणे नित्यसिद्धत्वादस्मिन्नेव शरीरे प्राप्तापि मोहरथारूढेन मनसा ग्रस्तत्वादसारदेहमात्रात्मभावः परिशिष्यत इति भावः ॥ ११ ॥ चित्तस्य प्रत्यक्प्रवण[2]वृत्तयो बहुतरद्वैतविषयासक्तिकल्पनालक्षणशय्यायां विलीनाः सुप्तप्रायाः प्रबोधकशास्त्राचार्योपदेशमन्तरेण केवलस्वबुद्धिकृतविचारसहस्रेणापि न प्रबुध्यन्ते । तेन तदप्रबोधेनाहं तप्ये ॥१२॥ क्रोडीकृता अन्तर्निवेशिता अहमिदं ममेदमित्यन्योन्यतादात्म्यसंसर्गाध्यासलक्षणा दृढग्रन्थयो यस्मिंस्तथाविधे भोगतृष्णासूत्रे स्थितेनात्मना स्वेनैव कर्त्रा, चेतसा करणेन । दृष्टान्ते तृष्णासदृशसूत्रे स्थितात्मनेति जालकविशेषणम् । आमिषतृष्णासूत्रे स्थितात्मना व्याधेन कर्त्रा जालकेन करणेनेति वार्थः ॥ १३ ॥ संततो विस्तारितः अमर्षः क्रोध एव धूमो यस्य । चिन्तैव ज्वाला तया आकुलेनेति रूपकसंपादितधूमादिसंपत्त्या वह्निसादृश्यमेव विवक्ष्यते न वह्नित्वमिति न रूपकोपमानविरोधः । उपमानविशेषणत्वपक्षे न मृष्यते सह्यत इत्यमर्षो दुःसहस्तथाविधेन धूमेन । चिन्त्यते



१ दीर्घता इत्युभयत्र पाठः. २ प्रवृत्तय इति पाठः.

वह्निनेव तृणं शुष्कं मुने दग्धोऽस्मि चेतसा ॥ १४
क्रूरेण जडतां यातस्तृष्णाभार्यानुगामिना ।
शवं कौलेयकेनेव ब्रह्मन्भुक्तोऽस्मि चेतसा ॥ १५
तरङ्गतरलास्फालवृत्तिना जडरूपिणा ।
तटवृक्ष इवौघेन ब्रह्मन्नीतोऽस्मि चेतसा ॥ १६
अवान्तरनिपाताय शून्ये वा भ्रमणाय च ।
तृणं चण्डानिलेनेव दूरे नीतोऽस्मि चेतसा ॥ १७
संसारजलधेरस्मान्नित्यमुत्तरणोन्मुखः ।
सेतुनेव पयःपूरो रोधितोऽस्मि कुचेतसा ॥ १८
पातालाद्गच्छता पृथ्वीं पृथ्व्याः पातालगामिना ।
कूपकाष्ठं कुदाम्नेव वेष्टितोऽस्मि कुचेतसा ॥ १९
मिथ्यैव स्फाररूपेण विचाराद्विशरारुणा ।
बालो वेतालकेनेव गृहीतोऽस्मि कुचेतसा ॥ २०
वह्नेरुष्णतरः शैलादपि कष्टतरक्रमः ।
वज्रादपि दृढो ब्रह्मन्दुर्निग्रहमनोग्रहः ॥ २१
चेतः पतति कार्येषु विहगः स्वामिषेष्विव ।
क्षणेन विरतिं याति बालः क्रीडनकादिव ॥ २२
जडप्रकृतिरालोलो विततावर्तवृत्तिमान् ।
मनोऽब्धिरहितव्यालो दूरं नयति तात माम् ॥ २३
अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ।
अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः ॥ २४
चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् ।
तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ २५

चित्तादिमानि सुखदुःखशतानि नून-
मभ्यागतान्यगवरादिव काननानि ।
तस्मिन्विवेकवशतस्तनुतां प्रयाते
मन्ये मुने निपुणमेव गलन्ति तानि ॥ २६
सकलगुणजयाशा यत्र बद्धा महद्भि-
स्तमरिमिह विजेतुं चित्तमभ्युत्थितोऽहम् ।
विगतरतितयान्तर्नाभिनन्दामि लक्ष्मीं
जडमलिनविलासां मेघलेखामिवेन्दुः ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे वैराग्यचित्तदौरात्म्यं नाम षोडशः सर्गः ॥ १६ ॥

---

दग्धैरिति चिन्ता ज्वालेति व्याख्येयम् । एवमन्यत्रापि ॥ १४ ॥ जडतामज्ञतां यातः प्राप्तोऽहमिति शेषः । क्रूरेण निष्ठुरेण । तृष्णा भार्येवेत्युपमितसमासो रूपकं वा । अन्यत्र तृष्णावत्सदाऽपूर्णोदरी भार्या शुनी तदनुगामिना कौलेयकेन शुना जडतां भारतां प्राप्तं शवं कुणप इवेति संबन्धः ॥ १५ ॥ तरङ्गवत्तरला आस्फालाः अलभ्यविषये प्रतिहन्यमाना वृत्तयो यस्येति चेतःपक्षे । अन्यत्र तरङ्गास्तरला आस्फालवृत्तयो यस्मिंस्तेन डलयोरभेदाज्जलरूपिणा ओघेन पूरेण नदीतटवृक्ष इव निपात्य नीतोऽस्मि ॥ १६ ॥ धर्मप्रवृत्त्या स्वर्गारोहे अकाण्डनिपाताय तदभावे सुखलेशशून्ये इहैव कीटपतङ्गादिजन्मभिर्भ्रमणाय । तथाच श्रुतिः 'एतमेवाध्वानं पुनर्निवर्तन्ते' इति, 'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' इति च । उपमानपक्षे स्पष्टम् ॥ १७ ॥ संसारजलधेरुत्तरणोन्मुखो निर्गमनोद्युक्तः । 'जलधौ ह्यस्मादि'ति सप्तमीपाठे उत्तरणोन्मुखोऽहं संसारजलधावेव निरुध्य स्थापितोऽस्मीत्यर्थः । यथा सेतुना क्षुद्रनदीपयःपूरो रुध्यते तद्वत् ॥ १८ ॥ पृथ्वीपातालशब्दाभ्यां तत्तद्दशावूर्ध्वाधोदेशौ लक्ष्येते । रज्ज्वा जलादिभाराकर्षणायैकतो बद्धभारं तिर्यक्काष्ठप्रोतवलयाकारभारं वा कूपकाष्ठं प्रसिद्धम् ॥ १९ ॥ बालबिभीषिकार्थं कल्पितवेतालको यथा बालबुद्ध्या स्फारतां प्राप्तस्तस्यैव बाल्यापगमे विचारादसत्त्वमापद्यते तथाऽज्ञबुद्ध्या दुर्जयं मनो विवेके तु निःस्वरूपमेवेत्यर्थः ॥ २० ॥ दुःखेनापि ग्रहीतुमशक्यो मनोलक्षणो गृह्णातीति ग्रहः पिशाच उष्णतरः सदासन्तापकत्वात् । कष्टतरः क्रमः अतिक्रमणं वशीकार इति यावत् । वज्राद्धीरकादपि दृढो दुर्भेदः । अशनेरपि निष्ठुर इति वा ॥ २१ ॥ कार्येषु विषयेषु पतति झटित्येवासज्जते । विरतिं निवृत्तिम् । चिराभ्यस्तेभ्योऽपि सद्व्यापारेभ्य इति शेषः । यथा बालः कदाचिदपि प्राप्तात्क्रीडनकान्निमित्ताच्चिरोपात्तादध्ययनादेर्विरतिं याति तद्वत् ॥ २२ ॥ सर्वाणि विशेषणान्यब्धिमनसोस्तुल्यानि स्पष्टानि । अहिताः कामादयः षट् त एव व्यालाः सर्पा यस्मिन् ॥ २३ ॥ विषमः कष्टतरः ॥ २४ ॥ चिकित्स्यं रोगवद्वश्यमपनेयम् ॥ २५ ॥ उक्तमेव दृष्टान्तेन स्पष्टयति—**चित्ता**दिति । नूनमिति वितर्के । अभ्यागतानि प्ररूढानि । अगवराद्गिरिश्रेष्ठाद्विन्ध्यादेः । तनुतां सूक्ष्मताम् । निर्वासनतया भर्जितबीजप्रायतामिति यावत् ॥ २६ ॥ महद्भिर्मुमुक्षुभिर्यत्र यस्मिंश्चित्ते जिते सति सकलानां शान्तिदान्त्यादिगुणानां जयः स्वाधीनतासंपत्तिस्तस्य सकलाः कामकर्मवासनादिकलासहिता गुणाः सत्त्वरजस्तमांसि यस्यास्तस्या अविद्याया जयो नाशस्तस्य, सकला गुणा आनन्दलवा यस्मिन्निरतिशयानन्दे तस्य जयः प्राप्तिस्तस्य वा । आशानिबद्धेत्यर्थः । इह अस्मिन्नेव शरीरे । 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' इति श्रुतेः । अभ्युत्थित उद्युक्तोऽस्मि । विगतरतितया वैराग्यसंपत्त्या अन्तर्मनसि जडान्मूर्खान्मलिनानशुद्धांश्च विलासयत्युत्साहयति शोभयति वा । जडो मोहहेतुर्मलिनः पापहेतुर्विलासो यस्या वा ताम् । मेघलेखापक्षे जलेन मलिना नीला विलसतीत्यर्थः ॥ २७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे वैराग्यचित्तदौरात्म्यं नाम षोडशः सर्गः ॥ १६ ॥

१ दूरं नीतोऽस्मि इति पाठः.

## सप्तदशः सर्गः १७

श्रीराम उवाच ।

हार्दान्धकारशर्वर्या तृष्णयेह दुरन्तया ।
स्फुरन्ति चेतनाकाशे दोषकौशिकपङ्क्तयः ॥ १
अन्तर्दाहप्रदायिन्या समूढरसमार्दवः ।
पङ्क आदित्यदीप्त्येव शोषं नीतोऽस्मि चिन्तया ॥ २
मम चित्तमहारण्ये व्यामोहतिमिराकुले ।
शून्ये ताण्डविनी जाता भृशमाशापिशाचिका ॥ ३
वचोरचितनीहारा काञ्चनोपवनोज्वला ।
नूनं विकासमायाति चिन्ताचणकमञ्जरी ॥ ४
अलमन्तर्भ्रमायैव तृष्णातरलिताशया ।
आयाता विषमोल्लासमूर्मिरम्बुनिधाविव ॥ ५
उद्दामकल्लोलरवा देहाद्रौ वहतीह मे ।
तरङ्गतरलाकारा तरत्तृष्णातरङ्गिणी ॥ ६
वेगं संरोद्धुमुदितो वात्ययेव जरत्तृणम् ।
नीतः कलुषया क्वापि तृष्णया चित्तचातकः ॥ ७
यां यामहमतीवास्थां संश्रयामि गुणश्रियाम् ।
तां तां कृन्तति मे तृष्णा तन्त्रीमिव कुमूषिका ॥ ८
पयसीव जरत्पर्णं वायाविव जरत्तृणम् ।
नभसीव शरन्मेघश्चिन्ताचक्रे भ्रमाम्यहम् ॥ ९
गन्तुमास्पदमात्मीयमसमर्थधियो वयम् ।
चिन्ताजाले विमुह्यामो जाले शकुनयो यथा ॥ १०
तृष्णाभिधानया तात दग्धोऽस्मि ज्वालया तथा ।
यथा दाहोपशमनमाशङ्के नामृतैरपि ॥ ११
दूरं दूरमितो गत्वा समेत्य च पुनःपुनः ।
भ्रमत्याशु दिगन्तेषु तृष्णोन्मत्ता तुरङ्गमी ॥ १२
जडसंसर्गिणी तृष्णा कृतोर्ध्वाधोगमागमा ।
क्षुब्धा ग्रन्थिमती नित्यमारघट्टाग्ररज्जुवत् ॥ १३
अन्तर्ग्रथितया देहे सर्वदुश्छेदयाऽनया ।
रज्जुवेवाशु बलीवर्दस्तृष्णया वाह्यते जनः ॥ १४
पुत्रमित्रकलत्रादितृष्णया नित्यकृष्टया ।
खगेष्विव किरात्येदं जालं लोकेषु रच्यते ॥ १५
भीषयत्यपि धीरं मामन्धयत्यपि सेक्षणम् ।
खेदयत्यपि सानन्दं तृष्णा कृष्णेव शर्वरी ॥ १६
कुटिला कोमलस्पर्शा विषवैषम्यशंसिनी ।
दशत्यपि मनाक्स्पृष्टा तृष्णा कृष्णेव भोगिनी ॥ १७
भिन्दती हृदयं पुंसां मायामयविधायिनी ।

सर्वपापौघजननी दैन्यकार्पण्यमृत्युदा ।
भ्रमयन्ती जगत्कृत्स्नं तृष्णैकात्र विनिन्द्यते ॥ १ ॥

हार्दस्य परमप्रेमास्पदस्य आत्मतत्त्वस्य हृदयोद्भवस्य विवेकादेश्च तिरोधाने अन्धकारशर्वर्या तमिस्रया । दुरन्तया दुरुच्छेदया । इह चेतनाकाशे जीवे । रागादिदोषलक्षणाः कौशिकपङ्क्तय उलूकश्रेणयः ॥ १ ॥ समूढे अपहृते रसमार्दवे स्नेहदये दाक्षिण्यविनयौ वा यस्य । शोषं नैष्ठुर्यम् । प्रसिद्धे वा रसमार्दवे पङ्कसाधारणे । अथवा । सम्यगूढे प्राप्ते रसमार्दवे येन तथाविधोऽहं संप्रति शोषं तच्छून्यतां नीत इत्यर्थः ॥ २ ॥ शून्ये विचारेण । अरण्यपक्षे जनैः ॥ ३ ॥ तत्तदार्तिविलापवचोभिर्विरचिताश्रुनीहारजलकणा । काञ्चनस्य स्वर्णादेरुप समीपे वनं वननं मनोभिलाषातिशयस्तेन पाण्डुतापादनादुज्वला । अन्यत्र नीहारजलेनैव चणका वर्धन्त इति वचोभङ्ग्या निशारचिता नीहारजलकणा यस्याम् । समीपस्थेन धत्तूरवनेनोज्वला शोभमाना चिन्तालक्षणा चणकसस्यानां मञ्जरी अर्थात्तृष्णा क्षेत्रे विकासमायाति । नूनमित्युत्प्रेक्षा ॥ ४ ॥ तरलिताशया विक्षोभितचित्ता । अन्यत्र चञ्चलितमध्यभागा । तृष्णा अम्बुनिधावूर्मिरिव अलमत्यर्थमन्तर्भ्रमायैव विषमोल्लासं कष्टबहुलं धनार्जनोत्साहं आयाता प्रापितवती[2] । अन्यत्र भ्रमणायैव विसदृशमूर्ध्वनाट्यं प्राप्तेत्यर्थः ॥ ५ ॥ उद्दामा उच्छ्रिताः अधिक्षेपानृतभाषणादयः प्रवृत्तिकल्लोलरवा यस्याः । अतएव उक्ततरङ्गैस्तरलाकारा तरन्ती विषयाद्विषयान्तरं प्लवमाना या तृष्णा तल्लक्षणा तरङ्गिणी नदी मे देहपर्वते वहति प्रवहति ॥ ६ ॥ वेगं स्वचापल्यम् । उदित उद्युक्तः । धर्ममेघाख्यसमाधिरसपानायेत्यर्थाद्गम्यते । चित्तलक्षणश्चातकः कलुषया रजोमलिनया वात्यया वातसमूहेन क्वापि अयोग्ये विषये नीतः ॥ ७ ॥ गुणश्रियां विवेकवैराग्यादिगुणसंपदां विषये यां यामास्थामुत्साहं कृन्तति छिनत्ति । तन्त्रीं चर्मगुणां वीणाम् ॥ ८ ॥ पयसि आवर्तजले ॥ ९ ॥ आत्मीयं स्वीयमास्पदं प्रतिष्ठाम् । पारमार्थिकं रूपमिति यावत् । गन्तुं प्राप्तुम् ॥ १० ॥ आशङ्के संभावयामि ॥ ११ ॥ द्विरुक्तिर्व्यवहितविप्रकृष्टविषयलाभाय ॥ १२ ॥ धर्माधर्मरूपविषयानुसारात् कृतौ संपादितौ स्वर्गनरकयोर्गमागमौ गमनागमने यया । क्षुब्धा संचलिता । भोक्तृभोग्यतादात्म्यसंसर्गाध्यासो ग्रन्थिस्तद्वती । आरघट्टाग्ररज्जुर्घटीयन्त्रोपरितनरज्जुस्तत्पक्षेऽपि चत्वारि विशेषणानि प्रसिद्धान्येव ॥ १३ ॥ देहे अन्तर्मनसि ग्रथितया[3] प्रोतया बलीवर्दरज्जुपक्षे नासादिप्रदेशे प्रोतया । वाह्यते ऐहिकामुष्मिकसाधनसहस्रभारमित्यर्थः ॥ १४ ॥ नित्यं कृष्टमाकर्षणं यस्याः स्वभावस्तथाभूतया तृष्णया किरात्या खगेषु जालमिव इदं प्रसिद्धं पुत्रमित्रकलत्रादिजालं लोकेषु जनेषु रच्यते ॥ १५ ॥ धीरं प्राज्ञं धैर्यवन्तं च । सेक्षणं विवेकचक्षुष्मन्तं प्रसिद्धं च । शर्वरी रात्रिः ॥ १६ ॥ कौटिल्यसहस्रवती । कोमलः सुखलवोन्मुखः स्पर्शो विषयलाभो यस्याः । परिणामे तु विषयसदृशं यद्वैषम्यं वैरबन्धवधादि तच्छंसनशीला । दशतीव मोहयति । भोगिनीपक्षे स्पष्टोऽर्थः ॥ १७ ॥ मायाश्च आमया रोगाश्च तेषां

१ दोषाः कौशिक इति पाठः. २ प्राप्तवती इति पाठः.

३ ग्रन्थितयेति क्वचित्.

दौर्भाग्यदायिनी दीना तृष्णा कृष्णेव राक्षसी ॥ १८
तन्द्रीतन्त्रीगणैः कोशं दधाना परिवेष्टितम् ।
नानन्दे राजते ब्रह्मंस्तृष्णा जर्जरवल्लकी ॥ १९
नित्यमेवातिमलिना कटुकोन्माददायिनी ।
दीर्घतन्त्री घनस्नेहा तृष्णा गह्वरवल्लरी ॥ २०
अनानन्दकरी शून्या निष्फला व्यर्थमुन्नता ।
अमङ्गलकरी क्रूरा तृष्णा क्षीणेव मञ्जरी ॥ २१
अनावर्जितचित्तापि सर्वमेवानुधावति ।
न चाप्नोति फलं किंचित्तृष्णा जीर्णेव कामिनी ॥ २२
संसारवृन्दे महति नानारससमाकुले ।
भुवनाभोगरङ्गेषु तृष्णा जरठनर्तकी ॥ २३
जराकुसुमितारूढा पातोत्पातफलावलिः ।
संसारजंगले दीर्घे तृष्णा विषलता तता ॥ २४
यन्न शक्नोति तत्रापि धत्ते ताण्डवितां गतिम् ।
नृत्यत्यानन्दरहितं तृष्णा जीर्णेव नर्तकी ॥ २५
भृशं स्फुरति नीहारे शाम्यत्यालोक आगते ।
दुर्लङ्घ्येषु पदं धत्ते चिन्ता चपलबर्हिणी ॥ २६
जडकल्लोलबहुला चिरं शून्यान्तरान्तरा ।
क्षणमुल्लासमायाति तृष्णा प्रावृट्तरङ्गिणी ॥ २७
नष्टमुत्सृज्य तिष्ठन्तं तृष्णा वृक्षमिवापरम् ।
पुरुषात्पुरुषं याति तृष्णा लोलेव पक्षिणी ॥ २८
पदं करोत्यलङ्घ्येऽपि तृप्तापि फलमीहते ।
चिरं तिष्ठति नैकत्र तृष्णा चपलमर्कटी ॥ २९
इदं कृत्वेदमायाति सर्वमेवासमञ्जसम् ।
अनारतं च यतते तृष्णा चेष्टेव दैविकी ॥ ३०
क्षणमायाति पातालं क्षणं याति नभस्थलम् ।
क्षणं भ्रमति दिक्कुञ्जे तृष्णा हृत्पद्मषट्पदी ॥ ३१
सर्वसंसारदोषाणां तृष्णैका दीर्घदुःखदा ।
अन्तःपुरस्थमपि या योजयत्यतिसंकटे ॥ ३२
प्रयच्छति परं जाड्यं परमालोकरोधिनी ।
मोहनीहारगहना तृष्णा जलदमालिका ॥ ३३
सर्वेषां जन्तुजातानां संसारव्यवहारिणाम् ।
परिप्रोतमनोमाला तृष्णा बन्धनरज्जुवत् ॥ ३४
विचित्रवर्णा विगुणा दीर्घा मलिनसंस्थितिः ।
शून्या शून्यपदा तृष्णा शक्रकार्मुकधर्मिणी ॥ ३५
अशनिर्गुणसस्यानां फलिता शरदापदाम् ।
हिमं संवित्सरोजानां तमसां दीर्घयामिनी ॥ ३६
संसारनाटकनटी कार्यालयविहंगमी ।

मायाकार्यवञ्चनादीनां सर्वस्यैव वा मायाकार्यप्रपञ्चस्य उत्पादनशीला । दौर्भाग्यं हतभाग्यता । दीना दैन्यवती ॥१८॥ तन्द्रीभिः प्रमीलाभिस्तन्त्रीगणैर्नाडीसमूहैश्च परिवेष्टितं कोशं शरीरं दधाना । जर्जरवल्लकी जीर्णस्फुटितालाबुका वीणा । सापि हि तन्त्र्या अलाब्वन्तरसंपादनालस्येन विच्छिन्नतन्त्रीभिः सीवनेन वेष्टितमलाबुकोशं दधानाऽमङ्गलत्वाद्यथा न माङ्गलिकोत्सवानन्दे राजते तथा तृष्णापि तृष्णाक्षयलभ्ये निर्विक्षेपनिरतिशयानन्दे न राजते । तथाचोक्तम् 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इति ॥ १९ ॥ कटुकः परिणामदुःखो य उन्मादस्तद्दानशीला । शेषं स्पष्टम् । गह्वरवल्लरी पर्वतगुहोत्पन्ना लता । सापि हि सूर्यरश्म्यसंस्पर्शान्नित्यमेव म्लाना तिक्तोन्मादहेतुफलदायिनी दूरावलम्बित्वाद्दीर्घप्रताना घनस्नेहा बहुनिर्यासा चेति तद्दर्शिनां प्रसिद्धम् ॥ २० ॥ तृष्णापक्षे स्पष्टोऽर्थः । अन्यत्र शून्या पुष्पैः । उन्नता आम्रादेरूर्ध्वशाखासु स्थिता । क्रूरा शुष्कत्वात्कण्टकप्राया ॥२१॥ अनावर्जितमवशीकृतं चित्तं यया । फलं लाभं भोगं वा । जीर्णा कामिनी वृद्धवेश्या ॥२२॥ नानारसैः शोकमोहादिभिः, नर्तकीपक्षे करुणहास्यबीभत्सादिभिः । रङ्गेषु नृत्यशालासु ॥ २३ ॥ जंगले जीर्णारण्ये । तता विस्तीर्णा ॥ २४ ॥ न शक्नोति साधयितुमिति शेषः । अन्यत्र यद्यत्र गन्तुमिति शेषः । आनन्दरहितं नैर्बल्येन निरुत्साहत्वात् ॥ २५ ॥ नीहारे वर्षावश्याये तत्सदृशमोहावरणे च स्फुरति नृत्यति । आलोके विवेकप्रकाशे प्रकाशोपलक्षिते शरदि च । दुर्लङ्घ्येषु असाध्यदुर्गमेषु । पदं व्यवसितं [illegible]

॥ २६ ॥ फलजलान्यकाले चिरं शून्या । तत्कालेऽपि अन्तरान्तरा मध्ये मध्ये शून्या । उल्लासं फलजलसंपत्त्योपचयम् । प्रावृट्तरङ्गिणी वर्षर्तुमात्रप्रवहा नदी ॥२७॥ नष्टं नष्टफलम् । तृष्णालोला क्षुत्तृड्व्याकुला ॥ २८ ॥ अलङ्घ्ये दुष्प्रापे दुर्लङ्घ्ये च । पदं व्यवसितं, पादन्यासं च । फलं लाभं, शलाटुं च ॥ २९ ॥ इदं शुभमुचितं वा कृत्वा आरभ्य तदपरिसमाप्यैव इदमशुभमनुचितं च असमञ्जसं प्रक्रमविरुद्धं सर्वमेव कार्यं सहसैवायात्यनुसरति तथापि नोपरमते, किंतु अनारतं सर्वदैव यतते शुभाशुभफलाय । यथा प्राणिकर्मानुसारिणो दैवस्य विधातुश्चेष्टा तद्वत् ॥ ३० ॥ हृत्पद्मे षट्पदी भ्रमरिका । शेषं प्राग्व्याख्यातप्रायम् ॥ ३१ ॥ दीर्घदुःखदा चिरदुःखदा । दीर्घबडिशरज्जुरिव वधकसंनिधावाकृष्य मरणादिदुःखदा । तदेवोपपादयति—**अन्तःपुरस्थमपी**ति ॥ ३२ ॥ जाड्यं मौर्ख्यं, शैत्यं वा । परमालोकः परं ज्योतिरात्मा सूर्यश्च । मोहयति पूर्वापरं दिग्विभागं चेति मोहोऽविवेकस्तद्रूपेण नीहारेण गहना दुर्गमा ॥३३॥ यथा बहूनां पशूनां कण्ठदामभिः प्रोता मालोपमाना तिर्यग्दीर्घरज्जुस्तद्वत् ॥ ३४ ॥ विचित्रविषयानुरञ्जितत्वाद्विचित्रवर्णा, विविधविस्मयहेतुरूपवती च । विगुणा असद्गुणा, ज्याशून्या च । मलिनः पुरुषो, मेघश्च संस्थितिराधारो यस्याः स्वतस्तुच्छत्वाच्छून्या अवस्तुः, मनोनभोधिष्ठितत्वाच्छून्यपदा । शक्रकार्मुकमिन्द्रायुधम् ॥३५॥ गुणलक्षणसस्यानां अशनिः । संवित्सरोजानां बोधपद्मानां हिमं विघातिकेत्यर्थः । आपदां तु फलिता फलितसस्या, शरद्वर्धिकेत्यर्थः । एवं तमसामपि हेमन्तरात्रिः ॥३६॥ कार्यालयस्य प्रवृत्तिलक्षण-

मानसारण्यहरिणी स्मरसंगीतवल्लकी ॥ ३७
व्यवहाराब्धिलहरी मोहमातङ्गशृङ्खला ।
सर्गन्यग्रोधसुलता दुःखकैरवचन्द्रिका ॥ ३८
जरामरणदुःखानामेका रत्नसमुद्गिका ।
आधिव्याधिविलासानां नित्यं मत्ता विलासिनी ॥ ३९
क्षणमालोकविमला सान्धकारलवा क्षणम् ।
व्योमवीथ्युपमा तृष्णा नीहारगहना क्षणम् ॥ ४०
गच्छत्युपशमं तृष्णा कायव्यायामशान्तये ।
तमी घनतमःकृष्णा यथा रक्षोनिवृत्तये ॥ ४१
तावन्मुह्यत्ययं मूको लोको विलुलिताशयः ।
यावदेवानुसंधत्ते तृष्णा विषविषूचिका ॥ ४२
लोकोऽयमखिलं दुःखं चिन्तयोज्झितयोज्झति ।
तृष्णाविषूचिकामन्त्रश्चिन्तात्यागो हि कथ्यते ॥ ४३
तृणपाषाणकाष्ठादिसर्वमामिषशङ्कया ।
आददाना स्फुरत्यन्ते तृष्णा मत्स्यी ह्रदे यथा ॥ ४४
रोगार्तिरङ्गनातृष्णा गम्भीरमपि मानवम् ।
उत्तानतां नयन्त्याशु सूर्यांशव इवाम्बुजम् ॥ ४५
अन्तःशून्या ग्रन्थिमत्यो दीर्घस्वाङ्कुरकण्टकाः ।
मुक्तामणिप्रिया नित्यं तृष्णा वेणुलता इव ॥ ४६
अहो बत महच्चित्रं तृष्णामपि महाधियः ।
दुश्छेदामपि कृन्तन्ति विवेकेनामलासिना ॥ ४७
नासिधारा न वज्रार्चिर्न तप्तायःकणार्चिषः ।
तथा तीक्ष्णा यथा ब्रह्मंस्तृष्णेयं हृदि संस्थिता ॥ ४८
उज्ज्वलाऽसिततीक्ष्णाग्रा स्नेहदीर्घदशा परा ।
प्रकाशा दाहदुःस्पर्शा तृष्णा दीपशिखा इव ॥ ४९
अपि मेरुसमं प्राज्ञमपि शूरमपि स्थिरम् ।
तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ ५०
संस्तीर्णगहना भीमा घनजालरजोमयी ।
सान्धकारोग्रनीहारा तृष्णा विन्ध्यमहाटवी ॥ ५१
एकैव सर्वभुवनान्तरलब्धलक्ष्या
दुर्लक्ष्यतामुपगतैव वपुःस्थितैव ।
तृष्णा स्थिता जगति चञ्चलवीचिमाले
क्षीरोदकाम्बुतरले मधुरेव शक्तिः ॥ ५२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे तृष्णाभङ्गो नाम सप्तदशः सर्गः ॥ १७ ॥

---

नीडस्य गृहविटङ्कस्य वा । मानसा मनोरथाः । वल्लकी वीणा ॥ ३७ ॥ न्यग्रोहतीति न्यग्रोधो वटस्तस्य सुलता प्ररोहवल्ली । कैरवाणां कुमुदानाम् ॥ ३८ ॥ समुद्गिका संपुटिका ॥ ३९ ॥ आलोक ईषद्विवेकप्रकाशः । व्योमैव वीथी तदुपमा । नीहारसदृशैर्व्यामोहैः ॥ ४० ॥ एवं तृष्णामुपवर्ण्य तदुपशान्तिफलमाह—गच्छतीत्यादिना । कायव्यायामो देहप्रयुक्तश्रमस्तस्य शान्तये । मुक्तय इति यावत् । तमी कृष्णपक्षरात्रिः । घनतमो मेघान्धकारस्तेन कृष्णा । सा यथा रक्षोनिवृत्तये नक्तंचरप्रचाराभावाय उपशमं विनाशं गच्छति तद्वत् ॥ ४१ ॥ मूकः अध्यात्मशास्त्रकथाशून्यः । लोको जनः । विलुलिताशयो व्याकुलचित्तः । विषविशेषप्रयुक्तविषूचिकारोगवन्मृत्युहेतुस्तृष्णा यावदेवानुसरन्ती संधत्ते सम्यग्धारयति । न संत्यजतीत्यर्थः ॥ ४२ ॥ तर्हि तत्त्यागे क उपायस्तत्राह—लोक इति । चिन्तात्र विषयानुस्मरणम् । उज्झितया त्यक्तया । तथाच भगवद्वाक्यम्—'ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते' इति ॥ ४३ ॥ आमिषशङ्कया भक्ष्यमिति संभावनया । सा यथा अन्ते बडिशमप्यादायाहन्यमाना स्फुरति तद्वत्तृष्णापीत्यर्थः ॥ ४४ ॥ रोगपीडा, स्त्रीतृष्णा च । गम्भीरं धीरम् । उत्तानतां अधीरताम्, ऊर्ध्वविकासितां च ॥ ४५ ॥ ग्रन्थयो दृढाभिनिवेशाः, पर्वाणि च । तृष्णाया अङ्कुराश्चिन्ताः । कण्टका दुःखानि । मुक्तामणयश्च प्रिया यासाम् । वेणुलतापक्षे तासां मुक्ताकरत्वान्मुक्ता एव मणयः सर्वजनप्रिया यासु ॥ ४६ ॥ विवेकोऽपि तदुच्छेदहेतुरिति दर्शयति—अहो इति ॥ ४७ ॥ असिधारादयो बाह्यत्वात्कदाचिदेवानर्थः, तृष्णा तु हृदि स्थितत्वात् सदैवेति तेभ्योऽप्याधिक्यमिति भावः ॥ ४८ ॥ मध्ये भोगविभवोज्वला, अन्ते तु असितं तीक्ष्णं चाग्रं यस्याः सा । तमोमृत्युपर्यवसानेत्यर्थः । मातृभार्यापुत्रस्नेहैर्दीर्घा बाल्ययौवनवार्धकदशाः परा उत्कृष्टा यस्याः । प्रकाशा प्रत्यक्षा । इष्टवियोगप्रयुक्तैरन्तर्दाहैर्दुःस्पर्शा असह्या । दीपशिखापक्षे स्नेहस्तैलम् । दशा वर्तिः । शिष्टं स्पष्टम् ॥ ४९ ॥ मेरुसमं गौरवेण । स्थिरं अपरिग्रहव्रतेन तृणीकरोति याच्ञादैन्यमापाद्य तृणवदुपेक्ष्यं चलं च करोति । यथाहुः—'तृणाल्लघुतरस्तूलस्तूलादपि च याचकः । वायुना किं न नीतोऽसौ मामयं याचयिष्यति ॥' इति ॥ ५० ॥ संस्तीर्णानि विस्तीर्णानि गहनानि साहसकार्याण्यरण्यानि च यस्याम् । अथवा एकैव तृष्णा आशा कामलोभलाम्पट्यादिभावैश्चतुर्दशसु लोकेषु विस्तीर्णा चासौ गहना दुर्लक्ष्या चेति कर्मधारयः । एवं निबिडजालवद्बन्धनहेतवाशापाशरूपरजोगुणप्रचुरा निबिडताजालधूलिप्रचुरा च । शिष्टं स्पष्टम् ॥ ५१ ॥ कथं विस्तीर्णा कथं च गहना कथं चैका । आश्रयविषयशब्दादिभेदेनाशाकामलोभादीनां भेदादित्याशङ्क्योक्तमर्थं दृष्टान्तेनोपपादयति—एकैवेति । वपुःस्थितैव तृष्णा एकैव सर्वभुवनानामान्तरेषु भोग्येषु लब्धलक्ष्या प्राप्तविषया सती जगति व्यवहारभूमौ दुर्लक्ष्यतामुपगतैव स्थिता देहतृष्णैव सर्वतृष्णात्वमाशाकामादिभावं च प्राप्नोति न स्पष्टं विभाव्यत इत्यर्थः । यथा रसनेन्द्रियात्मना वपुःस्थिता एकैव माधुर्यशक्तिः सर्वेषां भुवनानां जलानामान्तरे जल-

१ आलोकविषया इति पाठः.
२ पाशरजोगुण इति पाठः.

# अष्टादशः सर्गः १८

श्रीराम उवाच ।

आर्द्रान्त्रतन्त्रीगहनो विकारी परिपातवान् ।
देहः स्फुरति संसारे सोऽपि दुःखाय केवलम् ॥ १
अज्ञोऽपि तज्ज्ञसदृशो वलितात्मचमत्कृतिः ।
युक्त्या भव्योऽप्यभव्योऽपि न जडो नापि चेतनः ॥२
जडाजडदृशोर्मध्ये दोलायितदुराशयः ।
अविवेकी विमूढात्मा मोहमेव प्रयच्छति ॥ ३
स्तोकेनानन्दमायाति स्तोकेनायाति खेदिताम् ।
नास्ति देहसमः शोच्यो नीचो गुणवहिष्कृतः ॥ ४
आगमापायिना नित्यं दन्तकेसरशालिना ।
विकासस्मितपुष्पेण प्रतिक्षणमलंकृतः ॥ ५
भुजशाखो घनस्कन्धो द्विजस्तम्भशुभस्थितिः ।
लोचनालिबिलाक्रान्तः शिरःपीठवृहत्फलः ॥ ६
श्रवदन्तरसग्रस्तो हस्तपादसुपल्लवः ।
गुल्मवान्कार्यसंघातो विहङ्गमकृतास्पदः ॥ ७
सच्छायो देहवृक्षोऽयं जीवपान्थगणास्पदः ।
कस्यात्मीयः कस्य पर आस्थानास्थे किलात्र के ॥ ८
तात संतरणार्थेन गृहीतायां पुनःपुनः ।
नावि देहलतायां च कस्य स्यादात्मभावना ॥ ९
देहनाम्नि वने शून्ये बहुगर्तसमाकुले ।
तनूरुहासंख्यतरौ विश्वासं कोऽधिगच्छति ॥ १०
मांसस्नाय्वस्थिवलिते शरीरपटहेऽदृढे ।
मार्जारवदहं तात तिष्ठाम्यत्र गतध्वनौ ॥ ११
संसारारण्यसंरूढो विलसच्चित्तमर्कटः ।
चिन्तामञ्जरिताकारो दीर्घदुःखघुणक्षतः ॥ १२
तृष्णाभुजङ्गमीगेहं कोपकाककृतालयः ।
स्मितपुण्योद्गमः श्रीमाञ्छुभाशुभमहाफलः ॥ १३
सुस्कन्धौघलताजालो हस्तस्तवकसुन्दरः ।
पवनस्पन्दिताशेषस्वाङ्गावयवपल्लवः ॥ १४
सर्वेन्द्रियखगाधारः सुजानुस्तम्भ उन्नतः ।

सामान्ये लब्धप्रतिष्ठा चञ्चलवीचिमाले नदीसमुद्रादौ क्षरणात्क्षीरमुन्दनात् क्लेदनादुदकमम्भनात् शब्दनादम्भिवति क्रियाशब्दभेदेन तरले अव्यवस्थिते जले स्थिता दुर्लक्ष्यतामुपगता एकैवेति न विभाव्यते तद्वत् । 'जीवनं भुवनं वनम्', 'नीरक्षीराम्बुशम्बरम्' इत्यमरः ॥ ५२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे तृष्णाभङ्गो नाम सप्तदशः सर्गः ॥ १७ ॥

आधिव्याधिबहुक्लेशजरामरणभङ्गुरः ।
निदानं मानतृष्णादेर्देह एवात्र निन्द्यते ॥ १ ॥

अस्तु तृष्णा दुःखहेतुस्तथापि 'जीवन्भद्राणि पश्यति' इति न्यायाद्देहस्य सुखभोगायतनत्वप्रसिद्धेः सर्वेषां तत्र प्रीत्यतिशयदर्शनाच्च सुखहेतुत्वमित्याशङ्क्य तस्यापि दुःखहेतुत्वमेवेत्युपपादयति—**आर्द्रे**त्यादिना । आन्त्राण्युदरस्थमलमूत्रादिभस्त्राः । तन्त्र्यो नाड्यः । परितः पातः पतनोपघातो मरणं च ॥ १ ॥ अज्ञो जडोऽपि तज्जडं जानातीति तज्ज्ञ आत्मा तत्सदृशस्तत्प्रायः । स्वतस्तादृशप्राणादिकोशचतुष्काधारवत्त्वाच्च वलिता वेष्टितेव पञ्चगुणा आत्मचमत्कृतिरध्यस्तचित्तादात्म्यं यस्मिन् । भव्यो मोक्षाधिकारसंपत्तौ । न जडो नेतरजडतुल्यः ॥२॥ अतएव चिज्जडदृष्ट्योर्मध्ये किमयमात्मकोटौ स्यादुतानात्मकोटाविति संशये दोलायितोऽनिर्णयदुष्ट आशयो मनो यस्मिन् । विवेकः शोधस्तच्छून्यत्वादेव विमूढ आत्मा यस्मिन् । अथवा 'प्रपश्यती'ति पाठे जडदृगज्ञः अजडदृग्विवेकी तयोराद्योऽस्मिन्देहे आत्मबुद्ध्या मोहं संसारमेव प्रपश्यति न पुरुषार्थम् । यतोऽसौ दोलायितदुराशयः । चञ्चलाशुद्धचित्त इत्यर्थः ॥३॥ स्तोकेनाल्पेनान्नपानादिना शीतातपादिना च । नीचोऽधमोऽशुचिरिति यावत् ॥ ४ ॥ उपेक्षार्हतां वक्तुं वृक्षत्वेन रूपयति[3]—**आगमे**त्यादिचतुर्भिः । प्रतिक्षणं प्रतिहर्षलवं प्रत्यार्तवं च ॥ ५ ॥ घन उन्नतः स्कन्धोंऽसः शाखा मूलं च । द्विजा दन्तास्त एव श्लेषात्पक्षिणस्तेषां श्रेणिबद्धानामाधारस्तम्भ इव शुभा स्थितिर्यस्य । शिरःपीठं शिरस्थानम् ॥ ६ ॥ श्रवौ कर्णौ तावेव दन्तेन रसयत इति दन्तरसौ काष्ठकुट्टकाख्यौ पक्षिणौ ताभ्यां ग्रस्तश्चञ्चुप्रहारैः कुट्टित इव सच्छिद्रः । गुल्मं रोगविशेषो मूलप्ररोहाश्च तद्वान् । कार्यः कर्तुं शक्यः सम्यक् घातश्छेदनभेदनादिः शस्त्रकुठारादिना यस्य । विहंगमौ 'द्वासुपर्णा' इति मन्त्रप्रसिद्धौ जीवेश्वरौ बुद्धिजीवौ वा ताभ्यां कृतहृदयनीडः ॥७॥ छाया कान्तिः प्रसिद्धच्छाया च । परः शत्रुः । आस्था प्रीतिरनास्था द्वेषश्चात्रास्मिन्देहतरौ के अयुक्ते इत्युपेक्ष्य इति भावः ॥ ८ ॥ नन्वात्मत्वेन सर्वजनप्रसिद्धोऽयं कथमुपेक्ष्यस्तत्राह—**ताते**ति । संतरणमायुर्नद्याः संसाराम्बुधेर्वा परतीरगमनम् । नावि नौकायाम् ॥ ९ ॥ विश्वासं निःशङ्कचिरावस्थानयोग्यताप्रत्ययम् ॥ १० ॥ स्नायवः शिराः । पटहो वाद्यविशेषः । अदृढे असारे सच्छिद्रे च । गतध्वनौ अप्राप्तनिर्गमनोपायोपदेशशब्दे ॥ ११ ॥ देहमेव पुनः षड्भिः प्लक्षत्वेन रूपयति—**संसारे**त्यादिना । घुणाः काष्ठकीटास्तैः क्षतश्छिद्रितः ॥ १२ ॥ प्लक्षस्य त्वक्पल्लवादेर्माङ्गलिकत्वेन पुण्योद्गमहेतुत्वात्स्मितपुण्योद्गमः । 'पुष्पोद्गम' इति वा पाठः ॥ १३ ॥ स्कन्धशब्देन बाहू लक्ष्येते । लते शाखे । 'समे शाखालते' इत्यमरः । ओघजालशब्दौ शरीरभेदेन नेयौ । जालैक्येनैव प्लक्षत्वरूपणात्[4] । पवनोऽत्र प्राणः ॥१४॥ शोभने जानुनी मध्यमपर्वणी यस्य स तथा-

१ ततास्पद इति पाठः. २ आस्थानास्था इति पाठः. ३ रूपयति चतुर्भिः इति पाठः. ४ निरूपणात् इति पाठः.

सरसच्छायया युक्तः कामपान्थनिषेवितः ॥ १५
मूर्धसंजनिताऽऽदीर्घशिरोरुहतृणावलिः ।
अहंकारगृध्रकृतकुलायः सुषिरोदरः ॥ १६
विच्छिन्नवासनाजालमूलत्वाद्दुर्लवाकृतिः ।
व्यायामविरसः कायलक्षोऽयं न सुखाय मे ॥ १७
कलेवरमहंकारगृहस्थस्य महागृहम् ।
लुठत्वभ्येतु वा स्थैर्यं किमनेन मुने मम ॥ १८
पङ्क्तिबद्धेन्द्रियपशुं वलत्तृष्णागृहाङ्गनम् ।
रागरञ्जितसर्वाङ्गं नेष्टं देहगृहं मम ॥ १९
पृष्ठास्थिकाष्ठसंघट्टपरिसंकटकोटरम् ।
आन्त्ररज्जुभिराबद्धं नेष्टं देहगृहं मम ॥ २०
प्रसृतस्नायुतन्त्रीकं रक्तास्बुकृतकर्दमम् ।
जरामङ्कोलधवलं नेष्टं देहगृहं मम ॥ २१
चित्तभृत्यकृतानन्तचेष्टावष्टब्धसंस्थिति ।
मिथ्यामोहमहास्थूणं नेष्टं देहगृहं मम ॥ २२
दुःखार्भककृताक्रन्दं सुखशय्यामनोरमम् ।
दुरीहादग्धदासीकं नेष्टं देहगृहं मम ॥ २३
मलाढ्यविषयव्यूहभाण्डोपस्करसंकटम् ।
अज्ञानक्षारवलितं नेष्टं देहगृहं मम ॥ २४
गुल्फगुग्गुलुविश्रान्तजानूर्ध्वस्तम्भमस्तकम् ।
दीर्घदोर्दारुसुदृढं नेष्टं देहगृहं मम ॥ २५
प्रकटाक्षगवाक्षान्तः क्रीडत्प्रज्ञागृहाङ्गनम् ।

विधोऽधःकाय एव स्तम्भसदृशो भागो यस्य । स यावत्सरसच्छायया यौवनकान्त्या शीतलच्छायया च युक्तस्तावत्कामपान्थनिषेवित इत्यर्थः ॥१५॥ आदीर्घेति च्छेदः । लक्षोपर्यपि क्वचित्तृणोत्पत्तिः प्रसिद्धा ॥ १६ ॥ विभक्तवासनालक्षणप्ररोहजटाजालवेष्टितमूलत्वाद्दुर्लवा दुरुच्छेदा आकृतिः स्वरूपं यस्य । व्यायामः श्रमः स एव विविध आयामो विटपदैर्घ्यं तेन विरसः प्रियसंस्पर्शहीनो रूक्षश्च ॥ १७ ॥ लुठतु भूमौ पतित्वा परिवर्तताम् ॥ १८ ॥ वलन्ती मुहुः प्रसरन्ती तृष्णालक्षणा गृहस्वामिनी यस्मिन् । अतएव रागेण कामेन गैरिकादिरञ्जकद्रव्येण च रञ्जितानि सर्वाङ्गानि यस्मिन् ॥१९॥ पृष्ठास्थिलक्षणकाष्ठानां संघट्टेन परितः संकटः संकुचितावकाशः कोटरो यस्य । आन्त्राणि[2] मलमूत्रान्नरसादिप्रसारार्था दीर्घपेश्यः ॥ २० ॥ स्नायवः शिरास्ता एव तन्त्र्यो वीणादिसूत्राणि बन्धनरज्जवो वा यस्मिन् । अस्वाङ्गत्वात् 'नाडीतन्त्र्योः स्वाङ्गे' इति न ङीन्निषेधः । मङ्कोलं चूर्णम् ॥ २१ ॥ अवष्टम्भः पतनप्रतिविधानम् । मिथ्या अनृतं मोहोऽज्ञानं च स्थूणे आधारस्तम्भौ । कर्मधारयो वा ॥ २२ ॥ दुरीहा दुश्चेष्टा सैव दग्धा दाहव्रणपीडिता दासी यस्मिन् ॥२३॥ अतएव मलाढ्यैर्दोषबहुलैरनिर्णिक्तैश्च विषयव्यूहलक्षणैर्भाण्डैरुपस्करैर्द्रव्यादिसाधनैश्च संकीर्णम् । क्षारं लवणादिभित्त्यादिविशीर्णतादिहेतुरूपो वा ॥२४॥ जङ्घास्तम्भस्य गुल्फो गुग्गुलुः आधार-

१ सर्वातिसार इति पाठः.

चिन्तादुहितृकं ब्रह्मन्नेष्टं देहगृहं मम ॥ २६
मूर्धजाच्छादनच्छन्नकर्णश्रीचन्द्रशालिकम् ।
आदीर्घाङ्गुलिनिर्व्यूहं नेष्टं देहगृहं मम ॥ २७
सर्वाङ्गकुड्यसंघातघनरोमयवाङ्कुरम् ।
संशून्यपेटविवरं नेष्टं देहगृहं मम ॥ २८
नखोर्णनाभिनिलयं सरमारणितान्तरम् ।
भाङ्कारकारिपवनं नेष्टं देहगृहं मम ॥ २९
प्रवेशनिर्गमव्यग्रवातवेगमनारतम् ।
विततक्षगवाक्षं तन्नेष्टं देहगृहं मम ॥ ३०
जिह्वामर्कटिकाक्रान्तवदनद्वारभीषणम् ।
दृष्टदन्तास्थिशकलं नेष्टं देहगृहं मम ॥ ३१
त्वक्सुधालेपमसृणं यन्त्रसंचारचञ्चलम् ।
मनः सदाखुनोत्खातं नेष्टं देहगृहं मम ॥ ३२
स्मितदीपप्रभोद्भासि क्षणमानन्दसुन्दरम् ।
क्षणं व्याप्तं तमःपूरैर्नेष्टं देहगृहं मम ॥ ३३
समस्तरोगायतनं वलीपलितपत्तनम् ।
सर्वाधिसारगहनं[1] नेष्टं देहगृहं मम ॥ ३४
अक्षर्क्षक्षोभविषमा शून्या निःसारकोटरा ।
तमोगहनदिक्कुञ्जा नेष्टा देहाटवी मम ॥ ३५
देहालयं धारयितुं न शक्नोमि मुनीश्वर ।
पङ्कमग्नं समुद्धर्तुं गजमल्पबलो यथा ॥ ३६
किं श्रिया किं च राज्येन किं कायेन किमीहितैः ।

काष्ठस्थानीयस्तत्र विश्रान्तस्य प्रतिष्ठितस्यार्थात् जङ्घास्तम्भस्य जानु मस्तकं तदपि स्वाधाराधारे परम्परया प्रतिष्ठितमेव । मूलशैथिल्ये सर्वशैथिल्यापत्तेः । दोषौ बाहू ॥ २५ ॥ प्रकटाण्यक्षाणि ज्ञानेन्द्रियाणि । प्रज्ञा बुद्धिः । प्रकटेति तद्विशेषणं क्रियाविशेषणं वा ॥ २६ ॥ मूर्धजाः केशास्त एव च्छादनं छदिः । कर्णावेव कुण्डलमुक्तादिश्रीयुक्ते चन्द्रशाले शिरोगृहे । निर्व्यूहाः काष्ठचित्रकाः ॥ २७ ॥ पेटविवरमुदरच्छिद्रम् ॥ २८ ॥ सरमा शुनीव भ्रमणदैन्यकलहादिकारिणी क्षुत्तया रणितान्तरम् । भाङ्कारो भीषणध्वनिः ॥ २९ ॥ ३० ॥ मर्कटिका प्रसिद्धा कवाटविष्कम्भकाष्ठं वा । ॥ ३१ ॥ सुधा चूर्णम् । त्वगेव सुधालेपस्तेन मसृणं स्निग्धम् । यन्त्राणि घरट्टशकटादीनि तेषामिव सन्धीनां संचारो भ्रमणादिस्तेषामेव संचारो वा । मन एव सदातन आखुर्मूषकस्तेनोत्खातमिव शैथिल्यरजस्वलादिभावमापादितम् ॥ ३२ ॥ स्मितानि ईषद्धसितान्येव दीपाः । तमःपूरैरज्ञानान्धकारप्रवाहैः ॥ ३३ ॥ वली त्वक्शैथिल्यम् । पत्तनं नगरं निवासस्थानमिति यावत् । आधयो मानसदुःखानि तान्येव सारः प्राधान्येन भोग्यत्वात्तैर्गहनं दुर्गममरण्यायमानं वा ॥३४॥ अक्षाणीन्द्रियाण्येव ऋक्षा भल्लूकाः ॥ ३५ ॥ ३६ ॥ ईहितैश्चेष्टितैर्मनोरथैर्वा । निकृन्तति

२ अन्त्राणि इति पाठः.

दिनैः कतिपयैरेव कालः सर्वं निकृन्तति ॥ ३७
रक्तमांसमयस्यास्य सबाह्याभ्यन्तरं मुने ।
नाशैकधर्मिणो ब्रूहि कैव कायस्य रम्यता ॥ ३८
मरणावसरे काया जीवं नानुसरन्ति ये ।
तेषु तात कृतघ्नेषु कैवास्था वद धीमताम् ॥ ३९
मत्तेभकर्णाग्रचलः कायो लम्बाम्बुभङ्गुरः ।
न संत्यजति मां यावत्तावदेनं त्यजाम्यहम् ॥ ४०
पवनस्पन्दतरलः पेलवः कायपल्लवः ।
जर्जरस्तनुवृत्तश्च नेष्टो मे कटुनीरसः ॥ ४१
भुक्त्वा पीत्वा चिरं कालं बालपल्लवपेलवाम् ।
तनुतामेत्य यत्नेन विनाशमनुधावति ॥ ४२
तान्येव सुखदुःखानि भावाभावमयान्यसौ ।
भूयोऽप्यनुभवन्कायः प्राकृतो हि न लज्जते ॥ ४३
सुचिरं प्रभुतां कृत्वा संसेव्य विभवश्रियम् ।
नोच्छ्रायमेति न स्थैर्यं कायः किमिति पाल्यते ॥ ४४
जराकाले जरामेति मृत्युकाले तथा मृतिम् ।
सम एवाविशेषज्ञः कायो भोगिदरिद्रयोः ॥ ४५
संसाराम्भोधिजठरे तृष्णाकुहरकान्तरे ।
सुप्तस्तिष्ठति मुक्तेहो मूकोऽयं कायकच्छपः ॥ ४६
दहनैकार्थयोग्यानि कायकाष्ठानि भूरिशः ।
संसाराब्धाविहोह्यन्ते कंचित्तेषु नरं विदुः ॥ ४७
दीर्घदौरात्म्यवलया निपातफलपातया ।
न देहलतया कार्यं किंचिदस्ति विवेकिनः ॥ ४८
मज्जन्कर्दमकोशेषु झटित्येव जरां गतः ।
न ज्ञायते यात्यचिरात्कः कथं देहदर्दुरः ॥ ४९
निःसारसकलारम्भाः कायाश्चपलवायवः ।
रजोमार्गेण गच्छन्तो दृश्यन्ते नेह केनचित् ॥ ५०
वायोर्दीपस्य मनसो गच्छतो ज्ञायते गतिः ।
आगच्छतश्च भगवञ्छरीरस्य कदाचन ॥ ५१
बद्धास्था ये शरीरेषु बद्धास्था ये जगत्स्थितौ ।
तान्मोहमदिरोन्मत्तान्धिग्धिगस्तु पुनःपुनः ॥ ५२
नाहं देहस्य नो देहो मम नायमहं तथा ।
इति विश्रान्तचित्ता ये ते मुने पुरुषोत्तमाः ॥ ५३
मानावमानबहुला बहुलाभमनोरमाः ।
शरीरमात्रबद्धास्थं घ्नन्ति दोषदृशो नरम् ॥ ५४
शरीरश्वभ्रशायिन्या पिशाच्या पेशलाङ्गया ।
अहंकारचमत्कृत्या छलेन छलिता वयम् ॥ ५५
प्रज्ञा वराकी सर्वैव कायबद्धास्थयानया ।
मिथ्याज्ञानकुराक्षस्या छलिता कष्टमेकिका ॥ ५६
न किंचिदपि दृश्येऽस्मिन्सत्यं तेन हतात्मना ।
चित्रं दग्धशरीरेण जनता विप्रलभ्यते ॥ ५७
दिनैः कतिपयैरेव निर्झराम्बुकणो यथा ।
पतत्ययमयत्नेन जरठः कायपल्लवः ॥ ५८
कायोऽयमचिरापायो बुद्बुदोऽम्बुनिधाविव ।
व्यर्थं कार्यपरावर्तैं परिस्फुरति निष्फलः ॥ ५९
मिथ्याज्ञानविकारेऽस्मिन्स्वप्नसंभ्रमपत्तने ।

च्छिनत्ति ॥ ३७ ॥ सबाह्याभ्यन्तरं विमृश्येति शेषः ॥ ३८ ॥ नानुसरन्ति नानुगच्छन्ति । कृतं पालनपोषणाद्युपकारं घ्नन्ति प्रत्युपकाराभावादिति कृतघ्नाः ॥ ३९ ॥ चलश्चपलः । लम्बं लम्बमानं यदम्बु जलकणः । संनिधानान्मत्तेभकर्णाग्र एवेति गम्यते । भङ्गुरो नश्वरः ॥४०॥ आधिव्याधिकण्टकशतक्षतत्वाज्जर्जरः शिथिलः । तनुवृत्तः क्षुद्रस्वभावः ॥ ४१ ॥ बालपल्लवमिव पेलवां मृद्वीं तनुतां कार्श्यम् । 'पेलव'मिति पाठे क्रियाविशेषणम् । आश्रयद्वारा उभयत्रापि योग्यता ॥ ४२ ॥ तानि पुनःपुनः पूर्वोपभुक्तान्येव । वीप्सितार्थस्यैव बुद्ध्यारूढस्य सर्वनाम्ना परामर्शाद्विनापि द्विर्वचनं[1] वीप्सा लभ्यते । प्राकृतः पामरः ॥४३॥॥ संसेव्य संप्राप्य । उच्छ्रायमुपचयमुत्कर्षं वा । स्थैर्यमविनाशिताम् ॥४४॥४५॥ तृष्णैव कुहरकमल्पच्छिद्रम् । सुप्तः सुप्त इव मूढः । अतएव मुक्तेह आत्मोद्धारानुकूलेच्छाचेष्टाविधुरोऽतएव मूको गुरूपसर्पणेन तत्प्रश्नादिवाग्विकलश्च । कच्छोपलक्षितदुरिन्द्रियैर्दुर्विषयकर्दमरसास्वादित्वात्कच्छपः ॥४६॥दहनमेवैकोऽर्थो मुख्यं प्रयोजनं तद्योग्यानि । तेषु तेषां मध्ये ॥४७॥ वलनं वलः प्रतानवेष्टनम् । निपातोऽधोगतिस्तत्फलस्तत्पर्यवसितः पातो मरणं यस्याः । निपातफलैर्दुश्चरितैः पातो यस्या इति वा ॥४८॥ कर्दमकोशेषु पङ्काधारेषु विषयपल्वलेषु । कथं कैर्दुर्दशाप्रकारैः । दुर्दुरो भेकः ॥४९॥ निःसारा नीरसाः । काया एव चपला वायवो झंझापवनाः । रजोमार्गेण राजसप्रवृत्त्या धूलिमात्रपरिशेषेण वा धूलिसहितेनाकाशमार्गेणान्यत्र ॥ ५० ॥ अत्र दीपशरीरयोर्गत्यागती विनाशोत्पत्ती पूर्वश्लोकादनुकृष्य शरीरस्य नेह केनचिज्ज्ञायत इति संबन्धः ॥ ५१ ॥ आस्था सारत्वचिरस्थायित्वसत्यत्वाद्यभिमानः । कण्ठोक्तेऽपि पौनःपुन्ये द्विर्वचनमतिशयार्थम् ॥५२॥ अयमिदंत्वेन घटादिवज्जडो देहोऽहं नेति विचार्य विश्रान्तचित्ताः । परमात्मनीति शेषः । पुरुषोत्तमाः पुरुषश्रेष्ठाः, विष्णुस्वरूपा एवेति वा ॥ ५३ ॥ दोषदृशो दुर्दृष्टयो विशेष्याः । घ्नन्ति मृत्युवशं नयन्ति ॥ ५४ ॥ अहंकारस्य चमत्कृतिर्भोगतृष्णादिः सैव पिशाची । छलेन कपटेन छलिता असारे सारतामापाद्य सारापहारेण प्रतारिताः ॥ ५५ ॥ प्रज्ञा सद्बुद्धिः । वराकी दीना । मिथ्याज्ञानमेव कुराक्षसी । एकिका विवेकादिस्वसहायशून्या ॥ ५६ ॥ यदा दृश्यवर्गे न किंचिदपि सत्यं तदा तदन्तःपाति शरीरमपि तथैवेति स्वत एव दग्धप्रायेणासतापि शरीरेण जीवसमूहः प्रतार्यते, चित्रमाश्चर्यमेतदित्यर्थः ॥ ५७ ॥ यदि जनताविप्रलम्भेन कायस्य किंचित्प्रयोजनं स्यात्तदा युज्येतापि, तदपि नास्तीत्याह द्वाभ्याम् ॥ ५८ ॥ कार्याणि सांसारिकधावनान्येव पर आवर्तोऽम्भसां भ्रमः । व्यर्थं स्वार्थशून्यं यथा स्यात्तथा निष्फलः । परार्थशून्योऽपीत्यर्थः ॥५९॥ कुतः कायादिकार्यवर्गस्यासत्त्वं तत्राह—मिथ्येति । यतो मिथ्याभूतस्याज्ञा-

[1] वचनं वा लभ्यते इति पाठः.

काये स्फुटतरापाये क्षणमास्था न मे द्विज ॥ ६०
तडित्सु शरदभ्रेषु गन्धर्वनगरेषु च ।
स्थैर्यं येन विनिर्णीतं स विश्वसितु विग्रहे ॥ ६१

सततभङ्गुरकार्यपरम्परा
विजयिजातजयं हठवृत्तिषु ।
प्रबलदोषमिदं तु कलेवरं
तृणमिवाहमपोह्य सुखं स्थितः ॥ ६२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे कायजुगुप्सानामाष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः १९

श्रीराम उवाच ।

लब्ध्वापि तरलाकारे कार्यभारतरङ्गिणि ।
संसारसागरे जन्म बाल्यं दुःखाय केवलम् ॥ १
अशक्तिरापदस्तृष्णा मूकता मूढबुद्धिता ।
गृध्नुता लोलता दैन्यं सर्वं बाल्ये प्रवर्तते ॥ २
रोषरोदनरौद्रासु दैन्यजर्जरितासु च ।
दशासु बन्धनं बाल्यमालानं करिणामिव ॥ ३
न मृतौ न जरारोगे न चापदि न यौवने ।
ताश्चिन्ताः परिकृन्तन्ति हृदयं शैशवेषु याः ॥ ४
तिर्यग्जातिसमारम्भः सर्वैरेवावधीरितः ।
लोलो बालसमाचारो मरणादपि दुःखदः ॥ ५
प्रतिबिम्बघनाज्ञानं नानासंकल्पपेलवम् ।
बाल्यमालूनसंशीर्णमनः कस्य सुखावहम् ॥ ६
जलवह्न्यनिलाजस्रजातभीत्या पदे पदे ।
यद्भयं शैशवेऽबुद्ध्या कस्यापदि हि तद्भवेत् ॥ ७
लीलासु दुर्विलासेषु दुरीहासु दुराशये ।
परमं मोहमाधत्ते बालो बलवदापतन् ॥ ८
विकल्पकल्पितारम्भं दुर्विलासं दुरास्पदम् ।
शैशवं शासनायैव पुरुषस्य न शान्तये ॥ ९
ये दोषा ये दुराचारा दुष्क्रमा ये दुराधयः ।
ते सर्वे संस्थिता बाल्ये दुर्गर्त इव कौशिकाः ॥ १०
बाल्यं रम्यमिति व्यर्थबुद्धयः कल्पयन्ति ये ।
तान्मूर्खपुरुषान्ब्रह्मन्धिगस्तु हतचेतसः ॥ ११

नस्य विकार इत्यर्थः । स्वप्नसंभ्रमनगरतुल्ये । अथवा स्वाप्नभ्रान्तीनामाधारे । शरीरे एव स्वप्नदर्शनात् । 'स्वे शरीरे यथाकामं परिवर्तेत' इति श्रुतेः । नगरस्य नागरिकव्यापारतुल्यसत्ताकत्वादित्यर्थः ॥ ६० ॥ विश्वसितु विश्वासं करोतु । विग्रहे देहे ॥ ६१ ॥ हठवृत्तिषु भङ्गुरताशैघ्र्ये स्वस्वोत्कर्षख्यापनाय बलात्प्रवृत्तेषु पदार्थेषु मध्ये सततभङ्गुरकार्यसमूहविजयिनो ये ये तडिच्छरदभ्रादयस्तेभ्योऽपि जातजयं लब्धोत्कर्षम् । तत्कुतस्तत्राह–**प्रबलदोष**मिति । नाशहेतुदोषसामग्रीबाहुल्यादित्यर्थः । अपोह्य तुच्छबुद्ध्या निरस्य ॥ ६२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे कायजुगुप्सानामाष्टादशः सर्गः ॥१८॥

अज्ञानक्षुत्तृषारोगाशौचचापलदूषितम् ।
तिर्यग्जन्तुसमावस्थं बाल्यमप्यत्र निन्द्यते ॥ १ ॥

ननु न देहस्य सर्वा अवस्था दुःखरूपास्तद्बाल्यस्य सर्वजनस्पृहणीयतया रम्यतरत्वात् 'तद्यथा महाराजो वा महाब्राह्मणो वा महाकुमारो वा अतिघ्नीमानन्दस्य गत्वा शयीत' इति श्रुत्यापि बाल्यस्यानन्दबहुलत्वप्रतिपादनादित्याशङ्क्य विस्तरेण तस्यानर्थबहुलतां प्रपञ्चयितुं प्रतिजानीते–**लब्ध्वापी**ति । कार्यभारैर्नानाकर्तव्याभिनिवेशैः । प्रकृत्यादित्वात्तृतीया । धान्येन धनवानितिवत्तद्धितप्रकृत्यर्थे अभेदेनान्वयः । तरला अस्थिरा आकाराश्चतुर्विधशरीराणि यस्मिन् । अन्यत्र चञ्चलस्वभावे संसारसागरे जन्म मनुष्यजन्म । बाल्यं केवलं दुःखायैव लभते जन्तुरिति शेषः । अपिना मनुष्यजन्मनोऽतिदौर्लभ्यं द्योत्यते । तथाच श्रुतिः 'ततो वै तद्दुर्निष्प्रपतरम्' इति ॥१॥ प्रतिज्ञातार्थं प्रपञ्चयति—अशक्तिरित्यादिना । गृध्नुता साभिलाषता । तृष्णा भक्षणादिविषये । गृध्नुता क्रीडाकौतुकादिविषये, तदलाभे दैन्यमिति भेदः ॥ २ ॥ चकारोऽनुक्तानन्तदुर्दशासमुच्चयार्थः । बन्धनम् । अधिकरणे ल्युट् । आलानं गजबन्धनस्तम्भः ॥ ३ ॥ जरारोगे । समाहारद्वन्द्वे एकवद्भावः । तास्तादृश्यः । परितः कृन्तन्ति छिन्दन्तीव पीडयन्ति । या यादृश्यः ॥ ४ ॥ तिर्यग्जातयः पश्वादयस्तैः सम आरम्भो यस्य । अवधीरितो भर्त्सितः ॥ ५ ॥ पुरःस्थितं प्रतिबिम्बमिव स्फुटं घनं निबिडं अज्ञानं प्रतिक्षणं चित्ते तत्तद्विषयप्रतिबिम्बनैर्वा घनानि बहुलानि भ्रान्तिज्ञानानि यस्मिन् । अतएव नानासंकल्पैः पेलवं मृदु । तुच्छमिति यावत् । तत्तत्संकल्पितविषयालाभादालूनं सर्वतश्छिन्नमिव संशीर्णमिव सदा दुःखितं मनो यस्मिन् ॥६॥ भयं लक्षणया दुःखं मुख्यमेव वा भयादपि भयान्तरोत्पत्तेः । अबुद्ध्याऽज्ञानेन । हिशब्दोऽप्यर्थे॥७॥ सामान्यविशेषाभ्यां बुद्ध्यबुद्धिपूर्वकत्वाभ्यां कायिकत्वेन मानसत्वेन च लीलादीनां भेदः । मोहं सारताभ्रमम् ॥८॥ निष्फलेऽपि कर्मणि बालप्रमत्तादिवचनादपि कौतूहलेन कल्पितमहारम्भम् । दुरास्पदं दुष्प्रतिष्ठम् । शासनाय गुर्वादिकृतकशाताडनादिदुःखायैव न विश्रान्तये ॥९॥दुष्क्रमा दुरुत्तराः । कौशिका वायसारातयः ॥१०॥ यच्छङ्कितं बाल्यं रम्यतरमिति तत्राह–**बाल्य**मिति ।

१ 'विनिकृन्तति' इति पाठः.

२ संशीर्ण मन इति पाठः. ३ 'दुर्गते इव' इति पाठः. ४ कायिकत्वेनेति क्वचिन्न पठ्यते.

यत्र दोलाकृति मनः परिस्फुरति वृत्तिषु ।
त्रैलोक्याऽभव्यमपि तत्कथं भवति तुष्टये ॥ १२
सर्वेषामेव सत्त्वानां सर्वावस्थाभ्य एव हि ।
मनश्चञ्चलतामेति बाल्ये दशगुणं मुने ॥ १३
मनः प्रकृत्यैव चलं बाल्यं च चलतां वरम् ।
तयोः संश्लिष्यतोस्त्राता क इवान्तः कुचापले ॥ १४
स्त्रीलोचनैस्तडित्पुञ्जैर्ज्वालाजालैस्तरङ्गकैः ।
चापलं शिक्षितं ब्रह्मञ्शैशवाक्रान्तचेतसः ॥ १५
शैशवं च मनश्चैव सर्वास्वेव हि वृत्तिषु ।
भ्रातराविव लक्ष्येते सततं भङ्गुरस्थिती ॥ १६
सर्वाणि दुःखभूतानि सर्वे दोषा दुराधयः ।
बालमेवोपजीवन्ति श्रीमन्तमिव मानवाः ॥ १७
नवं नवं प्रीतिकरं न शिशुः प्रत्यहं यदि ।
प्राप्नोति तदसौ याति विषवैषम्यमूर्च्छनाम् ॥ १८
स्तोकेन वशमायाति स्तोकेनैति विकारिताम् ।
अमेध्य एव रमते बालः कौलेयको यथा ॥ १९
अजस्रबाष्पवदनः कर्दमाक्तो जडाशयः ।
वर्षोक्षितस्य तप्तस्य स्थलस्य सदृशः शिशुः ॥ २०
भयाहारपरं दीनं दृष्टादृष्टाभिलाषि च ।
लोलबुद्धि वपुर्धत्ते बाल्यं दुःखाय केवलम् ॥ २१
स्वसंकल्पाभिलषितान्भावानप्राप्य तप्तधीः ।
दुःखमेत्यबलो बालो विनिष्कृत्त इवाशये ॥ २२
दुरीहालब्धलक्षाणि बहुवक्रोल्बणानि च ।
बालस्य यानि दुःखानि मुने तानि न कस्यचित् ॥ २३
बालो बलवता स्वेन मनोरथविलासिना ।
मनसा तप्यते नित्यं ग्रीष्मेणेव वनस्थली ॥ २४
विद्यागृहगतो बालो परामेति कदर्थनाम् ।
आलान इव नागेन्द्रो विषवैषम्यभीषणाम् ॥ २५
नानामनोरथमयी मिथ्याकल्पितकल्पना ।
दुःखायात्यन्तदीर्घाय बालता पेलवाशया ॥ २६
संहृष्टो भुवनं भोक्तुमिन्दुमादातुमम्बरात् ।
वाञ्छते येन मौर्ख्येण तत्सुखाय कथं भवेत् ॥ २७
अन्तश्चित्तेरशक्तस्य शीतातपनिवारणे ।
को विशेषो महाबुद्धे बालस्योर्वीरुहस्तथा ॥ २८
उड्डीतुमभिवाञ्छन्ति पक्षाभ्यां क्षुत्परायणाः ।
भयाहारपरा नित्यं बाला विहगधर्मिणः ॥ २९
शैशवे गुरुतो भीतिर्मातृतः पितृतस्तथा ।
जनतो ज्येष्ठबालाच्च शैशवं भयमन्दिरम् ॥ ३०
सकलदोषदशाविहताशयं
शरणमप्यविवेकविलासिनः ।
इह न कस्यचिदेव महामुने
भवति बाल्यमलं परितुष्टये ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे बाल्यजुगुप्सानामैकोनविंशः सर्गः ॥ १९ ॥

---

श्रुतिस्तु रागादिविक्षेपाप्ररोहे स्वाभाविकात्मसुखाविर्भावसंभावनार्था न बाल्यरम्यतापरेति भावः ॥ ११ ॥ तदरम्यतामेवोपपादयति—**यत्रे**त्यादिना । त्रैलोक्ये अभव्यममङ्गलं तदपीत्यन्वयः ॥ १२ ॥ न केवलं मनुष्याणामेवाभव्यमपि तु सर्वजन्तूनामित्याह—**सर्वेषा**मिति । मनश्चाञ्चल्यातिशयस्य दुःखातिशयहेतुता प्रसिद्धैवेति भावः ॥ १३ ॥ संश्लिष्यतोर्मिलतोः । कुचापले तत्प्रयुक्तानर्थे ॥ १४ ॥ शैशवेनाक्रान्ताच्चेतसश्चित्तात्सकाशात् शिक्षितमभ्यस्तं नूनमित्युत्प्रेक्षा ॥ १५ ॥ भङ्गुरस्थिती । नुमभावश्छान्दसः । चपलस्वभावे ॥ १६ ॥ दुःखभूतानि प्रभूतदुःखानि दुर्व्यसनादीनि ॥ १७ ॥ तत्तदा विषवद्दुःसहेन वैषम्येण चित्तविकारेण । मूर्च्छनां मूर्च्छाम् ॥ १८ ॥ कौलेयकः श्वा । विशेषणानि साधारणानि ॥ १९ ॥ बाष्पमश्रु ऊष्मोद्गमश्च । जडाशयोऽज्ञबुद्धिरचेतनश्च । वर्षोक्षिततप्तभूमावपि बाष्पादयः प्रसिद्धाः ॥२०॥ भयं च आहारश्च भयाहारौ । दृष्टं संनिहितम् । अदृष्टमसंनिहितम् । लोले बुद्धिवपुषी यस्य ॥ २१ ॥ भावान्पदार्थान् । विनिष्कृत्तश्छिन्नः ॥२२॥ दुरीहाभिर्दुश्चेष्टाभिर्दुष्टमनोरथैर्वा लब्धलक्षाणि प्राप्तास्पदानि । बहुभिर्वक्रैरनृजुभिर्वञ्चनोपायैरुल्बणानि क्रूराणि ॥२३॥२४॥ अपरां प्रागुक्तादन्यामपि कदर्थनां पारवश्यकशाघाताद्यनिष्टपरम्पराम् ॥२५॥ मिथ्यावस्तुष्वेव कल्पिता कल्पना सत्यताबुद्धिर्यस्याम् ॥ २६ ॥ कदाचिद्भोजनेच्छया रुदन्बालो भुवनं ते भोजनं दास्यामीति प्रतारणेन संहृष्टस्तदेव भोक्तुं वाञ्छते वाञ्छतीति प्रसिद्धम् ॥२७॥ अन्तर्मनसि चित्तिः शीतातपादिदुःखसंवेदनं यस्य । उर्वीरुहो वृक्षस्य ॥२८॥ उड्डीतुमुड्डयितुम् । इङ्गुणाभावश्छान्दसः । पक्षाभ्यां लक्षणया बाहुभ्याम् । विहगधर्मिणः पक्षिसमाः ॥ २९ ॥ ॥ ३० ॥ सकलाभिर्दोषदशाभिर्विहताशयं दूषितान्तःकरणम् । अविवेकलक्षणस्य विलासिनो निरङ्कुशविहारशीलस्य शरणं गृहम् । चिदिति निपातोऽप्यर्थे । एवकारो भिन्नक्रमः । कस्यापि परितुष्टये सुखाय अलमत्यर्थं नैव भवतीत्यर्थः ॥ ३१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे बाल्यजुगुप्सानामैकोनविंशः सर्गः ॥ १९ ॥

---

१ बाल्यमेव इति पाठः. २ विनिष्कृत इति पाठः. ३ लक्ष्यणि इति पाठः. ४ बाल्यस्य इति पाठः. ५ महाबाहो इति पाठः.

# विंशः सर्गः २०

श्रीराम उवाच ।

बाल्यानर्थमथ त्यक्त्वा पुमानभिहताशयः ।
आरोहति निपाताय यौवनं संभ्रमेण तु ॥ १
तत्रानन्तविलासस्य लोलस्य स्वस्य चेतसः ।
वृत्तीरनुभवन्याति दुःखाद्दुःखान्तरं जडः ॥ २
स्वचित्तबिलसंस्थेन नानासंभ्रमकारिणा ।
बलात्कामपिशाचेन विवशः परिभूयते ॥ ३
चिन्तानां लोलवृत्तीनां ललनानामिवाऽवृतीः ।
अर्पयत्यवशं चेतो बालानामञ्जनं यथा ॥ ४
ते ते दोषा दुरारम्भास्तत्र तं तादृशाशयम् ।
तद्रूपं प्रतिलुम्पन्ति दुष्टास्तेनैव ये मुने ॥ ५
महानरकबीजेन संततभ्रमदायिना ।
यौवनेन न ये नष्टा नष्टा नान्येन ते जनाः ॥ ६
नानारसमयी चित्रवृत्तान्तनिचयोम्भिता ।
भीमा यौवनभूर्येन तीर्णा धीरः स उच्यते ॥ ७
निमेषभांसुराकारमालोलघनगर्जितम् ।
विद्युत्प्रकाशमशिवं यौवनं मे न रोचते ॥ ८
मधुरं स्वादु तिक्तं च दूषणं दोषभूषणम् ।
सुराकल्लोलसदृशं यौवनं मे न रोचते ॥ ९
असत्यं सत्यसंकाशमचिराद्विप्रलम्भदम् ।
स्वप्नाङ्गनासङ्गसमं यौवनं मे न रोचते ॥ १०
सर्वस्याग्रे सर्वपुंसः क्षणमात्रमनोहरम् ।
गन्धर्वनगरप्रख्यं यौवनं मे न रोचते ॥ ११
इषुप्रपातमात्रं हि सुखदं दुःखभासुरम् ।
दाहपोषप्रदं नित्यं यौवनं मे न रोचते ॥ १२
आपातमात्ररमणं सद्भावरहितान्तरम् ।
वेश्यास्त्रीसंगमप्रख्यं यौवनं मे न रोचते ॥ १३
ये केचन समारम्भास्ते सर्वे सर्वदुःखदाः ।
तारुण्ये संनिधिं यान्ति महोत्पाता इव क्षये ॥ १४
हार्दान्धकारकारिण्या भैरवाकारवानपि ।
यौवनाज्ञानयामिन्या बिभेति भगवानपि ॥ १५
सुविस्मृतशुभाचारं बुद्धिवैधुर्यदायिनम् ।
ददात्यतितरामेष भ्रमं यौवनसंभ्रमः ॥ १६
कान्तावियोगजातेन हृदि दुःस्पर्शवह्निना ।
यौवने दह्यते जन्तुस्तरुर्दावाग्निना यथा ॥ १७
सुनिर्मलापि विस्तीर्णा पावन्यपि हि यौवने ।

लोभद्वेषमदासूयामानमात्सर्यदूषितम् ।
कामाद्यनर्थसदनं यौवनं चात्र निन्द्यते ॥ १ ॥

अस्तु बाल्यमतिमौर्ख्याशक्तिपारतन्त्र्येभ्यो दुःखबहुलम्, यौवनं तु तदभावान्नानाभोगरसरञ्जितत्वाच्च सुखहेतुरेवेति स्पृहणीयमेवेत्याशङ्क्य तस्य सुतरामनर्थतां प्रपञ्चयितुमुपक्रमते—**बाल्यानर्थ**मित्यादिना । संभ्रमेण भोगोत्साहेन भ्रान्त्या वक्ष्यमाणकामपिशाचादिना वा अभिहताशयो दूषितान्तःकरणः । आचतुर्दशवर्षं माण्डव्येन मर्यादाकरणान्न तथा बाल्यं निपाताय, यौवनं तु निपातायैवेति भावः ॥१॥ तत्र यौवने । अनन्ता विलासाश्चेष्टा यस्य । वृत्ती रागद्वेषादिपरिणामान् । जडो मूर्खः ॥ २ ॥ परिभूयते विवेकं तिरस्कृत्य वशीक्रियते ॥ ३ ॥ अतएवाऽवशमस्वतन्त्रं चेतो ललनानां युवतीनामिव लोलवृत्तीनां चञ्चलस्थितिकानां चिन्तानां अवृतीः वरणं वृतिस्तिरोधानं तदभावान् । स्वैरप्रसरानिति यावत् । अर्पयति प्रयच्छति । यथा निध्यादिदर्शनाय बालानां करतलेऽर्पितं सिद्धाञ्जनं लोलवृत्तीनां तन्नयनप्रभाणां अवृतीः अनावरणानि । भूमिशिलादिव्यवधानतिरस्कारेण स्वैरं निधिदर्शनसमर्थतामिति यावत् ॥ ४ ॥ तत्र यौवने तादृशाशयं कामचिन्तादिवशीकृतचित्तमतएव तद्रूपं तत्प्रायं तं पुरुषं नरकादिहेतुत्वाद्बह्वयक्लेशसाध्यत्वाच्च दुष्टा आरम्भाः स्त्रीद्यूतकलहादिव्यसनारम्भा येभ्यस्ते तथाविधास्ते ते प्रसिद्धा रागलोभादिदोषाः प्रतिलुम्पन्ति विनाशयन्ति । ये दोषास्तेन यौवनेनैव दुष्टाः । अतिशयं नीता इत्यर्थः ॥ ५ ॥ अतएव **महानरके**ति । स्पष्टम् ॥ ६ ॥ रसाः शृङ्गारादयः कद्वादयो विषयाभिलाषा दुस्तरजलानि च । प्राचुर्ये मयट् । रागलोभादीनां चोरव्याघ्रसर्पादीनां च चित्रैराश्चर्यहेतुभिर्वृत्तान्तनिचयैरुम्भिता पूरिता भूर्यौवनारण्यभूमिः ॥७॥ घनानि बहुलानि गर्जितानीव साभिमानोक्तयो, घनानां मेघानां गर्जितानि च यस्मिन् । अतएव विद्युदिव प्रकाशमानम् ॥ ८ ॥ भोगकाले मधुरमतएव स्वादु हृद्यं तिक्तं परिणामतः दूषणं निन्दाहेतुदोषाणां भूषणमलंकारायमाणम् । सुरायाः कल्लोला मदविलासाः ॥ ९ ॥ विप्रलम्भदं वञ्चनप्रदम् ॥ १० ॥ सर्वस्य क्षणमनोहरस्य वस्तुजातस्य मध्ये अग्रे अग्रेसरं श्रेष्ठमित्यर्थः । गन्धर्वनगरदर्शनस्य मरणचिह्नत्वात्तत्पक्षे सर्वस्य वयसोऽग्रे अन्ते इत्यर्थः ॥ ११ ॥ ज्यामुक्त इषुर्यावता कालेन लक्ष्यं प्रपतति तावत्कालं सुखदम् ॥ १२ ॥ रमणं रमणीयम् । सद्भावः शुभचित्तता ॥ १३ ॥ सर्वेषां दुःखदा ये केचन समारम्भास्ते सर्वे इत्यन्वयः । क्षये प्रलये ॥ १४ ॥ भैरवाकारवान् भगवानीश्वरोऽपि यौवनयुक्ताज्ञानरात्रैर्नूनं बिभेति, कथमन्यथा सदैव विवेकज्ञानचन्द्रं धारयतीति भावः ॥ १५ ॥ भ्रमं भ्रान्तिम् । संभ्रमो मोहः ॥ १६ ॥ दुःस्पर्शः स्प्रष्टुमशक्यः शोकवह्निस्तेन हृदि चित्ते दह्यते ॥१७॥ दोषमार्जनेन निर्मला । औदार्येण । विस्तीर्णा । गुणाधानैः[3] पावनी ।

१ भास्वराकार इति पाठः.

२ ज्ञानवानपि इति पाठः. ३ गुणाधानेन इति पाठः.

मतिः कलुषतामेति प्रावृषीव तरङ्गिणी ॥ १८
शक्यते घनकल्लोला भीमा लङ्घयितुं नदी ।
न तु तारुण्यतरला तृष्णातरलितान्तरा ॥ १९
सा कान्ता तौ स्तनौ पीनौ ते विलासास्तदाननम् ।
तारुण्य इति चिन्ताभिर्याति जर्जरतां जनः ॥ २०
नरं तरलतृष्णार्तिं युवानमिह साधवः ।
पूजयन्ति न तु च्छिन्नं जरत्तृणलवं यथा ॥ २१
नाशायैव मदार्तस्य दोषमौक्तिकधारिणः ।
अभिमानमहेभस्य नित्यालानं हि यौवनम् ॥ २२
मनोविपुलमूलानां दोषाशीविषधारिणाम् ।
शोषरोदनवृक्षाणां यौवनं बत काननम् ॥ २३
रसकेसरसंबाधं कुविकल्पदलाकुलम् ।
दुश्चिन्ताचञ्चरीकाणां पुष्करं विद्धि यौवनम् ॥ २४
कृताकृतकुपक्षाणां हृत्सरस्तीरचारिणाम् ।
आधिव्याधिविहंगानामालयो नवयौवनम् ॥ २५
जडानां गतसंख्यानां कल्लोलानां विलासिनाम् ।
अनपेक्षितमर्यादो वारिधिर्नवयौवनम् ॥ २६
सर्वेषां गुणसर्गाणां परिरूढरजस्तमाः ।
अपनेतुं स्थितिं दक्षो विषमो यौवनानिलः ॥ २७
नयन्ति पाण्डुतां वक्त्रमाकुलावकरोत्कटाः ।
आरोहन्ति परां कोटिं रूक्षा यौवनपांसवः ॥ २८
उद्बोधयति दोषालिं निकृन्तति गुणावलिम् ।
नराणां यौवनोल्लासो विलासो दुष्कृतश्रियाम् ॥ २९
शरीरपङ्कजरजश्चञ्चलां मतिषट्पदीम् ।
निबध्नन्मोहयत्येष नवयौवनचन्द्रमाः ॥ ३०
शरीरखण्डकोद्भूता रम्या यौवनवल्लरी ।
लग्नमेव मनोभृङ्गं मदयत्युन्नतिं गता ॥ ३१
शरीरमरुतापोत्थां युवतामृगतृष्णिकाम् ।
मनोमृगाः प्रधावन्तः पतन्ति विषयावटे ॥ ३२
शरीरशर्वरीज्योत्स्ना चित्तकेसरिणः सटा ।
लहरी जीवितामभोधेर्युवता मे न तुष्टये ॥ ३३
दिनानि कतिचिद्येयं फलिता देहजङ्गले ।
युवता शरदस्यां हि न समाश्वासमर्हथ ॥ ३४
झटित्येव प्रयात्येव शरीराद्युवताखगः ।
क्षणेनैवाल्पभाग्यस्य हस्ताच्चिन्तामणिर्यथा ॥ ३५
यदा यदा परां कोटिमध्यारोहति यौवनम् ।
वल्गन्ति सज्वराः कामास्तदा नाशाय केवलम् ३६
तावदेव विवल्गन्ति रागद्वेषपिशाचकाः ।
नास्तमेति समस्तैषा यावद्यौवनयामिनी ॥ ३७
नानाविकारबहुले वराके क्षणनाशिनि ।

---

चकारः शैत्यमाधुर्याद्यनुक्तसमुच्चयार्थः ॥ १८ ॥ तारुण्येन तरला चञ्चला चित्तवृत्तिः । भोगतृष्णया तरलितानि आन्तराणीन्द्रियाणि यस्याम् ॥ १९ ॥ जर्जरतां शैथिल्यम् ॥ २० ॥ तरलास्तृष्णार्तयो यस्मिन् । [2]न केवलं न पूजयन्ति किंत्ववमन्यन्तेऽपीति द्योतनाय तुशब्दः ॥ २१ ॥ मानभङ्गस्तु मनस्विनां मरणोपम इत्यभिप्रेत्याह—**नाशायैवे**ति । अभिमान एव महेभस्तस्य, अथवा अभिमानैर्महेभवत्स्तब्धस्याविवेकिपुरुषस्य । नाशायाधःपाताय । नित्यालानमभीक्ष्णं बन्धनाय स्तम्भः ॥२२॥ इष्टालाभवियोगाभ्यामन्तर्दाहाच्छोषस्तद्युक्तरोदनान्येव वृक्षाः । दोषा एवाशीविषाः सर्पाः । बतेति खेदे ॥ २३ ॥ रस्यते इति रसः सुखलवमकरन्दस्तेन के सुखे विषये सरन्ति प्रसरन्तीति रागादय एव केसरास्तैश्च संबाधं निबिडितम् । दलानि पत्राणि । चञ्चरीका भ्रमराः । पुष्करं पद्मम् ॥ २४ ॥ कृतं पापमकृतं पुण्यं लौकिककार्याणि वा कृताकृतानि पतनहेतुत्वात्कुपक्षाः । आलयो नीडम् ॥ २५ ॥ असंख्यत्वादेव गतसंख्यानां कल्लोलानां विकल्पतरङ्गाणाम् । विलासिनां विलसनशीलानाम् । अनपेक्षितमर्यादोऽनवधिः । अनपेक्षितमनिष्टं जरादिदुःखमेव मर्यादा पर्यवसानभूर्यस्येति वा ॥ २६ ॥ चित्ताकाशे प्रसादप्रकाशविवेकद्रवप्रसरादीनां सर्वेषां गुणानां सृज्यन्ते साधुसंगमसच्छास्त्रप्रयत्नादिभिरुत्पाद्यन्त इति सर्गास्तेषाम् । विशेष्यविशेषणभावे कामचारात्परनिपातः । प्रयत्नसहस्र[3]साधितानामपि सद्गुणानामिति यावत् । स्थितिं स्थैर्यमपनेतुं दक्षः समर्थः । अनिलपक्षे गुणसर्गाणां, लूतासृष्टतन्तूनां च ॥ २७ ॥ **पाण्डुता**मिति । विषयवासनोत्थरोगैरित्यर्थः । आकुलैश्चालितैरवकरैरुत्कराशुचितृणपर्णादितुल्यैरिन्द्रियैरुत्कटा दुःसहाः । परां कोटिं दोषोत्कर्षमूर्ध्वदेशं च ॥ २८ ॥ दोषाणामालिं समूहम् । दुष्कृतश्रियां पापसंपदां विलासहेतुत्वाद्विलासः ॥ २९ ॥ रजोगुणपरागनिरुद्धविवेकपक्षत्वाद्देहपङ्कज एव चञ्चलां मतिषट्पदीं बुद्धिभ्रमरीमर्थात्तदभिमानकोशे निबध्नन्मोहयति ॥ ३० ॥ शरीरलक्षणे खण्डके अल्पे वनखण्डे कुञ्जे वा । वल्लरी पुष्पमञ्जरी । मदयति मोहयति । उन्नतिमुत्कर्षमूर्ध्वदेशं च ॥ ३१ ॥ शरीरमेव मरुभूमिस्तत्र कामातपतापेनोत्थां प्रतिभातां युवता यौवनं सैव मृगतृष्णिका तां प्रति धावन्तः । विषयलक्षणे अवटे गर्ते ॥ ३२ ॥ शरीरमेव शर्वरी रात्रिस्तस्या ज्योत्स्ना चन्द्रिका । चित्तलक्षणस्य केसरिणः सटा स्कन्धलोम । तेन हि स शोभते । लहरी वीचिमाला ॥ ३३ ॥ येयं युवता सेयं हि यस्माद्देहजङ्गले कतिचिद्दिनानि फलिता संजातफला शरत् शरत्कालः । अचिरादेव क्षयमेष्यतीति भावः । अतोऽस्यां समाश्वासं नार्हथेति स्वजनान्प्रत्युक्तिः ॥ ३४ ॥ उक्तमेव प्रपञ्चयति—**झटिती**त्यादिभिः षड्भिः ॥ ३५ ॥ परां कोटिमुत्कर्षकाष्ठाम् । वल्गन्ति गच्छन्ति । वृद्धिमिति यावत् । सज्वराः संतापाः । पूर्वत्र वीप्सादर्शनात्तदातदेति परिणेयम् ॥ ३६ ॥ विवल्गन्ति विशेषेण संचरन्ति । यामिनी रात्रिः ॥ ३७ ॥ वि-

---

१ विकृन्तति इति पाठः २ नेति क्वचिन्न लभ्यते. ३ साध्यानामपि इति पाठः.

कारुण्यं कुरु तारुण्ये म्रियमाणे सुते यथा ॥ ३८
हर्षमायाति यो मोहात्पुरुषः क्षणभङ्गिना ।
यौवनेन महामुग्धः स वै नरमृगः स्मृतः ॥ ३९
मानमोहान्मदोन्मत्तं यौवनं योऽभिलष्यति ।
अचिरेण स दुर्बुद्धिः पश्चात्तापेन युज्यते ॥ ४०
ते पूज्यास्ते महात्मानस्त एव पुरुषा भुवि ।
ये सुखेन समुत्तीर्णाः साधो यौवनसंकटात् ॥ ४१
सुखेन तीर्यतेऽम्भोधिरुत्कृष्टमकराकरः ।
न कल्लोलबलोल्लासि सदोषं हतयौवनम् ॥ ४२

विनयभूषितमार्यजनास्पदं
करुणयोज्वलमावलितं गुणैः ।
इह हि दुर्लभमङ्ग सुयौवनं
जगति काननमम्बरगं यथा ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे यौवनगर्हा नाम विंशतितमः सर्गः ॥ २० ॥

## एकविंशः सर्गः २१

श्रीराम उवाच ।

मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनं १
त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचनम् ।
समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥ २
इतः केशा इतो रक्तमितीयं प्रमदातनुः ।
किमेतया निन्दितया करोति विपुलाशयः ॥ ३
वासोविलेपनैर्यानि लालितानि पुनः पुनः ।
तान्यङ्गान्यङ्ग लुण्ठन्ति क्रव्यादाः सर्वदेहिनाम् ॥ ४
मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता ॥ ५
श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥ ६
रक्तमांसास्थिदिग्धानि करभस्य यथा वने ।
तथैवाङ्गानि कामिन्यास्तां प्रत्यपि हि को ग्रहः ॥ ७
आपातरमणीयत्वं कल्पते केवलं स्त्रियाः[1] ।
मन्ये तदपि नास्त्यत्र मुने मोहैककारणम् ॥ ८
विपुलोल्लासदायिन्या मदमन्मथपूर्वकम् ।
को विशेषो विकारिण्या मदिरायाः स्त्रियास्तथा[2] ९

कारश्चित्तविकारा बाललीलाश्च ॥ ३८ ॥ क्षणभङ्गिना यौवनेन मोहाद्यो हर्षमायाति स नरमृगो मनुष्यः सन्नपि पशुरेव । यतोऽसौ महामुग्धः ॥ ३९ ॥ मानमोहादभिमानसहितादज्ञानात् । अभिलष्यति सारबुद्ध्या सज्जते ॥ ४० ॥ सुखेन अहिंसासत्यास्तेयब्रह्मचर्याद्यनुपक्षयेण ॥४१॥ उत्कृष्टानां महतां मकराणां ग्राहाणामाकरः खनिः । रागादिकल्लोलानां बलेनोल्लसनशीलम् । हतं निन्दितम् । 'कुत्सितानि कुत्सनैः' इति तत्पुरुषः ॥ ४२ ॥ ननु बाल्यवार्धकयोर्मौर्ख्याशक्तिभ्यां[3] पुरुषार्थसाधनायोग्यत्वाद्यौवनस्यापि दोषबहुलत्वान्नास्ति कदापि पुरुषस्य साधनसंपत्त्या पुरुषार्थप्रत्याशेत्याशङ्क्य[4], न सर्वं यौवनं निन्द्यते किंतु दुर्यौवनमेव, सुयौवनं तु पुरुषार्थपर्यवसितमेवेति लक्षणैस्तद्दर्शयंस्तस्य दुर्लभतामाह—**विनये**ति । आर्याः पूज्या जना मुनिजना आस्पदं स्थानं यस्य, आर्यजनानां साधूनामास्पदमावासस्थानवद्विश्रान्तिदमिति वा । गुणैः शान्तिदान्त्यादिभिः । जगति संसारे । हिशब्दोऽप्यर्थे । इहास्मिन्मनुष्यजन्मन्यपि सुदुर्लभं, किमन्यत्रेत्यर्थः । अम्बरगं काननं नन्दनवनम् । तत्पक्षे वीन् पक्षिणो नयन्ति प्रापयन्ति स्वसंनिधिमिति विनयाः कल्पवृक्षास्तैर्भूषितम् । आर्यजना देवास्तेषामास्पदम् । अतएव करुणया दयया ऊर्जितम् । गुणैः फलपुष्पसमृद्ध्यादिभिः कल्पलतागुणैरावलितं वेष्टितमिति वा । इह भुवि सुदुर्लभमिति योज्यम् ॥ ४३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे यौवनगर्हा नाम विंशतितमः सर्गः ॥ २० ॥

प्रत्यक्षनरकव्रातनिष्पन्ननिखिलाङ्गिकाः ।
स्त्रियोऽप्यत्र विनिन्द्यन्ते पुंसां नरकजन्मदाः ॥ १ ॥

येषु स्त्रीपिण्डेषु यूनां रमणीयताभ्रमस्तेषां स्वरूपं विविच्य दर्शयितुमुपक्रमते—**मांसे**त्यादिना । स्नायवः शिराः । ग्रथनं ग्रन्थिस्तेन शालिन्याः शोभनाया मांसमय्याः पाञ्चालिकायाः प्रतिमायाः स्त्रियाः शकटादियन्त्रमिव लोले चञ्चले अङ्गपञ्जरे शोभनमिव यन्मन्यन्ते तत्किम् । न किंचिदित्यर्थः ॥ १ ॥ उक्तमेव प्रपञ्चयिष्यन्प्रथमं यूनां यत्र नेत्रे विलासविभ्रमस्तत्र विवेके अशोभनतां दर्शयति—**त्वगि**ति । समाहारद्वन्द्वः । रम्यं चेत्सज्जस्व[5] । किं मुधेति । नोचेदिति शेषः । मुधा व्यर्थम् ॥ २ ॥ विपुलाशयो विवेकविस्तीर्णबुद्धिः ॥ ३ ॥ अङ्गेति कोमलामन्त्रणे । लुण्ठन्ति उपघ्नन्ति । क्रव्यादा मांसाशिनो गृध्रगोमाय्वादयः ॥४॥ रयः प्रवाहः । मुक्ताहारस्य उल्लासशालिता शोभा यस्मिन्स्तने दृष्टा स एव ललनास्तन इत्युत्तरेण संबन्धः ॥ ५ ॥ आस्वाद्यते रुच्या भक्ष्यते । अन्धस ओदनस्य ॥ ६ ॥ दिग्धान्युपचितानि करभस्य खरस्योष्ट्रस्य वा । ग्रह आग्रहः । आशातिशय इति यावत् ॥ ७ ॥ अविचारजं ज्ञानमापातं पतनावधीति वा । कल्पते युज्यते । यतो मोहैककारणं चित्तविभ्रमैकनिमित्तकं तत् । नहि तथाविधं शुक्तिरजताद्यस्तीति भावः ॥ ८ ॥ विकारिण्याः स्वतः

१ कल्प्यते केवलं स्त्रियः इति पाठः. २ स्त्रियस्तथा इति पाठः. ३ मौग्ध्याशक्तिभ्यां इति पाठः. ४ पुरुषार्थ प्रत्याशेति पाठः. ५ [illegible]तार्थकथनम्.

ललनालानसंलीना मुने मानवदन्तिनः ।
प्रबोधं नाधिगच्छन्ति दृढैरपि शमाङ्कुशैः ॥ १०
केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ११
ज्वलतामतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥ १२
विकीर्णाकारकबरी तरत्तारकलोचना ।
पूर्णेन्दुबिम्बवदना कुसुमोत्करहासिनी ॥ १३
लीलाविलोलपुरुषा कार्यसंहारकारिणी ।
परं विमोहनं बुद्धेः कामिनी दीर्घयामिनी ॥ १४
पुष्पाभिराममधुरा करपल्लवशालिनी ।
भ्रमराक्षिविलासाढ्या स्तनस्तबकधारिणी ॥ १५
पुष्पकेसरगौराङ्गी नरमारणतत्परा ।
ददात्युन्मत्तवैवश्यं कान्ता विषलता यथा ॥ १६
सत्कार्योच्छ्वासमात्रेण भुजङ्गदलनोत्कया ।
कान्तयोद्ध्रियते जन्तुः करभ्येवोरगो बिलात् ॥ १७
कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् ।
नार्यो नरविहंगानामङ्गबन्धनवागुराः ॥ १८
ललनाविपुलालाने मनोमत्तमतंगजः ।
रतिशृङ्खलया ब्रह्मन्बद्धस्तिष्ठति मूकवत् ॥ १९
जन्मपल्वलमत्स्यानां चित्त[1]कर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिका ॥ २०
मन्दुरं च तुरङ्गाणामालानमिव दन्तिनाम् ।
पुंसां मन्त्र इवाहीनां बन्धनं वामलोचना ॥ २१
नानारसवती चित्रा भोगभूमिरियं मुने ।
स्त्रियमाश्रित्य संयाता परामिह हि संस्थितिम् ॥ २२
सर्वेषां दोषरत्नानां सुसमुद्गिकयाऽनया ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥ २३
किं स्तनेन किमक्ष्णा वा किं नितम्बेन किं भ्रुवा ।
मांसमात्रैकसारेण करोम्यहमवस्तुना ॥ २४
इतो मांसमितो रक्तमितोऽस्थीनीति वासरैः ।
ब्रह्मन्कतिपयैरेव याति स्त्री विशरारुताम् ॥ २५
यास्तात पुरुषैः स्थूलैर्ललिता मनुजैः प्रियाः ।
ता मुने प्रविभक्ताङ्ग्यः स्वपन्ति पितृभूमिषु ॥ २६
यस्मिन्घनतरस्नेहं मुखे पत्राङ्कुराः स्त्रियः ।
कान्तेन रचिता ब्रह्मन्पीयते तेन जङ्गले ॥ २७
केशाः श्मशानवृक्षेषु यान्ति चामरलेखिकाम् ।
अस्थीन्युडुवदाभान्ति दिनैरवनिमण्डले ॥ २८
पिबन्ति पांसवो रक्तं क्रव्यादाश्चाप्यनेकशः ।
चर्माणि च शिवा भुङ्क्ते खं यान्ति प्राणवायवः ॥ २९
इत्येषा ललनाङ्गानामचिरेणैव भाविनी ।
स्थितिर्मया वः कथिता किं भ्रान्तिमनुधावथ ॥ ३०

---

कामकिण्वादिविकारवत्याः स्खलनकलहादिविकी[2]रिण्या वा ॥ ९ ॥ सम्यग्लीना मदमोहात्सुप्तप्रायाः । प्रबोधं विवेकजागरणम् ॥१०॥ नार्यः स्त्रियः दुष्कृताग्नीनां शिखा ज्वालाः । तदेव तद्धर्मैः रुपपादयति—केशेति । केशा एव कज्जलानि, केशान्कज्जलानि च धारयितुं शीलं यासाम् । दुःस्पर्शाः स्प्रष्टुमशक्याः । लोचनप्रियाः प्रियदर्शनाः । अतएव हि नरं तृणवद्दहन्ति ॥ ११ ॥ अतिदूरे संयमिन्यां दारुणं यथा स्यात्तथा ज्वलतामपि नरकाग्नीनामिहत्या अपि नार्यश्चारु इन्धनमिति कार्यकारणतः सरसा अपि नीरसा इति स्वतश्च विरोधाभासः। अथवा दारुणमित्यपीन्धनविशेषणमेव । तथाच तत्रापि स्वत एव विरोधाभासः । परिहारस्तु वासनादुष्टत्वात् सरसाः आपाततः, नीरसाः परमार्थतः । एवं चारु आपाततः, दारुणं फलत इति ॥ १२ ॥ यामिन्या आकारोऽन्धकारः स एव, स इव वा कबरी केशपाशो यस्याः । तरन्त्यो भ्रमन्त्यस्तारका नक्षत्राण्येव लोचनानि तानीव च तरत्तारके, चलत्कनीनिके वा लोचने यस्याः । एवमिन्दुबिम्बमेव, इन्दुबिम्बमिव वा वदनं यस्याः । कुसुमोत्कर एव, कुसुमोत्कर इव वा हासोऽस्या अस्तीति विग्रहः ॥ १३ ॥ शृङ्गारलीलाभिर्विलोलाः पुरुषा यस्याम् । अतएव तेषां कार्याणामवश्यकर्तव्यानां धर्मविवेकवैराग्यादीनां संहारस्य कारिणी । दीर्घयामिनीव व्यर्थमायुर्विनाशयेति भावः ॥ १४ ॥ न केवलं पुरुषार्थविघातिता अपित्वनर्थहेतुतापीत्याह—पुष्पेत्यादिद्वाभ्याम् । भ्रमरा इव, भ्रमरा एव वा अक्षिविलासास्तैराढ्या । एवं स्तनावेव स्तनाविव ॥१५॥ पुष्पकेसरैः पुष्पकेसराणीव वा । उन्मत्तानां कामोन्मादात्स्वसेविनां मूर्खाणां मूर्च्छामरणादिवैवश्यं ददाति ॥ १६ ॥ करभ्यत्र भल्लूकी । सा हि बिलस्थान्सर्पादीन्श्वासबलेनाकृष्य भक्षयतीति प्रसिद्धम् । तथा सत्कार्यैरलीकसत्कारैरुच्छ्वास आश्वासनं तावन्मात्रेण भुजङ्गानां विटानां दलने वित्तचित्तापहारेण विनाशे सोत्कण्ठया कान्तया जन्तुरुद्ध्रियते । वशीक्रियत इत्यर्थः ॥१७॥ विकीर्णाः प्रसारिताः । वागुरा जालानि ॥ १८ ॥ १९ ॥ बडिशं मत्स्यवेधनकण्टकस्तत्रत्या पिष्टपिण्डिका ॥२०॥ मन्दुरं मन्दुरा वाजिशाला ॥२१॥ इयं भोगभूमिर्ब्रह्माण्डलक्षणा इह संसारे परां दृढां संस्थितिं चिरस्थितिं संयाता प्राप्ता ॥ २२ ॥ सुसमुद्गिकया दृढसंपुटिकया । अलं पर्याप्तम् । प्रयोजनं नास्तीत्यर्थः ॥ २३ ॥ अवस्तुना तुच्छेन ॥ २४ ॥ विशरारुतां विशीर्णताम् ॥ २५ ॥ स्थूलैरसूक्ष्मदर्शिभिः । ललिता लालिताः । पितृभूमिषु श्मशानेषु ॥ २६ ॥ कर्पूरगोरोचनचन्दनादिकृतास्तिलकरचनाविशेषाः पत्राङ्कुराः । पीयते शुष्यते । 'पै शोषणे' । अकर्मकत्वाद्भावे लः ॥ २७ ॥ स्त्रियः केशाः लेख उल्लेख उत्प्रेक्षा सैव लेखिका ताम् । भस्मधूसरत्वाज्जीर्णचामरवदुत्प्रेक्ष्यतां यान्ति । उडुवन्नक्षत्रवत् ॥ २८ ॥ पिबन्ति शोषयन्ति । पांसवो धूल्यः । क्रव्यं मांसमदन्तीति क्रव्यादा अनेकशः सन्तीति शेषः । शिवा सृगाली ॥ २९ ॥ स्थितिः परिणतिः ॥ ३० ॥

---

१ वित्तकर्दम इति पाठः. २ विकारकारिण्या इति पाठः.

भूतपञ्चकसंघट्टसंस्थानं ललनाभिधम् ।
रसादभिपतत्वेतत्कथं नाम धियान्वितः ॥ ३१
शाखाप्रतानगहना कटुम्लफलमालिनी ।
सुतालोत्तालतामेति चिन्ता कान्तानुसारिणी ॥ ३२
कान्दिग्भूततया चेतो घनगर्धान्धमाकुलम् ।
परं मोहमुपादत्ते यूथभ्रष्टमृगो यथा ॥ ३३
शोच्यतां परमां याति तरुणस्तरुणीपरः ।
निबद्धः करिणीलोलो विन्ध्यखाते यथा गजः ॥ ३४
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ ३५
आपातमात्ररमणेषु सुदुस्तरेषु
भोगेषु नाहमलिपक्षतिचञ्चलेषु ।
ब्रह्मन्रमे मरणरोगजरादिभीत्या
शाम्याम्यहं परमुपैमि पदं प्रयत्नात् ॥ ३६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे स्त्रीजुगुप्सा नामैकविंशतितमः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः २२

श्रीराम उवाच ।
अपर्याप्तं हि बालत्वं बलात्पिबति यौवनम् ।
यौवनं च जरा पश्चात्पश्य कर्कशतां मिथः ॥ १
हिमाशनिरिवाम्भोजं वात्येव शरदम्बुकम्[1] ।
देहं जरा नाशयति नदी तीरतरुं यथा ॥ २
जर्जरीकृतसर्वाङ्गी जरा जरठरूपिणी ।
विरूपतां नयत्याशु देहं विषलवो यथा ॥ ३
शिथिलादीर्णसर्वाङ्गं[2] जराजीर्णकलेवरम् ।
समं पश्यन्ति कामिन्यः पुरुषं करभं यथा ॥ ४
अनायासकदर्थिन्या गृहीते जरसा जने ।
पलाय्य गच्छति प्रज्ञा सपत्न्येवाहताङ्गना ॥ ५
दासाः पुत्राः स्त्रियश्चैव बान्धवाः सुहृदस्तथा ।
हसन्त्युन्मत्तकमिव नरं वार्धककम्पितम् ॥ ६
दुष्प्रेक्ष्यं जरठं दीनं हीनं गुणपराक्रमैः ।
गृध्रो वृक्षमिवादीर्घं गर्धो ह्यभ्येति वृद्धकम् ॥ ७
दैन्यदोषमयी दीर्घा हृदि दाहप्रदायिनी ।
सर्वापदामेकसखी वार्धके वर्धते स्पृहा ॥ ८
कर्तव्यं किं मया कष्टं परत्रेत्यतिदारुणम् ।
अप्रतीकारयोग्यं हि वर्धते वार्धके भयम् ॥ ९
कोऽहं वराकः किमिव करोमि कथमेव च ।
तिष्ठामि मौनमेवेति दीनतोदेति वार्धके ॥ १०
कथं कदा मे किमिव स्वादु स्याद्भोजनं जनात्[3] ।

संघट्टनं संघट्टस्तत्कृतं संस्थानं संनिवेशम् । रसाद्रागाद्धियान्वितो बुद्धिमान्कथमभिपततु । 'अर्हे कृत्यतृचश्च' इति चकारेण लोडपि समुच्चीयत इति केचित् ॥३१॥ पारलौकिकं दुःखं कटुफलमैहिकशोकरागादिकं त्वीषत्सुखलवमिश्रत्वात्कट्वम्लम् । सुतालेत्यारण्यकलताविशेषः । तत्पक्षे शलाटूनां कटुता, वानानाम्म्लता । उत्तालतामूर्ध्वविस्तीर्णताम् ॥ ३२ ॥ आकुलमुक्तचिन्तयेति गम्यते । अतएव घनेन निबिडेन गर्धेन धनाभिलाषेणान्धम् । कां दिशं गमिष्यामि, क धनं लप्स्यामीत्येवंभूततया चेतो-मोहमुपादत्ते ॥३३॥ खाते गर्ते ॥३४॥ भवनं भूः संभवः ॥३५॥ पक्षतिः पक्षमूलम् । मरणजन्मजरादिभीत्या भोगेष्वहं न रमे इति संबन्धः । शाम्याम्युपरतोऽस्मि । उपैमीति वर्तमानसामीप्ये वर्तमानवत् ॥ ३६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे स्त्रीजुगुप्सा नामैकविंशतितमः सर्गः ॥ २१ ॥

शोकमोहवियोगार्तिविषादगदसंकुलम् ।
चिन्तापरिभवस्थानं वृद्धत्वमिह निन्द्यते ॥ १ ॥

ननु कामादिदोषप्राबल्यान्मास्तु यौवने सुखम्, वृद्धावस्थायां तु तदुपशान्तौ विनीतैः पुत्रपौत्रादिभिर्गृहे सेव्यमानस्य बहुतरं सुखं भविष्यतीत्याशङ्क्य तत्र दुःखस्थानानामानन्त्यं विस्तरेण विवक्षुः प्रथमं 'स्वकुलग्रासिसर्पाणां दया परकुले कुतः' इति न्यायेन कर्कशत्वमाह—**अपर्याप्त**मिति । अपर्याप्तमसंपूर्णक्रीडाकौतुकाद्यभिलाषे । पिबति ग्रसति । यौवनं च स्त्र्यादिभोगाभिलाषे अपर्याप्तमिति योज्यम् ॥१॥ पामराणां परमप्रेमास्पदसुखायतनस्य देहस्यैव शिथिलीकरणे क तत्र सुखप्रत्याशेत्याह—**हिमाशनिरिवे**त्यादिना । हिममशनिर्वज्रमिवेति हिमाशनिः । अम्बुकमम्बुकणं तृणाग्रस्थमिति यावत् ॥ २ ॥ जरठरूपिणीत्यौत्प्रेक्षिकम् । यदि स्वयं तथा न स्यात्कथमन्यांस्तथा कुर्यादिति । विषलवो भुक्त इति शेषः ॥ ३ ॥ समशब्दोऽत्र सर्वपर्यायः । कामिन्यो जराजीर्णकलेवरं सर्वं पुरुषं करभं उष्ट्रं यथा तथा पश्यन्ति । तदेवोपपादयति—**शिथिले**ति । शिथिलान्यादीर्णानि सर्वाङ्गानि यस्य तम् ॥४॥ अनायासेन विनैवायासम् । कदर्थयितुं दैन्यं प्रापयितुं शीलं यस्याः । आहता परिभूता ॥ ५ ॥ उन्मत्तकमिति कुत्सायां कन् ॥ ६ ॥ आदीर्घमतिदीर्घम् । गर्धोऽभिलाषातिशयः । वृक्षपक्षे सफलशाखाविटपविस्तारेण परेषां पक्ष्यन्तराणामाक्रमैराक्रमणैः ॥ ७ ॥ दैन्यदोषप्रचुरा ॥ ८ ॥ कष्टमिति दौर्मनस्यद्योतको निपातः ॥ ९ ॥ कोऽहमित्यादिर्दीनताया एवोल्लेखः । किंकथंशब्दौ साध्यसाधनचिन्तापरौ ॥१०॥ वार्धके जनान्प्राप्य । एषा उक्तलक्षणा अपरापि जरा चेतो दहतीति संबन्धः । इह पूर्व-

१ दम्बुजं इति पाठः. २ दीर्घसर्वाङ्गं इति पाठः. ३ जनादिति ल्यब्लोपे पञ्चमी.

इत्यजस्रं जरा चैषा चेतो दहति वार्धके ॥ ११
गर्धोऽभ्युदेति सोल्लासमुपभोक्तुं न शक्यते ।
हृदयं दह्यते नूनं शक्तिदौस्थ्येन वार्धके ॥ १२
जराजीर्णबकी यावत्कायक्लेशापकारिणी ।
रौति रोगोरगाकीर्णा कायद्रुमशिरःस्थिता ॥ १३
तावदागत एवाशु कुतोऽपि परिदृश्यते ।
घनान्ध्यतिमिराकाङ्क्षी मुने मरणकौशिकः ॥ १४
सायंसंध्यां प्रजातां वै तमः समनुधावति ।
जरां वपुषि दृष्ट्वैव मृतिः समनुधावति ॥ १५
जराकुसुमितं देहद्रुमं दृष्ट्वैव दूरतः ।
अध्यापतति वेगेन मुने मरणमर्कटः ॥ १६
शून्यं नगरमाभाति भाति च्छिन्नलतो द्रुमः ।
भात्यनावृष्टिमान्देशो न जराजर्जरं वपुः ॥ १७
क्षणान्निगरणायैव कासक्कणितकारिणी ।
गृध्रीवामिषमादत्ते तरसैव नरं जरा ॥ १८
दृष्ट्वैव सोत्सुकेवाशु प्रगृह्य शिरसि क्षणम् ।
प्रलुनाति जरा देहं कुमारी कैरवं यथा ॥ १९
सीत्कारकारिणी पांसुपरुषा परिजर्जरम् ।
शरीरं शातयत्येषा वात्येव तरुपल्लवम् ॥ २०
जरसोपहतो देहो धत्ते जर्जरतां गतः ।
तुषारनिकराकीर्णपरिम्लानाम्बुजश्रियम् ॥ २१
जरा ज्योत्स्नोदितैवेयं शिरःशिखरिपृष्ठतः ।
विकासयति संरब्धं वातकासकुमुद्वती ॥ २२
परिपक्कं समालोक्य जराक्षारविधूसरम् ।
शिरःकूश्माण्डकं[2] भुङ्क्ते पुंसां कालः किलेश्वरः ॥ २३
जराजह्नुसुतोद्युक्ता मूलान्यस्य निकृन्तति ।
शरीरतीरवृक्षस्य चलत्यायुषि सत्वरम् ॥ २४
जरामार्जारिका भुङ्क्ते यौवनाखुं तथोद्धता ।
परमुल्लासमायाति शरीरामिषगर्धिनी ॥ २५
काचिदस्ति जगत्यस्मिन्नामङ्गलकरी तथा ।
यथा जराक्रोशकरी देहजङ्गलजम्बुकी ॥ २६
कासश्वाससशीत्कारा दुःखधूमतमोमयी ।
जराज्वाला ज्वलत्येषा यस्यासौ दग्ध एव हि ॥ २७
जरसा वक्रतामेति शुक्लावयवपल्लवा ।
तात तन्वी तनुर्नृणां लता पुष्पानता यथा ॥ २८
जराकर्पूरधवलं देहकर्पूरपादपम् ।
मुने मरणमातङ्गो नूनमुद्धरति क्षणात् ॥ २९
मरणस्य मुने राज्ञो जराधवलचामरा ।
आगच्छतोऽग्रे निर्याति स्वाधिव्याधिपताकिनी ॥ ३०
न जिताः शत्रुभिः संख्ये प्रविष्टा येऽद्रिकोटरे ।
ते जराजीर्णराक्षस्या पश्याशु विजिता मुने ॥ ३१
जरातुषारवलिते शरीरसदनान्तरे ।
शक्नुवन्त्यक्षशिशवः स्पन्दितुं न मनागपि ॥ ३२
दण्डतृतीयपादेन प्रस्खलन्ती मुहुर्मुहुः ।
कासाधोवायुमुरजा जरा योषित्प्रनृत्यति ॥ ३३
संसारसंसृतेरस्या गन्धकुट्यां शिरोगता ।
देहयष्ट्यां जरानाम्नी चामरश्रीर्विराजते ॥ ३४

श्लोके च इवशब्दो विषयविसंवादद्योतनार्थः ॥११॥ भोक्तुं शक्तौ जरणाशक्तिस्तच्छक्तौ भोक्तुमशक्तिरित्यादिशक्तिदौस्थ्यम् ॥१२॥ कायस्य क्लेशैः पीडनैरपकारिणी । बक्या अपि स्वाश्रयद्रुमपीडकत्वं[1] प्रसिद्धम् । रोगलक्षणेनोरगेणाकीर्णा ग्रस्ता यावद्रौति रोदिति तावन्मरणकौशिकः कुतोऽप्यागत एव दृश्यत इति संबन्धः ॥ १३ ॥ घनमान्ध्यं मूर्च्छा तदेव तिमिरमन्धकारः ॥ १४ ॥ पूर्वार्धार्थो दृष्टान्तः । प्रजातां संभूताम् ॥ १५ ॥ अधि उपर्यापतति तद्विनाशायेति भावः ॥ १६ ॥ आभाति ईषच्छोभतेऽपि ॥ १७ ॥ कास एव क्कणितं ध्वनिस्तत्करणशीला । गृध्री आमिषमिव नरं तरसा वेगेन निगरणायैवादत्त इत्यन्वयः ॥ १८ ॥ प्रलुनाति विनाशयति । कुमारी बालिका । कैरवं कुमुदम् ॥ १९ ॥ वात्यात्र शिशिरर्तुवायुसमूहः । सा हि सीत्कारादि कारयति शरीरं, तरुपल्लवं च पांसुध्वस्तं कृत्वा विदारयत्येवं जरापि ॥ २० ॥ परिम्लानाम्बुजस्य श्रियं साम्यम् ॥ २१ ॥ जरैव ज्योत्स्ना कौमुदी । शिर एव शिखरिपृष्ठं पर्वतोर्ध्वदेशः । वातकासौ रोगौ तावेव कुमुद्वतीं कुमुदलतां संरब्धं सोद्योगं विकासयति ॥ २२ ॥ जरैव क्षारो लवणादिचूर्णं तेन विधूसरमुपस्कृतमिति यावत् । ईश्वरः स्वामी शिरःकूश्माण्डस्य । तेनैवोत्पाद्य वर्धितत्वात् ॥२३॥ जह्नुसुता गङ्गा । अविरामादुद्युक्तेव । आयुषि आयुःप्रवाहे सत्वरं चलति सति ॥ २४ ॥ यौवनमेवाखनति विषयबिलमित्याखुस्तं भुङ्क्ते तथा शरीरामिषस्य गर्धिनी भक्षणेच्छुः ॥ २५ ॥ जरैव देहजङ्गले जम्बुकी शिवा । आक्रोशो रोदनमारावश्च ॥२६॥ आर्द्रकाष्ठे दह्यमाने ज्वालायामपि सीत्कारः प्रसिद्धः ॥ २७ ॥ तन्वी अल्पा । तनुः शरीरम् ॥२८॥ कर्पूरपादपं कदलीतरुम् । उद्धरति उन्मूलयति ॥२९॥ आगच्छत आगमिष्यतः । वर्तमानसामीप्ये वर्तमानवत् । जरा धवलचामरं यस्याः । स्वा स्वीया आधिव्याधीनां पताकिनी सेना ॥ ३० ॥ अद्रिकोटरे दुष्प्रवेशे पर्वतविवरेऽपि ये धैर्येण प्रविष्टाः ॥ ३१ ॥ तुषारो हिमं तेन वलिते संकोचिते । अक्षाणीन्द्रियाण्येव शिशवो बालाः ॥ ३२ ॥ दण्डोऽवलम्बनयष्टिस्तद्रूपेण तृतीयपादेनोपलक्षिता । कासाधोवायू मुरजो वाद्यविशेषो यस्याः ॥ ३३ ॥ अस्याः प्रसिद्धायाः । संसाराख्यस्य[3] राज्ञः संसृतेर्व्यवहारस्य संबन्धिनी । गन्धयति रागादिभिर्वासयति चित्तं सभां चेति गन्धो विषयभोगः कस्तूर्यादिगन्धद्रव्यं च तस्य कुट्यां आश्रयभूतायां देहयष्ट्यां शिरोगता जरानाम्नी चामरश्रीर्विराजते । सौन्दर्यसौरभ्यमन्दवायुप्रसरादिभिरित्यर्थः ॥३४॥

१ पिडिकात्वं इति पाठः. २ कूश्माण्डेत्युभयत्र पाठः. ३ संसारा[illegible]ः इति पाठः.

जराचन्द्रोदयसिते शरीरनगरे स्थिते ।
क्षणाद्विकासमायाति मुने मरणकैरवम् ॥ ३५
जरासुधालेपसिते शरीरान्तःपुरान्तरे ।
अशक्तिरार्तिरापच्च तिष्ठन्ति सुखमङ्गनाः ॥ ३६
अभावोऽग्रेसरी यत्र जरा जयति जन्तुषु ।
कस्तत्रेह समाश्वासो मम मन्दमतेर्मुने ॥ ३७
किं तेन दुर्जीवितदुर्ग्रहेण
जरागतेनापि हि जीव्यते यत् ।
जराजगत्यामजिता जनानां
सर्वैषणास्तात तिरस्करोति ॥ ३८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे जराजुगुप्सा नाम द्वाविंशतितमः सर्गः ॥ २२ ॥

---

## त्रयोविंशः सर्गः २३

श्रीराम उवाच ।
विकल्पकल्पनानल्पजल्पितैरल्पबुद्धिभिः ।
भेदैरुद्धुरतां नीतः संसारकुहरे भ्रमः ॥ १
सतां कथमिवास्थेह जायते जालपञ्जरे ।
बाला एवात्तुमिच्छन्ति फलं मुकुरबिम्बितम् ॥ २
इहापि विद्यते येषां पेलवा सुखभावना ।
आखुस्तन्तुमिवाशेषं कालस्तामपि कृन्तति ॥ ३
न तदस्तीह यदयं कालः सकलघस्मरः ।
ग्रसते तज्जगज्जातं प्रोत्थाब्धिमिव वाडवः ॥ ४
समस्तसामान्यतया भीमः कालो महेश्वरः ।
दृश्यसत्तामिमां सर्वां कवलीकर्तुमुद्यतः ॥ ५
महतामपि नो देवः प्रतिपालयति क्षणम् ।
कालः कवलितानन्तविश्वो विश्वात्मतां गतः ॥ ६
युगवत्सरकल्पाख्यैः किंचित्प्रकटतां गतः ।
रूपैरलक्ष्यरूपात्मा सर्वमाक्रम्य तिष्ठति ॥ ७
ये रम्या ये शुभारम्भाः सुमेरुगुरवोऽपि ये ।
कालेन विनिगीर्णास्ते गरुडेनेव पन्नगाः ॥ ८
निर्दयः कठिनः क्रूरः कर्कशः कृपणोऽधमः ।
न तदस्ति यदद्यापि न कालो निगिरत्ययम् ॥ ९
कालः कवलनैकान्तमतिरत्ति गिरन्नपि ।
अनन्तैरपि लोकौघैर्नायं तृप्तो महाशनः ॥ १०

---

स्थिते जीविताशासरसीति शेषः ॥ ३५ ॥ सुधा चूर्णम् ॥ ३६ ॥ यत्र येषु जन्तुषु चतुर्विधशरीरेषु प्रथमं जरा जयत्यभिभवति । अग्रे च अभावो मृत्युः सरणं सरः सरोऽस्यास्तीति सरी । अवश्यमागन्तेत्यर्थः । 'अभावाग्रेसरी'ति पाठश्चेत्स्पष्टः । तत्र तेषु शरीरेषु मध्ये इहास्मिन् शरीरे मम कः समाश्वासो विस्रम्भः । ननु वसिष्ठादीनामपि तुल्यमेतदित्याशङ्क्याह—**मन्दमते**रिति । अतत्त्वज्ञस्येति यावत् ॥ ३७ ॥ दुर्जीविते दुःखजीवने दुर्ग्रहो दुराग्रहस्तेन किम् । व्यर्थमित्यर्थः । सर्वैषणाः सर्वानभिलाषान् ॥ ३८ ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे वैराग्यप्रकरणे जराजुगुप्सा नाम द्वाविंशतितमः सर्गः ॥ २२ ॥

रमयन्स्वविलासौघैः सर्वप्राणिक्रियाप्रियाम्[1] ।
गुणदोषबलोत्कर्षैः काल एकोऽत्र वर्ण्यते ॥ १ ॥

इत्थं भोग्यायाः श्रियो भोगतृष्णाया भोगावसरभूतबाल्याद्यवस्थानां च दोषप्रपञ्चनेन दुरन्तदुःखमात्रपर्यवसानोपपादनेन च स्वस्येहामुत्रार्थफलभोगविरागो दर्शितः । संप्रति कामादिस्वभावप्रपञ्चनमुखेन नित्यानित्यवस्तुविवेकं दर्शयितुं भूमिकामारचयति—**विकल्पे**ति । ममेदं भोग्यम्, अहमस्य भोक्ता, इमानि च तत्साधनानि, अनेनेदमित्थं संपाद्य चिरं भोक्ष्यामि, 'इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्' इत्याद्यनन्तमनोविकल्पकल्पनैरनल्पानि जल्पितानि व्यवहारवचनानि येषां तैः । अल्पे देहे आत्मबुद्धिरल्पेषु सुखलवेषु परमपुरुषार्थबुद्धिश्च येषां तैर्मूढजनैः । शत्रुमित्रोदासीनादिभेदैर्हेयोपादेयोपेक्ष्यादिभेदैस्तत्प्रयुक्तरागद्वेषादिभेदैश्च । संसरत्यस्मिन्निति संसारो ब्रह्माण्डं तस्य कुहरे छिद्रे भ्रमोऽन्यथाग्रहः । उद्धुरतामतिगुरुताम् । दुरुच्छेदतामिति यावत् । नीतः प्रापितः ॥ १ ॥ जालमिव दूरादप्याकृष्य बन्धका विषयाः पञ्जरमिव परिच्छिद्य बन्धको देहस्तयोः समाहारे । भ्रान्तिसिद्धत्वादेवावस्तुभूते इह संसारे सतां विवेकिनामास्था कथमिव जायते । तत्प्रकारे दृष्टान्तोऽप्यप्रसिद्ध इति सूचनायेवकारः । तदेव दृष्टान्तेन द्रढयति—**बाला एवे**ति । मुकुरे दर्पणे ॥ २ ॥ इह ईदृशेऽपि संसारे येषां पेलवा क्षुद्रा सुखभावना सुखाशा तामाखुर्बिलतृणाग्रात्कूपे लम्बमानं तन्मात्रावलम्बजिजीविषुकीटावलम्बिताग्रं लूतातन्तुमिवाशेषं निरवशेषं यथा स्यात्तथा ॥ ३ ॥ इहास्यां व्यवहारभूमौ जगति जातमुत्पन्नं तत्तादृशं वस्तु नास्ति यत्कालो न ग्रसत इति नञ आवृत्त्या संबन्धः । घस्मरो भक्षकः । चन्द्रोदयादिनिमित्तैः प्रोत्थमुपचितमब्धिं वाडवो वडवानलः ॥ ४ ॥ समस्तसामान्यतया सर्वपदार्थसाधारण्येन । काल एव महेश्वरः संहाररुद्रः ॥ ५ ॥ महतामपीति कर्मण एव शेषत्वविवक्षया षष्ठी । बलबुद्धिवैभवादिना महान्त्यपि भूतानि क्षणमपि न प्रतिपालयति न प्रतीक्षते । सद्य एव निहन्तीत्यर्थः ॥ ६ ॥ रूपैः क्रियोपाधिकरूपैः । आक्रम्य वशीकृत्य ॥ ७ ॥ ८ ॥ पाषाणादिवत्कठिनः, व्याघ्रादिवत्क्रूरः, क्रकचादिवत्कर्कश इति भेदः । निगिरति ग्रसति ॥ ९ ॥ कवलनविषय एवैकान्तम[illegible] । एकं गिरन्नपरमत्ति । 'गिरीनपी'ति पाठे स्पष्टम्

---

१ क्रियापराम् इति पाठः.

हरत्ययं नाशयति करोत्यत्ति निहन्ति च ।
कालः संसारनृत्तं हि नानारूपं यथा नटः ॥ ११
भिनत्ति प्रविभागस्थभूतबीजान्यनारतम् ।
जगत्यसत्तया बन्धाद्दाडिमानि यथा शुकः ॥ १२
शुभाशुभविषाणाग्रविलूनजनपल्लवः ।
स्फूर्जति स्फीतजनताजीवराजीवनीगजः ॥ १३
विरिञ्चिमूलब्रह्माण्डबृहद्देवफलद्रुमम् ।
ब्रह्मकाननमाभोगि परमावृत्य तिष्ठति ॥ १४
यामिनी भ्रमरापूर्णा रचयन्दिनमञ्जरीः ।
वर्षकल्पकलावल्लीर्न कदाचन खिद्यते ॥ १५
भिद्यते नावभग्नोऽपि दग्धोऽपि हि न दह्यते ।
दृश्यते नापि दृश्योऽपि धूर्तचूडामणिर्मुने ॥ १६
एकेनैव निमेषेण किंचिदुत्थापयत्यलम् ।
किंचिद्विनाशयत्युच्चैर्मनोराज्यवदाततः ॥ १७
दुर्विलासविलासिन्या चेष्टया कष्टपुष्टया ।
द्रव्यैकरूपकृद्रूपं जनमावर्तयन्स्थितः ॥ १८
तृणं पांसुं महेन्द्रं च सुमेरुं पर्णमर्णवम् ।
आत्मंभरितया सर्वमात्मसात्कर्तुमुद्यतः ॥ १९
क्रौर्यमत्रैव पर्याप्तं लुब्धतात्रैव संस्थिता ।
सर्वदौर्भाग्यमत्रैव चापलं वापि दुःसहम् ॥ २०
प्रेरयँल्लीलयार्केन्दू क्रीडतीव नभस्तले ।
निक्षिप्तलीलायुगलो निजे बाल इवाङ्गणे ॥ २१
सर्वभूतास्थिमालाभिरापादवलिताकृतिः ।
विलसत्येव कल्पान्ते कालः कलितकल्पनः ॥ २२
अस्योड्डामरवृत्तस्य कल्पान्तेऽङ्गविनिर्गतैः ।
प्रस्फुरत्यम्बरे मेरुर्भूर्जत्वगिव वायुभिः ॥ २३
रुद्रो भूत्वा भवत्येष महेन्द्रोऽथ पितामहः ।
शक्रो वैश्रवणश्चापि पुनरेव न किंचन ॥ २४
धत्तेऽजस्रोत्थितोद्ध्वस्तान्सर्गानमितभास्वरान् ।
अन्यान्दधद्दिवानक्तं वीचीरब्धिरिवात्मनि ॥ २५
महाकल्पाभिधानेभ्यो वृक्षेभ्यः परिशातयन् ।
देवासुरगणान्पक्कान्फलभारानिव स्थितः ॥ २६
कालोऽयं भूतमशकघुंघुमानां प्रपातिनाम् ।
ब्रह्माण्डोदुम्बरौघानां बृहत्पादपतां गतः ॥ २७
सत्तामात्रकुमुद्वत्या चिज्ज्योत्स्नापरिफुल्लया ।
वपुर्विनोदयत्येकं क्रियाप्रियतमान्वितः ॥ २८

॥ १० ॥ हरणादि यत्किंचिद्भुवनादौ प्रसिद्धं तत्सर्वं तत्तत्कर्तृरूपेण स्थितः काल एव करोतीति भावः ॥ ११ ॥ प्रविभागो व्याकृतावस्था तत्स्थान्यण्डजादिचतुर्विधभूतबीजानि असत्तया बन्धात् नाशेन असत्त्वापादनात् भिनत्ति विदार्य भक्षयतीत्युत्प्रेक्षा । दृष्टान्तः स्पष्टः ॥१२॥ स्फीता अभिमानाद्युपचिता या जनता जनसमूहास्तेषां जीवराजी जीवसमूहः सैव वनी महद्वनं तत्रत्यो गजः कालः । 'राजीविनी'ति पाठे तु कमलिनी तस्या विनाशने गज इत्यर्थः । तदनुरूपं विशिनष्टि—**शुभाशुभे**ति । स्फूर्जति गर्जति ॥ १३ ॥ विरिञ्चिरपञ्चीकृतभूतात्मा मूलं येषां तथाविधा ब्रह्माण्डा एव [3]महान्तो देवतारूपफलविशिष्टा द्रुमा यस्मिंस्तथाभूतम् । वेषः कृत्रिम आभोगो मायिकं जगद्रूपं तदस्यास्तीत्याभोगि । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इति श्रुतेः सप्रपञ्चमित्यर्थः । ब्रह्मैव काननं दुस्तरत्वादरण्यं परमत्यर्थमावृत्य सर्वतो व्याप्य कालस्तिष्ठति । कालोदर एव सर्ववस्तूनामुत्पत्तिस्थितिविनाशदर्शनादिति भावः । 'विरिञ्चिमजब्रह्माण्डं महद्दिवफलद्रुमम्' इति पाठस्यैव सार्वत्रिकत्वे तु विरिञ्चिमुक्तब्रह्माण्डकारणं मायाशबलमिति यावत् । अजाश्चतुर्मुखाः प्रतिब्रह्माण्डं तस्यैव लीलाविग्रहास्तत्सहितं ब्रह्माण्डम् । जातावेकवचनम् । तदेव महत् । दिवा देवाः । गुणाभावश्छान्दसः । तदुपलक्षितचतुर्विधभूतान्येव तत्तत्कर्मफलयुक्ता द्रुमा यस्मिंस्तथाविधम् । आभोगि कृत्रिमवेषवत् ईषद्भोगयुक्तं सर्वतः सर्पव्याप्तप्रायं वा ब्रह्मकाननमावृत्य तिष्ठतीत्यर्थः ॥१४॥ यामिन्यो रात्रयस्तद्रूपैर्भ्रमरैरापूर्णाः । दिनान्यहान्येव मञ्जर्यो यासु ताः । वर्षः संवत्सरः कल्पो ब्रह्माहः कलास्त्रिंशत्काष्ठाश्चेत्येवंरूपा वल्लीर्लता रचयन् कालपुरुषो न कदाचन खिद्यते । खेदाद्विरमतीति यावत् ॥१५॥ तत्तत्कार्यात्मना अवभग्नो दग्धो दृश्योऽपि वा स्वरूपेण न भङ्गादि प्राप्नोतीत्यर्थः ॥ १६ ॥ १७ ॥ तत्तद्युगानुरूपचेष्टैव स्वकीयदुर्विलासेषु विलासिनी प्राणिनां कष्टेनैव पुष्टा कालस्य भार्या तया द्रव्यैर्भौतिकदेहेन्द्रियादिभिस्तादात्म्याध्यासादेकरूपकृत् रूपमज्ञातात्मस्वरूपं यस्य तं जनं जीवं स्वर्गनरकादिष्वावर्तयन्स्थितः ॥१८॥ आत्मंभरितया स्वकुक्षिपूरणमात्रस्वभावेन । आत्मसात्स्वाधीनं कर्तुम् । ग्रसितुमिति यावत् ॥ १९ ॥ पर्याप्तं समग्रम् । अत्रास्मिन्काले ॥ २० ॥ निक्षिप्तं पुनःपुनरास्फालितं लीलार्थं कन्दुकयुगलं येन ॥ २१ ॥ कलितकल्पनो नाशितप्राणिविभागः ॥ २२ ॥ उड्डामरं निरङ्कुशं वृत्तं चरित्रं यस्य । अङ्गेभ्यो विनिर्गतैर्वायुभिर्मेरुर्भूर्जत्वगिव सर्वतो विशीर्यमाणः । ॥ २३ ॥ २४ ॥ अन्यान्सर्गान्दधद्धारयन्नेवार्थादन्यानजस्रमुत्थितानुद्ध्वस्तांश्च सर्गान्धत्ते । अजस्रोत्थितो नित्योद्युक्त इति कालविशेषणं वा । वीचीस्तरङ्गान् ॥ २५ ॥ शातयन् पातयन् ॥ २६ ॥ भूतानि प्राणिन एव मशकास्तैर्घुंघुमानां घुंघुमिति ध्वनतां ब्रह्माण्डोदुम्बरफलौघानाम् ॥ २७ ॥ चित् सर्वाधिष्ठानचैतन्यमेव ज्योत्स्ना चन्द्रिका तत्संनिधानमात्रेण परितः फुल्लया व्यक्ततां प्राप्तया जगत्सत्तासामान्यलक्षणया कुमुद्वत्या कुमुदिन्या विनोदहेतुभूतया तत्तत्प्राणिशुभाशुभक्रियालक्षणप्रियतमया अन्वितः सन्नेकमद्वितीयं वपुः स्वरूपं विनोदयति । विनोदो हि [4]व्यवहारकौतुकैः कालक्षेपस्तत्र कालस्य विहर्तुः

१ न च भग्नोऽपि इति पाठः. २ चापि इति पाठः. ३ मूलस्य बृहच्छब्दपर्याया महान्त इति. ४ विहारकौतुकैः इति पाठः.

अनन्तापारपर्यन्तबद्धपीठं निजं वपुः ।
महाशैलवदुत्तुङ्गमवलम्ब्य व्यवस्थितः ॥ २९
क्वचिच्छ्यामतमःश्यामं क्वचित्कान्तियुतं ततम् ।
द्वयेनापि क्वचिद्रिक्तं स्वभावं भावयन् स्थितः ॥ ३०
संलीनासंख्यसंसारसारया स्वात्मसत्तया ।
उर्व्येव भारघनया निबद्धपदतां गतः ॥ ३१
न खिद्यते नाद्रियते नायाति न च गच्छति ।
नास्तमेति न चोदेति महाकल्पशतैरपि ॥ ३२
केवलं जगदारम्भलीलया घनहेलया ।
पालयत्यात्मनात्मानमनहंकारमाततम् ॥ ३३
यामिनीपङ्ककलितां दिनकोकनदावलीम् ।
मेघभ्रमरिकामात्मसरस्यारोपयन्स्थितः ॥ ३४
गृहीत्वा कृपणः कृष्णां रजनीं जीर्णमार्जनीम् ।
आलोककनकक्षोदानाहरत्यभितो गिरिम् ॥ ३५
संचारयन्क्रियाङ्गुल्या कोणकेष्वर्कदीपिकाम् ।
जगत्सद्मनि कार्पण्यात्क्व किमस्तीति वीक्षते ॥ ३६
प्रेक्ष्याहर्विनिमेषेण सूर्याक्ष्णा पाकवन्त्यलम् ।
लोकपालफलान्यत्ति जगज्जीर्णवनादयम् ॥ ३७

जगज्जीर्णकुटीकीर्णानर्पयत्युग्रकोटरे ।
क्रमेण गुणवल्लोकमणीन्मृत्युसमुद्गके ॥ ३८
गुणैरापूर्यते यैव लोकरत्नावली भृशम् ।
भूषार्थमिव तामङ्गे कृत्वा भूयो निकृन्तति ॥ ३९
दिनहंसानुसृतया निशेन्दीवरमालया ।
तारकेसरयाजस्रं चपलो वलयत्यलम् ॥ ४०
शैलार्णद्युधराशृङ्गजगदूर्णायुसौनिकः ।
प्रत्यहं पिबते प्रेक्ष्य तारारक्तकणानपि ॥ ४१
तारुण्यनलिनीसोम आयुर्मातङ्गकेसरी ।
न तदस्ति न यस्यायं तुच्छातुच्छस्य तस्करः ॥ ४२
कल्पकेलिविलासेन पिष्टपातितजन्तुना ।
अभावो भावभासेन रमते स्वात्मनात्मनि ॥ ४३
कर्ता भोक्ताथ संहर्ता स्मर्ता सर्वपदं गतः ॥ ४४
सकलमप्यकलाकलितान्तरं
सुभगदुर्भगरूपधरं वपुः ।
प्रकटयन्सहसैव च गोपयन्
विलसतीह हि कालबलं नृपु ॥ ४५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे कालापवादो नाम त्रयोविंशतितमः सर्गः ॥ २३ ॥

---

कालान्तराप्रसिद्धेः स्ववपुरेव विनोदयतीति भावः ॥ २८ ॥ अनन्तेऽपरिच्छिन्ने अनन्तायां भुवि च अतएवापारपर्यन्ते पूर्वोत्तरावधिशून्ये ब्रह्मणि प्रदेशे च बद्धपीठं प्रतिष्ठितम् ॥ २९ ॥ क्वचिन्निशीथाञ्जनादौ श्यामैस्तमोभिस्तम इव वा श्यामम् । क्वचिद्दिनराकामण्यादौ । क्वचित्कुड्यकुसूलादौ । रिक्तं शून्यम् । स्वभावं स्वकार्यम् ॥ ३० ॥ संलीनानामसंख्यप्राणिसंसाराणां सारवत्परिशिष्टया स्वात्मसत्तया स्वरूपस्थित्या सर्वाधारत्वाद्भारघनया निबद्धपदः प्रतिष्ठितस्तद्भावम् ॥ ३१ ॥ ३२ ॥ घन[2]हेलया अनास्थया । पालयति न विनाशयति । अनहंकारं निरभिमानं यथा स्यात्तथा आततं विस्तीर्णम् ॥ ३३ ॥ यामिनी रात्रिः सैव मालिन्यात्पङ्कस्तस्मात्कलितामुद्गताम् । दिनान्येव कोकनदावली रक्तोत्पलसमूहः स्वात्मा कालस्वरूपमेव सरस्तस्मिन् ॥ ३४ ॥ कृपणो लुब्धोऽत एव नूतनसंमार्जन्यन्तरसंपादनासमर्थः । सकृन्मार्जनेन बहुतरकनकलाभेऽप्यसंतुष्टश्चेति भावः । गिरिं कनकाचलम् । अतएव कनकक्षोदान् गिरेः शीर्णानिति गम्यते ॥ ३५ ॥ प्रकारान्तरेण तस्य कार्पण्यमाह—**संचारयन्निति** । कोणकेषु दिक्कोणेषु ॥ ३६ ॥ सूर्याक्ष्णोऽनुरूपोऽहरेव विनिमेषस्तेन ॥ ३७ ॥ जगदेव जीर्णा कुटी तृणगृहं तत्र कीर्णान्प्रमादात्पतितान् । मृत्युरेव समुद्गकः संपुटकस्तस्मिन् ॥ ३८ ॥ गुणैस्तन्तुभिर्विद्याविनयादिभिश्च । लोको जनः अङ्गे स्वावयवे कृतत्रेतादौ । यद्यपि सर्वं निकृन्तति तथापि गुणवतां विनाश एव प्रसिद्धिमायातीति श्लोकद्वये तदुक्तिः ॥ ३९ ॥ ताराणि दीर्घाणि नक्षत्राण्येव वा केसराणि यस्यामुत्पलमालायाम् । हंसनिवेशस्यानौचित्यद्योतनाय चपल इति । वलयति वलयवद्धारयति । पञ्चत्वङ्गुलिकवत्सरकरप्रकोष्ठे इति शेषः ॥ ४० ॥ अर्णा अर्णवाः । द्यौर्लोकः । शैलादयश्चत्वारः प्रधानत्वाच्छृङ्गाणि येषां जगल्लक्षणानामूर्णायूनां मेषाणां सूना हिंसास्थानं तत्र भवः सौनिको हिंसकः कालो नभोङ्गणविकीर्णास्तारा नक्षत्राण्येव रक्तकणास्तानपि प्रेक्ष्य प्रत्यहमहन्यहनि पिबते लेढीत्युत्प्रेक्षा । आत्मनेपदं छान्दसम् ॥ ४१ ॥ तुच्छस्य क्षुद्रस्यातुच्छस्य महतश्च वस्तुजातस्य मध्ये यस्यायं तस्करो न भवति तन्नास्तीति संबन्धः ॥ ४२ ॥ पिष्टाः संचूर्णिता मृत्युमुखे पातिताश्च जन्तवो येन तथाभूतेन । कल्पः संवर्तस्तद्रूपेण केलिविलासेन । न विद्यन्ते भावा यस्य तथाभूतः सन् सुषुप्ताविव भावरूपज्ञानावभासकेन स्वात्मना स्वाधिष्ठानब्रह्मचैतन्येन तस्मिन्नेवात्मनि रमते विश्राम्यति, न ततः पृथग्विभज्यत इत्यर्थः ॥ ४३ ॥ एवं प्रलये विश्रम्याथ पुनः सर्गकाले विश्वस्य कर्ता भोक्ता संहर्ता स्मर्तेत्यादिसर्ववस्तुभावं गतः स्वयमेव भवतीति शेषः ॥ ४४ ॥ न कलाभिर्बुद्धिकौशलैः कलितं केनापि निश्चितमान्तरं रहस्यं यस्य तत् । तथा सुभगं पुण्यफलभोगानुरूपं तद्विपरीतं दुर्भगं यद्रूपं तस्य धरं सकलमपि वपुः प्रकटयन् गोपयन्नुपसंहरंश्च विलसति । काल इति शेषः । हीति प्रसिद्धौ । इह जगति कालस्य बलं नृपु प्रसिद्धमेवेत्यर्थः ॥ ४५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे कालापवादो नाम त्रयोविंशतितमः सर्गः ॥ २३ ॥

१ भ्रमरिकां स्वात्म इति पाठः. २ घनेति क्वचिन्न पठ्यते.

## चतुर्विंशः सर्गः २४

श्रीराम उवाच ।

अस्योड्डामरलीलस्य दूरास्तसकलापदः ।
संसारे राजपुत्रस्य कालस्याकलितौजसः ॥ १
अस्यैवाचरतो दीनैर्मुग्धैर्भूतमृगव्रजैः ।
आखेटकं जर्जरिते जगज्जङ्गलजालके ॥ २
एकदेशोल्लसच्चारुवडवानलपङ्कजा ।
क्रीडापुष्करिणी रम्या कल्पकालमहार्णवः ॥ ३
कटुतिक्ताम्लभूताद्यैः सदधिक्षीरसागरैः ।
तैरेव तैः पर्युषितैर्जगद्भिः कल्यवर्तनम् ॥ ४
चण्डी चतुरसंचारा सर्वमातृगणान्विता ।
संसारवनविन्यस्ता व्याघ्री भूतौघघातिनी ॥ ५
पृथ्वी करतले पृथ्वी पानपात्री रसान्विता ।
कमलोत्पलकह्लारलोलजालकमालिता ॥ ६
विरावी विकटास्फोटो नृसिंहो भुजपञ्जरे ।
सटाविकटपीनांसः कृतः क्रीडाशकुन्तकः ॥ ७
अलाबुवीणामधुरः शरद्व्योमलसच्छविः ।
देवः किल महाकालो लीलाकोकिलबालकः ॥ ८
अजस्रस्फूर्जिताकारो वान्तदुःखशरावलिः ।
अभावनामकोदण्डः परिस्फुरति सर्वतः ॥ ९
अनुत्तमस्त्वधिकविलासपण्डितो
भ्रमच्चलन्परिविलसन्विदारयन् ।
जरज्जगज्जनितविलोलमर्कटः
परिस्फुरद्वपुरिह काल ईहते ॥ १०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे कालविलासो नाम चतुर्विंशतितमः सर्गः २४

---

## पञ्चविंशः सर्गः २५

श्रीराम उवाच ।

अत्रैव दुर्विलासानां चूडामणिरिहापरः ।
करोत्यत्तीति लोकेऽस्मिन्दैवं कालश्च कथ्यते ॥ १

स एव वर्ण्यते कालश्चण्डीप्रियतमान्वितः ।
मृगयाकौतुकाविष्टराजपुत्रतयाधुना ॥ १ ॥

सांप्रतं तमेव कालं मृगयाकौतुकविहारिमहाराजपुत्रभावेन रूपयितुं प्रतिजानीते—अस्येति । उड्डामरा उद्भटा लीला यस्य । दूरे अस्ता निरस्ताः सकलापदो यस्य । अकलितौजसः अचिन्त्यपराक्रमस्य । राजते प्रसिद्धसूर्यचन्द्रादीनपि प्रकाशयन् दीप्यत इति राजा परं ब्रह्म तस्य अनादिमायामहिषीसंबन्धलब्धस्वरूपत्वाज्जगद्यौवराज्यसंपद्भोक्तृत्वाच्च पुत्रस्य कालस्य चरित्रं वर्ण्यत इति शेषः ॥ १ ॥ अस्यैव कल्पकालमहार्णवः क्रीडापुष्करिणीकृत इत्युत्तरत्र संबन्धः । मुग्धैरज्ञैः । भूतान्येव मृगव्रजास्तैः । वध्यानामपि वधकविनोदहेतुत्वात्तृतीया । आखेटकं मृगयाविनोदम् ॥ २ ॥ अर्थाज्जगज्जङ्गलस्यैकदेशे ॥ ३ ॥ भूतपदं प्रत्येकं संबध्यते । दधिक्षीरादिसागरसहितैस्तैरेव प्रत्यहमेकरूपैः पर्युषितैश्चिरस्थितैर्जगद्भिः कल्यवर्तनं प्रातरशनं तस्येत्यनुषज्यते । कटुतिक्तदध्यादिसहितपर्युषितप्रातराशो द्रविडेषु प्रसिद्धः ॥४॥ तस्यानुरूपां प्रियामाह—चण्डीति । व्याघ्रीव भूतौघघातिनी संसारवने विन्यस्ता विहर्तुं विनियुक्ता चण्डी कालरात्रिस्तस्य प्रियेति शेषः ॥५॥ तस्य पानपात्रीमाह—पृथ्वीति । पृथ्वी भूरेव तस्य करतले पृथ्वी महती पानपात्री । आसवसौगन्ध्यशोभार्थं पानपात्र्या अपि कमलोत्पलादिजालसमावृतत्वं संभवति ॥६॥ तस्य भुजावष्टब्धे पञ्जरे नृसिंहोऽवतारो दानवादिवधक्रीडार्थं वाजाख्यः शकुन्तकः पक्षी कृतः । स कीदृक् । विरावी गर्जनशीलः । विकटो दुःसह आस्फोटो भुजास्फालनध्वनिर्यस्य । सटाभिः केसरैर्विकटो दुर्दर्शः पीनोंऽसः स्कन्धो यस्य ॥७॥ महाकालः पाषाणाख्यायिकायां वक्ष्यमाणः संहारभैरवो लीलार्थं कोकिलबालकः कृतः । सोऽपि कीदृक् । तस्य ब्रह्माण्डमालाधारित्वान्नानालाबुघटितवीणेव स्वरूपतो ध्वनितश्च मधुरः । यद्यपि तत्स्वरूपध्वनी अन्येषां भीषणौ तथापि ततोऽप्युग्रशीलानां दृष्ट्या मधुर एवेति तथोक्तिः । शरद्व्योमेव श्यामलस्वच्छकान्तिः ॥ ८ ॥ स्फूर्जितं टंकारध्वनिः । वान्ता निःसारिता दुःखशरावलिर्येन तस्य अभावः संहारस्तन्नामा कोदण्डो धनुः सर्वतः परिस्फुरति ॥ ९ ॥ भ्रमत्स्वपि लक्ष्येषु स्वयं चलन्नप्यमोघबाणत्वाल्लक्ष्यं विदारयन्नत एव सर्वेभ्यो लक्ष्यवेधिभ्यः परि उपरि विलसन्नतएव जरति जगति जनिताः संपादिता विलोला व्याकुला मर्कटा मर्कटवच्चपलवृत्तयो विषयलम्पटजना येन स तथाविधः कालो राजकुमारः परिस्फुरद्वपुर्विराजमानशरीर ईहते मृगयाविहारेण चेष्टते । मर्कटत्वेन रूपणं तु प्रक्रमविशेषणाननुगुणत्वादनभिप्रेतम् ॥१०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे कालविलासो नाम चतुर्विंशतितमः सर्गः ॥ २४ ॥

अपारस्यात्र कालस्य क्रियातत्फलरूपिणः ।
चित्रो नियतिकान्तस्य नृत्यविस्तर ईर्यते ॥ १ ॥

एवं महाकालं राजपुत्रत्वेनोपवर्ण्य तदुपाधिभूतं क्रियात्मकं

१ मृगया वर्ण्यते इति पाठः. १ अपारस्यात्र इति पाठः.

क्रियामात्रादृते यस्य स्वपरिस्पन्दरूपिणः।
नान्यदालक्ष्यते रूपं न कर्म न समीहितम्॥ २
तेनेयमखिला भूतसंततिः परिपेलवा।
तापेन हिममालेव नीता विधुरतां भृशम्॥ ३
यदिदं दृश्यते किंचिज्जगदाभोगि मण्डलम्।
तत्तस्य नर्तनागारमिहासावतिनृत्यति॥ ४
तृतीयं च कृतान्तेति नाम बिभ्रत्सुदारुणम्।
कापालिकवपुर्मत्तं दैवं जगति नृत्यति॥ ५
नृत्यतो हि कृतान्तस्य नितान्तमिव रागिणः।
नित्यं नियतिकान्तायां मुने परमकासिता॥ ६
शेषः शशिकलाशुभ्रो गङ्गावाहश्च तौ त्रिधा।
उपवीते अवीते च उभौ संसारवक्षसि॥ ७
चन्द्रार्कमण्डले हेमकटकौ करमूलयोः।
लीलासरसिजं हस्ते ब्रह्मन्ब्रह्माण्डकर्णिका॥ ८
ताराबिन्दुचितं लोलपुष्करावर्तपल्लवम्।
एकार्णवपयोधौ तमेकमम्बरमम्बरम्॥ ९
एवंरूपस्य तस्याग्रे नियतिर्नित्यकामिनी।
अनस्तमितसंरम्भमारम्भैः परिनृत्यति॥ १०
तस्या नर्तनलोलाया जगन्मण्डपकोटरे[2]।
अरुद्धस्पन्दरूपाया आगमापायचञ्चुरे॥ ११
चारुभूषणमङ्गेषु देवलोकान्तरावली।
आपातालं नभोलम्बं कबरीमण्डलं बृहत्॥ १२
नरकाली च मञ्जीरमाला कलकलोज्ज्वला।
प्रोता दुष्कृतसूत्रेण पातालचरणे स्थिता॥ १३
कस्तूरिकातिलककं क्रियासंख्योपकल्पितम्।
चित्रितं चित्रगुप्तेन यमे वदनपट्टके॥ १४
कालास्यं समुपादाय कल्पान्तेषु किलाकुला।
नृत्यत्येषा पुनर्देवी स्फुटच्छैलघनारवम्॥ १५
पश्चात्प्रालम्बविभ्रान्तकौमारभृतबर्हिभिः।
नेत्रत्रयबृहद्रन्ध्रभूरिभाङ्कारभीषणैः॥ १६
लम्बलोलजटाचन्द्रविकीर्णहरमूर्धभिः।
उच्चरच्चारुमन्दारगौरीकबरचामरैः॥ १७
उत्ताण्डवाचलाकारभैरवोदरतुम्बकैः।
रणत्सशतरन्ध्रेन्द्रदेहभिक्षाकपालकैः॥ १८
शुष्कशारीरखट्वाङ्गभरैरापूरिताम्बरम्।
भीषयत्यात्मनात्मानं सर्वसंहारकारिणी॥ १९

कालं तद्विनोदाय द्वैरूप्येण नर्तकत्वेन परिकल्प्य वर्णयितुमुपक्रमते—**अत्रैवे**त्यादिना। दुष्टो विलासो येषां तेषु चूडामणिरिव श्रेष्ठः। अपरः पूर्वोक्तादन्यः। दीव्यति व्यवहरति प्राणिनां कर्मफलदानेनेति दैवं फलावस्थः कृतान्तः। कलयत्यवश्यं फलं संपादयतीति क्रिया काल इत्येक एव पूर्वोत्तरावस्थाभेदेन द्वेधा कथ्यत इत्यर्थः॥१॥ तत्र द्वितीयं सूचीकटाहन्यायेन प्रथमं वर्णयति—**क्रिये**ति। क्रियात्र फलसिद्धिः। समीहितमभिलषितम्॥२॥ भूतसंततिः प्राणिनिकायः। तापेनातपेन। हिममाला नीहारपटली। विधुरतां विनाशितां। सर्वस्याप्यनर्थस्य स्वकर्मकृतत्वादिति भावः॥ ३॥ आभोगि विस्तीर्णं जगन्मण्डलं नर्तनागारं नृत्यशाला। रागद्वेषादिप्रयुक्तप्रवृत्त्यतिशयस्य सर्वप्राणिप्रत्यक्षत्वान्न नृत्यमस्य विस्तरेण वर्ण्यते॥ ४॥ आद्यं शास्त्रैकगम्यत्वाद्विश्वासदार्ढ्याय विस्तरेण वर्णयितुमुपक्रमते—**तृतीय**मित्यादिना। पूर्वसर्गोक्तापेक्षया तृतीयम्। कापालिकवपुः कापालिकवेषम्॥ ५॥ नियतिः कृतस्य कर्मणः फलावश्यंभावनियमस्तस्यामतिरागिणः। अवश्यं फलं प्रयच्छत इत्यर्थः॥६॥ तस्याङ्गेषु भूषणान्याह—**शेष** इति। त्रिधा प्रसिद्धो गङ्गावाहो गङ्गाप्रवाहः। चकारेण समुच्चितयोरेकशेषेण ताविति परामर्शः। अवीते प्राचीनावीते। संसरत्यस्मिन्निति संसारस्त्रैलोक्यं तदेव वक्षः॥७॥ करमूलयोः प्रकोष्ठयोः। ब्रह्माण्डकर्णिका मेरुः॥८॥ बिन्दवश्चित्रबिन्दवः। पुष्करावर्तौ संवर्तमेघौ पल्लवौ दशे यस्य। धौतं क्षालितमम्बरमाकाशमेवाम्बरं वस्त्रम्। कापालिकानां मध्यच्छिद्रकण्ठावसक्तैककन्थाम्बरधारणप्रसिद्धेः॥९॥ अनस्तमितसंरम्भमविरतप्रयत्नम्। प्राणिसभ्यभोगानुकूलकार्यारम्भैः॥१०॥ अरुद्धस्पन्दरूपायाः अप्रतिबद्धक्रियाशक्तेः। नृत्यद्रष्टृप्राणिनामागमापायाभ्यां चञ्चुरे चञ्चले। चरतेः पचाद्यचि यङ्लुकि 'चरफलोश्च' इत्यभ्यासस्य नुक् 'उत्परस्यातः' इत्युत्वम्॥ ११॥ देवसहिता लोकान्तराणां भुवनभेदानामावलिस्तस्या नियतेरङ्गेषु चारु भूषणं भवतीति प्रतिवाक्यं कल्प्यम्। आपातालं पातालपर्यन्तं नभस्तस्यालम्बं लम्बमानं कबरीमण्डलं श्यामत्वात्॥१२॥ कलकलै रोदनकोलाहलैरुज्ज्वला नरकाग्निभिर्दीप्यमाना या नरकाली तस्याः पाताललक्षणे चरणे स्थिता मञ्जरीमाला। मञ्जरीशब्देन पादकिङ्किण्यो लक्ष्यन्ते। अन्यथा सूत्रप्रोतत्वानुपपत्तेः॥ १३॥ प्राणिकर्मसौरभ्यप्रकटनहेतुत्वात्कस्तूरीभूतेन चित्रगुप्तेन करणेन यमरूपे वदनावयवभूते पट्टके। फलके ललाटे इति यावत्। यमे हि चित्रगुप्तो विराजते। पादललाटयोराद्यन्तावयवयोः क्लृप्त्यैव तद्वदितरावयवक्लृप्तिर्यथायोगमर्थाद्बोध्या॥ १४॥ कालस्य पत्युः आस्यं लक्षणया मुखविलासभ्रूभङ्गकटाक्षादिसूचितमभिप्रायम्। स्फुटतां शैलानां घना आरवाः शब्दा यस्मिन्कर्मणि तत्तथा॥ १५॥ तस्या नृत्यप्रकारमेव प्रपञ्चयति षड्भिः। पश्चात्पृष्ठतः। बर्हिभिर्मयूरैः। सर्वेषां तृतीयान्तानां राजते इति पञ्चमस्थेन संबन्धः। भीषणैरित्यन्तस्य हरमूर्धभिरित्युत्तरेणान्वयः। भाङ्कारो ध्वनिविशेषः॥ १६॥ चन्द्रान्तबहुव्रीहिघटितः कर्मधारयः। कबराः केशास्तद्रूपैश्चामरैः॥१७॥ अचलाः पर्वतास्तदाकारैस्तुम्बकैरलाबुपात्रैः। तैः कापालिकव्यवहारस्य प्रसिद्धत्वात्। शतशब्दस्य कृतैकशेषस्य बहुवचनान्तस्य बहुव्रीहिस्तेन सप्तोत्तरसहस्रलाभः॥ १८॥ शारीरं शरीरावयव-

१ वपुर्भूतं इति पाठः, २ न्मण्डलकोटरे इति पाठः, ३ [illegible]

...क्षित्वेन सप्ताधिकसहस्रच्छिद्रत्वान्नवच्छिद्रत्वेन प्रसिद्धेभ्यो देहेभ्यो

विश्वरूपशिरश्चक्रचारुपुष्करमालया ।
ताण्डवेषु विवलगन्त्या महाकल्पेषु राजते ॥ २०
प्रमत्तपुष्करावर्तडमरोड्डामरारवैः ।
तस्याः किल पलायन्ते कल्पान्ते तुम्बुरादयः ॥ २१
नृत्यतोऽन्तः कृतान्तस्य चन्द्रमण्डलभासिनः ।
तारकाचन्द्रिकाचारुव्योमपिच्छावचूलिनः ॥ २२
एकस्मिञ्छ्रवणे दीप्ता हिमवानस्थिमुद्रिका ।
अपरे च महामेरुः कान्ता काञ्चनकर्णिका ॥ २३
अत्रैव कुण्डले लोले चन्द्रार्कौ गण्डमण्डले ।
लोकालोकाचलश्रेणी सर्वतः कटिमेखला ॥ २४
इतश्चेतश्च गच्छन्ती विद्युद्वलयकर्णिका ।
अनिलान्दोलिता भाति नीरदांशुकपट्टिका ॥ २५
मुसलैः पट्टिशैः प्रासैः शूलैस्तोमरमुद्गरैः ।
तीक्ष्णैः क्षीणजगद्वान्तकृतान्तैरिव संभृतैः ॥ २६

संसारबन्धनादीर्घे पाशे कालकरच्युते ।
शेषभोगमहासूत्रप्रोते मालास्य शोभते ॥ २७
जीवोल्लसन्मकरिकारत्नतेजोभिरुज्ज्वला ।
सप्ताब्धिकङ्कणश्रेणी भुजयोरस्य भूषणम् ॥ २८
व्यवहारमहावर्ता सुखदुःखपरम्परा ।
रजःपूर्णतमःश्यामा रोमाली तस्य राजते ॥ २९
एवंप्रायः स कल्पान्ते कृतान्तस्ताण्डवोद्भवाम् ।
उपसंहृत्य नृत्येहां सृष्ट्वा सह महेश्वरम् ॥ ३०
पुनर्लास्यमयीं नृत्यलीलां सर्गस्वरूपिणीम् ।
तनोतीमां जराशोकदुःखाभिभवभूषिताम् ॥ ३१
भूयः करोति भुवनानि वनान्तराणि
लोकान्तराणि जनजालककल्पनां च ।
आचारचारुकलनामचलां चलां च
पङ्क्त्याद्यथार्भकजनो रचनामखिन्नः ॥ ३२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे कृतान्तविलसितं नाम पञ्चविंशतितमः सर्गः ॥ २५ ॥

---

## षड्विंशः सर्गः २६

श्रीराम उवाच ।
वृत्तेऽस्मिन्नेवमेतेषां कालादीनां महामुने ।
संसारनाम्नि कैवास्था मादृशानां वदत्विह ॥ १
विक्रीता इव तिष्ठाम एतैर्दैवादिभिर्वयम् ।

भूतं पृष्ठास्थि । भीषयति भापयतीव अन्येषां भयार्थम् ॥१९॥ विश्वरूपाणि नानाकाराणि यानि शिरश्चक्राणि मस्तकवृन्दानि तान्येव पुष्करमाला तया विविधं वलगन्त्या भ्रमन्त्या ॥ २० ॥ पुष्करावर्ताख्याः संवर्तमेघा एव डमरो डमरुकं तस्योड्डामरारवैरुद्भटशब्दैः । तुम्बुरादयो गन्धर्वाः ॥२१॥ इत्थं नियतेः सपरिकरं नृत्यमुपवर्ण्य तद्भर्तुरपि तद्वर्णयन्भूषणान्याह-**नृत्यत** इत्यादिना । अन्तः प्रागुक्तनृत्यशालान्तः । चन्द्रमण्डलेन वक्ष्यमाणकुण्डलभूतेन भासिनः शोभमानस्य । तारकाभिश्चन्द्रिकया च तारकालक्षणचन्द्रप्रतिकृतिभिश्च चारु मनोहरं व्योमैव पिच्छं तेनावचूलिनो भूषितकेशस्य कृतान्तस्य श्रवणे इत्युत्तरेणान्वयः ॥२२॥ एकस्मिन्दक्षिणे श्रवणे कर्णे । अस्थिमयी मुद्रिका मुद्रिकाकारं कुण्डलं कापालिकानुरूपम् । अपरे वामे । कर्णिका कर्णभूषणं, कुण्डलमिति यावत् ॥ २३ ॥ अत्र अनयोरेव कर्णयोः । श्रेणीति शृङ्गबाहुल्यात्, कल्पब्रह्माण्डभेदाद्वा ॥ २४ ॥ विद्युद्वलयकर्णिका कर्णिकाकृति कङ्कणम् । नीरदा मेघा एव नानावर्णत्वाद्वस्त्रपट्टादिपटच्चरघटिता कन्था ॥ २५ ॥ क्षीणेभ्यो जगद्भ्यः पूर्वसर्गेभ्यो वान्तैर्निर्गतैः कृतान्तैर्मृत्युभिः संभृतैर्मिलितैरिव स्थितैर्मुसलादिभिर्विरचिता अस्य माला शोभते इत्युत्तरेणान्वयः ॥ २६ ॥ शेषस्य नागराजस्य भोगः शरीरम् । आयुधभृच्छरीरसामान्योपलक्षणमेतत् । प्राथमिकमुसलसंबन्धाच्छेषग्रहणम् । तदेव महासूत्रं तत्र प्रोत इव संबद्धे कालस्य पूर्वोक्तराजपुत्रस्य करादेवाच्युते संसरणशीलस्य जीवमृगसङ्घस्य बन्धनाय आमुक्ते पाशे ग्रथिता माला अस्य कृतान्तस्य कण्ठे शोभते ॥ २७ ॥ मकरिकादिलाञ्छनान्यन्येषां कङ्कणेषु निर्जीवानि प्रसिद्धानि तद्वैलक्षण्यार्थं जीवोल्लसदिति ॥ २८ ॥ व्यवहाराः शास्त्रीयाः स्वाभाविकाश्च त एव महान्तो लक्षणभूता रोमावर्ताः । रजस्तमसी प्रकृतिगुणौ ॥ २९ ॥ ताण्डवस्योद्भवो यस्यास्तथाविधां नृत्येहां गात्रविक्षेपेच्छामुपसंहृत्य, चिरं विश्रम्येति यावत् । महेश्वरैर्ब्रह्मादिभिः सहितं पुनः सृष्ट्वा इमां नृत्यलीलां तनोतीत्युत्तरेण संबन्धः ॥३०॥ लास्यमयीमभिनयप्रचुराम् ॥३१॥ आचाराणां श्रौतस्मार्तादिसत्कर्मणां चारुकलनां सम्यक्प्रवृत्तिम् । अचलां कृतत्रेतयोः, चलां कलिद्वापरयोः । रचनां क्रीडापुत्रिकादिरूपाम् ॥३२॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे कृतान्तविलसितं नाम पञ्चविंशतितमः सर्गः ॥ २५ ॥

इह प्रपञ्च्यते दोषैर्भूरिसंसारदुर्दशा ।
कालादिपारतन्त्र्येण वैराग्यस्योपपत्तये ॥ १ ॥

करोत्वेवं कालः, किं ते तत इत्याशङ्क्य कालादिसर्ववस्तुषु स्वस्य दोषदर्शनं प्रपञ्चयिष्यंस्तत्फलं वैराग्यरूपानास्थासंपत्तिं दर्शयति—**वृत्त** इत्यादिना । एवमुक्तरूपे । वृत्ते चरित्रे । आस्था आश्वासः ॥ १ ॥ दैवं प्राक्तनं कर्म आदिः प्रधानं

---

१ तुम्बरादयः इति पाठः. २ जगद्वातकृतान्त इति पाठः. ३ महेश्वरैः इति पाठः. ४ भवत्विह इति पाठः. ५ आदीर्घे इत्यस्य आमुक्ते इत्यादिफलितोऽर्थः इति पाठः.

मुने प्रपञ्चरचनैर्मुग्धा वनमृगा इव ॥ २
एषोऽनार्यसमाम्नायः कालः कवलनोन्मुखः ।
जगत्यविरतं लोकं पातयत्यापदर्णवे ॥ ३
दहत्यन्तर्दुराशाभिर्देवो दारुणचेष्टया ।
लोकमुष्णप्रकाशाभिर्ज्वालाभिर्दहनो यथा ॥ ४
धृतिं विधुरयत्येषा मर्यादारूपवल्लभा ।
स्त्रीत्वात्स्वभावचपला नियतिर्नियतोन्मुखी ॥ ५
ग्रसतेऽविरतं भूतजालं सर्प इवानिलम् ।
कृतान्तः कर्कशाचारो जरां नीत्वाऽजरं वपुः ॥ ६
यमो निर्घृणराजेन्द्रो नार्तं नामानुकम्पते ।
सर्वभूतदयोदारो जनो दुर्लभतां गतः ॥ ७
सर्वा एव मुने फल्गुविभवा भूतजातयः ।
दुःखायैव दुरन्ताय दारुणा भोगभूमयः ॥ ८
आयुरत्यन्तचपलं मृत्युरेकान्तनिष्ठुरः ।
तारुण्यं चातितरलं बाल्यं जडतया हृतम् ॥ ९
कलाकलङ्कितो लोको बन्धवो भवबन्धनम् ।
भोगा भवमहारोगास्तृष्णाश्च मृगतृष्णिकाः ॥ १०
शत्रवश्चेन्द्रियाण्येव सत्यं यातमसत्यताम् ।
प्रहरत्यात्मनैवात्मा मनसैव मनो रिपुः ॥ ११
अहंकारः कलङ्काय बुद्धयः परिपेलवाः ।
क्रिया दुष्फलदायिन्यो लीलाः स्त्रीनिष्ठतां गताः ॥ १२
वाञ्छाविषयशालिन्यः सञ्चमत्कृतयः क्षताः ।
नार्यो दोषपताकिन्यो रसा नीरसतां गताः ॥ १३
वस्त्ववस्तुतया ज्ञातं दत्तं चित्तमहंकृतौ ।
अभाववेधिता भावा भावान्तो नाधिगम्यते ॥ १४
तप्यते केवलं साधो मतिराकुलितान्तरा ।
रागरोगो विलसति विरागो नोपगच्छति ॥ १५
रजोगुणहता दृष्टिस्तमः संपरिवर्धते ।
न चाधिगम्यते सत्त्वं तत्त्वमत्यन्तदूरतः ॥ १६
स्थितिरस्थिरतां याता मृतिरागमनोन्मुखी ।
धृतिर्वैधुर्यमायाता रतिर्नित्यमवस्तुनि ॥ १७
मतिर्मान्द्येन मलिना पातैकपरमं वपुः ।
ज्वलतीव जरा देहे प्रतिस्फुरति दुष्कृतम् ॥ १८
यत्नेन याति युवता दूरे सज्जनसंगतिः ।
गतिर्न विद्यते काचित्क्वचिन्नोदेति सत्यता ॥ १९
मनो विमुह्यतीवान्तर्मुदिता दूरतां गता ।
नोज्ज्वला करुणोदेति दूरादायाति नीचता ॥ २०
धीरताऽधीरतामेति पातोत्पातपरो जनः ।
सुलभो दुर्जनाश्लेषो दुर्लभः सत्समागमः ॥ २१
आगमापायिनो भावा भावना भवबन्धनी ।
नीयते केवलं क्वापि नित्यं भूतपरम्परा ॥ २२
दिशोऽपि हि न दृश्यन्ते देशोऽप्यन्यापदेशभाक् ।

येषां तैरेतैः प्रागुक्तैश्चतुर्भिः शब्दादिविषयप्रपञ्चरचनैर्मुग्धा मोहिताः ॥ २ ॥ अनार्यैः सम आम्नायश्चरित्राभ्यासो यस्य । अविरतमसमाप्तभोगजीवितादितृष्णं, संततमिति वा । समासोक्त्या अनार्यः शिष्टैरपरिगृहीतः समाम्नायो बौद्धाद्यसच्छास्त्रोपदेशो यस्य । कवलनोन्मुख उदरभरणमात्रपरः । कालनामा धूर्तः असन्मार्गप्रवर्तनेन लोकं जनमित्यर्थान्तरमपि गम्यते ॥ ३ ॥ दुराशाभिरन्तर्दहन्ति । दारुणचेष्टया दुश्चारित्र्येण । बहिरपीति शेषः । तथा दृष्टान्तेऽपि योज्यम् ॥ ४ ॥ कालमर्यादारूपकृतान्तस्य वल्लभा प्रिया इन्द्रियाणां पराक्प्रवृत्तिनियमलक्षणा नियतिर्नियतेषु समाधिपरेषु उन्मुखी उद्युक्ता तेषां धृतिं धैर्यं विधुरयति वियोजयति । तत्र हेतुः—**स्त्रीत्वादिति** ॥ ५ ॥ अजरं तरुणं वपुर्जरां नीत्वा प्रापय्य ॥ ६ ॥ निर्दयराजानामिन्द्रः स्वामी । अतिनिर्दय इति यावत् ॥ ७ ॥ सर्वा ब्रह्मान्ता अपि भूतजातयः प्राणिजातयो विरक्तदशा फल्गुविभवास्तुच्छैश्वर्याः । भोगभूमयो विषया लोका वा ॥ ८ ॥ जडतया मोहेन । हृतमपनीतम् ॥ ९ ॥ कलनं कला विषयानुसंधानम् ॥ १० ॥ सत्यं परमार्थत आत्मेति गृहीतं देहादि । तस्य विवेके असत्यतां अपरमार्थात्मताम् । यद्वा सत्यं सत्यज्ञानादिलक्षणं वस्तु असत्यताम् । मन एव बन्धहेतुत्वाद्रिपुर्यस्य तथाभूत आत्मा मनोभिमानान्मनोभूत आत्मानं मनसैवात्मना प्रहरतीव दुःखीकरोति ॥ ११ ॥ अहंकारोऽभिमानप्रधान-



मन्तःकरणं कलङ्काय लाञ्छनाय । स्वरूपदूषणायेति यावत् । बुद्धयोऽध्यवसायात्मिकास्तद्वृत्तयो बहिर्मुखत्वात्परिपेलवा मृदवः स्वरूपनिष्ठा दार्ढ्यशून्याः । क्रियाः प्रवृत्तयः शारीराः । लीला मानसविलासाः ॥१२॥ सचमत्कृतय आत्मस्फूर्तिचमत्काराः । दोषाणां पताकिन्यो ध्वजिन्यः । रसा अनुरागाः । नीरसतामनुरागशून्यताम् । विषया अस्पृहणीयतामिति वा ॥ १३ ॥ वस्तु अलौकिकं कार्यकारणसंघातात्मना ज्ञातम् । चित्तं दत्तम् । अभिनिवेशितमिति यावत् । अभाववेधिता नाशग्रस्ताः । भावानामनित्यपदार्थानामन्तोऽवसानभूमिरात्मा ॥ १४ ॥ नोपगच्छतीत्यादिर्लोके अतिदौर्लभ्योक्तिर्नतु स्वस्य प्रक्रमविरोधात् ॥ १५ ॥ अधिगम्यते लभ्यते ॥ १६ ॥ स्थितिर्जीवनम् । अवस्तुनि फल्गुविषये ॥ १७ ॥ मान्द्येन मौर्ख्येण । पातैकपरमं नाशैकपर्यवसितम् ॥ १८ ॥ ननु धार्मिकस्य तव कथं गतिर्न विद्यते तत्राह—**क्वचिदिति** । स्वर्गादिगतेरप्यनित्यतया स्वप्नसुखप्रायत्वादिति भावः ॥ १९ ॥ मुदिता परसुखदर्शनसंतोषः । नीचताशब्देन तद्धेतुरसूयादिर्गृह्यते ॥ २० ॥ अधीरतामस्थिरताम् । पातोत्पातौ मरणजन्मनी, ऊर्ध्वाधोगमने वा । आश्लेषः सङ्गः ॥२१॥ भावना वासना । भावेष्वपगतेष्वपि सा नापैतीति भवे बन्धनी बन्धहेतुः । भूतपरम्परा प्राणिनिकायः । कालेनेति शेषः ॥२२॥ दिशो यासु कालाद्वयं नास्ति तादृश्यः । तदेव प्रपञ्चयति—**देश इति** । देशः सद्व्यवहारोपदेशः ।

शैला अपि विशीर्यन्ते कैवास्था मादृशे जने ॥ २३
अद्यते सत्तयापि द्यौर्भुवनं चापि भुज्यते ।
धरापि याति वैधुर्यं कैवास्था मादृशे जने ॥ २४
शुष्यन्त्यपि समुद्राश्च शीर्यन्ते तारका अपि ।
सिद्धा अपि विनश्यन्ति कैवास्था मादृशे जने ॥ २५
दानवा अपि दीर्यन्ते ध्रुवोऽप्यध्रुवजीवितः ।
अमरा अपि मार्यन्ते कैवास्था मादृशे जने ॥ २६
शक्रोऽप्याक्रम्यते वक्रैर्यमोऽपि हि नियम्यते ।
वायुरप्येत्यवायुत्वं कैवास्था मादृशे जने ॥ २७
सोमोऽपि व्योमतां याति मार्तण्डोऽप्येति खण्डताम् ।
मग्नतामग्निरप्येति कैवास्था मादृशे जने ॥ २८
परमेष्ठ्यपि निष्ठावान्ह्रियते हरिरप्यजः ।
भवोऽप्यभावमायाति कैवास्था मादृशे जने ॥ २९
कालः संकाल्यते येन नियतिश्चापि नीयते ।
खमप्यालीयतेऽनन्तं कैवास्था मादृशे जने ॥ ३०
अश्राव्यावाच्यदुर्दर्शतत्त्वेनाज्ञातमूर्तिना ।
भुवनानि विडम्ब्यन्ते केनचिद्भ्रमदायिना ॥ ३१
अहंकारकलामेत्य सर्वत्रान्तरवासिना ।
न सोऽस्ति त्रिषु लोकेषु यस्तेनेह न बाध्यते ॥ ३२
शिलाशैलकवप्रेषु साश्वभूतो दिवाकरः ।
वनपाषाणवन्नित्यमवशः परिचोद्यते ॥ ३३
धरागोलकमन्तस्थसुरासुरगणास्पदम् ।
वेष्ट्यते धिष्ण्यचक्रेण पक्वाक्षोटमिव त्वचा ॥ ३४
दिवि देवा भुवि नराः पातालेषु च भोगिनः ।
कल्पिताः कल्पमात्रेण नीयन्ते जर्जरां दशाम् ॥ ३५
कामश्च जगदीशानरणलब्धपराक्रमः ।
अक्रमेणैव विक्रान्तो लोकमाक्रम्य वल्गति ॥ ३६
वसन्तो मत्तमातङ्गो मदैः कुसुमवर्षणैः ।
आमोदितककुप्चक्रश्चेतो नयति चापलम् ॥ ३७
अनुरक्ताङ्गनालोललोचनालोकिताकृति ।
स्वस्थीकर्तुं मनः शक्तो न विवेको महानपि ॥ ३८
परोपकारकारिण्या परार्तिपरितप्तया ।
बुद्ध एव सुखी मन्ये स्वात्मशीतलया धिया ॥ ३९
उत्पन्नध्वंसिनः कालवडवानलपातिनः ।
संख्यातुं केन शक्यन्ते कल्लोला जीविताम्बुधौ ॥ ४०
सर्वे एव नरा मोहाद्दुराशापाशपाशिनः ।
दोषगुल्मकसारङ्गा विशीर्णा जन्मजङ्गले ॥ ४१

संक्षीयते जगति जन्मपरम्परासु
लोकस्य तैरिह कुकर्मभिरायुरेतत् ॥
आकाशपादपलताकृतपाशकल्पं
येषां फलं नहि विचारविदोऽपि विद्मः ॥ ४२

यद्वा—दिशति प्रयच्छति प्राणिभ्योऽवकाशमिति देश इति । व्यपदेशादन्यं विरुद्धमपदेशं व्यवहारम् । खस्यैव निरवकाशत्वमिति यावत् ॥ २३ ॥ द्यौराकाशोऽपि सत्तया सन्मात्रस्वभावेनेश्वरेणाद्यते ॥ २४ ॥ सिद्धा ज्ञानातिरिक्तैर्योगमन्त्ररसायनादिभिः ॥ २५ ॥ २६ ॥ वक्रैराक्रम्यते चर्व्यते । नितरां यम्यते उपरमं प्राप्यते ॥ २७ ॥ व्योमतां शून्यताम् ॥ २८ ॥ निष्ठा परिसमाप्तिः । ह्रियते संह्रियते ॥ २९ ॥ कालः प्रागुक्तस्त्रिविधः । खमत्र बहिरावरणाकाशः ॥ ३० ॥ अश्राव्यं श्रोत्रेन्द्रियाविषयः । अवाच्यं वागगम्यं दुर्दर्शं चक्षुराद्यगम्यं च तत्त्वं सूक्ष्मं रूपं यस्य । मूर्तिः स्थूलं रूपम् । विडम्ब्यन्ते स्वात्मन्येव मायया प्रदर्श्यन्ते । तत्त्वमाच्छाद्य कल्पितमेव प्रदर्शयतीत्यर्थः ॥ ३१ ॥ अहंकारकलामभिमानांशमेत्य प्राप्य स्थितेषु मध्ये इति शेषः ॥ ३२ ॥ सर्वबाधकत्वोपपादनाय तस्य निरङ्कुशं स्वातन्त्र्यमाह—**शिले**त्यादित्रिभिः । साश्वोऽश्वसहितो रथस्तद्भावं प्राप्तः । 'य आदित्ये तिष्ठन्' इत्यादिश्रुतेः । स्वाधिरूढेनेश्वरेण प्रेर्यमाणः शिलाशैलवप्रादिदुर्गमप्रदेशेषु किरणाश्वपादैः संचरन्निव स्थितो दिवाकरो रथवदुत्प्रेक्ष्यते । वनं जलं योग्यतया पर्वतशिखराद्वेगेन प्रवहत्तेन यथा वर्तुलाः स्फटिकादिपाषाणा अधोधः प्रेर्यन्ते तद्वदवशोऽस्वतन्त्रः । सूर्यादीनामपि मरुत्प्रवाहेणोह्यमानत्वादिति भावः ॥ ३३ ॥ धरा भूमिः सैव गोलकम् । ज्योतिःशास्त्रे तथा प्रसिद्धेः । धिष्ण्यं देवानामायतनभूतं चक्रं ज्योतिश्चक्रं तेन वेष्ट्यते परितो व्याप्यते । अक्षोटं फलविशेषः । युगावर्तेषु भूमेर्दाहप्लवनादिविकारेऽप्याकल्पं ज्योतिश्चक्रस्याविनाशाद्दार्ढ्यसूचनाय पक्वेति विशेषणम् ॥ ३४ ॥ कल्पमात्रेण संकल्पमात्रेण । तथाचात्यन्तपारवश्यमपि जगतो महान् दोष इति भावः ॥ ३५ ॥ दोषान्तराण्यप्याह—**काम** इत्यादिना । अक्रमेण अनुचितप्रकारेण । आक्रम्य वशीकृत्य । नियन्तुरीश्वराद्बिभेति चेन्न विश्रृङ्खलः स्यात् । नासौ तथेत्याह—**जगदीशाने**ति ॥ ३६ ॥ वसन्त एव मत्तमातङ्गः कुसुमवर्षणमेव मदवर्षणमिति व्यस्तरूपकम् । चापलमिति भयोन्मादभावद्वयसंभेदः ॥ ३७ ॥ ३८ ॥ बुद्धः प्रबुद्धतत्त्वः पुरुषः । बोधश्चातिदुर्लभ इति भावः ॥ ३९ ॥ ध्वंसित्वे हेतुः—**काले**ति । भावा इति शेषः ॥ ४० ॥ पूर्वोक्तदोषलक्षणेषु गुल्मकेषु स्थिताः सारङ्गा मृगाः पक्षिणो वा दुराशापाशेन पाशिनो बद्धाः सन्तो जन्मजङ्गले विशीर्णा इति संबन्धः ॥ ४१ ॥ तैरुक्तदोषप्रयुक्तैः कुकर्मभिः काम्यनिषिद्धाचरणैरायुः संक्षीयते । फलं स्वर्गनरकादि । आकाशे चेत्पादपस्तत्र लतापि स्यात्तत्कृतकण्ठपाशोल्लम्बनसदृशमसारं निरालम्बनदुःखं पतनावसानस्थितिकमित्यर्थः । आस्तां तन्निवृत्त्युपायो दूरे, तच्चिन्तापि

१ दोषयुक्तैः इति पाठः.

अद्योत्सवोऽयमृतुरेष तथेह यात्रा
ते बन्धवः सुखमिदं सविशेषभोगम् ।
इत्थं मुधैव कलयन्सुविकल्पजाल-
मालोलपेलवमतिर्गलतीह लोकः ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे देवदुर्विलासवर्णनं नाम षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः २७

श्रीराम उवाच ।

अन्यच्च ताताऽतितरामरम्ये
मनोरमे चेह जगत्स्वरूपे ।
न किंचिदायाति तदर्थजातं
येनातिविश्रान्तिमुपैति चेतः ॥ १
बाल्ये गते कल्पितकेलिलोले
मनोमृगे दारदरीषु जीर्णे ।
शरीरके जर्जरतां प्रयाते
विदूयते केवलमेव लोकः ॥ २
जरातुषाराभिहतां शरीर-
सरोजिनीं दूरतरे विमुच्य ।
क्षणाद्गते जीवितचञ्चरीके
जनस्य संसारसरोऽवशुष्कम् ॥ ३
यदा यदा पाकमुपैति नूनं
तदा तदेयं रतिमातनोति ।
जराभराऽनल्पनवप्रसूना
विजर्जरा कायलता नराणाम् ॥ ४
तृष्णानदी सारतरप्रवाह-
ग्रस्ताखिलानन्तपदार्थजाता ।
तटस्थसंतोषसुवृक्षमूल-
निकाषदक्षा वहतीह लोके ॥ ५
शारीरनौश्चर्मनिबन्धबद्धा
भवाम्बुधावालुलिता भ्रमन्ती ।
प्रलोड्यते पञ्चभिरिन्द्रियाख्यै-
रधोभवन्ती मकरैरधीरा ॥ ६
तृष्णालताकाननचारिणोऽमी
शाखाशतं काममहीरुहेषु ।
परिभ्रमन्तः क्षपयन्ति कालं
मनोमृगा नो फलमाप्नुवन्ति ॥ ७
कृच्छ्रेषु दूरास्तविषादमोहाः
स्वास्थ्येषु नोत्सिक्तमनोभिरामाः ।
सुदुर्लभाः संप्रति सुन्दरीभि-
रनाहतान्तःकरणा महान्तः ॥ ८
तरन्ति मातङ्गघटातरङ्गं
रणाम्बुधिं ये मयि ते न शूराः ।
शूरास्त एवेह मनस्तरङ्गं
देहेन्द्रियाम्भोधिमिमं तरन्ति ॥ ९
अक्लिष्टपर्यन्तफलाभिरामा
न दृश्यते कस्यचिदेव काचित् ।

दुर्लभेत्याह—नहीति ॥ ४२ ॥ तत्प्रमोषसामग्री तु प्रतिक्षणमतिसुलभेत्याह—अद्येति । गलति विशीर्यते ॥ ४३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे देवदुर्विलासवर्णनं नाम षड्विंशः सर्गः ॥ २६ ॥

उक्तानुक्तेषु भावेषु निःश्रेयसविरोधिषु ।
विस्तरेण पुनर्दोषा वैराग्यायेह कीर्तिताः ॥ १ ॥

प्रत्येकमुक्तेष्वनुक्तेषु च भावेषु समुच्चित्य दोषान्तराणि प्रपञ्चयन्स्वचित्तविश्रान्तिहेत्वलाभं दर्शयति—अन्यच्चेत्यादिना । अन्यच्च शृण्विति शेषः । आपाततो मनोरमे वस्तुतस्त्वरम्ये जगत्स्वरूपे येन लब्धेन चेतोऽतिविश्रान्तिं पूर्णकामतामुपैति तत्तादृशं किंचिदप्यर्थजातं नायाति चेतसि, ततोऽन्यच्च तत्त्वं नायाति न लभ्यत इति वार्थः ॥ १ ॥ दारा एव दर्यो गिरिगुहाः । विशेषेण दूयते उपतप्यते । केवलं पुरुषार्थसाधनशून्यतया व्यर्थायुःक्षपणेनेत्यर्थः ॥ २ ॥ जीवितं जीवनं स एव चञ्चरीको भ्रमरः । संसारोऽत्रैहिकसमारम्भस्तदेव सरः ॥ ३ ॥ रतिं प्रीतिमातनोति । मृत्योरिति शेषः । नराणां काय एव लता वल्ली ॥ ४ ॥ सारतरो वेगवत्तरो बलवत्तरो वा मूलनिकाषो वप्रनिकृन्तनं तत्र दक्षा समर्था ॥ ५ ॥ चर्मणा निबन्धनेन आच्छादनेन बद्धा । चर्ममयी तरिर्दक्षिणदेशे प्रसिद्धा । ऊर्मिभिरालुलिता व्याकुलिता स्वतश्च लघुत्वाद्भ्रमन्ती अतएवाधोभवन्ती मज्जनोन्मुखी इन्द्रियग्राहैरपि प्रलोड्यते । यतोऽधीरा न विद्यन्ते धीरा विवेकधीमन्तो वैराग्यधैर्यशालिनो वा जीवा यस्यां तथाविधा ॥ ६ ॥ लताप्रधानं काननं लताकाननम् । शाखाशतं परिभ्रमन्त इति विशेषणान्मृगाः, अत्र शाखामृगाः कालमायुः क्षपयन्ति ॥ ७ ॥ कृच्छ्रेषु आपत्सु । स्वास्थ्येषु संपत्सु । नोत्सिक्तेनागर्वितेन मनसा अभिरामाः । नञर्थको नशब्दोऽप्यस्ति तस्य समासः ॥ ८ ॥ घटाः समूहास्त एव तरङ्गा यस्मिन् । ये तरन्ति ते मयि शौर्योत्कर्षविमर्शपरे सति न शूरा नोत्कृष्टशूराः । मद्दृष्ट्येति यावत् । ये देहेन्द्रियाम्भोधिं वर्तमानं विवेकवैराग्यादिना भाविनं च मूलाज्ञानोच्छेदेन तरन्त्यतिक्रामन्ति त एव शूराः । तच्च दुर्लभमुपायदौर्लभ्यादिति भावः ॥ ९ ॥ ननु कर्मैव तत्रोपा-

क्रियादुराशाहतचित्तवृत्ति-
यामेत्य विश्रान्तिमुपैति लोकः ॥ १०

कीर्त्या जगद्दिक्कुहरं प्रतापैः
श्रिया गृहं सत्त्वबलेन लक्ष्मीम् ।
ये पूरयन्त्यक्षतधैर्यबन्धा
न ते जगत्यां सुलभा महान्तः ॥ ११

अप्यन्तरस्थं गिरिशैलभित्ते-
र्वज्रालयाभ्यन्तरसंस्थितं वा ।
सर्वं समायान्ति ससिद्धिवेगाः
सर्वाः श्रियः सन्ततमापदश्च ॥ १२

पुत्राश्च दाराश्च धनं च बुद्ध्या
प्रकल्प्यते तात रसायनाभम् ।
सर्वं तु तन्नोपकरोत्यथान्ते
यत्रातिरम्या विषमूर्च्छनैव ॥ १३

विषादयुक्तो विषमामवस्था-
मुपागतः कायवयोवसाने ।
भावान्स्मरन्स्वानिह धर्मरिक्तान्
जन्तुर्जरावानिह दह्यतेऽन्तः ॥ १४

कामार्थधर्माप्तिकृतान्तराभिः
क्रियाभिरादौ दिवसानि नीत्वा ।
चेतश्चलद्बर्हिणपिच्छलोलं
विश्रान्तिमागच्छतु केन पुंसः ॥ १५

पुरोगतैरप्यनवाप्तरूपै-
स्तरङ्गिणीतुङ्गतरङ्गकल्पैः ।
क्रियाफलैर्दैववशादुपेतै-
र्विडम्ब्यते भिन्नरुचिर्हि लोकः ॥ १६

इमान्यमूनीति विभावितानि
कार्याण्यपर्यन्तमनोरमाणि ।
जनस्य जायाजनरञ्जनेन
जवाज्जरान्तं जरयन्ति चेतः ॥ १७

पर्णानि जीर्णानि यथा तरूणां
समेत्य जन्माशु लयं प्रयान्ति ।
तथैव लोकाः स्वविवेकहीनाः
समेत्य गच्छन्ति कुतोऽप्यहोभिः ॥ १८

इतस्ततो दूरतरं विहृत्य
प्रविश्य गेहं दिवसावसाने ।
विवेकिलोकाश्रयसाधुकर्म-
रिक्तेऽह्नि रात्रौ क उपैति निद्राम् ॥ १९

विद्राविते शत्रुजने समस्ते
समागतायामभितश्च लक्ष्म्याम् ।
सेव्यन्त एतानि सुखानि याव-
त्तावत्समायाति कुतोऽपि मृत्युः ॥ २०

कुतोऽपि संवर्धिततुच्छरूपै-
र्भावैरमीभिः क्षणनष्टदृष्टैः ।

---

योऽस्तु तत्राह—**अक्लिष्टेति** । अप्यर्थ एवकारः । कस्यचित्काचिदपि क्रिया अक्लिष्टं क्लेशेन नाशेन वा रहितं पर्यन्तः संसारावसानं तद्रूपं यत्फलं तेन अभिरामा न दृश्यते । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इत्यादिश्रुतेः । कृतकफलस्य नाशनियमादिष्टनाशस्य दुःखपर्यवसितत्वाच्चेति भावः । यां क्रियामेत्य आश्रित्य । विश्रान्तिं स्वास्थ्यम् ॥ १० ॥ यत्र असति भाग्योदये कीर्तिप्रतापलक्ष्म्याद्यल्पफलानामपि धैर्यादिक्षतिहेतुरागलोभादिप्राबल्याद्दौर्लभ्यं तत्र किं वाच्यं महाफलस्य मोक्षस्येत्यभिप्रेत्याह—**कीर्त्येति** । श्रिया संपदा । गृहमर्थिगृहम् । सत्त्वबलेन सात्त्विकक्षमाविनयौदार्यादिबलेन लक्ष्मीम् । तेन हि सा पूर्णेव राजते ॥ ११ ॥ सति तु भाग्योदये सर्वस्य सर्वत्र सर्वाभिलषितप्राप्तिः सुलभेति पुरुषप्रयत्नवैयर्थ्यमभिप्रेत्याह—**अप्यन्तरस्थ**मिति । गिरेः शैली शिलामयी या भित्तिः । कर्मधारयनिमित्तः पुंवद्भावः । तन्मध्ये स्थितमपि वज्रनिर्मितत्वादभेद्यस्यालयस्याभ्यन्तरे संस्थितमपि वा सर्वं सभाग्यजनमिति शेषः । सिद्धयोऽणिमादयस्तेषां वेगैस्त्वराभिः सहिताः । आपद्ग्रहणं दृष्टान्तार्थम् ॥ १२ ॥ अक्लिष्टपर्यन्तेत्यनुपदोक्तमेव प्रपञ्चयति—**पुत्राश्चे**त्यादिना । प्रकल्प्यते भ्रान्त्येति शेषः । अन्ते मृत्युकाले । अतिरम्या अपि भोगविषया यत्र विषमूर्च्छनावद्दुःखायैव ॥ १३ ॥ धर्मरिक्तान् पुण्यसंग्रहशून्यान् ॥ १४ ॥ आदौ धनार्जनभोगतृष्णाप्राबल्यात्कामार्थाभ्यासेन धर्मावाप्तौ कृतान्तराभिराक्रान्तावकाशाभिर्लौकिकक्रियाभिः । बर्हिणो मयूरस्तस्य पिच्छं बर्हमिव लोलम् । कायवयोवसाने इत्येतदत्राप्यनुषज्यते ॥ १५ ॥ ननु मास्तु धर्मार्जनशून्यानां चेतसि विश्रान्तिस्तदर्जनवतां भवदादीनां तत्फललाभात्कुतो न सेत्याशङ्क्य धर्मफलस्वर्गपुत्रादेरप्यसारतामाह—**पुरोगतै**रिति । तरङ्गवद्भङ्गुरैरतएवानवाप्तरूपैरप्राप्तप्रायैः । हि यस्माद्भिन्ने अनात्मनि रुचिर्यस्य स लोको जनो विडम्ब्यते वञ्च्यते । अयं भावः—स एव हि लाभ इत्युच्यते यल्लब्धं नापैति, अनर्थे वा न पर्यवस्यति । अन्यस्तु लाभो विडम्बनमात्रम् । यथा अल्पायुःपुत्रलाभो यथा वा मत्स्यस्य बडिशामिषलाभः । तथाच श्रुतिः 'स योऽन्यदात्मनः प्रियंब्रुवाणं ब्रूयात्प्रियं रोत्स्यति' इति । तथाच न तल्लाभादाश्वास इति ॥ १६ ॥ उक्तमेवार्थमासुरसंपद्विस्तारप्रदर्शनेन प्रपञ्चयति—**इमानी**त्यादिना । इमानि संनिहितानि सद्यःकर्तव्यान्यमूनि विप्रकृष्टानि देशकालान्तरे कर्तव्यानीति विभावितानि निरन्तरं चिन्तितान्यपर्यन्तमनोरमाणि । परिणामेऽनर्थरूपाणि । जायानां जनानां च रञ्जनेन प्रियाचरणेन देहजरान्तं चेतोऽपि जरयन्ति । विवेकाद्भ्रंशयन्तीति यावत् ॥१७॥ कुतोऽप्यहोभिः कतिपयैरेव दिनैः ॥१८॥ अह्नि दिवसे विवेकिजनानामनुसरणेन सत्कर्मभिश्च रहिते सति को निद्रामुपैति विना मूढमिति शेषः ॥ १९ ॥ २० ॥ कुतोऽप्यनिर्धारिततत्त्वाद्धेतोः संवर्धितैः भावैर्विषयैर्विलोक्यमाना भ्राम्यमाणा । पातं मृत्युम् । 'यात'मिति

विलोड्यमाना जनता जगत्यां
नवेत्युपायातमहो न पातम् ॥ २१

प्रियासुभिः कालमुखं क्रियन्ते
जनैडकास्ते हतकर्मबद्धाः ।
यैः पीनतामेव बलादुपेत्य
शरीरबाधेन न ते भवन्ति ॥ २२

अजस्रमागच्छति सत्वरैव-
मनारतं गच्छति सत्वरैव ।
कुतोऽपि लोला जनता जगत्यां
तरङ्गमाला क्षणभङ्गुरेव ॥ २३

प्राणापहारैकपरा नराणां
मनो मनोहारितया हरन्ति ।
रक्तच्छदाश्चञ्चलषट्पदाक्ष्यो
विषद्रुमालोललताः स्त्रियश्च ॥ २४

इतोऽन्यतश्चोपगता मुधैव
समानसंकेतनिबद्धभावा ।
यात्रासमासंगसमा नराणां
कलत्रमित्रव्यवहारमाया ॥ २५

प्रदीपशान्तिष्विव भुक्तभूरि-
दशाखतिस्नेहनिबन्धनीषु ।
संसारमालासु चलाचलासु
न ज्ञायते तत्त्वमतात्त्विकीषु ॥ २६

संसारसंरम्भकुचक्रिकेयं
प्रावृट्पयोबुद्बुदभङ्गुरापि ।
असावधानस्य जनस्य बुद्धौ
चिरस्थिरप्रत्ययमातनोति ॥ २७

शोभोज्ज्वला दैववशाद्विनष्टा
गुणाः स्थिताः संप्रति जर्जरत्वे ।
आश्वासनादूरतरं प्रयाता
जनस्य हेमन्त इवाम्बुजस्य ॥ २८

पुनःपुनर्दैववशादुपेत्य
स्वदेहभारेण कृतोपकारः ।
विलूयते यत्र तरुः कुठारै-
राश्वासने तत्र हि कः प्रसङ्गः ॥ २९

मनोरमस्याप्यतिदोषवृत्ते-
रन्तर्विघाताय समुत्थितस्य ।

---

पाठे उपायातमागतं यातं गतं च अहो न वेत्ति ॥ २१ ॥ सर्वप्राणिनां प्रियत्वेन प्रसिद्धैरसुभिः प्राणैर्यजमानैस्त एव जनैडका नरमेषाः पशवः । हतशब्दः कुत्सायाम् । कुत्सितकर्मलक्षणेषु यूपेषु बद्धाः सन्तो दोषाञ्जनैः कालवर्णं मुखं यथा स्यात्तथा क्रियन्ते संस्क्रियन्ते। ते के। यैर्विषयासक्तिदेहपोषणादिबलात्पीनतामेवोपेत्य स्थितं, न विवेकवैराग्याद्यभ्यस्तमित्यर्थः । अत एव हि ते रोगर्त्विग्भिः संज्ञपनविशसनादिना शरीरस्य बाधेन नाशेन हेतुना न भवन्ति असत्प्राया भवन्तीत्युत्प्रेक्षा । 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति श्रुतेः । यज्ञविशेषेषु मेषाणामपि पशुत्वं प्रसिद्धम् । एडकशब्दस्य च्छागेषु वा लक्षणा । अथवा यैरेव जनैडकैः पोषकैः स्वयं पीनतामुपेत्य स्थितास्त एव जनैडकाः प्रियासुभिर्बलाद्धतकर्मपाशैर्बद्धाः कालस्य मृत्योर्मुखं प्रति क्रियन्ते उपह्रियन्ते । अतएव कृतघ्ना असवः शरीरबाधेन हेतुना ते प्रियासवो न भवन्ति किंत्वप्रियाः शत्रवः । तथाच न प्राणपोषणमात्रपरेण भाव्यमिति भावः । अथवा असुपोषणपरा अपि न मूढजनाः प्रियासवः । तेषां मृत्युमुखप्रवेशोपायाचरणेन प्रत्युत प्राणविघातकत्वात् । किंतु तत्त्वज्ञा एवेह प्रियासवः । प्राणानां तत्त्वदृशा नित्यात्मभावमापाद्य रक्षकत्वात् । अतस्तैः प्रियासुभिर्हतकर्मबद्धास्ते प्रसिद्धा मूढजनैडकाः कालमुखमिव क्रियन्ते । नाद्रियन्त इति यावत् । कस्तेष्वतिशयस्तत्राह—यैस्तत्त्वज्ञानबलाच्छरीरत्रयबाधेन पीनतामपरिच्छिन्नतामेवोपेत्य स्थितमिति हेतोस्ते जनैडकवद्देहात्ममतयो न भवन्तीत्ययमेवातिशय इत्यर्थः ॥२२॥ यथा आगच्छति एवं सत्वरैव गच्छति । कुतोऽपीत्युक्त्या यत आगच्छति यत्र च गच्छति तज्जिज्ञासितमिति सूचितम् ॥ २३ ॥ रक्तच्छदा रक्तौष्ठयो रक्तवस्त्रा वा रक्तपल्लवाश्च । षट्पदा इव षट्पदा एव चाक्षीणि आसाम् । विषद्रुमेष्वालोला लता विषलताः ॥ २४ ॥ इतो मनुष्यलोकादन्यतः स्वर्गनरकादिभ्यश्च । मुधा व्यर्थमेव । इहास्माभिर्मिलितव्यमिति परस्पराभिप्रायनिबन्धनः संकेतस्तेन संपादितस्वरूपा । देवोत्सवादियात्रायां समासङ्गः समाजमेलनम् ॥ २५ ॥ संसारा जन्ममरणपरम्परास्तेषां मालासु प्रदीपानां शान्तिषु क्षणिकज्वालोपरमप्रवाहेष्विव तत्त्वं पारमार्थिकं वस्तु न ज्ञायते इति संबन्धः । सर्वाणि विशेषणान्युभयसाधारणानि । दशा बाल्यादयो वर्तिकाश्च । स्नेहो रागस्तैलं च । चलाचलासु चञ्चलासु । अतात्त्विकीषु मिथ्याभूतासु ॥ २६ ॥ यथा कुलालचक्रिका भ्रमन्त्यप्यसावधानपुरुषबुद्धौ चिरं स्थिरैवेयं न भ्रमतीति प्रतीतिं जनयति, एवमियं संसारप्रवृत्तिरूपा[1] कुचक्रिका वार्षिकजलबुद्बुदवदनित्यापि चिरस्थायिताप्रतीतिं जनयतीत्यर्थः ॥ २७ ॥ जनस्य अम्बुजस्येव संप्रति यौवने शरदि च ये सौन्दर्यसौगन्ध्यादयो गुणाः शोभोज्ज्वलाः स्थितास्त एव गुणा वार्धकेन जर्जरत्वे हेमन्ते च दैववशाद्विनष्टाः सन्त आश्वासनायाश्चित्तसमाधानस्य आघ्राणस्य च दूरतरं प्रयाता दुर्लभा भविष्यन्तीति न तेषु विश्वास इति भावः ॥ २८ ॥ यत्र संसारे भूजलपवनादि दैववशात्पुरुषोपकारमनपेक्ष्यैवेति यावत् । जन्माभिवृद्धिफलपुष्पादिसमृद्धिमुपेत्य स्वदेहस्य भारेण धारणेन पुनःपुनर्जनेभ्यश्छायापत्रपुष्पफलादिभिः कृतोपकारोऽनपराध्यपि तरुर्वृक्षः कुठारैर्विलूयते छिद्यते। तत्र संसारे । तत्र प्रतिपदप्रसक्तापराधस्याकृतोपकारस्य च मनुष्यस्याश्वासने कः प्रसङ्गः । तथा च मृत्युरनपकारिणमपि हनिष्यत्येवेति भावः ॥ २९ ॥ नन्वस्त्वन्यत्र दोषस्तथापि हितैषिषु स्वजनेषु को दोषस्तत्राह-**मनोरमस्येति** ।

---

१ प्रवृत्तिकुचक्रिका इति पाठः.

विषद्रुमस्येव जनस्य सङ्गा-
दासाद्यते संप्रति मूर्च्छनैव ॥ ३०

कास्ता दशो यासु न सन्ति दोषाः
कास्ता दिशो यासु न दुःखदाहः ।
कास्ताः प्रजा यासु न भङ्गुरत्वं
कास्ताः क्रिया यासु न नाम माया ॥ ३१

कल्पाभिधानक्षणजीविनो हि
कल्पौघसंख्याकलने विरिञ्चयाः ।
अतः कलाशालिनि कालजाले
लघुत्वदीर्घत्वधियोऽप्यसत्याः ॥ ३२

सर्वत्र पाषाणमया महीध्रा
मृदा मही दारुभिरेव वृक्षाः ।
मांसैर्जनाः पौरुषबद्धभावा
नापूर्वमस्तीह विकारहीनम् ॥ ३३

आलोक्यते चेतनयाऽनुविद्धा
पयोनुबद्धोऽस्तनयो नभः स्थाः ।
पृथग्विभागेन पदार्थलक्ष्म्या
एतज्जगन्नेतरदस्ति किंचित् ॥ ३४

चमत्कृतिश्चेह मनस्विलोक-
चेतश्चमत्कारकरी नराणाम् ।
स्वप्नेऽपि साधो विषयं कदाचि-
त्केषांचिदभ्येति न चित्ररूपा ॥ ३५

अद्यापि यातेऽपि च कल्पनाया
आकाशवल्लीफलवन्महत्त्वे ।
उदेति नो लोभलवाहताना-
मुदारवृत्तान्तमयी कथैव ॥ ३६

अतिशयितदोषाः स्नेहभोगादिवृत्तयो दाहभ्रमणादिवृत्तयश्च यस्मात् । अन्तरुपशमस्य जीवितस्य च विघातायोद्युक्तस्योत्पन्नस्य च मूर्च्छना मूढता कश्मलं वा आसाद्यत इत्ययमेव दोष इति भावः ॥ ३० ॥ संसारदृष्टिषु कास्ता दशो दृष्टयः । क्रिया लौकिक्यः । माया छलम् ॥ ३१ ॥ नन्वन्यासां प्रजानां भङ्गुरत्वेऽपि विरिञ्चिसालोक्यं प्राप्तानां प्रजानां कल्पायुषां न भङ्गुरत्वमित्याशङ्क्याह—कल्पेति । कल्पौघानामतीतानागतानन्तकल्पानां संख्याया अकलने अपरिज्ञाने आनन्त्याविशेषात्कल्पा अपि विष्णुरुद्रादिदृशा क्षणा एवेति विरिञ्च्या अपि कल्पाभिधानक्षणजीविन एव । अतोऽवयवशालिनि कालसमूहे लघुत्वदीर्घत्वधियश्चिराचिरजीवनबुद्धयोऽपि द्रष्टृकल्पनाधीनत्वादसत्याः । तुल्यन्यायेन ब्रह्माण्डा अप्यनन्तकोटिब्रह्माण्डदृशां दृशा अणव एवेत्यणुमहत्त्वादिबुद्धयोऽप्यसत्या बोध्याः ॥ ३२ ॥ एवं प्रकृतिदृष्टौ विकारजातमप्यसत्यमेव प्रतिभातीत्याह—सर्वत्रेति । स्वार्थे मयट् । प्रकृत्या चारुरित्यादिवदभेदे तृतीया । महीध्रा वस्तुतः पाषाणा एव । मही मृदेव । जना मांसादीन्येव । कथं तर्हि पर्वतादिविशेषबुद्धिस्तत्राह—पौरुषेति । व्यवहाराय पुरुषकृतैर्नामरूपसंकेतैः प्रतिनियतस्वभावा इत्यर्थः । परमार्थतस्तु अपूर्वं पूर्वसिद्धकारणादन्यन्नास्ति । तथाच सर्वत्र न्यायसाम्याद्विकारहीनं परित्यक्तविकारं सर्वं जगत्प्रकृतिभूतमेकमेव परमार्थवस्त्वस्तीति युक्त्या संभाव्यत इत्यर्थः । अथवा अस्तु पर्वतादिविकाराणामसत्यत्वं तत्प्रकृतीनां पाषाणमृदादीनां तु तत्कुतस्तत्राह—नापूर्वमिति । तेषामपि स्वकारणमहाभूतविकारत्वादिह भोग्यवर्गे विकारव्यतिरिक्तं नास्तीति मिथ्यात्वादप्यनाश्वास एवेत्यर्थः ॥ ३३ ॥ पाषाणमृदादीनां महाभूतमात्रत्वमुक्तं स्फुटयति—आलोक्यत इति । अनुवित् हा इति च्छेदः । पयो जलं तदनुबद्धस्तत्कारणत्वेन तदिन्धनत्वेन वा तत्संबद्धो वह्निः । यद्यपि भौमो वह्निः पार्थिवेन्धनस्तथापि काष्ठाद्यन्तर्गताप्यस्नेहांशमात्रदाहित्वात्पयोनुबद्ध एव । अस्तं नयति सूर्यचन्द्राभ्युदकादीनीत्यस्तनयो वायुः । नभ आकाशः । तिष्ठति न चलतीति स्थाः पृथिवी । इत्येतन्महाभूतपञ्चकमेवानुविध्यते परस्परं संबध्यत इत्यनुवित् मिलितं सत् गोघटादिनानापदार्थलक्ष्म्या एतज्जगच्चेतनया बुद्ध्या आलोक्यते अविवेकिभिः । हा इति खेदावद्योतको निपातः । विवेकदृशा पृथग्विभागेन पर्यालोचने तु इतरत्पञ्चभूतातिरिक्तं न किंचिदस्तीत्यर्थः । तथाच श्रुतिः—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य । अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' इति ॥ ३४ ॥ नन्वेवं पदार्थानामसत्यत्वे कथं जनानां व्यवहारभोगचमत्कारः, नहि शुक्तिरजतेन कङ्कणं कर्तुं शक्यमित्याशङ्क्याह—चमत्कृतिरिति । इह मिथ्याभूतेऽपि पदार्थजाते व्यवहारकुशलतया मनस्विनां प्रेक्षावतामपि लोकानां चेतसि भोगचमत्कारकरी व्यवहारचमत्कृतिरपि प्रसिद्धा न चित्ररूपा नाश्चर्यभूता । यतस्तथाविधा चमत्कृतिः कदाचित्केषांचिन्नराणां स्वप्ने मिथ्याभूतमपि विषयमभिलक्ष्य एति प्राप्नोति । दृश्यत इति यावत् । यद्यपि सर्वेषामपि स्वप्ने भोगाः प्रसिद्धास्तथापि सुखदुःखातिशयभोगारम्भे झटित्येव जागरणदर्शनात्प्रबलकर्मोद्भवे सत्येव चिरभोगचमत्कृतिर्यथा हरिश्चन्द्रस्य स्वर्गनरकभोगयोरिति सूचनाय कदाचित्केषांचिदित्युक्तम् ॥ ३५ ॥ ननु यद्यस्ति भोगचमत्कृतिस्तर्हि किमधुनैव विरज्यसे । भोगान्भुक्त्वोत्तरे वयसि विरज्यात्मविचारस्य कर्तुं युक्तत्वादित्याशङ्क्य भोगासक्तौ वैराग्यस्य विचारस्य च सदैव दौर्लभ्यमित्याह—अद्येति । अद्याधुनातने पूर्वे वयसि यातेऽस्मिन्नुत्तरेऽपि च वयसि आकाशवल्लीफलवन्मिथ्याभूताया अपि भोगासक्तिकल्पनाया अविचारान्महत्त्वे सति भोगतत्साधनादिलोभलवेनाहतानां नाशितानां पुरुषाणां यद्यप्यासक्तिमहत्त्वे लोभवैपुल्यमस्त्येव तथापि विनाशे तस्य लेशोऽप्यलमिति सूचनाय लवग्रहणम् । उदारस्य सर्वोत्कृष्टस्य परमात्मनो यो वृत्तान्तः स्वरूपनिरूपणवार्ता तत्प्रचुरा कथैव नोदेति । निरन्तरं तद्विचारस्तु दूरनिरस्त इति भावः

१ विरिञ्च्या इति पाठः.

आदातुमिच्छन्पदमुत्तमानां
स्वचेतसैवापहतोऽद्य लोकः।
पतत्यशङ्कं पशुरद्रिकूटा-
दानीलवल्लीफलवाञ्छयैव ॥ ३७
अवान्तरन्यस्तनिरर्थकांश-
च्छायालतापत्रफलप्रसूनाः।
शरीर एव क्षतसंपदश्च
श्वभ्रद्रुमा अद्यतना नराश्च ॥ ३८
क्वचिज्जना मार्दवसुन्दरेषु
क्वचित्कठोरेषु च संचरन्ति।
देशान्तरालेषु निरन्तरेषु
वनान्तखण्डेष्विव कृष्णसाराः ॥ ३९
धातुर्नवानि दिवसं प्रति भीषणानि
रम्याणि वा विलुलितान्ततमाकुलानि।
कार्याणि कष्टफलपाकहतोदयानि
विस्माययन्ति न शवस्य मनांसि केषाम् ॥ ४०
जनः कामासक्तो विविधकुकलाचेष्टनपरः
स तु स्वप्नेऽप्यस्मिञ्जगति सुलभो नाद्य सुजनः।
क्रिया दुःखासङ्गाऽविधुरविधुरा नूनमखिला
न जाने नेतव्या कथमिव दशा जीवितमयी ॥४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे निःश्रेयसविरोधिभावानित्यताप्रतिपादनं नाम सप्तविंशतितमः सर्गः ॥२७॥

---

## अष्टाविंशः सर्गः २८

श्रीराम उवाच।
यच्चेदं दृश्यते किंचिज्जगत्स्थावरजंगमम्।
तत्सर्वमस्थिरं ब्रह्मन्स्वप्नसंगमसंनिभम् ॥ १
शुष्कसागरसंकाशो निखातो योऽद्य दृश्यते।
स प्रातरभ्रसंवीतो नगः संपद्यते मुने ॥ २
यो वनव्यूहविस्तीर्णो विलीढगगनो महान्।
दिनैरेव स यात्युर्वीसमतां कूपतां च वा ॥ ३
यदङ्गमद्य संवीतं कौशेयस्रग्विलेपनैः।
दिगम्बरं तदेव श्वो दूरे विशरिताऽवटे ॥ ४
यत्राद्य नगरं दृष्टं विचित्राचारचञ्चलम्।
तत्रैवोदेति दिवसैः संशून्यारण्यधर्मता ॥ ५
यः पुमानद्य तेजस्वी मण्डलान्यधितिष्ठति।
स भस्मकूटतां राजन्दिवसैरधिगच्छति ॥ ६
अरण्यानी महाभीमा या नभोमण्डलोपमा।

॥ ३६ ॥ आसक्तौ न केवलं पुरुषार्थहानिः प्रत्युत महानर्थोऽपीत्याह—**आदातु**मिति। उत्तमानामुत्कृष्टभोगशालिनां पदं स्थानं साम्यं राज्यधनादि वा आदातुं संपादयितुमिच्छन् स्वैरं यतमानो लोको रागलोभादिमूढेन स्वचेतसापहृतः सन्नद्यास्मिन्पूर्ववयस्येवाशङ्कं पतति। अमुमर्थमर्थान्तरन्यासेन द्रढयति—**पशु**रित्यादिना। पशुश्छागादिः पततीत्यनुषज्यते। आनीला हरिता वल्ली अर्थाद्विषमस्था करीरादिवल्ली गृह्यते ॥ ३७ ॥ अवान्तरे दुर्गमे गर्तोदर एव न्यस्तान्यतएव निरर्थकांशानि, अंशतोऽपि प्राणिभिरनुपभोग्यत्वाद्व्यर्थानीति यावत्। छायादीनि येषां तथाविधाः श्वभ्रद्रुमाः शरीरे स्वशरीरपोषणार्थैवोपयोगात्क्षता व्यर्थं नाशिता विद्याविनयधनादिसंपदो यैस्तथाविधा नराश्च तुल्या एव। व्यर्थजन्मत्वादित्यर्थः। 'निरर्थकांशे' इति पाठे सप्तम्या अलुक् छान्दसः ॥३८॥ यद्यपि क्वचिद्धार्मिका अपि सन्ति, तथापि विवेकिनो दुर्लभा इति वक्तुं जनद्वैविध्यमाह—**क्वचि**दिति। देशान्तरालशब्देनात्र प्रकृतानुसाराच्चित्तभूमयो गृह्यन्ते। मार्दवं दयादाक्षिण्यक्षमादिसौन्दर्यं विद्याविनयादि च तद्वत्सु। कठोरेषु क्रोधलोभनैष्ठुर्यशालिषु[1]। वनमध्यभागानां खण्डेष्ववयवेषु ॥ ३९ ॥ जनानां दुर्दशां दृष्ट्वा दुःखितस्तन्निमित्तं दैवं निन्दति—**धातु**रिति। शवस्य अचेतनत्वान्मृतकल्पस्य धातुर्दैवस्य। यदि जीवन्स्यात्तर्हीदृशो निर्दयः स्यादित्यभिप्रायः। दिवसं प्रति दिने दिने। कर्मप्रवचनीयेनैव वीप्साद्योतनान्न द्विवचनं कृतम्। फलतो भीषणान्यापाततो रम्याणि। वाशब्दः समुच्चये। विलुलितान्ततमैः रागादिभिरत्यन्तव्याकुलितचित्तैराकुलानि। परिणामे कष्टफलपाकेन दूषितारम्भाभ्युदयानि नवानि कार्याणि केषां विवेकिनां मनांसि न विस्माययन्ति ॥ ४० ॥ उक्तमर्थमनूद्योपसंहरंस्तन्निमित्तं स्वस्योद्वेगं दर्शयति—**जन** इति। कुकलाभिः कौटिल्यचातुर्यैः। सुजनो विवेकी। दुःखैरसङ्गोऽसंबन्धस्तद्विधुरैस्तद्रहितभिन्नैरत्यन्तदुःखरहितैः साधनैः फलैर्वा विधुरा रहिता। अवश्यं दुःखानुबन्धिन्येवेति यावत् ॥ ४१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे निःश्रेयसविरोधिभावानित्यताप्रतिपादनं नाम सप्तविंशतितमः सर्गः ॥ २७ ॥

इह सर्वेषु भोग्येषु वैरस्यप्रतिपत्तये।
वर्ण्यते सर्वभावानां विपर्यासिस्वभावता ॥ १ ॥

सर्वभावानामविरतविपर्याासस्वभावतादर्शनादपि न तेष्वाश्वास इत्याह—**यच्चेद**मित्यादिना। स्वप्ने संगमः समाजमेलनम् ॥ १ ॥ निखातो गर्तः। प्रातर्ग्रहणं कालान्तरोपलक्षणम् ॥ २ ॥ वनव्यूहेन वनसमुदायेन। विलीढगगनश्चुम्बितनभस्तलः। उन्नत इति यावत्। महान्परिणाहतः। दिनैः कैश्चिदेव ॥ ३ ॥ अवटे गर्ते। विशरिता विशीर्णा भविता। लुट् ॥ ४ ॥ चञ्चलं पुनःपुनश्चरत् ॥ ५ ॥ अधिगच्छति प्राप्नोति ॥ ६ ॥ महारण्यमर-

१ गगनोऽचलः इति पाठः।

[1] १ तीक्ष्ण्यशालिषु इति पाठः।

पताकाच्छादिताकाशा सैव संपद्यते पुरी ॥ ७
या लतावलिता भीमा भात्यद्य विपिनावली ।
दिवसैरेव सा याति पुनर्मरुमहीपदम् ॥ ८
सलिलं स्थलतां याति स्थलीभवति वारिभूः ।
विपर्यस्यति सर्वं हि सकाष्ठाम्बुतृणं जगत् ॥ ९
अनित्यं यौवनं बाल्यं शरीरं द्रव्यसंचयाः ।
भावाद्भावान्तरं यान्ति तरङ्गवदनारतम् ॥ १०
वातान्तर्दीपकशिखालोलं जगति जीवितम् ।
तडित्स्फुरणसंकाशा पदार्थश्रीर्जगत्त्रये ॥ ११
विपर्याससमियं याति भूरिभूतपरम्परा ।
बीजराशिरिवाजस्रं पूर्यमाणः पुनःपुनः ॥ १२
मनःपवनपर्यस्तभूरिभूतरजःपटा ।
पातोत्पातपरावर्तपराभिनयभूषिता ॥ १३
आलक्ष्यते स्थितिरियं जागती जनितभ्रमा ।
नृत्तावेशविवृत्तेव संसारारभटीनटी ॥ १४
गन्धर्वनगराकारविपर्यासविधायिनी ।
अपाङ्गभङ्गुरोदारव्यवहारमनोरमा ॥ १५
तडित्तरलमालोकमातन्वाना पुनःपुनः ।
संसाररचना राजन्वृत्तसकेव राजते ॥ १६
दिवसास्ते महान्तस्ते संपदस्ताः क्रियाश्च ताः ।
सर्वं स्मृतिपथं यातं यामो वयमपि क्षणात् ॥ १७
प्रत्यहं क्षयमायाति प्रत्यहं जायते पुनः ।
अद्यापि हतरूपाया नान्तोऽस्या दग्धसंसृतेः ॥ १८

तिर्यक्त्वं पुरुषा यान्ति तिर्यञ्चो नरतामपि ।
देवाश्चादेवतां यान्ति किमिवेह विभो स्थिरम् ॥ १९
रचयन्रश्मिजालेन रात्र्यहानि पुनःपुनः ।
अतिवाह्य रविः कालो विनाशावधिमीक्षते ॥ २०
ब्रह्मा विष्णुश्च रुद्रश्च सर्वा वा भूतजातयः ।
नाशमेवानुधावन्ति सलिलानीव वाडवम् ॥ २१
द्यौः क्ष्मा वायुराकाशं पर्वताः सरितो दिशः ।
विनाशवाडवस्यैतत्सर्वं संशुष्कमिन्धनम् ॥ २२
धनानि बान्धवा भृत्या मित्राणि विभवाश्च ये ।
विनाशभयभीतस्य सर्वं नीरसतां गतम् ॥ २३
स्वदन्ते तावदेवैते भावा जगति धीमते ।
यावत्स्मृतिपथं याति न विनाशकुराक्षसः ॥ २४
क्षणमैश्वर्यमायाति क्षणमेति दरिद्रताम् ।
क्षणं विगतरोगत्वं क्षणमागतरोगताम् ॥ २५
प्रतिक्षणविपर्यासदायिना निहतात्मना ।
जगद्भ्रमेण के नाम धीमन्तो हि न मोहिताः ॥ २६
तमःपङ्कसमालब्धं क्षणमाकाशमण्डलम् ।
क्षणं कनकनिष्यन्दकोमलालोकसुन्दरम् ॥ २७
क्षणं जलदनीलाब्जमालावलितकोटरम् ।
क्षणमुड्डामररवं क्षणं मूकमिव स्थितम्[1] ॥ २८
क्षणं ताराविरचितं क्षणमर्केण भूषितम् ।
क्षणमिन्दुकृताह्लादं क्षणं सर्वबहिष्कृतम् ॥ २९
आगमापायपरया क्षणसंस्थितिनाशया ।

ण्यानी । विस्तीर्णतया नीलतया च नभोमण्डलोपमा ॥ ७ ॥ लताभिर्वलिता संवृत्ता । मरुमह्याः पदं लक्षणं निर्वृक्षजलताम् ॥ ८ ॥ वारिभूरुदकस्थानम् । विपर्यस्यति विपरीतावस्थामापद्यते ॥ ९ ॥ पूर्वस्वभावात्स्वभावान्तरम् ॥ १० ॥ अल्पो दीपो दीपकः ॥ ११ ॥ यथा कुसूलादावजस्रं पुनःपुनः पूर्यमाणो धान्यादिबीजराशिर्व्ययेन विपर्यासं क्षेत्रे उप्तो जलेन पूर्यमाणो वोच्छूनताङ्कुरसस्यादिभावेन विपर्यासमित्यर्थः ॥१२॥ इयं जागती स्थितिरेव संसारस्य[2] कर्तृभोक्तृतासंतानलक्षणा या आरभटी आडम्बरातिशयः सैव नटी नर्तकी स्वकौशलातिशयप्रकटनाय नृत्ते आवेशेन विवृत्ता परिवर्तमानेव जनितभ्रमा आलक्ष्यते इति संबन्धः । तदनुरूपं विशिनष्टि । मन एव पवनस्तेन पर्यस्तमुद्धूतं भूरिभूतं प्राणिलक्षणं रजोवृन्दमेव पटो यस्याः । अतएव प्राणिनां पातो नरकादावुत्पातः स्वर्गे परावर्तो मध्यमलोकेऽत एव परा उत्कृष्टा अभिनया भावव्यञ्जकचेष्टास्ताभिर्भूषिता ॥१३॥१४॥ तामेव वर्णयति द्वाभ्याम्—**गन्धर्वे**ति । विपर्यासो भ्रान्तिः वंशनटीनां नेत्रपिधानगारुडविद्या प्रसिद्धा । अपाङ्गाविव भङ्गुरैश्चपलैरपाङ्गपातैश्च भङ्गुरैर्व्यवहारैर्मनोरमा ॥ १५ ॥ तडितमेव तडितमिव च तरलं आलोकं आलोकनम् ॥ १६ ॥ ते उत्सवविभवशालिनः ॥ १७ ॥ हतदग्धशब्दौ निन्दावचनौ ॥ १८ ॥ तिर्यक्त्वं पश्वादिजन्म ॥ १९ ॥ कालः कालात्मा रविः सूर्यः । रचयन् । भूतजातमिति शेषः । रात्र्यहानि अतिवाह्य विनाशावधिं स्वरचितस्य भूतजातस्येति शेषः ॥ २० ॥ अनुधावन्त्यनुसरन्ति । वाडवं वडवानलम् ॥ २१ ॥ वाडवस्य भागलक्षणया वह्नेः । प्रसिद्धस्य वाडवस्याबिन्धनत्वेन संशुष्कविशेषणानुपयोगात् ॥ २२ ॥ २३ ॥ स्वदन्ते रोचन्ते ॥ २४ ॥ क्षणमलंकालम् । जन इति शेषः ॥२५॥ निहतशब्दो निन्दावचनो नश्वरवचनो वा ॥२६॥ अनियतस्थितिमेवोदाहरणेन प्रपञ्चयति—**तम** इत्यादित्रिभिः । आकाशमण्डलोदाहरणं दृष्टान्तार्थम् । तमोलक्षणेन पङ्केन सम्यगालब्धं स्पृष्टम् । कनकस्य निष्यन्दो द्रव इव रम्येण कोमलेन सुखस्पर्शेन चन्द्राद्यालोकेन ॥२७॥ जलदा एव नीलाब्जमालास्ताभिर्वेष्टितोदरम् । उड्डामरस्तारः ॥ २८ ॥ आलोकातिरिक्तैः पर्यायेण वा पूर्वोक्तैः सर्वैर्बहिष्कृतं रहितम् ॥ २९ ॥ इवशब्दोऽनर्थको दृष्टान्तदौर्लभ्यार्थो वा । एवमुत्तर-

१ मूकमवस्थितम् इति पाठः. २ स्वकौशलातिशयप्रकटनाय प्राणिनां जन्ममृत्युसंसरणलक्षणायामारभट्यां नटी वंशनटी । भटीनटीति समुदायो वा तद्वाचकः इति पाठः.

न बिभेति हि संसारे धीरोऽपि क इवानया ॥ ३०
आपदः क्षणमायान्ति क्षणमायान्ति संपदः ।
क्षणं जन्म क्षणं मृत्युर्मुने किमिव न क्षणम् ॥ ३१
प्रागासीदन्य एवेह जातस्त्वन्यो नरो दिनैः ।
सदैकरूपं भगवन्किंचिदस्ति न सुस्थिरम् ॥ ३२
घटस्य पटता दृष्टा पटस्यापि घटस्थितिः ।
न तदस्ति न यद्दृष्टं विपर्यस्यति संसृतौ ॥ ३३
तनोत्युत्पादयत्यत्ति निहत्यासृजति क्रमात् ।
सततं रात्र्यहानीव निवर्तन्ते नरं प्रति ॥ ३४
अशूरेण हतः शूर एकेनापि हतं शतम् ।
प्राकृताः प्रभुतां याताः सर्वमावर्त्यते जगत् ॥ ३५
जनतेयं विपर्यासमजस्रमनुगच्छति ।
जडस्पन्दपरामर्शात्तरङ्गाणामिवावली ॥ ३६
बाल्यमल्पदिनैरेव यौवनश्रीस्ततो जरा ।
देहेऽपि नैकरूपत्वं कास्था बाह्येषु वस्तुषु ॥ ३७
क्षणमानन्दितामेति क्षणमेति विषादिताम् ।
क्षणं सौम्यत्वमायाति सर्वस्मिन्नटवन्मनः ॥ ३८
इतश्चान्यदितश्चान्यदितश्चान्यदयं विधिः ।
रचयन्वस्तुनायाति खेदं लीलास्विवार्भकः ॥ ३९
चिनोत्युत्पादयत्यत्ति निहत्यासृजति क्रमात् ।
सततं रात्र्यहानीव निवर्तन्ते नरं प्रति ॥ ४०
आविर्भावतिरोभावभागिनो भवभागिनः ।
जनस्य स्थिरतां यान्ति नापदो न च संपदः ॥ ४१
कालः क्रीडत्ययं प्रायः सर्वमापदि पातयन् ।
हेलाविचलिताशेषचतुराचारचञ्चुरः ॥ ४२
समविषमविपाकतो विभिन्ना-
स्त्रिभुवनभूतपरम्पराफलौघाः ।
समयपवनपातिताः पतन्ति
प्रतिदिनमाततसंसृतिद्रुमेभ्यः ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे सर्वभावाऽविरतविपर्यासप्रतिपादनं नामाष्टाविंशः सर्गः ॥ २८ ॥

## एकोनत्रिंशः सर्गः २९

श्रीराम उवाच ।
इति मे दोषदावाग्निदग्धे महति चेतसि ।
प्रस्फुरन्ति न भोगाशा मृगतृष्णाः सरःस्विव ॥ १
प्रत्यहं याति कटुतामेषा संसारसंस्थितिः ।
कालपाकवशाल्लोला रसा निम्बलता यथा ॥ २
वृद्धिमायाति दौर्जन्यं सौजन्यं याति तानवम् ।

त्रापि । अनया जगत्स्थित्या ॥ ३० ॥ ३१ ॥ इह सदैकरूपं सुस्थिरं न किंचिदस्तीति संबन्धः ॥ ३२ ॥ घटस्य कार्पासक्षेत्रे विशीर्णस्य कार्पासपरिणामक्रमेण पटता दृष्टेत्यर्थः ॥ ३३ ॥ वृद्धिविपरिणामापक्षयविनाशपुनर्जन्माख्याः पञ्च भावविकारास्तनोत्यादिभिरुच्यन्ते । तान्क्रमेण प्राप्नुवानं नरं देहाभिमानिनं प्रति ते भावविकारा निवर्तन्ते न चिरं तिष्ठन्तीति तेऽपि विपर्यस्यन्तीत्यर्थः । यद्यप्यस्तीति सत्तापि भावविकारेषु यास्केन पठ्यते तथापि साधिष्ठानब्रह्मसत्तानुवेधो न विकार इति भावः ॥ ३४ ॥ आवर्त्यते विपर्यस्यते ॥ ३५ ॥ जनता चेतनसमूहः जडस्याचेतनस्य प्राणकरणादेः । डलयोरभेदाज्जलस्य च स्पन्देन परामर्शात्संसर्गात् ॥ ३६ ॥ अल्पदिनैर्यातीति शेषः ॥ ३७ ॥ नटो यथा हर्षविषादाद्यभिनयति तद्वत् ॥ ३८ ॥ त्रिभिरित आदिशब्दैर्हर्षविषादमोहहेतवो विचित्रा उच्यन्ते ॥ ३९ ॥ चिनोति व्रीह्यादीनिव संचयेनोपचयं नयति तैरन्यानुत्पादयति तांश्च निहत्यात्ति भक्षयति ततो लब्धास्वादस्तथैव निरन्तरं भोक्तुमन्यानपि जन्तूनासृजति विधिः । सृष्टं च नरं प्रति हर्षविषादादयो रात्र्यहानीव सदा प्राप्य निवर्तन्त इत्यर्थः ॥ ४० ॥ तदेव हेत्वस्थैर्येण विशदयति—**आविर्भावेति** ॥४१॥ हेलया अनादरेणैव विचलिताः परिवर्तिता अशेषाश्चतुराः समर्था अपि येन तथाविधे आचरणे चञ्चुरः कुशलः ॥ ४२ ॥ कर्मणां रसानां च समविषमविपाकतो नानाविधास्त्रैलोक्यप्राणिनिकायलक्षणाः फलसमूहाः संसृतयः संसाराः प्रतिजीवं भिन्नास्तल्लक्षणेभ्यो द्रुमेभ्यः समयः कालस्तल्लक्षणेन पवनेन पातिताः प्रतिदिनं पतन्ति । तथाच पतनपर्यवसितं सर्वं दुष्टमेवेति न क्वचिदास्था युक्तेति भावः ॥ ४३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे सर्वभावाऽविरतविपर्यासप्रतिपादनं नामाष्टाविंशः सर्गः ॥ २८ ॥

दोषाणां दर्शनात्सर्वनिर्वेदः स्वस्य वर्ण्यते ।
रामेण तत्प्रशान्त्यर्थमुपदेशस्तथार्थ्यते ॥ १ ॥

इत्थं दोषदर्शनात्स्वचित्ते तत्त्वबुभुत्सापर्यवसितं निर्वेदं दर्शयति—**इतीत्यादिना** । दोषपदेन तद्दर्शनं लक्ष्यते । दोषाणामेव वा विवेकबुद्ध्यारूढानां दग्धृता विवक्ष्यते । एवं दग्धे दग्धास्थाबीजे । महति विवेकविपुले । मरुष्वेव हि मृगतृष्णाः स्फुरन्ति न सरःसु ॥१॥ 'एषे'ति पाठे स्पष्टम् । 'एती'ति पाठे तु प्रत्यहमहन्यहनि याति सति संसारसंस्थितिरपि कटुता नैष्ठुर्यातिशयं वैरस्यातिशयं वा एतीति योज्यम् । कालेन पाकप्रकर्षवशादल्पकटुकटुतरमित्येवमवस्थाभेदैर्लोलाः कटुरसा यथा निम्बानां लताः बालवृक्षास्त्यजन्ति तद्वत् ॥ २ ॥ वैराग्याभावे भोगाशास्फुरणे त्वनर्थमाह—**वृद्धिमिति** । करञ्जः कण्टकवृक्षः । प्रत्यहं

१ ऽधिक इव इति पाठः.

करक्रकर्कशे राजन्प्रत्यहं जनचेतसि ॥ ३
भज्यते भुवि मर्यादा झटित्येव दिनं प्रति ।
शुष्केव माषशिम्बीका टङ्कारकरवं विना ॥ ४
राज्येभ्यो भोगपूगेभ्यश्चिन्तावद्भ्यो मुनीश्वर ।
निरस्तचिन्ताकलिता वरमेकान्तशीलता ॥ ५
नानन्दाय ममोद्यानं न सुखाय मम स्त्रियः ।
न हर्षाय ममार्थाशा शाम्यामि मनसा सह ॥ ६
अनित्यश्चासुखो लोकस्तृष्णा तात दुरुद्वहा ।
चापलोपहतं चेतः कथं यास्यामि निर्वृतिम् ॥ ७
नाभिनन्दामि मरणं नाभिनन्दामि जीवितम् ।
यथा तिष्ठामि तिष्ठामि तथैव विगतज्वरम् ॥ ८
किं मे राज्येन किं भोगैः किमर्थेन किमीहितैः ।
अहंकारवशादेतत्स एव गलितो मम ॥ ९
जन्मावलिवरत्रायामिन्द्रियग्रन्थयो दृढाः ।
ये बद्धास्तद्विमोक्षार्थं यतन्ते ये त उत्तमाः ॥ १०
मथितं मानिनीलोकैर्मनो मकरकेतुना ।
कोमलं खुरनिष्पेषैः कमलं करिणा यथा ॥ ११
अद्य चेत्स्वच्छया बुद्ध्या मुनीन्द्र न चिकित्स्यते ।
भूयश्चित्तचिकित्सायास्तत्किलावसरः कुतः ॥ १२
विषं विषयवैषम्यं न विषं विषमुच्यते ।
जन्मान्तरघ्ना विषया एकदेहहरं विषम् ॥ १३
न सुखानि न दुःखानि न मित्राणि न बान्धवाः ।
न जीवितं न मरणं बन्धाय ज्ञस्य चेतसः ॥ १४
तद्भवामि यथा ब्रह्मन्पूर्वापरविदां वर ।
वीतशोकभयायासो ज्ञस्तथोपदिशाशु मे ॥ १५
वासनाजालवलिता दुःखकण्टकसंकुला[1] ।
निपातोत्पातबहुला भीमरूपाऽज्ञताटवी ॥ १६
क्रकचाग्रविनिष्पेषं सोढुं शक्नोम्यहं मुने ।
संसारव्यवहारोत्थं नाशाविषयवैशसम् ॥ १७
इदं नास्तीदमस्तीति व्यवहाराञ्जनभ्रमः ।
धुनोतीदं चलं चेतो रजोराशिमिवानिलः ॥ १८
तृष्णातन्तुलवप्रोतं जीवसंचयमौक्तिकम् ।
चिदच्छाङ्गतया नित्यं विकसच्चित्तनायकम् ॥ १९
संसारहारमरतिः कालव्यालविभूषणम् ।
त्रोटयाम्यहमक्रूरं वागुरामिव केसरी ॥ २०
नीहारं हृदयाटव्यां मनस्तिमिरमाशु मे ।
केन विज्ञानदीपेन भिन्धि तत्त्वविदांवर ॥ २१

धर्मपादापचयादधर्मपादोपचयाच्चेति भावः ॥३॥ दिनं प्रति प्रतिदिनम् । ननु वीप्सायां द्विर्वचनाभावेऽवश्यं नित्येनाव्ययीभावेन भाव्यम् । सत्यम्, तथापि च्छान्दसत्वात्स न कृतः परिपाकशुष्का माषाणां शिम्बीका शिम्बीव । माषशिम्बी टङ्काररवेण भज्यते मर्यादा तु तं विनेत्येतावान्विशेष इत्यर्थः ॥ ४ ॥ आकलिता स्वीकृता । एकान्त ऐकाग्र्यम् ॥ ५ ॥ अर्थाशा लक्षणया धनप्राप्तिः ॥ ६ ॥ शान्तिं विना नान्यो निर्वृतिहेतुरस्तीत्याह—**अनित्यश्चेति** ॥ ७ ॥ ८ ॥ ईहितैं राज्यादिविषयैरभिलाषैश्चेष्टितैर्वा । एतद्राज्यादि ॥ ९ ॥ इन्द्रियाण्येव ग्रन्थयो दृढा विषयासङ्गस्य दुस्त्यजत्वात् । तैर्ग्रन्थिभिर्ये जन्मावलीलक्षणायां वरत्रायां चर्मरज्जौ बद्धा जीवास्तेषां मध्ये ये तद्विमोक्षार्थं यतन्ते त एवोत्तमा इति संबन्धः ॥ १० ॥ मकरकेतुना कर्त्रा मानिनीलोकैः करणैर्मथितं हिंसितम् ॥ ११ ॥ अद्यास्मिन्बाल्ये वयसि । तत्तर्हि 'पेलवः सूद्धरो वृक्षो रूढस्कन्धो दुरुद्धर' इति न्यायादिति भावः ॥ १२ ॥ विषयलक्षणं वैषम्यमनार्जवम् । जन्मान्तरेष्वपि घ्नन्ति मृत्युं प्रापयन्तीति जन्मान्तरघ्नाः ॥१३॥ ननु तत्त्वज्ञा अपि विषयान्भुञ्जानाः सुखादिभागिनो दृश्यन्ते, तथाच तेषु को विशेषस्तत्राह—**नेति** । ज्ञस्यात्मज्ञस्य ॥ १४ ॥ सर्वदुःखासङ्गमूलोच्छेदित्वात् ज्ञत्वमेव महान्पुरुषार्थ इति तदर्थमुपदेशं प्रार्थयते—**तदिति** । तत्तस्मादुक्तहेतोर्यथाऽहं ज्ञः सन् वीतशोकभयायासो भवामि शीघ्रं भविष्यामि । वर्तमानसामीप्ये लट् । तथैव आशु उपदिशेति संबन्धः ॥ १५ ॥ उपदेशाविलम्बाय स्वस्य दुःखातिशयासहिष्णुतां निर्वेदौत्कटचं दर्शयति—**वासनेत्यादिना** । वासनालक्षणैर्जालैर्लतासंकटैर्वागुराभिर्वा वलिता वेष्टिता । निपतन्त्युत्पतन्ति चानयोरिति निपातोत्पातौ निम्नोन्नतप्रदेशौ विपत्संपदौ निरयस्वर्गौ वा । अज्ञतैवाटवी अरण्यम् ॥ १६ ॥ क्रकचस्याग्रैर्दशनैर्विनिष्पेषं घर्षणम् । आशाविषयाभ्यां ततं वैशसं विशसनम् ॥ १७ ॥ इदमनिष्टमस्तीति तन्निवारणे इदमिष्टं नास्तीति तत्संपादने च प्रवृत्तिनिवृत्त्यादिव्यवहाररूपोऽविद्याञ्जनप्रयुक्तो भ्रमः स्वभावत एव चलं चेतः, रजोराशिमनिलो वायुरिव धुनोति कम्पयति । हर्षविषादचिन्तादिभिर्विशारयतीत्यर्थः । 'तूलराशिमिवानलः' इति पाठे तु दाहो लक्ष्यते ॥ १८ ॥ तृष्णैव तन्तुलवः सूक्ष्मतन्तुस्तत्र प्रोतं गुम्फितम् । जीवसंचया जीवसमूहा एव मौक्तिकानि यस्मिन् । साक्षिचिद्व्याप्त्या तैजसत्वेन स्वच्छरूपतया च विकसद्विशेषेण दीप्यमानं चित्तमेव नायकः प्रधानः शिखामणिर्यस्मिंस्तथाविधम् ॥ १९ ॥ कालो मृत्युः स एव व्यालः षिङ्गस्तस्य विभूषणमलंकारभूतं संसारलक्षणं हारं मुक्ताहारमरतिर्वैराग्यादिसंपन्नोऽसहमानो वाऽहमक्रूरमक्रोधहिंसादितीक्ष्णोपायं यथा स्यात्तथा वागुरां केसरीव त्रोटयामि । भवदुपदेशजन्यज्ञानेनेति भावः ॥ २० ॥ हृदयं हृत्पुण्डरीकस्थानं तदेव दुष्प्रवेशत्वादटवी । तस्य जाड्यावरणहेतुत्वान्नीहारं मिहिकाभूतम् । तत्रात्मतत्त्वान्वेषणप्रवृत्तस्य मनसस्तिमिरमिव विवेकनेत्रपिधायकमज्ञानं केन सुखकरेण शिर इव प्रधानेन वा विज्ञायते अनेनेति विज्ञानमुपदेशः स एव दीपयति

१ संकटसंकुला इति पाठः. २ मुक्तासरं इति पाठः.

विद्यन्त एवेह न ते महात्मन्
दुराधयो न क्षयमाप्नुवन्ति ।
ये सङ्गमेनोत्तममानसानां
निशातमांसीव निशाकरेण ॥ २२

आयुर्वायुविघट्टिताभ्रपटलीलम्बाम्बुवद्भङ्गुरं
भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चलाः ।
लोलायौवनलालनाजलरयश्चेत्याकलय्य द्रुतं
मुद्रैवाद्य दृढार्पिता ननु मया चित्ते चिरं शान्तये २३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे सकलपदार्थानास्थाप्रतिपादनं नामैकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ३०

श्रीराम उवाच ।

एवमभ्युत्थितानर्थशतसंकटकोटरे ।
जगदालोक्य निर्मग्नं मनो मननकर्दमे ॥ १
मनो मे भ्रमतीवेदं संभ्रमश्चोपजायते ।
गात्राणि परिकम्पन्ते पत्राणीव जरत्तरोः ॥ २
अनाप्तोत्तमसंतोषधैर्योत्सङ्गाकुला मतिः ।
शून्यास्पदा बिभेतीह बालेवाल्पबलेश्वरा ॥ ३
विकल्पेभ्यो लुठन्त्येताश्चान्तःकरणवृत्तयः ।
श्वभ्रेभ्य इव सारङ्गास्तुच्छालम्बविडम्बिताः ॥ ४
अविवेकास्पदा भ्रष्टाः कष्टे रूढा न सत्पदे ।
अन्धकूपमिवापन्ना वराकाश्चक्षुरादयः ॥ ५
नावस्थितिमुपायाति न च याति यथेप्सितम् ।
चिन्ता जीवेश्वरायत्ता कान्तेव प्रियसद्मनि ॥ ६
जर्जरीकृत्य वस्तूनि त्यजन्ती बिभ्रती तथा ।
मार्गशीर्षान्तवल्लीव धृतिर्विधुरतां गता ॥ ७
अपहस्तितसर्वार्थमनवस्थितिरास्थिता ।
गृहीत्वोत्सृज्य चात्मानं भवस्थितिरवस्थिता ॥ ८
चलिताचलितेनान्तरवष्टम्भेन मे मतिः ।

दिश इति दीपः सूर्यस्तेन भिन्धि विदारय ॥ २१ ॥ ये उत्तममानसानां सङ्गेन तत्फलेनोपदेशेन क्षयं नाप्नुवन्ति ते तथाविधा दुराधयो जगति न विद्यन्त एवेति संबन्धः ॥ २२ ॥ ननु शान्त्यादिदार्ढ्यशून्ये बाले त्वयि कुतोऽप्युपदेशः कथं फलिष्यतीत्याशङ्क्य स्वस्य शान्त्यादिदार्ढ्यं दर्शयति—**आयुरिति**। यथा राज्ञा बहुष्वधिकारलिप्सुषु सत्सु येषु लोभकातरतादिदोषै राष्ट्रे पीडापराक्रमणादिप्रसक्तिस्तान्विहाय कस्मैचिदेव गुणवते समर्थाय प्रधानाधिकारमुद्रा समर्प्यते तथा मयाद्य अस्मिन्नपि वयसि आयुर्भोगयौवनादिषु तृष्णाचापलादिदोषैश्चित्तदुःखनाशाद्यनर्थमाकलय्य तानि विहाय सर्वदोषरहितायै समर्थायै च शान्तये प्रशमायैव दृढा अचला चित्ते विषये अधिकारमुद्रा अर्पितेत्यर्थः । वायुविघट्टितायामभ्रपटल्यां लम्बमानं यदम्बु तद्वद्भङ्गुरम् । मेघानां वितानो विस्तारो वितानमिव विस्तृता वा मेघास्तेषां मध्ये विलसन्ती सौदामिनी विद्युदिव चञ्चलाः यौवनसंबन्धिन्यो लालनाश्चित्तविनोदाः । इवार्थे चशब्दः । जलस्य रयो वेग इव लोलाः । तुल्ययोरेवोत्सर्गतः समुच्चयो दृष्ट इत्यर्थाद्वा इवार्थलाभः । द्रुतं शीघ्रमाकलय्य विचार्य ॥२३॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे सकलपदार्थानास्थाप्रतिपादनं नामैकोनत्रिंशः सर्गः ॥ २९ ॥

स्वचित्तोद्वेगमेवेह हेतुभिः संप्रकाशयन् ।
तन्निरासाय विश्रान्त्यै प्रार्थयत्युपदेशनम् ॥ १ ॥

स्वचित्तोद्वेगमेव हेतुभिः प्रपञ्चयन्विश्रान्तिहेतुतत्त्वोपदेशमेव विस्तरेण प्रार्थयति—**एवमित्यादिना** । एवमुक्तप्रकारैरनर्थशतैः संकटे निबिडिते अर्थात्संसारान्धकूपस्य कोटरे छिद्रे जगज्जीवजातं निर्मग्नमालोक्य मनो मननमत्र चिन्ता तल्लक्षणे कर्दमे निमग्नं ममेति शेषः ॥ १ ॥ संभ्रमो भयम् । जरत्तरोः जीर्णवृक्षस्य ॥ २ ॥ न आप्त उत्तमसंतोषो धैर्यलक्षणो मातुरुत्सङ्गो यया सा मतिः शिशुस्थानीया बिभेति । अल्पबलो रक्षणासमर्थ ईश्वरः पतिर्यस्याः सा बाला स्त्री यथारण्यादौ बिभेति तद्वत् ॥ ३ ॥ तुच्छैरालम्बैर्विषयैर्विडम्बिता वञ्चिता अन्तःकरणवृत्तयो विकल्पेभ्यो विक्षेपदुःखेभ्यो विक्षेपदुःखानि प्राप्तुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति कर्मणि चतुर्थी । लुठन्ति गच्छन्ति । दुःखगर्ते पतन्तीति यावत् । यथा सारङ्गा मृगास्तुच्छलम्बमानतृणादिवञ्चिताः श्वभ्रेषु पतन्ति तद्वत् ॥ ४ ॥ तत्र हेतुमाह—**अविवेकेति** । न विद्यते विवेको येषां पुरुषाणां तदास्पदास्तदाश्रिताश्चक्षुरादयो यतः कष्टे संसारस्थान एव रूढाश्चिरपरिचयेन दृढवासिता ननु सत्पदे परमार्थवस्तुनीत्यर्थः ॥५॥ जीव एवेश्वरः पतिस्तस्मिन्नायत्ता निबद्धा । अवस्थितिमुपरमम् । यथेप्सितं विषयं देशं च । याति प्राप्नोति ॥ ६ ॥ वस्तूनि विषयान् पर्णादींश्च विवेकहिमोपघातात्त्यजन्ती रसावशेषपातकानिचिद्बिभ्रती । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवद्वचनाद्विनात्मदर्शनं रसानिवृत्तेः । मार्गशीर्षस्यान्तः पौषारम्भः ॥ ७ ॥ तामन्तरालावस्थामेव क्लेशावहां स्वस्य प्रपञ्चयति—**अपहस्तितेति** । उक्ता चित्तस्यानवस्थितिरस्थिरता । हस्तादपगमिताः सर्वे सांसारिकाः पारमार्थिकाश्चार्थाः सुखानि यस्मिंस्तथा स्यात्तथा आस्थिता । तथा चोभयभ्रंशः संपन्न इति भावः । यत आत्मानं मां संसारस्थितिः स्वविवेकमात्रेणार्धप्रबोधादर्धमुत्सृज्यार्धं च गृहीत्वाऽवस्थितेत्यर्थः ॥ ८ ॥ अन्तरवष्टम्भ आत्मतत्त्वनिश्चयावलम्बनं तेन दरिद्रा तद्रहिता । आत्मतत्त्वनिश्चये संशयितेति यावत् । मे मतिश्छिन्नवृक्षस्य मूलेन स्थाणुना कर्त्रा यथा महान्धकारे स्थाणुर्वा चोरो वेति

१ अवकारा इति पाठः. २ श्वरायाता इति पाठः. ३ अचञ्चला इति पाठः. ४ महान्धकारे इति मुद्रितपुस्तके पाठः.

दरिद्रा छिन्नवृक्षस्य मूलेनेव विडम्ब्यते ॥ ९
चेतश्चञ्चलमाभोगि भुवनान्तर्विहारि च ।
न संभ्रमं जहातीदं स्वविमानमिवामराः ॥ १०
अतोऽतुच्छमनायासमनुपाधि गतभ्रमम् ।
किं तत्स्थितिपदं साधो यत्र शोको न विद्यते ॥ ११
सर्वारम्भसमारूढाः सुजना जनकादयः ।
व्यवहारपरा एव कथमुत्तमतां गताः ॥ १२
लग्नेनापि किलाङ्गेषु बहुधा बहुमानद ।
कथं संसारपङ्केन पुमानिह न लिप्यते ॥ १३
कां दृष्टिं समुपाश्रित्य भवन्तो वीतकल्मषाः ।
महान्तो विचरन्तीह जीवन्मुक्ता महाशयाः ॥ १४
लोभयन्तो भयायैव विषयाभोगभोगिनः ।
भङ्गुराकारविभवाः कथमायान्ति भव्यताम् ॥ १५
मोहमातङ्गमृदिता कलङ्ककलितान्तरा ।
परं प्रसादमायाति शेमुषीसरसी कथम् ॥ १६
संसार एव निवहे जनो व्यवहरन्नपि ।
न बन्धं कथमाप्नोति पद्मपत्रे पयो यथा ॥ १७
आत्मवत्तृणवच्चेदं सकलं कलयञ्जनः ।
कथमुत्तमतामेति मनोमन्मथमस्पृशन् ॥ १८
कं महापुरुषं पारमुपायातं[1] महोदधेः ।
आचारेणानुसंस्मृत्य जनो याति न दुःखिताम् ॥ १९
किं तत्स्यादुचितं श्रेयः किं तत्स्यादुचितं फलम् ।
वर्तितव्यं च संसारे कथं नामासमञ्जसे ॥ २०
तत्त्वं कथय मे किंचिद्येनास्य जगतः प्रभो ।
वेद्मि पूर्वापरं धातुश्चेष्टितस्यानवस्थितेः ॥ २१
हृदयाकाशशशिनश्चेतसो मलमार्जनम् ।
यथा मे जायते ब्रह्मंस्तथा निर्विघ्नमाचर ॥ २२
किमिह स्यादुपादेयं किंवा हेयमथेतरत् ।
कथं विश्रान्तिमायातु चेतश्चपलमद्रिवत् ॥ २३
केन पावनमन्त्रेण दुःसंसृतिविषूचिका ।
शाम्यतीयमनायासमायासशतकारिणी ॥ २४
कथं शीतलतामन्तरानन्दतरुमञ्जरीम् ।
पूर्णचन्द्र इवाक्षीणां भृशमासादयाम्यहम्[2] ॥ २५
प्राप्यान्तः पूर्णतां पूर्णो न शोचामि यथा पुनः ।
सन्तो भवन्तस्तत्त्वज्ञास्तथेहोपदिशन्तु माम् ॥ २६
अनुत्तमानन्दपदप्रधान-
विश्रान्तिरिक्तं सततं महात्मन् ।
कदर्थयन्तीह भृशं विकल्पाः
श्वानो वने देहमिवाल्पजीवम् ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे प्रयोजनकथनं नाम त्रिंशः सर्गः ॥ ३० ॥

---

सत्यासत्यकोटित्वाचलिताचलितेन संशयेन हेतुना मतिर्विडम्ब्यते तद्वदिदं तत्त्वं स्यादिदं वा तत्त्वमिति संशयेन विडम्ब्यत इत्यर्थः। अथवा उक्तलक्षणा मे मतिर्दोषदर्शनजन्यवैराग्यदार्ढ्याद्रोगेभ्यश्चलितेन अपगतसंशयेन मूलाज्ञानानुच्छेदादचलितेन च वासनाप्ररोहेण हेतुना छिन्नवृक्षस्य मूलेन मूलानुच्छेदात्पुनः प्ररोहोन्मुखेन विडम्ब्यते अनुक्रियत इवेत्यर्थः ॥ ९ ॥ स्वत एव चञ्चलमाभोगि नानाभोगवासनाविस्तीर्णं भुवनान्तर्विहरणेन च दृढाभ्यस्तचापलमतो बलान्निगृह्यमाणमपि तत्त्वज्ञानावष्टम्भाभावात्संभ्रमं चापलं न जहाति । विमानपक्षे आभोगि नानाभोगसामग्रीपूर्णम् ॥ १० ॥ अतुच्छं परमार्थसत्यम् । जन्ममरणायासरहितं देहाद्युपाधिशून्यम् । भ्रमहेतूच्छेदाद्गतभ्रमम् । स्थितिपदं विश्रान्तिस्थानम् । यत्र गत्वा यत्प्राप्य ॥ ११ ॥ वयमिव सर्वेषु दृष्टादृष्टफलारम्भेषु । परास्तत्पराः । तदनुकूललौकिकवैदिकव्यवहारपरा एवेत्यर्थः ॥ १२ ॥ संसारपङ्केन पुण्यपापरूपेण शोकमोहादिना च ॥ १३ ॥ १४ ॥ विषयाभोगा विषयवेषा भोगिनः सर्पाः । भङ्गुरौ नश्वरौ कुटिलौ चाकारविभवौ येषाम् । सर्पपक्षे विभवो विषसामर्थ्यम् । भव्यतां मङ्गलताम् ॥ १५ ॥ मृदिता विलोडिता । कलङ्काः कामादयः कर्दमशैवलादयश्च । प्रसादं नैर्मल्यम् । शेमुषी प्रज्ञा सैव सरसी महत्सरः । 'दक्षिणापथे महान्ति सरांसि सरस्य इत्युच्यन्ते' इति महाभाष्योक्तेः ॥ १६ ॥ निवहे प्रवाहरूपे ॥ १७ ॥ परदुःखादावात्मवत्स्वदुःखादौ तृणवत् । अन्तर्दृष्ट्या आत्मवत् बहिर्दृष्ट्या तृणवत् । कलयन्पश्यन् । मनसो मन्मथं कामादिवृत्तिम् ॥ १८ ॥ महापुरुषं जीवन्मुक्तम् । महदत्राज्ञानं तल्लक्षणादुदधेः । आचारेण चरित्रेणानु लक्षीकृत्य स्मृत्वा तद्वदेव स्मृत्वा आचर्येत्यर्थः ॥ १९ ॥ उचितमनश्वरत्वात्प्राप्तुं योग्यम् । श्रेयो मोक्षः । फलं कर्मोपासनादेः ॥ २० ॥ येन उपदेशेन । अनवस्थितेः अव्यवस्थितस्य । 'असमस्थितेः' इति पाठे विषमस्थितेः । धातुश्चेष्टितस्य जगतः । पूर्वापरमाद्यन्तयोरविशिष्टं वस्तु ॥ २१ ॥ चेतसः साभासान्तःकरणस्य । मलमज्ञानम् ॥ २२ ॥ इतरत् अहेयमनुपादेयं च ॥ २३ ॥ रोगाणां पापमूलत्वात्तन्निरासद्वारा पावनेन पवनदोषोपशमनहेतुना वा ॥ २४ ॥ आनन्दतरोर्मञ्जरीमिव स्थितां शीतलताम् । भृशं दैशिकपरिच्छेदशून्याम् । अक्षीणां कालिकपरिच्छेदशून्यामिति यावत् ॥ २५ ॥ २६ ॥ आनन्दपदे प्रधानविश्रान्तिरात्यन्तिकं स्थैर्यं तेन रिक्तं शून्यम् । कदर्थयन्ति पीडयन्ति ॥ २७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे प्रयोजनकथनं नाम त्रिंशः सर्गः ॥ ३० ॥

---

१ उपयातं इति पाठः. २. भृशं साक्षाद्[illegible] इति पाठः. ३ [illegible] इति पाठः. ४ द्रोगेभ्यः इति पाठः. ५ अन्ययमिदम्.

# एकत्रिंशः सर्गः ३१

श्रीराम उवाच ।

प्रोच्चवृक्षचलत्पत्रलम्बाम्बुलवभङ्गुरे ।
आयुषीशानशीतांशुकलामृदुनि देहके ॥ १
केदारविरटद्भेककण्ठत्वक्कोणभङ्गुरे ।
वागुरावलये जन्तोः सुहृत्सुजनसंगमे ॥ २
वासनावातवलिते कदाशातडिति स्फुटे ।
मोहोग्रमिहिकामेघे घनं स्फूर्जति गर्जति ॥ ३
नृत्यत्युत्ताण्डवं चण्डे लोले लोभकलापिनि ।
सुविकासिनि सास्फोटे ह्यनर्थकुटजद्रुमे ॥ ४
क्रूरे कृतान्तमार्जारे सर्वभूताखुहारिणि ।
अश्रान्त[1]स्यन्दसंचारे कुतोऽप्युपरिपातिनि ॥ ५
क उपायो गतिः का वा का चिन्ता कः समाश्रयः ।
केनेयमशुभोदर्का न भवेज्जीविताटवी ॥ ६
न तदस्ति पृथिव्यां वा दिवि देवेषु वा क्वचित् ।
सुधियस्तुच्छमप्येतद्यन्नयन्ति न रम्यताम् ॥ ७
अयं हि दग्धसंसारो नीरन्ध्रकलनाकुलः ।
कथं सुस्वादुतामेति नीरसो मूढतां विना ॥ ८
आशाप्रतिविपाकेन क्षीरस्नानेन रम्यताम् ।
उपैति पुष्पशुभ्रेण मधुनेव वसुंधरा ॥ ९
अपमृष्टमलोदेति क्षालनेनामृतद्युतिः ।
मनश्चन्द्रमसः केन तेन कामकलङ्कितात् ॥ १०
दृष्टसंसारगतिना दृष्टादृष्टविनाशिना ।
केनेव व्यवहर्तव्यं संसारवनवीथिषु ॥ ११
रागद्वेषमहारोगा भोगपूगा विभूतयः ।
कथं जन्तुं न बाधन्ते संसारार्णवचारिणम् ॥ १२
कथं च धीरवर्याग्नौ पततापि न दह्यते ।
पावके पारदेनेव रसेन रसशालिना ॥ १३
यस्मात्किल जगत्यस्मिन्व्यवहार[2]क्रिया विना ।
न स्थितिः संभवत्यब्धौ पतितस्याजला यथा ॥ १४
रागद्वेषविनिर्मुक्ता सुखदुःखविवर्जिता ।
कृशानोर्दाहहीनेव शिखा नास्तीह सत्क्रिया ॥ १५
मनोमननशालिन्याः सत्ताया भुवनत्रये ।

संसारे जीवितं प्रावृड्घनदुर्जीवितोपमम् ।
येन सौख्यपदं याति स उपायोऽत्र पृच्छ्यते ॥ १ ॥

करिष्यमाणप्रश्नोपोद्घातत्वेन संसारे जीवितं प्रावृड्घनत्वेन कल्पयति—**प्रोच्चे**त्यादिषड्भिः । सर्वेषां सप्तम्यन्तानां क उपाय इत्यादिभिः संबन्धः । प्रोच्चः प्रांशुः । लम्बो लम्बमानोऽम्बुकण इव भङ्गुरे । यद्यपि हेमन्तेऽप्येतदस्ति तथापि वर्षास्वासारपातादाशुतरभङ्गुरतेति विशेषः । ईशानः शिवस्तद्भूषणशीतांशुः कलामात्रशेष इव मृदुन्यल्पे । दुर्लक्ष्य इति यावत् । वर्षासु चन्द्र एव दुर्लक्ष्यस्तत्रापि कलामात्रशेषः सुतरामिति भावः । इदमप्यायुष एव विशेषणम् । कुत्सितेऽल्पे वा देहके [3]देहे ॥ १ ॥ केदारेषु शालिक्षेत्रेषु । कोणोऽत्र मध्यभागः स इव भङ्गुरे अस्थिरे देहके इति पूर्वेण संबन्धः । सुहृदां मित्राणां सुजनानां आप्तबन्धुजनानां संगम एव वागुरावत्प्रवृद्धो लताप्रतानवलयः । सद्गतिमार्गनिरोधकत्वात् ॥ २ ॥ वासनालक्षणेन पुरोवातेन वलिते आवेष्टिते मोहोग्रमिहिकामेघे इत्यन्वयः । मिहिकातुषारो मेघानामारम्भावस्था । घनं निरन्तरम् । गर्जनं सामान्यतः, स्फूर्जनं त्वशनिपातपर्यन्तमित्यपौनरुक्त्यम् ॥ ३ ॥ लोले चञ्चले । कलापिनि मयूरे । आस्फोटः कलहः कलिकाः पुटभेदश्च ॥ ४ ॥ सर्वभूतान्येवाखवः । वर्षासु बहुजन्तुभक्षणान्मार्जाराणां बलातिशयः प्रसिद्धः । स्यन्दो जलप्रवाहः । कुतो भूमितः, अपिशब्दान्नभस्तश्च, कुतोऽप्यतर्कितस्थानादिति वा ॥ ५ ॥ आरण्यकवातवर्षादिपीडानिवृत्तौ छत्रच्छदिः कटादिरुपायाः । रसगुटिकौषधलेपादिना द्रुतं निर्दिष्टदूरदेशे गतिः । संकटोत्तारकमन्त्रदेवतादेश्चिन्ता । गिरिगुहादेः समाश्रयो वा साधनानि यथा लोके प्रसिद्धानि तथा अत्रापि पृच्छ्यन्ते । अशुभमेवोदर्क औत्तरकालिकं फलं यस्यास्तथाविधा न भवेत् ॥ ६ ॥ सुधियस्तपोज्ञानशक्त्यूर्जितबुद्धयो भवादृशास्तुच्छमतिफल्ग्वपि यद्वस्तु रम्यतां न नयन्ति । नेतुमसमर्था इति यावत् । तदेतत्पृथिव्यां मनुष्यादिषु दिवि देवेषु वा नास्ति । यतस्त्रिशङ्कोस्तादृशो गुरुशापोऽप्याकल्पभोग्यस्वर्गपरिणतः शुनःशेपस्य च मृत्युर्दी[4]र्घायुषि पर्यवसित इति भावः ॥ ७ ॥ नीरन्ध्रं निरन्तरं दुःखकलनया आकुलः अतएव नीरसः । सुस्वादुतां सरसताम् । मूढतां विना मूढतानिरासद्वारा । कथं केनोपायेन सुस्वादुतामेतीत्यर्थः ॥ ८ ॥ सर्वदुःखनिदानभूताया आशायाः प्रसिद्धस्वभावप्रतिकूलो विपाकः पूर्णकामता स एव क्षीरस्नानम् । उपैति संसार इति शेषः । पुष्पैः शुभ्रेण रम्येण मधुना वसन्तेन ॥ ९ ॥ कामेन कलङ्कितान्मनश्चन्द्रमसः । तेन विद्वदनुभवप्रसिद्धेन केन क्षालनेनापमृष्टकामादिमला अमृतद्युतिराह्लादचन्द्रिका उदेतीत्यन्वयः ॥ १० ॥ दृष्टा संसारस्य गतिरनर्थपर्यवसानलक्षणा येन । दृष्टादृष्टे ऐहिकामुष्मिकभोगौ [5]विवेकवैराग्यबोधदार्ढ्याभ्यां विनाशितवता केन महापुरुषेणेव व्यवहर्तव्यमस्माभिस्तमुदाहरेति शेषः । 'केनैव' इति पाठे व्यवहारेणेति शेषः ॥ ११ ॥ १२ ॥ धीरवर्येति संबोधनम् । अग्नौ अग्निवद्दाहके संसारे । रसो ज्ञानामृतं तेन शालिना ॥ १३ ॥ ननु यदि व्यवहाराद्दुःखं तर्हि संत्यज्यतां तत्राह—**यस्मा**दिति । व्यवहाराणां क्रियाः संपादनानि विना । अब्धौ पतितस्य जातस्य मत्स्यादेर्यथा अजला स्थितिर्न संभवति तद्वत् ॥ १४ ॥ नन्वस्तु दुर्व्यवहारे दुःखं, सत्क्रियायां तु न तत्संभावनेत्याशङ्क्याह—**रागे**ति ॥ १५ ॥ तिष्ठतु बाह्यव्यवहारो मनश्चाञ्चल्यमेव परं दुःखम्, अतस्तच्चिकित्सैव वक्त-

१ स्पन्द इति पाठः. २ क्रियां विना इति पाठः. ३ देहे इति क्वचिन्न पठ्यते. ४ दीर्घायुष्यपर्यवसित इति पाठः. ५ विवेकेति क्वचिन्न पठ्यते.

क्षयो युक्तिं विना नास्ति ब्रूत तामलमुत्तमाम् ॥ १६
व्यवहारवतो युक्त्या दुःखं नायाति मे यया।
अथवा व्यवहारस्य ब्रूत तां युक्तिमुत्तमाम् ॥ १७
तत्कथं केन वा किं वा कृतमुत्तमचेतसा।
पूर्वं येनैति विश्रामं परमं पावनं मनः ॥ १८
यथा जानासि भगवंस्तथा मोहनिवृत्तये।
ब्रूहि मे साधवो येन नूनं निर्दुःखतां गताः ॥ १९
अथवा तादृशी युक्तिर्यदि ब्रह्मन्न विद्यते।
न वक्ति मम वा कश्चिद्विद्यमानामपि स्फुटम् ॥ २०
स्वयं चैव न चाप्नोमि तां विश्रान्तिमनुत्तमाम्।
तदहं त्यक्तसर्वेहो निरहंकारतां गतः ॥ २१
न भोक्ष्ये न पिबाम्यम्बु नाहं परिदधेऽम्बरम्।
करोमि नाहं व्यापारं स्नानदानाशनादिकम् ॥ २२
न च तिष्ठामि कार्येषु संपत्स्वापद्दशासु च[1]।
न किंचिदपि वाञ्छामि देहत्यागादृते मुने ॥ २३
केवलं विगताशङ्को निर्ममो गतमत्सरः।
मौन एवेह तिष्ठामि लिपिकर्मस्विवार्पितः ॥ २४
अथ क्रमेण संत्यज्य प्रश्वासोच्छ्वाससंविदः।
संनिवेशं त्यजामीममनर्थं देहनामकम् ॥ २५
नाहमस्य न मे नान्यः शाम्याम्यस्नेहदीपवत्।
सर्वमेव परित्यज्य त्यजामीदं कलेवरम् ॥ २६

श्रीवाल्मीकिरुवाच।

इत्युक्तवानमलशीतकराभिरामो
रामो महत्तरविचारविकासिचेताः।
तूष्णीं बभूव पुरतो महतां घनानां
केकारवं श्रमवशादिव नीलकण्ठः ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे राघवप्रश्नो नामैकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ३२

श्रीवाल्मीकिरुवाच।

वदत्येवं मनोमोहविनिवृत्तिकरं वचः।
रामे राजीवपत्राक्षे तस्मिन्राजकुमारके ॥ १
सर्वे बभूवुस्तत्रस्था विस्मयोत्फुल्ललोचनाः।
भिन्नाम्बरा देहरुहैर्गिरः श्रोतुमिवोद्धुरैः ॥ २
विरागवासनापास्तसमस्तभववासनाः।
मुहूर्तममृताम्भोधिवीचीविलुलिता इव ॥ ३
ता गिरो रामभद्रस्य तस्य चित्रार्पितैरिव।
संश्रुताः श्रृणुकैरन्तरानन्दपदपीवरैः ॥ ४
वसिष्ठविश्वामित्राद्यैर्मुनिभिः संसदि स्थितैः।
जयन्तधृष्टिप्रमुखैर्मन्त्रिभिर्मन्त्रकोविदैः ॥ ५
नृपैर्दशरथप्रख्यैः पौरैः पारशवादिभिः[2]।
सामन्तै राजपुत्रैश्च ब्राह्मणैर्ब्रह्मवादिभिः ॥ ६
तथा भृत्यैरमात्यैश्च पञ्जरस्थैश्च पक्षिभिः।
क्रीडामृगैर्गतस्पन्दैस्तुरङ्गैस्त्यक्तचर्वणैः ॥ ७
कौसल्याप्रमुखैश्चैव निजवातायनस्थितैः।
संशान्तभूषणारावैरस्पन्दैर्वनितागणैः ॥ ८

व्येत्याह—मन इति। मनसो मननं विषयावलम्बस्तच्छालिन्येव सत्ताविषयावलम्बक्षय एव मनःसत्ताक्षयः स च सर्वविषयबाधकतत्त्वबोधहेतुयुक्त्युपदेशं विना नास्ति। अतस्तां युक्तिमलमत्यर्थं यावद्बोधोदयं ब्रूत। उपदिशन्तित्यर्थः ॥१६॥१७॥ तत् युक्त्या मोहनिरसनं केन वा पूर्वं कृतं कथं केन प्रकारेण कृतं तेन किं वा प्राप्तं तत्त्वं यथा जानासि तथा ब्रूहीत्युत्तरेण संबन्धः ॥ १८ ॥ १९ ॥ तादृशयुक्त्यलाभे स्वस्य देहत्यागान्तं प्रायोपवेशनमेव न जीवनव्यवहारादय इत्याह—अथवेत्यादिसप्तभिः ॥ २० ॥ स्वयमेव विचार्य वा नाप्नोमि चेत्तर्हि ॥ २१ ॥ २२ ॥ २३ ॥ मौने वागादिसर्वव्यवहाराभावे। लिपिकर्मसु चित्रक्रियासु। अर्पितो लिखितः ॥ २४ ॥ संनिवेशमवयवसंस्थानरूपम् ॥ २५ ॥ न मे इदमिति शेषः। अन्योऽपि न मे। अस्नेहो निस्तैलः ॥ २६ ॥ शीतकरश्चन्द्रः। इति उक्तवान्सन् महतां गुरूणां वसिष्ठादीनां पुरतस्तूष्णीं बभूव। यथा केकारवमुक्तवान्नीलकण्ठो मयूरो घनानां पुरतस्तूष्णीं भवति तद्वत् ॥२७॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे राघवप्रश्नो नामैकत्रिंशः सर्गः ॥ ३१ ॥

रामवाक्यं श्रुतवतां वर्ण्यते भूरिविस्मयः।
नराणाममराणां च पुष्पवर्षश्च खाच्च्युतः ॥ १ ॥

स्वविवेकसम्यग्विचारमूलमिदं श्रीरामवचनजातं स्वतो विचारासमर्थानां मुमुक्षूणामुपदेशरूपत्वादादराभ्यासाभ्यामुपादेयतममिति सूचनाय प्रशंसमानः 'तदुपर्यपि बादरायणः संभवात्' इति न्यायसिद्धं देवादीनामपि वक्ष्यमाणब्रह्मविद्याधिकारं दर्शयितुं तत्कृतां श्रीरामवाक्यप्रशंसां तत्समागममहोत्सवं च वर्णयितुमुपक्रमते—वदत्येवमित्यादिना। रामे एवं वदति सति तत्रस्थाः सर्वे वक्ष्यमाणविस्मयरोमाञ्चादिविशिष्टा बभूवुरित्युत्तरत्रान्वयः ॥ १ ॥ उक्ता रामगिरः श्रोतुमुद्धुरैरुत्सारितजाड्यभारैरुत्थितैरिति यावत्। देहरुहै रोमभिर्भिन्नाम्बराश्छिद्रितवस्त्रा इवेत्युत्प्रेक्षा ॥२॥ विरागवासनया अपास्ता समस्ता भवहेतुरागद्वेषादिवासना येषाम् ॥ ३ ॥ श्रृणुकैः श्रवणसमर्थैः। आनन्दस्य पदेन लक्षणा पीवरैः पुष्टैः ॥४॥५॥ पैर्श्वादयो देशविशेषास्थराजादयः पारशवादयः। पर्श्वादित्वादण् ॥ ६ ॥ ७ ॥ वातायनं

१ संपत्स्वापत्सु चैव हि इति पाठः. २ पर्शुर्ना[illegible] नाभावात्तस्याकृतिगणत्वाभावाचेदं विचारणीयम्।

उद्यानवल्लीनिलयैर्विटङ्कनिलयैरपि ।
अक्षुब्धपक्षततिभिर्विहङ्गैर्विरतारवैः ॥ ९
सिद्धैर्नभश्चरैश्चैव तथा गन्धर्वकिन्नरैः ।
नारदव्यासपुलहप्रमुखैर्मुनिपुङ्गवैः ॥ १०
अन्यैश्च देवदेवेशविद्याधरमहोरगैः ।
रामस्य ता विचित्रार्था महोदारा गिरः श्रुताः ॥ ११
अथ तूष्णीं स्थितवति रामे राजीवलोचने ।
तस्मिन्रघुकुलाकाशशशाङ्के शशिसुन्दरे ॥ १२
साधुवादगिरा सार्धं सिद्धसार्थसमीरिता ।
वितानकसमा व्योम्नः पौष्पी वृष्टिः पपात ह ॥ १३
मन्दारकोशविश्रान्तभ्रमरद्वन्द्वनादिनी ।
मधुरामोदसौन्दर्यमुदितोन्मदमानवा ॥ १४
व्योमवातविनुन्नेव तारकाणां परम्परा ।
पतितेव धरापीठे स्वर्गस्त्रीहसितच्छटा ॥ १५
वृष्यमूककचन्मेघलवावलिरिव च्युता ।
हैयंगवीनपिण्डानामीरितेव परम्परा ॥ १६
हिमवृष्टिरिवोदारा मुक्ताहारचयोपमा ।
ऐन्दवी रश्मिमालेव क्षीरोर्मीणामिवाततिः ॥ १७
किञ्जल्काम्भोजवलिता भ्रमद्भृङ्गकदम्बका ।
सीत्कारगायदामोदिमधुरानिललोलिता ॥ १८
प्रभ्रमत्केतकीव्यूहा प्रस्फुरत्कैरवोत्करा ।
प्रपतत्कुन्दवलया चलत्कुवलयालया ॥ १९
आपूरिताङ्गणरसा गृहाच्छादनचत्वरा ।
उद्ग्रीवपुरवास्तव्यनरनारीविलोकिता ॥ २०
निरभ्रोत्पलसंकाशव्योमवृष्टिरनाकुला ।
अदृष्टपूर्वा सर्वस्य जनस्य जनितस्मया ॥ २१
अदृश्याम्बरसिद्धौघकरोत्करसमीरिता ।
सा मुहूर्तचतुर्भागं पुष्पवृष्टिः पपात ह ॥ २२
आपूरितसभालोके शान्ते कुसुमवर्षणे ।
इमं सिद्धगणालापं शुश्रुवुस्ते सभागताः ॥ २३
आकल्पं सिद्धसेनासु भ्रमद्भिरभितो दिवम् ।
अपूर्वमिदमस्माभिः श्रुतं श्रुतिरसायनम् ॥ २४
यदनेन किलोदारमुक्तं रघुकुलेन्दुना ।
वीतरागतया तद्धि वाक्पतेरप्यगोचरम् ॥ २५
अहो बत महत्पुण्यमद्यास्माभिरिदं श्रुतम् ।
वचो राममुखोद्भूतं महाह्लादकरं धियः ॥ २६
उपशमामृतसुन्दरमादरा-
दधिगतोत्तमतापदमेष यत् ।
कथितवानुचितं रघुनन्दनः
सपदि तेन वयं प्रतिबोधिताः ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे नभश्चरसाधुवादो नाम द्वात्रिंशः सर्गः ॥ ३२ ॥

## त्रयस्त्रिंशः सर्गः ३३

सिद्धा ऊचुः ।
पावनस्यास्य वचसः प्रोक्तस्य रघुकेतुना ।
निर्णयं श्रोतुमुचितं वक्ष्यमाणं महर्षिभिः ॥ १
नारदव्यासपुलहप्रमुखा मुनिपुङ्गवाः ।

गवाक्षः ॥ ८ ॥ विटङ्कः सौधाग्रकपोतपालिका ॥ ९ ॥ १० ॥ देवेशा दिक्पतयः । श्रुता इति सर्वत्र संबध्यते ॥ ११ ॥ रघुकुलमेवाकाशो निर्मलत्वात्तस्य शशाङ्के पूर्णचन्द्रे । पूर्णे हि शशो लक्ष्यते तर्हि कलङ्कितापि स्यादित्याशङ्क्याह—**शशिसुन्दरे** इति । सौन्दर्यातिशयलाभाय पूर्णतोपलक्षणार्थं शशोपादानं न स्वार्थमिति भावः ॥ १२ ॥ सिद्धग्रहणं मुमुक्षुदेवयोनिमात्रोपलक्षणम् । सार्थः सङ्घः ॥ १३ ॥ द्वन्द्वं मिथुनम् । मुदिताः संतुष्टाः । उन्मदा अस्वाधीनचित्ताः ॥ १४ ॥ विनुन्ना पातिता । हसितच्छटा हास्यकान्तिः ॥ १५ ॥ वृष्या वर्षणशीला मूका गर्जनवर्जिता विद्युद्भिः कचन्तो दीप्ता ये मेघास्तेषां लवावलिर्लेशसमूहः ॥१६॥१७॥ किञ्जल्कः केसरस्तत्प्रधानैरम्भोजैर्वलिता सहिता । जनानां स्पर्शसुखाभिनयसीत्कारध्वनिभिर्गायता मधुरेण मन्दत्वात्सुखस्पर्शेनानिलेन लोलिता ईषच्चालिता ॥ १८ ॥ व्यूहादयः समूहार्थाः ॥ १९ ॥ रसा भूमिः । आपूरितानि चत्वरान्तानि यया । पुरवास्तव्यैः पुरवासिभिः ॥ २० ॥ निरभ्रमत एवोत्पलसंकाशं यद्व्योम

ततः पतिता वृष्टिर्वर्णितपुष्पवृष्टिः । स्मयो विस्मयः ॥ २१ ॥ मुहूर्तस्य चतुर्थभागोऽर्धघटिका[2] तावत्कालं पपात । ह किल ॥२२॥ आपूरिताः सभा तद्गता लोकाश्च येन । शान्ते उपरते सति ॥ २३ ॥ दिवमभितः स्वर्गस्य सर्वप्रदेशेषु श्रुतिरसायनं श्रोत्रामृतं वेदसारभूतं वा ॥ २४ ॥ न गोचरा अर्था यस्मिंस्तथाविधम् ॥ २५ ॥ बतेत्येतादृशवाक्यश्रवणहीनं जन्म व्यर्थमिति खेदे ॥ २६ ॥ अधिगतायाः प्राप्तायाः जातिकुलचारित्र्यधर्माभिज्ञतादिभिरुत्तमतायाः सार्थक्यापादनात्पदं त्राणं लक्षणभूतं वा यद्वाक्यजातं कथितवांस्तेन वयं प्रतिबोधिताः स्वर्गादिसुखानामप्यसारतामिति भावः ॥२७॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे नभश्चरसाधुवादो नाम द्वात्रिंशः सर्गः ॥३२॥

अवतारोऽत्र सिद्धानां सभायामुपवर्ण्यते ।
यथोचितोपविष्टैस्तै रामवाक्यप्रशंसनम् ॥ १ ॥

सिद्धैः कृतां रामवाक्यादिप्रशंसामेव महीकुर्वंस्तेषां प्रश्ननिर्णयोत्तरशुश्रूषां सभाप्रवेशादिकं च वर्णयितुमुपक्रमते—**सिद्धा ऊचु**रित्यादिना । रघुशब्देन तद्वंशो लक्ष्यते तस्य केतुवत्प्रख्यापकेनेत्यर्थः ॥ १ ॥ आशु आगच्छत अविघ्नेन । श्रोतुमिति शेषः ।

१ वृष्टमूक इति पाठः. २ अर्धघटी इति पाठः.

आगच्छताश्वविघ्नेन सर्वे एव महर्षयः ॥ २
पतामः परितः पुण्यामेतां दाशरथीं सभाम् ।
नीरन्ध्रां कनकोद्योतां पद्मिनीमिव षट्पदाः ॥ ३
श्रीवाल्मीकिरुवाच ।
इत्युक्ता सा समस्तैव व्योमवासनिवासिनी ।
तां पपात सभां तत्र दिव्या मुनिपरम्परा ॥ ४
अग्रस्थितमनुत्सृष्टरणद्वीणं मुनीश्वरम् ।
पयःपीनघनश्यामं व्यासमेव किलान्तरा ॥ ५
भृग्वङ्गिरःपुलस्त्यादिमुनिनायकमण्डिता ।
च्यवनोद्दालकोशीरशरलोमादिमालिता ॥ ६
परस्परपरामर्शदुःसंस्थानमृगाजिना ।
लीलाक्षमालावलया सुकमण्डलुधारिणी ॥ ७
तारावलिरिव व्योम्नि तेजःप्रसरपाटला ।
सूर्यावलिरिवान्योन्यं भासिताननमण्डना ॥ ८
रत्नावलिरिवान्योन्यं नानावर्णकृताङ्गिका ।
मुक्तावलिरिवान्योन्यं कृतशोभातिशायिनी ॥ ९
कौमुदीवृष्टिरन्येव द्वितीयेवार्कमण्डली ।
संभृतेवातिकालेन पूर्णचन्द्रपरम्परा ॥ १०
ताराजाल इवाम्भोदो व्यासो यत्र विराजते ।
तारौघ इव शीतांशुर्नारदोऽत्र विराजते ॥ ११
देवेष्विव सुराधीशः पुलस्त्योऽत्र विराजते ।
आदित्य इव देवानामङ्गिरास्तु विराजते ॥ १२
अथास्यां सिद्धसेनायां पतन्त्यां नभसो रसाम् ।
उत्तस्थौ मुनिसंपूर्णा तदा दाशरथी सभा ॥ १३
मिश्रीभूता विरेजुस्ते नभश्चरमहीचराः ।
परस्परवृताङ्गाभा भासयन्तो दिशो दश ॥ १४
वेणुदण्डावृतकरा लीलाकमलधारिणः ।
दूर्वाङ्कुराक्रान्तशिखाः सचूडामणिमूर्धजाः ॥ १५
जटाजूटैश्च कपिला मौलिमालितमस्तकाः ।
प्रकोष्ठगाक्षवलया मल्लिकावलयान्विताः ॥ १६
चीरवल्कलसंवीताः स्रक्कौशेयावगुण्ठिताः ।
विलोलमेखलापाशाश्चलन्मुक्ताकलापिनः ॥ १७
वसिष्ठविश्वामित्रौ तान्पूजयामासतुः क्रमात् ।
अर्घ्यैः पाद्यैर्वचोभिश्च सर्वानेव नभश्चरान् ॥ १८
वसिष्ठविश्वामित्रौ ते पूजयामासुरादरात् ।
अर्घ्यैः पाद्यैर्वचोभिश्च नभश्चरमहागणाः ॥ १९
सर्वादरेण सिद्धौघं पूजयामास भूपतिः ।
सिद्धौघो भूपतिं चैव कुशलप्रश्नवार्तया ॥ २०
तैस्तैः प्रणयसंरम्भैरन्योन्यं प्राप्तसत्क्रियाः ।
उपाविशन्विष्टरेषु नभश्चरमहीचराः ॥ २१
वचोभिः पुष्पवर्षेण साधुवादेन चाभितः ।
रामं ते पूजयामासुः पुरः प्रणतमास्थितम् ॥ २२
आसांचक्रे च तत्रासौ राज्यलक्ष्मीविराजितः ।
विश्वामित्रो वसिष्ठश्च वामदेवोऽथ मन्त्रिणः ॥ २३
नारदो देवपुत्रश्च व्यासश्च मुनिपुङ्गवः ।
मरीचिरथ दुर्वासा मुनिराङ्गिरसस्तथा ॥ २४
क्रतुः पुलस्त्यः पुलहः शरलोमा मुनीश्वरः ।
वात्स्यायनो भरद्वाजो वाल्मीकिर्मुनिपुङ्गवः ॥ २५
उद्दालक ऋचीकश्च शर्यातिश्च्यवनस्तथा ॥ २६
एते चान्ये च बहवो वेदवेदाङ्गपारगाः ।
ज्ञातज्ञेया महात्मान आस्थितास्तत्र नायकाः ॥ २७
वसिष्ठविश्वामित्राभ्यां सह ते नारदादयः ।
इदमूचुरनूचाना राममानमिताननम् ॥ २८
अहो बत कुमारेण कल्याणगुणशालिनी ।
वागुक्ता परमोदारा वैराग्यरसगर्भिणी ॥ २९
परिनिष्ठितवक्तव्यं सबोधमुचितं स्फुटम् ।

'श्रेयांसि बहुविघ्नानि' इति न विलम्बनमुचितमिति भावः ॥२॥ नीरन्ध्रां पूर्णामर्थात्संपदेति गम्यते । अतएव कनकैरुद्योतामुत्कृष्टप्रकाशाम् । पद्मिनीपक्षे केसरश्रिया कनकैरिवोद्योतमानाम् ॥ ३ ॥ व्योम वासो निवासस्थानं येषां विमानानां तेषु निवासिनी । विस्तीर्णायां सभायां यत्र प्रदेशे रामादयस्तत्र ॥ ४ ॥ तामेव वर्णयत्यष्टभिः । अग्रे प्रमुखस्थाने स्थितम् । न उत्सृष्टा रणद्वीणा येन तं मुनीश्वरं नारदम् । पयसा जलेन पीनः पूर्णो घन इव श्यामं व्यासमेव च अन्तरा । तयोरन्तराले इत्यर्थः । 'अन्तरान्तरेण युक्ते' इति षष्ठ्यर्थे द्वितीया । भृग्वङ्गिरःपुलस्त्यादिमुनिनायकैर्मण्डिता भूषितेत्युत्तरेण संबन्धः ॥ ५ ॥ भृग्वादीनि तेषां नामानि ॥ ६ ॥ परामर्शेन संघर्षणेन दुःसंस्थानानि विसंष्ठुलानि मृगाजिनानि यस्याः ॥ ७ ॥ तेजःप्रसरेण पाटला श्वेतरक्ता ॥ ८ ॥ ९ ॥ अन्या प्रसिद्धविलक्षणा । अतिकालेन चिरेण संभृता एकत्र संचिता ॥१०॥ व्यास एकतः नारदोऽन्यत इति शेषः ॥११॥१२॥ रसां सभाभूमिम् । पतन्त्यां प्रविशन्त्याम् ॥ १३ ॥ परस्परं वृताभिर्मिश्रिताभिरङ्गानामाभाभिः कान्तिभिः ॥१४॥ लीलाकमलधारिणः केचिदिति यथायोग्यं शेषः ॥ १५ ॥ मौलावग्रभागे मालितं मालाभिर्वेष्टितं मस्तकं शिरो येषाम् । प्रकोष्ठः करमूलम् ॥ १६ ॥ चीरवल्कलयोरवान्तरजात्या भेदः । कलापिनो भूषिताः । कर्मधारयादप्यतिशायने वा इनिः ॥१७॥ ॥ १८ ॥ १९ ॥ कुशलप्रश्नसहितया वार्तया तत्कालोचितकथया ॥ २० ॥ प्रणयः प्रीतिस्तदुचितैर्दानमानादिसंरम्भैः । सत्क्रिया पूजा । विष्टरेष्वासनेषु ॥२१॥ वचोभिरुचितकथालापैः । साधुवादेन प्रशंसनेन ॥ २२ ॥ तत्र तेषां मध्ये । असौ रामः । विश्वामित्रादयः अथ आस्थिता उपविष्टा इति सप्तमेन संबन्धः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ज्ञातमवश्यं ज्ञेयमात्मतत्त्वं ज्ञेयमात्रं वा यैः । नायकाः श्रेष्ठाः ॥२७॥ अनूचाना आचार्याद्विधिवदधीतसाङ्गवेदाः । आनमिताननं विनयेन ॥ २८ ॥ तदुक्तीरेव प्रपञ्चयति अहो इत्यादिभिरष्टादशभिः । कल्याणैर्वक्ष्यमाणषोडशगुणैः शालिनी शोभमाना ॥ २९ ॥ विचार्यैत्थमेवेति व्यव-

१ यतामः इति पाठः. २ इत्युक्ता, सिद्धैरिति शेषः. ३ अम्भोधो इति पाठः. ४ सभाभूमिम् इति पाठः. ५ सप्तमेन श्लोकार्धेनेति ज्ञेयम्.

उदारं प्रियमार्यार्हमविह्वलमपि स्फुटम् ॥ ३०
अभिव्यक्तपदं स्पष्टमिष्टं स्पष्टं च तुष्टिमत् ।
करोति राघवप्रोक्तं वचः कस्य न विस्मयम् ॥ ३१
शतादेकतमस्यैव सर्वोदारचमत्कृतिः ।
ईप्सितार्थार्पणैकान्तदक्षा भवति भारती ॥ ३२
कुमार त्वां विना कस्य विवेकफलशालिनी ।
परं विकासमायाति प्रज्ञाशरलतातता ॥ ३३
प्रज्ञादीपशिखा यस्य रामस्येव हृदि स्थिता ।
प्रज्वलत्यसमालोककारिणी स पुमान्स्मृतः ॥ ३४
रक्तमांसास्थियन्त्राणि बह्वन्यतितराणि च ।
पदार्थानभिकर्षन्ति नास्ति तेषु सचेतनः ॥ ३५
जन्ममृत्युजरादुःखमनुयान्ति पुनःपुनः ।
विमृशन्ति न संसारं पशवः परिमोहिताः ॥ ३६
कथंचित्क्वचिदेवैको दृश्यते विमलाशयः ।
पूर्वापरविचारार्हो यथायमरिमर्दनः ॥ ३७
अनुत्तमचमत्कारफलाः सुभगमूर्तयः ।
भव्या हि विरला लोके सहकारद्रुमा इव ॥ ३८

सम्यग्दृष्टजगद्यात्रा स्वविवेकचमत्कृतिः ।
अस्मिन्मान्यमतावन्तरियमद्यैव दृश्यते ॥ ३९
सुभगाः सुलभारोहाः फलपल्लवशालिनः ।
जायन्ते तरवो देशे न तु चन्दनपादपाः ॥ ४०
वृक्षाः प्रतिवनं सन्ति नित्यं सफलपल्लवाः ।
नत्वपूर्वचमत्कारो लवङ्गः सुलभः सदा ॥ ४१
ज्योत्स्नेव शीता शशिनः सुतरोरिव मञ्जरी ।
पुष्पादामोदलेखेव दृष्टा रामाच्चमत्कृतिः ॥ ४२
अस्मिन्नुद्दामदौरात्म्यदैवनिर्माणनिर्मिते ।
द्विजेन्द्रा दग्धसंसारे सारो ह्यत्यन्तदुर्लभः ॥ ४३
यतन्ते सारसंप्राप्तौ ये यशोनिधयो धियः ।
धन्या धुरि सतां गण्यास्त एव पुरुषोत्तमाः ॥ ४४
न रामेण समोऽस्तीह दृष्टो लोकेषु कश्चन ।
विवेकवानुदारात्मा न भावी चेति नो मतिः ॥ ४५

सकललोकचमत्कृतिकारिणो-
ऽप्यभिमतं यदि राघवचेतसः ।
फलति नो तदिमे वयमेव हि
स्फुटतरं मुनयो हतबुद्धयः ॥ ४६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे नभश्चरमहीचरसंमेलनं नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

स्थापिताः परिनिष्ठिता वक्तव्यार्था यस्मिन् । सबोधं पदार्थतत्त्वबोधसहितं न कल्पनामात्रव्यवस्थापितार्थमिति यावत् । अतएव विद्वत्सभोचितम् । स्फुटं व्यक्तवर्णम् । उदारमुत्कृष्टवह्वाशयगर्भम् । प्रियं हृदयानन्दनम् । आर्याणां पूज्यानामर्हमुचितम् । अविह्वलं चित्तचाञ्चल्यप्रयुक्तदोषशून्यम् । स्फुटमर्थतः ॥ ३० ॥ अभिव्यक्तानि व्याकरणपरिशोधितानि पदानि यस्मिन् । इष्टं हितम् । स्पष्टं ग्रस्तादिदोषरहितम् । तुष्टिमत् तृष्णाक्षयप्रयुक्तसंतोषवत् ॥ ३१ ॥ सर्वेभ्यो वक्तृभ्यः सर्वांशेऽपि वा उदारा उत्कृष्टा चमत्कृतिः सहृदयास्वादनीयं सौष्ठवं यस्यास्तथाविधा अतएव ईप्सितस्याभिप्रेतस्यार्थस्यार्पणे बोधने एकान्तदक्षा नियमेन समर्था भारती वाणी वाग्मिशतादपि मुख्येषु मुख्यतमस्यैव विकासं स्फूर्तिमायाति न सर्वेषाम् । 'पञ्चमी विभक्ते' इति शताद्विभज्य निर्धारितेषु तमपा निर्धारणान्तरप्रत्ययात्सर्वोदारतोपपत्तिः ॥ ३२ ॥ प्रज्ञा शर इव सूक्ष्मार्थभेदिनी प्रज्ञाशरः सैव लता वल्ली । विकासं विचारवैराग्यपुष्पपल्लवाभ्यामुपचयम् । शकारपाठे प्रकाशम् ॥ ३३ ॥ असममनन्यसाधारणमालोकं पदार्थतत्त्वप्रकाशं करोति, असमस्याध्यस्तदेहेन्द्रियादिसाम्याद्विविक्तस्यात्मन आलोकनं करोति तच्छीला वा । स एव पुमान् । अन्यस्तु पुरुषार्थासमर्थः स्त्रीप्राय इति भावः ॥ ३४ ॥ उक्तप्रज्ञाहीनाजना रक्तादियन्त्रात्मकदेहात्मबुद्धित्वात्तान्येव शब्दस्पर्शादिपदार्थाननुकर्षन्त्युपभुञ्जते । अन्यश्च सचेतन आत्मा नास्तीति चार्वाकतैवमेतेषां फलितेति भावः । अथवा यदि तेषु सचेतनः स्यादवश्यं पुरुषार्थे यतेतैव यतो न यतन्ते तस्माद्दृटकुड्यादिवदचेतना एव ते इति निन्दार्थमपह्नवः ॥ ३५ ॥ ये न विमृशन्ति ते पशवः ॥ ३६ ॥ अयं रामः । अरयः कामादयस्तेषां मर्दनः ॥ ३७ ॥ अनुत्तमः सर्वोत्कृष्टश्चमत्कारो माधुर्यविशेषो येषां तथाविधानि तत्त्वसाक्षात्कारफलानि येषु । सहकारद्रुमा आम्रवृक्षाः ॥ ३८ ॥ स्वबुद्धिकृतेनैव विवेकेन तत्त्वदर्शनपर्यन्ता चमत्कृतिः । अयास्मिन्नेव वयसि । तच्चाश्चर्यमिति भावः ॥ ३९ ॥ सुभगाः सुन्दराः देशे सर्वत्रेति शेषः ॥ ४० ॥ ४१ ॥ आमोदलेखा परिमलपङ्क्तिः ॥ ४२ ॥ उद्दामं दौरात्म्यं यस्य तथाविधस्य दैवस्य प्राक्तनकर्मणस्तदनुसारिणो विधातुर्वा निर्माणेन सृष्ट्या निर्मिते रचिते । हे द्विजेन्द्राः । सारो विवेकेनात्मलाभः ॥ ४३ ॥ ध्यायन्तीति धियः सदा तत्त्वचिन्तनपराः सन्तो ये यतन्ते ते धन्याः सतां धुरि गण्याः ॥ ४४ ॥ इह सांप्रतं नास्ति प्राङ् दृष्टोऽग्रे च न भावी ॥ ४५ ॥ राममनोरथसंपत्तेरवश्यकर्तव्यतां तत्प्रशंसनेनोत्तमाधिकारप्राप्तिख्यापनमुखेनोक्त्वा तदुपेक्षणे दोषमाहुः—**सकले**ति । सकललोकानां सर्वजनानां चमत्कृतिर्गुणशीलविनयादिभिः समुचितप्रष्टव्यरहस्योद्धाटनेन चानन्दस्तत्कारिणो राघवचेतसोऽप्यभिमतं तत्त्वजिज्ञासालक्षणो मनोरथो यदि नो फलति अस्मदाद्यभिज्ञोपदेशेनेति शेषः । नो इति नञ्पर्यायो निपातः । तर्हि हतबुद्धयो दुर्बुद्धयः । अभिज्ञता निष्फलैव स्यादिति भावः । तस्मादवश्यमुपदेष्टव्यमिति सिद्धम् ॥ ४६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे नभश्चरमहीचरसंमेलनं नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥



समाप्तमिदं वैराग्यप्रकरणम् ।

श्रीः ।

# योगवासिष्ठः ।

श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशाख्यव्याख्यासंवलितः ।

## मुमुक्षुव्यवहारप्रकरणं द्वितीयम् ।

### प्रथमः सर्गः १

वाल्मीकिरुवाच ।

इति नादेन महता वचस्युक्ते सभागतैः ।
राममग्रगतं प्रीत्या विश्वामित्रोऽभ्यभाषत ॥ १
न राघव तवास्त्यन्यज्ज्ञेयं ज्ञानवतां वर ।
स्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवानसि ॥ २
केवलं मार्जनामात्रं मनागेवोपयुज्यते ।
स्वभावविमले नित्यं स्वबुद्धिमुकुरे तव ॥ ३
भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव ।
विश्रान्तिमात्रमेवान्तर्ज्ञातज्ञेयाप्यपेक्षते ॥ ४

श्रीराम उवाच ।

भगवद्व्यासपुत्रस्य शुकस्य भगवन्कथम् ।
ज्ञेयेऽप्यादौ न विश्रान्तं विश्रान्तं च धिया पुनः ॥ ५

विश्वामित्र उवाच ।

आत्मोदन्तसमं राम कथ्यमानमिदं मया ।
शृणु व्यासात्मजोदन्तं जन्मनामन्तकारणम् ॥ ६
योऽयमञ्जनशैलाभो निविष्टो हेमविष्टरे ।
पार्श्वे तव पितुर्व्यासो भगवान्भास्करद्युतिः ॥ ७
अस्याभूदिन्दुवदनस्तनयो नयकोविदः ।
शुको नाम महाप्राज्ञो यज्ञो मूर्त्येव सुस्थितः ॥ ८
प्रविचारयतो लोकयात्रामलमिमां हृदि ।
तवेव किल तस्यापि विवेक उदभूदयम् ॥ ९
तेनासौ स्वविवेकेन स्वयमेव महामनाः ।

---

अजमजरमनाद्यमेकं निजसौख्यलवाञ्चिताखिलानन्दम् ।
हृदि निहितमात्मसारं निगमान्तामृतरसायनं वन्दे ॥ १ ॥

श्रीरामादिवचनमुखेन वर्णितापि साधनसंपन्नमुमुक्षुभिः केन क्रमेण व्यवहरद्भिः संपाद्या, कथं च तया तत्त्वविश्रान्तिलाभ इति प्रत्येकं विविच्य तेषामुपदेशाय द्वितीयं प्रकरणमारभमाणः श्रीवाल्मीकिरुवाच—

स्वयं विचारातसंबुद्धे पित्रा चोक्तेऽप्यविश्वसन् ।
जनकोक्त्या शुकस्तत्त्वे विश्रान्त इति कीर्त्यते ॥ १ ॥

तत्रादौ मन्दवैराग्यादिसाधनानां सहसैवाधिकारसंपत्तिभ्रमेण श्रवणादौ प्रवृत्तिर्मा भूदिति शुकाख्यायिकया तत्परिपाकलक्षणानि दर्शयन् 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति श्रुतेः कुलाचार्यं वसिष्ठं श्रीरामस्योपदेशनाय पूर्ववृत्तान्तस्मारणतत्त्वोपदेशोपक्रमाभ्यां प्रोत्साहयिष्यन् स्वप्रयोजनसिद्ध्यैव श्रवणाय च त्वरमाणो विश्वामित्र एव प्रथममभ्यभाषतेत्याह—इतीति । सभायामागतैः सिद्धैः अग्रगतं पुरःस्थितम् अधिकारसीम्नि स्थितं च । मुख्याधिकारिणां दौर्लभ्याद्रामे रसज्ञतमत्वाद्वाति... ब्रह्मचर्चायां च प्रीत्या ॥ १ ॥ ज्ञेयमज्ञातत्वादवश्यज्ञातव्यम् । सर्वं हेयोपादेयरहस्यम् । तथाच सारासारविवेचनपरया बुद्ध्या परमार्थसारभूतमखण्डाद्वयचिन्मात्ररूपमात्मतत्त्वमपि त्वया विदितमेवेत्यर्थः ॥ २ ॥ तर्हि कुतो न विश्रान्तिस्तत्राह—केवलमिति । मार्जना अविश्वाससंदेहमालिन्यनिराकरणं तावन्मात्रम् । स्वबुद्ध्या विदितेऽपि प्रमाणाचार्यादिसंवादमन्तरेण विश्वासाभावादित्यर्थः । तथाचाहुः 'बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः' इति ॥ ३ ॥ भगवतो व्यासस्य । अत्र व्यासशुकौ प्राक्तनद्वापरान्तजातौ गृह्येते । प्रतिद्वापरान्तं व्यासावतारभेदप्रसिद्धेः ॥४॥ ज्ञेये स्वेनैव विचारेण ज्ञातुं शक्येऽपि तत्त्वे । धिया गुरूपदेशसंवादिन्या बुद्ध्या । पुनः पश्चाद्विश्रान्तम् । आत्मोदन्तसमं स्ववृत्तान्तसदृशम् । जन्मनाभावे कः ॥ ५ ॥ मन्तो मोक्षः ॥ ६ ॥ अञ्जनशैलो नीलाद्रिरिति प्रसिद्धो वर्षपर्वतः । निविष्ट उपविष्टः । विष्टरे आसने ॥ ७ ॥ नयकोविदः सर्वशास्त्रज्ञः । मूर्त्या शरीरेण युक्तो यज्ञ इव सुस्थितः ॥ ८ ॥ ...विवेको विचारः । अयमीदृशः ॥ ९ ॥ यत्परमार्थसत्यमात्म-

प्रविचार्य चिरं चारु यत्सत्यं तदवाप्तवान् ॥ १०
स्वयं प्राप्ते परे वस्तुन्यविश्रान्तमनाः स्थितः ।
इदं वस्त्विति विश्वासं नासावात्मन्युपाययौ ॥ ११
केवलं विरराामास्य चेतो विगतचापलम् ।
भोगेभ्यो भूरिभङ्गेभ्यो धाराभ्य इव चातकः ॥ १२
एकदा सोऽमलप्रज्ञो मेरावेकान्तसुस्थितम् ।
पप्रच्छ पितरं भक्त्या कृष्णद्वैपायनं मुनिम् ॥ १३
संसाराडम्बरमिदं कथमभ्युत्थितं मुने ।
कथं च प्रशमं याति कियत्कस्य कदेति वा ॥ १४
इति पृष्टेन मुनिना व्यासेनाखिलमात्मजे ।
यथावदमलं प्रोक्तं वक्तव्यं विदितात्मना ॥ १५
आऽज्ञासिषं पूर्वमेतदहमित्यथ तत्पितुः ।
स शुकः शुभया बुद्ध्या न वाक्यं बह्वमन्यत ॥ १६
व्यासोऽपि भगवान्बुद्ध्वा पुत्राभिप्रायमीदृशम् ।
प्रत्युवाच पुनः पुत्रं नाहं जानामि तत्त्वतः ॥ १७
जनको नाम भूपालो विद्यते वसुधातले ।
यथावद्वेत्त्यसौ वेद्यं तस्मात्सर्वमवाप्स्यसि ॥ १८
पित्रेत्युक्ते शुकः प्रायात्सुमेरोर्वसुधातले ।
विदेहनगरीं प्राप जनकेनाभिपालिताम् ॥ १९
आवेदितोऽसौ याष्टीकैर्जनकाय महात्मने ।
द्वारि व्याससुतो राजञ्शुकोऽत्र स्थितवानिति ॥ २०
जिज्ञासार्थं शुकस्यासावास्तामेवेत्यवज्ञया ।
उक्त्वा बभूव जनकस्तूष्णीं सप्त दिनान्यथ ॥ २१
ततः प्रवेशयामास जनकः शुकमङ्गणम् ।
तत्राहानि स सप्तैव तथैवावसदुन्मनाः ॥ २२
अथ प्रवेशयामास जनकोऽन्तःपुरं शुकम् ।
राजा न दृश्यते तावदिति सप्त दिनानि च ॥ २३
तत्रोन्मदाभिः कान्ताभिर्भोजनैर्भोगसंचयैः ।
जनको लालयामास शुकं शशिसमाननम् ॥ २४
ते भोगास्तानि दुःखानि व्यासपुत्रस्य तन्मनः ।
नाजह्रुर्मन्दपवना बद्धपीठमिवाचलम् ॥ २५
केवलं सुसमः स्वस्थो मौनी मुदितमानसः ।
अतिष्ठत्स शुकस्तत्र संपूर्ण इव चन्द्रमाः ॥ २६
परिज्ञातस्वभावं तं शुकं स जनको नृपः ।
आनीतं मुदितात्मानमवलोक्य ननाम ह ॥ २७
निःशेषितजगत्कार्यं प्राप्ताखिलमनोरथ ।
किमीप्सितं तवेत्याशु कृतस्वागतमाह तम् ॥ २८

श्रीशुक उवाच ।

संसाराडम्बरमिदं कथमभ्युत्थितं गुरो ।
कथं प्रशममायाति यथावत्कथयाशु मे ॥ २९

विश्वामित्र उवाच ।

जनकेनेति पृष्टेन शुकस्य कथितं तदा ।
तदेव यत्पुरा प्रोक्तं तस्य पित्रा महात्मना ॥ ३०

---

तत्त्वमद्वितीयचिन्मात्ररूपं तदवाप्तवाञ्ज्ञातवान् । ज्ञानस्यैव तल्लाभत्वात् ॥ १० ॥ अविश्रान्तौ हेतुरविश्वासः ॥ ११ ॥ विरराम उपरतम् । विरक्तमिति यावत् । भूरिभङ्गेभ्यो बहुतरविनाशदुःखहेतुभ्यः । धाराभ्यः अवार्षिकजलधाराभ्यः ॥ १२ ॥ कृष्णद्वैपायनं व्यासम् ॥ १३ ॥ परवञ्चनार्थं कृत्रिमचेष्टितमाडम्बरं कथं केन क्रमेण अभ्युत्थितमुत्पन्नम् । कदा वा प्रशममत्यन्तोच्छेदम् । कियत् देशकालपरिमाणतः । कस्य संसारः किं देहस्य उत इन्द्रियाणामुत मनसः प्राणस्य वा उत संघातस्य उत तदन्यस्य विकारिणो निर्विकारचिन्मात्रस्य वेति पप्रच्छेति पूर्वेणान्वयः ॥ १४ ॥ विदितात्मना व्यासेन अखिलं वक्तव्यं यथावत्प्रोक्तमित्यन्वयः ॥ १५ ॥ आ अज्ञासिषमिति च्छेदः । ननु यद्यत्र प्राक् स्वविचारेणैव ज्ञातस्य स्मरणार्थोऽयं आ इति निपातस्तर्हि 'वाक्यस्मरणयोरङित्' इत्यनाङ्त्वात् 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावो न्याय्यः । सत्यम् । तथापि पूर्वं आसमन्ताद्विशिष्याज्ञासिषमिति धात्वर्थातिशयद्योतकतया क्रियायोगस्यापि विवक्षितत्वात्तत्रैकशेषादिना आङोऽपि संग्रहात् 'निपात एकाजनाङ्' इत्यत्र आङ्वर्ज्यं इति प्रसज्यप्रतिषेधपक्षस्वीकारात् 'प्रतिषेधाश्च बलीयांसो भवन्ति' इति महाभाष्योक्तेः प्रगृह्यसंज्ञानिषेधात्संधिः साधुरेव । अथ उपदेशानन्तरं शुकस्तत्पितुर्वाक्यं आज्ञासिषमित्यनपूर्वार्थतया शुभया बुद्ध्या न बह्वमन्यतेत्यन्वयः ॥ १६ ॥ पुत्राभिप्रायं बुद्ध्वा तद्बुद्धिमेवानुसरन् प्रत्युवाच नाहं जानामि । उक्तादन्यदिति भावः ॥ १७ ॥ ॥ १८ ॥ विदेहा नाम जनपदास्तेषां नगरीं मिथिलाम् ॥ १९ ॥ याष्टीकैर्द्वास्थैर्यष्टिधरैः ॥ २० ॥ जनकोऽपि विदितशुकवृत्तान्तः सहसैवोपदेशे व्यासवचनवदवहेलनया तस्याकृतार्थता मा भूदिति शुकस्य वैराग्यादिसाधनानां विश्वासस्य स्थैर्यस्य च जिज्ञासार्थम् । अवज्ञया उपेक्षया ॥ २१ ॥ अङ्गणं गृहान्तश्चत्वरम् । उन्मनाः तत्त्वजिज्ञासोत्कण्ठाविस्मृतानादर इति यावत् ॥ २२ ॥ यावद्भोजनादिभिस्त्वं न पूज्यसे तावद्राजा न दृश्यते इति वादनमिषेण तत्रान्तःपुरे सप्त दिनानि भोगसंचयैर्लालयामासेत्युत्तरेण संबन्धः ॥ २३ ॥ २४ ॥ नाजह्रुर्न विचक्रुः । बद्धपीठं दृढमूलम् ॥ २५ ॥ केवलमित्यवधारणे । भोगानादरयोः सुसमोऽतएव स्वस्थः । तत्र हेतुः—मौनी निगृहीतवागादीन्द्रियः ॥ २६ ॥ इत्थं परीक्षणेन परिज्ञातस्तत्त्वदर्शनपर्यन्तप्रतिष्ठितो विचारवैराग्यादिपरिपाकस्वभावो यस्य तम् ॥ २७ ॥ निःशेषितानि निरवशेषं कृतानि जगति प्रसिद्धानि कार्याण्यवश्यकर्तव्यानि परमपुरुषार्थसाधनानि येन तथाविध । हे कृतकृत्येत्यर्थः । सर्वसुखलवानामात्मसुखेऽन्तर्भावात्तत्प्राप्त्यैव प्राप्ताखिलमनोरथ ॥ २८ ॥ संसारेति प्राग्व्याख्यातम् ॥ २९ ॥ इति पृष्टेन जनकेन तस्य शुकस्य पित्रा पुरा

१ शुकस्याज्ञायास्तां इति पाठः. तत्र आज्ञाय ज्ञात्वेत्यर्थः.

श्रीशुक उवाच ।

स्वयमेव मया पूर्वमेतज्ज्ञातं विवेकतः ।
एतदेव च पृष्टेन पित्रा मे समुदाहृतम् ॥ ३१
भवताप्येष एवार्थः कथितो वाग्विदां वर ।
एष एव च वाक्यार्थः शास्त्रेषु परिदृश्यते ॥ ३२
यथायं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात् ।
क्षीयते दग्धसंसारो निःसार इति निश्चयः ॥ ३३
तत्किमेतन्महाबाहो सत्यं ब्रूहि ममाचलम् ।
त्वत्तो विश्रान्तिमाप्नोमि चेतसा भ्रमता जगत् ॥ ३४

जनक उवाच ।

नातः परतरः कश्चिन्निश्चयोऽस्त्यपरो मुने ।
स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम् ॥ ३५
अविच्छिन्नचिदात्मैकः पुमानस्तीह नेतरत् ।
स्वसंकल्पवशाद्बद्धो निःसंकल्पश्च मुच्यते ॥ ३६
तेन त्वया स्फुटं ज्ञातं ज्ञेयं यस्य महात्मनः ।
भोगेभ्यो विरतिर्जाता दृश्यात्प्राक्सकलादिह ॥ ३७
तव बाल महावीर मतिर्विरतिमागता ।
भोगेभ्यो दीर्घरोगेभ्यः किमन्यच्छ्रोतुमिच्छसि ॥ ३८
न तथा पूर्णता जाता सर्वज्ञानमहानिधेः ।
तिष्ठतस्तपसि स्फारे पितुस्तव यथा तव ॥ ३९
व्यासादधिक एवाहं व्यासशिष्योऽसि तत्सुतः ।
भोगेच्छातानवेनेह मत्तोऽप्यत्यधिको भवान् ॥ ४०
प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा ।
न दृश्ये पतसि ब्रह्मन्मुक्तस्त्वं भ्रान्तिमुत्सृज ॥ ४१
अनुशिष्टः स इत्येवं जनकेन महात्मना ।
अतिष्ठत्स शुकस्तूष्णीं स्वच्छे परमवस्तुनि ॥ ४२
वीतशोकभयायासो निरीहश्छिन्नसंशयः ।
जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ॥ ४३
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना ।
दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ॥ ४४
व्यपगतकलनाकलङ्कशुद्धः
स्वयममलात्मनि पावने पदेऽसौ ।
सलिलकण इवाम्बुधौ महात्मा
विगलितवासनमेकतां जगाम ॥ ४५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे शुकनिर्याणं नाम प्रथमः सर्गः ॥ १ ॥

---

पूर्वं यत्प्रोक्तं तदेव कथितमित्यन्वयः ॥ ३० ॥ समुदाहृतं सम्यगुदाहरणोपपत्तिभिर्व्याख्यातम् ॥ ३१ ॥ वाक्यार्थः सर्वोपनिषद्गतमहावाक्यानामर्थः । तत्तात्पर्यनिर्णायकन्यायप्रदर्शनपरेषु सूत्रभाष्यादिशास्त्रेषु ॥ ३२ ॥ स्वस्मिन्नज्ञानोपहिते आत्मनि विविधं कल्पयतीति विकल्पोऽनन्तकामकर्मवासनाबीजसंभृतं प्रलयसुषुप्त्योः समष्टिव्यष्टिसंस्कारपरिशेषेणाव्याकृते लीनमनादिजीवभावोपाधिभूतमन्तःकरणं तस्मात्प्रलयक्रमविपरीतक्रमेण प्रथममपञ्चीकृतवियदाद्युत्पत्तिक्रमेण समष्टिहिरण्यगर्भात्मना ततः पञ्चीकरणेन विराडात्मना ततोऽन्नादिक्रमेण व्यष्टिस्थूलदेहात्मना तदन्तर्व्यष्टिलिङ्गात्मना चोत्थ आविर्भूतो महानर्थरूपो वर्तते । स च कर्मोपासनसमुच्चयमात्रानुष्ठानेनाध्यात्मिकव्यष्टिभावपरिच्छेदवासनामात्रक्षये समष्टिहिरण्यगर्भभावेनावतिष्ठते । श्रवणादिपरिपाकजन्यतत्त्वसाक्षात्कारेण सवासनकार्यकारणाविद्यानाशे तु मूलोच्छेदेनात्यन्तमन्तःकरणपरिक्षयान्निःशेषं क्षीयते । दग्धशब्दो निन्दायाम् । अथवा स्वप्रकाशात्मनि दुःस्थितत्वान्मिथ्यात्वाच्च पूर्वमेव दग्धप्रायोऽतएव निःसारः स भूयः साक्षात्कारप्रलयानलव्याप्तौ कथं तिष्ठेदिति भावः । उपरि दग्धतृणवदन्तःसारावशेषेण पुनःपुनः प्ररोहशङ्कावारणाय वा निःसार इति निश्चयः । तत्त्वविदामिति शेषः ॥ ३३ ॥ एतत् मया स्वयमेव पूर्वं विचारेण परिज्ञातं यत् तदेव सत्यं, किं तर्हि, तदचलमसंदिग्धं हृदि यथा भवति तथा ब्रूहि । जगत् नानाविषयानिदं वा तत्त्वं स्यादन्यद्वेत्यविश्वासेन भ्रमता चेतसा भ्राम्यमाणोऽहं त्वत्तः । त्वद्वचनविश्वासादिति यावत् । विश्रान्तिं तत्रैव स्थैर्यमाप्नोमि ॥ ३४ ॥ अतोऽस्मात्त्वया परिज्ञातात् । निश्चयो निश्चेतव्योऽर्थः ॥ ३५ ॥ तमेव दृढनिश्चयाय पुनराह—**अविच्छिन्नेति** ॥ ३६ ॥ महात्मनस्तवेति शेषः । प्राक् भोगेभ्यः । इहास्यां निश्चयदशायाम् । दृश्यात् दृश्यमात्रात् ॥ ३७ ॥ बालोऽपि विषयत्यागशूरत्वान्महावीर ॥ ३८ ॥ यथा तव पूर्णता जाता तथा तव पितुर्नेति दार्ढ्यार्थं प्रशंसा । एवमुत्तरत्रापि ॥ ३९ ॥ ॥ ४० ॥ दृश्ये बाह्यविषये न पतसि दृश्यदर्शनस्यैव संसारपातत्वात् । 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' इति श्रुतेः । भ्रान्तिं ज्ञेयान्तरसद्भावभ्रमं दृश्यदर्शनभ्रमं वा ॥ ४१ ॥ स पूर्वोक्तोऽविच्छिन्नचिदात्मैकस्त्वमित्येवमनुशिष्टः स शुकः । स्वच्छे दृश्यमालिन्यशून्ये ॥ ४२ ॥ सात्त्विकदेवाधिष्ठितत्वेन विक्षेपहेत्वभावादनिन्दितम् । समाध्यनुकूलमिति यावत् ॥ ४३ ॥ शशाम विदेहमुक्तोऽभूत् ॥ ४४ ॥ कलना दृश्योन्मुखता कलङ्कस्तन्मूलमज्ञानं तदुभयापगमाच्छुद्धः । अतएवादृश्यसंचितागामिपुण्यपापाश्लेषविनाशाभ्याममलात्मनि प्रारब्धकर्मक्षपणादशुद्धदेहादिनिवृत्तेः पावने पदे परमात्मवस्तुनि । सलिलकणपक्षे कलना पृथग्भावः । कलङ्को नीलमेघसंबन्धः । एकतां भेदकोपाध्यपगमे वास्तवमखण्डैक्यम् । तथा चोक्तं विष्णुपुराणे—'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति ॥ ४५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे शुकनिर्याणं नाम प्रथमः सर्गः ॥ १ ॥

---

१ दृश्याद्वा इति पाठः. २ मोक्षोपाये इत्यधिकं क्वचित्.

# द्वितीयः सर्गः २

विश्वामित्र उवाच ।

तस्य व्यासतनूजस्य मलमात्रोपमार्जनम् ।
यथोपयुक्तं ते राम तावदेवोपयुज्यते ॥ १
ज्ञेयमेतेन विज्ञातमशेषेण मुनीश्वराः ।
स्वदन्तेऽस्मै न यद्भोगा रोगा इव सुमेधसे ॥ २
ज्ञातज्ञेयस्य मनसो नूनमेतद्धि लक्षणम् ।
न स्वदन्ते समग्राणि भोगवृन्दानि यत्पुनः ॥ ३
भोगभावनया याति बन्धो दार्ढ्यमवस्तुजः ।
तयोपशान्तया याति बन्धो जगति तानवम् ॥ ४
वासनातानवं राम मोक्ष इत्युच्यते बुधैः ।
पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते ॥ ५
स्वात्मतत्त्वाभिगमनं भवति प्रायशो नृणाम् ।
मुने विषयवैरस्यं कदर्थादुपजायते ॥ ६
सम्यक्पश्यति यस्तज्ज्ञो ज्ञातज्ञेयः स पण्डितः ।
न स्वदन्ते बलादेव तस्मै भोगा महात्मने ॥ ७
यशःप्रभृतिना यस्मै हेतुनैव विना पुनः ।
भुवि भोगा न रोचन्ते स जीवन्मुक्त उच्यते ॥ ८
ज्ञेयं यावन्न विज्ञातं तावत्तावन्न जायते ।
विषयेष्वरतिर्जन्तोर्मरुभूमौ लता यथा ॥ ९
अतएव हि विज्ञातज्ञेयं[1] विद्धि रघूद्वहम् ।
यंदेनं[2] रञ्जयन्त्येता न रम्या भोगभूमयः ॥ १०
रामो यदन्तर्जानाति तद्वस्त्वित्येव सन्मुखात् ।
आकर्ण्य चित्तविश्रान्तिमाप्नोत्येव मुनीश्वराः ॥ ११
केवलं केवलीभावविश्रान्तिं समपेक्षते ।
रामबुद्धिः शरल्लक्ष्मीः खलु विश्रमणं यथा ॥ १२
अत्रास्य चित्तविश्रान्त्यै राघवस्य महात्मनः ।
युक्तिं कथयतु श्रीमान्वसिष्ठो भगवानयम् ॥ १३
रघूणामेष सर्वेषां प्रभुः कुलगुरुः सदा ।
सर्वज्ञः सर्वसाक्षी च त्रिकालामलदर्शनः ॥ १४
वसिष्ठ भगवन्पूर्वं कच्चित्स्मरसि यत्स्वयम् ।
आवयोर्वैरशान्त्यर्थं श्रेयसे च महाधियाम् ॥ १५
निषधाद्रेर्मुनीनां च सानौ सरलसंकुले ।
उपदिष्टं भगवता ज्ञानं पद्मभुवा बहु ॥ १६
येन युक्तिमता ब्रह्मन्ज्ञानेनेयं हि वासना ।
सांसारी नूनमायाति शमं श्यामेव भास्वता ॥ १७
तदेव युक्तिमज्ज्ञेयं रामायान्तेनिवासिने ।

इह रामोपदेशार्थं विश्वामित्रेण धीमता ।
प्रार्थितस्य वसिष्ठस्य तदुत्साहः प्रकीर्त्यते ॥ १ ॥

शुकाख्यायिकां प्रकृते योजयन् रामोपदेशाय वसिष्ठं प्रवर्तयितुमारभमाणो विश्वामित्र उवाच—**तस्ये**त्यादिना । यथा यावत्प्रकारमुपयुक्तमुपपत्तियुक्तमुपदेशनमुपयुज्यते तावदेव ते तवापि उपयुक्तं युज्यत इति संबन्धः । उपयुक्तमभूदिति पूर्ववाक्यमात्रशेषतया तु न व्याख्येयम् । समानवाक्ये युष्मदस्मदादेशविधानेन विरोधात् ॥ १ ॥ उक्तमर्थं सर्वमुनिसंमत्या समर्थयितुं मुनीश्वरा इति तेषां संबोधनम् । स्वदन्ते रोचन्ते । अस्मै रामाय । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानत्वाच्चतुर्थी ॥२ ॥ ॥ ३ ॥ भावनया वासनया । तानवमल्पताम् ॥ ४ ॥ यावद्विषयवासना क्षीयते तावता मुच्यते । सर्वथा क्षये तु सर्वतो मुक्तिरिति भावः ॥ ५ ॥ अभिगमनमापातज्ञानम् । प्रायशः अल्पश्रवणाद्यायासेनापि । अपरोक्षदृक्स्वरूपस्य दृश्यविवेकमात्रेणैव सुपरिचयत्वादिति भावः । कदर्थात्क्लेशात् ॥ ६ ॥ तर्ह्यलं तावता किं वैराग्येण तत्राह—**सम्यगि**ति । सम्यक् रागाद्यप्रतिहतं यथा स्यात्तथा यः पश्यति स एव तज्ज्ञस्तत्त्वज्ञानजन्याविद्योच्छेदफलभागिति ज्ञातज्ञेयः पण्डितश्च । आपातदर्शी तु मौर्ख्यानपगमान्न तथेति भावः ॥ ७ ॥ प्रभृतिग्रहणेन पूजालाभादयो गृह्यन्ते । हेतुना उद्देश्येन फलेन विनैव । तथाच न दाम्भिकभोगत्यागादिष्टसिद्धिरित्यर्थः ॥ ८ ॥ वैराग्यबोधोपरमाणामभिवृद्धौ परस्परसहायत्वाज्ज्ञानपरिपाकातिशयेनैव मूलोच्छेदा-दात्यन्तिकरागक्षय इत्याह—**ज्ञेय**मिति । यावद्यावन्न विज्ञातं तावत्तावद्विषयेष्वरतिर्न जायत इति व्यतिरेकप्रकर्षादन्वयप्रकर्षो लक्ष्यते । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवद्वचनादिति भावः ॥ ९ ॥ भोगभूमयो विषयाः ॥ १० ॥ यदि रामस्तत्त्वज्ञस्तर्हि किमर्थमुपदेशार्थं वक्ष्यमाणा वसिष्ठप्रार्थना तत्राह—**राम** इति । सतो वसिष्ठस्य मुखात् । आप्नोत्येव अन्योऽप्यधिकारीति शेषः । तथाच सर्वोपकारायोपदेशप्रार्थनेत्यर्थः । अथवा रामो यदन्तस्तत्त्वं जानाति तद्राम एव विश्वासदार्ढ्याभावादनाप्तप्रायं वसिष्ठमुखादाकर्ण्य विश्वस्तस्तत्र चित्तविश्रान्तिमाप्नोत्येवेत्यर्थः ॥११॥ तदेव स्फुटमाह—**केवल**मिति । केवलीभावविश्रान्तिं द्वैतनिरासे अद्वितीयचिन्मात्रपरिशेषम् । शरल्लक्ष्मीपक्षे विश्रमणं निर्मेघनिर्मलाकाशमात्रपरिशेषम् । खल्विति निश्चयेन । विश्वासेनेत्यर्थः ॥ १२ ॥ १३ ॥ ननु त्वयैव कुतो नोपदिश्यते तत्राह—**रघू**णामिति । रघूपलक्षितानामिक्ष्वाकूणां, न राघवाणामेव प्रभुर्नियन्ता । तदतिक्रमे त्रिशङ्कुप्रभृतीनां दण्डदर्शनादिति भावः । सर्वज्ञः शास्त्रतः । सर्वस्य साक्षी तत्त्वतो योगबलेन विभागशश्च साक्षाद्द्रष्टा । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिः । तत्र हेतुः–त्रिष्वपि कालेष्वमलं मोहातिरस्कृतं दर्शनसाधनं मनो यस्य ॥१४॥ कच्चिदिति हितप्रश्ने । महाधियां मुनीनामित्युत्तरेणान्वयः ॥१५॥ सानौ प्रस्थदेशे । सरला वृक्षविशेषाः । बहुश्रेष्ठमुपपत्तितो वा बहु ॥ १६ ॥ येन ज्ञानेन । युक्तिरुपपत्तिस्तदेकतानता च ॥ १७ ॥



१ विज्ञातं ज्ञेयं इति पाठः. २ येनेदं इति पाठः.

ब्रह्मन्नुपदिशाशु त्वं येन विश्रान्तिमेष्यति ॥ १८
कदर्थना च नैवैषा रामो हि गतकल्पषः ।
निर्मले मुकुरे वक्त्रमयत्नेनैव बिम्बति ॥ १९
तज्ज्ञानं स च शास्त्रार्थस्त्वद्वैदग्ध्यमनिन्दितम् ।
सच्छिष्याय विरक्ताय साधो यदुपदिश्यते ॥ २०
अशिष्यायाविरक्ताय यत्किंचिदुपदिश्यते[1] ।
तत्प्रयात्यपवित्रत्वं गोक्षीरं श्वदृताविव ॥ २१
वीतरागभयक्रोधा निर्मोना गलितैनसः ।
वदन्ति त्वादृशा यत्र तत्र विश्राम्यतीह धीः ॥ २२
इत्युक्ते गाधिपुत्रेण व्यासनारदपूर्वकाः ।
मुनयस्ते तमेवार्थं साधुसाध्वित्यपूजयन् ॥ २३
अथोवाच महातेजा राज्ञः पार्श्वे व्यवस्थितः ।
ब्रह्मेव ब्रह्मणः पुत्रो वसिष्ठो भगवान्मुनिः ॥ २४

श्रीवसिष्ठ उवाच ।

मुने यदादिशसि मे तदविघ्नं करोम्यहम् ।
कः समर्थः समर्थोऽपि सतां लङ्घयितुं वचः ॥ २५
अहं हि राजपुत्राणां रामादीनां मनस्तमः ।
ज्ञानेनापनयाम्याशु दीपेनेव निशातमः ॥ २६
सराम्यखण्डितं सर्वं संसारभ्रमशान्तये ।
निषधाद्रौ पुरा प्रोक्तं यज्ज्ञानं पद्मजन्मना ॥ २७

वाल्मीकिरुवाच ।

इति निगदितवानसौ महात्मा
परिकरबन्धगृहीतवक्तृतेजाः ।
अकथयदिदमन्नतोपशान्त्यै
परमपदैकविबोधनं वसिष्ठः ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे विश्वामित्रवाक्यं नाम द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ३

श्रीवसिष्ठ उवाच ।

पूर्वमुक्तं भगवता यज्ज्ञानं पद्मजन्मना ।
सर्गादौ लोकशान्त्यर्थं तदिदं कथयाम्यहम् ॥ १

श्रीराम उवाच ।

कथयिष्यसि विस्तीर्णां भगवन्मोक्षसंहिताम् ।
इमं तावत्क्षणं जातं संशयं मे निवारय ॥ २
पिता शुकस्य सर्वज्ञो गुरुर्व्यासो महामतिः ।

---

॥ १८ ॥ अल्पफलो बहुप्रयासः कदर्थना ॥ १९ ॥ नेयं कदर्थना प्रत्युताभिज्ञतादयादिसार्थक्यापादनादभ्युदय एवेत्याह—**तदि**ति । विदग्धः पण्डितस्तद्भावो वैदग्ध्यम् । अनिन्दितं प्रशस्तम् । पात्रेष्वप्रतिपत्तौ वैयर्थ्यान्निन्दितमेव स्यादिति भावः॥२०॥ दृतिश्चर्मभस्त्रा ॥ २१ ॥ रागादीनामविद्यामूलकत्वात्तदुच्छेदादेव वीतरागादयः । गलितैनसो निष्पापाः । इहास्यामुपदेशदशायामेव । अस्मिन्नित्यपरोक्षे आत्मतत्त्वे वा ॥ २२ ॥ गाधिपुत्रेण विश्वामित्रेण । अपूजयन् प्राशंसन् ॥ २३ ॥ यतोऽयं ब्रह्मणः पुत्रो ब्रह्मेव महातेजस्त्वादिगुणविशिष्टोऽतो दिव्यानामपि महर्षीणां पुरतो ब्रह्मेवोवाचेति भावः ॥२४॥ तत्त्वज्ञानां लक्षणभूतानमानित्वादिगुणान्स्वाचरितैः शिक्षयन्निव विनयोक्तिभिः प्रार्थितार्थनिरूपणं प्रतिजानीते—**मुने** इत्यादिना । आदिशसि आज्ञापयसि ॥२५॥ ज्ञानोदये अज्ञाननिवृत्तौ न विलम्ब इति द्योतनायाश्विति ॥२६॥ यज्ज्ञानं पुरा पद्मजन्मना प्रोक्तं तत्सर्वमखण्डितमविच्छिन्नं ग्रन्थतोऽर्थतश्च सरामि । अथवा अखण्डितमपरिच्छिन्नमत एव सर्वं पूर्णं यज्ज्ञानस्वरूपमात्मतत्त्वं तदखण्डितं निरन्तरं स्मरामि अनुसंदधे ॥ २७ ॥ असौ महात्मा वसिष्ठ इति निगदितवान्व्यक्तं प्रतिज्ञातवान्सन् यथा शूरो नटो वा भूषणाच्छादनायुधादिपरिकरबन्धनेनोद्युक्तः शोभते तथैव शिष्यप्रबोधानुरञ्जनोपायदृष्टान्तोपाख्यानप्रमाणतर्काद्यनुसंधानोत्साहादिपरिकरबन्धनेन गृहीतं स्वीकृतं वक्तॄणां व्याख्यातॄणां तेजः शोभाविशेषो येन तथाविधः सन् सर्वेषां जगतामज्ञताया उपशान्त्यै मूलोच्छेदायेदं वक्ष्यमाणं परमपदस्यैकं मुख्यं विबोध्यते येन तद्विबोधनं शास्त्रमकथयत् ॥ २८ ॥ इति श्रीमद्वासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे विश्वामित्रवाक्यं नाम द्वितीयः सर्गः ॥ २ ॥

स्थूलादिजगदारोपनिरासाभ्यां प्रसाध्यते ।
प्रत्यक्चिदात्मा विषयो रामशङ्काद्युतिच्छलात् ॥ १ ॥

इत्थं प्राक्तनं सर्वं प्रतिसंधाय विस्तरेण तद्वक्तुकामः सद्गुरुस्मरणरूपं मङ्गलमाचरन् विद्यासंप्रदायशुद्धिं च दर्शयन् शिष्यावधानाय पुनः प्रतिजानीते—**पूर्व**मिति । लोकानां शान्तिः सर्वसंसारदुःखोपशान्तिस्तदर्थं यज्ज्ञानं ज्ञानसाधनं शास्त्रमुक्तं तदेवेदं कथयामि नान्यदिति संप्रदायशुद्धिरुक्ता ॥ १ ॥ इत्थं प्रतिज्ञया अवधापितो रामः सत्यामन्यजिज्ञासायां[2] तदवधानायोगात् सूचीकटाहन्यायेन प्रथममुत्पन्नः संशयस्तदपनोदं प्रार्थयमान उवाच—**कथयिष्यसी**ति । एतत्संशयनिवृत्त्यनन्तरमिति भावः । इमं व्यासस्य शिष्टलोकवत् जीवदर्शनाच्छुकस्य च विदेहमुक्तिश्रवणात्संजातम् ॥ २ ॥ तदेव[3] दर्शयति—**पिते**ति । नन्वघटितोऽयं संशयः । न । आत्यन्तिकदुःखोच्छेदोपलक्षितनिर-

[1] यत्किंचिदुपदिश्यते इति पाठः.

[2] सत्यासत्यजिज्ञासायां इति पाठः. [3] तमेव इति पाठः.

विदेहमुक्तो न कथं कथं मुक्तः सुतोऽस्य सः ॥ ३

श्रीवसिष्ठ उवाच ।

परमार्कप्रकाशान्तस्त्रिजगत्त्रसरेणवः ।
उत्पत्योत्पत्य लीना ये न संख्यामुपयान्ति ते ॥ ४
वर्तमानाश्च याः सन्ति त्रैलोक्यगणकोटयः ।
शक्यन्ते ताश्च संख्यातुं नैव काश्चन केनचित् ॥ ५
भविष्यन्ति पराम्भोधौ जगत्सर्गतरङ्गकाः ।
तांश्च वै परिसंख्यातुं सा कथैव न विद्यते ॥ ६

श्रीराम उवाच ।

या भूता या भविष्यन्त्यो जगत्सर्गपरम्पराः ।
तासां विचारणा युक्ता वर्तमानास्तु का इव ॥ ७

श्रीवसिष्ठ उवाच ।

तिर्यक्पुरुषदेवादेर्यो नाम स विनश्यति ।
यस्मिन्नेव प्रदेशेऽसौ तदैवेदं प्रपश्यति ॥ ८
आतिवाहिकनाम्नान्तः स्वहृद्येव जगत्त्रयम् ।
व्योम्नि चित्तशरीरेण व्योमात्मानुभवत्यजः ॥ ९
एवं मृता म्रियन्ते च मरिष्यन्ति च कोटयः ।
भूतानां यां जगन्त्याशामुदितानि पृथक्पृथक् ॥ १०
संकल्पनिर्माणमिव मनोराज्यविलासवत् ।
इन्द्रजालमाल इव कथार्थप्रतिभासवत् ॥ ११

---

तिशयानन्दस्वप्रकाशात्ममात्रपरिशेषरूपत्वाद्विदेहमुक्तिरेव ज्ञानफलं तच्चेत्सर्वज्ञस्यापि व्यासस्य न संपन्नं ज्ञानस्यानित्यफलत्वं प्राप्तम्। किंच यदि ज्ञानेनाज्ञानं निःशेषमुच्छिन्नं तर्हि भृग्वादिवज्जीवनासंभवः उपादाननाशे कार्यावस्थानायोगात् अजीवने च ब्रह्मविद्याप्रवर्तकाभावात्संप्रदायोच्छेदः । अथ नोच्छिन्नं तर्ह्यनिर्मोक्षः सिद्ध एव । नहि कर्मेव ज्ञानमदृष्टद्वारा मरणोत्तरं फलति तस्य कालत्रयेऽप्यखण्डात्मनावस्थितस्येत्यविधेयत्वादिति[1] न जीवन्मुक्तिसिद्धिरिति भावः ॥३॥ इति पृष्टो भगवान्वसिष्ठो यावद्रामो बन्धस्याविद्यकत्वमविद्यास्वरूपं तत्साक्ष्यपरिच्छिन्नसर्वाधारचित्स्वरूपं च न जानाति तावज्जीवन्मुक्तौ न विश्वसितीति प्रथमं तदुपपाद्य पश्चात्समाधास्यामीति मन्यमानस्तदर्थं सुखबोधत्वात्साक्षिणि स्थूलप्रपञ्चपरम्पराध्यारोपं[2] दर्शयति-**परमार्के**त्यादिश्लोकत्रयेण । 'न तत्र सूर्यो भाति न चन्द्रतारकं', 'येन सूर्यस्तपति तेजसेद्धः' इत्यादिश्रुतेः सूर्यादिसर्वजगदवभासकत्वात्परमार्कः परमात्मा स एव चित्प्रकाशस्तदन्तः पूर्वं ये त्रिजगदुपलक्षितानन्तकोटिब्रह्माण्डलक्षणास्त्रसरेणव उत्पत्योत्पत्य स्थित्वा स्थित्वा लीनास्ते संख्यां नोपयान्ति । संख्यातुं न शक्यन्त इत्यर्थः । एतेन व्यासादयोऽप्यसंख्याता उत्पद्यन्त इति सूचितम् ॥ ४ ॥ **वर्तमानाः सन्ती**ति । आरब्धापरिसमाप्तत्वं वर्तमानता, उक्तिकालसंबन्धोऽस्तितेति न पौनरुक्त्यम् ॥ ५ ॥ परः परमात्मा स एवाम्भोधिः । ये भविष्यन्ति तान् । सा प्रसिद्धा । कथा वाक्प्रवृत्तिः । अनेन त्रैकालिकजगदुत्पत्त्याद्याधारभूते परमात्मनि जगदध्यारोपो दर्शितः ॥ ६ ॥ पृष्टमर्थमुपेक्ष्यान्यद्वदतो गुरोर्निगूढाशयः स्वेन सम्यग्विदित इति गुरोरुत्साहाय स्वकौशलं सूचयन् रामस्तेषु सर्गेषु स्वयं कंचिद्विशेषमुवाच-**या** इति । यद्यपि वर्तमानाः सर्गाः प्रातिस्विकरूपेणासंख्येयास्तथापि ते कालतः कूलद्वयदर्शनाद्भूतभविष्यत्सर्गापेक्षया न्यूनसंख्या इति विदिता एवेति भावः । का इव किंभूता इवोत भविष्यन्त इव । नोभयसाम्यमपीति न तत्पङ्क्तावेषां विचारणा युक्तेत्यर्थः । तथा चानन्तानामागन्तूनां तेषामुपादानमात्मतत्त्वमनन्तमेकमनागन्तुकं चिद्रूपं त्वया दर्शितमिति मया विदितमिति भावः ॥ ७ ॥ एवं निगूढाशयपरिज्ञानेन तत्र विशेषोक्त्या प्रोत्साहितः पूर्वोक्तस्थूलप्रपञ्चस्य मिथ्यात्वबोधनाय सूक्ष्मभूतानामेव पञ्चीकरणेन स्थूलीभावावभासात्सूक्ष्मप्रपञ्चमात्रतेति दर्शयिष्यन् श्रीवसिष्ठ उवाच-**तिर्यगि**ति । तिर्यञ्चः पशुपक्ष्यादयः पुरुषा मनुष्या देवाः प्रसिद्धा आदिः प्रधानो यस्य प्राणिनिकायस्य तस्य मध्ये यो यस्मिन्नेव प्रदेशे यदैव विनश्यति म्रियते सोऽसौ प्रत्यगात्मा तस्मिन्नेव प्रदेशे तदैवेदं वक्ष्यमाणं जगत्त्रयं प्रपश्यति नान्यत्र न वाचिरेणेत्यर्थः ॥८॥ स किमुपकरणः किंस्वरूपश्च पश्यति तत्राह—**आतिवाहिके**ति । अतिवहनमतिवाहो धूमार्चिरादिमार्गाभिमानिदेवैः परलोकप्रापणं तत्र साधुरातिवाहिकस्तन्नाम्ना चित्तशरीरेण चित्ताहंकारमनोबुद्धिदशेन्द्रियप्राणघटितेन वासनामयेन सूक्ष्मशरीरेण स्वहृद्येवान्तर्व्योम्नि दहराकाशे जगत्त्रयं वासनामयमेवानुभवति भ्रान्त्या वासनामयतत्तच्छरीराणि वा प्राप्नोति क्रमशः । वस्तुतस्तु स व्योमात्मा प्रागुक्तचिदाकाशस्वरूपः अतएवाजो जन्मादिविक्रियारहितश्चेत्यर्थः । ननु 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति', 'उत्क्रामन्तं स्थितं वापि' इत्याद्यनेकश्रुतिस्मृतिप्रसिद्धिविरुद्धं मृतस्य स्वहृद्येव परलोकदर्शनं कथमुच्यत इति चेत् । सत्यम् । कर्मोपासनानुरूपव्यवहारदृष्ट्या ते श्रुतिस्मृतिवादाः । इह तु परमार्थदृष्ट्या 'अस्मिन्द्यावापृथिवी अन्तरेव समाहिते'[3] इति श्रुतिवादवद्धृद्येव परलोककल्पनमुच्यते । आत्मनो वैपुल्याद्धृदयस्याप्यपरिच्छिन्नत्वात्तत्[4]साक्षिणो हृदयपरिच्छेदं निवार्य निष्क्रियत्वं प्रपञ्चस्य वासनामात्रमयत्वं च व्युत्पादयितुं परलोकवदुत्क्रमणगमनादेरपि तत्रैव कल्पनामात्रेणाप्युपपत्तेरित्यभिप्रेत्येत्यविरोधः ॥ ९ ॥ एकत्र व्युत्पादितं न्यायं सर्वत्र दर्शयति—**एवमि**ति । भूतानां कोटय इत्यन्वयः । जगन्ति दृश्यजातानि मरणकाले तेषां जगतां वासनासु लीनानि यानि यां आशां वासनां यस्यां यस्यां वासनायां कर्मपरिपाकानुरोधात्पृथक्पृथग्देवमनुष्यपश्वादियोनिभेदेन उदितानि उद्भाव्य स्फुरन्ति तानि तान्येव प्राप्नुवन्तीति शेषः । 'यद्यद्भवन्ति तदाभवन्ति', 'यं यं वापि स्मरन्भावम्' इत्यादिश्रुतिस्मृतिभ्य इति भावः ॥१०॥ इत्थं

---

१ फलत्वविधेयत्वादिति इति पाठः. २ प्रपञ्चाध्यारोपं इति पाठः. ३ समाहिते कल्पिते. ४ तत् इति क्वचिन्न पठ्यते.

दुर्वातभूकम्प इव त्रस्तबालपिशाचवत् ।
मुक्तालीवामले व्योम्नि नौस्पन्दतरुयानवत् ॥ १२
स्वप्नसंवित्तिपुरवत्स्मृतिजातखपुष्पवत् ।
जगत्संसरणं स्वान्तर्मृतोऽनुभवति स्वयम् ॥ १३
तत्रातिपरिणामेन तदेव घनतां गतम् ।
इहलोकोऽयमित्येव जीवाकाशे विजृम्भते ॥ १४
पुनस्तत्रैव जन्मेहामरणाद्यनुभूतिमान् ।
परं लोकं कल्पयति मृतस्तत्र तथा पुनः ॥ १५
तदन्तरन्ये पुरुषास्तेषामन्तस्तथेतरे ।
संसार इति भ्रान्तीमे कदलीदलपीठवत् ॥ १६
न पृथ्व्यादिमहाभूतगणा न च जगत्क्रमाः ।
मृतानां सन्ति तत्रापि तथाप्येषां जगद्भ्रमाः ॥ १७
अविद्यैव ह्यनन्तेयं नानाप्रसरशालिनी ।
जडानां सरिदादीर्घा तरत्सर्गतरङ्गिणी ॥ १८
परमार्थाम्बुधौ स्फारे राम सर्गतरङ्गकाः ।
भूयोभूयोऽनुवर्तन्ते त एवान्ये च भूरिशः ॥ १९
सर्वतः सदृशाः केचित्कुलक्रममनोगुणैः ।
केचिदर्धेन सदृशाः केचिच्चातिविलक्षणाः ॥ २०
इमं व्यासमुनिं तत्र द्वात्रिंशं संस्मराम्यहम् ।
यथासंभवविज्ञानदृशा संदृश्यमानया ॥ २१
द्वादशाल्पधियस्तत्र कुलाकारेहितैः समाः ।
दश सर्वे समाकाराः शिष्टाः कुलविलक्षणाः ॥ २२
अद्याप्यन्ये भविष्यन्ति व्यासवाल्मीकयस्तथा ।
भृग्वङ्गिरःपुलस्त्याश्च तथैवाप्यन्यथैव च ॥ २३
नराः सुरर्षिदेवानां गणाः संभूय भूरिशः ।
उत्पद्यन्ते विलीयन्ते कदाचिच्च पृथक्पृथक् ॥ २४
ब्राह्मी द्वासप्ततिस्त्रेता आसीदस्ति भविष्यति ।
स एवान्यश्च लोकाश्च त्वं चाहं चेति वेद्म्यहम् ॥ २५
क्रमेणास्य मुनेरित्थं व्यासस्याद्भुतकर्मणः ।
संलक्ष्यतेऽवतारोऽयं दशमो दीर्घदर्शिनः ॥ २६
अभूम व्यासवाल्मीकियुक्ता वयमनेकशः ।
अभूम वयमेवेमे बहुशश्च पृथक्पृथक् ॥ २७
अभूम वयमेवेमे सदृशा इतरे विदः ।
अभूम वयमेवेमे नानाकाराः समाशयाः ॥ २८
भाव्यमद्याप्यनेनेह ननु वाराष्टकं पुनः ।
भूयोऽपि भारतं नाम सेतिहासं करिष्यति ॥ २९
कृत्वा वेदविभागं च नीत्वानेन कुलप्रथाम् ।
ब्रह्मत्वं च तथा कृत्वा भाव्यं वैदेहमोक्षणम् ॥ ३०

---

वासनामयत्वे जगतो यत्फलितं परमार्थदृष्ट्या भ्रमरूपत्वं तदाह—**संकल्पे**त्यादिषड्भिः । संकल्पे मानसपूजादौ रत्नमयप्रासादादेर्यत्नेन निर्माणं मनोराज्ये त्वयत्नेनेति भेदः । 'निर्वाणम्' इति पाठे निर्वृतिर्निर्वाणं सुखं सांकल्पिकाङ्गनापरिष्वङ्गादिजम् । इन्द्रजालान्यारचिता मालेव यस्मिन्भ्रमे स इव ॥ ११ ॥ दुर्वातो वातरोगविशेषस्तेन भूकम्पभ्रमः । बालस्य भीषणार्थं कल्पितः पिशाचस्तद्वत् । मुक्ताली मौक्तिकसमूहः । नौकारूढानां नौस्पन्दे तीरस्थतरूणां यानं गमनं भ्रान्त्या प्रसिद्धम् ॥ १२ ॥ संवित्तिर्दर्शनम् । स्मृतेः स्मरणाज्जातं कल्पितं खे पुष्पं तद्वत् । जगत्संसरणमिति प्रथमान्तं प्रथमान्तप्राक्तनदृष्टान्तान्वयानुरोधात् । अनुभवतीत्यत्र तु द्वितीयान्ततया विपरिणामेन संबध्यते । मृत इति जातस्याप्युपलक्षणम् ॥ १३ ॥ तर्हि कथं 'वैधर्म्याच्च न स्वप्नादिवत्' इति भगवतो बादरायणस्य सूत्रम् भोक्तुश्चिरं तत्र वैधर्म्येण नियतव्यवहारादिः सत्यताप्रत्ययश्च तत्राह—**तत्रे**ति । अतिपरिणामश्चिरपरिचयः । घनतां पञ्चीकरणेन दृढताम् । तथाच तत्कृत एव वैधर्म्यादिव्यवहार इति भावः ॥ १४ ॥ अनवस्थितस्वभावत्वादपि जगतो मिथ्यात्वमिति दर्शयितुमाह—**पुन**रिति । ईहा जन्मोत्तरं मरणपर्यन्तं चेष्टा ॥ १५ ॥ वासनाया अन्तः अन्तरे अन्ये पुरुषा देहाः । पुरुषा इति पश्वादीनामप्युपलक्षणम् । कदलीदलस्य पीठान्याधारभूताः कदलीत्वचस्तद्वत् ॥ १६ ॥ एवं मिथ्यात्वे सिद्धे तदपवादेनात्मपरिशेषसिद्धिरित्यभिप्रेत्याह—**न पृथ्व्यादी**ति । ज्ञानं विना नोच्छिद्यन्ते इति शेषः । एवं प्रपञ्चापवादेन परिशिष्टात्मसिद्धिः ॥ १७ ॥ मूलोच्छेदं विना नापलापमात्रेण तन्निवृत्तिसिद्धिरित्यभिप्रेत्याविद्योच्छेद्यत्वप्रसिद्धये सूक्ष्मभावेन व्युत्पादितप्रपञ्चस्य कारणाविद्यामात्रत्वमाह—**अविद्यैवे**ति । जडानां मूढानां आदीर्घा दुस्तरेति यावत् । तरद्भिश्चलद्भिः सर्गैस्तरङ्गिणी तरङ्गवती ॥ १८ ॥ अविद्यादिसर्वकल्पनाधिष्ठानं दर्शयति—**परमार्थे**ति । ते प्राक्तना अभिनवाश्च ॥ १९ ॥ २० ॥ प्रकृतशङ्कासमाधानोपोद्घातेन जगद्व्यवस्थितिं प्रकृतशास्त्रविषयं च व्युत्पाद्य शङ्कासमाधानमुपक्रमते—**इम**मित्यादिना । पुराणभारतादिनिर्माणकार्यैः संदृश्यमानया प्रसिद्ध्या । यथोचितेन संभवेन जन्मना विज्ञानेन शास्त्रादिज्ञानेन दृशा ब्रह्मविद्यया चोपलक्षितेषु । तत्र तेषु व्याससर्गतरङ्गकेषु । इमं द्वात्रिंशं संस्मरामीति संबन्धः ॥ २१ ॥ तेष्वप्यवान्तरविशेषमाह—**द्वादशे**ति । अल्पधियो ब्रह्मविद्ब्रह्मविद्वरो ब्रह्मविद्वरीयान् ब्रह्मविद्वरिष्ठ इति प्रसिद्धेषु चतुर्थस्थानाविश्रान्तेरल्पबुद्धयः । ईहितैराधिकारिकचेष्टाभिः ॥ २२ ॥ तथैव पूर्वसदृशा अन्यथैव तद्विलक्षणाश्चेत्यर्थः ॥ २३ ॥ २४ ॥ ब्राह्मी ब्राह्मकल्पावयवभूता त्रेता सांप्रतमस्ति प्रतिकल्पं चासीद्भविष्यति च । स पूर्वसदृशोऽन्यस्तद्विलक्षणः । त्वं रामोऽहं वसिष्ठः ॥ २५ ॥ अस्य पुरोवर्तिनो व्यासस्य व्यासजीवस्य ॥ २६ ॥ २७ ॥ इतरे विसदृशाः । विदः अभिज्ञाः ॥ २८ ॥ करिष्यति अयमिति शेषः ॥ २९ ॥ कुलस्य स्ववंशस्य भरतवंशस्य वा प्रथां प्रख्यातिम् । ब्रह्मत्वं हैरण्यगर्भाधिकारम् । वैदेहमोक्षणं विदेहमुक्ताम्

---

१ तथा परे इति पाठः. २ इन्द्रजालेनारचिता इति पाठः. ३ हिरण्यगर्भाधिकारं इति पाठः.

वीतशोकभयः शान्तनिर्वाणो गतकल्पनः ।
जीवन्मुक्तो जितमना व्यासोऽयमिति वर्णितः ॥ ३१
वित्तबन्धुवयःकर्मविद्याविज्ञानचेष्टितैः ।
समानि सन्ति भूतानि कदाचिन्नतु तानि तु ॥ ३२
कैश्चित्सर्गशतैस्तानि भवन्ति न भवन्ति वा ।
कदाचिदपि मायेयमित्थमन्तविवर्जिता ॥ ३३
यच्छतीयं विपर्यासं भूरिभूतपरम्परा ।
बीजराशिरिवाजस्रं पूर्यमाणः पुनःपुनः ॥ ३४
तेनैव संनिवेशेन तथान्येन पुनःपुनः ।
सर्गाकाराः प्रवर्तन्ते तरङ्गाः कालवारिधेः ॥ ३५
आश्वस्तान्तःकरणः
शान्तविकल्पः स्वरूपसारमयः ।
परमशमामृततृप्त-
स्तिष्ठति विद्वान्निरावरणः ॥ ३६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे भूयोभूयःसर्गानुवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ४

श्रीवसिष्ठ उवाच ।
सौम्याम्बुत्वे तरङ्गत्वे सलिलस्याम्बुता यथा ।
समैवाब्धौ तथाऽदेहसदेहमुनिमुक्तता ॥ १
सदेहा वास्त्वदेहा वा मुक्तता विषये न च ।
अनास्वादितभोगस्य कुतो भोज्यानुभूतयः ॥ २
जीवन्मुक्तं मुनिश्रेष्ठं केवलं हि पदार्थवत् ।
पश्यामः पुरतो नास्य पुनर्विज्ञोऽन्तराशयम् ॥ ३
सदेहादेहमुक्तानां भेदः को बोधरूपिणाम् ।
यदेवाम्बुतरङ्गत्वे सौम्यत्वेऽपि तदेव तत् ॥ ४
न मनागपि भेदोऽस्ति सदेहादेहमुक्तयोः ।
सस्पन्दोऽप्यथवाऽस्पन्दो वायुरेव यथानिलः ॥ ५
सदेहा वा विदेहा वा मुक्तता न प्रमास्पदम् ।
अस्माकमपि तस्यास्ति स्वैकतास्त्यविभागिनी ॥ ६

प्राप्तेनेति शेषः । भाव्यमिति भावे कृत्यः । अथवा वैदेहमोक्षणं भाव्यं प्राप्तव्यम् । भू प्राप्तावात्मनेपदी तस्मात्कर्मणि कृत्यः । ॥ ३० ॥ तस्य सांप्रतं जीवन्मुक्ततां दर्शयति—**वीते**ति । निर्वाणो निर्गतो मोहबन्धात् । गत्यर्थत्वात्कर्तरि क्तः । 'निर्वाणो वाते' इति निष्ठानत्वम् । शान्तश्चासौ निर्वाणश्चेति कर्मधारयः । अतएव गता अहंममेत्यध्यासकल्पना यस्य । अतएव च वीतशोकभयः ॥ ३१ ॥ क्वचित्तु तानि न समानीत्यन्वयः ॥ ३२ ॥ क्वचित्कदाचिदपि भवन्ति ॥ ३३ ॥ भूतपरम्परा प्राणिनिकायः । यथा धान्यादिबीजराशिर्मानाय पुनःपुनः प्रस्थादौ पूर्यमाणः पुना राशीकृतो न पूर्वक्रमसंनिविष्टबीजो भवति किंतु विपर्यासं यच्छति तद्वत् ॥ ३४ ॥ संनिवेशोऽवयवसंस्थानविशेषः क्रमो वा ॥ ३५ ॥ जीवन्मुक्तस्य योगबलादाधिकारिकनानाशरीरपरिग्रहेऽपि न मुक्तिस्वरूपप्रच्युतिरित्याह—**आश्वस्ते**ति । आश्वस्तान्तःकरणः समाहितचित्तः सर्वस्योपपादको हेतुर्निरावरण इति । अनाश्वासविकल्पासारदेहादिमयत्वाशान्ततृष्णादीनामविद्यावरणप्रयुक्तत्वात्तदभावादित्यर्थः । तथाच जीवन्मुक्तिरेव ज्ञानफलं सा च न पाक्षिकीति भावः ॥ ३६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे भूयोभूयःसर्गानुवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

मुक्तानुभवतो मुक्त्योरविशेषोऽत्र कीर्त्यते ।
मूलदार्ढ्याय शास्त्रीयं पौरुषं च प्रशस्यते ॥ १ ॥

आत्मनो नित्यमुक्तस्वभावस्याज्ञानावरणमेव बन्धः । ज्ञानेन तन्नाश एव मुक्तिः । नष्टे त्वज्ञाने परिज्ञातश्चित्रव्याघ्र इव दृश्यमानोऽपि व्यवहारः कौतुकायैव नानर्थायेति न जीवन्मुक्तविदेह-

मुक्त्योर्विशेष इति पूर्वशङ्कां समाधाय प्रस्तुतमात्मतत्त्वं विस्तरेणोपदेष्टुकामः प्रथमं मूलदार्ढ्याय पुरुषप्रयत्नं समर्थयति—**सौम्ये**त्यादिना । हे सौम्य प्रियदर्शन, अम्बुत्वे निश्चलाम्बुत्वे । समैव न विषमा । तथैव अदेहसदेहमुन्योर्मुक्तता स्वरूपावस्थितिः समैवेत्यर्थः ॥ १ ॥ विषये न च विषयाधीना तु न । यदि मुक्तिः स्वर्गादिरिव विषयाधीना स्यात्तर्हि तथैव विषयवैषम्याद्विषमा स्यादिति भावः । ननु तथापि भोक्तृत्वाभोक्तृत्वकृतो विशेषोऽस्त्येव भोगार्थत्वाद्देहस्थितेस्तत्राह—**अनास्वादिते**ति । भोगेषु सत्यबुद्ध्या भोक्तृत्वाभिमानेन । भोगास्वादने हि भोगकृतो विशेषः स्यान्न त्वसङ्गोदासीनात्मैकत्वदर्शिनः स इति भावः ॥ २ ॥ तर्हि कथमस्य सदेहत्वं तत्राह—**जीवन्मुक्त**मिति । मुनिश्रेष्ठं व्यासं पदार्थवत्सदेहवत्पुरतः पश्यामः । स्वकल्पनयेति शेषः । अन्तराशयमन्तर्गतं विदेहत्वनिश्चयम् । तथाच यद्यप्ययं सदेह इवास्माभिर्वीक्ष्यते तथाप्यसौ स्वनिश्चयेनान्तर्विदेह एवास्त इति नास्य स्वानुभवतो विशेष इति भावः ॥ ३ ॥ अबोध एव हि भेदकस्तदपगमे बोधमात्रपरिशेषे को भेदक इत्यर्थः । सौम्यत्वे निश्चलतया प्रसन्नत्वे । तत् अम्बु । तदेव अम्ब्वेव ॥ ४ ॥ अम्बुनि कदाचिदस्वच्छत्वादिकृतो विशेषोऽपि स्यादिति दृष्टान्तान्तरेणोक्तं समर्थयते—**न मनागि**ति ॥ ५ ॥ अत्र क्वचित्पुस्तकेषु

'मयोक्तं केवलीभावं तत्तत्स्मरणजीवनम् ।
सदेहस्य विदेहस्य समतैव सदा शिवा ॥'

इति श्लोकोऽधिकः पठ्यते, तस्यायमर्थः—ननु वायुः सस्पन्दः शिशिरस्तरुतरङ्गादिकम्पहेतुस्त्वगिन्द्रियवेद्यश्च । अस्पन्दस्तु तद्विपरीत इति तत्रापि भेदोऽस्त्येवेति कथं तदभावेऽसौ दृष्टान्त-

१ क्वचिदिति पूर्वोत्तरान्वयि. २ गच्छति इति पाठः.

३ समा शिवा इति पाठः.

तस्मात्प्रकृतमेवेदं शृणु श्रवणभूषणम् ।
मयोपदिश्यमानं त्वं ज्ञानमज्ञान्ध्यनाशनम् ॥ ७
सर्वमेवेह हि सदा संसारे रघुनन्दन ।
सम्यक्प्रयुक्तात्सर्वेण पौरुषात्समवाप्यते ॥ ८
इह हीन्दोरिवोदेति शीतलाह्लादनं हृदि ।
परिस्पन्दफलप्राप्तौ पौरुषादेव नान्यतः ॥ ९
पौरुषं स्पन्दफलवद्दृष्टं प्रत्यक्षतो नयत् ।
कल्पितं मोहितैर्मन्दैर्दैवं किंचिन्न विद्यते ॥ १०
साधूपदिष्टमार्गेण यन्मनोऽङ्गविचेष्टितम् ।
तत्पौरुषं तत्सफलमन्यदुन्मत्तचेष्टितम्[1] ॥ ११
यो यमर्थं प्रार्थयते तदर्थं चेहते क्रमात् ।
अवश्यं स तमाप्नोति न चेदर्धान्निवर्तते ॥ १२
पौरुषेण प्रयत्नेन त्रैलोक्यैश्वर्यसुन्दराम् ।
कश्चित्प्राणिविशेषो हि शंक्रतां[2] समुपागतः ॥ १३
पौरुषेणैव यत्नेन सहसाम्भोरुहास्पदम् ।
कश्चिदेव चिदुल्लासो ब्रह्मतामधितिष्ठति ॥ १४
सारेण पुरुषार्थेन खेनैव गरुडध्वजः ।
कश्चिदेव पुमानेव पुरुषोत्तमतां गतः ॥ १५
पौरुषेणैव यत्नेन ललनावलिताकृतिः[3] ।
शरीरी कश्चिदेवेह गतश्चन्द्रार्धचूडताम् ॥ १६
प्राक्तनं चैहिकं चेति द्विविधं विद्धि पौरुषम् ।
प्राक्तनोऽद्यतनेनाशु पुरुषार्थेन जीयते ॥ १७
यत्नवद्भिर्दृढाभ्यासैः प्रज्ञोत्साह[4]समन्वितैः ।
मेरवोऽपि निगीर्यन्ते कैव प्राक्पौरुषे कथा ॥ १८
शास्त्रनियन्त्रितपौरुष-
परमा पुरुषस्य पुरुषता या स्यात् ।
अभिमतफलभरसिद्ध्यै
भवति हि सैवान्यथा त्वनर्थाय ॥ १९

स्तत्राह—**मयेति**। हे राम, त्वं सर्वत्र उक्तं विवक्षितं तत्तद्दृष्टान्तस्मरणस्य जीवनं सारभूतं केवलीभावं वस्तुनः स्वरूपाप्रच्युतिलक्षणं मय उपमिनु नत्वविवक्षितं कार्यभेदकृतं वैलक्षण्यं कल्पयेत्यर्थः । तथा[6]चैकांशे दृष्टान्तो न सर्वांशे इति भावः । अत्र सदेहादेहमुक्तैक्यमुपमेयं उक्तं विवक्षितं तत्सादृश्यार्थं स्मर्यते तत्स्मरणं सस्पन्दास्पन्दानिलैक्यमुपमानं तस्य जीवनं उपमेयसादृश्योल्लासापादकं केवलीभावं परिस्पन्दत्यागात्केवलेनैकांशेन ऐक्यसादृश्यभावेन उपमेयं मय उपमाविषयं कुरु । मिनोतेरेव गणकार्यस्यानित्यत्वाच्छपि लोटि मयेति रूपम् । तथा सति फलितमाह—**सदेहस्येति** । किंच सदेहविदेहबन्धमोक्षादिव्यवहारोऽप्यज्ञदृशा कल्पनयैव न परमार्थदृशेत्याह—**सदेहेति**(?) । अस्माकं वसिष्ठस्य तस्य व्यासस्यापि सदेहा विदेहा वा मुक्तता प्रमायाः परमार्थदृष्टेरास्पदं विषयो नास्ति किंतु अविभागिनी द्वैतशून्या स्वात्मैकतैवास्तीति तल्लाभरूपे ज्ञानफले विशेषाभावान्न ज्ञानस्यानित्यफलतादोषशङ्कावकाशः, नापि ज्ञानोदये देहपातापत्तिः । स्वविरोध्यंशस्यैव ज्ञानेन बाधाद्देहधारणस्य च प्रारब्धफलत्वेन ज्ञानतुल्यत्वेनोपजीव्यत्वेन च ज्ञानाविरुद्धत्वादुपादाननिद्रानाशेऽपि स्वप्नसंस्कारस्य कंचित्कालमनुवृत्तिवदविद्योच्छेदेऽपि यावत्प्रारब्धं देहादिप्रतिभासोपपत्तेरिति भावः ॥ ६ ॥ इत्थं निरस्ते संशये प्रकृतस्यावसरं दर्शयति—**तस्मादिति** । अज्ञानमज्ञा सैवान्ध्यं तस्य नाशनम् ॥ ७ ॥ ननु शुकादीनां शमदमादिसाधनसंपन्नानां श्रवणं फलितं कथमन्येषामाधुनिकानां तत्फलिष्यति साधनानां दुःसंपादत्वादित्याशङ्क्य, पुरुषप्रयत्नस्यासाध्यं नास्तीत्याह—**सर्वमेवेति** । सर्वेण सदा सर्वमेवावाप्यते तर्हि कथं क्वचिद्यत्नवैफल्यदर्शनं तत्राह—**सम्यगिति** । अनुपरम एव सम्यक्प्रयोगः । समवाप्यते संप्राप्यते ॥ ८ ॥ परिस्पन्दः शास्त्रविहितकायवाक्चित्तचलनरूपं कर्म तस्य फलं चित्तशुद्धिद्वारा ज्ञानं तत्प्राप्तौ सत्यां हृदि शीतलं कामक्रोधादिसंतापाप्रतिहतमाह्लादनं जीवन्मुक्तिसुखमुदेति । तथाच श्रुतिः 'स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य' इति । स्मृतिश्च 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इति, तत्तु सर्वं पौरुषादेव भवति नान्यत इति पुरुषप्रयत्न एव निर्भरः कार्य इति भावः ॥९॥ ननु दैवप्रातिकूल्ये पौरुषं व्यर्थं दृश्यते । तथाच 'श्रेयांसि बहुविघ्नानि' इति प्रवादान्न तत्फलाश्वास इत्याशङ्क्य दैवस्य पौरुषेऽन्तर्भावं दौर्बल्यं च वक्ष्यमाणमभिप्रेत्य स्वतन्त्रं तन्निरस्यति—**पौरुषमिति** । गमनभोजनादिपौरुषं स्पन्दद्वारा देशान्तरं तृप्त्यादि वा नयत्प्रापयत् प्रत्यक्षतो दृष्टमिति नयत्पदस्य पूर्वत्र वा, यद्दैवं न दृष्टं तत् न विद्यत इति पदभङ्गेनोत्तरत्र वान्वयः ॥ १० ॥ किं तत्पौरुषं यत्प्रशस्यते तदाह—**साध्विति** । अङ्गग्रहणं वाचोऽप्युपलक्षणम् ॥ ११ ॥ ईहते चेष्टते । क्वचिद्विघ्नैः प्रतिघातः शास्त्रोक्तक्रमभ्रंशादेवेति सूचनाय क्रमादित्युक्तम् । साङ्गात्कर्मणः फलावश्यंभावनियमादिति भावः ॥ १२ ॥ तमेव नियमं बहुशः संवादेन द्रढयति—**पौरुषेणे**त्यादिचतुर्भिः ॥ १३ ॥ अम्भोरुहास्पदं पद्मासनं अधिष्ठायेति शेषः । ब्रह्मतां हिरण्यगर्भतां गुणमूर्तिसारूप्यमुक्तिं वा । एवमुत्तरयोरपि ॥ १४ ॥ ॥ १५ ॥ १६ ॥ पुरुषार्थेन पौरुषेण जीयतेऽभिभूयते ॥१७॥ नन्वनन्तकोटिकल्पार्जितानामनन्तानां प्राक्तनकर्मणां कथमल्पेनाद्यतनेन पौरुषेण जयस्तत्राह—**यत्नवद्भि**रिति । निगीर्यन्ते । प्रलयाधिकारिदेवताभावं प्राप्तैः पुरुषैरित्यर्थः । यद्यप्यनन्तानि कर्माणि तथापि तेषां मूलैक्यात्तन्नाशेन जयः सुकर इत्यभिप्रेत्याह—**कैवेति** ॥ १८ ॥ उक्तमर्थमुपसंहरंस्तद्भ्रंशेऽनर्थमाह—

१ तत्साफल्यम् इति पाठः. २ वृषतां इति पाठः. वृषा=इन्द्रः. ३ वलिताकृतिम् इति पाठः. ४ प्रजोत्साह इति पाठः. ५ विवक्षितकार्यकृतं भेदं कल्पयेत्यर्थ इति पाठः. ६ चैकांशेन दृष्टान्त इति पाठः.

कस्यांचित्स्वयमात्मदुःस्थितिवशात्पुंसो दशायां शनै-
रङ्गुल्यग्रनिपीडितैकचुलुकादावापबिन्दुर्बहुः ।
कस्यांचिज्जलराशिपर्वतपुरद्वीपान्तरालीकृता
भर्तव्योचितसंविभागकरणे पृथ्वी न पृथ्वी भवेत् ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे पौरुषप्रकरणं नाम चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ५

श्रीवसिष्ठ उवाच ।

प्रवृत्तिरेव प्रथमं यथाशास्त्रविहारिणाम् ।
प्रभेव वर्णभेदानां साधनी सर्वकर्मणाम् ॥ १
मनसा वाञ्छ्यते यच्च यथाशास्त्रं न कर्मणा ।
साध्यते मत्तलीलासौ मोहनी नार्थसाधनी ॥ २
यथा संयतते[1] येन तथा तेनानुभूयते ।
स्वकर्मैवेति चास्तेऽन्या व्यतिरिक्ता न दैवदृक् ॥ ३
उच्छास्त्रं शास्त्रितं चेति द्विविधं पौरुषं स्मृतम् ।
तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ ४
द्वौ हुडाविव युध्येते पुरुषार्थौ समासमौ ।
प्राक्तनश्चैहिकश्चैव शाम्यत्यत्राल्पवीर्यवान् ॥ ५
अतः पुरुषयत्नेन यतितव्यं यथा तथा ।
पुंसा तन्त्रेण सद्योगाद्येनाश्वद्यतनो जयेत् ॥ ६
द्वौ हुडाविव युध्येते पुरुषार्थौ समासमौ ।
आत्मीयश्चान्यदीयश्च जयत्यतिबलस्तयोः ॥ ७
अनर्थः प्राप्यते यत्र शास्त्रितादपि पौरुषात् ।
अनर्थकर्तृ बलवत्तत्र ज्ञेयं स्वपौरुषम् ॥ ८
परं पौरुषमाश्रित्य दन्तैर्दन्तान्विचूर्णयन् ।

**शास्त्रे**ति । शास्त्रैः श्रुत्यादिभिर्नियन्त्रितं नियमितं यत्पौरुषं तदेव परममवश्यसंपाद्यं यस्मात्तथाविधा या पुरुषस्य पुरुषता निरन्तरोद्युक्तता स्यात्सैवाभिमतफलभरस्य सिद्ध्यै भवति हि । अन्यथा अशास्त्रीया त्वनर्थायेत्यर्थः ॥ १९ ॥ नन्वल्पधनबलबुद्धीनां कथं महाधनबलबुद्धिसाध्यपौरुषफललाभ इत्याशङ्क्य तेषामपि स्वशक्यपौरुषपरम्परयैवेह जन्मनि जन्मान्तरे वा महाधनादिसंपत्त्या तल्लाभः सिध्यति । नहि पुरुषस्य दुर्दशा सुदशा वा सदैव भवतीत्यभिप्रेत्य शास्त्रीयप्रयत्नतच्छैथिल्ययोः फलतो महदन्तरं दर्शयति—**कस्यांचिदि**ति । पुंसः शास्त्रीयप्रयत्नशैथिल्ये स्वयं स्वत एव स्वाभाविकरागादिवशादात्मनो दुःस्थितिरसन्मार्गस्थितिस्तद्वशात्कस्यांचिद्दारिद्र्यरोगबन्धनादिदुर्दशायां स्वहस्तादेरप्यस्वाधीनत्वादङ्गुल्यग्राणां निपीडितेन पीडासाध्येनापि निकुञ्चनेन संपाद्यादेकचुलुकात्करसंमितसलिलात् मुखे आ उप्यते क्षिप्यत इत्यावापस्तथाविधो बिन्दुरपि दुर्लभत्वाद्बहुमतो भवति । तस्यैव शास्त्रीययत्नदार्ढ्ये धर्मोत्कर्षात्कस्यांचित्प्रियव्रतादिवत्सप्तद्वीपाधिपत्यदशायां भर्तव्येभ्यः पुत्रादिभ्य उचितो दायादिसंविभागस्तत्करणे जलराश्यादयोऽन्तरालीकृता गर्भीकृता यया तथाविधा संपूर्णा पृथ्व्यपि न पृथ्वी न महती भवेत् । न बहुमता भवेदित्यर्थः । तथाहि प्रसिद्धं पुराणे 'प्रियव्रतोत्तानपादौ तावेवावां सुहीतरू' इति ॥ २० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे पौरुषप्रकरणं नाम चतुर्थः सर्गः ॥ ४ ॥

प्राबल्ये पौरुषस्यात्राप्यवश्यं फलसंगमे ।
दैवस्याव्यतिरेके च युक्तिदृष्टान्त ईर्यते ॥ १ ॥

यत्पूर्वमुक्तं पौरुषातिरेकेण दैवस्यासत्त्वं दैवात्पौरुषस्य प्राबल्यं पौरुषादेव पुरुषार्थसिद्धिरिति च तत्सर्वमुपपत्तिभिः समर्थयितुं प्रतिजानीते—**प्रवृत्तिरेवे**ति । शास्त्रमनतिक्रम्य विहारिणां वाङ्मनःकायैर्व्यवहरणशीलानामधिकारिणां सर्वकर्मणां सर्वेषां पुरुषार्थानां सिद्धौ प्रथमं प्रवृत्तिरेव कारणं यथा नीलपीतादिवर्णभेदानामभिव्यक्तौ प्रभैव साधनी तद्वत् । 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ', 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इत्यादिस्मृतेरिति भावः ॥ १ ॥ ननु तृप्त्यादिवद्दृष्टफलत्वाद्विद्यायाः कस्तत्साधने शास्त्रीयनियमस्योपयोगस्तत्राह—**मनसे**ति । असौ मत्तलीला उन्मत्तचेष्टेव । साध्यते तेनेति शेषः । अतएव न पुरुषार्थसाधनी प्रत्युत मोहनी । दृष्टफलत्वेऽप्यशास्त्रीयोपायस्यान्वयव्यतिरेकादर्शनेनाहेतुत्वादिति भावः ॥ २ ॥ शास्त्रीयस्य यत्नस्य शास्त्रीयमेव फलमशास्त्रीयस्य चाशास्त्रीयमेवेत्यौचित्यबलाच्च व्यवस्थासिद्धिरित्याह—**यथे**ति । ननु दैवादुभयवैपरीत्यमपि स्यात्तत्राह—**आस्तेऽन्या व्यतिरिक्ता न दैवदृ**गिति । प्राक्तनकर्मैव फलावस्थं दैवमित्युच्यते न ततोऽतिरिक्तं दैवं दृश्यत इत्यर्थः ॥ ३ ॥ उक्तमर्थमेव स्फुटयति—**उच्छास्त्र**मिति । शास्त्रितं शास्त्रनियतम् । प्रातिपदिकाद्धात्वर्थे णिचि क्तः ॥ ४ ॥ हुडौ मेषौ । कदाचित्समौ कदाचिदसमौ । अत्र अनयोर्मध्ये ॥५॥ तन्त्रेण शास्त्रीयनियमेन । 'अतन्द्रेण' इति पाठे निरालस्येन पुंसा ॥ ६ ॥ ननु मनुष्याणां 'त्रिभिर्ऋणैर्वा जायते' इति श्रुतौ देवादिऋणित्वश्रवणात् 'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इति श्रवणाच्च तैरस्यावश्यंविघ्नाचरणे कृतोऽपि यत्नो विफलः स्यादित्याशङ्क्याह—**द्वावि**ति । दोषेषु सत्स्वेव देवानां विघ्नशक्तिः स्वप्रयत्नेन दोषजये तेषां विघ्नशक्तिः कुण्ठीभवतीति भावः ॥ ७ ॥ ननु शास्त्रीयमार्गे यतमानानामपि क्वचिद्रोगाद्यनर्थः कथं दृश्यते तत्राह—**अनर्थ** इति । तथाच तदपि जय्यमेवेति भावः ॥ ८ ॥ शुभेनाद्यतनपौरुषेण । उद्युक्तं विघ्नाचरणा-

[1] संयत्नते इति पाठः.

[2] [illegible] इति पाठः.

शुभेनाऽशुभमुद्युक्तं प्राक्तनं पौरुषं जयेत् ॥ ९
प्राक्तनः पुरुषार्थोऽसौ मां नियोजयतीति धीः ।
बलादधस्पदीकार्या प्रत्यक्षादधिका न सा ॥ १०
तावत्तावत्प्रयत्नेन यतितव्यं सुपौरुषम् ।
प्राक्तनं पौरुषं यावदशुभं शाम्यति स्वयम् ॥ ११
दोषः शाम्यत्यसंदेहं प्राक्तनोऽद्यतनैर्गुणैः ।
दृष्टान्तोऽत्र ह्यस्तनस्य दोषस्याद्य गुणैः क्षयः ॥ १२
असद्दैवमधःकृत्वा नित्यमुद्रिक्तया धिया ।
संसारोत्तरणं भूत्यै यतेताऽऽधातुमात्मनि ॥ १३
न गन्तव्यमनुद्योगैः साम्यं पुरुषगर्दभैः ।
उद्योगस्तु यथाशास्त्रं लोकद्वितयसिद्धये ॥ १४
संसारकुहरादस्मान्निर्गन्तव्यं स्वयं बलात् ।
पौरुषं यत्नमाश्रित्य हरिणेवारिपञ्जरात् ॥ १५
प्रत्यहं प्रत्यवेक्षेत देहं नश्वरमात्मनः ।
संत्यजेत्पशुभिस्तुल्यं श्रयेत्सत्पुरुषोचितम् ॥ १६
किंचित्कान्तान्नपानादिकलिलं कोमलं गृहे ।
व्रणे कीट इवास्वाद्य वयः कार्यं न भस्मसात् ॥ १७
शुभेन पौरुषेणाशु शुभमासाद्यते फलम् ।
अशुभेनाशुभं नित्यं दैवं नाम न किंचन ॥ १८
प्रत्यक्षमानमुत्सृज्य योऽनुमानमुपैत्यसौ ।
स्वभुजाभ्यामिमौ सर्पाविति प्रेक्ष्य पलायते ॥ १९
दैवं संप्रेरयति मामिति दग्धधियां मुखम् ।
अदृष्टश्रेष्ठदृष्टीनां दृष्ट्वा लक्ष्मीर्निवर्तते ॥ २०
तस्मात्पुरुषयत्नेन विवेकं पूर्वमाश्रयेत् ।
आत्मज्ञानमहार्थानि शास्त्राणि प्रविचारयेत् ॥ २१
चित्ते चिन्तयतामर्थं यथाशास्त्रं निजेहितैः ।
असंसाधयतामेव मूढानां धिग्दुरीप्सितम् ॥ २२
पौरुषं च नवानन्तं न यत्नमभिवाञ्छयते ।
न यत्नेनापि महता प्राप्यते रत्नमश्मतः ॥ २३
यथा घटः परिमितो यथा परिमितः पटः ।
नियतः परिमाणस्थः पुरुषार्थस्तथैव च ॥ २४
स च सच्छास्त्रसत्सङ्गसदाचारैर्निजं फलम् ।
ददातीति स्वभावोऽयमन्यथा नार्थसिद्धये ॥ २५
स्वरूपं पौरुषस्यैतदेवं व्यवहरन्नरः ।
याति निष्फलयत्नत्वं न कदाचन कश्चन ॥ २६
दैन्यदारिद्र्यदुःखार्ता अप्यन्ये पुरुषोत्तमाः ।

---

येत्यर्थः ॥ ९ ॥ पुरुषार्थः कर्मफलम् । अधस्पदीकार्या पादेनाक्रमणीया । विनाशनीयेति यावत् । 'अधःशिरसी पदे' इति सत्वम् ॥ १० ॥ सुपौरुषमिति क्रियाविशेषणम् । स्वयमिति निःशेषतालाभाय विशेषणं परतः शान्तौ तदपगमे पुनरुद्भवो मा भूदिति ॥ ११ ॥ प्राक्तन एव प्रबलः किं न स्यात्तत्राह—**दोष** इति । ह्यस्तनस्य पूर्वेद्युस्तनस्य दोषस्याजीर्णादेः । गुणैर्लङ्घनादिभिः ॥ १२ ॥ असद्दैवं प्राक्तनदुरदृष्टमद्यतनसुकृतैरुद्रिक्तया धिया अधःकृत्वा परिभूय आत्मनि संसारोत्तरणमाधातुं संपादयितुं भूत्यै शमदमश्रवणादिसंपदे यतेत ॥ १३ ॥ लोकद्वितयं स्वर्गापवर्गौ ॥ १४ ॥ हरिणा सिंहेन अरिभिर्मनुष्यैः कृताद्बन्धनपञ्जरादिव । विष्णुना असुरैः प्रयुक्तान्मायापञ्जरादिवेति वा ॥ १५ ॥ तुल्यं तुल्यताम् । भावप्रधानो निर्देशः । सत्पुरुषोचितं साधुसंगमसच्छास्त्रादि श्रयेत् ॥ १६ ॥ कलिलं द्रवपिच्छिलम् । वयः सर्वपुरुषार्थसाधनं यौवनम् । भस्मसाद्भस्मप्रायम् । व्यर्थमिति यावत् ॥ १७ ॥ न किंचन प्राक्तनशुभाशुभातिरिक्तमित्यर्थः ॥ १८ ॥ अद्यतनयोरदृष्टरूपयोः शुभाशुभयोः प्रत्यक्षमानं श्रुतिः, दृष्टयोस्त्वन्वयव्यतिरेकसहकृतं चक्षुरादि, तत्सिद्धमद्यतनशुभपौरुषमुत्सृज्येत्यर्थः । एवंच सर्वव्यवहारकदम्बस्यातिप्रसिद्धं प्रत्यक्षश्रुतिप्रमाणं प्रभुसंमितमुत्सृज्य पौरुषप्रयत्नफलसंदिग्धः सन् प्रयत्नफलविघटकानुमानिकं दैवं प्रत्यप्रयत्नाद्बिभ्यन्नपसरति यः । स्वभुजाभ्यां भीत इति गम्यमानत्वात् 'भीत्रार्थानाम्' इत्यपादानता ॥ १९ ॥ न दृष्टा श्रेष्ठानां पौरुषेणैव पुरुषार्थं प्राप्तानां विश्वामित्रादीनां दृष्टिर्यैस्तेषाम् ॥ २० ॥ विवेकं नित्यानित्यादिविवेकोपलक्षितसाधनचतुष्टयम् ॥ २१ ॥ श्रवणादिप्रवणतां स्थिरीकर्तुमन्यचेष्टां निन्दति—**चित्ते** इति । यथाशास्त्रं निजैरीहितैः श्रवणमननादिचेष्टाभिरर्थं परमार्थभूतमात्मतत्त्वमचिन्तयतामत एव तं पुरुषार्थमसंसाधयतामेव मूढानां दुरन्तनरकादिहेतुत्वाद्दुष्टमीप्सितं भोगलिप्सां धिक् । तस्य शोच्यतेत्यर्थः । एवकारो योग्यजन्मलाभेऽपि तदसाधने पुनस्तद्दौर्लभ्यद्योतनार्थः । तथाच श्रुतिः 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' इति ॥ २२ ॥ नन्वियन्तं कालं पौरुषं कार्यमित्यवध्यवगमेन तस्यानन्त्यात्परिश्रमबाहुल्याच्च कथं तत्र प्रवृत्तिस्तत्राह—**पौरुषं चे**ति । तत्पौरुषमनन्तमनवधिकं न । साक्षात्कारोदयस्यैवावधित्वात् । यत्नं परिश्रममभिलक्ष्य च न वाञ्छयते नापेक्ष्यते । 'प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्' इति भगवद्वचनादिति भावः । नन्विदं 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इतिवत्प्ररोचनामात्रं श्रमाधिक्ये सत्येव फलाधिक्यनियमादित्याशङ्क्यान्वयव्यभिचारमाह—**ने**ति । रत्नतत्त्वपरीक्षाकुशलानां विनैव श्रमं लाभातिशयदर्शनाद्[2]व्यतिरेके व्यभिचारोऽपि बोध्यः ॥ २३ ॥ पूर्वार्धोक्तं दृष्टान्तेन द्रढयति—**यथे**ति । घटो जले यत्रापरिच्छेदकत्वेन, पटस्तु दैर्घ्यादिना परिमितः प्रमाणैर्निश्चितस्तथैव पुरुषार्थः पौरुषयत्नोऽपि परिमाणे साक्षात्कारफलावधौ तिष्ठतीति परिमाणस्थो नियत एव ॥ २४ ॥ स पौरुषयत्नः सदाचारैः सहित इति शेषः ॥ २५ ॥ स्वरूपं पौरुषस्यैतदित्युक्तोपसंहारः । तादृशस्य फलाव्यभिचारमाह—**एव**मिति ॥ २६ ॥ उक्तं द्रढयितु[3]मन्यत्रापि न्याय्यस्य पौरुषस्य फलाव्यभिचारं दर्श-

---

१ तैलमश्मनः इति पाठः. २ व्यतिरेकेऽभिचारी इति पाठः. ३ मन्यत्राप्यस्य इति पाठः.

पौरुषेणैव यत्नेन याता देवेन्द्रतुल्यताम् ॥ २७
आबाल्यादलमभ्यस्तैः शास्त्रसत्सङ्गमादिभिः ।
गुणैः पुरुषयत्नेन स्वार्थः संप्राप्यते यतः ॥ २८
इति प्रत्यक्षतो दृष्टमनुभूतं श्रुतं कृतम् ।
दैवात्तमिति मन्यन्ते ये हतास्ते कुबुद्धयः ॥ २९
आलस्यं यदि न भवेज्जगत्यनर्थः
को न स्याद्बहुधनको बहुश्रुतो वा ।
आलस्यादियमवनिः ससागरान्ता
संपूर्णा नरपशुभिश्च निर्धनैश्च ॥ ३०

बाल्ये गतेऽविरतकल्पितकेलिलोले
दोर्दण्डमण्डितवयःप्रभृति प्रयत्नात् ।
सत्सङ्गमैः पदपदार्थविशुद्धबुद्धिः
कुर्यान्नरः स्वगुणदोषविचारणानि ॥ ३१
वाल्मीकिरुवाच ।
इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरेण सहाजगाम ॥ ३२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे पौरुषस्थापनं नाम पञ्चमः सर्गः ॥ ५ ॥

## प्रथमो दिवसः ।

## षष्ठः सर्गः ६

श्रीवसिष्ठ उवाच ।
तस्मात्प्राक्पौरुषाद्दैवं नान्यत्तत्प्रोज्झ्य दूरतः ।
साधुसंगमसच्छास्त्रैर्जीवमुत्तारयेद्बलात् ॥ १
यथा यथा प्रयत्नः स्याद्भवेदाशु फलं तथा ।
इति पौरुषमेवास्ति दैवमस्तु तदेव च ॥ २
दुःखाद्यथा दुःखकाले हा कष्टमिति कथ्यते ।

हाकष्टशब्दपर्यायस्तथा हा दैवमित्यपि ॥ ३
प्राक्स्वकर्मैतराकारं दैवं नाम न विद्यते ।
बालः प्रबलपुंसेव तज्जेतुमिह शक्यते ॥ ४
ह्यस्तनो दुष्ट आचार आचारेणाद्य चारुणा ।
यथाशु शुभतामेति प्राक्तनं कर्म तत्तथा ॥ ५
तज्जयाय यतन्ते ये न लोभलवलम्पटाः ।

यति—दैन्येति । अन्ये नलहरिश्चन्द्रादयः ॥ २७ ॥ यदि न श्रमापेक्षा तर्ह्यन्ते तत्करिष्यामः किमधुनैव तेनेत्याशङ्क्याह—आबाल्यादिति । अलमत्यन्तमभ्यस्तैर्नतु सहसा कृतैः कोमलकण्टकायमानैरित्यर्थः ॥ २८ ॥ प्रत्यक्षतो दृष्टमस्मदादिभिर्जीवन्मुक्तैरित्यर्थः । कृतं साधनतः ॥ २९ ॥ यद्येवं तर्हि न कुतः सर्वे यतन्ते तत्राह—आलस्यमिति । अनर्थहेतुत्वादर्थविघातकत्वाच्चानर्थः । बहुधनकः संपन्नतमः । 'शेषाद्विभाषा' इति कप् । बहुश्रुतः पण्डितः । सागरान्तैः समुद्रान्तैः सहिता अवनिर्भूमिः । तस्मादालस्यमुत्सृज्य बाल्यात्प्रभृति सत्संगमादिपरेण भाव्यमिति मुख्यः पक्ष इति भावः ॥ ३० ॥ यद्यप्यत्यन्तबाल्यप्रभृति कर्तुं न शक्यते तर्हि यौवनमारभ्य वा यतितव्यमित्याह—बाल्य इति । नरः अविरतैश्चपलैर्बालैः कल्पिताभिः क्रीडाभिर्लोले बाल्ये गते सति दोर्दण्डाभ्यां गुरुशुश्रूषादिसमर्थाभ्यां दोर्भ्यां मण्डितं वयो यौवनं ततःप्रभृति पदपदार्थविशुद्धबुद्धिः पदतदर्थतत्परीक्षाकुशलः । व्युत्पन्नः सन्नित्यर्थः । गुरुसतीर्थ्याभिज्ञतमादिसत्संगमैः । स्वस्य आत्मनो गुणानां शान्त्यादीनां दोषाणां रागादीनां चार्थानर्थपर्यवसानपर्यालोचनलक्षणानि विचारणानि कुर्यात् ॥ ३१ ॥ श्रीवाल्मीकिरुवाचारिष्टनेमिनं प्रतीति देवदूतोक्तिः । मुनौ वाल्मीकौ इति उक्तप्रकारेण वसिष्ठोक्तं भरद्वाजं प्रत्युक्तवति सति दिवसो जगाम । इनः सूर्यश्चास्तं जगाम । भरद्वाजादिमुनिसभा च वाल्मीकये कृतनमस्करणा सायंतनाय संध्योपास्त्यग्निहोत्रादिविधये स्नातुं जगाम । अथ श्यामाया रात्रेः क्षये सति प्रातः रविकरेण आतपेन सह आजगाम । पुनर्वाल्मीकिसंनिधिमित्यर्थः । उत्तरत्रापि सर्वत्रायं श्लोक एवमेव व्याख्येयो नतु मुनौ वसिष्ठे इत्युक्तवतीति । उत्तरत्र विस्तरेण तत्र तत्र दशरथसभोत्थानवर्णनस्याह्निकशेषानुष्ठानस्य रात्रौ रामादिभिः श्रुतार्थचिन्तनस्योषःकालसूर्योदयादेश्च वर्णनविस्तरस्याकाण्डप्रस्तुतप्रलापत्वापत्तेः ॥ ३२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे पौरुषस्थापनं नाम पञ्चमः सर्गः ॥ ५ ॥

यत्रास्ति प्रबलं दैवं तत्रापि परपौरुषम् ।
प्रोच्यते बलवद्दैवं प्राक्तनं वा स्वपौरुषम् ॥

उक्तमेवार्थं प्रतिष्ठापयिष्यन्वसिष्ठ उवाच—तस्मादिति । तस्मात्स्वतन्त्रस्य दुर्वचत्वात्प्राक्तनपौरुषादन्यद्दैवं नास्ति । तद्दैवं तदधीनोऽहं न स्वतन्त्र इति दैष्टिकतामिति यावत् । दूरतः प्रोज्झ्य त्यक्त्वा । उत्तारयेत् । संसारादिति शेषः ॥ १ ॥ किं तद्बलं तद्दर्शयति—यथेति ॥ २ ॥ हा कष्टमिति दुःखरूपेण परिणतं प्राक्तनं कर्मोच्यते तदेव दैवमित्यर्थः ॥ ३ ॥ इतराकारं स्वरूपान्तरवत् । अस्तु प्राक्तनकर्मैव दैवं किं ततस्तत्राह—बाल इति ॥ ४ ॥ चारुणा आचारेण प्रायश्चित्तादिना । शुभतामशुभाक्षमताम् ॥ ५ ॥ लोभयन्तीति लोभा विषयसुखलवास्तेषु

१ दैवोत्थमिति पाठः. २ मण्डनवयः इति पाठः. ३ स्वगुण इति पाठः.
४ रविकरैश्च इति पाठः. ५ प्राक्स्वकर्म इति पाठः. ६ तत्त्वपरीक्षा इति पाठः.

ते दीनाः प्राकृता मूढाः स्थिता दैवपरायणाः ॥ ६
पौरुषेण कृतं कर्म दैवाद्यदभिनश्यति ।
तत्र नाशयितुर्ज्ञेयं पौरुषं बलवत्तरम् ॥ ७
यदेकवृन्तफलयोरथैकं शून्यकोटरम् ।
तत्र प्रयत्नः स्फुरितस्तथा तद्रससंविदः ॥ ८
यत्प्रयान्ति जगद्भावाः संसिद्धा अपि संक्षयम् ।
क्षयकारकयत्नस्य ह्यत्र ज्ञेयं महद्बलम् ॥ ९
द्वौ हुडाविव युध्येते पुरुषार्थौ परस्परम् ।
य एव बलवांस्तत्र स एव जयति क्षणात् ॥ १०
भिक्षुको मङ्गलेभेन नृपो यत्क्रियते बलात् ।
तदमात्येभपौराणां प्रयत्नस्य बलं महत् ॥ ११
पौरुषेणान्नमाक्रम्य यथा दन्तेन चूर्ण्यते ।
अन्यः पौरुषमाश्रित्य तथा शूरेण चूर्ण्यते ॥ १२
अन्नभूता हि महतां लघवो यत्नशालिनाम् ।
यथेष्टं विनियोज्यन्ते तेन कर्मसु लोष्टवत् ॥ १३
शक्तस्य पौरुषं दृश्यमदृश्यं वापि यद्भवेत् ।
तद्दैवमित्यशक्तेन बुद्धमात्मन्यबुद्धिना ॥ १४
भूतानां बलवद्भूतं यन्न दैवमिति स्थितम् ।
तत्तेषामप्यधिष्ठातृ सतामेतत्स्फुटं मिथः ॥ १५
शास्त्रामात्येभपौराणामविकल्पा स्वभावधीः ।
या सा भिक्षुकराज्यस्य कर्तृ धर्तृ प्रजास्थितेः ॥ १६
भिक्षुको मङ्गलेभेन नृपो यत्क्रियते क्वचित् ।
प्राक्तनं पौरुषं तत्र बलवद्वापि कारणम् ॥ १७
ऐहिकः प्राक्तनं हन्ति प्राक्तनोऽद्यतनं बलात् ।
सर्वदा पुरुषस्पन्दस्तत्रानुद्वेगवाञ्जयी ॥ १८
द्वयोरद्यतनस्यैव प्रत्यक्षाद्बलिता भवेत् ।
दैवं जेतुं यतो यत्नैर्बालो यूनेव शक्यते ॥ १९
मेघेन नीयते यद्वद्वत्सरोपार्जिता कृषिः ।
मेघस्य पुरुषार्थोऽसौ जयत्यधिकयत्नवान् ॥ २०
क्रमेणोपार्जितेऽप्यर्थे नष्टे कार्या न खेदिता ।
न बलं यत्र मे शक्तं तत्र का परिदेवना ॥ २१
यन्न शक्नोमि तस्यार्थे यदि दुःखं करोम्यहम् ।
तदमारितमृत्योर्मे युक्तं प्रत्यहरोदनम् ॥ २२
देशकालक्रियाद्रव्यवशतो विस्फुरन्त्यमी ।
सर्वे एव जगद्भावा जयत्यधिकयत्नवान् ॥ २३
तस्मात्पौरुषमाश्रित्य सच्छास्त्रैः सत्समागमैः ।
प्रज्ञाममलतां नीत्वा संसारजलधिं तरेत् ॥ २४
प्राक्तनश्चैहिकश्चेमौ पुरुषार्थौ फलद्रुमौ ।

---

लम्पटाः सन्तो ये न यतन्ते ते दीनाः प्राकृताः पामराः ॥६॥ यत्रापि दैवप्राबल्यप्रसिद्धिस्तत्रापि पौरुषस्यैव प्राबल्यमिति दर्शयति—**पौरुषेणे**ति॥७॥नन्वस्तु पुरुषतन्त्रेष्वेवम्, अपुरुषतन्त्रेषु तु दैवमेव शरणं स्यात्तत्राह—**यदि**ति । शून्यकोटरं रसशून्यं[3], दृश्यत इति शेषः । तद्रसं संवेत्त्युपभुङ्क्ते[4] यः पुरुषः कीटादिर्वा तस्य प्राक्तन ऐहिको वा प्रयत्न एव तद्रसविघाताय स्फुरितः॥८॥ एकत्रोक्तं न्यायमन्यत्रापि दर्शयति—**यदि**त्यादिना । यत् यत्र । जगति प्रसिद्धा भावाः पदार्थाः ॥ ९ ॥ तत्रोक्तं स्मारयति—**द्वावि**ति ॥ १० ॥ राजवंशाभावे पौरामात्यविसृष्टेन मङ्गलालंकृतेनेभेन गजेन यः कश्चिद्भिक्षुकोऽपि नृपः क्रियते इति प्रसिद्धं यत्तदिति संबन्धः ॥ ११ ॥ अन्नमदनार्हं चर्वणयोग्यमिति यावत् । 'आत्तम्' इति पाठे मुखेन गृहीतं तदेव । आक्रम्य निष्पीड्य । अन्यो दुर्बलः शूरेण प्रबलेन ॥ १२ ॥ हि यस्माद्धेतोः । अन्नभूता उपभोग्यभूताः । लघवोऽल्पबलाः । तेन हेतुना । लोष्टं शुष्कमृत्पिण्डः ॥ १३ ॥ आत्मनि स्वस्मिन् । अबुद्धिना मूढेन ॥ १४ ॥ तेषां शक्तानामपि भूतानां बलवद्भूतं यत्तदधिष्ठातृ[5] नियन्तृ एतत्सतां विद्यमानप्राणिनां मिथः परस्परं स्फुटं व्यक्तं ननु दैवं स्थितमित्यन्वयः । 'यत्नस्तेने'ति पाठे तु केन हेतुना यत्न एव स्थितो न दैवं स्थितमिति भित्त्वा व्याख्येयम् ॥ १५ ॥ अविकल्पा ऐकमत्यापन्नेति यावत् । स्वभावधीः स्वारसिकी बुद्धिर्या सैव भिक्षुकराजभावस्य कर्तृ कर्त्री प्रजास्थितेश्च धर्तृ धारयित्री पदसंस्कारपक्षेऽन्तरङ्गं सामान्ये नपुंसकं बहिरङ्गेण विशेष्यसंबन्धेन न बाध्यते । तथाच महाभाष्ये 'शास्त्रेण धर्मनियमः' इति वार्तिकशेषप्रसङ्गेन प्रयोगः । शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुं अतः शास्त्रेण नियमः क्रियते 'पञ्च पञ्चनखा भक्ष्याः' इतीति ॥ १६ ॥ अन्यपौरुषेणान्यस्य फलभोगे अतिप्रसङ्गमाशङ्क्य पक्षान्तरमाह—**भिक्षुक** इति । तत्र प्राक्तनं बलवत्पौरुषं वा कारणमित्यन्वयः ॥ १७ ॥ पुरुषं स्पन्दयतीति पुरुषस्पन्दो यत्नः । अनुद्वेगवाननुद्वेगादुपरतः । तथाविधस्त्विदानींतन एव संभवति न प्राक्तनः । तस्य प्रागेव विच्छिन्नत्वादिति भावः ॥ १८ ॥ तमेव स्पष्टमाह—**द्वयो**रिति ॥ १९ ॥ ननु करकादिनिपातेन कृषिफलविघातादौ वैपरीत्यमेव दृष्टमित्याशङ्क्य सोऽप्यस्मदिष्टसाधक एव दृष्टान्त इत्याह—**मेघेने**ति । नीयते अपनीयते विनाश्यत इत्यर्थः । मेघस्य मेघाभिमानिपुरुषस्यासौ पुरुषार्थो यद्वत्तद्वदन्यत्रापि बोध्यमित्यर्थः । अभ्युपेत्य चेदम् । वस्तुतस्तु तत्रापि प्राक्तनं स्वस्य पौरुषमेवादृष्टद्वारा हेतुः ॥ २० ॥ अस्तु वा क्वचित्पौरुषवैफल्यं तथापि न खेदो युक्तः, किंतु पुनरुद्योग एव युक्त इत्याह—**क्रमेणे**त्यादिचतुर्भिः ॥ २१ ॥ २२ ॥ **देशे**ति । तथाच यत्र देशे काले वा स्वयत्नो विफलोऽभूत्तद्विहाय देशान्तरे कालान्तरेण क्रियान्तरेण द्रव्यान्तरेण वा यतितव्यमेव । प्रागादिदिक्षु विघ्नितस्यापि विश्वामित्रतपस उत्तरदिशि सिद्धिदर्शनादिति भावः ॥ २३ ॥ २४ ॥ फलन्तौ फलजननसमर्थौ तथाविधौ च तौ द्रुमौ फलद्रुमौ संजातौ पुरुषारण्ये ।

---

१ यदपि इति पाठः. २ जेतुमतः इति पाठः. ३ शून्यान्तरं इति पाठः. ४ सेवन्त्युप इति पाठः. ५ यत्तत्तेषामधिष्ठातृ इति पाठः.

संजातौ पुरुषारण्ये जयत्यभ्यधिकस्तयोः ॥ २५
कर्म यः प्राक्तनं तुच्छं न निहन्ति शुभेहितैः ।
अज्ञो जन्तुरनीशोऽसावात्मनः सुखदुःखयोः ॥ २६
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव वा ।
स सदैव पराधीनः पशुरेव न संशयः ॥ २७
यस्तूदारचमत्कारः सदाचारविहारवान् ।
स निर्याति जगन्मोहान्मृगेन्द्रः पञ्जरादिव ॥ २८
कश्चिन्मां प्रेरयत्येवमित्यनर्थकुकल्पने ।
यः स्थितोऽदृष्टमुत्सृज्य त्याज्योऽसौ दूरतोऽधमः २९
व्यवहारसहस्राणि यान्युपायान्ति यान्ति च ।
यथाशास्त्रं विहर्तव्यं तेषु त्यक्त्वा सुखासुखे ॥ ३०
यथाशास्त्रमनुच्छिन्नां मर्यादां स्वामनुज्झतः ।
उपतिष्ठन्ति सर्वाणि रत्नान्यम्बुनिधाविव ॥ ३१
स्वार्थप्रापककार्यैकप्रयत्नपरता बुधैः ।
प्रोक्ता पौरुषशब्देन सा सिद्ध्यै शास्त्रयन्त्रिता ॥ ३२
क्रियया स्पन्दधर्मिण्या स्वार्थसाधकता स्वयम् ।
साधुसंगमसच्छास्त्रतीक्ष्णयोन्नीयते धिया ॥ ३३
अनन्तं समतानन्दं परमार्थं विदुर्बुधाः ।
स येभ्यः प्राप्यते नित्यं ते सेव्याः शास्त्रसाधवः ॥ ३४
देवलोकादिहागत्य लोकद्वयहितं भवेत् ।
प्राक्तनं पौरुषं तद्वै दैवशब्देन कथ्यते ॥ ३५
तद्युक्तमेतदेतस्मिन्नास्ति नापवदामहे ।
मूढैः प्रकल्पितं दैवं मन्यन्ते ये क्षयं गताः ॥ ३६
नित्यं स्वपौरुषादेव लोकद्वयहितं भवेत् ।
ह्यस्तनी दुष्क्रियाभ्येति शोभां सत्क्रियया यथा ३७
अद्यैवं प्राक्तनी तस्माद्यत्नाद्यः कार्यवान्भवेत् ।
करामलकवद्दृष्टं पौरुषादेव तत्फलम् ।
मूढः प्रत्यक्षमुत्सृज्य दैवमोहे निमज्जति ॥ ३८

---

एकस्य मूलच्छेदेन शोषे परस्य प्ररोहोऽत्र जयः ॥ २५ ॥ उक्तार्थानभ्युपगमे अनिष्टं दर्शयन्नीश्वराधीनतावादं निराचष्टे—**कर्मे**त्यादिना । यो न निहन्ति अनीशोऽस्वतन्त्रो यं जन्तुरीश्वरप्रेरितः सन्स्वर्गं नरकमेव वा गच्छेद्विनापि पुण्यपापाभ्यामित्यर्थः ॥२६॥ तथा चानिर्मोक्षप्रसङ्ग इत्याह—**स** इति ॥२७॥ स्वपक्षे तु नायं दोष इत्याह—**यस्त्व**ति । प्रयत्नकौशल्मत्र चमत्कारः ॥२८॥ ईश्वरस्वातन्त्र्यनिराससुपसंहरति—**कश्चिदि**ति । ननु 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते', 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति', 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादिश्रुतिस्मृतिविरुद्धं कथमीश्वरापलापेन जीवस्वातन्त्र्यमुच्यते । ननु भवतापि कथं 'यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति', 'यजेत, जुहुयाद्दद्यात्', 'कर्ता शास्त्रार्थवत्त्वात्' 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः' इत्याद्यनेकश्रुतिसूत्रस्मृत्यनुभवविरुद्धं जीवस्य पारतन्त्र्यमुच्यते । नह्यस्वतन्त्रो जीवः कर्ता भवति । 'स्वतन्त्रः कर्ता' इत्यनुशासनविरोधात् । न वा बलवत्तरेश्वरायत्तोऽयं विधिशतेन निषेधसहस्रेण वा प्रवर्तयितुं निवर्तयितुं वा शक्यते । कथं वा बलादीश्वरेण ब्रह्मवधादौ प्रवर्तितोऽयमपराधी स्यात् । कथं वा विषमेषु स्वयमेव कांश्चित्प्रवर्त्य तान्नरकादिभागिनः कुर्वाणस्येश्वरस्य वैषम्यनैर्घृण्यदोषौ न स्याताम् । कथं वा अन्तर्यामिब्राह्मणवाक्यशेषे 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता' इत्यादिना जीवापलापेनेश्वरैकस्वातन्त्र्यसमर्थनं च संगच्छताम् । यदि तु केवलाज्ञपुरुषदृष्टिमवलम्ब्य कर्मकाण्डप्रवृत्तेर्जीवस्वातन्त्र्यवादः तच्छैथिल्यापादनेन सर्वभूतेष्वैकात्म्यव्युत्पादनाय प्रवृत्तां विवेकदृष्टिमवलम्ब्येश्वरैकस्वातन्त्र्यवादः तत्फलज्ञानेन लब्धां पूर्वदृष्टिमवलम्ब्य 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः', 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः' इत्यादिश्रुतिस्मृतिवादाः । यथा स्वप्नदर्पणादौ दारुहस्तिधावनस्य हस्तिदृष्ट्या दर्शने हस्ती धावति न दारु । दारुदृशा दर्शने तु दार्वेव धावति न हस्ती । परमार्थदृशा तु न हस्ती न वा दारु न वा धावत्यविकृतं पुरुषदर्पणादिस्वरूपमेवास्ते इति वादास्तद्वदित्यविरोधं ब्रूषे तर्हि मोक्षोपायप्रवर्तकवसिष्ठवचनस्याप्यज्ञविषयत्वाद्युक्त एवात्रेश्वरस्वातन्त्र्यनिरासः । तथाच भगवत्पादीयं भाष्यम् 'तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिकाः प्रवृत्ताः सर्वाणि च शास्त्राणि विधिनिषेधमोक्षपराणि' इति । एवं चाज्ञदृष्टिसिद्धजीवस्वातन्त्र्यपक्षप्राप्तकर्मानुसारेण नियन्तुरीश्वरस्य न वैषम्यनैर्घृण्यादिप्रसक्तिरपीति भावः ॥२९॥ उपायान्ति लाभादिफलेन । यान्ति तद्विघातेन । तेषु प्रियाप्रिये रागद्वेषौ त्यक्त्वा यथाशास्त्रमेव व्यवहर्तव्यमित्यर्थः ॥३०॥ सर्वाणि अभीष्टानीति शेषः ॥ ३१ ॥ पौरुषशब्दार्थमाह—**स्वार्थे**ति । स्वार्थः सुखं दुःखनिवृत्तिश्च तत्प्रापकाणि यान्यवश्यकर्तव्यानि साधनानि तदेकप्रयत्नतत्परतेत्यर्थः । सा सिद्ध्यै परमपुरुषार्थाय ॥ ३२ ॥ स्पन्दो देहादिचलनं तद्धर्मिण्या तत्परम्परारूपया शुश्रूषया श्रवणादिक्रियया साधुसंगमेन सच्छास्त्रैश्चासंभावनादिदोषनिरासेन निशितया स्वया धिया स्वयमात्मा उन्नीयते उद्ध्रियते सा चास्य स्वार्थसाधकतेत्यर्थः ॥ ३३ ॥ साधुसच्छास्त्रयोर्लक्षणमाह—**अनन्त**मिति । समता अज्ञानकृतवैषम्यनिवृत्तिः ॥ ३४ ॥ यल्लोकद्वयहितं पौरुषं भवेत्तदेव देवलोकभुक्तशिष्टं देवलोकादिहागत्य स्थितस्य दैवशब्देन कथ्यत इत्यर्थः ॥ ३५ ॥ तदेतद्युक्तमेतस्मिन्नास्ति संदेह इति शेषः । तन्नापवदामहे न निन्दामः । किं तर्हि निन्द्यते तदाह—**मूढै**रिति । ते क्षयं गता इत्यपवदामहे इति शेषः ॥ ३६ ॥ ननु प्राग्देवलोकावाप्तिरपि दैवादेव किं न स्यात्तत्राह—**नित्य**मिति । प्रसाधितं फलेनोपसंहरति—**ह्यस्तनी**त्यादिना ॥३७॥ एवं अद्य अद्यतन्या

१ स्थितो दृष्टं इति पाठः, २ क्वचित् अद्य इति न पठ्यते.

सकलकारणकार्यविवर्जितं
निजविकल्पबलादुपकल्पितम् ।
तदनपेक्ष्य हि दैवमसन्मयं
श्रय शुभाशय पौरुषमात्मनः ॥ ३९
शास्त्रैः सदाचरविजृम्भितदेशधर्मै-
स्त्कल्पितं फलमतीव चिरप्ररूढम् ।
तस्मिन्हृदि स्फुरति चोपनमेति चित्त-
मङ्गावली तदनु पौरुषमेतदाहुः ॥ ४०
बुद्ध्वैव पौरुषफलं पुरुषत्वमेत-
दात्मप्रयत्नपरतैव सदैव कार्या ।
नेया ततः सफलतां परमामथासौ
सच्छास्त्रसाधुजनपण्डितसेवनेन ॥ ४१
दैवपौरुषविचारचारुभि-
श्चेदमाचरितमात्मपौरुषम् ।
नित्यमेव जयतीति भावितैः
कार्य आर्यजनसेवयोद्यमः ॥ ४२
जन्मप्रबन्धमयमामयमेष जीवो
बुद्ध्वैहिकं सहजपौरुषमेव सिद्ध्यै ।
शान्तिं नयत्ववितथेन वरौषधेन
मृष्टेन तुष्टपरपण्डितसेवनेन ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे दैवनिराकरणं नाम षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ७

श्रीवसिष्ठ उवाच ।
प्राप्य व्याधिविनिर्मुक्तं देहमल्पाधिवेदनम् ।
तथात्मनि समादध्याद्यथा भूयो न जायते ॥ १
दैवं पुरुषकारेण यो निवर्तितुमिच्छति ।
इह वामुत्र जगति स संपूर्णाभिवाञ्छितः ॥ २
ये समुद्योगमुत्सृज्य स्थिता दैवपरायणाः ।
ते धर्ममर्थं कामं च नाशयन्त्यात्मविद्विषः ॥ ३
संवित्स्पन्दो मनःस्पन्द ऐन्द्रियस्पन्द एव च ।

---

प्राक्तनी शोभामभ्येतीति पूर्वेणान्वयः । नन्वस्तु प्राक्तनजयः पुरुषार्थसिद्धिस्तु कुतस्तत्राह—**तस्मा**दिति । यः कार्यवान्भवेत्तस्य तत्फलं करामलकवद्दृष्टमित्यन्वयः ॥ ३८ ॥ हे शुभाशय, तत्तस्मात्कारणान्निजस्य स्वस्य विकल्पोऽर्थशून्या चित्तवृत्तिस्तद्वशादुपकल्पितमत एवासन्मयम् । स्वार्थे मयट् । तत्र हेतुः-सकलैः कारणैः कार्यैः प्रयोजनैश्च विवर्जितमिति । तथाविधं दैवमनपेक्ष्य पौरुषं श्रय स्वीकुरु ॥३९॥ किं तत्पौरुषं यच्छ्रयेत्युच्यते तदाह—**शास्त्रै**रिति । वेदस्मृत्यादिभिः शास्त्रैः सतामाचरणं सदाचरः । 'घञर्थे कविधानम्' इति कः । तेन विजृम्भिता विस्तीर्णा ये देशधर्मास्तत्तद्देशनियताचारास्तैश्च यच्चित्तशुद्धिलक्षणं ज्ञानलक्षणं च फलं कल्पितं समर्थितमतीव चिरं प्ररूढं प्रसिद्धं च तस्मिन् हृदि बुद्धौ स्फुरति, अभिलषिते सति तत्साधनाचरणेच्छया चित्तं चोपनं स्पन्दम् । 'चुप मन्दायां गतौ' ल्युट् । एति प्राप्नोति, तदनुसारेण अङ्गावली इन्द्रियहस्तपादादिश्चोपनमेति, श्रवणादिना व्यवहरति एतदेव पौरुषमित्याहुः, शिष्टा इत्यर्थः ॥ ४० ॥ एतत्पुरुषत्वमधिकारिपुंजन्मपौरुषफलं पुरुषार्थसिद्धावेव सफलं नान्यथेति बुद्ध्वा सदैव आत्मप्रयत्नपरतैव कार्या । अथासौ प्रयत्नपरता सच्छास्त्राणां साधुजनानां सेवनेन तदनुगतविचारेणात्मज्ञानफललाभेन सफलतां नेया प्रापणीया । नयतेर्द्विकर्मणः 'प्रधाने नीहृकृष्वहाम्' इति प्रधानकर्मण एव क्तेनाभिधानादप्रधाने कर्मणि द्वितीया ॥ ४१ ॥ इदमात्मपौरुषं नित्यमाचरितं सद्दैवं जयत्येवेति दैवपौरुषयोर्बलाबलविचारेण चारुभिश्चकाराच्छमदमादिमद्भिरधिकारिभिरार्यजनसेवया नित्यं भावितैः श्रवणादिभिरुद्यमः कार्यस्तत्त्वज्ञानायेत्यर्थः ॥४२॥ एष जीव ऐहिकमिहास्मिन्नधिकारिजन्मनि संपाद्यमानं सहजं शास्त्रबोधितत्वात्सत्यम् । फलाविसंवादीति यावत् । तथाविधं पौरुषमेव सिद्ध्यै परमपुरुषार्थलाभायेति बुद्ध्वा नित्यसंतुष्टानां पराणां सर्वोत्कृष्टानां पण्डितानां ब्रह्मविदां सेवनेन सेवालक्षणेनावितथेनामोघेन मृष्टेन मधुरतरेण वरौषधेन जन्मप्रबन्धो जन्मपरम्परा तन्मयं तत्प्रचुरमामयं शान्तिं नयतु । अभीष्टे लोट् । अतिसुलभोपाये सति किमर्थमवसीदतीत्यर्थः ॥ ४३ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे दैवनिराकरणं नाम षष्ठः सर्गः ॥ ६ ॥

पौरुषैकप्रधानत्वमुदाहरणविस्तरैः ।
प्रत्युदाहरणैश्चात्र युक्तिभिश्च समर्थ्यते ॥ १ ॥

कृतमेव दैवनिरासेन पौरुषप्राधान्यसमर्थनमुदाहरणप्रत्युदाहरणैर्दृढीकरिष्यन्नधिकारिणो हितोपदेशोपपत्तिभिः पुरुषार्थे अवतारयति—**प्राप्ये**ति । अल्पा आधिवेदना मानसदुःखभोगा यस्मिन् । समादध्याच्चित्तसमाधानाय प्रयतेत ॥ १ ॥ अनिच्छतः कथं यत्नः स्यादिति तत्रेच्छावश्यकत्वमाह—**दैव**मिति । संपूर्णाभिवाञ्छितो भवतीति शेषः ॥ २ ॥ अन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेनापि समर्थयति—**ये** इति । आत्मविद्विषः स्वात्मशत्रवः ॥ ३ ॥ प्रत्यक्षपौरुषविरुद्धं दैवं प्रत्याचिख्यासुः पौरुषस्य प्रत्यक्षसिद्धं स्वरूपमाह—**संवित्स्पन्द** इत्यादिना । संवित्स्पन्दः पुरुषार्थतत्साधनस्फूर्तिस्तेन तत्साधनेच्छायत्नो मनःस्पन्दस्तेन कर्मेन्द्रियाणामङ्गचालनाय प्रवृत्तिरैन्द्रियस्पन्दः । एव

एतानि पुरुषार्थस्य रूपाण्येभ्यः फलोदयः ॥ ४
यथा संवेदनं [1]चेतस्तथा तत्स्पन्दमृच्छति ।
तथैव कायश्चलति तथैव फलभोक्तृता ॥ ५
आबालमेतत्संसिद्धं यत्र यत्र यथा यथा ।
दैवं तु न क्वचिद्दृष्टमतो जगति पौरुषम् ॥ ६
पुरुषार्थेन देवानां गुरुरेव बृहस्पतिः ।
शुक्रो दैत्येन्द्रगुरुतां पुरुषार्थेन चास्थितः ॥ ७
दैन्यदारिद्र्यदुःखार्ता अपि साधो नरोत्तमाः ।
पौरुषेणैव यत्नेन याता देवेन्द्रतुल्यताम् ॥ ८
महान्तो विभवाश्चर्यैर्नानाश्चर्यसमाश्रयाः ।
पौरुषेणैव दोषेण नरकातिथितां गताः ॥ ९
भावाभावसहस्रेषु दशासु विविधासु च ।
स्वपौरुषवशादेव निर्वृत्ता भूतजातयः ॥ १०
शास्त्रतो गुरुतश्चैव स्वतश्चेति त्रिसिद्धयः ।
सर्वत्र पुरुषार्थस्य न दैवस्य कदाचन ॥ ११
अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।
प्रयत्नाच्चित्तमित्येष सर्वशास्त्रार्थसंग्रहः ॥ १२
यच्छ्रेयो यदतुच्छं च यदपायविवर्जितम् ।
तत्तदाचर यत्नेन पुत्रेति गुरवः स्थिताः ॥ १३
यथा यथा प्रयत्नो मे फलमाशु तथा तथा ।
इत्यहं पौरुषादेव फलभाङ् न तु दैवतः ॥ १४

पौरुषाद्दृश्यते सिद्धिः पौरुषाद्धीमतां क्रमः ।
दैवमाश्वासनामात्रं [2]दुःखे पेलवबुद्धिषु ॥ १५
प्रत्यक्षप्रमुखैर्नित्यं प्रमाणैः पौरुषक्रमः ।
फलितो दृश्यते लोके देशान्तरगमादिकः ॥ १६
भोक्ता तृप्यति नाभोक्ता गन्ता गच्छति नागतिः ।
वक्ता वक्ति न चावक्ता पौरुषं सफलं नृणाम् ॥ १७
पौरुषेण दुरन्तेभ्यः संकटेभ्यः सुबुद्धयः ।
समुत्तरन्त्ययत्नेन न तु मोघतयानया ॥ १८
यो यो यथा प्रयतते स स तत्तत्फलैकभाक् ।
न तु तूष्णीं स्थितेनेह केनचित्प्राप्यते फलम् ॥ १९
शुभेन पुरुषार्थेन शुभमासाद्यते फलम् ।
अशुभेनाशुभं राम यथेच्छसि तथा कुरु ॥ २०
पुरुषार्थात्फलप्राप्तिर्देशकालवशादिह ।
प्राप्ता चिरेण शीघ्रं वा यासौ दैवमिति स्मृता ॥ २१
न दैवं दृश्यते दृष्ट्या न च लोकान्तरे स्थितम् ।
उक्तं दैवाभिधानेन स्वर्लोके कर्मणः फलम् ॥ २२
पुरुषो जायते लोके वर्धते जीर्यते पुनः ।
न तत्र दृश्यते दैवं जरायौवनबाल्यवत् ॥ २३
अर्थप्रापककार्यैकप्रयत्नपरता बुधैः ।
प्रोक्ता पौरुषशब्देन सर्वमासाद्यतेऽनया ॥ २४
देशाद्देशान्तरप्राप्तिर्हस्तस्य द्रव्यधारणम् ।
व्यापारश्च तथाङ्गानां पौरुषेण न दैवतः ॥ २५

कारचकाराभ्यां तत्प्रयुक्तकायबाह्योपकरणस्पन्दोऽपि संगृह्यते । एतानि पुरुषार्थस्य पौरुषस्य रूपाणि क्रमिकविभेदाः । एतेभ्यो निरन्तरवृत्तेभ्यः फलोदयोऽभिलषितार्थसिद्धिः प्रसिद्धेत्यर्थः ॥ ४ ॥ उक्तमर्थं विवृणोति—**यथे**ति । यथा संवेदनं साक्षिणि यादृशी विषयस्फूर्तिः पूर्वं भवति ततो मनस्तादृशं स्पन्दमृच्छति गच्छति । तथैव कर्मेन्द्रियस्पन्देन कायश्चलति । क्रियानुसारिणी च फलसिद्धिरित्यर्थः ॥ ५ ॥ यत्र यत्र फले लौकिके वैदिके वा यथा यथा पौरुषमुपयुज्यते ध्यानादौ मानसमेव प्रधानमासनमौने तदङ्गे । स्तवनादौ वाचिकमेव प्रधानमैकाग्र्यसांमुख्ये तदङ्गे । यात्रादौ तु कायिकमेव प्रधानं वाङ्मनोनियमौ तदङ्गे । क्वचित्तु द्वयोर्द्वयोः प्राधान्यं क्वचित्त्रयाणामिति तत्र तत्र तथा तथा तत्पौरुषमाबालं बालानभिव्याप्य संसिद्धं प्रत्यक्षसिद्धं, दैवं तु न क्वचिद्दृष्टमित्यसदेवेत्यर्थः ॥ ६ ॥ उक्तमर्थमुदाहरणैः स्फुटयति—**पुरुषार्थेने**त्यादिचतुर्भिः ॥ ७ ॥ ८ ॥ नानाविधानामाश्चर्यरूपाणां [3]विभावानां समाश्रया नहुषादयः ॥ ९ ॥ भावा विभवा अभावा विपदस्तेषां सहस्रेषु । निर्वृत्ता अतिक्रान्ताः ॥ १० ॥ लौकिकाः स्वत एव, यागादयः स्वतः शास्त्रतश्च, ज्ञानं तु स्वतः शास्त्रतो गुरुतश्चेति त्रिसिद्धयः । [4]ननु दैवस्य त्रिसिद्धयो निर्व्यापारदैवदुर्ग्रहवादिनां मतावलम्बने सर्वविधीनामुच्छेदप्रसङ्गः । 'सोमेन यजेत' इत्यादिवाक्यबोधितयागानां व्यापारजन्यत्वाद्भावनानां च पुरुषप्रवृत्तिनिमित्तत्वात्प्रवृत्तेश्च परिस्पन्दरूपत्वात् ॥ ११ ॥ तेषु प्रस्तुतोपयोगिसारं दर्शयति—**अशुभेष्वि**ति ॥ १२ ॥ श्रेयः सर्वोत्कृष्टम् । अतुच्छं परमार्थसत्यम् । अपायविवर्जितं नित्यम् । फलतो यद्यदीदृशं तत्तदाचर ॥ १३ ॥ आशु शीघ्रं भवतीति शेषः । इति निश्चित्य ॥ १४ ॥ क्रम आचरणम् । दुःखे रुदत्सु पेलवबुद्धिषु आश्वासनामात्रमश्रुमार्जनतुल्यम् ॥ १५ ॥ देशान्तरे गमनं गमः ॥ १६ ॥ इति सफलं दृष्टमिति शेषः ॥ १७ ॥ मोघतया निर्व्यापार[5]रूपया । अनया दैवदृष्ट्या ॥ १८ ॥ एकभाक् नियतं भाजनम् ॥ १९ ॥ २० ॥ यदि दैवे महती भक्तिस्तर्हि पौरुषमेव दैवबुद्ध्यावलम्ब्यतां नत्वसत्कल्पनमन्यदित्यभिप्रेत्याह—**पुरुषार्थादि**त्यादिना । फलप्राप्तिः फलसंपत् ॥ २१ ॥ ननु स्वर्गादिलोकस्थं दैवमिहादर्शनेन नापलपितुं शक्यं तत्राह—**ने**ति । स्वर्लोके स्वर्गलोके ॥ २२ ॥ तत्र पुरुषे ॥ २३ ॥ सदसत्पौरुषयोर्विभागमाह—**अर्थे**त्यादिना ॥ २४ ॥ देशान्तरप्राप्तिः पादयोः पौरुषेण । अन्यो व्यापारश्चाङ्गान्तराणां पौरुषेणैव

१ चेतस्तथा इति पाठः. २ दुःखपेलव इति पाठः. ३ विभवानां इति पाठः. ४ ननु दैवासिद्धौ यमहानिः इति मुद्रितपुस्तकपाठः.

५ रूपतया इति पाठः.

अनर्थप्राप्तिकार्यैकप्रयत्नपरता तु या ।
प्रोक्ता प्रोन्मत्तचेष्टेति न किंचित्प्राप्यतेऽनया ॥ २६
क्रियया स्पन्दधर्मिण्या स्वार्थसाधकता स्वयम् ।
साधुसंगमसच्छास्त्रतीक्ष्णयोन्नीयते धिया ॥ २७
अनन्तसमतानन्दं परमार्थं स्वकं विदुः ।
स येभ्यः प्राप्यते यत्नात्सेव्यास्ते शास्त्रसाधवः ॥२८
सच्छास्त्रादिगुणो मत्या सच्छास्त्रादिगुणान्मतिः ।
विवर्धेते मिथोऽभ्यासात्सरोब्जाविव कालतः ॥ २९
आबाल्यादलमभ्यस्तैः शास्त्रसत्संगमादिभिः ।
गुणैः पुरुषयत्नेन स्वार्थः संपद्यते हितः ॥ ३०
पौरुषेण जिता दैत्याः स्थापिता भुवनक्रियाः ।
रचितानि जगन्तीह विष्णुना न च दैवतः ॥ ३१
जगति पुरुषकारकारणेऽस्मिन्
कुरु रघुनाथ चिरं तथा प्रयत्नम् ।
व्रजसि तरुसरीसृपाभिधानां
सुभग यथा न दशामशङ्क एव ॥ ३२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे पौरुषप्राधान्यसमर्थनं नाम सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ८

श्रीवसिष्ठ उवाच ।
नाकृतिर्न च कर्माणि न स्पन्दो न पराक्रमः ।
तन्मिथ्याज्ञानवद्रूढं दैवं नाम किमुच्यते ॥ १
स्वकर्मफलसंप्राप्ताविदमित्थमितीति याः ।
गिरस्ता दैवनाम्नैताः प्रसिद्धिं समुपागताः ॥ २
तत्रैव मूढमतिभिर्दैवमस्तीति निश्चयः ।
आत्तो दुरवबोधेन रज्ज्वामिव भुजंगमः ॥ ३
ह्यस्तनी दुष्क्रियाभ्येति शोभां सत्क्रियया यथा ।
अद्यैवं प्राक्तनी तस्माद्यत्नात्सत्कार्यवान्भवेत् ॥ ४
मूढानुमानसंसिद्धं दैवं यस्यास्ति दुर्मतेः ।

न दैवतो दृष्ट इत्यर्थः ॥ २५ ॥ अनर्थस्य प्राप्तिर्यस्मादिति व्यधिकरणपदबहुव्रीहिः । कर्मणि क्तिनि समानाधिकरणपदो वा । न किंचिच्छुभमिति शेषः । अशुभं तु प्राप्यत एव ॥ २६ ॥ अधिकविवक्षयोक्तमेव पुनराह—**क्रियये**त्यादिना । क्रिययेति तृतीयान्तपाठः प्राग्व्याख्यातः । क्वचित्तु 'क्रियायाः स्पन्दधर्मिण्याः' इति पाठस्तत्र क्रियायाः स्वार्थसाधकता प्रसिद्धेति तत्फलभूतया धिया स्वयमुन्नीयते, उद्व्रियत इत्यर्थः ॥ २७ ॥ समता अज्ञानकृतवैषम्यनिवृत्तिस्तदुपलक्षितमानन्दं ये विदुः स चानन्दो येभ्यः प्राप्यते ते सेव्याः प्रणिपातपरिप्रश्नशुश्रूषादिभिरभ्यासेन चावर्जनीयाः ॥ २८ ॥ यद्विवक्षयोक्तमपि पुनरुक्तं तदाह—**सच्छास्त्रे**ति । आदिपदात्साधुसंगमपरिग्रहः । तत्र साधुसंगमाभ्यासस्य गुणस्तत्समशीलताप्राप्तिः । शास्त्राभ्यासस्य गुणः शास्त्रतात्पर्यज्ञानम् । मतिस्तत्त्वबोधः । यथा यथायं गुरुशुश्रूषाशास्त्राभ्यासपरो भवति तथा तथास्य बोधो विवर्धते । यथा यथा च बोधाभिवृद्धिस्तथा तथा गुरुशास्त्रविश्वासवृद्धिस्तद्गुणवृद्ध्या सुखादिवृद्ध्योत्तरोत्तरभूमिकामारोहति । कालतश्चिरकालतो वर्षाकालतश्च ॥ २९ ॥ तथाच तद्विवृद्धये चिरं यत्नः कार्य इति वक्तुमुक्तमेव पुनराह—**आबाल्या**दिति ॥ ३० ॥ ३१ ॥ पुरुषकारः पौरुषं तदेव पुरुषार्थकारणं यस्मिंस्तथाविधे जगति । रघुनाथेत्यधिकृतकुलश्रेष्ठत्वद्योतनाय संबोधनम् । सरीसृपः सर्पः ॥ ३२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे पौरुषप्राधान्यसमर्थनं नाम सप्तमः सर्गः ॥ ७ ॥

वर्णितं दैवमिथ्यात्वमुदाहरणविस्तरैः ।
उपजीव्यविरोधादियुक्तिभिश्च समर्थ्यते ॥ १ ॥

इत्थं दैवं निरस्य पौरुषस्वातन्त्र्यसमर्थितेऽप्यनाश्वासेन मोमुह्यमानं प्राग्वैराग्यप्रकरणे पञ्चविंशे सर्गे, 'अत्रैव दुर्विलासानां चूडामणिरिहापरः । करोत्यत्तीति लोकेऽस्मिन्दैवं कालश्च कथ्यते ॥ तेनेयमखिला भूतसंततिः परिपेलवा । तापेन हिममालेव नीता विधुरतां भृशम् ॥ नृत्यतो हि कृतान्तस्य नितान्तमिव रागिणः । नित्यं नियतिकान्तायां मुने परमकामिता ॥' इत्यादिना स्वेन विस्तरेणोपवर्णितं बहुतरश्रुतिस्मृतिपुराणैतिह्येषु परमस्वतन्त्रतया प्रसिद्धं दैवं दुरपह्नवमिति मन्यमानं श्रीरामं लिङ्गैरुपलक्ष्य यावदस्य दैवस्वातन्त्र्ये उपजीव्यविरोधो न प्रदर्शितस्तावन्न विश्वसिष्यतीति तं दिदर्शयिषुः श्रीवसिष्ठ उवाच—**नाकृति**रित्यादिना । आकृतिर्जातिस्तद्गतसंस्थानं च । कर्मस्पन्दपराक्रमाणां मानसशारीरफलोपधानैः सामान्यविशेषतद्विशेषभावेन वा भेदः । यस्यैते न सन्ति तद्दैवं किंस्वरूपमिति न तत्त्वतो निर्णीय जनैरुच्यते । यतो दुर्वचं तत्तस्मान्मिथ्याज्ञानवदेव रूढमित्यर्थः । 'मिथोऽज्ञानव'दिति पाठेऽपि अज्ञानं भ्रान्तिज्ञानं तद्वदेव मिथोऽन्योन्यं व्यवहारे रूढमित्यर्थः ॥ १ ॥ किमधिष्ठाना भ्रान्तिरिति चेत्तद्दर्शयन् मिथो व्यवहारं स्फुटयति—**स्वकर्मे**ति । इदं कर्म इत्थमनेन क्रमेणानुष्ठितमिति एवंरूपफलसंपन्नमिति या गिरो वाग्व्यवहारास्ताः लक्षणया तद्विषया इत्यर्थः ॥ २ ॥ तत्र तेषु । दुरवबोधेन भ्रान्त्या । आत्तो गृहीतः ॥ ३ ॥ तथाच मदुक्तमेव फलितमित्याह—**ह्यस्तनी**ति ॥ ४ ॥ उपजीव्यप्रमाणविरोधं विवक्षुः

१ स्वातन्त्र्यैक्यसमर्थिते इति पाठः. २ पुराणैतिह्येषु इति पाठः. ३ स्वातन्त्र्यैक्ये उपजीव्य इति पाठः.

दैवाद्दाहोऽस्ति नैवेति गन्तव्यं तेन पावके ॥ ५
दैवमेवेह चेत्कर्तृ पुंसः किमिव चेष्टया ।
स्नानदानासनोच्चारान्दैवमेव करिष्यति ॥ ६
किंवा शास्त्रोपदेशेन मूकोऽयं पुरुषः किल ।
संचार्यते तु दैवेन किं कस्येहोपदिश्यते ॥ ७
न च निस्पन्दता लोके दृष्टेह शवतां विना ।
स्पन्दाच्च फलसंप्राप्तिस्तस्माद्दैवं निरर्थकम् ॥ ८
न चामूर्तेन दैवेन मूर्तस्य सहकर्तृता ।
पुंसः संदृश्यते काचित्तस्माद्दैवं निरर्थकम् ॥ ९
मिथोऽङ्गानि समासाद्य द्वयोरेकैककर्तृता ।
हस्तादीनां हतत्वे ह न दैवेन क्वचित्कृतम् ॥ १०
मनोबुद्धिवदप्येतद्दैवं नेहानुभूयते ।
आगोपालं कृतप्रज्ञैस्तेन दैवमसत्सदा ॥ ११
पृथक्चेद्बुद्धिरन्योऽर्थः सैव चेत्कान्यता तयोः ।
कल्पनायां प्रमाणं चेत्पौरुषं किं न कल्प्यते ॥ १२
नामूर्तेस्तेन सङ्गोऽस्ति नभसेव वपुष्मतः ।
मूर्तं च दृश्यते लग्नं तस्माद्दैवं न विद्यते ॥ १३
विनियोक्तृ भूतानामस्त्यन्यच्चेज्जगत्त्रये ।
शेरते भूतवृन्दानि दैवं सर्वं करिष्यति ॥ १४
दैवेन त्वभियुक्तोऽहं तत्करोमीदृशं स्थितम् ।
समाश्वासनवागेषा न दैवं परमार्थतः ॥ १५
मूढैः प्रकल्पितं दैवं तत्परास्ते क्षयं गताः ।
प्राज्ञास्तु पौरुषार्थेन पदमुत्तमतां गताः ॥ १६
ये शूरा ये च विक्रान्ता ये प्राज्ञा ये च पण्डिताः ।
तैस्तैः किमिव लोकेऽस्मिन्वद दैवं प्रतीक्ष्यते ॥ १७
कालविद्भिर्विनिर्णीता यस्यातिचिरजीविता ।
स चेज्जीवति संछिन्नशिरास्तद्दैवमुत्तमम् ॥ १८
कालविद्भिर्विनिर्णीतं पाण्डित्यं यस्य राघव ।
अनध्यापित एवासौ तज्ज्ञश्चेद्दैवमुत्तमम् ॥ १९
विश्वामित्रेण मुनिना दैवमुत्सृज्य दूरतः ।
पौरुषेणैव संप्राप्तं ब्राह्मण्यं राम नान्यथा ॥ २०
अस्माभिरपरै राम पुरुषैर्मुनितां गतैः ।
पौरुषेणैव संप्राप्ता चिरं गगनगासिता ॥ २१
उत्साद्य देवसंघातं चक्रुस्त्रिभुवनोदरे ।
पौरुषेणैव यत्नेन साम्राज्यं दानवेश्वराः ॥ २२
आलूनशीर्णमाभोगि जगदाजह्रुरोजसा ।
पौरुषेणैव यत्नेन दानवेभ्यः सुरेश्वराः ॥ २३
राम पौरुषयुक्त्या च सलिलं धार्यतेऽनया ।
चिरं करण्डके चारु न दैवं तत्र कारणम् ॥ २४
भरणादानसंरम्भविभ्रमश्रमभूमिषु ।

---

प्रथमं प्रत्यक्षस्वक्रियाविरोधमाह—**मूढेति** । दाहो नैवास्तीति दैवाग्निश्चित्य गन्तव्यमित्यन्वयः ॥५॥ उच्चारान् दानाद्यङ्गमन्त्राद्युच्चारणानि ॥ ६ ॥ तथाच वेदादिप्रामाण्यविरोध इत्याह—**किमिति** । मूको वाग्व्यापारेऽप्यस्वतन्त्रः ॥ ७ ॥ दृष्टविरोधोऽपीत्याह—**न चेति** ॥ ८ ॥ ननु देहादिस्पन्दः कर्त्रन्तरसमुच्चयकर्तृकः क्रियात्वात् शिबिकोद्वहनवदित्यनुमाने मूर्तकर्त्रन्तरस्य प्रत्यक्षबाधे अमूर्तः सहकारिकर्ता सेत्स्यति तदेव दैवं नः सिद्धमित्याशङ्क्याह—**न चेति** । तथा च मूर्तसमुच्चितकर्तृकत्वं दृश्यसमुच्चितकर्तृकत्वं चोपाधिरित्यर्थः । तथाच पक्षे उपाध्यभावाभावेन साध्याभावः सिद्ध इत्याह—**तस्मादिति** ॥ ९ ॥ क्वचिल्लेखनवपनादौ मिथः परस्परं लेखनीक्षुराद्यङ्गानि समासाद्य प्राप्तयोर्द्वयोर्मध्ये द्वितीयस्य प्रत्याख्यानमेकैकस्य कर्तृता च संदृश्यत इत्यनुषज्यते । क्वचित्तु पुस्तके पुंसः संदृश्यत इत्यर्धं पुनः पठ्यते । एतेन हस्तपादमनोबुद्ध्यादिवत्क्रियोपकरणत्वेनापि दैवकल्पनाशा निरस्तेत्याह—**हस्तादीना**मिति । तत्र हस्तादौ सति तेन दैवस्यान्यथासिद्धेः करणत्वायोगाद्वातरोगादिना हतत्वे नष्टत्वे सतीत्युक्तम् । ह इति किलार्थे ॥ १० ॥ ११ ॥ किंच दैवसिद्धौ कर्त्रादिकारकबुद्धिरेव मानं तत्पृथग्भूतबुद्धिर्वा । द्वितीये क्रियायामनुपयुक्तोऽन्य एव दैवमिति निरर्थकोऽर्थः कल्पितः स्यात् । आद्ये प्रसिद्धकर्त्रादिरेव दैवशब्देनोक्तः स्यादित्याह—**पृथगिति** । ननु समानपाण्डित्यादिफलमीहमानानामधीयानानां केचिदेव तत्फलेन युज्यन्ते न सर्वे तत्रावश्यं वैषम्ये निमित्तं कल्प्यम्, कार्यवैषम्यलिङ्गस्य कल्पनाप्रमाणत्वादिति चेत्तत्राह—**कल्पनाया**मिति । तत्रापि दृष्टसजातीयपौरुषमेव प्राक्तनं कल्प्यते नाप्रसिद्धं दैवमित्यर्थः ॥१२॥ कारकान्तरसहकारित्वायोग्यत्वादपि न तत्कल्पना युक्तेत्याह—**नेति** । तेन कारकान्तरेण । सङ्गः संयोगः । वपुष्मतोऽस्मदादेः । चकारोऽवधारणे । यस्मान्मूर्तमेव लग्नं परस्परसंयुक्तं दृश्यते तस्मात् ॥ १३ ॥ शेरते शयीरन् । व्यत्ययेन लिङर्थे लट् ॥ १४ ॥ अभियुक्तः प्रेरितः । स्थितं दैवसंकल्पसिद्धम् ॥ १५ ॥ १६ ॥ किमिति काकुः प्रश्नच्छलेनाक्षेपे ॥ १७ ॥ ननु दैवज्ञा ग्रहान् निवेदयन्ति तदेव दैवमित्याशङ्क्य तेषां लिङ्गविधयाचारभेदेन पौरुषतत्फलसूचकत्वमेव न कारणतेत्यभिप्रेत्याह—**कालविद्भि**रिति ॥ १८ ॥ उत्तमं श्रेष्ठं कारणं सिध्येदिति शेषः ॥ १९ ॥ विश्वासदार्ढ्याय पुरोगतेष्वेव पौरुषफलमुदाहरति—**विश्वामित्रे**णेति ॥ २० ॥ २१ ॥ यत्तु प्रसिद्धमिन्द्रादिदैवं तदपि पौरुषेण पराजितं प्रसिद्धमित्याह—**उत्साद्ये**ति ॥ २२ ॥ योऽपि तस्य जयः सोऽपि पौरुषादेव न स्वत इत्याह—**आलूने**ति । आभोगि विस्तीर्णं जगत् आलूनं छिन्नं शीर्णं जर्जरीकृतं च शत्रुसैन्यं यस्मिन् युद्धादिकर्मणि तद्यथा स्यात्तथा आजह्रुः प्रत्याजह्रुः । तथाच दैवस्यापि दैवं पौरुषमेवेति भावः ॥२३॥ अनया रालमधूच्छिष्टादिलेपनादिरूपेण प्रसिद्धया पौरुषयुक्त्या । करण्डके वंशसंपुटके ॥ २४ ॥ भरणं स्वजनपोषणम् । आदानं बलात्परराष्ट्रादेः । संरम्भः क्रोधेन परनिग्रहः । विभ्रमा भोगविलासाः ।

शक्तता दृश्यते राम न दैवस्यौषधेरिव ॥ २५
सकलकारणकार्यविवर्जितं
निजविकल्पवशादुपकल्पितम् ।
त्वमनपेक्ष्य हि दैवमसन्मयं
श्रय शुभाशय पौरुषमुत्तमम् ॥ २६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे दैवनिराकरणं नामाष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ९

श्रीराम उवाच ।
भगवन्सर्वधर्मज्ञ प्रतिष्ठामलमागतम् ।
यल्लोके तद्वद ब्रह्मन्दैवं नाम किमुच्यते ॥ १
श्रीवसिष्ठ उवाच ।
पौरुषं सर्वकार्याणां कर्तृ राघव नेतरत् ।
फलभोक्तृ च सर्वत्र न दैवं तत्र कारणम् ॥ २
दैवं न किंचित्कुरुते न भुङ्क्ते न च विद्यते ।
न दृश्यते नाद्रियते केवलं कल्पनेदृशी ॥ ३
सिद्धस्य पौरुषेणेह फलस्य फलशालिना ।
शुभाशुभार्थसंपत्तिर्दैवशब्देन कथ्यते ॥ ४
पौरुषोपनता नित्यमिष्टानिष्टस्य वस्तुनः ।
प्राप्तिरिष्टाप्यनिष्टा वा दैवशब्देन कथ्यते ॥ ५
भावी त्ववश्यमेवार्थः पुरुषार्थैकसाधनः ।
यः सोऽस्मिँल्लोकसंघाते दैवशब्देन कथ्यते ॥ ६
ननु राघव लोकस्य कस्यचित्किंचिदेव हि ।
दैवमाकाशरूपं हि करोति न करोति च ॥ ७
पुरुषार्थस्य सिद्धस्य शुभाशुभफलोदये ।
इदमित्थं स्थितमिति योक्तिस्तद्दैवमुच्यते ॥ ८
इत्थं ममाभवद्बुद्धिरित्थं मे निश्चयो ह्यभूत् ।
इति कर्मफलप्राप्तौ योक्तिस्तद्दैवमुच्यते ॥ ९
इष्टानिष्टफलप्राप्ताविदमित्यस्य वाचकम् ।
आश्वासनामात्रवचो दैवमित्येव कथ्यते ॥ १०
श्रीराम उवाच ।
भगवन्सर्वधर्मज्ञ यत्प्राक्कर्मोपसंचितम् ।
तद्दैवं दैवमित्युक्तमपमृष्टं कथं त्वया ॥ ११
श्रीवसिष्ठ उवाच ॥
साधु राघव जानासि शृणु वक्ष्यामि तेऽखिलम् ।
दैवं नास्तीति ते येन स्थिरा बुद्धिर्भविष्यति ॥ १२

अन्येऽपि ये श्रमभूमयः कष्टसाध्याः पुरुषार्थास्तेषु दैवस्य शक्तता न दृश्यते । ओषधिग्रहणं मणिमन्त्राद्युपलक्षणं तस्येव ॥ २५ ॥ हे शुभाशय, त्वं निजः स्वीयो विकल्पो भ्रमस्तस्मादुपकल्पितमिवासन्मयं तुच्छप्रायं दैवमनपेक्ष्य पौरुषं श्रय आश्रय ॥ २६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे दैवनिराकरणं नामाष्टमः सर्गः ॥ ८ ॥

दैवापलापसिद्ध्यर्थं मनोमात्रत्वमुच्यते ।
कर्मणः सफलस्यात्र मनसश्च चिदात्मता ॥ १ ॥

पूर्वं पौरुषस्वातन्त्र्यसिद्धये क्वचिद्दैवमसदेव नास्त्येवेत्यपलपितम् । क्वचित्तु प्राक्तनप्रयत्नजन्यकर्मैव दैवं पौरुषमेव वा दैवमित्युक्तम् । तत्र प्रथमकल्पे दृढतरलोकवेदप्रसिद्धेर्निरालम्बनत्वापत्तिमसति दुर्बले तत्सापेक्षपौरुषप्राबल्योक्तिविरोधं च, द्वितीये तु असद्दैवमिति प्रतिज्ञानुपपत्तिमाधुनिकप्रवृत्तीनामपि पूर्वकर्मफलतया तदनुगुणतयैवोत्पत्तौ तद्विरोधित्वाभावेन ताभिस्तज्जयोक्तिविरोधं तत्पारतन्त्र्येऽपि पुरुषस्वातन्त्र्यविघातं चाक्षेप्स्यामीति गूढाभिसंधिः श्रीरामस्तदर्थं गुरोः कतरस्मिन्कल्पे निर्भर इति जिज्ञासुरुवाच—**भगवन्निति** । प्रतिष्ठां प्रसिद्धिमलमत्यन्तमागतं प्राप्तं यद्दैवं तत्किमसदुत सदेवेत्यर्थः ॥ १ ॥ एवं पृष्टो ज्ञातरामाभिप्रायः श्रीवसिष्ठोऽपि दैवापलापोपपत्त्यैव जगदपलापेनाद्वितीयमात्मतत्त्वं बुबोधयिषुः कल्पयोः फलतो नास्ति भेद इति गूढाभिप्रायः । प्रथमकल्पमेवावलम्ब्योक्तमेवोवाच—**पौरुषमिति** । वस्तुत उदासीनत्वादात्मनो न कर्तृत्वं न वा भोक्तृत्वमिति द्योतनाय करणेऽपि पौरुषे तत्कर्तृताव्यपदेशः ॥ २ ॥ विवेकिभिर्नाद्रियते । कल्पनानिरूढभ्रान्तिर्लौकानामित्यर्थः ॥ ३ ॥ निरालम्बनत्वानुपपत्तिं परिहरति—**सिद्धस्येति** । फलशालिना अवश्यं फलवता पौरुषेण सिद्धस्य वनितापिण्डादेर्भर्तृसपत्न्यादिभिः शुभाशुभं यत्प्राप्यते तदेवालम्ब्य दैवमिति व्यवह्रियत इत्यर्थः ॥ ४ ॥ प्रथममिष्टस्य पश्चादनिष्टापि प्राप्तिर्भवति कदाचित्प्रथममनिष्टस्य पश्चादिष्टापीति तथोक्तिः कथ्यते । लोकैरिति शेषः ॥ ५ ॥ लौकायतिकानां मतमाह—**भावीति** । पुरुषार्थोऽत्र भोगः ॥ ६ ॥ सिद्धान्तमाह—**नन्विति** । कस्यचित्किंचिदेव दैवमाकाशरूपं शून्यकल्पं नभोनैल्यसदृशं वा करोति भ्रान्तदृशा । न करोति विवेकिदृशा ॥ ७ ॥ इदं फलमित्थमेतद्वीजात्मना प्राक् स्थितम् ॥ ८ ॥ ९ ॥ इष्टानिष्टफलयोः प्राप्तौ सत्यामिदं प्राक्तनं कर्म इत्थमेवंप्रकारमित्यस्यार्थस्य सर्वकल्पनानां पौरुषे एवान्तर्भावः ॥ १० ॥ कल्पद्वयाभेदोक्त्याऽऽशयमप्रतिपद्यमानः प्रथमकल्पेनोपक्रम्य द्वितीयकल्पेनोपसंहारे विरोधं मन्यमानः स्वाभिसंधिं प्रकाशयन् श्रीराम उवाच—**भगवन्निति** । यत्प्राक्तनं कर्म तदेव पुनःपुनर्दैवमिति यद्युक्तं तर्हि तद्विद्यत एव, न विद्यते इति त्वया कथमपमृष्टमपलपितम् । अपलापवचनस्य कोऽभिप्राय इत्यर्थः ॥ ११ ॥ स्वाभिसंधिं प्रकटयन् श्रीवसिष्ठ

१ भावी पौरुषजः. २ तदेतद्दैवमित्युक्तं इति पाठः. ३ दुर्बले तत्सापेक्ष इति पाठः.

या मनोवासना पूर्वं बभूव किल भूरिशः ।
सैवेयं कर्मभावेन नृणां परिणतिं गता ॥ १३
जन्तुर्यद्वासनो राम तत्कर्ता भवति क्षणात् ।
अन्यकर्मान्यभावश्चेत्येतन्नैवोपपद्यते ॥ १४
ग्रामगो ग्राममाप्नोति पत्तनार्थी च पत्तनम् ।
यो यो यद्वासनस्तत्र स स प्रयतते सदा ॥ १५
यदेव तीव्रसंवेगाद्दृढं कर्म कृतं पुरा ।
तदेव दैवशब्देन पर्यायेणेह कथ्यते ॥ १६
एवं कर्मस्थकर्माणि कर्मप्रौढा स्ववासना ।
वासना मनसो नान्या मनो हि पुरुषः स्मृतः ॥ १७
यद्वैवं तानि कर्माणि कर्म साधो मनो हि तत् ।
मनो हि पुरुषस्तस्माद्दैवं नास्तीति निश्चयः ॥ १८
एष एव मनोजन्तुर्यद्यत्प्रयतते हितम् ।
कृतं तत्तदवाप्नोति स्वत एव हि दैवतः ॥ १९
मनश्चित्तं वासना च कर्म दैवं च निश्चयः ।
राम दुर्निश्चयस्यैताः संज्ञाः सद्भिरुदाहृताः ॥ २०
एवंनामा हि पुरुषो दृढभावनया यथा ।
नित्यं प्रयतते राम फलमाप्नोत्यलं तथा ॥ २१
एवं पुरुषकारेण सर्वमेव रघूद्वह ।
प्राप्यते नेतरेणेह[2] तस्मात्स शुभदोऽस्तु ते ॥ २२

श्रीराम उवाच ।

प्राक्तनं वासनाजालं नियोजयति मां यथा ।
मुने तथैव तिष्ठामि कृपणः किं करोम्यहम् ॥ २३

श्रीवसिष्ठ उवाच ।

अत एव हि राम त्वं श्रेयः प्राप्नोषि शाश्वतम् ।
स्वप्रयत्नोपनीतेन पौरुषेणैव नान्यथा ॥ २४
द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते ।
प्राक्तनो विद्यते राम द्वयोरेकतरोऽथ वा ॥ २५
वासनौघेन शुद्धेन तत्र चेदद्य नीयसे ।
तत्क्रमेण शुभेनैव पदं प्राप्स्यसि शाश्वतम् ॥ २६
अथ चेदशुभो भावस्त्वां योजयति संकटे ।
प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता बलात् ॥ २७
प्राज्ञश्चेतनमात्रस्त्वं न देहस्त्वं जडात्मकः ।
अन्येन चेतसा[3] तत्ते चेत्यत्वं क्वेव विद्यते ॥ २८

उवाच—**साध्विति** । जानासि विरोधं कल्पद्वयेऽपि दोषांश्चेति भावः । स्थिरा दोषाशङ्कानुपहता ॥ १२ ॥ कर्मभावेन कायिकवाचिककर्मभावेन । 'यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति' इति श्रुतेस्तथैवानुभवाच्चेति भावः ॥ १३ ॥ तदेवान्वयव्यतिरेकोपदर्शनेनोपपादयति—**जन्तुरिति** ॥ १४ ॥ विशेषे सहचारदर्शनात्सामान्ये व्याप्तिः सिद्धेत्याह—**ग्रामग** इति । ग्रामगो ग्रामगमनगोचरोद्भूतवासनः ॥ १५ ॥ तीव्रसंवेगात् फलाभिलाषातिशयात् । कर्मप्रयत्नप्राबल्येन कृतं यत् ॥ १६ ॥ कर्मसु तिष्ठन्तीति कर्मस्थाः कर्तारस्तेषां सर्वाणि कर्माण्येवमुक्तरीत्यैव भवन्ति । कर्म च प्रौढा उपचिता स्ववासनैव । वासना च स्वकारणान्मनसो नान्या 'वाचारम्भणं विकारो नामधेयम्' इति श्रुत्युक्तन्यायात् । यद्यपि वाक्काययोरपि कर्म दृश्यते तथापि तयोरपि विमर्शे मनोवासनामात्रत्वं वक्ष्यमाणमभिप्रेत्यैवमुक्तम् । मनश्च पुरुषः पूर्णात्मैव न ततो व्यतिरिच्यते । 'तन्मनोऽकुरुत आत्मन्वी स्याम्' इतीत्यादिश्रुतेर्मनसः पुरुषविवर्तत्वादिति भावः ॥१७॥ पुरुषस्य च परमार्थतो निर्विकारचिन्मात्ररूपत्वान्मनसोऽसत्त्वे कर्मासत्त्वात्तदात्मकदैवासत्त्वं[4] फलितमित्याह—**यदिति** ॥ १८ ॥ 'प्राणन्नेव प्राणो नाम भवति वदन् वाक्पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः' इति श्रुतेरात्मन एवाध्यासान्मनआदिभावेन स्थितस्य कर्मतत्फलभावेनाप्यवस्थितिरिति स एव दैवमिति यद्युच्यते तर्ह्यस्तु नाम न तेन पुरुषस्वातन्त्र्यविघात इत्याशयेनाह—**एष एवेति** । मनः मनआदिभावं प्राप्तः ॥ १९ ॥ यद्यत्यन्तासदेव मनस्तर्हि कथं तेन व्यवहारसिद्धिर्वन्ध्यापुत्रादिना तददर्शनादित्याशङ्क्य यौक्तिकदृशा तस्यानिर्वचनीयतां दर्शयन् 'तदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानम्' इत्यादिश्रुतिमनुरुध्य मनस एव दैवादिसंज्ञाभेदा इत्याह—**मन** इति । दुर्निश्चयस्य सत्त्वासत्त्वचिज्जडत्वभेदाभेदादिना तत्त्वतो निश्चेतुमशक्यस्य मिथ्याभूतस्य मनसस्तदात्मतापन्नस्य पुरुषस्येति यावत् ॥ २० ॥ तथाच पुरुषस्वातन्त्र्यं सिद्धमित्याह—**एवंनामेति** । एवं पूर्वोक्तविधानि नामानि यस्य ॥ २१ ॥ स पुरुषकारः ॥ २२ ॥ एवमपि प्राक्तनवासनापरवशस्य नेदानीं स्वातन्त्र्यसिद्धिरिति रामः शङ्कते—**प्राक्तन**मिति । कृपणो दीनः । परवश इति यावत् ॥२३॥ अस्त्विदानीं फले अस्वातन्त्र्यं औत्तरकालिकफलानुकूले यत्ने तु स्वातन्त्र्यमस्त्येव । सद्विद्यासंपन्नजन्मानुमितसत्प्रयत्नप्रारब्धफलायाः पूर्ववासनायाः स्वविरुद्धफलमात्रप्रतिरोधकत्वात्तदधिकृतजन्मन्यपि तत्प्रवृत्त्यस्वातन्त्र्ये कर्मब्रह्मविद्यापरशास्त्रवैयर्थ्यप्रसङ्गादित्यभिप्रेत्य श्रीवसिष्ठ उवाच—**अत एव हीति** । अतः अधिकृतजन्महेतुवासनानुगुण्यादेव । वासनानुगुण्यस्य जन्मविवेकसंपद्विशेषेणानुमानादिति भावः । प्राप्नोषि प्राप्स्यसि । वर्तमानसामीप्ये वर्तमानवद्व्यपदेशः ॥ २४ ॥ उक्तमेवार्थं समर्थयितुं वासनां विभज्य पृच्छति—**द्विविध** इति ॥२५॥ तत्राद्ये तावदाह—**वासनौघेनेति** ॥ २६ ॥ द्वितीयेऽप्याह—**अथेति** । न स्वातन्त्र्येण वासनानामुद्बोधः । किंतूद्बोधकानुसारेण । यद्यसत्समागमादिना दैवादेका अशुभवासनोद्भवेत्सापि तद्विरोधिसाधुसंगमसच्छास्त्रसेवनेन विरोधिवासनामुद्बोध्योत्पाद्य वा झटिति तिरस्कार्येत्यर्थः ॥ २७ ॥ ननु 'यो मनसि तिष्ठन्मनसोन्तरो यं मनो न वेद' इति मनसः प्रेरकः प्राज्ञात्मान्यः श्रूयते तदधीने

१ तत्कर्मा इति पाठः. २ नत्विरेणेह इति पाठः.

३ चेत्यसे तत्त्वं इति पाठः. ४ कर्मासत्त्वमतस्तदात्मक इति पाठः.

अन्यस्त्वां चेतयति चेत्तं चेतयति कोऽपरः ।
क इमं चेतयेत्तस्मादनवस्था न वास्तवी ॥ २९
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ ३०
अशुभेषु समाविष्टं शुभेष्वेवावतारय ।
स्वं मनः पुरुषार्थेन बलेन बलिनां वर ॥ ३१
अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।
जन्तोश्चित्तं तु शिशुवत्तस्मात्तच्चालयेद्बलात् ॥ ३२
समता सांत्वनेनाशु न द्रागिति शनैःशनैः ।
पौरुषेणैव यत्नेन पालयेच्चित्तबालकम् ॥ ३३
वासनौघस्त्वया पूर्वमभ्यासेन घनीकृतः ।
शुभो वाप्यशुभो वापि शुभमद्य घनीकुरु ॥ ३४
प्रागभ्यासवशाद्याता यदा ते वासनोदयम् ।
तदाभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन ॥ ३५
इदानीमपि ते याति घनतां वासनानघ ।
अभ्यासवशतस्तस्माच्छुभाभ्यासमुपाहर ॥ ३६
पूर्वे चेद्घनतां याता नाभ्यासात्तव वासना ।
वर्धिष्यते तु नेदानीमपि तात सुखी भव ॥ ३७
संदिग्धायामपि भृशं शुभामेव समाहर ।
अस्यां तु वासनावृद्धौ शुभाद्दोषो न कश्चन ॥ ३८
यद्यदभ्यस्यते लोके तन्मयेनैव भूयते ।
इत्याकुमारं प्राज्ञेषु दृष्टं संदेहवर्जितम् ॥ ३९
शुभवासनया युक्तस्तदत्र भव भूतये ।
परं पौरुषमाश्रित्य विजित्येन्द्रियपञ्चकम् ॥ ४०
अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः ।
गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ॥ ४१
ततः पक्वकषायेण नूनं विज्ञातवस्तुना ।
शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निराधिना ॥ ४२
यदतिसुभगमार्यसेवितं त-
च्छुभमनुसृत्य मनोज्ञभावबुद्ध्या ।
अधिगमय पदं सदा विशोकं
तदनु तदप्यवमुच्य साधु तिष्ठ ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे कर्मविचारो नाम नवमः सर्गः ॥ ९ ॥

---

मनोवासनोद्भवे कथं मम सद्वासनोद्भवस्वातन्त्र्यमित्याशङ्क्याह—**प्राज्ञ** इति । यश्चेतनमात्रश्चिन्मात्रस्वभावः प्राज्ञः श्रुतः स एव त्वं न जडात्मकः सूक्ष्मः स्थूलो वा देहस्त्वं येनान्यः स्याः । 'नान्योऽतोऽस्ति द्रष्टा तत्त्वमसि' इत्यादिश्रुतेः । तत्तस्मादेवं चिन्मात्रस्वरूपस्य तव अन्येन चेतसा चेतनेन चेत्यत्वं भास्यत्वं क्व विद्यते । यदि प्राज्ञस्त्वदन्यः स्यात्तर्हि चितश्चिदन्तरेण प्रकाशायोगात्त्वामपश्यन्न सर्वज्ञ एव स स्यादतस्त्वमेव स इति व्यतिहारेणैक्यं सिद्धमिति भावः । पाठान्तरे[1] अन्येन त्वं चेत् यदि चेत्यसे भास्यसे तर्हि ते तव चेतस्त्वं चेतनत्वं क्व विद्यते । चिद्भास्यस्य जडत्वापत्तेर्दुर्वारत्वादित्यर्थः ॥ २८ ॥ चितश्चिदन्तरवेद्यत्वे तदप्यन्यवेद्यमित्यनवस्थापि स्यादित्याह—**अन्य** इति । इमं तच्चेतयितारं कश्चेतयेत् । तस्याप्यन्यश्चेदनवस्था स्यात् सा च न वास्तवी वस्तुसिद्धिकरीति तव सद्वासनोद्बोधयत्ने स्वातन्त्र्यमव्याहतमिति भावः ॥ २९ ॥ पुरुषस्वातन्त्र्यप्रसाधनस्य फलमाह—**शुभाशुभाभ्या**मिति ॥ ३० ॥ ३१ ॥ चित्तनदी हि द्वेधा प्रवहति पुण्याय च पापाय च, तत्रैकस्रोतोनिरोधे अपरत्र द्विगुणं वहतीति योगशास्त्रोक्तिमनुसृत्याह—**अशुभादि**ति । चालितं निवारितम् । तस्माच्छुभादपि चालितमितरदशुभम् । चालयेदशुभादिति शेषः ॥ ३२ ॥ इति उक्तक्रमेण चित्तबालकमाशु शीघ्रमेव रागादिवैषम्यत्याजनेन स्वाभाविक्यां समतायां सांत्वनेन निर्दोषतामापाद्य शनैःशनैरात्मस्वरूपे निरोधलक्षणेन पौरुषेण प्रयत्नेन पालयेन्नतु द्रागेव हठान्निरुध्यादुद्वेगात् समाधानभ्रंशो मा भूदिति । तथाच भगवद्वचनं 'शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया' इत्यादि ॥ ३३ ॥ त्वया शुभो वा अशुभो वा घनीकृतोऽस्तु नाम तथाप्यद्य शुभमेव घनीकुरु । प्रथमे फलशैघ्र्याय द्वितीये तु विरोधिनिरासाय तस्यावश्यकत्वादिति भावः ॥ ३४ ॥ न च वासनाभ्यासस्य वैफल्यं शङ्क्यं पूर्ववासनाभ्यासेषु प्रत्यक्षतः फलक्लृप्तेरित्याह—**प्रागि**ति । उदयमुद्भवं घनीभावमित्यर्थः ॥ ३५ ॥ **इदानीमपी**ति । तद्वदेवेति भावः ॥ ३६ ॥ प्राक्तनवासनाघनीभावेऽपि संदिहानं प्रत्याह—**पूर्वे**मिति । तथाच यथोचितं सुखेन व्यवहर्तव्यमिति न दुर्वासनावृद्धिप्रयुक्तानर्थसंभावनेन विषादस्ते युक्त इति भावः ॥ ३७ ॥ तर्हि किमिति शुभवासनावर्धने मां प्रवर्तयसि तत्राह—**संदिग्धायामपी**ति । समाहर उपचिनु । शुभादाचरणादस्यां शुभायां वासनावृद्धौ तु न कश्चन दोषः । 'शुभाशुभफलारम्भे संदिग्धेऽपि शुभं चरेत् । यदि न स्यात्तदा किं स्याद्यदि स्यान्नास्तिको हतः ॥' इति न्यायादिति भावः ॥ ३८ ॥ वस्तुतस्तु न संदेहसंभावना । अन्यत्राप्यभ्यासस्याभ्यस्यमानदार्ढ्यहेतुत्वक्लृप्तेरित्याह—**यद्यदि**ति ॥ ३९ ॥ ४० ॥ तर्हि कियत्कालं शुभवासना अभ्यसनीया तत्राह—**अव्युत्पन्ने**ति । तत्त्वज्ञानपर्यन्तमित्यर्थः । प्रमाणानि युक्त्यनुभवादीनि ॥ ४१ ॥ पक्वा वस्त्रादिलग्नमलभागाः क्षारपाकेनेव शिथिलिता रागादिवासनाकषाया यस्य तेन । ततस्तदनन्तरं विज्ञातात्मवस्तुना । तथाच स्मृतिः—'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायते' इति । अतएव निराधिना अपगतमासदुःखेन पूर्णेनेति यावत् ॥४२॥ उक्तमेवार्थं संक्षिप्योपसंहरन्नाचरणीयं शुभं लक्षयति—**यदि**ति । मनोज्ञभावाः शुभवासनास्तत्संपन्नया बुद्ध्या पदं परमार्थवस्तु अधिगमय साक्षात्कुरु । तच्छुभवासनानुसरणमप्यवमुच्य साधुरूपे तिष्ठ ॥ ४३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे कर्मविचारो नाम नवमः सर्गः ॥ ९ ॥

[1] पाठान्तरं अन्येन चेत्यसे चेत्ते चेतस्त्वं क्वेव विद्यते इति ।

# दशमः सर्गः १०

श्रीवसिष्ठ उवाच ।

यथास्थितं ब्रह्मतत्त्वं सत्तानियतिरुच्यते ।
सा विनेतुर्विनेतृत्वं सा विनेयविनेयता ॥ १
अतः पौरुषमाश्रित्य श्रेयसे नित्यबान्धवम् ।
एकाग्रं कुरु तच्चित्तं शृणु चोक्तमिदं मम ॥ २
अवान्तरनिपातीनि स्वारूढानि मनोरथम् ।
पौरुषेणेन्द्रियाण्याशु संयम्य समतां नय ॥ ३
इहामुत्र च सिद्ध्यर्थं पुरुषार्थफलप्रदाम् ।
मोक्षोपायमयीं वक्ष्ये संहितां सारनिर्मिताम् ॥ ४
अपुनर्ग्रहणायान्तस्त्यक्त्वा संसारवासनाम् ।
संपूर्णां शमसंतोषावादायोदारया धिया ॥ ५
सपूर्वापरवाक्यार्थविचारविषयाहतम् ।
मनः समरसं कृत्वा सानुसंधानमात्मनि ॥ ६
सुखदुःखक्षयकरं महानन्दैककारणम् ।
मोक्षोपायमिमं राम वक्ष्यमाणं मया शृणु ॥ ७
इमां मोक्षकथां श्रुत्वा सह सर्वैर्विवेकिभिः ।
परं यास्यसि निर्दुःखं नाशो यत्र न विद्यते ॥ ८
इदमुक्तं पुराकल्पे ब्रह्मणा परमेष्ठिना ।
सर्वदुःखक्षयकरं परमाश्वासनं धियः ॥ ९

श्रीराम उवाच ।

केनोक्तं कारणेनेदं ब्रह्मन्पूर्वं स्वयंभुवा ।
कथं च भवता प्राप्तमेतत्कथय मे प्रभो ॥ १०

श्रीवसिष्ठ उवाच ।

अस्त्यनन्तविलासात्मा सर्वगः सर्वसंश्रयः ।
चिदाकाशोऽविनाशात्मा प्रदीपः सर्वजन्तुषु ॥ ११
स्पन्दास्पन्दसमाकारात्ततो विष्णुरजायत ।
स्यन्दमानरसापूरात्तरङ्गः सागरादिव ॥ १२

---

धातुः स्वस्य च जन्मात्र समस्तजनमुक्तये ।
स्वोपदेश इति प्रोक्तो ज्ञानावतरणक्रमः ॥ १ ॥

नन्वस्तु दैवं नाम प्राक्तनं पौरुषमेवेति तदाधुनिकेन शुभाचरणेन जय्यम्, नियतिस्तु दुर्जयैव । या हि कृतान्तस्य कान्तेति वर्णिता वैराग्यप्रकरणे, तां हि भाविपदार्थानामवश्यंभावलक्षणां भवितव्यतापरपर्यायामप्रतीकार्यामाहुरभियुक्ताः—'अवश्यंभाविभावानां प्रतीकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥' इति । तथाच तन्नियम्यत्वेऽपि पुरुषस्य न स्वातन्त्र्यमिति शङ्कापरिजिहीर्षुः श्रीवसिष्ठ उवाच—**यथास्थित**मिति । ब्रह्मतत्त्वं यथास्थितं सच्चिदानन्दस्वप्रकाशात्मना सर्वत्र समतया सर्वानुकूल्येन स्थितं तत्संबन्धिनी सर्वपदार्थानां सत्तैव भविष्यत्कालसंबन्धेन व्यपदिश्यमाना भवितव्यताख्या नियतिरुच्यते । सत्ता च स सर्वत्र यथास्थितं ब्रह्मतत्त्वम् । तदेव हि कारणकार्ययोर्नियामकनियम्यरूपेणावतिष्ठते । कारणे सत्यवश्यं कार्येण भाव्यं, कार्ये सत्यवश्यं कारणेन भाव्यमिति नियतिर्नियमः । सा च विनेतुर्नियन्तुः कारणादेर्विनेतृत्वं कार्यादिनियामकत्वम् । विनेयस्य नियम्यस्य च कार्यादेर्विनेयता नियम्यता । नियतपूर्वकालसत्ताकारणता नियतपश्चात्कालसत्ताकार्यतेति तयोर्देशकालविशेषितसत्तामात्ररूपत्वादित्यर्थः । पूर्वोक्तनियतिरपि सर्वकारणभूतब्रह्मसत्तारूपकालशक्तिरिति भावः ॥ १ ॥ अतः सर्वानुकूलब्रह्मसत्तारूपत्वात्पौरुषसाफल्येऽप्यनुकूलैव नियतिर्न प्रतिकूलेत्यत उक्तं वचनं वक्ष्यमाणमिदमेकाग्रकरणोपायबोधकं प्रथमं तदेव वचनमाह—**पौरुष**मित्यादिना ॥ २ ॥ इन्द्रियाणि मनोरथं विषयाभिलाषं स्वारूढानि सन्ति अवान्तरे मुक्तेरर्वाक्तने ऐहिकस्वर्गादिसुखे निर्पा[1]तनशीलानि भवन्त्यतस्तानि यथा मनोरथं नारोहन्ति तथा पौरुषेण प्रयत्नेन संयम्य मनः समतां नयेत्यर्थः ॥ ३ ॥ तदनन्तरं यत्कार्यं तदाह—**इहे**त्यादिना । इह सिद्धिर्जीवन्मुक्तता, अमुत्र सिद्धिर्विदेहमुक्तता । इह मनुष्यलोके, अमुत्र स्वर्गादिलोकेषु चाधिकारिणां ज्ञानसिद्ध्यर्थमिति वा । मोक्षोपायमयीं मोक्षसाधनोपदेशप्रचुराम् । यां संहितां वक्ष्ये तां स्वीकुर्विति शेषः ॥ ४ ॥ तच्छ्रवणे मन्दविरक्तस्यापि नाधिकार इति द्योतनायापुनर्ग्रहणायेति । शमसंतोषौ शान्तिवैतृष्ण्यसुखे ॥ ५ ॥ कर्मकाण्डश्रुतयः पूर्ववाक्यानि । उपासनापरश्रुतय उत्तरवाक्यानि । अर्थविचारो ज्ञानसाधकत्वम् । पूर्वापरवाक्यार्थविचारसहितं च तद्विषयैरहतं चेति विग्रहः । आत्मनि सानुसंधानं समरसं गुरुशास्त्रोपदिष्टप्रकारस्य स्वानुभवस्य चैकरस्यापादनसहितमिति यावत् ॥ ६ ॥ ७ ॥ अविवेकिनां श्रवणशालाप्रवेशमपि वारयितुं सर्वैर्विवेकिभिरित्युक्तिः ॥ ८ ॥ इत्थं साङ्गं श्रवणमवतार्य श्रोतव्यशास्त्रा[2]देरसिद्धये तदवतारप्रकारं विवक्षुराह—**इद**मिति । पुराकल्पे कल्पादौ ॥ ९ ॥ वसिष्ठाभिप्रायानुरूपं जिज्ञासुः श्रीराम उवाच—**केने**ति ॥ १० ॥ तत्रादौ परमेष्ठिनो जन्म वक्तुं तन्मूलकारणमाह—**अस्ती**ति । अनन्तानां मायिकविलासानामधिष्ठानभूत आत्मा अस्ति । सर्वगः सर्वान्तरः सर्वसंश्रयः सर्वाधार इति तस्य मायातत्कार्यातिरेकद्योतनायोक्तम् । सर्वजन्तुषु प्रदीप इति प्र[3]त्यक्चिद्रूपत्वेन नित्यापरोक्षतालाभाय ॥ ११ ॥ मायातत्कार्याणां स्पन्दे अस्पन्दे च सम एक आकारः स्वभावो यस्य तस्मान्निर्विकारादित्यर्थः । विष्णुः सर्वकार्यव्यापनशीलो ब्रह्माण्डात्मा विराट् सूक्ष्मभूतसृष्टिक्रमेणाजायत । स्यन्दमानस्य रसस्य जलस्य आपूरात्स्पन्दास्पन्दयोरप्यप्रच्युतजलैकस्वभावात्सागरात्तरङ्ग इव । अनेन निर्विकाराज्जगदुत्पत्तिर्विवर्तरूपैव न

---

१ निपतन इति पाठः २ शास्त्रादेः सिद्धये इति पाठः.

३ प्रत्यक्त्वेन इति पाठः.

सुमेरुकर्णिकात्तस्य दिग्दलाद्धृदयाम्बुजात् ।
तारकाकेसरवतः परमेष्ठी व्यजायत ॥ १३

वेदवेदार्थविद्देवमुनिमण्डलमण्डितः ।
सोऽसृजत्सकलं सर्गं विकल्पौघं यथा मनः ॥ १४

जम्बूद्वीपस्य कोणेऽस्मिन्वर्षे भारतनामनि ।
ससर्ज जनसर्गौघं ह्याधिव्याधिपरिप्लुतम् ॥ १५

भावाभावविषण्णाङ्गमुत्पातध्वंसतत्परम् ।
सर्गेऽस्मिन्भूतजातीनां नानाव्यसनसंकुलम् ॥ १६

जनस्यैतस्य दुःखं तद्दृष्ट्वा सकललोककृत् ।
जगाम करुणामीशः पुत्रदुःखात्पिता यथा ॥ १७

क एतेषां हताशानां दुःखस्यान्तो हतायुषाम् ।
स्यादिति क्षणमेकाग्रं चिन्तयामास भूतये ॥ १८

इति संचिन्त्य भगवान्ससर्ज स्वयमीश्वरः ।
तपो धर्मं च दानं च सत्यं तीर्थानि चैव हि ॥ १९

एतत्सृष्ट्वा पुनर्देवश्चिन्तयामास भूतकृत् ।
पुंसां नानेन सर्गस्य दुःखस्यान्त इति स्वयम् ॥ २०

निर्वाणं नाम परमं सुखं येन पुनर्जनः ।
न जायते न म्रियते तज्ज्ञानादेव लभ्यते ॥ २१

संसारोत्तरणे जन्तोरुपायो ज्ञानमेव हि ।
तपो दानं तथा तीर्थमनुपायाः प्रकीर्तिताः ॥ २२

तत्तावद्दुःखमोक्षार्थं जनस्यास्य हितात्मनः ।
प्रत्यग्रं तरणोपायमाशु प्रकटयाम्यहम् ॥ २३

इति संचिन्त्य भगवान्ब्रह्मा कमलसंस्थितः ।
मनसा परिसंकल्प्य मामुत्पादितवानिमम् ॥ २४

कुतोऽप्युत्पन्न एवाशु ततोऽहं समुपस्थितः ।
पितुस्तस्य पुनः शीघ्रमूर्मिरूर्मेरिवानघ ॥ २५

कमण्डलुधरो नाथः सकमण्डलुना मया ।
साक्षमालः साक्षमालं स प्रणम्याभिवादितः ॥ २६

एहि पुत्रेति मामुक्त्वा स स्वाब्जस्योत्तरे दले ।
शुक्लाभ्र इव शीतांशुं योजयामास पाणिना ॥ २७

मृगकृत्तिपरीधानो मृगकृत्तिनिजाम्बरम् ।
मामुवाच पिता ब्रह्मा सुहंसः सारसं यथा ॥ २८

मुहूर्तमात्रं ते पुत्र चेतो वानरचञ्चलम् ।
अज्ञानमभ्याविशतु शशः शशधरं यथा ॥ २९

इति तेनाशु शप्तः सन्विचारसमनन्तरम् ।
अहं विस्मृतवान्सर्वं स्वरूपममलं किल ॥ ३०

अथाहं दीनतां यातः स्थितोऽसंबुद्धया धिया ।
दुःखशोकाभिसंतप्तो जातो जन इवाधनः ॥ ३१

कष्टं संसारनामायं दोषः कथमिहागतः ।
इति चिन्तितवानन्तस्तूष्णीमेव व्यवस्थितः ॥ ३२

अथाभ्यधात्स मां तातः पुत्र किं दुःखवानसि ।
दुःखोपघातं मां पृच्छ सुखी नित्यं भविष्यसि ॥ ३३

ततः पृष्टः स भगवान्मया सकललोककृत् ।
हेमपद्मदलस्थेन संसारव्याधिभेषजम् ॥ ३४

कथं नाथ महादुःखमयः संसार आगतः ।
कथं च क्षीयते जन्तोरिति पृष्टेन तेन मे ॥ ३५

तज्ज्ञानं सुबहु प्रोक्तं यज्ज्ञात्वा पावनं परम् ।
अहं पितुरभिप्रायः किलाधिक इव स्थितः ॥ ३६

ततो विदितवेद्यं मां निजां प्रकृतिमास्थितम् ।
स उवाच जगत्कर्ता वक्ता सकलकारणम् ॥ ३७

शापेनाज्ञपदं नीत्वा पृच्छकस्त्वं मया कृतः ।
पुत्रास्य ज्ञानसारस्य समस्तजनसिद्धये ॥ ३८

परिणाम इति ध्वन्यते ॥ १२ ॥ तस्य विराजः सुमेरुः कर्णिका यस्य दिशो दलानि यस्य तादृशात्तारकाकेसरवतो हृदयाम्बुजात् ॥ १३ ॥ देवानां मुनीनां च मण्डलैः समूहैः । सर्गं प्राणिनिकायम् ॥ १४ ॥ १५ ॥ भावाभावौ लाभालाभौ ताभ्यां विषण्णमङ्गं मनो यस्य । उत्पत्तिरुत्पातस्तत्संनिहितो ध्वंसो मरणं तत्र तत्परम् । अल्पजीवितमिति यावत् । एतस्मिन्भूतजातीनां सर्गे नानाविधैर्विषयभोगव्यसनैः संकुलं जनस्य दुःखं दृष्ट्वेत्युत्तरत्रान्वयः ॥ १६ ॥ ईशस्तद्दुःखनिवारणसमर्थः ॥ १७ ॥ अन्तयति नाशयतीत्यन्तः क उपायः स्यादिति चिन्तयामास ॥ १८ ॥ प्रथमं शुद्धिसाधनसर्गमाह—इतीति ॥ १९ ॥ सर्गस्य सृष्टेः संबन्धिनां पुंसां । स्वसृष्टानामिति यावत् । अन्तो मूलतो निवृत्तिः ॥ २० ॥ जनो जीवः पुनर्न जायते न म्रियते तन्निर्वाणम् ॥ २१ ॥ अनुपाया असाधनानि प्रकीर्तिताः 'न कर्मणा न प्रजया धनेन', 'प्लवा ह्येते अदृढा यज्ञरूपाः' इत्यादिश्रुतिषु ॥ २२ ॥ प्रत्यग्रं नवम् । दृढमिति यावत् ॥ २३ ॥ इमं त्वत्पुरःस्थं माम् ॥ २४ ॥ कुतोऽपि अनिर्वचनीयमायावशादेवोपाध्युत्पत्त्योत्पन्नः सन्नाशु समुपस्थितः पितुः पितरमित्यर्थः ॥ २५ ॥ साक्षमालं यथा स्यात्तथा प्रणम्य नम्रीभूयाभिवादितो नमस्कृतः ॥ २६ ॥ योजयामास संयोजयामास । उपवेशितवानिति यावत् ॥ २७ ॥ ॥ २८ ॥ वानरजातिरिव चञ्चलं चापलहेतुरज्ञानं कर्तृ ते चेतः कर्म अभ्याविशतु प्रविशतु । शशः कलङ्कः ॥ २९ ॥ विचारः परमेष्ठिनः संकल्पस्तत्समनन्तरम् । सर्वं पूर्णम् । किलेत्याश्चर्ये ॥ ३० ॥ दीनतां अपहृतधन इव कार्पण्यम् ॥ ३१ ॥ तूष्णीं निर्व्यापारो व्यवस्थितः ॥ ३२ ॥ दुःखमुपहन्तीति दुःखोपघात उपायस्तम् । कर्मण्यण् ॥ ३३ ॥ ३४ ॥ तेन मे प्रोक्तमित्युत्तरेणान्वयः ॥ ३५ ॥ पितुरधिकः सर्वोत्कृष्टोऽभिप्रायस्तत्त्वावबोध इव निर्मलः परिपूर्णस्वभावः स्थितः । किलेत्याश्चर्ये ॥ ३६ ॥ स वक्ता उपदेष्टा पिता मामुवाच ॥ ३७ ॥ समस्तानामधिकारिजनानां ज्ञानसिद्धये ॥ ३८ ॥

१ सर्वभूतानां इति पाठः. २ महात्मनः इति पाठः. ३ मार्तिकर्मैः इति पाठः

इदानीं शान्तशापस्त्वं परं बोधमुपागतः ।
संस्थितोऽहमिवैकात्माऽकनकं कनकादिवत् ॥ ३९
गच्छेदानीं महीपृष्ठे जम्बूद्वीपान्तरस्थितम् ।
साधो भरतवर्षं त्वं लोकानुग्रहहेतुना ॥ ४०
तत्र क्रियाकाण्डपरास्त्वया पुत्र महाधिया ।
उपदेश्याः क्रियाकाण्डक्रमेण क्रमशालिना ॥ ४१
विरक्तचित्ताश्च तथा महाप्राज्ञा विचारिणः ।
उपदेश्यास्त्वया साधो ज्ञानेनानन्ददायिना ॥ ४२
इति तेन नियुक्तोऽहं पित्रा कमलयोनिना ।
इह राघव तिष्ठामि यावद्भूतपरम्परा ॥ ४३
कर्तव्यमस्ति न ममेह हि किंचिदेव
स्थातव्यमित्यतिमना भुवि संस्थितोऽस्मि ।
संशान्तया सततसुप्तधियेह वृत्त्या
कार्यं करोमि न च किंचिदहं करोमि ॥ ४४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे ज्ञानावतरणं नाम दशमः सर्गः ॥ १० ॥

## एकादशः सर्गः ११

श्रीवसिष्ठ उवाच ।

एतत्ते कथितं सर्वं ज्ञानावतरणं भुवि ।
मया स्वमीहितं चैव कमलोद्भवचेष्टितम् ॥ १
तदिदं परमं ज्ञानं श्रोतुंमद्य[1] तवानघ ।
भृशमुत्कण्ठितं चेतो महतः सुकृतोदयात् ॥ २

श्रीराम उवाच ।

कथं ब्रह्मन्भगवतो लोके ज्ञानावतारणे ।
सर्गादनन्तरं बुद्धिः प्रवृत्ता परमेष्ठिनः ॥ ३

श्रीवसिष्ठ उवाच ।

परमे ब्रह्मणि ब्रह्मा स्वभाववशतः स्वयम् ।
जातः स्पन्दमयो नित्यमूर्मिरम्बुनिधाविव ॥ ४
दृष्ट्वैवमातुरं सर्गं सर्गस्य सकलां गतिम् ।
भूतभव्यभविष्यस्थां ददर्श परमेश्वरः ॥ ५
सत्क्रियाक्रमकालस्य कृतादेः क्षय आगते ।
मोहमालोच्य लोकानां कारुण्यमगमत्प्रभुः ॥ ६
ततो मामीश्वरः सृष्ट्वा ज्ञानेनायोज्य चासकृत् ।
विससर्ज महीपीठं लोकस्याज्ञानशान्तये ॥ ७
यथाहं प्रहितस्तेन तथान्ये च महर्षयः ।
सनत्कुमारप्रमुखा नारदाद्याश्च भूरिशः ॥ ८
क्रियाक्रमेण पुण्येन तथा ज्ञानक्रमेण च ।
मनोमोहामयोन्नद्धमुद्धर्तुं लोकमीरिताः ॥ ९
महर्षिभिस्ततस्तैस्तैः क्षीणे कृतयुगे पुरा ।
क्रमात्क्रियाक्रमे शुद्धे पृथिव्यां तनुतां गते ॥ १०
क्रियाक्रमविधानार्थं मर्यादानियमाय च ।
पृथग्देशविभागेन भूपालाः परिकल्पिताः ॥ ११

यथा कनकं चिरं मालिन्यसंसर्गादकनकभावमिवापन्नं पुनः शोधनेनादिकालस्थितशुद्धकनकभावेनावतिष्ठते तद्वत् ॥ ३९ ॥ फलमपि प्राग्बुद्ध्युपारूढं[2] क्रियाहेतुरिति हेतुनेत्युच्यते ॥ ४० ॥ तत्रेति । 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्' इति न्यायादिति भावः ॥ ४१ ॥ महाप्राज्ञाः सूक्ष्मार्थग्रहणपटवः विचारिणो विमर्शशीलाः ॥ ४२ ॥ भूतपरम्परा अधिकारिजनप्रवाहो यावत्स्थास्यति तावत् ॥ ४३ ॥ कर्तव्यं क्रियाप्रयोजनम् । मनोऽतिक्रान्तोऽतिमना निर्मनस्कः । अतएव सततं सुप्तेव निरभिमाना धीर्यस्यां तया वृत्त्या कार्यं यथाप्राप्तानुवर्तनं करोमि । अथवा संशान्तया वृत्त्या स्थितोऽहं सततसुप्ता अज्ञास्तेषां धिया कार्यं करोमि स्वधिया तु न किंचित्करोमीत्यर्थः ॥ ४४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे ज्ञानावतरणं नाम दशमः सर्गः ॥ १० ॥

ज्ञानावतारविस्तारो राम वैराग्यसंस्तवः ।
वक्तृप्रच्छकलक्ष्मादि प्राधान्येनात्र वर्ण्यते ॥ १ ॥

पुनर्विस्तरेण ज्ञानावतारप्रकारं वक्तृप्रच्छकलक्षणं च वर्णयिष्यंस्तदवतारायोक्तमुपसंहरति—**एतदिति** । मम एतावज्ज्ञानावतरणं स्वं स्वीयं ईहितं जन्मादि चेष्टितं कमलोद्भवस्य मत्पितुश्चेष्टितं चैव ते कथितमित्यन्वयः ॥ १ ॥ सुकृतोदयात्पुण्यपरिपाकात् ॥ २ ॥ तादृशसुकृतोदयः कीदृग्विधलक्षणैः परिज्ञेयः कीदृशाश्च तल्लक्ष्यवस्तूपदेशप्रकारा इति प्राक्तनकथाविस्तरश्रवणमुखेन जिज्ञासुः श्रीराम उवाच—**कथमिति** । कथं केन प्रकारेण । तं प्रकारं विस्तरेण वर्णयेत्यर्थः ॥ ३ ॥ स्वस्य भावः प्राक्तनविद्याकर्मवासनाप्रचयस्तद्वशतः । स्वयमेव तदनुरूपोपाध्यात्मा जातः । स्पन्दमयः क्रियाशक्तिप्रचुरः । नित्यमभीक्ष्णम् ॥ ४ ॥ स च भुवनभूतग्रामसर्गानन्तरं सर्गं सृष्टजनमेवं जन्मजरामृत्युनरकादिप्रकारेण स्वाज्ञानवशादातुरं दुःखितं दृष्ट्वा तद्दृष्टान्तेनैव भूतभव्यभविष्यत्कालस्थामपि सर्गस्य सकलां गतिं ददर्श ॥ ५ ॥ विशेषेण च स्वर्गापवर्गसाधनानुष्ठानयोग्यकालस्य कृतयुगादेः क्षये आगते लोकस्य भाविनं मोहमालोच्य ॥ ६ ॥ असकृदुपदेशेन ज्ञानेनायोज्य संयोज्य ॥ ७ ॥ ८ ॥ क्रिया कर्म तदुपदेशक्रमेण । चादुपासनोपदेशक्रमेण । मनश्च मोहोऽज्ञानं च तावेव वा तद्युक्तो वा आमयः संसाररोगस्तेनोन्नद्धं बद्धं वशीकृतमिति यावत् । ईरिताः प्रेरिताः ॥ ९ ॥ महर्षिभिर्भूपालाः परिकल्पिता इत्युत्तरेणान्वयः । शुद्धे वैदिके रागलोभा[illegible] वा ॥ १० ॥ विधानार्थं प्रवर्तनार्थम् ॥ ११ ॥

१ श्रोतुं मम इति पाठः. २ रूढक्रियाहेतुः इति पाठः.

बहूनि स्मृतिशास्त्राणि यज्ञशास्त्राणि चावनौ ।
धर्मकामार्थसिद्ध्यर्थं कल्पितान्युचितान्यथ ॥ १२
कालचक्रे वहत्यस्मिंस्ततो विगलिते क्रमे ।
प्रत्यहं भोजनपरे जने शाल्यर्जनोन्मुखे ॥ १३
द्वन्द्वानि संप्रवृत्तानि विषयार्थं महीभुजाम् ।
दण्ड्यतां संप्रयातानि भूतानि भुवि भूरिशः ॥ १४
ततो युद्धं विना भूपा महीं पालयितुं क्षमाः ।
न समर्थास्तदा याताः प्रजाभिः सह दैन्यताम् ॥ १५
तेषां दैन्यापनोदार्थं सम्यग्दृष्टिक्रमाय च ।
ततोऽस्मदादिभिः प्रोक्ता महत्यो ज्ञानदृष्टयः ॥ १६
अध्यात्मविद्या तेनेयं पूर्वं राजसु वर्णिता ।
तदनु प्रसृता लोके राजविद्येत्युदाहृता ॥ १७
राजविद्या राजगुह्यमध्यात्मज्ञानमुत्तमम् ।
ज्ञात्वा राघव राजानः परां निर्दुःखतां गताः ॥ १८
अथ राजस्वतीतेषु बहुष्वमलकीर्तिषु ।
अस्माद्दशरथाद्राम जातोऽद्य त्वमिहावनौ ॥ १९
तव चातिप्रसन्नेऽस्मिञ्जातं मनसि पावनम् ।
निर्निमित्तमिदं चारु वैराग्यमरिमर्दन ॥ २०
सर्वस्यैव हि सर्वस्य साधोरपि विवेकिनः ।
निमित्तपूर्वं वैराग्यं जायते राम राजसम् ॥ २१
इदं त्वपूर्वमुत्पन्नं चमत्कारकरं सताम् ।
तवानिमित्तं वैराग्यं सात्त्विकं स्वविवेकजम् ॥ २२
बीभत्सं विषयं दृष्ट्वा को नाम न विरज्यते ।
सतामुत्तमवैराग्यं विवेकादेव जायते ॥ २३
ते महान्तो महाप्राज्ञा निमित्तेन विनैव हि ।
वैराग्यं जायते येषां तेषां ह्यमलमानसम् ॥ २४
स्वविवेकचमत्कारपरामर्शविरक्तया ।
राजते हि धिया जन्तुर्युवेव वरमालया ॥ २५
परामृश्य विवेकेन संसाररचनामिमाम् ।
वैराग्यं येऽधिगच्छन्ति त एव पुरुषोत्तमाः ॥ २६
स्वविवेकवशादेव विचार्येदं पुनःपुनः ।
इन्द्रजालं परित्याज्यं सबाह्याभ्यन्तरं बलात् ॥ २७
श्मशानमापदं दैन्यं दृष्ट्वा को न विरज्यते ।
तद्वैराग्यं परं श्रेयः स्वतो यदभिजायते ॥ २८
अकृत्रिमविरागत्वं महत्त्वमलमागतः ।
योग्योऽसि ज्ञानसारस्य बीजस्येव मृदुस्थलम् ॥ २९
प्रसादात्परमेशस्य नाथस्य परमात्मनः ।
त्वादृशस्य शुभा बुद्धिर्विवेकमनुधावति ॥ ३०
क्रियाक्रमेण महता तपसा नियमेन च ।
दानेन तीर्थयात्राभिश्चिरकालं विवेकतः ॥ ३१
दुष्कृते क्षयमापन्ने परमार्थविचारणे ।
काकतालीययोगेन बुद्धिर्जन्तोः प्रवर्तते ॥ ३२

अथ राजकल्पनानन्तरं राज्ञां प्रजानां च स्वस्वधर्मनियमनोचितानि स्मृतिशास्त्राणि कल्पितानि ॥ १२ ॥ भोजनग्रहणं भोगमात्रस्योपलक्षणं, शालिग्रहणं च विषयमात्रस्य ॥ १३ ॥ द्वन्द्वानि लक्षणया तन्निष्ठानि वैराणि । विषयार्थं देशार्थं भोग्यार्थं वा । यद्वा द्वन्द्वानि शीतोष्णादीनि । विषयार्थं तत्परिहारोपायविषयसंपादनार्थम् । ततश्च विषयसिद्धेर्धनमूलत्वाद्धनार्थं भूतानि परभूभुजां दण्ड्यतां दण्डनीयतां संप्रयातानि ॥ १४ ॥ पूर्वं क्षमाः समर्था अपि ततस्तदनन्तरं न समर्थाः सन्तो दीना एव दैन्यास्तद्भावं याताः । देहे आत्मतावुद्ध्या युद्धादौ देहनाशे आत्मनाशभयादित्यर्थः ॥ १५ ॥ सम्यग्दृष्टिरात्मतत्त्वज्ञानं तस्य क्रमणं क्रमो लोके प्रचारस्तस्मै ॥ १६ ॥ तेनोक्तहेतुना । राजविद्येत्युदाहृता व्यासादिभिः ॥ १७ ॥ १८ ॥ १९ ॥ अतिप्रसन्ने अत्यन्तं निर्मले । निर्निमित्तं श्मशानमापदं दैन्यमिति वक्ष्यमाणदृष्टनिमित्तरहितम् ॥ २० ॥ सर्वस्य विवेकिनः पुरुषसार्थस्य[1] मध्ये साधोरुत्तमत्वेन प्रसिद्धस्यापि सर्वस्य बहुतरजनस्य सर्वस्य विषयस्य संबन्धीति वा । रजोगुणकार्यदृष्टदुःखानुभवनिमित्तमत एव राजसम् ॥ २१ ॥ 'सत्त्वात्सुखं च ज्ञानं चे'त्यादिस्मृतेर्विवेकज्ञानमात्रजत्वात्सात्त्विकम् ॥ २२ ॥ उक्तमेव व्यनक्ति— **बीभत्समिति** ॥ २३ ॥ २४ ॥ स्वविवेकवशादेव यश्चमत्कारपरामर्शस्तत्त्वाभिमुख्यं तेनेतरविषयेभ्यो विरक्तया ॥ २५ ॥ ॥ २६ ॥ इदं दृश्यजातमिन्द्रजालमिवेन्द्रजालम् । मायिकमिति यावत् । न बाह्यमेव किंतु बाह्यसहितमाभ्यन्तरं देहेन्द्रियप्राणमनोबुद्ध्यविद्यान्तमपि ॥ २७ ॥ २८ ॥ अलमत्यन्तमागतः प्राप्तवान् ॥ ज्ञानानां विद्यानां सार आत्मविद्या तस्य ॥ २९ ॥ तपःप्रभावाद्देवप्रसादाच्च । 'यस्य देवे परा भक्तिः', 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना । प्रसादादेव रुद्रस्य भवानीसहितस्य तु ॥ अध्यात्मविषयं ज्ञानं जायते बहुजन्मभिः ॥' इत्यादिश्रुतिस्मृत्याद्यनुसरन्नाह—**प्रसादादि**ति ॥ ३० ॥ 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतिमनुसृत्याह—**क्रियाक्रमेणे**ति । क्रियाक्रमश्च 'गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानमष्टका पार्वणं श्राद्धं श्रावण्याग्रयणी चैत्र्याश्वयुजीति सप्त पाकसंस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोळशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्कारा अष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यं प्राप्नोती'ति गौतमस्मृतौ दर्शितः । नियमेनेन्द्रियप्राणमनोनियमनेन ॥ ३१ ॥ काकागमनमिव तालपतनमिव संपन्नेन योगेन साधनसमूहमेलनेन । 'समासाच्च तद्विषयात्' इत्युपमानविषयात्समासादुपमानान्तरे छः । तथाच ब्रह्मजिज्ञासाप्रयोजकविचारोदय एव दुर्लभ

१ पुरुषार्थस्य इति क्वाचित्कः पाठः.
१ दैवानुग्रहभूतब्रह्मज्ञानामेतेषां च इति पाठः.

क्रियापरास्तावदलं चक्रावर्तिभिरावृताः ।
भ्रमन्तीह जना यावन्न पश्यन्ति परं पदम् ॥ ३३
यथाभूतमिदं दृष्ट्वा संसारं तन्मयीं धियम् ।
परित्यज्य परं यान्ति निरालाना गजा इव ॥ ३४
विषमेयमनन्तेह राम संसारसंसृतिः ।
देहयुक्तो महाजन्तुर्विना ज्ञानं न पश्यति ॥ ३५
ज्ञानयुक्तिप्लवेनैव संसाराब्धिं सुदुस्तरम् ।
महाधियः समुत्तीर्णा निमेषेण रघूद्वह ॥ ३६
तामिमां ज्ञानयुक्तिं त्वं संसाराम्भोधितारिणीम् ।
शृणुष्वावहितो बुद्ध्या नित्यावहितया तया ॥ ३७
यस्मादनन्तसंरम्भा जागत्यो दुःखभीतयः ।
चिरायान्तर्दहन्त्येता विना युक्तिमनिन्दिताम् ॥ ३८
शीतवातातपादीनि द्वन्द्वदुःखानि राघव ।
ज्ञानशक्तिं विना केन सह्यतां यान्ति साधुषु ॥ ३९
आपतन्ति प्रतिपदं यथाकालं दहन्ति च ।
दुःखचिन्ता नरं मूढं तृणमग्निशिखा इव ॥ ४०
प्राज्ञं विज्ञातविज्ञेयं सम्यग्दर्शनमाधयः ।
न दहन्ति वनं वर्षासिक्तमग्निशिखा इव ॥ ४१
आधिव्याधिपरावर्ते संसारमरुमारुते ।
क्षुभितेऽपि न तत्त्वज्ञो भज्यते कल्पवृक्षवत् ॥ ४२
तत्त्वं ज्ञातुमतो यत्नाद्धीमानेव हि धीमता ।
प्रामाणिकः प्रबुद्धात्मा प्रष्टव्यः प्रणयान्वितम् ॥ ४३
प्रामाणिकस्य पृष्टस्य वक्तुरुत्तमचेतसः ।
यत्नेन वचनं ग्राह्यमंशुकेनेव कुङ्कुमम् ॥ ४४
अतत्त्वज्ञमनादेयवचनं वाग्विदां वर ।
यः पृच्छति नरं तस्मान्नास्ति मूढतरोऽपरः ॥ ४५
प्रामाणिकस्य तज्ज्ञस्य वक्तुः पृष्टस्य यत्नतः ।
नानुतिष्ठति यो वाक्यं नान्यस्तस्मान्नराधमः ॥ ४६
अज्ञतातज्ज्ञते पूर्वं वक्तुर्निर्णीय कार्यतः ।
यः करोति नरः प्रश्नं प्रच्छकः स महामतिः ॥ ४७
अनिर्णीय प्रवक्तारं बालः प्रश्नं करोति यः ।
अधमः प्रच्छकः स स्यान्न महार्थस्य भाजनम् ॥ ४८
पूर्वापरसमाधानक्षमबुद्धावनिन्दिते ।
पृष्टं प्राज्ञेन वक्तव्यं नाधमे पशुधर्मिणि ॥ ४९
प्रामाणिकार्थयोग्यत्वं प्रच्छकस्याविचार्य च ।
यो वक्ति तमिह प्राज्ञाः प्राहुर्मूढतरं नरम् ॥ ५०
त्वमतीव गुणश्लाघी प्रच्छको रघुनन्दन ।
अहं च वक्तुं जानामि समो योगोऽयमावयोः ॥ ५१
यदहं वच्मि तद्यत्नात्त्वया शब्दार्थकोविद ।
एतद्वस्त्विति निर्णीय हृदि कार्यमखण्डितम् ॥ ५२
महानसि विरक्तोऽसि तत्त्वज्ञोऽसि जनस्थितौ ।
त्वयि चोक्तं लगत्यन्तः कुङ्कुमाम्बु यथांशुके ॥ ५३
उक्तावधानपरमा परमार्थविवेचिनी ।
विशत्यर्थं तव प्रज्ञा जलमध्यमिवार्कभाः ॥ ५४
यद्यद्वच्मि तदादेयं हृदि कार्यं प्रयत्नतः ।
नोचेत्प्रष्टव्य एवाहं न त्वयेह निरर्थकम् ॥ ५५
मनो हि चपलं राम संसारवनमर्कटम् ।
संशोध्य हृदि यत्नेन श्रोतव्या परमार्थगीः ॥ ५६

---

इति भावः ॥ ३२ ॥ तत्कुतः । यावत्परं पदं न पश्यन्ति तावच्चक्रमिवावर्तयन्ति भ्रामयन्ति पुरुषं तच्छीलैः रागादिभिरावृताः सन्तः सर्वेऽप्यैहिकामुष्मिकभोगसाधनक्रियापरा एवेह संसारे भ्रमन्ति । 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनेव नीयमाना यथान्धाः' इत्यादिश्रुतेरिति भावः ॥ ३३ ॥ यथाभूतं यथास्थितं परमार्थभूतमित्यर्थः । इदं नित्यापरोक्षं ब्रह्मतत्त्वं परं च तदेव । यद्वा । इदं दृश्यजातं यथाभूतं परमार्थतः असदसारं दुःखभूतं विवेकबुद्ध्या दृष्ट्वेत्यर्थः । परं ब्रह्म यान्ति ज्ञानेन प्राप्नुवन्ति । आलानं बन्धनस्तम्भस्तस्मान्निर्गताः ॥ ३४ ॥ देहेन तादात्म्याध्यासाद्युक्त एकीभूत इव मिलितः । अतएव महानपि जन्तुः कृमिकीटादिप्रायः ॥ ३५ ॥ महाधियो विवेकिनः ॥ ३६ ॥ नित्यमवहितया विचाराभ्यासपरया । तया विवेकवैराग्यादिसंपत्त्या प्रसिद्धया बुद्ध्या । अवहित एकाग्रः सन् ॥ ३७ ॥ संरम्भो विक्षेपवेगः । 'वाचो वेगं मनसः क्रोधवेगं जिह्वावेगमुदरोपस्थवेगम्' इत्यादिप्रसिद्धः ॥ ३८ ॥ ३९ ॥ ४० ॥ विज्ञातानि विज्ञेयानि विचार्य ज्ञातुं योग्यान्यध्यात्मशास्त्राणि येन, अतएव सम्यग्दर्शनं ब्रह्म तत्त्वसाक्षात्कारो यस्य तम् । आधयो मानसव्यथाः ॥ ४१ ॥ आधिव्याधय एव परा उत्कृष्टा आवर्ताश्चक्रवाता यस्मिन्संसाररूपे मरुदेशप्रसिद्धे मारुते क्षुभिते संचलितेऽपि भज्यते आमर्द्यते पीड्यत इत्यर्थः ॥ ४२ ॥ यत्नादुपगमनप्रणिपातसेवादिप्रयत्नात् । प्रामाणिकः श्रुत्यादिप्रमाणकुशलः ॥ ४३ ॥ यथा कुङ्कुमद्रवे रञ्जनाय निमज्जितेनांशुकेन वस्त्रेण कुङ्कुमं तद्भावानुरञ्जनेनानपायि गृह्यते तद्वद्ग्राह्यम् ॥ ४४ ॥ तदर्थं वक्तृप्रच्छकलक्षणं विवक्षुरपरीक्षकं निन्दति—**अतत्त्वज्ञ**मिति । न आदेयं ग्राह्यं वचनं यस्य ॥ ४५ ॥ ४६ ॥ कार्यतो व्यवहारलिङ्गतः ॥ ४७ ॥ परीक्षणेन प्रकृष्टवक्तारमनिर्णीय । बालो मूर्खः ॥ ४८ ॥ पूर्वापरयोरुक्तानुक्तयोः समाधाने विविच्यावधारणे क्षमा समर्था बुद्धिर्यस्य ॥ ४९ ॥ एवमपरीक्ष्य वक्तारमपि निन्दति—**प्रामाणिके**ति ॥ ५० ॥ वक्तृप्रच्छकलक्षणोक्तेः प्रकृतोपयोगं दर्शयति—**त्व**मिति ॥ ५१ ॥ ॥ ५२ ॥ कुलेन गुणैः सदाचारादिभिश्च महान् ॥ ५३ ॥ मेधाप्रतिभाशालिनीत्वं विशेषणद्वयेन लभ्यते । अर्कभाः सूर्यप्रभा ॥ ५४ ॥ आदरदृढीकरणायाह—**यद्यदि**ति । प्रयत्नतश्चिराभ्यासादिप्रयत्नेन ॥ ५५ ॥ प्रयत्नान्तरमप्याह—**मन** इति ॥ ५६ ॥

अविवेकिनमज्ञानमसज्जनरतिं जनम् ।
चिरं दूरतरे कृत्वा पूजनीया हि साधवः ॥ ५७
नित्यं सज्जनसंपर्काद्विवेक उपजायते ।
विवेकपादपस्यैव भोगमोक्षौ फले स्मृतौ ॥ ५८
मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः ।
शमो विचारः संतोषश्चतुर्थः साधुसंगमः ॥ ५९
एते सेव्याः प्रयत्नेन चत्वारो द्वौ त्रयोऽथवा ।
द्वारमुद्घाटयन्त्येते मोक्षराजगृहे तथा ॥ ६०
एकं वा सर्वयत्नेन प्राणांस्त्यक्त्वा समाश्रयेत् ।
एकस्मिन्वशगे यान्ति चत्वारोऽपि वशं यतः ॥ ६१
सविवेको हि शास्त्रस्य ज्ञानस्य तपसः श्रुतेः ।
भाजनं भूषणाकारो भास्करस्तेजसामिव ॥ ६२
घनतामुपयातं हि प्रज्ञामान्द्यमचेतसाम् ।
याति स्थावरतामम्बु जाड्यात्पाषाणतामिव ॥ ६३
त्वं तु राघव सौजन्यगुणशास्त्रार्थदृष्टिभिः ।
विकासितान्तःकरणः स्थितः पद्म इवोदये ॥ ६४
इमां ज्ञानगिरं श्रोतुमवबोद्धुं च सन्मते ।
अर्हस्युद्धतकर्णस्त्वं जन्तुर्वीणास्वनं यथा ॥ ६५
वैराग्याभ्यासयोगेन सम[1]सौजन्यसंपदाम् ।
अर्जनं कुरुतां राम यत्र नाशो न विद्यते ॥ ६६
शास्त्रसज्जनसंसर्गपूर्वकैः सतपोदमैः ।
आदौ संसारमुक्त्यर्थं प्रज्ञामेवाभिवर्धयेत् ॥ ६७
एतदेवास्य मौर्ख्यस्य परमं विद्धि नाशनम् ।
यदिदं प्रेक्ष्यते शास्त्रं किंचित्संस्कृतया धिया ॥ ६८
संसारविषवृक्षोऽयमेकमास्पदमापदाम् ।
अज्ञं संमोहयेन्नित्यं मौर्ख्यं यत्नेन नाशयेत् ॥ ६९
दुराशासर्पगत्येन मौर्ख्येण हृदि वल्गता ।
चेतः संकोचमायाति चर्माग्नाविव योजितम् ॥ ७०
प्राज्ञे यथार्थभूतेयं वस्तुदृष्टिः प्रसीदति ।
दृगिवेन्दौ निरम्भोदे सकलामलमण्डले ॥ ७१
पूर्वापरविचारार्थचारुचातुर्यशालिनी ।
सविकासा मतिर्यस्य स पुमानिह कथ्यते ॥ ७२

विकसितेन सितेन तमोमुचा
वरविचारणशीतलरोचिषा ।
गुणवता हृदयेन विराजसे
त्वममलेन नभः शशिना यथा ॥ ७३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे वक्तृप्रच्छकलक्षणं नामैकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः १२

श्रीवसिष्ठ उवाच ।

परिपूर्णमना मान्यः प्रष्टुं जानासि राघव ।
वेत्सि चोक्तं च तेनाहं प्रवृत्तो वक्तुमादरात् ॥ १

तत्र प्रथमोपदेष्टव्यार्थमाह—**अविवेकिन**मिति । न विद्यते ज्ञानं शास्त्रोत्थं यस्य तम् । दूरतरे अतिदूरे ॥ ५७ ॥ तत्फलमाह—**नित्य**मिति ॥५८॥५९॥ अशक्तौ त्रयस्तदशक्तौ द्वौ वा ॥६०॥ प्राणांस्त्यक्त्वेत्यादरणीयत्वातिशयोक्तिः ॥ ६१ ॥ विवेकेन सहितः सविवेकः पुरुषः शास्त्रस्य श्रुतेः श्रवणस्य तपसस्तदर्थालोचनस्य च भाजनं योग्यः । भूषणाकारः शिरोभूषणमिव श्रेष्ठो[2]ऽऽदरणीयः । तेजसां मध्ये भास्कर इव ॥ ६२ ॥ प्रज्ञामान्द्यं मौर्ख्यम् । घनतामभेद्यताम् । स्थावरतामद्रवतां, काठिन्यमिति यावत् । जाड्याच्छीतातिशयात् । प्रसिद्धं हीदं हिमकरकादौ ॥६३॥ उन्मुखीकरणाय पुना रामं प्रशंसति—**त्वं त्वि**ति ॥६४॥ अवबोद्धुं मन्तुम् । उद्धतौ ऊर्ध्वीकृतौ कर्णौ येन तथाविधो जन्तुर्मृगादिरिव ॥ ६५ ॥ सुजनानां धर्मैः सौजन्यं विनयादि तद्रूपाणां संपदाम् ॥ ६६ ॥ प्रज्ञां विवेकग्रहणधारणपटीयसीं बुद्धिम् ॥ ६७ ॥ तद्वृद्धावप्येतद्ग्रन्थपरिशीलनमेवोपाय इत्यभिप्रेत्याह—**एतदि**ति ॥ ६८ ॥ आस्पदं प्रतिष्ठा । यतः संमोहयेत्तस्मादिति शेषः । मौर्ख्यमज्ञानम् ॥ ६९ ॥ दुराशया सर्पगतिं कुटिलगतिं वहतीति सर्पगत्येन हृदि हृद्[3]गतेन प्रतीचि वल्गता, विक्षेपसहस्रात्मना चलता । चेतो बुद्धिश्चिदात्मा वा । संकोचं संकुचितपद्मवदप्रसन्नताम् । मालिन्यमिति यावत् ॥ ७० ॥ क तर्हि प्रसीदति तमाह—**प्राज्ञे** इति । इयं प्रागुक्ता वस्तु परमार्थरूपं दृश्यते यया सा वस्तुदृष्टिः सूक्ष्मबुद्धिः । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुतेः । यथार्थभूता यथार्थवस्त्वैकरस्यमापन्ना । अथवा वस्तुभूता दृष्टिश्चिदात्मा प्राज्ञे उपदेष्टरि सति प्रसीदत्यज्ञानमालिन्यमपास्य स्फुरति ॥ ७१ ॥ मतिविकासलक्षणमाचक्षाणस्तद्वन्तं प्रशंसति—**पूर्वे**ति । पूर्वापरविचारेण सूक्ष्मतमार्थग्रहणपटीयसी चातुर्येण च शोभमाना मतिः सविकासेत्यर्थः । पुमान् पुरुषार्थसंपादनेन सार्थकीकृतपुंजन्मेत्यर्थः ॥७२॥ स्वमतिस्तर्हि सविकासा न वेति संदिहानं राममाश्वासयन्नाह—**विकसितेने**ति । तमोऽज्ञानं मुञ्चता अतएव सितेन स्वच्छेन गुणवता शान्त्यादिगुणशालिना हृदयेन प्रागुक्तबुद्ध्या त्वं विराजसे॥७३॥इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे वक्तृप्रच्छकलक्षणं नामैकादशः सर्गः ११

अनर्थता भवगतेर्ज्ञानमाहात्म्यमुत्तमम् ।
रामे च प्रच्छकगुणसमृद्धिरिह वर्ण्यते ॥ १ ॥

अन्येषामपि विवेकवैराग्यदार्ढ्याय संसारगतेरनर्थरूपतां ज्ञान-

[1] शमसौजन्य. [2] श्रेष्ठो इति पाठः. [3] हृद्गते प्रतीचि इति पाठः.

रजस्तमोभ्यां रहितां शुद्धसत्त्वानुपातिनीम् ।
मतिमात्मनि संस्थाप्य ज्ञानं श्रोतुं स्थिरो भव ॥ २
विद्यते त्वयि सर्वैव प्रच्छकस्य गुणावली ।
वक्तुर्गुणा[1]श्चैव मयि रत्नश्रीर्जलधौ यथा ॥ ३
आप्तवानसि वैराग्यं विवेकासङ्गजं सुत ।
चन्द्रकान्त इवार्द्रत्वं लग्नचन्द्रकरोत्करः ॥ ४
चिरमाशैशवादेव तवाभ्यासोऽस्ति सद्गुणैः ।
शुद्धैः शुद्धस्य दीर्घैश्च पद्मस्येवातिसंततैः ॥ ५
अतः शृणु कथां वक्ष्ये त्वमेवास्या हि भाजनम् ।
न हि चन्द्रं विना शुद्धा सविकासा कुमुद्वती ॥ ६
ये केचन समारम्भा याश्च काश्चन दृष्टयः ।
ते च ताश्च पदे दृष्टे निःशेषं यान्ति वै शमम् ॥ ७
यदि विज्ञानविश्रान्तिर्न भवेद्भव्यचेतसः ।
तदस्यां संसृतौ साधुश्चिन्तामौढ्यं सहेत कः ॥ ८
परं प्राप्य विलीयन्ते सर्वा मननवृत्तयः ।
कल्पान्तार्कगणासङ्गात्कुलशैलशिला इव ॥ ९
दुःसहा राम संसारविषावेशविषूचिका ।
योगगारुडमन्त्रेण पावनेन प्रशाम्यति ॥ १०

स च योगः सज्जनेन सह शास्त्रविचारणात् ।
परमार्थज्ञानमन्त्रो नूनं लभ्यत एव च ॥ ११

अवश्यमिह हि विचारे कृते सकलदुःखपरिक्षयो भवतीति मन्तव्यं नातो विचारदृष्टयोऽवहेलया द्रष्टव्याः ॥ १२

विचार[2]वता पुरुषेण सकलमिद[3]माधिपञ्जरं सर्पेण त्वचमिव परिपक्वां संत्यज्य विगतज्वरेण शीतलान्तःकरणेन विनोदादिन्द्रजालमिव जगदखिलमालोक्यते सम्यग्दर्शनवता असम्यग्दर्शनवतो हि परं दुःखमिदम् ॥ १३

विषमो ह्यतितरां संसार[4]रागो भोगीव दशति असिरिव छिनत्ति कुन्त इव वेधयति रज्जुरिवावेष्टयति पावक इव दहति रात्रिरिवान्धयति अशङ्कितपरिपतितपुरुषान्पाषाण इव विवशीकरोति हरति प्रज्ञां नाशयति स्थितिं पातयति मोहान्धकूपे तृष्णा जर्जरीकरोति न तदस्ति किंचिद्दुःखं संसारी यन्न प्राप्नोति ॥ १४

---

माहात्म्यं च विवक्षुस्तत्प्ररोचनाय न केवलं त्वयि सविकासा बुद्धिरेव, अपित्वन्येऽपि बहवो गुणाः प्रच्छकलक्षणं च समग्रमस्तीति प्रशंसनेन रामं प्रोत्साहयन् श्रीवसिष्ठ उवाच—**परिपूर्णमना** इति । उक्तवक्ष्यमाणैर्गुणैः परिपूर्णं मनो यस्य । उक्तं च सामान्योक्तिसूचितमपि वेत्सि विशिष्यावधारयसि ॥ १ ॥ रजसा मतेश्चापलं स्यात्तमसा त्वावरणमतस्तद्रहितामतएव शुद्धसत्त्वगुणे परमात्मनि चानुपातिनीम् । आत्मनि संस्थाप्य स्वस्थीकृत्य । स्थिर उद्युक्तः ॥ २ ॥ रत्नानां श्रीः संपत् रत्नसहिता श्रीर्लक्ष्मीश्च ॥ ३ ॥'शिष्यांश्च पुत्रवत्पश्येत्' इति न्यायात्सुतेति संबोधनम् । आर्द्रत्वं सद्रवताम् । लग्नश्चन्द्रकराणामुत्करो यस्मिन् ॥ ४ ॥ अभ्यासः परिशीलनम् । संबन्ध इति यावत् । शुद्धस्य तव । दीर्घैः सर्वदिक्प्रसृतैः । संततैरविच्छिन्नैः । पद्मपक्षे गुणैस्तन्तुभिः सौरभ्यादिभिश्च ॥ ५ ॥ भाजनं श्रवणफलप्रबोधाधारः । शुद्धा शुभ्रा । सविकासा चन्द्रकृतप्रबोधाधारः । यथा चन्द्र एव कुमुद्वती सविकासा तथेयं कथा त्वय्येव सविकासेति वार्थः ॥ ६ ॥ नन्वस्य कथाश्रवणसमारम्भस्य कोऽवधिरिति चेत्परमपददर्शनविश्रान्तिरेवेत्यभिप्रेत्याह—**ये केचने**ति । ते सर्वे समारम्भास्ताः सर्वाः प्रमाणप्रमेयदृष्टयः । नन्विह 'पुमान्स्त्रिया' इत्येकशेषेण भाव्यम्, न हि द्वन्द्व इवैकशेषो वैकल्पिक इति चेत्सत्यम् । तथापि महाभाष्याद्यभियुक्तप्रयोगेष्वेकशेषवृत्तेः स्वपदविग्रहवाक्यप्रयोगदर्शनाददोषः ॥ ७ ॥ उक्तविश्रान्तावनाश्वासं वारयति—**यदी**ति । साधुर्विवेकी कः सहेत । तदसहनात्[5]त्वरितं देहत्यागोद्युक्तः स्यादिति भावः ॥ ८ ॥ न केवलं बाह्यदृष्टय एव विलीयन्तेऽपितु मानसा[6] अपीत्याह—**पर**मिति । तथाच श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति । दृष्टान्तपक्षे हिरण्यगर्भस्यायुरन्तम् ॥ ९ ॥ लोके विषसंबन्धादपि विषूचिका प्रसिद्धा । योगो जीवस्य ब्रह्मैक्यबोधः स एव गारुडमन्त्रस्तेन । पावनेन विषशोधनेन ॥ १० ॥ सज्जनेन गुरुसतीर्थ्यादिना सह । चकारात्फलति च ॥ ११ ॥ पद्योक्तमर्थं गद्यैः प्रपञ्चयति—**अवश्य**मित्यादिना । इहास्मिन्नधिकारिजन्मनि अवश्यं भवतीत्यन्वयः । अवहेलया अनादरेण न द्रष्टव्याः ॥ १२ ॥ विचारवता सम्यग्दर्शनवता अतएव शीतलान्तःकरणेन पुरुषेण । 'वशतः' इति पाठे तु विचारस्य वशोऽपरोक्षबोधस्ततः । सर्पेण परिपक्वां जीर्णां त्वचमिव सर्वमाधिपञ्जरं संत्यज्याखिलमिदं जगदिन्द्रजालमिव कौतुकं सुखरूपमवलोक्यते । परमित्यवधारणे निपातः । परमुत्कृष्टं दुःखमिति वा ॥ १३ ॥ प्रतिज्ञातं वैषम्यमेव दृष्टान्तैः प्रपञ्चयति—**भोगीवे**त्यादिना । मोहान्धकूपे इत्यन्ते सर्वत्र संसार[7]रागस्यैव कर्तृत्वेनान्वयः । विवशीकरोतीत्यन्ते सर्वत्र अशङ्कितपरिपतितपुरुषानित्यस्य कर्मतयान्वयः । अशङ्कितमनाशङ्कितमनर्थशङ्कां विनैव मोहाद्विषयेषु परिपतितान्पुरुषानिति तदर्थः । शिरसि पतितः पाषाण इव विवशीकरोति मूर्च्छयति । प्रज्ञां विवेकदृष्टिम् । स्थितिं मर्यादाम् । पातयति पुरुषानित्यनुषज्जते । मोहलक्षणे अन्धकार-

---

१ गुणावली च मयि इति मुद्रितपुस्तके पाठः. २ विचारवशतः इति पाठः. ३ मायिपञ्जरं इति पाठः. ४ संसारेण इति पाठः. ५ त्वमिह देह इति पाठः. ६ मानसोऽपीति पाठः. ७ रोगस्यैव इति पाठः.

दुरन्तेयं किल विषयविषूचिका यदि न चिकित्स्यते तन्नितरां नरकनगरनिकरफलानुबन्धिनी तत्तत्करोति ॥ १५

यत्र शिलाशितासिशातः पात उपलताडनमग्निदाहो हिमावसेकोऽङ्गावकर्तनं चन्दनचर्चातरुवनानि घुणवृत्तान्तःपरिवेषोऽङ्गपरिमार्जनमनवरतानलविचलितसमरनाराचनिपातो निदाघविनोदनं धारागृहसीकरवर्षणं शिरश्छेदः सुखनिद्रामूकीकरणमाननमुद्राबान्धुर्यं महानुपचयः ॥ १६

तदेवंविधकष्टचेष्टासहस्रदारुणे संसारचलयन्त्रेऽस्मिन् राघव नावहेलना कर्तव्या अवश्यमेवं विचारणीयमेवं चाववोद्धव्यं यथा किल शास्त्रविचाराच्छ्रेयो भवतीति ॥ १७

अन्यच्च रघुकुलेन्दो यदि चैते महामुनयो महर्षयश्च विप्राश्च राजानश्च ज्ञानकवचेनावगुण्ठितशरीरास्ते कथमदुःखक्षमा अपि दुःखकरीं तां तां वृत्तिपूर्विकां संसारकदर्थनामनुभवन्तः सततमेव मुदितमनसस्तिष्ठन्ति ॥ १८

इह हि।

विकौतुका विगतविकल्पविप्लवा
यथा स्थिता हरिहरपद्मजादयः।
नरोत्तमाः समधिगतात्मदीपका-
स्तथा स्थिता जगति विशुद्धबुद्धयः ॥ १९

परिक्षीणे मोहे विगलति घने ज्ञानजलदे
परिज्ञाते तत्त्वे समधिगत आत्मन्यतितते।
विचार्यार्यैः सार्धं चलितवपुषो वै सदृशतो
धिया दृष्टे तत्त्वे रमणमटनं जागतमिदम् ॥ २०

युक्तकूपे। अन्धकूपो नरकविशेषो वा। जर्जरीकरोत्यभिषवेण सोममिव शिथिलीकरोति पुरुषानित्येव। किं बहुनेत्येकोक्त्याप्याह—न तदस्तीति ॥ १४ ॥ नरकाणां मलमूत्रादीनां नगराणीव शरीराणि तेषां निकरः स्वस्वजनपोष्यवर्गादिसमूहस्तत्रानुरागेण पुरुषमनुबध्नाति तच्छीला विषयलक्षणा विषूचिका यदि न चिकित्स्यते तर्हि नितरां तत्तद्वक्ष्यमाणं नरकदुर्दशासहस्रं करोति ॥ १५ ॥ यत्र शिलाशिता पाषाणभक्षकता। असिभिः शातः खण्डनम्। पातः पर्वताग्रेभ्यः पातनम्। उपलघनैस्ताडनम्। अग्निना दाहः। हिमेनावसेकः सदा आर्द्रता। अङ्गानामवकर्तनं छेदनं कुठारकर्तर्यादिभिः। चन्दनकाष्ठस्येव चर्चा घर्षणं शिलाफलकेषु। असिपत्रतरूणां वनानि तेषु धावनमिति यावत्। घुणाः काष्ठान्तःकीटकास्तेषामिव वृत्तान्तः सर्वाङ्गे काष्ठयन्त्रनिपीडनम्। परिवेषस्तप्तायःकटकशृङ्खलाभिः परितो वेष्टनम्। अङ्गानां कण्टकमार्जनीभिः परिमार्जनं निस्त्वचनमिति यावत्। अनवरतमनलविचलितान्यग्निज्वालानिःसरणानि येभ्यस्तथाविधानां समरनाराचानां युद्धप्रक्षिप्तबाणानां धारावदविच्छेदेन निपतनं निपातः। निदाघस्य ग्रीष्मकालस्य विनोदोऽतिवाहनम्। विनैव च्छायापानीयाभ्यामिति शेषः। तथा शिशिरे धारागृहेषु सीकरवर्षणम्। शिरसंच्छिन्नप्ररूढस्य पुनःपुनश्छेदः। सुखनिद्राविषये तु मूकीकरणं वार्तापि नास्तीत्यर्थः। आननस्य मुद्रा पिधानेन निरुच्छ्वासत्वापादनम्। बान्धुर्यं निम्नोन्नतभावोऽङ्गानाम्। विसंष्ठुलत्वाद्व्यवहाराक्षमतेति यावत्। पर्वतवन्महानुपचयो देहस्यैकैकाङ्गस्य वेत्यर्थः। अथवा यत्र शिलाशितादिचतुष्टयं हिमावसेकवत्सोढव्यम्। अङ्गावकर्तनं चन्दनलेपवत्। तरुवनादित्रयमङ्गपरिमार्जनवद्देहसंस्कारवत्। विशिष्टशरधारानिपातस्तु निदाघविनोदनार्थधारागृहसीकरवर्षणवत्। शिरश्छेदप्रयुक्तं मरणं सुखनिद्रावत्। मुखपिधानेन बलान्मूकीकरणं च सहजवृत्त्या आननमुद्रावत् बान्धुर्यं च महासंपदुपचयवदवश्यं सोढव्यमित्यर्थः ॥ १६ ॥ दुःखस्थानानामानन्त्यादिक्प्रदर्शनमात्रं ह्येतदिति प्रदर्श्योपसंहरंस्तद्वर्णनस्य प्रकृतोपयोगमाह—तदेवमिति। चलैरश्वैरदैर्हैर्यन्त्रणं यत्र संकोचः परिच्छेदः पारवश्यं च तस्मिन्। एवं वक्ष्यमाणरीत्या। तमेवाह—यथेति ॥ १७ ॥ ननु कथं शास्त्रविचाराच्छ्रेयो भवतीति निश्चयस्तत्पराणामपि माण्डव्यादीनां दुर्दशासहस्रदर्शनादित्याशङ्क्य परिहरन्विद्याया दृष्टफलतां दर्शयति—अन्यच्चेति। ज्ञानकवचेनावगुण्ठितशरीरा अतएवादुःखार्हा अप्येते पूर्वोक्तमुन्यादयोऽज्ञवन्मनोवृत्तिपूर्विकां दुःखकरीं तां तां संसारकदर्थनामनुभवन्तस्तिष्ठन्तीति यदि मन्यसे तर्हि ते कथं सततमेव मुदितमनसस्तिष्ठन्तीत्येवमन्वयः। मुनयो ध्यानपराः। ऋषयो मन्त्रजपपराः। विप्राः कर्मपराः। राजानो जनकादयः ॥ १८ ॥ इह हीत्यस्य देहलीदीपन्यायेन पूर्वोत्तरश्लोके चान्वयः। तर्हि कीदृशी तेषां स्थितिस्तामाह—विकौतुका इति। अपूर्वविषयदर्शनोपभोगोत्साहः कौतुकं तद्रहिताः। विकल्पैर्विप्लवो विक्षेपस्तद्रहिताः ॥ १९ ॥ यदि ब्रह्मादिदेववदेते पूर्णकामास्तर्हि कथं तेषां संसारेष्वटनदर्शनमित्याशङ्क्य परिहरन् विचारादेर्जीवन्मुक्तिविहरणफलतां दर्शयति—परिक्षीणे इति। आर्यैर्गुर्वादिभिः सार्धं विचार्य पदार्थपरिशोधने सदृशतस्तादात्म्याध्यासप्रसक्तात्मसादृश्याच्चलितान्यनात्मभावेन निरस्तानि वपूंषि स्थूलादिशरीराणि येन तस्याधिकारिणः प्रथमं वाक्यात्तत्त्वे परिज्ञाते मननेन च अतितते अपरिच्छिन्ने आत्मनि सम्यगसंभावनानिरासेनाधिगते। धिया निदिध्यासननिरस्तविपरीतभावनया बुद्ध्या च तस्य भावस्तत्त्वं ब्रह्मभावस्तस्मिन्दृष्टे साक्षात्कृते सति मोहे परिक्षीणे तत्कार्यनिबिडभ्रान्तिज्ञानमेघे च विगलति सतीदं जागतमटनं भ्रमणं रमणं क्रीडनमेव न पीडन-

१ विगलितघने इति पाठः।

२ मूलमधुरोभेनैतट्टीकायोजनं विचारणीयम्।

अन्यच्च राघव।

प्रसन्ने चित्तत्त्वे हृदि शमभवे वल्गति परे
शमाभोगीभूतास्वखिलकलनादृष्टिषु पुरः।
समं याति स्वान्तःकरणघटनास्वादितरसं
धिया दृष्टे तत्त्वे रमणमटनं जागतमिदम् ॥ २१

अन्यच्च।

रथः स्थाणुर्देहस्तुरगरचना चेन्द्रियगतिः
परिस्पन्दो वातो वहनकलितानन्दविषयः।
परोऽणुर्वा देही जगति विहरामीत्यनघया
धिया दृष्टे तत्त्वे रमणमटनं जागतमिदम् ॥ २२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे तत्त्वमाहात्म्यवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः १३

श्रीवसिष्ठ उवाच।

एतां दृष्टिमवष्टभ्य दृष्टात्मानः सुबुद्धयः।
विचरन्तीह संसारे महान्तोऽभ्युदिता इव ॥ १
न शोचन्ति न वाञ्छन्ति न याचन्ते शुभाशुभम्।
सर्वमेव च कुर्वन्ति न कुर्वन्तीह किंचन ॥ २
स्वच्छमेवावतिष्ठन्ते स्वच्छं कुर्वन्ति यान्ति हि।
हेयोपादेयतापक्षरहिताः स्वात्मनि स्थिताः ॥ ३
आयान्ति च न चायान्ति प्रयान्ति च न यान्ति च।
कुर्वन्त्यपि न कुर्वन्ति न वदन्ति वदन्ति च ॥ ४
ये केचन समारम्भा याश्च काश्चन दृष्टयः।
हेयोपादेयतस्तास्ताः क्षीयन्तेऽधिगते पदे ॥ ५
परित्यक्तसमस्तेहं मनोमधुरवृत्तिमत्।
सर्वतः सुखमभ्येति चन्द्रबिम्ब इव स्थितम् ॥ ६
अपि निर्मननारम्भमव्यस्ताखिलकौतुकम्।
आत्मन्येव न मात्यन्तरिन्दाविव रसायनम् ॥ ७
न करोतीन्द्रजालानि नानुधावति वासनाम्।
बालचापलमुत्सृज्य पूर्वमेव विराजते ॥ ८

एवंविधा हि वृत्तय आत्मतत्त्वावलोकनाल्लभ्यन्ते नान्यथा ॥ ९

तस्माद्विचारेणात्मैवान्वेष्टव्य उपासनीयो ज्ञातव्यो यावज्जीवं पुरुषेण नेतरदिति ॥ १०

स्वानुभूतेश्च शास्त्रस्य गुरोश्चैवैकवाक्यता।
यस्याभ्यासेन तेनात्मा सन्ततेनावलोक्यते ॥ ११
अवहेलितशास्त्रार्थैरवज्ञातमहाजनैः।
कष्टामप्यापदं प्राप्तो न मूढैः समतामियात् ॥ १२

मित्यर्थः ॥२०॥ रमणत्वमेवोपपादयति—**प्रसन्ने** इति। चित्तत्त्वे चैतन्यमात्रस्वभावे परमार्थवस्तुनि प्रसन्ने सति परे उत्कृष्टे शमभवे शान्त्याविर्भावे वल्गति प्राप्ते अखिलकलनादृष्टिषु समस्तबुद्धिवृत्तिषु शमाभोगीभूतासु शान्तिरसास्वादरूपासु संतीषु स्वान्तःकरणघटना आस्वादितब्रह्मरसं यथा स्यात्तथा समं वैषम्यशून्यस्वभावं याति गच्छति। अतो युक्तं रमणत्वमित्यर्थः ॥ २१ ॥ 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इत्यादिरूपकदृष्ट्या वा रमणमुपपन्नमित्याह—**रथ** इति। स्थाणुश्छिन्नतरुरिवाचेतनो देहो रथः इन्द्रियाणां विषयाभिमुखी गतिस्तुरगाणां रचनागतिचातुरी परितः स्पन्दश्चालनं येन स प्रग्रहो वातः प्राणप्रधानं मनः अर्थाद्रथादिभिर्वहनेन प्रापणेन कलिताः प्राप्ता आनन्दरूपा विषया येन तथाविधो देही आत्मा समाधौ परः परमात्मैव व्यवहारकाले बुद्ध्युपाधिपरिच्छेदादणुः सूक्ष्मो वा रथीति शेषः। एवंभूतोऽहं जगति विहरामीति धियापि रमणमेवेत्यर्थः ॥२२॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे तत्त्वमाहात्म्यवर्णनं नाम द्वादशः सर्गः ॥१२॥

वर्णिता इह बाहुल्याद्वैराग्यादिगुणोदयाः।
जीवन्मुक्तिफलोन्नद्धा विशेषेण शमः पुनः ॥ १ ॥

वैराग्यशान्त्यादिसाधनानि वर्णयिष्यन्प्रस्तुतां जीवन्मुक्तिस्थितिमेव वर्णयति—**एताम्** इति। अभ्युदिताः साम्राज्याभ्युदयं प्राप्ता इव ॥१॥ यतः शुभाशुभमुपादातुं हातुं वा न वाञ्छन्ति अतएव तत्साधनानि न याचन्ते ॥ २ ॥ असङ्गात्मदर्शनात्स्वच्छं निर्लेपम्। कुर्वन्ति शास्त्रीयम्। गच्छन्ति लौकिकसन्मार्गम् ॥ ३ ॥ आयान्ति प्रयान्त्यन्यदृशा। स्वदृशा तु न। 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव' इत्यादिश्रुतेरिति भावः ॥ ४ ॥ क्षीयन्ते प्रयोजकद्वेषरागयोः[2] क्षयात्तद्विषयसत्यताबुद्धिक्षयाच्चेति भावः ॥ ५ ॥ ईहा इच्छा चेष्टा च मधुरवृत्तिः शान्तिर्ब्रह्माकारता च। सुखं कर्तृ। मनः कर्म। चन्द्रबिम्बे स्थितं स्वर्गिणमिव मनः कर्तृ, चन्द्रबिम्बे स्थितमिवेत्युत्प्रेक्षा वा ॥ ६ ॥ विषयमननकौतुकयोरेव विक्षेपहेतुत्वात्तदभावे निर्विक्षेपं सुखमित्यनुषज्यते। सुखात्मतापन्नं मन इत्यर्थः। न माति न परिच्छिद्यते। इन्दौ पूर्णचन्द्रे। रसायनममृतम् ॥ ७ ॥ इन्द्रजालानि मायिकविक्षेपान्। वासनां तद्धेतुम्। बालानामिव भ्रान्तिप्रसक्तं चापलमुत्सृज्य पूर्वमनादिसिद्धमात्मसुखमेव विराजते ॥ ८ ॥ प्रयोजनप्रपञ्चनस्य प्रस्तुतोपयोगं पुनर्गद्येनोपसंहरति—**एवम्** इति। वृत्तयः स्थितयः ॥ ९ ॥ अन्वेषणं श्रवणमननाभ्यासः। उपासनं निदिध्यासनम् ॥१०॥ एकवाक्यता एकार्थनिष्ठता निश्चयः यस्याधिकारिणः श्रवणादेरभ्यासेन ॥ ११ ॥ अवहेलितौ शास्त्रतदर्थौ यैः। अवज्ञाता

१ प्रतीतिषु इति पाठः. २ प्रयोजकदोषगुण्ये इति पाठः.

न व्याधिर्न विषं नापत्तथा नाधिश्च भूतले ।
खेदाय स्वशरीरस्थं मौर्ख्यमेकं यथा नृणाम् ॥ १३
किंचित्संस्कृतबुद्धीनां श्रुतं शास्त्रमिदं यथा ।
मौर्ख्यापहं तथा शास्त्रमन्यदस्ति न किंचन ॥ १४
इदं श्राव्यं सुखकरं यथा दृष्टान्तसुन्दरम् ।
अविरुद्धमशेषेण शास्त्रं वाक्यार्थबन्धुना ॥ १५
आपदो या दुरुत्तारा याश्च तुच्छाः कुयोनयः ।
तास्ता मौर्ख्यात्प्रसूयन्ते खदिरादिव कण्टकाः ॥ १६
वरं शरावहस्तस्य चाण्डालागारवीथिषु ।
भिक्षार्थमटनं राम न मौर्ख्यहतजीवितम् ॥ १७
वरं घोरान्धकूपेषु कोटरेष्वेव भूरुहाम् ।
अन्धकीटत्वमेकान्ते न मौर्ख्यमतिदुःखदम् ॥ १८
इममालोकमासाद्य मोक्षोपायमयं जनः ।
अन्धतामेति न पुनः कश्चिन्मोहतमस्यपि ॥ १९
तावन्नयति संकोचं तृष्णा वै मानवाम्बुजम् ।
यावद्विवेकसूर्यस्य नोदिता विमला प्रभा ॥ २०
संसारदुःखमोक्षार्थं मादृशैः[1] सह बन्धुभिः ।
स्वरूपमात्मनो ज्ञात्वा गुरुशास्त्रप्रमाणतः ॥ २१
जीवन्मुक्ताश्चरन्तीह यथा हरिहरादयः ।
यथा ब्रह्मर्षयश्चान्ये तथा विहर राघव ॥ २२
अनन्तानीह दुःखानि सुखं तृणलवोपमम् ।
नातः सुखेषु बध्नीयाद्दृष्टिं दुःखानुबन्धिषु ॥ २३
यदनन्तमनायासं तत्पदं सारसिद्धये ।
साधनीयं प्रयत्नेन पुरुषेण विजानता ॥ २४
त एव पुरुषार्थस्य भाजनं पुरुषोत्तमाः ।
अनुत्तमपदालम्बि मनो येषां गतज्वरम् ॥ २५
संभोगाशनमात्रेण राज्यादिषु सुखेषु ये ।
संतुष्टा दुष्टमनसो विद्धि तानन्धदर्दुरान् ॥ २६
ये शठेषु दुरन्तेषु दुष्कृतारम्भशालिषु ।
द्विषत्सु मित्ररूपेषु भक्ता वै भोगभोगिषु ॥ २७
ते यान्ति दुर्गमाद्दुर्गं दुःखाद्दुःखं भयाद्भयम् ।
नरकान्नरकं मूढा मोहमन्थरबुद्धयः ॥ २८
परस्परविनाशोक्तेः श्रेयःस्थो न कदाचन ।
सुखदुःखदशे राम तडित्[2]प्रसरभङ्गुरे ॥ २९
ये विरक्ता महात्मानः सुविविक्ता भवादृशाः ।
पुरुषान्विद्धि तान्वन्द्यान्भोगमोक्षैकभाजनान् ॥ ३०
विवेकं परमाश्रित्य वैराग्याभ्यासयोगतः ।
संसारसरितं घोरामिमामापदमुत्तरेत् ॥ ३१
न स्वप्तव्यं च संसारमायास्विह विजानता ।
विषमूर्च्छनसंमोहदायिनीषु विवेकिना ॥ ३२
संसारमिममासाद्य यस्तिष्ठत्यवहेलया ।
ज्वलितस्य गृहस्योच्चैः शेते तार्णस्य संस्तरे ॥ ३३
यत्प्राप्य न निवर्तन्ते यदासाद्य न शोचति ।
तत्पदं शेमुषीलभ्यमस्त्येवात्र न संशयः ॥ ३४
नास्ति चेत्तद्विचारेण दोषः को भवतां भवेत् ।
अस्ति चेत्तत्समुत्तीर्णा भविष्यथ भवार्णवात् ॥ ३५

उपेक्षिता महान्तः पूज्या जनास्तत्त्वज्ञा यैः ॥ १२ ॥ १३ ॥ दुरधिगमानि शास्त्राणि कथं मौर्ख्यनिवृत्तिः स्यात्तत्राह—**किंचिदिति** । ईषद्व्युत्पन्नानामपीत्यर्थः ॥१४॥ यथोचितैर्दृष्टान्तैः । वाक्यार्थः परमात्मा बन्धुः प्रियतमोऽवश्यं लब्धुमिष्टो यस्य तेन । श्राव्यमवश्यं श्रोतव्यम् ॥ १५ ॥ तुच्छा अधमाः ॥ १६ ॥ सर्वदुर्दशाहेत्वपेक्षया एकैका दुर्दशापि वरमित्याह द्वाभ्याम् ॥ १७ ॥ कोटरेष्वेव वा ॥ १८ ॥ मोहो मूर्च्छा मृत्युद्वारं तल्लक्षणेऽपि तमसि नान्धतामेति किमन्यत्रेत्यर्थः ॥ १९ ॥ ननु तृष्णात्यागे उपायं न पश्यामस्तत्राह—**तावदिति** । मानवमेवाम्बुजं पद्मम् ॥२०॥ ज्ञात्वा विहरेत्युत्तरेणान्वयः ॥ २१ ॥२२॥ दृष्टिमास्थाम् ॥ २३ ॥ तदात्मतत्त्वं पद्यते प्राप्यते येन तज्ज्ञानं तत्पदं परमपुरुषार्थसिद्धये साधनीयम् ॥ २४ ॥ न विद्यते उत्तममुत्कृष्टतममन्यद्यस्मात्तथाविधं पदं वस्तु तदालम्बि ॥ २५ ॥ दर्दुरान्भेकान् । स हि कूपस्थो न बहिः पश्यति तत्राप्यन्धश्चेत्सुतरामिति भावः ॥ २६ ॥ शठेषु वञ्चकेषु दुरन्तेषु दुरुच्छेदेषु प्रबलेष्विति यावत् । भक्ताः सक्ता ये ते यान्तीत्युत्तरेणान्वयः ॥२७॥ दुर्गमात्संकटात् । मन्थरबुद्धयो मन्दबुद्धयः ॥२८॥ 'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । घटीयन्त्रवदश्रान्तं भ्रमन्याति पुनःपुनः ॥' इत्यादिवाक्यैः सुखदुःखदशयोः परस्परविनाशोक्तेरयं कदापि श्रेयसि तिष्ठतीति श्रेयःस्थो विश्रान्तिभाङ् भवति । प्रत्यक्षतोऽपि तयोर्भङ्गुरता प्रसिद्धेत्याह—**सुखदुःखेति** ॥ २९ ॥ सुविविक्ताः सम्यग्विवेकिनः ॥ ३० ॥ संसारसरिद्रूपामिमामापदम् ॥ ३१ ॥ विषवन्मूर्च्छनेन समुच्छ्रयेण संमोहं कश्मलं दातुं शीलं यासां तासु संसाराख्यमायासु मिथ्यावञ्चनोपायेषु ॥ ३२ ॥ तार्णस्य तृणविकारस्य । राहोः शिर इतिवत्संस्तराद्भेदकल्पनया षष्ठी ॥ ३३ ॥ ननु संसारात्परमन्यन्नास्त्येव तत्र किमवलम्ब्य संसारे अरतिः कार्येत्याशंक्याह—**यदिति** । शेमुषीलभ्यं ज्ञानमात्रेण प्राप्तुं शक्यमस्त्येव । न नास्ति । तदसत्त्वे जगदान्ध्यप्रसङ्गादात्मापलापायोगाच्चेति भावः । तथाचोक्तं पुराणेषु—'असत्यस्मिञ्जगन्नाथे अन्धीभूतमिदं भवेत् । सूर्येणेव विहीनत्वान्निरालोकं जगद्यथा ॥' इति, श्रुतिश्च 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति ॥३४॥ 'संदिग्धे परलोकेऽपि वरं श्रुतिपथाश्रयः । यदि न स्यात्तदा किं स्याद्यदि स्यान्नास्तिको हतः ॥' इति न्यायेन संदिहानं प्रत्यप्याह—**नास्ति चेदिति** । संदेहेऽपि महाफलस्योपेक्षानर्हत्वाच्चेति भावः ॥ ३५ ॥

[1] मोक्षोर्थमीदृशैः इति पाठः.

[2] तडित्प्रासरभङ्गुरे इति पाठः.

प्रवृत्तिः पुरुषस्येह मोक्षोपायविचारणे ।
यदा भवत्याशु तदा मोक्षभागी स उच्यते ॥ ३६
अनपायि निराशङ्कं स्वास्थ्यं विगतविभ्रमम् ।
न विना केवलीभावाद्विद्यते भुवनत्रये ॥ ३७
तत्प्राप्तावुत्तमप्राप्तौ न क्लेश उपजायते ।
न धनान्युपकुर्वन्ति न मित्राणि न बान्धवाः ॥ ३८
न हस्तपादचलनं न देशान्तरसंगमः ।
न कायक्लेशवैधुर्यं न तीर्थायतनाश्रयाः ॥ ३९
पुरुषार्थैकसाध्येन वासनैकार्थकर्मणा ।
केवलं तन्मनोमात्रजयेनासाद्यते पदम् ॥ ४०
विवेकमात्रसाध्यं तद्विचारैकान्तनिश्चयम् ।
त्यजता दुःखजालानि नरेणैतदवाप्यते ॥ ४१
सुखसेव्यासनस्थेन तद्विचारयता स्वयम् ।
न शोच्यते पदं प्राप्य न स भूयो हि जायते ॥ ४२
तत्समस्तसुखासारसीमान्तं साधवो विदुः ।
तदनुत्तमनिष्पन्दं परमाहू रसायनम् ॥ ४३
क्षयित्वात्सर्वभावानां स्वर्गमानुष्ययोर्द्वयोः ।
सुखं नास्त्येव सलिलं मृगतृष्णास्विवैतयोः ॥ ४४
अतो मनोजयश्चिन्त्यः शमसंतोषसाधनः ।
अनन्तसमसंयोगस्तस्मादानन्द आप्यते ॥ ४५
तिष्ठता गच्छता चैव पतता भ्रमता तथा ।
रक्षसा दानवेनापि देवेन पुरुषेण वा ॥ ४६
मनः प्रशमनोद्भूतं तत्प्राप्यं परमं सुखम् ।
विकासिशमपुष्पस्य विवेकोच्चतरोः फलम् ॥ ४७
व्यवहारपरेणापि कार्यवृन्दमविन्दता ।
भानुनेवाम्बरस्थेन नोज्झ्यते न च वाञ्छ्यते ॥ ४८
मनःप्रशान्तमत्यच्छं विश्रान्तं विगतभ्रमम् ।
अनीहं विगताभीष्टं नाभिवाञ्छति नोज्झति ॥ ४९
मोक्षद्वारे द्वारपालानिमाञ्छृणु यथाक्रमम् ।
येषामेकतमासक्त्या मोक्षद्वारं प्रविश्यते ॥ ५०
सुखदोषदशादीर्घा संसारमरुमण्डली ।
जन्तोः शीतलतामेति शीतरश्मेः समप्रभा ॥ ५१
शमेनासाद्यते श्रेयः शमो हि परमं पदम् ।
शमः शिवः शमः शान्तिः शमो भ्रान्तिनिवारणम् ॥ ५२
पुंसः प्रशान्ततृप्तस्य शीतलाच्छतरात्मनः ।
शमभूषितचित्तस्य शत्रुरप्येति मित्रताम् ॥ ५३

तर्हि कथं न सर्वे प्रवर्तन्त इत्याशङ्क्य 'यावन्नानुग्रहः साक्षाज्जायते परमेशितुः । तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वापि विन्दति ॥' इति वचनादीश्वरानुग्रहलभ्यमोक्षभागिताशालिन इव मोक्षसाधने प्रवृत्तिर्न सर्वेषामित्याह—**प्रवृत्ति**रिति । प्रवृत्तिफलं लिङ्गानुमेयं मोक्षभागित्वमिति भावः ॥ ३६ ॥ ननु देहेन्द्रियविषयशून्यकेवलीभावहेतुना किमनेन शास्त्रेण सत्स्वेव देहादिषूपायान्तरेणापि स्वर्गादिसुखस्य संभवादित्याशङ्क्याह—**अनपायी**ति । स्वर्गादि अपायपतनाशङ्काऽस्वास्थ्यादिग्रस्तमेवेति केवलीभाव एव पुरुषार्थ इति भावः ॥ ३७ ॥ तदिति योग्यत्वाद्यवहितविचारप्रवृत्तिपरामर्शः । तस्याः प्राप्तौ सत्यामुत्तमस्य कैवल्यस्य प्राप्तौ क्लेशो नोपजायते । ननु धनादिभिरेव केवलीभावोऽस्तु किं विचारेण तत्राह—**ने**ति ॥ ३८ ॥ हस्तपादचलनं कायिकनमस्कारादौ । देशान्तरसंगमो यात्रादौ । उपवासादौ कायक्लेशेन बलोत्साहनिद्रादिवैधुर्यम् । तीर्थायतनानि क्षेत्राणि तत्र निवासाः ॥ ३९ ॥ केन तर्हि तत्प्राप्यते तत्राह—**पुरुषार्थै**ति । पुरुषार्थः श्रवणमनननिदिध्यासनपौरुषं तदेकसाध्येन । द्वैतवासनाविरोधिब्रह्माकारदृढवासनाया एकार्थेन तुल्यविषयेण कर्मणा साध्येन साक्षात्कारेणेत्यर्थः । मनोमात्रस्य द्वैतस्य मूलोच्छेदलक्षणेन जयेन । यथाहुः—'एवं निरन्तरकृता ब्रह्मैवास्मीति वासना । हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥' इति ॥ ४० ॥ विवेको देहेन्द्रियादेरात्मनः पृथक्करणम् । विचारश्च श्रवणमनननिदिध्यासनैरसंभावनादिनिरासः एकान्त ऐकाग्र्यं च ताभ्यां निश्चेतुं शक्यम् । दुःखजालानि विषयान् ॥ ४१ ॥ स प्राप्तपदः ॥ ४२ ॥ संसारे सारत्वेन प्रसिद्धसुखानामुत्कर्षे इतरेषामसाराणां सत्तास्फूर्त्योः सीमान्तं परमावधिम् । सुखस्य आसाराणां मेघस्थानीयमवधिमिति वा । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति', 'सा काष्ठा सा परा गतिः' इत्यादिश्रुतेरिति भावः । अनुत्तमा निष्पन्दा आनन्दरसाविर्भावा ध्यानिनां यस्मात् ॥ ४३ ॥ ४४ ॥ अनन्ते समः संयोग ऐकरस्यलक्षणः ॥ ४५ ॥ शारीरपरिश्रमो मनुष्याधिकारनियमश्च नास्तीत्याह—**तिष्ठते**त्यादिना ॥ ४६ ॥ विकासी शमः पुष्पं यस्य उच्चस्योत्कृष्टस्य तरोः कल्पवृक्षस्य फलं परं सुखम् ॥ ४७ ॥ ननु तत्प्राप्तमपि पुनर्व्यवहारप्रसक्तावपैष्यतीत्याशङ्क्याह—**व्यवहारे**ति । नोज्झ्यते नोत्सृज्यते पूर्णत्वेनाहेयत्वादत एव न वाञ्छ्यते ॥ ४८ ॥ सति मनसि कथं न वाञ्छा स्यात्तत्राह—**मन** इति ॥ ४९ ॥ प्रा[1]गनुक्रान्तानपि विस्तरेण वर्ण्यमानाञ्छृणु ॥ ५० ॥ तत्रासर्गसमाप्तेः शमं प्रस्तोतुमुपक्रमते—**सुखे**ति । सुखशब्देन तदाशा लक्ष्यते । सैवाध्वगस्य तृषातापसमा दोषदशा तया दीर्घा दुरतिक्रमा शीतलतामेति शमेनेत्यपकृष्यते । समप्रभा प्रभासमा । पदव्यत्यासश्छान्दसः । यथा चन्द्रस्य स्वीया प्रभा तद्वत् । 'शीतरश्मिसमप्रभे'ति पाठे स्पष्टम् ॥ ५१ ॥ हि यस्माच्छमेन श्रेय आसाद्यते अत आयुर्घृतमितिवदभेदोपचारात्तत्परमं पदं 'तद्विष्णोः परमं पदम्' इति श्रुति[2]प्रसिद्धं शम एव । एवं 'न सन्न चासञ्छिव एव केवलः' इति श्रुतिप्रसिद्धः शिवोऽपि शम एव । एवं 'तरति शोकमात्मवित्' इत्यादिश्रुतिसिद्धा सर्वदुःखोपशान्तिरपि शम एवेत्यर्थः ॥ ५२ ॥ रागद्वेषाद्यतापितत्वाच्छीतलो निर्मोहत्वादच्छतरश्च आत्मा विज्ञानात्मा

[1] एकादशसर्गे मोक्षद्वारे द्वारपाला इत्यादि ।

[2] प्रसिद्धः इति पाठः.

शमचन्द्रमसा येषामाशयः समलंकृतः ।
क्षीरोदानामिवोदेति तेषां परमशुद्धता ॥ ५४
हृत्कुशेशयकोशेषु येषां शमकुशेशयम् ।
सतां विकसितं ते हि द्विहृत्पद्माः समा हरेः ॥ ५५
शमश्रीः शोभते येषां मुखेन्दावकलङ्किते ।
ते कुलीनेन्दवो वन्द्याः सौन्दर्यविजितेन्द्रियाः ॥ ५६
त्रैलोक्योदरवर्तिन्यो नानन्दाय तथा श्रियः ।
साम्राज्यसंपत्प्रतिमा यथा शमविभूतयः ॥ ५७
यानि दुःखानि या तृष्णा दुःसहा ये दुराधयः ।
तत्सर्वं शान्तचेतःसु तमोऽर्केष्विव नश्यति ॥ ५८
मनो हि सर्वभूतानां प्रसादमधिगच्छति ।
न तथेन्दोर्यथा शान्ते जने जनितकौतुकम् ॥ ५९
शमशालिनि सौहार्दवति सर्वेषु जन्तुषु ।
सुजने परमं तत्त्वं स्वयमेव प्रसीदति ॥ ६०
मातरीव परं यान्ति विषमाणि मृदूनि च ।
विश्वासमिह भूतानि सर्वाणि शमशालिनि ॥ ६१
न रसायनपानेन न लक्ष्म्यालिङ्गनेन च ।
तथा सुखमवाप्नोति शमेनान्तर्यथा मनः ॥ ६२
सर्वाधिव्याधिचलितं क्रान्तं तृष्णावरत्रया ।
मनः शमामृतासेकैः समाश्वासय राघव ॥ ६३
यत्करोषि यदश्नासि शमशीतलया धिया ।
तत्रातिस्वदते स्वादु नेतरत्तात मानसे ॥ ६४
शमामृतरसाच्छन्नं मनो यामेति निर्वृतिम् ।
छिन्नान्यपि तयाङ्गानि मन्ये रोहन्ति राघव ॥ ६५

न पिशाचा न रक्षांसि न दैत्या न च शत्रवः ।
न च व्याघ्रभुजङ्गा वा द्विषन्ति शमशालिनम् ॥ ६६
सुसंनद्धसमस्ताङ्गं प्रशमामृतवर्मणा ।
वेधयन्ति न दुःखानि शरा वज्रशिलामिव ॥ ६७
न तथा शोभते राजा अप्यन्तःपुरसंस्थितः ।
समया स्वच्छया बुद्ध्या यथोपशमशीलया ॥ ६८
प्राणात्प्रियतरं दृष्ट्वा तुष्टिमेति न वै जनः ।
यामायाति जनः शान्तिमवलोक्य शमाशयम् ॥ ६९
समया शमशालिन्या वृत्त्या यः साधु वर्तते ।
अभिनन्दितया लोके जीवतीह स नेतरः ॥ ७०
अनुद्धतमनाः शान्तः साधुः कर्म करोति यत् ।
तत्सर्वमभिनन्दन्ति तस्येमा भूतजातयः ॥ ७१
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा शुभाशुभम् ।
न हृष्यति ग्लायति यः स शान्त इति कथ्यते ॥ ७२
यः समः सर्वभूतेषु भावि काङ्क्षति नोज्झति ।
जित्वेन्द्रियाणि यत्नेन स शान्त इति कथ्यते ॥ ७३
स्पृष्ट्वाऽवदातया बुद्ध्या यथैवान्तस्तथा बहिः ।
दृश्यन्ते यत्र कार्याणि स शान्त इति कथ्यते ॥ ७४
तुषारकरबिम्बाभं मनो यस्य निराकुलम् ।
मरणोत्सवयुद्धेषु स शान्त इति कथ्यते ॥ ७५
स्थितोऽपि न स्थित इव न हृष्यति न कुप्यति ।
यः सुषुप्तसमः स्वस्थः स शान्त इति कथ्यते ॥ ७६
अमृतस्यन्दसुभगा यस्य सर्वजनं प्रति ।
दृष्टिः प्रसरति प्रीता स शान्त इति कथ्यते ॥ ७७

यस्य ॥ ५३ ॥ आशयश्चित्तम् । ज्ञानलब्धा स्वाभाविकशुद्धता शमेन द्विगुणीभवन्तीवाभिवर्धत इव । यथा क्षीरोदानां शुभ्रता चन्द्रोदयेनेत्यर्थः ॥ ५४ ॥ कुशेशयं पद्मम् । हरेः समा हरिणा तुल्याः । हरेर्हृत्पद्मस्यैव बहिर्ब्रह्मासनपद्मतया द्वैधीभावादिति भावः ॥ ५५ ॥ कुलीनाः सत्कुलास्त एवेन्दवः स्वपरकुलोद्भूतपापोपशमहेतुत्वात् । 'विजितेन्दव' इति पाठे स्पष्टम् । पाठान्तरे तु सौन्दर्येण गुणैर्विजितानि वशीकृतानि परेषामपि चक्षुर्मनःप्रभृतीनीन्द्रियाणि यैः ॥ ५६ ॥ साम्राज्यसंपत्प्रतिमेवाकारमात्रेण सदृशी यासां, नतु गुणान्तरैरित्यर्थः ॥ ५७ ॥ तत्सर्वमिति 'नपुंसकमनपुंसकेन' इत्येकशेषैकवद्भावः ॥ ५८ ॥ इन्दोश्चन्द्रान्निमित्तभूतात् । विषयस्यापि निमित्तत्वविवक्षया पञ्चमी । जनितं कौतुकं स्वात्मानुभवचमत्कारो यस्मिंस्तथाभूतं सद्यथा प्रसादमधिगच्छतीति संबन्धः ॥ ५९ ॥ स्वयमेवेत्यनायासोक्तिः ॥ ६० ॥ विषमाणि क्रूरकुटिलाशयानि । मृदूनि तद्विपरीतानि ॥ ६१ ॥ इन्द्रपदे अमृतरसायनपानेन । विष्णुपदे लक्ष्म्यालिङ्गनेन ॥ ६२ ॥ चलितं भीषणेन कम्पितम् । वरत्रया चर्मरज्ज्वाक्रान्तमितस्तत आकृष्टम् । श्रान्तमिति यावत् ॥ ६३ ॥ स्वादु मधुरं यथा स्यात्तथा तत्र तत् मानसेऽतिस्वदते रोचते ॥ ६४ ॥ निर्वृतिं सुखम् । तया निर्वृत्या । रोहन्ति पुनः प्रादुर्भवन्ति । मन्ये इत्युत्प्रेक्षा ॥ ६५ ॥ ६६ ॥ सुसंनद्धानि सम्यग्गुप्तानि समस्तान्यङ्गानि यस्य तम् । अमृतरूपेण वर्मणा कवचेन । वेधयन्ति पीडयन्ति । दुःखानि दुःखनिमित्तानि ॥ ६७ ॥ यथा पुरुष इति शेषः ॥ ६८ ॥ जनस्तां तुष्टिं नैतीत्यर्थः । शमयुक्तः आशयो यस्य तम् ॥ ६९ ॥ जीवति सफलजीवनो भवति ॥ ७० ॥ अनुद्धतं विनीतं मनो यस्य साधुः शान्तो यत्प्रमादादपराधमपीति यावत् ॥ ७१ ॥ इदानीं दाम्भिकसात्त्विकपरीक्षणाय शान्तलक्षणान्याह—**श्रुत्वे**त्यादिना । शुभाशुभं प्रियाप्रियम् ॥ ७२ ॥ भाविसुखादि न काङ्क्षति प्रारब्धप्रापितं च नोज्झति ॥ ७३ ॥ आर्जवमपि तल्लक्षणमित्याह—**स्पृष्ट्वे**ति । स्पृष्ट्वा ज्ञात्वापि परकौटिल्यादीनीति शेषः । मोक्षोपायतया कर्तव्यानि कार्याणि ॥ ७४ ॥ मरणोत्सवयुद्धेषु भयरागक्रोधैर्निराकुलमसंतप्तमत एव तुषारकरश्चन्द्रस्तद्बिम्बाभम् ॥ ७५ ॥ हर्षकोपनिमित्तवत्प्रदेशे स्थितोऽपि ॥ ७६ ॥ अमृतस्यन्दोऽमृतप्रवाह इव सुभगा सुखदा ॥ ७७ ॥ भावेषु

१ यथाश्रम इति पाठः. २ मनुगच्छति इति पाठः. ३ [illegible] ४ साधु इति पाठः. ५ स्नात्वा इति पाठः. ६ साधुसंमतः इति पाठः.

योऽन्तः शीतलतां यातो यो भावेषु न मज्जति ।
व्यवहारी न संमूढः स शान्त इति कथ्यते ॥ ७८
अप्यापत्सु दुरन्तासु कल्पान्तेषु महत्स्वपि ।
तुच्छेऽहं न मनो यस्य स शान्त इति कथ्यते ॥ ७९
आकाशसदृशी यस्य पुंसः संव्यवहारिणः ।
कलङ्कमेति न मतिः स शान्त इति कथ्यते ॥ ८०
तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च ।
बलवत्सु गुणाढ्येषु शमवानेव राजते ॥ ८१
शमसंसक्तमनसां महतां गुणशालिनाम् ।
उदेति निर्वृतिश्चित्ताज्ज्योत्स्नेव सितरोचिषः ॥ ८२
सीमान्तो गुणपूगानां पौरुषैकान्तभूषणम् ।
संकटेषु भयस्थाने शमः श्रीमान्विराजते ॥ ८३
शममममृतमहार्यमार्यगुप्तं
परमवलम्ब्य परं पदं प्रयाताः ।
रघुतनय यथा महानुभावाः
क्रममनुपालय सिद्धये तमेव ॥ ८४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे शमनिरूपणं नाम त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः १४

श्रीवसिष्ठ उवाच ।
शास्त्रावबोधामलया धिया परमपूतया ।
कर्तव्यः कारणज्ञेन विचारोऽनिशमात्मनः ॥ १
विचारात्तीक्ष्णतामेत्य धीः पश्यति परं पदम् ।
दीर्घसंसाररोगस्य विचारो हि महौषधम् ॥ २
आपद्वनमनन्तेहापरिपल्लविताकृति ।
विचारक्रकचच्छिन्नं नैव भूयः प्ररोहति ॥ ३
मोहेन बन्धुनाशेषु संकटेषु शमेषु च ।
सर्वं व्याप्तं महाप्राज्ञ विचारो हि सतां गतिः ॥ ४

विषयेषु व्यवहारी सन्नपि न मज्जति नासज्जते ॥ ७८ ॥ महत्सु चिरकालिकेषु । तुच्छे मिथ्याभूते नश्वरे देहादौ यस्याहमिति मनो नास्ति ॥ ७९ ॥ परमाकाशेन ब्रह्मणा सदृशी समरसा प्रसिद्धाकाशवदविकार्या वा । कलङ्कं रागादिलेपम् ॥ ८० ॥ लोकेऽपि सर्वगुणश्रैष्ठ्येन शमः प्रसिद्ध इत्याह—**तपस्विष्विति** ॥ ८१ ॥ ८२ ॥ गुणानां पूगानां समूहानां सीमान्तोऽवधिः । एकान्तभूषणं मुख्यभूषणम् । श्रीमान् सर्वगुणसंपत्तिमान् शमो विराजते ॥ ८३ ॥ अहार्यं परैरपहर्तुमशक्यमार्यैः पूज्यैर्गुप्तं सावधानतया रक्षितं परमुत्कृष्टं साधनमवलम्ब्य महानुभावा यथा येन क्रमेण परं पदं प्रयाताः प्राप्तास्तमेव क्रममनुपालय अवलम्ब्य रक्षस्वेत्यर्थः ॥ ८४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे शमनिरूपणं नाम त्रयोदशः सर्गः ॥ १३ ॥

साधुसंगमसच्छास्त्रभावशुद्ध्युपबृंहितः ।
शमसंतोषयोर्हेतुर्विचारोऽत्र प्रशस्यते ॥ १ ॥

इत्थं मोक्षद्वारपालं शमाख्यमाद्यमुपवर्ण्य द्वितीयं विचारं वर्णयिष्यन् वसिष्ठ उवाच—**शास्त्रेति** । तत्रार्थानर्थानुबन्धविचारः सारासारविचारो हेयोपादेयविचारः, प्रमाणतात्पर्यविचारः, आत्मतत्त्वपरीक्षा, चेति विचारः पञ्चविधः । तत्र स्वाभाविकप्रवृत्तेर्विषयाणां चानर्थानुबन्धिता शास्त्रीयप्रवृत्तेर्वैराग्यादेश्च पुरुषार्थानुबन्धितेत्यन्वयव्यतिरेकादिना परीक्षात्मक आद्यः । स्त्रीपुत्रस्वदेहादिषु स्वतो बीजतः परिणामतश्चाशुचिविण्मूत्राद्यमङ्गलत्वपरीक्षात्मा ब्रह्मलोकान्तसुखानामनित्यत्वदुःखसंभिन्नत्वादिपरीक्षात्मा च द्वितीयः । एतौ वैराग्यमुमुक्षाहेतू । मुमुक्षोत्तरमपि मोक्षसाधनं कर्म वोपासनमेव वा, ते अपि किं समुच्चिते उत ज्ञानसमुच्चिते उत ज्ञानमेवेति परीक्षात्मा तृतीयः । यदापि ज्ञानमेव तदापि तत्किं सांख्यवैशेषिकाद्यभिमतं कपिलगौतमोक्ततत्तच्छास्त्रप्रमाणकं श्रौतमेव वा, यदापि श्रौतं तदापि किं श्रुतीनां द्वैते उताद्वैते सविशेषे उत निर्विशेषे आत्मन्यनात्मनि वा तात्पर्यमिति परीक्षात्मा चतुर्थः । स च श्रवणमित्युच्यते । श्रुत्यादिप्रमाणानामप्यद्वितीये सच्चिदानन्दब्रह्मात्मनि तात्पर्यावधारणेऽपि स्वात्मनि परमार्थतस्तथात्वं संभवति न वेति रत्नपरीक्षान्यायेनानुभवनिष्ठगुरुसतीर्थ्यादिसंवादेन जीवेश्वरजगत्तत्त्वपरिशोधनेन च यावदवधारणं परीक्षणात्मा पञ्चमः । तत्राद्यानां त्रयाणां फलं साधनचतुष्टयसंपत्तिः, अन्त्ययोस्तु क्रमात्प्रमाणप्रमेयासंभावनानिवृत्तिः । तत्राद्या यद्यपि भाग्यवशतः स्वतोऽपि च भवन्ति तथापि स्वप्रत्ययदृढीकाराय पुनर्गुरुशास्त्रपुरःसरं कर्तव्याः । अन्त्यौ तु गुरुशास्त्राभ्यामेव भवत इति सर्वसाधारण्येन शास्त्रावबोधामलया धियेत्युक्तम् । कारणज्ञेन विषयविशयपूर्वपक्षसिद्धान्तप्रयोजनविभागज्ञानवता पुंसा प्रमाणप्रमेयतत्त्वप्रतिपादनोपायकुशलेन गुरुणा सहेति वार्थः । तत्र चित्तशुद्धेरप्युपयोगं दर्शयति—**परमपूतयेति** ॥ १ ॥ तीक्ष्णतां सूक्ष्मतत्त्वावगाहनकुशलताम् ॥ २ ॥ आपदेव दुरुत्तरत्वाद्वनम् । अनन्ताभिरीहाभिः प्रवृत्तिभिः परितः पल्लवितेव रागादिभिर्विवृद्धा आकृतिः संनिवेशो यस्य । क्रकचं काष्ठदारणम् ॥ ३ ॥ बन्धुनाशादिषु दुःखस्थानेषु यदुचितं कर्तव्यं येन चोपायेन दुःखोत्तरणं चित्तसमाधानं च तत्सर्वं मोहेन वैचित्त्येन व्याप्तं न स्फुरतीति यावत् । तत्र विचार एव गतिस्तत्प्रतिसंधाने हेतुरि-

१ सीमन्तः इति पाठः. १ भ्रमेषु च इति पाठः. २ विशयः=संशयः.

न विचारं विना कश्चिदुपायोऽस्ति विपश्चिताम् ।
विचारादशुभं त्यक्त्वा शुभमायाति धीः सताम् ॥ ५
बलं बुद्धिश्च तेजश्च प्रतिपत्तिः क्रियाफलम् ।
फलन्त्येतानि सर्वाणि विचारेणैव धीमताम् ॥ ६
युक्तायुक्तमहादीपमभिवाञ्छितसाधकम् ।
स्फारं विचारमाश्रित्य संसारजलधिं तरेत् ॥ ७
आलूनहृदयाम्भोजान्महामोहमतङ्गजान् ।
विदारयति शुद्धात्मा विचारो नाम केसरी ॥ ८
मूढाः कालवशेनेह यद्गताः परमं पदम् ।
तद्विचारप्रदीपस्य विजृम्भितमनुत्तमम् ॥ ९
राज्यानि संपदः स्फारा भोगो मोक्षश्च शाश्वतः ।
विचारकल्पवृक्षस्य फलान्येतानि राघव ॥ १०
या विवेकविकासिन्यो मतयो महतामिह ।
न ता विपदि मज्जन्ति तुम्बकानीव वारिणि ॥ ११
विचारोदयकारिण्या धिया व्यवहरन्ति ये ।
फलानामत्युदाराणां भाजनं हि भवन्ति ते ॥ १२
मूर्खहृत्काननस्थानामाशाप्रथमरोधिनाम् ।
अविचारकरञ्जानां मञ्जर्यो दुःखरीतयः ॥ १३
कज्जलक्षोदमलिना मदिरामदधर्मिणी ।
अविचारमयी निद्रा यातु ते राघव क्षयम् ॥ १४

महापदतिदीर्घेषु सद्विचारपरो नरः ।
न निमज्जति मोहेषु तेजोराशिस्तमःस्विव ॥ १५
मानसे सरसि स्वच्छे विचारकमलोत्करः ।
नूनं विकसितो यस्य हिमवानिव भाति सः ॥ १६
विचारविकला यस्य मतिर्मान्द्यमुपेयुषः ।
तस्योदेत्यशनिश्चन्द्रान्मुधा यक्षः शिशोरिव ॥ १७
दुःखखण्डकमस्थूलं विपन्नवलतामधुः ।
राम दूरे परित्याज्यो निर्विवेको नराधमः ॥ १८
ये केचन दुरारम्भा दुराचारा दुराधयः ।
अविचारेण ते भान्ति वेतालास्तमसा यथा ॥ १९
अविचारिणमेकान्तवनद्रुमसधर्मकम् ।
अक्षमं साधुकार्येषु दूरे कुरु रघूद्वह ॥ २०
विविक्तं हि मनो जन्तोराशावैवश्यवर्जितम् ।
परां निर्वृतिमभ्येति पूर्णचन्द्र इवात्मनि ॥ २१
विवेकितोदिता देहे सर्वं शीतलयत्यलम् ।
अलंकरोति चात्यन्तं ज्योत्स्नेव भुवनं यथा ॥ २२
परमार्थपताकाया धियो धवलचामरम् ।
विचारो राजते जन्तो रजन्यामिव चन्द्रमाः ॥ २३
विचारचारवो जीवा भासयन्तो दिशो दश ।
भान्ति भास्करवन्नूनं भूयो भवभयापहाः ॥ २४

---

त्यर्थः ॥ ४ ॥ तदेवाह—नेति ॥ ५ ॥ तेजः सामर्थ्यम् । प्रतिपत्तिस्तत्तत्कालोचिता स्फूर्तिः । क्रिया तदनुष्ठानं तत्फलं च । फलन्ति निष्पद्यन्ते सफलीभवन्ति वा ॥ ६ ॥ युक्तमुचितमुपादेयमयुक्तमनुचितं हेयं तयोः प्रकाशने महादीपम् । स्फारमनल्पम् ॥ ७ ॥ आलूनानि हृदयस्थानि विवेकाम्भोजानि यैस्तान् । शुद्धात्मा जल्पच्छलजात्यादिदोषशून्यः ॥ ८ ॥ मूढास्तरणोपायमार्गव्यामूढाः । विजृम्भितं तादृशमार्गप्रकाशनस्य फलम् ॥ ९ ॥ १० ॥ विवेकोऽत्र विचारस्तेन विकासिन्यो या मतयस्ता न मज्जन्ति न विषीदन्ति । तुम्बकानि शुष्कालाबुकानि ॥ ११ ॥ विचारवती धीर्विवेकोदयकारिणी तया ये व्यवहरन्ति । उदाराणां श्रेष्ठानाम् ॥ १२ ॥ मूर्खाणां हृन्मन एव काननं वनं तत्स्थानाम् । पुरुषार्थविषये आशां मुमुक्षां प्रथमं रुन्धन्ति तच्छीलानाम् । करञ्जानां कुबेराक्षवल्लीनाम् । तत्पक्षे आशा दिशः । ते हि वृतिभावेन दिशो रुन्धन्ति । मञ्जर्यः फलकोशमञ्जर्यो दुःखव्यवहाराडम्बरभूतास्ता हि सकण्टकाः कटुकफलगर्भाः प्रसिद्धाः ॥ १३ ॥ क्षोदश्चूर्णमिव मलिना । मदिरामदधर्मा भ्रान्तिस्खलनादयस्तद्वती । क्षयं यातु विचारेणेति शेषः ॥ १४ ॥ महत्य आपदो येषु ते च ते अतिदीर्घाश्च तेषु । मोहेषु अज्ञानेषु । तेजोराशिः सूर्यः ॥ १५ ॥ मानसं मन एव सरस्तदेव हिमवत्कुक्षौ प्रसिद्धं मानसं सरः । शैत्यौन्नत्यस्थैर्यादिगुणैर्हिमवानिव ॥ १६ ॥ मान्द्यं मौर्ख्यम् । चन्द्रदैवत्ये चन्द्रवद्विवेकप्रकाशयोग्ये च मनसि चन्द्रिकासदृश-

ज्ञानसुखाविर्भाव एवोचितस्तस्माद्यस्य मूर्खस्य शोकदुःखाद्युद्भवस्तस्य चन्द्रादप्यशनिर्वज्रमुदेति । यथा शिशोर्बालस्य मौर्ख्याद्यक्षः प्रागुक्तवेताल उदेति तद्वत् ॥ १७ ॥ निर्विवेको नराधमो दुःखबीजानामेव निरन्तरभरणाय निर्मितं खण्डकं भूकुसूलम् । न विद्यते स्थूलं यस्मात्तथाविधम् । अतिस्थूलमित्यर्थः । विपल्लक्षणानां नवलतानां मधुर्वसन्त उल्लासहेतुरित्यर्थः ॥ १८ ॥ दुरारम्भाः स्वपरदुःखानुकूलकर्माणि । दुराचारा निषिद्धाचरणानि । भान्ति आविर्भवन्ति ॥ १९ ॥ एकान्तेन नियमेन वनद्रुमसमानधर्माणम् । एकान्ते मनुष्यासेव्यस्थाने वा विद्यमानेन वनद्रुमेण सधर्माणम् । अतएव साधूनामध्वगानां छायाश्रयदानादिकार्येषु साधुषु पुरुषार्थोपयोगिषु कार्येषु वाऽक्षममसमर्थम् ॥ २० ॥ विविक्तं विचारवत् । आशाया वैवश्येन पारवश्येन वर्जितम् । निर्वृतिं विश्रान्तिसुखम् ॥ २१ ॥ ज्योत्स्ना चन्द्रिकेव । भुवनं जलं यथा तापार्तं सर्वं जनं शीतलयति तृषार्तं च अलं तृप्तं करोति तद्वत् ॥ २२ ॥ जन्तोरधिकारिजन्मवतः पुरुषस्य परमार्थस्योत्कृष्टपुरुषार्थलक्षणराजभावप्राप्तेः सूचकत्वात्पताकाया धियः शुद्धबुद्धेः संबन्धिविचारो धवलचामरमिवासाधारणं राजचिह्नं राजते । रूपितपताकाचामरयो रजनीचन्द्रमसावुपमाने । तत्र रजन्या वैयधिकरण्येनोपमानत्वम् ॥ २३ ॥ जीवा विचारेणैव क्रमाच्चारवो जीवन्मुक्तभूताः सन्तो भूयसां प्राणिनां विचारप्रकाशेन भवभयलक्षणं तमोऽपघ्नन्तो

---

१ तमोऽपहरन्तो इति पाठः.

बालस्य स्वमनोमोहकल्पितः प्राणहारकः ।
रात्रौ नभसि वेतालो विचारेण विलीयते ॥ २५
सर्व एव जगद्भावा अविचारेण चारवः ।
अविद्यमानसद्भावा विचारविशरारवः ॥ २६
पुंसो निजमनोमोहकल्पितोऽनल्पदुःखदः ।
संसारचिरवेतालो विचारेण विलीयते ॥ २७
समं सुखं निराबाधमनन्तमनपाश्रयम् ।
विद्धीमं केवलीभावं विचारोच्चतरोः[1] फलम् ॥ २८
अचलस्थितितोदारा प्रकटाभोगतेजसा ।
तेन निष्कामतोदेति शीततेवेन्दुनोदिता ॥ २९
स्वविचारमहौषध्या साधुश्चित्तनिषण्णया ।
तयोत्तमत्वप्रदया नाभिवाञ्छति नोज्झति ॥ ३०
तत्पदालम्बनं चेतः स्फारमाभासमागतम् ।
नास्तमेति न चोदेति खमिवातितताम्[2]तरम् ॥ ३१
न ददाति न चादत्ते न चोन्नमति शाम्यति ।
केवलं साक्षिवत्पश्यञ्जगदाभोगि तिष्ठति ॥ ३२
न च शाम्यति नाप्यन्तर्नापि बाह्येऽवतिष्ठति ।
न च नैष्कर्म्यमादत्ते न च कर्मणि मज्जति ॥ ३३
उपेक्षते गतं वस्तु संप्राप्तमनुवर्तते ।
न क्षुब्धो न च वाऽक्षुब्धो भाति पूर्ण इवार्णवः॥ ३४
एवं पूर्णेन मनसा महात्मानो महाशयाः ।
जीवन्मुक्ता जगत्यस्मिन्विहरन्तीह योगिनः ॥ ३५
उषित्वा सुचिरं कालं धीरास्ते यावदीप्सितम् ।
ते तमन्ते परित्यज्य यान्ति केवलतां तताम् ॥ ३६
कोऽहं कस्य च संसार इत्यापद्यपि धीमता ।
चिन्तनीयं प्रयत्नेन सप्रतीकारमात्मना ॥ ३७
कार्यसंकटसंदेहं राजा जानाति राघव ।
निष्फलं सफलं वापि विचारेणैव नान्यथा ॥ ३८
वेदवेदान्तसिद्धान्तस्थितयः स्थितिकारणम् ।
निर्णीयन्ते विचारेण दीपेन च भुवो निशि ॥ ३९
अनष्टमन्धकारेषु बहुतेजः[3]स्वजिह्मितम् ।
पश्यत्यपि व्यवहितं विचारश्चारुलोचनम् ॥ ४०
विवेकान्धो हि जात्यन्धः शोच्यः सर्वस्य दुर्मतिः ।
दिव्यचक्षुर्विवेकात्मा जयत्यखिलवस्तुषु ॥ ४१

---

भास्करवद्भान्ति ॥ २४ ॥ ननु विचारेण भयनिवृत्तिः क्व दृष्टा तत्राह—**बालस्येति** । निशि बहिर्गमनप्रतिबन्धार्थं कल्पितो वेतालस्तथा संसारो विलीयते ॥ २५ ॥ अस्तु तत्र तथा, प्रकृते कथं भयनिवृत्तिरित्याशङ्क्य भयहेतोर्जगतो विचारेण मिथ्यात्वनिर्णयादित्याह—**सर्व एवेति** । चारवः सत्यवद्रमणीयाः । विशरारवः शिलास्फालितलोष्टादिवद्विशरणशीलाः । असारा मिथ्याभूता इति यावत् ॥ २६ ॥ उक्तमेव स्पष्टयति—**पुंस** इति ॥ २७ ॥ न भयनिवृत्तिरेव किंतु निरतिशयानन्दावाप्तिरपि तत्फलमित्याह—**सम**मिति । समं जगद्वैषम्यशून्यम् । अनपाश्रयमनन्याधीनम् । केवलीभावं कैवल्यम् ॥ २८ ॥ तद्विच्छेदशङ्कां वारयति—**अचले**ति । तेन विचारेण प्रकटस्याभोगस्य निरतिशयानन्दस्य तेजसा सामर्थ्येन चाञ्चल्यहेत्वज्ञाने नष्टे अचलस्थिततया उदारा आनन्दपूर्णतालक्षणा निष्कामता उदेति ॥ २९ ॥ अचलस्थितिरेवोत्तमत्वं तत्प्रदया पूर्वोक्तया विचारलक्षणया महौषध्या सिद्धः पुरुषो नाभिवाञ्छत्यप्राप्तं, प्राप्तं च नोज्झति । कृतकृत्यो भवतीत्यर्थः ॥ ३० ॥ ननु चित्तं यदि विचारजन्यज्ञानेन नश्येत्तर्हि जीवनासंभवः, यदि न नश्येत्तर्हि पुनर्विक्षेपाञ्जनयेदेवेति कथं कृतकृत्यतेत्याशङ्क्याह—**तदि**ति । यथा भर्जितं बीजं बीजाभासतां गतं नाङ्कुरारम्भक्षमं तद्वदाभासतां गतं चित्तमपि खमाकाशमिवातिततमतिविस्तीर्णब्रह्मभावं प्राप्तमान्तरं विक्षेपबीजवासनाजालं यस्य । नास्तं विनाशमेति येन जीवनं न स्यात्, नापि रागद्वेषादिवृत्तिभिरुदेति येन विक्षेपः स्यादित्यर्थः । यद्वा चेतः आभासं भर्जितबीजमिव नोदेति येन विक्षेपः स्यात् । अनादिवासनया स्फारतां गतं दृढं विषय संस्कारवशान्न विनाशमेति ॥ ३१ ॥ तत्कुतः । यतो जगद्विषयानयं केवलं साक्षिवदौदासीन्येन पश्यंस्तेषु रागितया मनो न ददाति सत्यतया पुरुषार्थबुद्ध्या च नादत्ते नोपभुङ्क्ते ॥ ३२ ॥ न सुषुप्ताविवोपाधिशान्त्या शाम्यति, नापि स्वप्नवदान्तरवासनामये निमज्जति, न वा मूढजनजाग्रद्वद्बाह्येऽवसन्नस्तिष्ठति ॥ ३३ ॥ अर्णवपक्षे गतं लक्ष्मीकौस्तुभादिवस्तु उपेक्षते न तत्प्राप्त्यै यतते । क्षुब्धो मर्यादात्यागपर्यन्तं क्षोभवान् । अक्षुब्धः स्तिमितः । स्वाभाविकं व्यवहारं त्यजन्निति यावत् । क्षोभादिफलाभावसमुच्चयार्थश्चकारः ॥ ३४ ॥ इहास्मिञ्शरीर एवानुभूयमानो जीवब्रह्मैक्यलक्षणो योगो येषामस्ति ते ॥ ३५ ॥ तमुपाध्याभासम् । ततामपरिच्छिन्नां केवलतां विदेहकैवल्यम् ॥ ३६ ॥ आपद्यपि कुटुम्बादिव्यापृतायामपि । सप्रतीकारं तत्प्रतीकारश्रवणाद्यनुष्ठानसहितं यथा स्यात्तथा । आत्मना स्वेनैव ॥ ३७ ॥ कार्योऽवश्यकर्तव्यः संकटेष्वर्थकृच्छ्रेषु संदिह्यत इति संदेहः संधिविग्रहादिस्तं जानाति निश्चिनोति ॥ ३८ ॥ वेदानां कर्मकाण्डानां वेदान्तानां च सिद्धान्तस्थितयो धर्मब्रह्मतत्त्वलक्षणास्तात्पर्यविश्रान्तिभूमयः स्थितेः पुरुषार्थप्रतिष्ठायाः कारणं प्रापिका इति यावत् । दीपेन चेति तुल्ययो[4]रेव समुच्चय इत्यौत्सर्गिकनियमात्सादृश्यं गम्यते ॥ ३९ ॥ प्रसिद्धलोचनमन्धकारे नष्टमिव बहुतेजःसु सूर्यादिषु जिह्मितं प्रतिहतं व्यवहितविप्रकृष्टग्रहणेष्वसमर्थं च, विचारलक्षणं लोचनं तु न तथेत्यर्थः ॥ ४० ॥ विवेको विचार आत्मेव प्रियः प्रधानो वा यस्य स पुरुषो दिव्यचक्षुर्जयति अभिभवत्यापदो विनाशयति प्राप्नोति वा पुरु-

---

१ विचारोऽस्य तरोः इति पाठः. २ गतान्तरम् इति पाठः.

३ तेजस्सु जिह्मितं इति टीकाकारसम्मतः पाठः. ४ तुल्ययोगे समुच्चयः इति पाठः.

परमात्ममयी मान्या महानन्दैकसाधिनी ।
क्षणमेकं परित्याज्या न विचारचमत्कृतिः ॥ ४२
विचारचारुपुरुषो महतामपि रोचते ।
परिपक्वचमत्कारं सहकारफलं यथा ॥ ४३
विचारकान्तमतयो नानेकेषु पुनःपुनः ।
लुठन्ति दुःखश्वभ्रेषु ज्ञाताध्वगतयो नराः ॥ ४४
नच रौति तथा रोगी नानर्थशतजर्जरः ।
अविचारविनष्टात्मा यथाऽज्ञः परिरोदिति ॥ ४५
वरं कर्दममेकत्वं मलकीटकता वरम् ।
वरमन्धगुहाहित्वं न नरस्याविचारिता ॥ ४६
सर्वानर्थनिजावासं सर्वसाधुतिरस्कृतम् ।
सर्वदौःस्थित्यसीमान्तमविचारं परित्यजेत् ॥ ४७
नित्यं विचारयुक्तेन भवितव्यं महात्मना ।
तथान्धकूपे पततां विचारो ह्यवलम्बनम् ॥ ४८
स्वयमेवात्मनात्मानमवष्टभ्य विचारतः ।
संसारमोहजलधेस्तारयेत्स्वमनोमृगम् ॥ ४९
कोऽहं कथमयं दोषः संसाराख्य उपागतः ।
न्यायेनेति परामर्शो विचार इति कथ्यते ॥ ५०
अन्धान्धमोहसुघनं चिरं दुःखाय केवलम् ।
कृतं शिलाया हृदयं दुर्मतेश्चाविचारिणः ॥ ५१
भावाभावग्रहोत्सर्गदृशामिह हि राघव ।
न विचाराहते तत्त्वं ज्ञायते साधु किंचन ॥ ५२
विचाराज्ज्ञायते तत्त्वं तत्त्वाद्विश्रान्तिरात्मनि ।
अतो मनसि शान्तत्वं सर्वदुःखपरिक्षयः ॥ ५३
सफलतां फलते भुवि कर्मणां
प्रकटतां किल गच्छति उत्तमाम् ।
स्फुटविचारदृशैव विचारिता
शमवते भवते च विरोचताम् ॥ ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे विचारनिरूपणं नाम चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः १५

श्रीवसिष्ठ उवाच ।
संतोषो हि परं श्रेयः संतोषः सुखमुच्यते ।
संतुष्टः परमभ्येति विश्राममरिसूदन ॥ १

षार्थम् ॥ ४१ ॥ विचारेष्वपि यः सारभूतस्तमाह—**परमात्मे**ति । 'स्त्रीमयो जाल्मः' इतिवदत्यासक्त्या तत्प्रायताद्योतनाय मयट् । क्षणं क्षणमपि । 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' इति श्रुतेः । 'सा हानिस्तन्महाच्छिद्रं सान्धता सा च मूकता । यत्क्षणं वा मुहूर्तं वा शिवमेकं न चिन्तयेत्' इति लैङ्गवचनाच्चेति भावः ॥ ४२ ॥ महतां विदिततत्त्वानां किं पुनर्विविदिषूणामिति द्योतनार्थमपिशब्दः । परिपक्वः परिपाकनिष्पन्नश्चमत्कारो माधुर्यातिशयो यस्मिन् । सहकारस्याम्रस्य फलम् ॥४३॥ विचारेणैव ज्ञाता अनुभवाध्वनि गतिर्यैः । समासोक्त्या लौकिकाध्वगवृत्तान्तोऽपि गम्यते ॥ ४४ ॥ विषशस्त्रघाताद्यनर्थशतैर्जर्जरः शिथिलाङ्गोऽपि तथा नच रौति यथा अविचारेण विनष्टो विनाशितप्राय आत्मा येन सोऽज्ञः परितो जन्मपरम्परासु रोदिति ॥ ४५ ॥ ४६ ॥ ४७ ॥ तथाहि प्रसिद्धम् । अन्धयतीत्यन्धस्तथाविधः कूपो रागादिः फलाभेदेनोच्यते ॥ ४८ ॥ अवष्टभ्य रागादिप्रवाहाकृष्टमपि बलात्स्थिरीकृत्य ॥ ४९ ॥ विचारस्वरूपमेव दर्शयति—**कोऽह**मिति । किं देहादिरेवाहमुत तद्विलक्षण इति त्वंपदार्थविचारः । संसारः कथं केन हेतुना अधिष्ठाने आगत इति तत्पदार्थविचारः । श्रुतिमुन्याचार्यसांप्रदायिकदर्शितेन न्यायेन ॥ ५० ॥ शिलाया दुर्मतेश्च हृदयं मन आन्तरावयवश्च । दुःखाय पीडायै । टङ्कच्छेदादिकष्टनिष्पाद्यत्वाद्दुष्टाय खाय च्छिद्रायैव च कृतं धात्रा । नान्यत्र तस्योपयोग इत्यर्थः । सादृश्यलाभः प्राग्वत् । यतस्तदन्धादचक्षुषोऽप्यन्धं मोहेन च सुघनमतिनिबिडम् । अन्धो ह्यदृष्ट्वा कूपे पतति मनस्तु दृष्ट्वापि मोहान्नरकेष्वपि पततीति । शिलाहृदयपक्षे अन्धादप्यन्धं जडत्वान्मोहादपि सुघनं कठोरत्वादित्यर्थः । अथवा यो दुर्मतिरविचारी च पुरुषस्तस्य हृदयं शिलायाः सकाशात् कृतमित्युत्प्रेक्षा । यतोऽन्धादन्धं मोहेन सुघनं च । अतस्तच्चिरं केवलं दुःखायैवेत्यर्थः ॥ ५१ ॥ भावः सत्यस्तस्य ग्रह उपादानं अभावोऽसत्यस्तस्योत्सर्गस्त्यागस्तौ पश्यतां प्रेक्षावतामिह व्यवहारभूमौ साधु सम्यक् तत्त्वं विचारं विना न ज्ञायते ॥ ५२ ॥ तत्त्वं वस्तुनो नित्यत्वं तत्त्वज्ञानाद्विश्रान्तिर्मनोनैश्चल्यम् । अतो विश्रान्तेः शान्तत्वमेव सर्वदुःखपरिक्षयः ॥५३॥ विस्तरोक्तं संक्षिप्योपसंहरति—**सफलता**मिति । यतः सर्वोपि जनः स्फुटविचारदृशैव लौकिकवैदिककर्मणां सफलतां फलते निष्पादयति आत्मतत्त्वस्य उत्तमां वक्ष्यमाणसप्तमभूमिकातामुत्कृष्यमाणां प्रकटतां च गच्छति प्राप्नोति । अतः शमादि[2]-साधनसंपत्तिमते भवते च तादृशी विचारिता रोचताम् । गच्छति उत्तमामित्यसंधिर्वाक्ये संहिताया अनित्यत्वात् ॥ ५४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे विचारनिरूपणं नाम चतुर्दशः सर्गः ॥ १४ ॥

वैराग्यकल्पवृक्षस्य च्छायेव सुखशीतलः ।
तृतीयो द्वारपालोऽत्र संतोष उपवर्ण्यते ॥ १ ॥

क्रमप्राप्तं तृतीयद्वारपालं संतोषं वर्णयति—**संतोष** इत्या-

१ सीमन्ते इति पाठः. २ समाधिसाधन इति पाठः.

संतोषैश्वर्यसुखिनां चिरविश्रान्तचेतसाम् ।
साम्राज्यमपि शान्तानां जरत्तृणलवायते ॥ २
संतोषशालिनी बुद्धी राम संसारवृत्तिषु ।
विषमास्वप्यनुद्विग्ना न कदाचन हीयते ॥ ३
संतोषामृतपानेन ये शान्तास्तृप्तिमागताः ।
भोगश्रीरतुला तेषामेषा प्रतिविषायते ॥ ४
न तथा सुखयन्त्येताः पीयूषरसवीचयः ।
यथातिमधुरास्वादः संतोषो दोषनाशनः ॥ ५
अप्राप्तवाञ्छामुत्सृज्य संप्राप्ते समतां गतः ।
अदृष्टखेदाखेदो यः स संतुष्ट इहोच्यते ॥ ६
आत्मनात्मनि संतोषं यावद्याति न मानसम् ।
उद्भवन्त्यापदस्तावल्लता इव मनोबिलात् ॥ ७
संतोषशीतलं चेतः शुद्धविज्ञानदृष्टिभिः ।
भृशं विकासमायाति सूर्यांशुभिरिवाम्बुजम् ॥ ८
आशावैवश्यविवशे चित्ते संतोषवर्जिते ।
म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति ॥ ९
अज्ञानघनयामिन्या संकोचं न नराम्बुजम् ।
यात्यसावुदितो यस्य नित्यं संतोषभास्करः ॥ १०
अकिंचनोऽप्यसौ जन्तुः साम्राज्यसुखमश्नुते ।
आधिव्याधिविनिर्मुक्तं संतुष्टं यस्य मानसम् ॥ ११
नाभिवाञ्छत्यसंप्राप्तं प्राप्तं भुङ्क्ते यथाक्रमम् ।
यः सुसौम्यसमाचारः संतुष्ट इति कथ्यते ॥ १२
संतुष्टिपरतृप्तस्य महतः पूर्णचेतसः ।
क्षीराब्धेरिव शुद्धस्य मुखे लक्ष्मीर्विराजते ॥ १३
पूर्णतामलमाश्रित्य स्वात्मन्येवात्मना स्वयम् ।
पौरुषेण प्रयत्नेन तृष्णां सर्वत्र वर्जयेत् ॥ १४
संतोषामृतपूर्णस्य शान्तशीतलया धिया ।
स्वयं स्थैर्यं मनो याति शीतांशोरिव शाश्वतम् ॥ १५
संतोषपुष्टमनसं भृत्या इव महर्द्धयः ।
राजानमुपतिष्ठन्ति किंकरत्वमुपागताः ॥ १६
आत्मनैवात्मनि स्वस्थे संतुष्टे पुरुषे स्थिते ।
प्रशाम्यन्त्याधयः सर्वे प्रावृषीवाशु पांशवः ॥ १७
नित्यं शीतलया राम कलङ्कपरिभिन्नया ।
पुरुषः शुद्धया वृत्त्या भाति पूर्णतयेन्दुवत् ॥ १८
समतासुन्दरं वक्त्रं पुरुषस्यावलोकयन् ।
तोषमेति यथा लोको न तथा धनसंचयैः ॥ १९
समतया मतया गुणशालिनां
पुरुषराडिह यः समलंकृतः ।
तममलं प्रणमन्ति नभश्चरा
अपि महामुनयो रघुनन्दन ॥ २०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे संतोषनिरूपणं नाम पञ्चदशः सर्गः ॥ १५ ॥

---

दिना । वक्ष्यमाणलक्षणः सन्तोष एव परं श्रेयो मोक्षः सुखमितरदपि । आयुर्घृतमितिवत्साधने फलभेदारोपेण स्तुतिः । विश्रममात्यन्तिकदुःखविक्षेपनिवृत्तिम् ॥ १ ॥ संतोषलक्षणेनैश्वर्येण प्रभावेन सुखिनाम् । चिरं विश्रान्तमाश्वस्तं चेतो येषाम् । जरतो जीर्णस्य तृणस्य लवो लेशः स इवाचरति । तुच्छीभवतीत्यर्थः ॥ २ ॥ विषमासु दारिद्र्यवियोगादिवैषम्यवतीष्वपि संसारस्थितिषु दैवात्प्रसक्तासु संतोषशालिनी बुद्धिर्न हीयते । सुखेन न वियुज्यत इत्यर्थः ॥ ३ ॥ प्रतिकूलविषवदाचरति । तथा भातीत्यर्थः ॥ ४ ॥ अतिमधुर आनन्दप्रचुर आस्वादोऽनुभवो यस्य । आशादैन्यादिदोषनाशनः ॥ ५ ॥ संतोषमाश्रयलक्षणेन लक्षयति—**अप्राप्तेति** । प्राप्तेऽपि विषये मिथ्यात्वादप्राप्तसमतां तत्प्राप्तिनिमित्तहर्षादिराहित्येन पूर्वावस्थासमतां वा गतः । तत्र हेतुमाह—**अदृष्टेति** ॥ ६ ॥ आत्मना स्वेनैव न निमित्तान्तरेण । आत्मन्येव न विषयान्तरे ॥ ७ ॥ अम्बुजपक्षे सम्यक् तोषस्तृषानिवृत्तिर्येन तेन जलेन शीतलमाप्यायितम् ॥ ८ ॥ वैवश्यं पारवश्यं तेन विवशे व्याकुले । म्लाने आदर्शे वक्त्रमिव न प्रतिबिम्बति व्यक्तीभवति । उपदिष्टमपीत्यर्थः ॥ ९ ॥ यस्य नराम्बुजस्य विकासायासौ प्रागुक्तः संतोषभास्कर उदितस्तन्नराम्बुजमज्ञानलक्षणया गाढान्धकाररात्र्या संकोचं न याति ॥ १० ॥ ११ ॥ प्रागुक्तं लक्षणमनूद्य लक्षणान्तरमप्याह—**नेति** । यथाक्रमं प्राप्तं सुखं दुःखं च । सौम्यो जगदानन्दनः सम्यगाचार आचरणं यस्य ॥ १२ ॥ मुखकान्तिविशेषोऽपि तल्लक्षणमित्याह—**संतुष्टीति** ॥ १३ ॥ स्वात्मन्यात्मनैव पूर्णतां निरतिशयानन्दरूपतामाश्रित्यानुभवेनावलम्ब्य ॥ १४ ॥ शीतांशोरिव संतोषलक्षणेनामृतेन पूर्णस्य पुंसः क्रोधसंतापहेत्वभावाच्छान्ता शीतला च या धीस्तया निमित्तभूतया मनः शाश्वतं स्थैर्यं याति ॥ १५ ॥ विनैव विषयार्जनं संतोषमात्रेण कथं देहयात्रासिद्धिस्तत्राह—**संतोषेति** । भृत्या राजानमिव महत्य ऋद्धयः संपद उपतिष्ठन्ति । तथाचाहुः—'आशाया दासा ये दासास्ते सर्वलोकस्य । आशा दासी येषां तेषां दासायते लोकः ॥' इति ॥ १६ ॥ नन्वस्त्वेवं देहयात्रा, तथापि देवानामिव मानसं दुःखं दुश्चिकित्सं तत्राह—**आत्मनैवेति** । पांशवो धूलयः । 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः' इति ॥ १७ ॥ तथापि कारणकलङ्कावरणेन दुःखबीजेन यद्दुःखं तत्स्यादेवेति तत्राह—**नित्यमिति** । यथा अमायां क्षीणेन्दुः कलङ्काद्भेदेनाविभाव्यमानत्वात्कलङ्कमग्न इव भवति सूर्यसन्निधानाच्च न शीतलया वृत्त्या वर्तते स एव पौर्णमास्यां कलापूर्णतया कलङ्कस्यापि भासकत्वात्तद्विविक्तया शुद्धया वृत्त्या भाति तद्वत्पुरुषोऽप्यसंतोषे मोहकलङ्कमग्न इव तापत्रयेण दह्यमान इव संतोषामृतकलापूर्णस्त्वज्ञानकलङ्कसाक्षित्वात्तद-

# षोडशः सर्गः १६

श्रीवसिष्ठ उवाच ।

विशेषेण महाबुद्धे संसारोत्तरणे नृणाम् ।
सर्वत्रोपकरोतीह साधुः साधुसमागमः ॥ १
साधुसङ्गतरोर्जातं विवेककुसुमं सितम् ।
रक्षन्ति ये महात्मानो भाजनं ते फलश्रियः ॥ २
शून्यमाकीर्णतामेति मृतिरप्युत्सवायते ।
आपत्संपदिवाभाति विद्वज्जनसमागमे ॥ ३
हिममापत्सरोजिन्या मोहनीहारमारुतः ।
जयत्येको जगत्यस्मिन्साधुः साधुसमागमः ॥ ४
परं विवर्धनं बुद्धेरज्ञानतरुशातनम् ।
समुत्सारणमाधीनां विद्धि साधुसमागमम् ॥ ५
विवेकः परमो दीपो जायते साधुसंगमात् ।
मनोहरोज्ज्वलो नूनमासेकादिव गुच्छकः ॥ ६
निरपायां निराबाधां निर्वृतिं नित्यपीवरीम् ।
अनुत्तमां प्रयच्छन्ति साधुसङ्गविभूतयः ॥ ७
अपि कष्टतरां प्राप्तैर्दशां विवशतां गतैः ।
मनागपि न संत्याज्या मानवैः साधुसंगतिः ॥ ८
साधुसंगतयो लोके सन्मार्गस्य च दीपिकाः ।
हार्दान्धकारहारिण्यो भासो ज्ञानविवस्वतः ॥ ९
यः स्नातः शीतसितया साधुसंगतिगङ्गया ।
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥ १०
नीरागाश्छिन्नसंदेहा गलितग्रन्थयोऽनघ ।
साधवो यदि विद्यन्ते किं तपस्तीर्थसंग्रहैः ॥ ११
विश्रान्तमनसो धन्याः प्रयत्नेन परेण हि ।
दरिद्रेणेव मणयः प्रेक्षणीया हि साधवः ॥ १२
सत्समागमसौन्दर्यशालिनी धीमतां मतिः ।
कमलेवाप्सरोवृन्दे सर्वदैव विराजते ॥ १३
तेनामलविचारस्य पदस्याग्रावचूलिता ।
प्रथिता येन धन्येन न त्यक्ता साधुसंगतिः ॥ १४
विच्छिन्नग्रन्थयस्तज्ज्ञाः साधवः सर्वसंमताः ।
सर्वोपायेन संसेव्यास्ते ह्युपाया भवाम्बुधौ ॥ १५
त एते नरकाग्नीनां संशुष्केन्धनतां गताः ।
यैर्दृष्टा हेलया सन्तो नरकानलवारिदाः ॥ १६
दारिद्र्यं मरणं दुःखमित्यादिविषयो भ्रमः ।
संप्रशाम्यत्यशेषेण साधुसंगमभेषजैः ॥ १७
संतोषः साधुसङ्गश्च विचारोऽथ शमस्तथा ।
एत एव भवाम्भोधावुपायास्तरणे नृणाम् ॥ १८
संतोषः परमो लाभः सत्सङ्गः परमा गतिः ।
विचारः परमं ज्ञानं शमो हि परमं सुखम् ॥ १९
चत्वार एते विमला उपाया भवभेदने ।
यैरभ्यस्तास्त उत्तीर्णा मोहवारिभवार्णवात् ॥ २०
एकस्मिन्नेव वै तेषामभ्यस्ते विमलोदये ।

---

संस्पृष्टया स्वात्मसुखशीतलया वृत्त्या भातीत्यर्थः ॥ १८ ॥ समता सर्वत्र संतोषादवैषम्यबुद्धिः ॥ १९ ॥ तस्य सर्वोत्कृष्टतामाह—**समतये**ति । नभश्चरा देवा महान्तो मुनयोऽपि प्रणमन्ति नमस्यन्ति ॥ २० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे सन्तोषनिरूपणं नाम पञ्चदशः सर्गः ॥५॥

चतुर्थो द्वारपालोऽत्र वर्ण्यते साधुसंगमः ।
चतुर्ष्वेकैकसेवा[3]पि पुरुषार्थे[3] फलत्यपि ॥ १ ॥

चतुर्थमपि द्वारपालं साधुसमागममुपवर्णयंश्चतुर्ष्वेकैकविषये पौरुषस्य पुरुषार्थपर्यवसानं दर्शयिष्यन् वसिष्ठ उवाच—**विशेषेणे**ति । सर्वत्र सर्वावस्थासु ॥ १ ॥ फलश्रियो मोक्षफलसंपदो भाजनं भवन्तीति शेषः ॥२॥ शून्यं स्वजनधनादिशून्यम् । दुःखस्थानमाकीर्णतां तद्व्याप्तताम् ॥ ३ ॥ आपल्लक्षणायाः सरोजिन्याः कमलिन्या हिमं प्रालेयम् । साधुः प्रशस्तः ॥४॥ बुद्धेर्विवेकज्ञानस्य विशेषेण वर्धनम् । शातनं विशरणकरणम् ॥ ५ ॥ मनोहरश्चासावुज्ज्वलो निर्मलश्च । आरामासेकाद्गुच्छकः पुष्पफलगुच्छः ॥ ६ ॥ नित्यपीवरीं नित्यं वर्धमानां, नित्यामपरिच्छिन्नामिति वा । निर्वृतिं सुखम् ॥७॥ मनाक् ईषदपि । क्षणमपीति यावत् ॥ ८ ॥ सन्मार्गस्य सदाचारस्य दीपिका यावदज्ञाननिशानुवृत्तिस्तावत् । तदुत्तरकालं तु ज्ञानरूपस्य सूर्यस्य भासः प्रकाशाः ॥९॥ शीतसितयेति तापमालिन्यक्षयलाभाय विशेषणे । अध्वरैर्यज्ञैः ॥ १० ॥ ग्रन्थिः अन्तःकरणतद्धर्मतादात्म्यसंसर्गाध्यासलक्षणश्चिदचिद्ग्रन्थिः ॥ ११ ॥ अलभ्यलाभतया मणय इव ॥ १२ ॥ कमला लक्ष्मीस्तत्पक्षे सता विष्णुना समागमः सर्वोत्कृष्टं सौन्दर्यं च । नह्येते तत्सोदर्याणामप्यप्सरसां स्तः ॥ १३ ॥ पदस्य ब्रह्मात्मवस्तुनश्चूडामणिस्थानीयस्य बहूनां तत्प्राप्त्यै यतमानानां मध्ये अग्रावचूलिता प्रथमं तत्प्राप्त्या शिरोभूषणीकरणम् । प्रथिता प्रख्यापिता । चूडायामवतंसनमवचूडः । मयूरव्यंसकादित्वात्समासस्तत्करोतीति णिचि तान्छीलिकणिन्यन्ताद्भावे तल् । डलयोरभेदाल्लत्वम् ॥ १४ ॥ सर्वोपायेन दानमानसेवनादिसर्वप्रयत्नेन । उपायास्तरणोपायाः ॥ १५ ॥ यैः सन्तो हेलयापि न दृष्टास्ते नरकाग्नीनामिन्धनानि पोषका भवन्ति । हेलया अनादरेण । नरकलक्षणस्यानलस्य वारिदा मेघा इव प्रशमनहेतवः ॥ १६ ॥ भ्रमः सन्निपातः । अशेषेण मूलोच्छेदेन ॥ १७ ॥ सर्वान्द्वारपालान्युगपत्प्रशिशंसिषुरनुवदति—**संतोष** इति ॥ १८ ॥ सर्वत्र फलाभेदारोपः ॥१९॥ मोह एव वारि यस्मिंस्तथाविधाद्भवार्णवात् ॥ २० ॥ सर्वाभ्यासासामर्थ्ये-

---

१ अज्ञानज्वरनाशनम् इति पाठः.
२ कैकमेवापि पुरुषार्थफलेत्यपि इति पाठः.
३ पुरुषार्थफलेत्यपि इति पाठः.
४ महत्सौदर्याणां इति पाठः.

चत्वारोऽपि किलाभ्यस्ता भवन्ति सुधियां वर ॥ २१
एकोऽप्येकोऽपि सर्वेषामेषां प्रसवभूरिह ।
सर्वसंसिद्धये तस्माद्यत्नेनैकं समाश्रयेत् ॥ २२
सत्समागमसंतोषविचाराः सुविचारितम् ।
प्रवर्तन्ते शमस्वच्छे वाहनानीव सागरे ॥ २३
विचारसंतोषशमसत्समागमशालिनि ।
प्रवर्तन्ते श्रियो जन्तौ कल्पवृक्षाश्रिते यथा ॥ २४
विचारशमसत्सङ्गसंतोषवति मानवे ।
प्रवर्तन्ते प्रपूर्णेन्दौ सौन्दर्याद्या गुणा इव ॥ २५
सत्सङ्गसंतोषशमविचारवति सन्मतौ ।
प्रवर्तन्ते मन्त्रिवरे राजनीव जयश्रियः ॥ २६
तस्मादेकतमं नित्यमेतेषां रघुनन्दन ।
पौरुषेण मनो जित्वा यत्नेनाभ्याहरेद्गुणम् ॥ २७
परं पौरुषमाश्रित्य जित्वा चित्तमतङ्गजम् ।
यावदेको गुणो नान्तस्तावन्नास्त्युत्तमा गतिः ॥ २८
पौरुषेण प्रयत्नेन दन्तैर्दन्तान्विचूर्णयेत् ।
यावन्नाभिनिविष्टं ते मनो राम गुणार्जने ॥ २९
देवो भवाथ यक्षो वा पुरुषः पादपोऽथ वा ।
तावत्तव महाबाहो नोपायोऽस्तीह कश्चन ॥ ३०
एकस्मिन्नेव फलदे गुणे बलमुपागते ।
क्षीयन्ते सर्व एवाशु दोषा विवशचेतसः ॥ ३१
गुणे विवृद्धे वर्धन्ते गुणा दोषजयप्रदाः ।
दोषे विवृद्धे वर्धन्ते दोषा गुणविनाशनाः ॥ ३२
मनोमोहवने ह्यस्मिन्वेगिनी वासनासरित् ।
शुभाशुभबृहत्कूला नित्यं वहति जन्तुषु ॥ ३३
सा हि स्वेन प्रयत्नेन यस्मिन्नेव निपात्यते ।
कूले तेनैव वहति यथेच्छसि तथा कुरु ॥ ३४

पुरुषयत्नजवेन मनोवने
शुभतटानुगतां क्रमशः कुरु ।
वरमते निजभावमहानदी-
मिह तेन मनागपि नोह्यसे ॥ ३५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे सदाचारनिरूपणं नाम षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः १७

श्रीवसिष्ठ उवाच ।
एवमन्तर्विवेको यः स महानिह राघव ।
योग्यो ज्ञानगिरः श्रोतुं राजेव नयभारतीम् ॥ १
अवदातोऽवदातस्य विचारस्य महाशयः ।
जडसङ्गोज्झितो योग्यः शरदिन्दोर्यथा नभः ॥ २
त्वमेतया खण्डितया गुणलक्ष्म्या समाश्रितः ।
मनोमोहहरं वाक्यं वक्ष्यमाणमिदं शृणु ॥ ३
पुण्यकल्पद्रुमो यस्य फलभारानतः स्थितः ।

---

ऽप्याह—**एकस्मिन्निति** ॥ २१ ॥ प्रसवभूरुत्पत्तिस्थानम् ॥ २२ ॥ शमादूर्मिविक्षेपराहित्येन स्वच्छे । रागादिग्राहैरुपघातो यथा न स्यात्तथा चिरं सुविचारितमतिसावधानमिति क्रियाविशेषणम् । वाहनानि पण्यसंभारवाहका महापोताः । तत्र हि पोतवणिजां सावधानता प्रसिद्धा ॥ २३ ॥ श्रियो ज्ञानसंपदो लौकिक्यश्च ॥ २४ ॥ प्रपूर्णेन्दौ सौन्दर्याद्या इव मानवे प्रसादादयो गुणाः प्रवर्तन्त इत्यन्वयः ॥ २५ ॥ मन्त्रिणो वरयते सदा विचाराय स्वीकरोति, मन्त्रितार्थान्वा वृणोति संवृणोति गोपयतीति मन्त्रिवरस्तस्मिन् राजनि ॥ २६ ॥ एकतमं वा गुणम् ॥ २७ ॥ अन्तर्हृदि यावदेको गुणो न प्राप्त इति शेषः ॥ २८ ॥ विचूर्णयेद्विघट्टयेदित्युद्योगातिशयोक्तिः ॥ २९ ॥ ननु सात्त्विकदेवादिजन्मने यतितव्यं तत्र विनैव गुणार्जनश्रमं ज्ञानं सेत्स्यति तत्राह—**देव** इति । यावद्गुणान्नोपार्जयसि तावत् ॥३०॥ बलमुपागते । अभ्यासेन दृढीकृत इति यावत् । दोषविवशस्य[3] गुणाः, गुणविवशस्य वा चेतसो दोषाः क्षीयन्ते ॥ ३१ ॥ परस्परविरोधिनोरेकाभिवृद्धौ तत्सजातीयकुलाभिवृद्धिरितरक्षयः प्रसिद्ध एवेत्याह—**गुण** इति ॥ ३२ ॥ कूलशब्देन द्वौ प्रवाहौ लक्ष्येते ॥ ३३ ॥ निपात्यते एकतरनिरोधेनेत्यर्थः ॥ ३४ ॥ शुभतटानुगतां सद्वासनाप्रवाहानुगताम् । तेन तथाकरणेन । नोह्यसे अशुभप्रवाहेण नापनीतो भविष्यसीत्यर्थः ॥ ३५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे सदाचारनिरूपणं नाम षोडशः सर्गः ॥ १६ ॥

ग्रन्थसंख्याविभागोऽत्र भिन्नः प्रकरणक्रमैः ।
विभक्तैर्वर्णनीयार्थैर्गुणैश्चाथोपवर्ण्यते ॥ १ ॥

एवं साधनान्युपवर्ण्य तत्संपन्नस्य प्रस्तुतग्रन्थश्रवणादिना पुरुषार्थसिद्धिं दर्शयन् ग्रन्थप्रवृत्तिक्रमं प्रकरणादिविभागेन वर्णयितुमुपक्रमते—**एवमि**त्यादिना । एवमुक्तप्रकारोऽन्तर्मनस्यागतो विवेको विचारादिगुणसंपद्यस्य । नयभारतीं नीतिशास्त्रवाणीम् ॥ १ ॥ अवदातो निर्मलः । अवदातस्य निर्दोषप्रकाशकस्य । जडानां मूर्खाणां मेघजलानां च सङ्गेनोज्झित उत्सृष्टः तद्रहित इति यावत् ॥ २ ॥ रामस्योक्तगुणसंपदभावशङ्कां

---

१ युक्तैनैकं इति पाठः. २ मरुद्धतेन इति पाठः.
३ एतत्पुरोवर्ति 'गुणाः' इति पदं क्वचिन्न पठ्यते.

मुक्तये जायते जन्तोस्तस्येदं श्रोतुमुद्यमः ॥ ४
पावनानामुदाराणां परबोधैकदायिनाम् ।
वचसां भाजनं भूत्यै भव्यो भवति नाधमः ॥ ५
मोक्षोपायाभिधानेयं संहिता सारसंमिता ।
त्रिंशद्द्वे च सहस्राणि ज्ञाता निर्वाणदायिनी ॥ ६
दीपे यथा विनिद्रस्य ज्वलिते संप्रवर्तते ।
आलोकोऽनिच्छतोऽप्येवं निर्वाणमनया भवेत् ॥ ७
स्वयं ज्ञाता श्रुता वापि भ्रान्तिशान्त्यैकसौख्यदा ।
आप्रेक्ष्य वर्णिता सद्यो यथा स्वर्गतरङ्गिणी ॥ ८
यथा रज्ज्वामहिभ्रान्तिर्विनश्यत्यवलोकनात् ।
तथैतत्प्रेक्षणाच्छान्तिमेति संसारदुःखिता ॥ ९
युक्तियुक्तार्थवाक्यानि कल्पितानि पृथक्पृथक् ।
दृष्टान्तसारसूक्तानि चास्यां प्रकरणानि षट् ॥ १०
वैराग्याख्यं प्रकरणं प्रथमं परिकीर्तितम् ।
विरागो वर्धते येन सेकेनेव मरौ तरुः ॥ ११
[ [1]अनुबन्धेन सहितं दिष्टतत्त्वनिरूपणम् । ]
सार्धं सहस्रं ग्रन्थस्य यस्मिन्हृदि विचारिते ।
प्रकाशाच्छुद्धतोदेति मणाविव सुमार्जिते ॥ १२
मुमुक्षुव्यवहाराख्यं ततः प्रकरणं कृतम् ।
सहस्रमात्रं ग्रन्थस्य युक्तिग्रन्थेन सुन्दरम् ॥ १३

स्वभावो हि मुमुक्षूणां नराणां यत्र वर्ण्यते ।
अथोत्पत्तिप्रकरणं दृष्टान्ताख्यायिकामयम् ॥ १४
सप्तग्रन्थसहस्राणि विज्ञानप्रतिपादकम् ।
जागती द्रष्टृदृश्यश्रीरहंत्वमितिरूपिणी ॥ १५
अनुत्पन्नैवोत्थितेव यत्रेति परिवर्ण्यते ।
यस्मिन्श्रुते जगदिदं श्रोतान्तर्बुध्यतेऽखिलम् ॥ १६
सास्मद्युष्मत्सविस्तारं सलोकाकाशपर्वतम् ।
पिण्डग्रहविनिर्मुक्तं निर्भित्तिकमपर्वतम् ॥ १७
पृथ्व्यादिभूतरहितं संकल्प इव पत्तनम् ।
स्वप्नोपलम्भभावाभं मनोराज्यवदाततम् ॥ १८
गन्धर्वनगरप्रख्यमर्थशून्योपलम्भनात् ।
द्विचन्द्रविभ्रमाभासं मृगतृष्णाम्बुवर्तनम् ॥ १९
नौयानलोलशैलाभं सत्यलाभविवर्जितम् ।
चित्तभ्रमपिशाचाभं निर्बीजमपि भासुरम् ॥ २०
कथार्थप्रतिभासाभं व्योममुक्तावलीनिभम् ।
कटकत्वं यथा हेम्नि तरङ्गत्वं यथाम्भसि ॥ २१
यथा नभसि नीलत्वमसदेवोत्थितं सदा ।
अभित्तिरङ्गरहितमुपलब्धिमनोहरम् ॥ २२
स्वप्ने वा व्योम्नि वा चित्रमकर्तृ चिरभासुरम् ।
अवह्निरेव वह्नित्वं धत्ते चित्रानलो यथा ॥ २३

---

निराचष्टे—त्वमिति ॥ ३ ॥ ४ ॥ उक्तगुणासंपन्नस्यानधिकारमाह—**पावनाना**मिति । उक्तगुणसंपन्नो भवतीति भव्यः । 'भव्यगेय—' इत्यादिना यत् ॥ ५ ॥ सारभूतैरर्थैः संमिता पूर्णा, सारभूतोपनिषद्भिस्तुल्येति वा ॥ ६ ॥ विनिद्रस्य पुरो दीपे ज्वलिते सत्यनिच्छतोऽपि तस्य यथा आलोकः पदार्थदर्शनं सम्यक् प्रवर्तते तथा अनया श्रुतया निर्वात्यनेनेति निर्वाणं मोक्षसाधनीभूतं ज्ञानं भवेत् ॥ ७ ॥ स्वयमेव आप्रेक्ष्य सम्यक् परिशील्य ज्ञाता अन्येन वर्णिता स्वयं श्रुता वा । गङ्गापक्षे भ्रान्तिशान्त्या भ्रमणहेतुभूतपापतापोपशान्त्या ॥ ८ ॥ अवलोकनाद्रज्जुतत्त्वस्येति शेषः ॥ ९ ॥ युक्तिभिर्व्युत्पादकतर्कैर्युक्ता उपपन्ना अर्था येषां तथाविधानि वाक्यानि येषु तथाविधानि, दृष्टान्ताः साराः श्रेष्ठा येषु तथाविधानि सूक्तान्याख्यायिका[3] येषु तादृशानि षट्प्रकरणानि । अस्यां संहितायाम् ॥ १० ॥ तान्येव नामभिः क्रमाद्विभजते—**वैराग्याख्य**मित्यादिना । मरौ निर्जलप्रदेशेऽपि ॥ ११ ॥ प्रकाशाद्विषयदोषपरिज्ञानात् । शुद्धता मालिन्यनिवृत्तिः ॥ १२ ॥ ततस्तदुत्तरम् । ग्रन्थस्य श्लोकानां संख्येति शेषः ॥ १३ ॥ मुमुक्षूणां स्वः स्वीयो भावोऽधिकारनिर्वाहकसाधनकलापः । दृष्टान्तैराख्यायिकाभिश्च प्रचुरम् ॥ १४ ॥ अहमिति प्रत्यगात्मरूपम् । त्वंग्रहणमिदंकारोपलक्षणम् । अहमिदमितिरूपिणी द्रष्टृदृश्यभेदवैचित्र्यसंपत् । यत्रोत्पत्तिप्रकरणे । वस्तुतोऽनुत्पन्नैवोत्थितेवोत्पन्नैव भ्रान्त्या प्रतीयत इति वर्ण्यते इत्युत्तरेणान्वयः ॥ १५ ॥ यस्मिन्प्रकरणे श्रुते सति उत्तरोत्तरज्ञानभूमिकाकलनेन श्रोता इदं सास्मद्युष्मदस्मद्युष्मत्सहितं प्रतीयमानभिन्नार्थयोस्त्वंपदाहंपदयोरैकार्थ्यप्रतिपादकमनन्तब्रह्माण्डविस्तारसहितं प्रतिब्रह्माण्डं च लोकाकाशपर्वतादिसहितमखिलं जगत्सचेतनमचेतनमित्यन्तं सार्धैकादशश्लोकैर्वक्ष्यमाणप्रकारमन्तः स्वात्मन्येव बुध्यते इत्यादिकुलकान्वयः ॥ १६ ॥ पिण्डग्रहो मूर्तद्रव्यतापरिग्रहस्तेन विनिर्मुक्तम् । भेदो भित्तिस्तद्रहितमतएवाविद्यमानपर्वतादिभावम् ॥ १७ ॥ पत्तनं नगरम् । स्वप्नोपलम्भे ये प्रतीयमाना भावाः पदार्थास्तदाभम् ॥ १८ ॥ अर्थशून्योपलम्भनादिति हेतुर्यथायोगं पूर्वोत्तरदृष्टान्तेषु सर्वत्र संबध्यते । मृगतृष्णाम्बुन इव वर्तनं स्थितिः परिवर्तनं वा यस्य ॥ १९ ॥ नौकायाने शैलानां चलनभ्रमः प्रसिद्धः । सत्येन लाभेन पुरुषार्थेन विवर्जितम् । चित्तभ्रमकल्पितपिशाचः । जगद्बीजमायाया मिथ्यात्वादात्मनश्च निर्विकारत्वान्निर्बीजमपि भासुरं प्रकाशमानम् ॥ २० ॥ कथाश्रवणासक्तौ संस्कारेण प्रत्यक्षवत्कथार्थप्रतिभासः प्रसिद्धः । व्योम्नि कल्पिता मुक्तावल्यः । कटकत्वतरङ्गत्वे यथा हेमजलस्वरूपव्यतिरेकेण दुर्निरूपे इति मिथ्याभूते ॥ २१ ॥ अभित्तिरङ्गैर्लेख्यवर्णैश्च रहितमकर्तृ चित्रं स्वप्ने व्योम्नि वा भासते तद्वदित्युत्तरेणान्वयः । उपलब्धिमनोहरं पूर्वानुभवस्मृतिमात्रमनोहरमित्यर्थः ॥ २२ ॥ चित्रलिखितोऽनलो वह्निः ॥ २३ ॥

---

१ इदमर्धमधिकं क्वचित्. २ वर्णितः इति पाठः. ३ आख्यानानि इति पाठः.

दधात्येवं जगच्छब्दरूपार्थमसदात्मकम् ।
तरङ्गोत्पलमालाभं दृष्टनृत्यमिवोत्थितम् ॥ २४
चक्रचीत्कारपूर्णस्य जलराशिमिवोद्यतम् ।
शीर्णपत्रं भ्रष्टनष्टं ग्रीष्मे वनमिवारसम् ॥ २५
मरणव्यग्रचित्ताभं शिलागृहगुहास्पदम् ।
अन्धकारगुहैकैकनृत्तमुन्मत्तचेष्टितम् ॥ २६
प्रशान्ताज्ञाननीहारं विज्ञानशरदम्बरम् ।
समुत्कीर्णमिव स्तम्भे चित्रं भित्ताविवोदितम् ॥ २७
पङ्कादिवाभिरचितं सचेतनमचेतनम् ।
ततः स्थितिप्रकरणं चतुर्थं परिकल्पितम् ॥ २८
त्रीणि ग्रन्थसहस्राणि व्याख्यानाख्यायिकामयम् ।
इत्थं जगदहंभावरूपस्थितिमुपागतम् ॥ २९
द्रष्टृदृश्यक्रमं प्रौढमित्यत्र परिकीर्तितम् ।
दशदिङ्मण्डलाभोगभासुरोऽयं जगद्भ्रमः ॥ ३०
इत्थमभ्यागतो वृद्धिमिति तत्रोच्यते चिरम् ।
उपशान्तिप्रकरणं ततः पञ्चसहस्रकम् ॥ ३१
पञ्चमं पावनं प्रोक्तं युक्तिसंततिसुन्दरम् ।
इदं जगदहं त्वं च स इति भ्रान्तिरुत्थिता ॥ ३२
इत्थं संशाम्यतीत्यस्मिन्कथ्यते श्लोकसंग्रहैः ।
उपशान्तिप्रकरणे श्रुते शाम्यति संसृतिः ॥ ३३
प्रभ्रष्टचित्रसेनेव किंचिल्लभ्योपलम्भना ।
शतांशशिष्टा भवति संशान्तभ्रान्तरूपिणी ॥ ३४
अन्यसंकल्पचित्तस्था नगरश्रीरिवासती ।
अलभ्यवस्तुपार्श्वस्थस्वप्नयुद्धचिरारवा ॥ ३५
शान्तसंकल्पमत्ताभ्रभीषणाशनिशब्दवत् ।
विस्मृतस्वप्नसंकल्पनिर्माणनगरोपमा ॥ ३६
भविष्यन्नगरोद्यानप्रसूवन्ध्यामलाङ्गिका ।
तस्या जिह्वोच्यमानोग्रकथार्थानुभवोपमा ॥ ३७
अनुलिखितचित्रस्य चित्रव्यासेव भित्तिभूः ।
परिविस्मर्यमाणार्थकल्पनानगरीनिभा ॥ ३८
सर्वर्तुमदनुत्पन्नवनस्पन्दास्फुटाकृतिः ।
भाविपुष्पवनाकारवसन्तरसरञ्जना ॥ ३९
अन्तर्लीनतरङ्गौघसौम्यवारिसरित्समा ।
निर्वाणाख्यं प्रकरणं ततः षष्ठमुदाहृतम् ॥ ४०
शिष्टो ग्रन्थः परीमाणं तस्य ज्ञानमहार्थदः ।
बुद्धे तस्मिन्भवेच्छ्रेयो निर्वाणं शान्तकल्पनम् ॥ ४१

असदात्मकं सत् जगच्छब्दस्य गच्छति विचारे न तिष्ठतीति जगदित्यनुरूपार्थं धत्ते संपादयति । तरङ्गेषु उत्पलमाला भ्रान्तिकल्पिता । पूर्वदृष्टं नृत्यं स्मर्यमाणं मनस्युत्थितमिव ॥ २४ ॥ चक्रश्चक्रवाकः । मुखसंबन्धिवायुयुक्तस्तुषारसमूहश्चीत्कारः । यथा उत्तानशायिनः पुरुषस्य कवेर्वा चक्रवाकचीत्कारेण पूर्णस्य नभसो दर्शने उद्यतं उत्प्रेक्षितं जलराशिं सर इव । शीर्णपत्रमरसं शुष्कं निःसारं च । अतएव भ्रष्टं छायाशोभादिभिर्नष्टं फलादिसमृद्धिरहितम् ॥ २५ ॥ मरणे व्यग्राणां चित्तं भ्रान्तिमूर्च्छोन्मुखमस्थिरं च प्रसिद्धम् । शिलानां गृहाः पर्वतास्तेषां गुहास्थानमिव सान्धकारशून्यभीषणम् । सान्धकारगुहास्वेकैकनृत्तमिवोन्मत्तचेष्टितप्रायम् ॥ २६ ॥ परमार्थतस्तु प्रशान्ताज्ञाननीहारं विज्ञानशरदम्बरं च । सम्यगुत्कीर्णं टङ्कच्छेदादिना कल्पितं प्रतिमाद्याकारमिव ॥ २७ ॥ मृत्पङ्काभिरचितचेतनाचेतनाकारं परमार्थतो मृन्मात्रस्वभावमिवाधिष्ठानपृथक्सत्ताशून्यं जगदुत्पन्नमिति बुध्यते [6]श्रोत्रेत्यर्थः । ततस्तस्मादुत्पत्तिप्रकरणादनन्तरम् ॥ २८ ॥ व्याख्यानं प्रपञ्चतदधिष्ठानतत्त्वस्थितिव्युत्पादनमाख्यायिकाः कथास्तत्प्रचुरम् । तदेवाह—**इत्थ**मित्यादिभिश्चतुर्भिरर्धैः । ब्रह्मैव द्रष्टृदृश्यक्रमं प्रकर्षेण रूढं स्वीकुर्वत्सत् इत्थं वर्ण्यमानप्रकारेण जगद्भावरूपेणाहंभावरूपेण च भोक्तृभोग्यलक्षणेन कर्तृत्वसंतानितेन स्थितिमुपागतमिति अत्र स्थितिप्रकरणे कीर्तितमित्युत्तरेणान्वयः ॥ २९ ॥ ३० ॥ वृद्धिग्रहणं विपरिणामस्याप्युपलक्षणम् । चिरमनादिकालादारभ्याऽभ्यागतोऽस्ति ॥ ३१ ॥ ३२ ॥ संशाम्यति जीवन्मुक्तिक्रमेणोपक्षीणं सक्लेशतोऽवशिष्यत इत्यस्मिन्नुपशान्तिप्रकरणे कथ्यते । लेशतोऽवशेषमेव तच्छ्रवणफल[7]कीर्तनमुखेन स्फुटयति—**उपशान्ती**त्यादि—**सौम्यवारिसरित्सम**इत्यन्तेन ॥ ३३ ॥ प्रभ्रष्टा विशीर्णप्राया चित्रलिखितसेनेव ॥ ३४ ॥ तत्राप्युत्तरोत्तरभूमिकाजये अपक्षयप्रकर्षाल्लक्ष्यालक्ष्यसंस्कारमात्रेण परिशेषं दृष्टान्तैराह—**अन्ये**त्यादिना । परकीयसंकल्पनिर्मितत्वात्तच्चित्तस्था । न लभ्यं वस्तु धनादि याभ्यां तथाविधौ संकल्पयितृपुरुषपार्श्वस्थपुरुषान्तरस्य स्वप्नयुद्धचिरारवौ यस्यां तथाविधा नगरश्रीरिव । मिथ्यात्वेन तुल्ययोरपि परकीयक्रियाशब्दयोरविषयीभूतेति यावत् । सा यथा स्वप्नद्रष्टृदृशा किंचित्स्फुटलक्ष्या, संकल्पयितुर्दृशा तु ईषल्लक्ष्याप्यसती स्वत एव शाम्यति तद्वदित्यर्थः ॥ ३५ ॥ ततोऽप्युपशान्तिप्रकरणे अलक्ष्यावस्थया परिशेषे शान्तेत्यादि नव दृष्टान्ताः । शान्त उपरतो यः संकल्पस्तेन कल्पितस्य मत्तगजवन्निरङ्कुशस्याभ्रस्य भीषणः अशनिशब्दः स्फूर्जथुस्तद्वत् । विस्मृतं स्वप्नेन संकल्पेन वा निर्माणं यस्य नगरस्य तदुपमा ॥ ३६ ॥ भविष्यतो नगरस्योद्याने प्रसूयते या वन्ध्या तद्वदमलं निर्मलं शून्यमेवाङ्गं स्वरूपं यस्यास्तस्या वन्ध्याया जिह्वया उच्यमाना ये उग्रा वीररसाद्युपेताः स्वपुत्रयुद्धादिकथार्थाः ॥ ३७ ॥ ३८ ॥ अनुत्पन्नवन[8]स्पन्द इव अस्फुटाकृतिरलक्ष्याकारा । वसन्तेनेव रसरञ्जना यस्याः ॥ ३९ ॥ सौम्यं निश्चलत्वात्प्रसन्नम् ॥ ४० ॥ शिष्टः द्वात्रिंशत्सहस्रमध्ये

१ चित्तभित्ताविव इति पाठः. २ मुनिसंतति इति पाठः. ३ भ्रान्तिरूपिणी इति पाठः. ४ नगरोद्यानसीरसवन्ध्यामलात्मिका: इति पाठः. ५ नश्यज्जिह्वोच्यमान इति पाठः. ६ श्रोतेत्यर्थः इति पाठः. ७ फलानुकीर्तन इति पाठः. ८ स्पंदन इति पाठः.

अचेत्यचित्प्रकाशात्मा विज्ञानात्मा निरामयः ।
परमाकाशकोशाच्छः शान्तसर्वभवभ्रमः ॥ ४२
निर्वापितजगद्यात्रः कृतकर्तव्यसुस्थितः ।
समस्तजनतारम्भवज्रस्तम्भो नभोनिभः ॥ ४३
विनिर्गीर्णयथासंख्यजगज्जालातितृप्तिमान् ।
आकाशीभूतनिःशेषरूपालोकमनस्कृतिः ॥ ४४
कार्यकारणकर्तृत्वहेयादेयदृशोज्झितः ।
सदेह इव निर्देहः ससंसारोऽप्यसंसृतिः ॥ ४५
चिन्मयो घनपाषाणजठरापीवरोपमः ।
चिदादित्यस्तपँल्लोकानन्धकारोपरोपमम् ॥ ४६
परप्रकाशरूपोऽपि परमान्ध्यमिवागतः ।
रुद्धसंसृतिदुर्लीलः प्रक्षीणाशाविषूचिकः ॥ ४७
नष्टाहंकारवेतालो देहवानकलेवरः ।
कस्मिंश्चिद्रोमकोट्यग्रे तस्येयमवतिष्ठते ।
जगल्लक्ष्मीर्महामेरोः पुष्पे कचिदिवालिनी ॥ ४८
परमाणौ परमाणौ चिदाकाशः स्वकोटरे ।
जगल्लक्ष्मीसहस्राणि धत्ते कृत्वाथ पश्यति ॥ ४९
विततता हृदयस्य महामते-
र्हरिहराब्जजलक्षशतैरपि ।
तुलनमेति न मुक्तिमतो यतः
प्रविततास्ति निरुत्तमवस्तुनः ॥ ५०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे ग्रन्थसंख्यादिवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः १८

श्रीवसिष्ठ उवाच ।
अस्यां वा चित्तमात्रायां प्रबोधः संप्रवर्तते ।
बीजादिव सतो व्युत्पादवश्यंभावि सत्फलम् ॥ १
अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम् ।
अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना ॥ २

परिगणितसार्धसप्तदशसहस्रावशिष्टः । सार्धचतुर्दशसहस्रमिति यावत् । मूलाविद्योच्छेदाच्छान्ताः सर्वकल्पना यस्मिन् ॥ ४१ ॥ श्रोता 'अकलेवर' इत्यन्तेन वर्ण्यमानस्वभावो भवेदित्यन्वयः । अचेत्यो निर्विषयः । अतएव निरामयः ॥ ४२ ॥ यथा वज्रमणिस्तम्भः स्वप्रतिबिम्बितसमस्तजनतामविकृत एवारभते जनतातत्समारम्भाणां चाधारस्तद्वत् ॥ ४३ ॥ विनिर्गीर्णैर्यथाप्रसिद्धसंख्यैर्जगज्जालैरिव अतितृप्तिमानित्युत्प्रेक्षा । रूपालोको बाह्येन्द्रियैर्भोगः मनस्कृतिर्मानसः ॥ ४४ ॥ कार्यकारणकर्तृत्वे आधिभूताध्यात्मिकाधिदैवरूपे स्वीकारपरित्यागदृशा ॥ ४५ ॥ घनं पाषाणजठरमिवापीवरं निश्छिद्रं पूर्णमन्यदप्युपमा यस्य । चिदादित्यः स्वाज्ञानपरिकल्पितान् लोकान् स्वाकारवृत्तीद्धेन स्वालोकेन तपन् परप्रकाशरूपोऽपि दृश्याभावादेव तत्प्रथाविषये अन्धकारोपरोपमं रलयोरभेदाद्धनीभूतान्धकारोपलसदृशं परमान्ध्यमिवागत इति परेणान्वयः ॥४६॥४७॥ **देहवानकलेवर** इति । तथाच श्रुतिः 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति' इति । जगतस्तत्साक्षात्कारबाध्यत्वमुक्तं संभावयितुं तस्य जगत्कल्पनाधिष्ठानत्वेनापरिच्छिन्नत्वमाह—**कस्मिंश्चि**दित्यादिना । रोमकोटिवत्परिच्छिन्नाविद्याया अप्यग्रे एकदेशे जगल्लक्ष्मीरवतिष्ठते । तथाच श्रुतिः 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति । स्मृतिश्च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति ॥ ४८ ॥ नन्वविस्तृतदेशे कथमतिविस्तृतजगद्धानमित्याशङ्क्य दर्पणोदरे साभ्रग्रहनक्षत्रव्योमसमावेशदर्शनान्नाज्ञानस्यास्ति दुष्करमित्यभिप्रेत्याह—**परमाणा**विति । स्वकोटरे स्वान्तःकल्पिताकाशे

'चिदाकाशस्' इति पाठे अर्थाच्चिदाकाश एव धत्ते पश्यति च । अथशब्दः समुच्चये ॥ ४९ ॥ महामतेर्जीवन्मुक्तस्य हृदयं परमात्मैव तस्य विततता विस्तीर्णता हरिहरादीनां लक्षशतैरपि तुलनमियत्तापरिच्छेदं नैति । तत्किं तेषामसामर्थ्यात् । न । यतो यस्माद्धेतोर्न विद्यते उत्तममुत्कृष्टतमं सत्तया आनन्त्येनानन्दस्वाभाव्येन च यस्मात्तथाविधस्यात्मवस्तुनः सा प्रवितता अपरिच्छिन्नता परमार्थत एवास्ति न त्वाकाशादीनामिव द्रष्टृपुरुषाशक्तिकल्पितेत्यर्थः ॥ ५० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे ग्रन्थसंख्यादिवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥

एतद्ग्रन्थगुणा मुख्यामुख्यैरप्यानुषङ्गिकैः ।
फलैः सह निरूप्यन्ते ग्राह्यांशाश्चोपमास्त्विह ॥ १ ॥

इत्थं प्रकरणभेदं विषयप्रयोजनाभ्यामुपवर्ण्य समग्रग्रन्थगुणान्वर्णयंस्तत्र तत्र दृष्टान्तोपन्यासेषु ग्राह्यांशं तात्पर्यं च ग्रंथशैलीपरिज्ञानाय वक्तुमुपक्रमते—**अस्या**मित्यादिना । अस्यां षट्प्रकरणीरूपायां मोक्षोपायसंहितायां सतोऽनुपहतशक्तेर्व्युत्पाद्विशिष्टक्षेत्रकाले उत्पादवश्यंभावि सत्फलं यथा प्रवर्तते तद्वत् ॥ १ ॥ ननु सतीष्वनेकशाखाभेदभिन्नासु श्रुतिषु ता विहाय पुरुषबुद्धिविरचितमिदमेवोपादेयतया किमर्थमुच्यते तत्राह—**अपी**ति । युक्तिभिर्बोधकं तत्त्वनिर्णायकम् । ऋषिर्वेदस्तत्र भवमार्षम् । न्यायादनपेतं न्याय्यं तदेव मुख्यमित्यनुसरता भाव्यम्, पुरुषेणेत्यर्थः । यद्यपि श्रुतयोऽभ्यर्हितास्तथापि गूढाभिसंधित्वात्सहसा नानुभवायालमिति न साधारणाधिकारिभिरुपादेयाः । तत्साराभिज्ञानुभवमूलकयुक्तिघटितं त्विदं शास्त्रं स्फुटाभिसन्धित्वा-

१ इयत्तां परिच्छेदं इति पाठः।

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना ॥ ३
योऽस्मत्तातस्य कूपोऽयमिति कौपं पिबत्यपः ।
त्यक्त्वा गाङ्गं पुरस्थं तं को नाशास्त्यतिरागिणम् ॥ ४
यथोषसि प्रवृत्तायामालोकोऽवश्यमेष्यति ।
अस्यां वा चित्तमात्रायां सुविवेकस्तथैष्यति ॥ ५
श्रुतायां प्राज्ञवदनाद्बुद्ध्वान्तं स्वयमेव च ।
शनैःशनैर्विचारेण बुद्धौ संस्कार आगते ॥ ६
पूर्वं तावदुदेत्यन्तर्भृशं संस्कृतवाक्यता ।
शुद्धयुक्ता लतेवोच्चैर्या सभास्थानभूषणम् ॥ ७
परा नागरतोदेति महत्त्वगुणशालिनी ।
सा यया स्नेहमायान्ति राजानो अमरा अपि ॥ ८
पूर्वापरज्ञः सर्वत्र नरो भवति बुद्धिमान् ।
पदार्थानां यथा दीपहस्तो निशि सुलोचनः ॥ ९
लोभमोहादयो दोषास्तानवं यान्त्यलं शनैः ।
धियो दिशः समासन्नशरदो मिहिका यथा ॥ १०
केवलं समवेक्ष्यन्ते विवेकाध्यासनं[1] धियः ।
न किंचन फलं धत्ते स्वाभ्यासेन विना क्रिया ॥ ११
मनः प्रसादमायाति शरदीव महत्सरः ।
परं साम्यमुपादत्ते निर्मन्दर इवार्णवः ॥ १२
निरस्तकालिमारत्नशिखेवास्ततमःपटा ।
प्रति ज्वलत्यलं प्रज्ञा पदार्थप्रविभागिनी ॥ १३
दैन्यदारिद्र्यदोषाढ्या दृष्टयो दर्शितान्तराः ।
न निकृन्तन्ति मर्माणि ससंनाहमिवेषवः ॥ १४
हृदयं नावलुम्पन्ति भीमाः संसृतिभीतयः ।
पुरःस्थितमपि प्राज्ञं महोपलमिवेषवः ॥ १५
कथं स्यादादिता जन्मकर्मणां दैवपुंस्त्वयोः ।
इत्यादिसंशयगणः शाम्यत्यह्नि यथा तमः ॥ १६
सर्वदा सर्वभावेषु संशान्तिरुपजायते ।
यामिन्यामिव शान्तायां प्रज्ञालोक उपागते ॥ १७
समुद्रस्येव गाम्भीर्यं धैर्यं मेरोरिव स्थितम् ।
अन्तः शीतलता चेन्दोरिवोदेति विचारिणः ॥ १८
सा जीवन्मुक्तता तस्य शनैः परिणतिं गता ।
शान्ताशेषविशेषस्य भवत्यविषयो गिराम् ॥ १९
सर्वार्थशीतला शुद्धा परमालोकदास्यधीः ।
परं प्रकाशमायाति ज्योत्स्नेव शारदैन्दवी ॥ २०
हृद्याकाशे विवेकार्के शमालोकिनि निर्मले ।
अनर्थसार्थकर्तारो नोद्यन्ति किल केतवः ॥ २१
शाम्यन्ति शुद्धिमायान्ति सौम्यास्तिष्ठन्ति सून्नते ।
अचञ्चले जलेऽतृष्णाः शरदीवाभ्रमालिकाः ॥ २२
यत्किंचनकरी क्रूरा ग्राम्यता विनिवर्तते ।
दीनानना पिशाचानां लीलेव दिवसागमे ॥ २३
धर्मभित्तौ भृशं लग्नां धियं धैर्यधुरं गताम् ।
आधयो न विधुन्वन्ति वाताश्चित्रलतामिव ॥ २४
न पतत्यवटे ज्ञस्तु विषयासङ्गरूपिणि ।
कः किल ज्ञातसरणिः श्वभ्रं समनुधावति ॥ २५

---

दनुभवे संनिकृष्यत इत्यवश्यमादरेण सेव्यमिति ॥ २ ॥ एतदेवार्थान्तरन्यासेन द्रढयति—**युक्तियुक्त**मिति ॥ ३ ॥ ननु यदि पौरुषमप्युपादेयं तर्ह्यस्मद्वंश्यरचितानेव कांश्चित्प्रबन्धाञ्श्रोष्यामो नेमं ग्रन्थमिति तत्राह—**य** इति ॥ ४ ॥ तर्ह्यस्मिन् कोऽतिशयस्तमाह—**यथे**ति । उषसि प्रातर्वेलायां प्रवृत्तायाम् । 'उषा वा अश्वस्य' इत्यादौ स्त्रीलिङ्गस्याप्युषःशब्दस्य दर्शनात् ॥ ५ ॥ गुडजिह्विकान्यायेनानुषङ्गिकफलानि दिदर्शयिषुः शाब्दव्युत्पत्तिं प्रथमफलमाह—**श्रुतायाम**िति द्वाभ्याम् । आन्तमन्तपर्यन्तं श्रुतायामापाततो बुद्ध्वा विचारेण दृढं संस्कारे आगते सति ॥ ६ ॥ सभास्थानस्य उच्चैर्भूषणं शिरोभूषणमिव प्रकाशिकेत्यर्थः ॥ ७ ॥ अर्थव्युत्पत्तिचातुर्यमपि द्वितीयं फलमित्याह—**परे**ति । नागरता चतुरता । अमरा अमरवत्पूज्या विद्वांसोऽपि ॥८॥९॥ समासन्ना शरत् यस्यां तथाविधाया दिशो मिहिका नीहार इव धियो दोषास्तानवमल्पतां यान्ति ॥१०॥ समवेक्ष्यन्ते अपेक्ष्यन्ते तव । तत्र हेतुः—**न किंचने**ति ॥११॥ साम्यमवैषम्यम् । निर्मन्दरो मथनोत्तरं निर्गतमन्दरः ॥१२॥ निरस्तकालिमा अविद्यमानव्यामोहकज्जला रत्नदीपशिखेव ॥ १३ ॥ दर्शितमान्तरं घनादिविषयनिःसारत्वं यासां तथाविधाः सत्यः ॥ १४ ॥ भीतिहेतूनां पुरःस्थितमपि प्राज्ञं प्रकृतशास्त्रज्ञम् । हृदयं चित्तम् । महोपलपक्षे प्रकर्षेण अज्ञम् ॥ १५ ॥ पुंस्त्वं पौरुषम् । संसारे जन्मन आदित्वे पौरुषस्य प्राधान्यं, कर्मण आदित्वे तु दैवस्य । शाम्यति । द्वयोरप्यविद्यामूलमिथ्यात्वनिश्चयादिति भावः ॥१६॥ संशान्तिः रागद्वेषाद्यक्षुब्धता । प्रज्ञालक्षणे आलोके प्रज्ञाहेतौ सूर्यालोके च ॥ १७ ॥ स्थितं प्रतिष्ठितम् । एतच्छास्त्रविचारिणः ॥ १८ ॥ एवमानुषङ्गिकफलान्युक्त्वा मुख्यं दर्शयति—**से**ति । शनैर्भूमिकाक्रमैः ॥ १९ ॥ परमस्य परमात्मन आलोकनमालोकस्तं ददातीति परमालोकदा । अस्यैतद्ग्रन्थविचारकस्य ॥ २० ॥ शमेनालोकिनी प्रकाशवती । अनर्थसूचकाः कामादिधूमकेतवः । तेषां रात्रावेवोदयप्रसिद्धेः ॥ २१ ॥ अचञ्चले सून्नते स्वात्मपदे । दृष्टान्तपक्षे तु पर्वते । डलयोरभेदाज्जडे । अतृष्णाः पुरुषा जले अतृष्णा अभ्रमालिकाः शाम्यन्तीत्यादिसाधारणं योज्यम् ॥ २२ ॥ यत्किंचनकरी परविद्वेषादिकारिणी ग्राम्यता अश्लीलवचनता । दीनान्याननानि यस्याम् ॥ २३ ॥ धारयतीति धर्मः शमदमादिः परमात्मा वा स एव भित्तिर्विश्वचित्राधारत्वात्तस्यां भृशमैकरस्येन लग्ना न विधुन्वन्ति न कम्प[illegible]लिखितां लतामिव ॥ २४ ॥ ज्ञस्तत्त्ववित् । अवटे

---

१ विवेकाभ्यसनं इति पाठः.

सच्छास्त्रसाधुवृत्तानामविरोधिनि कर्मणि ।
रमते धीर्यथाप्राप्ते साध्वीवान्तःपुराजिरे ॥ २६
जगतां कोटिलक्षेषु यावन्तः परमाणवः ।
तेषामेकैकशोऽन्तःस्थान्सर्गान्पश्यत्यसङ्गधीः ॥ २७
मोक्षोपायाववोधेन शुद्धान्तःकरणं जनम् ।
न खेदयति भोगौघो न चानन्दयति क्वचित् ॥ २८
परमाणौ परमाणौ सर्गवर्गा निरर्गलाः ।
ये पतन्त्युत्पतन्त्यम्बुवीचिवत्तान्स पश्यति ॥ २९
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ।
कार्याण्येष प्रबुद्धोऽपि निष्प्रबुद्ध इव द्रुमः ॥ ३०
दृश्यते लोकसामान्यो यथाप्राप्तानुवृत्तिमान् ।
इष्टानिष्टफलप्राप्तौ हृदयेनापराजितः ॥ ३१
बुद्ध्वेदमखिलं शास्त्रं वाचयित्वा विविच्यताम् ।
अनुभूयत एवैतन्न तूक्तं वरशापवत् ॥ ३२
शास्त्रं सुबोधमेवेदं सालंकारविभूषितम् ।
काव्यं रसमयं चारु दृष्टान्तैः प्रतिपादितम् ॥ ३३
बुध्यते स्वयमेवेदं किंचित्पदपदार्थवित् ।
स्वयं यस्तु न वेत्तीदं श्रोतव्यं तेन पण्डितात् ॥ ३४
यस्मिन्श्रुते मते ज्ञाते तपोध्यानजपादिकम् ।
मोक्षप्राप्तौ नरस्येह न किंचिदुपयुज्यते ॥ ३५
एतच्छास्त्रघनाभ्यासात्पौनःपुन्येन वीक्षणात् ।
पाण्डित्यं स्यादपूर्वं हि चित्तसंस्कारपूर्वकम् ॥ ३६
अहं जगदिति प्रौढो द्रष्टृदृश्यपिशाचकः ।
पिशाचोऽकोंदयेनेव स्वयं शाम्यत्ययत्नतः ॥ ३७
भ्रमो जगदहं चेति स्थित एवोपशाम्यति ।
स्वप्नमोहः परिज्ञात इव नो भ्रमयत्यलम् ॥ ३८
यथा संकल्पनगरे पुंसो हर्षविषादिता ।
न बाधते तथैवास्मिन्परिज्ञाते जगद्भ्रमे ॥ ३९
चित्रसर्पः परिज्ञातो न सर्पभयदो यथा ।
दृश्यसर्पः परिज्ञातस्तथा न सुखदुःखदः ॥ ४०
परिज्ञानेन सर्पत्वं चित्रसर्पस्य नश्यति ।
यथा तथैव संसारः स्थित एवोपशाम्यति ॥ ४१
सुमनःपल्लवामर्दे किंचिद्व्यतिकरो भवेत् ।
परमार्थपदप्राप्तौ ननु व्यतिकरोऽल्पकः ॥ ४२
गच्छत्यवयवः स्पन्दं सुमनःपत्रमर्दने ।
इह धीमात्ररोधस्तु नाङ्गावयवचालनम् ॥ ४३
सुखासनोपविष्टेन यथासंभवमश्नता ।
भोगजालं सदाचारविरुद्धेषु न तिष्ठता ॥ ४४
यथाक्षणं यथादेशं प्रविचारयता सुखम् ।
यथासंभवसत्सङ्गमिदं शास्त्रमथेतरत् ॥ ४५
आसाद्यते महाज्ञानबोधः संसारशान्तिदः ।
न भूयो जायते येन योनियन्त्रप्रपीडनम् ॥ ४६
एतावत्यपि येऽभीताः पापा भोगरसे स्थिताः ।
स्वमातृविष्ठाक्रमयः कीर्तनीया न तेऽधमाः ॥ ४७
शृणु तावदिदानीं त्वं कथ्यमानमिदं मया ।
राघव ज्ञानविस्तारं बुद्धिसारतरान्तरम् ॥ ४८

मोहगर्ते ॥ २५ ॥ तस्य यथेष्टाचरणं वारयति—**सदिति**। यथायोग्यं प्राप्ते । साध्वी पतिव्रतेव ॥२६॥ सर्गान्ब्रह्माण्डान् । मायाया अघटितघटनापटीयस्त्वनिश्चयादिति भावः ॥२७॥२८॥ निरर्गला असंकीर्णाः । उत्पातपाताविर्भावतिरोभावौ ॥ २९ ॥ संप्रवृत्तान्यैरिष्टानि । निवृत्तानीष्टानि । प्रबुद्धः कार्यफलादिस्वरूपाभिज्ञोऽपि तदनभिज्ञो द्रुम इव ॥३०॥ लोकसामान्य इतरजनसदृशः । अपराजितोऽविकृतचित्तः ॥३१॥ तात्पर्यपर्यालोचनेन प्रतिश्लोकं विविच्यताम् । उक्तमुक्तिमात्रमिति न मन्तव्यं किंतु वराणां ब्रह्मादीनां शापवत् वरवत् शापवद्वा अनुभूयत एव ॥३२॥ माधुर्योपमादिशब्दार्थालंकारभेदोपादानायालंकारविभूषणयोः पृथग्ग्रहणम् ॥ ३३ ॥ किंचित्पदपदार्थवित्पुरुषः इदं काव्यं स्वयमेव बुध्यतेऽवगच्छति ॥ ३४ ॥ मते विचारिते । नोपयुज्यते तत्फलानामेतत्फलेऽन्तर्भावादिति भावः ॥ ३५ ॥ यद्यपि ग्रन्थान्तराभ्यासादपि पाण्डित्यं भवति तथापि तन्न चित्तसंस्कारपूर्वकमत एवेदमपूर्वम् ॥ ३६ ॥ द्रष्टृदृश्योभयशान्तौ दृङ्मात्रात्मा शुद्धः परिशिष्यत इति भावः ॥ ३७ ॥ नो इति नञर्थो निपातः । न भ्रमयतीत्यर्थः ॥ ३८ ॥ कल्पनामात्रमेतदिति परिज्ञाते ॥ ३९ ॥ चित्रलिखितः सर्पः ॥ ४० ॥ अधिष्ठानपरिशेषेण स्थित एव ॥ ४१ ॥ नन्वतिविततः प्रपञ्चः कुद्दालकोटिभिरपि दुर्भेदः कथमल्पायासेन शाम्येदित्याशङ्क्य ज्ञानप्रभावस्तादृश इत्यभिप्रेत्याह—**सुमन** इति । सुमनसां पुष्पाणां पल्लवानामामर्दने खसूच्यादिना भेदने व्यतिकरः प्रयत्नातिशयः । कश्चिच्चासौ व्यतिकरश्चेति कर्मधारयः । अल्पकः स्वल्पोऽपि । ननु किमर्थं तर्हि प्राक्पौरुषसमर्थनमिति चेत् ज्ञानप्रतिबन्धकरागासंभावनादिपुरुषापराधनिरासार्थमेवेति ॥ ४२ ॥ इह तु धीस्पन्दस्यापि रोधो न कस्यचिदङ्गस्य तदवयवस्य वा चालनम् ॥ ४३ ॥ शास्त्रविरुद्धेषु मार्गेषु न तिष्ठता पुरुषेण आसाद्यते इति व्यवहितेनान्वयः ॥ ४४ ॥ यथाक्षणं यथाकालम् । इतरदुपनिषन्मोक्षधर्मादि ॥ ४५ ॥ महदपरिच्छिन्नं ज्ञानं परमात्मा तस्य बोधः साक्षादनुभवः ॥ ४६ ॥ इत्थं गुणतः फलतः सौलभ्यतश्च शास्त्रं प्रशस्य तद्विमुखान्निन्दति-**एतावतीति**। कीर्तयितुमप्ययोग्याः । आत्मघातित्वादिति भावः ॥ ४७ ॥ स्तुतिनिन्दयोः प्रकृतोपयोगं दर्शयति—**शृण्विति**। बुद्ध्या ये सारतरा अत्यन्तपरिशुद्धास्तेषामन्तरमन्तरङ्गभूतम्, विवेकबुद्धिग्राह्याणां सारतराणामन्तरमवधिभूतम्, बुद्धेरपि सारतरमान्तरं प्रत्यग्भूतमात्मतत्त्वं विषयभूतं यस्मिन्निति वा तथोक्तम् । ज्ञानं विस्तारयतीति

१ निष्प्रबोध इति पाठः, २ वस्तु इति पाठः, ३ नगरे इति पाठः, ४ जगद्भ्रमः इति पाठः, ५ अनिष्टानि इति पाठः.

यथेदं श्रूयते चास्त्रं तामापातनिकां शृणु ।
विचार्यते यथार्थोऽयं यथा च परिभाषया ॥ ४९
येनेहाननुभूतेऽर्थे दृष्टेनार्थेन बोधनम् ।
बोधोपकारफलदं तं दृष्टान्तं विदुर्बुधाः ॥ ५०
दृष्टान्तेन विना राम नापूर्वार्थोऽवबुध्यते ।
यथा दीपं विना रात्रौ भाण्डोपस्करणं गृहे ॥ ५१
यैर्यैः काकुत्स्थ दृष्टान्तैस्त्वं मयेहावबोध्यसे ।
सर्वे सकारणास्ते हि प्राप्यन्तु सदकारणम् ॥ ५२
उपमानोपमेयानां कार्यकारणतोदिता ।
वर्जयित्वा परं ब्रह्म सर्वेषामेव विद्यते ॥ ५३
ब्रह्मोपदेशे दृष्टान्तो यस्त्वेह हि कथ्यते ।
एकदेशसधर्मत्वं तत्रान्तः परिगृह्यते ॥ ५४
यो यो नामेह दृष्टान्तो ब्रह्मतत्त्वावबोधने ।
दीयते स स बोद्धव्यः स्वप्नजातो जगद्गतः ॥ ५५
एवं सति निराकारे ब्रह्मण्याकारवान्कथम् ।
दृष्टान्त इति नोद्यन्ति मूर्खवैकल्पिकोक्तयः ॥ ५६
अन्यासिद्धविरुद्धादिदृग्दृष्टान्तप्रदूषणैः ।
स्वप्नोपमत्वाज्जगतः समुदेति न किंचन ॥ ५७
अवस्तु पूर्वापरयोर्वर्तमाने विचारितम् ।
यथा जाग्रत्तथा स्वप्नः सिद्धमाबालमागतम् ॥ ५८
स्वप्नसंकल्पनाध्यानवरशापौषधादिभिः ।
यथार्था इह दृष्टान्तास्तद्रूपत्वाज्जगत्स्थितेः ॥ ५९
मोक्षोपायकृता ग्रन्थकारेणान्येऽपि ये कृताः ।
ग्रन्थास्तेष्वियमेवैका व्यवस्था बोध्यबोधने ॥ ६०
स्वप्नाभत्वं च जगतः श्रुते शास्त्रेऽवबोध्यते ।
शीघ्रं न पार्यते वक्तुं वाक्किल क्रमवर्तिनी ॥ ६१

ज्ञानविस्तारं शास्त्रम् । कर्मण्यण् ॥ ४८ ॥ आपातनं शास्त्रावतारस्तदुपायोऽवधारणरूप आपातनिका ताम् । यथा येन दृष्टान्तेन । परिभाषया उपक्रमोपसंहारादिरूपया तत्तद्बोधोपयोगिसंकेतेन च यथा श्रूयते ताम् ॥ ४९ ॥ तत्र दृष्टान्तस्य लक्षणमाह—**येने**ति । दृष्टेनार्थेन साधर्म्येण बोध्यते येन तद्बोधनम् । तदेव विवृणोति—**बोधोपकारफलद**मिति । दृष्टः अन्तः सादृश्यबलेन प्रकृतार्थनिर्णयो येन स दृष्टान्त इति तदर्थज्ञा बुधाः ॥ ५० ॥ अपूर्वार्थोऽदृष्टार्थोऽद्भुतार्थो वा । उपस्करणं गुणवदुपकरणम् । 'उपात्प्रतियत्न–' इति सुट् ॥ ५१ ॥ दृष्टान्तेषु विवक्षितसादृश्यविवेकाय हेयांशं दर्शयति—**यै**रिति । सकारणा जन्या अतएवानृताश्च । ज्ञेयं तु सत्परमार्थसत्यमकारणं नित्यम् । मिथ्याभूतैरेव मृत्सुवर्णाद्युपादानैर्दृष्टान्तैः सद्ब्रह्म कारणं बोध्यते । तथाच जन्यत्वानृतत्वादयो दृष्टान्तधर्मा हेया इत्यर्थः ॥ ५२ ॥ परब्रह्मदृष्टान्तेष्वेवायं नियमो नान्यदृष्टान्तेष्वित्याह—**उपमाने**ति । कार्यकारणता कार्यत्वकारणत्वादिना सादृश्यमुदिता पूर्वोक्ता । अयमर्थः—यथा विचारादिभिर्बिम्बग्राहकं ज्ञानमुत्पद्यत इत्युच्यते तथा ज्ञानाद्बिम्बमुत्पद्यते इति न वक्तव्यं ब्रह्मण उत्पत्तेर्वक्तुमशक्यत्वात् ॥ ५३ ॥ वर्जयित्वा परं ब्रह्मेत्युक्तं विस्पष्टयति—**ब्रह्मे**ति । एकदेशसधर्मत्वमादाय तत्रान्तःप्रकृतनिर्णयः । अयं भावः—जगद्विवर्तब्रह्माधिष्ठानबोधने भुजङ्गविवर्ताधिष्ठानबोधकरज्जुदृष्टान्तस्याधिष्ठानविवर्तांशमात्रेण दृष्टान्तत्वं न तु दार्ष्टान्तिकनित्यत्वसुखित्वादिसर्वांशेन ॥ ५४ ॥ ननु किमित्येकदेशे स दृष्टान्त एवोपादीयत इति चेत् सर्वांशसादृश्याप्रसिद्धेरेवेत्यभिप्रेत्याह—**यो य** इति । स्वप्नजात इव मिथ्याभूतो जगदन्तर्गत एव न वास्तवः । द्वितीयपरमार्थसच्चिदानन्दवस्त्वप्रसिद्धेरिति भावः ॥ ५५ ॥ वैकल्पिका विकल्पोद्भूता उक्तयः । ब्रह्म सद्वितीयमद्वितीयं वा । सद्वितीयं चेदपसिद्धान्तः । अद्वितीयं चेद्गुरुशास्त्राद्यभावाज्ज्ञानानुत्पत्तिः । एवं विकल्पोक्तयो नोद्यन्ति ॥ ५६ ॥ एतेन दृष्टान्तोपन्यासस्यानुमानोन्नयनेन बोधकत्वे दृष्टान्तहेतुव्याप्त्यादेरनृतत्वे व्याप्यत्वासिद्धिः स्वरूपासिद्धिरित्यादयः प्रापञ्चिकैर्हेतुभिः सत्यत्वादिसाधने विरुद्धत्वादयश्च हेत्वाभासताप्रयोजकदोषाः स्युरिति तार्किकप्रत्यवस्थानस्याप्यवसरो निरस्त इत्याह—**अन्ये**ति । अन्येषामसिद्धविरुद्धादिदोषदृशां तार्किकाणां दृष्टान्तप्रदूषणैर्दूष्यस्य हेत्वादेर्जगतः स्वप्नोपमत्वाद्वस्तुनि न किंचिद्दूषणं समुदेतीत्यर्थः । साध्यसिद्धिपर्यन्तं बोध्यबोधकव्यवहारस्तु व्यावहारिकसत्यतामात्रेणाप्युपपन्न इति भावः ॥ ५७ ॥ उक्तं स्वप्नोपमत्वं तत्साधर्म्यप्रदर्शनेनोपपादयति—**अवस्त्व**िति । पूर्वापरयोरुत्पत्तिविनाशपूर्वोत्तरकालयोरवस्तु अभावग्रस्तं वर्तमानकालेऽपि उपादानाद्भेदाभेदसत्तया अविचारितं विचार्य वादिसहस्रेणापि निर्गन्तुमशक्यम् । वर्तमानकाले तु विचारितं सदवस्त्वति वा । यथा जाग्रद्वस्तु तथा स्वप्नोऽपीति मिथ्यात्वेन साम्यमित्यर्थः ॥ ५८ ॥ ननु प्रातिभासिकसत्तावता स्वप्नेन कथं व्यावहारिकसत्तातुल्यतेति चेत्परस्परहेतुफलभावदर्शनाल्लौकिकाचाराच्च तुल्यतेत्याह—**स्वप्ने**ति । जाग्रति कार्याकार्यत्वेन संदिग्धयात्रादौ देवताप्रार्थनादिना शयानस्य स्वप्ने कार्यमिति संकल्पोदये तथा चिन्तने चिन्तनोपलक्षितचिरकालपूजामन्त्रजपस्तुत्यादिना तदनुकूलवरलाभे शत्रूणां मुनिशापादिदर्शनेन वा प्रातर्यात्रादिकरणे शत्रुजयादिदर्शनात् स्वाप्नौषधलाभेन जागरे रोगशान्तिदर्शनाच्च तत्साम्येन सर्वजगत्स्थितेरपि तद्रूपत्वात्स्वप्नदृष्टान्ता यथार्थाः ॥ ५९ ॥ मोक्षोपायकृता वाल्मीकिना अन्येऽपि पूर्वरामायणादयो ये ग्रन्थाः कृतास्तेष्वपि दृष्टान्तानां संभवदंशसाम्यबोधने व्यवस्था प्रसिद्धेत्यर्थः ॥ ६० ॥ ननु तर्हि श्रोतारः स्वप्नसाम्यमुक्तं कुतः सहसैव न बुध्यन्ते कुतो वा विप्रतिपद्यन्ते इत्याशङ्क्याध्यात्मशास्त्रश्रवणसंस्काराभावेन जगत्सत्यताभ्रमादित्याह—**स्वप्नाभत्व**मिति । वक्तुं बोधयितुम् । पार्यते शक्यते । श्रोतॄणां विरो-

१ स्वप्नदृष्टजगतः. २ आविग्रहणादभ्यासोऽपूर्वतापलं अर्थवाद  उपपत्तिश्च भाष्याः. ३ करणेन इति पाठः.

स्वप्नसंकल्पनाध्याननगराद्युपमं जगत् ।
यतस्त एव दृष्टान्तास्तस्मात्सन्तीह नेतरे ॥ ६२
अकारणे कारणता यद्बोधायोपमीयते ।
न तत्र सर्वसाधर्म्यं संभवत्युपमाश्रमैः ॥ ६३
उपमेयस्योपमानादेकांशेन सधर्मता ।
अङ्गीकार्यावबोधाय धीमता निर्विवादिना ॥ ६४
अर्थावलोकने दीपादाभामात्रादृते किल ।
न स्थानतैलवर्त्यादि किंचिदप्युपयुज्यते ॥ ६५
एकदेशसमर्थत्वादुपमेयावबोधनम् ।
उपमानं करोत्यङ्ग दीपोऽर्थप्रभया यथा ॥ ६६
दृष्टान्तस्यांशमात्रेण बोध्यबोधोदये सति ।
उपादेयतया ग्राह्यो महावाक्यार्थनिश्चयः ॥ ६७
न कुतार्किकतामेत्य नाशनीया प्रबुद्धता ।
अनुभूत्यपलापान्तैरपवित्रैर्विकल्पितैः ॥ ६८
विचारणादनुभवकारिवैरिणोऽपि
वाङ्मयं त्वनुगतमसदादिषु ।
स्त्रियोक्तमप्यपरमार्थवैदिकं
वचो वचःप्रलपनमेव नागमः ॥ ६९
अस्माकमस्ति मतिरङ्ग तयेति सर्व-
शास्त्रैकवाक्यकरणं फलितं यतो यः ।
प्रातीतिकार्थमपशास्त्रनिजाङ्गपुष्टा-
त्संवेदनादितरदस्ति ततः प्रमाणम् ॥ ७०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे दृष्टान्तनिरूपणं नामाष्टादशः सर्गः ॥ १८ ॥

---

धिसंस्कारोच्छेदस्य चिरसाध्यत्वादिति भावः ॥ ६१ ॥ ध्यानेऽपि नगरकल्पनं मानसपूजायां प्रसिद्धम् ॥ ६२ ॥ यदि जगति स्वप्नाद्युपमाने सर्वांशेऽपि साधर्म्यं विवक्षितं तर्हि ब्रह्मण्यपि कटकमुकुटाद्युपादानस्वर्णदृष्टान्ते तद्वदेव परिणामिता कुतो न विवक्ष्यते तत्राह—**अकारणे** इति । 'तदेतद्ब्रह्मापूर्वमनपरं', 'एकमेवाद्वितीयम्' इत्यादिश्रुतिभिश्चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा शुद्धा चानन्ता च । 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' इत्यादिस्मृतिभिरसङ्गोदासीनस्य परिणामहेतुत्वासंस्पर्शाच्चितो जाड्याकाराघटनाच्चेत्यादियुक्तिभिश्च परिणामाघटनादकारणे अपरिणामिनि यत् यत्र परिणामि स्वर्णादिवत् करणतोपमीयते तत्रोपमाप्रयुक्तैः श्रमैः प्रयत्नैरपि सर्वांशे साधर्म्यं न लब्धुं शक्यमित्यर्थः ॥६३॥ तदेव स्पष्टमाह—**उपमेयस्ये**ति ॥६४॥ लोकेऽपि मणिर्दीप इवेक्ष्यत इत्यादौ नाविवक्षितांशसादृश्यबोधो दृष्ट इत्याह—**अर्थे**ति द्वाभ्याम् । श्लोकद्वयस्य यथाश्रुतार्थो वा स्पष्टः । आभामात्रात्प्रकाशमात्रात् ॥ ६५ ॥ ६६ ॥ एतच्छास्त्रीयसर्वदृष्टान्तानामुपयोगमाह—**दृष्टान्तस्ये**ति । जगतः स्वप्नादिदृष्टान्तैर्मिथ्यात्वे प्रतीच आकाशसवित्रादिदृष्टान्तस्य ब्रह्मणो मृल्लोहादिदृष्टान्तस्य च पदार्थपरिशोधनेन बोध्यलक्ष्यार्थं तस्य बोधोदये सति सकार्याविद्योच्छेदार्थमवश्योपादेयतया सर्वश्रुतिशास्त्रमहातात्पर्यविषयोऽहं ब्रह्मास्मीति महावाक्यार्थनिश्चयो ग्राह्य इत्यर्थः ॥ ६७ ॥ नन्वहं गौरः स्थूल इत्यादिप्रत्यक्षेणौषधपानारोग्यलाभादिप्रवृत्तिफलदर्शनलिङ्गेन परव्यवहारसाम्योपमानेन सर्वव्यावहारिकमहाजनवाक्यैः 'ब्राह्मणो यजेत' इत्यादिश्रुत्या स्मृत्या धर्मशास्त्रैरनेकतार्किकादियुक्तिभिश्च देहस्तदन्यो वा कर्तृभोक्तृत्वादिस्वभाव आत्मावगम्यते तत्कथं प्रत्यक्षाद्यनेकप्रमाणविरुद्धोऽर्थो महावाक्यमात्रादुपादेय इत्याशङ्क्याह—**ने**ति । अनुभूतिर्विद्वत्प्रत्यक्षं तदपलापपर्यवसितैरपवित्रदेहाद्यात्मभावविषयत्वादपवित्रशुनकसूकरादिजन्मफलत्वाच्चापवित्रैर्विकल्पितैर्ब्रह्म सप्रमाणमप्रमाणं वा, सप्रमाणं चेद्द्वैतहानिः, अप्रमाणं चेत्प्रमेयहानिरित्यादिभिर्विकल्पैः परमपुरुषार्थानुबन्धिनी प्रबुद्धता ज्ञानाभिज्ञता न नाशनीया । यथा च देहादेरात्मत्वासंभवस्तथ वक्ष्यत इति भावः ॥ ६८ ॥ ननु सर्वजनस्य निरुपाधिकस्वेच्छाविहारसुखार्थित्वाद्यालोराप्ततमस्य चार्वाकादेर्भार्यापुत्रमित्रादेश्च दृष्टबहुतरविचित्रभोगसुखानुबन्धिस्वाभाविकस्वप्रीतिविषये प्रवर्तकं संसारसारतादिवचनं कथं हेयं कथं वा तपःक्लेशसंयमवित्तव्ययायासानुबन्धीष्टपुत्रवित्तभार्यादिवियोजकसंन्यासभिक्षाटनादिदृष्टानर्थसहस्रपर्यवसितं निर्विषयात्ममात्रपरिशेषात्मकपरमदारिद्र्यलक्षणमोक्षफलानुषङ्गिब्रह्मात्मैकत्वबोधकत्वाद्वैरिवाक्यकल्पमचेतनं श्रौतं महावाक्यमुपादेयमित्याशङ्क्याह—**विचारणा**दिति । सत्यमविचारणादेवमेव विचारणात्तु वैरिणो वैरित्वेन ज्ञातस्यापि वाङ्मयं नित्यनिरतिशयानन्दात्मरूपपरमपुरुषार्थानुभवकारीति अस्मदादिष्वनुभवनिष्ठेषु परमाप्ततमं सर्वप्रमाणमूर्धन्यमित्यनुगतमेव । अपगतं परमार्थभूतं वैदिकं पुरुषार्थतत्त्वं यस्मात्तथाविधं वचो वाक्यं स्त्रिया परमप्रेयस्योक्तमपि मृत्युनरकाद्यनर्थपरम्परानुबन्धित्वाद्वचःप्रलपनं वाक्प्रलापमात्रमेव न आगमो नाप्तवचनं न वा प्रमाणमित्यर्थः ॥ ६९ ॥ ननु तर्हि कपिलकणादजैमिनिप्रभृतयो वेदार्थज्ञा अपि कथमन्यथैव पुरुषार्थतदुपायतत्त्वं निरूपितवन्तः, भवन्तस्त्वन्यथा निरूपयन्ति तत्र भवदुक्तौ को विशेषस्तत्राह—**अस्माक**मिति । हे अङ्ग, अस्माकं यतो यस्या मतेः सकाशादयस्तत्त्वसाक्षात्कारजीवन्मुक्तिलक्षणः शुभावहो विधिस्तादृशी मतिरस्ति तया इति पूर्वोक्तप्रकारेण प्रातीतिकोऽपरोक्षानुभवयोग्योऽर्थः परमपुरुषार्थो यस्मात्तथाविधं सर्वेशास्त्राणां सकलश्रुत्यध्यात्मशास्त्राणामेकवाक्यकरणमेकमहावाक्यार्थपर्यवसानं फलितम् । ततः अपशास्त्रं श्रुतितात्पर्याविषयीभूतं निजाङ्गस्तर्कादिभिरेव पुष्टं यत्सांख्यकणादादिसंवेदनं तस्मादितरन्महावाक्यार्थरूपं प्रातीतिकार्थमपरोक्षानुभवयोग्यार्थकं प्रमाणमस्माकमस्ति ननु तेषाम् । कुतर्कोपहतमतित्वेन श्रुतितात्पर्यावधारणयोग्यमतिशून्यत्वादित्यर्थः ॥ ७० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे दृष्टान्तनिरूपणं नाम अष्टादशः सर्गः ॥ १८ ॥

# एकोनविंशः सर्गः १९

श्रीवसिष्ठ उवाच ।

विशिष्टांशसमर्थत्वमुपमानेषु गृह्यते ।
को भेदः सर्वसादृश्ये तूपमानोपमेययोः ॥ १
दृष्टान्तबुद्धावेकात्मज्ञानशास्त्रार्थवेदनात् ।
महावाक्यार्थसंसिद्धा शान्तिर्निर्वाणमुच्यते ॥ २
तस्माद्दृष्टान्तदार्ष्टान्तविकल्पोल्लसितैरलम् ।
यया कयाचिद्युक्त्या तु महावाक्यार्थमाश्रयेत् ॥ ३
शान्तिः श्रेयः परं विद्धि तत्प्राप्तौ यत्नवान्भव ।
भोक्तव्यमोदनं प्राप्तं किं तत्सिद्धौ विकल्पितैः ॥ ४
अकारणैः कारणिभिर्बोधार्थमुपमीयते ।
उपमानैस्तूपमेयैः सदृशैरेकदेशतः ॥ ५
स्थातव्यं नेह भोगेषु विवेकरहितात्मना ।
उपलोदरसंजातपरिपीनान्धभेकवत् ॥ ६
दृष्टान्तैर्यत्नमाश्रित्य जेतव्यं परमं पदम् ।
विचारणवता भाव्यं शान्तिशास्त्रार्थशालिना ॥ ७
शास्त्रोपदेशसौजन्यप्रज्ञातज्ज्ञसमागमैः ।
अन्तरान्तरसंपन्नधर्मार्थोपार्जनक्रियः ॥ ८
तावद्विचारयेत्प्राज्ञो यावद्विश्रान्तिमात्मनि ।
संप्रयात्यपुनर्नाशां शान्तिं तुर्यपदाभिधाम् ॥ ९
तुर्यविश्रान्तियुक्तस्य प्रतीपस्य भवार्णवात् ।
जीवतोऽजीवतश्चैव गृहस्थस्य तथा यतेः ॥ १०
न कृतेनाकृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ।
निर्मन्दर इवाम्भोधिः स तिष्ठति यथास्थितम् ॥ ११
एकांशेनोपमानानामुपमेयसधर्मता ।
बोद्धव्यं बोध्यबोधाय न स्थेयं बोधचञ्चुना ॥ १२

दृष्टान्तार्थप्रसङ्गेन मानतत्त्वं विशोध्यते ।
नित्यापरोक्षं ब्रह्मैव द्रष्टृदृश्यादिसाक्षि यत् ॥ १ ॥

प्रासङ्गिकं समर्थ्य तत्प्रसक्तं प्रमाणतत्त्वं निर्णिनीषुः प्रस्तुतमुखेनोपक्रममाणः श्रीवसिष्ठ उवाच—**विशिष्टे**ति । विशिष्टो विशेषेण प्रतिपादयितुं विवक्षितो योऽशस्तेनैव सधर्मत्वं सर्वत्रोपमानेषु गृह्यते । अन्यथा गौरिव गवय इत्यादौ जात्यादिनापि सादृश्यविवक्षायां भेदाभावादुपमानमात्रोच्छेदः स्यादित्यर्थः ॥१॥ दृष्टान्तबुद्धेः फलमाह—**दृष्टान्तबुद्धावि**ति । तत्त्वंपदार्थशोधनोपयोगितत्तद्दृष्टान्तबुद्धौ सत्यामेकमद्वितीयं यज्ज्ञानस्वरूपमात्मतत्त्वं तदेव सर्ववेदान्ततात्पर्यविषयत्वाच्छास्त्रार्थस्तस्य वेदनात्तद्गोचराखण्डाकारवृत्त्युदयात्तदभिव्यक्तमहावाक्यार्थभूतब्रह्मस्वरूपेणैव सम्यक् सिद्धा अज्ञानतत्कार्यशान्तिर्निर्वाणं दृष्टान्तबुद्धिफलमुच्यते इत्यर्थः ॥ २ ॥ तदेव स्फुटमाह—**तस्मा**दिति । दार्ष्टान्तं दार्ष्टान्तिकम् । 'तस्येदम्' इत्यण् । तद्भेदतद्गतभूयोधर्मवत्त्वादिप्रसञ्जकैः किमयं सर्वांशे दृष्टान्त उत कतिपयधर्मांश इत्यादिविकल्पोल्लसितैः अलम् । प्रयोजनं नास्तीत्यर्थः । केन तर्हि प्रयोजनं तदाह—**यया कयाचि**दिति । पदलक्ष्यार्थतात्पर्यग्रहणानुकूलया कल्पितधर्मवत्त्वादियुक्त्यापीत्यर्थः ॥ ३ ॥ ननु सर्वसंसारशान्तौ तदन्तर्गतदृष्टान्तयुक्त्यादीनामपि बाधादाभासता स्यादित्याशङ्क्य फलसिद्ध्यनन्तरं साधनक्षतेरदूषणत्वमित्याह—**शान्ति**रिति । भोक्तव्यं भुक्तियोग्यं प्राप्तं सिद्धं चेत्तत्सिद्धौ साधनभूतैर्दृष्टान्तादिभिर्विकल्पितैराभासितैः किमनिष्टमिति शेषः ॥ ४ ॥ 'औषधं पिब भ्रातुरिव ते शिखा वर्धिष्यत' इति बालप्रवृत्तिकारणिभिः शिखावृद्ध्यकारणैरपीष्टसाधनत्वादेकदेशतः सदृशैरुपमानैरुपमेयैश्च बालस्यौषधपानं तस्य तत्रेष्टसाधनताबोधार्थमुपमीयते लोके तद्वदत्रापीत्यर्थः ॥ ५ ॥

तत्रानात्मविषयदृष्टान्तं प्रकृतोपयोगितयोदाहरन् शान्त्यादौ प्रवर्तयति—**स्थातव्य**मित्यादिना । परिपीनश्चासावन्धभेकश्च तद्वत् ॥ ६ ॥ एवंविधैर्दृष्टान्तैः प्रतिबोधितेनेति शेषः ॥ ७ ॥ 'उपशमे'ति पाठे शास्त्रपदेन तदभ्यास उपलक्ष्यते । तज्ज्ञाः शास्त्रादिज्ञा आत्मज्ञाश्च । अन्तरान्तरेण पूर्वपूर्वान्तरङ्गसाधनक्रमेण संपन्नानाम् । 'दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात् । गुरुशुश्रूषया युक्तात्कृच्छ्राशीतिफलं लभेत् ॥ यो यजेताश्वमेधेन मासि मासि शतं समाः । न यः क्रुध्येत सर्वस्य तयोरक्रोधनो वरः ॥' इत्यादिस्मृतिप्रसिद्धधर्माणां गुरुशुश्रूषाद्युपयोग्यर्थानां शास्त्रतात्पर्यचमत्कृतार्थानां च उपार्जनमेव क्रिया यस्य तथाविधः सन् विचारयेदित्युत्तरेणान्वयः ॥ ८ ॥ अपुनर्नाशामपुनरावर्तिनीं तुर्यपदाभिधां 'शिवमद्वैतं चतुर्थं मन्यन्ते' इति श्रुतौ चतुर्थपदाभिधेयां सप्तमभूमिकाप्रतिष्ठालक्षणाम् ॥ ९ ॥ तत्प्राप्तावेव सर्वकर्तव्यविश्रान्तिरित्याह—**तुर्ये**ति द्वाभ्याम् । प्रतिलङ्घिता आपो येन तस्य । उत्तीर्णस्येत्यर्थः । जीवत ऐहिकोऽर्थोऽजीवतः पारलौकिकश्चार्थः फलं कृतेनाकृतेन वा कर्मणा नास्तीति परेणान्वयः ॥ १० ॥ श्रुतिस्मृती श्रवणमनने तद्रूपैर्मनोविक्षेपैः ॥ ११ ॥ ननु विरुद्धमिदमुच्यते । गृहस्थस्य तथा यतेरिति तत्तदाश्रमनियतधर्मनिष्ठता, 'न कृतेनाकृतेनार्थ' इति चानियतधर्मनिष्ठता, 'तत्र निर्मन्दर इवार्णवः' इत्यात्यन्तिकविक्षेपनिवृत्तिपरो दृष्टान्तः कथं संगच्छतामित्याशङ्क्य मत्प्रागुक्तमात्मतत्त्वविषये एकदेशेन सादृश्यं ग्राह्यमिति तदभिप्रेत्येदमुदाहृतमित्याह—**एकांशेने**त्यादिपञ्चदशभिः । उपमेयसधर्मता अत्राभिप्रेतेति शेषः । अवश्यं चैवं बोद्धव्यं बोध्यार्थबोधानुगुणत्वात् । बोधश्चञ्चुरिव परखण्डनायैव मुखसंलग्नो न तु हृदयप्रवेशी यस्य तथाविधेन भूत्वा न स्थेयं स्वपुरुषार्थविघातापत्तेरिति भावः ।

१ सधर्मत्व इति पाठः. २ संविद्या इति पाठः.

१ प्रतीपस्योऽथवा यतेरिति इति पाठः.

यया कयाचिद्युक्त्या तु बोद्धव्यं बोध्यमेव ते ।
युक्तायुक्तं न पश्यन्ति व्याकुला बोधचक्षवः ॥ १३
हृदये संविदाकारो विश्रान्तेऽनुभवात्मनि ।
वस्तुन्यनर्थं यः प्राह बोधचक्षुः स उच्यते ॥ १४
अभिमानविकल्पांशैरज्ञो ज्ञप्तिं विकल्पयेत् ।
बोधं मलिनयत्यन्तः स्वं खमब्द इवामलम् ॥ १५
सर्वप्रमाणसत्तानां पदमब्धिरपामिव ।
प्रमाणमेकमेवेह प्रत्यक्षं तदतः शृणु ॥ १६
सर्वाक्षसारमध्यक्षं वेदनं विदुरुत्तमाः ।
नूनं तत्प्रतिपत्तिसिद्धं तत्प्रत्यक्षमुदाहृतम् ॥ १७
अनुभूतेर्वेदनस्य प्रतिपत्तेर्यथाभिधम् ।
प्रत्यक्षमिति नामेह कृतं जीवः स एव नः ॥ १८
स एव संवित्स पुमानहंताप्रत्ययात्मकः ।
स ययोदेति संवित्त्या सा पदार्थ इति स्मृता ॥ १९
ससंकल्पविकल्पाद्यैः कृतनानाक्रमभ्रमैः ।
जगत्तया स्फुरत्यम्बु तरङ्गादितया यथा ॥ २०
प्रागकारणमेवाशु सर्गादौ सर्गलीलया ।
स्फुरित्वा कारणं भूतं प्रत्यक्षं स्वयमात्मनि ॥ २१
कारणं त्वविचारोत्थजीवस्यासदपि स्थितम् ।
सदिवास्यां जगद्रूपं प्रकृतौ व्यक्तिमागतम् ॥ २२
स्वयमेव विचारस्तु स्वत उत्थं स्वकं वपुः ।
नाशयित्वा करोत्याशु प्रत्यक्षं परमं महत् ॥ २३
विचारवान्विचारोऽपि आत्मानमवगच्छति ।
यदा तदा निरुल्लेखं परमेवावशिष्यते ॥ २४
मनस्यनीहिते शान्ते स्वबुद्धीन्द्रियकर्मभिः ।
नहि कश्चित्कृतैरर्थो नाकृतैरप्यभावनात् ॥ २५
मनस्यनीहिते शान्ते न प्रवर्तन्त एव ते ।
कर्मेन्द्रियाणि कर्मादावसंचारितयन्त्रवत् ॥ २६
मनोयन्त्रस्य चलने कारणं वेदनं विदुः ।
प्रणालीदारुमेषस्य रज्जुरन्तर्गता यथा ॥ २७

॥ १२ ॥ बोध्यं बोधार्हं बोद्धव्यमवश्यं बोद्धव्यमेवेत्यावश्यके तव्यः । दृष्टान्तखण्डनप्रवृत्तौ तु वरघातन्यायापत्तिरित्याह—युक्तेति ॥ १३ ॥ तत्र बोधचक्षोर्लक्षणतो द्वैविध्यमाह—हृदय इति । ज्ञानफलमनर्थत्वेन विकल्पयन्नाद्य इत्यर्थः ॥ १४ ॥ खमब्दो मेघ इव स्वमात्मभूतं बोधं मलिनयति । ज्ञप्तिं तत्साधनं च कुतर्कैर्विकल्पयन् द्वितीय इत्यर्थः ॥ १५ ॥ प्रासङ्गिकं बोधचक्षुलक्षणमभिधाय व्यवहारेऽपि जीवन्मुक्तस्य निर्मन्दरार्णवदृष्टान्तलब्धं निष्क्रियत्वं प्रत्यक्षादिप्रमाणतत्त्वपरीक्षणमुखेन जीवस्याद्वितीयकूटस्थचिन्मात्रस्वभावताव्युत्पादनेन समर्थयितुमुपक्रमते—सर्वेत्यादिना । अपामब्धिः समुद्र इव सर्वप्रमाणप्रामाण्यानां पदं मूलतो विश्रान्तिश्चाधारभूतं प्रत्यक्षमेवैकं मुख्यं तत्त्वमिति यावत् । अतस्तत्प्रत्यक्षमेव मया तत्त्वतो वर्ण्यमानं शृण्वित्यर्थः ॥ १६ ॥ यथा सर्वप्रमाणानामक्षाणीन्द्रियाणि सारस्तथा सर्वाक्षाणामध्यक्षमपरोक्षं वेदनं सारं विदुः । तदेव मुख्यं प्रत्यक्षम् । तत्प्रतिपदवच्छेदभूतमाश्रयभूतं विषयभूतं च घटमहं जानामीति त्रिपुटीप्रत्ययात्सिद्धं तदपि प्रत्यक्षमेव ॥१७॥ तत्र त्रिपुटीमनुसृत्य प्रकाशात्मना भवनमनुभूतिर्वेद्यायास्त्रिपुट्याः प्रकाशनं वेदनं त्रितयं प्रतिप्रकाशात्मनापत्तिर्व्याप्तिः प्रतिपत्तिरिति यथाभिधमभिधामक्षरार्थमनतिक्रम्य त्रिपुटीव्यापिनः साक्षिचिन्मात्रस्य प्रत्यक्षमिति व्यवहारभूमौ नाम कृतं स साक्ष्येव जीवः प्राणधारणनिमित्तेन व्यपदिश्यत इत्यर्थः ॥ १८ ॥ साक्ष्येव वृत्त्युपाधौ संविदित्युच्यते । अहंताप्रत्ययात्मकस्तु पुमान् प्रमातेत्युच्यते । स एव यया विषयाकारवृत्त्या बाह्यावरणभङ्गे आविर्भवति सा पदार्थो विषय इति साक्ष्येव क्रमात्रैविध्यं भजत इत्यर्थः ॥ १९ ॥ व्यष्टावुपपाद्य समष्टौ हिरण्यगर्भेऽप्ययमेव क्रम इत्याह—स इति । संकल्पविकल्पप्रधानान्तःकरणानामाद्यैः समष्टिभिः ॥ २० ॥ तत्साक्षिप्रत्यक्षं प्राक् सर्गादावकारणमेव सर्गलीलया स्वयमेव स्फुरित्वात्मनि सर्गभावापन्ने स्वस्मिन्नेव स्वयं कारणभूते ॥ २१ ॥ एकस्मिन् वास्तवकार्यकारणत्वायोगादसदप्यज्ञानोत्थजीवस्य सदिव स्थितम् । अस्यामविचारसंवलितात्मरूपायां प्रकृतौ जगद्रूपमपि व्यक्तिमागतमेवमसौ प्रपञ्चोऽध्यारोपित इति भावः ॥ २२ ॥ अपवादं दर्शयति—स्वयमेवेति । एवं विचारस्तदभिव्यक्तसाक्षात्कारोऽपि स्वयमेव स स्वत उत्थं परमार्थतः स्वात्मकमेव जगद्वपुरज्ञानोच्छेदेन नाशयित्वा स्वात्मकमनावृतं महदपरिच्छिन्नं प्रत्यक्षं परमं परमपुरुषार्थरूपं करोतीत्युपचारमात्रमित्यर्थः ॥२३॥ तर्हि सविचारश्चरमसाक्षात्कारवृत्तिर्वा मोक्षे शिष्येत, तस्यान्येन नाशेऽनवस्थापत्तिस्तत्राह—विचारोऽपीति । यदा विचारवान् आत्मानमवगच्छति आत्माकारी भवति तदा विचारोऽपि निरुल्लेखं शब्दप्रत्ययोल्लेखायोग्यम् ॥२४॥ तदित्थं बाधिते प्रपञ्चे स्वबुद्धीन्द्रियकर्मभिः सह मनसि शान्ते सति बाधितस्य पुनः सत्यत्वेनाविभावनात् प्रारब्धाधीनचलनाभासेन न क्रियातत्फलभोक्तृत्व इत्यर्थः ॥ २५ ॥ मनःशान्तौ कर्मेन्द्रियाणां तत्प्रवृत्तिनिमित्तस्य चाभावादचलत्वमभिप्रेत्य निर्मन्दर इवाम्भोधिरिति दृष्टान्तोपन्यासः । नह्यज्ञदृशा चलनाभासेऽपि जीवन्मुक्तानां चलनसिद्धिरिति भावः ॥ २६ ॥ वेदनं विषयस्फूर्तिः । यथा काष्ठप्रणाल्यन्तर्गतदारुमेषद्वयस्य परस्परशिरोविघट्टनानुकूले चलने अन्त-

१ अस्योत्तरश्लोकस्य च टीकायां पुस्तकान्तरे प्रतीकोत्तरं "एवं विचारवान्विचारस्तत्पर्यवसितसाक्षात्कारोऽपि" इति । उत्तरत्र तर्हीत्यतः प्राक् "विचारवानिति प्राक्संबध्यते" इति । प्रतीकानन्तरं "यदा आत्मानमवगच्छति आत्माकारी भवति । निरुल्लेखं शब्दप्रत्ययोल्लेखायोग्यम्" इति च पाठो दृश्यते तत्र सदसत्त्वसंख्याद्दुराणावेवचनीयम्.

रूपालोकमनस्कारपदार्थव्याकुलं जगत्।
विद्यते वेदनस्यान्तर्वातान्तः स्पन्दनं यथा ॥ २८
सर्वात्मवेदनं शुद्धं यथोदेति तदात्मकम्।
भाति प्रसृतदिक्कालबाह्यान्तारूपदेहकम् ॥ २९
दृष्टैव दृश्यताभासं स्वरूपं धारयन्स्थितः।
स्वं यथा यत्र यद्रूपं प्रतिभाति तथैव तत् ॥ ३०
स सर्वात्मा यथा यत्र समुल्लासमुपागतः।
तिष्ठत्याशु तथा तत्र तद्रूप इव राजते ॥ ३१
सर्वात्मकतया द्रष्टुर्दृश्यत्वमिव युज्यते।
दृश्यत्वं द्रष्टृसद्भावे दृश्यतापि न वास्तवी ॥ ३२
अकारणकमेवातो ब्रह्म सिद्धमिदं स्थितम्।
प्रत्यक्षमेव निर्मात् तस्यांशास्त्वनुमादयः ॥ ३३
स्वयत्नमात्रे यदुपासको य-
स्तद्दैवशब्दार्थमपास्य दूरे।
शूरेण साधो पदमुत्तमं तत्
स्वपौरुषेणैव हि लभ्यतेऽन्तः ॥ ३४
विचारयाचार्यपरम्पराणां
मतेन सत्येन सितेन तावत्।
यावद्विशुद्धं स्वयमेव बुद्ध्या
ह्यनन्तरूपं परमभ्युपैषि ॥ ३५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे प्रमाणनिरूपणं नामैकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः २०

श्रीवसिष्ठ उवाच।
आर्यसंगमयुक्त्यादौ प्रज्ञां वृद्धिं नयेद्बलात्।
ततो महापुरुषतां महापुरुषलक्षणैः ॥ १
यो यो येन गुणेनेह पुरुषः प्रविराजते।
शिष्यते तं तमेवाशु तस्माद्बुद्धिं विवर्धयेत् ॥ २
महापुरुषता ह्येषा शमादिगुणशालिनी।
सम्यग्ज्ञानं विना राम सिद्धिमेति न कांचन ॥ ३

र्गता रज्जुः सूत्रमाकृष्यमाणा हेतुस्तथा ॥ २७ ॥ ननु मनश्चलने निर्विषयवेदनस्य हेतुत्वायोगात्सविषयं तद्वाच्यम्। तत्र मनश्चलनादपि पूर्वसिद्धो विषयो वाच्यः। तथा विषयाणां मनोमयत्वस्य प्रागुक्तत्वाद्विषयसिद्धेः प्राङ्मनःसिद्धिर्वाच्येत्यन्योन्याश्रय इत्याशङ्क्य सर्वसंस्काररूपेण मायाशबलचिदन्तरधिष्ठानसत्तया सदेवाविर्भवतीत्याह—**रूपे**ति। बहिरिन्द्रियैर्विषयग्रहो रूपालोको मनसा विषयानुसंधानं मनस्कारस्तदुभयविषयाः पदार्थाश्च तैर्व्याकुलम् ॥ २८ ॥ ननु तर्हि कथं कादाचित्कतदुत्पत्त्यादिव्यवस्था स्यात्तत्राह—**सर्वे**ति। उदेति कर्मपरिपाकव्यवस्थया यादृशं प्राणिकर्मभोगायाविर्भवति तदात्मकमुत्पन्नमिव प्रसृतदिक्कालबाह्याभ्यन्तरपदार्थवेषं भाति। अन्तारूपेति 'ढलोपे' इति दीर्घः ॥२९॥ तर्हि स विचारश्चरमं स्वं देहादिदृश्यताभासं दृष्टैव तदेव मे स्वरूपमिति मोहाद्धारयन् सर्वात्मा जीवभावेन स्थित इत्यर्थः। युक्तं चैतदित्याह—**स्व**मिति ॥३०॥ तदेव स्फुटमाह—**स** इति ॥३१॥ इवकारसूचितं दृश्यमिथ्यात्वमुपपादयति—**दृश्यत्व**मिति। दृक्स्वरूपो द्रष्टा यदि दृक्स्वरूपात्प्रच्युतो दृश्यत्वमापद्येत तत् तर्हि निर्द्रष्टृकदृश्यसिद्धिरेव न स्यात्। यद्यप्रच्युतस्तर्हि दृश्यतास्य विवर्तमात्रं रज्जुस्वभावादप्रच्युतस्य सर्पभाववदिति मिथ्यात्वमेवेत्यर्थः ॥ ३२ ॥ अतः कार्यमिथ्यात्वे तत्सापेक्षकारणभावस्यापि मिथ्यात्वादकारणकं सिद्धम्। इत्थं प्रत्यक्षतत्त्वविमर्शो ब्रह्मैवाद्वयं सिद्धमित्युपसंहरति—**इदं स्थितं प्रत्यक्षमेवे**ति। अनुमानादयस्तु प्रत्यक्षपूर्वकत्वात्तत्तत्पर्यवसितत्वाच्च तदंशा एवेति सर्वप्रमाणतत्त्वमात्मैवेत्यर्थः ॥ ३३ ॥ सिंहावलोकनन्यायेन दैवनिरासं स्मारयन् पौरुषस्यैवैतत्फलमित्याह—**स्वे**ति। परमार्थतः स्वकीयप्राक्तनप्रयत्नमात्रं दैवमिति कल्पयित्वा तदधीनोऽहमिति तदुपासनपरो यः पुरुषस्तत्कल्पितं दैवशब्दार्थं दूरे अपास्येन्द्रियादिजये शूरेणाधिकारिणा स्वपौरुषेणैव तत्परमपदं अन्तर्हृद्येवासाद्यते प्राप्यते ॥ ३४ ॥ सत्येन परमार्थनिष्ठेन। सितेन प्रमाणपरिशुद्धेन तावद्विचारय यावत्स्वयमेव स्वबुद्ध्या त्रिविधपरिच्छेदशून्यं पदमभ्युपैषि साक्षात्कारेण प्राप्नोषि ॥ ३५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे प्रमाणनिरूपणं नामैकोनविंशतितमः सर्गः ॥ १९ ॥

प्रज्ञाबुद्धिप्रकारोऽत्र महापुरुषलक्षणम्।
सदाचारक्रमाश्चोक्ताः परस्परविवर्धनाः ॥ १ ॥

उक्तं ज्ञानं महापुरुषेष्वेव प्रतितिष्ठति नान्येषु। महापुरुषता च वक्ष्यमाणसदाचारेण सिध्यतीति सदाचारं वर्णयितुमुपक्रममाणः श्रीवसिष्ठ उवाच—**आर्ये**ति। आदौ आर्याणां संगमैस्तदुपदेशाचरणशिक्षणयुक्त्या प्रज्ञां वृद्धिं नयेत्। ततः स्वं महापुरुषलक्षणैर्वक्ष्यमाणैर्महापुरुषतां नयेत् ॥ १ ॥ तत्र यदि सर्वे गुणा एकस्मिन् पुरुषे न लभ्येरंस्तर्हि यो यः पुरुषो येन येन गुणेन प्रभूतो विज्ञायते स तेनैवेतरेभ्यः शिष्यते विशिष्यते तस्मात्पुरुषात्तं तमेवाशु शिक्षित्वा स्वबुद्धिं विवर्धयेत्। 'शिक्षेत' इति पाठे तु स्पष्टम् ॥ २ ॥ एषा शमादिगुणप्रज्ञाशालितैव

१ सत्त्वेन इति मूलव्याख्ययोः क्वचित्पाठः। २ परमार्थतः स्वरूपदेहकमेव. ३ तर्हीत्यारभ्य चरममित्यन्तं क्वचिन्नास्ति.

ज्ञानाच्छमादयो यान्ति वृद्धिं सत्पुरुषक्रमाः ।
श्लाघनीयाः फलेनान्तर्वृष्टेरिव नवाङ्कुराः ॥ ४
शमादिभ्यो गुणेभ्यश्च वर्धते ज्ञानमुत्तमम् ।
अन्नात्मकेभ्यो यज्ञेभ्यः शालिवृष्टिरिवोत्तमा ॥ ५
गुणाः शमादयो ज्ञानाच्छमादिभ्यस्तथा ज्ञता ।
परस्परं विवर्धन्ते ते अब्जसरसी इव ॥ ६
ज्ञानं सत्पुरुषाचाराज्ज्ञानात्सत्पुरुषक्रमः ।
परस्परं गतौ वृद्धिं ज्ञानसत्पुरुषक्रमौ ॥ ७
शमप्रज्ञादिनिपुणपुरुषार्थक्रमेण च ।
अभ्यसेत्पुरुषो धीमाञ्ज्ञानसत्पुरुषक्रमौ ॥ ८
न यावत्सममभ्यस्तौ ज्ञानसत्पुरुषक्रमौ ।
एकोऽपि नैतयोस्तात पुरुषस्येह सिध्यति ॥ ९
यथा कलमरक्षिण्या गीत्या वितततालया ।
खगोत्सादेन सहितं गीतानन्दः प्रसाध्यते ॥ १०
ज्ञानसत्पुरुषेहाभ्यामकर्त्रा कर्तृरूपिणा ।
तथा पुंसा निरिच्छेन सममासाद्यते पदम् ॥ ११
सदाचारक्रमः प्रोक्तो मयैवं रघुनन्दन ।
तथोपदिश्यते सम्यगेवं ज्ञानक्रमोऽधुना ॥ १२
इदं यशस्यमायुष्यं पुरुषार्थफलप्रदम् ।
तज्ज्ञादाप्ताच्च सच्छास्त्रं श्रोतव्यं किल धीमता ॥ १३
श्रुत्वा त्वं बुद्धिनैर्मल्याद्बलाद्यास्यसि तत्पदम् ।
यथा कतकसंश्लेषात्प्रसादं कलुषं पयः ॥ १४
विदितवेद्यमिदं हि मनो मुने-
र्विवशमेव हि याति परं पदम् ।
यदवबुद्धमखण्डितमुत्तमं
तदवबोधवशान्न जहाति हि ॥ १५

इत्यार्षे श्रीवासिष्ठमहारामायणे द्वात्रिंशत्साहस्र्यां संहितायां वाल्मीकीये मोक्षोपाये मुमुक्षुव्यवहारप्रकरणे सदाचारनिरूपणं नाम विंशतितमः सर्गः ॥ २० ॥

---

महापुरुषता ॥ ३ ॥ सत्पुरुषैः क्रम्यन्त आचर्यन्त इति सत्पुरुषक्रमाः सदाचारा अमानित्वादयश्च अन्तःफलेनात्मसुखाविर्भावेन श्लाघनीयाः प्रशस्याः ॥ ४ ॥ शाल्याद्यन्नोत्पत्तिहेतुभूता वृष्टिरिव । तथाच स्मृतिः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति ॥५॥ युगपत्परस्परवृद्ध्यनुरूपदृष्टान्तोपन्यासायोक्तमेव पुनराह—**गुणा** इति । ते अब्जसरसी इवेत्युभयत्रापि प्रगृह्यत्वादसंधिः । अब्जैः सरसः शैत्यसौगन्ध्यशोभादिगुणैर्वृद्धिरत्र विवक्षिता ॥ ६ ॥ एवं ज्ञानसदाचारयोरपि परस्परवृद्धिहेतुतेत्याह—**ज्ञान**मिति ॥ ७ ॥ शमेन प्रज्ञामहापुरुषतादिना च निपुणो यः पुरुषार्थः श्रवणादिप्रयत्नस्तत्क्रमेण ज्ञानसदाचारावभ्यसेत् ॥ ८ ॥ ९ ॥ विवृद्धिफलमपि तयोस्तुल्यकालमेव भवतीति सदृष्टान्तमाह—**यथे**ति द्वाभ्याम् । पक्वशालिक्षेत्ररक्षिण्याः स्त्रियाः खगोत्सादनांशे व्यापारान्तराकर्त्र्या अपि विततकरतालध्वनियुक्तया गीत्या आनुषङ्गिकखगोत्सादेन तुल्यकालो गीतानन्दः प्रवर्तते[1] ॥ १० ॥ तथा ज्ञानविघ्नरागमानादिनिरासांशे निरिच्छेन । अतएवाकर्त्रापि ज्ञानसाधनश्रवणसदाचाराभ्यामनुष्ठिताभ्यां तन्मात्रकर्तृरूपिणा पुंसा आनुषङ्गिकविघ्ननिरासेन समं परमपदमासाद्यते ॥ ११ ॥ यथा एवंप्रकारोऽयं सदाचारक्रमो मया प्रोक्तस्तथा अधुना उत्तरप्रकरणे ज्ञानक्रम उपदिश्यते इति वक्ष्यमाणप्रतिज्ञा ॥ १२ ॥ साधनकलापोपदेशं फलकीर्तनेनोपसंहरति—**इद**मित्यादिना । किलेति सांप्रदायिकार्थप्रसिद्धौ ॥ १३ ॥ बलादिति साधनप्रभावोक्तिः । प्रसादं नैर्मल्यम् ॥ १४ ॥ मुनेः प्रकृतसाधनसंपत्त्या मननशीलस्य मनो विदितवेद्यं सत्तद्बलाद्विवशं परं पदमनिच्छदपि याति । न केवलं साधनप्राबल्यादेवैवं किंतु वेद्यतत्त्वस्वभावादपीत्याह—**यदि**ति । अवबोधवशादवबोधाधीनत्वात् । अवबोधात्मकचरमवृत्तीद्धत्वादिति यावत् । अवधूयाज्ञानतत्कार्यं बुद्धं जागरूकमखण्डितमुत्तमं यत्पदं तन्मनो न जहाति । अज्ञानतत्कार्यान्तरैः समं बाधत एवेत्यर्थः । हीति विद्वत्प्रसिद्धौ । तथाचाहुः 'देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥' ॥ १५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे सदाचारनिरूपणं नाम विंशतितमः सर्गः ॥ २० ॥

[1] प्रवर्तते=प्रसिद्ध्यति.

## समाप्तमिदं मुमुक्षुव्यवहारप्रकरणम् ।



श्रीः ।

# योगवासिष्ठः ।

## श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशाख्यव्याख्यासंवलितः ।

## उत्पत्तिप्रकरणं तृतीयम् ।

### प्रथमः सर्गः १

**वाग्भाभिर्ब्रह्मविद्ब्रह्म भाति स्वप्न इवात्मनि ।**
**यदिदंतत्स्वशब्दोत्थैर्यो यद्वेत्ति स वेत्ति तत् ॥ १**

सत्यं ज्ञानमनन्तमेकमजरं नित्यं विभुं शाश्वतं
प्रत्यग्ब्रह्मरसायनं सुखघनं पूर्णं परं पावनम् ।
स्वात्मज्योतिरनादिमध्यनिधनं मायाविलासैर्मुहु-
र्विश्वाकारमपास्तमायमभयं वन्दे विशुद्धं पदम् ॥१॥

ज्ञानादेवात्मनो मोक्षो न तु कर्मसमाधिभिः ।
अज्ञातोऽसौ स्वसंदृश्यं सृजत्येवेति कीर्त्यते ॥ १ ॥

**अथ** यथोक्तसाधनसंपन्नस्याधिकारिणः-'तावद्विचारयेत्प्राज्ञो यावद्विश्रान्तिमात्मनि । संप्रयात्यपुनर्नाशां शान्तिं तुर्यपदाभिधाम् ॥' यावत्तत्त्वापरोक्षावधारणं कर्तव्यतया विहितं विचारप्रकारं प्रकरणद्वयोपवर्णितसमस्तसाधनसंपन्नायाधिकारिमूर्धन्याय श्रीरामाय 'अथोपदिश्यते सम्यगेवं ज्ञानक्रमोऽधुना' इति प्रतिज्ञानपूर्वकमुत्तरग्रन्थेन विस्तरेण वर्णयितुं प्रवृत्तो भगवान् श्रीवसिष्ठः सृष्टिप्रकारोपवर्णनमुखेन ब्रह्माद्वैतं प्रतिपादयितुं प्रवृत्तस्योत्पत्तिप्रकरणस्य सुखप्रबोधाय प्रथमं संक्षिप्य तात्पर्यं दिदर्शयिषुः 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादिसृष्टिप्रदर्शकश्रौतसंदर्भस्य 'अहं ब्रह्मास्मि' इत्यादिमहावाक्यार्थबोध इवात्रापि दृष्टान्तस्यैकदेशेन 'बोध्यबोधोदये सति । उपादेयतया ग्राह्यो महावाक्यार्थनिर्णयः' इति प्रागुक्तरीत्या पर्यवसानमिति दर्शयति-**वाग्भाभिरि**त्यादिना । ब्रह्मैव वाग्भाभिर्महावाक्यजाखण्डाकारवृत्तीद्धस्वात्मप्रकाशैर्ब्रह्मवित् स्वतत्त्वं साक्षात्कृतवत्सद्भाति पारमार्थिकनित्यमुक्तपूर्णस्वरूपेण प्रकाशते । स्वमुक्तौ वाक्यजन्यवृत्त्यतिरिक्तं नापेक्षत इति भावः । तत्कुतः । यतो यदिदं देहेन्द्रियादि वियदादि च दृश्यं बन्धरूपमात्मनि प्रत्यगात्मभूते ब्रह्मण्येव स्वप्न इवाविर्भूतं भाति । नहि स्वाप्नबन्धनिवृत्तिः प्रबोधातिरिक्तं साधनमपेक्षत इति भावः । तथाच श्रुतौ 'यद्ब्रह्मविद्यया भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत्' इत्याक्षिप्योत्तरमुक्तं 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदाहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' इति । सर्वं पूर्णम् असंसारिभूमानन्दैकस्वभावमित्यर्थः । अस्यां श्रुतौ ब्रह्म स्वयं स्वतत्त्वबोधान्मुक्तबन्धं पूर्णमभूदित्युक्तेस्तदेव प्राक् स्वतत्त्वप्रतिबोधात्स्वप्न इव द्वैतप्रियाप्रियदर्शनपरिच्छेदलक्षणं बन्धमनुभवतीवेति बन्धस्य मिथ्यात्वं प्रतीच एव ब्रह्मत्वं च स्फुटतरमवगम्यते । तत्र यथा तदुपपादकार्थवादभूतानां तन्नामरूपाभ्यामेव व्याक्रियते 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यादिप्राक्तनसृष्टिप्रवेशादिवाक्यानां जगज्जीवभावयोरज्ञातब्रह्ममात्रोपादानकयोरुत्पत्त्यादिकालत्रयेऽपि ब्रह्मव्यतिरिक्तसत्ताऽसंभवान्मिथ्यात्वमेवेत्युपपादनेन स्वप्रधानमहावाक्यतात्पर्यविषयब्रह्माद्वैते पर्यवसानं तद्वदत्रापि बोध्यमिति भावः । भवतु तथा किं नस्तेनेति तत्राह—**तदि**त्यादिना । तद्ब्रह्म इदानींतनोऽस्मदादिरपि योऽधिकारी स्वशब्दोत्थैः श्रवणाद्युपायैर्यत् यादृशं तत्त्वं तस्तथा वेत्ति अहमेव ब्रह्मेति साक्षात्करोति स तत् प्रागुक्तं पूर्णनित्यमुक्तब्रह्म भारूपं मोक्षफलमपि वेत्ति जीवन्नेव साक्षादनुभवति । तथाच श्रुतिः 'तयो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति ॥ अथवा यन्मुमुक्षूणामज्ञातत्वाजिज्ञासितमिदं सर्वजनानामात्मत्वेन प्रत्यक्षं ब्रह्मवचनं वाक् वाचकशब्दप्रपञ्चो भातीति भास्तत्प्रकाश्यार्थप्रपञ्चश्च ताभिः 'त्रयं वा इदं नामरूपं कर्म' इति श्रुतिदर्शितद्वैतप्रपञ्चभावैर्वि-

१ स्वयं दृश्यं इति पाठः. २ भावरूपं इति पाठः. ३ स्वस्यापि प्रकरणस्य इति पाठः.

विविक्ततया ब्रह्मवित् स्वं पश्यत्सदात्मनि खस्मिन् स्वप्न इव वधबन्धशोकमोहादिदुःखिस्वभावं भाति, तत्तथा भातमपि ब्रह्म योऽधिकारी खशब्दोत्थैः स्वात्ममात्रपरिशेषक 'नेतिनेति' इत्यादिवाक्यकृतैर्द्वैतनिषेधैर्यत् यादृशं परिशिष्टं वेत्ति स एव तद्ब्रह्म तत्त्वतो वेत्ति नत्वध्यारोपितनामरूपादिसंवलितदर्शीत्यर्थः ॥ **अथवा** वागिति वचनादिक्रियाशक्तिप्रधानानि कर्मेन्द्रियाण्युपलक्ष्यन्ते। भा इति प्रकाशप्रधानानि ज्ञानेन्द्रियाणि। तैर्द्वारैर्या ब्रह्मविद्वस्तुतो ब्रह्मापि पश्यति स ब्रह्म सन्नप्यात्मनि स्वप्न इवाब्रह्मभूतोऽन्यथा भाति। बहिर्मुखस्य तत्त्वदर्शनासिद्धेः। 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्' इत्यादिश्रुतेः। यस्त्वधिकारी यत्प्रसिद्धमिदं प्रपञ्चरूपमपि स्वशब्दोत्थैः 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदं सर्वं' इत्यादिपरमार्थपरवाक्यजन्यबोधैर्यत्सर्वाधिष्ठानसन्मात्रं वेत्ति स व्यावृत्तबाह्येन्द्रियप्रसरः प्रत्यङ्मुखस्तद्ब्रह्म वेत्ति। तथाच बाह्यदृष्ट्या ब्रह्मापि दृष्टमनर्थं एव, प्रामाणिकप्रत्यग्दृष्ट्या तु जगदपि दृष्टं पुरुषार्थायेति सृष्टिप्रपञ्चनव्याजेन प्रत्यग्दृष्टिव्युत्पादनेऽस्य प्रकरणस्य तात्पर्यमित्यर्थः॥ **अथवा** वक्ष्यमाणाभिरुपदेशवाग्भिर्भाभिर्दृष्टान्ताख्यानोपपत्तिप्रकाशैश्चैतदुच्यत इति शेषः। यद्ब्रह्मविदेव परमार्थतो ब्रह्म न ब्रह्मनामकमर्थान्तरं व्यवहितविप्रकृष्टदेशे स्वात्मनोऽन्यदेवास्तीति भ्रमितव्यमिति। यदिदं दृश्यप्रपञ्चरूपं तत्स्वप्न इवात्मन्येवाध्यस्तं भाति न तदपि परमार्थसत्यमन्यदस्तीति भ्रमितव्यमिति। तत्र चोक्तब्रह्मभावजगद्भावद्वये यो विवेक्यविवेकी वा यदेव स्वशब्दोत्थैर्ब्राह्मणोऽहं क्षत्रियोऽहं देवदत्तोऽहमिति स्वाभाविकलौकिकप्रसिद्धमिथ्यास्वशब्दजन्यैर्वा ब्रह्मैवाहं चिदेवाहमित्यादिशास्त्रीयसत्यार्थस्वशब्दजन्यैर्वा प्रत्ययैर्यद्यादृशं स्वरूपं स्वस्य वेत्ति स तदेव वेत्ति पुनःपुनरनुभवति। संसार्यात्मदर्शिनः संसार एव फलति, ब्रह्मात्मदर्शिनस्तु ब्रह्मभाव एवेति तद्दर्शिनैव भाव्यमिति भावः॥ **अथवा** ननु प्रागुपदिष्टमेव ब्रह्म यथास्थितं ब्रह्मतत्त्वं सत्तानियतिरुच्यते 'अस्त्यनन्तविलासात्मा सर्वगः सर्वसंश्रयः' इत्यादिना, तत्रोपदिष्टे ब्रह्मणि शमाद्यभावाच्चित्तास्थैर्ये प्राप्ते शमादिसाधनानि तद्दृढीकाराय पौरुषप्रयत्नश्चोपदिष्ट इति नोपदेष्टव्यान्तरमवशिष्यते। यदि सकृदुपदिष्टवाक्यार्थप्रकाशैर्ब्रह्म न भाति तर्हि शतकृत्वोऽप्युपदिश्यमानं तथैवेति किमस्यैव पुनःपुनरुपदेशेन पिष्टपेषणप्रायेणेत्याशङ्क्याह—**वाग्भाभिरिति**। यो ब्रह्मविद् ब्रह्मवेत्ता श्रोता वाग्भाभिः सकृदुपदेशवाक्यार्थप्रकाशैर्हेतुभिर्यद्ब्रह्म स्वयमेवेति भाति प्रथते तत्स्वप्न इव बाधितप्रायं न दृढतरं भवति निद्रावशोऽनिरूढनाक्षत्रादिस्वनामघटितोपांशुप्रबोधकवाक्यमिव न सम्यगवधारयतीति वार्थः। स एव हे देवदत्त हे यज्ञदत्तेत्यादिचिरव्यवहारनिरूढस्वनामसंबोधनोत्थैरिव बहुकालाभ्यस्तश्रवणाद्यभ्यासदृढपरिचितमहावाक्योत्थप्रत्ययैर्यद्वेत्ति स एव तद्वेत्ति। तादृशासंदिग्धस्वात्मबोध एवाविद्योच्छेदहेतुरित्यर्थः। तथाच तादृशदृढनिश्चयापरोक्षानुभवाय पुनःपुनरुपपत्तिभिरुपदेशो यावत्फलोदयमभ्यसनीय इत्युत्तरग्रन्थोपपत्तिरिति भावः। तथाच सूत्रम् 'आवृत्तिरसकृदुपदेशात्' इति॥ **अथवा** यथा अब्रह्मविज्जाग्रद्व्याधिचिरवासनावासितः स्वप्ने अविद्यया कुत्सनभर्त्सनभीषणादिवाग्भिर्भयकम्पपलायनगर्तपतनादिप्रतिभाभिश्चोपलक्षितो दुःखी भाति, यथा वा उपासको जाग्रद्देवभाववासनावासितः स्वप्ने देव इव राजेव स्तुतिप्रशंसनादिवाग्भिर्जक्षणक्रीडनविमानारोहनभोविहारादिप्रतिभाभिश्चोपलक्षितो भाति तथा ब्रह्मविदपि चिराभ्यस्तश्रवणादिवासितः स्वप्ने ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं अहमेवेदं सर्वोऽस्मीति परमार्थप्रतिपादकवाग्भिर्वास्तवब्रह्मभावप्रतिभाभिश्च भाति। तथा फलावस्थायामपि स्वप्नवत्परलोकफलस्यापि दृढाभ्यस्तवासनानुसारित्वस्य लीलोपाख्यानादौ व्युत्पादयिष्यमाणत्वात्। नन्वत्र किं प्रमाणं तत्राह—**यदिति**। यदिदं स्वप्नवत्परलोकस्यापि वासनानुसारित्वं तत्स्वयमेव शब्दयन्ति बोधयन्ति ननु मूलसापेक्षतयेति स्वशब्दाः श्रुतयस्तदुत्थैः प्रत्ययैः स्वतःप्रमाणभूतैरध्यवसीयते। 'अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छादयति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथो यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः'। 'तद्य इह व्याघ्रो वा सिंहो वा यद्यद्भवन्ति तदाभवन्ति।' 'यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनं मनो कृतेनायात्यस्मिन् शरीरे' इत्यादिश्रुतिभ्यः। 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः॥ तस्मात्सर्वेषु कालेषु मामनुस्मर' इत्यादिस्मृतिभ्यश्चेत्यर्थः। तथाचाभ्यासदशायां यो यद्वेत्ति संसार्यात्मानं ब्रह्मात्मभावं वा स फलावस्थायामपि तद्वेत्त्यनुभवतीति निरन्तरं ब्रह्मानुभववासनैव दृढीकार्येत्युत्पत्तिप्रकरणतात्पर्यार्थं इति भावः॥ **अथवा** वाग्भिः श्रुतिस्मृत्यादिशब्दप्रमाणैर्भाभिर्विद्वदनुभवप्रकाशैश्च ब्रह्मविद्ब्रह्मैव। यदिदमस्याज्ञानदशाप्रसिद्धमब्रह्मत्वमवस्थात्रयं च तदात्मनि स्वप्न इव भाति। 'तस्य त्रय आवसथास्त्रयः स्वप्नाः' इति श्रुतेः 'तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि। उक्तेऽर्थे संशयश्चेत्स्यात्प्रत्यग्दृष्ट्या निरीक्ष्यताम्॥' इति वार्तिकादिप्रसिद्धविद्वदनुभवाच्च। तदुक्तार्थद्वयं योऽधिकारी स्वः स्वीयः करतलामलकवदपरोक्षीकृतात्मतत्त्व उपदेशकुशल आचार्यस्तस्योपदेशशब्दोत्थैरनुभवानुकूलैरूहापोहाद्युपायैर्यद्यादृशं वेत्ति स एव स्वानुभवतोऽपि तद्वेत्ति। 'आचार्यवान्पुरुषो वेद'। 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्'। 'आचार्यो ज्ञाता कुशलानुशिष्टः' इत्यादिश्रुतेरित्यर्थः॥ **अथवा** ब्रह्मविदामनुभवसिद्धं ब्रह्म व्यवहारे वाग्भाभिस्तुल्यं भाति, यथा वा घटादिशब्दाः संकेतात्स्वानुरञ्जितमर्थं प्रकाशयन्ति तद्भावापन्नैव स्वयं प्रथते यथा भा आलोकोऽपि तथा प्रथते एवं ब्रह्मापि भास्यानुरञ्जितं तदविविक्तस्वप्रकाशं प्रथत इत्यर्थः। नन्वसङ्गाद्वितीयस्य कथं परानुरञ्जनेन प्रथनं तत्राह—**यदिति**। यद्यस्मात्कारणादात्मन्यध्यासेन स्वप्न इव इदं तनोतीतीदंतत्



१ पुनःपुनरुपदेशो इति पाठः.

२ वाग्भा इति पाठः.

**न्यायेनानेन लोकेऽस्मिन्सर्गे ब्रह्माम्बरे सति ।**
**किमिदं कस्य कुत्रेति चोद्यमूचे निराकृतम् ॥ २**
**अहं तावद्यथाज्ञानं यथावस्तु यथाक्रमम् ।**
**यथास्वभावं तत्सर्वं वच्मीदं श्रूयतां बुध ॥ ३**
**स्वप्नवत्पश्यति जगच्चिन्नभोदेहवित्स्वयम् ।**
**स्वप्नसंसारदृष्टान्त एवाहंत्वंसमन्वितम् ॥ ४**

सर्वप्रपञ्चविवर्तोपादानमित्यर्थः । तथाच कारणस्य कार्यानुरञ्जनं युक्तमेव । कार्यमिथ्यात्वाच नासङ्गाद्वितीयताविरोध इति भावः । तत्तथाभूतं ब्रह्म स्वशब्दोक्तैरनुगतस्वयंरूपमात्रपरामर्शात्मादिशब्दनिकृष्टबोधैर्यो वेत्ति स तदसङ्गोदासीनस्वप्रकाशचिन्मात्रस्वभावं वेत्ति न विशेषनामरूपसंवलितदर्शीत्यर्थः ॥ **अथवा** ब्रह्म स्वप्रकाशत्वाद्ब्रह्मवित्स्वप्रथायामन्यनिरपेक्षमपि वाग्भाभिः 'वागेवास्य ज्योतिर्भवति आदित्य एवास्य ज्योतिर्भवति' इति श्रुत्युक्तेर्ज्योतिरन्तरैर्व्यामोहात्स्वप्न इवात्मनि ज्योतिरन्तरासंकीर्णदशायामेव समाध्यादौ निष्कृष्टं भाति न संसारजागरे । श्रुत्या तत्रैव 'आत्मैवास्य ज्योतिर्भवत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते' इति स्वयंज्योतिष्ट्वस्फुटीभावप्रदर्शनात् । इत्थं स्वप्ने व्युत्पादितस्य स्वयंज्योतिरात्मनो जागरेऽप्यनुभवे उपायमाह—**यदिति** । इदमिति तदिति स्वमिति च शब्दैरुक्तैराधिभौतिकाधिदैविकाध्यात्मिकविषयप्रत्ययैर्भोक्तारं प्रति एति आगच्छतीति यत्तथाविधं यद्विषयजातं तद्यो वेत्ति स तद्ब्रह्मैव सन्वेत्ति ननु कल्पितोपाध्यात्मा सन्वेत्ति । जडात्मनो वेदनशक्त्यभावात् 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इति द्रष्टश्रोत्रन्तरप्रतिषेधाच्चेति भावः । तथाच बहिरर्थप्रकाशे ज्योतिरन्तरसंकीर्णत्वेऽपि नान्तरुपनीतार्थप्रथायां तत्संकर इति जागरेऽपि स्वयंज्योतिरात्मा विवेकिभिः सुबोध इति सदैव तद्विमर्शपरेण भाव्यमित्याशयः ॥ **अथवा** यदिदमिहलोकरूपं कर्मस्थानं तत्स्वर्गादिरूपं तत्फलस्थानं स्वं स्वयं तत्फलभोक्ता चेति त्रितयप्रतिपादककर्मकाण्डशब्दोक्तैः प्रत्ययैर्यद्भाति यच्चोपनिषद्वाग्भिर्मननादिप्रकाशैश्चाहं ब्रह्मविद्ब्रह्मेति वा भाति तत्सर्वं स्वप्न इवाप्रबुद्ध एवात्मनि भाति न भूमात्मनि । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति श्रुतेः । 'सर्वाणि च शास्त्राणि विधिनिषेधमोक्षपराण्यविद्यावद्विषयत्वं नातिवर्तन्ते' इति भाष्याच्च । तदिदं रहस्यं योगस्तद्वेदेति श्रुतिं विडम्बयन्नाह—**यो यद्वेत्ती**ति । विद्वदनुभवैकसिद्धमिदमित्यर्थः ॥ दुरूहत्वास्य पद्यस्य सुधीभिरपि दुर्गमाः । इमे गुरुप्रसादेन दशार्थाः संप्रकाशिताः ॥ १ ॥ इत्थं प्रकरणार्थसंक्षेपोपदर्शनमुखेनावान्तरविषये प्रदर्शिते प्रपञ्चमिथ्यात्वज्ञानलक्षणावान्तरप्रयोजनानुबन्धी प्राक्तनचोद्यपरिहारोऽप्यर्थात्सिद्ध इत्याह—**न्यायेने**ति । अनेन संक्षेपतो दर्शितेन विस्तरतो वक्ष्यमाणेनाध्यस्तस्याधिष्ठानापृथगसत्त्वन्यायेनाध्यारोपापवादन्यायेन वा ब्रह्माम्बरेऽध्यासक्रमेणास्मिन्परिदृश्यमाने सर्गे प्रपञ्चरूपे सति सर्गे वाऽपवादक्रमेण लोकेऽवलोक्यमाने ब्रह्माम्बरे ब्रह्माकाशमात्रे सति 'तदेतद्भगवन्ब्रूहि किमिदं परिणश्यति । किमिदं जायते भूयः किमिदं परिवर्धते ॥' इत्यादिना भवान् प्राग्यत्सतो नाशायसंभवचोद्यमूचे तत्स्वतो निराकृतमेवोचे । सतो नाशाद्यनभ्युपगमान्नश्वरस्य सत्त्वानभ्युपगमाच्चोद्यविषयाभावादित्यर्थः ॥ २ ॥ इत्थमवान्तरविषयफले प्रदर्श्य विस्तरोक्तिं प्रतिजानीते—**अह**मिति । इदं संक्षिप्य दर्शितमर्थजातं वच्मि विस्तरेणेत्यर्थः । प्रमाणतोऽनुभवतश्च यथाज्ञानं, परीक्षणतो यथावस्तु, साधनोपपत्तिनिरूपणतो यथाक्रमं, श्रोतृबुद्धिपरिपाकानुसारतश्च यथास्वभावम् । सर्वत्र पदार्थानतिवृत्तावव्ययीभावः । अथवा यथावस्त्विति सर्गपूर्वावस्थोक्तिस्तदा सर्वजगतः सन्मात्ररूपत्वात्, यथाज्ञानमिति सर्गारम्भकलनोन्मुखत्वोक्तिः । यथाक्रममिति स्थूलीभावेन सृष्टिक्रमोक्तिः । यथास्वभावमिति जगदारोपदशायामप्यविकृतस्वभावोक्तिः । सर्वमिति ज्ञानप्राप्यपूर्णभावोक्तिः । 'तस्मात्तत्सर्वमभवत्' इति श्रुतौ पूर्णभावे सर्वशब्ददर्शनात् । बुधेत्युत्तमाधिकारस्मारणं श्रवणादरोत्पादनार्थम् ॥ ३ ॥ स्वप्नवदात्मनीति यदुक्तं तस्य तात्पर्यं विशदयति—**स्वप्नवदि**ति । चिन्नभोदेहविजीवभावापन्नं सद्यज्जगत्पश्यति तत्स्वप्नवत्पश्यति । यथा स्वप्नदर्शनं विषयबाधेऽपि न बाध्यते तद्वज्जगद्दर्शनमपीति । दृशेः सत्यत्वे तात्पर्यमिति भावः । एवमहमिति प्रत्यगात्मतादात्म्येन त्वमिति पराग्भावेन च भासमानं प्रपञ्चरूपमपि स्वप्नसंसारदृष्टान्ते दार्ष्टान्तिकत्वेन समन्वितं सम्यक्संबद्धम् । तस्य मिथ्यात्वे तात्पर्यमिति भावः । अथवा ननु प्रमाणजस्य कथमप्रमाणजं स्वप्नदर्शनं दृष्टान्तस्तत्राह—**देहविदि**ति । यद्यपि बाह्यं जगत्प्रमाणैः पश्यति तथापि कार्यकरणसंघातात्मकव्यष्टिसमष्टिदेहभासकः स्वयमेव न बाह्यप्रमाणसापेक्ष इत्यर्थः । ननु रूपादिमत्त्वाद्देहोऽपि चक्षुरादिनैव भासतां तत्राह—**अहंत्व**मिति । यदि चक्षुरादिना स भासेत तर्हीदमित्येव भासेत । तद्विषये सर्वत्रेदंत्वदर्शनात् । अहंत्वं तु तत्र भासमानं स्वप्नसंसारदृष्टान्त एव समन्वितं युक्तमित्यर्थः । अथवा अस्तु देहस्य स्वप्नसाम्यं तथापि कथं बाह्यनामरूपात्मकजगन्मात्रस्य तथात्वं तत्राह—**अहंत्वंसमन्वित**मिति । न बाह्यरूपादितावन्मात्रं निष्कृष्टं भासते किंतु रूपमहं पश्यामीति त्रिपुटीभूतमहमर्थसंवलितत्वमर्थरूपम्, तत्तु साक्षिमात्रैगम्यत्वात्स्वप्नसंसारदृष्टान्ते दार्ष्टान्तिकं भवत्येवेति शेषः । नह्यध्यस्तगोचरज्ञाने सत्यार्थो विषयो भवति । 'अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु' इति सिद्धान्ताद्बाह्यप्रमाणानां व्यवहारेष्वर्थाविसंवादमात्रेणापि व्यावहारिकप्रामाण्याविघातादिति भावः

१ चिन्मयं इति पाठः. २ कार्यकरणसंघाता इति पाठः. ३ मात्रवेद्यत्वात् इति पाठः.

मुमुक्षुव्यवहारोक्तिमयात्प्रकरणात्परम् ।
अथोत्पत्तिप्रकरणं मयेदं परिकथ्यते ॥ ५
बन्धोऽयं दृश्यसद्भावाद्दृश्याभावेन बन्धनम्[1] ।
न संभवति दृश्यं तु यथेदं तच्छृणु क्रमात् ॥ ६
उत्पद्यते यो जगति स एव किल वर्धते ।
स एव मोक्षमाप्नोति स्वर्गं वा नरकं च वा ॥ ७
अतस्ते स्वावबोधार्थं तत्तावत्कथयाम्यहम् ।
उत्पत्तिः संसृतावेति पूर्वमेव हि यो यथा ॥ ८
इदं प्रकरणार्थं त्वं संक्षेपाच्छृणु राघव ।
ततः संकथयिष्यामि विस्तरं ते यथेप्सितम् ॥ ९
यदिदं दृश्यते सर्वं जगत्स्थावरजंगमम् ।
तत्सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति ॥ १०
ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ ११
ऋतमात्मा परं ब्रह्म सत्यमित्यादिका बुधैः ।
कल्पिता व्यवहारार्थं तस्य संज्ञा महात्मनः ॥ १२
स तथाभूत एवात्मा स्वयमन्य इवोल्लसन् ।
जीवतामुपयातीव भाविनाम्ना[2] कदर्थिताम् ॥ १३
ततः स जीवशब्दार्थकलनाकुलतां गतः ।
मनो भवति भूतात्मा मननान्मन्थरीभवन् ॥ १४
मनः संपद्यते तेन महतः परमात्मनः ।
सुस्थिरादस्थिराकारस्तरङ्ग इव वारिधेः ॥ १५
तत्स्वयं स्वैरमेवाशु संकल्पयति नित्यशः ।
तेनेत्थमिन्द्रजालश्रीर्विततेयं वितन्यते ॥ १६
यथा कटकशब्दार्थः पृथक्त्वार्हो न काञ्चनात् ।
न हेम कटकात्तद्वज्जगच्छब्दार्थता परे ॥ १७
ब्रह्मण्येवास्त्यनन्तात्म यथास्थितमिदं जगत् ।
न जगच्छब्दकार्थेऽस्ति हेम्नीव कटकात्मता ॥ १८

॥ ४ ॥ अथेत्यानन्तर्येण हेतुतासंगतिर्दर्शिता ॥ ५ ॥ ननु बन्धनिरासोपायार्थिनो मम किमनेन दृश्यमिथ्यात्वपरोत्पत्तिप्रकरणश्रवणेनेत्यत्राह—**बन्ध** इति ॥ ६ ॥ ननु न दृश्यासंभवमात्रेण बन्धनिवृत्तिः, उत्पत्तिवृद्धिनाशस्वर्गनरकादेर्बन्धस्य द्रष्टृधर्मताप्रत्ययेनात्मकोट्यन्तःपातेन दृश्यनिवृत्तावपि तदनिवृत्तेरित्याशङ्क्याह—**उत्पद्यत** इति द्वाभ्याम् । सत्यमुत्पद्यते यः स एव वृद्ध्यपक्षयस्वर्गनरकादीन् बन्धमोक्षौ चानुभवेन्न त्वात्मा उत्पत्त्यादिस्वभावः । स्वस्वरूपानवबोधेनैव तस्योत्पत्त्यादिभ्रमविभावनादित्यर्थः ॥७॥ यतः स्वानवबोधादेव बन्धोऽतः स्वावबोधार्थं तद्दृश्यासंभवं तावद्वक्ष्यमाणप्रकारं कथयामि । यथा उत्पत्त्यादिसंबन्धः संसृतौ दृश्यसंसारकोटौ एति नात्मकोटौ । आत्मा तु दृश्योत्पत्तेः पूर्वं यथा तथैव नाणुमात्रमपि विक्रियत इत्यर्थः । तथाच श्रुतिः 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तिरित्येषा[3] परमार्थता' इति ॥ ८ ॥ अयमेवास्य प्रकरणस्यार्थ इति वक्ष्यमाणविस्तरोपोद्घाततयास्मिन्सर्गे संक्षेपतः प्रपञ्च्यत इत्याह—**इद**मिति । अयं चासौ प्रकरणार्थश्चेति कर्मधारयः । प्रकरणार्थमुत्पत्तिप्रकरणोपोद्घाताय, इदमेतत्सर्गप्रतिपाद्यमिति वा ॥ ९ ॥ पूर्वमेव हि यो यथेत्युक्तार्थस्योपपादनाय प्रलयावस्थापरिशिष्टात्मस्वरूपं वक्तुं पूर्वसर्गस्य कारणे लयप्रकारं दृष्टान्तेनाह—**यदिद**मिति । सांख्यनैयायिकाद्यभिमतप्रधानपरमाण्वादिपरिशेषात्मकप्रलयवैधर्म्यार्थं दृष्टान्तोक्तिः ॥ १० ॥ स्तिमितमक्रियममूर्तत्वात् । गम्भीरमपरिच्छेद्यत्वात् । अरूपत्वान्न तेजः । भारूपत्वान्न तमः । निर्धर्मकत्वादनाख्यम् । अज्ञानावृतत्वादनभिव्यक्तं, प्रपञ्चसंस्काराधारत्वाद्वा अनभिव्यक्तम् ॥ ११ ॥ उत्कृष्टप्रमाणश्रुतिगम्यत्वादृतम् । 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति शब्द्यते ॥' इति व्यासोक्तरीत्या आत्मा । सत्यतोत्कर्षावधित्वात्परम् । बृहत्त्वाज्जगदाकारबृंहकत्वाद्वा ब्रह्म । यथाशास्त्रं विद्वद्भिरनुभूयमानं सत्यम् । व्यवहार उपदेश्योपदेशस्तदर्थम् ॥ १२ ॥ सर्गादौ तस्यावृतं समष्टिजीवभावमाह—**स** इति । तथाभूतश्चित्स्वभावेन स्थित एव मोहादन्यो जड आकाशादिक्रमोद्भूतलिङ्गसमष्ट्यात्मा तदनुप्रवेशात्तदभिमानेन स इवोल्लसंस्तदन्तर्गतप्राणधारणोपाधिना देहनिष्पत्त्युत्तरभाविवागभिव्यक्त्यधीनत्वाद्भाविना जीवनाम्ना कदर्थितां कुत्सितार्थत्वेन संपादितां जीवतां एतीव[4] भ्रान्त्या । वस्तुतस्तु नैत्येवेत्यर्थः ॥ १३ ॥ इत्थं ज्ञानशक्तिमात्रसाध्यं सर्गमुक्त्वा क्रियाशक्तिसहकृततत्साध्यं तमाह—**तत** इति । जीवशब्दार्थः क्रियाशक्तिप्रधानप्राणधृतिस्तत्कलनेन आकुलतां चञ्चलताम् । भूतात्मा भौतिकलिङ्गात्मा । संकल्पविकल्पमननान्मन्थरीभवन् जाड्येन मन्दीभवन् ॥ १४ ॥ तेन मनोभावेन । महतः परमात्मन इति ल्यब्लोपे पञ्चम्यौ । तादृशपरमात्मभावं विस्मृत्येत्यर्थः । मनः संपद्यते मनोधर्मसंकल्पादीनात्मन इति मन्यते ॥ १५ ॥ तदेवं समष्टिमनोभावमापन्नं हिरण्यगर्भाख्यं ब्रह्म स्वयमन्येनाबोधितमपि पूर्ववासनानुरोधाद्विराड्भावं भुवनादिभावं तत्र चतुर्विधभूतग्रामभावमिति नित्यं स्वैरमेव संकल्पयतीत्यर्थः । तेन सत्यसंकल्पेन ॥ १६ ॥ इत्थमध्यारोपसहस्रेणापि नाधिष्ठानस्य पारमार्थिकस्थितिभङ्ग इति दर्शयितुं दृष्टान्तमाह—**यथे**ति । हेमकटकरूपात्काञ्चनात्कटकशब्दार्थौ यथा पृथक्त्वार्हौ नेत्यन्वयः । परे ब्रह्मणि प्रतिभाता जगच्छब्दार्थतापि ततः पृथक्त्वार्हा नेत्यर्थः ॥१७॥ द्वयोः पृथक्त्वानर्हत्वेनैकसत्ताकता सिद्धा सा चानागन्तुकब्रह्मभावे, स्वतो जगद्भावे तु तदधीना न स्वत इत्याह—**ब्रह्मण्येवे**ति । इदं जगत् अनन्तात्मपरित्यक्तपरिच्छेदस्वभावं ब्रह्मस्वभाव एवास्ति जगच्छब्दकार्थे अन्तवदात्मस्वभावे तु नास्ति कटकात्मता यथा हेमस्वभावेऽस्ति न कटक-



१ सद्भावो दृश्याभावेन इति पाठः. २ भाविनाम इति पाठः. ३ मुक्त इत्येषा इति पाठः. ४ सेतीव इति पाठः.

सती वाप्यसती तापनद्येव लहरी चला ।
मनसेहेन्द्रजालश्रीर्जागती प्रवितन्यते ॥ १९
अविद्या संसृतिर्बन्धो माया मोहो महत्तमः ।
कल्पितानीति नामानि यस्याः सकलवेदिभिः ॥ २०
बन्धस्य तावद्रूपं त्वं कथ्यमानमिदं शृणु ।
ततः स्वरूपं मोक्षस्य ज्ञास्यसीन्दुनिभानन ॥ २१
द्रष्टुर्दृश्यस्य सत्ताङ्ग बन्ध इत्यभिधीयते ।
द्रष्टा दृश्यबलाद्बद्धो[1] दृश्याभावे विमुच्यते ॥ २२
जगत्त्वमहमित्यादिर्मिथ्यात्मा दृश्यमुच्यते ।
यावदेतत्संभवति तावन्मोक्षो न विद्यते ॥ २३
नेदं नेदमिति व्यर्थप्रलापैर्नोपशाम्यति ।
संकल्पजनकैर्दृश्यव्याधिः प्रत्युत वर्धते ॥ २४
न च तर्कभरक्षोदैर्न तीर्थनियमादिभिः ।
सतो दृश्यस्य जगतो यस्मादेति विचारकाः[2] ॥ २५
जगद्दृश्यं तु यद्यस्ति न शाम्यत्येव कस्यचित् ।
नासतो विद्यते भावो नाभावो विद्यते सतः ॥ २६
अचेत्यचित्स्वरूपात्मा यत्र यत्रैव तिष्ठति ।
द्रष्टा तत्रास्य दृश्यश्रीः समुदेत्यप्यणूदरे ॥ २७
तस्मादस्ति जगद्दृश्यं तत्प्रमृष्टमिदं मया ।
त्यक्तं तपोध्यानजपैरिति काञ्जिकतृप्तिवत् ॥ २८
यदि राम जगद्दृश्यमस्ति तत्प्रतिबिम्बति ।
परमाणूदरेऽप्यास्मिंश्चिदादर्शे तथैव हि ॥ २९
यत्र तत्र स्थिते यद्वद्दर्पणे प्रतिबिम्बति ।
अम्यब्ध्युर्वीनदीवारि चिदादर्शे तथैव हि ॥ ३०
ततस्तत्र पुनर्दुःखं जरा मरणजन्मनी ।
भावाभावग्रहोत्सर्गः स्थूलसूक्ष्मचलाचलः ॥ ३१
इदं प्रमार्जितं दृश्यं मया चात्राहमास्थितः ।
एतदेवाक्षयं बीजं समाधौ संसृतिस्मृतेः ॥ ३२
सति त्वस्मिन्[3] कुतो दृश्ये निर्विकल्पसमाधिता ।
समाधौ चेतनत्वं तु तुर्यं चाप्युपपद्यते ॥ ३३
व्युत्थाने हि समाधानात्सुषुप्तान्त इवाखिलम् ।
जगद्दुःखमिदं भाति यथास्थितमखण्डितम् ॥ ३४
प्राप्तं भवति हे राम तत्किं नाम समाधिभिः ।
भूयोऽनर्थनिपाते हि क्षणसाम्ये हि किं सुखम् ॥ ३५
यदि वापि समाधाने निर्विकल्पे स्थितिं व्रजेत् ।
तदक्षयसुषुप्ताभं तन्मन्येतामलं पदम् ॥ ३६

स्वभावे तद्वत् ॥ १८ ॥ यदि स्वतो नास्ति कथं सतीव भाति तत्राह—**सतीति**। तापो मरुमरीचिस्तत्कल्पितनद्या लहरीव जागती इन्द्रजालश्रीरसत्यपि सतीव प्रवितन्यत इत्यन्वयः॥१९॥ तस्या असत्त्वं तु आविद्यकत्वेनाविद्यात्मकत्वादित्यभिप्रेत्य तदनुरूपनामभिरविद्यां दर्शयति—**अविद्येति**। विद्यापोद्यत्वादविद्या । ऊर्ध्वाधस्तिर्यक्संसरणहेतुत्वात्संसृतिः । अस्वातन्त्र्यप्रयोजकत्वाद्बन्धः । मिथ्यात्वान्माया । भ्रमहेतुत्वान्मोहः । दुस्तरत्वान्महत् । स्वरूपावरकत्वात्तम इत्यादीनि नामानि ॥ २० ॥ २१ ॥ ज्ञानेन बाधितुं प्राप्तुं च योग्यं बन्धमोक्षयोः स्वरूपमाह—**द्रष्टुरिति**। अङ्गेति प्रियसंबोधने ॥ २२ ॥ २३ ॥ ननु यदि दृश्यासंभव एव मोक्षस्तर्हि तदा तदोपस्थितस्य दृश्यस्य नेदं नेदमिति निरासेनैव रोगनिरासेनारोग्यमिव स सेत्स्यतीति किं तत्त्वज्ञानायासेनेत्यत आह—**नेदमिति**। नेदमिति प्रलापो हि सति दृश्ये बाधितार्थत्वात्तद्विरोधि दृश्यान्तरोत्पादन[4]संकल्पेन तदुत्पादनेन पूर्वदृश्यनिरासको वाच्यः, तथा सत्येकदृश्यनिरासाय दृश्यद्वयजननाद्वर्धत इत्यर्थः ॥ २४ ॥ हे विचारकाः, दृश्यस्य सतः दृश्ये सति तर्कातिशयादिना दृश्यव्याधिर्न शाम्यतीत्येतावदेव न किंत्वन्योऽप्येति आगच्छतीत्यर्थः । 'षष्ठी चानादरे' इति भावलक्षणे षष्ठी । दृश्यसत्ता नानादरादुपेक्ष्या किंतु विचारेण बाध्येत्यर्थः ॥२५॥ किंच दृश्यस्य स्वतः सत्ताभ्युपगमे सतो बाधायोगादनिर्मोक्षः स्यादित्याह—**जगदिति** ॥ २६ ॥ नन्वयं द्रष्टा तपोध्यानादिबलाद्दृश्यनिर्मुक्ते दृश्यसमावेशायोग्यपरमाणूदरादौ वा गत्वा तिष्ठन् दृश्यनिर्मुक्तो भविष्यतीति कथमनिर्मोक्षस्तत्राह—**अचेत्येति**। तपआदिना अचेत्यो बोद्धुमशक्यः अज्ञातचिद्रूप[5] आत्मा यस्य स द्रष्टा तादृशात्मन एव दृश्यबीजत्वादणूदरेऽपि भ्रान्त्या वैपुल्यप्रतिभासाविरोधात्तत्रापि दृश्यबन्धो दुर्वार इति भावः ॥२७॥ उक्तमुपसंहरति—**तस्मादिति**। स्वस्थाने प्रमृष्टं देशान्तरप्राप्त्या त्यक्तं चेत्यर्थः । काञ्जिकं पर्युषितौदनोदकं सुराविशेषो वा ॥ २८ ॥ परमाणूदरेऽप्यात्मनि ब्रह्माण्डसमावेशसंभावनार्थमादर्शे इति । यथा विपुलप्रदेशे तथैव न संकोचेनेत्यर्थः ॥ २९ ॥ ३० ॥ स्थूलो जागरे सूक्ष्मः स्वप्ने भावाभावग्रहः सुषुप्तौ तूत्सर्ग इति । चलाचलोऽस्थिरः ॥ ३१ ॥ ज्ञाननिरपेक्षसविकल्पकसमाधिना दृश्यमार्जन[6]माशङ्क्याह—**इदमिति**। अस्मृतस्य प्रमार्जनायोगात्तत्स्मृतौ तु समाधिभङ्गादिति भावः ॥ ३२ ॥ अतएव न निर्विकल्पकसमाधिनापि तन्मार्जनमित्याह—**सतीति**। सति तु निर्विकल्पकसमाधौ चित्तसत्त्वे चेतनत्वं तद्बाधे तुर्यत्वं चोपपद्यते । दृश्ये सति तु निर्विकल्पसमाधितैव कुत इत्यन्वयः । 'न चाक्षयसुषुप्तत्वं तुर्यं चापी'ति पाठे तु स्पष्टम् ॥ ३३ ॥ अस्तु वा समाधिस्तथापि संसारो दुर्वार इत्याह—**व्युत्थान** इति । भाति भासमाने प्रतीचि प्राप्तं भवतीत्युत्तरेणान्वयः ॥ ३४ ॥ भूयोऽप्यनर्थनिपाते संभाविते सति क्षणमात्रसमाधानेन किं सुखम् । किमित्याक्षेपे । सुखं नास्तीत्यर्थः ॥ ३५ ॥ यदि निर्विकल्पे स्थितिं कदाप्यव्युत्थानं व्रजेत्तत्सर्वक्षयसुखं विनापि ज्ञानं प्राप्तमिति यदि

१ बलाद्बद्ध इति पाठः. २ विचारक इति पाठः. ३ जगद्दृश्ये इति पाठः. ४ त्पादनेन संकल्पेन इति पाठः. ५ चिद्रूपेति पदं क्वचिन्न पठ्यते. ६ मार्जनस्यासंभवमा इति पाठः.

प्राप्यते सति दृश्येऽस्मिन्न च किंनाम केनचित् ।
यत्र यत्र किलायाति चित्ततास्य जगद्भ्रमः ॥ ३७
द्रष्टाथ यदि पाषाणरूपतां भावयन्बलात् ।
किलास्ते तत्तदन्तेऽपि भूयोऽस्योदेति दृश्यता ॥३८
न च पाषाणतातुल्या निर्विकल्पसमाधयः ।
केषांचित्स्थितिमायान्ति सर्वैरित्यनुभूयते ॥ ३९
न च पाषाणतातुल्या रूढिं याताः समाधयः ।
भवन्त्यग्रपदं शान्तं चिद्रूपमजमक्षयम् ॥ ४०
तस्माद्यदीदं सद्दृश्यं तन्न शाम्येत्कदाचन ।
शाम्येत्तपोजपध्यानैर्दृश्यमित्यज्ञकल्पना ॥ ४१
आलीनवल्लरीरूपं यथा पद्माक्षकोटरे ।
आस्ते कमलिनीबीजं तथा द्रष्टरि दृश्यधीः ॥ ४२
यथा रसः पदार्थेषु यथा तैलं तिलादिषु ।
कुसुमेषु यथाऽऽमोदस्तथा द्रष्टरि दृश्यधीः ॥ ४३
यत्र तत्र स्थितस्यापि कर्पूरादेः सुगन्धिता ।
यथोदेति तथा दृश्यं चिद्धातोरुदरे जगत् ॥ ४४
यथा चात्र तव स्वप्नः संकल्पश्चित्तराज्यधीः ।
स्वानुभूत्यैव दृष्टान्तस्तथा ह्यस्ति दृश्यभूः ॥ ४५
तस्माच्चित्तविकल्पस्थपिशाचो बालकं यथा ।
विनिहन्त्येवमप्येतं द्रष्टारं दृश्यरूपिका ॥ ४६
यथाङ्कुरोऽन्तर्बीजस्य संस्थितो देशकालतः ।
करोति भासुरं देहं तनोत्येवं हि दृश्यधीः ॥ ४७
द्रव्यस्य हृद्येव चमत्कृतिर्यथा
सदोदितास्त्यस्तमितोज्झितोदरे ।
द्रव्यस्य चिन्मात्रशरीरिणस्तथा
स्वभावभूतास्त्युदरे जगत्स्थितिः ॥ ४८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे बन्धहेतुवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः २

श्रीवसिष्ठ उवाच ।
इदमाकाशजाख्यानं शृणु श्रवणभूषणम् ।
उत्पत्त्याख्यं प्रकरणं येन राघव बुध्यसे ॥ १
अस्ति ह्याकाशजो नाम द्विजः परमधार्मिकः ।
ध्यानैकनिष्ठः सततं प्रजानां च हिते रतः ॥ २

मन्येतेति पराभिप्रायानुवादः । अक्षयसुषुप्ताभमिति मौढ्यानुच्छेदादपुरुषार्थता सूचिता ॥ ३६ ॥ उत्तरमाह—**प्राप्यत** इति । अस्मिन्मनोलक्षणे दृश्ये सति केनचित्समाधियत्नवतापि किंनाम दृश्यं न प्राप्यते । यतोऽस्य चित्तता यत्रयत्र विषये आयाति तत्र तत्र तदनुबन्धी जगद्भ्रमो दुर्निवार इत्यर्थः ॥३७॥ किंचायमज्ञत्वादनात्मानमेव पाषाणादिसमाधौ भावयेत् तदस्य तदन्ते फलकालेऽपि दृश्यतामेति न दृश्यात्रपरिशेषसमाधिसिद्धिरित्याह—**द्रष्टेति** ॥ ३८ ॥ समाधिबललब्धनिर्दुःखपाषाणभावेऽपि न स्थैर्यं प्रत्याशेत्याह—**न चेति** । इत्ययमर्थः सर्वैः समाधिनिष्ठैरनुभूयते ॥ ३९ ॥ मा भूदनिरूढानां स्थैर्यं तद्भावापत्तिपर्यन्तनिरूढसमाधीनां तु स्थैर्यं स्यात्तत्राह—**न चेति** । रूढिं याता अप्यचेतना नित्यपाषाणतादितुल्याः समाधयः सर्वसंसारशान्त्युपलक्षितमग्रपदं मोक्षरूपं न भवन्ति ॥ ४० ॥ अतः प्रागुक्तमेव सिद्धमित्याह—**तस्मादिति** ॥ ४१ ॥ साविद्ये द्रष्टरि दृश्यसद्भावं दृष्टान्तैः साधयति—**आलीनेत्यादिचतुर्भिः**। पद्माक्षकोटरे भाविकमलिनीवल्ल्या बीजमुपादानभूतमालीनं सूक्ष्मीभूतं पद्मवल्लरीरूपं यथा आस्ते असत उत्पत्त्ययोगात्तथा द्रष्टरि दृश्यसहिता धीरस्त्येवेत्यर्थः ॥ ४२ ॥ ४३ ॥ सतश्चोद्भवोऽपि दुर्वार इत्यत्रापि दृष्टान्तमाह—**यत्रेति** ॥ ४४ ॥ यदुक्तं परमाणूदरेऽपीति तत्रापि तमाह—**यथेति** । यथा तव हृदि अन्तर्मनोराज्यधीः स्वानुभूत्यैव दृष्टा । स्वप्नः संकल्पश्च दृष्ट इति विपरिणामः ॥ ४५ ॥ एवमुक्तदृष्टान्तवत् एतं द्रष्टारमपि दृश्यलक्षणा रूपिका निहन्ति । स्त्रीवेषेण मोहयित्वा पुरुषान्निघ्नन्त्यः पिशाच्यो रूपिका इत्युच्यन्ते ॥४६॥ यदि सर्वं दृश्यं ह्यस्ति तर्ह्यधुनैव सर्वैः कुतो नानुभूयते तत्राह—**यथेति** । देशकालकर्मपरिपाका अपि तदाविर्भावसहकारिण इति भावः ॥ ४७ ॥ अतर्क्यकार्यवैचित्र्यशक्तिश्चमत्कृतिः सा यथा बीजादिद्रव्यस्योदरे कोटरे हृदि सारभागे एवास्ति तथा चिन्मात्रस्वभावस्य विद्याशरीरिणोऽप्यात्मद्रव्यस्याप्युदरेऽन्तश्चिदचित्संवलनस्वभावभूता जगत्स्थितिरतीतानागतजगत्सत्तास्तीत्युक्तार्थनिगमनम् ॥ ४८ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे बन्धहेतुवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

अज्ञो भौतिकदेहात्मा मृत्युभक्षो न तत्त्ववित् ।
आकाशजो द्विज इव चिन्मात्रात्मेति कीर्त्यते ॥ १॥

कामकर्मवासनासंभृताविद्योपहित आत्मैव जगद्बीजं मृत्युबीजं च । विद्यया तद्बीजशक्तिदाहे तु मृत्युवशो भवतीति प्रागुक्तार्थे विशेषं दर्शयितुं जगदाद्यसृष्टतत्त्वशोधनेन वक्ष्यमाणार्थोपोद्घातसंगतामाख्यायिकां वर्णयिष्यन् श्रीवसिष्ठ उवाच—**इदमिति** । आकाशादध्यस्ता विद्या नैल्याधारत्वेनाकाशसदृशाद्विद्यावृतत्वादीषत्प्रकाशाद्वा ब्रह्मणो जात आकाशजो लिङ्गसमष्ट्यात्मा हिरण्यगर्भस्तस्याख्यानम् ॥ १ ॥ 'तद्यथा कृताय विजितायाधरेयाः संयन्ति' इत्यादिश्रुत्या हैरण्यगर्भपदप्रापकसर्ववर्गविद्यादिधर्मे सर्वप्रजाकृतधर्माणामन्तर्भाववर्णनात्परमधार्मिकः ।

१ वृद्धिं याताः इति पाठः. २ सुष्यत्वं इति पाठः. ३ स्थैर्यप्रत्याशा इति पाठः.

स चिरं जीवति यदा तदा मृत्युरचिन्तयत् ।
सर्वाण्येव क्रमेणाहं भूतान्यद्मि किलाक्षयः ॥ ३
एनमाकाशजं विप्रं न कस्माद्भक्षयाम्यहम् ।
अत्र मे कुण्ठिता शक्तिः खड्गधारा इवोपले ॥ ४
इति संचिन्त्य तं हन्तुमगच्छत्तत्पुरं तदा ।
त्यजन्त्युद्यममुद्युक्ता न स्वकर्माणि केचन ॥ ५
ततस्तत्सदनं यावन्मृत्युः प्रविशति स्वयम् ।
तावदेनं दहत्यग्निः कल्पान्तज्वलनोपमः ॥ ६
अग्निज्वालामहामालां विदार्यान्तर्गतो ह्यसौ ।
द्विजं दृष्ट्वा समादातुं हस्तेनैच्छत्प्रयत्नतः ॥ ७
नचाशकत्पुरो दृष्टमपि हस्तशतैर्द्विजम् ।
बलवानप्यवष्टब्धुं संकल्पपुरुषं यथा ॥ ८
अथागत्य यमं मृत्युरपृच्छत्संशयच्छिदम् ।
किमित्यहं न शक्नोमि भोक्तुमाकाशजं विभो ॥ ९

यम उवाच ।

मृत्यो न किंचिच्छक्तस्त्वमेको मारयितुं बलात् ।
मारणीयस्य कर्माणि तत्कर्तॄणीति नेतरत् ॥ १०
तस्मादेतस्य विप्रस्य मारणीयस्य यत्नतः ।
कर्माण्यन्विष्य तेषां त्वं साहाय्येनैनमत्स्यसि ॥ ११
ततः स मृत्युर्बभ्राम तत्कर्मान्वेषणादृतः ।
मण्डलानि दिगन्तांश्च सरांसि सरितो दिशः ॥ १२
वनजङ्गलजालानि शैलानब्धितटानि च ।
द्वीपान्तराण्यरण्यानि नगराणि पुराणि च ॥ १३
ग्रामाण्यखिलराष्ट्राणि देशान्तर्गहनानि च ।
एवं भूमण्डलं भ्रान्त्वा न कुतश्चित्स कानिचित् ॥ १४
तान्याकाशजकर्माणि लब्धवान्मृत्युरुद्यतः ।
वन्ध्यापुत्रमिव प्राज्ञः संकल्पाद्रिमिवापरः ॥ १५
समपृच्छदथागत्य यमं सर्वार्थकोविदम् ।
परायणं हि प्रभवः संदेहेष्वनुजीविनाम् ॥ १६

मृत्युरुवाच ।

आकाशजस्य कर्माणि क्व स्थितानि वद प्रभो ।
धर्मराजोऽथ संचिन्त्य सुचिरं प्रोक्तवानिदम् ॥ १७

धर्मराज उवाच ।

आकाशजस्य कर्माणि मृत्यो सन्ति न कानिचित् ।
एष आकाशजो विप्रो जातः खादेव केवलात् ॥ १८
आकाशादेव यो जातः स व्योमैवामलं भवेत् ।
सहकारीणि नो सन्ति न कर्माण्यस्य कानिचित् १९
संबन्धः प्राक्तनेनास्य न मनागपि कर्मणा ।
अस्ति वन्ध्यासुतस्येव तथाऽजाताकृतेरिव ॥ २०
कारणानामभावेन तस्मादाकाशमेव सः ।
नैतस्य पूर्वकर्मास्ति नभसीव महाद्रुमः ॥ २१
नैतदस्यावशं चित्तमभावात्पूर्वकर्मणाम् ।
अद्य तावदनेनोग्रं न किंचित्कर्म संचितम् ॥ २२
एवमाकाशकोशात्मा विशदाकाशरूपिणि ।
स्वकारणे स्थितो नित्यः कारणानि न कानिचित् ॥२३
प्राक्तनानि न सन्त्यस्य कर्माण्यद्य करोति नो ।
किंचिदप्येवमेषोऽत्र विज्ञानाकाशमात्रकः ॥ २४
प्राणस्पन्दोऽस्य यत्कर्म लक्ष्यते चास्मदादिभिः ।
दृश्यतेऽस्माभिरेवं तन्न त्वस्यास्त्यत्र कर्मधीः ॥ २५
संस्थिता भावयन्तीव चिद्रूपैव परात्पदात् ।
भिन्नमाकारमात्मीयं चित्स्तम्भे शालभञ्जिका ॥ २६

---

ध्यानमात्मचिन्तनं तदेकनिष्ठः ॥ २ ॥ चिरं जीवति मृत्युवशो न भवति यदा तदेत्यर्थः ॥ ३ ॥ ४ ॥ तत्पुरं मेरुमध्ये प्रसिद्धम् । सत्यलोके मृत्योरप्रवेशात् । उद्युक्ता उद्योगयुक्ताः समर्थाः ॥ ५ ॥ समाधिविघातकप्रतिरोधाय पूर्वमेव ब्रह्मणा प्राकारतया संकल्पितोऽग्निः । एनं मृत्युम् ॥ ६ ॥ अग्निज्वालानां महतीं मालां वलयं विदार्य ॥ ७ ॥ अवष्टब्धुं स्प्रष्टुम् ॥ ८ ॥ ॥ ९ ॥ एकः असहायः । तत्कर्तॄणि मारणकर्तॄणि । इति एतस्मान्नेतरत्त्वदशक्तौ कारणमिति शेषः ॥ १० ॥ अन्विष्य गवेषणं कुरु । 'इष गतौ' श्यन् लोट् हिः । साहाय्येन आनुकूल्येन ॥ ११ ॥ कस्मिन्देशेऽयं प्राक्किं कर्म कृतवानिति सप्रणिधानं पर्यालोचनमेव चिरयत्ननिष्पाद्यत्वाद्बभ्रामेत्युच्यते न देशसंचरणम् । कर्तृलिङ्गसमवायिनामदृष्टानां बहिरन्वेषणाप्रसक्तेः ॥ १२ ॥ पुराणि महानगरोपकण्ठे शाखानगराणि ॥ १३ ॥ ॥ १४ ॥ लब्धवानुपलब्धवान् । अपरः संकल्पयितुरन्यः पुरुषः ॥ १५ ॥ अनुजीविनां भृत्यानाम् ॥ १६ ॥ १७ ॥ प्रारब्धाधिकारफलानां फलारम्भेणैव विनाशात्संचितानां ज्ञानेन बाधादागामिनां बीजाभावान्न सन्त्येवेत्युक्तिः ॥ १८ ॥ सहकारीण्यभिमानरागादीनि मृत्योर्मारणे वा सहकारीणि कर्माण्यद्यतनानीति शेषः ॥१९॥ **संबन्ध** इति । तथाच सूत्रम्—'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति । अजाताकृतेरनुत्पन्नाकारस्येव ॥ २० ॥ कारणानामविद्यादीनां निर्विकारस्य विकारहेतूनां वा । तस्माद्विकारायोगात् ॥ २१ ॥ मास्तु शारीरं मानसं तु स्यात्तत्राह—**नैतद्**इति । पूर्वदेहस्पन्दवासनावशो हि चित्तस्पन्दः, तदभावादेवाद्यतनं शारीरमपि आद्यमदनार्हं मृत्योः कर्म न संचितम् ॥ २२ ॥ एवंच सत्ययं परब्रह्मस्वभाव एव स्थितो न दृश्यस्वभाव इत्याह—**एवम्**इति ॥ २३ ॥ तद्भावे तु प्राक्तनकर्मादिप्रसक्तिरेव नास्तीत्याह—**प्राक्तनानी**ति ॥२४॥ ननु तर्हि कथमयमस्माभिः प्राणदेहादिक्रियावान्दृश्यते तत्राह—**प्राणे**ति । तदस्माभिः स्वाविद्यया भ्रान्त्या दृश्यते, नत्वस्य तत्र सत्यताधीरस्तीत्यर्थः ॥ २५ ॥ **कथं तर्हि तस्य देहादिधी-**

---

१ अनेनान्यत्र किंचित् इति पाठः. २ चिरं [illegible] कानिचित् इति पाठः. २ रेवैतत् इति पाठः.

तथैव परमार्थात्स्वात्मभूतः[1] स्थितो द्विजः ।
यथा द्रवत्वं पयसि शून्यत्वं च यथाम्बरे ॥ २७
स्पन्दत्वं च यथा वायोस्तथैष परमे पदे ।
कर्माण्यद्यतनान्यस्य संचितानि न सन्ति हि ॥ २८
न पूर्वाण्येष तेनेह न संसारवशं गतः ।
सहकारिकारणानामभावे यः प्रजायते ॥ २९
नासौ स्वकारणाद्भिन्नो भवतीत्यनुभूयते ।
कारणानामभावेन तस्मादेष स्वयंभवः ॥ ३०
कर्ता न पूर्वं नाप्यद्य कथमाक्रम्यते वद ।
यदैष कल्पनां बुद्ध्या मृतिनाम्नीं करिष्यति ॥ ३१
पृथ्व्यादिमानयमहमिति यस्य च निश्चयः ।
स पार्थिवो भवत्याशु ग्रहीतुं स च शक्यते ॥ ३२
पृथ्व्यादिकलनाभावादेष विप्रो न रूपवान् ।
दृढरज्ज्वेव गगनं ग्रहीतुं नैव युज्यते ॥ ३३

मृत्युरुवाच ।

भगवञ्जायते शून्यात्कथं नाम वदेति मे ।
पृथ्व्यादयः कथं सन्ति न सन्ति वद वा कथम् ॥ ३४

यम उवाच ।

न कदाचन जातोऽसौ न च नास्ति कदाचन ।
द्विजः केवलविज्ञानभामात्रं तत्तथा स्थितः ॥ ३५
महाप्रलयसंपत्तौ न किंचिदवशिष्यते ।
ब्रह्मास्ते शान्तमजरमनन्तात्मैव केवलम् ॥ ३६
शून्यं नित्योदितं सूक्ष्मं निरुपाधि परं स्थितम् ।
तदा तदनु येनास्य निकटेऽद्रिनिभं महः ॥ ३७
संविन्मात्रस्वभावत्वाद्देहोऽहमिति चेतति ।
काकतालीयवद्भ्रान्तमाकारं तेन पश्यति ॥ ३८
स एष ब्राह्मणस्तस्मिन्सर्गादावम्बरोदरे ।
निर्विकल्पश्चिदाकाशरूपमास्थाय संस्थितः ॥ ३९
नास्य देहो न कर्माणि न कर्तृत्वं न वासना ।
एष शुद्धचिदाकाशो विज्ञानघन आततः ॥ ४०
प्राक्तनं वासनाजालं किंचिदस्य न विद्यते ।
केवलं व्योमरूपस्य भारूपस्येव तेजसः ॥ ४१
वेदनामात्रसंशान्तावीदृशोऽपि न दृश्यते ।
तस्माद्यथा चिदाकाशस्तथा तत्प्रतिपत्तयः ॥ ४२
कुतः किलात्र पृथ्व्यादेः कीदृशः संभवः कथम् ।
एतदाक्रमणे मृत्यो तस्मान्मा यत्नवान्भव ॥ ४३
ग्रहीतुं युज्यते व्योम न कदाचन केनचित् ।
श्रुत्वैतद्विस्मितो मृत्युर्जगाम निजमन्दिरम् ॥ ४४

श्रीराम उवाच ।

ब्रह्मैष कथितो देवस्त्वया मे प्रपितामहः ।
स्वयंभूरज एकात्मा विज्ञानात्मेति मे मतिः ॥ ४५

---

स्तामाह—**संस्थिते**ति । चित्स्तम्भे चिद्रूपैव शालभञ्जिका प्रतिमा आत्मीयं भिन्नं चिद्विलक्षणमाकारं भावयन्तीव स्थिता । तथाच भावनामात्ररूपं तन्न वास्तवमित्यस्य धीरित्यर्थः ॥ २६ ॥ क्वचित्त्वस्य दृष्टान्तार्थमनुत्कीर्णा यथा स्तम्भे संस्थिता शालभञ्जिकेत्यर्धमधिकं पठ्यते ॥ २७ ॥ २८ ॥ उपपादितप्रकारेण कर्मासंभवानुवादस्य फलकीर्तनं न संसारवशं गत इति । प्रसिद्धरजतकारणाजन्यशुक्तिरजतस्येव तदीयदेहादेर्मिथ्यात्वनिर्णये तत्प्रयुक्तकर्तृत्वादिबाधान्न मृत्यवाक्रमणप्रसक्तिरित्याह—**सहकारी**त्यादिना **वदे**त्यन्तेन ॥ २९ ॥ ३० ॥ ननु जीवान्तराणामप्येतद्यष्टित्वात्कथं ते वा मृत्युना गृह्यन्ते तत्राह—**यदैष** इति । यस्य जीवस्य पृथ्व्यादिमान् देह एवाहमिति निश्चयोऽस्ति स मूढः पार्थिवदेह एव भवति तस्य एष ब्रह्मा यदा सत्यसंकल्पबुद्ध्या मृतिनाम्नीं कल्पनां करिष्यति तदा स त्वया ग्रहीतुं शक्यत इत्यर्थः ॥ ३१ ॥ ३२ ॥ पृथ्व्यादिमयदेहकलनाया अभावान्न रूपवान्नाकारवान् ॥ ३३ ॥ निर्विकारस्य शून्यस्य विकारमजस्य जन्म सतां पृथ्व्यादीनामसत्त्वं चोक्तमसंभावयन्मृत्युरुवाच—**भगवन्नि**ति ॥ ३४ ॥ परस्याकाशत्वोक्तिः 'पृथ्व्यादीनामसत्त्वोक्तिश्च न शून्यत्वाभिप्रायेण, किंतु कार्यस्य कारणपृथक्सत्ताशून्यत्वाभिप्रायेण' एवमजस्य जन्मोक्तिर्विवर्ताभिप्रायेण न परिणामाभिप्रायेणेत्याशयं सूचयन् यम उवाच—**न कदाचने**ति । यतोऽयं द्विजः परमार्थतः केवलं विज्ञानभामात्रं तत्ततो हेतोस्तथैव सदा स्थितो न विकृत इत्यर्थः ॥ ३५ ॥ आद्यन्तयोस्तन्मात्रपरिशेषात्तदेवास्य स्वाभाविकं सत्यं रूपमित्याशयेनाह—**महाप्रलये**ति सार्धेन ॥ ३६ ॥ तदा प्रलये स्थितमित्यन्वयः । यदुक्तं 'दृश्यतेऽस्माभिरेवं तदि'ति तदुपपादयति—**तदन्वि**त्यादिना । तदनु सर्गारम्भकाले येन वासनादृष्टसंभृतजीवाविद्याहेतुना अस्य संविन्मात्रस्वभावत्वान्निकटे पुरोविषयभावेन अद्रिनिभं पर्वतवदनिवार्यं विराड्रूपं चतुर्मुखं वा देहोऽहमित्यभिलापार्हं महः स्थूलं रूपं चेतति ईषत्स्फुरति तदा तेनैव तादृशविद्याहेतुना काकतालीयवदकस्मात्स्वप्न इव भ्रान्तं मिथ्याभूतं तमाकारं पश्यति । अस्मदादिजन इत्यर्थः ॥ ३७ ॥ ३८ ॥ तथाच परदृष्ट्यध्यस्तदेहादिना नास्य निर्विकल्पतादिक्षतिरिति प्रागुक्तमव्याहतमित्याशयेनाह—**स एष** इत्यादि ॥ ३९ ॥ ४० ॥ ४१ ॥ वेदना बहिर्मुखचित्प्रवृत्तिस्तन्मात्रसंशान्तौ ईदृशः प्रातिभासिकरूपोऽपि । वेदनाशान्तिस्तर्हि कथं तत्राह—**तस्मादि**ति । अधिष्ठानतत्त्वपरिचयेन विषयबाधे तत्प्रतिपत्तयो वेदना अपि यथा चिदाकाशस्तथैव तद्भावादवतिष्ठन्त इत्यर्थः ॥ ४२ ॥ यत्र चित्स्वभावानां वेदनानामप्यसहनं तत्र दूरे पृथ्व्यादिसहनसंभावनेति तव नाक्रमणं प्रत्याशेत्याशयेनाह—**कुत** इति ॥ ४३ ॥ ४४ ॥ आकाशजद्विज इति नामान्तरप्रतिपादितो ब्रह्मैव मया आख्यायिकाता-

---

१ परमार्थान्तः स्वात्मभूत इति पाठः.

श्रीवसिष्ठ उवाच ।

एवमेतन्मया राम ब्रह्मैष कथितस्तव ।
विवादमकरोन्मृत्युर्यमेनैतत्कृते पुरा ॥ ४६
मन्वन्तरे सर्वभक्षो यदा मृत्युर्हरन्प्रजाः ।
बलमेत्यब्जजाक्रान्तावारम्भमकरोत्स्वयम् ॥ ४७
तदैव धर्मराजेन यमेनाश्वनुशासितः ।
यदेव क्रियते नित्यं रतिस्तत्रैव जायते ॥ ४८
ब्रह्मा किल पराकाशवपुराक्रम्यते कथम् ।
मनोमात्रं च संकल्पः पृथ्व्यादिरहिताकृतिः ॥ ४९
यश्चिद्व्योमचमत्कारः किलाकारानुभूतिमान् ।
स चिद्व्योमैव नो तस्य कारणत्वं न कार्यता ॥ ५०
आकाशस्फुरदाकारः संकल्पपुरुषो यथा ।
पृथ्व्यादिरहितो भाति स्वयंभूर्भासते तथा ॥ ५१
निर्मले व्योम्नि मुक्तालीसंकल्पस्वप्नयोः पुरम् ।
अपृथ्व्यादि यथा भाति स्वयंभूर्भासते तथा ॥ ५२
न दृश्यमस्ति न द्रष्टा परमात्मनि केवले ।
स्वयंचित्ता तथाप्येष स्वयंभूरिति भासते ॥ ५३
संकल्पमात्रमेवैतन्मनो ब्रह्मेति कथ्यते ।
संकल्पाकाशपुरुषो नास्य पृथ्व्यादि विद्यते ॥ ५४
यथा चित्रकृदन्तःस्था निर्देहा भाति पुत्रिका ।
तथैव भासते ब्रह्मा चिदाकाशाच्छरञ्जनम् ॥ ५५
चिद्व्योमकेवलमनन्तमनादिमध्यं
ब्रह्मेति भाति निजचित्तवशात्स्वयंभूः ।
आकारवानिव पुमानिव वस्तुतस्तु
वन्ध्यातनूज इव तस्य तु नास्ति देहः ॥ ५६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे आद्यस्रष्टिकर्तृवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ३

श्रीराम उवाच ।

एवमेव मनः शुद्धं पृथ्व्यादिरहितं त्वया ।
मनो ब्रह्मेति कथितं सत्यं पृथ्व्यादिवर्जितम् ॥ १
तदत्र प्राक्तनी ब्रह्मन्स्मृतिः कस्मान्न कारणम् ।
यथा मम तवान्यस्य भूतानां चेति मे वद ॥ २

श्रीवसिष्ठ उवाच ।

पूर्वदेहोऽस्ति यस्याद्य पूर्वकर्मसमन्वितः ।
तस्य स्मृतिः संभवति कारणं संसृतिस्थितेः ॥ ३

त्पर्यार्थो जगन्मिथ्यात्वमपि परिज्ञातमिति सूचनेन गुरुं प्रहर्षयन् श्रीराम उवाच—ब्रह्मेति । विज्ञानात्मा जीवसमष्टिरूपः ॥ ४५ ॥ विवादं संवादम् ॥ ४६ ॥ मन्वोः अन्तरे संधिकाले । अब्जजस्याक्रान्तौ मारणे । आरम्भमुद्योगम् ॥ ४७ ॥ कथमशक्येऽपि मृत्योः पुनःपुनरुद्योग इति चेद्व्यसनितयेत्याह—यदेवेति ॥ ४८ ॥ आख्यायिकामुखोक्तार्थं कण्ठतोऽपि वदंस्तच्छरीरादेर्मनोमात्रत्वमाह—ब्रह्मेति ॥ ४९ ॥ ५० ॥ आकाशे यथा अवाङ्मुखेन्द्रनीलमहाकटहाकारः पृथ्व्यादिरहितो भाति तथेत्यर्थः ॥ ५१ ॥ ५२ ॥ स्वयंचित्ता चिन्मात्रस्वभावतैव अस्ति ॥ ५३ ॥ संकल्पमात्रमेव मनोरूपं न पृथ्व्यादिघटितं, स एव ब्रह्मा पद्मज इत्यर्थः ॥ ५४ ॥ निराकारस्य संकल्पस्य कथं पुरुषाकारता तत्राह—यथेति । चित्रकृतो हि लेख्यप्रतिमाकारमन्तः संकल्पेन विधाय तथैव बहिर्लिखतोऽन्तःस्था पुत्रिका चित्रप्रतिमा यथा निर्देहापि तदाकारा भाति तथैव चिदाकाशस्याच्छे स्वच्छं यद्रञ्जनं प्रतिबिम्बग्राहकं मनस्तद्ब्रह्मा प्रजापतिशरीराकारं भाति ॥ ५५ ॥ तत्र मनसस्तदाकारकल्पनापरिणामो न वास्तवः किंतु शुद्धं ब्रह्मैवाज्ञानात्तथा विवर्तत इत्याह—चिद्व्योमेति । ब्रह्मा स्वयंभूरित्याकारवानिवेत्यन्वयः ॥ ५६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे आद्यस्रष्टिकर्तृवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

मनोरूपो यतो ब्रह्मा तत्संकल्पमयं जगत् ।
मनोराज्यवदेवेदमसदित्यत्र कीर्त्यते ॥ १ ॥

'मनोमात्रं च संकल्पः पृथ्व्यादिरहिताकृतिः' इति प्रागुक्तरीत्या ब्रह्मणो मनोरूपत्वाभ्युपगमे मनसो वासनाजालरूपत्वात्प्राक्तनं वासनाजालं किंचिदस्य न विद्यत इत्युक्तिरयुक्तेति मन्यमानः श्रीराम उवाच-एवमेवेति द्वाभ्याम् । मनः शुद्धं पृथ्व्यादिरहितम् एवमेव प्रसिद्धम् । उत्तरत्र तर्हीत्यर्थे तदिति प्रयोगात्तदाकाङ्क्षितमत्र यदीत्यध्याहार्यम् ॥ १ ॥ अत्रास्मिन्ब्रह्मणः शरीरे प्राक्तनी पूर्वशरीरत्यागकालोद्भूता स्मृतिस्तव मम अन्यस्य वा पुरुषस्य भूतानां पश्वादीनां च शरीरे प्राक्तनी स्मृतिर्यथा कारणं तथा कस्मात्कारणं न 'यं यं वापि स्मरन्भावम्' इत्यादिस्मृतेः । यदि प्राक्तनी स्मृतिरस्ति तर्हि तदुद्भवाधारसंस्कारदेहादिकमपि प्राक्तनं दुर्वारमिति भावः ॥२॥ सत्यं पूर्वदेहादिसिद्धौ तदनुभूतगोचरा स्मृतिः कारणं स्यात्तदेवासिद्धमिति श्रीवसिष्ठ उवाच—पूर्वमिति द्वाभ्याम् । ननु 'तद्धैतल्लोकजिदेव' इत्यादिश्रुतिभिस्तत्क्रतुन्यायेन च हैरण्यगर्भपदस्य कर्मोपासनसमुच्चयफलत्वप्रसिद्धेः कथं प्राग्देहवासनाद्यसत्त्वोक्तिः कथं वा मनोमयस्य तद्देहस्यापृथ्व्यादिमयत्वोक्तिर्मनसः 'अन्नमयं हि सौम्य मनः' इत्यन्नविकारत्वपरश्रुतिविरोधादपञ्चीकृतभूतकार्यत्वसिद्धान्तविरोधाच्चेति चेत् । सत्यम् । अन्नहशैवं यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति', 'सह सिवं वनु-

ब्रह्मणः प्राक्तनं कर्म यदा किंचिन्न विद्यते ।
प्राक्तनी संस्मृतिस्तस्य तदोदेति कुतः कथम् ॥ ४
तस्मादकारणं भाति वा स्वचित्तैककारणम् ।
स्वकारणादनन्यात्मा स्वयंभूः स्वयमात्मवान् ॥ ५
आतिवाहिक एवासौ देहोऽस्त्यस्य स्वयंभुवः ।
न त्वाधिभौतिको राम देहोऽजस्योपपद्यते ॥ ६

श्रीराम उवाच ।

आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः ।
सर्वासां भूतजातीनां ब्रह्मणोऽस्त्येक एव किम् ॥ ७

श्रीवसिष्ठ उवाच ।

सर्वेषामेव देहौ द्वौ भूतानां कारणात्मनाम् ।
अजस्य कारणाभावादेक एवातिवाहिकः ॥ ८
सर्वासां भूतजातीनामेकोऽजः कारणं परम् ।
अजस्य कारणं नास्ति तेनासावेकदेहवान् ॥ ९
नास्त्येव भौतिको देहः प्रथमस्य प्रजापतेः ।
आकाशात्मा च भात्येष आतिवाहिकदेहवान् ॥ १०
चित्तमात्रशरीरोऽसौ न पृथ्व्यादिक्रमात्मकः ।
आद्यः प्रजापतिर्व्योमवपुः प्रतनुते प्रजाः ॥ ११
ताश्च चिद्व्योमरूपिण्यो विनान्यैः कारणान्तरैः ।
यद्यतस्तत्तदेवेति सर्वैरेवानुभूयते ॥ १२

निर्वाणमात्रं पुरुषः परो बोधः स एव च ।
चित्तमात्रं तदेवास्ते नायाति वसुधादिताम् ॥ १३
सर्वेषां भूतजातानां संसारव्यवहारिणाम् ।
प्रथमोऽसौ प्रतिस्पन्दश्चित्तदेहः स्वतोदयः ॥ १४
अस्मात्पूर्वात्प्रतिस्पन्दादनन्यैतत्स्वरूपिणी ।
इयं प्रविसृता सृष्टिः स्पन्दसृष्टिरिवानिलात् ॥ १५
प्रतिभानाकृतेरस्मात्प्रतिभामात्ररूपधृक् ।
विभात्येवमयं सर्गः सत्यानुभववान्स्थितः ॥ १६
दृष्टान्तोऽत्र भवत्स्वप्नपुरस्त्रीसुरतं यथा ।
असदप्यर्थसंपत्त्या सत्यानुभवभासुरम् ॥ १७
अपृथ्व्यादिमयो भाति व्योमाकृतिरदेहकः ।
सदेह इव भूतेशः स्वात्मभूः पुरुषाकृतिः ॥ १८
संवित्संकल्परूपत्वान्नोदेति समुदेति च ।
स्वायत्तत्वात्स्वभावस्य नोदेति न च शाम्यति ॥ १९
ब्रह्मा संकल्पपुरुषः पृथ्व्यादिरहिताकृतिः ।
केवलं चित्तमात्रात्मा कारणं त्रिजगत्स्थितेः ॥ २०
संकल्प एष कचति यथा नाम स्वयंभुवः ।
व्योमात्मैष तथा भाति भवत्संकल्पशैलवत् ॥ २१
आतिवाहिकमेवान्तर्विस्मृत्या दृढरूपया ।
आधिभौतिकबोधेन मुधा भाति पिशाचवत् ॥ २२

---

ष्टयम्' इति श्रुतिस्मृतिसिद्धतदीयतत्त्वदृशा तु त्रैकालिकप्रपञ्चस्यापि नासीदस्ति भविष्यतीति त्रैकालिकबाधाच्च पूर्वदेहवासनादिसत्त्वमिति तथोक्तिः । बाधितानुवृत्तौ तु मनसि तद्देहे च दग्धपटे तान्तवत्वमिव न पृथ्व्यादिमयत्वं यथापूर्वमस्तीति न कश्चिद्विरोधः । यत्राबाधिताज्ञमनःसंकल्पनगरादेरपि न सत्यत्वं भौतिकत्वं वा तत्र किं वाच्यं तत्त्वज्ञानबाधितानुवृत्तवैरिञ्च्यमनःसंकल्पजस्य विश्वस्य तथात्वमित्यभिप्रेत्य वक्ष्यमाणजगन्मिथ्यात्वौपयिकत्वात्तत्त्वदृष्टिमेवावष्टभ्य पूर्वदेहवासनाद्यपलापो नाज्ञदृष्ट्यनुवाद्युपास्तिफलश्रुतिपुरस्कारेणेति ॥ ३ ॥ ४ ॥ स्वचित्तं देहद्रष्टृचित्तं तदेकं कारणमिति तस्य स्वतश्चित्ताभावोक्तिः ॥५॥ अतिवहनमर्चिर्धूमादिमार्गेण लोकान्तरप्रापणं तत्र साधुरसदादिलिङ्गदेह इवातिवाहिकः । सूक्ष्म इति यावत् । आधिभौतिकः स्थूलभूतजः ॥ ६ ॥ ७ ॥ कारणात्मनां चक्षुरादिव्यावहारिकप्रमाणवद्यपञ्चीकृतभूतरूपकारणात्मनाम् । कारणाभावात् अविद्याऽपञ्चीकृतभूतानामनन्यपरश्रुतिचक्षुराद्यवेद्यत्वेन साक्षिवेद्यत्वेन च प्रातिभासिकत्वेन व्यावहारिकसत्यत्वाभावात्प्रागुक्तरीत्या वा कारणाभावादित्यर्थः ॥ ८ ॥ प्रकारान्तरेणाप्याह—**सर्वासा**मिति ॥ ९ ॥ आकाशात्मा चिदाकाशमात्ररूपः । आरोपितस्याधिष्ठानातिरिक्तस्वरूपाभावात् ॥ १० ॥ इत्थं च तत्संकल्पकल्पितजगतोऽपि तदाधिष्ठानचिन्मात्रता फलितेति विवक्षुराह—**चित्ते**ति ॥ ११ ॥ अन्यैस्तत्संकल्पव्यतिरिक्तैः कारणान्तरैः कारणभेदैः । यतो यस्मादुपादानाज्जातमिति शेषः । अ-

नुभूयते कनककुण्डलादौ । तथा च जगतो ब्रह्ममात्रता सिद्धेति भावः ॥ १२ ॥ तेन जीवस्यापि तन्मात्रता सिद्धेत्याह—**निर्वाणमात्र**मिति । यतः स चित्तोपाधिश्चित्तभ्रान्त्या चित्तमात्रभूतोऽपि परमार्थतः स चिदाकाश एवास्ते न भौतिकपुरुषादिभावमायातीत्यर्थः ॥ १३ ॥ स्वता अहंभावस्तस्योदयः ॥१४॥ एतदुपादानकस्थूलस्यैतन्मात्रत्वादनन्यैतत्स्वरूपिणी ॥ १५ ॥ अध्यस्तमनोविकारस्य जगतोऽप्यध्यस्ततैव फलितेत्याह—**प्रतिभाने**ति । प्रतिभानं प्रतिभासस्तन्मात्रसिद्धाकृतेः प्रातिभासिकाकारादित्यर्थः । अथवा परमार्थचिन्मात्राकाराच्चिन्मात्ररूपधृगपि सर्ग एवं परिदृश्यमानाऽचिदाकारेण विभातीत्यर्थः ॥ १६ ॥ स्वप्ने योऽन्यः स्वप्नस्तत्रत्यस्त्रीसुरतमिति सूक्ष्मकल्पनान्तर्गतस्थूलकल्पनादृष्टान्तत्वोपपत्त्यर्थम् । अर्थसंपत्त्या व्यवहारप्रयोजननिष्पत्त्या ॥ १७ ॥ तथाच प्रागुक्तं नासंभावितमित्याह—**अपृथ्व्यादी**ति ॥ १८ ॥ नोदेति परमार्थतः समुदेति भ्रान्त्या, तत्राद्यमुपपादयति—**स्वायत्तत्वा**दिति । जगद्भाववदविद्याद्यधीनत्वाभावादिति भावः । स्वभावस्य स्वरूपस्थितेः ॥ १९ ॥ २० ॥ यथा यादृशप्राणिकर्मानुरोधेन येन येन प्रकारेण कचति विकसति । तथा तेन प्रकारेण ॥ २१ ॥ तर्हि कथं सर्वेषां संकल्पशैलविलक्षणाधिभौतिकत्वार्थक्रियासामर्थ्याद्यनुभवस्तत्राह—**आतिवाहिकमि**ति । स्वरूपविस्मृत्या आति-

१ स्वमसमुत्थ इति मुद्रितपुस्तके पाठः ।

इदं प्रथमतोद्योगसंप्रबुद्धं महाचितेः ।
नोदेति शुद्धसंविश्वादातिवाहिकविस्मृतिः ॥ २३
आधिभौतिकजातेन नास्योदेति पिशाचिका ।
असत्या मृगतृष्णेव मिथ्या जाड्यभ्रमप्रदा ॥ २४
मनोमात्रं यदा ब्रह्मा न पृथ्व्यादिमयात्मकः ।
मनोमात्रमतो विश्वं यद्यज्जातं तदेव हि ॥ २५
अजस्य सहकारीणि कारणानि न सन्ति यत् ।
तज्जस्यापि न सन्त्येव तानि तस्मात्तु कानिचित् ॥ २६
कारणात्कार्यवैचित्र्यं तेन नात्रास्ति किंचन ।
यादृशं कारणं शुद्धं कार्यं तादृगिति स्थितम् ॥ २७
कार्यकारणता ह्यत्र न किंचिदुपपद्यते ।
यादृगेव परं ब्रह्म तादृगेव जगत्त्रयम् ॥ २८
मनस्तामिव यातेन ब्रह्मणा तन्यते जगत् ।
अनन्यादात्मनः शुद्धाद्द्रवत्वमिव वारिणः ॥ २९
मनसा तन्यते सर्वमसदेवेदमाततम् ।
यथा संकल्पनगरं यथा गन्धर्वपत्तनम् ॥ ३०
आधिभौतिकता नास्ति रज्ज्वामिव भुजङ्गता ।
ब्रह्मादयः प्रबुद्धास्तु कथं तिष्ठन्ति तत्र ते ॥ ३१
आतिवाहिक एवास्ति न प्रबुद्धमतेः किल ।
आधिभौतिकदेहस्य वाचो वात्र कुतः कथम् ॥ ३२
मनोनाम्नो मनुष्यस्य विरिञ्चयाकारधारिणः ।
मनोराज्यं जगदिति सत्यरूपमिव स्थितम् ॥ ३३
मन एव विरिञ्चित्वं तद्धि संकल्पनात्मकम् ।
स्ववपुः स्फारतां नीत्वा मनसेदं वितन्यते ॥ ३४
विरिञ्चो मनसो रूपं विरिञ्चस्य मनो वपुः ।
पृथ्व्यादि विद्यते नात्र तेन पृथ्व्यादि कल्पितम् ॥ ३५
पद्माक्षे पद्मिनीवान्तर्मनो ह्यस्ति दृश्यता ।
मनोदृश्यदृशौ भिन्ने न कदाचन केनचित् ॥ ३६
यथा चात्र तव स्वप्नः संकल्पश्चित्तराज्यधीः ।
स्वानुभूत्यैव दृष्टान्तस्तस्माद्ध्यस्ति दृश्यभूः ॥ ३७
तस्माच्चित्तविकल्पस्थपिशाचो बालकं यथा ।
विनिहन्त्येवमेषान्तर्द्रष्टारं दृश्यरूपिका ॥ ३८
यथाङ्कुरोऽन्तर्बीजस्य संस्थितो देशकालतः ।
करोति भासुरं देहं तनोत्येवं हि दृश्यधीः ॥ ३९

सचेन्न शाम्यति कदाचन दृश्यदुःखं
दृश्ये त्वशाम्यति न बोद्धरि केवलत्वम् ।
दृश्ये त्वसंभवति बोद्धरि बोद्धृभावः
शाम्येत्स्थितोऽपि हि तदस्य विमोक्षमाहुः ॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे बन्धहेतुवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

---

वाहिकभावविस्मृत्या च ॥ २२ ॥ तर्हि विरिञ्चेरप्यस्मदादिवदातिवाहिकभावविस्मृतिः किं न स्यात्तत्राह—इदमिति । इदं वैरिञ्चं रूपं महाचितेर्मायाशबलब्रह्मणः प्रथमता सर्वस्थूलप्रपञ्चापेक्षया कारणीभूतसूक्ष्मभूतात्मकतेति यावत् । तत्र उद्योगेन संकल्पेन सत्यसंकल्पत्वात्तत्रैव संप्रबुद्धं प्रत्यक्षमाविर्भूतमतस्तमोऽनाच्छादितत्वेन विरिञ्चेः शुद्धसंवित्त्वान्नातिवाहिकस्मृतिरुदेतीत्यर्थः ॥ २३ ॥ २४ ॥ यदा यस्मिन्कल्पे यत इति वार्थः । यस्माज्जातं यज्जातम् ॥ २५ ॥ इत्थं च 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ' इति श्रुतिदर्शितन्यायेन जगतो मनोमात्रत्वं मनसश्च ब्रह्ममात्रतेति ब्रह्माद्वैतं फलितमित्याह—अजस्येत्यादित्रिभिः ॥ २६ ॥ २७ ॥ इत्थं च भेदकाभावात्कार्यकारणभावायोगाज्जगद्ब्रह्मैव संपन्नमित्याह—कार्येति ॥ २८ ॥ २९ ॥ ॥ ३० ॥ इत्थं च तत्त्वज्ञानां जगत एव बाधे देहादौ नाधिभौतिकताप्रत्ययसंभव इत्याह—आधिभौतिकतेति ॥ ३१ ॥ कैमुतिकन्यायेनाप्युक्तमर्थं द्रढयति—आतिवाहिकेति । आतिवाहिकः प्रातिभासिकः सोऽपि नास्त्येव तत्राधिभौतिकस्य वाचः कुतो हेतोः कथं केन प्रकारेण ॥ ३२ ॥ मनुष्यस्येति प्राक्तनोपासकावस्थां स्मृत्वोक्तिः ॥ ३३ ॥ विरिञ्चित्वं सर्वस्रष्टृत्वम् । हि यस्मात्तद्विरिञ्चित्वं विरिञ्चेः संकल्पनात्मकं न बाह्योपकरणाधीनम् । स्फारतां विपुलताम् । इदं विश्वम् ॥ ३४ ॥ अत्र मनसि । तेन हेतुना मनसा वा कल्पितमध्यस्तमात्मनीति शेषः ॥ ३५ ॥ मनो हृदि । मनोन्तः दृश्यता लक्षणया दृश्यवर्गः । ननु कथं विरुद्धमिदमुच्यते । 'पृथ्व्यादि विद्यते नात्र मनो ह्यस्ति दृश्यते' इतिचेत्तत्राह—मनोदृश्येति । यतो मनश्च दृश्यं च तयोः समाहारो मनोदृश्यं तदुभयदृक् साक्ष्यात्मा च ते उभे केनचित्कदाचन न भिन्ने न विवेचिते । यावत्ते न विवेचिते तावदज्ञानानुच्छेदादस्त्येवेत्युक्तमिति भावः । अथवा मनश्च दृश्यदृक् दृश्यदर्शनं च तेन भिन्ने । तथाच मनस उच्छेद एव दृश्यदर्शनोच्छेद इति भावः ॥ ३६ ॥ तत्रान्वयव्यतिरेकसिद्धदृष्टान्तान्वदन्निगमयति—यथेति ॥ ३७ ॥ ३८ ॥ दृश्यधीर्मनः ॥ ३९ ॥ ननु किमर्थं महता यत्नेन दृश्यमिथ्यात्वं साध्यते तस्य सत्यत्वे का क्षतिस्तत्राह—सचेदिति । स्थितोऽपि शाम्येत्किं पुनर्मिथ्याभूत इत्यर्थः । तत्केवलत्वमेव विमोक्षमाहुः ॥ ४० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे बन्धहेतुवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

---

१ यथा ब्रह्मा इति पाठः. २ अनन्यत्व इति पाठः. ३ जाबाला इति पाठः.

# चतुर्थः सर्गः ४

श्रीवाल्मीकिरुवाच।

कथयत्येवमुद्दामवचने मुनिनायके।
श्रोतुमेकरसे जाते जने मौनमुपस्थिते ॥ १
शान्तेषु किङ्किणीजालरवेषु स्पन्दनं विना।
पञ्जरान्तरहारीतशुकेष्वप्यस्तकेलिषु ॥ २
सुविस्मृतविलासासु स्थितासु ललनास्वपि।
चित्रभित्ताविव न्यस्ते समस्ते राजसद्मनि ॥ ३
मुहूर्तशेषमभवद्दिवसं मधुरातपम्।
व्यवहारा रविकरैः सह तानवमाययुः ॥ ४
ववुरुत्फुल्लकमलप्रकरामोदमांसलाः।
वायवो मधुरस्पन्दाः श्रवणार्थमिवागताः ॥ ५
श्रुतं चिन्तयितुं भानुरिवाहोरचनाश्रमम्।
तत्याजैकान्तमगमच्छून्यमस्तगिरेस्तटम् ॥ ६
उत्तस्थुर्मिहिकारम्भसमता वनभूमिषु।
विज्ञानश्रवणादन्तःशीतलाः शान्तता इव ॥ ७
बभूवुरल्पसंचारा जना दशसु दिक्ष्वपि।
सावधानतया श्रोतुमिव संत्यक्तचेष्टिताः ॥ ८
छाया दीर्घत्वमाजग्मुर्वासिष्ठं वचनक्रमम्।
इव श्रोतुमशेषाणां वस्तूनां दीर्घकन्धराः ॥ ९
प्रतीहारः पुरः प्रह्वो भूत्वाह वसुधाधिपम्।
देव स्नानद्विजार्चासु कालो व्यतिगतो भृशम् ॥ १०
ततो वसिष्ठो भगवान्संहृत्य मधुरां गिरम्।
अद्य तावन्महाराज श्रुतमेतावदस्तु वः ॥ ११
प्रातरन्यद्वदिष्यामि इत्युक्त्वा मौनवानभूत्।
इत्याकर्ण्यैवमस्तूक्त्वा भूपतिर्भूतिवृद्धये ॥ १२
पुष्पपाद्यार्घसन्मानदक्षिणादानपूजया।
सदेवर्षिमुनीन्विप्रान्पूजयामास सादरम् ॥ १३
अथोत्तस्थौ सभा सर्वा सराजमुनिमण्डला।
मण्डलाकीर्णरत्नौघपरिवेषावृताननः ॥ १४
परस्पराङ्गसंघट्टरणत्केयूरकङ्कणा।
हारभाराहृतस्वर्णपट्टाभोरुस्तनान्तरा ॥ १५
शेखरोत्सङ्गविश्रान्तप्रबुद्धमधुपस्वनैः।
सघुंघुमशिरोभारा वदद्भिरिव मूर्धजैः ॥ १६
काञ्चनाभरणोद्द्योतकनकीकृतदिङ्मुखाः।
बुद्धिस्थमुनिवागर्थसंशान्तेन्द्रियवृत्तयः ॥ १७
जग्मुर्नभश्चरा व्योम भूचरा भूमिमण्डलम्।
चक्रुर्दिनसमाचारं सर्वे ते स्वेषु सद्मसु ॥ १८
एतस्मिन्नन्तरे श्यामा यामिनी समदृश्यत।
जनसङ्गाद्विनिर्मुक्ता[1] गृहे बालाङ्गना यथा ॥ १९
देशान्तरं भासयितुं ययौ दिवसनायकः।
सर्वत्रालोककर्तृत्वमेव सत्पुरुषव्रतम् ॥ २०
उदभूदभितः संध्या तारानिकरधारिणी।
उत्फुल्लकिंशुकवना वसन्तश्रीरिवोदिता ॥ २१
चूतनीपकदम्बाग्रग्रामचैत्यगृहोदरे।
निलिल्यिरे खगाश्चित्ते ऽवदाता वृत्तयो यथा ॥ २२
भानोर्भासा भूषितैर्मेघलेशैः
किंचित्किंचित्कुङ्कुमच्छाययेव।
पाश्चात्त्योऽद्रिः पीतवासाः समेघ-
स्ताराहारः श्रीयुतः खं समेतः ॥ २३

श्रुत्वोपदेशं प्रथमसुत्थानादिनिशाक्रमः।
प्रातरागमनं चित्रस्वभावश्चात्र[2] वर्ण्यते ॥ १ ॥

एकरसे एकाग्रे ॥ १ ॥ एकरसतामेव लिङ्गैर्दर्शयति—शान्तेष्वित्यादिना। हारीताः पक्षिविशेषाः ॥ २ ॥ राजसद्मनि लक्षणया राजसद्मस्थप्राणिनिकाये चित्रभित्तौ न्यस्ते चित्र इव स्थिते इति विपरिणामेनानुषङ्गः ॥ ३ ॥ तानवमल्पताम् ॥ ४ ॥ आमोदेन मांसलाः पुष्टाः। मधुरो मन्दत्वात्सुखकरः स्पन्दो येषाम्। सर्वत्र विशेषणानि साधारणानि। उपमानमुत्प्रेक्षा वा ॥ ५ ॥ भानुः श्रुतं श्रवणावधृतमर्थं चिन्तयितुं मननेन दृढीकर्तुमिवेत्युत्प्रेक्षा। शून्यं जनशून्यम् ॥ ६ ॥ मिहिकानां तुषाराणामारम्भेण समता अविषमताः। अन्तःशीतला इति साधारणं विशेषणम् ॥ ७ ॥ संत्यक्तानि चेष्टितानि व्यापारान्तराणि यैः ॥ ८ ॥ अशेषाणां वस्तूनां छाया अशेषाणां श्रोतॄणां दीर्घाः कन्धराः कण्ठा वचनक्रमं श्रोतुमिव दीर्घत्वमाजग्मुः। असमासश्छान्दसः ॥९॥ प्रतीहारो द्वारपालः। प्रह्वो नम्रो भूत्वा ॥१०॥ संहृत्योपसंहृत्य ॥११॥ एवमस्तु इत्युक्त्वा ॥१२॥१३॥ सभाशब्दो जनवचनः। निःस्पृहैर्मुनिभी राजदत्तरत्नानामुपेक्षणान्मण्डलाकारेण कीर्णानां रत्नौघानां प्रभापरिवेषेण आवृतजनानना ॥ १४ ॥ हृता अपहृता स्वर्णजटितपट्टवस्त्राणां आभा कान्तिर्यैस्तथाविधानि ऊरुस्तनान्तराणि यस्याम् ॥ १५ ॥ शेखरस्य शिरोग्रस्य उत्सङ्गवद्विस्तृतभागे घुंघुमेत्यव्यक्तध्वन्यनुकरणम् ॥ १६ ॥ ॥ १७ ॥ १८ ॥ श्यामा कृष्णा। बालाङ्गना। पक्षे यौवनमध्यस्था। संभवादुपमानदर्शनस्यापि तत्कालता गम्यते ॥ १९ ॥ सद्ब्रह्म तदात्मा पुरुषो ब्रह्म तन्निष्ठश्च तयोर्व्रतम् ॥ २० ॥ २१ ॥ अवदाता निर्मलाः। चित्ते अर्थान्निद्रावृते इति गम्यते ॥ २२ ॥ किंचित्किंचित्कुङ्कुमच्छाययेव विचित्रया भानोर्भासा भूषितैर्मेघैः पीतवासाः। तारालक्षणहारेण श्रिया च युक्तः। स प्रागुक्तः पाश्चात्त्योऽस्ताद्रिर्भानोर्भासा भूषितैर्मेघलेशैरुपलक्षितमर्थात्ताराहारं श्रीयुतं चेति समानधर्मीकं खं

१ जनसङ्गात् इति पाठः. २ चित्तस्वभावश्च इति पाठः.

पूजामादाय संध्यायां प्रगतायां यथागतम् ।
अन्धकाराः समुत्तस्थुर्वेताला वपुषा यथा ॥ २४

अवश्यायकणास्पन्दी हेलाविद्युतपल्लवः ।
कोमलः कुमुदाशंसी ववावाशीतलोऽनिलः ॥ २५
परमान्ध्यमुपाजग्मुर्दिशोऽविस्फुटतारकाः ।
लम्बदीर्घतमःकेश्यो विधवा इव योषितः ॥ २६
आययौ भुवनं तेजः क्षीरपूरेण पूरयन् ।
रसायनमयाकारः शशिक्षीरार्णवो नभः ॥ २७
जग्मुस्तिमिरसंघाताः पलाय्य क्वाप्यदृश्यताम् ।
श्रुतज्ञानगिरश्चित्तान्महीपानामिवाज्ञताः ॥ २८

ऋषयो भूमिपालाश्च मुनयो ब्राह्मणास्तथा ।
चेतसीव विचित्रार्थाः स्वास्पदेषु विशश्रमुः ॥ २९
यमकायोपमाश्यामा ययौ तिमिरमांसला ।
आययौ सिंहिकास्फारा तत्र तेषामुषः शनैः ॥ ३०
अन्तर्धानमुपाजग्मुस्तारा नभसि भासुराः ।
प्रभातपवनेनेव हृताः कुसुमवृष्टयः ॥ ३१
दृश्यतामाजगामार्कः प्रभोन्मीलितलोचनः ।
विवेकवृत्तिर्महतां मनसीव नवोदिता ॥ ३२
भानोर्भासा भूषितैर्मेघलेशैः
किंचित्किंचित्कुङ्कुमच्छाययेव ।
पूर्वक्ष्माभृत्पीतवासाः समेघै-[2]
स्ताराहारः श्रीयुतः खं समेतः ॥ ३३
सभां पुनरुपाजग्मुर्नभश्चरमहीचराः ।
ह्यस्तनेन क्रमेणैव कृतप्रातस्तनक्रमाः ॥ ३४
पूर्ववत्संनिवेशेन विवेश सकला सभा ।
बभूवास्पन्दिताकारा वातमुक्तेव पद्मिनी ॥ ३५
अथ प्रसङ्गमासाद्य रामो मधुरया गिरा ।
उवाच मुनिशार्दूलं वसिष्ठं वदतां वरम् ॥ ३६
श्रीराम उवाच ।
भगवन्मनसो रूपं कीदृशं वद मे स्फुटम् ।
यस्मात्तेनेयमखिला तन्यते लोकमञ्जरी ॥ ३७
श्रीवसिष्ठ उवाच ।
रामास्य मनसो रूपं न किंचिदपि दृश्यते ।
नाममात्राद‍ृते व्योम्नो यथा शून्यजडाकृतेः ॥ ३८
न बाह्ये नापि हृदये सद्रूपं विद्यते मनः ।
सर्वत्रैव स्थितं चैतद्विद्धि राम यथा नभः ॥ ३९
इदमस्मात्समुत्पन्नं मृगतृष्णाम्बुसंनिभम् ।
रूपं तु क्षणसंकल्पाद्द्वितीयेन्दुभ्रमोपमम् ॥ ४०
मध्ये यदेतदर्थस्य प्रतिभानं प्रथां गतम् ।
सतो वाप्यसतो वापि तन्मनो विद्धि नेतरत् ॥ ४१
यदर्थप्रतिभानं तन्मन इत्यभिधीयते ।
अन्यन्न किंचिदप्यस्ति मनो नाम कदाचन ॥ ४२
संकल्पनं मनो विद्धि संकल्पात्तन्न भिद्यते ।
यथा द्रवत्वात्सलिलं तथा स्पन्दो यथानिलात् ॥ ४३
यत्र संकल्पनं तत्र तन्मनोऽङ्ग तथा स्थितम् ।
संकल्पमनसी भिन्ने न कदाचन केचन ॥ ४४
सत्यमस्त्वथवाऽसत्यं पदार्थप्रतिभासनम् ।
तावन्मात्रं मनो विद्धि तद्ब्रह्मैव पितामहः ॥ ४५

---

आकाशं च समेतः प्रविष्टः । यथा पीतवासा विष्णुरुक्तधर्मा श्री-
युतो निरावरणं स्वानुरूपं ध्यायिनां हृदयाकाशं प्रविशति त-
द्वत् । संध्यासु हि भगवद्ध्यानं प्रशस्तमिति समासोक्त्या गम्यते
॥ २३ ॥ संध्यायां देव्यां पूजामादाय गतायां तद्वणा वेताला
वपुषा यथा समुत्तिष्ठन्ति तद्वत् ॥ २४ ॥ कलिकाविकासात्कु-
मुदान्यासमन्ताच्छंसत्यनुमापयति तच्छीलः । विशेषणत्रयानु-
सारादाशीतलग्रहणं मान्द्यसौरभ्ययोरप्युपलक्षणम् ॥ २५ ॥
नीहारपटावृतत्वादविस्फुटास्तारका नक्षत्राणि कनीनिकाश्च यासां
ताः । धवस्य भानोरस्तमयाद्विधवा इव ॥ २६ ॥ तेजोलक्षणेन
दुग्धप्रवाहेण पूरयन् । रसायनममृतं तन्मयाकारः ॥ २७ ॥
श्रुता ज्ञानगिरो येन तथाविधान्महीपानां चित्तात् ॥ २८ ॥
विचित्राः वसिष्ठोपदिष्टा अर्थाः स्वचेतसीव स्वेषामास्पदेषु प्रति-
ष्ठासु विशश्रमुर्विश्रान्ताः ॥२९॥ श्यामा रात्रिः । उषः प्रत्यूषः
॥ ३० ॥ हृता अपनीताः । कुसुमवृष्टयो वृष्टिनिपतितकुसुमा-
नीवेत्यत्र तात्पर्यम् ॥ ३१ ॥ प्रभाभिरुन्मीलितानि जनलोच-
नानि येन ॥३२॥ 'तमोघ्नैः' इति पाठे तमोविघातकैः काञ्चन-
शृङ्गैरित्यर्थः ॥ ३३ ॥ ह्यस्तनेन पूर्वेद्युस्तनेन ॥ ३४ ॥ वात-
मुक्ता निर्वाता पद्मिनी पद्मवती सरसीव ॥ ३५ ॥ प्रसङ्गं प्र-
स्तावम् ॥ ३६ ॥ रूपं तात्त्विकस्वरूपम् । यद्रूपं मनो वक्ष्यति
जगतोऽपि तदेव रूपमिति न निस्तत्त्वतालक्षणं मिथ्यात्वं से-
त्स्यतीति रामाशयः ॥३७॥ **नाममात्रादि**ति । अतएव तत्का-
र्येषु 'वाचारम्भणं विकारो नामधेयम्' इतिश्रुतमिथ्यात्वोपपत्ति-
रिति भावः । शून्यजडाकृतेरिति भूतव्योम्नो मनसश्च साधारणम्
॥ ३८ ॥ नभःसाम्यमेवोपपादयति—**ने**ति ॥ ३९ ॥ इदं ज-
गदस्मान्मनसः भ्रमः । तद्विषयोऽध्यस्त इति यावत् । तदुपमम्
॥ ४० ॥ यद्यपि मनो नाम परमार्थतो नास्त्येव तथापि
शास्त्रीयव्यवहारोपयुक्तं कल्पितं तद्रूपमाह—**मध्ये** इति । प्र-
त्यक्षे पुरः सतः स्मृत्यादि परोक्षे त्वसतो वाऽर्थस्य मध्ये यदेतत्त-
दाकारप्रतिभानं प्रथां गतं सर्वजनानां तन्मन इत्यर्थः ॥ ४१ ॥
तदेव संक्षिप्याह—**यदि**ति । निराकारचितो योऽर्थाकाराध्या-
सस्तन्मन इत्यर्थः ॥ ४२ ॥ एवं वृत्तिसामान्यैस्तल्लक्षणमुक्त्वा
असाधारणवृत्त्याप्याह—**संकल्पन**मिति ॥४३॥ तदेव विषय-
भेदव्यवस्थितिप्रदर्शनेन द्रढयति—**यत्रे**ति ॥ ४४ ॥ ननु चि-
त्संवलितैव वृत्तिः पदार्थप्रतिभासनमित्युच्यते तत्र चितः सत्यत्वे

---

१ क्षीरार्णवोपमः इति पाठः.

२ तमोघ्नैः इति पाठः.

आतिवाहिकदेहात्मा मन इत्यभिधीयते ।
आधिभौतिकबुद्धिं तु स आधत्ते चिरस्थितेः ॥ ४६
अविद्या संसृतिश्चित्तं मनो बन्धो मलस्तमः ।
इति पर्यायनामानि दृश्यस्य विदुरुत्तमाः ॥ ४७
नहि दृश्यादृते किंचिन्मनसो रूपमस्ति हि ।
दृश्यं चोत्पन्नमेवैतन्नेति वक्ष्याम्यहं पुनः ॥ ४८
यथा कमलबीजान्तः स्थिता कमलवल्लरी ।
महाचित्परमाण्वन्तस्तथा दृश्यं जगत्स्थितम् ॥ ४९
प्रकाशस्य यथाऽऽलोको यथा वातस्य चापलम् ।
यथा द्रवत्वं पयसि दृश्यत्वं द्रष्टरीदृशम् ॥ ५०
अङ्गदत्वं यथा हेम्नि मृगनद्यां यथा जलम् ।
भित्तिर्यथा स्वप्नपुरे तथा द्रष्टरि दृश्यधीः ॥ ५१
एवं द्रष्टरि दृश्यत्वमनन्यदिव यत्स्थितम् ।
तदप्युन्मार्जयाम्याशु त्वच्चित्तादर्शतो मलम् ॥ ५२
यद्द्रष्टुरस्याद्रष्टृत्वं दृश्याभावे भवेद्बलात् ।
तद्विद्धि केवलीभावं तत एवासतः सतः ॥ ५३
तत्तामुपगते भावे रागद्वेषादिवासनाः ।
शाम्यन्त्यस्पन्दिते वाते स्पन्दनक्षुब्धता यथा ॥ ५४
असंभवति सर्वेस्मिन्दिग्भूम्याकाशरूपिणि ।
प्रकाश्ये यादृशं रूपं प्रकाशस्यामलं भवेत् ॥ ५५
त्रिजगत्त्वमहं चेति दृश्येऽसत्तामुपागते ।
द्रष्टुः स्यात्केवलीभावस्तादृशो विमलात्मनः ॥ ५६
अनाप्ताखिलशैलादि प्रतिबिम्बे हि यादृशी ।
स्याद्दर्पणे दर्पणता केवलात्मस्वरूपिणी ॥ ५७
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसंभ्रमे ।
स्यात्तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे ॥ ५८

श्रीराम उवाच ।

सच्चेन्न शाम्यत्येवेदं नाभावो विद्यते सतः ।
असत्तां च न विज्ञोऽस्मिन्दृश्ये दोषप्रदायिनि ॥ ५९
तस्मात्कथमियं शाम्येद्ब्रह्मन्दृश्यविषूचिका ।
मनोभवभ्रमकरी दुःखसंततिदायिनी ॥ ६०

श्रीवसिष्ठ उवाच ।

अस्य दृश्यपिशाचस्य शान्त्यै मन्त्रमिमं शृणु ।
रामात्यन्तमयं येन स्मृतिमेष्यति नङ्क्ष्यति ॥ ६१
यदस्ति तस्य नाशोऽस्ति न कदाचन राघव ।
तस्मात्तन्नष्टमप्यन्तर्बीजभूतं भवेद्धृदि ॥ ६२
स्मृतिबीजाच्चिदाकाशे पुनरुद्भूय दृश्यधीः ।
लोकशैलास्वराकारं दोषं वितनुतेऽतनुम् ॥ ६३
इत्यनिर्मोक्षदोषः स्यान्न च तस्येह संभवः ।
यस्माद्देवर्षिमुनयो दृश्यन्ते मुक्तिभाजनम् ॥ ६४
यदि स्याज्जगदादीदं तस्मान्मोक्षो न कस्यचित् ।
बाह्यस्थमस्तु हृत्स्थं वा दृश्यं नाशाय केवलम् ॥ ६५

कथं तद्घटितमनसो मिथ्यात्वं तत्राह—**सत्य**मिति । मिथ्याविषयाकारान्मिथ्या वा सत्यचित्संवलनात्सत्यं यथाविवक्षमस्तु न तत्राग्रहः, यादृशं मनस्तत्समष्टिरपि तन्मात्रस्वभावा सैव विरिञ्चिरित्येतत्तु न व्याहतमित्याह—**असत्य**मिति ॥४५॥ यदि सर्वाकारमनोदेहोऽसौ तर्हि तस्य किमन्यत्स्रज्यं तत्राह—**आतिवाहिके**ति । सूक्ष्माणामेव चिरं मिलितावस्थितेर्मिश्रणात्पञ्चीकरणे स्थूलपृथ्व्यादिबुद्धिं स एव धत्ते तदेवास्य स्रष्टृत्वमित्यर्थः ॥ ४६ ॥ मनआदिप्रपञ्चः सर्वोऽप्यविद्याविलासत्वादविद्यैव, तस्या एवोत्तरोत्तरं नामानीत्याह—**अविद्ये**ति ॥४७॥ यद्युत्पन्नस्य दृश्यस्याविद्यात्वं मनस्त्वं वा तर्हि कथं तयोरनादित्वप्रसिद्धिस्तत्राह—**दृश्यं चे**ति ॥ ४८ ॥ तथाच चित्यविद्यास्थितिरेव जगत्स्थितिरिति फलितमित्याशयेनाह—**यथे**ति ॥ ४९ ॥ साविद्यचितो दृश्याव्यभिचाराद्दृश्यस्य तत्स्वभावता फलितेत्याह—**प्रकाशस्ये**ति । ईदृशमेवंप्रकारम् । स्वभाव इति यावत् ॥ ५० ॥ तत्स्वभावत्वे तदपृथक्सत्ता फलितेत्याह—**अङ्गदत्व**मिति ॥ ५१ ॥ ५२ ॥ **यदि**ति । दृश्यस्य द्रष्टृपृथक्सत्तापगमे अन्यसत्तयान्यस्य सत्त्वायोगात् दृश्याभावे तद्बलादस्य द्रष्टुश्चिन्मात्रस्य यदद्रष्टृत्वं भवेत्तत एवासतो बाधिताद्दृश्यात्सतः सन्मात्रचिद्रूपेण परिशिष्टस्यात्मनस्तत्केवलीभावं विद्धीत्यर्थः ॥ ५३ ॥ अस्त्वेवं तथापि कथं प्रतिज्ञातं मच्चित्तादर्शे दृश्यमलमार्जनं सिध्यति तत्राह—**तत्ता**मिति । भावे चित्ते तत्तां कैवल्यबोधेन तद्भावम् । वातस्पन्दनप्रयुक्तवनजलाशयादिक्षुब्धताः ॥ ५४ ॥ निर्विषयज्ञानस्थितिमसंभावयन्तं दृष्टान्तेनानुभावयति—**असंभवती**त्यादिभिः ॥५५॥ असत्तामिति च्छेदः ॥ ५६ ॥ केवलदर्पणात्मस्वरूपिणी ॥ ५७ ॥ चितो दृश्योन्मुखत्वं वीक्षणं तच्छून्ये ॥ ५८ ॥ दृश्यस्यासत्त्वे त्वदुक्तः केवलीभावः स्यात्तदेवानुभवविरुद्धं सत्सदित्येव दृश्यानुभवादिति परिणामवादमभिप्रेत्य श्रीरामः शङ्कते—**सच्चेदि**ति द्वाभ्याम् ॥ ५९ ॥ मनसा भवो जन्मादिस्तद्भ्रमकरी ॥ ६० ॥ असतोऽप्यविद्यया सदनुबोधाद्दृश्यस्य सत्ताभ्रमः, केवलीभावसाक्षात्कारेणाविद्यानाशे तु नायं भ्रमः समुदेतीति गूढाभिसन्धिः । प्रथमं जीवन्मुक्तदर्शनलिङ्गेनानिर्मोक्षप्रसञ्जनेन च दृश्ये सत्यताविश्वासं वारयन् विवर्तवादमाश्रित्य श्रीवसिष्ठ उवाच—**अस्ये**त्यादिना । चेतनत्वेनाभिमतं देहादिस्मृतिमेष्यति अचेतनं तु नङ्क्ष्यतीति बाध एव द्वेधोक्तः ॥६१॥ परिणामवादे दोषमाह—**यदि**ति । अयं भावः—परिणामवादे ह्युत्तरोत्तरावस्थाभिः पूर्वपूर्वावस्थातिरोभावमात्रं नोच्छेदः सतोऽसत्त्वायोगात्, तथाच नाशलक्षणषष्ठविकारेणापि तिरोहितस्य द्वैतस्य चित्ते प्रकृतौ वा स्थितस्य कामकर्मवासनाबीजात्पुनरुद्भवो दुर्वार इत्यनिर्मोक्षप्रसङ्ग इति ॥ ६२ ॥ स्मृतिग्रहणं भोगोपयुक्तान्तःकरणवृत्तिप्रमुखजगन्मात्रोपलक्षणम् ॥ ६३ ॥ मुक्तिभाजनं जीवन्मुक्ताः ॥ ६४ ॥

१ बीजरूपं इति पाठः.

२ [illegible]तमस्तु इति पाठः.

तस्मादिमां प्रतिज्ञां त्वं शृणु रामातिभीषणाम् ।
यामुत्तरेण ग्रन्थेन नूनं त्वमवबुध्यसे ॥ ६६
अयमाकाशभूतादिरूपोऽहं चेति लक्षितः ।
जगच्छब्दस्य नामार्थो ननु नास्त्येव कश्चन ॥ ६७
यदिदं दृश्यते किंचिद्दृश्यजातं पुरोगतम् ।
परं ब्रह्मैव तत्सर्वमजरामरमव्ययम् ॥ ६८
पूर्णे पूर्णं प्रसरति शान्ते शान्तं व्यवस्थितम् ।
व्योमन्येवोदितं व्योम ब्रह्मणि ब्रह्म तिष्ठति ॥ ६९
न दृश्यमस्ति सद्रूपं न द्रष्टा न च दर्शनम् ।
न शून्यं न जडं नो चिच्छान्तमेवेदमाततम् ॥ ७०

श्रीराम उवाच ।

वन्ध्यापुत्रेण पिष्टोऽद्रिः शशशृङ्गं प्रगायति ।
प्रसार्य भुजसंपातं शिला नृत्यति ताण्डवम् ॥ ७१
स्रवन्ति सिकतास्तैलं पठन्त्युपलपुत्रिकाः ।
गर्जन्ति चित्रजलदा इतीवेदं वचः प्रभो ॥ ७२
जरामरणदुःखादिशैलाकाशमयं जगत् ।
नास्तीति किमिदं नाम भवताऽपि ममोच्यते ॥ ७३
यथेदं न स्थितं विश्वं नोत्पन्नं न च विद्यते ।
तथा कथय मे ब्रह्मन्येनैतन्निश्चितं भवेत् ॥ ७४

श्रीवसिष्ठ उवाच ।

नासमन्वितवागस्मि शृणु राघव कथ्यते ।
यथेदमसदाभाति वन्ध्यापुत्र इवाऽऽरवी ॥ ७५
इदमादावनुत्पन्नं सर्गादौ तेन नास्त्यलम् ।
इदं हि मनसो भाति स्वप्नादौ पत्तनं यथा ॥ ७६
मन एव च सर्गादावनुत्पन्नमसद्वपुः ।
तदेतच्छृणु वक्ष्यामि यथैवमनुभूयते ॥ ७७
मनोदृश्यमयं दोषं तनोतीमं क्षयात्मकम् ।
असदेव सदाकारं स्वप्नः स्वप्नान्तरं यथा ॥ ७८
तत्स्वयं स्वैरमेवाशु संकल्पयति देहकम् ।
तेनेयमिन्द्रजालश्रीर्विततेन वितन्यते ॥ ७९
स्फुरति वल्गति गच्छति याचते
　भ्रमति मज्जति संहरति स्वयम् ।
अपरतामुपयात्यपि केवलं
　चलति चञ्चलशक्तितया मनः ॥ ८०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे उत्पत्तिप्रकरणार्थकल्पनं नाम चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ५

श्रीराम उवाच ।

भगवन्मुनिशार्दूल किमिवेह मनोभ्रमे ।
विद्यते कथमुत्पन्नं मनो मायामयं कुतः ॥ १
उत्पत्तिमादाविति मे समासेन वद प्रभो ।
प्रवक्ष्यसि ततः शिष्टं वक्तव्यं वदतां वर ॥ २

ननु चिदात्मायं स्वबाह्यप्रधानस्थमेव दृश्यं बुद्ध्यविवेकात्स्वहृत्स्थतया पश्यति सोऽयं संसारः विवेकज्ञानोदयात्तदविवेकाभिमाननिवृत्तौ सत्यपि बहिस्तस्मिंस्ततो मोक्षः स्यादिति सांख्यरीतिमाशङ्क्याह—**यदी**ति ॥ ६५ ॥ तस्माद्विवर्तवाद एव परिशिष्यत इत्याशयेनाह—**तस्मादि**त्यादिना । विषयरागिणामारम्भादिवादिनां च भीषणाम् । यथाहुर्गौडपादाचार्याः—'अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिनाम् । योगिनो बिभ्यति यस्मादभये भयदर्शिनः ॥' इति ॥ ६६ ॥ ६७ ॥ ६८ ॥ प्रतीचो यद्ब्रह्मैक्यं तत् पूर्णे पूर्णं प्रसरति । यतस्तच्छान्तावस्थात्रये शान्तं वियदादि द्वैतं व्यवस्थितम् । यतश्च व्योमन्येव घटाद्युपाधित्यागाद्व्योमेवोदितम् । अतो ब्रह्मण्येव ब्रह्म तिष्ठति नाणुमात्रमपि तद्विकृतमित्यर्थः । यत्र हि यदध्यासस्तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न संबध्यत इति ॥ ६९ ॥ चित् बुद्धिप्रतिबिम्बचैतन्यम् ॥ ७० ॥ उक्ते विवर्तवादे पामराणामसंभावनामुद्घाटयन् श्रीराम उवाच—**वन्ध्यापुत्रेणे**त्यादिना । अत्र प्रायः पदार्थवाक्यार्थोभयासंभवप्रदर्शनाय तथा दृष्टान्ताः ॥ ७१ ॥ इत्येतानि वचांसीव प्रतिभान्तीति शेषः ॥ ७२ ॥ भवता प्रामाणिकमूर्धन्येनापि मम विवेकशालिनोऽप्रतार्यस्यापीति पामराशयसर्वस्वोक्तिः ॥ ७३ ॥ इदानीं स्वाशयानुरूपमाह—**यथे**ति ॥ ७४ ॥ उक्तदोषं परिहृत्यासतोऽपि सत्यवद्भानं स्वप्नदृष्टान्तेन संभावयिष्यन् श्रीवसिष्ठ उवाच—**ने**त्यादिना । आरवी ध्वनिमान् ॥ ७५ ॥ ॥ ७६ ॥ ७७ ॥ ७८ ॥ विततेन चिरं भावनाविपुलेन ॥ ७९ ॥ केवलं मन एव चञ्चलशक्तितया यच्चलति तत्रैव स्फुरतीत्यादिभ्रमविभावनमिति भावः । अपरतां सांसारिकदशाप्रयुक्तमपकर्षं, केवलं कैवल्यलक्षणोत्कर्षं चोपयाति ॥ ८० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे उत्पत्तिप्रकरणार्थकल्पनं नाम चतुर्थः सर्गः ॥ ४ ॥

विश्वस्य मूलं हि मनस्तस्य मूलमिहोच्यते ।
तदेव मनसस्तत्त्वं विश्वस्येति च वर्ण्यते ॥ १ ॥

एवं मनोमिथ्यात्ववर्णनेन प्रकरणार्थे कृते तदधिष्ठानतत्त्वं तदारोपप्रकारं तस्य मिथ्यात्वे कारणं च विस्तरेण जिज्ञासमानः श्रीराम उवाच—**भगवन्नि**ति । किं विद्यते । मनो भ्रमे परमार्थभूतं मूलं किमित्यर्थः ॥ १ ॥ सर्वजगदुत्पत्तिमूलमपहाय मनोमू[illegible] बीजमाह—**आदा**विति । आद्यस्य मूलपरिज्ञाने-

१ परं स्थितं इति पाठः.

श्रीवसिष्ठ उवाच ।

महाप्रलयसंपत्तावसतां समुपागते ।
अशेषदृश्यसर्गादौ शान्तमेवावशिष्यते ॥ ३
आस्तेऽनस्तमितो भास्वानजो देवो निरामयः ।
सर्वदा सर्वकृत्सर्वः परमात्मा महेश्वरः ॥ ४
यतो वाचो निवर्तन्ते यो मुक्तैरवगम्यते ।
यस्य चात्मादिकाः संज्ञाः कल्पिता न स्वभावजाः ॥५
यः पुमान्सांख्यदृष्टीनां ब्रह्म वेदान्तवादिनाम् ।
विज्ञानमात्रं विज्ञानविदामेकान्तनिर्मलम् ॥ ६
यः शून्यवादिनां शून्यो भासको योऽर्कतेजसाम् ।
वक्ता मन्ता ऋतं भोक्ता द्रष्टा कर्ता सदैव सः ॥ ७
सन्नप्यसद्यो जगति यो देहस्थोऽपि दूरगः ।
चित्प्रकाशो ह्ययं यस्मादालोक इव भास्वतः ॥ ८
यस्माद्विष्णवादयो देवाः सूर्यादिव मरीचयः ।
यस्माज्जगन्त्यनन्तानि बुद्बुदा जलधेरिव ॥ ९
यं यान्ति दृश्यवृन्दानि पयांसीव महार्णवम् ।
य आत्मानं पदार्थं च प्रकाशयति दीपवत् ॥ १०
य आकाशे शरीरे च दृषत्स्वप्सु लतासु च ।
पांसुष्वद्रिषु वातेषु पातालेषु च संस्थितः ॥ ११
यः प्लावयति संरब्धं पुर्यष्टकमितस्ततः ।
येन मूकीकृता मूढाः शिला ध्यानमिवास्थिताः ॥१२
व्योम येन कृतं शून्यं शैला येन घनीकृताः ।
आपो द्रुताः कृता येन दीपो यस्य वशो रविः ॥ १३
प्रसरन्ति यतश्चित्राः संसारासारवृष्टयः ।
अक्षयामृतसंपूर्णादम्भोदादिव वृष्टयः ॥ १४
आविर्भावतिरोभावमयास्त्रिभुवनोर्मयः ।
स्फुरन्त्यतितते यस्मिन्मराविव मरीचयः ॥ १५
नाशरूपो विनाशात्मा योऽन्तःस्थः सर्वजन्तुषु ।
गुप्तो योऽप्यतिरिक्तोऽपि सर्वभावेषु संस्थितः ॥ १६
प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला ।
चित्तमूलेन्द्रियदला येन नृत्यति वायुना ॥ १७
यश्चिन्मणिः प्रकचति प्रतिदेहसमुद्गके ।
यस्मिन्निन्दौ स्फुरन्त्येता जगज्जालमरीचयः ॥ १८
प्रशान्ते चिद्धने यस्मिन्स्फुरन्त्यमृतवर्षिणि ।
धाराजलानि भूतानि सृष्टयस्तडितः स्फुटाः ॥ १९
चमत्कुर्वन्ति वस्तूनि यदालोकतया मिथः ।
असज्जातमसद्येन येन सत्सत्त्वमागतम् ॥ २०
चलतीदमनिच्छस्य कायो यो यस्य संनिधौ ।
जडं परमरक्तस्य शान्तमात्मनि तिष्ठतः ॥ २१
नियतिर्देशकालौ च चलनं स्पन्दनं क्रिया ।
इति येन गताः सत्तां सर्वसत्तातिगामिना ॥ २२

नैव संक्षेपतः सर्वमूलपरिज्ञानोपपत्तेरित्याशयः ॥ २ ॥ तत्राद्यप्रश्नोत्तरं मुख्यत्वाद्विस्तरेणासर्गसमाप्तेर्वसिष्ठ उवाच—**महाप्रलयेति**। अर्थाज्जगति । असत्तां सूक्ष्मीभावादर्थक्रियाऽसमर्थताम् । भाविनोऽशेषदृश्यसर्गस्य आदौ । शान्तं निर्विक्षेपम् ॥ ३ ॥ सर्वकृत्सर्वक्रियाशक्तिसंपन्नः ॥ ४ ॥ मुक्तैर्जीवन्मुक्तैरवगम्यते प्रत्यक्षमनुभूयते। स्वो भावः अनारोपितरूपं तज्जा न किंत्वारोपितधर्मजाः ॥ ५ ॥ सर्ववादिनामपि स एव तत्तद्बुद्धिकल्पितविशेषैः सिद्धान्तविषय इत्यविवादः सर्वाधिष्ठाने तस्मिन्नित्याह—**य** इति । विज्ञानमात्रं क्षणिकविज्ञानमात्रम् ॥ ६ ॥ सर्वेषां प्रत्यगात्मापि स एवेत्याह—**वक्तेति**। ऋतं सत्यम् ॥७॥ असत्त्वापादकाविद्यावृतत्वात्पामरदृशा असत्। अतएव दूरगः ॥ ८ ॥ देवाः प्रकाशप्राधान्यान्मरीचय इव। अचेतनत्वात् जगन्ति तु बुद्बुदानीव जायन्त इति शेषः ॥ ९ ॥ यान्ति प्रलयेनापियन्ति । तस्यैव स्वप्रकाशत्वात्स्वपरप्रथानिर्वाहकत्वमाह—**य** इति । आत्मानं प्रकाशयतीत्यभेदेऽपि राहोः शिर इतिवदुपचारः ॥ १० ॥ तस्यैव सर्वान्तरत्वेन सर्वगतत्वमाह—**य** इति ॥ ११ ॥ संरब्धं स्वस्वव्यापारेषूद्युक्तं कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि भूतसूक्ष्माणि प्राणा अविद्याकामकर्मान्तःकरणमिति पुर्यष्टकमितस्ततोऽन्तर्बहिश्च स्वचिद्व्याप्त्या प्लावयति । चेतनानां चेतनता यत्प्रयुक्तेत्यर्थः । एवमचेतनानामपि वैचित्र्ये स एव हेतुरित्याह—**येनेत्यादिना** ॥ १२ ॥ यस्य वशः सन् रविर्दीपो दीप्तिस्वभावः । प्रकाशक इति यावत् । 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः ॥ १३ ॥ संसारलक्षणा असारदृष्टय एव आसारवृष्टयः । अक्षयेण नित्येन बहलेन चामृतेन सुखेन जलेन च संपूर्णादिति यथायोगमुभयविशेषणम् ॥ १४ ॥ प्राचुर्ये मयट् । अतिततेऽत्यन्तविस्तीर्णे । मरीचयस्तदुदकानि ॥ १५ ॥ प्रपञ्चात्मना नाशरूपः । स्वरूपेण त्वविनाशात्मा । सूक्ष्मतमत्वादन्तर्गुप्तः । महत्तमत्वात्सर्वतोऽप्यतिरिक्तः । निष्प्रपञ्चतयावशिष्टः । तथाच श्रुतिः 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति ॥ १६ ॥ प्रकृतिर्माया सैव व्रततिर्लता । व्योम्नि शुद्धचिति । येनेश्वरेण ॥ १७ ॥ समुद्गके संपुटके ॥ १८ ॥ भूतानि जाड्यप्राधान्याद्धाराजलानि । स्फुटाश्चित्प्रकाशप्रधानाः सृष्टयस्तडितः ॥ १९ ॥ चमत्कुर्वन्ति विचित्रकार्याणि कुर्वते ॥ २० ॥ यः प्रसिद्धो देवनरतिर्यगादिकायः अरक्तस्यासङ्गस्यानिच्छतश्च यस्य संनिधौ इदं दृश्यभूतमतएव परमत्यन्तं जडमपि चलति । पदसंस्कारपक्षाश्रयणात्सामान्ये नपुंसकम् ॥ २१ ॥ सर्गकालेऽवश्यं सृष्ट्या भाव्यं प्रलयकाले च प्रलयेनेत्यादिनियमो नियतिस्तदवच्छेदकौ देशकालौ । तत्राप्यौ बीजाद्यन्तर्गतकार्यस्य बीजोच्छूनतया चलनम् । बीजपुटं भित्त्वाङ्कुरादिनिर्गमनेन स्पन्दनम् । ततः काण्डपत्रशाखादिक्रमेण फलावसानो व्यापारः क्रिया । इत्थं क्रमेण सर्वभावा येन सत्तां व्यवहारार्थक्रियासम-

१ दृश्य इति पाठः।

शुद्धसंविन्मयत्वाद्यः खं भवेद्व्योमचिन्तया ।
पदार्थचिन्तयार्थत्वमिव तिष्ठत्यधिष्ठितः ॥ २३
कुर्वन्नपीह जगतां महतामनन्त-
वृन्दं न किंचन करोति न काश्चनापि ।
स्वात्मन्यनस्तमयसंविदि निर्विकारे
त्यक्तोदयस्थितिमति स्थित एक एव ॥ २४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे मूलकारणदेवस्वरूपवर्णनं नाम पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ६

श्रीवसिष्ठ उवाच ।

अस्य देवाधिदेवस्य परस्य परमात्मनः ।
ज्ञानादेव परा सिद्धिर्न त्वनुष्ठानदुःखतः ॥ १
अत्र ज्ञानमनुष्ठानं नत्वन्यदुपयुज्यते ।
मृगतृष्णाजलभ्रान्तिशान्तौ चेदं निरूपितम् ॥ २
नह्येष दूरे नाभ्याशे नालभ्यो विषमे न च ।
स्वानन्दाभासरूपोऽसौ स्वदेहादेव लभ्यते ॥ ३
किंचिन्नोपकरोत्यत्र तपोदानव्रतादिकम् ।
स्वभावमात्रे विश्रान्तिमृते नात्रास्ति साधनम् ॥ ४
साधुसंगमसच्छास्त्रपरतैवात्र कारणम् ।
साधनं बाधनं मोहजालस्य यदकृत्रिमम् ॥ ५
अयं स देव इत्येव संपरिज्ञानमात्रतः ।
जन्तोर्न जायते दुःखं जीवन्मुक्तत्वमेति च ॥ ६

श्रीराम उवाच ।

संपरिज्ञातमात्रेण किलानेनात्मनात्मना[1] ।
पुनर्दोषा न बाधन्ते मरणाद्याः कदाचन[2] ॥ ७
देवदेवो महानेष कुतो दूरादवाप्यते ।
तपसा केन तीव्रेण क्लेशेन कियताथवा ॥ ८

श्रीवसिष्ठ उवाच ।

स्वपौरुषप्रयत्नेन विवेकेन विकासिना ।
स देवो ज्ञायते राम न तपःस्नानकर्मभिः ॥ ९
रागद्वेषतमःक्रोधमदमात्सर्यवर्जनम् ।
विना राम तपोदानं क्लेश एव न वास्तवम् ॥ १०
रागाद्युपहते[3] चित्ते वञ्चयित्वा परं धनम् ।
यदर्ज्यते तस्य दानाद्यस्यार्थास्तस्य तत्फलम् ॥ ११

र्थतां गताः । सर्वसत्तातिगामिनेति तस्य जगद्विलक्षणपारमार्थिकसत्तोक्ता ॥ २२ ॥ अथवा स एव मायिकव्योमादिभावचिन्तया व्योमादिभावेन संपन्नो न ततोऽन्यद्व्योमादिशब्दभागस्तीत्याह—**शुद्धेति** । तथाच श्रुतिः 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति । चमत्कुर्वन्तीत्याद्येतदन्तेन श्लोकचतुष्टयेन जगदारोपप्रकारप्रश्नस्याप्युत्तरमुक्तम् ॥ २३ ॥ संप्रति तस्य मिथ्यात्वे कारणमाह—**कुर्वन्नपीति** । निर्विकारे अतएव त्यक्तस्वजातीयाद्युदयादिमति यतोऽयं स्थितस्ततोऽयं महतां जगतां ब्रह्माण्डानां वृन्दं तत्र विचित्रलीलाश्च कुर्वन्नपि न किंचन कार्यं न काश्चन क्रियाः करोतीति निर्विकारोपादानकत्वमेव कार्यमिथ्यात्वे हेतुरित्यर्थः ॥ २४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मूलकारणदेवस्वरूपवर्णनं नाम पञ्चमः सर्गः ॥ ५ ॥

ज्ञानादेव भवप्राप्तिरात्मनो न तु कर्मभिः ।
ज्ञानोपायेष्वतो यत्नः क्रमश्चात्रोपवर्ण्यते ॥ १ ॥

इत्थं जगन्मूलकारणं देवस्वरूपमुपवर्ण्य तत्प्राप्त्युपायज्ञानसाधनान्युपदिदिक्षुः श्रीवसिष्ठ उवाच—**अस्येत्यादि** । देवस्य हिरण्यगर्भस्यादिकारणत्वात्तदधिदेवस्य द्योतकत्वाद्देवानामिन्द्रियमनसामपि साक्षितया प्रकाशकत्वात्तेषामधिदेवस्येति वा ॥१॥ अनुष्ठानमिव वक्ष्यमाणप्रयत्नसंपाद्यत्वाज्ज्ञानमपि गौण्यानुष्ठानमुच्यते । कर्मकोटिभिरपि दुर्भेद्यस्य ज्ञानमात्रेण निवृत्तावनुरूपं दृष्टान्तमाह—**मृगतृष्णेति** । निरूपितं दृष्टम् ॥ २ ॥ नातिदूरे नातिसंनिहिते क्रियामन्तरेणालभ्ये विषमादिस्थे च फले क्रिया सफला स्यादात्मा तु न तथेति तस्य न क्रियालभ्यतेत्याह—**नहीति** । विस्मृतकण्ठचामीकरवज्ज्ञानलभ्यता त्वस्य सुलभेत्याह—**स्वानन्देति** ॥ ३ ॥ अत्रास्यां प्रागुक्तदेवप्राप्तौ ॥ ४ ॥ अत्र तत्प्राप्तिसाधने ज्ञानेऽपि कुतः सर्वथा कर्मनिरपेक्षता तत्राह—**साधनमिति** । यद्यतो मोहजालस्य बाधनमकृत्रिमं नित्यसिद्धं ब्रह्मैव चरमसाक्षात्कारवृत्त्यारूढं सद्बाधनं बाधे कारणं नान्यदित्यर्थः ॥५॥ दुःखनिवृत्तौ जीवन्मुक्तौ वा तर्हि साधनान्तरं स्यात्तत्राह—**अयमिति** ॥ ६ ॥ 'तमेतं वेदानुवचनेन' इति प्रत्यक्षं यज्ञदानतपसां ज्ञानसाधनत्वश्रवणात्किंचिन्नोपकरोतीत्याद्युक्तिः साधारणतपआदिविषया तीव्रतरतपआदिविधित्सयेति मन्यमानः श्रीराम उवाच—**संपरीति** ॥ ७ ॥ अदूराच्छीघ्रमवाप्यते ज्ञानेन प्राप्यते । शीघ्रं तज्ज्ञानं केनोपायेन सिध्यतीत्यर्थः ॥ ८ ॥ विविदिषार्थं विहितानां निष्कामकर्मणां जन्मान्तरानुष्ठितसाधारणानां विविदिषोत्पत्तावेवोपक्षयात्सत्यामुत्कटविविदिषायां श्रवणादिप्रयत्न एवोपयुज्यते न तपआदीति मन्यमानः श्रीवसिष्ठ उवाच—**स्वपौरुषेत्यादिना** ॥ ९ ॥ न वास्तवं साधनमिति शेषः ॥ १० ॥ तत्कुतस्तत्राह—**रागादीति** । सति रागादौ धनार्जने परवञ्चनाद्यवश्यंभावाच्चित्तशुद्धेरेव दौर्लभ्याद्दानादेः काम्यं फलमपि दुर्लभं, दूरे ततो ज्ञानमोक्षे[4] प्रत्याशेत्या-

१ मात्मनः इति पाठः. २ कथंचन इति पाठः. ३ द्युपहते इति पाठः. ४ मोक्षफला इति पाठः.

रागाद्युपहते चित्ते व्रतादि क्रियते च यत् ।
तद्दम्भः प्रोच्यते तस्य फलमस्ति मनाङ् च ॥ १२
तस्मात्पुरुषयत्नेन मुख्यमौषधमाहरेत् ।
सच्छास्त्रसज्जनासङ्गौ संसृतिव्याधिनाशनौ ॥ १३
अत्रैकं पौरुषं यत्नं वर्जयित्वेतरा गतिः ।
सर्वदुःखक्षयप्राप्तौ न काचिदुपपद्यते ॥ १४
शृणु तत्पौरुषं कीदृगात्मज्ञानस्य लब्धये ।
येन शाम्यत्यशेषेण रागद्वेषविषूचिका ॥ १५
यथासंभवया वृत्त्या लोकशास्त्राविरुद्धया ।
संतोषसंतुष्टमना भोगगन्धं परित्यजेत् ॥ १६
यथासंभवमुद्योगादनुद्विग्नतया स्वया ।
साधुसंगमसच्छास्त्रपरतां प्रथमं श्रयेत् ॥ १७
यथाप्राप्तार्थसंतुष्टो यो गर्हितमुपेक्षते ।
साधुसंगमसच्छास्त्रपरः शीघ्रं स मुच्यते ॥ १८
विचारेण परिज्ञातस्वभावस्य महामतेः ।
अनुकम्प्या भवन्त्येते ब्रह्मविष्णिवन्द्रशंकराः ॥ १९
देशे यं सुजनप्राया लोकाः साधुं प्रचक्षते ।
स विशिष्टः स साधुः स्यात्तं प्रयत्नेन संश्रयेत् ॥ २०
अध्यात्मविद्या विद्यानां प्रधानं तत्कथाश्रयम् ।
शास्त्रं सच्छास्त्रमित्याहुर्मुच्यते तद्विचारणात् ॥ २१
सच्छास्त्रसत्संगमजैर्विवेकै-
स्तथा विनश्यन्ति बलादविद्याः ।
यथा जलानां कतकानुषङ्गा-
द्यथा जनानां मतयोऽपि योगात् ॥ २२

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे मुमुक्षुप्रयत्नोपदेशो नाम षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ७

श्रीराम उवाच ।
य एष देवः कथितो यस्मिञ्ज्ञाते विमुच्यते ।
वद क्वासौ स्थितो ब्रह्मन्कथमेनमहं लभे ॥ १
श्रीवसिष्ठ उवाच ।
य एष देवः कथितो नैष दूरेऽवतिष्ठते ।
शरीरे संस्थितो नित्यं चिन्मात्रमिति विश्रुतः ॥ २
एष सर्वमिदं विश्वं न विश्वं चैष सर्वगः ।
विद्यते ह्येष एवैको न तु विश्वाभिधास्ति दृक् ॥ ३
चिन्मात्रमेष शशिभृच्चिन्मात्रं गरुडेश्वरः ।
चिन्मात्रमेव तपनश्चिन्मात्रं कमलोद्भवः ॥ ४
श्रीराम उवाच ।
बाला अपि वदन्त्येतद्यदि चेतनमात्रकम् ।
जगदित्येव केवात्र नाम स्यादुपदेशता ॥ ५

शयेनाह—**रागादी**ति द्वाभ्याम् ॥ ११ ॥ १२ ॥ मुख्यमौषधमेवादौ द्विधा दर्शयति—**सच्छास्त्रे**ति ॥१३॥ इतरा गतिरुपायान्तरम् ॥ १४ ॥ १५ ॥ वृत्त्या जीवनसाधनसंपत्त्या । भोगगन्धं भोगवासनाम् । तदभिनिवेशमिति यावत् ॥ १६ ॥ अनुद्विग्नतया अशक्यमिदमिति निर्वेद उद्विग्नता तद्वर्जनेन । स्वया आत्मीयया । हितयेति यावत् ॥ १७ ॥ गर्हितं शास्त्रशिष्टेषु निन्दितम् ॥ १८ ॥ परिज्ञातः स्वभाव आत्मतत्त्वं येन तस्य ॥ १९ ॥ साधुं लक्षयति—**देश** इति । सुजनाः श्रुतिस्मृत्याचारनिष्ठास्तत्प्रायास्तत्प्रचुरा लोका जना यं प्रचक्षते स चेद्विशिष्टैर्ज्ञानवैराग्यादिगुणैः सहितः स्यात्तर्हि स साधुः स्यादित्यर्थः ॥ २० ॥ आत्मानमधिकृत्य प्रवृत्ता विद्या ज्ञानमध्यात्मविद्या तदुत्पत्त्यनुकूलविचारात्मककथाया आश्रयं शास्त्रमुपनिषत्सूत्रभाष्यैतद्ग्रन्थादि ॥ २१ ॥ ननु सत्स्वनेकेषूपायेषु कुतः साधुसंगमसच्छास्त्रे एव प्रशस्येते तत्राह—**सच्छास्त्रे**ति । अविद्या मोहाः विद्याविरोधिनो रागादयश्च । जलानां पङ्का इति शेषः । मतयो बाह्यमनोवृत्तयो योगाभ्यासाद्विनश्यन्ति ॥ २२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मुमुक्षुप्रयत्नोपदेशो नाम षष्ठः सर्गः ॥ ६ ॥

विरिञ्च्यादिजगन्मूलं यो देवः प्राङ्निरूपितः ।
निरस्तनिखिलोपाधेस्तस्य तत्त्वमिहोच्यते ॥ १ ॥

प्रसङ्गजिज्ञासिते साधने परिज्ञाते प्रस्तुतजगत्कारणस्य वास्तवं रूपं जिज्ञासुः श्रीराम उवाच—**य** इति । यो विरिञ्च्यादिकारणभूत एष प्रत्यगात्मभूतो देवः प्राक्कथितः असौ क्व कस्मिन्नुपाधावनावरणेनाभिव्यक्तः । कीदृशे वा तत्त्वे स्थितः । कथं लभे इत्यौत्सुक्योक्तिः साधनानां पूर्वमुक्तत्वादन्तरङ्गोपायान्तरप्रश्नो वा ॥ १ ॥ तत्रादौ प्रथमप्रश्नोत्तरमाह—**य** इति । नैष दूरेऽवतिष्ठत इत्यौत्सुक्यपरिहारार्थमुक्तिः । शरीरे सामान्याभिव्यक्त्या तदन्तर्हृदयपुण्डरीके तु विशेषतः सम्यगभिव्यक्तः । स्थित इत्यर्थः ॥ २ ॥ तर्हि किं देहपरिच्छिन्न एव सः, नेत्याह—**एष** इति । तर्हि किं दृश्यविश्वाकार एव, नेत्याह—**ने**ति । सर्वाधिष्ठानभावेन सर्वगतत्वप्रतिपादनाय विश्वात्मत्वोक्तिरिति भावः ॥ ३ ॥ न केवलं कार्यात्मकं विश्वमेव तद्व्यतिरेकेण नास्ति किंतु तत्कारणमायापि सहतद्गुणाभिमानिदेवैरित्याशयेनाह—**चिन्मात्रमेष** इति । गरुडेश्वरो नियन्ता विष्णुः । तपनस्य त्रिमूर्तिरमत्वप्रसिद्धेस्तत्पङ्क्तावुक्तिः ॥ ४ ॥ चिन्मात्रमित्यत्र कर्तरि

१ मतयश्च इति पाठः।

श्रीवसिष्ठ उवाच ।

चिन्मात्रं चेतनं विश्वमिति यज्ज्ञातवानसि ।
न किंचिदेव विज्ञातं भवता भवनाशनम् ॥ ६

चेतनं राम संसारो जीव एष पशुः स्मृतः ।
एतस्मादेव निर्यान्ति जरामरणभीतयः ॥ ७

पशुरज्ञो ह्यमूर्तोऽपि दुःखस्यैवैष भाजनम् ।
चेतनत्वाच्चेतनीयं मनोऽनर्थः स्वयं स्थितः ॥ ८

चेत्यनिर्मुक्तता या स्यादचेत्योन्मुखताथवा ।
अस्य सा भरितावस्था[1] तां ज्ञात्वा नानुशोचति ॥ ९

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ १०

तस्य चेत्योन्मुखत्वं तु चेत्यासंभवनं विना ।
रोद्धुं न शक्यते दृश्यं चेत्यं शाम्यति वै कथम् ॥ ११

अचेत्यचित्स्वरूपं यत्तच्चासंभवनं विना ।
क स्वरूपोन्मुखत्वं हि केवलं चेत्यरोधतः ॥ १२

श्रीराम उवाच ।

यस्मिञ्जीवे हि विज्ञाते न विनश्यति संसृतिः ।
व्योमरूपी पशुस्त्वज्ञः स ब्रह्मन्कुत्र कीदृशः ॥ १३

साधुसंगमसच्छास्त्रैः संसारार्णवतारकः ।
दृश्यते परमात्मा यः स ब्रह्मन्वद कीदृशः ॥ १४

श्रीवसिष्ठ उवाच ।

यदेतच्चेतनं जीवो विशीर्णो[2] जन्मजङ्गले ।
एतमात्मानमिच्छन्ति ये तेऽज्ञाः पण्डिता अपि ॥ १५

क्विबन्तान्मात्रच्चि चेतनमात्रं विश्वमित्यर्थो लभ्यते । तच्च लोके आबालगोपालं प्रसिद्धं पुरुषार्थापर्यवसितं चेति नोपदेशार्हमिति मन्यमानानामाशयमुद्धाटयन् रामः शङ्कते—**बाला अपी**ति ॥ ५ ॥ नासौ कर्तरि क्विप् अपितु भावे । तथाच नोक्तदोष इति मन्यमानो वसिष्ठः प्रागुक्तकल्पं निन्दति—**चिन्मात्र**मिति । किंचिदल्पमपि न विज्ञातम् । भ्रान्तेरज्ञानलेशस्याप्यनिवृत्तेरिति भावः ॥ ६ ॥ कुतो न विज्ञातं तत्राह—**चेतन**मिति । कर्तरि क्विबन्तत्वे चिच्चेतनशब्दौ तुल्यार्थौ स्याताम् । नन्यादिल्युप्रत्ययस्यापि कर्तर्येव विधानाच्चितिकर्तृतदर्थः[3] स्यात् । नच नित्यचितेः कर्तृत्वसंभव इत्यनित्यमनोवृत्तिप्रतिफलनचित्परिग्रहे तदाश्रयभूतमन्तःकरणमेवात्मतया गृह्णंस्तदात्मा जीव उक्तः स्यात् । स च बहिर्मुखतया विषयानेव सारतया पश्यन्पशुः । एतस्मादेव देहेन्द्रियविषयवासनानुसारात्तत्तद्देहपरिग्रहे जरामरणादयोऽन्तस्था निर्यान्तीवाविर्भवन्तीत्यर्थः ॥७॥ ननु मूर्तस्थूलशरीरातिरिक्ततया तज्ज्ञानादेव जरामरणादिप्रलयः सिद्धः 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतेरित्याशङ्क्याह—**पशु**रिति । अमूर्तस्थूलदेहशून्योऽप्यसौ न कृतार्थो यतोऽज्ञः अज्ञानवान् चेतनीयं यन्मनस्तद्रूपोऽनर्थश्च स्वयं भूत्वा स्थितोऽतो दुःखस्यैव भाजनम् । अशरीरमित्यादिश्रुतेस्तु स्थूलसूक्ष्मकारणाख्यदेहत्रयरहितं प्रियाप्रिये न स्पृशत इत्यर्थो न स्थूलदेहमात्ररहितमिति । तथात्वेऽपि स्वप्ने प्रियाप्रियदर्शनादिति भावः ॥ ८ ॥ कीदृशस्य तर्हि तस्य ज्ञानात्कृतकृत्यता तत्राह—**चेत्ये**ति । चेत्यनिर्मुक्तता मुक्तौ अचेत्योन्मुखता तु समाधौ प्रसिद्धा ॥ ९ ॥ तत्र श्रुतिं प्रमाणयति—**भिद्यत** इति । मूलाज्ञाननाशात्तत्कार्यान्तःकरणतादात्म्याध्यासलक्षणो हृदयग्रन्थिर्भिद्यते नश्यति, तन्नाशादेव तन्मूलकसंशयादयोऽपीत्यर्थः । परं कारणमप्यवरं यस्मात्तथाविधे ॥ १० ॥ ननु तर्हि चित्तनिरोधलक्षणयोगेनैव चेत्योन्मुखत्वस्य रोद्धुं शक्यत्वात्किं ज्ञानप्रयासेन तत्राह—**तस्ये**ति । चेत्यस्य दृश्यस्यासंभवनं ज्ञानेन मूलतो बाधम् । शाम्यति वै कथम्, विना ज्ञानमिति शेषः । तथाच विना ज्ञानं तादृशस्वरूपसमाधिरेव न सिध्यतीत्यर्थः ॥११॥ एवं मोक्षोऽपि ज्ञानमन्तरेण दुर्लभ इत्याह—**अचेत्ये**ति । यन्मोक्षाख्यमचेत्यचित्स्वरूपं तच्च असंभवनं प्रागुक्तचेत्यासंभवनं विना क । हि यस्मात्समाधौ केवलं स्वरूपोन्मुखत्वमपि चेत्यरोधतो दृश्यबाधादेव भवति, तत्र किं वाच्यं मोक्षे तदावश्यकत्वमिति भावः ॥ १२ ॥ **यस्मि**न्निति । ननु रामस्येदं प्रश्नश्लोकद्वयमप्यसंगतं, 'चेतनं राम संसारो जीव एष पशुः स्मृतः' इति जीवस्वरूपस्य तदाधारस्य मनोमूलकारणस्य च प्रागुक्तत्वेनाद्यश्लोकानुत्थानात्[4] । ब्रह्मस्वरूपस्य च सर्गाद्यश्लोके पृष्टत्वेन पुनःप्रश्नानर्हत्वादिति चेत् । एवं तर्हि न यथाश्रुतप्रश्नो रामाभिप्रेतः किंत्वाक्षेपः । तथाहि । ननु जीव एव संसार इति व्याहतं तस्य ब्रह्मप्राप्तौ ब्रह्मणोऽपि संसारित्वप्रसङ्गात् । तदप्राप्तौ तु तत्साधनज्ञानशास्त्रादिवैयर्थ्यम् । तस्मादन्यदेव जैवं रूपं वाच्यम् । तथा तदाधारोऽपि किं ब्रह्मैव उतान्यत् । आद्ये ज्ञानेन ब्रह्माध्यस्तसर्वद्वैतेन सह बाधापत्तौ वरघातन्यायापत्तिः । द्वितीये ब्रह्माद्वैतव्याघात इति मन्यमानः श्रीरामः पृच्छति—**यस्मि**न्निति । व्योमेव रूपी कल्पितरूपवान् । कुत्र कस्मिन्नाधारे तिष्ठति कीदृशः किं संसारकोटावुतात्मकोटावित्यर्थः[5] ॥ १३ ॥ किंच यदि जीवः संसारकोटावेव तर्हि तस्य संसारार्णवतारको यः शास्त्रैरुपदिश्यते स कीदृशः । नहि जलधिमेव जलधेः कश्चित्तारयति । तस्माद्व्याहतं जीवस्य संसारित्ववचनमिति ॥ १४ ॥ स्यादेतदेवं यदि जीव एव संसरेज्जीव एव स्वज्ञानान्मुच्येत जीव एव वा तात्त्विक आत्मा स्यात् । नत्वेवम् । 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' इति श्रुतौ ब्रह्मण एव स्वाज्ञानात्संसारः स्वज्ञानान्मुक्तिरिति प्रतिपादनविरोधात् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिचेतनधात्वन्तरप्रतिषेधविरोधाच्च । यदा तु ब्रह्मैव 'अनेन जीवेनात्मना' इति श्रुतेरिदंकारास्पदत्वात्कल्पितत्वाच्चानात्मभूतेन संसारकोट्यन्तर्भूतेनैव

१ भवितावस्था इति पाठः. २ जीवे विशीर्णे इति पाठः. ३ कर्तरि तु इति पाठः. ४ प्राक्तनत्वेन इति पाठः. ५ उतान्यकोटौ इति पाठः.

जीव एव हि संसारश्चेतना दुःखसंततिः ।
अस्मिञ्ज्ञाते न विज्ञातं किंचिद्भवति कुत्रचित् ॥ १६
ज्ञायते परमात्मा चेद्राम दुःखस्य संततिः ।
क्षयमेति विषावेशशान्ताविव विषूचिका ॥ १७

श्रीराम उवाच ।

रूपं कथय मे ब्रह्मन्यथावत्परमात्मनः ।
यस्मिन्दृष्टे मनो मोहान्समग्रान्संतरिष्यति ॥ १८

श्रीवसिष्ठ उवाच ।

देशाद्देशान्तरं दूरं प्राप्तायाः संविदो वपुः ।
निमिषेणैव यन्मध्ये तद्रूपं परमात्मनः ॥ १९
अत्यन्ताभाव एवास्ति संसारस्य यथास्थितेः ।
यस्मिन्बोधमहाम्भोधौ तद्रूपं परमात्मनः ॥ २०
द्रष्टृदृश्यक्रमो यत्र स्थितोऽप्यस्तमयं गतः ।
यदनाकाशमाकाशं तद्रूपं परमात्मनः ॥ २१
अशून्यमिव यच्छून्यं यस्मिञ्शून्यं जगत्स्थितम् ।
सर्गौघे सति यच्छून्यं तद्रूपं परमात्मनः ॥ २२
यन्महाचिन्मयमपि बृहत्पाषाणवत्स्थितम् ।
जडं वा जडमेवान्तस्तद्रूपं परमात्मनः ॥ २३
सबाह्याभ्यन्तरं येन सर्वं संप्राप्य संगमम् ।
स्वरूपसत्तामाप्नोति तद्रूपं परमात्मनः ॥ २४
प्रकाशस्य यथालोकः शून्यत्वं नभसो यथा ।
तथेदं संस्थितं यत्र तद्रूपं परमात्मनः ॥ २५

श्रीराम उवाच ।

सद्रूपं परमात्मेति कथं नाम हि बुध्यते ।
इयतोऽस्य जगन्नाम्नो दृश्यस्यासंभवः कथम् ॥ २६

श्रीवसिष्ठ उवाच ।

भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
अत्यन्ताभावसंबोधे यदि रूढिरलं भवेत् ॥ २७
तज्ज्ञातं ब्रह्मणो रूपं भवेन्नान्येन कर्मणा ।
दृश्यात्यन्ताभावतस्तु ऋते नान्या शुभा गतिः ॥ २८
अत्यन्ताभावसंपत्तौ दृश्यस्यास्य यथा स्थितेः ।
शिष्यते परमार्थोऽसौ बुध्यते जायते ततः ॥ २९
न विदः प्रतिबिम्बोऽस्ति दृश्याभावादृते क्वचित् ।
क्वचिन्नाप्रतिबिम्बेन किलादर्शोऽवतिष्ठते ॥ ३०

---

जीवेनात्मतया भ्रान्त्या गृहीतेन तद्धर्मैर्जीवोऽहमिति मन्यमानः संसरति तदा जीवस्यैव संसारित्वं पर्यवसन्नमिति तद्बाधेऽपि न वरघातन्यायापातादिदोष इत्यभिप्रेत्य स्वोक्तमेव द्रढयन् श्रीवसिष्ठ उवाच—**यदेतदि**त्यादिना । जन्मग्रहणं शरीरसंघोपलक्षणम् ॥ १५ ॥ १६ ॥ १७ ॥ एवं समाहितो रामः सर्गोपक्रमपृष्टार्थमेव प्रासङ्गिकोक्तिव्यवहितमिति पुनः स्पष्टं पृच्छति—**रूप**मिति । कार्यबाहुल्यान्मोहानिति बहुवचनम् ॥ १८ ॥ तत्र लोके निर्विषयज्ञानाप्रसिद्धेर्निर्विषयानावृतापरोक्षचिद्रूपं तदित्युक्तेऽप्यनुभवपथानारोहाद्यथा तत्तमारोहति तथाह—**देशा**दिति । शाखाग्रचन्द्रदर्शने चक्षुर्द्वारा निःसृतान्तःकरणाभिव्यक्तापरोक्षसंविदः शाखादेशाद्दूरं चन्द्रदेशं निमिषान्तरमात्रेण प्राप्तायाः शाखाचन्द्रयोर्युगपद्ग्रहणान्यथानुपपत्त्या शाखाप्रदेशमारभ्य चन्द्रपर्यन्तमनुस्यूतता अवश्यं वाच्या । अन्तराले विच्छेदे कारणानुभवयोरभावात् । तत्र तस्याः शाखाचन्द्रप्रदेशयोः सविषयत्वेऽपि मध्ये यद्वपुः स्वरूपं तदेव निर्विषयापरोक्षचिद्रूपं प्रसिद्धमिति परमात्मनोऽपि तद्रूपं ज्ञेयमित्यर्थः ॥ १९ ॥ यथास्थितेः नाशादिविकारमन्तरेणैव स्वस्थाने मिथ्यात्वमापन्नस्येति यावत् । 'जगत्स्थितेः' इति पाठेऽपि गच्छति बाधमिति जगदिति व्युत्पत्त्या अयमेवार्थः ॥ २० ॥ तदेव स्पष्टमाह—**द्रष्ट्रि**ति । आकाशबाधेऽप्यपरिच्छिन्नत्वेन विपुलत्वादाकाशम् ॥ २१ ॥ जगत्स्वभावशून्यमपि यत्सर्ववस्तुयाथात्म्यभूतस्वरूपेण पूर्णत्वादणुमात्रेणाप्यशून्यमिव शून्यमसदपि जगद्यस्मिन् स्थितं सद्भावमापन्नमित्यर्थः । सर्गलक्षणा ओघा यस्य तथाविधे अज्ञाने सति यत्सदप्यनुपयोगाच्छून्यमिव शून्यम् ॥ २२ ॥ महाचित्प्रचुरत्वादस्थूलादिधर्मकमप्यज्ञदृशा पाषाणवद्बृहत्स्थूलमन्तरजडमेव जडं वा । इवार्थे वाशब्दः । जडमिव स्थितमित्यर्थः ॥ २३ ॥ बाह्यमधिभूताधिदैवमाभ्यन्तरमध्यात्मं च यत्प्रसिद्धं तत्सहितं सर्वं जगद्येन संगममाध्यासिकतादात्म्यं संप्राप्य सत्सदिति व्यवहारयोग्यतालक्षणां स्वरूपसत्तामाप्नोतीत्यर्थः ॥ २४ ॥ प्रकाशादेरालोकादि यथा आत्मतया संस्थितं तथेति लोकदृष्ट्या दृष्टान्तोक्तिः । वस्तुतस्त्वान्त्यात्कार्यादनुगतं ब्रह्मैव सर्वभावानामात्मा नत्वान्तरालिकाः प्रकाशादय इति ॥ २५ ॥ यत् खलु प्रमाणैर्यथावगम्यते तत्तथैव सत् न रूपान्तरेण । ब्रह्म च नावगम्यते तत्कथं सद्रूपं निश्चेतुं शक्यम्, जगच्च तथावगम्यमानं कथमसदिति रामः शङ्कते—**सद्रूप**मिति । इयतः इदंप्रमाणस्य विपुलस्य बहुप्रमाणसिद्धस्य चेत्यर्थः ॥ २६ ॥ ब्रह्म प्रमाणैर्नावगम्यत इत्यसिद्धम् । असति प्रतिबन्धके महावाक्यैस्तदवगमात् । प्रतिबन्धनिरासस्तु तदध्यस्तद्वैतमिथ्यात्वबोधेनैव । नहि सर्पादिकमप्रत्याख्याय रज्जुतत्त्वं बोधयितुं शक्यमित्यभिप्रेत्य श्रीवसिष्ठ उवाच—**भ्रमस्ये**त्यादिना ॥ २७ ॥ ॥ २८ ॥ यः शिष्यते स बुध्यते यो बुध्यते स ततो बोधात् बोद्धुरात्मैव जायत इत्यर्थः ॥ २९ ॥ उक्तेऽर्थे उपपत्तिमाह—**ने**ति । विदो ब्रह्मणः प्रतिबिम्बो नास्ति बुद्धाविति शेषः । बुद्धौ प्रतिबिम्बितं हि ब्रह्म स्वावरकमज्ञानं दहत्तत्त्वतः प्रतीयेत । न चाध्यस्तसत्यताबुद्धौ ब्रह्म प्रतिबिम्बति । विरोधिद्वैताक्रान्तबुद्धावद्वैतप्रतिबिम्बानुदयादित्यर्थः । ननु द्वैतप्रतिबिम्बशून्यतादशायां ब्रह्म प्रतिबिम्बतां तत्राह—**क्वचिदि**ति । यथा आदर्शः क्वचिदपि किंचित्प्रतिबिम्बग्रहणं विना नावतिष्ठते तद्व-

---

१ संततेः इति पाठः. २ निमेषेणैव इति पाठः. ३ [illegible] इति पाठः. ४ नाघृरया इति पाठः. ५ स्वाधिष्ठाने इति पाठः.

जगन्नाम्नोऽस्य दृश्यस्य स्वसत्तासंभवं विना ।
बुध्यते परमं तत्त्वं न कदाचन केनचित् ॥ ३१

श्रीराम उवाच ।

इयतो दृश्यजातस्य ब्रह्माण्डस्य जगत्स्थितेः ।
मुने कथमसत्तास्ति क मेरुः सर्षपोदरे ॥ ३२

श्रीवसिष्ठ उवाच ।

दिनानि कतिचिद्राम यदि तिष्ठस्यखिन्नधीः ।
साधुसंगमसच्छास्त्रपरमस्तदहं क्षणात् ॥ ३३
प्रमार्जयामि ते दृश्यं बोधे मृगजलं यथा ।
दृश्याभावे द्रष्टृता च शाम्येद्बोधोऽवशिष्यते ॥ ३४
द्रष्टृत्वं सति दृश्येऽस्मिन्दृश्यत्वं सत्यथेक्षके ।
एकत्वं सति हि द्वित्वे द्वित्वं चैकत्वयोजने ॥ ३५
एकाभावे द्वयोरेव सिद्धिर्भवति नात्र हि ।
द्वित्वैक्यद्रष्टृदृश्यत्वक्षये सदवशिष्यते ॥ ३६
अहंतादिजगद्दृश्यं सर्वं ते मार्जयाम्यहम् ।
अत्यन्ताभावसंवित्त्या मनोमुकुरतो मलम् ॥ ३७
नासतो विद्यते भावो नाभावो विद्यते सतः ।
यत्तु नास्ति स्वभावेन कः क्लेशस्तस्य मार्जने ॥ ३८
जगदादावनुत्पन्नं यच्चेदं दृश्यते ततम् ।
तत्स्वात्मन्येव विमले ब्रह्मचित्त्वात्स्वबृंहितम् ॥ ३९
जगन्नाम्ना न चोत्पन्नं न चास्ति न च दृश्यते ।
हेम्नीव कटकादित्वं किमेतन्मार्जने श्रमः ॥ ४०
तथैतद्विस्तरेणाहं वक्ष्यामि बहुयुक्तिभिः ।
अबाधितं यथा तत्त्वं स्वयमेवानुभूयते ॥ ४१
आदावेव हि नोत्पन्नं यत्तस्येहास्तिता कुतः ।
कुतो मरौ जलसरिद्द्वितीयेन्दौ कुतो ग्रहः ॥ ४२
यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम् ।
यथा नास्ति [१]नभोयक्षस्तथा नास्ति जगद्भ्रमः ॥ ४३
यदिदं दृश्यते राम तद्ब्रह्मैव निरामयम् ।
एतत्पुरस्ताद्वक्ष्यामि युक्तितो न गिरैव च ॥ ४४
यन्नाम युक्तिभिरिह प्रवदन्ति तज्ज्ञा-
स्तत्रावहेलनमयुक्तमुदारबुद्धे ।
यो युक्तियुक्तमवमत्य विमूढबुद्धिः
कष्टाग्रहो भवति तं विदुरज्ञमेव ॥ ४५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे जगदादिदृश्यासत्ताप्रतिज्ञा नाम सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः ८

श्रीराम उवाच ।

कयैतज्ज्ञायते युक्त्या कथमेतत्प्रसिध्यति ।
न्यायानुभूत एतस्मिन्न ज्ञेयमवशिष्यते ॥ १

---

द्बुद्धिरपि द्वैतप्रतिबिम्बग्रहणं विनेत्यर्थः ॥ ३० ॥ अनयोपपत्त्यापि प्रागुक्तं सिद्धमित्याह—**जगदि**ति । स्वसत्ताऽसंभवं मिथ्यात्वम् । तन्निश्चयमिति यावत् ॥ ३१ ॥ रामः किंचिदधिकं विशेषमभिप्रेत्य द्वितीयं प्रश्नमुत्थापयति—**इयत** इति । भवेदेवं यदि ब्रह्मणि जगदध्यस्तं स्यात्तदेव त्वसंभवि । चिन्मात्ररूपत्वात्परमसूक्ष्मे ब्रह्मणि इयतो ब्रह्माण्डविस्तृतस्थूलप्रपञ्चस्याध्यासाघटनात्तदेतदाह—**क मेरु**रिति ॥ ३२ ॥ भवेदेवं यदि जगति स्थूलता विमर्शसहा स्यान्नतु सा तथा । स्थूलताप्रत्यय एव यदा तवास्माभिः कालेनोपपत्तिभिः शिथिलीकरिष्यते तदा त्वमस्मदुक्तमवधारयिष्यसीत्यभिप्रेत्य श्रीवसिष्ठ उवाच—**दिनानी**त्यादिना । अखिन्नधीरनुद्विग्नचित्तः ॥ ३३ ॥ ३४ ॥ दृश्यद्वैताभावे न केवलं द्रष्टुरेवाभावः किंतु द्वित्वैकत्वयोरपीत्युपपादयति—**द्रष्टृत्व**मिति । सति ईक्षके द्रष्टरीत्यर्थः । एकत्वं हि द्वित्वादावन्यत्र प्रसिद्धे सति तद्व्यावृत्तये कल्प्यते न व्यावर्त्याप्रसिद्धावित्यर्थः ॥ ३५ ॥ इत्थं द्वैतैक्यवर्जितं सन्मात्रं परिशिष्यत इत्याह—**द्वित्वैक्ये**ति ॥३६॥ प्रकारान्तरेणापि दृश्यमार्जनं प्रतिजानीते—**अहंतादी**ति ॥ ३७ ॥ असतो हि सत्ताविकारो विवर्तः स्वरूपं वोच्येत न त्रयमपि । खपुष्पादौ त्रयस्याप्यदर्शनादेवं सतोऽप्यसत्त्वं स्वरूपव्याघातादेवासंभवीत्यनिर्वच-नीयतासिद्धौ न तस्य मार्जने क्लेश इत्यर्थः ॥ ३८ ॥ एवमुत्पत्तिरपि सती व्यर्था असतस्त्वसंभविनीति हेम्नि कल्पितं कटकत्वं हेमदृष्ट्येव सुबाधमित्याह—**जगदि**ति द्वाभ्याम् ॥ ३९ ॥ ४० ॥ वक्ष्यमाणप्रकारान्तरोक्तीरपि प्रसङ्गात्प्रतिजानीते- **तथे**ति ॥४१॥ अनुत्पन्नस्य [२]सत्तेव ग्रहणमप्यसदेवेत्याह—**आदावि**ति ॥४२॥ एवंच भ्रान्तितद्विषययोरुभयोरप्यसत्ता सिद्धेति सदृष्टान्तमाह—**यथे**ति ॥ ४३ ॥ किं तर्हि दर्शनाभासेषु परमार्थतोऽस्ति तदाह—**यदिद**मिति । युक्तित आख्यानाद्युपपत्तितः ॥ ४४ ॥ अनुभवपथानारोहे किं युक्तिसहस्रेणापि लक्ष्यापराद्धेषोर्धानुष्कस्येवेत्यवहेलनामाशङ्क्याह—**यदि**ति । तज्ज्ञास्तत्त्वज्ञाः । अवमत्य अनादृत्य । कष्टे निर्युक्तिके आग्रहोऽभिनिवेशो यस्य तथाविधो यो भवति तमज्ञमेव विदुः । प्राज्ञा इति शेषः ॥ ४५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जगदादिदृश्यासत्ताप्रतिज्ञा नाम सप्तमः सर्गः ॥ ७ ॥

प्रागुक्ततत्त्वविज्ञानं सच्छास्त्रेभ्यो न चान्यतः ।
सच्छास्त्रेष्वप्ययं ग्रन्थः सद्यःफल इतीर्यते ॥ १ ॥

वक्ष्यामि युक्तित इति यत्प्रतिज्ञातं गुरुणा तत् श्रीरामः पृच्छति—**कयैत**दिति । 'यदिदं दृश्यते राम तद्ब्रह्मैव निरामय'-

---

१ नभोवृक्षः इति पाठः. २ सत्त्वेन इति पाठः.

श्रीवसिष्ठ उवाच ।

बहुकालमियं रूढा मिथ्याज्ञानविषूचिका ।
जगन्नाड्यविचाराख्या विना ज्ञानं न शाम्यति ॥ २
वदाम्याख्यायिका राम या इमा बोधसिद्धये ।
ताश्चेच्छृणोषि तत्साधो मुक्त एवासि बुद्धिमान् ॥ ३
नो चेदुद्वेगशीलत्वादर्धादुत्थाय गच्छसि ।
तत्तिर्यग्धर्मिणस्तेऽद्य न किंचिदपि सेत्स्यति ॥ ४
योऽयमर्थं प्रार्थयते तदर्थं यतते तथा ।
सोऽवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥ ५
साधुसंगमसच्छास्त्रपरो भवसि राम चेत् ।
तद्दिनैरेव नो मासैः प्राप्नोषि परमं पदम् ॥ ६

श्रीराम उवाच ।

आत्मज्ञानप्रबोधाय शास्त्रं शास्त्रविदां वर ।
किं नाम तत्प्रधानं स्याद्यस्मिञ्ज्ञाते न शोच्यते ॥ ७

श्रीवसिष्ठ उवाच ।

आत्मज्ञानप्रधानानामिदमेव महामते ।
शास्त्राणां परमं शास्त्रं महारामायणं शुभम् ॥ ८
इतिहासोत्तमादस्माच्छ्रुताद्बोधः प्रवर्तते ।
सर्वेषामितिहासानामयं सार उदाहृतः ॥ ९
श्रुतेऽस्मिन्वाङ्मये यस्माज्जीवन्मुक्तत्वमक्षयम् ।
उदेति स्वयमेवात इदमेवातिपावनम् ॥ १०
स्थितमेवास्तमायाति जगद्दृश्यं विचारणात् ।
यथा स्वप्ने परिज्ञाते स्वप्नादावेव भावना ॥ ११
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्कचित् ।
इमं समस्तविज्ञानशास्त्रकोशं विदुर्बुधाः ॥ १२
य इदं शृणुयान्नित्यं तस्योदारचमत्कृतेः ।
बोधस्यापि परं बोधं बुद्धिरेति न संशयः ॥ १३
यस्मै नेदं त्वरुचये रोचते दुष्कृतोदयात् ।
विचारयतु यत्किंचित्सच्छास्त्रं ज्ञानवाङ्मयम् ॥ १४
जीवन्मुक्तत्वमस्मिंस्तु श्रुते समनुभूयते ।
स्वयमेव यथा पीते नीरोगत्वं वरौषधे ॥ १५
श्रूयमाणे हि शास्त्रेऽस्मिञ्छ्रोता वेत्त्येतदात्मना ।
यथावदिदमस्माभिर्ननूक्तं वरशापवत् ॥ १६

नश्यति संसृतिदुःखमिदं ते
स्वात्मविचारणया कथयैव ।
नो धनदानतपःश्रुतवेदै-
स्तत्कथनोदितयत्नशतेन ॥ १७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे सच्छास्त्रनिरूपणं नामाष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ९

श्रीवसिष्ठ उवाच ।

तच्चित्तास्तद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च तन्नित्यं तुष्यन्ति च रमन्ति च ॥ १
तेषां ज्ञानैकनिष्ठानामात्मज्ञानविचारिणाम् ।
सा जीवन्मुक्ततोदेति विदेहान्मुक्ततैव या ॥ २

मिति यदुक्तमेतत् । एतस्मिन्नित्यनेनाप्यस्यैव परामर्शः ॥ १ ॥ ॥ २ ॥ वदामि वक्ष्यामि । इमास्त्वत्पृष्टयुक्तिप्रधानाः सन्निहिताः ॥३॥ नो चेत् न शृणोषि चेत् । अश्रवणे हेतुमाह—**उद्वेगे**ति । तत्तर्हि तिरश्चां पश्वादीनां धर्मः सच्छास्त्रश्रवणायोग्यता तद्वतः ॥ ४ ॥ ननु महतामपि दुर्लभमिदं कथं मादृशेन लभ्येतेति मन्दमतेरनाश्वासमाशङ्क्याह—**य** इति । निवर्तते अर्धप्रयत्नादिति शेषः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ कुतोऽस्योत्तमत्वं तत्राह—**सर्वेषा**मिति ॥ ९ ॥ वाङ्मये वाक्यसंदर्भात्मके ग्रन्थे ॥ १० ॥ यथा स्वप्नादौ स्थिते एव स्वप्नोऽयमिति परिज्ञाते स्वप्नसत्यत्वभावना अस्तमभ्येति तद्वत् ॥ ११ ॥ अन्यत्र ग्रन्थान्तरे । यद्बोधोपयुक्तयुक्तिजातम् । विज्ञानशास्त्रधनानां कोशगृहम् ॥ १२ ॥ बोधस्येतरग्रन्थजन्यबोधस्यापि परमुत्कृष्टं बोधम् । पञ्चम्यर्थे षष्ठी ॥ १३ ॥ यस्मै एतन्न रोचते सोऽन्यत्सच्छास्त्रं विचारयतु नास्माकं तत्र प्रद्वेष इत्यर्थः ॥ १४ ॥ कस्तर्ह्यस्यातिशये हेतुस्तमाह—**जीवन्मुक्तत्व**मिति ॥ १५ ॥ एतज्जीवन्मुक्तत्वमात्मना स्वयमेव वेत्त्यनुभवति । इदमस्माभिरुक्तं ... यथावत् यथार्थमेव भवति नान्यथेत्यर्थः ॥ १६ ॥ स्वात्मविचारणात्मिकया प्रकृतग्रन्थकथयैव नश्यति । धनैर्दानैस्तपोभिः श्रुतैर्द्वैतशास्त्रश्रवणैः कर्मकाण्डरूपैर्वेदैश्च द्वैतवेदशास्त्रलक्षणेन कथनेन वाक्यप्रबन्धेन उदितयागहोमादियत्नशतेन च ते संसृतिदुःखं नो नश्यतीत्यर्थः ॥ १७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सच्छास्त्रनिरूपणं नामाष्टमः सर्गः ॥ ८ ॥

जीवन्मुक्तस्य लक्ष्माणि तस्य सर्वात्मता तथा ।
जगत्प्रलयशिष्टात्मस्वरूपं चेह कीर्त्यते ॥ १ ॥

आत्मविचारोऽपि यावदवधारणं तदेकप्रवणतालक्षण एवापेक्ष्यते न कादाचित्को व्यापारान्तरव्यवहितावृतो वा । 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' । 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यादिश्रुतेरित्यभिप्रेत्य श्रीवसिष्ठ उवाच—**तच्चित्ता** इति । तस्मिन्नात्मन्येव चित्तं येषाम् । तद्गतास्तत्प्राप्तावेवोद्युक्ताः प्राणा जीवनव्यापारा येषाम् ॥ १ ॥ ज्ञाने ज्ञानसाधनश्रवणादौ ... निष्ठा अनन्यव्यापारतालक्षणा स्थितिर्येषाम् । विदेहादेह-

श्रीराम उवाच ।

ब्रह्मन्विदेहमुक्तस्य जीवन्मुक्तस्य लक्षणम् ।
ब्रूहि येन तथैवाहं यते शास्त्रदृशा धिया ॥ ३

श्रीवसिष्ठ उवाच ।

यथास्थितमिदं यस्य व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम जीवन्मुक्तः स उच्यते ॥ ४
बोधैकनिष्ठतां यातो जाग्रत्येव सुषुप्तवत् ।
या आस्ते व्यवहर्तैव जीवन्मुक्तः स उच्यते ॥ ५
नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ।
यथाप्राप्तस्थितेर्यस्य जीवन्मुक्तः स उच्यते ॥ ६
यो जागर्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ७
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदच्छस्थः स जीवन्मुक्त उच्यते ॥ ८
यस्य नाहंकृतो भावो यस्य बुद्धिर्न लिप्यते ।
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ ९
यस्योन्मेषनिमेषार्धाद्विदः प्रलयसंभवौ ।
पश्येत्त्रिलोक्याः स्वसमः स जीवन्मुक्त उच्यते ॥ १०
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ११
शान्तसंसारकलनः कलावानपि निष्कलः ।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ १२
यः समस्तार्थजातेषु व्यवहार्यपि शीतलः ।
पदार्थेष्वपि पूर्णात्मा स जीवन्मुक्त उच्यते ॥ १३
जीवन्मुक्तपदं त्यक्त्वा देहे कालवशीकृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ १४
विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
न सन्नासन्न दूरस्थो न चाहं न च नेतरः ॥ १५
सूर्यो भूत्वा प्रतपति विष्णुः पाति जगत्त्रयम् ।
रुद्रः सर्वान्संहरति सर्गान्सृजति पद्मजः ॥ १६
खं भूत्वा पवनस्कन्धं धत्ते सर्षिसुरासुरम् ।
कुलाचलगतो भूत्वा लोकपालपुरास्पदः ॥ १७
भूमिर्भूत्वा बिभर्तीमां लोकस्थितिमखण्डिताम् ।
तृणगुल्मलता भूत्वा ददाति फलसंततिम् ॥ १८
बिभ्रज्जलानलाकारं ज्वलति द्रवति द्रुतम् ।
चन्द्रोऽमृतं प्रसवति मृतं हालाहलं विषम् ॥ १९
तेजः प्रकटयत्याशास्तनोत्यान्ध्यं तमो भवत् ।
शून्यं सद्व्योमतामेति गिरिः सन् रोधयत्यलम् ॥ २०
करोति जंगमं चित्तः स्थावरं स्थावराकृतिः ।
भूत्वार्णवो वलयति भूस्त्रियं वलयो यथा ॥ २१
परमार्कवपुर्भूत्वा प्रकाशान्तं विसारयन् ।
त्रिजगत्त्रसरेण्वोघं[1] शान्तमेवावतिष्ठते ॥ २२

---

विगमाया शुद्धा मुक्तैव नान्येत्यर्थः ॥ २ ॥ श्रवणादिफलोक्तिप्रसञ्जिते जीवन्मुक्तविदेहमुक्तलक्षणे जिज्ञासुः श्रीराम उवाच—ब्रह्मन्निति । शास्त्रलक्षणया दृशा चक्षुषोत्पादितया धिया ॥ ३ ॥ विदेहमुक्तेर्जीवन्मुक्तिपूर्वकत्वात्पाठक्रमादर्थक्रमो बलीयानिति न्यायेन प्रश्नक्रममुल्लङ्घ्य प्रथमं जीवन्मुक्तलक्षणं श्रीवसिष्ठ उवाच—यथेति । शास्त्रानिषिद्धव्यवहारवतोऽपि यस्य विश्वं परमार्थदृशा बाधादस्तं गतं सद्व्योम आकाशमिव शून्यं स्थितं दर्पणनगरमिव प्रतीयमानमपि नास्त्येवेत्यर्थः ॥ ४ ॥ यो व्यवहर्ता सन्नपि 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इति भगवदुक्तदिशा जाग्रत्यपि सुप्तवन्निर्विकार आस्ते ॥ ५ ॥ ६ ॥ निर्विकारे स्वात्मनि सुषुप्त इव तिष्ठतीति सुषुप्तस्तथाभूतोऽपि योऽविद्यानिद्राक्षयात्स्वात्मनि जागर्ति । देहेन्द्रियादिबाधादिन्द्रियैरर्थोपलब्धिलक्षणा जाग्रद्यस्य न विद्यते । यस्य बोधो निर्वासन इति जाग्रद्वासनोद्भवनिमित्तः स्वप्नोऽपि यस्य न विद्यत इति भावः ॥ ७ ॥ अनुरूपं यथोचितं नट इवानुकाराभिनयमिति वा । अच्छे निरावरणात्मनि तिष्ठतीत्यच्छस्थः । 'सुपि स्थः' इति कः ॥ ८ ॥ न लिप्यते कर्तृत्वाकर्तृत्वाभिमानाभ्यामित्यर्थः ॥ ९ ॥ यस्य विदश्चिदात्मन उन्मेषादावरणविघटनात् त्रिलोक्याः प्रलयं निमेषादावरणाच्च प्राक् संभवं यः पश्येदित्यर्थः । विदेहमुक्तावेव निःशेषोन्मेषात्साक्षिणीश्वरे चावरणाभावाच्चोभयत्राप्यर्थादित्युक्तिः ॥ १० ॥ नोद्विजते न बिभेति । लोको जनः । यतोऽसौ हर्षामर्षभयहेत्वज्ञानाभिमानोन्मुक्तः ॥११॥ यतोऽसौ सचित्तः सचेतनोऽपि निश्चित्तो निर्मनस्कः । शान्ता संसारस्य कलना सत्यतामतिर्यस्य सः । परदृष्ट्या कलावान्देहावयववानपि निष्कलो निरवयवः ॥ १२ ॥ शीतलो रागाद्यतापितः । यतोऽयं रागादिविषयेष्वपि पदार्थेषु पूर्णस्तेषामप्यात्मा । नह्यहेयोपादेये स्वात्मनि तदध्यस्ते मिथ्यात्वेन निश्चिते वार्थे रागादिसंभव इति भावः ॥ १३ ॥ इदानीं प्रथमपृष्टं विदेहमुक्तलक्षणं वक्तुमुपक्रमते—जीवन्मुक्तेति । कालेन वशीकृते ग्रस्ते । प्रारब्धक्षये सतीति यावत् ॥ १४ ॥ तस्यादौ विद्वदनुभवसिद्धं स्वरूपलक्षणमाह—विदेहमुक्त इति । उदयास्तमयौ वृद्ध्यपक्षयौ । सन्व्यक्तः । असन्नव्यक्तः । नच अहं अहं नेति च न । न च इतरः ॥ १५ ॥ तस्य लोकदृष्ट्या सार्वात्म्यलक्षणं तटस्थलक्षणमाह—सूर्य इत्यादिना ॥ १६ ॥ कुलाचलो मेरुर्मानसोत्तरश्च । तयोरेव लोकपालपुरप्रसिद्धेः ॥१७॥ लोकस्थितिं जनमर्यादाम् ॥ १८ ॥ हालाहलसंज्ञं विषं भूत्वा मृतं मरणं प्रसवतीति च्छान्दसो विकरणव्यत्ययः ॥ १९ ॥ तेजो भवत् प्रकटयत्याशा दिशः ॥ २० ॥ चित्तः स्फुटान्तःकरणाभिव्यक्तचैतन्यतः । स्थावराकृतिः अस्फुटचित्तत्वाज्जडप्रायाकृतिः । भूरेव स्त्री ताम् ॥ २१ ॥ परमार्कवपुरनावरणचिदात्मा प्रकाशान्तं तत्प्रकाशव्याप्तं त्रिजगदादि त्रसरेण्वन्तं पदार्थौघं वि-

---

१ त्रिजगत्त्रसरेण्वन्तं इति पाठः.

यत्किंचिदिदमाभाति भातं भानमुपैष्यति ।
कालत्रयगतं दृश्यं तदसौ सर्वमेव च ॥ २३

श्रीराम उवाच ।

कथमेवं वद ब्रह्मन्भूयते विषमा हि मे ।
दृष्टिरेषाथ दुष्प्राप्या दुराक्रम्येति निश्चयः ॥ २४

श्रीवसिष्ठ उवाच ।

मुक्तिरेषोच्यते राम ब्रह्मैतत्समुदाहृतम् ।
निर्वाणमेतत्कथितं शृणु तत्प्राप्यते कथम् ॥ २५
यदिदं दृश्यते दृश्यमहन्त्वंन्तादिसंयुतम् ।
सतोऽप्यस्यात्यनुत्पत्त्या बुद्ध्यैतदवाप्यते ॥ २६

श्रीराम उवाच ।

विदेहमुक्तास्त्रैलोक्यं संपद्यन्ते यदा तदा ।
मन्येते सर्गतामेव गता वेद्यविदांवर ॥ २७

श्रीवसिष्ठ उवाच ।

विद्यते चेत्त्रिभुवनं तत्तत्तां संप्रयान्तु ते ।
यत्र त्रैलोक्यशब्दार्थौ न संभवति कश्चन ॥ २८
एतत्रिलोकतां यातं ब्रह्मेत्युक्तार्थधीः कुतः ।
तस्मान्नो संभवत्येषा जगच्छब्दार्थकल्पना ॥ २९
अनन्यच्छान्तमाभासमात्रमाकाशनिर्मलम् ।
ब्रह्मैव जगदित्येतत्सर्वं सत्त्वावबोधतः ॥ ३०
अहं हि हेमकटके विचार्यापि न दृष्टवान् ।
कटकत्वं क्वचिन्नाम ऋते निर्मलहाटकात् ॥ ३१
जलादृते पयोवीचौ नाहं पश्यामि किंचन ।
वीचित्वं तादृशं दृष्टं यत्र नास्त्येव तत्र हि ॥ ३२
स्पन्दत्वं पवनादन्यन्न कदाचन कुत्रचित् ।
स्पन्द एव सदा वायुर्जगत्तस्मान्न भिद्यते ॥ ३३
यथा शून्यत्वमाकाशे ताप एव मरौ जलम् ।
तेज एव सदा लोके ब्रह्मैव त्रिजगत्तथा ॥ ३४

श्रीराम उवाच ।

अत्यन्ताभावसंपत्त्या जगद्दृश्यस्य मुक्तता ।
ययोदेति मुने युक्त्या तां ममोपदिशोत्तमाम् ॥ ३५
मिथःसंपन्नयोर्द्रष्टृदृश्ययोरेकसंख्ययोः ।
द्वयाभावे स्थितिं याते निर्वाणमवशिष्यते ॥ ३६
दृश्यस्य जगतस्तस्मादत्यन्तासंभवो यथा ।
ब्रह्मैवेत्थं स्वभावस्थं बुध्यते वद मे तथा ॥ ३७
कयैतज्ज्ञायते युक्त्या कथमेतत्प्रसिद्ध्यति ।
एतस्मिंस्तु मुने सिद्धे न साध्यमवशिष्यते ॥ ३८

श्रीवसिष्ठ उवाच ।

बहुकालमियं रूढा मिथ्याज्ञानविषूचिका ।
नूनं विचारमन्त्रेण निर्मूलमुपशाम्यति ॥ ३९
न शक्यते झटित्येषा समुत्सादयितुं क्षणात् ।
समप्रपतने ह्यद्रौ समरोहावरोहणे ॥ ४०
तस्मादभ्यासयोगेन युक्त्या न्यायोपपत्तिभिः ।
जगद्भ्रान्तिर्यथा शाम्येत्तवेदं कथ्यते शृणु ॥ ४१
वक्ष्याम्याख्यायिकां राम यामिमां बोधसिद्धये ।
तां चेच्छृणोषि तत्साधो मुक्त एवासि बोधवान् ४२
अथोत्पत्तिप्रकरणं मयेदं तव कथ्यते ।
यत्किलोत्पद्यते राम तेन मुक्तेन भूयते ॥ ४३
इयमित्थं जगद्भ्रान्तिर्भात्यजातैव खात्मिका ।
इत्युत्पत्तिप्रकरणे कथ्यतेऽस्मिन्मयाधुना ॥ ४४

---

सारयन्विस्तारयन्नपि स्वयं शान्तं निर्विकारमेवावतिष्ठते ॥ २२ ॥ ॥ २३ ॥ प्रतिबन्धबाहुल्येन समदृष्टिदौर्लभ्यान्मुक्तेर्दौर्लभ्यं मन्यमानस्तत्प्राप्त्युपायसोत्कण्ठः श्रीराम उवाच—**कथमिति**। हि यस्माद्विषमा दृष्टिः। एषा मुक्तिर्दुष्प्राप्या। अथ कथंचित्प्राप्तापि तत्र चित्तस्थैर्यस्य दुष्करत्वाद्दुरारोहेति मे निश्चय इत्यन्वयः ॥ २४ ॥ एवं सोत्कण्ठं रामं तत्प्राप्त्युपायोपदेशेनाश्वासयन् वसिष्ठ उवाच—**मुक्तिरित्यादिना** ॥ २५ ॥ अनात्मन्यारोपितप्रत्यक्त्वमहन्त्वम्। पराक्चेतनत्वं त्वन्त्वम्। सतः सदिति भासमानस्याप्यस्य वन्ध्यापुत्रस्येवात्यन्तमनुत्पत्त्या ॥ २६ ॥ ब्रह्मणः सार्वात्म्यश्रवणाद्ब्रह्मप्राप्तौ तद्भावेन संसारप्राप्तिरेव किं न स्यादिति रामः शङ्कते—**विदेहेति**। ते विदेहमुक्ताः सर्गतां संसारभावमेव गता इति मन्ये ॥ २७ ॥ प्रागुक्तात्यन्तानुत्पत्तिमेवावलम्ब्य वसिष्ठः परिहरति—**विद्यते चेदिति**। तर्त्तार्हि तत्तां तत्तत्सर्गरूपताम्। ते मुक्ताः यत्र न संभवन्ति तत्र उक्तार्थधीः कुत इत्युत्तरेणान्वयः ॥ २८ ॥ उक्तार्थधीस्त्वच्छङ्कितार्थबुद्धिः तस्मादित्युपसंहारः ॥ २९ ॥ अनन्यदद्वयम्। आभासमात्रं चिन्मात्रम्। सत्त्वं सन्मात्रभावस्तदवबोधतः ॥ ३० ॥ प्रत्यग्दृष्ट्या पर्यालोचने तदध्यस्तस्यासत्त्वं दृष्टान्तैरनुभावयति—**अहं हीत्यादिना** ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ एवं दर्शितदृष्टान्तान्पर्यालोच्य गुरूक्तार्थं श्लोकद्वयेन संभावयंस्तत्र विपरीतभावनाविक्षेपात्पुनरसंभावनाविकल्पोदयैरप्रतिष्ठितेन मनसावधारयितुमशक्नुवन्निव तदवधारणोपायं पृच्छति—**अत्यन्ते**त्यादिना। जगद्दृश्यस्यात्यन्ताभावसंपत्तिर्बाधस्तया ॥ ३५ ॥ मिथः एकसंख्ययोः संपन्नयोर्बाधपरिशिष्टस्वप्रकाशात्मभावापन्नयोरिति यावत् ॥ ३६ ॥ ३७ ॥ ३८ ॥ श्रुतार्थस्य सकृत्संभावनोदये पुनःपुनश्चिरमनाभ्यास एव तत्प्रतिष्ठावधारणोपाय इति श्रीवसिष्ठ उवाच—**बहुकालमित्यादिना** ॥ ३९ ॥ शिखरारूढस्य पुंसः सर्वतः सममधः प्रपतनं यस्मात्तथाविधेऽद्रौ समे तुल्यकाले आरोहावरोहणे यथा झटित्येव कर्तुं न शक्येते तद्वत् ॥ ४० ॥ ॥ ४१ ॥ वक्ष्यमाणजगत्प्रलयाख्यायिकाम् ॥ ४२ ॥ अथ प्रलयाख्यायिकानन्तरम्। उत्पत्तिप्रकरणं जगदुत्पत्तिप्रक्रमः। सच निर्विकारोपादानको विवर्त एव पर्यवस्यतीति बन्धमिथ्यात्वे

---

१ त्वन्त्वादि इति क्वचित्. २ याति इति पाठः. ३ मनुत्पन्न इति पाठः.

यदिदं दृश्यते किंचिज्जगत्स्थावरजङ्गमम् ।
सर्वं सर्वप्रकाराढ्यं ससुरासुरकिंनरम् ॥ ४५
तन्महाप्रलये प्राप्ते रुद्रादिपरिणामिनि ।
भवत्यसदहश्यात्म कापि याति विनश्यति ॥ ४६
ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ ४७
न शून्यं नापि चाकारं न दृश्यं न च दर्शनम् ।
न च भूतपदार्थौघो यदनन्ततया स्थितम् ॥ ४८
किमप्यव्यपदेशात्म पूर्णात्पूर्णतराकृति ।
न सन्नासन्न सदसन्न भावो भवनं न च ॥ ४९
चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यपर्यन्तं यदनादि निरामयम् ॥ ५०
यस्मिञ्जगत्प्रस्फुरति दृष्टमौक्तिकहंसवत् ।
यश्चेदं यश्च नैवेदं देवः सदसदात्मकः ॥ ५१
अकर्णजिह्वानासात्वङ्नेत्रः सर्वत्र सर्वदा ।
शृणोत्यास्वादयति यो जिघ्रेत्स्पृशति पश्यति ॥ ५२
स एव सदसद्रूपं येनालोकेन लक्ष्यते ।
सर्गचित्रमनाद्यन्तं स्वरूपं चाप्य रञ्जनम् ॥ ५३

अर्धोन्मीलितदृश्यभ्रूमध्ये तारकवज्जगत् ।
व्योमात्मैव सदाभासं स्वरूपं योऽभिपश्यति ॥ ५४
यस्यान्यदस्ति न विभोः कारणं शशशृङ्गवत् ।
यस्येदं च जगत्कार्यं तरङ्गौघ इवाम्भसः ॥ ५५
ज्वलतः सर्वतोऽजस्रं चित्तस्थानेषु तिष्ठतः ।
यस्य चिन्मात्रदीपस्य भासा भाति जगत्त्रयम् ॥ ५६
यं विनाऽर्कादयोऽप्येते प्रकाशास्तिमिरोपमाः ।
सति यस्मिन्प्रवर्तन्ते त्रिजगन्मृगतृष्णिकाः ॥ ५७
सस्पन्दे समुदेतीव निःस्पन्दान्तर्गते न च ।
इयं यस्मिञ्जगल्लक्ष्मीरलात इव चक्रता ॥ ५८
जगन्निर्माणविलयविलासो व्यापको महान् ।
स्पन्दास्पन्दात्मको यस्य स्वभावो निर्मलोऽक्षयः ॥ ५९
स्पन्दास्पन्दमयी यस्य पवनस्येव सर्वगा ।
सत्ता नाम्नैव भिन्नेव व्यवहारान्न वस्तुतः ॥ ६०
सर्वदैव प्रबुद्धो यः सुप्तो यः सर्वदैव च ।
न सुप्तो न प्रबुद्धश्च यः सर्वत्रैव सर्वदा ॥ ६१
यदस्पन्दं शिवं शान्तं यत्स्पन्दं त्रिजगत्स्थितिः ।
स्पन्दास्पन्दविलासात्मा य एको भरिताकृतिः[1] ॥ ६२

---

स्वतःसिद्ध एव मोक्ष इति तद्वर्णनाशय इत्याह—**यदि**त्यादिना । यद्यदुत्पद्यते इति प्रतिपाद्यते तेन तेन मुक्तेन तत्तद्बन्धशून्येन स्वेन भूयते स्थीयत इत्यर्थः ॥ ४३ ॥ ४४ ॥ अजातैव स्वात्मिका भातीत्युक्तमर्थं प्रलयाख्यायिकया समर्थयितुमुपक्रमते—**यदि-दमि**ति । यदिदं जगद्दृश्यते तत्प्रलये असद्भवतीत्युत्तरेणान्वयः ॥ ४५ ॥ महाप्रलये प्राकृते । रुद्रादीनां परिणामिनि तिरोभावयितरि । विनश्यतीत्यस्य व्याख्या असदहश्यात्मेति ॥ ४६ ॥ किं शून्यान्तं नश्यति, नेत्याह—**तत** इति । अनाख्यमनभिव्यक्तमिति नामरूपप्रतिषेधः ॥ ४७ ॥ तत्प्रतिषेधे नामरूपशून्यवस्तुनो जगत्यत्यन्ताप्रसिद्धेः शून्यतामाशङ्क्याह—**ने**ति । तर्हि तस्याशून्यस्याकारदृश्यदर्शनादिभावः परिशेषात्स्यात्तत्राह—**नापी**त्यादिना । आकारमिति च्छान्दसं, मत्वर्थीयाजन्तं वा ॥ ४८ ॥ अनाख्यत्वादेवाव्यपदेशात्म । अव्यपदेश्यतामेव प्रपञ्चयति—**न सदि**त्यादिना । भवनं कालसंबन्ध उत्पत्तिर्वा तद्वान्भावः ॥ ४९ ॥ न विद्यते आदिः कारणं यस्य तदनादि ॥ ५० ॥ मुक्ताभुजां हंसानां तत्परिणामत्वात्पूर्वं मुक्तात्मना पश्चाद्धंसात्मना च दृष्टतदुभयानुगतद्रव्यवच्चित्रभ्रान्त्यादिदृष्टमुक्तामयहंसवद्वा । यश्चेदमध्यारोपदृशा । नैवेदमपवाददृशा । सदसदात्मको व्यक्ताव्यक्तावस्थाद्वयानुगतः ॥ ५१ ॥ कर्णनासाद्यभावेऽपि श्रवणादिकमस्य स्वप्ने प्रत्यक्षम् । तथाच श्रुतिः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति ॥ ५२ ॥ येनालोकेन प्रागुक्तसदसद्रूपं लक्ष्यते स चिदालोकोऽपि स एव । तथा अज्ञानसत्त्वे सर्गचित्रमज्ञाननिवृत्तौ त्वनाद्यन्तं स्वरूपं चाप्य प्राप्य रञ्जनं प्रथनं स एवेत्यर्थः ॥ ५३ ॥ एवं जीवन्मुक्तदशायां बाधितजगदाभासदर्शनमपि स एवेत्याह—**अर्धे**ति । यथा योगिनः खेचरमुद्रायां भ्रूमध्ये दृष्टिनिवेशे अर्धोन्मीलितचक्षुर्दृश्यभ्रूमध्ये निविष्टं कृष्णतारकमस्फुटत्वात्सदाभासं जगत्पश्यन्ति तद्वद्यो व्योमात्मैव सदाभासं स्वरूपं पश्यति सोऽपि स एवेत्यर्थः । खेचरमुद्रायास्तु लक्षणमुक्तं योगशास्त्रे—'कपालकुहरे जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ न पीड्यते स रोगेण न च लिप्येत कर्मणा । बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम् ॥' इति ॥ ५४ ॥ ५५ ॥ एवं सर्वलयाधारतत्पदार्थरूपं प्रदर्श्य त्वंपदार्थरूपेणापि तं दर्शयितुमुपक्रमते—**ज्वलत** इत्यादिना । सर्वतः सामान्यतो ज्वलतो दीप्यमानस्य चित्रस्थानेषु त्वनावृतत्वादजस्रं विशेषाभिव्यक्त्या ज्वलतस्तिष्ठतः ॥ ५६ ॥ यथान्धस्य दिनजातमप्यप्रकाशरूपं तथा दृग्रूपं यं विना तिमिरोपमाः ॥ ५७ ॥ यस्मिन्मनोभावेन सस्पन्दे जगल्लक्ष्मीः समुदेतीव । निःस्पन्दे अन्तः प्रत्यक्त्वं गते प्राप्ते तु न च समुदेति । चोऽवधारणे । अलाते ज्वलदुल्मुके निशि भ्राम्यमाणे चक्राकारता प्रसिद्धा ॥ ५८ ॥ उक्तमेव स्पष्टमाह—**जगदि**ति । यस्य स्वभावः पारमार्थिकरूपं तु निर्मलोऽक्षयः ॥५९॥ उक्तस्पन्दास्पन्दयोः सद्रूपपूर्णतयोरनन्यथाभावात्तद्व्यतिरिक्तान्यथाभावस्य विवर्ततापर्यवसाना नाम्नैव भिन्ना न वस्तुत इत्यर्थः ॥ ६० ॥ तस्य प्रबुद्धाज्ज्ञमुक्तदृक्प्रसिद्धं त्रैविध्यमाह—**सर्वदैवे**ति ॥ ६१ ॥ मुमुक्षुहेयोपादेयताप्रयोजकमपि

---

[1] भरतावनिः इति पाठः.

आमोद इव पुष्पेषु न नश्यति विनाशिषु ।
प्रत्यक्षस्थोऽप्यथाग्राह्यः शौक्ल्यं शुक्लपटे यथा ॥ ६३
मूकोपमोऽपि योऽमूको मन्ता योऽप्युपलोपमः ।
यो भोक्ता नित्यतृप्तोऽपि कर्ता यश्चाप्यकिंचनः ॥ ६४
योऽनङ्गोऽपि समस्ताङ्गः सहस्रकरलोचनः ।
न किंचित्संस्थितेनापि येन व्याप्तमिदं जगत् ॥ ६५
निरिन्द्रियबलस्यापि यस्याशेषेन्द्रियक्रियाः ।
यस्य निर्मननस्यैता मनोनिर्माणरीतयः ॥ ६६
यदनालोकनाद्भ्रान्तिसंसारोरगभीतयः ।
यस्मिन्दृष्टे पलायन्ते सर्वाशाः सर्वभीतयः ॥ ६७
साक्षिणि स्फार आभासे ध्रुवे दीप इव क्रियाः ।
सति यस्मिन्प्रवर्तन्ते चित्तेहाः स्पन्दपूर्विकाः ॥ ६८
यस्माद्घटपटाकारपदार्थशतपङ्क्तयः ।
तरङ्गगणकल्लोलवीचयो वारिधेरिव ॥ ६९
स एवान्यतयोदेति यत्पदार्थशतभ्रमैः ।
कटकाङ्गदकेयूरनूपुरैरिव काञ्चनम् ॥ ७०
यस्त्वमेकोऽवभासात्मा योऽहमेते जनाश्च ये ।
यश्च न त्वमबुद्धात्मा नाहं नैते जनाश्च यः ॥ ७१
अन्येवाप्यतिरिक्तेव सैवासेव च भङ्गुरा ।
पयसीव तरङ्गाली यस्मात्स्फुरति दृश्यभूः ॥ ७२
यतः कालस्य कलना यतो दृश्यस्य दृश्यता ।
मानसी कलना येन यस्य भासा विभासनम् ॥ ७३
क्रियां रूपं रसं गन्धं शब्दं स्पर्शं च चेतनम् ।
यद्वेत्सि तदसौ देवो येन वेत्सि तदप्यसौ ॥ ७४
द्रष्टृदर्शनदृश्यानां मध्ये यद्दर्शनं स्थितम् ।
साधो तदवधानेन स्वात्मानमवबुध्यसे ॥ ७५
अजमजरमनाद्यं शाश्वतं ब्रह्म नित्यं
शिवममलममोघं वन्द्यमुच्चैरनिन्द्यम् ।
सकलकलनशून्यं कारणं कारणाना-
मनुभवनमवेद्यं वेदनं विश्वमन्तः ॥ ७६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे परमकारणवर्णनं नाम नवमः सर्गः ॥ ९ ॥

---

तस्योक्तरूपद्वयमेवेत्याशयेनाह—**यदिति** ॥ ६२ ॥ आमोद इव सार इति शेषः । सर्ववस्तुप्रत्यक्षवृत्तिषु प्रथारूपेण स्थितोऽपि वृत्तिविषयनिष्कर्षेणाग्राह्यो ग्रहीतुमशक्यः ॥ ६३ ॥ वागिन्द्रियाभावान्मूकोपमोऽपि सर्ववाक्प्रवृत्तिनिमित्तत्वादमूकः । एवं मननविकारहीनत्वादुपलोपमोऽपि मन्तेत्यादि बोध्यम् । नास्ति किञ्चन क्रियादिनिमित्तं यस्य सोऽकिञ्चनः ॥ ६४ ॥ समस्तानामङ्गान्येवाङ्गानि यस्य अतएव सहस्राण्यनन्तानि करलोचनादीनि यस्य ॥ ६५ ॥ एताः प्रसिद्धजगद्रूपाः ॥ ६६ ॥ आशाः कामाः, दिशः प्रतीति वा ॥ ६७ ॥ दीपे सति नाट्यादिक्रिया इव स्फारे अपरिच्छिन्ने आभासे प्रकाशरूपे अतएव साक्षिणि । यस्मिन्सति चित्तस्येहाश्चेष्टाः प्रवर्तन्ते ॥ ६८ ॥ वारिधेरिव प्रवर्तन्ते इत्यनुषज्यते ॥ ६९ ॥ स चिदात्मैवान्यतया जडप्रपञ्चात्मना । ये प्रसिद्धाश्च ते पदार्थशतभ्रमाश्चेति कर्मधारयादित्थंभावे तृतीया ॥ ७० ॥ यः अवभासत इत्यवभासस्त्वया साक्षात्कृत आत्मा सन् त्वमेवैकः । एवं मया जनैर्वा साक्षात्कृतस्तत्तदात्मैवैकः । अबुद्धात्मा तु तद्विपरीत इत्यर्थः ॥ ७१ ॥ असौ अनन्याप्यन्येव । अनतिरिक्ताप्यतिरिक्तेव । अतिरेको[3]ऽत्र पृथक्त्वमिति न पौनरुक्त्यम् । सा प्राक्सिद्धैवासेवोत्पत्तिसिद्धेव ॥ ७२ ॥ कालस्य कलनाः षड्भावविकाराः दृश्यस्य दृश्यता दर्शनफलव्याप्तिः । मानसी कलना इष्टानिष्टप्राप्तिपरिहारविषया मनोरथविकल्पा येन निमित्तेन । क्रमाद्यदीयसच्चिदानन्दरूपतानिर्वाह्या इति यावत् । तच्च त्रयं यस्य भासा जगद्विभासनमेव नान्यत् । अज्ञातसाधारणी सर्वव्याप्तिः सत्ता । अनावृतमात्रव्याप्तिर्दर्शनं । तत्रानुकूलवेदनीयमात्रव्याप्तिरानन्दतेत्यवान्तरौपाधिकवैलक्षण्येऽपि भारूपव्याप्तेरेकत्वादिति भावः ॥ ७३ ॥ देहकर्मेन्द्रियोपाधौ क्रियाम्, ज्ञानेन्द्रियोपाधौ रूपादि, अन्तःकरणोपाधौ चेतनम्, प्रमातारं च यत्स्वरूपः सन् वेत्सि तत्प्रमातृ निष्कृष्टचिद्रूपमसौ । येन विषयव्याप्तवृत्तिनिष्कृष्टचिद्रूपेण वेत्सि तदप्यसौ देव इत्यर्थः ॥ ७४ ॥ तथाच त्रिपुटीसाक्षी स इति फलितमित्याह—**द्रष्ट्रिति** । अवधानमेकाग्रेण मनसा उपाधिभ्यो निष्कृष्य दर्शनम् ॥ ७५ ॥ इत्थं तत्त्वंपदार्थौ निर्दिश्य वाक्यार्थमन्ते दर्शयति—**अज**मिति । कारणं कारणानामिति तत्पदवा[4]च्यार्थस्य निर्देशः । शून्यमित्यन्तस्तत्पदलक्ष्यार्थस्य । विश्वं कृत्स्नं वेदनमित्यवस्थात्रयद्रष्टृत्वंपदवाच्यस्य । अवेद्यं वेदनमिति वेद्यावस्थात्रयनिर्मुक्तत्वंपदलक्ष्यस्य । समभिव्याहाराच्चाखण्डवाक्यार्थोपदेश इति ॥ ७६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे परमकारणवर्णनं नाम नवमः सर्गः ॥ ९ ॥

---

१ जनाश्च ये इति पाठः. २ संनिकर्षग्राह्यो इति पाठः. ३ अतिरिक्तत्वं पृथक्त्वं इति पाठः. ४ वाक्यार्थस्य इति पाठः.

# दशमः सर्गः १०

श्रीराम उवाच ।

महाप्रलयसंपत्तौ यदेतदवशिष्यते ।
भवत्येतदनाकारं नाम नास्त्यत्र संशयः ॥ १
न शून्यं कथमेतत्स्यान्न प्रकाशः कथं भवेत् ।
कथं वा न तमोरूपं कथं वा नैव भास्वरम् ॥ २
कथं वा नैव चिद्रूपं जीवो वा न कथं भवेत् ।
कथं न बुद्धितत्त्वं स्यात्कथं वा न मनो भवेत् ॥ ३
कथं वा नैव किंचित्स्यात्कथं वा सर्वमित्यपि ।
अनयैव वचोभङ्ग्या मम मोह इवोदितः ॥ ४

श्रीवसिष्ठ उवाच ।

विषमोऽयमतिप्रश्नो भवता समुदाहृतः ।
भेत्तास्म्यहं त्वयत्नेन नैशं तम इवांशुमान् ॥ ५
महाकल्पान्तसंपत्तौ यत्तत्सदवशिष्यते ।
तद्राम न यथा शून्यं तदिदं श्रृणु कथ्यते ॥ ६
अनुत्कीर्णा यथा स्तम्भे संस्थिता शालभञ्जिका ।
तथा विश्वं स्थितं तत्र तेन शून्यं न तत्पदम् ॥ ७
अयमित्थं महाभोगो जगदाख्योऽवभासते ।
सत्यो भवत्वसत्यो वा यत्र तत्र त्वशून्यता ॥ ८
यथा न पुत्रिकाशून्यः स्तम्भोऽनुत्कीर्णपुत्रिकः ।
तथा भातं जगद्ब्रह्म तेन शून्यं न तत्पदम् ॥ ९
सौम्याम्भसि यथा वीचिर्न चास्ति नच नास्ति च ।
तथा जगद्ब्रह्मणीदं शून्याशून्यपदं गतम् ॥ १०
देशकालादि शान्तत्वात्पुत्रिकारचनं द्रुमे ।
संभवत्ययथाऽतो वै तेनानन्ते विमुह्यते ॥ ११
तत्स्तम्भपुत्रिकाद्येतत्परमार्थे जगत्स्थितेः ।
एकदेशेन सदृशमुपमानं न सर्वथा ॥ १२
न कदाचिदुदेतीदं परस्मान्न च शाम्यति ।
इत्थं स्थितं केवलं सद्ब्रह्म स्वात्मनि संस्थितम् ॥ १३
अशून्यापेक्षया शून्यशब्दार्थपरिकल्पना ।
अशून्यत्वात्संभवतः शून्यताशून्यते कुतः ॥ १४

---

विरोधमिव संभाव्य प्रागुक्ते ब्रह्मलक्षणे ।
क्रमात्तत्परिहारेण तात्पर्यमिह वर्ण्यते ॥ १ ॥

महाप्रलये यत्सत्किंचिदवशिष्यते तत् 'न तेजो न तम' इत्यादिविरुद्धरूपमसंभावितं मन्यमानस्तथोक्तेस्तात्पर्यं जिज्ञासुः श्रीराम एकतरार्थसंभावनोपन्यासेन प्रश्नभूमिकां रचयति—**महाप्रलये**ति । आकारविलये अनाकारताप्रसिद्धेः संभावितमिदमिति द्योतनाय नामेति निपातः ॥ १ ॥ इदानीं प्रष्टव्यार्थं दर्शयति—**ने**त्यादिना । नष्टस्याशून्यता दुर्लभा तेजस्तमसोरन्यतरनाशेऽन्यतरापरिशेषोऽप्यप्रसिद्ध इत्यर्थः । प्रकाश्यविलयात्तदानीं परप्रकाशरूपत्वाभावेऽपि खद्योतवत्स्वमात्रप्रकाशेन भास्वरं कथं न भवेदित्यर्थः ॥ २ ॥ दृश्यातिरिक्तस्य दर्शनत्वप्रसिद्धेर्न दृश्यं न च दर्शनमित्युक्तिव्याघातमभिप्रेत्याह—**कथं वे**ति । यदि तु दृश्यदर्शनातिरिक्तो द्रष्टैव प्रसिद्ध इत्युच्येत तर्हि जीवो बुद्धितत्त्वं मनो वा कथं न भवेत्तेषामेव मतभेदेन द्रष्टृत्वप्रसिद्धेस्तथा च तेषामेव लोके प्राणिवाचकभूतशब्दाभिलप्यत्वान्न च भूतपदार्थौघ इत्युक्तिव्याघात इति भावः ॥ ३ ॥ यच्चोक्तं 'यस्त्वमेकोऽवभासात्मा योऽहमेते जनाश्च ये । यश्च न त्वमबुद्धात्मा नाहं नैते जनाश्च ये ॥' इति तदपि स्वोक्तिव्याहतमित्यभिप्रेत्याह—**कथं वे**ति । किंचित्त्वमहमादि ॥ ४ ॥ मदाशयमतिक्रम्य प्रश्नोऽतिप्रश्नः । भेत्ता छेत्ता तत्प्रश्नबीजं संशयं स्वाशयोद्घाटनेनेति शेषः । अंशुमान् सूर्यः ॥ ५ ॥ ६ ॥ स्तम्भोत्कीर्णप्रतिमायाः स्तम्भसत्तातिरिक्तसत्ताभावात्तत्सत्तया स्थितेरनुत्कीर्णदशायामप्यनपायादिति भावः ॥ ७ ॥ अयं प्रपञ्चो व्यवहारतः सत्यो वा परमार्थतोऽसत्यो वा भवतु । यत्र यस्मिन्नधिष्ठानेऽवभासते तत्रास्य न शून्यता । शून्यस्यारोपाधिष्ठानत्वायोगादित्यर्थः ॥ ८ ॥ अन्वयमुखसमर्थितमर्थं व्यतिरेकमुखेनापि समर्थयते—**यथे**ति । तथा तत्पदं जगच्छून्यं नेति संबन्धः । यतो ब्रह्मैव प्राग्जगद्भातं तेन हेतुनेत्यर्थः ॥९॥ ननु तदा यदि जगदस्ति तर्हि प्रलयानुपपत्तिर्यदि नास्ति तर्हि प्राक्तैव तच्छून्यतेति सत्त्वासत्त्वव्याघातं दृष्टान्तेन वारयति—**सौम्ये**ति । वीचिर्लीनेति शेषः । शून्याशून्यपदं अनिर्वचनीयतां शून्याशून्योभयकल्पनाधिष्ठानं परमार्थवस्तुप्राप्तमिति वा ॥ १० ॥ यदि स्तम्भपुत्रिकावदेव प्रलये जगदस्ति तर्हि कथं वादिभिस्तत्र विमुह्यते न स्तम्भपुत्रिकायां तत्राह—**देशे**ति । पुत्रिकारचनयोग्यकर्तृकर्माधारदेशस्य अहरादिकालस्य आदिपदात्कर्तृकरणोपकरणादेश्च विषये शान्तत्वान्निराकाङ्क्षत्वात्सर्वसामग्रीसंपत्तेरित्यर्थः । द्रुमे द्रुमविकारस्तम्भे पुत्रिकारचनं संभवति तेन तत्र तत्सत्ता संभावयितुं शक्यत इत्यर्थः । अनन्ते त्रिविधपरिच्छेदशून्ये ब्रह्मणि तु अयथा यथोक्तसामग्र्यदर्शनमित्यर्थः । वै इति निश्चये । अतस्तेन प्रसिद्धेन वादिजनेन विमुह्यते मोहः प्राप्यत इत्यर्थः ॥ ११ ॥ यद्युक्तरीत्या वैषम्यं कथं तर्हि स्तम्भपुत्रिकादृष्टान्तस्तत्राह—**तदि**ति । तदेतत्प्रागुक्तं स्तम्भपुत्रिकादि परमार्थे ब्रह्मणि एकदेशेन तत्सत्तानुच्छेदांशेन[4] ॥१२॥ नन्वस्तूक्तरीत्या जगत्सत्ता तदुदयास्तमययोर्विरुद्धयोस्तु तत्र युगपत्कथं सत्तेत्याशङ्क्य तयोः स्वधर्मिव्यतिरिक्तसत्तानभ्युपगमाद्धर्मिपृथक्सत्तानिरासे संभावनैव नास्तीत्याशयेनाह—**न कदाचिदि**ति ॥१३॥ नन्वशून्यत्वेनोदेति न शाम्यतीति शून्यार्थकनञा कथमुल्लेख-

---

१ मासं इति पाठः. २ सर्वतः इति पाठः. ३ शब्दाभिधेयत्वात् इति पाठः. ४ तत्सत आधारसत्तानुच्छेदांशेन इति पाठः. ५ असत्यार्थकनञः इति पाठः.

ब्रह्मण्ययं प्रकाशो हि न संभवति भूतजः।
सूर्यानलेन्दुतारादिः कुतस्तत्र किलाव्यये ॥ १५

महाभूतप्रकाशानामभावस्तम उच्यते।
महाभूताभावजं तु तेनात्र न तमः क्वचित् ॥ १६

स्वानुभूतिः प्रकाशोऽस्य केवलं व्योमरूपिणः।
योऽन्तरस्ति स तेनैव नत्वन्येनानुभूयते ॥ १७

मुक्तं तमःप्रकाशाभ्यामित्येतदजरं पदम्।
आकाशकोशमेवेदं विद्धि कोशं जगत्स्थितेः ॥ १८

बिल्वस्य बिल्वमध्यस्य यथा भेदो न कश्चन।
तथास्ति ब्रह्मजगतोर्न मनागपि भिन्नता ॥ १९

सलिलान्तर्यथा वीचिर्मृदन्तर्घटको यथा।
तथा यत्र जगत्सत्ता तत्कथं खात्मकं भवेत् ॥ २०

भूजलाद्युपमानश्रीः साकारान्ता समानसा।
ब्रह्म त्वाकाशविशदं तस्यान्तस्थं तथैव तत् ॥ २१

तस्माद्यादृक्चिदाकाशमाकाशादपि निर्मलम्।
तदन्तस्थं तादृगेव जगच्छब्दार्थभागपि ॥ २२

मरीचेऽन्तर्यथा तैक्ष्ण्यमृते भोक्तुर्न लक्ष्यते।
चिन्मात्रत्वं चिदाकाशे तथा चेत्यकलां विना ॥ २३

तस्माच्चिदप्यचिद्रूपं चेत्यरिक्तं तदात्मनि।
जगत्ता तादृगेवेयं तावन्मात्रात्मतावशात् ॥ २४

रूपालोकमनस्कारास्तन्मया एव नेतरत्।
यथास्थितमतो विश्वं सुषुप्तं तुर्यमेव वा ॥ २५

तेन योगी सुषुप्तात्मा व्यवहार्यपि शान्तधीः।
आस्ते ब्रह्म निराभासं सर्वाभाससमुद्गकः ॥ २६

आकारिणि यथा सौम्ये स्थितास्तोये महोर्मयः।
अनाकृतौ तथा विश्वं स्थितं तत्सदृशं परे ॥ २७

पूर्णात्पूर्णं प्रसरति यत्तत्पूर्णं निराकृति।
ब्रह्मणो विश्वमाभातं तद्धि स्वार्थं विचक्षितम् ॥ २८

पूर्णात्पूर्णं प्रसरति संस्थितं पूर्णमेव तत्।
अतो विश्वमनुत्पन्नं यच्चोत्पन्नं तदेव तत् ॥ २९

चेत्यासंभवतस्तस्मिन्यदेका जगदर्थता।
आस्वादका संभवतो मरीचे कैव तीक्ष्णता ॥ ३०

स्तत्राह—**अशून्येति**। प्रतियोगिन्यशून्यत्वं सिद्धवत्कृत्य तदपेक्षया वस्त्वन्तरे तच्छून्यता कल्प्यते, कल्पितां च शून्यतामपेक्ष्य प्रतियोगिन्यशून्यत्वमिति परस्परसापेक्षकल्पने शून्यताशून्यते कुतः संभवत इत्यर्थः ॥ १४ ॥ इत्थं प्रथमप्रश्नपदं व्यवस्थाप्य द्वितीयमपि समाधत्ते—**ब्रह्मणी**त्यादिना। अविन्धनस्य पार्थिवेन्धनस्य वाव्ययेन हि सूर्यानलादेः संभवः। अव्यये तु ब्रह्मणि स कुत इति न प्रकाश इत्युक्तिरिति भावः। एतेन कथं वा नैव भास्वरमित्यस्याप्युत्तरमुक्तमेव ॥ १५ ॥ कथं वा न तमोरूपमित्येतत्समाधत्ते—**महाभूते**ति। सूर्यादिमहाभूताभावजं तु तमः पृथ्व्यादिमहाभूतप्रकाशानां अभावो विरोधी सन् परप्रकाश्येषु पृथ्व्यादिष्वेव तम इत्युच्यते न स्वप्रकाशे, तेनात्र न तम इत्यर्थः। तुशब्दो मायातमोव्यावृत्त्यर्थः ॥ १६ ॥ स्वप्रकाशतामनुभवेन साधयति—**स्वानुभूति**रिति। यद्यपि बुद्ध्यादयोऽन्येनानुभूयन्ते तथापि तेषामन्तर्योऽस्ति स तेनैवानुभूयते स्वातिरिक्तानुभवं नापेक्षते। अन्यथा अनवस्थापत्तेरित्यर्थः ॥१७॥ द्वितीयतृतीयप्रश्नोत्तरमुपपादितमुपसंहरति—**मुक्त**मिति। इति उक्तविधया बोध्यमिति शेषः। जगत्स्थितेर्धनस्थानीयायाः कोशगृहस्थानीयं ब्रह्म आकाशोदरस्वच्छं विद्धीत्यर्थः ॥१८॥ अन्त्योपान्त्यप्रश्नोत्तरमाह—**बिल्वस्ये**ति। मध्यस्योदरस्य ॥ १९ ॥ अल्पो घटो घटकः। सिंहावलोकनन्यायेनाह—**तत्कथ**मिति। खात्मकं शून्यम् ॥ २० ॥ ननु जलान्तःस्थिताया भुवो घटाद्यन्तर्गतजलादेर्वा आधारस्वभावत्वादर्शनात्कथं ब्रह्मान्तर्गतजगतस्तदा ब्रह्मस्वभावता तत्राह—**भूजलादी**ति। त्वदुक्ता भूजलाद्युपमानश्रीर्न समा। यतः साकारमन्तोऽवसानं दर्शनावधिर्यस्यास्तथाविधा। तस्य निराकारस्य ब्रह्मणोऽन्तस्थं तज्जगत्तु विलीनत्वान्निराकारमेवेति तथैवेत्यर्थः ॥ २१ ॥ उक्तमेवार्थं स्फुटमाह—**तस्मादि**ति ॥ २२ ॥ अतएव चतुर्थप्रश्नोऽपि निराकृत इत्याह—**मरीच** इति। सत्यं दृश्यातिरिक्तमेव दर्शनत्वेन प्रसिद्धं तत्तु दृश्याभावेन दर्शनत्वव्यवहारार्हमिति भावः ॥ २३ ॥ **तस्मादि**ति। अतएव चिदादिशब्दाः प्रतीचि लक्षणयैव प्रवर्तन्ते न मुख्यवृत्त्येति भावः। यथा जगल्लये चितस्तद्विषयतालक्षणा चित्ता निवर्तते एवं चिद्विषयत्वलक्षणा जगतो जगत्तापीत्याह—**जगत्ते**ति। तावन्मात्रात्मतावशाद्बहीरूपालोका अन्तर्मनस्काराश्च तन्मया इत्युत्तरेण संबन्धः ॥ २४ ॥ वक्ष्यमाणासु सप्तसु पञ्चम्यन्तभूमिकागतानां सुषुप्तमुत्तरयोस्तुर्यम् ॥ २५ ॥ उक्तार्थमेव पूर्वोत्तरार्धाभ्यां स्पष्टमाह—**तेने**ति। सर्वाभासानां संस्काराणां समुद्गकः संपुटकः ॥ २६ ॥ अनाकारब्रह्मात्मना कथं साकारजगत्सत्तेत्याशङ्क्य यथा नानाकाराणामूर्मीणामेकाकारजलात्मनेत्यविरोध इत्यभिप्रेत्याह—**आकारिणी**ति। सौम्ये निश्चलत्वात्प्रसन्ने ॥ २७ ॥ एवमुपाधिभूतस्य जगतः कारणाव्यतिरेकमुक्त्वा तदुपाधिकजीवस्यापि तमाह—**पूर्णादि**ति। यत्पूर्णाद्ब्रह्मणः सकाशादौपाधिकभेदेन जीवभावेन प्रसरति तत्परमार्थतः पूर्णमेव। तत्र साकारस्य पूर्णत्वायोगाद्यत्पूर्णं तन्निराकृति। यदि पूर्णं तर्हि किमर्थं विश्वात्मना जीवभावेन चाभातं तत्राह—**यदि**ति। यद्विश्वात्मना भातं तद्धि स्वार्थं स्वस्वरूपलाभप्रयोजनसिद्धये विचक्षितं दिदृक्षितम्। क्रमादधिकारिशरीरप्राप्त्या स्वतत्त्वसाक्षात्कारेणाज्ञानतिरोहितस्वात्मलाभार्थं जगज्जीवभावेन प्रसरतीत्यर्थः। तथाच श्रुतिः 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय' इति ॥ २८ ॥ कथं तद्दिदृक्षितं तदाह—**पूर्णादि**ति। उक्तार्थम् ॥ २९ ॥ यद्यस्मात्कारणाज्जगच्छब्दार्थता एका एकरसा संपन्नेत्यर्थः। 'पदे'

१ प्रकाशोऽयं इति पाठः. २ मृदोन्तः इति मुद्रितपुस्तके पाठः. ३ तादृष्ट्यात्र इति पाठः. ४ विश्वभानं तत्तद्धि स्वार्थं इति पाठः. ५ प्रश्ने पदं इति पाठः. ६ तरामः इति पाठः.

सत्येवेयमसत्यैव चित्तचेत्यादिता परे ।
तद्भावात्प्रतिबिम्बस्य प्रतिबिम्बार्हता कुतः ॥ ३१
परमाणोरपि परं तदणीयो ह्यणीयसः ।
शुद्धं सूक्ष्मं परं शान्तं तदाकाशोदरादपि ॥ ३२
दिक्कालाद्यनवच्छिन्नरूपत्वादतिविस्तृतम् ।
तदनाद्यन्तमाभासं भासनीयविवर्जितम् ॥ ३३
चिद्रूपमेव नो यत्र लभ्यते तत्र जीवता ।
कथं स्याच्चित्तताकारा वासना नित्यरूपिणी[1] ॥ ३४
चिद्रूपानुदयादेव तत्र नास्त्येव जीवता ।
न बुद्धिता चित्तता वा नेन्द्रियत्वं न वासना ॥ ३५
एवमित्थं महारम्भपूर्णमप्यजरं पदम् ।
असदृष्ट्या स्थितं शान्तं शून्यमाकाशतोऽधिकम् ३६

श्रीराम उवाच ।

परमार्थस्य किं रूपं तस्यानन्तचिदाकृतेः ।
पुनरेतन्ममाचक्ष्व निपुणं बोधवृद्धये ॥ ३७

श्रीवसिष्ठ उवाच ।

महाप्रलयसंपत्तौ सर्वकारणकारणम् ।
शिष्यते परमं ब्रह्म तदिदं वर्ण्यते शृणु ॥ ३८
नाशयित्वा स्वमात्मानं मनसो वृत्तिसंक्षये ।
सद्रूपं यदनाख्येयं तद्रूपं तस्य वस्तुनः ॥ ३९
नास्ति दृश्यं जगद्द्रष्टा दृश्याभावाद्विलीनवत् ।
भातीति भासनं यत्स्यात्तद्रूपं तस्य वस्तुनः ॥ ४०
चितेर्जीवस्वभावाया यदचेत्योन्मुखं वपुः ।
चिन्मात्रं विमलं शान्तं तद्रूपं परमात्मनः ॥ ४१
अङ्गलग्नेऽपि वातादौ स्पर्शाद्यनुभवं विना ।
जीवतश्चेतसो रूपं यत्तद्वै परमात्मनः ॥ ४२
अस्वप्नाया अनन्ताया अजडाया मनःस्थितेः ।
यद्रूपं चिरनिद्रायास्तत्तदानघ शिष्यते ॥ ४३
यद्व्योम्नो हृदयं यद्वा शिलायाः पवनस्य च ।
तस्याचेत्यस्य चिद्व्योम्नस्तद्रूपं परमात्मनः ॥ ४४
अचेत्यस्यामनस्कस्य जीवतो या स्वभावतः ।
स्यात्स्थितिः सा परा शान्ता सत्ता तस्याद्यवस्तुनः ४५
चित्प्रकाशस्य यन्मध्यं प्रकाशस्यापि खस्य वा ।
दर्शनस्य च यन्मध्यं तद्रूपं ब्रह्मणो विदुः ॥ ४६

इति पाठे का इत्यपह्नवे ॥ ३० ॥ एकरसत्वादेव चित्तचेत्यादिनानारसताऽसत्यैव सत्येव प्रतिभासत इत्यर्थः । एवं चोपाध्यभावे प्रतिबिम्बजीवभावार्हता कुतो नास्त्येवेति, जीवो वा न कथं भवेदिति शङ्कापि निरस्तेति भावः ॥ ३१ ॥ जीवो हि अणुर्मध्यमपरिमाणो वा पुण्यपापादिदूषितत्वादशुद्धः स्वभासनीयविषयभोक्ता प्रसिद्धस्तत्तु तद्विपरीतमित्याह—**परमाणोरपीति** द्वाभ्याम् ॥ ३२ ॥ ३३ ॥ यद्विषयप्रथात्वलक्षणं[2] चिद्रूपत्वमेव न सहते तदनुकूलप्रतिकूलविषयभोक्तृतालक्षणं जीवत्वं सुतरामित्याह—**चिद्रूपमिति** । एतेन 'कथं न बुद्धितत्त्वं स्यात्कथं वा न मनो भवे'दिति शङ्कापि प्रत्युक्तेत्याह—**कथमिति** ॥ ३४ ॥ उक्तमेव स्पष्टयति—**चिद्रूपेति** ॥ ३५ ॥ सर्वप्रश्नसमाधाने फलितमुपसंहरति—**एवमिति** ॥ ३६ ॥ एवं समाहितो रामः समाहिते चेतसि येन रूपेण तदपरोक्षमनुभवितुं शक्यं तदसाधारणं रूपं परिचेतुकामः पुनः पृच्छति—**परमार्थस्येति** ॥ ३७ ॥ तदिदमपरोक्षम् ॥ ३८ ॥ यथा समाधौ निरोधेन वृत्तिसंक्षये सति निरिन्धनाग्निवन्मनसः स्वमात्मानं मनःस्वरूपमपि नाशयित्वा यदनाख्येयं स्वप्रकाशसद्रूपमवशिष्यते तदित्यर्थः ॥ ३९ ॥ एवं निर्विकल्पसमाध्यारम्भे दृश्याभावाद्द्रष्टा प्रमातापि विलीनवद्भातीति त्रिपुटीलयभासनं साक्षिरूपं तदित्यर्थः ॥ ४० ॥ एवं समाधिव्युत्थानप्राक्काले भाविजीवस्वभावायाश्चितेरचेत्योन्मुखं यद्वपुः स्वरूपं तदित्यर्थः । यद्यपि समाधिमध्यकालेऽपि स्फुरत्परमात्मरूपमेव तथापि तदपि[3] सूक्ष्मत्वान्नारुरुक्षुणाभ्यासदशायां लक्षयितुं शक्यमित्याद्यन्तप्रदर्शनम् ॥ ४१ ॥ इदानीमारूढानुभवसिद्धतन्मध्यस्फुरद्रूपेणापि तदर्शयति—**अङ्गेति** । ब्रह्माकाराविच्छिन्नापरोक्षवृत्तिमत्त्वाच्चेतसो जीवत एव चित्ते जीवत्येव सति क्षीरोदकवद्ब्रह्मण्यैकरस्येन तिरोभूतत्वाच्चित्तमनादृत्येत्यर्थः । 'षष्ठी चानादरे' इति भावलक्षणे षष्ठी । वातादौ अङ्गलग्नेऽपि तत्स्पर्शाद्यनुभवं विना स्फुरद्यद्रूपं तदेव तद्रूपमित्यर्थः । क्वचित्तु पुस्तके एतत्पूर्वार्धस्थाने 'अङ्गुष्ठस्याथवाङ्गुल्या वाताद्यस्पर्शने सति' इति पठ्यते, तत्राङ्गुष्ठस्य तथाङ्गुल्याश्च ये वातादयो नोदनादिव्यापारास्तेषामस्पर्शने स्पर्शाप्रतिसंधाने सतीत्यर्थः । 'वा गतिगन्धनयोः' भावे क्तः ॥४२॥ इदानीं योगाभ्यासविधुराणामप्यनुभवपथं यथारोहति तथाह—**अस्वप्नाया इति** । स्वप्नदर्शनशून्या मशकमत्कुणाद्यविच्छिन्ना मनोविश्रान्तिहेतुर्या सुषुप्तिः सैव चेतसो जाड्यहीना चिरं संभाव्येत तद्रूपं प्रलयेऽवशिष्यत इत्यर्थः ॥ ४३ ॥ व्योम्नो हृदयं रहस्यं शून्यत्वं, पवनस्य हृदयमन्तर्बहिःपूर्णत्वं, शिलायास्तु घनत्वं तस्यैवाचेत्यस्य चेत्यभिन्नस्य चेत्यरहितस्य च चिद्व्योम्नः सतो यद्रूपं भवेत्तत्तदित्यर्थः ॥ ४४ ॥ किं बहुना सर्वस्यापि जीवतश्चेत्यचित्तपरित्यागे या स्थितिः परिशिष्यते सा तद्रूपमित्याह—**अचेत्यस्येति** ॥ ४५ ॥ यत् द्रष्टृकोटौ अन्नमयान्ते आत्मतया प्रसृतस्य चित्प्रकाशस्यैकैककोशविवेकेन पर्यालोच्यमानस्यानन्दमयकोशस्याप्यान्तरत्वान्मध्यं, दृश्यकोटौ च मूर्तप्रपञ्चसारभूतादित्यात्मकप्रकाशस्यामूर्तप्रपञ्चसारभूतस्य खस्याकाशस्य लिङ्गसमष्ट्यात्मनोऽव्याकृताकाशस्य वा आन्तरत्वाद्यन्मध्यं, दर्शनस्य चाक्षुषादिवृत्तिरूपस्य चान्तःस्फुरणरूपत्वाद्यन्मध्यं, क्रमादानन्दसच्चिद्रूपं प्रसिद्धं तदित्यर्थः । तथा च तैत्तिरीयाणामुपनिषदि अन्नमयादीनां कोशानामान्तरमानन्द-

१ ऽनिलरूपिणी इति पाठः. २ विषयप्रत्या[illegible] इति पाठः. ३ [illegible]लक्षणत्वात् इति पाठः.

वेदनस्य प्रकाशस्य दृश्यस्य तमसस्तथा ।
वेदनं यदनाद्यन्तं तद्रूपं परमात्मनः ॥ ४७
यतो जगदुदेतीव नित्यानुदितरूप्यपि ।
विभिन्नवदिवाभिन्नं तद्रूपं परमार्थकम् ॥ ४८
व्यवहारपरस्यापि यत्पाषाणवदासनम् ।
अव्योम्न एव व्योमत्वं तद्रूपं परमात्मनः ॥ ४९
वेद्यवेदनवेत्तृत्वरूपत्रयमिदं पुरः ।
यत्रोदेत्यस्तमायाति तत्तत्परमदुर्लभम् ॥ ५०
वेद्यवेदनवेत्तृत्वं यत्रेदं प्रतिबिम्बति ।
अबुद्ध्यादौ महादर्शे तद्रूपं परमं स्मृतम् ॥ ५१
मनः स्वप्नेन्द्रियैर्मुक्तं यद्रूपं स्यान्महाचितेः ।
जङ्गमे स्थावरे वापि तत्सर्वान्तेऽवशिष्यते ॥ ५२
स्थावराणां हि यद्रूपं तच्चेद्बोधमयं भवेत् ।
मनोबुद्ध्यादिनिर्मुक्तं तत्परेणोपमीयते ॥ ५३
ब्रह्मार्कविष्णुहरशक्रसदाशिवादि
शान्तौ शिवं परममेतदिहैकमास्ते ।
सर्वोपधिव्ययवशादविकल्परूपं
चैतन्यमात्रमयमुज्झितविश्वसङ्गम् ॥ ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे महाकल्पान्तावशिष्टपरमभाववर्णनं नाम दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ११

श्रीराम उवाच ।
इदं रूपमिदं दृश्यं जगन्नास्तीति भासुरम् ।
महाप्रलयसंप्राप्तौ भो ब्रह्मन्केव तिष्ठति ॥ १
श्रीवसिष्ठ उवाच ।
कुत आयाति कीदृग्वा वन्ध्यापुत्रः क्व गच्छति ।
क्व याति कुत आयाति वद वा व्योमकाननम् ॥ २
श्रीराम उवाच ।
वन्ध्यापुत्रो व्योमवनं नैवास्ति न भविष्यति ।
कीदृशी दृश्यता तस्य कीदृशी तस्य नास्तिता ॥ ३
श्रीवसिष्ठ उवाच ।
वन्ध्यापुत्रव्योमवने यथा न स्तः कदाचन ।
जगदाद्यखिलं दृश्यं तथा नास्ति कदाचन ॥ ४

---

मयकोशं प्रदर्श्य 'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्मपुच्छं प्रतिष्ठा' इति तस्याप्यान्तरं ब्रह्म दर्शितम् । बृहदारण्यके च 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इति प्रस्तुत्य 'तस्यैतस्य मूर्तस्यैष रसो य एष तपति तस्यैतस्यामूर्तस्यैष रसो य एष एतस्मिन्मण्डले पुरुषः' इति तदुभयसारं प्रदर्श्य 'अथात आदेशो नेति नेतीति' मूर्तामूर्तारोपाधिष्ठानं तदान्तरं ब्रह्म तन्निषेधेन दर्शितम् । 'प्रतिबोधविदितं मत'मिति तलवकारिणामुपनिषदि ब्रह्मणः सर्वबुद्धिवृत्त्यान्तरत्वमुक्तमिति ॥ ४६ ॥ बुद्धिवृत्तेरर्थस्फुरणस्य विषयस्याज्ञानस्य च यत्साक्षिभूतं वेदनं तेषामाद्यन्तप्रथात्वादनाद्यन्तं तदित्यर्थः ॥ ४७ ॥ ४८ ॥ मायिकव्यवहारपरस्यापि ज्ञस्येश्वरस्य वा यत् पाषाणवदचलमासनम् । अच्छिद्रस्यैव सर्वजगदवकाशदातृत्वाद्व्योमत्वं यस्येति शेषस्तदित्यर्थः ॥ ४९ ॥ वेद्यादित्रिपुटीजन्मादिनिमित्तं यत्सच्चिदात्मरूपं तदेव तदित्याह—वेद्येति ॥ ५० ॥ निमित्ततापि न परिणामेन किंतु विवर्तभावेनेत्याह—वेद्येति ॥ ५१ ॥ स्वप्नैरिन्द्रियोपलक्षितजागरैश्च मुक्तं मनो यत्सुषुप्तात्मरूपं स्यात्तदेव स्थावरे जङ्गमे च दृश्यप्रलयकालेऽवशिष्यते ॥ ५२ ॥ स्थावराणां रूपमचलस्वभावः । परेण परमात्मना ॥ ५३ ॥ उक्तं प्रलयात्मतत्त्वावस्थानमुपसंहरति—ब्रह्मेति । एतत्सर्वानुभवसिद्धप्रत्यगात्मभूतम् । इहास्मिन् जगति । सर्वोपधिव्ययः सर्वोपाधिलयः । मायासंवलनात्प्राचुर्ये मयट् ॥५४॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे महाकल्पान्तावशिष्टपरमभाववर्णनं नाम दशमः सर्गः ॥ १० ॥

सदधिष्ठानतः सत्ता प्रलयेऽपि न वार्यते ।
स्वतस्तु सत्ता जगतः सर्गेऽप्यत्र निवार्यते ॥ १ ॥

नन्वस्तु प्रलये जगत्सत्तासामान्यात्मकब्रह्ममात्रपरिशेषात्प्रातिस्विकसत्तया जगतो निवृत्तावपि ताद्रूप्येण सत्ता, सर्गे तु प्रलयवैलक्षण्यस्य सर्वानुभवसिद्धत्वात्स्वतन्त्रसत्ताप्यपरा वाच्या । तथाच तयोपेतं जगद्ब्रह्मणि निवर्तमानमन्यत्र तिष्ठतीत्येव संभाव्यते । 'नाभावो विद्यते सतः' इति सतोऽसत्त्वस्य त्वयैव वारितत्वात् । तथाच यत्र तिष्ठति तदेव जगतः परायणमुपदिश्यतामिति मन्यमानः श्रीराम उवाच—इदमिति । इदमेवंविधं चतुर्दशभुवनदेवनरासुरतिर्यगाद्यनन्तविस्ताररूपं यस्य इदमित्थं भासुरं स्फुटतरं दृश्यं प्रत्यक्षादिदृढीकृतं जगत् महाप्रलयसंप्राप्तौ केव तिष्ठति तद्वदेति शेषः । 'गच्छती'ति पाठेऽपि प्राप्त्यर्थस्य गमेरुक्त एवार्थः ॥ १ ॥ सर्वपदार्थानामुत्पत्तिकाले यदि पृथक्सत्तया कुतश्चिदागमनं स्यात्तर्हि तस्य प्रलयेऽन्यत्र गमनं तत्र स्थितिश्च स्यात्तदेव तावद्वन्ध्यापुत्रवदस्य नास्तीत्याशयेन वसिष्ठ उवाच—कुत इति ॥ २ ॥ रामो दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते-वन्ध्येति । तात्कालिकस्वसत्ता भविष्यत्कालिकसत्ताप्रत्यक्षवेद्यता च तयोर्नास्तीति वैषम्यमिति प्रतियोग्यस्तित्वाप्रसिद्धौ नास्तितापि तयोर्दुर्वचेत्यर्थः ॥ ३ ॥ यद्येवं तर्हि जगदपि स्वसत्तया नास्ति न भविष्यति न दृश्यमपीति तस्य तत्साम्यमेवेति

---

१ इत्थंरूपं इति पाठः.

२ गच्छति इति पाठः.

न चोत्पन्नं न च ध्वंसि यत्किलादौ न विद्यते ।
उत्पत्तिः कीदृशी तस्य नाशशब्दस्य का कथा ॥ ५

श्रीराम उवाच ।

वन्ध्यापुत्रनभोवृक्षकल्पना तावदस्ति हि ।
सा यथा नाशजन्माढ्या तथैवेदं न किं भवेत् ॥ ६

श्रीवसिष्ठ उवाच ।

तुल्यस्यातुलदुःस्थस्य भावकैः किल तोलनम् ।
निरन्वया यथैवोक्तिर्जगत्सत्ता तथैव हि ॥ ७
यथा सौवर्णकटके दृश्यमानमिदं स्फुटम् ।
कटकत्वं तु नैवास्ति जगत्त्वं न तथा परे ॥ ८
आकाशे च यथा नास्ति शून्यत्वं व्यतिरेकवत् ।
जगत्त्वं ब्रह्मणि तथा नास्त्येवाप्युपलब्धिमत् ॥ ९
कज्जलान्न यथा कार्ष्ण्यं शैत्यं च न यथा हिमात् ।
पृथगेवं भवेद्बुद्धं जगन्नास्ति परे पदे ॥ १०
यथा शैत्यं न शशिनो न हिमाद्यतिरिच्यते ।
ब्रह्मणो न तथा सर्गो विद्यते व्यतिरेकवान् ॥ ११
मरुनद्यां यथा तोयं द्वितीयेन्दौ यथेन्दुता ।
नास्त्येवेह जगन्नाम दृष्टमप्यमलात्मनि ॥ १२
आदावेव हि यन्नास्ति कारणासंभवात्स्वयम् ।
वर्तमानेऽपि तन्नास्ति नाशः स्यात्तत्र कीदृशः ॥ १३

कारणसंभवद्भूतजाड्यं पृथ्व्यादेर्जडवस्तुनः ।
कारणं भवितुं शक्तं छायायाश्चातपो यथा ॥ १४
कारणाभावतः कार्यं नेदं तत्किंचनोदितम् ।
यत्तत्कारणमेवास्ति तदेवेत्थमवस्थितम् ॥ १५
अज्ञानमेव यद्भाति संविदाभासमेव तत् ।
यज्जगद्दृश्यते स्वप्ने संवित्कचनमेव तत् ॥ १६
संवित्कचनमेवान्तर्यथा स्वप्ने जगद्भ्रमः ।
सर्गादौ ब्रह्मणि तथा जगत्कचनमाततम् ॥ १७
यदिदं दृश्यते किंचित्सदैवात्मनि संस्थितम् ।
नास्तमेति न चोदेति जगत्किंचित्कदाचन ॥ १८
यथा द्रवत्वं सलिलं स्पन्दनं पवनो यथा ।
यथा प्रकाश आभासो ब्रह्मैव त्रिजगत्तथा ॥ १९
यथा पुरमिवास्तेऽन्तर्विदेव स्वप्नसंविदः ।
तथा जगदिवाभाति स्वात्मैव परमात्मनि ॥ २०

श्रीराम उवाच ।

एवं चेत्तत्कथं ब्रह्मन्सुघनप्रत्ययं वद ।
इदं दृश्यविषं जातमसत्स्वप्नानुभूतिवत् ॥ २१
सति दृश्ये किल द्रष्टा सति द्रष्टरि दृश्यता ।
एकसत्त्वे द्वयोर्बन्धो मुक्तिरेकक्षये द्वयोः ॥ २२

---

वसिष्ठ आह—**वन्ध्येति** ॥४॥ सत्ताभावे उत्पत्त्याद्यपि जगतो न सिध्यतीत्याह—**न चेति** ॥ ५ ॥ ननु प्रत्यक्षसिद्धोत्पत्त्यादिमतो जगतो न वन्ध्यापुत्रादिरुपमानम् । अत्यन्तासत उपमानत्वाद्दर्शनाच्च । अतः परिशेषाद्विकल्पप्रत्ययरूपस्तत्प्रत्यय एवोपमानं जन्मनाशादिमत्त्वेन तस्य जगत्साधर्म्यसंभवादिति रामः शङ्कते—**वन्ध्येति** ॥ ६ ॥ स्यात्तस्योपमानता यद्युपमेयजगदन्तःपातो न स्यात् । तदन्तःपाते तु तस्य नोपमानतासंभव इत्यपरमार्थसतो जगतो मदुक्त एव दृष्टान्तः परिशिष्यत इत्याशयेन वसिष्ठ उवाच—**तुल्यस्येति** । तुल्यस्योपमातुमिष्टस्य दृश्यस्योपमेयबहिर्भूततुलाऽलाभेन दुःस्थस्योपमातुमशक्यस्योपमेयकोटिप्रविष्टैर्भावकैर्यत्तोलनमुपमावचनं तत् निरन्वया अनन्वयालंकारोदाहरणभूता यथा उक्तिस्तथैव । यथा 'गगनं गगनाकारं सागरः सागरोपमः' इत्युक्तिरनुपमत्वे पर्यवस्यति तथैव स्यादिति न विकल्पकल्पनादृष्टान्तः । अतो जगतः पृथक्सत्ता यथा मदुक्तवन्ध्यापुत्रादिसत्ता तथैवेत्यर्थः । असतः सदृष्टान्तत्वादर्शनेऽप्यसद्दृष्टान्तता न विरुध्यते । वन्ध्यापुत्र इव खपुष्पमसदित्युक्तिदर्शनादिति भावः ॥ ७ ॥ ननु प्रत्यक्षमुपलभ्यमानस्य कथमसत्त्वमित्याशङ्क्य तथाविधस्यापि सम्यग्दर्शने बाधदृष्टेरसत्त्वं बहुतरदृष्टान्तेषु प्रसिद्धमित्याह—**कटकत्व**मित्यादिपञ्चभिः ॥ ८ ॥ व्यतिरेको भेदस्तद्वत् । उपलब्धिमदुपलभ्यमानमपि ॥ ९ ॥ ॥ १० ॥ ११ ॥ दृष्टं अनुभूयमानमपि ॥ १२ ॥ १३ ॥ कथं कारणासंभवस्तमाह—**क्वेति** । पृथ्व्यादेर्जडवस्तुनो ...

कारणं भवितुं शक्तं तत्त्वसंभवद्भूतजाड्यं ब्रह्म । क्वचिदपि स्वविरुद्धपरिणामादर्शनादिति भावः ॥ १४ ॥ परिणामदृष्ट्या नेदं किंचिदुदितम्, विवर्तदृष्ट्या तु यद्यपि विरुद्धारोपोऽपि संभवति तथापि तत्कारणमेवेत्थं जगद्भावेनावस्थितं न पृथक्कार्यसत्तास्तीत्यर्थः ॥ १५ ॥ नन्वज्ञानमेव तर्हि परिणामिकारणमस्तीति कथं कारणाभावस्तत्राह—**अज्ञानमेवे**ति । यदज्ञानमेव जगदाकारपरिणतं भातीत्युच्यते तत्संविदं जगदात्मना आभासयतीति संविदाभासम् । संविदमेव जगदात्मना विवर्तयतीत्यर्थः । अज्ञानपरिणामस्य संविद्विवर्तत्वमेव स्वप्ने प्रसिद्धमित्याह—**यदि**ति ॥१६॥ तदेव स्पष्टमाह—**संविदिति** ॥१७॥ तथाच जगतो ब्रह्ममात्रत्वं यत्प्रतिज्ञातं तत्सिद्धमित्याह—**यदिद**मिति । आत्मनि परमार्थस्वभावे ॥ १८ ॥ १९ ॥ स्वप्नसंविदः स्वप्नद्रष्टुरन्तर्गता वित् चैतन्यमेव पुरमिव यथा आस्ते ॥२०॥ जगत्प्रत्ययस्य सुघनत्वेन स्वप्नस्य च कालैर्नानभिव्यक्ततया पेलवत्वेन वैषम्यं द्रष्टृदृश्यसंबन्धस्य च स्वाभाविकत्वेनानिवार्यत्वान्मुक्त्यसंभवं च रामः शङ्कते—**एवं चे**दित्यादिना । इदं दृश्यविषमेवमुक्तरीत्या स्वप्नानुभूतिवदसच्चेदाकल्पान्तं व्यवहाराविसंवादाद्दृढ सुघनं दृढमिति प्रत्ययो यस्मिंस्तथाविधं कथं जातमित्यर्थः । 'स्वप्नानुभूतिमत्'इति पाठेऽपि स्वदृष्टान्ततया स्वप्नानुभूतिमत्तत्सदृशमित्येवार्थः ॥ २१ ॥ द्रष्टा दुर्वार इति शेषः । एवमुत्तरवाक्ययोरपि । द्वयोर्मध्ये एकस्य क्षये हि मुक्तिः स्यात्स एव दुर्घट

१ स्वप्नविदेव इति पाठः. २ यज्ज्ञानेति क्वचित्.

अत्यन्तासंभवो यावद्बुद्धो दृश्यस्य न क्षयः।
तावद्द्रष्टरि दृश्यत्वं न संभवति मोक्षधीः॥ २३
दृश्यं चेत्संभवत्यादौ पश्चात्क्षयमुपालभेत्।
तद्दृश्यस्मरणानर्थरूपो बन्धो न शाम्यति॥ २४
यत्र क्वचन संस्थस्य स्वादर्शस्येव चिद्वतेः।
प्रतिबिम्बो लगत्येव सर्वस्मृतिमयो ह्यलम्॥ २५
आदावेव हि नोत्पन्नं दृश्यं नास्त्येव चेत्स्वयम्।
द्रष्टुर्दृश्यस्वभावत्वात्तत्संभवति मुक्तता॥ २६
तस्मादसंभवन्मुक्तेर्मम प्रोत्सार्य युक्तिभिः।
अत्यन्तासंभवो यावत्कथयात्मविदां वर॥ २७
श्रीवसिष्ठ उवाच।
असदेव सदा भाति जगत्सर्वात्मकं यथा।
शृण्वहं कथया राम दीर्घया कथयामि ते॥ २८
व्यवसायकथावाक्यैर्यावत्तत्रानुवर्णितम्।
न विश्राम्यति ते तावद्धृदि पांसुर्यथा ह्रदे॥ २९
अत्यन्ताभावमस्यास्त्वं जगत्सर्गभ्रमस्थितेः।
बुद्ध्वैकध्याननिष्ठात्मा व्यवहारं करिष्यसि॥ ३०
भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचलाचलाः।
दृशस्त्वां वेधयिष्यन्ति न महाद्रिमिवेषवः॥ ३१
स एषोऽस्त्येक एवात्मा न द्वितीयास्ति कल्पना।
जगदत्र यथोत्पन्नं तत्ते वक्ष्यामि राघव॥ ३२
तस्मादिमानि सकलानि विजृम्भितानि
सोऽपीदमङ्ग सकलासकलं महात्मा।
रूपावलोकनमनोमननप्रकारा
कारास्पदं स्वयमुदेति विलीयते च॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे परमार्थवर्णनं नामैकादशः सर्गः॥ ११॥

## द्वादशः सर्गः १२

श्रीवसिष्ठ उवाच।
एतस्मात्परमाच्छान्तात्पदात्परमपावनात्।
यथेदमुत्थितं विश्वं तच्छृणूत्तमया धिया॥ १
सुषुप्तं स्वप्नवद्भाति भाति ब्रह्मैव सर्गवत्।
सर्वात्मकं च तत्स्थानं तत्र तावत्क्रमं शृणु॥ २
तस्यानन्तप्रकाशात्मरूपस्यानन्तचिन्मणेः।
सत्तामात्रात्मकं विश्वं यदजस्रं स्वभावतः॥ ३

इति भावः॥ २२॥ कुतो दुर्घटस्तत्राह—**अत्यन्तेति**। अत्यन्तं मूलपरिशेषेणासंभवो यस्य। मूलविद्याबाधेनात्यन्तिक इत्यर्थः। दृश्यत्वमपरिहार्यमिति शेषः। अतो मोक्षधीर्न संभवतीत्यर्थः॥ २३॥ मास्त्वत्यन्तासंभवबोधः संभूतस्यैव विद्यया क्षयोऽस्तु तत्राह—**दृश्यमिति**। तर्हि स्मरणमिव स्मरणं संस्कारात्मना स्थितस्य पुनरुद्भवः स एवानर्थः॥ २४॥ दृश्यप्रदेशपरिहाणेनैव दृश्यासंभवोपपत्तिशङ्कायास्तु परिहारस्त्वयैव प्रागुक्त इत्याह—**यत्रेति**॥ २५॥ यद्यनुत्पन्नं स्यात्तदा द्रष्टुश्चैतन्यस्य दृश्यस्वभावत्वान्मुक्तता संभवेत्। नत्वनुत्पन्नमनुभूयते अतो न द्रष्टुः स्वभावनिर्मुक्तिरिति भावः॥ २६॥ तस्मान्मम असंभवन्मुक्तेर्मुक्त्यसंभवस्य शङ्कामिति शेषः। यावन्निरूढः स्यात्तावत्कथय॥ २७॥ यच्छङ्कितं स्वप्नवैषम्यं तस्य वक्ष्यमाणसृष्ट्याख्यायिकया समाधानं वसिष्ठः प्रतिजानीते—**असदिति**। दीर्घया मण्डपोपाख्यानादिविस्तारितया यद्यपि सुघनप्रलयं तथाप्यसदेव सदात्मनावभातीत्यंशे स्वप्नसाम्यमस्त्येव, सुघनप्रलयता तु चिरानुवृत्त्येति भावः॥ २८॥ व्यवसायः पूर्वेषां व्यवहारस्तत्कथावाक्यैः॥ २९॥ तेनैव ते द्वितीयशङ्कानिरासस्तत्त्वे विश्रान्तिर्लोकव्यवहारश्च स्थेत्स्यतीत्याह—**अत्यन्तेति**॥ ३०॥ प्रयोजनादिभावे गृह्णन्त इति ग्रहाः प्रयोजनाभावे तूत्सृज्यन्त इत्युत्सर्गाः। स्थूलसूक्ष्मादिविषयेषु चलाचलास्तदनुरूपा दृशो व्यवहारदृष्टयो रागादिभिर्वेधन्ति। रागाद्युद्भवेन न पीडयिष्यन्तीत्यर्थः। प्राग्व्याख्यातो वार्थो ग्राह्यः॥ ३१॥ अत्र द्वितीयकल्पनारहितेऽप्यात्मनि॥ ३२॥ हे अङ्ग, इमानि जगन्ति तस्मादात्मनः सकाशाद्विजृम्भितानि आविर्भूतानि। किं तटस्थेश्वरादिव भेदेन नेत्याह—**स** इति। स महात्मापि सकलासकलं समष्टिव्यष्टिरूपं इदं बहिरिन्द्रियैर्दृश्यमानं रूपावलोकनप्रकारास्पदमन्तस्तु मनो मननप्रकाराकारास्पदं भूत्वा स्वयमेवोदेति विलीयते च। उदयविलयभावेन भ्रान्त्या विभाव्यत इत्यर्थः॥ ३३॥ इति श्रीवासिष्ठमहारामायण उत्पत्तिप्रकरणे परमार्थवर्णनं नामैकादशः सर्गः॥ ११॥

अत्यन्तासंभवं वक्तुमपवादेन कृत्स्नशः।
सर्गस्तदनुरूपोऽस्मिन्नध्यारोपः प्रपञ्च्यते॥ १॥

प्रतिज्ञातार्थं वक्तुमुपक्रममाणः श्रीवसिष्ठ उवाच—**एतस्मादिति**॥ १॥ यथा प्रतिपुरुषं सुषुप्तात्मरूपमेव स्वप्नवद्विवर्तते तथा ब्रह्मापीति दृष्टानुसारिणीयं कल्पनेत्यर्थः। तत्रैकपुरुषवासनामात्रकार्यत्वात्स्वप्नो न सुघनप्रलयः सर्ववासनाकार्यत्वाच्च प्रपञ्चः सुघनप्रलय इति पूर्वशङ्कापरिहारमभिप्रेत्याह—**सर्वात्मकं चेति**। सर्वात्मकत्वं च 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतौ सर्ववाचीदंपदसामानाधिकरण्यात्। तत्स्थानं सर्वसुषुप्तसमष्टिप्रलयावस्थं ब्रह्म॥ २॥ यद्यस्मात्कारणाद्विश्वं चिन्मणेः सत्तामात्रमात्मा परमार्थरूपं यस्य तथाविधं तत्तस्माच्चेत्यतामिव गच्छतीत्युत्तरेण संबन्धः॥३॥ तस्य प्रथमं 'स ईक्षत लोकान्

तदात्मनि स्वयं किंचिच्चेत्यतामिव गच्छति ।
अगृहीतात्मकं संविदहंमर्शनपूर्वकम् ॥ ४
भाविनामार्थकलनैः किंचिदूहितरूपकम् ।
आकाशादणु शुद्धं च सर्वस्मिन्भाति बोधनम् ॥ ५
ततः सा परमा सत्ता सचेतश्चेतनोन्मुखी ।
चिन्नामयोग्या भवति किंचिल्लभ्यतया तथा ॥ ६
घनसंवेदना पश्चाद्भाविजीवादिनामिका ।
संभवत्यात्तकलना यदोज्झति परं पदम् ॥ ७
सत्तैव भावनामात्रसारा संसरणोन्मुखी ।
तदा वस्तुस्वभावेन त्वनुत्तिष्ठति तामिमाम् ॥ ८
समनन्तरमेवास्याः खसत्तोदेति शून्यता ।
शब्दादिगुणबीजं सा भविष्यदभिधार्थदा ॥ ९
अहंतोदेति तदनु सह वै कालसत्तया ।
भविष्यदभिधार्थेन बीजं मुख्यजगत्स्थितेः ॥ १०
तस्याः शक्तेः परायास्तु स्वसंवेदनमात्रकम् ।
एतज्जालमसद्रूपं सदिवोदेति विस्फुरत् ॥ ११
एवंप्रायात्मिका संविद्बीजं संकल्पशाखिनः ।
भवत्यहंकारकणस्ततः स्पन्दतया मरुत् ॥ १२
चिदहं तावती व्योमशब्दतन्मात्रभावनात् ।
खतो घनीभूय शनैः खतन्मात्रं भवत्यलम् ॥ १३
भाविनामार्थरूपं तद्बीजं शब्दौघशाखिनः ।
पदवाक्यप्रमाणाख्यं वेदवृन्दं विकासितम् ॥ १४
तस्मादुदेष्यत्यखिला जगच्छ्रीः परमात्मनः ।
शब्दौघनिर्मितार्थौघपरिणामविसारिणः ॥ १५
चिदेवंपरिवारा सा जीवशब्देन कथ्यते ।
भाविशब्दार्थजालेन बीजं रूपौघशाखिनः ॥ १६
चतुर्दशविधं भूतजालमावलितान्तरम् ।
जगज्जठरगर्तौघं प्रसरिष्यति वै ततः ॥ १७
असंप्राप्ताभिधाचारा चिज्जवात्प्रस्फुरद्वपुः ।
सा चैव स्पर्शतन्मात्रं भावनाद्भवति क्षणात् ॥ १८

सृजा' इति श्रुतिसिद्धमीक्षणभावं दर्शयति—**तदि**त्यादित्रिभिः । संविदा अहंमर्शनपूर्वकमगृहीतात्मकमहंकाराध्यासं विनेति यावत् । आकाशादणु शुद्धं च यद्बोधनं तत्सर्वस्मिन्स्रज्यविषये भाविनामरूपानुसंधानैः किंचिदूहितानि रूपकाणि यस्मिंस्तथाविधं सचेत्यतामिव गच्छतीत्यन्वयः ॥ ४ ॥ ५ ॥ तस्येक्षणवृत्तितद्विषयोपाधिभ्यामीश्वरजीवभावौ दर्शयति—**तत** इति । चेतईक्षणात्मिका वृत्तिस्तत्सहिता चेतना तदभिव्यक्तचैतन्यं तदुन्मुखी तत्प्रधाना सती चेतयतीति चित्सर्वज्ञेश्वरस्तन्नामयोग्येत्यर्थः । वाक्प्रवृत्तिविषयधर्मवत्त्वेन वाग्व्यवहारलभ्यतया ॥ ६ ॥ चिरानुवृत्त्या घना दृढीभूता ईक्षणसंवेदना यस्यास्तथाविधा सती आत्ता गृहीता कलना तद्विषयसूक्ष्मप्रपञ्चात्मभावलक्षणपरिच्छेदकलना यया अतएव परं पदमपरिच्छिन्नभूमात्मभावं विस्मरणेनोज्झति तदा भाविप्राणधारणोपाधिकजीवहिरण्यगर्भादिनामिका संभवतीत्यर्थः ॥ ७ ॥ तथा भावेऽपि न ब्रह्मसत्ताया स्वरूपक्षतिरित्याह—**सत्ते**ति । तदा ब्रह्मसत्तैव भावनामात्रसारा संसरणोन्मुखी भवति न विकारादिक्रियासारेत्यर्थः । तत्कुतस्तत्राह—**वस्तुस्वभावेने**ति । कथं तर्हि जीवभावस्तत्राह—**अन्वि**ति । तामिमां सत्तामेवानुसृत्य रज्जौ सर्प इव जीवभाव उत्तिष्ठतीत्यर्थः ॥ ८ ॥ इदानीं महाभूतसर्गं विवक्षुः प्रथममाकाशसर्गमाह—**समनन्तर**मिति । अस्या जीवसत्तायाः समनन्तरमेव खसत्ता इतरभूतावकाशदत्वाच्छून्यताप्राया उदेति । सूर्यादिसर्गोत्तरं भविष्यन्तीनामाकाशाद्यभिधानामासमन्तात्काशते प्रकाशत इत्याद्यर्थदा ॥ ९ ॥ तत्र प्रागुक्तजीवस्याहंताभिमानं तदाप्रभृति द्विपरार्धपरिमिततदायुःकालक्लृप्तिं चाह—**अहंते**ति । भविष्यदित्यादि पूर्ववत् ॥ १० ॥ इयमाकाशाहंकारकालसृष्टिर्न हिरण्यगर्भादेव किंतु तद्वेषोपहितपरमात्मसत्ताया एव तस्या एव सर्वकारणत्वादित्याह—**तस्या** इति । शक्तिशब्देनात्र परसत्तैवोच्यते । तस्या अविकृतत्वद्योतनाय स्वसंवेदनमात्रकमिति ॥ ११ ॥ एवंप्रायात्मिका वियदहंकारेण वियत्प्राय आत्मा स्वरूपं यस्यास्तथाविधा संविद्वियत्कार्यगोचरसंकल्पवृक्षस्य बीजमित्यर्थः । अतएव तस्याहंकारस्य कण एकदेश इव परिच्छिन्नस्पन्दशक्तिप्रधानतया मरुद्वायुर्भवति । आविर्भवतीत्यर्थः ॥ १२ ॥ तस्या एव वियदहन्तोपहितपरसत्तायाः सर्वशब्दबीजभूतशब्दतन्मात्रात्मताभावनात्तदुत्पत्तिरित्याह—**चिदि**ति । खत आकाशभावादतिसूक्ष्मादीषद्घनीभूय खतन्मात्रं शब्दतन्मात्रं भवतीत्यर्थः । यद्यपि सांख्यदर्शनपुराणादिषु तन्मात्रतो भूतोत्पत्तिः प्रसिद्धा तथापि 'आत्मन आकाशः संभूतः, तत्तेजोऽसृजत' इत्यादिश्रुतिषु वियदादीनां साक्षाद्ब्रह्मोपादानकत्वश्रवणात् 'तद्यथा दुन्दुभेर्हन्यमानस्य' इत्यादौ शब्दसामान्यस्य तद्विशेषोपादानत्वश्रवणाच्चाकाशादेव शब्दसामान्यात्मकतन्मात्रोत्पत्तिरुक्तेति न दोषः ॥ १३ ॥ शब्दतन्मात्रस्य वेदादिसर्वशब्दविशेषोपादानत्वमाह—**भावी**ति ॥ १४ ॥ तस्माद्वेदभावापन्नात्परमात्मनो जगच्छ्रीरुदेष्यत्युत्पत्स्यते । 'स भूरिति व्याहरत् स भुवमसृजत्', 'एत इति वै प्रजापतिर्देवानसृजत असृग्रमिति मनुष्यानिन्दव इति पितॄन्' इत्यादिश्रुतेरित्यर्थः ॥ १५ ॥ यदुक्तं भाविजीवादिनामिकेति तद्वायूत्पत्तौ तस्यैव प्राणत्वात्तद्धारणनिमित्तेन सिद्धमित्याह—**चिदि**ति । एवमुक्तप्रकारो वाय्वन्तःसंततिपरिवारो यस्याः सा । तस्याः सर्वमूर्त्याकारहेतुतामाह—**बीज**मिति । रूपमत्र मूर्त्याकारः ॥ १६ ॥ तस्य व्यष्टिप्राणभावेनाध्यात्मिकसर्वक्रियाहेतुत्वमाह—**चतुर्दशे**ति । चतुर्दशभुवनभेदाच्चतुर्दशविधं प्राणिजालं तत उक्तात्प्राणवायोर्निमित्तात्वेन व्याप्तान्तरालं जगज्जठराणि ब्रह्माण्डोदराणि तद्रूपं गर्तौघं प्रसरिष्यति संचरिष्यति ॥ १७ ॥ तस्यैव वायुत्वा-

१ मेतस्याः इति पाठः २ सदैव काल इति पाठः. ३ भूतजालमभावं इति पाठः. ४ सन्ततिः परिवारः इति पाठः.

Speed Post ~~BY REGISTERED A/D~~





# THE ASIATIC SOCIETY

FOUNDED IN 1784

(An Institution of National Importance declared by an Act of Parliament)

1, PARK STREET, KOLKATA-700 016

No. 4957

**Professor Ramakanta Chakrabarty**
**General Secretary**

Date: 31.05.2005
02.06.2005

**Dear** Professor Vrat,

**We are thankful to you for kindly participating in the Two-day National Seminar on MRICCHAKATIKA – REASSESSMENT IN THE 21ST CENTURY held on 5th and 6th January 2005 in the premises of The Asiatic Society. The Paper you read was illuminating and impressive.**

**The Asiatic Society has decided to bring out the proceedings of the Seminar as early as possible.**

**I would, therefore, request you to kindly send your paper after properly editing it in the light of the discussion held in the seminar within 15 days from the date of the issue of this letter.**

**This may kindly be treated as urgent.**

**With regards,**

**Yours sincerely,**

R. K. Chakrabarty

**Ramakanta Chakrabarty**

Professor Usha Satya Vrat
C-24 B, Defence Colony
New Delhi – 110024.

Dr/akd/gov./p-13

✆: 2229-0779, 2249-7250, 2229-7251, Fax : 91-033-2217-2355, e-mail : aslibcal@cal.vsnl.net.in, website : www.asiatic society cal.com

अत्यन्तासंभवो यावद्बुद्धो दृश्यस्य न क्षयः ।
तावद्द्रष्टरि दृश्यत्वं न संभवति मोक्षधीः ॥ २३
दृश्यं चेत्संभवत्यादौ पश्चात्क्षयमुपालभेत् ।
तद्दृश्यस्मरणानर्थरूपो बन्धो न शाम्यति ॥ २४
यत्र क्वचन संस्थस्य स्वादर्शस्येव चिद्गतेः ।
प्रतिबिम्बो लगत्येव सर्वस्मृतिमयो ह्यलम् ॥ २५
आदावेव हि नोत्पन्नं दृश्यं नास्त्येव चेत्स्वयम् ।
द्रष्टुर्दृश्यस्वभावत्वात्तत्संभवति मुक्तता ॥ २६
तस्मादसंभवन्मुक्तेर्मम प्रोत्सार्य युक्तिभिः ।
अत्यन्तासंभवो यावत्कथयात्मविदां वर ॥ २७

श्रीवसिष्ठ उवाच ।

असदेव सदा भाति जगत्सर्वात्मकं यथा ।
शृण्वहं कथया राम दीर्घया कथयामि ते ॥ २८
व्यवसायकथावाक्यैर्यावत्तत्रानुवर्णितम् ।
न विश्राम्यति ते तावद्धृदि पांसुर्यथा ह्रदे ॥ २९
अत्यन्ताभावमस्यास्त्वं जगत्सर्गभ्रमस्थितेः ।
बुद्ध्वैकध्याननिष्ठात्मा व्यवहारं करिष्यसि ॥ ३०
भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचलाचलाः ।
दृशस्त्वां वेधयिष्यन्ति न महाद्रिमिवेषवः ॥ ३१
स एषोऽस्त्येक एवात्मा न द्वितीयास्ति कल्पना ।
जगदत्र यथोत्पन्नं तत्ते वक्ष्यामि राघव ॥ ३२
तस्मादिमानि सकलानि विजृम्भितानि
सोऽपीदमङ्ग सकलासकलं महात्मा ।
रूपावलोकनमनोमननप्रकारा
कारास्पदं स्वयमुदेति विलीयते च ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे परमार्थवर्णनं नामैकादशः सर्गः ॥ ११ ॥

---

## द्वादशः सर्गः १२

श्रीवसिष्ठ उवाच ।

एतस्मात्परमाच्छान्तात्पदात्परमपावनात् ।
यथेदमुत्थितं विश्वं तच्छृणूत्तमया धिया ॥ १
सुषुप्तं स्वप्नवद्भाति भाति ब्रह्मैव सर्गवत् ।
सर्वात्मकं च तत्स्थानं तत्र तावत्क्रमं शृणु ॥ २
तस्यानन्तप्रकाशात्मरूपस्यानन्तचिन्मणेः ।
सत्तामात्रात्मकं विश्वं यदजस्रं स्वभावतः ॥ ३

---

इति भावः ॥ २२ ॥ कुतो दुर्घटस्तत्राह—**अत्यन्तेति** । अत्यन्तं मूलापरिशेषेणासंभवो यस्य । मूलाविद्याबाधेनात्यन्तिक इत्यर्थः । दृश्यत्वमपरिहार्यमिति शेषः । अतो मोक्षधीर्न संभवतीत्यर्थः ॥ २३ ॥ मास्त्वत्यन्तासंभवबोधः संभूतस्यैव विद्यया क्षयोऽस्तु तत्राह—**दृश्यमिति** । तर्त्तर्हि स्मरणमिव स्मरणं संस्कारात्मना स्थितस्य पुनरुद्भवः स एवानर्थः ॥ २४ ॥ दृश्यप्रदेशपरिहाणेनैव दृश्यासंभवोपपत्तिशङ्कायास्तु परिहारस्त्वयैव प्रागुक्त इत्याह—**यत्रेति** ॥ २५ ॥ यद्यनुत्पन्नं स्यात्तदा द्रष्टुश्चैतन्यस्य दृश्यस्वभावत्वान्मुक्तता संभवेत् । नत्वनुत्पन्नमनुभूयते अतो न द्रष्टुः स्वभावनिर्मुक्तिरिति भावः ॥२६॥ तस्मान्मम असंभवन्मुक्तेर्मुक्त्यसंभवस्य शङ्कामिति शेषः । यावन्निरूढः स्यात्तावत्कथय ॥ २७ ॥ यच्छङ्कितं स्वप्नवैषम्यं तस्य वक्ष्यमाणसृष्ट्याख्यायिकया समाधानं वसिष्ठः प्रतिजानीते—**असदिति** । दीर्घया मण्डपोपाख्यानादिविस्तारितया यद्यपि सुघनप्रत्ययं तथाप्यसदेव सदात्मनावभातीत्यंशे स्वप्नसाम्यमस्त्येव, सुघनप्रत्ययता तु चिरानुवृत्त्येति भावः ॥ २८ ॥ व्यवसायः पूर्वेषां व्यवहारस्तत्कथावाक्यैः ॥ २९ ॥ तेनैव ते द्वितीयशङ्कानिरासस्तत्त्वे विश्रान्तिर्लोकव्यवहारश्च सेत्स्यतीत्याह—**अत्यन्तेति** ॥ ३० ॥ प्रयोजनादिभावे गृह्यन्त इति ग्रहाः प्रयोजनाभावे तूत्सृज्यन्त इत्युत्सर्गाः । स्थूलसूक्ष्मादिविषयेषु चलाचलास्तदनुरूपा दृशो व्यवहारदृष्टयो न वेधयिष्यन्ति । रागाद्युद्भवेन न पीडयिष्यन्तीत्यर्थः । प्राग्व्याख्यातो वार्थो ग्राह्यः ॥३१॥ अत्र द्वितीयकल्पनारहितेऽप्यात्मनि ॥३२॥ हे अङ्ग, इमानि जगन्ति तस्मादात्मनः सकाशाद्विजृम्भितानि आविर्भूतानि । किं तटस्थेश्वरादिव भेदेन नेत्याह—**स** इति । स महात्मापि सकलासकलं समष्टिव्यष्टिरूपं इदं बहिरिन्द्रियैर्दृश्यमानं रूपावलोकनप्रकारास्पदमन्तस्तु मनो मननप्रकाराकारास्पदं भूत्वा स्वयमेवोदेति विलीयते च । उदयविलयभावेन भ्रान्त्या विभाव्यत इत्यर्थः ॥३३॥ इति श्रीवासिष्ठमहारामायण उत्पत्तिप्रकरणे परमार्थवर्णनं नामैकादशः सर्गः ॥ ११ ॥

अत्यन्तासंभवं वक्तुमपवादेन कृत्स्नशः ।
सर्गस्तदनुरूपोऽस्मिन्नध्यारोपः प्रपञ्च्यते ॥ १ ॥

प्रतिज्ञातार्थं वक्तुमुपक्रममाणः श्रीवसिष्ठ उवाच—**एतस्मादिति** ॥ १ ॥ यथा प्रतिपुरुषं सुषुप्तात्मरूपमेव स्वप्नवद्विवर्तते तथा ब्रह्मापीति दृष्टानुसारिणीयं कल्पनेत्यर्थः । तत्रैकपुरुषवासनामात्रकार्यत्वात्स्वप्नो न सुघनप्रत्ययः सर्ववासनाकार्यत्वाच्च प्रपञ्चः सुघनप्रत्यय इति पूर्वशङ्कापरिहारमभिप्रेत्याह—**सर्वात्मकं चेति** । सर्वात्मकत्वं च 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतौ सर्ववाचीदंपदसामानाधिकरण्यात् । तत्स्थानं सर्वसुषुप्तसमष्टिप्रलयावस्थं ब्रह्म ॥ २ ॥ यद्यस्मात्कारणाद्विश्वं चिन्मणेः सत्तामात्रमात्मा परमार्थरूपं यस्य तथाविधं तत्तस्माच्चित्यतामिव गच्छतीत्यनयोः संबन्धः ॥३॥ तस्य प्रथमं 'स ईक्षत लोकान्न

तदात्मनि स्वयं किंचिच्चेत्यतामिव गच्छति ।
अगृहीतात्मकं संविदहंमर्शनपूर्वकम् ॥ ४
भाविनामार्थकलनैः किंचिदूहितरूपकम् ।
आकाशादणु शुद्धं च सर्वस्मिन्भाति बोधनम् ॥ ५
ततः सा परमा सत्ता सचेतश्चेतनोन्मुखी ।
चित्नामयोग्या भवति किंचिल्लभ्यतया तथा ॥ ६
घनसंवेदना पश्चाद्भाविजीवादिनामिका ।
संभवत्यात्तकलना यदोज्झति परं पदम् ॥ ७
सत्तैव भावनामात्रसारा संसरणोन्मुखी ।
तदा वस्तुस्वभावेन त्वनुत्तिष्ठति तामिमाम् ॥ ८
समनन्तरमेवास्याः खसत्तोदेति शून्यता ।
शब्दादिगुणबीजं सा भविष्यदभिधार्थदा ॥ ९
अहंतोदेति तदनु सह वै कालसत्तया ।
भविष्यदभिधार्थेन बीजं मुख्यजगत्स्थितेः ॥ १०
तस्याः शक्तेः परायास्तु स्वसंवेदनमात्रकम् ।
एतज्जालमसद्रूपं सदिवोदेति विस्फुरत् ॥ ११
एवंप्रायात्मिका संविद्बीजं संकल्पशाखिनः ।
भवत्यहंकारकणस्ततः स्पन्दतया मरुत् ॥ १२
चिदहं तावती व्योमशब्दतन्मात्रभावनात् ।
खतो घनीभूय शनैः खतन्मात्रं भवत्यलम् ॥ १३
भाविनामार्थरूपं तद्बीजं शब्दौघशाखिनः ।
पदवाक्यप्रमाणाख्यं वेदवृन्दं विकासितम् ॥ १४
तस्मादुदेष्यत्यखिला जगच्छ्रीः परमात्मनः ।
शब्दौघनिर्मितार्थौघपरिणामविसारिणः ॥ १५
चिदेवंपरिवारा सा जीवशब्देन कथ्यते ।
भाविशब्दार्थजालेन बीजं रूपौघशाखिनः ॥ १६
चतुर्दशविधं भूतजालमावलितान्तरम् ।
जगज्जठरगर्तौघं प्रसरिष्यति वै ततः ॥ १७
असंप्राप्ताभिधाचारा चिज्जवात्प्रस्फुरद्वपुः ।
सा चैव स्पर्शतन्मात्रं भावनाद्भवति क्षणात् ॥ १८

सृजा' इति श्रुतिसिद्धमीक्षणभावं दर्शयति—**तदि**त्यादित्रिभिः । संविदा अहंमर्शनपूर्वकमगृहीतात्मकमहंकाराध्यासं विनेति यावत् । आकाशादणु शुद्धं च यद्बोधनं तत्सर्वस्मिन्सृज्यविषये भाविनामरूपानुसंधानैः किंचिदूहितानि रूपकाणि यस्मिंस्तथाविधं सच्चेत्यतामिव गच्छतीत्यन्वयः ॥ ४ ॥ ५ ॥ तस्येक्षणवृत्तितद्विषयोपाधिभ्यामीश्वरजीवभावौ दर्शयति—**तत** इति । चेतईक्षणात्मिका वृत्तिस्तत्सहिता चेतना तदभिव्यक्तचैतन्यं तदुन्मुखी तत्प्रधाना सती चेतयतीति चित्सर्वज्ञेश्वरस्तन्नामयोग्येत्यर्थः । वाक्प्रवृत्तिविषयधर्मवत्त्वेन वाग्व्यवहारलभ्यतया ॥ ६ ॥ चिरानुवृत्त्या घना दृढीभूता ईक्षणसंवेदना यस्यास्तथाविधा सती आत्ता गृहीता कलना तद्विषयसूक्ष्मप्रपञ्चात्मभावलक्षणपरिच्छेदकलना यया अतएव परं पदमपरिच्छिन्नभूमात्मभावं[3] विस्मरणेनोज्झति तदा भाविप्राणधारणोपाधिकजीवहिरण्यगर्भादिनामिका संभवतीत्यर्थः ॥ ७ ॥ तथा भावेऽपि न ब्रह्मसत्ताया स्वरूपक्षतिरित्याह—**सत्ते**ति । तदा ब्रह्मसत्तैव भावनामात्रसारा संसरणोन्मुखी भवति न विकारादिक्रियासारेत्यर्थः । तत्कुतस्तत्राह—**वस्तुस्वभावेने**ति । कथं तर्हि जीवभावस्तत्राह—**अन्वि**ति । तामिमां सत्तामेवानुसृत्य रज्जौ सर्प इव जीवभाव उत्तिष्ठतीत्यर्थः ॥ ८ ॥ इदानीं महाभूतसर्गं विवक्षुः प्रथममाकाशसर्गमाह—**समनन्तर**मिति । अस्या जीवसत्तायाः समनन्तरमेव खसत्ता इतरभूतावकाशदत्वाच्छून्यताप्राया उदेति । सूर्यादिसर्गोत्तरं भविष्यन्तीनामाकाशाद्यभिधानामासमन्तात्काशते प्रकाशत इत्याद्यर्थदा ॥ ९ ॥ तत्र प्रागुक्तजीवस्याहंताभिमानं तदाप्रभृति द्विपरार्धपरिमिततदायुःकालक्लृप्तिं चाह—**अहंते**ति । भविष्यदित्यादि पूर्ववत् ॥ १० ॥ इयमाकाशाहंकारकालसृष्टिर्न हिरण्यगर्भादेव किंतु तद्वेषोपहितपरमात्मसत्ताया एव तस्या एव सर्वकारणत्वादित्याह—**तस्या** इति । शक्तिशब्देनात्र परसत्तैवोच्यते । तस्या अविकृतत्वद्योतनाय स्वसंवेदनमात्रकमिति ॥ ११ ॥ एवंप्रायात्मिका वियदहंकारेण वियत्प्राय आत्मा स्वरूपं यस्यास्तथाविधा संविद्वियत्कार्यगोचरसंकल्पवृक्षस्य बीजमित्यर्थः । अतएव तस्याहंकारस्य कण एकदेश इव परिच्छिन्नस्पन्दशक्तिप्रधानतया मरुद्वायुर्भवति । आविर्भवतीत्यर्थः ॥ १२ ॥ तस्या एव वियदहन्तोपहितपरसत्तायाः सर्वशब्दबीजभूतशब्दतन्मात्रात्मताभावनात्तदुत्पत्तिरित्याह—**चिदि**ति । खत आकाशभावादतिसूक्ष्मादीषद्घनीभूय खतन्मात्रं शब्दतन्मात्रं भवतीत्यर्थः । यद्यपि सांख्यदर्शनपुराणादिषु तन्मात्रतो भूतोत्पत्तिः प्रसिद्धा तथापि 'आत्मन आकाशः संभूतः, तत्तेजोऽसृजत' इत्यादिश्रुतिषु वियदादीनां साक्षाद्ब्रह्मोपादानकत्वश्रवणात् 'तद्यथा दुन्दुभेर्हन्यमानस्य' इत्यादौ शब्दसामान्यस्य तद्विशेषोपादानत्वश्रवणाच्चाकाशादेव शब्दसामान्यात्मकतन्मात्रोत्पत्तिरुक्तेति न दोषः ॥ १३ ॥ शब्दतन्मात्रस्य वेदादिसर्वशब्दविशेषोपादानत्वमाह—**भावी**ति ॥ १४ ॥ तस्माद्वेदभावापन्नात्परमात्मनो जगच्छ्रीरुदेष्यत्युत्पत्स्यते । 'स भूरिति व्याहरत् स भुवमसृजत्', 'एत इति वै प्रजापतिर्देवानसृजत असृग्रमिति मनुष्यानिन्दव इति पितॄन्' इत्यादिश्रुतेरित्यर्थः ॥ १५ ॥ यदुक्तं भाविजीवादिनामिकेति तद्वायूत्पत्तौ तस्यैव प्राणत्वात्तद्धारणनिमित्तेन सिद्धमित्याह—**चिदि**ति । एवमुक्तप्रकारो वाय्वन्तःसंततिपरिवारो[4] यस्याः सा । तस्याः सर्वमूर्त्याकारहेतुतामाह—**बीज**मिति । रूपमत्र मूर्त्याकारः ॥ १६ ॥ तस्य व्यष्टिप्राणभावेनाध्यात्मिकसर्वक्रियाहेतुत्वमाह—**चतुर्दशे**ति । चतुर्दशभुवनभेदाच्चतुर्दशविधं प्राणिजालं तत उक्तात्प्राणवायोर्निमित्तात्स्वेन व्याप्तान्तरालं जगज्जठराणि ब्रह्माण्डोदराणि तद्रूपं गर्तौघं प्रसरिष्यति संचरिष्यति ॥ १७ ॥ तस्यैव वायुत्व-

१ मेतस्याः इति पाठः २ सहैव काल इति पाठः. ३ मूलात्मभावं इति पाठः. ४ सन्ततिः परिवारः इति पाठः.

पवनस्कन्धविस्तारं बीजं स्पर्शौघशाखिनः ।
सर्वभूतक्रियास्पन्दस्तस्मात्संप्रसरिष्यति ॥ १९
तत्रैव चिद्विलासेन प्रकाशोऽनुभवाद्भवेत् ।
तेजस्तन्मात्रकं तत्तु भविष्यदभिधार्थकम् ॥ २०
तत्सूर्याग्निविजृम्भादिबीजमालोकशाखिनः ।
तस्माद्रूपविभेदेन संसारः प्रसरिष्यति ॥ २१
भावयंस्तनुतामेव रसस्कन्ध इवाम्भसः ।
स्वदनं तस्य सङ्घस्य रसतन्मात्रमुच्यते ॥ २२
भाविवारिविलासात्मा तद्बीजं रसशाखिनः ।
अन्योन्यस्वदने तस्मात्संसारः प्रसरिष्यति ॥ २३
भविष्यद्रूपसंकल्पनामासौ कल्पनात्मकः ।
संकल्पात्मगुणैर्गन्धतन्मात्रत्वं प्रपश्यति ॥ २४
भाविभूगोलकत्वेन बीजमाकृतिशाखिनः ।
सर्वाधारात्मनस्तस्मात्संसारः प्रसरिष्यति ॥ २५
चिता विभाव्यमानानि तन्मात्राणि परस्परम् ।
स्वयं परिणतान्यन्तरम्बुनीव निरन्तरम् ॥ २६
तथैतानि विमिश्राणि विविक्तानि पुनर्यथा ।
न शुद्धान्युपलभ्यन्ते सर्वनाशान्तमेव हि ॥ २७
संवित्तिमात्ररूपाणि स्थितानि गगनोदरे ।
भवन्ति वटजालानि यथा बीजकणान्तरे ॥ २८
प्रसवं परिपश्यन्ति शतशाखं स्फुरन्ति च ।
परमाण्वन्तरे भान्ति क्षणात्कल्पीभवन्ति च ॥ २९
विवर्तमेव धावन्ति निर्विवर्तानि सन्ति च ।
चिद्वेधितानि सर्वाणि क्षणात्पिण्डीभवन्ति च ॥ ३०
तन्मात्रगणमेतत्स्यात्सा संकल्पात्मिका चितिः ।
वेदनात्त्रसरेण्वाभमनाकारैव पश्यति ॥ ३१
बीजं जगत्सु ननु पञ्चकमात्रमेव
बीजं पराव्यवहितस्थितिशक्तिराद्या ।
बीजं तदेव भवतीति सदानुभूतं
चिन्मात्रमेवमजमाद्यमतो जगच्छ्रीः ॥ ३२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे जगदुत्पत्तिवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥

---

भिमानोपहितचैतन्यस्य सर्वस्पर्शविशेषोपादानस्पर्शतन्मात्रभावमावहप्रवहाद्येकोनपञ्चाशत्पवनस्कन्धविभागेन सर्वपदार्थक्रियास्पन्दनिमित्तत्वं चाह—**पवनेति**। ... **अ सं प्राप्ते** ति द्वाभ्याम् । प्रागसंप्राप्ताभिधाचारापि वायुभावाभिमानजवात्प्रस्फुरद्वपुः ॥ १८ ॥ १९ ॥ ततस्तेजस उत्पत्तिमाह—**तत्रे**ति । चिद्विलासः प्रकाशात्मकत्वभावना । शेषं पूर्ववत् । तेजस्तन्मात्रकं रूपतन्मात्रकम् ॥ २० ॥ तत्तेजः । विजृम्भैव क्षणव्यादाना विद्युत् । आदिपदाच्चन्द्रनक्षत्रादि ॥२१॥ ततो जलोत्पत्तिमाह—**भावयन्नि**ति । स तेजोभूत आत्मा अम्भसो रसस्कन्ध इवाहमस्मीति तनुतां तच्छरीरतां परिच्छिन्नतां वा भावयन् संस्तद्भावमापद्यत इति शेषः । तस्य जलात्मकस्य सङ्घस्य मूर्तद्रव्यस्य जिह्वया आस्वादने मधुरमिदमिति यत्स्वदनं तद्रसविशेषोपादानसामान्यरूपत्वाद्रसतन्मात्रमुच्यत इत्यर्थः ॥ २२ ॥ तस्यैव रसस्येन्द्रियविषयभावेनान्योन्यस्वदने तद्विषयरागाद्युद्भवेन पुनःपुनर्विषयार्जनप्रवृत्त्यात्मा संसारः प्रसरिष्यतीत्यर्थः । एवं पूर्वत्रापि ॥ २३ ॥ ततः पृथिवीसर्गमाह—**भविष्यदि**ति । असौ जलभावापन्नः परमात्मा पृथिव्येवाहमिति संकल्पनात्मकः सन् भविष्यद्रूपसंकल्पनामा[१] भूत्वा गन्धसंकल्पात्मगुणैः स्वस्य गन्धतन्मात्रत्वं प्रपश्यतीत्यर्थः ॥२४॥ तस्योपयोगमाह—**भावी**ति । भूगोलकत्वेन ब्रह्माण्डगोलकत्वेन ज्योतिषप्रसिद्धभूगोलकत्वेन वा । आकृतिर्मनुष्याद्याकारः ॥२५॥ एवमुत्पन्नानां भूतानां मिश्रणेन ब्रह्माण्डाकारपरिणतिमाह—**चिते**ति । पूर्वोक्तभूताहंभावापन्नया चिता ब्रह्माण्डाकारेण विभाव्यमानानि अन्तर्दशगुणोत्तरस्वावरणान्तरम्बुनि बुद्बुदानीव ब्रह्माण्डात्मना परिणतानीत्यर्थः ॥ २६ ॥ कियत्कालं तेषां विमिश्रभावेनावस्थानं तदाह—**तथे**ति । एतानि भूतानि तथा विमिश्राणि यथा पुनः सर्वनाशपर्यन्तं न विविक्तानि शुद्धान्युपलभ्यन्ते ॥ २७ ॥ ब्रह्मसत्तया प्राक् सत्तामेव स्थूलात्मनाविर्भाव इति सदृष्टान्तमाह—**संवित्ती**ति । गगनमत्राव्याकृताकाशः ॥ २८ ॥ ननु सूक्ष्मतमत्वादनवकाशेषु तन्मात्रेषु स्थूलावस्थितिर्विरुद्धा तत्राह—**प्रसव**मिति । न वास्तवं तत्रावस्थानं किंतु मायिकप्रसवादिदर्शनमात्रं, तच्च परमाण्वायन्तरेऽपि संभवति । स्वप्ने सूक्ष्मतमनाडीच्छिद्रेष्वपि विशालतमजगद्दर्शनादिति भावः ॥ २९ ॥ तेषां स्थूलभावेऽपि न स्वरूपसौक्ष्म्यापायो विवर्तस्याविकारकत्वादित्याह—**विवर्त**मिति । तत्र हेतुः—**चिद्वेधितानी**ति । अविकारचिदनुविद्धत्वादित्यर्थः। अतएव न विलम्ब इत्याह—**क्षणादि**ति । परिणामपक्षे हि कूश्माण्डोपचय इव विलम्बः स्यात् ॥ ३० ॥ उक्तार्थंसारेणोपसंहरति—**तन्मात्रे**ति । एतदुक्तप्रकारम् । छान्दसी क्लीबता ॥ ३१ ॥ इत्थं च यदुक्तं ब्रह्मैव जगदाकारं भवतीति तत्सिद्धमित्याह—**बीज**मिति । जगतस्तन्मात्रपञ्चकं बीजं कारणं तस्य च बीजं परेण परमात्मना अव्यवहिता साक्षात्संबद्धा जगत्स्थितिहेतुर्मायाशक्तिरेव । इत्थंच तत्परमात्मतत्त्वमेव मायाशक्त्या बीजं भवन्मायापगमे तदेव भवतीति प्रतिज्ञातार्थसिद्धिरित्यर्थः ॥ ३२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जगदुत्पत्तिवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥

१ भविष्यतद्रूप इति पाठः.

# त्रयोदशः सर्गः १३

श्रीवसिष्ठ उवाच ।

परमे ब्रह्मणि स्फारे समे राम समस्थिते ।
अनुत्पन्ननभस्तेजस्तमःसत्ता चिदात्मनि ॥ १
पूर्वं चेत्यत्वकलनं सतश्चेत्यांशचेतनात् ।
उदेति चित्तकलनं चितिशक्तित्वचेतनात् ॥ २
ततो जीवत्वकलनं चेत्यसंयोगचेतनात् ।
ततोऽस्यं मायाकलनं चेत्यैकपरतावशात् ॥ ३
ततो बुद्धित्वकलनमहन्तापरिणामतः ।
एतदेव मनस्तादिशब्दतन्मात्रकादिमत् ॥ ४
उच्छूनादन्यतन्मात्रभावनाद्भूतरूपिणः ।
अयमित्थं महागुल्मो जगदादिर्विलोक्यते ॥ ५
झटित्येवं क्रमेणेति स्वप्ने पुरमिवाकृतम् ।
महाकाशमहाटव्यामुद्भूयोद्भूय नश्यति ॥ ६
जगत्करञ्जकुञ्जानां बीजमेतदवापजम् ।
नापेक्षते किंचिदपि क्षितिवार्यनलादिकम् ॥ ७
एतच्चिदात्मकं पश्चात्किलोर्व्यादि करिष्यति ।
स्वं स्वप्नवित्पुरमिव चिन्मात्रात्मकमेव यत् ॥ ८
जगदाद्यङ्कुरं यत्र तत्रस्थमपि मुञ्चति ।
जगतः पञ्चकं बीजं पञ्चकस्य चिदव्यया ॥ ९
यद्बीजं तत्फलं विद्धि तस्माद्ब्रह्ममयं जगत् ।
एवमेष महाकाशे सर्गादौ पञ्चको गणः ॥ १०
चिच्छक्त्या स्वाङ्गभूतात्मा कल्पितोऽस्ति न वास्तवः ।
अनेनोच्छूनतामेत्य यदपीदं वितन्यते ॥ ११
तदप्याकाशरूपात्मकल्पनात्मनि सन्मयम् ।
क्वचिन्न नाम तत्सिद्धं यदसिद्धेन साध्यते ॥ १२
स्वरूपं यद्विकल्पात्म कथं तत्सत्यतामियात् ।
अथ चेत्पञ्चकं ब्रह्म ब्रह्मात्मकतया धिया ॥ १३
तत्पञ्चकं विद्धि प्रौढो ब्रह्मैव त्रिजगत्क्रमः ।
यथा स्फुरति सर्गादावेष पञ्चकसंभवः ॥ १४
तथैवाद्येह भूतत्वे याति कारणतां स्वयम् ।
एवं न जायते किंचिज्जगज्जातं न लक्ष्यते ॥ १५
स्वप्नसंकल्पपुरवदसत्सदनुभूयते ।
ब्रह्माकाशपराकाशे जीवाकाशत्वमात्मनि ॥ १६
इति चित्यवदातात्मा पृथ्व्यादीनामसंभवात् ।
इत्येष जीवः कथितो व्योम्नि खात्मा इवोदितः ॥ १७

---

सर्गोक्त्या प्राग्जगद्भावो वर्णितो ब्रह्मणोऽनृतः ।
जीवभावोऽधुना तस्य देहाद्याप्तिश्च वर्ण्यते ॥

प्रलये सुषुप्ताविव विलयेन मायाशबलब्रह्मभावं प्राप्तानां जीवोपाधीनां पुनराविर्भावक्रमं सहेतुकं श्रीवसिष्ठ उवाच—**परम** इत्यादिपञ्चभिः । विकारकृतवैषम्यशून्यमायाशबलत्वात्समेऽसमे चाधिष्ठाने स्थिते अनुत्पन्नानां नभस्तेजस्तमआदीनां या कारणात्मना सत्ता तद्रूपे चिदात्मनि ॥ १ ॥ चितश्चेतयितृभावलक्षणजीवत्वस्य विषयकरणसिद्धिपूर्वकत्वात्तदध्यासं प्रथमं दर्शयति—**पूर्व**मिति । कलनं कल्पनम् । तत्र हेतुः सद्वस्तुनस्तत्प्रथा स्वभावतैव । एवमुत्तरत्रापि । यदेवाध्यस्यते तत्प्रथास्वभावतायाश्चिति पूर्वसिद्धत्वात्सर्वत्र निमित्तता ॥ २ ॥ मायात्राहंभावः । 'अहंभावकलनम्' इति पाठे तु स्पष्टम् । सा हि जीवभावस्य निरूढावस्था एकपरता तावन्मात्रोऽहमित्यभिमानः ॥ ३ ॥ परिणामत उपचयतः । इत्थं धर्मसिद्धौ शब्दादिविषयमात्राणां वासनात्मना स्वान्तर्गतानां स्वप्न इव मननात्तद्घटितं मनोरूपमेतदेव संपद्यत इत्यर्थः ॥ ४ ॥ तस्य स्थूलदेहभावापत्तिमाह—**उच्छूनादि**ति । वासनात्मनां शब्दतन्मात्राणामन्यैः स्पर्शादितन्मात्रैर्भावनान्मेलनात्पञ्चीकृतभावेनोच्छूनादाध्यात्मिकमहाभूतरूपिणः । स्थूलदेहभावापन्नान्मनस इति यावत् ॥ ५ ॥ उक्तमुपसंहरति—**झटिती**त्यादिना । अकृतमनिच्छासंपन्नम् ॥ ६ ॥ ७ ॥ पश्चादुत्तरकाले । स्वप्नवित्स्वप्नद्रष्टा । स्वं स्वानुभूयमानम् । वस्तुतस्तु तदसङ्गमेवेत्याह—**चिन्मात्रात्मकमेवे**ति । यच्चिन्मात्रात्मकं तत् यत्रतत्रस्थमपि जगदाद्यङ्कुरं मुञ्चत्येवेत्युत्तरेणान्वयः ॥ ८ ॥ पञ्चकं तन्मात्राणाम् ॥ ९ ॥ एवमित्यादेः सर्वस्योत्तरान्वयः ॥ १० ॥ चिच्छक्त्या चेत्यप्रथनशक्त्या स्वाङ्गभूतात्मा स्वशरीरमिव संपन्नस्वरूपः । अनेन पञ्चकगणेन । इदं स्थूलम् ॥ ११ ॥ आकाशरूपमिव स्वकल्पनाधिष्ठानात्मनि स्थितत्वात्सन्मयं न स्वत इत्यर्थः । तदेवोपपादयति—**क्वचिदि**ति ॥ १२ ॥ ननु पञ्चकगणस्य ब्रह्मण्यध्यस्तस्यास्तु ब्रह्ममात्रता, तत्कार्यस्य तु सा कथं तत्राह—**अथे**ति ॥ १३ ॥ तत्पञ्चकं तत्कार्यस्थूलभूतपञ्चकमपि चिद्ब्रह्मैव । हीति कारणकार्ययोरेकत्वप्रसिद्धेर्हेतोरित्यर्थः । तथाच प्रौढो रूढस्त्रिजगत्क्रमो ब्रह्मैवेति सिद्धमित्यर्थः । कथं तर्ह्यभिन्ने [4]कार्यकारणत्वव्यवहारस्तत्राह—**यथे**ति ॥ १४ ॥ भूतत्वे पौर्वकालिकत्वे । स्वयं औत्तरकालिकं स्वं प्रत्येवेति शेषः । उपसंहरति—**एव**मिति ॥ १५ ॥ तदुपाधिकजीवभावोऽप्यसन्नेवेति दर्शयन्नसतः सत्त्वानुभावसंभावनां दृष्टान्तेनापनुदति—**स्वप्ने**ति । ब्रह्माकाशरूपे पराकाशे परमप्रकाशे आत्मनि जीवाकाशत्वं असत्सदिवानुभूयते ॥ १६ ॥ अवदातात्मा प्रपश्यतीत्यध्याहृत्यान्वयः । वस्तुतः पृथ्व्यादीनां परिच्छेदोपाधीनामसंभवाद्व्योम्नि गन्धर्वनगरगृहघटादिपरिच्छिन्नः खादेव कल्पनया उदितः । खात्मैवैष जीवः कथित इत्यर्थः ॥ १७ ॥

---

१ ततोऽहंभावकलनं इति पाठः. २ भाव[illegible] इति पाठः. ३ [illegible] इति पाठः. ४ कार्येति पदं क्वचिन्न लभ्यते.

जीवाकाशस्त्विमं देहं यथा विन्दति तच्छृणु ।
जीवाकाशः स्वमेवासौ तस्मिंस्तु परमेश्वरे ॥ १८
अणुतेजःकणोऽस्मीति स्वयं चेतति चिन्तया ।
यत्तदेवोच्छूनमिव भावयत्यात्मनाम्बरे ॥ १९
असदेव सदाकारं संकल्पेन्दुर्यथा न सन् ।
तमेव भावयन् द्रष्टृदृश्यरूपतया स्थितः ॥ २०
एक एव द्वितामेति स्वप्ने स्वमृतिबोधवत् ।
किंचित्स्थौल्यमिवादत्ते ततस्तारकतां विदन् ॥ २१
यथाभावितमात्रार्थभाविताद्विश्वरूपतः ।
स एव स्वात्मा सततोऽप्ययं सोहमिति स्वयम् ॥ २२
चित्तात्प्रत्ययमाधत्ते स्वप्ने स्वासिव पान्थताम् ।
तारकाकारमाकारं भाविदेहाभिधं तथा ॥ २३
भावयत्येति तद्भावं चित्तं चेत्यार्थतामिव ।
परित्यज्यैव तद्बाह्यं ततस्तारककोटरे ॥ २४
अन्तर्भाति बहिष्ठोऽपि पर्वतो मुकुरे यथा ।
कूपसंस्थो यथा देहः समुद्गकगतं वचः ॥ २५
स्वप्नसंकल्पयोः संविद्वेत्त्येतज्जीवकोऽणुके ।
स्वरूपतारकान्तस्थो जीवोऽयं चेतति स्वयम् ॥ २६

तदेतद्बुद्धिचित्तादिज्ञानसत्तादिरूपकम् ।
जीवाकाशः स्वतस्तत्र तारकाकाशकोशगम् ॥ २७
प्रेक्षेऽहमिति भावेन द्रष्टुं प्रसरतीव खे ।
ततो रन्ध्रद्वयेनैव भाविबाह्याभिधं पुनः ॥ २८
येन पश्यति तन्नेत्रयुगं नाम्ना भविष्यति ।
येन स्पृशति सा वै त्वग्यच्छृणोति श्रुतिस्तु सा ॥ २९
येन जिघ्रति तद्घ्राणं स स्वमात्मनि पश्यति ।
तत्तस्य स्वदनं पश्चाद्रसना चोल्लसिष्यति ॥ ३०
स्पन्दते यत्स तद्वायुश्चेष्टा कर्मेन्द्रियव्रजम् ।
रूपालोकमनस्कारजातमित्यपि भावयत् ॥ ३१
आतिवाहिकदेहात्मा तिष्ठत्यम्बरमम्बरे ।
एवमुच्छूनतां तस्मिन्भावयंस्तेजसः कणे ॥ ३२
असत्यां सत्यसंकाशां ब्रह्मास्ते जीवशब्दवत् ।
इत्थं स जीवशब्दार्थः कलनाकुलतां गतः ॥ ३३
आतिवाहिकदेहात्मा चित्तदेहाम्बराकृतिः ।
स्वकल्पनान्त आकारमण्डं संस्थं प्रपश्यति ॥ ३४
कश्चिज्जलगतं वेत्ति कश्चित्सम्राट्स्वरूपिणम् ।
भाविब्रह्माण्डकलनां पश्यत्यनुभवत्यपि ॥ ३५

---

एवं सामान्याभिमानेन ब्रह्मणः समष्टिजीवभावमुक्त्वा विशेषाभिमानेन व्यष्टितद्भावेन स्थूलदेहान्ततादात्म्यारोपक्रमं प्रपञ्चयितुमारभते—**जीवाकाश** इत्यादिना। तत्रादौ भावनयैव समष्ट्युपाधेर्व्यष्ट्यन्तःकरणाङ्कुरारम्भं दर्शयति—**जीवाकाश** इत्यादिना तस्मिन्परमेश्वरे कल्पितः समष्टिजीवाकाशो विस्तृतमपि स्वं अणुरल्पतरः स्फुलिङ्गवत्तेजःकणोऽस्मीति चिन्तया तथैवात्मानं चेतत्यनुभवतीत्युत्तरेणान्वयः । एतदेवाभिप्रेत्याह श्रुतिः 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युचरन्त्येवमेवास्मादात्मनः सर्वे एत आत्मानो व्युचरन्ति' इति ॥ १८ ॥ तस्याभावनोपचयादुपचयमाह—**यदि**त्यादिना । यच्चेतति तदेवोच्छूनमिव भावयति॥१९॥ यद्भावयति तत्संकल्पेन्दुर्यथा न सन् तथा असदेवेत्यर्थः । तद्भावनफलमाह—**तमे**वेति ॥ २० ॥ द्रष्टृदृश्यभावसंवलने तस्योपचयं दर्शयति-**किंचिदि**ति । अणुतेजःकणभावमपहाय तारकासादृश्यं विदन् किंचित्स्थौल्यमादत्त इव । अयमेवास्य भूतमात्रासंवलितलिङ्गात्मभावः ॥२१॥ अयं जीवस्ततस्तादृशवेदनात्सतारकाकार एव स्वात्मा आस बभूव । तत्र हेतुद्वयमाह—**यथाभावि**तेति । सोऽहमिति तद्भावाभिनयः ॥ २२ ॥ अयं लिङ्गदेहप्रत्ययो भाविस्थूलदेहप्रत्ययश्च चित्तकल्पनावशादेवेत्याह—**चित्ता**दिति । तारकाकारं प्रागुक्तलिङ्गाकारम् ॥२३॥ तत्र दृष्टान्तश्चित्तं चेत्यार्थतां विषयाकारतामिवेति । वस्तुनः सर्वोपाधिबाह्यस्यापि मोहात्तद्भावपरित्यागेनोपाध्यन्तर्भानं सदृष्टान्तमुपपादयंस्तस्य स्वप्नादिवासनामयसंसारमाह—**परित्यज्यै**वेत्यादिना ।

तारककोटरे उपाध्यन्तःकल्पिताकाशे ॥ २४ ॥ यथा सर्वत्र व्यवहारसमर्थो देहः कूपसंस्थस्तावन्मात्रव्यवहारी भाति । यथा वा पूराच्छ्रवणयोग्यमप्याक्रोशादिवचः समुद्गकगतं संपुटकावरुद्धमबहिःप्रसारि ॥ २५ ॥ यथा वा स्वप्नसंकल्पयोः संविदेहान्तरेव स्वप्नादि पश्यति तथा अणुके प्रागुक्तस्फुलिङ्गसदृशोपाधौ स्वरूपतया कल्पिततारकान्तस्थो वासनामयदेहादिव्यवहारं चेततीत्यर्थः । चित्तं चेत्यार्थतामिवेति दृष्टान्तपक्षेऽपि परित्यज्येत्यादिसार्धश्लोकद्वयमेवं योज्यम् । स्वप्नसंकल्पयोर्बहिष्ठोऽपि विषयस्तद्बाह्यरूपं परित्यज्यैव अन्तर्भाति यथा कूपजलप्रतिबिम्बितो देहो यथा वा गुहादिसंपुटगतं प्रतिध्वनिवचस्तथा जीवक एतद्वासनामयं वेद्यं वेत्ति । शिष्टं प्राग्वत् ॥ २६ ॥ तदेतद्वासनामयदेहादिव्यवहारदशा निष्कर्षे बुद्धिचित्तादिपरिणामत्वात्तत्तद्रूपकं परमार्थदशा विमर्शे तु ज्ञानसत्तानन्दरूपकमेव । ततस्त्स्थूलदेहभावनया तद्भावापन्नस्य चक्षुरादिकल्पनया जाग्रद्व्यवहारसंसारं प्रपञ्चयति—**जीवाकाश** इत्यादिना॥२७॥२८॥२९॥ स्वदनं रसनेन्द्रियम् ॥ ३० ॥ यत्स्पन्दते तद्वायुः प्राणादिवृत्तिः ॥ ३१ ॥ भावयत् अध्यस्यत् आस्ते ब्रह्म ॥ ३२ ॥ ३३ ॥ चित्तदेहाम्बरमेव स्थौल्येन स्थूलदेहाकृतिर्यस्य । स्फुलिङ्गाकारादिबाह्यविषयान्तस्वकल्पनाकारं ब्रह्म तदन्ते संस्थं आवरणादिसंस्थायुक्तमण्डं ब्रह्माण्डं प्रपश्यतीत्यर्थः ॥ ३४ ॥ तस्यैव जलान्तर्गतब्रह्माण्डशरीराद्यंभाववेदनं तदन्तश्चतुर्मुखशरीराद्यंभाव-

---

१ उच्छून्यभावं इति पाठः. २ भाविस्वाथस्वरूपतः इति पाठः. ३ भावयन्याति इति पाठः.

४ वेत्त्येवं जीवक इति पाठः. ५ जीवाकाशस्ततस्तत्रेति पाठः. ६ भावयंस्तेजसः इति पाठः.

आत्मगर्भगृहं चित्ताद्यथासंकल्पमात्मनः ।
देशकालक्रियाद्रव्यकल्पनावेदनं स तत् ॥ ३६
भावयञ्छब्दनिर्माता शब्दैर्बध्नाति कल्पितैः ।
आतिवाहिकदेहोऽसावित्यसत्यजगद्भ्रमे ॥ ३७
असत्य एव कचति स्वप्ने खोड्डयनं यथा ।
इत्यनुत्पन्न एवासौ स्वयंभूः स्वयमुत्थितः ॥ ३८
आतिवाहिकदेहात्मा प्रभुराद्यः प्रजापतिः ।
एतस्मिन्नपि संपन्ने ब्रह्माण्डाकारिणि भ्रमे ॥ ३९
न किंचिदपि संपन्नं न च जातं न दृश्यते ।
तद्ब्रह्माकाशमाकाशमेव स्थितमनन्तकम् ॥ ४०
संकल्पनगराकारमेतत्सदपि नैव सत् ।
अनिर्मितमरागं च एतद्वै चित्रमुत्थितम् ॥ ४१
अकृतं चानुभूतं च न सत्यं सत्यवत्स्थितम् ।
महाकल्पे विमुक्तत्वाद्ब्रह्मादीनामसंशयम् ॥ ४२
स्मृतिर्न प्राक्तनी काचित्कारणं वा स्वयंभुवः ।
तेन यादृक्स्वयंभूः स्यात्तादृक्तज्जमिदं स्मृतम् ॥ ४३
अनाद्यनुभवस्त्वित्थं योऽत्रास्ति वनिकादिके ।
स्वप्नानुभूतं पृथ्व्यादि प्रबोधे यादृशं भवेत् ॥ ४४
स्मृतः स व्योममात्रात्मा सर्वदैव स्मृतं जगत् ।
यत्र यत्र यथा तोये द्रवत्वं नाम भिद्यते ॥ ४५
तत्र तत्र तथा नान्यः सर्गोऽस्ति परमात्मनि ।
सृष्टिरेवमियं प्रौढा सम एव स्वयं स्थितः ॥ ४६
भात्येवं नाम ब्रह्माण्डं व्योमात्मैवातिनिर्मलम् ।
दृश्यमेवमिदं शान्तं स्वात्मनिर्मितविभ्रमम् ॥ ४७
निराधारं निराधेयमद्वैतं चैक्यवर्जितम् ।
जगत्संविदि जातायामपि जातं न किंचन ॥ ४८
परमाकाशमाशून्यमच्छमेव व्यवस्थितम् ।
सर्वसंसारता नास्ति यदेव तदवस्थितम् ॥ ४९
नाधेयं तत्र नाधारो न दृश्यं न च द्रष्टृता ।
ब्रह्माण्डं नास्ति न ब्रह्मा न च वैतण्डिका कचित् ॥ ५०
न जगन्नापि जगती शान्तमेवाखिलं स्थितम् ।
ब्रह्मैव कचति स्वच्छमित्थमात्मात्मनात्मनि ॥ ५१
चित्त्वाद्द्रवत्वात्सलिलमिवावर्ततयात्मनि ।
असदेवेदमाभाति सदिवेहानुभूयते ॥ ५२
विनश्यत्यसदेवान्ते स्वप्ने स्वमरणं यथा ।
अथवा स्वस्वरूपत्वात्सदेवेदमनामयम् ।
अखण्डितमनाद्यन्तं ज्ञानमात्राम्बरोदरम् ॥ ५३

आकाश एव परमे प्रथमः प्रजेशो
नित्यं स्वयं कचति शून्यतया समो यः ।
स ह्यातिवाहिकवपुर्ननु भूतरूपी
पृथ्व्यादि तेन न सदस्ति यथा न जातम् ॥ ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे स्वयंभूत्पत्तिवर्णनं नाम त्रयोदशः सर्गः ॥ १३ ॥

---

वेदनं चेति द्वैविध्यमाह—**कश्चिदिति** ॥३५॥ आत्मन आत्मत्वेनाभिमताच्चित्तादेव निमित्ताद्यथासंकल्पमात्मनो गर्भगृहवासनिमित्तत्वाद्गर्भगृहं देशादिकल्पनावेदनं भावयन्नामादिनिर्मातेश्वर एव तत्तच्छब्दैस्तांस्तानर्थानात्मानं च बध्नातीत्युत्तरेणान्वयः ॥३६॥३७॥उपपादिताया उत्पत्त्याख्यायिकायाः प्रस्तुतोपयोगमाह—**इत्यनुत्पन्न** इति ॥३८॥३९॥४०॥ अरागं रङ्गद्रव्यशून्यम् ॥४१॥ बाह्यसामग्र्या अनिर्मितमान्तरप्रयत्नेन त्वकृतमिति भेदः । ननु तर्ह्यदृष्टसंस्कारादिसामग्रीजन्यमेव जगत्किं न स्यात्तत्राह—**महाकल्पे** इति । अयं भावः । 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इत्यादिस्मृतिसूत्रोपदर्शितन्यायेन महाकल्पान्ते प्राक्तनानां ब्रह्मादीनां मुक्तत्वावधारणान्न तदीयादृष्टसंस्कारेणाग्रिमजगन्निर्माणम् । यस्तूपासकः कल्पादौ हिरण्यगर्भादिपदं लभते न तेन कदापि प्रागिवचित्रं जगत् सृष्टमित्यनुभवाभावे तत्संस्कारासंभवाज्जगतो न संस्कारजत्वमिति स्वप्नेन्द्रजालवदकस्मादेवाविद्ययैवोद्भूतत्वान्मिथ्यात्वमेवेति ॥ ४२ ॥ ४३ ॥ ननु तर्ह्यनादिसाक्ष्यनुभवादेव तत्संस्कारोऽस्तु तज्जश्च प्रपञ्चोऽस्तु तत्राह—**अनादीति** । अवनिकादिके पृथ्व्यादिसर्गविषये । यादृशं तादृशं भवेदिति शेषः । साक्षिवेद्यस्वप्रादेर्मिथ्यात्वदृष्टेस्तज्जनितसंस्कारजस्यापि मिथ्यात्वमेव स्यादिति भावः ॥ ४४ ॥ यादृक्स्वयंभूस्तादृक्तज्जमिति यदुक्तं तद्विवृणोति-**स्मृत** इति । स स्वयंभूः स्मृत इव स्मृतः स्मर्यमाणातीतपदार्थवद्व्योममात्रात्मा शून्यमात्रस्वभावस्तथा जगदपीत्यर्थः । यत्र यत्र देशे काले च यथा तोये द्रवत्वं न भिद्यत इत्यग्रिमनञोऽत्रापि संबन्धः । नामेति प्रसिद्धौ ॥ ४५ ॥ प्रौढा भाति । परमार्थतस्तु समो जगद्वैषम्यशून्य एव स्थितः ॥ ४६ ॥ उक्तमेव विवृणोति—**भातीत्यादिना** ॥ ४७ ॥ द्वैतव्यवहाराभावे व्यावर्त्याभावादेकत्वसंख्ययापि वर्जितम् । संविदि भ्रान्तौ ॥ ४८ ॥ सर्वः संसारो यस्मिंस्तद्भावो नास्ति ॥ ४९ ॥ वैतण्डिका मोहमदान्धजनवेतण्डघटा । जगद्विमर्शे स्थाप्यपक्षाभावात्प्रसक्ता वादिनो वैतण्डिकता वा ॥ ५० ॥ ५१ ॥ ५२ ॥ इत्थमपवाददृष्ट्या स्वतो जगतः शून्यत्वमुक्त्वा अधिष्ठानदृष्ट्या त्वाह—**अथवेति** ॥ ५३ ॥ सिंहावलोकनन्यायेन प्रागुक्तं सर्वमनुसंधायोपसंहरति—**आकाश एवेति** । परमे ब्रह्मणि प्रजेशः स्वयंभूराकाशः शून्यमेव । यः समः परमात्मा स एव शून्यप्रजेशाद्यात्मना कचति प्रथते । हि यस्मात्स प्रजेश आतिवाहिक-

---

१ एतत् खे चित्रं इति पाठः.

२ योऽत्रास्त्यवनिकादिके इति पाठः. ३ तथा न इति पाठः.

# चतुर्दशः सर्गः १४

श्रीवसिष्ठ उवाच ।

इत्थं जगदहंतादिदृश्यजातं न किंचन ।
अजातत्वाच्च नास्त्येव यच्चास्ति परमेव तत् ॥ १
परमाकाशमेवादौ जीवतां चेतति स्वयम् ।
निःस्पन्दाम्भोधिकुहरे सलिलं स्पन्दतामिव ॥ २
आकाशरूपमजहदेवं वेत्तीव हृद्यताम् ।
स्वप्नसंकल्पशैलादाविव चिद्वृत्तिरान्तरी ॥ ३
पृथ्व्यादिरहितो देहो यो विराडात्मको महान् ।
आतिवाहिक एवासौ चिन्मात्राच्छनभोमयः ॥ ४
अक्षयः स्वप्नशैलाभः स्थिरस्वप्नपुरोपमः ।
चित्रकृत्स्थिरचित्तस्थचित्रसैन्यसमाकृतिः ॥ ५
अनिखातमहास्तम्भपुत्रिकौघसमोपमः ।
ब्रह्माकाशेऽनिखातात्मा सुस्तम्भे शालभञ्जिका ॥ ६
आद्यः प्रजापतिः पूर्वं स्वयंभूरिति विश्रुतः ।
प्राक्तनानां स्वकार्याणामभावादप्यकारणः ॥ ७
महाप्रलयपर्यन्तेष्वाद्यकालपितामहाः ।
मुच्यन्ते सर्वे एवातः प्राक्तनं कर्म तेषु किम् ॥ ८
सोऽकुड्य एव कुड्यात्मा दृश्यादृश्यः स्वयंस्थितः ।
न च दृश्यं न च द्रष्टा न स्रष्टा सर्वमेव च ॥ ९
प्रतिशब्दपदार्थानां सर्वेषामेष एव सः ।
तस्मादुदेति जीवाली दीपाली दीपकादिव ॥ १०
संकल्प एव संकल्पात्किलेति क्ष्मादिवर्जितः ।
आदिमादिव निःशून्यः स्वप्नात्स्वप्नान्तरं यथा ॥ ११
अस्मादेकप्रतिस्पन्दाज्जीवाः संप्रसरन्ति ये ।
सहकारिकारणानामभावाच्च स एव ते ॥ १२
सहकारिकारणानामभावे कार्यकारणम् ।
एकमेतदतो नान्यः परस्मात्सर्गविभ्रमः ॥ १३
ब्रह्मवाद्यो विराडात्मा विराडात्मैव सर्गता ।
जीवाकाशः स एवेत्थं स्थितः पृथ्व्याद्यसद्यतः ॥ १४

श्रीराम उवाच ।

किं स्यात्परिमितो जीवो राशिराहो अनन्तकः ।
आहोस्विदस्त्यनन्तात्मा जीवपिण्डोऽचलोपमः ॥ १५
धाराः पयोमुच इव शीकरा इव वारिधेः ।
कणास्तप्तायस इव कस्मान्निर्यान्ति जीवकाः ॥ १६

वपुर्मनोमयशरीरो न पाञ्चभौतिकः । तेन तत्संकल्पमात्ररूपत्वेन पृथ्व्यादि न सत् सत्यम् । यथा न जातमनुत्पन्नं शशशृङ्गादि नास्ति तद्वदित्यर्थः । यथा न जातं नास्ति च तथोपवर्णितमिति शेषो वा ॥ ५४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे स्वयंभूत्पत्तिवर्णनं नाम त्रयोदशः सर्गः ॥ १३ ॥

प्राग्वर्णिते जीवभावे परिच्छेदादिसंशयान् ।
युक्त्या निरस्य ब्रह्मैक्यं शिष्टमत्रानुवर्ण्यते ॥ १ ॥

तत्रादौ समष्टिविराड्जीवपरिच्छेदनिरासाय वृत्तानुवादेन भूमिकां रचयति—**इत्थ**मित्यादिना ॥ १ ॥ तदनुगुणां विराड्देहकल्पनां[2] विवक्षुस्तदर्थं समष्टिजीवभावसिद्धिमाह—**परमे**ति ॥२॥ आकाशरूपमजहदित्येतत्पूर्वान्वयि । आन्तरी संकल्पात्मिका चिद्वृत्तिरेवं वक्ष्यमाणविराडुपाधिविषयां हृद्यतां आत्मताभ्रान्त्या प्रेमास्पदतां वेत्तीव ॥ ३ ॥ संकल्पजत्वोक्तेः फलं दर्शयति—**पृथ्व्यादी**ति ॥ ४ ॥ क्षयो निवासस्तद्रहितः । स्थिरं चिरस्थायि स्वप्नपुरं यदि स्यात्तदा तदुपमः । चित्रकृतः स्थिरं निश्चलं यदि चित्रं स्यात्तदा तद्वासनात्मकचित्रसैन्यसमाकृतिः ॥ ५ ॥ अनिखाता अनुत्कीर्णा ये महास्तम्भपुत्रिकौघास्तत्समाश्च येऽन्ये ते सर्वेऽप्युपमा यस्य । ब्रह्माकाशलक्षणे सुस्तम्भे अनिखातात्मा अनुत्कीर्णस्वरूपा शालभञ्जिकेति रूपकम् ॥ ६ ॥ आधिभौतिकं रूपं मिथ्येत्युक्त्वा तस्याधिदैविकमपि तत्तथैवेत्याह—**आद्य** इत्यादिना । तत्र हेतून्प्राग्वर्णितानेव स्मारयति—**प्राक्तनाना**मित्यादिसार्धेन । स्वकार्याणां स्वकर्मणाम् ॥७॥८॥ अकुड्ये दर्पणादौ प्रतिबिम्बकुड्यात्मेव दृश्योऽप्यसत्त्वान्न दर्शनार्हः । असत्त्वमुपपादयितुमसङ्गनिर्विकारचिति द्रष्टा दृश्यं दर्शनं, स्रष्टा सृष्टिः सर्जनं, भोक्ता भोग्यं भोग इति त्रिपुटीत्रयासंभवमाह—**न चे**ति । सर्वमित्यनुक्तषट्कपरिग्रहः ॥ ९ ॥ एवं सर्वनिषेधेऽपि न प्रतिशब्दार्थानां शून्यता । यस्मादेष प्रत्यगात्मैव प्रतिशब्दपदार्थानां स आत्मा स्थितः ॥ १० ॥ घनसंकल्पात्मकविरादकार्यत्वाद्व्यष्टिदेहिनामपि संकल्पमात्रमयत्वं न सत्यपृथ्व्यादिघटितत्वमित्याह—**संकल्प** इति । यथा आदिमात् हिरण्यगर्भान्मिथ्यात्वान्नितरां शून्यो विराडुत्पन्नस्तद्वद्विराजो व्यष्ट्यात्मापीत्यर्थः[1] ॥ ११ ॥ एकस्वभावत्वेनैव व्यष्टिसमष्ट्योरेकत्वं प्रसाध्य तेन ब्रह्मैक्यपरिशेषः सिद्ध इत्याह—**अस्मादि**त्यादिना । ये व्यष्टिजीवाः सहकारिकारणानामभावादेकोऽसहाय एव परिस्पन्दते तथाविधादस्माद्विराजः प्रसरन्ति ते स एव नान्ये । तथाविधाद्वृक्षात्प्रसृतानां शाखादीनां ततो भेदादर्शनादिति भावः ॥१२॥१३॥ ॥ १४ ॥ व्यष्टिसमष्टितन्मूलानामेकत्वे व्यष्टिसमष्ट्योरवास्तवत्वं तन्मूलस्यैव वस्तुतेति कुतः मूलसमष्ट्योरवास्तवत्वं व्यष्टिविभागस्यैव प्रत्यक्षादिप्रमाणसिद्धस्य वास्तवत्वं किं न स्यात्सेनासमाजादौ समष्ट्यपगमेऽपि व्यष्टिपरिशेषेण तस्याः सत्यत्वक्लृप्तेरिति मन्यमानः श्रीराम उवाच—**किं स्यादि**ति । व्यष्टिमात्रसत्यत्वे व्यष्टिजीव एवैकबुद्धिपरिमितत्वादेकदेशावस्थितेर्वा परस्परसंश्लेषेणैकपिण्डात्मतापत्तेर्वा कल्पितसमष्ट्यात्मा संभाव्यत इति भावः ॥ १५ ॥ अवश्यं चैवमभ्युपेयमन्यथा वृष्टिवारिधि-

१ ध्वाधा किल इति पाठः. २ विराड्विग्र[illegible] इति पाठः.

१ दृश्यात्मापि इति पाठः.

इति मे भगवन्ब्रूहि जीवजालविनिर्णयम् ।
ज्ञातमेतन्मया प्रायस्तदेव प्रकटीकुरु ॥ १७

श्रीवसिष्ठ उवाच ।

एक एव न जीवोऽस्ति राशीनां संभवः कुतः ।
शशशृङ्गं समुड्डीय प्रयातीव हि ते वचः ॥ १८
न जीवोऽस्ति न जीवानां राशयः सन्ति राघव ।
न चैकः पर्वतप्रख्यो जीवपिण्डोऽस्ति कश्चन ॥ १९
जीवशब्दार्थकलनाः समस्तकलनान्विताः ।
नेह काश्चन सन्तीति निश्चयोऽस्तु तवाचलः ॥ २०
शुद्धचिन्मात्रममलं ब्रह्मास्तीह हि सर्वगम् ।
तद्यथा सर्वशक्तित्वाद्विन्दते याः स्वयं कलाः ॥ २१
चिन्मात्रानुक्रमेणैव संप्रफुल्ललतामिव ।
ननु मूर्ताममूर्तां वा तामेवाशु प्रपश्यति ॥ २२
जीवो बुद्धिः क्रियास्पन्दो मनोद्वित्वैक्यमित्यपि ।
स्वसत्तां प्रकचन्तीं तां नियोजयति वेदने ॥ २३
साऽबुद्धेव भवत्येवं भवेद्ब्रह्मैव बोधतः ।
अबोधः प्रेक्षया याति नाशं न तु प्रबुध्यते ॥ २४
यथान्धकारो दीपेन प्रेक्ष्यमाणः प्रणश्यति ।
न चास्य ज्ञायते तत्त्वमबोधस्यैवमेव हि ॥ २५
एवं ब्रह्मैव जीवात्मा निर्विभागो निरन्तरः ।
सर्वशक्तिरनाद्यन्तो महाचित्साररूपवान् ॥ २६
सर्वानणुतया त्वस्य न कचिद्भेदकल्पना ।
विद्यते या हि कलना सा तदेवानुभूतितः ॥ २७

श्रीराम उवाच ।

एवमेतत्कथं ब्रह्मन्नेकजीवेच्छयाखिलाः ।
जगज्जीवा न युज्यन्ते महाजीवैकतावशात् ॥ २८

श्रीवसिष्ठ उवाच ।

महाजीवात्म तद्ब्रह्म सर्वशक्तिमयात्मकम् ।
स्थितं तथेच्छमेवेह निर्विभागं निरन्तरम् ॥ २९
यदेवेच्छति तत्तस्य भवत्याशु महात्मनः ।
पूर्वं तेनेष्टमिच्छादि ततो द्वित्वमुदेति यत् ॥ ३०
पश्चाद्द्वित्वविभक्तानां स्वशक्तीनां प्रकल्पितः ।
अनेनेत्थं हि भवतीत्येवं तेन क्रियाक्रमः ॥ ३१
तं विनानुदये त्वासां प्रधानेच्छैव रोहति ।
शक्त्या ह्यजातया ग्राह्या नियमोऽयं प्रकल्पितः ॥ ३२
यस्या जीवाभिधानायाः शक्त्यपेक्षा फलत्यसौ ।
प्रधानशक्तिनियमानुष्ठानेन विना न तु ॥ ३३

जलकणवद्विस्फुलिङ्गवद्वा समष्टेरुद्भवे अनित्यत्वापत्त्या कृतहानाकृताभ्यागमः स्यादित्याशयेनाह—**धारा** इति । **कस्मादि**ति । यस्मान्निर्यान्ति तन्न संभावयितुं शक्यमित्यर्थः ॥ १६ ॥ विशेषजिज्ञासया वैपरीत्यापादनं न दुर्मेधस्तया त्वदाशयानवबोधादित्याह—**ज्ञात**मिति ॥ १७ प्रयोजनवद्ब्रह्मात्मैकत्वसिद्धये एकाधिष्ठाना अनेककल्पना लघीयसीति समष्टिजीवं परिकल्प्य तदुपहितव्यष्टिकल्पना मयोक्ता न व्यष्टिसमष्ट्योरन्यतरसत्यत्वाय जीवोत्पत्त्यादिप्रतिपादनाय वा तत्र च न त्वदाशङ्काप्रसर इत्याशयेन श्रीवसिष्ठ उवाच-**एक** इति । अप्यर्थे एवकारः॥१८॥१९॥ कलनाः प्रतिभासाः ॥ २० ॥ कलाः कल्पनाकौशलानि विन्दते लभते । अनुसंधत्त इति यावत् ॥२१॥ तत्तत्संकल्पवृत्तिक्रमानुसारिणां चितो मात्राणामाभासानामनुप्रवेशेनैव निमित्तेन तामेव कलां मूर्तामूर्तस्वरूपेणाविर्भूतां प्रपश्यति । यथा लताक्रमेण स्वां कोरकितामथ संप्रफुल्लतां च पश्यति तद्वत् ॥ २२ ॥ दर्शनप्रकारमेव विषयप्रपञ्चनेन विशदयति—**जीव** इति । तद्ब्रह्मैव वेदने नियोजयति । विषयीकरोतीति यावत् ॥ २३ ॥ तथा प्रकचनं चास्याविद्ययैव तदपगमे तु निर्विक्षेपस्वरूपमात्रावस्थितिरित्याह—**सै**ति । अबुद्धा अज्ञानावृतैवैवमुक्तरूपा भवति । प्रेक्षयात्मप्रबोधेन । प्रबोध एव दुर्लभ इत्याह—**नत्वि**ति ॥ २४ ॥ निवर्तितस्याबोधस्य तर्हि किमात्मना परिशेषः । न तावद्बोधात्मना तस्य तदकरणत्वाद्विरोधाच्च । नाप्यन्यात्मनान्यपरिशेषादित्याशङ्क्याह—**यथे**ति ॥ २५ ॥ उपपादितमुपसंहरति—**एव**मिति । चिदेव सारोऽबाध्यांशस्तेनैव परमार्थरूपेण रूपवान् ॥ २६ ॥ सर्वतोऽप्यनणुतया अपरिच्छिन्नतया विषयभेदापगमे तत्कलनभेदोऽ[2]पि वनच्छेदे वनातपभेद इवापगत इति ब्रह्ममात्रपरिशेष इत्याह—**विद्यत** इति ॥२७॥ उक्तमभ्युपगम्य श्रीरामः प्रागुक्ते व्यष्टिसमष्टिजीवयोरभेदे व्यष्टिजीवेच्छादेरपि समष्टिधर्मत्वेनामोघत्वापत्त्या भोगमोक्षाव्यवस्थां शङ्कते—**एव**मिति । एतत्प्राग्वर्णितमेवमेवेत्यभ्युपगमः । जगज्जीवा अन्ये सर्वे जीवाः ॥ २८ ॥ ब्रह्म प्रथमं सत्यसंकल्पसमष्टिजीवभावापन्नं सत्स्वसंकल्पाधीनवृत्तिव्यष्टिजीवभावमापद्यते । तत्र पूर्वसंकल्पविरुद्धेऽर्थे न व्यष्टीनां सत्यसंकल्पतासिद्धिरिति परिहरन् श्रीवसिष्ठ उवाच—**महाजीवे**ति । यथा जगद्व्यवस्था सिध्यति तथेच्छं अहमेव सर्वदा सर्वेषु सत्यसंकल्पः स्यामितीच्छावदिति यावत् । निर्विभागं व्यष्टिविभागात्पूर्वं तच्छून्यम् । निरन्तरमित्युत्तरान्वयि ॥ २९ ॥ इच्छा सत्यसंकल्पः । आदिपदात्तेनेतरेच्छाप्रतिरोधः । द्वित्वं व्यष्टिविभागः ॥ ३० ॥ स्वशक्तीनां स्वांशजीवानाम् । अनेन दण्डचक्रादिबाह्योपकरणेनेत्थं भ्रमणादिना घटादि भवतीति क्रियाक्रमो न संकल्पमात्रादित्यर्थः ॥ ३१ ॥ ननु तर्हि कथमन्येषामपि महर्षीणां क्रियाक्रमं विनापि संकल्पादेव कार्यदर्शनं तत्राह—**त**मिति । एवं तं क्रियाक्रमं विना कार्यानुदये नियते सति यत्कचिदासां महर्ष्यादिव्यष्टिशक्तीनां क्रियाक्रमं विना इच्छा रोहति तत्प्रधानस्य समष्टेरिच्छैव रोहति । अस्यायं संकल्पः सिध्यत्विति प्रधानस्यैव तत्रेच्छा कल्प्यत इत्यर्थः ॥ ३२ ॥ उक्तार्थ-

१ बोधिता इति पाठः. २ अपीति क्वचिन्न पठ्यते.

प्रधानशक्तिनियमः सुप्रतिष्ठो न चेद्भवेत्[१]।
तत्फलं शक्त्यधीनत्वान्नेहितानां क्वचिद्भवेत् ॥ ३४
एवं ब्रह्म महाजीवो विद्यतेऽन्तादिवर्जितः।
जीवकोटि महाकोटि भवत्यथ न किंचन ॥ ३५
चेत्यसंवेदनाज्जीवो भवत्यायाति संसृतिम्।
तदसंवेदनाद्रूपं समायाति समं पुनः ॥ ३६
एवं कनिष्ठजीवानां ज्येष्ठजीवक्रमाक्रमैः।
समुदेत्यात्मजीवत्वं ताम्राणामिव हेमता ॥ ३७
अत्रान्तरे महाकाश इत्थमेष गणोऽप्यसन्।
स्वात्मैवं सदिवोदेति चिच्चमत्करणात्मकः ॥ ३८
स्वयमेव चमत्कारो यः समापद्यते चितः।
भविष्यन्नामदेहादि तदहंभावनं विदुः ॥ ३९
चितो यस्माच्चिदालेहस्तन्मयत्वादनन्तकः।
स एष भुवनाभोग इति तस्यां प्रबिम्बति ॥ ४०
परिणामविकारादिशब्दैः सैव चिदव्यया।
तादृग्रूपादसेद्यापि स्वशक्त्यैव विबुध्यते ॥ ४१
अविच्छिन्नविलासात्म स्वतो यत्स्वदनं चितः।
चेत्यस्य च प्रकाशस्य जगदित्येव तत्स्थितम् ॥ ४२
आकाशादपि सूक्ष्मैषा या शक्तिर्विततता चितः।
सा स्वभावत एवैतामहंतां परिपश्यति ॥ ४३

आत्मन्यात्मात्मनैवास्या यत्प्रस्फुरति वारिवत्।
जगदन्तमहंताणुं तदैषा संप्रपश्यति ॥ ४४
चमत्कारकरी चारु यच्चमत्कुरुते चितिः।
स्वयं स्वात्मनि तस्यैव जगन्नाम कृतं ततः ॥ ४५
चितश्चेत्यमहंकारः सैव राघव कल्पना।
तन्मात्रादि चिदेवातो द्वित्वैकत्वे क्व संस्थिते ॥ ४६
जीवहेत्वादिसंत्यागे त्वं चाहं चेति संत्यज।
शेषः सदसतोर्मध्ये भवत्यर्थात्मको भवेत् ॥ ४७
चिता यथादौ कलिता स्वसत्ता सा तथोदिता।
अभिन्ना दृश्यते व्योम्नः सत्तासत्ते न विद्महे ॥ ४८
विश्वं खं जगदीहाख्यं खमस्ति विबुधालयः।
साकारश्चिच्चमत्काररूपत्वान्नान्यदस्ति हि ॥ ४९
यो यद्विलासस्तस्मात्स न कदाचन भिद्यते।
अपि सावयवं तस्मात्कैवानवयवे कथा ॥ ५०
चितेर्नित्यमचेत्याया निर्नाड्या वितताकृतेः।
यद्रूपं जगतो रूपं तत्तत्स्फुरणरूपिणः ॥ ५१
मनो बुद्धिरहंकारो भूतानि गिरयो दिशः।
इति या यास्तु रचनाश्चितस्तत्त्वाज्जगत्स्थितेः ॥ ५२
चितेश्चित्त्वं जगद्विद्धि नाजगच्चित्त्वमस्ति हि।
अजगत्त्वादचिच्चित्स्याद्भानाद्भेदो जगत्कुतः ॥ ५३

मेव स्पष्टयति—**यस्या** इति। असौ फलति ॥३३॥ क्रियाक्रमस्यापि फलसिद्धिः प्रधानसंकल्पाधीनैवेत्याह—**प्रधाने**ति। सुप्रतिष्ठः सम्यक्फलसिद्ध्यनुगुणो यदि भवेत्तदा ईहितानां कार्यादिचेष्टानामपि फलं न भवेदिति संवन्धः ॥ ३४ ॥ एवंच निष्कर्षे ब्रह्मैव महाजीवः स एव व्यष्टिसमष्टिकोटिद्वयं भवतीति फलितमित्युपसंहरति—**एव**मिति ॥ ३५ ॥ विस्तरोक्तं बोधसौकर्याय संक्षिप्य दर्शयति—**चेत्ये**ति। सममविषमं ब्रह्मस्वरूपम् ॥ ३६ ॥ ब्रह्मभावो जीवानामुपासनेन समष्टिभावप्राप्तिक्रमेण वा अत्रैव ज्ञानेन साक्षाद्वा समुदेतीत्याह—**एव**मिति। आत्मजीवत्वं प्रागुक्तब्रह्मभावमहाजीवत्वम्। यथा ताम्राणां हेमता रसौषधैः पाकक्रमेण वा स्पर्शसंयोगे अक्रमेण वा भवति तद्वत् ॥ ३७ ॥ जीवजगद्भावौ विमर्शे चिच्चमत्कारमात्रं न वस्त्वन्तरमित्याह—**अत्रे**ति। आन्तरे प्रत्यग्रूपे महाकाशे ॥ ३८ ॥ ३९ ॥ कोऽसौ चिच्चमत्कारस्तमाह—**चित** इति। जगत्संस्कारसंस्कृतमायाप्रतिफलनेन तदेकरस्येन स्वात्मास्वादश्चिदालेहः तस्यामात्मचिति प्रबिम्बति स्फुरति ॥ ४० ॥ सा चिदालीढा चिद्वास्तवचिद्रूपाद्भेत्तुमशक्यापि परिणामादिशब्दैर्भिन्नेव विबुध्यते ॥ ४१ ॥ चितस्तदधीनप्रकाशस्य चेत्यस्य च स्वतः स्वाभाविकं यदविच्छिन्नविलासात्म अविविक्तस्वभावापन्नं स्वदनं तदेव जगदिति भ्रान्त्या स्थितमित्यर्थः ॥ ४२ ॥ तत्राप्यहंतादर्शनं पूर्वं तत्कृतं च परिच्छिन्नजगद्रूपदर्शनमित्याह—**आकाशादि**ति द्वाभ्याम् ॥ ४३ ॥ बहिर्बहिः स्थौल्योत्कर्षणपरंपरायां जगद्ब्रह्माण्डोऽन्ते यस्य तथाविधमहंताणुम् ॥ ४४ ॥ तथाच चिच्चमत्कृतेरेव जगदिति नामकरणं न जगत्पृथगस्तीति फलितमित्याह—**चमत्कारे**ति ॥ ४५ ॥ चिदधीनमहंकारकल्पनं तदधीनं तन्मात्रादिजगत्कल्पनमिति स्थिते यदधीनमन्यकल्पनं तदेव परिशिष्टमित्याह—**चित** इति ॥४६॥ सदसतोः सत्यानृतयोः कल्पनयोर्मध्ये त्वं चाहं चेति चेतनपरिच्छेदकल्पनैव दुस्त्यजा तत्त्यागे कृते शेषः स्वत एव विकल्पकाभावात्सन्मात्ररूपः संपद्यत इत्याह—**जीवे**ति। भावप्रधानो निर्देशः। जीवभावं प्रति हेतुर्निमितं वासनाकर्मादि। आदिपदादुपादानपरिग्रहः। भवत्यर्थः सत्ता तदात्मकः ॥ ४७ ॥ ज्ञानेन दृश्यतत्संवलितसत्तापाये पूर्वसिद्धाधिष्ठानसत्ता यथा स्थितैवोदिता मेघापाये निर्मलव्योमसत्तावदित्याह—**चिते**ति ॥ ४८ ॥ अनुभावितं निष्प्रपञ्चत्वमनुमानेनापि द्रढयति—**विश्व**मिति। ईहाख्यं मनश्चेष्टारूपं सूक्ष्मं जगत् खं शून्यमेव। तथा विबुधानामिन्द्रियतदधिष्ठातृदेवानामालयः साकारः स्थूलश्च विश्वविराड्रूप इति द्विविधमपि विश्वं खं शून्यमेवास्ति चिच्चमत्काररूपत्वादित्यर्थः ॥ ४९ ॥ तत्र व्याप्त्यादिसिद्धये उदाहरणादि दर्शयति—**यो यदि**ति। सावयवजलादिकार्ये तरङ्गादावपि तथा दृष्टं, निरवयवचित्कार्ये कैव कथेत्यर्थः ॥ ५० ॥ इत्थं च नामरूपनिष्कृष्टापरिच्छिन्नचिद्रूपमेव जगतस्तात्त्विकं रूपं फलितमित्याह—**चितेरि**ति ॥ ५१ ॥ वैपरीत्यदर्शनेऽपि जगद्रचना चिद्रचनैवेति फलितमित्याह—**मन** इति ॥ ५२ ॥ एवं जगतश्चिन्मयत्वे सति

१ भवेद्भवेत इति पाठः।

चितेर्मरीचिबीजस्य निजा यान्तश्चमत्कृतिः ।
सा चैषा जीवतन्मात्रमात्रं जगदिति स्थिता ॥ ५४
चित्तात्स्वशक्तिकचनं यदहंभावनं चितः ।
जीवः स्पन्दनकर्मात्मा भविष्यदभिधो ह्यसौ ॥ ५५
यच्चिच्चित्त्वेन कचनं स्वसंपाद्याभिधात्मकम् ।
स्वविकारैर्व्यवच्छेद्यं भिद्यते नो न विद्यते ॥ ५६
चित्स्पन्दरूपिणोरस्ति न भेदः कर्तृकर्मणोः ।
स्पन्दमात्रं भवेत्कर्म स एव पुरुषः स्मृतः ॥ ५७
जीवश्चित्तपरिस्पन्दः पुंसां चित्तं स एव च ।
मनस्त्विन्द्रियरूपं सत्सत्तां नानेव गच्छति ॥ ५८
शान्ताशेषविशेषं हि चित्प्रकाशच्छटा जगत् ।
कार्यकारणकादित्वं तस्मादन्यन्न विद्यते ॥ ५९
अच्छेद्योऽहमदाह्योऽहमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽहमिति स्थितम् ॥ ६०
विवदन्ते तथा ह्यत्र विवदन्तो यथा भ्रमैः ।
भ्रमयन्तो वयं त्वेते जाता विगतविभ्रमाः ॥ ६१
दृश्ये मूर्तं ह्यसंरूढे विकारादि पृथग्भवेत् ।
नामूर्ते तज्ज्ञकचिते चित्खे सदसदात्मनि ॥ ६२
चित्तरौ चेत्यरसतः शक्तिः कालादिनामिकाम् ।
तनोत्याकाशविशदां चिन्मधुश्रीः स्वमञ्जरीम् ॥ ६३
स्वयं विचित्रं स्फुरति चिदण्डकमनाहतम् ।
स्वयं विलक्षणस्पन्दं चिद्वायुरण्डजात्मकः ॥ ६४
स्वयं विचित्रं कचनं चिद्वारि न निखातगम् ।
स्वयं विचित्रधातुत्वं श्रेष्ठाङ्गमपि निर्मितम् ॥ ६५
स्वविचित्ररसोल्लासा चिज्ज्योत्स्ना सततोदिता ।
स्वयं चिदेव प्रकटश्चिदालोको महात्मकः ॥ ६६
स्वयमस्तं गते बाह्ये स्वज्ञानादुदिता चितिः ।
स्वयं जडेषु जाड्येन पदं सौषुप्तमागता ॥ ६७
स्वयं स्पन्दितयास्पन्दिचित्त्वाच्चिति महानभः ।
चित्प्रकाशप्रकाशो हि जगदस्ति च नास्ति च ॥ ६८
चिदाकारैकशून्यत्वं जगदस्ति च नास्ति च ।
चिदालोकमहारूपं जगदस्ति च नास्ति च ॥ ६९

चिद्धर्मतैव फलितेत्याह—**चित** इति । चिच्चि[१]त्वयोश्च कल्पनरूपभानाद्भेदो न वस्तुत इति जगत्कुतः ॥ ५३ ॥ वर्णितां जगतश्चिन्मात्रतामुक्तिवैचित्र्यैर्दृढं व्युत्पादयितुमुपक्रमते—**चितेरि**त्यादिना । चितेरर्थप्रथनशक्तिरेव जीवतदुपाधिभूततन्मात्रमात्रं सज्जगदिति वेषे[२]ण स्थितेत्यर्थः ॥ ५४ ॥ ततश्चित्तादहंकारशक्तिस्फुरणमेव स्पन्दनकर्मप्राणसंवलने जीवशब्दवाच्यं भविष्यतीत्याह—**चित्तादि**ति ॥ ५५ ॥ तथा भावेऽपि न चित्स्वभावभेद इत्याह—**यदि**ति । यत् यद्यपि चितश्चित्त्वेन कचनं स्वविकारैरहंतादिभिर्व्यवच्छेद्यं सत्स्वसंपाद्यजीवाद्यभिधात्मकं संपन्नं तथापि तद्व्यवच्छिन्नरूपमुपाधिमिथ्यात्वान्न विद्यत इति नो भिद्यते नैव भेदप्रसक्तिरित्यर्थः ॥ ५६ ॥ चित्स्पन्दशक्तिभेदादहंकारप्राणोपहितजीवभेदमाशङ्क्याह—**चिदि**ति । चित्प्रधानोऽहंकारः कर्ता स्पन्दप्रधानः प्राणः क्रिया । नहि स्वक्रियया कर्ता भिद्यते अतः स चित्स्पन्दसंवलित एव पुरुषो जीव इत्यर्थः ॥ ५७ ॥ एवं चित्तमनइन्द्रियादिभावेऽपि न जीवभेदः । जीवोपाधिमनस एव गोलकभेदेनेन्द्रियभावेनावस्थानादित्याह—**जीव** इति ॥ ५८ ॥ एवं जगज्जीवभेदनिरासे फलितमुपसंहरति—**शान्ते**ति । हि यस्मात्तुच्छतरकार्यकारणादिभावस्वभावं जगत्प्रागुक्तरीत्या चित्प्रकाशस्य छटाप्रान्त इव तदभिन्नसत्तास्फूर्तिकं तस्माद्धेतोरन्यन्न विद्यते इति शान्ताशेषविशेषं प्रत्यगात्मरूपमेव संपन्नमित्यर्थः ॥ ५९ ॥ तत्र सर्वानर्थनिवृत्तिं दर्शयति—**अच्छेद्य** इति ॥ ६० ॥ एतदपरिज्ञानादेव द्वैतवादिनां विवादभेदो नास्माकमित्याह—**विवदन्त** इति । स्वस्वभ्रमैरन्यान्भ्रमयन्तो यथा तद्वत् ॥ ६१ ॥ अज्ञतज्ज्ञयोर्दृश्ये मूर्तामूर्तभावनाकृत एव सत्यमिथ्यात्वप्रयुक्तद्वैताद्वैतविभाग इत्याह—**दृश्य** इति ॥ ६२ ॥ चेत्ये रस आसक्तिस्तद्रूपजलसेकाच्चिद्वसन्तश्रीरूपा शक्तिर्मायाकालादिनामिकां स्वमञ्जरीं तनोति । आकाशे प्रथमभूते ऊर्ध्वदेशे च विशदाम् ॥ ६३ ॥ यथा ब्रह्म स्वाधीनकल्पनाक्रमैर्जगज्जीवभावं प्राप्तं तथा स्वाधीनैरेव बोधक्रमैः स्वरूपेऽवतिष्ठत इत्याह—**स्वयमि**त्यादिसार्धचतुर्भिः । चित्स्वयमेवानाहतमच्छिन्नगर्भमेव सत् प्रथममाकाशकल्पने सच्छिद्रत्वादण्डकमण्डसदृशं ब्रह्माण्डरूपं वा स्फुरति । ततोऽण्डजात्मको वायुः सूत्रात्मा वातस्कन्धरूपो वा स्फुरतीति सर्वत्रानुषङ्गः ॥ ६४ ॥ ततो वक्ष्यमाणतेजोजन्मानन्तरं वारि अप्तत्त्वं भूत्वा स्फुरति । तच्च न तडागादिनिखातगं भूसगर्तप्राक्तदयोगात् । सा चित्स्वयं विचित्राः स्वर्णरजतादिधातवो यस्यां पृथिव्यां तद्भावं श्रेष्ठानां देवासुरमनुष्याणामङ्गं देहादिभावमपि निर्माणेन प्रापितम् ॥ ६५ ॥ जगदाप्यायकचन्द्रात्मनापि स्वयमेवाभूदित्याह—**स्वयमि**ति । भौमौषधिरसभेदानामपि चन्द्राधीनत्वात्स्वविचित्रेत्युक्तम् । अत्र तेजःसर्गः पाठक्रमादार्थक्रमो बलीयानिति प्रागुक्तवायुसर्गानन्तरं बोध्यः । चिदण्डकमित्यादिसमस्तं सर्वत्र रूपकं वा बोध्यम् ॥ ६६ ॥ स्वज्ञानादेव बाह्ये दृश्येऽस्तं गते सति उदिता आविर्भूतपूर्णभावा अवतिष्ठत इति शेषः । जडेषु स्थावरादिषु ॥ ६७ ॥ उक्तमेवार्थं संक्षिप्याहार्धेन—**स्वयमि**ति । अविचारे स्पन्दस्वभावप्राणाद्यात्मभावकल्पने स्पन्दि संसार्येव भवति । स्वविचाराविर्भूतचित्त्वात्तु चित्येव स्वस्वभावेऽवतिष्ठत इत्यर्थः । तदवस्थस्य किं जगदस्ति उत नास्ति, सत्त्वे संसारापत्तिरसत्त्वे त्वसद्व्याप्तिप्रसङ्ग इत्याशङ्क्य, सर्वदा जगतो ब्रह्मसत्तया सत्त्वमेव स्वसत्तया त्वसत्त्वमेवेत्याह—**चित्प्रकाश** इत्याद्यर्धषट्केन । सर्वत्र चित्सत्तोपजीवित्वप्रदर्शनाय प्रकाशादिभावरूपि तत्तद्धर्मतोक्तिः । प्रकाशस्य

१ चित्तादिति मूले टीकायां च पाठः. २ स्वज्ञ... इति पाठः. ३ चिच्चेत्ययोश्च इति पाठः. ४ विशेषेण इति पाठः.

चिन्मारुतपरिस्पन्दो जगदस्ति च नास्ति च।
चिद्घनध्वान्तकृष्णत्वं जगदस्ति च नास्ति च ॥ ७०
चिदर्कालोकदिवसो जगदस्ति च नास्ति च।
चित्कज्जलरजस्तैलपरमाणुर्जगत्क्रमः ॥ ७१
चिदश्मौष्ण्यं जगल्लेखा जगच्चिच्छङ्खशुक्लता।
जगच्चिच्छैलजठरं चिज्जलद्रवता जगत् ॥ ७२
जगच्चिदिक्षुमाधुर्यं चित्क्षीरस्निग्धता जगत्।
जगच्चिद्धिमशीतत्वं चिज्ज्वालाज्वलनं जगत् ॥ ७३
जगच्चित्सर्षपस्नेहो वीचिश्चित्सरितो जगत्।
जगच्चित्क्षौद्रमाधुर्यं जगच्चित्कनकाङ्गदम् ॥ ७४
जगच्चित्पुष्पसौगन्ध्यं चिल्लताग्रफलं जगत्।
चित्सत्तैव जगत्सत्ता जगत्सत्तैव चिद्वपुः ॥ ७५
अत्र भेदविकारादि नखे मलमिव स्थितम्।
इतीदं सन्मयत्वेन सदसद्भुवनत्रयम् ॥ ७६
अविकल्पतदात्मत्वात्सत्तासत्तैकतैव च।
अवयवावयविता शब्दार्थौ शशशृङ्गवत् ॥ ७७
अनुभूत्यपलापाय कल्पितो यैर्धिगस्तु तान्।
न विद्यते जगद्यत्र साब्ध्यब्ध्युर्वीनदीश्वरम् ॥ ७८

चिदेकत्वात्प्रसङ्गः स्यात्कस्तत्रेतरविभ्रमः।
शिलाहृदयपीनापि स्वाकाशे विशदैव चित् ॥ ७९
धत्तेऽन्तरखिलं शान्तं संनिवेशं यथा शिला।
पदार्थनिकराकाशे त्वयमाकाशजो मलः ॥ ८०
सत्तासत्तात्मतात्वत्तामत्तास्लेषा न सन्ति ते।
पल्लवान्तरलेखौघसंनिवेशवदाततम् ॥ ८१
अन्यानन्यात्मकमिदं धत्तेऽन्तश्चित्स्वभावतः।
समस्तकारणौघानां कारणादि पितामहः ॥ ८२
स्वभावतो कारणात्म चित्तं चिद्ध्यनुभूतितः।
न चासत्त्वमचेत्यायाश्चितो वाचापि सिद्ध्यति ॥ ८३
यदस्ति तदुदेतीति दृष्टं बीजादिवाङ्कुरः ॥ ८४
गगन इव सुशून्यभेदमस्ति
त्रिभुवनमङ्ग महाचितोऽन्तरस्थाः।
परमपदमयं समस्तदृश्यं
त्विदमिति निश्चयवान्भवानुभूतेः ॥ ८५
इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ८६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे ब्रह्मप्रतिपादनं नाम चतुर्दशः सर्गः ॥ १४ ॥

## तृतीयो दिवसः।

तेजसः प्रकाशो भास्वररूपम् ॥ ६८ ॥ ६९ ॥ ७० ॥ तैलदाहे कज्जलस्येव जगद्बाधे चिदवशेषात्कज्जलत्वोक्तिर्न कार्यत्वाभिप्रायेण ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ सर्वत्र चिदपृथक्सत्त्वादेव जगतश्चिद्धर्मत्वमभिप्रेतमिति स्फुटमाह—**चित्सत्तैवे**ति ॥ ७५ ॥ खे मलं नैल्यमिव प्रतीतमपि न स्थितम्। असदपि भुवनत्रयमित्युक्तविधया सन्मयत्वेन सदित्यर्थः ॥७६॥ जगदसत्ता तर्हि वस्त्वन्तरं स्यात्तत्राह—**अविकल्पे**ति। कल्पितनिरूपितसत्तासत्तयोरधिष्ठानातिरेकादर्शनादित्यर्थः। सावयवनिरवयवयोः कथमपृथक्सत्त्वमिति वदतस्तार्किकान्विद्वदनुभवापलापिनो धिक्करोति—**अवयवे**ति ॥ ७७ ॥ तत्र युक्तिविरोधमाह—**न विद्यत** इति। अब्ध्यब्धिभिरुर्व्यादिभिस्तत्तदीश्वरैश्च सहितं जगत् ॥ ७८ ॥ प्रसज्यत इति प्रसङ्गः। कर्मणि घञ्। तत्र इतरस्यावयवादेर्विभ्रमः कः प्रसक्तः स्यादित्यर्थः। विशदा स्वच्छा ॥ ७९ ॥ शान्तं मिथ्यात्वादसदेवाखिलं यथा स्फटिकशिलाप्रतिबिम्बनगरसंनिवेशं धत्ते तद्वत्। कुतोऽखिलस्य शान्तत्वं तत्राह—**पदार्थे**ति। सर्वपदार्थाधिष्ठाने चिदाकाशेऽयं भूताकाशजो मलो वाय्वादिः सावयवप्रपञ्चः। तत्र भूताकाशेऽप्यसङ्गस्वभावे यदि तत्कार्यश्लेषा न सन्ति तदा चिदाकाशे सत्तासत्ताद्याः श्लेषाः सुतरां न सन्तीत्यर्थः ॥ ८० ॥ तर्हि चित्यसतो जगत्संनिवेशस्य कथं भानं तत्राह—**पल्लवे**ति। यथा पल्लवं शिरारेखौघसंनिवेशं पल्लवात्पृथगनिरूढत्वादसदेव तदन्यानन्यात्मकतया स्थितं धत्ते चिदपि तथा जगदित्यर्थः ॥ ८१ ॥ निर्विकाराकाशोपादानकत्वाज्जगद्विकारस्य मिथ्यात्वमुक्तं, संप्रति मिथ्याविकल्पसहस्रात्मकचित्तसमष्ट्यात्मकहिरण्यगर्भनिदानकत्वादपि जगतो मिथ्यात्वमित्याह—**समस्ते**ति ॥ ८२ ॥ चित्तकार्यमानोरथिकविकल्पानामसत्त्वादेव चित्तमकारणात्म तदेव पितामह इत्यर्थः। चेत्यासत्त्वे चितोऽप्यसत्त्वं तस्यास्तदव्यभिचारदर्शनादिति वाचापि चितोऽसत्त्वं न सिध्यति। हि यस्माच्चिदनुभूतितः सिद्धा। अनुभवविरुद्धे च न वाचः प्रामाण्यमित्यर्थः ॥ ८३ ॥ यदि जगत्स्वतः सत्स्यात्तदा ज्ञानाद्युपायसहस्रैरप्यनुच्छेद्यमेव स्यात्सत आत्यन्तिकोच्छेदासंभवेन पुनराविर्भावावर्जनादनिर्मोक्षप्रसङ्गः स्यादित्याशयेनाह—**यदि**ति ॥ ८४ ॥ यदि दृश्यस्य सत्तायां महानाग्रहस्तर्हि अनुभवेन भेदं निरस्य परमपदात्मकचिन्मयत्वेन तत्सत्तयैव सा स्वीकार्येत्याह—**गगन** इति ॥ ८५ ॥ ८६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ब्रह्मप्रतिपादनं नाम चतुर्दशः सर्गः ॥ १४ ॥

१ जगद्भ्रमः इति पाठः. २ मितो इति क्वचित्.

# पञ्चदशः सर्गः १५

श्रीवसिष्ठ उवाच ।

जगदाकाशमेवेदं यथा हि व्योम्नि मौक्तिकम् ।
विमले भाति स्वात्मैव जगच्चिद्गगनं यथा ॥ १
अनुत्कीर्णैव भातीव त्रिजगच्छालभञ्जिका ।
चित्स्तम्भेनैव सोत्कीर्णा नचोत्कर्तात्र विद्यते ॥ २
समुद्रेऽन्तर्जलस्पन्दाः स्वभावादच्युता अपि ।
वीचिवेगा भवन्तीव परे दृश्यविदस्तथा ॥ ३
जालान्तर्गतसूर्याभा जालाकाररजांस्यपि ।
जगद्भानं प्रति स्थूलान्यणुं प्रति यथाचलाः ॥ ४
जगद्भानं न भातीदं ब्रह्मणो व्यतिरेकतः ।
जालसूर्यांशुजालं तु व्यतिरेकानुभूतिदम् ॥ ५
अनुभूतान्यपीमानि जगन्ति व्योमरूपिणि ।
पृथ्व्यादीनि न सन्त्येव स्वप्नसंकल्पयोरिव ॥ ६
पिण्डग्रहो जगत्यस्मिन्विज्ञानाकाशरूपिणि ।
मरुनद्यां जलमिव न संभवति कुत्रचित् ॥ ७
जगत्यपिण्डग्राहेऽस्मिन्संकल्पनगरोपमे ।
मरौ सरिदिवाभाति दृश्यता भ्रान्तिरूपिणी ॥ ८
स्वप्नादृश्येव जगतां तुलादेशेन केन च ।
तुलिता कलनोन्मुक्ता दृश्यश्रीर्व्योम जृम्भते ॥ ९
वर्जयित्वा ज्ञविज्ञानं जगच्छब्दार्थभाजनम् ।
जगद्ब्रह्मखशब्दानामर्थे नास्त्येव भिन्नता ॥ १०
इदं त्वचेत्यचिन्मात्रं भानोर्भातं नभः प्रति ।
तथा सूक्ष्मं यथा मेघं प्रति संकल्पचारिदः ॥ ११
यथा स्वप्नपुरं स्वच्छं जाग्रत्पुरवरं प्रति ।
तथा जगदिदं स्वच्छं सांकल्पिकजगत्प्रति ॥ १२
तस्मादचेत्यचिद्रूपं जगद्व्योमैव केवलम् ।
शून्यौ व्योमजगच्छब्दौ पर्यायौ विद्धि चिन्मयौ ॥ १३
तस्मान्न किंचिदुत्पन्नं जगदादीह दृश्यकम् ।
अनाख्यमनभिव्यक्तं यथास्थितमवस्थितम् ॥ १४
जगदेवं महाकाशे चिदाकाशमभित्तिमत् ।
तद्देशस्याणुमात्रस्य तुलायाश्चाप्रपूरकम् ॥ १५
आकाशरूपमेवाच्छं पिण्डग्रहविवर्जितम् ।
व्योम्नि व्योममयं चित्रं संकल्पपुरवत्स्थितम् ॥ १६
अत्रेदं मण्डपाख्यानं शृणु श्रवणभूषणम् ।
निःसंदेहो यथैषोऽर्थश्चित्ते विश्रान्तिमेष्यति ॥ १७

---

शश्वद्दृष्टान्तयुक्त्योघैरुक्तार्थमनुभावयन् ।
विस्तृतं मण्डपाख्यानमत्रोपक्रमते मुनिः ॥ १ ॥

जगच्चिदाकाशमेवेति प्रतिज्ञा । कथं तर्हि पृथग्भाति तत्राह—**यथे**ति । यथा विमले व्योम्नि भ्रान्त्या मुक्तानां संघो मौक्तिकं भाति तद्वत् । चिद्गगनं स्वात्मैव यथा जगत्तथा दृष्टान्तः श्रूयतामिति शेषः ॥१॥ **नचोत्कर्ते**ति । तदुत्कर्तृचेतनान्तराप्रसिद्धेर्निर्विकारासङ्गस्योत्कर्तनासंभवाच्चेति भावः ॥ २ ॥ दृश्यविदो जगत्प्रत्ययाः ॥ ३ ॥ जगदतिमहत्त्वेन मूढैरवगतमपि विद्वद्दृष्ट्या वस्तुतो जालसूर्यमरीच्यणुकादप्यतिफल्गिवत्याह—**जाले**ति । सूर्याभाया यो जालच्छिद्रप्रयुक्तो दण्डमुसलाद्याकारस्तदन्तर्गतानि रजांसि । अपिशब्दादन्येषां स्थूलतमत्वं किं वाच्यमित्याशयः । अथवा जगदवभासकसाक्षिचित्प्रकाशस्य सूर्यालोकादिप्रकाशात्तदन्तर्गतपरमाण्वादिभ्योऽप्यतिसूक्ष्मत्वमित्याह—**जाले**ति ॥ ४ ॥ तदेवोपपादयितुं मरीचितदणुवैधर्म्यं चिति दर्शयति—**जगदि**ति ॥ ५ ॥ व्यतिरेकतो न भातीत्युक्तेरनुभवविरोधं परिहरति—**अनुभूतान्यपी**ति ॥६॥ अनेकदिनावस्थाभिन्नस्य कथं स्वप्नसंकल्पसाम्यं तत्राह—**पिण्डे**ति । पिण्डग्रहो मूर्ततास्वीकारः ॥ ७ ॥ ८ ॥ जगतां दृश्यश्रीर्दृशि साक्षिचैतन्य एवैकतः स्वप्नमारोप्य केन च सारासारविवेचकबुद्धिलक्षणेन तुलामध्यकण्टकप्रदेशेन तुलिता साम्येनावधारिता चेत्सैव जागरे स्वप्न इव कलनोन्मुक्ता सती व्योम शून्यं ब्रह्मैव वा जृम्भते प्रथते ॥९॥ तथाचाविवेकिदृशैव ब्रह्मादिशब्दार्थाज्जगच्छब्दार्थभेदो न तत्त्वज्ञदृशेत्याह—**वर्जयित्वे**ति ॥१०॥ कथं तर्हि तत्त्वज्ञदृशां जगत्प्रति तत्साक्षिदर्शनमित्युक्ते शून्यात्मकनभः प्रति तदालोकस्य प्रकाशत्वदर्शनमिवेत्याह—**इद**मिति । साक्षिचैतन्यं प्रति जगद्दर्शनं तर्हि कथं तत्राप्याह—**तथे**ति ॥११॥ कथमत्यन्तमलिनस्य दृश्यस्य स्वच्छतमचिन्मात्रतेत्याशङ्क्य प्रतीतिकालिकैव बाह्यमानसदृश्ययोर्मलिनता, तिरोभावकाले तु परस्परापेक्षया स्वच्छतमतैव परिशिष्यत इत्याह—**यथे**ति । जगज्जाग्रत्प्रपञ्चः । सांकल्पिकग्रहणं स्वाप्नस्याप्युपलक्षणम् ॥१२॥ उपसंहरति—**तस्मादि**त्यादिना । शून्यौ शून्यार्थावर्थशून्यौ वा ॥ १३ ॥ १४ ॥ एवमुक्तरीत्या महाकाशे मायाकाशे स्थितं जगदभित्तिमन्निरावरणं चिदाकाशमेव । परिच्छिन्नजगद्भेदे चितोऽपि तावन्मात्रतां वारयति—**तद्देशस्ये**ति । तद्देशस्य चित्प्रदेशस्याणुमात्रस्याल्पतरस्यापि अल्पान्तःकरणवृत्तितद्वासनापरिच्छिन्नाणुतमचिद्भागेऽपि सर्वजगत्परिच्छेदभानेन तदन्तर्भाव्यस्य जगतस्तदप्रपूरकत्वे दूरनिरस्ता ब्रह्मचैतन्यस्य तावन्मात्रतेति भावः ॥ १५ ॥ कथं व्योमवच्छून्यप्रायचित्तवृत्तितद्वासनान्तर्भूता विपुलतमजगदवस्थितिस्तत्राह—**आकाशे**ति । पिण्डग्रहो मूर्तिस्वीकारः । तत्रानुभवारोहाय दृष्टान्तमाह—**संकल्पे**ति ॥१६॥ उक्तेऽर्थे रामस्य संदेहव्यामोहानवधारणानि लिङ्गैरुपलक्ष्य श्रीवसिष्ठस्तदपनोदाय तदुपपत्तिसहस्रकथानुरञ्जना-

श्रीराम उवाच ।

सद्बोधवृद्धये ब्रह्मन्समासेन वदाशु मे ।
मण्डपाख्यानमखिलं येन बोधो विवर्धते ॥ १८

श्रीवसिष्ठ उवाच ।

अभूदस्मिन्महीपीठे कुलपद्मो विकाशवान् ।
पद्मो नाम नृपः श्रीमान्बहुपुत्रो विवेकवान् ॥ १९
मर्यादापालनाम्भोधिर्द्विषत्तिमिरभास्करः ।
कान्ताकुमुदिनीचन्द्रो दोषतृणहुताशनः ॥ २०
मेरुर्विबुधवृन्दानां यशश्चन्द्रो भवार्णवे ।
सरः सद्गुणहंसानां कमलामलभास्करः ॥ २१
संग्रामवीरुत्पवनो मनोमातङ्गकेसरी ।
समस्तविद्यादयितः सर्वाश्चर्यगुणाकरः ॥ २२
सुरारिसागरक्षोभविलसन्मन्दराचलः ।
विलासपुष्पौघमधुः सौभाग्यकुसुमायुधः ॥ २३
लीलालतालास्यमरुत्साहसोत्साहकेशवः ।
सौजन्यकैरवशशी दुर्लीलावल्लिकानलः ॥ २४

तस्यास्ति सुभगा भार्या लीला नाम विलासिनी ।
सर्वसौभाग्यवलिता कमलेवोदिताऽवनौ ॥ २५
सर्वानुवृत्तिललिता लीला मधुरभाषिणी ।
सानन्दमन्दचलिता द्वितीयेन्दूदयसिता ॥ २६
अलकालिमनोहारिवदनाम्भोजशालिनी ।
सिताङ्गी कर्णिकागौरी जङ्गमेव सरोजिनी ॥ २७
लताविलासकुन्दौघभासिनी रसशालिनी ।
प्रवालहस्ता पुष्पाभा मधुश्रीरिव देहिनी ॥ २८
अवदाततनुः पुण्या स्पर्शनाह्लादकारिणी ।
गङ्गेव गां गता देहवती हंसविलासिनी ॥ २९
तस्य भूतलपुष्पेषोः सकलाह्लाददायिनः ।
परिचर्यां चिरं कर्तुमन्या रतिरिवोदिता ॥ ३०
उद्विग्ने प्रोद्विग्ना
मुदिते मुदिता समाकुलाकुलिते ।
प्रतिबिम्बसमा कान्ता
संक्रुद्धे केवलं भीता ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे मण्डपोपाख्याने राजवर्णनं नाम पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः १६

श्रीवसिष्ठ उवाच ।

भूतलाप्सरसा सार्धमनन्यदयितापतिः ।
अकृत्रिमप्रेमरसं स रेमे कान्तया तया ॥ १
उद्यानवनगुल्मेषु तमालगहनेषु च ।
पुष्पमण्डपरम्येषु लतावलयसद्मसु ॥ २
पुष्पान्तःपुरशय्यासु पुष्पसंभारवीथिषु ।
वसन्तोद्यानदोलासु क्रीडापुष्करिणीषु च ॥ ३
चन्दनद्रुमशैलेषु संतानकतलेषु च ।
कदम्बनीपगेहेषु पारिभद्रोदरेषु च ॥ ४
विकसत्कुन्दमन्दारमकरन्दसुगन्धिषु ।
वसन्तवनजालेषु कूजत्कोकिलपक्षिषु ॥ ५
नानारण्यतृणानां च स्थलेषु मृदुदीप्तिषु ।
निर्झरेषु तरत्तारसीकरासारवर्षिषु ॥ ६
शैलानां मणिमाणिक्यशिलानां फलकेषु च ।
देवर्षिमुनिगेहेषु दूरपुण्याश्रमेषु च ॥ ७

न्वितं विस्तृतं मण्डपोपाख्यानं श्रावयितुं प्रतिजानीते—अत्रेति ॥ १७ ॥ समासेनानुपयुक्तार्थं संक्षेपेण । पूर्वतरप्रतिज्ञायामिवोक्तिविलम्बमाशङ्क्याह—आश्विति ॥ १८ ॥ कुलस्य वंशस्य पद्म इव यशःसौरभ्यहेतुत्वात्पद्मः ॥ १९ ॥ वर्णाश्रममर्यादा वेला द्वीपमर्यादा च ॥ २० ॥ विबुधा विद्वांसो देवाश्च तद्वृन्दानाम् । कमलाः संपदस्तल्लक्षणकमलानां भास्करः ॥ २१ ॥ संग्रामे वीरुत्प्रायाणां परेषां पवन इव प्रकम्पयिता अतएव मानोर्जिततन्मनोलक्षणमातङ्गानां केसरी, शत्रून्मानभङ्गेन नमयिता न हन्तेत्याशयः । दयितः प्रियः ॥२२॥ तस्येन्द्रशत्रुजेतृत्वमाह—सुरारीति । मधुर्वसन्तः ॥ २३ ॥ सर्वासाध्यधरण्युद्धारादिसाधनोद्योगः साहसम् । दुश्चेष्टाविषवल्लीनामनल इव दाहकः । कुत्सायां कन् ॥ २४ ॥ वलिता वेष्टिता । कमला लक्ष्मीः ॥ २५ ॥ सर्वास्वनुवृत्तिषु भर्तृसेवाप्रकारेषु सर्वेषां पर-

जनानां वा अनुवृत्तिष्वनुकूलाचरणेषु ललिता ॥ २६ ॥ अलका एव अलयो भ्रमराः । सिताङ्गी निर्मलाङ्गी । कर्णिकेव कर्णिकया च गौरी । एवमग्रेऽप्युपमानसाधारणविशेषणानि योज्यानि ॥ २७ ॥ रसः प्रेमा मकरन्दश्च ॥ २८ ॥ अवदाततनुः स्वच्छदेहा ॥ २९ ॥ ३० ॥ ३१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राजवर्णनं नाम पञ्चदशः सर्गः ॥१५॥

अतृप्तिः कामभोगेभ्यो भूयो दुःखावसानता ।
देवैरप्यन्यथाकर्तुमशक्येत्यत्र कीर्त्यते ॥ १ ॥

अनन्यदयितापतिरिति प्रेमरसस्याकृत्रिमत्वे हेतुः ॥ १ ॥ उद्यानवनगुल्मेष्वित्यादीनां रेमे इत्यत्रैवान्वयः ॥ २ ॥ ३ ॥ संतानकाः कल्पवृक्षविशेषाः स्वप्रभावादिन्द्रप्रसादाद्वा प्राप्तास्तेषां तलेषु ॥ ४ ॥ ५ ॥ तरतां प्लवमानानां तारसीकराणामासारो धारासंपातः ॥ ६ ॥ देवर्षिमुनिगेहेषु सहयात्रारूपं रमणम्

कुमुद्वतीषु फुल्लासु स्मेरासु नलिनीषु च ।
वनस्थलीषु कृष्णासु फुल्लासु फलिनीषु च ॥ ८
सुरतैः सुरतारुण्यैः सुन्दरः सुन्दरेहितैः ।
ईहितैः पेशलान्योन्यघनप्रेमरसाधिकैः ॥ ९
प्रहेलिकाभिराख्यानैस्तथा चाक्षरमुष्टिभिः ।
अष्टापदैर्बहुद्यूतैस्तथा गूढचतुर्थकैः ॥ १०
नाटिकाख्यायिकाभिश्च श्लोकैर्विन्दुमतिक्रमैः ।
देशकालविभागैश्च नगरग्रामचेष्टितैः ॥ ११
स्रग्दाममालावलितैर्नानाभरणयोजनैः ।
लीलाविलोलचलनैर्विचित्ररसभोजनैः ॥ १२
आर्द्रकुङ्कुमकर्पूरताम्बूलीदलचर्वणैः ।
फुल्लपुष्पलतागुञ्जादेहगोपनखव्रणैः ॥ १३
समालम्भनलीलाभिर्मालाप्रहरणक्रमैः ।
गृहे कुसुमदोलाभिरन्योन्यं दोलनक्रमैः ॥ १४
नौयानयुग्महस्त्यश्वदान्तोष्ट्रादिगमागमैः ।
जलकेलिविलासेन परस्परसमुक्षणैः ॥ १५
नृत्यगीतकलालास्यतालताण्डवमण्डनैः ।
संगीतकैः संकथनैर्वीणामुरजवादनैः ॥ १६
उद्यानेषु सरित्तीरवृक्षेषु वरवीथिषु ।
अन्तःपुरेषु हर्म्येषु फुल्लदोलावदोलनैः ॥ १७
सा तथा सुखसंवृद्धा तस्य प्रणयिनी प्रिया ।
एकदा चिन्तयामास सुभ्रूः संकल्पशालिनी ॥ १८
प्राणेभ्योऽपि प्रियो भर्ता ममैष जगतीपतिः ।
यौवनोल्लासवाञ्श्रीमान्कथं स्यादजरामरः ॥ १९
भर्त्रानेन सहोत्तुङ्गस्तनी कुसुमसद्मसु ।
कथं स्वैरं चिरं कान्ता रमे युगशतान्यहम् ॥ २०
तथा यते यत्नमतस्तपोजपयमेहितैः ।
रजनीशमुखो राजा यथा स्यादजरामरः ॥ २१
ज्ञानवृद्धांस्तपोवृद्धान्विद्यावृद्धानहं द्विजान् ।
पृच्छामि तावन्मरणं कथं न स्यान्नृणामिति ॥ २२
इत्यानीयाथ संपूज्य द्विजान्पप्रच्छ सा नता ।
अमरत्वं कथं विप्रा भवेदिति पुनःपुनः ॥ २३

विप्रा ऊचुः ।

तपोजपयमैर्देवि समस्ताः सिद्धसिद्धयः ।
संप्राप्यन्तेऽमरत्वं तु न कदाचन लभ्यते ॥ २४
इत्याकर्ण्य द्विजमुखाच्चिन्तयामास सा पुनः ।
इदं स्वप्रज्ञयैवाशु भीता प्रियवियोगतः ॥ २५
मरणं भर्तुरग्रे मे यदि दैवाद्भविष्यति ।
तत्सर्वदुःखनिर्मुक्ता संस्थास्ये सुखमात्मनि ॥ २६
अथ वर्षसहस्रेण भर्तादौ चेन्मरिष्यति ।
तत्करिष्ये तथा येन जीवो गेहान्न यास्यति ॥ २७
तद्भमद्भर्तृजीवेऽस्मिन्निजे शुद्धान्तमण्डपे ।
भर्त्रा विलोकिता नित्यं निवत्स्यामि यथासुखम् ॥ २८
अद्यैवारभ्यैतदर्थं देवीं ज्ञप्तिं सरस्वतीम् ।
जपोपवासनियमैरातोषं पूजयाम्यहम् ॥ २९
इति निश्चित्य सा नाथमनुक्त्वैव वराङ्गना ।
यथाशास्त्रं चचारोग्रं तथा नियममास्थिता ॥ ३०
त्रिरात्रस्य त्रिरात्रस्य पर्यन्ते कृतपारणा ।
देवद्विजगुरुप्राज्ञविद्वत्पूजापरायणा ॥ ३१
स्नानदानतपोध्याननित्योद्युक्तशरीरिका ।
सर्वास्तिक्यसदाचारकारिणी क्लेशहारिणी ॥ ३२
यथाकालं यथोद्योगं यथाशास्त्रं यथाक्रमम् ।
तोषयामास भर्तारमपरिज्ञातसंस्थितिः ॥ ३३
त्रिरात्रशतमेवं सा बाला नियमशालिनी ।
अनारतं तपोनिष्ठामतिष्ठत्कष्टचेष्टया ॥ ३४

---

॥ ७ ॥ कुमुद्वतीषु निशि, नलिनीषु दिवा ॥ ८ ॥ सुरसदृशै-स्तारुण्यैः । सुन्दराणां विषयाणामीहितैरीप्सितैः । ईहितैर्विलासचेष्टितैः ॥ ९ ॥ प्रहेलिकाः लौकिकपरिहासकथाः । आख्यानानि पौराणिकानि । अक्षरमुष्ट्यादयो द्यूतविशेषाः ॥ १० ॥ नाट्यदृश्यार्थाः प्रबन्धा नाटिकाः । श्रवणमात्रास्वाद्यकाव्यनिबन्धकथा आख्यायिकाः । विन्दूनां विदुषां मतिभिः क्रम्यन्ते अवगम्यन्त इति विन्दुमतिक्रमैर्गूढाशयश्लोकैः । नगरग्रामचेष्टितैरनुकृतैरिति यावत् ॥ ११ ॥ वलितैर्वेष्टनैः ॥ १२ ॥ फुल्लैः पुष्पैर्लताभिर्गुञ्जाभिर्वा देहस्य गोपनं पिधानं येषु तथाविधैर्नखव्रणैर्नखक्षतैः ॥ १३ ॥ अनुधावनेन स्पर्शः समालम्भनं तत्प्रधानलीलाभिः ॥ १४ ॥ नौभिर्यानं जलेषु । युग्मभूतहस्त्यश्वानां दान्तानां दमनेन शिक्षितानामुष्ट्रादीनां च गमागमैश्चंक्रमणपरिवर्तनैः ॥ १५ ॥ गीतिकथालापः संकथनानि ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ यमेहितैर्नियमानुष्ठानैः ॥२१॥२२॥ इति चिन्तयामासेति पूर्वतनेनान्वयः । अमरत्वं भर्तुः स्वस्य चेति शेषः ॥२३॥२४॥ स्वप्रज्ञयैव इदं वक्ष्यमाणं चिन्तयामास ॥२५॥ आत्मनि सर्वदुःखनिर्मुक्ता । परलोके एतज्जन्मस्मरणाभावेन भर्तृवियोगदुःखाप्रसक्तेरिति भावः ॥ २६ ॥ ॥२७॥ शुद्धान्तस्यान्तःपुरस्य मण्डपे ॥२८॥ ज्ञप्तिं चिद्रूपम् ॥२९॥ **नाथमनुक्त्वेति** । ननु 'या स्त्री भर्त्राऽननुज्ञाता उपवासव्रतं चरेत् । आयुष्यं हरते भर्तुर्मृता नरकमृच्छति ॥' इति निन्दितमिदं कथं यथाशास्त्रमिति चेत् । 'प्रत्यक्षं वा परोक्षं वा सदा भर्तृहितं चरेत् । व्रतोपवासनियमैरुपचारैश्च लौकिकैः ॥' इति शास्त्रनिन्दाया भर्तृहितातिरिक्तस्वकाम्योपवासादिविषयत्वाददोषः ॥ ३० ॥ ३१ ॥ सर्वस्मिन् शास्त्रार्थे अस्त्यवश्यं फलमिति बुद्धिः सर्वास्तिक्यम् ॥ ३२ ॥ ३३ ॥ अविघ्नत् अनुष्ठितवती

त्रिरात्राणां शते चाथ पूजिता प्रतिमानिता ।
तुष्टा भगवती गौरी वागीशा समुवाच ताम् ॥ ३५

श्रीसरस्वत्युवाच ।

निरन्तरेण तपसा भर्तृभक्त्यतिशालिना ।
परितुष्टास्मि ते वत्से गृहाण वरमीप्सितम् ॥ ३६

श्रीराज्युवाच ।

जय जन्मजराज्वालादाहदोषशशिप्रभे ।
जय हार्दान्धकारौघनिवारणरविप्रभे ॥ ३७
अम्ब मातर्जगन्मातस्त्रायस्व कृपणामिमाम् ।
इदं वरद्वयं देहि यदहं प्रार्थये शुभे ॥ ३८
एकं तावद्विदेहस्य भर्तुर्जीवो ममाम्बिके ।
अस्मादेव हि मा यासीन्निजान्तःपुरमण्डपात् ॥ ३९
द्वितीयं त्वां महादेवि प्रार्थयेऽहं यदा यदा ।
दर्शनाय वरार्थाय तदा मे देहि दर्शनम् ॥ ४०
इत्याकर्ण्य जगन्माता तवास्त्वेवमिति स्वयम् ।
उक्त्वान्तर्धानमगमत्प्रोत्थायोर्मिरिवार्णवे ॥ ४१
अथ सा राजमहिषी परितुष्टेष्टदेवता ।
श्रुतगीतेव हरिणी बभूवानन्दधारिणी ॥ ४२
पक्षमासर्तुकटके दिनारे वर्षदण्डके ।
क्षणनाभौ स्पन्दमये कालचक्रे वहत्यथ ॥ ४३
अन्तर्धिमाजगामास्याः पत्युस्तच्चेतनं तनौ ।
संदृश्यमानमेवाशु शुष्कपत्ररसो यथा ॥ ४४
रणखण्डितदेहेऽस्मिन्मृतेऽन्तःपुरमण्डपे ।
निर्जला नलिनीवासौ परां म्लानिमुपाययौ ॥ ४५
विषोष्णश्वसनध्वस्तसकलाधरपल्लवा ।
प्राप सा मरणावस्थां सशल्येव मृगी यथा ॥ ४६
प्राप सा तमसान्धत्वं तस्मिन्मरणमागते ।
दीपज्वालालवे क्षीणे सद्मश्रीरिव भूषिता ॥ ४७
कार्श्यमाप क्षणेनासौ बाला विरसतां गता ।
यथा स्रोतस्विनी स्रोतःक्षये क्षारविधूसरा ॥ ४८
क्षिप्रमाक्रन्दिनी क्षिप्रं मौनमूका वियोगिनी ।
बभूव चक्रवाकीव मानिनी मरणोन्मुखी ॥ ४९
अथ तामतिमात्रविह्वलां
सकृपाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविह्वलां
प्रथमा वृष्टिरिवान्वकम्पत ॥ ५०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे मण्डपोपाख्याने राज्ञीपरिदेवनं नाम षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः १७

श्रीसरस्वत्युवाच ।

शवीभूतमिमं वत्से भर्तारं पुष्पपुञ्जके ।
आच्छाद्य स्थापयैनं त्वं पुनर्भर्तारमेष्यसि ॥ १
पुष्पाणि म्लानिमेष्यन्ति नो नचैष विनङ्क्ष्यति ।
भूयश्च तव भर्तृत्वमचिरेण करिष्यति ॥ २
एतदीयश्च जीवोऽसावाकाशविशदस्तव ।
न निर्गमिष्यति क्षिप्रमितोऽन्तःपुरमण्डपात् ॥ ३
षट्पदश्रेणिनयना समाकर्ण्येति बन्धुभिः ।
सा समाश्वासितागत्य पयोभिरिव पद्मिनी ॥ ४
पतिं संस्थाप्य तत्रैव पुष्पपूरप्रगोपितम् ।
किंचिदाश्वासिताऽतिष्ठद्दरिद्रेव निधानिनी ॥ ५

॥ ३४ ॥ बाह्योपचारैः पूजिता भावोपचारैः प्रतिमानिता ॥ ३५ ॥ ३६ ॥ भाविभर्तृजीवनब्रह्मविद्याप्राप्तिं भाग्यानुरूपामेव स्तुतिं दैवाद्राज्युवाच—**जयेति** ॥ ३७ ॥ इमां मामिति शेषः ॥ ३८ ॥ ३९ ॥ यदा यदा वरार्थाय दर्शनाय प्रार्थये तदा दर्शनं देहीत्यन्वयः ॥ ४० ॥ ४१ ॥ ४२ ॥ पक्षा नेमिकटका मासा मध्यकटका ऋतवो नाभिकटका यस्य । 'त्रिनाभि चक्रमजरम्' इति श्रुतेः । त्रितयानुस्यूतानि दिनान्यरास्तिर्यगनुप्रोतशङ्कवः केसरप्राया यस्य । वर्षः संवत्सरोऽक्षदण्डको यस्य । क्षणस्त्रिंशत्कलात्मको नाभिर्मध्यच्छिद्रं यस्य तथाविधे सूर्यादिस्पन्दमये ॥ ४३ ॥ रणखण्डितदेहे[1]स्येत्युत्तरात्कृष्यते । पत्युस्तत्प्राणनादिलिङ्गैः प्रत्यक्षप्रायं चेतनं तनौ लिङ्गदेहे अन्तर्धिं तिरोभावमाययौ ॥ ४४ ॥ नलिनी पद्मिनी ॥ ४५ ॥ विषवदुष्णेन निःश्वसनेन ध्वस्तो विवर्णीकृतः । सशल्येवेत्युत्प्रेक्षा । मृगी यथेत्युपमेति न यथाशब्दपौनरुक्त्यम् । सशल्येति मृग्या अपि विशेषणम् ॥ ४६ ॥ सद्मश्रीर्गृहशोभा । भूषिता प्राग्दीपेनालंकृता ॥ ४७ ॥ स्रोतसः प्रवाहस्य क्षये शोषे क्षारेणोषेण विधूसरा ॥ ४८ ॥ मानिनी प्राग्भर्तृमन्मानवती तत्क्षयान्मरणोन्मुखी ॥ ४९ ॥ सकृपा प्राग्बहुजन्मस्वाराधितत्वात्तत्त्वज्ञानदानपर्यवसितकृपावती । आकाशभवा अशरीरिणीति यावत् । अन्वकम्पतेत्यनुकम्पाफलमाश्वासनं लक्ष्यते ॥ ५० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राज्ञीपरिदेवनं नाम षोडशः सर्गः ॥ १६ ॥

अन्वयव्यतिरेकाभ्यां नव्यप्राक्तनसर्गयोः ।
मनोमात्रविलासत्वात्तुल्यत्वमिह बोध्यते ॥ १ ॥

अशरीरिण्येवाश्वासनवरप्रदानाभ्यामनुकम्पमाना श्रीसरस्वत्युवाच—**शवीभूतमिति** । पुष्पपुञ्जके पुष्पराशौ ॥ १ ॥ नो इति निषेधार्थो निपातः पूर्वान्वयी ॥ २ ॥ प्राक्तनवरस्यासत्यताशङ्कां वारयति—**एतदीय** इति ॥ ३ ॥ यथा पयःशोषाच्छुष्यन्ती

[1] देहस्य इति षष्ठ्येकवचनान्तं पदमेतत् ४५ नमश्लोकगत[illegible] इति सप्तम्येकवचननिर्देशकमिति भाति।

तस्मिन्नेव दिने सैषा तस्मिञ्छुद्धान्तमण्डपे ।
अर्धरात्रे परिजने सर्वस्मिन्निद्रया हृते ॥ ६
ज्ञप्तिं भगवतीं देवीं शुद्धध्यानमहाधिया ।
दुःखादाह्वाययामास सोवाच समुपेत्य ताम् ॥ ७
किं स्मृतास्मि त्वया वत्से धत्से किमिति शोकिताम् ।
संसारभ्रान्तयो भान्ति मृगतृष्णाम्बुवन्मुधा ॥ ८

लीलोवाच ।

क्व ममावस्थितो भर्ता किं करोत्यथ कीदृशः ।
समीपं नय मां तस्य नैका शक्नोमि जीवितुम् ॥ ९

श्रीदेव्युवाच ।

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं वरानने ॥ १०
तच्चिदाकाशकोशात्म चिदाकाशैकभावनात् ।
अविद्यमानमप्याशु दृश्यतेऽथानुभूयते ॥ ११
देशाद्देशान्तरप्राप्तौ संविदो मध्यमेव यत् ।
निमिषेण चिदाकाशं तद्विद्धि वरवर्णिनि ॥ १२
तस्मिन्निरस्तनिःशेषसंकल्पा स्थितिमेषि चेत् ।
सर्वात्मकं पदं तत्त्वं त्वं तदाप्नोष्यसंशयम् ॥ १३
अत्यन्ताभावसंपत्त्या जगतश्चैतदाप्यते ।
नान्यथा मद्वरेणाशु त्वं तु प्राप्स्यसि सुन्दरि ॥ १४

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा सा ययौ देवी दिव्यमात्मीयमास्पदम् ।
लीला तु लीलयैवासीन्निर्विकल्पसमाधिभाक् ॥ १५
तत्तत्याज निमेषेण सान्तःकरणपञ्जरम् ।
स्वदेहं खमिवोड्डीना मुक्तनीडा विहंगमी ॥ १६
ददर्श खस्था भर्तारं तस्मिन्नेवालयाम्बरे ।
संस्थितं पृथिवीपालमास्थाने बहुराजनि ॥ १७
सिंहासने समारूढं जयजीवेति संस्तुतम् ।
प्रस्तुतं मण्डलानीककार्यमाहर्तुमादृतम् ॥ १८
पताकामञ्जरीकीर्णराजधानीगृहस्थितम् ।
पूर्वद्वारस्थितासंख्यमुनिविप्रर्षिमण्डलम् ॥ १९
दक्षिणद्वारगासंख्यराजराजेशमण्डलम् ।
पश्चिमद्वारगासंख्यललनालोकमण्डलम् ॥ २०
उत्तरद्वारगासंख्यरथहस्त्यश्वसंकुलम् ।
एकभृत्यविनिर्णीतदक्षिणापथविग्रहम् ॥ २१
कर्णाटनाथरचितपूर्वदेशक्रियाक्रमम् ।
सुराष्ट्राधिपनिर्णीतसर्वम्लेच्छोत्तरापथम् ॥ २२
मालदेशसमाक्रान्तसर्वपाश्चात्यतङ्गणम् ।
दक्षिणाब्धितटायातलङ्कादूतविनोदितम् ॥ २३
पूर्वाब्धितटमाहेन्द्रसिद्धोक्तगगनापगम् ।
उत्तराब्धितटायातदूतवर्णितगुह्यकम् ॥ २४
पश्चिमाब्धितटालोकवर्णितास्तमयक्रमम् ।
असंख्यबद्धभूपालकलाकीर्णाखिलाजिरम् ॥ २५
यज्ञवाटपठद्विप्रजिततूर्याग्रनिःस्वनम् ।
बन्दिकोलाहलोल्लासप्रतिशुद्धनकुञ्जरम् ॥ २६

---

पद्मिनी पयोभिरागत्याश्वास्यते तद्वत् ॥ ४ ॥ ५ ॥ शुद्धान्तोऽवरोधः ॥ ६ ॥ शुद्धध्यानसहितमहाधिया आहूतेवागतेत्याह्वाययामासेत्युत्प्रेक्षा । 'अर्तिह्री–' इत्येतदपवादेन 'शाच्छासाह्वा–' इत्यादिना युक् । सा सरस्वती ॥ ७ ॥ तत्रादौ शोकापनयाय तद्धेतूनां मिथ्यात्वमाह—**संसारे**ति ॥ ८ ॥ ९ ॥ इहलोकवत्परलोककल्पनाया अपि चिन्मात्राधिष्ठानकत्वं दर्शयितुं चिदाकाशं विविच्य दर्शयति—**चित्ते**ति । वासनामयं चित्ताकाशं निरूढं व्यावहारिकं तृतीयकं उभयसंधावुभयशून्यं चिदाकाशं सुलक्ष्यमिति भावः ॥ १० ॥ चिदाकाशमेव स्वावरणाज्ञानाविविक्तं स्फुरदसज्जगदात्मना सद्यो दृश्यते तेन च दुःखाद्यनुभूयत इत्याह—**तदि**ति । तत् त्वत्पृष्टभर्त्रवस्थानस्थलादि वस्तुतश्चिदाकाशकोशात्मकमेव । अतः पृथगविद्यमानमपि चिदाकाशस्यैकाग्रचिन्तनात् आशु इत एव दृश्यते, अथ तत्र गत्वा अनुभूयते चेत्यर्थः ॥ ११ ॥ तदर्थं चिदाकाशं परिचाययति—**देशादि**ति । क्रमिकविषयद्वयाभाससंधौ तदुभयशून्यचिदाकाशः सुलक्ष्य इत्यर्थः ॥ १२ ॥ अतस्तव तत्प्राप्तिरेव तद्भावस्थितभर्तृसमीपे प्राप्तिस्तत्रैव भर्तृपरलोककल्पनादित्याशयेनाह—**तस्मिन्नि**ति ॥ १३ ॥ कथं तर्हि तत्प्राप्तिस्तत्रोपायमाह—**अत्यन्ते**ति । तत्त्वदर्शनेनाविद्याक्षये द्वैतानुदय एवात्यन्ताभावसंपत्तिः । तत्र 'नान्यः पन्था' इति श्रुतिर्मानमित्यभिप्रेत्याह—**नान्यथे**ति । मम तर्हि कथं ज्ञानप्राप्तिस्तत्राह—**मद्वरेणे**ति ॥ १४ ॥ लीलया वरप्रभावाद्विनैवाभ्यासश्रमम् ॥ १५ ॥ लोहपञ्जरवद्दुर्भेद्यान्तःकरणसहितं स्थूलदेहम् । स्थिरीकृतचेतसा अभिमानत्याग एवात्र विवक्षितो नतु मरणवद्बहिर्निर्गमनम् ॥ १६ ॥ खमत्र चिदाकाशस्तत्स्था सती आलयाम्बरे आविर्भूतस्ववासनाकर्मानुरूपदेहगेहादिसंपत्त्या संस्थितम् ॥ १७ ॥ प्रस्तुतमुपस्थितं कार्यमाहर्तुं संपादयितुम् ॥ १८ ॥ पताकामण्डलैर्व्याप्ताया राजधान्याः प्रधानगृहे स्थितम् । इत आरभ्य बहुपदबहुव्रीहयः सर्वे ॥ १९ ॥ ललनालोकाः स्त्रीजनाः ॥ २० ॥ एकभृत्यवचसा विनिर्णीतो दक्षिणापथे विग्रहो युद्धप्रसङ्गो येन ॥ २१ ॥ सर्वदेशराजानां तद्वश्यतां दर्शयति—**कर्णाटे**ति । क्रियाक्रमो व्यवहारमर्यादास्थापनम् । निर्णीताः निगृह्य वशीकृताः ॥ २२ ॥ मालदानामीशेन राज्ञा सम्यगाक्रान्तास्तङ्गणा देशविशेषाः ॥ २३ ॥ महेन्द्रपर्वते भवो माहेन्द्रः सिद्धस्तपस्वी तेनोक्ता वर्णिता सहस्रमुखविस्तारादिविचित्रा गगनापगा गङ्गा यस्मै ॥ २४ ॥ अब्धितटमालोकितवानित्यब्धितटालोको दूतस्तेन वर्णितः । असंख्यानां श्रेणीबद्धानां भूपालानां कलाभिः कीर्णाः ॥ २५ ॥ तूर्याग्रं वाद्यश्रेष्ठम् । बन्दिकोलाहलोल्लासस

गेयवाद्योद्यतध्वानप्रध्वनद्गगनान्तरम् ।
हयहस्तिरथाराजिरजोमेघघनाम्बरम् ॥ २७
पुष्पकर्पूरधूपाढ्यं गन्धामोदितपर्वतम् ।
सर्वमण्डलसंभाररचितानेकशासनम् ॥ २८
यशःकर्पूरजलदसुशुभ्राम्बरपर्वतम् ।
रोदसीस्तम्भभूतैकस्वप्रतापजितार्ककम् ॥ २९
आरम्भमन्थरोदारकार्यसंव्यग्रभूमिपम् ।
नानानगरनिर्माणसोद्योगस्थपतीश्वरम् ॥ ३०
पपाताथ महारम्भा सा तां नरपतेः सभाम् ।
व्योमात्मिका व्योममयीं सिंहिकेवाम्बराटवीम् ॥ ३१
भ्रमन्तीं तत्र तामग्रे ददृशुस्ते न केचन ।
संकल्पमात्ररचितां पुरुषाः कामिनीमिव ॥ ३२
तथा ते तां न ददृशुः संचरन्तीं पुरोगताम् ।
अन्यसंकल्परचितामन्येन नगरीं यथा ॥ ३३
प्राक्तनानेव तान्सर्वान्स्वान्ददर्श सभागतान् ।
भूभृतेव सुसंप्राप्तान्नगरान्नगरान्तरम् ॥ ३४
तद्देशांस्तत्समाचारांस्तथा तानेव बालकान् ।
ता एव बालवनितास्तांस्तानेव च मन्त्रिणः ॥ ३५
तानेव भूमिपालांश्च तांस्तानेव च पण्डितान् ।
तानेव नर्मसचिवान्भृत्यांस्तानेव तादृशान् ॥ ३६
अथान्यानप्यपूर्वांश्च पण्डितान्सुहृदस्तथा ।
व्यवहारांस्तथान्यांश्च पौरानन्यांस्तथैव च ॥ ३७
मध्याह्नकाले दिवसे घनदावाकुला दिशः ।
अन्तरिक्षं सचन्द्रार्कं साम्भोदपवनध्वनि ॥ ३८
महीरुहनदीशैलपुरपत्तनमण्डितम् ।
नानानगरविन्यासजङ्गलग्रामसंकुलम् ॥ ३९
द्विरष्टवर्षं भूपालं प्राक्तन्या जरसोज्झितम् ।
प्राक्तनीं जनतां सर्वां समस्तान्ग्रामवासिनः ॥ ४०
सा तानालोक्य ललना चिन्तापरवशाभवत् ।
तस्मिन्नगरवास्तव्याः किं ते सर्वे मृता इति ॥ ४१
पुनः प्रज्ञप्तिबोधेन प्राक्तनान्तःपुरं गता ।
क्षणेन च ददर्शात्र सार्धरात्रे तथैव तान् ॥ ४२
अथ सोत्थापयामास निद्राक्रान्तं सखीजनम् ।
आह चातीव मे दुःखमास्थानं दीयतामिति ॥ ४३
भर्तुः सिंहासनस्यास्य पार्श्वे तिष्ठाम्यहं यदि ।
पश्यामि स्वभ्यसंघातं तत्प्रजीवामि नान्यथा ॥ ४४
स राजपरिवारोऽथ तयेत्युक्ते यथाक्रमम् ।
आसीद्विनिद्रः संव्यग्रः सर्वैः सर्वस्वकर्मणि ॥ ४५
पौरान्सभ्यान्समानेतुं ययुर्याष्टीकपङ्क्तयः ।
व्यवहारं कलयितुमुर्व्यामर्ककरा इव ॥ ४६
आस्थानभूमिं भृत्याश्च मार्जयामासुरादृताः ।
प्रावृट्पयोदमलिनं खं शरद्वासरा इव ॥ ४७
अङ्गणं प्रति दीपौघास्तस्थुः पीततमोऽम्भसः ।
आश्चर्यदर्शनायेव संप्राप्ता ऋक्षपङ्क्तयः ॥ ४८
जनताः पूरयामासुः पूरैरजिरभूमिकाः ।
अब्धीन्प्रलयसंशुष्कान्पुरासर्ग इवाम्भसा ॥ ४९
आजग्मुर्मन्त्रिसामन्ताः स्वस्वं स्थानमनिन्दिताः ।
त्रैलोक्ये पुनरुत्पन्ने लोकपाला यथा दिशः ॥ ५०
ववुराकीर्णकर्पूरसान्द्रावश्यायशीतलाः ।
उत्फुल्लकुसुमोद्भ्रान्तमांसलामोदितानिलाः ॥ ५१
पर्यन्तेषु प्रतीहारास्तस्थुर्धवलवाससः ।
ऋष्यमूकार्कतापार्तमेघमाला इवाद्रिषु ॥ ५२
प्रभापीततमःपुञ्जाः पेतुः पुष्पोत्करा भुवि ।
चण्डमारुतविध्वस्तास्तारकानिकरा इव ॥ ५३

प्रतिश्रुतः प्रतिध्वनिकरा वनकुञ्जरा यस्य ॥ २६ ॥ गेयेभ्यो वाद्येभ्यश्चोद्यतैर्ध्वानैः प्रध्वनद्गगनमध्यं यस्य । हयादीनां आ सर्वतो राजयो यत्र ॥ २७ ॥ पर्वतशब्देन पर्वतसदृशाः प्रासादा उच्यन्ते । सर्वेभ्यो मण्डलेभ्य आहृत्योपायनादि संभरन्ति पूरयन्ति गृहं ये भृत्यास्तेभ्यो रचितानेकशासनम् ॥ २८ ॥ स्वयशःकर्पूरराश्युपमाना जलदलक्षणाः सुशुभ्रा अम्बरोद्भूतपर्वता यस्य ॥ २९ ॥ आरम्भमन्थरेषु गुरुतरारम्भेषूदारकार्येषु संव्यग्रा भूमिपाः सामन्ता यस्य । स्थपतयः शिल्पिकुलपतयः ॥ ३० ॥ पपात प्रविवेश । सा लीला । वासनामात्ररूपत्वादुभयोर्व्योमरूपता । सिंहिका नीहारपटली ॥ ३१ ॥ संकल्पमात्ररचितामित्युभयान्वयि ॥ ३२ ॥ ३३ ॥ स्वान्स्वीयान् । भूभृता सहेति शेषः ॥३४॥ तैः स्वदेशीयैः सम आचारो येषां तान् ॥ ३५ ॥ नर्मसचिवान् रहस्यविचारसहायान् ॥ ३६ ॥ वासनामये स्वाप्न इव न पूर्वसादृश्यनियम इत्याह—अथेति ॥ ३७ ॥ घनैर्निबिडैर्दावैररण्यैः ॥ ३८ ॥ ३९ ॥ ४० ॥ तस्मिन्वासनानगरे आलोक्य नगरवास्तव्याः प्राक्तननगरस्थाः ॥ ४१ ॥ प्रज्ञप्तिः सरस्वती तत्प्रसादजेन बोधेन समाधिव्युत्थानेन । तथैव पूर्ववदेव स्थितानिति शेषः ॥ ४२ ॥ आस्थानं सभायां संनिधानम् ॥ ४३ ॥ ४४ ॥ यथाक्रमं यथोचितं सर्वस्मिन्स्वस्वोचितकर्मणि ॥ ४५ ॥ ४६ ॥ ४७ ॥ ऋक्षपङ्क्तयो नक्षत्रसमूहाः ॥ ४८ ॥ पूरैः पूरवत्प्रवृत्तैः सङ्घैः । पुरासर्गो जनसृष्टिप्राक्कालः ॥ ४९ ॥ ५० ॥ अवश्यायो हिमम् । धावल्यशैत्याभ्यां तत्सादृश्योपपादनायाकीर्णकर्पूरेति । कुसुमोद्भ्रान्तैर्मकरन्दैर्मांसलः पुष्ट आमोदः संजातो येषाम् । तारकादित्वादितच् ॥ ५१ ॥ पर्यन्तेष्वास्थानप्रान्तेषु । ऋष्यमूकः सुग्रीवालयस्तत्र सुग्रीवानुग्रहायार्कस्य विशेषसंनिधानात्तत्तापार्ताः । अद्रिषु हिमवदादिषु ॥ ५२ ॥ चण्डमारुतोऽत्र प्रलयमारुतः

१ मृता अपि इति पाठः. २ पश्यन्ती इति पाठः. ३ सभ्यसंघातं इति पाठः. ४. संविग्नः इति पाठः. ५ सर्वान्सभ्यान् इति पाठः.

आस्थानं पूरयामासुर्महीपालानुयायिनः ।
उत्फुल्लकमलोत्कीर्णं हंसा इव सरोवरम् ॥ ५४
सिंहासनसमीपस्थे हैमचित्रासने नवे ।
उपाविशदसौ लीला लीलेव स्मरचेतसि ॥ ५५
ददर्श तान्नृपान्सर्वान्पूर्वानेव यथास्थितान् ।
गुरूनार्यान्सखीन्सभ्यान्सुहृत्संबन्धिबान्धवान् ॥ ५६
सकलमेव हि पूर्ववदेव सा
समवलोक्य मुदं परमां ययौ ।
नृपतिराप्तजनं खलु जीवना-
भ्युदितया च बभौ शशिवच्छ्रिया ॥ ५७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने संदेहराष्ट्रवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः १८

श्रीवसिष्ठ उवाच ।

इत्थं विनोदयामीदं दुःखदं चित्तमित्यलम् ।
बोधयित्वेङ्गितैर्भूपानास्थानादुत्थिताथ सा ॥ १
प्रविश्यान्तःपुरं भर्तुः पार्श्वेऽन्तःपुरमण्डपे ।
विवेश पुष्पगुप्तस्य चिन्तयामास चेतसा ॥ २
अहो विचित्रा मायेयमेतेऽस्मत्पुरमानवाः ।
बहिरन्तरवद्देशे तत्र चेह च संस्थिताः ॥ ३
तालीतमालहिंतालमालिता गिरयोऽप्यमी ।
यथा तत्र तथेहापि बत मायेयमातता ॥ ४
आदर्शेऽन्तर्बहिश्चैव यथा शैलोऽनुभूयते ।
बहिरन्तश्चिदादर्शे तथा सर्गोऽनुभूयते ॥ ५
तत्र भ्रान्तिमयः सर्गः कः स्यात्कः पारमार्थिकः ।
इति पृच्छामि वागीशामभ्यर्च्योक्तमसंशयम् ॥ ६
इति निश्चित्य तां देवीं पूजयामास सा तदा ।
ददर्श च पुरः प्राप्तां कुमारीरूपधारिणीम् ॥ ७
भद्रासनगतां देवीमुपविश्य पुरोगता ।
परमार्थमहाशक्तिं लीलाऽपृच्छद्भुवि स्थिता ॥ ८

लीलोवाच ।

अनुकम्प्यस्य नो देवि भजन्त्युद्वेगमुत्तमाः ।
त्वयैवं किल सर्गादौ स्थापिता स्थितिरुत्तमा ॥ ९
तदिदं यत्पुरः प्रह्वा पृच्छामि परमेश्वरि ।
तद्ब्रूहि त्वत्कृतो नूनं सफलो मेऽस्त्वनुग्रहः ॥ १०
अस्त्यादर्शो जगन्नाम्नः खादप्यधिकनिर्मलः ।
यस्य योजनकोटीनां कोटयोऽवयवो मनाक् ॥ ११
निःसंधितवचोज्योतिर्घनो मृदुसुशीतलः ।
अचेत्यचिदिति ख्यातो नाम्ना निर्भित्तिरग्रतः ॥ १२
दिक्कालकलनाकाशप्रकाशनियतिक्रमाः ।
यत्रेमे प्रतिबिम्बन्ति परां परिणतिं गताः ॥ १३
त्रिजगत्प्रतिबिम्बश्रीर्बहिरन्तश्च संस्थिता ।
तत्र वै कृत्रिमा का स्यात्कासौ वा स्यादकृत्रिमा ॥ १४

श्रीदेव्युवाच ।

अकृत्रिमत्वं सर्गस्य कीदृशं वद सुन्दरि ।
कीदृशं कृत्रिमत्वं स्याद्यथावत्कथयेति मे ॥ १५

---

॥ ५३ ॥ ५४ ॥ सरस्य चेतसि लीला रतिरिव, स्मरविकृते चेतसि लीला शृङ्गारचेष्टेव वा ॥ ५५ ॥ आर्यान्मान्यान् ॥ ५६ ॥ खलु जीवनं निश्चितं जीवनं तदभ्युदितया ॥ ५७ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सन्देहराष्ट्रवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥

समाधिदृष्टसर्गस्य पूर्वसर्गस्य चाधुना ।
दृश्यत्वात्तुल्यमिथ्यात्वे चिन्मात्रस्थितिरुच्यते ॥ १ ॥

इत्थमास्थानदर्शनादिना विनोदयाम्याश्वासयामीतीङ्गितैरभिप्रायसूचकचेष्टाभिर्भूपान्बोधयित्वा ॥ १ ॥ पुष्पैर्गुप्तस्य च्छन्नस्य भर्तुः पार्श्वे उपविश्येति शेषः ॥ २ ॥ तत्र समाधिदृष्टेऽन्तरवत्यवकाशवति देशे इहास्मत्पुरे च ॥ ३ ॥ तथेहापि संस्थिता इत्यनुषज्यते ॥ ४ ॥ मायात्वमेव दृष्टान्तेन संभावयति—**आदर्श** इति ॥ ५ ॥ तर्हि दृष्टान्तवदेवान्यतरस्यैव मिथ्यात्वं न द्वयोरपीति संभावनात्संदेहं दर्शयति—**तत्रे**ति । वागीशामभ्यर्च्य तदग्रे स्वेनोक्तं संशयमसंशयं यथा स्यात्तथा पृच्छामि ॥ ६ ॥ ७ ॥ भुवि स्थिता लीला पुरोगता भूत्वोपविश्यापृच्छदित्यन्वयः ॥ ८ ॥ अनुकम्प्यस्य दयोचितस्य विषये इति शेषः । स्थितिर्मर्यादा ॥ ९ ॥ तत्तस्मादिदं पृच्छामि तद्ब्रूहि ॥ १० ॥ संशयबीजोद्घाटनायोपोद्घातेन समाध्यनुभूतमात्मस्वरूपं प्रथमममनुवदति—**अस्त्ये**त्यादित्रिभिः । मनाक् अल्पः ॥ ११ ॥ निःसंधितानि संसर्गागोचराणि । अखण्डार्थानीति यावत् । वचांसि यस्मिंस्तथाविधः प्रज्ञानज्योतिर्घनः अमूर्तत्वान्मृदुरकठिनो निःशेषतापोपशमाच्छीतलो निर्भित्तिर्निरावरणो निर्भेदो वा सर्वव्यवहारेष्वग्रतः स्फुरन्निति शेषः ॥ १२ ॥ यत्रात्मादर्शे दिक्कालौ तदन्तश्च सर्वकार्याणां कलना उत्पत्तिरुत्पन्नानामाकाशेऽवकाशप्राप्तिस्तेजोनयनादिभिः प्रकाशः प्रकाशितानां चार्थक्रियास्वनेनेदमित्थमेवोपपादितमीदृशव्यवहारोपयुक्तमिति नियतिक्रमाः परां देशकालविस्तीर्णां परिणतिं विकारवैचित्र्यं गताः प्राप्ताः प्रतिबिम्बवदन्तः स्फुरन्ति ॥ १३ ॥ औपोद्घातिकप्रसञ्जितं प्रस्तुतं पृच्छति—**त्रिजगदि**ति । तत्र तयोर्मध्ये । कृत्रिमा काल्पनिकी । मिथ्येति यावत् ॥ १४ ॥ तत्त्वदृशा जगत्यकृत्रि-

लीलोवाच ।

यथाहमिह तिष्ठामि त्वं च देवि स्थिताम्बिके ।
असावकृत्रिमः सर्ग इति देवेशि वेद्म्यहम् ॥ १६
यत्राधुना स भर्ता मे स्थितः सर्गः स कृत्रिमः ।
अहं मन्ये यतः शून्यो देशकालाद्यपूरकः ॥ १७

श्रीदेव्युवाच ।

कृत्रिमोऽकृत्रिमात्सर्गान्न कदाचन जायते ।
नहि कारणतः कार्यमुदेत्यसदृशं क्वचित् ॥ १८

लीलोवाच ।

दृश्यते कारणात्कार्यं सुविलक्षणमम्बिके ।
अम्ब्वादातुमशक्ता मृद्घटस्तज्जस्तदास्पदम् ॥ १९

श्रीदेव्युवाच ।

संपद्यते हि यत्कार्यं कारणैः सहकारिभिः ।
मुख्यकारणवैचित्र्यं किंचित्तत्रावलोक्यते ॥ २०
वद तद्भर्तृसर्गस्य किं पृथ्व्यादिषु कारणम् ।
तद्भूमण्डलतो भूतिर्जाता तत्र वरानने ॥ २१
गतं चेदित उड्डीय कुतः स्यादिह भूतलम् ।
सहकारीणि कानीव कारणान्यत्र कारणे ॥ २२
कारणानामभावेऽपि योदेति सहकारिता ।
तत्पूर्वकारणान्नान्यत्सर्वेणेत्यनुभूयते ॥ २३

लीलोवाच ।

स्मृतिः सा देवि मद्भर्तुस्तथा स्फारत्वमागता ।
स्मृतिस्तत्कारणं वेद्मि सर्गोऽयमिति निश्चयः ॥ २४

श्रीदेव्युवाच ।

स्मृतिराकाशरूपा च यथा तज्जस्तथैव ते ।
भर्तुः सर्गोऽनुभूतोऽपि स व्योमैव तथाबले ॥ २५

लीलोवाच ।

स्मृत्याकाशमयः सर्गो यथा भर्तुर्समोदितः ।
तथैवेममहं मन्ये स सर्गोऽत्र निदर्शनम् ॥ २६

श्रीदेव्युवाच ।

एवमेतदसत्सर्गो भर्तुस्तैर्भाति भासुरः ।
तथैवायमिहाभाति पश्याम्येतदहं सुते ॥ २७

लीलोवाच ।

यथा पत्युरमूर्तोऽस्मात्सर्गात्सर्गो भ्रमात्मकः ।
जातस्तथा कथय मे जगद्भ्रमनिवृत्तये ॥ २८

श्रीदेव्युवाच ।

प्राक्स्मृतेर्भ्रान्तिमात्रात्मा सर्गोऽयमुदितो यथा ।
स्वप्नभ्रमात्मको भाति तथेदं कथ्यते शृणु ॥ २९

---

मत्वं नास्त्येवेत्याशयेन संशयबीजं निरसिष्यन्ती देवी पृच्छति—**अकृत्रिमत्व**मिति ॥ १५ ॥ विपुलत्वेन प्रमितस्य तदपर्याप्तदेशकालपरिच्छेदो मिथ्यात्वव्याप्यो गिरिप्रतिबिम्बादौ दृष्टः, स च भर्तृप्रपञ्च एव दृश्यते नास्मिन्निति वैधर्म्यदर्शिनी लीलोवाच—**यथे**त्यादि द्वाभ्याम् वेद्मि संभावयामि ॥ १६ ॥ शून्यो मिथ्याभूतो यतः स्वावस्थित्यपर्याप्तस्याल्पस्यापि देशकालव्यवहारादेरपूरकः प्रतिबिम्बस्वप्नपर्वतादिस्तथा दृष्ट इत्यर्थः ॥ १७ ॥ भर्तृसर्गो निर्हेतुकः सहेतुको वा । नाद्यः । अनुत्पत्तिप्रसङ्गात् । द्वितीये कृत्रिमहेतुकोऽकृत्रिमहेतुको वा। तदाऽऽद्येऽपि एतत्सर्गहेतुकोऽन्यहेतुको वा । तत्रान्यस्याप्रसिद्धेराद्यकल्पपरिशेषे कृत्रिमहेतोरस्यापि सर्गस्य कृत्रिमत्वप्रसङ्गः । भिन्नसत्ताकयोर्हेतुफलभावादर्शनादिति न सर्गयोर्वैधर्म्यमित्याशयेन देव्युत्तरमाह—**कृत्रिम इति** ॥ १८ ॥ उक्तनियमे लीला व्यभिचारं शङ्कमानाह—**दृश्यत इति** । पिण्डभूता मृत् अम्बु जलमादातुमन्तर्धारयितुमशक्ता । तज्जो घटस्तु तस्याम्बुन आस्पदं धारणसमर्थो दृश्यते । तथाच समशक्तितानियमवन्न समसत्तानियमोऽपि संभवतीति भावः ॥ १९ ॥ उपादानवैचित्र्यात्सहकारिनिमित्तवैचित्र्याद्वा पिण्डघटयोर्वैचित्र्यमस्तु यत्खलु तुल्योपादाननिमित्तकं यथा दीपाद्दीपान्तरं न तत्र वैचित्र्यं दृश्यते । प्रकृतसर्गयोरपि तथात्वमेवेत्याशयेन देवी समाधत्ते—**संपद्यत** इति । मुख्यमसाधारणं दण्डचक्रादि ॥ २० ॥ त्वद्भर्तृसर्गस्य तु नासाधारणकारणवैचित्र्यं कल्पयितुं शक्यमुभयोर्मायाकामकर्मवासनामात्रमूलकत्वाविशेषादित्याशयेनाह—**वदे**ति । एतत्सर्गान्तर्गतपृथ्व्यादिषु मध्ये त्वद्भर्तृसर्गस्य किं कारणं येन वैचित्र्यं स्यात् । भौतिकेष्वपि यथा एतद्भूमण्डलतो भूतिरुत्पत्तिर्जाता तथा तद्भूमण्डलतस्तत्रेति न वैषम्यमित्यर्थः ॥ २१ ॥ अत्रत्यभूम्यादेरेव तत्रत्यभूम्याद्युत्पत्तिरस्त्विति चेत्तत्राह–**गत**मिति । अगतेन तत्र कार्यजननायोगादिति भावः ॥ २२ ॥ तस्मादत्रत्यसहकारिकारणानामभावेऽपि या सामग्रीलक्षणा सहकारिता उदेति कार्यान्यथानुपपत्त्या कल्प्यते सा तत्पूर्वसर्गकारणात्कामकर्मवासनाविद्यात्मकादन्यदन्या न । छान्दसी क्लीबता । तथाच न वैलक्षण्यसिद्धिरित्यर्थः ॥ २३ ॥ सत्यैतत्सर्गानुभवजन्यसंस्कारजः प्रमुष्टसत्ताकस्मृतितुल्यः स्वप्न इव मद्भर्तुः सर्गोऽस्त्विति विधान्तरेण वैधर्म्यं लीला शङ्कते—**स्मृति**रिति ॥ २४ ॥ तर्हि तज्जस्तस्मात्पूर्वदृष्टसर्गात्संस्कारद्वारा जातस्ते भर्तुः सर्गो यथा स्मृतिराकाशरूपा स्मृतिरिव पुरोवर्तिविषयशून्यत्वादाकाशरूपस्तथा अनुभूतः संस्कारहेत्वनुभवविषयः पूर्वसर्गोऽपि व्योमैव । यतः सोऽपि तथा तत्पूर्वसर्गसंस्कारज इत्यर्थः ॥ २५ ॥ उक्तमर्थं विमृश्याभ्युपगतवती लीला देव्याशयानुरूपमेवाह—**स्मृती**ति ॥ २६ ॥ लीलोक्तिमनुमोदमाना देव्युवाच—**एव**मिति । सर्वथा असन्सर्गो यस्मिन्स आत्मैव भर्तुस्तैस्तैः सर्गभावैर्भाति ॥ २७ ॥ २८ ॥ अस्यापि सर्गस्य पूर्वसर्गगोचरसंस्कारजन्यभ्रान्तित्वमेवेत्युक्तार्थस्योपपादनाय मण्डपोपाख्यानारम्भं प्रति-

---

१ स्मृतेस्तत् इति पाठः.

अस्ति क्वचिच्चिदाकाशे क्वचित्संसारमण्डपः ।
आकाशकाचदलवत्संस्थानाच्छादिताकृतिः ॥ ३०
मेरुस्तम्भस्थलोकेशपुरन्ध्रीशालभञ्जिकः ।
चतुर्दशापवरकस्त्रिगर्तो भानुदीपकः ॥ ३१
कोणस्थभूतवल्मीकव्याप्तपर्वतलोष्टकः ।
अनेकपुत्रजरठप्रजेशब्राह्मणास्पदम् ॥ ३२
जीवौघकोशकाराढ्यो व्योमोर्ध्वतलकालिमा ।
नभोनिवाससिद्धौघमशकाहितघुंघुमः ॥ ३३
पयोदगृहधूमोग्रजालावलितकोणकः ।
वातमार्गमहावंशस्थितवैमानकीटकः ॥ ३४
सुरासुरादिदुर्बाललीलाकलकलाकुलः ।
लोकान्तरपुरग्रामभाण्डोपस्करनिर्भरः ॥ ३५
सरःस्रोतोब्धिसरसीजलोक्षितमहीतलः ।
पातालभूतलस्वर्गभागभासुरकोटरः ॥ ३६
तत्र कस्मिंश्चिदेकस्मिन्कोणेष्ववरकोटरे ।
शैललोष्टतलेष्वेको गिरिग्रामकगर्तकः ॥ ३७
तस्मिन्नदीशैलवनोपगूढे
साग्निः सदारः सुतवानरोगः ।
गोक्षीरवान् राजभयाद्विमुक्तः
सर्वातिथिर्धर्मपरो द्विजोऽभूत् ॥ ३८

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो० जगद्भ्रान्तिप्रतिपादनं नामाष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः १९

श्रीदेव्युवाच ।
वित्तवेषवयःकर्मविद्याविभवचेष्टितैः ।
वसिष्ठस्यैव सदृशो नतु वासिष्ठचेष्टितः ॥ १
वसिष्ठ इति नाम्नासौ तस्याभूदिन्दुसुन्दरी ।
नाम्ना त्वरुन्धती भार्या भूमिव्योमन्यरुन्धती ॥ २
वित्तवेषवयःकर्मविद्याविभवचेष्टितैः ।
समैव साप्यरुन्धत्या नतु चेतनसत्तया ॥ ३
अकृत्रिमप्रेमरसा विलासालसगामिनी ।
सास्य संसारसर्वस्वमासीत्कुमुदहासिनी ॥ ४
स विप्रस्तस्य शैलस्य सानौ सरलशाद्वले ।
कदाचिदुपविष्टः सन्ददर्शाधो महीपतिम् ॥ ५
समग्रपरिवारेण यान्तमाखेटकेच्छया ।
महता सैन्यघोषेण मेरोरिव बिभित्सया ॥ ६
चामरैः कीर्णचन्द्रांशुपताकाभिर्लतावनम् ।
कुर्वाणं खं सितच्छत्रमण्डलै रूप्यकुट्टिमम् ॥ ७
अश्वपादूखनत्क्ष्माजरेणुपूरावृताम्बरम् ।
हास्तिकोत्तम्भितकरवाताट्टालकगोपितम् ॥ ८

जानीते—**प्रागिति** ॥ २९ ॥ तदुपयोगितया संसारं जीर्णमण्डपत्वेन वर्णयति—**अस्तीत्यादिना** । क्वचिदज्ञानावृतांशे तत्रापि क्वचित्स्वभ्रन्तःकरणभागे । 'कश्चित्' इति पाठे स्पष्टम् । आकाशरूपं यत्काचखण्डवन्नीलमूर्ध्वावयवसंस्थानं तेनाच्छादिताकृतिः ॥ ३० ॥ लोकपालतत्पुरन्ध्रीलक्षणाः प्रतिमा यस्मिन् । चतुर्दशभुवनरूपा अपवरका अन्तर्गृहा यस्मिन् । त्रिभुवनान्तरालानि गर्ता यस्मिन् ॥ ३१ ॥ भूतवम्रीणां वल्मीकप्रायनगरादिव्याप्ताः पर्वतमृत्खण्डा यस्मिन् । प्रजेशो ब्रह्मा स एव ब्राह्मणः ॥३२॥ कोशकाराः स्वबन्धनकोशनिर्मातृकृमिविशेषाः । घुंघुमेति ध्वन्यनुकरणम् ॥ ३३ ॥ वातमार्गौघः स एव महावंशः । मधुविद्यायां द्यौरेव तिरश्चीनवंश इत्युक्तेः ॥ ३४ ॥ लोकानां भ्वादीनां आन्तराः पुरग्रामा एव मण्डपान्तर्गतभाण्डोपस्करातिशयाः ॥ ३५ ॥ ३६ ॥ तत्र तस्मिन्मण्डपे । कोणलोष्टतलयोर्बहुत्वं पाशबहुत्ववदविवक्षितम् । अल्पो ग्रामो ग्रामकः स एव गर्तकः ॥ ३७ ॥ गोमत्त्वेनैव क्षीरवत्त्वलाभे पश्वन्तरसंपत्तेरपि द्योतनाय क्षीरवानित्युक्तिः । सर्वेऽपि वर्णाश्रमा अतिथयः पूज्याः पोष्याश्च यस्य ॥ ३८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जगद्भ्रान्तिप्रतिपादनं नामाष्टादशः सर्गः ॥ १८ ॥

राजदर्शनराज्येच्छादृढसंकल्पतो जनिः ।
पाद्मस्यास्यापि सर्गस्य प्राग्जन्मोक्त्यात्र वर्ण्यते ॥ १ ॥

वित्तं दैवं मानुषं च । वासिष्ठानि चेष्टितानीक्ष्वाकुवंशपौरोहित्यरामोपदेशादीनि तद्रहितः ॥ १ ॥ प्रसिद्धारुन्धतीखव्योमनि, इयं तु भूमिव्योमनीति विशेषः ॥ २ ॥ चेतनो जीवस्तत्सत्तया तत्स्वरूपस्थित्या । प्रसिद्धारुन्धतीवसिष्ठयोस्तत्त्वज्ञतया जीवन्मुक्तत्वात्तयोस्तूत्तरजन्मभाविज्ञानत्वेन तदानीमज्ञतया बद्धत्वादित्यर्थः ॥ ३ ॥ ४ ॥ सानौ प्रस्थदेशे । सरलाः समाः शाद्वला हरिततृणभूमयो यस्मिन् ॥ ५ ॥ आखेटकं मृगया । बिभित्सया विदारणसंभावनया । 'आशङ्कायां सन्वक्तव्यः' इति सन् ॥ ६ ॥ लतावनं चामरैः पताकाभिश्च कीर्णचन्द्रांशु कुर्वाणं तथा खं सितच्छत्रमण्डलै रूप्यसौधं कुर्वाणम् । उभयत्र तत्सदृशमित्यर्थः ॥ ७ ॥ अश्वानां पादूभिः खुरत्राणलोहैः खनन्त्यां मृदुत्वात्खनने अनुकूलीभवन्त्यां क्ष्मायां जातै रेणुभिः पूरिताकाशम् । आरोहति हस्तीतिवत्कर्मणोऽप्यानुकूल्याचरणविवक्षया कर्तृत्वाच्छतृप्रत्ययः । तर्हि किं राजाऽपि रजोभिः कीर्णो नेत्याह—**हास्तिकेति** । हस्तिनां समूहो हास्तिकम् । 'अचित्तहस्तिधेनोष्ठक्' इति ठक् । तत्पुष्करस्थैरुत्तम्भिता निरुद्धाः कराः सूर्यरश्मयो वाताश्च यैस्तथाविधैरट्टालकैः स्वर्णरजतमुक्तामण्डपैः

१ गूथे इति पाठः. २ याः वल्मीकं जनयन्ति वम्र्य उपदीकाः.

महाकलकलावर्तद्रवद्दिग्भूतमण्डलम् ।
क्वचत्काञ्चनमाणिक्यहारकेयूरमण्डलम् ॥ ९
तमालोक्य महीपालमिदं चिन्तितवानसौ ।
अहो नु रम्या नृपता सर्वसौभाग्यभासिता ॥ १०
पदातिरथहस्त्यश्वपताकाच्छत्रचामरैः ।
कदा स्यां दशदिकुञ्जपूरकोऽहं महीपतिः ॥ ११
कदा मे वायवः कुन्दमकरन्दसुगन्धयः ।
पास्यन्त्यन्तःपुरस्त्रीणां सुरतश्रमसीकरान् ॥ १२
कर्पूरेण पुरन्ध्रीणां पूर्णेन यशसा दिशाम् ।
इन्दूदयावदातानि कदा कुर्यां मुखान्यहम् ॥ १३
इत्थं ततःप्रभृत्येष विप्रः संकल्पवानभूत् ।
स्वधर्मनिरतो नित्यं यावज्जीवमतन्द्रितः ॥ १४
हिमाशनिरिवाम्भोजं जर्जरीकर्तुमादृता ।
जले जर्जरितेवाथ जरा द्विजमुपाययौ ॥ १५
आसन्नमरणस्याथ भार्या म्लानिमुपाययौ ।
तस्य शाम्यति पुष्पतौ लतेव ग्रीष्मभीतितः ॥ १६
मामथाराधितवती सा ततस्त्वमिवाङ्गना ।
अमरत्वं सुदुष्प्रापं बुद्ध्वेमं सावृणोद्वरम् ॥ १७
देवि स्वमण्डपादेव जीवो भर्तुर्मृतस्य मे ।
मायासीदित्यतस्तस्याः स एवाङ्गीकृतो मया ॥ १८
अथ कालवशाद्विप्रः स पञ्चत्वमुपाययौ ।
तस्मिन्नेव गृहाकाशे जीवाकाशतया स्थितः ॥ १९
संपन्नः प्राक्तनानल्पसंकल्पवशतः स्वयम् ।
आकाशवपुरेवैष पतिः परमशक्तिमान् ॥ २०
प्रभावजितभूपीठः प्रतापाक्रान्तविष्टपः ।
कृपापालितपातालस्त्रिलोकविजयी नृपः ॥ २१
कल्पाग्निररिवृक्षाणां स्त्रीणां मकरकेतनः ।
मेरुर्विषयवायूनां साध्वब्जानां दिवाकरः ॥ २२
आदर्शः सर्वशास्त्राणामर्थिनां कल्पपादपः ।
पादपीठं द्विजाग्र्याणां राकाधर्मामृतत्विषः ॥ २३
स्वगृहाभ्यन्तराकाशे चित्ताकाशमयात्मनि ।
तस्मिन्द्विजे शवीभूते भूताकाशशरीरिणि ॥ २४
सा तस्य ब्राह्मणी भार्या शोकेनात्यन्तकर्शिता ।
शुष्केव माषशिम्बीका हृदयेन द्विधाभवत् ॥ २५
भर्त्रा सह शवीभूता देहमुत्सृज्य दूरतः ।
आतिवाहिकदेहेन भर्तारं समुपाययौ ॥ २६
नदीनिखातमिव तं भर्तारमनुसृत्य सा ।
आजगाम विशोकत्वं सा वासन्तीव मञ्जरी ॥ २७

तत्रास्य विप्रस्य गृहाणि सन्ति
भूस्थावरादीनि धनानि सन्ति ।
अद्याष्टमं वासरमाप्तमृत्यो-
र्जीवो गिरिग्रामककन्दरस्थः ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० ब्राह्मणमरणं नामैकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः २०

श्रीदेव्युवाच ।

स ते भर्ताद्य संपन्नो द्विजो भूपत्वमागतः ।
या सावरुन्धती नाम ब्राह्मणी सा त्वमङ्गने ॥ १
इहेमौ कुरुतो राज्यं तौ भवन्तौ सुदम्पती ।
चक्रवाकाविव नवौ भुवि जातौ शिवाविव ॥ २

---

गोपितं रक्षितम् ॥ ८ ॥ कलकलाः कोलाहलास्तैर्दिग्भ्रमादावर्तवत् द्रवन्ति दशदिशां मृगादिभूतमण्डलानि यस्य तम् ॥ ९ ॥ चिन्तितवान् चिन्तापूर्वकं संकल्पितवान् ॥१०॥ ११ ॥ १२ ॥ सुचरित्राचरणशिक्षणैः पुरं धारयन्तीति पुरन्ध्र्यस्तासां दिशां च मुखानि कर्पूरमिश्रचन्दनेन यशसा च क्रमादिन्दूदयेनेवावदातानि सप्रकाशानि कदा कुर्याम् ॥ १३ ॥ एवमिच्छामुपवर्ण्येष्टविषये संकल्पमाह—इत्थमिति ॥ १४ ॥ हिमात्मिका अशनिर्वज्रमम्भोजमिव सरोजले जर्जरः सेतुशैथिल्यं तद्वत्तेव चेत्यर्थः ॥ १५ ॥ पुष्पतौ वसन्ते ॥ १६ ॥ १७ ॥ स्वमण्डपाद्बहिरिति शेषः । मायासीदेवेत्यन्वयः । अतः प्रार्थनात्स प्रार्थितोऽर्थोऽङ्गीकृतो दत्त इति यावत् ॥ १८ ॥ पञ्चत्वं मरणम् । अन्तःकरणवासनावच्छिन्नं ब्रह्म जीवाकाशस्तद्भावेन स्थितः ॥१९॥ नृपः संपन्न इत्युत्तरत्रान्वयः । परमशक्तिमान् दैवमानुषशक्तिविशिष्टः ॥ २० ॥ ते एव शक्ती प्रभावप्रतापशब्दाभ्यां विभज्योक्तेः । विष्टपोऽत्र त्रिविष्टपं भूपातालयोः पृथग्ग्रहणात् ॥ २१ ॥ दावाग्नौ पुनः प्ररोहसंभावनापि स्यान्नतु कल्पाग्नौ । विषया एव वायवश्चापलहेतुत्वात्तेषां मेरुरिवाप्रकम्प्यो विष्टम्भकश्च ॥२२॥ धर्मलक्षणस्यामृतत्विषश्चन्द्रस्य राका पौर्णिमा ॥ २३ ॥ चित्तसंस्कारावच्छिन्नब्रह्माकाशप्रचुरात्मनि । अतएव आकाशशरीरिणि । शवीभूते मृते सति ॥२४॥२५॥ परलोकातिवहनयोग्येन मानसेन देहेन ॥ २६ ॥ निखातं निम्नदेशम् । सा प्रसिद्धा । वासन्ती वसन्तकालप्ररूढा ॥ २७ ॥ तत्र गिरिग्रामे । वासरं वर्तत इति शेषः । कंदरशब्देन गृहमण्डपो गौण्योच्यते ॥ २८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ब्राह्मणमरणं नामैकोनविंशः सर्गः ॥ १९ ॥

श्रुते प्राग्जन्मचरितेऽप्यसंभावनकातरा ।
लीलात्र बोध्यते देव्या दृष्टान्तैश्चोपपत्तिभिः ॥ १ ॥

स द्विजोऽद्य भूपत्वमागतः संस्ते भर्ता संपन्नः ॥१॥ शिवश्च

एष ते कथितः सर्वः प्राक्तनः संसृतिक्रमः ।
भ्रान्तिमात्रकमाकाशमेवं जीवस्वरूपधृक् ॥ ३
भ्रमादस्माच्चिदाकाशे भ्रमोऽयं प्रतिबिम्बितः ।
असत्य एव वा सत्यो भवतोर्भवभङ्गदः ॥ ४
तस्माद्भ्रान्तिमयः कः स्यात्को वा भ्रान्त्युज्झितो भवेत् ।
सर्गो निरर्गलानर्थबोधान्नान्यो विजृम्भते ॥ ५

श्रीवसिष्ठ उवाच ।

इत्याकर्ण्य चिरं चारु विस्मयोत्फुल्ललोचना ।
भूत्वोवाच वचो लीला लीलालसपदाक्षरम् ॥ ६

लीलोवाच ।

देवि भोस्त्वद्वचो मिथ्या कथं संपन्नमीदृशम् ।
क्व विप्रजीवः स्वगृहे केमे वयमिह स्थिताः ॥ ७
तादृग्लोकान्तरं सा भूस्ते शैलास्ता दिशो दश ।
कथं भान्ति गृहस्यान्तर्मद्भर्ता येष्ववस्थितः ॥ ८
मत्त ऐरावतो बद्धः सर्षपस्येव कोटरे ।
मशकेन कृतं युद्धं सिंहौघैरणुकोटरे ॥ ९
पद्माक्षे स्थापितो मेरुर्निगीर्णो भृङ्गसूनुना ।
स्वप्नाब्दगर्जितं श्रुत्वा चित्रं नृत्यन्ति बर्हिणः ॥ १०
असमंजसमेवैतद्यथा सर्वेश्वरेश्वरि ।
तथा गृहान्तः पृथिवी शैलाश्चेत्यसमञ्जसम् ॥ ११
यथावदेतद्देवेशि कथयामलया धिया ।
प्रसादानुगृहीते हि नोद्विजन्ते महौजसः ॥ १२

श्रीदेव्युवाच ।

नाहं मिथ्या वदामीदं यथावच्छृणु सुन्दरि ।
भेदनं नियतीनां हि क्रियते नासदादिभिः ॥ १३
विभिद्यमानामन्येन स्थापयाम्यहमेव याम् ।
मर्यादां तां मया भिन्नां कोऽपरः पालयिष्यति ॥ १४
सग्रामद्विजजीवात्मा तस्मिन्नेव स्वसद्मनि ।
व्योम्न्येवेदं महाराष्ट्रं व्योमात्मैव प्रपश्यति ॥ १५
प्राक्तनी सा स्मृतिर्लुप्ता युवयोरुदितान्यथा ।
स्वप्ने जाग्रत्स्मृतिर्यद्वदेतन्मरणमङ्गने ॥ १६
यथा स्वप्ने त्रिभुवनं संकल्पे त्रिजगद्यथा ।
यथा कथार्थसंग्रामो मरुभूमौ जलं यथा ॥ १७
तस्य ब्राह्मणगेहस्य सशैलवनपत्तना ।
इयमन्तः स्थिता भूमिः संकल्पादर्शयोरिव ॥ १८
असत्यैवेयमाभाति सत्येव घनसर्गता ।
तस्मात्सत्यावभासस्य चिद्व्योम्नः कोशकोटरे ॥ १९
असत्याद्यत्समुत्पन्नं स्मृत्या नाम तदप्यसत् ।
मृगतृष्णातरङ्गिण्यां तरङ्गोऽपि न सद्यतः ॥ २०
इदं त्वदीयं सदनं तद्गेहाकाशकोशगम् ।
विद्धि मां त्वां च सर्वं च तच्चिद्व्योमैव केवलम् ॥ २१
स्वप्नसंभ्रमसंकल्पस्वानुभूतिपरम्पराः ।
प्रमाणान्यत्र मुख्यानि संबोधाय प्रदीपवत् ॥ २२
स्थितो ब्राह्मणगेहान्तर्द्विजजीवस्तदम्बरे ।
ससमुद्रवना पृथ्वी स्थिताब्ज इव षट्पदः ॥ २३
तस्याः कस्मिंश्चिदेकस्मिन्पेलवे कोणकोटरे ।
इदं पत्तनदेहादि केशोण्डुक इवाम्बरे ॥ २४
तस्मिन्नस्मिन्पुरे तन्वि तदेव सदनं स्थितम् ।
तस्मात्किं त्रसरेण्वन्तर्जगद्वृन्दमिव स्थितम् ॥ २५
परमाणौ परमाणौ सन्ति वत्से चिदात्मनि ।
अन्तरन्तर्जगन्तीति किंत्वेतन्नाम शङ्क्यते ॥ २६

---

शिवा च शिवौ ॥ २ ॥ उक्तां कथामुपसंहरन्ती सर्गद्वयवत्प्राक्तनोऽपि सर्गो भ्रम एवेत्याह—**एष** इति । तत्र ब्रह्माकाशस्य जीवभावभ्रम एव मूलमित्याह—**भ्रान्ती**ति ॥ ३ ॥ उत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमो हेतुरिति दर्शयति—**भ्रमादि**ति । स्वदृष्ट्या असत्य एव अधिष्ठानदृष्ट्या सत्यो वा ॥ ४ ॥ एवं च मिथ्यानर्थबोधत्वेन सर्वसर्गाणां तुल्यतैवेत्याह—**तस्मादि**ति ॥ ५ ॥ असंभावनया चिरं विस्मयोत्फुल्ललोचना भूत्वा ॥ ६ ॥ मिथ्या अनृतमथवा त्वद्वचस्त्वमिथ्या ईदृशं विरुद्धमिदं कथं संपन्नमित्यर्थः । इहास्मिन्विपुले देशे ॥ ७ ॥ समाधिदृष्टभर्तृसर्गोऽपि स्वगृहे असंभावित इत्याह—**तादृगि**ति ॥ ८ ॥ असंभावनापुष्टये देव्युक्तार्थे दृष्टान्तैरसमञ्जसतामुपपादयति—**मत्त** इत्यादित्रिभिः ॥ ९ ॥ १० ॥ ११ ॥ यथावत् यथैतदुपपद्यते तथेत्यर्थः ॥ १२ ॥ असामञ्जस्योपपादनसंभावितमनृतवदनं परिहरन्ती देव्याह—**नाह**मिति द्वाभ्याम् । नियतीनां 'नानृतं वदेत्' इत्यादिश्रौतनियमानाम् ॥ १३ ॥ १४ ॥ राजवासनोपहितचिद्व्योमात्मैव ॥ १५ ॥ तावेवावां चेत्कुतो न प्रत्यभिजानीवो मरणस्य वा किं रूपं तत्राह—**प्राक्तनी**ति ॥ १६ ॥ १७ ॥ ॥ १८ ॥ असत्यस्यापि सत्यवद्भाने निमित्तमाह—**तस्मादि**ति । पञ्चकोशान्तर्गतसत्यचिद्व्योम्नो निमित्तादित्यर्थः ॥ १९ ॥ प्राक्सर्गस्यासत्यत्वेऽस्य सर्गस्य किं तत्राह—**असत्यादि**ति ॥ २० ॥ ॥ २१ ॥ सर्वप्रपञ्चमिथ्यात्वे चिन्मात्रपरिशेषे चानुभवसिद्धदृष्टान्तमुखेनानुमानप्रमाणान्याह—**स्वप्ने**ति ॥ २२ ॥ अनेन सर्गेण न केवलं गेहाकाश एव न पूर्यते किंतु तदेकदेशस्थजीवाकाशैकदेशोऽपि । अतो मिथ्यात्वमित्याह—**स्थित** इति द्वाभ्याम् ॥ २३ ॥ निर्मले नभसि कुण्डलितकेशाकारभ्रमः केशोण्डुकः ॥ २४ ॥ एवंच विप्रसदनस्य विपुलसर्गान्तःप्ररोहेणाश्वतरीकुक्षेर्गर्भेणेव न विनाशशङ्कापीत्याह—**तस्मिन्नि**ति । एवकारो भिन्नक्रमः । तस्मिन्सदनेऽस्मिन्सर्गे पुरे चान्तर्निरूढेऽपीति शेषः । तद्विप्रसदनं स्थितमेव न विदीर्णमित्यर्थः । एवं च तस्माद्विप्रसदनादुदाहृतात्किमाश्चर्यं, यतस्त्रसरेण्वन्तरेऽपि जगद्वृन्दं स्थितम् । इवकारो मिथ्यात्वेनासामञ्जस्यपरिहारद्योतनार्थः ॥२५॥ आकाशादिजगत्सर्गेण प्राक्तनी निरवकाशता विरोधिनीति परमा-

---

१ स्मृतिर्नष्टा इति पाठः. २ सर्गे न इति पाठः.

लीलोवाच ।

अष्टमे दिवसे विप्रः स मृतः परमेश्वरि ।
गतो वर्षगणोऽस्माकं मातः कथमिदं भवेत् ॥ २७

श्रीदेव्युवाच ।

देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथाङ्गने ।
नास्त्येवेति यथान्यायं कथ्यमानं मया शृणु ॥ २८
यथैतत्प्रतिभामात्रं जगत्सर्गावभासनम् ।
तथैतत्प्रतिभामात्रं क्षणकल्पावभासनम् ॥ २९
क्षणकल्पं जगत्सर्वं त्वत्तामत्तात्मजन्मनाम् ।
यथावत्प्रतिभासस्य वक्ष्ये क्रममिमं शृणु ॥ ३०
अनुभूय क्षणं जीवो मिथ्यामरणमूर्च्छनम् ।
विस्मृत्य प्राक्तनं भावमन्यं पश्यति सुव्रते ॥ ३१
तदेवोन्मेषमात्रेण व्योम्न्येव व्योमरूप्यपि ।
आधेयोऽयमिहाधारे स्थितोऽहमिति चेतति[1] ॥ ३२
हस्तपादादिमान्देहो ममायमिति पश्यति ।
यदेव चेतति वपुस्तदेवेदं स पश्यति ॥ ३३
एतस्याहं पितुः पुत्रो वर्षाण्येतानि सन्ति मे ।
इमे मे बान्धवा रम्या ममेदं रम्यमास्पदम् ॥ ३४
जातोऽहमभवं बालो वृद्धिं यातोऽहमीदृशः ।
बान्धवाश्चास्य मे सर्वे तथैव विचरन्त्यमी ॥ ३५
चित्ताकाशघनैकत्वात्स्वेऽप्यन्येऽपि भवन्ति ते ।
एवं नामोदितेऽप्यस्य चित्ते संसारखण्डके ॥ ३६
न किंचिदप्यभ्युदितं स्थितं व्योमैव निर्मलम् ।
स्वप्ने द्रष्टरि यद्वच्चित्तद्वद्दृश्ये चिदेव सा ॥ ३७
सर्वैकतया यस्मात्सा स्वप्ने दृष्टदर्शना ।
यथा स्वप्ने तथोदेति परलोकदृगादिभिः ॥ ३८
परलोके यथोदेति तथैवेहाभ्युदेति सा ।
तत्स्वप्नपरलोकेहलोकानामसतां सताम् ॥ ३९
न मनागपि भेदोऽस्ति वीचीनामिव वारिणि ।
अतो जातमिदं विश्वमजातत्वादनाशि च ॥ ४०
स्वरूपत्वात्तु नास्त्येव यच्च भाति चिदेव सा ।
यथैव चेत्यनिर्हीणा परमव्योमरूपिणी ॥ ४१
सचेत्यापि तथैवैषा परमव्योमरूपिणी ।
तस्माच्चेत्यमतो नान्यद्वीचित्वादीव वारितः ॥ ४२
वीचित्वं च रसे नास्ति शशशृङ्गवदेव हि ।
सैव चेत्यमिवापन्ना स्वभावादच्युताप्यलम्[2] ॥ ४३
तस्मान्नास्त्येव दृश्योऽर्थः कुतोऽतो द्रष्टृदृश्यधीः ।
निमिषेणैव जीवस्य मृतिमोहादनन्तरम् ॥ ४४
त्रिजगद्दृश्यसर्गश्रीः प्रतिभामुपगच्छति ।
यथादेशं यथाकालं यथारम्भं यथाक्रमम् ॥ ४५
यथोत्पादं यथामातृ यथापितृ यथौरसम् ।
यथावयो यथासंविद्यथास्थानं यथेहितम् ॥ ४६
यथाबन्धु यथाभृत्यं यथेहास्तमयोदयम् ।
अजात एव जातोऽहमिति चेतति चिद्वपुः ॥ ४७
देशकालक्रियाद्रव्यमनोबुद्धीन्द्रियादि च ।
झटित्येव मृतेरन्ते वपुः पश्यति यौवने ॥ ४८
एषा माता पिता ह्येष बालोऽभूवमहं त्विति ।
नानुभूतोऽनुभूतो वा यः स्यात्स्मृतिमयः क्रमः ॥ ४९
पश्चादुदेत्यसौ तस्य पुष्पस्येव फलोदयः ।
निमिषेणैव मे कल्पो गत इत्यनुभूयते ॥ ५०
रात्रिर्द्वादशवर्षाणि हरिश्चन्द्रे तथा ह्यभूत् ।
कान्ताविरहिणामेकं वासरं वत्सरायते ॥ ५१
मृतो जातोऽहमन्यो मे पितेति स्वप्नतास्विव ।
अभुक्तस्यैव भोगस्य भुक्तधीरुपजायते ॥ ५२

ण्ववच्छिन्नचिदात्मन्यपि तत्संभवे निरालम्बैवासंभवाशङ्क्येत्याह—**परमाणाविति** ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ प्रतिभामात्रत्वं कुतस्तत्राह—**क्षणे**ति । यतः क्षणकल्पादि सर्वं जगत्त्वत्तामत्ताध्यासाधीनात्मजन्मभ्रमवतामेव प्रतिभासते इति शेषः । तत्प्रतिभासक्रमं वक्तुं प्रतिजानीते—**यथावदि**ति ॥ ३० ॥ ३१ ॥ व्योमैवाधारदेहादिशून्योऽपि चेतति स्मरति । संस्कार उद्भवतीति यावत् ॥ ३२ ॥ ३३ ॥ आस्पदं गृहम् ॥ ३४ ॥ ३५ ॥ ननु बान्धवानां देहसंबन्धित्वेन कल्पनात्तदीयत्वेऽपि कथं स्वीयत्वं तत्राह—**चित्ते**ति । देहभावापन्नचित्तस्यात्माकाशस्य च दृढतरैक्याध्यासात्ते वस्तुतोऽन्येऽपि स्वे स्वीया अपि भवन्तीत्यर्थः । एवं नामैवं सति देहभावापन्ने ॥ ३६ ॥ ३७ ॥ स्वप्ने सर्वत्र सर्वेषु द्रष्टृदृश्यभावेन कल्पितभेदेष्वदर्शनानुगता चित्तदुभयबाधे एकतया दृष्टदर्शना भूयो दृष्टा यस्मात्तस्मान्न किंचिदप्यभ्युदितमिति पूर्वत्रान्वयः ॥ ३८ ॥ असतामेव भ्रान्त्या सताम् ॥ ३९ ॥ ॥ ४० ॥ स्वं आत्मैव पारमार्थिकं रूपं यस्य तत्त्वाज्जगद्रूपेण नास्त्येव । किं तर्हि प्रत्यक्षादिप्रमाणैर्भाति तत्राह—**यच्चे**ति । अधिष्ठानचैतन्यमेव सर्वप्रमाणैर्भाति तस्यैवाज्ञातत्वेन अबाध्यत्वेन च प्रमाणयोग्यत्वान्नतु जडं तत्रावरणकृत्याभावेन प्रमाणप्रवृत्तिफलाभावादिति भावः ॥ ४१ ॥ **सचेत्ये**ति । आरोपितचेत्येनाधिष्ठानादूषणादिति भावः । अतोऽस्याश्रितः ॥ ४२ ॥ रसतन्मात्रमेव हि जलस्य तत्त्वं नच तत्र वीचित्वम् । रसनयानुपलम्भात् । यत्तु चक्षुषा तथा ग्रहणं तद्भूतान्तरसंसर्गोपाधिकमिति भावः ॥ ४३ ॥ ४४ ॥ वासनानां प्रतिनियतदेशकालादिविषयत्वात्तत्प्रयुक्तप्रतिभापि तथैवेत्याह—**यथादेश**मित्यादिना ॥ ४५ ॥ ४६ ॥ ४७ ॥ राक्षसयोनौ शंभोर्वरात् मातृसमानवयःप्राप्त्या प्रथमं यौवने प्राप्तेऽपि कल्पितबाल्यादिस्मृतिमयः क्रमः पश्चादुदेतीति परेण संबन्धः ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ प्रसिद्धं चेदं मार्कण्डेयादिपुराणेषु । लोके चेत्याह—

१ चेतसि इति सर्वत्र पाठः. २ तथैव इति पाठः.

२ स्वभावादच्युताप्यलम् इति पाठः.

भुक्तेऽप्यभुक्तधीर्दृष्टमित्यलक्षितवादिषु ।
शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः ।
विप्रलम्भोऽपि लाभश्च मदस्वप्नादिसंविदि ॥ ५३

तैक्ष्ण्यं यथा मरिचबीजकणे स्थितं स्वं
स्तम्भेषु चारचितपुत्रकजालमन्तः ।
दृश्यं त्वनन्यदिदमेवमजेऽस्ति शान्तं
तस्यास्तिबन्धनविमोक्षदृशः कुतः काः ॥ ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने परमार्थवर्णनं नाम विंशः सर्गः ॥ २० ॥

---

## एकविंशः सर्गः २१

श्रीदेव्युवाच ।
प्रतिभान्ति जगन्त्याशु मृतिमोहादनन्तरम् ।
जीवस्योन्मीलनादक्ष्णो रूपाणीवाखिलान्यलम् ॥ १
दिक्कालकलनाकाशधर्मकर्ममयानि च ।
परिस्फुरन्त्यनन्तानि कल्पान्तस्थैर्यवन्ति च ॥ २
नानुभूतं न यद्दृष्टं तन्मया कृतमित्यपि ।
तत्क्षणात्स्मृतितामेति स्वप्ने स्वमरणं यथा ॥ ३
भ्रान्तिरेवमनन्तेयं चिद्व्योमव्योम्नि भासुरा ।
अपकुड्या जगन्नाम्नी नगरी कल्पनात्मिका ॥ ४
इदं जगदयं सर्गः स्मृतिरेवेति जृम्भते ।
दूरकल्पक्षणाभ्यासविपर्यासैकरूपिणी ॥ ५
नानुभूतानुभूता च ज्ञप्तिरित्थं द्विरूपिणी ।
पूर्वकारणरिक्तैव चिद्रूपैव प्रवर्तते ॥ ६
नानुभूतेऽनुभूतत्वसंविदन्तरुदेत्यपि ।
स्वप्नभ्रमादावन्यस्मिन्पितरीव पितुः स्मृतिः ॥ ७
कदाचित्स्मृतितां त्यक्त्वा प्रतिभामात्रमेव सत् ।
भाति प्रथमसर्गेषु रूपेण तदनुक्रमात् ॥ ८
दृश्यं त्रिभुवनादीदमनुभूतं स्मृतौ स्थितम् ।
केषांचित्तन्वि केषांचिन्नानुभूतं स्मृतौ स्थितम् ॥ ९
प्रतिभासत एवेदं केषांचित्स्मरणं विना ।
चिदणूनां प्रजेशत्वं काकतालीयवद्यतः ॥ १०
अत्यन्तविस्मृतं विश्वं मोक्ष इत्यभिधीयते ।
ईप्सितानीप्सिते तत्र न स्तः काचन कस्यचित् ॥ ११
अत्यन्ताभावसंपत्तिं विनाहन्ताजगत्स्थितेः ।
अनुत्पादमयी ह्येषा नोदेत्येव विमुक्तता ॥ १२
रज्ज्वां सर्पभ्रमः सर्पशब्दार्थासंभवं स्थितम् ।
अनुत्पादमयं त्यक्त्वा शान्तोऽपि हि न शाम्यति १३

---

रात्रिरिति ॥ ५१ ॥ ५२ ॥ 'लकि लक्षणे' । अलक्षितं प्रमाणैरलक्षितं वदन्ति तच्छीलेष्वलक्षितवादिषु मुग्धजनेषु इति एतत्पूर्वोक्तं सर्वं दृष्टम् । अविद्यया न केवलमसद्भानं किंतु सद्विरुद्धभानमपि प्रसिद्धमित्याह—**शून्यमिति** । आकीर्णतां जनसमाजव्याप्तताम् ॥ ५३ ॥ मरिचबीजकणे तैक्ष्ण्यं स्तम्भेषु अरचितप्रतिमाजालं च यथा स्थितमेवं यस्मिन्नजे इदं दृश्यमनन्यत्सत्तत्सत्तयैवास्ति । तस्यात्मनः अस्तिबन्धनविमोक्षदृशः । अस्तीति तिङन्तप्रतिरूपकमव्ययम् । सत्यबन्धमोक्षदृष्टय इत्यर्थः । कुतो निमित्तात्काः किंरूपाः स्युः । सर्वथाप्यसंभाविता इत्यर्थः । ॥ ५४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे परमार्थवर्णनं नाम विंशः सर्गः ॥ २० ॥

स्थूलं विचारतः सूक्ष्मं तदविद्याविचारतः ।
सापि चिन्मात्रमेवेति देव्या लीलात्र बोध्यते ॥ १ ॥

उक्तमेवार्थं विशेषं वक्तुं पुनः प्रपञ्चयन्त्याह—**प्रतिभान्तीति** ॥ १ ॥ धर्ममयानि स्वर्गादीनि । कर्ममयानि गृहादीनि । कल्पान्तपर्यन्तं स्थैर्यवन्ति पृथ्व्यादीनि ॥ २ ॥ मायिकस्मृत्यनुभवाभासयोः प्रसिद्धस्मृत्यनुभववैधर्म्यमाह—**नानुभूतमिति** ॥ ३ ॥ चिद्व्योम्नो व्योम्नि मायाकाशे ॥ ४ ॥ षड्विधविकारेष्वाद्यत्रयप्राधान्येन सर्गः । अन्त्यत्रयप्राधान्येन जगत् । स्मृतिरिति तद्धेतुर्वासनोच्यते । सा हि संनिहिते सांप्रतिकेऽपि दूरकल्पदेशकालविप्रकर्षात्मना शाश्वते निष्क्रिये च क्षणतदभ्यासात्मकघटिकामुहूर्तदिनपक्षाद्यात्मना च यो विपर्यासो भ्रमस्तदेकरूपिणी ॥ ५ ॥ उक्तमुपसंहरति—**नानुभूतेति** ॥ ६ ॥ नन्वननुभूते अनुभूतत्वभ्रमः क्व दृष्टस्तत्राह—**नानुभूत** इति ॥ ७ ॥ नन्वनादौ संसारे सर्वमेवानुभूतमिति स्मृतिरैक्यं प्रमुष्टतत्ताकासु न भ्रान्तिस्तत्राह—**कदाचिदिति** । प्रतिभाऽनुभवः । प्रजापतेः प्रथमसर्गेष्वित्यर्थः । रूपेण स्मृतिरूपेण ॥ ८ ॥ तथाच अनुभूतमेव प्रतिभासत इति न नियम इत्याह—**दृश्यमिति** ॥ ९ ॥ प्रजेशत्वं प्राङ्नानुभूतमेव । 'सह सिद्धं चतुष्टय'मिति स्मृत्या तत्र ज्ञानोदयावश्यंभावे पुनर्जन्मायोगादिति भावः ॥ १० ॥ यतो वासनापुञ्जात्मकचित्तमयः संसारस्ततस्तदुच्छेदादात्यन्तिकनिर्वासनात्मिका विस्मृतिरेव मोक्षः फलित इत्याह—**अत्यन्तेति** । ईप्सितानीप्सिते प्रियाप्रिये । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतेः । कुतो न स्तस्तत्राह—**काचनेति** । या मोक्षे काचन चित्परिशिष्यते सा कस्य विषयस्य भोक्तुर्वा यत्प्रयुक्ते प्रियाप्रिये स्यातामित्यर्थः । तथाच श्रुतिः 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्याद्या । 'केचन' इति पाठे तु स्पष्टम् ॥ ११ ॥ अहन्ताजगतोः स्थितिः प्रतिष्ठा अविद्या तस्या अत्यन्ताभावसंपत्तिर्बाधः ॥ १२ ॥ सर्पशब्दार्थोऽसंभवमभावं रज्ज्वात्मना स्थितं त्यक्त्वा उपेक्ष्य । अनु-

अर्धशान्तो न शान्तोऽसौ समेत्यर्थतया पुनः ।
उदेत्येकपिशाचान्ते पिशाचोऽन्यो ह्यधीमतः ॥ १४
संसारश्चायमाभोगी परमेवेति निश्चयः ।
कारणाभावतो भाति यदिहाभातमेव तत् ॥ १५

लीलोवाच ।

ब्राह्मणब्राह्मणीरूपे सर्गे कारणसंस्मृतिः ।
कथमभ्युत्थिता सास्य स्मरणीयमिदं विना ॥ १६

श्रीदेव्युवाच ।

पितामहस्मृतिस्तत्र कारणं तस्य न स्मृतिः ।
पूर्वं न संभवत्येव मुक्तत्वात्पूर्वजन्मनः ॥ १७
पूर्वं न संभवत्येव स्मरणीयमिति स्वयम् ।
पद्मजादित्वमायाति चैतन्यस्य तथास्थितेः ॥ १८
अभूवमहमित्यन्यः प्रजानाथः प्रजापतेः ।
काकतालीयवत्कश्चिद्भवति प्रतिभामयः ॥ १९
एवमभ्युदिते लोके न किंचिन्न कदाचन ।
क्वचिदभ्युदितं नाम केवलं चिन्नभः स्थितम् ॥ २०
द्विविधायाः स्मृतेरस्याः कारणं परमं पदम् ।
कार्यकारणभावोऽसावेक एव चिदम्बरे ॥ २१
कार्यं च कारणं चैव कारणैः सहकारिभिः ।
कार्यकारणयोरैक्यात्तदभावान्न शाम्यति ॥ २२
महाचिद्रूपमेव त्वं स्मरणं विद्धि वेदनम् ।
कार्यकारणता तेन स शब्दो न च वास्तवः ॥ २३
एवं न किंचिदुत्पन्नं दृश्यं चिज्जगदाद्यपि ।
चिदाकाशे चिदाकाशं केवलं स्वात्मनि स्थितम् ॥ २४

लीलोवाच ।

अहो नु परमा दृष्टिर्दर्शिता देवि मे त्वया ।
रूपश्रीर्जागती प्रातः प्रभयेवेक्षणद्युतिः ॥ २५
इदानीमहमेतस्यां यावत्परिणता दृशि ।
नाभ्यासेन विना तावद्भिन्धीदं देवि कौतुकम् ॥ २६

द्भवति यावत् ॥१३॥ ननु योगेन मनोवृत्तिप्रशमादेव स शाम्यतु किं ज्ञानेन तत्राह—अर्धेति । तेन विक्षेपांशशान्त्या अर्धशान्तोऽप्यसौ न शान्तः, यतो व्युत्थाने पुनर्विक्षेपार्थतया उदेति । अधीर्मूढता तद्वतः ॥१४॥ तथाच ज्ञानेनैव निस्तार इत्याह—संसार इति । कारणाभावतः अविद्याबाधाद्यदि भाति तत्तर्हि आभातमेव न पुनरावरणादिशङ्कास्तीत्यर्थः ॥ १५ ॥ यत्प्रागुक्तमस्य सर्गस्य ब्राह्मणब्राह्मणीसर्गाभ्यस्तवासनाकार्यत्वं तत्रानुपपत्तिं लीला शङ्कते—ब्राह्मणेति । एतत्सर्गे कारणभूता संस्मृतिरत्र सर्वत्र संस्कारः । स्मरणीयं स्मरणयोग्यं प्रागनुभूतमिति यावत् । इदं एतत्कालदृश्यं विना । इदानींतनस्य प्रागसत्त्वेन तदनुभवाभावान्न संस्कारलक्षणवासना तदानीं संभवतीत्यर्थः ॥ १६ ॥ न संस्कार एव वासना । द्वितीयाया अपि वक्ष्यमाणत्वात् । यदि तु संस्कारमपि तत्रावश्यकं मन्यसे तर्हि पितामहस्य सर्वज्ञतया भाव्यर्थेऽप्यनुभवसंभवात्तदीयसंस्कार एव तत्र कारणम् । तद्देहादिसर्गे तु तस्यापि संस्कारो न हेतुः । नच पूर्वपितामहसंस्कारो हेतुः, तस्य पूर्वकल्पान्ते मुक्तत्वादित्यर्थः ॥१७॥ स्मरणीयाभावप्रयुक्तोऽपि स्मृत्यसंभवस्तत्रास्तीत्याह—पूर्वमिति । तस्मात्पूर्वपद्मजदेहादिवासनाञ्चितमायोपहितचैतन्यस्य तथास्थितेस्तदेव स्वयं इति एवंविधेन अपूर्वपद्मजात्मना विवर्तत इत्यर्थः ॥ १८ ॥ पूर्वपद्मजवासनाञ्चिताविद्यायास्तदीयतत्त्वज्ञानेन बाधालोचने त्वाह—अभूवमिति ॥ १९ ॥ प्रतिभामयत्वादेव हि तस्य तत्सर्गस्य च बाध उपपन्न इत्याशयेनाह—एवमिति ॥ २० ॥ द्विविधायाः पूर्वानुभवजन्यसंस्कारजाया अनाद्यविद्याशक्तिरूपवासनान्तरजायाश्च हैरण्यगर्भ्या अन्यदीयायाश्च वा । परमं पदमत्र मायाशबलं ब्रह्म । शुद्धे तु न कार्यकारणभावादिभेदगन्धोऽप्यस्तीत्याह—कार्येति ॥ २१ ॥ अविमर्शात्मकमायाकृतः कार्यकारणविकल्पो विमर्शे बाध्यत इति दर्शयितुं विमृशति—कार्यमिति । पटः कार्यं तन्तवः कारणमिति तुरीवेमादिसहकारिभिः कारणैः स्यात्तत्रोपकारमकुर्वाणानां सहकारित्वायोगादुपकाररूपमपि कार्यं तथाविधैरेव वाच्यमित्यनवस्थापत्तेस्तस्योपकारस्याभावात्कार्यकारणभावबाधे तत्कल्पनाधिष्ठानतत्त्वायैक्यं न शाम्यति भेदकारणाभावादित्यर्थः ॥२२॥ नन्वस्तु युक्त्यैवं, अनुभवारूढं त्विदं कथं स्यादिति तदर्थं प्रत्यग्दृष्टिं व्युत्पादयति—महाचिद्रूपमिति । स्मर्यते येन तत्स्मरणं चित्संवलितं व्यष्टिसमष्ट्यन्तःकरणं तदेव वेदनं तद्धि मायाशबलस्येश्वरस्य कार्यम् । तत्र मायोपाधेरन्तःकरणाकारोपाधेश्च भेदे परामृश्यमाने तदुपहिताधिष्ठानसन्मात्रेऽपि भेदकल्पनात्कार्यसत्ता कारणसत्ताधीनजन्मेति भ्रान्त्या पूर्वावस्थं सत्कारणं उत्तरावस्थं सत्कार्यमिति वेत्सि तन्न तथा विद्याः, किंतु मायातत्कार्याकारावुपेक्ष्य तदुभयानुगतसन्मात्रात्मकमहाचिद्रूपमेव स्मरणं विद्धि । तेन यथोक्तलक्षणेन प्रत्यग्दर्शनेन बाधिता कार्यकारणता स कार्यकारणशब्द एव परिशेक्ष्यते सोऽप्यनया दृशा दृष्टो न वास्तव इति । इयं प्रत्यग्दृष्टिः स्फुटतरमुपपादितास्माभिः स्वाराज्यसिद्धौ—'पिण्डावस्था घटत्वे मनसि कलयतो हेतुकार्यत्वधीः स्यान्मृन्मात्रं यद्वदेकं स्फुटमभिमृशतो नैव हेतुर्न कार्यम् । तद्वन्मायिप्रपञ्चौ झटिति कलयतो ब्रह्म विश्वस्य हेतुः सन्मात्रं त्वेकरूपं पटु परिमृशतो नैव मायी न विश्वम् ॥' इति । वार्तिके चोक्तम्—'तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि । उक्तोऽर्थे संशयश्चेत्स्यात्प्रत्यग्दृष्ट्या निरीक्ष्यताम् ॥' इति ॥ २३ ॥ इत्थंच निष्प्रपञ्चत्वं प्रतिष्ठितमित्युपसंहरति—एवमिति । चिदाकाश इति । 'स्वे महिम्नि प्रतिष्ठितः' इति श्रुतेरिति भावः ॥ २४ ॥ तया दृष्ट्या प्रतिबुद्धा लीलोवाच—अहो इति । ईक्षणेन द्योत्यते प्रकाश्यत इतीक्षणद्युतिः, स्फुटेति यावत् ॥२५॥ परिणतिर्युक्तिसिद्धार्थ्यम् । इदं वक्ष्यमाणं कौतुकमुत्कण्ठां भिन्धि

१ पद्मजन्मन इति पाठः।

यत्रासौ ब्राह्मणो गेहे ब्राह्मण्या सहितोऽभवत् ।
तं सर्गं तं गिरिग्रामं नय मां तं विलोकये ॥ २७

श्रीदेव्युवाच ।

अचेत्यचिद्रूपमयीं परमां पावनीं दृशम् ।
अवलम्ब्येममाकारमवमुच्य भवामला ॥ २८
ततः प्राप्स्यस्यसंदेहं व्योमात्मानं नभःस्थितम् ।
भूमिष्ठनरसंकल्पो गगनान्तः पुरं यथा ॥ २९
एवं स्थिते तं पश्यावः सह सर्गमनर्गलम् ।
अयं तद्दर्शनद्वारे देहो हि परमार्गलम् ॥ ३०

लीलोवाच ।

अमुना देवि देहेन जगदन्यदवाप्यते ।
न कस्मादत्र मे युक्तिं कथयानुग्रहाग्रहात् ॥ ३१

श्रीदेव्युवाच ।

जगन्तीमान्यमूर्तानि मूर्तिमन्ति मुधाग्रहात् ।
भवद्भिरवबुद्धानि हेमानीवोर्मिकाधिया ॥ ३२
हेम्न्यूर्मिकारूपधरेऽप्यूर्मिकात्वं न विद्यते ।
यथा तथा जगद्रूपे जगन्नास्ति च ब्रह्मणि ॥ ३३
जगदाकाशमेवेदं ब्रह्मैवेह तु दृश्यते ।
दृश्यते काचिदप्यत्र धूलिरम्बुनिधाविव ॥ ३४
अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमद्वयम् ।
अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ॥ ३५
ब्रह्मैव पश्यति ब्रह्म नाब्रह्म ब्रह्म पश्यति ।
सर्गादिनाम्ना प्रथितः स्वभावोऽस्यैव चेदृशः ॥ ३६
न ब्रह्मजगतामस्ति कार्यकारणतोदयः ।
कारणानामभावेन सर्वेषां सहकारिणाम् ॥ ३७

यावदभ्यासयोगेन न शान्ता भेदधीस्तव ।
नूनं तावदतद्रूपा न ब्रह्म परिपश्यसि ॥ ३८
तत्र रूढिमुपायाता य इमे त्वमदादयः ।
अभ्यासाद्ब्रह्मसंपत्तेः पश्यामस्ते हि तत्परम् ॥ ३९
संकल्पनगरस्यैव ममाकारमयं वपुः ।
ब्रह्मैव चान्तः पश्यामि देहेनानेन तत्पदम् ॥ ४०
विशुद्धज्ञानदेहार्हास्तथैते पद्मजादयः ।
ब्रह्मात्मजगदादीनामंशे संस्थानमङ्गने ॥ ४१
तवाभ्यासं विना बाले नाकारो ब्रह्मतां गतः ।
स्थितः कलनरूपात्मा तेन तन्नानुपश्यसि[1] ॥ ४२
यत्र स्वसंकल्पपुरं स्वदेहेन न लभ्यते ।
तत्रान्यसंकल्पपुरं देहोऽन्यो लभते कथम् ॥ ४३
तस्मादेनं परित्यज्य देहं चिद्व्योमरूपिणी ।
यत्पश्यसि तदेवाशु कुरु कार्यविदांवरे ॥ ४४
संकल्पनगरं सत्यं यथासंकल्पितं प्रति ।
संदेहं वा विदेहं वा नेतरं प्रति किंचन ॥ ४५
आदिसर्गे जगद्भ्रान्तिर्यथेयं स्थितिमागता ।
तथा तदाप्रभृत्येवं नियतिः प्रौढिमागता ॥ ४६

लीलोवाच ।

त्वयोक्तं देवि गच्छावो ब्राह्मणब्राह्मणी जगत् ।
सहेतीदमिदं वच्मि कथं गन्तव्यमम्ब हे ॥ ४७
इमं देहमिहास्थाप्य शुद्धसत्त्वानुपातिना ।
चेतसा तं परं यामि लोकं त्वं कथमेषि तत् ॥ ४८

श्रीदेव्युवाच ।

संकल्पव्योमवृक्षस्ते यथा सन्नपि खात्मकः ।
न कुड्यात्मा न कुड्येन रोध्यते नापि कुड्यहा ॥ ४९

---

नाशाय ॥ २६ ॥ २७ ॥ तदवलोकने पूर्ववत्समाधिनैतद्देहविस्मरणमावश्यकमित्याह—अचेत्येति । चिद्रूपमयीं । प्राचुर्ये मयट् । कारणब्रह्मरूपतामिति यावत् ॥ २८ ॥ चिन्नभःस्थितं मायाव्योमात्मानं तं सर्गम् ॥ २९ ॥ सह पश्यावो द्रक्ष्यावः । अर्गलं विष्कम्भः । प्रतिरोधक इति यावत् ॥ ३० ॥ अनुग्रहप्रयुक्तादाग्रहादभिनिवेशात् ॥ ३१ ॥ मायामात्रत्वादमूर्तानि । मुधाग्रहान्मिथ्याज्ञानात् । ऊर्मिकाङ्गुलिमुद्रिका ॥ ३२ ॥ ऊर्मिकात्वमहेमरूपमित्यर्थः ॥ ३३ ॥ काचिन्माया । धूलिविरोधिन्यम्बुनिधौ प्रतिबिम्बधूलिरिव ॥ ३४ ॥ उक्तेऽर्थे प्रमाणासंभावनामूलोच्छेदाय दृढतराणि प्रमाणानि दर्शयति—अयमिति । मुख्यं प्रमाणं वेदान्ताः तत्तात्पर्यार्थस्यानुभवारोपणाय गुरवः । स्वानुभवस्तु फलीभूतं प्रमाणमित्यर्थः ॥ ३५ ॥ स्वभाव आवृतसत्ता ॥ ३६ ॥ ३७ ॥ अतद्रूपा अब्रह्मदेहाद्यात्मबुद्धित्वात्तद्रूपा । नूनमिति वितर्के ॥ ३८ ॥ ये रूढिं दृढव्युत्पत्तिम् । त इमे पश्यामः ॥ ३९ ॥ आकाशमयं शुद्धचित्ताकाशमयम् ॥ ४० ॥ ज्ञायतेऽनेनेति ज्ञानं चित्तं विशुद्धेन तेन अर्हाः सदा ब्रह्मदर्शन-योग्याः । वस्तुतो ब्रह्मात्मकानां जगत्तद्व्यवहाराणामंशे लेशे संस्थानमवस्थितिं पश्यन्तीति विपरिणमय्यानुषज्यते । 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इत्यादिश्रुतेरित्यर्थः ॥ ४१ ॥ कलनमन्तःकरणे चिदाभासस्तद्रूपात्मा । तद्ब्रह्म प्रागनुक्रान्तं गिरिग्रामकं च ॥ ४२ ॥ अनेन देहेनानुपलम्भे सांकल्पिकत्वमेव हेतुरिति कैमुतिकन्यायेन द्रढयति—यत्रेति ॥ ४३ ॥ पश्यसि द्रक्ष्यसि । वर्तमानसामीप्याद्वर्तमानवन्निर्देशः ॥ ४४ ॥ सदेहं देहसाध्यं विदेहं वा संकल्पितं तन्नगरव्यवहारोपभोगं प्रति । सत्यमर्थक्रियासमर्थम् । इतरं व्यवहारं प्रति तु न किंचन तुच्छमिति यावत् ॥ ४५ ॥ धातृसांकल्पिकस्यास्य जगतोऽस्मत्सांकल्पिकस्य च सांकल्पिकत्वाविशेषेऽपि कुतोऽवान्तरवैलक्षण्यमिति चेदनादिनियतिरूपेश्वरेच्छालक्षणमायाशक्तिवशादेवेत्याह—आदिसर्ग इति ॥ ४६ ॥ ४७ ॥ त्वं कथमेषि स्वेन देहेनेति शेषः ॥ ४८ ॥ सांकल्पिकसत्तया सन्नपि वास्तवसत्तया खात्मकः । न कुड्यात्मेव मूर्तः कुड्यहा कुड्यभेदकः

[1] तत्पश्यसि इति पाठः.

शुद्धैकसत्त्वनिर्माणं चिद्रूपस्यैव तत्किल ।
प्रतिभानमतस्तस्मात्परस्माद्भिद्यते मनाक् ॥ ५०
सोऽयमेतादृशो देहो नैनं[1] संत्यज्य याम्यहम् ।
अनेनैव तमाप्नोमि देशं गन्धमिवानिलः ॥ ५१
यथा जलं जलेनाग्निरग्निना वायुनानिलः ।
मिलत्येवमतो देहो देहैरन्यैर्मनोमयैः ॥ ५२
नहि पार्थिवतासंविदेत्य पार्थिवसंविदा ।
एकत्वं कल्पनाशैलशैलयोः क्वाहतिर्मिथः ॥ ५३
आतिवाहिक एवायं त्वादृशैश्चित्तदेहकः ।
आधिभौतिकताबुद्ध्या गृहीतश्चिरभावनात् ॥ ५४
यथा स्वप्ने यथा दीर्घकालध्याने यथा भ्रमे ।
यथाच सति संकल्पे यथा गन्धर्वपत्तने ॥ ५५
वासनातानवं नूनं यदा ते स्थितिमेष्यति ।
तदातिवाहिको भावः पुनरेष्यति देहके ॥ ५६

लीलोवाच ।

आतिवाहिकदेहत्वप्रत्यये घनतां गते ।
तामवाप्नोत्ययं देहो दशामाहो विनश्यति ॥ ५७

श्रीदेव्युवाच ।

यदस्ति नाम तत्रैव नाशानाशक्रमो भवेत् ।
वस्तुतो यच्च नास्त्येव नाशः स्यात्तस्य कीदृशः ॥५८
रज्ज्वां सर्पभ्रमे नष्टे सत्यबोधवशात्सुते[2] ।
सर्पो न नष्ट उन्नष्टो वेत्येवं कैव सा कथा ॥ ५९
यथा सत्यपरिज्ञानाद्रज्ज्वां सर्पो न दृश्यते ।
तथातिवाहिकज्ञानाद्दृश्यते नाधिभौतिकः ॥ ६०
कल्पनापि निवर्तेत कल्पिता यदि केनचित् ।
सा शिला समपास्तैव या नेहास्ति कदाचन ॥ ६१
परं परे परापूर्णमिदं देहादिकं स्थितम् ।
इति सत्यं वयं भद्रे पश्यामो नाभिपश्यसि ॥ ६२
आदिसर्गे भवेच्चित्त्वं कल्पनाकल्पितं यदा ।
तदा ततः प्रभृत्येकसत्त्वं दृश्यमवेक्षते ॥ ६३

लीलोवाच ।

एकस्मिन्नेव संशान्ते दिक्कालाद्यविभागिनि ।
विद्यमाने परे तत्त्वे कलनावसरः कुतः ॥ ६४

श्रीदेव्युवाच ।

कटकत्वं यथा हेम्नि तरङ्गत्वं यथाम्भसि ।
सत्यत्वं च यथा स्वप्नसंकल्पनगरादिषु ॥ ६५
नास्त्येव सत्यनुभवे तथा नास्त्येव ब्रह्मणि ।
कल्पनाव्यतिरिक्तात्मतत्स्वभावादनामयात् ॥ ६६
यथा नास्त्यम्बरे पांसुः परे नास्ति तथा कला ।
अकलाकलनं शान्तमिदमेकमजं ततम् ॥ ६७

॥ ४९ ॥ यच्छुद्धस्यैव सत्त्वगुणस्य निर्माणं कार्यमस्मद्देहादि तच्चिद्रूपस्यैव किल तथा प्रतिभानमतो हेतोस्तस्मात् परस्माद्ब्रह्मणो मनागल्पमेव भिद्यते । यथा दग्धपटे पटाकारो वस्तुतस्तद्भस्मैव तद्वदिति भावः ॥ ५० ॥ ५१ ॥ तर्ह्यस्मद्भर्तृसांकल्पिकसर्गेणास्य कथं योगस्तत्राह—**यथे**ति । मनोमयैर्देहैरन्यैश्च वस्तुभिरित्यर्थः ॥ ५२ ॥ तर्हि मद्देहोऽपि वस्तुतो मनोमात्रत्वेन त्वद्देहसाजात्यात्त्वद्देहेनैकीभावेन संयोगेन वा मिलितः संस्तत्रैतु तत्राह—**नही**ति । पृथिव्या विकारः पार्थिवस्तद्भावेन संवेद्यत इति पार्थिवतासंवित्त्वद्देहस्तद्विरुद्धचिन्मात्रसंविदा मद्देहेनैकत्वं संयोगं वा नहि एति । आहतिरभिघातः ॥ ५३ ॥ नन्वस्यापि मानसत्वे कथं पार्थिवत्वं तत्राह—**आतिवाहिक** इति ॥ ५४ ॥ ५५ ॥ कदा तर्ह्यस्य पार्थिवभावनिवृत्तिस्तत्राह—**वासने**ति । तनोर्भावस्तानवमल्पता एष्यति । समाध्यभ्यासेनेति भावः ॥ ५६ ॥ अन्येषां स्थूलदेहस्य नाशदर्शनाज्जीवन्मुक्तयोगिदेहस्यापि नाश एव संभावितो नातिवाहिकभाव इति संभावयन्ती लीला पृच्छति—**आतिवाहिके**ति । घनतां दार्ढ्यं गते । समाध्यभ्यासेनेति शेषः ॥ ५७ ॥ तत्त्वविद्देहो ज्ञानबाधितत्वाद्दग्धपटवन्नास्त्येव प्राग्वासनामात्राच्च पटाभासवत्प्रतिभासमानोऽपि वासनातानवे ततोऽपि सौक्ष्म्यादातिवाहिकभावमेवापद्यते । न नाशमित्याशयेन देव्युत्तरमाह—**यदि**त्यादिना ॥ ५८ ॥ उत् अपि ॥ ५९ ॥ आतिवाहिकत्वनिमित्तं ब्रह्मज्ञानमातिवाहिकज्ञानम् ॥ ६० ॥ कल्पितः प्रपञ्चः प्रागभूत् ज्ञानेन तु समूलं स निवर्तित इति व्यवहारकल्पनाप्यापातदृशैव । तत्त्वदृशा तु तस्या अपि संभावना नास्तीत्याह—**कल्पने**ति । कल्पिता समर्थिता । तथाचोक्तं गौडपादैः—'प्रपञ्चो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥' इति ॥ ६१ ॥ कथं तर्हि यूयं स्वदेहादि पश्यथ तत्राह—**पर**मिति । परेण ब्रह्मणा आपूर्णमिदं देहादिकोशपञ्चकं यदेकैकान्तःप्रवेशेन स्थितं तत्परं ब्रह्मैव स्वे महिम्नि परे स्थितमिति वयं सत्यमबाधितं पश्यामः । त्वं त्वप्ररूढबोधत्वान्नाभिपश्यसि ॥ ६२ ॥ नन्वदृश्या चित्कथं दृश्यसत्त्वात्मतामापन्ना तत्राह—**आदी**ति । आदेर्लिङ्गात्मनः सर्गे तं गोचरयन्त्याश्रितश्चित्त्वं नाम धर्मो भवेत् । यदा तु पञ्चीकरणेन कल्पनया स्थूलं रूपं कल्पितं तदा ततःप्रभृत्येकमनुगतं सत्त्वं दृश्यानुरोधात्स्वयमपि दृश्यभूतं स्वयमवेक्षते भ्रान्त्येत्यर्थः ॥ ६३ ॥ यत्प्रागुक्तं कलनाधीना सर्वकल्पनेति तत्र लीलानुपपत्तिं शङ्कते—**एकस्मिन्नि**ति । पौर्वकालिकं दुग्धमौत्तरकालिकदध्याद्याकारेण परिणमते । दधिभावे च दुग्धमविद्यमानं भवति । कालसंबन्धरहिते नित्यं विद्यमाने ब्रह्मणि कलनाख्यप्रथमविकारस्यैव नावसर इत्यर्थः ॥ ६४ ॥ सत्ये हि विकारेऽभ्युपगते त्वदुक्तदोषः स्यान्न मिथ्याभूत इति देवी परिहरति—**कटकत्व**मित्यादिना ॥ ६५ ॥ ६६ ॥ कलाकलनं विषयः ॥ ६७ ॥

१ नैवं इति पाठः । २ सुते इति लीलायाः संबोधनम्.

यदिदं भासते किंचित्तत्तस्यैव निरामयम् ।
कचनं काचकस्येव कान्तस्याऽतिमणेरिव ॥ ६८

लीलोवाच ।

एतावन्तं चिरं कालमेते देवि वयं वद ।
भ्रमिताः केन नामापि द्वैताद्वैतविकल्पनैः ॥ ६९

श्रीदेव्युवाच ।

अविचारेण तरले भ्रान्तासि चिरमाकुला ।
अविचारः स्वभावोत्थः स विचाराद्विनश्यति ॥ ७०
अविचारो विचारेण निमेषादेव नश्यति ।
एषा सत्त्वेव तेनान्तरविद्यैषा न विद्यते ॥ ७१
तस्मान्नैवाविचारोऽस्ति नाविद्यास्ति न बन्धनम् ।
न मोक्षोऽस्ति निराबाधं शुद्धबोधमिदं जगत् ॥ ७२
एतावन्तं यदाकालं त्वयैतन्न विचारितम् ।
तदा न संप्रबुद्धा त्वं भ्रान्तैवाभव आकुला[1] ॥ ७३

अद्यप्रभृति बुद्धासि विमुक्तासि विवेकिनी ।
वासनातानवं बीजं पतितं तव चेतसि ॥ ७४
आदावेव हि नोत्पन्नं दृश्यं संसारनामकम् ।
यदा तदा कथं तेन वास्यन्ते वासनापि का ॥ ७५
अत्यन्ताभावसंपत्तौ द्रष्टृदृश्यदृशां मनः ।
एकध्याने परे रूढे निर्विकल्पसमाधिनि ॥ ७६
वासनाक्षयबीजेऽस्मिन्किंचिदङ्कुरिते हृदि ।
क्रमान्नोदयमेष्यन्ति रागद्वेषादिका दृशः ॥ ७७
संसारसंभवश्चायं निर्मूलत्वमुपैष्यति ।
निर्विकल्पसमाधानं प्रतिष्ठामलमेष्यति ॥ ७८
विगतकलनकालिमाकलङ्का
गगनकलान्तरनिर्मलाम्बनेन ।
सकलकलनकार्यकारणान्तः
कतिपयकालवशाद्भविष्यसीति ॥ ७९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे विश्रान्त्युपदेशो नामैकविंशः सर्गः ॥ २१ ॥

---

## द्वाविंशः सर्गः २२

श्रीदेव्युवाच ।

यथा स्वप्नपरिज्ञानात्स्वप्नदेहो न वास्तवः ।
अनुभूतोऽप्ययं तद्वद्वासनातानवादसन् ॥ १
यथा स्वप्नपरिज्ञानात्स्वप्नदेहः प्रशाम्यति ।
वासनातानवात्तद्वज्जाग्रद्देहोऽपि शाम्यति ॥ २
स्वप्नसंकल्पदेहान्ते देहोऽयं चेत्यते यथा ।
तथा जाग्रद्भावनान्ते उदेत्येवातिवाहिकः ॥ ३
स्वप्ने निर्वासनाबीजे यथोदेति सुषुप्तता ।
जाग्रत्यवासनाबीजे तथोदेति विमुक्तता ॥ ४
येयं तु जीवन्मुक्तानां वासना सा न वासना ।
शुद्धसत्त्वाभिधानं तत्सत्तासामान्यमुच्यते ॥ ५

---

कचनं आपातप्रतिभासः । अतिशयितो मणिरतिमणिस्तस्येव ॥ ६८ ॥ उक्तभ्रान्तेर्हेतुं लीला पृच्छति—**एतावन्त**मिति ॥ ६९ ॥ विचारबाध्यत्वादविचारशब्दितो मोह एव तद्धेतुरिति देव्याह—**अविचारेणे**ति ॥ ७० ॥ एषा अविचारलक्षणा अविद्या विचारबाधिता ब्रह्मसत्त्वेव संपद्यत इति शेषः ॥ ७१ ॥ तद्बाधस्य त्रैकालिकत्वमाह—**तस्मा**दिति । बन्धाभावान्मोक्षोऽपि नास्ति ॥ ७२ ॥ ७३ ॥ ज्ञानेन द्वैतवासनाबाधे तत्त्ववासनाशेषो वासनातानवं तदेव मुक्तिबीजम् ॥ ७४ ॥ पुनर्द्वैतवासनाप्ररोहमाशङ्क्याह—**आदा**वित्यादिना ॥ ७५ ॥ मनः रूढे अधिरूढे सति ॥ ७६ ॥ ७७ ॥ ७८ ॥ इति एवंविधया निर्विकल्पसमाधिप्रतिष्ठया कतिपयकालवशाद्गगनस्य मायाकाशस्य तत्कलानां तत्कार्याणां चान्तरस्याधिष्ठानभूतस्य निर्मलस्यात्मनः अम्बनेन अवलम्बनेन विगतो भ्रान्तिकलनलक्षणः कालिमा यस्या अतएवाकलङ्का तत्संस्कारकलङ्कनिर्मुक्ता सती सकलप्राणिनां कलनानां भ्रान्तीनां तत्कार्यवासनानां तत्कारणाविद्यायाश्च अन्तो बाधावधिभूतो यो मोक्षाख्यः परमपुरुषार्थः स त्वमेव भविष्यसीत्यर्थः ॥ ७९ ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे विश्रान्त्युपदेशो नामैकविंशः सर्गः ॥२१॥

अवस्थातुर्यलक्ष्मात्र जीवन्मुक्तस्थितिस्तथा ।
वासनातानवोपायस्तदभ्यासश्च कीर्त्यते ॥ १ ॥

प्रागुक्तां ज्ञानदार्ढ्यात्स्थूलदेहभावनिवृत्तिमातिवाहिकभावप्राप्तिं च दृष्टान्तैर्बोधयितुं देव्युपक्रमते—**यथे**ति । अयं स्थूलदेहः ॥ १ ॥ २ ॥ जाग्रद्भावना स्थूलदेहाहंभावना तस्या अन्ते । मूलोच्छेदादुच्छेदे सतीत्यर्थः ॥ ३ ॥ निर्वासनाबीजे अनुद्भूतवासनाबीजे नतूच्छिन्नवासनाबीज इत्यर्थः । पुनः स्वप्नापत्तेः । अवासनाबीजे बाधितसर्ववासनाबीजे । विमुक्तता जीवन्मुक्तिः ॥ ४ ॥ ननु जीवन्मुक्तानामपि वासनास्त्येव, अन्यथा व्यवहारानुपपत्तेस्तत्राह—**येय**मिति । न वासना किंतु शुद्धसर्ववासनाबाधावधेरधिष्ठानसत्त्वस्यैव शुद्धवासनेत्यभिधानं यथा दग्धपट इति भस्मन एवाभिधानम् । तत्पूर्वतनं सर्वासामानुगतसत्तासामान्यमेव तथोच्यत इत्यर्थः ॥ ५ ॥

[1] भ्रान्तेवार्णव आकुला इति पाठः.

या सुप्तवासना निद्रा सा सुषुप्तिरिति स्मृता ।
यत्सुप्तवासनं जाग्रद्घनोऽसौ मोह उच्यते ॥ ६
प्रक्षीणवासना निद्रा तुर्यशब्देन कथ्यते ।
जाग्रत्यपि भवत्येव विदिते परमे पदे ॥ ७
प्रक्षीणवासना येह जीवतां जीवनस्थितिः ।
अमुक्तैरपरिज्ञाता सा जीवन्मुक्ततोच्यते ॥ ८
शुद्धसत्त्वानुपतितं चेतः प्रतनुवासनम् ।
आतिवाहिकतामेति हिमं तापादिवाम्बुताम् ॥ ९
आतिवाहिकतां यातं बुद्धं चित्तान्तरैर्मनः ।
सर्गजन्मान्तरगतैः सिद्धैर्मिलति नेतरत् ॥ १०
यदा तेऽयमहंभावः स्वभ्यासाच्छान्तिमेष्यति ।
तदोदेष्यति ते स्फारा दृश्यान्ता बोधता स्वयम् ॥ ११
आतिवाहिकताज्ञानं स्थितिमेष्यति शाश्वतीम् ।
यदा तदा ह्यसंकल्पाँल्लोकान्द्रक्ष्यसि पावनान् ॥ १२
वासनातानवे तस्मात्कुरु यत्नमनिन्दिते ।
तस्मिन्प्रौढिमुपायाते जीवन्मुक्ता भविष्यसि ॥ १३
यावन्न पूरितस्त्वेष शीतलो बोधचन्द्रमाः ।
तावद्देहमवस्थाप्य लोकान्तरमवेक्ष्यताम् ॥ १४
मांसदेहो मांसदेहेनैव संश्लेषमेष्यति ।
ननु चित्तशरीरेण व्यवहारेषु कर्मसु ॥ १५
यथानुभवमेवैतद्यथास्थितमुदाहृतम् ।
आबालसिद्धसंसिद्धं न नाम वरशापवत् ॥ १६
अवबोधघनाभ्यासाद्देहस्यास्यैव जायते ।
संसारवासनाकार्श्ये नूनं चित्तशरीरता ॥ १७
उदेष्यन्ती च सैवात्र केनचिन्नोपलक्ष्यते ।
केवलं तु जनैर्देहो म्रियमाणोऽवलोक्यते ॥ १८
देहस्त्वयं न म्रियते न च जीवति किंच ते ।
के किल स्वप्नसंकल्पभ्रान्तौ मरणजीविते ॥ १९
जीवितं मरणं चैव संकल्पपुरुषे यथा ।
असत्यमेव भात्येवं तस्मिन्पुत्रि शरीरके ॥ २०

लीलोवाच ।

तदेतदुपदिष्टं मे ज्ञानं देवि त्वयाऽमलम् ।
यस्मिञ्श्रुतिगते शान्तिमेति दृश्यविषूचिका ॥ २१
अत्रोपकुरु मे ब्रूहि कोऽभ्यासः कीदृशोऽथवा ।
स कथं पोषमायाति पुष्टे तस्मिंश्च किं भवेत् ॥ २२

श्रीदेव्युवाच ।

यद्येन क्रियते किंचिद्येन येन यदा यदा ।
विनाभ्यासेन तन्नेह सिद्धिमेति कदाचन ॥ २३
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च तदभ्यासं विदुर्बुधाः ॥ २४
ये विरक्ता महात्मानो भोगभावनतानवम् ।
भावयन्त्यभवायान्तर्भव्या भुवि जयन्ति ते ॥ २५

---

मूर्च्छासुषुप्त्योरवान्तरभेदं दर्शयति—**ये**ति । वासनानां सुप्तिरनुद्भवोऽभिभवश्च । तथाचानु तद्भूवासनानिद्रासुषुप्तिरभिभूतवासनं जाग्रन्मोहो मूर्च्छेत्यर्थः । जाग्रति घनतरोद्भूतवासनानां सहसोत्पन्नदुःखातिशयेन प्रसह्याभिभवाद्घनत्वमपरित्यज्यैव मोहभावापत्तिस्तदेति सूचनाय घन इति मोहविशेषणम् ॥ ६ ॥ निद्रेत्यविवक्षितं, यतो जाग्रत्यपि ज्ञानात्समूलवासनाक्षये तुर्यं भवत्येवेत्यर्थः ॥ ७ ॥ तदेव जीवतो जीवन्मुक्तिरित्याह—**प्रक्षीणे**ति ॥ ८ ॥ प्राग्व्याख्याते शुद्धसत्त्वे अनुपतितं समाधिपाटवाच्चिरप्रतिष्ठितम् ॥ ९ ॥ बुद्धं व्युत्थानव्यवहारकालेऽप्यात्मप्रबोधवन्मनः सर्गान्तरगतैर्जन्मान्तरगतैश्च चित्तान्तरैः सिद्धैश्च देवयोग्यादिशरीरैरेकीभावेन मिलति ॥ १० ॥ दृश्यप्रपञ्चस्यान्ता चरमावधिभूता बोधता स्वाभाविकचिद्रूपता ॥११॥ असंकल्पान्संकल्पादूषितानतएव पावनान् ॥ १२ ॥ १३ ॥ गिरिग्रामकदिदृक्षाप्रतिबद्धचेतसि बोधपूर्तिर्वासनातानवाभ्यासो वा न संभवतीत्याशयेनाह—**याव**दिति ॥१४॥ ननु किमर्थं मद्देहावस्थापनं त्वद्देहसंश्लेषादस्यापि गमनशक्तिः किं न स्यात्तत्राह—**मांसदेह** इति ॥१५॥ किं वरवच्छापवद्वा त्वद्वचनादेव संश्लेषमेष्यति नेत्याह—**यथे**ति । मूढतमेषु बालानभिज्ञतमेषु सिद्धांश्च मर्यादीकृत्य सर्वानुभवसिद्धोऽर्थो मयानूदितो नापूर्वार्थो बलात्संपादित इत्यर्थः ॥१६॥ यदि लोकसिद्धवस्तुस्वभावो न विपर्यस्यति तर्हि वासनातानवेऽप्यस्य देहस्यातिवाहिकभावो न संभावयितुं शक्य इत्याशङ्क्याह—**अवबोधे**ति । चित्तशरीरता आतिवाहिकशरीरता ॥ १७ ॥ ननु जीवानां परलोकगमनमप्यातिवाहिकदेहेन प्रसिद्धं स्थूलदेहस्य तु मृतस्यात्रैवावस्थानं दृश्यते तत्कथमेकस्यातिवाहिकभावेन जीवनं स्थूलभावेन मरणं चैकदेत्याशङ्क्याह—**उदेष्यन्ती चे**ति । सा आतिवाहिकता च मरणकाले अत्रास्मिन्नेव शरीरे उदेष्यन्ती केनचिन्म्रियमाणेन जीवता वा नोपलक्ष्यते । 'तद्यथा पेशस्करी' इत्यादिश्रुतेः । पारलौकिकदेहनिर्माणाय म्रियमाणस्य स्वाज्ञानकल्पितदेहारम्भकभूतमात्रांशसंवलितस्यैव परलोके गमनात्तासां मात्राणां तेनानुपलक्षितानामप्यातिवाहिकभावाविरोधात् । यस्त्वन्याज्ञानकल्पितभूतमात्रांशोऽज्ञानदेहः सोऽन्यैर्जनैर्म्रियमाणोऽवलोक्यत इत्यर्थः ॥ १८ ॥ किंचावास्तवोऽयं देहो न म्रियते न च जीवति ते जीवनमरणे च किं, न किंचिद्वस्त्विति नात्र विरोधशङ्का युक्तेत्यर्थः ॥ १९ ॥ २० ॥ लीलाप्रश्नश्लोकौ स्पष्टौ ॥ २१ ॥ ॥ २२ ॥ २३ ॥ तत्रादावभ्यासस्वरूपमाह—**तच्चिन्तन**मिति । असंदिग्धं स्वबुद्ध्यारोहाय चिन्तनं, अभिज्ञबुद्ध्यन्तरसंवादाय कथनं, परस्पराज्ञातांशप्रबोधायान्योन्यप्रबोधनमित्येतैरुपायैरसंभावनानिवृत्तिरेतदेकपरत्वेन च विपरीतभावनानिवृत्तिरिति फलानि ॥ २४ ॥ दृढवैराग्यादीन्येव तल्लक्षणानीति विरक्त-

---

१ विहिते परमे इति पाठः. २ स्वाभ्यासात् पाठः. ३ दृश्यान्ते [illegible] इति पाठः. ४ कोकिलस्वम पाठः. ५ यदैव क्रियते पाठः.

उदितौदार्यसौन्दर्यवैराग्यरसरञ्जिता ।
आनन्दस्पन्दिनी येषां मतिस्तेऽभ्यासिनः परे ॥ २६
अत्यन्ताभावसंपत्तौ ज्ञातृज्ञेयस्य वस्तुनः ।
युक्त्या शास्त्रैर्यतन्ते ये ते ब्रह्माभ्यासिनः स्थिताः ॥ २७
सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा ।
इदं जगदहं चेति बोधाभ्यासं उदाहृतः ॥ २८
दृश्यासंभवबोधेन रागद्वेषादितानवे ।
रतिर्बलोदिता यासौ ब्रह्माभ्यास उदाहृतः ॥ २९
दृश्यासंभवबोधेन विना द्वेषादितानवम् ।
तप इत्युच्यते तस्मान्न ज्ञानं तच्च दुःखतत् ॥ ३०
दृश्यासंभवबोधो हि ज्ञानं ज्ञेयं च कथ्यते ।
तदभ्यासेन निर्वाणमित्यभ्यासो महोदयः ॥ ३१
भवबहुलनिशानितान्तनिद्रा-
सततविवेकविबोधवारिसेकैः ।
प्रगलति हिमशीतलैरशेषा
शरदि महामिहिकेव चेतसीति ॥ ३२
इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे विज्ञानाभ्यासवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥

## चतुर्थो दिवसः ।

## त्रयोविंशः सर्गः २३

श्रीवसिष्ठ उवाच ।
इति संकथनं कृत्वा तस्यां निशि वराङ्गने ।
सुप्ते परिजने नूनमथान्तःपुरमण्डपे ॥ १
दृढाखिलार्गलद्वारगवाक्षे दक्षचेतसि ।
पुष्पप्रकरनिष्ठ्यूतमांसलामोदमन्थरे ॥ २
अम्लानमालावसनशवपार्श्वासनस्थिते ।
सकलामलपूर्णेन्दुवदनद्योतितास्पदे ॥ ३
समाधिस्थानकं गत्वा तस्थतुर्निश्चलाङ्गिके ।
रत्नस्तम्भादिवोत्कीर्णे चित्रे भित्ताविवार्पिते ॥ ४
सर्वास्तत्यजतुश्चिन्ताः संकोचं समुपागते ।
दिवसान्त इवाब्जिन्यौ प्रसृतामोदलेखिके ॥ ५
बभूवतुर्भृशं शान्ते शुद्धे स्पन्दविवर्जिते ।
गिरौ शरदि निर्वात इव भ्रष्टाभ्रमालिके ॥ ६

स्तुतिमुखेन दर्शयति—**ये** इति । भोगभावनानि विषयवासनास्तेषां तानवमपक्षयं भावयन्ति यत्नेनोत्पादयन्ति ॥ २५ ॥ औदार्यं सर्वपरिग्रहत्यागस्तल्लक्षणसौन्दर्येण वैराग्यरसेन च रञ्जिता । परे उत्कृष्टाः ॥ २६ ॥ श्रवणादिपरत्वमपि तदभ्यासलक्षणमित्याह—**अत्यन्ते**ति । युक्त्या प्रमागतत्त्वावधारणानुकूलया प्रमेयतत्त्वावधारणानुकूलया च । शास्त्रैरध्यात्मशास्त्रैः ॥ २७ ॥ त्रैकालिकदृश्यबाधदर्शनावृत्तिरपि तदभ्यास इत्याह—**सर्गादा**विति ॥ २८ ॥ बलं मननजन्यविद्यावासनादार्ढ्यं तदुदिता रतिरात्मरतिः ॥ २९ ॥ दृश्यमिथ्यात्वदार्ढ्यकृतरागाद्युच्छेदे एव प्राग्ज्ञानोपयोगीति तदा तदभ्यासलक्षणं नान्यादृशमित्याह—**दृश्ये**ति । तत्तपो वृथाद्वेषादिनिरोधदुःखं तनोति विस्तारयतीति दुःखतत् ॥ ३० ॥ तत्र हेतुमुक्त्वाभ्यासफलं दर्शयन्नुपसंहरति—**दृश्ये**ति द्वाभ्याम् । हि यस्माच्चरमसाक्षात्कारात्मकं ज्ञानं तज्ज्ञेयं ब्रह्म च दृश्यस्यासंभवो यस्माद्यस्मिन्वा तथाविधो बोध इति कथ्यते इत्यर्थः ॥ ३१ ॥ चेतसि चित्ते इत्येवमभ्यस्तैः सर्वतापोपशमहेतुत्वाद्धिमशीतलैः सततविवेकविबोधवारिसेकैर्भवः संसारस्तल्लक्षणायां बहुलनिशायां कृष्णपक्षरात्रौ प्रवृत्ता मोहलक्षणा नितान्तनिद्रा अशेषसंस्कारात्मनाप्यपरिशिष्यमाणा प्रगलति विशीर्यते । महती मिहिका नीहारपटली ॥ ३२ ॥ ३३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे विज्ञानाभ्यासवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥

योगात्स्थूलतनुं त्यक्त्वा गिरिग्रामदिदृक्षया ।
गृहे व्योम्नि गतिः स्फारे वर्ण्यते ज्ञप्तिलीलयोः ॥१॥

परिजने अनूनमपरिशेषं सुप्ते सत्यथ वराङ्गने ज्ञप्तिलीले समाधिस्थानकं गत्वा तस्थतुरिति चतुर्थश्लोकेनान्वयः ॥ १ ॥ दक्षचेतसीति प्राक्तनपरिजनविशेषणं गौणं वा । दृढाः अखिलाः सर्वाः । बहुविधा इति यावत् । अर्गलाः कपाटविष्कम्भा येषु तथाविधा द्वारगवाक्षा यस्मिन् । पुष्पप्रकरैर्निष्ठ्यूतैर्निरस्तैर्मांसलैः पुष्टैरामोदैर्मन्थरे । भरिते इति यावत् ॥ २ ॥ सकलं समग्रममलमकलङ्कं च यथा स्यात्तथा पूर्ण इन्दुरिव ये वदने इति विग्रहो नतु सकलः कलासहितः पूर्णेन्दुरिवेति । व्यर्थविशेषणत्वापत्तेः ॥ ३ ॥ उत्कीर्णे पुत्रिके इति शेषः । चित्रे चित्रलिखितप्रतिमे ॥ ४ ॥ संकोचं सर्वेन्द्रियप्रत्याहारलक्षणम् । परितः प्रसृता आमोदलेखाः परिमलभागा ययोस्ते ॥ ५ ॥ निर्वाते शरदि गिरौ भ्रष्टे अवतीर्णे अभ्रमालिके यथा शुद्धे शुभ्रे शान्ते-

१ रसगर्भिणी इति पाठः. २ बोधाभ्यासं विदुः परे इति पाठः. ३ रशेषं शरदि इति पाठः. ४ पुष्पप्राकार इति पाठः. ५ मण्डपविशेषणत्वे एव गौणत्वम्.

निर्विकल्पसमाधानाज्जहतुर्बाह्यसंविदम् ।
यथा कल्पलते कान्ते पूर्वमृत्वन्तरे रसम् ॥ ७
अहं जगदिति भ्रान्तिदृश्यस्यादावनुद्भवः ।
यदा ताभ्यामवगतस्त्वत्यन्ताभावनात्मकः ॥ ८
तदा दृश्यपिशाचोऽयमलमस्तं गतो द्वयोः ।
असत्त्वादेव चास्माकं शशशृङ्गमिवानघ ॥ ९
आदावेव हि यन्नास्ति वर्तमानेऽपि तत्तथा ।
भातं वाऽभातमेवातो मृगतृष्णाम्बुवज्जगत् ॥ १०
स्वभावकेवलं शान्तं स्त्रीद्वयं तद्बभूव ह ।
चन्द्रार्कादिपदार्थौघैर्दूरमुक्तमिवाम्बरम् ॥ ११
तेनैव ज्ञानदेहेन चचार ज्ञप्तिदेवता ।
मानुषी त्वितरेणाशु ध्यानज्ञानानुरूपिणा[१] ॥ १२
गेहान्तरेव प्रादेशमात्रमारुह्य संविदा ।
बभूवतुश्चिदाकाशरूपिण्यौ व्योमगाकृती ॥ १३
अथ ते ललने लीलालोले ललितलोचने ।
स्वभावाच्चेत्यसंवित्तेर्नभो दूरमितो गते ॥ १४
तत्रस्थे वाथ चिद्वृत्त्या पुप्लुवाते नभस्थलम् ।
कोटियोजनविस्तीर्णं दूराद्दूरतरान्तरम् ॥ १५
दृश्यानुसन्धाननिजस्वभावा-
दाकाशदेहे अपि ते मिथोऽत्र ।
परस्पराकारविलोकनेन
बभूवतुः स्नेहपरे वयस्ये ॥ १६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलाप्रज्ञादेव्योर्ज्ञानदेहाकाशगमनं नाम त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः २४

श्रीवसिष्ठ उवाच ।
दूराद्दूरमभिप्लुत्य शनैरुच्चैः पदं गते ।
हस्तं हस्ते समालम्ब्य यान्त्यौ ददृशतुर्नभः ॥ १
एकार्णवमिवोच्छूनं गम्भीरं निर्मलान्तरम् ।
कोमलं कोमलमरुदासङ्गसुखभोगदम् ॥ २
आह्लादकमलं सौम्यं शून्यताम्भोनिमज्जनात् ।
अत्यन्तशुद्धं गम्भीरं प्रसन्नमपि सज्जनात् ॥ ३
शृङ्गस्थनिर्मलाम्भोदपीनोदरसुधालये ।
विश्रामतुराशासु पूर्णचन्द्रोदरामले ॥ ४
सिद्धगन्धर्वमन्दारमालामोदमनोहरे ।
चन्द्रमण्डलनिष्क्रान्ते रेमाते मधुरानिले ॥ ५
सस्नतुर्भूरिघर्मान्ते तडिद्रक्ताब्जसंकुले ।
सरसीव जलापूरमन्थरे मेघमण्डले ॥ ६

शीतले स्पन्दविवर्जिते च तद्वत् ॥ ६ ॥ बाह्यां देहाद्यनात्मवस्तुतद्गोचरां संविदं प्रतिसंधानम् । यथा ऋत्वन्तरे वसन्तादावुपस्थिते पूर्वं रसं त्यजतः । पुराणपत्रशोषादिदर्शनादित्यर्थः ॥ ७ ॥ आत्यन्तिकदृश्योपशमेन निर्विकल्पसमाधिप्रतिष्ठायां तत्त्वसाक्षात्कारेण समूलत्रैकालिकदृश्यबाध एव परिनिष्ठितो हेतुरित्याह—**अहमि**त्यादिसार्धेन ॥ ८ ॥ समाधाविव सर्वदापि त्रैकालिकदृश्यबाधोऽस्माकमनुभवसिद्ध इति वसिष्ठो रामं संबोध्याह—**असत्त्वादि**त्यादिना सार्धेन । अस्माकं दृशा जगद्भातं मृगतृष्णाम्बुवदभातं शशशृङ्गमिव । यतो यदादावेव नास्ति तद्वर्तमानेऽपि तथेत्यन्वयः ॥९॥१०॥ दृश्यास्तमये ते कथं बभूवतुस्तदाह—**स्वभावे**ति । चन्द्रार्कादिभिः सर्वपदार्थौघैर्दूरे मुक्तमम्बरं सर्गादौ वायूत्पत्तेः प्राग्वाय्वन्तप्रलये च प्रसिद्धं तदिव ॥ ११ ॥ वक्ष्यमाणव्योमगमने तयोर्देहवैलक्षण्यमाह—**तेने**ति ॥ १२ ॥ तच्च दूरनभोगमनकल्पनं स्वगृहमण्डपाकाशप्रादेशमात्र एव वृत्तं न बहिरित्याह—**गेहान्तरि**ति । 'देहान्तः' इति पाठे हृदयात्कण्ठपर्यन्तं प्रादेशमात्रं नाडीमार्गमारुह्येत्यर्थः । संविदा उद्बुद्धपूर्वसंकल्पसंस्कारसंविदा ॥ १३ ॥ चेत्या विषयास्तत्संवित्तिः स्वभावो विषयानुरूपव्यवहारकल्पना तद्वशादित्यर्थः ॥ १४ ॥ तत्रस्थे गेहस्थे । वाशब्दोऽवधारणे । चिद्वृत्त्या आकाशमावां प्लवावहे इत्येवंरूपया चित्प्रधानमा[illegible]कल्पनावृत्त्या ॥ १५ ॥ वस्तुतश्चिदाकाशदेहे अपि प्राक्संकल्पितदृश्यानुसंधानसहितचित्तात्मतापन्नान्निजस्वभावात् । वयस्ये सख्यौ ॥ १६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे लीलाप्रज्ञादेव्योर्ज्ञानदेहाकाशगमनं नाम त्रयोविंशः सर्गः ॥ २३ ॥

अनन्तविश्ववैचित्र्यविलासैः संभृतान्तरम् ।
नभोऽत्र वर्ण्यते पन्थाः प्रयान्त्योर्ज्ञप्तिलीलयोः ॥१॥

उच्चैःपदमूर्ध्वस्थानम् ॥ १ ॥ उच्छूनं विवृद्धम् । गम्भीरमेकार्णवमिव । कोमलमिव कोमलं स्निग्धम् । कोमलमरुतां मन्दमारुतानामासङ्गेन संश्लेषेण सुखभोगदम् ॥ २ ॥ शून्यतालक्षणे अम्भसि निमज्जनादवगाहनादलमत्यन्तमाह्लादकम् । अथवा जगच्छून्यतालक्षणे ब्रह्माम्भसि प्रथमं निमज्जनान्निर्गमनात्प्राणिभ्रमराणामाह्लादहेतुभूतं कमलम् । अत्र गम्भीरमिति साक्षाद्विशेषणं पूर्वं तु दृष्टान्तस्येति न पौनरुक्त्यम् । सज्जनादपि प्रसन्नं प्रसन्नतरम् ॥ ३ ॥ आशासु दिक्षु मेर्वादिशृङ्गस्थे निर्मलाम्भोदपीनोदरलक्षणे पीनोदरान्तर्निविष्टे वा सुधालये सौधे ॥ ४ ॥ क्वचिच्चन्द्रमण्डलसंनिधौ चन्द्रमण्डलान्निष्क्रान्ते । शैत्यसौरभ्ययोः पूर्वविशेषणाभ्यां लाभान्मधुरशब्दो मान्द्यसुखस्पर्शपरः ॥ ५ ॥ घर्मोऽर्कतापस्तस्यान्ते अवसानभूते । तडित इव

[१] ज्ञानाज्ञानानुरूपिणी.

भूतलौघमहाशैलमृणालाङ्कुरकोटिषु ।
दिक्षु बभ्रमतुः स्वैरं भ्रमर्यौ सरसीष्विव ॥ ७
धारागृहधिया धीरगङ्गानिर्झरधारिणि ।
भ्रेमतुर्वातविक्षुब्धमेघमण्डलमण्डपे ॥ ८
ततो मधुरगामिन्यौ विश्राम्यन्त्यौ स्वशक्तितः ।
शून्ये ददृशतुर्व्योम महारम्भातिमन्थरम् ॥ ९
अदृष्टपूर्वमन्योन्यं सर्वसंकटकोटरम् ।
अपूर्यमाणमाशून्यं जगत्कोटिशतैरपि ॥ १०
उपर्युपर्युपर्युच्चैरन्यैरन्यैर्वृतं पृथक् ।
विचित्राभरणाकारैर्भूतलैः सुविमानकैः ॥ ११
परितः पूरितव्योम्नां मेर्वादिकुलभूभृताम् ।
पद्मरागतटोद्योतैः कल्पज्वालोपमोदरम् ॥ १२
मुक्ताशिखरभापूरैर्हिमवत्सानुसुन्दरम् ।
काञ्चनाद्रिस्थलार्चिर्भिः काञ्चनस्थलभासुरम् ॥ १३
महामरकताभाभिः शाद्वलस्थलनीलिमम् ।
द्रष्टृदृश्यक्षयासक्तजातध्वान्तोत्थकालिमम् ॥ १४
पारिजातलतालोलविमानगणकेतनम् ।
अतो मञ्जरिकाकारमिव वैदूर्यभूतलम् ॥ १५
मनोवेगमहासिद्धजितवातगमागमम् ।
विमानगृहदेवस्त्रीगेयवाद्यसघुंघुमम् ॥ १६
त्रैलोक्यवरभूतौघसंचारविरलान्तरम्[1] ।
अन्योन्यादृष्टसंचारसुरासुरकुलाकुलम् ॥ १७
पर्यन्तस्थितकूष्माण्डरक्षःपैशाचमण्डलम् ।
वातस्कन्धमहावेगवहद्वैमानिकव्रजम् ॥ १८
वहद्विमानसीत्कारमुष्टिग्राह्यघनध्वनि ।
ग्रहर्क्षघनसंचारात्प्रचलद्वातयन्त्रकम् ॥ १९
निकटातपदग्धाल्पसिद्धसिद्धोज्झितास्पदम् ।
अर्काश्वमुखवातास्तदग्धमुग्धविमानकम् ॥ २०
लोकपालाप्सरोवृन्दसंचाराचारचञ्चलम् ।
देव्यन्तःपुरिकादग्धधूपधूमाम्बुदाम्बरम् ॥ २१
स्वस्वर्गाहूतदेवस्त्रीस्वाङ्गविभ्रष्टभूषणम् ।
सामान्यसिद्धसङ्घोग्रतेजःपुञ्जतमोबलम् ॥ २२
बलवत्सिद्धसंघट्टगमागमविघट्टितैः ।
घनैः सांशुकपार्श्वस्थहिमवन्मेरुमन्दरम् ॥ २३
काकोलूकैर्गृध्रभासै राशिभूतैश्चलैर्वृतम् ।
नृत्यद्भिर्डाकिनीसङ्घैस्तरङ्गैरिव वारिधिम् ॥ २४
प्रवृत्तैर्योगिनीसङ्घैः श्वकाकोष्ट्रखराननैः ।
निरर्थं योजनशतं गत्वागच्छद्भिरावृतम् ॥ २५

---

रक्ताब्जानि सरःपक्षे । तडितो रक्ताब्जानीव मेघमण्डलपक्षे ॥६॥ तत्तद्भूतलौघस्था महाशैला हिमवत्कैलासादयो मृणालानामब्जकन्दानामङ्कुरकोटय इव यासु ॥ ७ ॥ निर्झरशब्देन तच्छीकरा लक्ष्यन्ते ॥८॥ महद्भिरारम्भैर्भुवनतज्जननिर्माणैरतिमन्थरं संक्लिष्टम् ॥९॥ यद्यपि प्रज्ञप्त्या प्राग्दृष्टमेव तथाप्यन्योन्यं परस्परसाहित्येन पूर्वमदृष्टम् । सर्वे संकटकोटरा गर्भच्छिद्रादयोंऽशा यस्य । सर्वप्राणिभवदुःखानामाश्रयभूतं छिद्रमिति वार्थः । आशून्यत्वमपूर्यमाणत्वे हेतुः ॥ १० ॥ विचित्राभरणप्रख्यैर्भूतलैर्लक्षणया भुवनतलैः । शोभनानि विमानानि येषु तैः ॥ ११ ॥ पद्मरागमणिमयानां तटानां पार्श्वानामुद्द्योतैः प्रकाशैः ॥ १२ ॥ तेषामेव भूभृतां मुक्तामयशिखराणां भापूरैः प्रभाप्रवाहैर्हिमवतः सानुः प्रस्थदेशस्तद्वद्भासुरम् ॥ १३ ॥ तथा तेषामेव भूभृतां महामरकतानां महार्हहरिन्मणीनां प्रभाभिर्घासहरितस्थलस्य नीलिमेव नीलिमा यस्य । तथा क्वचिद्द्रष्टॄणां सचक्षुषां दृश्यानां रूपभेदानां क्षये आसक्तस्तत्परः सन् जात उत्पन्नो ध्वान्तोत्थकालिमा यस्मिंस्तथाविधम् ॥ १४ ॥ क्वचित्तु यतः पारिजातकल्पलतावनोपरि आलोलविमानगणानां केतनं स्थानमतः समीपस्थदृष्ट्या तद्वनमञ्जरिकाकारमिव दूरस्थदृष्ट्या तु वैदूर्यमयभूतलमिव स्थितमित्यर्थः ॥ १५ ॥ मनोवेगैर्महासिद्धैर्वातगमागमो वायुसंचारवेग स जितो यस्मिन् । घुंघुममिति ध्वन्यनुकरणम् ॥ १६ ॥ ॥ १७ ॥ वातस्कन्धा आवहप्रवहादयो वायुभेदाः ॥ १८ ॥

विमानसीत्कारो विमानवेगध्वनिस्तस्य मोषणं मुष्टिरभिभवस्तेन ग्राह्या घनध्वनयो मेघशब्दा यस्मिन् । वातयन्त्रकं वायुविष्टम्भमययन्त्ररूपं ज्योतिश्चक्रम् ॥ १९ ॥ क्वचित्सूर्यसंनिहितदेशनिकटातपेन दग्धैः संतप्तैस्तपोयोगरसायनादिना अल्पसिद्धैः सिद्धाख्यदेवयोनिविशेषैश्चोज्झितावस्थानम् । अर्केण तदीयाश्वमुखवातैश्च यथायोगमस्ताः क्षिप्ता दग्धाश्चाल्पा विमाना विमानका यस्मिन् ॥ २० ॥ पद्भ्यां संचारा इतरैरङ्गैस्तत्तदुचिताचरणान्याचारास्तैश्चञ्चलमिव चञ्चलम् । धूपधूमैरम्बुदव्याप्ताम्बरमिव स्थितम् । 'विष्णुना सदृशो वीर्ये' इति राम इव कल्पितभेदादुपमेयता ॥ २१ ॥ इन्द्रचन्द्रादिभिः स्वर्गशब्दितस्वस्वलोकायाहूतानामतएवान्यानुपेक्ष्याहंपूर्विकया धावन्तीनां देवस्त्रीणामप्सरसां स्वाङ्गेभ्यो विभ्रष्टानि भूषणानि यस्मिंस्तथाविधं यतः अतस्ताः समीहमानानां सामान्यसिद्धानामिन्द्रादिवदणिमादिविशेषसिद्धिशून्यानां स्वर्ग्यन्तराणां यः संघस्तदीयोग्रतेजःपुञ्जस्य क्रोधासूयादिना तिरोभावकं तमोबलं तमोगुणप्राबल्यमिव नीलं स्थितमित्यर्थः ॥ २२ ॥ तथा बलवतां सिद्धानां देवयोनिविशेषाणां संघट्टः संमर्दस्तद्युक्तगमनागमनाभ्यां विघट्टितैश्चूर्णितैर्घनैर्मेघैस्तद्भयादिव पार्श्वस्थहिमवदाद्यधित्यकाश्रयणात्सांशुकाः सवस्त्रा इव संपन्ना हिमवन्मेरुमन्दरा यस्मिन् ॥ २३ ॥ उलूकादयः पक्षिभेदाः ॥ २४ ॥ योगिनीनामणिमादिसिद्धिमत्त्वात्स्व-

---

[1] संचारविरलां इति पाठः.

लोकपालपुरोध्वान्तधूमधूम्रेऽभ्रमन्दिरे ।
सिद्धगन्धर्वमिथुनप्रारब्धसुरतोत्सवम् ॥ २६
स्वर्गगीतस्तवोन्मत्तमदनाक्रान्तमार्गगम् ।
अनारतवहद्धिष्ण्यचक्रलक्षितपक्षकम् ॥ २७
वातस्कन्धनिखातान्तर्वहत्त्रिपथगाजलम् ।
आश्चर्यालोकनव्यग्रसंचरत्त्रिदशार्भकम् ॥ २८
सदेहसंचरद्वज्रचक्रशूलासिशक्तिमत् ।
क्वचिन्निर्भित्ति भवनं गायन्नारदतुम्बुरु ॥ २९
मेघमार्गमहामेघमहारम्भाकुलं क्वचित् ।
चित्रन्यस्तसमाकारमूककल्पान्तवारिदम् ॥ ३०
उत्पतत्कज्जलाद्रीन्द्रसुन्दराम्भोधरं क्वचित् ।
क्वचित्कनकनिष्पन्दकान्ततापान्तवारिदम् ॥ ३१
क्वचिद्दिग्दाहतापाढ्यमृष्यमूकाम्बुदांशुकम् ।
क्वचिन्निष्पवनाम्भोधिसंरम्भं शून्यताजलम् ॥ ३२
क्वचिद्वातनदीप्रौढविमानतृणपल्लवम् ।
क्वचिच्चलदलिव्रातपृष्ठत्वक्कान्तिनिर्मलम् ॥ ३३
क्वचिन्मेरुनदीकल्पवातधूलिविधूसरम् ।
क्वचिद्विमानगीर्वाणप्रभाचित्रबलाङ्गकम् ॥ ३४
क्वचिन्निरम्बरोन्नृत्तमातृमण्डलमालितम् ।
क्वचिन्नित्यं नवक्षीबक्षुब्धयोगीश्वरीगणम् ॥ ३५
क्वचिच्छान्तसमाधिस्थविश्रान्तमुनिमालितम् ।
समं दूरास्तसंरम्भसाधुचित्तमनोहरम् ॥ ३६
गायत्किन्नरगन्धर्वसुरस्त्रीमण्डलं क्वचित् ।
क्वचित्स्तब्धपुराकीर्णं वहत्पुरवरं क्वचित् ॥ ३७
क्वचिद्रुद्रपुरापूर्णं क्वचिद्ब्रह्ममहापुरम् ।
क्वचिन्मायाकृतपुरं क्वचिदागामिपत्तनम् ॥ ३८
क्वचिद्भ्रमच्चन्द्रसरः क्वचित्स्तब्धमयंसरः ।
क्वचित्सरत्सिद्धगणं क्वचिदिन्दुकृतोदयम् ॥ ३९
क्वचित्सूर्योदयमयं क्वचिद्रात्रितमोमयम् ।
क्वचित्संध्यांशुकपिलं क्वचिन्नीहारधूसरम् ॥ ४०
क्वचिद्धिमाभ्रधवलं क्वचिद्वर्षत्पयोधरम् ।
क्वचित्स्थल इवाकाश एव विश्रान्तलोकपम् ॥ ४१
ऊर्ध्वाधोगमनव्यग्रसुरासुरगणं क्वचित् ।
पूर्वापरोत्तरायाम्यदिक्संचाराकुलं क्वचित् ॥ ४२
अपि योजनलक्षाणि क्वचिद्दुष्प्रापभूधरम् ।
अविनाशितमःपूर्णं दृषद्गर्भोपमं क्वचित् ॥ ४३
अविनाशिबृहत्तेजः क्वचिदर्कानलोपमम् ।
हिमानीजठराशीतं क्वचिच्चन्द्रादिसद्मसु ॥ ४४
क्वचिद्वहत्पुरोवृत्तकल्पवृक्षलतावनम् ।
क्वचिद्दैत्यहतोत्तुङ्गप्रपतद्देवपत्तनम् ॥ ४५
वैमानिकनिपातेन वह्निलेखाङ्कितं क्वचित् ।
क्वचित्केतुशतोत्पातमिथःसंघट्टपट्टितम् ॥ ४६
क्वचिच्छुभग्रहगणप्रगृहीताग्र्यमण्डलम् ।
क्वचिद्रात्रितमोव्याप्तं क्वचिद्दिवसभास्वरम् ॥ ४७
क्वचिदुद्गर्जदम्भोदं क्वचिन्मूकामलाम्बुदम् ।
वातावकीर्णशुक्लाभ्रखण्डपुष्पोत्तरं क्वचित् ॥ ४८

---

स्थान एवेप्सितलाभेऽपि व्यर्थं दूरं गत्वा आगच्छद्भिरित्यर्थः ॥ २५ ॥ दिगन्तविश्रान्तत्वात्तत्तद्दिगधिष्ठातृलोकपालानां पुरोग्रत इव स्थिते ध्वान्तवद्दृष्टिप्रसरनिरोधिनि धूमधूम्रेऽभ्ररूपे मन्दिरे ॥ २६ ॥ स्वर्गे गीयमानैर्दिव्यगीतैर्दिव्यस्तवैश्चोद्दीपकैरुन्मत्ता मदनाक्रान्ताश्च नभोमार्गगा यस्मिन् । अनारतं वहति नक्षत्रधिष्ण्यभूते ज्योतिश्चक्रे सूर्यादिगत्या लक्षितः शुक्लकृष्णपक्षादिकालविभागो यस्मिन् ॥२७॥ वातस्कन्धभेदरूपे तस्मिन्नेव चक्रे कल्पितो निखातो निम्नदेशस्तदन्तःप्रवहत्त्रिपथगाजलं यस्मिन् ॥२८॥ वज्रचक्रादिशब्दैस्तदधिष्ठात्र्यो देवता उच्यन्ते, अतः सदेहत्वोपपत्तिः ॥ २९ ॥ मेघमार्गप्रदेशे महामेघानां पुष्करावर्तकादीनां महता प्रलयवृष्ट्यारम्भेणाकुलं । क्वचित्तु चित्रन्यस्तवन्निर्व्यापारा मूका निःशब्दाश्च कल्पान्तवारिदा यस्मिन् ॥ ३० ॥ कनकस्य निष्पन्दो द्रव इव कान्तस्तपो ग्रीष्मः स एव तापस्तदन्तः प्रावृडादिः ॥ ३१ ॥ ऋष्यमूके गिरौ पूर्वरामायणवर्णितप्रकारेणेव वर्षन्तोऽम्बुदा एवांशुकानि यस्य । निष्पवनो निश्चल इति यावत् ॥ ३२ ॥ वातनद्यां वायुप्रवाहे प्रौढविमानान्येव प्रवाह्यमानतृणपल्लवस्थाने यस्मिन् ॥ ३३ ॥ मेरुनद्यो लक्षणया वार्षिकगिरिणद्यस्तत्कल्पैस्तत्सवर्णैर्वातधूलिप्रवाहैर्विधूसरम् । चित्रेण बलं शबलमङ्गकं यस्य ॥ ३४ ॥ ३५ ॥ दूरेऽस्ताः संरम्भाः क्रोधादयो येन साधुचित्तेन ॥ ३६ ॥ स्तब्धैर्निश्चलैः पुरैराकीर्णम् । वहन्ति भ्रमन्ति त्रिपुरादिपुरवराणि यस्मिन् ॥ ३७ ॥ ३८ ॥ भ्रमच्चन्द्र एवामृतपूर्णत्वाच्चन्द्रसदृशं वा मायासरो यस्मिन् । स्तब्धमयं देवशक्त्या घनीभूतं जलमयं सरो यस्मिन् । विभक्त्यलुक्छान्दसः ॥ ३९ ॥ ४० ॥ आकाश एव विश्रान्तलोकपमिति विश्रान्तिक्रियाया अधिकरणसापेक्षतया नित्यत्वात्संबन्धिशब्दत्वाच्च न सापेक्षमसमर्थं भवतीत्यसमर्थसमासता । तथाचोक्तम्–'संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥' इति ॥ ४१ ॥ अपराशब्दः प्रतीचीपरः परिशेषात् । उत्तरा याम्येति सर्वनाम्नो वृत्तावपुंवद्भावश्छान्दसः । दिशः संचरन्तीति दिक्संचारास्तैराकुलम् ॥ ४२ ॥ क्वचिल्लोकालोकगिरेः परतः ॥४३॥ हिमानी हिमसंहतिस्तज्जठरवदाशीतम् ॥ ४४ ॥ क्वचिद्दैत्यभयादुत्पाट्य वहद्भिर्देवानुचरैः पुरोवृत्तं पुरस्कृतं कल्पवृक्षलतावनं यस्मिन् ॥ ४५ ॥ क्वचिद्वैमानिकानां स्वर्गिणां निपातेन दीर्घीभूततत्तेजसा पतदुल्कावह्निरेखयेवाङ्कितं चिह्नितम् । पट्टितं पट्टवन्निबिडितम् ॥ ४६ ॥ अग्र्यं श्रेष्ठं ऊर्ध्वभागमण्डलं यस्य ॥ ४७ ॥ अभ्रखण्डा एव पुष्पोत्तराः पुष्पास्तरा यस्य ॥ ४८ ॥

---

१ धूम्राभ्रमन्दिरं इति पाठः. २ निरन्तरोन्नृत्त इति पाठः.

क्वचिदत्यन्तनिःशून्यमवदातमनन्तरम् ।
आनन्दमृदुशान्ताच्छं ज्ञस्येव हृदयं ततम् ॥ ४९
शुक्रवाहनमेकौघैः क्वचिद्दलकृतारवम् ।
शून्यतावारिवलितं क्षेत्रमाकाशवासिनाम् ॥ ५०
मयूरहेमचूडादिपक्षिभिः क्वचिदावृतम् ।
विद्याधरीणां देवीनां वाहनैर्विहितास्पदैः ॥ ५१
क्वचिदश्रान्तरोन्नृत्यद्गुहमायूरमण्डलम् ।
क्वचिदग्निशुकैः श्यामं शाद्वलानामिव स्थलम् ॥ ५२
क्वचित्प्रेतेशमहिषमहिम्ना वामनाम्बुदम् ।
क्वचिदश्वैस्तृणग्रामशङ्काग्रस्तासिताम्बुदम्[1] ॥ ५३
क्वचिद्देवपुरव्याप्तं क्वचिद्दैत्यपुरान्वितम् ।
अन्योन्याप्राप्यनगरं नगरन्ध्रकरानिलम् ॥ ५४
क्वचित्कुलाचलाकारनृत्यद्भैरवभासुरम् ।
क्वचित्सपक्षशैलेन्द्रसमनृत्यद्विनायकम् ॥ ५५
क्वचिद्घर्घरवातौघपक्षप्रोड्डीनपर्वतम् ।
क्वचिद्गन्धर्वनगरसुरस्त्रीवृन्दवन्धुरम् ॥ ५६
क्वचिद्वहद्गिरिध्वस्तवृक्षलक्षोच्छ्रिताम्बुदम् ।
क्वचिन्मायाकृताकाशनलिनीजलशीतलम् ॥ ५७
क्वचिदिन्दुकराकृष्टिशीतलाह्लादमारुतम् ।
क्वचित्तप्तानिलादग्धद्रुमपर्वतवारिदम् ॥ ५८
क्वचिदत्यन्तसंशान्तवातादेकान्तनिर्ध्वनि ।
क्वचित्पर्वततुल्याभ्रशिखाकूटशतोदयम् ॥ ५९
क्वचित्प्रावृड्घनोन्मत्तघनाभ्ररवघर्घरम् ।
क्वचित्सुरासुरगणप्रवृत्तरणदुर्गमम् ॥ ६०
क्वचिद्व्योमाब्जिनीहंसीस्वनाहूताब्जवाहनम् ।
क्वचिन्मन्दाकिनीतीरनलिनीलुण्ठकानिलम् ॥ ६१
स्वशरीरेण गङ्गादिसरितां सन्निधानतः ।
प्रोड्डीनमत्स्यमकरकुलीराम्बुजकूर्मकम् ॥ ६२
पातालगार्कजनितभूच्छायाकाकचोपनैः ।
क्वचित्क्वचिन्मण्डलेषु ग्रस्तचन्द्रार्कमण्डलम् ॥ ६३
क्वचित्सर्गानिलाधूतमायाकुसुमकाननम् ।
पतत्पुष्पहिमासारत्रसद्वैमानिकाङ्गनम् ॥ ६४
उदुम्बरोदरमशकक्रमभ्रम-
जगत्त्रयान्तरगतभूतसंचयम् ।
विलङ्घ्य तद्वरललने खमुच्चकै-
र्महीतलं पुनरपि गन्तुमुद्यते ॥ ६५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणे लीलाप्रज्ञादेव्योर्गमनवर्णनं नाम चतुर्विंशः सर्गः ॥ २४ ॥

---

## पञ्चविंशः सर्गः २५

श्रीवसिष्ठ उवाच ।
नभःस्थलाद्गिरिग्रामं गच्छन्त्यौ कंचिदेव ते ।
ज्ञप्तिचित्तस्थितं भूमितलं ददृशतुः स्त्रियौ ॥ १

---

नितरां दृश्यपदार्थशून्यम् । अवदातं स्वच्छम् । अनन्तरमज्ञानमेघान्तरायरहितम् । अच्छं नीरजस्कम् ॥४९॥ शुक्रोपलक्षितसर्वनभश्चरवाहनान्येव भेकौघास्तैः । शून्यतावारिणा वलितं पूर्णम् । क्षेत्रं केदारम् ॥५०॥५१॥ गुहः स्कन्दः । अग्नेर्वाहनैः शुकैः । यद्यपि मेषवाहनत्वमग्नेः प्रसिद्धं तथाप्यत्रोक्तेः शुकवाहनत्वमपि बोध्यम् ॥ ५२ ॥ प्रेतेशो यमस्तन्महिषस्य महिम्ना बृहत्कायत्वेन । तृणग्रामशङ्का तृणराशिभ्रमः ॥ ५३ ॥ अन्योन्यैरप्राप्ये प्राप्तुमशक्ये नगरे यस्मिन् । तत्र हेतुः-अन्तराले नगानां पर्वतानामपि रन्ध्रकरणसमर्थो बलवत्तरोऽनिलो यस्मिन्निति ॥५४॥ ॥ ५५ ॥ घर्घरवातौघं यथा स्यात्तथा पक्षैः प्रोड्डीनाः पर्वता यस्मिन् ॥ ५६ ॥ वहद्भिरुड्डीय गच्छद्भिर्गिरिभिर्ध्वस्ताश्चूर्णिता वृक्षलक्षैश्छत्रवदुच्छ्रिताश्चाम्बुदा यस्मिन् । 'अम्बुधिम्' इति पाठेऽप्यम्बूनि धीयन्ते येष्विति व्युत्पत्त्याऽत्राम्बुदा एवोच्यन्ते ॥ ५७ ॥ ५८ ॥ एकान्तं नितान्तं निर्ध्वनि ॥ ५९ ॥ ६० ॥ अब्जवाहनपदे छान्दसो जलोपः । नलिनीनां लुण्ठकः सौरभ्यापहारी ॥ ६१ ॥ स्वशरीरेण देवताशरीरेण । प्रोड्डीनेत्यादेरुत्प्रेक्षितोक्तिः ॥६२॥ ज्यौतिषिकप्रक्रियामाश्रित्याह—**पातालेति** । भूगोलं परितो भ्रमत्यादित्ये भूच्छायापि परितो भ्रमन्ती पातालगेऽर्के ऊर्ध्वं प्रसरति सैव श्यामत्वात्काकस्तस्य चोपनैः । 'चुप मन्दगतौ' । आक्रमणैरिति यावत् । सेयं चन्द्रग्रासे उपपत्तिः । अर्कग्रासे तु नेयमुपपत्तिरिति श्लेषादर्थान्तरमुच्यते । पातालशब्देन लक्षणया चन्द्रस्य व्यवहितः पश्चाद्भागस्तद्गतेऽर्के सति चन्द्रमण्डले जनिता या भुवश्छाया प्रतिबिम्बस्तेन श्यामत्वापादनात्काकवत् संपन्नश्चन्द्रस्तेन चोपनैरिति ॥ ६३ ॥ वैमानिकैरेव स्वाङ्गनाविस्मयार्थनिर्मितमायासर्गानिलैराधूतं मायाकुसुमकाननं यस्मिन्नित्यर्थः ॥६४॥ इत्थं नभसि वर्णिते नभश्चरवैभवे रागो मा भूदिति तांस्तुच्छीकुर्वन्नाह—**उदुम्बरेति**। मशकक्रमो मशकमर्यादा तद्वदिति यावत् ॥ ६५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे लीलाप्रज्ञादेव्योर्गमनवर्णनं नाम चतुर्विंशः सर्गः ॥ २४ ॥

सप्ताब्धिद्वीपसंवीतं ब्रह्माण्डावरणैर्युतम् ।
अपूर्वं भुवनं ताभ्यां दृष्टमत्रोपवर्ण्यते ॥ १ ॥

कंचित् अपूर्वं ज्ञप्तिचित्तस्थितं ज्ञप्त्या लीलायै प्रदर्शयितुमभि-

---

१ ग्रस्तामिताम्बुदं इति पाठः.

ब्रह्माण्डनरहृत्पद्मं दिगष्टकदलं बृहत् ।
गिरिकेसरसंबाधं स्वामोदभरसुन्दरम् ॥ २
सरित्केसरिकानालमध्येऽवश्यायबिन्दुकम् ।
शर्वरिभ्रमरीभ्रान्तं भूतौघमशकाकुलम् ॥ ३
अन्तर्गुणगणाकीर्णं सुरन्ध्रैः सुषिरैर्वृतम् ।
उह्यमानपयःपूरैर्दिवसालोककान्तिमत् ॥ ४
रसार्द्रं खे भ्रमद्धंसं रात्रिसंकोचभाजनम् ।
पातालपङ्कनिर्मग्ननागनाथमृणालकम् ॥ ५
कदाचिदास्पदाम्भोधिकम्पकम्पितदिग्दलम् ।
अधोनालगतानन्तदैत्यदानवकण्टकम् ॥ ६
असुरस्त्रैणवल्लर्या संभोगसुकुमारया ।
प्राप्य भूभृन्महाबीजहृदयं भूतबीजया ॥ ७
जम्बूद्वीप इति ख्यातां विपुलां तत्र कर्णिकाम् ।
सरित्केसरिकानालां नगरग्रामकेसराम् ॥ ८
कुलशैलेश्वरोत्तुङ्गबीजसप्तकसुन्दरीम् ।
मध्यस्थोच्चमहामेरुबीजाक्रान्तनभस्थलीम् ॥ ९
सरःप्रालेयकणिकां वनजङ्गलधूलिकाम् ।
स्थलेष्वामण्डलान्तस्थजनजालालिमण्डलाम् ॥ १०
तां योजनशताकारैः प्रतिराकं प्रबोधिभिः ।
सागरैर्भ्रमरैर्व्याप्तां दिक्चतुष्टयशालिभिः ॥ ११
दिग्दलाष्टकविश्रान्तससुराम्भोधिषट्पदाम् ।
भ्रातृभिर्नवभिर्भूपैर्नवधा परिकल्पिताम् ॥ १२
लक्षयोजनविस्तीर्णामाकीर्णां च रजोलवैः ।
नानाजनपदव्यूहस्थिरावश्यायसीकराम् ॥ १३
द्वीपात्तु द्विगुणं मानं लवणार्णवलेखया ।
दधत्या वलितां बाह्ये प्रकोष्ठमिव कम्बुना ॥ १४
ततोऽपि द्विगुणं देहं दधत्या वलयाकृतिम् ।
जगद्भूतलताव्याप्तां शाकाख्यद्वीपलेखया ॥ १५
ततोऽपि द्विगुणाकारं धारयन्त्या च वेष्टिताम् ।
प्रत्यग्रक्षीरपूर्णाब्धिलेखया स्वादुशीतया ॥ १६
ततोऽपि द्विगुणाकारं धारयन्त्योपवेष्टिताम् ।
नानाजनालंकृतया कुशाख्यद्वीपलेखया ॥ १७
ततोऽपि द्विगुणाकारं धारयन्त्या च वेष्टिताम् ।
दध्यब्धिलेखया नित्यसंतर्पितसुरौघया ॥ १८
ततः क्रौञ्चाभिधद्वीपलेखयैवंप्रमाणया ।
वेष्टितां खातरचया नवां नृपपुरीमिव ॥ १९
ततोऽपि च घृताम्भोधिलेखयैवंप्रमाणया ।
ततोऽपि शाल्मलीद्वीपलेखया मलपूर्णया ॥ २०
ततः सुरामहाम्भोधिलेखया पुष्पशुभ्रया ।
शेषस्य देहलतया हरिमूर्तिमिवावृताम् ॥ २१
ततो गोमेदकद्वीपलेखयैवंप्रमाणया ।
इक्ष्वब्धिलेखयाप्येवं हिमवत्सानुशुद्धया ॥ २२
ततोऽपि पुष्करद्वीपलेखया द्विगुणस्थया ।
अन्ते स्वादूदकाम्भोधिलेखयैवंप्रमाणया ॥ २३
ततो दशगुणेनाथ पातालतलगामिना ।
निखातवलयेनोच्चैः श्वभ्रसंभाररूपिणा ॥ २४

---

प्रेतमिति यावत् ॥ १ ॥ तदेव भूमितलं ब्रह्माण्डपुरुषस्य हृत्पद्मतया वर्णयति—ब्रह्माण्डेत्यादिना ॥ २ ॥ गिरिकेसरेभ्यः प्रवृत्तत्वात्सरितः केसरिकाः केसरावान्तरशाखाः । अवश्याया हिमकणा एव मकरन्दबिन्दवो यस्मिन् ॥ ३ ॥ अन्तर्नालान्तर्गुणास्तन्तवो भोग्यवस्तुगुणाश्च । शोभननालरन्ध्रायमाणैः पातालादिसुषिरैः । उह्यमानपयःपूरैरिति सुषिराणां विशेषणम् । दिवसस्यालोकः प्रकाशस्तेन कान्तिमत् ॥ ४ ॥ रसैर्मकरन्दैः शृङ्गारादिभिश्च । हंसः सूर्यः प्रसिद्धहंसाश्च ॥ ५ ॥ 'तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्' इति श्रुतेः । पुराणेषु वराहेणोद्धृत्य जलोपरि स्थापितत्वप्रसिद्धेश्च भूमेरास्पदभूतो यो महाम्भोधिस्तत्कम्पे भूकम्पात्कम्पितदिग्दलम् ॥ ६ ॥ अधस्ताद्भूतबीजया स्वसंततिभूतप्राणिबीजभूतया । असुराणां स्त्रीणां समूहः स्त्रैणं तल्लक्षणया मृणालकलिकादिवल्लर्या प्राप्यं प्राप्तुं शक्यं भूभृतां मेर्वादीनां महाबीजस्थानीयानां हृदयं हृदयवज्जीवननिमित्तं नालमूलं यस्य ॥ ७ ॥ तत्र भूपद्मे कर्णिकां ददृशतुरित्यनुषज्यते ॥ ८ ॥ ९ ॥ सरांस्येव प्रालेयकणिका हिमबिन्दवो यस्याम् । धूलिकाः परागाः । कर्णिकापर्यन्तस्थलेषु आसमन्तात् मण्डलान्तस्थानि जनजालान्यलिमण्डलानि यस्याः ॥ १० ॥ ११ ॥ सुरैर्दिक्पालैरष्टभिः सहिता अम्भोधयः षट्पदा यस्याम् । पूर्वमेकस्यैव समुद्रस्य दिक्चतुष्टयोपाधिभिश्चतुःसमुद्रभ्रमरकल्पना, इह तु अष्टदिक्पालोपाधिभिर्दलेष्वष्टसमुद्रभ्रमरकल्पनेति भेदः । नवभिर्भद्राश्वकेतुमालादिभिः ॥ १२ ॥ १३ ॥ द्वीपाद्द्विगुणमित्यादिपौराणिकप्रक्रियाविरुद्धोक्तेर्ब्रह्माण्डान्तरविषयत्वान्मायिकत्वे तात्पर्याच्चादोषत्वं बोध्यम् । प्रकोष्ठं करमूलम् । कम्बुना शङ्खवलयेन ॥ १४ ॥ वलयाकृतिं देहं संस्थानं दधत्या शाकाख्यद्वीपलेखया जगद्भूतया पद्मलतयेव व्याप्ताम् ॥ १५ ॥ १६ ॥ १७ ॥ ॥ १८ ॥ एवंप्रमाणया पूर्ववद्द्विगुणप्रमाणया खातस्य रचनं खातरचा परिखा तया । भिदादित्वकल्पनादङ् ॥१९॥ मलपूर्णया सुराम्भोधिवेष्टितत्वात्पापपूर्णया ॥ २० ॥ २१ ॥ इक्ष्वब्धिरिक्षुरसाब्धिः । गोमेदका मणिविशेषास्तत्प्रधानो द्वीपः परिशेषात्प्लक्षद्वीपः ॥ २२ ॥ २३ ॥ निखातो निम्नदेशस्तद्वलयेन । श्वभ्रं गर्तस्तस्य संभारः समूहस्तद्रूपिणा । पुराणेषु पूर्वद्विगुणविस्तारया काञ्चनभूम्येत्युक्तं तद्विरोधपरिहारः प्रागुक्तरीत्या बोध्यः । तथाचोक्तं श्रीधराचार्यैः—'क्वचित्क्वचित्पुराणादौ विरोधो यदि लक्ष्यते । कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरि-

---

१ नागराज इति पाठः. २ स्थलेषु मण्डलां इति पाठः.

पातालगामिमार्गेण वलितां भयदात्मना ।
एतस्मात्खलु सर्वस्मात्ततो दशगुणोच्चया ॥ २५
आव्योमसु चतुर्दिक्षु श्वभ्रसंभारभीषया ।
अर्धोन्म्लानतमोरूपलग्ननीलोत्पलस्रजा ॥ २६
नानामाणिक्यशिखरकह्लारकुमुदाब्जया ।
लोकालोकाचलोत्तालविपुलोद्दाममालया ॥ २७
वलितां त्रिजगल्लक्ष्मीधम्मिल्लवलनामिव ।
एतस्मादेव सर्वस्मात्ततो दशगुणात्मना ॥ २८
अज्ञातभूतसंचारनाम्नारण्येन मालिताम् ।
एतस्मादेव सर्वस्मात्ततो दशगुणात्मना ॥ २९
नभसेव चतुर्दिक्कं व्याप्तामतुलवारिणा[1] ।
एतस्मादेव सर्वस्मात्ततो दशगुणात्मना ॥ ३०
मेर्वादिद्रावणोत्केन ज्वालाजालेन मालिताम् ।
एतस्मादथ सर्वस्मात्ततो दशगुणात्मना ॥ ३१
मेर्वाद्यचलसङ्घातं नयता तृणपांसुवत् ।
वहताद्रीन्द्रविस्फोटकारिणा जवहारिणा ॥ ३२
निःशून्यत्वादशब्देन मरुता परितो वृतम् ।
एतस्मादथ सर्वस्मात्ततो दशगुणात्मना ॥ ३३
परितो वलितं व्योम्ना निःशून्येनैकरूपिणा ।
अथ योजनकोटीनां शतेन घनरूपिणा ।
व्याप्तं ब्रह्माण्डकुड्येन हैमेनापि द्विपर्वणा ॥ ३४

इति जलधिमहाद्रिलोकपाल-
त्रिदशपुराम्बरभूतलैः परीतम् ।
जगदुदरमवेक्ष्य मानुषी द्रा-
ग्भुवि निजमन्दिरकोटरं ददर्श ॥ ३५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० भूलोकवर्णनं नाम पञ्चविंशः सर्गः ॥ २५ ॥

---

## षड्विंशः सर्गः २६

श्रीवसिष्ठ उवाच ।
इति ते वरवर्णिन्यौ ततो ब्रह्माण्डमण्डलात् ।
निर्गत्यान्यदनुप्राप्ते यत्र तद्ब्राह्मणास्पदम् ॥ १
ततो ददृशतुः सद्म स्वमेवं सिद्धयोषितौ ।
अदृश्ये एव लोकस्य मण्डपं ब्राह्मणास्पदम् ॥ २
चिन्ताविधुरदासीकं बाष्पक्लिन्नाङ्गनामुखम् ।
विध्वस्तप्रायवदनं शीर्णपर्णाम्बुजोपमम् ॥ ३
नष्टोत्सवपुरप्रायमगस्त्यात्तमिवार्णवम् ।
ग्रीष्मदग्धमिवोद्यानं विद्युद्दग्धमिव द्रुमम् ॥ ४
वातच्छिन्नमिवाम्भोदं हिमदग्धमिवाम्बुजम् ।
अल्पस्नेहदशं दीपमिवालोकनभेदनम् ॥ ५

आसन्नमृत्युकरुणाकुलवक्त्रकान्ति-
संशीर्णजीर्णतरुपर्णवनोपमानम् ।
वृष्टिव्यपायपरिधूसरदेशरूक्षं
जातं गृहेश्वरवियोगहतं गृहं तत् ॥ ६

---

ष्यते ॥' इति ॥ २४ ॥ २५ ॥ आव्योमसूर्ध्वं व्योममर्यादासु संनिहितेनोक्तश्वभ्रसंभारेण भीषया भीषणया । अर्धे परपार्श्वे उन्म्लाना ऊर्ध्वभागे सूर्यप्रकाशसंभेदादवतमसभावापत्त्या म्लानप्राया तमोरूपवलयाकारेण लग्ना नीलोत्पलस्रग्यस्यास्तया ॥ २६ ॥ नानाविधमाणिक्यशिखरसरोरूढकह्लारकुमुदान्येवाब्जानि यस्यास्तया लोकालोकाचललक्षणया औन्नत्येनोत्तालया परिणाहेन विपुलया गुणैश्चोद्दामया मालया वलितामिवेत्युत्तरेणान्वयः ॥ २७ ॥ धम्मिल्लाः संयताः कचाः ॥ २८ ॥ सर्वपुराणानुरोधात्पाठक्रमादार्थक्रमस्य बलीयस्त्वाच्च 'अथ योजनकोटीना'मित्यन्ते वक्ष्यमाणा ब्रह्माण्डकुड्यव्याप्तिरत्रैव बोध्या । तद्बहिर्जलाद्यावरणान्याह—**एतस्मादेवे**त्यादिना ॥ २९ ॥ ३० ॥ मेर्वादेर्द्रावणं द्रवीकरणम् । प्रलय इति यावत् । तत्रोत्केनोत्कण्ठितेनेव मालितं ब्रह्माण्डमिति विशेष्यमत्राग्रेऽप्यध्याहार्यम् ॥ ३१ ॥ नयतेत्यादिसामर्थ्योक्तिः । भूतान्तराणां जवहारिणा ॥ ३२ ॥ नितरां मूर्तप्रतिघातशून्यत्वादशब्देन ॥ ३३ ॥ ३४ ॥ मानुषी लीला । निजमन्दिरकोटरं स्वमन्दिराधारं गिरिग्रामावकाशम् ॥ ३५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे भूलोकवर्णनं नाम पञ्चविंशः सर्गः ॥ २५ ॥

**स्वगृहे स्वजनान्दृष्ट्वा श्रुत्वैषां परिदेवितम् ।**
**अनुग्रहोऽत्र लीलाया जगत्तत्त्वं च वर्ण्यते ॥ १ ॥**

वक्ष्यमाणकथासंबन्धप्रतिपत्तये उक्तमनुवदति—**इतीति** । तस्मात्पद्मभूपालाधारब्रह्माण्डमण्डलादन्यद्ब्रह्माण्डमण्डलं इति वर्णितप्रकारमनुप्राप्ते ॥ १ ॥ स्वं सद्म गृहम् ॥ २ ॥ चिन्तया विधुरा विह्वला दास्यो यत्र । अश्रुधूल्यादिमलिनत्वात्परिहृतभूषणतिलकत्वाद्विध्वस्तप्रायाणि जनवदनानि यस्मिन् ॥ ३ ॥ अगस्त्येन आत्तं पीतम् । ग्रीष्मेण दग्धं शुष्कम् ॥ ४ ॥ स्नेहस्तैलादिर्दशा वर्तिः । आलोक्यते येन तदालोकनं चक्षुस्तस्य भेदनम् । दुर्दर्शमिति यावत् ॥५॥ करुणाशोकोद्दीपको भावविशेषो रसो वा तया आकुला । निरस्तेति यावत् । वक्त्रकान्तिर्यस्य । अतएवासन्नमृत्यिवव स्थितम् । संशीर्णानि जीर्णतरुपर्णानि यस्मिंस्तथाविधं वनमुपमानं यस्य । वृष्टिव्यपायोऽनावृष्टिः ॥ ६ ॥

---

१ ममलवारिणा इति पाठः.

श्रीवसिष्ठ उवाच ।

अथ सा निर्मलज्ञानचिराभ्यासेन सुन्दरी ।
संपन्ना सत्यसंकल्पा सत्यकामा च देववत् ॥ ७
चिन्तयामास मामेते देवीं चेमां स्वबन्धवः ।
पश्यन्तु तावत्सामान्यललनारूपधारणीम् ॥ ८
ततो गृहजनस्तत्र स ददर्शाङ्गनाद्वयम् ।
लक्ष्मीगौर्योर्युगमिव समुद्भासितमन्दिरम् ॥ ९
आपादविविधाम्लानमालावसनसुन्दरम् ।
वसन्तलक्ष्म्योर्युगलमिवामोदितकाननम् ॥ १०
सर्वौषधिवनग्रामं पूरयन्त्यौ रसायनैः ।
शीतलाह्लादसुखदं चन्द्रद्वयमिवोदितम् ॥ ११
लम्बालकलतालोललोचनालिविलोकनैः ।
किरत्कुवलयोन्मिश्रमालतीकुसुमोत्करान् ॥ १२
द्रुतहेमरसापूरसरित्सरणहारिणा ।
देहप्रभाप्रवाहेण कनकीकृतकाननम् ॥ १३
सहजाया वपुर्लक्ष्म्या लीलादोलाविलासिनः ।
त एते च तरङ्गाढ्या निजलावण्यवारिधेः ॥ १४
विलोलबाहुलतिकायुगेनारुणपाणिना ।
किरन्नवनवं हैमं कल्पवृक्षलतावनम् ॥ १५
पादैरमृदितास्लानपुष्पैकोमलपल्लवैः ।
स्थलाब्जदलमालाभैरस्पृशद्भूतलं पुनः ॥ १६
तालीतमालखण्डानां शुष्काणां शुचिशोचिषाम् ।
आलोकनामृतासेकैर्जनयद्बालपल्लवान् ॥ १७
नमोऽस्तु वनदेवीभ्यामित्युक्त्वा कुसुमाञ्जलिम् ।
तत्याज ज्येष्ठशर्माथ सार्धं गृहजनेन सः ॥ १८
पपात पादयोर्गेहे तयोर्वै कुसुमाञ्जलिः ।
प्रालेयसीकरासारः पद्मिन्या इव पद्मयोः ॥ १९

ज्येष्ठशर्मादय ऊचुः ।

जयतं वनदेव्यौ नो दुःखनाशार्थमागते ।
प्रायः परपरित्राणमेव कर्म निजं सताम् ॥ २०
इति तद्वचनान्ते ते देव्यावूचतुरादरात् ।
आख्यात दुःखं येनायं लक्ष्यते दुःखितो जनः ॥ २१
ज्येष्ठशर्मादयस्ते ते देव्यौ प्रति यथाक्रमम् ।
निजं तद्दुःखमाचख्युर्दम्पतिव्यसनात्मकम् ॥ २२

ज्येष्ठशर्मादय ऊचुः ।

देव्यावभवतां स्निग्धाविह ब्राह्मणदम्पती ।
सर्वातिथी कुलकरौ स्तम्भाभूतौ द्विजस्थितेः ॥ २३
तावद्य गृहमुत्सृज्य सपुत्रपशुबान्धवम् ।
स्वर्गं गतौ नः पितरौ तेन शून्यं जगत्त्रयम् ॥ २४
पक्षिणो गृहमारुह्य विक्षिपन्तः प्रतिक्षणम् ।
देहं शून्ये मृतं भक्त्या शोचन्ति मधुरैः स्वरैः ॥ २५
गुहागुरुगुरारावप्रलापलपनाकुलः ।
सरित्स्थूलाश्रुधाराभिः परिरोदिति पर्वतः ॥ २६
निर्झराक्रन्दकारिण्यो मुक्ताम्बरपयोधराः ।
तप्तनिःश्वासविध्वस्ताः परं कार्श्यमिता दिशः ॥ २७
क्षतविक्षतसर्वाङ्गः करुणाक्रन्दकर्कशः ।
उपवासरतो ग्रामो दीनो मृतिपरः स्थितः ॥ २८

सा लीला ॥ ७ ॥ ८ ॥ ९ ॥ आपादेत्याद्यष्टश्लोक्याङ्गनाद्वयं वर्णयति । आपादग्रहणमामस्तकत्वस्याप्युपलक्षणम् । विविधानामम्लानानां मालानां वलनैर्व्यापनैः ॥ १० ॥ ओषध्यः फलपाकान्ताः पूरयन्त्यौ पूरयत् । नपुंसकैकविशेष्योपक्रमाल्लिङ्गवचनव्यत्ययश्छान्दसः । रसायनैश्चन्द्रिकामृतैः ॥ ११ ॥ अलकलतानां संनिधावालोलत्वादलित्वेन परिणतैर्लोचनैरिति यावत् । कटाक्षाणां नीलोन्मिश्रधवलच्छवित्वात्कुवलयोन्मिश्रमालतीकुसुमोच्चयत्वेनोत्प्रेक्षा ॥ १२ ॥ द्रवीकृतस्वर्णरसप्रवाहायाः सरितः सरणं वेग इव मनोहारिणा ॥ १३ ॥ वपुःकान्तिलक्षणाया लक्ष्म्याः लीलार्थं क्लृप्ता दोलाः प्रेङ्खोलिका इव विलासिनो विलसनशीला ये निजलावण्यस्य स्वभावसुन्दरब्रह्मात्मकस्य स्वसौन्दर्यलक्षणस्य वा वारिधेस्तरङ्गाढ्यास्तरङ्गश्रेष्ठाः प्रसिद्धास्ते एते धन्गने एवेत्युत्प्रेक्षया प्रत्यभिज्ञायमानमिति शेषः ॥ १४ ॥ प्रत्येकं बाहुलतिकयोररुणपाण्योश्च विलोलत्वेन विशेषणात्प्रतिक्षणं विन्यासभेदेन समुदाये कल्पितवनसंस्थानभेदान्नवान्नवं कल्पवृक्षलतावनं किरद्विक्षिपत् । कल्पयदिति यावत् ॥१५॥ अमृदितान्यम्लानानि च यानि पुष्पाणि कोमलपल्लवानि वा तद्रूपैः पादैः । 'पल्लवकोमलैः' इति पाठे तु स्पष्टम् । अब्जसादृश्यस्य पुष्पत्वरूपकादेव लाभादपौनरुक्त्याय दलमालाभैरित्युक्तम् ॥१६॥ शुचिशोचिषां पाण्डुरवर्णानाम् ॥ १७ ॥ ज्येष्ठशर्माख्यो ज्येष्ठपुत्रः ॥ १८ ॥ प्रालेयसीकरासारो हिमाम्बुकणवर्षः । पद्मिन्याः पद्मवल्ल्याः ॥ १९ ॥ जयतमिति लोण्मध्यमपुरुषद्विवचनम् ॥ २० ॥ २१ ॥ दम्पत्योर्व्यसनं विपत्तिस्तदात्मकम् ॥ २२ ॥ हे देव्यौ, कुलं संततिः द्विजानां स्थितेर्मर्यादायाः स्तम्भवदाधारभूतौ ॥ २३ ॥ अद्येत्यचिरत्वलक्षणार्थम् । शून्यं शून्यमिव ॥ २४ ॥ 'पूर्णः पूर्णं जगत्पश्येत्कामुकः कामुकं जगत् । आर्तो्प्यार्तिमयं विश्वं लुब्धो लुब्धं स्वचित्तवत् ॥' इति न्यायेनाहुः— **पक्षिण** इत्यादिना । शून्ये आकाशे स्वदेहं विक्षिपन्तः ॥२५॥ गुहारूपाणि यानि गुरुगुरारावप्रलापानि लपनानि मुखानि तैराकुलो व्याप्तो व्याकुलश्च ॥ २६ ॥ मुक्ताम्बरास्त्यक्ताकाशास्त्यक्तवस्त्राश्च पयोधरा मेघाः स्तनाश्च यासाम् । दिवपक्षे बाष्पधूसरा वायवो निःश्वाससाम्यान्निःश्वासाः । कार्श्यमपुष्टिम् ॥२७॥ भूपरिलुठनाभिहननादिना क्षतविक्षतसर्वाङ्गः । ग्रामशब्दो जन-

१ प्रभविन इति पाठः.

२ पुष्पपल्लवकोमलैः इति पाठः.

दिवसं प्रति वृक्षाणामवश्यायाश्रुबिन्दवः ।
गुच्छलोचनकोशेभ्यस्तापोष्णानि पतन्त्यधः ॥ २९
प्रशान्तजनसंचारा रथ्या क्षारविधूसरा ।
विधवाविगतानन्दा संशून्यहृदया स्थिता ॥ ३०
कोकिलालिप्रलापिन्यो वृष्टिबाष्पहता लताः ।
उष्णोष्णश्वसना देहं घ्नन्ति पल्लवपाणिभिः ॥ ३१
आत्मानं शतधा कर्तुं बृहच्छ्वभ्रशिलातले ।
निर्झराः प्रपतन्त्येते तापतप्तशरीरकाः ॥ ३२
निःशङ्कया गतश्रीका मूका विलुलिताशयाः ।
अन्धेन तमसा पूर्णा गृहा गहनतां गताः ॥ ३३
उद्यानपुष्पखण्डेभ्यो रुदद्भ्यो भ्रमरारवैः ।
पूतिगन्धो विनिर्याति स्वामोदापरनामकः ॥ ३४
चैत्रद्रुमविलासिन्यो विरसाः प्रतिवासरम् ।
लताः कृशा विलीयन्ते संकुचद्गुच्छलोचनाः ॥ ३५
प्रक्षेप्तुमम्बुधौ देहं प्रवृत्ता गन्तुमाकुलाः ।
कुल्याः कलकलालोलं दोलयन्त्यस्तनुं भुवि ॥ ३६
अशङ्कमशकापातस्पन्दमप्यतिचापलम् ।
कलयन्त्यः स्थिता वाप्यो निस्पन्दानन्दमात्मनि ॥ ३७
गायत्किन्नरगन्धर्वविद्याधरसुराङ्गनम् ।
नूनमद्य नभो जातमस्मत्तातात्र्यलंकृतम् ॥ ३८
तद्देव्यौ क्रियतां तावदस्माकं शोकनाशनम् ।
महतां दर्शनं नाम न कदाचन निष्फलम् ॥ ३९
इत्युक्तवन्तं सा पुत्रं मूर्ध्नि पस्पर्श पाणिना ।
पल्लवेनानता नम्रं मूलग्रन्थिमिवाब्जिनी ॥ ४०

तस्याः स्पर्शेन तेनासौ दुःखदौर्भाग्यसंकटम् ।
जहौ प्रावृड्घनासङ्गाद्ग्रीष्मतापमिवाचलः ॥ ४१
सर्वो गृहजनः सोऽथ तयोर्देव्योर्विलोकनात् ।
लक्ष्मीवान्दुःखनिर्मुक्तो बभूवामृतपो यथा ॥ ४२

श्रीराम उवाच ।

तयास्य लीलया मात्रा पुत्रस्य ज्येष्ठशर्मणः ।
कस्मान्न दर्शनं दत्तं मोहं तावन्निराकुरु ॥ ४३

श्रीवसिष्ठ उवाच ।

बुद्धः पृथ्व्यादिबोधेन येन पृथ्व्यादिसङ्घकः ।
तस्य पिण्डात्मतां धत्ते व्योमैवान्यस्य केवलम् ॥ ४४
असदेवाङ्ग सदिव भाति पृथ्व्यादिवेदनात् ।
यथा बालस्य वेतालो नाभाति तदवेदनात् ॥ ४५
यथा पृथ्व्यादिना भातमपृथ्व्यादि भवेत्क्षणात् ।
स्वप्ने स्वप्नपरिज्ञानात्तथा जाग्रत्यपि स्फुटम् ॥ ४६
पृथ्व्यादि खतया बुद्धं खमित्येवानुभूयते ।
तथाहि क्षुब्धधातूनां कुड्येषु ख इवोद्यमः ॥ ४७
स्वप्ने नगरमुर्वी वा शून्यं खातं च बुध्यते ।
स्वप्नाङ्गना च कुरुते शून्याप्यर्थक्रियां नृणाम् ॥ ४८
खं पृथ्व्यादितया बुद्धं पृथ्व्यादि भवति क्षणात् ।
मूर्च्छायां परलोकोऽपि प्रत्यक्षमनुभूयते ॥ ४९
बालो व्योमैव वेतालं म्रियमाणोऽम्बरे वनम् ।
केशोण्डुकं खमन्यस्तु खमन्यो वेत्ति मौक्तिकम् ॥ ५०
त्रस्तक्षीबार्धनिद्राश्च नौयानाश्च सदैव खे ।
वेतालवनवृक्षादि पश्यन्त्यनुभवन्ति च ॥ ५१

---

परः मृतिपरो मर्तुकामः ॥ २८ ॥ दिवसं प्रति लक्षणीकृत्य । 'लक्षणेत्थंभूत' इति कर्मप्रवचनीययुक्ते द्वितीया । ताप आतपः शोकाग्निश्च ॥ २९ ॥ क्षार ऊषरस्तेन विधूसरा रथ्या विधवेव विगतानन्दा स्थिता ॥ ३० ॥ कोकिलैरलिभिश्च प्रलापिन्यः ॥ ३१ ॥ शतधा कर्तुम् । चूर्णयितुमिति यावत् । श्वभ्रं गर्तस्तत्रत्ये शिलातले । 'शुभ्रे' इति पाठे स्फटिकशिलातले ॥ ३२ ॥ मूकाः हर्षवार्ताविधुराः । विलुलिता आशया इवान्तरा भाण्डोपस्करादयो[२] येषु । यत एवंरूपा अतो निःशङ्कया असंशयं गतश्रीकाः सन्तो गहनतामरण्यताम् ॥ ३३ ॥ स्वामोदोऽपि शोकार्तैर्घ्राणपीडकत्वात्पूतिरिति निन्द्यते ॥ ३४ ॥ चैत्रद्रुमान्विलासयन्ति तच्छीलाः । 'चैत्य' इति पाठे स्पष्टम् । विलीयन्ते विशीर्यन्ते ॥ ३५ ॥ कुल्याग्रहणं सरिन्मात्रोपलक्षणम् ॥ ३६ ॥ प्राग्जनव्यवहारादतिचापलमपि कलयन्त्यो वाप्यः सांप्रतमशङ्कः असंभावितो मशकापातप्रयुक्तस्पन्दोऽपि यत्र तद्यथा स्यात्तथा आत्मनि स्वस्वरूपे समाधिनिष्ठा इव निस्पन्दानन्दं स्थिताः ॥ ३७ ॥ तातग्रहणं मातुरप्युपलक्षणम् ॥ ३८ ॥ एवं शोकमुपवर्ण्य विवक्षितमर्थमाहुः—**तदि**ति । तत्तस्माद्धेतोः ॥ ३९ ॥ पल्लवेन स्वसंतानमूलग्रन्थिमिव अर्थाज्जलापाये इति लभ्यते ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ लीलायाः सत्यसंकल्पत्वात्पूर्वतनमातृशरीरेणैव पुत्रस्याश्वासनाय दर्शनं कुतो न दत्तमिति रामः शङ्कते—**तये**ति । मात्रा मातृशरीरेण । **मोह**मिति । मोहापगमे तत्कार्यसंशयः स्वयमेव गमिष्यतीत्याशयः ॥ ४३ ॥ लीलायाः पुत्रगेहागमनस्य प्रपञ्चमिथ्यात्वपरीक्षार्थत्वेन पुत्रस्नेहप्रयुक्तत्वाभावात्पुत्रादिप्रपञ्चे मिथ्यात्वनिश्चये च पुत्रस्नेहाभावात्तत्त्वज्ञानेन मूलबाधोत्तरं वर्तमानशरीरातिरिक्तभौतिकशरीरधारणायोगाच्च न पूर्वशरीरधारणमिति सोपपत्तिकमुत्तरयितुं वसिष्ठ उपक्रमते—**बुद्ध** इत्यादिना । येनाज्ञेन मिथ्यापृथ्व्यादिसंघको देहः सत्यपृथ्व्यादिबोधेन बुद्धस्तस्य वस्तुतः केवलमद्वितीयं चिद्व्योमैव भ्रान्त्या पिण्डात्मतां धत्ते । अन्यस्य तत्त्वज्ञस्य तु तद्वैत्वज्ञानाभावात्केवलमद्वितीयं चिद्व्योमैवावतिष्ठत इत्यर्थः ॥ ४४ ॥ बालस्य भ्रान्त्या ना पुरुषस्तदवेदनाद्वेतालो भाति ॥ ४५ ॥ स्वप्नपरिज्ञानात्स्वप्नत्वपरिज्ञानात् ॥ ४६ ॥ क्षुब्धपित्तादिधातूनाम् । विक्षिप्तानामिति यावत् । द्वाराभासस्फटिकादिकुड्येषु ॥ ४७ ॥ नगरं शून्यमुर्वीं समभुवं खातं बुध्यते । पादसंवाहनाद्यर्थक्रियाम् ॥ ४८ ॥ परमार्थवस्तु यथाबोधं विवर्तत इति सर्वानुभवसिद्धमित्याह—**ख**मित्यादिना । अनुभूयते कैश्चिदिति शेषः ॥ ४९ ॥ ॥ ५० ॥ त्रस्ता भीताः, क्षीबा मत्ताः, अर्धनिद्रा अर्धजागरूकाः । अनुभवन्ति तत्प्रयुक्तं पलायनादिकार्यमित्यर्थः ॥ ५१ ॥

---

१ ऊर्वीं इत्युभयत्र पाठः.

२ भाण्डोपस्कारादयः इति पाठः.

यथाभावितमेतेषां पदार्थानामतो वपुः ।
अभ्यासजनितं भाति नास्त्येकं परमार्थतः ॥ ५२
लीलया तु यथावस्तु बुद्धा पृथ्व्यादिनास्तिता ।
आकाशमेव संवित्त्या भाति भ्रान्तितयोदितम् ॥ ५३
ब्रह्मात्मैकचिदाकाशमात्रबोधवतो मुनेः ।
पुत्रमित्रकलत्राणि कथं कानि कदा कुतः ॥ ५४
दृश्यमादावनुत्पन्नं यच्च भात्यजमेव तत् ।
सम्यग्ज्ञानवतामेवं रागद्वेषदृशो कुतः ॥ ५५
हस्तः शिरसि यद्दत्तो लीलया ज्येष्ठशर्मणः ।
तत्प्रभावस्थितारम्भसंबोधायाश्रितेः फलम् ॥ ५६
बोधो हि चेतति यथैव तथा शुभानि
सूक्ष्मस्तु खादपि तथातितरां विशुद्धः ।
सर्वत्र राघव स एव पदार्थजालं
स्वप्नेषु कल्पितपुरेष्वनुभूतमेतत् ॥ ५७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने सिद्धदर्शनहेतुकथनं नाम षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः २७

श्रीवसिष्ठ उवाच ।

तस्मिन् गिरितटे ग्रामे तस्य मण्डपकोटरे ।
अन्तर्धिमाश्वाययतुस्तत्रस्थे एव ते स्त्रियौ ॥ १
अस्माकं वनदेवीभ्यां प्रसादः कृत इत्यथ ।
शान्तदुःखे गृहजने स्वव्यापारपरे स्थिते ॥ २
मण्डपाकाशसंलीनां लीलामाह सरस्वती ।
व्योमरूपा व्योमरूपां स्मयात्तूर्ष्णीमिव स्थिताम् ॥ ३
संकल्पस्वप्नयोर्येषां यत्र संकथनं मिथः ।
यथेहार्थक्रियां धत्ते तयोः सा संकथा तथा ॥ ४
पृथ्व्यादिनाडीप्राणादिकृतेऽप्यभ्युदिता तयोः ।
सा संकथनसंवित्तिः स्वप्नसंकल्पयोरिव ॥ ५

श्रीसरस्वत्युवाच ।

ज्ञेयं ज्ञातमशेषेण दृष्टादृष्टार्थसंविदः ।
ईदृशीयं ब्रह्मसत्ता किमन्यद्वद पृच्छसि ॥ ६

लीलोवाच ।

मृतस्य भर्तुर्जीवोऽसौ यत्र राज्यं करोति मे ।
तत्राहं किं न तद्दृष्टा दृष्टासीह सुतेन किम् ॥ ७

श्रीसरस्वत्युवाच ।

अभ्यासेन विना वत्से तदा ते द्वैतनिश्चयः ।
नूनमस्तंगतो नाभून्निःशेषं वरवर्णिनि ॥ ८
अद्वैतं यो न यातोऽसौ कथमद्वैतकर्मभिः ।
युज्यते तापसंस्थस्य च्छायाङ्गानुभवः कुतः ॥ ९
लीलासीति विनाभ्यासं तव नास्तंगतोऽभवत् ।
यदा भावस्तदा सत्यसंकल्पत्वमभून्न ते ॥ १०
अद्यासि सत्यसंकल्पा संपन्ना तेन मां सुतः ।
संपश्यत्वित्यभिमतं फलितं तव सुन्दरि ॥ ११

एकं नियतम् ॥ ५२ ॥ कथं बुद्धा तदाह—**आकाशमेवे**ति । भ्रान्तितया मिथ्याप्रपञ्चतया ॥ ५३ ॥ चतुर्भिः किंवृत्तैः प्रकारप्रकारिकालनिमित्तान्याक्षिप्यन्ते ॥ ५४ ॥ ५५ ॥ ननु पुत्रस्नेहाद्यभावे लीलया कुतः शिरसि हस्तो दत्तस्तत्राह—**हस्त** इति । हस्तः शिरसि दत्त इति यत्तन्न पुत्रस्नेहफलं किंतु तस्य ज्येष्ठशर्मणः प्रभावाय भाविशुभार्थं स्थितौ आरम्भसंबोधौ प्राक्तनसुकृतोपक्रमतत्फलप्रदेश्वरबोधौ यस्यां तथाविधायाः सर्वाधिष्ठानचितेरेव विवर्तरूपं फलमित्यर्थः ॥ ५६ ॥ सर्गसारार्थमनुवदन्नुपसंहरति—**बोध** इति । यथैव प्राक् चेतति चिन्तयति ॥५७॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सिद्धदर्शनहेतुकथनं नाम षड्विंशः सर्गः ॥ २६ ॥

**लीलात्र विस्मिता भूयो भर्तृदर्शनलालसा ।**
**ज्ञप्त्या प्रबोधिता स्मृत्वा स्वजन्मान्याह भूरिशः ॥१॥**

तस्य द्विजसद्मनो मण्डपकोटरे मण्डपाकाशे । तत्रस्थे ज्येष्ठशर्मादीनां पुरोदेशस्थे एवान्तर्धिमन्तर्धानं आययतुः प्रापतुः ॥ १ ॥ स्वव्यापारः स्वगृहकृत्यं तत्परे ॥ २ ॥ संलीनां इतरजनदृष्ट्या अन्तर्हिताम् । तर्हि ते किं वस्तुतः सदेहे नेत्याह—**व्योमरूपे**ति । शून्यात्मकसंकल्पशरीरा । तादृशीमिति यावत् । स्मयाद्विस्मयात् ॥ ३ ॥ ननु अन्योन्यसांकल्पिकस्यान्योन्यादृश्यत्वात्कथं तयोः संवादोपपत्तिरिति रामस्य शङ्कां लिङ्गैरुपलक्ष्य स्वयमेव वसिष्ठः समाधत्ते—**संकल्पे**ति । लोके येषां देवतानुग्रहादिना उषानिरुद्धयोरिव तुल्य एव परस्परसंवादिसंकल्पः स्वप्नो वा जातस्तेषां तत्र मिथः संकथनं यथा औत्तरकालिकीमर्थक्रियां धत्ते, तयोर्ज्ञप्तिलीलयोः संकथा संवादोऽपि तथेत्यर्थः ॥ ४ ॥ अधिभूतं पृथ्व्यादि, अध्यात्मं नाडीप्राणाद्युपलक्षितशरीरमपि ऋते विना ॥ ५ ॥ इत्थमुक्ताशङ्कां समाधाय प्रस्तुतकथामनुसरति—**श्रीसरस्वत्युवाचे**ति ॥ ६ ॥ किंकारणं न दृष्टेत्यर्थः ॥ ७ ॥ अभ्यासेन विना अभ्यासाभावादित्यर्थः । द्वैतनिश्चयः प्रपञ्चसत्यतानिश्चयः ॥ ८ ॥ न यातो भेदकाऽविद्योच्छेदेन न प्राप्तः । अद्वैतकर्मभिः सत्यसंकल्पत्वाद्यर्थक्रियाभिः । छायाया अङ्गं गुणः शैत्यं तदनुभवः । छायोपविष्टाङ्गस्य पुंसो योऽनुभवः स वा ॥९॥ लीलादेह एवाहमस्मीति भावो दृढसंस्कारः ॥ १० ॥ अद्य

१ अन्तर्धिमापतुर्दृष्ट्वा ततस्ते सिद्धयोषितौ इति पाठः. २ परस्थिते इति पाठः. ३ तूष्णीं व्यवस्थिताम् इति पाठः. ४ द्रष्टव्यसंविदः इति पाठः.

इदानीं तस्य भर्तुस्त्वं समीपं यदि गच्छसि ।
तत्तेन व्यवहारस्ते पूर्ववत्संप्रवर्तते ॥ १२

लीलोवाच ।

इहैव मन्दिराकाशे पतिर्विप्रो ममाभवत् ।
इहैव स मृतो भूत्वा संपन्नो वसुधाधिपः ॥ १३
इहैव तस्य संसारे तस्मिन्भूमण्डलान्तरे ।
राजधानीपुरे तस्मिन्पुरन्ध्यस्मि व्यवस्थिता ॥ १४
इहैवान्तःपुरे तस्मिन्स मृतो मम भूपतिः ।
इहैवान्तःपुराकाशे तस्मिन्नेव पुरे नृपः ॥ १५
संपन्नो वसुधापीठे नानाजनपदेश्वरः ।
सर्वार्जवजवीभाव इहैवैवं व्यवस्थितः ॥ १६
अस्मिन्नेव गृहाकाशे सर्वा ब्रह्माण्डभूमयः ।
स्थिताः समुद्गके मन्ये यथान्तः सर्षपोत्कराः ॥ १७
सदाऽदूरमहं मन्ये तद्भर्तुर्मम मण्डलम् ।
क्वचित्पार्श्वे स्थितमिह यथा पश्यामि तत्कुरु ॥ १८

श्रीदेव्युवाच ।

भूतलारुन्धतिसुते भर्तारस्तव संप्रति ।
त्रयो नामाथवाभूवन्बहवः शतसंमताः ॥ १९
नेदीयसां त्रयाणां तु द्विजस्ते भस्मतां गतः ।
राजा माल्यान्तरगतः संस्थितोऽन्तःपुरे शवः ॥ २०
संसारमण्डले ह्यस्मिंस्तृतीयो वसुधाधिपः ।
महासंसारजलधिं पतितो भ्रममागतः ॥ २१
भोगकल्लोलकलनाविकलो मलचेतनः ।
जाड्यजर्जरचिद्वृत्तिः संसाराम्भोधिकच्छपः ॥ २२
चित्राणि राजकार्याणि कुर्वन्नप्याकुलान्यपि ।
सुप्तः स्थितो जडतया न जागर्ति भवभ्रमे ॥ २३
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ।
इत्यनर्थमहारज्ज्वा वलितो वशतां गतः ॥ २४
तत्कस्य वद भर्तुस्त्वां समीपं वरवर्णिनि ।
वात्या वनान्तरं गन्धलेखामिव त्वनान्नये ॥ २५
अन्य एव हि संसारः सोऽन्यो ब्रह्माण्डमण्डपः ।
अन्या एव तता वत्से व्यवहारपरम्पराः ॥ २६
संसारमण्डलानीह तानि पार्श्वे स्थितान्यपि ।
दूरं योजनकोटीनां कोटयस्तेष्विहान्तरम् ॥ २७
आकाशमात्रमेतेषामिदं पश्य वपुः पुनः ।
मेरुमन्दरकोटीनां कोटयस्तेष्ववस्थिताः ॥ २८
परमाणौ परमाणौ सर्ववर्गानिरर्गलम् ।
महाचितेः स्फुरन्त्यर्करुचीव त्रसरेणवः ॥ २९
महारम्भगुरूण्येवमपि ब्रह्माण्डकानि हि ।
तुलया धानकामात्रमपि तानि भवन्ति नो ॥ ३०
नानारत्नामलोद्द्योतो वनवद्भाति खे यथा ।
पृथ्व्यादिभूतरहिता जगच्चिद्भाति चिन्तया ॥ ३१
कचति ज्ञप्तिरेवेदं जगदित्यादि नात्मनि ।
नतु पृथ्व्यादि संपन्नं सर्गादावेव किंचन ॥ ३२
यथा तरङ्गः सरसि भूत्वा भूत्वा पुनर्भवेत् ।
विचित्राकारकालाङ्गदेशाज्ञप्तावलं तथा ॥ ३३

लीलोवाच ।

एवमेतज्जगन्मातर्मया स्मृतमिहाधुना ।

---

सत्यसंकल्पा संपन्नासि । सुतो मां पश्यत्विल्यभिमतमीप्सितम् ॥ ११ ॥ १२ ॥ एवं प्रत्यक्षमुपदर्शनेनोपदेशेन च प्रश्नोक्तार्थे निवृत्तासंभवाशङ्का मण्डपाकाशान्तरेव भर्तृपरलोकद्वयस्य ब्रह्माण्डसहस्राणां च संभवमनुवदन्ती लीला पुनः स्वभर्तृमण्डलदर्शनं प्रार्थयते—**इहेत्यादिना** ॥ १३ ॥ पुरन्ध्री राजमहिषी । व्यवस्थिता वसुधाधिपस्येत्यनुषज्यते ॥ १४ ॥ १५ ॥ सर्ववस्तूनां आर्जवमकापव्यं कूटस्थं पारमार्थिकं ब्रह्म तस्मिन्कल्पितो जवीभावो मायिकचलनादिविकारः एवं उक्तदृष्टश्रुतलक्षण इहैव मण्डपाकाशे व्यवस्थितः ॥१६॥ समुद्गके संपुटके ॥१७॥ अदूरमतिसंनिहितम् ॥ १८ ॥ न केवलं सांप्रतिकमेवैतन्मण्डपाकाशे अस्ति, किंत्वतीतानागतं सर्वमपि तत्र तेऽनेकजन्मसंबन्धिष्वनेकभर्तृशब्दवाच्यशरीरेषु सर्वेषां दर्शनायोगात्संनिहितेषु त्रिषु कतममण्डलं प्रदर्श्यतामित्याशयेनाह—**भूतलेति** । शतशः संमताः शतसंमताः ॥ १९ ॥ नेदीयसामन्तिकतमानां मध्ये । इष्ठनो विषये ईयसुन् छान्दसः ॥२०॥ पतितः प्रविष्टः ॥२१॥ भोगलक्षणानां कल्लोलानां कलनाभिर्विकलो विक्षिप्तः । तत एव मलयुक्ता चेतना बुद्धिर्यस्य । अत एतदन्तः प्रतिफलिता चिद्वृत्तिरपि तज्जाड्येनैव जर्जरा शिथिलप्राया यस्य ॥२२॥२३॥ अवशतामस्वतन्त्रताम् ॥ २४ ॥ वातसमूहो वात्या । 'पाशादिभ्यो यः' ॥२५॥ तता विस्तृताः ॥२६॥ इहास्मिन्मण्डपाकाशे । अधिष्ठानचिद्दृष्ट्या पार्श्वे अन्तः । संनिधावितिं यावत् । अपि यद्यपि तथापि । इह सांसारिकदृष्टौ । दूरमन्तरं । व्यवधानमित्यर्थः ॥ २७ ॥ परमार्थदृष्ट्या त्वाह—**आकाशमात्रमिति** । एतेषां संसारमण्डलानां इदं पारमार्थिकं वपुः स्वरूपं मण्डपान्तस्थचिदाकाशमात्रम् । तेष्वेतेषु ॥२८॥ अर्कस्य रुचिजालान्तरस्थमरीचौ ॥ २९ ॥ एवं दर्शितब्रह्माण्डवदेव तानि महद्भिर्द्वीपसमुद्रभुवनायारम्भैर्गुरूणि महान्त्यपि चिद्दृष्टितुलया दृष्टानि धानका वटबीजानि तावन्मात्रमपि न भवन्तीत्यर्थः ॥ ३० ॥ वस्तुतः पृथ्व्यादिभेदरहितैव चिज्जगद्भाति । चिन्तया आविद्यकदृढवासनया ॥ ३१ ॥ भ्रान्त्या जगद्भानेऽपि न वस्तुनि कदाचिदपि किंचित्संपन्नमित्याह—**कचतीति** ॥ ३२ ॥ विचित्राकाराः कालाः कालाङ्गानि दिनरात्र्यादीनि ब्रह्माण्डा भुवनादिदेशाश्च ज्ञप्तौ महाचिति भूत्वा भूत्वा भवन्तीत्यर्थः ॥ ३३ ॥ इदं लीलाजन्म राजसं रजःकार्यं दुःखसंतापबाहुल्यात् 'मध्ये

---

१ पुरतोऽस्मिन्व्यवस्थिता इति पाठः. २ पुनः पुनः इति पाठः. ३ दृष्टाभिधानका इति पाठः.

ममेदं राजसं जन्म न तमो न च सात्त्विकम् ॥ ३४
ब्रह्मणस्त्ववतीर्णाया अष्टौ जन्मशतानि मे ।
नानायोनीन्यतीतानि पश्यामीवाधुना पुनः ॥ ३५
संसारमण्डले देवि कस्मिंश्चिदभवं पुरा ।
लोकान्तराब्जभ्रमरी विद्याधरवराङ्गना ॥ ३६
दुर्वासनाकलुषिता ततोऽहं मानुषी स्थिता ।
संसारमण्डलेऽन्यस्मिन्पन्नगेश्वरकामिनी ॥ ३७
कदम्बकुन्दजम्बीरकरञ्जवनवासिनी ।
पत्राम्बरधरा श्यामा शबर्यहमथाभवम् ॥ ३८
वनवासनया मुग्धा संपन्नाहमथोद्धता ।
गुलुच्छनयना पत्रहस्ता वनविलासिनी ॥ ३९
पुण्याश्रमलता साहं मुनिसङ्गपवित्रिता ।
वनाग्निदग्धा तस्यैव कन्याभूवं महामुनेः ॥ ४०
अस्त्रीत्वफलदातॄणां कर्मणां परिणामतः ।
राजाहमभवं श्रीमान्सुराष्ट्रेषु समाः शतम् ॥ ४१
तालीनां तलकच्छेषु राजदुष्कृतदोषतः ।
नकुली नववर्षाणि कुष्ठनष्टाङ्गिकाभवम् ॥ ४२
वर्षाण्यष्टौ सुराष्ट्रेषु देवि गोत्वं कृतं मया ।
मोहाद्दुर्जनदुष्टाज्ञबालगोपाललीलया ॥ ४३
विहंग्या वैरविन्यस्ता वागुरा विपिनावनौ ।
क्लेशेन महता छिन्ना अधमा वासना इव ॥ ४४
कर्णिकाकोडशय्यासु विश्रान्तमलिना सह ।
पद्मकुड्मलकोशेषु भुक्तकिंजल्कया रहः ॥ ४५
भ्रान्तमुत्तुङ्गश्रृङ्गासु हरिण्या हारिनेत्रया ।
वनस्थलीषु रम्यासु किराताहतमर्मया ॥ ४६
दृष्टं नष्टासु दिक्ष्वब्धिकल्लोलैरुह्यमानया ।
मत्स्याम्बुकच्छपाच्छोडे मोघमाननताडनम् ॥ ४७
पीतं चर्मण्वतीतीरे गायन्त्या मधुरस्वरम् ।
पुलिन्द्यां[1] सुरतान्तेषु नालिकेररसासवम् ॥ ४८
सारसीसरसालिन्या[2] सीत्कारमधुरस्वरम् ।
सारसः सुरतैः स्वैरं सामन्तश्चारुरञ्जितः ॥ ४९
तालीतमालकुञ्जेषु तरलाननेनेत्रया ।
क्षीबप्रेक्षणविक्षोभैः कृतं कान्तावलोकनम् ॥ ५०
कनकस्यन्दसंदोहसुन्दरैरङ्गपञ्जरैः ।
स्वर्गेऽप्सरोम्बुजिन्यासु तोषिताः सुरषट्पदाः ॥ ५१
मणिकाञ्चनमाणिक्यमुक्तानिकरभूतले ।
कल्पद्रुमवने मेरौ यूना सह रतं कृतम् ॥ ५२
कल्लोलाकुलकच्छासु लसद्गुच्छलतासु च ।
वेलावनगुहास्वब्धेश्चिरं कूर्मतया स्थितम् ॥ ५३
तरत्तारतरङ्गासु दोलनं सरसालिनाम् ।
चलच्छदपटालीषु राजहंस्यं मया कृतम् ॥ ५४
शाल्मलीदललोलानामान्दोलनदरिद्रताम् ।

तिष्ठन्ति राजसाः' इति मर्त्यजन्मनां राजसत्वस्मृतेश्चेत्यर्थः । ॥ ३४ ॥ ब्रह्मणो हिरण्यगर्भादेतत्कल्पादावन्तःकरणोपाध्युत्पत्त्या प्रतिबिम्बतया तत्रावतीर्णायाः । पश्यामीव स्फुटं स्मरामीति यावत् ॥ ३५ ॥ लोकान्तरं विद्याधरलोकस्तदेवाब्जम् ॥ ३६ ॥ मानुषी भूत्वा स्थिता । ततः पन्नगेश्वरकामिनी अभवमित्यनुषङ्गः ॥ ३७ ॥ ३८ ॥ 'वासनया' इति पाठे स्पष्टम् । 'वासतया' इति पाठे तु वने वासो यस्यास्तद्भावेन मुग्धा मूढा । धर्ममर्यादानभिज्ञेति यावत् । अतएवोद्धता दुष्कर्मसंचयात् । गुलुच्छशब्दस्तत्पुष्पगुच्छपरः । वनविलासिनी लता जाता अर्थाद्गुलुच्छलतेति गम्यते ॥ ३९ ॥ ४० ॥ अस्त्रीत्वं पुंस्त्वं तत्प्रयुक्तस्य राज्यादिभोगफलस्य दातॄणां प्राक्संचितकर्मणाम् । समाः संवत्सरान् ॥ ४१ ॥ कच्छा जलप्रायदेशाः । राजदुष्कृतदोषः परस्वापहारादिः ॥ ४२ ॥ सुराष्ट्रा देशविशेषाः । गोत्वं कृतम् । गोजन्मानुभूतमिति यावत् । दुर्जना दुष्टा अज्ञा बालाश्च ये गोपालास्तेषां ताडनानुधावनादिलीलया ॥ ४३ ॥ विहङ्ग्या विहङ्गीजन्मप्राप्तया मया निष्कारणवैरादेव व्याधैर्विन्यस्ता वागुराः । अधमा वासनाः द्वैतवासनाः ॥ ४४ ॥ कर्णिकाकोडाः किंजल्कमध्यानि त एव शय्याः । कुड्मला मुकुलाः । अलिना सहेत्यर्थादलिनीजन्मप्राप्तयेति गम्यते ॥ ४५ ॥ हरिण्या मृग्या मया । हारिनेत्रया रम्येक्षणया ॥ ४६ ॥ अब्धिकल्लोलैरुह्यमानया मत्स्या मया 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति यलोपः । दिक्षु नष्टासु दिग्भ्रमे सति भ्रान्त्या । कैवर्तसविधं प्राप्तयेति यावत् । कैवर्तैर्यष्ट्यादिना कृतमाननप्रदेशे ताडनं दवोपनीते अम्बुनि बृहत्तरङ्गजले कच्छपाच्छोडे कूर्मपृष्ठास्थनि च निपतनान्मोघं व्यर्थं जातं दृष्टमित्यर्थः ॥४७॥ पीतं पुलिन्द्या मयेति शेषः ॥ ४८ ॥ सारस्यां पद्मिन्यां सरसा सप्रेमा अलिनी भ्रमरीव निश्चलं स्थितयेति यावत् । मया सीत्कारेण सुरतकूजितेन मधुरस्वरं यथा स्यात्तथा सामन्तः अधीश्वरः । पतिरिति यावत् । सारसो रञ्जितः प्रीणितः ॥ ४९ ॥ क्षीबप्रेक्षणं समदनिरीक्षणं तत्कृतैर्मन्मथविक्षोभैः कान्तस्यावलोकनं मया कृतम् । अनेन तद्योग्यं जन्मान्तरमुक्तम् ॥ ५० ॥ स्यन्दो द्रवः । अप्सरोलक्षणया अम्बुजिन्या सुरा एव षट्पदा अधरमधुपानादिना तोषिताः ॥ ५१ ॥ तस्मिन्नेव जन्मनि देवयूना ॥ ५२ ॥ कूर्मतया कच्छपीत्वेन ॥ ५३ ॥ चलत्तारतरङ्गासु सरसीषु मया स्वीयेषु चलेषु च्छदेषु पटानां पटवत् शुभ्रपक्षाणां आलीषु पङ्क्तिषु पद्मभ्रान्त्योपविष्टानां सरसानामलिनां भ्रमराणां दोलनमान्दोलनसाधनं राजहंसं राजहंसीत्वं कृतम् । अनुभूतमिति यावत् । 'नलिनीनालदोलासु' इति पाठे स्पष्टम् ॥ ५४ ॥ दोलायमाने एकस्मिञ्शाल्मलीदले लोलानां बहूनां मशकानां मध्ये ततः प्रच्युतस्य कस्यचिन्मशकस्य तत्रोपवेष्टु-

१ पुलिन्दसुरतान्तेषु इति पाठस्तत्र पुलिन्दैरित्यर्थः. २ सरसी इति पाठः.

मशकस्य मयालोक्य दीनं मशकया स्थितम् ॥ ५५
तरत्तारतरङ्गासु चञ्चद्वीचियग्रचुम्बनैः ।
भ्रान्तं शैलस्रवन्तीषु जलवञ्जुललीलया ॥ ५६
गन्धमादनमन्दारमन्दिरे मदनातुराः ।
पातिताः पादयोः पूर्वं विद्याधरकुमारकाः ॥ ५७
कीर्णकर्पूरपूरेषु तल्पेषु व्यसनातुरा ।
चिरं विलुलितासीन्दुबिम्बेष्विव शशिप्रभा ॥ ५८
योनिष्वनेकविधदुःखशतान्वितासु
भ्रान्तं मयोन्नमनसन्नमनाकुलाङ्ग्या ।
संसारदीर्घसरितश्चलया लहर्या
दुर्वारवातहरिणीसरणक्रमेण ॥ ५९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे जन्मान्तरवर्णनं नाम सप्तविंशः सर्गः ॥ २७ ॥

---

## अष्टाविंशः सर्गः २८

श्रीराम उवाच ।

वज्राङ्गसाराद्ब्रह्माण्डकुड्यान्निबिडमण्डलात् ।
कोटियोजनसंपुष्टात्कथं ते निर्गतेऽबले ॥ १

श्रीवसिष्ठ उवाच ।

क्व ब्रह्माण्डं क्व तद्भित्तिः क्वात्रासौ वज्रसारता ।
किलावश्यं स्थिते देव्यावन्तःपुरवराम्बरे ॥ २
तस्मिन्नेव गिरिग्रामे तस्मिन्नेवालयाम्बरे ।
ब्राह्मणः स वसिष्ठाख्य आस्वादयति राजताम् ॥ ३
तमेव मण्डपाकाशकोणकं शून्यमात्रकम् ।
चतुःसमुद्रपर्यन्तं भूतलं सोऽनुभूतवान् ॥ ४
आकाशात्मनि भूपीठं तस्मिंस्तद्राजपत्तनम् ।
राजसद्मानुभवति स च सा चाप्यरुन्धती ॥ ५
लीलाभिधाना सा जाता तया च ज्ञप्तिरर्चिता ।
ज्ञप्त्या सह समुल्लङ्घ्य खमाश्चर्यमनोहरम् ॥ ६
प्रादेशमात्रे[1] नभसि सा तत्रैव गृहोदरे ।
ब्रह्माण्डान्तरमासाद्य गिरिग्रामकमन्दिरे ॥ ७
ब्रह्माण्डात्परिनिर्गत्य स्वगृहे स्थितिमाययौ ।
स्वप्नात्स्वप्नान्तरं प्राप्य यथा तल्पगतः पुमान् ॥ ८
प्रतिभामात्रमेवैतत्सर्वमाकाशमात्रकम् ।
न ब्रह्माण्डं न संसारो न कुड्यादि न दूरता ॥ ९
स्वचित्तमेव कचति तयोस्ताद्दङ्मनोहरम् ।
वासनामात्रसोल्लेखं क्व ब्रह्माण्डं क्व संसृतिः ॥ १०
निरावरणमेवेदं ज्ञप्त्याकाशमनन्तकम् ।
किंचित्स्वचित्तेनोन्नीतं स्पन्दयुक्त्येव मारुतः ॥ ११
चिदाकाशमजं शान्तं सर्वत्रैव हि सर्वदा ।
चित्त्वाज्जगदिवाभाति स्वयमेवात्मनात्मनि ॥ १२
येन बुद्धं तु तस्यैतदाकाशादपि शून्यकम् ।
न बुद्धं येन तस्यैतद्वज्रसाराचलोपमम् ॥ १३
गृह एव यथा स्वप्ने नगरं भाति भासुरम् ।
तथैतदसदेवान्तश्चिद्धातौ भाति भास्वरम् ॥ १४

---

मसामर्थ्यादान्दोलनदरिद्रतामालोक्य तत्संस्कारेणैव मृतयाहंस्या मयापि मशकतया भूत्वा दीनं स्थितम् । 'यं यं वापि स्मरन्भावम्' इति स्मृतेरिति भावः ॥ ५५ ॥ शैलस्रवन्तीषु गिरिणदीषु जलवञ्जुला वेतसास्तल्लीलया । तज्जन्मनेति यावत् ॥ ५६ ॥ स्थावरान्ताधमयोनिजन्मान्युक्त्वोत्तमजन्मान्यप्याह—**गन्धमादनेति** ॥ ५७ ॥ तत्रापि दुःखबाहुल्यं दर्शयति—**कीर्णेति** । व्यसनं तद्वियोगदुःखं तेनातुरा ॥ ५८ ॥ उक्तं संक्षिप्योपसंहरति—**योनिष्विति** । तुलाकोटेरिवोन्नमनमूर्ध्वगतिः सन्नमनमधोगतिस्ताभ्यामाकुलाङ्ग्या व्याकुलचित्तया । वातहरिणी वातप्रमीः । सा हि स्वभावाद्वायुप्रवाहानुसारिणी उच्चावचदेशान्सरतीति प्रसिद्धम् ॥५९॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जन्मान्तरवर्णनं नाम सप्तविंशः सर्गः ॥ २७ ॥

दृष्टप्रपञ्चमिथ्यात्वाच्चिदाकाशस्य सत्यता ।
पर्वतो विस्तरेणात्र गिरिग्रामश्च वर्ण्यते ॥ १ ॥

वज्राङ्गमिव साराद्दृढात् । पूर्वोक्तरीत्यानेककोटियोजनं सम्यक्पुष्टं अन्तर्घनं यस्य तथाभूतात् । मिथ्याभूतकुड्यादेरपि स्वप्ने गतिनिरोधकत्वदर्शनान्निर्गमनानुपपत्तिरिति शङ्कितुराशयः ॥ १ ॥ अबाधितावस्थमस्तु निरोधकं न बाधितं स्वप्नेऽपि तददर्शनादित्याशयेन वसिष्ठः परिहरति—**क्व ब्रह्माण्डमित्यादिना** । अवश्यं वस्तुतः । देव्याविति राजवाचकदेवशब्दनिष्पन्नदेवीशब्दस्यान्यस्य चैकशेषः ॥ २ ॥ आस्वादयत्यनुभवति विदूरथः सन् ॥ ३ ॥ अनुभूतवान् पद्मभूपालः सन् ॥ ४ ॥ पत्तनं नगरं तस्मिन् राजसद्म । सा चानुभवतीति वर्तमानसामीप्ये वर्तमानवन्निर्देशः । विदूरथवासनाजन्यवक्ष्यमाणलीलान्तरात्मतां प्राप्ता वा सा अरुन्धती अनुभवतीति मुख्यवर्तमानोपपत्तिः ॥ ५ ॥ ॥ ६ ॥ ॥ ७ ॥ ८ ॥ प्रतिभा भ्रान्तिस्तन्मात्रम् ॥ ९ ॥ वासनामात्रेण सोल्लेखं तत्तत्पदार्थव्यवहारोल्लेखसहितम् । तयोः स्वचित्तमेव तथा कचति प्रथते ॥ १० ॥ ज्ञप्त्याकाशं चिदाकाशमेव ताभ्यां स्वचित्ते न किंचिद्ब्रह्माण्डरूपमुन्नीतं कल्पितम् । यथा आकाशमेव स्पन्दयोगेन मारुत इति कल्प्यते तद्वत् ॥ ११ ॥ जगदिवाभाति । येन न बुद्धं तद्दृशेति शेषः ॥ १२ ॥ येन बुद्धं तस्य दृशा तु नास्त्येवेत्याह—**येनेति** । कथं तर्ह्यन्योऽपि ब्रह्माण्डकुड्याद्बहिर्न निःसरति तत्राह—**न बुद्धमिति** ॥ १३ ॥ १४ ॥

[1] प्रदेशमात्रे इति पाठः.

यथा मरौ जलं बुद्धं कटकत्वं च हेमनि ।
असत्सदिव भातीदं तथा दृश्यत्वमात्मनि ॥ १५
एवमाकथयन्त्यौ ते ललने ललिताकृती ।
गृहान्निर्ययतुर्बाह्यं चारुचंक्रमणक्रमैः ॥ १६
आदृश्ये ग्रामलोकेन प्रेक्षमाणे पुरोगिरिम् ।
चुम्बिताकाशकुहरं संस्पृष्टादित्यमण्डलम् ॥ १७
नानावर्णाखिलोत्फुल्लविचित्रवननिर्मलम् ।
नानानिर्झरनिर्ह्रादकूजद्वनविहंगमम् ॥ १८
विचित्रमञ्जरीपुञ्जपिञ्जराम्बुदमण्डलम् ।
स्वभ्रमच्छगुलुच्छाग्रविश्रान्तखगसारसम् ॥ १९
सारवञ्जुलविस्तारगुप्ताखिलसरित्तटम् ।
असमाप्तशिलाश्वभ्रलतावर्तनमारुतम् ॥ २०
पुष्पाग्रपिहिताकाशकोशकुड्यकवारिदम् ।
पतद्दीर्घसरित्स्रोतःस्फुरन्मुक्ताकलापकम् ॥ २१
चलद्वृक्षवनव्यूहवातवेल्लिसरित्तटम् ।
नानावनाकुलोपान्तच्छायासततशीतलम् ॥ २२
अथ ते ललने तत्र तदा ददृशतुः स्वयम् ।
तं गिरिग्रामकं व्योम्नः स्वर्गखण्डमिव च्युतम् ॥ २३
रटत्प्रणालीपटलं पूर्णपुष्करिणीगणम् ।
द्विजैः कुचकुचैः कूजत्स्वलीलाश्वभ्रकच्छकम् ॥ २४
गच्छद्गोवृन्दहुंकारकरालाखिलकुञ्जकम् ।
कुञ्जगुल्मकखण्डाढ्यं सच्छायघनशाद्वलम् ॥ २५
दुष्प्रवेशार्ककिरणं दृशन्नीहारधूसरम् ।
उदग्रमञ्जरीपुञ्जजटालं विशिखान्तरम् ॥ २६
शिलाकुहरवाःस्फालप्रोच्चलन्मुक्तनिर्झरैः ।
सारिताचलनिर्धूतक्षीरोदकजलश्रियम् ॥ २७
फलमाल्यमहाभारभाग्रुरैरजिरद्रुमैः ।
आनीय पुष्पसंभारं तिष्ठद्भिरिव संकुलम् ॥ २८
तरत्तरङ्गझांकारकारिमारुतकम्पितैः ।
कीर्णपुष्पसमावृष्टं द्रुमैरपि रसाकुलैः ॥ २९
अशङ्कितशिलाकूटस्रवद्बिन्दुटंकृतैः ।
किंचित्कृतरवं गुप्तैरशङ्कैः शङ्कितैः खगैः ॥ ३०
उत्फाललहरीश्रान्तसीकरास्वादनाकुलैः ।
नद्यामुडुपरावर्तवृत्ति भिर्विहगैर्वृतम् ॥ ३१
उत्तालतालविश्रान्तकाकालोकनशङ्कितैः ।
बालैः प्रगोपितामिक्षाखण्डं जीर्णस्वभुक्तकैः ॥ ३२
पुष्पशेखरसंभारवसनग्रामबालकम् ।
खर्जूरनिम्बजम्बीरगहनोपान्तशीतलम् ॥ ३३
क्षौमाग्रहस्ताम्बरया मञ्जरीपूर्णकर्णया ।
क्षुत्क्षीणयाक्रान्तरथ्यं ग्रामकीटककान्तया ॥ ३४
सरित्तरङ्गसंघट्टसंरावाश्रुतसंकथम् ।
कर्मजाड्यघनत्रासवाञ्छितैकान्तसंस्थितम् ॥ ३५
दधिलिप्तास्यहस्तांसैः स्निग्धपुष्पलताधरैः ।
नग्नैर्गोमयपङ्काङ्कैर्बालैराकुलचत्वरम् ॥ ३६

दृश्यत्वं दृश्यप्रपञ्चरूपत्वम् ॥ १५ ॥ बाह्यं देशम् । चंक्रमणं गतिः ॥ १६ ॥ आकाशस्य कुहरं मध्यच्छिद्रम् । राहोः शिर इतिवच्छेदकल्पना । संस्पृष्टादित्यमण्डलमित्यतिशयोक्तिः ॥१७॥ ॥ १८ ॥ मञ्जरीपुञ्जपिञ्जराणि अतएव विचित्राण्यम्बुदमण्डलानि यस्मेति वृक्षौन्नत्योक्तिः । अतएव स्वभ्रं शोभनाभ्रयुक्तम् । गुलुच्छा लताविशेषाः ॥ १९ ॥ सारैर्बलवद्भिर्वञ्जुलानामतिमुक्तकानामम्बुवेतसानां वा मूलविस्तारैर्गुप्तानि पतनाद्रक्षितानि सरित्तटानि यत्र । न सम्यगाप्ताः प्राप्ता वृक्षावलम्बनं याः शिलाश्वभ्रोत्पन्नलतास्तासामावर्तनः परिवर्तनो मारुतो यस्मिन् ॥ २० ॥ पुष्पाण्यग्रे येषां तैः शिखरद्रुमैः पिहिता आकाशकोशस्य कुड्यकाः कुड्यप्रतिकृतिभूता वारिदा यस्य । सरित्स्रोतांस्येव स्फुरन्मुक्तामाला यस्य ॥ २१ ॥ चलद्वृक्षा वनव्यूहा येषु अतएव वातेन वेल्लिनो वेष्टनशीलाः सरित्तटा यस्मिन् ॥ २२ ॥ गिरिमभिवर्ण्य गिरिग्रामं वर्णयितुमाह—**अथेति** ॥ २३ ॥ रटदिति विशेषणाद्घटीयन्त्रादिप्रणाल्यो ग्राह्याः । कुचकुचैरिति शब्दानुकरणेन ताद्रूप्यारोपोक्तिः । तथाविधैर्द्विजैः पक्षिभिः कूजन्तः स्वस्य ग्रामस्य लीलार्थाः श्वभ्रकच्छा यस्मिन् ॥ २४ ॥ तत्र गोसंपत्तिमाह—**गच्छदिति** । गवां यवसच्छायादिसमृद्धिमाह—**कुञ्जेति** ॥२५॥ दृषद्भिः शिलाभिर्नीहारैश्च धूसरं भस्मोद्धूलितमिव । उन्नम्राग्रैर्मञ्जरीपुञ्जैर्जटा इव लम्बीनि शिखान्तराणि कतिपयशिखा यस्य ॥ २६ ॥ शिलाच्छिद्रेषु वारां आस्फालात् प्रोच्चलन्तो मुक्तासदृशबिन्दवो येषां तथाविधैर्निर्झरैः सारिता मन्थाचलनिर्धूतक्षीरोदकजलश्रीर्यत्र ॥ २७ ॥ अजिरमङ्गणम् ॥२८॥ रसो मकरन्दः प्रेमातिशयश्च तेनाकुलितैर्द्रुमैरपि अर्थिषु सम्यगावृष्टं, किं पुनर्नरैरित्यर्थः ॥२९॥ अशङ्कैः शङ्काऽयोग्यैरपि अशङ्कितं यथा स्यात्तथा शिलाकूटात्स्रवतां निपततामब्बिन्दूनां टंकृतैर्हेतुभिर्गुटिकाधनुर्ध्वानसाम्याच्छङ्कितैरतएव गुप्तैर्निलीनैः खगैः ॥ ३० ॥ श्रान्तत्वं सीकरास्वादने हेतुः । उडूनां नक्षत्राणां परावर्तः परिवर्तनमिव वृत्तिः परिवृत्तिर्येषां तैर्विहङ्गैर्हंसैः ॥३१॥ काकग्रहणं मार्जारादीनामप्युपलक्षणम् । जीर्णप्रातस्तनस्वभुक्तकैरस्माभिर्भक्षणीयमिति बुद्ध्या प्रगोपिताः संवृतदेशे रक्षिता आमिक्षाखण्डा यत्र । घनीकृतं पय आमिक्षा ॥ ३२ ॥ पुष्पाण्येव शेखरसंभारः शिरोभूषणादिर्वसनानि च येषां तथाविधा ग्रामबालका यत्र ॥ ३३ ॥ तत्र भिल्लादिदरिद्रवधूर्वर्णयति—**क्षौमेति** । क्षुमाऽतसी तस्या अवयवाः क्षौमाण्यग्राणि शाखास्तान्येव हस्तप्राप्याण्यम्बराणि यस्याः । ग्रामे कीटका इवोपेक्ष्या दरिद्रनीचालसास्तेषां कान्तया वधूजनेन ॥ ३४ ॥ संरावैस्तारध्वनिभिरभिवादश्रुताः संकथाः संलापा यत्र । कर्मकरणे जाड्यादकौशलाद्घनस्त्रासो येषां मुग्धालसानां तैर्वाञ्छिता एकान्तसंस्थितिर्यत्र ॥ ३५ ॥ ३६ ॥

१ स्वच्छन्दचर इति पाठः ।

तीरशाद्वलवल्लीनां दोलान्दोलनकारिभिः ।
तरङ्गैर्वाह्यमानस्य लेखिकाङ्कितसैकतम् ॥ ३७
दधिक्षीरघनामोदमत्तमन्थरमक्षिकम् ।
कामभुक्तार्थतोद्बाष्पजर्जराबलबालकम् ॥ ३८
गोमयासिक्तवलयकरनारीकृतक्रुधम् ।
धम्मिल्लवलनाव्यग्रत्रस्तस्त्रीविहसज्जनम् ॥ ३९
दान्तपुष्पच्छदोत्सन्नपतत्ककुदवायसम् ।
गृहरथ्यागणद्वारकीर्णक्रूरकुरण्टकम् ॥ ४०
गृहपार्श्वस्थितश्वभ्रकुञ्जैः कुसुमितभ्रमैः ।
प्रत्यहं प्रातरागुल्फमाकीर्णकुसुमाजिरम् ॥ ४१
चरच्चमरसारङ्गजालजङ्गलखण्डकम् ।
गुञ्जानिकुञ्जसंजातशष्पसुप्तमृगार्भकम् ॥ ४२
एकान्तसुप्तवत्सैककर्णस्पन्दास्तमक्षिकम् ।
गोपोच्छिष्टीकृतदधिस्वसृक्किस्पन्दिमक्षिकम् ॥ ४३
समस्तसद्मसंक्षीणमक्षिकाक्षिप्तमाक्षिकम् ।
फुल्लाशोकद्रुमोद्यानकृतलाक्षिकमन्दिरम् ॥ ४४
सीकरासारमरुता नित्यार्द्रविकचद्रुमम् ।
कदम्बमुकुलप्रोतसमस्तच्छादनतृणम् ॥ ४५
प्रतिकृत्तलताफुल्लकेतकोत्करपाण्डुरम् ।
बृहत्प्रणालपटलीरणद्घुरुघुरारवम् ॥ ४६
वातायनगुहानिर्यत्सौधविश्रान्तवारिदम् ।
पूर्णपुष्करिणीपङ्क्तिपूर्णराजपृथूत्तरम् ॥ ४७
नीरन्ध्रविटपिच्छायाशीतलामलशाद्वलम् ।
सर्वशष्पाग्रवार्बिन्दुप्रतिबिम्बिततारकम् ॥ ४८
अनारतपतत्फुल्लहिमवर्षसितालयम् ।
विचित्रमञ्जरीपुष्पपत्रसत्फलपादपम् ॥ ४९
गृहकक्षान्तरालीनमेघसुप्तचिरण्टिकम् ।
सौधस्थमेघविद्युद्भिरनादेयप्रदीपकम् ॥ ५०
कन्दरानिलझांकारघनघुंघुममण्डपम् ।
चरच्चकोरहारीतहरिणीहारिमन्दिरम् ॥ ५१
उन्निद्रकन्दलोद्भ्रान्तमांसलामोदमन्थरैः ।
मरुद्भिर्मन्दमायातुमारब्धैर्लोलपल्लवम् ॥ ५२
लावकालापलीलायामालीनललनागणम् ।
कोककोकिलकाकोलकोलाहलसमाकुलम् ॥ ५३
शालतालतमालाञ्जनीलतत्फलमालिनम् ।
वल्लीवलयविन्यासविलासवलितद्रुमम् ॥ ५४

आलोलपल्लवलतावलितायनाना-
मुत्फुल्लकन्दलशिलीन्ध्रसुगन्धितानाम् ।
तालीतमालदलताण्डवमण्डपाना-
मारामफुल्लकुसुमद्रुमशीतलानाम् ॥ ५५
साराववारिचलनाकुलगोकुलाना-
मानीलसस्यकुसुमस्थलशोभितानाम् ।
तीरद्रुमप्रकरगुप्तसरिद्वयाणां
नीरन्ध्रपुष्पितलताग्रवितानकानाम् ॥ ५६

तीरशाद्वलेत्यादिपूर्वोक्तवालानां विशेषणं चेद्दोलास्वान्दोलनकारिभिः, तरङ्गविशेषणत्वे तु दोलावदान्दोलनकारिभिः, वाह्यमानस्य जलस्य लेखिका रेखास्ताभिरङ्कितसैकतम् ॥ ३७ ॥ कामभुक्तार्थतायै यथाभिलाषभक्षणाय रोदनादुद्गतबाष्पैर्जर्जरा अबलाः कृशा अस्वतन्त्रा वा बालका यत्र ॥ ३८ ॥ गोमयासिक्तवलयकरत्वादितरनारीषु कृतक्रोधं यथा स्यात्तथा मुक्तधम्मिल्लवलनासु व्यग्रास्त्रस्ताश्च स्त्रियो दृष्ट्वा विहसन्तो जना यत्र ॥ ३९ ॥ दान्तैर्जितक्रोधैर्मुनिभिः पुष्पैश्छदैः पत्रैर्वा उत्सन्ना उत्सारिता नतु काष्ठलोष्टादिना कदाचिदभिघातो मा भूदिति । बलिकर्माक्षतादिभक्षणाय पतन्तः ककुदानां गिरिशिखराणां वायसा यत्र । सकण्टकत्वात्क्रूराः कुरण्टकाः प्रसिद्धा गुल्मभेदा यत्र ॥ ४० ॥ ४१ ॥ चरन्तः शष्पादिभक्षयन्तश्चमरा मृगाः सारङ्गा मृगा पक्षिणश्च । निकुञ्जे लतागृहे संजातेषु शष्पेषु बालतृणेषु । ग्रामशब्दस्य ससीमके सस्थण्डिलकेऽपि वृत्तेर्महाभाष्यादौ प्रसिद्धत्वात्तदन्तर्जङ्गलकुञ्जादिवर्णनेऽपि न विरोधः ॥४२॥ गोपानामुच्छिष्टीकृतदधिषु सृक्किषु वक्त्रपार्श्वेषु ॥४३॥ समस्तेषु सद्मसु संक्षीणमधुमक्षिकं यथा स्यात्तथा आक्षिप्तं संचितं माक्षिकं मधु यस्मिन् । लाक्षिकानि लाक्षारञ्जितकाष्ठसयानि क्रीडामन्दिराणि यस्मिन् ॥ ४४ ॥ नित्यार्द्रत्वादेव विकचाः प्रोत्फुल्लाः । समस्तेति विशेषणमतिशयोक्त्यर्थम् ॥ ४५ ॥ प्रतिकूलत्वादेव कृत्ताभिश्छिन्नाभिर्लताभिरप्रतिबन्धात्फुल्लैः ॥४६॥ पुष्करिणीपङ्क्तिषु पूर्णराजाः पूर्णचन्द्रा इव यानि फुल्लपद्मानि तैः पृथूत्तरं बहूत्कृष्टतरम् । पृथुभिः प्रांशुभिरुत्तीर्यत इति पृथूत्तरमिति वा ॥ ४७ ॥ ४८ ॥ फुल्लैः पुष्पैर्हिमवर्षैश्च सिताः शुभ्राः ॥४९॥ सुप्ताश्चिरण्टिकाः सुवासिन्यो यत्र । अनादेयाः अन्यतः कार्यसिद्धेरनुपादेयाः ॥ ५० ॥ घनाः प्रतिध्वनिभिर्निबिडिता घुंघुमा येषु तथाविधा मण्डपा यत्र । घना इव घुंघुमाः गर्जन्तो वा चकोरहारीतौ पक्षिभेदौ । हारीणि सुन्दराणि ॥ ५१ ॥ कन्दलैः कन्दलीपुष्पैः । उद्भ्रान्तैरिव निःसृतैरामोदैर्मन्थरैर्भरितैः ॥ ५२ ॥ लावकाग्रहणं शुकसारिकादीनामप्युपलक्षणम् । काकोला द्रोणकाकाः ॥ ५३ ॥ ५४ ॥ आलोलपल्लवलतानां वलयो वेष्टनान्यावलयः पङ्क्तयो वा तासां तायनानां संतानाधिकरणानाम् । लताभिर्वेलितानि रुद्धान्ययनानि परितो मार्गा येषामिति वा । सर्वाणि सर्गान्त्यश्लोकस्थस्य गिरिमन्दिराणामित्यस्य विशेषणानि ॥ ५५ ॥ सारावाणि सहंभारवाणि वारिचलनेषु जलोत्तरणेष्वाकुलानि गोकुलानि येषाम् । गुप्त आच्छन्नः सरिद्वयो नदीप्रवाहो येषु

१ खण्डकैः इति पाठः.

उद्यानकुन्दमकरन्दसुगन्धितानां
गन्धान्धषट्पदकुलान्तरिताम्बुजानाम् ।
सौन्दर्यतर्जितपुरन्दरमन्दिराणां
राजीवराजिरजसारुणिताम्बराणाम् ॥ ५७
रंहोवहद्गिरिनदीरवघर्घराणां
कुन्दावदातजलदद्युतिभासुराणाम् ।
सौधस्थितोल्लसितफुल्ललतालयानां
लीलावलोलकलकण्ठविहङ्गमानाम् ॥ ५८
उल्लासिकौसुमदलास्तरणस्थयूना-
मापादमावलितमाल्यविलासिनीनाम् ।
सर्वत्र सुन्दरनवाङ्कुरदन्तुराणां
शोभोल्लसद्वरलताकुलमार्गणानाम् ॥ ५९
संजातकोमललतोत्पलसंकुलानां
तिष्ठत्पयोदपटसंवलितालयानाम् ।
नीहारहारहरितस्थलविश्रुतानां
सौधस्थमेघतडिदाकुलिताङ्गनानाम् ॥ ६०
नीलोत्पलोल्लसितसौरभसुन्दराणां
हुंकारहारिहरितोन्मुखगोकुलानाम् ।
विश्रब्धमुग्धमृगसारगृहाजिराणा-
मुन्नृत्यबर्हिघनसीकरनिर्झराणाम् ॥ ६१
सौगन्ध्यमत्तपवनाहतविक्लवानां
वप्रौषधिज्वलनविस्मृतदीपकानाम् ।
कोलाहलाकुलकुलायकुलाकुलानां
कुल्याकुलाकलकलाश्रुतसंकथानाम् ॥ ६२
मुक्ताफलप्रकरसुन्दरबिन्दुपात-
शीताखिलद्रुमलतातृणपल्लवानाम् ।
लक्ष्मीमनस्तमितपुष्पविकासभाजां
शक्नोति कः कलयितुं गिरिमन्दिराणाम् ॥ ६३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने गिरिग्रामवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः २९

श्रीवसिष्ठ उवाच ।

तत्र ते पेततुर्देव्यौ ग्रामेऽन्तःशीतलात्मनि ।
भोगमोक्षश्रियौ शान्ते पुंसीव विदितात्मनि ॥ १
कालेनैतावता लीला तेनाभ्यासेन साभवत् ।
शुद्धज्ञानैकदेहत्वात्त्रिकालामलदर्शिनी ॥ २
अथ सस्मार सर्वास्ताः प्राक्तनीः संसृतेर्गतीः ।
सा स्वयं स्वरसेनैव प्राग्जन्ममरणादिकाः ॥ ३

लीलोवाच ।

देवि देशमिमं दृष्ट्वा त्वत्प्रसादात्स्मराम्यहम् ।
इह तत्प्राक्तनं सर्वं चेष्टितं चेष्टितान्तरम् ॥ ४
इहाभूवमहं जीर्णा शिरालाङ्गी कृशा सिता ।
ब्राह्मणी शुष्कदर्भाग्रभेदरूक्षकरोदरा ॥ ५
भर्तुः कुलकरी भार्या दोहमन्थानशालिनी ।
माता सकलपुत्राणामतिथीनां प्रियंकरी ॥ ६
देवद्विजसतां भक्ता सिक्ताङ्गी घृतगोरसैः ।

---

॥ ५६ ॥ गन्धान्धैः षट्पदकुलैरन्तरितानि तिरोहितान्यम्बुजानि येषु । रजसा वायून्नीतेनेत्याशयः ॥ ५७ ॥ रंहसा वेगेन वहन्तीनाम् । कुन्दवदवदातैः शुभ्रैर्जलदद्युतिभिर्भासुराणाम् । कलकण्ठा मधुरकण्ठाः । कण्ठशब्देन तद्ध्वनिर्लक्ष्यते ॥ ५८ ॥ आपादमावलितानि माल्यानि याभिस्तथाविधा विलासिन्यः स्त्रियो येषु । वरलताभिराकुला व्याप्ता मार्गणाः शरस्तम्बा याचका वा येषु ॥ ५९ ॥ नीहारशब्देन तज्जलबिन्दुपङ्क्तयो लक्ष्यन्ते । ता एव हारा मुक्तावल्यो येषु तथाविधैर्हरितस्थलैर्विश्रुतानाम् ॥ ६० ॥ हुंकारैर्हारीणि मनोहराणि हरितोन्मुखानि हरिततृणोन्मुखानि गोकुलानि येषु । विश्रब्धा विश्वस्ता मुग्धा मृगाः सरन्त्यस्मिन्नित्यधिकरणे बाहुलकाद्घञ् । निर्झराणां घनसीकरत्वं वृष्टिभ्रान्त्या बर्हिणानामुन्नृत्ये हेतुः ॥ ६१ ॥ सौगन्ध्येन मत्तवत्क्रान्तेन पवनेनाहता निरस्ताः । विक्लवशब्दो वैक्लव्यपरः । वप्रेष्वौषध्यो ज्योतिर्लता एव ज्वलनाः । कोलाहलोऽत्र पक्षिरवः । कुलायो नीडम् । कुल्याशब्देन गिरिनिर्झरा ग्राह्यास्तत्कुलानामासमन्तात्कलकलैर्ध्वनिभिरश्रुतास्तिरस्कृता इति यावत् । संकथाः संवादा येषु ॥ ६२ ॥ लक्ष्मीं शोभां कलयितुं संख्यातुम् । गिरिमन्दिराणां गिरिग्रामस्येति यावत् ॥ ६३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे गिरिग्रामवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥

लीलायाः प्राक्चरित्राणां प्रत्यभिज्ञात्र वर्ण्यते ।
तथा प्रतिप्रयाणं च व्योम्नि लोकौघमण्डिते ॥ १ ॥

शान्ते शान्त्यादिसाधनसंपन्ने ॥ १ ॥ २ ॥ स्वरसेन अप्रयत्नेनैवेति यावत् ॥ ३ ॥ चेष्टितान्तरं तत्प्राक्तनजन्मपरम्पराचेष्टितमपि ॥ ४ ॥ जीर्णा वृद्धा । शुष्कदर्भाणामग्रैस्तीक्ष्णभागैर्भेदैर्विदारणै रूक्षं करोदरं यस्याः सा ॥ ५ ॥ मन्थानो दधिमन्थदण्डः ॥ ६ ॥ भर्जनी भर्जनपिठरी चरुश्वरुश्रपणस्थाली ।

---

१ दलातरणस्थ इति पाठः. २ शीलतात्मनि इति पाठः.

भर्जनी चरुकुम्भादिभाण्डोपस्करशोधिनी ॥ ७
नित्यमन्नलवाक्तैककाचकम्बुप्रकोष्ठका ।
जामातृदुहितृभ्रातृपितृमातृप्रपूजनी ॥ ८
आदेहं सद्मभृत्यैव प्रक्षीणदिनयामिनी ।
वाचं चिरं चिरमिति वादिन्यनिशमाकुला ॥ ९
काहं क इव संसार इति स्वप्नेऽप्यसंकथा ।
जाया श्रोत्रियमूढस्य तादृशस्यैव दुर्धियः ॥ १०
एकनिष्ठा समिच्छाकगोमयेन्धनसंचये ।
म्लानकम्बलसंवीतशिरालक्करागात्रिका ॥ ११
तर्णकीकर्णजाहस्थकृमिनिष्कासतत्परा ।
गृहशाकायनासेकसत्वराहृतकर्परा ॥ १२
नीलनीरतरङ्गान्ततृणतर्पिततर्णिका ।
प्रतिक्षणं गृहद्वारकृतलेपनवर्णका ॥ १३
नीत्यर्थं गृहभृत्यानामादीनकृतवाच्यता ।
मर्यादानियमादब्धेर्वेलेवानिशमच्युता ॥ १४
जीर्णपर्णसवर्णैककर्णदोलाधिरूढया ।
काष्ठताड्यजराभीतजीववृत्त्येव चिह्निता ॥ १५

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा संचरन्ती सा शिखरिग्रामकोटरे ।
संचरन्त्याः सरस्वत्या दर्शयामास सस्मयम् ॥ १६
इयं मे पाटलाखण्डमण्डिता पुष्पवाटिका ।
इयं मे पुष्पितोद्यानमण्डपाशोकवाटिका ॥ १७
इयं पुष्करिणीतीरद्रुमाऽऽग्रन्थिततर्णका ।
इयं सा कर्णिकानाम्नी तर्णिका मुक्तपर्णिका ॥ १८
इयं सा मेऽलसाकीर्णा वराकी जलहारिका ।
अद्याष्टमं दिनं बाष्पक्लिन्नाक्षी परिरोदिति ॥ १९
इह देवि मया भुक्तमिहोषितमिह स्थितम् ।
इह सुप्तमिहापीतमिह दत्तमिहाहृतम् ॥ २०
एष मे ज्येष्ठशर्माख्यः पुत्रो रोदिति मन्दिरे ।
एषा मे जङ्गले धेनुर्दोग्ध्री चरति शाद्वलम् ॥ २१
गृहे वसन्तदाहाय रूक्षक्षारविधूसरम् ।
स्वदेहमिव पञ्चाक्षं पश्येमं प्रघणं मम ॥ २२
तुम्बीलताभिरुग्राभिः पुष्टाभिरिव वेष्टितम् ।
महानसस्थानमिदं मम देहमिवापरम् ॥ २३
एते रोदनताम्राक्षा बन्धवो भुवि बन्धनम् ।
अङ्गदार्पितरुद्राक्षा आहरन्त्यनलेन्धनम् ॥ २४
अनारतं शिलाकच्छे गुच्छाच्छोटनकारिभिः ।
तरङ्गैः स्थगिताकारं स्पृष्टतीरलतादलैः ॥ २५
सीकराकीर्णपर्यन्तशाद्वलस्थलसल्लतैः ।
शिलाफलहकास्फालफेनिलोत्पलसीकरैः ॥ २६

---

भाण्डानामुपस्करान्तराणां च मार्जनादिना शोधनशीला ॥ ७ ॥ एकं काचकम्बु काचवलयं । बहूनां धारणे कर्मत्वरयाभिघाते भङ्गापत्तेः ॥ ८ ॥ देहपदेन तत्पातो लक्ष्यते । सद्मभृतिर्गृहपोषणम् । पुत्रस्नुषाभृत्यवर्गान्प्रति कर्मत्वरार्थं चिरं त्वया स्नातं चिरं त्वया विलम्बितं किं चिरायसे इत्यादिवदनशीला । आकुला व्यग्रा ॥ ९ ॥ तादृशस्य ममेवात्यन्तगृहकर्मासक्तस्येति यावत् । दुर्धियः अविशुद्धबुद्धेः ॥ १० ॥ समिदादिसंचयविषये एकनिष्ठा एकाग्रचित्ता । सावधानेति यावत् ॥११॥ तर्णकी वत्सा तस्याः कर्णजाहे कर्णमूले स्थितानां कृमीणां निष्कासनं निष्कासस्तत्र तत्परा । 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणञ्जाहचौ' इति जाहच् । गृहे कृतं शाकायनं शाककेदारस्तस्यासेकायाहृतानि सेकसाधनकर्पराणि यया । कर्परपदेन तत्पाणयो भृत्या लक्षणयोच्यन्ते ॥१२॥ नीलैर्नीरतरङ्गाणामन्तोऽवधिः कूलं तत्रत्यतृणैः स्नेहात्स्वयमाहृतैस्तर्पितास्तर्णिकाः बालवत्सा यया । गृहद्वारे कृतालेपनं तत्र वर्णका रङ्गवल्लीरचनाश्च यया ॥ १३ ॥ नीतिर्विनयाचारादिशिक्षणं तदर्थम् । आदीनमीषद्दैन्ययुक्तं यथा स्यात्तथा कृताः प्रकाशिता वाच्यता जनवचनीयता ईदृशानां गृहे कथमेवंशीला अविनीता भृत्यास्तिष्ठन्तीत्येवं वक्ष्यन्ति जना इत्येवमादिरूपा यया । स्वचरित्रेणापि तन्मर्यादाशिक्षकत्वमाह—**मर्यादेति** ॥ १४ ॥ एवं चिरं स्थितायाः स्वस्या जराप्रकर्षेण वामकर्णबाधिर्ये शिरःप्रकम्पे कुब्जात्वे यष्ट्यवलम्बनाधीने च संचारे या जीवनदशा तां वर्णयति—जीर्णेति । जीर्णपर्णसमानवर्णस्य देहस्यैको दक्षिणो यः कर्णः स एव शिरःकम्पेन कम्पमानत्वाद्दोला तदधिरूढयेव तदधीनश्रवणव्यवहारया अत एवावलम्बनकाष्ठस्योन्नयने तत्ताडनार्हयेव जरायाः सकाशाद्भीतयेव चरमजीवनवृत्त्या चिह्नितेवात्रासमित्यर्थः ॥ १५ ॥ संचरन्ती भ्रमन्ती । स्मयोऽत्र विस्मयः ॥१६॥ पाटलैर्गुल्मैरखण्डमखण्डितं मण्डिता ॥१७॥ आग्रन्थिता ईषद्ग्रन्थिनिबद्धास्तर्णका यस्याः मुक्तपर्णिका मद्वियोगदुःखादित्यार्थिकं लभ्यते ॥ १८ ॥ अलसा दुःखात्स्वकार्याक्षमेति यावत् । कीर्णा रजोभिरिति शेषः ॥ १९ ॥ आहृतमानीतं फलधान्यादि ॥ २० ॥ २१ ॥ वसन्तारम्भे होलिकादाहाय कृतमिति शेषः । क्षारेण भस्मना विधूसरम् । स्वदेहमिव मम प्रियमिति शेषः । पञ्चाक्षा गवाक्षा यस्मिन् देहपक्षे अक्षाणि ज्ञानेन्द्रियाणि । प्रघणं बहिर्द्वारप्रकोष्ठम् ॥२२॥ तुम्बीलताभिरलाबुवल्लीभिः उग्राभिः कटुभिः पुष्टाभिः स्वेनारोप्य पोषिताभिरिव वेष्टितं योग्यतया छदिप्रदेशे इति गम्यते । महानसस्थानं पाकस्थानम् ॥ २३ ॥ बन्धनं प्रत्यक्षबन्धनभूता बन्धवः ॥ २४ ॥ शिलाप्रचुरे कच्छे आच्छोटनमास्फालनम् । उत्पलसीकरैरित्यन्तविशेषितैस्तरंगैः साधनैः स्थगिताकारं तिरस्कृतस्वरूपं यथा स्यात्तथा तुषारीकृताः मध्याह्नदिवाकरकरोत्करा यैस्तथाविधैस्तटद्रुमैर्व्याप्तया ग्रामकुल्यया वेष्टितोऽयं गृहमण्डप आलक्ष्यते इत्युत्तरैरन्वयः ॥ २५ ॥ सीकरव्याप्ताग्राः शाद्वलस्थलस्थाः सल्लता येषाम् । फलहकानि फलकानि तेष्वा-

---

१ सोकमेदिका इति पाठः.

तुषारीकृतमध्याह्नदिवाकरकरोत्करैः ।
फुल्लपुष्पोत्करासारप्रणादोत्कतटद्रुमैः ॥ २७
विद्रुमैरिव संक्रान्तफुल्लकिंशुककान्तिभिः ।
व्याप्तया पुष्पराशीनां समुल्लासनकारिभिः ॥ २८
उह्यमानफलापूरसुव्यग्रग्रामबालया ।
महाकलकलावर्तमत्तया ग्रामकुल्यया ॥ २९
वेष्टितस्तरलास्फालजलधौततलोपलः ।
घनपत्रतरुच्छन्नच्छायासततशीतलः ॥ ३०
अयमालक्ष्यते फुल्ललतावलनसुन्दरः ।
दलद्गुलुच्छकाच्छन्नगवाक्षो गृहमण्डपः ॥ ३१
अत्र मे संस्थितो भर्ता जीवाकाशतयाऽकृतिः ।
चतुःसमुद्रपर्यन्तमेखलाया भुवः पतिः ॥ ३२
आ स्मृतं पूर्वमेतेन किलासीदभिवाञ्छितम् ।
शीघ्रं स्यामेव राजेति तीव्रसंवेगधर्मिणा ॥ ३३
दिनैरष्टभिरेवासौ तेन राज्यं समृद्धिमत् ।
चिरकालप्रत्ययदं प्राप्तवान्परमेश्वरि ॥ ३४
अत्रासौ भर्तृजीवो मे स्थितो व्योम्नि गृहे नृपः ।
अदृश्यः खे यथा वायुरामोदो वानिले यथा ॥ ३५
इहैवाङ्गुष्ठमात्रान्ते तद्व्योम्न्येव पदं स्थितम् ।
मद्भर्तृराज्यं समवगतं योजनकोटिभाक् ॥ ३६
आवां खमेव खस्थं च भर्तृराज्यं ममेश्वरि ।
पूर्णं सहस्रैः शैलानां महामायेयमातता ॥ ३७
तद्देवि भर्तृनगरं पुनर्गन्तुं ममेप्सितम् ।
तदेहि तत्र गच्छावः किं दूरं व्यवसायिनाम् ॥ ३८

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा प्रणता देवीं सा प्रविश्याशु मण्डपम् ।
विहंगीव तया साकं पुप्लुवे सिंनिभं नमः ॥ ३९
भिन्नाञ्जनचयप्रख्यं सौम्यैकार्णवसुन्दरम् ।
नारायणाङ्गसदृशं भृङ्गपृष्ठामलच्छवि ॥ ४०
मेघमार्गमतिक्रम्य वातस्कन्धावनिं तथा ।
सौरमार्गमथाक्रम्य चन्द्रमार्गमतीत्य च ॥ ४१
ध्रुवमार्गोत्तरं गत्वा साध्यानां मार्गमेत्य च ।
सिद्धानां समतीत्योर्वीमुल्लङ्घ्य स्वर्गमण्डलम् ॥ ४२
ब्रह्मलोकोत्तरं गत्वा तुषितानां च मण्डलम् ।
गोलोकं शिवलोकं च पितृलोकमतीत्य च ॥ ४३
विदेहानां सदेहानां लोकानुत्तीर्य दूरगम् ।
दूराद्दूरमथो गत्वा किंचिद्बुद्धा बभूव सा ॥ ४४
पश्चादालोकयामास समतीतं नभस्थलम् ।
यावन्न किंचिच्चन्द्रार्कताराद्यालक्ष्यते ह्यधः ॥ ४५
तमस्तिमितगम्भीरमाशाकुहरपूरकम् ।
एकार्णवोदरप्रख्यं शिलोदरघनं स्थितम् ॥ ४६

लीलोवाच ।

तद्देवि भास्करादीनां क्वाधस्तेजो गतं वद ।
शिलाजठरनिष्पन्दं मुष्टिग्राह्यं तमः कुतः ॥ ४७

श्रीदेव्युवाच ।

एतावतीमिमां व्योम्नः पदवीमागतासि भोः ।
अर्कादीन्यपि तेजांसि यतो दृश्यन्त एव नो ॥ ४८
यथा महान्धकूपाधः खद्योतो नावलोक्यते ।
पृष्ठगेन तथेहातो नाधः सूर्योऽवलोक्यते ॥ ४९

लीलोवाच ।

अहो नु पदवीं दूरमावामेतामुपागते ।
सूर्योऽप्यधोणुकणवन्न मनागपि लक्ष्यते ॥ ५०

---

स्फालनमास्फालस्तेन फेनिला उत्पलवासितसीकरा येषाम् ॥२६॥ फुल्लपुष्पोत्करानासरन्ति आगच्छन्तीति फुल्लपुष्पोत्करासारा भ्रमरास्तत्प्रणादैरुत्कैरुत्कण्ठितैरिव स्थितैस्तटद्रुमैः ॥२७॥ प्रतिबिम्बेन संक्रान्तानामन्तर्निविष्टानां फुल्लकिंशुकानां पलाशानां कान्तिभिर्विद्रुमैः प्रवालैरिव पुष्पराशीनां समुल्लासनं मण्डनं तत्कारिभिर्द्रुमैर्व्याप्तया ॥ २८ ॥ प्रवाहैरुह्यमाने आम्रादिफलानामापूरे तृष्णाभयाभ्यां सुव्यग्रा ग्रामबाला यस्याम् । महाकलकलैर्बहुकोलाहलैरावर्तैर्मत्तयेव ॥ २९ ॥ ३० ॥ वलनं वेष्टनं तेन सुन्दरः । गलद्भिर्विशीर्यमाणैर्गुलुच्छकैः फलपुष्पगुच्छैरछन्नगवाक्षः ॥ ३१ ॥ जीवाकाशतया हेतुना अकृतिरक्रियोऽपि भुवः पतिर्भूत्वा संस्थितः ॥ ३२ ॥ आ इति निपातो नत्वाङ् । स्मरणे ङित्वाभावात् । तीव्रसंवेगो दृढाध्यवसायः ॥ ३३ ॥ ३४ ॥ ३५ ॥ स्थितं पदं परमार्थवस्तुयोजनकोटिभाक् समधिगतं भ्रान्त्येत्यर्थः ॥ ३६ ॥ खमत्र चिदाकाशम् ॥ ३७ ॥ ३८ ॥ नभो मण्डपान्तःकल्पितं महाकाशं पुप्लुवे उदडीयत ॥ ३९ ॥ सौम्येनाक्षुब्धेन । निश्चलेनेति यावत् । एकार्णवेन संनिभं तुल्यम् ॥ ४० ॥ अवनिशब्दः प्रदेशपरः ॥ ४१ ॥ मार्गशब्दो लोकपरो ध्रुवस्य मार्गाभावात् । एवमुर्वीपदमपि ॥ ४२ ॥ तुषितानां नित्यसंतुष्टानां मण्डलं वैकुण्ठम् । जगतः पितरौ शिवौ लोक्येते यत्रेति पितृभ्यां वालोक्यत इति पितृलोकोऽत्र शिवलोक एव । कव्यवाडादिपितृदेवाधिष्ठितलोकस्य दूरमध एवावस्थानादत्राप्रसक्तेः ॥ ४३ ॥ पुराणेषु 'सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः' इति शिवसारूप्यमुक्तिं प्राप्तानां द्वेधावस्थानोक्तेस्तेषां लोकम् । अपरिच्छिन्नस्वरूपविस्मरणात्किंचिद्बुद्धा ॥४४॥ यावत्कालं यावद्दूरं च न किंचिदालक्ष्यते तमश्च स्थितं तावत्पश्चादालोकयामासेति पूर्वेणान्वयः ॥४५॥ आशा दश दिशस्तत्कुहराणां छिद्राणां पूरकम् ॥४६॥ तत्तत्र । घनत्वान्मुष्टिग्राह्यमिव मुष्टिग्राह्यम् । कुतः प्राप्तमिति शेषः ॥ ४७ ॥ ४८ ॥ खं द्योतयति खे द्योतत इति वा खद्योतो ज्योतिरिङ्गणः पृष्ठगेन दूरोर्ध्वदेशस्थितेन नावलोक्यते तथेत्यर्थः ॥ ४९ ॥ पदवीं पन्थानम् । अणोरल्पयणुकस्य कणः

---

१ सितिमं इति पाठः. २ लोकमुत्तीर्य इति पाठः.

इत उत्तरमन्या स्यात्पदवी का नु कीदृशी ।
कथं च मातरेतव्या कथ्यतामिति देवि मे ॥ ५१

श्रीदेव्युवाच ।

इत उत्तरमग्रे ते ब्रह्माण्डपुटकर्परम् ।
यस्य चन्द्रादयो नाम धूलिलेशाः समुत्थिताः ॥ ५२

श्रीवसिष्ठ उवाच ।

इति प्रकथयन्त्यौ ते प्राप्ते ब्रह्माण्डकर्परम् ।
भ्रमर्याविव शैलस्य कुड्यं निबिडमण्डपम् ॥ ५३
अक्लेशेनैव ते तस्मान्निर्गते गगनादिव ।
निश्चयस्थं हि यद्वस्तु तद्वज्रगुरु नेतरत् ॥ ५४
निरावरणविज्ञाना सा ददर्श ततस्ततम् ।
जलाद्यावरणं पारे ब्रह्माण्डस्यातिभासुरम् ॥ ५५
ब्रह्माण्डाद्दशगुणतस्तोयं तत्र व्यवस्थितम् ।
आस्थितं वेष्टयित्वा तु त्वगिवाक्षोटपृष्ठगा ॥ ५६
तस्माद्दशगुणो वह्निस्तस्माद्दशगुणोऽनिलः ।
ततो दशगुणं व्योम ततः परममम्बरम् ॥ ५७
तस्मिन्परमके व्योम्नि मध्याद्यन्तविकल्पनाः ।
न काश्चन समुद्यन्ति वन्ध्यापुत्रकथा इव ॥ ५८
केवलं विततं शान्तं तदनादि गतभ्रमम् ।
आद्यन्तमध्यरहितं महत्यात्मनि तिष्ठति ॥ ५९

आकल्पमुत्तमबलेन शिला पतेचे-
त्तस्मिन्बलात्पतगराडपि चोत्पतेचेत् ।
तद्योजनं न लभते विमलेऽम्बरेऽन्त-
र्माकल्पमेकजवगोऽप्यथ मारुतोऽपि ॥ ६०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० परमाकाशवर्णनं नामैकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ३०

श्रीवसिष्ठ उवाच ।

पृथिव्यप्तेजसां तत्र नभस्वन्नभसोरपि ।
यथोत्तरं दशगुणानतीत्यावरणान्क्षणात् ॥ १
ददर्श परमाकाशं तत्प्रमाणविवर्जितम् ।
तथा ततं जगदिदं यथा तत्राण्डमात्रकम् ॥ २
तादृशावरणान्सर्गान्ब्रह्माण्डेषु ददर्श सा ।
कोटिशः स्फुरितान्व्योम्नि त्रसरेणूनिवातपे ॥ ३
महाकाशमहाम्भोधौ महाशून्यत्ववारिणि ।
महाचिद्द्रवभावोत्थान्बुद्बुदानर्बुदप्रभान् ॥ ४
कांश्चिदापततोऽधस्तात्कांश्चिच्चोपरि गच्छतः ।
कांश्चित्तिर्यग्गतीनन्यान्स्थितांस्त्वधान्स्वसंविदा ॥ ५
यत्र यत्रोदिता संविद्येषां येषां यथा यथा ।
तत्र तत्रोदितं रूपं तेषां तेषां तथा तथा ॥ ६
नेहैव तत्र नामोर्ध्वं नाधो नच गमागमाः ।
अन्यदेव पदं किंचित्तस्माद्देहागमं हि तत् ॥ ७
उत्पद्योत्पद्यते तत्र स्वयं संवित्स्वभावतः ।
स्वसंकल्पैः शमं याति बालसंकल्पजालवत् ॥ ८

परमाणुस्तद्वत् ॥ ५० ॥ एतव्या गन्तव्या ॥ ५१ ॥ पुटस्य संपुटस्य कर्परमूर्ध्वखर्परम् । धूलिलेशा इव ॥ ५२ ॥ निबिडमण्डपं निश्छिद्रगर्भमिति यावत् ॥ ५३ ॥ निश्चयः सत्यताध्यवसायस्तत्स्थम् । कल्पितकुड्यादिवस्तु । इतरन्मिथ्यात्वबुद्धिबाधितम् ॥ ५४ ॥ ५५ ॥ आक्षोटबीजकर्परपृष्ठगा ॥ ५६ ॥ परमं शुद्धम् । अम्बरं चिदाकाशः । अविद्याया नष्टत्वेनाव्याकृताकाशपरिशेषात् ॥ ५७ ॥ तस्यापरिच्छिन्नतामाह—तस्मिन्निति ॥ ५८ ॥ महत्यात्मनि तिष्ठति । 'स्वे महिम्नि प्रतिष्ठितः' इति श्रुतेरित्यर्थः ॥५९॥ तस्मिन्विमलेऽम्बरे । ऊर्ध्वदेशादाकल्पं शिला उत्तमबलेनातिजवेन पतेच्चेदधोदेशाद्गरुडराडप्याकल्पमुत्पतेचेत् अथ तयोरन्तः अन्तराले मानं मा तत्कल्पं तत्समर्थं यथा स्यात्तथा उभयत एकजवगोऽपि मारुतस्तयोर्योजनं मेलनं न लभते किं पुनः परितोऽन्तमिति सर्वतोऽप्यपरिच्छिन्नं तदित्यर्थः ॥ ६० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे परमाकाशवर्णनं नामैकोनत्रिंशः सर्गः ॥२९॥

तादृशास्तद्विचित्राश्च ब्रह्माण्डानन्तकोटयः ।
चिद्व्योम्नि रेणुवद्दृष्टा लीलयेत्यत्र वर्ण्यते ॥ १ ॥

नभस्वन्नभसोर्वाय्वाकाशयोः ॥ १ ॥ तत्प्रमाणं ... शं अविद्याशबलं चिदाकाशं यथा तत्राकाशे इदं वर्णितब्रह्माण्डलक्षणं जगत्ततं विस्तृतं तथा अण्डमात्रकं सर्वं ब्रह्माण्डजातमपि ददर्शेत्यर्थः ॥ २ ॥ तदेव स्पष्टयति—तादृशेति । स्फुरितान् स्वप्रकाशाधिष्ठानचैतन्येन भासितान् ॥ ३ ॥ महाशून्यत्वमविद्या सैव वारि यत्र । अर्बुदग्रहणमसंख्यत्वपरम् ॥ ४ ॥ 'इतीदृशानामण्डानां कोट्यो ज्ञेयाः सहस्रशः । सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधस्थिताः॥' इति पुराणोक्तिमनुरुध्याह—कांश्चिदिति । स्वसंविदा तत्तद्ब्रह्माण्डाभिमानिजीवसंविदनुसारेणेत्यर्थः ॥ ५ ॥ इदानीं तनक्रियावैचित्र्याद्रूपवैचित्र्येणोत्पत्तिरपि प्राक्तनोपासनासंविदनुसारेणैवेत्याह—यत्रेति ॥ ६ ॥ इदं च तदनुभवितृदृष्ट्योक्तं परमार्थतस्तु तत्र चिदाकाशे इह एतद्ब्रह्माण्डदेशेऽपि नैव किंचिदस्ति ऊर्ध्वमपि नामेत्यत्यन्तनिवारणार्थम् । तेषामण्डानां गमनागमनान्यपि नच किंत्वन्यदेव किंचिद्वाङ्मनसगोचरं दिग्विभागादिसर्वद्वैतशून्यं पदं वस्त्वस्ति, तस्माद्ब्रह्माण्डजातं वर्णितं तद्देहागमं देहप्राप्तिमज्ञदशाभिप्रेत्य तत्तथोक्तमित्यर्थः ॥ ७ ॥ यदि धर्म्यैव नास्ति क्व तद्धर्मोत्पत्त्यादिकल्पनेति चेत्तदधिष्ठानसंविद्येवेत्याह—उत्पद्येति । स्वभावोऽत्र स्वाविद्या ततस्तत्प्रभवैः स्वसंकल्पैरुत्पद्यत इव । शमं यातीत्यर्थः ॥ ८ ॥

१ नैमित्तिकरूपवैचित्र्येण इति पाठः।

श्रीराम उवाच ।

किमधः स्यात्किमूर्ध्वं स्यात्किं तिर्यक्तत्र भासुरे ।
इति ब्रूहि मम ब्रह्मन्निहैव यदि न स्थितम् ॥ ९

श्रीवसिष्ठ उवाच ।

ससर्वावरणा एते महत्यन्तविवर्जिते ।
ब्रह्माण्डा भान्ति दुर्दृष्टेर्व्योम्नि केशोण्ड्रको यथा ॥ १०
अस्वातन्त्र्यात्प्रधावन्ति पदार्थाः सर्व एव यत् ।
ब्रह्माण्डे पार्थिवो भागस्तदधस्तूर्ध्वमन्यथा ॥ ११
पिपीलिकानां महतां व्योम्नि वर्तुललोष्टके ।
दशदिक्कमधः पादाः पृष्ठमूर्ध्वमुदाहृतम् ॥ १२
वृक्षवल्मीकजालेन केषांचिद्धृदि भूतलम् ।
ससुरानरदैत्येन वेष्टितं व्योम निर्मलम् ॥ १३
संभूतं सह भूतेन सग्रामपुरपर्वतम् ।
इदं कल्पनभूतेन पक्काक्षोटमिवत्वचा ॥ १४
यथा विन्ध्यवनाभोगे प्रस्फुरन्ति करेणवः ।
तथा तस्मिन्पराभोगे ब्रह्माण्डत्रसरेणवः ॥ १५
तस्मिन्सर्वं ततः सर्वं तत्सर्वं सर्वतश्च यत् ।
तच्च सर्वमयो नित्यं तथा तदणुकं प्रति ॥ १६
शुद्धबोधमये तस्मिन्परमालोकवारिधौ ।
अजस्रमेत्य गच्छन्ति ब्रह्माण्डाख्यास्तरङ्गकाः ॥ १७
अन्तःशून्याः स्थिताः केचित्संकल्पक्षयरात्रयः ।
तरङ्गा इव तोयेऽब्धौ प्रोह्यन्ते शून्यतार्णवे ॥ १८
केषांचिदन्तःकल्पान्तः प्रवृत्तो घर्घरारवः ।
न श्रुतोऽन्यैर्न च ज्ञातः स्वभावेन रसाकुलैः ॥ १९
अन्येषां प्रथमारम्भे शुद्धभूषु विजृम्भते ।
सर्गः संसिक्तबीजानां कोशेऽङ्कुरकला यथा ॥ २०
महाप्रलयसंपत्तौ सूर्यार्चिर्विद्युतोऽद्रयः ।
प्रवृत्ता गलितुं केचित्तापे हिमकणा इव ॥ २१
आकल्पं निपतन्त्येव केचिदप्राप्तभूमयः ।
यावद्विशीर्य जायन्ते तथा संविन्मयाः किल ॥ २२

ननु यद्यधिष्ठाने दिग्विभागो नास्ति तर्ह्यध्यस्तेऽपि न स्यात् । अध्यस्तस्याधिष्ठानदिङ्मात्रनिष्ठत्वनियमादित्याशयेन रामः शङ्कते—**किमध** इति । इहाधिष्ठान एव यदि प्राङ्ग स्थितं तर्हि तत्र कल्पनया भासुरे जगति किमधः स्यादित्यर्थः ॥ ९ ॥ मायिके प्रपञ्चे नैतादृशनियमव्यभिचारो दोषायेत्याशयेन प्रथममुत्तरमाह वसिष्ठः—**ससर्वे**ति । दुर्दृष्टेस्तिमिरदूषितदृष्टेः ॥ १० ॥ सर्ववस्तूनामीश्वरेच्छापारतन्त्र्याद्वा नियमातिक्रमो न दोष इत्याशयेनाह—**अस्वातन्त्र्यादि**ति । यथा कदम्बकेसराणामाधारकर्णिकागोलकमपेक्ष्यैव मूलदेशकल्पना तथा ब्रह्माण्डेषु सर्वभावनां पृथिवीमपेक्ष्याधोदेशकल्पना । नच वास्तवाधोदिगभावे वृन्तमुक्तस्यफलस्य गुरुत्वादधःपतने विनिगमनाविरहः स्यादिति वाच्यम् । गुरुत्वं हि विषयाणां स्वस्वेन्द्रियाकर्षणशक्तिरिव स्वशक्यसंबद्धपृथिव्यादेः स्वांशाकर्षणशक्तिरेव न गुणान्तरम् । अतएव हि बहिर्दिग्विभागाभावाद्गुरुतमानामपि ब्रह्माण्डानां न पतनादिप्रसक्तिर्न वा तदावरणजलादेस्तद्विश्लेषप्रसक्तिरिति नाधिष्ठानचिति दिग्विभागापेक्षेत्याशयेन समाध्यन्तरमाह—**ब्रह्माण्डे** इति । पार्थिवो महापृथिवीरूपो ब्रह्माण्डभागस्तस्य सार्वभौतिकपदार्थस्याधः । अन्यथा तदन्यो नभोभाग ऊर्ध्वमिति कल्पनेत्यर्थः ॥ ११ ॥ अयं प्रकारो भूगोलं सर्वतः खगोलेन ज्योतिश्चक्राधारेण वेष्टितमित्यभ्युपगच्छतां ज्योतिःशास्त्रकृतामपि संमत इत्याशयेन तदुदाहृतं दृष्टान्तमाह—**पिपीलिकानामि**ति । लोष्टके मृत्पिण्डे । दशसु दिक्षु दशदिक्कं लग्नानां पादा अध एव, पृष्ठं तु ऊर्ध्वमिति महतां सूर्यादीनामुदाहृतं तत्सिद्धान्ते प्रसिद्धमित्यर्थः ॥ १२ ॥ इत्थं शङ्कां समाधाय प्रस्तुतब्रह्माण्डानां वैचित्र्यं वर्णयितुं प्रक्रमते—**वृक्षे**त्यादिना । केषांचिद्ब्रह्माण्डानां हृदि अन्तर्भूतलं वृक्षवल्मीकजालेन वेष्टितं न मनुष्यैः । व्योम तु सुरैरनरैर्नरसदृशैः किंपुरुषैर्दैत्यैश्च सहितैस्तैस्तैर्लोकैर्वेष्टितमित्यर्थः ॥ १३ ॥ किंचित्तु ब्रह्माण्डजातं भूतेन इदं कल्पनभूतेन सद्यः कल्पनात्मकेन चतुर्विधप्राणिवर्गेण सहैव संभूतमुत्पन्नम् । आक्षोटं कंदरालद्रुमफलम् ॥ १४ ॥ विन्ध्याचलस्य वनलक्षणे आभोगे कल्पितसंस्थाने करेणवः करिण्यः । परस्य परमात्मन आभोगे मायाशवलसंस्थाने । गजा इति वाच्ये करेणुग्रहणं यमकार्थम् ॥ १५ ॥ ननु यथा ब्रह्माण्डाश्चिदाकाशं प्रत्यणवस्तथा चिदाकाशमपि कंचित्पदार्थं प्रत्यणु किं न स्यात्तत्राह—**तस्मिन्नि**ति । स्थितौ तस्मिन्सर्वं, उत्पत्तौ ततः सर्वं, प्रलये तत्सर्वम् । यद्यस्मादेवं तस्मात्सर्वतः सर्वदिक्षु सर्वकालेषु सर्ववस्तुषु च तदेव । तच्च 'तद्यदिदंमयोऽदोमयः सर्वमयः' इति श्रुतिप्रसिद्ध आत्मैव तथाभूतं च तत्कं प्रत्यणु स्याच्च कंचित्प्रतीत्यर्थः ॥ १६ ॥ शुद्धबोधमये । स्वार्थे मयट् ॥ १७ ॥ तत्र केचिद्ब्रह्माण्डा अव्याकृता एवान्तः सन्तीत्याह—**अन्त**रिति । पूर्वकल्पीयसर्वसंकल्पबीजलिङ्गोपाधिक्षये सति रात्रयस्तमोरूपाः सुषुप्त इवेति यावत् । 'असद्वा इदमग्र आसीत्' इति श्रुतावसच्छब्देनेव शून्यताशब्देनाव्याकृतमुच्यते । तल्लक्षणे अर्णवे अम्बुधौ प्रकर्षेण ऊह्यन्ते तर्क्यन्ते । 'कथमसतः सज्जायेत' इति श्रुत्युक्तयुक्त्या संन्तीति तर्क्यन्त इत्यर्थः ॥ १८ ॥ स्वभावेन स्वाभाविकेन मोहेन । रसो विषयरागस्तदाकुलैरन्यैर्नच ज्ञातो नैव ज्ञातः ॥ १९ ॥ अन्येषां ब्रह्माण्डानां प्रथमारम्भे प्राथमिककल्पयुगाद्यारम्भे पूर्वोत्पन्नप्राणिभिरदूषितत्वाच्छुद्धासु भूषु भुवनेषु सर्गः प्रवर्तत इत्यर्थः । कोशे बीजपुटे अङ्कुर एव शुभ्रत्वात्कला ॥ २० ॥ केषुचिद्ब्रह्माण्डेषु महाप्रलयस्य संपत्तौ विभवे । विजृम्भणकाल इति यावत् । सूर्यादयः प्रथमं भुवनं दग्ध्वा स्वयमपि गलितुं प्रवृत्ता इत्यर्थः ॥ २१ ॥ केचिद्ब्रह्माण्डा अप्राप्तभूमयोऽधराः । ननु पतनासंभवः प्रागुक्तस्तस्य का गतिस्तत्राह

स्तब्धा इव स्थिताः केचित्केशोण्ड्रकमिवाम्बरे ।
वायोः स्पन्दा इवाभान्ति तथा प्रोदितसंविदः ॥ २३

आचाराद्वेदशास्त्राणामाद्य एवान्यथोदिते ।
आरम्भोऽपि तथान्येषामनित्यः संस्थितः क्रमः ॥ २४

केचिद्ब्रह्मादिपुरुषाः केचिद्विष्णवादिसर्गपाः ।
केचिद्रुद्रान्यप्रजानाथाः केचिन्निर्नाथजन्तवः ॥ २५

केचिद्विचित्रसर्गेशाः केचित्तिर्यञ्ज्ञयान्तराः ।
केचिदेकार्णवापूर्णा इतरे जनिवर्जिताः ॥ २६

केचिच्छिलाङ्गनिष्पिण्डाः केचित्कृमिमयान्तराः ।
केचिद्देवमया एव केचिन्नरमयान्तराः ॥ २७

केचिन्नित्यान्धकाराढ्यास्तथा शीलितजन्तवः ।
केचिन्नित्यप्रकाशाढ्यास्तथा शीलितजन्तवः ॥ २८

केचिन्मशकसंपूर्णा उदुम्बरफलश्रियः ।
नित्यं शून्यान्तराः केचिच्छून्यस्पन्दात्मजन्तवः ॥ २९

सर्गेण तादृशेनान्ये पूर्णा येऽन्तर्धियामिह ।
कल्पनामपि नायान्ति व्योमपूर्णाचलो यथा ॥ ३०

तादृगम्बरमेतेषां महाकाशं ततं स्थितम् ।
आजीवितं प्रगच्छद्भिर्विष्णवाद्यैर्यन्न मीयते ॥ ३१

प्रत्येकस्याण्डगोलस्य स्थितः कटकरत्नवत् ।
भूताकृष्टिकरो भावः पार्थिवः स्वस्वभावतः ॥ ३२

यः सर्वविभवोऽस्माकं धियां न विषयं ततः ।
तज्जगत्कथने शक्तिर्न ममास्ति महामते ॥ ३३

भीमान्धकारगहने सुमहत्यरण्ये
नृत्यन्त्यदर्शितपरस्परमेव मत्ताः ।
यक्षा यथा प्रवितते परमाम्बरेऽन्त-
रेवं स्फुरन्ति सुबहूनि महाजगन्ति ॥ ३४

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो० विचित्रब्रह्माण्डकोटिवर्णनं नाम त्रिंशः सर्गः ॥ ३० ॥

---

**—तथेति** । पतनसंविन्मयेषु पतनं न विरुध्यत इत्यर्थः ॥२२॥ स्तब्धा निश्चला अन्ये तथा प्रोदितसंविदः । स्पन्दात्मसंविद्वासनाप्रभवा इति यावत् ॥ २३ ॥ ननु 'धाता यथापूर्वमकल्पयत्' इति श्रुत्या सर्गाणामैकरूप्यं प्रतिपादितं तद्विरुद्धमिदं कथं वैचित्र्यमुच्यते तत्राह**—आचारादिति** । तया श्रुत्या पूर्वकल्पे यादृशी धातुः सृष्टिस्तादृश्येव द्वितीयादिरिति प्रतिपाद्यते । तत्र वेदशास्त्राणां संबन्धिनः प्राग्भवीयकर्मज्ञानानुष्ठानलक्षणादाचाराद्धातृभावं प्राप्तस्य आद्ये प्राथमिके एव सर्गे अन्यथा इतरधातृसर्गवैलक्षण्येनोदिते सति अन्येषां तदुत्तरकल्पीयसर्गाणामारम्भोऽपि तथा पूर्ववदस्तु नाम, तथापि धात्रन्तरसर्गापेक्षया अस्य क्रमोऽनित्योऽनियत एव संस्थित इति वैचित्र्यसिद्धिरित्यर्थः ॥ २४ ॥ 'तपसा तोषयित्वा तु पितरं परमेश्वरम् । परस्परस्माज्जायन्ते परस्परजयैषिणः ॥' इति पुराणेषु ब्रह्मविष्णुरुद्राणां कल्पभेदेन परस्परस्मादुत्पत्त्यभिधानादुत्पादकप्राधान्ये तेषां गुणभेदात्सर्गस्य सत्त्वादिगुणप्राधान्यप्रयुक्तवैचित्र्यमपि दुर्वारमित्याशयेनाह**—केचिदि**त्यादिना । केचिद्ब्रह्माण्डा ब्रह्मा चतुर्मुख एवादिपुरुषो येषां तथाविधाः । विष्णुरेवादिः सर्गपः सर्गाधिनाथो येषाम् । अन्ये रुद्रभैरवदुर्गाविनायकादयः प्रजानाथा येषाम् । तत्तन्माहात्म्यप्रतिपादकपुराणादिषु तेषामपि ब्रह्मादिनियन्तृताश्रवणात् । निर्नाथा नियन्तृशून्या मृगपक्ष्यादिजन्तवो येषु ॥ २५ ॥ ब्रह्मादीनां समप्राधान्ये विचित्रसर्गेशाः । इत्थं च प्राणिकर्मवासनावैचित्र्यात्स्रष्टृणामिच्छाबोधादिवैचित्र्याच्च यथेच्छं ब्रह्माण्डवैचित्र्यं सुकल्पमित्याशयेनाह**—तिर्यञ्ज्ञयान्तरा** इत्यादिना ॥२६॥ निष्पिण्डा नितरां पिण्डिता निबिडा इति यावत् ॥ २७ ॥ तथा शीलितादृष्टाः जन्तवः प्राणिनो येषु । पेचकादीनामन्धकारेऽपि दर्शनदर्शनादिति भावः ॥ २८ ॥ ॥ २९ ॥ तादृशेन सर्गेण पूर्णा ये सर्गा अन्तर्धियां योगिनां केऽपि स्फुटव्यवहारकल्पनां सविकल्पकज्ञानविषयतां नायान्ति । 'अस्मद्धियाम्' इति पाठेऽप्यस्माकं धीरिव धीर्येषां योगिनामित्येवार्थः ॥ ३० ॥ तादृगिति पदं देहलीदीपकन्यायेन पूर्वोत्तरेण च संबध्यते । तथाच व्योमपूर्णाचलो यथा यादृशस्तादृगम्बरमाकाशः । अशून्यस्वभाव इति यावत् । महाकाशं महाप्रकाशं तु तादृक्तथा ततं विस्तृतं यथा आजीवितं स्वजीवनकालमभिव्याप्य प्रगच्छद्भिर्धावद्भिरपि विष्णवाद्यैर्यन्न मीयते । इयदिति न परिमीयत इत्यर्थः ॥ ३१ ॥ नन्वस्तु ब्रह्माण्डानन्त्यं तद्वैचित्र्यं च तथापि बाह्यजलाद्यावरणानां विधारकाभावात्कथं न विश्लेष इत्याशङ्क्य प्रागस्मदुक्तामाकर्षणशक्तिमाश्रित्य समाधत्ते**—प्रत्येकस्येति** । भूतानामाकृष्टिराकर्षणं तत्करो भावः शक्तिविशेषः कटकरत्नवत्परितो व्याप्तः स्थितः ॥ ३२ ॥ जगद्विस्तारवर्णनं तदशक्तिख्यापनव्याजेनोपसंहरति**—य** इति । अस्माकं धियां जगद्वर्णनविषये यः सर्वविभवः स दर्शित इति शेषः । ततः परं यज्जगद्धियां न विषयं विषयः । विषयशब्दे क्लीबता छान्दसी । तत्कथने मम शक्तिर्नास्तीत्यर्थः ॥ ३३ ॥ न मदीयवर्णनाशक्त्या इयन्त्येव जगन्तीति मन्तव्यं, किंतु परैरलक्षितान्यप्यनन्तानि सन्ति मायायां सर्गशक्त्यानन्त्यादिति सदृष्टान्तमाह**—भीमे**ति । न दर्शितं परस्परं स्वरूपं यथा स्यात्तथा यक्षा भूतगणा यथा नृत्यन्ति एवं सुबहूनि जगन्त्यविद्यावृते ब्रह्मणि स्फुरन्तीत्यर्थः ॥३४॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे विचित्रब्रह्माण्डकोटिवर्णनं नाम त्रिंशः सर्गः ॥ ३० ॥

---

१ शक्तिर्मम नास्ति इति पाठः.

# एकत्रिंशः सर्गः ३१

श्रीवसिष्ठ उवाच ।

एवमाकलयन्त्यौ ते निर्गत्य जगतो निजात् ।
अन्तःपुरं ददृशतुर्झटित्येव विनिर्गते ॥ १
स्थितपुष्पभरापूर्णमहाराजमहाशवम् ।
शवपार्श्वोपविष्टान्तश्चित्तलीलाशरीरकम् ॥ २
घनरात्रितयाल्पाल्पमहानिद्राजनाकुलम् ।
धूपचन्दनकर्पूरकुङ्कुमामोदमन्थरम् ॥ ३
तमालोक्यापरं भर्तुः संसारं गन्तुमादृता ।
पपात लीला संकल्पदेहेनात्रैव तन्नभः ॥ ४
विवेश भर्तुः संकल्पसंसारं किंचिदाततम् ।
संसारावरणं भित्त्वा भित्त्वा ब्रह्माण्डकर्परम् ॥ ५
प्राप सार्धं तया देव्या पुनरावरणान्वितम् ।
ब्रह्माण्डमण्डपं स्फारं तं प्रविश्य तथा जवात् ॥ ६
ददर्श भर्तुः संकल्पजगज्जम्बालपल्वलम् ।
सिंहीव शैलकुहरं तमो जलदपङ्किलम् ॥ ७
देव्यो विविशतुस्तत्ते व्योम व्योमात्मिके जगत् ।
ब्रह्माण्डेऽन्तर्यथा पक्वं मृदुबिल्वं पिपीलिके ॥ ८
तत्र लोकान्तराण्यद्रीनन्तरिक्षमतीत्य ते ।
प्रापतुर्भूतलं शैलमण्डलाम्भोधिसंकुलम् ॥ ९
मेरुणालंकृतं जम्बूद्वीपं नवदलोदरम् ।
गत्वाथ भारते वर्षे लीलानाथस्य मण्डलम् ॥ १०
एतस्मिन्नन्तरे तस्मिन्मण्डले मण्डितावनौ ।
चक्रेऽवस्कन्दनं कश्चित्सामन्तोद्रिक्तभूमिपः ॥ ११
तेन संग्रामसंरम्भे प्रेक्षार्थं समुपागतैः ।
त्रैलोक्यभूतैस्तद्व्योम बभूवात्यन्तसंकटम् ॥ १२
अशङ्किताागते तत्ते देव्यौ ददृशतुर्नभः ।
नभश्चरगणाक्रान्तमम्बुदैरिव मालितम् ॥ १३
सिद्धचारणगन्धर्वगणविद्याधरान्वितम् ।
शूरग्रहणसंरब्धस्वर्गलोकाप्सरोवृतम् ॥ १४
रक्तमांसोन्मुखोन्मत्तभूतरक्षःपिशाचकम् ।
पुष्पवृष्टिभिरापूर्णहस्तविद्याधराङ्गनम् ॥ १५
वेतालयक्षकूश्माण्डैर्द्वन्द्वालोकनसादरैः ।
आयुधापातरक्षार्थं गृहीताद्रितटैर्वृतम् ॥ १६
अस्त्रमार्गनभोभागविद्रवद्भूतमण्डलम् ।
आहोपुरुषिकाक्षुब्धप्रेक्षकामोदनोद्भटम् ॥ १७
आसन्नभीमसंग्रामकिंवदन्तीपरस्परम् ।
लीलाहासविलासोत्कसुन्दरीधूतचामरम् ॥ १८
धर्मप्रेक्ष्यप्रयुक्ताग्र्यमुनिस्वस्त्ययनस्तवम् ।
संपन्नानेकलोकेशवनितावसरस्तवम् ॥ १९
स्वर्गार्हशूरानयनव्यग्रेन्द्रभटभासुरम् ।
शूरार्थालंकृतोत्तुङ्गलोकपालाख्यवारणम् ॥ २०
आगच्छच्छूरसन्मानोन्मुखगन्धर्वचारणम् ।
शूरोन्मुखामरस्त्रैणकटाक्षेक्षितसङ्कटम् ॥ २१
वीरदोर्दण्डकाश्लेषलम्पटस्त्रीगणाकरम् ।
शुक्लेन शूरयशसा चन्द्रीकृतदिवाकरम् ॥ २२

---

पुनरन्तःपुरप्रेक्षा ब्रह्माण्डान्तरदर्शनम् ।
शूरादिलक्ष्मसन्नद्धसैन्यप्रेक्षात्र वर्ण्यते ॥ १ ॥

निजात्प्राग्भवीयाज्जगतो निर्गत्यैवमुक्तप्रकारमनन्तकोटिब्रह्माण्डवैचित्र्यमाकलयन्त्यौ पश्यन्त्यौ ते तेषु किंचिद्ब्रह्माण्डं झटित्येव प्रविश्यान्तःपुरं ददृशतुस्तत्र च न चिरमूषतुः किंतु झटित्येव विनिर्गते इति वक्ष्यमाणानुवादः ॥ १ ॥ स्थितेत्यादिबहुव्रीह्योऽन्तःपुरविशेषणानि । अन्तःसमाध्यारूढं चित्तं यस्मिंस्तथाविधं लीलाशरीरं यस्मिन् ॥ २ ॥ घनशब्देन शोकप्रयुक्तदैर्घ्यं लक्ष्यते । अल्पाल्पया महानिद्रया सुषुप्त्या युक्तैर्जनैराकुलम् ॥ ३ ॥ अत्रैवान्तःपुर एव तन्नभः प्रागुक्तमण्डपाकाशम् ॥ ४ ॥ ५ ॥ स्फारं विस्तीर्णम् ॥ ६ ॥ जम्बालस्य पङ्कस्य पल्वलं वेशन्तमिव स्थितम् । तमोजलदाभ्यां पङ्किलं सपङ्कमिव स्थितम् ॥ ७ ॥ ८ ॥ ॥ ९ ॥ नवदलानि नवखण्डाः । लीलानाथस्य मण्डलं राज्यं ददर्शेत्यन्वयः ॥ १० ॥ अवस्कन्दनं सेनया आक्रमणम् । सामन्तैर्मण्डलेश्वरैः स्वसहायैरुद्रिक्तो विवृद्धो भूमिपः सिन्धुराजः ॥ ११ ॥ तेन सह संग्रामसंरम्भे प्रसक्ते सतीति शेषः । त्रैलोक्यस्थैर्भूतैः प्राणिभिः संकटं निबिडितम् ॥ १२ ॥ सिध्यात्वनिश्चयादन्तर्धानादिकुशलत्वाच्चाशङ्कितं भयशङ्कारहितं यथा स्यात्तथा आगते । नभश्चरेत्यादीन्यारामप्रश्नान्नभसो विशेषणानि ॥ १३ ॥ १४ ॥ इत आरभ्य यथायोगं बहवो बहुव्रीहिसमासाः ॥ १५ ॥ वेतालादयो भूतजातिभेदाः । द्वन्द्वपदेन तत्कार्यं युद्धं लक्ष्यते । आयुधानां आसमन्तात्पातेभ्य आत्मनो रक्षार्थं गृहीतान्याश्रितान्यद्रितटानि यैः ॥ १६ ॥ अस्त्राणां मार्गभूतात् संनिहितान्नभोभागात् । अहो अहं पुरुष इत्यभिमान आहोपुरुषिका ॥ १७ ॥ किंवदन्ती जनश्रुतिः । लीलासु हासविलासयोश्चोत्काभिरुत्कण्ठिताभिः ॥ १८ ॥ धर्मातिशयेनान्यैरप्रेक्ष्याणां प्रेक्षितुमशक्यानां प्रयुक्तेन योगबलेन चाग्र्याणां श्रेष्ठानां मुनीनां जगत्स्वस्त्ययनार्थं पठ्यमाना देवतास्तवा यस्मिन् । संपन्ना अनेकेषां गन्धर्वादिलोकपालानां वनिताविषयास्तदवसरोचिताः स्तवा यस्मिन् । अप्सरसः स्वांनुपेक्ष्याभिनवान्कान्तान्नोपगच्छेयुरिति लोकेशास्ताः स्तुवन्तीत्यर्थः ॥ १९ ॥ स्वर्गार्हाः स्वर्गालंकरणत्वात्स्वर्गयोग्याः । लोकपालाख्या वारणा ऐरावतादयः ॥ २० ॥ अमराणां स्त्रैणेन स्त्रीसमूहेन ॥ २१ ॥ यशःशैत्ये-

---

१ स्वनुपेक्ष्याभिनवान् इति पाठः.

श्रीराम उवाच ।

भगवञ्छूरशब्देन कीदृशः प्रोच्यते भटः ।
स्वर्गालंकरणं कः स्यात्को वा डिम्भाहवो भवेत् ॥ २३

श्रीवसिष्ठ उवाच ।

शास्त्रोक्ताचारयुक्तस्य प्रभोरर्थेन यो रणे ।
मृतो वाथ जयी वा स्यात्स शूरः शूरलोकभाक् ॥ २४
अन्यथा प्राणिकृत्ताङ्गो रणे यो मृतिमाप्नुयात् ।
डिम्भाहवहतः प्रोक्तः स नरो नरकास्पदम् ॥ २५
अयथाशास्त्रसंचारवृत्तेरर्थेन युध्यते ।
यो नरस्तस्य संग्रामे मृतस्य निरयोऽक्षयः ॥ २६
यथासंभवशास्त्रार्थलोकाचारानुवृत्तिमान् ।
युध्यते तादृशश्चैव भक्तः शूरः स उच्यते ॥ २७
गोरर्थे ब्राह्मणस्यार्थे मित्रस्यार्थे च सन्मते ।
शरणागतयत्नेन स मृतः स्वर्गभूषणम् ॥ २८
परिपाल्यस्वदेशैकपालने यः स्थितः सदा ।
राजा मृतास्तदर्थं ये ते वीरा वीरलोकिनः ॥ २९
प्रजोपद्रवनिष्ठस्य राज्ञोऽराज्ञोऽथ वा प्रभोः ।
अर्थेन ये मृता युद्धे ते वै निरयगामिनः ॥ ३०
ये हि राज्ञामराज्ञां वाप्ययथाशास्त्रकारिणाम् ।
रणे म्रियन्ते छिन्नाङ्गास्ते वै निरयगामिनः ॥ ३१
धर्म्यं यथा तथा युद्धं यदि स्यात्तर्हि संस्थितिः ।
नाशयेयुरलं मत्ताः परलोकभयोज्झिताः ॥ ३२
यत्र यत्र हतः शूरः स्वर्ग इत्यवशोक्तयः ।
धर्मे योद्धा भवेच्छूर इत्येवं शास्त्रनिश्चयः ॥ ३३
सदाचारवतामर्थे खड्गधारां सहन्ति ये ।
ते शूरा इति कथ्यन्ते शेषा डिम्भाहवाहताः ॥ ३४
तेषामर्थे रणे व्योम्नि तिष्ठन्त्युत्कण्ठिताशयाः ।
शूरीभूतमहासत्त्वदयितोक्तिसुराङ्गनाः ॥ ३५

विद्याधरीमधुरमन्थरगीतिगर्भं
मन्दारमाल्यवलनाकुलकामिनीकम् ।
विश्रान्तकान्तसुरसिद्धविमानपङ्क्ति
व्योमोत्सवोच्चरितशोभमिवोल्ललास ॥ ३६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे युद्धप्रेक्षिकास्थिताम्बरवर्णनं नामैकत्रिंशः सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः ३२

श्रीवसिष्ठ उवाच ।

अथ वीरवरोत्कण्ठनृत्यदप्सरसि स्थिता ।
लीलावलोकयामास व्योम्नि विद्यान्विताववनौ ॥ १
खराग्रमण्डले भर्तृपालिते बलमालिते ।
कस्मिंश्चिद्विततारण्ये द्वितीयाकाशभीषणे ॥ २
सेनाद्वितयमाक्षुब्धं सौम्याब्धिद्वितयोपमम् ।
महारम्भघनं मत्तं स्थितं राजद्वयान्वितम् ॥ ३
युद्धसज्जं सुसंनद्धमिद्धमग्निमिवाद्भुतम् ।
पूर्वप्रहारसंपातप्रेक्षाक्षुब्धाक्षिलक्षितम् ॥ ४
उद्यतामलनिस्त्रिंशधारासारवहज्जनम् ।
कचत्परश्वधप्रासभिन्दिपालर्ष्टिमुद्गरम् ॥ ५

नाभिभूतौष्ण्यत्वाचन्द्रीकृतः ॥२२॥ प्रसङ्गाच्छूरादिलक्षणं जिज्ञासू रामः पृच्छति—**भगवन्निति** । अनुक्तासूचितस्यापि डिम्भाहवस्यात्र लक्षणप्रश्नः शूरस्वर्गालंकरणत्वव्यतिरेकात्मकत्वात्तत्प्रासङ्गिको बोध्यः ॥२३॥ रणे युध्यत इति शेषः ॥२४॥ ॥ २५ ॥ पूर्वोक्तमेव स्पष्टीकुर्वन्नाह—**अयथाशास्त्रे**त्यादिना ॥ २६ ॥ २७ ॥ शरणागतस्य रक्षणार्थेन युद्धप्रयत्नेन ॥२८॥ परिपाल्यस्यावश्यंपरिपालनार्हस्य स्वदेशस्य एकपालने मुख्यवृत्त्या रक्षणे । स्थित उद्युक्तः ॥ २९ ॥ ३० ॥ अयथाशास्त्रकारिसमाश्रय एव नरकाय किंपुनः प्रजोपद्रवकारिसमाश्रय इत्याशयेन पुनराह—**ये हीति** । अयथाशास्त्रकारिणामर्थे इति शेषः ॥३१॥ धार्मिकाश्रितस्याप्यधर्मेण युध्यतो हतस्य न स्वर्ग इत्याह—**धर्म्यमिति** । धर्मादनपेतं धर्म्यम् । संस्थितिः स्वर्गे स्थितिः । अधर्म्येणापि युद्धेन यदि हतस्य स्वर्गः स्यात्तर्हि परलोकस्य निर्भयाः सन्तः अलमत्यर्थं अधर्मयुद्धेनापि मत्ताः परान्नाशयेयुरित्यर्थः ॥ ३२ ॥ 'परप्राणान्निजप्राणैः पणीकृत्योद्यतायुधः । यत्र यत्र हतः शूरः स्वर्गस्तत्र पदे पदे ॥' इत्यादिसामान्यप्रवादानां तर्हि का गतिस्तत्राह—**यत्रेति** ॥ ३३ ॥ ३४ ॥ शूरीभूतानां महासत्त्वानां महाबलानां दयिता वयमित्युक्तिर्यस्मिन्कर्मणि तद्यथा स्यात्तथा तिष्ठन्ति । प्रतीक्षन्त इति यावत् ॥ ३५ ॥ मन्दारमाल्यानां वलना शूरोरसि प्रदानाय ग्रथनं स्वकबरीषु वेष्टनं वा तत्राकुला व्यग्राः कामिन्यो यस्मिन् । उत्सवार्थमुच्चरिता ऊर्ध्वगता शोभा यस्य तथाविधमिवेत्युत्प्रेक्षा ॥ ३६ ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे युद्धप्रेक्षिकास्थिताम्बरवर्णनं नामैकत्रिंशः सर्गः ॥ ३१ ॥

सांकल्पिकविमानस्थज्ञप्तिलीलावलोकितम् ।
संनद्धसेनाद्वितयं युयुत्स्वत्रोपवर्ण्यते ॥ १ ॥

विद्या सरस्वती तदन्विता लीला अवनौ सेनाद्वितयमवलोकयामासेति संबन्धः ॥ १ ॥ बलेन चतुरङ्गसैन्येन मालिते वेष्टिते । सिंहवृश्चिकरक्षःपिशाचाधारत्वाद्द्वितीयाकाशभीषणे ॥ २ ॥ महद्भिरारम्भैः कार्योद्योगैः ॥ ३ ॥ ४ ॥ निस्त्रिंशानां खड्गानां धारा एवासारा जलधारास्तान्वहन्तो जना यत्र । पर-

१ वरा त्कण्ठा इति पाठः. २ स्वर्गस्थितिः इति पाठः.

गरुत्मत्पक्षविक्षुब्धवनसंपातकम्पितम्।
उद्यद्दिनकरालोकचञ्चत्कनककङ्कटम् ॥ ६
परस्परमुखालोककोपप्रोद्दामितायुधम्।
अन्योन्यबद्धदृष्टित्वाच्चित्रं भित्ताविवार्पितम् ॥ ७
लेखामर्यादया दीर्घबद्धया स्थापितस्थिति।
अनिवार्यमहासैन्यझांकाराश्रुतसंकथम् ॥ ८
पूर्वप्रहारसयतश्चिरं संशान्तदुन्दुभि।
निबद्धयोधसंस्थाननिखिलानीकमन्थरम् ॥ ९
धनुर्द्वितयमात्रात्मशून्यमध्यैकसेतुना।
विभक्तं कल्पवातेन मत्तमेकार्णवं यथा ॥ १०
कांये संकटसंरम्भचिन्तापरवशेश्वरम्।
विरटद्भेककण्ठत्वग्भङ्गुरातुरहृद्गुहम् ॥ ११
प्राणसर्वस्वसंत्यागसोद्योगासंख्यसैनिकम्।
कर्णाकृष्टशरौघौघत्यागोन्मुखधनुर्धरम् ॥ १२
प्रहारपातसंप्रेक्षानिष्पन्दासंख्यसैनिकम्।
अन्योन्योत्कण्ठकाठिन्यभरभ्रुकुटिसंकटम् ॥ १३
परस्परसुसंघट्टकटुटङ्कारकङ्कटम्।
वीरयोधमुखादग्धभीरुप्रेप्सितकोटरम् ॥ १४
मिथःसंस्थानकालोकमात्रासंदिग्धजीवितम्।
समस्ताङ्गरुहासक्तप्रांशुवृद्धेभमानवम् ॥ १५
पूर्वप्रहारसंप्रेक्षाव्यग्रप्राणतया तया।
संशान्तकल्लोलरवं निद्रामुद्रपुरोपमम् ॥ १६
संशान्तशङ्खसंघाततूर्यनिर्ह्रादृदुन्दुभि।
भूतलाकाशसंलीनसर्वपांसुपयोधरम् ॥ १७
पलायनपरैः पश्चात्त्यक्तमङ्गुलमण्डलम्।
विसारिमकरव्यूहमत्स्यसंख्याब्धिभासुरम् ॥ १८
पताकामञ्जरीपुञ्जविजिताकाशतारकम्।
हास्तिकोत्तम्भितकरकाननीकृतखान्तरम् ॥ १९
तरत्तरलभापूरसपक्षसकलायुधम्।
धमद्धमितिशब्दैश्च श्वासोत्थैर्ध्मातखान्तरम् ॥ २०
चक्रव्यूहकराक्रान्तदुर्वृत्तसुरभासुरम्।
गरुडव्यूहसंरम्भविद्रवन्नागसंचयम् ॥ २१
श्येनव्यूहविभिन्नाग्रसंनिवेशोत्तमध्वनि।
अन्योन्यास्फोटनिःशेषप्रपतद्भूरिवृन्दकम् ॥ २२
विविधव्यूहविन्यासवान्तवीरवरारवम्।
करप्रतोलनोल्लासमत्तमुद्गरमण्डलम् ॥ २३
कृष्णायुधांशुजलदश्यामीकृतदिवाकरम्।
अनिलाधूतपल्यूलसूत्कृताभशरध्वनि ॥ २४
अनेककल्पकल्पाभ्रसवृन्दमिव संस्थितम्।
प्रलयानिलसंक्षुब्धमेकार्णवमिवोत्थितम् ॥ २५
सद्यश्छिन्नं महामेरोः पक्षद्वयमिव स्फुरत्।
क्षुब्धमारुतनिर्धूतमिव कज्जलपर्वतम् ॥ २६

श्वधं परशुः। भिन्दिपालादय आयुधविशेषाः ॥ ५ ॥ कङ्कटं वर्म ॥ ६ ॥ कोपात्प्रोद्दामितानि प्रोद्यतानि ॥ ७ ॥ सर्पादिनिरोधाय मान्त्रिकोल्लिखितरेखासदृश्या सेनाद्वयमध्यकृतरेखालक्षणया वा मर्यादया। झांकारैर्ध्वनिभिरभिभूतत्वादश्रुताः संकथा मिथोवार्ता यत्र ॥ ८ ॥ राजाज्ञातः पूर्वं प्रहारो मा भूदिति स्मयोऽत्र शङ्का ततो निमित्तान्निबद्धप्रायेण योधा एव संस्थानानि प्रधानावयवसंनिवेशा यस्य तथाविधेन निखिलानीकेन मन्थरम् ॥ ९ ॥ धनुर्द्वितयप्रमाणं जनशून्यात्मकं यन्मध्यं तल्लक्षणेनैकसेतुना ॥ १० ॥ ईश्वरौ राजानौ। भयाद्भेककण्ठत्वगिव भङ्गुरा कम्पमाना आतुराणां भीरूणां हृद्गुहा यत्र ॥ ११ ॥ शरौघलक्षणस्यौघस्य प्रवाहस्य ॥ १२ ॥ युद्धोत्कण्ठया काठिन्यं निर्दयता। क्रोध इति यावत्। तद्भरप्रयुक्तभ्रुकुटिभिः संकटं दुष्प्रेक्ष्यम् ॥ १३ ॥ सुसंघट्टोऽभिघातस्तेन कटुटंकाराः कङ्कटा वारबाणा यत्र। वीरयोधमुखाग्निना आदग्धैरिव श्यामीकृतमुखैर्भीरुभिर्निलयनाय प्रेप्सिता गिरिकोटरा यत्र ॥१४॥ संस्थानकं युद्धं तदालोकनपर्यन्तं असंदिग्धं जीवितं यस्य। सम्यगस्तैरुदञ्चितैरङ्गरुहैरासक्ता अतएवोर्ध्वं प्रांशवस्तिर्यक्च वृद्धा उपचिता इभा मानवाश्च यत्र ॥ १५ ॥ प्राणशब्देन तद्वशं चित्तं लक्ष्यते ॥१६॥ पांसुपयोधरयोर्यथाक्रमं संबन्धः ॥१७॥ मङ्गुलाः सेनामण्डनभूताः शूराः। मकरव्यूहानां मत्स्यानां च संख्यं युद्धं यस्मिंस्तथाविधाब्धिरिव भासुरम् ॥ १८ ॥ हास्तिकानां हस्त्यारोहाणामुत्तम्भितैरूर्ध्वीकृतैः करैः काननमिव संपद्यमानं कृतं खान्तरं नभोवकाशो यस्मिन् ॥ १९ ॥ तरद्भिः प्लवद्भिस्तरलैर्भापूरैः सपक्षाणीव संवृत्तानि सकलायुधानि यस्मिन्। दुन्दुभ्यादीनां धमद्धमितिशब्दैः श्वासोत्थैः शङ्ककाहलादिशब्दैश्च ध्मातं शब्दायमानं कृतम् ॥ २० ॥ सांप्रतं सेनयोः प्रदेशभेदेन व्यूहरचनाभेदं वर्णयन्विशिनष्टि—**चक्रेति**। क्वचिच्चक्रव्यूहस्य करैर्निर्मातृभिः पुरुषैराक्रान्ता दुर्वृत्ता दानवा यैस्तथाविधैः सुरैरिव भासुरम्। नागशब्दश्लेषभित्तिकाभेदारोपेण सर्पात्मतया गजा उच्यन्ते ॥ २१ ॥ क्वचित्तु श्येनव्यूहेन विभिन्नो विभक्तो यः प्रतिसैन्यसंनिवेशस्तेन हेतुना उत्तमस्तारतमो ध्वनिर्यस्मिन्। क्वचित्तु अन्योन्यं प्रतिभुजास्फोटेन संरम्भान्निःशेषं कृत्स्नशः प्रपतन्तो भूरिवृन्दकाः समूहा यस्मिन् ॥ २२ ॥ व्यूहविन्यासाद्वान्तानां पुरोनिर्गतानां वीराणां वर आरवो यस्मिन्। करेण प्रतोलनमुद्यमनं तत्कृतेनोल्लासेन मत्तानीव भ्रमन्ति मुद्गरमण्डलानि यस्मिन् ॥ २३ ॥ कृष्णानां श्यामानामायुधानामंशुभिरिवोत्थितैर्जलदैः श्यामीकृतस्तिरोहित इति यावत्। पल्यूलास्तृणविशेषास्तेषां सूत्कृतमिति वायुसंघट्टनजन्यशब्दानुकरणम् ॥ २४ ॥ कल्पाय प्रलयाय कल्पन्ते समर्था भवन्तीति कल्पकल्पाः पुष्करावर्तकादिमेघाः। अनेकैस्तैरभ्रै सवृन्दं संघीभूतमिव ॥ २५ ॥ कज्जलपर्वतोऽञ्जनाद्रिः।

१ कार्यसंकर इति पाठः २ मङ्गलमण्डलं इति पाठः ३ क्षेपणि[illegible] इति पाठः

पातालकुहरात्क्षुब्धमन्धकारमिवोत्थितम् ।
लोकालोकमिवोन्मत्तनृत्यलोललसत्तटम् ।
महानरकसंघातं भित्त्वावनिमिवोत्थितम् ॥ २७

आलोलकुन्तमुसलासिपरश्वधांशु-
श्यामायमानदिवसातपवारिपूरैः ।
एकार्णवं भुवनकोशमिवाचिरेण
कर्तुं समुद्यतमगाधमनन्तपूरैः ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने आहवारम्भणं नाम द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ३३

श्रीराम उवाच ।
भगवन्युद्धमेतन्मे समासेन मनाग्वद ।
श्रुतिराह्लाद्यते श्रोतुर्यस्मादेताभिरुक्तिभिः ॥ १
श्रीवसिष्ठ उवाच ।
अथ तत्रैव ते देव्यौ संग्रामं तमवेक्षितुम् ।
विमाने कल्पिते कान्ते रुद्धे रुरुहतुः स्थिरे ॥ २
एतस्मिन्नन्तरे तत्र लीलेशः प्रतिपक्षतः ।
तमुत्सोढुमशक्तः सन्मुखव्यतिकरे रणे ॥ ३
प्रलयार्णवकल्लोल इवोत्पत्योद्भये भटे ।
जहौ सानाविव शिलां भटस्योरसि मुद्गरम् ॥ ४
अथ प्रवृत्तः प्रसभं प्रलयार्णवरंहसा ।
सेनयोः शस्त्रसंपातः किरन्ननलविद्युतः ॥ ५
तरत्तरलधाराग्ररेखाङ्कितनभस्तलः ।
ध्वनत्कणकणाशब्दमध्यलक्षितटांकृतिः ॥ ६
धीरहुंकारमिश्रोष्मघर्घरारावघस्मरः ।
प्रवृत्तशरधाराग्रभास्करार्चिर्वितानकः ॥ ७
नदत्कङ्कटटङ्कारप्रोड्डीनकणपावकः ।
परस्पराहतिच्छिन्नहेतिखण्डखगाम्बरः ॥ ८
वीरदोर्द्रुमसंचारवहद्घननभस्थलः ।
कोदण्डचक्रकेङ्कारद्रवद्वैमानिकाङ्गनः ॥ ९
महाहलहलारावभृङ्गीकृतघनध्वनिः ।
निर्विकल्पसमाधिस्थ इवैकघनतावशात् ॥ १०
नाराचासारधाराग्रलूनशूरशिरस्करः ।
परस्परांससंघट्टरणत्कङ्कटसंकटः ॥ ११
हुंकारहतहेत्युग्रसंघट्टकटुटांकृतः ।
तरद्धारातरङ्गाभ्रदन्तुराशेषदिङ्मुखः ॥ १२
हेतिसंघट्टविक्षोभमुष्टिग्राह्यझणज्झणः ।
चिरमास्फोटकास्फोटलुठच्चटचटारवः ॥ १३

---

श्यामतमगजादिबाहुल्यात्तत्साम्योक्तिः ॥ २६ ॥ उन्मत्तनृत्येन लोला लसन्तश्च तटा वप्राणि यस्य ॥ २७ ॥ कुन्ताद्यायुधानामंशवः किरणास्तल्लक्षणैः श्यामायमानो दिवसातपो येभ्यस्तथाविधैर्वारिभिः पूर्यन्त इति वा, वारिभिः पूरयन्ति जगदिति वा वारिपूरा मेघास्तैर्भुवनकोशमनन्तैः पूरैः प्रवाहैरगाधमेकार्णवं कर्तुं समुद्यतमित्यर्थः ॥२८॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे आहवारम्भणं नाम द्वात्रिंशः सर्गः ॥३२॥

सांकल्पिकविमानस्थप्रज्ञालीलासमीक्षितः ।
अथ प्रवृत्तः संग्रामः सेनयोरत्र वर्ण्यते ॥ १ ॥

श्रुतिः श्रोत्रमाह्लाद्यते तत्त्वोपदेशग्रहणप्रतिरोधिजामितादोषनिवारणेनेत्यर्थः ॥ १ ॥ सत्यसंकल्पेन कल्पिते कान्ते रमणीये नभसि रुद्धे निश्चलीकृते अतएव स्थिरे विमाने आरुरुहतुः ॥ २ ॥ तत्र तयोः सेनयोर्मुखव्यतिकरे परस्परमुखसंघट्टने प्रसक्ते सति प्रतिपक्षतः शत्रुसैन्यात्प्रलयार्णवकल्लोल इवोत्पत्य निर्गत्य उद्भये निर्भये कस्मिंश्चिद्भटे प्रहर्तुकामे सति लीलेशो विदूरथस्तमुत्सोढुं क्षान्तुमशक्तः संस्तस्य भटस्योरसि मुद्गरं जहौ प्रहृतवानिति परेणान्वयः ॥ ३ ॥ ४ ॥ अथ राजप्रवृत्त्यनन्तरम् । अनलपदेन तत्सदृशानि शस्त्राणि विद्युत्पदेन तत्प्रभाश्च लक्ष्यन्ते ॥ ५ ॥ इतः प्रभृति सर्वाणि सर्गान्त्यश्लोकस्थरणसंग्र-

मविशेषणानि । तरतां प्लवमानानां शस्त्राणां तरलधाराग्रै रेखाङ्कितमित्यौत्प्रेक्षिकम् ॥ ६ ॥ हुंकारमिश्रत्वेन तरतमत्वादूष्मणो ग्रीष्मान्तस्य घनघर्घरारावाणां घस्मरो भक्षकः । तिरस्कर्तेति यावत् । शरधाराप्रतिफलितभास्करार्चीष्येव वितानं यस्य ॥ ७ ॥ शरखड्गादिप्रहरणादग्न्यः कङ्कटेभ्यो वर्मभ्यष्टङ्कारेण प्रोड्डीनाः कणपावकाः स्फुलिङ्गा यस्मिन् । हेतिखण्डाः खड्गशकलान्येव प्रोड्डीयमानत्वात्खगा यस्मिंस्तथाविधमम्बरमाकाशं यत्र ॥ ८ ॥ दोर्द्रुमाणां संचारैर्वहत्संचरद्घनं यस्मिंस्तथाविधं नभस्थलं यत्र ॥ ९ ॥ भृङ्गपदेन ध्वनिर्लक्ष्यते । हुलहुलारावैरभिभवाद्भृङ्गध्वनिवदल्पीकृतो मेघध्वनिर्यत्र । 'तद्यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मा विज्ञानघन एव' इति श्रुतिदर्शित एकघनः परमात्मा तद्भाववशाद्यथा निर्विकल्पसमाधिस्थो बाह्यशब्दादीन्नानुभवति तद्वदित्यर्थः । तथाचोक्तम्—'समाधौ बाह्यशब्दादीन्यावदेषोऽधिगच्छति । तावत्स सविकल्पः स्यान्निर्विकल्पस्ततः परः ॥' इति ॥१०॥११॥ खड्गधारातरङ्गैरभ्रैर्दन्तुराण्युन्नतदन्तानीव दिङ्मुखानि यत्र ॥१२॥ खड्गप्रहारेण शस्त्रोर्विक्षोभे तच्छिरोग्रहणाय प्रवृत्तस्य हस्तस्य तदलाभाज्झणज्झणशब्द एव मुष्टिग्राह्य इव संपन्नो यत्र । बाहास्फोटकानां शूराणामास्फोटैर्लुठन्त इव चटचटारवा यत्र ॥ १३ ॥

प्रवहत्खड्गसीत्कारज्वलत्कणसणध्वनिः ।
सरच्छरभराध्वान्तशरत्खरखरारवः ॥ १४
धगद्धगितिविच्छिन्नकण्ठोत्थप्राणलोहितः ।
छिन्नबाहुशिरःखड्गखण्डनिर्विवराम्बरः ॥ १५
कङ्कटोत्थस्फुरद्वह्निसटास्पृष्टशिरोरुहः ।
रणत्पतदसिव्रातमत्तपीनझणज्झणः ॥ १६
कुन्तकुण्ठितमातङ्गतरङ्गोत्तुङ्गलोहितः ।
दन्तिदन्तविनिष्पेषतारचीत्कारकर्कशः ॥ १७
महामुसलसंपातपिष्टकष्टोद्धुरस्वरः ।
तरच्छूरशिरःपद्मप्रकराच्छादिताम्बरः ॥ १८
व्योमन्यस्तभुजाहीन्द्रः पूर्णधूलिमयाम्बुदः ।
छिन्नहेतिनरारब्धकेशाकेशिप्रतिक्रियः ॥ १९
नखानखिनिकृत्ताक्षिकर्णनासोष्ठकन्धरः ।
छिन्नायुधमहामल्लहेलोल्लालनलब्धभूः ॥ २०
पतत्समदमातङ्गकम्पितोर्वीलुठद्रयः ।
रणद्रथरयोत्पन्नक्षरद्रक्तसरित्पथः ॥ २१
रजोरचितनीहारः कचत्प्रवहदायुधः ।
एकीकृतघनक्षोभसैन्यसागरगर्जितः ॥ २२
मत्तहासविलासेन मृत्युना परिचर्वितः ।
गर्विताद्रीन्द्रनागेन्द्रखर्वितामभोदगर्जितः ॥ २३
वृक्षश्वभ्रतटीच्छन्नचक्रशक्त्यृष्टिमुद्गरः ।
शरोर्णातन्तुनीरन्ध्रघृष्टियोधाद्रिमेखलः ॥ २४
मेघविश्रान्तविच्छिन्नपताकापटचामरः ।
यन्त्रपाषाणचक्रौघदूरविद्रुतखेचरः ॥ २५
मरणव्यग्रकृत्ताङ्गयोधाक्रन्दातिघर्घरः ।
कुठाराघातसंघातविदलन्मस्तकव्रजः ॥ २६
दूरोड्डीनकचत्खड्गखण्डतारकिताम्बरः ।
शक्तिनिर्मुक्तशक्त्यौघविभिन्नेभावृतावनिः ॥ २७
सैन्यव्याकुलवेताललनोन्मुक्तमुद्गरः[1] ।
गगनोत्तम्भितोत्तुङ्गशूरतोमरतोरणः ॥ २८
भुशुण्डीभग्नखड्गौघखण्डालीव्योमकुन्तलः ।
कुन्तवेणुवनन्यस्ततापाम्बरकचच्छविः ॥ २९
खड्गर्ष्टिवृष्टिसंपुष्टराजपूजितसैनिकः ।
शूलोत्तम्भितसच्छूरग्रहणोद्यसिताप्सराः ॥ ३०
गदातुषारविगलत्स्फुरिताङ्गददिङ्मुखः ।
प्रासप्रसभसंपिष्टकष्टचेष्टतयोत्कटः ॥ ३१
चक्रक्रकचसंचारच्छिन्नाश्वनरवारणः ।
परशुव्रातसंपातपतत्समदवारणः ॥ ३२
लकुटोल्लोडनोड्डीनप्रोड्डामरचटद्भटः ।
यन्त्रपाषाणसंपातपिष्टकेतुरथद्रुमः ॥ ३३
करवालविलूनाग्रच्छत्रपङ्कजपाण्डुरः ।
क्षेपणक्षोभसंक्षीणसैन्यक्षोभोऽप्यलक्षणः ॥ ३४
कबन्धबन्धसंनेतृपातसंपिष्टपार्श्वगः ।
साङ्कुशाङ्कितसंख्यस्थवीरवारितवारणः ॥ ३५

त्वरया कोशात्प्रवहतां निर्गच्छतां खड्गानां लोहसंघर्षसीत्कारसहितो ज्वलत्कणानां सणसण इति ध्वनिर्यत्र । सरतां शरभराणामध्वान्ते मार्गावधौ । लक्ष्यदेश इति यावत् । शरतां विशरारूणां खरखरारवो यत्र ॥ १४ ॥ धगद्धगिति शब्देन सह विच्छिन्नकण्ठादुत्थाः प्राणा लोहितानि च यत्र ॥ १५ ॥ वह्नेः सटाभिर्जटासदृशज्वालाभिः स्पृष्टाः शिरोरुहाः केशा यत्र । असिव्रातानां मत्ता हर्षपरवशचित्ताः संपन्नाः पीना रणोत्साहोत्फुल्लदेहाः शूरा येन तथाविधो झणज्झणरवो यत्र ॥ १६ ॥ कुन्तैरायुधभेदैः कुण्ठितानां मातङ्गानां तरङ्गोत्तुङ्गो लोहितप्रवाहो यत्र ॥ १७ ॥ १८ ॥ केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि तदेव हेतिच्छेदनापराधप्रतीकारो यत्र ॥ १९ ॥ छिन्नायुधैर्महामल्लानां हेलया तिरस्कारेण उल्लालनेन उत्कृष्टबाहुयुद्धक्रीडया लब्धा भूर्जयस्थानं यत्र ॥ २० ॥ मातङ्गेन कम्पितानां अतएव धावितुमशक्त्या उर्व्यां लुठतां रयो यत्र ॥२१॥२२॥ चर्वितो भक्षितः । 'चर्चितः' इति पाठे हिंसितो भर्त्सितो वा । नागेन्द्रैर्गजश्रेष्ठैः खर्वितानि औन्नत्येन गर्जितेन चाल्पीकृतान्यम्भोदास्तद्गर्जितानि च यत्र ॥ २३ ॥ वृक्षश्वभ्राद्याश्रयेण प्रहरतां वधाय क्षिप्तास्तत्र च्छन्नाश्चक्रादयो यत्र । शरलक्षणोर्णातन्तुभिर्नीरन्ध्रघृष्टयो निरन्तरानुस्यूता नानावर्णा योधलक्षणा अद्रिमेखलाः पर्वतनितम्बा यत्र ॥ २४ ॥ मेघानां विश्रान्तैराक्रमणैर्मेघेषु वा विश्रान्तैर्विद्युदादिभिर्विच्छिन्नाः क्षेपणाख्ययन्त्रनिर्मुक्तपाषाणैश्चक्रौघैश्च दूरं विद्रुताः खेचराः पक्ष्यादयो यत्र ॥ २५ ॥ २६ ॥ खड्गखण्डैस्तारकितं संजाततारकमिवाम्बरं यत्र । शक्त्या बलेन निर्मुक्तैः शक्त्यायुधौघैः ॥ २७ ॥ गगने उत्तम्भितान्युत्तुङ्गानि शूरतोमराण्येव तोरणस्रगिव यत्र ॥ २८ ॥ खड्गखण्डालिरेव व्योम्नः कुन्तलाः केशा यत्र । कुन्तसमूहलक्षणे वेणुवने न्यस्तः क्षिप्तस्तापो दावाग्निरिवाम्बरे कचन्ती छविः कुन्तकान्तिर्यत्र ॥ २९ ॥ संपुष्टैः संतोषितैस्तत्स्वामिराजैः ॥ ३० ॥ गदालक्षणैस्तुषारैर्हिमैर्विगलन्ति पद्मानीव स्फुरिताङ्गददिशां भटानां मुखानि यत्र ॥ ३१ ॥ ३२ ॥ 'तटाकश्च तडागः स्यान्मञ्चको मञ्जकस्तथा । मण्डपो मण्टपश्च स्याल्लकुटो लगुटोऽपि च ॥' इति द्विरूपोक्तेर्लकुटैर्बृहद्यष्टिभिरुल्लोडनं गवामिव प्रकालनं तेनोड्डीना इवादर्शनं गताः प्रोड्डामरा उत्पतनशीलाश्चटन्तो वृक्षकुड्यचर्मादिनात्मानमावृण्वानाश्च भटा यत्र । 'चटे आवरणे' ॥ ३३ ॥ पङ्कजैरुत्तंसपद्मैः पाण्डुरः । न लक्षयतीत्यलक्षणः सैन्यक्षोभं न गणयतीति यावत् ॥ ३४ ॥ उत्प्लुत्य रथिकान् जीवग्राहं जिघृक्षतामन्तरा शिरश्छेदे कबन्धानां छिन्नशिरस्कदेहानां बन्धैराश्लेषबन्धनैः संनेतृणां जीवद्रथनायकानां पातेनोत्पथप्रवृत्तरथादिभिः संपिष्टाः पार्श्वगा

[1] द्रुतमुद्गरः इति पाठः.

परशुव्रातसंपातपतत्समदवारणः ।
पाशापाशिविशेषज्ञवीरार्तिपरिदेवनः ॥ ३६
क्षुरिकाकुक्षिनिर्भेदगलत्पद्मपतज्जनः ।
त्रिशूलवलनोन्मत्तशूरसंकरनर्तितः ॥ ३७
धावद्धानुष्कसंपूर्ण[1]कुलकूजितकाकलिः ।
भिन्दिपालसटाटोपहुंकारारभटीनटः ॥ ३८
वज्रमुष्टिविनिष्पिष्टपिष्टसङ्घटसंकटः ।
श्येनवद्व्योमपदवीप्रोत्पतत्पट्टुपट्टिशः ॥ ३९
अङ्कुशाकृष्टशूरेशरथेभहयकेतनः ।
हलाहलिहतालूनहेलाकुलकुलाचलः ॥ ४०
सुतालोत्तालकुद्दालनिखातवनभूतलः ।
धनुर्द्विगुणमात्रास्तलूनलोकशिलावलिः ॥ ४१
क्रकचोभयपार्श्वभच्छिन्नमत्तमतङ्गजः ।
संग्रामोलूखलक्षुण्णलोकतण्डुलमौसली ॥ ४२
अस्त्राभाशृङ्खलाजालबद्धसेनाविहङ्गमः ।
लोलासिवीरनिस्त्रिंशनीतवादिगृहाङ्गणः ॥ ४३
गणशो नीयमानाग्र्यश्वापदारावनिर्भरः ।
नखाङ्कुष्ठखनत्पुङ्खप्रेङ्खारणरणारवैः ॥ ४४
मरिचैर्व्यञ्जनानीव रञ्जयन्सकलारवान् ।
[2]सैन्यनिक्षिप्तकुम्भाग्निदग्धयोधेरितायुधः ।
सैन्यनिक्षिप्तकुम्भा[3]ग्निदग्धयोधोज्झितायुधः ॥ ४५
सैन्यनिक्षिप्तकुम्भस्थतप्ताङ्गारहतेक्षणः ।
सैन्यनिक्षिप्तकुम्भस्थविषवारिदलज्जनः ॥ ४६

नाराचवर्षवरवारिदवीरपूर-
मत्ताभ्रसंभ्रमसनृत्तकबन्धबर्हीं ।
कल्पान्तकाल इव वेगविवर्तमान-
मातङ्गशैलवलितो रणसंभ्रमोऽभूत् ॥ ४७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे सेनयोः प्रथमपातवर्णनं नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ३४

श्रीवसिष्ठ उवाच ।
अथ राज्ञां युयुत्सूनां भटानां मन्त्रिणामपि ।
नभसः प्रेक्षकाणां च तत्रेमाः प्रोदगुर्गिरः ॥ १
चलत्पद्मं सर इव वहद्विहगमेव च ।
नभः शूरशिरःकीर्णं भाति तारकिताकृति ॥ २
पश्य रक्तपृषत्पूरसिन्दूरारुणमारुतैः ।
सांध्या इव विभान्त्येते मध्याह्नेऽम्बुदभानवः ॥ ३

यत्र । साङ्कुशानां हस्तिपकानामङ्कुशाघातेनाङ्कितैरपि संख्यस्थैर्युद्धे प्रहारिभिः शूरैर्वारिता निरस्ता वारणा यत्र ॥ ३५ ॥ वीराणामतिशयितं परितो देवनं प्राणद्यूतं यत्र ॥ ३६ ॥ पद्मं हृदयपद्मम् । शूरसंकराः शूरबहुला योधास्तेषां नर्तितो गात्रविक्षेपात् ॥३७॥ धनुः प्रहरणं येषां ते धानुष्काः । काकलिर्मधुरास्फुटध्वनिः । सटाटोपः केसराडम्बरः आरभटीसाहंकारनादः ताभ्यां नृसिंहवेषनटा इव भटा यत्र ॥ ३८ ॥ वज्रमुष्टिर्मल्लानां प्रसिद्धा तद्विनिष्पिष्टैः पिष्टा येऽन्ये सङ्घटास्तैः संकटः । प्रोत्पतत्पट्टुपट्टिश इत्यसमर्थसमासश्छान्दसः ॥ ३९ ॥ शूरादिद्वन्द्वगर्भो बहुव्रीहिः । केतनानि पताकाः । हलप्रहरणं युद्धं हलाहलि तत्र हतालूनानां हेलावहेलनं तत्राकुलाः कुलाचलवदुन्नताः शत्रुकुले अचला निष्कम्पा वा शूरा यत्र ॥ ४० ॥ सुतालवदुन्नतपुरुषैरुत्तालकुद्दालैरुद्यतखनित्रैः करणैर्निखातान्युन्मूलितानि समीकृतानि च । धनुःशब्देनेषुप्रक्षेपदेशो लक्ष्यते । तद्द्विगुणमात्रदेशे युद्धसंचारसौकर्याय अस्ता लूनाश्छिन्ना लोका जनाः शिलावलयश्च यत्र ॥ ४१ ॥ अत्रोलूखलादिरूपकोपपादितं मौसलं श्लेषादवघाताभेदेन विवक्षितं मुसलयुद्धं तदत्रास्तीति मौसली ॥ ॥ ४२ ॥ युद्धे लोलासयो ये वीरास्तदीयनिस्त्रिंशैः खड्गविशेषैः । वादिरत्र वकारादिनामा वैवस्वतः । अर्थात्स एव व्याधाधिपतिरिति कल्प्यते । अन्यथा बद्धसेनाविहंगमानां तदङ्गणे नीतत्वायोगात् ॥ ४३ ॥ नीयमाना अग्र्याः युद्धनिपतितभटश्रेष्ठा यैस्तथाविधानां श्वापदानां व्याघ्रवृकादीनाम् । नखप्रधानैरङ्गुष्ठैः खनन्त उद्ध्रियमाणाः । आरोहति हस्तीतिवत्कर्मव्यापारांशे कर्मणः स्वातन्त्र्यविवक्षणाच्छतृप्रत्ययः । ये पुङ्खोपलक्षितशरास्तेषां प्रेङ्खा वेगः ॥४४॥ रञ्जयन् मिश्रणेन रोचयन् । कुम्भाग्निः प्रसिद्धः ॥४५॥ विषवारिभिर्दलन्तो विशीर्णाः ॥ ४६ ॥ नाराचवर्षलक्षणं वरवारि ददति तथाविधानि वीरपूरलक्षणमत्ताभ्राणि तेषां संभ्रमेण विलासेन प्रनृत्ताः कबन्धलक्षणा बर्हिणो यत्र । वेगेन विवर्तमानैर्भ्रमद्भिर्मातङ्गलक्षणैः शैलैर्वलितो वेष्टितः ॥ ४७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे प्रथमपातवर्णनं नाम त्रयस्त्रिंशत्तमः सर्गः ॥ ३३ ॥

वर्ण्यतेऽत्र विशेषेण विचित्रार्थनिबन्धनैः ।
रणप्रेक्षकवक्त्रेण युद्धस्यैव चमत्कृतिः ॥ १ ॥

नभसः सकाशात्प्रेक्षकाणां देवगन्धर्वादीनाम् । प्रोदगुः प्रादुर्बभूवुः ॥ १ ॥ वहद्विहगमिति नभःसरसोः साधारणं विशेषणम् । तारकितस्याकृतिरिवाकृतिर्यस्येति विशेषणभेदाद्भेदकल्पनयोपमानता ॥ २ ॥ रक्तपृषतां रुधिरसीकराणां पूरैर्निकरैः

१ कृतकूजित इति पाठः. २ सैनिकक्षिप्त इति पाठः. ३ भिमृतयोधो जितायुधः, मृतयाधेरितायुधः इति पाठौ.

किमिदं भगवन्व्योम पलालभरितं स्थितम् ।
नेदं पलालं वीराणामेते शरभराम्बुदाः ॥ ४
यावन्तो भुवि सिच्यन्ते रुधिरै रणरेणवः ।
तावन्त्यब्दसहस्राणि भटानामास्पदं दिवि ॥ ५
मा भैष्ट नैते निस्त्रिंशा नीलोत्पलदलत्विषः ।
अमी वीरावलोकिन्या लक्ष्म्या नयनविभ्रमाः ॥ ६
वीरालिङ्गनलोलानां नितम्बे सुरयोषिताम् ।
मेखलाः शिथिलीकर्तुं प्रवृत्तः कुसुमायुधः ॥ ७
लसद्भुजलतालोला रक्तपल्लवपाणयः ।
मञ्जरीमत्तनयना मध्वामोदसुगन्धयः ॥ ८
गायन्त्यो मधुरालापैर्नन्दनोद्यानदेवताः ।
तवागमनमाशङ्क्य प्रवृत्ताः परिनर्तितुम् ॥ ९
प्रत्यनीकं भिनत्त्यन्तः कुठारैः कठिनैरियम् ।
सेना ग्राम्येव वनिता दयितं दृष्टिचेष्टितैः ॥ १०
हा पितुर्मम भल्लेन शिरो ज्वलितकुण्डलम् ।
सूर्यस्य निकटं नीतं कालेनेवाष्टमो ग्रहः ॥ ११
आपादश्रृङ्खलाप्रोतभ्रमत्स्थूलोपलद्वयम् ।
भ्रामयंश्चित्रदण्डाख्यं चक्रमूर्ध्वभुजो जवात् ॥ १२
योधो यम इवाभाति याम्यादायाति दिक्तटात् ।
सर्वतः संहरन्सेनामेहि यामो यथागतम् ॥ १३
सद्यश्छिन्नशिरःश्वभ्रमज्जत्कङ्ककुलाकुलाः ।
कबन्धाः परिनृत्यन्ति तालोत्ताला रणाङ्गणे ॥ १४
गीर्वाणगणगोष्ठीषु प्रवृत्ताः संकथा मिथः ।
कदा लोकान्तरं धीराः कथं यास्यन्ति के कुतः ॥ १५
निर्गिरत्यागताः सेनाः स्रवन्तीरिव सागरः ।
समत्स्यमकरव्यूहा अहो नु विषमो भटः ॥ १६
कटेषु करिणां कीर्णा धारानाराचराजयः ।
पतिता इव संपूर्णाः श्रृङ्गसंघेषु वृष्टयः ॥ १७
हा कुन्तेन शिरो नीतं ममेत्येवं विवक्षतः ।
शिरसाऽजीवमित्येवं खे खगेनेव वाशितम् ॥ १८
यन्त्रपाषाणवर्षेण यैषास्मान्परिषिञ्चति ।
सेनानुश्रृङ्खलाजालवलना क्रियतां बलात् ॥ १९
वलीपलितनिर्मुक्तं पूर्वभार्याप्सराः सती ।
अङ्गीकरोति भर्तारं परिज्ञाय रणे हतम् ॥ २०
आदिवं रचिताकाराः कुन्तकाननकान्तयः ।
वीराणां स्वर्गमारोढुमिव सोपानपङ्क्तयः ॥ २१
कान्तकाञ्चनकान्ताङ्गे भटस्योरसि कामिनी ।
दृष्टा देवपुरन्ध्रीयं भर्तुरन्वेषणान्विता ॥ २२
हा हतं सैन्यमस्माकं भटैरुद्धतमुष्टिभिः ।
महाप्रलयकल्लोलैः सुरशैलस्थलं यथा ॥ २३
युध्यध्वमग्रतो मूढा नयतार्धमृतान्नरान् ।
निजान्पादप्रहारेण मैतान्दारयताधमाः ॥ २४
धम्मिल्लवलनाव्यग्रे घनोत्कण्ठेऽप्सरोगणे ।
भटो दिव्यशरीरेण पार्श्वप्राप्तो निरीक्ष्यताम् ॥ २५
फुल्लहेमारविन्दासु च्छायाशीतजलानिलैः ।
स्वर्गनद्यास्तटीष्वेनं दूरायातं विनोदय ॥ २६
विविधायुधसंघट्टखण्डितोग्रास्थिकोटयः ।
खे कवन्त्यः कणत्कारैः प्रसृतास्तारका इव ॥ २७
व्योम्नि जीवनदीवाहे वहत्सायकवारिणि ।
चक्रावर्तिनि गच्छन्ति गिरयोऽप्यणुपङ्कताम् ॥ २८
भ्रमद्भिर्ग्रहमार्गेषु शिरोभिर्वीरभूभृताम् ।
आयुधांशुलतानाललग्नासिदलकण्टकैः ॥ २९

सिन्दूरेणेवारुणैर्मारुतैर्हेतुभिः । सांध्याः संध्यासंबन्धिनः । अम्बुदा भानवः सूर्यकराश्च ॥ ३ ॥ दूराच्छरोत्करेषु पलालभ्रान्त्या कश्चित्स्वमान्यं पृच्छति—**किमिद**मिति । स प्रत्याह—**नेद**मिति ॥ ४ ॥ ५ ॥ लक्ष्म्याः स्वर्गलक्ष्म्या जयलक्ष्म्या वा ॥ ६ ॥ नभश्चरोक्तिर्वीरेति ॥ ७ ॥ वीरस्य वीरान्तरं प्रत्युक्तिर्लसद्भुजेति द्वाभ्याम् ॥ ८ ॥ ९ ॥ दृष्टिचेष्टितैर्दृग्विलासैः ॥१०॥ कालेन सूर्योपरागकालेनेव । अष्टमो ग्रहो राहुः ॥११॥ भीरोर्भीरुं प्रत्युक्तिरापादेति द्वाभ्याम् । आपादलम्बिन्यां यन्त्रश्रृङ्खलायां प्रोतं चक्रं चक्रोपलयन्त्रम् ॥ १२ ॥ याम्याद्दक्षिणात् । संहरन्निति योधयमयोर्विशेषणम् ॥ १३ ॥ श्वभ्रेषु कण्ठच्छिद्रेषु मज्जद्भिः कङ्ककुलैराकुलाः । तालैर्युद्धवादित्रतालैरुत्ताला उच्छलन्तः ॥ १४ ॥ चतुर्भिः किंवृत्तैः कालप्रकारपुरुषनिमित्तानि पृच्छ्यन्ते ॥ १५ ॥ स्रवन्तीर्नदीः । समत्स्यमकरव्यूहा इति स्रवन्तीसेनयोर्विशेषणम् ॥ १६ ॥ गिरिश्रृङ्गसङ्घेषु पतिताः संपूर्णवृष्टय इव राजन्त इति शेषः ॥ १७ ॥ शिरश्छेदस्य दुःखताबुद्ध्या तथा विवक्षतश्छिन्नेनोड्डीनेन शिरसा स्वर्गारोहणोत्सवदर्शनादजीवमहं नतु मृत इति हर्षेण खे यद्भाषितं तत्खगेन पक्षिणा वाशितमिव जनैः श्रुतमिति शेषः । तिरश्चां कूजितं वाशितम् ॥१८॥ या सेना सिञ्चति एषा अनुश्रृङ्खलाजालेन वलिता वेष्टिता क्रियतामिति सैनिकोक्तिः ॥१९॥ पूर्वभार्या प्रागेव मृता अप्सराः सती स्थिता युद्धे मृतं स्वभर्तारं वलीपलितनिर्मुक्तं देवभूतं परिज्ञायाङ्गीकरोतीति देवोक्तिः ॥२०॥ कुन्तायुधानां काननं समूहस्तेषां कान्तय आदिवं स्वर्गपर्यन्तं रचितवत्प्रसृताः सोपानपङ्क्तय इत्युत्प्रेक्ष्यन्ते ॥ २१ ॥ या भटस्य कामिनी स्वतः काञ्चनैश्च कान्तान्यङ्गानि करचरणादीनि यस्य तथाविधे भटस्योरसि मृता दृष्टा सेयं देवपुरन्ध्री भूत्वा भर्तुरन्वेषणान्विता दृश्यत इति शेषः ॥ २२ ॥ हा हतमिति कातरस्योक्तिः ॥ २३ ॥ निजान्स्वीयान् ॥ २४ ॥ धम्मिल्लवलना केशसंग्रथनम् ॥ २५ ॥ स्वर्गनद्या गङ्गायाः विनोदय विश्रामयेत्यप्सरःसख्युक्तिः ॥ २६ ॥ कोटिशब्दोऽसंख्येयपरः । कणत्कारैः कवन्त्यो रणन्त्यः ॥ २७ ॥ चक्रैरावर्तिन्यावर्तवति । अणवो रेणवस्तल्लक्षणां पङ्कताम् । कल्पितपूरानुरूपः कल्पित एव पङ्कः ॥ २८ ॥ ग्रहमार्गेषु भ्रमद्भिर्वीरभूभृतां शिरोभिर्नभः पद्मसरः कृतमित्युत्तरेणान्वयः । तदुपपत्तये विशि-

केतुपट्टमृणालाङ्गदलैर्लब्धशिलीमुखैः ।
वहद्वातचलत्पद्मं नभः पद्मसरः कृतम् ॥ ३०
मृतमातङ्गसंघाते गिराविव पिपीलिकाः ।
भीरवः परिलीयन्ते स्त्रियः पुंवक्षसीव च ॥ ३१
अपूर्वोत्तमसौन्दर्यकान्तसंगमशंसिनः ।
वान्ति विद्याधरस्त्रीणामलकोल्लासिनोऽनिलाः ॥ ३२
छत्रैरुड्डीयमानेषु स्थितेषु व्योम्नि चन्द्रता ।
इन्दुनेव यशोमूर्त्या कृता शुभ्रातपत्रता ॥ ३३
भटो मरणमूर्छान्ते निमेषेणामरं वपुः ।
स्वकर्मशिल्पिरचितं प्राप्तः स्वप्नपुरं यथा ॥ ३४
शूलशक्त्यृष्टिचक्राणां वृष्ट्यो मुक्ततुष्टयः ।
व्योमाब्धौ मत्स्यमकरसंकुलावयवाः स्थिताः ॥ ३५
शरोत्कृत्तसितच्छत्रकलहंसैर्नभःस्थलम् ।
भाति संचितपूर्णेन्दुबिम्बलक्षैरिवावृतम् ॥ ३६
क्रियते गगनोड्डीनैश्चामरैश्चारुघर्घरैः ।
वातावधूतसंरोधतरङ्गनिकरद्युतिः ॥ ३७
दृश्यन्ते हेतिदलिताश्छत्रचामरकेतवः ।
आकाशक्षेत्रविक्षिप्ता यशःशालिलता इव ॥ ३८
वहद्भिर्व्योम्नि सक्षेम पश्य नीता क्षयं शरैः ।
शक्तिवृष्टिरुपायान्ती सस्यश्रीः शलभैरिव ॥ ३९
एषा प्रसृतदोर्दण्डभटखड्गच्छटात्कृतिः ।
कठिनात्कंकटाज्जाता मृत्योरेवोग्रहुंकृतिः ॥ ४०
हेतिकल्पानिलक्षुण्णा दन्तनिर्झरवारयः ।
जनताक्षयकालेऽस्मिन्भग्ना नागा नगा इव ॥ ४१
सचक्रनाथसूताश्वं व्यूढं रक्तमहाह्रदे ।
हाहाभिभूतगतिकं चेष्टते रथपत्तनम् ॥ ४२
करकंकटकुल्यङ्कखड्गसंघट्टटांकृतैः ।
कालरात्र्या प्रनृत्यन्त्या रणवीणेव वाद्यते ॥ ४३
नरेभखरवाजिभ्यो ये च्युता रक्तनिर्झराः ।
पश्य तद्बिन्दुसिक्तेन वायुनारुणिता दिशः ॥ ४४
शस्त्रांशुजलदे व्योम्नि कालीचिकुरमेचके ।
शरकोरकभारस्रङ्मेघे विद्युदिवोदिता ॥ ४५
अनन्तरक्तसंसक्तसन्नावनितलायुधैः ।
भुवनं भात्यभिज्वालमग्निलोक इवाकुलम् ॥ ४६
भुशुण्डीशक्तिशूलासिमुसलप्रासवृष्टयः ।
अन्योन्यच्छेदभेदाभ्यां करप्रकरतोऽपतन् ॥ ४७
अक्षोभैकप्रहरणाद्यातुधान्योऽन्यचेष्टितम् ।
संरम्भावेक्षणप्रज्ञं रणं स्वप्नमिव स्थितम् ॥ ४८
अनन्यशब्दाविरतहताहतिरणज्झणैः ।
गायतीव क्षतक्षोभमुदितो रणभैरवः ॥ ४९
अन्योन्यरणहेत्युग्रचूर्णपूर्णो रणार्णवः ।
वालुकामय एवाभूच्छिन्नच्छत्रतरङ्गकः ॥ ५०
सरभसरसवद्भिसारितूर्य-
प्रतिरवपूरितलोकपाललोकः ।

नष्टि—आयुधांशुभिरित्यादिना । आयुधानामंशवः किरणा एव पद्मलतानालानि तेषु लग्ना असयः दलानि विदलनसाधनशूलकुन्तादीनि च कण्टका येषाम् ॥ २९ ॥ केतुपट्टाः पताकापटास्त एव मृणालस्यावयवभूतपर्णानि येषाम् । लब्धाः शिलीमुखाः श्लेषाद्बाणलक्षणभ्रमरा यैः ॥ ३० ॥ चकार उपमानद्वयसमुच्चयार्थः ॥ ३१ ॥ गृहादागच्छन्तीनामलकोल्लासितयानुकूलत्वेन शकुनरूपत्वान्मनोरथसिद्धिशंसिन इति भावः ॥ ३२ ॥ इवकारः पूर्वत्रापि संबध्यते । तेन च्छत्रेषु व्योम्नि स्थितेषु तैश्चन्द्रता कृतेव । यशोमूर्त्या इन्दुना भुवि शुभ्रातपत्रता कृतेवेत्युत्प्रेक्षाद्वयं लभ्यते ॥ ३३ ॥ ३४ ॥ मुक्ततुष्टयः असंतोषशीला इव व्यग्रा मत्स्यमकररूपाः संकुलावयवा इव स्थिताः । अब्धिस्थमत्स्यादीनामभ्यवयवत्वं काल्पनिकम् ॥ ३५ ॥ ३६ ॥ वातेनावधूतः संरोधः स्थैर्यं येषां तरङ्गाणाम् ॥ ३७ ॥ ३८ ॥ सक्षेमेति श्रोतृसंबोधनम् । उपायान्ती समुपसर्पन्ती आसन्नफला च ॥ ३९ ॥ छटात्कृतिरिति खड्गपातध्वन्यनुकरणम् । सैव मृत्योर्हुंकृतिरित्युत्प्रेक्षा ॥ ४० ॥ हेतयः खड्गाद्यायुधान्येव कल्पानिलास्तैः क्षुण्णाः । दन्ता एव निर्झरवारीणि शुभ्रत्वबहिर्निःसृतत्वसाम्याद्येषां ते । नागा गजा नगा गिरय इव ॥ ४१ ॥ व्यूढं संनद्धम् । रक्तमहाह्रदे अभिभूता चक्रविष्टम्भात्तिरोभूता गतिर्यस्य तथाभूतं सच्चेष्टते स्पन्दते । हाहेति खेदे ॥ ४२ ॥ वीरहस्त्यादिकराः कंकटानि च कुल्यङ्कास्तन्त्रीपदानि तेषु खड्गसंघट्टकृतैष्टांकृतैर्वादनशब्दैः ॥ ४३ ॥ ४४ ॥ चिकुराः केशा इव मेचके श्यामे । शरा एव कोरकाः कलिकास्तेषां भारः प्रचयस्तल्लक्षणा स्रक् । जलदे इति जातिशब्दः । मेघे 'मिह' सेचने तत्प्रधाने इति तद्विशेषणम् ॥ ४५ ॥ अनन्तैः रक्तसंसक्तैः सन्नैर्विशीर्णैरवनितलैरायुधैश्च आकुलं भुवनं अग्नेर्लोक इव भातीति शेषः । 'अग्निशोक इव' इति पाठे अग्निप्रयुक्ते नगरादिदाहशोके आकुलमिवेति व्याख्येयम् ॥ ४६ ॥ ४७ ॥ अक्षोभेषु संचलितुमसमर्थेष्वनकेष्वेकेन शूरतमेन खलाघवातिशयेन प्रहरणात् । यातुधानानां रक्षसां माया यातुधानी तया उन्यं उन्नेयं उपमेयं शूरचेष्टितं यत्र । नयतेष्टिलोपश्छान्दसः । संरम्भेण क्रोधेनावेक्ष्यते यया सा संरम्भावेक्षणी तथाविधा प्रज्ञा योद्धृबुद्धिर्यत्र । स्वप्नपक्षे अक्षोभेषु विनाशानुकूलच्छेदभेदादिसंचलनशून्येषु स्वाप्नपदार्थेष्वेकेन जागरमात्रेण प्रहरणाद्धाधायातुधानमायोपमेयमिथ्याचेष्टितम् । संरम्भेण आवेशेनावेक्षणी प्रज्ञा स्वयंज्योतिरात्मप्रज्ञा यत्र । स्वप्नमिव स्थितं रणं पुरःस्थितं स्वप्नमिव पश्यामीति शेषः ॥ ४८ ॥ अविरतं निरन्तरं या हताहतिरन्योन्यप्रहारस्तदुद्भवै रणज्झणैर्ध्वनिविशेषैः ॥ ४९ ॥ वालुकामयः सैकतप्रचुरः ॥ ५० ॥ सरभसं रसवद्भिर्मधुरैर्वि-

१ परिहीयन्ते इति पाठः. २ महाभिभूत इति पाठः.

२ शेफा इति पाठः.

रणगिरिरयमुग्रपक्षदक्ष-
प्रतिसृतिवृत्त इवाम्बरे युगान्ते ॥ ५१
हा हा धिक्प्रविकटकङ्कटाननोद्य-
त्प्रोड्डीनप्रकटतडिच्छटाप्रतप्ताः।
क्रेङ्कारस्फुरितगुणेरिता रणन्तो
नाराचाः शिखरिशिलागणं वहन्ति ॥ ५२
छिन्नेच्छाच्छमिति न यावदङ्गभङ्गं
कुर्वन्तो ज्वलदनलोज्ज्वलाः पृषत्काः।
तावद्द्राग्द्रुतमित एहि मित्र यामो
यामोऽयं प्रवहति वासरश्चतुर्थः ॥ ५३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने रणप्रेक्षकजनोक्तिवर्णनं नाम चतुस्त्रिंशः सर्गः ॥ ३४॥

## पञ्चत्रिंशः सर्गः ३५

श्रीवसिष्ठ उवाच।
अथ प्रोड्डयनोद्युक्ततुरङ्गमतरङ्गकः।
उत्ताण्डव इवोन्मत्तो बभूव स रणार्णवः ॥ १
छत्रडिण्डीरविश्रान्तसितेषुशफरोत्करः।
अश्वसैन्योल्लसल्लोलकल्लोलाकुलकोटरः ॥ २
नानायुधनदीनीतसैन्यावर्तविवृत्तिमान्।
मत्तहस्तिघटापीठचलाचलकुलाचलः ॥ ३
कचचक्रशतावर्तवृत्तिभ्रान्तशिरस्तृणः।
धूलीजलधरापीतभ्रमत्खड्गप्रभाजलः ॥ ४
मकरव्यूहविस्तारभग्नाभग्नभटौघनौ।
महागुड्गुडावर्तप्रतिश्रुद्घनकन्दरः ॥ ५
मीनव्यूहविनिष्क्रान्तशरबीजौघसर्षपः।
हेतिवीचीवराल्लूनपताकावीचिमण्डलः ॥ ६
शस्त्रवारिकृताम्भोदसदृशावर्तकुण्डलः।
संरम्भघनसंचारसेनातिमितिमिङ्गिलः ॥ ७
कृष्णायसपरीधानवलत्सेनाम्बुभीषणः।

सारिभिः प्रसमरैस्तूर्याणां वाद्यानां प्रतिरवैः प्रतिध्वनिभिः पूरिता लोकपालानां दिक्पतीनां लोका येन। तूर्यरवैरुड्डयनोद्योगेन गर्जन्निवेति यावत्। अयं दृश्यमानो रणलक्षणो रणसंनिहितो वा गिरिः पर्वतो युगान्ते अम्बरे नभसि उग्रयोर्युद्धकर्कशयोः सैन्यद्वयलक्षणयोः पक्षयोर्दक्षया समर्थया प्रतिसृत्या परस्परप्रतिकूलचलनेन वृत्त उड्डयने प्रवृत्त इवाभातीत्यर्थः ॥५१॥ समर्थानपि कठिनकङ्कटेषु मोघान्स्वशराननुशोचन्तो वीरा आहुर्हाहेति। प्रविकटानतिकठिनान्कङ्कटान् अनोद्याभित्त्वैव तदभिघातप्रोड्डीनाभिः प्रकटतडिच्छटासदृशीभिर्ज्वालाभिः प्रतप्ता नाराचाः शराः शिखरिणः सन्निहितपर्वतस्य शिलागणं छित्त्वा वहन्ति। हाहेति खेदे। अभिमतकार्ये प्रेरितस्य तदकृत्वा अनभिमतमहाकार्यकारिणोऽपि धिक्कार्यतैवेति भावः। 'अरणीतः' इति पाठे स्फुरितगुणं यद्धनुस्तल्लक्षणाया ईरितायाः कर्षणोन्मथिताया अरणीतः अरण्याः सकाशात् नाराचाः शराग्नय इति व्याख्येयम् ॥ ५२ ॥ अथ युद्धश्रान्तस्य तादृशं कंचित्प्रत्युक्तिः। हे छिन्नेच्छ श्रमविच्छिन्ना युद्धेच्छा यस्य तथाविध हे मित्र, अच्छं स्वच्छं निर्दोषं इति वक्ष्यमाणं हितं शृण्विति शेषः। ज्वलदनलोज्ज्वलाः पृषत्का बाणा अस्माकमङ्गानां हस्तपादादीनां भङ्गं विच्छेदं कुर्वन्तो यावन्न भवन्ति तावदेव द्राक् शीघ्रमेव द्रुतं पलायितं यथा स्यात्तथा इतो यामः अपगच्छामः। यतोऽयं चतुर्थो यामः प्रहरः यामो यमसंबन्धी वासरः। नियताशनदिनमिव जनक्षयाय प्रवहति। परिवर्तत इत्यर्थः। 'छिन्नेच्छाछं' इति पाठे तु छिन्नवर्मादौ छाछं इति शब्देन नाङ्गभङ्गं कुर्वन्त इति योज्यम् ॥५३॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे रणप्रेक्षकजनोक्तिवर्णनं नाम चतुस्त्रिंशः सर्गः॥३४॥

समुद्रवनकल्पान्तनानारूपकविस्तरैः।
संग्रामश्चतुरङ्गाणां विस्तरेणात्र वर्ण्यते ॥ १ ॥

तत्रादौ त्रयोदशश्लोकैरर्णवात्मना निरूपयिष्यन्नाह—अथेत्यादिना ॥ १ ॥ डिण्डीरेषु फेनकूटेषु विश्रान्ताः सिता इषवः शफराः क्षुद्रमत्स्यजातिभेदाः अश्वसादिसैन्यान्येवोच्छलनशीलत्वात्कल्लोलाः ॥ २ ॥ विवृत्तिर्भ्रमणं तद्वान्। घटा समूहस्तल्लक्षणा आपीठमामूलाच्चलाचलाश्चञ्चलाः कुलाचला मन्दरादयो यत्र। 'बलाबल' इति पाठे बलाबलपरीक्षार्थं युध्यन्तः कुलाचला इवेति क्लेशेन योज्यम् ॥ ३ ॥ आवर्तानां वृत्तिः परिभ्रमणं तेन भ्रान्तानि तच्छिन्नशिरस्तृणानि यत्र। खड्गप्रभाणां धूलिभिराच्छादनं पानत्वेन कल्प्यते ॥ ४ ॥ सेनापक्षे मकराकारस्य व्यूहस्य सेनासंनिवेशस्य। प्रतिश्रुतः प्रतिध्वनन्त्यो घनानां मेघानां कन्दराश्छिद्राणि घनाः कन्दराः पर्वतगुहा वा यत्र ॥ ५ ॥ मीनाः प्रमीणा मृतजनास्तद्व्यूहेभ्यो विभिद्य निष्क्रान्ताः शरा एव क्षेत्रे फलिताः बीजौघशिम्बीशिरस्काः सर्षपा इव यत्र। अर्णवपक्षे मीनानां मत्स्यानां व्यूहेभ्यो निष्क्रान्ताः प्रसूताः काशबीजौघा इव शुभ्रा अण्डसर्षपा यत्र। वीचीवरैः प्रबलवीचिभिः ॥ ६ ॥ अम्भोदसदृशा मेघवदस्थिरा आवर्ता एव कुण्डलानीव यस्य। संरम्भः क्रोधस्तेन घनसंचारा सेनैव तिमयस्तिमिङ्गिलाश्च महामत्स्यजातिभेदा यत्र ॥ ७ ॥ कृष्णायसमयः सारस्तन्मयानि परीधानानि

१ रवमुग्र इति पाठः.

कबन्धावर्तलेखान्तर्बद्धसैन्यादिभूषणः ॥ ८
शरसीकरनीहारसान्धकारककुग्गणः ।
निर्घोषाशोषिताशेषशब्दैकघनघुंघुमः ॥ ९
पतनोत्पतनव्यग्रशिरःशकलसीकरः ।
आवर्तचक्रव्यूहेषु प्रभ्रमद्भटकाष्ठकः ॥ १०
कचटाङ्कारकोदण्डकुण्डलोन्मथनोद्भटः ।
अशङ्कमेव पातालादिवोद्यत्सैनिकोर्मिमान् ॥ ११
गमागमपरानन्तपताकाच्छत्रफेनिलः ।
वहद्रक्तनदीरंहःप्रोह्यमानरथद्रुमः ॥ १२
गजप्रतिमसंपन्नमहारुधिरबुद्बुदः ।
सैन्यप्रवाहविचलद्धयहस्तिजलेचरः ॥ १३
ससंग्रामोऽम्बरग्राम इवाश्चर्यकरो नृणाम् ।
अभूत्प्रलयभूकम्पकम्पिताचलचञ्चलः ॥ १४
तरत्तरङ्गविहगः पतत्करिघटातटः ।
त्रस्तभीरुमृगानीकस्फूर्जद्धुरघुरारवः ॥ १५
सरच्छरालीशलभशतभङ्गुरसैनिकः ।
तरत्तुरङ्गशरभः शरभारवनावनिः ॥ १६
चलद्विरेफनिर्ह्रादो रसत्तूर्यगुहागुरुः ।
चिरात्स सैन्यजलदो लुठद्भटमृगाधिपः ॥ १७
प्रसरद्धूलिजलदो विगलत्सैन्यसानुमान् ।
पतद्रथवराढ्याङ्गः प्रतपत्खड्गमण्डलः ॥ १८
प्रोत्पतत्पदपुष्पौघः पताकाच्छत्रवारिदः ।
वहद्रक्तनदीपूरपतत्सारावचारणः ॥ १९
सोऽभूत्समरकल्पान्तो जगत्कवलनाकुलः ।
पर्यस्तसध्वजच्छत्रपताकारथपत्तनः ॥ २०
पतद्विमलहेत्यौघभूरिभास्वरभास्करः ।
कठिनप्राणसंतापतापिताखिलमानसः ॥ २१
कोदण्डपुष्करावर्तशरधारानिरन्तरः ।
वहत्खड्गशिलालेखाविद्युद्वलयिताम्बरः ॥ २२
उच्छिन्नरक्तजलधिपतितेभकुलाचलः ।
नभोविकीर्णनिपतद्युत्तारकणतारकः ॥ २३
चक्रकुल्याम्बुदावर्तपूर्णव्योमशिराम्बुदः ।
अस्त्रकल्पाग्निनिर्दग्धसैन्यलोकान्तरक्रमः ॥ २४
हेतिवर्षाशनिच्छिन्नभूतलामलभूधरः ।
गजराजगिरिव्रातपातपिष्टजनव्रजः ॥ २५
शरधाराघनानीकमेघच्छन्नमहीनभाः ।
महानीकार्णवक्षोभसंघट्टघटिताद्रवः ॥ २६
व्याप्त उग्रानिलोद्धूतैर्जलव्यालैरिवाचलः ।
अन्योन्यदलनव्यग्रैः शस्त्रोत्पात इवोत्थितैः ॥ २७

शूलासिचक्रशरशक्तिगदाभुशुण्डी-
प्रासादयो विदलनेन मिथो ध्वनन्तः ।
दीप्ता अधुर्दशदिशः शतशो भ्रमन्तः
कल्पान्तवातपरिवृत्तपदार्थलीलाम् ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे रणवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

कवचानि यस्य तथाविधेन वलता परिवर्तमानेन सैन्याम्बुना । कवन्धं जलममूर्धकायश्च तदावर्तरेखाया अन्तर्मध्ये बद्धानि निविष्टानि सैन्यादीनां भूषणानि यत्र । समुद्रपक्षे सैन्यान्यदन्ति भक्षयन्तीति सैन्यादीनि रक्षांसि तान्येव भूषणानीव यस्य ॥ ८ ॥ निर्घोषेण आशोषिता इवासंवेद्याः कृता अशेषशब्दा येन । अतएवैकघनघुंघुमः ॥ ९ ॥ १० ॥ कोदण्डान्येव कुण्डलानि सर्पशरीराणि तेषामुन्मथने च्छेदने ॥ ११ ॥ १२ ॥ हयहस्तिन एव जलेचरा यादांसि यत्र ॥ १३ ॥ अम्बरग्रामो गन्धर्वनगरम् । सांप्रतं तमेव समरं कल्पान्तत्वेन वर्णयति— अभूदित्यादिना ॥ १४ ॥ तरत्तरङ्गा इव विहगा यत्र ॥ १५ ॥ तुरङ्गा एव शरभा यत्र । शराणां भाराः, शरान् बिभ्रति ये ते वा वनावनिर्वनभूमिर्यत्र ॥ १६ ॥ चिरादित्यस्योत्तरत्राभूदित्यनेनान्वयः । ससैन्या गजादयो जलदा इव यत्र ॥ १७ ॥ पतन्ति रथवराढ्यानां महारथानामङ्गानि यत्र । खड्गा मृगविशेषा निस्त्रिंशाश्च ॥ १८ ॥ पदान्यङ्घ्रयङ्का एव पुष्पौघाः ॥ १९ ॥ ॥ २० ॥ कठिनेन प्राणसंतापेन ॥ २१ ॥ कोदण्डा धनूंषि तल्लक्षणानां पुष्करावर्ताख्यप्रलयाम्बुदानां खड्गानां शिलालेखाः शिलासंस्कृतधारा एव विद्युतः ॥ २२ ॥ नभसि विकीर्णाः प्रसृताः निपतद्भिश्च युवन्ति मिश्रीभवन्ति अतएव ताराः स्थूला ये रुधिरकणास्त एव तारका इव यत्र ॥२३॥ चक्रकुल्याभिश्चक्रपरम्परासरिद्भिरम्बुदप्रदेशे भ्रमणे तदावर्तप्रायाभिः पूर्णा व्योमशिरा नभोनाड्योऽम्बुदाश्च यत्र । लोकान्तरक्रमः परलोकाक्रमणम् ॥ २४ ॥ २५ ॥ शरधाराभिर्घनैर्निबिडैरनीकमेघैः ॥ २६ ॥ जलव्यालैर्डुण्डुभैः । अचलः अर्थात्समुद्रान्तर्गत इति लभ्यते । अन्योन्यदलने व्यग्रैः शस्त्रैरिति शेषः । शस्त्रवर्षिणि संवर्तोत्पाते उत्थितैरिवेत्युत्प्रेक्षा ॥ २७ ॥ दीप्ताः शूलादयो मिथो विदलनेन ध्वनन्तो दिशो भ्रमन्तः सन्तः कल्पान्तवातेन परिवृत्तानां भ्राम्यमाणानां शिलावृक्षशस्त्रादीनां पदार्थानां लीलां विलासं अधुः । अधारयन्नित्यर्थः ॥ २८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे रणवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

१ जलद्विरेफ इति पाठः. २ विंशतितमश्लोकगतेनेत्यर्थः.

## षट्त्रिंशः सर्गः ३६

श्रीवसिष्ठ उवाच ।

अथ शृङ्गोपमानेषु स्थितेषु शरराशिषु ।
सर्वभीरुषु भग्नेषु विद्रुतेषु दिशो दश ॥ १
मातङ्गशवशैलेषु विश्रान्ताम्बुदपङ्क्तिषु ।
यक्षरक्षःपिशाचेषु क्रीडत्सु रुधिरार्णवे ॥ २
महतां धर्मनिष्ठानां शीलौजःसत्त्वशालिनाम् ।
शुद्धानां कुलपद्मानां वीराणामनिवर्तिनाम् ॥ ३
द्वन्द्वयुद्धानि जातानि मेघानामिव गर्जताम् ।
मिथोनिगरणोत्कानि मिलन्त्यापगपूरवत् ॥ ४
पञ्जरः पञ्जरेणेव गजौघेन गजोच्चयः ।
सवनः सवनेनाद्रिरद्रिणेवामिलद्बलात् ॥ ५
अश्वौघो मिलदश्वानां वृन्देनाराविरंहसा ।
तरङ्गौघेन घोषेण तरङ्गौघ इवार्णवे ॥ ६
नरानीकं नरानीकः समायुधमयोधयत् ।
वेण्वोघमिव वेण्वोघो मरुल्लोलो मरुद्बलम् ॥ ७
रथौघश्च रथौघेन निष्पिपेषाखिलं वपुः ।
नगरं नगरेणेव दैवेनोड्डीनमासुरम् ॥ ८
सरच्छरभरासाररचितापूर्ववारिदम् ।
युयुधे स्थगिताकाशा धनुर्धरपताकिनी ॥ ९
विषमायुधयुद्धेषु योद्धारः पेलवाशयाः ।
यदा युक्त्या पलायन्ते रणकल्पानले तदा ॥ १०
मिलिताश्चक्रिणश्चक्रैर्धनुर्धारैर्धनुर्धराः ।
खड्गिभिः खड्गयोद्धारो भुशुण्डीभिर्भुशुण्डयः ॥ ११
मुसलैर्मुसलोदाराः कुन्तिनः कुन्तिधारिभिः ।
ऋष्ट्यायुधा ऋष्टिधरैः प्रासिभिः प्रासपाणयः ॥ १२
समुद्गरा मुद्गरिभिः सगदैर्विलसद्गदाः ।
शाक्तिकैः शक्तियोद्धारः शूलैः शूलविशारदाः ॥ १३
प्रासासनविदः प्रासैः परशूक्ताः परश्वधैः ।
लकुटोग्रैर्लकुटिनश्चोपलैरुपलायुधाः ॥ १४
पाशिभिः पाशधारिण्यः शङ्कुभिः शङ्कुधारिणः ।
क्षुरिकाभिस्तु क्षुरिका भिन्दिपालैश्च तद्गताः ॥ १५
वज्रमुष्टिधरा वज्रैरङ्कुशैरङ्कुशोद्धताः ।
हलैर्हलनिकाषज्ञास्त्रिशूलैश्च त्रिशूलिनः ॥ १६
शृङ्खलाजालिनो जालैः शृङ्खलैरलिकोमलैः ।
क्षुभिताकल्पविक्षुब्धसागरोर्मिघटा इव ॥ १७
क्षुब्धचक्रदलावर्तः शरसीकरमारुतः ।
प्रभ्रमद्धेतिमकरो व्योमैकार्णव आबभौ ॥ १८
उत्फुल्लायुधकल्लोलशिराकुलजलेचरः ।
रोदोरन्ध्रसमुद्रोऽसौ बभूवामरदुस्तरः ॥ १९
दिव्याष्टकजनानीकं पक्षद्वयतया तया ।
अर्धेनार्धेन कुपितं भूपालाभ्यां तथा स्थितम् ॥ २०
मध्यदेशादिसंख्याने प्राग्दिग्भ्योऽभ्यागतानिमान् ।
लीलानाथस्य पद्मस्य पक्षे जनपदाञ्छृणु ॥ २१

समायुधद्वन्द्वयुद्धं सहायाश्चात्र वर्णिताः ।
प्राच्यादिभिर्जनपदैः समं जनपदेश्वराः ॥ १ ॥

मातङ्गशवशैलेषु स्थितेषु शरराशिषु शृङ्गोपमानेषु सत्स्विति परेण सहान्वयः ॥ १ ॥ २ ॥ शीलं सुचारित्र्यम् । सत्त्वं बलम् । कुलपद्मानां स्वकुलं पद्मवत्स्वयशःसौरभैः सुरभीकुर्वाणानामित्यर्थः ॥ ३ ॥ मिथोऽन्योन्ययुद्धतो निगरणं ग्रसनं तत्रोत्कान्युत्कण्ठितानीवेति द्वन्द्वयुद्धविशेषणम् । मिलन्ति वीरा इति शेषः ॥ ४ ॥ वनेन सह वर्तमानः सवनोऽद्रिस्तादृशेनाद्रिणेव ॥ ५ ॥ ६ ॥ मरुता वलति चलतीति मरुद्वलस्तम् ॥ ७ ॥ वपुः परस्परसंस्थानम् ॥ ८ ॥ रचितः संपादितः अपूर्वोऽभिनवो वारिदो यस्मिन्कर्मणि तथा युयुधे । स्थगिताकाशा आच्छादिताकाशा ॥ ९ ॥ पेलवाशया भीरुचित्ताः ॥ १० ॥ अत्र प्रकरणे तृतीयान्तायुधनामभिः सर्वत्र तद्धारिणो लक्ष्यन्ते । भुशुण्डीशब्देन भुशुण्डीधरा लक्षणयोच्यन्ते ॥ ११ ॥ १२ ॥ ॥ १३ ॥ प्रासानामसनं क्षेपणं तद्विदः । परशुभिरुक्ताः । विख्याता इति यावत् । लकुटा वेणुदण्डा उग्रा उद्यता येषां ते लकुटोग्रास्तैः ॥ १४ ॥ पाशधारिण्यः सेनाः । शङ्कुक्षुरिके क्षुद्रायुधविशेषौ । तद्गतास्तत्संगताः ॥ १५ ॥ वज्रैर्मुष्टिगतैः वज्रमुष्टिभिरिति यावत् । वज्रमुष्टिशब्देन मल्लानां सलोहकीला मुष्टिबन्धा उच्यन्ते । निकाषो निघर्षः ॥ १६ ॥ शृङ्खलाजालमिति कङ्कटजातिभेदस्तद्वन्तः सादिनः शृङ्खलाजालिनः । कोमलशब्दः स्निग्धश्यामपरः । मिलिता इति सर्वत्रानुषङ्गः । दृष्टान्तोऽपि प्राक्तनसर्वसाधारणः ॥ १७ ॥ क्षुब्धानि भ्रमन्ति दलानीव चक्राणि चक्रदलानि तान्यावर्ता यस्मिन् ॥ १८ ॥ उत्फुल्ला आयुधलक्षणाः कल्लोलशिरास्तरङ्गनाड्यः । रोदस्योर्द्यावापृथिव्यो रन्ध्रमन्तरालं स एव समुद्रः । अमरैर्जीवद्भिर्दुस्तरः ॥ १९ ॥ विद्या बुद्धिर्बलं शौर्यमस्त्राण्यश्वा रथो धनुरिति प्रसिद्धं दिव्यमप्रतिहतमष्टकं यस्य तथाविधं योधजनानीकं तया प्रागुक्तया द्वन्द्वशो मिलितया पक्षद्वयतया सैन्यद्वयेऽप्यर्धेनार्धेन कुपितं स्थितम् । तत्कुतः । यतो भूपालाभ्यां सिन्धुराजविदूरथाभ्यां तथा तदनुकूलतया स्थितमित्यर्थः । अथवा यक्षा रक्षांसि पिशाचा असुरा इत्येकतो देवा गन्धर्वाः किन्नरा विद्याधरा इत्येकत इति दिव्याष्टकजनानीकं तया भाविजयपराजयानुसारिण्या पक्षद्वयतया सैन्यस्यार्धेनार्धेन कुपितं स्थितं यतो भूपालाभ्यामपि तथा तदनुरूपादृष्टशालितया स्थितमित्यर्थः ॥ २० ॥ इदानीं पद्मसिन्धुराजयोः सहायभूतान् जनान् प्राच्यादिदिग्भेदतत्तद्देशभेदैः क्रमेण

पूर्वस्यां कोसलाः काशिमागधा मिथिलोत्कलाः ।
मेखलाः कर्करा मुद्रास्तथा संग्रामशौण्डकाः ॥ २२
मुख्या हिमा रुद्रमुख्यास्ताम्रलिप्तास्तथैव च ।
प्राग्ज्योतिषा वाजिमुखा अम्बष्ठाः पुरुषादकाः ॥ २३
वर्णकोष्ठाः सविश्वोत्रा आममीनाशनास्तथा ।
व्याघ्रवक्त्राः किराताश्च सौवीरा एकपादकाः ॥ २४
माल्यवान्नाम शैलोऽत्र शिविराञ्जन एव च ।
वृषलध्वजपद्माद्यास्तथोदयकरो गिरिः ॥ २५
अथ प्राग्दक्षिणायां तु इमे विन्ध्यादिवासिनः ।
चेद्यो वत्सदाशार्णा अङ्गवङ्गोपवङ्गकाः ॥ २६
कलिङ्गपुण्ड्रजठरा विदर्भा मेखलास्तथा ।
शबराननवर्णाश्च कर्णात्रिपुरपूरकाः ॥ २७
कण्टकस्थलनामानः पृथग्द्वीपककोमलाः ।
कर्णान्ध्राश्चोलिकाश्चैव तथा चार्मण्वता अपि ॥ २८
काकका हेमकुड्याश्च तथा श्मश्रुधरा अपि ।
बलिग्रीवमहाग्रीवाः किष्किन्धा नालिकेरिणः ॥ २९
अथ लीलापतेरस्य दक्षिणस्यामिमे नृपाः ।
विन्ध्योऽथ कुसुमापीडो महेन्द्रो दर्दुरस्तथा ॥ ३०
मलयः सूर्यवांश्चैव गणा राज्यसमृद्धकाः ।
अवन्तीरिति विख्यातास्तथा शाम्बवतीति च ॥ ३१
दशपूरकथाचक्रारेषिकातुरकच्छपाः ।
वनवासोपगिरयस्ते भद्रगिरयस्तथा ॥ ३२
नागरा दण्डकाश्चैव गणराष्ट्रनृराष्ट्रकाः ।
साह्या शैवार्ष्यमूकाश्च कर्कोटा वनबिम्बलाः ॥ ३३
पम्पानिवासिनश्चैव कैरकाः कर्कवीरकाः ।
खेरिका यासिकाश्चैव धर्मपत्तनपञ्जिकाः ॥ ३४
कारिकास्तृष्णखल्लूला यादास्ते ताम्रपर्णकाः ।
गोनर्दाः कनकाश्चैव दीनपत्तनमामकाः ॥ ३५
ताम्रीका[१] दम्भराकीर्णाः सहकारेणकास्तथा ।
वैतुण्डकास्तुम्ववनालाजिनद्वीपकर्णिकाः ॥ ३६
कर्णिकाभाश्च शिवयः कौङ्कणाश्चित्रकूटकाः ।
कर्णाट[२]मण्टवटका महाकटकिकास्तथा ॥ ३७

आन्ध्राश्च कोलगिरयश्चावन्तिकविचेरिकाः ।
चण्डायत्ता देवनकाः क्रौञ्चा वाहास्तथैव च ॥ ३८
शिलाक्षारोदमोनन्दमर्दना मलयाभिधाः ।
ते चित्रकूटशिखरा लङ्कारक्षोगणाः स्मृताः ॥ ३९
अथ प्रत्यग्दक्षिणस्यां महाराज्यसुराष्ट्रकाः ।
सिन्धुसौवीरशूद्राख्या आभीरा द्रविडास्तथा ॥ ४०
कीकटाः सिद्धखण्डाख्यास्तथा कालिरुहा अपि ।
अत्र हेमगिरिः शैलस्तथा रैवतको गिरिः ॥ ४१
जयकच्छो मयवरो यवनास्तत्र जन्तवः ।
बाह्लीका मार्गणावन्ता धूम्रास्तुम्बकनामकाः ॥ ४२
तथा लाजगणाश्चैव तथात्र गिरिवासिनः ।
ततोऽब्धितोकनियुता एते लीलापतेर्जनाः ॥ ४३
अथ तत्प्रतिपक्षस्थानिमाञ्जनपदाञ्शृणु ।
पश्चिमायां दिशि प्रौढा इमे तावन्महाद्रयः ॥ ४४
मणिमान्नाम शैलेन्द्रः कुरार्पणगिरिस्तथा ।
वनोऽर्कहो मेघभवश्चक्रवानस्तपर्वतः ॥ ४५
जनाः पञ्चजना नाम काशब्रह्मचयान्तकाः ।
तथैव भारक्षतथाः पारकाः शान्तिकास्तथा ॥ ४६
शैव्यारमर[३]कायाच्छा गुहुत्वा नियमास्तथा ।
हैहयाः सुह्मगायाश्च ताजिका हूणकास्तथा ॥ ४७
पार्श्वेकतकयोः कर्का गिरिपर्णावमास्तथा ।
संत्यक्तधर्ममर्यादास्ते वर्णा म्लेच्छजातयः ॥ ४८
ततोऽजनपदा भूमिर्योजनानां शतद्वयम् ।
ततो महेन्द्रशिखरी मुक्तामणिमयावनिः ॥ ४९
युते महीधरशतैरथाश्वो नाम पर्वतः ।
ततो महार्णवो भीमः पारियात्रगिरिस्तटे ॥ ५०
पश्चिमोत्तरदिग्भागे देशो गिरिमति स्थितः ।
तथा वेणुपतिश्चैव ततो नरपतिर्मही ॥ ५१
तथा फल्गुणकाश्चैव माण्डव्यानेकनेत्रकाः ।
पुरुकुन्दाश्च पाराश्च भानुमण्डलभावनाः ॥ ५२
वन्मिला नलिना दीर्घा दीर्घकेशाङ्गवाहवः ।
रङ्गाश्च स्तनिकाश्चान्या गुरुहाश्च[४]लुहास्तथा ॥ ५३

---

वर्णयितुं वसिष्ठः प्रतिजानीते—मध्यदेशेत्यादिना । इमान्वक्ष्यमाणान् ॥ २१ ॥ देशनामानि स्पष्टानि । मार्कण्डेयादिपुराणोक्तदेशनाम्नामत्रत्यानां च क्वचिद्यद्यपि वैलक्षण्यं व्यत्यासश्च दृश्यते तथापि ब्रह्माण्डान्तरत्वान्न दोषः । प्राच्यां देशाः २४ पर्वताः ७ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ प्राची च दक्षिणा चानयोरन्तरालं दिक्प्राग्दक्षिणा । 'दिङ्नामान्यन्तराले' इति बहुव्रीहिः । अत्रापि देशाः २७ ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥ दक्षिणस्यां पर्वताः ६ देशाः ६३ ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ प्रत्यग्दक्षिणस्यां पर्वताः ४ देशाः १९ ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ पश्चिमायां पर्वताः ९ देशाः १८ ॥ ४४ ॥ ४५ ॥ काशानां ब्राह्मणचयानां चान्तका इति पञ्चजनानां विशेषणम् ॥ ४६ ॥ ४७ ॥ दक्षिणोत्तरकतकदेशयोः पार्श्वे कर्काः ॥ ४८ ॥ अजनपदेति च्छेदः ॥ ४९ ॥ तटे अर्थान्महार्णवतटे ॥ ५० ॥ पश्चिमोत्तरस्यां देशाः १९ वेणुपतिर्नरपतिरिति देशः स्थितः । मही नित्योत्सववान् ॥५१॥५२॥ यतो

---

१ ताम्रीकदंभराकीर्णा इति पाठः. २ कर्णाटमण्टवटका इति पाठः. ३ करछायामद्भुला नियमास्तथा. ४ चलहास्तथा इति पाठः.

ततः स्त्रीराष्ट्रमतुलं गोवृषापत्यभोजनम् ।
अथोत्तरस्यां हिमवान्क्रौञ्चोऽथ मधुमान्गिरिः ॥ ५४
कैलासो वसुमान्मेरुस्तत्पादेषु जना उमे ।
मद्रावारेवयौधेया मालवाः शूरसेनिकाः ॥ ५५
राजन्याश्च तथा ज्ञेया अर्जुनातनयस्तथा ।
त्रिगर्त एकपात्क्षुद्रामबलास्वस्तवासिनः ॥ ५६
अबलाः प्रखलाः शाकाः क्षेमधूर्तय एव च ।
दशधानागावसन्यदण्डाहन्यसनास्तथा ॥ ५७
धानदाः सरकाश्चैव वाटधानास्तथैव च ।
अन्तरद्वीपगान्धारास्तथावन्तिसुरास्तथा ॥ ५८
अथ तक्षशिला नाम ततो वीलवगोधनी ।
पुष्करावर्तदेशस्य यशोवतिमही ततः ॥ ५९
ततो नाभिमतिर्भूमिस्तिक्षा कालवरास्तथा ।
काहकं नगरं चैव सुरभूतिपुरं तथा ॥ ६०
तथैव रतिकादर्शा अन्तरादर्श एव च ।
ततः पिङ्गलपाण्डव्यं यामुने यातुधानकाः ॥ ६१
मानवा नांगना हेमतालाः स्वस्वमुखास्तथा ।
हिमवान्वसुमान्क्रौञ्चकैलासावित्यगास्तथा ॥ ६२
ततोऽजनपदा भूमिरशीतिशतयोजना ।
अथ प्रागुत्तरस्यां तु क्रमाज्जनपदाञ्छृणु ॥ ६३
कालुता ब्रह्मपुत्राश्च कुणिदाः खदिनास्तथा ।
मालवा रन्ध्रराज्याश्च वना राष्ट्रास्तथैव च ॥ ६४
केडवस्ताः सिंहपुत्रास्तथा वामनतां गताः ।
सावाकच्चापलवहाः कासिरा दरदास्तथा ॥ ६५
अभिसासदजार्वाकाः पलोलकुविकौतुकाः ।
किरातायामुपाताश्च दीनाः स्वर्णमही ततः ॥ ६६
देवस्थलोपवनभूस्तदनूदितश्री-
विंश्वावसोस्तदनु मन्दिरमुत्तमं च ।
कैलासभूस्तदनु मञ्जुवनश्च शैलो
विद्याधरामरविमानसमानभूमिः ॥ ६७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० जनपदवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

---

## सप्तत्रिंशः सर्गः ३७

श्रीवसिष्ठ उवाच ।
रणे रभसनिर्लूननरवारणदारुणे ।
अहंपूर्वमहंपूर्वमिति वृन्दानुपातिनि ॥ १
एते चान्ये च बहवस्तत्र भस्मत्वमागताः ।
प्रविशन्तः प्रयत्नेन शलभा इव पावके ॥ २
अत्रान्ये मध्यदेशीया जना नोदाहृता मया ।
तानिमाञ्छृणु वक्ष्यामि पक्षाँल्लीलामहीभृतः ॥ ३
तद्देहिकाः शूरसेना गुडा अश्वघनायकाः ।
उत्तमज्योतिभद्राणि मदमध्यमिकादयः ॥ ४
साल्वूकाकोद्यमालास्या[1] दौर्ङ्गेयाः पिप्पलायनाः ।
माण्डव्याः पाण्डुनगराः सौग्रीवाद्या गुरुग्रहाः ॥ ५
पारियात्राः कुराष्ट्राश्च यामुनोदुम्बरा अपि ।
राज्याह्वा उज्जिहानाश्च कालकोटिकमाथुराः ॥ ६
पाञ्चाला धर्मारण्याश्च तथैवोत्तरदक्षिणाः ।
पाञ्चालकाः कुरुक्षेत्रास्तथा सारस्वता जनाः ॥ ७
अवन्तीस्यन्दनश्रेणीकुन्तिपाञ्चनदेरितैः ।
स्पन्दमाना विद्रवन्ती निपपात महाभृगौ ॥ ८
कोशब्रह्मावसानाश्च चिंछिन्ना वत्रवतीजनैः ।
भूमौ निपतिताः सन्तो मिलिता मत्तवारणैः ॥ ९
शूरा दाशपुराः शस्त्रनिकृत्तोदरकन्धराः ।
वाणक्षितिभिराक्रम्य[2] योजिता योजने ह्रदे ॥ १०

दीर्घकेशाङ्गबाहवः अतो दीर्घाख्या इत्यर्थः ॥ ५३ ॥ उत्तरस्यां पर्वताः ६ पादेषु प्रत्यन्तपर्वतेषु देशाः ४४ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ प्रागुत्तरस्यां देशाः २४ पर्वतः १ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जनपदवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

कीर्त्यन्ते मध्यदेशीया जना जनपदाख्यया ।
तथा जानपदानां च द्वन्द्वयुद्धजयाजयाः ॥ १ ॥

वृन्दशो वृन्देषु वा अनुपातिनि अनुसृत्य पतनशीले ॥१॥२॥ मध्यदेशजनपदाः २९ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ एते चान्ये च रणे भस्मत्वमागता इति यदुक्तं तत्प्रकारमेव जनपदनामभिर्विभज्य सर्गसमाप्तेराचष्टे-**अवन्ती**त्यादिना । अवन्ती उज्जयिनी मालवेषु प्रसिद्धा, तत्रत्यानां स्यन्दनश्रेणी रथपङ्क्तिः कुन्तिदेशस्थानां पाञ्चनदानां च ईरितैः प्रेरणैः । युद्धरभसैरिति यावत् । ईरितैः क्षिप्तैः शस्त्रैरिति वा । स्पन्दमाना भयात्कम्पमाना द्रवन्ती पलायमाना महति भृगौ गिरिप्रपाते निपपात । एवमुत्तरत्रापि प्रथमान्तदेशवाचिवाच्यानां तृतीयान्तदेशवाचिवाच्यैः पराजयो बोध्यः ॥८॥ मिलिताः संगताः । विमर्दिता इति यावत् ॥ ९ ॥ बाणक्षितिभिर्बाणभूमिष्ठैः । तद्देश्यैरिति यावत् । आक्रम्य पराजित्यानुधाव्य योजने पलायिता दैवात्प्राप्ते ह्रदे योजिता निमज्जिताः

१ साल्वसाकेद्य इति पाठः.
२ [illegible] इति पाठः.

दीर्णोदरविनिर्यातस्वान्त्रतन्त्रीनियन्त्रिताः ।
शान्तिकाः शान्तसंचाराः पिशाचैश्चर्विता निशि ॥११
उद्द्रवैर्भद्रगिरिभिः संग्रामाध्वरदीक्षितैः ।
क्षोणिगर्तेषु निक्षिप्ता मरगाः कमठा इव ॥ १२
प्रद्रुता विद्रवद्रक्ता विद्राविनमहारयः ।
दण्डिकास्थानिलोद्भूता हैहयैर्हरिणा इव ॥ १३
दन्तिदन्तविनिर्भिन्ना दरदा दलितारयः ।
नीता रक्तमहानद्या द्रुमाणां पल्लवा इव ॥ १४
नाराचैश्चर्विताश्चीना जीर्णा जर्जरजीविताः ।
जहुर्जलनिधौ देहान्भारभूतानिव स्थितान् ॥ १५
कर्णाटसुभटोड्डीनकुन्ताकलितकन्धराः ।
भग्ना नलदशूराश्च तारकानिकरा इव ॥ १६
करीन्द्रमकरव्यूहरंहःसंहतहेतयः ।
केशाकेशिकृतारम्भा विनेदुर्दाशकाः शकाः ॥ १७
दशार्णाः पाशनिर्मुक्तशृङ्खला जालभीरवः ।
निलीना रक्तजम्वाले वैतसास्तिमयो यथा ॥ १८
गुर्जरानीकनाशेन गुर्जरीकेशलुञ्चनम् ।
विहितं तङ्गणोत्तुङ्गनासिशङ्कुशतै रणे ॥ १९
सिषिचुः शस्त्रकर्णौघाद्बिन्दुभ्यो निगडा गुहान् ।
शरधारावनानीव वीरहेतिप्रभाम्बुदाः ॥ २०
भुशुण्डीमण्डलोद्द्योतश्यामार्कोत्पातभीरुषु ।
आभीरेष्वरयः पेतुर्गोगणा हरितेष्विव ॥ २१
कान्तकाञ्चनकान्तासीत्ताम्रसंग्रामवाहिनी ।
भुक्ता गौडभटेनाङ्ग नखकेशनिकर्षणैः ॥ २२
रणे नगनयासंख्यकवचक्रनिकृन्तनैः ।
तङ्गणाः कणशः कीर्णाः कङ्कगृध्रेषुमासकैः ॥ २३
लगुडालोडनोड्डीनं गौडं गुड्डुगुडारवम् ।
श्रुत्वा गान्धारगावोऽग्रे दुद्रुवुर्द्रविडा इव ॥ २४
आकाशगार्णवप्रख्यो वहच्छकदम्बकः ।
अकरोत्पारसीकानां घनैनैशतमोभ्रमम् ॥ २५
मन्दराहननोड्डीनस्वच्छक्षीरार्णवोदरे ।
वनानीवायुधान्यासञ्छत्त्रुप्रालेयसानुनि ॥ २६
यदम्बुदैरिवोड्डीनं शस्त्रवृन्दैर्नभोङ्गणे ।
तद्दृष्टं वीचिवलनैर्लोलैः प्लुतमिवार्णवे ॥ २७
शतचन्द्रं सितच्छत्रैः शरैः शलभनिर्भरम् ।
शक्तिभिः किल नीरन्ध्रं दृष्टमाकाशकाननम् ॥ २८
वीरासवसमाक्रन्दकारिणः केकयैः कृताः ।
कङ्कैः कङ्ककुलाक्रान्तव्योमोद्धूलितमस्तकाः ॥ २९
किरातसैन्यकन्यानां कामं कलकलारवैः ।
अङ्गैरनङ्गतां नीत्वा भैरवैरिव गर्जितम् ॥ ३०
काशैस्तद्देहकाः क्रांता अदृश्यैर्मायया खगैः ।
निर्धूतपक्षैः क्षुभितैः पवनैरिव पांसवः ॥ ३१
उन्मत्ताः सुविनिर्धूतास्त्यक्तहेतिरणाम्बराः ।
नार्मदा नर्मनिर्मात्रृ ननृतुर्जहसुर्जगुः ॥ ३२

॥१०॥ नियन्त्रिता निरुद्धा अतएव शान्तसंचाराः ॥ ११ ॥ उत् उत्कृष्टो द्रवो वेगो रवो ध्वनिर्वा येषां तैः । क्षोणिगर्तेषु पल्वलादिषु ॥ १२॥ दण्डिका नगरी तत्स्थाः । अनिलोद्भूता इति हरिणविशेषणम् । संधिरार्षः । हैहयैर्विद्राविता इत्यर्थाद्गम्यते । हरिणा वातप्रम्यः ॥१३॥१४॥१५॥ उड्डीनकुन्तैराकलिता आच्छिन्नाः कंधराः कण्ठा येषाम् । भग्ना विशीर्णाः ॥ १६ ॥ दाशकाः शकाश्च युध्यमाना दैवात्करीन्द्रैर्मकरव्यूहेनेव रंहसा संहतहेतयो विनाशितायुधाः केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि तदर्थं कृतारम्भाः सन्तो विनेदुः ॥ १७ ॥ पाशदेशीयैर्निर्मुक्तेभ्यः शृङ्खलाजालेभ्यो भीरवः । जम्बाले पङ्के । वैतसा वेतसमूलाश्रयास्तिमयो मत्स्यभेदाः ॥ १८ ॥ तङ्गणानां उत् ऊर्ध्वं तुङ्गनमुच्छलनं येषां तथाविधैरसिभिः शङ्कुशतैश्च विहितं कारितम् ॥ १९ ॥ शस्त्रकर्णानां कर्णवदूर्ध्वीकृतशस्त्रत्वात्तथा प्रसिद्धानामोघात्संघान्निर्गता वीरहेतिप्रभाविद्युद्भिरम्बुदायमाना निगडा जानपदा गुहान् जानपदान्प्रति शरधाराः सिषिचुरक्षरन् । यथा वीरहेतिसदृशप्रभा अम्बुदाः स्वबिन्दुभ्यो हेतुभ्यो वनानि सिंचन्ति तद्वत् ॥ २० ॥ भुशुण्डीमण्डलानामुद्द्योतैः श्यामो नीलीकृतो योऽर्कः सूर्यः भुशुण्डीमण्डललक्षणो वा उद्द्योतेन श्यामोऽर्कस्तल्लक्षणेनोत्पातेन । उक्तंच—'यदि चन्द्र इवादित्यः सच्छिद्रो रश्मिमण्डलः । कृष्णरक्तान्तपर्यन्तस्तज्जनक्षयलक्षणम् ॥' इति ॥२१॥ ताम्रा यवनभेदास्तेषां संग्रामोद्युक्ता वाहिनी सैव नायिका गौडभटेन नायकेन भुक्ता उपभुक्ता । अङ्गेति रामसंबोधनम् ॥ २२ ॥ नगान्वृक्षशैलानपि नयन्त्यपाकुर्वन्ति तथाविधैरनन्तैः कवद्भिर्घ्नद्भिश्चक्रैर्निकृन्तनैश्छेदनैः । भासकैर्जानपदैः ॥ २३ ॥ लगुडानामालोडनेन भ्रमणेनोपलक्षितमुड्डीनमुद्गतं गौडभटसंबन्धि गुड्डुगुडारवमव्यक्तभाषणध्वनिम् । गान्धारा गाव इवेत्युपमितसमासः । टजभावश्छान्दसः ॥ २४॥ वहतां नदीवत्पर्वतेभ्योऽवतरतां शकानां कदम्बकः स्तोमः । प्रायः शका नीलाम्बरा इति गम्यते । पारसीकास्तु धवलाम्बरा इति ॥ २५ ॥ अतएवाह—मन्दरेति । तत्र युध्यतामायुधानि क्षीरार्णवोदरे मन्दरस्य वनानीव प्रेक्षकाणां तु प्रालेयाचलसानुनि तद्वनानीवेति बोध्यम् ॥ २६ ॥ उड्डीनमिति भावे क्तः । ल्वादिभ्य इति नत्वम् । वलनैः संवलनैर्वीच्यन्तरसंवलितवीचिभिरिति यावत् । भूमिष्ठदृष्ट्याम्बुदोड्डीनमिव दृष्टमपि नभश्चरैर्वीचिप्लवनमिव दृष्टमिति भावः ॥ २७ ॥ शलभैः पतङ्गैर्निर्भरं भृशं व्याप्तम् । नीरन्ध्रं निरवकाशम् ॥ २८ ॥ कृताः शत्रव इति देहलीदीपन्यायेनोभयत्र शेषः ॥ २९ ॥ किरातसैन्यान्येव कन्यास्तासाम् । अङ्गैर्जानपदैः । अनङ्गतां विदेहतां मन्मथोद्रेकं च ॥ ३० ॥ काशैः सामुद्रैर्नरभेदैः । मायया खगैः पक्षिभूतैः ॥३१॥ उन्मत्ता युद्धोन्मत्ताः । नर्म लीला तन्निर्मातृ इति क्रिया-

१ गर्जितैः इति पाठः।

प्रक्वणत्किंकिणीजालं शक्तिवर्षमुपागतम् ।
साल्वबाणानिलोद्भूतमगमत्पृषदाकृति ॥ ३३
शैब्यास्तु खण्डिताः कौन्तैर्भ्रमत्कुन्तैर्विघट्टिताः ।
शवीभूता दिवं नीता दृष्टा विद्याधरा इव ॥ ३४
धराधरणधर्मिण्या धीरया हीनसेनया ।
लुण्ठिताः पाण्डुनगराश्चलनोल्लासमात्रतः ॥ ३५
तं देहकाः पाश्चनदैर्दलिता मत्तकाशिभिः ।
कुन्तदन्तद्रुमोद्दामा नगा इव मतङ्गजैः ॥ ३६
ब्रह्मावत्सनका नीपैश्चकैः कृत्ता गता महीम् ।
सहयाः क्रकचोत्कृत्ता वृक्षाः कुसुमिता इव ॥ ३७
श्वेतकाकाननं लूनं कुठारैर्जठरेरितैः ।
एतद्ददाह पार्श्वस्थो भद्रेशः शरवह्निना ॥ ३८
काष्ठयोधे निरालानं मग्ना जीर्णा मतङ्गजाः ।
लयमाजग्मुरायुद्धसिद्धेह्नाविन्धनं यथा ॥ ३९
मित्रगर्तास्त्रिगर्तात्ता भ्रमित्वोर्ध्वं तृणोपमम् ।
विविशुर्व्यस्तमूर्धानः पातालान्तं पलायितुम् ॥ ४०
मन्दानिलचलाम्भोधिभासुरे मागधे बले ।
निर्मग्ना वनिला मन्दाः पङ्के जीर्णगजा इव ॥ ४१
चेदयश्चेतनां जहुस्तङ्गणानां रणाङ्गणे ।
पुष्पाणां पथि शीर्णानां सौकुमार्यमिवातपाः ॥ ४२
कौसलाः पौरवारावमसहन्तोऽन्तका इव ।
तैरुन्मुक्तगदाप्रासशरशक्त्यतिवृष्टयः ॥ ४३
बभूवुर्भल्लकृत्ताङ्गाऽविस्मया विद्रुमद्रुमाः ।
इवाद्रौ विद्रवन्त्यार्द्रसान्द्रासृक्सूर्यमूर्तयः ॥ ४४
नाराचौघमहाहेतिमारुताधूतमूर्तयः ।
बभ्रमुर्भ्रमरानीकभासुरा जलदा इव ॥ ४५
शरधाराधरा मेघाः शरोर्णापूर्णमेषकाः ।
शरपत्रावृता वृक्षा भ्रेमुस्तद्गजनागजाः ॥ ४६
वनराज्यजराजीर्णाः कन्दाकस्थल[1]जन्तवः ।
अत्रुटन्परमाकृष्टाः पेलवा इव तन्तवः ॥ ४७
रथेषु ध्वस्तचक्रेषु निखातेऽमुत्र मूर्धसु ।
निपेतुर्जनसंघाता मेघा इव वनाद्रिषु ॥ ४८
शालतालवनं प्राप्य जनतावलनं वनम् ।
भुजावकर्तनं चासीदुत्तालं स्थाणुकाननम् ॥ ४९
ननर्दुर्नन्दनोद्यानसुन्दर्यो मत्तयौवनाः ।
वनोपवनदेशेषु मेरोर्वीरवराश्रिताः ॥ ५०
तावत्तारारवं रेजे सैन्यकाननमुत्तमम् ।
यावन्न परपक्षेण प्राप्तं कल्पानलार्चिषा ॥ ५१
छिन्नाः पिशाचसंयुक्ता भूतापहृतहेतयः ।
पातयित्वा ययुः कर्णान्दशार्णास्तर्णका इव ॥ ५२
जहुर्भग्नेश्वराः कान्तिं तां जिगीषवनौजसा ।
कांसयः[2] कमलानीव शुष्कस्रोतस्विनौजसा ॥ ५३
तुषाका मेखलैः[3] कीर्णाः शरशक्त्यसिमुद्गरैः ।
विद्रुता नरकैः क्षिप्ताः कटकच्छलना अपि ॥ ५४

विशेषणम् ॥ ३२ ॥ पृषदाकृतिं बिन्द्वाकारम् । विशीर्णतामिति यावत् ॥ ३३ ॥ कौन्तैः कुन्तिदेशजैः ॥ ३४ ॥ धराया युद्धभूमेर्धरणमाक्रमणं तद्धर्मिण्या अहीना जानपदास्तेषां सेनया ॥ ३५ ॥ कुन्तैर्गजदन्तैर्द्रुमैश्च प्रहरणैरुद्दामा युद्धदक्षाः । नगा वृक्षाः ॥ ३६ ॥ ब्रह्मावत्सनका जानपदा नीपैर्जानपदैः ॥ ३७ ॥ श्वेतकाकानां जानपदानामाननं मुखं शिर इति यावत् । जठरैर्जानपदैः । एतज्जठरबलम् ॥ ३८ ॥ काष्ठयोधलक्षणपङ्केषु निरालानं विनैव बन्धनस्तम्भं मग्नाः सन्तो जीर्णा मतङ्गदेशजा एव श्लेषाद्गजाः ॥ ३९ ॥ त्रिगर्तैरात्ता गृहीताः ॥ ४० ॥ वनिला जानपदाः ॥ ४१ ॥ चेतनां विवेकबुद्धिं जीवं वा ॥ ४२ ॥ कौसलाः कोसलदेशजा अन्तका इव निघ्नन्त इति शेषः । तैः पौरवैरुन्मुक्ता गदादिवृष्टयो येषु तथाविधा बभूवुरित्यपकृष्यते ॥ ॥४३॥ तेषु ये भल्लकृत्ताङ्गा अप्यविस्मयाः परपराक्रमे आश्चर्यबुद्धिरहिताः अतएवार्द्रसान्द्रासृग्भिर्बालसूर्यसदृशमूर्तयः सन्तः अद्रौ पर्वते विद्रुमद्रुमाः प्रवालवृक्षा एव विद्रवन्ति परिधावन्तीव बभूवुः ॥ ४४ ॥ ४५ ॥ तेषां कोसलानां गर्जनोपलक्षिता गजाः शराणां धारोर्णा यत्र । सदृशकाण्डगरुच्छल्यभागाकीर्णत्वात्क्रमान्मेघमेषवृक्षात्मना उत्प्रेक्ष्यन्ते ॥ ४६ ॥ कन्दाकस्थलोद्भवा जन्तवो मनुष्यहस्त्यादयो वनराज्या जानपदास्तल्लक्षणया जरया जीर्णा निर्बलीकृताः सन्तः परमाकृष्टाः पेलवास्तन्तव इवात्रुटन् छिन्नाः ॥ ४७ ॥ निखातगर्तैं निरोधाद्रथेषु ध्वस्तचक्रेषु सत्सु अमुत्र अमीषु रथमूर्धसु प्रहरिष्यन्तः शत्रुजनसंघाता निपेतुः ॥ ४८ ॥ शालवनं तालवनं च युद्धे परस्परं जनतयोर्जनसमूहयोर्वलनं मेलनं अतएव वनं महावनत्वेन संपन्नं युद्धस्थानं प्राप्य तत्र भुजावकर्तनं चकाराच्छिरोवकर्तनं च प्राप्य यथाक्रममुत्तालमूर्ध्वीभूततालवृक्षप्रायं स्थाणुकाननं चासीत् । शालानां परितः शाखाच्छेदने तालप्रायता, तालानां तु शिरःकर्तने स्थाणुतैव परिशिष्यत इति युक्तमेव संपन्नमिति भावः ॥ ४९ ॥ ५० ॥ तारः आरवो यस्मिन् । सैन्यमेव काननम् ॥ ५१ ॥ पिशाचैः पिशाचप्रधानैः कामरूपादिजानपदैः सह युद्धाय संयुक्ता दशार्णा भूतैरपहृतायुधाः सन्तस्तर्णका इव पलायमानाः पथि कर्णान्पातयित्वा ययुः । तर्णकपक्षे कर्णपदेन कर्णवदुद्भूतद्वित्रिपत्राणि गुल्मान्युच्यन्ते ॥ ५२ ॥ भग्नेश्वरा हतस्वामिकाः । तां जिगीषवनानां जानपदानाम् । शुष्काः स्रोतस्विनः सरःपूरकनिर्झरा येन तथाविधेन ग्रीष्मौजसा ॥ ५३ ॥ नरकैर्जानपदैः । क्षिप्ता निरस्ताः कटकच्छलना अपि विद्रुताः पलायिताः

१ कण्टकस्थल इति पाठः. २ काशयः इति पाठः.

३ मेखलैः इति पाठः.

कौन्तक्षेत्राः प्रस्थवासैः स्थित्वा योधिभिरावृताः ।
गुणा इव खलाक्रान्ता गता व्यक्तमशक्तताम् ॥ ५५
द्विपयो बाहुधानानां क्षणेनादाय मस्तकम् ।
भल्लैः पलाय्याशु गता विलूनकमला इव ॥ ५६
मिथः सारस्वता नीत्वा आदिनान्तं कृताजयः ।
पण्डिता इव वादेषु नोद्विग्ना न पराजिताः ॥ ५७
खर्वगाः खदिताः क्षुद्रा यातुधानैः परावृताः ।
तेजः परममाजग्मुः शान्तानय इवेन्धनैः ॥ ५८
कियदाख्यायत पत-
जिह्वानिचयैः किलालमाकुलितः ।
वासुकिरपि वर्णयितुं
न समर्थो रणवरं राम ॥ ५९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे मो० लीलो० जनपदवर्णनं नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

## अष्टत्रिंशः सर्गः ३८

श्रीवसिष्ठ उवाच ।
एवमत्याकुले युद्धे सास्फोटभयसंकुले ।
आदित्ये तमसा वृद्धे चटत्कठिनकङ्कटे ॥ १
वहत्यस्वूत्पतन्तीषु पतन्तीष्वश्मवृष्टिषु ।
नदीषु क्षेपणाच्छासु वरकेष्वब्जपङ्क्तिषु ॥ २
मिथः फलाग्रकाटोत्थवह्निसीकरिणीषु च ।
आयान्तीषु प्रयान्तीषु दूरं शरनदीषु च ॥ ३
वहल्लूनशिरःपद्मचक्रावर्तैस्तरङ्गितैः ।
खार्णवे पूरिते हेतिवृन्दमन्दाकिनीगणैः ॥ ४
समीरणरणत्काणशस्त्रपूर्णघनैर्घनैः ।
संदेहान्तेषु सिद्धेषु कपिकच्छव्यथाप्रदैः ॥ ५
अग्रभागदशाशेषप्रतापमधुराकृति ।
शस्त्रघातौजसा वीर इवाहस्तनुतां ययौ ॥ ६
श्रान्ताश्वेभाः प्रभग्नाश्च हेतिसंघातदीप्तयः ।
दिवसेन समं सेना ययुर्मन्दप्रतापताम् ॥ ७
अथसेनाधिनाथाभ्यां विचार्य सहमन्त्रिभिः ।
दूताः परस्परं वृत्ता युद्धं संह्रियतामिति ॥ ८
तत्र श्रमवशान्मन्दयन्त्रशस्त्रपराक्रमैः ।
रणसंहरणं काले सर्वैरेवोररीकृतम् ॥ ९
ततो महारथोत्तुङ्गकेतुप्रान्तकृतास्पदम् ।
बलयोरारुहोहैक एको योधो ध्रुवो यथा ॥ १०
सोंऽशुकं भ्रामयामास सर्वदिङ्मण्डले सितम् ।
श्यामेव दीर्घशुद्धांशुं युद्धं संह्रियतामिति ॥ ११
ततो दुन्दुभयो नेदुः प्रतिध्वनितदिङ्मुखाः ।
महाप्रलयसंशान्तौ पुष्करावर्तका इव ॥ १२
शरादिहेतिसरितो विस्तीर्णे गगने स्थिते ।

॥ ५४ ॥ स्वस्थान एव स्थित्वा योधिभिर्युद्धशीलैर्धीरैरित्यर्थः । आवृताः परिक्षिप्ताः ॥ ५५ ॥ विलूनानि कमलानि यैस्ते विलूनकमलाः पुरुषा इव ॥ ५६ ॥ सारस्वताः सरस्वतीतीरोद्भवा मिथः कृताजयः कृतयुद्धाः सन्त आदिनान्तं दिनावसानावधि नीत्वा नोद्विग्नाः ॥ ५७ ॥ खदिता विद्राविता अपि यातुधानैर्लङ्कास्थैः सहायैः परावृताः परावर्तिताः ॥ ५८ ॥ प्रकृतं रणवर्णनमुपसंहरति—**कियदिति** । जिह्वानिचयैर्द्विसहस्रजिह्वाभिरलमत्यर्थं वर्णयितुमाकुलितो व्यग्रो वासुकिः शेषोऽपि ॥५९॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जनपदवर्णनं नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

दिनान्ते सेनयोर्युद्धात्परावृत्तौ रणक्षितिः ।
पिशाचभीमबीभत्सा विस्तरेणात्र वर्ण्यते ॥ १ ॥

जितकाशिभिः सास्फोटैः पराजितानां भयेन च संकुले । चटति रुधिरोद्गममात्रृणोति तथाविधे कठिनकङ्कटे अम्बु तद्वधिरक्लेदजलं वहति प्रक्षरति सतीति परेणान्वयः ॥ १ ॥ क्षेपणपाषाणकरकैरच्छासु शुभ्रास्वश्मवृष्टिष्वेकत्रोत्पतन्तीष्वन्यत्र पतन्तीषु । नदीष्वब्जपङ्क्तिषु वरकेषु संवरकेषु संकुचन्तीषु सतीषु । लिङ्गव्यत्ययश्छान्दसः ॥ २ ॥ शरफलाग्रयोर्मिथः काटेन संघट्टनेनोत्थैर्वह्निकणैः सीकरिणीषु शरनदीषु ॥ ३ ॥ वहन्ति प्रवहन्ति लूनशिरांस्येव पद्मानि येषु तथाविधाश्चक्राण्येवावर्ता येषु तथाविधैर्हेतिवृन्दमन्दाकिनीगणैः खार्णवे आकाशलक्षणे समुद्रे पूरिते सति ॥ ४ ॥ समीरणवद्रणत्काणैः शस्त्रैः पूर्णत्वादेव घनैर्निबिडैर्घनैर्मेघैरतएव वर्षर्त्वारम्भशङ्कया कपीनां कच्छप्रदेशे शोणतोपचयात्काममव्यथाप्रदैः । मेघान्तरितेषु सिद्धेषु संदिह्यते इति संदेहः अन्तः प्रलयो येस्तथाविधेषु सत्सु ॥ ५ ॥ शस्त्राघातप्रयुक्तेनौजसा शोणकान्त्या वीरः शूर इव ॥ ६ ॥ ७ ॥ वृत्ताः प्रवर्तिताः ॥ ८ ॥ मन्दैर्मन्दीकृतैर्यन्त्रशस्त्रपराक्रमैः । बहुव्रीहिर्वा । संहरणमुपसंहारः ॥ ९ ॥ महतो रथस्योत्तुङ्गे केतुप्रान्ते कृतास्पदं कृताधारं दीर्घवंशस्तम्भद्वयमिति शेषः । नन्वेक एक इति द्विर्वचनं चेद्वीप्साविवक्षायाम् । 'एकं बहुव्रीहिवदि'ति बहुव्रीहिवद्भावे एकैक इति स्यात् तदविवक्षायां तु सरूपैकशेषः स्यादिति चेन्नात्र वीप्सा । व्याप्यानेकविवक्षाभावात् । नाप्येकशेषः । सह विवक्षाभावात् । संख्यावाच्येकशब्दस्य द्विवचनानर्हत्वादेकवचनेन सेनयोः पुरुषभेदप्रत्यायनायोगाच्च । तस्मात्परस्परानपेक्षयोरेव पुरुषयोस्तन्त्रेणारोहणक्रियासंबन्धविवक्षणाच्च कश्चिद्दोष इति ॥ १० ॥ श्यामा रात्रिरंशुभिर्दीर्घशुद्धांशुं चन्द्रमिव ॥ ११ ॥ १२ ॥ सुखमप्रतिबन्धमागम्य

प्रवृत्ताः सुखमागन्तुं सरसः सरितो यथा ॥ १३
योधदोर्द्रुमसंचारस्तनुतामाययौ शनैः ।
भूकम्पान्ते वनस्पन्द इवाभ्रान्त इवार्णवः ॥ १४
विनिर्गन्तुं प्रववृते रणादथ बलद्वयम् ।
वारिपूरश्चतुर्दिक्षु प्रलयैकार्णवादिव ॥ १५
उत्क्षिप्तमन्दरक्षीरसमुद्रवदनाकुलम् ।
सैन्यं प्रशाम्यदावर्तं शनैः साम्यमुपाययौ ॥ १६
क्रमेणासीन्मुहूर्तेन विकटोदरभीषणम् ।
अगस्त्यपीतार्णववच्छून्यमेव रणाङ्गणम् ॥ १७
शवसन्ततिसंपूर्णं वहद्रक्तनदाकुलम् ।
परिकूजनझङ्कारपूर्णझिल्लिवनोपमम् ॥ १८
वहद्रक्तसरित्स्रोतस्तरङ्गारवघर्घरम् ।
साक्रन्दार्धमृताहूतसप्राणव्यग्रमानवम् ॥ १९
मृतार्धमृतदेहौघसृतासृक्प्लुतनिर्झरम् ।
सजीवनरपृष्ठस्थशवस्पन्दनभ्रान्तिदम् ॥ २०
करीन्द्रशवराश्यग्रविश्रान्ताम्बुदखण्डकम् ।
विशीर्णरथसंघातं वातच्छिन्नमहावनम् ॥ २१
वहद्रक्तनदीरंहःप्रोह्यमानहयद्विपम् ।
शरशक्त्यृष्टिमुसलगदाप्रासासिसंकुलम् ॥ २२
पर्याणावनसंनाहकवचावृतभूतलम् ।
केतुचामरपट्टौघगुप्तं शवशरीरकम् ॥ २३
फणास्फुटकतूणीरकुञ्जकूजत्समीरणम् ।
शवराशिपलालौघतल्पसुप्तपिशाचकम् ॥ २४
मौलिहाराङ्गदद्योतशक्रचापवनावृतम् ।
श्वश्टगालकराकृष्टसान्द्रान्त्रादीर्घरज्जुकम् ॥ २५
रक्तक्षेत्रक्वणत्किंचिच्छेषजीवनृदन्तुरम् ।
रक्तकर्दमनिर्मग्नसजीवनरदर्दुरम् ॥ २६
वराङ्गकवचप्रख्यनिर्गताक्षिशतोच्चयम् ।
वहद्भुजोरुकाष्ठौघघोररक्तसरिच्छतम् ॥ २७
साक्रन्दबन्धुवलितं मृतार्धमृतमानवम् ।
शरायुधरथाश्वेभपर्याणासंवरान्तरम् ॥ २८
नृत्यत्कबन्धदोर्दण्डमण्डलानमिताम्बरम् ।
मदमेदोवसागन्धपीडार्द्रघ्राणकोटरम् ॥ २९
उत्तालवर्धमृतेभाश्ववार्यमाणाल्पजीवितम् ।
वहद्रक्तनदीवीचिप्रहारहतदुन्दुभि ॥ ३०
उह्यमानमृतेभाश्वमकरासृक्सरिच्छतम् ।
म्रियमाणनरानीकफूत्कृतासृक्प्रणालिकम् ॥ ३१
स्वल्पजीवशरापूर्णमुखद्रक्कान्तितस्वनम् ।
पिण्डभार्यावसागन्धवातान्तोत्पीठलोहितम् ॥ ३२
उन्नासार्धमृतेभेन्द्रकराक्रान्तकबन्धकम् ।
निरधिष्ठितहस्त्यश्वपातितोच्चकबन्धकम् ॥ ३३
रुदत्क्रन्दत्परिभ्रष्टशवक्षुब्धासृगुद्धति ।
मृतभर्तृगले शस्त्रत्यक्तप्राणकुलाङ्गनम् ॥ ३४
सेनोत्क्रान्तततक्षिप्रबहुपान्थपरीक्षणम् ।
शवहारकराकृष्टसप्राणानुचराकुलम् ॥ ३५
केशशैवालवक्त्राब्जचक्रावर्तनदीशतम् ।
तरत्तुङ्गतरङ्गाढ्यवहद्रक्तमहानदम् ॥ ३६
अङ्गलग्नायुधोद्धारव्यग्रार्धमृतमानवम् ।

पतितुम् । सरसो मानसादेः सरितः सरय्वादयो यथा ॥ १३ ॥ अभ्रान्ते शरदि ॥ १४ ॥ **वारिपूर** इति । अर्थात्प्रलयान्ते इति गम्यते ॥ १५ ॥ उत्क्षिप्तो बहिर्निष्कासितो मन्दरो यस्मात्तथाविधक्षीरसमुद्रवत् । साम्यमव्याकुलताम् ॥ १६ ॥ जननिर्गमनक्रमेण । विकटा पूतनेश्वरी तस्या उदरमिव भीषणम् ॥ १७ ॥ झिल्ल्यो वनपतङ्गभेदाः ॥ १८ ॥ १९ ॥ शवानां स्पन्दनेन जीवनभ्रान्तिदम् ॥ २० ॥ शवराशीनामग्रेषु शिखरेषु विश्रान्ता अम्बुदखण्डा यत्रेत्यतिशयोक्तिः । वातच्छिन्नमहावनमिवेति शेषः ॥ २१ ॥ २२ ॥ पर्याणैः पल्याणैरवनैरङ्गरक्षकैश्चर्मादिभिः सन्नाहैः कवचैश्चावृतं भूतलं यत्र । गुप्तमाच्छन्नं शवशरीरकं यत्र ॥ २३ ॥ फणावदुच्छ्रिताग्रेष्वास्फुटकेषु छिद्रीकृतेषु तूणीरेषु कीचककुञ्जेष्विव कूजन्समीरणो वायुर्यत्र ॥ २४ ॥ मौलिना ह्रियन्त इति मौलिहाराश्चूडामणयः अङ्गदानि च तेषां द्योतैः शक्रचापानां वनेन समूहेनेवावृतं व्याप्तम् ॥ २५ ॥ रक्तपूर्णे क्षेत्रे क्वणन्तो घर्घरस्वरेण कूजन्तो नृदन्तुरा उद्घाटितदन्ताः पुरुषा यत्र । सजीवनरा एव दर्दुरा भेका यत्र ॥ २६ ॥ वराङ्गकवचं चित्रकञ्चुकम् ॥ २७ ॥ पर्याणान्तैरासंवरमाच्छन्नमन्तरं मध्यं यस्य ॥ २८ ॥ आनमितमुच्छ्रयादधरीकृतमिति यावत् ॥ २९ ॥ उत्तालुभिरूर्ध्वीकृततालुभिः ॥ ३० ॥ फूत्कृता फूत्कारेण निरस्यमाना मुखप्रदेशप्रसृता असृक्प्रणालिका यत्र ॥ ३१ ॥ स्वल्पजीवैः शरापूर्णमुखद्रक्कैश्च नरैरन्तिता निबद्धा आक्रन्दस्वना यत्र । 'अति अदि बन्धने' । वामकुक्षिस्थो मांसग्रन्थिविशेषः पिण्डभार्येत्युच्यते । तस्या वसायाश्च गन्धेनोपलक्षितं वातान्तेन वायुसंस्पर्शेन उत्पीठमिव घनीभूतं लोहितं यत्र ॥ ३२ ॥ सादिमरणान्निरधिष्ठितैरनियन्त्रितैः ॥ ३३ ॥ रुदद्भिः क्रन्दद्भिः परिभ्रष्टैः पतद्भिः शवैश्च क्षुब्धा असृगुद्धतिर्लोहितोच्छलनं यत्र । मृतस्य भर्तुर्गले आलिङ्ग्येति शेषः । दैवोपनीतेन शस्त्राघातेन त्यक्तप्राणा कुलाङ्गना यत्र । बुद्धिपूर्वकं शस्त्रघातेन भर्तृसहगमनं तु न शास्त्रार्थः ॥ ३४ ॥ संस्कार्यशवानयनाय स्वाम्याज्ञप्तायाः शिबिरनिविष्टसेनायाः सकाशादुत्क्रान्तैर्निर्गतैः प्रत्येकं रणभूप्रवेशभीरुत्वात्ततैः संततैः क्षिप्रैः शीघ्रप्रवृत्तैर्बहुभिः पान्थैः कृतं स्वस्वजनशवपरीक्षणं यत्र । शवान् हरन्तीति शवहारास्तेषां स्वाभिलषितशवान्वेषणत्वरया कराकृष्टसप्राणनरैरनुचरैर्भृत्यैराकुलम् ॥ ३५ ॥ केशाः शैवालानि वक्त्राण्यब्जानि चक्राण्यावर्ता येषु तथाविधं रक्तनदीशतं यत्र ॥ ३६ ॥ विदेशे मृतानां शोकात्साक्रन्दं हुता दत्तास्तदङ्गभूषणा-

१ झिल्ली इति पाठः.

२ मार्यमाण इति पाठः.

विदेशमृतसाक्रन्दहुताङ्गगजवाजिनम् ॥ ३७
प्राणान्तस्मृतपुत्रेष्टमातृदेवपराभिधम् ।
हाहाहीहीतिकथितमर्मच्छेदनवेदनम् ॥ ३८
म्रियमाणमथाजिष्ठद्विष्टप्रारब्धसंचयम् ।
दन्तियुद्धासमर्थाग्रमृतदेहेष्टदैवतम् ॥ ३९
म्रियमाणमहावज्ञाशूराश्रितपलायनम् ।
अशङ्कितासृगावर्तभीमास्पदगमोत्सुकम् ॥ ४०
मर्मच्छेदशराघातव्यथाविदितदुष्कृति ।
कबन्धबन्धप्रारब्धवेतालवदनाक्रमम् ॥ ४१
उह्यमानध्वजच्छत्रचारुचामरपङ्कजम् ।
किरत्संध्यारुणं दिक्षु तेजस्कं रक्तपङ्कजम् ॥ ४२
रथचक्रधरावर्तं रक्तार्णवमिवाष्टमम् ।
पताकाफेनपुञ्जाढ्यं चारुचामरबुद्बुदम् ॥ ४३
विपर्यस्तरथं भूमिपङ्कमग्नपुरोपमम् ।
उत्पातवातनिर्धूतद्रुमं वनमिवाततम् ॥ ४४
कल्पद्रुध्वजगतप्रख्यं मुनिपीतार्णवोपमम् ।
अतिवृष्टिहतं देशमिव प्रोज्झितमानवम् ॥ ४५
कलापकुन्तवलितं भुशुण्डीमण्डलाकुलम् ।
मत्तनागशताकारशवतोमरमुद्गरम् ॥ ४६
शिलाशिखरसंजाततालजालमिवाततम् ।
तरद्रक्तनदीतीरजातकुन्तोन्नतद्रुमम् ॥ ४७
नागांसस्यूतहेत्योघवृक्षांशुकुसुमाकुलम् ।
कङ्कच्छन्नान्त्ररसनावृन्दजालकिताम्बरम् ॥ ४८

असृक्सरित्तीरजातकुन्तोन्नतवनद्रुमम् ।
असृक्सरोवरोर्ध्वस्थपताकानलिनीगणम् ॥ ४९
रक्तकर्दमनिर्मग्नराहूतसुहृज्जनम् ।
करीन्द्रकुणपापातनिर्यद्भग्नजनेक्षितम् ॥ ५०
हेतिलूनलतैर्वृक्षैः संदिग्धार्धकबन्धकम् ।
असृङ्नदीवहद्धस्तिकटकर्पटनौगणम् ॥ ५१
रक्तस्रोतःस्फुरच्छुक्लवस्त्रडिण्डीरपिण्डकम् ।
संचारनियतक्षिप्रभृत्यविच्छिन्नमानवम् ॥ ५२
इतश्चेतश्च निपतत्कबन्धैरवदानवम् ।
ऊर्ध्वैस्थूलाक्षचक्रौघच्छिन्नसैन्यद्रवज्जनम् ॥ ५३
रक्तनिःस्वनभाङ्कारफेत्कारार्धमृतारवम् ।
शिलामुखललद्रक्तधाराधूतरजःखगम् ॥ ५४
सुतालोत्तालवेतालतालताण्डवसंकटम् ।
पर्यस्तरथदार्वन्तरर्धान्तरितसङ्कटम् ॥ ५५
अन्तस्थसज्जीवभटस्पन्दिस्पन्दनभीतिदम् ।
रक्तकर्दमपूर्णास्यकिंचिज्जीवकृपाच्छवम् ॥ ५६
किंचिज्जीवनरोद्ग्रीवदुःखदष्टश्ववायसम् ।
एकामिषोत्कक्रव्यादयुद्धकोलाहलाकुलम् ।
एकामिषार्थयुद्धेहामृतक्रव्यादसंकुलम् ॥ ५७
विवृत्तासंख्याश्वद्विरदपुरुषाधीश्वररथ-
प्रकृत्तोग्रग्रीवाप्रसृतरुधिरोद्गारसुसरित् ।
रणोद्यानं मृत्योस्तदभवदशुष्कायुधलतं
सशैलं कल्पान्ते जगदिव विपर्यस्तमखिलम् ॥ ५८

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो॰ आहववर्णनं नामाष्टात्रिंशः सर्गः ॥ ३८ ॥

दयो गजा वाजिनश्च यत्र । क्लीबे सुब्लुक् छान्दसः ॥ ३७ ॥ परोऽन्यः परमेश्वरो वा । तेषां अभिधा नामानि ॥ ३८ ॥ पराक्रममकृत्वैव म्रियमाणैर्मथैर्देवोन्मथितैरोजिष्ठैर्बलवत्तरैर्द्विष्टो निन्दितः स्वप्रारब्धकर्मसंचयो यत्र । दन्तियुद्धेष्वसमर्थैर्दन्त्यग्रे मृतप्रायदेहैर्विमर्दभयादिष्टानि प्रार्थितानि दैवतानि यत्र ॥ ३९ ॥ म्रियमाणेषु महत्या पादाघाताद्यवज्ञया अपराधेन अशूरैराश्रितं पलायनं यत्र । अतएवाशङ्किता निःशङ्का असृगावर्तभयानकस्थानेष्वपि गमनोत्सुका गमनोन्मुखा यत्र ॥ ४० ॥ मर्मच्छेदिन्या शराघातव्यथया विदितानुमिता जन्मान्तरस्वदुष्कृतिर्यत्र । पलायमानकबन्धानां बन्धनेन रुधिरपानाय प्रारब्धा वेतालवदनाक्रमा यत्र ॥ ४१ ॥ रक्तह्रदेषूह्यमानानि ध्वजच्छत्रचामराणि पङ्कजानि सिताम्भोजानि यत्र । रक्तह्रदेषु संध्यारागप्रतिफलनादरुणं तेजस्कं तेजःसमूहलक्षणं रक्तपङ्कजं कोकनदं दिक्षु किरत् विक्षिपत् ॥ ४२ ॥ रथास्तच्चक्राणि च क्रमाद्धराः पर्वता आवर्ताश्च यत्र तथाविधाम् । प्रसिद्धार्णवसप्तकाधिक्यादष्टमं रक्तार्णवमिव स्थितम् ॥ ४३ ॥ ४४ ॥ हतो देश इति प्रथमान्तपाठश्छान्दसः ॥ ४५ ॥ कलापैर्भूषणैः शरैश्च वलितं व्याप्तम् । नागा गजास्तदाकाराः शवाः, नागा सर्पास्तदाकारास्तोमरमुद्गराश्च यत्र ॥ ४६ ॥ पूर्वार्धोक्तार्थे उत्तरार्धोक्तोऽर्थो हेतुः ॥ ४७ ॥ नागानां गजानामङ्गेषु स्यूताः प्रोता हेत्योघा एव वृक्षास्तेषामंशवः किरणास्तल्लक्षणैः कुसुमैराकुलम् । जालकितं संजातजालकमिव कृतम् ॥ ४८ ॥ ४९ ॥ करीन्द्राणां कुणपेभ्यः शवेभ्य आपातनिर्यद्भिरीषन्निर्गतैर्भग्नकट्यादिजनैरीक्षितम् ॥ ५० ॥ असृङ्नदीषु वहन्तः प्लवमाना हस्तिनां कटा गण्डाः कर्पटानि पल्याणवस्त्राणि च नौगणा नौकासमूहा यत्र ॥ ५१ ॥ डिण्डीरः फेनः । संचाराय नियतैराज्ञप्तैः क्षिप्रैः शीघ्रकारिभिर्भृत्यैर्विच्छिन्ना विवेचिताः ॥ ५२ ॥ ऊर्ध्वीभूतैः स्थूलाक्षैर्बृहच्छिद्रैश्चक्रौघैः ॥ ५३ ॥ रक्तनिःस्वनसहिता भाङ्कारफेत्काररूपा अर्धमृतप्राण्यारवा यत्र । शिलामुखेषु ललन्त्याः स्रवन्त्या रक्तधारायाः पानाय निरालम्बेन पक्षविधूननेनोद्धूतरजसः कङ्कादिखगा यत्र ॥ ५४ ॥ सङ्कटा जीवद्भटाः ॥ ५५ ॥ किंचिज्जीवत्वात्कृपां अन्ततः प्राप्नुवन्तः शवा यत्र ॥ ५६ ॥ युद्धेहाभिर्युद्धचेष्टाभिः ॥ ५७ ॥ विशेषेण वृत्तानां मृतानां परि-

१ तिर्यग्भग्न इति पाठः. २ नवदानवं इति पाठः.

# एकोनचत्वारिंशः सर्गः ३९

श्रीवसिष्ठ उवाच ।

अथ वीर इवारक्तः कालेनास्तमितो रविः ।
अस्त्रतेजःपरिम्लानप्रतापोऽब्धौ समुज्झितः ॥ १
रणरक्तरुचिर्व्योमदर्पणप्रतिबिम्बिता ।
जहौ सूर्यशिरश्छेदे संध्यालेखोदभूत्क्षणम् ॥ २
भूपातालनभोदिग्भ्यः प्रलयाब्धिजलौघवत् ।
समाजग्मुस्तनत्ताला वेताला वलया इव ॥ ३
मृष्टध्वान्तासिवलिते दिननागेन्द्रमस्तके ।
संध्यारागारुणं कीर्णं तारानिकरमौक्तिकम् ॥ ४
निःसत्त्वेषु तमोन्धेषु रसनारसशालिषु ।
संकोचमाययुः पद्मामृतानां हृदयेष्विव ॥ ५
मीलत्पक्षाः क्षणात्सुप्ताः कृच्छ्रप्रोच्छ्रितकन्धराः ।
कुलायेषु खगा आसञ्छवाङ्गेष्विव हेतयः ॥ ६
आसन्नचन्द्रसुभगा लोकाः कुसुमपङ्क्तयः ।
उल्लसद्धृदया जाता वीरपक्षेष्विव श्रियः ॥ ७
रक्तवारिमयी सायमङ्गगुप्तशिलीमुखा ।
संकुचद्वक्रपद्माभूद्रणभूमिरिवाब्जिनी ॥ ८
उपर्यभूद्व्योमसरस्ताराकुमुदमण्डितम् ।
अधस्त्वभूद्वारिसरः स्फुरत्कुमुदतारकम् ॥ ९
तमस्यपेतभीतानि भूतानि मिलितान्यलम् ।
पयांसीव विसेतूनि प्रसृतानि दिशं प्रति ॥ १०
आसीद्रणाङ्गणं गायद्वेतालकुलसंकुलम् ।
क्वणत्कङ्कालकाङ्कस्थकङ्ककाकोलकेलिमत् ॥ ११
अथ काष्ठचिताज्वालसताराम्बरभास्वरम् ।
पचत्पचपचाशब्दिमेदोमांसमयानलम् ॥ १२
सर्वाङ्गास्थिस्फुटास्फोटस्फुटच्चितिचयोन्मुखम् ।
वेताललललनारब्धजललीलातिरोहितम् ॥ १३
श्वकाकयक्षवेतालतालकोलाहलोल्बणम् ।
गमागमेन भूतानां समुड्डीनवनोपमम् ॥ १४
रक्तमांसवसामेदोहरणव्यग्रडाकिनि ।
चर्विताखृग्वसामांसस्रवत्सृक्किपिशाचकम् ॥ १५
मध्यमध्यचितालोकप्रकटासृक्शवव्रजम् ।
विरूपिकानीयमानस्वांसन्यस्तमहाशवम् ॥ १६
उत्ताण्डवोग्रकुम्भाण्डमण्डलोड्डामरोदरम् ।
छमिच्छमित्प्रलापान्तं मेदोसृग्वाष्पसाम्बुदम् ॥ १७
वहद्रक्तनदीरंहोरूढभूचररूपिकम् ।
वेतालकुलकङ्कालकर्षणाकुलकाकलम् ॥ १८
मृतेभोदरमञ्जूषासुप्तवेतालबालकम् ।
विविक्तैकरणोद्देशपानक्रीडास्थराक्षसम् ॥ १९
मत्तवेतालकलहचितालातरणोज्ज्वलम् ।

वर्तितानां चासंख्यानामश्वादीनां प्रकृत्ताभ्यश्छिन्नाभ्य उष्ट्रग्रीवाभ्यश्च प्रसृता रुधिरोद्गारैः शोभनाः सरितो यत्र । अशुष्का रक्तसेकपल्लविता आयुधलता यत्र तथाविधं रणभूमिलक्षणं मृत्योरुद्यानमुपवनमासीत् ॥ ५८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे आहववर्णनं नामाष्टत्रिंशः सर्गः ॥३८॥

सूर्यस्यास्तमयः संध्या रक्षोवेतालसंकुला ।
बीभत्सबहलं रात्रौ रणस्थानं च वर्ण्यते ॥ १ ॥

सूर्यपक्षे अस्त्रतेजसि स्वच्छे नभसि परिम्लानप्रतापो मन्दरश्मिः । समुज्झितस्त्यक्तः पातित इति यावत् ॥ १ ॥ सूर्यलक्षणस्य सादिनः शिरसश्छेदे पातने सति प्राग्व्योमदर्पणे प्रतिबिम्बिता रक्तरुचिर्व्योम जहौ । क्षणमल्पकालम् ॥ २ ॥ सर्वदिग्वलयनाद्वल्याकाराः स्तनन्तो ध्वनन्तस्तालाः करताला येषां, स्तनन्तो ध्वनन्तस्ताला इव दीर्घा वा वेतालाः ॥ ३ ॥ दिनलक्षणस्य नागेन्द्रस्य गजश्रेष्ठस्य मस्तके मृष्टेन शाणनिघृष्टेन ध्वान्तासिना वलिते खण्डिते सति रागो रक्तं तेनारुणं तारानिकरलक्षणं गजमौक्तिकं विकीर्णमित्युत्प्रेक्षा ॥ ४ ॥ निःसत्त्वेषु निर्गतहंसादिजन्तुषु निष्प्राणेषु च । तमसान्धकारेण मोहेन चान्धेषु । रसशालिषु सरःसु प्राग्जीवनप्रेमवत्सु च । रसनाः प्राग्भ्रमरादिभिः प्राणैश्च ध्वनन्तः ॥ ५ ॥ हेतिपक्षे कृच्छ्रेण मरणदुःखेन प्रोच्छ्रिता उन्नामिताः कन्धराः कण्ठा यैः ॥ ६ ॥ आसन्नस्य चन्द्रस्य सुभगालोकलक्षणास्तत्सदृशाश्च कुमुदादिकुसुमपङ्क्तयः ॥ ७ ॥ अब्जिनीपक्षे संध्यारागप्रतिफलनाद्रक्तसदृशवारिप्रचुराः । शिलीमुखा बाणा भ्रमराश्च । वक्राण्येव वक्राणीव वा पद्मानि यस्याः ॥ ८ ॥ ९ ॥ प्रागपेतानि वियुक्तानि पश्चान्मिलितान्यप्यपरिचयात्परस्परस्माद्भीतानीत्यर्थः ॥ १० ॥ कङ्कालकानां शवानामङ्के उत्सङ्गे ॥ ११ ॥ अथ रणाङ्गणं वक्ष्यमाणविशेषणमासीदित्यासर्गान्तमनुवर्तते ॥ १२ ॥ अस्थ्नां स्फुटैरासमन्तात्स्फोटैः स्फुटन्तश्चितिचया एव वीरवदुन्मुखाः प्राधान्येन प्रकाशमाना यत्र । वेताललललनाभिरारब्धं जललीला जलक्रीडा तस्यामिव चिताग्निषु तिरोहितमन्तर्धानं यत्र ॥ १३ ॥ १४ ॥ स्रवन्त्यौ सृक्किणी ओष्ठप्रान्तौ येषां तथाविधाः पिशाचका यत्र ॥ १५ ॥ मध्यमध्यचितासु आलोकाः पिशाचैरालोक्यमानाः प्रकटासृजः शवव्रजा यत्र । विरूपिकाः पूतनाः ॥ १६ ॥ कुम्भाण्डाः पिचण्डिलाः पिशाचजातिभेदाः । छमिच्छमिदिति प्रलापा इव शववक्रान्ते ज्वालाशब्दा यत्र । मेदोसृजां बाष्पैः सार्द्रधूमैः साम्बुदमिव ॥ १७ ॥ रक्तनदीरंहसि रूढा निखातपादा अतएव भूचरीव लक्ष्यमाणा रूपिका यत्र । वेतालकुलानां कङ्कालानां शवानां कर्षणासु कुलोच्चितानि काकलानि हर्षकाकूजितानि यत्र ॥ १८ ॥ १९ ॥ चिताना-

वहद्रक्तवसासिश्रगन्धबन्धुरमारुतम् ॥ २०
रूपिकापेटिकावान्तारणद्रटरटारवम् ।
अर्धपक्कशवास्वादलुब्धयक्षोल्लसत्कलि ॥ २१
तुङ्गवङ्ककलिङ्गाङ्गतङ्गणाङ्गलगत्खगम् ।
तारापातोपमहसत्संमुखज्वालरूपिकम् ॥ २२
पतद्वेतालसोल्लासमध्यस्थासृग्विरूपिकम् ।
पिशाचाकर्णिताश्चर्यणयोगिनीगणनायकम् ॥ २३
प्रसृताम्रमहातन्त्रीप्रायसंपन्नवादनम् ।
पिशाचवासनोत्क्रान्तपिशाचीभूतमानवम् ॥ २४
रूपिकालोकनापूर्वत्रासार्धमृतसङ्कटम् ।
क्वचिद्वेतालरक्षोभिरपरीपूर्णमद्रकम् ॥ २५
खरूपिकास्कन्धपतच्छवत्रस्तनिशाचरम् ।
नभःसंघट्टितापूर्वभूतपेटकसंकटम् ॥ २६
अतिप्रयत्नापहृतम्रियमाणनरामिषम् ।
स्वभक्ष्यापेक्षपक्षेषु विक्षिप्तशवराशिवत् ॥ २७
शिवामुखानलशिखाखण्डोत्थमितिरक्तगैः ।
समुड्डीननवाशोकपुष्पगुच्छमिवाभितः ॥ २८
कबन्धकन्धराबन्धव्यग्रवेतालबालकम् ।
यक्षरक्षःपिशाचादिकचदाकाशगोल्मुकम् ॥ २९
आकाशभूधरनिकुञ्जगुहान्तराल-
पिण्डोपमण्डिततमोम्बुदपीठपूरम् ।
व्यालोलभूतरभसाकुलकल्पवात-
व्याधूतलोककरकाण्डकपेटकल्पम् ॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे ली० निशाचराकुलरात्रिरणाङ्गणवर्णनं नामैकोनचत्वारिंशः सर्गः ॥३९॥

## चत्वारिंशः सर्गः ४०

श्रीवसिष्ठ उवाच ।

एवं निशाचराचारचिरघोरे रणाङ्गणे ।
अहनीव जनाचारे स्थिते यामावरेहिते ॥ १
हस्तहार्यतमःपिण्डस्फुटकुड्ये निशागृहे ।
लाभोच्छ्दोच्चलचते भूतसङ्घे प्रवल्गति ॥ २
निःशब्दे ध्वान्तसंचारे निद्रारुद्धककुब्गणे ।
लीलापतिरुदारात्मा किंचित्खिन्नमना इव ॥ ३
प्रातःकार्यं विचार्याशु मन्त्रिभिर्मन्त्रकोविदैः ।
दीर्घचन्द्रसमाकारे शयने हिमशीतले ॥ ४
चन्द्रोदरनिभे चारुगृहे शिशिरकोटरे ।
निद्रां मुहूर्तमगमन्मुद्रितेक्षणपुष्करः ॥ ५
अथ ते ललने व्योम तत्परित्यज्य तद्गृहम् ।
रन्ध्रैर्विविशतुर्वातलेखेऽब्जमुकुलं यथा ॥ ६

श्रीराम उवाच ।

कियन्मात्रमिदं स्थूलं शरीरं वाग्विदांवर ।
रन्ध्रेण तन्तुतनुना कथमाश्वाविशत्प्रभो ॥ ७

मलातैर्ज्वलदुल्मुकैर्यो रणस्तेनोज्वलं दीप्रम् ॥ २० ॥ रूपिकाणां पूतनाभेदानां पेटिका करण्डास्तासामेव प्रसिद्धाः । यक्षाणां उल्लसन्कलिः कलहो यत्र ॥ २१ ॥ तुङ्गेषु वङ्गादिदेशजानामङ्गेषु लगन्तो निशाचरखगा यत्र । तारापातोपमैर्दशनैर्हसन्त्यः संमुखीकृतज्वालारूपिका यत्र ॥ २२ ॥ असृग्विपच्छिले पतत्सु वेतालेषु हासादिसोल्लासा असृक्प्रधाना विरूपिका यत्र ॥ २३ ॥ आन्त्रमहातन्त्रीभिः प्रायेण संपन्नानि वादनानि यत्र ॥ २४ ॥ रूपिकाणामालोकनादपूर्वत्रास आकस्मिकं भयं तस्मात् । मद्रकं कल्याणोत्सवः ॥ २५ ॥ नभसि संघट्टितैरपूर्वैः प्रसिद्धविलक्षणैर्भूतपेटकैः संकटं निरन्तरम् ॥ २६ ॥ स्वेषु स्वीयेषु भक्ष्यापेक्षेषु पक्षेषु ॥ २७ ॥ शिवा जम्बुकास्तन्मुखानलज्वालाभिरखण्डमनुच्छेदमुत्थमितिभिर्मूर्च्छान्तःप्राप्तसंज्ञैः रक्तगैः रक्तव्याप्तैर्नरैश्च ॥ २८ ॥ कबन्धकन्धरासु च्छिन्नशिरोबन्धनक्रीडासु व्यग्रा वेतालबालका यत्र । यक्षादीनां कचन्तो दीप्यमाना आकाशगा उल्मुका ज्वलदलातानि यत्र ॥ २९ ॥ आकाशभूधरेषु तदीयनिकुञ्जानां गुहानां चान्तरालेषु च पिण्डवन्निबिडतया उपमण्डितस्तमोलक्षणः अम्बुदपीठानां पीठवत्प्रतिष्ठिताम्बुदानां पूरः समूहो यत्र । व्यालोलानां भूतानां रभसेन वेगेन आकुलं, कल्पवातैर्व्याधूता लोका जनास्तदीयकरकादिसंभाराश्च यत्र तथाविधं यदण्डकपेटं ब्रह्माण्डोदरं तत्कल्पं रणाङ्गणमासीदित्यर्थः ॥ ३० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे निशाचराकुलरात्रिरणाङ्गणवर्णनं नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥



सुप्ते विदूरथे वेश्मप्रवेशो ज्ञप्तिलीलयोः ।
आतिवाहिकदेहस्य तत्त्वं चात्र निरूप्यते ॥ १ ॥

निशाचराणामाचारेण चिरं घोरे भयानके रणाङ्गणे । यामानां यमसंबन्धिनां दूतानामवराणां निकृष्टानां पिशाचादीनां च ईहिते चेष्टिते । अहनि जनानां यथोचिताचारवत् एवं वर्णितप्रकारेण स्थिते सतीत्यर्थः ॥ १ ॥ हस्तेन हर्तुं शक्यैरिव निबिडैस्तमःपिण्डैः स्फुटानि प्रकटीभूतानि कुड्यानि यत्र तथाविधे निशालक्षणे गृहे भक्ष्यसमृद्धिलाभे उच्छदं उद्गतवस्त्रं, उच्चलं पलायमानं च तं याच्ञादैन्यं यस्मात्तथाविधे भूतसङ्घे प्रवल्गति क्रीडति सति । चते याचने । घञर्थे कविधानमिति भावे कः ॥ २ ॥ रणाङ्गणस्थितिमुक्त्वा नगरस्थितिमाह—**निःशब्द इति।** ककुब्गणशब्देन दिक्समूहस्थितप्राणिनो लक्ष्यन्ते ॥ ३ ॥ ४ ॥ अगमत्प्राप ॥ ५ ॥ ते ललने ज्ञप्तिलीले ॥ ६ ॥ सूक्ष्मतमब्रह्माण्डच्छिद्रान्निर्गमने प्राक्पृष्टमेवार्थं रामः पुनर्दृढीकारायाधिक-

श्रीवसिष्ठ उवाच ।

आधिभौतिकदेहोऽहमिति यस्य मतिभ्रमः ।
तस्यासावणुरन्ध्रेण गन्तुं शक्नोति नानघ ॥ ८
रोधितोऽहमनेनेति न मास्यत्रेति यस्य धीः ।
अनुभूतानुभवती भवतीत्यनुभूयते ॥ ९
येनानुभूतं पूर्वार्धे गच्छामीति स तत्क्रियः ।
कथं भवति पश्चार्धे गमनोन्मुखचेतनः ॥ १०
नहि वायूर्ध्वमायाति नाधो गच्छति पावकः ।
या यथैव प्रवृत्ता चित्सा तथैव प्रतिष्ठिता ॥ ११
छायायामुपविष्टस्य कुतस्तापानुभूतयः ।
यस्य संवेदनेऽन्योऽर्थः केनचिन्नानुभूयते ॥ १२
यथा संवित्तथा चित्तं सा तथावस्थितिं गता ।
परमेण प्रयत्नेन नीयतेऽन्यदशां पुनः ॥ १३
सर्पैकप्रत्ययो रज्ज्वामसर्पप्रत्यये बलात् ।
निवर्ततेऽन्यथा त्वेष तिष्ठत्येव यथास्थितः ॥ १४
यथा संवित्तथा चित्तं यथा चित्तं तथेहितम् ।
बालं प्रत्यपि संसिद्धमेतत्को नानुभूतवान् ॥ १५
यः पुनः स्वप्नसंकल्पपुरुषः प्रतिमाकृतिः ।
आकाशमात्रकाकारः स कथं केन रोध्यते ॥ १६
चित्तमात्रं शरीरं तु सर्वस्यैव हि सर्वतः ।
विद्यते वेदनाच्चैतत्कचिदेतीव हृद्गतात् ॥ १७
यथाभिमतमेवास्य भवत्यस्तमयोदयम् ।
आदिसर्गे स्वभावोत्थं पश्चाद्द्वैतैक्यकारणम् ॥ १८
चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
विद्ध्येतत्त्रयमेकं त्वमविनाभावनावशात् ॥ १९
एतच्चित्तशरीरत्वं विद्धि सर्वगतोदयम् ।
यथासंवेदनेच्छत्वाद्यथासंवेदनोदयम् ॥ २०
वसति त्रसरेण्वन्तर्भ्रियते गगनोदरे ।
लीयतेऽङ्कुरकोशेषु रसीभवति पल्लवे ॥ २१
उल्लसत्यम्बुवीचित्वे प्रनृत्यति शिलोदरे ।
प्रवर्षत्यम्बुदो भूत्वा शिलीभूयावतिष्ठते ॥ २२
यथेच्छमम्बरे याति जठरेऽपि च भूभृताम् ।
अनन्तराकाशवपुर्धत्तेऽथ परमाणुताम् ॥ २३
भवत्यद्रिर्धराधारो बद्धपीठो नभः शिराः ।

---

जिज्ञासया पृच्छति—**कियदि**ति । कियन्मात्रं चतुर्हस्तप्रमाणदैर्घ्यमिति यावत् ॥ ७ ॥ असौ स्थूलदेहः । अणुरन्ध्रेण सूक्ष्मच्छिद्रेण ॥ ८ ॥ तत्कुतस्तत्राह—**रोधित** इति । रोधितो निरुद्धः अत्रास्मिञ्छिद्रे न मामि मातुं न शक्नोमि नरदेहस्वभावत्वादिति यस्य धीः पूर्वं शतशोऽनुभूतमेव स्थूलदेहस्वरूपत्वमात्मनोऽनुभवती भवति । शप्श्यनोर्नित्यवचनान्नुमभावश्छान्दसः । तेन इति एवंरीत्या अगमनमेवानुभूयते इत्यर्थः ॥ ९ ॥ येन तु स्थूलनरदेहतादात्म्यबुद्ध्यभावादातिवाहिकदेहमात्रत्वनिश्चयाच्च पूर्वार्धपौर्वकालिकदृढवासनासमृद्धं सूक्ष्मतमेऽपि च्छिद्रे गच्छामि गमनसमर्थोऽस्मीत्येवं शतशोऽनुभूतं स तादृशगमनस्वभावोन्मुखात्मचेतनांशस्वभावः पुरुषः पश्चार्धे उत्तरकाले तत्क्रियः स्थूलदेहानुरूपनिरोधादिक्रियाविशिष्टः कथं भवति । प्रागाविर्भूतशक्तिस्वभावस्यान्यथात्वायोगादिति भावः ॥ १० ॥ बहिरपि वस्तुशक्तिस्वभावस्तथैव नियतो दृष्ट इत्याह—**नही**ति । प्रवृत्ता प्रागाविर्भूतशक्तिः ॥ ११ ॥ स्थूलदेहात्मबुद्धिरहितयोगिपिशाचादीनामपि निरोधदुःखाभावे द्वैतमात्राध्यासरहितानां तत्त्वज्ञानां तद्दुःखं नास्तीति किं वक्तव्यमित्याशयेनाह—**छायाया**मिति । यस्य परमात्मनः सम्यग्वेदने साक्षात्कारे सति ॥ १२ ॥ नन्वधिष्ठाने संविदि स्थौल्यसौक्ष्म्यादिशक्त्याविर्भावेऽपि चित्तस्य तदनुविधायित्वं कुतस्तत्राह—**यथे**ति । कथं तर्ह्यन्यथाभावस्तत्राह—**परमेणे**ति । योगज्ञानाभ्यासादिप्रयत्नेनेत्यर्थः ॥ १३ ॥ तत्र ज्ञानप्रयत्नेनान्यथाभावमुदाहरति—**सर्पे**ति । असर्पप्रत्यये रज्जुतत्त्वनिर्णये सति ॥ १४ ॥ चित्तस्य संविच्छक्त्यनुसारित्वमिव चेष्टायाश्चित्तानुसारित्वमपि प्रसिद्धतरमित्याह—**यथे**ति ॥ १५ ॥ ननु स्थूलदेहवदातिवाहिकं चित्तशरीरमपि कुतो न रोध्यते तत्राह—**य** इति ॥ १६ ॥ ननु भौतिकस्यास्य देहस्य ज्ञानबलाद्वा कथं चित्तशरीरत्वप्राप्तिस्तत्राह—**चित्तमात्र**मिति । हृद्गताद्वेदनाद्वेदनं ज्ञानं तद्बलादेति आयातीव । तथाच न भूतानि चित्तात्पृथक्सन्तीति भावः ॥ १७ ॥ भूतानां चित्तादपृथक्सत्तामुपपादयति—**यथाभिमत**मिति । अस्य परमात्मनः अभिमतं चित्तवृत्तिस्तदनतिक्रम्येति यथाभिमतम् । अस्य भूतजातस्य । अस्तमयोदयमिति समाहारद्वन्द्वः । स्वभावः स्वाभाविकमज्ञानं कर्म वा तदुत्थम् । स्थूलानि भूतानि भौतिकानि च द्वैतं तेषां मेलनेनैकदेहभावेनैक्यं च तत्र कारणं पञ्चीकरणं पश्चाद्भवतीत्यर्थः ॥ १८ ॥ एवं चित्ताव्यक्तयोरपि न शुद्धचितः पृथक्सत्तेत्याह—**चित्ताकाश**मिति । अविनाभावना अधिष्ठानसत्ताव्यतिरेकेणास्फुरणं तद्वशात् ॥ १९ ॥ एवमधिष्ठानसत्ताधीनसत्तासाम्येऽपि स्थूलात्सूक्ष्मे अनिरोधहेतुर्विशेषोऽस्तीत्याह-**एत**दिति । सर्ववस्तुषु गतः प्राप्त उदयः स्वैरमाविर्भावशक्तिर्यस्य तत्तथाविधं विद्धि । तत्कुतः । यतो यथासंवेदनोदयं संवेदनं पूर्ववासनाकर्मानुसारिपदार्थस्फूर्तिस्तदनतिक्रम्योदयो यस्य तथास्वभावं न बाह्यवस्तुशक्त्यनुसारिस्वभावम् । तदपि कुतः । यथासंवेदनेच्छत्वात् । यतः शुक्तिमपि रजतात्मना संविदितामिच्छति न शुक्तिशक्तिमनुसृत्योपेक्षते । तथाच स्थूलस्य बाह्यवस्त्वनुसारित्वान्निरोधेऽपि न संवेदनेच्छामात्रानुसारिणश्चित्तशरीरस्य निरोध इति भावः ॥ २० ॥ सर्वगतोदयत्वं प्रपञ्चयति—**वसती**त्यादिना ॥ २१ ॥ २२ ॥ न विद्यतेऽन्तः आकाशवपुरवकाशस्वरूपं यत्र तथाविधं सत्परमाणुतां धत्ते ॥ २३ ॥ वनलक्षणं तनरुहं [illegible] सत् अद्रिर्भवति । बद्धपीठो दृढमूलः । देह-

देहस्यान्तर्बहिरपि दधद्भनतनूरुहम् ॥ २४
भवत्याकाशमाधत्ते कोटीः पद्मजसद्मनाम् ।
अनन्याः स्वात्मनोऽम्भोधिरावर्तरचना इव ॥ २५
अनुद्विग्नप्रबोधोऽसौ सर्गादौ चित्तदेहकः ।
आकाशात्मा महान्भूत्वा वेत्ति प्रकृततां ततः ॥ २६
असत्यमेव वारित्वं बुद्ध्योदेतीव तत्तथा ।
वन्ध्यापुत्रोऽयमस्तीति यथा स्वप्ने भ्रमो नरः ॥ २७

श्रीराम उवाच ।

किं चित्तमेतद्भवति किंवा भवति नो कथम् ।
कथमेव न सद्रूपं नान्यद्भवति वीक्षणात् ॥ २८

श्रीवसिष्ठ उवाच ।

प्रत्येकमेव यच्चित्तं तदेवंरूपशक्तिकम् ।
पृथक्प्रत्येकमुदितः प्रतिचित्तं जगद्भ्रमः ॥ २९
क्षणकल्पजगत्सङ्घाः समुद्यन्ति गलन्ति च ।
निमेषात्कस्यचित्कल्पात्कस्यचिच्च क्रमं शृणु ॥ ३०
मरणादिमयी मूर्च्छा प्रत्येकेनानुभूयते ।
यैषा तां विद्धि सुमते महाप्रलययामिनीम् ॥ ३१
तदन्ते तनुते सर्गं सर्व एव पृथक्पृथक् ।
सहजस्वप्नसंकल्पान्संभ्रमाचलनृत्यवत् ॥ ३२
महाप्रलयरात्र्यन्ते चिरादात्ममनोवपुः ।
यथेदं तनुते तद्वत्प्रत्येकं मृत्यनन्तरम् ॥ ३३

श्रीराम उवाच ।

मृतेरनन्तरं सर्गो यथा स्मृत्यानुभूयते ।
चिरात्तथानुभवति नातो विश्वमकारणम् ॥ ३४

श्रीवसिष्ठ उवाच ।

महति प्रलये राम सर्वे हरिहरादयः ।
विदेहमुक्ततां यान्ति स्मृतेः क इव संभवः ॥ ३५
अस्मदादिः प्रबुद्धात्मा किलावश्यं विमुच्यते ।
कथं भवन्तु नो मुक्ता विदेहाः पद्मजादयः ॥ ३६
अन्ये त्वमिव[1] ये जीवास्तेषां मरणजन्मसु ।
स्मृतिः कारणतामेति मोक्षाभाववशादिह ॥ ३७

---

स्यान्तरव्यादिभावः स्वप्ने प्रसिद्धो बहिस्त्विन्द्रजालादौ ॥ २४ ॥ स्वात्मनश्चित्तस्वरूपादनन्या अभिन्नाः पद्मजसद्मनां ब्रह्माण्डानां कोटीः आसमन्ताद्धत्ते ॥ २५ ॥ अनुद्विग्नः उद्वेगादविपर्यस्तः कर्मानुसारी प्रबोधो यस्य । आकाशात्मा आकाशादिक्रमेण महान् ब्रह्माण्डात्मा भूत्वा प्रकृततां प्रस्तुततां प्रारब्धकर्मानुसारिप्रवृत्तिम् ॥ २६ ॥ वारित्वं मृगतृष्णादौ यथेति शेषः । वन्ध्यापुत्रोऽयं नरोऽस्तीति यथा स्वप्ने भ्रम उदेतीत्यन्वयः ॥ २७ ॥ सूक्ष्मतमं चित्तमेव सर्वजगत्सर्वशक्तिमत् तदेवापरिज्ञाततत्त्वं स्थूलमिव भूत्वा परतन्त्रं भवति । परिज्ञाततत्त्वं तु व्यवहारे सर्वत्राप्रतिहतं स्वतन्त्रमित्युक्तं तत्र किमस्मदादिचित्तं प्रत्येकमेवंशक्तिकं भवत्युत न । आद्ये प्रतिचित्तं विचित्रसर्वभेदसत्त्वप्रसङ्गः । द्वितीये तु चित्ताजन्यं चित्तादन्यदेव जगद्रूपं स्यात्तथैव सर्वैर्वीक्षणात्तथा च ज्ञानेन चित्तनाशेऽपि जगदनुवृत्तिरेव स्यादित्याशयेन श्रीरामः पृच्छति—**कि**मिति । एतदस्मदादिसंबन्धि चित्तं एतदुक्तशक्तिकं भवति किंवा नो भवति । आद्ये प्रतिचित्तं भिन्नं जगत्सद्रूपं कथं न । द्वितीये तु अन्यत्कथं न भवतीति कथंशब्दद्वयस्य प्रत्येकमन्वयः ॥ २८ ॥ तत्राद्यकल्पमेवाभ्युपगम्य वसिष्ठ उत्तरमाह—**प्रत्येक**मिति ॥ २९ ॥ ३० ॥ कथं तर्हि महाप्रलयानन्तरं सृष्टिप्रवादस्तत्राह—**मरणे**ति । व्यष्टिकृतसर्गे प्राक्तनमरणमेव महाप्रलय इत्यर्थः ॥ ३१ ॥ सहजान्स्वाभाविकाविद्योत्थानवस्थात्रयस्वप्नसंकल्पान् । 'तस्य त्रय आवसथास्त्रयः स्वप्नाः' इति श्रुतेः । संभ्रमश्चित्तमोहः ॥ ३२ ॥ आत्मनः परब्रह्मणः समष्टिमनोवपुर्हिरण्यगर्भः सत्यसंकल्पात्तनुते तथैव न तदतिक्रम्येति न प्रतिचित्तं जाग्रत्प्रपञ्चवैचित्र्यप्रसक्तिः । स्वप्नादौ तु वैचित्र्यं दृष्टत्वादिष्टमेवेति भावः । अथवायं दृष्टान्तः—यथा समष्टिमनोवपुर्हिरण्यगर्भः स्वसंभोग्यं प्रपञ्चं तनुते तथा व्यष्टिमनोमात्रो जीवोऽपि स्वस्वभोग्यं स्वप्नादिव्यष्टिप्रपञ्चमिति ॥ ३३ ॥ ननु 'यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति' इति श्रुत्या सर्वानुभवाच्च स्मृतिवत्क्रियाणामेकवस्तुविषयत्वं निश्चितं स्मृतिश्च स्वकारणानुभवस्य सत्यार्थत्वे यथार्था असत्यार्थत्वे त्वयथार्था । तत्रास्माकं भ्रान्तिबहुलत्वादसत्यसंकल्पत्वाच्चास्मत्स्मृतेरयथार्थत्वे तज्जन्यकतिपयस्वप्नादिप्रपञ्चस्यासत्यतास्तु । हिरण्यगर्भस्य तु सर्वज्ञत्वेनाभ्रान्तत्वात्सत्यसंकल्पत्वाच्च तत्स्मृतेरयथार्थत्वायोगेन तत्सृष्टप्रपञ्चस्य न मिथ्यात्वप्रसक्तिरित्याशयेन रामः शङ्कते—**मृते**रिति । यथा व्यष्टिजीवैर्मृतेरव्यवहितोत्तरकाले स्मृत्या स्वकृतसर्गोऽनुभूयते तथा समष्टिरपि चिरान्महाप्रलयादनन्तरं स्वकीयया यथार्थस्मृत्या सृष्टं प्रपञ्चमनुभवति अतस्तत्स्मृत्यारूढप्राक्तनसत्यार्थानामेवैतत्कल्पीयसत्यविश्वकारणत्वसंभवाद्विश्वमकारणं ब्रह्मातिरिक्तसत्यकारणताशून्यमिति यत्प्राक्प्रतिज्ञातं तन्मतव्याघात इत्यर्थः ॥ ३४ ॥ भवेदेवं यद्यादिसर्गे यथार्थानुभवजन्या सर्गहेतुः स्मृतिस्तस्य संभवेत् । नहि सा प्रथमं हिरण्यगर्भपदप्राप्तस्योपासकस्य संभवति, तस्य हि स्मृतिरुपासनोपनीतसंस्कारजन्या न यथार्थानुभवजन्या । उपासना च प्राक्तनी व्यष्टेरेव समष्टिभावचिन्तनं न यथार्थानुभव इत्ययथार्थोपासनासंस्कारजस्मृतिजन्यत्वान्नादिसर्गस्य सत्यताप्रसक्तिः । नहि प्राक्तनाः केचिदन्ये सर्वज्ञास्तदानीं सन्ति । सर्वेषां प्रागेव मुक्तत्वात् । द्वितीयकल्पादिसर्गहेतुस्मृतेस्तु पूर्वसर्गानुभूतमिथ्यार्थविषयतैवेति न क्वापि सर्गसत्यताप्रसक्तिरित्याशयेन वसिष्ठः समाधत्ते—**महती**त्यादिना ॥ ३५ ॥ प्रबुद्धात्मा तत्त्ववित् ॥ ३६ ॥ मरणजन्मसु मरणजन्मप्रयोजकसर्गेषु स्मृतिः प्राक्तन-

---

[1] त्वमपि च इति पाठः.

जीवो हि मृतिमूर्च्छान्ते यदन्तः प्रोन्मिषन्निव ।
अनुन्मिषित एवास्ते तत्प्रधानमुदाहृतम् ॥ ३८
तद्व्योमप्रकृतिः प्रोक्ता तदव्यक्तं जडाजडम् ।
संस्मृतेरस्मृतेश्चैव क्रम एष भवोदये ॥ ३९
बोधोन्मुखत्वे हि महत्तत्प्रबुद्धं यदा भवेत् ।
तदा तन्मात्रदिक्कालक्रिया भूताद्युदेति खात् ॥ ४०
तदेवोच्छूनमाबुद्धं भवतीन्द्रियपञ्चकम् ।
तदेव बुध्यते देहः स एषोऽस्यातिवाहिकः ॥ ४१
चिरकालप्रत्ययतः कल्पनापरिपीवरः ।
आधिभौतिकताबोधमाधत्ते चैष बालवत् ॥ ४२
ततो दिक्कालकलनास्तदाधारतया स्थिताः ।
उद्यन्त्यनुदिता एव वायोः स्पन्दक्रिया इव ॥ ४३
वृद्धिमित्थमयं यातो मुधैव भुवनभ्रमः ।
स्वप्नाङ्गनासङ्गसमस्त्वनुभूतोऽप्यसन्मयः ॥ ४४
यत्रैव म्रियते जन्तुः पश्यत्याशु तदेव सः ।
तत्रैव भुवनाभोगमिममित्थमिव स्थितम् ॥ ४५
व्योमैवानुभवत्यच्छमहं जगदिति भ्रमम् ।
व्योमरूपं व्योमरूपी जीवो जात इवात्मवान् ॥ ४६
सुरपत्तनशैलार्कतारानिकरसुन्दरम् ।
जरामरणवैक्लव्यव्याधिसंकटकोटरम् ॥ ४७
स्वभावाभावसंरम्भस्थूलसूक्ष्मचराचरम् ।
साब्ध्यद्युर्वीनदीशाहोरात्रिकल्पक्षणक्षयम् ॥ ४८
अहं जातोऽमुना पित्रा किलात्रेत्यात्तनिश्चयम् ।
इयं माता धनमिदं ममेत्युदितवासनम् ॥ ४९
सुकृतं दुष्कृतं चेदं ममेति कृतकल्पनम् ।
बालोऽभूवमहं त्वद्य युवेति विलसद्धृदि ॥ ५०
प्रत्येकमेवमुदितः संसारवनखण्डकः ।
ताराकुसुमितो नीलमेघचञ्चलपल्लवः ॥ ५१
चरन्नरमृगानीकः सुरासुरविहंगमः ।
आलोककौसुमरजाः श्यामागहनकुञ्जकः ॥ ५२
अब्धिपुष्करिणीपूर्णो मेर्वाद्यचलललोष्टकः ।
चित्तपुष्करबीजान्तर्निलीनानुभवाङ्कुरः ॥ ५३
यत्रैष म्रियते जीवस्तत्रैवं पश्यति क्षणात् ।
प्रत्येकमुदितेष्वेवं जगत्खण्डेषु भूरिशः ॥ ५४
कोटयो ब्रह्मरुद्रेन्द्रमरुद्विष्णुविवस्वताम् ।
गिर्यब्धिमण्डलद्वीपलोकान्तरदृशां गताः ॥ ५५
याता यास्यन्ति यान्त्येता दृष्टयो नष्टरूपिणीः ।
या ब्रह्मण्युपबृंहाद्व्यास्ताः के गणयितुं क्षमाः ॥ ५६
एवं कुड्यमयं विश्वं नास्त्येव मननादृते ।
मनने चलमेवान्तस्तदिदानीं विचारय ॥ ५७

मिथ्यार्थानुभववासनाजन्यैर्वेलाशयः ॥ ३७ ॥ ननु हैरण्यगर्भी सृष्टिः प्रधानान्महदहंकारादिक्रमेण पुराणादिषु श्रूयते, जैवी तु सा सहसैव जायते, तत्र कथं तत्सृष्टिसाम्यं जैवसृष्टेरित्याशङ्क्य तत्रापि प्रधानमहदादिक्रमसुपपादयति—**जीवो** हीत्यादिना । अनुन्मिषितो बहिरिति शेषः । तत्तादवस्थ्यं प्रधानं मूलप्रकृतिरित्युदाहृतं पुराणादावित्यर्थः ॥ ३८ ॥ 'आकाश इव तदोतं च प्रोतं च' इत्यादिश्रुतेर्व्योमादिशब्दानामपि तत्र प्रसिद्धिमाह—**तदि**ति । चित्प्रतिबिम्बग्राहाजडाजडम् । संस्मृतेः सर्गस्य अस्मृतेः प्रलयस्य च क्रमः आद्यन्तावधिरेष इत्यर्थः ॥ ३९ ॥ तदेव बोधोन्मुखत्वे महत्तत्त्वं प्रबुद्धं सदहंकाराख्यं यदा भवेत्तदा तदवस्थात् खात् प्रागुक्तावकाशात्तन्मात्रादिभूतभौतिकान्तमुदेतीत्यन्वयः ॥ ४० ॥ आ उच्छूनमीषदुच्छूनं सूक्ष्मावस्थमित्यर्थः । बुध्यते स्वप्नजागरयोः ॥ ४१ ॥ आधिभौतिकताबोधं भौतिकस्थूलदेहाहंभावम् ॥ ४२ ॥ दिक्कालपदेन तदाश्रितपदार्था लक्ष्यन्ते । तदाधारतया स्थूलदेहाश्रितचक्षुराद्यधीनतया स्थितास्तत्तद्देशकालगतपदार्थकलनाः उद्यन्ति प्रादुर्भवन्तीत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ आगन्तुकदेहाद्यात्मना आत्मवान् जात इव सन् अहमिति जगदिति च भ्रममनुभवतीत्यर्थः ॥ ४६ ॥ जगद्भ्रममेव विशेषणैः प्रपञ्चयति—**सुरे**त्यादिना । इन्द्रादयः सुराः अमरावत्यादीनि तत्पत्तनानि मेर्वादयस्तदाधारशैलास्तान्प्रदक्षिणीकुर्वाणा अर्कतारानिकरास्तैः सुन्दरम् । कोटरमत्र मर्त्यलोकादिच्छिद्रम् ॥ ४७ ॥ स्वानुकूलानां भावः संपादनं प्रति-कूलानां चाभावो निवारणं तद्विषये संरम्भेणोद्योगेन युक्ताः स्थूलाः सूक्ष्माश्चरा अचराश्च प्राणिनो यत्र । अचराणामपि लतानां सालम्बनदेशे प्रसरस्य निरालम्बनप्रदेशपरिहारस्य च दर्शनादचरसाधारण्योक्तिः । अब्धयश्च अद्रयश्च उर्वी च नद्यश्च ईशास्तत्तदधिपतयश्च तैः सहिता अहोरात्र्यादयो यत्र ॥ ४८ ॥ ॥ ४९ ॥ हृदि विलसत् स्फुरन्तं जगद्भ्रमं पश्यतीति पूर्वत्र संबन्धः । पुंलिङ्गविशेषणस्य क्लीबता पदसंस्कारपक्षाश्रयणात् ॥ ५० ॥ इदानीं तमेव प्रत्येकं जीवसंसारं वनखण्डत्वेन वर्णयति—**प्रत्येक**मित्यादिना । ताराभिः कुसुमितः संजातपुष्पः ॥ ५१ ॥ नरा एव मृगानीकानि यत्र । आलोकप्रधानान्यहानि कौसुमरजांसि यत्र । श्यामा रात्रय एव गहना दुष्प्रवेशाः कुञ्जका लतागृहाणि यत्र ॥ ५२ ॥ निलीनाः संस्कारात्मना स्थिता अनुभवाश्चित्तवृत्तयोऽङ्कुरा यत्र ॥ ५३ ॥ पश्यति वर्णितवनखण्डकमिति शेषः ॥ ५४ ॥ मरुतो देवाः । लोकान्तान्यान्तराणि ब्रह्माण्डगर्भस्थानि पश्यन्तीति तद्दृशस्तेषां ब्रह्मादीनां कोटयो गताः ॥ ५५ ॥ नष्टरूपिणीः असत्स्वरूपाः । छान्दसो विभक्तिव्यत्ययः । उपबृंहणमुपबृंह आविर्भावस्तदाढ्याः । घञर्थे कः ॥ ५६ ॥ एवं प्रपञ्चसारोपक्रममुपवर्ण्यापवादं क्रमेणाह—**एव**मित्यादिना । कुड्यमयं भित्तिवत्स्थूलं विश्वं मननान्मनःसंकल्पलक्षणात्सूक्ष्मादृते तद्व्यतिरेकेण नास्त्येव । 'त्रीणि रूपाणीत्येव सत्यम्' इत्यादिश्रुतेः । ननु स्थूलं स्थिरस्वभावं

१ पूर्वत्र जीवोऽनुभवतीति षट्चत्वारिंशत्तमश्लोके इति भावः.

यदेव तच्चिदाकाशं तदेव मननं स्मृतम् ।
यदेव च चिदाकाशं तदेव परमं पदम् ॥ ५८
यदेवाम्बु स आवर्तो नत्वस्यावर्त वस्तु सन् ।
द्रष्टैवास्ते दृश्यमिव दृश्यं नत्वस्ति वस्तु सत् ॥ ५९
चिद्व्योम्नो भूतनभसि कचनं यन्मणेरिव ।
तज्जगद्भाविनानासत्त्वं श्वभ्रमिवाम्बरे ॥ ६०
मद्बुद्ध्यार्थो जगच्छब्दो विद्यते परमामृतम् ।
त्वद्बुद्ध्यार्थस्तु नास्त्येव त्वमहंशब्दकादपि ॥ ६१
तस्माल्लीलासरस्वत्यावाकाशवपुषौ स्थिते ।
सर्वगे परमात्माच्छे सर्वत्राप्रतिघेऽनघे ॥ ६२
यत्र यत्र सदा व्योम्नि यथाकामं यथेप्सितम् ।
उदयं कुरुतस्तेन तद्गेहेऽस्ति गतिस्तयोः ॥ ६३
सर्वत्र संभवति चिद्गगनं तदत्र
सद्वेदनं कलनमाममनं विसारि ।
तच्चातिवाहिकमिहाहुरकुड्यमेव
देहं कथं क इव तं वद किं रुणद्धि ॥ ६४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने समरसमनन्तरसंस्मृत्यनुभववर्णनं नाम चत्वारिंशः सर्गः ४०

## एकचत्वारिंशः सर्गः ४१

श्रीवसिष्ठ उवाच ।

तयोः प्रविष्टयोर्देव्योः पद्मसद्म बभूव तत् ।
चन्द्रद्वयोदयोद्द्योतधवलोदरसुन्दरम् ॥ १
कोमलामलसौगन्ध्यमृदुमन्दारमारुतम् ।
तत्प्रभावेन निद्रालुनृपेतरनराङ्गनम् ॥ २
सौभाग्यनन्दनोद्यानं विद्रुतव्याधिवेदनम् ।
सवसन्तं वनमिव फुल्लं प्रातरिवाम्बुजम् ॥ ३
तयोर्देहप्रभापूरैः शशिनिस्यन्दशीतलैः ।
आह्लादितोऽसौ बुबुधे राजोक्षित इवामृतैः ॥ ४
आसनद्वयविश्रान्तं स ददर्शाप्सरोद्वयम् ।
मेरुशृङ्गद्वये चन्द्रविम्बद्वयमिवोदितम् ॥ ५
निमेषमिव संचिन्त्य स विस्मितमना नृपः ।
उत्तस्थौ शयनाच्छेषादिव चक्रगदाधरः ॥ ६
परिसंयमितालम्बिमाल्यहाराधराम्बरः ।
पुष्पाहार इवोत्फुल्लं जग्राह कुसुमाञ्जलिम् ॥ ७

मनस्तु चलस्वभावं तत्कथमस्य मनोमात्रता तत्राह—**मनने** इति । यद्यपि बहिर्विश्वं स्थिरं भाति तथापि मननेन मनसा यथेच्छं विभाव्यमानं चलमस्थिरस्वभावमेवानुभूयते । भ्राम्यति मनसि भ्रमदिव प्रसन्ने प्रसन्नमिव मलिने मलिनमिव मनोरथादौ उत्पाद्यान्यत्रारोप्यमाणमिव सर्वैरनुभूयते तदिदानीं त्वं स्वानुभवेनैव विचारयेत्यर्थः ॥ ५७ ॥ मनसश्च विमर्शे तत्साक्षिमात्रत्वं साक्षिणश्च ब्रह्ममात्रतेति पूर्णैकचिन्मात्रपरिशेष इत्याह—**यदेवेति** । मननं यच्चिदाकाशं तदेवेति संबन्धः ॥ ५८ ॥ उक्तमर्थं दृष्टान्तेनोपपादयति—**यदेवेति** । आवर्त इति विभक्तिलोपश्छान्दसः ॥ ५९ ॥ अभूते असत्ये अनादौ वा मायानभसि सूक्ष्मभूतकार्यचित्तनभसि वा कचनं जीवभावेन स्फुरणं यत्तदेव नामरूपात्मना भावि नानाभवनशीलं सज्जगदित्युच्यते । यथा ऐन्द्रजालिकमणेरम्बरे कचनं बहुविधगन्धर्वनगरच्छिद्रमिव भवति तच्चिद्व्योमैव तत्त्वं परमार्थ इत्यर्थः ॥ ६० ॥ मद्बुद्ध्यार्थोऽधिष्ठानसन्मात्रम् । त्वद्बुद्ध्यार्थ आरोपितसत्ता । एवं त्वमहंशब्दौ कायति अभिलपति यः स त्वमहंशब्दकात् जगत्प्रमाता सोऽपि मद्बुद्धः साक्षिचिन्मात्रस्वभाव एवास्ति न त्वद्बुद्धजीवस्वभाव इत्यर्थः ॥ ६१ ॥ उक्तमुपसंहृत्य प्रस्तुते योजयति—**तस्मादिति** । आकाशवपुषौ सत्यसंकल्पचित्ताकाशमात्रशरीरे । अप्रतिघे सूक्ष्मतमेऽपि च्छिद्रे प्रवेशप्रतिघातरहिते ॥ ६२ ॥ अप्राप्तप्राप्तीच्छा ईप्सा । प्राप्तोपभोगेच्छा काम इति भेदः । उदयमाविर्भावम् । तेन हेतुना । तद्गेहे विदूरथगृहे ॥ ६३ ॥ चिद्गगनं सर्वत्र संभवति । न प्रतिहन्यत इति यावत् । तदेव कलनं सत् आमननं मानसविषयावधारणपर्यन्तं विसारि बहिःप्रसरणस्वभावं सद्वेदनं यथार्थज्ञानं भवति । अकुड्यमस्थूलं सूक्ष्ममेवाहुः । को रुणद्धि किं निमित्तं कथं केन प्रकारेण वा । न कथंचिदपि तस्य रोधसंभावनेत्यर्थः ॥ ६४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे समरसमनन्तरसंस्मृत्यनुभववर्णनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

प्रविष्टयोस्तयो राज्ञा सुप्तबुद्धेन पूजनम् ।
राज्ञोऽन्वयः स्मृतिर्ज्ञेयात्मोपदेशश्च वर्ण्यते ॥ १ ॥

चन्द्रद्वयोदय इव उद्द्योतधवलेनोदरेण सुन्दरं शोभमानम् ॥ १ ॥ कोमलाः सुखस्पर्शा अमलसौगन्ध्या मृदवः सांकल्पिकमन्दारपुष्पमारुता यत्र । तयोर्देव्योः प्रभावेन कारणेन । संबन्धिशब्दस्य नित्यसापेक्षत्वेन सामर्थ्याविघातात्समासः ॥ २ ॥ सौभाग्येन नन्दनोद्यानमिव ॥ ३ ॥ उक्षितः सिक्त इव ॥ ४ ॥ सांकल्पिके आसनद्वये विश्रान्तमुपविष्टम् । अप्सरोद्वयं दिव्यस्त्रीद्वयम् ॥ ५ ॥ निमेषमल्पकालं संचिन्त्यान्तर्विमृश्य । चिरं विमर्शे पूजादिविलम्बेनापराधापत्तेः । अतएवाल्पविमर्शस्यापि निगूहनद्योतनायेवकारः ॥ ६ ॥ निद्राकाले व्यस्तानि परितः संयमितानि स्वस्वोचितस्थानं प्रापितानि अतएव कण्ठाद्यालम्बीनि माल्यादीनि यस्य तथाविधः सन् । पुष्पाण्याहरतीति पुष्पा-

१ त्वमहंशब्दौ कायतीति विचारणीयोंऽशः । २ महाव्योम्नि इति पाठः । ३ वलनं इति कतिपयपुस्तकेषु पठ्यते ।

उपधानप्रदेशस्थात्स्वयं पटलकोटरात् ।
बद्धपद्मासनो भूमौ भूत्वोवाचेदमानतः ॥ ८
जयतां जन्मदौस्थित्यदाहदोषशशिप्रभे ।
देव्यौ बाह्यान्तरतमोविद्रावणरविप्रभे ॥ ९
तयोरुक्त्वेति तत्याज पादयोः कुसुमाञ्जलिम् ।
तीरद्रुमो विकसितः पद्मिन्योः पद्मयोरिव ॥ १०
लीलायै भूपजन्माथ वक्तुं मन्त्रिणमीश्वरी ।
बोधयामास पार्श्वस्थं संकल्पेन सरस्वती ॥ ११
प्रबुद्धोऽप्सरसौ दृष्ट्वा प्रणम्य कुसुमाञ्जलिम् ।
तयोः पादेषु संत्यज्य विवेश पुरतो नतः ॥ १२
उवाच देवी हे राजन्कस्त्वं कस्य सुतः कदा ।
इह जात इति श्रुत्वा स मन्त्री वाक्यमब्रवीत् ॥ १३
देव्यौ युष्मत्प्रसादोऽयं भवत्योरपि यत्पुरः ।
वक्तुं शक्नोसि तद्देव्यौ श्रूयेतां जन्म मत्प्रभोः ॥ १४
आसीदिक्ष्वाकुवंशोत्थो राजा राजीवलोचनः ।
श्रीमान्कुन्दरथो नाम दोश्छायाच्छादितावनिः ॥ १५
तस्याभूदिन्दुवदनः पुत्रो भद्ररथाभिधः ।
तस्य विश्वरथः पुत्रस्तस्य पुत्रो बृहद्रथः ॥ १६
तस्य सिन्धुरथः पुत्रस्तस्य शैलरथः सुतः ।
तस्य कामरथः पुत्रस्तस्य पुत्रो महारथः ॥ १७
तस्य विष्णुरथः पुत्रस्तस्य पुत्रो नभोरथः ।
अयमस्मत्प्रभुस्तस्य पुत्रः पूर्णमलाकृतिः ॥ १८
अमृतापूरितजनः क्षीरोदस्येव चन्द्रमाः ।
महद्भिः पुण्यसंभारैर्विदूरथ इति श्रुतः ॥ १९
जातो मातुः सुमित्राया गौर्या गुह इवापरः ।
पितास्य दशवर्षस्य दत्त्वा राज्यं वनं गतः ॥ २०
पालयत्येष भूपीठं ततः प्रभृति धर्मतः ।
भवत्यावद्यसंप्राप्ते फलिते सुकृतद्रुमे ॥ २१
देव्यौ दीर्घतपःक्लेशशतैर्दुष्प्रापदर्शने ।
इत्ययं वसुधाधीशो विदूरथ इति श्रुतः ॥ २२
अद्य युष्मत्प्रसादेन परां पावनतां गतः ।
इत्युक्त्वा संस्थिते तूष्णीं मन्त्रिण्यवनिपे तथा ॥ २३
कृताञ्जलौ नतमुखे बद्धपद्मासनेऽवनौ ।
राजन्स्मर विवेकेन पूर्वजातिमिति स्वयम् ॥ २४
वदन्ती मूर्ध्नि पस्पर्श तं करेण सरस्वती ।
अथ हार्दं तमो मायापद्मस्य क्षयमाययौ ॥ २५
सुविकासं च हृदयं ज्ञप्तिस्पर्शोदयेऽभवत् ।
सस्मार पूर्ववृत्तान्तमन्तः स्फुरदिव स्थितम् ॥ २६
त्यक्तदेहैकराज्यत्वं लीलाविलसितान्वितम् ।
ज्ञात्वा प्रज्ञप्तिवृत्तान्तं लीलायास्तु विजृम्भितम् २७
आत्मोदन्तं बभूवासावुह्यमान इवार्णवे ।
उवाचात्मनि संसारे बत माययमातता ॥ २८
परिज्ञाता प्रसादेन देव्योरिह मयाधुना ।

राजोवाच ।

हे देव्यौ किमिदं नाम दिनमेकं मृतस्य मे ॥ २९
गतमद्येह जातानि वयो वर्षाणि सप्ततिः ।
स्मराम्यनेककार्याणि स्मरामि प्रपितामहम् ॥ ३०
स्मरामि बाल्यं तारुण्यं मित्रं बन्धुपरिच्छदम् ।

ज्ञप्तिरुवाच ।

राजन्मृतिमहामोहमूर्च्छायाः समनन्तरम् ॥ ३१
तस्मिँल्लोकान्तरेऽतीते तस्मिन्नेव मुहूर्तके ।
तस्मिन्नेव गृहे चास्मिन्नेव व्योम्न्यपि सद्मनि ॥ ३२
अयं तस्य गृहस्यान्तर्व्योमन्येव किल स्थिते ।
गिरिग्रामकविप्रस्य गृहेऽन्तर्भूप मण्डपः ॥ ३३
तस्यान्तरेऽयमाभाति प्रत्येकं च जगद्गृहम् ।
किल ब्राह्मणगेहान्तर्जीवस्ते मदुपास्थितः ॥ ३४

---

हारो भृत्य इव ॥ ७ ॥ पटलं पुष्पकरण्डम् ॥ ८ ॥ दौस्थित्यं दुःखजीवनम् । दाहस्त्रिविधसंतापः ॥ ९ ॥ इत्युक्त्वा तयोः पादयोः कुसुमाञ्जलिं तत्याजेत्यन्वयः ॥ १० ॥ ११ ॥ १२ ॥ इति प्रश्नं स मन्त्री श्रुत्वा ॥ १३ ॥ १४ ॥ दोश्छायया आच्छादितेव शत्रुदारिद्र्यादिसंतापनिवारणेन पालिता अवनिर्येन ॥ १५ ॥ ॥ १६ ॥ १७ ॥ तस्य नभोरथस्य पुण्यसंभारैर्जातः ॥ १८ ॥ अमृतसदृशैः स्नेहमाधुर्यौदार्यादिगुणैरापूरिता जना येन । पुण्यसंभारैरित्येतद्देहलीदीपकन्यायेन मात्रापि संबध्यते ॥ १९ ॥ अस्य दशवर्षस्येति 'षष्ठी चानादरे' इति भावलक्षणे षष्ठी वैराग्यातिशयाद्राज्ये पुत्रे चानादरद्योतनार्था ॥ २० ॥ अस्माकं सुकृतद्रुमे फलिते सति अद्य संप्राप्ते ॥ २१ ॥ २२ ॥ २३ ॥ इति वदन्ती सरस्वती मूर्ध्नि पस्पर्शेति परेणान्वयः ॥ २४ ॥ हार्दं हृदयाकाशस्थजीवावरकम् ॥ २५ ॥ हृदयं मनः सुविकासं सान्तःप्रकाशम् ॥ २६ ॥ एक एव राजा यस्य भुवनस्य तदेकराट् तद्भाव ऐकराज्यं देहश्च ऐकराज्यं च देहैकराज्ये त्यक्ते देहैकराज्ये येन स त्यक्तदेहैकराज्यस्तस्य भावस्त्यक्तदेहैकराज्यत्वम् । ज्ञप्त्यनुग्रहबलादननुभूतमपि ज्ञातवानित्याह—**ज्ञात्वेति** ॥ २७ ॥ आत्मोदन्तं स्वपूर्ववृत्तान्तम् । आत्मनि स्वमनसि ॥ २८ ॥ २९ ॥ ॥ ३० ॥ परिच्छदं परीवारम् । यत्स्मरामि तदिदं किमिति तत्तत्त्वजिज्ञासया प्रश्नः । स्वरूपत्वमधिष्ठानचिन्मात्रमेव सर्वप्रपञ्चतत्त्वमितरत्तु मायामात्रमिति तत्त्वमुपदेष्टुं प्रथमं विप्रकृष्टदेशकालस्थितं लोकान्तरागमनभ्रमं वारयन्ती ज्ञप्तिरुवाच—**राजन्नि**त्यादिना ॥ ३१ ॥ अस्मिन्नेव त्वत्सद्मनि तदधिष्ठानचिद्व्योमनि अतीते मायावरणतिरोहिते गिरिग्रामकविप्रस्य गृहेऽन्तःस्थिते तस्मिन्पाञ्चे लोकान्तरे तस्मिन्नेव राजगृहे तत्रापि प्रधानगृहस्यान्तर्व्योमन्येवायं ब्रह्माण्डमण्डपः किलास्तीति प्राक्तनकथाक्रमानुरोधादन्वयः ॥ ३२ ॥ ३३ ॥ तस्य ब्रह्माण्डमण्डपस्यान्तरे अयं परिदृश्यमानस्त्वदीयजन्मादिराभाति आपाततः

---

१ नदिदं इति पाठः.

तत्रैव तस्य भूपीठं तस्मिंश्च किल मण्डपे ।
तस्यैव च गृहस्यान्तरिदं संसारमण्डलम् ॥ ३५
तत्रैवेदं तव गृहं स्थितमारम्भमन्थरम् ।
तत्रैव चेतसि तव निर्मलाकाशनिर्मले ॥ ३६
प्रतिभामागतमिदं व्यवहारभ्रमाततम् ।
यथेदं नाम मे जन्म तथेक्ष्वाकुकुलं मम ॥ ३७
एवंनामान एते मे पुराभूवन्पितामहाः ।
जातोऽहमभवं बालो दशवर्षस्य मे पिता ॥ ३८
परिव्राड्विपिनं यात इह राज्येऽभिषिच्य माम् ।
ततो दिग्विजयं कृत्वा कृत्वा राज्यमकण्टकम् ॥ ३९
अमीभिर्मन्त्रिभिः पौरैः पालयामि वसुन्धराम् ।
यज्ञक्रियाक्रमवतो धर्मे पालयतः प्रजाः ॥ ४०
वयसः समतीतानि मम वर्षाणि सप्ततिः ।
इदं परबलं प्राप्तं मम दारुणविग्रहः ॥ ४१
युद्धं कृत्वेदमायातो गृहमस्मिन्यथास्थितम् ।
इमे देव्यौ गृहे प्राप्ते समैते पूजयाम्यहम् ॥ ४२
पूजिता हि प्रयच्छन्ति देवताः स्वसमीहितम् ।
प्रमेयमेतयोरेका ज्ञानं जातिस्मृतिप्रदम् ॥ ४३
इह दत्तवती देवी भाजस्येव विकासनम् ।
इदानीं कृतकृत्योऽस्मि जातोऽस्मि गतसंशयः ॥ ४४
शाम्यासि परिनिर्वामि सुखमासे च केवलम् ।
इतीयमातता भ्रान्तिर्भवतो भूरिसंभ्रमा ॥ ४५
नानाचारविहाराढ्या सलोकान्तरसंचरा ।
यस्मिन्नेव मुहूर्ते त्वं मृतिमभ्यागतः पुरा ॥ ४६
तदैव प्रतिभैषा ते स्वयमेवोदिता हृदि ।
एकामावर्तचलनां त्यक्त्वा दत्ते यथाऽपराम् ॥ ४७
क्षिप्रमेव नदीवाहो वित्प्रवाहस्तथैव च ।
आवर्तान्तरसंमिश्रो यथावर्तः प्रवर्तते ॥ ४८
कदाचिदेवं सर्गश्रीर्मिश्राऽमिश्रा च वर्धते ।
तस्मिन्मृतिमुहूर्ते ते प्रतिभानमुपागतम् ॥ ४९
एतज्ज्ञालमसद्रूपं चिद्व्रानोः समुपस्थितम् ।
यथा स्वप्नमुहूर्तेऽन्तः संवत्सरशतभ्रमः ॥ ५०
यथा संकल्पनिर्माणे जीवनं मरणं पुनः ।
यथा गन्धर्वनगरे कुड्यमण्डनवेदनम् ॥ ५१
यथा नौयानसंरम्भे वृक्षपर्वतवेपनम् ।
यथा स्वधातुसंक्षोभे पूर्वपर्वतनर्तनम् ॥ ५२
यथा समञ्जसं स्वप्ने स्वशिरःप्रविकर्तनम् ।
मिथ्यैवैवमियं प्रौढा भ्रान्तिराततरूपिणी ॥ ५३
वस्तुतस्तु न जातोऽसि न मृतोऽसि कदाचन ।
शुद्धविज्ञानरूपस्त्वं शान्त आत्मनि तिष्ठसि ॥ ५४
पश्यसीवैतदखिलं न च पश्यसि किंचन ।
सर्वात्मकतया नित्यं प्रकचस्यात्मनात्मनि ॥ ५५
महामणिरिवोदार आलोक इव भास्वरः ।
वस्तुतस्तु न भूपीठमिदं न च भवानयम् ॥ ५६
न चेमे गिरयो ग्रामा न चैते न च वै वयम् ।
गिरिग्रामकविप्रस्य मण्डपाकाशके किल ॥ ५७
तल्लीलाभर्तृदाराढ्यं जगदाभाति भास्वरम् ।
तत्र लीलाराजधानी मण्डपामण्डिताकृतिः ॥ ५८
भाति तस्योदरे व्योम्नि तदेवं विदितं जगत् ।
तस्मिञ्जगति गेहेऽन्तर्यस्मिन्वयमिह स्थिताः ॥ ५९
एवं तेषां मण्डपानां व्योमाव्योमैव निर्मलम् ।
तथैव मण्डपेष्वस्ति न मही न च पत्तनम् ॥ ६०

प्रथते तर्हि किं तदेव ब्राह्मणजगदित्थं भाति नेत्याह—**प्रत्येकमिति** । भिन्नभिन्नमित्यर्थः । प्रत्येकतामेवोपपादयन्नाह—**किलेत्यादिना** । मां उपास्थितो मदुपास्थितः मद्भक्त इत्यर्थः ॥ ३४ ॥ इदं संनिहितं पाद्मसंसारमण्डलम् ॥ ३५ ॥ तत्र पाद्मगृहमण्डपे एव । प्रपञ्चत्रयस्यापि चित्तविकारमात्रत्वमित्याशयेनाह—**तत्रैव चेतसीति** । नैर्मल्योक्तिश्चित्प्रतिबिम्बोपपत्त्यर्था ॥ ३६ ॥ व्यवहारभ्रमाततत्वमनुभूतमुल्लिख्य प्रपञ्चयति—**यथेत्यादिना** । नामेति किलार्थे ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ मन्त्रिभिः पौरैः सहेति शेषः ॥ ४० ॥ दारुणो विग्रहः संग्रामः प्राप्त इति विपरिणामेनानुषज्यते ॥ ४१ ॥ अस्मिन्गृहे यथापूर्वं स्थितं मयेति शेषः ॥ ४२ ॥ एतयोर्देव्योर्मध्ये एका ॥ ४३ ॥ ४४ ॥ सर्वदुःखोपशमाच्छाम्यासि । निरतिशयसुखसमृद्ध्या परिनिर्वामि । केवलं एकरसं सुखमेवाहं भूत्वा आसे तिष्ठामि ॥ ४५ ॥ लोकान्तरसंचराः सिद्धा अस्मदादयस्तत्सहिता ॥ ४६ ॥ ४७ ॥ वेत्तीति विच्चित्तं तत्प्रवाहः ॥ ४८ ॥ मिश्रा जीवान्तरसर्गसंवलिता जाग्रति । अमिश्रा स्वप्ने । चिद्भानोस्ते प्रतिभानमुपागतमिति संबन्धः ॥ ४९ ॥ ५० ॥ कुड्यानां तन्मण्डनचित्रादीनां च वेदनं दर्शनम् ॥ ५१ ॥ वेपनं कम्पनम् । स्वस्य धातूनां वातपित्तश्लेष्मणां संक्षोभे सन्निपाते अपूर्वं पर्वतनर्तनम् ॥ ५२ ॥ असमञ्जसं व्यवहारे अननुरूपं मिथ्यैव तथेति शेषः ॥ ५३ ॥ तर्हि कः परमार्थसत्यस्तत्राह—**वस्तुतस्त्विति** ॥ ५४ ॥ दृश्यमिथ्यात्वे तत्संवलितचिदाभासलक्षणं तद्दर्शनमपि मिथ्यैवेति निर्विषयचिन्मात्रपरिशेष इत्याशयेनाह—**पश्यसीवेति**। प्रकचसि प्रदीप्यसे ॥ ५५ ॥ आलोकः सूर्यादिः । भवान् अयं विदूरथदेहः ॥ ५६ ॥ एते तव परिजनाः शत्रवश्च । अल्पतरे महत्तरस्यासंमाननमेव मिथ्यात्वकारणमित्याशयेनाह—**गिरिग्रामकेत्यादिना** ॥ ५७ ॥ मण्डपैः शालाभिरासमन्तान्मण्डिता आकृतिः संस्थानं यस्याः ॥ ५८ ॥ यस्मिन्गृहे इह सांप्रतं वयं स्थितास्तद्वातीत्यर्थः ॥ ५९ ॥ तेषां मण्डपानां यद्व्योम तदव्योम आकाशादिशून्यं ब्रह्मैव

१ यथा पुरा इति पाठः.

२ संसिद्धो इति पाठः.

न वनानि न शैलौघा न मेघसरिदर्णवाः ।
केवलं तत्र निःशून्ये विहरन्ति गृहे जनाः ॥ ६१
न पश्यन्ति जना नापि पार्थिवा न च भूधराः ।

विदूरथ उवाच ।

एवं चेत्तत्कथं देवि ममेहानुचरा इमे ॥ ६२
संपन्ना आत्मना सन्ति ते किमात्मनि नोऽथवा ।
जगत्स्वप्नार्थवद्भाति तस्य स्वप्ननरादयः ॥ ६३
कथमात्मनि सत्याः स्युर्न सत्या वेति मे वद ।

श्रीसरस्वत्युवाच ।

राजन्विदितवेद्येषु शुद्धबोधैकरूपिषु ॥ ६४
न किंचिदेतत्सद्रूपं चिद्व्योमात्मसु जागतम् ।
शुद्धबोधात्मनो भाति कुतो नाम जगद्भ्रमः ॥ ६५
रज्ज्वां सर्पभ्रमे शान्ते पुनः सर्पभ्रमः कुतः ।
असद्भावे परिज्ञाते कुतः सत्ता जगद्भ्रमे ॥ ६६
परिज्ञाते मृगजले पुनर्जलमतिः कुतः ।
स्वप्नकाले परिज्ञाते स्वे स्वप्नमरणं कुतः ।
स्वस्वप्ने स्वप्नमृतिभीरमृतस्यैव जायते ॥ ६७
बुद्धस्य शुद्धस्य शरन्नभःश्रीः
स्वच्छावदातातिततारायस्य ।
अहं जगच्चेति कुशब्दकार्थौ
न वस्तुतः सोऽङ्ग हि वाचिकं तत् ॥ ६८
इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ६९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने भ्रान्तिविचारवर्णनं नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

## पञ्चमदिनम् ।

## द्विचत्वारिंशः सर्गः ४२

श्रीवसिष्ठ उवाच ।

यस्त्ववुद्धमतिर्मूढो रूढो न वितते पदे ।
वज्रसारमिदं तस्य जगदस्त्यसदेव सत् ॥ १
यथा वालस्य वेतालो मृतिपर्यन्तदुःखदः ।
असदेव सदाकारं तथा मूढमतेर्जगत् ॥ २
ताप एव यथा वारि मृगाणां भ्रमकारणम् ।
असत्यमेव सत्याभं तथा मूढमतेर्जगत् ॥ ३
यथा स्वप्नमृतिर्जन्तोरसत्या सत्यरूपिणी ।
अर्थक्रियाकरी भाति तथा मूढधियां जगत् ॥ ४
अव्युत्पन्नस्य कनके कानके कटके यथा ।
कटकज्ञतिरेवास्ति न मनागपि हेमधीः ॥ ५
तथाऽज्ञस्य पुरागारनगनागेन्द्रभासुरा[1] ।
इयं दृश्यदृगेवास्ति न त्वन्या परमार्थदृक् ॥ ६
यथा नभसि मुक्तालीपिच्छकेशोण्ड्रकादयः ।
असत्याः सत्यतां याता भात्येवं दुर्दृशां जगत् ॥ ७

॥ ६० ॥ निःशून्ये चिन्मात्रपूर्णे तत्र ब्रह्मणि मिथ्यागृहे मिथ्याजना विहरन्तीत्यर्थः ॥ ६१ ॥ जना न पश्यन्तीत्युक्त्या मन्त्रिभृत्यादीनां स्वप्नदृष्टसामाजिकजनसाम्यं प्राप्तं तदसंभावयन् राजा पृच्छति—**एवं चेदि**त्यादिना ॥ ६२ ॥ आत्मना जीवेन संपन्ना युक्ताः सन्ति । अहमिवात्मनि सत्स्वभावे । स्वशङ्काबीजमाह—**जगदि**ति । तस्य ममेत्यर्थः ॥ ६३ ॥ कथं सत्याः स्युस्त्वदुक्तकल्पे **इ**त्यर्थः । अज्ञदृशा जीवभावेन तेषां यदि सत्यतां पृच्छसि तर्हि सा तवापि नास्ति । तत्त्वदृशा अधिष्ठानचिन्मात्रभावेन चेत्तेषामपि सास्त्येवेत्याशयेन देव्युत्तरमाह—**राजन्नि**त्यादिना ॥ ६४ ॥ ६५ ॥ ६६ ॥ स्वप्नकाले स्वे जीवस्वरूपे प्रबोधेन परिज्ञाते सति स्वप्नमरणं कुतः, कथं सत्यमित्यर्थः ॥ ६७ ॥ बोधेनाज्ञानमेघावरणापाये शरन्नभःश्रीरिव स्वच्छो निर्मलः स्फुरदात्मभाभिरवदातो धवलीकृतस्तदैकरस्यापत्त्या अतिततः अतिविस्तारं पूर्णतालक्षणं प्राप्त आशयो यस्य बुद्धस्य तत्त्वविदः सः अज्ञदृशा प्रसिद्धः अहमिति जगदिति च कुत्सितस्याल्पस्य शब्दस्यार्थौ वस्तुतो नास्त्येव । अङ्गेति कोमलामन्त्रणे । हि यस्मात्तद्वाचिकं वाचारम्भणमात्रम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतेरिति भावः ॥ ६८ ॥ ६९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे भ्रान्तिविचारवर्णनं नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

सत्यत्वं जगतोऽज्ञाने स्वप्नस्यापि प्रपञ्च्यते ।
अत्रान्ते तु कथाशेषो वरदानान्त ईर्यते ॥ १ ॥

विद्वद्दृशा जगतो मिथ्यात्वं विस्तरेणोपवर्ण्य तद्दृढीकाराया-ज्ञदृशा तस्यात्यन्तदृढसत्यतामाह—**यस्त्वि**ति । रूढो दृढव्युत्पन्नो न वज्रस्य सारो दार्ढ्यमिव सारो यस्य तत्तथाविधं परमार्थसदस्ति । लोके अर्थक्रियाकारित्वस्यैव सत्यत्वेन प्रसिद्धेरिति भावः ॥ १ ॥ असतोऽज्ञं प्रत्यर्थक्रियाकारित्वलक्षणं सत्त्वं(त्वं?) क्व दृष्टं तत्राह—**यथे**ति ॥ २ ॥ यथा तापो मरुभूम्यातप एवाज्ञमृगदृशा सत्यवारि सत् मृगाणां भ्रमकारणम् ॥ ३ ॥ शोकरोदनाद्यर्थक्रियाकरी ॥ ४ ॥ कनके अव्युत्पन्नस्य अनुगतकनकस्वरूपानभिज्ञस्येत्यर्थः ॥ ५ ॥ अगाराणि गृहाः नगाः पर्वता वृक्षाश्च नागेन्द्रा गजाः सर्पा वा तैर्भासुरा परमार्थदृक् सर्वानुगतैकसद्ब्रह्मदृष्टिः ॥ ६ ॥ मुक्ताली मौक्तिकमाला । पिच्छानि

[1] भास्वरा इति पाठः.

दीर्घस्वप्नमिदं विश्वं विद्ध्यहन्तादिसंयुतम् ।
अत्रान्ये स्वप्नपुरुषा यथा सत्यास्तथा शृणु ॥ ८
अस्ति सर्वगतं शान्तं परमार्थघनं शुचि ।
अचेत्यचिन्मात्रवपुः परमाकाशमाततम् ॥ ९
तत्सर्वगं सर्वशक्ति सर्वं सर्वात्मकं स्वयम् ।
यत्र यत्र यथोदेति तथास्ते तत्र तत्र वै ॥ १०
तेन स्वप्नपुरे द्रष्टा यान्वेत्ति पुरवासिनः ।
नरानिति नरा एव क्षणात्तस्य भवन्ति ते ॥ ११
यद्द्रष्टुश्चित्स्वरूपं तत्स्वप्नाकाशान्तरस्थितम् ।
स्वप्नाकाशचित्ताभं हि नरानामेति भावितम् ॥ १२
वेदितृत्वैक्यवशतो नरतेवावबुध्यते ।
आत्मन्यतश्चिद्बलेन द्वयोरप्येति सत्यता ॥ १३

श्रीराम उवाच ।

स्वप्नेऽपि स्वप्नपुरुषा न सत्याः स्युर्मुने यदि ।
वद तत्को भवेद्दोषो मायामात्रशरीरिणि ॥ १४

श्रीवसिष्ठ उवाच ।

स्वप्ने न पुरवास्तव्या वस्तुतः सत्यरूपिणः ।
प्रमाणमत्र शृणु मे प्रत्यक्षं नाम नेतरत् ॥ १५
सर्गादावात्मभूर्भाति स्वप्नाभानुभवात्मकः ।
तत्संकल्पकलं विश्वमेवं स्वप्नाभमेव तत् ॥ १६
एवं विश्वमिदं स्वप्नस्तत्र सत्यं भवान्मम ।
यथैव त्वं तथैवान्ये स्वप्ने स्वप्नवरा नृणाम् ॥ १७
स्वप्ने नगरवास्तव्याः सत्या न स्युरिमे यदि ।
तदिहापि तदाकारे न सत्यं मे मनागपि ॥ १८
यथाहं तव सत्यात्मा सत्यं सर्वं भवेन्मम ।
स्वप्नोपलम्भे संसारे मिथः सिद्ध्यै प्रमेदृशी ॥ १९
संसारे विपुले स्वप्ने यथा सत्यमहं तव ।
यथा त्वमपि मे सत्यं सर्वं स्वप्नेष्विति क्रमः ॥ २०

श्रीराम उवाच ।

स्वप्नद्रष्टरि निर्निद्रे तद्द्रष्टुः स्वप्नपत्तनम् ।
सद्रूपत्वात्तथैवास्ते ममेति भगवन्मतिः ॥ २१

श्रीवसिष्ठ उवाच ।

एवमेतत्तथैवास्ते सत्यत्वात्स्वप्नपत्तनम् ।
स्वप्नद्रष्टरि निर्निद्रेऽप्याकाशविशदाकृति ॥ २२
एतदास्तामिदं तावद्यज्जाग्रदिव मन्यसे ।
विद्धि तत्स्वप्नमेवान्तर्देशकालाद्यपूरकम् ॥ २३

बर्हाणि ॥ ७ ॥ अन्ये स्वातिरिक्तसत्यजनाः स्वप्नपुरुषाः स्वप्नदृष्टपुरुषान्तरप्रायाः । तर्हि ते कथं शास्त्रीययाजनप्रतिग्रहोपदेशाद्यर्थक्रियाक्षमाः सत्या इति शास्त्रेऽभ्युपगतास्तत्राह—**यथा सत्यास्तथा शृण्विति** ॥ ८ ॥ सर्वगतं सर्वाधिष्ठानम् । परमार्थघनं निरतिशयसत्यम् । 'प्राणा वै सत्यं तेषामेष सत्यम्' इत्यादिश्रुतेः ॥ ९ ॥ तस्य मायाशबलं रूपमाह—**तत्सर्वग**मिति । मायया यत्र यत्र यथा यथा यादृशार्थक्रियायोग्यमाविर्भवति तत्र तत्र तथा आस्ते ॥ १० ॥ तथा जागरे शास्त्रीयार्थक्रियायोग्यं तदाविर्भूतं न स्वप्ने इत्यवान्तरविशेषेऽपि न सद्रूपे विशेष इत्याशयेनाह—**तेने**ति ॥ ११ ॥ स्वप्नस्याकाशो विकाशः सूक्ष्मतमनाडीच्छिद्रं तदन्तःस्थितं स्वप्नाध्यस्तविपुलाकाशपरिवर्तिचित्ताभं चित्तवासनानुसारेण विवर्तमानमित्यर्थः ॥ १२ ॥ स्वप्नजागरयोर्द्वयोरपि आत्मनि नरताद्यवबोधे अध्यस्ते सत्यतावबोधे चान्योन्यतादात्म्यसंसर्गाध्यास एव हेतुरित्याह—**वेदितृत्वे**ति । वेदितुर्भावो वेदितृत्वं सत्यस्वप्रकाशापरोक्षचैतन्यं तदैक्यं तत्तादात्म्याध्यासस्तद्वशः संसर्गाध्यासस्तस्मादित्यर्थः । द्वयोः स्वप्नजागरयोरध्यस्ततद्धर्मयोर्वा सत्यता एति प्रथते ॥ १३ ॥ तदेवं स्वप्नजाग्रद्दृश्यपदार्थानां मिथुनीभूतमायातदधिष्ठानलक्षणसत्यानृतोभयशरीरतोक्ता । तत्र रामः स्वप्नस्यानृतमायामात्रशरीरत्वमस्तु किं सत्यांशानुप्रवेशेनेति शङ्कते—**स्वप्ने** इति । यदि जाग्रत्पुरुषा अधिष्ठानसत्तया सत्या न स्युस्तर्हि व्यवहारविसंवादः कर्मशास्त्राप्रामाण्यं च दोषः स्यादिति तेषां तथात्वमस्तु । यदि सत्यासंवलितमायामात्रशरीरिणि स्वप्नेऽपि कल्पिताः स्वप्नपुरुषास्तथा सत्या न स्युस्तदा को दोषः । 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति भगवता व्यासेन स्वप्नस्य मायामात्रत्वोक्तेः । तथाच कथं स्वजगतः स्वप्नसाम्यमिति भावः ॥ १४ ॥ स्वाप्नार्था ब्रह्मवद्वस्तुतः सत्या न भवन्तीत्येतावदेव शक्यं वक्तुं न निरधिष्ठानत्वादधिष्ठानसत्तयापि सत्या न भवन्तीति । प्रत्यक्षप्रमाणविरोधादित्याशयेन वसिष्ठ उवाच—**स्वप्ने** इति । नेतरदिति प्रमाणान्तरस्यानादरार्थमुक्तं न प्रतिषेधार्थम् । नह्यत्यन्तासतः प्रत्यक्षं नामोपपद्यते वन्ध्यापुत्रादावदर्शनादित्याशयः ॥ १५ ॥ किंच स्वप्नस्यात्यन्तासत्त्वे जाग्रत्प्रपञ्चस्यापि तद्दुर्वारम्, तस्यापि हैरण्यगर्भस्वप्नरूपत्वादित्याशयेनाह—**सर्गादा**विति ॥ १६ ॥ तथाच जगतः स्वप्नसाम्यं प्रागुक्तसत्यता च सिद्धेत्याह—**एव**मिति । तत्र स्वप्ने भवान्मम सत्यं त्वत्सत्यतायास्त्वया अपलपितुमशक्यत्वात् । यथैव त्वं तथैवान्येऽपि त्वदृशा मदृशा च सत्याः । एवमन्येषामपि नृणां स्वस्वानुभवानुसारात्स्वप्नस्त्यता सिद्धेत्यर्थः ॥ १७ ॥ उक्तमेवार्थं पुनः स्पष्टमाह—**स्वप्ने** इत्यादिना । नगरस्य वास्तुनि वेश्मभुवि भवा नगरवास्तव्याः, नगरे वसन्तीति वा नगरवास्तव्याः । 'वसेस्तव्यत्कर्तरि णिच्च' इति वचनात् ॥ १८ ॥ १९ ॥ २० ॥ एवं चेत्तर्हि स्वप्नद्रष्टुर्जागरणे जातेऽपि स्वप्नप्रपञ्चस्य जाग्रत्प्रपञ्चवदवस्थानं स्यादिति रामः शङ्कते—**स्वप्ने**ति । इति मतिर्मम त्वद्वचनात्संपन्नेति शेषः ॥ २१ ॥ इष्टापत्त्या वसिष्ठः परिहरति—**एवमेतदि**ति । आकाशविशदाकृति अधिष्ठानसन्मात्रस्वभावं सत्यमेवेत्यर्थः ॥ २२ ॥ एवं तर्हि, जाग्रदर्थवत्स्वप्नस्यापि स्वप्नान्तरे व्यवहारसंवादः स्यादिति

१ कलाविश्वं इति पाठः. २ सत्याः संवलित इति पाठः.

एवं सर्वमिदं भाति न सत्यं सत्यवत्स्थितम् ।
रञ्जयत्यपि मिथ्यैव स्वप्नस्त्रीसुरतोपमम् ॥ २४
सर्वत्र विद्यते सर्वं देहस्यान्तर्बहिस्तथा ।
यत्तु वेत्ति यथा संवित्तत्तथा स्वैव पश्यति ॥ २५
यत्कोशे विद्यते द्रव्यं तद्द्रष्ट्रा लभ्यते यथा ।
तथास्ति सर्वं चिद्व्योम्नि चेत्यते तत्त्वनेन वै ॥ २६
अनन्तरमुवाचेदं देवी ज्ञप्तिर्विदूरथम् ।
कृत्वा बोधामृतासेकैर्विवेकाङ्कुरसुन्दरम् ॥ २७
एतदेव मया राजँल्लीलार्थमुपवर्णितम् ।
स्वस्ति तेऽस्तु गमिष्यावो दृष्टा दृष्टान्तदृष्टयः ॥ २८

श्रीवसिष्ठ उवाच ।

इति प्रोक्ते सरस्वत्या गिरा मधुरवर्णया ।
उवाच वचनं धीमान्भूमिपालो विदूरथः ॥ २९

विदूरथ उवाच ।

ममापि दर्शनं देवि मोघं भवति नार्थिनि ।
महाफलप्रदायास्तु कथं तव भविष्यति ॥ ३०
अहं देहं समुत्सृज्य लोकान्तरमितोऽपरम् ।
निजमायामि हे देवि स्वप्नात्स्वप्नान्तरं यथा ॥ ३१
पश्यादिशाशु मां मातः प्रपन्नं शरणागतम् ।
भक्तेऽवहेला वरदे महतां न विराजते ॥ ३२
यं प्रदेशमहं यामि तमेवायात्वयं मम ।
मन्त्री कुमारी चैवेयं बालेति कुरु मे दयाम् ॥ ३३

श्रीसरस्वत्युवाच ।

आगच्छ राज्यमुचितार्थविलासचारु
प्राग्जन्ममण्डलपते कुरु निर्विशङ्कम् ।
अस्माभिरर्थिजनकामनिराकृतिर्हि
दृष्टा न काचन कदाचिदपीति विद्धि ॥ ३४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० स्वप्नपुरुषसत्यत्वनिरूपणं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ४३

श्रीसरस्वत्युवाच ।

अस्मिन् रणवरे राजन्मर्तव्यं भवताधुना ।
प्राप्तव्यं प्राक्तनं राज्यं सर्वं प्रत्यक्षमेव ते ॥ १
कुमार्या मन्त्रिणा चैव त्वया च प्राक्तनं पुरम् ।
आगन्तव्यं शवीभूतं प्राप्तव्यं तच्छरीरकम् ॥ २
आवां यावो यथायातं वातरूपेण च त्वया ।
आगन्तव्यः स देशस्तु कुमार्या मन्त्रिणापि च ॥ ३
अन्यैव गतिरश्वस्य गतिरन्या खरोष्ट्रयोः ।
मदस्विन्नकपोलस्य गतिरन्यैव दन्तिनः ॥ ४
प्रस्तुतेति कथा यावन्मिथो मधुरभाषिणोः ।

---

रामस्य विवक्षामालक्ष्य देशान्तरकालान्तरानुवृत्तिकृतोऽसंवादो जाग्रत्पदार्थेष्वपि बहुष्वस्ति । पृथिव्याकाशनामजात्यादिकतिपयपदार्थानुवृत्तिसंवादः स्वप्नेऽप्यस्तीति न विशेष उपपादयितुं शक्य इत्याशयेन प्रौढिमादर्शयन्नाह—**एतदास्ता**मिति । अथवा यदि स्वाप्नार्थाः सत्यास्तर्हि जागरेऽप्यनुवर्तेरन्निति रामस्याशङ्कामालक्ष्याह वसिष्ठः-**एतदि**ति । स्वाप्नस्य जाग्रद्बाह्यदेशकालाद्यननुवृत्त्या यद्यलीकत्वं मन्यसे तर्हि यज्जाग्रदिति मन्यसे तदपि अन्तः स्वाप्नदेशकालाद्यपूरकमिति तुल्यमिति द्वयोः स्वप्नतैवेत्यर्थः ॥२३॥ एवमधिष्ठानसत्तया सत्यत्वेऽपि सर्वदेशकालाद्यपूरकत्वान्न स्वतस्तथेति मिथ्यात्वमुभयोः सममित्याह—**एव**मिति । रञ्जयति स्वासक्त्या मोहयति ॥ २४ ॥ संविदस्तु सर्वदेशकालादिपूरकत्वात्सत्यत्वं सर्वत्र मायाशक्त्या सर्वभावेन स्फुरणसामर्थ्यं चेत्याह—**सर्वत्रे**ति । स्वैव स्वयमेव ॥ २५ ॥ कोशे धनागारे । द्रव्यं धनम् । अनेन चिद्व्योम्ना ॥ २६ ॥ एवमुक्त्वा रामं समाधाय प्रस्तुतकथामालम्ब्याह—**अनन्तर**मिति ॥ २७ ॥ एतत्प्रागुक्तं तत्त्वम् । लीलार्थं लीलाप्रीत्यर्थम् । स्वस्ति अभिलषितार्थसिद्धिरस्तु । जगन्मिथ्यात्वस्योक्तस्य दृष्टान्तदृष्टयो मण्डपान्तस्त्वदीयब्रह्माण्डकल्पनालक्षणा दृष्टा लीलयेति शेषः ॥ २८ ॥ धीमान्स्वस्ति तेऽस्त्वित्युक्तेस्तात्पर्यं विद्वान् ॥ २९ ॥ मम मनुष्यमात्रस्याल्पदानसमर्थस्यापीत्याशयः ॥ ३० ॥ निजं प्राक्तनम् । आयामि अविलम्बेनागमिष्यामि ॥ ३१ ॥ पश्य कृपादृष्ट्या । आदिश प्रयच्छ मत्प्रार्थितमुपदेशोत्तरकार्यं च ॥ ३२ ॥ प्रार्थनीयार्थमाह—**य**मिति । कुमारी अनूढा कन्या ॥ ३३ ॥ लीलाभक्तिभाग्योचितैरर्थविलासैश्चारु राज्यं कुरु । अस्माभिर्निराकृतिः प्रत्याख्यानं कदाचिदपि न कृतेति शेषः । केनचिदपि न दृष्टेत्यर्थः ॥ ३४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे स्वप्नपुरुषसत्यत्वनिरूपणं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

**अभीष्टवरदानं च पुरस्याक्रमदीपनम् ।**
**वर्ण्यते दह्यमानानां चेष्टा च पुरवासिनाम् ॥ १ ॥**

देवी तज्जिज्ञासितं भाव्यर्थमपि स्पष्टमाचक्षाणा वरशेषमपि दातुमाह—**अस्मिन्नि**ति । सर्वं ते प्रत्यक्षमेव भविष्यतीति शेषः ॥ १ ॥ त्वया च प्राक्तनं शवीभूतं तच्छरीरकं प्राप्तव्यमिति संबन्धः ॥ २ ॥ मृत्वा वायुरूपिणा आतिवाहिकदेहरूपेण त्वया स प्राक्तनो देश आगन्तव्यः ॥ ३ ॥ इयमातिवाहिकदेहगतिर्मानोरथिकगतिवन्मण्डपान्तःसंवृताकाशेऽपि सुदूरमिव संभवति नाश्वादिगतिवद्देशवैपुल्यं प्राक्सिद्धमपेक्षत इत्याशयेनाह—**अन्यैवे**ति ॥ ४ ॥ ऊर्ध्वस्थितः प्रासादाग्राद्युन्नतप्रदेशमारुह्य निशि

तावत्प्रविश्य संभ्रान्त उवाचोर्ध्वस्थितो नरः ॥ ५
देव सायकचक्रासिगदापरिघवृष्टिमत् ।
महत्परबलं प्राप्तमेकार्णव इवोद्धतः ॥ ६
कल्पकालानिलोद्भूतकुलाचलशिलोपमम् ।
गदाशक्तिभुशुण्डीनां वृष्टिं मुञ्चति तुष्टिमत् ॥ ७
नगरे नगसंकाशे लग्नोऽग्निर्व्याप्तदिक्तटः ।
दहंश्चटचटास्फोटैः पातयत्युत्तमां पुरीम् ॥ ८
कल्पाम्बुदघटातुल्या व्योम्नि धूममहाद्रयः ।
बलात्प्रोड्डयनं कर्तुं प्रवृत्ता गरुडा इव ॥ ९

श्रीवसिष्ठ उवाच ।

ससंभ्रमं वदत्येवं पुरुषे परुषारवः ।
उदभूत्पूरयन्नाशा बहिः कोलाहलो महान् ॥ १०
बलादाकर्णकृष्टानां धनुषां शरवर्षिणाम् ।
बृंहतामतिमत्तानां कुञ्जराणां तरस्विनाम् ॥ ११
पुरे चटचटास्फोटैर्दहतां जातवेदसाम् ।
पौराणां[1] दग्धदाराणां महाहलहलारवैः ॥ १२
तरतामग्निखण्डानां टांकारः कथितो रवैः ।
ज्वलितानां परिस्पन्दाद्धगद्धगिति चार्चिषाम् ॥ १३
अथ वातायनाद्देव्यौ मन्त्री राजा विदूरथः ।
ददृशुः प्रोल्लसन्नादं महानिशि महापुरम् ॥ १४
प्रलयानलसंक्षुब्धपूर्णैकार्णवरंहसा ।
पूर्णं परबलेनोग्रहेतिमेघतरङ्गिणा ॥ १५
कल्पान्तवह्निविगलन्मेरुभूधरभासुरैः ।
दह्यमानं महाज्वालाज्वालैरम्बरपूरकैः ॥ १६
मुष्टिग्राह्यमहामेघगर्जासंतर्जितोर्जितैः ।
घोरं कलकलारावैर्मांसलैर्दस्युजल्पितैः ॥ १७
पुष्करावर्तसंकाशधूम्राभ्रपिहिताम्बरम् ।
प्रोड्डीनहेमाग्रनिभैर्ज्वालापुञ्जैर्निरन्तरम् ॥ १८
तरदुल्मुकखण्डोग्रतारातरलिताम्बरम् ।
अन्योन्यदेशसञ्चारौघप्रज्वलज्ज्वलनाचलम् ॥ १९
हतसैन्यपुरापातं द्रुताङ्गाराभ्रकोटरैः ।
कर्कशाक्रन्दनिर्दग्धलोकपूगोग्रगर्जितम् ॥ २०
कृशानुकणनाराचनिरन्तरतराम्बरम् ।
बहुहेतिशिलाजालछुठद्दग्धपुरोत्करम् ॥ २१
रणद्विरदसंघट्टकुट्टितोद्भटसङ्कटम् ।
विद्रवत्तस्करच्छेदमार्गकीर्णमहाधनम् ॥ २२
अङ्गारराशिनिपतन्नरनार्युग्ररोदनम् ।
स्फुटच्चटचटाशब्दप्रलुठत्स्फुटकाष्ठकम् ॥ २३
विपुलालातचक्रौघशतसूर्यनभस्तलम् ।
अङ्गारशिखिराकीर्णसमस्तवसुधातलम् ॥ २४
दग्धाग्निकाष्ठक्रेंकाररणज्ज्वलनवैणवम् ।
दग्धजन्तुघनाक्रन्दरुदत्सकलसैनिकम् ॥ २५
पांसुशेषात्तराजश्रीवृद्धतृप्तहुताशनम् ।
सकलग्रसनारम्भसोद्योगाग्निमहाशनम् ॥ २६
यदृच्छात्कारडात्कारकठिनाग्निरटद्गृहम् ।
अनन्तजन्तुभोज्यान्नवह्निभुक्तेन्धनस्पृहम् ॥ २७
अथ शुश्राव तत्रासौ गिरो राजा विदूरथः ।
योधानां दग्धदाराणां पश्यतामभिधावताम् ॥ २८

बाह्यपुरवृत्तान्तदर्शी पुरुषो राजसन्निधिं प्रविश्योवाच ॥ ५ ॥ देवेति राजसंबोधनम् ॥ ६ ॥ तुष्टिमत् उत्साहप्रहृष्टं परबलम् ॥ ७ ॥ उन्नतप्रासादशिखरैस्तृणकाष्ठादिसमृद्ध्या च नगसंकाशे पर्वतसदृशे ॥ ८ ॥ कल्पाम्बुदानां संवर्तमेघानां घटाभिः समूहैस्तुल्याः ॥ ९ ॥ ससंभ्रमं सभयम् । परुषा निष्ठुरभाषणरूपा आरवा यत्र तथाविधः कोलाहलः । आशा दिशः ॥ १० ॥ कोलाहलमेव संबन्धिभेदैर्विशिष्य वर्णयति—**बलादि**त्यादिना ॥ ११ ॥ महाहलहलारवैः कथित इत्युत्तरत्रान्वयः ॥ १२ ॥ अर्चिषां धगद्धगिति रवैः सह जनैः कथितष्टांकार उदभूदित्यनुकृष्यते ॥ १३ ॥ वातायनात्प्रासादगवाक्षात् ॥ १४ ॥ उग्रैर्हेतिभिर्मेघतरङ्गोभयवता ॥ १५ ॥ महाज्वालानां ज्वालैः शिखाभिः । 'जालैः' इति पाठे स्पष्टम् ॥ १६ ॥ मोषणं मुष्टिः परलुण्ठनं तद्ग्राह्यविषये परभीषणाय महामेघगर्जासदृशैः संतर्जितैर्भर्त्सनैरूर्जितैः प्रबलैर्मांसलैः पुष्टैर्दस्यवश्चोरास्तज्जल्पितैर्घोरम् ॥ १७ ॥ पुष्करावर्ताः प्रलयमेघाः । निरन्तरं निरवकाशम् ॥ १८ ॥ उल्मुकानां ज्वलत्काष्ठानां खण्डा एवोग्रा औत्पातिका रक्तास्ताराः ज्वालापरिवर्तेन अन्योन्यदेशविनिमयेन प्रज्वलन्तो ज्वलनाचला यत्र ॥ १९ ॥ हतावशिष्टसैन्यानां पुरापातो नगरप्रवेशो यत्र । द्रुताः प्रसृता अङ्गारा येषु तथाविधैरभ्रकोटरैर्मेघच्छिद्रैरुपलक्षितमित्यर्थः । कर्कशाक्रन्दं यथा स्यात्तथा निर्दग्धजनसमूहैः शत्रुभिरुग्रगर्जितं यत्र ॥ २० ॥ कृशानुकणैर्नाराचैश्च निरन्तरतरमत्यन्तनिरवकाशमम्बरं यत्र । हेतिभिः शिलाजालैश्च लुठन्तो निपतन्तः । पुरशब्देन पुरजना उच्यन्ते । लुठन्तः प्रधावन्तो दग्धं पुरं यैस्तथाविधा उत्करा ऊर्ध्वीकृतहस्ताः शत्रवो यत्रेति वा ॥ २१ ॥ रणे द्विरदानां संघट्टैः कुट्टिताश्चूर्णिता उद्भटाः शूरतराः सङ्कटा यत्र । तस्कराणां शिरश्छेदेन ॥ २२ ॥ ॥ २३ ॥ अलातानि ज्वलदुल्मुकानि । शिखिरैरग्निभिराकीर्णानि ॥ २४ ॥ दग्धैरग्निकाष्ठैः सहक्रेंकारेण रणत्प्रज्वलनयुक्तं वैणवं वेणुकाष्ठं यत्र ॥ २५ ॥ पांसव एव शिष्यन्ते यथा तथा आत्तायां दग्धायां राजश्रियि वृद्धः प्रवृद्धस्तृप्तश्च हुताशनो यत्र । अग्निलक्षणो महाशनो घस्मरो यत्र ॥ २६ ॥ यदृच्छया अकस्मादेव दैवोपपादिताभ्यां सर्वस्वादानमात्कारो निशि सुप्तेषु दस्युभिः प्रहरणं डात्कारस्ताभ्यां कठिनेन दुर्वारेणाग्निना च रटन्तो गृहा यत्र । अनन्तानां जन्तूनां भोज्येषु भोजनार्हेष्वन्नेषु धान्यराशिषु वह्निना भुक्तेषु अवशिष्टेन्धनमात्रे केषांचित्स्पृहा यत्र ॥ २७ ॥ दारग्रहणं सर्वस्वोपलक्षणम् ॥ २८ ॥

---

१ पौराणामिति द्वादशश्लोकोत्तरार्धेन रुति भावः.

हा मत्तमरुदूर्ध्वस्थानङ्गार गृहपादपान् ।
रणत्खरखरं नीरजालमातपपन्थिनः ॥ २९
हा दग्धदाराः प्रालेयशीता देहेषु दन्तिनाम् ।
मग्ना मनस्सु महतामिव विज्ञानसूक्तयः ॥ ३०
हा तात हेतयो लग्नास्तरुणीकबरीतृणे ।
ज्वलन्ति शुष्कपर्णौघा इव वीरानिलेरिताः ॥ ३१
आवर्तननदीदीर्घा वहत्यूर्ध्वतरङ्गिणी ।
पश्येयं धूममयमुना व्योमगङ्गां प्रधावति ॥ ३२
वहदुल्मुककाष्ठोर्ध्वगामिनी धूमनिम्नगा ।
वैमानिकानन्धयति पश्याग्निकणबुद्बुदा ॥ ३३
अस्या माता पिता भ्राता जामाता स्तनपाः सुते ।
अस्मिन्सद्मनि निर्दग्धा दग्धैवासत्समिन्धने ॥ ३४
हा हा हागच्छ ते शीघ्रमेतदङ्गारमन्दिरम् ।
इतः प्रवृत्तं पतितुं सुमेरुः प्रलये यथा ॥ ३५
अहो शरशिलाशक्तिकुन्तप्रासासिहेतयः ।
जालसंध्याभ्रपटलं विशन्ति शलभा इव ॥ ३६
हेतिप्रवाहा ज्वलनं नभस्यन्त्यां विशन्त्यहो ।
वडवानलमुज्ज्वालमर्णःपूरा इवार्णवात् ॥ ३७
धूमायन्ति महाभ्राणि ज्वालाः शिखरिकोटिषु ।
सरसान्यपि शुष्यन्ति हृदयानीव रागिणाम् ॥ ३८
आलानत्वरुषेवैता दन्तिभिर्वृक्षपङ्क्तयः ।
स्फुरत्कटकटारावं पात्यन्ते कृतचीत्कृतैः ॥ ३९
पुष्टपुष्पफलस्कन्धा गतश्रीका गृहद्रुमाः ।
गता निर्दग्धसर्वस्वा गृहस्था इव दीनताम् ॥ ४०
मातापितृविनिर्मुक्ता बालकास्तिमिरावलीम् ।
मग्नन्तोऽङ्गेषुरथ्यासु कुड्यपातेन हा हताः ॥ ४१
वातविद्रावितात्त्रस्यन्करिण्यो रणमूर्धनि ।
पतदङ्गारकागारभारिणः कटुकूजितम् ॥ ४२
हा कष्टमसिनिर्भिन्ने स्कन्धे सन्नद्धढोल्मुके ।
पतितो यन्त्रपाषाणः पुरुषस्याशनिर्यथा ॥ ४३
गवाश्वमहिषैभोष्ट्रश्वशृगालैडकैरहो ।
घोरे रणमिवारब्धं मार्गरोधकमाकुलैः ॥ ४४
पटैः पटपटाशब्दजलजालालिमालितैः ।
आक्रन्दन्त्यः स्त्रियो यान्ति स्थलपद्माचिता इव ॥ ४५
स्त्रीणां ज्वालालवाः पश्य लिहन्त्यलकवल्लरीः ।
कुर्वन्तोऽशोकपुष्पाभां करभा इव पन्नगीः ॥ ४६
हा हा हरिणशावाक्ष्याः पक्ष्मलक्षणपक्ष्मसु ।
कुमार्गेष्विव विश्रान्तिमेति कार्शानवी शिखा ॥ ४७
दह्यमानो विनिर्याति न कलत्रं विना नरः ।
अहो बत दुरुच्छेदाः प्राणिनां स्नेहवागुराः ॥ ४८
करी रभसनिर्लूनज्वलदङ्गारपादपः ।
प्लुष्टपुष्करकः कोपान्मग्नः पुष्करदं सरः ॥ ४९

अङ्ग आर इति च्छेदः । अङ्गेति कश्चित्कंचित्संबोध्याह—नीरजालेन रसातिशयेन आमान् हरितानत एवातपस्य संतापस्य पन्थिनः परिपन्थिनो निवारकान् ऊर्ध्वस्थान् औन्नत्ये स्थितान् अस्मद्गृहलक्षणानस्मद्गृहसंवृद्धांश्च पादपान् वृक्षान् उन्मूलयितुं मत्तः प्रचण्डो मरुत् विपक्षलक्षणो वायुर्वा [1]रणत्खरखरं यथा स्यात्तथा आर आजगाम । हा इति खेदे ॥ २९ ॥ प्राक्प्रालेयशीता दग्धाः संतप्ता दारा दन्तिनां मृतानां देहेषु लीनाः प्रच्छन्नाः सूक्तिपक्षे ज्ञानाग्निना दग्धाः स्थूलादिदेहा याभिः । त्रिविधतापोपशमनात्प्रालेयादपि शीतलाः ॥ ३० ॥ हेतयः शस्त्राग्नयो विविधास्तज्ज्वाला वा । कबर्यः केशास्तल्लक्षणे तृणे । ज्वलन्ति दीप्यन्ते ॥ ३१ ॥ आवर्तनैरावर्तैर्नदीसदृशप्रवाहभेदैश्च दीर्घा । व्योमलक्षणां गङ्गां मन्दाकिनीं वा ॥ ३२ ॥ वहन्ति प्रवहन्ति उल्मुककाष्ठानि यस्यां सा । अग्निकणा एव बुद्बुदा यस्याम् ॥ ३३ ॥ स्तनपाः स्तनंधयाः । सुते कन्ये । पुत्रीसंबोधनं वा । इयमपि तद्विरहलक्षणे असत्समिन्धने अविद्यमानेऽप्यग्नौ दग्धैव ॥ ३४ ॥ शीघ्रं आगच्छ निर्गच्छ ते तव एतदङ्गारवज्ज्वलितं मन्दिरं इतः स्वस्थानाच्चलनेन पतितुं प्रवृत्तम् ॥ ३५ ॥ वातायनजालकलक्षणं संध्याभ्रपटलम् ॥ ३६ ॥ नभस्यन्त्यां भयान्नभ उत्पतितुमिच्छन्त्यां पुर्याम् । [2]अर्णःपूरा जलप्रवाहाः ॥ ३७ ॥ शिखरिणां शृङ्गवतां प्रासादानां कोटिष्वग्रभागेषु । सरसानि सजलानि वाप्यादीनि उद्यानानि च ॥ ३८ ॥ आलानं बन्धनस्तम्भस्तज्जातीयत्वप्रयुक्तया रुषा ॥ ३९ ॥ ४० ॥ तिमिरावलीं निलयनाय मग्नन्तः शोधयन्तः । मृगयन्त इति यावत् । मस्जेः शोधनार्थाच्छतरि च्छान्दसे कुत्वनत्वे । अङ्गेत्यामन्त्रणे । इषुकीर्णासु रथ्यासु । कुड्यपातेन भित्तिपतनेन ॥ ४१ ॥ वातेन विद्रावितात् प्रोड्डायितात् । पतन्तः अङ्गारका यस्मात्तथाविधात् । अगारं भर्तुं वर्षातपादिभ्यस्त्रातुं शीलमस्येत्यगारभारि च्छदिस्तस्मात्करिण्योऽभ्रम्वः कटुकूजितं यथा स्यात्तथा त्रसन् । त्रसेर्लङि 'वा भ्राशभ्लाश' इति श्यन् । अडभावश्छान्दसः ॥ ४२ ॥ ॥ ४३ ॥ एडकैर्मेषैः गन्तॄणां मार्गनिरोधकं रणं युद्धमारब्धमिव पश्यन्त्विति शेषः ॥ ४४ ॥ अग्निशिखास्कन्दनभयादार्द्रपटान्परिधाय निर्गच्छन्तीः स्त्रियो वर्णयति—**पटै**रिति । जलबिन्दुजाललक्षणैरलिभिर्मालितैः परिवृतैर्हस्तपादवक्त्रलक्षणैः स्थलपद्मैराचिता घटिता इव ॥ ४५ ॥ करभा उष्ट्राः । पन्नं पतितं यथा स्यात्तथा गच्छन्त्यः पन्नग्यः प्रलम्बिततरुशाखाः दैवात्तदालम्बिसर्पिणीर्वा ॥ ४६ ॥ पक्ष्मलक्षणेषु भ्रमरपक्षसदृशेष्वक्षिपक्ष्मसु । कृशानुरग्निस्तत्संबन्धिनी कार्शानवी शिखा ज्वाला ॥ ४७ ॥ स्वयं दह्यमानोऽपि ॥ ४८ ॥ रभसेन बलवेगेन निर्लूनो भग्नो ज्वलदङ्गारमिश्र आलानपादपो येन । अतएव तदाकर्षणकाले प्लुष्टो दग्धः पुष्करः शुण्डाग्रं यस्य तथाविधः करी पलाय्य जनेभ्यः पुष्करदं पद्मदं सरः प्राप्य तत्र मग्नः । दग्धपुष्करस्य पुनर्लाभेच्छयेवेति श्लेषमूला उत्प्रेक्षा ॥ ४९ ॥

१ कतिपयादर्शान्तरैरप्यत्र रणादित्येव पठ्यते, परन्त्वेतत्पाठो मूलानुगत्वात्सुवच इति स एव सङ्गृहीतोऽस्माभिः. २ अर्णपूराः इति पाठः.

धूमोऽम्बुदपदं प्राप्य विलोलान्तस्तडिल्लतः ।
ज्वलदङ्गारनाराचनिकरं परिवर्षति ॥ ५०
देव धूमस्फुरद्वह्निकण आवर्तवृत्तिमान् ।
स्थित आपीडवान्व्योम्नि रत्नपूर्ण इवार्णवः ॥ ५१
गौरमम्बरमाभाति ज्वालाशिखरतेजसा ।
मृत्युनेवोत्सवे दत्तः कुङ्कुमाक्तकरण्डकः ॥ ५२
अहो नु विषमं चेदं वर्तते वृत्तवर्जितम् ।
म्रियन्ते राजनार्योऽपि वैरिवीरैरुदायुधैः ॥ ५३
लोलस्रग्दामकुसुमैर्मार्गप्राकारकारकैः ।
अर्धनिर्दग्धकबरीकीर्णवक्षस्थलस्तनाः ॥ ५४
आलोलाम्बरसंलक्ष्यनितम्बजघनस्थलाः ।
पतन्माणिक्यवलयवलितावनिमण्डलाः ॥ ५५
छिन्नहारलताजालविकीर्णामलमौक्तिकाः ।
दृष्टादृष्टस्तनश्रेणीपार्श्वोद्यत्कनकप्रभाः ॥ ५६
कुररीकर्कशाक्रन्दमन्दीकृतरणारवाः ।
धारावाहास्रुतारावभिन्नपार्श्वविचेतनाः ॥ ५७
रक्तकर्दमबाष्पाम्बुक्लिन्नग्रन्थितवाससः ।
भुजमूलार्पितभुजैर्नीयमाना बलान्नृभिः ॥ ५८
क इवास्मिन्परित्राता स्यादित्यादीनवीक्षितैः ।
उत्पलालीव वर्षद्भिः परिरोदितसैनिकाः ॥ ५९
मृणालकोमलाच्छोरुमूलजालैः सुनिर्मलैः ।
स्वच्छाम्बरतलालक्ष्यैराकाशनलिनीनिभाः ॥ ६०
आलोलमाल्यवसनाभरणाङ्गरागा
बाष्पाकुलाततचलालकवल्लरीकाः ।
आनन्दमन्दरनिरन्तरमथ्यमाना-
त्कामार्णवात्समुदिता इव राजलक्ष्म्यः ॥ ६१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० अग्निदग्धगृहादिवर्णनं नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

## चतुश्चत्वारिंशः सर्गः ४४

श्रीवसिष्ठ उवाच ।
एतस्मिन्नन्तरे राजमहिषी मत्तयौवना ।
तद्विवेश गृहं लक्ष्मीरिव पङ्कजकोटरम् ॥ १
आलोलमाल्यवसना भिन्नहारलताकुला ।
अनुयाता वयस्याभिर्दासीभिर्भयविह्वला ॥ २
चन्द्राननावदाताङ्गी श्वासोत्कम्पिपयोधरा ।
तारकाकारदशना स्थिता द्यौरिव रूपिणी ॥ ३
अथ तस्या वयस्यैका राजानं तं व्यजिज्ञपत् ।
भूतसंग्रामसंरब्धममरेन्द्रमिवाप्सराः ॥ ४
देव देवी सहास्माभिः पलाय्यान्तःपुरान्तरात् ।
शरणं देवमायाता वातार्तेव लता द्रुमम् ॥ ५
राजन्दारा हृतास्तास्ते बलवद्भिरुदायुधैः ।
ऊर्मिजालैर्महाब्धीनां तीरद्रुमलता इव ॥ ६
अन्तःपुराधिपाः सर्वे पिष्टाः शत्रुभिरुद्धतैः ।
अशङ्किताभिपतितैर्वातैरिव वरद्रुमाः ॥ ७
दूरेणाशङ्कमायातैः परैर्नः पुरमाहृतम् ।
रात्रौ वर्षास्विवोद्घोषैः कमलानीव वारिभिः ॥ ८

अम्बुदानां पदं वृष्ट्यधिकारनिर्वाहकमाकाशस्थानं प्राप्य विलोलवह्निज्वालालक्षणा अन्तर्गतास्तडिल्लता यस्य । ज्वलतामङ्गाराणां नाराचानां शराणां च निकरं स्वानुरूपं परितो वर्षतीत्युत्प्रेक्षा ॥५०॥ देवेति राजानं संबोध्य कस्यचिदुक्तिः। धूमो व्योम्नि अर्णव इव स्थितः । आपीडवान् शिखातरङ्गवान् ॥ ५१ ॥ गौरं पीतमम्बरमाकाशः । कुङ्कुमैः अक्तो रञ्जितः करण्डकः संपुटको दत्तः । अर्थाद्दिग्वधूभ्य इति गम्यते ॥ ५२ ॥ वृत्तं सच्चरितं तेन वर्जितं बहिष्कृतम् ॥ ५३ ॥ आसर्गसमाप्ते राजनारीरेव विशिनष्टि—**लोले**त्यादिना । मार्गे प्र आकिरणं प्राकारस्तस्य कारकैर्लोलैः स्रग्दामभिः कुसुमैश्चोपलक्षिताः ॥ ५४ ॥ पतद्भिर्माणिक्यैर्वलयैश्च माणिक्यखचितैर्वलयैर्वा वलितानि संवृतान्यवनिमण्डलानि याभिः ॥५५॥५६॥ कुररीशब्दवत्कर्कशैर्दुःश्रवैराक्रन्दैर्मन्दीकृतोऽभिभूतो रणारवो याभिः । धारावाहमविच्छिन्नधारं यथा स्यात्तथा आस्रुतैर्निर्गतैराक्रन्दारावैर्भिन्नानि विदारितानीव पीडितानि कुक्षिपार्श्वानि यासाम् । अतएव विचेतनाः कर्तव्यार्थचेतनाशून्याः ॥ ५७ ॥ पलायनशङ्कया परस्परं ग्रन्थितवाससः ॥ ५८ ॥ दीनैर्वीक्षितैर्वीक्षणैः । परितो दयया रोदिताः रोदनशीलाः कृताः स्वपक्षसैनिका याभिस्ताः ॥ ५९ ॥ स्वच्छेष्वम्बरतलेषु वस्त्रान्तःप्रदेशेष्वालक्ष्यैः । अम्बरपदश्लेषादाकाशनलिनीनिभाः ॥ ६० ॥ आतता दीर्घाश्चलाश्चालकवल्लर्यो यासां ताः । आनन्दोऽत्र विषयसुखं तल्लक्षणेन मन्दरेण मथ्यमानात् । राज्ञां मूर्तिभूता लक्ष्म्यः संपदो, राजा चन्द्रस्तद्धटिता लक्ष्म्यः श्रियो वा ॥ ६१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे अग्निदग्धगृहादिवर्णनं नाम त्रिचत्वारिंशः सर्गः ॥४३॥

**भीतां विलोक्य महिषीं श्रुत्वान्तःपुरधर्षणम् ।**
**युद्धाय राज्ञो निर्याणं लीलातत्त्वं च वर्ण्यते ॥ १ ॥**

मत्तमिव विघूर्णमानं यौवनं यस्याम् । तल्लीलाप्रज्ञाधिष्ठितं राज्ञो गृहम् ॥ १ ॥ २ ॥ चन्द्र इव चन्द्र एव च आननं यस्याः । अवदातानि गौराणि स्वच्छानि चाङ्गानि यस्याः ॥ ३ ॥ ॥ ४ ॥ देवी कृताभिषेका प्रधानमहिषी ॥ ५ ॥ दाराः अन्या भोगिन्यः ॥ ६ ॥ पिष्टाः संचूर्णिताः ॥ ७ ॥ दूरेण दूरात् । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति चात्तृतीया । आहृतमास्कन्दि-

धूमं वर्षद्भिरुन्नादैर्लेलिहानोग्रहेतिभिः ।
वह्निभिर्नः पुरं प्राप्तं परयोधैश्च भूरिभिः ॥ ९
परिवारैर्विलासिन्यो देव्य आहृत्य मूर्धजैः ।
आक्रन्दन्त्यो बलान्नीताः कुरर्य इव धीवरैः ॥ १०
इति नो येयमायाता शाखा प्रसरशालिनी ।
आपत्तामलमुद्धर्तुं देवस्यैवास्ति शक्तता ॥ ११
इत्याकर्ण्यावलोक्यासौ देव्यौ युद्धाय यास्यतः ।
क्षम्यतां मम भार्येयं युष्मत्पादाब्जषट्पदी ॥ १२
इत्युक्त्वा निर्ययौ राजा कोपारुणितलोचनः ।
मत्तेभनिर्भिन्नवनः कन्दरादिव केसरी ॥ १३
लीला लीलां ददर्शाथ स्वाकारसदृशाकृतिम् ।
प्रतिबिम्बमिवायातामादर्शे चारुदर्शनाम् ॥ १४

प्रबुद्धलीलोवाच ।

किमिदं देवि हे ब्रूहि[1] कस्मादियमहं स्थिता ।
या साऽभवमहं पूर्वं कथं सेयमहं स्थिता ॥ १५
मन्त्रिप्रभृतयः पौरा योधाः सबलवाहनाः ।
सर्वे एव त एवेमे स्थितास्तत्र तथैव ते ॥ १६
तत्रापीह च हे देवि सर्वे कथमवस्थिताः ।
बहिरन्तश्च मुकुरे इवैते किं प्रचेतनाः ॥ १७

श्रीदेव्युवाच ।

यथा ज्ञप्तिरुदेत्यन्तस्तथानुभवति क्षणात् ।
चितिश्चेत्यार्थतामेति चित्तं चित्तार्थतामिव ॥ १८
यादृगर्थं जगद्रूपं तत्रैवोदेति तत्क्षणात् ।
न देशकालदीर्घत्वं न वैचित्र्यं पदार्थजम् ॥ १९
बाह्यमाभ्यन्तरं भाति स्वप्नार्थोऽत्र निदर्शनम् ।
यदन्तः स्वप्नसंकल्पपुरं च कचनं चितेः ॥ २०
तदेतद्वाह्यनाम्नैव स्वभ्यासात्सत्स्फुटं स्थितम् ।
यादृग्भावो मृतो भर्ता तव तस्मिंस्तदा पुरे ॥ २१
तादृग्भावस्तमेवार्थं तत्रैव समुपागतः ।
अन्य एव ह्यमी भूतास्तेभ्यस्तास्तादृशा अपि ॥ २२
सद्रूपा एव चैतस्य स्वप्नसंकल्पसैन्यवत् ।
अविसंवादि सर्वार्थरूपं यदनुभूयते ॥ २३
तस्य तावद्वद कथं कीदृशी वापि सत्यता ।
अथवोत्तरकाले तु भङ्गुरत्वादवस्तु तत् ॥ २४
ईदृक्च सर्वमेवेदं तत्र का नास्तिताधिका ।
स्वप्ने जाग्रदसद्रूपा स्वप्नो जाग्रत्यसन्मयः ॥ २५
मृतिर्जन्मन्यसद्रूपा मृत्यां जन्माप्यसन्मयम् ।
विशरेद्विशरारुत्वादनुभूतेश्च राघव ॥ २६
एवं न सन्नासदिदं भ्रान्तिमात्रं विभासते ।
महाकल्पान्तसंपत्तावप्यद्याथ युगेऽनघ ॥ २७

तम् ॥ ८ ॥ धूमं वर्षद्भिः किरद्भिः । उन्नादैर्ध्वनद्भिः । 'धूमघर्मिभिः' इति पाठे स्पष्टम् । 'उन्मादैः' इति पाठे उत्कृष्टो मादो हर्षो ग्लेपनं च येषां तैः । लेलिहाना इव चलन्त उग्रा हेतयः खड्गा ज्वालाश्च येषाम् ॥ ९ ॥ परिवारैः शत्रुसैनिकैः । कुरर्यो मृगयः पक्षिण्यश्च । धीवरैर्लुब्धकैः ॥ १० ॥ आपत् विपत् । तामलमत्यर्थमुद्धर्तुं निवारयितुम् ॥ ११ ॥ असौ राजा इति वाक्यमाकर्ण्य देव्यौ विलोक्य उवाचेति शेषः । हे देव्यौ, अहं युद्धाय यामि गच्छामि क्षम्यताम् । आज्ञां विनैवान्तराले निर्गमनापराधः । युष्मत्पादाब्जषट्पदीति युवाभ्यां रक्षणीयेत्याशयः ॥ १२ ॥ १३ ॥ लीला प्रबुद्धलीला ॥ १४ ॥ सेयं भूत्वेति शेषः । या अहं सा इयं कथम् । या प्रथमवयस्का अभवं सा तथैव स्थिता कथम् । स्वस्या अन्यत्वायोगादतीतावस्थायाश्च स्थित्यसंभवादिति भावः ॥ १५ ॥ किंच मन्त्र्यादिष्वपि भेदप्रत्यभिज्ञे विरुद्धे इत्याह—**मन्त्रिप्रभृतय** इति ॥ १६ ॥ प्रचेतनाः सचेतनाः किम् ॥ १७ ॥ चितिशक्तीनामतर्क्यत्वात्तुल्यकर्मोद्बोधितानां तुल्य एवाविर्भावः क्वचिद्भवतीति देवी दृष्टिसृष्टिवादमालम्ब्य समाधत्ते —**यथेति** । चेत्यार्थतां अध्यासेन चेत्याकारताम् । यथा चित्तं मनः स्वप्नादौ चित्तानुभूतजाग्रदर्थाकारतामित्यर्थः ॥ १८ ॥ यादृक् यदाकारोऽर्थो यस्मिंस्तथाविधं संस्कारात्मकं जगद्रूपं तत्र चित्ते चिति च अस्ति तादृगेवोदेति । भोजकादृष्टोद्बोधिता मायासंवलितचिच्छक्तिरघटितमपि घटयितुं समर्थेत्यर्थः । एवंच देशकालाल्पतावैपुल्यविरोधोऽपि परिहृत इत्याशयेनाह—**नेति** । यदि पदार्थजं स्यात्तर्हि तत्स्वभावविरुद्धं न घटेत, नतु तथेति भावः ॥ १९ ॥ चैतन्ये अध्यस्तत्वात्तदाभ्यन्तरं जगद्वाह्यं बहिर्भवमिव भाति ॥ २० ॥ स्वभ्यासाच्चिराभ्यासात् स्फुटं व्यक्तं सत्सत्यमिव स्थितम् । यादृक् भावो वासना यस्य स तथाविधः सन् मृतः ॥ २१ ॥ समुपागतः प्राप्तवान् । समानकर्मवासनोद्बोधितत्वादाकारसाम्येऽप्येते मन्त्र्यादिजीवा न त एव किंत्वन्ये इत्याह—**अन्य एवेति** । त एवेति प्रत्यभिज्ञया अभ्यस्ताः पुनःपुनरनुभूता अपि तादृशा अन्ये एव ॥ २२ ॥ एतस्य राज्ञश्चित्सत्तया सद्रूपा एव । एतावदेव स्वाप्नाजाग्रद्वस्तुनो वैलक्षण्यं यदविसंवादि सर्वपुरुषसाधारणार्थत्वं नैतावन्मात्रेण सत्यतासिद्धिरित्याह—**अविसंवादी**ति । चन्द्रप्रादेशिकत्वेन्द्रजालादावपि अविसंवादि सर्वार्थत्वदर्शनादिति भावः ॥ २३ ॥ उत्तरकाले बाध्यत्वात्स्वप्नस्यासत्यत्वं चेजाग्रत्यपि समानं नाशबाधयोर्वस्तुनि विशेषाभावादित्याशयेनाह—**अथवेति** । तत्स्वाप्नम् ॥ २४ ॥ अधिका जाग्रदर्थेष्वित्यर्थः । परस्परकालासत्त्वमप्यविशिष्टमित्याह—**स्वप्ने** इति ॥ २५ ॥ नाशेऽपि बाधवत्परस्परकालासत्त्वं तुल्यमित्याह—**मृति**रिति । नाशे अवयवानां विशरारुत्वाद्द्रव्यं विशरेन्नश्येत् । बाधे त्वनुभूतेरनुभवबलाद्विशरेत् । इति निमित्तभेदेऽपि न विशरणे विशेष इत्यर्थः ॥ २६ ॥ प्राक् सत्यतोपपादिता, इह त्वसत्यतेत्य-

[1] मे ब्रूहीति पाठः.

न कदाचन यन्नास्ति तद्ब्रह्मैवास्ति तज्जगत् ।
तस्मिन्मध्ये कचन्तीमा भ्रान्तयः सृष्टिनामिकाः ॥ २८
व्योम्नि केशोण्ड्रकानीव न कचन्तीव वस्तुतः ।
यथा तरङ्गा जलधौ तथेमाः सृष्टयः परे ॥ २९
उत्पत्योत्पत्य लीयन्ते रजांसीव महानिले ।
तस्माद्भ्रान्तिमयाभासे मिथ्यात्वमहमात्मनि ॥ ३०
मृगतृष्णाजलचये कैवास्था सर्गभस्मनि ।
भ्रान्तयश्च न तत्रान्यास्तास्तदेव परं पदम् ॥ ३१
घने तमसि यक्षाभास्तम एव न यक्षकः ।
तस्माज्जन्ममृतिर्मोहो व्यामोहत्वमिदं ततम् ॥ ३२
सर्वं तत्समहाकल्पं शान्तौ यदवशिष्यते ।
नातः सत्यमिदं दृश्यं न चासत्यं कदाचन ॥ ३३
द्वयमेवैतदथवा ब्रह्म तत्रैव संभवात् ।
आकाशे परमाण्वन्तर्द्रव्यादेरणुकेऽपि च ॥ ३४
जीवाणुर्यत्र तत्रेदं जगद्वेत्ति निजं वपुः ।
अग्निरौष्ण्यं यथा वेत्ति निजभावक्रमोदितम् ॥ ३५
पश्यतीदं तथैवात्मा स्वात्मभूतं विशुद्धचित् ।
यथा सूर्योदये गेहे भ्रमन्ति त्रसरेणवः ॥ ३६
तथेमे परमाकाशे ब्रह्माण्डत्रसरेणवः ।
यथा वायौ स्थितः स्पन्द आमोदः शून्यमम्बरे ॥ ३७
पिण्डग्रहविनिर्मुक्तं तथा विश्वं स्थितं परे ।
भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचराचराः ॥ ३८
विवर्जितस्यावयवैर्भागा ब्रह्मण ईदृशाः ।
साकारस्यावबोधाय विज्ञेया भवताधुना ॥ ३९
अनन्याः स्वात्मनस्तस्य तेनानवयवा इव ।
यथास्थितमिदं विश्वं निजभावक्रमोदितम् ॥ ४०
रिक्तं न विश्वशब्दार्थैरनन्यद्ब्रह्मणि स्थितम् ।
न तत्सत्यं न चासत्यं रज्जुसर्पभ्रमो यथा ॥ ४१
मिथ्यानुभूतितः सत्यमसत्यं सत्परीक्षितम् ।
परमं कारणं चित्त्वाज्जीवत्वमिति चेत्यलम् ॥ ४२
ततस्तथैवानुभवाज्जीवत्वं विन्दति स्फुटम् ।
सत्यं भवत्वसत्यं वा खे विभातमिदं जगत् ॥ ४३
रञ्जयत्येव जीवाणुः स्वेच्छाभिरनुभूतिभिः ।
अनुभूयन्त एवाशु काश्चित्पूर्वानुभूतितः ॥ ४४
अपूर्वानुभवाः काश्चित्समाश्चैवासमास्तथा ।
कचित्कदाचित्ता एव क्वचिदर्धसमा अपि ॥ ४५

---

निर्वचनीयता द्वयोरपि समेत्याह—**एवमिति** । एवं च सृष्टिकाले प्रलयकाले चाविशिष्टं सद्रूपं ब्रह्म सिद्धमित्याह—**महाकल्पान्तेति** । महाकल्पान्तसंपत्तावपि अद्यापि अथानन्तरमतीतानागतयुगभेदेऽपि कदाचन कदापि यन्नास्ति तत्स्वरूपेण न किंतु तत्कल्पनाधिष्ठानं ब्रह्मैवास्ति अतस्तदेव जगन्नतु भासमानमब्रह्मरूपं जगदित्यर्थः ॥ २७ ॥ २८ ॥ न कचन्त्येवेति वक्तव्ये इवकारः प्रपञ्चवत्तदभावस्यापि ब्रह्मातिरिक्तस्य मिथ्यात्वद्योतनार्थः ॥ २९ ॥ मिथ्यैव त्वं अहं इत्येवंविभागात्मनि ॥ ३० ॥ सर्गभस्मनि दग्धपटभस्मप्राये प्रपञ्चे । ननु विषयबाधेऽपि भ्रान्तिज्ञानस्वरूपाबाधात्तैरेव द्वैतं स्यात्तत्राह—**भ्रान्तयश्चेति** । निर्विषयज्ञानानां परस्परं ब्रह्मतश्च भेदकाभावाद्ब्रह्ममात्रत्वमित्यर्थः ॥ ३१ ॥ यक्षाभाः बालस्य यक्षभ्रान्तयः । व्यामोहोऽज्ञानं तस्य भावो व्यामोहत्वं तदीयावरणविक्षेपशक्तिस्तदेवेदं जगद्रूपं ततम् ॥ ३२ ॥ महाकल्पो ब्रह्मज्ञानेन सर्वबाधलक्षणो वैज्ञानिकः प्रलयस्तेन सहितं बाध्यमित्यर्थः । अधिष्ठानब्रह्मसत्तैव दृश्यस्य सत्त्वासत्त्वादिसर्वपक्षान्निरुणद्धीत्याह—**शान्ता**वित्यादिना । सर्वशान्तौ यदवशिष्यते ब्रह्म अतो ब्रह्मतः सत्यं नेत्यादिसंबन्धः ॥ ३३ ॥ द्वयं सत्यासत्योभयरूपं तु नैव । एकस्य विरुद्धोभयरूपत्वासंभवादित्यर्थः । तत्र त्रिष्वपि विरुद्धेषु कल्पेष्वविरोधेन संभवाद्ब्रह्मैवेति कल्पः श्रेयानित्याह—**ब्रह्मेति** । कल्पनामात्रत्वं प्रपञ्चस्य सर्वत्र संभवतीत्याह—**आकाशे** इति । द्रव्यगुणादेरणुके अल्पतरेऽप्यन्तर्भागे ॥ ३४ ॥ वासनाबलेनात्मन्यनात्माध्यासे दृष्टान्तमाह—**अग्निरिति** । पूर्वमनग्निरेवोपासकोऽहमेवाग्निरित्युपासनात्मकनिजभावनाक्रमेणोदितं फलभावेनाविर्भूतमौष्ण्यं यथा वेत्ति तद्वदित्यर्थः ॥ ३५ ॥ ३६ ॥ स्पन्द आमोदश्च वायौ यथा स्थितः । शून्यं शून्यत्वम् ॥ ३७ ॥ पिण्डग्रहः स्थौल्यम् । भावाभावौ आविर्भावतिरोभावौ । ग्रह उपादानम् । उत्सर्गस्त्यागः । क्रियामात्रोपलक्षणमेतत् ॥ ३८ ॥ भागाः कल्पितविभागाः । भवतेति पुंस्त्वाद्रामं प्रति वसिष्ठोक्तिः । ते च साकारस्य तस्य विश्वस्य निराकारत्वावबोधाय तादृशस्वात्मनोऽनन्या अनवयवा इव विज्ञेयाः । इवकारः सावयवतावन्निरवयवताया अपि मिथ्यात्वद्योतनार्थः ॥ ३९ ॥ एवमनवयवत्वेन निजभावनाक्रमेण पारमार्थिकरूपेणाविर्भूतं यथास्थितमेव विश्वशब्दार्थैं रिक्तं शून्यं न भविष्यति । विश्वशब्दस्य पूर्णार्थत्वपर्यवसानात्पूर्णस्य च रिक्तत्वायोगादिति भावः ॥ ४० ॥ तत्र हेतुः—**अनन्यदिति** । तर्हि यत्सावयवं विश्वं भासते तत्किं तत्राह—**न तदिति** । अनिर्वचनीयमेवेत्यर्थः ॥ ४१ ॥ तत्र हेतुमाह—**मिथ्येति** । नहि भ्रान्तिज्ञानानुभूतं सत्यं भवति न वा वस्तुतत्त्वपरीक्षणात्मकं तद्बाधकज्ञानं सत्यमपह्नुते येनासत्यं स्यादिति भावः । चित्त्वात् मायापिहितस्वरूपचित्त्वात् ॥ ४२ ॥ अनुभवाच्चिरसंवेदनदृढानुभवात् । संसारस्य च जैवी भोगेच्छा हेतुर्विषयरञ्जनैवोपयुज्यते न सत्यत्वमसत्यत्वं वेत्याह—**सत्यमिति** ॥ ४३ ॥ औपोद्घातिकमुक्त्वा प्रस्तुतप्रश्नसमाधानमाह—**अनुभूयन्त** इत्यादिना । पूर्वानुभूतितः पूर्वानुभूत्या समा असमाश्च केचिदपूर्वानुभवा अनुभूयन्त इत्यन्वयः ॥ ४४ ॥ सर्वतद्वासनोद्भवे भेदाप्रहात्ता एवेति कचन्ति । अर्धवासनोद्भवे अर्धसमा अपि ॥ ४५ ॥

क्वचन्त्यसत्याः सत्याभा जीवाकाशेऽनुभूतयः ।
तत्कुलास्तत्समाचारास्तज्जन्मानस्तदीहिताः ॥ ४६
त एव मन्त्रिणः पौराः प्रतिभाने भवन्ति च ।
ते चैवात्मन्यलं सत्या देशकालेहितैः समाः ॥ ४७
सर्वगात्मस्वरूपायाः प्रतिभाया इति स्थितिः ।
यथा राजात्मनि व्योम्नि प्रतिभोदेति सन्मयी ॥ ४८
तथा तदग्रगोदेति सत्येव प्रतिभाम्बरे ।
त्वच्छीला त्वत्समाचारा त्वत्कुला त्वद्वपुर्मयी ॥ ४९
इति लीलेयमाभाति प्रतिभाप्रतिबिम्बजा ।
सर्वगे संविदादर्शे प्रतिभा प्रतिबिम्बति ॥ ५०
यादृशी यत्र सा तत्र तथोदेति निरन्तरम् ।
जीवाकाशस्य यान्तस्था प्रतिभा कुरुते स्वयम् ।
सा बहिश्च चिदादर्शे प्रतिबिम्बादियं स्थिता ॥ ५१
एषा त्वमम्बरमहं भुवनं धरा च
राजेति सर्वमहमेव विभातमात्रम् ।
चिद्व्योमबिल्वजठरं विदुरङ्ग विद्धि
त्वं तेन शान्तमलमास्स्व यथास्थितेह ॥ ५२

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो० अग्निदाहरात्रियुद्धे जगद्भ्रमवर्णनं नाम चतुश्चत्वारिंशः सर्गः ॥४४॥

## पञ्चचत्वारिंशः सर्गः ४५

श्रीसरस्वत्युवाच ।
विदूरथस्ते भर्तैष तनुं त्यक्त्वा रणाङ्गणे ।
तदेवान्तःपुरं प्राप्य तादृगात्मा भविष्यति ॥ १
श्रीवसिष्ठ उवाच ।
इत्याकर्ण्य वचो देव्या लीला सा तत्पुरास्पदा ।
पुरः प्रह्वा स्थितोवाच वचनं विहिताञ्जलिः ॥ २
द्वितीयलीलोवाच ।
देवी भगवती ज्ञप्तिर्नित्यमेवार्चिता मया ।
स्वप्ने संदर्शनं देवी सा ददाति निशासु मे ॥ ३
सा यादृश्येव देवेशि तादृश्येव त्वमम्बिके ।
तन्मे कृपणकारुण्याद्वरं देहि वरानने ॥ ४
श्रीवसिष्ठ उवाच ।
इत्युक्ता सा तदा ज्ञप्तिः स्मृत्वा तद्भक्तिभावनम् ।
इदं प्रसन्ना प्रोवाच तां लीलां तत्पुरास्पदाम् ॥ ५
श्रीदेव्युवाच ।
अनन्यया भावनया यावज्जीवमजीर्णया ।
परितुष्टास्मि ते वत्से गृहाणाभिमतं वरम् ॥ ६
तद्देशलीलोवाच ।
रणादेहं परित्यज्य यत्र तिष्ठति मे पतिः ।
अनेनैव शरीरेण तत्र स्यामेतदङ्गना ॥ ७
श्रीदेव्युवाच ।
एवमस्तु त्वयाऽविघ्नं पूजितास्मि सुते चिरम् ।
अनन्यभावया भूरि पुष्पधूपसपर्यया ॥ ८
श्रीवसिष्ठ उवाच ।
अथ तद्देशलीलायां फुल्लायां तद्वरोदयात् ।
पूर्वलीलाब्रवीद्देवीं संदेहलुलिताशया ॥ ९

तयोः प्रथमोऽयं प्रकार इत्याह—तत्कुला इत्यादिना ॥ ४६ ॥ तेषामधिष्ठानदृष्ट्या परमार्थतः प्राक्तनाभेदः, अध्यस्तदृष्ट्या तु साम्यं पर्यवस्यतीत्याह—ते चेति । आत्मनि पारमार्थिकस्वरूपे अलमत्यन्तं त एवेति सत्याः स्वस्वदेशकालेहितदृष्ट्या तु समास्तुल्याः ॥ ४७ ॥ सर्वत्रैवमेव चैतन्यस्थितिरित्याह—सर्वगेति। नन्वीश्वरस्य प्रतिभानुसार्यर्थनिर्मातृत्वं श्रुतं जीवस्य त्वर्थानुसार्येव प्रतिभोदयः । अन्यथा मानोरथिकस्यापि सत्यत्वसाधारण्ययोरापत्तेस्तत्कथं राजप्रतिभामात्रादर्थानां सिद्धिरितरजीवसाधारणव्यवहारयोग्यता चेत्याशङ्क्याह—यथेति । राजात्मनि यथा यादृशी सन्मयी सर्वसाधारणसत्यार्था प्रतिभा उदेति तथा तदग्रगा ततः पूर्वभाविनी साधारणभोजकादृष्टवशात् सच्छब्दवाच्ये अम्बरे अव्याकृताकाशरूपे ईश्वरे सत्यसंकल्परूपा प्रतिभा उदेत्येव । तथाच नोक्तदोष इति भावः ॥ ४८ ॥ ४९ ॥ इति उक्तदिशा आभाति । सर्वत्रेयमेव रीतिरित्याह—सर्वगे इति ॥५०॥ अन्तस्था अन्तर्यामीश्वरप्रतिभासा बहिश्च कुरुते । तथाच बाह्यत्वेन साधारणदृश्यत्वोपपत्तिरिति भावः ॥ ५१ ॥ अम्बरमाकाशं तदन्तर्गतं भुवनं तदन्तर्गता धरा तदन्तर्गता त्वं अहं राजा चेति सर्वं विभातमात्रं चिन्मात्रस्वभावं अहं प्रत्यग्रूपमेव । एवमेवान्ये तत्त्वज्ञाः सर्वं चिद्व्योमलक्षणबिल्वस्य जठरं तत्सत्तामात्रं बीजगर्भं विदुः । हे अङ्ग लीले, त्वमपि तथा विद्धि । तेन यथास्थिता स्वभावस्था शान्तं निर्विक्षेपमास्स्व ॥ ५२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जगद्भ्रमवर्णनं नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

वरो द्वितीयलीलायाः पद्मप्राप्तिरिहोच्यते ।
जीवानां फललाभश्च स्वसंकल्पानुसारतः ॥ १ ॥

तादृगात्मा पद्मभूपालात्मा ॥ १ ॥ प्रह्वा भक्तिनम्रा पुरः स्थिता । विहिताञ्जलिः कृताञ्जलिः ॥ २ ॥ ३ ॥ त्वं तादृश्येव दृश्यसे अतः सैव त्वमित्याशयः ॥ ४ ॥ भक्त्या भावनं चिन्तनं पूजनं च॥५॥ ६॥ तिष्ठति स्थास्यति । वर्तमानसामीप्ये वर्तमानवत् ॥७॥ अविघ्नमिति कर्मसाङ्गतामाह । अनन्यभावया असाधारण्या [illegible] संतोषेण विकासितायां सत्याम् । तस्याः

१ स्वमित्यपि पाठः।

पूर्वलीलोवाच ।

ये सत्यकामाः सन्त्येवंसंकल्पा ब्रह्मरूपिणः ।
त्वादृशाः सर्वमेवाशु तेषां सिद्ध्यत्यभीप्सितम् ॥ १०
तत्तेनैव शरीरेण किमर्थं नाहमीश्वरि ।
लोकान्तरमिदं नीता तं गिरिग्रामकं वद ॥ ११

श्रीदेव्युवाच ।

न किंचित्कस्यचिदहं करोमि वरवर्णिनि ।
सर्वं संपादयत्याशु स्वयं जीवः स्वमीहितम् ॥ १२
अहं हितं रटे ज्ञप्तिः संविन्मात्राधिदेवता ।
प्रत्येकमस्ति चिच्छक्तिर्जीवशक्तिस्वरूपिणी ॥ १३
जीवस्योदेति या शक्तिर्यस्य यस्य यथा यथा ।
भाति तत्फलदा नित्यं तस्य तस्य तथा तथा ॥ १४
मां समाराधयन्त्यास्तु जीवशक्तिस्तवोदिता ।
तदा भवद्यदीह स्यां मुक्तासीति चिरं तदा ॥ १५
तेन तेन प्रकारेण त्वं मया संप्रबोधिता ।
तया युक्त्यामलं भावं नीतासि वरवर्णिनि ॥ १६
अनयैवं भावनया बोधितासि चिरं तदा ।
तमेवार्थं प्राप्तवती सदा स्वचितिशक्तितः ॥ १७
यस्य यस्य यथोदेति स्वचित्प्रयतनं चिरम् ।
फलं ददाति कालेन तस्य तस्य तथा तथा ॥ १८
तपो वा देवता वापि भूत्वा स्वैव चिदन्यथा ।
फलं ददात्यथ स्वैरं नभःफलनिपातवत् ॥ १९
स्वसंविद्यतनादन्यन्न किंचिच्च कदाचन ।
फलं ददाति तेनाशु यथेच्छसि तथा कुरु ॥ २०
चिद्भाव एव ननु सर्गगतोऽन्तरात्मा
यच्चेतति प्रयतते च तदेति तच्छ्रीः ।
रम्यं ह्यरम्यमथवेति विचारयस्व
यत्पावनं तदवबुध्य तदन्तरास्स्व ॥ २१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे ली० सत्यकामसत्यसङ्कल्पाख्तिता नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ४६

श्रीराम उवाच ।

एवं संकथयन्तीषु तासु तस्मिन्गृहोदरे ।
विदूरथः किमकरोन्निर्गत्य कुपितो गृहात् ॥ १

श्रीवसिष्ठ उवाच ।

विदूरथः स्वसदनान्निर्गतः परिवारितः ।
परिवारेण महता ऋक्षौघेणेव चन्द्रमाः ॥ २
सन्नद्धसर्वावयवो लग्नहारविभूषणः ।
महाजयजयारावैः सुरेन्द्र इव निर्गतः ॥ ३
समादिशन्योधगणं शृण्वन्मण्डलसंस्थितिम् ।
आलोकयन्वीरगणानारुरोह नृपो रथम् ॥ ४
कूटाकारसमाकारं मुक्तामाणिक्यमण्डितम् ।
पताकापङ्क्तिभिर्व्याप्तं द्युविमानमिवोत्तमम् ॥ ५

स्थूलशरीरेण भर्तृलोकप्राप्तिः स्वस्य तु देहं त्यक्त्वेति कुतो विशेष इति संदेहेन लुलितो लोलः कृत आशयो यस्याः सा ॥ ९ ॥ तत्रादौ संदेहबीजमाह—ये इति ॥ १० ॥ तत्तस्मात्सत्यकामताबलात् ॥ ११ ॥ स्वस्य न स्वतः कामनास्ति पूर्णकामत्वात् । प्राणिकर्मानुसारिणी तु सा तद्व्यवस्थयैव व्यवस्थितेत्याशयेन ज्ञप्तिः समाधत्ते—न किंचिदित्यादिना ॥ १२ ॥ हितं प्राण्यभिलषितं भाविशुभं रटे वरदानेन प्रकाशयामि । फलोत्पादने च जीवानां प्रत्येकं प्राक्तनकामकर्मवासनावच्छिन्नचिदात्मकजीवशक्तिस्वरूपिणी तत्तत्कार्यबीजभूता मायासंवलितचिच्छक्तिरस्ति ॥ १३ ॥ अतस्तदनुसारेणैवाहं फलप्रदेत्याह—जीवस्येति । भाति कर्मानुष्ठानहेतुकामनाविषयतया स्फुरति ॥ १४ ॥ अस्मीत्यहंशब्दपर्यायं तिङन्तप्रतिरूपकमव्ययम् । अहं मुक्ता स्यां इति भाविकर्मतत्फलसूक्ष्मावस्थानगर्भकामनावच्छिन्नचिद्रूपा जीवशक्तिः ॥ १५ ॥ बोधनिरस्ताज्ञानावरणनिर्मलात्मावस्थितिलक्षणममलं भावम् ॥ १६ ॥ मुक्ता स्यामित्येवंभावनया चिरं युक्ता त्वमनया प्रागदर्शितयुक्त्या बोधितासि । तं भावितमेवार्थम् ॥ १७ ॥ स्वचिदवच्छिन्नं प्रयतनं पुरुषप्रयत्नः ॥ १८ ॥ नभःफलनिपातवन्मिथ्याभूतमित्यर्थः ॥ १९ ॥ यथा यादृशं फलमिच्छसि तथा तदनुरूपं कर्म कुरु ॥ २० ॥ चिद्भावश्चित्सत्ता । नन्विति निश्चये । तदा प्राक्काले रम्यं विहितमथवा अरम्यं निषिद्धं यत्कर्म चेतति प्रयतते च उत्तरकालं तस्यैव फलरूपा श्रीः एति उदेति इति विचारयस्व । विचारेण च यत्पावनं पदं तदवबुध्य तदन्तः आस्स्व तिष्ठ ॥ २१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सत्यकामसत्यसङ्कल्पाख्तिता नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

विदूरथस्य युद्धार्थं निर्गमः सैन्यसंभ्रमैः ।
रणभूमिप्रवेशेन युद्धारम्भश्च वर्ण्यते ॥ १ ॥

॥ १ ॥ ऋक्षौघेण नक्षत्रगणेन ॥ २ ॥ वर्मायुधादिना सन्नद्धसर्वावयवः । लग्नानि स्वस्वोचितस्थानेष्वासक्तानि हारविभूषणानि यस्य ॥ ३ ॥ समादिशन् तत्तदुचितकार्येष्वाज्ञापयन् । मन्त्रिभिरुक्तां मण्डलस्य व्यूहरचनाविशेषस्य संस्थितिं जनपदव्यवस्थां वा ॥ ४ ॥ कूटस्य मेर्वादिशिखरस्याकारेण सम

१ सर्वगतः इति पाठः।

चक्रभित्तिपरिप्रोतप्रकचत्काञ्चनाङ्कुरम् ।
मुक्ताजालरणत्कारचारुविक्रमकूबरम् ॥ ६
सुग्रीवैर्लक्षणोपेतैः प्रशस्तैः प्रचलैः कृशैः ।
जवोड्डयनवेगेन प्रवहद्भिः सुरानिव ॥ ७
वायुं जवेन सहसा असहद्भिर्गतिक्रमैः ।
प्रोह्यद्भिरिव पश्चार्धमापिबद्भिरिवाम्बरम् ॥ ८
योजितैरिव संपूर्णैश्चन्द्रैश्चामरदीप्तिभिः ।
अश्वैरष्टभिराबद्धमाशापूरकहेषितैः ॥ ९
अथोदपतदुद्दामनागाश्रवनिर्भरः ।
शैलभित्तिप्रतिध्वानदारुणो दुन्दुभिध्वनिः ॥ १०
मत्तसैनिकनिर्मुक्तैर्व्याप्तं कलकलारवैः ।
किंकिणीजालनिर्ध्वानैर्हेतिसंघट्टघट्टितैः ॥ ११
धनुश्चटचटाशब्दैः शरसीत्कारगायनैः ।
परस्पराङ्गनिष्पिष्टकवचौघझणज्झणैः ॥ १२
ज्वलदग्निटणत्कारैरार्तिमत्क्रन्दनारवैः ।
परस्परभटाह्वानैर्वन्दिविक्षुब्धरोदनैः ॥ १३
शिलाघनीकृताशेषब्रह्माण्डकुहरो ध्वनिः ।
हस्तग्राह्योऽभवद्भीमो दशाशाकुञ्जपूरकः ॥ १४
अथोदपतदादित्यपथपीवररोधकम् ।
रजोनिभेन भूपीठमम्बरोड्डयनोन्मुखम् ॥ १५
गर्भवासमिवापन्नं तेनासीत्तन्महापुरम् ।
मूढत्वं यौवनेनेव घनतामाययौ तमः ॥ १६
प्रययुः क्वापि दीपौघा दिवसेनेव तारकाः ।
आययुर्बलमालोला नैशभूतपरम्पराः ॥ १७
ददृशुस्तन्महायुद्धं द्वे लीले सा कुमारिका ।
प्रस्फुटद्धृदयेनेव देवीदत्तमहादृशौ ॥ १८
प्रशेमुरथ हेतीषु प्रोद्यत्कटकटारवाः ।
एकार्णवपयःपूरैर्वालवा इव वह्नयः ॥ १९
शनैः सेनां समाकर्षन्नाज्ञायत बलान्तरम् ।
विवेशपक्षप्रोड्डीनो मेरुरेकमिवार्णवम् ॥ २०
अथोदभूद्गुणध्वानं चटच्चटदिति स्फुटम् ।
रचितांशुमयाम्भोदाश्चेरुः परपरम्पराः ॥ २१
ययुरम्बरमाश्रित्य नानाहेतिविहंगमाः ।
प्रसस्रुरलमात्ताखुमलिनाः शस्त्रदीप्तयः ॥ २२
जज्वलुः शस्त्रसंघट्टज्वलना उल्मुकाग्निवत् ।
जगर्जुः शरधारौघान्वर्षन्तो वीरवारिदाः ॥ २३
विविशुः क्रकचक्रूरा वीराङ्गेषु च हेतयः ।
पेतुः पटपटारावं हेतिनिष्पिष्टयोऽम्बरे ॥ २४
जग्मुः शमं तमांस्याशु शस्त्रकानलदीपकैः ।
बभूवुरखिला सेना नवनाराचरोमशाः ॥ २५
उत्तस्थुर्यमयात्रायां कबन्धनटपङ्क्तयः ।
जगुरुच्चै रणोद्रेकं पिशाच्यो रणदारिकाः ॥ २६
उदगुर्दन्तसंघट्टटंकारा दन्तिनां बलात् ।
ऊहुः क्षेपणपाषाणमहानद्यो नभस्तले ॥ २७
पेतुः शवा निवातास्तसंशुष्कवनपर्णवत् ।
निर्ययुर्लोहिता नद्यो रणाद्रेर्मृतिवर्षिणः ॥ २८

आकारो यस्य । द्युविमानं स्वर्गे प्रसिद्धं विमानम् ॥५॥ चक्रेषु भित्तिषु च परिप्रोता निखाताः प्रकचन्तः काञ्चनाङ्कुराः स्वर्णकीला यत्र । विक्रमकूबरं दीर्घाग्रभागम् ॥ ६ ॥ प्रशस्तैरुत्तमजातिजैः । सुरानिवान्तरिक्षे प्रवहद्भिरित्यतिशयोक्तिः ॥ ७ ॥ पूर्वकायगतिक्रमैः पश्चार्धं प्रोह्यद्भिर्वहद्भिरिव । छान्दसो विकरणव्यत्ययः ॥८॥ चामरदीप्तिभिः संपूर्णैश्चन्द्रैर्योजितैरिवेति सर्वत्रोत्प्रेक्षा ॥९॥ नागा गजास्तल्लक्षणानामश्राणां रवेण निर्भरोऽतिशयितः । शैलानां भित्तिषु वप्रेषु प्रतिध्वानेन दारुणो भीरुभीषणः ॥१०॥ हेतीनामायुधानां संघट्टेन संघट्टनशब्देन घट्टितैर्निबिडितैः ॥११॥ ॥ १२ ॥ बन्दिभिर्वीरोत्साहायाधिक्षेपेण विक्षुब्धानामयुद्धक्षतपीडितानां कातराणां रोदनैः ॥ १३ ॥ स्वपूरणेन शिलावद्घनीकृतं निरन्तरीकृतमशेषं ब्रह्माण्डकुहरं येन । घनत्वादेव हस्तग्राह्य इत्युत्प्रेक्षा ॥ १४ ॥ आदित्यपथस्य पीवरं सत् रोधं कामयते इति रोधकम् । कमेः क्विप् । रजोनिभेन वेषेण भूपीठमेव अम्बरोड्डयनोन्मुखं भूत्वा उदतिष्ठदित्युत्प्रेक्षा ॥१५॥ तेन रजसा । मूढत्वं स्वाभाविकमज्ञानम् । रजोधिकेन यौवनेनेव । तमोऽन्धकारो घनतां निबिडताम् ॥ १६ ॥ बलं वीर्यं आययुः प्रापुः ॥ १७ ॥ देव्या ज्ञप्त्या दत्ता महादृशो दिव्यदृष्टयो ययोस्ते । सा विदूरथस्य कुमारिका कन्या च देवीदत्तमहादृगिति विपरिणामेन संबध्यते ॥ १८ ॥ अथ विदूरथनिर्गमनानन्तरं नगरलुण्टाकानां सैन्धवानां हेतीनामिषूणां च प्रोद्यन्तः कटकटारवाः प्रशेमुः प्रलये एकार्णवपयःपूरैर्वालवा वाडवा वह्नय इव । लडयोरभेदात् ॥ १९ ॥ सेनां समाकर्षन्स विदूरथः सैन्धवानां बलस्य स्वबलस्य च अन्तरं तारतम्यं न आज्ञायत । अविज्ञायैव एकं सांवर्तमर्णवं मेरुरिव विवेश परबलमिति शेषः ॥ २० ॥ गुणध्वानं ज्यासिंजितम् । रचिताः स्वायुधांशुमया अम्भोदा मेघा याभिस्ताः परेषां शत्रूणां परम्पराश्चेरुः ॥ २१ ॥ आत्तासवो गृहीतपरप्राणा अतएव पापेनेव मलिनाः श्यामाः । प्रसस्रुः प्रसृताः ॥ २२ ॥ २३ ॥ हेतिनिष्पिष्टयः खड्गप्रहारा एव पटपटारावात्मना अम्बरे पेतुरुत्पेतुः ॥ २४ ॥ २५ ॥ यमयात्रायां यमाराधनयात्रोत्सवे इति यावत् । नटास्तदनुरूपा रणोत्सवालंकारभूता दारिका बालिकास्तरुण्य इति यावत् ॥ २६ ॥ उत् ऊर्ध्वमगुः ॥ २७ ॥ नितरां वातेनास्तैः क्षिप्तैः संशुष्कैर्वनपर्णैस्तुल्यं तद्वन्निपेतुः । मृतिः प्राणिमरणं तेन

प्रशेमुः पांसवो रक्तैस्तमांस्यायुधवह्निभिः ।
युद्धैकध्यानतः शब्दा भयानि मृतिनिश्चयैः ॥ २९
अभवत्केवलं युद्धमपशब्दमसंभ्रमम् ।
अनाकुलाम्बुवाहाभं खड्गवीचिसटांकृतम् ॥ ३०
खदखदरवसंवहच्छरौघं
टकटकितारवसंपतद्भुशुण्डि ।
झणझणरवसंमिलन्महास्त्रं
तिमितिमिवद्रणमास दुस्तरं तत् ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने विदूरथनिर्याणं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ४७

श्रीवसिष्ठ उवाच ।
एतस्मिन्वर्तमाने तु घोरे समरसंगमे ।
लीलाद्वयमुवाचेदं ज्ञप्तिं भगवतीं पुनः ॥ १
लीलाद्वयमुवाच ।
देवि कस्मादकस्मान्नौ भर्ता जयति नो रणे ।
वद त्वय्यपि तुष्टायामस्मिन्विद्रुतवारणे ॥ २
श्रीसरस्वत्युवाच ।
चिरमाराधितानेन विदूरथनृपारिणा ।
अहं पुत्रि जयार्थेन न विदूरथभूभृता ॥ ३
तेनासावेव जयति जीयते च विदूरथः ।
ज्ञप्तिरन्तर्गता संविदेतां मां यो यदा यथा ॥ ४
प्रेरयत्याशु तत्तस्य तदा संपादयाम्यहम् ।
यो यथा प्रेरयति मां तस्य तिष्ठामि तत्फला ॥ ५
न स्वभावोऽन्यतां धत्ते वह्नेरौष्ण्यमिवैष मे ।
अनेन मुक्त एव स्यामहमित्यस्मि भाविता ॥ ६
प्रतिभारूपिणी तेन बाले मुक्तो भविष्यति ।
एतदीयः स्वयं शत्रुः सिन्धुर्नाम महीपतिः ॥ ७
जयाम्यहं त्वां संग्राम इत्यनेनास्मि पूजिता ।
तस्माद्विदूरथो देहं तत्प्राप्य सह भार्यया ॥ ८
त्वयानया च कालेन बाले मुक्तो भविष्यति ।
एतदीयः स्वयं शत्रुः सिन्धुर्नाम महीपतिः ॥ ९
हत्वैनं वसुधापीठे जयी राज्यं करिष्यति ।
श्रीवसिष्ठ उवाच ।
एवं देव्यां वदन्त्यां तु बलयोर्युध्यमानयोः ॥ १०
रविर्द्रष्टुमिवाश्चर्यमाजगामोदयाचलम् ।
चेलुस्तिमिरसंघाता बलानीवारिरूपिणः ॥ ११
असृजञ्जीवसङ्घान्ये संध्यायां तारका इव ।
शनैः प्रकटतां जग्मुर्नीलीकाशाद्रिभूमयः ॥ १२
भुवनं कज्जलाम्भोधेरिवोत्क्षिप्तमराजत ।
पेतुः कनकनिःस्यन्दसुन्दरा रविरश्मयः ॥ १३
शैलेषु वरवीरेषु रणे रक्तच्छटा इव ।
अदृश्यत ततो व्योम तथा रणमहीतलम् ॥ १४
बाहुभिर्भ्रान्तभुजगं प्रभाभिः कीर्णकाञ्चनम् ।
कुण्डलैः कीर्णरत्नौघं शिरोभिर्दृष्टपङ्कजम् ॥ १५
आयुधैः खड्गनीरन्ध्रं शरैः शलभनिर्भरम् ।
रक्ताभास्थिरसंध्याढ्यं ससिद्धपुरुषं शवैः ॥ १६

वर्षिणो वृष्टिप्लावितादृणलक्षणाददेः सकाशात् ॥ २८ ॥ प्रशेमुरिति सर्वत्र संबध्यते । शब्दा वाक्प्रसराः ॥ २९ ॥ अपशब्दमपगतशब्दम् । वाय्वायनाकुलवर्षदम्बुवाहाभम् । वीचयोऽत्र विद्युत्तरङ्गास्तैः सटांकृतम् ॥ ३० ॥ तिमितिमीत्युक्तशस्त्रातिरिक्तप्रहरणध्वन्यनुकरणम् । तद्वत् रणं युद्धं दुस्तरं आस । भीरूणामिति शेषः ॥ ३१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे विदूरथनिर्याणं नाम षट्चत्वारिंशः सर्गः ४६

सिन्धोः शत्रुजये हेतुः सूर्योदयरणक्रमः ।
युद्धं च द्वैरथं राज्ञोर्मन्त्रास्त्रैरिह कीर्त्यते ॥ १ ॥

पुनःशब्देन वक्ष्यमाणप्रश्नोत्तरयोः प्रागुक्तयुक्तिभिरेव गतार्थत्वात् पुनरुक्तप्रायतया उक्तार्थस्फुटीकारमात्रप्रयोजनतां दर्शयति ॥ १ ॥ विद्रुताः प्रधाविता वारणा यस्मिंस्तथाविधे रणे नौ आवयोर्भर्ता विदूरथः ॥ २ ॥ आराधिता जयकामनयेति शेषः ॥ ३ ॥ अन्तर्गता सर्वप्राणिमनोन्तर्गता संवित्संवेदनमहमिति शेषः ॥ ४ ॥ प्रेरयति कामकर्मवासनाबलात्फलदानोन्मुखीकरोति । संपादनं च स्वस्य तत्तत्फलभावेन विवर्त एवेत्युक्तार्थस्फुटीकारेणाह—य इति ॥ ५ ॥ अनेन विदूरथेन ॥ ६ ॥ बाले इत्यप्रबुद्धलीलासंबोधनम् । प्रबुद्धलीलायाः प्रागेव समाहितत्वात् ॥ ७ ॥ जयेन आमयति पीडयति शत्रूनिति जयामी अहं त्वां इति संकल्पेन । स्यामिति सामान्यस्य जयामीति क्रियाविशेषेण पचतिभवतीतिवदभेदान्वयो वा ॥ ८ ॥ त्वया अनया च भार्यया सह ॥ ९ ॥ १० ॥ विदूरथस्यारिरूपिणो ये तिमिरसंघाता रात्रौ रक्षःपिशाचादीन् जीवसङ्घान् बलानि स्वसैन्यानीव असृजन् आविश्चकुरित्युत्प्रेक्षा । संध्यायां तारका इवेति तस्योपमानम् ॥ ११ ॥ १२ ॥ उत्क्षिप्तं पर्यानीतम् ॥ १३ ॥ रणमहीतलं वीरबाहुभिर्भ्रान्तभुजगमिव व्योम तु सूर्यस्य बाहुभिरिव किरणैः ॥ १४ ॥ उभयमुभयप्रभाभिः कीर्णकाञ्चनमिवादृश्यतेत्यर्थः । एवमग्रेऽप्युत्प्रेक्षयोभयवर्णनं बोध्यम् । उत्पतद्भिः पतितैश्च कुण्डलैः कीर्णरत्नौघं शिरोभिश्च दृष्टपङ्कजं सर इव ॥ १५ ॥ खड्गैर्मृगजातिभिर्नीरन्ध्रं निबिडितमिव । रक्ताभाभिः रक्तकान्तिभिः स्थिरसंध्याढ्यमिव । एवं सर्वत्र ॥ १६ ॥

१ भविष्यति इति पाठः. २ बिलाकाशाद्रि इति मुद्रितपुस्तके पाठः.

हारैः ससर्पनिर्मोकं कटैरिद्धं सुसंकुलम् ।
लसल्लतं पताकाभिरुरुभिः कृततोरणम् ॥ १७
हस्तैः पादैः पल्लवितं शरैः शरवणोपमम् ।
शस्त्रांशुशाद्वलश्यामं शस्त्रपूरैः सकैतकम् ॥ १८
कीर्णमायुधमालाभिरुन्मत्तमिव भैरवम् ।
फुल्लाशोकवनाकारं शस्त्रसंघट्टवह्निभिः ॥ १९
उदघुंघुमहाशब्दैर्विद्रवत्सिद्धनायकैः ।
सौवर्णनगराकारं बालार्ककचितायुधैः ॥ २०
प्रासासिशक्तिचक्रर्ष्टिमुद्गरारणितास्वरम् ।
वहद्रक्तनदीरंहःप्रोह्यमानशवोत्करम् ॥ २१
भुशुण्डीशक्तिकुन्तासिशूलपाषाणसंकुलम् ।
शूलशस्त्राहतिच्छन्नकबन्धपतनान्वितम् ॥ २२
कालताण्डववेतालकुलारब्धहलारवम् ।
शून्ये रणाङ्गणे दीप्तौ पद्मसिन्ध्वो रथौ चलौ ॥ २३
अदृश्येतां नभश्चिह्नौ चन्द्रसूर्यौ दिवीव तौ ।
चक्रशूलभुशुण्ड्यृष्टिप्रासायुधसमाकुलौ ॥ २४
सहस्रेण सहस्रेण वीराणां परिवारितौ ।
विचरन्तौ यथाकामं मण्डलैर्विततारवैः ॥ २५
सचीत्कारमहाचक्रपिष्टानेकमृतामृतौ ।
तरन्तौ रक्तसरितौ मत्तवारणलीलया ॥ २६
केशशैवलसंपन्ने चक्रचक्रजलेन्दुके ।
वहच्चक्राहतिक्षोभपातिताकुलवारणौ ॥ २७
मणिमुक्ताझणत्काररणत्कूबरकारवौ ।
वाताहतपताकाग्रपटत्पटपटारवौ ॥ २८
अनुयातौ महावीरैर्भूरिभिर्भीरुसैनिकैः ।
धारा वमद्भिः कुन्तानां शराणां धनुषामपि ॥ २९
शक्तीनां प्रासशङ्कूनां चक्राणां कचतां रणे ।
तत्र तौ क्षणमावृत्य मण्डले भूमिकुण्डले ॥ ३०
उभौ व्यतिबभूवाते संमुखावायुधावुभौ ।
नाराचधारानिकरविक्षेपकरकध्वनौ ॥ ३१
अन्योन्यमपि गर्जन्तौ मत्ताब्धिजलदाविव ।
तयोः प्रहरतोर्बाणा वसुधानरसिंहयोः ॥ ३२
पाषाणमुसलाकारा व्योमविस्तारिणोऽभवन् ।
करवालमुखाः केचिन्मुद्गराननकाः परे ॥ ३३
शितचक्रमुखाः केचित्केचित्परशुवक्रकाः ।
केचिच्छक्तिमुखाः केचित्केचिच्छूलशिलामुखाः ।
त्रिशूलवदनाः केचित्स्थूला इव महाशिलाः ॥ ३४

प्रलयपवनपातिताः शिलौघा
इव निपतन्ति शिलीमुखास्तदा स्म ।
प्रमिलितमभवत्तयोस्तदानीं
प्रलयविजृम्भितसिन्धुसंभ्रमेण ॥ ३५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे ली० विदूरथसिन्धुसमागमो नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

कटैः कंकटैः ॥ १७ ॥ १८ ॥ १९ ॥ उदधिवद्घुंघुमहाशब्दैः । उदधिशब्दस्य च्छान्दसो धिलोपः । सौवर्णनगरं त्रिपुरे प्रसिद्धं तदाकारम् ॥ २० ॥ २१ ॥ २२ ॥ इत्थं व्योमरणमहीतले वर्णयित्वा सिन्धुविदूरथयोर्द्वैरथं युद्धं रथादिद्वारा वर्णयति—**शून्ये** इत्यादिना । शून्ये परिवारयोधानां परस्परं युद्धेन क्षयादिति भावः ॥ २३ ॥ नभसश्चिह्नौ लक्षणभूतौ । दिवि स्वर्गे ॥ २४ ॥ २५ ॥ रक्तसरितौ अन्योन्यसंपादिते तरन्तौ ॥ २६ ॥ चक्राण्येव चक्राश्चक्रवाका जलप्रतिबिम्बितेन्दुकाश्च ययोस्तथाविधे रक्तसरितौ ॥ २७ ॥ झणत्कारलक्षणा रणतां रणप्रवृत्तानां वा रथकूबरकाणामारवा ध्वनयो ययोस्तौ ॥ २८ ॥ भीरवः सैनिका येषां तथाविधैर्भूरिभिर्महावीरैरनुयातौ । धनुषां संबन्धिनां शराणां शक्त्यादीनामपि धारा वमद्भिः । क्षिपद्भिरिति यावत् ॥ २९ ॥ रणभूमेः कुण्डले इवालंकारभूते रथयोः परिवर्तनरूपे मण्डले क्षणमावृत्य ॥ ३० ॥ आयोधनमायुधिर्युद्धं तस्मिन्नुभौ व्यतिबभूवाते परस्परक्रियाव्यत्यासेन बभूवतुः । व्यतिशब्दौ कर्मव्यतिहारद्योतनार्थौ । 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम् । व्यतिहृतक्रियां दर्शयति—**नाराचे**ति । नाराचा एव जलधारानिकराः । विक्षिप्यन्त इति विक्षेपाः प्रासकुन्तादयस्त एव करका वर्षोपलास्तत्पातनसहनप्रयुक्तध्वनौ विषये अब्धिजलदाविव पुनःपुनः पर्यायेणैको जलद इव ववर्ष अपरोऽब्धिरिव सेहे । तत्र च ध्वनिमात्रं वृत्तं न क्षतादिफलान्तरमिति द्योतनाय ध्वनावित्युक्तिः ॥ ३१ ॥ ३२ ॥ तयोः शराणां वैचित्र्यं वर्णयति—**पाषाणे**त्यादिना । व्योम्नि विस्तारिणः अभवन्निति सर्वत्र संबध्यते ॥ ३३ ॥ केचित्केचिदिति वीप्साविवक्षया द्विरुक्तिः ॥ ३४ ॥ शिलीमुखा बाणाः तयोः सिन्धुविदूरथयोः प्रमिलितमन्योन्यमेलनं प्रलयार्थं विजृम्भितयोर्विवृद्धयोः सिन्ध्वोः समुद्रयोः संभ्रमेण परस्परमेलनविलासेन अभवत् तुल्यमिति शेषः ॥ ३५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे विदूरथसिन्धुसमागमो नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

# अष्टचत्वारिंशः सर्गः ४८

श्रीवसिष्ठ उवाच ।

प्राप्य राजा पुरः प्राप्तं सिन्धुमुद्धुरकन्धरम् ।
मध्याह्नतपनान्तेन कोपेन विततोऽभवत् ॥ १
धनुरास्फालयामास चिरारावितदिङ्मुखम् ।
कल्पान्तपवनास्फोट इव मेरुगिरेस्तटम् ॥ २
विससर्जोर्जितो राजा प्रलयार्कः करानिव ।
तूणीररजनीबद्धाः शिलीमुखपरम्पराः ॥ ३
एक एव विनिर्याति गुणात्तस्य शिलीमुखः ।
सहस्रं भवति व्योम्नि गच्छन्पतति लक्षशः ॥ ४
सिन्धोरपि तथैवासीच्छक्तिर्लाघवमेव च ।
वरेण वरदस्यैवं विष्णोर्धानुष्कता तयोः ॥ ५
मुसला नाम ते बाणा मुसलाकृतयोऽम्बरम् ।
छादयामासुरुन्नादाः कल्पान्ताशनयो यथा ॥ ६
रेजुः कनकनाराचराजयो व्योम्नि सस्वनाः ।
रसन्त्यः कल्पवातार्ताः पतन्त्य इव तारकाः ॥ ७
विदूरथाच्छरासारा अजस्रमभिनिर्ययुः ।
अब्धेरिव पयःपूराः सूर्यादिव मरीचयः ॥ ८
प्रचण्डपवनोद्धूतात्पुष्पाणीव महातरोः ।
अयःपिण्डादिवोत्तप्तात्ताडितात्कणपङ्क्तयः ॥ ९
धारा वर्षमुच इव सीकरा इव निर्झरात् ।
तत्पुराग्निमहादाहात्स्फुलिङ्गा इव भासुराः ॥ १०
तयोश्चटचटास्फोटं शृण्वत्कोदण्डयोर्द्वयोः ।
बलद्वयमभूत्प्रेक्षामूकं शान्त इवाम्बुधिः ॥ ११
वहन्ति स्म शरापूरा गङ्गापूरा इवाम्बरे ।
सिन्धोरभिमुखं युद्धे घर्घरारावरंहसः ॥ १२
कचत्कनकनाराचशरवर्षा अनारतम् ।
वहच्छवशवाशब्दं निर्ययुर्धनुरम्बुदात् ॥ १३
बाणमन्दाकिनीपूरं व्रजन्तं सिन्धुपूरणे ।
वातायनात्तमालोक्य लीला तत्पुरवासिनी ॥ १४
तेन बाणसमूहेन जयमाशङ्क्य भर्तरि ।
उवाच वाक्यमानन्दविकसन्मुखपङ्कजा ॥ १५
जय देवि जयत्येष नाथोऽस्माकं विलोकय ।
किंचानेन शरौघेण मेरुरप्येति चूर्णताम् ॥ १६
तस्यामेवं वदन्त्यां तु घनस्नेहरवाकुलम् ।
प्रेक्षणव्यग्रयोर्देव्योर्हसन्त्योर्मानुषीं हृदा ॥ १७
तच्छरार्णवमामत्तमपिबत्सिन्धुवाडवः ।
शरोष्मणा ह्यगस्त्येन जह्नुर्मन्दाकिनीमिव ॥ १८
बाणवर्षेण कणशस्तं सायकमहाघनम् ।
छित्त्वा तनुरजः कृत्वा चिक्षेप गगनार्णवे ॥ १९
यथा दीपस्य शान्तस्य न परिज्ञायते गतिः ।
तस्य सायकसङ्घस्य न विज्ञाता तथा गतिः ॥ २०
तं छित्त्वा सायकासारं शरीराम्बुधरं घनम् ।
व्योम्नि प्रसारयामास रंसाच्छवशतान्वितम् ॥ २१
विदूरथस्तमप्याशु व्यधमत्सायकोत्तमैः ।
सामान्यजलदं मत्तं कल्पान्तपवनो यथा ॥ २२
कृतप्रतिकृतैरेवं बाणवर्षैर्महीपती ।
व्यर्थीकृतैरनयतां प्रहारमविचारणैः ॥ २३
अथादधे मोहनास्त्रं सिन्धुर्गन्धर्वसौहृदात् ।
प्राप्तं तेन ययुर्लोका विना मोहं विदूरथात् ॥ २४
व्यस्तशस्त्राम्बरा मूका विषण्णवदनेक्षणाः ।
मृता इवाभवन्योधाश्चित्रन्यस्ता इवाथवा ॥ २५
यावद्विदूरथादन्यं मोहो नयति मन्दताम् ।
तावद्विदूरथो राजा प्रबोधास्त्रमथाददे ॥ २६

---

विचित्रमायाजननैर्मन्त्रास्त्रैर्विश्वमोहनः ।
वर्ण्यते विस्तरेणात्र समरः सिन्धुपद्मयोः ॥ १ ॥

मध्याह्नतपनं अन्तयति सादृश्येन बध्नातीति मध्याह्नतपनान्तस्तेन । तत्सदृशेनेति यावत् । 'अति बन्धने' कर्मण्यण् ॥ १ ॥ आस्फालयामास विस्फारयामास ॥ २ ॥ रजनीपदेन तत्स्थानि मुकुलितपद्मानि लक्ष्यन्ते । तेषु बद्धाः शिलीमुखा बाणा भ्रमराश्च तत्परम्पराः ॥ ३ ॥ यदा विनिर्याति तदैक एव ॥ ४ ॥ कुत ईदृशं युद्धकौशलं तयोरिति तत्राह—**वरेणेति** । विष्णोस्तपसा आराधितस्येति गम्यते । धानुष्कता धनुर्युद्धकुशलता ॥ ५ ॥ उन्नादा महाध्वनयः ॥ ६ ॥ कनकरञ्जिता नाराचा बाणाः । रसन्त्यो ध्वनन्त्यः ॥ ७ ॥ ८ ॥ ॥ ९ ॥ वर्षाणि वृष्टीर्मुञ्चतीति वर्षमुक् तस्माद्वर्षमुचो धारा इव । तत्पुरस्य विदूरथनगरस्य । प्रागुक्तादग्निमहादाहात् ॥१०॥ बलद्वयं सेनाद्वयम् ॥ ११ ॥ सिन्धो राज्ञः समुद्रस्य च । घर्घरारावयुक्तानि रंहांसि वेगा येषाम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ मानुषीं मनुष्यदेहात्मबुद्धिम् । अप्रबुद्धामिति यावत् ॥ १७ ॥ अगस्त्येनागस्त्यीभूतेन शरोष्मणा करणेनापिबत् । उपसंहृतवानिति यावत् ॥ १८ ॥ तनुरजः कृत्वा धूलीकृत्येत्यर्थः ॥ १९ ॥ २० ॥ शरीरलक्षणानामम्बूनां धरम् । तस्योपपत्तिः शवशतान्वितमिति ॥ २१ ॥ २२ ॥ प्रहारं बाणाभिघातं अविचारणैर्लक्षीकरणैरनयतां अत्यवाहयताम् । यद्वा प्रहारं छान्दसो दीर्घः । प्रहरमितं कालं कृतप्रतिकृतैरनयताम् ॥२३॥ गन्धर्वस्य सौहृदान्मैत्रीवशात्प्राप्तम् । विदूरथाद्विना विदूरथमेकं वर्जयित्वा अन्ये परिवारलोका मोहं ययुः । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति सूत्रे 'अपादाने पञ्चमी'त्यतः पञ्चम्यप्यनुवर्तत इति मतेन पञ्चमी ॥ २४ ॥ मोहप्रकारमेव वर्णयति—**व्यस्तेति** ॥ २५ ॥ अन्यं जनम् ॥ २६ ॥

---

१ रसात् युद्धविषये रागात्.

ततः प्रबोधमापन्नाः प्रजाः प्रातरिवाब्जिनी ।
विदूरथे भवत्सिन्धुः क्रुद्धोऽर्क इव राक्षसे ॥ २७
नागास्त्रमाददे भीमं पाशबन्धनखेददम् ।
तेनाभवन्नभो व्याप्तं भोगिभिः पर्वतोपमैः ॥ २८
सर्पैर्विलसिता भूमिर्मृणालैः सरसी यथा ।
संपन्ना गिरयः सर्वे कृष्णपन्नगकम्बलाः ॥ २९
पदार्थाः सर्व एवेमे विषोष्मखिन्नतां ययुः ।
सपर्वतवनाभोगा ययौ विवशतां मही ॥ ३०
पूताङ्गारसमाकीर्णं विषवैषम्यशंसिनः ।
ववू रूक्षोष्णनीहारवाता ज्वलनरेणवः ॥ ३१
विदूरथोऽथ सौपर्णमाददेऽस्त्रं महास्त्रवित् ।
उदगुर्गरुडास्त्रेण सौपर्णाः पर्वता इव ॥ ३२
काञ्चनीकृतसर्वाशाः सर्वाशापरिपूरकाः ।
पक्षपर्वतसंरम्भजनितप्रलयानिलाः ॥ ३३
घोणानिलजवाकृष्टश्वसद्भुजगमण्डलाः ।
महाघुरघुरारावपूरिताम्भोधिखण्डकाः ॥ ३४
स सुपर्णघनोऽपात्तं सर्पौघं भूप्रपूरकम् ।
कष्टं शलशलायन्तमगस्त्य इव वारिधिम् ॥ ३५
सर्पकम्बलनिर्मुक्तं भूमण्डलमराजत ।
चिरात्तमवनीरन्ध्रमिव निर्वारिराशि च ॥ ३६
ततस्तद्गरुडानीकं क्वाप्यगच्छददृश्यताम् ।
दीपौघ इव वातेन शरदेवाब्दमण्डलम् ॥ ३७
वज्रभीत्येव पक्षौघपर्वतप्रकरः पुरः ।
स्वप्नदृष्टं जगदिव संकल्पपुरपूरवत् ॥ ३८
ततस्तमोऽस्त्रमसृजत्सिन्धुरन्धान्धकारदम् ।
तेनान्धकारो ववृधे कृष्णो भूजठरोपमः[1] ॥ ३९
रोदोरन्ध्रे प्रविसृत एकार्णव इवाभवत् ।
मत्स्या इवाभवंस्तेनास्ताराश्च मणयोऽभवन् ॥ ४०
अन्धकारप्रवृत्तेन मषीपङ्कार्णवोपमम् ।
कज्जलाचलसंभारोद्धूतकल्पानिलैरिव ॥ ४१
अन्धकूपे निपतिता इवासन्सकलाः प्रजाः ।
कल्पान्त इव संशेमुर्व्यवहारा दिशं[2] प्रति ॥ ४२
विदूरथोऽथ मार्तण्डं दीपं ब्रह्माण्डमण्डपे ।
अस्त्रं मन्त्रविदां श्रेष्ठः सृष्ट्वा मन्त्रो व्यचेष्टयत् ॥ ४३
अथोदिततमोऽम्भोधिमर्कागस्त्यो गभस्तिभिः ।
अपिबत्कृष्णमम्भोदं शरत्काल इवामलः ॥ ४४
अन्धकाराम्बरोन्मुक्ता विरेजुरमला दिशः ।
भूपतेः पुरतः कान्ता इव रम्यपयोधराः ॥ ४५
ययुः प्रकटतामन्तरखिला वनराजयः ।
लोभकज्जलजालेन मुक्ता इव सतां धियः ॥ ४६
अथ कोपाकुलः सिन्धू राक्षसास्त्रं महाभयम् ।
क्षणादुदीरयामास मन्त्रोदीर्णशरात्मकम् ॥ ४७
उदगुर्भीषणा दिग्भ्यः परुषा वनराक्षसाः ।
पातालगजफूत्कारक्षुब्धा इव महार्णवाः ॥ ४८
कपिलोर्ध्वजटाधूम्राः स्फुटच्चटचटारवाः ।
अग्नयो लेलिहानोग्रजिह्वा आर्द्रेन्धना इव ॥ ४९
सावर्तवृत्तयो व्योम्नि भीमचीत्कारटांकृताः ।
अग्निदाहा महाधूमविलोला इव सोल्मुकाः ॥ ५०
दंष्ट्राबिसाङ्कुराक्रान्तमुखपङ्काक्षदेहकाः ।
उदिता लोमजम्बाला दुष्पल्वलतटा इव ॥ ५१

---

विदूरथे विषये । राक्षसे मन्देहाख्येऽर्क इव क्रुद्धो लोहितोऽभूदित्यर्थः ॥ २७ ॥ भोगिभिः सर्पैः ॥ २८ ॥ तत्र भूः पाण्डुरैः सर्पैर्व्याप्ता पर्वतास्तु कृष्णैरिति वैचित्र्यमाह—**सर्पैरिति** ॥२९॥ विषोष्मणा खिन्नतामिव म्लानताम् । विवशतां व्याकुलताम् ३० रूक्षा उष्णाश्च नीहारा हिमाः स्निग्धशीतला अपि पदार्था यैस्तथाविधा ये वातास्तल्लक्षणा ज्वलनरेणवः पूतैर्भस्मनो विवेचितैरङ्गारैः समाकीर्णं यथा स्यात्तथा ववुः ॥ ३१ ॥ उदगुर्निर्ययुः । सुपर्णा एव सौपर्णाः ॥ ३२ ॥ पक्षैः सपक्षपर्वतसदृशैर्नोड्डयनसंरम्भेण जनितप्रलयानिलाः ॥ ३३ ॥ घोणा नासास्तदनिलजवेन श्वासवेगेन ॥३४॥ सः सुपर्णलक्षणो घनो मेघस्तं सर्पलक्षणमोघं प्रवाहं अपात् अपिबत् । पिबतेर्लुङि 'गातिस्था' इति सिचो लुक् । विशेषणान्योघवारिध्योः साधारण्येन योज्यानि ॥ ३५ ॥ चिराद्ग्राहेण आत्तमुद्धृतमत एव निर्गतं वारिराशेरिति निर्वारिराशि च । अवनीरन्ध्रं भूम्यवकाशमिव ॥ ३६ ॥ ३७ ॥ पक्षौघयुक्तमैनाकादिपर्वतप्रकर इव । संकल्पकल्पितं पुरं पूरश्च तद्वत् ॥ ३८ ॥ जठरं मध्यम् ॥ ३९ ॥ रोदस्योर्द्यावाभूम्योः रन्ध्रेऽन्तराले । एकार्णवसाम्योपपादनायाह—**मत्स्या इवेति** । मणय इवेत्यत्रापि संबध्यते ॥ ४० ॥ अन्धकारस्य प्रवृत्तेन प्रवृत्त्या । भावे क्तः । मषीपङ्कार्णवोपमं अभूज्जगदिति शेषः । कज्जलाचलस्याञ्जनगिरेः संभारैः उपादानभूतै रेणुभिः सह उद्धूतैः कल्पानिलैः प्रलयवायुभिरिव व्याप्तमिति शेषः ॥ ४१ ॥ दिशं प्रति प्रतिदिशम् ॥ असमासश्छान्दसः ॥ ४२ ॥ अमन्त्रः मन्त्रणं मन्त्रो गुप्तविचारस्तदनपेक्ष एव व्यचेष्टयज्जगदित्यर्थः ॥ ४३ ॥ ४४ ॥ अन्धकारलक्षणेनाम्बरेण वस्त्रेण । पयोधरा मेघाः स्तनाश्च ॥ ४५ ॥ ४६ ॥ ४७ ॥ उदगुर्निर्जग्मुः । पातालस्था गजा दिग्गजाः ॥ ४८ ॥ आर्द्रं इन्धनं येषां तथाविधा अग्नय इव धूम्राः । अग्निपक्षे 'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः' इति श्रुतिप्रसिद्धा जिह्वाः ॥४९॥ आवर्तानां वृत्तिर्भ्रमणं तत्सहिताः ॥ ५० ॥ दंष्ट्रालक्षणैर्बिसाङ्कुरैर्मृणालैराक्रान्तैर्मुखैः पङ्कैर्मलिनैरक्षैश्चक्षुरादिभिः कर्दमैः पद्मबीजैश्चोपलक्षितदेहकाः । लोमान्येव जम्बालानि शैवला

---

[1] 'तेनान्धकारः कृष्णोऽभूद्बिले जठरोपमः' इति पाठः. तत्र बिले पाताले यज्जठरं मध्यं तदुपम इत्यर्थः. [2] दिशः इति पाठः.

निगिरन्तः प्रधावन्तो गर्जन्तः सर्जिता इव ।
जटाजालतडित्पुञ्जा जलदाः सजला इव ॥ ५२
एतस्मिन्नन्तरे तस्मिँल्लीलानाथो विदूरथः ।
नारायणास्त्रं प्रददे दुष्टभूतनिवारणम् ॥ ५३
उदीर्यमाण एवास्मिन्मन्त्रराजेऽस्त्रराजयः ।
राक्षसानां प्रशेमुस्ता अन्धकार इवोदये ॥ ५४
प्रसुप्तराक्षसानीकमभवद्भुवनत्रयम् ।
शरदीव गताम्भोदं व्योम निर्मलमावभौ ॥ ५५
अथ सिन्धुर्मुमोचास्त्रमाग्नेयं ज्वलिताम्बरम् ।
जज्वलुः ककुभस्तेन कल्पाग्निज्वलिता इव ॥ ५६
धूमाम्बुदभराच्छन्ना बभूवुः सकला दिशः ।
गगने प्रोतपातालतिमिराकुलिता इव ॥ ५७
बभूवुर्ज्वलिताकारा गिरयः काञ्चना इव ।
प्रफुल्लवननीरन्ध्रचम्पकौघवना इव ॥ ५८
ययुर्व्योमाद्रिदिक्कुञ्जा ज्वालाजालजटालताम् ।
कुङ्कुमेनोत्सवे मृत्योः समालब्धा इव स्रजः ॥ ५९
ज्वलिता जनता चैकशङ्किनी सा नभःस्पृशा ।
सहस्राकृतिनौवेगचलितेनेव सागरात् ॥ ६०
जित्वा रिपुं पुनरसौ यथा प्रहरते तथा ।
वारुणं विससर्जास्त्रं पूजयित्वा विदूरथः ॥ ६१
आययुः सलिलापूरास्तमःपूरा इवाभितः ।
अधस्तादूर्ध्वतो दिग्भ्यो द्रवरूपा इवाद्रयः ॥ ६२
भागा इव शरव्योम्नि धृतयाना इवाम्बुदाः ।
महार्णवा इवोच्चस्थाः कुलशैलशिला इव ॥ ६३
तमालौघा इवोड्डीनाः संधिता इव रात्रयः ।
कज्जलौघा इवोद्भूता लोकालोकतटादिव ॥ ६४
रसातलगुहाभोगा इव व्योमदिदृक्षवः ।
महाघुरघुरारावरंहोबृंहितमूर्तयः ॥ ६५
तामग्निसंततिं मत्तामाचचामाम्बुसंततिः ।
भुवनव्यापिनी संध्यामाशु कृष्णेव यामिनी ॥ ६६
तामग्निसंततिं पीत्वा पूरयामास भूतलम् ।
जलश्रीजटितं देहं निद्रेव व्यक्तिमेयुषी ॥ ६७
एवंविधानस्त्रमोहान्विदधुर्धावनेतरे ।
मिथोमायामयानग्रे पश्यन्त्यनुभवन्ति च ॥ ६८
हेतिभारवराः सिन्धोश्चक्ररक्षास्ततोऽम्भसा ।
तृणानीव गताः प्रोह्य रथश्चास्याभवत्स्रुतः ॥ ६९
एतस्मिन्नन्तरे सिन्धुरस्त्रं सस्मार शोषणम् ।
आपत्त्राणकरं दैवं ददौ च शररूपिणम् ॥ ७०
शशामाम्बुमयी माया तेन यामेव भास्वता ।
ये मृतास्ते मृता एव बभूवुः शोषिता भुवः ॥ ७१
अथ मूर्खरुषा तुल्यस्तापः संतापयन्प्रजाः ।
जजृम्भे झर्झराकीर्णवनविस्तारकर्कशः ॥ ७२
कचत्कनकनिःस्यन्दसुन्दराङ्गच्छविर्दिशाम् ।
आसीद्राजवरस्त्रीणामिवालेपोऽङ्गसंगतः ॥ ७३
तेन घर्ममयीं मूर्च्छामाजग्मुस्तद्विरोधिनः ।
ग्रीष्मदावानलोत्तप्ता मृदवः पल्लवा इव ॥ ७४
विदूरथो रणोद्रेके तावत्कैंकारमाततम् ।
कोदण्डं कुण्डलीकृत्य पर्जन्यास्त्रमथाददे ॥ ७५
उदगुः पङ्क्तयोऽब्दानां यामिन्य इव संचिताः ।
तमालविपिनोड्डीनसंरम्भादम्बुमन्थराः ॥ ७६
वामना वारिपूरेण गर्जनोद्दामसंचराः ।
महिम्नामन्थराशेषककुम्मण्डलकुण्डलाः ॥ ७७

---

येषाम् ॥ ५१ ॥ निगिरन्तो जनान् जलदपक्षे ज्योतींषि । जगन्निगरणार्थमेव सर्जिताः सृष्टा इव । निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिच् ॥ ५२ ॥ तस्मिन्युद्धे । प्रददे प्रयोक्तुमाददे ॥ ५३ ॥ ॥ ५४ ॥ ५५ ॥ ककुभो दिशः ॥ ५६ ॥ गगने प्रोतेन पातालसंबन्धिना तिमिरेणाकुलिता व्याकुलीकृताः ॥ ५७ ॥ ५८ ॥ ज्वालाजालैर्जटालतां जटिलताम् । मृत्योः क्ष्वेलिकासेचनोत्सवे कुङ्कुमेन समालब्धाः सिक्ताः स्रज इव ॥ ५९ ॥ सागरात् सहस्राकृतिभिर्नावां वेगैश्चलितेन आगतेन वडवाग्निनेव जनता एकशङ्किनी वह्न्यद्वैतमेव जगतः संभावयन्ती सती ज्वलिता ॥६०॥ असौ वक्ष्यमाणास्त्रविशेषः । आग्नेयमस्त्रं जित्वा । अप्यर्थे पुनःशब्दः । रिपुं सिन्धुमपि यथा प्रहरते तथा वारुणं अस्त्रं पूजयित्वा विससर्ज ॥ ६१ ॥ ६२ ॥ शरव्योम्नि शरमार्गावकाशे तदीयभागा अवयवा इव । धृतयाना निबद्धगतयः । उच्चस्था ऊर्ध्वदेशाद्विलुठिताः कुलशैलानां बृहच्छिला इव ॥ ६३ ॥ लोकालोकस्य गिरेस्तटान्धकारकज्जलौघा इव ॥६४॥ व्योम ऊर्ध्वाकाशं दिदृक्षव इवेत्युत्प्रेक्षा । 'सूर्मिः'

इति पाठे सूर्मिः प्रतिमा मूर्तिरिवेत्येवार्थः ॥ ६५ ॥ ६६ ॥ ६७ ॥ धावनाः पूर्वास्त्रकृतमालिन्यविशोधकास्तदितरे तद्विरुद्धाश्चान्येऽप्यस्त्रविदः । 'विभाषा जसि' इति वैकल्पिकी सर्वनामता । मिथ्याभूतानामप्यस्त्रमोहानामर्थक्रियासामर्थ्यं दर्शयति—**मिथ** इति । अनुभवन्ति शत्रुविध्वंसादिफलमुखेनापि जना इति शेषः ॥ ६८ ॥ चक्रं स्वबलं रक्षन्तीति चक्ररक्षाः हेतीनामायुधानां भारावराः श्रेष्ठा योधाश्च ॥ ६९ ॥ शररूपिणं शोषणास्त्रं ददौ । धनुषि संदधे इत्यर्थः ॥ ७० ॥ नामैकदेशे नामग्रहणाद्यामा त्रियामा रात्रिरिव । भास्वता सूर्येण । भुवो भूप्रदेशाः शोषिता बभूवुः ॥ ७१ ॥ तापस्तीव्रातपः । झर्झरैः शुष्कपर्णराकीर्णैर्वनविस्तारैः कर्कशः ॥ ७२ ॥ दिशामालेपोऽङ्गराग इव आसीत् ॥ ७३ ॥ ७४ ॥ कैंकारो ज्यास्वनस्तस्य मा श्रीस्तया ततम् ॥ ७५ ॥ तमालविपिनस्य यदुड्डीनमाकाशे गमनं तदिव संरम्भाद्विभ्रमात् । उदगुः उद्ययुः ॥ ७६ ॥ वारिपूरेण नम्रत्वाद्वामना अप्रांशवः । महिम्ना तिर्यग्विस्तारेण अमन्थराणि स्वाभाविकविस्तारे कुण्ठितगतीनीव संकुचितानि अशेषदिङ्मण्ड-

वव्रुरावलितासारा मेघडम्बरसेदिनः ।
कीर्णसीकरनीहारभारोदाराः समीरणाः ॥ ७८
प्रपुस्फुरुः सुसौवर्णसर्पापत्सरणोपमाः ।
विद्युतो दिवि दैव्यस्त्रीकटाक्षवलना इव ॥ ७९
जुघूर्णुर्गर्जनोच्छूनप्रतिश्रुद्धनकन्दराः ।
दिशश्चलितमातङ्गसिंहर्क्षरवघर्घराः ॥ ८०
महामुसलधाराभिः पेतुरासारवृष्टयः ।
कष्टंकारकठिनाः कृतान्तस्येव दृष्टयः ॥ ८१
उदभूत्प्रथमं बाष्प उष्णोऽनलनिभो भुवः ।
पातालादभ्रवृन्दानां युद्धायेवात्तविभ्रमः ॥ ८२

ततो निमेषमात्रेण प्रशेमुर्मृगतृष्णिकाः ।
परबोधरसापूरैर्यथा संसारवासनाः ॥ ८३
आसीत्पङ्काङ्कमखिलं भूमण्डलमसंचरम् ।
पूरितः पूर्णधाराभिः सिन्धुः सिन्धुरिवाम्बुना ॥ ८४
वायव्यमस्त्रमसृजत्पूरिताकाशकोटरम् ।
कल्पान्तनृत्तसंमत्तरुद्रभैरवभीषणम् ॥ ८५
वव्रुरशनिनिपातपीडिताङ्गा
दलितशिलाशकलाः ककुम्मुखेषु ।
प्रलयसमयसूचका भटानां
कृतपटुटांकृतटङ्किनः समीराः ॥ ८६

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो० आयुधवर्णनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

## एकोनपञ्चाशः सर्गः ४९

श्रीवसिष्ठ उवाच ।
वव्रुर्वेलितनीहारा विकीर्णवनपल्लवाः ।
वायवो धूतवृक्षौघाः सलीलापीडपांसवः ॥ १
पक्षिवक्रान्तवृक्षौघाः पतनोत्पातनोद्भटाः ।
विकुट्टिताट्टालखण्डाश्चाभ्रभित्तिविभेदिनः ॥ २
तेनातिभीमवातेन विदूरथरथोऽप्यथ ।
उह्यमानोऽभवन्नद्या यथा जर्जरपल्लवः ॥ ३
विदूरथोऽथ तत्याज पार्वतास्त्रं महास्त्रवित् ।
व्योमापि घनतोयेन समादातुमिवोद्यतम् ॥ ४
तेन शैलास्त्रघातेन विराट् प्राणसमीरणः ।
शमं चैतन्यशान्त्येव प्रययौ वायुराततः ॥ ५

अन्तरिक्षगता वृक्षपङ्क्तयः पतिता भुवि ।
नानाजनशवव्यूहे काकानामिव कोटयः ॥ ६
शेमुः सूत्कारडात्कारभांकारोत्कारका दिशाम् ।
प्रलापा इव विध्वस्ताः पूर्ग्रामवनवीरुधाम् ॥ ७
गिरीनपश्यन्नभसः पततः पत्रवर्णवत् ।
सिन्धुः सिन्धुरिवोत्पक्षान्मैनाकादीनितस्ततः ॥ ८
वज्रास्त्रमसृजद्दीप्तं चेरुर्वज्रगणास्ततः ।
पिबन्तोऽद्रीन्द्रतिमिरमग्निदाहमिवाग्नयः ॥ ९
ते गिरीणां तथा क्षिप्ताः कोटितुण्डावखण्डनैः ।
शिरांसि पातयामासुः फलानीवोल्बणानिलाः ॥ १०
विदूरथोऽथ वज्रास्त्रशान्त्यै ब्रह्मास्त्रमत्यगात् ।

---

लानि कुण्डलानीव संपन्नानि येषाम् ॥ ७७ ॥ कीर्णैः शीकरैरम्बुकणैर्नीहारभारेण शैत्योत्कर्षेण उदाराः सुखदाः समीरणा वायवो वव्रुः ॥७८॥ सौवर्णानां सर्पाणां प्रागुक्तसंतापलक्षणाया आपदः सकाशात्सरणं बहिर्निःसरणं यत्पर्वतादौ प्रसिद्धं तदेव उपमा यासाम् । दैव्यो देवविषयिण्यः । अर्थाद्दिव्यस्त्रीकटाक्षा इति गम्यते ॥ ७९ ॥ उच्छूनैः प्रवृद्धैः प्रतिश्रुद्भिः प्रतिध्वनिभिर्घना निबिडिता गिरिकन्दरा यासु । रोषाच्चलितानामभिमुखप्रस्थितानां मातङ्गादीनां प्रतिगर्जितरवैर्घर्घरा मुखराः ॥ ८० ॥ कष्टंकारैः करकनिपातध्वनिभिर्मर्मशिराभेदनध्वनिभिश्च कठिनाः ॥ ८१ ॥ अभ्रवृन्दानां संबन्धिने युद्धाय आत्तः स्वीकृतो विभ्रमः शौर्यविलासो येन तथाविध इवेत्युत्प्रेक्षा ॥ ८२ ॥ मृगतृष्णिकाशब्देन तद्धेतव आतपा लक्ष्यन्ते । परस्यात्मनो बोधः साक्षात्कारस्तल्लक्षणैर्निरतिशयानन्दरसापूरैः ॥ ८३ ॥ असंचरं संचाराक्षमम् । सिन्धुः राजा सिन्धुः समुद्र इव पूरितः ॥८४॥ ॥ ८५ ॥ अशनिनिपातेनेव पीडितानि प्राणिनामङ्गानि यैः भटानां प्रतियोद्धृभिरिव कृतैः पटुभिष्टांकृतैः शिलाद्यभिघातध्वनिभिष्टङ्कैः पाषाणदारणायुधविशेषैस्तद्वन्त इव समीरा वायवः ककुभां दिशां मुखेषु वव्रुः ॥ ८६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे आयुधवर्णनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

पर्वतास्त्रं च वज्रास्त्रं ब्रह्मास्त्रं चात्र वर्ण्यते ।
विस्तरेण पिशाचास्त्रं पिशाचचरितान्वितम् ॥ १ ॥

सतां मूर्तिमतां लीलया आपीडाः शिरोभूषणीकृताः पांसवो यैः ॥ १ ॥ पक्षिवक्रान्ता भ्रमिता वृक्षौघा यैः । विकुट्टिताश्चूर्णिताः ॥ २ ॥ उह्यमानः प्रवाह्यमाणः ॥ ३ ॥ घनतोयेन मेघोदकेन समं व्योमापि समादातुं ग्रसितुमिवोद्यतमुद्युक्तम् ॥ ४ ॥ तत्त्वाववोधाच्चैतन्यस्य मायालक्षणकारणशान्त्या तत्कार्यभूतो विराड् प्राणसमीरणः सूत्रात्मेव वायुः शमं ययौ ॥५॥६॥ 'निःश्वासशब्दाः सूत्कारा डात्कारा लुण्ठनारवाः । भांकारा भीषणाः शब्दा उत्कारा उद्भटारवाः ॥' पुरां ग्रामाणां वनानां वीरुधां वल्लीनां च प्रलापा निरर्थकवर्णनवाक्यानीव ॥ ७ ॥ सिन्धुः राजा । सिन्धुः समुद्रः स्वस्मिन्नुत्पततो मैनाकादीनिव ॥ ८ ॥ अग्निभिर्दह्यत इत्यग्निदाह्यं इन्धनम् ॥ ९ ॥ कोटयः अग्रभागास्तल्लक्षणैस्तुण्डैश्चञ्चुभिरवखण्डनैश्छेदनैः । गिरीणां शिरांसि शिखराणि ॥ १० ॥ [illegible]ात् इतरास्त्राण्यतिक्रम्य प्रयोक्तुं अगात्प्रापत् ।

ततो ब्रह्मास्त्रवज्रास्त्रे समं प्रशममागते ॥ ११
श्यामाश्यामं पिशाचास्त्रमथ सिन्धुरचोदयत् ।
तेनोदगुः पिशाचानां पङ्क्तयोऽत्यन्तभीतिदाः ॥ १२
संध्यायामथ भीत्येव दिवसः श्यामतां ययौ ।
पिशाचा भुवनं जग्मुरन्धकारभरा इव ॥ १३
भस्मनःस्तम्भसदृशास्तालोत्तालविलासिनः ।
दृश्यमानमहाकारा मुष्टिग्राह्या न किंचन ॥ १४
ऊर्ध्वकेशाः कृशाङ्गाश्च केचिच्च श्मश्रुला अपि ।
कृष्णाङ्गा मलिनाङ्गाश्च ग्राम्या इव नभश्चराः ॥ १५
सभया मूढदृष्टाश्च यत्किंचनकराश्चलाः ।
दीना वज्रासिनः क्रूरा दीना ग्राम्यजना इव ॥ १६
तरुकर्दमरथ्यान्तःशून्यगेहगृहाश्चलाः ।
लेलिहानाः प्रेतरूपाः कृष्णाङ्गाश्चपला इव ॥ १७
जगृहुस्ते तदा मत्ता हतशिष्टमरेर्बलम् ।
आसंस्तत्सैनिकास्तत्र भिन्नास्त्रक्षुब्धचेतनाः ॥ १८
त्यक्तायुधतनुत्राणास्त्रस्तप्राणाः स्खलद्गमाः ।
नेत्रैरङ्गैर्मुखैः पादैर्विकारभरकारिणः ॥ १९
त्यक्तकौपीनवसना निमग्नावसनोत्तराः ।
विष्ठां मूत्रं च कुर्वन्तः स्थिरमारब्धनर्तनाः ॥ २०
पिशाचराजी राजानं तस्य यावद्विदूरथम् ।
समाक्रामति तावत्तां मायां स बुबुधे बुधः ॥ २१
पिशाचसंग्रामकरीं मायां वेत्ति स भूमिपः ।
तया पिशाचसैन्यं तत्परसैन्ये न्ययोजयत् ॥ २२
ततः स्वसैनिकाः स्वस्थाः परयोधाः पिशाचिनः ।
तस्याशु रूपिकास्त्रं च ददावन्यदसौ रुषा ॥ २३
उदगुर्भूतलाद्योम्नो रूपिका ऊर्ध्वमूर्धजाः ।
निर्मग्नविकरालाक्ष्यश्चलच्छ्रोणिपयोधराः ॥ २४
उद्भिन्नयौवना वृद्धाः पीवराङ्ग्योऽथ जर्जराः ।
स्वरूपारूपजघना दुर्नाभ्यो विकसद्भगाः ॥ २५
नररक्तशिरोहस्ताः संध्याभ्रारुणगात्रिकाः ।
अर्धचर्वितमांसास्रुक्स्रवत्सृक्कयाकुलाननाः ॥ २६
नानाङ्गवलना नानानमन्नमनसत्तमाः ।
शिलाभुजगवक्रोरुकटिपार्श्वकराङ्गिकाः ॥ २७
नारीकृतार्भकशवा हस्ताकृष्टान्त्ररज्जवः ।
श्वकाकोलूकवदना निम्नवक्रहनूदराः ॥ २८
जगृहुस्तान्पिशाचांस्ता दुर्बलान्दुःशिशूनिव ।
पिशाचरूपिकासैन्यं तदासीदेकतां गतम् ॥ २९
निर्मग्ननर्तनोत्तानवदनाङ्गविलोचनम् ।
परस्पराक्रान्तिकरं प्रधावच्च परस्परम् ॥ ३०
निष्कासितमहाजिह्वं नानामुखविकारदम् ।
शरभाराढ्यमन्योन्यं ह्रियमाणशवाङ्गकम् ॥ ३१
रुधिराम्भसि मज्जं तदुन्मज्जद्धृल्लसत्तनु ।
लम्बोदरं लम्बभुजं लम्बकर्णोष्ठनासिकम् ॥ ३२
रक्तमांसमहापङ्केष्वन्योन्यं वेल्लनाभ्यसत् ।
मन्दरोद्धूतदुग्धाब्धिलसत्कलकलाकुलम् ॥ ३३
यथैव मायासंचारस्तेन तस्य कृतः पुरा ।
तेनापि तस्याशु तथा कृतो बुद्ध्वा स लाघवात् ॥ ३४
वेतालास्त्रं ततो दत्ते तेनोत्तस्थुः शवव्रजाः ।
अमूर्धानः समूर्धानो वेताला वेशवल्लिताः ॥ ३५

---

समं एककालम् ॥ ११ ॥ श्यामा तमिस्रेव श्यामम् ॥ १२ ॥ इवकार आवृत्त्योभयत्र संबध्यते । तेन संध्यायामिवेत्युपमा । भीत्येवेति हेतूत्प्रेक्षा । जग्मुः आजग्मुः ॥ १३ ॥ भस्मनः संबन्धी स्तम्भो दग्धस्तम्भ इति यावत् । असमर्थसमासश्छान्दसः । मुष्टिग्राह्या हस्तप्राप्याः ॥ १४ ॥ ग्राम्याः ग्रामीणा दरिद्रजना इव । नभश्चरा आकाशसंचारिणः ॥ १५ ॥ मूढैर्मूर्खैरशुच्यनाचारैर्दृष्टाः । यत्किंचनास्थिकपालादि करे येषाम् । वज्रं चासिश्चोभयोः समाहारो वज्रासि तस्मादपि क्रूरा निष्ठुराः । समाहारनपुंसकत्वे 'इकोऽचि विभक्तौ' इति नुम् ॥ १६ ॥ लेलिहानाः सृक्किणी । चपला विद्युत इव दृश्यादृश्यस्वभावाः ॥ १७ ॥ तत्सैनिका विदूरथसैनिकाः ॥ १८ ॥ विकारभरा भूताविष्टचेष्टाः ॥१९॥ता एव दर्शयति—**त्यक्ते**ति । निमग्नानि संकुचितान्यवसनान्युत्तराण्यधराङ्गानि येषाम् ॥ २० ॥ पिशाचानां राजिः पङ्क्तिः ॥२१॥ परप्रयुक्तानां पिशाचानां स्ववशीकारेण परसैन्यसंग्रामकरीम् ॥ २२ ॥ तस्य पिशाचसैन्यस्य सहायभूतम् । रूपिकाः पूतनाभेदाः । असौ विदूरथः ॥ २३ ॥ २४ ॥ २५ ॥ रक्तपदेन तत्पूर्णकपालानि लक्ष्यन्ते । स्रवन्त्यां सृक्किभ्यामोष्ठप्रान्ताभ्यामाकुलाननाः ॥ २६ ॥ नानाविधान्यङ्गवलनान्यवयवचेष्टा यासाम् । नानाविधानामनमतामुत्तब्धानामपि नमने प्रह्वीकरणे सत्तमाः समर्थाः । शिला इव कठिना भुजगा इव वक्राश्च वक्षादयो यासाम् ॥ २७ ॥ नराणामियं नारी नरमाला तथाकृताः अर्भकशवा याभिः ॥ २८ ॥ जगृहुः पतित्वेन स्वीचक्रुः । दुष्कृतकारिशिशूनिव । उपभोग्यतांशे साम्याद्दृष्टान्तः ॥ २९ ॥ एकतां गतं तद्वर्णयति—**निर्मग्ने**त्यादिना । क्रीडारसावेशे नितरां मग्नम् ॥ ३० ॥ शरो रुधिरमण्डस्तद्भाराढ्यम् । अन्योन्यप्रीतये ह्रियमाणानि शवाङ्गानि येन ॥ ३१ ॥ मज्जं उन्मज्जत् । पुनःपुनर्निमज्योन्मज्जत् । आभीक्ष्ण्ये णमुलि द्विर्वचनाभावश्छान्दसः । घृत् क्षरद्रक्तं तेन लसत्तनु ॥ ३२ ॥ वेल्लनान्यालिङ्गनान्यभ्यसत् आवर्तयत् । मन्दरेणोद्धूतस्य मथ्यमानस्य दुग्धाब्धेरिव लसता कलकलेन कोलाहलेन आकुलम् ॥ ३३ ॥ मायायाः संचारः परावृत्य प्रेषणम् । तेन विदूरथेन । तस्य सिन्धोः । सः मायासंचारः कृतः ॥ ३४ ॥ ततस्तत्सहायार्थं दत्ते, ददाविति यावत् ।

---

१ स्वरूपेण स्वरूपतः अरूपाणि निराकाराणि जघनानि यासां तथाविधाः दुर्लक्ष्यजघना इत्यर्थः. २ न्योन्यह्रियमाण इति पाठः.

ततः पिशाचवेतालरूपिकोग्रकबन्धवत्।
तद्बभूव बलं भीममुर्वीनिगरणक्षमम्॥ ३६
अथेतरोऽपि भूपालो मायां संचार्य तां गुरौ।
राक्षसास्त्रं ससर्जाथ त्रैलोक्यग्रहणोन्मुखम्॥ ३७
उदगुः पर्वताकाराः सर्वतः स्थूलराक्षसाः।
देहमाश्रित्य निष्क्रान्ताः पातालान्नरका इव॥ ३८
अथोदभूद्बलं भीमं ससुरासुरभीतिदम्।
गर्जद्रक्षोमहानादवाद्यनृत्यत्कबन्धकम्॥ ३९
मेदोमांसोपदंशाढ्यं रुधिरासवसुन्दरम्।
क्षीबकूश्माण्डवेतालयक्षताण्डवसुन्दरम्॥ ४०
कूश्माण्डकोत्ताण्डवदण्डपाद-
क्षुब्धासृगुत्क्षिप्ततरङ्गसिक्तैः।
संध्याभ्ररागोत्करकोटिकान्ति
भूतैरसृक्स्रोतसि दत्तसेतु॥ ४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० तृतीयास्त्रयुद्धं नामैकोनपञ्चाशः सर्गः॥ ४९॥

## पञ्चाशः सर्गः ५०

श्रीवसिष्ठ उवाच।

तस्मिंस्तदा वर्तमाने घोरे समरविभ्रमे।
सर्वारिसैन्यनाशार्थमेकं स्वबलशान्तये॥ १
ससार स्मृतिमानन्तो महोदाराधिधैर्यभृत्।
अस्त्रमस्त्रेश्वरं श्रीमद्वैष्णवं शंकरोपमम्॥ २
अथ योऽसौ शरस्तेन वैष्णवास्त्राभिमन्त्रितः।
मुक्तस्तस्य फलप्रान्तादुल्मुका दिवि निर्ययौ॥ ३
पङ्क्तयः स्फारचक्राणां शतार्कीकृतदिक्तटाः।
गदानामभियान्तीनां शतवंशीकृताम्बराः॥ ४
वज्राणां शतधाराणां तृणराजीकृताम्बराः।
पट्टिशानां सपद्मानां दीनवृक्षीकृताम्बराः॥ ५
शराणां शितधाराणां पुष्पजालीकृताम्बराः।
खड्गानां श्यामलाङ्गानां पत्रराशीकृताम्बराः॥ ६
अथ राजा द्वितीयोऽपि वैष्णवास्त्रस्य शान्तये।
ददौ वैष्णवमेवास्त्रं शत्रुनिष्ठावपूरकम्॥ ७
ततोऽपि निर्ययुर्नद्यो हेतीनां हतहेतयः।
शरशक्तिगदाप्रासपट्टिशादिपयोमयाः॥ ८
शस्त्रास्त्रसरितां तासां व्योम्नि युद्धमवर्तत।
रोदोरन्ध्रक्षयकरं कुलशैलेन्द्रदारणम्॥ ९
शरपातितशूलासिखड्गकुट्टितपट्टिशम्।
मुसलप्रतनाप्रासशूलशातितशक्तिकम्॥ १०
शराम्बुराशिमथनमत्तमुद्गरमन्दरम्।
गदावदनतो युक्तं दुर्वारास्त्रिनिभासिनि॥ ११
रिष्टारिष्टप्रशमनभ्रमत्कुन्तेन्दुमण्डलम्।
प्रासप्रसरसंरब्धप्रोद्यतान्तकृतान्तकम्॥ १२

वेशेन परमर्दनावेशेन वल्लिताः संचलिताः। 'वल वल्ल संवरणे संचलने च'॥ ३५॥ ३६॥ इतरो विदूरथः। गुरौ पूर्वप्रयोगेणोपदेष्टरीव सिन्धौ॥ ३७॥ ३८॥ ३९॥ क्षीवाणां मत्तानाम्॥ ४०॥ दण्डपादो नाट्यशास्त्रप्रसिद्धः पादाघातविशेषः। सिक्तैर्भूतैः। दत्तसेतु निबद्धसेतु। बलं उदभूदिति पूर्वेणान्वयः॥ ४१॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे तृतीयास्त्रयुद्धं नामैकोनपञ्चाशः सर्गः॥ ४९॥

अत्रास्त्रयोर्वैष्णवयोर्युद्धं विरथता द्वयोः।
मृतिर्विदूरथस्यापि गृहानीतस्य वर्ण्यते॥ १॥

एकमसाधारणम्। स्वबलस्य स्वसैन्यस्य शान्तये रक्षःपिशाचपीडाशान्तये॥ १॥ अन्तः कालोचितप्रतिभावतामवधिभूतः सिन्धुः महोदारः सन्नधिकधैर्यभृदधिकधैर्यवान्। शंकरोपमं कालरुद्रवत्संहारकम्॥ २॥ फलप्रान्तात् शल्यप्रदेशात्॥ ३॥ उल्मुकादीत्युक्तमादिशब्दार्थं प्रपञ्चयति—**पङ्क्तय** इत्यादिना। त्रिषु श्लोकेषु पङ्क्तय एव विशेष्याः। वंशपदेन गदाकाराणि वंशकरीराणि गृह्यन्ते॥ ४॥ सपद्मानां पद्मदलमुकुलाकारानेकशाखाशालिनां पट्टिशानां पङ्क्तयः। दीना लूना ये वृक्षास्तद्व्याप्तप्रायं कृतमम्बरं याभिरित्यर्थः। 'ल्वादिभ्यः' इति निष्ठानत्वम्॥ ५॥ ६॥ द्वितीयो राजा विदूरथः शत्रोर्निष्ठा पराक्रमस्थितिस्तस्या अवपूरकं पूर्तिकरम्। तदनुरूपमिति यावत्॥ ७॥ हतारिछन्नाः पूर्वास्त्रप्रयुक्तहेतयो याभिस्ताः॥ ८॥ ९॥ शस्त्रास्त्रसरितां युद्धमेव विस्तराद्वर्णयति—**शरे**त्यादिना। शरेभ्य आपतितैर्निर्गतैः शूलादिभिः कुट्टितानि चूर्णितानि पट्टिशानि यत्र। असिखड्गयोरवान्तरजातिभेदविवक्षया पृथग्ग्रहणम्। मुसलानां प्रतननं प्रतना विस्तारः। भिदादित्वादङ्। तया प्रासादिभिश्च शातिताः खण्डिताः शक्तयो यत्र॥ १०॥ शरलक्षणस्याम्बुराशेर्मथने मत्ताः प्रहृष्टाः। समर्था इति यावत्। मुद्गरा एव मन्दरपर्वता यत्र। गदानां वदनतः। सार्वविभक्तिकस्तसिः। मुखसदृशैरग्रभागैर्युक्तं संघट्टितम्। दुर्वाराः अस्त्रं येषामस्ति तेऽस्त्रिणः प्रतियोद्धारस्तन्निभास्तत्समानप्रमाणप्रभावा असिन्यः खड्गजातिभेदा यत्र। 'गोस्त्रियोरुपसर्जनस्य' इति ङीपो ह्रस्वः॥ ११॥ रिष्टम्। 'रिष हिंसायां' भावे क्तः। स्व-

१ तरच्छन्नीकृताम्बरा इति पाठः. २ तृणजालीकृताम्बरा इति पाठः. ३ शरापतित इति टीकाकारसम्मतः पाठः.

चक्रावकुण्ठितोर्ध्वास्त्रं सर्वायुधक्षयंकरम् ।
शब्दस्फुटद्दिरिब्राण्डं घातभग्नकुलाचलम् ॥ १३
धारानिकृत्तशस्त्रौघमस्त्रयोर्युध्यमानयोः ।
मदस्त्रवारणेनेव वज्राविजरपर्वतम् ॥ १४
शङ्कुशङ्कितसूत्कारकाशिशूलशिलाशतम् ।
भुशुण्डीनिर्जितोद्दण्डभिन्दिपालोग्रमण्डलम् ॥ १५
परशूलकराभैकपरशूलैकलम्पितम् ।
वहद्रुच्छिन्नचञ्चूरचारणं शत्रुवारणम् ॥ १६
स्फुटच्चटचटास्फोटरुद्धत्रिपथगारयम्[1] ।
हेत्यस्त्रीचूर्णसंभारमहाधूमवितानकम् ॥ १७
अन्योन्यशस्त्रसंघट्टाद्भ्रमज्ज्वालोलसत्तडित् ।
शब्दस्फुटद्दिरिब्राण्डं घातभग्नकुलाचलम् ॥ १८
धारानिकृत्तशस्त्रौघमस्त्रयोर्युध्यमानयोः ।
मदस्त्रवारणेनैव कालोपायोऽचलात्मनः ॥ १९
अयं कियद्बल इति सिन्धौ तिष्ठति हेलया ।
विदूरथोऽस्त्रमाग्नेयं तत्याजाशनिशब्दवत् ॥ २०
ज्वालयामास स रथं सिन्धोः कक्षमिवारसम् ।
एतस्मिन्नन्तरे व्योम्नि हेतिनिर्विवरोदरे ॥ २१
ससन्नाह इव प्रावृट्पयोदतटिनीव यः ।
अस्त्रे राज्ञोः क्षणं कृत्वा युद्धं परमदारुणम् ॥ २२
अन्योन्यं शममायाते सवीर्ये सुभटाविव ।
एतस्मिन्नन्तरे सोऽग्नी रथं कृत्वा तु भस्मसात् ॥ २३
प्राप दग्ध्वा वनं सिन्धुं मृगेन्द्रमिव कन्दरात् ।
सिन्धुरभ्यासतोऽभ्यस्त्रं वारुणास्त्रेण शामयन् ॥ २४
रथं त्यक्त्वावनिं प्राप्य खड्गास्फोटकवानभूत् ।
अक्ष्णोर्निमेषमात्रेण रथाश्वानां रिपोः खुरान् ॥ २५
लुलाव करवालेन मृणालानीव लाघवात् ।
विदूरथोऽपि विरथो बभूवास्फोटकासिमान् ॥ २६
समायुधौ समोत्साहौ चेरतुर्मण्डलानि तौ ।
खड्गौ क्रकचतां यातौ मिथः प्रहरतोस्तयोः ॥ २७
दन्तमालेयमस्येव बले चर्वयतः प्रजाः ।
शक्तिमादाय चिक्षेप खड्गं त्यक्त्वा विदूरथः ॥ २८
सिन्ध्वम्बुघर्घरारावो महोत्पात इवाशनिः ।
अविच्छिन्ना समायाता पतिता सास्य वक्षसि ॥ २९
अप्रियस्य यथा भर्तुरनिच्छन्ती स्वकामिनी ।
तेन शक्तिप्रहारेण नासौ मरणमाप्तवान् ॥ ३०
केवलं रुधिरव्रातं नागो जलमिवात्यजत् ।
तद्देशलीला तं दृष्ट्वा भग्नं तम इवेन्दुना ॥ ३१
सविकासघनानन्दा पूर्वलीलामुवाच ह ।
देवि पश्य नृसिंहेन हतो भर्त्रायमावयोः ॥ ३२
शक्तिकोटिनखैर्दैत्यः सिन्धुरुद्धुरकन्धरः ।
सरःस्थलस्थनागेन्द्रकरफूत्कृतवारिवत् ॥ ३३
पिष्टो रसोऽस्य निर्याति रक्तं चुलचुलारवैः ।
हा कष्टं रथमानीतं सिन्धुरारोढुमुद्यतः ॥ ३४
सौवर्णं मैरवं शृङ्गं पुष्करावर्तको यथा ।
पश्य देवि रथोऽस्यासौ मुद्गरेण विचूर्णितः ॥ ३५
भ्रमत्पार्थनिपातेन सौवर्णं नगरं यथा ।
प्रवृत्तो रथमारोढुमानीतं पतिरेष मे ॥ ३६

खसैन्यहिंसनं तल्लक्षणस्यारिष्टस्याशुभतमसः प्रशमनाय भ्रमन्ति कुन्तलक्षणानीन्दुमण्डलानि यत्र । प्रासानां प्रसरैः संरब्धः कुपितः अतएव प्रोद्यतान्तः प्रारब्धजनविनाश एव कृतान्तो यमो यत्र ॥ १२ ॥ १३ ॥ मत्कृतेन विश्वामित्रास्त्रनिवारणेनेव परस्परप्रतिबद्धकार्ययोर्युध्यमानयोर्नारायणास्त्रयोः संबन्धिभिर्वज्रैः अविजरा जरयितुमशक्याः पर्वता यत्र । असमर्थसमासश्छान्दसः ॥१४॥ शङ्कवः कीलानीव कार्याच्छङ्कितानि संभावितानि सूत्कारशब्दमात्रकाशीनि शूलानि शिलाशतानि च यत्र ॥ १५ ॥ पर उत्कृष्टः सर्वसंहारसमर्थः शूलकरो रुद्रस्तदाभं एकैकमायुधं परं श्रेष्ठं यद्द्रुद्रशूलं तत्सदृशेनैकैकेन लम्पितं कुण्ठितं यत्र । वहतां निःसरतामेवोच्छिन्नानां खण्डितानामायुधानां चञ्चूराणि कुटिलविषमगतिफलानि च चारणानि प्रवर्तनानि यत्र । चरतेः 'नित्यं कौटिल्ये गतौ' इति यङि पचाद्यचि 'यङोऽचि च' इति लुकि 'उत्परस्यातः' इत्युत्वे छान्दसो दीर्घः ॥ १६ ॥ हेतीनामस्त्राणां च समाहारो हेत्यस्त्री । स्त्रीत्वं छान्दसम् ॥ १७ ॥ भ्रमत् ज्वालमानाय इवोल्लसन्त्यस्तडितो यत्र ॥ १८ ॥ पुनरुक्तं श्लोकार्धद्वयं व्याख्यातम् । अचलात्मनः युद्धे अचलवज्जडीभूतस्य विदूरथस्य मदीयास्त्रनिवारणमात्रेणावस्थितिरियं कालस्य कालक्षेपमात्रस्य उपायः ॥ १९ ॥ अयं तु मदग्रे कियद्बल इति हेलया अवज्ञाबुद्ध्या सिन्धौ तिष्ठति सति ॥ २० ॥ कक्षं तृणगुच्छम् । अरसं शुष्कम् ॥ २१ ॥ यो राजा स सन्नाहः प्रावृडिव यश्चान्यो राजा पयोदवर्धिता तटिनी नदीव शरान्वर्षति वहति च । तयो राज्ञोः अस्त्रे प्राक्प्रयुक्ते द्वे नारायणास्त्रे ॥ २२ ॥ स आग्नेयास्त्रसंबन्धी अग्निः ॥ २३ ॥ वनं दग्ध्वा । वनकन्दरान्निर्गतं मृगेन्द्रमिव ॥ २४ ॥ आस्फोटकं चर्म तद्वान् अभूत् ॥ २५ ॥ २६ ॥ क्रकचतां क्रकचवत्कठिनतरचर्मादिविदारणसमर्थतां यातौ प्राप्तौ ॥ २७ ॥ बले सैन्यद्वये ॥२८॥ सिन्धोः समुद्रस्याम्बु जलमिव घर्घरारावः महाप्रलयादिसूचक उत्पातः सा शक्तिरस्य सिन्धोर्वक्षसि ॥२९॥ ॥ ३० ॥ नागो गजो जलं मदजलमिवात्यजत् अस्त्रवत् ॥ ३१ ॥ आवयोर्भर्त्रा नृसिंहेन सिन्धुर्दैत्यो हिरण्यकशिपुर्हत इति व्यक्तरूपकम् ॥ ३२ ॥ ३३ ॥ पिष्टात्संचूर्णितात् उरसः सकाशात् । रक्तं सरःस्थलस्थस्य सरोमध्यस्थस्य गजेन्द्रस्य करात् फूत्कृतं वारीव निर्यातीति पूर्वेणान्वयः ॥ ३४ ॥ मैरवं मेरोः संबन्धि शृङ्गम् । पुष्करावर्तको मेघराजः । अस्य सिन्धो रथः ॥३५॥ पार्थस्यार्जुनस्य शरनिपातेन भ्रमन्निपातकवचानां सौवर्णं नगरं

[1] रुद्धत्रिपथगा इति पाठः.

कष्टं वज्रमिवेन्द्रेण मुसलं सिन्धुनेक्षितम्।
जवात्पतिः प्रयातो मे सैन्धवं मुसलायुधम् ॥ ३७
वञ्चयित्वा विलासेन रथमारुह्य लाघवात्।
हा धिक्कष्टमसौ सिन्धुरार्यपुत्ररथं रयात् ॥ ३८
हरिश्वभ्रमिवारूढं प्लवेनोर्ध्वमिव द्रुमम्।
क्रीडित्वा पीडयामास शरवर्षैर्विदूरथम् ॥ ३९
छिन्नध्वजं छिन्नरथं छिन्नाश्वं छिन्नसारथिम्।
छिन्नकार्मुकवर्माणं भिन्नसर्वाङ्गमाकुलम् ॥ ४०
हृदि स्फोटशिलापट्टदृढे पीवरमूर्धनि।
भित्त्वा वज्रसमैर्बाणैः पातयत्येष भूतले ॥ ४१
अथान्यं रथमानीतं कृच्छ्रेण प्राप्य चेतनाम्।
खड्गेनारोहतोऽस्यांसं छिन्नं भर्तुर्विलोकय ॥ ४२
पद्मरागगिरिद्योतसिवर्द्धासृग्विमुञ्चति।
हा हा धिक्कष्टमेतेन सिन्धुना खड्गधारया ॥ ४३
जङ्घयोर्मे पतिश्छिन्नः क्रकचेनेव पादपः।
हा हा हतास्मि दग्धास्मि मृतास्म्युपहतास्मि च ॥ ४४
मृणाले इव पत्युर्मे लूने द्वे अपि जानुनी।
इत्युक्त्वा सा तदालोक्य भर्तुर्भीविभयातुरा ॥ ४५
लता परशुकृत्तेव मूर्च्छिता भुवि सापतत्।
विदूरथोऽपि निर्जानुः प्रहरन्नेव विद्विषि ॥ ४६
पपात स्यन्दनस्याधश्छिन्नमूल इव द्रुमः।
पतन्नेवैष सूतेन रथेनैवापवाहितः ॥ ४७
यदा तदाहतिं तस्य कण्ठेऽदात्सिन्धुरुद्धतः।
अर्धविच्छिन्नकण्ठोऽसावनुयातोऽथ सिन्धुना ॥ ४८
स्यन्दनेनाविशत्सद्म पद्मं रविकरो यथा।
सरस्वत्याः प्रभावाढ्यं तत्प्रवेष्टुमसौ गृहम्।
नाशकन्मशको मत्तो महाज्वालोदरं यथा ॥ ४९
खड्गावकृत्तगलगर्तगलत्स्रवात-
रक्तच्छटाछुरितवस्त्रतनुत्रगात्रम्।
तत्याज तं भगवतीमभितो गृहान्तः
सूतः प्रवेश्य मृतितल्पतले गतोऽरिः ॥ ५०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० विदूरथमरणवर्णनं नाम पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ५१

श्रीवसिष्ठ उवाच।
हतो राजा हतो राजा प्रतिराजेन संयुगे।
इतिशब्दे समुद्भूते राष्ट्रमासीद्भयाकुलम् ॥ १
भाण्डोपस्करभाराढ्यं विद्रवच्छकटव्रजम्।
साक्रन्दार्तकलत्राढ्यं द्रवन्नागरदुर्गमम् ॥ २
पलायमानसाक्रन्दं मार्गाहतवधूगणम्।
अन्योन्यलुण्ठनव्यग्रलोकलग्नमहाभयम् ॥ ३
परराष्ट्रजनानीकताण्डवोल्लाससारवम्।

यथा तथा भ्रमन्तमर्थात्तं रथं पश्येत्यर्थः। तद्ब्रह्माण्डेऽपि पार्थादिजन्मसंभवान्नाप्रसिद्धोपमा॥ ३६ ॥ ईक्षितं प्रहरणार्थमिति शेषः। सैन्धवं वञ्चयित्वा ॥३७॥३८॥ ध्वजलाञ्छितत्वात् प्लवेन पक्षिविशेषेण उपलक्षितम्। शैवलादिना हरि हरितवर्णं श्वभ्रं पल्वलमिव। तथाविधमूर्ध्वमुच्छ्रितं द्रुममिव वा स्थितं रथमारूढमार्यपुत्रं स्वभर्तारं विदूरथं पीडयामासेति संबन्धः ॥ ३९ ॥ ४० ॥ स्फोटे स्फोटनविषये शिलापट्टवद्दृढे। अशक्यस्फोटने इति यावत्। पीवरे स्थूले मूर्धनि च भित्त्वा ॥ ४१ ॥ रथं कृच्छ्रेणारोहतोऽस्य मे भर्तुः सिन्धुना छिन्नमंसं स्कन्धदेशं विलोकय ॥ ४२ ॥ अतएव भर्तारं भिन्नस्य पद्मरागगिरेर्निःसृतं द्योतमारक्तप्रभामिवर्द्धं समृद्धमसृग्रक्तं विमुञ्चति। पश्येत्यत्राप्यनुकृष्यते ॥ ४३ ॥ हता हननव्यापारविषयीकृता, मृता तत्फलमरणभागिनीति भेदः ॥ ४४ ॥ भर्तुर्विषये भावः स्नेहातिशयस्तेन भयेन चातुरा। सीदतीति सा। सदेर्डप्रत्यये टाप् ॥ ४५ ॥ ४६ ॥ पपात पतनोन्मुखो बभूवेत्यर्थः। पतन् पतनोन्मुख एवैष सूतेन विष्टभ्य रथेनैवापवाहितो गृहं प्रतीति शेषः। 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति स्मृतेः। रणे अभिमुखमरणे सूर्यमण्डलभेदिनो ब्रह्मलोकावाप्तौ विरक्तस्य। 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति वचनात्क्रममुक्तिप्रसक्तौ अविरक्तस्य 'इमं मानवमावर्तं नावर्तन्ते' इति श्रुतेः कल्पान्तरे पुनरावृत्तौ वा प्राक्तनपद्मशरीरेण प्रारब्धशेषभोगासिद्धेस्तदनुगुणसरस्वतीसंकल्पवरदानबलादेव सूतस्य राजयशःश्रेयोविनाशे अपवाहने प्रवृत्तिरासीदिति बोध्यम् ॥ ४७ ॥ यदा अपवाहितस्तदा आहतिं खड्गाघातं अदात्। अपवाह्यमाने असंमुखे शत्रौ प्रहारः शूरविगर्हितः कृत इति सूचयन्विशिनष्टि— उद्धत इति ॥ ४८ ॥ असौ सिन्धुः पद्मगृहं प्रवेष्टुं नाशकत् ॥ ४९ ॥ खड्गेन अवकृत्तस्य गलस्य गर्ताच्छिद्रात् गलद्भिः स्रवाताभिः रक्तस्य च्छटाभिर्धाराभिश्छुरितानि सिक्तानि वस्त्रादीनि यस्य तथाविधं तं विदूरथं सूतो गृहं प्रवेश्य गृहान्तर्भगवतीं सरस्वतीमभितः अभिमुखे मृतितल्पतले सुखमरणयोग्यमृद्वास्तरणोपरि तत्याज। 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति षष्ठ्यर्थे द्वितीया। अरिः शत्रुः सिन्धुश्च गृहप्रवेशासामर्थ्याद्गतः परावृत्त इत्यर्थः ॥५०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे विदूरथमरणवर्णनं नाम पञ्चाशः सर्गः ॥५०॥

अत्र राजवधोदन्ताद्वर्ण्यते राष्ट्रविड्वरः।
सिन्धौ प्रतिष्ठिते भूयो देशस्वास्थ्यं च विस्तरात् ॥ १ ॥

राजा विदूरथः। प्रतिराजेन सिन्धुना। संयुगे युद्धे ॥ १ ॥ ॥ २ ॥ ३ ॥ परराष्ट्रजनानान्तराणां सिन्ध्वनीकस्य च जयता-

निरधिष्ठितमातङ्गहयवीरपताङ्गनम् ॥ ४
कपाटपाटनोड्डीनकोशान्तरवघर्घरम् ।
लुण्ठितासंख्यकौशेयप्रावृताभिभटोद्भटम् ॥ ५
क्षुरिकोत्पाटितार्द्रान्त्रमृतराजगृहाङ्गनम् ।
राजान्तःपुरविश्रान्तचण्डालश्वपचोत्करम् ॥ ६
गृहापहृतभोज्यान्नभोजनोन्मुखपामरम् ।
सहेममहारवीरौघपादाहतरुदच्छिशु ॥ ७
अपूर्वतरुणाक्रान्तकेशान्तःपुरिकाङ्गनम् ।
चोरहस्तच्युतानर्घ्यरत्नदन्तुरमार्गगम् ॥ ८
हयेभरथसंघट्टव्यग्रसामन्तमण्डलम् ।
अभिषेकोद्यमादेशपरमन्त्रिपुरःसरम् ॥ ९
राजधानीविनिर्माणसारम्भस्थपतीश्वरम् ।
कृतवातायनश्वभ्रनिपतद्राजवल्लभम् ॥ १०
जयशब्दशतोद्घोषसिन्धुराजन्यनिर्भरम् ।
असंख्यनिजराजौघधृतसिन्धुकृतास्थिति ॥ ११
ग्रामान्तरसमाक्रान्तविद्रवद्राजवल्लभम् ।
मण्डलान्तरसंजातनगरग्रामलुण्ठनम् ॥ १२
अनन्तचोरमोषार्थरुद्धमार्गगमागमम् ।
महानुभाववैधुर्यसनीहारदिनातपम् ॥ १३
मृतबन्धुजनाक्रन्दैर्मृततूर्यरवैरपि ।
हयेभरथशब्दैश्च पिण्डग्राह्यघनध्वनि ॥ १४
सिन्धुदेवो जयत्येकच्छत्रभूमण्डलाधिपः ।
इत्यनन्तरमारेभे मेर्यः प्रतिपुरं तदा ॥ १५
राजधानीं विवेशाथ सिन्धुरुद्धुरकन्धरः ।
प्रजाः स्रष्टुं युगस्यान्ते मनुर्जगदिवापरः ॥ १६
प्रवृत्ता दशदिग्भ्योऽथ प्रवेष्टुं सैन्धवं पुरम् ।
कराः करिहयाकारै रत्नपूरा इवाम्बुधिम् ॥ १७
निबन्धनानि चिह्नानि शासनानि दिशं प्रति ।
क्षणान्निवेशयामासुर्मण्डलं प्रति मन्त्रिणः ॥ १८
उदभूदचिरेणैव देशे देशे पुरे पुरे ।
जीविते मरणे माने नियमोऽयमतो यथा ॥ १९
अथ शेमुर्निमेषेण देशोपप्लवविभ्रमाः ।
प्रशान्तोत्पातपवनाः पदार्थावृत्तयो यथा ॥ २०
सौम्यतामाजगामाशु देशो दशदिगन्वितः ।
क्षीरोदः क्षुभितावर्तो द्रागिवोद्धृतमन्दरः ॥ २१

ववुरलकचयान्विलोलयन्तो
मुखकमलालिकुलानि सैन्धवीनाम् ।
जललववलनाकुलाः समीरा
अशिवगुणानिव सर्वतः क्षणेन ॥ २२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० सिंधुराष्ट्रवर्णनं नामैकपञ्चाशः सर्गः ॥ ५१ ॥

---

ण्डवोल्लासेन सारवं सशब्दम् ॥ ४ ॥ कपाटानां पाटनेन उड्डीन इव बहिराकाशे निर्गतो यः कोशगृहस्यान्ते विनाशे रवस्तेन घर्घरम् । कौशेयप्रावृता अभिभूतकोशपालभटा उद्भटा यत्र ॥ ५ ॥ चोरैः क्षुरिकाभिः शस्त्रीभिरुत्पाटितैरार्द्रैरान्त्रैरुपलक्षिता मृता राजगृहाङ्गना यत्र ॥ ६ ॥ भोज्यानां राजभोजनयोग्यानामन्नानां भोजने उन्मुखाः पामराः पृथग्जना यत्र ॥ ७ ॥ रत्नैर्दन्तुरा उन्नतदन्ता इव धवलिता मार्गगा यत्र ॥ ८ ॥ संघट्टनं संघट्टः अपहृत्य मेलनं तत्र व्यग्रं सामन्तमण्डलं यत्र । सिन्धुसुतपट्टाभिषेकोद्यमस्य आदेशे आज्ञापने परास्तत्पराः ॥ ९ ॥ स्थपतीश्वराः कारुश्रेष्ठाः । कारुकृतेषु वातायनश्वभ्रेषु अपूर्वनगरसौन्दर्यदर्शनाय निपतन्त्यः प्रविशन्त्यः सिन्धुराजवल्लभा यत्र ॥१०॥ जयशब्दशतोद्घोषैः प्रवेशितस्य सिन्धुराजन्यस्य सिन्धुराजपुत्रस्य अभिषिक्तस्य निर्भरः प्रभावातिशयो यत्र । निजैः स्वपक्षीयै राजौघैः शिरसा धृता सिन्धुना कृता स्थिती राष्ट्रमर्यादा यत्र ॥ ११ ॥ ग्रामान्तरप्रच्छन्नाः परैः परिज्ञातास्ततोऽपि विद्रवन्तः पूर्वराजवल्लभजना यत्र ॥ १२ ॥ अनन्तैश्चोरैर्मोषार्थं रुद्धा मार्गेषु गमागमा जनसंचारा यत्र । महानुभावो विदूरथस्तद्वैधुर्येण सनीहारा दिनेषु आतपा यत्र ॥ १३ ॥ पिण्डवत्करे ग्रहीतुं शक्या इत्यौत्प्रेक्षिकम् । घना ध्वनयो यत्र ॥ १४ ॥ इति उद्घोषयन् भेर्यः भेरीः । छान्दसः सुब्व्यत्ययः । वादयितुमारेभे जन इति शेषः ॥ १५ ॥ अथ पुत्रस्य राज्याभिषेकानन्तरम् । सिन्धुः स्वराजधानीं विवेश ॥ १६ ॥ ॥ १७ ॥ निबन्धनानि मर्यादाः । चिह्नानि मुद्रादिषु सिन्धुनामाङ्कनानि ॥ १८ ॥ १९ ॥ पवने शान्ते पवनकृतास्तृणपर्णधूल्यादिपदार्थानामावृत्तयो भ्रमणानि यथा शाम्यन्ति तद्वत् ॥ २० ॥ २१ ॥ समीरा वायवः सैन्धवीनां मुखकमले अलिकुलानि भ्रमरपङ्क्तिभूतानलकचयान्विलोलयन्तः । तन्मधुप्रायाणां तत्स्वेदजललवानां वलनेन मत्ता इव मन्दगतित्वादाकुलाः सन्तस्तच्छैत्यसौरभ्यादिमङ्गलगुणैः सर्वदेशतः संतापदौर्गन्ध्याद्यशिवगुणान्विलोलयन्तो डलयोरभेदाद्विलोडयन्त उपघ्नन्त इव ववुः ॥ २२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सिन्धुराष्ट्रवर्णनं नामैकपञ्चाशः सर्गः ॥ ५१ ॥

१ यमादेशं परं इत्यपि आदर्शान्तरे पाठो लभ्यते, तथाप्येतत्पाठस्य सुसङ्गतत्वाट्टीकाकारसंमतत्वाच्चैष एवास्माभिरादृतः.

# द्विपञ्चाशः सर्गः ५२

श्रीवसिष्ठ उवाच ।
एतस्मिन्नन्तरे राम लीलोवाच सरस्वतीम् ।
श्वासावशेषमालोक्य मूढं भर्तारमग्रगम् ॥ १
प्रवृत्तो देहमुत्स्रष्टुं मद्भर्तायमिहाम्बिके ।
ज्ञप्तिरुवाच ।
एवंरूपमहारम्भे संग्रामे राष्ट्रसंभ्रमे ॥ २
संपन्नेऽपि स्थितेऽप्युच्चैर्विचित्रारम्भमन्थरे ।
न किंचिदपि संपन्नं राष्ट्रं न च महीतलम् ॥ ३
न स्थितं क्वचनाप्येवं स्वप्नात्मकमिदं जगत् ।
तस्य तन्मण्डपस्यान्तः शवस्य निकटाम्बरे ॥ ४
इदं भूराष्ट्रमाभाति भर्तृजीवस्य तेऽनघे ।
अन्तःपुरगृहान्ते तदिदं राष्ट्रान्वितोदरम् ॥ ५
वसिष्ठविप्रगेहेऽन्तर्विन्ध्याद्रिग्रामके स्थितम् ।
वसिष्ठविप्रगेहेन्तः शवगेहजगत्स्थितम् ॥ ६
शवगेहजगत्कुक्षाविदं गेहजगत्स्थितम् ।
एवमेष महारम्भो जगत्त्रयमयो भ्रमः ॥ ७
त्वया मयाऽनयाऽनेन संयुक्तः सार्णवावनिः ।
गिरिग्रामकदेहान्तर्मध्ये गगनकोशके ॥ ८
स्वात्मैव कचति व्यर्थो न कचत्येव वा क्वचित् ।
तत्पदं परमं विद्धि नाशोत्पादविवर्जितम् ॥ ९
स्वयं कचितमाभातं शान्तं परमनामयम् ।
किल मण्डपगेहेन्तः स्वस्वभावोदितात्मनि ॥ १०
एवमारम्भघनयोरपि मण्डपयोस्तयोः ।
उदरे शून्यमाकाशमेवास्ति न जगद्भ्रमः ॥ ११
भ्रमद्रष्टुरभावे हि कीदृशी भ्रमता भ्रमे ।
नास्त्येव भ्रमसत्तातो यदस्ति तदजं पदम् ॥ १२
भ्रमो दृश्यमसत्तस्य द्रष्टृदृश्यदशा कुतः ।
द्रष्टृदृश्यक्रमाभावादद्वयं सहजं हि तत् ॥ १३
तत्पदं परमं विद्धि नाशोत्पादविवर्जितम् ।
स्वयं कचितमाभातं शान्तमाद्यमनामयम् ॥ १४
किल मण्डपगेहान्तः स्वस्वभावोदितात्मनि ।
विहरन्ति जनास्तत्र स्वगेहे स्वव्यवस्थया ॥ १५
न जगत्तत्र नो सर्गः कश्चिदप्यनुभूयते ।
तेनाहमजमाकाशं जगदित्येव वर्तते ॥ १६
सर्वं शून्यात्मविज्ञानं मेर्वादिगिरिजालकम् ।
नेदं कुड्यमयं किंचिद्यथा स्वप्ने महापुरम् ॥ १७
देशे प्रादेशमात्रेऽपि गिरिजालमयान्यपि ।
वज्रसाराणि खान्येव लक्षाणि जगतो विदुः ॥ १८

---

राज्ञोऽत्र मरणं तस्य संसारस्य मृषात्मता ।
तथा तत्पुरलीलाया वर्ण्यते वासनात्मता ॥ १ ॥

मूढं मूर्च्छितम् ॥ १ ॥ २ ॥ संपन्ने उत्पन्ने स्थिते अपिशब्दाद्विनष्टेऽपि क्वचन क्वचिदपि । क्वचनेत्यखण्डमव्ययम् । न संपन्नं न स्थितं न नष्टं चेत्यर्थः । तन्मण्डपस्य प्रागदृष्टतादृशालपतरमण्डपस्यान्तः पद्मशवस्य ॥ ३ ॥ ४ ॥ तद्विदूरथब्रह्माण्डं पद्मान्तःपुरगृहान्ते स्थितं राष्ट्रैरन्वितमुदरं यस्य तथाभूतमिदं पाद्मब्रह्माण्डं वसिष्ठविप्रगेहेन्तःस्थितमित्यन्वयः ॥ ५ ॥ उक्तमेव व्यतिहारेण द्रढयति—**वसिष्ठे**ति ॥ ६ ॥ ७ ॥ अनया द्वितीयलीलया । अनेन त्वद्भर्त्रा ॥ ८ ॥ एकैकान्तरपरमुत्पन्नमित्यपि कल्पनैव । वस्तुतश्चैतन्य एव नाकाशे । आकाशादिसहितत्रितयाध्यासादित्याशयेनाह—**स्वात्मैवे**ति । विषयमिथ्यात्वे चिति तत्संवलितरूपमपि नास्त्येवेत्याशयेनाह—**न कचत्येवे**ति । तथाच निर्विषयचिन्मात्रमेवावशिष्यते तदेव मुख्यं ज्ञेयमित्याह—**तदि**ति ॥ ९ ॥ स्वयं कचितं स्वप्रकाशं तदेव मण्डपगेहान्तः स्वेन चिन्मात्रस्वभावेनोदिते स्वात्मनि आभातं न वस्त्वन्तरमित्यर्थः । किलेति विद्वत्प्रसिद्धौ ॥ १० ॥ मण्डपान्तर्गते भूताकाशेऽपि न जगदस्ति किं वाच्यं शुद्धचिदाकाश इत्याशयेनाह—**एवमि**ति ॥११॥ नन्वल्पान्ते बृहतोऽसमावेशात्तत्प्रलयो यदि भ्रमस्तर्ह्यतिबृहतो ब्रह्मणो मण्डपहृदयाद्याकाशेष्वसमावेशात्तत्र शास्त्राचार्योपदेशात्तत्प्रलयोऽपि भ्रमः किं न स्यादिति शङ्कोपजीव्यविरोधान्नैवमित्याह—**भ्रमद्रष्टु**रिति ॥१२॥ ननु तर्हि भ्रम एव भ्रमं पश्यतु नान्यस्तत्राह—**भ्रम** इति । द्रष्टृव्यापारफलाधारो हि दृश्यः । न च स्वात्मनि केनचिद्व्यापारितुं शक्यते, एकत्र कर्तृकर्मताविरोधात् । न च द्रष्टर्यसति दृश्यस्य सत्तास्फूर्ती सिध्यत इति भावः । अयं द्रष्टृदृश्यक्रमाभावो द्वैतस्यैव दूषणम् । अद्वैतस्य तु सहजस्य भूषणमेवेत्याशयेनाह—**द्रष्ट्रि**ति ॥ १३ ॥ १४ ॥ एवमल्पतरे बृहत्तरासमावेशोऽपि दृश्यस्यैव दूषणं न सर्वाधिष्ठानचैतन्यस्येत्याशयेनाह—**किले**त्यादिना । स्वस्वव्यवहारानुकूलदेशवैपुल्यव्यवस्थया विहरन्ति संचरन्ति । किलेत्याश्चर्ये ॥ १५ ॥ अनुभूयते तत्त्वज्ञैरित्यर्थः । तेनानुभवात्मकप्रत्यक्षप्रमाणेनाहंकारसाक्षिभूतं यच्चिदाकाशं तदेवाज्ञदृशा जगदिति रूपेण वर्तत इति निश्चितमित्यर्थः ॥ १६ ॥ एवमनुमानेनापि तन्निश्चयं साधयति—**सर्व**मिति । मेर्वादिगिरिजालकोपलक्षितं सर्वमिदं दृश्यं शून्यात्मस्वरूपज्ञानमात्रमेव न कुड्यमयं न यथादृष्टस्थूलस्वभावम् । तत्समावेशायोग्ये अल्पप्रदेशे प्रतीतत्वात् । देहान्तः स्वप्नदृष्टमहापुरवदित्यर्थः ॥ १७ ॥ स्वप्ने सर्वानुभवसिद्धां व्याप्तिं दर्शयति—**देशे** इति । 'कण्ठे स्वप्नः समाविशे'दिति श्रुतेः कण्ठादिहृदयान्ते प्रादेशमात्रे खानि तत्प्रदेशावच्छिन्नात्मचैतन्यान्येव । औपाधिकं बहुवचनम् । गिरिजालमयानि विदुः पश्यन्ति सर्वे स्वप्ने ॥ १८ ॥

१ कचित् इति पाठः.

जगन्ति सुबहून्येव संभवन्त्यणुकेऽपि च ।
कदलीपल्लवानीव संनिवेशेन भूरिशः ॥ १९
त्रिजगच्चिदणावन्तरस्ति स्वप्नपुरं यथा ।
तस्याप्यन्तश्चिदणवस्तेष्वप्येकैकशो जगत् ॥ २०
तेषां यस्मिञ्जगत्येष पद्मो राजा शवः स्थितः ।
लीला तव सपत्नीयं प्राप्ता पूर्वतरा शुभे ॥ २१
यदैव मूर्च्छामायाता लीलेयं पुरतस्तव ।
तदैव भर्तुः पद्मस्य शवस्य निकटे स्थिता ॥ २२
लीलोवाच ।
कथमेषा पुरा देवि संपन्ना तत्र देहिनी ।
कथं च तत्सपत्नीकभावमाप्तवती स्थिता ॥ २३
ते चास्या वद किं रूपं पश्यन्त्यथ वदन्ति किम् ।
तद्गेहवरवास्तव्याः समासेनेति मे वद ॥ २४
श्रीदेव्युवाच ।
शृणु सर्वं समासेन यथापृष्टं वदामि ते ।
लीले लीलास्ववृत्तान्तमन्तदं दृश्यदुर्दशम् ॥ २५
पद्मस्तव स भर्तैव भ्रान्तिं तावत्ततामिमाम् ।
इयं जगन्मयी तस्मिन्नेव सद्मनि पश्यति ॥ २६
भ्रान्तियुद्धमिदं युद्धमेषा भ्रान्तिर्जनोऽजनः ।
भ्रान्त्यैवास्तीह मरणमेष चैवं भ्रमात्मकः ॥ २७
भ्रमक्रमेणानेनैव लीलास्य दयिता स्थिता ।
त्वं चैषा च वरारोहे स्वप्नमात्रं वराङ्गने ॥ २८
यथा भवत्यावेतस्य स्वप्नमात्रं वराङ्गने ।
तथा भवत्योर्भर्तैष तथैवाहमपि स्वयम् ॥ २९
जगच्छोभैवेदृशीयं दृश्यमेतदिहोच्यते ।
एतदेव परिज्ञातं दृश्यशब्दार्थमुज्झति ॥ ३०
एवमेषा त्वमेषा च संपन्नैवमसौ नृपः ।
अहं चात्मनि सत्यत्वं गता सर्वतयात्मनः ॥ ३१
इमे वयमिहान्योन्यं संपन्नाश्चोदिता इति ।
इत्थं सर्वात्मकतया महाचिद्घनसंस्थितेः ॥ ३२
एवमेषा स्थिता राज्ञी हारिहासविलासिनी ।
लीला विलोलवदना नवयौवनशालिनी ॥ ३३
पेशलाचारमधुरा मधुरोदारभाषिणी ।
कोकिलास्वरसंकाशा मदमन्मथमन्थरा ॥ ३४
असितोत्पलपत्राक्षी वृत्तपीनपयोधरा ।
कान्ता काञ्चनगौराङ्गी पक्वबिम्बफलाधरा ॥ ३५
त्वत्संकल्पात्मकस्यैषा यदा भर्तुर्मनःकला ।
तदा त्वत्सदृशाकारा स्थितैषा चिच्चमत्कृतौ ॥ ३६
त्वद्भर्तुर्मरणे क्षिप्रं समनन्तरमेव हि ।
त्वद्भर्त्रैषा पुरो दृष्टा त्वत्संकल्पात्मनामुना ॥ ३७
यदाधिभौतिकं भावं चेतोऽनुभवति स्वयम् ।
चेत्यं सन्मयमेवात आतिवाहिककल्पनम् ॥ ३८
यदाधिभौतिकं भावं चेतो वेत्ति न सन्मयम् ।
आतिवाहिकसंकल्पस्तदा सत्योपजायते ॥ ३९
अथो मरणसंवित्त्या पुनर्जन्ममये भ्रमे ।
त्वं हि संविदितानेन त्वया च गत एव सः ॥ ४०
इत्थं त्वां दृष्टवानेष दृष्टश्चैष त्वयेति च ।
त्वमप्यात्मनि संपन्ना सर्वगत्वाच्चिदात्मनः ॥ ४१
ब्रह्म सर्वगतं यस्माद्यथा यत्र यदोदितम् ।
भवत्याशु तथा तत्र स्वप्नशक्त्यैव पश्यति ॥ ४२

तथा दार्ष्टान्तिकेऽपि संभवमुपनयेन दर्शयति—**जगन्तीति** ॥१९॥ निगमनेन प्रसाधितं द्रढयति—**त्रिजगदिति** ॥२०॥ पृष्टं समाधाय तत्पुरलीलातत्त्वं वक्तुकामा प्रस्तुतकथामादत्ते—**तेषामि**त्यादिना । पूर्वराजगमनापेक्षया पूर्वतरा ॥ २१ ॥ २२ ॥ सा सपत्नी यस्य भावस्य स्थितेस्तं तत्सपत्नीकं भावम् ॥ २३ ॥ तस्य पद्मस्य वरगेहलक्षणे वास्तुनि भवा वास्तव्यास्ते जना अस्याः किं रूपं पश्यन्ति अथवा किं वदन्ति इत्येतत्सर्वं समासेन संक्षेपेण वद ॥ २४ ॥ लीलान्तरभूतायाः स्वस्या एव वृत्तान्तम् । अन्तं निर्णयं ददातीत्यन्तदम् । दृश्याः सम्यग् द्रष्टुं शक्या मरणपरलोकगमनादिदुर्दशा येन तम् ॥ २५ ॥ इयमेतन्नगरादिभावेन दृश्यमाना जगन्मयी भ्रान्तिस्तां भ्रान्तिमेष विदूरथभूतस्तव स पद्मो भर्ता तस्मिन्नेव शवाश्रये सद्मनि पश्यतीत्यन्वयः ॥२६॥ इदं त्वया दृष्टं युद्धं स्वाप्नयुद्धवद्भ्रान्तियुद्धमेव । एषा त्वत्पृष्टलीलापि भ्रान्तिरेव । एष जनश्चाऽजनो जन्मादिविक्रियारहितात्मैव । एष संसारः ॥२७॥२८॥२९॥ दृश्यशब्दस्यार्थं दृशि कर्मतामुज्झति त्यजति ॥३०॥ एषा संसारस्थितिः । एवं भ्रान्तिरूपैव । आत्मनः सर्वतया पूर्णतया ॥ ३१ ॥ इमे नृपादयो वयमन्योन्यमनुग्राह्यानुग्राहकभावेन चोदिताः प्रेरिता इतीत्थं महाचिद्घनस्य संस्थितेर्मिथ्याकल्पनास्थितेर्यथा संपन्ना एवमेषापि राज्ञी संपन्ना स्थितेत्यन्वयः ॥ ३२ ॥ ३३ ॥ पेशला दक्षा । आचारेण मधुरा हृद्या । कोकिलायाः स्वरेण संकाशा सदृशस्वरा ॥ ३४ ॥ ३५ ॥ मनःकला मनोवृत्तिस्तद्वासना च, जातेति शेषः ॥ ३६ ॥ ३७ ॥ यदि वासनामयीयं कथं तर्हि सत्यतया तेनानुभूता तत्राह—**यदेति** । वस्तुत आतिवाहिककल्पनं प्रातिभासिकमेव । चेत्यं दृश्यम् । तत्र चेतश्चित्तं यदाभ्यासदृढवासनया आधिभौतिकं व्यावहारिकं भावमनुभवति तदा अतोऽनुभवाच्चेत्यं सन्मयं परमार्थसत्यमित्येव भवतीत्यर्थः ॥ ३८ ॥ यदा तु विवेकज्ञानाभ्यासेनाधिभौतिकं भावं न सन्मयं अनृतं वेत्ति तदा सत्या दृढया तद्वासनया प्रपञ्चे आतिवाहिकसंकल्पः प्रातिभासिकनिर्णय उपजायते ॥ ३९ ॥ वासनामयलीलान्तररूपया त्वया गतः संगत एव ॥ ४० ॥ त्वयाप्यसौ स्ववासनामय एव दृष्ट इति प्राग्दर्शितब्रह्माण्डत्रयतया परिणता । सर्वगत्वात्सर्ववासनानुगतत्वात्सर्वाकारवित्तौपपत्तेरित्यर्थः ॥४१॥ तदेव स्पष्टमाह—**ब्रह्मेति** । स्वप्नशक्त्या विक्षेपशक्त्या । 'स्वस्वशक्त्या' इति पाठे तत्तद्वासनाशक्त्या ॥ ४२ ॥

सर्वत्र सर्वशक्तित्वाद्यत्र या शक्तिरुन्नयेत् ।
आस्ते तत्र तथा भाति तीव्रसंवेगहेतुतः ॥ ४३
मृतिमोहक्षणेनैव यदैतौ दंपती स्थितौ ।
तदैवाभ्यामिदं बुद्धं प्रतिभासवशाद्धृदि ॥ ४४
आवयोः पितरावेताविमे वै चापि मातरौ ।
देश एष धनं चेदं कर्मेदं पूर्वमीदृशम् ॥ ४५
आवां विवाहितावेवमेवं नामैकतां गतौ ।
एतयोः सापि जनता याता तत्रैव सत्यताम् ॥ ४६
तथैवात्रास्ति दृष्टान्तः प्रत्यक्षं स्वप्नवेदनम् ।
इत्येवंभावया लीले लीलयाहमथार्चिता ॥ ४७
नाहं स्यां विधवेत्येवं वरो दत्तो मयाप्यसौ ।
इत्यर्थेन मृता पूर्वमेवेह खलु बालिका ॥ ४८
भवतां चेतनांशानामहं चेतनधर्मिणी ।
कुलदेवी सदा पूज्या स्वत एव करोम्यहम् ॥ ४९
अथास्या जीवको देहात्प्राणमारुतरूपधृक् ।
मनसा चलतां प्राप्तो मुखाग्रत्यक्तदेहकः ॥ ५०
ततो मरणमूर्च्छान्ते गृहेऽस्मिन्नेव चैतया ।
बुद्धौ भावित आकाशे दृष्टो जीवात्मना ततः ॥ ५१
संपन्नैषा हरिणनयना चन्द्रबिम्बाननश्री-
र्मानोन्नद्धा दयितललिता कान्तमाभोक्तुकामा ।
पूर्वस्मृत्या सरभसमुखी संयुता मण्डलान्तः
स्वप्नान्ते वाऽप्रकृतिविभवा पद्मिनी चोदितेव ५२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये लीलोपाख्याने० मरणसमनन्तरदेहप्रतिभावर्णनं नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ५३

श्रीवसिष्ठ उवाच ।

अथ लब्धवरा देहेनानेनैव महीपतिम् ।
पतिमाप्तुं प्रयात्येषा नभोमार्गेण विष्टपम् ॥ १
इति संचिन्त्य सानन्दमुद्दाममकरध्वजा ।
पुप्लुवे पेलवाकारा पक्षिणीव नभस्तले ॥ २
कुमारीं तत्र सा प्राप ज्ञप्त्यैव प्रहितां हिताम् ।
स्वसंकल्पमहादर्शात्पुरतो निर्गतामिव ॥ ३

कुमार्युवाच ।

दुहितास्मि सखि ज्ञप्तेः स्वागतं तेऽस्तु सुन्दरि ।
प्रतीक्षमाणा त्वामेव स्थितास्मीह नभःपथि ॥ ४

---

यथा यथा यद्यद्रूपेण उन्नयेद्भोजकादृष्टबलादाविर्भावयेत् । तीव्रसंवेगो दृढाभिनिवेशवासना तस्माद्धेतोः ॥ ४३ ॥ मृतिमोहः स्वस्वमरणानुकूलमूर्च्छा तत्क्षणेनोपलक्षितौ यदा स्थितौ तदैवाभ्यामिदं वक्ष्यमाणं सर्वं बुद्धं स्वकल्पनयाऽनुभूतम् । प्रतिभासो वासनोद्बोधस्तद्वशात् ॥ ४४ ॥ पूर्वं ईदृशं कर्म कृतमिति शेषः ॥ ४५ ॥ सा कल्पनात्मिकापि जनता भोजकादृष्टबलात्सत्यतामर्थक्रियासमर्थतां याता ॥ ४६ ॥ यत्पृष्टं पूर्वं तत्र कथं प्राप्तेति तस्योत्तरमाह—**इत्येव**मिति । इति एवं वक्ष्यमाणप्रकारो भावोऽभिसंधिर्यस्याः सा तया ॥ ४७ ॥ इत्यर्थेनैतस्माद्धेतोः पूर्वमेव मृता ॥ ४८ ॥ अस्या मम च त्वदाराधने त्वत्प्रसादे च को हेतुस्तत्राह—**भवता**मिति । चेतनांशानां व्यष्टिचेतनानां चेतनधर्मिणी हैरण्यगर्भचेतना त्वत्समष्टिचेतनात्मिका ॥४९॥ पुरा कथं प्राप्तेत्यस्य प्रश्नांशस्योत्तरमुक्त्वा देहिनी कथं संपन्नेति तदंशस्योत्तरमाह—**अथे**त्यादिना । अथ देहादुच्चिक्रमिषुरस्या अङ्गुष्ठपरिमितलिङ्गदेहमात्रत्वादल्पो जीवो जीवकः 'प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयती'ति श्रुतेरुत्क्रमणस्य प्राणाधीनत्वात् 'प्राणं तर्हि वागप्येति' इत्यादिश्रुत्या सर्वकरणानां प्राणेऽप्ययाच्च प्राणमारुतरूपधृग् बभूवेत्यर्थः । 'यथासंकल्पितं लोकं नयति' इति श्रुतेः, 'यं यं वापि स्मरन्भावम्' इत्यादिस्मृतेश्च भाव्यर्थसंकल्पप्रधानेन मनसा चलतां तत्तदर्थप्राप्त्युत्सुकतां 'तस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य' इति श्रुत्युक्तक्रमेण नाडीमार्गेण त्यक्तदेहकः अभूदिति शेषः ॥ ५० ॥ ततस्तदनन्तरं जीवात्मना अनया अस्मिन्नेव गृहे ब्रह्माकाशे भूताकाशे वा बुद्धौ भावितः संकल्पितो वक्ष्यमाणशरीरगमनकुमारीप्राप्त्यादिरूपोऽर्थो दृष्टः ॥ ५१ ॥ ततो भावनावशात्पूर्वदेहस्मृत्या स्वप्नान्ते स्वप्नमध्ये इव । इवार्थेऽत्र वशब्दो वाशब्दो वा बोध्यः । रविकरैश्चोदिता पद्मिनीव विकासितवासनामुकुला एषा लीला दयितस्य स्वयं ललिता उपभोगयोग्या स्वयं च कान्तं मनोहरं भर्तारमाभोक्तुमनुभवितुं कामो यस्यास्तथाविधा । 'तुं काममनसोरपि' इति तुमुनो मलोपः । सरभसं लावण्यकान्तवेगसहितं मुखं यस्यास्तथाविधा सती पद्मब्रह्माण्डमण्डलान्तर्गत्वा भर्त्रा संयुता संपन्नेत्यर्थः ॥५२॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मरणसमनन्तरदेहप्रतिभावर्णनं नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

गतिमार्गोऽत्र लीलाया भर्तृप्राप्तिश्च वर्ण्यते ।
अज्ञानयोगसिद्धानामगतिश्च नभःपथि ॥ १ ॥

अनेन प्राग्वर्णितवासनामयेनैव देहेन । विष्टपं वक्ष्यमाणभुवनानि । जातावेकवचनम् ॥ १ ॥ इति उक्तप्रकारेण संचिन्त्य स्मरणेन देहादिभावं संपद्य पतिप्राप्त्युत्साहेन सानन्दं यथा स्यात्तथा पुप्लुवे । पेलवाकारा लघुशरीरा ॥ २ ॥ कुमारीं स्वकल्पजाम् ॥ ३ ॥ हे ज्ञप्तेः सखि, इति मातुः संबोधनम् ॥ ४ ॥

लीलोवाच ।

देवि भर्तुः समीपं मां नय नीरजलोचने ।
महतां दर्शनं यस्मान्न कदाचन निष्फलम् ॥ ५

श्रीवसिष्ठ उवाच ।

एहि तत्रैव गच्छाव इत्युक्त्वा सा कुमारिका ।
पुरस्तस्याः स्थिता व्योम्नि मार्गदर्शनतत्परा ॥ ६
ततस्तदनुयाता सा प्राप कोटरमम्बरम् ।
निर्मलं करमालाग्रं यथा लक्षणलेखिका ॥ ७
मेघमार्गमथोल्लङ्घ्य वातस्कन्धान्तरे गता ।
सूर्यमार्गादभिगता तारामार्गमतीत्य च ॥ ८
वाय्विन्द्रसुरसिद्धानां लोकानुल्लङ्घ्य लाघवात् ।
ब्रह्मविष्णुमहेशानां प्राप ब्रह्माण्डखर्परम् ॥ ९
हिमशैत्यं यथान्तस्थं कुम्भेऽभिन्ने बहिर्भवेत् ।
तथा संकल्पसिद्धा सा ब्रह्माण्डान्निर्गता बहिः ॥ १०
स्वचित्तमात्रदेहैषा स्वसंकल्पस्वभावजम् ।
अन्तरेवानुभवति किलैवं नाम विभ्रमम् ॥ ११
ब्रह्मादिस्थानमाक्रम्य प्राप्य ब्रह्माण्डखर्परम् ।
ततो ब्रह्माण्डपारस्था जलाद्यावरणानि च ॥ १२
समुल्लङ्घ्य पुरः प्राप महाचिद्गगनान्तरम् ।
अदृष्टपारपर्यन्तमतिवेगेन धावता ।
सर्वतो गरुडेनापि कल्पकोटिशतैरपि ॥ १३
तत्र ब्रह्माण्डलक्षाणि सन्त्यसंख्यानि भूरिशः ।
तान्यन्योन्यमदृष्टानि फलानीव महावने ॥ १४
तत्रैकस्मिन्पुरःसंस्थे विततावरणान्विते ।
वेधयित्वा विवेशान्तर्बदरं कृमिको यथा ॥ १५
पुनर्ब्रह्मेन्द्रविष्ण्वादिलोकानुल्लङ्घ्य भास्वरान् ।
तन्महीमण्डलं श्रीमत्प्राप तारापथादधः ॥ १६
तत्र तन्मण्डलं प्राप्य तत्पुरं तच्च मण्डपम् ।
प्रविश्य पुष्पगुप्तस्य शवस्य निकटे स्थिता ॥ १७
एतस्मिन्नन्तरे सा च न ददर्श कुमारिकाम् ।
मायामिव परिज्ञातां क्वापि यातां वरानना ॥ १८
मुखमालोक्य सा तस्य स्वभर्तुः शवरूपिणः ।
इदं बुद्धवती सत्यं प्रतिभावशतः स्वतः ॥ १९
अयं स भर्ता संग्रामे निहतो मम सिन्धुना ।
वीरलोकानिमान्प्राप्य क्षणं शेते यथासुखम् ॥ २०
अहं देव्याः प्रसादेन सशरीरैवमीदृशम् ।
इह प्राप्तवती धन्या मत्समा नास्ति काचन ॥ २१
इति संचिन्त्य सा हस्ते गृहीत्वा चारु चामरम् ।
वीजयामास चन्द्रेण द्यौरिवावनिमण्डलम् ॥ २२

प्रबुद्धलीलोवाच ।

ते भृत्यास्ताश्च वै दास्यः स राजा च प्रबुद्धवान् ।
वक्ष्यन्ति वदतां देवि किं कयैव कथं धिया ॥ २३

श्रीदेव्युवाच ।

स राजा सा च ते भृत्याः सर्व एव परस्परम् ।
चिदाकाशैकतावेशादावयोश्च प्रभावतः ॥ २४
महाचित्प्रतिभासत्वान्महानियतिनिश्चयात् ।
अन्योन्यमेव पश्यन्ति मिथः संप्रतिबिम्बितात् ॥ २५
इयं मे सहजा भार्या ममेयं सहजा सखी ।
ममेयं सहजा राज्ञी भृत्योऽयं सहजो मम ॥ २६
केवलं त्वमहं सा च यथावृत्तमखण्डितम् ।
ज्ञास्याम इदमाश्चर्यं नतु कश्चिदपीतरः ॥ २७

प्रबुद्धलीलोवाच ।

अमुनैव शरीरेण किमर्थं न गता पतिम् ।
एषा वरेण संप्राप्ता लीला ललितवादिनी ॥ २८

---

पूर्वमागमनान्मार्गाभिज्ञतां तस्या निश्चित्य लीलोवाच—**देवी**ति । देवि देवताशरीरं प्राप्ते । मम भर्तुस्त्वत्पितुः । ननु तवेव कान्तार्थिन्या मम किं पितृसमीपगमनेन तत्राह—**महतामि**ति । तथाच मत्प्रियार्थं मदुक्तं संपादयेत्यर्थः ॥ ५ ॥ ६ ॥ कोटरं ब्रह्माण्डच्छिद्रभूतम् । करमालानां प्राणिहस्तसमूहानामग्रं तलं यथा भाविशुभाशुभलक्षणभूता विधातृकृता लेखिका रेखा ॥ ७ ॥ अभिगता निर्गता ॥ ८ ॥ ब्रह्मविष्णुमहेशानां लोकांश्चोल्लङ्घ्येत्यर्थः ॥ ९ ॥ हिमस्य जलस्य शैत्यं अभिन्ने अच्छिद्रेऽपि कुम्भे यथा बहिर्भवेन्निःसरेत् ॥ १० ॥ इदं च गमनं चित्तकल्पनामात्रमिति स्मारयति—**स्वचित्ते**ति ॥ ११ ॥ श्लोकार्धमनुवादः ॥ १२ ॥ चिद्गगनं मायासंवलितचिदाकाशः । अतिवेगेन धावता गरुडेनापि सर्वतः । अदृष्टपारपर्यन्तमित्यन्वयः ॥ १३ ॥ १४ ॥ वेधयित्वा छिद्रीकृत्येवेत्यौत्प्रेक्षिकम् । वास्तवच्छिद्रानपेक्षणात् ॥ १५ ॥ तारापथान्नभसः अधस्तस्य पद्मस्य महीमण्डलम् ॥ १६ ॥ १७ ॥ १८ ॥ स्वतः प्रतिभावशतः स्वतर्कतः ॥ १९ ॥ २० ॥ प्राप्तवती भर्तारमिति शेषः ॥ २१ ॥ ॥ २२ ॥ पूर्वप्रश्नशेषसहितं पुनः पृच्छति—**ते भृत्या** इति । कया धिया किं वक्ष्यन्ति तच्च कथमुपपद्यते । राज्ञः पूर्ववृत्तान्तस्य विस्मरणे केयं कस्येयमिति शङ्कया स्मरणेऽपि शिष्टलोकविगर्हिततया तत्परिग्रहासिद्धेरिति भावः । तां कथां वद ॥ २३ ॥ अपूर्वा काचिदियमिति सर्वेषां प्रतीतौ हि उक्तदोषः स्यात् सैव तावत्सत्यसंकल्पास्मदादिप्रभावान्न भविष्यतीति देवी समाधत्ते—**स राजे**त्यादिना । राजादयः सर्वे एवान्योन्यमैकमत्येन परस्परमेवं वक्ष्यमाणप्रकारेण पश्यन्तीत्यन्वयः । ऐकमत्ये हेतवश्चिदाकाशेत्यादयः । मिथः स्वस्वबुद्धौ संप्रतिबिम्बितात् प्रतिबिम्बवदन्तर्निविष्टात् साक्षिचिदाकाशस्यैकतयैकमत्यानुगुण्येन आवेशात्स्फुरणात् । महाचिद्ब्रह्मचैतन्यं तत्प्रतिभासत्वाद्बीजकादृष्टानुगुणतद्विवर्तत्वात् महानियतिरनेनेत्थमेव भाव्यमितीश्वरसंकल्पस्तत्संश्रयात्तदधीनत्वाच्चेत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ सा विदूरथलीला च । इतरः ननु ज्ञास्यतीत्यर्थः ॥ २७ ॥ पतिं

श्रीदेव्युवाच ।

अप्रबुद्धधियः सिद्धलोकान्पुण्यवशोदितान् ।
न समर्थाः स्वदेहेन प्राप्तुं छाया इवातपान् ॥ २९
आदिसर्गे च नियतिः स्थापितेति प्रबोधिभिः ।
यथा सत्यमलीकेन न मिलत्येव किंचन ॥ ३०
यावद्वेतालसंकल्पो बालस्य किल विद्यते ।
निर्वेतालधियस्तावदुदयस्तस्य कः कथम् ॥ ३१
अविवेकज्वरोष्णत्वं विद्यते यावदात्मनि ।
तावद्विवेकशीतांशुशैत्यं कुत उदेत्यलम् ॥ ३२
अहं पृथ्व्यादिदेहः खे गतिर्नास्ति ममोत्तमा ।
इति निश्चयवान्योऽन्तः कथं स्यात्सोऽन्यनिश्चयः ३३
अतो ज्ञानविवेकेन पुण्येनाथ वरेण च ।
पुण्यदेहेन गच्छन्ति परं लोकमनेन तु ॥ ३४
शुष्कपर्णं किलाङ्गारे एतदेवाशु दह्यते ।
अयं देहमहंदेहः प्राप्त एव विशीर्यते ॥ ३५
एतावदेव भवति वरशापविजृम्भितैः ।
यथा संचिन्त्य एवाहं तथा स्मृत इति स्मृतिः ॥ ३६
यः सर्पप्रत्ययो रज्ज्वां स कथं सर्पकार्यकृत् ।
आत्मन्येव हि यो नास्ति तस्य का कार्यकारिता ॥ ३७
यस्त्वेतन्मृत इत्येव मिथ्या समनुभूयते ।
प्रागभ्यासस्य पुष्टस्य नामैतत्प्रविजृम्भते ॥ ३८
स्वानुभूते जगज्जाले सुगमाः संस्मृतिभ्रमाः ।
नान्यसंकल्पितो नाम सर्गाद्यभ्यास ईदृशः ॥ ३९
अन्तरनुभूयमानाः
संसृतयो बाह्यभूतजालानाम् ।
अविदितवेद्यदृशामपि
दूरे पुंसामिवैन्दवं बिम्बम् ॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो० संसृतिविदितवेद्यं नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुःपञ्चाशः सर्गः ५४

श्रीदेव्युवाच ।

तस्माद्ये वेद्यवेत्तारो ये वा धर्मं परं श्रिताः ।
आतिवाहिकलोकांस्ते प्राप्नुवन्तीह नेतरे ॥ १
आधिभौतिकदेहत्वं मिथ्याभ्रममयात्मकम् ।
कथं सत्ये स्थितिं याति च्छायास्ते कथमातपे ॥ २
लीला विदितवेद्या नो परमं धर्ममाश्रिता ।
केवलं तेन सा भर्तुः कल्पितं नगरं गता ॥ ३

---

संप्राप्तेति वर्णिता एषा लीला त्वद्वरबलेनामुना स्थूलेन शरीरेण किमर्थं न गतेत्यन्वयः ॥ २८ ॥ अप्रबुद्धधियः अस्थूलात्मप्रबोधहीनाः ॥ २९ ॥ प्रबोधिभिः सत्यसंकल्पैरीश्वरहिरण्यगर्भादिभिरिति नियतिर्मर्यादा स्थापिता । तत्र दृष्टान्तः—**यथेति** । तथाच भाष्यम्—'यत्र हि यदध्यासस्तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न संबध्यते' इति ॥ ३० ॥ नन्वस्यास्त्वद्वरादस्थूलात्मनिश्चयः कुतो नाभूत्तत्राह—**यावदि**त्यादिना ॥ ३१ ॥ ३२ ॥ ३३ ॥ अनेन त्वद्देहसदृशेन ॥ ३४ ॥ आतिवाहिकदेहप्राप्तौ वा कथं स्थूलाहंभावनिवृत्तिस्तत्राह—**शुष्केति** । अङ्गारे ज्वलदग्नौ पतद्दह्यते एतदेव निदर्शनमिति । अयं स्थूलो देहः अहंदेहं अहंकारवासनामात्रमयमातिवाहिकदेहं प्राप्त एव सन् विशीर्यते ॥ ३५ ॥ वरशापावपि प्राक्तनवासनाकर्मानुसारिणावेव तदुद्बोधकतया प्राणिभिर्लभ्येते इति स्मृतिदृष्टान्तेनाह—**एतावदेवे**ति । यथा प्रागभ्यस्तेऽपि झटिति संस्कारानुद्बोधात्संचिन्त्ये चिरचिन्तनयोग्ये अनुवाकाद्यर्थे केनचित्प्रतीकोदाहरणेन स्मारिते सति यथा त्वयाहं स्मारितस्तथा स स्मृत इति स्मृतिर्भवति तद्वदित्यर्थः ॥ ३६ ॥ नन्वर्थक्रियाकारी स्थूलो देहः कथं तत्त्वबोधेन बाध्यते इत्याशङ्क्य तत्त्वदृशा अर्थक्रियैव नास्तीत्याह—**य** इति । आत्मनि स्वस्वरूपे ॥ ३७ ॥ यद्यसन्नेव देहस्तर्हि कथं मृतोऽयं देह इति सर्वानुभवस्तत्राह—**यस्त्वि**ति । यस्तु भ्रमो मिथ्या मिथ्यार्थः समनुभूयते एतदनुभवनं पुष्टस्योपचितस्य प्राक्तनाभ्यासस्य संस्कारात् प्रविजृम्भते इत्यर्थः ॥ ३८ ॥ अन्येन वरशापादिप्रदेन हिरण्यगर्भेणेश्वरेण वा सम्यक्कल्पितः असद्वासनादिनिरपेक्षतयैव रचित इति न ॥ ३९ ॥ ननु संसारस्यान्तरवासनामयत्वे कथं बाह्यताप्रत्यय इत्याशङ्क्य दृष्टान्तेन समाधत्ते—**अन्तरि**ति । अविदिततत्त्वदृशामज्ञानामप्यन्तरेव संसृतयो न बहिः, अध्यस्तं द्वितीयमैन्दवं बिम्बं दूरे भासमानमपि यथा आन्तरभ्रान्तिकल्प्यत्वादान्तरमेव तद्वदित्यर्थः ॥ ४० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे संसृतिविदितवेद्यं नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥

**नियतिः सर्वभावानां तथात्र मरणक्रमः ।**
**भोगः कर्मगुणाचारादायुर्मानं च वर्ण्यते ॥ १ ॥**

प्रस्तुतप्रश्नोत्तरमुक्तानुवादेनोपसंहरति—**तस्मादि**त्यादिना । वेद्यवेत्तारस्तत्त्वज्ञाः । परं योगाभ्यासजम् ॥ १ ॥ नन्वातिवाहिकब्रह्मादिलोकेष्वप्यत्रैव चिराभ्यासादाधिभौतिकदेहत्वोदयः किं न स्यात्तत्राह—**आधिभौतिके**ति । 'अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यं प्राणा वै सत्यं तेषामेष सत्यः' इत्यादिश्रुतिषु स्थूलस्य सूक्ष्मे त्रिवृत्करणादिना अध्यस्तत्वोक्तेः स्थूलापेक्षया सत्यं आतिवाहिकभावे पुण्योत्कर्षात्प्राप्ते सतीत्यर्थः ॥ २ ॥ ननु तर्हि लीलायाः कथं पद्मप्राप्त्युत्तरमाधिभौतिकदेहत्वोद्भवस्तत्राह—**लीले**ति । नो इति नञर्थकमव्ययं देहलीदीपकन्यायेनो-

१ एतदेवाशु इति पाठः क्वचिल्लभ्यते.

प्रबुद्धलीलोवाच ।

एवमेषा प्रयाताऽस्तु भर्ता पश्य ममाम्बिके ।
प्रवृत्तः प्राणसंत्यागे कर्तव्यं किमिहाधुना ॥ ४
भावाभावेषु भावानां कथं नियतिरागता ।
कथं भूयोऽप्यनियतिर्मृतिजन्मादिसूचिता ॥ ५
कथं स्वभावसंसिद्धिः कथं सत्ता पदार्थगा ।
कथमग्न्यादिषूष्णत्वं पृथ्व्यादौ स्थिरता कथम् ॥ ६
हिमादिषु कथं शैत्यं का सत्ता कालखादिषु ।
भावाभावग्रहोत्सर्गस्थूलसूक्ष्मदृशः कथम् ॥ ७
कथमत्यन्तमुच्छ्रायं तृणगुल्मनरादिकम् ।
वस्तु नायात्यनिष्टेऽपि स्थिते स्वोच्छ्रायकारणे ॥ ८

श्रीदेव्युवाच ।

महाप्रलयसंपत्तौ सर्वार्थास्तमये सति ।
अनन्ताकाशमाशान्तं सद्ब्रह्मैवावतिष्ठते ॥ ९
तच्चिद्रूपतया तेजःकणोऽहमिति चेतति ।
स्वप्ने संविद्यथा हि त्वमाकाशगमनादि च ॥ १०
तेजःकणोऽसौ स्थूलत्वमात्मनात्मनि विन्दति ।
असत्यमेव सत्याभं ब्रह्माण्डं तदिदं स्मृतम् ॥ ११
तत्रान्तर्ब्रह्म तद्वेत्ति ब्रह्मायमहमित्यथ ।
मनोराज्यं स कुरुते स्वात्मैवं तदिदं जगत् ॥ १२
तस्मिन्प्रथमतः सर्गे या यथा यत्र संविदः ।
कचितास्तास्तथा तत्र स्थिता अद्यापि निश्चलाः ॥ १३
यद्यथा स्फुरितं चित्तं तत्तथा ह्यात्मचिद्भवेत् ।
स्वयमेवानियमतस्तत्तस्यान्नेह किंचन ॥ १४
न च नाम नाकिंचित्त्वं युज्यते विश्वरूपिणः ।
त्यक्त्वा समस्तसंस्थानं हेम तिष्ठति वै कथम् ॥ १५
सर्गादौ स्वयमेवान्तश्चिद्यथा कचितात्मनि ।
हिमाद्यादितयाद्यापि सा तथास्ते स्वसत्तया ॥ १६
तस्मात्स्वसत्तासंत्यागः सतः कर्तुं न युज्यते ।
यदा चिदास्ते तेनेयं नियतिर्न विनश्यति ॥ १७
यद्यथा कचितं यत्र व्योमरूप्यपि पार्थिवम् ।
सर्गादौ तस्य चलितुमद्ययावन्न युज्यते ॥ १८
या यथा चित्प्रकचिता प्रतिपक्षविदं विना ।
न सा ततः प्रचलति वेदनाभ्यासतः स्वयम् ॥ १९

भयतः संवध्यते । परमं योगजम् ॥ ३ ॥ देव्युक्तमभ्युपगम्य राजमरणदर्शनसूचितां जीवननियत्यनियतिमनुपपद्यमानां मन्यमाना लीलोवाच—**एव**मित्यादिना । एषा प्रयातेति यदुपवर्णितं तदेवं त्वदुक्तरीत्या अस्तु उपपद्यताम् । भर्ता प्राणसंत्यागे प्रवृत्तः प्रत्यक्षं पश्य । इहास्मिन्विषये तु अधुना किं कर्तव्यम् । कात्रोपपत्तिरिति यावत् । मया इदानीं किं कर्तव्यमिति तु न प्रश्नाशयः प्रश्नान्तरैरसंगतेः उत्तरे कर्तव्यकार्यानुपदेशाच्च ॥ ४ ॥ भावानां देहादीनां जीवनसौख्यादिभावेषु दुःखदौर्भाग्याद्यभावेषु च पूर्वं कथं नियतिरागता भूयः पुनरनियतिरप्यागता कथम् ॥५॥ ननु मास्तु नियतिरनियम एवास्तु तत्राह—**कथ**मिति । स्वभावो जलस्य शैत्यमग्नेरौष्ण्यमेवेत्यादिः । घटादिपदार्थगा सत्ता भावरूपतानियमः ॥ ६ ॥ भावस्य सत्यरजतादेर्ग्रहः संग्रहः अभावस्य शुक्तिरजतादेरुत्सर्गः, भूम्यादेः स्थूलता मनइन्द्रियादेः सूक्ष्मतैवेत्यादिनियमस्य दृशो दर्शनानि कथम् ॥७॥ शालतालादिवदत्यन्तमुच्छ्रायमूर्ध्वदैर्घ्यम् । स्वोच्छ्रायकारणे स्थितेऽपि इष्टे अनिष्टेऽपि सर्वत्रानियमात्सर्ववस्तुष्वनाश्वास एव किं न स्यादिति भावः ॥ ८ ॥ भवेत्सर्वत्रैवंरूपैव नियतिर्यदि जगत्सत्यैकस्वभावं स्याद्ब्रह्मवद्वा अत्यन्तानियतिर्यद्यनृतं मायामात्रप्रकृतिकं स्यात्सत्यानृतसंवलिताव्यक्तप्रकृतिकत्वात्तु सत्यानृतस्वभावा भोजकादृष्टानुगुणचिद्विवर्तव्यवस्थयैव व्यवतिष्ठत इति समाधिरसुदेवी तदर्थं शुद्धचिद्विवर्तक्रममाह-**महाप्रलये**त्यादिना ॥ ९ ॥ तेजःकणशब्देन शुद्धचिद्याप्तत्वाद्भास्वराणि सूक्ष्मभूतान्युच्यन्ते । चेतत्यनुभवति ॥१०॥ तेजःकणभूतश्चासावात्मा अनात्मनि आत्मभिन्नत्वेन कल्पिते जलाद्यावरणेऽन्तःस्थूलत्वं विन्दति कल्पनया लभते तद्यत्स्थूलं तदेवेदं परिदृश्यमानं ब्रह्माण्डमित्यर्थः ॥११॥ तत्र ब्रह्माण्डेऽन्तःस्थितं हिरण्यगर्भाख्यं तद्ब्रह्म सह सिद्धं चतुष्टयमिति प्रागुक्तस्मृतेरन्तर्मुखांशेन ब्रह्माहमिति वेत्ति बाह्यवासनादूषितांशेनैवं प्राणिकर्मानुगुणसृष्टिसंकल्परूपेण मनोराज्यं च कुरुते तदेव सत्यसंकल्पं मनोराज्यमिदं जगदित्यर्थः ॥ १२ ॥ संविदः संकल्पवृत्तयो या यथा यादृशनियमानियमरूपाः कचिता अद्यापि तथैव निश्चला अव्यत्यस्ताः स्थिताः ॥ १३ ॥ ननु मनसो वैचित्र्याकारवासनामयत्वात्तथा संकल्पोदयेऽप्यात्मचैतन्यस्य तदनुसारी विवर्तः कुतस्तत्राह—**यदि**ति । **स्वयमेवे**ति । आत्मचितः स्वच्छोपाध्यनुविधायित्वस्वाभाव्यात् । अतो न किंचिदनियतस्वभावमुत्पद्यत इत्यर्थः ॥ १४ ॥ मायाशबले ब्रह्मणि अनादिनियतरूपेण स्थितस्यैव विश्वस्य आविर्भावादपि नियतिसिद्धिरित्याशयेनाह—**न चे**ति । नकिंचित्त्वं सर्ववस्तुशून्यत्वं न युज्यते प्रलयेऽपीति शेषः । तथा सति कारणत्वव्याघात इत्यर्थान्तरन्यासेन दर्शयति-**त्यक्त्वे**ति । कटकरुचकपिण्डत्वादिसमस्तसंस्थानं त्यक्त्वा हेम कथं तिष्ठति सर्वसंस्थानानां तत्रान्तर्भावेन कस्यापि त्यक्तुमशक्यत्वादित्यर्थः ॥ १५ ॥ यथा शैत्यौष्ण्यादिस्वभावेन कचिता आविर्भूता सा चित्तथा तेन स्वभावेन नियता अद्याप्यास्ते इत्यर्थः ॥ १६ ॥ किंच मायाशबलं ब्रह्म यदि स्वाधिष्ठानसत्तां जह्यात्तदा मायान्तर्गतनियतीनामसत्त्वं भवेत् । तत्त्वशक्यमेवेति दर्शयन्नुपसंहरति-**तस्मा**दिति । सतो मायाशबलब्रह्मणः । न विनश्यति । नापह्नोतुं शक्येति यावत् ॥ १७ ॥ नियत्यविपर्यासे पृथिव्यादिस्थितिरेव निदर्शनमित्याशयेनाह—**यदि**ति ॥ १८ ॥ जीवननियतेर्मरणनियत्या विपर्यासदर्शनादाह—प्रतिपक्षविदं विनेति

१ प्रतिपक्षचितं इत्युभयत्र पाठः.

जगदादावनुत्पन्नं यच्चेदमनुभूयते ।
तत्संविद्व्योमकचनं स्वप्नस्त्रीसुरतं यथा ॥ २०
असत्यमेव सत्याभं प्रतिभानमिदं स्थितम् ।
इति स्वभावसंपत्तिरिति भूतानुभूतयः ॥ २१
सर्गादौ या यथा रूढा संवित्कचनसंततिः ।
साद्याप्यचलितान्येन स्थिता नियतिरुच्यते ॥ २२
गृहीतव्योमसंवित्तिचिद्व्योम व्योमतां गतम् ।
गृहीतकालतासंविच्चिन्नभः कालतां गतम् ॥ २३
गृहीतजलसंवित्तिचिद्व्योम वारिवत्स्थितम् ।
स्वप्ने यथा हि पुरुषः पश्यत्यात्मनि वारिताम् ॥ २४
स्वप्नचित्संविदाभाति भवत्येषा यथास्थिता ।
चिच्चमत्कारचातुर्यादसदेतत्समूहते ॥ २५
खत्वं जलत्वमुर्वीत्वमग्निवायुत्वमप्यसत् ।
वेत्त्यन्तः स्वप्नसंकल्पध्यानेष्विव चितिः स्वयम् ॥ २६
मरणानन्तरं कर्मफलानुभवनक्रमम् ।
सर्वसंदेहशान्त्यर्थं मृतिश्रेयस्करं शृणु ॥ २७
रूढादिसर्गे नियतिर्यैकद्वित्रिचतुःशता ।
पूर्वादिष्वायुषः पुंसां तस्या मे नियतिं शृणु ॥ २८
देशकालक्रियाद्रव्यशुद्ध्यशुद्धी स्वकर्मणाम् ।
न्यूनत्वे चाधिकत्वे च नृणां कारणमायुषः ॥ २९
स्वकर्मधर्मे ह्रसति ह्रसत्यायुर्नृणामिह ।
वृद्धे वृद्धिमुपायाति सममेव भवेत्समे ॥ ३०
बालमृत्युप्रदैर्बालो युवा यौवनमृत्युदैः ।
वृद्धमृत्युप्रदैर्वृद्धः कर्मभिर्मृतिमृच्छति ॥ ३१
यो यथाशास्त्रमारब्धं स्वधर्मंनुमतिष्ठति ।
भाजनं भवति श्रीमान्स यथाशास्त्रमायुषः ॥ ३२
एवं कर्मानुसारेण जन्तुरन्त्यां दशामितः ।
भवन्त्यन्तं गतवतो दृङ्मर्मच्छेदवेदनाः ॥ ३३

प्रबुद्धलीलोवाच ।

मरणं मे समासेन कथयेन्दुसमानने ।
किं सुखं मरणं किं वा दुःखं मृत्वा च किं भवेत् ॥

श्रीदेव्युवाच ।

त्रिविधाः पुरुषाः सन्ति देहस्यान्ते मुमूर्षवः ।
मूर्खोऽथ धारणाभ्यासी युक्तिमान्पुरुषस्तथा ॥ ३५
अभ्यस्य धारणानिष्ठो देहं त्यक्त्वा यथासुखम् ।
प्रयाति धारणाभ्यासी युक्तियुक्तस्तथैव च ॥ ३६

---

॥ १९ ॥ इदं च सर्वं मायिकदृशोक्तं, परमार्थदृशा तु जगदेव नास्तीति क्व नियत्याक्षेप इत्याशयेनाह—**जगदि**ति ॥ २० ॥ इतिनिश्चया एव स्वभावसंपत्तिः स्वरूपावाप्तिः । भूतानुभूतयो यथास्थितबोधा इत्यर्थः । अथवा इति प्राग्वर्णितरीत्या नियतिः स्वभावसंपत्तिर्भूतानुभूतयो जीवनमरणादिपदार्थानुभवाश्चेत्यर्थः ॥२१॥ नियतिशब्दार्थपर्यालोचनेऽप्ययमेवार्थः प्रसिध्यतीत्याशयेनाह—**सर्गादा**विति । अन्येन विरोधिना । अचलिता अविपर्यस्ता । 'आवलिता' इति पाठे अन्येन पदार्थान्तरेण आवलिता मिलिता । यथा जन्मजीवने मरणेन मिलिते एव नियते न स्वातन्त्र्येण । यथा शैत्योष्ण्ये विरोधित्वेनैव मिलिते । क्रियाकारके साध्यसाधनभावेनेवेत्यर्थः ॥ २२ ॥ उक्तमर्थमुदाहृत्य दर्शयति—**गृहीते**ति । गृहीता सर्गादौ स्वीकृता व्योमसंवित्तिर्व्योमाकारेण कचनं येन चिद्व्योम्ना तत्तथोक्तम् । एवमग्रेऽपि ॥२३॥ द्रष्ट्रात्मनि दृश्यकल्पना स्वात्मन्येव प्रसिद्धेत्याह—**स्वप्ने** इति ॥ २४ ॥ तथाभावेऽपि यथास्थिता स्वरूपादप्रच्युतैव भवति । तत्कुतः । चिच्चमत्कारः असङ्गस्वभावता तल्लक्षणाच्चातुर्यात् अथवा चिच्चमत्कारो माया तच्चातुर्यादसदेव यस्मात्समूहते सत्यतया वितर्कयतीत्यर्थः ॥ २५ ॥ २६ ॥ इत्थमितरनियतीर्व्यवस्थाप्य जीवननियतिरपि कर्मानुसारेण युगभेदेन च कालविशेषपरिच्छिन्नैवेश्वरसंकल्पेन क्लृप्तेति न मरणेन तद्भङ्ग इति वक्तुं कर्मफलानुभवक्रमनिरूपणं प्रतिजानीते—**मरणानन्तर**मिति । यावन्मरणं प्रारब्धफलैः प्रतिबन्धान्न तद्देहसंचितकर्माणि फलारम्भाय क्षमन्ते, मरणे तु सति प्रतिबन्धकापगमा[illegible] योपक्रमन्त इति सूचनाय मरणानन्तरमित्युक्तिः । एतच्छ्रवणं तव सर्वसंदेहशान्त्यर्थं त्वन्मुखेन लोके विख्यातं सदन्येषामप्यास्तिक्यबुद्धिजननान्मृतौ श्रेयस्करम् ॥ २७ ॥ पूर्वं कृतयुगं तदादिषु युगेषु कलावेकशतं द्वापरे द्विशतं त्रेतायां त्रिशतं कृते चतुःशतमिति संख्याता पुंसामायुषो या नियतिः सा आदिसर्गे रूढा तस्या न्यूनाधिकभावेऽप्यवान्तरनियतिं शृण्वित्यर्थः ॥ २८ ॥ आयुर्निमित्तभूतानां कर्मणां देशाद्यशुद्ध्या वैगुण्ये फलस्य न्यूनता शुद्ध्यतिशयेन फलाधिक्यमित्यर्थः ॥ २९ ॥ एवं विहितकर्माननुष्ठानमप्यायुःक्षयहेतुरित्याह—**स्वकर्मे**ति । समं तत्तद्युगनियतसंख्यम् ॥ ३० ॥ विहिताकरणमिव निषिद्धाचरणमप्यायुःक्षयहेतुरित्याह—**बाले**ति ॥ ३१ ॥ ३२ ॥ अन्तमायुःसमाप्तिं गतवतः प्राप्तवतः पुरुषस्य दृश्यन्ते प्रत्यक्षमनुभूयन्त इति दृशस्तथाविधा मर्मच्छेदवेदना भवन्ति । सर्वशरीरनाडीभ्यः प्राणानां हृद्युपसंहारकाले सहस्रवृश्चिकदंशवेदनासमं दुःखं भवतीति पुराणेषु प्रसिद्धम् ॥ ३३ ॥ वर्णितं मरणदुःखं किं सर्वेषां सममुत केषांचित्सुखमप्यस्ति मरणोत्तरं च किं सर्वेषां तुल्या गतिरुत योगिनां विशिष्टेति प्रश्नाशयः ॥ ३४ ॥ प्रश्नाशयानुरूपमेवोत्तरं वक्तुं पुरुषान्विभजते—**त्रिविधा** इति । प्राणमनसोर्नाभिहृदयकण्ठभ्रूमध्ये ब्रह्मरन्ध्रान्तेषु नियतकालं निरोधो धारणा तदभ्यासी । युक्तिमान् स्वेच्छोत्क्रमणे परकायप्रवेशे स्वाभिमतलोकप्राप्तिमार्गभूतनाडीद्वारा विशेषनिर्गमनप्रवेशादौ चाभ्यस्तकौशलो योगी ॥ ३५ ॥ तत्र धारणानिष्ठो मध्यमः क्रमेण युक्तिमभ्यस्य सुखं [illegible] । युक्तियुक्तस्तु तथैव स्थितः सुखं प्रयातीति विशेष

धारणा यस्य नाभ्यासं प्राप्ता नैव च युक्तिमान् ।
मूर्खः स्वमृतिकालेऽसौ दुःखमेत्यवशाशयः ॥ ३७
वासनावेशवैवश्यं भावयन्विषयाशयः ।
दीनतां परमामेति परिलूनमिवाम्बुजम् ॥ ३८
अशास्त्रसंस्कृतमतिरसज्जनपरायणः ।
मृतावनुभवत्यन्तर्दाहमग्नाविव च्युतः ॥ ३९
यदा घर्घरकण्ठत्वं वैरूप्यं दृष्टिवर्णजम् ।
गच्छत्येषोऽविवेकात्मा तदा भवति दीनधीः ॥ ४०
परमान्ध्यमनालोको दिवाप्युदिततारकः ।
साभ्रदिग्मण्डलाभोगो घनमेचकिताम्बरः ॥ ४१
मर्मव्यथाविच्छुरितः प्रभ्रमद्दृष्टिमण्डलः ।
आकाशीभूतवसुधो वसुधाभूतखान्तरः ॥ ४२
परिवृत्तककुप्चक्र उह्यमान इवार्णवे ।
नीयमान इवाकाशे घननिद्रोन्मुखाशयः ॥ ४३
अन्धकूप इवापन्नः शिलान्तरिव योजितः ।
स्वयं जडीभवद्वर्णो विनिकृत्त इवाशये ॥ ४४
पततीव नभोमार्गात्तृणावर्त इवार्पितः ।
रथे द्रुत इवारूढो हिमवद्गलनोन्मुखः ॥ ४५
व्याकुर्वन्निव संसारं बान्धवानस्पृशन्निव ।
भ्रमितक्षेपणेनेव वातयन्त्र इवास्थितः ॥ ४६
भ्रमितो वा भ्रम इव कृष्टो रसनयेव वा ।
भ्रमन्निव जलावर्ते शस्त्रयन्त्र इवार्पितः ॥ ४७
प्रोह्यमानस्तृणमिव वहत्पर्जन्यमारुते ।
आरुह्य वारिपूरेण निपतन्निव चार्णवे ॥ ४८
अनन्तगगने श्वभ्रे चक्रावर्ते पतन्निव ।
अब्धिरुर्वीविपर्यासदशामनुभवन्स्थितः ॥ ४९
पतन्निवानवरतं प्रोत्पतन्निव चाभितः ।
सूत्काराकर्णनोद्भ्रान्तपूर्णसर्वेन्द्रियव्रणः ॥ ५०
क्रमाच्छ्यामलतां यान्ति तस्य सर्वाक्षसंविदः ।
यथास्तं[1] गच्छति रवौ मन्दालोकतया दिशः ॥ ५१
पूर्वापरं न जानाति स्मृतिस्तानवमागता ।
यथा पाश्चात्यसंध्यान्ते नष्टा दृष्टिर्दिगष्टके ॥ ५२
मनः कल्पनसामर्थ्यं त्यजत्यस्य विमोहतः ।
अविवेकेन तेनासौ महामोहे निमज्जति ॥ ५३
यदैवामोहमादत्ते नादत्ते पवनस्तदा ।
नत्वादत्ते यदा प्राणान्मोहमायात्यलं तदा ॥ ५४
अन्योन्यपुष्टतां यातैर्मोहसंवेदनभ्रमैः ।
जन्तुः पाषाणतामेति स्थितमित्यादिसर्गतः ॥ ५५

प्रबुद्धलीलोवाच ।

व्यथां विमोहं मूर्च्छान्तं भ्रमं व्याधिमचेतनम् ।
किमर्थमयमायाति देहो ह्यष्टाङ्गवानपि ॥ ५६

श्रीदेव्युवाच ।

एवं संविहितं कर्म सर्गादौ स्पन्दसंविदा ।
यद्यस्मिन्समये दुःखं कालेनैतावतेदृशम् ॥ ५७
स्यान्मे इत्येव संविश्य गुल्मवत्तत्स्वभावजम् ।
वेत्ति चित्तविजृम्भोत्थं नान्यदत्रास्ति कारणम् ॥ ५८
यदा व्यथावशान्नाड्यः स्वसंकोचविकासनैः ।
गृह्णन्ति मारुतो देहे तदोज्झति निजां स्थितिम् ॥ ५९

---

इत्यर्थः ॥३६॥ मूर्खं लक्षयंस्तस्य दुःखमाह—**धारणे**ति ॥३७॥ वासनावेशेन वैवश्यमस्वाधीनचित्ततां प्राप्तः अतएव विषयाशयो न परमार्थाशयः ॥३८॥ तत्रापि विहिताकर्तुर्दुःखातिशयमाह—**अशास्त्रे**ति ॥ ३९ ॥ तादृशदुःखकालोपलक्षकलिङ्गान्याह—**यदे**ति ॥ ४० ॥ परमान्ध्यं प्राप्य दिवाप्युदितास्तारका यस्य तथाविधोऽनालोको निष्प्रकाशोऽतएव घनं मेचकितं श्यामीभूतमम्बरमाकाशं यस्य तथाविधः । साभ्रो दिङ्मण्डलाभोगो यस्य तथाविध इव भवतीति सर्वत्र शेषः ॥ ४१ ॥ विच्छुरितो व्याप्तः ॥४२॥ परिवृत्तं भ्रमत्ककुप्चक्रं दिङ्मण्डलं यस्य ॥४३॥ आपन्नः पतितः । योजितः प्रवेशितः । स्वदुःखं वक्तुकामोऽपि वाक्स्तम्भाज्जडीभवन्त उच्चरितुमशक्या वर्णा अक्षराणि यस्य । आशये हृदये विनिकृत्तश्छिन्न इव ॥ ४४ ॥ तृणान्यावर्तयतीति तृणावर्तो वात्या तत्रार्पित इव । हिमं तुषारशिला तद्वद्गलने विलीनतायामुन्मुखः ॥ ४५ ॥ संसारशब्देन तद्दुःखं लक्ष्यते । तद्व्याकुर्वन् स्वात्मानमुदाहृत्यान्येभ्यः प्रख्यापयन्निव । क्षेपणेन शिलाप्रक्षेपयन्त्रेण ॥ ४६ ॥ भ्रमे भ्रमियन्त्रे । रसनया रज्ज्वा कृष्ट आकृष्ट इव ॥ ४७ ॥ वहति पर्जन्यमारुते आरुह्य वारिपूरेण सह अर्णवे निपतन्निव ॥ ४८ ॥ उर्वीविपर्यासदृशामनुभवन्नब्धिरिवानवरतं पतन्नित्यौत्प्रेक्षिकोपमा ॥ ४९ ॥ सूत्कारो निःश्वासध्वनिः ॥ ५० ॥ तस्य मूर्च्छोपक्रमे चक्षुराद्युपरममाह—**क्रमादि**ति । तस्य मुमूर्षोः सर्वा अक्षसंविदः । श्यामलतां मालिन्यम् ॥ ५१ ॥ तानवं कृशताम् ॥ ५२ ॥ ५३ ॥ आमोहमीषन्मूर्च्छाम् । पवनः प्राणो नादत्ते न गृह्णाति । अङ्गानि न विष्टम्भयतीत्यर्थः। यदा प्राणानप्यसौ नत्वादत्ते न चालयितुं शक्नोति तदा मोहं गाढमूर्च्छाम् ॥५४॥ मोहः स्वरूपापरिचयः संवेदनानि विषयवासनाः भ्रमा अन्यथाप्रतिभासास्तैः । पाषाणतां पाषाणवज्जडताम् । आदिसर्गत आरभ्य इति एवं नियतं सैर्वं[2] स्थितमित्यर्थः ॥ ५५ ॥ शिरःपाणिपादगुह्यनाभिहृदयान्यष्टाङ्गानि तद्वानपि ॥ ५६ ॥ स्पन्दसंविदा क्रियाशक्तिप्रधानेनेश्वरेण एवं वक्ष्यमाणरूपं संकल्पलक्षणं कर्म संविहितम् । यद्यस्मिन्समये बाल्ये यौवने वृद्धत्वे वा एतावता कालेन भोग्यमीदृशं दुःखं मे मदभिन्नस्य जीवस्य स्यादिति परेणान्वयः ॥ ५७ ॥ तत्स्वसंकल्पस्वभावजमेव चित्तपरिकल्पिततरुगुल्मवच्चित्तविजृम्भोत्थं दुःखं स्वयमेव जीवभावेनोपाधौ संविश्य वेत्ति भुङ्क्ते इत्यर्थः ॥ ५८ ॥ पृष्टं समाधाय प्रस्तुतमेवाह—**यदे**त्या-

---

१ यथा ह्यस्तंगतरवौ इति पाठः. २ सर्वं स्थितं इति क्वाचित्कः पाठः.

प्रविष्टा न विनिर्यान्ति गताः संप्रविशन्ति नो ।
यदा वाता विनाडीत्वात्तदा स्पन्दात्स्मृतिर्भवेत् ॥ ६०
न विशत्येव वातो न निर्याति पवनो यदा ।
शरीरनाडीवैधुर्यान्मृत इत्युच्यते तदा ॥ ६१
आगन्तव्यो मया नाशः कालेनैतावतेति या ।
पूर्वसंविदिता संविद्याति तच्चोदिता मृतिम् ॥ ६२
ईदृशेन मयेहेत्थं भाव्यमित्यादि सर्गजा ।
संविद्बीजकला नाशं न कदाचन गच्छति ॥ ६३
संविदो वेदनं नाम स्वभावोऽव्यतिरेकवान् ।
तस्मात्स्वभावसंवित्तेर्नान्ये मरणजन्मनी ॥ ६४
क्वचिदावृतिमत्सौम्यं क्वचिन्नद्यां जलं यथा ।
क्वचित्सौम्यं क्वचिज्जीवधर्मेदं चेतनं तथा ॥ ६५
यथा लतायाः पर्वाणि दीर्घाया मध्यमध्यतः ।
तथा चेतनसत्ताया जन्मानि मरणानि च ॥ ६६
न जायते न म्रियते चेतनः पुरुषः क्वचित् ।
स्वप्नसंभ्रमवद्भ्रान्तमेतत्पश्यति केवलम् ॥ ६७
पुरुषश्चेतनामात्रं स कदा क्वेव नश्यति ।
चेतनव्यतिरिक्तत्वे वदान्यत्किं पुमान्भवेत् ॥ ६८
कोऽद्ययावन्मृतं ब्रूहि चेतनं कस्य किं कथम् ।
म्रियन्ते देहलक्षाणि चेतनं स्थितमक्षयम् ॥ ६९
अमरिष्यन्न वै चित्तमेकस्मिन्नेव तन्मृते ।
अभविष्यत्सर्वभावमृतिरेकमृताविह ॥ ७०
वासनामात्रवैचित्र्यं यज्जीवोऽनुभवेत्स्वयम् ।
तस्यैव जीवमरणे नामनी परिकल्पिते ॥ ७१
एवं न कश्चिन्म्रियते जायते न च कश्चन ।
वासनावर्तगर्तेषु जीवो लुठति केवलम् ॥ ७२
अत्यन्तासंभवादेव दृश्यस्यास्य च वासना ।
नास्त्येवेति विचारेण दृढज्ञातैव नश्यति ॥ ७३
अनुदितमुदितं जगत्प्रबन्धं
भवभयतोऽभ्यसनैर्विलोक्य सम्यक् ।
अलमनुदितवासनो हि जीवो
भवति विमुक्त इतीह सत्यवस्तु ॥ ७४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० मरणविचारो नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

दिना । नाड्यः प्रततपित्तादिरसपूरितत्वाद्यथासंचलनं तद्वशात्स्वसंकोचविकासनैर्भुक्तान्नपानरसं वैषम्येण गृह्णन्ति तदा मारुतः समानवायुर्निजां भुक्तान्नपानादिसमीकरणस्थितिमुज्झत्युत्सृजति ॥ ५९ ॥ यदा नाडीद्वारेषु प्रविष्टा वाता न विनिर्यान्ति निर्गताश्च न प्रविशन्ति तदा नाडीव्यापारोपरमे विनाडीत्वाच्चक्षुरादेरस्पन्दात् स्मृतिरेवान्तर्भवेन्नेन्द्रियकं ज्ञानमित्यर्थः ॥ ६० ॥ तच्च नाडीवैधुर्यं प्राणसंचाररोधेन मरणे हेतुरित्याह—**न विशत्येवेति** । वातः अपानो देहेन विशत्येव । यदा पवनः प्राणश्च मुखनासिकाभ्यां न निर्याति तदाऽवश्यं लिङ्गस्योत्क्रमणान्मृत इत्युच्यत इत्यर्थः ॥ ६१ ॥ तत्रापि प्राक्तनचित्संकल्परूपा नियतिरेव हेतुरित्याह—**आगन्तव्य** इति । पूर्वसंविदिता प्राक्तनसंकल्पवती । तच्चोदिता तादृशनियतिप्रेरिता ॥ ६२ ॥ ननु तस्या नियतेर्नाशे जगद्व्यवस्था भज्येत तत्राह—**संविदिति** । सत्यसंकल्पसंविदो बीजकला तत्संस्कारवती माया सा कदाचिदपि काले न नश्यति, मुक्तौ कालेन सहैव तन्निवृत्तेरिति भावः ॥ ६३ ॥ आविद्यकजीवसंवित्स्वरूपपर्यालोचनेऽपि यावन्मोक्षं जन्ममरणाद्यनिवृत्तिरेवेत्याशयेनाह—**संविद** इति । अव्यतिरेकवान् व्यतिरेको विश्लेषस्तदभाववान् ॥ ६४ ॥ सांसारिकजीवसंवित्प्रवाहं वर्णयति—**क्वचिदिति** । यथा नद्यां जलं क्वचिदावृतिमत् कालुष्यवत् क्वचित्तु सौम्यं स्थिरनिर्मलं तथा इदं चेतनमपि क्वचित्सौम्यं क्वचित्तु जीवधर्मरागद्वेषादिकलुषमित्यर्थः ॥ ६५ ॥ दूर्वादिलतायाः पर्वाणि ग्रन्थयः ॥ ६६ ॥ इदं च सर्वमाविद्यकदृशा । परमार्थदृशा त्वाह—**न जायत** इति । 'न जायते म्रियते वा विपश्चित्' इत्यादिश्रुतेरित्यर्थः ॥ ६७ ॥ अमरणधर्मतां तस्य युक्त्याप्युपपादयति—**पुरुष** इत्यादिना । चेतनव्यतिरिक्त एव पुरुष इति पक्षे अन्यत्किं देहः पुरुषो भवेदुत प्राण उतेन्द्रियाणि किंवा मन उत बुद्धिरुताहंकारचित्ते उत तत्तदधिष्ठातृदेवता उताविद्या । सर्वेष्वपि पक्षेषु जडैः पुरुषकार्यप्रकाशाधीनसर्वव्यवहारानिर्वाहात्परिशेषाच्चेतनामात्रमेव पुरुष इति पक्षः स्थित इत्यर्थः ॥ ६८ ॥ चेतनस्य तु मरणं न सिध्यति निःसाक्षिकमरणासिद्धेरित्याशयेनाह—**कोऽद्येति** । अद्ययावदद्यतनावधिके अनादिसंसारे चेतनं मृतं को दृष्टवानिति शेषः । एवं किं तन्मरणं विनाश उत देहान्तरप्राप्तिः । आद्येऽपि कथं चेतनस्य नाशः किं स्वत उत परतः । नाद्यः । स्वात्मनि विरोधाभावात् । असङ्गस्य परतस्तदप्रसक्तेरित्यर्थः । द्वितीये त्वाह—**म्रियन्त** इति ॥ ६९ ॥ अनिष्टप्रसञ्जनेनापि चेतनमरणं वारयति—**अमरिष्यदिति** । प्रतिदेहं चेतनभेदे मानाभावात् 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुतेश्चैकस्मिंस्तत् तस्मिंश्चेतने मृते सति तदधीनसत्तास्फूर्तिकं समष्टिव्यष्टिचित्तं नामरिष्यद्वै । किमर्थे काका वैशब्दः नामरिष्यत्किमित्यर्थः । तस्मिंश्च मृते सति निरुपादानजगत्सत्ताऽयोगादेकमृतौ सर्वभावमृतिदोषो नाभविष्यत्किमित्यर्थः ॥ ७० ॥ के तर्हि प्रतीयमाने जीवनमरणे तत्राह—**वासनेति** । जीवो जीवनम् ॥ ७१ ॥ उपपादितमुपसंहरति—**एवमिति** ॥ ७२ ॥ अभिमानेन दृढतरो ज्ञाता अन्तःकरणात्मा नश्यत्येवेत्यर्थः ॥ ७३ ॥ भवभयतो वैराग्यादिसाधनसंपन्नोऽधिकारिजीवो गुरुपूर्वकश्रवणाद्यभ्यसनैर्भ्रान्त्या उदितं जगत्प्रबन्धं परमार्थतोऽनुदितमेवेति सम्यक्तत्त्वदर्शनतो विलोक्य मूलोच्छेदादलमत्यन्तमनुदितद्वैतवासनः सन् विमुक्तो भवतीति विमुक्तात्मस्वरूपमे-



१ चेतनं पुरुषे क्वचित् इति पाठः.

२ स कदाचिन्न नश्यति इत्यपि पाठः.

## पञ्चपञ्चाशः सर्गः ५५

प्रबुद्धलीलोवाच ।

यथैव जन्तुर्म्रियते जायते च यथा पुनः ।
तन्मे कथय देवेशि पुनर्बोधविवृद्धये ॥ १

श्रीदेव्युवाच ।

नाडीप्रवाहे विधुरे यदा वातविसंस्थितिम् ।
जन्तुः प्राप्नोति हि तदा शाम्यतीवास्य चेतना ॥ २
शुद्धं हि चेतनं नित्यं नोदेति न च शाम्यति ।
स्थावरे जङ्गमे व्योम्नि शैलेऽग्नौ पवने स्थितम् ॥ ३
केवलं वातसंरोधाद्यदा स्पन्दः प्रशाम्यति ।
मृत इत्युच्यते देहस्तदासौ जडनामकः ॥ ४
तस्मिन्देहे शवीभूते वाते चानिलतां गते ।
चेतनं वासनामुक्तं स्वात्मतत्त्वेऽवतिष्ठति ॥ ५
जीव इत्युच्यते तस्य नामाणोर्वासनावतः ।
तत्रैवास्ते स च शवागारे गगनके तथा ॥ ६
ततोऽसौ प्रेतशब्देन प्रोच्यते व्यवहारिभिः ।
चेतनं वासनामिश्रमामोदानिलवत्स्थितम् ॥ ७
इदं दृश्यं परित्यज्य यदास्ते दर्शनान्तरे ।
स स्वप्न इव संकल्प इव नानाकृतिस्तदा ॥ ८
तस्मिन्नेव प्रदेशेऽन्तः पूर्ववत्स्मृतिमान्भवेत् ।
तदैव मृतिमूर्च्छान्ते पश्यत्यन्यशरीरकम् ॥ ९
आत्मन्यस्ति घटापुष्टमन्यस्य व्योम केवलम् ।
आकाशभूतले साकं साकाशशशिवासरम् ॥ १०
भवन्ति षड्विधाः प्रेतास्तेषां भेदमिमं शृणु ।
सामान्यपापिनो मध्यपापिनः स्थूलपापिनः ॥ ११
सामान्यधर्मा मध्यमधर्मा चोत्तमधर्मवान् ।
एतेषां कस्यचिद्भेदो द्वौ त्रयोऽप्यथ कस्यचित् ॥ १२
कश्चिन्महापातकवान्वत्सरं स्मृतिमूर्च्छनम् ।
विमूढोऽनुभवत्यन्तः पाषाणहृदयोपमः ॥ १३
ततः कालेन संबुद्धो वासनाजठरोदितम् ।
अनुभूय चिरं कालं नारकं दुःखमक्षयम् ॥ १४
भुक्त्वा योनिशतान्युच्चैर्दुःखाद्दुःखान्तरं गतः ।
कदाचिच्छममायाति संसारस्वप्नसंभ्रमे ॥ १५

वेह सत्यवस्तु नान्यदित्यर्थः ॥ ७४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मरणविचारो नाम चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

इह जीवस्य संसारगतिवैचित्र्यमुच्यते ।
आदिसर्गात्तथेशस्य तत्कर्मानुगुणा स्थितिः ॥ १ ॥

कथितमेव पुनर्विस्तरेण कथयेत्यर्थः । तत्फलं वैराग्यातिशयेन बोधविवृद्धिः ॥ १ ॥ प्राणवातानां विसंस्थितिं चलनस्वभावविरुद्धां संस्थितिम् । प्रशान्तिमिति यावत् । व्यञ्जकान्तःकरणोपाधिविलयाच्छाम्यतीव । 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति' इति श्रुतेरिति भावः ॥ २ ॥ वस्तुतस्तु न क्वापि शाम्यतीत्याह—**शुद्धम्**इति । 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इति श्रुतेरिति भावः ॥ ३ ॥ एवं च देहधर्म एव मरणं नात्मधर्म इत्याह—**केवलम्**इति ॥४॥ वाते शरीरवायौ अनिलतां स्वप्रकृतिमहावायुताम् । प्राणस्तु सहतेजसा प्राज्ञात्मन्येव लीयते । उपाधिविलये जीवोऽपि सह वासनाभिः परमात्मभावेऽवतिष्ठत इत्याह—**चेतनम्**इति । तथाच श्रुतिः 'अथास्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति ॥५॥ ननु यदि स्वात्मतत्त्वेऽवतिष्ठते तर्हि मुक्तो ब्रह्मैव स्यादसौ न जीवस्तत्राह—**जीव** इति । पुनर्जन्मबीजवासनावतस्तदुपाधिकत्वादणोः सूक्ष्मस्य तत्परिच्छिन्नस्य तस्य जीव इति नाम उच्यते नतु वस्तुतो जीवो नाम ब्रह्मान्योऽस्तीत्यर्थः । अतएव तस्य वासनावशात्स्वस्थान एव परलोकगमनाद्यध्यासो न वास्तवं गमनाद्यस्तीत्याशयेन मण्डपाकाशन्यायं स्मारयति—**तत्रैवास्त** इति ॥६॥ ततो देहमरणादेव । नन्वसङ्गे कथं वासनास्थितिस्तत्राह—**चेतनम्**इति । यथा सूक्ष्मतरपुष्परेणुनिष्ठ एवामोदः, अनिलस्तु तत्तादात्म्यसंसर्गाध्यासादामोदमिश्रः स्थितस्तद्वदित्यर्थः ॥ ७ ॥ इदं प्राक्तनं देहादिदृश्यं परित्यज्य देहान्तरादिदर्शनान्तरे यदा आस्ते तदा स जीवः स्वप्न इव स्वयमेव स्ववासनामयगमनपरलोकतत्रत्यभोग्यादिनानाकृतिर्भवतीत्यर्थः ॥८॥ तमेवाध्यासं क्रमेण वक्तुमुपक्रमते—**तस्मिन्नेवे**ति । पूर्ववत्प्राग्जन्मवत् ॥ ९ ॥ ननु तस्मिन्नल्पतरे मरणप्रदेशे देहान्तरकल्पनघटनेऽपि कथं दूरगमनविस्तृतपरलोकादिसमावेशघटनं तत्राह—**आत्मनी**ति । पुष्टं विपुलं केवलं व्योम एकं आकाशभूतले द्वे वा साकाशशशिवासरं ब्रह्माण्डकोटिलक्षं वा साकं युगपदेवान्तर्निविशतु तथापि आत्मन्यन्यस्य सर्वस्य प्रपञ्चस्य घटा घटनमस्त्येव । आत्मनोऽनन्तत्वान्मायायाश्चाघटितघटनासामर्थ्यसत्त्वादित्यर्थः । तथाचात्मस्वरूपपर्यालोचनया अल्पप्रदेशेऽपि जगदन्तरसमावेश उक्तो न तत्प्रदेशमात्रमपेक्ष्येति भावः । अथवा यदि तस्मिन्प्रदेशे मार्गपरलोकादिकमस्ति तर्ह्यन्येनापि कुतो नोपलभ्यते तत्राह—**आत्मनीति**। आकाशभूतले द्वे साकाशशशिवासरं सर्वं जगच्च मृतपुरुषस्यात्मनि मेघघटेव पुष्टमस्ति अन्यस्य दृशा तु केवलं व्योम गृहाकाशमेवास्तीति दर्शनप्रसक्तिरित्यर्थः ॥ १० ॥ गतिभेदान्वक्तुं प्रेतान्विभजते—**भवन्ती**ति ॥ ११ ॥ एतेषां मध्ये कस्यचिद्भेदो विशेषः । स कः । कस्यचिद्द्वौ भेदौ । यथा कंचित्कालं सामान्यपापी तदुत्तरमध्यमपाप्यतिपापी वेति उक्तरीत्या कस्यचित्त्रयोऽपि क्रमेण व्युत्क्रमेण वा भेदाः ॥ १२ ॥ तत्र प्रथमं तृतीयस्य गतिमाह—**कश्चिदि**ति । वत्सरं संवत्सरमात्रम् ॥ १३ ॥ १४॥ **भुक्त्वे**ति । तथाच श्रुतिः 'अथ य इह कपूयचरणा अभ्याशो ह

१ शशिचामरम् इति पाठः २ छन्दोभङ्गोऽत्र आर्षः. ३ अस्तीति न दर्शनप्रसक्तिरिति क्वचित्.

अथवा मृतिमोहान्ते जडदुःखशताकुलाम् ।
क्षणाद्वृक्षादितामेव हृत्स्थाम्[1]नुभवन्ति ते ॥ १६
स्ववासनानुरूपाणि दुःखानि नरके पुनः ।
अनुभूयाथ योनीषु जायन्ते भूतले चिरात् ॥ १७
अथ मध्यमपापो यो मृतिमोहादनन्तरम् ।
सशिलाजठरं जाड्यं कंचित्कालं प्रपश्यति ॥ १८
ततः प्रबुद्धः कालेन केनचिद्वा तदैव वा ।
तिर्यगादिक्रमैर्भुक्त्वा योनीः संसारमेष्यति ॥ १९
मृत एवानुभवति कश्चित्सामान्यपातकी ।
स्ववासनानुसारेण देहं संपन्नमक्षतम् ॥ २०
स स्वप्न इव संकल्प इव चेतति तादृशम् ।
तस्मिन्नेव क्षणे तस्य स्मृतिरित्थमुदेति च ॥ २१
ये तूत्तममहापुण्या मृतिमोहादनन्तरम् ।
स्वर्गविद्याधरपुरं स्मृत्या स्वनुभवन्ति ते ॥ २२
ततोऽन्यकर्मसदृशं भुक्त्वान्यत्र फलं निजम् ।
जायन्ते मानुषे लोके सश्रीके सज्जनास्पदे ॥ २३
ये च मध्यमधर्माणो मृतिमोहादनन्तरम् ।
ते व्योमवायुवलिताः प्रयान्त्योषधिपल्लवम् ॥ २४
तत्र चारुफलं भुक्त्वा प्रविश्य हृदयं नृणाम् ।
रेतसामधितिष्ठन्ति गर्भे जातिक्रमोचिते ॥ २५
स्ववासनानुसारेण प्रेता एतां व्यवस्थितिम् ।
मूर्च्छान्तेऽनुभवन्त्यन्तः क्रमेणैवाक्रमेण च ॥ २६

यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति । शमं महापापफलोपरमम् ॥१५॥ **क्षणादिति** । इदं चान्यदृशा ॥१६॥१७॥ द्वितीयस्य गतिमाह—**अथेति** । शिला जठरमिव शिलाजठरम् । जाड्यं मूर्च्छाम् ॥ १८ ॥ तदैवेति परदृष्ट्युक्तिः ॥ १९ ॥ प्रथमस्य गतिमाह—**मृत** इति । देहं मनुष्यादिशरीरम् । 'उभाभ्यामेव मनुष्यलोक'मिति श्रुतेः ॥ २० ॥ चेतति अनुभवति । इत्थं प्रागुक्तदिशा ॥ २१ ॥ षष्ठस्य गतिमाह—**ये त्विति** । स्मृत्या पुण्यवासनोद्बोधेन ॥ २२ ॥ ततो महापुण्यभोगानन्तरम् । अन्यत्किंचिदल्पं पुण्यं पापं वा संभावितं तत्सदृशं तदनुरूपं फलम् । अन्यत्र इलावृतकिंपुरुषादिवर्षेषु ॥ २३ ॥ पञ्चमस्य गतिमाह—**ये चेति** । ओषधिपल्लवं ओषधिपल्लवप्रधानं नन्दनचैत्ररथादिवनं किन्नरकिंपुरुषयक्षादिशरीरेण प्रयान्तीत्यर्थः ॥ २४ ॥ चारु स्वकर्मफलं भुक्त्वान्ते वायुवृष्ट्यादिद्वारा भूमौ व्रीहियवादिषु प्रविश्यान्नभूता नृणां ब्राह्मणादीनां हृदयं प्रविश्य रेतसां निषेके तद्द्वारा स्त्रीणां गर्भे अधितिष्ठन्तीत्यर्थः । 'अथ य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा' इति श्रुतेः ॥ २५ ॥ एतेन चतुर्थस्यापि गतिरुक्तप्रायैवेति मन्यमान उपसंहरति—**स्ववासनेति** ॥ २६ ॥ इदानीं

१ 'तत्स्थाम्' इति पाठः.

आदौ मृता वयमिति बुध्यन्ते तदनुक्रमात् ।
बन्धुपिण्डादिदानेन प्रोत्पन्ना इति वेदिनः ॥ २७
ततो यमभटा एते कालपाशान्विता इति ।
नीयमानः प्रयाम्येभिः क्रमाद्यमपुरं त्विति ॥ २८
उद्यानानि विमानानि शोभनानि पुनःपुनः ।
स्वकर्मभिरुपात्तानि दिव्यानीत्येव पुण्यवान् ॥ २९
हिमानीकण्टकश्वभ्रशस्त्रपत्रवनानि च ।
स्वकर्मदुष्कृतोत्थानि संप्राप्तानीति पापवान् ॥ ३०
इयं मे सौम्यसंपाता सरणिः शीतशाद्वला ।
स्निग्धच्छाया सवापीका पुरःसंस्थेति मध्यमः ॥ ३१
अयं प्राप्तो यमपुरमहमेष स भूतपः ।
अयं कर्मविचारोऽत्र कृत इत्यनुभूतिमान् ॥ ३२
इति प्रत्येकमभ्येति पृथुः संसारखण्डकः ।
यथासंस्थितनिःशेषपदार्थाचारभासुरः ॥ ३३
आकाश इव निःशून्ये शून्यात्मैव विबोधवान् ।
देशकालक्रियादैर्घ्यभासुरोऽपि न किंचन ॥ ३४
इतोऽयमहमादिष्टः स्वकर्मफलभोजने ।
गच्छाम्याशु शुभं स्वर्गमितो नरकमेव च ॥ ३५
यः स्वर्गोऽयं मया भुक्तो भुक्तोऽयं नरकोऽथ वा ।
इमास्ता योनयो भुक्ता जायेऽहं संसृतौ पुनः ॥ ३६
अयं शालिरहं जातः क्रमात्फलमहं स्थितः ।
इत्युदर्कप्रबोधेन बुध्यमानो भविष्यति ॥ ३७

मरणप्रभृति तेषामारोपक्रमं विशिष्य दर्शयति—**आदा**वित्यादिना । तदनुक्रमाद्दाहदशाहकृत्यक्रमात्प्रोत्पन्ना निष्पन्नशरीरा इति बुध्यन्त इति सर्वत्रानुषज्यते ॥ २७ ॥ एभिर्यमभटैः क्रमात्पाथेयश्राद्धतर्पितः संवत्सरेण यमपुरं प्रयामीति ॥ २८ ॥ पुण्यवानुत्तमपुण्यवान् ॥ २९ ॥ ३० ॥ सौम्यसंपाता पद्भ्यां सुखेन गन्तुं योग्येत्यर्थः । सरणिर्मार्गः । मध्यमः पुण्यवान् इति बुध्यते ॥ ३१ ॥ अयमहं यमपुरं प्राप्तः । स सर्वलोकप्रसिद्धो यमः । एष पुरःस्थः । अत्र यमसभायां चित्रगुप्तादिभिर्मम कर्मविचारः कृतः ॥ ३२ ॥ अयं चारोपक्रमः प्रतिपुरुषं स्वप्नवद्भिन्न इत्याह—**इती**ति । यथा प्रतीयन्ते तथैव संस्थिताः सत्या इव ये निःशेषपदार्थास्तदाचारास्तत्तदर्थक्रियाश्च तैर्भासुरः ॥ ३३ ॥ स्वरूपदृष्ट्यावलोकने तु न किंचिदात्मातिरिक्तमस्तीत्याह—**आकाश इवे**ति । निःशून्ये निःस्वरूपे स्थितः प्रपञ्चो देशकालादिदैर्घ्येण भासमानोऽपि न किंचन किंतु सर्वारोपशून्य आत्मैवेत्यर्थः ॥ ३४ ॥ अहं यमेन स्वकर्मफलभोजने इतोऽस्यां दिशि आदिष्ट आज्ञप्तः । इतो यमसभातः ॥ ३५ ॥ यो यमेन निर्दिष्टः स्वर्गः अयं मया भुक्तः । ता यमनिर्दिष्टाः पश्वादियोनय इमाः प्रत्यक्षा मया भुक्ताः । अहं संसृतौ मनुष्यसंसारे पुनर्जाये सांप्रतं प्रादुर्भवामि ॥ ३६ ॥ तत्क्रममाह—**अयमिति** । शालिः शाल्यङ्कुरः । काण्डपत्रगर्भमञ्जरीक्रमात्फलं

संसुप्तकरणस्त्वेवं बीजतां यात्यसौ नरे ।
तद्बीजं योनिगलितं गर्भो भवति मातरि ॥ ३८
स गर्भो जायते लोके पूर्वकर्मानुसारतः ।
भव्यो भवत्यभव्यो वा बालको ललिताकृतिः ॥ ३९
ततोऽनुभवतीन्द्वाभं यौवनं मदनोन्मुखम् ।
ततो जरां पद्ममुखे हिमाशनिमिव च्युतम्[1] ॥ ४०
ततोऽपि व्याधिमरणं पुनर्मरणमूर्च्छनाम् ।
पुनः स्वप्नवदायातं पिण्डैर्देहपरिग्रहम् ॥ ४१
याम्यं याति पुनर्लोकं पुनरेव भ्रमक्रमम् ।
भूयो भूयोऽनुभवति नानायोन्यन्तरोदये ॥ ४२
इत्याजवं जवीभावमामोक्षमतिभासुरम् ।
भूयो भूयोऽनुभवति व्योम्न्येव व्योमरूपवान् ॥ ४३

प्रबुद्धलीलोवाच ।

आदिसर्गे यथा देवि भ्रम एष प्रवर्तते ।
तथा कथय मे भूयः प्रसादाद्बोधवृद्धये ॥ ४४

श्रीदेव्युवाच ।

परमार्थघनं शैलाः परमार्थघनं द्रुमाः ।
परमार्थघनं पृथ्वी परमार्थघनं नभः ॥ ४५
सर्वात्मकत्वात्स यतो यथोदेति चिदीश्वरः ।
परमाकाशशुद्धात्मा तत्र तत्र भवेत्तथा ॥ ४६
सर्गादौ स्वप्नपुरुषन्यायेनादिप्रजापतिः ।
यथा स्फुटं प्रकचितस्तथाद्यापि स्थिता स्थितिः ॥ ४७
प्रथमोऽसौ प्रतिस्पन्दः पदार्थानां हि बिम्बकम् ।
प्रतिबिम्बितमेतस्माद्यत्तदद्यापि संस्थितम् ॥ ४८
यन्नाम सुषिरं स्थानं देहानां तद्गतोऽनिलः ।
करोत्यङ्गपरिस्पन्दं जीवतीत्युच्यते ततः ॥ ४९
सर्गादावेवमेवैषा जङ्गमेषु स्थिता स्थितिः ।
चेतना अपि निःस्पन्दास्तेनैते पादपादयः ॥ ५०
चिदाकाशोऽयमेवांशं कुरुते चेतनोदितम् ।
स एव संविद्भवति शेषं भवति नैव तत् ॥ ५१
नरोपाधिपुरं प्राप्तं चेतत्यक्षिपुटं नयत् ।
तत्तस्या नाक्षिचिज्जीवं नो जीवत्येव सर्गतः ॥ ५२
तथा खं खं तथा भूमिर्भूमित्वेनाम्बुवज्जलम् ।
यद्यथा चेतति स्वैरं तद्वेत्त्येव तथा वपुः ॥ ५३

भूत्वा अहं स्थितः । ननु स्वर्गनरकनानायोनिभोग इव व्रीह्यादिभावोऽपि किमस्यानुभवसिद्धो नेत्याह—**इत्युदर्के**ति । उदर्के औत्तरकालिके मनुष्यशरीरे श्रुतिपुराणादिजन्यप्रबोधेन बुध्यमानोऽयं भविष्यतीत्यर्थः ॥ ३७ ॥ कुतस्तदानीमसौ व्रीह्यादिभावं नानुभवति तत्राह—**संसुप्तकरण** इति । शरीराभावात्संमूर्च्छितबाह्यान्तःकरणः । तुशब्द एतद्विशेषसूचनाय । एवमेवासौ नरे पितृशरीरे भुक्तान्नद्वारा प्रविष्टो बीजतां रेतोभावं याति ॥३८॥ पूर्वकर्मानुसारमेव प्रपञ्चयति—**भव्य** इति । भव्यः सुखसौभाग्यारोग्यसाधुवृत्तसंपन्नस्तद्विपरीतोऽभव्यः ॥ ३९ ॥ इन्द्वाभं चन्द्रवदुपचयापचयधर्मिणं चलं कान्तं च ॥ ४० ॥ बन्धुदत्तैरौर्ध्वदेहिकपिण्डैः ॥ ४१ ॥ ४२ ॥ इति उक्तप्रकारं आजवं जवीभावं परिवर्तनम् । 'जु गतौ' इति धातोराङ्पूर्वात्पचाद्यच्चि च्विः द्वित्वनुकौ तु बाहुलकात्पृषोदरादित्वाच्छान्दसत्वाद्वा बोध्यौ ॥ ४३ ॥ नन्वस्तु त्वंपदार्थे जीवे भ्रान्तिसंभवादयमध्यारोपक्रमस्तत्पदार्थे त्वीश्वरे भ्रान्त्ययोगात्कथं जगदध्यारोपक्रम इति तत्परिशुद्धिज्ञानाय लीला पृच्छति—**आदिसर्गे** इति ॥ ४४ ॥ नेश्वरस्य भ्रान्त्या जगदध्यारोपः किंतु स्वतः परमार्थघनरूपस्यैव स्वतो मायाध्यारोपितरूपेण विवर्तः । अनावृतस्वचैतन्येनाध्यस्तभानं न च भ्रमः, किंतु सत्यत्वेनासत्यप्रतिभासः । ईश्वरस्य सर्वदा सर्वज्ञत्वात्सर्वार्थप्रतिभासेऽपि स्वरूपाप्रच्युतिबोधबाधितत्वान्न जगति सत्यताप्रतिभास इति न कश्चिद्दोष इत्यभिप्रेत्य देवी तत्पदार्थेऽध्यारोपमुपपादयितुमाह—**परमार्थघन**मित्यादिना ॥ ४५ ॥ उदेति विवर्तते । तथा भवति अस्वदृशा न स्वदृशा ॥ ४६ ॥ स ईश्वर एव स्वप्नकल्पयितृपुरुषन्यायेन जीवसमष्ट्यात्मा आदिप्रजापतिर्भूत्वा सृज्यसंकल्पात्मना यथा भूरादिलोकात्मना विवर्तेन प्रकचति तथैवाद्यापि तादृशस्थितिसंकल्पसत्तया स्थितिर्व्यवस्था स्थिता ॥ ४७ ॥ सांकल्पिकजगत्सत्ताया इयं जगत्सत्ता भिन्नेति पक्षेऽपि तत्प्रतिबिम्बतुल्यत्वान्मिथ्यैवेत्याह—**प्रथम**मिति । असौ सांकल्पिकप्रकचनरूपः परिस्पन्दो विवर्तः ॥४८॥ तत्र स्थावरजंगमविभागे निमित्तमाह—**यन्नामे**ति द्वाभ्याम् ॥ ४९ ॥ निःस्पन्दा निश्चेष्टाः ॥५०॥ एवं चेतनाचेतनविभागकल्पनेऽपि निमित्तमाह—**चिदाकाश** इति । अयं चिदाकाश ईश्वर एव चेतनाबुद्ध्युपाधिसूत्रावच्छेदात्प्रतिबिम्बनाद्वा उदितमाविर्भूतमंशमिवांशमौपाधिकं जीवविभागं कुरुते स एवांशः संविच्चेतनं भवति शेषं त्वध्यारोपितं तच्चेतनं न भवति किंत्वचेतनमेवेत्यर्थः ॥५१॥ तस्य बुद्धिद्वारैव स्थूलानुप्रवेशं तत्र चक्षुरादिप्राप्त्या बाह्यव्यवहारयोग्यतां चाह—**नरे**ति । तद्बुद्ध्यनुप्रविष्टचिदाकाशं तस्याः बुद्धेर्निमित्तान्नरशरीरादिरूपं द्वितीयं सोपाधिभूतं पुरं नगरं प्राप्तं प्रविष्टं सत्स्वाधिरूढां बुद्धिमक्षिपुटं चक्षुरादिगोलकस्थानं नयत् प्रापयत्सच्चाक्षुषादिबुद्धिवृत्तिद्वारा बाह्यार्थांश्चेतति । ननु चक्षुराद्येव साक्षाच्चिदध्यस्तत्वेन चित्त्वाज्जीवभूतं शरीरमधिष्ठाय व्यवहरतु किं बुद्ध्युपाधिकजीवकल्पनया नेत्याह—**नाक्षी**ति । अक्षि चक्षुरुपलक्षितमिन्द्रियजातं स्वयमेव चिच्चेतनं जीवभूतं न । कुतः । यतः सर्गतः चिदध्यारोपमात्रत एव किंचिदपि न जीवति । तथा सति घटादीनामपि जीवनप्रसङ्गादिति भावः ॥ ५२ ॥ बुद्धेरेव जीवोपाधिता नान्यस्येति नियमे तु सर्ववस्तुशक्तिव्यवस्थापकचित्संकल्प एव हेतुरित्याशयं स्फुटयन्नाह—**तथे**ति । खमाकाशं खं शून्यताशक्तिमत् । भूमिर्भूमित्वेन सर्वधारणशक्त्या स्थिता । जलं च अम्बुवत् सर्वाप्यायनशक्तिमत्स्थितमित्यर्थः । चेतति

[1] च्युताम् इति पाठः.

इति सर्वशरीरेण जंगमत्वेन जंगमम् ।
स्थावरं स्थावरत्वेन सर्वात्मा भावयन् स्थितः ॥ ५४
तस्मादजङ्गमं नाम तत्स्वबोधनरूपवत् ।
तेन बुद्धं ततस्तद्वत्तदेवाद्यापि संस्थितम् ॥ ५५
यद्वृक्षाभिधमाबुद्धं स्थावरत्वेन वै पुनः ।
जडमद्यापि संसिद्धं शिलातरुतृणादि च ॥ ५६
न तु जाड्यं पृथक्किंचिदस्ति नापि च चेतनम् ।
नात्र भेदोऽस्ति सर्गादौ सत्तासामान्यकेन च ॥ ५७
वृक्षाणामुपलानां या नामान्तःस्थाः स्वसंविदः ।
बुद्ध्यादिविहितान्येव तानि तेषामिति स्थितिः ॥ ५८
विदोन्तःस्थावरादेर्यास्तस्या बुद्ध्यास्तथा स्थितेः ।
अन्याभिधानास्थानार्थाः संकेतैरपरैः स्थिताः ॥ ५९
कृमिकीटपतङ्गानां या नामान्तःस्वसंविदः ।
तान्येव तेषां बुद्ध्यादीन्यभिधार्थानि कानिचित् ॥ ६०
यथोत्तराब्धिजनता दक्षिणाब्धिजनं स्थितम् ।
न किंचिदपि जानाति निजसंवेदनादृते ॥ ६१
स्वसंज्ञानुभवे लीनास्तथा स्थावरजङ्गमाः ।
परस्परं यदा सर्वे स्वसंकेतपरायणाः ॥ ६२
यथा शिलान्तःसंस्थानां बहिष्ठानां च वेदनम् ।
असज्जडं च भेकानां मिथोऽन्तस्तस्थुषां तथा ॥ ६३
सर्वं सर्वगतं चित्तं चिद्व्योम्ना यत्प्रचेतितम् ।
सर्गादौ चोपनं वायुः स इहाद्यापि संस्थितः ॥ ६४
चेतितं यत्तु सौषिर्यं तन्नभस्तत्र मारुतः ।
स्पन्दात्मेत्यादिसर्गेहाः पदार्थेष्विव चोपनम् ॥ ६५
चित्तं तु परमार्थेन स्थावरे जंगमे स्थितम् ।
चोपनान्यनिलैरेव भवन्ति न भवन्ति च ॥ ६६
एवं भ्रान्तिमये विश्वे पदार्थाः संविदंशवः ।
सर्गादिषु यथैवासंस्तथैवाद्यापि संस्थिताः ॥ ६७
यथा विश्वपदार्थानां स्वभावस्य विजृम्भितम् ।
असत्यमेव सत्याभं तदेतत्कथितं तव ॥ ६८
अयमस्तं गतः प्रायः पश्य राजा विदूरथः ।
मालाशवस्य पद्मस्य पत्युस्ते याति हृद्गतम् ॥ ६९

प्रबुद्धलीलोवाच ।

केन मार्गेण देवेशि यात्येष शवमण्डपम् ।
एनमेवाशु पश्यन्त्यावावां गच्छाव उत्तमे ॥ ७०

श्रीदेव्युवाच ।

मनुष्यवासनान्तस्थं मार्गमाश्रित्य गच्छति ।
एषोऽहमपरं लोकं दूरं यामीति चिन्मयः ॥ ७१
मार्गेणैवमनेनैव यावत्स्त्येयेन (?) संमतम् ।
परस्परेच्छाविच्छित्तिर्न हि सौहार्दबन्धनी ॥ ७२

संकल्पयति ॥५३॥ भावयन्संकल्पयन्संस्तत्कालमेव तथा निर्वृत्तः[१] स्थितः ॥ ५४ ॥ यथा भावनसिद्धं तदद्याप्यनुवर्तत एवेत्याह—**तस्मादिति** द्वाभ्याम् ॥५५॥ ५६ ॥ इत्थं तत्त्वंपदार्थयोरध्यारोपितभेदजातमपवदन्नाह—**न त्विति**त्यादिना । चेतनं चिद्विशिष्टं जडम् । अत्र पदार्थजाते सर्ग उत्पत्तिः । आदिपदात्स्थितिनाशौ तेषु भेदो नास्ति । असतो भेदाश्रयत्वायोगात् । अस्तु तर्ह्यनुगते सद्वस्तुनि स नेत्याह—**सत्तासामान्यके** इति ॥ ५७॥ ननु यदि चिदेकरसमेव सर्वं तर्हि कथं तत्रैव तद्विरुद्धजाड्यरूपनाममेदानुभवः सर्वेषामित्याशङ्क्य तत्तदान्तरप्रत्यक्संविदि अविद्याध्यस्तबुद्धिकृतकल्पनावशादेवेति रहस्यं प्रथमं स्थावरेषु दर्शयति—**वृक्षाणा**मिति । उपलानां शैलानाम् । तानि जाड्यभेदनामरूपाणि । तेषां वृक्षादीनाम् । बुद्ध्यादिभिरेव विहितानि कल्पितानि न वस्तुत इति परमार्थस्थितिरित्यर्थः ॥ ५८ ॥ उक्तार्थमेव स्पष्टं पुनराह—**विद** इति । विदः प्रत्यक्संविदः । उपाधिकृतभेदाद्बहुवचनम् । तस्याः स्थावरादिबुद्धेस्तथा स्थावरोऽहमित्यादिव्यवस्थितरूपेणैव स्थितत्वाच्चरेभ्योऽन्ये इत्यभिधानस्य तथा आस्थानस्य अभिमानस्य च अर्था विषयभूताः सन्तोऽपरैरन्यैर्वृक्षाः पर्वता इत्यादिशब्दसंकेतैः स्थिताः ॥५९॥ एवं जङ्गमेष्वप्युक्तं रहस्यं दर्शयति—**कृमिकीटे**ति । याः स्वसंविदस्तान्येव बुद्ध्यादीन्यभिधार्थानि शब्दार्थभूतानि तत्तदन्यानि जातानीत्यर्थः ॥ ६० ॥ चितिं वक्ष्यमाणजाड्यकल्पनस्योक्तार्थस्य चोपपादकं दृष्टान्तमाह—**यथे**ति । उत्तराब्धितीरस्था जनता जनसमूहः ॥ ६१ ॥ यथायं दृष्टान्तस्तथा सर्वे स्थावरजङ्गमाः स्वप्रत्यक्साक्षिके अनुभवे लीनाः पर्यवसन्ना नान्यबुद्धिकल्पितं जानन्तीत्यर्थः । अतएव समुदितव्यवहारे परस्परसंकेतमपेक्षन्त इत्याह—**परस्पर**मिति ॥ ६२ ॥ अतएव सच्चिद्रूपे ब्रह्मण्यसत्त्वजाड्यवाग्वाकाशादिकल्पनमप्युपपन्नमित्येतदपि दृष्टान्तेन दर्शयति—**यथे**ति ॥ ६३ ॥ यथायं दृष्टान्तस्तथा प्रलयकाले मायान्तर्लीनं सर्वात्मकं सर्वगतं च समष्टिचित्तं जगतः सूक्ष्मावस्थारूपं सर्वप्रलयभूतेन चिद्व्योम्ना सर्गादौ यद्यद्यथा प्रचेतितं तत्तत्तथा अद्यापि स्थितमित्यर्थः । तदेव प्रपञ्चयति—**चोपनं वायु**रित्यादिना । चोपनं स्पन्दनम् ॥ ६४ ॥ सुषिरमेव सौषिर्यं छिद्रम् । तत्र स्पन्दात्मा सर्वक्रियाशक्तिरूपो मारुतः स्थित इत्यर्थः । इति उक्तलक्षणेन वायुना सर्ववस्तूनां ईहाश्चलनानि । यथा शुष्कतृणपर्णादिपदार्थेष्वनिलेन चोपनं तद्वत् ॥ ६५ ॥ अतएव स्थावरजङ्गमयोर्वस्तुतश्चित्तसाम्येऽपि वायुकृतचोपनाचोपनाभ्यां विशेष इत्याह—**चित्तं त्विति ।** जङ्गमे भवन्ति स्थावरे न भवन्ति च ॥६६॥ अस्मिन्नपि नियमे प्राक्तनी नियतिरेव हेतुरित्याह—**एव**मिति । सर्गादौ आदिसर्गे । एवं सक्रियत्वेनाक्रियत्वेन वा संविदि अंशवः किरणा इव स्फुरिता अद्यापि तथैव संस्थिताः ॥६७॥ प्रस्तुतं वक्तुं पृष्टप्रसङ्गागतं तत्त्वावबोधनमुपसंहरति—**यथे**ति ॥ ६८ ॥ प्राय इति वितर्के । अस्तं गतो मृतः सन् पुष्पमालापिहितस्य शवभूतस्य पद्मस्य हृद्गतं पद्मकोशं विविक्षुर्याति गच्छति ॥ ६९ ॥ एनं पश्यन्त्यावेव आवां आशु गच्छावो गमिष्यावः ॥ ७० ॥ मनुष्यवासना पद्मशरीराहंवासना । अन्यथा तत्प्राप्त्ययोगादिति भावः ॥ ७१ ॥ सौहार्दं स्नेहस्तेन बन्धनी संबन्धहेतुः ॥ ७२ ॥

१ विवृत्तः इति पाठः.

श्रीवसिष्ठ उवाच ।
इति विहितकथागतक्रमायां
परमदृशि प्रसृते विबोधभानौ ।
नृपतिवरसुतामनस्युदारे
विगलितचित्तजडो विदूरथोऽभूत् ॥ ७३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे लीलो० संसारमरणावस्थावर्णनं नाम पञ्चपञ्चाशः सर्गः ॥५५॥

## षट्पञ्चाशः सर्गः ५६

श्रीवसिष्ठ उवाच ।
एतस्मिन्नन्तरे राजा परिवृत्ताक्षितारकः ।
बभूवैकतनुप्राणशेषः शुष्कसिताधरः ॥ १
जीर्णपर्णसवर्णाभः क्षीणपाण्डुमुखच्छविः ।
भृङ्गध्वनितसच्छायश्वासकूजाविकूणितः ॥ २
महामरणमूर्च्छान्धकूपे निपतिताशयः ।
अन्तर्निलीननिःशेषनेत्रादीन्द्रियवृत्तिमान् ॥ ३
चित्रन्यस्त इवाकारमात्रदृश्यो विचेतनः ।
निःस्पन्दसर्वावयवः समुत्कीर्ण इवोपले ॥ ४
बहुनात्र किमुक्तेन तनुदेशेन तं जहौ ।
प्राणः पिपतिषुं वृक्षं स्वं पक्षीवान्तरिक्षगः ॥ ५
ते तं ददृशतुर्बाले दिव्यदृष्टी नभोगतम् ।
जीवं प्राणमयी संविद्गन्धलेशमिवानिले ॥ ६
सा जीवसंविद्गगने वातेन मिलिता सती ।
खे दूरं गन्तुमारेभे वासनानुविधायिनी ॥ ७
तामेवानुससाराथ स्त्रीद्वयं जीवसंविदम् ।
भ्रमरीयुगलं वातलग्नां गन्धकलामिव ॥ ८
ततो मुहूर्तमात्रेण शान्ते मरणमूर्च्छने ।
अम्बरे बुबुधे संविद्गन्धलेखेन वायुना ॥ ९
अपश्यत्पुरुषान्याम्यान्नीयमानं च तैर्वपुः ।
बन्धुपिण्डप्रदानेन शरीरं जातमात्मनः ॥ १०
मार्गे कर्मफलोल्लासमतिदूरतरे स्थितम् ।
वैवस्वतपुरं प्राप जन्तुभिः परिवेष्टितम् ॥ ११
प्राप्तं वैवस्वतपुरमादिदेश ततो यमः ।
अस्य कर्माण्यशुभ्राणि नैव सन्ति कदाचन ॥ १२
नित्यमेवावदातानां कर्तायं शुभकर्मणाम् ।
भगवत्याः सरस्वत्या वरेणायं विवर्धितः ॥ १३
प्राक्तनोऽस्य शवीभूतो देहोऽस्ति कुसुमाम्बरे ।
प्रविशत्वेष तं गत्वा त्यज्यतामिति चेतसा ॥ १४
ततस्त्यक्तो नभोमार्गे यन्त्रोपल इव च्युतः ।
अथ जीवकला लीला ज्ञप्तिश्चेति त्रयं नभः ॥ १५
पुप्लुवे जीवलेखा तु रूपिण्यौ ते न पश्यति ।
तामेवानुसरन्त्यौ ते समुल्लङ्घ्य नभस्तलम् ॥ १६
लोकान्तराण्यतीत्याशु विनिर्गत्य जगद्गृहात् ।
द्वितीयं जगदासाद्य भूमण्डलमुपेत्य च ॥ १७
ते द्वे संकल्परूपिण्यौ संगते जीवलेखया ।
पद्मराजपुरं प्राप्य लीलान्तःपुरमण्डपम् ॥ १८

नृपतिवरसुताया लीलाया उदारे विशुद्धे मनसि परमदृशि परमार्थदृग्रूपे स्वतत्त्वे इति विहितया कथया गतक्रमायां निरस्तसर्वसंतापे सति विबोधलक्षणे भानौ सूर्ये प्रसृते आविर्भूते सति विदूरथो विगलितेन कारणे प्राज्ञात्मनि विलीनेन चित्तेन जडः प्रतिसंधानशून्यो मरणाय मूर्च्छितोऽभूदित्यर्थः ॥ ७३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे संसारमरणावस्थावर्णनं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

इह तन्नृपजीवस्य वासना यमपूर्गतिः ।
तयोरनुगमः पूर्वपुरप्राप्तिश्च वर्ण्यते ॥ १ ॥

सर्वेषु करणेषु मूर्च्छितेष्वेकतनुः सूक्ष्मः प्राण एव शेषो देहेऽवशिष्टो यस्य स तथाविधो बभूव ॥ १ ॥ भृङ्गस्य ध्वनितं ध्वनिस्तत्सच्छायया श्वासकूजया विकूणितो ध्वनितः ॥२॥ महति मरणमूर्च्छालक्षणे अन्धकूपे निपतित इव निमग्न आशयो मनो यस्य ॥ ३ ॥ तदुत्तरावस्थामाह—चित्रेति । उपले समुत्कीर्णः प्रतिमादिरिव ॥ ४ ॥ तनुदेशेन अल्पेनैव प्रदेशेनोत्क्रान्त्यर्थमाश्रितेन । तं राजदेहं प्राणो जहौ । स्वं स्वालयभूतं वृक्षम् ॥५॥ ते बाले नभोगतं तं जीवं ददृशतुः । प्राणमयी घ्राणजवृत्त्युपहिता संवित् अनिले स्थितं गन्धलेशं सूक्ष्मगन्धमिव ॥ ६ ॥ वातेन आतिवाहिकप्राणेन ॥ ७ ॥ ८ ॥ संवित् जीवसंवित् । वासनामयदेहेन स्वप्न इव बुबुधे ॥ ९ ॥ वपुर्वासनादेहम् । शरीरं स्थूलदेहं और्ध्वदेहिकेन बन्धुपिण्डप्रदानेन जातमिवापश्यत् ॥ १० ॥ अतिदूरतरे संवत्सरगम्ये दक्षिणमार्गे स्थितं प्राणिकर्मफलान्युल्लासयति प्रकटयतीति कर्मफलोल्लासं वैवस्वतपुरं यमनगरं प्राप ॥ ११ ॥ आदिदेश आज्ञप्तवान् कर्माणि विमृश्येत्यर्थाद्गम्यते । अशुभ्राणि श्यामानि । पापानीति यावत् ॥१२॥ अवदातानां लोभादिदोषाकलुषाणाम् ॥ १३ ॥ इति मदुक्तप्रकारानुसारिणा चेतसा चित्तेन भटैरेष त्यज्यताम् । अत्र लीलासरस्वत्यावन्तर्हिते यमपुरं प्रविष्टे बहिरेव वा तदागमनप्रतीक्षे स्थिते इत्यर्थाद्गम्यते ॥ १४ ॥ क्षेपणीयन्त्राच्च्युतो यन्त्रोपल इव नभोमार्गे त्यक्तः ॥ १५ ॥ राज्ञो जीवलेखारूपिण्यौ रूपवत्यावपि ते ज्ञप्तिलीले न पश्यति । ते तु तां पश्यत एवेति तुशब्दाल्लभ्यते ॥ १६ ॥ जगद्गृहं ब्रह्माण्डं तस्माद्विनिर्गत्य द्वितीयं जग-

क्षणाद्विविशतुः स्वैरं वातलेखा यथाम्बुजम् ।
सूर्यभासो यथाम्भोजं सुरभिः पवनं यथा ॥ १९

श्रीराम उवाच ।

ब्रह्मन्प्राप्तः कथमसौ शवस्य निकटं गृहम् ।
कथं तेन परिज्ञातो मार्गो मृतशरीरिणा ॥ २०

श्रीवसिष्ठ उवाच ।

तस्य स्ववासनान्तःस्थशवस्य किल राघव ।
तत्सर्वं हृद्गतं कस्मान्नासौ प्राप्नोति तद्गृहम् ॥ २१
भ्रान्तिमात्रमसंख्येयं जगज्जीवकणोदरे ।
वटधानातरुमिव स्थितं को वा न पश्यति ॥ २२
यथा जीवद्वपुर्बीजमङ्कुरं हृदि पश्यति ।
स्वभावभूतं चिदणुस्त्रैलोक्यनिचयं तथा ॥ २३
नरो यथैकदेशस्थो दूरदेशान्तरस्थितम् ।
संपश्यति निधानं स्वं मनसानारतं सदा ॥ २४
तथा स्ववासनान्तस्थमभीष्टं परिपश्यति ।
जीवो जातिशताढ्योऽपि भ्रमे परिगतोऽपि सन् २५

श्रीराम उवाच ।

भगवन्पिण्डदानादिवासनारहिताकृतिः ।
कीदृक्संपद्यते जीवः पिण्डो यस्मै न दीयते ॥ २६

श्रीवसिष्ठ उवाच ।

पिण्डोऽथ दीयते मावा पिण्डो दत्तो ममेति चित् ।
वासना हृदि संरूढा तत्पिण्डफलभाङ्नरः ॥ २७
यच्चित्तं तन्मयो जन्तुर्भवतीत्यनुभूतयः ।
सदेहेषु विदेहेषु न भवत्यन्यथा क्वचित् ॥ २८
सपिण्डोसीति संवित्त्या निष्पिण्डोपि सपिण्डवान्
निष्पिण्डोसीति संवित्त्या सपिण्डोपि नपिण्डवान् ॥
यथाभावनमेतेषां पदार्थानां हि सत्यता ।
भावना च पदार्थेभ्यः कारणेभ्य उदेति हि ॥ ३०
यथा वासनया जन्तोर्विषमप्यमृतायते ।
असत्यः सत्यतामेति पदार्थो भावनात्तथा ॥ ३१
कारणेन विनोदेति न कदाचन कस्यचित् ।
भावना काचिदपि नो इति निश्चयवान्भव ॥ ३२
कारणेन विना कार्यमा महाप्रलयं क्वचित् ।
न दृष्टं न श्रुतं किंचित्स्वयं त्वेकोदयादृते ॥ ३३
चिदेव वासना सैव धत्ते स्वप्न इवार्थताम् ।
कार्यकारणतां याति सैवागत्यैव तिष्ठति ॥ ३४

श्रीराम उवाच ।

धर्मो नास्ति ममेत्येव यः प्रेतो वासनान्वितः ।
तस्य चेत्सुहृदा भूरिधर्मः कृत्वा समर्पितः ॥ ३५

---

ब्रह्माण्डमासाद्य ॥ १७ ॥ १८ ॥ अम्बुजमम्भोजमिति प्रवेशकर्मणः शब्दमात्रभेदेऽपि प्रवेशकर्त्रोर्वातलेखासूर्यभासोर्भेदादुपमानभेदेन मालोपमेयम् ॥१९॥ विदूरथलीलाजीवस्य दुहित्रा मार्गप्रदर्शनं प्रागुक्तं राजजीवस्य तु नोक्तमिति तस्य मार्गपरिज्ञाने संदिहानो रामः पृच्छति—**ब्रह्मन्निति** ॥ २० ॥ पूर्वशरीरवासनायामनपगतायामेव बलवता प्रारब्धेन मध्ये जन्मान्तरविभावनाद्योगेन तत्क्षये पूर्ववासनोद्भवाद्यथागतमार्गास्फुरणोपपत्तिरित्याशयेनाह वसिष्ठः—**तस्येति** । स्ववासनाया अन्तःस्थः शवः पद्मशरीराहंभावो यस्य तथाविधस्य तस्य जीवस्य तन्मार्गादि सर्वं हृद्गतं हृदि स्फुरितम् ॥ २१ ॥ जीवकणस्य जीवोपाधेः सूक्ष्मस्यान्तःकरणस्योदरे आविर्भूतवासनात्मना स्थितम् । यथा जीववद्वटधानाभूजलाद्यङ्कुरोदयसामग्रीप्राप्तौ स्वतः अङ्कुरात्मना जायमानं वटतरुं पश्यति स्वान्तरेवानुभवति तद्वत् ॥२२॥ उक्तं दृष्टान्तं विवृण्वंस्तदेव स्फुटमाह—**यथेति** । **त्रैलोक्यनिचयमिति** । ज्ञानाज्ञानान्यतरव्यवधानेन सर्वस्य जगतः साक्षिभास्यत्वमितिसिद्धान्तरहस्यमिति भावः ॥ २३ ॥ स्वं स्वीयं निधानं निखातधनं सदा पश्यति मनसा अनारतं भावयन्निति शेषः । तथाच विधुरपरिभावितकामिनीसाक्षात्कारवद्भावनाप्रचयबलादपि तद्दर्शनसिद्धिरिति भावः ॥२४॥२५॥ यत्प्रागुक्तं बन्धुपिण्डप्रदानेन शरीरं जातमात्मनः अपश्यदिति तस्यासार्वत्रिकत्वं रामः शङ्कते—**भगवन्निति** । यस्मै पिण्डो न दीयते तस्य तद्वासनाहेत्वभावात्स वासनारहिताकृतिर्जीवः कीदृक्कथं सशरीरः संपद्यत इत्यर्थः ॥२६॥ तत्पिण्डफलं शरीरसिद्धिस्तद्भाक् । पिण्डदानादिविधिस्तु बन्धुकृत्यबोधको वस्तुतो बन्धुफलहेतुरपि मृतवासनाफलसंवादादुभयगामिफलः प्रसिद्ध इति भावः ॥ २७ ॥ 'चित्तमेव हि संसारस्तच यत्नेन शोधयेत् । यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातन'मित्यादिप्रत्यक्षश्रुतयो विद्वदनुभवाश्चेत्यर्थः । सदेहेषु च योगिषु प्रसिद्धाः । अथवा सदेहेषु जीवत्सु विदेहेषु मृतेषु च जीवेषु क्वचिदपि अयं नियमोऽन्यथा न भवतीत्यर्थः ॥ २८ ॥ ॥२९॥ एतावांस्तु शास्त्रकृतो विशेषः । बन्धुभिः पिण्डेषु दत्तेष्ववश्यं मृतस्य पिण्डदानवासना उद्भवत्येवेत्याशयेनाह—**भावना चेति** ॥३०॥ सर्पादिविषमपि गरुडोपासकस्य गरुडाहंभावनया अमृतायते । जीर्यतीति यावत् । कण्टकादिवेधे सर्पदंशभ्रान्तावसत्योऽपि स तथा सत्यतया भावनात् सत्यतां मरणाद्यर्थक्रियाकारितां गच्छति ॥ ३१ ॥ कारणसत्यत्वे हि कार्यसत्यता स्यात् । भावना तु न वस्तुसतीति सत्यकारणेन विना जातं कार्यं नास्त्येवेति शुद्धं ब्रह्मैव वस्तुतोऽस्तीति निश्चयवान्भवेत्यर्थः ॥३२॥ कारणासत्त्वेऽपि कार्योद्भवः किं न स्यात्तत्राह—**कारणेनेति** । सर्वथा कार्यसत्तायाः कारणसत्ताधीनत्वस्यैव प्रमाणैः सिद्धेरित्यर्थः । ब्रह्मसत्तापि तर्हि किं कारणाधीना नेत्याह—**स्वयं त्विति** । स्वयं स्वतो यदेकोदयं नित्यस्वप्रकाशं ब्रह्म तस्मादृते । अनित्यसत्तायामेव कारणसत्तापेक्षणादिति भावः ॥ ३३ ॥ एवं च शुद्धचिन्मात्रमेव भ्रान्त्या वासना वासनादिजगद्रूपेण भासते इति यः सिद्धान्तः स प्रतिष्ठित इत्याह—**चिदेवेति** ॥३४॥ सपिण्डोऽसीति संवित्त्येति यत्प्रागुक्तं प्रेतवासनानुसार्येव प्रेतस्य शरीरारम्भादिफलमिति तत्र करिष्य-

तत्तदात्र स किं धर्मो नष्टः स्यादुत वा न वा ।
सत्यार्था वाप्यसत्यार्था भावना किं बलाधिका ॥ ३६
श्रीवसिष्ठ उवाच ।
देशकालक्रियाद्रव्यसंपत्त्योदेति भावना ।
यत्रैवाभ्युदिता सा स्यात्स द्वयोरधिको जयी ॥ ३७
धर्मदातुः प्रवृत्ता चेद्वासना तत्तया क्रमात् ।
आपूर्यते प्रेतमतिर्न चेत्प्रेतधियाशुभा ॥ ३८
एवं परस्परजयाज्जयत्यत्रातिवीर्यवान् ।
तस्माच्छुभेन यत्नेन शुभाभ्यासमुदाहरेत् ॥ ३९
श्रीराम उवाच ।
देशकालादिना ब्रह्मन्वासना समुदेति चेत् ।
तन्महाकल्पसर्गादौ देशकालादयः कुतः ॥ ४०
कारणे समुदेतीदं तैस्तदा सहकारिभिः ।
सहकारिकारणानामभावे वासना कुतः ॥ ४१
श्रीवसिष्ठ उवाच ।
एवमेतन्महाबाहो सत्यात्मन्न कदाचन ।
महाप्रलयसर्गादौ देशकालौ न कौचन ॥ ४२
सहकारिकारणानामभावे सति दृश्यधीः ।
नेयमस्ति न चोत्पन्ना न च स्फुरति काचन ॥ ४३
दृश्यस्यासंभवादेव किंचिद्यद्दृश्यते त्विदम् ।
तद्ब्रह्मैव स्वचिद्रूपं स्थितमित्थमनामयम् ॥ ४४
एतच्चाग्रे युक्तिशतैः कथयिष्याम एव ते ।
एतदर्थं प्रयत्नोऽयं वर्तमानकथां शृणु ॥ ४५
एवं ददृशतुः प्राप्ते मन्दिरं सुन्दरोदरम् ।
कीर्णं पुष्पोपहारेण वसन्तमिव शीतलम् ॥ ४६
प्रशान्ताचारसंरम्भराजधान्या समन्वितम् ।
मन्दारकुन्दमाल्यादिशवं तत्र समं स्थितम् ॥ ४७
मन्दारकुन्दस्रग्दामवृताम्बरबृहच्छवम् ।
शवशय्याशिरःस्थाग्र्यपूर्णकुम्भादिमङ्गलम् ॥ ४८
अनिवृत्तगृहद्वारगवाक्षकठिनार्गलम् ।
प्रशाम्यद्दीपकालोकश्यामलामलभित्तिकम् ।
गृहैकदेशसंसुप्तमुखश्वाससमीकृतम् ॥ ४९
संपूर्णचन्द्रसकलोदयकान्तिकान्तं
सौन्दर्यनिर्जितपुरन्दरमन्दिरर्द्धि ।
वैरिञ्चपद्ममुकुलान्तरचारुशोभं
निःशब्दमन्दमिव निर्मलमिन्दुकान्तम् ५०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्र० लीलो० मरणशयनानन्तरप्रेतव्यवस्था नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

माणाक्षेपोपयोगितया रामः पृच्छति—**धर्म** इति ॥३५॥ नष्टः प्रेतवासनाविरोधान्निष्फलः स्याद्वा उत सुहृद्वासनाप्राबल्यान्न वा निष्फल इत्यर्थः । तत्र सुहृद्वासनाधर्मसत्त्वात्सत्यार्था । प्रेतवासनात्वसत्यार्था । तत्र वासनायां प्राबल्ये किं भोक्तृनिष्ठता प्रयोजिका उत सत्यार्थता । आद्ये कृतहानदोषः । द्वितीये त्वर्थसत्यता स्यादिति पूर्वोक्त्यव्याघात इत्युभयतस्पाशा रज्जुरित्याशयः ॥ ३६ ॥ शास्त्रोक्ते देशे काले यथोक्तानुष्ठानेन शास्त्रानुसारिणी सुहृद्वासना शास्त्रप्रामाण्यात्प्रबला । प्रेतवासना तु केवललौकिकत्वाद्दुर्बलेति शास्त्रमेव प्राबल्यप्रयोजकं नार्थसत्यत्वमिति गूढाभिसंधिर्वसिष्ठः समाधत्ते—**देशे**ति । यत्रैव फलरूपे विषये सा अभ्युदिता स विषयो जयी । स एव भवतीत्यर्थः ॥ ३७ ॥ धर्मदानशास्त्रबलात्प्रेतान्तःकरणे वा तत्काले तादृशधर्मवानहमिति वासनोत्पत्तिः कल्प्यत इत्याह—**धर्मदातु**रिति । अवश्यं च शास्त्रबलादेव प्रेतस्य फललाभ इति वाच्यम् । पाषण्डस्य तस्य वेदप्रद्वेषनास्तिकत्वाद्यशुभवासनादूषितधियः सुहृद्भिर्धर्मदानेऽपि तत्फलाप्राप्तेरित्याशयेनाह—**न चे**दिति । प्राबल्यस्यार्थसत्यत्वप्रयुक्तत्वे तस्यापि धर्मफलापत्तिरिति भावः॥३८॥ अतएव प्राज्ञया पुरुषप्रयत्नप्राबल्यं प्रसाध्य शुभाभ्यास एव सदा कार्य इत्युक्तमित्याशयेनाह—**एव**मिति ॥ ३९ ॥ यदि देशकालादिकारणसहकारिसंपत्त्या धर्मतद्वासनोदयोऽभ्युपगम्यते तर्हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति श्रुतेरादिसर्गे देशकालादिसहकार्यभावाद्वासनोत्पत्त्ययोगात्तन्मयजगदुत्पत्तिरेव न स्यात्तथा च 'तदैक्षत बहु स्यां प्रजायेय' इत्याद्युत्तरश्रुतिविरोध इत्याशयेन रामः शङ्कते—**देशे**ति ॥ ४० ॥ तदा वासना कुतः । कारणे सति हि इदं वासनादिकार्यं समुदेति ॥ ४१ ॥ इष्टमेवेदं त्वया मां प्रत्यापादितम् । 'न निरोधो न चोत्पत्तिः', 'तदेतद्ब्रह्मापूर्वमनपरमस्थूलमनण्वह्रस्वम्', 'अथात आदेशो नेति नेति' 'यत्तदद्रेश्यमग्राह्यम्', 'यत्र नान्यत्पश्यति नान्यच्छृणोति' इत्यादिश्रुतिशतस्य तत्रैव तात्पर्यदर्शनान्महता च प्रयत्नेनास्यैवार्थस्य बुबोधयिषितत्वाच्च 'सोऽकामयत' इत्यादिसृष्टिश्रुतीनामपि प्रतीयमानद्वैतानृतत्वोपपादनेनोपक्रान्तमुक्तिफलकनिष्प्रपञ्चात्मव्युत्पादन एव तात्पर्येण सृष्ट्यादौ तात्पर्याभावादित्याशयेनानुमोदमानो वसिष्ठ उवाच—**एवमेत**दित्यादिना । महाप्रलयरूपे सर्गस्यादौ पूर्वभूते सत्यात्मन् परमार्थसत्ये आत्मनि । 'सुपां सुलुक्' इति छान्दसे ङिलुकि 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः ॥ ४२ ॥ ४३ ॥ ४४ ॥४५ ॥ एवं प्राग्वर्णितरीत्या पद्मनगरं प्राप्ते ज्ञप्तिलीले पद्ममन्दिरं ददृशतुः ॥ ४६ ॥ प्रशान्तराजकार्याचरणसंरम्भया राजधान्या लक्षणया राजधानीस्थजनेन तत्र गृहे तैर्जनैः समं साकं स्थितं मन्दारकुन्दमाल्यादिपिहितं शवं च ददृशतुरित्यत्रोत्तरत्र चानुकृष्यते ॥ ४७ ॥ ४८ ॥ पुनस्तद्गृहमेव वर्णयति—**अनिवृत्त**त्यादिना । अनिवृत्तान्युद्घाटितानि बृहद्वारगवाक्षाणां कठिनार्गलानि दृढविष्कम्भा यत्र । प्रशाम्यन्मलिनीभवन्यो दीपकानामालोकस्तेन श्यामला मलिना वस्तुतस्त्वमला भित्तयो यस्य ॥ ४९ ॥ बहिः संपूर्णचन्द्रस्य

१ तस्य इति पदं क्वचिन्न पठ्यते ।

## सप्तपञ्चाशः सर्गः ५७

श्रीवसिष्ठ उवाच ।

ततो ददृशतुस्तत्र शवशय्यैकपार्श्वगाम् ।
लीलां विदूरथस्याग्रे मृतां ते प्रथमागताम् ॥ १
प्राग्वेषां प्राक्समाचारां प्राग्देहां प्राक्सवासनाम् ।
प्राक्तनाकारसदृशीं सर्वरूपाङ्गसुन्दरीम् ॥ २
प्राग्रूपावयवस्पन्दां प्रागम्बरपरीवृताम् ।
प्राग्भूषणभरच्छन्नां केवलं तत्र संस्थिताम् ॥ ३
गृहीतचामरां चारु वीजयन्तीं महीपतिम् ।
उद्यच्चन्द्रामिव दिवं भूषयन्तीं महीतलम् ॥ ४
मौनस्थां वामहस्तस्थवदनेन्दुतया नताम् ।
भूषणांशुलतापुष्पैः फुल्लामिव वनस्थलीम् ॥ ५
कुर्वाणां वीक्षितैर्दिक्षु मालत्युत्पलवर्षणम् ।
सृजन्तीमात्मलावण्यादिन्दुमिन्दुं नभोदितम् ॥ ६
नरपालात्मनो विष्णोर्लक्ष्मीमिव समागताम् ।
उदितां पुष्पसंभारादिव पुष्पाकरश्रियम् ॥ ७
भर्तुर्वदनके न्यस्तदृष्टिमिष्टविचेष्टिताम् ।
किंचित्प्रम्लानवदनां म्लानचन्द्रां निशामिव ॥ ८
ताभ्यां सा ललना दृष्टा तया ते तु न लक्षिते ।
यस्मात्ते सत्यसंकल्पे सा न तावत्तथोदिता ॥ ९

श्रीराम उवाच ।

तस्मिन्प्रदेशे सा पूर्वलीला संस्थाप्य देहकम् ।
ध्यानेन ज्ञप्तिसहिता गताभूदिति वर्णितम् ॥ १०
किमिदानीं स लीलाया देहस्तत्र न वर्णितः ।
किंसंपन्नः क वा यात इति मे कथय प्रभो ॥ ११

श्रीवसिष्ठ उवाच ।

कासील्लीलाशरीरं तत्कुतस्तस्यास्ति सत्यता ।
केवला भ्रान्तिरेवाभूज्जलबुद्धिर्मराविव ॥ १२
आत्मैवेदं जगत्सर्वं कुतो देहादिकल्पना ।
ब्रह्मैवानन्दरूपं सद्यत्पश्यसि तदेव चित् ॥ १३
यथैव बोधे लीलासौ परिणाममिता क्रमात् ।
परे तथैव तस्मात्तद्धिमवद्गलितं वपुः ॥ १४
( [3]आतिवाहिकदेहस्य कालेनाभ्युदितो भ्रमः ।
आधिभौतिकदेहोऽहमिति रज्जुभुजंगवत् ॥ १ ॥ )
आतिवाहिकदेहेन दृश्यं यदवलोकितम् ।
भूम्यादि नाम तस्यैव कृतं तच्चाधिभौतिकम् ॥ १५
वास्तवेन तु रूपेण भूम्याद्यात्माधिभौतिकः ।
न शब्देन न चार्थेन सत्यात्मा शशशृङ्गवत् ॥ १६
पुंसो हरिणकोऽस्मीति स्वप्ने यस्योदिता मतिः ।
स किमन्विष्यति मृगं स्वमृगत्वपरिक्षये ॥ १७
उदेत्यसत्यमेवाशु तथा सत्यं विलीयते ।
भ्रान्तिर्भ्रमवतो रज्ज्वामपि सर्पभ्रमे गते ॥ १८
समस्तस्याप्रबुद्धस्य मनोजातस्य कस्यचित् ।

कलासहितेनोदयेन प्रकाशितत्वात्कान्तम् । अन्तस्तु वैरिञ्चस्य विरिञ्चालयस्य भगवन्नाभिपद्ममुकुलस्य आन्तरं गर्भ इव चारुशोभा यस्य । निःशब्दतया मन्दं मूकमिव स्थितम् । इन्दुरिव कान्तं रम्यं गृहं ददृशतुरित्यर्थः ॥ ५० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मरणशयनानन्तरप्रेतव्यवस्था नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

लीलान्तरेक्षा लीलाया देहमिथ्यात्वमुच्यते ।
योगिनां च शरीरस्य आतिवाहिकतोदयः ॥ १ ॥

अग्रे पूर्वं मृतां विदूरथस्य लीलां ते ज्ञप्तिलीले ददृशतुः ॥१॥ प्राग्वेषत्वादौ हेतुः–**प्राक्संवासना**मिति ॥ २ ॥ केवलं तत्र पद्मगृहे संस्थिताम् । तत्र स्थितिमात्रमपूर्वमन्यत्सर्वं पूर्वतनमेवेत्यर्थः ॥ ३ ॥ ४ ॥ भूषणानामंशुभिः किरणैः । पत्रलताभिः पुष्पैश्च फुल्लां वनस्थलीमिव स्थिताम् ॥ ५ ॥ इन्दुमिन्दुमिति वीप्सा । सर्वानिन्दून् आत्मलावण्यात्सृजन्तीमिवेत्युत्प्रेक्षा । नभोदितमिति संधिरार्षः । नभसि दितं क्षयेण खण्डितं पुनः सृजन्तीमिति वा ॥ ६ ॥ ७ ॥ ८ तथा सत्यसंकल्पतया सा नोदिता नाविर्भूता ॥ ९ ॥ लीलाया आवश्यकं प्राक् त्यक्तस्वशरीरान्वेषणं विहाय विदूरथलीलादर्शनमेव प्रथमं कुतो वर्णितमिति संदेहाद्रामः पृच्छति—**तस्मिन्नि**ति ॥ १० ॥ ॥ ११ ॥

आतिवाहिकताबुद्ध्युदयेन तत्त्वाववबोधेन च बाधितत्वादेव लीलायाः स्वदेहदर्शनं नच वर्णितम् । येषां त्वज्ञानां दृष्ट्या न बाधितं तद्दृष्ट्योत्तरसर्गे तद्देहमरणदाहादि वक्ष्यते इति वक्ष्यमाणं निगूह्य तत्त्वाववबोधनाय तन्मिथ्यात्वमेव प्रपञ्चयन् वसिष्ठ उवाच—**कासीदि**त्यादिना ॥ १२ ॥ १३ ॥ यथा येन क्रमेणैव परिणामं परिपाकलक्षणं उपागता प्राप्ता तथा तेन क्रमेणैव । तस्माद्बोधात्परे ब्रह्मणि । गलितं बाधितम् ॥ १४ ॥ न केवलं स्वदेहस्याधिभौतिकत्वं गलितं किंतु भूम्यादिसर्ववस्तूनामपि । 'अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यम्' इति श्रुत्या तेषामपि स्थौल्यबाधेन आतिवाहिकत्वपरिशेषणादित्याशयेनाह—**आतिवाहिके**ति । आतिवाहिकताबुद्ध्या सूक्ष्मतमसमष्टिमनोमात्रत्वबुद्ध्या तत्त्वदृशा तया यद्दृश्यमवलोकितं तस्यैव प्राग्भ्रान्त्या भूम्यादिनामकृतं स्थितं तदेव आधिभौतिकम् ॥ १५ ॥ अतो न वस्तुत आधिभौतिकं नाम किंचिदस्तीत्याह—**वास्तवेने**ति ॥१६॥ तथाच बाधितस्यान्वेषणप्रसक्तिरेव नास्तीत्याह—**पुंस** इति ॥ १७ ॥ यथा भ्रमतः असत्यमेवोदेति लीयते च तथा भ्रमे गतेऽपि उदेति किमिति काका योज्यम् ॥ १८ ॥ तथाचाज्ञमनःसमष्टिकल्पित आधिभौतिकप्रपञ्च इति फलितमित्याह—

१ स्ववासनां इति पाठः.

२ परिणाममुपागता इति पाठष्टीकानुगुणः स्यात्. ३ क्वाचित्कमिदं [illegible] पद्यम्.

बीजं विना मृषैवेयं मिथ्यारूढिमुपागता ॥ १९
स्वप्नोपलम्भं सर्गाख्यं स सर्वोऽनुभवन्स्थितः ।
चिरमावृत्तदेहात्मा भूचक्रभ्रमणं यथा ॥ २०

श्रीराम उवाच ।

ब्रह्मँल्लोकैः पुरस्थस्य गच्छतो योगिनो निजम् ।
आतिवाहिकतां देहः कीदृशोऽयं विलोक्यते ॥ २१

श्रीवसिष्ठ उवाच ।

देहाद्देहान्तरप्राप्तिः पूर्वदेहं विना सदा ।
आतिवाहिकदेहेऽस्मिन्स्वप्नेष्विव विनश्वरी ॥ २२
यथातपे हिमकणः शरद्व्योम्नि सितोऽम्बुदः ।
दृश्यमानोऽप्यदृश्यत्वमित्येवं योगिदेहकः ॥ २३
द्रागित्येवाथवा कश्चिद्योगिदेहो न लक्ष्यते ।
योगिभिश्च पुरो वेगात्प्रोड्डीन इव खे खगः ॥ २४
स्ववासनाभ्रमेणैव क्वचित्केचित्कदाचन ।
मृतोऽयमिति पश्यन्ति केचिद्योगिनमग्रगाः ॥ २५
भ्रान्तिमात्रं तु देहात्मा तेषां तदुपशाम्यति ।
सत्यबोधेन रज्जूनां सर्पबुद्धिरिवात्मनि ॥ २६
को देहः कस्य वा सत्ता कस्य नाशः कथं कुतः ।
स्थितं तदेव यदभूदबोधः केवलं गतः ॥ २७

श्रीराम उवाच ।

आतिवाहिकतामेति आधिभौतिक एव किम् ।
उतान्य इति मे ब्रूहि येनोह्य इव भोः प्रभो ॥ २८

श्रीवसिष्ठ उवाच ।

बहुशो ह्युक्तमेतत्ते न गृह्णासि किमुत्तम ।
आतिवाहिक एवास्ति नास्त्येवेहाधिभौतिकः ॥ २९
तस्यैवाभ्यसतोऽप्येति साधिभौतिकतामतिः ।
यदा शाम्यति सैवास्य तदा पूर्वा प्रवर्तते ॥ ३०
तदा गुरुत्वं काठिन्यमिति यश्च मुधा ग्रहः ।
शाम्येत्स्वप्ननरस्येव बोद्धुर्बोधान्निरामयात् ॥ ३१
लघुतूलसमापत्तिस्ततः समुपजायते ।
स्वप्ने स्वप्नपरिज्ञानादिव देहस्य योगिनः ॥ ३२
स्वप्ने स्वप्नपरिज्ञानाद्यथा देहो लघुर्भवेत् ।
तथा बोधादयं देहः स्थूलवद्द्युतिमान्भवेत् ॥ ३३
अनेकदिनसंकल्पदेहे परिणतात्मनाम् ।
अस्मिन्देहे शवे दग्धे तत्रैवास्थितिमीयुषाम् ॥ ३४

---

**समस्तस्येति**। जातशब्दः समूहवचनः। इयमेतद्ब्रह्माण्डगतस्थूलभ्रान्तिः प्रतिब्रह्माण्डभिन्नानन्ताज्ञमनोजातानां मध्ये कस्यचिन्मनोजातस्य मिथ्यारूढिं वृथाप्रसिद्धिमुपागता मृषैवेत्यर्थः ॥१९॥ स सर्वोऽज्ञश्चिरं आगमापायेन आवृत्तदेह एवात्मा यस्य स तथाविधः सन् बालो यथा भूचक्रभ्रमणमनुभवति तद्वत् ॥२०॥ ननु योगिदेहस्याधिभौतिकत्वं यदि नास्ति तर्हि तस्य पुरस्थस्य जीवतो निजं स्वात्मरूपं गच्छतो मृतस्य वा आतिवाहिकतां प्राप्तो देहो लोकैर्जनैर्विलोक्यते अयं कीदृशः । नहि आतिवाहिको लोकैर्द्रष्टुं शक्यो मुक्तिकाले परिशिष्यते वेति रामप्रश्नार्थः ॥ २१ ॥ योगिनां द्विविधं मरणम् । एकं प्रारब्धभोगायैच्छिकं नानादेहकल्पनम् । अपरं सर्वप्रारब्धक्षये विदेहकैवल्यम् । तत्राद्ये तावन्न पूर्वशेषोऽस्तीत्याह—**देहादिति** । यथा स्वप्नेषु आतिवाहिकदेहे एकं मृगादिभावं त्यक्त्वा अपरमनुष्यादिभावकल्पना पूर्वदेहपरिशेषं विनैव विनश्वरी अनित्या तद्वदित्यर्थः ॥ २२ ॥ द्वितीयेऽपि स नास्तीति सदृष्टान्तमाह—**यथेति** । तथाच शरन्मेघादिवन्मन्दं क्षीयमाणे तस्मिन्कंचित्कालं परिशेषभ्रम इत्यर्थः ॥ २३ ॥ मन्दं क्षीयते अवश्यं परैर्दृश्यते इत्यपि न नियमः केषांचित्सद्यो विनाशसंकल्पेन तथैव नाशसंभवादित्याह—**द्रागिति** । अन्यैर्योगिभिश्च न लक्ष्यते किं पुनः पृथग्जनैरित्यर्थः । तथाच जीवद्दशायामपि जनैस्तद्देहदर्शनमेते मामित्थं पश्यन्त्विति तदीयसत्यसंकल्पवशादेव न देहस्याधिभौतिकत्ववशादिति भावः ॥ २४ ॥ अथवा योगिनां स्वदृष्ट्या स्वदेहस्यातिवाहिकत्वानुभवेऽपि तदुपभोजकादृष्टसहकृताज्ञजनवासनया तस्य भौतिकत्वमरणादिकल्पनसंभवान्न कश्चिद्विरोध इत्याशयेनाह—**स्ववासनेति** । केचिदग्रगाः क्वचिन्मृतोऽयमिति पश्यन्ति क्वचित्तु केचिद्योगिनं जीवन्तं पश्यन्तीत्यर्थः । अतएव हि प्राग्विदेहमुक्तस्यापि शुकस्य परीक्षित्सभायां पुनर्दर्शनं भागवतोपदेशादिकं च न विरुध्यत इति बोध्यम् ॥ २५ ॥ किंच योगिनां ज्ञानोदयकाले एव देहादेर्बाधान्न जीवनदशायामपि तद्दृष्ट्या देहोऽस्तीत्याह—**भ्रान्तिमात्रमिति** ॥२६॥ यदेव परमार्थतः स्थितं तदेव ज्ञानेनाभूत् ॥२७॥ ननु यदि योगिनां देहो बाध्यते तर्हि बाधितस्य परिणामायोगात्प्रारब्धभोगायातिवाहिकशरीरमन्यदेवोत्पद्यत इति स्यात्, तथाच तस्य जन्मान्तरत्वाजीवन्मुक्तत्वानुपपत्तिः 'न स भूयोऽभिजायते' इत्यादिशास्त्रविरोधश्चेति मन्यमानो रामः पृच्छति—**आतिवाहिकतामिति** । किं योगिन आधिभौतिकदेह एवातिवाहिकतामेत्युतान्य एवातिवाहिकदेह उत्पद्यते । आद्ये बाधितस्य परिणामान्तरं सर्वप्रमाणविरुद्धम् । द्वितीये तु ज्ञानस्य मुक्तिफलत्वहानिरित्युभयथाप्यनुपपत्तेः संशयप्रवाहे अहं उह्ये प्रवाह्यमान इव न स्थैर्यं प्राप्नोमीत्यर्थः ॥ २८ ॥ नासौ परिणामः किंतु स्थूलबाधे प्राक्सिद्धतदधिष्ठानसूक्ष्मपरिशेष एव त्रिवृत्करणश्रुत्या सूक्ष्मदेहोपहिते ब्रह्मणि स्थूलाध्यासबोधनात्त्रीणि रूपाणीत्येव सत्यमिति स्थूलबाधेन सूक्ष्मपरिशेषोक्तेश्च नोक्तदोषावकाश इति प्रागुक्तस्मारणेन समाधत्ते—**बहुश इत्यादिना** ॥ २९ ॥ पूर्वा प्राक्तनी। सैव आतिवाहिकता ॥ ३० ॥ ननु परिणामान्तरं विना देहस्य गुरुत्वकाठिन्यादेः कथं निवृत्तिस्तत्राह—**तदेति** । स्वप्ननगरगुरुत्वकाठिन्यादय इव तेऽपि बाध्यन्त एवेत्यर्थः ॥ ३१ ॥ ३२ ॥ द्युतिमान् आकाशगमनादियोग्यः ॥ ३३ ॥ यत्र दृढतरस्थूल-

१ वाभ्यासतो इति पाठः.

लघुदेहानुभवनमवश्यं भावि वै तथा ।
प्रबोधातिशयादेति जीवतामपि योगिनाम् ॥ ३५
उदितायां स्मृतौ तत्र संकल्पात्माहमित्यलम् ।
यादृशः स भवेद्देहस्तादृशोऽयं प्रबोधतः ॥ ३६
भ्रान्तिरेवमियं भाति रज्वामिव भुजङ्गता ।
किं नष्टमस्यां नष्टायां जातायां किं प्रजायते ॥ ३७

श्रीराम उवाच ।

अनन्तरं ये वास्तव्या लीलां पश्यन्ति ते यदि ।
तत्सत्यसंकल्पतया बुध्यन्ते किमतः प्रभो ॥ ३८

श्रीवसिष्ठ उवाच ।

एवं ज्ञास्यन्ति ते राज्ञी स्थितेयमिह दुःखिता ।
वयस्या काचिदन्येयं कुतोऽप्यस्या उपागता ॥ ३९
संदेहः क इवात्रैषां पशवो ह्यविवेकिनः ।
यथादृष्टं विचेष्टन्ते कुत एषां विचारणा ॥ ४०
यथा लोष्टो लुठद्वृक्षं वञ्चयित्वाशु गच्छति ।
अज्ञानत्वेऽजपशवस्तथा ह्यस्ति पुरादिकम् ॥ ४१
यथा स्वप्नवपुर्बोधान्न जाने क्वेव गच्छति ।
असत्यमेव तद्यस्मात्तथैवेहाधिभौतिकम् ॥ ४२

श्रीराम उवाच ।

भगवन्स्वप्नशिखरी प्रबोधे क्वेव गच्छति ।
इति मे संशयं छिन्धि शरदभ्रमिवानिलः ॥ ४३

श्रीवसिष्ठ उवाच ।

स्वप्नभ्रमेऽथ संकल्पे पदार्थाः पर्वतादयः ।
संविदोऽन्तर्मिलन्त्येते स्पन्दनान्यनिले यथा ॥ ४४
अस्पन्दस्य यथा वायोः स्पस्पन्दोऽन्तर्विशत्यलम् ।
अनन्यात्मा तथैवायं स्वप्नार्थः संविदो मलम् ॥ ४५
स्वप्नाद्यर्थावभासेन संविदेव स्फुरत्यलम् ।
अस्फुरन्ती तु तेनैव यात्येकत्वं तदात्मिका ॥ ४६
संवित्स्वप्नार्थयोर्द्वित्वं न कदाचन लभ्यते ।
यथा द्रवत्वपयसोर्यथा वा स्पन्दवातयोः ॥ ४७
यस्तत्र स्यादिवाबोधस्तदज्ञानमनुत्तमम् ।
सैषा संसृतिरित्युक्ता मिथ्याज्ञानात्मिकोदिता ॥ ४८
सहकारिकारणानामभावे किल कीदृशी ।
संवित्स्वप्नपदार्थानां द्विता स्वप्ने निरर्थिका ॥ ४९

वासनानामज्ञानां स्थूलदेहस्य शवीभावदाहादिना कारणे तिरोभावलक्षणे नाशेऽपि प्राक्तनसूक्ष्मदेहप्राप्तिस्तत्र किं वाच्यं ज्ञानिनां निर्वासनानां मूलोच्छेदनलक्षणे तद्बाधे जाते स्वाभाविकसौक्ष्म्यप्राप्तिर्भवतीति कैमुतिकन्यायेनाह—**अनेके**ति द्वाभ्याम् । आस्थितिमास्थां दृढाभिमानलक्षणाम् ॥ ३४ ॥ ३५ ॥ तत्र स्वप्ने अहं संकल्पात्मैव न स्थूलात्मा इति स्मृतौ उदितायां सत्याम् । ईदृशी च स्मृतिः स्वप्ने ध्यायिनामनुभवसिद्धा न पामराणाम् । यादृशः स्वेच्छानभोविहारक्षमः ॥३६॥ ननु सर्वजनप्रियस्य देहस्य बाधकं ज्ञानमनर्थ एवेत्याह—**भ्रान्ति**रिति । **किं नष्ट**मिति । नहि शुक्तिरजतबाधे कश्चिच्छोचतीति भावः ॥ ३७ ॥ इत्थं प्रासङ्गिके निर्णीते प्रस्तुतकथाविषय एव रामः पृच्छति—**अनन्तर**मिति । पूर्वलीलाया अभिनवलीलायाश्च पद्मगृहे समागमानन्तरं ये पद्मगृहवास्तव्या जनास्तां लीलामातिवाहिकदेहत्वाद्द्रष्टुमशक्यामपि इमे जना मां पश्यन्त्विवति तस्याः सत्यसंकल्पतया हेतुना यदि पश्यन्ति तर्हि किं बुध्यन्ते, किं सैवेयमत्रैव स्थितेति, किं वा अपूर्वा देवता काचिदियमागतेति ज्येष्ठशर्मादिवत्सविस्मया इत्यर्थः ॥ ३८ ॥ तत्राद्यमेव कल्पमाश्रित्य वसिष्ठ उवाच—**एव**मिति । द्वितीयलीलां तर्हि किं बुध्यन्ते तत्राह—**वयस्ये**ति ॥ ३९ ॥ ननु द्वितीयलीलाया अपूर्वत्वात्केयं कुत आयाता किं सुचरित्रोत पुंश्चली सत्या असत्या वेत्यादिसंदेहस्तेषां कुतो नाभूत्तत्राह—**संदेह** इति । दृष्टमनतिक्रम्य यथादृष्टं पुरा दृष्टपदार्थानुसारेणैव विचेष्टन्ते । व्यवहरन्तीत्यर्थः ॥४०॥ तेषां विचारानुदये को हेतुरिति चेत्स्थूलाभिनिविष्टतासारदार्ढ्यसौक्ष्म्यादिशून्यता च हेतुरिति दृष्टान्तेन सूचयन्नाह—**यथे**ति । यथा बालेन[1] वृक्षोपघाताय प्रक्षिप्तो लोष्टः शुष्कपांसुपिण्डो लुठन्तं स्वमुपघ्नन्तं वृक्षं वञ्चयित्वा प्राप्य न शरवदन्तर्निविशते न वा कर्दमपिण्डवत्संश्लिष्यते न वा अश्मवदीषत्क्षतं कृत्वा स्वयं वा पुनरुपघातक्षमोऽवतिष्ठते किंतु आशु शीघ्रमेव गच्छति विशीर्यते तथा ते जना अपि न विद्यते ज्ञानं येषां ते अज्ञानास्तद्भावे वस्तुतः अजा अपि पशव इवेत्यजपशवः पेलवत्वादन्तर्निवेशविचाराक्षमा इत्यर्थः । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुतेः । तेषां विचारानुदये न केवलमज्ञानमेव हेतुः किंतु तथा पुराणि शरीराणि आदिपदात्कामकर्मवासनादिकं चैषां तदा तदनुरूपमेव पशुवदेव वास्तीति युक्त एव विचारानुदय इत्यर्थः । 'अज्ञपशवः' इति पाठे स्वयमज्ञा अज्ञानां देवानां पशवश्चेति व्याख्येयम् । ॥ ४१ ॥ ये तु विचारयन्ति तेषां क्रमेण तत्त्वबोधोदयेन बाधितत्वात्तेष्वाधिभौतिकताप्रत्यय एव नास्ति दूरे संदेहादिप्रसक्तिरित्याशयेनोपसंहरति—**यथे**ति । बोधाज्जागरणात् ॥ ४२ ॥ दृष्टान्तप्रसङ्गाद्रामः स्वाप्नविषयस्य मूलाज्ञानबाधमन्तरेणात्यन्तिकबाधासंभवात्कचित्तिरोहितस्यावस्थानमस्ति तत्केति पृच्छति—**भगवन्नि**ति ॥ ४३ ॥ स्वाप्नस्य मानोरथिकस्य च प्रपञ्चस्य जाग्रद्वासनासंभृताविद्योपहितजीवसंवित्कार्यत्वात्तत्रैव तिरोधानमिति वसिष्ठः समाधत्ते—**स्वप्ने**ति ॥४४॥ अनन्यात्मा तात्त्विकस्वरूपान्तरशून्यः । संविदो मलं मलवदावरकमज्ञानमेव स्वोपादानं विशतीत्यर्थः ॥ ४५ ॥ इत्थं च संविदेवाज्ञाता कर्मवशात्कदाचित्स्वाप्नार्थात्मना स्फुरतीति फलितमित्याह—**स्वप्ने**ति ॥ ४६ ॥ विवेके तु न स्वाप्नार्थो नाम संविदन्योऽस्तीत्याह—**संविद्**िति ॥ ४७ ॥ तत्रान्यदिव भासमानं तु केवलमविद्यैव सैव संसृतिरित्याह—**य** इति ॥ ४८ ॥ लोकप्रसिद्धदण्डचक्रादि-

[1] बलेन इत्यपि क्वचित्.

यथा स्वप्नस्तथा जाग्रदिदं नास्त्यत्र संशयः ।
स्वप्ने पुरमसद्भाति सर्गादौ भात्यसज्जगत् ॥ ५०
न चार्थो भवितुं शक्यः सत्यत्वे स्वप्नतोदितः ।
संविदो नित्यसत्यत्वं स्वप्नार्थानामसत्यता ॥ ५१
झटित्येव यथाकाशं भवति स्वप्नपर्वतः ।
क्रमेण वा तथा बोधे खं भवत्याधिभौतिकम् ॥ ५२
उड्डीनोऽयं मृतो वेति पश्यन्ति निकटस्थिताः ।
ज्ञमातिवाहिकीभूतं स्वस्वभावहता यतः ॥ ५३
मिथ्यादृष्टय एवेमाः सृष्टयो मोहदृष्टयः ।
मायामात्रदृशो भ्रान्तिः शून्याः स्वप्नानुभूतयः ॥ ५४
स्वप्नानुभूतय इमा मरणान्तबोधे
भ्रान्त्येतरभ्रमदृशः स्फुटसर्गभासः ।
भ्रान्त्यातिवाहिकशरीरगताः समस्ता
मिथ्योदिता मृगनदीसरणक्रमेण ॥ ५५

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो० स्वप्नार्थस्य विचारो नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ५८

श्रीवसिष्ठ उवाच ।
एतस्मिन्नन्तरे ज्ञप्तिर्जीवं वैदूरथं पुनः ।
संकल्पेन रुरोधाशु मनसः स्पन्दनं यथा ॥ १
लीलोवाच ।
वद देवि कियान्कालो गतोऽस्यामिह मन्दिरे ।
समाधौ मयि लीनायां महीपाले शवे स्थिते ॥ २
ज्ञप्तिरुवाच ।
इह मासस्त्वतिक्रान्त इह दास्याविमे तव ।
रक्षार्थं वासगृहके स्वपतोऽवहिते स्थिते ॥ ३
शृणु देहस्य किंवृत्तं तवेह वरवर्णिनि ।
शरीरं तव पक्षेण तत्क्लिन्नं बाष्पतां गतम् ॥ ४
निर्जीवं पतितं भूमौ संशुष्कमिव पल्लवम् ।
काष्ठकुड्योपमो जातः शवस्तु हिमशीतलः ॥ ५
ततो मन्त्रिभिरागत्य मृतैवेयमिति स्वयम् ।
क्लेदालोकाद्विनिर्णीय भूयो निष्कासितं गृहात् ॥ ६
बहुनात्र किमुक्तेन नीत्वा चन्दनदारुभिः ।
चितौ संक्षिप्य सघृतं सहसा भस्मसात्कृतम् ॥ ७

---

सहकारिकारणाजन्यत्वादपि स्वाप्नार्थानामसत्त्वमित्याह—**सहकारीति** ॥ ४९ ॥ ननु तर्हि सहकारिकारणवतो जाग्रत्प्रपञ्चस्य सत्यत्वं प्राप्तं नेत्याह—**यथेति** । **सर्गादाविति** । यद्यपीदानीं सहकार्यादयः सन्ति, तथाप्यादिसर्गे अज्ञानोपहितहैरण्यगर्भसंविदतिरिक्तं नास्तीति स्वप्नसाम्यमेवेत्यर्थः ॥ ५० ॥ प्रपञ्चस्य सत्यत्वे संविद्वच्चित्त्वापत्त्या चिद्विषयत्वव्याघातोऽपि स्यादित्याह—**न चेति** । स्वप्नतायाः स्वरूपावबोधादुदितः प्रपञ्चः अर्थ्यते भास्यते संविदेत्यर्थस्तथा भवितुं संभावयितुं शक्यः । किंच संवित्सत्तां न व्यभिचरति, अर्थास्तु व्यभिचरन्तीति न सत्या इत्याह—**संविद** इति ॥ ५१ ॥ तत्त्वज्ञानबाध्यत्वादपि न सत्येत्याह—**झटित्येवेति** । आकाशं शून्यं भवति नाणुमात्रमपि परिशिष्यत इत्यर्थः । बोधे जागरणे तत्त्वज्ञाने च । बोधाभ्यासक्रमेण ईश्वराद्यनुग्रहात्सहसैव वा । खं शून्यमसद्भवतीत्यर्थः ॥ ५२ ॥ कथं तर्हि लोकैः शुकस्योड्डीय सूर्यमण्डलगमनदर्शनं दधीचिप्रभृतीनां मृतदेहदर्शनं च तत्राह—**उड्डीन इति** । ज्ञं तत्त्वज्ञम् । आतिवाहिकीभूतं बाधिताधिभौतिकशरीरम् । स्वेषां स्वभावः अनागन्तुकमज्ञानं तेन हता हिंसितप्राया जनाः । तथाच स्वस्वाज्ञानकल्पितदेह एव तैर्दृश्यते न ज्ञानिदेहः स इत्यर्थः ॥ ५३ ॥ उक्तमर्थमनुमानेनापि द्रढयन्नुपसंहरति द्वाभ्याम् । इमा द्वैतदृष्टयो मिथ्यादृष्टय एव । यतो मोहदृष्टयः । तथाहि ऐन्द्रजालिकमायामात्रदृशो भ्रान्तिः प्रसिद्धा । अर्थशून्याः स्वप्नानुभूतयश्च प्रसिद्धा इत्यर्थः ॥ ५४ ॥ इतरभ्रमदृशः पूर्वपूर्वभेददर्शिनः पुरुषस्य दृढतरभेदसंस्कारोदयान्मरणान्तबोधे प्राणोत्क्रमणपूर्वक्षणोत्पन्ने भाविभोगानुकूलार्थप्रतिभासे समस्ताः स्वप्नानुभूतिसदृशा इमाः स्फुटसर्गभास आतिवाहिकशरीरगता मनोमात्रनिष्ठा अपि भ्रान्त्या मृगनद्याः सरणं प्रवाहस्तत्क्रमेण तद्रीत्यैव मिथ्योदिता बाह्या इव भान्ति, न तु वस्तुतो मनसो बहिः सन्तीत्यर्थः ॥ ५५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे स्वप्नार्थस्य विचारो नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

इह कालः समाधिस्थलीलादेहविनाशनम् ।
लीलासंभाषणं राज्ञो जीवनं चेति वर्ण्यते ॥ १ ॥

एवं रामप्रश्नान्समाधाय प्रस्तुतकथाशेषं वर्णयिष्यन्वसिष्ठः सर्गान्तवक्तव्यार्थे भूमिकां रचयति—**एतस्मिन्निति** । अमूर्तस्यापि संकल्पमात्रेण निरोधसंभावनाय दृष्टान्तमाह—**मनस** इति ॥१॥ अस्यां पाद्मसृष्टौ ॥२॥ इहास्यां सृष्टौ इह वासगृहके तव त्वद्देहस्य रक्षार्थं दास्यौ स्थिते इमे इदानीं स्वपतः । इडभावश्छान्दसः ॥३॥ पूर्वं लीलायाः स्वाज्ञानकल्पितस्य स्वानुभवसिद्धस्य देहस्य तत्त्वज्ञानेन बाधितस्यापि प्रारब्धशेषभोगाय प्रतिभासमानस्यातिवाहिकभावो वर्णितः । संप्रति परकीयाज्ञानकल्पितस्य परानुभवसिद्धस्य वृत्तान्तं श्रावयति—**शृण्विति** । किंवृत्तं वृत्तान्तः । पक्षेण पञ्चदशभिर्दिनैः क्लिन्नं स्वेदार्द्रं सत् प्राणनिरोधप्रदीप्तजठराग्निना तप्यमानं बाष्पतां सार्द्रधूमतां गतं प्राप्तम् ॥ ४ ॥ ततः क्रमेण शुष्कं निर्जीवं सत् शवो जातः ॥ ५ ॥ भूयः क्लेदालोकाद्विशरणोन्मुखतादर्शनान्मृतेति निश्चित्य ॥ ६ ॥ ७ ॥

ततो राज्ञी मृतेत्युच्चैः कृत्वा रोदनमाकुलम् ।
परिवारस्तवाशेषं कृतवानौर्ध्वदेहिकम् ॥ ८
इदानीं त्वामिहालोक्य सशरीरामुपागताम् ।
परलोकादागतेति महच्चित्रं भविष्यति ॥ ९
त्वं तु तेन शरीरेण सत्यसंकल्पतः सुते ।
दृश्यसे स्ववदातेन चित्रं तत्र तवोपरि ॥ १०
यद्वासना त्वमभवो देहं प्रति तदेव ते ।
रूपमभ्युदितं बाले तेन प्राक्सदृशं तव ॥ ११
स्ववासनानुसारेण सर्वैः सर्वं हि पश्यति ।
दृष्टान्तोऽत्राविसंवादी बालवेतालदर्शनम् ॥ १२
आतिवाहिकदेहासि संपन्ना सिद्धसुन्दरि ।
विस्मृतस्त्वेव देहोऽसौ प्राक्तनोऽनपवासनः ॥ १३
रूढातिवाहिकदृशः प्रशाम्यत्याधिभौतिकः ।
बुधस्य दृश्यमानोऽपि शरन्मेघ इवाम्बरे ॥ १४
रूढातिवाहिकीभावः सर्वो भवति देहकः ।
निर्जलाम्भोदसदृशो निर्गन्धकुसुमोपमः ॥ १५
सद्वासनस्य रूढायामातिवाहिकसंविदि ।
देहो विस्मृतिमायाति गर्भसंस्थेव यौवने ॥ १६
एकत्रिंशेऽद्य दिवसे प्राप्ता वयमिहाम्बरे ।
प्रभाते मोहिते दास्यौ मयैते निद्रयाधुना ॥ १७
तदेहि यावल्लीलायै लीले संकल्पलीलया ।
आत्मानं दर्शयावोऽस्यै व्यवहारः प्रवर्तताम् ॥ १८

श्रीवसिष्ठ उवाच ।

आवां तावदिमे लीला पश्यत्वित्येव चिन्तिते ।
ज्ञप्त्या देव्या ततस्तत्र दृश्ये दीप्ते बभूवतुः ॥ १९
सा विदूरथलीलाथ समाकुलविलोचना ।
गृहमालोकयामास तत्तेजःपुञ्जभास्वरम् ॥ २०
चन्द्रबिम्बादिवोत्कीर्णं धौतं हैमद्रवैरिव ।
ज्वालाया द्रवशीतायास्तत्प्रभाद्रवभित्तिमत् ॥ २१
गृहमालोक्य पुरतो लीलाज्ञप्ती विलोक्य ते ।
उत्थाय संभ्रमवती तयोः पादेषु सापतत् ॥ २२
मज्जयायागते देव्यौ जयतां जीवनप्रदे ।
इह पूर्वमहं प्राप्ता भवत्योर्मार्गशोधिनी ॥ २३
इत्युक्तवत्यां तस्यां ता मानिन्यो मत्तयौवनाः ।
उपाविशन्विष्टरेषु लतामेरुशिरःस्विव ॥ २४

ज्ञप्तिरुवाच ।

सुते वद कथं प्राप्ता त्वमिमं देशमादितः ।
किं वृत्तं ते त्वया दृष्टं किमिवाध्वनि कुत्र वा ॥ २५

विदूरथलीलोवाच ।

देवि तस्मिन्प्रदेशे सा जातमूर्च्छा तदाभवम् ।
द्वितीयेन्दोः कलेवाहं कल्पान्तज्वालया हता ॥ २६
न चेतितं मया किंचित्समं विषममेव च ।
ततस्तरलपक्ष्मान्ते विनिमील्य विलोचने ॥ २७
ततो मरणमूर्च्छान्ते पश्यामि परमेश्वरि ।
यावदभ्युदितास्म्याशु प्लुता च गगनोदरे ॥ २८
भूताकाशेऽनिलरथं समारूढास्म्यहं ततः ।
आनीता गन्धलेखेव तेनाहमिममालयम् ॥ २९
देवि पश्यामि सदनं नायकेनाभ्यलंकृतम् ।
दीप्तदीपं विविक्तं च महार्हशयनान्वितम् ॥ ३०
पतिमालोकयामीमं यावदेष विदूरथः ।

राजशरीरस्य विकारानुदयस्तु ज्ञप्तिसंकल्पात्तदीयादृष्टवशाच्च बोध्यः ॥८॥ चित्रमाश्चर्यं भविष्यति जनानामिति शेषः ॥ ९ ॥ त्वदीयदिव्यशरीरदर्शनादपि परमाश्चर्यं भविष्यतीत्याह—**त्वं त्विति** । तेन आतिवाहिकेन स्ववदातेन स्वच्छतरेण मनुष्यैर्द्रष्टुमशक्येनापि दृश्यसे इति तदुपरि तव तत्र दर्शनविषये चित्तं भविष्यतीत्यनुषज्यते ॥ १० ॥ ननु दिव्यशरीरस्य पूर्वदेहाकारत्वाभावे तेषां प्रत्यभिज्ञायोगात्तदाकारमावश्यकं, तत्र को हेतुस्तमाह—**यदिति** । यद्वासना यादृशाकारवासना ॥११॥ ॥ १२ ॥ ननु तद्देहवासनत्वे मया स एव देहो राज्ञेव कुतो न प्राप्तस्तत्राह—**आतिवाहिकेति** । सिद्धा तत्त्वज्ञानपरिनिष्ठिता सुन्दरी । यदि सर्वथा विस्मृतस्तर्ह्यातिवाहिकदेहे तदाकारत्वासिद्धिरित्यत उक्तमनपवासन इति । नात्यन्तं तद्वासनोच्छिन्नेत्याशयः ॥ १३ ॥ तर्ह्यस्याधिभौतिकतापि कुतो नाभूत्तत्राह—**रूढेति** । परैराधिभौतिक इति दृश्यमानोऽपि ॥ १४ ॥ १५ ॥ वासनाया अत्यन्तोच्छेदे तु नातिवाहिकदेहकल्पनाप्यस्तीति सूचनाय सद्वासनस्येत्युक्तम् । देह आधिभौतिकः ॥ १६ ॥ १७ ॥ संकल्पलीलया सत्यसंकल्पविलासेन ॥ १८ ॥ इमे आवां विदूरथलीला पश्यतु इति ज्ञप्त्या देव्या चिन्तिते सति दीप्ते प्रकाशमाने ज्ञप्तिलीले दृश्ये बभूवतुः ॥ १९ ॥ २० ॥ द्रवशीताया ज्वालाया दीप्तैर्वशाच्चन्द्रबिम्बादुत्कीर्णमिव स्थितम् । तदङ्गप्रभाद्रवव्याप्तभित्तिमत्त्वाद्धेतोर्हैमद्रवैर्लिप्तमिव स्थितमित्यर्थः ॥ २१ ॥ संभ्रमोऽत्र हर्षनिर्भरः ॥ २२ ॥ मम जयाय कल्याणोत्कर्षाय । मार्गशोधिनी परिचारिकेवेति यावत् ॥ २३ ॥ २४ ॥ आदित आरभ्य वद । ते कुत्र वा अध्वनि किं वा आश्चर्यं वृत्तं तत्त्वया कुत्र वा दृष्टमित्यर्थः ॥ २५ ॥ तस्मिन्विदूरथगृहप्रदेशे साहं द्वितीयातिथिस्तत्संबन्धिन इन्दोः कला कल्पान्तज्वालया हतेव मूर्च्छिता अभवम् ॥ २६ ॥ विलोचने विनिमील्य मूर्च्छायां न चेतितं न किंचिज्ज्ञातम् । न चेतितमित्यननुभूतस्याभिलापायोगात्साक्षिभावेनाज्ञातं चेतितमेवेति न चिदात्मलोपाशङ्कावसरः ॥ २७ ॥ वासनापरिकल्पितपूर्वदेहसदृशदेहरूपेण यावदभ्युदिता अध्यासेनाविर्भूतास्मि तावच्चिद्गगनोदरे भूताकाशे प्लुता उत्प्लुता चास्मि ॥ २८ ॥ अनिलः प्राणो वातस्कन्धो वा तद्रूपं रथम् । तेनानिलरथेन ॥ २९ ॥ ३० ॥ यावच्छेते तावत्प्रतीक्षमाणा

१ निमील्य चेतितं इति पाठः.

शेते कुसुमगुप्ताङ्गो मधुः पुष्पवने यथा ॥ ३१
अथ संग्रामसंरम्भश्रमार्तोऽयं स्वपित्यलम् ।
इति निद्रा मया सेयं देवेश्वरि न वारिता ॥ ३२
अनन्तरमिमं देशं प्राप्ते देव्याविमे त्विति ।
यथानुभूतं कथितं मदनुग्रहकारिणि ॥ ३३

ज्ञप्तिरुवाच ।

हे हंसहारिगामिन्यौ लीले ललितलोचने ।
उत्थापयामो नृपतिं शवतल्पतलादिमम् ॥ ३४
इत्युक्त्वा मुमुचे जीवमामोदमिव पद्मिनी ।
ससमीरलताकारस्तन्नासानिकटं ययौ ॥ ३५
घ्राणकोशं विवेशान्तर्वंशरन्ध्रमिवानिलः ।
स्ववासनाशतान्यन्तर्दधदब्धिर्मणीनिव ॥ ३६
अन्तस्थजीवं वदनं तस्य तत्कान्तिमाययौ ।
पद्मस्यावग्रहे पद्मं सुवृष्ट इव वारिणि ॥ ३७
क्रमादङ्गानि सर्वाणि सरसानि चकाशिरे ।
तस्य पुष्पाकर इव लताजालानि भूभृतः ॥ ३८
अथावभौ कलापूर्णः स राकायामिवोडुराट् ।
भासयन्भुवनं भूरि वदनेन्दुमरीचिभिः ॥ ३९
स्फुरयामास सोऽङ्गानि रसवन्ति मृदूनि च ।
कनकोज्वलकान्तीनि पल्लवानीव माधवः ॥ ४०
उन्मीलयामास दृशौ विमलालोलतारके ।
हारिण्यौ सुभगाभोगे चन्द्रार्कौ भुवनं यथा ॥ ४१
उत्तस्थौ प्रोल्लसत्कायो विन्ध्याद्रिर्वृद्धिमानिव ।
उवाच कः स्थित इति घनगम्भीरनिःस्वनम् ॥ ४२
लीलाद्वयमथास्याग्रे प्रोवाचादिश्यतामिति ।
स ददर्श पुरो नम्रं लीलाद्वयमवस्थितम् ॥ ४३
समाचारं समाकारं समरूपं समस्थिति ।
समवाक्यं समोद्योगं समानन्दं समोदयम् ॥ ४४
का त्वं केयं कुतश्चेयमित्याह स विलोकयन् ।
तस्मै लीलाह हे देव श्रूयतां यद्वदाम्यहम् ॥ ४५
महिला तव लीलाहं प्राक्तनी सहधर्मिणी ।
वागर्थस्येव संपृक्ता स्थिता संश्लेषशालिनी ॥ ४६
इयं लीला द्वितीया ते महिला हेलया मया ।
उपार्जिता त्वदर्थेन प्रतिविम्बमयी शुभा ॥ ४७
शिरोभागोपविष्टेयं पाहि हैममहासने ।
एषा सरस्वती देव त्रैलोक्यजननी शिवा ॥ ४८
अस्माकं पुण्यसंभारैरिह साक्षादुपागता ।
अनयेमे परालोकादिहानीते महीपते ॥ ४९
इत्याकर्ण्य समुत्थाय राजा राजीवलोचनः ।
लम्बमाल्याम्बरधरः पपात ज्ञप्तिपादयोः ॥ ५०
सरस्वति नमस्तुभ्यं देवि सर्वहितप्रदे ।
प्रयच्छ वरदे मेधां दीर्घमायुर्धनानि च ॥ ५१
इत्युक्तवन्तं हस्तेन पस्पर्श ज्ञप्तिदेवता ।

सरस्वत्युवाच ।

त्वं पुत्राभिमतार्थाढ्यो भवेति भवनान्वितः ॥ ५२
सर्वापदः सकलदुष्कृतदृष्टयश्च
गच्छन्तु वः शममनन्तसुखानि सम्यक् ।
आयान्तु नित्यमुदिता जनता भवन्तु
राष्ट्रे स्थिराश्च विलसन्तु सदैव लक्ष्म्यः ॥ ५३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने पद्मजीवनं नामाष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

आलोकयामीत्यर्थः । मधुर्वसन्तः ॥ ३१ ॥ अयं संग्रामश्रमार्तः स्वपितीत्यनेनाभिप्रायेण अथ मया अस्य निद्रा न वारिता ॥ ३२ ॥ देव्यौ, युवां इमं देशं गृहं प्राप्ते इति मया यथानुभूतं कथितम् ॥ ३३ ॥ ३४ ॥ इत्युक्त्वा ज्ञप्तिः प्राक्संकल्पेन निरुद्धं राज्ञो जीवं मुमोच । स जीवः समीरवदहृश्योऽपि रागादिवासनापल्लवितत्वाल्लताकारः ॥ ३५ ॥ तदेवाह—**स्ववासनाशतान्यन्तर्दधदिति** ॥ ३६ ॥ तस्य पद्मस्य । अवग्रहे वृष्टिप्रतिबन्धे म्लानं पद्मं वारिणि सुवृष्टे सतीव ॥ ३७ ॥ पुष्पाकरे वसन्तकाले ॥ ३८ ॥ ॥ ३९ ॥ स्फुरयामास संचालयामास । 'चिस्फुरोर्णौ' इत्यात्वस्य गुणस्य चाभावश्छान्दसः ॥ ४० ॥ हारिण्यौ मनोहरे । सुभगाभोगे सौभाग्यलक्षणशालिसंस्थानवत्यौ दृशौ । भुवनं सर्वभुवनात्मा विराट्स्वनेत्रभूतौ चन्द्रार्काविवोन्मीलयामास ॥ ४१ ॥ ॥ ४२ ॥ लीलाद्वयं कर्तृ आदिश्यतां आज्ञाप्यतां महाराजेनेत्युवाच ॥ ४३ ॥ ४४ ॥ लीला पूर्वलीला आह ॥ ४५ ॥ यथा वाक् शब्दोऽर्थस्य वाचकतया संपृक्ता तद्वत् ॥ ४६ ॥ त्वदर्थेन त्वदुपभोगार्थम् ॥ ४७ ॥ ४८ ॥ इमे आवां परालोकाद्ब्रह्माण्डान्तरात् ॥ ४९ ॥ ५० ॥ मेधां श्रुतपरमार्थधारणावतीं बुद्धिम् ॥ ५१ ॥ ऐहिकेन दीर्घायुर्धनाद्यभिमतार्थेन आढ्यः संपन्नतमः । तत्त्वमेधाभिव्यक्तेन भवनेन पारमार्थिकात्मस्वस्वरूपस्थित्या चान्वितो भव ॥ ५२ ॥ दुष्कृतदृष्टयः पापबुद्धयश्च शमं विनाशं गच्छन्तु । अनन्तान्यसंख्यान्यभ्युदयसुखानि आयान्तु । तथा वः राष्ट्रे जनता जनसमूहाः नित्यं मुदिता भवन्तु । लक्ष्म्यः संपदः सदैव विलसन्त्वित्याशिषि लोटः (?) ॥ ५३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे पद्मजीवनं नामाष्टपञ्चाशः सर्गः ॥ ५८ ॥

# एकोनषष्टितमः सर्गः ५९

श्रीवसिष्ठ उवाच ।

सरस्वती तथेत्युक्त्वा तत्रैवान्तर्धिमाययौ ।
प्रभाते पङ्कजैः सार्धं बुबुधे सकलो जनः ॥ १
आलिलिङ्ग च तां लीलां लीला च दयितं क्रमात् ।
पुनःपुनर्महानन्दान्मृतं प्रोज्जीवितं पुनः ॥ २
तदासीद्राजसदनं मदमन्मथमन्थरम् ।
आनन्दमत्तजनतं वाद्यगेयरवाकुलम् ॥ ३
जयमङ्गलपुण्याहघोषघुंघुमघर्घरम् ।
तुष्टपुष्टजनापूर्णं राजलोकवृताङ्गणम् ॥ ४
सिद्धविद्याधरोन्मुक्तपुष्पवर्षसहस्रभृत् ।
ध्वनन्मृदङ्गमुरजकाहलाशङ्खदुन्दुभि ॥ ५
ऊर्ध्वीकृतबृहद्धस्तहास्तिकस्तनितोत्कटम् ।
उत्तालताण्डवस्त्रैणपूर्णाङ्गणलसद्ध्वनि ॥ ६
मिथःसंघट्टनिपतज्जनोपायनदन्तुरम् ।
पुष्पशेखरसंभारमयसंसारसुन्दरम् ॥ ७
विकीर्णपादितक्षौमं मन्त्रिसामन्तनागरैः ।
स्थूलपद्ममयं व्योम रक्तैस्ताण्डविनीकरैः ॥ ८
मत्तस्त्रीकन्धरावृत्तलीलान्दोलितकुण्डलम् ।
प्रवृत्तपादसंपातप्रोल्लसत्पुष्पकर्दमम् ॥ ९
पट्टवासःशरन्मेघवितानकवितानकम् ।
वराङ्गनामुखैर्नृत्यच्चन्द्रलक्षगृहाजिरम् ॥ १०
परलोकादुपानीता राज्ञी सा पतिरेव च ।
इति निर्वृत्तगाथाभिर्जगुर्देशान्तरे जनाः ॥ ११
पद्मो भूमिपतिः श्रुत्वा वृत्तान्तं कथितं मनाक् ।
चक्रे स्नानं समानीतैश्चतुःसागरवारिभिः ॥ १२
ततोऽभिषिषिचुर्विप्रा मन्त्रिणो भूभुजश्च तम् ।
लब्धोदयमनन्तेहममरेन्द्रमिवामराः ॥ १३
लीला लीला च राजा च जीवन्मुक्तमहाधियः ।
रेमिरे पूर्ववृत्तान्तकथनैः सुरतैरिव ॥ १४
सरस्वत्याः प्रसादेन स्वपौरुषकृतेन तत् ।
प्राप्तं लोकत्रयश्रेयः पद्मेनेति महीभुजा ॥ १५
स ज्ञप्तिज्ञानसंबुद्धो राजा लीलाद्वयान्वितः ।
चक्रे वर्षायुतान्यष्टौ तत्र राज्यमनिन्दितः ॥ १६
जीवन्मुक्तास्त इत्येवं राज्यं वर्षायुताष्टकम् ।
कृत्वा विदेहमुक्तत्वमासेदुः सिद्धसंविदः ॥ १७

---

राज्ञः संजीवनोद्धर्षात्तत्पुरान्तःपुरोत्सवः ।
राज्यं च जीवन्मुक्तानां चिरं मुक्तिश्च वर्ण्यते ॥ १ ॥

सरस्वती इति उक्तप्रकारेण प्राग्यद्राज्ञा प्रार्थितं तत्तथास्त्वित्युक्त्वा तत्र राजगृहे एव अन्तर्धिमन्तर्धानमाययौ ॥१॥ लीला च प्राङ्मृतं पुनः प्रोज्जीवितं पुनःपुनर्महानन्दादालिलिङ्ग ॥ २ ॥ तदा राजसदनमानन्देन मत्ता परवशचित्ता जनता यस्मिंस्तथाविधमासीत् ॥ ३ ॥ राज्ञो लोकाः सेवकजनाः राजानं लोकयन्तीति राजलोकाः पौरजानपदाश्च तैर्वृताङ्गणम् ॥ ४ ॥ काहलशब्दः कार्णालसंज्ञकवाद्यविशेषार्थः ॥ ५ ॥ उत्तालताण्डवैः स्त्रैणैः स्त्रीसमूहैः पूर्णाङ्गणे लसंस्तौर्यत्रिकध्वनिर्यस्मिन् ॥ ६ ॥ पुष्पशेखराणामौत्सविकसंभारप्रचुराणां नानाजनानां संसारेण संचारेण सुन्दरं शोभमानम् ॥ ७ ॥ मन्त्रिभिः सामन्तैर्नागरैश्च विकीर्णैः कुसुमलाजमौक्तिकैः सर्वतश्छन्नत्वादापादितानि संपादितानि क्षौमाम्बराणीव यस्य तत् । व्योम्नि रक्तैस्ताण्डविनीनां नर्तकीनां करैः स्थूलपद्ममयं दीर्घपद्मप्रचुरं सर इव स्थितमित्याशयः ॥ ८ ॥ मत्तानां हृष्टानां स्त्रीणां कंधराणां ग्रीवाणामावृत्तलीलाभिः परिवर्तनविलासैरान्दोलितानि कुण्डलानि यत्र ॥ ९ ॥ पट्टवाससां शरन्मेघवितानकसदृशानि वितानकानि यत्र । नृत्यन्ति चन्द्रलक्षाणि यत्र तथाविधानि गृहाजिराणि यत्र ॥१०॥ सा राज्ञी द्वितीयलीला परलोकादुपानीता पूर्वलीलयेत्यर्थाद्गम्यते । पतिरेव च उपानीत इति प्रबन्धशतात्मना निर्वृत्ताभिर्गाथाभिर्जगुः ॥ ११ ॥ वृत्तान्तं स्वमरणादिकथां मनाक् संक्षेपेण कथितं श्रुत्वा ॥ १२ ॥ चिरप्रवासादागतस्येव परलोकादागतस्य पुनः पदाभिषेको मङ्गलार्थः । अमरेन्द्रपक्षे अनन्ता ईहाः स्वराज्यलाभप्रयत्ना यस्य तम् । अतएव नहुषनिपातेन पुनर्लब्धः स्वराज्योदयो येन तथाविधम् ॥१३॥ ननु लीला लीला चेत्यत्र सरूपैकशेषः किं न स्यादिति चेद्रामश्च रामश्च रामौ इत्येकशेषविग्रहवाक्यवदिति गृहाण । न ह्येकशेषवृत्तेर्विग्रह एव नास्ति । परस्परनिरपेक्षमेव संस्कारेण परिनिष्ठितयोः पश्चात्सहविवक्षायां तस्य निराबाधत्वात् । विभक्त्युत्पत्तेः प्रागेव प्रातिपदिकार्थद्वयस्य सहविवक्षायामेकशेषस्य सावकाशतया परिनिष्ठितपदद्वये प्रसक्त्यभावादिति ॥ १४ ॥ ननु यदि राज्ञा सरस्वतीप्रसादेन तत्पुनर्जीवनं राज्यं च प्राप्तं तर्हि दैवेनैव तत्प्राप्तं न स्वपौरुषकृतेनेति रामाशङ्कां हृदिस्थामुपलक्ष्य तां परिहरन्नुपसंहरति—**सरस्वत्या** इति । **स्वपौरुषकृतेने**ति । सरस्वत्याराधनादिस्वपौरुषकृत एव तत्प्रसादो नाकस्मिक इत्यर्थः । पद्मेन इति वर्णितरीत्या लोकत्रये श्रेयः प्रशस्यतमं पुनर्जीवनं राज्यं ज्ञानं च प्राप्तम् ॥१५॥ ज्ञप्त्युपदिष्टेन ज्ञानेन संबुद्धः सम्यग्बुद्धात्मतत्त्वः स राजा अष्टौ वर्षाणामयुतान्यशीतिसहस्राणि राज्यं चक्रे । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ॥ १६ ॥ सिद्ध-

यद्वदयविशदं विदग्धमुग्धं
समुचितमात्महितं च पेशलं च ।
तदखिलजनतोषदं स्वराज्यं
चिरमनुपाल्य सुदंपती विमुक्तौ ॥ १८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये लीलोपाख्याने पद्मनिर्वाणं नामैकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ६०

श्रीवसिष्ठ उवाच ।
एतत्ते कथितं राम दृश्यदोषनिवृत्तये ।
लीलोपाख्यानमनघं घनतां जगतस्त्यज ॥ १
शान्त्यैव दृश्यसत्तायाः शमनं नोपयुज्यते ।
सतो हि मार्जनक्लेशो नासतस्तु कदाचन ॥ २
ज्ञानेनाकाशरूपेण दृश्यं ज्ञेयस्वरूपकम् ।
इत्येकीभूतमालोक्य ज्ञस्तिष्ठत्यस्वरोपमः ॥ ३
पृथ्व्यादिरहितेनेदं चिद्भासैव स्वयंभुवा ।
साधितं यदि सिद्धेन ततः स्वात्मनि साधितम् ॥ ४
संविद्यथा या यतते तथा सैव व्यवस्थिता ।
विसृष्टा सृष्टिविन्नद्यां यावद्यत्नान्न रोधिता ॥ ५
चिदाकाशावभासोऽयं जगदित्यवबुध्यते ।
चिद्व्योम्न्येवात्मनि स्वच्छे परमाणुकणं प्रति ॥ ६
एवमस्या मुधाभ्रान्तेः का सत्ता केव वासना ।
का वास्था का च नियतिः कावश्यंभावितोच्यताम् ७
सर्वं चैतद्यथादृष्टं स्थितमित्थमखण्डितम् ।
मायैवेयमनन्तेयं न च मायास्ति काचन ॥ ८
श्रीराम उवाच ।
अहो नु परमा दृष्टिर्दर्शिता भगवंस्त्वया ।
दावाग्निदग्धकक्षाणां दाहशान्तौ कलैन्दवी ॥ ९
अहो नु सुचिरेणाद्य ज्ञातं ज्ञातव्यमक्षतम् ।
मया यथेदं यच्चेदं यादृग् ज्ञेयं यतो यदा ॥ १०
शाम्यामीव द्विजश्रेष्ठ निर्वामीव विकल्पयन् ।
एतदाख्यानमाश्चर्यं व्याख्यानं शास्त्रदृष्टिषु ॥ ११

संविदः परिनिष्ठितप्रबोधाः ॥ १७ ॥ यद्राज्यं प्रजानामुदयैर्नित्याभ्युदयैर्विशदं निर्दोषम् । विदग्धानां विदुषां शास्त्रानुसारित्वान्मुग्धं मनोहरम् । कुलपरंपरायाः समुचितम् । आत्मनः स्वस्य भोगयशोधर्महेतुत्वाद्धितम् । जनानामनुरञ्जनेन पेशलं चतुरं च । अतएवाखिलजनतोषदं तत्स्वराज्यं चिरमनुपाल्य सुदंपती लीलापद्मौ प्रारब्धफलभोगान्ते विमुक्तौ विदेहकैवल्यं प्राप्तौ । ननु प्राक् त्रयाणां जीवन्मुक्ततोक्ता कथमत्र द्वयोरेव मुक्तिरुपसंहृतेति चेद्राजवासनामय्या द्वितीयलीलायाः पूर्वलीलाप्रतिबिम्बप्रायतया तदन्तर्भावविवक्षणादिति ॥ १८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे पद्मनिर्वाणं नामैकोनषष्टितमः सर्गः ॥ ५९ ॥

विस्तराद्वर्ण्यतेऽत्रादौ लीलाख्यानप्रयोजनम् ।
कालादिसाम्यवैषम्यहेतुश्चात्र निगद्यते ॥ १ ॥

दृश्यदोषनिवृत्तये । तथाच दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनं संपन्नं चेत्तदा प्राप्ता परा निर्वाणनिर्वृतिरिति ग्रन्थोपक्रमे यत्प्रतिज्ञातं तत्सिद्धिरेवास्य प्रयोजनमिति भावः । घनतां सत्यताम् ॥ १ ॥ ननु सत्यतात्यागमात्रेण कथं दृश्यनिवृत्तिस्तत्राह—**शान्त्यैवेति** । यावत्सत्यताबुद्धिस्तावदेव मार्जनेनेति नेत्यपवादे क्लेशो न्यायैर्मिथ्यात्वनिर्णये तु स नास्तीत्यर्थः ॥ २ ॥ इति उक्तप्रकारेणापवादेनैकीभूतमखण्डैकरसतां प्राप्तम् । ज्ञस्तत्त्वज्ञः ॥ ३ ॥ ननु जडस्य दृश्यस्य कथं संविदैकरस्यमित्याशङ्क्य आदिसर्गे चिन्मात्ररूपेणैव स्वयंभुवा स्वात्मन्येव दृश्यविवर्तकल्पनात्करकाकाठिन्यस्य द्रवैकरस्याविरोधवदुपपत्तेरित्याशयेनाह—**पृथ्व्यादिरहितेनेति** ॥४॥ तर्हि विनैव प्रयत्नं करकाकाठिन्यवदेव दृश्यविलयः किं न स्यात्तत्राह—**संविदिति** । सृष्टिं वेत्तीति सृष्टिवित्स्वयंभूचैतन्यं तल्लक्षणायां नद्यां तदेकदेशभूता या जीवसंविद्यथा यादृशप्रवृत्तिप्रवाहेण यथा यादृशकार्यकरणफलभावाय यतते सा तथा तादृशकार्यकरणफलभावेन विसृष्टा सती स्वप्रयत्नानुसारात्तथैव व्यवस्थिता सा यावद्विरुद्धनिवृत्तिप्रयत्नान्न रोधिता तावन्न निवर्तत इत्यर्थः ॥ ५ ॥ ननु ब्रह्मसृष्टमिदं जगत्कथं जीवप्रयत्नेन विरुध्येत, नहि महाराजाज्ञासिद्धं पृथग्जनप्रयत्नेन निवर्तयितुं शक्यमित्याशङ्क्याह—**चिदाकाशेति** । यद्यपि चिद्व्योम्न्येव स्वच्छे ब्रह्मात्मनि चिदाकाशस्य मायिकोऽवभासोऽयं जगदित्यवबुध्यते इति ब्रह्मसृष्टं जगत्, तथापि तत्रापरिच्छिन्नब्रह्मभावं प्रति तथावबुध्यते, किंतु बुद्ध्यादिपरिच्छिन्नोपाधिवशात्परमाणुकणमत्यन्तपरिच्छिन्नं जीवं प्रति । तदीयप्रयत्नजन्यकर्मभोगार्थमेव ब्रह्मणि तदारोपात् । तथाच तत्प्रयत्नजन्यबोधेन दृश्यमार्जनं संभवत्येवेति भावः ॥ ६ ॥ एवंच सति सत्तानियतिवासनादिभिरपि न दृश्यत्राणप्रसक्तिरित्याशयेनाह—**एवमिति** ॥ ७ ॥ मायादृष्टौ सर्वमेतद्यथादृष्टं स्थितमपि न परमार्थदृष्टौ संभवति । यतो मायाकार्यभूतेयं सृष्टिर्मायैव । न च माया वस्तुसतीत्यर्थः ॥ ८ ॥ दावाग्निना दग्धानां कक्षाणां तृणसंघानां दाहशान्तौ पुनर्हरिताङ्कुरप्ररोहाय ऐन्दवी कलेव संसारतापतप्तानां शान्तिविवेकप्ररोहायेयं दृष्टिरित्यर्थः ॥ ९ ॥ पञ्चभिर्यद्वृत्तैः क्रमात्प्रकारस्वरूपदृष्टान्तप्रमाणकालास्तत्त्वबोधोचिताः कीर्त्यन्ते । यादृग्भिर्दृष्टान्तैरधिकारिभिर्वा ज्ञेयम् ॥ १० ॥ विकल्पयन् जगत्तत्त्वं विचारयन् । उपाधिशान्त्या शाम्यामीव । नित्यनिर्वाणस्वरूपावाप्त्या निर्वामीव

इमं मे भगवन्ब्रूहि संशयं सर्वकोविद ।
तव पातुं न तृप्तोऽस्मि श्रोत्रपात्रैर्वचोमृतम् ॥ १२
स सर्गत्रितये कालो लीलाभर्तुर्हि योगतः ।
स क्वचित्किमहोरात्रः क्वचित्किं माससमात्रकः ॥ १३
क्वचित्किं बहुवर्षाणि कस्यचित्किमु पेलवः ।
कस्यचित्किं महादीर्घः कस्यचित्किं क्षणः स्थितः ॥ १४
इति मे भगवन्ब्रूहि त्वं यथावदनुग्रहात् ।
सकृच्छ्रुतं न विश्रान्तिमेति लोष्टे यथा जलम् ॥ १५

श्रीवसिष्ठ उवाच ।

येन येन यथा यद्यद्यदा संवेद्यतेऽनघ ।
तेन तेन तथा तत्तत्तदा समनुभूयते ॥ १६
अमृतत्वं विषं याति सदैवामृतवेदनात् ।
शत्रुर्मित्रत्वमायाति मित्रसंवित्तिवेदनात् ॥ १७
यथा भावितमेतेषां पदार्थानां निजं वपुः ।
तदेव हि चिराभ्यासान्नियतेर्वशमायतम् ॥ १८
कचनैकात्मिकैषा चिद्यथा कचति यादृशम् ।
तथा तथाशु भवति तत्स्वभावैककारणात् ॥ १९
निमेषे यदि कल्पौघसंविदं परिविन्दति ।
निमेष एव तत्कल्पो भवत्यत्र न संशयः ॥ २०
कल्पे यदि निमेषत्वं वेत्ति कल्पोऽप्यसौ ततः ।
निमेषीभवति क्षिप्रं तादृग्रूपात्मिका हि चित् ॥ २१
दुःखितस्य निशा कल्पः सुखितस्यैव च क्षणः ।
क्षणः स्वप्ने भवेत्कल्पः कल्पश्च भवति क्षणः ॥ २२
यथा च मृत्वा जातोऽहं तरुणो यौवनस्थितः ।
यातोऽस्मि योजनशतं स्वप्न इत्यनुभूयते ॥ २३
रात्रिं द्वादशवर्षाणि हरिश्चन्द्रोऽनुभूतवान् ।
लवणो भुक्तवानायुरेकरात्र्या समाः शतम् ॥ २४
यन्मुहूर्तः प्रजेशस्य स मनोर्जीवितं मुनेः ।
जीवितं यद्विरिञ्चस्य तद्दिनं किल चक्रिणः ॥ २५
विष्णोर्यज्जीवितं राम तद्वृषाङ्कस्य वासरः ।
ध्यानप्रक्षीणचित्तस्य न दिनानि न रात्रयः ॥ २६
न पदार्था न च जगत्सत्यमात्मनि योगिनः ।
मधुरं कटुतामेति कटुभावेन चिन्तितम् ॥ २७
कटु चायाति माधुर्यं मधुरत्वेन चिन्तितम् ।
मित्रबुद्ध्या द्विषन्मित्रं रिपुबुद्ध्या रिपुः सुहृत् ॥ २८
भवतीति महाबाहो यथासंवेदनं जगत् ।
अनभ्यस्ताः पदार्था ये शास्त्रपाठजपादयः ॥ २९
तेषां संवेदनाभ्यासान्नूनमभ्येति साम्यता ।
नौयायिनां भ्रमार्तानां वेदनाद्भूर्विवर्तते ॥ ३०
अवेदनाभ्रमार्तानामपि नैषां विवर्तते ।

---

शास्त्राणि श्रुतयस्तत्प्रदर्शितासु दृष्टिषु ज्ञानेषु । व्याख्यानमुपबृंहणभूतम् ॥ ११ ॥ इमं वक्ष्यमाणम् ॥ १२ ॥ स प्रागुक्तः सर्गत्रितये वासिष्ठपाद्मवैदूरथसर्गेषु यः कालो गतः सः क्वचिद्गिरिग्रामे अहोरात्राष्टकात्मकः प्रागुक्तः, पाद्मसर्गे तु माससमात्रको वैदूरथे तु बहुवर्षात्मक इति ब्रह्माण्डभेदः ॥ १३ ॥ एकस्मिन्नपि ब्रह्माण्डे मनुष्याणां संवत्सरो देवानां दिनमिति पेलवः । कस्यचित्क्षुद्रजन्तोः स एव महादीर्घः । कस्यचित्स्वयंभुवः क्षण इति एक एव कालो देशलोकादिभेदेन विरुद्धरूपः किं स्थितः । अर्थसत्तैकरूप्ये प्रतीतिवैषम्यं कथमित्याशयः । इति इमं संशयं मे ब्रूहीति संबन्धः ॥ १४ ॥ ननु 'देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथैव हि' इति प्रागेवास्योत्तरमुक्तप्रायं तत् किं पुनः पृच्छसि तत्राह—**सकृदि**ति । लोष्टे शुष्कमृत्पिण्डे । जलं जलबिन्दुः ॥ १५ ॥ यद्यर्थसत्तानुसारिणी प्रतीतिः स्यात्तदा स्यादयं विरोधः प्रतीत्यनुसारिण्यां त्वनिर्वचनीयार्थसत्तायां प्रतिद्रष्ट्रर्थभेदान्न कालवैषम्यं दोष इत्याशयेनोत्तरमाह—**येन येने**ति ॥ १६ ॥ तदेवोदाहरति—**अमृतत्व**मित्यादिना । अमृतत्वं अमृतवज्जीवनहेतुत्वम् । अमृतवेदनाज्जीवनसाधनत्ववेदनात् । तथाहि । तादृशदृढसंवेदनाविषक्रमयो विषेणैव जीवन्ति । कथं तर्हि प्रमादाद्भोज्यबुद्ध्या विषं भुक्तवता मरणदर्शनमिति चेत्क्रमिवत्तेषां विषे चिराभ्यस्तजीवनहेतुतादृढसंवेदनाभावाद्विषे मरणहेतुतानिश्चयसंस्कारसत्त्वाच्चेति ॥ १७ ॥ एतदेव स्पष्टयति—**तदेव ही**ति । तथाच नियतिवशीकारपर्यन्तचिराभ्यस्तसंवेदनानुसारिणी पदार्थेष्वर्थक्रिया नियतिरिति भावः ॥ १८ ॥ किंच संविदः स्फुरणं स्वभावः अर्थविशेषाकारता तु तस्या द्रष्टृसंस्कारानुरोधिनी । तथा चैकस्यामेव संविदि कस्यचित्संस्कारानुसारेण निमेषारोपः कस्यचित्कल्पाद्यारोपश्च न विरुध्यत इत्याह—**कचनैके**ति त्रिभिः ॥ १९ ॥ २० ॥ २१ ॥ लोकेऽप्ययं प्रकारः प्रसिद्ध एवेत्याह—**दुःखितस्ये**ति ॥ २२ ॥ इति स्वप्नोऽनुभूयते कैश्चिदिति शेषः ॥ २३ ॥ तदेवोदाहरति—**हरिश्चन्द्र** इति । प्रसिद्धं चेदं मार्कण्डेयपुराणादौ लवणो राजा । इदं चाग्रे वक्ष्यति ॥ २४ ॥ मनोर्यज्जीवितमायुः स मुनेरात्ममननशीलस्य प्रजेशस्य मुहूर्तः मुनेरित्युत्तरेऽपि संबध्यते ॥ २५ ॥ निर्विकल्पसमाधौ तु दिनरात्रिभेद एव नास्तीत्याह—**ध्याने**ति ॥ २६ ॥ मधुरं प्रियं विषयजातम् । कटुतां अप्रियताम् । कटुभावेन वैराग्यवासनया ॥ २७ ॥ कटु प्रागप्रियं इन्द्रियमनःप्राणनिरोधादिमाधुर्यमात्मसुखप्रसादनेन प्रियतमताम् । विषयलम्पटतां द्विषद्गुरुशास्त्रादिमित्रबुद्ध्या आप्ततमत्वबुद्ध्या सेवितः सुहृत्परमाप्ततमो भवति । एवं प्राक्तनो विषयभोगसहायः सुहृन्मूढः स्वजनो रिपुबुद्ध्या पुरुषार्थविघातीति बुद्ध्या भावितस्तथैव भवतीति ॥ २८ ॥ उक्तं न्यायं जपोपासनश्रवणादिष्वपि दर्शयति—**अनभ्यस्ता** इति ॥ २९ ॥ सममेव साम्यं तद्भावः साम्यता अवैषम्यं स्वाधीनता अभ्येति प्राप्नोति । संपद्यत इति यावत् । भूर्विवर्तते जलमिति ॥ ३० ॥ वेदनाभ्रमार्तिशून्यानामेषां तीरस्थानां तु दृष्ट्या

शून्यमाकीर्णतामेति वेदनात्[1]स्वप्नदृक्ष्विव ॥ ३१
वेदनात्पीतमानीलं शुक्लं वाप्यनुभूयते ।
आपद्वदुत्सवः खेदं करोति परिमोहतः ॥ ३२
कुड्येऽपि ख इवाचारो दृष्टो नन्वविचारिणः ।
असद्यक्षो विमूढानां प्राणानप्यपकर्षति ॥ ३३
वेदनात्स्वप्नवनिता जाग्रतीव रतिप्रदा ।
यद्यथाभासमायातं तत्तथा स्थिरतां गतम् ॥ ३४
असदेव नभश्चैव नभ एव चिदात्मनि ।
शतहस्ताम्बुदच्छायानटनृत्तमिवाततम् ॥ ३५
[2]गगने मानसं स्पन्दं जगद्विद्धि न वस्तु तत् ।
मिथ्याज्ञानपिशाचस्य स्पन्ददर्शनमाकृति ॥ ३६
मायामात्रकमेवेदमरोधकमभित्तिमत् ।
इदं भास्वरमाभातं स्वप्नसंदर्शनं स्थितम् ॥ ३७
अपूर्वमेवासुप्तस्य नरस्येवोदितं विदुः ।
अचेता चेतति स्तम्भो यादृशं शालभञ्जिकाम् ॥ ३८
परमार्थमहास्तम्भः सृष्टिं चेतति तादृशम् ।
यादृशो मे नरः पार्श्वे स्वप्ने क्षुब्धो महाभटैः ॥ ३९
तादृशो ब्रह्मणः सर्गो बुद्ध एव सुषुप्तवत् ।
तृणगुल्मलतायुक्तः शिशिरान्ते यथा रसः ॥ ४०
वासन्तः संस्थितो भूमौ तथा सर्गः परे पदे ।
यथा द्रवत्वं कनके स्थितमन्तरनुन्मिषत् ॥ ४१
तथा स्थितः परे सर्ग आत्मवर्गादणावणौ ।
संनिवेशो यथाङ्गानामङ्गिनोऽनन्य आत्मनः ॥ ४२
जगदेवमनङ्गस्य स्वात्मनो ब्रह्मणस्तथा ।
यादृगेकनरः स्वप्ने युद्धमन्यं नरं प्रति ॥ ४३
तादृशं सदसद्रूपं स्वात्मेदं व्योमगं जगत् ।
महाकल्पान्तसर्गादौ चित्स्वभावमिदं [3]जगत् ॥ ४४
कारणत्वं मिथः पश्चादसदेति न वास्तवम् ।
मुक्तेऽस्मिन्ब्रह्मणि यदि ब्रह्मान्यः स्मृतिजो भवेत् ।
तत्स्मृतिज्ञप्तिजे सर्गे स्थितैव ज्ञप्तिमात्रता ॥ ४५

श्रीराम उवाच ।

पौराणां मन्त्रिमुख्यानां विदूरथकुलक्रमः ।
सममेव कथं तत्र सर्वेषां प्रतिभासितः ॥ ४६

श्रीवसिष्ठ उवाच ।

चितः समनुवर्तन्ते मुख्यायाः सर्वसंविदः ।
यथा विपुलवात्यायाः सामान्या वातलेखिकाः ॥ ४७

---

न विवर्तते ॥ ३१ ॥ अनुभूयते नभः परिमोहत इति । तथाहि बालाः स्वोत्सवेष्वपि क्वचिद्रुदन्तो दृश्यन्ते ॥ ३२ ॥ मिथ्याभूतार्थानामर्थक्रियासामर्थ्यमपि लोकप्रसिद्धमित्याह—**असद्यक्ष** इत्यादिना ॥ ३३ ॥ ३४ ॥ **असदेवेति** । नास्त्येवेत्यर्थः । तर्हि किमलीकं नेत्याह— **नभश्चैवेति** । कार्यस्य कारणमात्रत्वादव्याकृताकाशमेवेत्यर्थः । तथाच तन्नभ एव स्वाधिष्ठानचिदात्मनि शतहस्तस्य अम्बुदच्छायाकल्पितमिथ्यानटस्य नृत्तमभिनयविशेष इव जगद्वैचित्र्यभावेनाततं विस्तीर्णमिति कलितमित्यर्थः ॥ ३५ ॥ सर्वमनःसमष्टिव्यष्टिकार्यत्वादपि तस्यासत्यतैवेत्याशयेनाह—**गगने** इति । बालस्य मिथ्याज्ञानकल्पितपिशाचस्य यत्स्पन्ददर्शनं तन्मा तदुपमा मनोमात्राकृतिर्यस्य तत् ॥३६॥ वास्तवमूर्तत्वाभावात्स्वयमन्यस्यारोधकं अभित्तिमत्स्वरोधकवस्त्वन्तरशून्यं च भास्वरं स्फुटमाभातमिदं जगत् असुप्तस्य नरस्यापूर्वमेवोदितं स्वप्नसंदर्शनं विदुस्तत्त्वविद इति परेणान्वयः ॥ ३७॥ अचेता स्वस्फुरणानुकूलस्वव्यापारशून्यश्चेतति स्वात्मनि प्रथयति शालभञ्जिकां प्रतिमारूपम् । स्वयं यादृशो यादृशं यादृक्स्वरूपां सृष्टिं चेतति सर्गकाले पश्यति परमार्थमहास्तम्भः सर्वाधिष्ठानचिदात्मापि तादृशो भूत्वा तादृशीं सृष्टिं सर्गकाले पश्यतीत्यर्थः ॥ ३८ ॥ स्वप्ने मे मम पार्श्वे महाभटैः क्षुब्धः क्षोभितो नरो बुद्धोऽपि सुषुप्तवदज्ञानमात्रस्वभावो न वस्तुसन् ब्रह्मणः सर्गोऽपि तादृश एवेति परेणान्वयः ॥ ३९ ॥ शिशिरस्यान्ते वृक्षादीनां पत्रशातनकाले वासन्तः अग्रे वसन्ते पल्लवपुष्पाद्यात्मना आविर्भविष्यंस्तृणगुल्मलतायुक्तो रसो भूमौ उपादाने यथा संस्थितस्तथेत्यर्थः ॥ ४० ॥ ४१ ॥ आत्मवर्गाज्जीवसंघान्निमित्तादणावणौ तद्भोग्यः सर्गः परे स्थितः अस्ति भविष्यति चेत्यर्थः । अङ्गानामवयवानां संनिवेशः संस्थानभेदः अङ्गिन आत्मनः स्वस्मादनन्यः अव्यतिरेकतः । अपृथक्सत्ताक इति यावत् ॥ ४२ ॥ तथा जगत्स्वात्माभिन्नब्रह्मणः सकाशात् एवं अव्यतिरेकत इत्यर्थः । समसत्ताकत्ववारणायानङ्गस्येत्युक्तिः । एकस्य नरस्य स्वप्ने अन्येन नरेण सह युद्धं तत्काले तं प्रति सद्रूपमन्यं प्रत्यसद्रूपमपि द्रष्टुः स्वात्मैव तथेदं मायाव्योमगं जगदपि मायिकदृष्ट्या सदपि तदन्यशुद्धदृष्ट्या असदेवेत्यर्थः ॥४३॥ आद्यन्तकालयोः सद्ब्रह्ममात्राभावेन परिशेषादपि तन्मात्रस्वभावतेत्याह—**महाकल्पान्ते**ति ॥ ४४ ॥ कारणत्वं सर्वकार्यविभागे सति मिथस्तत्सापेक्षकारणत्वकल्पनम् । सर्वजगदाकारपरिणतपूर्वपूर्वहिरण्यगर्भाहंभावकल्पनात्मकोपासनसंस्कारजन्यस्मृतिकल्पितत्वादपि जगतोऽधिष्ठानसन्मात्रानतिरिक्ततेत्याह—**मुक्ते** इति ॥ ४५ ॥ ब्रह्माण्डान्तरस्थानामिवैकनगरस्थानामपि प्राणिनां प्रत्येकं वासनाकर्मादिवैचित्र्यात्स्वप्न इव जागरेऽपि क्रमवैचित्र्याद्यारोपः किं न स्यादित्याशयेन रामः पृच्छति—**पौराणा**मिति । समं एकरूपमेव यथा स्यात्तथा कथं प्रतिभासितो भातः । तत्र को हेतुरित्यर्थः ॥४६॥ स्रष्टृसंकल्पकृता इतरजीवसंविदां प्रधानजीवसंविदनुवृत्तिनियतिरेव तत्र हेतुरित्याशयेन वसिष्ठ उवाच—**चित** इत्यादिना । सामान्या अल्पाः ॥ ४७ ॥ तदनुरूपफलोन्मुखभोजका-

---

१ 'स्वप्नदृष्टिवत्' इति पाठः. २ मूले गमने इति पाठः, टीकायां च गगने इति मूलाननुगुणः प्रतीको मुद्रितपुस्तके लभ्यते.

३ 'वपुः' इति पाठः.

परस्परानुसारेण तथारूपेण संविदः ।
कचितास्ताः प्रजापालप्रजावास्तव्यमन्त्रिणः ॥ ४८
एवंरूपात्कुलाज्जातो राजास्माकमयं त्वसौ ।
कचिता इव वास्तव्यविदो वैदूरथे पुरे ॥ ४९
कचने चित्स्वभावस्य न च कारणमार्गणम् ।
युक्तं महामणेर्भासामिवान्यत्र स्वभावतः ॥ ५०
अहमेवं कुलाचारे राजा स्यामेवमित्यपि ।
विदूरथविदो रत्नादुदिता प्रतिभा यथा ॥ ५१
यावन्तो जन्तवो यस्मिन्ये ये सर्गे यदा यदा ।
ते सर्वगत्वाच्चिद्धातोरन्योन्यादर्शतां गताः ॥ ५२
तीव्रवेगवती या स्यात्तत्र संविदकम्पिता ।
सैवायाति परं स्थैर्यमामोक्षं त्वेकरूपिणी ॥ ५३
बलवच्चिद्विलासानामनुवृत्त्या परस्परम् ।
स्वभावाः प्रतिबिम्बन्ति चिदादर्शे स्वभावतः ॥ ५४
तत्रातियत्नाज्जयति सत्याः संविद आत्मसात् ।
कुर्वन्ति सरिदम्भोधिगामिनी सरितो यथा ॥ ५५
ये समास्तत्र ते तावद्यतन्ते चित्स्वभावतः ।
यावदेको जयत्यत्र द्वितीयः स निमज्जति ॥ ५६
जायमानेषु नश्यत्सु वर्तमानेषु भूरिशः ।
एवं सर्गसहस्रेषु परमाणुकणं प्रति ॥ ५७
न किंचित्केनचिद्व्याप्तं न किंचित्केनचित्स्थितम् ।
चिदाकाशमिदं शान्तमतः सर्वमभित्तिमत् ॥ ५८
अयमाभासते स्वप्नो निर्निद्रो दृष्टिवर्जितः ।
अवश्यंभाविबोधस्तु स्वनुभूतोऽप्यसन्मयः ॥ ५९
पत्रपुष्पफलांशात्मा यथैकः स्वाश्रितो द्रुमः ।
अनन्तसर्वशक्त्यात्मा ह्येक एव तथा विभुः ॥ ६०
मातृमेयप्रमाणादिमायात्मकमजं पदम् ।
बुद्धं विस्मृतिमायाति न कदाचन कस्यचित् ॥ ६१
शून्योदयास्तमयवस्तु तमःप्रकाशं
दिक्कालरूप्यपि सदैकमनादिशुद्धम् ।
आद्यन्तमध्यरहितं स्थितमच्छमम्बु
सौम्यत्ववीचिवलनाढ्यमिवैकमेव ॥ ६२

---

दृष्टमेलनं च तत्र हेतुरित्याशयेनाह—**परस्परे**ति । तथा ऐकरूप्येण रूपयति संपादयतीति तथारूपमदृष्टजातं तेन प्रजापालश्च प्रजाश्च वास्तव्याः पुरवासिनश्च मन्त्रिणश्च परस्परानुसारेण कचिताः ॥ ४८ ॥ कचने वैचित्र्यं प्रपञ्चयंस्तस्य मिथ्यात्वमाह—**एवंरूपादि**ति । वैदूरथे पुरे वास्तुषु वेश्मभूमिषु भवा वास्तव्याः पदार्थास्तद्विदस्तदुपभोगिनो जना इति कचिता इव ॥४९॥ ननूदासीनायाः संविदोऽध्यस्तविषयप्रथालक्षणे कचने को हेतुरिति चेन्नात्र हेतुचिन्ता युक्ता कचनस्यागन्तुकत्वादतोऽन्यत्र आगन्तुकविषयेष्वेव सा युक्ता । यथा उदासीनस्य चिन्तामणेर्भासां प्रसरे न हेत्वन्तरापेक्षा किंतु विचित्रार्थजनने चिन्तकजनमनोरथवैचित्र्यापेक्षा तद्वदित्याह—**कचने** इति ॥ ५० ॥ प्राक्तदनुकूलसंकल्पवैचित्र्योत्पत्तिरपि यथोक्तरीत्यैवेत्याह—**अह**मिति । विदूरथस्य विदो जीवचैतन्यान्निमित्तात् । तथाच चिन्तामणिरिव । चिन्मणिरपि यथामनोरथमेवार्थान् प्रसूते इति दर्शयति—**रत्ना**दिति । प्रतिभा मनोरथः ॥ ५१ ॥ अनेकेषु जीवचैतन्येषु तुल्यविषयारोपक्रमेण दर्पणानां परस्परान्तर्गतप्रतिबिम्बग्राहित्वमिव संपन्नमित्याह—**यावन्त** इति ॥ ५२ ॥ नन्वेवं सति सति बिम्बे प्रतिबिम्बोदयस्यावर्जनीयत्वात्कथं निर्विषयतालक्षणमोक्षप्राप्तिरित्याशङ्क्याह—**तीव्रवेगवती**ति । तत्र तासु जीवसंवित्सु मध्ये यैव जीवसंविद्ब्रह्माकारवृत्तिस्तीव्रवेगवती विषयदोषैरकम्पिता सती आमोक्षमेकरूपिणी भवति सैव परं सर्वोत्कृष्टं ब्रह्मभावेन स्थैर्यं मोक्षलक्षणमायाति नान्येत्यर्थः ॥ ५३ ॥ तां तथाच जगदाकारस्य ब्रह्माकारस्य वा जीवचितिप्रतिबिम्बने तीव्रवेगवत्तालक्षणबलवत्तत्तदाकारचिद्विलासा एव नियामकस्तथैव नियतिस्वभावत इत्याह—**बलवदि**ति ॥ ५४ ॥ नन्वेवं सति जगदुन्मुखत्वस्य चिराभ्यस्तत्वात्तत्रैव तीव्रवेगोदये न मोक्षं प्रत्याशेत्याशङ्क्याह—**तत्रे**ति । अयत्नजवेगाद्यत्नजवेगस्य प्रावल्यदर्शनादतियत्नात्संपादितो ब्रह्माकारवेग एव जयति जगदाकारचिद्विलासवेगम् । किंच सत्यासत्यगोचरसंविदोः सत्यगोचराणां प्राबल्यदर्शनात्सत्या ब्रह्माकारसंविद एवैनमात्मसात् आत्माधीनं कुर्वन्ति । यथा अम्भोधिगामिनी महासरित्स्वमिलिताः क्षुद्रसरितः स्वाधीनवृत्तीः करोति तद्वदित्यर्थः ॥ ५५ ॥ अस्तु ब्रह्माकारतायास्तीव्रवेगत्वे जयो यदा तु मन्दमध्यमाधिकाराच्चित्ताप्रतिष्ठितेर्विच्छिद्य विच्छिद्य ब्रह्माकारतोदयो बाह्याकारतोदयश्च तदा समत्वान्नैकतरजयं प्रत्याशेत्याशङ्क्याह—**ये** इति । येऽधिकारिण उक्तोभयाकारे समाः समवेगास्ते न तथैवावतिष्ठन्ते, किंतु अत्र उक्ताकारद्वयमध्ये यावदेको ब्रह्माकारः प्रतिष्ठितः सन् जयति उत्कर्षकाष्ठां गच्छति द्वितीयः स बाह्याकारश्च निमज्जति तावद्यतन्ते श्रवणाद्यावृत्तिलक्षणं यत्नं कुर्वन्ति । तथाच तेषामप्यभ्यासक्रमात्तीव्रवेगोदयेनेतरजयसिद्धिरित्यर्थः ॥ ५६ ॥ एवं प्रासङ्गिकानिर्मोक्षप्रसङ्गनिरासमुपपाद्य प्रस्तुतं प्रतिजीवं समविषमसर्ववैचित्र्यमेवावलम्ब्याह—**जायमानेष्वि**त्यादिना । औपाधिकपरिच्छेदारोपात्परमाणुकणं जीवजातं प्रति एवं उक्तप्रकारेषु समविषमेषु सर्गसहस्रेषु भ्रान्त्या जायमानेषु वर्तमानेषु नश्यत्सु च परमार्थतो न किंचित्केनचिज्जीवकणेन धावतापि प्राप्तं केनचिदुदासीनेनापि स्थितं न प्राप्तम् । अवस्तुनः प्राप्यप्राप्त्युभयायोग्यत्वादित्यर्थः ॥ ५७ ॥ ५८ ॥ दृष्टिवर्जितो विवेकदृष्टिशून्यः । अवश्यंभावी बोधः अधिष्ठानात्मसाक्षात्कारो यस्य तथाविधस्तु सन् प्रागनुभूतोऽप्यसन्मयोऽलीकसदृशः ॥५९॥ शुद्धदृष्ट्या प्रपञ्चस्यापृथक्सत्त्वमुक्त्वा मायाशबलदृशाप्याह—**पत्रे**ति ॥६०॥ जीवदृशापि आबोधं भिन्नरूपमपि बोधे पुनर्विस्मृतिहेत्वज्ञानाभावादेकमेवावतिष्ठत इत्याह—**मात्रि**ति ॥ ६१ ॥ मायावभासकत्वप्रयुक्ते नानात्वेऽपि शुद्धस्य न वास्तवैकरूप्यस्थितिविरोध इत्याशयेनोपसंहरति—**शून्ये**ति । तमः प्रकाशयति साक्षिभावे-

---

१ सर्गगत्वात् इति पाठः.

१ केनचिद्व्याप्तं इति क्वाचित्कः पाठः.

अहंत्वमित्यादिजगत्स्वरूपा
विशुद्धबोधैकविभा विभाति।
आकाशकोशे निजशून्यतेव
द्वैतैक्यसंकल्पविकल्पनाच्च॥ ६३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे लीलो० प्रयोजनवर्णनं नाम षष्टितमः सर्गः॥ ६०॥

---

## एकषष्टितमः सर्गः ६१

श्रीराम उवाच।
अहं जगदिति भ्रान्तिः परस्मात्कारणं विना।
यथोदेति तथा ब्रह्मन्भूयः कथय साधु मे॥ १
श्रीवसिष्ठ उवाच।
समस्ताः समतैवान्ताः संविदो बुध्यते यतः।
सर्वथा सर्वदा सर्वं सर्वात्मकमजस्ततः॥ २
सर्वा हि शब्दार्थदृशो ब्रह्मैवैताः पृथङ्न तत्।
सर्वार्थशब्दार्थकलारूपमासां न विद्यते॥ ३
कटकत्वं पृथग्धेम्नस्तरङ्गत्वं पृथग्जलात्।
यथा न संभवत्येवं न जगत्पृथगीश्वरात्॥ ४
एष एव जगद्रूपं जगद्रूपं तु नेश्वरे।
हेमैव कटकादित्वं कटकत्वं न हेमनि॥ ५
यथावयविनो रूपमनेकावयवात्मकम्।
तथाऽनवयवायास्तु चितः सर्वात्मकं च यत्॥ ६
यत्तुल्यकालमखिलं तन्मात्रावेदनं परे।
अन्तस्थं तदिदं भाति जगदित्यहमित्यपि॥ ७

नेति तमःप्रकाशं तथाविधं सत्। दिक्कालरूप्यपि परमार्थतः सदा शुद्धम्। शून्यौ सर्वविकारोदयास्तमयौ यत्र तथाविधमात्मवस्तु आद्यन्तमध्यरहितं सदेकमेव स्थितम्। यथा अच्छं निर्मलमम्बु सौम्यत्वाढ्यं वीचिविलनाढ्यं वा अम्बुस्वरूपैकरूप्यादेकमेव तद्वदित्यर्थः॥६२॥ विशुद्धबोधैकरूपस्य ब्रह्मणः स्वरूपभूता विभा प्रकाश एव द्वैतैक्यगोचरसंकल्पविकल्पनरूपान्मनसो निमित्ताचकारात्तन्मूलभूताविद्याकामकर्मवासनादिवशाचाहंममेत्याद्यध्यस्तजगत्स्वरूपा विभाति। यथा आकाशलक्षणे कोशे निजा शून्यतैव तलमालिन्यमौक्तिककेशोण्डूककटाहाद्याकारतया भाति तद्वदित्यर्थः॥ ६३॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे प्रयोजनवर्णनं नाम षष्टितमः सर्गः॥६०॥

प्रयोजनप्रसिद्ध्यर्थं वैराग्यार्थं च संसृतेः।
असारत्वमसत्त्वं च युक्तिभेदेन वर्ण्यते॥ १॥

अनहंभूतदेहादौ अहंभावकारणं विनाप्यहमिति भ्रान्तिः परमाणुक्षणोदरे वैपुल्यचिरभावलक्षणजगत्संनिवेशकारणं विनापि जगदिति भ्रान्तिर्यथा यादृशकल्पनाक्रमेण यादृशोपपत्त्या चोदेति तथा कथयेत्यर्थः। ननु 'महाकल्पान्तसर्गादौ चित्स्वभावमिदं वपुः' इत्यादिना प्राक्कथितमेवेदं कथं पुनः पृच्छ्यते तत्राह—**भूय** इति। साधु याभिरुपपत्तिभिरनुभवमारोहति तादृशोपपत्तिपरिष्कृतं यथा स्यात्तथा कथयेत्यर्थः॥ १॥ तत्र सर्वभ्रान्तीनां संविदन्तःप्रथमानत्वमेव मुख्योपपत्तिरिति प्रथमं श्रीवसिष्ठ उवाच—**समस्ता** इति। यतः असौ बोद्धा सर्वथा सर्वप्रकाराः समस्ताः भ्रान्तीः संविदः स्वरूपचैतन्यस्यैव आन्ता अन्तर्निविष्टाः सर्वदा बुध्यते न कदाचिदपि काश्चिदपि तद्बहिर्भूताः ततः सर्वं सर्वात्मकं सा च समतैव। न हि सर्वस्य सर्वात्मकत्वे वैषम्यं परिशिष्यते। न हि तदभावे जन्मादिविक्रिया उपपद्यन्त इत्यजः परमात्मैव वस्तुतोऽस्तीति जगद्भ्रान्तिः कारणं विनैवेति यदुक्तं तदुपपन्नमित्यर्थः॥ २॥ ननु चैतन्यान्तर्बुध्यमानत्वमात्रेण कथं सर्वस्य सर्वात्मतासिद्धिः। एकचित्तादात्म्यस्फुरणादिति चेन्न। विभिन्नविषयतादात्म्याद्घटज्ञानं पटज्ञानमिति चितोऽपि भेदानुभवेन भिन्नत्वादित्याशङ्क्याह—**सर्वा** हीति। न चितो भेदो यतः सर्वाः शब्दानामर्थानां च दृशो बोधा ब्रह्मैव। नहि ब्रह्मातिरिक्तचिद्धातुरस्ति। विषयभेदोपरागाद्धि चिति भेदो विभाव्यते विषयनिष्कर्षे तु तच्चिद्रूपान्न पृथक्। न भिद्यत इत्यर्थः। ननु विषयाकारतानुभवाद्विषयवद्भेदः किं स्यात्तत्राह—**सर्वार्थे**ति। सर्वे ये अर्थ्यन्त इत्यर्था विषयभूताः शब्दार्थास्तत्कलास्तदंशभूतं यत्पृथुबुध्नोदराकाररूपं तदासां दृशां न विद्यते। चिति जडाकारसत्त्वे उपपत्त्यभावात्। यस्त्वनुभूयते आकारः स वृत्तेरेवेति भावः॥३॥ एवं चिद्भेदे निरस्ते जडभेदोऽपि तदपृथक्सत्तास्फूर्तिकत्वान्निरसितुं शक्य इति सदृष्टान्तमाह—**कटकत्व**मिति॥४॥ तथापि कथं कारणं विनोत्पन्नमित्युक्तैरुपपत्तिश्चित एव कनकवत्कारणत्वात्तत्राह—**एष एवे**ति। सति हि जगतस्तस्माद्भेदे तत्प्रति कारणता स्यादत्यन्ताभेदे तु चितो न कारणत्वमित्यर्थः। तर्हि किं जगद्रूपमेव ब्रह्म, नेत्याह—**जगद्रूपं त्वि**ति। नहि विवर्तः पृथक्सन्नित्याशयः। एवं च कटककुण्डलादयोऽपि हेमात्मकब्रह्मविवर्ता एवेत्याशयेनाह—**हेमैवे**ति॥५॥ नन्वेकस्यानेकात्मताविरोध इत्याशङ्क्य यत्र समसत्ताकैरप्यनेकैरवयवैरेकस्यावयविनः समसत्ताकं तादात्म्यं लोके न विरुद्धं तत्र किं वाच्यं कल्पितैरनेकैर्वास्तवं ब्रह्मैक्यमविरुद्धमितीत्याशयेनाह—**यथे**ति। किंचैकात्म्ये सर्वस्य सर्वात्मतालाभादनेकत्वापगमादप्यविरोध इत्याशयेनाह—**सर्वात्मकं चे**ति॥ ६॥ किं तर्हि सर्वानुभवसिद्धं जगदित्यहमिति च नानात्वं तत्राह—**यदि**ति। परे ब्रह्मणि सर्वप्राणिनामन्तस्थं तुल्यकालं यद्ब्रह्ममात्रस्वरूपस्यावेदनमज्ञानं तदेव

लेखौघानां यथा भेदसंनिवेशः शिलोदरे ।
तथानन्यज्जगदहं चेत्यन्तश्चिद्घने घनम् ॥ ८
स्थितास्तरङ्गाः सलिले यथान्तरतरङ्गिते ।
सृष्टिशब्दार्थरहितास्तथान्तः सृष्टयः परे ॥ ९
न सर्गे तिष्ठति परं सर्गस्तिष्ठति नो परे ।
अवयवावयविवत्सत्तानवयवैस्तयोः ॥ १०
चिद्रूपेण स्वसंवित्त्या स्वचिन्मात्रं विभाव्यते ।
स्वमेव रूपहृदयं वातेन स्पन्दनं यथा ॥ ११
तत्कालमेष शब्दाणुश्चिच्चमत्काररूपधृक् ।
चेतते खमिवैवान्तः संकल्प इव चेतसा ॥ १२
तदेवानिलतां वेत्ति निजसत्तात्मिकां स्वयम् ।
अन्तर्गतस्पर्शरसां पवनस्पन्दतामिव ॥ १३
तदेवाभासतामेति निजसत्तात्मिकां स्वयम् ।
कोशस्थितालोकलवां तेजः प्रगटतामिव ॥ १४
तदेवं जलतां याति निजसत्तात्मिकां स्वयम् ।
अन्तःस्थितास्वादलवां सलिलं द्रवतामिव ॥ १५
तदेदावनितां वेत्ति स्वचित्तैकात्मतामयीम् ।
अन्तःस्थगन्धतन्मात्रामुर्वी स्थैर्यकलामिव ॥ १६
तुल्यकालनिमेषांशलक्षभागप्रतीति यत् ।
निजं विदः प्रकचनं तत्सर्गौघपरम्परा ॥ १७
शुद्धं सकृत्प्रभातान्तर्दृश्यमध्यमनामयम् ।
उदयास्तमयोन्मुक्तं ब्रह्म तिष्ठत्यनिष्ठितम् ॥ १८
बुद्धं सदपवर्गं तत्ससर्गमपि सत्समम् ।
अबुद्धं सर्गरूपात्म विसर्गमपि तत्सदा ॥ १९
चिद्ब्रह्म यद्यथा येन बुध्यते स्वात्मनात्मनि ।
तत्तत्तथा नु भवति सर्वं सर्वाङ्गशक्तिमत् ॥ २०
तत्सत्यं चिद्विलासत्वान्नित्यानुभवरूपतः ।
तदसत्यं मनः षष्ठात्सर्वाख्या निगतं यतः ॥ २१
यथैतत्सरणं वायौ तथा सर्गः स्थितः परे ।
असत्कल्पेऽपि संकल्पः सत्येऽसत्य इवापि च ॥ २२

---

जगदित्यहमिति नानात्वेन भातीत्यर्थः ॥७॥ लेखा राजयः यथा स्फटिकशिलोदरे अभेदेऽपि वनलेखौघानां प्रतिबिम्बानां संनिवेशोऽविरुद्धस्तद्वदत्रापीत्याह—**लेखौघाना**मिति ॥ ८ ॥ ९ ॥ ननु लीनास्तरङ्गा यथा महाजले अवयवभावेन तिष्ठन्ति अवयवी वा समवायेनावयवेषु तिष्ठति किं तद्वद्ब्रह्मणि जगत्स्थितिर्नेत्याह—**ने**ति । वस्तुतस्तु अवयवावयविनोरप्यन्योन्याधारता नोपपत्तिमतीत्याह—**सत्ते**ति । तथाहि । अवयवेषु तिष्ठन्नवयवी किं प्रत्यवयवं कार्त्स्न्येन तिष्ठत्युतावयवैः । आद्ये प्रत्यवयवमवयविनानात्वापत्तिः । गोः कर्णादिप्रदेशेऽपि कृत्स्ना गौरस्तीति दोहनादिकार्यापत्तिः । अवयवविश्लेषेऽप्यवयविनो जातिवन्नाशानापत्तिश्च । द्वितीये तु अनवस्थया अनन्तावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणापत्तिः । एवमवयवा अप्यवयविनि किमेकदेशे तिष्ठेयुरुत कृत्स्ने । आद्येऽनवस्था । द्वितीये अवयवान्तरस्यासमावेशादद्वयस्यावयवत्वायोगात्सर्वद्रव्याणां निरवयवत्वापत्तिरिति तयोरवयवावयविनोरनवयवैरेव सत्ता पर्यवस्यतीत्यर्थः ॥ १० ॥ दृष्टसृष्ट्युपपादनक्रमेणापि जगतश्चिदनन्यत्वमनुभावयिष्यन् निष्क्रियस्यापि चैतन्यस्याविद्यान्तःप्रतिफलनेनान्यथा स्वविभावनं प्रथममाह—**चिद्रूपेणे**ति । परमार्थचिद्रूपेण ब्रह्मणा प्रथममविद्याप्रतिफलितया दर्पणप्रतिहतनयनेन मुखमिव स्वसंवित्त्या स्वचिन्मात्ररूपात्मकप्रपञ्चस्य हृदयं रहस्यभूतमज्ञानावृतं स्वमेव विभाव्यते कल्प्यते । एवकारः प्राक्तनपारमार्थिकस्वरूपविस्मरणद्योतनार्थः ॥ ११ ॥ तदानीमेव कारणे लीनस्य शब्दतन्मात्रस्याकाशात्मना आविर्भाव इत्याह—**तत्काल**मिति । शब्दाणुः शब्दतन्मात्रम् । चिच्चमत्कारः सर्वशक्तिमन्मायासंवलनं तद्रूपधृक् ब्रह्म खं चिद्रूपमिव चेत्यते सैवाकाशोत्पत्तिरिति भावः ॥१२॥ तदेवाकाशभूतं ब्रह्म अन्तर्गतस्पर्शरसां स्वान्तरुन्मिषितस्पर्शतन्मात्रसंस्कारां स्वयं स्वात्मन्यनिलतां वेत्ति अनुभवति । यथा स्थिरपवनः काले स्पन्दतामनुभवति तद्वत् ॥१३॥ तद्वाय्वात्मतापन्नं ब्रह्मैव । आभासतां तेजस्ताम् । कोशे गर्भे स्थित आलोकलवो रूपतन्मात्रं यस्यास्तथाविधाम् ॥ १४ ॥ तत्तेजोभूतं ब्रह्मैव । आस्वादलवो रसतन्मात्रम् ॥ १५ ॥ १६ ॥ ननु चक्षुरुन्मेषक्षणे झटित्येव जगद्भानान्नात्रायमारोपक्रमो विभाव्यत इति कथं दृष्टसृष्ट्युपपत्तिस्तत्राह—**तुल्यकाले**ति । ईदृशोऽयं चितश्चमत्कारो यत्तुल्ये तुलया संमिते इव दुर्लक्ष्ये इति यावत् । निमेषांशस्य लक्षतमभागे प्रतीतिर्यस्य तादृशमपि विदो जगदाकारप्रकचनं तत्कल्पकोटिविस्तृतकालानां सर्गौघानां परंपरा भवति । तथाच चित्कचने कालापरिच्छेद्यतत्तन्निमेषांशलक्षतमभागारोपः कल्पकोट्यारोपो वा मायिको न वस्तुतो विरुध्यत इति क्रमकल्पनोपपत्तिरित्यर्थः ॥१७॥ यद्धि अशुद्धं जडं देशकालतः परिच्छिन्नं सदोषमाद्यन्तवत् काले निष्ठितं तत्कालेन परिच्छिद्यते ब्रह्म तु न तथेत्याह—**शुद्ध**मिति । सकृत्प्रभातं न पुनःपुनर्विच्छिद्य प्रभातं नित्यस्वप्रकाशमिति यावत् । अन्तर्गता दृश्याः सर्गा मध्याः प्रलयाश्च यस्य तत् । अनिष्ठितं अनाधारम् ॥१८॥ ननु यद्यन्तर्दृश्यमध्यं तत् तर्हि ससर्गं सप्रलयं वा नैकरूपापवर्गो भवितुमर्हति तत्राह—**बुद्धं सदि**ति । सत् परमार्थसत्यम् । समं वैषम्यरहितम् । विसर्गं परमार्थतः सर्गशून्यमपि ॥ १९ ॥ यथा यथा बोद्धृभिर्बुध्यते तथा तथा तत्तत्प्रकारविशिष्टं तत्तद्ब्रह्म आत्मनि भवति तत्तदाकारं मायया धत्त इत्यर्थः । नु इति खल्वर्थे । यतः सर्वाङ्गशक्तिमत् सर्वानुगुणमायाशक्तिमदित्यर्थः ॥ २० ॥ जगदपि शास्त्रीयचिद्विलासदृष्ट्या दृष्टं परमार्थसत्यं ब्रह्मैव । ब्रह्मापि बहिर्मुखचक्षुरादिमनःषष्ठजन्यदृष्ट्या दृष्टमनृतं जगदेवेत्याह—**तत्सत्य**मिति । सत्यस्य कुतोऽसत्यता तत्राह—**सर्वाख्या** इति । यतः सर्वाख्याः सर्वाणि नामानि नितरां गतं प्राप्तम् । नहि वागगोचरस्य तद्गोचरं रूपं सत्यं भवितुमर्हतीत्यर्थः । 'सर्वार्थातिगतम्' इति पाठे सर्वान् अर्थान् अतितरां गतं व्याप्तं तद्रूपापन्नं यत इत्यर्थः ॥२१॥ यथा वायौ सरणं प्राक्स-

अन्यरूपा यथानन्या तेजस्यालोकतोदरे ।
तथा ब्रह्मणि विश्वश्रीः सत्यासत्यात्मिका चिति ॥ २३
अनुत्कीर्णा यथा पङ्के पुत्रिका चाथ दारुणि ।
यथा वर्णा मषीकल्के तथा सर्गाः स्थिताः परे ॥ २४
अनन्यान्येव कचति ब्रह्मतत्त्वमरुस्थले ।
असत्यात्मनि सत्येव त्रिजगन्मृगतृष्णिका ॥ २५
ब्रह्मणा चिन्मयेनात्मा सर्गात्मैव विभाव्यते ।
न भाव्यते चानन्यत्वाद्बीजेनान्तरिव द्रुमः ॥ २६
यथा क्षीरस्य माधुर्यं तीक्ष्णत्वं मरिचस्य च ।
द्रवत्वं पयसश्चैव स्पन्दनं पवनस्य च ॥ २७
स्थितोऽनन्यो यथान्यः सन्नास्ति तत्र तथात्मनि ।
सर्गो निर्गलचिद्रूपः परमात्मात्मरूपभृत् ॥ २८
कचनं ब्रह्मरत्नस्य जगदित्येव यत्स्थितम् ।
तदकारणकं यस्मात्तेन न व्यतिरिच्यते ॥ २९
वासना चित्तजीवादिवेदनं वेदनोदितम् ।
नोदेत्यवेदनादेव यतनादेव पौरुषात् ॥ ३०
नास्तमेति न चोदेति क्वचित्किंचित्कदाचन ।
सर्वं शान्तमजं ब्रह्म चिद्घनं सुशिलाघनम् ॥ ३१
पराणुं प्रति सर्गौघाश्रिताद्भ्रान्तिसहस्रशः ।
तेष्वप्यणावणावन्तः कैवात्रावासना कथम् ॥ ३२
यथा जलान्त ऊर्म्योद्या गुप्तागुप्ताश्च शक्तयः ।
जाग्रत्स्वप्नसुषुप्ताद्यास्तथा जीवेऽन्तरास्थिताः ॥ ३३
जाता चेदरतिर्जन्तोर्भोगान्प्रति मनागपि ।
तदसौ तावतैवोच्चैः पदं प्राप्त इति श्रुतिः ॥ ३४
यतो यतो विरज्यते ततस्ततो विमुच्यते ।
अतोऽहमित्यसंविदन्क एति जन्मसंविदम् ॥ ३५
चितिं परापरामजामरूपिकामनामिकाम् ।
चराचराऽधरामयीं विदन्ति ये जयन्ति ते ॥ ३६

परे चितिः स्वप्रकटाद्वितीया-
स्वावर्तलेखेव जले द्रवान्तः ।
साहं तयेमानि जगन्ति धत्ते
न सन्ति नासन्ति परात्मकानि ॥ ३७
अहंमयी पद्मजभावना चित्
संकल्पभेदाद्वितनोति विश्वम् ।
अन्तर्मुखैवानुभवत्यनन्त-
निमेषकोट्यंशविधौ युगान्तम् ॥ ३८

इत्यार्षे श्रीवासिष्ठमहारामायणे उत्पत्तिप्रकरणे लीलो० जगत्स्वरूपवर्णनं नामैकषष्टितमः सर्गः ॥ ६१ ॥

---

रणादसत्कल्पेऽपि आविर्भावात्सत्कल्पम् । सरणकाले वायोः सत्त्वावगमात्सत्ये स्थैर्यमात्रादसत्यमिव । तथा सर्गोऽपि असत्कल्पेऽपि मूलाज्ञाने अधिष्ठानसत्तया सत्कल्पः । सत्येऽप्यधिष्ठाने असत्यमायात्मकत्वादसत्य इवेत्यर्थः ॥२२॥ तथाच दृष्टिभेदेन सत्यासत्यात्मत्वं विश्वस्येत्याह—**अन्यरूपे**ति । आलोकता भास्वरता । अन्यरूपेण दृष्टा असत्या अनन्यरूपेण दृष्टा सत्या स्थितेत्यर्थः ॥ २३ ॥ स्वप्नजाग्रदुपादानसौषुप्तात्मदृष्टान्तावाद्यौ विश्वसर्गोपादानब्रह्मदृष्टान्तस्तृतीयः ॥ २४ ॥ २५ ॥ चिन्मयेन भ्रान्त्या चिदाभासलक्षणजीवभूतेन । तत्त्वदृशा तु परब्रह्मानन्यत्वान्न भाव्यते ॥ २६ ॥ २७ ॥ अनन्यः सन् स्थितः । अन्यः सन्नास्ति असन्नित्यर्थः । निर्गलतीति निर्गलः प्रविलीनमात्रश्चिद्रूपः सन् परमात्ममात्रपरिशिष्टस्वरूपभृदित्यर्थः ॥ २८ ॥ अकारणोत्पन्नत्वमुपपादितमुपसंहरति—**कचन**मिति । यस्मात्तेन ब्रह्मणा न व्यतिरिच्यते तत्तस्मादकारणकमित्यर्थः ॥ २९ ॥ यद्यकारणकं तर्ह्यजातमेवेति कथं तद्वेदनानुभवस्तत्राह—**वासने**ति । वासना चित्तजीवादेर्यद्वेदनमनुभवस्तद्वेद्यतेऽनेनेति वेदनं मनस्तस्मादुदितम् । कस्तर्हि तदनुदये उपायस्तमाह—**नोदेती**ति । अवेदनान्मनोनाशात् । तच्च कस्मात्तत्राह—**यतनादेवे**ति । ज्ञानयोगदृढाभ्यासलक्षणात्पुरुषयत्नादित्यर्थः ॥ ३० ॥ कीदृशः स ज्ञानयोगस्तमभिनीयाह—**नास्तमेती**ति ॥ ३१ ॥ सति चित्ते परमाणूदरेऽपि सर्गपरम्परा दुर्वारेत्याह—**पराणुं प्रती**ति । अत्र अणवन्तः सर्गौघस्य आवसतिरावासना । एवमन्तावृत्ते यत्र समावेशेन स्थितिः कैव कथं वा । न क्वापि न कथंचिदपि युक्तेति मिथ्यैवेत्यर्थः ॥ ३२ ॥ अनिर्वचनीयमायाशक्तिरूपेणावस्थानं तु ऊर्म्यादिदृष्टान्तेऽपि सममित्याह—**यथे**ति ॥ ३३ ॥ तादृशपुरुषयत्ने च वैराग्यं हेतुरित्याशयेन श्रुतिमुदाहरति—**जाता चेदि**ति । तथा अन्यापि । 'कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः' इति ॥ ३४ ॥ स्मृतिमप्युदाहरति—**यत** इति । 'निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि' इति स्मृतिशेषो बोध्यः । अतो ज्ञानवैराग्यदार्ढ्यादहमिति देहादिकमसंविदन्न पश्यन् को जन्मसंविदं जननमरणभ्रान्तिमेति प्राप्नोति । न कश्चिदित्यर्थः ॥ ३५ ॥ तदेव ज्ञानं तत्त्वंपदार्थाखण्डैक्यगोचरं दर्शयति—**चिति**मिति । परामीश्वरचैतन्यात्मिकामपरां जीवचैतन्यात्मिकां च चितिं क्रमात्परामनामिकामरूपिकां नामरूपात्मकजगत्कल्पनोपाधिशून्यामपरां तु चराचरदेहादिलक्षणां ये अधरा निकृष्टोपाधयस्तन्मयताशून्याम् । मयडंतेन नञ्समासे अचराचराधरमयीमिति वक्तव्ये नञो मयटः प्राङ्निवेशश्छान्दसः । तथाच शोधितत्वंपदलक्ष्यार्थभूतामजां जन्मादिविकारशून्यां चितिमखण्डां ये गुरुशास्त्रस्वानुभवैर्विदन्ति ते जयन्ति संसारमित्यर्थः । चराचरात्मिका अधरा यास्तनवस्तन्मयीं तत्प्रायां जीवभूतामनामिकामरूपिकां च ये विदुरिति वा ॥ ३६ ॥ ३७ ॥ व्यष्टाविव समष्टावप्यहंकारसंकल्पोभयवशादेव स्वान्तःसंसारकल्पनेति दर्शयन्नुपसंहरति—**अहंमयी**ति । समष्टौ व्यष्ट्यपेक्षया

## द्विषष्टितमः सर्गः ६२

श्रीवसिष्ठ उवाच।

परमाणुनिमेषाणां लक्षांशकलनास्वपि।
जगत्कल्पसहस्राणि सत्यानीव विभान्त्यलम् ॥ १
तेष्वप्यन्तस्तथैवान्तः परमाणुकणं प्रति।
भ्रान्तिरेवमनन्ताहो इयमित्यवभासते ॥ २
वहन्तीमाः पराः सत्ताः शान्ताः सर्गपरम्पराः।
सलिलद्रवतेवान्तःस्फुटावर्तविवर्तिका ॥ ३
मिथ्यात्मिकैव सर्गश्रीर्भवतीह महामरौ।
तीरद्रुमलतोन्मुक्तपुष्पालीव तरङ्गिणी ॥ ४
स्वप्नेन्द्रजालपुरवत्संकथेहापुराद्रिवत्।
संकल्पवदसत्यैव भाति सर्गानुभूतिभूः ॥ ५

श्रीराम उवाच।

एकात्मैकतयैवं हि जाते सम्यग्विचारणात्।
निर्विकल्पात्मविज्ञाने परे ज्ञानवतां वर ॥ ६
किमर्थमिह तिष्ठन्ति देहास्तत्त्वविदामपि।
दैवेनैव समाक्रान्ता दैवमत्र च किं भवेत् ॥ ७

श्रीवसिष्ठ उवाच।

अस्तीह नियतिर्ब्राह्मी चिच्छक्तिः स्पन्दरूपिणी।
अवश्यभवितव्यैकसत्ता सकलकल्पगा ॥ ८
आदिसर्गे हि नियतिर्भाववैचित्र्यमक्षयम्।
अनेनेत्थं सदा भाव्यमिति संपद्यते परम् ॥ ९
महासत्तेति कथिता महाचितिरिति स्मृता।
महाशक्तिरिति ख्याता महादृष्टिरिति स्थिता ॥ १०
महाक्रियेति गदिता महोद्भव इति स्मृता।
महास्पन्द इति प्रौढा महात्मैकतयोदिता ॥ ११
तृणानीव जगन्त्येवमिति दैत्याः सुरा इति।
इति नागा इति नगा इत्याकल्पं कृतास्थितिः ॥ १२
कदाचिद्ब्रह्मसत्ताया व्यभिचारोऽनुमीयते।
चित्रमाकाशकोशे च नान्यथा नियतेः स्थितिः ॥ १३
विरिञ्च्याद्यात्मभिर्बुद्धैर्बोधायाविदितात्मनाम्।
ब्रह्मात्मैव सा नियतिः सर्गोऽयमिति कथ्यते ॥ १४
अचलं चलवद्दृष्टं ब्रह्मापूर्य व्यवस्थितः।
अनादिमध्यपर्यन्तं सर्गो वृक्ष इवाम्बरे ॥ १५
पाषाणोदरलेखौघन्यायेनात्मनि तिष्ठता।
ब्रह्मणा नियतिः सर्गो बुद्धोऽबोधवतेव खम् ॥ १६

---

यो विशेषस्तमाह—**अन्तर्मुखैवेति** । नासदादिवद्बहिर्मुखेत्यर्थः। अनन्तस्य विष्णोर्निमेषस्य यः कोट्यंशभूतो विदधातीति विधिः कालस्तस्मिन् युगान्तं द्विसप्ततिसहस्रसहस्रसंख्याकदिव्ययुगान्तं स्वायुरनुभवति। अहो मायेति भावः ॥ ३८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जगत्स्वरूपवर्णनं नामैकषष्टितमः सर्गः ॥ ६१ ॥

भ्रान्तिमात्रत्वमुदितं विश्वस्यादौ प्रपञ्च्यते।
महानियतिशक्तिश्च जीवन्मुक्त्यादिसिद्धये ॥ १ ॥

परमाणोर्लक्षतमांशस्य कल्पनायां तत्र जगच्छद्दितब्रह्माण्डसहस्राणि निमेषस्य लक्षांशकल्पनायां तत्र कल्पसहस्राणि च अलमन्यन्तं दृश्यमानब्रह्माण्डवदेव सत्यानीव भान्तीति क्रमेण संबन्धः ॥ १ ॥ तेष्वपि प्रत्येकमेवंविधा कल्पना संभवतीत्यनवस्थितस्वभावत्वाद्भ्रान्तिरेवेयमित्याह—**तेष्वपीति** ॥ २ ॥ इमा वर्तमानाः परा आगामिन्यः शान्ता अतीताश्च सर्गपरम्परा अन्तःस्फुटा आवर्तानां विवर्तिकाः परिवृत्तयो यस्यां तथाविधा सलिलद्रवतेव प्रातीतिकीः सत्ता वहन्ति धारयन्ति प्रवहन्ति च ॥ ३ ॥ तीरद्रुमैर्लतामिश्रैरोन्मुक्ता अभिवृष्टा पुष्पालिर्यस्यां तथा कल्पिता तरङ्गिणी मृगतृष्णिका नदीव ॥ ४ ॥ ५ ॥ तत्त्वज्ञानोदयेन सर्वभ्रान्तिनाशे विदुषां देहस्थित्यसंभवं रामः शङ्कते—**एकात्मेति**। एवमुक्तप्रकारात्सम्यग्विचारणात्। एकोऽद्वितीय आत्मा ब्रह्म तदेकतया तदभेदेन परे उत्कृष्टे निर्विकल्पात्मविज्ञाने जाते सति ॥ ६ ॥ दैवेन सम्यगाक्रान्ता बलिप्रभृतय इव। **अत्र तत्त्वज्ञविषये दैवं किं भवेत्**। 'तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति'। इति श्रुत्या तत्त्वविदि दैवस्यासामर्थ्योक्तेः किं तत्प्रबलतरं संभावितमित्यर्थः ॥ ७ ॥ प्राण्यदृष्टवस्तु शक्तिसहकृतेश्वरसंकल्पलक्षणमहानियतिवशादेव सर्वव्यवहारव्यवस्थावद्विदुषां देहधारणमपीत्याशयेन वसिष्ठ उत्तरमाह—**अस्तीत्यादिना** । स्पन्दः सर्वजगद्व्यवस्थितव्यवहारस्तेन रूपिणीव स्फुटा ॥ ८ ॥ कदाप्रभृति सा किंरूपा वा तदाह—**आदिसर्गे** इति। अनेन वह्न्यादिना इत्थमौष्ण्योर्ध्वज्वलनादिस्वभावेन सदा भाव्यमिति परं ब्रह्म स्वयं संकल्पात्मकवृत्तिरूपमक्षयमप्रतिहतं संपद्यते ॥ ९ ॥ सर्वजगतां स्थितिप्रथासामर्थ्यविवेकनिर्माणजन्मार्थक्रियादिहेतुत्वात्क्रमेण महासत्तेत्यादिनामभिः ख्याता ॥ १० ॥ ११ ॥ जगन्ति एवं दृश्यमानविधया तृणानीव परिवर्तयन्तीति शेषः। दैत्या इति एवं क्रूरादिप्रकाराः सुरा देवा इति सौम्यादिप्रकारा इत्यादिरूपा आकल्पं कृता आस्थितिर्व्यवस्था यया ॥ १२ ॥ परमार्थदृष्टौ ब्रह्मसत्तेव व्यवहारे साप्यव्यभिचरितेत्याह—**कदाचिदिति** । ब्रह्मसत्ताया व्यभिचार आकाशकोशे चित्रलेखनं चात्यन्तासंभावितमप्यनुमीयते न तु नियतेः स्थितिरन्यथा जातेत्यनुमातुं शक्यमित्यतिशयोक्तिः ॥१३॥ इदं च व्यावहारिकदृशोक्तं तत्त्वज्ञदृशा तु न ब्रह्मनियतिसर्गशब्दार्था भिद्यन्त इत्याशयेनाह—**विरिञ्च्यादीति**। बुद्धैस्तत्त्वज्ञैः ॥१४॥ नन्वलं ब्रह्म चलः सर्गः कथमनयोरैक्यं तत्राह—**अचलमिति**। अनादिमध्यपर्यन्तं ब्रह्म आपूर्य अज्ञदृशा आपूर्येव सर्गो व्यवस्थितः ॥ १५ ॥ नन्वियं नियतिर्हिरण्यगर्भेण कथं बुद्धा येन तदनुरूपमेव ससर्ज तत्राह—**पाषाणेति**। स्फटिक-

देहे यथाङ्गिनोऽङ्गादि दृश्यते चित्स्वभावतः ।
ब्रह्मणा पद्मजत्वेन नियत्याद्यङ्गकं तथा ॥ १७
एषा दैवमिति प्रोक्ता सर्वं सकलकालगम् ।
पदार्थमलमाक्रम्य शुद्धा चिदिति संस्थिता ॥ १८
स्पन्दितव्यं पदार्थेन भाव्यं वा भोक्तृतापदम् ।
अनेनेत्थमनेनेत्थमवश्यमिति दैवधीः ॥ १९
एषैव पुरुषस्पन्दस्तृणगुल्मादि चाखिलम् ।
एषैव सर्वभूतादि जगत्कालक्रियादि वा ॥ २०
अनया पौरुषी सत्ता सत्तास्याः पौरुषेण च ।
लक्ष्यते भुवनं यावद्द्वे एकात्मतयैव हि ॥ २१
नरेण पौरुषेणैव कार्ये सत्तात्मके उभे ।
ईदृश्येतेन नियतिरेवं नियतिपौरुषे ॥ २२
प्रष्टव्योऽहं त्वया राम दैवपौरुषनिर्णयः ।
मदुक्तं पौरुषं पाल्यं त्वयेति नियतिः स्थिता ॥ २३
भोजयिष्यति मां दैवमिति दैवपरायणः ।
यत्तिष्ठत्यक्रियो मौनं नियतेरेष निश्चयः ॥ २४

न स्याद्बुद्धिर्न कर्माणि न विकारादि नाकृतिः ।
केवलं त्वित्थमाकल्पं स्थित्या भाव्यमिति स्थिताः ॥
अवश्यंभवितव्यैषा त्विदमित्थमिति स्थितिः ।
न शक्यते लङ्घयितुमपि रुद्रादिबुद्धिभिः ॥ २६
पौरुषं न परित्याज्यमेतामाश्रित्य धीमता ।
पौरुषेणैव रूपेण नियतिर्हि नियामिका ॥ २७
अपौरुषं हि नियतिः पौरुषं सैव सर्गगा ।
निष्फलाऽपौरुषाकारा सफला पौरुषात्मिका ॥ २८
नियत्या मूकतामेत्य निष्पौरुषतयाऽक्रियम् ।
यस्तिष्ठति प्राणमरुत्स्पन्दस्तस्य क गच्छति ॥ २९
अथ प्राणक्रियारोधमपि कृत्वा विरामदम् ।
यदि तिष्ठति तत्साधुर्मुक्त एव किमुच्यते ॥ ३०
पौरुषैकात्मता श्रेयो मोक्षोऽत्यन्तमकर्तृता ।
आभ्यां तु सबलः पक्षो निर्दुःखैव महात्मनाम् ॥ ३१
नियतिर्ब्रह्मसत्ताभा तस्यां चेत्परिणस्यते ।
नूनं परमशुद्धाख्यं तत्प्राप्तैव परागतिः ॥ ३२

---

पाषाणोदरप्रतिबिम्बितवनलेखौघन्यायेनात्मनि मायाशवले ब्रह्मणि तिष्ठता ब्रह्मणा हिरण्यगर्भेण अबोधवता प्रसुप्तपुरुषेण आत्मनि स्वाप्नकल्पनाश्रयं खमिव नियतिरेव भाविसर्गो बुद्धः ॥१६॥ तथा नियत्यादिसर्गजातमङ्गकं स्वावयवभूतं दृष्टमिति शेषः ॥१७॥ शुद्धा मोहानास्कन्दिता चित् ईश्वरसंकल्पचैतन्यम् । इति जगद्व्यवस्थारूपेण ॥ १८ ॥ १९ ॥ २० ॥ प्राण्यदृष्टनियत्योः परस्परसहायतामाह—**अनये**ति । पौरुषी पुरुषादृष्टसंबन्धिनी सत्ता फलावश्यंभावलक्षणा स्थितिर्लक्ष्यते । सत्ता नियतिसत्ता । कियत्कालमेवं व्यवस्था तत्राह—**भुवन**मिति । भुवनं त्रिभुवनं यावत्कालमस्ति तावदित्यर्थः । प्रलये तर्हि कथं तत्राह—**द्वे** इति । द्वे एते सत्ते एकात्मतयैव तदा आसाते इत्यर्थः ॥ २१ ॥ द्वयोरपि पुरुषयत्नानुसारिता तथैव नियतिस्थितेरित्याह—**नरे**णेति । कार्ये निर्वाह्ये नियतिपौरुषे अपि एवं प्राण्यदृष्टनिर्वाह्ये । एतेन क्रमेण ईदृशी नियतिः स्थितेति शेषः ॥२२॥ किं बहुना तव शिष्यभावेन प्रष्टृत्वं मदुपदिष्टार्थानुष्ठातृत्वं च नियतिकृतमेवेत्याह—**प्रष्टव्य** इति । ननु 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्' इति कात्यायनवचनात्प्रच्छेरकथिते गौणे कर्मणि तव्यप्रत्ययेन मुख्यस्य कर्मणोऽनभिहितत्वाद्दैवपौरुषनिर्णयमिति द्वितीयया भाव्यं तत्कथं प्रथमाप्रयोग इति चेत् । सत्यम् । त्वया अहं प्रष्टव्यस्तत्रापि दैवपौरुषनिर्णय एव प्रष्टव्य इत्यावृत्त्या नियतिद्वयबोधनाय तन्त्रेण कर्मद्वयस्यापि तव्यप्रत्ययेनाभिधानविवक्षोपपत्तेरिति ॥ २३ ॥ यदपि कश्चिद्दैवमेवावलम्ब्य पौरुषप्रयत्नमकुर्वन्नाजगरं व्रतमास्थाय तिष्ठति तदपि तदनुगुणप्राक्तनकर्मोद्बोधितनियतिनिश्चयादेवेत्याह—**भोजयिष्यती**ति ॥ २४ ॥ प्रागपि पुरुषो यदि केवलमक्रिय एव स्यात्तर्हि बुद्धिस्तत्प्रयुक्तकर्म तत्प्रयुक्ता भूतभौतिकविकारा विकृतीनां च गन्धादिसंस्थानाकृति-

श्चेत्येते न स्युः । तथाच श्रुतिः—'यद्येतन्न कुर्यात्क्षीयेत ह' इति । इत्थं पुरुषक्रियामूलतयैव तु आकल्पव्यवहारस्थित्या भाव्यमिति नियतिवशादेव सर्वे भावास्तथा स्थिता इत्यर्थः ॥ २५ ॥ इयं च नियतिरीश्वरैरपि दुरतिक्रमेत्याह—**अवश्य**मिति ॥ २६ ॥ एतां निश्चितिमिति शेषः ॥ २७ ॥ इदानीं नियतिपौरुषशब्दार्थैक्यमेव उपाधिभेदादेव व्यवहारभेद इत्याह—**अपौरुष**मिति । अपौरुषं पुरुषप्रयत्नात्मना अविवक्षिता ईश्वरसंकल्पनामात्रेण नियतिरित्युच्यते । सैव तदात्मना सर्गगा सृष्टिफलोपहिता पौरुषमित्युच्यते । यतः अपौरुषा पुरुषयत्नाकारेणापरिणता नियतिर्निष्फला । पौरुषात्मिका सफलेति पौरुषादेव पुरुषार्थलाभ इत्यर्थः ॥ २८ ॥ ननु तर्हि निष्पौरुषस्याप्यजगरवृत्तेस्तृप्त्यादिफललाभो दृष्टस्तत्राह—**नियत्ये**ति । सत्यं दृष्टस्तथापि स ग्रसनादिपुरुषयत्नादेव । यस्तु पुरुषो नियत्या तृप्तिः सेत्स्यतीति मूकतां वागादिक्रियाप्रयत्नशून्यतामेत्य निष्पौरुषतया अक्रियं ग्रसनादिक्रियारहितं यथा स्यात्तथा तिष्ठति न स तृप्यति । यदपि स क्षुधितोऽपि कंचित्कालं जीवति तदपि प्राणचलनानुकूलपुरुषयत्नादेवेत्याह—**प्राणे**ति ॥ २९ ॥ यदि विरामदं निर्विकल्पसमाधौ चित्तविश्रान्तिदं प्राणनिरोधमधिकृत्वा स तिष्ठति तत्तस्मायत्नात्साधुस्तत्त्वविच्चेन्मुक्तः सर्वपौरुषफलावस्थालक्षणं मोक्षं प्राप्तो भवति तदपि प्राणनिरोधादिपौरुषस्यैव फलमित्यपौरुषं फलं किमुच्यते, न किंचिदित्यर्थः ॥३०॥ तस्मात्पौरुषैकात्मता शास्त्रीयपौरुषैकपरता श्रेयोहेतुत्वात्साधनतः श्रेयः । अत्यन्तकर्मतालक्षणो मोक्षस्तु फलतः श्रेयः । आभ्यां साध्यसाधनश्रेयोभ्यां तु महात्मनां ज्ञानिनां पक्षः सबलः सकार्याविद्योपघातसमर्थ इति निर्दुःखैव तेषां नियतिरित्यर्थः ॥ ३१ ॥ या चेयं निर्दुःखा नियतिः सैव ब्रह्मसत्ताया आभा स्फूर्तिस्तस्यां चेद्यत्नेन

एतैर्नियत्यादिमहाविलासै-
र्ब्रह्मैव विस्फूर्जति सर्वगात्मा ।
तृणादिवल्लीतरुगुल्मजालैः
सत्तेव तोयस्य धरान्तरस्था ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० दैवशब्दार्थनिरूपणं नाम द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ६३

श्रीवसिष्ठ उवाच ।

यदेतद्ब्रह्मतत्त्वं सर्वथा सर्वदैव सर्वत एव सर्वशक्ति सर्वाकारं सर्वेश्वरं सर्वगं सर्वमेवेति ॥ १

एष त्वात्मा सर्वशक्तित्वाच्च कचिच्चिच्छक्तिं प्रकटयति क्वचिच्छान्तिं क्वचिज्जडशक्तिं क्वचिदुल्लासं क्वचित्किंचिन्न किंचित्प्रकटयति ॥ २

यत्र यदा यदेवासौ यथा भावयति तत्र तदा तदेवासौ प्रपश्यति ॥ ३

सर्वशक्तेर्हि या यैव यथोदेति तथैव सा ॥ ४

तदास्ति शक्तिर्नानारूपिणी सा स्वभावत इमाः शक्तयोऽयमात्मेति ॥ ५

एवं विकल्पजालं व्यवहारार्थं धीमद्भिः परिकल्पितं लोके नत्वात्मनि विद्यते भेदः ॥ ६

यथोर्मितरङ्गपयसां सागरे कटकाङ्गदकेयूरैर्वा हेम्नः । अवयवावयविनोः संवित्कालपनिकी द्विता न वास्तवी ॥ ७

यथा यच्चेत्यते हि तथैव तन्न बाह्यतो नान्तरतश्चैतत्समुदेति हि ॥ ८

सर्वात्मत्वात्समाभासं क्वचित्किंचित्प्रपश्यति ॥ ९

सर्वाकारमयं ब्रह्मैवेदं ततं मिथ्याज्ञानवद्भिः शक्तिशक्तिमत्त्वे अवयवावयविरूपे कल्पिते न पारमार्थिके ॥ १०

सद्वा भवत्वसद्वा चिद्यत्संकल्पयत्यभिनिविशति तत्तत्पश्यति सकला तत्सद्ब्रह्मैव चिद्भाति ॥ ११

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० चित्तविकारो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

परिणम्यते स्थिरीभूयते तदेव परमशुद्धाख्यं पदं 'सा काष्ठा सा परा गतिः' इति श्रुतिप्रसिद्धा परमागतिरपि तत्तस्मात्प्रसिद्धैवेत्यर्थः ॥ ३२ ॥ एतैरुक्तप्रकारैर्महद्भिरप्रतिहतैर्विलासैर्ब्रह्मैव धरान्तरस्था तोयस्य सत्ता द्रवता तृणकुशकाशादिभेदैर्वल्लीतरुगुल्मजालादिभावैश्च यथा विस्फूर्जति स्फुरति तथा विस्फूर्जतीत्यर्थः ॥ ३३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे दैवशब्दार्थनिरूपणं नाम द्विषष्टितमः सर्गः ॥ ६२ ॥

**विस्फूर्जति यथा ब्रह्म सर्वतः सर्वरूपतः ।**
**मायाशक्तिविलासेन तथात्र प्रतिपाद्यते ॥ १ ॥**

नियत्यादिविलासैर्ब्रह्मैव विस्फूर्जतीत्युक्तं तत्कस्य हेतोस्तत्राह—**यदेतदिति** । यद्यत एतन्मायाशबलं ब्रह्मतत्त्वं सर्वथा सर्ववस्तुतः, सर्वदैव कालतः, सर्वत एव देशतश्च, सर्वशक्ति सर्वभावसमर्थमतएव सर्वाकारम् सर्वज्ञतया सर्वनियन्तुमीष्टे इति सर्वेश्वरम् । विप्रकर्षताटस्थ्ययोर्वारणाय सर्वगं सर्वमेवेति विशेषणे । इति अतो हेतोरित्यर्थः ॥१॥ कुतो न विप्रकर्षताटस्थ्ये तत्राह—**एष त्वात्मेति** । स तर्हि सर्वं सर्वत्र प्रकटयेन्नेत्याह—**क्वचिदिति** । क्वचिदन्तःकरणोपाधौ जीवभावेन प्रवेशाच्चिच्छक्तिं प्रकटयति, सात्त्विकोपाधौ शान्तिम्, तामसोपाधौ जडशक्तिम्, राजसोपाधौ रागलोभप्रवृत्त्याद्युल्लासम्, किंचिन्मिश्रितं गुणकार्यत्वादिविशेषतो दुर्वचम्, सुषुप्तिप्रलययोस्तु न किंचित्प्रकटयति ॥ २ ॥ तत्र चास्य सत्यसंकल्पतैव हेतुरित्याह—**यत्रेति** ॥३॥ शक्तीनामाविर्भावानुगुणैव स्थितिवैचित्र्यं चेत्याह—**सर्वशक्तेरिति** । या येति वीप्सा ॥४॥ शक्तिशक्तिमद्भेदकल्पनेयं व्यवहारदृशैव न परमार्थत इत्याह—**इमा** इति ॥ ५ ॥ ६ ॥ नत्वात्मनि विद्यते भेद इत्यत्रार्थे दृष्टान्तत्रयप्रदर्शनपरो यथेत्यादिर्न वास्तवीत्यन्तो ग्रन्थः । संवित्कालपनिकी व्युत्पादकबुद्धिपरिकल्पिता द्विता भिदा ॥ ७ ॥ हि यस्माद्यद्रज्ज्वादि यथा सर्पादिप्रकारेण चेत्यते बुध्यते तत्तथैव विवर्ततो भवति न परमार्थतः । कुतः । यत एतत्सर्पादि रज्ज्वादेर्न बाह्यं समुदेति नाप्यन्तरतः ॥ ८ ॥ समाभासं सर्वसाधारणप्रथारूपं साक्षिचैतन्यं भोजकादृष्टोद्बुद्धं क्वचित्किंचिदेव भ्रान्त्या प्रपश्यति न सर्वत्र नापि स्वरूपमित्यर्थः ॥ ९ ॥ परमार्थतस्तु ततं विस्तृतमिदं सर्वाकारमयं ब्रह्मैव । तत्किं शक्तिविशिष्टं जगदवयवकं परमार्थतो ब्रह्म नेत्याह—**मिथ्याज्ञानवद्भिरिति** ॥ १० ॥ एवंच मिथ्याज्ञानोपहिता चित्सत् शास्त्रानुगुणमसत् शास्त्रप्रतिकूलं वा यदेव कर्तव्यतया संकल्पयति तदभिनिविशति तद्विषये उद्युक्तं च भवतीत्यर्थः । अभिनिवेशेन च तत्तदनुरूपं विहितं निषिद्धं वा कृत्वा फलभोगकालेऽपि तत्तत्पश्यतीति आद्यसर्गसंकल्पमारभ्य भूतभौतिकदेहभोग्यादिसर्गेण पुरुषभोगान्तसकलप्रपञ्चरूपा ब्रह्मचिदेव भाति विस्फूर्जति नान्यदिति ॥ ११ ॥ चिद्भावश्रित्ता तस्या अविकारः सर्गार्थः । इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तविकारो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥

## चतुःषष्टितमः सर्गः ६४

श्रीवसिष्ठ उवाच ।

योऽयं सर्वगतो देवः परमात्मा महेश्वरः ।
स्वच्छः स्वानुभवानन्दस्वरूपोऽन्तादिवर्जितः ॥ १
एतस्मात्परमानन्दाच्छुद्धचिन्मात्ररूपिणः ।
जीवः संजायते पूर्वं स चित्तं चित्ततो जगत् ॥ २

श्रीराम उवाच ।

स्वानुभूतिप्रमाणेऽस्मिन्ब्रह्मणि ब्रह्मबृंहिते ।
कथं सत्तामवाप्नोति जीवको द्वैतवर्जिते ॥ ३

श्रीवसिष्ठ उवाच ।

असदाभासमच्छात्म ब्रह्मास्तीह प्रबृंहितम् ।
बृहच्चिद्भैरववपुरानन्दाभिधमव्ययम् ॥ ४
तस्य यत्सममापूर्णं शुद्धं सत्वमचिह्नितम् ।
तद्विदामप्यनिर्देश्यं तच्छान्तं परमं पदम् ॥ ५
तस्यैवोद्यदिवाशान्ति यत्सत्त्वं संविदात्मकम् ।
स्वभावात्स्पन्दनं तत्तु जीवशब्देन कथ्यते ॥ ६
तत्रेमाः परमादर्शे चिद्व्योम्न्यनुभवात्मिकाः ।
असंख्याः प्रतिबिम्बन्ति जगज्जालपरम्पराः ॥ ७
ब्रह्मणः स्फुरणं किंचिद्यदवाताम्बुधेरिव ।
दीपस्येवाप्यवातस्य तं जीवं विद्धि राघव ॥ ८
शान्तत्वापगमेऽच्छस्य मनाक्संवेदनात्मकम् ।
स्वाभाविकं यत्स्फुरणं चिद्व्योम्नः सोऽङ्ग जीवकः ॥ ९
यथा वातस्य चलनं कृशानोरुष्णता यथा ।
शीतता वा तुषारस्य तथा जीवत्वमात्मनः ॥ १०
चिद्रूपस्यात्मतत्त्वस्य स्वाभाववशतः स्वयम् ।
मनाक्संवेदनमिव यत्तज्जीव इति स्मृतम् ॥ ११
तदेव घनसंवित्त्या यात्यहंतामनुक्रमात् ।
वह्न्यणुः स्वेन्धनाधिक्यात्स्वां प्रकाशकतामिव ॥ १२
यथा स्वतारकामार्गे व्योम्नः स्फुरति नीलिमा ।
शून्यस्याप्यस्य जीवस्य तथाहंभावभावना ॥ १३
जीवोऽहंकृतिमादत्ते संकल्पकलयेद्धया ।
स्वयैतया घनतया नीलिमानमिवाम्बरम् ॥ १४
अहंभावो हि दिक्कालव्यवच्छेदी कृताकृतिः ।
स्वयं संकल्पवशतो वातस्पन्द इव स्फुरन् ॥ १५
संकल्पोन्मुखतां यातस्त्वहंकाराभिधः स्थितः ।
चित्तं जीवो मनो माया प्रकृतिश्चेति नामभिः ॥ १६
तत्संकल्पात्मकं चेतो भूततन्मात्रकल्पनम् ।
कुर्वंस्ततो व्रजत्येव संकल्पाद्याति पञ्चताम् ॥ १७

---

भोग्यस्य शक्तिवैचित्र्याद्याविर्भावो निरूपितः ।
भोक्तुर्जीवत्वसंपत्तिक्रमोऽत्र प्रतिपाद्यते ॥ १ ॥

॥१॥ 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि'इति श्रुतेर्नामरूपव्याकरणलक्षणजगत्सर्गात्पूर्वं जीवोपाधिलिङ्गसमष्ट्युत्पत्त्या जीवः संजायते स एवोपाधिप्राधान्येन चित्तमित्युच्यते ॥ २ ॥ अखण्डाद्वितीयस्वप्रकाशे ब्रह्मणि सखण्डसद्वितीयजीवसत्तानुपपत्तिं रामः शङ्कते—**स्वानुभूती**ति। ब्रह्मणि ब्रह्मत्वादेव बृंहिते निरतिशयापरिच्छेदलक्षणां वृद्धिं प्राप्ते। अल्पो जीवो जीवकः सत्तां पूर्वसिद्धब्रह्मताविरोधिनीं पृथक्सत्तां कथमवाप्नोतीत्यर्थः ॥ ३ ॥ सत्ये निरविद्ये ब्रह्मणि परमार्थदृशा न जीवसत्तासंभवः, साविद्ये तु तत्संभवो न विरुध्यत इति विभज्य विवक्षुः प्रथमं साधारणं तत्स्वरूपमाह—**असदि**ति। असन्त आभासा द्वैतप्रत्यया यत्र। प्रबृंहितमित्यस्यैव विवरणं बृहच्चिद्भैरववपुरिति। अनात्मयोगिनां भीषणत्वाद्भैरवं वपुः स्वरूपं यस्य। यथाहुर्वृद्धाः—'अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिनाम्। योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥' इति ॥४॥ आद्यं दर्शयति—**तस्ये**ति ॥ ५ ॥ द्वितीयं दर्शयति—**तस्यैवे**ति ॥ आशान्ति आमोक्षं उद्भवबीजसत्त्वादुद्यदिव यद्रूपं तस्योपाधिस्वभावाद्यत्स्पन्दनं चलनशक्त्यात्मकप्राणधारणम् ॥ ६ ॥ तत्रैव सर्वनामरूपव्याकरणमित्याह—**तत्रे**ति ॥७॥ जगद्वैचित्र्यकल्पनानुकूलक्रियाशक्तिप्रधानप्राणभाव एव जीवभावश्चित इत्यत्र दृष्टान्तमाह—**ब्रह्मण** इति ॥ ८ ॥ अच्छस्य ब्रह्मणः प्राणाधीनचलनाध्यासे शान्तत्वस्य निष्क्रियत्वस्यापगमे तिरोधाने सति मनागल्पं यत्संवेदनं तदात्मकम् ॥ ९ ॥ तच्च जीवत्वमामोक्षं जीवस्य स्वाभाविकमिवेत्याह—**यथे**ति ॥ १० ॥ स्वस्य अभावनमभावोऽज्ञानं तद्वशतो मनाक्संवेदनं ज्ञानस्वरूपस्य परिच्छेद इव यत्तत् ॥ ११ ॥ तस्याहंकारात्मकरुद्रभावमाह—**तदेवे**ति। घनसंवित्त्या वासनादार्ढ्येन। अहंतां अहंकारताम्। वह्न्यणुरग्निकणः स्वस्य इन्धनं दीपनं यद्घृततैलादि तदाधिक्यात् ॥ १२ ॥ स्वस्य द्रष्टुस्तारका कनीनिकोपलक्षितं चक्षुस्तस्या मार्गे अविषये भागे व्योम्नि प्रसृतं हि चक्षुर्यावद्दूरं गन्तुं शक्नोति तावन्नीलिमानं न पश्यति। यत्र तु गत्वाग्रे कुण्ठीभवति ततः प्रभृति तस्या मार्गस्तत्र नैल्यशून्येऽपि नीलिमा स्फुरति तथा अहंताशून्यस्याप्यस्य जीवस्य स्वाविषये स्वात्मन्यहंभावभावनेत्यर्थः ॥ १३ ॥ संकल्पकला पूर्वसंकल्पसंस्कारस्तया इद्धया उद्बुद्धया स्वया स्वाध्यस्तया एतया प्रत्यक्षया घनतया स्निग्धेन्द्रनीलशिलाकल्पया निबिडतया ॥ १४ ॥ दिक्कालव्यवच्छेदी आत्मनो दैशिककालिकपरिच्छेदकारी। स्वयं संकल्पवशतः कृतदेहाद्याकृतिः ॥ १५ ॥ अहंभावाध्यासमूलाश्चित्तादिभेदा इत्याह—**चित्त**मित्यादिना। सोहंकारो रुद्रश्चित्तं विष्णुर्जीवो ब्रह्मा तेषामेव क्रमान्मनो माया प्रकृतिरिति क्रियानामानि ॥१६॥ तत्संकल्पात्मकं चेतो ब्रह्मा संकल्पाद्भूततन्मात्रकल्पनां कुर्व-

तन्मात्रपञ्चकाकारं चित्तं तेजःकणो भवेत् ।
अजातजगति व्योम्नि तारका पेलवा यथा ॥ १८
तेजःकणत्वमादत्ते चित्तं तन्मात्रकल्पनात् ।
शनैः स्वस्मात्परिस्पन्दाद्बीजमङ्कुरतामिव ॥ १९
असौ तेजःकणोऽण्डाख्यः कल्पनात्कश्चिदण्डताम् ।
प्रयात्यन्तःस्फुरद्ब्रह्मा जलमापिण्डतामिव ॥ २०
कश्चिद्वागिति देहादिकलनायाति देहताम् ।
भ्रान्तित्वं तदतद्रूपं गन्धर्वैश्च वसत्पुरम् ॥ २१
कश्चित्स्थावरतामेति कश्चिज्जंगमतामपि ।
कश्चिद्याति खचार्यादिरूपं संकल्पतः स्वतः ॥ २२
सर्गादावादिजो देहो जीवः संकल्पसंभवः ।
क्रमेण पदमासाद्य वैरिञ्चं कुरुते जगत् ॥ २३
आत्मभूकलनात्मासौ यत्संकल्पयति क्षणात् ।
तत्स्वभाववशादेव जातमेव प्रपश्यति ॥ २४
चित्स्वभावात्समायातं ब्रह्मत्वं सर्वकारणम् ।
संसृतौ कारणं पश्चात्कर्म निर्माय संस्थितम् ॥ २५
चित्तं स्वभावात्स्फुरति चित्तः फेन इवाम्भसः ।
कर्मभिर्बध्यते पश्चाड्डिण्डीरमिव रज्जुभिः ॥ २६
संकल्पः कलनाबीजं तदात्मैव हि जीवकः ।
कर्म पश्चात्तनोत्युच्चैरुत्थायाकर्मतः क्रमात् ॥ २७
क्रोडीकृताङ्कुरं पूर्वं जीवो धत्ते स्वजीवितम् ।
पश्चान्नानात्वमायाति पत्राङ्कुरफलक्रमैः ॥ २८
अन्ये स्व एव ये जीवा एवमेवाकृतिं गताः ।
पूर्वोत्पन्ने जगति ते यान्ति भूताश्रयां स्थितिम् ॥ २९
स्वकर्मभिस्ततो जन्ममृतिकारणतां गतैः ।
प्रयान्त्यूर्ध्वमधस्ताद्वा कर्म चित्स्पन्द उच्यते ॥ ३०
चित्स्पन्दनं भवति कर्म तदेव दैवं
चित्तं तदेव भवतीह शुभाशुभादि ।
तस्माज्जगन्ति भुवनानि भवन्ति पूर्वं
भूत्वा निजाङ्गकुसुमानि तरोरिवाद्यात् ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो० उत्पत्तिबीजाङ्कुरनिर्णयो नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

स्ततश्चेतनात्मकपूर्वावस्थातो व्रजति प्रच्यवत एव जडां पञ्चतां च याति ॥ १७ ॥ तस्य पञ्चीकरणेन हैमाण्डप्रकृतितेजोभावमाह—**तन्मात्रे**ति । ब्रह्मभावदृष्ट्या अल्पत्वात्कण इत्युक्तम् । पेलवा अस्फुटप्रकाशा ॥१८॥ उक्तमेव स्पष्टमाह—**तेजःकणत्व**मिति ॥१९॥ तत्र पूर्वकल्पे विराडात्मोपासनसंस्कृतस्य स्थूलसमष्टिविराड्भावस्तदन्यस्य व्यष्टिस्थूलदेहाहंभावसंस्कारात्तद्भाव इति विशेषमाह—**असा**वित्यादिना । कल्पनात्प्राक्तनोपासनात्मकाण्डात्माहंभावकल्पनात् । तस्य सह सिद्धं चतुष्टयमिति स्मृतिसिद्धमात्मज्ञानमित्याशयेन विशिनष्टि—**अन्तःस्फुरद्ब्रह्मे**ति । अथवा अन्तर्गर्भभूपद्मकर्णिकायां स्फुरन् ब्रह्मा चतुर्मुखो यस्येत्यर्थः । आपिण्डतां करकादिघनीभावम् ॥२०॥ कश्चिदनुपासकस्तु पुण्यकृत् इति वक्ष्यमाणप्रकारेण दिव्यदेहादेः कलनाद्राक् शीघ्रमेव देवादिदेहतां तत्र देहे अतद्रूपं अनहमि अहंभावलक्षणभ्रान्तित्वं याति । गन्धर्वैश्चादन्यैर्वा देवैर्वसत् पालितं पुरममरावत्यादि याति ॥ २१ ॥ कश्चित्पापकृत्तु स्थावरताम् । खचारिणः पक्षिणो रक्षःपिशाचादयश्च । आदिपदाज्जलचरा गृह्यन्ते ॥ २२ ॥ प्रथमजः सूक्ष्मदेहसमष्ट्युपाधिक एवात्मा विरिञ्चिजीवः स्वसंकल्पादण्डान्तर्जगत्सृजतीत्यर्थः ॥२३॥ तस्य सत्यसंकल्पतायां पूर्वतनसत्यसंकल्पात्मभूतादात्मोपासना हेतुरित्याशयेन विशिनष्टि—**आत्मभूकलनात्मे**ति ॥ २४ ॥ प्रथाचलनोभयधर्मकस्य जगतश्चिदात्मा प्रथमं प्रथायां हेतुश्चलनविकारादौ तु पश्चात्तनं कर्मेत्याह—**चित्स्वभावा**दिति । आद्यः कारणशब्दो भावप्रधानः ॥२५॥ उक्तमेव मूलतः स्फुटयति—**चित्त**मिति । डिण्डीरं फेनपिण्डो नौकादिनिबन्धनरज्जुभिर्बध्यते निरुध्यते न जलं तद्वच्चित्तमेव देहनिबन्धनैः कर्मभिर्बध्यते न चिदात्मेति भावः ॥ २६ ॥ लोकेऽपि संकल्पपूर्वकं कर्मणा घटादिरचनदर्शनादुक्तक्रमसिद्धिरित्याशयेनाह—**संकल्प** इति । अकर्मतः निष्क्रियात्मसंनिधानादिति यावत् ॥ २७ ॥ पश्चात्तनैरपि कर्मभिः प्राग्जीवे बीजान्तरङ्कुरवद्वासनात्मना स्थितमेवाविष्क्रियते नापूर्वमित्याशयेनाह—**क्रोडीकृताङ्कुर**मिति । यथा बीजस्थो जीवः पूर्वं क्रोडीकृतः सूक्ष्मतयान्तर्धृतः अङ्कुरो येन तथाविधं स्वजीवितं धत्ते पश्चात्त्वङ्कुरपत्रकाण्डशाखापल्लवपुष्पफलक्रमैर्नानात्वमायाति, तथा हिरण्यगर्भजीवोऽपीत्यर्थः ॥ २८ ॥ व्यष्टिजीवा अप्येवमेव स्वे स्वस्मिन् वासनात्मना स्थितामेवाकृतिं देहाद्याकारं गताः प्राप्ताः । एतावांस्तु विशेषः । ते हिरण्यगर्भजीवसंकल्पात्पूर्वोत्पन्ने जगति ब्रह्माण्डे मातापित्रादिरूपभूताश्रयां प्राणिनिमित्तां स्थितिं देहलाभं यान्तीति ॥२९॥ कर्मशब्दं व्याचष्टे—**चित्स्पन्द उच्यत** इति ॥३०॥ कर्मशब्दार्थमेव विवृण्वन् सर्गद्वयवर्णितभोक्तृभोग्यसर्गमुपसंहरति—**चित्स्पन्दन**मिति । तरोर्निजाङ्गानि शाखादीनि कुसुमानि च यथा प्राग्भूत्वा पुनर्भवन्ति तथा आद्यात्कारणाद्ब्रह्मणः सकाशात्तस्माच्चित्स्पन्दनलक्षणाच्छुभाशुभलक्षणात्कर्मणो निमित्ताज्जगन्ति भोक्तृप्राणिनिकायास्तदाधारतद्भोग्यभुवनानि च पुनःपुनर्भवन्तीत्यर्थः ॥३१॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे उत्पत्तिबीजाङ्कुरनिर्णयो नाम चतुःषष्टितमः सर्गः ॥६४॥

---

१ भावनः इति पाठः.

## पञ्चषष्टितमः सर्गः ६५

श्रीवसिष्ठ उवाच ।

परस्मात्कारणादेव मनः प्रथममुत्थितम् ।
मननात्मकमाभोगि तत्स्थमेव स्थितिं गतम् ॥ १
भावाभावलसद्दोलं तेनायमवलोक्यते ।
सर्गः सदसदाभासः पूर्वगन्ध इवेच्छया ॥ २
न कश्चिद्विद्यते भेदो द्वैतैक्यकलनात्मकः ।
ब्रह्मजीवमनोमायाकर्तृकर्मजगद्दृशाम् ॥ ३
अपारावारविस्तारसंवित्सलिलवल्गनैः ।
चिदेकार्णव एवायं स्वयमात्मा विजृम्भते ॥ ४
असत्यमस्थैर्यवशात्सत्यं संप्रतिभासतः ।
यथा स्वप्नस्तथा चित्तं जगत्सदसदात्मकम् ॥ ५
न सन्नासच्च संजातश्चेतसो जगतो भ्रमः ।
अथ धीसमवायानामिन्द्रजालमिवोत्थितः ॥ ६
दीर्घः स्वप्नः स्थितिं यातः संसाराख्यो मनोबलात् ।
असम्यग्दर्शनात्स्थाणाविव पुंस्प्रत्ययो मुधा ॥ ७
अनात्मालोकनाच्चित्तं चित्तत्वं नानुशोचति ।
वेतालकल्पनाद्बाल इव संकल्पिते भये ॥ ८
अनाख्यस्य स्वरूपस्य सर्वाशातिगतात्मनः ।
चेत्योन्मुखतया चित्तं चित्ताज्जीवत्वकल्पनम् ॥ ९
जीवत्वादप्यहंभावस्त्वहंभावाच्च चित्तता ।
चित्तत्वादिन्द्रियादित्वं ततो देहादिविभ्रमाः ॥ १०
देहादिमोहतः स्वर्गनरकौ मोक्षबन्धने ।
बीजाङ्कुरवदारम्भसंरूढे देहकर्मणोः ॥ ११

द्वैतं यथा नास्ति चिदात्मजीवयो-
स्तथैव भेदोऽस्ति न जीवचित्तयोः ।
यथैव भेदोऽस्ति न जीवचित्तयो-
स्तथैव भेदोऽस्ति न देहकर्मणोः ॥ १२
कर्मैव देहो ननु देह एव
चित्तं तदेवाहमितीह जीवः ।
स जीव एवेश्वरचित्स आत्मा
सर्वः शिवस्त्वेकपदोक्तमेतत् ॥ १३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने जीवविचारो नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

मनसो भोग्यवर्गस्य भोक्तुर्मूलस्य चाधुना ।
विमृश्य तत्त्वं चिन्मात्रपरिशेषः प्रदर्श्यते ॥ १ ॥

तत्रादौ सर्वकल्पनानां चिदनतिरेकं वक्तुं मूलभूतस्य मनस उत्पत्तिस्थित्योः कारणानन्यसत्ताकत्वात्तन्मात्रत्वमाह—**परस्मादि**ति ॥१॥ द्वैताभासस्य मनोधीनत्वमाह—**भावाभावे**ति । इदमित्थं भवति इत्थं नेत्येवं भावाभावयोर्विषययोर्लसन्ती दोलेव परिवृत्तिर्यस्येति पूर्वान्वयि । तेन चित्तेन पूर्वानुभूतो गन्धः स्मर्यमाणो यथा इच्छया मनोरथेनासन्नप्यवलोक्यते तद्वत् ॥ २ ॥ तथाच मनःकल्पितो भेदो मनोऽपगमादपगच्छतीत्याह—**न कश्चिदि**ति ॥३॥ भेदापगमे शिष्टमात्मस्वरूपं दर्शयति—**अपारे**ति । संविल्लक्षणस्य सलिलस्य वल्गनैरपरिच्छेदेन प्रसारैः ॥ ४ ॥ ननु चित्तजगतोर्बाधे कुतः सत्परिशेष इत्याशङ्क्य स्थिरास्थिरोभयसंवलितत्वेन जगतः सदसदात्मकत्वादस्थिरांशबाधे स्थिरपरिशेषोपपत्तिरित्याशयेनाह—**असत्य**मिति । स्वप्ने अस्थिरविषयांशबाधेऽपि स्थिरतद्द्रष्टृपरिशेषदर्शनात्तद्वदित्यर्थः ॥ ५ ॥ नन्वत्यन्तासतोऽपि न बाधो दृष्ट इत्याशङ्क्य तयोर्बाधयोग्यामनिर्वचनीयतामाह—**न सदि**ति । ननु मिथ्यात्वे कथं बहूनामेकाकारता तत्राह—**अथे**ति । अथेति तथापीत्यर्थः । तथापि सामाजिकधीसमूहानामिन्द्रजालमायाक्षुब्धानामेकाकारताभ्रमवदुत्थित इत्यर्थः ॥ ६ ॥ कुतस्तर्हि चिरकालस्थायितास्य तत्राह—**दीर्घ** इति । मनोबलात् मनःकृतासक्तिबलात् ॥ ७ ॥ नन्वात्मा स्वपूर्णानन्दभावप्रच्युतिहेतुं सर्वदुःखनिदानं स्वस्य मनोभावमेव कुतो नानुशोचति तत्राह—**अनात्मालोकनादि**ति । न आत्मालोकनमनात्मालोकनमात्मविषयकमज्ञानं अनात्मनामालोकनं दर्शनं च तस्मान्निमित्ताच्चित्तं चित्तभावमापन्नोऽप्यात्मा चित्तत्वं चित्तभावकृतानर्थं नानुशोचति, यथा बालो वेतालकल्पनाद्भये सम्यक्कल्पिते सम्यङ्निरूढे सति तदभिनिविष्टचित्तत्वात्तद्धेतुं वेतालकल्पनां नानुशोचति तद्वदित्यर्थः ॥ ८ ॥ तथाच चितश्चेत्योन्मुखत्वस्वभाव एवानर्थपरम्परामूलमित्याह—**अनाख्यस्ये**त्यादिना ॥ ९ ॥ १० ॥ देहादौ मोहतोऽहंममेत्यभिमानतः ॥ ११ ॥ इयं सर्वाप्यनर्थपरंपरा जीवब्रह्मभेदभ्रममूलत्वात्तदैक्यबोधेन तद्भ्रमबाधे बाध्यत इत्याशयेन भेदमपवदति—**द्वैत**मिति चिदात्मा ब्रह्मजीवश्च तयोर्द्वैतं भेदः ॥ १२ ॥ सकलशास्त्रविचाररहस्यमेकोक्त्यैव संक्षिप्य स्फुटमाह—**कर्मैवे**ति ॥ १३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जीवविचारो नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

# षट्षष्टितमः सर्गः ६६

श्रीवसिष्ठ उवाच ।
एवमेकं परं वस्तु राम नानात्वमेत्यलम् ।
नानात्वमिव संजातं दीपाद्दीपशतं यथा ॥ १
यथाभूतमसद्रूपमात्मानं यदि पश्यति ।
विचार्यतेऽन्तस्तदनुभावहीनं न शोचति ॥ २
चित्तमात्रं नरस्तस्मिन्गते शान्तमिदं जगत् ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ ३
पत्रमात्रादृते नान्यत्कदल्या विद्यते यथा ।
भ्रममात्रादृते नान्यज्जगतो विद्यते तथा ॥ ४
जायते बालतामेति यौवनं वार्धकं ततः ।
मृतिं स्वर्गं च नरकं भ्रमाच्चेतो हि नृत्यति ॥ ५
विचित्रबुद्बुदोल्लासे स्वात्मनो व्यतिरेकिणि ।
यथा सुरायाः सामर्थ्यं तथा चित्तस्य संसृतौ ॥ ६
यथा द्वित्वं शशाङ्कादौ पश्यत्यक्षिमलाविलम् ।
चिच्चेतनकलाक्रान्ता तथैव परमात्मनि ॥ ७
यथा मदवशाक्रान्तान्क्षीबः पश्यति पादपान् ।
तथा चेतनविक्षुब्धान्संसारांश्चित्प्रपश्यति ॥ ८
यथा लीलाभ्रमाद्बालाः कुम्भकृच्चक्रवज्जगत् ।
भ्रान्तं पश्यन्ति चित्तात्तु विद्धि दृश्यं तथैव हि ॥ ९
यदा चिच्चेतति द्वित्वं तदा द्वैतैक्यविभ्रमः ।
यदा न चेतति द्वैतं तदा द्वैतैक्ययोः क्षयः ॥ १०
यच्चेत्यते तदितरद्व्यतिरिक्तं चितोऽस्ति न ।
किंचिन्नास्तीति संशान्त्या चितः शाम्यति चेतनं ११
चिद्घनेनैकतामेत्य यदा तिष्ठति निश्चलः ।
शाम्यन्व्यवहरन्वापि तदा संशान्त उच्यते ॥ १२
तन्वी चेतयते चेत्यं घना चिन्नाङ्ग चेतति ।
अल्पक्षीबः क्षोभमेति घनक्षीबो हि शाम्यति ॥ १३
चिद्घनैकप्रपातस्य रूढस्य परमे पदे ।
नैरात्म्यशून्यवेद्याद्यैः पर्यायैः कथनं भवेत् ॥ १४
चिच्चेतनेन चेत्यत्वमेत्येवं पश्यति भ्रमम् ।
जातो जीवामि पश्यामि संसरामीत्यसन्मयम् ॥ १५
स्वभावाद्व्यतिरिक्तं तु न चित्तस्यास्ति चेतनम् ।
स्पन्दादृते यथा वायोरन्तः किं नाम चेत्यते ॥ १६

---

मनोमात्रविलासत्वं द्वैतस्यात्र प्रपञ्च्यते ।
इष्टत्यागात्प्रबोधाच्च साज्ञानमनसः क्षयः ॥ १ ॥

एवं चेत्योन्मुखतया चित्तमित्यादिवर्णितक्रमेण । तत्र दृष्टान्तमाह—**नानात्व**मिति । नानात्वं संजातं संप्राप्तं दीपशतम् । अथवा न केवलं चेत्यस्यैव नानात्वं संजातं किंतु एवमुक्तदिशा चितोऽपि प्रत्युपाधिभेदं नानात्वमिव संजातम् । तत्र 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव' इति श्रुत्युक्तं दृष्टान्तमाह—**दीपाद्**िति ॥ १ ॥ यथाऽस्य चित्ताधीनजीवत्वकल्पनया बन्धः, एवं चित्ताधीनाभ्यामेव विचारतत्त्वबोधाभ्यां मुक्तिरपीति गूढाशयेनाह—**यथाभूत**मिति । आदौ यदि विचार्यते तदनुभावो द्वैताभिनिवेशस्तद्धीनं अतएव यथाभूतं यथास्थितं असद्रूपम् । रूपग्रहणं नाम्नोऽप्युपलक्षणम् । नामरूपशून्यमित्यर्थः । तथाविधमात्मानं पश्यति तदा न शोचति । 'तरति शोकमात्मवित्' इति श्रुतेरित्यर्थः ॥ २ ॥ ननु विचारेण चित्तोपशमेऽपि कथं सर्वद्वैतोपशमस्तत्राह—**चित्तमात्र**मिति । नरो जीवः । तस्य अचेत्यमानद्वैतसत्ताभावाच्चित्तोपरमे द्वैतोपरमसिद्धिरित्यर्थः ॥ ३ ॥ चित्तभ्रमोपादानकस्य जगतस्तदतिरिक्तस्वरूपाभावादप्युपरमसिद्धिरित्याशयेनाह—**पत्रमात्राद्**िति । पत्रग्रहणं त्वक्काण्डमूलानामप्युपलक्षणम् । अन्यत् स्वरूपमिति शेषः ॥ ४ ॥ उक्तमेव प्रपञ्चयति—**जायत** इति ॥ ५ ॥ बुद्बुदोल्लासे नभसि अनेकसहस्रबुद्बुदाकारभ्रमजनने । तथा चित्तस्य ब्रह्माण्डबुद्बुदोल्लासे ॥ ६ ॥ मलेन तिमिरेणाविलं कलुषमक्षि पश्यति । चेतनं चित्तं तस्य कला भ्रान्तिजननशक्तिस्तया आक्रान्ता परवशीकृता जीवचित् ॥ ७ ॥ क्षीबो मदिरामत्तः ॥ ८ ॥ लीलया भ्रमाद्भ्रमणात् । कुम्भकृत्कुलालस्तदीयचक्रवत् ॥ ९ ॥ चित्ताधीनप्रतीतिकालिकैव द्वैतसत्ता चित्तोपरमे उपरमतीत्याह—**यदे**ति ॥ १० ॥ प्रतीतिकालेऽपि सा न पृथगस्तीत्याह—**यद्**िति । तस्याश्चित इतरज्जडरूपम् । चित्तस्य तर्हि कुतः शान्तिस्तत्राह—**किंचिद्**िति । विषयापह्नवे निरिन्धनाग्निरिव चित्तं स्वयमेव शाम्यतीत्यर्थः ॥ ११ ॥ जीवन्मुक्तस्तर्हि कदा भवति तत्राह—**चिद्घनेने**ति । शाम्यन् समाधिलीनः ॥ १२ ॥ नन्वल्पज्ञचितश्चिद्घनैक्ये सर्वज्ञतैव स्यान्न निर्विषयतालक्षणा संशान्तिरिति चेत्तत्राह—**तन्वी**ति । अङ्गेति संबोधने । घनक्षीबोऽत्यन्तमत्तः । शाम्यति निर्व्यापारो भवति । अयं भावः—चितः सविषयता न केवलचित्त्वप्रयुक्ता किंत्वविद्याविक्षिप्तचित्त्वप्रयुक्ता । सा च ज्ञानसमाधिदार्ढ्याभिव्यक्तचिद्घनैक्येनाविद्याविक्षेपापगमे अपैत्येव । या त्वीश्वरादीनां सर्वज्ञता सापि मायिक्येव न वास्तवीति न कश्चिद्दोष इति ॥ १३ ॥ एतदेवाभिप्रेत्याह—**चिद्घनै**केति । चिद्घनेन एकप्रपातोऽनन्यविषयता नैरन्तर्यं च यस्य तथाविधस्य, अतएव परमे पदे तस्मिन् रूढस्येति निर्विकल्पसमाधिसाक्षात्कारावुक्तौ । तथाविधस्य चित्तस्य नैरात्म्यं स्वरूपशून्यता शून्यवेद्यं निर्विषयतेत्यादिपर्यायैः ॥ १४ ॥ चिति चेत्यजडसंसरणक्रमरूपताकल्पनापि चित्तनिमित्तैवेति तदुपशमे तदपगमोपपत्तिरित्याशयेनाह—**चिद्**िति ॥ १५ ॥ ननु चेतनं चित्तव्यापारः समाधिज्ञानाभ्यासादुपरमतु चित्तं त्वनुपरतमेवेत्याशङ्कायामाह—**स्वभावाद्**िति । औष्ण्योपरमे वह्निपरिशेषवद्या-

चेत्यत्वं संभवत्येवं किंचिच्चेत्यते चिता ।
रज्जुसर्पभ्रमाभासं तमविद्याभ्रमं विदुः ॥ १७
संविन्मात्रचिकित्स्येऽस्मिन्व्याधौ संसारनामनि ।
चित्तमात्रपरिस्पन्दे संरम्भो न च किंचन ॥ १८
यदि सर्वं परित्यज्य तिष्ठस्युत्क्रान्तवासनः ।
अमुनैव निमेषेण तन्मुक्तोऽसि न संशयः ॥ १९
यथा रज्ज्वां भुजङ्गाभा विनश्यत्येव वीक्षणात् ।
संविन्मात्रविवर्तेन नश्यत्येव हि संसृतिः ॥ २०
यत्राभिलाषस्तन्नूनं संत्यज्य स्थीयते यदि ।
प्राप्त एवाङ्ग तन्मोक्षः किमेतावति दुष्करम् ॥ २१
अपि प्राणांस्तृणमिव जयन्तीह महाशयाः ।
यत्राभिलाषस्तन्मात्रत्यागे कृपणता कथम् ॥ २२
यत्राभिलाषस्तत्त्यक्त्वा चेतसा निरवग्रहम् ।
प्राप्तं कर्मेन्द्रियैर्गृह्णंस्त्यजन्नष्टं च तिष्ठ भोः ॥ २३
यथा करतले बिल्वं यथा वा पर्वतः पुरः ।
प्रत्यक्षमेव तस्यालमजत्वं परमात्मनः ॥ २४
आत्मैव भाति जगदित्युदितस्तरङ्गैः
कल्पान्त एक इव वारिधिरप्रमेयः ।
ज्ञातः स एव हि ददाति विमोक्षसिद्धिं
त्वज्ञात एव मनसे चिरबन्धनाय ॥ २५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने संसृतिपरमयोगो नाम षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ६७

श्रीराम उवाच ।
मनस्त्वयोग्यो जीवोऽयं को भवेत्परमात्मनः ।
कथं वास्मिन्समुत्पन्नः को वायं वद मे पुनः ॥ १
श्रीवसिष्ठ उवाच ।
समस्तशक्तिखचितं ब्रह्म सर्वेश्वरं सदा ।
ययैव शक्त्या स्फुरति प्राप्तां तामेव पश्यति ॥ २
स्वयं यां वेत्ति सर्वात्मा चिरं चेतनरूपिणीम् ।
सा प्रोक्ता जीवशब्देन सैव संकल्पकारिणी ॥ ३
स्वभावात्कारणं द्वित्वं पूर्वसंकल्पचित्स्वयम् ।
नानाकारणतां पश्चाद्याति जन्मसृतिस्थितेः ॥ ४
श्रीराम उवाच ।
एवं स्थिते मुनिश्रेष्ठ दैवं नाम किमुच्यते ।
किमुच्यते तथा कर्म कारणं च किमुच्यते ॥ ५

पारोपरमेन चित्तं परिशिष्यते, न हि तदन्तर्गतं स्वरूपान्तरं केनचिदनुभूयत इत्याह—**अन्तरिति** ॥ १६ ॥ एवं चित्तापगमे चिति चेत्याप्रथनादप्रथमानस्य च साधकान्तराभावादसिद्धेश्च तदप्यपगतमेवेत्याशयेनाह—**चेत्यत्व**मिति । प्राक्तर्हि चेत्यप्रतिभासः कीदृक् तमाह—**रज्ज्वि**ति ॥१७॥ एवंच रज्जुसर्पस्पन्द इव चित्तस्पन्दात्मकः संसारो बोधमात्रेण चिकित्सितुं शक्य इत्याह—**संविदि**ति । संरम्भ आयासः किंचन कश्चन ॥१८॥ उत्क्रान्तवासनो वासनामयचित्तशून्यः ॥१९॥ संविन्मात्रस्य विवर्तः प्रत्यङ्मुखतया परावृत्त्य स्वतत्त्वदर्शनं तेन ॥ २० ॥ संवित्परावृत्तौ चेन्द्रियनिग्रहो हेतुस्तत्र च विषयाभिलाषत्यागो हेतुरित्याशयेनाह—**यत्राभिलाष** इति ॥ २१ ॥ विषयत्यागं प्ररोचयति—**अपी**ति ॥२२॥ निरवग्रहं निरासङ्गम् । कथं तर्हि जीवनं तत्राह—**प्राप्त**मिति । नष्टं त्यजन् नानुशोचन्निति यावत् ॥२३॥ तस्य उक्तलक्षणस्य तत्त्वविदः अजत्वं जन्मादिविक्रियाशून्यब्रह्मत्वं अलमत्यन्तं प्रत्यक्षमेव न तिरोहितमित्यर्थः ॥ २४ ॥ उक्तार्थत्रयं संक्षिप्योपसंहरति—**आत्मैवे**ति । आत्मैवाज्ञदृशां जगदिति वेषेण उदित आविर्भूतः सन् भाति । यथा कल्पान्तवारिधिस्तरङ्गभेदैर्भाति तद्वत् । स एव ज्ञातो ज्ञानाभिव्यक्तः सन् विमोक्षलक्षणां सिद्धिं पुरुषार्थं ददाति । अज्ञातस्तु प्रथमं मनसे सर्वार्थनिदानमनोभावाय तत्प्रयुक्तचिरबन्धनाय च भवतीति शेषः ॥ २५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे संसृतिपरमयोगो नाम षट्षष्टितमः सर्गः ॥६६॥

भोक्ता यः कथितो जीवस्तत्स्वरूपमिहोच्यते ।
व्यष्टिप्राधान्यतस्तस्य करणादेश्च संभवः ॥ १ ॥

समष्टिप्राधान्येनोक्तं जीवं व्यष्टिप्राधान्येन स्फुटं जिज्ञासुः श्रीरामः पुनः पृच्छति—**मनस्त्वे**ति । मनः स्रष्टा तत्तादात्म्यस्य स्वस्मिन्नध्यासान्मनस्त्वयोग्यः परमात्मनः संबन्धी को भवेत् । किमंश उत कार्यमुत स एव । यदि स एव तर्हि कथं वास्मिन्समुत्पन्नः । किं परिणामेनोत विवर्तेन । आद्ये अनित्यता । द्वितीये बाध्यता । यद्यनुत्पन्नस्तर्हि भोक्तुरसिद्धिः । ब्रह्मणोऽशनायाद्यत्ययश्रुतेः । यद्यन्यस्तर्हि को वा । तत्सजातीय उत विजातीय इति विकल्पे नैकोऽपि पक्षो घटत इति संदेहपरिहाराय पुनर्वदेत्यर्थः ॥ १ ॥ अचिन्त्यानन्तशक्तिसंपन्नमायाशक्तिशबलं ब्रह्म परमार्थत आविष्कृतमभिन्नमपि स्वस्मिन्नेव मायया द्वितीयतामिवापन्ने औपाधिकविकारानारोप्यानन्तजीववेषेण सर्वज्ञेश्वरभावेन च क्रीडितुं समर्थमिति न कश्चिद्दोष इत्याशयेन वसिष्ठः समाधातुमुपक्रमते—**समस्ते**ति । सर्वेश्वरं सर्वसमर्थम् ॥ २ ॥ चिरमनादिकालाच्चेतनरूपिणीं चित्तसंस्कारोपहितचिद्रूपाम् ॥ ३ ॥ आत्मनि स्वाभाविकं द्वितीयत्वमेवोत्तरसंसारप्रवृत्तेर्मुख्यं कारणं पूर्वपूर्वसंकल्पवासनावासितजीवचैतन्यं तु पश्चात्तनवैचित्र्यमात्रहेतुरित्याह—**स्वभावादि**ति ॥ ४ ॥ एतावतैव प्रश्नशेषस्याप्युत्तरमुक्तप्रायमिति मन्यमानो राम उक्तजीवस्य जन्मादिनिमित्तदैवकर्मकारणानि तत्त्वतो जिज्ञासुः पृच्छति—

श्रीवसिष्ठ उवाच ।

स्पन्दास्पन्दस्वभावं हि चिन्मात्रमिह विद्यते ।
खे वात इव तत्स्पन्दात्सोल्लासं शान्तमन्यथा ॥ ६
चित्त्वं चित्तं भावितं सत्स्पन्द इत्युच्यते बुधैः ।
दृश्यत्वभावितं चैतदस्पन्दनमिति स्मृतम् ॥ ७
स्पन्दात्स्फुरति चित्सर्गो निःस्पन्दाद्ब्रह्म शाश्वतम् ।
जीवकारणकर्माद्या चित्स्पन्दस्याभिधा स्मृता ॥ ८
य एवानुभवात्मायं चित्स्पन्दोऽस्ति स एव हि ।
जीवकारणकर्माख्यो बीजमेतद्धि संसृतेः ॥ ९
कृतद्वित्वचिदाभासवशाद्देहमुपस्थितम् ।
संकल्पाद्विविधार्थत्वं चित्स्पन्दो याति सृष्टिषु ॥ १०
नानाकारणतां यातश्चित्स्पन्दो मुच्यते चिरात् ।
कश्चिज्जन्मसहस्रेण कश्चिदेकेन जन्मना ॥ ११
स्वभावात्कारणाद्वित्वं चित्समेत्याधिगच्छति ।
स्वर्गापवर्गनरकबन्धकारणतां शनैः ॥ १२
हेम्नीव कटकादित्वं काष्ठलोष्टसमस्थितौ ।
देहे तिष्ठति नानात्वं जडे भावविकारजम् ॥ १३

अजातमप्यसद्रूपं पश्यतीदं मनोभ्रमः ।
जातः स्थितो मृतोऽस्मीति भ्रमार्तः पत्तनं यथा ॥ १४
अहंममेत्यसद्रूपमेव चेतः प्रपश्यति ।
अदृष्टपरमार्थत्वादाशाविवशसंस्थिति ॥ १५
मथुराधिपते राज्ञो यथा श्वपचसंभ्रमः ।
आसीदेवं हि चित्तस्य स्फुरतीयं जगत्स्थितिः ॥ १६
सर्वमेव मनोमात्रभ्रान्त्युल्लासविजृम्भणम् ।
इदं जगत्तया राम प्रस्फुरत्यम्बुभङ्गवत् ॥ १७
शिवात्प्राक्कारणात्पूर्वं चिच्चेत्यकलनोन्मुखी ।
उदेति सौम्याज्जलधेः पयःस्पन्दो मनागिव ॥ १८
स्फुरणाज्जीवचक्रत्वमेति चित्तोर्मितां दधत् ।
चिद्वारि ब्रह्मजलधौ कुरुते सर्गबुद्बुदान् ॥ १९
स्वस्थः सौम्य समस्यैतद्यत्सिंहस्य विजृम्भणम् ।
ब्रह्मणः संविदाभासस्तत्संचेत्यमिव स्वयम् ॥ २०
चित्संवित्त्योच्यते जीवः संकल्पात्स मनो भवेत् ।
बुद्धिश्चित्तमहंकारो मायेत्याद्यभिधं ततः ॥ २१

**एव**मिति । एवमुक्तविधया जीवस्वरूपे स्थिते बुद्धौ प्रतिष्ठिते सति पृच्छामीति शेषः ॥ ५ ॥ स्पन्दस्वभावं रजःप्रधानमायोपहितम् । अस्पन्दस्वभावं शुद्धम् । सोल्लासं सृष्ट्युन्मुखं भवतीति शेषः । अन्यथा स्पन्दाभावे तु शान्तमेवावतिष्ठत इत्यर्थः ॥ ६ ॥ तत्राद्यं विवृणोति—**चित्त्व**मिति । स्वीयं स्वाभाविकं चित्त्वमेव चित्तं चेत्याकारं स्वाविद्यया भावितं कल्पितं चेत्तदाकारं सत् स्पन्द इत्युच्यत इत्यर्थः । द्वितीयं विवृणोति—**दृश्यत्वे**ति ॥ ७ ॥ स्पन्दास्पन्दाभ्यामेव चितः प्रपञ्चाप्रपञ्चात्मतेति निष्कर्षे स्पन्दस्यैव जीवकारणकर्मदैवादिनाम्ना व्यपदेश इति फलितमित्याह—**स्पन्दादि**ति । चिदिति पृथक्पदम् । तत्र प्राणस्पन्दविवक्षया जीवः स्वान्तर्गतकार्याणामाविर्भावनलक्षणस्पन्दविवक्षया कारणं शरीरादिस्पन्दविवक्षया कर्म दैव सूक्ष्मावस्थं चिरस्थितं फलारम्भोन्मुखं दैवमिति भेद इति भावः ॥ ८ ॥ तेषां चानुभवसत्तालम्बनेनैव सत्ता स्वकार्यक्षमता चेत्याह—**य एवे**ति ॥ ९ ॥ यत्पृष्टं कथं वास्मिन्समुत्पन्न इति तस्योत्तरमाह—**कृतद्वित्वे**ति । तत्तत्कर्मानुसारेण प्राञ्मरणकाले बुद्धावुपस्थितं देवनरतिर्यगादिदेहं पूर्वसंकल्पानुसारिविविधभोग्यपदार्थभावं च याति प्राप्नोति ॥ १० ॥ नानाविधानि योनिसहस्राणि कारणानि जन्महेतूनि यस्य तद्भावं चिरायातः सन् कश्चिन्मन्दशास्त्रीयप्रवृत्तिश्चित्स्पन्दश्चिरान्मुच्यते । संपन्नज्ञानाधिकारस्त्वेकेन जन्मना ॥ ११ ॥ यदुक्तं नानाकारणतां यात इति तत्प्रकारमाह—**स्वभावादि**ति । चितः स्वभावो येनोपाधिना संबध्यते तद्रूपेण स्फुरणम् । यथा आलोको नीलपटे नीलरूपो रक्तपटे रक्तरूपः पीते तद्रूप इति । तादृशस्वभाववशादेव देहजन्मकारणैरन्नरसैस्तद्द्वारा पित्रादिशरीरैश्चाद्वित्वमैक्यं समेत्य संप्राप्य क्रमेण शुक्रशोणितादिरूपेण परिणतं शनैः स्वर्गमोक्षनरकवधबन्धादिकारणदेहतामधिगच्छति प्राप्नोतीत्यर्थः । 'अपगच्छति' इति पाठे स्वर्गादिहेतुं देहभावं प्राप्तुं शुक्रादिरूपेण पितृदेहादपगच्छति निर्गच्छतीत्यर्थः ॥ १२ ॥ तथा चोपाधीनां मेलनेनैक्ये पितापुत्रजीवयोर्भेदो न लक्ष्यते उपाधिपृथग्भावे तु भेदः प्रतीयत इति जीवानां परस्परभेद उपाधेरेव धर्मो न चैतन्यस्येत्याह—**हेम्नीवे**ति । उपाधीनामपि भूतविकारत्वाद्भूतानां चोत्तरोत्तरं पूर्वपूर्वभूतविकारत्वादखण्डाकाशमात्रत्वेन सत्यभेदावकाश इत्याशयेन हेमकटकदृष्टान्तोपन्यासः । जन्मादयः षड्भावविकारास्तेभ्यो जातं नानात्वं भेदः ॥ १३ ॥ एवं भेदस्य मृषात्वेऽपि जन्मादिभेदप्रतीतिर्मनोभ्रम एवेत्याह—**अजातमपी**ति ॥ १४ ॥ सर्वभेदप्रत्ययानामहंममेति भेदकल्पनामूलं तस्या अपि पूर्णात्मस्वरूपाज्ञानं भोगाशासंस्काराश्च क्रमेण मूलमित्याशयेनाह—**अह**मिति ॥ १५ ॥ उक्तेऽर्थे वक्ष्यमाणलवणोपाख्यानार्थो निदर्शनमित्याह—**मथुरे**ति ॥ १६ ॥ १७ ॥ उक्तमेवारोपक्रमं पुनः प्रत्येकं दृष्टान्तैर्बोधयति—**शिवादि**त्यादिना ॥ १८ ॥ स्फुरणात् स्पन्दनात् । जीवचक्रत्वं जीवस्वरूपामावर्तताम् ॥ १९ ॥ हे सौम्य, स्वबोधमात्रेण सिंहः मायाबन्धनं हन्तीति सिंहस्तथाविधस्य सिंहवदचिन्त्यशक्तिमतो वा ब्रह्मणो यन्मायया विजृम्भणं गात्रविनमनं स एव स्वात्मस्थः संविदाभासो जीव इव स्थितं तदेव संचेत्यं, विषयरूपमिव स्थितं न पृथगस्तीत्यर्थः ॥ २० ॥ कैरुपाधिभिस्तर्हि जीवमनोबुद्धिचित्ताहंकारादिशब्दभेदस्तानाह—**चित्संवित्त्ये**ति । चित्संवित्त्या चिदाभासात्मना अध्यवसायाद्बुद्धिः स्मरणाच्चित्तमभिमानादहंकारो विक्षेपशक्तित्वान्माया । आदिपदात् 'प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः' इत्यादिश्रुत्युक्ताभिधा-

तन्मात्रकल्पना पूर्वं तनोतीदं जगन्मनः ।
असत्यं सत्यसंकाशं गन्धर्वनगरं यथा ॥ २२
यथा शून्ये दृशः स्फारान्मुक्तावल्यादिदर्शनम् ।
यथा स्वप्ने भ्रमश्चैव तथा चित्तस्य संसृतिः ॥ २३
शुद्ध आत्मा नित्यतृप्त इव शान्तः समस्थितः ।
अपश्यन्पश्यतीवेमं चित्ताख्यं स्वप्नविभ्रमम् ॥ २४
संसृतिर्जाग्रदित्युक्तं स्वप्नं विदुरहंकृतिम् ।
चित्तं सुषुप्तभावः स्याच्चिन्मात्रं तुर्यमुच्यते ॥ २५
अत्यन्तशुद्धे सन्मात्रे परिणामनिरामयम् ।
तुर्यातीतं पदं तत्स्यात्तत्स्थो भूयो न शोचति ॥ २६
तस्मिन्सर्वमुदेतीदं तस्मिन्नेव प्रलीयते ।
न चेदं न च तन्नेदं दृष्टौ मुक्तावली यथा ॥ २७
अरोधकत्वात्खं हेतुर्यथा वृक्षसमुन्नतेः ।
अकर्तापि तथा कर्ता चेतनाद्धिर्जगत्स्थितेः ॥ २८
संनिधानाद्यथा लोहः प्रतिबिम्बस्य हेतुताम् ।
यात्यादर्शस्तथैवायं चिन्मयोऽप्यर्थवेदने ॥ २९
बीजमङ्कुरपत्रादियुक्त्या यद्वत्फलं भवेत् ।
चिन्मात्रं चित्तजीवादियुक्त्या तद्वन्मनो भवेत् ॥ ३०
स्वतोबीजफला विप्रुड् यथा बीजं पुनर्भवेत् ।
तथा चिच्चेत्यचित्तादि त्यक्त्वा स्वस्था न तिष्ठति ३१
यद्यप्यबोधे बोधे वा बीजान्तस्तरुबीजयोः ।
इयान्भेदोऽस्ति न जगद्ब्रह्मणोरपि चित्तयोः ॥ ३२
तथापि व्यज्यते बोधे सत्यात्मकमखण्डितम् ।
रूपश्रीरिव दीपेन चिन्मात्रालोकरूपि यत् ॥ ३३
यद्यन्निखन्यते भूमेर्यथा तत्तन्नभो भवेत् ।
या या विचार्यते विद्या तथा सा सा परं भवेत् ॥ ३४
स्फटिकान्तःसन्निवेशः स्थाणुताऽवेदनाद्यथा ।
शुद्धेऽनानापि नानेव तथा ब्रह्मोदरे जगत् ॥ ३५
ब्रह्म सर्वं जगद्वस्तु पिण्डमेकमखण्डितम् ।
फलपत्रलतागुल्मपीठबीजमिव स्थितम् ॥ ३६

श्रीराम उवाच ।

अहो चित्रं जगदिदमसत्सदिव भासते ।
अहो बृहदहो स्वस्थमहो स्फुटमहो तनु ॥ ३७
ब्रह्मणि प्रतिभासात्मा तन्मात्रगुणगोलकः ।
अवश्यायकणाभासो यथा स्फुरति तच्छ्रुतम् ॥ ३८
यथाऽसौ याति वैपुल्यं यथा भवति चात्मभूः ।
यथा स्वभावसिद्धार्थात्तथा कथय मे प्रभो ॥ ३९

---

संग्रहः ॥ २१ ॥ तत्र संकल्पप्रधानस्य शब्दादिसूक्ष्मभूतकल्पनापूर्वकं जगत्कल्पकत्वमाह—**तन्मात्रे**ति ॥२२॥ मनःकल्पितस्य च मानोरथिकवस्तुवन्मिथ्यात्वमेवेत्याह—**यथे**ति । शून्ये आकाशे दृशो दृष्टेः स्फाराद्विस्तारात् ॥ २३ ॥ तत्साक्षिणस्तु नित्यशुद्धतैवेत्याह—**शुद्ध** इति । अशनायाद्यभावान्नित्यतृप्त इव ॥ २४ ॥ तस्यैवेन्द्रियद्वारैर्बहिः संसृतिर्जाग्रत् । अन्तरहंभाववासितस्य हृदयात्कण्ठपर्यन्तं संसृतिः स्वप्नः । स्मृतिबीजवासनामात्रशेषेण हृदि स्थितिः सुषुप्तिस्तदतिक्रमस्तु तुर्यतेत्याह—**संसृतिरि**ति ॥ २५ ॥ एवं शोधितस्य प्रत्यक्तत्त्वस्य ब्रह्मात्मनि परिणत्या निरामयं यथा स्यात्तथा स्थितिरेव तुर्यातीतत्वमित्याह—**अत्यन्ते**ति ॥ २६ ॥ अशोधिततत्पदार्थे प्रतिष्ठाशङ्कावारणाय तच्छोधनं 'तज्जलानिति शान्त उपासीत' इति श्रुतिदर्शितदिशा दर्शयति—**तस्मिन्नि**ति । न चेदं तदिति शेषः । आद्यो ब्रह्मणि जगत्तादात्म्यस्य निषेधो द्वितीयस्तु संसर्गस्य ॥ २७ ॥ यदि जगत्संबन्धशून्यस्तर्हि कथं जगद्धेतुरिति श्रुत्योक्तस्तत्राह—**अरोधकत्वादि**ति । समुन्नतेरभिवृद्धेः । मायाकृतसर्गे अनिवारकत्वमात्रेण कर्तृत्वोपचार इत्यर्थः ॥ २८ ॥ लौहो लोहविकार आदर्शः ॥२९॥ कथं तर्हि सर्वं न युगपज्जायते तत्राह—**बीज**मिति । युक्तिरत्र क्रमः । तथैवानादिनियतिस्थितेरित्यर्थः ॥३०॥ ननु प्रलये सर्वविलये तथैव स्वस्था चित्सदा कुतो नावतिष्ठते तत्राह—**यथे**ति । यथा अनुशयिजीवसंयुक्ता विप्रुड् वृष्टिजलबिन्दुर्वृक्षसस्याद्यनुप्रविश्य पुनर्बीजं भवत्येव नोदास्ते तथा जीववासनावासिता चिदपि चेत्यचित्तादिसर्गमसत्वा पुनर्भवत्येव

तत्त्यक्त्वा स्वस्था तिष्ठतीत्यर्थः ॥ ३१ ॥ ननु बीजे सूक्ष्मतया स्थितस्य तरोस्तद्बीजस्य च अबोधे बोधे वा न तरुजननशक्तिरपैति तथा चित्तात्मतापन्नयोर्जगद्ब्रह्मणोरपि तत्त्वतो बोधाबोधयोर्विशेषो न स्यादिति बोधवैफल्यमित्याशङ्क्याह—**यद्यपी**ति । इयान्परिदृश्यमानस्तरुजननशक्तिभेदोऽस्ति तथापि चित्तभूतयोर्जगद्ब्रह्मणोः स नास्त्येव । यतो बीजतरुबोधमात्रेण न तात्त्विकमखण्डितं रूपं व्यज्यते, ब्रह्मबोधेन तु दीपेन रूपश्रीरिव तद्व्यज्यते इति इयान्भेदो वैलक्षण्यमस्तीत्यावृत्त्या परेण सह योज्यम् ॥ ३२ ॥ ३३ ॥ कुतो बोधस्येदृशसामर्थ्यमिति चेद्विचारजन्यत्वेन तत्त्वावगाहित्वादित्याशयेनाह—**यद्यदि**ति । अविद्या आवियकं पटादि । परं अधिष्ठानसत्तामात्रम् ॥३४॥ स्फटिकान्तर्वनादिसंनिवेशः स्थाणुता कौटस्थ्यं तदवेदनाद्यथा भवति तथा शुद्धे ब्रह्मोदरे अनानापि जगन्नानेव भातीति शेषः ॥३५॥ पिण्डं स्फटिकघनम् । स्वप्रतिबिम्बितवनफलपत्रलतादयस्तेषां पीठमाधारभूतस्तदन्तर्गतं बीजं चेत्येवंरूपमिव ब्रह्म जगद्रूपं स्थितमित्यर्थः ॥ ३६ ॥ इत्थं वर्णितं जीवमनोबुद्धिचित्ताहंकारस्वरूपं तन्मात्रकल्पनान्तं प्रासङ्गिकं जगतो मायामात्रत्वं च श्रुत्वा विस्मितो गुरुवचनविश्वासाज्जगतो मायामात्रत्वमनुवादेनानुमोदमानस्तन्मात्राणां सेन्द्रियसमष्टिव्यष्टिस्थूलशरीरभावोत्पादकमं जिज्ञासुः पृच्छति—**अहो** इत्यादिना ॥३७॥३८॥ वैपुल्यं समष्टिव्यष्टिस्थूलदेहभावम् । यथार्थस्वभावसिद्धादर्थादात्मवस्तुनः आत्मभूर्व्यष्टिसमष्टिस्थूलभुविश्वैश्वानरात्मा यथा

श्रीवसिष्ठ उवाच ।

अत्यन्तासंभवद्रूपमनन्यत्स्वस्वभावतः ।
अत्यन्ताननुभूतं सत्स्वानुभूतमिवाग्रतः ॥ ४०
उल्लासफुल्लो फुल्लाङ्ग इति बालहृदि स्फुटम् ।
यथोदेति तथोदेति परे ब्रह्मणि जीवता ॥ ४१
मानमेयात्मिका शुद्धा सत्यैवासत्यवत्स्थिता ।
भिन्नेव च न भिन्ना स्याद्ब्रह्मणो बृंहणात्मिका ॥ ४२
यथा ब्रह्म भवत्याशु जीवः कलनजीवितः ।
तथा जीवो भवत्याशु मनो मननवेदनात् ॥ ४३
चित्तं तन्मात्रमननं पश्यत्याशु स्वरूपवत् ।
एष सद्योऽनिललवप्रख्यः स्फुरति खान्तरे ॥ ४४
अस्तनिमेषोऽनुभवत्यवश्यायकणोपमम् ।
संवेदनात्मकं कालकलितं कान्तमात्मनि ॥ ४५
अहंकिमिति शब्दार्थवेदनाभोगसंविदम् ।
संविदं तत्त्वशब्दार्थं जीवः पश्यति सार्थकम् ॥ ४६
तादृक्षवेदनात्सोऽथ रसशब्दार्थवेदनम् ।
भाविजिह्वार्थनाम्नैकदेशेऽनुभवति क्षणात् ॥ ४७
तादृक्षवेदनात्तेजःशब्दार्थोन्मुखतां गतः ।
भविष्यन्नेत्रनाम्नैकदेशे भवति भासनम् ॥ ४८
तादृक्षवेदनात्सोऽथ घ्राणं तद्दृष्टिवेदनात् ।
स्थितो यस्मिन्भवतीति तावद्दृश्यादिता स्थिता ॥ ४९
एवंप्रायः स जीवात्मा काकतालीयवच्छनैः ।
विशिष्टसंनिवेशत्वं भावितं पश्यति स्वतः ॥ ५०
स तस्य संनिवेशस्य त्वसतोऽपि सतः सतः ।
शब्दभावैकदेशत्वं श्रवणार्थेन विन्दति ॥ ५१
स्पर्शभावैकदेशत्वं त्वक्शब्दार्थेन विन्दति ।
रसभावैकदेशत्वं रसनात्वेन विन्दति ॥ ५२
रूपभावैकदेशत्वं नेत्रार्थाकृति पश्यति ।
गन्धभावैकदेशत्वं नासिकात्वेन पश्यति ॥ ५३
एवं भावमयैः सत्ताप्रकटीकरणक्षमम् ।
भविष्यदिन्द्रियाख्यं स रन्ध्रं पश्यति देहके ॥ ५४
इत्येवमादि जीवस्य राघवाद्यतनस्य च ।
उदेति प्रतिभासात्मा देह एवातिवाहिकः ॥ ५५
अनाख्येयं परा सत्तास्यातिवाहिकतामिव ।
सा गच्छत्यप्यगच्छन्ती तादृक्सत्यात्मभावनात् ५६
मातृमेयप्रमाणादि यदा ब्रह्मैव वेदनात् ।
तदातिवाहिकोक्तीनां कः प्रसङ्गस्तदेव तत् ॥ ५७
अन्यत्ववेदनादन्यः परस्मादातिवाहिकः ।
ब्रह्मत्ववेदनाद्ब्रह्म सा संवित्तिर्हि नान्यजा ॥ ५८

श्रीराम उवाच ।

असंभवादसंवित्तेर्ब्रह्मात्मैकतयाथवा ।
को मोक्षः को विचारश्चेत्यलं भेदविकल्पनैः ॥ ५९

---

भवति तथा कथय मे इत्यर्थः ॥३९॥ पृष्टं वर्णयितुं प्रथममत्यन्तासंभावितानिर्वचनीयस्थूलतान्तसर्ववासनाविजृम्भितजीवभावाविर्भावं सदृष्टान्तं दर्शयति—**अत्यन्ते**त्यादिद्वाभ्याम् । जीवलक्षणमत्यन्तासंभवद्रूपमफुल्लाङ्गो वस्तुतः फुल्लाङ्गशून्योऽपि फुल्लाङ्गो वेतालो यथा बालहृदि स्फुटमुदेति तथोदेतीत्यन्वयः॥४०॥ ॥ ४१ ॥ अननुभूतमननायोगादनुभवस्य च मानमेयाधीनत्वान्मनोभावनिमित्तं मानमेयवासनोद्भवमाह—**माने**ति ॥ ४२ ॥ मननवेदनान्मननवासनोद्भवाज्जीवो मनो भवति । 'मन्वानो मनः' इति श्रुतेरित्यर्थः ॥ ४३ ॥ तच्चित्तं मनस्तन्मात्रगोचरमननं स्वीयं स्वरूपवत्तन्मात्रात्मना आविर्भूतं पश्यतीत्यर्थः । अस्तनिमेषः अविच्छिन्नदृग्रूपः अनिललवप्रख्यः अतिसूक्ष्मः एष तन्मात्रात्मा खान्तरे चिदाकाशे स्फुरति । स्वतःप्रकाशमाने सति तत्स्फूर्त्या संवेदनात्मकं सृष्टिकालवशेन पञ्चीकरणद्वारोत्पादितं कान्तं हिरण्मयत्वात्सूर्यवत्प्रकाशमानं अपरिच्छिन्नचिद्दृष्ट्या अवश्यायकणोपमं ब्रह्माण्डरूपं मनुष्यादिदेहरूपं चात्मनि पश्यतीत्यनुषज्यते ॥ ४४ ॥ ४५ ॥ तस्मिन्प्रथमं शब्दार्थविभागास्फूर्त्या संमुग्धमहंताध्यासं ततः संसारतत्त्वस्मरणं चाह—**अह**मिति । अहं किमिति तत्त्वतो वा मनुष्याद्याकारतो वा विशिष्य वेदनां न भुङ्क्ते तां तथाविधां संविदं प्रथमं ततः सार्थकं पुरुषार्थविचारसहितं प्राक्तनजन्मसहस्रस्मृत्या गर्भे जगत्तत्त्वशब्दार्थं संविदं च पश्यतीत्यर्थः ॥ ४६ ॥ तस्येन्द्रियकल्पनां क्रमेणाह—**तादृक्षे**त्यादिना । तादृक्षवेदनात्पिण्डे स्फुटाहंभाववेदनादिति सर्वत्रार्थः । जिह्वाशब्दो रसनेन्द्रियपरस्तदर्थस्य रसस्य नाम्ना उपलक्षितमिति शेषः । एकदेशे मुखबिलादिप्रदेशे ॥ ४७ ॥ ४८ ॥ तद्दृष्टिर्घ्राणदृष्टिः । इति अनया रीत्या यस्मिन् श्रोत्रादिभावेऽपि यावत्कालं स्थितो भवति तावत्कालं शब्दादिदृश्यं अत्ति उपभुङ्क्ते तच्छीलता अस्य स्थितेत्यर्थः ॥ ४९ ॥ तस्य संघाताभिमानमाह—**विशिष्टे**ति । भावितं प्राग्वासनाकल्पितम् ॥ ५० ॥ तस्य श्रोत्रादिभिः शब्दादिभोगे तत्तदिन्द्रियतादात्म्याध्यासमाह—**स तस्ये**त्यादिना । असतोऽपि सतः सतः सत्त्वेन संपन्नस्य । श्रवणक्रियालक्षणेनार्थेन प्रयोजनेन शब्दान् भावयति ग्राहयतीति शब्दभावः श्रोत्रं तल्लक्षणं देहैकदेशत्वं विन्दति लभते ॥ ५१ ॥ ५२ ॥ ५३ ॥ एवमुक्तानुक्तेन्द्रियमयैर्बाह्यार्थसत्ताप्रकटीकरणक्षमं इन्द्रस्य परमात्मनो लिङ्गत्वेन भाविना भविष्यदिन्द्रियाख्यम् ॥ ५४ ॥ जीवस्य समष्टिरूपस्याद्यतनस्य व्यष्टिरूपस्य च ॥ ५५ ॥ ब्रह्मण एवाज्ञानाद्द्विविधातिवाहिकदेहभावो ज्ञानात्तदपगमश्चेति दर्शयति—**अनाख्ये**ति । इयमिति च्छेदः ॥ ५६ ॥ आतिवाहिकदेहादिमुखेनाध्यारोपापवादकल्पनाप्यात्मव्युत्पादकव्यवहारदशैव न परमार्थदशेत्याशयेनाह—**मात्रि**ति ॥ ५७ ॥ यदि यथावेदनमेव वस्तु तर्हि को विशेषस्तत्राह—**सा संवित्ति**रिति । सा ब्रह्मत्ववेदनाख्या संवित्तिर्नान्यजा न भ्रान्तिजेत्यर्थः ॥ ५८ ॥ यद्येवं तर्हि चिदेकरसे ब्रह्मण्यज्ञानस्यैवायोगात्तदभावे जीवभेदकल्पकाभावेन ब्रह्मात्मैकत्वस्य स्वतःसिद्धेर्वा

श्रीवसिष्ठ उवाच ।

सिद्धान्तकाल एवैष प्रश्नस्ते राम राजते ।
अकालपुष्पमाला हि शोभनापि न शोभते ॥ ६०
सार्थैवानर्थिकाऽकालमाला विलसिता यथा ।
तथैवाऽकालमिज्जन्तौ सर्वं काले हि शोभते ॥ ६१
प्रतिबन्धाभ्यनुज्ञानां कालो दातेति दृश्यते ।
ननु सर्वपदार्थानां कालेन फलयोगतः ॥ ६२
एवमेव स जीवात्मा स्वप्नात्मा समुपस्थितः ।
पितामहत्वमुच्छूनं पश्यन्नात्मनि कालतः ॥ ६३
ॐमुच्चारणसंवित्तिवेदनाच्च प्रपश्यति ।
यत्करोति मनोराज्यं भवत्याशु स तन्मयः ॥ ६४
इदमेवमसत्सर्वमिव व्योम्नि ततात्मनि ।
पर्वतोच्चाकृतिर्व्योम जगद्व्योम्नि विजृम्भते ॥ ६५
नेह प्रजायते किंचिन्नेह किंचिद्विनश्यति ।
जगद्गन्धर्वनगररूपेण ब्रह्म जृम्भते ॥ ६६
यथैव पद्मजादीनां जीवानां सदसन्मयी ।
सत्ता तथैव सर्वेषामासरीसृपमासुरम् ॥ ६७
संवित्संभ्रम एवायमेवमभ्युत्थितोऽप्यसन् ।
आब्रह्मकीटसंवित्तेः सम्यक्संवेदनात्क्षयः ॥ ६८
यथा संपद्यते ब्रह्मा कीटः संपद्यते तथा ।
कीटस्तु रूढभूतौघवलनात्क्षुद्रकर्मकः ॥ ६९
यदेव जीवनं जीवे चेत्योन्मुखचिदात्मकम् ।
तदेव पौरुषं तस्मिन्सारं कर्म तदेव च ॥ ७०
ब्रह्मणः सुकृतात्पापात्कीटकस्य समुत्थितेः ।
चिंतन्मात्रात्मिका भ्रान्तिः प्रेक्षामात्रं भवेत्क्षयः ७१
मातृमानप्रमेयाणि न चिन्मात्रेतरद्यतः ।
ततो द्वैतैक्यवादार्थः शशशृङ्गाब्जिनीसमः ॥ ७२
भावदार्ढ्यात्मकं मिथ्या ब्रह्मानन्दो विभाव्यते ।
आत्मैव कोशकारेण लालादार्ढ्यात्मकं यथा ॥ ७३

---

स्वातिरिक्तमोक्षफलस्य तत्प्रापकविचारादेश्च संभव एव नास्तीति कथं तत्प्रवृत्तिरिति रामः शङ्कते—**असंभवादिति** ॥ ५९ ॥ किमयं तत्त्वं बुद्ध्वा प्रश्न उताबुद्ध्वा । आद्ये विचारानर्थक्ये इष्टापत्तिर्द्वितीये तु नास्यावसर इत्याशयेन वसिष्ठः समाधत्ते—**सिद्धान्तकाले** इत्यादिना । न शोभते औत्पातिकानर्थशङ्काभयहेतुत्वादिति भावः ॥६०॥ अर्थान्तरन्यासोक्तमर्थमुपमानेनापि स्पष्टमाह—**सार्थैवे**ति । विलसिता शोभमानाप्यकालपुष्पमाला यथा तात्कालिकोपभोगेन सार्थैव सती औत्पातिकानर्थहेतुत्वेन जनहर्षाहेतुत्वादनर्थिका तथैव अपरिपाकदशापन्ने जन्तौ अकालोत्पन्ना मिनोत्यर्थं प्रमापयतीति मित् उक्तिरप्यनर्थिकेत्यर्थः ॥ ६१ ॥ तत्कुतस्तत्राह—**प्रतिबन्धे**ति । हेमन्तादिकालः शाल्याद्यङ्कुरोदयप्रतिबन्धस्य यवाद्यङ्कुरोदयाभ्यनुज्ञानस्य आनुकूल्यस्य च दातेत्यन्वयव्यतिरेकाभ्यां दृश्यते लोके । नत्वित्यवश्यमित्यर्थे ॥ ६२ ॥ एवं रामस्य शङ्कां हेलनया समाधाय अनाख्येयं परं ब्रह्मास्यातिवाहिकतामिवेत्यन्तं यदुक्तं तदेवानुसृत्यातिवाहिकदेहसमष्ट्युपहिते पितामहत्वकल्पनामाह—**एवमेवे**ति । स्वप्नात्मा स्वप्नसमष्ट्यात्मा । उपासनापरिपाकेनोपास्यभावेन फलीभूतेन समुपस्थितः । कालतः कालेन तद्भावोचितेन ॥ ६३ ॥ तस्य प्रणवोच्चारणेन तदर्थसंवित्त्या सर्वप्रपञ्चस्रष्टृत्वं दर्शयति—**ॐमुच्चारणे**ति ॥६४॥ एवंच व्यष्टिमनोराज्यवत्समष्टिमनोराज्यभूतस्यास्य जगतः असत्त्वमेवेति फलितमित्याह—**इदमेव**मिति । व्योम्नि कल्पितं सर्वं तलमलिनत्वादीव । तथाच पर्वतानां मेर्वादीनामुच्चाकृतिरुन्नताकारोऽपि व्योमैव । किं पुनरन्यदल्पम् । यतो वाय्वादिक्रमेण जगद्व्योम्न्येवारोपेण विजृम्भते ततोऽस्य तलमालिन्यादिसाम्यमेवेत्यर्थः ॥ ६५ ॥ एवंच सृष्ट्युत्पादनं प्रपञ्चमिथ्यात्वज्ञापनायैव न वास्तवसर्गप्रदर्शनायेत्यभिप्रेत्य 'न निरोधो न चोत्पत्तिः' इत्यादिश्रुत्याशयमुद्घाटयति—**नेहे**ति ॥ ६६ ॥ जीवत्वमपि जगत्कोटावेवेति दर्शयितुं जगतो जीवसमसत्ताकत्वं दर्शयति—**यथैवे**ति । यौक्तिकदृशा सदसन्मयी विचारासहा । अधः आसरीसृपं ऊर्ध्वं आसुरं सुरानभिव्याप्येत्यर्थः ॥ ६७ ॥ परमार्थदृशा त्वाह—**संविदि**ति । आब्रह्मकीटं प्रसिद्धायाः संवित्तेरनुभवाभ्युत्थितोऽप्यसन् । कुतः । यतोऽस्य सम्यक्संवेदनात्क्षयो बाध इत्यर्थः ॥ ६८ ॥ आब्रह्मकीटसंवित्तेरित्युक्तांशमुपपादयति—**यथे**ति । तर्हि कथं कीटस्य क्षुद्रकर्मता तत्राह—**कीटस्त्वि**ति । भूतौघवलनात् चित्ते भौतिकमालिन्याधिक्यादिति यावत् ॥ ६९ ॥ उपाध्यनुसारिणी जीवता तदनुसारिपौरुषं तदेव फलपर्यवसितं कर्म तच्च तदेव पौरुषमेवेत्यर्थः ॥ ७० ॥ तत्र सुकृतरूपसारोत्कर्षपरमावधिफलं ब्रह्मता दुष्कृतरूपसारोत्कर्षपरमावधिफलं कीटकतेति वैचित्र्यनिमित्तभेदेऽप्यज्ञातचिन्मात्रप्रयुक्ता द्वैतभ्रान्तिर्ज्ञानमात्रप्रयुक्तस्तदपगम इत्येतदुभयत्रापि तुल्यमेवेत्याह—**ब्रह्मण** इति ॥७१॥ ननु यावन्माता मानेन प्रमेयं द्वैतं वेत्ति तावद्द्वैतं तदपगमे त्वैक्यमेवेति क्रमिकद्वैतैक्यस्वभावत्वमेव वस्तुतो वास्तवं किं न स्यात्तत्राह—**मात्रि**ति । न द्वैतं मातृमानप्रमेयं मातृमानप्रमेयद्वैतस्यापि मातृमानान्तरापेक्षापत्त्या अनवस्थापातात् । अतस्तेषां चिन्मात्रत्वे द्वैतैक्यसाधकान्तराभावाद्द्वैतैक्यवादार्थः शशशृङ्गनभोब्जिनीसम इत्यर्थः ॥७२॥ यदि न द्वैतं मानमेयं तर्हि कथं कुद्दालकोटिदुर्भेदभुवनादिभावदार्ढ्यात्मकं प्रतीयते तत्राह—**भावदार्ढ्यात्मक**मिति । ब्रह्मानन्दात्मक आत्मैव बन्धकभुवनादिभावदार्ढ्यात्मकं द्वैतमिति भ्रान्त्यानुभूयते । यथा कोशकारकीटेन स्वलालादार्ढ्यात्मकं बन्धनमनुभूयते तद्व-

---

१ अज्ञाता या चित् तन्मात्रात्मिका. पूर्वं षट्पञ्चाशश्लोके 'अनाख्येयं परा सत्ता' इति मूले, अत्रतु 'अनाख्येयं परं ब्रह्म' इति वर्तते तत्र सदसद्विशेषो विचारणीयम्. २ वस्तुनो इति पाठः

मनसा ब्रह्मणा यद्यद्यथा दृष्टं विभावितम्।
तत्तथा दृश्यते तज्ज्ञैः स्वभावस्यैष निश्चयः॥ ७४
यथा यदुदितं वस्तु तत्तत्तन्न विना भवेत्।
निमेषमपि कल्पं वा स्वभावस्यैष निश्चयः॥ ७५
अलीकमिदमुत्पन्नमलीकं च विवर्धते।
अलीकमेव स्वदते तथालीकं विलीयते॥ ७६
शुद्धं सर्वगतं ब्रह्मानन्तमद्वितीयं दुःखबोधवशाद्-
शुद्धमिवासदिवानेकमिवासर्वगमिवावबुध्यते॥७७
जलमन्यत्तरङ्गोऽन्य इति बालकुकल्पनया भेदः
कल्प्यत एवमवास्तवस्तस्माद्यो योऽयमाभाति भेदः
स केवलमतत्त्वविद्भिः परिकल्पितो रज्ज्वां सर्प
इव एवं भेदाभेदशक्त्योररिमित्रयोरेव ब्रह्मण्येव
संभवेत्॥ ७८

तेनात्मनाऽद्वितीयेनैव द्वित्वमिवाततं यथा सलि-
लेन तरंगकल्पनया सुवर्णेन कटककल्पनयैवमिति
अतस्तेन स्वयमेवात्मनात्मान्य इव चेत्यते॥ ७९
अतः कलना जाता सैव स्फारतां प्राप्य मनः
संपन्नं तेनाहंभावः कल्पितो निर्विकल्पप्रत्यक्षरूप-
मेतत्प्रथमं तन्मनस्तदहं भवति क्षिप्रमहंशब्दार्थ-
भावनात्॥ ८०
ततो मनोहंकाराभ्यां स्मृतिरनुसंहिता तैस्त्रिभि-
स्तदनुभूततन्मात्राणि कल्पितानि तन्मात्रेषु जीवेन
चित्तात्मना स्वयं काकतालीयवद्ब्रह्मोपादानादि-
यान्संनिवेशः कल्पितो दृश्यते॥ ८१
एवं यदेव मनः कल्पयति तदेव पश्यति।
सद्वा भवत्वसद्वा चित्तं यत्कल्पयत्यभिनिविष्टम्।
तत्तत्पश्यति यास्यति सदिव प्रतिभासमुपगतं सद्यः

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणे सत्योपदेशो नाम सप्तषष्टितमः सर्गः॥ ६७॥

## अष्टषष्टितमः सर्गः ६८

श्रीवसिष्ठ उवाच।
अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
राक्षस्योक्तं महाप्रश्नजालमावलिताखिलम्॥ १
अस्ति कज्जलपङ्काद्रेरिवोग्रा शालभञ्जिका।
हिमाद्रेरुत्तरे पार्श्वे कर्कटी नाम राक्षसी॥ २
विषूचिकाभिधाना च नाम्नाप्यन्यायबाधिका।

दित्यर्थः॥७३॥ यद्यात्मकल्पित एव बन्धस्तर्हि प्रतिपुरुषं यथा-भिलषितकल्पनैव स्यान्नानिष्टकल्पनमित्याशङ्क्याह—**मनसे**ति। सर्वमनःसमष्ट्यात्मना ब्रह्मणा भोक्तृकर्मानुसारेण यद्यद्वस्तु यथा स्रष्टव्यत्वेन दृष्टं यादृशकार्यार्थं विभावितं च तत्तत् अन्यैरपि तज्ज्ञैर्जीवैस्तथा दृश्यते। तत्कुतः। यतः स्वभावस्य नियतेरेष निश्चयो व्यवस्थित इत्यर्थः॥ ७४॥ वटबीजादेव वटाङ्कुरो न कुटजबीजात्। बुद्बुदः कतिपयनिमेषं तिष्ठति ब्रह्माण्डं तु महाकल्पमिति हेतुफलादिनियतिबलादपि न यथेच्छं कल्पन-प्रसक्तिरित्याह—**यथे**ति॥ ७५॥ न चासदावस्थातत्त्रयबला-न्नियतिकृतशक्तिकालादिव्यवस्थादर्शनाच्च सत्यमेवेदं जगदिति भ्रमितव्यमित्याह—**अलीक**मिति। अलीकशब्दो मिथ्याव-चनः। स्वदते रोचते भोक्तॄणां भोगकाले॥ ७६॥ सर्गत्रयेण पद्यैर्विस्तरेणोक्तमर्थजातं गद्यैः संक्षिप्य दर्शयति—**शुद्ध**मित्या-दिना। दुरवबोधो भ्रान्तिस्तद्वशात्॥७७॥ यथा जलमन्यत्तर-ङ्गोऽन्य इति बालानां मूर्खाणां कुकल्पनयैवाऽवास्तवो भेद एवं जगद्भेदोऽप्यवास्तव एव कल्प्यते। जले तरङ्गभेदस्य परिणा-मत्वदृष्टौ न विवर्तता स्फुटेति दृष्टान्तान्तरमाह—**रज्ज्वां सर्प इवे**ति। भेदाभेदशक्त्योः स्थितिरिति शेषः। अरिमित्रयोर्वि-रुद्धाविरुद्धयोरेव न कदाचिदपि तत्स्वभावत्यजोरित्येवकारार्थः॥७८॥ तेन ब्रह्मभूतेनात्मना प्रतीचा आततं विस्तारितम्॥७९॥ कलना निर्विकल्पकजगत्स्फूर्तिः। स्फारतां सविकल्पताम्। तथैव

तद्याचष्टे। निर्विकल्पप्रत्यक्षरूपमेतत्प्रथमं तन्मनस्तदहं भवतीति अहंशब्दार्थभावनात्तदुभयगोचरसंस्कारोद्भवात्॥ ८०॥ अनु-संहिता यथानुभवमुत्पादिता। तया स्मृत्या अनुभूतानि यथा-नुभवं स्मृतानि। कल्पितानि सृष्टानि। जीवेन ब्रह्मलक्षणादुपा-दानकारणादियान् ब्रह्माण्डविस्तृतो जगत्संनिवेशः कल्पितः। 'हस्तपादादिमान्' इति पाठान्तरे स्पष्टम्॥ ८१॥ उपवर्णितः सृष्टिक्रमो लोकेऽप्येवमेव स्वप्ने प्रसिद्ध इत्याह—**यदे**वेति। पश्यति स्वसंभ्रमादाविति शेषः। ननु स्वाप्नं प्रातिभासि-कमसत् कथं सतो व्यावहारिकस्य दृष्टान्तस्तत्राह—**सद्वे**ति। चित्तं मनः अभिनिविष्टं चिरं तद्भावनोपचितं सद्यदेव कल्पयति तदवश्यं पश्यति दर्शनेन सत्सत्यमिव प्रतिभासमागतं प्राप्तं सत्सद्यो यास्यति व्यवहारोपयोगितया प्राप्स्यति चेत्यर्थः॥८२॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सत्यो-पदेशो नाम सप्तषष्टितमः सर्गः॥ ६७॥

वर्ण्यते विस्तरेणात्र कर्कटी नाम राक्षसी।
तस्याश्चोग्रं तपः सर्वजन्तुजालजिघांसया॥ १॥

विस्तरसंक्षेपाभ्यां वर्णितेऽर्थे दृढीकाराय कर्कट्युपाख्याना-ख्येतिहासमुखेन राक्षस्याः किरातराजमन्त्रिसंवादं विस्तरेण विवक्षुस्तमवतारयति—**अत्रैवे**ति। आवलितं तत्त्वतो विमर्शेन व्याप्तमखिलं जगद्यत्र॥ १॥ कज्जलमयात्पङ्कादद्रेर्वा निर्मिता शालभञ्जिका प्रतिमेव वर्णतः। कर्मतस्तूग्रा॥ २॥ तस्या द्वे

विन्ध्याटवीव देहेन शुष्का कार्श्यमुपागता ॥ ३
महाबलाग्निनयना रोदोरन्ध्रार्धपूरणी ।
नीलाम्बरधरा कृष्णा देहवद्धेव यामिनी ॥ ४
नीहारवसनच्छन्ना मेदुराभ्रशिरःपटा ।
लम्बाभ्रबिम्बोल्लसिता नित्योत्थतिमिरोर्ध्वजा ॥ ५
स्थिरविद्युल्लतानेत्रा तमालतरुजानुका ।
वैदूर्यशूर्पाग्रनखी भस्मनीहारहासिनी ॥ ६
निर्मांसनरदेहौघपुष्पस्रग्दामभूषिता ।
सर्वाङ्गोदात्तसंप्रोतशवमालाविराजिता ॥ ७
वेतालावेशविचलत्कालकङ्कालकुण्डला ।
अर्कादानोत्कदीर्घाग्रभीमोग्रभुजमण्डला ॥ ८
तस्या विपुलकायत्वादुर्लभत्वान्निजान्धसः ।
अतृप्तोऽर्णवलेखाया इवाभूज्जाठरोऽनलः ॥ ९
न कदाचन सा तृप्तिमुपयाता महोदरी ।
वडवानलजिह्वेव चिन्तयामास चैकदा ॥ १०
जम्बूद्वीपगतान्सर्वान्निगिरामि जनान्यदि ।
अनारतमनुश्वासं जलराशिमिवार्णवः ॥ ११
मेघेन मृगतृष्णेव तन्मे क्षुदुपशाम्यति ।
अविरुद्धैव सा युक्तिर्ययापदि हि जीव्यते ॥ १२
मन्त्रौषधतपोदानदेवपूजादिरक्षितम् ।
सममेव जनं सर्वं निर्बाधं कः प्रबाधते ॥ १३
तपः करोमि परममखिन्नेनैव चेतसा ।
तपसैव महोग्रेण यद्दुरापं तदाप्यते ॥ १४
इति संचिन्त्य सा सर्वजन्तुजातजिघांसया ।
तपोर्थमथ सस्मार पर्वतं भूतदुर्गमम् ॥ १५
आरुरोह च तच्छृङ्गं स्थिरविद्युद्विलोचना ।
हस्तपादादिमद्देहा श्यामलेवाभ्रमण्डली ॥ १६
तत्र गत्वाथ सा स्नात्वा तपः कर्तुं कृतस्थितिः ।
अतिष्ठदेकपादेन चन्द्रार्कास्पन्दलोचना ॥ १७
क्रमेण दिवसाः पक्षास्तस्या मासर्तवो ययुः ।
शीतातपेषु लीनायाः कृताया इव शैलतः ॥ १८
सा बभूवाभ्रमालायाः समासं स्तम्भिताकृतिः ।
कृष्णोर्ध्वगोर्ध्वकेशी च खमाहर्तुमिवोद्गता ॥ १९
आलोक्य तां पवनजर्जरिताङ्गकत्वक्
चीराङ्गणाकृतिरणत्पवनावधूतैः ।
ऊर्ध्वस्थमूर्धजतमःपटलैर्दधानां
तारौघमौक्तिकमजः समुपाजगाम ॥ २०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने राक्षसीवर्णनं नामाष्टषष्टितमः सर्गः ॥ ६८ ॥

---

## एकोनसप्ततितमः सर्गः ६९

श्रीवसिष्ठ उवाच ।
अथ वर्षसहस्रेण तां पितामह आययौ ।
दारुणं हि तपः सिद्ध्यै विषाग्निरपि शीतलः ॥ १
मनसैव प्रणम्यैनं सा तथैव स्थिता सती ।
को वरः क्षुच्छमायालमिति चिन्तान्विताभवत् ॥ २

नामनी अन्ये दर्शयति—**विषूचिकेति** ॥३॥ अग्निरिव प्रज्वलन्नयना । रोदस्योर्द्यावापृथ्व्यो रन्ध्रमन्तरालं तदर्धपूरणीति वैपुल्यातिशयोक्तिः ॥ ४ ॥ नीहारैर्वसनेन परिधानीयेनेव च्छन्ना । मेदुराण्यभ्राण्येव शिरःपट उत्तरीयं यस्याः । लम्बमानमभ्रबिम्बमिव उल्लसिता । नित्योत्थं तिमिरमिवोर्ध्वजाः केशा यस्याः ॥५॥ वैदूर्यवर्णाः शूर्पाग्राकाराश्च नखा यस्याः ॥ ६ ॥ ७ ॥ वेतालैः सह आवेशो नर्तनाभिनिवेशस्तेन विचलती स्पन्दमाने कालवर्णे कङ्कालकुण्डले यस्याः । अर्कस्यादाने ग्रहणे उत्कमुत्कण्ठितमिव दीर्घाग्रम् ॥८॥ निजस्य स्वजात्युचितस्यान्धस ओदनस्य । आहारस्येति यावत् ॥ ९ ॥ १० ॥ अनुश्वासं प्रतिश्वासम् ॥ ११ ॥ मेघेन मृगतृष्णा स्वहेत्वातपनिवारणे कृते यथा शाम्यति तद्वत् । यया युक्त्या आपदि जीव्यते सा युक्तिर्हि अविरुद्धा संमता ॥ १२ ॥ युगपत्सर्वजनग्रसनयुक्तिस्तु अशक्यत्वाद्विरुद्धैवेत्याशयेनाह—**मन्त्रेति** । समं युगपत् ॥ १३ ॥ तर्हि कथं सर्वजनग्रसनमनोरथसिद्धिस्तत्राह—**तप** इति ॥ १४ ॥ पर्वतं हिमवन्तम् ॥ १५ ॥ देहशब्दः स्वरूपपरः ॥ १६ ॥ चन्द्रार्कावेव

दीप्ते अस्पन्दे लोचने यस्याः ॥ १७ ॥ शैलतः कृताया इवेति तपःक्लेशसहनादुत्प्रेक्षा ॥ १८ ॥ नैल्यादभ्रोपमा । आहर्तुं आहारं कर्तुं । ग्रसितुमिति यावत् ॥ १९ ॥ पवनैः शीतोष्णपांसुरूक्षवायुभिर्जर्जरितानां शिथिलीकृतानामङ्गकानां कृशाङ्गानां लम्बमाना त्वगेव चीरं वल्कलमिव यस्यास्तथाभूताम् । गणाः सेनास्तदाकृति । तद्वदिति यावत् । रणद्भिः पवनैरवधूतैः कम्पितैः ऊर्ध्वदिक्स्थैर्मूर्धजलक्षणैस्तमःपटलैस्तारा नक्षत्राणि तत्समूहरूपं मौक्तिकं दधाना तां कर्कटीमालोक्य तस्यै वरं दातुमजो ब्रह्मा समुपाजगामेति वक्ष्यमाणस्य संक्षिप्योक्तिः ॥ २० ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीवर्णनं नामाष्टषष्टितमः सर्गः ॥ ६८ ॥

**दत्त्वात्र धातुः कर्कट्यै यथाभिलषितं वरम् ।**
**मन्त्रं च गुणिरक्षार्थं स्वलोके गतिरुच्यते ॥ १ ॥**

कुतो दुर्वृत्तायामपि तस्यां दुर्लभतमो धातुः प्रसादस्तत्राह—**दारुणमिति** । सिद्ध्यै भवत्येवेति शेषः । यतस्तपःसिद्धौ विषाग्निरपि शीतलो भवति । नासाध्यं तपसोऽस्तीति

आ स्मृतं प्रार्थयिष्येऽहं वरमेकमिमं विभुम् ।
अनायसी चायसी च स्यामहं जीवसूचिका ॥ ३
अस्योक्त्या द्विविधा सूचिर्भूत्वा लक्ष्या विशाम्यहम् ।
प्राणिनां सह सर्वेषां हृदयं सुरभिर्यथा ॥ ४
यथाभिमतमेतेन ग्रसेयं सकलं जगत् ।
क्रमेण क्षुद्विनाशाय क्षुद्विनाशः परं सुखम् ॥ ५
इति संचिन्तयन्तीं तामुवाच कमलालयः ।
अन्यादृश्यास्तथा दृष्ट्वा स्तनिताभ्रारवोपमम् ॥ ६

ब्रह्मोवाच ।

पुत्रि कर्कटिके रक्षःकुलशैलाभ्रमालिके ।
उत्तिष्ठ त्वं तु तुष्टोऽस्मि गृहाणाभिमतं वरम् ॥ ७

कर्कट्युवाच ।

भगवन्भूतभव्येश स्यामहं जीवसूचिका ।
अनायसी चायसी च विधेऽर्पयसि चेद्वरम् ॥ ८

श्रीवसिष्ठ उवाच ।

एवमस्त्विति तामुक्त्वा पुनराह पितामहः ।
सूचिका सोपसर्गा त्वं भविष्यसि विषूचिका ॥ ९
सूक्ष्मया मायया सर्वलोकहिंसां करिष्यसि ।
दुर्भोजना दुरारम्भा मूर्खा दुःस्थितयश्च ये ॥ १०
दुर्देशवासिनो दुष्टास्तेषां हिंसां करिष्यसि ।
प्रविश्याऽऽहृदयं प्राणैः पद्मप्लीहादिबाधनात् ॥ ११
वातलेखात्मिका व्याधिर्भविष्यसि विषूचिका ।
सगुणं विगुणं चैव जनमासादयिष्यसि ॥ १२
गुणान्वितचिकित्सार्थं मन्त्रोऽयं तु मयोच्यते ।

ब्रह्मोवाच ।

हिमाद्रेरुत्तरे पार्श्वे कर्कटी नाम राक्षसी ॥ १३
विषूचिकाभिधाना सा नाम्नाप्यन्यायबाधिका ।

तस्या मन्त्रः ।

'ॐह्रींह्रांरींरां विष्णुशक्तये नमः । ॐनमो भगवति विष्णुशक्तिमेनां ॐहरहर नयनय पचपच मथमथ उत्सादय दूरेकुरु स्वाहा हिमवन्तं गच्छ जीव सः सः सः चन्द्रमण्डलगतोऽसि स्वाहा ।'

इति मन्त्री महामन्त्रं न्यस्य वामकरोदरे ।
मार्जयेदातुराकारं तेन हस्तेन संयुतः ॥ १४
हिमशैलाभिमुख्येन विद्रुतां तां विचिन्तयेत् ।
कर्कटीं कर्कशाक्रन्दां मन्त्रमुद्गरमर्दिताम् ॥ १५
आतुरं चिन्तयेच्चन्द्रे रसायनहृदि स्थितम् ।
अजरामरणं युक्तं मुक्तं सर्वाधिविभ्रमैः ॥ १६
साधको हि शुचिर्भूत्वा स्वाचान्तः सुसमाहितः ।
क्रमेणानेन सकलां प्रोच्छिनत्ति विषूचिकाम् ॥ १७

भावः ॥ १ ॥ २ ॥ स्मरणेऽयमाकारो निपातो न त्वाङ् । अनायसी रोगरूपा । जीवयुक्ता सूचिका जीवसूचिका ॥ ३ ॥ अस्य ब्रह्मण उक्त्या वरेण सह युगपत् सुरभिर्घ्राणाकृष्टं सौगन्ध्यं यथा ॥ ४ ॥ एतेन क्रमेण उपायेन ॥ ५ ॥ शान्तिदान्तिदयादितपस्विधर्मविरुद्धलोकहिंसाभिलाषिणीत्वादन्यादृश्यास्तथाभिलाषं दृष्ट्वा ॥ ६ ॥ प्रशंसा भाविकल्याणद्योतनार्था ॥७॥ ॥ ८ ॥ ९ ॥ सूक्ष्मया जनैर्दुर्लक्ष्यया । दुर्भोजना निषिद्धापक्वाकालभोजना अतिभोजनाश्च । दुरारम्भाः परानिष्टारम्भकाः । दुःस्थितयः अशास्त्रीयमार्गस्थाः ॥ १० ॥ प्राणैः प्राणद्वारा आहृदयं अपानमारभ्य हृदयपर्यन्तं प्रविश्य हृदयपद्मस्य प्लीहस्य तत्संनिहितमांसग्रन्थेरादिपदाद्वस्तिशिरादीनां च बाधनात् पीडनात् ॥ ११ ॥ सगुणं शास्त्रसदाचारनिष्ठम् । तदन्यं विगुणम् ॥१२॥ चिकित्सा रोगप्रतीकारस्तदर्थम् ॥ १३ ॥ अन्याया न्यायपथातिवर्तिनस्तेषां बाधिका । द्विविधा हि विष्णुशक्तिराद्या माया यदधीना अन्याः सर्वाः शक्तयः । अपरा तु तदधीना प्रतिवस्तुनियता सात्त्विकादिभेदभिन्ना च । तत्र तामस्याः संहारशक्तेरंशाः प्राणिदुष्कर्मफलजननशक्तिविशेषा रोगाः । अतस्तन्निवृत्तये आद्या मायाशक्तिः प्रणवमायादिरहस्यबीजैः पञ्चभिः संबोध्य नमस्कृत्य प्रार्थ्यते । ॐमिति चतुर्थ्यन्तम् । नमःशब्दयोगात् । परब्रह्मात्मिकायै नम इत्यर्थः । भगो माहात्म्यं सर्वनियमनवीर्यं वा तद्वति आद्यविष्णुशक्ते, त्वं द्वितीयां एनां त्वदंशभूतां रोगात्मिकां विष्णुशक्तिं । ॐकारवाच्ये कारणस्वरूपे, हरहर भृशमुपसंहर । 'नित्यवीप्सयोः' इति भृशार्थे द्विर्वचनम् । नय स्वस्थानं प्रापय । पच पाकेनेव सद्यो मृदूकुरु । मथ दधिवद्विलोडय । उत्सादय अस्मात्स्थानादन्यतो नय । उक्तैरन्यैर्वा प्रकारैर्दूरे कुरु । स्वाहेति हविर्दानादिना पूज्यत्वद्योतनार्थम् । एवमादिशक्तिं संप्रार्थ्य तदधीना रोगशक्तिः प्रार्थ्यते हिमवन्तं स्वस्थानं गच्छेति । ततो रोगिणं प्रत्याह । सः प्राक्तनदुष्कर्मणाभिभूतः स रोगेणाभिभूतः स मृत्युना वाकृष्यमाणस्त्वं मन्त्रसामर्थ्यान्मृतोज्जीवनसमर्थेनामृतेन संपूर्णं चन्द्रमण्डलं मदीयभावनया गतः प्राप्तोऽसि । अन्ते स्वाहेति दीप्तेऽग्नौ हविष इव पूर्णचन्द्रमण्डले रोगिणो भावनया प्रक्षेपः कार्य इति द्योतनार्थम् । इति इमं मन्त्रं मन्त्री लिखित्वा वामकरस्योदरे तले न्यस्य ॥ १४ ॥ तां विषूचिकाम् । विद्रुतां पलायिताम् ॥ १५ ॥ रसायनहृदि अमृतगर्भे । युक्तं समाहितचित्तम् ॥ १६ ॥ पाठक्रमादार्थक्रमबलीयस्त्वाच्छौचाचमनादिपूर्वमेव कार्यम् । सुसमाहितः अव्य-

१ ह्र्यां जीव[illegible] इति कश्चित्.

इति गगनगतस्त्रिलोकनाथो
गगनगसिद्धगृहीतसिद्धमन्त्रः ।
गत उपगतशक्रवन्द्यमानो
निजपुरमक्षयमायमुज्ज्वलश्रीः ॥ १८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्ति० सूच्युपाख्याने विषूचिकामन्त्रकथनं नामैकोनसप्ततितमः सर्गः ॥ ६९ ॥

## सप्ततितमः सर्गः ७०

श्रीवसिष्ठ उवाच ।

अथ भूधरशृङ्गाभा सा महाकृष्णराक्षसी ।
कज्जलाम्बुदलेखेव तानवं गन्तुमुद्यता ॥ १
बभूवाभ्रोपमाकारा ततो विटपरूपिणी ।
पुंस्प्रमाणा ततोऽप्यासीद्‌थाभूद्धस्तमात्रिका ॥ २
ततः प्रादेशमात्रा सा ततोऽप्यङ्गुलिरूपिणी ।
ततो माषशमीतुल्या ततः सूची बभूव ह ॥ ३
ततः कौशेयसूचित्वं पद्मकेसरसुन्दरी ।
प्राप सा शिखराकारा संकल्पाद्रिरिवाणुताम् ॥ ४
रराज सूचिका कृष्णा सूक्ष्मायसमनायसी ।
पुर्यष्टकेन चलिता व्योमगा व्योमवासिनी ॥ ५
सूची दृश्यत एवासौ नत्वयो नाम विद्यते ।
संविद्भ्रमकुले चैषा स्वल्पसूचीव लक्ष्यते ॥ ६
रत्नसूचीव मसृणा मनोमननसंयुता ।
वैदूर्यरश्मिलेखेव भानुसंतानसुन्दरी ॥ ७
कज्जलाम्भोदसंकल्कलतेव पवनाहृता ।
सूक्ष्मरन्ध्रेक्षणस्वच्छदृष्ट्ज्योतिःकनीनिका ॥ ८
सुमुखग्राह्यरूपेण श्लक्ष्णपुच्छशिखाणुना ।
तदा वैपुल्यशान्त्यर्थं परं मौनव्रतं गता ॥ ९
सुदूराद्दीपवद्दृष्टं खतन्मात्रत्वमागता ।
दूरादेव मनोज्ञेन प्रोद्गिरन्ती मुखेन खम् ॥ १०
कुञ्चितेक्षणसंदृश्या दीर्घदीपांशुकोमला ।
सद्यःस्नातसमुत्सन्नबालवालविलासिनी ॥ ११
तन्तुर्बिसादिवोड्डीना बाह्यसंचारकौतुकात् ।
ब्रह्मनाडिरिवोद्युक्ता बहीरन्ध्रं सुसुन्दरी ॥ १२
नियतेन्द्रियशक्तिः सा जीवेनैव बहिःस्थिता ।
बौद्धतार्किकविज्ञानसंतानवदलक्षिता ॥ १३

प्रचित्तः ॥ १७ ॥ त्रिलोकनाथो ब्रह्मा गगनगैः सिद्धैर्गृहीतः सिद्धोऽव्याहतो मन्त्रो यस्य तथाविधः सन् कार्यान्तरसिद्धये उपगतेन शक्रेण वन्द्यमानः सन् अक्षयाः परैरुपहन्तुमशक्या मायाः सत्यसंकल्पसिद्धाः परचित्तसांकल्पिकपितृमातृभ्रातृगन्धमाल्यादिलोकरूपा विचित्रभोग्यमाया यत्र तथाविधं निजपुरं सत्यलोकं गतः ॥ १८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे विषूचिकामन्त्रकथनं नामैकोनसप्ततितमः सर्गः ॥ ६९ ॥

क्रमशस्तनुतापूर्वं सूचिरूपद्वयं गतिः ।
सूच्याः प्राणिशरीरेषु प्रवेशश्चोपवर्ण्यते ॥ १ ॥

तनु सूक्ष्मं तद्भावं तानवम् ॥ १ ॥ तदेव प्रपञ्चयति—**बभूवे**त्यादिना । विटपरूपिणी वृक्षशाखाप्रमाणा ॥ २ ॥ माषशमी माषशिम्बी । सूची स्थूलसूची ॥ ३ ॥ कौशेयसीवनयोग्या सूक्ष्मतमसूची तद्भावम् । अयंच स्थूलशरीरस्य क्रमेण सूक्ष्मीभावस्तस्याः स्वसंकल्पकल्पितस्यैव । पराविद्याकल्पितस्य त्वग्रे तत्रैव गलितत्वं वक्ष्यति ॥ ४ ॥ सा सूक्ष्ममायसमयो विकारो भूत्वा कृष्णा सूचिका अनायसी जीवसूचिका च सती रराज । महाभूतकर्मेन्द्रियज्ञानेन्द्रियप्राणान्तःकरणाविद्याकामकर्मसंघातात्मकपुर्यष्टकेन ॥ ५ ॥ इदं चास्याः सूचित्वं दृश्यभ्रान्तिकल्पितमेव न वास्तवम् । वरशापसहस्रैरपि वस्त्वन्यथाभावायोगादित्याशयेनाह—**सूची**ति । संविद्भ्रमाणां कुले समूहमध्ये एषाप्येका भ्रान्तिरित्यर्थः ॥ ६ ॥ भानूनां सूर्यकिरणानां संतानेनान्तःप्रवेशेन सुन्दरी रत्नसूचीव वैदूर्यरश्मिलेखेव च लक्ष्यते । मनोमननसंयुतेत्येतावान् दृष्टान्ताद्विशेष इत्यर्थः ॥ ७ ॥ सूर्यकिरणसंपर्के त्वाह—**कज्जले**ति । कज्जलमयोऽम्भोदो मेघस्तद्रूपस्य संकल्कस्य पिण्डस्य लताप्रतानो लेशः । पवनेनाहृता उपनीता । सूक्ष्मं यद्रन्ध्रं तत्र विशिष्टयोरीक्षणयोर्दृशोः स्वच्छदृष्ट्ज्योतिषी इव कनीनिके कृष्णतारे यस्याः ॥ ८ ॥ सूक्ष्मया पुच्छशिखया पुच्छाग्रेणाणुना परमाणुकल्पेन सुमुखं प्रसन्नवदनं यथा स्यात्तथा वरदानाद्ब्राह्मेण अभीष्टतमेन सूचीरूपेण निमित्तेन पूर्वतनदेहवैपुल्यस्य शान्त्यर्थं तदा प्राक्काले मौनं मुनिसंबन्धि तपोव्रतं गता परं नूनं इत्युत्प्रेक्षा । अस्यास्तपोव्रतं स्ववैपुल्यशान्तावेव पर्यवसन्नं व्यर्थमिवासीदित्याशयः ॥ ९ ॥ कीदृशं कथं च तत्सूचीरूपं सा प्राप्ता तदाह—**सुदूरा**दिति । सुदूराद्वीक्षणे ज्वलन्नेत्रयोः संध्यदर्शनादेकदीपवद्दृष्टं सूचीशरीरस्यादर्शनात्खतन्मात्रत्वमाकाशसाम्यमागता प्राप्ता । देहे अन्तर्गतस्याकाशस्य सौक्ष्म्यप्राप्तौ बहिरवस्थानान्मनोज्ञेन वरप्राप्तिप्रसन्नेन मुखेन खं प्रोद्गिरन्ती वमन्तीवेत्युत्प्रेक्षा ॥ १० ॥ पुनः सा कीदृशी तत्राह—**कुञ्चिते**त्यादिना । दीर्घा दूरप्रसृता दीपांशवो दीपकिरणा इव कोमला सूक्ष्मा । अतएवैकाग्र्याय कुञ्चितैरीक्षणैर्द्रष्टृदृष्टिभिः संदृश्या । सद्यःस्नातेन स्नानेन समुत्सन्नो बालानामर्भकाणां बालः केश इव विलासिनी विलसनशीला ॥ ११ ॥ बिसान्मृणालादुड्डीना ऊर्ध्वं निर्गता ब्रह्मनाडिः सुषुम्ना बहीरन्ध्रं ब्रह्मरन्ध्राद्बहिर्निर्गत्य उत् ऊर्ध्वं सूर्यमण्डलाभिमुखतया युक्ता ॥ १२ ॥ नियताः प्रतिनियतस्थानेन्द्रियशक्तयो यस्याः । जीवेन लिङ्गदेहेनैव बहिः-

शून्यसिद्धार्थसविका रन्ध्रानीलमयाऽरवा ।
अदृश्यया जीवसूच्या संततानुसृता स्थिता ॥ १४
कलाकलनधर्मिण्या वासनामात्रसारया ।
क्षीणदीपांशुसूचीवत्तीक्ष्णयानुपलभ्यया ॥ १५
ग्रासार्थं सूचितां याता सैवास्था नोपयुज्यते ।
विचारितं तया नैतदहो मौर्ख्यविजृम्भितम् ॥ १६
साग्रा संचिन्तयामास न सूचीरूपतुच्छताम् ।
चित्तमीहितमेवैकं पश्यन्त्यास्ते निरर्थकम् ॥ १७
अविचार्यैव सूचित्वं तया मूढधियाऽऽस्थितम् ।
नानर्थबुद्धेः स्फुरति पूर्वापरविचारणा ॥ १८
स्वार्थक्रियोग्रसामर्थ्याद्याति भावनयान्यताम् ।
पदार्थोऽभिमतांशाढ्यो निःश्वासेनेव दर्पणः ॥ १९
सूचीभावं प्रपन्नायास्त्यजन्त्याः पीवरं वपुः ।
महामरणमप्यस्या राक्षस्याः सुसुखं स्थितम् ॥ २०
एकवस्त्वतिरागाणामहो नु विषमा गतिः ।
देहोऽपि तृणवत्त्यक्तो राक्षस्या निजयेच्छया ॥ २१
एकवस्त्वतिगन्धेन भ्रश्यन्त्यन्या हि संविदः ।
राक्षस्या ग्रासगन्धेन देहनाशोऽपि नेक्षितः ॥ २२
नाशोऽपि सुखयत्यज्ञमेकवस्त्वतिरागिणम् ।
सूचीभूता विदेहापि परितुष्टैव राक्षसी ॥ २३

अन्या बभूव लग्ना[1] सा तथा जीवविषूचिका ।
व्योमात्मिका निराकारा व्योमवृत्तिशरीरका ॥ २४
तेजस्तनुप्रवाहाभा प्राणतन्तुमयात्मिका ।
मूलसंवेदनाकारा चन्द्रार्कांशुकसुन्दरी ॥ २५
पृथगेवासिधाराभा परमाण्ववलीय सा ।
कौसुमी गन्धलेखेव कला कलनरूपिणी ॥ २६
पापात्मिका मनोवृत्तिः सा हि तस्यास्तथा स्थिता ।
परप्राणवशादेव परमार्थपरायणा ॥ २७
एवमस्यास्तनुर्जाता सूचीद्वयमयी हि सा ।
नीहारांशुकवत्तन्वी कार्पासांशुसुपेलवा ॥ २८
तनुद्वयेन तेनासौ प्रविश्य हृदयं नृणाम् ।
वेधयन्ती ततः क्रूरा प्रबभ्राम दिशो दश ॥ २९
सर्वैः स्वसंकल्पवशाल्लघुर्भवति वा गुरुः ।
कर्कट्योग्रं वपुस्त्यक्त्वा सूचीत्वमुररीकृतम् ॥ ३०
तुच्छोऽप्यर्थोऽल्पसत्त्वानां गच्छति प्रार्थनीयताम् ।
सूचीवृत्तपिशाचीत्वं राक्षस्या तपसा स्थितम् ॥ ३१
अपि पुण्यशरीराणां जातिबन्धो न शाम्यति ।
तनुसूचीपिशाचीत्वं राक्षस्या तपसार्जितम् ॥ ३२
तस्यां दिगन्तभ्रमणे प्रवृत्तायां महानिलैः ।
तत्रैव सा तनुः स्थूला गलिता शरदभ्रवत् ॥ ३३

---

सूच्याकारापन्नेन स्थिता । यथा बौद्धानामालयविज्ञानसंतानः स्वमात्रगोचरोऽपि परैरलक्षितो, यथा वा तार्किकाणां धारावाहिकज्ञानसंतानः साक्ष्यनभ्युपगमादलक्षितस्तद्वत्परैरलक्षिता ॥१३॥ अत्यन्तालक्ष्यत्वादेव शून्यवादिसिद्धार्थानां सविका प्रसवित्री वेत्युत्प्रेक्षा । रन्ध्रस्य नभसो यदा नीलं नैल्यं तन्मया तत्प्राया । अरवा निःशब्दा । मयटष्टित्वेऽपि ङीबभावश्छान्दसः । कर्मधारये पुंवद्भावो वा । एवमायसीं सूचीमुपवर्ण्य अनायस्या जीवसूच्यास्तदनुसारित्वमाह—**अदृश्ययेति** ॥१४॥ कलास्तत्तद्वृत्तिषु प्रतिफलितचिदाभासास्तत्कलनधर्मिण्या । क्षीणस्य विनश्यदवस्थस्य दीपस्यांशुः किरणस्तल्लक्षणा सूची यथा चक्षुषाऽनुपलभ्यापि स्पृश्यमाना दाहकत्वात्तीक्ष्णा तादृश्या ॥ १५ ॥ इदानीं तस्याः सूचीभावलक्षणं तपःफलमिष्टानुपयोगादुपहसति—**ग्रासार्थ**मित्यादिना । सा ग्रासास्थैव निरुदरायाः सूच्या नोपयुज्यते ॥ १६ ॥ १७ ॥ आस्थितं अभिलषितम् । अनर्थबुद्धेर्निरर्थकबुद्धेर्जन्तोः ॥ १८ ॥ विमर्शयोग्ये चित्ते कुतो न स्फुरति तत्राह—**स्वार्थे**ति । अभिमते अभिलषितेंऽशे विषये आढ्योऽभिनिविष्टश्चित्तपदार्थः । स्वार्थक्रिया अभिमतार्थे दृढप्रयत्नस्तस्योग्रादनतिक्रमणीयात्सामर्थ्याद्भावनया तद्रागानुरञ्जनेनान्यतां पूर्वनैर्मल्यवैपरीत्यम् । कालुष्यमिति यावत् । याति । यथा निःश्वासेन दर्पणः ॥ १९ ॥ किंच स्वार्थदृढानुरागादस्या महादुःखमपि सुखायितमित्याह—**सूची**ति ॥२०॥२१॥२२॥२३॥ प्रसङ्गान्नीतिमुपवर्ण्य प्रस्तुतमनुसरन् जीवसूच्याख्यव्याधिस्वरूपमाह—**अन्ये**त्यादिना । व्योमवृत्ति आकाशवत्सूक्ष्मस्वभावं लिङ्गशरीरं यस्याः ॥ २४ ॥ मूलसंवेदनं कुण्डलिनीशक्तिस्तदाकारा । चन्द्रार्कयोरल्पा अंशवोंऽशुकानि तानीव सुन्दरी ॥२५॥ तस्याः कर्कट्याः पापात्मिका अतएव असिधाराभा क्रूरा मनोवृत्तिरयःसूच्याः पृथगेव तथा जीवसूचीरूपेण स्थितेति परेणान्वयः । कौसुमी गन्धलेखेव परमाणु परमसूक्ष्मं यथा स्यात्तथा प्राणिदेहेष्ववलीयान्तः प्रविश्य हिंसादिकलानां चातुरीणां यत्कलनं संपादनं तेन रूपिणी प्रकटा स्थिता ॥ २६ ॥ तदेव स्पष्टमाह—**परे**ति । परेषां प्राणिनां प्राणवशात्प्राणाननुसृत्य परमोऽर्थः स्वमनोरथसिद्धिस्तत्र परायणा उद्युक्ता ॥२७॥ तनुद्वयवर्णनमुपसंहरति—**एव**मिति ॥२८॥ अथ तस्याः संक्षेपतश्चरित्रमाह—**तनुद्वयेने**ति ॥ २९ ॥ संकल्पस्याघटितघटनासामर्थ्ये इदमेव निदर्शनमित्याह—**सर्वै** इति॥३०॥ अल्पसत्त्वानां क्षुद्रमनसाम् । सूच्या वृत्तमिव वृत्तं यस्मिंस्तथाविधं पिशाचीत्वम् ॥ ३१ ॥ ननु सा तपसा पूता पुण्यशरीरा संपन्ना तथाभूतायास्तस्याः परपीडाहेतुसूचीशरीरप्रार्थनं कथं युक्तं तत्राह—**अपी**ति । जातिबन्धो जात्यनुसारी वासनानिबन्धः ॥ ३२ ॥ सा स्थूला सर्वसाधारणाऽविद्याकल्पिता कर्कटीतनुर्महद्भिरनिलैर्वायुभिर्गलिता

---

[1] आयससूच्या संलग्ना । लग्नाशा इति पाठः, तत्र लग्ना आशा । प्राणिग्रसनेच्छा यस्या इत्यर्थः.

कस्यचिद्विवशाङ्गस्य क्षीणस्य विपुलस्य च ।
प्रविश्यान्तर्वातसूचिर्भवत्यतिविषूचिका ॥ ३४

कस्यचित्तनुदेहस्य स्वस्थस्य सुधियोऽपि वा ।
प्रविश्य जीवसूचित्वे भवत्यन्तर्विषूचिका ॥ ३५

एवं क्वचित्तृप्यति सा दुर्बुद्धिहृदयास्थिता ।
क्वचिदुच्छेद्यते पुण्यैर्मन्त्रौषधितपःक्रमैः ॥ ३६

आसीद्बहूनि वर्षाणि भ्रमणैकपरायणा ।
देहद्वयेन गच्छन्ती व्योम्नि भूमितले तथा ॥ ३७

रजस्तिरोहिता भूमौ हस्तेऽङ्गुलितिरोहिता ।
प्रभातिरोहिता व्योम्नि वस्त्रे सूत्रतिरोहिता ॥ ३८

अन्तःस्थस्नायुसरिति दुर्भगे पांशुपाण्डुरे ।
शुष्करेखासरित्खाते सूक्ष्मरेखाजरत्तृणे ॥ ३९

अर्थहीने गतच्छाये शून्या उच्छ्वासकारिणी ।
मक्षिकावातहरिते श्रीवृक्षपरिवर्जिते ॥ ४०

स्थूलास्थिग्रन्थिवलिते नित्यकम्पस्फुरत्तमे ।
अनात्मीयाच्छनीहारेऽशुद्धांशुककृतभ्रमे ॥ ४१

किणस्थाण्वङ्गविश्रान्तमक्षिकापिकवायसे ।
रौक्षरूढरसद्वाते विलोलाङ्गुलिशाखिनि ॥ ४२

मालाभ्रलेखासंसारे स्वाङ्गुलिव्रणगर्तके ।
स्पन्दावश्यायपृषति पदवल्मीकपर्वते ॥ ४३

कचत्याशु जलभ्रान्तौ नखाजगरकर्कशे ।
क्वाचित्कविसरद्भीतभीतयूककुपान्थके ॥ ४४

विरूपाशुष्कसंदष्टवीटिकापूतिपल्वले ।
मध्यस्थलेखमार्गौघशीतश्वसनगोचरे ॥ ४५

ग्रस्तयूकानरौघासृक्पूर्णसृक्किनखास्यताम् ।
दधताङ्गुष्ठपक्षेण क्रान्ते सर्वत्र यायिनी ॥ ४६

नानाविरचनाचित्रपटपत्तनगामिनी ।
गमागमपरिश्रान्ता तत्रात्यन्तचिराध्वगा ॥ ४७

नगरानगरे व्यस्तसूत्रभाण्डैकभारिणी ।
तप्ते कलेवरारण्ये बलीवर्दापवर्तिनी ॥ ४८

गुप्ता विश्रमणायैव मनाक्करपरिच्युता ।
तन्तुप्रोता मुखाकृष्टिः खिन्ना क्वापि विलीयते ॥ ४९

---

विशीर्णा ॥ ३३ ॥ अथ विषूच्याश्चरित्रं विस्तरेणाह—**कस्यचि-दि**त्यादिना । प्राग्रोगान्तरेण विवशाङ्गस्य । क्षीणस्य कृशाङ्गस्य । विपुलस्य पीनाङ्गस्य । वातलीना अयःसूचिरतिशयिता विषूचिकाप्रवृत्तिरोगो भवति ॥ ३४ ॥ अन्तर्विषूचिका दुर्बुद्धिरूपा ॥ ३५ ॥ क्वचित्कस्मिंश्चित्पुरुषे । उच्छेद्यते निवार्यते ॥ ३६ ॥ ॥ ३७ ॥ तस्यास्तिरोधानस्थलविशेषानाह—**रज** इत्यादिना ॥३८॥ देहमध्येऽपि तानाह—**अन्तःस्थे**ति । व्यभिचारादिदोषदुष्टे भगे उपस्थेन्द्रिये । पांशुभिरूषादिभूपांसुभिः पाण्डुरे धूसरावयवे । शुष्का रूक्षा या हस्तपादादिरेखास्तल्लक्षणे शुष्कसरित्खाते । सूक्ष्मा या रोमादिरेखास्तल्लक्षणे जरत्तृणे ॥ ३९ ॥ अर्थ्यते इत्यर्थः सौभाग्यलक्षणं तद्धीनेऽङ्गे । गतच्छाये नष्टकान्तौ । शून्या अन्तःसद्भावशून्या । उच्छ्वासः पीडितानामूर्ध्वनिःश्वासः । देहाद्बहिर्देशेऽपि मक्षिकाभिः रूक्षदुर्गन्धवातैश्च युक्ते हरिततृणाद्यावृतप्रदेशे । श्रिया वृक्षैश्च श्रीकरैर्वा बिल्वाम्रादिवृक्षैः परिवर्जिते ॥ ४० ॥ स्थूलैः पशुनराद्यस्थिग्रन्थिभिर्वलिते । वात्यादिना नित्यं कम्पेन स्फुरत्तमे संचलत्तमे । आत्मीया आत्मनिष्ठास्त एव अच्छाः स्वच्छा नीहारवत्परसंतापहारिणः । न विद्यन्ते आत्मीयाच्छनीहारा यत्र । अशुद्धान्यंशुकानि येषां तथाविधैरशिष्टजनैः कृतसंचारे ॥ ४१ ॥ किणेषु कोटरेषु स्थाण्वङ्गेषु च्छिन्नाग्रवृक्षेषु च क्रमाद्विश्रान्ता मधुमक्षिकाः पिकवायसाश्च यत्र । शीतातिशयेन रूक्ष एव रौक्षो रूढः प्रादुर्भूतो रसन् शब्दायमानो वातो यत्र । अतएव कम्पविलोलाङ्गुलिशाखिनि ॥ ४२ ॥ मालाभूतानामभ्रलेखानां नीहारपटलानां संसारः संचारो यत्र । विदीर्णस्वाङ्गुलिव्रणानां जनानां गर्तप्राये निवासदेशे । स्पन्दमाना अवश्यायपृषतो हिम[illegible] 

षपादाङ्किते देशे वल्मीके वामलूरे पर्वते च । समाहारैकत्वम् ॥ ४३ ॥ आशु जलभ्रान्तौ कचति प्रकाशमाने मरुदेशे । नखैर्नखप्रधानैर्व्याघ्रभल्लूकादिभिरजगरादिभिश्च कर्कशे कठिनतमे अरण्ये । क्वचिद्भवाः क्वाचित्का विसरन्तः पलायमाना भीतेभ्योऽपि भीता यूकाभिः कुत्सिताः पान्थाः पथिकजना यत्र ॥ ४४ ॥ विरूपैराशुष्कैश्च पिशाचादिभिः संदष्टानि ताम्बूलवीटिकाप्रायाणि शीर्णपर्णानि यत्र तथाविधे पूतिपल्वले दुर्गन्धजलगर्ते । मध्यस्था लेखाः कुल्यादिखातानि येषु तथाविधमार्गौघानां शीतस्य श्वसनस्य गोचरे विषये पान्थविश्रान्तिस्थाने ॥ ४५ ॥ ग्रस्तानां चर्वितानां यूकानामुदरस्थनरौघासृग्भिः पूर्णे सृक्किणी येषां तथाविधानां पामरनरवानरादीनां नखा एवास्यानि मुखानि यस्य तद्भावं दधता अङ्गुष्ठपक्षेण अङ्गुष्ठपरिवारायितेनाङ्गुलिजालेन क्रान्ते आक्रान्ते सर्वत्र देहप्रदेशे भूम्यादिप्रदेशे प्रागुक्तस्थानेषु च यायिनी गमनशीला सा अभूदिति शेषः ॥ ४६ ॥ तथा नानाविधाभिर्गजतुरगादिविरचनाभिश्चित्राः पटा वस्त्राणि येषु तथाविधेषु पत्तनेषु नगरेषु गमनशीला । तत्र गमागमैः संचारैः परिश्रान्ता अभूदिति शेषः ॥ ४७ ॥ सूचीस्वभावादेव च नगरेष्वनगरेषु ग्रामेषु च व्यस्तानां रथ्याप्रक्षिप्तानां कार्पासादिसूत्राणां तत्प्रोतानां काचमण्यादीनां भाण्डानामलंकाराणां च एकं भर्तुं शीलमस्याः सौक्ष्म्येणान्यहरणाशक्तेः । किंच ज्वरादिना तप्ते प्राणिनां कलेवरारण्ये बलीवर्दापवर्तिनी । यथा हृष्टो बलीवर्दः शृङ्गाभ्यां वल्मीकाद्यपस्किरन्नपवर्तयति तद्वदियं सूच्यपि तच्छीलेत्यर्थः ॥ ४८ ॥ केनचित्सीवनाय गृहीता चिरं सीवने तन्तुप्रोतमुखाकृष्टिः खिन्ना श्रान्ता सती मनाक् तत्करपरिच्युता सती विश्रमणायैव क्वापि गुप्ता प्रच्छन्ना लीयते

वेधनं कर्मसंश्लिष्टा कठिनापि न साकरोत् ।
न हि तीक्ष्णो बहिः कार्यो निजत्वं विजहाति चेत् ५०
सायःसूची मनःसूच्या वलिता विजहार ह ।
दिक्ष्वाशेव शिलागुर्वी नावाङ्गपलिता सती ॥ ५१
विससार दिगन्तेषु सान्तःकरणसत्तया ।
तुषलेखेव पवनशक्त्या संसृतिरूपया ॥ ५२
मुखेन सूक्ष्मसूत्रान्तं चरन्तीव परोम्भितम् ।
परपूरोद्यमेनाशु जातेव हृदयान्विता ॥ ५३
परपूररसेनैव सूच्या हृत्सुविकासितम् ।
अनारतपतत्सूक्ष्मसूत्रान्त इव स्तम्भिता ॥ ५४
तीक्ष्णैरपि चिरक्षीणं पूर्यते निर्विचारणा ।
दृष्टान्तोऽत्र क्षणात्सूच्या पूरितो जर्जरः पटः ॥ ५५
सूत्रांशुनिर्गमे योग्यं सूच्या हृदयमर्जितम् ।
परपूरणयैवाशु तेजश्च कवितार्करुक् ॥ ५६
अकस्मात्तेन रूढेन क्षीणपूरेण रूपिणी ।
हृदये राक्षसी सूचिः कर्मणा तप्यते च सा ॥ ५७
वेधं पूररयेणेव करोति स्वं प्रचारिता ।
प्रकृतेन निजेनापि वेधाय व्यवहारिता ॥ ५८
संचारयति वस्त्रेषु सूत्रं चतुरवेधनात् ।
आदीर्घवासनातन्तुः शरीरेष्विव चेतनाम् ॥ ५९
संचार्यमाणवेधेन धावन्तीवाक्षिपातने ।
अदर्शितमुखा एव दुर्जना मर्मवेधिनः ॥ ६०
कण्ठवस्त्रदलप्रोता वेधाक्षणा मुखमीक्षते ।
कथमेता भिनद्मीति तीक्ष्णानामेतदीप्सितम् ॥ ६१
सममेव च कौशेये क्षौमे च वसने सृता ।
जडः क इव वा नाम गुणागुणमपेक्षते ॥ ६२
सा दधाना ततं सूत्रमङ्गुष्ठाङ्गुलिपीडिता ।
आन्त्रतन्तुमिवामान्तमुद्गिरन्ती निरीक्षते ॥ ६३
तीक्ष्णाप्यहृदयत्वेन सरसेष्वरसेष्ववित् ।
सूत्रितापि पदार्थेषु विशल्यरसगामिनी ॥ ६४

॥ ४९ ॥ ननु सा सीवनकर्तुः करवेधनं कुतो नाकरोदित्याशङ्क्याह—**वेधन**मिति । कठिना क्रूरापि सा स्वयोग्ये सीवनकर्मणि सूचीत्वादेव संश्लिष्टा कौतुकादासक्ता सती वेधनं नाकरोत् । कुतः । सा सूची निजत्वं निजस्वभावं सीवनं विजहाति त्यजति न प्रकटयति चेत्तत्तुल्ययोगत्वात्स्वीयस्तीक्ष्णः क्रौर्यस्वभावोऽपि न बहिः कार्यो बहिः प्रकटयितुं शक्यः । तस्यापि निजत्वाविशेषादित्यर्थः ॥ ५० ॥ सा अयःसूची मनःसूच्या जीवसूच्या । गुर्वी शिला नावेव अङ्गपलितायां वृद्धायां सती स्थिता आशेव च दिक्षु विजहार बभ्राम । अङ्गेति संबोधनं वा ॥५१॥ संसृतिर्भ्रमणं रूपयति प्रकटयतीति संसृतिरूपा तया ॥ ५२ ॥ परैरुम्भितं गुम्फितं सूक्ष्मं सूत्रान्तं चरन्ती भक्षयन्तीव अतएव हि परप्रयुक्तेनैवोदरपूरणोद्यमेन हृदयान्विता स्वस्थचित्ता जातेवेत्युत्प्रेक्षा ॥ ५३ ॥ उचितैवेयमुत्प्रेक्षेत्याशयेनाह—**परे**ति । यतः सूच्या प्रागपि परपूररसेनैव परवधप्रयुक्तोदरपूरणेच्छयैव तपःक्लेशितं स्वं मनः सुविकासितमुल्लासितमतः सा अनारतं मुखे पतति । सूक्ष्मसूत्रान्ते स्वाभिलषितप्राये स्तम्भिता निरुद्धेवेत्युत्प्रेक्षोचितैवेत्यर्थः ॥ ५४ ॥ इदानीं सूच्या मौढ्याचरितं तपःसूत्रैः पटचरोदरपूरणायैव संपन्नं न स्वोदरपूरणायेत्युत्प्रेक्षितार्थो लोकप्रसिद्धसामान्योक्तिदृष्टान्तः संपन्न इत्याह—**तीक्ष्णै**रपीति । चिराय क्षीणं दारिद्र्यकार्श्यादिपीडितं कुलं तीक्ष्णैः क्रूरैरपि पूर्यते दयया पोष्यते । निर्विचारणा नास्मिन्नर्थे विचारोऽस्ति । यतो दृष्टान्तोऽत्रार्थे सूच्या पूरितो जर्जरः पटः प्रत्यक्षं दृष्ट इत्यर्थः ॥ ५५ ॥ कुतो न सूच्या स्वोदरपूरणं कृतं तत्राह—**सूत्रे**ति । यतः सूच्या सूत्रस्यांशोरग्रभागस्य निर्गमे अन्तरप्रवेशे योग्यमच्छिद्रमेव हृदयं तपसा अर्जितं तथा तेजोबुद्धिप्रकाशोऽपि तत्त्वावबोधभाग्यशालित्वात्कवितायाः अभिन्नतायाः अर्करुक् सूर्यकान्तिरिव प्रकाशस्वभावमपि परपूरणयैव पटादिसीवनेनैव आशु व्याप्तं ननु स्वभोगोपयुक्तमर्जितमित्यर्थः । आङ्पूर्वात् 'अशू व्याप्तौ' इति धातोरौणादिक उप्रत्ययः ॥ ५६ ॥ अतएव तस्याः पश्चात्तापोऽभूदित्याह—**अकस्मा**दिति । पूर्यत इति पूर उदरम् । क्षीणपूरेण तेन तपःकर्मणा अकस्माद्रूढेन प्रादुर्भूतेन तेन सूचीभावेन रूपिणी । सा सूचिः ॥ ५७ ॥ यदि पश्चात्तप्ता सा तर्हि किं प्राणिवेधनादुपरता नेत्याह—**वेध**मिति । तथापि सा पूररयेणेव नदीप्रवाहवेगसदृशेन निजेन राक्षसस्वभावेन प्रकृतेन सूचीस्वभावेनापि प्राणिवेधनाभिनिवेशेन वेधायैव स्वं स्वानुरूपं प्रचारिता प्रथममुद्योजिता पश्चाद्व्यवहारिता च सती वेधं करोत्येव ॥ ५८ ॥ अतएव केवलसूचीस्वभावप्रयुक्तं कार्यमपि करोतीति प्रागुक्तमर्थं सदृष्टान्तमाह—**संचारयती**ति । यथा पुत्रकलत्रादिविषयेष्वादीर्घो वासनारूपस्तन्तुर्मरणकाले उद्भूतस्तत्तद्वासनानुरूपस्वयादिशरीरेषु जीवचेतनां संचारयति तद्वद्वस्त्रेषु सूत्रं संचारयतीत्यर्थः ॥ ५९ ॥ अतएव तुन्नवायैः पटेषु वेधेन संचार्यमाणा तेषामक्षिपातने चक्षुःसंनिकर्षे मुखं पटे निगूह्य धावन्तीव बभूवेति शेषः । दुर्युक्तमेवेदं तया कृतमित्यर्थान्तरन्यासेन द्रढयति—**अदर्शिते**ति । पिशुनचोरादयो हि दुर्जना अदर्शितस्वमुखा एव परमर्मभेदिनः प्रसिद्धा इत्यर्थः ॥ ६० ॥ कदाचित्कण्ठसक्तस्योत्तरीयवस्त्रस्य गुणे प्रोता सती वेधाक्षणा स्वकीयच्छिद्रलक्षणेन नेत्रेण नारीणां मुखमीक्षते । केनाभिप्रायेणेति तमाह—**कथ**मिति ॥ ६१ ॥ कौशेये मृदुस्निग्धत्वादिगुणवति पट्टवस्त्रे क्षौमे काठिन्यरूक्षत्वादिदोषवति क्षुमावल्कले च समं तुल्यवृत्त्यैव सृता प्रविष्टा । जडो मूर्खः । अगुणं दोषम् । अपेक्षते विमृशतीति यावत् ॥ ६२ ॥ सीवनकाले सूचीच्छिद्रात्तन्तुनिर्गमनं सीवकाङ्गुष्ठनिपीडितसूच्युदरान्तर्गतान्त्रतन्तूद्गमनत्वेनोत्प्रेक्षते—**से**ति । अमान्तं निरवकाशत्वादन्तःस्थितिमलभमानम् ॥ ६३ ॥ सूत्रिता सूत्रप्रोता तीक्ष्णापि सा सरसेष्वरसे-

अगर्दती मुखप्रोता सुतीक्ष्णापि च तापिधीः ।
सुवेधिताप्यहृदया राजपुत्र्यापि दुर्भगा ॥ ६५
विना परापकारेण तीक्ष्णा मरणमीहते ।
वेदनाद्रोधिता सूची कर्मपाशे प्रलम्बते ॥ ६६
शेते किंश्याममैत्र्येव दूरे करपरिच्युता ।
स्वरूपसदृशं मित्रं कस्मै नाम न रोचते ॥ ६७
सिश्रिता मूढचित्तानां वृत्तिभिः प्राकृते जने ।
तिष्ठत्यात्मसमं को हि संगतिं त्यक्तुमिच्छति ॥ ६८
भवत्ययस्कारवित्तौ संत्यज्यान्तर्धिगामिनी ।
भस्त्रावातैर्विचलिता गगनादुत्पतोन्मुखी ॥ ६९
प्राणापानप्रवाहस्थहृत्पद्मान्तरचारिणी ।
दुःखशक्तिर्महाघोरा जीवशक्तिरिवोदिता ॥ ७०
समानवैपरीत्येन समानसमगामिनी ।
उदानविपरीतत्वादुदानसमगामिनी ॥ ७१
व्यानस्था व्याधिजननी सर्वाङ्गरसचारिणी ।
हृत्कण्ठे शूलपवने वैवर्ण्योन्मादकारिणी ॥ ७२
प्रायशोऽविकहस्तस्था सुप्तोर्णागन्धकोटरे ।
बालहस्ताङ्गुलीतल्पवेधनैकविलासिनी ॥ ७३
पादप्रविष्टा रुधिरपानोपार्जनविस्मिता ।
तुष्यत्यतितरां गुच्छभोजना तुच्छभोजनैः ॥ ७४
शेते कर्दमकोशस्था चिरकालमधोमुखी ।
इच्छानुरूपमासाद्य क इवास्पदमुज्झति ॥ ७५
क्रौर्येणापहतात्मानं दर्शयत्युपवेधनैः ।
उत्सवादपि नीचानां कलहोऽपि सुखायते ॥ ७६
कपर्दकार्धलाभेन कृपणो बहु मन्यते ।
दुरुच्छेदा हि भूतानामहंकारचमत्कृतिः ॥ ७७
सूचिकायुग्मलभ्येन मोहितेनात्मना नृणाम् ।
मृतिमाशङ्कते चित्रा स्वार्थे नोदेति मूढता ॥ ७८
वस्त्रतन्तुविभेदेन परमारणमाशु मे ।
इदं संपद्यत इति भवत्यन्तर्हि निर्मला ॥ ७९
स्थापिता मलमादत्ते यथा मृद्धर्षणं विना ।
परापराधविरहाद्व्याधिस्तस्याः प्रवर्तते ॥ ८०
सूक्ष्माऽदृश्या चैव दात्री क्षणाद्विस्मृतिमेति सा ।
तीक्ष्णभेदकरी क्रूरा सूची चेष्टेव दैविकी ॥ ८१

ष्वपि पदार्थेषु अहृदयत्वेन अन्तर्हृदयशून्यत्वेन अवित् विशेषानभिज्ञा अतएवारसगामिनी रसास्वादहीना सूची स्वभावादेव विशति ॥ ६४ ॥ अनपराधदण्डप्राप्तिरहो अस्या दुर्दशेत्याह—**अगर्दती**ति । नर्द गर्द शब्दे । अगर्दती निष्ठुरभाषणादिशब्दमकुर्वाणापि मुखे प्रोता सूत्रेण सुतीक्ष्णा परसंतापसमर्थापि स्वयमेव तापिनी संतापवती धीर्यस्याः । सुष्ठु वेधिता संजातच्छिद्रापि अहृदया अनुदरच्छिद्रा । यथा राजपुत्र्यपि दुर्भगा अभाग्या संपद्यते तद्वदियमपि संपन्नेत्यर्थः ॥ ६५ ॥ युक्तैवास्याः सा दुर्दशेत्याह—**विने**ति । यतः सा परेषां स्वापकारेण विनैव मरणं वधमीहते इच्छति, अतस्तत्पापवशाद्वेदनात्स्वबुद्धिवशादेव सूत्रे रोधिता सती स्वकर्मपाशे एव प्रलम्बते इत्युत्प्रेक्षा ॥ ६६ ॥ दैवात्सीवकस्य करात्परिच्युता सती तस्यान्यस्य वा अङ्के[1] उत्सङ्गे दूरे करस्पर्शायोग्ये स्थाने किंश्यामैः कुत्सितश्यामवर्णैरधोरोमभिः सह मैत्र्येव मित्रत्ववशादिव तेषु शेते निद्राति । कुतोऽस्यास्तत्समागमो रोचते तत्राह—**स्वरूपसदृश**मिति ॥ ६७ ॥ अतएव मूर्खचित्तवृत्त्यापि सह संगतिस्तस्या रोचत इत्याह—**सिश्रिते**ति ॥ ६८ ॥ नन्वेवं तस्या लोहसूच्यन्तरैः सहापि साम्यात्तन्मैत्र्या कदाचित्तैः सह दैवाल्लोहकारप्राप्तौ किं करोति तत्राह—**भवती**ति । अयस्काराणां वित्तौ प्राप्तौ सत्यां तैः संतापायाम्यौ न्यस्यमाना तदीयचर्मभस्त्रावातैर्विचलिता सती तान्संत्यज्यान्तर्धिगामिनी अन्तर्धानगता सती गगनादुत्पतोन्मुखी पलायनपरा भवतीत्यर्थः ॥ ६९ ॥ तस्याः प्राणिनां प्राणादिद्वारा देहान्तःसंचारमाह—**प्राणे**त्यादिना । दुःखप्रदा कर्मशक्तिरेव जीवशक्तिः सजीवा उदिता आविर्भूतेव ॥ ७० ॥ ७१ ॥ शूलपवने शूलरोगात्मके वायौ प्रविश्येति शेषः ॥ ७२ ॥ प्रायशः कम्बलादिसीवनकाले अविकानां अविपालानां हस्तस्था कदाचित्तदीयोर्णानां गन्धस्य लेशस्य कोटरे सुप्ता कदाचित्तु बालानां हस्ताङ्गुल्यादिलक्षणस्य स्वतल्पस्य वेधने एकविलासिनी मुख्यकौतुकवती आसीदिति शेषः ॥ ७३ ॥ पुष्पगुच्छमालाग्रथनकाले गुच्छभोजना तुच्छभोजनैरल्पभोजनैस्तुष्यति तृप्यति ॥ ७४ ॥ कर्दमकोशो मलपङ्किलमूलाधारकोशः ॥ ७५ ॥ अपहृतं दूषितमात्मानं स्वाम् । उपवेधनैः परप्राणापहारपर्यन्तैर्वेधनैः । स्वार्थाभावे कथं परमारणे तस्याः प्रवृत्तिस्तत्राह—**उत्सवाद**पी**ति । येषां परपीडाऽसामर्थ्येऽपि परैः सह कलहोऽपि सुखायते तेषां परमारणं सुखायते इति किं वक्तव्यमिति भावः ॥७६॥ अल्पतररक्तकणास्वादलोभाद्वास्याः परमारणे प्रवृत्तिरुपपन्नेत्याह—**कपर्दके**ति । राक्षसकुलोचितपरहिंसाविहाराभिमानाद्वा तदुपपत्तिरित्याह—**दुरुच्छेदे**ति॥७७॥ सा मोहितेन मूढेनात्मना क्रियमाणेन जीवसूचीलोहसूचीति स्वकीयसूचिकाद्वयलभ्येन वेधनेन सर्वेषां नृणां मृतिमाशङ्कते तर्कयति । मूढानामीवश्यके स्वार्थे मूढता नोदेति सा चित्रा आश्चर्यभूतेत्यर्थः ॥७८॥ इदानीं मे मम परमारणं प्राक् सीवनकाले वस्त्रतन्तुविभेदेनाभ्यस्तमिति हेतोराशु संपद्यत इति स्वकौशलानुसंधानेनान्तः अत्यन्तं निर्मला प्रसन्ना भवति । हृष्यतीति यावत् ॥७९॥ यथा लोके प्रसिद्धा सूचिः सीवनेन[2] मृदो घर्षणं विना तूष्णीं स्थापिता मलमनैर्मल्यमादत्ते स्वीकरोति । तथा तस्या अपि परापराधविरहाद्व्याधिर्दुःखं प्रवर्तत इत्यर्थः ॥ ८० ॥ अदृश्या दात्री खण्डयित्री ।

१ अङ्के इति निराधारशयनानुपपत्त्या व्याख्येयं(?) पाठः(?)। २ सीवनेन इति पाठः. ३ सीवनेलार्थलभ्यम्.

तन्तुवेधनमात्रेण हतोऽन्य इति तोषिता ।
दुर्जनो येन तेनैव नाशितेनैति हृष्टताम् ॥ ८२
पङ्के मज्जति याति खं विहरति व्योमानिलैर्दिक्तटे
शेते पांसुषु भूतलेष्विव वने पट्टे गृहेऽन्तःपुरे ।
हस्ते श्रोत्रसरोरुहेऽथ मृदुनि स्वेच्छोर्णिकाखण्डके
रन्ध्रे काष्ठमृदां च माति हृदये द्रव्यात्मशक्त्यैव सा ॥

श्रीवाल्मीकिरुवाच ।

इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामक्षये रविकरैश्च सहाजगाम ॥ ८४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे सूचिव्यवहारवर्णनं नाम सप्ततितमः सर्गः ॥ ७० ॥

## षष्ठो दिवसः ।

## एकसप्ततितमः सर्गः ७१

श्रीवसिष्ठ उवाच ।

अथ सा बहुकालेन कर्कटी नाम राक्षसी ।
सर्वेषां नरमांसानां ननु तृप्तिमुपाययौ ॥ १
पूर्वेणैव किलाहा सा तृप्ता रुधिरबिन्दुना ।
सूच्याः किमिव मात्यन्तस्तृष्णासूची सुदुर्भरा ॥ २
चिन्तयामास हा कष्टं किमहं सूचितां गता ।
सूक्ष्मास्मि हतशक्तिश्च अपि ग्रासो न माति च ॥ ३
क्व मे तानि विशालानि गतान्यङ्गानि दुर्धियः ।
कालमेघविशालानि वने शीर्णानि पर्णवत् ॥ ४
मय्यस्यां मन्दभाग्यायां मनागपि न माति हि ।
स्वादुमांसरसग्रासो वसावासित आसयन् ॥ ५
पङ्कान्तर्विनिमज्जामि पतामि धरणीतले ।
हस्तास्मि जनपादौघैः शुक्रेण मलिनास्मि च ॥ ६
हा हताहमनाथाहमनाश्वासा निरास्पदा ।
दुःखाद्दुःखे निमज्जामि संकटात्संकटेऽपि च ॥ ७
न सखी न च मे दासी न मे माता न मे पिता ।
न मे बन्धुर्न मे भृत्या न मे भ्राता न मे सुतः ॥ ८
न मे देहो न मे स्थानं न मे कश्चित्समाश्रयः ।
नैकस्थाने समावासो भ्राम्यामि वनपर्णवत् ॥ ९
आपदां धुरि तिष्ठामि निविष्टास्मि सुदारुणे ।
अभावमपि वाञ्छामि सोऽपि संपद्यते न मे ॥ १०
स्वको देहः परित्यक्तो मूढचेतनया मया ।
काचबुद्ध्या विमूढेन हस्ताच्चिन्तामणिर्यथा ॥ ११
आपतद्धि मनो मोहं पूर्वमापत्प्रयच्छति ।
पश्चादनर्थविस्ताररूपेण परिजृम्भते ॥ १२
धूमेषु परितिष्ठामि मार्गे विलुलितास्मि च ।
तृणेषु प्रेषितास्म्यन्तर्हा मे दुःखपरम्परा ॥ १३
परप्रेषकरी नित्यं परसंचारचारिणी ।
परं कार्पण्यमायाता जाता परवशास्म्यलम् ॥ १४
भ्रान्तिं करोमि तुच्छे च सापि वेधनरूपिणी ।
अहो ममाल्पभाग्याया दौर्भाग्यमपि दुर्भगम् ॥ १५

---

दैविकी औत्पातिकी चेष्टेव ॥ ८१ ॥ मर्मस्थानाच्छादनोत्तरीयतन्तुवेधनमात्रकौशलेन ॥ ८२ ॥ विस्तरोक्तं सूचीचरित्रं संक्षिप्योपसंहरति—**पङ्के** इति । पल्वलादिपङ्के मज्जति । खमाकाशं याति । व्योमानिलैः सह दिक्तटे विहरति । इवकारो भिन्नक्रमः । अन्तःपुरे गृहे पट्टे पर्यङ्कपट्टास्तरण इव भूतले वने पांसुष्वपि शेते । तथा नराणां हस्ते श्रोत्रलक्षणे श्रोत्रस्थे वा सरोरुहे पद्मे स्वेच्छया ऊर्णिकानां मेषरोम्णां खण्डके राशौ च शेते । काष्ठानां मृदां कुड्यादीनां च रन्ध्रे अल्पतरेऽपि छिद्रे माति संमीयते तथा प्राणिनां हृदये च माति यथा मणिमन्त्रादिद्रव्यात्मशक्त्या मायावी योगी वा सर्वत्र यथेच्छं विहरति तद्वदित्यर्थः ॥ ८३ ॥ ॥ ८४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचिव्यवहारवर्णनं नाम सप्ततितमः सर्गः ॥ ७० ॥

**कर्कट्याः सूचिभूतायाः पश्चात्तापोऽत्र वर्ण्यते ।**
**स्मरन्त्याः प्राक्तनं देहं विस्तरात्परिदेवनम् ॥ १ ॥**

सर्वेषां सर्वजातीयानां नराणां मांसानामास्वादनेऽपीति शेषः । तृप्तिमलंबुद्धिम् ॥१॥ तृप्ता अपगतक्षुधा ॥२॥ हतशक्तिः कुण्ठितभक्षणसामर्थ्या । न माति । उदरे इति शेषः ॥३॥ तानि प्राक्तनानि । अङ्गानि हस्तपादादीनि ॥ ४ ॥ अस्यामेतद्दशापन्नायाम् । वसया वासितः सुगन्धिः । आसनि आस्ये यन् प्रविशन् । एतेः शतृप्रत्ययः । 'पद्दन्–'इति सूत्रे प्रभृतिग्रहणस्य प्रकारार्थत्वादासन्नादेशः ॥५॥ पङ्कान्तर्मज्जनादि प्राक्सर्गे वर्णितम् । शुक्रेण चरमधातुना ॥ ६ ॥ अनाश्वासा सखिबन्ध्वाद्याश्वासनशून्या । संकटात्प्राणसंकटात् ॥ ७ ॥ तत्कुतस्तत्राह—**नेति** ॥ ८ ॥ समाश्रय उपजीव्यः ॥९॥ अभावं मरणम् ॥१०॥११॥ इदं च दुःखं मोहाविष्टमनःकृतमेवेत्याह—**आपतद्धीति** । मनः कर्तृ मोहमापतत्सत्पूर्वमापादयति दुःखसहस्रमित्यापद्दुर्बुद्धिस्ताम् । व्यत्ययेन प्रथमा ॥ १२ ॥ किंच कदाचिदहं कैश्चित्सूत्रे प्रोता धूमप्रदेशे बद्धा धूमेषु परि उपरि तिष्ठामि । कदाचिन्मार्गे पतिता खरोष्ट्रादिभिर्विलुलिता उपमर्दिता । कदाचित्कैश्चिन्नलिकादितृणेषु निधानायान्तः प्रेषिता प्रवेशितास्मि ॥ १३ ॥ १४ ॥ तुच्छेष्वान्तररक्ताद्यास्वादविषयेषु भ्रान्तिमभिलाषम् । सा भ्रान्तिरपि वेधनरूपिणी वेधनमात्रफला नास्वादनफला ।

उत्थितः स्फारवेतालः कुर्वत्याः शान्तिमद्य मे ।
सर्वनाशोऽवदातेन प्रवृत्ताया ममोदिता ॥ १६
किं मन्दया मया तादृक्संत्यक्तं तन्महावपुः ।
यथा नाशेन वा भाव्यं तथोदेत्यशुभा मतिः ॥ १७
मामवान्तरनिर्मग्नां सूक्ष्मां कीटतनोरपि ।
उद्धरिष्यति को नाम पांसुराशिभिरावृताम् ॥ १८
विविक्तमनसां बुद्धौ क स्फुरन्ति हताशयाः ।
ग्राममार्गतृणानीव गिरेरुपरिवासिनाम् ॥ १९
स्थिताया अज्ञताम्भोधौ क ममाभ्युदयो भवेत् ।
अन्धस्योदेति प्राकाश्यं नखद्योतानुसेविनः ॥ २०
अतः कियन्तं नो जाने कालमावलितापदम् ।
मयापच्छ्वभ्रगर्तेषु लुठितव्यं हतेहया ॥ २१
कदा स्यामञ्जनमहाशैलपुत्रकरूपिणी ।
द्यावापृथिव्योर्वैधुर्ये स्तम्भतामनुतिष्ठती ॥ २२
मेघमालासमभुजा चिरं विद्युत्पदेक्षणा ।
नीहारजालवसना प्रोच्चकेशासिताम्बरा ॥ २३
लम्बोदराभ्रसंदर्शप्रनर्तितशिखण्डिनी ।
लम्बलोलस्तनी श्यामा देहवातद्रवत्स्तनी ॥ २४
हासभस्मच्छटाच्छन्नसूर्यमण्डलरोधिनी ।
कृतान्तग्रसनोद्युक्तकृत्यैकाकृतिधारिणी ॥ २५
कृशानूलूखलदृशा सूर्यस्रग्दामहारिणी ।
पर्वतात्पर्वते शृङ्गे न्यस्य पादौ विहारिणी ॥ २६
कदा मे स्याद्धुरुश्वभ्रभासुरं तन्महोदरम् ।
कदा मे स्याच्छरन्मेघमेदुरा नखरावली ॥ २७
कदा मे स्यान्महारक्षोविद्रावणकरं स्मितम् ।
स्वस्फिग्वाद्यैररण्यान्यां कदा नृत्येयमुन्मदा ॥ २८
वसासवमहाकुम्भैर्मृतमांसास्थिसंचयैः ।
कदा करिष्येऽविरतं मेदुरोदरपूरणम् ॥ २९
कदा पीतमहालोकरुधिरा क्षीबतां गता ।
भवेयं मुदिता दृप्ता मुद्रिता निद्रया ततः ॥ ३०
मयैव कुतपोवह्नौ तदग्र्यं भासुरं वपुः ।
भस्मत्वं कनकेनेव सूचित्वमुररीकृतम् ॥ ३१
क क्लिष्टाञ्जनशैलाभं वपुर्भरितदिक्तटम् ।
क प्राचिकाखुरसमं सूचित्वं तृणपेलवम् ॥ ३२
त्यजत्याशु मृदित्यज्ञः प्राप्यापि कनकाङ्गदम् ।
मया सूचित्वलोभेन संत्यक्तं भासुरं वपुः ॥ ३३
हा महोदर विन्ध्याद्रिसनीहारगुहोपम ।
अद्य नान्तं करोषि त्वं कथं सिंहेन हस्तिनाम् ॥ ३४
हा भुजौ भरनिर्भग्नशिखरौ शशभृन्नखैः ।
पुरोडाशधिया चन्द्रं कथमद्य न बाधतः ॥ ३५

निरुदरजिह्वत्वादित्यर्थः ॥१५॥ सोऽयं वेतालशान्तिकर्मणि वेतालोदय इति लोकप्रसिद्ध आभाणकः स्वस्यां संपन्न इत्याह—**उत्थित** इति । अवदातेन तपसा ॥ १६ ॥ तत्प्राक्तनं महावपुः किंकारणं त्यक्तम् । वा अथवा येन प्रकारेण बुद्धौ सत्यां नाशेन भाव्यम् । आवश्यके कृत्यः ॥१७॥ 'नापूजयद्गणेशानं सूचीसृष्टौ स विश्वसृट् । नापसूत्रां ततः सूचीं नष्टां विन्दति मानवः ॥' इत्याभाणकमनुसृत्याह-**मामि**ति । अवान्तरे पथि दैवात्पांसुनिर्मग्नां को वा उद्धरिष्यति । दुर्लक्ष्यत्वान्न कश्चिदुद्धरिष्यतीत्यर्थः । हारितां हापिताम् । 'आवृताम्' इति पाठे तु स्पष्टम् ॥ १८ ॥ यद्यप्यसूक्ष्मदृश उद्धर्तुमशक्तास्तथापि विविक्तमनसः सूक्ष्मदर्शिनो योगिनस्त्वामुद्धरिष्यन्तीत्याशङ्क्याह—**विविक्ते**ति । हताशया मादृशा इति शेषः ॥१९॥ ननु त्वयैव स्वात्मोद्धर्तव्यस्तत्राह—**स्थिताया** इति । प्रकाशयतीति प्रकाशस्तद्भावः प्राकाश्यमर्थदर्शनम् ॥ २० ॥ आवलिता आपदा यस्मिन्कर्मणि तद्यथा स्यात्तथा लुठितव्यम् ॥ २१ ॥ वैधुर्ये प्राणिसंहारेणावष्टम्भेन च भारोत्तारणे ॥ २२ ॥ विद्युत्पदे विद्युत्स्थानापन्ने ईक्षणे चक्षुषी यस्याः । प्रोच्चैः केशैर्मितमम्बरं यस्याः ॥ २३ ॥ उदरलक्षणस्याभ्रस्य संदर्शेन प्रेक्षणेन प्रनर्तिताः शिखण्डिनो मयूरा यया । देहवातेन श्वासेन द्रवन्तौ कम्पमानौ स्तनौ यस्याः ॥ २४ ॥ हासेनाट्टहासविलासेन भस्मच्छटाभिर्दग्धारण्यधूलिपटलैश्छन्नस्य आच्छादितस्य सूर्यमण्डलस्य रोधिनी पिधानशीला । कृतान्त इव सर्वप्राणिग्रसनमेव उद्युक्तमारब्धं कृत्यं यया तथाविधा या एका आकृतिर्भीषणाकारस्तद्धारिणी ॥ २५ ॥ कृशानुरिव ज्वलन्त्यौ उलूखलमिव निमग्ने दृशौ नेत्रे यस्याः । 'आपं चैव हलन्तानाम्' इति भागुरिमतेन दृशाशब्दः साधुः । कदा भविष्यामीति सर्वत्रानुषज्यते ॥ २६ ॥ नखरा नखास्तेषामावली पङ्क्तिः ॥ २७ ॥ महतां प्रौढानां रक्षसां हृदयविद्रावणकरं स्मितं ईषद्धसितम् । स्फिग्वाद्यैः स्फिजो वादनैः । अरण्यान्यां महारण्ये । 'इन्द्रवरुण–' इत्यादिना ङीष्यानुक् ॥ २८ ॥ २९ ॥ ३० ॥ दुःखफलपर्यवसितत्वात्कुत्सार्हे तपोवह्नौ तत्प्राक्तनं भासुरं वपुर्भस्मत्वं नीतमिति शेषः । यथा कनकेन स्वकनकत्वनाशकं भस्मत्वं लोहसूचित्वं वा उररीकृतं स्यात्तत्तुल्यम् ॥३१॥ प्राचिका दीर्घपादलता जातिस्तस्याः खुरः पादाग्रं तत्समम् ॥ ३२ ॥ मृन्मलिनं कनकाङ्गदं प्राप्याप्यविचारेण मृदिति भ्रान्त्या त्यजति ॥ ३३ ॥ इदानीमुदरादङ्गानि प्रत्येकं संबोध्यानुशोचत्याह—**हा** इत्यादिना । विन्ध्याद्रेः सनीहारगुहा उपमा यस्य तथाविध हे महोदर, त्वं सिंहेन सिंहसदृशेन स्वाविर्भावेन हस्तिसदृशानां त्वद्वियोगदुःखानामन्तं नाशं कथं न करोषि ॥३४॥ भरेणातिशयेन निर्भग्नगिरिशिखरौ । शशभृत्सदृशैर्नखैर्दैवभोग्यत्वात्पुरोडाशमिव स्थितं चन्द्रं कथं न बाधत इति दैर्घ्यातिशयोक्तिः ॥३५॥

१ हारितां पांसुराशिभिः इति पाठष्टीकानुगुणः. २ आपदा इति द्रवन्तस्.

हा वक्षः काचवैधुर्यगिरीन्द्रतटसुन्दर।
नाथ सिंहादि यौकं तद्धृतं रोमवनं तथा॥ ३६
हा नेत्रे कृष्णरजनीरजःशुष्केन्धनैजने।
कस्मान्न मे भूषयतो दृग्ज्वालामालया दिशः॥ ३७
हा स्कन्ध बन्धो नष्टोऽसि निषिद्धोऽसि महीतले।
कालेन विनिपिष्टोऽसि निघृष्टोऽसि शिलातले॥ ३८
हा मुखेन्दो तपसि किं नाथ त्वं मम रश्मिभिः।
कल्पान्तदावसंशान्तचन्द्रबिम्बमनोहर॥ ३९
हा हा हस्तौ महाकारौ तावद्य क गतौ मम।
संपन्नासि महासूचिर्मक्षिकाखुरदोलिता॥ ४०
हा भगोग्रकरआढ्यसत्कन्दश्वभ्रशोभन।
विन्ध्याद्रेरेण्यविपुलनितम्बामलबिम्बक॥ ४१
काकारोऽम्बरपूरकः क च नवं तुच्छात्मसूचीवपू
रोदोरन्ध्रसमं क वास्य कुहरं केदं च सूचीमुखम्।
क ग्रासो बहुमांसभारबहुलः काबिन्दुना भोजनं
सूक्ष्मास्स्येतदहो मयैव रचितं स्वात्मक्षये नाटकम्॥ ४२

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे क० सूचिकापरिदेवनं नामैकसप्ततितमः सर्गः॥ ७१॥

## द्विसप्ततितमः सर्गः ७२

श्रीवसिष्ठ उवाच।
सूची सा संभवद्वाणी चिन्तयित्वेत्यकम्पनम्।
पुनस्तद्देहलाभाय भवाम्याशु तपस्विनी॥ १
इति संचिन्त्य चित्तस्थं संहृत्य जनमारणम्।
तदेव हिमवच्छृङ्गं जगाम तपसे स्थितम्॥ २
अपश्यदेव सूचित्वं सा तन्मानसमात्मनि।
प्राणवातात्मिका प्राणैः प्रविश्य हतमानसम्॥ ३
अथात्मन्येव सूचित्वं पश्यत्येव मनोमयम्।
प्राणवातशरीरासौ जगाम हिमवच्छिरः॥ ४
दग्धदावानले तत्र सर्वभूतविवर्जिते।
महामहाशिलाभाभारूक्षे पांसुविधूसरे॥ ५
तत्रावभ्युदितेवासौ निस्तृणे विपुले स्थले।
मरावकस्मात्संजातशुष्का तृणशिखा यथा॥ ६
सुसूक्ष्मस्यैकपादस्य सार्धेनैवाश्रितोर्वरा।
स्वसंविदेकपादात्म तपः कर्तुं प्रचक्रमे॥ ७
सूक्ष्मपादतलेनैषा वसुधारेणुसंकटी।
निवार्य त्रिपदीं कृत्स्नां यत्नेनोर्ध्वमुखी स्थिता॥ ८

काचमणिमालानां वैधुर्येऽपि स्वत एव गिरीन्द्रतटमिव सुन्दर हे वक्षः, त्वया सिंहादय इव सिंहादय एव वा सिंहानत्तुं शीलमस्य तथाविधं वा यूकानां समूहो यौकं यत्र तथाविधं रोमवनं यथा पूर्वं धृतं तथाद्य न धृतमित्यर्थः॥ ३६॥ कृष्णरजन्या कृष्णपक्षरात्र्या रज्यते आसज्यत इति कृष्णरजनीरजोऽन्धकारस्तद्रूपशुष्केन्धनस्य एजने प्रदीपने। एजृ दीप्तौ ल्युः। हे मे नेत्रे, दृक् दर्शनं तल्लक्षणया ज्वालामालया दिशः कस्मान्न भूषयतः॥ ३७॥ निषिद्धः परिहृतः। परित्यक्त इति यावत्॥ ३८॥ कल्पान्ते दावेन दवाग्निना संशान्तं दग्धं चन्द्रबिम्बमिव श्यामत्वान्मनोहर॥ ३९॥ मक्षिकाणां खुरैः पादाग्रैरपि दोलिता चालिता। अतिक्षुद्रेत्यर्थः॥ ४०॥ सत् विद्यमानं कन्दं स्थूलतरुमूलं यस्मिंस्तथाविधं श्वभ्रं गर्त इव शोभन॥ ४१॥ बहुभिर्मांसभारैर्बहुलो विपुलो ग्रास आहारः॥ ४२॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचिकापरिदेवनं नामैकसप्ततितमः सर्गः॥ ७१॥

वर्ण्यतेऽत्र पुनः सूच्यास्तप उग्रं हिमाचले।
तद्विस्मितस्य शक्रस्य नारदोक्त्या विनिश्चयः॥ १॥

सा शोकपरायणा सूची असंभवद्वाणी मौनमास्थिता सती अकम्पनं सैकाग्र्यनिश्चलं यथा स्यात्तथा इति प्रागुक्तरीत्या स्वदेहादिकं वक्ष्यमाणप्रकारं च चिन्तयित्वा। तमेव प्रकारमाह—पुनरिति॥ १॥ तपसे जगाम। स्थितं प्रागास्थितम्॥ २॥ कथं जगामेति तदाह—अपश्यदेवेति। प्रथममात्मनि मानसं मनःकल्पितं सूचित्वमेवापश्यत्। क्रियाशक्तिशून्ये आत्मनि सूचित्वदर्शनेऽपि कथं गमनसिद्धिस्तत्राह—प्राणेति। या प्राणवातात्मिका जीवसूचिः सा स्वोपाधिभूतैः प्राणैः सूचित्वकल्पनाहतं मानसं प्रविश्य। मनःकल्पितां लोहसूचीं प्रविश्येति यावत्। 'हतमानवाम्' इति पाठे हता मानवा यया लोहसूच्या तां प्रविश्येत्यर्थः॥ ३॥ अथ जीवसूच्यात्मन्येव मनोमयं लोहसूचिभावं पश्यत्येव। तथाच लोहजीवसूच्योरन्योन्यतादात्म्याध्यासादसौ कर्कटी प्राणवाताऽभिन्नशरीरा सती क्रियाशक्तिं प्राप्य हिमवच्छिरो जगाम। वक्ष्यमाणरीत्या गृध्रशरीरं प्रविश्येत्यर्थः॥ ४॥ महती विशाला या महाशिला गुणोत्कृष्टेन्द्रनीलशिला तदाभेवाभा कान्तिर्यस्याः। आभाभिरातपै रूक्षे इति वा॥ ५॥ अभ्युदिता तत्रैवाङ्कुरितेव॥ ६॥ सुसूक्ष्मस्य सूच्यग्ररूपस्यैकपादस्यार्धेन लेशेनैव आश्रिता उर्वरा भूमिर्यया। अतएव द्विपदामिवैकपादपरिहारेणैकपादात्मत्वासंभवेऽपि स्वसंविदा स्वीयकल्पनयैव कल्पितभागद्वयमध्ये अग्रार्धपरिहारेणैकपादात्म एकपादावस्थितिरूपं तपः॥ ७॥ पादतलेन निशिताग्रभागेन वसुधाया रेणुमपि संकटयति तुदतीति वसुधारेणुसंकटी। संकटशब्दात् 'तत्करोति–'इति णिचि कर्मण्यण्। अल्लोपस्य स्थानिवद्भावान्नोपधावृद्धिः। त्रिपदीं पुरःपार्श्वद्वयलक्षणत्रिभागवर्तिनीं दृष्टिं कृत्स्नां दिग्विषयां निवार्य॥ ८॥ नन्

१ त्वां शोचामीत्यर्थः। २ तपसे इति क्वचिन्न दृश्यते।

कृष्णत्वहिंस्रतातैक्ष्ण्यव्याप्त्यास्यपवनाशनैः ।
यत्नात्पदं निबध्नन्ती रेण्वणूपलसंकटे ॥ ९
अरण्ये क्षुभितां संपद्दूरालोकार्थमुत्थिताम् ।
पुच्छाकोटिस्थितां वातालोलामनुचकार सा ॥ १०
मुखरन्ध्रविनिष्क्रान्ता तस्या भास्करदीधितिः ।
सखी बभूव सूच्याभा पश्चाद्भागैकरक्षिणी ॥ ११
क्षुद्रेऽपि स्वजने भूतेऽप्येति वत्सलतां जनः ।
दीधित्यापि सखीवृत्तं सूच्यां शुचितया भृतम् ॥ १२
बभूव तस्याः स्वच्छाया द्वितीया तापसी सखी ।
एवं सूचीव मलिना तया पश्चात्कृतेव सा ॥ १३
सूच्या तया सुनिर्गत्य सुपाताक्ष्या स्म कूणितैः ।
पश्चात्सख्याभया साधुरन्योन्याचारकेवलम् ॥ १४
सूच्याभिप्रेक्षिते याता मतिं द्रुमलतादयः ।
महातपस्विनीं सूचीं दृष्ट्वा नोत्कण्ठयन्ति के ॥ १५
स्थिरबद्धपदामेनां स्वमनोवृत्तिमुत्थिताम् ।
अनिलं भोजयांचक्रुर्मुखनिर्गतभांकृतैः ॥ १६
प्रसूतानि भविष्याणि गीर्वाणान्यानि वा चिरम् ।
कौसुमानि रजांस्यस्या इत्यास्यं पर्यपूरयन् ॥ १७
ततो महेन्द्रप्रहितं वातनुन्नामिषं रजः ।
तया त्वभ्रत्वव्याजेन न निगीर्णं मुखे विशत् ॥ १८
न निगीर्णवती तानि रजांसि दृढनिश्चयात् ।
अन्तःसारतया कार्यं लघवोऽप्याप्नुवन्ति हि ॥ १९
न पिबत्यास्यसंस्थानि तथा पुष्परजांस्यपि ।
विस्मयं पवनः प्राप सुमेरून्मूलनाधिकम् ॥ २०
आशिरः पिहिता पङ्कैः पूरितापि महाजलैः ।
विधूतापि बृहद्वातैर्दग्धापि वनवह्निभिः ॥ २१
भिन्नापि करकापातैर्भ्रामितापि तडिद्भ्रमैः ।
उद्वेजितापि जलदैः क्षोभिताप्यतिगर्जितैः ॥ २२
अपि वर्षसहस्रैः सा चित्तस्थदृढनिश्चया ।
पादाग्रं तु कुसुमेव नाकम्पत तपस्विनी ॥ २३
निवृत्तायां बहिःस्पन्दाद्देशकाले बहौ गते ।
विचारयन्त्यास्तस्याः स्वमात्मा सत्यं सुचेतनम् ॥ २४
ज्ञानालोकः समुद्भूत्सा परावरदर्शिनी ।
बभूव निर्मला सूचिर्विषूची पावनं परम् ॥ २५
जाता विदितवेद्या सा स्वयमेव तया धिया ।
तपसा दुष्कृते क्षीणे सूची स्वसुखसूचिनी ॥ २६
इति वर्षसहस्राणि साकरोद्दारुणं तपः ।
सप्तसप्तमहालोकसंतापकरमुन्मुखी ॥ २७
तस्याः कल्पाग्निभीमेन तपसा हि महागिरिः ।
बभूव तेन ज्वलितो जज्वालेव ततो जगत् ॥ २८

---

ऊर्ध्वमुखत्वे दृष्टेः सर्वतो निवारणे च रेण्वणूपलसंकटे कथं तस्याः पादस्थैर्यं सिद्धं तत्राह—**कृष्णत्वे**ति । दृढत्वादेव स्थैर्यं सिद्धं, दृढत्वं चास्याः कृष्णत्वेन कृष्णायसत्वेन हिंस्रत्वेन तैक्ष्ण्येन तीक्ष्णाग्रत्वेन च सर्वाङ्गव्याप्त्या आस्येन पवनस्याशनैर्ग्रसनैस्तद्विष्टम्भलक्षणयत्नाच्च सिद्धमित्यर्थः ॥ ९ ॥ सा सूची अरण्ये क्षुधा-क्षुभितां अतएव सम्यक् पद्यन्ते समीपमुपसर्पन्तीति संपदोऽरण्याध्वगास्तेषां दूरादालोकनमालोकस्तदर्थमुत्थितामूर्ध्वीकृतमुखभागाम् । पुच्छेन आकोटौ तृणपर्णाद्यग्रभागे स्थिताम् । पथिकव्यामोहाय वातेनाप्यलोलामचञ्चलाम् । अर्थात्तृणजलूकामनुचकार विडम्बितवती । 'दूरालोकायम्' इति पाठे दूरादालोकाय आयं आयतं दीर्घं यथा स्यात्तथा उत्थितामित्यर्थः ॥ १० ॥ सूचीरन्ध्रनिःसृतातपस्यापि सूच्याकारत्वात्तत्सखीत्वमुत्प्रेक्षते—**मुखे**ति द्वाभ्याम् ॥ ११ ॥ १२ ॥ सूचीच्छायामपि तत्सख्यन्तरत्वेन कल्पयति—**बभूवे**ति । एवं दीधितिवदेव । यो विशेषस्तमाह—**सूचीवे**ति । तया सूच्या सा छायासूची पश्चात्कृता पृष्ठरक्षिका कृतेव ॥ १३ ॥ तासां तिसृणां सूचीनां परस्परशिरोमूलग्रन्थने परस्परविष्टम्भात्परस्परानुकूल्याचरणमिव वृत्तमित्युत्प्रेक्षते—**सूच्ये**ति । पश्चात्सख्या आभया सूर्यदीधित्या तया लोहसूच्या द्वारभूतया सुष्ठु निर्गत्य सुपाताक्ष्या दीधितिसुपात एव अक्षि नेत्रं यस्यास्तस्या छायासूच्या सह कूणितैर्ग्रथनैः । छायासूचीमूलग्रथनेन सह गणनाद्बहुत्वम् । अन्योन्याचारके परस्पराचरणीये स्थैर्यसाहाय्ये बलं दार्ढ्यं कृतमिति शेषः । स किल । अतः स आचारः साधुरित्यर्थः ॥ १४ ॥ एवं तप-स्विन्याः सूच्याः अभिप्रेक्षिते पुरोदर्शनविषये द्रुमलतादयोऽपि मतिं सद्बुद्धिं याताः प्राप्ताः । 'रतिम्' इति पाठे स्पष्टम् ॥ १५ ॥ तपोविषये स्थिरां स्वमनसो वृत्तिमिवोत्थितामेनां सूचीं द्रुमलतादयः स्वपुष्पफलादिवासितमनिलं वायुं भोजयांचक्रुरित्युत्प्रेक्षा । तस्यास्तद्भोजनसंभावने हेतुः—**मुखनिर्गतभांकृतै**रिति । सशब्दं हि भोजनं पामरेषु प्रसिद्धमिति भावः ॥ १६ ॥ दैवाद्रुमलताभिः कुसुमरजोभिः कृतं सूचीबिलपिधानमुत्प्रेक्षते—**प्रसूतानी**ति । यानि प्राक्प्रसूतानि यानि च भविष्याणि यानि गीर्वाणेभ्यो देवेभ्योऽन्यानि । अदेवतार्थानीत्यर्थः । तानि सर्वाणि कौसुमानि रजांसि अस्यै सूच्यै देयानीत्युत्साहेनेवेत्यर्थः ॥ १७ ॥ दैवाच्छिद्रे वातनुन्नामिषाद्यपवित्ररजसां प्रवेशं महेन्द्रकृतविघ्नत्वेन प्रविष्टानां यद्बहिर्निर्गमनं तत्तदीयानिगरणत्वेन चोत्प्रेक्षते—**तत** इति द्वाभ्याम् । अभ्रत्वव्याजेन च्छिद्रत्वच्छलेन स्थिते मुखे विशदपि तया न निगीर्णम् ॥ १८ ॥ कार्यं तपोविघ्ननिवारणलक्षणं प्रयोजनम् ॥ १९ ॥ २० ॥ एवं विघ्नान्तरैरपि सा न क्षुभितेत्याह—**आशिर** इत्यादिना ॥ २१ ॥ २२ ॥ कुसुमा विषमूर्च्छादिसुमेव । पादाग्रं सूच्यग्रमात्रम् । अणुमात्रमपीत्यर्थः । तुशब्दोऽप्यर्थे ॥ २३ ॥ तपस्यन्त्यास्तस्याः पापक्षयाद्विरक्तिचित्तैकाग्र्याच्च विचारपूर्वकं ज्ञानमुत्पन्नमित्याह—**निवृत्ताया** इत्यादिना । सत्यं सुचेतनं स्वं विचारयन्त्यास्तस्या आत्मैव ज्ञानालोकस्तत्साक्षात्कारवृत्तीद्धबोधात्मा समुद्भूदित्यर्थः ॥ २४ ॥ २५ ॥ ॥ २६ ॥ सप्तवर्षसहस्राणि सप्तसप्तानां चतुर्दशानां महतां भूरादिलोकानां संतापकरं तपः । उन्मुखी ऊर्ध्वमुखी ॥ २७ ॥

कस्येदं तपसाक्रान्तं जगदित्यथ वासवः।
नारदं परिपप्रच्छ स तस्याकथयच्च तत् ॥ २९
सप्तवर्षसहस्राणि सूची दीर्घतपस्विनी।
महाविज्ञानदेहासौ तेनेदं ज्वलितं जगत् ॥ ३०

नागाः श्वसन्ति विचलन्ति नगाः पतन्ति
वैमानिका जलधिवारिधराः प्रयान्ति।
शोषं दिशोऽर्कसहिता मलिनीभवन्ति
सूच्याः सुरेन्द्र तपसा क्षयमाययेव ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे क० सूचीतपःप्रभावो नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥

## त्रिसप्ततितमः सर्गः ७३

श्रीवसिष्ठ उवाच।
कर्कटीकटुवृत्तान्तं सर्वमाकर्ण्य वासवः।
नारदं परिपप्रच्छ पुनर्जातकुतूहलः ॥ १
शक्र उवाच।
सूचीवृत्तपिशाचत्वं तपसोपार्ज्य तत्तया।
कर्कट्या हिममर्कट्या के भुक्ता विभवा मुने ॥ २
श्रीनारद उवाच।
जीवसूच्याः पिशाचत्वं गतायाः शक्र पेलवम्।
आसीत्कार्ष्णायसी सूची तस्याः समवलम्बनम् ॥ ३
तत्समालम्बनं त्यक्त्वा व्योमवातरथस्थया।
प्राणमारुतमार्गेण तया देहप्रविष्टया ॥ ४
सर्वेषामान्त्रतन्त्रीणां स्नायुमेदोवसासृजाम्।
रन्ध्रेण पक्षिणेवान्तर्निलीनं मलिनात्मनाम् ॥ ५
यस्यां नाड्यां नभोवायुर्माति तत्तामुपेतया।
तत्र शूलं कृतं स्थूलन्यग्रोधाग्र इवोत्कटम् ॥ ६
तच्छरीरेन्द्रियैस्तानि तथान्यानि बहूनि च।
भुक्तानि नरमांसानि भोजनान्युचितानि च ॥ ७

सुप्तं विवलितानल्पमालया मुग्धबालया।
कान्तवक्षःस्थलस्यूतसृष्टपत्रकपोलया ॥ ८
विद्रुतं वीतशोकासु विहङ्ग्या वनवीथिषु।
कल्पद्रुमौघपुष्पाग्रद्विगुणाम्भोजपङ्क्तिषु ॥ ९
पीत आमोदमन्दारमकरन्दकणासवः।
वनेष्वमरशैलानामलिन्यामलिलीलया ॥ १०
चर्वितानि शवाङ्गानि गृध्र्याऽऽगर्तानि वृद्धया।
खड्गपृष्ठ्येव संग्रामे वीराङ्गानि जवेद्धया ॥ ११
सर्वाङ्गकोशनाडीषु दिक्षिववानिललेखया।
उड्डीनमवडीनं च काचौघव्योमवीथिषु ॥ १२
विराडात्महृदि प्राणवातस्पन्दाः स्फुरन्ति तु।
यथा तथा प्रस्फुरितं प्रतिदेहगृहं तया ॥ १३
सर्वप्राणिशरीरेषु भान्ति चिच्छक्तयस्तथा।
दीपप्रभाभासितया गृहिण्येव स्वसद्मसु ॥ १४
विहृतं रुधिरेष्वन्तर्द्रवशक्त्येव वारिषु।
अब्धिष्वावर्तवृत्त्येव जठरेषु विवल्गितम् ॥ १५
सुप्तं मेदःसु शुभ्रेषु शेषाङ्गेष्विव शौरिणा।

॥ २८ ॥ तत्सूचीतपः ॥ २९ ॥ ३० ॥ जलधयो वारिधराश्च शोषं प्रयान्ति। क्षयप्रधानया मायया रुद्रस्य जगदुपसंहारशक्त्येवेत्यर्थः ॥ ३१ ॥ इतिश्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचीतपःप्रभावो नाम द्विसप्ततितमः सर्गः ॥७२॥

जीवसूच्या इह पुनर्वर्ण्यते भोगविस्तरः।
ततश्चान्वेषणं वायोः सर्वतः शक्रचोदनात् ॥ १ ॥

कर्कट्याः कटुमप्रियं तपोवृत्तान्तम्। जीवसूचीभोगप्रकारश्रवणे जातकुतूहलः ॥ १ ॥ सूचीव वृत्तं पिशाचत्वमिव अदृश्यं जीवसूचित्वम्। हिमसंबन्धादिव प्राप्तजाड्यबुद्ध्या मर्कटीव तुच्छभोगचपलया कर्कट्या ॥२॥ समवलम्बनमाश्रयः ॥३॥ कदाचित्तस्या लोहसूच्याः समालम्बनं त्यक्त्वा व्योमवात आकाशगो वायुस्तद्रूपरथारूढया तया ॥ ४ ॥ तया जीवसूच्या मलिनात्मनां पापिनामान्त्रतन्त्र्यादीनां रन्ध्रेण प्रविश्य देहान्तर्निलीनं चिरं निलीय स्थितमित्यर्थः ॥ ५ ॥ नाड्यां शिरायाम्। नभोवायुः रोगाश्रयबाह्यवायुर्माति संमितो भवति। तत्तां तादृशप्रवहताम्। तत्र नाड्याम्। शूलं शूलाख्या वेदना। यथा स्थूलस्य श्रीदक्षिणामूर्तेर्न्यग्रोधस्य नाडीनामग्रे शैवं शूलं कृतं विप्लुतं तद्वत् ॥ ६ ॥

तेषां प्राणिनां शरीरेन्द्रियैः तत्प्राण्युचितभोजनानि भुक्तानि ॥७॥ विवलिताः कान्ताश्लेषमृदिता अनल्पा मालाः स्रजो यस्यास्तया मुग्धबालया। तद्भावापन्नयेत्यर्थः। कान्तवक्षःस्थले स्यूतं कृतं सृष्टं संक्रामितं पत्रं याभ्यां तथाविधौ कपोलौ यस्यास्तया। तथाच मुग्धबालासुखमप्यनुभूतमेवेति भावः ॥ ८ ॥ विहङ्ग्या विहङ्गशरीरप्रविष्टया वनवीथिषु पद्मवनश्रेणिषु कल्पद्रुमपुष्पश्रेष्ठेभ्यो द्विगुणामोदादिशालिपद्मपङ्क्तिष्वित्यर्थः ॥९॥ अलिन्यां प्रविष्टयेति शेषः ॥ १० ॥ गृध्र्या गृध्रदेहप्रविष्टया आगर्तान्यापादितगर्तानि शवाङ्गानि। खड्गपृष्ठ्या खड्गधारया। 'खड्गयष्ट्येव' इति पाठे स्पष्टम् ॥ ११ ॥ काचौघनीलासु व्योमवीथिषु ॥ १२ ॥ समष्टिप्राणवातस्पन्दा यथा स्वच्छन्दं स्फुरन्ति तथा प्रस्फुरितम् ॥ १३ ॥ ननु प्रतिदेहगृहं तया केन प्रकाशेन व्यवहृतं तत्राह—**सर्वप्राणी**ति। सर्वप्राणिशरीरेषु यथा प्राणवाताः स्पन्दन्ते तथा चिच्छक्त्योऽपि भान्ति। अन्तःकरणोपाधिभेदाद्बहुवचनम्। अर्थात्तादृशचिच्छक्तिप्रभाभासितया तया दीपप्रभाभासितया गृहिण्या स्वसद्मस्विव व्यवहृतमित्यर्थः ॥ १४ ॥ १५ ॥ पीतशक्त्या पानशक्त्या

१ पाठः.

स्वादितश्चाङ्गगन्धोऽन्तः पीतशक्त्यामृतं यथा ॥ १६
तरुगुल्मौषधादीनां हृदौजान्यनिलश्रिया ।
परिभुक्तान्यशुक्लानि हिंसयोधीकृतानि च ॥ १७
अथो जीवमयी सूची स्यासिति स्थावरेण सा ।
संपन्ना तापसी सूची चेतना पावनी सिता ॥ १८
अदृश्यया तया चेह मारुतोग्रतुरंगया ।
अयःसूच्याऽनिलतया वहन्त्या दिक्ष्वरुद्धया ॥ १९
पीतं भुक्तं विलसितं दत्तं दापितमाहृतम् ।
नर्तितं गीतमुषितमनन्तैः प्राणिदेहकैः ॥ २०
अदृश्ययाऽशरीरिण्या मनःपवनदेहया ।
कृतमाकाशरूपिण्या न तदस्ति न यत्तया ॥ २१
मत्तया शक्तयास्वादरसाच्चलितमेतया ।
कालमालानमाश्रित्य करिण्येव विवल्गितम् ॥ २२
कल्लोलबहुलाधूतदेहदृष्टनदीष्वलम् ।
वैगैर्वैधुर्यकारिण्या मत्तया मकरायितम् ॥ २३
अशक्तया निगिरितुं मेदोमांसं तथा हृदि ।
नूनं रुदितमर्थाढ्यवृद्धातुरधिया यथा ॥ २४
अजोष्ट्रमृगहस्त्यश्वसिंहव्याघ्रादिनर्तितम् ।
नर्तक्येव चिरं रङ्गे वलयाङ्गदमङ्गके ॥ २५
वहिरन्तश्च वायूनामेकत्वमनुजातया ।
गन्धलेखिकयेवान्तः स्थितं दुर्बलया तथा ॥ २६
मन्त्रौषधितपोदानदेवपूजादिभिर्हता ।
वहिर्गिरिनदीतुङ्गतरङ्गवदुपद्रुता ॥ २७
दीपप्रभेवाविज्ञातगतिर्गत्याशु लीयते ।
अयःसूच्यां मातरीव तत्र निर्वृतिमेति सा ॥ २८

स्ववासनानुसारेण सर्वं आस्पदमीहते ।
सूचित्वमेव राक्षस्या सूचीत्वेनास्पदीकृतम् ॥ २९
सर्वा विहृत्यापि दिशः स्वमेवास्पदमापदि ।
जीवसूची लोहसूचीमिवायाति जडो जनः ॥ ३०
एवं प्रयतमाना सा विहरन्ती दिशो दश ।
मानसीं तृप्तिमायाता न शारीरीं कदाचन ॥ ३१
सति धर्मिणि धर्मा हि संभवन्तीह नासति ।
शरीरं विद्यते यस्य तस्य तत्किल तृप्यति ॥ ३२
अथ तृप्तस्य देहस्य स्मरणात्प्राक्तनस्य सा ।
बभूव दुःखितस्वान्ता पूर्णोदरसुखार्थिनी ॥ ३३
ततः प्राक्तनदेहार्थं करिष्ये विपुलं तपः ।
इति संचिन्त्य तपसे देशं निर्णीय सात्मना ॥ ३४
विवेशाकाशगृध्रस्य हृदयं तरुणस्य सा ।
प्राणमारुतमार्गेण खं खगीव बिलेशया ॥ ३५
गृध्रः स्वामयसूचित्वं कश्चिदेतत्समाश्रितः ।
नितान्तप्रेरितः सूच्या कर्तुं मन उपाददे ॥ ३६
सूचीमादाय गृध्रोऽसौ ययौ तच्चिन्तितं गिरिम् ।
अन्तःसूचिपिशाच्यन्ते नुन्नोऽब्द इव वायुना ॥ ३७
तत्राजने महारण्ये स्थापयामास तामसौ ।
सर्वसंकल्परहिते पदे योगीव चेतनाम् ॥ ३८
एकेनैवाशु सा तेन पादप्रान्तेन सुस्थिता ।
संप्रतिष्ठापितेवाद्रिमूर्ध्नि गृध्रेण देवता ॥ ३९
रजःकणगृहस्थाणुशिरस्येकेन सानुना ।
पादेनातिष्ठ[1]दुद्ग्रीवं शिखीव गिरिमूर्धनि ॥ ४०

॥ १६ ॥ हृदि ओजयन्ति बलारोग्यादि जनयन्तीति हृदौजानि रसनिर्यासादीनि । अनिलश्रिया वायुरूपया । अशुक्लानि शुक्लेतरवर्णानि ॥ १७ ॥ सैवेयं स्वसंकल्पा तपसि स्थैर्येण तापसी सती परमपावनी संपन्नेत्याह—**अथो** इति । स्थावरेण स्थाणुवन्निश्चलत्वेन । सिता निष्कल्मषा ॥१८॥ अयःसूच्या करणेन अनिलतया वायुवेगेन वहन्त्या गच्छन्त्या ॥ १९ ॥ २० ॥ जीवसूच्याः पारमार्थिकरूपं मनसि निधायाह—**अदृश्ययेति** । समष्टिव्यष्टिमनःपवनदेहया सर्वं जगदेव कृतमिति भावः ॥२१॥ यद्येवंप्रभावा सा तर्हि तया सूचीभावे सर्वेऽपि कुतो न हिंसितास्तत्राह—**शक्तयेति** । शक्तयापि तया कतिपयप्राणिरक्ताद्यास्वादरसादेव मत्तया प्राण्यायुर्नियतिलक्षणं कालमालानं बन्धनस्तम्भमाश्रित्य करिण्येवाल्पप्रदेशेष्वेव विवल्गितं भ्रान्तमित्यर्थः ॥ २२ ॥ देहरूपासु दृष्टनदीषु प्रत्यक्षनदीषु । वैधुर्यं प्राणिनां देहवैधुर्यं तत्कारिण्या ॥ २३ ॥ हृदि स्वमनसि । अर्थेन धनेन आढ्यानां वृद्धानामातुराणां च धिया यथा भोजनाशक्त्या रुदितं तद्वत् ॥ २४ ॥ यथा नर्तक्या स्वाङ्गके वलयाङ्गदादिनर्तितं तथा स्वपीडितमजोष्ट्राद्यप्यनया नर्तितमित्यर्थः ॥ २५ ॥ बहिः वातस्कन्धेषु । अन्तः प्राणेषु । दुर्बलया । वायुगतिपरवशयेति यावत् ॥ २६ ॥ बहिः उप समीपदेशे द्रुता पलायिता ॥२७॥ गत्या अन्तर्धानशक्त्या अविज्ञातगतिः । अयःसूच्यां लीयते । निर्वृतिं विश्रान्तिसुखम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ पूर्णोदरजन्यं यत्तृप्तिसुखं तदर्थिनी ॥ ३३ ॥ ३४ ॥ आकाशगामिनो गृध्रस्य । सा जीवसूचिः । केन मार्गेण विवेश तमाह—**प्राणेति** । खं नीडच्छिद्रम् । बिलेशया नीडबिलशायिनी ॥ ३५ ॥ स्वामयसूचित्वं स्वान्तर्गतरोगसूचिभावमाश्रितः कश्चित्प्रागुक्तगृध्रः स्वप्रविष्टसूच्यभिलषितं कर्म कर्तुं मन उपाददे ॥ ३६ ॥ सूचीं लोहसूचीम् । अन्तर्गतसूचिपिशाच्या अन्ते निवृत्तिकाले उपस्थिते सति ॥ ३७ ॥ चेतनां बुद्धिवृत्तिम् ॥ ३८ ॥ गृध्रेणाद्रिमूर्ध्नि संप्रतिष्ठापिता देवताप्रतिमेव सुस्थिता लोहसूची बभूवेत्यर्थः ॥ ३९ ॥ रजःकण एव गृहं तत्स्थस्याणोः

१ उज्जिह्वं शिखीव इति पाठः साधीयान् । शिखी अग्निरिव इति व्याख्यानुरोधात्.

उत्थितां स्थापितां सूचीं गृध्रेण जीवसूचिका ।
दृष्ट्वा बहिर्विनिर्गन्तुं खगदेहात्प्रचक्रमे ॥ ४१
खगदेहान्निर्जगाम सूची प्रोन्मुखचेतना ।
पवनाद्गन्धलेखेव घ्राणवातलवोन्मुखी ॥ ४२
जगाम गृध्रः स्वं देशं भारं त्यक्त्वेव भारिकः ।
निवृत्तव्याधिरिव स बभूवान्तरनाकुलः ॥ ४३
अतः सूचिस्तयाधारस्तपसे परिकल्पिता ।
दृढः सुसदृशोऽर्थानां विनियोगो हि राजते ॥ ४४
न ह्यमूर्तस्य सिध्यन्ति विनाधारं किल क्रियाः ।
इत्याधारैकनिष्ठत्वमाश्रित्यासौ तपःस्थिता ॥ ४५
जीवसूची लोहसूचीं पिशाची शिंशपामिव ।
सर्वतो वलयामास वात्येवामोदलेखिकाम् ॥ ४६
ततस्ततः प्रभृत्येषा सूची दीर्घतपस्विनी ।
अरण्यान्यां स्थिता शक्र तत्र वर्षगणान्बहून् ॥ ४७
तस्या वरार्थं यत्नं त्वं कुरु कर्तव्यकोविद ।
चिरेण संभृतं लोकमलं दग्धुं हि तत्तपः ॥ ४८

श्रीवसिष्ठ उवाच ।

इति नारदतः श्रुत्वा शक्रः सूचीनिरीक्षणे ।
मारुतं प्रेषयामास दशदिङ्मण्डलान्यथ ॥ ४९
जगामाथ मरुत्संविदात्मना तामवेक्षितुम् ।
अथामुच्य नभोमार्गं विचचार त्वरान्वितः ॥ ५०
सा तस्य संवित्क्षिप्रार्धेनैव सर्वगता सती ।
परमार्चिरिवाविघ्नं सहसैव ददर्श ह ॥ ५१
भूमेः सप्तसमुद्रान्ते निवद्धां विपुलस्थलीम् ।
लोकालोकाद्रिरसनां ततो मणिमयोपमम् ॥ ५२
स्वादूदकाब्धिवलयं सकोटरककुब्गणम् ।
पुष्करद्वीपवलयं तदन्तर्गिरिमण्डलं ॥ ५३
मदिराम्भोधिवलयं तज्जलेचरसंस्थितम् ।
गोमेदद्वीपकटकं तन्मध्यविषयव्रजम् ॥ ५४
इक्षूदकाब्धिपरिखं शान्तं गिरिगणान्तरम् ।
क्रौञ्चद्वीपोर्वरापीठं शान्तं गतगिरिक्रमम् ॥ ५५
क्षीराब्धिमुक्तावलयं समध्यगतनायकम् ।
श्वेताख्यद्वीपवलयं संभूतप्रविभागकम्[१] ॥ ५६
ततो घृतोदवलयस्वान्तस्थपुरमन्दिरम् ।
कुशद्वीपवृतिव्याप्तं समहाशैलकोटरम् ॥ ५७
दध्यम्भोराशिरशनासान्ताम्बरपुरोदरम् ।
शाकद्वीपोर्वराकारं सान्तस्थविषयान्तरम् ॥ ५८
क्षाराम्भोराशिपरिधिं सान्तस्थविषयान्तरम् ।
जम्बूद्वीपे महामेरुं कुलपर्वतसंकुलम् ॥ ५९
वातस्कन्धेभ्य एवादौ पतितानिलवेदना ।
क्रमेणानेन पर्यन्ते तेनैव प्रसृतोऽञ्जसा ॥ ६०
वायुरालोकयन्नद्धा जम्बूद्वीपं निरीक्ष्य च ।
तत्प्राप हिमवच्छृङ्गं यत्र सूची तपस्विनी ॥ ६१
शृङ्गमूर्ध्नि महत्युग्रे सारण्यानीमवाप ताम् ।
द्वितीयाकाशविततां वर्जितां प्राणिकर्मभिः ॥ ६२
असंजाततृणव्यूहां निकटत्वाद्विवस्वतः ।
रजोमयीमेव ततां संसाररचनामिव ॥ ६३
मृगतृष्णानदीसार्थपूरणीयाब्धितां गताम् ।
शक्रकोदण्डसंकाशमृगतृष्णासरिच्छताम् ॥ ६४
अमितानन्तपर्यन्तां लोकपालेक्षितैरपि ।
केवलं पवनस्पन्दप्रवहद्धूलिकुण्डलाम् ॥ ६५
सूर्यांशुकुङ्कुमालिप्तां लग्नचन्द्रांशुचन्दनाम् ।

---

शिरसि एकेन अणुना सूक्ष्मतमेन पादेनाग्रेण । शिखी अग्निरिव । 'उद्ग्रीवं शिखीव' इति पाठे तु मयूर इव ॥४०॥४१॥ प्रोन्मुखी निर्गमनोत्सुका चेतना बुद्धिर्यस्याः ॥ ४२ ॥ निवृत्तव्याधिः पुरुष इव अनाकुलः स्वस्थः ॥४३॥ अतो वक्ष्यमाणहेतुतः । सूचिर्लोहसूचिः । तया जीवसूच्या ॥ ४४ ॥ ४५ ॥ वलयामास व्याप्तवती ॥ ४६ ॥ ४७ ॥ वरार्थं तुच्छवरेण वञ्चनार्थम् ॥ ४८ ॥ ४९ ॥ मरुतः संवित् दिव्यदृष्टिलक्षणं ज्ञानं तामवेक्षितुं दिशो जगाम । गन्तुं दिव्यदृशा दिशः पर्यालोचितवानित्यर्थः । नभोमार्गमामुच्य विचचार भूमाविति शेषः ॥ ५० ॥ क्षिप्रा त्वरावती । अर्धेनैकांशेनैव सर्वगता सर्वदिक्पर्यालोचनपरा सती परमं सर्वोत्कृष्टं अर्चिर्ब्रह्मज्योतिरिव । अविघ्नमप्रतिबन्धम् ॥ ५१ ॥ सर्वं ददर्शेत्युक्तमेव प्रपञ्चयति—**भूमे**रित्यादिना । विपुलस्थलीं प्राणिशून्यकाञ्चनभूमिम् । अत्र द्वीपाम्भोधिक्रमः प्रागुक्तक्रमेण वा ब्रह्माण्डान्तरत्वादत्रत्यक्रमेण वा बोध्यः ॥ ५२ ॥ कोटरशब्देन पर्वतसंधिस्था देशा उच्यन्ते ॥ ५३ ॥ तज्जलेचरैः संस्थितमाश्रितम् । अनेन तत्र प्राणिनां जलस्थलोभयसंचारसामर्थ्यं गम्यते ॥ ५४ ॥ शान्तं निरुपद्रवम् ॥ ५५ ॥ क्षीराब्धिरेव मुक्ताखचितवलयो यस्य तत् । मध्यगतेन त्रैलोक्यनायकेन विष्णुना सहितम् । प्रविभागा अवान्तरखण्डभेदाः ॥ ५६ ॥ ५७ ॥ रसनया सान्तं सावधिकमम्बरं पुरोदरं यस्य ॥ ५८ ॥ विषयशब्देन तद्वासिनो जना लक्ष्यन्ते ॥५९॥ पतिता अवतीर्णा प्रागुक्ता वायोः संवित् । अनेन स्वसंविदवतारक्रमेण प्रसृतोऽवतीर्णो वायुः ॥ ६० ॥ यत्र सा तपस्विनी सूचीस्थिता तामरण्यानीं वायुरवाप । प्राणिकर्मभिः प्राणिसंचारैः ॥६१॥६२॥ **निकटत्वादिति** । अनेन शिखरौन्नत्यातिशयो गम्यते । रजोमयीं पांसुप्रचुरां रजोगुणविकारभूतां च । एवमन्ये अपि विशेषणे अरण्यानीसंसाररचनासाधारणे बोध्ये ॥ ६३ ॥ ६४ ॥ लोकपालानामिन्द्रादीनामीक्षितैर्दृष्टिभिरप्यमिता इयत्तयानवधारिता अनन्ताः पर्यन्ता अवान्तरप्रदेशभेदा यस्याम् । पार्श्वद्वये वात्या पवनस्पन्देन प्रवहद्धूलिपटले एव कुण्डले यस्याः । एतदादिविशेषणैररण्यानी व्योमविलासिनीत्वेनोत्प्रेक्ष्यते ॥६५॥ कान्तालिङ्गनसुखव्यञ्जको

---

१ संभूत इति पाठः.

विलासिनीमिव व्योम्नो वातसूत्कारपायिनीम् ॥ ६६
सप्तद्वीपसमुद्रमुद्रणसमुच्छन्नैकदेशाश्रयं
भूपीठं परितो विहृत्य पवनो दीर्घाध्वना जर्जरः ।
तां प्राप्योग्रगिरिस्थलीमलिवपुर्व्योमाङ्गलग्नामिव
व्याप्तानन्तदिगन्तपूरकबृहद्देहो विशश्राम सः ॥ ६७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे सूचीतपोवर्णनं नाम त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## चतुःसप्ततितमः सर्गः ७४

श्रीवसिष्ठ उवाच ।
तस्य तत्रोर्ध्वशृङ्गस्य तस्यां भुवि महावनौ ।
ददर्श मध्यमां सूचीं प्रोत्थितां सशिखामिव ॥ १
एकपादं तपस्यन्तीं शुष्यन्तीं शिरऊष्मणा ।
सततानशनां शुष्कपिण्डीभूतोदरत्वचम् ॥ २
सकृद्धिकसितास्येन गृहीत्वेवातपानिलान् ।
पश्चात्त्यजन्तीं हृदये मे न मान्तीत्यनारतम् ॥ ३
शुष्कां चण्डांशुकिरणैर्जर्जरां वनवायुभिः ।
अचलन्तीं निजात्स्थानात्स्नापितामिन्दुरश्मिभिः ॥ ४
पूर्वं रजोणुनैकेन संविष्टच्छन्नमस्तकाम् ।
कृतार्थत्वं कथयतीं ददतान्यस्य नास्पदम् ॥ ५
अरण्यान्येव दत्त्वार्थं चिरं जातशिखामिव ।
मूर्ध्न्यवस्थापितप्राणजटाजूटवलीमिव ॥ ६
तां प्रेक्ष्य पवनः सूचीं विस्मयाकुलचेतनः ।
प्रणम्यालोक्य सुचिरं भीतभीत इवागतः ॥ ७
महातपस्विनी सूची किमर्थं तप्यते तपः ।
नेति प्रष्टुं शशाकासौ तत्तेजोराशिनिर्जितः ॥ ८
भगवत्या महासूच्या अहो चित्रं महातपः ।
इत्येव केवलं ध्यायन्मारुतो गगनं ययौ ॥ ९
समुल्लङ्घ्याभ्रमार्गं तु वातस्कन्धानतीत्य च ।
सिद्धवृन्दानधः कृत्वा सूर्यमार्गमुपेत्य च ॥ १०
ऊर्ध्वमेत्य विमानेभ्यः प्राप शक्रपुरान्तरे ।
सूचीदर्शनपुण्यं तमालिलिङ्ग पुरंदरः ॥ ११
पृष्टश्च कथयामास दृष्टं सर्वं मयेत्यसौ ।
सहदेवनिकायाय शक्रायास्थानवासिने ॥ १२
वायुरुवाच ।
जम्बूद्वीपेऽस्ति शैलेन्द्रो हिमवान्नाम सुव्रतः ।
जामाता यस्य भगवान्साक्षाच्छशिकलाधरः ॥ १३
तस्योत्तरे महाशृङ्गपृष्ठे परमरूपिणी ।
स्थिता तपस्विनी सूची तपश्चरति दारुणम् ॥ १४
बहुनात्र किमुक्तेन वाताद्यशनशान्तये ।
यया स्वोदरसौषिर्यं पिण्डीकृत्वा निवारितम् ॥ १५
शान्तसंकोचसूक्ष्मार्थं विकास्यास्यं रजोणुना ।
तयाद्य स्थगितं शीतवाताशननिवृत्तये ॥ १६
तस्यास्तीव्रेण तपसा तुहिनाकरमुत्सृजन् ।
अङ्गाकारमयो गृह्णन् देव दुःसेव्यतां गतः ॥ १७

ध्वनिः सूत्कारस्तं पाययति श्रावयति तच्छीलाम् ॥ ६६ ॥ व्याप्तानन्तदिगन्तपूरकबृहद्देहः स पवनः सप्तभिर्द्वीपैः ससमुद्रैश्च मुद्रणेन लाञ्छनेन सम्यक् उत् उपरिभागे छन्नस्य व्याप्तस्यैकदेशस्याश्रयं भूलक्षणं पीठं परितो विहृत्य दीर्घेणाध्वना जर्जरः श्रान्तः सन् अलिसदृशवपुषो व्योम्नः अङ्गे लग्नामिव स्थितां तामुग्रगिरिस्थलीं प्राप्य विशश्राम विश्रान्तिं प्रापेत्यर्थः ॥ ६७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचीतपो वर्णनं नाम त्रिसप्ततितमः सर्गः ॥ ७३ ॥

दृष्ट्वा तां तापसीं सूचीं वायोः शक्रान्तिके गतिः ।
वरार्थं प्रार्थनं धातुर्ज्ञानं सूच्याश्च वर्ण्यते ॥ १ ॥

महती वनी प्राग्वर्णितारण्यानी यस्यां सा महावनिस्तथाविधायां भुवि। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । शृङ्गस्य मध्यमां शिखामिव ॥ १ ॥ 'स तत' इति पाठे स ततो ददर्शेति पूर्वेणान्वयः । पिण्डीभूतोदरत्वचमिव । सूच्या उदरत्वगसंभवात् ॥ २ ॥ आतपानिलांश्च । 'तेमयावेकवचनस्य' इत्यत्र अपादादावित्यधिकारात्पादादौ मे इत्यादेशश्छन्दसः ॥ ३ ॥ ४ ॥ सूचीमस्तके रजोन्तराऽसमावेशादन्यस्य रजोजातीयस्य रजोगुणस्य तत्सहचरिततमसोऽप्यास्पदं न ददता रजोणुना। कृतार्थत्वं कथयतीमिवाज्ञापयन्तीम् ॥ ५ ॥ पूर्वोक्तया अरण्यान्या स्वीयतरुगुल्ममृगादिरूपमर्थं स्वविभवं अरण्यान्तरेभ्यो दत्त्वा चिरं तपसा सूच्यात्मना जातां जनितां शिखां चूडामिव स्थिताम् । ततोऽपि योगपरिपाकान्मूर्ध्नि अवस्थापितप्राणानां जटाजूटस्य वलीं संवलनामिव स्थिताम् । सूच्यास्तपउपक्रमे सूक्ष्मत्वादरण्यानीशिखात्वेनोत्प्रेक्षा । चिरेण तपस्तेजसो बहलीभावेन पुञ्जीभावविवक्षया तु तज्जटाजूटवलित्वेनोत्प्रेक्षेति बोध्यम् । आद्य इवशब्द उत्प्रेक्षाद्योतकः। इतरौ तु औत्प्रेक्षिकोपमानार्थौ ॥ ६ ॥ देवानामपि ब्रह्मविदो वन्द्या इति द्योतनायोक्तं प्रणम्येति । भीतभीतो भृशं भीत इव ॥ ७ ॥ इति प्रष्टुं न शशाकेति योजना ॥ ८ ॥ ९ ॥ १० ॥ विमानेभ्यो वैमानिकप्रधाननक्षत्रलोकेभ्यः । सूचीदर्शनेन पुण्यं पवित्रीभूतम् ॥ ११ ॥ ॥ १२ ॥ १३ ॥ परमरूपिणी महातेजस्विनी ॥ १४ ॥ पिण्डीकृत्वा लोहघनतां संपाद्य । समासस्याविवक्षणान्न ल्यप् ॥ १५ ॥ तया शीतस्य वातस्याप्यशनस्य प्रसनस्य निवृत्तये शान्तसंकोचं निवारितसंकोचनं सूक्ष्मार्थं अत्यल्पच्छिद्रमास्यं विकास्य रजोणुना स्थगितं पिहितम् ॥ १६ ॥ तुहिनाकरमिति भावप्रधानो निर्देशः । तुहिनाकरतामुत्सृज्य अभिदावितविलिनामयः पिण्डात्मतासंपत्तेरङ्गाकार

तदुत्तिष्ठाशु गच्छामः सर्व एव पितामहम्।
तद्वरार्थमनर्थाय विद्धि तत्सुमहत्तपः॥ १८
इति वातेरितः शक्रः सहदेवगणेन सः।
जगाम ब्रह्मणो लोकं प्रार्थयामास तं विभुम्॥ १९
सूच्या वरमहं दातुं गच्छामि हिमवच्छिरः।
ब्रह्मणेति प्रतिज्ञाते शक्रः स्वर्गमुपाययौ॥ २०
एतावताथ कालेन सा बभूवातिपावनी।
सूची निजतपस्तापतापितामरमन्दिरा॥ २१
मुखरन्ध्रस्थितार्कांशुदृशा स्वच्छाययैव सा।
विकासिन्या विवर्तिस्था चोदितान्तमवेक्षिता॥ २२
कौशेयरूपया सूच्या मेरुः स्थैर्येण निर्जितः।
मज्जनं नैति वृद्ध्वैवं मुक्तमायन्तयोर्दिने॥ २३
मध्याह्ने तापभीत्येव विशन्त्या मारुतान्तरम्।
अन्यदा गौरवाद्दृष्ट्वा दूरतः प्रेक्षमाणया॥ २४
सा तामवेक्षते क्षारात्तापादङ्गे निमज्जति।
संकटे विस्मरत्येव जनो गौरवसत्क्रियाम्॥ २५
छायासूची तापसूची यश्चात्मा स तृतीयया।
त्रिकोणं तपसा पूतं वाराणस्या समं कृतम्॥ २६
गतास्तेन त्रिकोणेन त्रिवर्णपरिखावता।
वायवः पांसवो येऽपि ते परां मुक्तिमागताः॥ २७
विदितपरमकारणाद्य जाता
स्वयमनुचेतनसंविदं विचार्य।
स्वमननकलनानुसार एक-
स्त्विह हि गुरुः परमो न राघवान्यः॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे उत्पत्तिप्रकरणे सूचीतपःपरिपाकवर्णनं नाम चतुःसप्ततितमः सर्गः॥ ७४॥

## पञ्चसप्ततितमः सर्गः ७५

श्रीवसिष्ठ उवाच।
अथ वर्षसहस्रेण तां पितामह आययौ।
वरं पुत्रि गृहाणेति व्याजहार नभस्तलात्॥ १
सूची कर्मेन्द्रियाभावाज्जीवमात्रकलावती।
न किंचिद्व्याजहारास्मै चिन्तयामास केवलम्॥ २
पूर्णास्मि गतसंदेहा किं वरेण करोम्यहम्।
शाम्यामि परिनिर्वामि सुखमासे च केवलम्॥ ३
ज्ञातं ज्ञातव्यमखिलं शान्ता संदेहजालिका।
स्वविवेको विकसितः किमन्येन प्रयोजनम्॥ ४
यथा स्थितेयमस्मीह संतिष्ठेयं तथैव हि।
सत्यासत्यकलामेव त्यक्त्वा किमितरेण मे॥ ५

अयो गृह्णन् सशपथं तुहिनाकरतां त्यजचिति भावः। दुःसेव्यतां गतो हिमवानिति शेषः। 'अगो गृह्णन्' इति पाठे तु स्पष्टम्॥१७॥ अनर्थाय उपेक्षितमिति शेषः॥ १८॥ १९॥ २०॥ एतावता सप्तसहस्रवर्षपरिमितेन॥ २१॥ आसर्गसमाप्तेस्तत्तप एव वर्णयिष्यन्निर्जने कृतस्य सूचीतपसस्तच्छायैव साक्षिणीत्याह—**मुखेति**। विवर्तिनि विजृम्भमाणे तपसि स्था स्थिता सा सूची स्वच्छाययैव चोदितान्तं तत्संकल्पविदितकालमर्यादान्तं अवेक्षिता। केन कारणेन। विकासिन्या प्रसृतया मुखरन्ध्रे स्थितो योऽर्कांशुरातपस्तल्लक्षणया दृशा दृष्टेत्यर्थः॥ २२॥ तर्हि तच्छायया संध्ययोर्निशि च किमर्थं तद्दर्शनं मुक्तं तत्राह—**कौशेयेति**। कौशेयतन्तुवत्तुच्छरूपया लघ्व्या च सूच्या स्थैर्येण गुणेन निर्जितो मेरुर्लज्जयाम्बुधौ मज्जनं नैति न प्राप्नोति किं इति काकुना द्योत्यते। एवमनेनाभिप्रायेण तद्द्रष्टुमिव दिने आद्यन्तयोर्भागयोर्वृद्ध्वा दैर्घ्यमालम्ब्य तद्दर्शनान्मुक्तमुपरतमिति यावत्॥ २३॥ तर्हि मध्याह्ने किमिति मूले निलीना तत्राह—**मध्याह्ने** इति। मारुतानां सूचीप्राणानामन्तरमवकाशभूतं सूच्युदरं विशन्त्या मुक्तमित्यनुपज्यते। गौरवात् सन्मानहेतोः॥ २४॥ सा छाया। तां सूचीम्। क्षारात्तीक्ष्णात्। तापादातपात्। कथं तर्हि मध्याह्ने गौरवत्यागस्तत्राह—**संकटे** इति॥ २५॥ यश्च आत्मा लोहसूची तेन सतृतीयया परस्परग्रथनान्तरालदेशरूप-

त्रिकोणं असी वरणा गङ्गा ग्रथनान्तरालस्थया वाराणस्या समं कृतमित्यर्थः॥ २६॥ शुष्कत्वेनामूर्ता श्यामा शुक्ला चेति त्रिवर्णसूचीसरिल्लक्षणपरिखावता। मुक्तिं स्वसंसर्गिजनमुक्तिप्रयोजनतां दोषमुक्तिलक्षणां पावनतां वा॥ २७॥ विदितं साक्षात्कृतं परमकारणं ब्रह्म यया तथाविधा जाता। चेतनसंविदं प्रत्यगात्मानं स्वयमनुविचार्य। ननु कस्तस्या गुरुस्तत्राह—**स्वेति**। स्वस्य मननं युक्तिभिर्विचारस्तेन कलना स्वात्मपरिचयस्तदनुसरणं तदनुसार एवैको मुख्यो गुरुः। अन्यो गुरुस्तु न मुख्य इत्यर्थः। यद्यपि 'आचार्यवान्पुरुषो वेद' इति श्रुतिराह तथापि सा 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुत्यन्तरानुसाराच्छिष्यप्रज्ञामेवानुसरतीति भावः॥ २८॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचीतपःपरिपाकवर्णनं नाम चतुःसप्ततितमः सर्गः॥ ७४॥

**प्रसन्नेऽपि विधौ सूच्याः प्रबोधाज्जोषमासनम्।**
**तथाप्यस्या वराद्धातुर्देहोद्धृतिश्च कीर्त्यते॥ १॥**

अथ प्रबोधानन्तरं वर्षसहस्रेण॥ १॥ कर्मेन्द्रियाभावे वागिन्द्रियस्याप्यभावात्। कर्मेन्द्रियाभावश्चास्याः सूचीत्वात् प्रबोधबाधितत्वाच्च॥ २॥ चिन्ताप्रकारमेव स्फुटमाह—**पूर्णेत्यादिना**॥ ३॥ अखिलं ज्ञातम्। एकविज्ञानेन सर्वविज्ञानात्॥ ४॥ सत्या परमार्थरूपा। तां सत्यकलामेव त्यक्त्वा इतरेण

१ विदित इति पाठः.

एतावन्तमहं कालमविवेकेन योजिता ।
स्वसंकल्पसमुत्थेन वेतालेनेव बालिका ॥ ६
इदानीमुपशान्तोऽसौ स्वविचारणया स्वयम् ।
ईप्सितानीप्सितैरर्थैः को भवेत्कलितैर्मम ॥ ७
इति निश्चययुक्तां तां सूचीं कर्मेन्द्रियोज्झिताम् ।
तूर्ष्णीस्थितां सनियतिः स पश्यन्भगवान्स्थितः ॥ ८
ब्रह्मा पुनरुवाचेदं वीतरागां प्रसन्नधीः ।
वरं पुत्रि गृहाण त्वं किंचित्कालं च भूतले ॥ ९
भोगान्भुक्त्वा ततः पश्चाद्गमिष्यसि परं पदम् ।
अव्यावृत्तिस्वरूपाया नियतेरेष निश्चयः ॥ १०
तपसानेन संकल्पः सफलोऽस्तु तवोत्तमे ।
पीना भव पुनः शैले हिमकाननराक्षसी ॥ ११
यया पूर्वं वियुक्तासि तन्वा जलदरूपया ।
बीजान्तर्वृक्षता पुत्रि बृहद्वृक्षतया यथा ॥ १२
योगमेष्यसि भूयश्च तन्वान्तर्बीजरूपिणी ।
तयैव रससेकेन लतयेवाङ्कुरस्थितिः ॥ १३
बाधां विदितवेद्यत्वान्न च लोके करिष्यसि ।
अन्तःशुद्धा स्पन्दवती शारदीवाभ्रमण्डली ॥ १४
अश्रान्तध्याननिरता कदाचिल्लीलया यदि ।
भविष्यसि बहीरूपा सर्वात्मध्यानरूपिणी ॥ १५
व्यवहारात्मकध्यानधारणाधाररूपिणी ।
वातस्वभाववद्देहपरिस्पन्दाद्विलासिनी ॥ १६
तदा विरोधिनी पुत्रि स्वकर्मस्पन्दरोधिनी ।
न्यायेन क्षुन्निवृत्त्यर्थं भूतबाधां करिष्यसि ॥ १७
भविष्यसि न्यायवृत्तिर्लोके त्वन्यायबाधिका ।
जीवन्मुक्ततया देहे स्वविवेकैकपालिका ॥ १८

इत्युक्त्वा गगनतलाज्जगाम देवः
सूची सा भवतु ममेति किं विरोधः ।
रागो वाब्जजवचनार्थवारणेऽस्मि-
न्नित्यन्तः स्वतनुमयी मनाग्बभूव ॥ १९
प्रादेशः प्रथममभूत्ततोऽपि हस्तो
व्यामश्चाप्यथ विटपस्ततोऽभ्रमाला ।
सोद्यत्स्वावयवलता बभौ निमेषा-
त्संकल्पद्रुमकणिकाङ्कुरक्रमेण ॥ २०
तद्गात्राण्यविकलशक्तिमन्ति देहा-
दुद्भूतान्यथ करणेन्द्रियाणि सम्यक् ।
संकल्पद्रुमवनपुष्पवत्समन्ता-
द्बीजौघान्यलमभवंस्तिरोहितानि ॥ २१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे सूच्युपाख्याने सूचीशरीरलाभो नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

## षट्सप्ततितमः सर्गः ७६

श्रीवसिष्ठ उवाच ।
अथाभवदसौ सूची कर्कटीराक्षसी पुनः ।
सूक्ष्मैव स्थौल्यमायाता मेघलेखेव वार्षिकी ॥ १
निजमाकाशमासाद्य किंचित्प्रमुदिता सती ।

मिथ्यार्थेन किं, न किंचिदित्यर्थः ॥ ५ ॥ ६ ॥ असौ अविवेकः । कलितैः प्राप्तैः ॥ ७ ॥ नियत्या कर्मफलावश्यंभावनियामकेश्वरसंकल्पेन सहितः । सनियतिः स पितामहः ॥ ८ ॥ किंचिदिति पदसंस्कारपक्षे सामान्ये नपुंसकम् ॥ ९ ॥ अव्यावृत्तिस्वरूपायाः अस्मदादिभिरपि निवर्तयितुमशक्यायाः प्रागुक्तनियतेः ॥ १० ॥ अनेन तपसा फलितेनेति शेषः । पीना अभिवृद्धशरीरा ॥ ११ ॥ बीजान्तर्लीना वृक्षता जातिर्बृहद्वृक्षतया व्यक्त्या यथा वियुक्ता तथा यया तन्वा वियुक्तासि तया योगमेष्यसीति परेण संबन्धः ॥ १२ ॥ ननु नष्टायाः कथं पुनरुद्भव इत्याशङ्क्याह—**अन्तर्बीजरूपिणी**ति । न सा नष्टा किंतु सूच्यन्तरेव बीजभावेन लीनेति भावः ॥ १३ ॥ लोकबाधाहेतुना मम किं तया तन्वा तत्राह—**बाधा**मिति ॥ १४ ॥ यदि कदाचिद्बहीरूपा निर्विकल्पसमाधिव्युत्थिता भविष्यसि तदा न्यायेन भूतबाधां करिष्यसीति परेणान्वयः ॥ १५ ॥ किं ध्यानधारणादीनां सत्यता नेत्याह—**व्यवहारे**ति । एवं स्पन्दादिव्यवहारोऽपि न वास्तव इत्याशयेनाह—**वातस्वभाववद्दे**हेति ॥ १६ ॥ स्वकर्म राक्षसोचितमशास्त्रीयहिंसादि तदेव स्पन्दस्तस्य रोधिनी ॥ १७ ॥ १८ ॥ देवो ब्रह्मा जगाम । सा सूची अचिन्तयत् । इति ब्रह्मणोक्तं मम भवतु नाम किं विरोधोऽस्ति, नास्तीत्यर्थः । अब्जजवचनार्थस्य वरस्य वारणे मम रागो वा किं किमर्थ इति विचिन्त्य अन्तर्मनसि मनाक् स्वतनुमयी प्राक्तनस्वशरीराकारा बभूव ॥ १९ ॥ मानसकल्पनाक्रमेणैव स्थूलदेहाविर्भावमाह—**प्रादेश** इति । प्रादेशः प्रादेशप्रमाणो देहः । 'प्रमाणे लः' इति द्वयसचो लुक् । एवमग्रेऽपि । विटपो वृक्षशाखाप्रमाणः । ततो विस्तृतः । अभ्रमाला तत्प्रमाणः । एवं क्रमेण सा सूची निमेषात्स्वसंकल्पद्रुमकणिकाया बीजस्याङ्कुरक्रमेण उद्यत्स्वावयवलता सती बभौ ॥ २० ॥ गात्राणि अङ्गानि करणानीन्द्रियस्थानानि इन्द्रियाणि च उद्भूतानि । प्राक्तिरोहितानि बीजौघभूतानि सन्ति तदा अलं पर्याप्तानि पुनराविर्भूतान्यभवन् । तथाच मनःकल्पनामूलकत्वान्मिथ्याभूतान्येवेत्यर्थः ॥ २१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचीशरीरलाभो नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

लब्ध्वा देहं समाधिस्था षण्मासा क्षुधितोत्थिता ।
कर्कटी वायुवचसा किरातविषयं ययौ ॥ १ ॥

अथ सर्गावसानप्रादुर्भावानन्तरम् ॥ १ ॥ निजं स्वाभूतं

बृहद्राक्षसभावं तद्बोधात्कञ्चुकवज्जहौ ॥ २
तत्रैव ध्यायती तस्थौ बद्धपद्मासनस्थितिः ।
व्यालम्ब्य संविदं शुद्धां संस्थिता गिरिकूटवत् ॥ ३
अथ सा मासषट्केन ध्यानाद्बोधमुपागता ।
महाजलदनादेन प्रावृषीव शिखण्डिनी ॥ ४
प्रबुद्धा सा बहिर्वृत्तिर्बभूव क्षुत्परायणा ।
यावद्देहं स्वभावोऽस्य देहस्य न निवर्तते ॥ ५
अथ सा किं ग्रसे इति चिन्तयामास चिन्तया ।
भोक्तव्यः परजीवश्च न्यायेन न विना मया ॥ ६
यदार्यगर्हितं यद्वा न्यायेन न समर्जितम् ।
तस्माद्ग्रासाद्वरं मन्ये मरणं देहिनामिदम् ॥ ७
यदि देहं त्यजामीदं तन्न्यायोपार्जितं विना ।
न किंचिदस्ति निर्न्यायं भुक्तोऽर्थो हि गरायते ॥ ८
यत्र लोकक्रमप्राप्तं तेन भुक्तेन किं भवेत् ।
न जीवितेन नो मृत्या किंचित्कारणमस्ति मे ॥ ९
मनोमात्रमहं ह्यासं देहादिभ्रमभूषणम् ।
तच्छान्तं स्वावबोधेन देहादेहदशौ कुतः ॥ १०

श्रीवसिष्ठ उवाच ।

एवं स्थिता मौनवती शुश्राव गगनाद्गिरम् ।
रक्षःस्वरूपसंत्यागतुष्टेनोक्तां नभस्वता ॥ ११
गच्छ कर्कटि मूढांस्त्वं ज्ञानेनाश्ववबोधय ।
मूढोत्तारणमेवेह स्वभावो महतामिति ॥ १२
बोध्यमानो भवत्यापि यो न बोधमुपैष्यति ।
स्वनाशायैव जातोऽसौ न्याय्यो ग्रासो भवेत्तव ॥ १३
श्रुत्वेत्यनुगृहीतास्मि त्वयेत्युक्तवती शनैः ।
उत्तस्थौ शैलशिखरात्क्रमादवरुरोह च ॥ १४
अधित्यकामतीत्याशु गत्वा चोपत्यकातटान् ।
विवेश शैलपादस्थं किरातजनमण्डलम् ॥ १५
बह्वन्नपशुलोकौघद्रव्यशष्पौषधामिषम् ।
अनन्तमूलपानान्नमृगकीटखगादिकम्[१] ॥ १६
प्रचलितवलिताञ्जनाचलाभा
हिमगिरिपादनिवेशितं सुदेशम् ।
तदनुगतवती निशाचरी सा
निशि सुघनान्धतमिस्रमार्गभूमौ ॥ १७

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषूत्पत्तिप्रकरणे अन्यायबाधिको नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥

## सप्तसप्ततितमः सर्गः ७७

श्रीवसिष्ठ उवाच ।

एतस्मिन्नन्तरे तत्र किरातजनमण्डले ।
हस्तहार्यतमःपिण्डा बभूवासितयामिनी ॥ १
नीलमेघपटच्छन्ना निरिन्दुगगनान्तरा ।
तमालवनसंपिण्डा मांसलोड्डीनकज्जला ॥ २
लताघनतया ग्रामकोटरैकान्ध्यमन्थरा ।

ब्रह्माकाशं आसाद्य पुनः प्रतिसंधाय तस्य बोधात्साक्षात्काराच्चिरप्ररूढत्वाद्बृहद्राक्षसभावं जहौ ॥ २ ॥ शुद्धां निष्प्रपञ्चां संविदमात्मानं वृत्तिधारया व्यालम्ब्य आश्रित्य ॥ ३ ॥ महाजलदनादेन बोधं समाधिव्युत्थानम् । शिखण्डिनीपक्षे कामोद्बोधम् ॥ ४ ॥ अस्य देहस्य यावद्देहं यावदवस्थानं तावत्क्षुधादिस्वभावो न निवर्तते ॥ ५ ॥ चिन्तया चिन्तनहेतुना चित्तेन ॥ ६ ॥ आर्यैः पूज्यैर्महद्भिर्यद्गर्हितं निन्दितम् ॥ ७ ॥ न्यायोपार्जितं ग्रासं विना देहं यदि त्यजामि तदा निर्न्यायमन्याय्यं न किंचिदस्ति । अन्यायोपार्जितस्त्वर्थो भुक्तः सन् गरायते विषवदाचरति । अनर्थकोटिषु पर्यवस्यतीति यावत् ॥ ८ ॥ लोकसंमतः क्रमो लोकक्रमस्तेन यत्र प्राप्तम् । मृत्या मरणेन । कारणं इष्टमनिष्टं वा प्रयोजकम् ॥ ९ ॥ देहादेहदशौ जीवनमरणभ्रमौ ॥ १० ॥ रक्षःस्वरूपस्य तद्देहाभिमानस्य संत्यागाद्धेतोस्तुष्टेन नभस्वता वायुना ॥ ११ ॥ तां गिरं दर्शयति—**गच्छेत्यादिना** । मूढाननात्मज्ञान् । महतां तत्त्वविदाम् । इति हेतोः ॥ १२ ॥ असौ मूढः । न्याय्यो न्यायादनपेतः ग्रासः कवलः ॥ १३ ॥ इति गिरं श्रुत्वा । त्वया वायुना । परमार्थदृशा अनुग्रहाभावात्तथा वक्तुं लज्जमानेव शनैरुक्तवती ॥ १४ ॥ अधित्यकां पर्वतोर्ध्वभागम् । उपत्यका पर्वतासन्नभूमिस्तत्तटान् । शैलस्य हिमवतः पादेषु प्रत्यन्तपर्वतेषु स्थितम् ॥ १५ ॥ अन्नादीनां सप्तानां द्वन्द्वे बहुव्रीहिः । एवं मूलादीनामपि । शष्पाणि बालतृणानि । आमिषाणि मांसानि ॥ १६ ॥ प्रचलितः प्रस्थितो यो वलिताञ्जनः कज्जललिप्तोऽचलस्तदाभासा निशाचरी हिमगिरेः पादेषु निवेशितं सुदेशं गतवतीति संबन्धः ॥ १७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे अन्यायबाधिको नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥

तमिस्रा वर्ण्यते पश्चाद्दर्शनं राजमन्त्रिणोः ।
कर्कट्यास्तत्परीक्षार्थं प्रश्नेच्छा चात्र विस्तरात् ॥ १ ॥

तमः पिण्ड इव तमःपिण्डः । हस्तेन हर्तुं शक्यो हस्तहार्यः । हस्तहार्यस्तमः पिण्डो यस्याम् । यामिनी रात्रिः ॥ १ ॥ तां रात्रिं कर्कटीसखी भूतराक्षस्यन्तररूपेण वर्णयति—**नीलमेघेत्यादिना** । निरिन्दु अमृतलुण्ठनभयात्पलायितेन्दु गगनान्तरं यया । तमालवनानि संपिण्डयति एकघनीकरोतीव तमालवनसंपिण्डा । मांसला पुष्टा । सर्वत्रोड्डीनं श्यामीकुर्वत् नेत्रकज्जलं यस्याः ॥ २ ॥ गिरिग्रामेषु लतानां घनतया नक्षत्रज्योतिषोऽप्यप्रसरान्मुख्येनान्ध्येन जरतीव मन्थरा कुण्ठितगतिः । गृहचत्वरैः संबाधे

१ मूलपानान्नेति पाठेऽन्नेति पौनरुक्त्यम्; पाठान्तरे तु मूलपा वृक्षाः । [illegible] प्राणिविशेषाः । अनन्तमूलपादन्ता इति पाठः ।

गृहचत्वरसंबाधे नगरे नवयौवना ॥ ३
चत्वरेषु तमःपिण्डी प्रजिह्मीकृतदीपिका ।
कुञ्चितच्छिद्रनिष्क्रान्ताऽऽदीपिकारोचिराजिता ॥ ४
सुवयस्येव कर्कट्याः परिनृत्यतिपिशाचिका ।
मत्तवेतालकङ्कालकाष्ठमौनमिवास्थिता ॥ ५
सुषुप्तमृगभूतौघघननीहारहारिणी ।
मन्दमन्दमरुत्स्पर्शलसत्प्रालेयसीकरा ॥ ६
सरःसु विवटद्वारि काकभेकतरङ्गिता ।
अन्तःपुरेषु रमणरणन्नारीनराननां ॥ ७
जङ्गलेषु जगज्ज्वाला जटालज्वलनोज्ज्वला ।
केदारेष्वम्बुसंसेकपृष्ठपाकमिलच्छला ॥ ८
नभस्थलेक्षितस्पन्दप्रविविक्तर्क्षचक्रिका ।
वनेषु विसरद्वातपतत्पुष्पफलद्रुमा ॥ ९
श्वभ्रेषु कौशिकस्यान्तर्वायसव्याहतारवा ।
तस्कराक्रान्तपर्यन्तग्रास्याक्रन्दनकर्कशा ॥ १०
विपिने विपिनामौना नगरे सुप्तनागरा ।
वनेषु विसरद्वाता नीडेष्वस्पन्दपक्षिका ॥ ११
गुहासु सुप्तसिंहाढ्या कुञ्जेषु स्वपदेणका ।
खे सावश्यायनिकरा विपिने मौनचारिणी ॥ १२
कज्जलाम्भोदमध्याभा काचशैलोदरोपमा ।
पङ्कपिण्डान्तरघना खड्गच्छेद्यान्ध्यमांसला ॥ १३
प्रलयानिलविक्षुब्धकज्जलाचलचञ्चला ।
एकार्णवमहापङ्कपर्वतोदरमेदुरा ॥ १४
अङ्गारकोटरघना सौषुप्तपदसुन्दरी ।
अज्ञाननिद्रानिविडा भृङ्गपृष्ठच्छदच्छविः ॥ १५

तस्यां रजन्यां भीमायां किरातजनमण्डले ।
मन्त्रिणा सह भूपालस्तस्मिन्नवसरे तदा ॥ १६
निर्जगाम सुधीरात्मा नगरात्सुप्तनागरात् ।
अटवीं विक्रमो नाम विषमां वीरचर्यया ॥ १७
अटव्यां कर्कटी सा तौ चरन्तौ राजमन्त्रिणौ ।
अपश्यद्धृतधैर्यास्त्रौ वेतालालोकनोन्मुखौ ॥ १८
अथ सा चिन्तयामास लब्धो भक्ष्यो ह्यहो मया ।
मूढावेतावनात्मज्ञौ भारो देहः किलानयोः ॥ १९
इहामुत्र च नाशाय मूढो दुःखाय जीवति ।
यत्नाद्विनाशनीयोऽसौ नानर्थः परिपाल्यते ॥ २०
अपश्यतः स्वमात्मानं मृतिर्मूढस्य जीवितम् ।
मरणेनोदयोऽस्यास्ति पापासंपत्तिहेतुतः ॥ २१
आदिसर्गे च नियमः कृतः पङ्कजजन्मना ।
हिंस्राणां भोजनायास्तु मूढात्मानात्मवानिति ॥ २२
तस्मादिमौ मयैवाद्य भोक्तव्यौ भोज्यतां गतौ ।
अभव्य एव निर्दोषं प्राप्तमर्थमुपेक्षते ॥ २३
कदाचित्ताविमौ स्यातां गुणयुक्तौ महाशयौ ।
तादृङ्‌ रविनाशो हि स्वभावान्मे न रोचते ॥ २४
तदेतौ संपरीक्षेऽहं यदि तादृग्गुणान्वितौ ।
तद्भक्षं न करोम्येतौ न हिंस्यां गुणिनः क्वचित् ॥ २५
अकृत्रिमं सुखं कीर्तिमायुश्चैवाभिवाञ्छता ।
सर्वाभिमतदानेन पूजनीया गुणान्विताः ॥ २६
अपि नङ्क्ष्यामि देहेन नैव भोक्ष्ये गुणान्वितम् ।
सुखयन्ति हि चेतांसि जीवितादपि साधवः ॥ २७

---

निबिडिते नगरे नवयौवनेव दीपिकाभिः संचरन्ती ॥३॥ बहिश्चत्वरेषु वायुना प्रजिह्मीकृता वक्रीकृता दीपिका यया । अतएव तमांसि पिण्डयतीति तमःपिण्डी । कुञ्चितानां कुटिलगवाक्षाणां छिद्रेभ्यो निष्क्रान्तैरीषद्दीपिकारोचिर्भिः राजिता शोभमाना । आदीपिकारोचिरितीषदर्थे आङ् ढ्रलोप इति दीर्घाभावश्छान्दसः ॥ ४ ॥ सुवयस्या शोभमाना सखीव । मत्तवेतालानां कंकालादिहरणप्रसङ्गे निवारणाभावात्काष्ठमौनं व्रतमास्थितेव ॥५॥ सुषुप्तैर्मृगादिप्राणिनिकायैर्घनैर्नीहारैश्च हारिणी अलंकृता ॥६॥ इतःपरं राक्षसीरूपकं विहाय स्वरूपेणैव वर्णयति—**सरःस्वित्यादिना** । विवटानां गर्तानां विवृद्धवटानां च द्वारि काकैर्भेकैश्च तरङ्गिता व्याप्ता । रमणे क्रीडने रणन्ति नारीनराननानि यस्याम् ॥ ७ ॥ जगतो ज्वाला प्रलयानल इव जटालेन ज्वलनेनोज्ज्वला । अम्बुसेकेन आर्द्रीभावेन शल्यकपृष्ठे पाकेन परिपक्वदशया चोन्मूलनात्केदारेषु मिलन्ति शलानि शल्लीकण्टका यस्याम् ॥ ८ ॥ अक्षीणीव संजातान्यक्षितानि स्पन्दादिव प्रविविक्तानि विभक्तानि ऋक्षचक्राणि नक्षत्रवृन्दानि यस्याम् ॥ ९ ॥ श्वभ्रेषु वृक्षकोटरेष्वन्तः कौशिकस्य रवं श्रुत्वेति शेषः ॥ १० ॥ विपिनमिव आमौना ईषदशब्दा ॥ ११ ॥ १२ ॥ पङ्कपिण्डो मृत्पिण्डस्तस्यान्तरमिव घना निबिडा ॥१३॥ विक्षुब्धो विचूर्णितो विचलितो वा । एकार्णवमहापङ्कमिव पर्वतोदरमिव च मेदुरा ॥ १४ ॥ अङ्गारस्य दग्धकाष्ठस्य कोटरमिव श्यामघना । सौषुप्तपदं गाढाज्ञानमिव सुन्दरी । अज्ञाननिद्रा मूलाज्ञानमिव निबिडा घना । भृङ्गानां पृष्ठानीव च्छदाः पक्षा इव च च्छविर्यस्यास्तथाविधा । असितयामिनी बभूवेत्युपक्रमेणान्वयः ॥ १५ ॥ १६ ॥ वीरोचितया तस्करादिवधार्थया चर्यया ॥ १७ ॥ धृतानि धैर्यं च अस्त्राणि च याभ्यां तौ । ग्रामाद्बहिष्ठस्य ग्रामदैवतस्य वेतालस्य आलोकने उन्मुखौ ॥ १८ ॥ सा कर्कटी ॥ १९ ॥ इह लोके अमुत्र परलोके च । मूढोऽनात्मज्ञः ॥ २० ॥ मृतिरेव जीवितं । जीविताद्वरमिति यावत् । तदेवोपपत्त्या दर्शयति—**मरणेने**ति ॥ २१ ॥ २२ ॥ अभव्यः अभाग्य एव ॥ २३ ॥ आत्मज्ञानलक्षणगुणेन युक्तौ ॥ २४ ॥ तत्तर्हि ॥ २५ ॥ सर्वेषामभिमतानामिष्टानां दानेन ॥ २६ ॥ देहेन नत्वात्मना अविनाशि-

अपि जीवितदानेन गुणिनं परिपालयेत् ।
गुणवत्संगमौषध्या मृत्युरप्येति मित्रताम् ॥ २८
यत्राहमपि रक्षामि राक्षसी गुणशालिनम् ।
तत्रान्यः को न कुर्यात्तं हृदि हारमिवामलम् ॥ २९
उदारगुणयुक्ता ये विहरन्तीह देहिनः ।
धरातलेन्दवः सन्ताङ्कुरं शीतलयन्ति ते ॥ ३०
मृतिर्गुणितिरस्कारो जीवितं गुणिसंश्रयः ।
फलं स्वर्गापवर्गादि जीविताद्गुणिसंश्रितात् ॥ ३१
तस्मादिमौ परीक्षेऽहं कयाचित्प्रश्नलीलया ।
किंमात्रज्ञानकावेताविति तामरसेक्षणौ ॥ ३२
आदौ विचार्य सगुणागुणलेशयुक्तिं
पश्चात्स्वतोऽधिकतरं च गुणैर्यदि स्यात् ।
कुर्यात्ततः समुपपत्तिवशेन दण्डं
दण्ड्यस्य युक्तिसदृशं घनसंभवेन ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे क० राक्षसीविचारो नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥

## अष्टसप्ततितमः सर्गः ७८

श्रीवसिष्ठ उवाच ।
अथ सा राक्षसी रक्षःकुलकाननमञ्जरी ।
तमस्येवाभ्रलेखेव गम्भीरं विननाद ह ॥ १
नादान्ते समुवाचेदं हुंकारापरुषं वचः ।
गर्जितानन्तरं जातकरकाशनिशब्दवत् ॥ २
भो भो घोराटवीव्योमपदवीशशिभास्करौ ।
महामायातमःपीठशिलाकोटरकीटकौ ॥ ३
कौ भवन्तौ महाबुद्धी दुर्बुद्धी वा समागतौ ।
मन्त्रासपदमापन्नौ क्षणान्मरणकोचितौ ॥ ४
राजोवाच ।
भो भो भूतक किं स्यास्त्वं क तिष्ठसि च देहकम् ।
दर्शयास्यास्तव गिरः को बिभेत्यलिनीध्वनेः ॥ ५
सिंहवत्सर्ववेगेन पतन्त्यर्थे किलार्थिनः ।
त्यज संरम्भमारम्भं स्वसामर्थ्यं प्रदर्शय ॥ ६
किं प्रार्थयसि मे ब्रूहि ददामि तव सुव्रत ।
किं वा संरम्भशब्दाभ्यां भीषयास्मान्बिभेषि किम् ॥ ७
क्षिप्रमाकारशब्दाभ्यां मायया सन्मुखीभव ।
न किंचिद्दीर्घसूत्राणां सिद्ध्यत्यात्मक्षयादृते ॥ ८
राज्ञेत्युक्ते रम्यमुक्तमिति संचिन्त्य सा तयोः ।
प्रकाशयाप्य धैर्याय ननाद च जहास च ॥ ९
ततो ददृशतुस्तां तौ शब्दपूरितदिग्गणाम् ।
साट्टहासप्रभापिण्डपूरप्रकटिताकृतिम् ॥ १०
कल्पाभ्राशनिकाषेण घृष्टामद्रितटीमिव ।
स्वनेत्रविद्युद्वलयबलाकोज्ज्वलिताम्बराम् ॥ ११
तिमिरैकार्णवौर्वाग्निज्वालाविवलनामिव ।
गर्जद्घनघटाटोपपीवरासितकन्धराम् ॥ १२
रणद्दशनसंरम्भहाहाहतनिशाचराम् ।
रोदसीकज्जलस्तम्भां लीलयोल्लसितां पुनः ॥ १३
ऊर्ध्वकेशीं शिरालाङ्गीं कपिलाक्षीं तमोमयीम् ।
यक्षरक्षःपिशाचानामप्यनर्थभयप्रदाम् ॥ १४
देहरन्ध्रविशच्छ्वासवातभांकारभीषणाम् ।
मुसलोलूखलालातहलशूर्पकशेखराम् ॥ १५

त्वात् ॥ २७ ॥ वशीकरणौषध्या ॥ २८ ॥ तं गुणिनम् ॥२९॥ धरातले इन्दवश्चन्द्राः ॥ ३० ॥ फलं सिध्यतीति शेषः ॥३१॥ परीक्षे परीक्षिष्ये ॥ ३२ ॥ आदौ सगुणोऽयमगुणो वेति गुणलेशेनापि युक्तिं योगं विचार्य पश्चात्स्वतः स्वस्मादधिकतरं च गुणिनं विचार्य यदि गुणैर्हीनः स्यात्ततस्तदनन्तरं सम्यक् शास्त्रोक्तदृशा उपपत्तिवशेन युक्तिसदृशं दण्ड्यस्य दण्डं कुर्यात्, स्वतो गुणैर्घनसंभवे अतिशयस्य संभवे तु न कुर्यादित्यर्थः ॥ ३३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीविचारो नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥

भीषणोक्त्याप्यभीतस्य राज्ञः कर्कटिदर्शनम् ।
मन्त्रिवाक्यानुनीतायाः प्रश्नारम्भश्च कीर्त्यते ॥ १ ॥

रक्षोवंशलक्षणस्य काननस्य बोधसौरभमकरन्दमधुरत्वात्पुष्पमञ्जरीव स्थिता ॥१॥ शब्दतो हुंकारभीषणत्वेऽप्यर्थतोऽपरुषमनिष्ठुरम् ॥ २ ॥ घोराटवीलक्षणाया व्योमपदव्याः प्रकाशकत्वाच्छशिभास्करौ । महामायातमोलक्षणायाः सर्वभूताधारपीठभूतायाः कोटरान्तर्गतकीटकौ । अनेन स्वस्य आत्मज्ञता सूचिता ॥ ३ ॥ आत्मज्ञाने सति बुद्धेः साफल्यान्महाबुद्धी पूज्यबुद्धी । तदभावे बुद्धिवैयर्थ्याद्दुर्बुद्धी । कुत्सितं मरणं मरणकं तदुचितौ ॥ ४ ॥ अल्पं देहं देहकं दर्शय । अलिनीध्वनेर्भ्रमरिकाध्वनितुल्याया अस्यास्तव गिरः सकाशात्को बिभेति । न कश्चिदित्यर्थः ॥ ५ ॥ संरम्भं कोपम् । आरम्भं भीषणोद्योगम् ॥ ६ ॥ त्वत्सूचिता आत्मज्ञता मया ज्ञातेति द्योतनाय सुव्रतेति संबोधनम् । अस्मान्प्रति संरम्भशब्दाभ्यां भीषया वा किम् । त्वमेव वा किं बिभेषि ॥ ७ ॥ मायया परदृश्यशरीरकल्पनशक्त्या । दीर्घसूत्राणामक्षिप्रकारिणाम् ॥ ८ ॥ ९ ॥ अट्टहासदशनप्रभापिण्डपूरैः प्रकाशितस्वाकाराम् ॥ १० ॥ अशनिकाषेण वज्रनिष्पेषेण घृष्टां निष्पिष्टाम् । स्वनेत्रविद्युद्भ्यां शङ्खवलयलक्षणबलाकाभिश्च दीपिताकाशाम् ॥ ११ ॥ तिमिरलक्षणस्यैकार्णवस्य ॥ १२ ॥ रणद्भ्यः कटकटायमानेभ्यो दशनेभ्यः संरम्भाद्भयात् हाहाकारपूर्वकं हता मारिता निशाचराश्चोरव्याघ्रजम्बुकादयो यया । रोदस्यौ द्यावापृथिव्यौ कज्जलैः स्तम्भयति विष्टभ्नातीति तथोक्ताम् ॥ १३ ॥ १४ ॥ हलं शूर्पकाणि भग्नशूर्पाणि शेखरे यस्याः

स्फुरन्तीमिव कल्पान्ते वैदूर्यशिखरस्थलीम् ।
हासघट्टितविश्वेशां कालरात्रिमिवोदिताम् ॥ १६
शरद्व्योमाटवीं साभ्रां कृतदेहामिवागताम् ।
शरीरिणीं महाभ्राढ्यां यामिनीमिव मांसलाम् १७
शरीरसंनिवेशेन पङ्कपीठमिवोत्थिताम् ।
तनुं चन्द्रार्कयुद्धाय तमसेव समाश्रिताम् ॥ १८
इन्द्रनीलमहाशुभ्रलम्बाभ्रयुगलोपमौ ।
उलूखलादिहाराढ्यौ दधानामसितौ स्तनौ ॥ १९
लग्नामङ्गारकाष्ठेन समानां च महातनुम् ।
द्रुमाभास्पन्दसशिरलसद्भुजलतातनुम् ॥ २०
तामवेक्ष्य महावीरौ तथैवाक्षुभितौ स्थितौ ।
न तदस्ति विमोहाय यद्विविक्तस्य चेतसः ॥ २१

मन्त्र्युवाच ।

महाराक्षसि संरम्भो महात्मा किमयं तव ।
लघवो ह्यथवा कार्ये लघावप्यतिसंभ्रमाः ॥ २२
त्यज संरम्भमारम्भो नायं तव विराजते ।
विषये हि प्रवर्तन्ते धीमन्तः स्वार्थसाधकाः ॥ २३
त्वादृशानां सहस्राणि मशकानामिवावले ।
अस्माकं धीरतावात्याव्यूढानि तृणपर्णवत् ॥ २४
संरम्भद्वारमुत्सृज्य समतास्वच्छया धिया ।
युक्त्या च व्यवहारिण्या स्वार्थः प्राज्ञेन साध्यते ॥ २५
स्वेनैव व्यवहारेण कार्यं सिद्ध्यतु वा न वा ।
महानियतिरित्येव भ्रमस्यावसरो हि कः ॥ २६
कथयाभिमतं किं ते किमर्थयसि चार्थिनी ।
अर्थी स्वप्नेऽपि नास्माकमप्राप्तार्थः पुरो गतः ॥ २७
इत्युक्ता सा तदा तेन चिन्तयामास राक्षसी ।
अहो नु विमलाचारं सत्त्वं पुरुषसिंहयोः ॥ २८
न सामान्याविमौ मन्ये विचित्रेयं चमत्कृतिः ।
वचोवक्रेक्षणेनैव वदत्यन्तर्विनिश्चयम् ॥ २९
वचोवक्रेक्षणद्वारैर्धीमतामाशया मिथः ।
एकीभवन्ति सरितां पयांसि वलनैरिव ॥ ३०
आभ्यां प्रायः परिज्ञातो मम भावोऽनयोर्मया ।
न विनाश्यौ मया चेमौ स्वयमेवाविनाशिनौ ॥ ३१
मन्ये भवेतामात्मज्ञौ नात्मज्ञानादृते मतिः ।
प्रमृष्टसदसद्भावाद्भवल्यस्तभया मृतौ ॥ ३२
तदेतौ परिपृच्छामि किंचित्संदेहमुत्थितम् ।
प्राज्ञं प्राप्य न पृच्छन्ति ये केचित्ते नराधमाः ॥ ३३
इति संचिन्त्य पृच्छायै तन्वानावसरं ततः ।
अकालकल्पाभ्ररवं हासं संयम्य साब्रवीत् ॥ ३४
कौ भवन्तौ नरौ धीरौ कथ्यतामिति मेऽनघौ ।
जायते दर्शनादेव मैत्री विशदचेतसाम् ॥ ३५

मन्त्र्युवाच ।

अयं राजा किरातानामस्याहं मन्त्रितां गतः ।
उद्यतौ रात्रिचर्येण त्वादृग्जनविनिग्रहे ॥ ३६
राज्ञो रात्रिंदिवं धर्मो दुष्टभूतविनिग्रहः ।
स्वधर्मत्यागिनो ये तु ते विनाशानलेन्धनम् ॥ ३७

राक्षस्युवाच ।

राजंस्त्वमसि दुर्मन्त्री दुर्मन्त्री न नृपो भवेत् ।
सद्रूपस्य भवेन्मन्त्री राजा सन्मन्त्रिणो भवेत् ॥ ३८
राजा चादौ विवेकेन योजनीयः सुमन्त्रिणा ।
तेनार्यतामुपायाति यथा राजा तथा प्रजाः ॥ ३९
समस्तगुणजालानामध्यात्मज्ञानमुत्तमम् ।

---

॥ १५ ॥ कल्पान्ते विदीर्णामिति शेषः । हासैर्घट्टिता हिंसिता विश्वस्येशा दानवा यया तथाविधां कालरात्रिं शिवदूतीमिव ॥ १६ ॥ १७ ॥ पङ्कपीठं पृथिवीपीठम् । तमसा राहुणा ॥ १८ ॥ इन्द्रनीलमिव महाशुभ्रं नीलं यल्लम्बाभ्रयुगलं तदुपमौ ॥ १९ ॥ लग्नां लाञ्छितां समानां सवर्णां च । द्रुमाभाभ्यां अस्पन्दाभ्यां शिरासहिताभ्यां लसद्भ्यां भुजलताभ्यां अतनुं अनल्पाम् ॥ २० ॥ विविक्तस्य सत्यमिथ्याविवेकशालिनः ॥ २१ ॥ यदि त्वं महत्यसि तर्ह्यल्पकार्ये नैतावान्संरम्भो युक्त इति साम्ना समाधित्सुर्मन्त्री उवाच—**महाराक्षसी**ति । हे महाराक्षसि, तव स्वाभिमतसिद्धौ महात्मा निरतिशयस्वरूपोऽयं संरम्भः कोपः किं, किमर्थ इत्यर्थः । वाञ्छात्रलभ्ये आहारलाभलक्षणे कार्ये न क्रोधसाहसादेः प्रयोजनमस्तीति भावः । अथवा यदि लघुरसि तर्हि न त्वत्संरम्भेण बिभीव इत्याशयेनाह—**लघवो ही**ति ॥ २२ ॥ साम्ना पुनः प्रथमकल्पमेवाश्रित्याह—**त्यजे**ति । बुद्धिमन्तः सामसाध्येऽर्थे न दण्डमनुसरन्तीति भावः ॥ २३ ॥ पुनर्द्वितीयकल्पमाश्रित्य दण्डोद्योगवैयर्थ्यमाह—**त्वादृशानामि**ति । धीरतालक्षणया वात्या वात्यया । वातशब्दात्पाशादित्वात्समूहे यप्रत्यये व्यत्ययेन ङीपि 'हलस्तद्धितस्य' इति यलोपे तृतीयान्तोऽत्र वात्येति । व्यूढानि निरस्तानि ॥ २४ ॥ तर्हि कथं स्वार्थसिद्धिस्तत्राह—**संरम्भे**ति । व्यवहारिण्या प्राज्ञव्यवहारोचितया ॥ २५ ॥ कार्यसिद्धिसंशयेऽप्यनादिनियतिसिद्धः सामोपायो न हेयः, किं वाच्यं तन्निश्चये इत्याशयेनाह—**स्वेनैवे**ति । भ्रमस्य भ्रान्तोचितसंरम्भस्य ॥ २६ ॥ कथं तर्हि साम्ना सिद्धिस्तत्राह—**कथये**ति ॥ २७ ॥ सत्त्वं धैर्यं बुद्धिबलं च ॥ २८ ॥ वक्रेक्षणेन मुखदर्शनेनैव प्रसादादिलिङ्गैरन्तस्तत्त्वविनिश्चयं वदति सूचयति ॥ २९ ॥ वलनैः संगमैः ॥ ३० ॥ ३१ ॥ मिथ्यात्वनिश्चयेन प्रमृष्टौ सदसद्भावौ जीवनमरणप्रत्ययौ यस्मात्तथाविधादात्मज्ञानादृते ॥ ३२ ॥ ३३ ॥ हासं हास्यम् । संयम्य निरुध्य ॥ ३४ ॥ ३५ ॥ त्वादृग्जनानां हिंस्राणां विनिग्रहे उद्यतौ उद्युक्तौ ॥ ३६ ॥ ३७ ॥ करिष्यमाणप्रश्नस्योपोद्घातं रचयन्त्याह—**राजन्नि**ति । दुष्टो मन्त्री यस्य स तथा असि । संभावित इति शेषः ॥ ३८ ॥ [illegible] श्रेष्ठताम् ॥ ३९ ॥ **समस्ते**ति । तथा चाहुः—'तत्कर्म

तद्विद्राजा भवेद्राजा तद्विन्मन्त्री च मन्त्रवित् ॥ ४०
प्रभुत्वं समदृष्टित्वं तच्च स्याद्राजविद्यया ।
तामेव यो न जानाति नासौ मन्त्री न सोऽधिपः ४१
भवन्तौ तद्विदौ साधू यदि तच्छ्रेय आप्नुथः ।
नो चेदनर्थदौ स्वस्याः प्रकृतेरद्म्यहं युवाम् ॥ ४२
एकोपायेन मत्पार्श्वाद्बालकावुत्तरिष्यथः ।
मत्प्रश्नपञ्जरं सारं चेद्विचारयथो धिया ॥ ४३
प्रश्नानिमान्कथय पार्थिव वा च मन्त्रि-
स्तत्रार्थिनी भृशमहं परिपूरयार्थम् ।
अङ्गीकृतार्थमददत्क इवास्ति लोके
दोषेण संक्षयकरेण न युज्यते यः ॥ ४४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे क० राक्षसीवर्णनं नामाष्टसप्ततितमः सर्गः ॥ ७८ ॥

## एकोनाशीतितमः सर्गः ७९

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा राक्षसी प्रश्नान्सा वक्तुमुपचक्रमे ।
उच्यतामिति राज्ञोक्ते तानिमाञ्शृणु राघव ॥ १

राक्षस्युवाच ।

एकस्यानेकसंख्यस्य कस्याणोरम्बुधेरिव ।
अन्तर्ब्रह्माण्डलक्षाणि लीयन्ते बुद्बुदा इव ॥ २
किमाकाशमनाकाशं न किंचित्किंचिदेव किम् ।
कोऽहमेवास्मि संपन्नः को भवानप्यहं स्थितः ॥ ३
गच्छन्न गच्छति च कः कोऽतिष्ठन्नपि तिष्ठति ।
कश्चेतनोऽपि पाषाणः कश्चिद्व्योम्नि विचित्रकृत् ॥ ४
वह्नितामजहच्चैव कश्च वह्निरदाहकः ।
अवह्नेर्जायते वह्निः कस्माद्राजन्निरन्तरम् ॥ ५
अचन्द्रार्काग्नितारोऽपि कोऽविनाशः प्रकाशकः ।
अनेत्रलभ्यात्कस्माच्च प्रकाशः संप्रवर्तते ॥ ६
लतागुल्माङ्कुरादीनां जात्यन्धानां तथैव च ।
अन्येषामप्यनक्ष्णामालोकः क इवोत्तमः ॥ ७
जनकः कोऽम्बरादीनां सत्तायाः कः स्वभावदः ।
को जगद्रत्नकोशः स्यात्कस्य कोशो मणेर्जगत् ॥ ८
कोऽणुस्तमःप्रकाशः स्यात्कोऽणुरस्ति च नास्ति च ।
कोऽणुर्दूरेऽप्यदूरे च कोऽणुरेव महागिरिः ॥ ९
निमेष एव कः कल्पः कः कल्पोऽपि निमेषकः ।
किं प्रत्यक्षमसद्रूपं किं चेतनमचेतनम् ॥ १०
कश्च वायुरवायुश्च कः शब्दोऽशब्द एव कः ।
कः सर्वं न च किंचिच्च कोऽहं नाहं च किं भवेत् ११
किं प्रयत्नशतप्राप्यं लब्ध्वापि बहुजन्मनि ।
लब्धं न किंचिद्भवति किंतु सर्वं न लभ्यते ॥ १२
स्वस्थेन जीवितेनोच्चैः केनात्मैवापहारितः ।
केनाणुनान्तः क्रियते मेरुस्त्रिभुवनं तृणम् ॥ १३
केनाप्यणुकमात्रेण पूरिता शतयोजनी ।
कोऽणुरेव भवन्माति न योजनशतेष्वपि ॥ १४
केनालोकनमात्रेण जगद्बालः प्रनाट्यते ।
कस्याणोरुदरे सन्ति किलावनिभृतां घटाः ॥ १५
अणुत्वमजहत्कोऽणुर्मेरोः स्थूलतराकृतिः ।
वालाग्रशतभागात्मा कोऽणुरुच्चैः शिलोच्चयः ॥ १६

यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥' इति । मन्त्रविद्विचाररहस्यवित् ॥ ४० ॥ प्रभुत्वं समदृष्टित्वाधीनत्वादायुर्घृतमितिवत्ताद्रूप्यारोपात्समदृष्टित्वं विद्यानां राजा राजविद्या आत्मविद्या तया स्यात् । 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति भगवद्वचनात् ॥ ४१ ॥ 'यथा राजा तथा प्रजा' इति प्रागुक्तत्वाद्राज्ञो मौर्ख्ये प्रजानामपि तदनिवारणात्तत्प्रयुक्तानर्थदौ युवां अद्मि भक्षयामि ॥ ४२ ॥ बालकाविव पित्रोः प्रीतिविषयौ ॥ ४३ ॥ हे पार्थिव, त्वमिमान् प्रश्नान् पृष्टानर्थान्कथय । अथवा हे मन्त्रिस्त्वं च वा कथय । तत्र तस्मिन्विषयेऽहं भृशमार्थिनी उपयाचनवती अस्मि । अर्थं मदभिलषितं परिपूरय । योऽङ्गीकृतं दास्यामीति प्रतिज्ञातमर्थमददत्प्रयच्छन्संक्षयकरेण दोषेण न युज्यते स तादृशः क इवास्ति को वास्ति । न कश्चिदित्यर्थः ॥ ४४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीवर्णनं नामाष्टसप्ततितमः सर्गः ॥ ७८ ॥

अनात्मविद्व्रसमानात्मविद्धृदयंगमान् ।
चक्रे द्विसप्ततिप्रश्नान्क्रमात्सर्गेऽत्र कर्कटी ॥ १ ॥

उच्यतामिति राज्ञा उक्ते अभ्यनुज्ञाते सति वा वक्तुमुपचक्रमे ॥ १ ॥ प्रश्नानामाशय उत्तरसर्गयोः स्फुटो भविष्यतीति नेहातिविस्तरः क्रियते । उपाधिभेदादनेकसंख्यस्य दुर्लक्ष्यत्वादणोरपरिच्छेदाच्चाम्बुधेरिव ॥ २ ॥ अनाकाशमशून्यम् । लौकिकप्रसिद्धं न किंचित्तत्त्ववित्प्रसिद्धं किंचिदेव ॥ ३ ॥ अतिष्ठन् गतिनिवृत्तिमकुर्वन् । पाषाण इव चैतन्यानाश्रयः ॥ ४ ॥ ५ ॥ अविनाशः सन् प्रकाशकः ॥ ६ ॥ अनक्ष्णामनाविर्भूतेन्द्रियाणाम् ॥ ७ ॥ स्वभावदः सत्ताप्रदः ॥ ८ ॥ ९ ॥ प्रत्यक्षं भासमानमपि मूढदृशा असद्रूपम् ॥ १० ॥ ११ ॥ प्राग् बहुजन्मनि स्वात्मत्वादेव लब्ध्वाप्यज्ञानावृतत्वादलब्धप्रायत्वात्प्रयत्नशतप्राप्यम् । सर्वं पूर्णम् ॥ १२ ॥ आत्मा स्वात्मैव केनापहारितो नाशितप्रायः कृतः । त्रिभुवनं तृणं क्रियत इति पृथक्प्रश्नः ॥ १३ ॥ १४ ॥ प्रनाट्यते प्रनर्त्यते 'अनर्द्राटि' इति णोपदेशपर्युदासान्न णः । घटाः समूहाः ॥ १५ ॥ शिलोच्चयः पर्वतनिभः

कोऽणुः प्रकाशतमसां दीपः प्रकटनप्रदः ।
कस्याणोरुदरे सन्ति समग्रानुभवाणवः ॥ १७
कोऽणुरत्यन्तनिःस्वादुरपि संस्वदतेऽनिशम् ।
केन संत्यजता सर्वमणुना सर्वमाश्रितम् ॥ १८
केनात्माच्छादनाशक्तेनाणुनाच्छादितं जगत् ।
जगल्लये न कस्याणोः सद्भूतमपि जीवति ॥ १९
अजातावयवः कोऽणुः सहस्रकरलोचनः ।
को निमेषो महाकल्पः कल्पकोटिशतानि च ॥ २०
अणौ जगन्ति तिष्ठन्ति कस्मिन्बीज इव द्रुमः ।
बीजानि निष्कलान्तानि स्फुटान्यनुदितान्यपि ॥ २१
कल्पः कस्य निमेषस्य बीजस्येवान्तरस्थितः ।
कः प्रयोजनकर्तृत्वमप्यनाश्रित्य कारकः ॥ २२
दृश्यसंपत्तये द्रष्टा स्वात्मानं दृश्यतां नयन् ।
दृश्यं पश्यन्स्वमात्मानं को हि पश्यत्यनेत्रवान् ॥ २३
अन्तर्गलितदृश्यं च क आत्मानमखण्डितम् ।
दृश्यासंपत्तये पश्यन्पुरो दृश्यं न पश्यति ॥ २४
आत्मानं दर्शनं दृश्यं को भासयति दृश्यवत् ।
कटकादीनि हेम्नेव विकीर्णं केन च त्रयम् ॥ २५
कस्मान्न किंचिच्च पृथगूर्म्यादीव महाम्भसः ।
कस्येच्छया पृथक्नास्ति वीचितेव महाम्भसः ॥ २६
दिक्कालाद्यनवच्छिन्नादेकस्मादसतः सतः ।
द्वैतमप्यपृथक्कस्माद्द्रवतेव महाम्भसः ॥ २७
आत्मानं दर्शनं दृश्यं सदसच्च[1] जगत्त्रयम् ।
कोऽन्तर्बीजमिवान्तस्थं स्थितः कृत्वा त्रिकालगः ॥ २८
भूतं भवद्भविष्यच्च जगद्वृन्दं वृहद्भ्रमम् ।
नित्यं समस्य कस्यान्तर्बीजस्यान्तरिव द्रुमः ॥ २९
बीजं द्रुमतयेवाशु द्रुमो बीजतयेव च ।
स्वमेकमजहद्रूपमुदेत्यनुदितोऽपि कः ॥ ३०
बिसतन्तुर्महामेरुर्भो राजन्यदपेक्षया ।
तस्य कस्योदरे सन्ति मेरुमन्दरकोटयः ॥ ३१
केनेदमाततमनेकचिदेव विश्वं
किंसार एवमतिवल्गसि हंसि पासि ।
किंदर्शनेन न भवस्यथवा सदैव
नूनं भवस्यमलदृग्वदनः स्वशान्त्यै ॥ ३२
एषोऽसौ प्रगलतु संशयो ममोच्चै-
श्चित्तश्रीमुखमिहिकामलानुलेपः ।
यस्याग्रे न गलति संशयः समूलो
नैवासौ क्वचिदपि पण्डितोक्तिमेति ॥ ३३
एवं मे यदि न विनेष्यथः क्रमोक्त
संशान्तं लघुतरसंशयं सुबुद्धी ।
तद्रक्षोजरठहुताशनेन्धनत्वं
निर्विघ्नं झटिति गमिष्यथः क्षणेन ॥ ३४
पश्चात्तां जनपदमण्डलीं समन्ता-
द्भावत्कीमुरुजठरा क्षणाद्ग्रसेऽहम् ।
एवं ते भवतु सुराजतेति मन्ये
मूर्खाणामतिरस एव संक्षयाय ॥ ३५

॥१६॥ अनुभवाणवो वृत्त्यवच्छिन्नज्ञानलवाः ॥१७॥ निःस्वादुर्मधुरादिरसशून्यः । आश्रितं स्वीकृतमिति यावत् ॥ १८ ॥ लयेन तिरोहितमपि जगत्कस्याणोः सत्तया सद्भूतं पुनः सर्गे जीवत्यपि ॥ १९ ॥ २० ॥ जगन्ति अनुत्पन्नान्यपि प्रलये कस्मिंस्तिष्ठन्ति । सर्गकाले च निष्कलं निरवयवमव्यक्तमन्तो बीजपरम्परावधिर्येषां तानि सर्वाणि बीजानि सर्गकाले जगदात्मना स्फुटानि विकासितान्यपि कस्मिन्सदैवानुदितानि ॥ २१ ॥ एवंकल्पः प्रलयोऽपि कस्यान्तः स्थितः । प्रयोजनं तत्तत्कारकप्रवर्तनं तत्र कर्तृत्वं अक्रियत्वात्कारकव्यापारयितृत्वमनाश्रित्यापि कः कारकः कर्तेत्यर्थः । अथवा प्रयोजनकर्तृत्वं क्रियाफलनिष्पादकत्वम् ॥ २२ ॥ दृश्यसंपत्तये भोग्यसिद्धये । बहिर्दृशा दृश्यं पश्यन् ॥ २३ ॥ ज्ञानेनान्तर्गलितदृश्यं यथा स्यात्तथा पश्यन् ॥ २४ ॥ आत्मानं द्रष्टारम् । दर्शनं वृत्तिम् । दृश्यवच्चक्षुर्दृश्यमिवापरोक्षं को भासयति । विकीर्णं विक्षिप्तं । विक्षेपशक्त्या प्रकटितमिति यावत् । तत्त्रयं द्रष्टा दर्शनं दृश्यम् ॥२५॥२६॥ असतः अस्थूलत्वादसत्कल्पात्सतः ॥२७॥ सदुद्भूतावस्थं असत्तिरोहितावस्थं च अन्तस्थं कृत्वा स्थितः त्रिकालगः सदैवेत्यर्थः ॥ २८ ॥ कस्यान्तर्नित्यमस्तीति शेषः ॥ २९ ॥ दृष्टान्तद्वयाद्दार्ष्टान्तिके विशेषमाह—**स्वमेक**मिति । अविकृत एवेति यावत् । उदेति जगद्विकारात्मनेति शेषः ॥ ३० ॥ यदपेक्षया यद्दार्ढ्यमपेक्ष्य महामेरुर्बिसतन्तुरत्यन्तादृढतम इत्यर्थः । अथवा यस्यापेक्षया संकल्पेन बिसतन्तुरपि महामेरुरिव दृढ इत्यर्थः । तस्य तथाविधस्य वस्तुन उदरे अन्तः ॥ ३१ ॥ अनेकाश्चितश्चेतना यस्मिंस्तथाविधमिदं विश्वं केन आततं सृष्ट्या विस्तारितम् । त्वं च कः सारो वास्तवं रूपं यस्य तथाविधः सन्सर्वव्यवहारेष्वतिशयेन वल्गसि व्यवहरसि पासि प्रजा हंसि च वध्यान् । तथाच सृष्ट्यादिनिर्वाहाः सर्वेषां किंनिमित्तका इत्यर्थः । कस्य दर्शनं किंदर्शनं तेन त्वममलदृग्रूपः संस्तदन्यो न भवसि । अथवा तद्रूप एव सदैव नूनं भवसि तद्वस्तुनः अस्मभ्यं स्वशान्त्यै स्वमृत्युमोक्षार्थं वदेत्युपसंहारः ॥ ३२ ॥ एष उक्तलक्षणोऽसौ चित्तश्रियो मुखं स्वात्माकारवृत्तिस्तस्याश्चन्द्रस्येव मिहिकालक्षणस्य मलस्यानुलेप आवरणभूतो मम संशयो गलतु । समूलो मूलाज्ञानसहितः । पण्डितोक्तिं पण्डितशब्दयोग्यतां नैवैति ॥ ३३ ॥ एवंरूपं मे लघुतरसंशयं यदि न विनेष्यथो नापाकरिष्यथस्तर्हि रक्षोजातेः स्वदेहस्य जठरहुताशनेन्धनत्वं । भक्ष्यतामिति यावत् । झटिति क्षणेन निर्विघ्नं गमिष्यथः । अनात्मज्ञानां देहमात्रात्मभावानां[3] रक्षोन्नभावस्य दुर्वारत्वादिति भावः ॥ ३४ ॥ न केवलं युवयोरेवानर्थः किंतु सर्वस्य जनपदस्याप्युपस्थित

१ सदसच्च गतक्रमम् इति पाठः.　२ [illegible] इति क्वचित्.　३ भावनां इति पाठः.

इत्युक्त्वा विपुलगभीरमेघनाद-
प्रोल्लासप्रकटगिरा निशाचरी सा ।
तूष्णीमप्यतिविकटाकृतिस्तदासी-
च्छुद्धान्तः शरदमलाभ्रमण्डलीव ॥ ३६

इत्यार्षे श्रीवासिष्ठमहारामायणे उत्पत्तिप्रकरणे क० राक्षसीप्रश्नो नामैकोनाशीतितमः सर्गः ॥ ७९ ॥

## अशीतितमः सर्गः ८०

श्रीवसिष्ठ उवाच ।

महानिशि महारण्ये महाराक्षसकन्यया ।
इति प्रोक्ते महाप्रश्ने महामन्त्री गिरं ददौ ॥ १

मन्त्र्युवाच ।

शृणु तोयदसंकाशे प्रश्नमेतं भिनद्मि ते ।
अनुक्रमात्मकं मत्तं गजेन्द्रमिव केसरी ॥ २
भवत्या परमात्मैष कथितः कमलेक्षणे ।
अनयैव वचोभङ्ग्या प्रश्नविद्बोधयोग्यया ॥ ३
अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः ।
चिन्मात्रमेवमात्माणुराकाशादपि सूक्ष्मकः ॥ ४
चिदणोः परमस्यान्तः सदिवासदिवापि वा ।
बीजेऽन्तर्द्रुमसत्तेव स्फुरतीदं जगत्स्थितम् ॥ ५
सत्किंचिदनुभूतित्वात्सर्वात्मकतया स्वतः ।
तदात्मकतया पूर्वं भावाः सत्तां किलागताः ॥ ६
आकाशं बाह्यशून्यत्वादनाकाशं तु चित्त्वतः ।
अतीन्द्रियत्वात्रो किंचित्स एवाणुरनन्तकः ॥ ७
सर्वात्मकत्वाद्भुक्ते च तेन किंचिन्न किंचन ।
चिदणोः प्रतिभा सा स्यादेकस्यानेकतोदिता ।
असत्येव यथा हेम्नः कटकादि तथा परे ॥ ८
एषोऽणुः परमाकाशः सूक्ष्मत्वादप्यलक्षितः ।
मनःषष्ठेन्द्रियातीतः स्थितः सर्वात्मकोऽपि सन् ॥ ९
सर्वात्मकत्वान्नैवासौ शून्यो भवति कर्हिचित् ।
यदस्ति न तदस्तीति वक्ता मन्ता इति स्मृतः ॥ १०
कयाचिदपि युक्त्येह सतोऽसत्त्वं न युज्यते ।
सर्वात्मा स्वात्मगुप्तेन कर्पूरेणेव दृश्यते ॥ ११
चिन्मात्राणुः स एवेह सर्वं किंचिन्मनःस्थितम् ।

इत्याह—**पश्चादिति** । उरुजठरा बृहत्कुक्षिः । एवमुक्तप्रश्नोत्तरदानेन ते स्वात्मना सह सर्वप्रजापालनात्सुराजता स्यादिति मन्ये । मूर्खाणामनात्मज्ञानामतिरसो भोगलाम्पट्यातिशयो राजत्वनिमित्तः संक्षयायैव भवति । मद्भक्षणाभावेऽपि राज्यान्ते नरकावश्यंभावादिति भावः ॥ ३५ ॥ विपुलगभीरमेघनादप्रोल्लास इव प्रकटया तारया गिरा सा निशाचरीत्युक्त्वा बहिरतिविकटाकृतिरपि अन्तः शुद्धा शरदमलाभ्रमण्डलीव तूष्णीमासीदित्यर्थः ॥ ३६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीप्रश्नो नामैकोनाशीतितमः सर्गः ॥ ७९ ॥

समादधेऽत्र प्रथमं मन्त्री प्रश्नगणान्क्रमात् ।
व्युत्क्रमाच्च यथान्यायं सूक्ष्माभिरुपपत्तिभिः ॥ १ ॥

गिरं वक्ष्यमाणप्रतिज्ञानलक्षणाम् ॥ १ ॥ प्रश्नं प्रश्नगणं भिनद्मि उपपत्तिभिर्विदारयामि ॥ २ ॥ सर्वान्प्रश्नान् शिथिलीकर्तुं सर्वप्रश्नहृदयं तावत्प्रथमं दर्शयति—**भवत्येति** । स्वर्णकमलमिव पिङ्गलेक्षणे ॥ ३ ॥ कस्याणोरम्बुधेरिवेति प्रथमप्रश्नविशेष्येऽणुशब्दप्रयोगस्याभिप्रायमुद्घाटयति—**अनाख्यत्वादिति** । तथाच 'अणुः पन्था विततः पुराणः' इत्यादिश्रुतिषु प्रसिद्ध इति भावः ॥ ४ ॥ अन्तर्ब्रह्माण्डलक्षाणीति पृष्टांशं दर्शयति—**चिदणोरिति** । एतेन 'अणौ जगन्ति तिष्ठन्ति कस्मिन्बीज इव द्रुमः' इति प्रश्नोऽप्युत्तरितः ॥ ५ ॥ 'सदिवासदिवापि वा' इत्युक्त्या सूचितं सत्तायाः कः स्वभावद इति प्रश्नस्योत्तरमाह—**सत्किंचिदिति** । सर्ववस्तुसत्ताया अनुभवसत्ताधीनत्वात्तत्सत्ताया अन्याधीनत्वेऽनवस्थापातात्स्वतःसिद्धसत्ताकानुभवादेव सर्वे भावाः सत्तां प्राप्ता इत्यर्थः ॥ ६ ॥ 'किमाकाशमनाकाशम्' इति प्रश्नतात्पर्यमुद्घाटयति—**आकाशमिति** । 'न किंचित्किंचिदेव किम्' इति प्रश्नोत्तरमाह—**अतीन्द्रियत्वादिति** । नेन्द्रियगम्यं किंचिदेव यत्तदित्यर्थः ॥ ७ ॥ यदि तु किंचिदपि न किंचियदात्मभावे तदिति प्रश्नार्थस्तदाप्याह—**सर्वात्मकत्वादिति** । स्वस्यैव सर्वात्मकत्वात्स्वात्मनैव साक्षात्कृतेन सर्वस्मिन्भुक्ते निगीर्णे सति तदेव किंचित् । न किंचनात्मना परिशिष्यत इत्याशय इत्यर्थः । एकस्यानेकसंख्यस्येति प्रश्नोपक्रमाभिप्रायमाह—**चिदणोरिति** । एकस्यैव चिदणोस्त्वदुदितानेकताप्रतिभामात्र प्रातीतिकी न वास्तवीत्यर्थः । एतेन कटकादीनि हेम्नेवेति प्रश्नोऽप्युक्तप्राय एवेत्याशयेनाह—**यथा हेम्न** इति ॥ ८ ॥ 'कोऽणुस्तमःप्रकाशः स्यात्' इत्यादिप्रश्नेषु पुनःपुनरणुशब्दप्रयोगस्यापि प्रागुक्त एवाभिप्राय इत्याह—**एषोऽणुरिति** ॥ ९ ॥ 'कोऽणुरस्ति च नास्ति च' इति प्रश्ने नास्ति चेत्यंशो बाधित एवेति दूषयति—**सर्वात्मकत्वादि**त्यादिना । कथं बाधितस्तत्राह—**यदस्तीति** । यद्यस्माद्धेतोस्तदस्ति नास्तीति च वक्ता मन्ता च पुरुषः स आत्मैवेति वक्तृमन्त्रादिरूपेण स्मृतः प्रसिद्धः । तथाच स्वात्मापलापायोगान्नास्तितास्य न घटत एवेत्यर्थः ॥ १० ॥ सतोऽसत्त्वविरोधादपि न युक्तमिदमित्याह—**कयाचिदपीति** । यद्यस्त्येव तर्हि कुतो न दृश्यत इत्याशङ्क्य निष्कृष्टरूपेणादर्शनेऽपि सर्वानुगतसद्रूपेणापिधानगुप्तेनापि कर्पूरेण स्वगन्धात्मनेव दृश्यत एवेत्याह—**सर्वात्मेति** । स्वात्मना प्रत्यग्रूपेण गुप्तेन छन्नेन सर्वात्मा सर्वानुगतसदात्मा दृश्यत इत्यर्थः ॥ ११ ॥ 'कः सर्वं न च

१ असत्येवापि सत्येव हेम्नः कटकता यथा इति क्वाचित्कः पाठः ।

न किंचिदिन्द्रियातीतरूपत्वादमलः स्थितः ॥ १२
स एव चैकोऽनेकश्च सर्वसत्त्वात्मवेदनात् ।
स एवेदं जगद्धत्ते जगत्कोशस्तथैव हि ॥ १३
इमाश्चित्तमहाम्भोधौ त्रिजगल्लववीचयः ।
प्रज्ञास्तस्मिन्कचन्त्यप्सु द्रवत्वाच्चक्रता इव ॥ १४
चित्तेन्द्रियाद्यलक्ष्यत्वात्सोऽणुः शून्यस्वरूपवत् ।
स्वसंवेदनलक्ष्यत्वादशून्यं व्योमरूप्यपि ॥ १५
सोऽहं भवानेव भवान्संपन्नोऽद्वैतवेदनात् ।
स भवान्न भवेन्नाहं जातो बोधबृहद्वपुः ॥ १६
त्वंताहंतात्मकं सर्वं विनिगीर्यावबोधतः ।
न त्वं नाहं न सर्वं च सर्वं वा भवति स्वयम् ॥ १७
गच्छन्न गच्छत्येषोऽणुर्योजनौघगतोऽपि सन् ।
संवित्त्या योजनौघत्वं तस्याणोरन्तरे स्थितम् ॥ १८
न गच्छत्येष यातोऽपि संप्राप्तोऽपि च नागतः ।
स्वसत्ताकाशकोशान्तर्वासित्वाद्देशकालयोः ॥ १९
गम्यं यस्य शरीरस्थं क किलासौ प्रयाति हि ।
कुचकोटरगः पुत्रः किं मात्रान्यत्र वीक्ष्यते ॥ २०
गम्यो यस्य महादेशो यावत्संभवमक्षयः ।
अन्तस्थः सर्वकर्तुर्हि स कथं केव गच्छति ॥ २१

यथा देशान्तरप्राप्ते कुम्भे वक्त्रसमुद्रिते ।
तदाकाशस्य गमनागमने न तथात्मनः ॥ २२
चित्तता स्थाणुता स्वान्तर्यदा स्तोऽनुभवात्मिके ।
चेतनस्य जडस्यैव तदासौ द्वयमेव च ॥ २३
यदा चेतनपाषाणसत्तैकात्मैकचिद्वपुः ।
तदा चेतन एवासौ पाषाण इव राक्षसि ॥ २४
परमव्योम्न्यनाद्यन्ते चिन्मात्रपरमात्मना ।
विचित्रं त्रिजगच्चित्रं तेनेदमकृतं कृतम् ॥ २५
तत्संवित्त्या वह्निसत्ता तेनात्यक्तानलाकृतिः ।
सर्वगोऽप्यदहत्येव स जगद्द्रव्यपावकः ॥ २६
प्रज्वलद्भास्वराकारान्निर्मलाद्गगनादपि ।
प्रज्वलच्चेतनैकात्मा तस्मादग्निः स जायते ॥ २७
संवेदनाद्यदर्कादिप्रकाशस्य प्रकाशकः ।
न नश्यत्यात्मभारूपो महाकल्पाम्बुदैरपि ॥ २८
अनेत्रलभ्योऽनुभवरूपो हृद्गृहदीपकः ।
सर्वसत्ताप्रदोऽनन्तः प्रकाशः परमः स्मृतः ॥ २९
प्रवर्ततेऽस्मदालोको मनःषष्ठेन्द्रियातिगात् ।
येनान्तरापि वस्तूनां दृष्टा दृश्यचमत्कृतिः ॥ ३०

---

किंचिच्च' इत्यस्योत्तरमाह—**चिन्मात्राणुरिति**। नन्वपरिच्छिन्नं कथं परिच्छिन्नसर्वरूपं तत्राह—**किंचिदिति**। मनइन्द्रियवृत्तिभिर्नानात्मताप्रत्ययात्किंचिन्मनःपरिच्छिन्नरूपेणैव सर्वमित्यर्थः। अतएव मनइन्द्रियाद्यपरिच्छिन्नस्वाभाविकरूपेण न किंचिदपीत्याशयेन त्वया तथोक्तमित्याह—**न किंचिदिति** ॥१२॥ एतदभिप्रायेण वा तव एकस्यानेकसंख्यस्येत्युपक्रम इत्याह—**स एवैक** इति। 'नित्यं समस्य कस्यान्तः' इति प्रश्नस्य 'को जगद्रत्नकोशः स्यात्' इत्यस्य चोत्तरमाह—**स एवेति** ॥ १३ ॥ 'कस्मान्न किंचिच पृथगूर्म्यादीव महाम्भसः' इत्यस्योत्तरमाह—**इमा** इति। चित्तात्मना महाम्भोधिवद्विकारिणि। प्रज्ञाश्चित्तविकल्पमात्ररूपाः। एतेन 'कस्येच्छया पृथक्चास्ती'त्येतदपि समाहितमेव ॥ १४॥ 'दिक्कालाद्यनवच्छिन्नादेकस्मादसतः सतः' इति शून्याशून्योभयात्मतोक्तेस्तात्पर्यमाह—**चित्तेन्द्रियादीति** ॥१५॥ 'को भवानेव संपन्नः' इत्यस्योत्तरमाह—**सोऽहमिति**। अहमद्वैतवेदनात्स आत्मैव संपन्नः सन् भवान् त्वदात्मैव भवान्स संपन्नः अहमेव। इदमपि अहंताभवत्ताप्रतिसंधानव्यवहारे, अव्यवहारदशा तु स आत्मा न भवान्नाहं च किंतु बोधबृहद्वपुरेव जातः, प्रादुर्भूत इत्यर्थः ॥ १६ ॥ उक्तार्थमेव स्फुटमाह—**त्वंतेति** ॥ १७ ॥ 'गच्छन्न गच्छति च कः' इत्यस्योत्तरमाह—**गच्छन्निति**। योजनौघगत आकाशवद्योजनौघव्याप्यपि सन्। संवित्त्या स्वप्न इव कल्पनया ॥ १८ ॥ 'को तिष्ठन्नपि तिष्ठति' इत्यस्योत्तरमपि तथैव दिशा आह—**न गच्छतीति** ॥१९॥ उक्तमुभयं दृष्टान्तेनोपपादयति—**गम्य**मित्यादिना। गम्यं गमनेन प्राप्तव्यं देशान्तरम् ॥ २० ॥ २१ ॥ स्फुटं दृष्टान्तान्तरमाह—**यथेति**।

वक्त्रसमुद्रिते बद्धमुखे गमनागमने न स्वस्तथेत्यर्थः ॥ २२ ॥ 'कश्चेतनोऽपि पाषाणः' इत्यस्य प्रश्नस्य यदि चिद्रूपो जडरूपश्चेति विरुद्धोभयात्मक इत्यर्थस्तदाह—**चित्तते**ति। यदा जडस्यैव देहादेरात्मतादात्म्याध्यासाच्चेतनस्य चित्तता प्रकाशस्वभावता स्थाणुता जडता चानुभवात्मिके स्वानुभवसाक्षिके स्वस्तदासावविमर्शाद्द्वयं जडबोधोभयरूपो भवत्येवेत्यर्थः ॥ २३ ॥ यदा तु चेतनोऽपि पाषाण इव घनरूपः क इति प्रश्नार्थस्तदा पारमार्थिकमात्मरूपमेव चिद्घनं स इत्याह—**यदा चेति** ॥ २४ ॥ 'कश्चिद्व्योम्नि विचित्रकृत्' इत्यस्योत्तरमाह—**परमव्योम्नीति**। मिथ्यात्वादकृतमेव कृतम् ॥२५॥ 'वह्नितामजहच्चैव कश्च वह्निरदाहकः' इत्यस्योत्तरमाह—**तत्संवित्त्येति**। आत्मसत्ताया एव वह्निसत्तात्वे तस्याः सर्वगतत्वात्सर्वगोऽपि सः अदहति न दहत्येव। 'अमानोनाः प्रतिषेधे' इति नञर्थको निपातोऽकारः। नैतावता स सर्वगतो नेति मन्तव्यम्। यतः स सर्वद्रव्याणां पावक इव प्रकाशक इत्यर्थः ॥ २६ ॥ 'अवह्नेर्जायते वह्निः कस्मा'दिति प्रश्नस्योत्तरमाह—**प्रज्वलदिति** ॥२७॥ 'अचन्द्रार्काग्नितारोऽपि कोऽविनाशः प्रकाशकः' इत्यस्योत्तरमाह—**संवेदनादिति** ॥२८॥ 'अनेत्रलभ्यात्कस्माच्च प्रकाशः संप्रवर्तते' इत्यस्योत्तरमाह—**अनेत्रलभ्य** इति ॥२९॥ तस्य स्वयंज्योतिष्ट्वमनुभावयति—**प्रवर्तत** इति। अस्मदालोकोऽहंकारादिप्रथा मनःषष्ठेन्द्रियातिगादात्मनः सकाशात्प्रवर्तते। यथा गाढान्धकारस्थितोऽपि त्वं क्वासीति पृष्टोऽहमिहासीति वक्ति। येन हेतुना

१. स्फुटदृष्टान्तात्मकः इति पाठः साधुः।

लतागुल्माङ्कुरादीनामनक्षाणां च पोषकः ।
उत्सेधवेदनाकारः प्रकाशोऽनुभवात्मकः ॥ ३१
कालाकाशक्रियासत्ता जगत्तत्रास्ति वेदने ।
स्वामी कर्ता पिता भोक्ता आत्मत्वाच्च न किंचन ॥ ३२
अणुत्वमजहत्सोऽणुर्जगद्रत्नसमुद्गकः ।
मातृमानप्रमेयात्म जगन्नास्तीति केवले ॥ ३३
स एव सर्वजगति सर्वत्र कचति स्फुटम् ।
यदा जगत्समुद्रेऽस्मिंस्तदासौ परमो मणिः ॥ ३४
दुर्बोधत्वात्तमः सोऽणुश्चिन्मात्रत्वात्प्रकाशदृक् ।
सोऽस्ति संवित्तिरूपत्वादक्षातीतस्तथा न सन् ३५
दूरे सोऽनक्षलभ्यत्वाच्चिद्रूपत्वान्न दूरगः ।
सर्वसंवेदनाच्छैलो ह्यसावेवाणुरेव सन् ॥ ३६
तत्संवेदनमात्रं यत्तदिदं भासते जगत् ।
न सत्यमस्ति शैलादि तेनाणावेव मेरुता ॥ ३७
निमेषप्रतिभासो हि निमेष इति कथ्यते ।
कल्पेति प्रतिभासो हि कल्पशब्देन कथ्यते ॥ ३८
कल्पक्रियाविलासो हि निमेषः प्रतिभासते ।
बहुयोजनकोटिस्थं मनस्येव महापुरम् ॥ ३९
निमेषजठरे कल्पसंभवः समुदेति हि ।
महानगरनिर्माणं मुकुरेऽन्तरिवामले ॥ ४०

निमेषकल्पशैलादिपूरयोजनकोटयः ।
यत्राऽणावेव विद्यन्ते तत्र द्वैतैक्यते कुतः ॥ ४१
कृतवान्प्रागिदमहमिति बुद्धावुदेति हि ।
क्षणात्सत्यमसत्यं च दृष्टान्तः स्वप्नविभ्रमः ॥ ४२
दुःखे कालः सुदीर्घो हि सुखे लघुतरः सदा ।
रात्रिर्द्वादशवर्षाणि हरिश्चन्द्रस्य चोदिता ॥ ४३
निश्चयो य उदेत्यन्तः सत्यात्मा सत्य एव च ।
हेम्नीव कटकादित्वं स एव चिति राजते ॥ ४४
न निमेषोऽस्ति नो कल्पो नादूरं न च दूरता ।
चिदणुप्रतिभैवैवं स्थितान्यान्यान्यवस्तुवत् ॥ ४५
प्रकाशतमसोर्दूरादूरयोः क्षणकल्पयोः ।
एकचिद्देहयोरेव न भेदोऽस्ति मनागपि ॥ ४६
प्रत्यक्षमक्षसारत्वादप्रत्यक्षं ततोऽतिगम् ।
दृश्यत्वेनैष वोदेति चेता द्रष्टैव सद्वपुः ॥ ४७
यावत्कटकसंवित्तिस्तावन्नास्तीव हेमता ।
यावच्च दृश्यतापत्तिस्तावन्नास्तीव सा कला ॥ ४८
कटकत्वेऽकृतेऽदृष्टे सुवर्णत्वमिवाततम् ।
केवलं निर्मलं शुद्धं ब्रह्मैव परिदृश्यते ॥ ४९
सर्वत्वादेव सद्रूपो दुर्लक्ष्यत्वादसद्वपुः ।
चेतनश्चेतनात्मत्वाच्चेत्यासंभवतस्त्वचित् ॥ ५०

अन्तरा आलोकदीपादिकमिति शेषः । वस्तूनां स्वदेहेन्द्रियादीनां विषये दृश्यचमत्कृतिरपरोक्षप्रथा दृष्टा । सर्वानुभवप्रसिद्धेति यावत् ॥ ३० ॥ 'लतागुल्म' इत्यादिप्रश्नस्योत्तरमाह—**लते**ति । पोषकः स्वसंनिधानेन वृद्धिनिमित्तम् । उत्सेधस्य च तत्फलस्य वेदनमेव आकारो यस्य तत्साक्षिणः ॥ ३१ ॥ 'जनकः कोऽम्बरादीनाम्' इत्यस्योत्तरमाह—**कालाकाशे**ति । व्यवहारदृशा चेदं, परमार्थदृशा त्वाह—**आत्मत्वादि**ति ॥ ३२ ॥ 'को जगद्रत्नकोशः स्यात्' इत्यस्योत्तरं पुनराह—**अणुत्व**मिति । समुद्गकः संपुटकः । 'कस्य कोशो मणेर्जगत्' इत्यस्योत्तरमाह—**मात्रि**त्यादिसार्धेन ॥ ३३ ॥ ३४ ॥ 'कोऽणुस्तमःप्रकाशः स्यात्' इत्यस्योत्तरमाह—**दुर्बोधत्वादि**ति । 'कोऽणुरस्ति च नास्ति च' इत्यस्योत्तरमाह—**सोऽस्ती**ति ॥ ३५ ॥ 'कोऽणुर्दूरेऽप्यदूरे च' इत्यस्योत्तरमाह—**दूरे स** इति । 'कोऽणुरेव महागिरिः' इत्यस्योत्तरमाह—**सर्वसंवेदनादि**ति । विनैव करणं सर्वैरप्यहमहमिति पुरोवर्तिशैल इवापरोक्षतया संवेदनादिति त्वयोक्त इत्यर्थः ॥ ३६ ॥ 'तत्राणुरेव सन्' इत्यंशस्य तात्पर्यमाह—**तत्संवेदने**ति ॥ ३७ ॥ 'निमेष एव कः कल्प' इत्यस्योत्तरमाह—**निमेषे**त्यादिनवभिः ॥ ३८ ॥ उक्तार्थमुपपादयति—**कल्पे**ति । निमेष एव कल्पे यावन्त्यः क्रियास्तैर्विलसतीति कल्पक्रियाविलासः प्रतिभासत इत्यर्थः । अल्पान्तर्विस्तृतस्य प्रतिभासे दृष्टान्तमाह—**बह्वि**ति ॥ ३९ ॥ तदसंभावनावारणाय दृष्टान्तान्तरमाह—**निमेषे**ति । मुकुरे दर्पणे ॥ ४० ॥ निमेषाः कल्पाः शैलादिपूरा योजनकोटयश्च स्वसत्यत्वे विरोधादाश्रयभेदका यत्राऽणावतिसूक्ष्मेऽपि विद्यन्ते मिथ्यात्वमालम्ब्य समाविशन्ति तत्र द्वैतैक्ययोरपि तथैव मिथ्यात्वेनैव समावेशादित्यर्थः ॥ ४१ ॥ सत्यं व्यावहारिकमसत्यं प्रातिभासिकं च ॥ ४२ ॥ उक्तेऽर्थे लोकानुभवमाख्यायिकां चोदाहरति—**दुःख** इति । उदिता आविर्भूता ॥ ४३ ॥ चित्तवृत्त्यनुसारेणैव चितः प्रतिभासो न वस्तुवृत्तानुसारेणेत्याह—**निश्चय** इति ॥ ४४ ॥ किं तर्हि वस्तुवृत्तं तदाह—**ने**ति ॥ ४५ ॥ एवमन्येष्वपि विरुद्धेष्वधिष्ठानचिदभेदादेव भेदो नेत्याह—**प्रकाशे**ति ॥ ४६ ॥ 'किं प्रत्यक्षमसद्रूपम्' इति प्रश्नस्योत्तरमाह—**प्रत्यक्ष**मिति । अक्षाणां बाह्यान्तरकरणानां सारत्वात्स्वस्वविषयापरोक्षप्रथानिर्वाहकत्वात् । ततोऽतिगं तदविषयः । अथवा प्रत्यक्षादिप्रमाणगम्यदृश्यारोपेणोदयादप्यस्य प्रत्यक्षत्वमित्याह—**दृश्यत्वेने**ति । एषः वा इति च्छेदः । दृश्यत्वेनैष उदेतीति वा सद्वपुः प्रत्यक्ष इत्यर्थः ॥ ४७ ॥ यदि स एव दृश्यात्मा तर्हि कुतो दृश्यस्य हेयता तत्राह—**यावदि**ति । सा कला वास्तवी चिदेकरसता । तथाच न दृश्यरूपेण परमपुरुषार्थतेति हेयत्वमिति भावः ॥ ४८ ॥ अतएव दृश्यात्मना अकल्पने कल्पितस्य वा अदर्शने तस्य ब्रह्मरूपत्वात्पुरुषार्थतेत्याशयेनाह—**कटकत्वे** इति । अकृते अदृष्टे चेति च्छेदः ॥ ४९ ॥ असद्रूपमिति प्रश्नांशाशयमाह—**सर्वत्वादि**ति । सर्वानुविद्धसद्रूपेण प्रथनात्सद्रूपः । निष्कृष्टरूपेण दुर्लक्ष्यत्वाच्चासद्वपुरसद्रूपः ।

१ जगत्समुद्रे इति पाठः. २ निमेषकृतिभासः इति पाठः. ३ नान्यान्यवस्तुवत् इति पाठः.

चिच्चमत्कारमात्रात्मन्यस्मिंश्चित्प्रतिभात्मनि ।
जगत्यनिलवृक्षाभे चिच्चेत्यकलने कुतः ॥ ५१
यथा तापस्य पीनस्य भासनं मृगतृष्णिका ।
एवं पीवरमद्वैतं तथा चिद्भासनं जगत् ॥ ५२
अर्कांशुभिः सूक्ष्मतरनिर्माणं यदनामयम् ।
अस्तितानास्तिते तत्र कल्पादेरिव कैव धीः ॥ ५३
माययांशुकणाङ्के खे यथा कचति काञ्चनम् ।
तथा जगदिदं भाति चिच्चेत्यकलने कुतः ॥ ५४
स्वप्नगन्धर्वसंकल्पनगरे कुड्यवेदनम् ।
न सन्नासद्यथा तद्वद्विद्धि दीर्घभ्रमं जगत् ॥ ५५
तथा चैवंविधन्यायभावनाभ्यासनिर्मलात् ।
चिदाकाशेन निर्याति यथा भूतार्थदर्शिनः ॥ ५६
न कुड्याकाशयोर्भेदो दृश्यसंवेदनादृते ।
आब्रह्मजीवकलनाद्यद्रूढं रूढमेव च ॥ ५७
प्रतिभासाच्चिदाकाशे सत्त्वशून्यं भवन्ति ताः ।
प्रकचन्ति ह्यनिर्भाव्याः प्रभापिण्ड इव प्रभाः ॥ ५८
पृथक्तामतिभासस्य स्वचमत्कारयोगतः ।
सर्वात्मिका हि प्रतिभा परा वृक्षात्मबीजवत् ॥ ५९
बीजमन्तस्थवृक्षत्वं नानाऽनाना यथैकदृक् ।
तथाऽसंख्यजगद्ब्रह्म शान्तमाकाशकोशवत् ॥ ६०
बीजस्यान्तस्थवृक्षस्य व्योमाद्वैता स्थितिर्यथा ।
ब्रह्मणोऽन्तस्थजगतः साक्षित्वाच्चित्स्थितिस्तथा ६१

शान्तं समस्तमजमेकमनादिमध्यं
नेहास्ति काचन कलाकलना कथंचित् ।
निर्द्वन्द्वशान्तमतिरेकमनेकमच्छ-
माभासरूपमजमेकविकासमास्ते ॥ ६२

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषूत्पत्तिप्रकरणे क० प्रश्नभेदनं नामाशीतितमः सर्गः ॥ ८० ॥

---

'असद्वा इदमग्र आसीत्ततो वै सदजायत' इति श्रुतौ तथा व्यवहारदर्शनादित्याशयः । 'किं चेतनमचेतनम्' इति प्रश्नोत्तरमाह—**चेतन** इति । अचित् अचेतन इत्युक्तस्तवयेत्यर्थः ॥ ५० ॥ चेत्याभावमुपपादयति—**चिच्चमत्कारे**त्यादिना । चित्प्रतिभात्मनि चित्प्रतिभारूपे अनिललोलितवृक्षवदस्थिरे, अनिलमयवृक्षवदत्यन्तासति च । चिच्चेत्यकल्ने चैतन्याश्रयविषयताकल्पने ॥ ५१ ॥ चिचमत्कारमात्रे दृष्टान्तमाह—**यथे**ति । तापस्य आतपस्य । पीनस्य प्रचुरस्य ॥ ५२ ॥ यथा अर्करश्मिभिर्वक्ष्यमाणकाञ्चनादिनिर्माणं तत्र निर्माणे अस्तितानास्तिते ब्राह्मकल्पादिरूपस्य जगत इवेत्यसत उपमाभूतस्य असत्त्वं स्फुटमेव । एवंच चिच्चेत्यभेदधीः कैव । निर्विषयेत्यर्थः ॥ ५३ ॥ मायया अविद्यया यथा अंशुकणाङ्के सूर्यांशुलेशाञ्चिते खे आकाशे काञ्चनं कचति प्रथते ॥ ५४ ॥ ५५ ॥ अस्त्वेवं जगद्भ्रान्तिसिद्धं किं ततस्तत्राह—**तथाचे**ति । तथाच एवंविधानां मिथ्यात्वोपपादकन्यायानां पुनःपुनर्भावनालक्षणेनाभ्यासेन निर्मलान्मनसो यथाभूतार्थदर्शिनः पारमार्थिकं ब्रह्म दृष्टवतः पुंसोऽविद्यानाशे सति चिदाकाशे पुनः संसारो न निर्याति पुनरावृत्तिर्नास्तीति सिद्धमित्यर्थः । अथवा न्यायपरिष्कृततत्त्वदृशा सृष्टिरेव नाभूदित्यर्थः ॥ ५६ ॥ अथवा विषयरूपभेदकसंवेदनभेदादेव भिन्नमिव न वस्तुतस्तथैव आब्रह्मस्तम्बपर्यन्तनिरूढजीवानुभवादित्याह—**नेति** ॥ ५७ ॥ यदि न भेदस्तर्हि कथं कुड्यादिभेदकलना जायन्ते तत्राह—**प्रतिभासादि**ति । ताः कलनाः सत्त्वशून्यं यथा स्यात्तथा भवन्तीत्यर्थः । अत्यन्तासत्त्वे खपुष्पवद्भानानुपपत्तेराह—**अनिर्भाव्या** इति । यौक्तिकदृशा अनिर्वचनीया इत्यर्थः ॥ ५८ ॥ एवं सोपपत्ति- प्रासङ्गिकं 'किं चेतनमचेतनम्' इति प्रश्नोत्तरमुक्त्वा शिष्टानां प्रश्नानामुत्तरं राजार्थे परिशेषयंस्तदज्ञानशङ्कानिवृत्तये तेष्ववयुत्य द्वित्राणामुत्तरं विवक्षुर्द्वैतमिथ्यात्वोपवर्णनप्रसङ्गितं 'द्वैतमप्यपृथक्कस्मात्' इत्यस्योत्तरमाह—**पृथक्ते**ति । पृथक्तासंस्कारसंस्कृताया मतेर्बुद्धिवृत्तेर्यो भासोऽन्तर्गत आत्मप्रकाशस्तस्य यः स्वचमत्कारः पृथक्ताप्रकटनशक्तिलक्षणस्तद्योगतो द्वैतं प्रतिभातमपि अपृथगेवेत्यर्थः । तत्र हेतुमाह—**सर्वात्मिके**ति । प्रतिभा आत्मप्रकाशः ॥ ५९ ॥ वृक्षात्मबीजवदिति दृष्टान्तं विवृण्वन् 'कोऽन्तर्बीजमिवान्तस्थं स्थितः कृत्वा त्रिकालगः' इत्यस्योत्तरमाह—**बीज**मिति । एकदृक् एकरूपं बीजं नाना पृथग्भूतं अनाना अपृथग्भूतं च अन्तस्थवृक्षत्वं अन्तर्गतवृक्षाकारं कृत्वा स्थितं तथा ब्रह्माप्यसंख्यजगदित्यर्थः ॥ ६० ॥ आकाशकोशवदित्युक्तेस्तात्पर्यं स्फुटयति—**बीजस्ये**ति । व्यधिकरणे षष्ठ्यौ । बीजान्तर्गतवृक्षस्यातिसूक्ष्मत्वात्स्थितिर्यथा व्योमाद्वैता आकाशतुल्या तथा ब्रह्मान्तर्गतजगतोऽप्यात्मसाक्षित्वात्तत्साक्षिणः पृथगनुपलम्भाच्चिद्रूपेणैव स्थितिरिति चितिभेदकाभावादाकाशकोशसाम्यमित्यर्थः ॥ ६१ ॥ एतावतैव सर्वप्रश्नानामुत्तरमुक्तप्रायमिति सूचयन्सर्वप्रश्नपरमतात्पर्यविषयाद्वितीयचिन्मात्रपरमार्थस्थितिप्रदर्शनेनोपसंहरति—**शान्त**मिति । निर्द्वन्द्वैः शान्तमतिभिरेव रिच्यते मायातत्कार्यमलनिरासेन परिशोध्यत इति निर्द्वन्द्वशान्तमतिरेकम् । अनेकमेकत्वाख्यगुणेनापि शून्यम् । एकमेव परितो निरङ्कुशं विकसति बृहत्तमत्वादित्येकविकासम् । आभासरूपं चिन्मात्रमास्ते परमार्थत इत्यर्थः । अजपदाभ्यां जन्मादिविकाराणां तद्वतां च निरासः ॥ ६२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे प्रश्नभेदनं नामाशीतितमः सर्गः ॥ ८० ॥

# एकाशीतितमः सर्गः ८१

राक्षस्युवाच ।

अहो नु परमार्थोक्तिः पावनी तव मन्त्रिणः ।
राजा राजीवपत्राक्ष इदानीमेष भाषताम् ॥ १

राजोवाच ।

जागतप्रत्ययाभावो यस्याहुः प्रत्ययं परम् ।
सर्वसंकल्पसंन्यासश्चेतसा यत्परिग्रहः ॥ २
यत्संकोचविकासाभ्यां जगत्प्रलयसृष्टयः ।
निष्ठा वेदान्तवाक्यानामथ वाचामगोचरः ॥ ३
कोटिद्वयान्तरालस्थं मध्ये कोटिद्वयीमयम् ।
यस्य चित्तमयी लीला जगदेतच्चराचरम् ॥ ४
यस्य विश्वात्मकत्वेऽपि खण्ड्यते नैकपिण्डता ।
सन्मात्रं तत्त्वया भद्रे कथ्यते ब्रह्म शाश्वतम् ॥ ५
एषोऽणुर्वेदनाद्वायुः स्वभ्रान्तिर्दृगदृश्यत ।
अतो न किंचिद्वाय्वादि केवलं शुद्धचेतनम् ॥ ६
शब्दसंवेदनाच्छब्दः शब्दस्य भ्रान्तिदर्शनम् ।
ततोऽत्र शब्दशब्दार्थदृष्टेर्दूरतरं गतः ॥ ७
सोऽणुः सर्वं न किंचिच्च सोऽहं नाहं स एव च ।
सर्वशक्त्यात्मनोऽस्यैव प्रतिभैकात्र कारणम् ॥ ८
आत्मा यत्नशतप्राप्यो लब्धेऽस्मिन्न च किंचन ।
लब्धं भवति तच्चैतत्परमं वा न किंचन ॥ ९
तावज्जन्म वसन्तेषु संसृतिव्रततिश्चिरम् ।
विकसत्युदितो यावन्न बोधो मूलकाषकृत् ॥ १०
अणुनानेन रूपत्वं दृश्यतामिव गच्छता ।
तापेनाम्बुधियेवेदं स्वस्थेनैवापहारितम् ॥ ११
अनेन संविदणुना मेरुस्त्रिभुवनं तृणम् ।
वमित्वा बहिरन्तस्थं मायात्मकमवेक्ष्यते ॥ १२
चिदणोरन्तरे यद्यदस्ति तद्दृश्यते बहिः ।
संकल्पेष्वाँलिङ्गनादिदृष्टान्तोऽत्र हि रागिणः ॥ १३

इह राजाऽवशिष्टानां प्रश्नानामुत्तरं क्रमात् ।
वदन्वक्ति विशेषज्ञो युक्तिमुक्तेष्वपि क्वचित् ॥ १ ॥

मन्त्रिवचनचमत्कारदर्शनादेव राज्ञोऽपि तत्त्वज्ञत्वे परिज्ञातेऽपि राजोक्तौ चमत्कारातिशयं संभाव्य श्रोतुकामा राक्षस्युवाच—**अहो** इति ॥ १ ॥ राजा च तदभिप्रायमालक्ष्य सर्वप्रश्नमुख्यतात्पर्यविषयं ब्रह्म विरोधाभासोक्तिमुखचमत्कारातिशयेन दर्शयति—**जागत**त्यादिचतुर्भिः । अवस्थात्रयदर्शनलक्षणस्य जागतप्रत्ययस्याभावो बोधलक्षणा निवृत्तिरेव स्वतःस्फुरदधिष्ठानरूपतुरीयलक्षणा यस्य दर्शनमित्यर्थः । स च तदेकनिष्ठतारूपेण तत्परिग्रहेण भवतीति तत्परिग्रहं लक्षणेन दर्शयति—**सर्वे**ति ॥ २ ॥ यस्य मायिकाभ्यां संकोचविकासाभ्याम् । वाचामगोचरो य इति शेषः॥ ३ ॥ सत्त्वासत्त्वभानाभानकोटिद्वयस्यान्तरालस्थमनिर्वचनीयमित्यर्थः । अतएवाद्यन्तयोरसत्कोट्यैव ग्रस्तत्वेऽपि मध्ये दैशिकपरिच्छेदेन क्वचिदस्ति क्वचिन्नास्तीति कोटिद्वयीमयम् । एवमाद्यन्तयोरभानग्रस्तत्वेऽपि मध्ये तत्तदिन्द्रिययोग्यरूपेण भाति रूपान्तरेण तत्त्वतश्च न भातीति मध्ये कोटिद्वयीमयम् । अतएव सदसत्संधिरूपस्य चिज्जडसंधिरूपस्य च हिरण्यगर्भात्मकस्य यदीयचित्तस्य विकारत्वाल्लीलाभूतमेतज्जगदित्यर्थः ॥ ४ ॥ एकपिण्डता अखण्डवस्तुता । कथ्यते पृच्छ्यते ॥ ५ ॥ मन्त्र्युक्तशिष्टेषु प्रथमं 'कश्च वायुरवायुश्च' इति प्रश्नं समाधत्ते—**एष** इति । एष ब्रह्माणुः स्वात्मन्येव वायुत्ववेदनाद्भ्रान्तिरन्यथाग्रहो यस्य तथाविधः सन् वायुरदृश्यत । परमार्थतस्तु वायुरेवेत्याह—**अत** इति ॥ ६ ॥ 'कः शब्दोऽशब्द एव चे'त्यस्याप्येवमेवोत्तरं बोध्यमित्याह—**शब्दे**ति ॥७॥ 'कः सर्वं नच किंचिच्च' इत्यस्योत्तरमाह—**सोऽणु**रिति। 'कोऽहं नाहं च किं भवेत्' इत्येतत्समाधत्ते—**सोऽह**मिति। अहंकारनिष्कर्षे सोऽहं तद्रूपेण तु नाहम् । अथवा अहंकारतत्ताभ्यामुपलक्षणे सोहम् । ताभ्यामनुपलक्षणे तु नाहं स च नैवेत्यर्थः । एवं वास्तवावास्तववैचित्र्ये किं कारणं तदाह—**सर्वे**ति । भ्रान्तिप्रतिभाशक्तिरवास्तवरूपस्फूर्तौ वास्तवप्रतिभाशक्तिर्वास्तवरूपव्यक्तौ च कारणमित्यर्थः ॥८॥ 'किं प्रयत्नशतप्राप्यम्', 'लब्धं न किंचिद्भवति' इत्यनयोरुत्तरमाह—**आत्मे**ति । 'लब्धेऽस्मिन्नच किंचन' इत्येतदुपपादयति—**लब्ध**मिति । तदेतदात्मरूपत्वादेव प्रागेव लब्धं भवतीति यत्नस्तेन न सफलः । ततः परममुत्कृष्टमन्यद्वा यत्नफलं न किंचनेत्याशयेन त्वया तथा पृष्टमित्यर्थः ॥९॥ तर्हि किं ज्ञानप्रयत्नो व्यर्थ एवेति शङ्कां परिहरन् 'किंतु सर्वं न लभ्यते' इत्यस्य तात्पर्यमाह—**तावदि**ति । तथाच यावत्संसारमूलाज्ञाननाशो न वृत्तस्तावल्लब्धमप्यात्मतत्त्वं सर्वं पूर्णरूपं न लब्धम् । बोधेन तु पूर्णं लभ्यत इति न तद्यत्नवैयर्थ्यमित्यर्थः ॥ १० ॥ 'स्वस्थेन जीवितेनोच्चैः केनात्मैवापहारितः' इत्यस्योत्तरमाह—**अणुने**ति । रूपत्वं साकारभावं प्राप्येति शेषः । तापेन मरुभूम्यातपेन । इदं वास्तवात्मरूपम् ॥ ११ ॥ 'केनाणुनान्तः क्रियते मेरुस्त्रिभुवनं तृणम्' इत्यनयोरुत्तरमाह—**अनेने**ति । मेरुरन्तः क्रियते त्रिभुवनं च तृणमिव क्रियत इत्यर्थः । यद्यन्तः क्रियते तर्हि बहिः कथमवेक्ष्यते तत्राह—**वमित्वे**ति । बहिर्वमित्वेव अन्तरेव बाह्यमिव कल्पयित्वेति यावत् ॥ १२ ॥ आन्तरीमपि सांकल्पिकाङ्गनां तदालिङ्गनं च बाह्यसंस्कारबीजत्वाद्बहिरिव पश्यामीति रागिणाम-

१ भ्रान्तिदृगदृश्यत इति पाठः साधुः. २ संकल्पेष्वालिङ्गनादि इति पाठः. ३ स्वात्मन्येवेत्यादिफलितार्थकथनम्.

आदिसर्गे सर्वशक्तिश्चिद्यथैवोदितात्मना ।
तथाशु पश्यत्यखिलं संकल्पे पर्वतः स्वतः ॥ १४
अभिजातस्य यस्यान्तर्यद्यथा प्रतिभासते ।
तत्तथा पश्यतीवासौ दृष्टान्तोऽत्र शिशोर्मनः ॥ १५
परमाणुतयैवापि चिन्मात्रेणाणुनामुना ।
परिसूक्ष्मतमेनैव विष्वग्विश्वं प्रपूरितम् ॥ १६
अणुरेव न मात्येष योजनानां शतेष्वपि ।
सर्वगत्वादनादित्वादरूपत्वादनाकृतिः ॥ १७
यथा धूर्तेन खिङ्गेन पुंसा बालः प्रतार्यते ।
सुभ्रूविकारनयननिरीक्षणविचेष्टितैः ॥ १८
निदालोकेन शुद्धेन सपर्वततृणं जगत् ।
नाट्यतेऽविरतं तद्वद्विवृत्त्याभिनयं सदा ॥ १९
तेनैवानन्तरूपत्वादणुना वाससा यथा ।
संविदो तद्वद्वाह्ये कृत्वा मेर्वादिवेष्टितम् ॥ २०
दिक्कालाद्यनवच्छिन्नरूपत्वान्मेरुतो बृहत् ।
वालाग्रशतभागात्माप्येष सूक्ष्मः परोऽणुकः ॥ २१
शुद्धसंवेदनाकाररूपस्य परमाणुना ।
शोभते नहि साम्योक्तिर्मेरुसर्षपयोरिव ॥ २२

मायाकलापिनाणुत्वं निर्माय परमात्मनि ।
हेम्नीव कटकत्वेन नानात्र समता भवेत् ॥ २३
प्रकटोऽनेन दीपेन प्रकाशोऽनुभवात्मना ।
स्वसत्तानाशपूर्वो हि विनानेन भवेत्ततः ॥ २४
यदि सूर्यादिकं सर्वं जगदेकं जडं भवेत् ।
ततः किमात्मकं रूपं प्रकाशः स्यात्क वाथ किम् ॥ २५
शुद्धसन्मात्रचित्त्वं यत्स्वतः स्वात्मनि संस्थितम् ।
तदेतदणुना तेजो दृष्टं बहिरवस्थितम् ॥ २६
तेजांस्यर्केन्दुवह्नीनां न भिन्नानि तमोघनात् ।
एतावानेव भेदोऽस्ति यद्वर्णे शौक्ल्यकृष्णते ॥ २७
यादृक्कज्जलनीहारे मेघनीहारयोर्भवेत् ।
तादृक्प्रकाशतमसोर्भेदो नेति तयोः स्थितिः ॥ २८
जडयोरुपलम्भाय चिदादित्यः किलैतयोः ।
यदा तपति तेनैते लब्धसत्तैकतां गते ॥ २९
तपत्येकश्चिदादित्यो रात्रिंदिवमतन्द्रितः ।
अन्तर्बहिः शिलाद्यन्तरप्यनस्तमयोदयः ॥ ३०
त्रिलोकी भाति तेनेयं जीवस्य प्रथितात्मनः ।
नानोपलम्भभाण्डाढ्या कुटी कठिनकोटरा ॥ ३१

नुभवादित्यर्थः ॥ १३ ॥ ईदृशनियमे को हेतुस्तत्राह—**आदिसर्ग** इति । आदिसर्गे प्रवृत्ता नियतिरेव हेतुरित्यर्थः । यथा इक्षोर्वेण्वादेर्वा प्रथमपर्वतो यादृशशाखापत्राङ्कुराद्युद्गमस्तथैव द्वितीयादिपर्वभ्योऽपीति स्वतो नियमस्तथा आदिसर्गसंकल्पे पर्वतोऽपि इदानींतनसंकल्पे स्वतो नियम इति शेषः ॥ १४ ॥ अभिजातस्य आविर्भूतचित्तस्य च ॥ १५ ॥ 'केनाप्यणुकमात्रेण पूरिता शतयोजनी' इत्यस्योत्तरमाह—**परमाणुतये**ति । देशतः परमाणुतया, वस्तुतश्चिन्मात्रेणाणुना, कालतः परिसूक्ष्मतमेनेति त्रिविधपरिच्छेदकल्पनस्याप्यवधिभूतेनापीत्यर्थः । विष्वक् सर्वतः ॥ १६ ॥ 'कोऽणुरेव भवन्माति न योजनशतेष्वपि' इत्यस्योत्तरमाह—**अणुरेवे**ति ॥ १७ ॥ खिङ्गेन विटेन वालो मुग्धः स्त्रीजनः शोभनैर्भ्रूविकारैर्नयनाभ्यां निरीक्षणैर्विचेष्टितैश्च प्रतार्यते वशीकृत्याकृष्यते ॥ १८ ॥ यथायं दृष्टान्तस्तद्वच्चिदालोकेनापि अभिनयं व्यञ्जकचेष्टां विवृत्त्य जगन्नाट्यते सदेत्यर्थः ॥ १९ ॥ 'कस्याणोरुदरे सन्ति किलावनिभृतां घटाः' इत्येतत्प्रत्याह—**तेने**ति । यथा वाससा स्वान्तर्भवन्मेर्वादिचित्रं बाह्य इव कृत्वा वेष्टितं तद्वदित्यर्थः ॥ २० ॥ 'अणुत्वमजहत्कोऽणुर्मेरोः स्थूलतराकृतिः' इत्यस्योत्तरमाह—**दिक्काले**ति ॥ २१ ॥ प्रतिप्रश्नमात्मन्यणुशब्दप्रयोगस्य मन्त्रिणा योऽभिप्राय उक्तः 'अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः । चिन्मात्रमेवमात्माणुराकाशादपि सूक्ष्मकः ॥' इति कर्कट्या च स एवाभिप्रेतोऽभ्युपगतश्चेति निश्चित्य राजा स्वस्य विशेषज्ञतां दर्शयितुं तं दूषयति—**शुद्धे**ति । सौक्ष्म्यमात्रेण नापरिच्छिन्नः परिच्छेदोत्कर्षावधिपरमाणुसादृश्यमालम्ब्य गौण्याऽणुरिति व्यपदेष्टुं शक्य इति भावः ॥ २२ ॥ कथं तर्हि 'अणोरणीयान्महतो महीयान्', 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यादिश्रुतिषु तथा व्यपदेश इति चेत्सर्वशक्तिमत्त्वान्महत्त्वमिवाणुत्वमपि आत्मनि मायया निर्माय स्थितत्वान्मुख्यवृत्तिरेवात्राणुशब्दो नात्र समतानिमित्तमित्याह—**माये**ति । मायया कलापिना भूषितेन । शबलेनेति यावत् । हेम्नि स्वनिर्मितकटकादित्वेनेव अत्र समता न भवेत् । नानेत्यनेकविनार्थयोरित्यनुशासनान्नञो नाञः स्वार्थे विधानाच्च नानाशब्दो निषेधार्थः । इत्थमेव हि 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' इत्यादिश्रुतयो 'वालाग्रशतभागात्मा' इति त्वदुक्तिश्च समंजसेति भावः ॥ २३ ॥ 'कोऽणुः प्रकाशतमसां दीपः' इत्यस्योत्तरमाह—**प्रकट** इति । ययनेनात्मदीपेन विनैव प्रकाशोऽन्यो वा भवेत् । ततो हि तर्हि स्वस्य सत्ताया नाशोऽदर्शनं तत्पूर्वः असन्नेव भवेदित्यर्थः ॥ २४ ॥ किंचैवं सति जगदान्ध्यमपि स्यादित्याह—**यदि**ति ॥ २५ ॥ चिदणुना स्वान्तरेव तेजस्तमआदेः कल्पितत्वादपि तस्य तदधीनः प्रकाश इत्याह—**शुद्धे**ति । तदेतदणुना तेनैतेनाणुना ॥ २६ ॥ ननु अर्केन्द्वादिभिरेव प्रकाशसिद्धेः किं चिदणुना तत्राह—**तेजांसी**ति । तमोघनात् स्वकारणाज्ञानात् । **एतावानि**ति । जाड्यांशे तु न भेद इत्याशयः ॥ २७ ॥ कज्जलवर्णे नीहारे सति मेघ इति व्यपदेशान्मेघनीहारयोर्यादृग्भेदो भवेत् प्रकाशतमसोरपि तादृगेवेति तयोर्न स्वतो भेदोऽस्तीति स्थितिरित्यर्थः ॥ २८ ॥ चिदधीनप्रकाशसत्तावत्त्वेनापि तयोर्न भेद इत्याह—**जडयो**रिति ॥ २९ ॥ चैतन्यस्य तु न क्वचिदप्यप्रकाशप्रसक्तिरित्याह—**तपती**ति ॥ ३० ॥ नानाविधैरुपलम्भैर्भोगैर्भाण्डैस्तत्साधनैश्चाढ्या कुटीव कठिनकोटरा ॥ ३१ ॥

१ खिङ्गेन इति पाठः. २ संविदन्तर्भवद्वाह्ये इति पाठः.

तमस्त्वं तमसो देहमविनाशयतामुना ।
तप्यतेऽभासया भासा सर्वमाभास्यते तमः ॥ ३२
पद्मोत्पले यथार्केण तपता प्रकटीकृते ।
प्रकाशतमसोः सत्ते चितैवं प्रकटीकृते ॥ ३३
अर्कः कुर्वन्नहोरात्रे दर्शयत्याकृतिं यथा ।
चितिः सदसती कृत्वा दर्शयत्याकृतिं तथा ॥ ३४
चिदणोरन्तरे सन्ति समग्रानुभवाणवः ।
यथा मधुरसस्यान्तः पुष्पपत्रफलश्रियः ॥ ३५
उद्यन्ति चिदणोरेते समग्रानुभवाणवः ।
मधुमासरसाच्चित्रा इव खण्डपरम्पराः ॥ ३६
परमात्माणुरत्यन्तनिःस्वादुः सूक्ष्मतावशात् ।
समग्रस्वादुसत्तैकजनकः स्वदते स्वयम् ॥ ३७
यो यो नाम रसः कश्चित्समस्तोऽप्यप्स्ववस्थितः ।
प्रतिबिम्बमिवादर्शे तं विना नास्त्यसौ स्वतः ॥ ३८
त्यजता संस्थितं सर्वं चिन्मात्रपरमाणुना ।
त्यक्तं जगदसंवित्त्या संवित्त्या सर्वमाश्रितम् ॥ ३९
अशक्तया स्वात्मगुप्तौ सर्वमाच्छादितं जगत् ।
चिंत्ताणुतामेव परां संप्रसार्य वितानवत् ॥ ४०
आत्मगुप्तौ न शक्नोति परमात्माम्बराकृतिः ।
मनागपि क्षणमपि गजो दूर्वावने यथा ॥ ४१
तथाप्याक्रान्तवान्विश्वं ज्ञातो गोपायति क्षणात् ।
जगद्धानाकणं बाल इवाहो घनमायिता ॥ ४२
चिन्मात्रानुनयेनेदं जगत्सन्नपि जीवति ।
वसन्तरसबोधेन विचित्रेव वनावली ॥ ४३
चित्तसत्तैवमखिलं स्वतो जगदिवोदितम् ।
मधुमासरसोल्लासाच्चित्रो हि वनखण्डकः ॥ ४४
सत्यं चिन्मयमेवेदं जगदित्येव विद्ध्यलम् ।
वसन्तरसमेव त्वं विद्धि पल्लवगुल्मकम् ॥ ४५
सर्वावयविसारत्वात्सहस्रकरलोचनः ।
परमाणुरसावेव नित्यानवयवोदयः ॥ ४६
निमेषांशावबोधो हि चिदणोः प्रतिभासते ।
यतः कल्पसहस्रौघः स्वप्ने वार्धकबाल्यवत् ॥ ४७
ततः सोऽपि निमेषोणुः कल्पकोटिशतान्यलम् ।
सर्वसत्ताविलासेन प्रतिभैका विजृम्भते ॥ ४८
अभुक्तवत्येव यथा भुक्तवानहमित्यलम् ।
जायते प्रत्ययस्तद्वन्निमेषे कल्पनिश्चयः ॥ ४९
अभुक्त्वा भुक्तवानस्मीत्येवं प्रत्ययशालिनः ।
दृश्यन्ते वासनाविघ्नाः स्वप्ने स्वमरणं यथा ॥ ५०
जगन्ति परितिष्ठन्ति परमाणौ चिदात्मनि ।
प्रतिभासाः प्रवर्तन्ते तत एव हि जागताः ॥ ५१
यदस्ति यत्र तत्तस्मात्समुदेति तदेव तत् ।
आकारिणि विकारादि दृष्टं न गगनेऽमले ॥ ५२

---

ननु यदात्मना तमः प्रकाश्यते तर्हि तस्य तमस्त्वमेव नश्येत्, नह्यप्रथास्वभावं तत्तदनाशे प्रथमानं कर्तुं शक्यमित्याशङ्क्याह—**तमस्त्व**मिति । अमुना अभासया स्वतत्त्वप्रतिभासशून्यया भासा चैतन्येन तमसो देहं स्वरूपभूतं तमस्त्वमविनाशयता तमस्तप्यते कार्यभावाय क्षोभ्यते । ततः सर्वजगद्भूतं तम आभास्यत इत्यर्थः ॥ ३२ ॥ तत्सत्ताप्रकटनहेतुत्वादप्यसौ न तन्निवर्तक इत्याशयेनाह—**पद्मोत्पले** इति ॥ ३३ ॥ सदसती आविर्भावतिरोभावलक्षणे प्रकाशतमसी ॥ ३४ ॥ 'कस्याणोरुदरे सन्ति समग्रानुभवाणवः' इत्यस्योत्तरमाह—**चिदणो**रिति । **यथे**ति । मधुकरैः पत्रफलादिरसस्याप्याहरणेन मधूत्पादनसंभवादित्याशयः । अथवा मधुरसस्य वसन्तशोभायास्तात्कालिकवृक्षादिरसस्य वा ॥ ३५ ॥ तदेव स्पष्टमाह—**उद्यन्ती**ति । खण्डपरम्परा वनखण्डसौन्दर्यक्रमाः ॥ ३६ ॥ 'कोऽणुरत्यन्तनिःस्वादुरपि संस्वदतेऽनिशम्' इत्यस्योत्तरमाह—**परमात्मे**ति ॥ ३७ ॥ सर्वजलान्तर्गतरसाविर्भावस्यात्मनिमित्तत्वादपि स स्वदत इति वक्तुं शक्यमित्याह—**यो य** इति । असौ रसः ॥ ३८ ॥ 'केन संत्यजता सर्वमणुना सर्वमाश्रितम्' इत्यस्योत्तरमाह—**त्यजते**ति । असंवित्त्या अस्फुरणेन ॥ ३९ ॥ 'केनात्माच्छादनाशक्तेनाणुनाच्छादितं जगत्' इत्येतस्योत्तरमाह—**अशक्तये**ति । गुप्तौ परिच्छिद्य तिरोधाने ॥ ४० ॥ उक्तस्याशयं स्फुटमाह—**आत्मगुप्ता**विति ॥ ४१ ॥ जगत् जगदन्तःपाति-

जीवजातं ज्ञातः सन् स्वात्मलाभेन गोपायति रक्षति, यथा बालो ज्ञातः प्रबुद्धः सन् धानाकणं गोपायति न सुप्तस्तद्वत् । नन्वीदृशस्वप्रकाशपूर्णात्मनः कथं बालवत् स्वात्मविस्मृतिस्तत्राह—**अहो घनमायिते**ति । मायासामर्थ्यमिदमाश्चर्यभूतमित्यर्थः ॥ ४२ ॥ 'जगल्लये न कस्याणोः सद्भूतमपि जीवति' इत्यस्योत्तरमाह—**चिन्मात्रानुनयेने**ति । सन्नपि सन्नमपि जगत् । छान्दसो मलोपः । प्रलयेन लीनमपीत्यर्थः । चिन्मात्रस्यानुनयेनावलम्बेन जीवति । प्रलयेऽपि चित्सत्तयैव जगत्संस्कारशेषं तिष्ठतीत्यर्थः । वसन्तकाले पल्लवादिहेतुरसोद्बोधेन निमित्तेन ॥ ४३ ॥ यदि प्रलये सर्गे च ब्रह्मसत्तयैव जगज्जीवति तर्हि सर्गे को विशेषो येनाविर्भवतीत्याशङ्क्याह—**चित्तसत्ते**ति । प्रलये च न चित्तसत्ता पृथगस्तीति विशेष इति भावः ॥ ४४ ॥ एवंच न चिज्जगतोस्तत्त्वतो भेद इत्याह—**सत्य**मिति ॥ ४५ ॥ ४६ ॥ 'अजातावयवः कोऽणुः सहस्रकरलोचनः' इत्यस्योत्तरमाह—**सर्वे**ति । सर्वे येऽवयविनश्चतुर्विधा भूतग्रामास्तत्सारत्वात्तदात्मत्वादित्यर्थः । 'को निमेषो महाकल्पः कल्पकोटिशतानि च' इत्यस्योत्तरमाह—**निमिषे**ति । इदं च लीलोपाख्यानेन दर्शितमेव ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ ५० ॥ 'अणौ जगन्ति तिष्ठन्ति कस्मिन्बीज इव द्रुमे' इत्यस्योत्तरमाह—**जगन्ती**ति ॥ ५१ ॥ यद्यत्रास्ति तत्ततः समुदेति यथा स्तम्भात्पुत्रिका तदेव च तद्भवति ॥ ५२ ॥

---

१ चित्ताणुतां इति पाठः. २ वासनानिष्ठा इति पाठः.

चिति भूतानि भूतानि वर्तमानानि संप्रति ।
भविष्यन्ति च भूतानि सन्ति बीजे द्रुमा इव ॥ ५३
निमेषकल्पावेतेन तुषेणान्नकणाविव ।
वलिता वेषचेत्याभ्यामणुः स्वात्माङ्ककं श्रितः ॥ ५४
उदासीनवदासीनो न संस्पृष्टो मनागपि ।
एष भोक्तृत्वकर्तृत्वैः स्वात्मा सर्वजगत्यपि ॥ ५५
जगत्सत्तोदिते यं हि शुद्धचित्परमाणुतः ।
परमाणोश्च भोक्तृत्वकर्तृत्वे केवलं स्थिते ॥ ५६
जगन्न किंचित्क्रियते सर्वदैव न केनचित् ।
विलीयते च नो किंचिन्मानुष्याद्दृश्यखण्डनम् ॥ ५७
सर्वं समसमाभासमिदमाकाशकोशकम् ।
जगत्तयोपशब्दं च विद्धनाद्यं निशाचरि ॥ ५८
चिदणुर्दृश्यसिद्ध्यर्थमान्तरीं चिच्चमत्कृतिम् ।
बहीरूपतया धत्ते स्वात्मनि परिसंस्थिताम् ॥ ५९
एतद्बहिष्ठमन्तस्थमस्ति शब्दे न वस्तुनि ।
उपदेशाय सत्त्वानां चिद्रूपत्वाज्जगत्रये ॥ ६०
द्रष्टाऽदृष्टपदं गच्छन्नात्मानं संप्रपश्यति ।
नेत्रदृश्याभिपातीव सदेवासदिव स्थितम् ॥ ६१

नच गच्छति दृश्यत्वं द्रष्टा ह्यसदवास्तवम् ।
आत्मन्येव न यत्किंचित्तत्तामेति कथं परः ॥ ६२
दृगेव लोचने सा च वासनान्तं निजं वपुः ।
बहीरूपतया दृश्यं कृत्वा द्रष्टृतयोदिता ॥ ६३
न विना द्रष्टृतामस्ति दृश्यसत्ता कथंचन ।
पितृतेव विना पुत्रं द्वितेवैक्यपदं विना ॥ ६४
द्रष्टैव दृश्यतामेति न द्रष्टृत्वं विनास्ति तत् ।
विना पित्रेव तनयो विना भोक्रेव भोग्यता ॥ ६५
द्रष्टुर्दृश्यविनिर्माणे चित्त्वादस्त्येव शक्तता ।
कनकस्यावदातस्य कटकादिकृताविव ॥ ६६
दृश्यस्य द्रष्टृनिर्माणे जडत्वान्नास्ति शक्तता ।
कटकस्य तु हैमस्य यथा कनकनिर्मितौ ॥ ६७
चेतनाद्दृश्यनिर्माणं चित्करोत्यसदेव सत् ।
अकारणं मोहहेतुं हेमेव कटकभ्रमम् ॥ ६८
कटकत्वावभासे हि यथा हेम्नो न हेमता ।
सत्येव प्रकचत्येवं द्रष्टृदृश्यस्थितौ वपुः ॥ ६९
द्रष्टा दृश्यतया तिष्ठन्द्रष्टृतामुपजीवति ।
सत्यां कटकसंवित्तौ हेम काञ्चनतामिव ॥ ७०

---

'बीजानि निष्कलान्तानि' इत्यादेस्तात्पर्यमाह—**चितीति** । भूतान्यतीतानि संप्रति वर्तमानानि अग्रे भविष्यन्ति च भूतानि चिति सदा तिष्ठन्तीत्यर्थः ॥ ५३ ॥ 'कल्पः कस्य निमेषस्य बीजस्येवान्तरस्थितः' इत्यस्य तात्पर्यमाह—**निमेषेति** । अन्नकणौ तण्डुलतदवयवौ तुषेण व्रीहित्वचेव वलितौ परितो वेष्टितौ । एषोऽणुश्चेत्याभ्यां कल्पनिमेषाभ्यां स्वात्माङ्ककं स्वैकदेशं श्रित आश्रितः । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवद्वचनादिति भावः ॥ ५४ ॥ 'कः प्रयोजनकर्तृत्वमप्यनाश्रित्य कारकः' इत्यस्योत्तरमाह—**उदासीनवदि**त्यादिना ॥ ५५ ॥ केवलं विनैव क्रियाभोगसंबन्धं स्थिते ॥ ५६ ॥ कुतो न क्रियाभोगसंबन्धस्तत्राह—**जगदि**ति । क्रियाविषयस्यान्यतासत्त्वादित्यर्थः । किमर्थं तर्ह्यसतो दृश्यस्य खण्डनं वेदान्तेषु क्रियते तत्राह—**मानुष्यादि**ति । मनुष्यभावाद्व्यावहारिकयौक्तिकदृग्वशान्न परमार्थदृष्टिबलादित्यर्थः ॥ ५७ ॥ कीदृशी तर्हि परमार्थदृष्टिस्तां दर्शयति—**सर्व**मिति । जगत्तया उपशब्दं शब्दमात्रेण व्यवहृतम् । 'वाचारम्भणं विकारो नामधेयं' इति श्रुतेरिति भावः ॥ ५८ ॥ 'दृश्यसंपत्तये द्रष्टा स्वात्मानं दृश्यतां नयन् । दृश्यं पश्यन्स्वमात्मानं को हि पश्यत्यनेत्रवान् ॥' इति प्रश्नस्योत्तरमाह—**चिदणु**रिति । चिच्चमत्कृतिं चिद्व्याप्तमायाशक्तिम् । बहीरूपतया बाह्यप्रपञ्चतया ॥ ५९ ॥ ननु 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इति श्रुत्या अन्तर्बहिर्भेदशून्यत्वेनावगते ब्रह्मणि कथमुच्यते 'आन्तरीं चिच्चमत्कृतिं बहीरूपतया धत्ते' इति तत्राह—**एतदि**ति । बहिष्ठमन्तस्थमित्येतज्जगत्रये सत्त्वानामधिकारिप्राणिनामुपदेशाय कल्पितं शब्दे एवास्ति न वस्तुनि । तस्य चिदेकरूपत्वादित्यर्थः ॥ ६० ॥ दृश्यतां नयन्नित्यन्तस्य तात्पर्यमुक्त्वा प्रश्नशेषस्य तदाह—**द्रष्टेति** । नित्यापरोक्षोऽप्यात्मा अविद्यानावृतत्वादन्तःकरणावच्छेदेन सदैव स्फुरंस्तदभिमानेन द्रष्टा बहिर्विषयावच्छेदेनावृतत्वाददृष्टं पदं विषयं नेत्रदृश्याभिपातीव भूत्वा नेत्रद्वारा निर्गतान्तःकरणप्रणाड्या बहिर्गच्छन् सदेवात्मरूपमसद्घटादिरूपमिव स्थितमात्मानं संप्रपश्यति स्वात्मचितैव प्रकाशयति न नेत्रेण तस्य द्वारमात्रत्वादित्यनेत्रवानित्युक्तमित्यर्थः ॥ ६१ ॥ 'सदेवासदिव स्थितम्' इत्येतदुपपादयति—**नचेति** । कुतो न गच्छति तत्राह—**आत्मनीति** । सतोऽसद्रूपेण भवितुमशक्यत्वादिति भावः ॥ ६२ ॥ एवं द्रष्टृतापि मिथ्यादृश्यसापेक्षत्वान्मिथ्यैवेत्याह—**दृगेवेति** । न चक्षुषी लोचने द्वारमात्रत्वात्किंतु दृक् अपरोक्षात्मचैतन्यमेव लोचने । 'चक्षुषश्चक्षुः' इति श्रुतेः । सा च दृक् आविर्भावादारभ्य पुनस्तिरोभावेन वासनाभावान्तं दृश्यं कृत्वा तद्द्रष्टृतया स्वयमुदिता आत्मानं कल्पितवतीत्यर्थः ॥ ६३ ॥ एवंच परस्परसापेक्षकल्पनयोर्द्वयोरपि मिथ्यात्वमित्याह—**न विने**त्यादिना ॥ ६४ ॥ ६५ ॥ ॥ ६६ ॥ ६७ ॥ चिद्यतश्चेतना चेत्यप्रकाशनादिसमर्था अतो दृश्यनिर्माणं करोति । मोहहेतुमज्ञानमात्रहेतुकम् ॥ ६८ ॥ यदि द्रष्टैव दृश्यतां गच्छति तर्हि द्रष्टैवेदमिति दृश्यं कुतो न विभाव्यते तत्राह—**कटकत्वेति** । न हेमता सत्येव स्फुटं कचति कल्पितव्या मूढबुद्धौ सत्यास्फुरणात् । एवं दृश्यात्मना द्रष्टुः स्थितौ द्रष्टृवपुर्न कचतीत्यर्थः ॥ ६९ ॥ तर्हि द्रष्टुरस्फुरणे तन्निरपेक्षसत्ताकमेव किं न स्यादिति चेत्तदुपजीवकताभावप्रसङ्गान्नैवमित्याशयेनाह—**द्रष्टेति** । सत्यां पूर्वसिद्धां काञ्चनतामिव ॥ ७० ॥

एकस्मिन्प्रतिभासे हि न सत्ता द्रष्टृदृश्ययोः ।
पुंप्रत्ययप्रकचने क्व पशुप्रत्ययोदयः ॥ ७१
दृश्यं पश्यन्स्वमात्मानं न द्रष्टा संप्रपश्यति ।
द्रष्टुर्हि दृश्यतापत्तौ सत्ताऽसत्तेव तिष्ठति ॥ ७२
बोधाद्गलितदृश्यस्य द्रष्टुः सत्तेव भासते ।
अबुद्धे कटके स्वस्य हेम्नोऽकटकता यथा ॥ ७३
दृश्ये सत्यस्ति वै द्रष्टा दृश्यं द्रष्टरि भासते ।
द्वयेन च विना नैकं नैकमप्यस्ति चानयोः ॥ ७४
सर्वं यथावद्विज्ञाय शुद्धसंविन्मयात्मना ।
वाचामविषयं स्वच्छं किंचिदेवावशिष्यते ॥ ७५
आत्मानं दर्शनं दृश्यं दीपेनेवावभासितम् ।
कृतं च सर्वमेतेन चिन्मात्रपरमाणुना ॥ ७६
मातृमानप्रमेयाख्यं बुधो निगिरति त्रयम् ।
हेमेव कटकादित्वमसन्मयमुपस्थितम् ॥ ७७
यथा न जलभूम्यादेः पृथक्किंचिन्मनागपि ।
तथैतस्मात्स्वभावाणोर्न किंचित्पृथगस्ति हि ॥ ७८
सर्वगानुभवात्मत्वात्सर्वानुभवरूपतः ।
एकत्वानुभवन्याये रूढे सर्वैकतास्य हि ॥ ७९
अस्येच्छया पृथङ्नास्ति वीचितेव महाम्भसः ।
इच्छानुरूपसंपत्तेर्भावितार्थैकता किल ॥ ८०
दिक्कालाद्यनवच्छिन्नः परमात्मास्ति केवलः ।
सर्वात्मत्वात्स सर्वात्मा सर्वानुभवतः स्वतः ॥ ८१
सन्नेष चेतनात्मत्वाद्दर्शनानवबोधतः ।
द्वैतैक्ये नात्र विद्येते सर्वरूपे महात्मनि ॥ ८२
यदि कश्चिद्द्वितीयः स्यात्तदैकस्यैकता भवेत् ।
द्वैतैक्ययोर्मिथः सिद्धिरातपच्छाययोरिव ॥ ८३
यत्र नास्ति द्वितीयो हि तत्रैकस्यैकता कथम् ।
एकतायामसिद्धायां द्वयमेव न विद्यते ॥ ८४
एवं स्थिते तु यत्तिष्ठंस्तत्ताद्दक्तदिवास्ति हि ।
तस्मान्न व्यतिरिक्तं तद्रूपं द्रव इवाम्भसः ॥ ८५
नानारम्भविभासं च साम्येनाक्षुब्धरूपिणः ।
बीजस्यान्तस्तरुरिव ब्रह्मणोऽन्तः स्थितं जगत् ॥ ८६
द्वैतमप्यपृथक्तस्माद्धेम्नः कटकता यथा ।
सम्यग्बुद्धावबोधो हि द्वैतं तच्च न सन्मयम् ॥ ८७
यथा द्रवत्वं पयसः स्पन्दनं मातरिश्वनः ।
व्योम्नः शून्यत्वमेवं हि न पृथग्द्वैतमीश्वरात् ॥ ८८

कटकत्वावभासे हि यथा हेम्नो न हेमता सत्येव प्रकचतीत्येतदयुक्तं, कटकमिदं हेमेति सामानाधिकरण्यप्रत्यये उभयसत्त्वप्रतिभासादेवमहं द्रष्टेति प्रत्ययेऽपीति चेत्तत्राह—**एकस्मिन्निति** । यथा दूरस्थे विषये पुमान्पशुर्वेति संशये पुंस्प्रत्ययकोटौ न पशुत्वं प्रतिभासते, पशुप्रत्ययांशे च न पुंस्त्वम्, एवं सामानाधिकरण्यप्रत्ययेऽपि नोभयांशस्यैकप्रत्ययप्रमेयतासंभव इत्यर्थः ॥ ७१ ॥ बहिर्मुखतया हि दृश्यं पश्येदन्तर्मुखतया च द्रष्टारम्, नचोभयमुखता चितो युगपत्संभवतीत्याशयेनाह—**दृश्यमिति** । सत्ता द्रष्टृसत्ता । असत्तेव असतीवेति यावत् ॥ ७२ ॥ 'अन्तर्गलितदृश्यं च क आत्मानमखण्डितम् । दृश्यासंपत्तये पश्यन् पुरो दृश्यं न पश्यति ॥' इति प्रश्नस्योत्तरमाह—**बोधादिति** । अबुद्धे हेमैकतत्त्वपरीक्षणे दत्तदृष्टितया उपेक्षणादप्रतिसंहिते ॥ ७३ ॥ दृश्यादर्शनेऽपि द्रष्टुर्दर्शनमपरिहार्यमिति कथमात्यन्तिकं दृश्यादर्शनं सिद्ध्येदित्यत आह—**दृश्यते** इति । द्रष्टरि सतीति शेषः । बोधाद्गलितदृश्यस्य पुंसः अनयोर्द्रष्टृदृश्ययोर्मध्ये एकमपि नास्ति । छत्रापाये छायापायवद्दृश्यापाये द्रष्टुरप्यपायाद्ब्रह्ममात्रपरिशेषादित्यर्थः ॥ ७४ ॥ ॥ ७५ ॥ 'आत्मानं दर्शनं दृश्यं को भासयति दृश्यवत्' इत्यस्योत्तरमाह—**आत्मानमिति** । आत्मानं द्रष्टारम् । एतेन चिन्मात्रपरमाणुना च भासितं प्रथमानं कृतं द्रष्टादि सर्वं मातृमानप्रमेयाख्यं त्रयं बुधो निगिरतीति परेणान्वयः ॥ ७६ ॥ 'कटकादीनि हेम्नेव विकीर्णं केन च त्रयम्' इति प्रश्नं आक्तनोक्तदृष्टान्तोपन्यासेनैवार्थात्परिहरति—**हेमेति** ॥ ७७ ॥ 'कस्मान्न किंचिच्च पृथक्' इति प्रश्नस्योत्तरमाह—**यथेति** । किंचिद्भौतिकम् ॥ ७८ ॥ अपृथक्त्वं युक्त्याप्यनुभावयति—**सर्वगेति** ॥ ७९ ॥

'कस्येच्छया पृथक् चास्ती'त्येतद्दूषयति—**अस्येति** । किलेति हेतौ । इच्छानुरूपस्य फलस्य संपत्तेरिच्छाभावितार्थस्य च एकता अपृथक्ता यत इत्यर्थः ॥ ८० ॥ 'दिक्कालाद्यनवच्छिन्नादेकस्मादसतः सतः । द्वैतमप्यपृथक्कस्मात्' इत्यस्योत्तरमाह—**दिक्कालेति** द्वाभ्याम् । सः सर्वेषामात्मत्वात्सर्वमात्मा अपृथग्भूतं यस्य सर्वात्मा स्वतस्तु सर्वानुभव एव न जडः ॥ ८१ ॥ 'असतः सतः' इत्येतदर्थमाह—**सन्नेष** इति । असंदिग्धात्मसत्त्वानां चेतनानामात्मत्वात् दर्शने चक्षुरादिभिरालोचनेऽनवबोधतोऽत्रात्मनि द्वैतमैक्यं च लौकिकसद्रूपे न विद्येते इत्यसन्नित्युच्यते श्रुतौ न वास्तवासत्त्वाभिप्रायेणेत्यर्थः ॥ ८२ ॥ ननु द्वैतं सापेक्षरूपत्वान्मिथ्यास्तु, ऐक्यं तु द्वितीयनिरपेक्षत्वाद्वास्तवमेवेति तत्कथं न विद्यत इत्युच्यते तत्राह—**यदीति** ॥ ८३ ॥ द्वितीयव्यावर्तनाय कल्पितं संख्यारूपमपि द्वितीयसापेक्षं द्वित्वादितुल्यमेवेत्याशयेनाह—**यत्रेति** ॥ ८४ ॥ 'द्वैतमप्यपृथक्कस्माद्द्रवतेव महाम्भसः' इत्यंशं विवृणोति—**एवं स्थिते त्विति** । एवं द्वैतैक्यशून्यत्वेन तत्त्वे स्थिते सति यस्ताद्दग्द्वैतैक्यवानिव द्वैतैक्यमिव च यत्तिष्ठन् प्रतिभासते तस्मात्द्वैतैक्यरूपममम्भसो द्रवतेव न व्यतिरिक्तमित्यर्थः ॥ ८५ ॥ 'आत्मानं दर्शनं दृश्यं सदसच्च जगत्त्रयम् । कोऽन्तर्बीजमिवान्तस्थं स्थितः कृत्वा त्रिकालगः ॥' इत्यस्योत्तरमाह—**नानेति** । बीजपक्षे भूजलादीनां ब्रह्मपक्षे सत्त्वरजस्तमसां साम्येन अक्षुब्धरूपिणः पूर्वावस्थातोऽप्रच्युतस्य ॥ ८६ ॥ सम्यग्बुद्धस्यावगतवतोऽवबोधो ज्ञानात्मकमेव द्वैतम् । तच्च ज्ञानं सदेव न सन्मयम् ॥ ८७ ॥ ८८ ॥

१ विनाशं च इति पाठः. २ प्राक्तनोक्ति इति पाठः.

द्वैताद्वैतोपलम्भो हि दुःखायैव क्रियात्मने ।
निपुणोऽनुपलम्भो यस्त्वेतयोस्तत्परं विदुः ॥ ८९

मातृमानप्रमेयादिद्रष्टृदर्शनदृश्यता ।
एतावज्जगदेतच्च परमाणौ चिति स्थितम् ॥ ९०

अयं जगदणुर्नित्यमेतेनाणुसुमेरुणा ।
स्पन्दनं पवनेनेव स्वाङ्ग एव कृताकृतः ॥ ९१

अहो नु भीमा मायेयमथवा मायिनां परा ।
परमाण्वन्तरेवास्ति यत्त्रैलोक्यपरम्परा ॥ ९२

अथासंभवमायित्वमेवैतत्सर्वदा स्थितम् ।
चिन्मात्रपरमाणुत्वमात्रमेव जगत्स्थितिः ॥ ९३

अन्तर्गतजगज्जालोऽप्येषोऽणुः साम्यमत्यजन् ।
स्थितोऽन्तस्थबृहद्वृक्षं बीजं भाण्डोदरे यथा ॥ ९४

बीजेऽन्तर्वृक्षविस्तारः स्थितः सफलपल्लवः ।
परया दृश्यते दृष्ट्या जगच्च चिदणूदरे ॥ ९५

स शाखाफलपुष्पं स्वमजहद्बीजकोटरे ।
यथा तरुः स्थितस्तद्वद्विकासि चिदणोर्जगत् ॥ ९६

संस्थितं द्वैतमद्वैतं बीजकोश इव द्रुमः ।
जगच्चित्परमाण्वन्तर्यः पश्यति स पश्यति ॥ ९७

न द्वैतं नैव चाद्वैतं न च बीजं न चाङ्कुरः ।
न स्थूलं न च वा सूक्ष्मं नाजातं जातमेव च ॥ ९८

न चास्ति न च नास्तीदं न सौम्यं क्षुभितं न च ।
त्रिजगच्चिदणोरन्तः खवाय्वपि न किंचन ॥ ९९

न जगन्नाजगच्चास्ति विद्यते चित्परा शुभा ।
सर्वात्मिका यदा यत्र सा यथोदेति तत्तथा ॥ १००

उदेत्यनुदितोऽप्येष स्वयंवेदनजृम्भितः ।
परमात्माणुरेकात्मा समग्रात्मतयैव खे ॥ १०१

द्रुमो भूमौ स्वबीजत्वमिवोदेत्यनुदेत्यपि ।
परं तत्त्वं जगद्भङ्ग्या जगत्तां स्वोदयेन च ॥ १०२

द्रुमो बीजतयैवाशु न संत्यक्तसमस्थितिः ।
तिष्ठत्यपगतस्पन्दस्त्यागात्यागपरोऽणुकः ॥ १०३

बिसतन्तुर्महामेरुः परमाणोरपेक्षया ।
दृश्यं किल विशेत्तन्तुरदृश्याक्ष्णा पराणुता ॥ १०४

बिसतन्तुर्महामेरुः परमाणोः किलात्मनः ।
तस्यैव तद्घनाः स्वान्तः स्थिता मेर्वादिकोटयः ॥ १०५

एकेन तेन महता परमाणुना च
व्याप्तं ततं विरचितं जनितं कृतं च ।
दृश्यं प्रपञ्चरचितं नभसेव विश्वं
शून्यत्वमच्छमभितः परिलब्धमेव ॥ १०६

---

क्रियात्मने प्रवृत्तिसिद्धये एव न निवृत्तये ॥८९॥ 'भूतं भवद्भविष्यच्च' इत्यस्योत्तरमाह—**मात्रिति** । यद्भूतभव्यादि जगत् शास्त्रीयमातृमानप्रमेयं आदिपदात्प्रमितिश्चेत्येतावत् लौकिकसाधारणं तु द्रष्ट्रादित्रिपुटीत्येतावदेव नातोऽधिकमस्ति । तत्सर्वं तत्साक्षिचिति परमाणौ स्थितमित्यर्थः ॥ ९० ॥ एतेनात्मरूपेणाणुसुमेरुणा पवनेन स्पन्दनमिवायं जगल्लक्षणोऽणुः स्वाङ्गे एव बहुशः कृतः अकृत उपसंहृतश्चेत्यर्थः ॥९१॥ बृहद्भ्रममित्यंशमुपपादयति—**अहो** इति । इयमात्मचितिर्मायाशबलत्वान्माया । अथवा मायिनां जनव्यामोहकानां परा श्रेष्ठा । यद्यस्माद्धेतोः परमाण्वन्तरेव त्रैलोक्यपरम्परास्तीति दर्पणोदरप्रतीतो गिरिरिव नास्त्येवेति बृहद्भ्रम एवेत्यर्थः ॥९२॥ यदि तु 'एकमेवाद्वितीयम्' इत्यादिश्रुत्या मायाया अप्यसत्त्वं तदापि जगच्चिदणुरेव न वस्त्वन्तरमस्तीति जगत्प्रत्ययो बृहद्भ्रम एवेत्याशयेनाह—**अथे**ति । अथेति पक्षान्तरे । न संभवतीत्यसंभवं मायित्वं यस्मिंस्तथाविधमेवैतदात्मरूपं सर्वदा स्थितमिति पक्षेऽपीत्यर्थः ॥९३॥ 'नित्यं समस्य कस्यान्तर्बीजस्यान्तरिव द्रुमः' इत्यस्योत्तरमाह—**अन्तर्गते**ति । 'बीजं भाण्डोदरे यथा' इति दृष्टान्तपरमाण्वाद्यन्तर्गतब्रह्मचित्यपि सर्वजगदुत्पादनशक्तिसंभृतत्वलाभाय ॥ ९४ ॥ 'बीजस्यान्तरिव द्रुमः' इत्यंशं वर्णयति—**बीजेऽन्तरि**ति द्वाभ्याम् । परया । योगपरिष्कृतया ब्राह्मया च ॥ ९५ ॥ ९६ ॥ 'स्वमेकमजहद्रूपमुदेत्यनुदितोऽपि कः' इति प्रश्ने 'स्वमेकमजहद्रूप'मित्यंशमुपपादयितुमध्यारोपितं स्थूलसूक्ष्मादिप्रपञ्चमपवदति—**संस्थित**मित्यादिसार्धत्रयेण ॥ ९७ ॥ ९८ ॥ ९९ ॥ 'उदेत्यनुदितोऽपि कः' इत्यंशमुपपादयति—**सर्वात्मिके**त्यादिना सा चित् । यथा यादृशप्राग्वासनानुगुण्येन उदेति सृष्टिप्रतिभात्मना आविर्भवति ॥ १०० ॥ स्वयंवेदनेन स्वात्मरूपेण सर्गप्रतिभासेन जृम्भितो बृंहितः जृम्भितोऽपि खे निष्प्रपञ्चस्वरूपाकाशे एकात्मा सन् समग्रात्मतयैवास्ते इत्यर्थः ॥ १०१ ॥ तत्र दृष्टान्तमाह—**द्रुम** इति । यथा वृक्षो बीजानि जनयन् वृक्षस्वभावं अनुत् अनपनयन्स्वबीजत्वं उदेति ततो भूमौ एति प्राप्नोत्यपि, तथा परं तत्त्वमपि जगद्भङ्ग्या उदेति तथा स्वोदयेन जगत्तां जन्ममरणादिकल्पनां च एति प्राप्नोतीत्यर्थः ॥ १०२ ॥ एतावांस्तु विशेषो यत् द्रुमो बीजतयैव संत्यक्ता समस्थितिर्येन तथाविधो विकारी न किंतु वृक्षतयापि । उभयात्मना विकारवैषम्यदर्शनात् । आत्माणुकस्तु त्यागात्यागपरः असङ्गाद्वितीयत्वात्सर्वत्यागपरः । सर्वानुगतसद्रूपत्वाच्च सर्वात्यागपरश्च सन् अपगतस्पन्दो निर्विकार एव सदा तिष्ठतीत्यर्थः ॥ १०३ ॥ 'बिसतन्तुर्महामेरुर्भो राजन्यदपेक्षया' इत्यस्योत्तरमाह—**बिसतन्तु**रिति । परमाणोरपेक्षया स्थूलत्वादिति शेषः । तत्र युक्तिमाह—**दृश्य**मिति । भावप्रधानो निर्देशः । दृग्गोचरतां विशेदाविशेत् ॥ १०४ ॥ दृष्टान्तोक्तं दार्ष्टान्तिकेऽप्युपपादयन् 'तस्य कस्योदरे सन्ति मेरुमन्दरकोटयः' इत्यस्योत्तरमाह—**बिसत**न्तुरिति । परमाणोरप्यान्तरस्यात्मनो ब्रह्मणोऽपेक्षया बिसतन्तुरपि मेरुस्तस्यैव स्वान्तस्तद्घनाश्चिद्घनाः परमार्थस्वभावा मेरुमन्दरकोटयः स्थिताः ॥१०५॥ 'केनेदमाततम्' इति प्रश्नस्योत्तरमाह—**एकेने**ति । आततमित्यस्य यदि व्याप्तमित्यर्थस्तर्हि व्याप्तमित्युत्तरम् । यदि जगद्रूपेण विस्तारितमित्यर्थस्तदा ततं

द्वैतेन सुन्दरतरं स्वमनुज्झितेन
रूपं सुषुप्तसदृशेन यथावबोधात् ।
ऐक्यं गतं स्थितिगमागममुक्तमेव-
मित्थं स्थितं तनु जगत्परमार्थपिण्डः ॥ १०७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे कर्क० परमार्थापिण्डीकरणं नामैकाशीतितमः सर्गः ॥ ८१ ॥

---

## द्व्यशीतितमः सर्गः ८२

श्रीवसिष्ठ उवाच ।

इति राजमुखाच्छ्रुत्वा कर्कटी वनमर्कटी ।
अवबुद्धपदान्तं स्वं जहौ मत्सरचापलम् ॥ १

अन्तःशीतलतामेत्य विश्रान्तिमपतापताम् ।
प्राप्ता प्रावृण्मयूरीव सज्योत्स्नेव कुमुद्वती ॥ २

तथा राजगिरा तस्या आनन्द उदभूद्भृशम् ।
गर्भेऽन्तः खे बलाकाया रवेणेव पयोमुचः ॥ ३

राक्षस्युवाच ।

अहो बत पवित्रेयं भवतोर्भाति शेमुषी ।
अनस्तमितसारेण प्रबोधार्केण भासिता ॥ ४

शीता समरसा शुद्धा ज्योत्स्नेव शशिमण्डलात् ।
विवेककणिकां श्रुत्वा भवतो हृदयादियम् ॥ ५

विवेकिनो जगत्पूज्याः सेव्या मन्ये भवादृशाः ।
सत्सङ्गात्सविकासास्मि चन्द्रेणेव कुमुद्वती ॥ ६

सौरभं कुसुमासङ्गादेव सत्सङ्गमाच्छुभम् ।
वर्तते ह्यर्कसंपर्काद्विकासोऽम्बुरुहामिव ॥ ७

महतामेव संपर्कात्पुनर्दुःखं न बाधते ।
को हि दीपशिखाहस्तस्तमसा परिभूयते ॥ ८

मयेमौ जङ्गलप्राप्तौ भवन्तौ भूमिभास्करौ ।
पूजनीयावतः शीघ्रमीहितं कथ्यतां शुभम् ॥ ९

राजोवाच ।

अस्मिन् जनपदे रक्षःकुलकाननमञ्जरि[1] ।
जनस्य बाधतेऽत्यन्तं सदा हृदयशूलनम् ॥ १०

यतः सर्वैव जनता तप्ता दृढविषूचिका ।
मण्डले ननु तेनाहं निर्गतो रात्रिचर्यया ॥ ११

शूलादि हृदये नृणां न शाम्यति यदौषधैः ।
ततोऽहं त्वद्विधप्रोक्तमन्त्रार्थेन विनिर्गतः ॥ १२

त्वादृशस्य च लोकस्य मुग्धलोकाभिघातिनः ।
निग्रहार्थं प्रवृत्तिर्मे सा च संपत्तिमेत्यलम् ॥ १३

एतावदेव च शुभे त्वयाङ्गीक्रियतां वचः ।
भूयो भवत्या प्राणा हि हिंसनीया न कस्यचित् ॥ १४

राक्षस्युवाच ।

बाढमेवं करोम्यद्यप्रभृत्यवितथं प्रभो ।
सत्यमेव न किंचिद्धि हिंसनीयं मयाधुना ॥ १५

राजोवाच ।

यद्येवं फुल्लपद्माक्षि परदेहैकभोजने ।
किं स्याच्छरीरवृत्त्यै[2] ते स्थितताया मत्समीहिते ॥ १६

---

विरचितं जनितं कृतं चेति चतुर्धा उत्तरम् । अपञ्चीकृतभूतात्मना ततम्, पञ्चीकरणेन ब्रह्माण्डभुवनात्मना विरचितम्, तत्र देवनरासुरतिर्यग्भेदेन जनितम् । तेषां भोगाय तत्तद्विषयभेदेन कृतं चेत्यर्थः । यथा नभसा गन्धर्वनगरादि दृश्यं नाना वैचित्र्यप्रपञ्चेन रचितमपि अभितः अच्छं शून्यत्वं आकाशैकस्वभावतां परिलब्धमेव तद्वदित्यर्थः । एतेन 'किंसार एव परिवल्गसि पासि हंसि' इत्येतदपि विश्वान्तर्गतत्वात्तत्सार एवेत्यर्थात्समाहितमेव ॥१०६॥ 'किंदर्शनेन न भवस्यथ वा सदैव नूनं भवसि' इत्यस्योत्तरमाह—**द्वैतेनेति** । यदा यथास्थितात्मतत्त्वावबोधाच्चित्संभिन्नजडाविद्यामात्ररूपत्वात्सुषुप्तसदृशेन स्वकालेऽपि सत्तास्फूर्तिव्यवहारसिद्धये सच्चिदानन्दैकरसत्वात्सुन्दरतरं स्वं रूपमधिष्ठानात्मतत्त्वमनुज्झितेनात्यक्तवता[3] द्वैतेन स्थितिगमागमैः सत्ताक्रियातन्निवृत्तिभिर्मुक्तमैक्यं गतं प्राप्तं तदा तनु क्षुद्रं जगदित्थं परमार्थपिण्ड एव स इत्थं ब्रह्मैकस्वाभाव्येन स्थितमिति संसाररूपो न भवामि सदैवाद्वितीयब्रह्मैकरूपश्च भवामीत्यर्थः ॥ १०७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे परमार्थापिण्डीकरणं नामैकाशीतितमः सर्गः ॥ ८१ ॥

प्रसन्नया मन्त्रदानं वर्ण्यतेऽन्नानया तयोः ।
वध्यभोज्यार्पणं चास्यै व्युत्थितायै समाधितः ॥ १ ॥

अवबुद्धं ब्रह्मपदमेवान्तो मूलोच्छेदेन नाशो यस्य तथाविधं स्वं स्वजात्युचितं मत्सरचापलं जहौ ॥ १ ॥ अपतापतां अपगतबाह्यदृष्टिसंतापताम् ॥ २ ॥ खे पयोमुचो रवेण बलाकाया अन्तर्गर्भे सतीव ॥ ३ ॥ शेमुषी बुद्धिः ॥ ४ ॥ शशिमण्डलात्प्रवृत्ता ज्योत्स्नेव भातीति सर्वत्रान्वयः । भवतो हृदयाद्बुद्धेः सकाशाद्वाग्द्वारा प्रसृतां विवेकामृतस्य कणिकां श्रुत्वा इयमहं भवादृशा विवेकिनो जगत्पूज्याः सेवनयोग्याश्च मुमुक्षुभिरिति मन्ये इत्युत्तरेणान्वयः ॥ ५ ॥ ६ ॥ कुसुमासङ्गादेव यथेति शेषः ॥ ७ ॥ सकृद्विवेकबाधितं दुःखं पुनर्न बाधते ॥ ८ ॥ पूजनीयौ इष्टार्थदानेन प्रीणनीयौ । ईहितं वाञ्छितम् ॥९॥१०॥ जनता जनसमूहो दृढविषूचिका सती यतस्तप्ता संतप्ता ॥११॥ त्वद्विधैः प्रोक्तस्य मन्त्रस्य अर्थनमर्थोऽभिलाषस्तेन हेतुना ॥ १२ ॥ संपत्तिमेति तत्त्वज्ञमनोरथस्य मोघत्वासंभवाद्यं यं लोकमिति प्राक्प्रदर्शितश्रुतेरिति भावः ॥ १३ ॥ ततो मन्त्रप्राप्तिमसंभावयन्त्यन्यद्वृणीते—**एतावदेवेति** ॥ १४ ॥ १५ ॥ मत्समीहिते

---

१ रक्षःकुलकाननमञ्जरि इति राक्षस्याः संबोधनम्. २ भृत्यै इति पाठः. ३ अत्यक्तवता इति क्वचिन्न पठ्यते.

राक्षस्युवाच ।

षड्भिर्मासैर्गिरौ राजन्प्रबुद्धायाः समाधितः ।
जाता भोजनसंकल्पाद्भोजनेच्छेयमद्य मे ॥ १७
इदानीं शिखरं गत्वा तदेव ध्याननिश्चला ।
यावदिच्छं सुखेनासे सजीवा शालभञ्जिका ॥ १८
आमूर्तीं धारणां बद्धा धारयामि शरीरकम् ।
यथेच्छमथ कालेन त्यक्ष्यामीति मतिर्मम ॥ १९
आशरीरपरित्यागमिदानीं न मया नृप ।
हिंसनीयाः परप्राणास्तेनेदं मद्वचः शृणु ॥ २०
हिमवान्नाम शैलोऽस्ति शरच्चन्द्रांशुनिर्मलः ।
य उत्तराशाहृदये स्पृष्टपूर्वापरार्णवः ॥ २१
तत्राहं निवसाम्यग्रे हेमशृङ्गदरीगृहे ।
आयसी मेघलेखेव कर्कटीनाम राक्षसी ॥ २२
तपसोपार्जितो ब्रह्मा जनतामारणेच्छया ।
विषूचिका प्राणहरा स्यां सूच्यात्मेति भो मया ॥ २३
तस्मात्संप्राप्तवरया बहून्वर्षगणान्मया ।
भुक्ता विषूचिकात्वेन जनता जीवबाधनैः ॥ २४
त्वया न गुणिनो हिंस्या इति मे ब्रह्मणा ततः ।
नियमार्थं महामन्त्रस्तदायत्तास्मि संस्थिता ॥ २५
सोऽयं प्रगृह्यतां तेन सर्वं हृदयशूलनम् ।
शममेष्यति लोकेऽस्मात्का कथा मत्कृते भ्रमे ॥ २६
विततैवास्मि हिंसायां यत्पुरा हिंसितं मया ।
जनस्य हृदयं तेन नाड्यो वैधुर्यमागताः ॥ २७
हिंसित्वा रक्तमांसानि संत्यक्ता ये महाजनाः ।
तेभ्यो विधुरनाडीभ्यो ये जातास्तेऽपि तादृशाः २८
राजन्विषूचिकामन्त्रः सोऽयं संपन्न एव ते ।
नहि सत्त्ववतामस्ति दुःसाध्यमिह किंचन ॥ २९
अतो दुर्नाडिकोशेषु शूलानां परिशान्तये ।
मन्त्रो यो ब्रह्मणा प्रोक्तो राजञ्शीघ्रं गृहाण तम् ॥ ३०
आगच्छ निकटं नद्या गच्छामस्तत्र भूमिप ।
स्वाचान्ताभ्यां संयताभ्यां भवद्भ्यां सुमता ददे ॥ ३१

श्रीवसिष्ठ उवाच ।

इति तस्यां तदा रात्र्यां राक्षसीमन्त्रिभूभृतः ।
जग्मुस्ते सरितस्तीरं मिथः संजातसौहृदाः ॥ ३२
अन्वयव्यतिरेकेण राक्षस्याः सौहृदं तदा ।
ज्ञात्वा स्थितौ तौ स्वाचान्तावुभावन्तेनिवासिनौ ॥ ३३
तया ब्रह्मोपदिष्टोऽसौ ततस्ताभ्यां यथाक्रमम् ।
स्नेहाद्विषूचिकामन्त्रः प्रदत्तो जपसिद्धिदः ॥ ३४
ततः संजातसौहार्दौ तौ विसृज्य निशाचरीं ।
यदा गन्तुं प्रवृत्तासौ तदा राजाब्रवीद्वचः ॥ ३५

राजोवाच ।

गुरुस्त्वं नौ महादेहे वयस्या च सुनिर्वृता ।
निमन्त्रयावहे यत्नाद्ग्रासाय तव सुन्दरि ॥ ३६
नचास्मत्प्रणयं प्रीता वितथीकर्तुमर्हसि ।
सौहार्दं सुजनानां हि दर्शनादेव वर्धते ॥ ३७
लघुसौभाग्यसंयुक्तं कृत्वाकारं मनोरमम् ।
आगच्छास्मद्गृहं भद्रे तत्र तिष्ठ यथासुखम् ॥ ३८

राक्षस्युवाच ।

मुग्धस्त्रीरूपधारिण्यै दातुं शक्तोऽसि भोजनम् ।
संतर्पयसि मां केन राक्षसाकारधारिणीम् ॥ ३९
रक्षोन्नमेव संतुष्ट्यै न सामान्यजनाशनम् ।
पूर्वसिद्धस्वभावोऽयमादेहं न निवर्तते ॥ ४०

राजोवाच ।

हेमस्रग्दामवलिता दिनानि कतिचिद्गृहे ।
मम स्त्रीरूपिणी तिष्ठ यावदिच्छमनिन्दिते ॥ ४१
ततो दुष्कृतिनश्चौरान्वध्याञ्छतसहस्रशः ।
मण्डलेभ्यः समानीय ददे तुभ्यं सुभोजनम् ॥ ४२
कान्तारूपं परित्यज्य गृहीत्वा राक्षसं वपुः ।
आदाय वध्याञ्छतशः पुरुषांस्तान्सुसंचितान् ॥ ४३
नयस्व हिमवच्छृङ्गं तत्र भुङ्क्ष्व यथासुखम् ।
महाशनानामेकान्ते भोजनं हि सुखायते ॥ ४४
तृप्ता निद्रां मनाक्कृत्वा भव भूयः समाधिभाक् ।
समाधिविरता भूयोऽप्यागत्य पुनरन्यदा ॥ ४५

---

अहिंसने व्रते स्थितायाः ॥ १६ ॥ १७ ॥ शालभञ्जिका दार्वादिपुत्रिकेव ॥ १८ ॥ आमूर्तीं अमृतात्मभावनारूपाम् ॥ १९ ॥ ॥ २० ॥ उत्तराशाया उत्तरदिशो हृदये मध्यमे । स्पृष्टौ अवगाढौ पूर्वापरार्णवौ येन ॥ २१ ॥ २२ ॥ उपार्जितः स्ववशीकृतः इत्यन्त ईच्छाभिलापः[1] ॥ २३ ॥ २४ ॥ नियमार्थं मर्यादार्थं दत्त इति शेषः । अतस्तदायत्ता मन्त्राधीना ॥ २५ ॥ सर्वं मत्कृतादन्यदपि सर्वम् ॥ २६ ॥ वितता विस्तृता चिरं प्रवृत्तेति यावत् । हृदयं हिंसितं रक्तचोषणेन शोषितं तेन हेतुना जनस्य नाड्यो वैधुर्यं रक्तविधुरताम् ॥ २७ ॥ कथंचित्तेषां जीवनेऽपि तद्वंश्यानामपि नीरक्तैव संपन्नेत्याह—हिंसित्वेति । तस्माद्धिंसा महाननर्थ इत्यर्थः ॥ २८ ॥ संपन्नः प्राप्तो भविष्यतीति सिद्धवत्कारेण सूचयति ॥ २९ ॥ ३० ॥ सुमता सुप्रीताऽहं ददे ॥ ३१ ॥ ॥ ३२ ॥ अन्वयव्यतिरेकेण भावपरीक्षणलिङ्गेन । अन्तेनिवासिनौ शिष्यौ भूत्वेति शेषः ॥ ३३ ॥ ब्रह्मणा प्रागुपदिष्टोऽसौ मन्त्रः ॥ ३४ ॥ सौहार्दं सुहृद्भावः ॥ ३५ ॥ हे महादेहे इति राक्षसीसंबोधनम् । गुरुर्वयस्या सखी च । हृदयसौन्दर्यात् सुन्दरीति संबोधनम् ॥ ३६ ॥ ३७ ॥ लघु अल्पप्रमाणं सौभाग्येन सौन्दर्यालंकारादिना युक्तं च । आकारं देहम् ॥ ३८ ॥ भोजनमन्नपानादि मनुष्ययोग्यम् ॥ ३९ ॥ ४० ॥ मम गृहे । यावदिच्छं ददे इति परेणान्वयः ॥ ४१ ॥ वध्यान् वधार्हान्

[1] इच्छाभिलाष इति क्वाचित्कः पाठः।

नेष्यस्यन्यान्वध्यजनान् हिंसा नैषां च धर्मतः ।
स्वधर्मेण च हिंसैव महाकरुणया समा ॥ ४६
त्वं समेष्यसि चावश्यं मां समाधिविरागिणी ।
असतामपि संरूढं सौहार्दं न निवर्तते ॥ ४७
राक्षस्युवाच ।
युक्तमुक्तं त्वया राजन्करोम्येवमहं सखे ।
सौहार्देन प्रवृत्तस्य को वाक्यं नाभिनन्दति ॥ ४८
श्रीवसिष्ठ उवाच ।
इत्युक्त्वा राक्षसी तत्र संपन्ना सुविलासिनी ।
हारकेयूरकटकपट्टस्रग्दामधारिणी ॥ ४९
राजन्नागच्छ गच्छाम इत्युक्त्वा भूपमन्त्रिणौ ।
अग्रे गन्तुं प्रवृत्तौ तौ रात्रावनुससार सा ॥ ५०
अथ ते पार्थिवगृहं प्राप्य तां रजनीं मिथः ।
कथयैकगृहे रम्ये क्षपयामासुरादृताः ॥ ५१
प्रभातेऽन्तःपुरे तस्थौ पुरन्ध्रीजनलीलया ।
राक्षसी मन्त्रिराजानौ स्वव्यापारौ बभूवतुः ॥ ५२
ततो दिवसषट्केन संचितानि महीभृता ।
नृपः परपुरेभ्योऽपि स्वमण्डलगणात्तथा ॥ ५३
त्रीणि वध्यसहस्राणि तानि तस्यै तदा ददौ ।
सा बभूव निशा काले सैवोग्रा कृष्णराक्षसी ॥ ५४
तानि वध्यसहस्राणि जग्राह भुजमण्डले ।
धारानिकरजालानि मेघमालेव कोटरे ॥ ५५
ययौ राजानमापृच्छ्य तदेव हिमवच्छिरः ।
दरिद्रा लब्धहेमेव ग्रहेषूग्रशरीरिणी ॥ ५६
तत्र तृप्ता भृशं भुक्त्वा सुखं सुप्त्वा दिनत्रयम् ।
आसीत्प्रबोधसुस्वस्था सा समाधिमतिः पुनः ॥ ५७
पञ्चभिर्वा चतुर्भिर्वा वर्षैः सा संप्रबुध्यते ।
तत्ततो मण्डलं याति तेन राजसभाजने ॥ ५८
तत्र विश्रम्भगर्भाभिः कथाभिः कंचिदेव सा ।
स्थित्वा कालं गृहीत्वा तान्वध्यान्स्वास्पदमेत्यथ ॥ ५९
जीवन्मुक्ततयैवसेव विपिने साद्यापि रक्षोङ्गना
तस्मिन्नेव गिरौ स्थिता विचलितध्यानैकतानाशया ।
तस्मिन्राजनि शान्तिमागतवति त्यक्तैषणेनात्मना
तद्राष्ट्राधिपसौहृदैः स्वकवलानास्वादयन्ती चिरं ॥ ६०

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे कर्क० राक्षसीसौहार्दं नाम द्व्यशीतितमः सर्गः ॥ ८२ ॥

## त्र्यशीतितमः सर्गः ८३

श्रीवसिष्ठ उवाच ।
किरातमण्डले तस्मिन्ये भवन्ति महीभृतः ।
तैस्तैः सह परा मैत्री तस्याः समभिजायते ॥ १
सर्वांस्तत्र महोत्पातान्पिशाचादिभयान्यपि ।
रोगांश्च योगसंसिद्धा निवारयति राक्षसी ॥ २
बहुवर्षगणेनैषा ध्यानाद्विरतिमागता ।
तत्रागत्य समस्तांस्तान्वध्याञ्जन्तूनुसुसंचितान् ॥ ३
अद्यापि तत्र ये वध्यास्ते तदर्थं महीभुजा ।
नीयन्ते मित्रसन्माने के हि नाध्यवसायिनः ॥ ४
तस्यां ध्याननिषण्णायां किरातजनमण्डले ।
अनायान्त्यां चिरं कालं जनैर्दोषप्रशान्तये ॥ ५
सा देवी कन्दरानाम्नी मङ्गलेतरनासिका ।
संप्रतिष्ठापिता मूर्त्या पुरे गगनकोटरे ॥ ६

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ समाधौ विरागिणी अपगतेच्छा, व्युत्थितेति यावत् । संरूढं प्ररूढम् ॥ ४७ ॥ ४८ ॥ सुविलासिनी सुन्दरस्त्री । पट्टं कौशेयं काञ्चीपट्टं वा ॥ ४९ ॥ अनु पश्चात्ससार जगाम ॥ ५० ॥ एकगृहे एकस्यां शालायाम् । रजनीं क्षपयामासुः ॥ ५१ ॥ स्वस्वोचितो व्यापारो जनपालनवध्यसंपादनव्यापारो ययोस्तौ ॥ ५२ ॥ नृपो ददाविति परेणान्वयः ॥ ५३ ॥ ५४ ॥ कोटरे लम्बमानानीति शेषः ॥ ५५ ॥ ग्रहेषु पूतनारक्षःपिशाचादिषु मध्ये उग्रशरीरिणी बृहच्छरीरत्वेन श्रेष्ठेति यावत् ॥ ५६ ॥ समाधौ परिणता मतिर्यस्याः सा ॥ ५७ ॥ ततः प्रबोधानन्तरम् । तेन प्राक्तनराजवचनेन हेतुना । राज्ञः सभाजने प्रीतिसंगमे चिकीर्षिते सति तत्किरातमण्डलं याति ॥ ५८ ॥ विस्रम्भगर्भाभिर्विश्वासयुक्ताभिः । स्वास्पदं स्वस्थानं हिमवच्छिखरम् ॥ ५९ ॥ सा रक्षोङ्गना कर्कटी अद्यापि पूर्वोक्तरीत्यैव जीवन्मुक्ततया तस्मिन्नेव गिरौ विपिने विचलितः कदाचिद्व्युत्थाने व्यवहारभाक् कदाचित्समाधौ ज्ञानैकतानश्च आशयश्चित्तं यस्यास्तथा भूत्वा स्थिता । तस्मिन्किरातानां राजनि कालेन त्यक्तसर्वैषणेनात्मना मनसा विदेहकैवल्यलक्षणां परमां शान्तिमागतवति सति तत्संततिजानां तद्राष्ट्राधिपानां सौहृदैः पूर्ववदेव स्वकवलान्वध्यांश्चिरमास्वादयन्ती चिरं स्थितेत्यर्थः ॥ ६० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीसौहार्दं नाम द्व्यशीतितमः सर्गः ॥ ८२ ॥

अभ्युत्थिता समाधेः सा चिरात्कैरातमण्डले ।
प्रतिष्ठिताऽभवद्देवी कन्दरेत्यत्र वर्ण्यते ॥ १ ॥

तद्राष्ट्राधिपसौहृदैः स्वकवलानास्वादयन्तीति यदुक्तं तत्प्रपञ्चयति—**किरातमण्डले** इत्यादिना ॥ १ ॥ उत्पातादिशमनसामर्थ्योपपादनाय विशिनष्टि—**योगसंसिद्धे**ति ॥ २ ॥ वध्यान्भुङ्क्ते इति शेषः ॥ ३ ॥ नाध्यवसायिनो नोद्युक्ताः ॥ ४ ॥ दोषाणां प्रागुक्तोत्पातादीनां प्रशान्तये जनैः साकं शिरो दारयति वध्यानामिति मङ्गलेतरन्नामास्या अस्तीति मङ्गलेतरनासिका । अथवा मङ्गला इति इतरन्नाम यस्याः सा । गगन-

ततःप्रभृति तत्रत्यो यो यो भवति भूमिपः।
स कन्दरां भगवतीं प्रतिष्ठापयति स्वयम् ॥ ७
यः कन्दराप्रतिष्ठां च न करोति नृपाधमः।
तस्योपतापनिचयाः प्रजा निघ्नन्ति यत्नतः ॥ ८
तत्पूजनादवाप्नोति जनस्तन्निखिलं फलम्।
स्ववासनावशोच्छूनमनर्थं यात्यपूजनात् ॥ ९
वध्यलोकोपहारेण सा देवी परिपूज्यते।
प्रतिमा सा स्थिताद्यापि चित्रस्था फलदायिनी ॥ १०
सकलकोमलमङ्गलकारिणी
कवलिताखिलवध्यमहाजना।
जयति सात्र किरातजनास्पदे
परमबोधवती चिरदेवता ॥ ११

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे कर्क० कन्दरापूजनं नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः ८४

श्रीवसिष्ठ उवाच।
एतत्ते कथितं सर्वं मयाख्यानमनिन्दितम्।
कर्कट्या हिमराक्षस्या यथावदनुपूर्वशः ॥ १
श्रीराम उवाच।
हिमवद्गह्वरे प्रोत्था सा कथं कृष्णराक्षसी।
बभूव कर्कटीनाम्ना यथावद्वद मे प्रभो ॥ २
श्रीवसिष्ठ उवाच।
कुलानि सन्त्यनेकानि राक्षसानां स्वभावतः।
तानि शुक्लानि कृष्णानि हरितान्युज्ज्वलानि च ॥ ३
कर्कटप्राणिसादृश्यात्कर्कटो नाम राक्षसः।
बभूव तज्जा सा कृष्णा कर्कटी कर्कटाकृतिः ॥ ४
कर्कटीप्रश्नसंस्मृत्या मयैषा कथिता तव।
अध्यात्मोक्तिप्रसङ्गेन विश्वरूपनिरूपणे ॥ ५
संपन्नमेव मे कस्मादसंपन्नमिव स्फुटम्।
इदं जगदनाद्यन्तात्पदात्परमकारणात् ॥ ६
प्लाविन्यो वीचयो वारिण्यन्यानन्याः स्थिता यथा।
वर्तमाना अपि परे सृष्टयः संस्थितास्तथा ॥ ७
अज्वलन्नेव काष्ठेषु वह्निरर्थक्रियां यथा।
करोति मर्कटादीनां शीतापहरणादिकम् ॥ ८
समं सौम्यत्वमजहदेव नित्योदयस्थिति।
तथा ब्रह्म करोतीदं नाना कर्तेव सज्जगत् ॥ ९
अप्यनागत एवायमेवं सर्ग उपागतः।
भोः शालभञ्जिकासंविद्दारुण्येव मुधोदिता ॥ १०
बीजे यथाऽनन्यदपि फलाद्यन्यदिवोदितम्।
चितौ तथाऽनन्यदपि चेत्यमन्यदिवोदितम् ॥ ११
अच्छेदादेकसत्ताया न भेदः फलबीजयोः।
चिच्चेत्ययोश्च वार्यूर्म्योरिव वस्तुनि कश्चन ॥ १२
अविचारात्कुतो भेदो नैतयोरुपपद्यते।
यतःकुतश्चिदुदितः स विचारेण नश्यति ॥ १३
भ्रान्तिरेषा यथाऽऽयाता तथा यातु रघूद्वह।
ज्ञास्यसे तत्प्रबुद्धस्त्वमेनां केवलमुत्सृज ॥ १४

कोटरे गगनस्पर्शिप्रासादोदरे ॥ ५ ॥ ६ ॥ प्रतिष्ठापयति कालेन पूर्वप्रतिमायां गतायामन्यां प्रतिमां कारयित्वेति भावः ॥ ७ ॥ किमर्थं प्रतिष्ठापयतीत्यत्र हेतुं व्यतिरेकमुखेनाह—**य** इति ॥ ८ ॥ अन्वयमुखेनाप्याह—**तदि**ति। तत् उत्पातरोगशान्त्यादिफलम्। कुतो नियमेनोत्पातादिप्रसक्तिस्तत्राह—**स्ववासने**ति। स्वस्ववासनावशेन उच्छूनमाविर्भूतम् ॥ ९ ॥ सा प्रतिमा अद्यापि स्थिता। अन्यत्रापि चित्रस्था चित्रलिखिता फलदायिनीति वा ॥ १० ॥ सकलजनानां कोमलस्य बालवत्सस्यादिविभवस्य मङ्गलानां संपदां च कारिणी। चिरकालानुवृत्ता देवता ॥ ११ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे कन्दरापूजनं नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥

**निमित्तं कर्कटीनाम्ना उपदेशार्थकल्पनम्।**
**दृष्टान्तोक्त्युपयोगश्च विस्तरादत्र वर्ण्यते ॥ १ ॥**

हिमशब्देन हिमवानुच्यते, नामैकदेशे नामग्रहणन्यायात् ॥ १ ॥ तस्याः कृष्णवर्णत्वे कर्कटीनामप्राप्तौ च किं निमित्तमिति रामः पृच्छति—**हिमवदि**ति ॥ २ ॥ तत्राद्यस्य निमित्तमाह—**कुलानी**ति ॥ ३ ॥ द्वितीयस्य निमित्तमाह—**कर्कटे**ति। कर्कटः कुलीरः स एव प्राणी तत्सादृश्यात्। बृहदुदरदीर्घहस्तपादादिमत्त्वात्कर्कटाकृतिः ॥ ४ ॥ विश्वरूपस्य जगत्तत्त्वस्य निरूपणे प्रस्तुते अध्यात्मोक्तिप्रसङ्गेन कर्कटीकृतानां प्रश्नानां संस्मृत्या एषा आख्यायिका कथिता ॥ ५ ॥ उदाहृतामाख्यायिकां प्रकृते योजयति—**संपन्न**मिति ॥ ६ ॥ प्लाविन्य उत्प्लवनवत्यः। अपिशब्दादतीतानागतसमुच्चयः ॥ ७ ॥ यदि वर्तमानानामप्यतीतानागतसाम्यं तर्हि कथमर्थक्रियाकारित्वं विशेषस्तत्राह—**अज्वलन्नि**त्यादिना। 'प्रज्वलन्' इति पाठे मर्कटादीनां बुद्ध्या प्रज्वलन्नतु वस्तुतः ॥ ८ ॥ कर्तेव सत् नाना जगत्करोति ॥ ९ ॥ भो इति रामसंबोधनम्। शालभञ्जिकासंवित्प्रतिभाबुद्धिः ॥ १० ॥ फलादि अङ्कुरादि फलान्तं व्युत्क्रमेण फलादीत्युच्यते ॥ ११ ॥ बीजादिफलान्ते अनुस्यूतैकद्रव्यसत्ताया अविच्छेदान्न भेदः ॥ १२ ॥ १३ ॥ यथा निर्हेतुकतयैव आयाता तथा यातु गच्छतु। किं तर्हि मया कार्यं तत्राह—**एना**मिति।

१ तत्रान्य इति पाठः. २ कन्दरां प्रतिष्ठां च इति पाठः. ३ कर्कटीनाम्न इति पाठः.

भ्रान्तिग्रन्थौ वित्रुटिते मदुक्तिश्रवणात्ततः ।
ज्ञानशब्दार्थभेदानां वस्तु ज्ञास्यस्यलं स्वयम् ॥ १५
चित्तादियमनर्थश्रीस्तच्च सा चेतरा च ते ।
मदुक्तिश्रवणादेव शान्तिमेष्यत्यसंशयम् ॥ १६
ब्रह्मणः सर्वमुत्पन्नं सर्वं ब्रह्मैवमेति च ।
मद्गीर्भिः संप्रबुद्धः सन् ज्ञास्यस्यलमनिन्दितम् ॥ १७

श्रीराम उवाच ।

तस्मादियमिति ब्रह्मन्व्यतिरेकार्थपञ्चमी ।
ननु किं विद्धि देवेशादभिन्नं सर्वमित्यपि ॥ १८

श्रीवसिष्ठ उवाच ।

उपदेशाय शास्त्रेषु जातः शब्दोऽथवार्थजः ।
प्रतियोगिव्यवच्छेदसंख्यालक्षणपक्षवान् ॥ १९
भेदो दृश्यत एवायं व्यवहारान्न वास्तवः ।
वेतालो बालकस्येव कार्यार्थं परिकल्पितः ॥ २०
द्वैतैक्यमपि नो यस्यां तथा भूतार्थसंस्थितौ ।
अस्ति तस्यामीदृशः स्यात्कुतः संकल्पविप्लवः ॥ २१
कार्यकारणभावो हि तथा स्वस्वामिलक्षणम् ।
हेतुश्च हेतुमांश्चैवावयववावयविक्रमः ॥ २२
व्यतिरेकाव्यतिरेकौ परिणामादिविभ्रमः ।
तथा भावविलासादि विद्याविद्ये सुखासुखे ॥ २३
एवमादिमयी मिथ्यासंकल्पकलना मिता ।
अज्ञानामवबोधार्थं नतु भेदोऽस्ति वस्तुनि ॥ २४
अविबोधादयं वादो ज्ञाते द्वैतं न विद्यते ।
ज्ञाते संशान्तकलनं मौनमेवावशिष्यते ॥ २५
सर्वमेकमनाद्यन्तमविभागमखण्डितम् ।
इति ज्ञास्यसि सिद्धान्तं काले बोधमुपागतः ॥ २६
विवदन्ते ह्यसंबुद्धाः स्वविकल्पविजृम्भितैः ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ २७
वाच्यवाचकसंबोधो विना द्वैतं न सिद्ध्यति ।
नच द्वैतं संभवति मौनं वापादयत्यलम् ॥ २८
महावाक्यार्थनिष्ठान्तां बुद्धिं कृत्वा रघूद्वह ।
वचोभेदमनादृत्य यदिदं वच्मि ते शृणु ॥ २९
यतःकुतश्चिदुच्छ्रायं गन्धर्वपुरवन्मनः ।
भ्रान्तिमात्रं तनोतीदं जगदाख्यं स्वजृम्भणम् ॥ ३०
यथा चेतस्तनोतीमां जगन्मायां तथानघ ।
शृणु त्वं कथयामीदं दृष्टान्तं दृष्टिवेदनम् ॥ ३१
यं श्रुत्वा सर्वमेवेदं भ्रान्तिमात्रमिति स्वयम् ।
राम निश्चयवान्भूत्वा दूरे त्यक्ष्यसि वासनाम् ॥ ३२
मनोमनननिर्माणमात्रमेव जगत्त्रयम् ।
सर्वमुत्सृज्य शान्तात्मा स्वात्मन्येव निवत्स्यसि ॥ ३३
महावाक्यार्थावधानस्थो मनोव्याधिचिकित्सने ।
विवेकौषधलेशेन प्रयत्नं च करिष्यसि ॥ ३४
एवं स्थिते जगद्रूपं चित्तमेवेह जृम्भते ।
न विद्यते शरीरादि सिकतान्तरतैलवत् ॥ ३५
चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ ३६

---

एनां भ्रान्तिम् । तद्ब्रह्म प्रबुद्धः सन् ज्ञास्यसे ॥ १४ ॥ यदि भ्रममुत्सृजामि तर्हि कथं त्वदुक्तश्रवणे शब्दार्थबोधभेदं प्रतिपत्स्ये तत्राह—**भ्रान्तीति** । यद्यपि न भेदं प्रतिपत्स्यसे तथापि तत्तात्पर्यगोचरं वस्तु स्वयमेव ज्ञास्यसीत्यर्थः ॥ १५ ॥ तथापि कथमनर्थनिवृत्तिसिद्धिस्तत्राह—**चित्तादिति** । तच्चित्तम् । सा चित्तजा अनर्थश्रीः, इतरा चित्तहेतुरविद्या च ॥१६॥ जगत उत्पत्त्यादिनिरूपणस्यापि निष्प्रपञ्चवस्तुबोध एव प्रयोजनमित्याशयेनाह—**ब्रह्मण** इति । सर्वं जगद्विलयेन ब्रह्म एति प्राप्नोति च । अलं पूर्णम् ॥ १७ ॥ यदि भेदोऽसन्नेव तर्हि ब्रह्मणः सर्वमुत्पन्नमिति त्वदुक्तौ 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिश्रुतिषु च तस्मादितीयं व्यतिरेकार्थभेदप्रतिपादिका पञ्चमी किं सर्वं देवेशादभिन्नं विद्धीत्यपि किम् । लक्ष्यालक्ष्यभेदस्य तत्प्रतियोग्यादीनां चासत्त्वे शब्दाप्रसराल्लक्षणेन लक्ष्यबोधनव्यवहारासिद्धेरुपदेशासिद्धिश्चेति शङ्काशयः ॥ १८ ॥ तात्कालिकभेदकल्पनया व्यावहारिकदृष्टिसिद्धभेदाद्युपादानाद्वा शब्दप्रसराद्बिम्बप्रतिबिम्बलक्षणव्यवहारवदुपदेशोपपत्तेर्न कोऽपि दोष इत्याशयेन वसिष्ठः परिहरति—**उपदेशाये**त्यादिना । जातः कल्पितः । अथवा लोकसिद्धार्थजो व्यावहारिकभेदोपजीवी शब्दः प्रसरिष्यतीति शेषः ॥१९॥ कल्पितेन प्रयोजनव्यवहारसिद्धिर्लोकेऽपि प्रसिद्धेत्याह—**भेद** इति ॥ २० ॥ यत्र स्वप्नगन्धर्वनगरादिसंस्थितौ द्वैतमैक्यं च नास्ति तस्यामपीदृशो लक्षणादिव्यवहारोऽस्ति सत्यसंकल्पानामुपदेशादिव्यवहारे संकल्पविप्लवः कुतः स्यादित्यर्थः ॥ २१ ॥ त्वदुपदेशादिव्यवहारे च मय्येव संकल्पात्कार्यकारणादिभेदः कल्पित इत्याह—**कार्यकारणे**त्यादिना ॥ २२ ॥ २३ ॥ मिता कल्पिता ॥ २४ ॥ अयं च व्यवहार उपदेश्यस्याज्ञदशायामेव न प्रबोधदशायामिति नाद्वैतहानिरित्याह—**अविबोधादिति** । मौनमशब्दः ॥२५॥२६॥ असंबुद्धा अज्ञाततत्त्वाः पुरुषाः स्वविकल्पविजृम्भितैस्तर्कैः । अयं वादः सर्वोऽपि वेदान्ततत्त्वोपदेशात्प्रागेव, यतो ज्ञाते द्वैतं न विद्यते इत्यर्थः ॥२७॥ मास्तु द्वैतं, तथापि कथं विवादासंभवस्तत्राह—**वाच्येति** । तर्ह्यस्तु द्वैतं तत्राह—**नचेति** । चेत्यवधारणे, अतो मौनमेवापादयतीत्यर्थः ॥२८॥ यतो चेत्यादिलक्षणवाक्ये तर्हि पञ्चम्याद्यर्थो न प्रतिपत्तव्यस्तत्राह—**महावाक्येति** । पञ्चम्याद्युपात्तं वचोभेदमनादृत्य तां लक्षणवाक्योत्थां बुद्धिमखण्डे महावाक्यार्थे एव निष्ठापदवाच्यलक्ष्यार्थव्युत्पत्तिद्वारा पर्यवसानं यस्यास्तथाविधां कृत्वा यदिदं वक्ष्यमाणं वच्मि तच्छृण्वित्यर्थः ॥ २९ ॥ यतःकुतश्चिदनिर्वाच्याद्धेतोरुच्छ्राय आविर्भावो यस्य ॥ ३० ॥ उक्तार्थे वक्ष्यमाणाख्यायिकां दृष्टान्तत्वेनावतारयति—**यथेति** । स्वदृष्ट्यैव वेद्यते दार्ष्टान्तिकं येन तद्दृष्टिवेदनम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ एवं वक्ष्यमाणाख्यायिकारीत्या स्थिते ॥३५॥ भवस्य संसारस्यान्तो नाशः ॥३६॥

चित्तं साध्यं पालनीयं विचार्यं कार्यमार्यवत् ।
आहार्यं व्यवहार्यं च संचार्यं धार्यमादरात् ॥ ३७
सर्वमभ्यन्तरे चित्तं बिभर्ति त्रिजगन्नभः ।
अहमापूरमिव तद्यथाकालं विजृम्भते ॥ ३८
योऽयं चित्तस्य चिद्भागः सैषा सर्वार्थबीजता ।
यश्चास्य जडभागश्च तज्जगत्सोऽङ्ग संभ्रमः ॥ ३९
अविद्यमानमेवेदमादिसर्गे धरादिकम् ।
निराकृतिरजः स्वप्नं पश्यतीव न पश्यति ॥ ४०
सर्गादिदीर्घसंवित्त्या शैलादिजडसंविदा ।
सूक्ष्मं सूक्ष्मविदा चेति देहं शून्यं न वास्तवम् ॥ ४१
सर्वगेनात्मना व्याप्तं खचेत्यात्मवपुर्मनः ।
आततं सौम्य विमलं वारीव रवितेजसा ॥ ४२
चित्तबालो जगद्यक्षं मिथ्या पश्यत्यबोधतः ।
बोधितोऽसौ परं रूपं स्वं पश्यति निरामयम् ॥ ४३
यथात्मा दृश्यतामेति द्वित्वैक्यभ्रमदायिनीम् ।
शृणु तत्ते प्रवक्ष्यामि वक्ष्यमाणकथागमैः ॥ ४४

यत्कथ्यते हि हृदयंगमयोपमान-
युक्त्या गिरा मधुरयुक्तपदार्थया च ।
श्रोतुस्तदङ्ग हृदयं परितो विसारि
व्याप्नोति तैलमिव वारिणि वार्य शङ्काम् ॥ ४५
त्यक्तोपमानममनोज्ञपदं दुरापं
क्षुब्धं धराविधुरितं विनिगीर्णवर्णम् ।
श्रोतुर्न याति हृदयं प्रविनाशमेति
वाक्यं किलाज्यमिव भस्मनि हूयमानम् ॥ ४६
आख्यानकानि भुवि यानि कथाश्च या या
यद्यत्प्रमेयमुचितं परिपेलवं वा ।
दृष्टान्तदृष्टिकथनेन तदेति साधो
प्राकाश्यमाशु भुवनं सितरश्मिनेव ॥ ४७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे सूच्युपाख्याने मनोङ्कुरोत्पत्तिकथनं नाम चतुरशीतितमः सर्गः ॥ ८४ ॥

---

लौकिकशास्त्रीयसाध्यपालनीयादिसर्वपदार्थरूपेण चित्तमेव विजृम्भते नान्यदित्याह—**चित्त**मिति । सिद्धेषु साधनेष्वसिद्धं साध्यम् । पूर्वसिद्धं पालनीयम् । असिद्धेषु नानासाधनेषु प्रसक्तेषु प्रयत्नगुरुलाघवविमर्शेन साधनानि संपाद्य पश्चात्साध्यं विचार्यम्, तत्रापि शिष्टैकसंमतोपायसाध्यमार्यवत्कार्यम् । देशान्तरे सिद्धमेव स्वगृहे आनेतुं योग्यमाहार्यम् । स्वगृहस्थमेव क्रयविक्रयाद्युपयुक्तं व्यवहार्यम् । तेष्वप्यश्वरथादि संचार्यम् । भूषणादि तु धार्यम् । आदरादिति सर्वत्र संबध्यते । एतत्सर्वं चित्तमेव । नहि निश्चित्तस्य किंचित्साध्यादिकं प्रसिद्धमित्याशयः ॥ ३७ ॥ त्रिजगत्कल्पनाया नभ आकाशभूतं चित्तं सर्वं दृश्यमभ्यन्तरे बिभर्ति । तदेव चित्तं यथाकालं देहप्राणेन्द्रियादिषु व्यापृतेषु अहमेव व्यापृतोऽस्मीत्यहमापूरमहंताप्रवाह इव विजृम्भते इत्यर्थः ॥ ३८ ॥ तत्र चिदंशप्राधान्येन द्रष्टृतापरपर्याया सर्वकल्पनाबीजभूता अहंताऽजडांशप्राधान्येन तु दृश्यभ्रान्तिरूपतेति विभागमाह—**योऽय**मिति ॥ ३९ ॥ उक्तमर्थं प्रागुक्तसृष्टिक्रमसारणेनोपपादयति—**अविद्यमानमेवेति** । अजो ब्रह्मा ॥ ४० ॥ कथं पश्यति तदाह—**सर्गादी**ति । शैलादिस्थूलं विराड्देहं दीर्घसंवित्त्या सृष्टिस्थितिप्रलयकोटिसाधारण्या साक्षिसंविदा, सर्गादि जडसंविदा, जडाहंभावनारूपया वैश्वानरसंविदा, सूक्ष्मं लिङ्गसमष्टिसूत्रात्मकहिरण्यगर्भदेहं सूक्ष्मविदा, तदहंभावसंविदा चेति शून्यमेव देहत्रयं पश्यतीत्यर्थः ॥४१॥ 'योऽयं चित्तस्य चिद्भागः सैषा सर्वार्थबीजते'त्येतदुपपादयति—**सर्वगेने**ति । तथाच चिद्व्याप्तिबलादेव बीजतेत्यर्थः ॥ ४२ ॥ चिद्व्याप्तिबलादेव चित्तस्य अविचारे जगद्दृष्टृता विचारे आत्मदर्शनं चेत्याह—**चित्तबाल** इति ॥४३॥ एवंच शुद्धात्मैव चित्तभावद्वारा दृश्यभावं प्राप्त इवेति फलितं तत्संभावनार्थं वक्ष्यमाणकथामवतारयति—**यथे**ति ॥ ४४ ॥ ऐन्दवोपाख्यानोपमानयुक्त्या कथं जगतो मनोमात्रत्वनिश्चयस्तत्राह—**य**दिति । हृदयंगमया मनोनुरञ्जिन्या । शङ्कां वार्य निरस्य । ल्यप् छान्दसः । श्रोतुर्हृदयं व्याप्नोति ॥४५॥ उक्तमर्थं व्यतिरेकमुखेनाप्युपपादयति—**त्यक्तोपमान**मिति । यद्वाक्यं त्यक्तोपमानं दृष्टान्तोपन्यासरहितम् । अमनोज्ञानि शब्दशास्त्रासंमतानि कठोरवर्णादिघटितानि वा पदानि यस्मिंस्तथाविधम्, दुरापमनभिव्यक्तवर्णत्वात्स्फुटतया श्रोत्रेण प्राप्तुमशक्यम्, क्रोधावेशादिवशात्क्षुब्धं सत् धराविधुरितं स्वस्थानविच्युतवर्णम् । विनिगीर्णवर्णं ग्रस्ताक्षरम् । संवृतः कलो ध्मात इत्यादिमहाभाष्योक्तस्वरवर्णदोषाणामुपलक्षणमेतत् । तथाचाहुः—'ग्रस्तं निरस्तं प्रविलम्बितं द्रुतमम्बूकृतं ध्मातमथो विकम्पितम् । विस्रस्तमेणीकृतमर्धकं हतं विकीर्णमेताः स्वरदोषभावनाः ॥' इति । एतादृशं तद्वाक्यं श्रोतुर्हृदयं न याति नानुरञ्जयति । महतापि श्रमेणोपन्यस्तं प्रविनाशं नैष्फल्यं वाचाटत्वादिदोषप्रत्ययफलतां वा एति । किलेति प्रसिद्धोऽस्य दृष्टान्त इति दर्शयति—**आज्यमिवे**ति॥४६॥ व्यतिरेकमुखोपपादितमर्थं पुनरन्वयोक्त्या निगमयति—**आख्यानकानी**ति । नानाकथाभिरुपेता महत्यो भारतादिकथा आख्यानकानि । अल्पास्तु कथाः । उचितं अभिज्ञानुरञ्जनोपयुक्तं यद्यत्काव्यनाटकाध्यात्मनिबन्धादिरूपम् । परिपेलवं शब्दतोऽर्थतश्च कोमलं च यद्यच्छ्रोत्रप्रमेयं तत्सर्वं दृष्टान्तानां लोकप्रसिद्धप्रमाणदृष्टीनां च कथनेन प्राकाश्यं स्फुटहृद्यार्थतामेतीत्यर्थः ॥ ४७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मनोङ्कुरोत्पत्तिकथनं नाम चतुरशीतितमः सर्गः ॥ ८४ ॥

१ सर्वार्थबीजता इति पाठः

## पञ्चाशीतितमः सर्गः ८५

श्रीवसिष्ठ उवाच ।

पुरा मे ब्रह्मणा प्रोक्तं सर्वं तत्कथयानघ ।
यदिदं तत्प्रवक्ष्यामि त्वयि पृच्छति राघव ॥ १
पुरा मया हि भगवान्पृष्टः कमलसंभवः ।
इमे कथमुपायान्ति ब्रह्मन्सर्गगणा इति ॥ २
तदुपाश्रुत्य भगवान्ब्रह्मा लोकपितामहः ।
ऐन्दवाख्यानसहितं मामुवाच बृहद्वचः ॥ ३

ब्रह्मोवाच ।

सर्वं हि मन एवेदमित्थं स्फुरति भूतिमत् ।
जलं जलाशयस्फारैर्विचित्रैश्चक्रकैरिव ॥ ४
दिनादौ संप्रबुद्धस्य संसारं स्रष्टुमिच्छतः ।
पुराकल्पे हि कस्मिंश्चिच्छृणु किं वृत्तमङ्ग मे ॥ ५
कदाचिदखिलं सर्गं संहृत्य दिवसक्षये ।
एक एवाहमेकाग्रः स्वस्थस्तामनयं निशाम् ॥ ६
निशान्ते संप्रबुद्धात्मा संध्यां कृत्वा यथाविधि ।
प्रजाः स्रष्टुं दृशौ स्फारे व्योम्नि योजितवानहम् ॥ ७
यावत्पश्यामि गगनं न तमोभिर्न तेजसा ।
व्याप्तमत्यन्तविततं शून्यमन्तविवर्जितम् ॥ ८
सर्गं संकल्पयामीति मतिं निश्चित्य तन्मया ।
समवेक्षितुमारब्धं शुद्धं सूक्ष्मेण चेतसा ॥ ९
अथाहं दृष्टवांस्तत्र मनसा वितते ऽम्बरे ।
पृथक्स्थितान्महारम्भान्सर्गान्स्थितिनिरर्गलान् ॥ १०
तेषु मत्प्रतिबिम्बाभाः पद्मकोशनिवासिनः ।
राजहंसान्समारूढाः संस्थिता दश पद्मजाः ॥ ११
पृथक्स्थितेषु सर्गेषु तेषूद्यद्भूतपङ्क्तिषु ।
जलजालेषु शुद्धेषु जगत्सु जलदायिषु ॥ १२
प्रवहन्ति महानद्यः प्रध्वनन्ति यथाब्धयः ।
प्रतपन्त्युष्णरुचयः प्रस्फुरन्त्यम्बरे ऽनिलाः ॥ १३
दिवि क्रीडन्ति विबुधा भुवि क्रीडन्ति मानवाः ।
दानवा भोगिनश्चैव पातालेषु च संस्थिताः ॥ १४
कालचक्रपरिप्रोता यद्भावाः सकलर्तवः ।
यथाकालं फलापूर्णा भूषयन्त्यभितो महीम् ॥ १५
प्रौढ्यं शुभाशुभाचारस्मृतयः ककुभं प्रति ।
नरकस्वर्गफलदाः सर्वत्र समुपागताः ॥ १६
भोगमोक्षफलार्थिन्यः समस्ता भूतजातयः ।
स्वमीहितं यथाकालं प्रयतन्ते यथाक्रमम् ॥ १७
सप्तलोकास्तथा द्वीपाः समुद्रा गिरयस्तथा ।
अन्वेष्यमाणाः कल्पान्तं स्फुरन्त्युरुतरारवम् ॥ १८
क्वचिद्भासित्वमायातं क्वचित्स्थिरतरं स्थितम् ।
स्थितं सर्वत्र कुञ्जेषु तमस्तेजोलवावृतम् ॥ १९
नभोनीलोत्पलस्यान्तर्भ्रमद्भ्रमधुव्रतम् ।
प्रस्फुरत्तारकाजालकेसरापूर्णतां गतम् ॥ २०
कल्पान्तघननीहारो मेरुकुञ्जेषु संस्थितः ।
शाल्मलेरमलं तूलमष्ठीलाकोटरेष्विव ॥ २१
लोकालोकाद्रिरसनारणदर्णवघुंघुमा ।
तमःखण्डेन्द्रनीलाभा निजरत्नविराजिता ॥ २२
धानाधरसुधा भूतरवकाकलिघुंघुमा ।
संस्थिता भुवनाभोगे स्वान्तःपुर इवाङ्गना ॥ २३

---

सृष्टिं चिकीर्षतो धातुर्दशब्रह्माण्डदर्शनम् ।
तत्रैकरविणा तेषां तत्त्वोक्तिश्चात्र वर्ण्यते ॥ १ ॥

प्रतिज्ञातमैन्दवोपाख्यानं वक्तुमुपक्रमते—**पुरे**त्यादिना । हे अनघ, ब्रह्मणा मे पुरा यदिदं प्रोक्तं जगतो मनोमात्रत्वं तत्सर्वं तत्कथया तेन ब्रह्मणोक्तयैन्दवोपाख्यानकथया प्रवक्ष्यामीति योजना ॥ १ ॥ तदर्थं तदानीं स्वकृतं प्रश्नमाह—**पुरे**ति ॥२॥ तत् मत्पृष्टं उप आश्रुत्य वक्ष्यामीति प्रतिज्ञाय । बृहत् महार्थम् ॥ ३ ॥ भूतिमज्जगद्भावधारणशक्तिमत् । चक्रकैरावर्तैरिव ॥४॥ हे अङ्ग, मे मम पुराकल्पे दिनादौ कल्पादौ संप्रबुद्धस्य संसारं जगत्स्रष्टुमिच्छतः किं वृत्तं यत्संपन्नं तच्छृणिवत्यर्थः ॥ ५ ॥ ६ ॥ संध्यां संध्योपास्तिम् । योजितवान् प्रसारितवानिति यावत् ॥७॥ विद्यमानस्यापि तमसो दिव्यस्वदृष्टिप्रसाराविघातित्वान्न तमोभिरित्युक्तम् ॥८॥ तत्स्रष्टव्यवस्तु समवेक्षितुं पर्यालोचयितुम् ॥९॥ अम्बरे अव्यक्ताकाशे सर्गान्ब्रह्माण्डान् । स्थित्या तत्रत्यविष्णवादिकृतपालनादिव्यवस्थया निरर्गलान्निष्प्रतिबन्धान् ॥१०॥११॥ उद्यन्त्य उत्पद्यमाना भूतपङ्क्तयश्चतुर्विधप्राणिनिकाया येषु । जलजालेषु जलदजालेषु । छान्दसो दलोपः । अथवा जलानां जालमिव बन्धनेषु मेघेषु शुद्धेष्ववग्रहादिदोषनिर्मुक्तेषु ॥ १२ ॥ प्रकर्षेण स्फुरन्ति संचलन्ति ॥ १३ ॥ विबुधा देवाः ॥ १४ ॥ यद्भावाः यादृशशीतातपवर्षादिस्वभावाः । सकला ऋतवो वसन्तादयः ॥१५॥ शुभा विहिता अशुभा निषिद्धा आचारास्तद्विभाजकस्मृतिग्रन्थाश्च ककुभं प्रति प्रतिदिशं सर्वत्र सर्ववर्णेषु प्रौढ्यं प्रौढतां समुपागताः ॥ १६ ॥ यथाक्रमं यादृशो यासां प्रवृत्तिक्रमः स्वसर्गे क्लृप्तस्तमनतिक्रम्येत्यर्थः ॥ १७ ॥ कल्पान्तं प्रलयम् ॥ कालेन एष्यमाणा अपि स्वकाले उरुतरारवं यथा स्यात्तथा स्फुरति ॥ १८ ॥ तमः क्वचिदनावृतदेशे ह्रासित्वमपक्षयम् । क्वचिद्गिरिगुहादौ । कुञ्जेषु तु तेजोलवैरातपच्छिद्रैरावृतं । स्नेहान्मिलितमित्यर्थः ॥ १९ ॥ अर्थात्सरस्त्वेन जगद्वर्णयति—**नभ** इति ॥२०॥ मेरुरिवोच्छ्रयान्मेरुर्हिमवांस्तत्कुञ्जेषु । [1]अष्ठीला फलकर्परं तत्कोटरेष्विव ॥ २१ ॥ लोकालोकाद्रिरेव रसना काञ्ची यस्याः । रणन्तोऽर्णवा एव घुंघुमा भूषणध्वनयो यस्याः । तमःखण्डा एवेन्द्रनीलमणिप्रभा यस्याः । निजैः स्वान्तर्गतै रत्नैश्च विराजिता ॥ २२ ॥ धानाः शाल्यादिबीजान्येव प्राणिनामास्वादनीयत्वादधरसुधा यस्याः । भूतानां प्राणिनां रवा

---

[1] अष्ठिला इति मुद्रितपुस्तके पाठः.

गौराङ्गपङ्क्तिर्मध्यस्था रजनीराजिरञ्जिता ।
पद्मोत्पलस्रज इव लक्ष्यते वत्सरश्रियः ॥ २४
बहुगर्तविभागस्थभूता लोकाः पृथक्पृथक् ।
जातारुणा विलोक्यन्ते दाडिमानीव कान्तिकाः ॥ २५
त्रिप्रवाहा त्रिपथगा कुतोर्ध्वाधोगमागमा ।
जगद्यज्ञोपवीताभा स्फुरतीन्दुकलामला ॥ २६
इतश्चेतश्च गच्छन्ति शीर्यन्ते प्रोद्भवन्ति च ।
दिग्लतासु तडित्पुष्पा वातार्ता मेघपल्लवाः ॥ २७
गन्धर्वनगरोद्यानलतावितानमालिनी ।
समुद्रभूमिनभसां पदवी प्रविराजते ॥ २८
लोकान्तरेषु सत्त्वेन देवासुरनरोरगाः ।
उदुम्बरेषु मशका इव घुंघुमिताः स्थिताः ॥ २९
युगकल्पक्षणलवकलाकाष्ठाकलङ्कितः ।
कालो वहत्यकलितसर्वनाशप्रतीक्षकः ॥ ३०
एवमालोक्य शुद्धेन परेण स्वेन चेतसा ।
भृशं विस्मयमापन्नः किमेतत्कथमित्यलम् ॥ ३१
कथं मांसमयेनाक्ष्णा यन्न पश्यामि किंचन ।
तन्मायाजालमतुलं पश्यामि मनसाम्बरे ॥ ३२
अथालोक्य चिरं कालं मनसैवाहमम्बरात् ।
अर्कं तस्माज्जगज्जालादेकमानीय पृष्टवान् ॥ ३३
आगच्छ देवदेवेश भो भास्कर महाद्युते ।
स्वागतं तेऽस्त्विति प्रोक्तो मयासौ कथितोऽप्यथ ॥ ३४
कस्त्वं कथमिदं जातं जगदेव जगन्ति च ।
यदि जानासि भगवंस्तदेतत्कथयानघ ॥ ३५
इत्युक्तो मां समालोक्य संपरिज्ञातवानथ ।
नमस्कृत्वाभ्युवाचेदमनिन्द्यपदया गिरा ॥ ३६
श्रीभानुरुवाच ।
अस्य दृश्यप्रपञ्चस्य नित्यं कारणतामसि ।
गतः कस्मान्न जानीषे किं मामीश्वर पृच्छसि ॥ ३७
अथ मद्वाक्यसंदर्भे लीला चेत्तव सर्वग ।
अचिन्तितां मदुत्पत्तिं तच्छृणुष्व वदाम्यहम् ॥ ३८
सदसदिति कलाभिराततं यत्
सदसदबोधविमोहदायिनीभिः ।
अविरतरचनाभिरीश्वरात्मन्
प्रविलसतीह मनो महन्महात्मन् ॥ ३९

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० उ० ऐन्दवोपाख्यानोपक्रमे ब्रह्मादित्यसमागमो नाम पञ्चाशीतितमः सर्गः ॥ ८५ ॥

## षडशीतितमः सर्गः ८६

श्रीभानुरुवाच ।
कल्पनाम्नि महादेव ह्यस्तने दिवसे तव ।
तले कैलासशैलस्य जम्बूद्वीपैककोणके ॥ १

ध्वनय एव काकलिघुंघुमा मधुरास्फुटवाग्विलासा यस्याः सा तथाविधा अर्धाङ्गः तस्मिन्भुवनाभोगे स्वान्तःपुरे अङ्गनेव संस्थितेत्यर्थः ॥ २३ ॥ वत्सरश्रियः संवत्सरलक्ष्म्याः कण्ठधृतायास्तमःप्रकाशलक्षणपद्मोत्पलनिर्मितायाः स्रजो मध्यस्था अन्तर्निविष्टा अतएव तदीयपरागसदृशविद्युन्नक्षत्रादिव्याप्तत्वाद्रजनीराज्या हरिद्रालेपनप्रायेण रात्रिसमूहाङ्गरागेण रञ्जिता गौराणां कण्ठकुचोदरवलिनाभ्यायङ्गानां पङ्क्तिरिव अर्थात् द्यौर्लक्ष्यत इत्यर्थः ॥ २४ ॥ बहूनि भुवनगर्तविभागेषु स्थितानि भूतानि बीजस्थानीयानि येषु तथाविधा लोका ब्रह्माण्डा जातान्यरुणानि तेजांसि येषु तथाविधाः सन्तः कान्तिकाः प्रकाशमाना दाडिमफलानीव विलोक्यन्त इत्यर्थः ॥ २५ ॥ २६ ॥ तडित एव पुष्पाणि येषां तथाविधा मेघपल्लवा दिग्लतासु वातार्ताः सन्त इतश्चेतश्च गच्छन्ति शीर्यन्ते प्रोद्भवन्तीति योजना ॥ २७ ॥ तच्च प्रतिभातं जगन्मिथ्यैवेति दर्शयति—गन्धर्वेति । सा समुद्रभूमिनभसां पदवी वितानशालिनी गन्धर्वनगरोद्यानलतेव प्रतिराजते न वास्तवीत्यर्थः ॥ २८ ॥ लोकान्तरेषु भुवनगर्भेषु ॥ २९ ॥ तेषु लोकान्तरेषु युगादिलक्षणः कालोऽपि प्रवहतीत्यर्थः । अकलितस्य अतर्कितस्य सर्वनाशस्य प्रतीक्षकः ॥ ३० ॥ विस्मयमापन्नः । अहमिति शेषः ॥ ३१ ॥ विस्मयमेव सहेतुकमभिलप्य दर्शयति—कथमिति । मांसमयेन चक्षुर्गोलकनिविष्टेनाक्ष्णा यन्न पश्यामि तन्मनसा पश्यामि इदं कथं संपन्नमिति विस्मय इत्यर्थः ॥ ३२ ॥ अम्बरात्तद्भुवनाकाशात् । आनीय सत्यसंकल्पेन पुरः संनिधाप्य ॥ ३३ ॥ स्वागतं तेऽस्त्विति प्रथमं प्रोक्तः अथ वक्ष्यमाणमर्थं कथितः पृष्टश्च ॥ ३४ ॥ तमेवार्थं दर्शयति—क इति । इदं त्वदीयं जगत्कथं जातम् । एवमन्यानि नव जगन्ति कथं जातानि कैः स्रष्टृभिः सृष्टानीत्यर्थः ॥ ३५ ॥ मां संपरिज्ञातवान् । अस्य ब्रह्माण्डस्य ब्रह्मा अयमितीति शेषः ॥ ३६ ॥ नित्यं शश्वत् ॥ ३७ ॥ लीलाश्रवणे कौतूहलम् । अचिन्तितां त्वया असंकल्पिताम् ॥ ३८ ॥ व्यवहारे सर्वशक्तिमत्त्वादीश्वरात्मन् । परमार्थदृशा तु महात्मन् । अविरता जगद्रचना याभ्यस्तथाविधाभिः । सदिति वा असदिति वा तत्त्वतोऽबोधेन विमोहदानशीलाभिः कदाचित्सत्कदाचिदसत्क्वचित्सत्क्वचिदसदिति कालदेशपरिच्छिन्नजगत्सत्ताप्रदर्शनकौशलरूपाभिर्यदिह आसमन्तात्ततं विस्तृतं तन्मन एव तथा प्रविलसतीति विद्धीत्यर्थः ॥ ३९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ब्रह्मादित्यसमागमो नाम पञ्चाशीतितमः सर्गः ॥ ८५ ॥

इहेन्दोः सहभार्यस्य तपसैन्दवसंभवः ।
तेषां ज्येष्ठोपदेशेन धात्रहंभावनेर्यते ॥ १ ॥

जम्बूद्वीपैककोणके विद्यमानस्य कैलासशैलस्यावयवभूते तले

सुवर्णजटनाम्ना यस्त्वत्पुत्रैर्जनितप्रजैः ।
मण्डलं कल्पितं श्रीमदनरूपसुखसुन्दरम् ॥ २
तत्राभूदतिधर्मात्मा ब्राह्मणो ब्रह्मवित्तमः ।
इन्दुनामातिशान्तात्मा कश्यपस्य कुलोद्भवः ॥ ३
तस्मिंस्तदा निवसतो नित्यं स्वजनमण्डले ।
तस्य प्राणसमा भार्या काचित्तस्यां महात्मनः ॥ ४
न बभूवात्मजस्तस्य मरुभूमौ तृणं यथा ।
न व्यराजत सा भार्या तस्य निष्फलपुष्पिता ॥ ५
ऋज्वी गौरी सुशुद्धापि शून्या शरलता यथा ।
तौ ततो दंपती खिन्नौ पुत्रार्थं तपसे गिरेः ॥ ६
कैलासस्यांशमारूढौ रूढाविव नवद्रुमौ ।
भूतैरनावृते शून्ये तस्मिन्कैलासकुञ्जके ॥ ७
तेपतुस्तौ तपो घोरं जलाहारौ तरुस्थिती ।
एकं पानीयचुलकं पीत्वा दिवसपर्यये ॥ ८
निस्पन्दमुत्थितौ वार्क्षीं वृत्तिमाश्रित्य संस्थितौ ।
तस्थतुस्तौ तदा तत्र तावत्कालं तरुव्रतौ ॥ ९
यावत्त्रेता द्वापरं च युगे द्वे एव ते गते ।
ततस्तुष्टोऽभवद्देवस्तयोः शशिकलाधरः ॥ १०
दिनातपातापितयोरिन्दुः कुमुदयोरिव ।
आजगाम तमुद्देशं यत्र तौ विप्रदंपती ॥ ११
सलतापादपं देशं पुष्पाकर इवेश्वरः ।
दंपती तौ वृषारूढं सोमं सोमार्धशेखरम् ॥ १२
फुल्लाननौ ददृशतुः कुमुदे शशिनं यथा ।
तौ तं प्रणेमतुर्देवं तुषारामलमीश्वरम् ॥ १३
द्यावापृथिव्यावुदितं परिपूर्णमिवोडुपम् ।
तर्जयन्पवनाधूतनववृक्षाननस्वरम् ॥ १४
मृदूद्दामस्मितस्पन्दि प्रोवाचाथ वचः शिवः ।

ईश्वर उवाच ।

वरं विप्र गृहाणाशु तुष्टोऽस्मि तव वाञ्छितम् ॥ १५
मधुमासरसाक्रान्तवृक्षवन्मुदितो भव ।

विप्र उवाच ।

भगवन्देवदेवेश दश पुत्रा महाधियः ॥ १६
भव्या भवन्तु मे भूयः शोको येन न बाधते ।

भानुरुवाच ।

अथैवमस्त्विति प्रोच्य जगामान्तर्धिमीश्वरः ॥ १७
व्योम्नि वारिनिधिर्ह्रादं कृत्वेवोर्मिमहावपुः ।
ततस्तौ दम्पती तुष्टौ शिवलब्धवरौ गृहम् ॥ १८
गतौ गीर्वाणसदृशौ खमिवोमामहेश्वरौ ।
तत्रासौ ब्राह्मणी गेहे बभूवोदारगर्भिणी ॥ १९
बभौ पूर्णोदरा श्यामा मेघलेखेव वारिणा ।
कालेऽथ सुषुवे पुत्रान्प्रतिपच्चन्द्रकोमलान् ॥ २०
दशबालांस्ततो मुग्धान्वसुधेव नवाङ्कुरान् ।
कृतब्राह्मणसंस्कारा वृद्धिमीयुर्महौजसः ॥ २१
स्वल्पेनैव हि कालेन प्रावृषेव नवाम्बुदाः ।
ते सप्तवर्षवयसो बभूवुर्ज्ञातवाङ्मयाः ॥ २२
विरेजुस्तेजसा तत्र नभसीवामला ग्रहाः ।
अथ कालेन महता तेषां तौ पितरौ तदा ॥ २३
संजग्मतुस्तनुं त्यक्त्वा स्वां गतिं गतिकोविदौ ।
मातापितृभ्यां रहिता दश ते ब्राह्मणास्ततः ॥ २४
ययुः कैलासशिखरं गृहं संत्यज्य खेदिनः ।
तत्र संचिन्तयामासुरुद्विग्नास्ते विबान्धवाः ॥ २५
किं स्यादिह परं श्रेय ऊचुश्चेदं परस्परम् ।
किमिह स्यात्समुचितं भ्रातरः किमदुःखदम् ॥ २६

---

समभूप्रदेशे ॥ १ ॥ यः प्रदेशः सुवर्णजटनाम्ना प्रसिद्ध इति शेषः । यत्र प्रदेशे जनिता प्रजा संततिर्यैस्तथाविधैस्तत्पुत्रैर्मरीच्यादिभिः प्रजानां निवासार्थं मण्डलं कल्पितमित्यर्थः ॥ २ ॥ तत्र मण्डले । ब्रह्मवित्तमो वेदविच्छ्रेष्ठः ॥ ३ ॥ ४ ॥ ५ ॥ शून्या फलशून्या । शरलता काशस्तम्बः ॥ ६ ॥ अंशमूर्ध्वभागं । भूतैः प्राणिभिः ॥ ७ ॥ तरोः स्थितिरिव स्थितिः स्थैर्यं ययोस्तौ । तरुस्थितिमेवोपपादयति—**एक**मिति । दिवसपर्यये दिनचरमभागे ॥ ८ ॥ वार्क्षीं वृक्षसंबन्धिनीम् । तत्सदृशीमिति यावत् ॥ ९ ॥ द्वे युगे गते एवेति योजना । चिरं तपस्तु विशिष्टपुत्रलाभार्थम् ॥ १० ॥ उद्देशं प्रदेशम् ॥ ११ ॥ पुष्पाकरो वसन्त इव । उमया सहितं सोमम् ॥ १२ ॥ कुमुदे कैरवे । विकास एव दृष्टान्ते दर्शनम् ॥ १३ ॥ द्यावापृथिव्याविल्यनेन तत्स्था जना लक्ष्यन्ते । उडुपं चन्द्रम् । पवनेन मलयानिलेन आधूतानां ईषत्कम्पितपल्लवानां रसालादिवृक्षाणां आननमिव कूजतां भ्रमरकोकिलादीनां स्वरं स्ववचोमाधुर्यातिशयेन तर्जयन्निर्भर्त्सयन्निव ॥ १४ ॥ मृदुना उद्दामेन सौन्दर्योत्कृष्टेन स्मितेन स्पन्दि ईषच्चलिताधरं यथा स्यात्तथा । तव वाञ्छितमिष्टं वरं गृहाण ॥ १५ ॥ १६ ॥ भव्याः कल्याणगुणाचारशालिनः । येन पुत्रलाभेन ॥ १७ ॥ व्योम्नीति पूर्वान्वयि । अथवा वारि निधीयते अस्मिन्निति वारिनिधिर्मेघः । ऊर्मिभिरिव विभक्तैरवयवैर्महद्वपुर्यस्य ॥ १८ ॥ गीर्वाणा देवास्तत्सदृशौ तौ दंपती । अथवा मायिकदिव्यशरीरकल्पनाद्गीर्वाणसदृशावुमामहेश्वरौ खं वास्तवं ब्रह्माकाशमिव ॥ १९ ॥ २० ॥ मुग्धान् सुन्दरान् । कृता जातकर्मनामकरणान्नप्राशनचौलोपनयनवेदव्रताध्ययनादयो ब्राह्मणसंस्कारा येषाम् ॥ २१ ॥ प्रावृषा वर्षर्तुना ॥ २२ ॥ २३ ॥ स्वां गतिं विदेहकैवल्यम् । यतो मुख्यतमगतिभूतब्रह्मकोविदौ ॥ २४ ॥ खेदिनो दुःखिताः । तेषां भाग्यवशाद्भाविहैरण्यगर्भैश्वर्यप्राप्त्यनुसारि विचार उत्पन्न इत्याह—**तत्रे**ति । विबान्धवाः पित्रादिबन्धुहीनाः ॥ २५ ॥ परं विभवोत्कृष्टं श्रेयः सुखम् । इति संचिन्त्य इदं वक्ष्यमाणं

किं महत्त्वं किमैश्वर्यं किं महाविभवं शुभम् ।
किं तदेतज्जनैश्वर्यं सामन्तो हि महेश्वर ॥ २७
सामन्तसंपत्किंनाम राजानो हि महेश्वराः ।
का नाम संपद्रूपाणां सम्राडिह महेश्वरः ॥ २८
किं नाम तन्महेन्द्रत्वं यन्मुहूर्तं प्रजापतेः ।
विनश्यति न यत्कल्पे किं स्यात्तदिह शोभनम् ॥ २९
भाषमाणेष्वथैतेषु ज्येष्ठो भ्राता महामतिः ।
गम्भीरवागुवाचेदं मृगयूथान्मृगो यथा ॥ ३०
ऐश्वर्याणां हि सर्वेषामाकल्पं न विनाशि यत् ।
रोचते भ्रातरस्तन्मे ब्रह्मत्वमिह नेतरत् ॥ ३१
एतदुक्तं तदखिला द्विजपुत्रास्त उत्तमाः ।
वचोभिरैन्दवास्तत्र साधु साध्वित्यपूजयन् ॥ ३२
ऊचुश्चेदं कथं तात सर्वदुःखोपमार्जनम् ।
पद्मासनं जगत्पूज्यं विरिञ्चित्वमवाप्नुमः ॥ ३३
भ्रात्रा तेन पुनः प्रोक्ता भ्रातरो भूरितेजसः ।
मदुक्तं सर्व एवेमे भवन्तः पालयन्तु वै ॥ ३४
पद्मासनगतो भास्वान्ब्रह्माहमिति तेजसा ।
सृजामि संहरामीति ध्यानमस्तु चिराय वः ॥ ३५
अग्रजेनेति कथिते बाढं कृत्वा त उत्तमाः ।
ध्यानाधीनधियस्तस्थुः सहैव ज्यायसा रसात् ॥ ३६
लिपिकर्मार्पिताकारा ध्यानासक्तधियश्च ते ।
अन्तस्थेनैव मनसा चिन्तयामासुरादृताः ॥ ३७
अथ उत्फुल्लकमलकोशवक्रोन्नतासनः ।
ब्रह्माहं जगतां स्रष्टा कर्ता भोक्ता महेश्वरः ॥ ३८
यज्ञक्रियाक्रमवतः साङ्गोपाङ्गा महर्षयः ।
सरस्वत्याथ गायत्र्या युक्ता वेदा नरा इमे ॥ ३९
लोकपालपराक्रान्तः संचरत्सिद्धमण्डलः ।
अयमुद्दामसौभाग्यः स्वर्गः स्वरविभूषितः ॥ ४०
पर्वतद्वीपजलधिकाननैः समलंकृतम् ।
इदं भूमण्डलं चैव त्रिलोकीकर्णकुण्डलम् ॥ ४१
एतत्पातालकुहरं दैत्यदानवभोजितम् ।
अमृतस्त्रीगणाकीर्णं गृहं गगनकोटरम् ॥ ४२
अयमिन्द्रो महाबाहुः प्रजालंकृतदोत्तमः ।
त्रैलोक्यनगरीमेकः पाति पावनयज्ञभुक् ॥ ४३
दीप्रजालवरत्राभिरवष्टभ्याथ दिग्गणम् ।
क्रमेण प्रतपन्त्येते भानवो भूरिभानवः ॥ ४४
लोकपाला इमे लोकं रक्षन्ति शुद्धवृत्तयः ।
मर्यादाभिरतुच्छाभिर्गोपाला गोगणं यथा ॥ ४५
उन्मज्जन्ति निमज्जन्ति प्रस्फुरन्ति पतन्ति च ।
तरङ्गा इव तोयानामिमाः प्रतिदिनं प्रजाः ॥ ४६

चोचुः । ऐहिकामुष्मिकसुखोपायतया स्वीकर्तुं समुचितम् । हे भ्रातरः, ऐहिकसुखाहेतुत्वेऽपि परिणामे अदुःखदं किम् ॥२६॥ एवं सामान्यतो विमृश्य विशेषतोऽपि विमृशन्ति—**किमिति** । तदेतज्जनानामैश्वर्यं किमुत्कृष्टं गृहग्रामाधिपतिभ्यः । हि यस्मात्सामन्तो मण्डलाधिपतिर्महानीश्वरः ऐश्वर्यवान् ॥ २७ ॥ किंनाम कियन्नाम । राजानो देशाधिपतयः ॥ २८ ॥ महेन्द्रस्तर्हि महेश्वरः स्यात्तत्राह—**किं नामेति** ॥ २९ ॥ एवं भाषमाणेषु भ्रातृषु जन्मान्तरे कृतहिरण्यगर्भोपास्तिरन्तरायैरन्तरा विपन्नत्वात्प्राप्तोत्तमजन्मा भ्रातृसंवादादेवोद्बुद्धप्राक्तनोपास्तिसंस्कारो महामतिर्नाम ज्येष्ठो भ्राता प्राक्स्वानुष्ठितोपास्तिक्रमं तदधिकृतेभ्यो भ्रातृभ्य उपदेष्टुकाम उवाचेत्याह—**भाषमाणेष्विति** । मृगो यूथपः ॥३०॥ आकल्पं आप्राकृतप्रलयम् । हे भ्रातरः, ब्रह्मत्वं हिरण्यगर्भता ॥ ३१ ॥ भाग्यवशादितरेषामपि तत्राभिरुचिरुत्पन्नेत्याह—**एतदिति** । 'तदुत्तमाः' इति पाठे स महामतिरेवोत्तमो ज्येष्ठः श्रेष्ठश्च येषाम् ॥३२॥ अतएव तदुपायमपृच्छन्नित्याह—**ऊचुरिति** । सर्वाणि जरामरणसातिशयत्वादिप्रयुक्तदुःखान्युपमृज्यन्ते यस्मिन्नित्यधिकरणे ल्युट् । अवाप्नुमः शीघ्रं प्राप्स्यामः । वर्तमानसामीप्यविवक्षया लट् ॥ ३३ ॥ तेभ्य उपागतेभ्यो हिरण्यगर्भोऽहंग्रहोपास्तिं सपरिकरामुपदेक्ष्यंस्तदङ्गमामृतेर्धारणादार्ढ्यं विधत्ते—**मदुक्तमिति** । वै इति तत्र दृढनिश्चयापेक्षाद्योतनार्थम् ॥ ३४ ॥ सृजामि संहरामीति लिङ्गात्संवर्गविधेयमुपदिष्टेति गम्यते । इतिशब्दाद्वक्ष्यमाणप्रकारक्रमः सर्वोऽप्युपदिष्टो बोध्यः । चिरायेति भ्रमरकीटन्यायेन आतद्भावोदयमित्यर्थः ॥ ३५ ॥ बाढं कृत्वा दृढमङ्गीकृत्य । ज्यायसा ज्येष्ठभ्रात्रा सहैव । रसात्फलरागातिशयात् ॥ ३६ ॥ लिपिकर्म चित्रलेखस्तदर्पिताकाराः ॥ ३७ ॥ तत्कथं चिन्तनप्रकारं वक्तुमुपक्रमते—**अथेत्यादिना** ॥ ३८ ॥ यज्ञक्रियाक्रमवतो यज्ञमूर्तेर्मम याजका महर्षयः साङ्गोपाङ्गा अङ्गैः शिक्षादिभिरुपाङ्गैः पुराणादिभिश्च सहिताः सरस्वत्या गायत्र्या च युक्ता वेदा नरा मूर्तिमन्त इमे मदन्तस्था इत्यर्थः ॥ ३९ ॥ ४० ॥ त्रिलोकीलक्षणायाः स्त्रियः कर्णकुण्डलम् ॥ ४१ ॥ दैत्यैर्दानवैश्च भोजितं पूरितोदरम् । अमृतानाममर्त्यानां स्त्रीगणैरप्सरोभिराकीर्णं व्याप्तं गृहमिव गृहमित्यर्थः ॥४२॥ अयं मदन्तस्थः प्रजानां अलंकृतमलंकारं शोभमानतां ददतीति प्रजालंकृतदा राजानः । राजभिर्हि प्रजाः शोभन्ते तेषूत्तम ॥४३॥ दीप्राभिः कान्तिजाललक्षणवरत्राभिः पाशैर्दिग्गणमवष्टभ्य यथा न पलायन्ते तथा बद्ध्वा रसादानाय प्रतपन्ति । भानवो द्वादशादित्याः भूरिभानवः प्रचुरकिरणाः । क्रमेण चैत्रादिमासक्रमेण ॥ ४४ ॥ अतुच्छाभिर्न्याय्यत्वान्महतीभिः ॥ ४५ ॥ उन्मज्जन्त्याविर्भवन्ति, निमज्जन्ति तिरोभवन्ति, प्रस्फुरन्ति विविधविभवादिना विराजन्ते । दारिद्र्य-

१ रक्षन्त्यक्षुब्धवृत्तयः इति पाठः. २ अतुच्छाभिरवच्छिन्नन्यायवत्या । इतीभिरिति पाठः.

सृजामीममहं सर्गं संहरामि तथाहतः ।
अयमात्मनि तिष्ठामि शाम्यामि भुवनेश्वरः ॥ ४७
अयं संवत्सरो यात इदं परिणतं युगम् ।
सृष्टेरयमसौ कालः स्वयं संहरणस्य च ॥ ४८
अयमेव गतः कल्पो ब्राह्मी रात्रिरियं तता ।
अयमात्मनि तिष्ठामि पूर्णात्मा परमेश्वरः ॥ ४९
इति भावितया बुद्ध्या ते द्विजा अथ ऐन्दवाः ।
दशाद्रिवृत्तयस्तस्थुः समुत्कीर्णा इवोपलात् ॥ ५०
अधिगतकमलासनक्रमास्ते
परिगलितेतरतुच्छवृत्तिजालाः ।
सततमतितरां कुशासनस्था-
श्चिरमिति पङ्कजकल्पने विरेजुः ॥ ५१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० ए० ऐन्दवसमाधानं नाम षडशीतितमः सर्गः ॥ ८६ ॥

## सप्ताशीतितमः सर्गः ८७

भानुरुवाच ।
पितामहक्रमे तास्मिंस्ततस्ते बहुभावनात् ।
कर्मभिस्तैः समाक्रान्तमनस्कास्तस्थुरादृताः ॥ १
यावत्ते देहकास्तेषां तापेन पवनैस्तथा ।
कालेन शोषमभ्येत्य गलिताः शीर्णपर्णवत् ॥ २
जक्षुस्तान्देहकांस्तत्र क्रव्यादा वनवासिनः ।
इतश्चेतश्च लुठितान्सुफलानीव मर्कटाः ॥ ३
अथ ते शान्तबाह्यार्थां ब्रह्मत्वे कृतभावनाः ।
तस्थुश्चतुर्युगस्यान्ते यावत्कल्पः क्षयं गतः ॥ ४
क्षीयमाणे ततः कल्पे तपत्यादित्यसंचये ।
पुष्करावर्तकेषूच्चैर्वर्षत्सु कठिनारवम् ॥ ५
वहत्सु कल्पवातेषु स्थित एकमहार्णवे ।
क्षीणेषु भूतवृन्देषु ते तथैव व्यवस्थिताः ॥ ६
ततो रात्रिक्रमपरे सर्वा संहृत्य तां स्थितिम् ।
स्थिते त्वय्यात्मनि विभो ते तथैव व्यवस्थिताः ॥ ७
अद्य प्रबुद्धे भवति स्रष्टुमिच्छति संसृतिम् ।
सुखेनैव क्रमेणोच्चैस्ते तथैव व्यवस्थिताः ॥ ८
तथैते भगवन्ब्रह्मन्ब्रह्मणो ब्राह्मणा दश ।
त एते दश संसारा मनोव्योमनि संस्थिताः ॥ ९
तेषामेकतमस्याहमयमाकाशमन्दिरे ।
भानुर्भुवि विभो कालकलाकर्मणि योजितः ॥ १०
एष ते कथितः सर्गो दिशानामब्जसंभव ।
ब्रह्मणां संभवो व्योम्नि यथेच्छसि तथा कुरु ॥ ११
विविधकल्पनया वलिताम्बरं
यदिदमुत्तम जागतमुत्थितम् ।
करणजालकमाहितमोहनं
तदखिलं निजचेतसि विभ्रमः ॥ १२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ० ऐन्दवो० दशजगद्वर्णनं नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

दोषादिना पतन्ति च ॥ ४६ ॥ आत्मनि पारमार्थिके स्वरूपे तिष्ठामि । अतएव शाम्याम्युपरमे ॥ ४७ ॥ उक्तमेव स्पष्टं वदन्नुपसंहरति—**अयमि**त्यादिद्वाभ्याम् ॥ ४८ ॥ ४९ ॥ अथ ऐन्दवा इत्यसंधिः संहिताऽनित्यत्वात् । अद्रिवृत्तयो दृढवद्धासनाः ॥५०॥ कुशासनस्थास्ते पङ्कजासनकल्पने सति परिगलितेतरतुच्छवृत्तिजालाः सन्तः अधिगतकमलासनक्रमाश्च सन्तो विरेजुः ॥ ५१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ऐन्दवसमाधानं नाम षडशीतितमः सर्गः ॥८६॥

**मनसा ब्रह्मभूतानां क्रव्यादैर्देहभक्षणे ।**
**प्रतिसर्गेऽथ सर्गे च तथावस्थितिरीर्यते ॥ १ ॥**

हे पितामह, ते ऐन्दवास्तस्मिन्नुपास्तिक्रमे तैस्तैर्भुवनभूतग्रामादिसृष्टिपरिपालनसंहारादिकर्मभिस्त्वमिव समाक्रान्तमनस्कास्तत्रैवादृता अत्यासक्ताः सन्तस्तावत्तस्थुर्यावत्तेषां कृशा देहा देहकाः शोषमभ्येत्य गलिता इति परेणान्वयः ॥ १ ॥ २ ॥ जक्षुर्बभक्षुः । क्रव्यादा मांसाशिनो मृगपक्षिणः ॥ ३ ॥ शरीरनाशे च तेषामात्यन्तिकी बाह्यार्थप्रत्ययनिवृत्तिः संपन्नेत्याह—**अथे**ति । चतुर्युगस्य शिष्टस्यान्ते ॥ ४ ॥ ५ ॥ ते ऐन्दवास्तथैव स्वमनःकल्पितब्रह्माण्डे सर्गादिव्यापृततयैव व्यवस्थिताः ॥ ६ ॥ रात्रेः क्रमणं क्रमोऽतिक्रमस्तत्परे तत्प्रतीक्षे त्वयि योगनिद्रया आत्मनि स्थिते सति ॥ ७ ॥ ८ ॥ ९ ॥ एतावता ग्रन्थेन कथमिदं जातमिति प्रश्नस्योत्तरमुक्त्वा कस्त्वमित्यस्योत्तरमाह—**तेषामि**त्यादिना । तेषामैन्दवसर्गाणां मध्ये एकतमस्य ब्रह्माण्डस्य च्छिद्रभूताकाशलक्षणे मन्दिरे । भुवीति त्रैलोक्योपलक्षणम् । भूलोक एव कर्माङ्गतया कालविभागज्ञानस्य विशेषोपयोगात् ॥१०॥ एषु सर्गेषु सत्स्वपि न तव सर्गे कोऽपि विरोध इत्याशयेनाह—**यथेच्छसी**ति ॥ ११ ॥ कुतो न विरोध इति चेन्मनःकल्पनामात्रत्वेनासत्यत्वादित्याशयेनाह—**विविधे**ति । हे उत्तम, करणानां बाह्याभ्यन्तराणां जालकमिव बन्धनभूतम् । आहितेन आसङ्गेन मोहनं यदिदं जागतं दृश्यजातमुत्थितं तदखिलं तेषां निजचेतसि स्वचित्ते विभ्रमो भ्रान्तिमात्रं न वस्तुसदित्यर्थः ॥ १२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे दशजगद्वर्णनं नाम सप्ताशीतितमः सर्गः ॥८७॥

# अष्टाशीतितमः सर्गः ८८

श्रीब्रह्मोवाच ।

ब्रह्माणो ब्राह्मणा भानुरित्युक्त्वा ब्रह्मणो मम ।
ब्रह्मन्ब्रह्मविदां श्रेष्ठ तूष्णीमेव बभूव सः ॥ १
तत उक्तं मया तस्य चिरं संचिन्त्य चेतसा ।
भानो भानो वदाशु त्वं किमन्यत्संसृजाम्यहम् ॥ २
एतानि दश विद्यन्ते किल यत्र जगन्ति वै ।
तत्रान्यो मम सर्गेण कोऽर्थः कथय भास्कर ॥ ३
इत्युक्तोऽथ मया भानुः संचिन्त्य सुचिरं धिया ।
इदमत्र वचो युक्तमुवाच स महामुने ॥ ४

भानुरुवाच ।

निरीहस्य निरिच्छस्य कोऽर्थः सर्गेण ते प्रभो ।
विनोदमात्रमेवेदं सृष्टिस्तव जगत्पते ॥ ५
निष्कामादेव भवतः सर्गः संपद्यते प्रभो ।
अर्कादिव जलादित्यप्रतिबिम्बमिवाधियः ॥ ६
शरीरसंनिवेशस्य त्यागे रागे च ते यदा ।
निष्कामो भगवन्भावो नाभिवाञ्छति नोज्झति ॥ ७
सृजसीदं तथा देव विनोदायैव भूतप ।
पुनः संहृत्य संहृत्य दिनं दिनपतिर्यथा ॥ ८
तव नित्यमसंसक्तं विनोदायैव केवलम् ।
इदं कर्तव्यमेवेति जगन्न तूद्यमेच्छया ॥ ९
सृष्टिं चेन्न करोषि त्वं महेश[1] परमात्मनः ।
नित्यकर्मपरित्यागात्किमपूर्वमवाप्स्यसि ॥ १०
यथाप्राप्तं हि कर्तव्यमसक्तेन सदा सता ।
मुकुरेणाकलङ्केन प्रतिबिम्बक्रिया यथा ॥ ११
यथैव कर्मकरणे कामना नास्ति धीमताम् ।
तथैव कर्मसंत्यागे कामना नास्ति धीमताम् ॥ १२
अतः सुषुप्तोपमया धिया निष्कामया तया ।
सुषुप्तबुद्धसमया कुरु कार्यं यथागतम् ॥ १३
सर्गैरथेन्दुपुत्राणां तोषमेषि जगत्प्रभो ।
तदेते तोषयिष्यन्ति तं त्वां सर्गात्सुरेश्वर ॥ १४
चित्तनेत्रैर्भवानेतान्सर्गानन्यस्य नो दृशा ।
अवश्यं चक्षुषा सर्गं सृष्टमित्येव वेत्ति कः ॥ १५
येनैव मनसा सर्गो निर्मितः परमेश्वर ।
स एव मांसनेत्रेण तं पश्यति हि नेतरः ॥ १६
न चैतान्दश संसारान्दश नीरजसंभवान् ।
कश्चिन्नाशयितुं शक्तश्चित्तदार्ढ्याच्चिरस्थितान् ॥ १७
कर्मेन्द्रियैर्यत्क्रियते तद्रोद्धुं किल युज्यते ।
न मनोनिश्चयकृतं कश्चिद्रोधयितुं क्षमः ॥ १८
यो बद्धपदतां यातो जन्तोर्मनसि निश्चयः ।
स तेनैव विना ब्रह्मन्नान्येन विनिवार्यते ॥ १९
बहुकालं यदभ्यस्तं मनसा दृढनिश्चयम् ।
शापेनापि न तस्यास्ति क्षयो नष्टेऽपि देहके ॥ २०

---

इह भातुरनासक्त्या सर्गसिद्धिरुदीर्यते ।
मनसा दृढसिद्धस्य तथान्यैरनिवर्तनम् ॥ १ ॥

उक्तां कथामुपसंहरति—**ब्रह्माण** इति । ब्रह्मन्ब्रह्मविदां श्रेष्ठेति भानुकृतं ब्रह्मसंबोधनं ब्रह्मकृतं वसिष्ठसंबोधनं च । ते दश ब्रह्माणः प्रागुक्ता ब्राह्मणा एव नान्ये इति स भानुर्ब्रह्मणो मम पुर उक्त्वा तूष्णीमेव बभूवेत्यर्थः ॥ १ ॥ भानो भानो इत्यादराद्द्विरुक्तिः ॥ २ ॥ कोऽर्थः किं प्रयोजनम् ॥ ३ ॥ युक्तं मत्प्रश्नोचितम् ॥ ४ ॥ ५ ॥ अर्काज्जलादित्यात्मकं प्रतिबिम्बमिव । अधियो निर्मनस्कात् ॥ ६ ॥ सर्गे निष्कामतां कैमुतिकन्यायेन द्रढयति—**शरीरे**ति । शरीरात्मकस्यावयवसन्निवेशस्य त्यागे रागे अहमभिमानेन स्वीकृत्य रञ्जने च ते भावो निष्कामः ॥ ७ ॥ दिनं दिनपतिर्यथा सृजति तथा सृजसि ॥ ८ ॥ कर्तव्यं सर्गार्हम् । उद्यमः स्वार्थाभिलाषेणोद्योगस्तदिच्छया तु न ॥ ९ ॥ आत्मनः स्वस्य नित्यकर्मपरित्यागात्परमन्यदपूर्वमदृष्टं किमवाप्स्यसि । न किंचिदित्यर्थः ॥ १० ॥ तर्हि किमु परमो युक्तो नेत्याह—**यथाप्राप्त**मिति ॥ ११ ॥ अप्राप्तकरण इव प्राप्तत्यागेऽपि हेत्वभावादित्यर्थः ॥ १२ ॥ परमार्थतोऽकरणात्सुषुप्तोपमया । प्रतीतितः करणात्तु सुषुप्तेर्बुद्धः स्वप्नस्तत्समया ॥ १३ ॥ किंचैतैरैन्दवसर्गैस्त्वं स्वपुत्रपौत्रादीनां संपद्वृद्धिदर्शनादिव यदि तोषमेषि, तत्तर्हि एते ऐन्दवा अग्रेऽपि सर्गात्तं तोषशीलं त्वां तोषयिष्यन्तीत्यर्थः ॥ १४ ॥ अस्तु तोषः, तथापि मत्सर्गस्तेन कुतो न गतार्थस्तत्राह—**चित्तनेत्रेणे**ति । भवानन्यस्य सर्गं चित्तरूपेण नेत्रेण पश्यति, दृशा चक्षुषा तु नो पश्यति । कस्तत्स्रष्टा तु स्वकृतं सर्गं मयेदं सृष्टमिति चक्षुषैवावश्यं वेत्ति अतस्ते स्वचक्षुर्दर्शनार्हः सर्गो नान्येन गतार्थ इत्यर्थः ॥ १५ ॥ तर्ह्यैन्दवकृतसर्ग एव मया चक्षुषा द्रष्टव्यस्तत्राह—**येनैवे**ति ॥ १६ ॥ यद्येवं तर्हि वृथा मन्मनसा दृश्योऽयमैन्दवसर्गो मत्प्रतिकूल एवेति मया नाशनीयस्तत्राह—**न चैताना**विति । दशैतान्संसारांस्तद्धेतून्दश नीरजसंभवान्पद्मजान्वा कश्चिन्नाशयितुं शक्तः ॥ १७ ॥ रोद्धुं रोधयितुमित्यनयोर्नाशयितुमित्यर्थः ॥ १८ ॥ बद्धपदतां रूढमूलताम् ॥ १९ ॥ शापेन तर्हि स

---

[1] महेच्छ इति पाठः. तत्र हे महेच्छ महाशयेत्यर्थः.

यद्वद्बद्धपीठमभितो मनसि प्ररूढ
तद्रूपमेव पुरुषो भवतीह नान्यत् ।
तद्बोधनादितरमत्र किलाभ्युपायं
शैलौघसेकमिव निष्फलमेव मन्ये ॥ २१

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० उत्पत्तिप्रकरणे ऐ० ऐन्दवनिश्चयकथनं नामाष्टाशीतितमः सर्गः ॥ ८८ ॥

## एकोननवतितमः सर्गः ८९

भानुरुवाच ।
मनो हि जगतां कर्तृ मनो हि पुरुषः परः ।
मनःकृतं कृतं लोके न शरीरकृतं कृतम् ॥ १
सामान्यब्राह्मणा भूत्वा मनोभावनया किल ।
ऐन्दवा ब्रह्मतां याता मनसः पश्य शक्तताम् ॥ २
मनसा भाव्यमानो हि देहतां याति देहकः ।
देहभावनयाऽयुक्तो देहधर्मैर्न बाध्यते ॥ ३
बाह्यदृष्टिर्हि नियतं सुखदुःखादि विन्दति ।
नान्तर्मुखतया योगी देहे वेत्ति प्रियाप्रिये ॥ ४
मनःकारणकं तस्माज्जगद्विविधविभ्रमम् ।
इन्द्रस्याहल्यया सार्धं वृत्तान्तोऽत्र निदर्शनम् ॥ ५
श्रीब्रह्मोवाच ।
काहल्या भगवन्भानो को वात्रेन्द्रस्तमोनुद ।
ययोरुदन्तश्रवणे पावनी दृष्टिरेति हि ॥ ६
भानुरुवाच ।
श्रूयते हि पुरा देव मागधेषु महीपतिः ।
इन्द्रद्युम्न इति ख्यात इन्द्रद्युम्न इवापरः ॥ ७
तस्येन्दुबिम्बप्रतिमा भार्या कमललोचना ।
अहल्या नाम तत्रासीच्छशाङ्कस्येव रोहिणी ॥ ८
तस्मिन्नेव पुरे षिङ्गः षिङ्गप्रकरशेखरः ।
इन्द्रनामा परः कश्चिच्छ्रीमान्विप्रकुमारकः ॥ ९
अहल्या पूर्वमिन्द्रस्य बभूवेत्यहल्यया ।
श्रुतं राजमहिष्याथ कथाप्रस्तावतः क्वचित् ॥ १०
आकर्ण्यैवमहल्या सा बभूवेन्द्रानुरागिणी ।
अहल्यां मां स नो कस्मात्सक्तोऽभ्येतीत्यथोत्सुका ॥ ११
मृणालभारकदलीपल्लवास्तरणेषु सा ।
अतप्यत भृशं बाला लता लूना वनेष्विव ॥ १२
खेदमाप समग्रासु तासु भूपविभूतिषु ।
मत्सी निदाघतप्तासु परिलोला स्थलीष्विव ॥ १३
अयमिन्द्रोऽयमिन्द्रश्चेत्येवं जातप्रलापया ।
लज्जापि हि तया त्यक्ता वैवश्यमनुयातया ॥ १४
इत्यार्तया घनस्नेहमथ तस्या वयस्यया ।
उक्तं तया प्रियेऽविघ्नमिन्द्रमभ्यानयाम्यहम् ॥ १५
इष्टं तवानयामीति श्रुत्वा विकसितेक्षणा ।
पपात पादयोः सख्या नलिन्या नलिनी यथा ॥ १६
ततः प्रयाते दिवसे समायाते निशागमे ।
सा वयस्या तमिन्द्राख्यं ययौ द्विजकुमारकम् ॥ १७
बोधयित्वा यथायुक्तं सा तमिन्द्रमथाङ्गना ।
अहल्यानिकटं रात्र्यामानयामास सत्वरम् ॥ १८
ततः सा तेन षिङ्गेन सहेन्द्रेण रतिं ययौ ।
कस्मिंश्चित्सदने गुप्ते बहुमाल्यविलेपना ॥ १९
हाराङ्गदमनोज्ञेन तरुणी तेन सा तदा ।
रतेनावर्जिता वल्ली र[1]सेन मधुना यथा ॥ २०
ततस्तदनुरक्ता सा पश्यन्ती तन्मयं जगत् ।
न समस्तगुणाकीर्णं भर्तारं बह्वमन्यत ॥ २१
केनचित्त्वथ कालेन तस्या इन्द्रानुरागिता ।
सा ज्ञाता राजसिंहेन तन्मुखव्योमचन्द्रिका ॥ २२

मया निरसनीयस्तत्राह—**बहुकाल**मिति ॥ २० ॥ बद्धपीठं स्थिरीभूतम् । अतएव हि मूढानां संसारनिवारणे तद्बोधनमेवोपायो न वरशापादिरन्य इत्याह—**तद्बोधनाद्**िति । शैलौघानां शिलाशकलसमूहानामङ्कुरोदयेच्छया सेकमिव निष्फलमेवाहं मन्ये ॥ २१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ऐन्दवनिश्चयकथनं नामाष्टाशीतितमः सर्गः ॥ ८८ ॥

मनसो बद्धपीठस्य परयत्नैरचाल्यता ।
इन्द्राहल्यामनोवृत्तिकथयात्र प्रकाश्यते ॥ १ ॥

समष्टिभावापन्नं मन एव परः पुरुषो हिरण्यगर्भः ॥ १ ॥ २ ॥ देहभावनया अयुक्त इति च्छेदः । 'मुक्त' इति पाठः स्पष्टः । देहधर्मैर्जन्ममरणादिभिः ॥ ३ ॥ बाह्ये दृष्टिर्देहादावात्मात्मीयदृष्टिर्यस्य सः ॥ ४ ॥ वक्ष्यमाणकथां वक्तुमुक्तमुपसंहरति—**मनःकारणक**मिति ॥ ५ ॥ उदन्तो वृत्तान्तस्तस्य श्रवणे सति ॥ ६ ॥ अपरः पुराणान्तरप्रसिद्ध इन्द्रद्युम्न इव ॥ ७ ॥ ८ ॥ षिङ्गो विटः । 'षिङ्ग' इति पाठेऽपि स एवार्थः । धीमान्विटविद्याकुशलः ॥ ९ ॥ अहल्या गौतमपत्नी ॥ १० ॥ स इन्द्रः सक्त आसक्तः सन् कुतो नो एति नागच्छतीत्युत्सुका उत्कण्ठिता ॥ ११ ॥ १२ ॥ निदाघेन ग्रीष्मेण तप्तासु स्थलीषु परिलोला मत्सीव । 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति यलोपः ॥ १३ ॥ तथा लज्जापि त्यक्ता । अनुयातया अनुसृतया ॥ १४ ॥ अथानन्तरं तस्या वयस्यया एवंविधां दृष्ट्वा आर्तया तया इति उक्तम् । हे प्रिये सखि, अहमिन्द्रमभिमुखमविघ्नं यथा स्यात्तथा आनयामि ॥ १५ ॥ नलिनी पद्मिनी ग्लाना अन्यस्या नलिन्या मूले यथा पतति तद्वत् ॥ १६ ॥ १७ ॥ ॥ १८ ॥ १९ ॥ रतेन सुरतोचितक्रीडनेन आवर्जिता वशीकृता । मधुना वसन्तेन ॥ २० ॥ २१ ॥ तन्मुखव्योम्नश्चन्द्रिकेव

१ रतेन इति पाठः.

इन्द्रं ध्यायति सा यावत्तावत्तस्या विराजते ।
मुखं पूर्णेन चन्द्रेण प्रबुद्धमिव कैरवम् ॥ २३
इन्द्रोऽपि च तदासक्तसमस्तकरणाकुलः ।
न तिष्ठति क्षणमहो तया विरहितः क्वचित् ॥ २४
अथातिसुघनस्नेहनिरावरणचेष्टयोः ।
तयोरनयवृत्तान्तो राज्ञाकर्णि कटुव्यथः ॥ २५
एवमन्योन्यमासक्तं भावमालक्ष्य भूपतिः ।
चकार बहुभिर्दण्डैः स द्वयोरथ शासनम् ॥ २६
तावुभावपि संत्यक्तौ हेमन्ते सलिलाशये ।
तुष्टौ जहसतुस्तत्र न खेदं समुपागतौ ॥ २७
अपृच्छत ततो राजा खिन्नौ स्थो न तु दुर्मती ।
तावूचतुर्महीपालं जलाशयसमुद्धृतौ ॥ २८
संस्मृत्यावामिहान्योन्यमुखकान्तिमनिन्दिताम् ।
आत्मानं न विजानीवो रूढभावं परस्परम् ॥ २९
शासनेषु च यत्सङ्गो निःशङ्कस्तेन हर्षितौ ।
मुह्यावो न महीपाल स्वाङ्गैरपि विकर्तितैः ॥ ३०
ततो भ्राष्ट्रे परिक्षिप्तावखिन्नावेवमेव तौ ।
ऊचतुर्मुदितात्मानावन्योन्यस्मृतिहर्षितौ ॥ ३१
ग्रथितौ गजपादेषु न खिन्नावेव संस्थितौ ।
एवमेवोचतुर्भूपमन्योन्यस्मृतिहर्षितौ ॥ ३२
कशाहतावखिन्नौ तावेवमेव किलोचतुः ।
अन्यस्माच्छासनाद्राज्ञा कल्पिताच्च पुनः पुनः ॥ ३३
उद्धृतावूचतुः पृष्टौ तमेवार्थं पुनः पुनः ।
उवाचेन्द्रो महीपालं जगन्मे दयितामयम् ॥ ३४
न शातनानि दुःखानि बाधन्ते किंचिदेव मे ।
अस्याश्चैव जगद्राजन्सर्वं मन्मयमेव च ॥ ३५
तेनान्यशासनाद्दुःखं किंचिदेव न विद्यते ।
मनोमात्रमहं राजन् मनो हि पुरुषः स्मृतः ॥ ३६
प्रपञ्चमात्रमेवायं देहो दृश्यत एव हि ।
समकालप्रयुक्तेन सहसा दण्डराशिना ॥ ३७
वीरं मनो भेदयितुं मनागपि न शक्यते ।
का नाम ता महाराज कीदृश्यः कस्य शक्तयः ॥ ३८
याभिर्मनांसि भिद्यन्ते दृष्टनिश्चयवन्त्यपि ।
वृद्धिमायातु वा देहो यातु वा विशरारुताम् ॥ ३९
भावितार्थाभिपतितं मनस्तिष्ठति पूर्ववत् ।
इष्टेऽर्थे चिरमाविष्टं दधानं तत्स्थितं मनः ॥ ४०
भावाभावाः शरीरस्था नृप शक्ता न बाधितुम् ।
भावितं तीव्रवेगेन मनसा यन्महीपते ॥ ४१
तदेव पश्यत्यचलं न शरीरविचेष्टितम् ।
न काश्चन क्रिया राजन्वरशापादिका अपि ॥ ४२
तीव्रवेगेन संपन्नं शक्ताश्चालयितुं मनः ।
तीव्रवेगेन संयुक्तं पुरुषा ह्यभिवाञ्छितात् ॥ ४३
मनश्चालयितुं शक्ता न महाद्रिं मृगा इव ।
ममेयमसितापाङ्गी मनःकोशे प्रतिष्ठिता ॥ ४४
देवागारे महोत्सेधे देवी भगवती यथा ।
न दुःखमनुगच्छामि प्रियया जीवरक्षया ॥ ४५
गिरिर्ग्रीष्मदशादाहं लग्नयेवाब्दमालया ।
यत्र यत्र यथा राजंस्तिष्ठाम्यभिपतामि वा ॥ ४६
तत्रेष्टसंगमादन्यत्किंचिन्नानुभवाम्यहम् ।
अहल्यादयितानाम्ना मनसेन्द्राभिधं मनः ॥ ४७
संसक्तमिदमायाति न स्वभावादृते परम् ।
एककार्यनिविष्टं हि मनो धीरस्य भूपते ॥ ४८
न चाल्यते मेरुरिव वरशापबलैरपि ।
देहो हि वरशापाभ्यामन्यत्वमिव गच्छति ।
ननु धीरं मनो राजन्विजिगीषुतया स्थितम् ॥ ४९

प्रकाशहेतुः ॥ २२ ॥ तदेव स्पष्टमाह—**इन्द्र**मिति ॥ २३ ॥ ॥ २४ ॥ अतिशयितेन सुघनेन निरन्तरेण च स्नेहेन निरावरणा अप्रच्छन्नाश्चेष्टा ययोस्तयोः । कट्वी दुःसहा व्यथा यस्मात्सः ॥ २५ ॥ शासनं पीडनम् ॥ २६ ॥ तदेव विशिष्य दर्शयति—**ता**वित्यादिना । तत्र लौकिकेऽसत्ये कुत्सितेऽपि विषये चित्तस्थैर्ये यदा न दुःखं सुखसंपत्तिश्च तदा परमात्मनि तत्स्थैर्ये तत्प्रसक्तिसंभावनापि दूरं निरस्ता निरतिशयानन्दावाप्तिश्च स्वतःसिद्धेति तात्पर्यरहस्यं सूचयंस्तयोश्चित्तस्थैर्यफलद्वयं प्रपञ्चयति—**तुष्टा**वित्यादिना ॥ २७ ॥ २८ ॥ आत्मानं स्वदेहम् । रूढभावमिति क्रियाविशेषणम् ॥ २९ ॥ यद्यस्मादावयोः सङ्गो मनःसंबन्धो निःशङ्को भेदशङ्काशून्यस्तेन हेतुना शासनेषु त्वत्कृतेषु पीडनेषु हर्षितौ स्वो न मुह्यावश्च ॥३०॥ एवं पूर्वोक्तरीत्यैवोचतुः ॥३१॥३२॥३३॥३४॥ दुःखानि दुःखहेतून्यपि शरीरशातनानि किंचिन्न बाधन्त एवेति योजना ॥ ३५ ॥ अन्यशासनादन्यस्मात्पीडनादपि । न विद्यते आवयोरिति शेषः ॥ ३६ ॥ प्रपञ्चः कल्पितो विस्तारो मनस एवेत्यर्थः । मन एव तर्हि दण्डैर्भेत्स्यामि तत्राह—**समकाले**ति । समशब्द एकपरः ॥ ३७ ॥ वीरं इष्टार्थस्थैर्यशूरम् ॥ ३८ ॥ दृष्टोऽनुभूयमानस्तद्भावापत्तिपर्यन्तो निश्चयो दृष्टनिश्चयस्तद्वन्त्यपि मनांसि विशरारुतां विशीर्णताम् ॥ ३९ ॥ आविष्टमभिनिवेशं दधानम् ॥ ४० ॥ ४१ ॥ अचलं स्थिरम् ॥ ४२ ॥ तीव्रवेगेन दृढाभिनिवेशेन । अभिवाञ्छितादिष्टार्थाच्चालयितुम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ इष्टसंगमादभिलषितार्थलाभादन्यत्किंचिदणुमात्रमपि नानुभवामि । तथाच मन एव वेषद्वयेन दृढसंगतं स्वभावात्स्वभावान्तरं यत्नशतैरपि गमयितुमशक्यमित्याशयेनाह—**अहल्ये**ति ॥ ४७ ॥ एककार्यनिविष्टमेकाग्रम् । परं विषयान्तरम् ॥ ४८ ॥ सर्वविक्षेपविजिगीषुतया

१ तद्वतं मनः इति पाठः.

एतानि चात्र मनसां न च कारणानि
राजञ्शरीरशकलानि वृथोत्थितानि ।
चेतो हि कारणममीषु शरीरकेषु
वारीव सर्ववनखण्डलतारसेषु ॥ ५०
आद्यं शरीरमिह विद्धि मनो महात्म-
न्संकल्पितो जगति तेन शरीरसङ्घः ।
आद्यं शरीरमधितिष्ठति यत्र यत्र
तत्तत्स्वरूपं फलति नेतरदस्य पुंसः ॥ ५१
मुख्याङ्कुरं सुभग विद्धि मनो हि पुंसो
देहास्ततः प्रविसृतास्तरुपल्लवाभाः ।
नष्टेऽङ्कुरे पुनरुदेति न पल्लवश्री-
र्नैवाङ्कुरः क्षयमुपैति दलक्षयेषु ॥ ५२
देहे क्षते विविधदेहगणं करोति
स्वप्नावनाविव नवं नवमाशु चेतः ।
चित्ते क्षते तु न करोति हि किंचिदेव
देहस्ततः समनुपालय चित्तरत्नम् ॥ ५३
दिशि दिशि हरिणाक्षीमेव पश्यासि राजन्
प्रिययुवतिमनस्त्वान्नित्यमानन्दितोऽसि ।
तव पुरप्रकृतीनां यत्फलं दुःखदायि
क्षणमथ सुचिरं तत्तन्न पश्यासि किंचित् ॥ ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० उत्पत्तिप्रकरणे कृत्रिमेन्द्राहल्यानुरागो नामैकोननवतितमः सर्गः ॥ ८९ ॥

## नवतितमः सर्गः ९०

भानुरुवाच ।
अथेन्द्रेणैवमुक्तोऽसौ राजा राजीवलोचनः ।
मुनिं भरतनामानं पार्श्वसंस्थमुवाच ह ॥ १
राजोवाच ।
भगवन्सर्वधर्मज्ञ पश्यासि सुदुरात्मनः ।
भृशमस्य मुखे स्फारं धार्ष्ट्यं महारहारिणः ॥ २
पापानुरूपमस्याशु शापं देहि महामुने ।
यदवध्यवधात्पापं वध्यत्यागात्तदेव हि ॥ ३
इत्युक्तो राजसिंहेन भरतो मुनिसत्तमः ।
यथावत्प्रविचार्याशु पापं तस्य दुरात्मनः ॥ ४
सहानया दुष्कृतिन्या भर्तृद्रोहाभिभूतया ।
विनाशं व्रज दुर्बुद्धे इति शापं विसृष्टवान् ॥ ५
ततस्तौ राजभरतौ प्रत्यूचतुरिदं वचः ।
सुदुर्मती युवां याभ्यां क्षपितं दुश्चरं तपः ॥ ६
अनेन शापदानेन किंचिद्भवति नावयोः ।
देहे नष्टे न नौ किंचिन्नश्यति स्वान्तरूपयोः ॥ ७
स्वान्तं हि नहि केनापि शक्यते नाशितुं क्वचित् ।
सूक्ष्मत्वाच्चिन्मयत्वाच्च दुर्लक्ष्यत्वाच्च विद्धि नौ ॥ ८
श्रीभानुरुवाच ।
सुघनस्नेहसंबद्धमनस्काविव शापतः ।
पतितौ भूतले वृक्षविच्युताविव पल्लवौ ॥ ९
अथ व्यसनसंसक्तौ मृगयोनिमुपागतौ ।
ततो द्वावपि संसक्तौ भूयो जातौ विहंगमौ ॥ १०
अथास्माकं विभो सर्गे स्निग्धःसंबन्धभावनौ ।
तपःपरौ महापुण्यौ जातौ ब्राह्मणदम्पती ॥ ११
भारतोऽपि तयोः शापः स समर्थो बभूव ह ।
शरीरमात्राक्रमणे न मनोनिग्रहे प्रभो ॥ १२

स्थितम् ॥४९॥ ननु देह एव मनसः कारणं देहपीडने कुतो न पीड्यते तत्राह—एतानीति । एतानि परिदृश्यमानानि प्राणिनां शरीरलक्षणानि शकलानि कल्पनैकदेशा मनसां न कारणानि, किंतु चेतो मन एवामीषु शरीरकेषु कारणमित्यर्थः ॥ ५० ॥ आद्यं आत्मनः प्रथमभोगायतनम् । अधितिष्ठति अहमित्यभिमानेनाविर्भवति । तेनाधिष्ठानेन तत्तच्छरीराद्याकारं फलतीत्यर्थः ॥ ५१ ॥ उक्तमेवार्थं दृष्टान्तेनोपपादयन्नाह—मुख्याङ्कुरमिति ॥ ५२ ॥ अतएव देहनाशेऽपि पुनःपुनर्देहोद्भवः, चित्तनाशे तु कैवल्यमेव न पुनर्भव इति प्रसिद्धमित्याह—देह इति । ततश्चित्तलक्षणं रत्नं सर्वार्थहेतुभूतं चिन्तामणिं समनुपालय परमपुरुषार्थसमाधानेन रक्ष न तुच्छक्रोधादिवशतया विनाशयेत्यर्थः ॥ ५३ ॥ उक्तार्थं पिण्डीकृत्यानूद्योपसंहरन्दण्डनप्रयत्नवैफल्यमाह—दिशि दिशीति । तव पुरस्य तदन्तर्गतप्रकृतीनां सेवकादिप्रजानां वा मध्ये यन्मम दुःखदायि कशाशस्त्रघातादि यच्च तत्फलं दुःखं तत्तत्किंचिरक्षणकालमथवा सुचिरं न पश्यामीत्यर्थः ॥ ५४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे कृत्रिमेन्द्राहल्यानुरागो नामैकोननवतितमः सर्गः ॥ ८९ ॥

भरतस्य मुनेः शापान्नष्टयोरपि देहयोः ।
न मानसी तन्मयता तयोर्नष्टेति कीर्त्यते ॥ १ ॥

राजीवं पद्ममिव लोचने यस्य ॥ १ ॥ अस्येन्द्रस्य मुखे । स्फारं प्रचुरम् ॥ २ ॥ वध्यस्य वधार्हस्य त्यागादवधादपि तदेव पापं भवतीति हि धर्मशास्त्रे प्रसिद्धमित्यर्थः ॥ ३ ॥ ४ ॥ अनया अहल्यया सह । विनाशं मृत्युम् ॥ ५ ॥ राजभरतौ प्रति इदं वच ऊचतुः ॥ ६ ॥ नौ आवयोः किंचिदपि न नश्यति । तत्र हेतुः—स्वान्तरूपयोरिति ॥ ७ ॥ नाशितुं नाशयितुम् । सेटि णिलोपश्छान्दसः, परैर्दुर्लक्ष्यत्वाच्च ॥ ८ ॥ पतितौ मृताविति यावत् ॥ ९ ॥ व्यसनेन दृढविषयरागेण संसक्तौ बद्धौ ॥१०॥ अथ बहुजन्मपरम्परानन्तरम् । अस्माकं सर्गे अस्मदीये ब्रह्माण्डे ॥ ११ ॥ भारतो भरतेन दत्तः शापस्तयोः शरीरमात्रस्याक्रमणे

तावद्यापि हि तेनैव मोहसंस्कारहेतुना ।
यत्र यत्र प्रजायेते भवतस्तत्र दम्पती ॥ १३
अकृत्रिमप्रेमरसानुविद्धं
स्नेहं तयोस्तं प्रतिवीक्ष्य कान्तम् ।
वृक्षा अपि प्रेमरसानुविद्धाः
शृङ्गारचेष्टाकुलिता भवन्ति ॥ १४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे कृत्रिमेन्द्राहल्यानुरागो नाम नवतितमः सर्गः ॥ ९० ॥

## एकनवतितमः सर्गः ९१

भानुरुवाच ।
तेनैतद्ब्रह्मिम भवगन्यथाकालं मनो मुने ।
अनिग्राह्यममेयं च शापैरपि दुरासदैः ॥ १
ऐन्दवानामतः सृष्टिक्रमाणां प्रविनाशनम् ।
युज्यते न च तद्ब्रह्मन्युक्तमेतन्महात्मनः ॥ २
किं तदस्ति जगत्यस्मिन्विविधेषु जगत्सु च ।
तवापि नाथ नाथस्य यद्दैन्याय महात्मनः ॥ ३
मनो हि जगतां कर्तृ मनो हि पुरुषः स्मृतः ।
यन्मनोनिश्चयकृतं तद्द्रव्यौषधिदण्डनैः ॥ ४
हन्तुं न शक्यते जन्तोः प्रतिबिम्बं मणेरिव ।
तस्मादेतेऽत्र तिष्ठन्तु भासुरैः सर्गसंभ्रमैः ॥ ५
त्वं सृष्टेह प्रजास्तिष्ठ बुद्ध्याकाशो ह्यनन्तकः ।
चित्ताकाशश्चिदाकाश आकाशश्च तृतीयकः ॥ ६
अनन्तास्त्रय एवैते चिदाकाशप्रकाशिताः ।
एकं द्वौ त्रीन्वहून्वापि कुरु सर्गाञ्जगत्पते ॥ ७
स्वेच्छयात्मनि तिष्ठ त्वं किं गृहीतं तवैन्दवैः ।
ब्रह्मोवाच ।
अथैन्दवजगज्जाले भानुनैवमुदाहृते ॥ ८
मया संचिन्त्य सुचिरमिदमुक्तं महामुने ।
युक्तमुक्तं त्वया भानो विततं हि किलाम्बरम् ॥ ९
मनश्च विततं वापि चिदाकाशश्च विस्तृतः ।
तद्यथाभिमतं सर्गं नित्यकर्म करोम्यहम् ॥ १०
कल्पयामि वहून्याशु भूतजालानि भास्कर ।
तत्त्वमेवाशु भगवन्प्रथमो मे मनुर्भव ॥ ११
कुरु सर्गं यथाकामं मया समभिचोदितः ।
अथैतत्स महातेजा मम वाक्यं प्रभाकरः ॥ १२
अङ्गीकृत्य द्विधात्मानं चकार तपतांवर ।
एकेन प्राक्तनेनास्मिन्वपुषा सूर्यतां गतः ॥ १३
व्योमाध्वगतया सर्गं ततान दिवसावलिम् ।
मन्मनुत्वं द्वितीयेन कृत्वा स्ववपुषा क्षणात् ॥ १४
ससर्ज सकलां सृष्टिं तां तामभिमतां मम ॥ १५
एतत्ते कथितं सर्वं वसिष्ठमनसो मुने ।
स्वरूपं सर्वकर्तृत्वं च शक्तत्वं च महात्मनः ॥ १६
प्रतिभासमुपायाति यद्यदस्य हि चेतसः ।
तत्तत्प्रकटतामेति स्थैर्यं सफलतामपि ॥ १७
सामान्यब्राह्मणा भूत्वा प्रतिभासवशात्किल ।
ऐन्दवा ब्रह्मतां याता मनसः पश्य शक्तताम् ॥ १८
यथा चैन्दवजीवास्ते चित्रत्वाद्ब्रह्मतां गताः ।
वयं तथैव चिद्भावाच्चित्तत्वाद्ब्रह्मतां गताः ॥ १९
चित्तं हि प्रतिभासात्म यच्च तत्प्रतिभासनम् ।
तदिदं भाति देहादि स्वान्तं नान्यास्ति देहदृक् ॥ २०
चित्तमात्मचमत्कारं तच्च तत्कुरुते स्वतः ।

नाशे समर्थो बभूव नतु मनोनिग्रहे इत्यर्थः ॥ १२ ॥ १३ ॥ वृक्षा अपि शृङ्गारचेष्टाकुलिता भवन्ति किं पुनरन्ये इत्यतिशयोक्तिः ॥ १४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे कृत्रिमेन्द्राहल्यानुरागो नाम नवतितमः सर्गः ॥९०॥

इह भानुं मनुं कृत्वा धातुः सर्गो निरूप्यते ।
मनोमात्रविलासत्वं विश्वस्यैन्दवसर्गवत् ॥ १ ॥

तेन भारतः शापो न मनोनिग्रहे समर्थो बभूवेत्युक्तेन हेतुना ॥ १ ॥ अतो हेतोरैन्दवानां सृष्टिक्रमाणां प्रविनाशनं त्वया कर्तुं न युज्यते न पार्यते, महात्मनस्तव तद्युक्तमुचितं च न भवतीत्यर्थः ॥ २ ॥ तर्हि वृथा मम सर्गः स्यादिति दैन्यमालक्ष्याह—**किं तदि**ति ॥ ३ ॥ ४ ॥ एते ऐन्दवाः ॥ ५ ॥ क तर्हि मत्सर्गस्यावकाशस्तत्राह—**त्वमि**ति । इह स्वचित्ताकाशे 'अनन्तं वै मनः' इति श्रुतेरिति भावः । प्रथमश्चिदाकाशश्चिदाभासाकाशः ॥ ६ ॥ साक्षिकूटस्थश्चिदाकाशप्रकाशिताः । चित्ताकाशेऽनन्तकोटिब्रह्माण्डानामप्यवकाशोऽस्ति किं पुनरेकस्येत्याशयेनाह—**एकमि**ति ॥ ७ ॥ ८ ॥ अम्बरं प्रागुक्तमाकाशचतुष्टयमपि ॥ ९ ॥ तत्र द्वयोरेव सर्गाधारता मुख्येत्याशयेनाह—**मनश्चे**ति । चिदाकाशो मनोवच्छिन्नः । भूताकाशस्य सृज्यान्तःपाताद्ब्रह्माकाशस्यासङ्गतया सर्गानाधारत्वादिति ॥ १० ॥ तत्तस्मिन्सर्गे प्रथमो मनुः स्वायंभुवः ॥ ११ ॥ समभिचोदित आज्ञप्तः सन् ॥ १२ ॥ तपतांवरेति वसिष्ठसंबोधनम् । अस्मिन् ऐन्दवसर्गे ॥ १३ ॥ १४ ॥ १५ ॥ उपसंहरति—**एतदि**ति । महात्मनो मनसः ॥ १६ ॥ सफलतां भोगव्यवहारप्रयोजकतामपि ॥ १७ ॥ १८ ॥ स्वस्यापि हिरण्यगर्भता ऐन्दववन्मानसेवेत्याह—**यथे**ति । चिद्भावाच्चित्तत्वं प्राप्य चित्तत्वाद्ब्रह्मतां हिरण्यगर्भताम् ॥ १९ ॥ तदेव स्वान्तं मन एवास्ति । देहदृक् देहप्रतीतिश्चित्तादन्या नास्ति ॥ २० ॥ आत्मनि स्वस्मिंश्चमत्काराः कल्पना यस्य तथाविधं भवति । आत्मचम-

**यथावत्संभवं स्वात्मन्येवान्तर्मरिचादिवत् ॥ २१**
**तदेतच्चित्तवद्भातमातिवाहिकनामकम् ।**
**तदेवोदाहरन्त्येवं देहनाम्ना घनभ्रमम् ॥ २२**
**कथ्यते जीवनाम्नैतच्चित्तं प्रतनुवासनम् ।**
**शान्तदेहचमत्कारं जीवं विद्धि क्रमात्परम् ॥ २३**
**नाहं न चान्यदस्तीह चित्रं चित्तमिदं स्थितम् ।**
**वसिष्ठैन्दवसंविद्वदसत्सत्तामिवागतम् ॥ २४**
**यथैन्दव मनो ब्रह्मा तथैवायमहं स्थितः ।**
**तत्कृतं चाहमेवेदं संकल्पात्मैव भासते ॥ २५**
**कश्चिच्चित्तविलासोऽयं ब्रह्माहमिह संस्थितः ।**
**स्वभाव एव देहादि विद्धि शून्यतरात्मखात् ॥ २६**
**शुद्धचित्परमार्थैकरूपिणीत्येव भावनात् ।**
**जीवो भूयो मनो भूत्वा वेत्तीत्थं देहतां मुधा ॥ २७**
**सर्वमैन्दवसंसारवदिदं भाति चिद्वपुः ।**
**संपन्नसंप्रबोधात्मा स्वप्नो दीर्घः स्वशक्तिजः ॥ २८**
**द्विचन्द्रविभ्रमाकारं तन्मात्राभासपूर्वकम् ।**
**ऐन्दवाम्बरवद्रूढं चित्तादेवाखिलं भवेत् ॥ २९**
**न सन्नासदहंरूपं सत्तासत्ते तदेव च ।**
**उपलम्भेन सद्रूपमसत्यं तद्विरोधतः ॥ ३०**
**जडाजडं मनो विद्धि संकल्पात्म बृहद्वपुः ।**
**अजडं ब्रह्मरूपत्वाज्जडं दृश्यात्मतावशात् ॥ ३१**
**दृश्यानुभवसत्यात्म न सद्भावे विलासि तत् ।**
**कटकत्वं यथा हेम्नि तथा ब्रह्मणि संस्थितम् ॥ ३२**
**सर्वत्वाद्ब्रह्मणः सर्वं जडं चिन्मयमेव च ।**
**अस्मदादिशिलान्तात्म न जडं न च चेतनम् ॥ ३३**
**दार्वादीनामचित्त्वेन नोपलम्भस्य संभवः ।**
**उपलम्भो हि सदृशसंबन्धादेव जायते ॥ ३४**
**उपलब्धेऽजडं विद्धि तेनेदं सर्वमेव हि ।**
**उपलम्भो हि सदृशसंबन्धात्स्यात्समात्मनोः ॥ ३५**
**जडचेतनभावादिशब्दार्थश्रीर्न विद्यते ।**
**अनिर्देश्यपदे पत्रलतादीव महामरौ ॥ ३६**
**चितो यच्चेत्यकलनं तन्मनस्त्वमुदाहृतम् ।**
**चिद्भागोऽत्राजडो भागो जाड्यमत्र हि चेत्यता ॥ ३७**
**चिद्भागोऽत्रावबोधांशो जडं चेत्यं हि दृश्यते ।**
**इति जीवो जगद्भ्रान्तिं पश्यन्गच्छति लोलताम् ॥ ३८**

---

त्कारत्वं विवृणोति—**तच्च तत्कुरुते** इति । तर्हि सर्वेषां मनस्तुल्यं कुतो न कल्पयति तत्राह—**यथावत्संभवमि**ति । यथावत्कामकर्मवासनानुसाराद्यावद्यदा संभवति तदा तावदेवेत्यर्थः । यथा मरिचं कटुतयैवान्तःपरिणमते, निम्बस्तु तिक्ततया, द्राक्षा मधुरतयेति स्वस्वसंस्काराद्व्यवस्थितं तद्वदित्यर्थः ॥ २१ ॥ अतएव देवोऽहं मनुष्योऽहमित्यादिदेहनाम्ना प्रतिनियतं जना उदाहरन्ति नैकरूपमित्याह—**तदेतदि**ति । चित्तवद्भातमातिवाहिकनामकं सूक्ष्मदेहमेव घनभ्रमं स्थौल्यभ्रान्तियुक्तं तत्तद्देहनाम्ना उदाहरन्ति ॥ २२ ॥ यदि चित्तं देहस्तर्हि इदमेव जीव इति कथं प्रागुक्तं तत्राह—**कथ्यते** इति । प्रतनुवासनं जीवो घनभ्रमं तु देह इत्युच्यत इति भेदक्रमात् शान्तदेहत्रयचमत्कारं तु परं ब्रह्म विद्धीत्यर्थः ॥ २३ ॥ एवंच तन्तुभ्यः पट इव न कस्यापि देहो नाम पृथगस्तीत्याह—**नाह**मिति ॥ २४ ॥ तत्कृतं सर्गान्तरमित्यपि मच्चित्तकल्पनैवेत्यहमेव तदपीत्याह—**तत्कृत**मिति ॥ २५ ॥ स्वभावः परमात्मैव सर्वप्रपञ्चशून्यतरादात्मखात्पृथगिव देहादिभावेन भातीत्यर्थः ॥ २६ ॥ मुधेति निपातो नञर्थे ॥ २७ ॥ चिद्वपुः परमात्मैव ऐन्दवसंसारवत्सर्वात्मा भाति । यथा स्वाज्ञानशक्तिजः स्वप्नो दीर्घः सन्संपन्नजाग्रदात्मा भाति तद्वदित्यर्थः ॥ २८ ॥ यतः सूक्ष्मतरवासनामयशब्दतन्मात्राध्यासपूर्वकं भवति जगत्तत ऐन्दवचित्ताकाशवदेव रूढमिति संभाव्यत इत्यर्थः ॥ २९ ॥ यद्युदासीनचित्तादेव सर्वं रूढं तर्हि कथं देहादिष्वहंतयाभिमानादनुदासीनरूपं भातीति तत्राह—**न सदि**ति । यदहंरूपमभिनिवेशरूपमनुदासीनस्वभावमनुभूयते तन्न सत् । सर्वत्र चित्तकार्ये अदर्शनात् । नाप्यसत् । असत उपलम्भादर्शनात् । यतः स[illegible] 

सदेकरूपत्वात्सदेव । असत्ता चासदेकरूपत्वादसदेव । अहंरूपं तु नैकस्वभावनियतम् । यतः क्वचिदुपलम्भेन हेतुना सद्रूपमिव क्वचित्तु तद्विरोधतोऽनुपलम्भादसत्यमसद्रूपमिति विरुद्धस्वभावं भासत इति मायिकमित्यर्थः ॥ ३० ॥ एवं मनसो जडाजडविरुद्धस्वभावत्वादपि मायिकत्वमित्याह—**जडाजड**मिति ॥ ३१ ॥ तस्य कदा दृश्यात्मता कदा वा ब्रह्मरूपत्वं तत्राह—**दृश्ये**ति । तन्मनो दृश्यानुभवकाले दृश्यमिव सत्यात्म सद्भावे ब्रह्मानुभवे न विलासि न पृथग्विलसनशीलमिति ब्रह्मैव, यथा हेम्नि कटकत्वं करालंकृतिकार्यदृशा हेम्नः पृथक्सदिव कनकदृशा तु तदेव, तद्वत्संस्थितमित्यर्थः ॥३२॥ एवं जगतोऽपि जडाजडविरुद्धस्वभावत्वान्मायिकत्वमेवेत्याशयेनाह—**सर्वत्वादि**ति । अस्मदादिशिलान्तात्म ब्रह्मादिस्थावरान्तं यौक्तिकदृशा विरुद्धस्वभावमपि परमार्थदृशा न जाड्यचैतन्यधर्मकमित्यर्थः ॥ ३३ ॥ जडं चेतनमिति वा व्यवस्था अनुपलम्भे उपलम्भोत्तरं वा स्यात् । आद्ये उपलम्भस्यैवासंभवात्सत्तैव न सिध्यति, दूरे जडाजडत्वचिन्तेत्याशयेनाह—**दार्वादीना**मिति । सदृशयोः प्रमातृप्रमेयचिद्धात्वोर्वृत्तिद्वारकादैक्यसंबन्धाद्ध्युपलम्भः प्रसिद्धः । जडैकरूपत्ववादे तु न प्रमेयचैतन्यमस्तीति नोपलम्भसंभव इत्यर्थः ॥ ३४ ॥ द्वितीयेऽप्याह—**उपलब्धे** इति । अजडं विद्धीति च्छेदः । उपलब्धे प्रमेयस्योपलम्भेऽन्तर्भावात्तद्विषयस्याजडैकस्वभावता परिशिष्यते, यतः प्रागुक्तचितोरैक्यलक्षणसंबन्धादेवोपलम्भो जायते । तथा चानुपलब्धे उपलब्धे च जडचेतनद्वैविध्यं दुर्घटमित्यर्थः ॥ ३५ ॥ उभयदुर्घटत्वे यत्फलितं तदाह—**जडे**ति ॥ ३६ ॥ तस्याश्चितश्चेत्याकारकलनैव मनस्ता, तत्रैव जडाजडविकल्पस्तद्विवेक एव [illegible]शयेनाह—**चित** इत्यादिना ॥३७॥ तत्र चिदा-

चित्तस्थ एव भावोऽसौ शुद्ध एव द्विधा कृतः ।
अतः सर्वं जगत्सैव द्वैतलब्धं च सैव तत् ॥ ३९
स्वमेवान्यतया दृष्ट्वा चितिर्दृश्यतया वपुः ।
निर्भागाप्येकभागाभं भ्रमतीव भ्रमातुरा ॥ ४०
न भ्रान्तिरस्ति भ्रमभाङ्गा नैवेतीह निश्चयः ।
परिपूर्णार्णवप्रख्यावेतीत्थं संस्थिता चितिः ॥ ४१
सर्वं स्याज्जाड्यमप्यस्याश्चितिश्चित्त्वं च वेत्सि तत् ।
चिद्भागोंशोऽवबोधस्य त्वहंताजडतोदयः ॥ ४२
अहंतादिपरे तत्त्वे मनागपि न विद्यते ।
ऊर्म्यादीव पृथक्तोये संवित्सारं हि तद्यतः ॥ ४३
अहंप्रत्ययसंदृश्यं चेत्यं विद्धि समुत्थितम् ।
मृगतृष्णाम्बुवान्तस्थं नूनं विद्यत एव नो ॥ ४४
अहंतापदमन्तात्मपदं विद्धि निरामयम् ।
विदं विदुरहंतादि शैत्यमेव यथा हिमम् ॥ ४५
चित्तेव चेत्यते जाड्यं स्वप्ने स्वमरणोपमम् ।
सर्वात्मत्वात्सर्वशक्तीः कुर्वती नैति साम्यताम् ॥ ४६
मनः पदार्थादितया सर्वरूपं विजृम्भते ।
नानात्माचित्तदेहोऽयमाकाशविशदाकृतिः ॥ ४७

देहादिदेहप्रतिभारूपात्म्यं त्यजता सता ।
विचार्य प्रतिभासात्म चित्तं चित्तेन वै स्वयम् ॥ ४८
चित्तताम्रे शोधिते हि परमार्थसुवर्णताम् ।
गतेऽकृत्रिम आनन्दः किं देहोपलखण्डकैः ॥ ४९
यद्विद्यते शोध्यते तद्बोधः के च खपादपाः ।
देहाद्यविद्या सत्या चेद्युक्त एतां प्रति ग्रहः ॥ ५०
असत्यविनिविष्टानां देहवाचितया त्विह ।
ये नामोपदिशन्त्यज्ञाः किंचित्ते पुरुषैडकाः ॥ ५१
यथैतद्भावयेत्स्वान्तं तथैव भवति क्षणात् ।
दृष्टान्तोऽत्रैन्दवाहल्याकृत्रिमेन्द्रादिनिश्चयाः ॥ ५२
यद्यद्यथा स्फुरति सुप्रतिभात्मचित्तं
तत्तत्तथा भवति देहतयोदितात्म ।
देहोऽयमस्ति न न चाहमिति स्वरूपं
विज्ञानमेकमवगम्य निरिच्छमास्व ॥ ५३
देहोऽयमेष च किलायमिति स्वभावा-
देहोऽयमेतदखिलं तत एति नाशम् ।
यक्षादिकल्पनवशाद्भयमेति बालो
निर्यक्षदेहगत एव कयापि युक्त्या ॥ ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे जीवावतरणक्रमोपदेशो नामैकनवतितमः सर्गः ॥ ९१ ॥

---

त्मभागविस्मरणेन जडात्मजीवजगद्भ्रमः संपन्न इत्याह—**इति जीव** इति ॥ ३८ ॥ शुद्धो भावश्चित्स्वभाव एव चित्तं जगदिति द्विधा कृतः । अतश्चिदेकबुद्ध्योपलब्धं सर्वं जगत्सा चिदेव द्वैतबुद्ध्या लब्धमपि तत्सैवेत्यर्थः ॥ ३९ ॥ निर्भागा निर्विभागा । एकभागाभं स्वगतविभागतुल्यम् ॥ ४० ॥ भ्रमभाक् ना पुरुषो नैव ॥ ४१ ॥ अस्याश्चितेः सर्वरूपं जाड्यमपि चितिरेव स्यात् । यतस्तस्मिञ्जाड्ये चित्त्वं च वेत्सि । अचिदेकस्वभावत्वे स्फुरणायोगादस्फुरणे जाड्यस्याप्यसिद्धेरित्यर्थः । यथा जडेऽवबोधोऽस्ति एवं चेतने जडभागोऽप्यस्तीति दर्शयति—**अहंते**ति ॥ ४२ ॥ कथमहंताया जडत्वमिति चेद्ब्रह्मण्याव्रत्तत्वादित्याह—**अहंतादी**ति । संवित्सारं चिदेकरसम् ॥ ४३ ॥ अतएव तस्यासत्त्वमपीत्याह—**अहंप्रत्यये**ति ॥ ४४ ॥ अन्तात्मपदं सर्वद्वैतबाधावध्यात्मवस्तु । अहंताया अपदमनाश्रयं विद्धि । विदं चित्स्वभावमेव वासनया घनीभूताहंतादिरूपं जना विदुः पश्यन्ति । यथा शैत्यमेव घनीभावाद्धिमं पश्यन्ति तद्वदित्यर्थः ॥ ४५ ॥ सर्वशक्तीः कुर्वती आविष्कुर्वाणा चिद्विना ज्ञानदार्ढ्यं साम्यतां नैति ॥ ४६ ॥ नानात्मकश्चित्तलक्षणो देह आतिवाहिकः ॥ ४७ ॥ कथमिदं बोद्धुं शक्यं तत्रोपायमाह—**देहादी**ति । स्थूलदेहादिदेहत्रयप्रतिभारूपात्मतां च त्यजता सता अधिकारिणा चित्तेनैव चित्तं प्रतिभासात्म प्रातिभासिकं विचार्यमित्यर्थः ॥ ४८ ॥ किं तद्विचारलक्षणे शोधे कृते चित्तं भवति तदाह—**चित्ते**ति । अकृत्रिमो नित्यनिरतिशय आनन्दः प्राप्यत इति शेषः । तर्हि देहादयोऽपि शोध्यन्तां तत्रोपि कुतार्थ

किं न लभ्यते तत्राह—**कि**मिति । वृथा तच्छोध इत्यर्थः ॥४९॥ किंचासत्त्वादपि देहादेर्न शोधनार्हतेत्याह—**यदि**ति । तद्बोधः फलवानिति शेषः । खे कल्पिताः पादपाः के शोध्यमाना दृष्टा इत्यर्थः । एतामविद्यां प्रति ग्रहः शोधनाग्रहो युक्त उचितः स्यादित्यर्थः ॥ ५० ॥ अतएव ह्यात्मादिशब्दा देहे प्रयुक्ता अपि श्रुतौ न देहवाचिनः श्रुतेरसत्यार्थनिष्ठत्वायोगात् । ये त्वसत्यविनिविष्टा देहात्मदृढनिश्चयाश्चार्वाकपामरादयो देहवाचिन एवात्मादिशब्दा इति मन्यन्ते तेषां ये किंचिदपि प्रामाणिकं वस्तूपदिशन्ति तेऽज्ञाः पुरुषैडकाः पुंस्पशव एव । आत्मादिसत्यवस्तुनिष्ठशब्दानां देहाद्यसत्यवाचितया विपरीतव्युत्पन्नान्प्रति सत्यार्थबोधनाशक्तेरित्यर्थः ॥ ५१ ॥ कथं तर्ह्यमूर्तस्य चित्तस्य मूर्तदेहभावः संपन्न इति चेद्भावनयैवेत्याशयेनाह—**यथैतदि**ति ॥५२॥ उक्तमेवार्थं स्फुटं वदन्नुपसंहरति—**यद्यदि**ति । अयं देहो नास्ति । अहमिति प्रसिद्धोऽहंकारश्च नास्ति । अत एकरसं विज्ञानं स्वस्वरूपमवगम्य निरिच्छं यथा स्यात्तथा आस्स्व तिष्ठेत्यर्थः ॥ ५३ ॥ देहो मानुषादिरयं प्रत्यक्ष एष देहभोग्यः प्रपञ्चोऽयमिति स्वभावात्स्वकल्पनावशादयमात्मा देह एव भवति एतदखिलं भोग्यं च भवति ततस्तद्भावाद्देहनाशमनु नाशमेति । यथाऽयं बालः कयापि युक्त्या निर्यक्षदेहगत एव सन्नपि यक्षतद्भीषणत्वग्रसितृत्वादिकल्पनवशाद्यक्षेण ग्रस्तो यक्षदेहगतः स्वप्नादौ भवति तद्वदित्यर्थः ॥ ५४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जीवावतरणक्रमोपदेशो नामैकनवतितमः सर्गः ॥ ९१ ॥

# द्विनवतितमः सर्गः ९२

श्रीवसिष्ठ उवाच।

इत्युक्तवान्स भगवान्मया कमलसंभवः।
रघूद्वह पुनः पृष्टो वाक्यमाक्षिप्य भूतपः॥ १
त्वयैव भगवन्प्रोक्ताः शापमन्त्रादिशक्तयः।
अमोघा इति ता एव कथं मोघाः कृताः पुनः॥ २
शापेन मन्त्रवीर्येण मनोबुद्धीन्द्रियाण्यपि।
सर्वाण्येव विमूढानि दृष्टानि किल जन्तुषु॥ ३
यथैतौ पवनस्पन्दौ यथा स्नेहतिलौ यथा।
अभिन्नौ तद्वदेवैतौ मनोदेहौ स एव तत्॥ ४
अथ नास्तीह वा देहः केवलं चेतसैव सः।
मुधानुभूयते स्वप्नमृगतृष्णाद्विचन्द्रवत्॥ ५
एकनाशे द्वयोरेव नाशोऽत्राभ्युपपद्यते।
अवश्यं भवितुं मनोनाशे देहपरिक्षयः॥ ६
मनः शापादिभिर्दोषैः कथं नाक्रम्यते प्रभो।
कथमाक्रम्यते वापि ब्रूहि मे परमेश्वर॥ ७

ब्रह्मोवाच।

न तदस्तिजगत्कोशे शुभकर्मानुपातिना।
यत्पौरुषेण शुद्धेन न समासाद्यते जनैः॥ ८
आब्रह्म स्थावरान्तं च सर्वदा सर्वजातयः।
सर्व एव जगत्यस्मिन्द्विशरीराः शरीरिणः॥ ९
एकं मनःशरीरं तु क्षिप्रकारि सदा चलम्।
अकिंचित्करमन्यत्तु शरीरं मांसनिर्मितम्॥ १०
तत्र मांसमयः कायः सर्वस्यैव च संगतः।
सर्वैराक्रम्यते शापैस्तथा विद्यादिसंचयैः॥ ११
मूकप्रायो ह्यशक्तोऽसौ दीनः क्षणविनश्वरः।
पद्मपत्राम्बुचपलो दैवादिविवशस्थितिः॥ १२
मनोनाम द्वितीयोऽयं कायः कायवतामिह।
स आयत्तोऽपि नायत्तो भूतानां भुवनत्रये॥ १३
पौरुषं स्वमवष्टभ्य धैर्यमालम्ब्य शाश्वतम्।
यदि तिष्ठत्यगम्योऽसौ दुःखानां तदनिन्दितः॥ १४
यथा यथासौ यतते मनोदेहो हि देहिनाम्।
तथा तथासौ भवति स्वनिश्चयफलैकभाक्॥ १५
सफलो मांसदेहस्य न कश्चित्पौरुषक्रमः।
मनोदेहस्य सफलं सर्वमेव स्वचेष्टितम्॥ १६
पवित्रमनुसंधानं चेतः स्मरति सर्वदा।
निष्फलास्तत्र शापाद्याः शिलायामिव सायकाः॥ १७
पतत्वम्भसि वह्नौ वा कर्दमे वा शरीरकम्।
मनो यदनुसंधत्ते तदेवाप्नोति तत्क्षणात्॥ १८
पुरुषातिशयः सर्वैः सर्वभावोपमर्दने।
ददात्यविघ्नेन फलं मनो हि मनसो मुने॥ १९
पौरुषेण बलेनान्तश्चित्तं कृत्वा प्रियामयम्।
कृत्रिमेन्द्रेण दुःखार्तिर्न दृष्टा सा मनागपि॥ २०

---

दृढाक्षिप्य मनःशक्तिरमोघा स्थाप्यते दृढा।
दार्ढ्यं पुरुषयत्नस्य यथेष्टारोपणक्षमा॥ १॥

प्राक्तनं वाक्यमनुपपत्त्युद्भावनेनाक्षिप्य पुनर्मया पृष्टः॥ १॥ आक्षेपप्रकारमेव दर्शयति—**त्वयैवे**ति। अतस्त्वदुक्तिस्त्वदुक्तिविरुद्धेत्यर्थः ॥२॥ एवं लोकदृष्टविरोधोऽपीत्याह—**शापेने**ति। तथाच नहुषस्य शापादजगरत्वं प्राप्तस्य मनोमोहात्स्ववंशजस्य भीमस्य ग्रसने प्रवृत्तिः। तथैव धार्मिकस्यापि सौदासस्य शापाद्राक्षसतां गतस्य बुद्धिमोहाद्ब्रह्मवधादौ प्रवृत्तिः। गन्धर्वराजस्य च शापाद्धृतराष्ट्रजन्मनि चक्षुरिन्द्रियनाशः। एवमन्यत्रापि दृष्ट इत्यर्थः ॥३॥ एवं कार्यविरोधोऽप्यस्तीत्याशयेनाह—**यथे**त्यादिना। तृतीययथाशब्दो वह्न्यौष्ण्यादिदृष्टान्तान्तरसंग्रहार्थः। कार्यकारणयोर्भेदानिरूपणात्। तथाच मनसो वरशापाद्यनाक्रमणे तदभिन्ने देहेऽपि तदनाक्रमणं स्यादित्याद्याशयः ॥४॥ ननु देहस्य मनोन्यूनसत्ताकत्वादेव शापाद्याक्रमणेऽपि न मनसस्तत्प्रसक्तिरिति विवर्तवादेन परिहारमाशङ्कते—**अथे**ति ॥ ५ ॥ तत्रापि दोषान्तरमाह—**एकनाशे** इति। एकनाशे द्वयोर्नाशो भवितुमवश्यमुपपद्यते। यथा मनोनाशे देहपरिक्षयो दृष्टः, एवं देहनाशे मनःपरिक्षयोऽपि संभावित इति न देहस्य मनोन्यूनसत्ताकता किंतु समसत्ताकता। प्रत्युत चक्षुराद्यगम्यत्वे सत्यपरोक्षविषयत्वात्स्वप्नादिवन्मनस एव [illegible] रज्जुनाशे सर्पस्येव देहनाशेन मनोवस्थानसंभव इति भावः ॥ ६ ॥ ७ ॥ तत्र प्रथमं विरोधं परिहर्तुं वरशापप्राबल्योक्तेरौत्सर्गिकत्वं बहुतरदृष्टानुसारादवश्यमभ्युपेयमित्युपपादयितुं वरशापयोरप्युपजीव्यं कर्मापोद्बलितपौरुषप्राबल्यं तावत्स्मारयति—**न तदि**ति ॥ ८ ॥ स्थूलस्यैवोपघातो दृष्टो न सूक्ष्मस्येति लोकदृष्टानुसारं स्वोक्तिर्वक्तुं भिन्नस्वभावौ द्वौ देहौ दर्शयति—**आब्रह्मे**त्यादिना ॥ ९ ॥ १० ॥ विद्या अभिचारकृत्यादयः। आदिपदाच्छस्त्रविषादयो गृह्यन्ते, तेषां संचयैः समूहैः ॥११॥ दैवादीत्यादिपदाद्राजपित्रादिसंग्रहः ॥१२॥ आयत्तः स्वाधीनः। नायत्तोऽस्वाधीनः ॥१३॥ तत्र स्वाधीनतां हेतूक्त्योपपादयति—**पौरुष**मिति। अगम्योऽनाक्रमणीयः। तैर्दुःखहेतुभिरनिन्दितः अदूषितः ॥ १४ ॥ दुःखानुपघात इव सुखोपचयोऽप्यस्य वर्धत इत्याह—**यथे**ति ॥१५॥ स्थूलदेहस्य तु नायं क्रम इत्याह—**सफल** इति ॥ १६ ॥ विषयदोषैर्हि मनो दुष्येन्नान्यदोषेणेत्याशयेनाह—**पवित्र**मिति। तथाच न लोकदृष्टविरोधशङ्कावसर इति भावः ॥ १७ ॥ कार्यविरोधमपि परिहरति—**पतत्वि**ति ॥ १८ ॥ सर्वेषां देहादिभावानामुपमर्दनेऽपि पुरुषातिशयः प्रयत्नः सर्वैः समृद्धः सन्नविघ्नेन फलं ददाति। तद्यद्ददाति तन्मन एव मनसः फलं ददाति। पौरुषस्याऽपि मनोभेदत्वादित्यर्थः ॥१९॥ यत्र विषयदोषेऽपि मनोदार्ढ्यं दुःखादर्शनं तत्र

पौरुषेण मनः कृत्वा नीरागं विगतज्वरम् ।
माण्डव्येन जिताः क्लेशाः शूलप्रान्तेऽपि तिष्ठता ॥ २१
अन्धकूपस्थितेनापि मानसैर्यज्ञसंचयैः ।
ऋषिणा दीर्घतपसा संप्राप्तं वैबुधं पदम् ॥ २२
इन्दुपुत्रैर्नरैरेव पुरुषाध्यवसायतः ।
ध्यानेन ब्रह्मता प्राप्ता सा मयापि न खण्ड्यते ॥ २३
अन्येऽपि सावधाना ये धीराः सुरमहर्षयः ।
चित्तात्स्वमनुसंधानं न त्यजन्ति मनागपि ॥ २४
आधयो व्याधयश्चैव शापाः पापदृशस्तथा ।
न खण्डयन्ति तच्चित्तं पद्मघाताः शिलामिव ॥ २५
ये चापि खण्डिताः केचिच्छापाद्यैराधिसायकैः ।
स्वविवेकाक्षमं तेषां मनो मन्ये विपौरुषम् ॥ २६
न कदाचन संसारे सावधानमना मनाक् ।
स्वप्नेऽपि कश्चिद्दृश्ये वा दोषजालैः खिलीकृतः ॥ २७
मनसैव मनस्तस्मात्पौरुषेण पुमानिह ।
स्वकमेव स्वकेनैव योजयेत्पावने पथि ॥ २८
प्रतिभातं यदेवास्य यथाभूतं भवत्यलम् ।
क्षणादेव मनः पीनं बालवेतालवन्मुने ॥ २९
प्रतिभासस्यानुपदं प्राक्तनीं स्थितिमुज्झति ।
कुलालकर्मानुपदं घटो मृत्पिण्डतामिव ॥ ३०
प्रतिभासार्थतामेति क्षणादेव मनो मुने ।
स्पन्दमात्रात्मकं वारि यथा तुङ्गतरङ्गताम् ॥ ३१
अनुसंधानमात्रेण सूर्यबिम्बेऽपि यामिनीम् ।
मनः पश्यत्यशुद्धाक्षश्चन्द्रबिम्बे द्वितामिव ॥ ३२
यत्पश्यति तदेवाशु फलीभूतमिदं मनः ।
सह हर्षविषादाभ्यां भुङ्क्ते तस्मात्तदेव तत् ॥ ३३
प्रतिभानुपदं चेतश्चन्द्रेऽप्यग्निशिखाशतम् ।
दृष्ट्वा दाहमवाप्नोति दग्धं च परितप्यते ॥ ३४
प्रतिभानुपदं चेतः क्षारेऽपि हि रसायनम् ।
दृष्ट्वा पीत्वा परां तृप्तिं याति वल्गति नृत्यति ॥ ३५
प्रतिभानुपदं चेतो व्योमन्यपि महावनम् ।
दृष्ट्वा लुनाति लूत्वा च पुनरारोपयत्यलम् ॥ ३६
इत्थं यदेव परिकल्पयतीन्द्रजालं
क्षिप्रं तदेव परिपश्यति तात चेतः ।
नासज्जगन्न च सदित्यवगम्य नूनं
लूनां दृशं विविधभेदवतीं जहीहि ॥ ३७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे मनोमाहात्म्यवर्णनं नाम द्विनवतितमः सर्गः ॥ ९२ ॥

## त्रिनवतितमः सर्गः ९३

श्रीवसिष्ठ उवाच ।

**इति मे भगवता पूर्वमुक्तं तदेतदद्य तुभ्यं कथितम् ॥**

पवित्रे विषये किं वाच्यमित्याशयेनेन्द्रोपाख्यानादि स्मारयति—**पौरुषेणे**ति ॥ २० ॥ माण्डव्यस्य कथा महाभारतादौ प्रसिद्धा ॥२१॥ दीर्घतपा अपि यष्टुकामो यागोपकरणोपार्जनाय निर्गतो दैवादन्धकूपे निपतितस्तत्र यागकालातिक्रमे प्रसक्ते मनसैवेजे । तेनेन्द्रः प्रसन्नस्तं कूपादुद्धृत्य स्वपदं निनायेति भारतादौ प्रसिद्धम् ॥ २२ ॥ २३ ॥ अनुसंधानमुपासनं ज्ञानं वा ॥ २४ ॥ पापदृशो रक्षःपिशाचादयः । तच्चित्तं ध्येयार्थैकाग्रचित्तं न खण्डयन्ति न परिभवन्ति । पद्मेन घातास्ताडनानि ॥ २५ ॥ ये सौदासनाहुषविश्वामित्रादयः । आदिपदात्कामक्रोधाभिमानादिसंग्रहः । तेषां मनो विपौरुषमदृढपौरुषमित्युपासनायां स्वविवेकाक्षममिति ज्ञाने चासमर्थमिति तर्कयामीत्यर्थः ॥ २६ ॥ विवेकपौरुषदृढे तु मनसि नाभिलषितक्षतिरित्याह—**न कदाचि**दिति । दृश्ये जाग्रति वा ॥ २७ ॥ २८ ॥ ईषत्प्रतिभातमपि मनसि चिरनिरूढं पीनं सद्यथाभूतं सत्यमिवोपभोगक्षमं भवतीत्यर्थः ॥ २९ ॥ ननु पूर्वतनमनुष्यादिभावप्रतिभादार्ढ्यादैन्द्रत्वादेस्तत्स्थितिरपि कुतो नाभूत्तत्राह—**प्रतिभासस्ये**ति । उत्तरदृढवासनया पूर्ववासनोपमृद्यत इति भावः ॥ ३० ॥ पूर्ववासनोपमर्दनोपक्षीणस्योपासनस्य कथं कार्यान्तरक्षमता तत्राह—**प्रतिभासे**ति । विरोधिभञ्जनपर्यन्तमेव स्वकार्ये विलम्बः, तदुत्तरं तु

**तस्मादनाख्यानाद्ब्रह्मणः सर्वतः सर्वमनाख्यानमुत्पद्यते स्वयमेव तद्घनतां प्राप्य मनः संपद्यते ॥ २**

क्षणादेव निष्प्रत्यूहत्वादौपासनिकप्रतिभासगोचरोपास्यार्थतामेति प्राप्नोत्येवेति नोपक्षय इति भावः ॥ ३१ ॥ ननु तथापि प्रलयकाले कथं तद्विरुद्धसर्गकल्पनं तेषां तत्राह—**अनुसंधानमात्रेणे**ति । न तदीयसर्गे त्वदीयसर्गस्थं किंचिदनुकूलं प्रतिकूलं वा तत्र तदीयानुसंधानमात्रस्यापेक्षणादिति न प्रलयकालेऽपि तद्विरोध इति भावः । अशुद्धाक्षोऽङ्गुल्यवष्टब्धदृष्टिः ॥ ३२ ॥ स्रष्टृत्ववत्तद्भोक्तृत्वमपि मनस एवेत्याह—**यदि**ति । तदेव तत् यत्कर्तृ तदेव भोक्तृ इत्यर्थः ॥ ३३ ॥ उक्तमर्थमुदाहरणेन दर्शयति—**प्रतिभे**ति । प्रतिभा अनुसंधानं भोजकादृष्टोद्बोधितसंस्कारस्तदनुपदं तदनुसारि । तथाच विरहिणां प्रसिद्धमित्यर्थः ॥ ३४ ॥ क्षारे ऊषादौ । 'क्षीर' इति पाठे जले । रसायनं मधुरादिरसभेदान् । तथा चोष्ट्रच्छागादयोऽर्कनिम्बादिपर्णान्यपि मधुरीकृत्य भक्षयन्तीति दृश्यत इति भावः ॥ ३५ ॥ ३६ ॥ उक्तमुपसंहरति—**इत्थ**मिति । लूनां परिच्छिन्नां दृशं दृष्टिं जहीहि त्यज ॥ ३७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मनोमाहात्म्यवर्णनं नाम द्विनवतितमः सर्गः ॥ ९२ ॥

मनोऽत्र ब्रह्मणो जज्ञे ततोऽभूत्तैजसो विधिः ।
ततो मोहादहंकारस्ततो विश्वमितीर्यते ॥ १ ॥

मनउपक्रममेव सर्गक्रमं प्रागुक्तं प्रपञ्चयिषुर्विधिसंवादमुप-

तन्मनस्तन्मात्रकल्पनपूर्वकसन्निवेशं भवति ततस्तैजसः पुरुषः संपद्यते सोऽयं ब्रह्मेत्यात्मनि नाम कृतवान् ॥ ३

तेन राम योऽयं परमेष्ठी तन्मनस्तत्त्वं विद्धि ॥ ४

समनस्तत्त्वाकारो भगवान्ब्रह्मा संकल्पमयत्वाद्यदेव संकल्पयति तदेव पश्यति ॥ ५

ततस्तेनेयमविद्या परिकल्पिता अनात्मन्यात्माभिमानमयीति तेन ब्रह्मणा गिरितृणजलधिमयमिदं क्रमेण जगत्परिकल्पितम् ॥ ६

इत्थं क्रमेण ब्रह्मतत्त्वादियमागता सृष्टिरन्यत एवागतेयमिति लक्ष्यते ॥ ७

तस्मात्सर्वपदार्थानां त्रैलोक्योदरवर्तिनाम् ।
उत्पत्तिर्ब्रह्मणो राम तरङ्गाणामिवार्णवात् ॥ ८

य एवमनुत्पन्ने जगति या ब्रह्मणश्चिन्मनोरूपिणी साहंकारे परिकल्प्य ब्रह्म ब्रह्मतामेति ॥ ९

यास्त्वन्याश्चिच्छक्तयः सर्वशक्तेरभिन्ना एव कल्प्यन्ते ॥ १०

जगति स्फारतां नीते पितामहरूपेण मनसा समुल्लसन्ति ॥ ११

एते सहस्रशोऽपि परिवर्तमानजीवा उच्यन्ते १२

तेऽभ्युत्थिता एव चिन्नभसो नभसि तन्मात्रैरावलिता गगनपवनान्तर्वर्तिनश्चतुर्दशविधा ये भूतजातमध्यतयाभ्यासे तिष्ठन्ति तस्या एव प्राणशक्तिद्वारेण प्रविश्य शरीरं स्थावरं जंगमं वापि बीजतां गच्छन्ति ॥ १३

तदनु योनितो जगति जायन्ते तदनु काकतालीययोगेनोत्पन्नवासनाप्रवाहानुरूपकर्मफलभागिनो भवन्ति ॥ १४

ततः कर्मरज्जुभिर्वासनावलिताभिर्बद्धशरीरा भ्रमन्तः प्रोत्पतन्ति च ॥ १५

इच्छैवैता भूतजातयः ॥ १६

काश्चिज्जनसहस्रान्ताः पतन्ति वनपर्णवत् ।
कर्मवात्या परिभ्रान्ता लुठन्ति गिरिकुक्षिषु ॥ १७

अप्रमेयभवाः काश्चिच्चित्सत्ताज्ञानमोहिताः ।
चिरजाता भवन्तीह बहुकल्पशतान्यपि ॥ १८

काश्चित्कतिपयातीता मनोरमभवान्तराः ।
विहरन्ति जगत्यस्मिञ्शुभकर्मपरायणाः ॥ १९

---

संहरति—**इतीति**। भगवता परमेष्ठिना ॥ १ ॥ अनाख्यानादव्याकृतनामरूपात् । अनाख्यानं सूक्ष्मत्वान्नामसंबन्धानर्हं सर्वप्रपञ्चरूपं चलनात्मकं निर्विकल्पकज्ञानप्रकाशितमुत्पद्यते । तत्कालेन स्वयमेव संकल्पविकल्पनात्मकमननसामर्थ्योद्भवेन घनतां प्राप्य ॥ २ ॥ तन्मात्राणि सूक्ष्मभूतानि तत्कल्पनापूर्वकं संनिवेशं स्वाप्नशरीरमिव वासनामयपुरुषाकारम् । ततः संनिवेशोपाधेस्तदुपहितः पुरुष आत्मा तैजसः तेजःप्रधानलिङ्गसमष्ट्युपाधित्वात् । सोऽयं ब्रह्मा परमेष्ठी ॥ ३ ॥ तस्य जगत्सर्गसंकल्पकता मनोरूपत्वादेवेत्याह—**तेने**ति ॥ ४ ॥ ५ ॥ ननु तत्संकल्पाज्जगदुत्पद्यतां, जीवानां तदभिमानस्तु कुतस्तत्राह—**ततस्तेने**ति। अत्राविद्या अन्यथाग्रहणलक्षणाध्यासरूपा कार्याविद्या । इति अनया रीत्या ॥ ६ ॥ ब्रह्मतत्त्वाच्चिदेकरसादागतापि अन्यतो जडात्प्रधानपरमाण्वादेः सकाशादागतेति तार्किकैर्लक्ष्यते ॥ ७ ॥ एकैकस्यानेकोपादानकल्पनागौरवान्न परमाणुकारणतावादो युक्तः । विना कर्तारं जडस्य जगद्वैचित्र्यरचनानुपपत्तेरसङ्गोदासीनस्य कर्तृत्वानुपपत्तेश्च न प्रधानकारणतावादो युक्तः । चितो जडाकारपरिणामायोगान्न विज्ञानविपरिणामवादो युक्तः । शून्यस्य च क्वापि कारणत्वादर्शनान्न तत्कारणतावादोऽपि युक्तः । सर्वेष्वपि कल्पेषु प्रमाणाभावाच्च नान्यत इयमागता सृष्टिरिति निश्चिते श्रुतिप्रामाण्याद्भगवाननिर्वचनीयमायाशक्तिकब्रह्मविवर्तवाद एव परिशिष्ट इत्याशयेनोपसंहरति—**तस्मादिति**॥ ८ ॥ य उत्पत्तिप्रकार एवमनया रीत्या। तामेवाह—**अनुत्पन्ने** इत्यादिना । विवर्तत्वादेव परमार्थतोऽनुत्पन्ने जगति अहंकारसमष्ट्युपाधौ ब्रह्म प्रविष्टमिव परिकल्प्य ब्रह्मतां परमेष्ठितामेति ॥ ९ ॥ अन्या व्यष्ट्यहंकारोपहिताश्चिच्छक्तयश्चिदाभासाः ॥ १० ॥ ताः पितामहरूपेण मनसा समष्टिमनोभावेन प्रथमं समुल्लसन्तीत्यर्थः ॥ ११ ॥ १२ ॥ ते हि चिन्नभस एव समुत्थिता नभसि मायाकाशे तन्मात्रैर्भूतमात्रोपाधिभिरावलिताः सन्तो गगनस्थपवनस्यावहोद्वहादिभेदभिन्नस्य वातस्कन्धभेदस्य चान्तर्वर्तिनो ये चतुर्दशविधा लोकास्तेषु यादृशभूतजातमध्यवर्तितया, यादृशवासनाकर्माभ्यासे ये जीवास्तिष्ठन्ति तस्या एव भूतजातेः प्राणशक्तिद्वारेण शरीरं स्थावरं जंगमं वा प्रविश्य रेतोरक्तादिरूपां बीजतां गच्छन्ति ॥ १३ ॥ ॥ १४ ॥ ततः साध्वसाधुवासनासंवलिताभिः पुण्यापुण्यकर्मरज्जुभिर्बद्धं शरीरं लिङ्गशरीरं येषां तथाविधाः सन्तः प्रोत्पतन्त्युत्तमलोकान्निपतन्ति निरयेषु वा ॥ १५ ॥ कर्मतद्वासनयोश्च कामराग एव बीजमिति तन्मया एव जीवा इत्याह—**इच्छैवैता** इति । तथाच श्रुतिः 'काममय एवायं पुरुषः' ॥ १६ ॥ कामानुसारिजन्मपरम्परामेव मोक्षावसानां चतुर्धा पद्यैः प्रपञ्चयति—**काश्चिदि**त्यादिना । काश्चिद्भूतजातयस्तज्जीवा जननं जनः । जना जन्मानि तत्सहस्राण्यन्तोऽवधिस्तत्त्वबोधस्य यासां तथाविधाः सन्तः संसारे पतन्ति ततो मुच्यन्ते इत्यर्थः । वनपर्णवदित्यादिपूर्वोत्तरान्वयि ॥ १७ ॥ काश्चित्तु चित्सत्ताया अज्ञानेन मोहिता अतएवाप्रमेया गणनाद्यपरिच्छेद्या भवा जन्मानि यासां तथाविधाश्चिरजाताः सत्य इह संसारे बहुकल्पशतान्यपि भवन्ति ॥ १८ ॥ कतिपयान्यतीतान्यमनोरमाणि भवा-

काश्चिद्विज्ञातविज्ञानाः परमेव पदं गताः ।
वातोद्धूताः पयोमध्यं सामुद्रा इव बिन्दवः ॥ २०
उत्पत्तिः सर्वजीवानामितीह ब्रह्मणः पदात् ।
आविर्भावतिरोभावभङ्गुरा भवभाविनी ॥ २१
वासनाविषवैषम्यवैधुर्यज्वरधारिणी ।
अनन्तसंकटानर्थकार्यसत्कारकारिणी ॥ २२
नानादिग्देशकालान्तशैलकन्दरचारिणी ।
रचितोत्तमवैचित्र्यविहितासंभ्रमासती ॥ २३
एषा जगज्जाङ्गलजीर्णवल्ली
सम्यक्समालोककुठारकृत्ता ।
वल्लीव विक्षुब्धमनःशरीरा
भूयो न संरोहति रामभद्र ॥ २४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे उत्पत्तिदर्शनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

## चतुर्नवतितमः सर्गः ९४

श्रीवसिष्ठ उवाच ।

उत्तमाधममध्यानां पदार्थानामितस्ततः ।
उत्पत्तीनां विभागोऽयं शृणु वक्ष्यामि राघव ॥ १
इदंप्रथमतोत्पन्नो योऽस्मिन्नेव हि जन्मनि ।
इदंप्रथमतानाम्नी शुभाभ्याससमुद्भवा ॥ २
शुभलोकाश्रया सा च शुभकार्यानुबन्धिनी ।
सा चेद्विचित्रसंसारवासनाव्यवहारिणी ॥ ३
भवैः कतिपयैर्मोक्षमित्युक्ता गुणपीवरी ।
तादृक्फलप्रदानैककार्याकार्यानुमानदा ॥ ४
तेन राम ससत्त्वेति प्रोच्यते सा कृतात्मभिः ।
अथ चेच्चित्रसंसारवासनाव्यवहारिणी ॥ ५
अत्यन्तकलुषा जन्मसहस्रैर्ज्ञानभागिनी ।
तादृक्फलप्रदानैकधर्माधर्मानुमानदा ॥ ६
असावधमसत्त्वेति तेन साधुभिरुच्यते ।
सैव संख्यातिगानन्तजन्मवृन्दादनन्तरम् ॥ ७

न्तराणि जन्मानि यासां तथाविधाः सत्यः सांप्रतं शुभकर्मपरायणा विहरन्ति ता अल्पैरेव जन्मभिर्मोक्ष्यन्त इति शेषः ॥ १९ ॥ काश्चित्त्वितः पूर्वमेव मुक्ता इत्याह—**काश्चिदिति**। वातोद्धूताः सामुद्रा बिन्दवः पयोमध्यं समुद्रमिव प्रविशन्ति ॥ २० ॥ उक्तमुपसंहरति—**उत्पत्तिरि**त्यादिना ॥ २१ ॥ २२ ॥ नानादिक्षु नानादेशेषु नानाकालेषु नानाशैलकन्दरेषु च चारिणी कर्मफलभोगसंचारवती । रचितैरुत्तमैर्वैचित्र्यैर्विहिता आसंभ्रमाः सर्वतोभ्रमा यया । परमार्थतस्त्वसती ॥ २३ ॥ इत्थं संसारवल्लीं प्रपञ्च्य तदुच्छेदोपायमाह—**एषेति** । विक्षुब्धं विक्षेपबहुलं मन एव शरीरं स्वरूपं यस्यास्तथाविधा एषा जगल्लक्षणा मोहजाङ्गलस्य जीर्णवल्ली जरल्लता सम्यक्समालोकस्तत्त्वसाक्षात्कारस्तल्लक्षणेन कुठारेण कृत्ता छिन्ना सती । वल्लीवेति व्यतिरेकदृष्टान्तः । भूयो न संरोहति मूलाज्ञानोच्छेदादिति भावः ॥ २४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे उत्पत्तिदर्शनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

**इह द्वादशधा भिन्ना वर्ण्यन्ते जीवजातयः ।**
**उपाधिगुणवैचित्र्याच्चिराच्चिरविमुक्तिगाः ॥ १ ॥**

पूर्वोक्ते जीवानां चिराचिरमुक्तिविभागे रामस्य विशेषजिज्ञासां लिङ्गैरुपलक्ष्य तद्विस्तरेण वक्तुं वसिष्ठ उवाच—**उत्तमे**त्यादिना । सात्त्विकतामसराजसभेदेनोत्तमाधममध्यमानां पदार्थानां जीवोपाधीनामितस्ततो भुवनभेदेषु या उत्पत्तयः प्राक्कथितास्तासामयं वक्ष्यमाणो विभागोऽस्ति तं वक्ष्यामि शृण्वित्यर्थः ॥१॥ इदंप्रथमता १ गुणपीवरी २ ससत्त्वा ३ अधमसत्त्वा ४ अत्यन्ततामसी ५ राजसी ६ राजससात्त्विकी ७ राजसराजसी ८ राजसतामसी ९ राजसात्यन्ततामसी १० तामसी ११ तामससत्त्वा १२ तमोराजसी १३ अत्यन्ततामसी १४ इति वक्ष्यमाणभेदेषु अन्त्ययोर्भेदयोः पञ्चमनवमयोरन्तर्भावाद्वादश भेदाः परिशिष्यन्ते तेष्वाद्यां दर्शयति—**इदंप्रथमतोत्पन्न** इति । यो जीवः पूर्वकल्पे चरमजीवजन्मनि शमदमादिसर्वसाधनगुणसंपत्तावपि श्रवणाद्यलाभाद्बलवत्प्रतिबन्धाद्वा अनुत्पन्नज्ञानोऽस्मिन् कल्पे इदंप्रथमतया प्रथमे जन्मन्येव शमादिसर्वगुणसंपन्नो ज्ञानयोग्य उत्पन्नस्तस्य सा जीवजातिरिदंप्रथमतानाम्नीत्यर्थः । प्राक्कल्पीयशुभाभ्याससमुद्भवा हि सा । तस्मिन्नेव जन्मनि मुक्तिभागित्यर्थः ॥ २ ॥ सैव चेत्प्राक्तनवैराग्यमान्द्याच्छुभलोकेच्छाकृतोपासनकर्मादिसंवलिता अतएव विचित्रसंसारवासनया भोगव्यवहारिणी भोगैर्वासनाक्षये कतिपयैर्दशपञ्चभिरेव भवैर्जन्मभिर्मोक्षं प्रापयतीति शेषः । इति हेतोः सा शान्तिरागाद्युभयगुणोपचितत्वाद्गुणपीवरीत्युक्तेत्यर्थः ॥ ३ ॥ तृतीयामाह—**तादृगि**ति । तादृक्शब्दो वीप्सितव्यः । तादृशानि तादृशानि यानि सुखदुःखफलानि तत्प्रदानलक्षणैरेकैर्मुख्यैर्लिङ्गैः प्राक्कल्पीययोः कार्याकार्ययोः पुण्यपापयोरनुमानदा अनुमापयित्री सापि क्रमात्सत्त्वोपचये शतावधिजन्मभिर्मोक्षभागित्यर्थाद्गम्यते ॥ ४॥ चतुर्थीमाह—**अथेति** ॥ ५ ॥ अत्यन्तकलुषा प्राक्तनकल्पसंचितबहुदुष्कर्मदुर्वासनामालिन्यवती । तादृगित्यादि प्राग्वत् ॥६॥ पञ्चमीमाह—**सैवेति** । सैव तादृग्लक्षणैव सती अध्यात्मशास्त्र-

१ अन्तशब्देन मरणोत्तरं गन्तव्या लोका उपलक्ष्यन्ते तेषु च...

संदिग्धमोक्षा यदि तत्प्रोच्यतेऽत्यन्ततामसी ।
अनद्यतनजन्मा तु जातिस्तादृशकारिणी ॥ ८
योत्पत्तिर्मध्यमा पुंसो राम द्वित्रिभवान्तरा ।
तादृक्कार्या तु सा लोके राजसी राजसत्तम ॥ ९
अविप्रकृष्टजन्मापि सोच्यते कृतबुद्धिभिः ।
सा हि तन्मृतिमात्रेण मोक्षयोग्या मुमुक्षुभिः ॥ १०
तादृक्कार्यानुमानेन प्रोक्ता राजससात्त्विकी ।
सैव चेदितरैरल्पैर्जन्मभिर्मोक्षभागिनी ॥ ११
तत्तादृशी हि सा तज्ज्ञैः प्रोक्ता राजसराजसी ।
सैव जन्मशतैर्मोक्षभागिनी चेच्चिरैषिणी ॥ १२
त्वदुक्ता तादृगारम्भा सङ्घी राजसतामसी ।
सैव संदिग्धमोक्षा चेत्सहस्रैरपि जन्मनाम् ॥ १३
तदुक्ता तादृशारम्भा राजसात्यन्ततामसी ।
भुक्तजन्मसहस्रा तु योत्पत्तिर्ब्रह्मणो नृणाम् ॥ १४
चिरमोक्षा हि कथिता तामसी सा महर्षिभिः ।
तज्जन्मनैव मोक्षस्य भागिनी चेत्तदुच्यते ॥ १५
तज्ज्ञैस्तामससत्त्वेति तादृशारम्भशालिनी ।
भवैः कतिपयैर्मोक्षभागिनी चेत्तदुच्यते ॥ १६
तमोराजसरूपेति तादृशैर्गुणबृंहितैः ।
पूर्वजन्मसहस्राढ्या पुरोजन्मशतैरपि ॥ १७
मोक्षायोग्या ततः प्रोक्ता तज्ज्ञैस्तामसतामसी ।
पूर्वं तु जन्मलक्षाढ्या जन्मलक्षैः पुरोऽपि चेत् ॥ १८
संदिग्धमोक्षा तदसौ प्रोच्यतेऽत्यन्ततामसी ।
सर्वा एताः समायान्ति ब्रह्मणो भूतजातयः ॥ १९
किंचित्प्रचलिता भोगात्पयोराशेरिवोर्मयः ।
सर्वा एव विनिष्क्रान्ता ब्रह्मणो जीवराशयः ॥ २०
स्वतेजःस्पन्दिताभोगाद्दीपादिव मरीचयः ।
सर्वा एव समुत्पन्ना ब्रह्मणो भूतपङ्क्तयः ॥ २१
स्वमरीचिवलोद्भूता ज्वलिताग्नेः कणा इव ।
सर्वा एवोत्थितास्तस्माद्ब्रह्मणो जीवराशयः ॥ २२
मन्दारमञ्जरीरूपाश्चन्द्रबिम्बादिवांशवः ।
सर्वा एव समुत्पन्ना ब्रह्मणो दृश्यदृष्ट्यः[१] ॥ २३
यथा विटपिनश्चित्रास्तद्रूपा विटपश्रियः ।
सर्वा एव समुत्पन्ना ब्रह्मणो जीवपङ्क्तयः ॥ २४
कटकाङ्गदकेयूरयुक्तयः कनकादिव ।
सर्वा एवोत्थिता राम ब्रह्मणो जीवराशयः ॥ २५
निर्झरादमलोद्योतात्पयसामिव बिन्दवः ।
अजस्यैवाखिला राम भूतसंततिकल्पनाः ॥ २६
आकाशस्य घटस्थालीरन्ध्राकाशादयो यथा ।
सर्वा एवोत्थिता लोककलना ब्रह्मणः पदात् ॥ २७
सीकरावर्तलहरीबिन्दवः पयसो यथा ।
सर्वा एवोत्थिता राम ब्रह्मणो दृश्यदृष्ट्यः ॥ २८
मृगतृष्णातरङ्गिण्यो यथा भास्करतेजसः ।
सर्वा दृश्यदृशो द्रष्टुर्व्यतिरिक्ता न रूपतः ॥ २९
शीतरश्मेरित ज्योत्स्ना स्वालोक इव तेजसः ।
एवमेता हि भूतानां जातयो विविधाश्च याः ॥ ३०
यस्मादेव समायान्ति तस्मिन्नेव विशन्ति च ।
काश्चिज्जन्मसहस्रान्ते जातयश्चिरकालिकाः ।
काश्चित्कतिपयातीतजन्मरूपा व्यवस्थिताः ॥ ३१

वैमुख्यादस्मिन्कल्पे संदिग्धमोक्षा कथंचित्संभावितमोक्षा ॥ ७ ॥ षष्ठीं लक्षयति—**अनद्यतने**ति । या तु जातिरनद्यतनजन्मापूर्वकल्पीयवासनानुसारिणी अतएव तादृशचरित्रकारिणी द्वित्रिभवान्तरा एतत्कल्पीयद्वित्रिजन्ममध्ये मध्यमा मनुष्यादिरूपा या उत्पत्तिस्तादृक्कार्या तदनुरूपस्वर्गनरकादिप्रापिका संदिग्धमोक्षा सा राजसीत्यर्थः ॥ ८ ॥ ९ ॥ सप्तमीं लक्षयति—**अविप्रकृष्टे**ति । सा यदा राजसदुःखानुभवप्रयुक्तवैराग्यादिसंपत्त्या अविप्रकृष्टज्ञानजन्मापि भवति तदा तत्रत्यमृतिमात्रेण मोक्षयोग्या मुमुक्षुभिः प्रोच्यते । सैव मया तादृक्कार्यलिङ्गकानुमानेन राजससात्त्विकी प्रोक्तेत्यर्थः ॥ १० ॥ अष्टमीं लक्षयति—**सैव चेदि**ति । इतरैरुक्तमानुषातिरिक्तैरल्पैर्यक्षगन्धर्वादिजन्मभिः क्रमाज्ज्ञानप्राप्त्या मोक्षभागिनी चेद्राजसराजसीत्यर्थः ॥ ११ ॥ नवमीं लक्षयति—**सैव जन्मशतै**रिति ॥ १२ ॥ तादृगारम्भा राजसतामसफलोपभोजककर्मोपासनाद्यारम्भवती । दशमीं लक्षयति—**सैवे**ति ॥ १३ ॥ एकादशीमाह—**भुक्ते**ति । ब्रह्मणो हिरण्यगर्भाद्या उत्पत्तिः कल्पादावाविर्भावः ॥ १४ ॥ चिरमोक्षा कल्पान्तरमोक्षा । द्वादशीमाह—**तज्जन्मनैवे**ति । तज्जन्मना तामसप्रथमजन्मना । तामसे दानवरक्षःपिशाचादिजन्मनि सत्त्वोत्कर्षात्प्रह्लादकर्कट्यादीनां ज्ञानं प्रसिद्धमिति भावः ॥ १५ ॥ राजसतामसी प्राक्प्रोक्ता तस्या एव कार्यपौर्वापर्येण त्रयोदशीमाह—**भवै**रिति ॥ १६ ॥ गुणबृंहितै रजस्तमोबहुलफलैरुपलक्षिते इत्यर्थः ॥ १७ ॥ चतुर्दशीं विधामाह—**पूर्व**मिति ॥ १८ ॥ सर्वासामुपाधिद्वारा ब्रह्मप्रभवत्वं ब्रह्माभेदसंभावनाय दृष्टान्तभेदैर्द्रढयन्नाह—**सर्वा एता** इति ॥ १९ ॥ ॥ २० ॥ २१ ॥ कणाः स्फुलिङ्गाः ॥ २२ ॥ २३ ॥ विटपश्रियः शाखाशोभाः ॥ २४ ॥ २५ ॥ एवमंशांशिभावकल्पनया अभेदयोग्यतां प्रदर्श्य उपाधिमिथ्यात्वप्रदर्शनेनाभेदं दर्शयति—**अजस्यैवे**ति ॥ २६ ॥ उपाधिमिथ्यात्वं तदनन्यत्वन्यायोपपादनेन दृष्टान्ते दर्शयितुं जगतो ब्रह्मकार्यत्वमाह—**सर्वा एवे**त्यादिना ॥ २७ ॥ २८ ॥ २९ ॥ स्वस्य आलोकः प्रभेव । उपसंहरति—**एवमि**त्यादिना ॥ ३० ॥ समायान्त्याविर्भवन्ति । विशन्ति उपाधिविलयेनैक्यमापद्यन्ते । काश्चिदित्यादिः प्रागुक्त-

१ दृश्यदृष्ट्य इति पाठः.

इत्थं जगत्सु विविधेषु विचित्ररूपा-
स्तस्येच्छया भगवतो व्यवहारवत्यः ।
आयान्ति यान्ति निपतन्ति तथोत्पतन्ति
रूपश्रियः कणघटा इव पावकोत्थाः ॥ ३२

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषूत्पत्तिप्रकरणे ब्रह्मणः सर्वमुत्पद्यत इति कथनं नाम चतुर्नवतितमः सर्गः ॥ ९४ ॥

## पञ्चनवतितमः सर्गः ९५

श्रीवसिष्ठ उवाच ।
अभिन्नौ कर्मकर्तारौ सममेव परात्पदात् ।
स्वयं प्रकटतां यातौ पुष्पामोदौ तरोरिव ॥ १
सर्वसंकल्पनामुक्ते जीवा ब्रह्मणि निर्मले ।
स्फुरन्ति वितते व्योम्नि नीलिमेवाज्ञचक्षुषः ॥ २
अप्रबुद्धजनाचारो यत्र राघव दृश्यते ।
तत्र ब्रह्मण उत्पन्ना जीवा इत्युक्तयः स्थिताः ॥ ३
संप्रबुद्धजनाचारे वक्तुमेतन्न शोभनम् ।
यद्ब्रह्मण इदं जातं न जातं चेति राघव ॥ ४
काचिद्वा कलना यावन्न नीता राघव प्रथाम् ।
उपदेश्योपदेशश्रीस्तावल्लोके न शोभते ॥ ५
अतो भेददृशा दीनामङ्गीकृत्योपदिश्यते ।
ब्रह्मेदमेते जीवा वै वेति वाचामयं क्रमः ॥ ६

इति दृष्टो निरासङ्गाद्ब्रह्मणो जायते जगत् ।
तज्जं तदेव तद्धेतुगतं दुरवबोधतः ॥ ७
मेरुमन्दरसंकाशा बहवो जीवराशयः ।
उत्पत्योत्पत्य संलीनास्तस्मिन्नेव परे पदे ॥ ८
अथानन्ताः स्फुरन्त्येते जायमानाः सहस्रशः ।
नानाककुब्निकुञ्जेषु पादपेष्विव पल्लवाः ॥ ९
जीवौघाश्चोद्भविष्यन्ति मधाविव नवाङ्कुराः ।
तत्रैव लयमेष्यन्ति ग्रीष्मे मधुरसा इव ॥ १०
तिष्ठन्त्यजस्रं कालेषु त एवान्ये च भूरिशः ।
जायन्ते च प्रलीयन्ते परस्मिञ्जीवराशयः ॥ ११
पुष्पामोदाविवाभिन्नौ पुमान्कर्म च राघव ।
परमेशात्समायाते तत्रैव विशतः शनैः ॥ १२
दृष्टमेते जगत्यस्मिन्दैत्योरगनरामराः ।
उद्भवन्त्यभवा भावैः प्रस्फुरन्ति पुनः पुनः ॥ १३

स्यानुवादः ॥ ३१ ॥ तस्येश्वरात्मनो भगवतो ब्रह्मणो व्यवहारवत्यो रूपश्रिय उपाधिरूपाण्येव श्रीर्यासां तथाविधाः प्रागुक्तजीवजातयो निपतन्ति भवाद्भवान्तरे भ्रमन्ति । पावकोत्थाः कणघटाः स्फुलिङ्गसमूहा इव ॥ ३२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ब्रह्मणः सर्वमुत्पद्यत इति कथनं नाम चतुर्नवतितमः सर्गः ॥ ९४ ॥

अप्रबुद्धजनौघस्य प्रबोधाय न वस्तुतः ।
कर्मकर्त्रोः सहोद्भूतिराक्षिप्येह समर्थ्यते ॥ १ ॥

ब्रह्मण एव कल्पादौ सर्वा जीवजातय आविर्भवन्तीत्युक्तिव्याजेन ब्रह्मैवोपाधिषु जीवभावेन प्रविष्टमिति दर्शितम् । एवंच आगन्तुके जीवभावे न प्राक्तनं कर्म निमित्तं वक्तुं शक्यम् । तस्य प्राक्तनकर्तृसापेक्षत्वात् । तदर्थं जीवस्यानादित्वाभ्युपगमे तु न ब्रह्मणः प्रागुक्त औपाधिको जीवभावः समर्थयितुं शक्य इत्युभयथापि दोषं प्रसक्तं दृष्टिभेदाश्रयेण परिहरिष्यन् गूढाभिसंधिः परिशेषाद्यौक्तिकदृशा सहोत्पत्तिपक्षं दर्शयति—**अभिन्नाविति** । अन्योन्यतादात्म्यकल्पनादभिन्नौ, अतः समं युगपदेव परात्पदाद्ब्रह्मणः सकाशात्स्वयं स्वस्वभाववशादेव सर्गादौ प्रकटतां यातौ । तथाच भगवतो वाक्यम्—'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥' इति ॥ १ ॥ तदाविर्भावे तादात्म्याध्यासे च जीवानां स्वभावशब्दितं स्वाज्ञानमेव हेतुरिति सदृष्टान्तमाह—**सर्वेति** ॥ २ ॥ अतएव सृष्टिवादोऽयमज्ञसंमतव्यवहारभूमावेव न परमार्थपदे इत्याह—**अप्रबुद्धेति** ॥ ३ ॥ 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तिरित्येषा परमार्थता' । 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' इत्यादिश्रौतपारमार्थिकदृशा तु न जगतो जीवानां कर्मणां वा उत्पत्त्यादिकं तन्निषेधो वा वक्तुं शक्य इत्याह—**संप्रबुद्धेति** ॥४॥ तर्हि परमार्थोपदेशके शास्त्रे किमज्ञदृष्ट्युपपाद्यसर्गाद्युक्तेः प्रयोजनं तत्राह—**काचिद्वेति** । कलना द्वितीयकल्पना ॥५॥ दीनां शोच्यां[1] द्वैतकल्पनां यावद्व्यवहारकालमङ्गीकृत्येत्यर्थः । वै इति निश्चये । वा इति संशये । इतिशब्दः प्रकारे । यावत्प्रमाणपरिशोधं निश्चयेन यावत्प्रमेयनिर्णयं संशयेन प्रकारेणाङ्गीकृत्येत्यर्थः ॥ ६ ॥ लोकेऽप्यभ्युपगम्यवादो बहुशः प्रसिद्ध इत्याह—**इति दृष्ट इति** । यद्यभ्युपगतं द्वैतं तर्हि कथमपोद्यते तत्राह—**निरासङ्गादिति** । निरासङ्गादसङ्गादद्वितीयाद्ब्रह्मणो जगज्जायते इति प्रथमं व्युत्पादिते यत्तज्जं तदुपादानकं तत्तदेव । यतस्तदुत्पत्तेः प्राक् हेतुगतमुपादानस्थं तदेव आविर्भावदशायामपि हेतुगतत्वात्तावन्मात्रमपि दुरवबोधतो भ्रान्तिज्ञानात्पृथगिव भातीति बाध्यत इत्यर्थः ॥७॥ तदुपादानकत्वं तु कालत्रयेऽपि तत्रैवोत्पद्य लीयमानत्वात्सिद्धमित्याह—**मेर्वित्यादिचतुर्भिः** । जीवशब्देन तदुपाधयो गृह्यन्ते ॥८॥९॥१०॥११॥ गूढाभिसंधिमुपसंहरति—**पुष्पामोदाविति** । **अभिन्नाविति** । पुष्पामोदाविति दृष्टान्तविशेषणत्वात्पुंस्त्वम् । समायाते इति तु दार्ष्टान्तिकविशेषणमिति 'नपुंसकमनपुंसकेन' इति नपुंसकैकशेषः ॥ १२ ॥ सहोत्पत्तिकल्पनायां दृष्टानुसारोऽप्यस्तीत्याह—**दृष्टमिति** । वस्तुवृत्त्या अभवा अपि भावैर्वासनाभूतमात्रो-

१ शोच्याद्वैत इति पाठः

हेतुर्विहरणे तेषामात्मविस्मरणादृते ।
न कश्चिल्लक्ष्यते साधो जन्मान्तरफलप्रदः ॥ १४

श्रीराम उवाच ।

अविसंवादिनार्थे यद्यत्प्रामाणिकदृष्टिभिः ।
वीतरागैर्विनिर्णीतं तच्छास्त्रमिति कथ्यते ॥ १५
महासत्त्वगुणोपेता ये धीराः समदृष्टयः ।
अनिर्देश्यकलोपेताः साधवस्त उदाहृताः ॥ १६
द्वयं हि दृष्टिर्बालानां सिद्धये सर्वकर्मणाम् ।
साधुवृत्तं तथा शास्त्रं सर्वदैवानुवर्तते ॥ १७
साधुसंव्यवहारार्थं शास्त्रं यो नानुवर्तते ।
बहिःकुर्वन्ति तं सर्वे स च दुःखे निमज्जति ॥ १८
इह लोके च वेदे च श्रुतिरित्थं सदा प्रभो ।
यथा कर्म च कर्ता च पर्यायेणेह संगतौ ॥ १९
कर्मणा क्रियते कर्ता कर्त्रा कर्म प्रणीयते ।
बीजाङ्कुरादिवन्न्यायो लोकवेदोक्त एव सः ॥ २०
कर्मणो जायते जन्तुर्बीजादिव नवाङ्कुरः ।
जन्तोः प्रजायते कर्म पुनर्बीजमिवाङ्कुरात् ॥ २१
यया वासनया जन्तुर्नीयते भवपञ्जरे ।
तद्वासनानुरूपेण फलं समनुभूयते ॥ २२
एवं स्थिते कथं नाम जन्मबीजेन कर्मणा ।
विनोत्पत्तिस्त्वया प्रोक्ता भूतानां ब्रह्मणः पदात् ॥ २३
पक्षेणानेन भगवन्भवता जन्मकर्मणोः ।
तिरस्कृता जगज्जाता साऽविनाभावितैतयोः ॥ २४
ब्रह्मण्यकारणे ब्रह्मन्ब्रह्मादिषु फलेषु च ।
कर्मणां फलमस्तीति द्वयं लोके प्रमार्जितम् ॥ २५
संजाते संकरे लोके कर्मस्वफलदायिषु ।
मात्स्यन्याये विलसति नाश एवावशिष्यते ॥ २६

पाधिभिरुद्भवन्ति तत्कालं प्रस्फुरन्ति संचलन्ति चेति सहोत्पत्तितादात्म्ययोः प्रत्यक्षं दर्शनादित्यर्थः ॥ १३ ॥ तथाच तदुत्पत्तौ न कर्माणि न वा अन्यन्निमित्तं कर्तृपूर्वकत्वात्तेषामतः परिशेषात्प्रागुक्ताज्ञानमेकमेवेत्याह—**हेतुरिति**। अयमभिसंधिः। न तावत्कर्तुरनादिता वक्तुं शक्या, कर्तृत्वस्य स्वाभाविकत्वे अनादिस्वभावस्याग्न्यौष्ण्यस्येवोपायसहस्रैरप्यपरिहार्यतयाऽनिर्मोक्षप्रसङ्गात्। औपाधिकत्वे स उपाधिरविद्यैव वा स्यादन्यो वा। आद्ये फलतः सैद्धान्तिकपरिशेषपक्षान्तर्गतिः। किंच अविद्याया आत्मनि कर्तृतापादकत्वं स्वत एव वा अन्यसापेक्षतया वा। न स्वतः, सुषुप्तिमूर्च्छाप्रलयेष्वप्यात्मनः[1] कर्तृत्वापादनापत्तेः। अन्यसापेक्षतया चेद्यत्सापेक्षा सत्यविद्या कर्तृतामापादयति स एवोपाधिः स्यान्नाविद्या। नह्युपाधेरुपाधिर्भवतीति। द्वितीयेऽपि स उपाधिरविद्याकार्यं स्वतन्त्रो वा। स्वातन्त्र्ये यद्यनादिस्तर्हि सुषुप्तिप्रलययोरपि कर्तृतामापादयेत्। यदि सादिस्तर्हि तदुपहितकर्तृरूपमपि सादिवेति नानादिकर्तृसिद्धिः। अविद्याकार्योपाधिपक्षेऽप्ययमेव दोष इति नित्यस्याप्यात्मनः कर्त्रुपाधिसंबन्धस्य प्रतिकल्पं प्रतिदिनं च भेदात्तदधीनस्योपहितकर्तृरूपस्य कर्मसहोत्पत्तिः कर्मशक्तिमदुपाधितादात्म्यरूपता च, तत्र चात्मविस्मरणमेव बीजमिति पक्ष एव यौक्तिकदृशा परिशिष्यते। 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' इति श्रुतिरप्यत्रानुकूलेति ॥ १४ ॥ अस्मिन्पक्षे अनुपपत्तिमुपपादयिष्यन् रामस्तदुपयोगिनीं भूमिकां रचयितुं शास्त्रलक्षणमाह—**अविसंवादिनेति**। अलौकिके धर्मे ब्रह्मणि च प्रमाणं श्रुतिस्तत्प्रभवा दृष्टिर्येषां तैः प्रामाणिकदृष्टिभिर्वीतरागैश्च मन्वादिभिर्धर्माधर्मरूपे अर्थे स्वमूलश्रुत्यविसंवादिना जैमिनीयादितन्त्रसिद्धन्यायकलापेन यद्यद्विनिर्णीतं निर्णीय निबद्धं स्मृतिपुराणकल्पसूत्रेतिहासादि तच्छास्त्रमिति कथ्यते। तथाच श्रुतयस्तन्मूलस्मृत्यादयश्चालौकिकार्थे मानमित्याशयः ॥ १५ ॥

एवं सदाचारोऽपि मानमिति वक्तुं सतां लक्षणमाह—**महासत्त्वेति**। महता अत्यन्तविशुद्धेन सत्त्वगुणेनोपेताः। धीरा विषयैर्दुःखस्थानैश्चाप्रकम्प्याः समदृष्टयः अरागद्वेषाः। अनिर्देश्या शब्देनाभिलपितुमशक्या या निरतिशयानन्दब्रह्मसाक्षात्कारकला तदुपेताः। ते साधवः सन्त इत्यर्थः ॥ १६ ॥ साधुवृत्तमुक्तलक्षणानां सतामाचारः शास्त्रं श्रुतिस्मृती चेति द्वयं बालानामज्ञाततत्त्वानां शिष्टानां दृष्टिर्नेत्रद्वयं धर्मब्रह्मतत्त्वदर्शनायेत्यर्थः ॥ १७ ॥ साधुः स्वर्गमोक्षोपयोगी यः संव्यवहारस्तदर्थं तत्प्रयोजनं शास्त्रं सर्वे शिष्टा इति शेषः ॥ १८ ॥ इह अस्मिन् लोके प्रामाणिकजने वेदे च इत्थं श्रूयत इति श्रुतिर्निरूढप्रवादः। अस्तीति शेषः। प्रवादमेवाभिलप्य दर्शयन् विवक्षितमर्थमाह—**यथेत्यादिना**। पर्यायेण अयौगपद्येन। हेतुफलभावेनेति यावत् ॥१९॥ तदेव स्पष्टमाह—**कर्मणेति**। प्रणीयते निष्पाद्यते ॥२०॥२१॥ कर्मेव वासनापि प्राक्तनी कर्तृहेतुरित्याह—**ययेति**। समनुभूयते तेन जन्तुनेति शेषः ॥ २२ ॥ एवं भूमिकां कृत्वा कर्तृकर्मणोः सहोत्पत्तिपक्षमाक्षिपति—**एवं स्थिते** इति। सहोत्पत्तिपक्षे हि प्राक्तनं कर्म विनैवोत्पत्तिरिति फलितं तच्चायुक्तम्। 'साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन', 'कर्मणा जायते जन्तुः' इत्यादिश्रुतिस्मृतिशिष्टप्रवादविरोधादित्यर्थः ॥ २३ ॥ अनेन सहोत्पत्तिपक्षेणैतयोर्जीवकर्मणोर्जगति जाता प्रमाणनिरूढा अविनाभाविता अन्वयव्यतिरेकशालिनी परस्परहेतुफलता तिरस्कृता भवतेत्यर्थः ॥ २४ ॥ कर्मणां अकारणे अद्वयत्वात्स्वातिरिक्तकारणशून्ये मायाशबले ब्रह्मणि वियदादिस्थूलदेहान्तभोगायतनसर्गरूपं फलमस्ति तत्फलेषु ब्रह्मादिषु हिरण्यगर्भादिस्थूलसूक्ष्मोपाधिषु भोगतत्सामग्रीसर्गरूपं फलमस्तीति लोके प्रसिद्धं प्रवादद्वयं त्वया प्रमार्जितमित्यर्थः ॥ २५ ॥ दोषान्तरमप्याह—**संजात** इति। कर्मस्व-

[1] प्यनात्मन इति पाठः.

किं तत्कृतं भवत्येव भगवन्ब्रूहि तत्त्वतः ।
एनं मे संशयं स्फारं छिन्धि वेद्यविदांवर ॥ २७

श्रीवसिष्ठ उवाच ।

साधु राघव पृष्टोऽस्मि त्वया प्रश्नमिमं शुभम् ।
शृणु वक्ष्यामि ते येन भृशं ज्ञानोदयो भवेत् ॥ २८
मानसोऽयं समुन्मेषः कलाकलनरूपतः ।
एतत्तत्कर्मणां बीजं फलमस्यैव विद्यते ॥ २९
यदैव हि मनस्तत्त्वमुत्थितं ब्रह्मणः पदात् ।
तदैव कर्म जन्तूनां जीवो देहतया स्थितः ॥ ३०
कुसुमाशययोर्भेदो न यथा भिन्नयोरिह ।
तथैव कर्ममनसोर्भेदो नास्त्यविभिन्नयोः ॥ ३१
क्रियास्पन्दो जगत्यस्मिन्कर्मेति कथितो बुधैः ।
पूर्वं तस्य मनो देहं कर्मातश्चित्तमेव हि ॥ ३२
न स शैलो न तद्व्योम न सोऽब्धिश्च न विष्टपम् ।
अस्ति यत्र फलं नास्ति कृतानामात्मकर्मणाम् ॥ ३३
ऐहिकं प्राक्तनं वापि कर्म यद्रचितं स्फुरत् ।
पौरुषोऽसौ परो यत्नो न कदाचन निष्फलः ॥ ३४
कृष्णतासंक्षये यद्वत्क्षीयते कज्जलं स्वयम् ।
स्पन्दात्मकर्मविगमे तद्वत्प्रक्षीयते मनः ॥ ३५
कर्मनाशे मनोनाशो मनोनाशो ह्यकर्मता ।
मुक्तस्यैष भवत्येव नामुक्तस्य कदाचन ॥ ३६
वह्न्यौष्ण्ययोरिव सदा श्लिष्टयोश्चित्तकर्मणोः ।
द्वयोरेकतराभावे द्वयमेव विलीयते ॥ ३७

फलदायिषु निष्फलेषु सत्सु नरकादिभयाभावान्मत्स्यैरिव बलवद्भिर्हिंसनभक्षणैर्मात्स्यन्याये विलसति सति ॥ २६ ॥ तत्तस्मात् हे ब्रह्मन्, तत्त्वतो यथार्थतो ब्रूहि । कृतं कर्म फलात्मना भवत्येव किंवा नेति एनं संशयं छिन्धि ॥ २७ ॥ इत्थमाक्षिप्तो वसिष्ठः प्रामाणिकमाक्षेपं प्रशंसंस्तत्समाधिं प्रतिजानीते—**साध्विति** ॥२८॥ सहोत्पत्तिपक्षेऽपि यथा न कश्चिद्दोषस्तथोपपादयितुं भूमिकां रचयति—**मानस** इति । 'यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति' इति श्रुतेर्मनःसंबन्धी यः कलाकलनरूपतः क्रियाकौशलप्रतिसंधानरूपेण समुन्मेषो विकासः एतत्तत्प्रसिद्धं कर्मणां बीजम् । कथं ज्ञायते । यतः अस्यैवोत्तरत्र क्रियानिष्पत्तिरूपं फलं विद्यते नामनःपूर्वकदेहचेष्टामात्रस्येत्यर्थः ॥ २९ ॥ फलमस्यैव विद्यते इति यदुक्तं तदुदाहृत्य दर्शयति—**यदैवे**ति । आदिसर्गे परब्रह्मणः पदाद्यदैव मनोलक्षणं तत्त्वं वस्तूत्थितं तदैव जन्तूनां तदुपाध्याविर्भूतसमष्टिव्यष्टिजीवानां कर्माप्युत्थितम् । जीवश्च प्राक्तनवासनानुसारिदेहतया देहाहंभावेन स्थितः । तथाच श्रुतिः—'तन्मनोऽकुरुत आत्मन्वी स्यामिति सोऽर्चन्नचरत्' इति च । मनोजन्माधीनमेवात्मन्विताशब्दितदेहित्वं संचरणलक्षणं कर्म च दर्शयति । 'यद्यद्भवन्ति तदा भवन्ति' इति च श्रुत्यन्तरम् । तथाच मन एव कर्तृ नात्मेति दर्शयितुं मया सहोत्पत्तिपक्षो दर्शित इति भावः ॥ ३० ॥ एवं कर्तृकर्माभेदोक्तेरपि कर्मणो मनोधर्मतैव नात्मधर्मता कौटस्थ्यस्वभावविरोधादिति प्रदर्शने तात्पर्यमिति सदृष्टान्तमाह—**कुसुमे**ति । आशयोऽत्रान्तस्थ आमोदः॥ ३१॥ ननु कर्मशब्देन यज्ञादिस्तज्जन्यमदृष्टं वोच्यते । तत्राद्यो देहधर्मः, द्वितीयस्तु भोक्तृसमवायी, तत्कथं मनोधर्मतानयोस्तत्राह—**क्रियेति** । क्रियैव हि कर्मसंस्कारात्मना मनसि स्थिता अदृष्टफलात्मना आविर्भूता देहस्वर्गनरकादिरूपा भवति । एवंच तस्य कर्मण आश्रयो देहमपि पूर्वं मन एव । 'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति' इति श्रुत्या मनसो भाविदेहाभिमानं प्राप्तस्यैव पूर्वदेहादुत्क्रमणश्रुतेः । आतिवाहिकदेहस्यैव वासनाबलेन स्थूलदेहताकल्पनमिति प्रागप्युत्पादनाच्च । अतश्चित्तं मन एव कर्मधर्मकत्वात्कर्मेत्यर्थः ॥ ३२ ॥ एवंच त्वदुक्तः कर्मनैष्फल्यदोषोऽपि परिहृतो मनःकार्यस्य सर्वस्यापि प्रपञ्चस्य कर्मफलत्वोपपत्तेरित्याशयेनाह—**न स** इति । फलशब्दो भावप्रधानः । फलत्वमित्यर्थः ॥ ३३ ॥ रचितं सावधानमनुष्ठितं साङ्गतया च स्फुरद्विराजमानं यत्कर्म असौ पौरुषः प्रयत्न एव, सच कदाचन कदाचिदपि निष्फलो नेत्यर्थः । अयमभिप्रायः—अविद्योत्थं मन एव क्रियाशक्तिमत्त्वाच्चिदात्मौपाधिरत्वाच्च कर्तृ भोक्तृ च । तच्च 'अन्नमयं हि सोम्य मनस्तन्मनोऽकुरुत त्रीण्यात्मनेऽकुरुत मनो वाचं प्राणम्' इत्यादिश्रुतेः प्रागुक्तयुक्तेश्च । यद्यपि प्रतिकल्पं प्रतिदिनं चोत्पद्य प्रलीयते तथापि प्रत्यहमाविर्भूय निशि तमसि तिरोभवन्ती कुड्यच्छायेव प्रतिदर्पणसंनिधानमाविर्भूय दर्पणापसरणे तिरोभवन्मुखप्रतिबिम्बमिव च तदेवेदमित्यबाधितप्रत्यभिज्ञाप्रामाण्यादुपहितात्मैक्याच्च न भिद्यते इत्यनाद्यपि भवति । नहि नाशो नाम शून्यतापत्तिरुत्पत्तिर्वा असतः सत्त्वं येन प्रत्यहं सुषुप्तौ नाशाद्भेदः स्यात् । सत्कार्यवादाश्रयणाच्चाविद्याबीजात्मना सतोरेव प्राक्तनकर्तृकर्मणोस्तत्फलवियदादिप्रपञ्चस्य च सहोत्पत्त्यभ्युपगमेऽपि न कृतहानाकृताभ्यागमप्रसङ्ग इति न शास्त्रप्रामाण्यबाधो न वा मात्स्यन्यायप्रसक्तिर्न वा जन्मकर्मणोरविनाभावनियमप्रमार्जनं मन एव तिरोभूतावस्थमाविर्भूतावस्थं चाविद्येत्यभ्युपगमाच्चात्मविस्मरणैकहेतुपरिशेषोक्तिरप्यविरुद्धेति तत्त्वमिति ॥ ३४ ॥ सहोत्पत्त्यैक्यपक्षाभ्युपगमस्य किं फलं तदाह—**कृष्णते**ति । तथाच कर्ममनसोरन्यतरनाशार्थिना स्पन्दात्मकस्य प्राणस्य मनसो वा निरोधलक्षणो हठयोगो राजयोगो वाभ्यसनीय इति तत्फलमिति भावः ॥ ३५ ॥ योगजन्यसाक्षात्कारेणाविद्यानाशे चात्यन्तिक उभयनाशो भवति नान्यथेत्याशयेन मुक्तस्येत्युक्तिः ॥ ३६ ॥ श्लिष्टयोस्तादात्म्येन संगतयोः ॥ ३७ ॥

चित्तं सदा स्पन्दविलासमेत्य
स्पन्दैकरूपं ननु कर्मविद्धि ।
कर्माथ चित्तं किल धर्मकर्म-
पदं गते राम परस्परेण ॥ ३८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ० कर्मपुरुषयोरैक्यप्रतिपादनं नाम पञ्चनवतितमः सर्गः ॥ ९५ ॥

## षण्णवतितमः सर्गः ९६

श्रीवसिष्ठ उवाच ।
मनो हि भावनामात्रं भावना स्पन्दधर्मिणी ।
क्रिया तद्भावितारूपं फलं सर्वोऽनुधावति ॥ १
श्रीराम उवाच ।
विस्तरेण मम ब्रह्मन् जडस्याप्यजडाकृतेः ।
रूपमारूढसंकल्पं मनसो वक्तुमर्हसि ॥ २
श्रीवसिष्ठ उवाच ।
अनन्तस्यात्मतत्त्वस्य सर्वशक्तेर्महात्मनः ।
संकल्पशक्ति रचितं यद्रूपं तन्मनो विदुः ॥ ३
भावः सदसतोर्मध्ये नृणां चलति यश्चलः ।
कलनोन्मुखतां यातस्तद्रूपं मनसो विदुः ॥ ४
नाहं वेदावभासात्मा कुर्वाणोऽस्मीति निश्चयः ।
तस्मादेकान्तकलनस्तद्रूपं मनसो विदुः ॥ ५
कल्पनात्मिकया कर्मशक्त्या विरहितं मनः ।
न संभवति लोकेऽस्मिन्गुणहीनो गुणी यथा ॥ ६
यथा वह्न्यौष्ण्ययोः सत्ता न संभवति भिन्नयोः ।
तथैव कर्ममनसोस्तथात्ममनसोरपि ॥ ७
स्वेनैव चित्तरूपेण कर्मणा फलधर्मिणा ।
संकल्पैकशरीरेण नानाविस्तरशालिना ॥ ८
इदं ततमनेकात्म मायामयमकारणम् ।
विश्वं विगतविन्यासं वासनाकल्पनाकुलम् ॥ ९
या येन वासना यत्र सतेवारोपिता यथा ।
सा तेन फलसूस्तत्र तदेव प्राप्यते तथा ॥ १०
कर्म बीजं मनःस्पन्दः कथ्यतेऽथानुभूयते ।
क्रियास्तु विविधास्तस्य शाखाश्चित्रफलास्तरोः ॥ ११
मनो यदनुसंधत्ते तत्कर्मेन्द्रियवृत्तयः ।
सर्वाः संपादयन्त्येतास्तस्मात्कर्म मनः स्मृतम् ॥ १२
मनो बुद्धिरहंकारश्चित्तं कर्माथ कल्पना ।
संसृतिर्वासना विद्या प्रयत्नः स्मृतिरेव च ॥ १३
इन्द्रियं प्रकृतिर्माया क्रिया चेतीतरा अपि ।
चित्राः शब्दोक्तयो ब्रह्मन्संसारभ्रमहेतवः ॥ १४
काकतालीययोगेन त्यक्तस्फारदृगाकृतेः ।
चितेश्चेत्यानुपातिन्याः कृताः पर्यायवृत्तयः ॥ १५

एकनाशे अपरनाश इत्यत्रोपपत्तिं दर्शयन्नुपसंहरति—**चित्त**मिति । यतश्चित्तं स्पन्दविलासमेत्य विहितनिषिद्धनिष्पादनेन पुण्यपापात्मकधर्माधर्माकारपरिणामि भवति । अथ कर्म च तत्फलभोगानुरूपस्पन्दात्मकविलासमेत्य चित्तं भवति । अतस्ते परस्परेण निमित्तेन धर्मपदं कर्मपदं च गते वाचकत्वेन प्राप्ते धर्मकर्मशब्दाभ्यां लोके व्यवह्रियेते इत्यर्थः ॥ ३८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे कर्मपुरुषयोरैक्यप्रतिपादनं नाम पञ्चनवतितमः सर्गः ॥ ९५ ॥

**मनसः कर्मवैचित्र्यादिह नानाविधाकृतेः ।**
**व्याख्यायन्तेऽभिधाभेदास्तत्त्वं चास्य विशुद्धये ॥ १ ॥**

उक्तार्थप्रपञ्चनार्थस्य सर्गस्यार्थं संक्षिप्यादौ दर्शयति—**मन** इति । अनुभूतानामर्थानां भावना विभावनाख्यं विकल्पं तन्मात्रम् । सा भावना स्पन्दधर्मिणी सती विहितनिषिद्धक्रिया भवति, तस्याः क्रियाया एव सौक्ष्म्याददृष्टभावापन्नाया जन्मान्तरायात्मकं यद्भावितारूपं तदेव फलं सर्वो जन्तुरनुधावति अनुसरति । मन एव क्रमेणोभयभावमापद्यत इत्यर्थः ॥ १ ॥ प्रश्नः स्पष्टः ॥ २ ॥ सर्वशक्तेः सर्वशक्तिमन्मायाशबलस्य रचितं प्रथमनिष्पादितं संकल्पशक्ति यद्रूपं तन्मन इत्यर्थः ॥ ३ ॥ सांप्रतिकेऽपि नृणां व्यवहारे तत्प्रसिद्धमित्याह—**भाव** इति । स्थाणुर्वा पुरुषो वेति विकल्पे सदसतोः कोट्योर्यो भावश्चलो दोलायमानश्चलति संचरतीत्यर्थः । कलनोन्मुखतां कोटिद्वयस्मृतिपूर्वकताम् ॥ ४ ॥ सदा चिद्रूपत्वाद्भासमानेऽप्यात्मनि नाहं वेदेति प्रत्ययः, अकर्तर्यपि कर्तृताप्रत्ययश्च येन भवति तन्मन इत्याह—**नाह**मिति । एकान्तकलनो नियतं जायमानः ॥५॥ निःस्पन्दे मनस्येतस्य लक्षणस्याव्याप्तिमाशङ्क्याह—**कल्पनात्मिकये**त्यादिना ॥ ६ ॥ आत्ममनसोर्जीवमनसोः ॥ ७ ॥ फलेन धर्मिणा साध्यवता ॥८॥९॥ वासनाकल्पनाकलनाकुलामित्येतत्स्फुटयति—**या येने**ति । यत्र सतेव यथैन्द्रवैरिहस्थैरेव सत्यलोकस्था वयमिति कल्पितेनेत्यर्थः । 'लतेवे'ति पाठे स्पष्टम् ॥ १० ॥ तस्य वासनातरोः कर्म बीजं मनःस्पन्दः शरीरं क्रियाः शाखा इति शास्त्रे कथ्यते फलतश्चानुभूयत इत्यर्थः ॥११॥ ननु कर्मेन्द्रियवृत्तिः कर्म कथं तन्मनसः स्यात्तत्राह—**मन** इति ॥ १२ ॥ मन एव सर्वेन्द्रियभावं धत्त इति नायं दोष इति दर्शयंस्तन्नामान्याह—**मन** इत्यादिना ॥ १३ ॥ नैतावत्यः किंतितरा अपि सन्ति । ब्रह्मन् ब्रह्मणि । छान्दसः सप्तम्या लुक् । 'न ङिसंबुद्ध्योः' इति नलोपनिषेधः । संसारभ्रमः संसारकल्पितो वक्ष्यमाणप्रवृत्तिनिमित्तभेदः स एव हेतुर्यासाम् ॥ १४॥ काकतालीयमाकस्मिकं स्वरूपविस्मरणं तद्योगेन त्यक्तेव नानुभूयमाना स्फाराऽपरिच्छिन्ना दृगाकृतिश्चिदेकरसाकारो यया तथाभूतायाश्चितेश्चेत्यानुपातिन्या बाह्यकल्पनोन्मुखायाः ॥१५॥

श्रीराम उवाच ।

परायाः संविदो ब्रह्मन्नेताः पर्यायवृत्तयः ।
कल्प्यमानविचित्रार्थाः कथं रूढिमुपागताः ॥ १६

श्रीवसिष्ठ उवाच ।

गतेव सकलङ्कत्वं कदाचित्कल्पनात्मकम् ।
उन्मेषरूपिणी नाना तदैव हि मनःस्थिता ॥ १७
भावनामनुसंधानं यदा निश्चित्य संस्थिता ।
तदैषा प्रोच्यते बुद्धिरियत्ताग्रहणक्षमा ॥ १८
यदा मिथ्याभिमानेन सत्तां कल्पयति स्वयम् ।
अहंकाराभिमानेन प्रोच्यते भवबन्धनी ॥ १९
इदं त्यक्त्वेदमायाति बालवत्पेलवा यदा ।
विचारं संपरित्यज्य तदा सा चित्तमुच्यते ॥ २०
यदा स्पन्दैकधर्मत्वात्कर्तुर्या शून्यशंसिनी ।
आधावति स्पन्दफलं तदा कर्मेत्युदाहृता ॥ २१
काकतालीययोगेन त्यक्त्वैकघननिश्चयम् ।
यदेहितं कल्पयति भावं तेनेह कल्पना ॥ २२
पूर्वदृष्टमदृष्टं वा प्राग्दृष्टमिति निश्चयैः ।
यदैवेहां विधत्तेऽन्तस्तदा स्मृतिरुदाहृता ॥ २३
यदा पदार्थशक्तीनां संभुक्तानामिवाम्बरे ।
वसत्यस्तमितान्येहा वासनेति तदोच्यते ॥ २४
अस्त्यात्मतत्त्वं विमलं द्वितीया दृष्टिरङ्किता ।
जाता ह्यविद्यमानैव तदा विद्येति कथ्यते ॥ २५
स्फुरत्यात्मविनाशाय विस्मारयति तत्पदम् ।
मिथ्याविकल्पजालेन तन्मलं परिकल्प्यते ॥ २६
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा विमृश्य च ।
इन्द्रमानन्दयत्येषा[1] तेनेन्द्रियमिति स्मृतम् ॥ २७
सर्वस्य दृश्यजालस्य परमात्मन्यलक्षिते ।
प्रकृतत्वेन भावानां लोके प्रकृतिरुच्यते ॥ २८
सदसत्तां नयत्याशु सत्तां वा सत्त्वमञ्जसा ।
सत्तासत्ताविकल्पोऽयं तेन मायेति कथ्यते ॥ २९
दर्शनश्रवणस्पर्शरसनघ्राणकर्मभिः ।
क्रियेति कथ्यते लोके कार्यकारणतां गता ॥ ३०
चितेश्चेत्यानुपातिन्या गतायाः सकलङ्कताम् ।
प्रस्फुरद्रूपधर्मिण्या एताः पर्यायवृत्तयः ॥ ३१
चित्ततामुपयातायाः गतायाः प्रकृतं पदम् ।
स्वैरेव संकल्पशतैर्भृशं रूढिमुपागताः ॥ ३२
चेतनीयकलङ्काङ्काज्जाड्यजालानुपातिनी ।
संख्याविभागकलना स्वचैकल्याकुलेव चित् ॥ ३३

उक्तानां मनोबुद्ध्यादिनाम्नां चेत्योन्मुखचितिप्रवृत्तिनिमित्तभेदेन योगरूढ्या पर्यायवृत्तितां प्रत्येकं निर्वचनेन विशिष्य जिज्ञासमानो रामः पृच्छति—**पराया** इति । कल्प्यमानो विचित्रो योगार्थो यासां तथाविधाः सत्यः ॥ १६ ॥ एवं पृष्टो वसिष्ठः क्रमेण पञ्चदशापि नामानि व्याचिकीर्षुः प्रथमं मन इति नाम व्याचष्टे—**गतेवे**ति । परा संविदविद्यया सकलङ्कत्वं गतेव सती कदाचिदुन्मेषरूपिणी भूत्वा यदेदमित्थमनित्थं वेति विकल्पात्मना नाना भवति तदैव सा मनोरूपेण स्थितेति तन्नामिका भवतीत्यर्थः ॥ १७ ॥ यदा तु प्रथमं विकल्पोत्तरं वा विशेषभावनां प्राप्य एकतरकोट्यनुसंधानं निश्चित्य सुस्थिरा स्थिता तदैषा संविद्बुद्धिरिति प्रोच्यते । इयत्ता ईदृशमेवेदं वस्त्विति परिच्छित्तिस्तद्ग्रहणसमर्थेत्यर्थः ॥ १८ ॥ यदा तु मिथ्याभूतदेहाद्यात्मताभिमानेन स्वयं सत्तां कल्पयति मन्यते तदाहंकाराभिमानेन निमित्तेन सा अहंकार इति प्रोच्यते, सैव सर्वानर्थबीजत्वाद्भवबन्धनीत्यर्थः ॥ १९ ॥ यदा त्वेकं विषयं त्यक्त्वा अपरं विषयं स्मरति विचारं पूर्वापरप्रतिसंधानं परित्यज्य तदा सा संविच्चित्तमित्युच्यत इत्यर्थः ॥ २० ॥ सैव संवित् कर्तुः स्पन्दैकधर्मत्वाद्वस्तुतः शून्यमसदेव स्पन्दं शंसति गोचरयति तच्छीला सती स्पन्दफलं शरीरतदवयवादेर्देशान्तरसंयोगं संपादयितुमाधावतीव तदा कर्मेत्युच्यत इत्यर्थः ॥ २१ ॥ एकमेव घनं वस्त्वन्तरावकाशशून्यं यत्स्वरूपं तन्निश्चयं त्यक्त्वा स्वपूर्णभावं विस्मृत्य यदा ईहितं वाञ्छितं परिच्छिन्नभावं कल्पयतीत्यर्थः ॥ २२ ॥ स्मृतिः संस्मृतिः ॥ २३ ॥ यदा संभुक्तानां ग्रस्तानामिव तिरोभूतानां पदतदर्थतच्छक्तीनां स्वरूपेण अम्बरे शून्यप्रायेऽतिसूक्ष्मभावे वसति अस्तमितान्यचेष्टा च भवति तदा वासनेत्युच्यत इत्यर्थः ॥ २४ ॥ अङ्किताजातेत्येकं पदम् । अङ्कोऽविद्याकलङ्कस्तद्वैशिष्ट्यमङ्किता तद्वशाज्जाता द्वितीया दृष्टिः प्रपञ्चप्रतिभा कालत्रयेऽप्यविद्यमानैवेति यदा प्रबुध्यते तदा विद्येति कथ्यते इत्यर्थः ॥ २५ ॥ 'विस्मृतिर्मलमेव च' इति पाठे ते द्वे नामनी सहैव व्याचष्टे—**स्फुरती**ति । आत्मनो विनाशोऽत्यन्तादर्शनम् । यतो विस्मारयति तस्माद्विस्मृतिरित्युच्यत इत्यर्थः । अथवा मिथ्याविकल्पजालेन विविधं स्मारयति विक्षिपतीत्यर्थः । तथाचावरणशक्तिप्राधान्येन मलं विक्षेपप्राधान्येन विस्मृतिरिति भावः । 'प्रयत्नः स्मृतिरेव च' इति पाठे तु आत्मनो विनाशायादर्शनाय स्फुरति संचलति यतत इवेति प्रयत्न इति विविधं स्मारयतीति स्मृतिरिति च मलं मलिनं तत्संविद्रूपमेव नाम्ना परिकल्प्यते इति क्लेशेन व्याख्येयम् ॥ २६ ॥ एषा मनोभूता संविद्यदा श्रवणादिक्रियया इन्द्रं कार्यकरणस्वामिनं[2] जीवभावापन्नं परमेश्वरमानन्दयति भोगैः प्रीणयति तदेन्द्रियमित्युच्यत इत्यर्थः । इन्द्रजुष्टमिन्द्रियमिति हि पाणिन्यनुशासनम् ॥ २७ ॥ प्रकृतत्वेनोपादानाभिन्नकर्त्रात्मना निर्मितत्वेन ॥ २८ ॥ स्पष्टम् ॥ २९ ॥ कार्यकारणतां संसृतितद्बीजात्मकताम् ॥ ३० ॥ नामव्याख्यामुपसंहरति—**चिते**रिति ॥ ३१ ॥ प्रकृतं प्रस्तुतं संसारपदम् । स्वैः स्वीयैरेव संकल्पादिकल्पनाशतैः । एताः पर्यायवृत्तयः । रूढिं योगरूढिम् ॥ ३२ ॥ एकस्याश्चितः कुतो मनोबुद्ध्यादिसंख्याविभागकलना तत्राह—**चेतनीये**ति । चित् चेतनीयः अहमज्ञ इति स्वयमनु-

१ इंद्रमामोदयत्येषा इति पाठः. २ परमेश्वरमामोदयति इति पाठः.

जीव इत्युच्यते लोके मन इत्यपि कथ्यते ।
चित्तमित्युच्यते सैव बुद्धिरित्युच्यते तथा ॥ ३४
नानासंकल्पकलिलं पर्यायनिचयं बुधाः ।
वदन्त्यस्याः कलङ्किन्याश्च्युतायाः परमात्मनः ॥ ३५

श्रीराम उवाच ।

मनः किं स्याज्जडं ब्रह्मंस्तथा वापि च चेतनम् ।
इत्येको मम तत्त्वज्ञ निश्चयोऽन्तर्न जायते ॥ ३६

श्रीवसिष्ठ उवाच ।

मनो हि न जडं राम नापि चेतनतां गतम् ।
म्लानाऽजडा तदा दृष्टिर्मन इत्येव कथ्यते ॥ ३७
मध्ये सदसतो रूपं प्रतिभूतं यदाविलम् ।
जगतः कारणं नाम तदेतच्चित्तमुच्यते ॥ ३८
शाश्वतेनैकरूपेण निश्चयेन विना स्थितिः ।
येन सा चित्तमित्युक्ता तस्माज्जातमिदं जगत् ॥ ३९
जडाजडदृशोर्मध्ये दोलारूपं स्वकल्पनम् ।
यच्चितो म्लानरूपिण्यास्तदेतन्मन उच्यते ॥ ४०
चितिःस्पन्दो हि मलिनः कलङ्कविकलान्तरम् ।
मन इत्युच्यते राम न जडं न च चिन्मयम् ॥ ४१
तस्मानि विचित्राणि नामानि कलितान्यलम् ।
अहंकारमनोबुद्धिजीवाद्यानीतराण्यपि ॥ ४२
यथा गच्छति शैलूषो रूपाण्यलं तथैव हि ।
मनो नामान्यनेकानि धत्ते कर्मान्तरं व्रजत् ॥ ४३
चित्राधिकारवशतो विचित्रा विकृताभिधाः ।
यथा याति नरः कर्मवशाद्याति तथा मनः ॥ ४४
या एताः कथिताः संज्ञा मया राघव चेतसः ।
एता एवान्यथा प्रोक्ता वादिभिः कल्पनाशतैः ॥ ४५
स्वभावाभिमतां बुद्धिमारोप्य मनसा कृताः ।
मनोबुद्धीन्द्रियादीनां विचित्रा नामरीतयः ॥ ४६
मनो हि जडमन्यस्य भिन्नमन्यस्य जीवतः ।
तथाहंकृतिरन्यस्य बुद्धिरन्यस्य वादिनः ॥ ४७
अहंकारमनोबुद्धिदृष्टयः सृष्टिकल्पनाः ।
एकरूपतया प्रोक्ता या मया रघुनन्दन ॥ ४८
नैयायिकैरितरथा तादृशैः परिकल्पिताः ।
अन्यथा कल्पिताः सांख्यैश्चार्वाकैरपि चान्यथा ॥ ४९
जैमिनीयैश्चार्हतैश्च बौद्धैर्वैशेषिकैस्तथा ।
अन्यैरपि विचित्रैस्तैः पाञ्चरात्रादिभिस्तथा ॥ ५०

---

भवनार्हो योऽज्ञानकलङ्कश्चेतनीयेभ्यो विषयेभ्यः प्राप्तो वा यो द्वैतवासमाकलङ्कस्तदङ्कात्तत्संनिधानात्पूर्णस्वरूपवैकल्पेनाकुलेव भूत्वा देहादिजाड्यजालानुपातिनी यतः अत इत्यर्थः ॥ ३३ ॥ उक्तामेव विभागकलनां पुनर्विविच्याह—**जीव** इत्यादिद्वाभ्याम् ॥ ३४ ॥ ३५ ॥ जीव इत्युच्यते इत्युक्त्या चेतनत्वप्राप्तेर्दर्शनान्तरे लोके च जाड्यप्रसिद्धेः संदिहानो रामः पृच्छति—**मन** इति ॥ ३६ ॥ चिदचिदुभयसंवलनरूपत्वान्नैकतररूपं मनः, परमार्थतस्तु 'मन्वानो मन इति तान्येतानि कर्मनामान्येव' इति श्रुतावात्मन एव कर्मप्रयुक्तनामधेयेषु मनःशब्दपरिगणनादजडा दृष्टिश्चिदेव तदा संसारदशायां म्लाना उपाधिमालिन्यानुभाविनी मन इति कथ्यते इत्यर्थः ॥ ३७ ॥ चिदचिद्वैलक्षण्यवत्सदसद्वैलक्षण्यमपि तस्यास्तीत्याह—**मध्ये** इति । प्रतिभूतं प्रतिप्राणिभेदम् । 'प्रतिभातम्' इति पाठे स्पष्टम् ॥ ३८ ॥ अथवा आत्मनोऽज्ञातसत्तैव मन इत्याह—**शाश्वतेने**ति । येन हेतुना ॥ ३९ ॥ पूर्वोक्तमेव स्फुटयंस्तस्य चलस्वभावतामाह—**जडे**ति । यच्चितो रूपमिति शेषः ॥ ४० ॥ चितो निःस्पन्द औपाधिकचलभावो बहिर्मलिनस्तस्या अन्तः साक्षिचित आवरणविरहात्कलङ्कविकलान्तरं यद्रूपं तन्मन इत्युच्यत इत्यर्थः ॥ ४१ ॥ ॥ ४२ ॥ शैलूषो नटजातिविशेषः । रूपाणि नानावेषानलमत्यर्थं गच्छति क्रमेण धारयति । कर्मान्तरं क्रियाभेदम् ॥ ४३ ॥ यथा नरः पाकाधिकारात्पाचक इति पाठाधिकारात् पाठक इति ग्रामाधिपत्याद्ग्रामणीरिति विचित्राधिकारवशतो विचित्रा विकृतास्तत्तत्क्रियाप्रकाशिका अभिधा नामानि याति तथा मनोऽपि कर्मवशात्ताः यातीत्यर्थः ॥ ४४ ॥ अन्यथा कल्पनाशतैः स्वकपोलोन्नीतयुक्तिशतैः ॥ ४५ ॥ स्वेषां भावा विभावनास्तर्कास्तदभिमतां द्रव्यत्वाणुत्वादिबुद्धिं मनस्यारोप्य मनसा स्वेच्छया मनोबुद्ध्यादीनां विचित्रा नामरीतयः संज्ञाभेदास्तैः कृता इत्यर्थः ॥ ४६ ॥ तेषां कल्पनाप्रकारान्विभज्य दर्शयति—**मनो ही**त्यादिना ॥ ४७ ॥ अन्तःकरणस्यैकरूपतया तस्य सृष्टिकल्पनाः संकल्पादिवृत्तिभेदसृष्टिनिमित्ता अहंकारमनोबुद्धिनामभेददृष्टयस्ते मया याः प्रोक्ताः ॥ ४८ ॥ गौतमीयतन्त्रानुसारिभिस्तास्तादृशैरेव स्वबुद्धिविकल्पैरितरथा कल्पिताः । यथाहंकारो द्रव्यविशेषो विभुर्जीवात्मेति मनस्त्वणु तत्साक्षात्कारे कारणमिति, बुद्धिस्तु तदीयो गुणस्त्रिक्षणावस्थायिनीति, नतु वस्तुतस्तथेत्यर्थः । सांख्यैस्ततोऽप्यन्यथा कल्पिताः । यथा बुद्धिः साक्षात्रिगुणात्मकप्रकृतिकार्यं महत्तत्त्वं अहंकारस्तु तत्कार्यं तत्त्वान्तरं मनस्त्वेकादशेन्द्रियगणान्तर्गतं षोडशविकारान्तःपातीति । चार्वाकैस्तु चैतन्यगुणः कार्यस्यैव बुद्धिः काय एवाहंकार आत्मा तस्य पूर्वापरप्रतिसंधानं मन इति ॥ ४९ ॥ जैमिनीयैस्तु कैश्चिन्मनो विभु द्रव्यम् । कैश्चिदन्नयम् । बुद्धिस्तु जडबोधात्मकाहंकाररूपस्यात्मनश्चिदंश इति । आर्हतैस्तु मध्यमपरिमाणश्चिद्रूपो जीवास्तिकाय एवाहंकारः तस्य विषयाभिलाषो मनः अर्थप्रथा च बुद्धिरिति । बौद्धैः क्षणिकी आलयविज्ञाख्या बुद्धिधारा सैवात्माऽहंकाराश्च प्रवृत्तिविज्ञानात्मकः बुद्धिस्तु बाह्यार्थाकारस्तत्परिणामः अतीतः समनन्तरप्रत्ययो मन इति । वैशेषिकैस्तु नैयायिकवदेवाहंकारमनसी बुद्धिस्तु स्मृतिप्रत्यक्षानुमानतर्कविपर्ययविकल्पभेदभिन्ना पञ्चधेति । अन्यैः पाञ्चरात्रैर्वासुदेवाख्यात्परमात्मनः संकर्षणाख्यो जीवः स एवाहंकारस्ततः प्रद्युम्नाख्यं मनस्ततोऽनिरुद्धाख्या बुद्धिरिति । आदिपदाद्योगिमाहेश्वरनाकुलादीनामन्यथान्यथा कल्पना गृह्यन्ते ॥ ५० ॥

अविद्यावशतश्चित्तभावनाः स्थितिमागताः ।
चिति पर्यायशब्दा हि भिन्नास्ते नेह वादिनाम् ॥ ७२
जीवो मनश्च ननु बुद्धिरहंकृतिश्चे-
त्येवं प्रथामुपगतेयमनिर्मला चित् ।
सैषोच्यते जगति चेतनचित्तजीव-
संज्ञागणेन किल नास्ति विवाद एषः ॥ ७३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे मनःसंज्ञाविचारो नाम षण्णवतितमः सर्गः ॥ ९६ ॥

## सप्तनवतितमः सर्गः ९७

श्रीराम उवाच ।
ब्रह्मन्मनस एवेदमन्तश्चाडम्बरं स्मृतम् ।
यतस्तदेव कर्मेति वाक्यार्थादुपलभ्यते ॥ १
श्रीवसिष्ठ उवाच ।
दृढभावोपरक्तेन मनसैवोररीकृतम् ।
मरुचण्डातपेनेव भास्करावरणं पुनः ॥ २
ब्रह्मात्मनि जगत्यस्मिन्मन एकाकृतिं गतम् ।
क्वचिन्नरतया रूढं क्वचित्सुरतयोत्थितम् ॥ ३
क्वचिद्दैत्यतयोल्लासि क्वचिद्यक्षतयोदितम् ।
क्वचिद्गन्धर्वतां प्राप्तं क्वचित्किन्नररूपि च ॥ ४
नानाचारनभोभागपुरपत्तनरूपया ।
मन्ये विततयाकृत्या मन एव विजृम्भते ॥ ५
एवं स्थिते शरीरौघस्तृणकाष्ठलतोपमः ।
तद्विचारणया कोऽर्थो विचार्यं मन एव नः ॥ ६
तेनेदं सर्वमाभोगि जगदित्याकुलं ततम् ।
मन्ये तद्व्यतिरेकेण परमात्मैव शिष्यते ॥ ७
आत्मा सर्वपदातीतः सर्वगः सर्वसंश्रयः ।
तत्प्रसादेन संसारे मनो धावति वल्गति ॥ ८
मनो मन्ये मनः कर्म तच्छरीरेषु कारणम् ।
जायते म्रियते तद्धि नात्मनीदृग्विधा गुणाः ॥ ९
मन एव विचारेण मन्ये विलयमेष्यति ।
मनोविलयमात्रेण ततः श्रेयो भविष्यति ॥ १०
मनोनाम्नि परिक्षीणे कर्मण्याहितसंभ्रमे ।
मुक्त इत्युच्यते जन्तुः पुनर्नाम न जायते ॥ ११
श्रीराम उवाच ।
भगवन्भवता प्रोक्ता जातयस्त्रिविधा नृणाम् ।
प्रथमं कारणं तासां मनः सदसदात्मकम् ॥ १२
तत्कथं शुद्धचिन्नाम्नस्तत्त्वाद्बुद्धिविवर्जितात् ।
उत्थितं स्फारतां यातं जगच्चित्रकरं मनः ॥ १३
श्रीवसिष्ठ उवाच ।
आकाशा हि त्रयो राम विद्यन्ते विततान्तराः ।
चित्ताकाशश्चिदाकाशो भूताकाशस्तृतीयकः ॥ १४

त्प्रेक्षितः, किंतु 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्' इत्यादिश्रुतिसिद्धोऽयं पक्ष इत्याशयेनाह—**ऊर्णनाभादि**ति । प्रकृतिर्मनः ॥ ७१ ॥ वादिनां तु न श्रुत्यादर इत्यविद्यावशात्स्वस्वभावेनैव स्थिरीभूता तत एव तैर्मनस एव नामरूपभेदा भ्रान्त्या कल्पिता इत्याह—**अविद्ये**ति । चिति चित्तभावापन्ने चैतन्ये ॥ ७२ ॥ उक्तमेव स्फुटयन्नुपसंहरति—**जीव** इति ॥ ७३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मनःसंज्ञाविचारो नाम षण्णवतितमः सर्गः ॥ ९६ ॥

सर्वाकारेण संस्थानं मनसोऽत्र निरूप्यते ।
चित्ताकाशचिदाकाशभूताकाशाश्च विस्तरात् ॥ १ ॥

एवं कर्तृकर्ममनःस्वरूपं तन्नामभेदं च बहुभिः प्रकारैः प्रतिबोधितो रामः स्वबुद्धं तद्गुरुबुद्धिसंवादायाभिलप्य दर्शयति—**ब्रह्मन्नि**ति । हे ब्रह्मन्, प्राग्दर्शितत्वद्वाक्यार्थादिदमाडम्बरं ब्रह्माण्डपटहं मनस एव सकाशात्स्फुतमाविर्भूतं यतोऽतस्तज्जगदेव मनसः कर्मेति तात्पर्यमुपलभ्यते बुध्यते मयेत्यर्थः ॥ १ ॥ रामेण बुद्धं तात्पर्यं तथैवेत्यनुमोदनाय स्वयं वसिष्ठः पुनः संक्षेपविस्तराभ्यामाह—**दृढे**त्यादिना । भास्करस्य तेजस्त्वस्यावरणमप्रथाहेतुर्मृगतृष्णोदकमिव भास्करस्यात्मनोऽप्रथाहेत्वज्ञानजाड्यमुररीकृतम् । अङ्गीकृतमित्यर्थः ॥ २ ॥ एकां मुख्यामाकृतिं जगत्संस्थानं गतं प्राप्तम् । तदेव प्रपञ्चयति—**क्वचिदि**त्यादिना ॥ ३ ॥ ४ ॥ विततया विस्तीर्णया आकृत्या संस्थानवैचित्र्येण ॥ ५ ॥ यथा पृथिव्यादिभूततत्त्वजिज्ञासूनां तृणकाष्ठादिकं प्रत्येकं न विचारणार्हं तद्वदित्यर्थः ॥ ६ ॥ एवं कर्तृकर्मस्वरूपे बुद्धे तद्विशोधेन तदधिष्ठानात्मानं दर्शयितुमाह—**मन्ये** इति ॥७॥ मनआदिस्पन्दास्तद्बलेनैव न स्वत इत्याह—**तत्प्रसादेने**ति ॥८॥ शोधनप्रकारमाह—**मन** इति । ईदृग्विधा इत्यनेनान्तरालिका अपि भावविकारा उपलक्ष्यन्ते ॥९॥ श्रेयो मोक्षः ॥१०॥११॥ अस्त्वेवं मनसः सकाशाज्जगदुत्पत्तिः, मनस्तु कूटस्थचिन्मात्रस्वभावाद्ब्रह्मणो नोत्पत्तुमर्हति । बुद्धिपूर्विका हि तत्सृष्टिः श्रूयते 'तन्मनोऽकुरुत आत्मन्वी स्याम्' इति । नच मनउत्पत्तेः प्राग्बुद्धिः संभवति । अमतेऽर्थेऽध्यवसायादर्शनादिति रामः शङ्कते—**भगवन्नि**ति द्वाभ्याम् । **त्रिविधा** इति । यद्यपि द्वादशविधा उक्तास्तथापि तासां सात्त्विकराजसतामसलक्षणत्रैविध्येन्तर्भावमभिप्रेत्य त्रिविधा इत्युक्तिः । नृणां जीवानाम् ॥ १२ ॥ १३ ॥ इमामप्याशङ्कां वक्ष्यमाणदृष्टिभेदाभिप्रायेण सत्कार्यवादमाश्रित्य समाधिःसुर्वसिष्ठस्तदुपयुक्तामाकाशत्रयकल्पनां दर्शयति—

१ वरणं वपुः इति पाठः.

एते हि सर्वसामान्याः सर्वत्रैव व्यवस्थिताः ।
शुद्धचित्तत्वशक्त्या तु लब्धसत्तात्मतां गताः ॥ १५
सबाह्याभ्यन्तरस्थो यः सत्तासत्तावबोधकः ।
व्यापी समस्तभूतानां चिदाकाशः स उच्यते ॥ १६
सर्वभूतहितः श्रेष्ठो यः कालकलनात्मकः ।
येनेदमाततं सर्वं चित्ताकाशः स उच्यते ॥ १७
दशदिङ्मण्डलाभोगैरव्युच्छिन्नवपुर्हि यः ।
भूतात्मासौ य आकाशः पवनाब्दादिसंश्रयः ॥ १८
आकाशचित्ताकाशौ द्वौ चिदाकाशबलोद्भवौ ।
चित्कारणं हि सर्वस्य कार्यौघस्य दिनं यथा ॥ १९
जडोऽस्मि न जडोऽस्मीति निश्चयो मलिनश्चितः ।
यस्तदेव मनो विद्धि तेनाकाशादि भाव्यते ॥ २०
अप्रबुद्धात्मविषयमाकाशत्रयकल्पनम् ।
कल्प्यते उपदेशार्थं प्रबुद्धविषयं न तु ॥ २१
एकमेव परं ब्रह्म सर्वं सर्वावपूरकम् ।
प्रबुद्धविषयं नित्यं कलाकलनवर्जितम् ॥ २२
द्वैताद्वैतसमुद्भेदैर्वाक्यसंदर्भगर्भितैः ।
उपदेश्यत एवाज्ञो न प्रबुद्धः कथंचन ॥ २३
यावद्रामाप्रबुद्धस्त्वमाकाशत्रयकल्पना ।
तावदेवावबोधार्थं मया त्वमुपदिश्यसे ॥ २४
आकाशचित्ताकाशाद्याश्चिदाकाशकलङ्कितात् ।
प्रसूता दावदहनाद्यथा मरुमरीचयः ॥ २५
चिनोति मलिनं रूपं चित्ततां समुपागतम् ।
त्रिजगन्तीन्द्रजालानि रचयत्याकुलात्मकम् ॥ २६
चित्तत्वमस्य मलिनस्य चिदात्मकस्य
तत्त्वस्य दृश्यत इदं ननु बोधहीनैः ।
शुक्तौ यथा रजतता ननु बोधवद्भि-
मौर्ख्येण बन्ध इह बोधबलेन मोक्षः ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० उत्पत्तिप्रकरणे चिदाकाशमाहात्म्यं नाम सप्तनवतितमः सर्गः ॥ ९७ ॥

## अष्टनवतितमः सर्गः ९८

श्रीवसिष्ठ उवाच ।
यतःकुतश्चिदुत्पन्नं चित्तं यत्किंचिदेव हि ।
नित्यमात्मविमोक्षाय योजयेद्यत्नतोऽनघ ॥ १
संयोजितं परे चित्तं शुद्धं निर्वासनं भवेत् ।
ततस्तु कल्पनाशून्यमात्मतां याति राघव ॥ २
चित्तायत्तमिदं सर्वं जगत्स्थिरचरात्मकम् ।
चित्ताधीनवतो राम बन्धमोक्षावपि स्फुटम् ॥ ३
अत्रार्थे कथ्यमानं मे चित्ताख्यानमनुत्तमम् ।
ब्रह्मणा यत्पुरा प्रोक्तं शृणु रामातियत्नतः ॥ ४
अस्ति रामाटवी स्फारा शून्याशान्तातिभीषणा ।
योजनानां शतं यस्यां लक्ष्यते कणमात्रकम् ॥ ५
तस्यामेको हि पुरुषः सहस्रकरलोचनः ।

**आकाशा ही**ति । विततान्तरा विस्तीर्णजठराः ॥१४॥ सर्वस्वकार्यसाधारणाः सर्वस्वकार्ये व्यवस्थिता अनुगता इति तद्धेतुः । नचैवमद्वैतहानिः सत्ताभेदानभ्युपगमादित्याशयेनाह—**शुद्धे**ति ॥१५॥ त्रयाणामेकसत्ताकत्वे चिदाकाशे कोऽतिशय इत्याशङ्क्य तं दर्शयंश्चिदाकाशं मायाशबलं लक्षयति—**सबाह्ये**ति । आभ्यन्तरबुद्ध्यादीनां बाह्यवस्तूनां च सत्तासत्तयोरागमापाययोरवबोधकः साक्षी ॥१६॥ चित्ताकाशं लक्षयति—**सर्वे**ति । सर्वेषां भूतानां सर्वव्यवहारहेतुत्वाद्धितः । सर्वकार्यकारणनियन्तृत्वाच्छ्रेष्ठः । आततं स्वकल्पनया विस्तारितम् ॥ १७ ॥ भूताकाशं लक्षयति—**दशे**ति । अब्दा मेघाः संवत्सरात्मा सूर्यो वा ॥ १८ ॥ तत्र चिदाकाशे चिदंशस्य संनिधिमात्रेण निमित्ततेति प्रदर्शयति—**दिनं यथे**ति ॥१९॥ जडांशस्य तु मनआद्याकारपरिणामित्वान्मनः प्रति मुख्योपादानत्वेऽपि मनसि चिज्जाड्योभयानुभवात्संवलितस्यैव मनोभावापत्तिरित्याह—**जडोऽस्मी**ति ॥ २० ॥ इयं च मनःसृष्ट्यादिकल्पना अज्ञबोधनार्था न वास्तवीति परमार्थदृशा न शुद्धचितः किंचिदुत्पन्नं विनष्टं वेति न कश्चिदाक्षेपावकाश इत्याशयेनाह—**अप्रबुद्धे**त्यादिना ॥ २१ ॥ ॥ २२ ॥ २३ ॥ २४ ॥ दावदहनान्मरुभूमिप्रतापनाद्दावाग्नितुल्याद्वा आतपात् ॥२५॥ कार्येषु मालिन्यदर्शनादपि चित्तस्य न शुद्धचित्कार्यतेत्याशयेनाह—**चिनोती**ति ॥ २६ ॥ अज्ञैकदृश्यत्वादपि चित्तस्याज्ञानकार्यत्वं अतएवातत्त्वज्ञदृशैव बन्धस्तत्त्वज्ञदृशा त्वात्मनो नित्यमुक्ततैवेत्याह—**चित्तत्व**मिति ॥२७॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चिदाकाशमाहात्म्यं नाम सप्तनवतितमः सर्गः ॥ ९७ ॥

**उक्तार्थप्रतिबोधार्थं चित्ताख्यानमिहोच्यते ।**
**चित्ततत्त्वविमर्शाच्च नाशश्चित्तस्य विस्तरात् ॥ १ ॥**

नित्यमुक्तस्याप्यात्मनोऽज्ञानान्मनोभ्रान्तिकृतो बन्धप्रत्यय इत्येवं निर्णयाय मनसोऽज्ञातादात्मन उत्पत्तिर्विस्तरेणोक्ता रोगतत्त्वनिर्णयायेव रोगनिदानापथ्याशनोक्तिरियम् । निर्णीते तु मनस्तत्त्वे सांप्रतं तच्चिकित्साप्रयत्न एवावश्यं कार्यो न पुनः पुनर्निदानचिन्तायाः प्रयोजनमस्तीत्याशयेनाह—**यतःकुतश्चि**दिति । योजयेत् आत्मनि समादध्यात् ॥ १ ॥ समाधेः फलमाह—**संयोजित**मिति ॥ २ ॥ ननु चित्तनिरोधमात्रेण कथं बाह्याभ्यन्तरसर्वद्वैतबन्धनिवृत्तिः स्यात्तत्राह—**चित्तायत्त**मिति ॥३॥ उक्तेऽर्थे उपपादकमाख्यानमवतारयति—**अत्रे**ति ॥४॥ अटव्यादिशब्दानां तात्पर्यार्थमुत्तरसर्गे स्वयमेव वक्ष्यति । शून्या मृगपक्ष्यादिरहिता मिथ्याभूता च । अशान्ता विक्षेपबहुला । शून्या आशान्ता दिगन्ता यस्यामिति वा । कणमात्रकं

पर्याकुलमतिर्भीमः संस्थितो वितताकृतिः ॥ ६
स सहस्रेण बाहूनामादाय परिघान्बहून् ।
प्रहरत्यात्मनः पृष्ठे स्वात्मनैव पलायते ॥ ७
दृढप्रहारैः प्रहरन्स्वयमेवात्मनात्मनि ।
प्रविद्रवति भीतात्मा स योजनशतान्यपि ॥ ८
क्रन्दन्पलायमानोऽसौ गत्वा दूरमितस्ततः ।
श्रमवान्विवशाकारो विशीर्णचरणाङ्गकः ॥ ९
पतितोऽवश एवाशु महत्यन्धोऽन्धकूपके ।
कृष्णरात्रितमोभीमे नभोगम्भीरकोटरे ॥ १०
ततः कालेन बहुना सोऽन्धकूपात्समुत्थितः ।
पुनः प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनः ॥ ११
पुनर्दूरतरं गत्वा करञ्जवनगुल्मकम् ।
प्रविष्टः कण्टकव्याप्तं शलभः पावकं यथा ॥ १२
तस्मात्करञ्जगहनाद्विनिःसृत्य क्षणादिव ।
पुनः प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनः ॥ १३
पुनर्दूरतरं गत्वा शशाङ्ककरशीतलम् ।
कदलीकाननं कान्तं संप्रविष्टो हसन्निव ॥ १४
कदलीखण्डकात्तस्माद्विनिःसृत्य क्षणात्पुनः ।
स्वयं प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनि ॥ १५
पुनर्दूरतरं गत्वा तमेवान्धोऽन्धकूपकम् ।
स संप्रविष्टस्त्वरया विशीर्णावयवाकृतिः ॥ १६
अन्धकूपात्समुत्थाय प्रविष्टः कदलीवनम् ।
कदलीकाननाद्भ्रष्टः करञ्जवनगुल्मकम् ॥ १७
करञ्जकाननात्कूपं कूपाद्रम्भावनान्तरम् ।
प्रविशन्प्रहरंश्चैव स्वयमात्मनि संस्थितः ॥ १८
एवंरूपनिजाचारः सोऽवलोक्य चिरं मया ।
अवष्टभ्य बलादेव मुहूर्तं रोधितः पथि ॥ १९
पृष्टः स कस्त्वं किमिदं केनार्थेन करोषि वा ।
किं नामाभिमतं तेऽत्र किं मुधा परिमुह्यसि ॥ २०
इति पृष्टेन कथितं तेन मे रघुनन्दन ।
नाहं कश्चिन्न चैवेदं मुने किंचित्करोम्यहम् ॥ २१
त्वयाहमवभग्नोऽस्मि त्वं मे शत्रुरहो बत ।
त्वया दृष्टोऽस्मि नष्टोऽस्मि दुःखाय च सुखाय च ॥ २२
इत्युक्त्वा विकृवान्यङ्गान्यालोक्य स्वान्यतुष्टिमान् ।
रुरोदातिरवं दीनो मेघो वर्षन्निवाटवीम् ॥ २३
क्षणमात्रेण तत्रासावुपसंहृत्य रोदनम् ।
स्वान्यङ्गानि समालोक्य जहास च ननाद च ॥ २४
अथाट्टहासपर्यन्ते स पुमान्पुरतो मम ।
क्रमेण तानि तत्याज स्वान्यङ्गानि समंततः ॥ २५
प्रथमं पतितं तस्य शिरः परमदारुणम् ।
ततस्ते बाहवः पश्चाद्वक्षस्तदनु चोदरम् ॥ २६
अथ क्षणेन स पुमांस्तान्यङ्गानि यथाक्रमम् ।
संत्यज्य नियतेः शक्त्या क्वापि गन्तुमुपस्थितः ॥ २७
दृष्टवानहमेकान्ते पुनरन्यं तथा नरम् ।
सोऽपि प्रहारान्परितः प्रयच्छन्स्वयमात्मनि ॥ २८
बाहुभिः पीवराकारैः स्वयमेव पलायते ।
कूपे पतति कूपात्तु समुत्थायाभिधावति ॥ २९
पुनः पतति कुण्डेऽन्तः पुनरार्तः पलायते ।
पुनः प्रविशति श्वभ्रं क्षणं शिशिरकाननम् ॥ ३०
कष्टं पुनःपुनस्तुष्टः पुनः प्रहरति स्वयम् ।
एवंप्रायनिजाचारश्चिरमालोक्य सस्मयम् ॥ ३१
स मया समवष्टभ्य परिपृष्टस्तथैव हि ।
तेनैवासौ क्रमेणाद्य रुदित्वा संप्रहस्य च ॥ ३२
अङ्गैर्विशीर्णतामेत्य ययावलमलक्ष्यताम् ।
विचार्य नियतेः शक्तिं ततो गन्तुमुपस्थितः ॥ ३३
दृष्टवानहमेकान्ते पुनरन्यं तथा नरम् ।
प्रहरंस्तद्वदेवासौ स्वयमेव पलायते ॥ ३४
पलायमानः पतितो महत्यन्धेऽन्धकूपके ।
तत्राहं सुचिरं कालमवसं तत्प्रतीक्षकः ॥ ३५
यावत्स सुचिरेणापि कूपान्नाभ्युदितः शठः ।
अथाहमुत्थितो गन्तुं दृष्टवान्पुरुषं पुनः ॥ ३६
तादृशं तादृशाकारं प्रपतन्तं तथैव च ।
अवष्टभ्य तथैवाशु तस्य प्रोक्तं पुनर्मया ॥ ३७

---

अणुमात्रमिव ॥ ५ ॥ ६ ॥ आत्मनः स्वस्य । स्वात्मना स्वेनैव ॥ ७ ॥ ८ ॥ ९ ॥ अन्धो विवेकदृष्टिशून्यः । कृष्णरात्रिरिव तमसा भीमे ॥ १० ॥ आत्मनः स्वस्मादेव निमित्तात् ॥ ११ ॥ करञ्जकण्टकलतानिविडं वनगुल्मकमल्पच्छायं दुःखबहुलमिति यावत् । अन्यैश्च कण्टकैर्व्याप्तम् ॥ १२ ॥ ॥ १३ ॥ हसन् आनन्दित इव ॥ १४ ॥ १५ ॥ १६ ॥ श्वभ्रं गर्तमिव गम्भीरम् ॥ १७ ॥ कूपं प्रागुक्तान्धकूपम् । रम्भावनान्तरं कदलीवनमध्यम् ॥ १८ ॥ अवलोक्य विवेकदृशा दृष्ट्वा । अवष्टभ्य योगबलेन धृत्वा ॥१९॥ इदं आत्मप्रहरणकूपपतनादि किं किमर्थम् । अभिमतमभिलषितम् ॥ २० ॥ २१ ॥

॥२२॥ अतुष्टिमान् भोगेभ्योऽसंतृप्तः ॥ २३ ॥ २४ ॥ २५ ॥ संकल्पात्मकं शिरः, तदेव सर्वानर्थमूलत्वात्परमदारुणम्, बाहवो विकल्पाशयाः, विषयाभिनिवेशो वक्षः, तृष्णा उदरमिति योग्यतया कल्प्यम् ॥ २६ ॥ ज्ञानेनाज्ञानतत्कार्यबाधनियतेः शक्त्या । क्वापि गन्तुमित्यनेन गन्तव्यस्थलान्तरापरिशेषाद्बाधितस्य निःस्वरूपापत्तिरुक्ता ॥२७॥ स्वमनस इवान्यमनसामप्येवैव रीतिरिति प्रदर्शनायाह—**दृष्टवानि**त्यादिना ॥ २८ ॥ २९ ॥ कुण्डेऽन्धकूपे । श्वभ्रं करञ्जवनगर्तम् । शिशिरकाननं कदलीवनम् ॥ ३० ॥ ३१ ॥ ३२ ॥ अलक्ष्यतां अदृश्यताम् ॥ ३३ ॥ ३४ ॥ अन्धयतीत्यन्धे अन्धकूपके तमोवृते कूपे ॥ ३५ ॥ ३६ ॥ ३७ ॥

---

१ आत्मन इति पाठः.

तथैवोत्पलपत्राक्ष नासौ तदवबुद्धवान् ।
केवलं मामसौ मूढो नैव जानासि किंचन ॥ ३८
आः पाप दुर्द्धिजेत्युक्त्वा स्वव्यापारपरो ययौ ।
अथ तस्मिन्महारण्ये तथा विहरता मया ॥ ३९
बहवस्तादृशा दृष्टाः पुरुषा दोषकारिणः ।
मत्पृष्टाः केचिदायान्ति स्वप्नसंभ्रमवच्छमम् ॥ ४०
मदुक्तं नाभिनन्दन्ति केचिच्छवतनुं यथा ।
विनिपत्यान्धकूपेभ्यः केचित्तत्प्रोत्थिताः पुनः ॥ ४१
कदलीखण्डकात्केचिच्चिरेणापि न निर्गताः ।
केचिदन्तर्हिताः स्फारे करञ्जवनगुल्मके ॥ ४२
न कचित्स्थितिमायान्ति केचिद्धर्मपरायणाः ।
एवंविधा सा वितता रघूद्वह महाटवी ॥ ४३
अद्यापि विद्यते यस्यामित्थं ते पुरुषाः स्थिताः ।
सा च दृष्टा त्वया राम त्वयेह व्यवहारिणी ।
बाल्यात्तु बुद्धितत्त्वस्य न तां स्मरसि राघव ॥ ४४
सा भीषणा विविधकण्टकसङ्कटाङ्गी
घोराटवी घनतमोगहनापि लोके ।
आगत्य निर्वृतिमलब्धपरावबोधै-
रासेव्यते कुसुमगुल्मकवाटिकेव ॥ ४५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे चित्तोपाख्यानं नामाष्टनवतितमः सर्गः ॥ ९८ ॥

## एकोनशततमः सर्गः ९९

श्रीराम उवाच ।
कासौ महाटवी ब्रह्मन्कदा दृष्टा कथं मया ।
के च ते पुरुषास्तत्र किं तत्कर्तु कृतोद्यमाः ॥ १
श्रीवसिष्ठ उवाच ।
रघुनाथ महाबाहो शृणु वक्ष्यामि तेऽखिलम् ।
न सा महाटवी राम दूरे नैव च ते नराः ॥ २
येयं संसारपदवी गम्भीराऽपारकोटरा ।
तां तां शून्यां विकाराढ्यां विद्धि राम महाटवीम् ॥ ३
विचारालोकलभ्येयं यदैकेनैव वस्तुना ।
पूर्णा नान्येन संयुक्ता केवलेव तदैव सा ॥ ४
तत्र ये ते महाकाराः पुरुषाः प्रभ्रमन्ति हि ।
मनांसि तानि विद्धि त्वं दुःखे निपतितान्यलम् ॥ ५
द्रष्टा योऽयमहं तेषां सविवेको महामते ।
विवेकेन मया तानि दृष्टान्यन्येव नानघ ॥ ६
मया तान्येव बोध्यन्ते विवेकेन मनांसि हि ।
सततं सुप्रकाशेन कमलानीव भानुना ॥ ७
मत्प्रबोधं समासाद्य मत्प्रसादान्महामते ।
मनांसि कानि चित्तानि गतान्युपशमात्परम् ॥ ८

उत्पलपत्राक्षेति रामसंबोधनम् । केवलं स्वव्यापारपरोऽभवदित्युत्तरेणान्वयः ॥ ३८ ॥ न केवलं स्वयं विवेकानभिज्ञः किंतु विवेकिजनतिरस्कारपरोऽपीति सूचनाय आः पापेत्याद्युक्तिः ॥ ३९ ॥ मत्पृष्टा मया बोधिताः सन्तः शमं प्रागुक्तस्वरूपनाशलक्षणमुपरमम् ॥ ४० ॥ नाभिनन्दन्त्युपेक्षन्ते जुगुप्सन्ति च ॥ ४१ ॥ न निर्गताः । तत्रैव ज्ञानं प्राप्य मुक्ता इति यावत् ॥ ४२ ॥ धर्मपरायणाः काम्यधर्मपराः ॥ ४३ ॥ त्वया हेतुना व्यवहारिणी सर्वव्यवहारवती सा महाटवी त्वया दृष्टा । बुद्धितत्त्वस्य बुद्धिसारस्य विवेकस्य । बाल्यादप्रागल्भ्यात् ॥ ४४ ॥ उपसंहरति—**सेति** । लोके लोक्यते विवेकदृशा धर्मब्रह्मतत्त्वमस्मिंस्तथाविधे अधिकारिजन्मनि निर्वृतिं साधनसंपत्तिसुखमागत्य प्राप्यापि अभाग्यवशादलब्धपरमात्मबोधैरासेव्यते विषयासत्त्या सेव्यते । कुसुमकाननवाटिकेवेत्यापातरम्यत्वे दृष्टान्तः ॥ ४५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तोपाख्यानं नामाष्टनवतितमः सर्गः ॥ ९८ ॥

**उक्तस्य चित्ताख्यानस्य क्रमेण व्युत्क्रमेण च ।**
**रामप्रश्नमुखेनात्र तात्पर्यार्थोऽनुवर्ण्यते ॥ १ ॥**

किं किमर्थं वा तत्परिधैः स्वदेहप्रहारं कूपकरञ्जवनादिप्रवेशं च कर्तुं कृतोद्यमास्ते जाताः । 'किंतत्कर्तृकृतोद्यमाः' इति पाठे स्वतः स्वानिष्टे प्रवृत्तेरयोगात्परतः सा वाच्येति केन तत्कर्त्रा तादृशानिष्टे बलान्नियोजकेन हेतुना स्वप्रहारादौ कृतोद्यमास्ते संपन्ना इत्यर्थः । कश्चासौ तत्कर्ता च किंतत्कर्ता तेन कृतोद्यमा इति विग्रहः ॥ १ ॥ वस्तुतो ब्रह्मैव मिथ्याभूतस्वर्गनरकादिवैचित्र्यकल्पनया संसाराटवी तत्कल्पकानि मनांस्येव ते नरा इति न ते दूरस्था मयोक्ता इत्याह—**रघुनाथे**त्यादिना ॥ २ ॥ या इयं प्रसिद्धा संसारपदवी तां परमार्थदृशा असत्त्वाच्छून्यां भ्रान्तिदृशा तु सत्त्वाद्विकाराढ्यां तां प्रागुक्तां महाटवीं विद्धीत्यर्थः ॥ ३ ॥ कदा सा शून्या केन वा उपायेन लभ्यते तत्राह—**विचारालोके**ति । यदा एकेनाद्वितीयेनैव वस्तुना पूर्णा अन्येन न संयुक्ता भवति तदा केवला शून्येव भवति । इवशब्दः केवलशून्यादिशब्दानामपि तत्रौपचारिकी प्रवृत्तिः प्रतियोग्यनिरूपणे शून्यत्वादेर्निरूपणासंभवादिति द्योतनाय । तादृशी चेयं तत्त्वंपदार्थशोधनलक्षणेन विवेकालोकेन लभ्येत्यर्थः ॥ ४ ॥ ५ ॥ विवेकोऽत्र विचारः ॥ ६ ॥ ७ ॥ मत्प्रबोधं तत्त्वज्ञानम् । मत्प्रसादाद्विवेकप्रसादात् । उपशमान्मनोभावनाशात् । परं मोक्षं

१ कुसुमप्रधाना गुल्मका यस्मिंस्तत्कुसुमगुल्मकं काननं तद्रूपा वाटिकेत्यर्थः । एतत्फलितार्थकैव कुसुमकाननेत्यादिटीका ।

कानिचिन्नाभिनन्दन्ति मां विवेकं विमोहतः ।
मत्तिरस्कारवशतः कूपेष्वेव पतन्त्यधः ॥ ९
ये तेऽन्धकूपा गहना नरकास्ते रघूद्वह ।
कदलीकाननं यानि संप्रविष्टानि तानि तु ॥ १०
स्वर्गैकरसिकानि त्वं मनांसि ज्ञातुमर्हसि ।
प्रविष्टान्यन्धकूपान्तर्निर्गतानि न यानि तु ॥ ११
महापातकयुक्तानि तानि चित्तानि राघव ।
कदलीकाननस्थानि निर्गतानि न यानि तु ॥ १२
पुण्यसंभारयुक्तानि तानि चित्तानि राघव ।
करञ्जवनयातानि निर्गतानि न यानि तु ॥ १३
तानि मानुष्यजातानि चित्तानि रघुनन्दन ।
कानिचित्संप्रबुद्धानि तत्र मुक्तानि बन्धनात् ॥ १४
कानिचिद्बहुरूपाणि योनेर्योनिं विशन्ति हि ।
मनांसि तानि तिष्ठन्ति निपतन्त्युत्पतन्ति च ॥ १५
यत्तत्करञ्जगहनं तत्कलत्ररसं विदुः ।
दुःखकण्टकसंबाधं मानुष्यं विविधैषणम् ॥ १६
करञ्जगहनं यानि प्रविष्टानि मनांसि तु ।
मानुष्ये तानि जातानि तत्रैव रसिकानि च ॥ १७
कदलीकाननं यत्तच्छशाङ्ककरशीतलम् ।
तन्मनोह्लादनकरं स्वर्गं विद्धि रघूद्वह ॥ १८
कानिचित्पुण्यभूतेन तपसा धारणात्मना ।
धारयन्ति शरीराणि संस्थितान्युदितान्यपि ॥ १९
यैरहं पुंभिरबुधैर्बुद्धिचित्ततिरस्कृतः ।
तैर्मनोभिरनात्मज्ञैः स्वविवेकस्तिरस्कृतः ॥ २०
त्वया दृष्टो विनष्टोऽस्मि त्वं मे शत्रुरिति द्रुतम् ।
यदुक्तं तद्धि चित्तेन गलता परिदेवितम् ॥ २१
रुदितं यन्महाक्रन्दं पुंसा बह्वाशु राघव ।
तद्भोगजालं त्यजता मनसा रोदनं कृतम् ॥ २२
अर्धप्राप्तविवेकस्य न प्राप्तस्यामलं पदम् ।
चेतसस्त्यजतो भोगान्परितापो भृशं भवेत् ॥ २३
रुदताङ्गानि दृष्टानि कारुण्येनावबोधिना ।
कष्टमेतानि संत्यज्य किं प्रयामीति चेतसा ॥ २४
अर्धप्राप्तविवेकस्य न प्राप्तस्यामलं पदम् ।
चेतसस्त्यजतोऽङ्गानि परितापो हि वर्धते ॥ २५
हसितं तु यदानन्दि पुंसा मदवबोधतः ।
परिप्राप्तविवेकेन तत्तुष्टं राम चेतसा ॥ २६
परिप्राप्तविवेकस्य त्यक्तसंसारसंस्थितेः ।
चेतसस्त्यजतो रूपमानन्दो हि विवर्धते ॥ २७
हसताङ्गानि दृष्टानि पुंसा यान्युपहासतः ।
तानि दृष्टानि मनसा विप्रलम्भपदानि ह ॥ २८
मिथ्याविकल्परचितैर्विप्रलब्धमहो चिरम् ।
इत्यङ्गान्युपहासेन दृष्टानि स्वानि चेतसा ॥ २९
मनः प्राप्तविवेकं हि विश्रान्तं वितते पदे ।
प्राक्तनादीनताधारं हसन्पश्यति दूरतः ॥ ३०
यदसौ समवष्टभ्य मया पृष्टः प्रयत्नतः ।
तद्विवेको बलाच्चित्तमादत्त इति दर्शितम् ॥ ३१
यदङ्गानि विशीर्णानि गतान्यन्तर्धिमग्रतः ।
तच्चित्तेन विनार्थाशा शाम्यतीति प्रदर्शितम् ॥ ३२
सहस्रनेत्रहस्तत्वं यत्पुंसः परिवर्णितम् ।
तदनन्ताकृतित्वं हि चेतसः परिदर्शितम् ॥ ३३
यदात्मनि प्रहारौघैः पुमान्प्रहरति स्वयम् ।
तत्तत्कुकल्पनाघातैः प्रहरत्यात्मनो मनः ॥ ३४
पलायते यत्पुरुषः स्वात्मनः प्रहरन्स्वयम् ।
स्ववासनाप्रहारेभ्यस्तन्मनः प्रपलायते ॥ ३५
स्वयं प्रहरति स्वान्तं स्वयमेव स्वयेच्छया ।
पलायते स्वयं चैव पश्याज्ञानविजृम्भितम् ॥ ३६
स्ववासनोपतप्तानि सर्वाण्येव मनांसि हि ।
स्वयमेव पलायन्ते गन्तुं युक्तानि तत्पदम् ॥ ३७

गतानि ॥ ८ ॥ मत्तिरस्कारो विचारोपेक्षा ॥ ९ ॥ १० ॥ ११ ॥ ॥ १२ ॥ १३ ॥ मानुष्ये मनुष्यभावे जातानि परिणतानि । संप्रबुद्धानीति मनुष्यदेहे वैराग्यादिविशेषसंभवान्मुख्यो ज्ञानाधिकार इति द्योतनाय ॥ १४ ॥ निपतन्ति नरकेषु । उत्पतन्ति स्वर्गे ॥ १५ ॥ कलत्ररसं कुटुम्बस्नेहवत् । अतएव दुःखकण्टकसंबाधं विविधैषणं च मानुष्यम् ॥ १६ ॥ रसिकानि अभिनिविष्टानि विषयरसास्वादपराणि वा ॥ १७ ॥ १८ ॥ पुण्यभूतेन शास्त्रविहितेन । अशास्त्रविहितस्य वारणार्थं विशेषणम् । धारणात्मना ध्येयदेशे मनोनिबन्धरूपधारणाप्रधानेन उपासनेन हेतुना यानि ग्रहसमर्षिध्रुवादिशरीराणि धारयन्ति तानि इतरापेक्षया तेजोभोगाद्यतिशयेन तत्त्वावबोधेन च उदितानि अभ्युदयवन्त्यपि भूत्वा संस्थितानि चिरं स्थितानीत्यर्थः ॥ १९ ॥ बुद्धिभिश्चित्तैर्वा तिरस्कृत उपेक्षितः । नाध्यवसितो न स्मृतश्चेत्यर्थः ॥ २० ॥ गलता तत्त्वावबोधाद्विशीर्यता । परिदेवितं विलपितम् ॥ २१ ॥ ॥ २२ ॥ २३ ॥ 'स्वान्यङ्गानि समालोक्य जहास च ननाद च' इत्युक्तेस्तात्पर्यमाह—रुदतेति । अवबोधिना ईषद्विवेकवता । कारुण्येन स्त्रीपुत्रादिस्नेहेन ॥ २४ ॥ अङ्गानि स्नेहलोभादीनि ॥ २५ ॥ तत्तुष्टं आनन्दितम् । तुषेर्नपुंसके भावे क्तः ॥ २६ ॥ तदेव स्पष्टयति—परिप्राप्तेति ॥ २७ ॥ विप्रलम्भपदानि स्वप्ननिमित्तानि ॥ २८ ॥ मिथ्याविकल्पेन रचितैः कल्पितैर्विषयैर्विप्रलब्धं वञ्चितमित्युपहासेन ॥ २९ ॥ प्राक्तन्या आदीनताया आधारमालम्बनं विषयजातम् । दूरतः असङ्गात्मासंस्पर्शितयेति यावत् ॥ ३० ॥ असौ प्रागुक्तः पुरुषः । आदत्ते विष्टभ्नाति ॥ ३१ ॥ अर्थसहिता आशा अर्थाशा । मनोबाधे सह विषयैर्विषयतृष्णापि बाध्यत इति दर्शितमित्यर्थः ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥ स्वान्तं मनः ॥ ३६ ॥ उपतप्तानि विक्षोभि-

यदिदं विततं दुःखं तत्तनोति स्वयं मनः ।
स्वयमेवातिखिन्नं तु पुनस्तस्मात्पलायते ॥ ३८
संकल्पवासनाजालैः स्वयमायाति बन्धनम् ।
मनो लालामयैर्जालैः कोशकारक्रमिर्यथा ॥ ३९
यथानर्थमवाप्नोति तथा क्रीडति चञ्चलम् ।
आविदुःखमपश्यन्स्वं दुर्लीलाभिरिवार्भकः ॥ ४०
अपश्यन्काष्ठरन्ध्रस्थवृषणाक्रमणं यथा ।
कीलोत्पाटी कपिर्दुःखमेतीदं हि तथा मनः ॥ ४१
चिरपालनया चैव चिरभावनया तथा ।
अभ्यासात्तुच्छतामेत्य न भूयः परिशोचति ॥ ४२
मनःप्रमादाद्वर्धन्ते दुःखानि गिरिकूटवत् ।
तद्वशादेव नश्यन्ति सूर्यस्याग्रे हिमं यथा ॥ ४३
यावज्जीवमनिन्द्यया च रमते शास्त्रार्थसंजातया
तुल्यं वासनया मनो हि मुनिवन्मौनेन रागादिषु ।
पश्चात्पावनपावनं पदमजं तत्प्राप्य तच्छीतलं
तत्संस्थेन न शोच्यते पुनरलं पुंसा महापत्स्वपि ॥ ४४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणे चित्तोपाख्यानं नामैकोनशततमः सर्गः ॥ ९९ ॥

## शततमः सर्गः १००

श्रीवसिष्ठ उवाच ।
चित्तमेतदुपायातं ब्रह्मणः परमात्पदात् ।
अतन्मयं तन्मयं च तरङ्गः सागरादिव ॥ १
प्रबुद्धानां मनो राम ब्रह्मैवेह हि नेतरत् ।
जलसामान्यबुद्धीनामब्धेर्नान्यस्तरङ्गकः ॥ २
मनो रामाप्रबुद्धानां संसारभ्रमकारणम् ।
अपश्यतोऽम्बुसामान्यमन्यताम्बुतरङ्गयोः ॥ ३
अप्रबुद्धदृशां पक्षे तत्प्रबोधाय केवलम् ।
वाच्यवाचकसंबन्धकृतो भेदः प्रकल्प्यते ॥ ४
सर्वशक्ति परं ब्रह्म नित्यमापूर्णमव्ययम् ।
न तदस्ति न तस्मिन्यद्विद्यते विततात्मनि ॥ ५
सर्वशक्तिर्हि भगवान्यैव तस्मै हि रोचते ।
शक्तिं तामेव विततां प्रकाशयति सर्वगः ॥ ६
चिच्छक्तिर्ब्रह्मणो राम शरीरेष्वभिदृश्यते ।
स्पन्दशक्तिश्च वातेषु जडशक्तिस्तथोपले ॥ ७
द्रवशक्तिस्तथाम्भःसु तेजःशक्तिस्तथाऽनले ।
शून्यशक्तिस्तथाकाशे भावशक्तिर्भवस्थितौ ॥ ८
ब्रह्मणः सर्वशक्तिर्हि दृश्यते दशदिग्गता ।
नाशशक्तिर्विनाशेषु शोकशक्तिश्च शोकिषु ॥ ९
आनन्दशक्तिर्मुदिते वीर्यशक्तिस्तथा भटे ।
सर्गेषु सर्गशक्तिश्च कल्पान्ते सर्वशक्तिता ॥ १०

तानि । तद्ब्रह्मपदं गन्तुमवगन्तुं युक्तानि स्वरूपयोग्यानि । अथवा युक्तानि योगेन निरुद्धान्यपि ॥ ३७ ॥ उपतप्तमिथ्येतद्व्याचष्टे—**यदिद**मिति ॥ ३८ ॥ लाला स्वमुखद्रवस्तन्मयैस्तद्विकारैः । कोशकारक्रमिः कौशेयोत्पत्तिभूमौ प्रसिद्धः ॥ ३९ ॥ ४० ॥ उक्तेऽर्थे लौकिकीं गाथामुदाहरति—**अपश्यन्नि**ति । यथा किलारण्ये तक्षसु महाकाष्ठमर्धं विदार्य मध्ये कीलं दत्त्वा दैवादपगतेषु कश्चित्कपिस्तत्काष्ठोपविष्टः काष्ठरन्ध्रस्थस्ववृषणाक्रमं भाविनमपश्यन्स्वचापलाद्विष्टम्भकीलोत्पाटी वृषणसंदंशेन मरणादिदुःखमेति तद्वदित्यर्थः ॥ ४१ ॥ यदि निरुद्धमपि विक्षेपैः पलायते तर्हि कथमिष्टसिद्धिस्तत्राह—**चिरे**ति । न सकृन्निरोधादिष्टसिद्धिः, किंतु तस्य चिरपालनया चिरमसङ्गात्मभावनया चेत्यर्थः । तुच्छतां ज्ञानबाध्यताम् ॥ ४२ ॥ तथाच मन एव प्रमादविवेकाभ्यां बन्धमोक्षयोर्हेतुरिति फलितमित्याह—**मन** इति ॥ ४३ ॥ यद्यर्थे चशब्दः । यदि मनः शास्त्रार्थसंजातया अनिन्द्यया वासनया तुल्यं समरसं सत् रागादिषु विषयेषु मौनेन निरोधेन यावज्जीवं मुनिवद्रमते तत् तर्हि पश्चात्तत्त्वबोधेन पावनपावनं परमपवित्रमजं जन्मादिविक्रियारहितमतएव शीतलं तापत्रयास्पृष्टमलं पूर्णं तद्ब्रह्मपदं प्राप्य तत्संस्थेन जीवन्मुक्तेन पुंसा महापत्सु प्रलयादिष्वपि पुनर्न शोच्यते । 'तरति शोकमात्मवित्' इत्यादिश्रुतेरित्यर्थः ॥ ४४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तोपाख्यानं नामैकोनशततमः सर्गः ॥ ९९ ॥

वर्ण्यतेऽत्र मनःशक्त्या ब्रह्मणः सर्वशक्तिता ।
अज्ञानमात्राद्द्वैते बन्धमोक्षादिकल्पना ॥ १ ॥

मनोधीनैव बन्धमोक्षकल्पनेति यदुक्तं तत्रोपपत्तिमाह—**चित्त**मित्यादिना । अतन्मयमब्रह्मभूताज्ञानविकारः । तन्मयं शुद्धब्रह्मविवर्तश्च । यथा तरङ्गो जलविकारस्तत्सत्ताविवर्तश्च तद्वदित्यर्थः ॥ १ ॥ जलसामान्यं जलसत्ता ॥ २ ॥ ३ ॥ अतएव हि उपदेश्योपदेशकशब्दार्थादिशास्त्रीयव्यवहारकल्पनापि अज्ञपक्षमवलम्ब्यैव न तत्त्वदृशेति प्रागुक्तमित्याह—**अप्रबुद्धे**ति ॥ ४ ॥ सर्वजगत्कारणत्वमप्यज्ञातस्यैव ब्रह्मणो न ज्ञातस्येत्याशयेन तस्यैव सर्वशक्तिशालितामुपपादयति—**सर्वशक्ती**त्यादिना ॥ ५ ॥ प्रकाशयति कार्यात्मना प्रकटयति ॥ ६ ॥ शरीरेषु चतुर्विधभूतग्रामेषु ॥ ७ ॥ शून्यशक्तिरनावरकत्वात्सर्वावपनशक्तिः । भावशक्तिरस्तीति व्यवहारयोग्यता ॥ ८ ॥ नाशशक्तिः कारणे तिरोभावशक्तिः । शोकशक्तिराशोकजदेहजननशक्तिर्विषादशक्तिर्वा ॥ ९ ॥ कल्पान्ते प्राकृतप्रलये प्रकृतौ सर्वशक्तिता तस्याः सर्वकार्यबीजत्वात् । 'शर्वशक्तिता' इति पाठे संहारशक्तिता ॥ १० ॥

फलपुष्पलतापत्रशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ ११
प्रतिभासवशादेव मध्यस्थं चित्तजाड्ययोः ।
जीवेतराभिधं चित्तमन्तर्ब्रह्मणि दृश्यते ॥ १२
नानातरुलतागुल्मजालपल्लवशालयः ।
निर्विकल्पकचिन्मात्रं नानाऽनिर्ज्ञातकल्पना ॥ १३
ब्रह्मैवेदमहंतत्त्वं जगत्पश्याद्य राघव ।
स आत्मा सर्वगो नाम नित्योदितमहावपुः ॥ १४
यन्मनाङ्मननीं शक्तिं धत्ते तन्मन उच्यते ।
पिच्छभ्रान्तिर्यथा व्योम्नि पयस्यावर्तधीर्यथा ॥ १५
प्रतिभासकलामात्रं मनो जीवस्तथात्मनि ।
यदेतन्मनसो रूपमुदितं मननात्मकम् ॥ १६
ब्राह्मी शक्तिरसौ तस्माद्ब्रह्मैव तदरिंदम ।
इदं तदहमित्येव विभागः प्रतिभासजः ॥ १७
मनसो ब्रह्मणोऽन्यच्च मोहे परमकारणम् ।
यद्यच्चैतन्मनस्येव किंचित्सदसदात्मकम् ॥ १८
व्याशब्दितं सर्वशक्तेस्तां शक्तिं ब्रह्मतां विदुः ।
मनः सत्तात्मकं नाम यथैतन्मनसि स्थितम् ॥ १९
यथर्तोः शक्तयस्तद्वज्जीवेहा ब्रह्मणि स्थिताः ।
व्याप्तसर्वर्तुकुसुमा क्ष्मादेशविधिभेदतः ॥ २०
यथा दधाति पुष्पाणि तथा चित्तानि लोककृत् ।
कचित्कचित्कदाचिद्धि तस्मादायान्ति शक्तयः ॥ २१
देशकालादिवैचित्र्यात्क्ष्मातलादिव शालयः ।
न जातं प्रतिभासेन तेनैवान्येन पश्यति ॥ २२
प्रतियोगिव्यवच्छेदसंख्यारूपादयश्च ये ।
मनःशब्दैः प्रकल्प्यन्ते ब्रह्मजान्ब्रह्म विद्धि तान् ॥ २३
यथा यथास्य मनसः प्रतिभासः प्रवर्तते ।
तथा तथैव भवति दृष्टान्तोऽत्र किलैन्दवाः ॥ २४
स्वयमक्षुब्धविमले यथा स्पन्दो महाम्भसि ।
संसारकारणं जीवस्तथायं परमात्मनि ॥ २५
ज्ञस्य सर्वं चितं राम ब्रह्मैवावर्तते सदा ।
कल्लोलोर्मितरङ्गौघैरब्धेर्जलमिवात्मनि ॥ २६
द्वितीया नास्ति सत्तैका नामरूपक्रियात्मिका ।
परे नानातरङ्गेऽब्धौ कल्पनेव जलेतरा ॥ २७
जायते नश्यति तथा यदिदं याति तिष्ठति ।
तदिदं ब्रह्मणि ब्रह्म ब्रह्मणा च विवर्तते ॥ २८
स्वात्मन्येवातपस्तीव्रो मृगतृष्णिकया यथा ।
विचित्रेण विचित्रोऽपि प्रस्फुरत्यात्मना तथा ॥ २९
करणं कर्म कर्ता च जननं मरणं स्थितिः ।
सर्वं ब्रह्मैव नह्यस्ति तद्भिना कल्पनेतरा ॥ ३०
न लोभोऽस्ति न मोहोऽस्ति न तृष्णास्ति न रञ्जना ।
क आत्मन्यात्मनो लोभस्तृष्णा मोहोऽथवा कुतः ॥ ३१
आत्मैवेदं जगत्सर्वमात्मैव कलनाक्रमः ।
हेमाङ्गदतयेवायमात्मोदेति मनस्तया ॥ ३२

तदेवाह—**फले**ति ॥ ११ ॥ प्रथमकार्यस्य चित्तस्य चिज्जाड्योभयरूपतादर्शनादप्यज्ञातमेव ब्रह्म जगद्बीजमित्याशयेनाह—**प्रतिभासे**ति । प्रतिभासोऽत्राज्ञानसाक्षी तद्वशादेव न शुद्धवशात् ॥ १२ ॥ यतोऽयं तरुगुल्मादिदृश्यप्रपञ्चोऽज्ञातचिद्विवर्तोऽतश्चिन्मात्रमेव तत्त्वमित्याह—**नाने**ति । अनिर्ज्ञातकल्पना अज्ञाते तत्त्वे यत इयं कल्पनेत्यर्थः ॥ १३ ॥ जगत् अहंतत्त्वं अहमिति भासमानजीवतत्त्वं प्रत्यक्चिद्रूपं ब्रह्मैवेति पश्येत्यर्थः ॥ १४ ॥ ब्रह्मैव तत्तच्छक्तिपुरस्कारेण भ्रान्त्या मनआदिशब्दैरुच्यते नान्यदित्याह—**यदि**त्यादिना ॥ १५ ॥ १६ ॥ शक्तितत्कार्ययोरभेदादिदमिति पुरोवर्तितया, तदिति परोक्षतया, अहमिति प्रत्यक्तादात्म्येन च भासमानस्त्रिविधो दृश्यविभागः प्रतिभासजः प्रातिभासिक एव न वास्तव इत्यर्थः ॥ १७ ॥ ननु कामकर्मवासनादिकमपि द्वैतप्रपञ्चहेतुः श्रूयते तत्कथं ब्रह्मशक्तिरेव तद्धेतुरुच्यते तत्राह—**मनस** इति । मनसो जीवस्य ब्रह्मणश्च मोहे भेदादिभ्रमे अन्यच्च कामादि यद्यत्किंचित्परमकारणं व्याशब्दितं लोके तत्सर्वं मनस्येवाविर्भावतिरोभावाभ्यां सदसदात्मकं सर्वशक्तेर्ब्रह्मणस्तां प्रागुक्तां ब्रह्मतां बृंहणशक्तिमेव विदुर्न तदन्यदिति परेणान्वयः ॥ १८ ॥ ननु मनोधर्माः कामादिशक्तयः कथं ब्रह्मणि स्थिता येन तच्छक्तयः स्युस्तत्राह—**मन** इति । यथा मनः सत्तात्मकं नाम ब्रह्मरूपं मनसि संसर्गाध्यासास्थितं, यथा वा ऋतोर्वसन्तादेः शक्तयो वृक्षादिषु स्थितास्तद्वज्जीवेहा मनोधर्मा अपि ब्रह्मणि स्थिता इत्यर्थः ॥ १९ ॥ यदि सर्वा जीवेहा ब्रह्मशक्तयस्तर्हि कुतो न सर्वाः सर्वजीवेषु संकीर्यन्ते तत्राह—**व्याप्ते**ति । यथा व्याप्तसर्वर्तुकुसुमशक्तिरपि क्ष्मा भूमिस्तत्तत्प्रदेशेषु बीजसंस्कारादिविधिभेदतो व्यवस्थयैव पुष्पादि दधाति न संकरेण तथा लोककृद्ब्रह्मापि चित्तशक्तीर्व्यवस्थया दधातीत्यर्थः ॥ २० ॥ आयान्ति व्यवस्थितफलात्मना आविर्भवन्ति । क्ष्मातलाच्छालिशक्तय इवेत्यर्थः ॥ २१ ॥ अभ्युपेत्य चेदं प्रतियोगिव्यवच्छेदसंख्यारूपादिभेदरूपं जगद्वैचित्र्यमसंकरो दर्शितः, परमार्थतस्तत्प्रतिभासमात्रस्य कारकत्वायोगात्प्रतिभासपृथक्कृतकारकान्तरासिद्धेश्च प्रातिभासिकं न किंचिज्जातं न वा किंचित्केनचित्पश्यतीति मनःशब्दकल्पितब्रह्मजास्ते ब्रह्मैवेति बुध्यस्वेत्याह—**न जात**मिति सार्धेन ॥ २२ ॥ २३ ॥ २४ ॥ जगत्कल्पको जीव एव ब्रह्मान्यो नास्ति दूरे तत्कल्पितं जगदित्याशयेनाह—**स्वय**मिति ॥ २५ ॥ चितं उपचितं पूर्णमित्यर्थः । आसमन्ताद्वर्तते ॥ २६ ॥ परे ब्रह्मणि द्वितीया सत्ता नास्ति किंत्वेकैव ॥ २७ ॥ विवर्तते अतात्त्विकरूपेण प्रतिभासते ॥ २८ ॥ मृगतृष्णिकया मृगतृष्णानद्यात्मना । विचित्रो विगतनामरूपोऽपि ॥ २९ ॥ ३० ॥ द्वितीयाभावे लोभमोहादीनां प्रसक्तिरेव नास्तीत्याह—**ने**ति । रञ्जना अत्यासक्तिः ॥ ३१ ॥ मनस्तया मनोभावेन ॥ ३२ ॥

१ दिव शालयः इति पाठः।

अबुद्धं यत्परं धाम तच्चित्तं जीव उच्यते ।
अपरिज्ञात एवाशु बन्धुरायात्यबन्धुताम् ॥ ३३
चिन्मयेनात्मनाऽज्ञेन स्वसंकल्पनया स्वयम् ।
शून्यता गगनेनेव जीवता प्रकटीकृता ॥ ३४
आत्मैवानात्मवदिह जीवो जगति राजते ।
द्वीन्दुत्वमिव दुर्दृष्टेः सच्चासच्च समुत्थितम् ॥ ३५
मोहार्थशब्दार्थदृशोरेतयोरत्यसंभवात् ।
सत्यत्वादात्मनश्चैव कात्मा बद्धः क मुच्यते ॥ ३६
नित्यासंभवबन्धस्य बद्धोऽस्मीति कुकल्पना ।
यस्य काल्पनिकस्तस्य मोक्षो मिथ्या न तत्त्वतः ॥ ३७

श्रीराम उवाच ।

मनो यं निश्चयं याति तत्तद्भवति नान्यथा ।
तेन काल्पनिको नास्ति बन्धः कथमिह प्रभो ॥ ३८

श्रीवसिष्ठ उवाच ।

मिथ्या काल्पनिकीवेयं मूर्खाणां बन्धकल्पना ।
मिथ्यैवाभ्युदिता तेषामितरा मोक्षकल्पना ॥ ३९
एवमज्ञानकादेव बन्धमोक्षदृशोऽस्मृतेः ।
वस्तुतस्तु न बन्धोऽस्ति न मोक्षोऽस्ति महामते ॥ ४०
कल्पनाया अवस्तुत्वं संप्रबुद्धमतिं प्रति ।
रज्ज्वहेरिव हे प्राज्ञ तत्त्वबुद्धमतिं प्रति ॥ ४१
बन्धमोक्षादिसंमोहो न प्राज्ञस्यास्ति कश्चन ।
संमोहबन्धमोक्षादि ह्यज्ञस्यैवास्ति राघव ॥ ४२
आदौ मनस्तदनु बन्धविमोक्षदृष्टी
पश्चात्प्रपञ्चरचना भुवनाभिधाना ।
इत्यादिका स्थितिरियं हि गता प्रतिष्ठा-
माख्यायिका सुभग बालजनोदितेव ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे चित्तचिकित्सापूर्वकं चित्तोत्पत्तिवर्णनं नाम शततमः सर्गः ॥ १०० ॥

## एकाधिकशततमः सर्गः १०१

श्रीराम उवाच ।

किमुच्यते मुनिश्रेष्ठ बालकाख्यायिकाक्रमः ।
क्रमेण कथयैतन्मे मनोवर्णनकारणम् ॥ १

श्रीवसिष्ठ उवाच ।

कोऽपि मुग्धमतिर्बालो धात्रीं पृच्छति राघव ।
कांचिद्विनोदिनीं धात्रि वर्णयाख्यायिकामिति ॥ २
सा बालस्य विनोदाय धात्री तस्य महामते ।
आख्यायिकां कथयति प्रसन्नमधुराक्षराम् ॥ ३
कचित्सन्ति महात्मानो राजपुत्रास्त्रयः शुभाः ।
धार्मिकाः शौर्यमुदिता अत्यन्तासति पत्तने ॥ ४
विस्तीर्णे शून्यनगरे व्योम्नीव जलतारकाः ।
द्वौ न जातौ तथैकस्तु गर्भ एव न संस्थितः ॥ ५

अबुद्धमज्ञानावृतम् ॥ ३३ ॥ अज्ञेनाज्ञानविषयीकृतेन यथा अशून्येनापि गगनेन शून्यता प्रकटीकृता तद्वत् ॥ ३४ ॥ अनात्मवत् अनात्मभूताहंकारादितादात्म्येनाहंप्रत्ययविषयवत् । विषयरूपेण द्वितीयरूपेण चासत्परमार्थैकरूपेण सच ॥ ३५ ॥ मोहार्थयोर्व्यामोहनिमित्तयोः । एतयोर्बन्धमोक्षशब्दार्थदृशोरत्यन्तमसंभवात् ॥ ३६ ॥ नित्यं न संभवतीत्यसंभवो बन्धो यस्य। तथाच परमार्थदृष्ट्या काल्पनिकावपि बन्धमोक्षौ तुच्छौ । 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इति श्रुतेरिति भावः ॥ ३७ ॥ यौक्तिकदृशा काल्पनिकानिर्वचनीयबन्धस्य प्राग्विस्तरेणोपपादितत्वात्काल्पनिकोऽपि बन्धो नास्तीति तुच्छतोक्तिमसहमानो रामः पृच्छति—**मन** इति ॥ ३८ ॥ यौक्तिकदृष्टिरियं लौकिकदृष्टिदार्ढ्यविघटनाय परमार्थदृष्टिद्वारत्वेन कल्पितेति न तत्रैव विश्रान्तिः, किंतु श्रौततुच्छतादृष्टावेवेत्याशयेन वसिष्ठः प्रत्याह—**मिथ्ये**त्यादिना । यथा काल्पनिकी स्वाप्नी कल्पना जाग्रद्दृशा मिथ्या तुच्छा तद्वत्। अनिर्वचनीयता न वस्तुतत्त्वं किंतु युक्तिभिर्निर्वचनाशक्तिः । सा च मूर्खपुरुषधर्मो न वस्तुस्वभाव इति सूचनाय मूर्खाणामित्युक्तम् ॥ ३९ ॥ एवं प्रागुक्तरीत्या तुच्छमज्ञानमज्ञानकं तस्मादेव बन्धमोक्षदृशः । 'नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥' इति स्मृतिविरोधेन सदसदान्तरालिकानिर्वचनीयताविश्रान्त्ययोगादित्यर्थः ॥ ४० ॥ अवस्तुत्वं तुच्छत्वम् । तत्प्रागुक्तमनिर्वचनीयत्वं तु अबुद्धमतिमज्ञं परीक्षकं प्रति न प्राज्ञं प्रतीत्यर्थः ॥ ४१ ॥ तदेव स्पष्टतरमाह—**बन्धे**ति ॥ ४२ ॥ उक्तेऽर्थे बालकाख्यायिकामवतारयन्नुपसंहरति—**आदा**विति। हे सुभग, इत्यादिका इयं बन्धस्थितिः प्रतिष्ठां दृढमूलताम् । बालजनाय धात्र्या उदिता उक्ता वक्ष्यमाणा आख्यायिकेव ॥ ४३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तोत्पत्तिवर्णनं नाम शततमः सर्गः १००

संकल्पादर्थशून्याया विकल्पशतसंसृतेः ।
दृष्टान्तो वर्ण्यतेऽत्रैव बालकाख्यायिकाक्रमः ॥ १ ॥

संकल्पविकल्पात्मकस्य मनसः संकल्पो मूलं तन्निरोधे मूलोच्छेदाद्विकल्पानुत्थाने निर्विकल्पपदप्रतिष्ठासिद्धिरिति सूचनाय प्रागवतारितां बालकाख्यायिकां श्रोतुकामो रामः पृच्छति—**किमुच्यत** इति । पदसंस्कारपक्षमाश्रित्य किमेतदित्यनयोः सामान्ये नपुंसकत्वम् । बालकाख्यायिकालक्षणः क्रमो दृष्टान्तः किंप्रकारो लोके उच्यते एतत्क्रमेण कथयेत्यर्थः ॥ १ ॥ मुग्धमतिर्युक्तायुक्तविवेकशून्यः ॥ २ ॥ ३ ॥ अत्यन्तासति पत्तने इति प्रधानराजधान्युक्तिः ॥ ४ ॥ शून्यानि नगराणि शाखानगराणि यस्मिन्निति तद्विशेषणम् । जलमध्यस्थतारकाश्चन्द्रांश-

अथात्युत्तमलाभार्थं कदाचित्समवायतः ।
विबन्धवः खिन्नमुखाः शोकोपहतचेतसः ॥ ६
ते तस्माच्छून्यनगरान्निर्गता विततानना ।
गगनादिव संश्लिष्टा बुधशुक्रशनैश्चराः ॥ ७
शिरीषसुकुमाराङ्गाः पृष्ठतोऽर्केण तापिताः ।
मार्गेऽहनि गता ग्रीष्मतापार्ताः पल्लवा इव ॥ ८
संतप्तमार्गसिकतादग्धपादसरोरुहाः ।
हा तात चेति शोचन्तो मृगा यूथच्युता इव ॥ ९
दर्भाग्रभिन्नचरणास्तापखिन्नाङ्गसंधयः ।
उल्लङ्घ्य दूरमध्वानं धूलिधूसरमूर्तयः ॥ १०
मञ्जरीजालजटिलं फलपल्लवमालितम् ।
मृगपक्षिगणाधारं प्रापुर्मार्गे तरुत्रयम् ॥ ११
यस्मिन्वृक्षत्रये वृक्षौ द्वौ न जातौ मनागपि ।
बीजमेव तृतीयस्य स्वारोहस्य न विद्यते ॥ १२
विश्रान्तास्ते परिश्रान्तास्तत्रैकस्य तरोरधः ।
पारिजाततले स्वर्गे शक्रानिलयमा इव ॥ १३
फलान्यमृतकल्पानि भुक्त्वा पीत्वा च तद्रसम् ।
कृत्वा गुलुच्छकैर्मालां चिरं विश्रम्य ते ययुः ॥ १४
पुनर्दूरतरं गत्वा मध्याह्ने समुपस्थिते ।
सरित्त्रितयमासेदुस्तरङ्गतरलारवम् ॥ १५
तत्रैका परिशुष्कैव मनागप्यम्बु न द्वयोः ।
विद्यते सरितोर्दृष्टिरन्धलोचनयोरिव ॥ १६
परिशुष्का भृशं यासौ तस्यां ते सस्नुरादृताः ।
घर्मार्ता इव गङ्गायां ब्रह्मविष्णुहरा इव ॥ १७
चिरं कृत्वा जलक्रीडां पीत्वा क्षीरोपमं पयः ।
जग्मुस्ते राजतनयाः प्रहृष्टमनसः स्वयम् ॥ १८
अथासेदुर्दिनस्यान्ते लम्बमाने दिवाकरे ।
भविष्यन्नवनिर्माणं नगरं नगसन्निभम् ॥ १९
पताकापद्मिनीव्याप्तं नीलाकाशजलाशयम् ।
दूरश्रुतसमुल्लापगायन्नागरमण्डलम् ॥ २०
ददृशुस्तत्र रम्याणि त्रीणि सद्भवनानि ते ।
मणिकाञ्चनगेहानि शृङ्गाणीव महागिरेः ॥ २१
अनिर्मिते द्वे सदने एकं निर्भित्ति तत्र वै ।
अभित्तिमन्दिरं चारु प्रविष्टास्ते नरास्त्रयः ॥ २२
संप्रविश्योपविश्याशु विहरन्तो वराननाः ।
प्रापुः स्थालीत्रयं तत्र तप्तकाञ्चनकल्पितम् ॥ २३
तत्र कर्परतां याते द्वे एका चूर्णतां गता ।
जगृहुश्चूर्णरूपां तां स्थालीं ते दीर्घबुद्धयः ॥ २४
द्रोणैर्नवनवत्या तैस्तस्यां द्रोणेन चान्धसः ।
तत्र द्रोणशतं हीनं रन्धितं बहुभोजिभिः ॥ २५
निमन्त्रितास्त्रयस्तैस्तु ब्राह्मणा राजसूनुभिः ।
द्वौ निर्देहावथैकस्य मुखमेव न विद्यते ॥ २६
निर्मुखेनान्धसस्तत्र भुक्तं द्रोणशतं सुत ।
विप्रभुक्तावशेषं तु भुक्तमन्धो नृपात्मजैः ॥ २७
त्रिभिस्ते राजपुत्राश्च परां निर्वृतिमागताः ।
भविष्यन्नगरे तस्मिन् राजपुत्रास्त्रयो हि ते ।
सुखमद्य स्थिताः पुत्र मृगयाव्यवहारिणः ॥ २८
आख्यायिकैषा कथिता मया रम्या तवानघ ।
एतां हृदि कुरु प्राज्ञ विदग्धस्त्वं भविष्यसि ॥ २९
धात्र्येति कथिता राम बालकाख्यायिका शुभा ।
तुष्टिं जगाम बालश्च शुभाख्यायिकयानया ॥ ३०
एषा हि कथिता राम चित्ताख्यानकथां प्रति ।
बालकाख्यायिका तुभ्यं मया कमललोचन ॥ ३१
इयं संसाररचना स्थितिमेवमुपागता ।
बालकाख्यायिकेवोग्रैः संकल्पैर्दृढकल्पितैः ॥ ३२
विकल्पजालकैवेयं प्रतिभासात्मिकानघ ।
बन्धमोक्षादिकलनारूपेण परिजृम्भते ॥ ३३

---

स्वात् ॥ ५ ॥ ते कदाचिद्विबन्धवो दैवान्मृतबान्धवा दुर्भिक्षादिना खिन्नमुखाश्च सन्तः समवायतः स्वनागरसमाजात् परस्परैकमत्यतो वा उत्तमस्य नगरान्तरस्य लाभार्थं निर्जग्मुरिति शेषः ॥ ६ ॥ संश्लिष्टा मिलिताः ॥ ७ ॥ गताः म्लानतामिति शेषः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ वृक्षत्रय इति निर्धारणे सप्तमी । स्वारोहस्य सुखेनारोढुं शक्यस्य ॥ १२ ॥ ॥ १३ ॥ गुलुच्छकैस्तल्लताविशेषमञ्जरीभिः ॥ १४ ॥ १५ ॥ सरितोरिति कर्मणि षष्ठी । दृष्टिर्दर्शनम् । अन्धलोचनयोरन्धलोचनाभ्यामिवात्यन्तासतीत्यर्थः । करणताशक्तेरेव संबन्धसामान्यात्मना विवक्षणात्षष्ठी, अन्धस्य लोचनयोर्गोलकयोर्दृष्टिरिन्द्रियमिव सरितोरम्बु न विद्यत इति वा ॥ १६ ॥ घर्मार्ता जना इव ब्रह्मविष्णुहरा गङ्गायामिव चेति पृथक्कृत्य योज्यम् ॥ १७ ॥ अभिलषितनगरप्राप्तौ प्रहृष्टमनसः ॥ १८ ॥ नगसन्निभं पर्वतप्रांशु ॥ १९ ॥ ऊर्ध्वं पताकाभिरधः पद्मिनीभिश्च व्याप्तम् । नीलाकाशा इव सुन्दराः शून्या वा जलाशया यत्र । समुल्लापाः स्वरमूर्च्छनाः ॥ २० ॥ २१ ॥ तत्र तेषु त्रिषु मध्ये अभित्तिमन्दिरं ते प्रविष्टाः ॥ २२ ॥ २३ ॥ कर्परतां कपालताम् ॥ २४ ॥ तत्र तस्यां स्थाल्याम् । अन्धसः ओदनप्रकृतेस्तण्डुलस्य नवनवत्या द्रोणैरेकेन च द्रोणेन हीनं न्यूनं द्रोणशतं रन्धितं पक्वम् । भावे क्तः ॥ २५ ॥ २६ ॥ २७ ॥ निर्वृतिं तृप्तिम् । मृगयाभिर्व्यवहारिणः क्रीडमानाः ॥ २८ ॥ विदग्धः पण्डितः ॥ २९ ॥ ३० ॥ चित्ताख्यानानन्तरं प्रवृत्ता या जगत्प्रत्ययस्य विकल्पमात्रत्वकथा तां प्रति तदुदाहरणत्वेनेत्यर्थः ॥ ३१ ॥ स्थितिं दार्ढ्यम् । एवं विकल्पमात्ररूपा । बालकाख्यायिकाशब्देन तज्जन्यबालप्रतीतिर्लक्षणया गृह्यते ॥ ३२ ॥ तदेव स्पष्टमाह—**विकल्पेति** । विकल्पा एव जालकानि यस्या-

संकल्पमात्रादितरद्विद्यते नेह किंचन ।
संकल्पवशतः किंचिन्न किंचित्किंचिदेव वा ॥ ३४
द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
संकल्पकचितं सर्वमेवं स्वप्नवदात्मनः ॥ ३५
राजपुत्रास्त्रयो नद्यो भविष्यन्नगरे यथा ।
यथा संकल्परचना तथेयं हि जगत्स्थितिः ॥ ३६
संकल्पमात्रमभितः परिस्फुरति चञ्चलः ।
पयोमात्रात्मकोऽम्भोधिरम्भसीवात्मनात्मनि ॥ ३७
संकल्पमात्रं प्रथममुत्थितं परमात्मनः ।
तदिदं स्फारतां यातं व्यापारैर्दिवसं यथा ॥ ३८
संकल्पजालकलनैव जगत्समग्रं
संकल्पमेव ननु विद्धि विलासचेत्यम् ।
संकल्पमात्रमलमुत्सृज निर्विकल्प-
माश्रित्य निश्चयमवाप्नुहि राम शान्तिम् ॥ ३९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उत्पत्तिप्रकरणे बालकाख्यायिकानामैकोत्तरशततमः सर्गः ॥ १०१ ॥

## द्व्युत्तरशततमः सर्गः १०२

श्रीवसिष्ठ उवाच ।
स्वसंकल्पवशान्मूढो मोहमेति न पण्डितः ।
अक्षये क्षयसंकल्पान्मुह्यते शिशुरेव हि ॥ १
श्रीराम उवाच ।
कोऽसौ संकल्पितः केन क्षयो ब्रह्मविदां वर ।
असतैव महामोहं येनादात्तत्सदैव हि ॥ २
श्रीवसिष्ठ उवाच ।
असता भूतसंघेन क्षयोऽहंकारनामधृक् ।
वेतालः शिशुनेवेह मिथ्यैव परिकल्पितः ॥ ३
एकस्मिन्नेव सर्वस्मिन्स्थिते परमवस्तुनि ।
कुतः कोऽयमहं नाम कथं नाम किलोदितः ॥ ४
वस्तुतो नास्त्यहंकारः परमात्मन्यभेदिनि ।
असम्यग्दर्शनान्मार्गीसरित्तीव्रातपे यथा ॥ ५
मनोमणिमहारम्भः संसार इति लक्ष्यते ।
आत्मनात्मानमाश्रित्य स्फुरत्यन्तर्यथाम्भसा ॥ ६
असम्यग्दर्शनं तेन त्यज राम निराश्रयम् ।
साश्रयं सत्यमानन्दि सम्यग्दर्शनमाश्रय ॥ ७
धिया विचारधर्मिण्या मोहसंरम्भहीनया ।
विचारयाधुना सत्यमसत्यं संपरित्यज ॥ ८
अबद्धो बद्ध इत्युक्त्वा किं शोचसि मुधैव हि ।
अनन्तस्यात्मतत्त्वस्य किं कथं केन बध्यते ॥ ९

मिति विग्रहे समासादुत्पन्नस्य टापः सुपः परत्वात् 'प्रत्ययस्थात्कात्पूर्वस्य' इत्यस्याप्रवृत्तिः ॥ ३३ ॥ विकल्पानां च संकल्पकार्यत्वात्तद्व्यतिरेकेणासत्त्वमित्याशयेनाह—**संकल्पमात्रा**दिति । यतो यत्किंचिद्विकल्परूपं भाति तत्सर्वं संकल्पवशतो भाति । विकल्पभातं च किंचिन्नैव किंचिद्वा भवति । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पतञ्जलिना तथा तल्लक्षणोक्तेरिति भावः ॥ ३४ ॥ युक्तमेव विशिष्य प्रपञ्चयति—**द्यौ**रिति । क्षमा पृथ्वी ॥ ३५ ॥ ३६ ॥ चञ्चलः अम्भोधिः ॥ ३७ ॥ व्यापारैः सूर्यव्यापारैर्जनव्यापारैश्च ॥ ३८ ॥ तथाच संकल्पत्यागमात्रेण निर्विकल्पस्वरूपावस्थितिरिति दर्शयन्नुपसंहरति—**संकल्पे**ति । मनोविलासा रागादिवृत्तयस्तच्चेत्यानि च तेषां समाहारम् । संकल्पत्यागे च निर्विकल्पात्मनिश्चय एव हेतुरित्याह—**आश्रित्ये**ति ॥ ३९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे बालकाख्यायिकानामैकोत्तरशततमः सर्गः ॥ १०१ ॥

इहाहंकारसंकल्पक्षयोपायो निरूप्यते ।
विवेको नात्मवर्गस्य नित्यता च परात्मनः ॥ १ ॥

मूढोऽज्ञः । अक्षये परमात्मनि क्षीयत इति क्षयो नश्वरात्मा तत्संकल्पात् । शिशुर्बालः । मुह्यते बिभेति ॥ १ ॥ क्षयसंकल्पादिति हेतूक्तौ संकल्पकर्तृकर्मणी विशिष्य जिज्ञासमानो रामः पृच्छति—**कोऽसा**विति । असौ संकल्पितः क्षयः कः केन च संकल्पितो येनायमात्मा असतैव निमित्तेन महामोहं संसारभ्रमं आ अदात् उपात्तवान् । अयं भावः—किं नित्यात्मा नश्वरात्मानं संकल्पयति उत नश्वरात्मैव । नाद्यः । तस्य स्वात्मस्वभावविरुद्धसंकल्पकत्वायोगात् । न द्वितीयः । आत्माश्रयापत्तेः । तथा संकल्पितो नश्वरात्मापि किं जड उत चिद्रूपः नाद्यः । आत्मतादात्म्यानापातात् । न द्वितीयः । चितः संकल्पविषयत्वायोगादिति ॥ २ ॥ 'यद्यद्भवन्ति तदा भवन्ति' इति श्रुतेः प्राक्तनसिंहव्याघ्रादिभूतसंघात्मभावसंस्कारसंभृतासच्छब्दवाच्याविद्योपहितेन परमात्मना चिदचित्संवलनात्मकसिंहव्याघ्राद्यहंकारात्मकनश्वरात्मसंकल्पनान्न कश्चित्त्वसंभावितो दोष इत्याशयेन वसिष्ठः समाधत्ते—**असते**ति । भूतसंघेन सिंहव्याघ्रादिप्राण्यहंभाववासितेन असता अविद्योपहितेन परमात्मना तत्तदहंकारनामधृक् क्षयो नश्वरात्मा ॥ ३ ॥ नन्वहंकारस्यात्मस्वभावत्वैव किं न स्यात्कुतो मिथ्यात्वं तत्राह—**एकस्मि**न्निति । सर्वस्मिन् पूर्णे ॥ ४ ॥ मार्गीसरित् मृगतृष्णानदी ॥ ५ ॥ मनोलक्षणस्य मणेश्चिन्तामणेर्महान् आरम्भः कार्यजातसर्गः । तर्हि किं मनस एव स्वातन्त्र्यं नेत्याह—**आत्मानमाश्रित्ये**ति । अम्भसा अम्भ इति शेषः ॥ ६ ॥ असम्यग्दर्शनं भ्रान्तिम् । निराश्रयं असद्विषयम् । साश्रयं सत्यार्थविषयम् ॥ ७ ॥ तत्र क उपायस्तत्राह—**धिये**ति ॥ ८ ॥ ९ ॥

नानाऽनानात्वकलना त्वविभिन्नमहात्मनि ।
सर्वस्मिन्ब्रह्मतत्त्वेऽस्मिन्किं बद्धं किं विमुच्यते ॥ १०
अनार्तोऽप्यार्तिमान्भाति च्छिन्नेऽङ्गे किंच ताम्यति ।
भेदाभेदविकारार्तिः काचिन्नात्मनि विद्यते ॥ ११
देहे नष्टे क्षते क्षीणे कात्मनः क्षतिरागता ।
भस्त्रायां परिदग्धायां भस्त्रापूरो न नश्यति ॥ १२
देहः पततु वोदेतु का नः क्षतिरुपस्थिता ।
को नष्टः प्रक्षते पुष्पे आमोदो व्योमसंश्रयः ॥ १३
आपतन्तु वपुःपद्मे सुखदुःखहिमश्रियः ।
आकाशोड्डयनालीनां का नः क्षतिरुपस्थिता ॥ १४
देहः पततु वोदेतु यातु वा गगनान्तरम् ।
तद्विलक्षणरूपस्य कासौ भवति मे क्षतिः ॥ १५
यथा पयोदमरुतोर्यथा षट्पदपद्मयोः ।
तथा राघव संबन्धस्त्वच्छरीरत्वदात्मनोः ॥ १६
मनो राम शरीरं हि जगतः सकलस्य च ।
आद्या शक्तिश्चिदध्यात्मा न नश्यति कदाचन ॥ १७
योऽसावात्मा महाप्राज्ञ न नश्यति न गच्छति ।
न नश्यति कदाचिच्च किं मुधा परितप्यसे ॥ १८
विशीर्णेऽभ्रे यथा वातः शुष्केऽब्जे षट्पदो यथा ।
यात्यनन्तपदं व्योम तथात्मा देहसंक्षये ॥ १९
संसारेऽस्मिन्विहरतो मनोऽपि हि न नश्यति ।
ज्ञानाग्निना विना जन्तोरात्मनाशे तु का कथा ॥ २०
यः कुण्डबदरन्यायो यो घटाकाशयोः क्रमः ।
स्थितिर्देहात्मनोः सैव सविनाशाविनाशयोः ॥ २१
बदरं हस्तमायाति यथा स्फुटति कुण्डके ।
आत्मा गगनमायाति तथा चलति देहके ॥ २२
कुम्भे गच्छत्यकुम्भत्वं कुम्भाकाशो यथाम्बरे ।
तिष्ठत्येवमयं क्षीणे देहे देही निरामयः ॥ २३
मनोदेहो हि जन्तूनां देशकालतिरोहितः ।
मुहुर्मृतिपटाच्छन्नः शठे किं परिदेवना ॥ २४
देशकालतिरोधाने मूढोऽपि मरणे नरः ।
किं बिभेति महाबाहो नेह पश्यति कश्चन ॥ २५
अतस्त्वं वासनां राम मिथ्यैवाहमिति स्थिताम् ।
त्यज पक्षीश्वरो व्योमगमनोत्क इवाण्डकम् ॥ २६
एषा हि मानसी शक्तिरिष्टानिष्टनिबन्धनी ।
अनयैव मुधा भ्रान्त्या स्वप्नवत्परिकल्पना ॥ २७
अविद्यैषा दुरन्तैषा दुःखायैषा विवर्धते ।
अपरिज्ञायमानैषा तनोतीदमसन्मयम् ॥ २८
एषा तुच्छवदाकाशं तुषारमलिनं यथा ।
परिपश्यति विभ्रान्ता स्वरूपस्य स्वभावतः ॥ २९
असदेवेदमारम्भमन्थरं सदिवोत्थितम् ।
कल्पितं जगदाभोगि दीर्घस्वप्न इवैतया ॥ ३०
भावनामात्र एवास्याः स्वरूपं कर्तृतां गतम् ।
जगन्नामाविलं चक्षुर्व्योम्नि बिम्बरुचामिव ॥ ३१

---

नानाऽनानात्वकलना भेदाभेदभ्रान्तिः । अस्मिन्सर्वस्मिन्बाधेन ब्रह्मतत्त्वे तन्मात्रपरिशेषे सतीत्यर्थः ॥ १० ॥ अच्छेद्याभेद्यात्मदर्शने देहच्छेदभेदादिप्रयुक्तदुःखस्यापि नावसरः किं पुनरन्यस्येत्याशयेनाह—**अनार्त** इति । आर्तिमति देहे तथा भाति ॥ ११ ॥ भस्त्रामापूरयतीति भस्त्रापूरो वायुः ॥ १२ ॥ प्रक्षते नष्टे । आमोदो गन्धः ॥ १३ ॥ उड्डीयते अस्मिन्नित्युड्डयनम् । अधिकरणे ल्युट् । आकाश उड्डयनं येषां तथाविधानामलीनां भ्रमराणां नः । 'उडुपनालीनाम्' इति पाठे आकाशस्थानां उडुपाश्चन्द्रशुक्रबृहस्पत्यादयस्तारा श्रेष्ठास्तल्लक्षणानां नालीनां पद्मानाम् रलयोरभेदादुडुपस्य चन्द्रस्य नारीणामश्विन्यादिसर्वताराणां च ॥ १४ ॥ १५ ॥ अभ्युपगतेऽपि संबन्धे अलेपके आत्मनि न तत्प्रयुक्तदुःखप्रसक्तिरित्याशयेनाह—**यथेति** । पयोदमरुतोर्मेघवाय्वोः ॥ १६ ॥ शरीरादिसर्वजगतो मनोमात्रत्वादपि सति मनसि न शरीरादिनाशप्रयुक्तः शोको युक्तः किं पुनरात्ममात्रत्वादित्याशयेनाह—**मन** इति । शरीरशब्दः स्वरूपवचनः । तत्र हेतुः—**आद्या शक्तिरिति** । यतो मनो जगत आद्या कारणीभूता शक्तिः, चिदात्मा तु मनसोऽपि अधि उपरि अतस्तन्नाशभ्रान्तिः सर्वथा न युक्तेत्यर्थः ॥ १७ ॥ आत्मनाशादिभ्रान्तेरेव सर्वशोकादिमूलत्वात्तां पुनः पुनर्वारयन्नाह—**योऽसावि**त्यादिना ॥ १८ ॥ १९ ॥ २० ॥ आत्मनो देहान्तरवस्थितिर्वस्तुतो नास्त्येव । अभ्युपगमेऽपि न देहनाशात्तन्नाशप्रसक्तिरित्याशयेनाह—**य** इति । क्रमो न्यायः । स्थितिरपि न्यायः । सा तादृश्येव ॥ २१ ॥ आद्यं कुण्डबदरन्यायं प्रकृते उपपादयति—**बदर**मिति । आत्मा जीवः गगनं वासनाकाशम् । चलति नश्यति सति । तथाच श्रुतिः—'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इति ॥ २२ ॥ द्वितीयमुपपादयति—**कुम्भे** इति । अकुम्भत्वं नाशम् ॥ २३ ॥ मरणं मृतिस्तल्लक्षणेन पटेन मुहुराच्छन्नो भवति । शठे वञ्चके अस्मिन्मनसि किं का परिदेवना अयुक्तेत्यर्थः ॥ २४ ॥ किं तर्हि मरणं तदाह—**देशे**ति । गृहादिदेशे चरमश्वासकाले परेषां दृष्ट्या आत्मनस्तिरोधानमात्रं मरणमित्यर्थः । नेह पश्यति कश्चनात्मनाशमिति शेषः ॥ २५ ॥ पक्षी संजातपक्षः पक्षिशिशुः । स्वपरिच्छेदकमण्डकं शिथिलमण्डमिव ॥ २६ ॥ इष्टानिष्टयोः रागद्वेषाभ्यां निबन्धनी अभिनिवेशबन्धनकरी ॥ २७ ॥ अविद्याविलासत्वादविद्या ॥ २८ ॥ तुषारैर्मलिनं धूसरितम् । तथा दर्शनं मनसः स्वभाव इत्याह—**स्वरूपस्ये**ति ॥ २९ ॥ ॥ ३० ॥ ननु मनोव्यापाराणां सर्वेषां प्रत्यक्षत्वाज्जगन्निर्मातृता कुतः सर्वैर्नानुभूयते तत्राह—**भावने**ति । अस्याः स्वरूपं जगदाकारभावनामात्रे एव कर्तृतां गतं न तदतिरिक्तनिर्माणे । मिथ्यार्थानां दर्शनातिरिक्तनिर्माणाप्रसिद्धेः । तदेव जगन्नाम प्रसिद्धम् । यथा आविलं तिमिरादिदुष्टं चक्षुर्व्योम्नि पिच्छकेशोण्ड्रकाद्याकाराणां सूर्यचन्द्रादिबिम्बरुचां विभावनामात्रेण कर्तृ-

लयमस्याः स्वरूपं त्वं नय राम विचारणात् ।
यथा हिमशिलायास्तु तपनाद्दिवसाधिपः ॥ ३२
हिमाभावार्थिनोऽर्कस्य स्वोदयेनेप्सितं यथा ।
सिद्ध्यत्येवं विचारेण मनोनाशार्थिनोऽर्थितम् ॥ ३३
अविद्याऽसंप्रबुद्धा हि वितताऩर्थदुर्गमा ।
नानेन्द्रजालकलनां शम्बरो हेम वर्षति ॥ ३४
स्वविनाशक्रियां चैतां मन एव करोत्यलम् ।
मनो ह्यात्मवधं नाम नाटकं परिनृत्यति ॥ ३५
आत्मानमीक्षते चेतः स्वविनाशाय केवलम् ।
नहि जानाति दुर्बुद्धिर्विनाशं प्रत्युपस्थितम् ॥ ३६
स्वयं संकल्पमात्रेण स्वविनाशदशामिदम् ।
मनः संसाधयत्याशु क्लेशो नात्रोपयुज्यते ॥ ३७
स्वसंकल्पविकल्पांशं विवेकोपहितं मनः ।
संत्यज्य रूपमाभोगि करोत्यात्मावबोधनम् ॥ ३८
महोदयो मनोनाशो महोच्छेदस्य तूदयः ।
मनोनाशे प्रयत्नं त्वं कुरु मा मनसो जवे ॥ ३९
अविरलसुखदुःखवृक्षखण्डे
विषमकृतान्तमहोरगे वनेऽस्मिन् ।
प्रभुरिदमखिले विवेकहीनं
सुभग मनो महदापदेकहेतुः ॥ ४०
इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे दे० मो० उपदेशकरणं नाम द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

## त्र्युत्तरशततमः सर्गः १०३

श्रीवसिष्ठ उवाच ।

परस्मादुत्थितं चेतस्तत्कल्लोल इवार्णवात् ।
स्फारतामेत्य भुवनं तनोतीदमितस्ततः ॥ १
ह्रस्वं दीर्घं करोत्याशु दीर्घं नयति खर्वताम् ।
स्वतां नयत्यन्यदलं स्वं तथैवान्यतामपि ॥ २
प्रादेशमात्रमपि यद्वस्तुभावनयैव तत् ।
स्वयं संपन्नयेवाशु करोत्यद्रीन्द्रभासुरम् ॥ ३
लब्धप्रतिष्ठं परमात्पदादुल्लसितं मनः ।
निमेषेणैव संसारान्करोति न करोति च ॥ ४
यदिदं दृश्यते किंचिज्जगत्स्थास्नु चरिष्णु च ।
सर्वं सर्वप्रकाराढ्यं चित्तादेतदुपागतम् ॥ ५
देशकालक्रियाद्रव्यशक्तिपर्याकुलीकृतम् ।
भावाद्भावान्तरं याति लोलत्वान्नटवन्मनः ॥ ६
सदसत्तां नयत्याशु सत्तां वा सन्नयत्यलम् ।
तादृशान्येव चादत्ते सुखदुःखानि भावितम् ॥ ७

तद्वदित्यर्थः । विभावनं तु प्रत्यक्षमेवेति भावः ॥ ३१ ॥ अतएव ह्यविचारद्वैतभावनामात्रसिद्धस्य विचारजन्यज्ञानमात्राल्लयसिद्धिरिति विचारः कार्य इत्याह—**लय**मिति । यथा दिवसाधिपः सूर्यस्तपनात्स्वातपाद्धिमशिलायाः स्वरूपं लयं नाशं नयति तद्वत् ॥ ३२ ॥ अर्थितमभिलषितो मनोनाशः ॥ ३३ ॥ एकस्मिन्मनसि नष्टेऽपि पुनरविद्यया मनआदिबन्धजन्मप्रसक्तिमाशङ्क्याह—**अविद्ये**ति । हि यस्मादविद्याकादम्बिनी असंप्रबुद्धा अविज्ञातात्मतत्त्वा यदा तदैव शम्बरोऽसुरविशेष इव नानेन्द्रजालकलनारूपमसदेव हेम वर्षति नतु संप्रबुद्धा, तदा निःस्वरूपत्वादित्यर्थः ॥ ३४ ॥ एवंच मन एव चिरं जगद्रूपेण नृत्यदन्ते विद्यात्मकपरिणामेन साविद्यस्वविनाशं करोतीति फलितमित्याह—**स्वविनाशक्रिया**मिति । आत्मवधं स्वसंहारं नाम नाटकं स्वरचितग्रन्थं परिलक्षीकृत्य नृत्यति ॥ ३५ ॥ ॥ ३६ ॥ स्वविनाशदशां मनोनाशोपायमन्विष्यतां विवेकिनामिदं मनोनाशनं मनः स्वयमेव संकल्पनमात्रेण आशु संसाधयति ॥ ३७ ॥ विवेकेन उपहितं संस्कृतं मनः प्राक्तनं **स्वसंकल्प**विकल्पांशं संत्यज्य आभोगि ब्रह्माकारविस्तारं आत्मावबोधनं स्वात्मसाक्षात्कारवृत्त्यात्मकरूपं स्वं परिणामं करोति ॥ ३८ ॥ महोदयः परमपुरुषार्थलाभः । महोच्छेदः सर्वदुःखोच्छेदः । जवे बहिर्व्यापारे ॥ ३९ ॥ उक्तार्थोपेक्षणे अनर्थापातं दर्शयन्नुपसंहरति—**अविरले**ति । अविरला निबिडाः सुखदुःखात्मका वृक्षखण्डा यस्मिन् । विषमः कृतान्तो मृत्युर्महोरगो यस्मिंस्तथाविधे । अखिले अनुच्छेद्ये अस्मिन् संसारलक्षणे असिपत्रवने इदं विवेकहीनं मन एव प्रभुर्दुरन्तदुःखहेतुरित्यर्थः ॥ ४० ॥ ४१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे उपदेशकरणं नाम द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

**अविवेकस्य मनसो या यात्रानर्थकारिता ।**
**मुमुक्षूणां विवेकाय सा सर्वात्र प्रपञ्च्यते ॥ १ ॥**

अनर्थार्थमेव परस्मान्मनस उत्पत्तिरिति दर्शयति—**परस्मा**दिति ॥ १ ॥ मनसो वस्तुस्वभावविरुद्धकल्पनसामर्थ्यं दर्शयति—**ह्रस्व**मित्यादिना । ह्रस्वं नेत्रसंनिहिताङ्गुल्यादि अतिविस्तृतसूर्यमण्डलायाच्छादकत्वकल्पनेन दीर्घं आशु करोति । दीर्घं सूर्यमण्डलादि खर्वतां ह्रस्वताम् । एवमात्मानात्मनोः स्वरूपविनिमयकल्पनमपि मन एव करोतीत्याह—**स्वता**मिति ॥ २ ॥ स्वयमात्मभावेन संपन्नयेव । भावनया कल्पनया ॥ ३ ॥ **कुतोऽस्ये**दृशं सामर्थ्यं तत्राह—**लब्धप्रतिष्ठ**मिति । ब्रह्मसत्तया विचित्रशक्त्युपबृंहितत्वेन लब्धसत्ताकमित्यर्थः ॥ ४ ॥ ५ ॥ **भावाद्भा**वान्तरं एकवस्त्वाकारादपरवस्त्वाकारं नाट्यशास्त्रप्रसिद्धं

यदाप्तं स्वयमादत्ते यथैव चञ्चलं मनः ।
हस्तपादादिसंघातस्तदा प्रयतते तथा ॥ ८
ततः सैव क्रिया चित्तसमाहितफलाफलम् ।
क्षणात्प्रयच्छति लता कालसिक्तेव तादृशम् ॥ ९
चित्रां क्रीडनकश्रेणीं यथा पङ्काद्गृहे शिशुः ।
करोत्येवं मनो राम विकल्पं कुरुते जगत् ॥ १०
मनःसर्वजनक्रीडानृजस्वालवेष्वतः ।
किमेतद्धि पदार्थेषु रूढं जगति कल्प्यते ॥ ११
करोत्यृतुकरः कालो यथा रूपान्यथा तरोः ।
चित्तमेवं पदार्थानामेषामेवान्यतामिव ॥ १२
मनोरथे तथा स्वप्ने संकल्पकलनासु च ।
गोष्पदं योजनव्यूहः स्वासु लीलासु चेतसः ॥ १३
कल्पं क्षणीकरोत्यन्तः क्षणं नयति कल्पताम् ।
मनस्तदायत्तमतो देशकालक्रमं विदुः ॥ १४
तीव्रमन्दत्वसंवेगाद्बहुत्वाल्पत्वभेदतः ।
विलम्बनेन च चिरं नतु शक्तिमशक्तितः ॥ १५
व्यामोहसंभ्रमानर्थदेशकालगमागमाः ।
चेतसः प्रभवन्त्येते पादपादिव पल्लवाः ॥ १६
जलमेव यथाम्भोधिरौष्ण्यमेव यथानलः ।
तथा विविधसंरम्भः संसारश्चित्तमेव वा ॥ १७
सकर्तृकर्मकरणं यदिदं चेत्यमागतम् ।
द्रष्टृदर्शनदृश्याढ्यं तत्सर्वं चित्तमेव च ॥ १८
चित्तं जगन्ति भुवनानि वनान्तराणि
संलक्ष्यते स्वयमुपागतमात्मभेदैः ।
केयूरमौलिकटकैश्च लसत्स्वरूपं
त्यक्त्वैव काञ्चनधियेव जनेन हेम ॥ १९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे चित्तमाहात्म्यं नाम त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

## चतुरुत्तरशततमः सर्गः १०४

श्रीवसिष्ठ उवाच ।
अत्र ते शृणु वक्ष्यामि वृत्तान्तमिममुत्तमम् ।
जागतीहेन्द्रजालश्रीश्चित्तायत्ता यथा स्थिता ॥ १
अस्त्यस्मिन्वसुधापीठे नानावनसमाकुलः ।
उत्तरापाण्डवो नाम स्फीतो जनपदो महान् ॥ २
नीरन्ध्रघनगम्भीरवनविश्रान्ततापसः ।
विद्याधरीकृतलतादोलोपवनपत्तनः ॥ ३
वातोद्भूताब्जकिञ्जल्कपुञ्जपिञ्जरपर्वतः ।
लसत्कुसुमसंभारवनमालावतंसकः ॥ ४
करञ्जमञ्जरीकुञ्जगुच्छपर्यन्तजङ्गलः ।

संचारिभावभेदं च ॥ ६ ॥ ७ ॥ चञ्चलं मनः आप्तं कर्मोपस्थापितं भोग्यं यदा यथा येनैव कल्पनाप्रकारेणानुकूलतया प्रतिकूलतया वा आदत्ते तदा हस्तपादादिसंघातस्तथा तदनुसारेणैव उपादाने हाने वा प्रवर्तत इति मनस एव सर्वव्यवहारस्वातन्त्र्यमित्यर्थः ॥ ८ ॥ सा भोग्यार्थोपस्थापिका क्रिया चित्तेन समाहितं कल्पितं फलाफलं सुखदुःखम् ॥९॥ पङ्कादार्द्रमृत्पिण्डात् ॥१०॥ मनःकल्पनामात्रे जगति न किंचिदपि रूपं वास्तवं संभवतीत्याह—**मन** इति । अतो हेतोर्मनसो याः सर्वजनात्मना क्रीडास्तत्रत्यत्नदेहादिलक्षणेषु पङ्कलेशेषु सर्वपदार्थेषु यद्रूपं रूढं सत्यं कल्प्यते एतत्किं हि स्यान्न किंचिदित्यर्थः ॥ ११ ॥ ऋतुकरो वसन्तादिविभागकारी । रूपाणामन्यथा अन्यताम् । 'पूरणगुण' इति निषेधेऽपि च्छान्दसत्वात्पूर्वोत्तरसाहचर्येण कृदव्ययस्यैव तत्र ग्रहणाद्वा षष्ठीसमासः ॥ १२ ॥ मनसश्चाघटितघटनाशक्तिः प्रसिद्धैवेति दर्शयति—**मनोरथे** इत्यादिना । योजनानां व्यूहः समूहोऽपि गोष्पदमिवाल्पमित्यर्थः ॥ १३ ॥ अतो देशकालक्रमं सर्वं तदायत्तं मनोधीनं विदुः सर्वेऽपीत्यर्थः ॥ १४ ॥ ननु यदि मनः सर्वनिर्माणसमर्थं तर्हि कथमिदानीमस्माकं सर्वसर्गाशक्तिस्तत्राह—**तीव्रे**ति । रजोगुणोत्कर्षे तीव्रता तमस उत्कर्षे तु मन्दतेति संवेगभेदात् आहारोपचयादुपचये बहुत्वमपचयेऽल्पत्वमिति भेदस्तत्तद्वस्तुसर्गानुकूलोपासनादिविलम्बनेन च प्राप्तसर्गाशक्तितो न मनसो वास्तवी सर्वसर्गशक्तिमपहातुं शक्नुम इत्यध्याहृत्य योज्यम् ॥ १५ ॥ अतएव व्यामोहादिसंभवोऽपीत्याह—**व्यामोहे**ति ॥ १६ ॥ कार्यस्य कारणानन्यत्वाच्चित्तमात्रमेव सर्वमित्याह—**जलमेवे**ति । वाशब्दः पादपूरणार्थः ॥ १७ ॥ चेत्यं भोक्तृभोग्यभोगरूपानर्थात्मकम् । तथाच नवविधोऽपि संसारश्चित्तमेवेत्यर्थः ॥१८॥ सर्वं चित्तमेवेति येनोपायेन संलक्ष्यते तं दर्शयन्नुपसंहरति—**चित्त**मिति । यथा काञ्चनतत्त्वपरीक्षकजनेन केयूरमौलिभूषणकटकैश्चादन्यैश्च रुचकाद्याकारैर्लसत्कल्पितनानास्वरूपं त्यक्त्वैव शुद्धकाञ्चनमात्रप्रणिहितधिया परीक्ष्यमाणं तत्त्वतो हेम लक्षयितुं शक्यते न केयूरादिरचनावैचित्र्यव्यामूढधिया तथा विवेकिनापि जगति तदन्तर्गतभुवनानि तदन्तर्गतवनान्तरादिसर्ववस्तूनि च आत्मभेदैः स्ववैचित्र्यैश्चित्तमेव स्वयमुपागतं चित्तमात्रमेव न चित्ताद्वस्त्वन्तरमिति तत्त्वं संलक्ष्यत इत्यर्थः ॥ १९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तमाहात्म्यं नाम त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

अत्रादौ लवणाख्याने देशराजसभास्थितिः ।
तत्रैन्द्रजालिकाश्वेक्षा विस्मयस्थितिरुच्यते ॥ १ ॥

वृत्तान्तमाख्यानम् ॥ १ ॥ २ ॥ नीरन्ध्रघनेषु अतएव गम्भीरेषु वनेषु विश्रान्तास्तापसा यस्य । अनेन व्याघ्रचोराद्युपप्लवाभाव उक्तः ॥३॥४॥ पर्यन्तजङ्गलानि ग्रामपर्यन्तारण्यानि ।

१ वातोद्भूत इति क्वचित्. २ भोक्तृ इति पदं क्वचिन्न पठ्यते.

खर्जूरान्तरितग्रामो घुंघुमध्वनिताम्बरः ॥ ५
एकपिङ्गशिलाश्रेणीशालिकेदारपिङ्गलः ।
नीलकण्ठारवोद्दामवनजङ्गलमण्डितः ॥ ६
सारसारवसंरम्भरणत्कनककाननः ।
तमालपाटलीनीलगिरिग्रामककुण्डलः ॥ ७
विचित्रविहगव्यूहविरावकृतकाकलिः ।
नदीपरिसरोन्निद्रपारिभद्रद्रुमारुणः ॥ ८
गायत्कलमकेदारदारिकाहृतमन्मथः ।
पुष्पफलचलद्वातव्याधूतकुसुमाम्बुदः ॥ ९
दरीगृहविनिष्क्रान्तसिद्धचारणवन्दिकम् ।
स्वर्गादिव समानीय लावण्यमभिनिर्मितः ॥ १०
गायत्किन्नरगन्धर्वकदलीखण्डमण्डपः ।
मन्दानिलरवोद्भूतः पुष्पोपवनपाण्डुरः ॥ ११
तत्रास्ति लवणो नाम राजा परमधार्मिकः ।
हरिश्चन्द्रकुलोद्भूतो भूमाविव दिवाकरः ॥ १२
यद्यशःकुसुमोत्तंसपाण्डुरस्कन्धमण्डलाः ।
तत्र शैला विराजन्ते हाराः प्रोद्धूलिता इव ॥ १३
कृपाणशकलोत्कृत्तनिःशेषारातिमण्डलः ।
अरातिलोकः प्राप्नोति यदनुस्मरणाज्ज्वरम् ॥ १४
यस्योदारसमारम्भमार्यलोकानुपालनम् ।
चरितं संस्मरिष्यन्ति हरेरिव चिरं जनाः ॥ १५
यस्याप्सरोभिरद्रीन्द्रमूर्धस्वमरसद्मसु ।
विकासिपुलकोल्लासं गीयन्ते गुणगीतयः ॥ १६
यस्य स्वःसुन्दरीगीता लोकपालचिरश्रुताः ।
विरिञ्चिहंसैर्ध्वन्यन्ते स्वभ्यासाद्गुणगीतयः ॥ १७
स्वप्नेष्वपि न सामान्या यस्योदारचमत्कृतिः ।
राम दृष्टा श्रुता वापि दैन्यदोषमयी क्रिया ॥ १८
जिह्मतां यो न जानाति न दृष्टा येन धृष्णुता ।
उदारता येन धृता ब्रह्मणेवाक्षमालिका ॥ १९
दिनाष्टभागमाकाशमागते दिवसाधिपे ।
स कदाचित्सभास्थाने सिंहासनगतोऽभवत् ॥ २०
सुखोपविष्टे तत्रास्मिन्राजनीन्दाविवाम्बरे ।
प्रविशन्तीषु सामन्तसेनासु च ससंभ्रमम् ॥ २१
गायन्तीष्वथ कान्तासु सूपविष्टेषु राजसु ।
मनो हरति साह्लादे वीणावंशकलारवे ॥ २२
चारुचामरहस्तासु सविलासासु राजनि ।
देवासुरगुरुप्रख्ये विश्रान्ते मन्त्रिमण्डले ॥ २३
प्रस्तुतेषु प्रविष्टेषु राजकार्येषु मन्त्रिभिः ।
प्रोक्तासु देशवार्तासु निपुणैश्चारुमन्त्रिभिः ॥ २४
इतिहासमये पुण्ये वाच्यमाने च पुस्तके ।
पठत्सु च स्तुतीः पुण्याः पुरः प्रह्वेषु वन्दिषु ॥ २५
सभां विवेश साटोपः कश्चित्तामैन्द्रजालिकः ।
वर्षेणाहितसंरम्भो वसुधामिव वारिदः ॥ २६
स ननाम महीपालं शिखरोदारकन्धरम् ।
पादोपान्तगतः कान्तं शैलं फलतरुर्यथा ॥ २७
सच्छायस्योन्नतांसस्य फलिनः पुष्पभासिनः ।
स विवेश पुरो राज्ञस्तरोरग्रे कपिर्यथा ॥ २८
चपलो लम्पटोऽर्थानामामोदसुखमारुतम् ।
उवाचोत्कन्धरं भूपं सपद्मसिव षट्पदः ॥ २९
विलोकय विभो तावदेकामिह खरोलिकाम् ।
पीठस्थ एव साश्चर्यां व्योम्नि चन्द्र इवावनिम् ॥ ३०
इत्युक्त्वा पिच्छिका तेन भ्रामिता भ्रमदायिनी ।
नानाविरचनाबीजं मायेव परमात्मनः ॥ ३१
तां ददर्श महीपालस्तेजोरेणुविराजिताम् ।
शक्रः सुरविमानस्थः स्वकार्मुकलतामिव ॥ ३२

---

खर्जूरवृक्षैरन्तरिता अन्तर्हिता ग्रामा यत्र ॥ ५ ॥ एकपिङ्गशिला उत्कृष्टपिङ्गलवर्णा मणिविशेषास्तच्छ्रेणिसदृशैः पक्वशालिकेदारैः पिङ्गलः ॥ ६ ॥ ७ ॥ उन्निद्राः कुसुमिताः पारिभद्रतरवो निम्बास्तैररुणः ॥ ८ ॥ पुष्पेषु फलेषु च शिथिलितवृन्तानां पातनाय चलता वातेन व्याधूताः कुसुमलक्षणा अम्बुदा यत्र ॥ ९ ॥ मेरुदरीगृहेभ्यो विनिष्क्रान्तं सिद्धचारणवन्दिकं यस्य तथाविधं स्वर्गलावण्यं स्वर्गाद्भुवि समानीय निर्मित इवेत्यर्थः ॥ १० ॥ मन्दैरनिलरवैरुद्भूत उत्कृष्टतया स्थितः । पुष्पयुक्तैरुपवनैः पाण्डुरः । एतादृश उत्तरापाण्डवो नाम जनपदोऽस्तीति प्राक्तनेन संबन्धः ॥११॥ भूमाववतीर्णो दिवाकर इव ॥ १२ ॥ कुसुमलक्षणैरुत्तंसैः कुसुमानामुत्तंसै रजोभिर्वा ॥१३॥ कृपाणैः शकलानि यथा स्युस्तथा उत्कृत्तान्यत एव निःशेषाणि प्रधानारातिमण्डलानि यस्य स तथाभूतोऽरातीनां लोकः सेवकजनः ॥ १४ ॥ आर्यलोकानां धार्मिकजनानामनुपालनं रक्षकं चरितम् ॥ १५ ॥ १६ ॥ स्वःसुन्दरीभिरप्सरोभिर्गीता गुणगीतिप्रबन्धा विरिञ्चेर्ब्रह्मणो हंसैर्ध्वन्यन्ते । ध्वनिभिरनुक्रियन्त इति यावत् ॥१७॥ सामान्या इतरनृपसाधारणी ॥१८॥ जिह्मतां कौटिल्यम् । धृष्णुता अविनीतता । 'गृध्नुता' इति पाठे परस्वाभिलाषिता ॥ १९ ॥ अष्टभागमष्टमभागम् । मुहूर्तद्वयमिति यावत् ॥ २० ॥ २१ ॥ राजसु सामन्तेषु ॥ २२ ॥ सविलासासु सविलासं वीजयतीषु । देवासुरगुरू गुरुशुक्रौ तत्प्रख्ये ॥ २३ ॥ २४ ॥ २५ ॥ साटोपः ऐन्द्रजालिकोचितवेषालंकारबिरुदाडम्बरसंपन्नः । भाविना वर्षेण आहितो विद्युद्विस्फूर्जितादिसंरम्भो यस्य ॥ २६ ॥ शिखरेण किरीटकूटेन शृङ्गैश्चोदारा कन्धरा कण्ठोऽधित्यका च यस्य । फलभारयुक्तस्तरुः फलतरुः ॥ २७ ॥ कपिरित्ययुक्तदुश्चेष्टाकारिण उचितो दृष्टान्तः ॥ २८ ॥ २९ ॥ खरोलिकां मिथ्याकौतुकक्रीडाम् ॥ ३० ॥ पिच्छिका मयूरबर्हमुष्टिः ॥ ३१ ॥ तेजोरेणुभिर्नानावर्णकान्तैः

सभां सैन्धवसामन्तो विवेशासिन्क्षणे तदा ।
तारापरिकरापूर्णां व्योमवीथीमिवाम्बुदः ॥ ३३
तं चैवानुजगामाश्वः सौम्यः परमवेगवान् ।
देवलोकोन्मुखं तुष्टं शक्रमुच्चैःश्रवा इव ॥ ३४
स तमश्वमुपादाय पार्थिवं समुवाच ह ।
सोच्चैःश्रवा इव क्षीरसागरो मरुतां पतिम् ॥ ३५
इदमुच्चैःश्रवःप्रख्यं हयरत्नं महीपते ।
जवोड्डयनशीलेन मूर्तिमानिव मारुतः ॥ ३६
अश्वोऽयमस्मत्प्रभुणा प्रभो संप्रहितस्त्वयि ।
राजते हि पदार्थश्रीर्महतामर्पणाच्छुभा ॥ ३७
इत्युक्तवति तस्मिंस्तु प्रत्युवाचैन्द्रजालिकः ।
जलदस्तनिते शान्ते चातकोऽम्बुधरं यथा ॥ ३८
सदश्वमेनमारुह्य भुवनं विहर प्रभो ।
स्वप्रतापाहितानल्पशोभामुर्वीं रविर्यथा ॥ ३९
अश्वमालोकयामास तेनोक्त इति पार्थिवः ।
निर्घातस्तनितं मेघं मयूर इव सूत्करः ॥ ४०
अथानिमेषया दृष्ट्या राजा चित्रोपमाकृतिः ।
बभूवालोकयन्नश्वं लिपिकर्मार्पितोपमः ॥ ४१
क्षणमालोक्य पीठस्थस्तस्थौ संस्थगितेक्षणः ।
दृष्ट्वाऽऽक्षुब्धः समुद्रोऽद्रिमीनकैः करवो यथा ॥ ४२
तस्थौ मुहूर्तयुग्मं स ध्यानासक्त इवात्मनि ।
वीतरागो मुनिः क्षुब्धः परानन्द इव स्थितः ॥ ४३
बोधितः केनचिन्नासौ स्वप्रतापजितोर्जितः ।
धिया कामप्ययं भूयश्चिन्तां चिन्तयतीति च ॥ ४४
बभूवुः केवलं तत्र निःस्पन्दसितचामराः ।
चामरिण्यो हि शर्वर्यः स्तम्भितेन्दुकरा इव ॥ ४५
विरेजुर्विस्मयापूर्णा निःस्पन्दास्ते सभासदः ।
निःस्पन्दकिञ्जल्कदलाः पद्माः पङ्ककृता इव ॥ ४६
प्रशशाम सभास्थाने जनकोलाहलः शनैः ।
प्रशान्तप्रावृषि व्योमन्याम्भोदमिव गर्जितम् ॥ ४७
संदेहसागरे मग्ना जग्मुश्चिन्तां सुमन्त्रिणः ।
विषीदति गदापाणावसुराजाविवामराः ॥ ४८
विततविस्मितजिह्मितया तथा
जनतया भयमोहविषण्णया ।
स्तिमितचक्षुषि भूमिपतौ स्थिते
मुकुलिताब्जवनस्य धृता द्युतिः ॥ ४९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे इन्द्रजालोपाख्याने नृपव्यामोहो नाम चतुरुत्तरशततमः सर्गः ॥ १०४॥

---

## पञ्चोत्तरशततमः सर्गः १०५

श्रीवसिष्ठ उवाच ।
मुहूर्तद्वितयेनाथ बोधमाप महीपतिः ।
प्रावृषेण्याम्बुनिर्मुक्तमम्भोरुहमिवोत्तमम् ॥ १
आसनात्साङ्गदोत्तंसः प्रबुद्धोऽसावकम्पयत् ।
सवनाभोगश्टङ्गाग्र्यो भूकम्प इव पर्वतः ॥ २
बभूवाथ प्रबुद्धोऽसावासनोपरि कम्पितः ।
विक्षुब्ध इव पातालवारणे शङ्कराचलः ॥ ३
पतन्तं धारयामासुस्तं पुरोगा नृपं भुजैः ।
मेरुं प्रलयविक्षुब्धं कुलशैलास्तटैरिव ॥ ४
पुरोगैर्धार्यमाणोऽसौ पर्याकुलमतिर्नृपः ।
वीचिविक्षोभितस्येन्दोर्बभार वनमाः श्रियः ॥ ५

पटलैः ॥ ३२ ॥ सैन्धवसामन्तोऽश्वपालकः ॥ ३३ ॥ ३४ ॥ सः अश्वपालकः ॥ ३५ ॥ हयरत्नं पश्येति शेषः । जवेल्याद्युत्तरान्वयि ॥ ३६ ॥ महतामर्पणात् महद्भ्यो योग्येभ्यो दानात् ॥ ३७ ॥ राजानं प्रति उवाच ॥ ३८ ॥ स्वस्य प्रतापेन शौर्येणातपेन च आहितानल्पा शोभा श्रीः कान्तिश्च यस्यां ताम् ॥ ३९ ॥ इति तेनोक्तः पार्थिवः । सुष्ठु उत् ऊर्ध्वं करोति शिर इति सूत्करो ध्वनिविशेषकारी वा ॥ ४० ॥ लिपिकर्मार्पितश्चित्रन्यस्तस्तदुपमो निश्चलः । एतदादिः सभाजनप्रतीतिसिद्धार्थानुवादः । राजप्रतीतिदिष्टं तु अग्रे राजैव वक्ष्यति ॥ ४१ ॥ यथा केन जलेन रौति ध्वनतीति करवः समुद्रः पानोद्युक्तागस्त्यदृष्ट्या आक्षुब्धः सन् स्वान्तर्गतैरद्रिमीनकैः सह संस्थगितो भयात्संस्तम्भितस्तस्थौ तद्वत् । 'आक्षुब्धसमुद्राद्रिमीनकै'रिति समस्तपाठे तु करवः कस्य जलस्य रवो यथा संस्थगित इति व्याख्येयम् ॥ ४२ ॥ क्षुब्धो बाह्यदृष्टेरन्तः संचलितः । बाह्यदृष्टिशून्य इति यावत् ॥ ४३ ॥ स्वप्रतापेन जिता ऊर्जिता बलवन्तो येन । हेतुगर्भं विशेषणम् ॥ ४४ ॥ ४५ ॥ पङ्ककृता मृन्मयाः ॥ ४६ ॥ अम्भोदस्येदमाम्भोदम् ॥ ४७ ॥ असुरैः सह आजिः संग्रामस्तस्मिन् ॥ ४८ ॥ वितते विस्तृतेन विस्मयेन जिह्मितया कुटिलितया। निरुत्साहीकृतयेति यावत् । तया आस्थानजनतया जनसमूहेन ॥ ४९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे नृपव्यामोहो नाम चतुरुत्तरशततमः सर्गः १०४

विमोहं स्वस्थहृदयं नृपं प्रति सभासदाम् ।
मोहहेतोः परिप्रश्नात्तदुक्त्यारम्भ ईर्यते ॥ १ ॥

प्रावृषि भवेन प्रावृषेण्येनाम्बुना ॥ १ ॥ अकम्पयत् अर्थात्स्वदेहमिति गम्यते ॥ २ ॥ विक्षुब्धे संचलिते पातालवारणे भूविधारके दिग्गजे । शंकराचलः कैलासः ॥ ३ ॥ कुलशैला मन्दरादयो विष्टम्भपर्वताः ॥ ४ ॥ इन्दोः लक्षणया इन्दूदयोद्रिक्तस्यार्णवस्य वनं जलं मिन्वन्ति उपमिन्वन्तीति वनमाः श्रियः शोभा बभार । 'वपुषा श्रियः' इति पाठः स्पष्टः ॥ ५ ॥

१ अत्र योग्येभ्यो महद्भ्यो इति विपर्यस्तं क्वचित्पठ्यते.

कोऽयं प्रदेशः कस्येयं सभेति स नृपः शनैः ।
दध्वान मज्जदम्भोजकोशस्थ इव षट्पदः ॥ ६

अथोवाच सभा देव किमेतदिति सादरम् ।
रणन्मधुकरी भानुं दृष्टराहुमिवाब्जिनी ॥ ७

अथैनं परिपप्रच्छुः पुरोगा मन्त्रिणस्तथा ।
प्रलयोल्लाससंत्रस्तं मार्कण्डेयमिवामराः ॥ ८

त्वयीत्थं संस्थिते देव वयमत्यन्तमाकुलाः ।
अभेद्यमपि भिन्दन्ति निर्निमित्तं भ्रमा मनः ॥ ९

आपातरमणीयेषु पर्यन्तविरसेषु च ।
भोगेष्विव विकल्पेषु केषु ते लुलितं मनः ॥ १०

सततोदारवृत्तासु कथासु परिशीतलम् ।
मनस्ते निर्मलं कस्मात्संभ्रमेषु निमज्जति ॥ ११

तुच्छालम्बनमालूनविशीर्णं लोकवृत्तिषु ।
मनो मोहमुपादत्ते न महत्त्वविजृम्भितम् ॥ १२

सातत्येन हि यैवास्य मनसो वृत्तिरुत्थिता ।
शरीरमदमत्तासु तामेवैतद्विधावति ॥ १३

अतुच्छालम्बनं धीरं प्रबुद्धं गुणहारि च ।
तवापि हि मनश्चित्रमालूनमिव लक्ष्यते ॥ १४

अनभ्यस्तविवेकं हि देशकालवशानुगम् ।
मन्त्रौषधिवशं याति मनो नोदारवृत्तिमत् ॥ १५

नित्यमात्तविवेकस्य कथमालूनशीर्णता ।
धुनोति विततं चेतो वात्येव विबुधाचलम् ॥ १६

इति जातानुगीर्णस्य भूपतेः कान्तिराननम् ।
भूषयामास शीतांशुं मासान्त इव पूर्णता ॥ १७

रराज राजा सौम्यास्यमुन्मीलितविलोचनः ।
गते हिमर्तावुल्लासिपुष्पौघ इव माधवः ॥ १८

अथातिसंभ्रमाश्चर्यखिन्नास्मृतिमुखो बभौ ।
आसन्नमृत्युरालोक्य राहुमिन्दुरिवाम्बरे ॥ १९

ऐन्द्रजालिकमालोक्य प्रोवाचाथ हसन्निव ।
बभ्रुं हिंसात्मकं दृष्ट्वा सर्परूपीव तक्षकः ॥ २०

जाल्म जालजटालेन किमेतद्भवता कृतम् ।
येनास्पन्दप्रसन्नोऽब्धिः क्षणादेत्य प्रसन्नताम् ॥ २१

चित्रं चित्रा हि देवस्य पदार्थशतशक्तयः ।
सुशक्तमपि मे चित्तं याभिर्मोहे निवेशितम् ॥ २२

क्व वयं लोकपर्यायकृतान्तपदवेदिनः ।
क्व मनोमोहदायिन्यो विततः प्रकृतापदः ॥ २३

अभ्यभ्यस्तमहाज्ञानं मनस्तिष्ठति देहके ।
कदाचिन्मोहमादत्ते क्षणं मतिमतामपि ॥ २४

इदमाश्चर्यमाख्यानं श्रूयतां रे सभासदः ।
मम शाम्बरिकेणेह यन्मुहूर्तं प्रदर्शितम् ॥ २५

दृष्टवानहमेतस्मिन्बह्वीः कार्यदशाश्चलाः ।
मुहूर्तं प्रार्थितोऽध्वस्तशक्रसृष्टिरिवाब्जजः ॥ २६

इत्युक्त्वोन्मुखनेत्रेषु सभ्येषु स हसन्निव ।
राजा वर्णयितुं चित्रं वृत्तान्तमुपचक्रमे ॥ २७

---

दध्वान अस्फुटमुक्तवान् ॥ ६ ॥ सभाशब्देन जना उच्यन्ते । अब्जिन्या भानुं प्रति वक्तृत्वमौत्प्रेक्षिकमत्रोपमानम् । रणन्मधुकरीत्युत्प्रेक्षोपपादकं विशेषणम् ॥ ७ ॥ ८ ॥ भ्रमा भ्रान्तिप्रत्यया निर्निमित्तं विनैव बाह्यं कारणं मनो भिन्दन्ति क्षोभयन्ति भयविषादादिभिरित्यर्थः ॥ ९ ॥ भोगेषु रागादिना पृथग्जनानामिव ते केन हेतुना मनो लुलितं । व्यामूढमित्यर्थः ॥ १० ॥ कथासु विवेकचर्चासु परिशीलनेन शीतलम् । संभ्रमेषु भयेषु ॥ ११ ॥ कीदृशं तर्हि मनो मोहयोग्यं तत्राहुः—**तुच्छालम्बन**मिति । यतस्तुच्छविषयालम्बनमतो विषये आलूने आलूनमिव विशीर्णे विशीर्णमिव लोकवृत्तिषु मोहमुपादत्त इत्यर्थः । महत्त्वविजृम्भितं विवेकपरिष्कृतम् ॥ १२ ॥ शरीरमदो देहाभिमानस्तेन मत्तासु अस्पृष्टविवेकासु दशासु अस्य मनसो यैव स्त्रीपुत्रादिविषये वृत्तिरुत्थिता तामेव विधावति ॥ १३ ॥ तव मनस्तु न तथेत्याहुः—**अतुच्छे**ति ॥१४॥१५॥ विततं विवेकविस्तृतम् । विबुधाचलं मेरुम् ॥ १६ ॥ जातेन स्वजनसमूहेन अनुगीर्णस्य अनुकूलगीर्भिराश्वासितस्य । मासान्ते पौर्णमास्याम् ॥ १७ ॥ हिमर्तौ शिशिरे । माधवो वसन्तः ॥१८॥ अथासन्नमृत्युः संनिहितास्तमय इन्दुः राहुमिवैन्द्रजालिकमालोक्य अतिसंभ्रमेण भयेन आश्चर्येण च खिन्नं आस्मृत्या आध्यानेन पूर्वापरसर्ववृत्तान्तप्रतिसंधानेनोपलक्षितं मुखं यस्य तथाविधो बभौ । आसन्नो मृत्युर्ग्रसनं यस्य ॥ १९ ॥ बभ्रुं नकुलम् । सर्परूपी क्षुद्रसर्पवेषप्रच्छन्नस्तक्षको नागराजः ॥ २० ॥ हे जाल्म असमीक्ष्यकारिन्, जालेन मायावागुरया जटालेनेव । अब्धिपदेन तत्सदृशं स्वमनो गौण्योच्यते ॥ २१ ॥ चित्रमित्यस्य निवेशितमित्यत्रान्वयः ॥ २२ ॥ चित्रतामेवाभिनयन्नाह—क्वेति । लोकपर्याया लोकप्रसिद्धसर्वव्यवहारास्तेषां कृतान्तपदस्य सिद्धान्तरहस्यस्य वेदिनो बोद्धारः । प्रकृताः सांप्रतमनुभूता आपदः ॥ २३ ॥ अभ्यस्तमहाज्ञानमपि मनः कदाचिद्देहके तिष्ठति । विद्यमानेऽपि स्वप्नेन्द्रजालानां मोहं आदत्ते ॥ २४ ॥ शम्बरस्य माया शाम्बरी सास्यास्तीति शाम्बरिकस्तेन ॥ २५ ॥ अध्वस्तशक्रसृष्टिरिति च्छेदः । पुरा किल बलिः क्वचिदसहायं शक्रमासाद्य बलेर्निगृह्याहर्तुकामः शक्रेण मायया स्वसैन्यं सृष्ट्वा बलिं मायाबन्धेन मोहयामास । तदा बलिना स्वबन्धनमोक्षणाय स्तुत्या प्रसादितो ब्रह्मा तत्रागत्य शाक्रीं सृष्टिं ध्वंसयितुं प्रवृत्तः शक्रप्रार्थनया अध्वस्तशक्रसृष्टिर्मुहूर्तमात्रं तन्मायाकौतुकं

राजोवाच ।

इह विविधपदार्थसंकुलायां
हृदनदपत्तनपर्वताकुलायाम् ।
कुलशिखरिसमुद्रसंकरायां
भुवि विभवावलितोऽस्त्ययं प्रदेशः ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ० इन्द्रजालोपाख्याने राजावबोधो नाम पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

---

## षडुत्तरशततमः सर्गः १०६

राजोवाच ।

अस्ति तावदयं देशो नानावननदीयुतः ।
वसुधामण्डलस्यास्य सहोदर इवानुजः ॥ १
अस्मिंश्चायमहं राजा पौराभिमतवृत्तिमान् ।
इन्द्रः स्वर्ग इवास्यां तु सभायां मध्यसंस्थितः ॥ २
यावदभ्यागतो दूरात्कश्चिच्छाम्बरिकस्त्वयम् ।
रसातलादभ्युदितो मायी मय इव स्वयम् ॥ ३
अनेन भ्रमिताद्येह पिच्छिका तेजसोर्जिता ।
कल्पान्तपवनाभ्रेण शक्रचापलता यथा ॥ ४
आलोक्यैतामहं लोलामस्याश्वस्य पुरः स्थितः ।
पृष्ठमारूढवानेक आत्मना भ्रान्तमानसः ॥ ५
ततोऽद्रिं प्रलयक्षुब्धं पुष्करावर्तको यथा ।
तथा चलन्तं चलितः स्वश्वमारूढवानहम् ॥ ६
गन्तुं प्रवृत्तो मृगयामेकोऽहमतिरंहसा ।
उर्वरामिव निर्भर्तुः कल्लोलः प्रलयाम्बुधेः ॥ ७
तेनानिलविलोलेन दूरं नीतोऽस्मि वाजिना ।
योगाभ्यासजडेनाशो मुग्धस्य मनसा यथा ॥ ८
अकिंचनमनःशून्यं स्त्रीचित्तमिव निर्भरम् ।
ततः प्रलयनिर्दग्धजगदास्पदभीषणम् ॥ ९
निष्पक्षिक्षारनीहारं निर्वृक्षमजलं महत् ।
संप्राप्तोऽहमपर्यन्तमरण्यं श्रान्तवाहनः ॥ १०
तद्द्वितीयमिवाकाशं तथाष्टममिवाम्बुधिम् ।
पञ्चमं सागरमिव संशुष्कं शून्यकोटरम् ॥ ११
ज्ञस्येव विततं चेतो मूर्खस्येव रुषाऽजवम् ।
अदृष्टजनसंसर्गमजाततृणपल्लवम् ॥ १२
अरण्यमिदमासाद्य मतिर्मे खेदमागता ।
ललनेवैत्य दारिद्र्यं निरन्नफलबान्धवम् ॥ १३
कचन्मरुमरीच्यम्बुपुरःप्लुतककुम्मुखम् ।
आसूर्यास्तं दिनं तत्र प्रक्रान्तं सीदता मया ॥ १४
तदरण्यं मयातीतमतिकृच्छ्रेण खेदिना ।
विवेकिनेव संसारो मध्यशून्यतताकृति ॥ १५
यदेतेनातिवाह्याहं प्राप्तवाञ्जङ्गलं क्रमात् ।
अस्ताद्रिसानुं खिन्नाश्वः शून्यभ्रान्त्येव भास्करः ॥ १६
जम्बूकदम्बप्रायेषु कलालापाः पतत्रिणः ।
यत्र स्फुरन्ति खण्डेषु पान्थानामिव बान्धवाः ॥ १७
यत्र शष्पशिखाश्रेण्यो दृश्यन्ते विरलाः स्थले ।
कदर्थलक्ष्म्या जिह्मस्य हृदीवानन्दवृत्तयः ॥ १८
पूर्वादरण्यादरसात्तद्धि किंचित्सुखावहम् ।

---

यथा दृष्टवांस्तद्वदित्यर्थः ॥ २६ ॥ २७ ॥ वक्ष्यमाणोपोद्घातेन प्रथमं सर्वजनप्रसिद्धभूम्यन्तर्गतस्वदेशसत्तामनुवदति–इहेति । पर्वतग्रहणेन प्राप्तानामपि कुलशिखरिणां पुनर्ग्रहणं ब्राह्मणपरिव्राजकन्यायेन श्रैष्ठ्यार्थम् । संकीर्यत इति संकरा । 'कॄञः शच' इति कर्मणि बाहुलकात् शः । 'संकटायाम्' इति पाठे तु दुर्गमायामित्यर्थः ॥ २८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राजावबोधो नाम पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

इहाश्वेनापनीतस्य वने चण्डालकन्यया ।
समयात्पक्कणं नीत्वा विवाहः स्वस्य वर्ण्यते ॥ १ ॥

समानार्थः सहशब्दः । सहोदरः समानोदरोद्भव इवेत्यर्थः ॥ १ ॥ २ ॥ यावदिति प्राकाश्ये निपातो नतु वतुबन्तः । प्रत्यक्षमभ्यागत इत्यर्थः ॥ ३ ॥ भ्रमिता । भ्रमेर्णिचि मितां ह्रस्वः ॥ ४ ॥ एकोऽसहायः ॥ ५ ॥ प्रलयक्षुब्धं उत्पातवशादेव चलन्तमद्रिमारूढः पुष्करावर्तको मेघराजो यथा चलितस्तथाहं चलित इत्यन्वयः ॥ ६ ॥ उर्वरां सर्वसस्याढ्यभूमिम् । निर्भर्तुर्निर्भरवतः प्रवृद्धस्येति यावत् । कल्लोलो बृहत्तरङ्गः ॥ ७ ॥ 'मुग्धः स्वमनसा' इति पाठः स्पष्टः । 'मुग्धस्य मनसा' इति पाठे मुग्धस्यापातरमणीयस्य विषयजातस्य भोगाभ्यासेन जडेनेत्यर्थः । असमर्थसमासश्छान्दसः ॥ ८ ॥ अकिंचनस्य यतेर्मन इव शून्यं निर्विषयम् । निर्भरं लघु विषमं वा । जगदास्पदं ब्रह्माण्डम् ॥ ९ ॥ क्षारनीहारं दुःसहशीतम् ॥ १० ॥ स्वादूदकार्णवात्परतोऽष्टममम्बुधिं प्राग्वर्णितभूपरिखागर्तमिव । जम्बूद्वीपान्तश्चतुर्दिशं चतुःसागरप्रसिद्धेस्तत्र पञ्चमं सागरमिव ॥ ११ ॥ ज्ञस्य तत्त्वविदो ब्रह्माकारं चेत इव विततमपरिच्छेद्यम् । मूर्खस्य रुषा क्रोध इव अजवं दुर्गमं विषममिति यावत् ॥ १२ ॥ दारिद्र्यमेत्य प्राप्य स्थिता ललनेव स्थितमिति शेषः । सीदता मयेति व्यवहितेन वान्वयः ॥ १३ ॥ मरुमरीच्यम्बुभिः पुरोभागे प्लुतानि आप्लावितानि ककुम्मुखानि यत्र ॥ १४ ॥ ॥ १५ ॥ एतेनाश्वेन । शून्यभ्रान्त्या आकाशगमनेन । प्राप्तवानित्यस्य यत्र स्फुरन्ति तत्रेति परेण संबन्धः ॥ १६ ॥ ॥ १७ ॥ कदर्थलक्ष्म्या अधर्मार्जितधनेन । जिह्मस्य कुटिल-

---

१ टाबन्तमिदं रुषा इति । २ विषयं इति पाठः.

अत्यन्तदुःखान्मरणाद्वरं व्याधिर्हि जन्तुषु ॥ १९
तत्र जम्बीरखण्डस्य तलं संप्राप्तवानहम् ।
मार्कण्डेय इवागेन्द्रमेकार्णवविहारतः ॥ २०
आलम्बिता मया तत्र स्कन्धसंसर्गिणी लता ।
नीला जलदमालेव तापतप्तेन भूभृता ॥ २१
मयि प्रलम्बमानेऽस्यां प्रयातः स तुरङ्गमः ।
गङ्गावलम्बिनि नरे यथा दुष्कृतसंचयः ॥ २२
चिरं दीर्घाध्वगः खिन्नस्तत्र विश्रान्तवानहम् ।
भानुरस्ताचलोत्सङ्गे तले कल्पतरोरिव ॥ २३
यावत्समस्तसंसारव्यवहारभरैः समम् ।
रविर्विश्रमणायेव निविष्टोऽस्ताचलाङ्गणे ॥ २४
शनैः श्यासिकया ग्रस्ते समस्ते भुवनोदरे ।
रात्रिसंव्यवहारेषु संप्रवृत्तेषु जङ्गले ॥ २५
अहं तरुतृणे तस्मिन्पेलवे खण्डकोटरे ।
निलीनश्चिरलीनास्यः स्वनीडे विहगो यथा ॥ २६
विषदष्टविवेकस्य कीनाशस्य गलत्स्मृतेः ।
विक्रीतस्येव दीनस्य मग्नस्येवान्धकूपके ॥ २७
तत्र कल्पसमा रात्रिर्मोहमग्नस्य मे गता ।
एकार्णवोह्यमानस्य मार्कण्डेयमुनेरिव ॥ २८
न स्नातवान्नार्चितवान्न तदा भुक्तवानहम् ।
केवलं मे गता रात्रिः सापदां धुरि तिष्ठतः ॥ २९
विनिद्रस्य विधैर्यस्य स्फुरतः सह पल्लवैः ।
समं दुष्टातिदैर्घ्येण सा व्यतीयाय शर्वरी ॥ ३०
ततस्तिमिरलेखासु सह तारेन्दुकैरवैः ।
मयीवापाद्यमानासु म्लानतामलमानने ॥ ३१
शाम्यन्तीषु च वेतालक्ष्वेडासु जवजङ्गले ।
सहशीतार्तिमद्दन्तपङ्क्तिटाङ्कारसीत्कृतैः ॥ ३२
मामेवार्तिविनिर्मग्नं हसन्तीमिव दृष्टवान् ।
अहं पूर्वां दिशं प्राप्तमधुपानारुणामिव ॥ ३३
क्षणादज्ञ इव ज्ञानं दरिद्र इव काञ्चनम् ।
दृष्टवानहमर्कं खे वारणारोहणोन्मुखम् ॥ ३४
उत्थायास्तरणं वस्त्रं तत्तदास्फोटितं मया ।
हस्तिचर्मेहरेणेव संध्यानृत्यानुरागिणा ॥ ३५
प्रवृत्तस्तामहं स्फारां विहर्तुं जङ्गलस्थलीम् ।
कालो जगत्कुटीं कल्पदग्धभूतगणामिव ॥ ३६
न किंचिद्दृश्यते तत्र भूतं जरठजङ्गले ।
अभिजातो गुणलवो यथा मूर्खशरीरके ॥ ३७
केवलं विगताशङ्कं खण्डभ्रमणचञ्चलम् ।
चीचीकूचीतिवचना विहरन्ति विहङ्गमाः ॥ ३८
अथाष्टभागमापन्ने व्योम्नो दिवसनायके ।
शुष्कावश्यायलेशासु स्नातास्विव लतासु च ॥ ३९
दृष्टा मया प्रभ्रमता दारिकौदनधारिणी ।
गृहीतामृतसत्कुम्भा दानवेनेव माधवी ॥ ४०
तरत्तारकनेत्रां तां श्यामामधवलाम्बराम् ।
अहमभ्यागतस्तत्र शर्वरीमिव चन्द्रमाः ॥ ४१
मह्यमोदनमाश्वेतद्बाले बलवदापदि ।
देहिदीनार्तिहरणात्स्फारतां यान्ति संपदः ॥ ४२
क्षुदन्तर्महतीयं मे बाले वृद्धिमुपेयुषी ।
कृष्णसर्पा प्रसूतेव कोटरस्था जरद्द्रुमे ॥ ४३
याच्ञयापि तया मह्यमित्थं दत्तं न किंचन ।
यत्नप्रार्थनया लक्ष्म्या यथा दुष्कृतिने धनम् ॥ ४४
केवलं चिरकालेन मयात्यन्तानुगामिना ।

जनस्य ॥ १८ ॥ १९ ॥ अगेन्द्रं वृक्षश्रेष्ठं विष्णवधिष्ठितवटम् ॥ २० ॥ आलम्बिता अश्वपरित्यागार्थमवलम्बिता ॥ २१ ॥ ॥ २२ ॥ २३ ॥ यावत्समस्तसंसारव्यवहारैः सह रविरस्ताचलोपलक्षिते उदयाद्यन्ते गगनाङ्गणे निविष्टस्तावदहं तस्मिंस्तरुगणे निलीन इति व्यवहितेनान्वयः ॥ २४ ॥ २५ ॥ चिरं लीनं स्वपक्षपुटे गोपितमास्यं चञ्चुपुटं येन तथाविधो विहगो यथा तथा ॥ २६ ॥ विषशब्देन विषधरः कीनाशशब्देन मृत्युवशश्च लक्षणयोच्यते ॥ २७ ॥ २८ ॥ सापदां आपद्युक्तजनानां, सा रात्रिरिति वा ॥ २९ ॥ पल्लवैः सह स्फुरतः कम्पमानस्य । दुष्टेन दुरुत्तरेणातिदैर्घ्येण समं साकम् ॥ ३० ॥ ततः पूर्वां दिशं प्राप्तमधुपानारुणामिव दृष्टवानिति तृतीयेनान्वयः । तारेन्दुकैरवैः सह तिमिरलेखासु म्लानतामप्रसन्नतामापाद्यमानासु । तासामुपमानं मयीवेति । तारकेन्दुकैरवाणामुपमानमानने इत्यनेनार्थादाननमिन्दोर्नेत्रे कैरवाणां तत्तारके ताराणामुपमानमिति गम्यते ॥ ३१ ॥ क्ष्वेडासु सिंहनादेषु । जवजङ्गले दीर्घारण्ये । जङ्गलेऽसहेति प्रश्लेषः । असहा दुःसहा या शीतार्तिस्तद्वतां प्राणिनां दन्तपङ्क्तिघट्टनटाङ्कारसीत्कारैर्मामेव हसन्तीमिवेति दिशो विशेषणम् ॥ ३२ ॥ ३३ ॥ वारणाः प्राच्यामैरावताख्यो दिग्गजस्तदारोहणं तत ऊर्ध्वभावस्तदुन्मुखम् ॥ ३४ ॥ आस्तरणं वस्त्रमास्फोटितं विधूनितम् ॥ ३५ ॥ कालः कालरुद्रः । कल्पः प्रलयः ॥ ३६ ॥ अभिजातो हृद्यः ॥ ३७ ॥ केवलं निष्फलवनखण्डभ्रमणेन चञ्चलं जातिचापल्यं यथा स्यात्तथा विहरन्ति तत्रेति शेषः ॥ ३८ ॥ अवश्यायलेशा नीहारजलकणाः ॥ ३९ ॥ दारिका कन्या । माधवी स्त्रीवेषधरो हरिरिव ॥ ४० ॥ तरत्तारके चपलकनीनिके नेत्रे यस्याः । शर्वरीपक्षे चलत्तारका एव नेत्राणि यस्याः ॥ ४१ ॥ बलवत्यां प्राणात्ययपर्यन्तायाम् । तथाच स्मृतिः—'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥' इति । 'सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात्' इति बादरायणसूत्रं चेति भावः ॥ ४२ ॥ प्रसूता जातापत्या । सा हि स्वाण्डान्यपि ग्रसतीति क्षुधाया अनुचितकारिणीत्वद्योतनार्थं विशेषणम् । तथाचाहुः 'अस्य दग्धोदरस्यार्थे को न कुर्यादसांप्रतम्' इति ॥ ४३ ॥ यत्नयुक्तया प्रार्थनया यत्नप्रार्थनया ॥ ४४ ॥ एकस्माद्वनखण्डाद्वनखण्डान्तरं निपतति अनुगच्छति ।

खण्डात्खण्डं निपतति च्छायाभूते पुरःस्थिते ॥ ४५
तयोक्तं हारकेयूरिश्चण्डालीं विद्धि मामिति ।
राक्षसीमिव सुक्रूरां पुरुषाश्वगजाशनाम् ॥ ४६
राजन्यार्चनमात्रेण मत्तो नाप्नोषि भोजनम् ।
ग्राम्यादनभिजातेहात्सौजन्यमिव सुन्दरम् ॥ ४७
इत्युक्तवत्या गच्छन्त्या खेलया च पदेपदे ।
कुञ्जकेषु निमज्जन्त्या लीलावनतयोदितम् ॥ ४८
ददामि भोजनमिदं भर्ता भवसि चेन्मम ।
लोको नोपकरोत्यर्थैः सामान्यः स्निग्धतां विना ॥ ४९
वाहयत्यत्र मे दान्तान्केदारे पुल्कसः पिता ।
श्मशान इव वेतालः क्षुधितो धूलिधूसरः ॥ ५०
तस्येदमन्नं भवति भर्तृत्वे दीयते स्थिते ।
प्राणैरपि हि संपूज्या वल्लभाः पुरुषा यतः ॥ ५१
अथोक्ता सा मया भर्ता भवामि तव सुव्रते ।
केनापदि विचार्यन्ते वर्णधर्मकुलक्रमाः ॥ ५२
ततस्तयौदनादर्धं मह्यमेकं समर्पितम् ।
माधव्येवामृतादर्धमिन्द्रायार्तिमहत्पुरा ॥ ५३
जम्बूफलरसः पीतः स भुक्तः पक्कणौदनः ।
विश्रान्तं च मया तत्र मोहापहतचेतसा ॥ ५४
मां तत्रार्कमिवापूर्य सा प्रावृट् श्यामला गता ।
हस्तेन समुपादाय प्राणं वहिरिव स्थितम् ॥ ५५
दुराकृतिं दुरारम्भमाससाद भयप्रदम् ।
पितरं पीवराकारमवीचिमिव यातना ॥ ५६
तया मदनुषङ्गिण्या स्वार्थस्तस्मै निवेदितः ।
मातङ्गाय भ्रमयैव निःस्वनेनालिलग्नया ॥ ५७
अयं मम भवेद्भर्ता तात हे तव रोचताम् ।
स तस्या बाढमित्युक्त्वा दिनान्ते समुपस्थिते ॥ ५८
मुमोच दान्तावावद्धौ कृतान्तः किङ्कराविव ।
नीहाराभ्रकडारासु दिक्षु प्रोद्धूलितासु च ।
वेतालबन्धनात्तस्माद्दिनान्ते चलिता वयम् ॥ ५९
क्षणेन पक्कणं प्राप्ताः संध्यायां दीर्घजङ्गलात् ।
श्मशानादिव वेतालाः श्मशानसितरम्महत् ॥ ६०
विकर्तितविभागस्थकपिकुक्कुटवायसम् ।
रक्तसिक्तोर्वीराभागप्रभ्रमन्मक्षिकागणम् ॥ ६१
शोषार्थं प्रसृतार्द्रान्त्रतन्त्रीजालपतत्खगम् ।
निष्कुटस्थितजम्बीरखण्डलग्नखगध्वनि ॥ ६२
शुष्यद्गुरुवसापिण्डपूर्णालिन्दलसत्खगम् ।
दृप्तिप्रसृतरक्ताक्तचर्मस्रवदसृग्लवम् ॥ ६३
बालहस्तस्थितक्रव्यपिण्डक्वणितमक्षिकम् ।
जर्जराधिष्ठचण्डालतर्जितारटितार्भकम् ॥ ६४
तत्प्रविष्टा वयं कीर्णशिरान्त्रं भीमपक्कणम् ।
मृतभूतं जगत्कल्पे कृतान्तानुचरा इव ॥ ६५
संभ्रमोपहितानल्पकदलीदलपीठके ।
अहमास्थितवांस्तत्र नवे श्वशुरमन्दिरे ॥ ६६
श्वश्वा मे केकराक्ष्या तु तेनासृग्लवचक्षुषा ।
जामातायमिति प्रोक्तं तया तदभिनन्दितम् ॥ ६७
अथ विश्रम्य चण्डालभोजनान्यजिनासने ।
संचितान्युपभुक्तानि दुष्कृतानीव भूरिशः ॥ ६८
अनन्तदुःखबीजानि न मनोज्ञतराण्यपि ।
तानि प्रणयवाक्यानि श्रुतान्यशुभगान्यलम् ॥ ६९
निरभ्राम्बरनक्षत्रे कस्मिंश्चिद्दिवसे ततः ।
तैस्तैरारम्भसंरम्भैस्तैर्वस्त्रविभवार्पणैः ॥ ७०
दत्ताप्यनेन सा मह्यं कुमारी भयदायिनी ।
सुकृष्णा कृष्णवर्णेन दुष्कृतेनेव यातना ॥ ७१

सरभसमभितो विनेदुरत्र
प्रसृतमहामदिरासवाः श्वपाकाः ।
हतपटुपटहा विलासवन्तः
क्षयमिव दुष्कृतराशयो महान्तः ॥ ७२

इत्यार्षे श्रीवासिष्ठमहारामायणे मो० उत्पत्तिप्रकरणे इन्द्रजालोपाख्याने चाण्डालीविवाहो नाम षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

अतएव च्छायाभूते ॥ ४५ ॥ हारकेयूरिन्नित्यनेनोत्तमजातिसूचनेन मदन्नमभोज्यमिति द्योतितम् ॥ ४६ ॥ अनभिजातेहादसंपन्नाभिलाषात् । ग्राम्यात् ग्रामीणजनात् । सौजन्यं सौहार्दमिव ॥ ४७ ॥ मज्जन्त्या लीयमानया । लीलाभिः स्वाभिप्रेतार्थसूचककटाक्षादिचेष्टाभिरवनतया प्रह्वीभूतया ॥ ४८ ॥ सामान्यो लोकः पृथग्जनः ॥ ४९ ॥ दान्तान् बलीवर्दान् वाहयति । कर्षतीति यावत् ॥ ५० ॥ त्वयि भर्तृत्वे स्थिते सति दीयते ॥ ५१ ॥ ५२ ॥ माधव्या इन्द्राय दत्तममृतादर्धमिव । आर्त्या क्षुत्पीडया महद्बहुमतमिति यावत् ॥ ५३ ॥ ५४ ॥ आपूर्य तिरोधाय ॥ ५५ ॥ अवीचिं नरकविशेषम् ॥ ५६ ॥ मातङ्गाय चाण्डालाय निवेदितः । कर्णे इति शेषः । अतएवालिना भ्रमरान्तरेण लग्नया भ्रमयैवेत्युपमा ॥ ५७ ॥ ५८ ॥ कडारासु कपिलासु । वेतालबन्धनात्पिशाचनिवासात्तस्माद्वनात् ॥ ५९ ॥ ॥ ६० ॥ विकर्तिता अपि पुनः कर्तनेन विभागस्थाः ॥ ६१ ॥ निष्कुटेषु गृहारामेषु ॥ ६२ ॥ अलिन्दो बहिर्द्वारप्रकोष्ठः ॥ ६३ ॥ जर्जरैर्वृद्धैरधिष्ठैः श्रेष्ठैश्चण्डालैः ॥ ६४ ॥ मृतानि भूतानि प्राणिनो यत्र । कल्पे प्रलयकाले ॥ ६५ ॥ संभ्रमेणादरातिशयेन उपहिते आस्तीर्णे पीठके आसने ॥ ६६ ॥ ॥ ६७ ॥ ६८ ॥ ६९ ॥ तैस्तैश्चण्डालोत्सवोचितैर्मद्यमांसादिसंचयारम्भोद्योगैः ॥ ७० ॥ ७१ ॥ अत्रास्मिन्विवाहोत्सवे । मदिरासवपदाभ्यां तन्मदो लक्ष्यते । महान्तो ब्रह्महत्यादयः ॥ ७२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चाण्डालीविवाहो नाम षडुत्तरशततमः सर्गः ॥ १०६ ॥

१ सदभिनन्दितम् इति पाठः.

# सप्तोत्तरशततमः सर्गः १०७

राजोवाच ।

बहुनात्र किमुक्तेन सोत्सवावर्जिताशयः ।
तदाप्रभृति तत्राहं संपन्नः पुष्टपुल्कसः ॥ १
सप्तरात्रोत्सवस्यान्ते क्रमान्मासाष्टके गते ।
पुष्पिता सास्य संपन्ना स्थिता गर्भवती ततः ॥ २
प्रसूता दुःखदां कन्यां विपद्दुःखक्रियामिव ।
सा कन्या ववृधे शीघ्रं मूर्खचिन्तेव पीवरी ॥ ३
पुनः प्रसूता सा वर्षैस्त्रिभिः पुत्रमशोभनम् ।
अनर्थमिव दुर्बुद्धिराशापाशविधायकम् ॥ ४
पुनः सुतां दुहितरं पुनरप्यर्भकं ततः ।
कलत्रवानहं जातो वने जरठपुल्कसः ॥ ५
तया सह समास्तत्र मया बह्व्योऽतिवाहिताः ।
नारके चिन्तया सार्धं ब्रह्मघ्नेनेव यातनाः ॥ ६
शीतवातातपक्लेशविवशेन वनान्तरे ।
चिरं विलुलितं वृद्धकच्छपेनेव पल्वले ॥ ७
कलत्रचिन्ताहतया धिया संदह्यमानया ।
दृष्टाः कष्टसमारम्भा दिशः प्रज्वलिता इव ॥ ८
क्षौमानेकसमाक्षीणपटे चेण्डकधारिणा ।
काष्ठभारो वने व्यूढो यो मूर्तमिव दुष्कृतम् ॥ ९
यौकाकीर्णजरत्क्लिन्नगन्धिकौपीनवाससा ।
आश्वस्य धवलीकानां तले नीता घनाः समाः ॥ १०
कलत्रापूरणोत्केन जर्जरेण हिमानिलैः ।
हेमन्ते दर्दुरेणेव विलीनं वनकुक्षिषु ॥ ११
नानाकलहकल्लोलतापप्रसरविद्रुताः ।
बाष्पव्याजेन निर्मुक्ता नेत्राभ्यां रक्तबिन्दवः ॥ १२
यामिन्यो विपिने क्लिन्ने वराहामिषभोजनाः ।
शिलातलकुटीकोशे नीता जलदविक्लवाः ॥ १३
काले क्षयं गते रोहे कालाभ्रघनतां गते ।
असौहार्देन बन्धूनां कलहैश्चापि संततैः ॥ १४
सर्वत्र जातशङ्केन कलाभिमुखरार्भकैः ।
मया कृपणचित्तेन नीताः परगृहे समाः ॥ १५
चण्डालीकलहोद्विग्नचण्डचण्डालतर्जनैः ।
मुखं जर्जरतां यातमिन्दू राहुरदैरिव ॥ १६
चर्विताः खर्वितोष्ठेन द्वीपीपिशितपेशयः ।
नारकाहृतविक्रीता नारक्यो रशना इव ॥ १७
हिमवत्कन्दरोद्दीर्णाश्चण्डा हेमन्तवीचयः ।
शिशिरे शीकरासारतुषारनिचयाश्चिरम् ॥ १८
अङ्गे निरम्बरे सोढा मृत्युमुक्ता इवेषवः ।
जराजरठमूढेन मूलानि क्षीर्णभूरुहाम् ॥ १९
सुकृतानामिवैकेन समुत्खातानि भूरिशः ।
शरावकेष्वटव्यां च पललं पक्वमादरात् ॥ २०
अस्पृष्टेन जनैर्भुक्तं कुकलत्रवता मया ।
गृहीततेजःक्षतये बहुवक्रविकारिणा ॥ २१
मार्गाविकमिवात्मीयं विक्रीतं पण्यमन्यतः ।
प्राण्यङ्गवपुषस्तस्य प्रोत्कृत्योत्कृत्य पेशलः ॥ २२
आयसंपरि विक्रीता विन्ध्यपक्वणभूमिषु ।
जन्मान्तरसहस्रोत्थं स्वपापमिव वृद्धये ॥ २३
अविकीर्णमसत्कीर्णं चण्डालारामभूमिषु ।
दृष्टः कुद्दालको दृष्ट्या संध्यास्नेहविमुक्तया ॥ २४
रौरवापतितेनेव तत्कालस्निग्धतां गतः ।
विन्ध्यकन्दरगुल्मानां बन्धुत्वमिव गच्छता ॥ २५
पुलिन्दवपुषा यत्र युक्तयोगैः समर्पिताः ।

---

अत्र स्वस्य चिरं तत्र वसतः षष्टिहायनान् ।
चण्डालोचितकृत्येन जीवनं यत्तदुच्यते ॥ १ ॥

सोत्सवेनोत्सवसहितेन विवाहेन आवर्जिताशयो वशीकृतचित्तः ॥ १ ॥ सा भार्या । अस्य मम । पुष्पिता ऋतुमती ॥ २ ॥ ३ ॥ ४ ॥ कलत्रवान् कुटुम्बी ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ क्षौमे अतसीवल्कलविकारे अनेकसमाभिराक्षीणे जीर्णे पटे । चेण्डकं तृणादिनिर्मितं वलयाकारं भारोद्वहनशिरस्त्राणम् ॥ ९ ॥ यूकानां समूहो यौकम् । जरज्जीर्णं दुर्गन्धि च कौपीनमेव वासो यस्य । आश्वस्य विश्रम्य । धवलीकानां वृक्षविशेषाणाम् ॥ १० ॥ दर्दुरेण भेकेन ॥ ११ ॥ तापप्रसरादिव विद्रुता विलीनाः ॥ १२ ॥ ॥ १३ ॥ कालवर्णैरभ्रैर्घनतां निबिडतां गते रोहे सर्वबीजप्रादुर्भावहेतौ वर्षाकाले क्षयं गते सति ॥ १४ ॥ अर्भकैः सहेति शेषः । परगृहे चाण्डालान्तरगेहे ॥ १५ ॥ राहोः रदैर्दन्तैरिन्दुरिव ॥ १६ ॥ नारकैराहृता नारकेभ्यो विक्रीताः । अनेन नरकेऽपि क्रयविक्रयपातकिनां तदनुरूपो व्यवहारोऽस्तीति गम्यते । रशनाः आन्त्ररज्जवः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ गृहीतस्य तेजसः क्षतये ॥ २१ ॥ मृगाणां मांसं मार्गम् । अवेर्मांसं आविकम् । अन्यतः अन्येभ्यः पण्यं क्रीतं तदात्मीयं स्वदेहमांसमिव क्रीतमिति जुगुप्सोक्तिः ॥ २२ ॥ आयसंपरि अयःपात्रे निधाय संस्कृत्य वेत्यर्थः । वृद्धये अधिकमूल्यलाभार्थं विक्रीताः ॥ २३ ॥ विक्रीतशिष्टं तु चण्डालारामभूमिषु शोषणार्थमवकीर्णम् । असद्भिरपवित्रैर्मलमूत्रादिभिः कीर्णं व्याप्तम् । रौरवापतितेनेवात्यन्तदुर्दशां प्राप्तेन विन्ध्यपर्वतगुल्मानां बन्धुतां पोष्यतां गच्छतेव स्थितेन मया संध्यायां स्नेहेन विमुक्तया । कन्दमूलमांसाद्यर्जनविघ्नभूतसंध्याकालद्वेष्ट्र्येति यावत् । तथाविधया दृष्ट्या बुद्ध्या कुद्दालकः खनित्रविशेष एव पोषकत्वात्तत्कालस्निग्धतां तत्कालोचितमित्रतां गतो दृष्टो नान्य इति द्वयोरन्वयेनार्थः ॥ २४ ॥ २५ ॥ यत्र यस्यां दुर्दशायां युक्तयोगैः परम्परासंबन्धै-

---

१ क्षीरभूरुहां इति पाठः.

तर्पिता लगुडाघातजितकौलेयरंहसा ॥ २६
पुत्रदाराः कदन्नेन ग्रामकान्धोचितेन च ।
धारासाररणत्पत्रशुष्कतालतले निशाः ॥ २७
नीता रणितदन्तेन सार्धं विपिनवानरैः ।
रोमभिः कोटिमुद्रोग्रैः शीतेनाध्युषितस्य मे ॥ २८
वर्षासु मुक्ताकणवद्भूता वानलबिन्दवः ।
अजाजीमूतखण्डार्थं क्षुत्क्षुण्णक्षीणकुक्षिणा ॥ २९
कलत्रेण सहाटव्यां कृतः कलह आकुलः ।
वने रणितदन्तेन शीतकेकरचक्षुषा ॥ ३०
मषीमलिनगात्रेण वेतालस्वजनायितम् ।
सरित्तीरेषु मत्स्यार्थं भ्रान्तं बडिशधारिणा ॥ ३१
कल्पे जगत्सुनाशार्थं कृतान्तेनेव पाशिना ।
पीतं बहूपवासेन सद्यःकृत्तमृगोरसः ॥ ३२
तत्कालकोष्णं रुधिरं मातुः स्तनपयो यथा ।
श्मशानसंस्थितान्मत्तो रक्तरक्तान्मलाशिनः ॥ ३३
विद्रुता वनवेतालाश्चण्डिकाभिद्रुता इव ।
वागुरा विपिने व्युप्ता बन्धार्थं मृगपक्षिणाम् ॥ ३४
आशा इव विवृद्ध्यर्थं पुत्रदारकलत्रजाः ।
मया मायामयैर्लोकाः सूत्रजालमयैः खगाः ॥ ३५
जालैर्जर्जरतां नीता दिशश्चाशुकृतायुषा ।
तत्रापि दत्तः प्रसरो मनसो दुष्कृतोदये ॥ ३६
आशा प्रसारिता दूरं प्रावृषीव तरङ्गिणी ।
करभ्या इव सर्पेण विद्रुतं दूरतो धिया ॥ ३७
दूरे त्यक्ता दया देहे भुजङ्गेनेव कञ्चुकम् ।

क्रौर्यं सुखेन संरम्भशरवर्षि निनादि च ॥ ३८
अङ्गीकृतं निदाघान्ते नभसेवासिताम्बुदः ।
विकासिन्यो क्षताः क्षारा दूरं परिहृता जनैः ॥ ३९
श्वभ्रेणेव कुमञ्जर्यश्चिरमूढा मयापदः ।
स्वकालकुलकोणासु नरकोद्दामभूमिषु ॥ ४०
उप्ता दुष्कृतबीजानां मुष्टयो मोहवृष्टयः ।
वागुराभिर्मया विन्ध्यकन्दरस्थेन निर्दयम् ॥ ४१
भूतेष्विव कृतान्तेन मृगेषु परिवल्गितम् ।
चामरीकण्ठकुड्येषु विश्रान्तशिरसा मया ॥ ४२
सुप्तमस्तविवेकेन शेषाङ्गेष्विव शौरिणा ।
विलोलचरणाम्बरया सरावोल्लासिधूम्रया ॥ ४३
मम तन्वा सनीहारविन्ध्यकच्छगुहायितम् ।
कृष्णदेहेन यौकाढ्या कन्था स्कन्धे मया चिरम् ॥ ४४
ग्रीष्मे सोढा चलद्भूता वराहेण यथोर्वरा ।
बहुशोऽहं वनोत्थाग्निनिर्दग्धप्राणिमण्डलः ॥ ४५
कल्पाग्निभुक्तजगतः कालस्यानुगतिं गतः ।
लोभिलिङ्गो यथा रोगमनर्थानिव दुर्ग्रहः ।
प्रसूतास्तत्र मे दारा दुःखान्यथ सुखान्यपि ॥ ४६
नृपालपुत्रकेनैकतनयेन तदा मया ।
नीता नीरन्ध्रदोषेण षष्टिः कल्पसमाः समाः ॥ ४७
आकुष्टमुद्धुरतरं रुदितं विपत्सु
भुक्तं कदन्नमुषितं हतपक्कणेषु ।
कालान्तरं बहु मयोपहतेन तत्र
दुर्वासनानिगडबन्धगतेन सभ्याः ॥ ४८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे इन्द्रजालोपाख्याने आपद्वर्णनं नाम सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

दैवेन समर्पिताः पुत्रदारादयो लगुडाघातैर्यष्टिताडनैर्जितकौलेयरंहसा निवारितशुनकोपद्रवेण मया कदन्नेन तर्पिताः ॥ २६ ॥ [2]ग्रामकः कुग्रामस्तत्र येऽन्धास्तदुचितेन कोद्रवकणपिण्याकादिना ॥ २७ ॥ कोटिर्मुक्तावेधनसूच्यग्रं तस्य मुद्रां साम्यमुद्यन्ति ऊर्ध्वभागे प्राप्नुवन्तीति कोटिमुद्रोद्यानि ॥ २८ ॥ वनं जलं लाति आददातीति वनलो मेघस्तत्संबन्धिनो वानला बिन्दवः । जीमूतखण्डो मेघलेश इव तुच्छो मांसखण्डस्तदर्थम् ॥ २९ ॥ ३० ॥ वेतालस्य स्वजनो बन्धुस्तद्वदाचरितं, वेतालवत्स्थितमिति यावत् ॥ ३१ ॥ सद्यःकृत्तस्य शरच्छिन्नस्य मृगस्य उरसो वक्षसः ॥ ३२ ॥ कोष्णं कवोष्णम् । रक्तेन रुधिरेण रक्ताद्रञ्जितान् मत्तो मलाशिनः अपवित्रश्मशानबलिमांसाद्यशनशीलात् ॥ ३३ ॥ विद्रुताः भयात्पलायिताः । व्युप्ताः प्रसारिताः ॥ ३४ ॥ ३५ ॥ तत्र तादृशे पापकर्मण्यपि । मनसः प्रसरो दत्तः ॥ ३६ ॥ करभ्या भल्लूक्याः सकाशात्सर्पेणेव धिया सद्बुद्ध्या दूरतो गतम् । भावे क्तः । करभी हि सर्पं श्वासेन बिलादाकृष्य भक्षयतीति प्रागुक्तमेव ॥ ३७ ॥ देहे परप्राणिदेहे । संरम्भेण शरान्बाणानुदकानि च वर्षितुं शीलमस्य । निनादि निष्ठुरभाषि गर्जनशीलं चेति अम्बुदक्रौर्यसाधारणे विशेषणे । एवमग्रेऽप्युपमानोपमेयसाधारणानि विशेषणानि बोध्यानि ॥ ३८ ॥ क्षारा उग्रगन्धा दुःसहाश्च ॥ ३९ ॥ स्वस्य एतावत्कालमिदं भोक्तव्यमिति नियतः काल एव कुलकोणाः क्षेत्रभेदविभाजकसेतवस्तयो यासु ॥ ४० ॥ मोह एव वृष्टिरिव फलवर्धनो यासां ताः ॥ ४१ ॥ ४२ ॥ विभिः पक्षिभिर्लोलानि चरणाः प्रत्यन्तपर्वता अम्बरमाकाशं च यस्याः । सरावैः सध्वनिभिर्व्याघ्रादिभिरुल्लासि धूम्रं रूपं यस्यामिति च गुहापक्षेऽर्थः । तनुपक्षे स्पष्टम् ॥ ४३ ॥ विन्ध्यस्य कच्छो जलप्रायदेशस्तत्रत्यगुहावदाचरितम् । उपमानादाचारे क्यङि भावे क्तः । यूकानां समूहो यौकं तदाढ्या कन्था मया ग्रीष्मे सोढा मर्षितेति संबन्धः ॥ ४४ ॥ ४५ ॥ लोभिलिङ्गो मैथुनव्यसनी यथा क्षयादिरोगं प्रसूते । यथा वा दुर्ग्रहो दुराग्रहो दुष्टग्रहो वा वैरकलहाद्यनर्थान्प्रसूते तद्वन्मे दारा दुःखानि सुखान्यपि अपत्यानि प्रसूताः ॥ ४६ ॥ उपसंहरति—**नृपालेति** । एकतनयेनेत्यत्यन्तानौचित्यसूचनार्थमुक्तम् ॥ ४७ ॥ उक्तां सर्वां दुर्दशां संक्षिप्य वदन्नुपसंहरति—**आकुष्टमिति** । हे सभ्याः, क्रोधा-

---

१ लगुडास्फाल इति पाठः. २ ग्रामकाः कुग्रामाः इति पाठः.

# अष्टोत्तरशततमः सर्गः १०८

राजोवाच ।

अथ गच्छति कालेऽत्र जराजर्जरितायुषि ।
तुषारपूर्णशष्पौघसमश्मश्रुभृते मयि ॥ १
कर्मवातापनुन्नेषु सरसेष्वरसेष्वपि ।
पतत्सु वासरौघेषु शीर्णपर्णगणेष्विव ॥ २
आजाविव शरौघेषु सुखदुःखेष्वनारतम् ।
कलहेष्वप्यकार्येषु चागच्छत्सु पतत्सु च ॥ ३
विकल्पकल्पनावर्तवर्तिनि द्विजगे जडे ।
समुद्र इव कल्लोलभरे भ्रमितचेतसि ॥ ४
चलच्चिन्ताचितं चक्रमारूढे भ्रान्त आत्मनि ।
प्रोह्यमाने तृण इव सावर्ते कालसागरे ॥ ५
विन्ध्योर्वीवनकीटस्य ग्रासैकशरणस्य मे ।
द्विवाहोर्गर्दभस्यात्र क्षीण इत्थं समागणे ॥ ६
विस्मृते मम भूपत्वे शवस्येव महाजवे ।
चाण्डालत्वे स्थिरीभूते पक्षच्छिन्न इवाचले ॥ ७
संसारमिव कल्पान्तो दावाग्निरिव काननम् ।
सागरोर्मिस्तटमिव शुष्कवृक्षमिवाशनिः ॥ ८
अकाण्डे मरणोड्डीनं चण्डचण्डालमण्डलम् ।
निरन्नतृणपत्राम्बु विन्ध्यकच्छं तदाययौ ॥ ९
न वर्षति घनव्राते दृष्टनष्टे क्वचित्स्थिते ।
पूताङ्गारकणोन्मिश्रगतौ वहति मारुते ॥ १०
शीर्णमर्मरपर्णासु दावाग्निवलितासु च ।
वनस्थलीषु शून्यासु चिरप्रव्रजितास्विव ॥ ११
अकाण्डमभवद्भीममुद्दामदवपावकम् ।
शोषिताशेषगहनं भस्मशेषतृणोलपम्[1] ॥ १२
पांसुधूसरसर्वाङ्गं क्षुधिताशेषमानवम् ।
निरन्नतृणपानीयं देशाद्युद्दावमण्डलम् ॥ १३
कचन्मरुमरीचय्म्बुमज्जन्महिषमण्डलम् ।
वातोत्थसीकरव्यूहापरिवाहवनाम्बरम् ॥ १४
पानीयशब्दमात्रैकश्रवणोत्कनरव्रजम् ।
आतपाततिसंशोषसीदत्सकलमानवम् ॥ १५
पत्त्रग्रसनसंरब्धक्षुधितोत्थितजीवितम् ।
स्वाङ्गचर्वणसंरम्भलुठद्दशनमण्डलम् ॥ १६
मांसशङ्कानिगीर्णोग्रखदिराग्निकणोत्करम् ।
मण्डकासारसंग्रस्तवनपाषाणखण्डकम् ॥ १७
अन्योन्यभूतसंसक्तमातृपुत्रपितृव्रजम् ।
गृध्रोदररटत्सारनिगीर्णवरसारिकम् ॥ १८
परस्पराङ्गविच्छेदरक्तसिक्तधरातलम् ।
हरिग्रसनसंरब्धमत्तक्षुधितवारणम् ॥ १९
दरीनिगरणैकैकसिंहभ्रमणभीषणम् ।
अन्योन्यग्रसनोद्युक्तलोकमलङ्कृतं वहत् ॥ २०
निष्पत्रपादपोड्डीनप्रौढाङ्गारमयानिलम् ।
रक्तपानोत्कमार्जारलीढधातुतटावनि ॥ २१
ज्वालाघनघटाटोपसावर्तसवनानिलम् ।
सर्वस्थलरसद्दह्निपुञ्जपिञ्जरजङ्गलम् ॥ २२
दग्धाजगरकुञ्जोत्थधूममांसलगुल्मकम् ।
मारुतावलितज्वालासंध्याभ्रवलिताम्बरम् ॥ २३
उद्दामरवमुद्भ्रान्तभस्मनाऽस्तम्भमण्डलम् ।
साक्रन्दनरदाराग्रदीनार्भककृतारवम् ॥ २४
संभ्रान्तपुरुषव्यूहदन्तकृत्तमहारवम् ।

वेशेन आक्रुष्टं विपत्सु रुदितम् । भवदनुभूतकालपेक्षया कालान्तरम् ॥ ४८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे आपद्वर्णनं नाम सप्तोत्तरशततमः सर्गः ॥१०७॥

इह तस्मिन्निवसतश्चिरं चण्डालपक्कणे ।
अनावृष्ट्युत्थदुर्भिक्षाद्वर्ण्यते देशदुर्दशा ॥ १ ॥

शष्पौघसमैः श्मश्रुभिर्भृते संभृतमुखे ॥ १ ॥ सरसेषु ससुखेषु । अरसेषु सदुःखेषु । वासरौघेषु पतत्सु गच्छत्सु ॥ २ ॥ आजौ युद्धे । अकार्येषु कर्तुमयोग्येषु वधबन्धस्तेयादिषु ॥ ३ ॥ द्विजः पक्षीव गच्छति निरालम्बने भ्रमतीति द्विजगे ॥ ४ ॥ ५ ॥ समागणे वर्षपूगे क्षीणे सति ॥ ६ ॥ शवस्य मृतस्येव ॥ ७ ॥ ८ ॥ घनव्राते न वर्षति सति अकाण्डे मरणेन उड्डीनं परलोकगमनं यस्मिंस्तथाविधं दुर्भिक्षं कर्तृ । चण्डं चण्डालमण्डलं यस्मिंस्तथाविधं विन्ध्यकच्छं निरन्नतृणपत्राम्बु यथा स्यात्तथा आययौ प्राप । संसारमिवेत्यादिप्राक्तनानि क्रमात्कर्मकर्त्रोरुपमानानि बोध्यानि । अथवा तच्चण्डचण्डालमण्डलं विन्ध्यकच्छस्थलाख्यं देशान्तरं ययाविल्यर्थः ॥ ९ ॥ पूतैर्वस्त्रशोधितैरिव सूक्ष्मतमैरङ्गारकणैरुन्मिश्रा गतिर्यस्य ॥ १० ॥ चिरप्रव्रजितास्विवेति पिङ्गलजटिलत्वादिनोपमा ॥ ११ ॥ अकाण्डमनवसरोत्थं दुर्भिक्षम् ॥ १२ ॥ उद्दावं उत्कृष्टारण्यभूतं मण्डलं जनपदो यस्मिन् ॥ १३ ॥ वातोत्थसीकरव्यूहमपि न परिवहतीत्यपरिवाहं वनाम्बरं यत्र ॥ १४ ॥ आतपस्याततिर्विस्तारः ॥ १५ ॥ पत्त्रग्रसनोद्योगेन क्षुभितेभ्य उत्थितं प्रस्थितं जीवितं यत्र । स्वाङ्गचर्वणे संरम्भेणाभिलाषेण लुठन्ति परस्परमुपघ्नन्ति दशनमण्डलानि यत्र ॥ १६ ॥ मण्डकानि स्नेहपिष्टकास्तद्भ्रान्त्या असारा अपि संग्रस्ता वनपाषाणखण्डका यत्र ॥ १७ ॥ सारनिगीर्णा समग्रनिगीर्णा ॥ १८ ॥ १९ ॥ दरीषु स्वस्य निगरणशङ्कया एकैकशः सिंहभ्रमणेन भीषणम् । अन्योन्यस्य ग्रसने हिंसने उद्युक्तैर्लोकैर्मलङ्कृतं मलचरित्रम् ॥ २० ॥ २१ ॥ २२ ॥ दग्धा अजगरा यत्र तथाविधात्कुञ्जादुत्थितेन धूमेन दोहदेनेव मांसलानि पुष्टानीव गुल्मकानि यत्र ॥ २३ ॥ अस्तम्भान्यदण्डानि छत्त्रमण्डलानि यत्र ॥ २४ ॥ जवेन ग्रसनत्वरया ग्रस्ता रक्तैरारक्ता

१ तृणोपलम् इति पाठः.

मांसगन्धजवग्रस्तरक्तारक्तनिजाङ्गुलि ॥ २५
नीलपत्रलताशङ्कापीतधूमघनच्छवि ।
भ्रमद्वृध्रनिगीर्णोग्रनभोभ्रान्तोल्मुकासिषम् ॥ २६
इतरेतरभिन्नाङ्गलोकविद्रवणाकुलम् ।
ज्वलिताग्निटणत्कारविदीर्णहृदयोदरम् ॥ २७
गर्तमारुतकाङ्कारभीमदावाग्निवल्गनम् ।
भीताजगरफूत्कारपतदङ्गारपादपम् ॥ २८
सदकाण्डस्फुटद्देशं प्राप्य तच्छुष्ककोटरम् ।
द्वादशार्काग्निदग्धस्य जगतोऽनुकृतिं ययौ ॥ २९
ज्वलदनलजटालवृक्षखण्ड-
प्रसरमरुत्प्रसरावनुन्नलोकः ।
ज्वलनतपनभास्करात्मजानां
रमणगृहानुकृतिं जगाम देशः ॥ ३० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे इन्द्रजालोपाख्याने अकाण्डवर्णनं नामाष्टोत्तरशततमः सर्गः ॥ १०८ ॥

## नवोत्तरशततमः सर्गः १०९

राजोवाच ।

तस्मिंस्तदा वर्तमाने कष्टे विधिविपर्यये ।
अकालोल्बणकल्पान्ते नितान्तं तापदायिनि ॥ १
जनाः केचन निष्क्रम्य सकलत्रसुहृज्जनाः ।
गता देशान्तरं व्योम्नः शरदीव पयोधराः ॥ २
देहावयवसंलीनपुत्रदाराग्र्यबन्धवः ।
शीर्णाः केचन तत्रैव च्छिन्ना इव वने द्रुमाः ॥ ३
भक्ताः केचन च व्याघ्रैर्निर्गतास्तु स्वमन्दिरात् ।
अजातपक्षकाः श्येनैः खगा नीडोद्गता इव ॥ ४
प्रविष्टाः केचिदनलं ज्वलितं शलभा इव ।
केचिच्छ्वभ्रेषु पतिताः शिला शैलच्युता इव ॥ ५
अहं तु तान्परित्यज्य श्वशुरादीन्स्वकं क्षमम् ।
कलत्रमात्रमादाय कृच्छ्राद्देशाद्विनिर्गतः ॥ ६
अनलाननिलांश्चैव भक्षकांस्तक्षकानपि ।
वञ्चयित्वा भयान्मृत्योः सदारोऽहं विनिर्गतः ॥ ७
प्राप्य तद्देशपर्यन्तं तत्र तालतरोस्तले ।
अवरोप्य सुतान्स्कन्धान्नानानर्थानिवोल्बणान् ॥ ८
विश्रान्तोऽस्मि चिरं श्रान्तो रौरवादिव निर्गतः ।
दीर्घदावनिदाघार्तो ग्रीष्मे पद्म इवाजलः ॥ ९
अथ चाण्डालकन्यायां विश्रान्तायां तरोस्तले ।
सुप्तायां शीतलच्छाये द्वौ समालिङ्ग्य दारकौ ॥ १०
पृच्छको नाम तनयो ममैकः पुरतः स्थितः ।
अत्यन्तवल्लभोऽस्माकं कनीयान्मौग्ध्यवानिति ॥ ११
स मामुवाच दीनात्मा बाष्पपूर्णविलोचनः ।
तात देह्याशु मे मांसं पातुं च रुधिरं क्षणात् ॥ १२
पुनःपुनर्वदन्नेवं स बालस्तनयो मम ।
प्राणान्तिकीं दशां प्राप्तः साक्रन्दो हि पुनः क्षुधा ॥ १३
तस्योक्तं तु मया पुत्र मांसं नास्तीति भूरिशः ।
तथापि मांसं देहीति वदत्येव स दुर्मतिः ॥ १४
अथ वात्सल्यसूढेन मया दुःखातिभारिणा ।
तस्योक्तं पुत्र मन्मांसं पक्वं संभुज्यतामिति ॥ १५
तदप्यङ्गीकृतं तेन देहीति वदता पुनः ।
मन्मांसभक्षणं क्षीणवृत्तिनाऽऽश्लेषवृत्तिना ॥ १६
सर्वदुःखापनोदाय स्नेहकारुण्यमोहिना ।
तस्य तामार्तिमालोक्य मया दुःखातिभारिणा ॥ १७
सोढुं तामापदं तीव्रामशक्तेन हतात्मना ।
मरणायातिमित्राय कृतोऽन्तर्निश्चयो मया ॥ १८

निजाङ्गुलिर्यत्र ॥ २५ ॥ २६ ॥ २७ ॥ गर्तं प्रविशतो मारुतस्य काङ्कारो ध्वनिरिव भीमं दावाग्निवल्गनं यत्र । भीतानामजगराणां फूत्कारात्पतन्त उत्पतन्तोऽङ्गारा येषु तथाविधाः पादपा यत्र ॥ २८ ॥ सत् प्राग्रमणीयमपि विन्ध्यकच्छस्थलं प्राप्य तत् तादृशं दुर्भिक्षं प्रागुक्तमकाण्डस्फुटद्देशं सत् । अनुकृतिं साम्यम् ॥ २९ ॥ ज्वलदनलेन जटालेषु वृक्षखण्डेषु प्रसरो यस्य तथाविधस्य मरुतः प्रसरेण । अवनुन्नः पीडितो लोको जनो यत्र । ज्वलनतपनयोर्भास्करात्मजस्य शनैश्चरस्य च रमणं क्रीडास्थानभूतं यद्गृहं तस्यानुकृतिं साम्यम् ॥ ३० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे अकाण्डवर्णनं नामाष्टोत्तरशततमः सर्गः ॥१०८॥

निर्गतस्य सदारस्य दृष्ट्वा पुत्रापदं चिताम् ।
विविक्षोः प्रतिबुद्धस्य सभ्यसंवाद ईर्यते ॥ १ ॥

विधिविपर्यये दैवप्रातिकूल्ये ॥ १ ॥ २ ॥ देहावयवा इव संलग्नास्त्यक्तुमशक्या इति यावत् ॥ ३ ॥ चकारो भिन्नक्रमोऽनुक्तसमुच्चयार्थः । व्याघ्रैरन्यैश्च श्वापदैरित्यर्थः ॥ ४ ॥ ५ ॥ क्षमं स्वानुगमनसमर्थम् ॥ ६ ॥ भक्षकान्व्याघ्रादीन् । तक्षकान् सर्पान् ॥ ७ ॥ तद्देशस्य पर्यन्तं प्रान्तम् ॥ ८ ॥ अजलः पद्मः कमलिनीव शुष्यन्नित्यर्थः । अथवा अजलो मेकादिः पद्मे कमलिनीमूल इव विश्रान्तोऽस्मीत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥ क्षीणवृत्तिना अलब्धभक्ष्येण । अत्यन्तक्षुधितेनेति यावत् । आश्लेषवृत्तिना आलिङ्गनपरेण ॥ १६ ॥ स्नेहकारुण्यमोहशब्दानां द्वन्द्वे इनिः ॥१७॥ अतिमित्राय तत्काली-

१ क्षुदुर्मतिः इति पाठः. २ युक्तेन इति पाठः.

तत्र काष्ठानि संचित्य चितां रचितवानहम् ।
चिता चटचटास्फोटैः स्थिता मदभिकाङ्क्षिणी ॥ १९
तस्यां तु यावदात्मानं चितायां निक्षिपाम्यहम् ।
चलितोऽस्मि जवात्तावदस्मात्सिंहासनान्नृपः ॥ २०
ततस्तूर्यनिनादेन जयशब्देन बोधितः ।
इति शाम्बरिकेणायं मोह उत्पादितो मम ॥ २१
अज्ञानेनेव जीवस्य दशाशतसमन्वितः ।
इत्युक्तवति राजेन्द्रे लवणे भूरितेजसि ॥ २२
अन्तर्धानं जगामाशु तत्र शाम्बरिकः क्षणात् ।
अथेदमूचुस्ते सभ्या विस्मयोत्फुल्ललोचनाः ॥ २३
नायं शाम्बरिको देव यस्य नास्ति धनैषणा ।
दैवी काचन मायेयं संसारस्थितिबोधिनी ॥ २४
मनोविलासः संसार इति यस्यां प्रतीयते ।
सर्वशक्तेरनन्तस्य विलासो हि मनोजगत् ॥ २५
सर्वशक्तेर्विचित्रा हि शक्तयः शतशो विधेः ।
यद्विवेकि मनोऽप्येष विमोहयति मायया ॥ २६
विज्ञातलोकवृत्तान्तः क नामायं महीपतिः ।
क सामान्यमनोवृत्तियोग्यो विपुलसंभ्रमः ॥ २७
न च शाम्बरिकेच्छेयं माया मनसि मोहिनी ।
अर्थस्य सिद्ध्यै चेहन्ते नित्यं शाम्बरिकाः किल ॥ २८
यत्नेन प्रार्थयन्तेऽर्थं नान्तर्धानं व्रजन्ति भो ।
इति संदेहवेलायां संस्थिता लुलिता वयम् ॥ २९

श्रीवसिष्ठ उवाच ।

सभायामवसं तस्यामहं राम तदा किल ।
तेन प्रत्यक्षतो दृष्टं मयैतन्नान्यतः श्रुतम् ॥ ३०
इति बहुकलनाविवर्धिताङ्गं
जयति चिरं विततं मनो महात्मन् ।
शममुपगमिते परस्वभावे
परममुपैष्यसि पावनं पदं यत् ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० दे० उ० इन्द्रजालोपाख्याने चण्डालत्वव्यपगमो नाम नवोत्तरशततमः सर्गः ॥१०९॥

## दशोत्तरशततमः सर्गः ११०

श्रीवसिष्ठ उवाच ।

परमात्कारणादादौ चिच्चेत्यपदपातिनी ।
कलनापदमासाद्य कला कलिलतां गता ॥ १
असत्स्वेव विमोहेषु रामैवंप्रायवृत्तिषु ।
घनेषु तुच्छतामेत्य चिराय परिमूर्च्छति ॥ २
असदेव मनोवृत्तिर्म्लाना विस्तारयत्यलम् ।

चितबन्धवे ॥ १८ ॥ मदभिकाङ्क्षिणीव ॥ १९ ॥ चलनात्संभावितां पतनक्रियां तत्फलं विभागं च गम्यमानमपेक्ष्य सिंहासनादिति अपादाने पञ्चमी बोध्या॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ दैवी त्वदनुग्रहाय देवैः प्रयुक्ता अतएव संसारस्येदृशी स्थितिरिति बोधिनी ॥ २४ ॥ अनन्तस्य विष्णोः । मन एव जगत् ॥२५॥ एषः विधिः ॥ २६ ॥ सामान्यानां पृथग्जनानां मनोवृत्तेर्योग्यः ॥ २७ ॥ अर्थस्य धनस्य सिद्ध्यै ईहन्ते प्रीतिहेतुकौतुकप्रदर्शनाय चेष्टन्ते नत्वीदृशदुर्भ्रान्तये ॥ २८ ॥ इति उक्तालिङ्गद्वयाद्वयं संदेहसागरस्य वेलायां कूलभूते निर्णये स्थिताः ॥ २९ ॥ उक्तेयमाख्यायिका न बालकाख्यायिकावत्कल्पितकथा, नाप्यन्यतः श्रुता किंतु प्रत्यक्षदृष्टेत्याह—**सभायामिति** ॥ ३० ॥ उक्तामाख्यायिकां प्रस्तुते जगतो मनोमात्रविलासत्वे योजयंस्तत्फलमाह—**इतीति** । इति उक्तरीत्या बह्वीभिः कलनाभिर्विरचनैर्विवर्धिताङ्गं प्ररूढं चिरं विततं फलपल्लवशाखाभिर्विस्तीर्णं तरुशरीरमिव मनो जयति आत्मस्वरूपमभिभूय स्वयं सर्वोत्कर्षेण वर्तते । यैन्मनोविचारज्ञानयोगेन शमं निर्वासनतालक्षणं उपगमिते प्रापिते परस्वभावे सति त्वं भेदकोपाधिबाधात्परमं पावनं पूर्णात्मपदमुपैष्यसि अतस्तदर्थं वक्ष्यमाणोपायैर्यतस्वेत्यर्थः ॥ ३१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चण्डालत्वव्यपगमो नाम नवोत्तरशततमः सर्गः ॥ १०९ ॥

मनःप्रशमनोपायो मनोवैभववर्णनैः ।
प्रक्रम्यतेऽत्र गदितुं रामाय ब्रह्मसूनुना ॥ १ ॥

मनसो वासनामयत्वादात्यन्तिकज्ञेयवासनोच्छेद एव मनःप्रशमनोपायस्तस्मिंश्च शास्त्राचार्यस्वानुभवैर्दृश्यजातस्य मनोभ्रममात्रत्वनिश्चयपूर्वकः सप्तमभूमिकारोहणपर्यन्तं ज्ञानपरिपाचको मनोनिरोधप्रयत्न एवोपाय इति वक्तुं मूलतो मनस्स्वरूपं परिशोधयन्नाह—**परमादिति** । परमं कारणं चित्संवलितमज्ञानं तस्मादेव निमित्ताच्चिच्चेत्यपदपातिनी चेत्यगोचरा संपन्ना न वस्तुतः अविकारत्वात् । आदावित्यनेन प्राथमिकचेत्यपदपातस्याज्ञाननिमित्तत्वे तन्मूलद्वैतदर्शनानां सुतरां तन्निमित्तकत्वं सिद्धमिति सूच्यते । चेत्यपदपातादेव कलना अर्थप्रथेयमिति पदं नाम आसाद्य अर्थकलाभिर्नानारूपवैचित्र्यैः कलिलतां कलुषीभावं गता । स एव वासनाप्रथमाङ्कुर इति भावः ॥ १ ॥ एवंप्राया ईदृश्यो वृत्तयः स्थितयो येषां तेषु विमोहेषु अर्थकलाभासभ्रमेषु क्रमाद्घनेषु उपचितेषु सैव चित्स्वां पूर्णतां विस्मृत्य तुच्छतां असन्मनोरूपतामेत्य चिराय अनादिकालादारभ्य मूर्च्छति जन्ममरणादिभ्रमैर्मुह्यति । तथाच चितश्चेत्योन्मुखतैवानर्थमनोबीजमिति सैव निरोद्धव्येति भावः ॥२॥ एवं तुच्छवासनादोषसहस्रेण म्लाना मनोवृत्तिर्मनोभावेन स्थिता सा चिद-

१ अत्र यस्मान्मनसि इति पाठोऽपेक्षितः।

दुःखं दोषसहस्रेण वेतालानिव बालिका ॥ ३
सदेव हि महादुःखमसत्तां नयति क्षणात्।
निष्कलङ्का मनोवृत्तिरन्धकारमिवार्करुक् ॥ ४
नयत्यभ्याशतां दूरं दूरमभ्याशतां नयेत्।
मनो वल्गति भूतेषु बालो बालखगेष्विव ॥ ५
अभयं भयमज्ञस्य चेतसो वासनावतः।
दूरतो मुग्धपान्थस्य स्थाणुर्याति पिशाचताम् ॥ ६
शत्रुत्वं शङ्कते मित्रे कलङ्कमलिनं मनः।
मदाविष्टमतिर्जन्तुर्भ्रमत्पश्यति भूतलम् ॥ ७
पर्याकुले हि मनसि शशिनो जायतेऽशनिः।
अमृतं विषभावेन भुक्तं याति विषक्रियाम् ॥ ८
सुरपत्तननिर्माणमसत्सदिव पश्यति।
वासनावलितं चेतः स्वप्नवज्जाग्रदेव हि ॥ ९
मोहैककारणं जन्तोर्मनसो वासनोल्बणा।
उत्खातव्या प्रयत्नेन मूलोच्छेदेन सैव च ॥ १०
वासनावागुराकृष्टो मनोहरिणको नृणाम्।
परां विवशतामेति संसारवनगुल्मके ॥ ११
येन च्छिन्ना विचारेण जीवस्य ज्ञेयवासना।
निरभ्रस्येव सूर्यस्य तस्यालोको विराजते ॥ १२
अतस्त्वं मन एवेदं नरं विद्धि न देहकम्।
जडो देहो मनश्चात्र न जडं नाजडं विदुः ॥ १३
यत्कृतं मनसा तात तत्कृतं विद्धि राघव।
यत्त्यक्तं मनसा तावत्तत्त्यक्तं विद्धि चानघ ॥ १४
मनोमात्रं जगत्कृत्स्नं मनः पर्यन्तमण्डलम्।
मनो व्योम मनो भूमिर्मनो वायुर्मनो महान् ॥ १५
मनो यदि पदार्थे तु तद्भावेन न योजयेत्।
ततः सूर्योदये[1]ऽप्येते न प्रकाशाः कदाचन ॥ १६

मनो मोहमुपादत्ते यस्यासौ मूढ उच्यते।
शरीरे मोहमापन्ने न शवो मूढ उच्यते ॥ १७
मनः पश्य भवत्यक्षि शृण्वच्छ्रवणतां गतम्।
त्वग्भावं स्पर्शनादेति घ्राणतामेति जिघ्रणात् ॥ १८
रसनाद्रसतामेति विचित्रै[2]स्तत्र वृत्तिषु।
नाटके नटवद्देहे मन एवानुवर्तते ॥ १९
लघु दीर्घं करोत्येव सत्येऽसत्तां प्रयच्छति।
कटुतां नयति स्वादु रिपुं नयति मित्रताम् ॥ २०
य एव प्रतिभासोऽस्य चेतसो वृत्तिवर्तिनः।
ततस्तदेव प्रत्यक्षं तथात्रानुभवादिह ॥ २१
प्रतिभासवशादेव स्वप्नाकुलितचेतसः।
हरिश्चन्द्रस्य संपन्ना रात्रिर्द्वादशवार्षिकी ॥ २२
चित्तानुभाववशतो मुहूर्तत्वे गतं युगम्।
इन्द्रद्युम्नस्य वैरिञ्च्यपुराभ्यन्तरवर्तिनः ॥ २३
मनोज्ञया मनोवृत्त्या सुखतां याति रौरवम्।
प्रातःप्राप्तव्यराज्यस्य सुबद्धस्येव बन्धनम् ॥ २४
जिते मनसि सर्वैव विजिता चेन्द्रियावलिः।
शीर्यते च यथा तन्तौ दग्धे मौक्तिकमालिका ॥ २५
सर्वत्र स्थितया स्वच्छरूपया निर्विकारया।
समया सूक्ष्मया नित्यं चिच्छक्त्या साक्षिभूतया ॥ २६
सर्वभावानुगतया न चेत्यार्थविभिन्नया।
रामात्मसत्तया मूकमपि देहसमं जडम् ॥ २७
मनोऽन्तश्चलति व्यर्थं मननैषणमुह्यया।
बहिर्गिरिसरिद्व्योमसमुद्रपुरलीलया ॥ २८
जाग्रच्चाभिमतं वस्तु नयत्यमृतमृष्टताम्।
अनीहितं च विषतां नयत्यमृतमप्यलम् ॥ २९
अमृष्टसर्वभावानामलमात्मचमत्कृतिम्।

सदेव दुःखं विस्तारयति ॥ ३ ॥ यथा सकलङ्काऽसन्मनोवृत्तिश्चिद्दुःखं विस्तारयति एवं वासनाक्षये निर्वासनाकलङ्का स्वाभाविकसद्रूपैव सती महादुःखमसत्तां शून्यतां नयति। बोधेन बाध्यत इत्यर्थः ॥ ४ ॥ उक्तार्थसंभावनाय मनसोऽघटितघटनासामर्थ्यमाह—**नयती**त्यादिना। अभ्याशतां समीपताम् ॥ ५ ॥ ६ ॥ ॥ ७ ॥ ८ ॥ सुरपत्तनं गन्धर्वनगरम् ॥ ९ ॥ उत्खातव्या मूलत उच्छेत्तव्या ॥ १० ॥ ११ ॥ आलोकः प्रकाशः ॥ १२ ॥ तत्र प्रथमं मन एव मे देहो नान्य इति सदा भावनाभ्यासः कार्य इत्याह—**अत** इति। उक्तार्थे उपपत्तीर्दर्शयति—**जड** इत्यादिना ॥ १३ ॥ १४ ॥ पर्यन्तो भूप्रान्तस्तन्मण्डलम् ॥ १५ ॥ तद्भावेन प्रकाशादिभावेन न योजयेत् न कल्पयेत्। दिवान्धैर्वैपरीत्यदर्शनादिति भावः ॥ १६ ॥ मोहं अप्रबोधम् ॥ १७ ॥ ॥ १८ ॥ १९ ॥ स्वादु मधुरताम् ॥ २० ॥ २१ ॥ २२ ॥ अनुभावोऽत्रानुभवः प्रभावो वा। इन्द्रद्युम्नस्य रेवतापरनाम्नः ॥२३॥ दुःखस्य सुखत्वापत्तिः क्व दृष्टा तत्राह—**मनोज्ञये**ति। मनोज्ञया हरिस्मरणादिरूपया। रौरवं नरकदुःखमपि। श्वः प्रातरवश्यं राज्यं प्राप्तव्यमिति प्रमाणैर्निश्चयवतः करपादनिगडादिना सुष्ठु बद्धस्य बन्धनमिवेत्यर्थः ॥ २४ ॥ २५ ॥ हे राम, किमन्यन्मनसोऽर्थविपरीतकल्पनसामर्थ्यं वाच्यं यत्सर्वत्र समया स्वच्छत्वनिर्विकारत्वादिस्वभावचिन्मात्ररूपया स्वसत्तया मूकं वागादिसर्वक्रियाशून्यमपि ब्रह्मदेहतादात्म्यकल्पनया देहसमं जडं च कृत्वा अन्तर्मननं एषणं 'कामः संकल्पः' इत्यादिकया मुह्यया भ्रान्त्या बहिस्तु गिरिसरिद्व्योमसमुद्रपुरलीलया प्रकल्प्य व्यर्थं भ्रमतीति सर्वत्रेत्यादिश्लोकत्रयस्यैकोऽन्वयः ॥२६॥२७॥ ॥२८॥ननु मूढं मनोऽन्यथा कल्पयितुं विचारजागरूकं तु नान्यथा कल्पयिष्यतीति किं तन्नाशोपायचिन्तया तत्राह—**जाग्रच्चे**ति। विवेकजागरूकमपि मनोऽस्वादूच्छिष्टमपि योषिदधरादिवस्त्वभिमतं रागवशादिष्टममृतमिव मृष्टतां स्वादुतां नयति। अनीहितमनभिलषितं त्वमृतमपि विषतां विषवद्धेयतां नयति। विरक्तानाममृतेऽपि हेयताबुद्धिदर्शनादित्यर्थः ॥ २९ ॥ तर्हि

१ सूर्योदयोऽप्येते इति पाठः.

२ विचित्रास्तत्र वृत्तिषु इति पाठः साधुः.

मनः स्वाभिमताकारं रूपं सृजति वस्तुषु ॥ ३०
स्पन्देषु वायुतामेति प्रकाशेषु प्रकाशताम् ।
द्रवेषु द्रवतामेति चिच्छक्तिस्फुरितं मनः ॥ ३१
पृथ्व्यां कठिनतामेति शून्यतां शून्यदृष्टिषु ।
सर्वत्रेच्छास्थितिं याति चिच्छक्तिस्फुरितं मनः ॥ ३२
शुक्लं कृष्णीकरोत्येव कृष्णं नयति शुक्लताम् ।
विनैव देशकालाभ्यां शक्तिं पश्यास्य चेतसः ॥ ३३
मनस्यन्यत्र संसक्ते चर्वितस्यापि जिह्वया ।
भोजनस्यापि मृष्टस्य न स्वादोऽस्यानुभूयते ॥ ३४
यच्चित्तदृष्टं तद्दृष्टं न दृष्टं तदलोकितम् ।
अन्धकारे यथा रूपमिन्द्रियं निर्मितं तथा ॥ ३५
इन्द्रियेण मनो देहि मनसेन्द्रियमुन्मनः ।
इन्द्रियाणि प्रसूतानि मनसो नेन्द्रियान्मनः ॥ ३६
अत्यन्तभिन्नयोरैक्यं येषां चित्तशरीरयोः ।
ज्ञातज्ञेया महात्मानो मनस्यास्ते सुपण्डिताः ॥ ३७
कुसुमोल्लासिधम्मिल्ला हेलाचलितलोचना ।
काष्ठकुड्योपमाङ्गेषु लग्नाप्यमनसोऽङ्गना ॥ ३८
मनस्यन्यत्र संसक्ते वीतरागेण कानने ।
क्रव्यादचर्वितोऽङ्कस्थः स्वकरोऽपि न लक्षितः ॥ ३९
सुखीकर्तुं सुदुःखानि दुःखीकर्तुं सुखानि च ।
सुखेनैवाशु युज्यन्ते मनसोऽतिशया मुनेः ॥ ४०
मनस्यन्यत्र संसक्ते कथ्यमानापि यत्नतः ।
लता परशुकृत्तेव कथा विच्छिद्यते बत ॥ ४१
मनस्यद्रितटारूढे गृहस्थेनापि जन्तुना ।
शुभ्राभ्रकन्दरभ्रान्तिदुःखं समनुभूयते ॥ ४२

मनस्युल्लसिते स्वप्ने हृद्येव पुरपर्वताः ।
आकाश इव विस्तीर्णे दृश्यन्ते निर्मिताः क्षमाः ॥ ४३
मनो विलुलिते स्वप्ने हृद्येवाद्रिपुरावलिम् ।
तनोति चलिताम्भोधिर्वीचीचयमिवात्मनि ॥ ४४
अन्तरब्धिजलावृद्धत्तरङ्गापीडवीचयः ।
देहान्तर्मनसस्तद्वत्स्वप्नाद्रिपुरराजयः ॥ ४५
अङ्कुरस्य यथा पत्रलतापुष्पफलश्रियः ।
मनसोऽस्य तथा जाग्रत्स्वप्नविभ्रमभूमयः ॥ ४६
व्यतिरिक्ता यथा हेम्नो न हेमवनिता तथा ।
जाग्रत्स्वप्नक्रियालक्ष्मीर्व्यतिरिक्ता न चेतसः ॥ ४७
धाराकणोर्मिफेनश्रीर्यथा संलक्ष्यतेऽम्भसः ।
तथा विचित्रविभवा नानातेयं हि चेतसः ॥ ४८
स्वचित्तवृत्तिरेवेह जाग्रत्स्वप्नदशोदितम् ।
रसावेशादुपादत्ते शैलूष इव भूमिकाम् ॥ ४९
चण्डालत्वं हि लवणे प्रतिभासवशाद्यथा ।
तथेदं जगदाभोगि मनो मननमात्रकम् ॥ ५०
यद्यत्संवेद्यते किंचित्तेन तेनाशु भूयते ।
मनो मनननिर्माणं यथेच्छसि तथा कुरु ॥ ५१
नानापुरसरिच्छैलरूपतामेत्य देहिनाम् ।
तनोत्यन्तःस्थमेवेदं जाग्रत्स्वप्नमयं मनः ॥ ५२
सुरत्वाद्दैत्यतामेत्य नागत्वान्नगतामपि ।
प्रतिभासवशाच्चित्तमापन्नं लवणो यथा ॥ ५३
नरत्वादेति नारीत्वं पितृत्वात्पुत्रतां गतः ।
यथा क्षिप्रं प्रति नरः स्वसंकल्पात्तथा मनः ॥ ५४
संकल्पतः प्रम्रियते संकल्पाज्जायते पुनः ।
मनश्चिरन्तनाभ्यस्ताज्जीवतामेत्यनाकृति ॥ ५५

तत्त्वज्ञानपि तत्कुतो न भ्रमयेत्तत्राह—**अमृष्टे**ति । न मृष्टः साक्षात्कृतः सर्वभावः पूर्णता यैस्तेषामेव मनः स्वाभिमताकारमात्मचमत्कारभूतं रूपं सृजति नतु तत्त्वविदाम् । तेषां मिथ्याबुद्धिबाधितमनोविलासेषु चमत्कारदृष्ट्यभावादित्याशयः ॥ ३० ॥ रूपसर्गमेव प्रपञ्चयति—**स्पन्देष्वि**त्यादिना ॥ ३१ ॥ शून्यतामभावताम् । शून्यदृष्टिषु नास्तीति गृह्यमाणवस्तुषु । इच्छास्थितिं अप्रतिहतस्वैरवृत्तिम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ तेन चित्तेनालोकितमदृष्टं पुरःस्थमपि न दृष्टम् । तथाच चक्षुरादीन्द्रियमपि तेनैव स्वात्मनि कल्पितमित्याह—**अन्धकारे** इति । यथान्धकारे नैल्यं छायावैचित्र्यरूपं वा निर्मितं तद्वत् ॥ ३५ ॥ यद्यपीन्द्रियालोचिताकारधारणान्मन इन्द्रियेण निमित्तेन देहि साकारम् । इन्द्रियं च मनोधीनार्थालोचकत्वान्मनसा देहीति साम्यं तथापि मन उत् उत्कृष्टम् । तत्कुतस्तत्राह—**इन्द्रियाणी**ति ॥ ३६ ॥ तच्चेदं मनो मूढैरात्मकोटौ निक्षिप्याहमित्यात्मतया गृह्यते । तत्त्वज्ञैस्तु देहकोटौ निक्षिप्य जडदेहात्मना गृह्यते । अतएव ते निर्विकारात्मदर्शिनो वन्द्या इत्याह—**अत्यन्ते**ति । मूढदृष्ट्या अत्यन्तभिन्नयोः ॥ ३७ ॥ अतएव तेषां कामादिविकारो न दृश्यत इत्याह—**कुसुमे**ति । अमनसो देहे लग्नाप्यङ्गना काष्ठकुड्योपमा । विकारं जनयितुमक्षमेत्यर्थः ॥ ३८ ॥ एवं दुःखनिमित्तैर्दुःखात्मकविकारोऽपि तेषां नास्तीत्याह—**मनसी**ति । वीतरागेण तदाख्यमुनिना । अङ्कस्थो ध्यानकालेऽङ्के प्रसारितः ॥ ३९ ॥ मुनेर्मनसः अभ्यासपाटवकृता भावनातिशयाः सुखेनानायासेनैव युज्यन्ते क्षमन्ते ॥ ४० ॥ ४१ ॥ समनुभूयते । स्वप्ने इति शेषः ॥ ४२ ॥ हृद्येव निर्मिता अन्तःकृताः स्वस्वकार्यक्षमाश्च दृश्यन्ते ॥ ४३ ॥ मनः विलुलिते स्वेन विक्षिप्ते आत्मनि । तनोति विस्तारयति ॥ ४४ ॥ ४५ ॥ ४६ ॥ हेमवनिता स्वर्णप्रतिमा ॥ ४७ ॥ नानाता नानावैचित्र्यम् ॥ ४८ ॥ उदितमुदयमाविर्भावमादत्ते । रसो रागः शृङ्गारादिश्च तदावेशात् । शैलूषो नटः । भूमिकां वेषवैचित्र्यम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ नागत्वाद्गजत्वात्सर्पत्वाद्वा । नगतां वृक्षतां गिरितां वा ॥ ५३ ॥ यथा पितृत्वात्पुत्रतां गतः पुमान् नरत्वान्नारीत्वमेति तद्वत् ॥ ५४ ॥ अनाकृति स्वत आकारशून्यमपि जीवतां जीवाकारमेति ॥ ५५ ॥

मनो मननसंमूढमूढवासनमाततम् ।
संकल्पाद्योनिमायाति सुखदुःखे भयाभये ॥ ५६
सुखं दुःखं च मनसि तिले तैलमिव स्थितम् ।
तद्देशकालवशतो घनं वा तनु वा भवेत् ॥ ५७
तैलं तिलस्य चाक्रान्त्या स्फुटतामेति शाश्वतीम् ।
चेतसो मननासङ्गाद्घनीभूते सुखासुखे ॥ ५८
देशकालाभिधानेन राम संकल्प एव हि ।
कथ्यते तद्वशाद्यस्माद्देशकालौ स्थितिं गतौ ॥ ५९
प्रशाम्यत्युल्लसत्येति याति नन्दति वल्गति ।
मनःशरीरसंकल्पे फलिते न शरीरकम् ॥ ६०
नानास्फारसमुल्लासैः स्वसंकल्पोपकल्पितैः ।
मनो वल्गति देहेऽस्मिन्साध्वीवान्तःपुराजिरे ॥ ६१
चापले प्रसरत्तस्मादन्तर्येन नदीयते ।
मनोविलयमादत्ते तस्यालान इव द्विपः ॥ ६२
न स्पन्दते मनो यस्य शास्त्रस्तम्भ इवोत्तमः ।
सद्वस्तुतोऽसौ पुरुषः शिष्टाः कर्दमकीटकाः ॥ ६३
यस्याचपलतां यातं मन एकत्र संस्थितम् ।
अनुत्तमपदेनासौ ध्यानेनानुगतोऽनघ ॥ ६४
संयमान्मनसः शान्तिमेति संसारविभ्रमः ।
मन्दरेऽस्पन्दतां याते यथा क्षीरमहार्णवः ॥ ६५
मानस्यो वृत्तयो या या भोगसंकल्पविभ्रमैः ।
संसारविषवृक्षस्य ता एवाङ्कुरयोनयः ॥ ६६
चित्तं चलत्कुवलयं वलयन्त एते
मूढा महाजडजवे मदमोहमन्दाः ।
आवर्तवर्तिनि विलूनविशीर्णचिन्ता-
चक्रभ्रमे पुरुषदुर्भ्रमराः पतन्ति ॥ ६७

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषूत्पत्तिप्रकरणे चित्तचिकित्सापूर्वकं चित्तवर्णनं नाम दशोत्तरशततमः सर्गः ॥ ११० ॥

---

## एकादशोत्तरशततमः सर्गः १११

श्रीवसिष्ठ उवाच ।

अस्य चित्तमहाव्याधेश्चिकित्सायां महौषधम् ।
स्वायत्तं शृणु वक्ष्यामि साधु सुस्वादु निश्चितम् ॥ १
स्वेनैव पौरुषेणाशु स्वसंवेदनरूपिणा ।
यत्नेन चित्तवेतालस्त्यक्त्वेष्टं वस्तु जीयते ॥ २
त्यजन्नभिमतं वस्तु यस्तिष्ठति निरामयः ।
जितमेव मनस्तेन कुदन्त इव दन्तिना ॥ ३
स्वसंवेदनयत्नेन पाल्यते चित्तबालकः ।
अवस्तुतो वस्तुनि च योज्यते बोध्यतेऽपि च ॥ ४
शास्त्रसत्सङ्गधीरेण चिन्तातप्तमतापिना ।
छिन्धि त्वमायसेनायो मनसैव मनो मुने ॥ ५
अयत्नेन यथा बाल इतश्चेतश्च योज्यते ।
भावैस्तथैव चेतोऽन्तः किमिवात्रास्ति दुष्करम् ॥ ६
सत्कर्मणि समाक्रान्तमुदर्कोदयदायिनि ।
स्वपौरुषेणैव मनश्चेतनेन नियोजयेत् ॥ ७

---

मननेन सम्यङ्मूढा मोहातिशयं प्राप्ता मूढवासना यस्मिंस्तत् । ऊढवासनमिति वा छेदः । योनिं जन्मस्थानम् । 'मनोऽकृतेनायात्यस्मिञ्शरीरे' इति हि श्रुतिः ॥ ५६ ॥ ५७ ॥ आक्रान्त्या यन्त्रनिष्पीडनेन । चेतसोऽन्तर्घनीभूते सुखासुखे मननासङ्गात् स्फुरतां इतो गच्छत इति वचनविपरिणामेनानुषङ्गः ॥ ५८ ॥ ननु देशकालकर्मविषयवैचित्र्यादेव सुखदुःखादिवैचित्र्यं प्रसिद्धं तत्कथं मननासङ्गादित्युच्यते तत्राह—**देशे**ति । अल्पयोरपि देशकालयोर्मनसा वैपुल्यसंकल्पने वैपुल्यानुभवात्तुच्छेऽपि विषये मनसा बहुमते रागातिशयदर्शनाच्चेति भावः ॥ ५९ ॥ एवं शरीरमपि मनःसंकल्पाधीनमेवेत्याह—**प्रशाम्यती**ति । मनः-शरीरस्य संकल्पे फलिते सति स्थूलं शरीरकं प्रशान्त्यादिविकार-भाग्भवति न स्वातन्त्र्येणेति शेषः ॥ ६० ॥ ६१ ॥ मनसो निग्रहोपायं सफलं दर्शयति—**चापले** इति । विषयानुसंधानं चापलम् ॥ ६२ ॥ शस्त्रं स्तम्भनास्त्रं तत्कृते स्तम्भे यथा शत्रुर्न स्पन्दते तद्वत् । असावेव सद्वस्तुतः परमार्थतः पुरुषः ॥ ६३ ॥ ध्यानेन हेतुना असौ अनुत्तमपदेन अनुगतः संगतः । ब्रह्मीभूत एवेत्यर्थः ॥ ६४ ॥ अस्पन्दतामिति च्छेदः ॥ ६५ ॥ ६६ ॥ मद-मोहमन्दा एते पुरुषदुर्भ्रमराश्चित्तरूपं चलत्कुवलयं संसारदुर्नदी-प्रवाह्यमानोत्पलं वलयन्तः संवेष्ट्य भ्रमन्तः सन्तो महाजडजवे लडयोरभेदान्महाजाड्यप्रवाहरूपजलवेगे वात्यावर्तवद्वर्तिनि परि-वर्तमाने प्रबलचिन्तान्तरेण विलूना चिरं नैष्फल्याद्देहेन सह विशीर्णा च या चिन्ता तल्लक्षणे चक्रभ्रमे चक्रसदृशे आवर्ते पत-न्तीत्यर्थः ॥ ६७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तचिकित्सापूर्वकं चित्तवर्णनं नाम दशोत्तर-शततमः सर्गः ॥ ११० ॥

यत्नादभिमतत्यागस्त्यागोऽहंताममत्वयोः ।
अत्र चित्तजयोपायश्चिदैकाग्र्यं च वर्ण्यते ॥ १ ॥

स्वायत्तं स्वाधीनम् । अवश्यं साधयति पुरुषार्थमिति साधु ॥ १ ॥ इष्टं रागविषयं बाह्यविषयं त्यक्त्वा संवेदनं स्वात्ममात्रा-कारवृत्तिधारा तद्रूपिणा पौरुषेण यत्नेन जीयते ॥ २ ॥ तत्रेष्ट-त्यागः प्रथमपीठिका दृढीकार्येत्याशयेनाह—**त्यजन्नि**ति । अभिमतं इष्टम् । निरामयो रागादिचित्तरोगशून्यः ॥ ३ ॥ पाल्यते रागचापलादिरोगचिकित्सया रक्ष्यते । अवस्तुतः प्रत्याहृत्येति शेषः ॥ ४ ॥ चिन्तालक्षणे वह्नावातप्तं मनोरूपं अयः । अतप्तेन शान्ततापेन मनसैवायसा साधनेन च्छिन्धि ॥ ५ ॥ भावैर्लालन-भीषणाद्युपायैः ॥ ६ ॥ सत्कर्मणि समाध्यभ्यासलक्षणे समाक्रान्त-मुपक्रान्तम् । चेतनेन चिदात्मना नियोजयेदेकीकुर्यात् ॥ ७ ॥

स्वायत्तमेकान्तहितं स्वेप्सितत्यागवेदनम् ।
यस्य दुष्करतां यातं धिक्तं पुरुषकीटकम् ॥ ८
अरम्यं रम्यरूपेण भावयित्वा स्वसंविदा ।
मल्लेनेव शिशुश्चित्तमयत्नेनैव जीयते ॥ ९
पौरुषेण प्रयत्नेन चित्तमाश्वेव जीयते ।
अचित्तेनाप्रयत्नेन पदं ब्रह्मणि दीयते ॥ १०
स्वायत्तं च सुसाध्यं च स्वचित्ताक्रान्तिमात्रकम् ।
शक्नुवन्ति न ये कर्तुं धिक्तान्पुरुषजम्बुकान् ॥ ११
स्वपौरुषैकसाध्येन स्वेप्सितत्यागरूपिणा ।
मनःप्रशममात्रेण विना नास्ति शुभा गतिः ॥ १२
मनोमारणमात्रेण साध्येन स्वात्मसंविदा ।
निःसपत्नमनाद्यन्तमनिङ्गनमिहोच्यताम् ॥ १३
ईप्सितावेदनाख्यात्तु मनःप्रशमनादृते ।
गुरूपदेशशास्त्रार्थमन्त्राद्या युक्तयस्तृणम् ॥ १४
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ।
असंकल्पनशस्त्रेण छिन्नं चित्तं गतं यदा ॥ १५
स्वसंवेदनसाध्येऽस्मिन्संकल्पानर्थशासने ।
शान्तायामत्र वपुषि पुंसः कैव कदर्थना ॥ १६
नूनं दैवमनादृत्य मूढसंकल्पकल्पितम् ।
पुरुषार्थेन संवित्त्या नय चित्तमचित्तताम् ॥ १७
तां महापदवीमेकां[1] कामप्यधिगतं चिरम् ।
चित्तं चिद्भक्षितं कृत्वा चित्तादपि परो भव ॥ १८
भव भावनया युक्तो युक्तः परमया धिया ।
धारयात्मानमव्यग्रो ग्रस्तचित्तं ततः परम् ॥ १९
परं पौरुषमाश्रित्य नीत्वा चित्तमचित्तताम् ।
तां महापदवीमेहि यत्र नाशो न विद्यते ॥ २०
संवेदनविपर्यासरूपिणी धीरिवाचला ।
जेतुमाशु मनो राम पौरुषेणैव शक्यते ॥ २१
अनुद्वेगः श्रियो मूलमनुद्वेगात्प्रवर्तते ।
जन्तोर्मनोजयो येन त्रिलोकीविजयस्तृणम् ॥ २२
न शस्त्रदलनोत्पातपाता यस्यां मनागपि ।
स्वभावमात्रव्यावृत्तौ तस्यां कैव कदर्थना ॥ २३
अपि स्ववेदनाक्रान्तौ न शक्ता ये नराधमाः ।
कथं व्यवहरिष्यन्ति व्यवहारदशासु ते ॥ २४
पुमान्मृतोऽस्मि जातोऽस्मि जीवामीति कुदृष्टयः ।
चेतसो वृत्तयो भान्ति चपलस्यासदुत्थिताः ॥ २५
न कश्चनेह म्रियते जायते न च कश्चन ।
स्वयं वेत्ति मृतं स्वस्य लोकमन्यं स्वकं मनः ॥ २६
इतो याति परं लोकं स्फुरत्यन्यतया मनः ।
तत्तस्यैत्येतदामोक्षमतो मृतिभयं कुतः ॥ २७
इहलोकेन विचरत्विहलोके परत्र च ।
चित्तमामोक्षमास्तेऽस्य रूपमन्यन्न विद्यते ॥ २८
मृते भ्रातरि भृत्यादौ क्लेश आक्रियतेऽनृतः ।
तत्स्वचित्तं स्वचैतन्यव्यावृत्तात्मेति मे मतिः ॥ २९

अविरक्तान्निन्दति—**स्वायत्त**मिति । स्वेप्सितस्य त्यागस्तद्विषयं वेदनं वैराग्यवृत्तिः ॥ ८ ॥ अरम्यं विषयजातं परमार्थरम्यब्रह्मरूपेण भावयित्वा ॥ ९ ॥ ब्रह्मणि पदमङ्घ्रिर्दीयते । ब्रह्म प्राप्यत इति यावत् ॥ १० ॥ स्वचित्तस्य आक्रान्तिर्निग्रहस्तावन्मात्रम् ॥ ११ ॥ १२ ॥ स्वात्मसंविदा स्वात्मतत्त्वसाक्षात्कारेण निःसपत्नं स्वसाम्राज्यसुखविरोधिमोहादिशत्रुरहितमत एवानिङ्गनमचलमनाद्यन्तं स्वाराज्यसुखमिहास्मिन्नेव जीवन्मुक्तदेहे उच्यताम् । निःशङ्कं प्रतिज्ञायतामित्यर्थः ॥ १३ ॥ ईप्सितस्य बाह्यविषयस्यावेदनमनवभासः । ईप्सितस्य मोक्षसुखस्य आवेदनं निवेदनसाधनं तदाख्याद्वा । युक्तयः साधनानि । नात्र गुरूपदेशनिन्दायां तात्पर्यं किंतु मनःप्रशमनस्तुतौ ॥१४॥ गतं सहमूलेनोच्छिन्नं यदेत्यर्थः ॥ १५ ॥ संकल्परूपस्य अनर्थस्य शासने निग्रहे शान्तायां शान्त्यादिसाधनसंपन्नायां जीवन्मुक्तौ । अत्र वपुषि अधिकारिशरीरे । कदर्थना क्लेशः ॥ १६ ॥ ननु दैवप्रातिकूल्ये कथं कार्यसिद्धिस्तत्राह—**नून**मिति ॥ १७ ॥ अचित्ततानयने क उपायस्तमाह—**ता**मिति । चित्तं चिरं तां महापदवीं ब्रह्मरूपतामधिगतं प्राप्तं कृत्वान्ते साक्षात्कारवृत्त्याविर्भूतचित्ता समनस्काविद्याबाधाच्चिद्भक्षितं कृत्वा चित्तादपि परः पूर्णचिन्मात्ररूपो भवेत्यर्थः ॥ १८ ॥ तत्र प्रथमं चिन्मात्रभावनया युक्तो भव, तत्स्थैर्यार्थं परमया अतिसावधानया धिया बुद्ध्या युक्तो भव । ततो ग्रस्तचित्तं ततश्चित्तात्परं आत्मानं धारय स्थापय नान्यदित्यर्थः ॥ १९ ॥ २० ॥ यथा दिङ्मोहे अचला स्थिरापि प्रतीच्यां प्राचीति संवेदनविपर्यासधीर्विवेकस्थैर्यलक्षणेन पुरुषप्रयत्नेन जेतुं शक्यते तद्वन्मनोऽपीत्यर्थः ॥२१॥ चिरं मनोनिग्रहे प्रवृत्तस्योद्वेगात्तत्परित्यागो मा भूदिति तदुत्साहं वर्धयन्नाह—**अनुद्वेग** इति । श्रियो राज्यादिसंपदो मूलम् । दृष्टान्तार्थमिदम् । मनोजयः प्रवर्तते सिध्यतीति यावत् ॥२२॥ श्रीसुखे युद्धे शस्त्रदलनकदर्थना, स्वर्गसुखे उत्पातो मृत्वा ऊर्ध्वगमनं ततः पात इति कदर्थना, मनोजयसुखे तु न कापीत्याह—**न शस्त्रे**ति ॥ २३ ॥ स्वस्य वेदनं मनः । करणे ल्युट् । तस्याक्रान्तौ निग्रहे ॥ २४ ॥ समाधिसुषुप्त्यादौ जन्ममरणादिदुःखानामननुभवाद्व्यवहारकाले मनोवृत्तिपूर्वकमेव तदनुभवाच्च मनोवृत्तिमात्रत्वं संसारस्येति दर्शयति—**पुमानि**त्यादिना । असत्य एवोत्थिताः । कर्मधारयत्वात्पूर्वपदं पुंवत् ॥ २५ ॥ असत्त्वमेव दर्शयति—**न कश्चने**ति ॥ २६ ॥ २७ ॥ इहलोके इहलोकेन इहलोकात्मना विचरतु भ्राम्यतु, परत्र परलोके च परलोकभावेनेति शेषः । तथापि चित्तमेव तथा तथा आस्ते । अस्य संसारस्य चित्तादन्यद्रूपं न विद्यत इत्यर्थः ॥२८॥ एवं च शोकादयोऽप्यात्मचैतन्यव्यावृत्तचित्तमात्रधर्मा इत्याह—**मृते** इति । क्लेशः शोकः । निर्विकारस्वचैतन्याद्व्यावृत्तात्म विभक्तं

[1] एतां इति पाठः.

सति पथ्ये तते शुभ्रे चित्तोपशमनादृते ।
तिर्यगूर्ध्वमधस्ताच्च भूयोभूयो विचारितम् ॥ ३०
यावन्नास्ति किलोपायश्चित्तोपशमनादृते ।
ऋते तथ्ये तते शुभ्रे बोधे हृद्युदिते सति ॥ ३१
मनोविलयमात्रेण विश्रान्तिरुपजायते ।
व्यायते हृदयाकाशे चिति चिच्चक्रधारया ॥ ३२
मनो मारय निःशङ्कं त्वां प्रबध्नन्ति नाधयः ।
यदि रम्यमरम्यत्वे त्वया संविदितं विदा ॥ ३३
छिन्नान्येव तदाङ्गानि[1] चित्तस्येति मतिर्मम ।
अयं सोऽहमिदं तन्म एतावन्मात्रकं मनः ॥ ३४
तदभावनमात्रेण दात्रेणेव विलूयते ।
छिन्नाभ्रमण्डलं व्योम्नि[2] यथा शरदि धूयते ॥ ३५
वातेनाकल्पनेनैवं तथा तद्धूयते मनः ।
भवन्ति यत्र शस्त्राग्निपवनास्तत्र भीर्भवेत् ॥ ३६
स्नायते मृदुनि स्वच्छे किमसंकल्पने भयम् ।
इदं श्रेय इदं नेति सिद्धमाबालमक्षतम् ॥ ३७
बालं पुत्रमिवोदारे मनः श्रेयसि योजयेत् ।
अक्षयं चानवं चेतःसिंहं संसृतिबृंहणम् ।
घ्नन्ति ये ते जयन्तीह निर्वाणपददायिनः ॥ ३८
भीमाः संभ्रमदायिन्यः संकल्पकदनादिमाः ।
विपदः संप्रसूयन्ते मृगतृष्णा मराविव ॥ ३९
कल्पान्तपवना वान्तु यान्तु चैकत्वमर्णवाः ।
तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षतिः ॥ ४०
मनोबीजात्समुद्यन्ति सुखदुःखे शुभाशुभे ।
संसारखण्डका एते लोकसप्तकपल्लवाः ॥ ४१
असंकल्पनमात्रैकसाध्ये सकलसिद्धिदे ।
असंकल्पनसाम्राज्ये तिष्ठावष्टब्धतत्पदः ॥ ४२
प्रयच्छत्युत्तमानन्दं क्षीयमाणं मनः क्रमात् ।
काष्ठक्षीणाङ्गकाङ्गारो यथाङ्गारक्षयार्थिनः ॥ ४३
अपि ब्रह्मकुटीलक्षं मनसश्चेत्समीहितम् ।
तदणोरन्तरे व्यक्तं विभक्तं परिदृश्यते ॥ ४४

संकल्पमात्रविभवेन कृतात्यनर्थं
संकल्पमात्रविभवेन सुसाधितार्थम् ।
संतोषमात्रविभवेन मनो विजित्य
नित्योदितेन जयमेहि निरीहितेन ॥ ४५
परमपावनया विमनस्तया
समतया मतयात्मविदामपि ।
शमितया सितयान्तरहंतया
यदवशिष्टमजं पदमस्तु तत् ॥ ४६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उत्पत्तिप्रकरणे चित्तचिकित्सानामैकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

स्वविकाररूपं स्वचित्तमेवेत्यर्थः ॥२९॥ अतः परमात्मनि समूलचित्तनाश एव मुक्त्युपायो नान्य इति परिशेषयन्नुपसंहरति—**सती**त्यादिना । सति अन्यनिरपेक्षसत्ताके पथ्ये सर्वहिते । शुभ्रे मायामालिन्यरहिते । ऋते प्रमाणमूर्धन्यश्रुतिबोधिते परमात्मनि चितो भावश्चित्ता तया उपशमनात्तद्भावमात्रपरिशेषलक्षणाच्चित्तस्योपशमनात् ऋते विना मुक्तेरुपायोऽन्यो नास्ति । यावदित्यवधारणे । नास्त्येवेत्यर्थः । एतदूर्ध्वमूर्ध्वलोकेषु अधस्तात् पातालादिलोकेषु तिर्यक् परितो द्वीपान्तरेषु च तत्त्वदर्शिभिर्विचार्य निर्धारितमित्युत्तरेण सहान्वयः ॥ ३० ॥ मनोविलये च समाधिपरिपाकपरिष्कृते मनस्यपरोक्षतया आविर्भूतब्रह्मात्मकबोध एवोपाय इत्याशयेनाह—**ऋते तथ्ये** इति । ऋते अबाध्ये ॥ ३१ ॥ व्यायते अत्यन्तविस्तीर्णे हृदयाकाशे दहराकाशरूपे ब्रह्मचिति चरमवृत्तीद्धचिल्लक्षणया चक्रधारया मनो मारयेति परेणान्वयः ॥ ३२ ॥ आधयो मानसदुःखानि त्वां न प्रबध्नन्ति न बन्धयिष्यन्ति । आपातरम्येषु विषयेषु दोषानुसंधानेनारम्यतादर्शनं प्रथमं संपाद्यमित्याशयेनाह—**यदी**ति ॥३३॥ मनसश्छेद्यान्यङ्गान्युक्त्वा शरीरमाह—**अयं सोऽह**मिति । अयं दृश्यमानः स पित्रा उत्पादितो देहः अहं इदं देहसंबन्धि गृहक्षेत्रादि तत्प्राक् पित्राद्यर्जितं मे मदीयं इति यो भ्रम एतावन्मात्रकं एतावच्छरीरकं मन इत्यर्थः ॥ ३४ ॥ ३५ ॥ वातेन यथा छिन्नाभ्रमण्डलं धूयते निरस्यते तथा एवं प्रागुक्तेनाहंममेत्यकल्पनेन मनो धूयत इत्यर्थः ॥३६॥ मृदुनि अकठिने । अनायाससाध्ये इति यावत् । सिद्धं प्रसिद्धम् ॥३७॥ किं प्रसिद्धं तदाह—**बाल**मिति । अक्षयं क्षेतुमशक्यम् । अनवं अबालम् । चेतोलक्षणं सिंहं ये घ्नन्ति ते जयन्ति सर्वोत्कर्षेण वर्तन्ते । अन्येभ्योऽपि निर्वाणपददायिनो भवन्तीत्यर्थः ॥३८॥ मन एव महाभयं मनोजय एवाभयप्रतिष्ठेत्याह—**भीमा** इति द्वाभ्याम् ॥३९॥४०॥ खण्डका वनखण्डाः ॥४१॥ अवष्टब्धमवलम्बितं तत्परमात्मपदसिंहासनं येन तथाविधः सन् असंकल्पनसाम्राज्ये तिष्ठ ॥४२॥ नन्वसंकल्पनमात्रेण कथं मनःक्षयानन्दसिद्धिस्तत्र दृष्टान्तमाह—**काष्ठे**ति । यथा अङ्गारक्षयार्थिनो ज्वलदङ्गारनाशेन तापोपशमसुखार्थिनः पुरुषस्य काष्ठापसरणेन क्षीणाङ्गकः क्रमाद्भस्मीभावापन्नावयवः सोऽङ्गारस्तापोपशमनानन्दं प्रयच्छति तद्वदित्यर्थः ॥ ४३ ॥ संकल्पवृद्धौ ब्रह्माण्डलक्षाणामपि चिदणूदरे कल्पना संपद्यत इत्याह—**अपी**ति । ब्रह्मकुटीनां ब्रह्माण्डानाम् । समीहितं संकल्पैरभिलषितं चेत् ॥४४॥ संकल्पमात्रलक्षणेन स्वविभवेन सुसाधिता ब्रह्माण्डकोट्यादिपदार्था येन अतएव संकल्पमात्रविभवेनैव कृता अत्यनर्था जन्ममरणनिरयादयो येन तत्तथाविधं मनो नित्योदितेन निरन्तरभावितेन निरीहितेन निःसंकल्पेन संतोषमात्रविभवेन विजित्य विजयं सर्वोत्कर्षं एहि प्राप्नुहि ॥ ४५ ॥ आत्मविदां मतया संमतया समतया अवैषम्यवृत्त्या शमितया निरस्तया अमितया बहुधा अहंतयापि अन्तः यत्

---

१ तदङ्गानि इति पाठः क्वचित्. २ व्योम इति पाठः.

## द्वादशोत्तरशततमः सर्गः ११२

श्रीवसिष्ठ उवाच ।

यस्मिंस्तस्मिन्पदार्थे हि येन तेन यथा तथा ।
तीव्रसंवेगसंपन्नं मनः पश्यति वाञ्छितम् ॥ १
जायते म्रियते चैषा मनसस्तीव्रवेगिता ।
सौम्याम्बुबुद्बुदालीव निर्निमित्ता स्वभावतः ॥ २
शीतता तुहिनस्येव कज्जलस्येव कृष्णता ।
लोलता मनसो रूपं तीव्रातीव्रैकरूपिणी ॥ ३

श्रीराम उवाच ।

कथमस्यातिलोलस्य वेगो वेगैककारणम् ।
चलता मनसो ब्रह्मन्बलतो विनिवार्यते ॥ ४

श्रीवसिष्ठ उवाच ।

नेह चञ्चलताहीनं मनः क्वचन दृश्यते ।
चञ्चलत्वं मनोधर्मो वह्नेर्धर्मो यथोष्णता ॥ ५
यैषा हि चञ्चला स्पन्दशक्तिश्चित्तत्वसंस्थिता ।
तां विद्धि मानसीं शक्तिं जगदाडम्बरात्मिकाम् ॥ ६
स्पन्दास्पन्दादृते वायोर्यथा सत्तैव नोह्यते ।
तथा न चित्तसत्तास्ति चञ्चलस्पन्दनादृते ॥ ७
यत्तु चञ्चलताहीनं तन्मनो मृतमुच्यते ।
तदेव च तपःशास्त्रसिद्धान्तो मोक्ष उच्यते ॥ ८
मनोविलयमात्रेण दुःखशान्तिरवाप्यते ।
मनोमननमात्रेण दुःखं परमवाप्यते ॥ ९
दुःखमुत्पादयत्युच्चैरुत्थितश्चित्तराक्षसः ।
सुखायानन्तभोगाय तं प्रयत्नेन पातय ॥ १०
तस्य चञ्चलता यैषा त्वविद्या राम सोच्यते ।
वासनापदनाम्नीं तां विचारेण विनाशय ॥ ११
अविद्यया वासनया तयान्तश्चित्तसत्तया ।
विलीनया त्यागवशात्परं श्रेयोऽधिगम्यते ॥ १२
यत्तत्सदसतोर्मध्यं यन्मध्यं चित्त्वजाड्ययोः ।
तन्मनः प्रोच्यते राम द्वयोर्दोलायिताकृति ॥ १३
जाड्यानुसंधानहतं जाड्यात्मकतयेद्धया ।
चेतो जडत्वमायाति दृढाभ्यासवशेन हि ॥ १४
विवेकैकानुसंधानाच्चिदंशात्मतया मनः ।
चिदेकतामुपायाति दृढाभ्यासवशादिह ॥ १५
पौरुषेण प्रयत्नेन यस्मिन्नेव पदे मनः ।
पात्यते तत्पदं प्राप्य भवत्यभ्यासतो हि तत् ॥ १६
पुनः पौरुषमाश्रित्य चित्तमाक्रम्य चेतसा ।
विशोकं पदमाश्रित्य निराशङ्कः स्थिरो भव ॥ १७
भवभावनया मग्नं मनसैव न चेन्मनः ।
बलादुत्तार्यते राम तदुपायोऽस्ति नेतरः ॥ १८
मन एव समर्थं वो मनसो दृढनिग्रहे ।
अराजा कः समर्थः स्याद्राज्ञो राघव निग्रहे ॥ १९
तृष्णाग्राहगृहीतानां संसारार्णवरंहसि ।
आवर्तैरुह्यमानानां दूरे स्वं मन एव नौः ॥ २०
मनसैव मनश्छित्त्वा पाशं परमबन्धनम् ।
उन्मोचितो न येनात्मा नासावन्येन मोक्ष्यते ॥ २१
या योदेति मनोनाम्नी वासना वासितान्तरा ।
तां तां परिहरेत्प्राज्ञस्ततोऽविद्याक्षयो भवेत् ॥ २२

---

अजं जन्मादिविकारशून्यं पदमवशिष्टं तदेव तवास्तु प्राप्यमिति आशिषि लोट् ॥ ४६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तचिकित्सा नामैकादशोत्तरशततमः सर्गः ॥ १११ ॥

**अत्र चित्तक्षयोपायो वासनात्याग ईर्यते ।**
**चिन्मात्रवासनाभ्यासात्तदेकदृढनिश्चयात् ॥ १ ॥**

वासनाक्षयार्थं द्वैतविषये मनसस्तीव्रवेगो निरोद्धव्यश्चिन्मात्राकारे तु संपाद्य इति वक्तुं मनसः स्वतीव्रवेगानुसारिफलसंपादनस्वभावतामाह—**यस्मिन्निति** । यस्मिन्पदार्थे येन येन वाञ्छितेन निमित्तेन यथा यथा प्रकर्षेण मनस्तीव्रवेगाभिसंपन्नं भवति तस्मिन्पदार्थे तत्तद्वाञ्छितं पश्यतीत्यर्थः ॥ १ ॥ हे सौम्य, उपेक्षणेन जायते । निरोधप्रयत्नेन म्रियते शाम्यति । यत उत्पत्तौ निर्निमित्तेत्यर्थः ॥ २ ॥ स्वभावत इति यदुक्तं तद्विशदयति—**शीततेति** ॥ ३ ॥ वेग इत्यस्य व्याख्या चलतेति । वेगस्य तीव्रवेगस्य एकं मुख्यं कारणम् ॥ ४ ॥ ५ ॥ चित्तत्वं जगत्कारणमायासंवलितचैतन्यं तत्र संस्थिता स्पन्दशक्तिः क्रियाशक्तिस्तां मानसीं मनोरूपेण परिणतां विद्धीत्यर्थः ॥ ६ ॥ सत्ता अस्तिता । नोह्यते न वितर्क्यते ॥ ७ ॥ ८ ॥ ९ ॥ अनन्तं त्रिविधपरिच्छेदरहितं यथा स्यात्तथा भुज्यत इव प्रथत इत्यनन्तभोगाय मोक्षसुखाय ॥ १० ॥ अविद्या रजःशक्तिबीजकत्वादविद्या । **वासनापदनाम्नी**मिति । मनः 'अनो बहुव्रीहेः' इति प्रतिषेधविषये 'अन उपधालोपिन' इति ङीप् पाक्षिकः ॥ ११ ॥ त्यागवशाद्बाह्यविषयानुसंधानत्यागबलात् ॥ १२ ॥ एवं वक्तव्योपयोगितया चाञ्चल्यधर्मकतां मनसः समर्थ्य वास्तवावास्तवरूपद्वयात्मकतामवास्तवांशहेयताप्रदर्शनाय वास्तवरूपप्रतिष्ठाया विनाशप्रसक्तिवारणाय चाह—**यत्तदि**ति । सदसतोर्मध्यं मिथुनीभावरूपमन्तरालम् । अतएवान्यतररूपप्राधान्ये दोलायिताकृति अविश्रान्तस्थिति ॥१३॥ कस्मात्तर्ह्येकतरकोटिविश्रान्तिस्तत्राह—**जाड्येति** द्वाभ्याम् । इद्धया प्ररूढया ॥ १४ ॥ चिदंशात्मतया इद्धयेत्यनुषज्यते ॥ १५ ॥ प्रयत्नेन स्वाभाविकेन शास्त्रीयेण वा ॥ १६ ॥ १७ ॥ तत्तत इतरः ॥ १८ ॥ १९ ॥ दूरे उह्यमानानां प्रवाह्यमाणानाम् । नौस्तरिः ॥ २० ॥ २१ ॥ मनोनाम्नी बाह्यार्थमननाभिधाना । ङीप् प्राग्वत् । परिहरेन्मिथ्यात्वानुसंधानेन निरस्येत् । यथा औष्ण्ये क्षीणे वह्निः शाम्यति तद्वद्वासनाक्षये सह मनसाऽविद्या क्षीयत इति भावः ॥ २२ ॥

---

१ तथाच इति पाठः.

भोगौघवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ।
भावाभावौ ततस्त्यक्त्वा निर्विकल्पः सुखी भव ॥२३
अभावनं भावनायास्त्वेतावान्वासनाक्षयः ।
एष एव मनोनाशस्त्वविद्यानाश उच्यते ॥ २४
यद्यत्संवेद्यते किंचित्तत्रासंवेदनं परम् ।
असंवित्तिस्तु निर्वाणं दुःखं संवेदनाद्भवेत् ॥ २५
स्वेनैव तत्प्रयत्नेन पुंसः संवेद्यते क्षणात् ।
भावस्याभावनं भूत्यै तत्तस्मान्नित्यमाहरेत् ॥ २६
रागादयो ये मनसीप्सितास्ते
बुद्ध्वेह तांस्तांस्त्वमवस्तुभूतान् ।
त्यक्त्वा तदास्याङ्कुरमस्तबीजं
मा हर्षशोकं समुपैहि तृप्तः ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ० मुखरवेणोपदेशांशकथनं नाम द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

## त्रयोदशोत्तरशततमः सर्गः ११३

श्रीवसिष्ठ उवाच ।
एषा हि वासना नित्यमसत्यैव यदुत्थिता ।
द्विचन्द्रभ्रान्तिवत्तेन त्यक्तुं राघव युज्यते ॥ १
अविद्या विद्यमानेव नष्टप्रज्ञेषु विद्यते ।
नाम्नैवाङ्गीकृताभावात्सम्यक्प्रज्ञेषु सा कुतः ॥ २
मा भवाज्ञो भव प्राज्ञः सत्यग्राम विचारय ।
नास्त्येवेन्दुर्द्वितीयः खे भ्रान्त्या खंलक्ष्यते मुधा ॥ ३
नात्र तत्त्वादृते किंचिद्विद्यते वस्त्ववस्तु च ।
ऊर्मिमालिनि विस्तीर्णे वारिपूरादृते यथा ॥ ४
स्वविकल्पादृते नैतान्भावाभावानसन्मयान् ।
नित्येऽसिते तते शुद्धे मा समारोपयात्मनि ॥ ५
नासि कर्ता क्रिमेतासु क्रियासु ममता तव ।
एकस्मिन्विद्यमाने हि किं केन क्रियते कथम् ॥ ६
मा वाऽकर्ता भव प्राज्ञ किमकर्तृतयेहिते ।
साध्यं साध्यमुपादेयं तस्मात्स्वस्थो भवानघ ॥ ७
कर्ता संस्त्वमसक्तत्वाद्भावाभावे रघूद्वह ।
असक्तत्वादकर्तापि कर्तृवत्स्पन्दनं कुतः ॥ ८
सत्यं स्याच्चेदुपादेयं मिथ्या स्याद्धेयमेव चेत् ।
उपादेयैकसक्तत्वाद्युक्ता सक्तिर्हि कर्मणि ॥ ९
यत्रेन्द्रजालमखिलं मायामयमवस्तुकम् ।
तत्र कास्था कथं नाम हेयोपादेयदृष्टयः ॥ १०
संसारबीजकणिका यैषा विद्या रघूद्वह ।
एषा ह्यविद्यमानैव सतीव स्फारतां गता ॥ ११
येयमाभोगिनिःसारा संसारारम्भचक्रिका ।
विज्ञेया वासनैषा सा चेतसो मोहदायिनी ॥ १२
चारुवंशलतेवान्तःशून्या निस्सारकोटरा ।

वासनात्यागे क्रममाह—**भोगौघे**ति । भावाभावौ चित्तचैत्यौ । कल्पनाव्युत्क्रमेण त्याग इति भावः ॥ २३ ॥ चित्तचैत्यत्यागेऽपि तद्धेतुवज्ञानपरिशेषमाशङ्क्याह—**अभावन**मिति । न भाव्यते पूर्णतयानुभूयते येनाविद्यावरणेन तदविद्यावरणं भावनायास्तत्त्वसाक्षात्काराद्धेतोस्त्यक्त्वा सुखी भवेत्यनुषज्यते ॥ २४ ॥ अथवा साक्षाच्चित्तद्वारा वा यद्यत्किंचित्साक्षिणा संवेद्यते तत्र तत्र संवेद्यताया असंवेदनं परमुत्कृष्टमनोनाशनिर्वाणमिति संक्षेप इत्याह—**यद्यदि**ति ॥ २५ ॥ तच्च वेद्यावेदनं पुरुषप्रयत्नाद्भवतीत्याह—**स्वेने**ति । भावस्याभावनं वेद्यस्यावेदनम् । तत्स्वप्रयत्नं नित्यमाहरेदभ्यसेत् ॥ २६ ॥ उक्तमनूद्योपसंहरति—**रागादय** इति । ते तव मनसि ये ये रज्यन्ते येषु ते रागा विषयाः । आदिपदात्तदुपाया ईप्सितास्तांस्तांस्त्वमनर्थभूतान् बुद्ध्वा ते रागादयः आस्याङ्कुरा बीजमुखनिर्गच्छदङ्कुरकल्पा यस्य तत्तथाविधं मनोऽपि अस्तबीजं अज्ञानवासनाबीजैः सह त्यक्त्वा पूर्णात्मानुभवामृततृप्तः सन् हर्षशोकं मा समुपैहि 'मत्वा धीरो हर्षशोकौ जहाति' इति श्रुतेरित्यर्थः ॥ २७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मुखरवेणोपदेशांशकथनं नाम द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

सर्वदुर्वासनोच्छेदी विचारैर्विविधैर्भृतः ।
द्वैतमिथ्यात्वधीरूढस्तत्त्वबोधोऽत्र वर्ण्यते ॥ १ ॥

यद्यतो हेतोरसत्यैवोत्थिता तत्तस्त्यक्तुं बाधितुं युज्यते ॥ १ ॥ नष्टप्रज्ञेषु विवेकविज्ञानशून्येषु विद्यमाना परमार्थसत्येव दृढतरा विद्यते । सम्यक्प्रज्ञेषु तु अभावादपरमार्थत्वान्नाम्नैवाङ्गीकृता वन्ध्यापुत्रवत् । अतः सा कुतः ॥ २ ॥ अतस्तत्त्वज्ञतामेव विचारेण संपादयेत्याह—**मा भवे**ति ॥ ३ ॥ तत्त्वात्परमात्मनः । वस्तु भावः । अवस्तु अभावः ॥ ४ ॥ असिते देहादिबन्धनशून्ये । षिञ् बन्धने क्तः ॥ ५ ॥ बन्धस्याकर्तृतामूलत्वात्तामेव प्रथमं त्यजेत्याह—**नासी**ति । एकस्मिन् अद्वितीये । नह्येकमात्रकारकसाध्या क्रिया प्रसिद्धेति भावः ॥ ६ ॥ अकर्ता अकर्तृत्वाभिमानी च मा भव । अकर्तृतया ईहिते अभिमाने कृते उपादेयं प्राप्यं साध्यं स्वयत्ननिष्पाद्यं किं साध्यं फलमस्ति । न किंचिदित्यर्थः ॥ ७ ॥ भावोऽभिमानस्तदभावे सति असक्तत्वादकर्तापि एवमकर्तापि संस्तत्राप्यभिमानाभावे अकर्तृत्वेऽप्यसक्तत्वात्कर्तापि । तर्हि किमज्ञवत्कर्ताहं नेत्याह—**कर्तृवदि**ति । अस्पन्दात्मदर्शिनस्तव नाज्ञकर्तृवद्देहस्पन्दनेनात्मस्पन्दभ्रमलक्षणकर्तृताप्रसक्तिरित्यर्थः ॥ ८ ॥ क्रियाफलमिथ्यात्वे कर्मासक्तिरेव न युक्तेति तर्केणापि दृढीकुर्वन्नाह—**सत्य**मिति ॥ ९ ॥ दर्शिततर्कस्य विपर्ययपर्यवसानं दर्शयति—**यत्रे**ति । यत्रतत्रेति शब्दौ यर्हितर्ह्यर्थे ॥ १० ॥ कुत इन्द्रजालतेति चेदाविद्यकत्वादित्याह—**संसारे**ति ॥ ११ ॥ १२ ॥ अविद्यारूपां संसारारम्भचक्रिकामेव विस्तरेण वर्णयति—**चार्वि**त्यादिना । अन्तः-

सरित्तरङ्गमालेव न व्युच्छिन्नापि नश्वरी ॥ १३
गृह्यमाणापि हस्तेन ग्रहीतुं नैव युज्यते ।
मृद्व्यप्यत्यन्ततीक्ष्णाग्रा निर्झरोर्मिरिवोत्थिता ॥ १४
दृश्यते प्रकराभासा सदर्थे नोपयुज्यते ।
तरङ्गिण्यतरङ्गाभा स्वाकारपरिनिष्ठिता ॥ १५
क्वचिद्वक्राः क्वचित्स्पष्टा दीर्घाः खर्वाः स्थिराश्चलाः ।
यत्प्रसादोद्भवास्तस्माद्यतिरेकमुपागताः ॥ १६
अन्तःशून्यापि सर्वत्र दृश्यते सारसुन्दरी ।
न क्वचित्संस्थितापीह सर्वत्रैवोपलक्ष्यते ॥ १७
जडैव चिन्मयीवासावन्यस्पन्दोपजीविनी ।
निमेषमप्यतिष्ठन्ती स्थैर्याशङ्कां प्रयच्छति ॥ १८
ज्वालावच्छुद्धवर्णापि मषीमलिनकोटरा ।
वल्गत्यन्यप्रसादेन दीयते तदवेक्षणात् ॥ १९
आलोके विमले म्लाना तमस्यपि विराजते ।
मृगतृष्णेव शुष्काभा नानावर्णविलासिनी ॥ २०
वक्रा विषमयी तन्वी मृद्वी संकटकर्कशा ।
ललनाचञ्चला लुब्धा तृष्णा कृष्णेव भोगिनी ॥ २१
स्वयं दीपशिखेवाशु क्षीयते स्नेहसंक्षये ।
सिन्दूरधूलिलेखेव विना रागं विराजते ॥ २२
क्षणप्रकाशतरला कृतसंस्था जडाशया ।
मुग्धानां त्रासजननी वक्रा विद्युदिवोदिता ॥ २३
यत्नाद्गृहीत्वा दहति भूत्वा भूत्वा प्रलीयते ।
लभ्यतेऽपि हि नान्विष्टा विद्युद्वदतिभङ्गुरा ॥ २४
अप्रार्थितैवोपनता रमणीयाप्यनर्थदा ।
अकालपुष्पमालेव श्रेयसेनाभिनन्दिता ॥ २५
अत्यन्तविस्मृतैवातिसुखाय भ्रमदायिनी ।
दुःस्वप्नकलनेवेयमनर्थायैव तर्किता ॥ २६
प्रतिभासवशादेषा त्रिजगन्ति महान्ति च ।
मुहूर्तमात्रेणोत्पाद्य धत्ते ग्रासीकरोति च ॥ २७
मुहूर्तो वत्सरश्रेणी लवणस्यानया कृता ।
रात्रिर्द्वादशवर्षाणि हरिश्चन्द्रस्य निर्मिता ॥ २८
वियोगिनामथान्येषां कान्ताविभवशालिनाम् ।
रात्रिर्वत्सरवद्दीर्घा भवेत्तस्याः प्रसादतः ॥ २९
सुखितस्याल्पतामेति दुःखितस्यैति दीर्घताम् ।
कालो यस्याः प्रसादेन विपर्यासैकशीलिनाम् ॥ ३०
अस्याः स्वसत्तामात्रेण कर्तृतैताासु वृत्तिषु ।
दीपस्यालोककार्याणां यथा तद्वन्न वस्तुतः ॥ ३१
सनितम्बस्तनी चित्रे न स्त्री स्त्रीधर्मिणी यथा ।
तथैवाकारचिन्तेयं कर्तुं योग्या न किंचन ॥ ३२
मनोराज्यमिवाकारभासुरा सत्यवर्जिता ।
सहस्रशतशाखापि न किंचित्परमार्थतः ॥ ३३
अरण्ये मृगतृष्णेव मिथ्यैवाडम्बरान्विता ।
विडम्बयति तान्मुग्धमृगानेव न मानुषान् ॥ ३४
फेनमालेव संजातध्वस्ता विच्छेदवर्जिता ।
जडैव चञ्चलाकारा गृह्यमाणा न किंचन ॥ ३५
अटत्युड्डामराकारा रजःप्रसरधूसरा ।
बलात्कल्पान्तवात्येव स्वाक्रान्तभुवनान्तरा ॥ ३६
धूमालीवाङ्गसंलग्ना दाहखेदप्रदायिनी ।
गर्भीकृतरसाक्रम्य जगन्ति परिवर्तते ॥ ३७
धारा जलधरस्येव सुदीर्घा जलनिर्मिता ।
असारसंसारदृढा रज्जुस्तृणगणैरिव ॥ ३८

शून्येत्यस्य विवरणं निःसारकोटरेति । मूलनाशं विना व्युच्छिन्नापि न नश्वरी ॥ १३ ॥ निर्झरोर्मिपक्षे कूलद्रुमच्छेदिनीत्वात्तीक्ष्णाग्रेति बोध्यम् ॥ १४ ॥ प्रकरः कार्यसमर्थकारणकलापस्तद्वदाभासः प्रथा यस्याः । तथापि सदर्थे सत्यपुरुषार्थे । तरङ्गिणीपक्षे स्नानपानादिसत्यार्थक्रियार्थे । अतरङ्गाभा सत्यतरङ्गशून्यस्वप्रतरङ्गिणीसदृशी मृगतृष्णातरङ्गिणीव । स्वाकारः प्रतीतिमात्रशोभमान आकारस्तत्रैव परिनिष्ठिता परिसमाप्ता नार्थक्रियायामित्यर्थः ॥ १५ ॥ स्वाकारानेव प्रपञ्चयति—**क्वचिदिति** । यस्या वर्ण्यमानचक्रिकायाः प्रसादादुद्भवा आविर्भूतास्तद्व्यतिरेकं परस्परभेदमुपागताः सर्वपदार्था इति शेषः ॥ १६ ॥ ॥ १७ ॥ अन्यस्पन्दं मनश्चाञ्चल्यमुपजीवति तच्छीला ॥१८॥ सत्त्वगुणेन शुद्धवर्णापि तमसा मषीमलिनकोटरा । अन्यस्य परमात्मनः प्रसादेन सान्निध्येन वल्गति चलति । तस्यावेक्षणात्साक्षात्काराद्दीयते खण्ड्यते । दो अवखण्डने ॥ १९ ॥ विमले स्वात्मालोके आवरकत्वान्म्लाना ॥ २० ॥ तृष्णादिरूपेणापि तामेवाह—**वक्रेति** । संकटहेतुत्वात्कर्कशा । ललनेव चञ्चला । भोगिनी सर्पिणी ॥ २१ ॥ रागं स्नेहं विनापि सिन्दूरधूलिलेखेव रागवती विराजते ॥ २२ ॥ जडया आशया कृतसंस्था संपादितस्थितिः । विद्युत्पक्षे डलयोरभेदाज्जलस्याशया मेघे कृतस्थितिरित्यर्थः ॥ २३ ॥ दहति । संतापदुःखे पर्यवस्यतीति यावत् । विद्युत्पक्षे स्पष्टम् ॥ २४ ॥ अकालपुष्पमालाप्युत्पातत्वादनर्थदा ॥ २५ ॥ तर्किता पुनःपुनरस्तकैरनुसंधीयमाना ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ विपर्यासो भ्रमस्तदेकशीलिनां पुंसाम् ॥ ३० ॥ अविद्याया अपि ब्रह्मणि जगद्विवर्तारोपे सन्निधानमात्रेण निमित्तता नतु परिणामितेति स्वमतं दर्शयति—**अस्या इति** ॥ ३१ ॥ कुतो नास्याः कर्तृतेति चेदयोग्यत्वादित्याह—**सनितम्बेति** । स्त्रीधर्मिणी गृहकार्यकरणादिसमर्थेति यावत् । आकारचिन्ता प्रागनुभूतार्थवासनारूपा । इयमविद्या ॥ ३२ ॥ तदेव स्पष्टमाह—**मनोराज्यमिति** ॥ ३३ ॥ ३४ ॥ संजातध्वस्ता उत्पन्नप्रध्वंसिनी । विच्छेदवर्जिता प्रवाहनित्या । जडा नीहारपटलीव ॥ ३५ ॥ ३६ ॥ गर्भीकृतो रसः परमात्मा जलं च यया । अतएव जगन्ति आक्रम्य प्रक्रम्य परिभूय च परिवर्तते भ्रमति ॥ ३७ ॥ असारैः पेलवैः संसारैः संसरण-

१ त्रिस्ते इति पाठः.

तरङ्गोत्पलमालेव कल्पनामात्रवर्णिता ।
मृणालीव बहुच्छिद्रा पङ्कप्रौढा जलात्मिका ॥ ३९
जनेन दृश्यते वृद्धितत्परा नच वर्धते ।
विषास्वाद इवापातमधुराऽन्ते सुदारुणा ॥ ४०
नष्टा दीपशिखेवैषा न जाने केव गच्छति ।
सिंहिकेवाग्रदृष्टापि गृह्यमाणा न किंचन ॥ ४१
पांसुमुष्टिरिवाकीर्य प्रेक्षिता पारमाणवी ।
आकाशनीलिमेवैषा निर्निमित्तैव दृश्यते ॥ ४२
द्विचन्द्रमोहवज्जाता स्वप्नवद्विहितभ्रमा ।
यथा नौयायिनः स्थाणुस्पन्दस्तद्वदिहोत्थिता ॥ ४३
अनयोपहते चित्ते दीर्घकालमिवाकुलैः ।
जनैराकल्प्यते दीर्घसंसारस्वप्नविभ्रमः ॥ ४४
अनयोपहते स्वस्मिंश्चित्राश्चेतसि विभ्रमाः ।
उत्पद्यन्ते विनश्यन्ति तरङ्गास्तोयधेरिव ॥ ४५
मनोज्ञमपि सत्यं च दृश्यते सदसत्तया ।
अमनोज्ञमसत्यं च दृश्यते सत्तयाप्यसत् ॥ ४६
पदार्थरथमारूढा भावनैषा बलान्विता ।
आक्रामति मनः क्षिप्रं विहगं वागुरा यथा ॥ ४७
करुणास्यन्दमानाक्षी स्रवत्क्षीरलवस्तनी ।
भवत्युल्लसितानन्दं जननी गृहिणी यथा ॥ ४८
विषीकरोति निःस्यन्दसंतर्पितजगत्त्रयम् ।
सुधार्द्रार्द्रमपि क्षिप्रं प्रवृद्धं बिम्बमैन्दवम् ॥ ४९
उन्मत्तरववेतालनर्तनारम्भसंभ्रमम् ।
स्थाणवः संप्रयच्छन्ति मूका अप्येतयान्धया ॥ ५०
संध्यादिषु च कालेषु लोष्टपाषाणभित्तयः ।
अस्याः प्रसादाद्दृश्यन्ते सर्पाजगरदृष्टिभिः ॥ ५१
एकोऽपि द्वितयोदेति यथा द्विशशिदर्शने ।
दूरमभ्याशतां याति स्वप्ने स्वमरणं यथा ॥ ५२
आदीर्घं क्षणतामेति कालस्येष्टा यथा निशा ।
क्षणो वर्षमिवाभाति कान्ताविरहिणामिव ॥ ५३
न तदस्तीह यन्नाम न करोतीयमुद्धता ।
अस्यास्त्वकिंचनायास्तु शक्ततां पश्य राघव ॥ ५४
संरोधयेत्प्रयत्नेन संविदेवाशु संविदम् ।
सरित्स्रोतोनिरोधेन शुष्यत्येषा मनोनदी ॥ ५५

श्रीराम उवाच ।

अविद्यमानयैवेदं पेलवाङ्ग्या सुतुच्छया ।
मिथ्याभावनया नाम चित्रमन्धीकृतं जगत् ॥ ५६
अरूपया निराकृत्या चारुचेतनहीनया ।
असत्येवाप्यनश्यन्त्या[1] चित्रमन्धीकृतं जगत् ॥ ५७
आलोकेन विनश्यन्त्या स्फुरन्त्या तमसोन्तरे ।
कौशिकेक्षणधर्मिण्या चित्रमन्धीकृतं जगत् ॥ ५८
कुकर्मैकान्तकारिण्या न सहन्त्या विलोकनम् ।
देहमप्यविजानन्त्या चित्रमन्धीकृतं जगत् ॥ ५९
सुदीनाचारधर्मिण्या नित्यं प्राकृतकान्तया ।
अनारतास्तंगतया चित्रमन्धीकृतं जगत् ॥ ६०
अनन्तदुःखाकुलया सदैव मृतयानया ।
संबोधहीनया यत्र चित्रमन्धीकृतं जगत् ॥ ६१
कामकोपघनाङ्गिन्या तमःप्रसरवक्रया ।
अचिरेणाशरीरिण्या चित्रमन्धीकृतं जगत् ॥ ६२
स्वात्मान्धरूपास्पदया जडया जाड्यजीर्णया ।
दुःखदीर्घप्रलापिन्या चित्रमन्धीकृतं जगत् ॥ ६३
पुरुषासङ्गसङ्गिन्या रागिण्या क्रिययानया ।

---

संस्कारैर्दृढा । तत्र दृष्टान्तः—**रज्जु**रिति ॥ ३८ ॥ कविभिः कल्पनामात्रेण वर्णिता तरङ्गमालेवोत्पलमालेव च पङ्के पापे कर्दमे च प्रौढा जलात्मिका जडात्मिका । लडयोरभेदात् ॥ ३९ ॥ विषास्वादः सविषमोदकास्वादः ॥ ४० ॥ **न जाने** इति । बाधितस्य वादिसहस्रैरपि स्वरूपनिरूपणासंभवादिति भावः । सिंहिका नीहारधूमपटलीव ॥ ४१ ॥ ४२ ॥ ४३ ॥ इवशब्दो मिथ्यात्वद्योतकः ॥ ४४ ॥ स्वस्मिन्स्वात्मनि अनया उपहते । आवरणेनासत्प्राये कृते सतीत्यर्थः ॥ ४५ ॥ तस्या विपर्यासशक्तिमाह—**मनोज्ञ**मिति । सद्ब्रह्म । असज्जगत् ॥ ४६ ॥ पदार्था विषयास्तद्रूपं रथं । तदाकारतामिति यावत् । भावना उद्भूतवासनारूपा एषा अविद्या मनः आक्रामति मोहयित्वा बध्नाति ॥ ४७ ॥ मातृपत्न्यादिरूपतामप्यविद्यैव धारयतीत्याह—**करुणे**ति ॥४८॥ निःस्यन्दैरमृतद्रवैश्चन्द्रिकाद्यात्मना परिणतैः संतर्पितजगत्त्रयमैन्दवं बिम्बमपि विषीकरोति ॥ ४९ ॥ अन्धयतीत्यन्धया एतया निमित्तभूतया मूका वागादिसर्वकर्मेन्द्रियव्यापारशून्या अपि स्थाणव उन्मत्तरववेतालनर्तनारम्भसंभ्रमं संप्रयच्छन्ति जनयन्ति वने इत्यर्थः ॥ ५० ॥ सर्पाजगरदृष्टिभिस्तथा तथा भ्रान्तिभिः ॥ ५१ ॥ अभ्याशतां सामीप्यम् ॥ ५२ ॥ कालस्य संहाररुद्रस्येष्टा निशा प्रलयरात्रिरिव ॥ ५३ ॥ अकिंचनायाः स्वसत्तायामपि दरिद्रायाः ॥ ५४ ॥ संविदा विवेकबुद्ध्या । संविदं विषयबुद्धिम् । संरोधफलमाह—**सरिदि**ति । स्रोतोनिरोधेन सरिदिवेत्यध्याहार्यम् ॥ ५५ ॥ इत्थं विस्मापितो रामोऽविद्यास्वरूपपर्यालोचनेन विस्मितस्तां वर्णयन्विस्मयमभिनयति-**अविद्यमानयैवे**त्यादिना ॥५६॥ आकृतेः पृथग्ग्रहणाद्रूपपदं नीलादिपरम् । असत्या मृगतृष्णानद्येवानश्यन्त्या अशुष्यन्त्या ॥ ५७ ॥ कौशिकस्येक्षणं चक्षुस्तद्धर्मिण्या तत्सदृशया ॥ ५८ ॥ क्रियाशक्तिमात्राश्रयत्वात्कुकर्मैकान्तकारिण्या ज्ञानशक्तिशून्यत्वाद्देहमप्यविजानन्त्या ॥ ५९ ॥ प्राकृतानां मूढानां कान्तया रम्यया । प्राकृतस्य पृथग्जनस्य कान्तया भार्यया च अस्तंगतया असत्या तमस्तिरोहितया च ॥ ६० ॥ मृतया मृतकल्पया ॥ ६१ ॥ अचिरेण ज्ञानोदये वधे च अशरीरिण्या ॥ ६२ ॥ स्वात्मविषये येऽन्धरूपा मूढास्तदास्पदया । इह श्लोकपञ्चके श्लिष्टैर्विशेषणैः समासोक्त्या निशाचरी दीना स्त्री काचिदुपमा गम्यते ॥ ६३ ॥ इतस्त्रिभिः श्लोकैस्तां पुरुषस्य प्रति-

---

[1] विनाश्यन्त्या इति पाठः.

विद्रवन्त्या विवक्षासु चित्रमन्धीकृतः पुमान् ॥ ६४
पुरुषस्य न या शक्ता सोढुमीक्षितुमप्यलम् ।
तया स्त्रियावरणया चित्रमन्धीकृतः पुमान् ॥ ६५
न यस्याश्चेतनैवास्ति याप्यनष्टैव नश्यति ।
तया स्त्रिया परुषया चित्रमन्धीकृतः पुमान् ॥ ६६

अनन्तदुष्प्रसरविलासकारिणी
क्षयोदयोन्मुखसुखदुःखभागिनी ।
इयं प्रभो विगलति केन वाऽसमा
मनोगुहानिलयनिबद्धवासना ॥ ६७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे अविद्यावर्णनं नाम त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

---

## चतुर्दशोत्तरशततमः सर्गः ११४

श्रीराम उवाच ।

अविद्याविभवप्रोत्थं निबिडं पुरुषस्य हि ।
महदान्ध्यमिदं ब्रह्मन्कथं नाम विनश्यति ॥ १

श्रीवसिष्ठ उवाच ।

यथा तुषारकणिका भास्करालोकनात्क्षणात् ।
नश्यत्येवमविद्येयं राघवात्मावलोकनात् ॥ २
तावत्संसारभृगुषु स्वात्मना सह देहिनम् ।
आन्दोलयति नीरन्ध्रदुःखकण्टकशालिषु ॥ ३
अविद्या यावदस्यास्तु नोत्पन्ना क्षयकारिणी ।
स्वयमात्मावलोकेच्छा मोहसंक्षयदायिनी ॥ ४
अस्याः परं प्रपश्यन्त्याः स्वात्मनाशः प्रजायते ।
आतपानुभवार्थिन्याश्छायाया इव राघव ॥ ५
दृष्टे सर्वगते बोधे स्वयमेव विलीयते ।
सर्वाशाभ्युदितेच्छाया द्वादशार्कगणे यथा ॥ ६
इच्छामात्रमविद्येह तन्नाशो मोक्ष उच्यते ।
स चासंकल्पमात्रेण सिद्धो भवति राघव ॥ ७
मनागपि मनोव्योम्नि वासनारजनीक्षये ।
कालिमा तनुतामेति चिदादित्यमहोदयात् ॥ ८

यथोदिते दिनकरे क्वापि याति तमस्विनी ।
तथा विवेकेऽभ्युदिते क्वाप्यविद्या विलीयते ॥ ९
दृढवासनया बन्धो घनतामेति चेतसः ।
वलाढ्चेतालसंकल्पः संध्याकाले यथा शिशोः ॥ १०

श्रीराम उवाच ।

यावत्किंचिदिदं दृश्यं साविद्या क्षीयते च सा ।
आत्मभावनया ब्रह्मन्नात्मासौ कीदृशः स्मृतः ॥ ११

श्रीवसिष्ठ उवाच ।

चेत्यानुपातरहितं सामान्येन च सर्वगम् ।
यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः ॥ १२
आब्रह्म स्तम्बपर्यन्तं तृणादि यदिदं जगत् ।
तत्सर्वं सर्वदात्मैव नाविद्या विद्यतेऽनघ ॥ १३
सर्वं च खल्विदं ब्रह्म नित्यं चिद्घनमक्षतम् ।
कल्पनान्या मनोनाम्नी विद्यते नहि काचन ॥ १४
न जायते न म्रियते किंचिदत्र जगत्त्रये ।
न च भावविकाराणां सत्ता क्वचन विद्यते ॥ १५
केवलं केवलाभासं सर्वसामान्यमक्षतम् ।
चेत्यानुपातरहितं चिन्मात्रमिह विद्यते ॥ १६

---

कूलभार्यात्वेन वर्णयति—**पुरुषे**ति । पुरुषस्य आसक्तिरसङ्ग ऐक्याध्यासस्तेन पुरुषसङ्गिन्या । नानाविचित्रविषयकल्पनक्रियया पुरुषस्य भोगसंपादनात्पुरुषानुरागिण्या । विवक्षासु स्वतत्त्वविचारेषु विद्रवन्त्या ॥ ६४ ॥ ईक्षितं साक्षात्कारम् । आवृणोतीत्यावरणा । नन्द्यादित्वकल्पनाल्ल्युः ॥ ६५ ॥ ६६ ॥ वर्णितां वासनामयीमविद्यामुपसंहरंस्तदुच्छेदोपायं पृच्छति–**अनन्ते**ति । दुष्प्रसरविलासा दुश्चेष्टाविभ्रमाः । क्षयोदयोन्मुखानि मरणजन्मप्रभृतीनि सुखदुःखानि भाजयति प्रापयति तच्छीला । असमा विषमा । केनोपायेन विगलति नश्यति ॥ ६७ ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे अविद्यावर्णनं नाम त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

**इहाविद्याक्षयोपायः स्वात्मदर्शनमुच्यते ।**
**विशुद्धात्मस्वरूपं चासंकल्पाद्वासनाक्षयः ॥ १ ॥**

वासनाक्षयोपायं पृष्ट्वा तन्मूलाविद्यावरणक्षयोपायं पृच्छति—**अविद्ये**ति ॥१॥ एवं पृष्टो वसिष्ठः प्रथममविद्याक्षयोपायमाह—**यथे**त्यादिना ॥ २ ॥ संसारलक्षणेषु भृगुषु गिरिप्रपातेषु । देहिनं देहाभिमानिनमहंकारम् । आन्दोलयत्यधोधःपातनेनावलोडयति ॥३॥४॥ परं परमात्मानम् ॥५॥ सर्वासु आशासु दिक्षु अभ्युदिते द्वादशार्कगणे छाया यथा तथा ॥ ६ ॥ कारणाविद्यानाशोपायमुक्त्वा कार्याविद्याजयोपायमाह–**इच्छे**ति । **तन्नाश** इति । तथाच श्रुतिः 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति ॥७॥ वासना कामवासना । कालिमा अविद्यावरणम् ॥ ८ ॥ ९ ॥ शिशोर्दृढतरवेतालवासनावासितस्येति शेषः ॥१०॥ प्रश्नः स्पष्टः ॥ ११ ॥ चेत्यानुपातो विषयव्याप्तिस्तद्रहितम् । सर्वचेत्यानां कारणत्वात्सामान्यमविद्या तेन च वर्जितम् । निर्विशेषावरणमिति[1] यावत् ॥ १२ ॥ तदसंभावनावारणाय सकार्याविद्यायास्तत्र बाधं प्रपञ्चयति—**आब्रह्मे**त्यादिना ॥१३॥१४॥ १५ ॥ सर्वसामान्यं

[1] निर्विक्षेपावरणं इति पाठः.

तस्मिन्नित्ये तते शुद्धे चिन्मात्रे निरुपद्रवे ।
शान्ते समसमाभोगे निर्विकारोदितात्मनि ॥ १७
यैषा स्वभावातिगतं स्वयं संकल्प्य धावति ।
चिच्चैत्यं स्वयमाम्लाना सा म्लाना तन्मनः स्मृतम् १८
एतस्मात्सर्वगाद्देवात्सर्वशक्तेर्महात्मनः ।
विभागकलनाशक्तिर्लहरीवोत्थितास्भसः ॥ १९
एकस्मिन्विततं शान्ते या न किंचन विद्यते ।
संकल्पमात्रेण गता सा सिद्धिं परमात्मनि ॥ २०
अतः संकल्पसिद्धेयं संकल्पेनैव नश्यति ।
येनैव जाता तेनैव वह्निज्वालेव वायुना ॥ २१
पौरुषोद्योगसिद्धेन भोगाशा रूपतां गता ।
असंकल्पनमात्रेण साविद्या प्रविलीयते ॥ २२
नाहं ब्रह्मेति संकल्पात्सुदृढाद्बध्यते मनः ।
सर्वं ब्रह्मेति संकल्पात्सुदृढान्मुच्यते मनः ॥ २३
संकल्पः परमो बन्धस्त्वसंकल्पो विमुक्तता ।
संकल्पं संविजित्यान्तर्यथेच्छसि तथा कुरु ॥ २४
दृढा न यास्बरेऽत्रास्ति नलिनी हेमपङ्कजा ।
लोलवैदूर्यमधुपा सुगन्धितदिगन्तरा ॥ २५
उद्दण्डैः प्रकटाभोगैर्मृणालभुजमण्डलैः ।
विहसन्ती प्रकाशस्य शशिनो रश्मिमण्डलम् ॥ २६
विकल्पजालिकेवेत्थमसत्येवापि सत्समा ।
मनःस्वार्थविलासार्थं यथा बालेन कल्प्यते ॥ २७
तथैवेयमविद्येह भवबन्धनबन्धनी ।
चपला न सुखायैव बालेन कलिता दृढा ॥ २८
कृशोऽतिदुःखी बद्धोऽहं हस्तपादादिमानहम् ।
इति भावानुरूपेण व्यवहारेण बध्यते ॥ २९
नाहं दुःखी न मे देहो बन्धः कस्यात्मनः स्थितः ।
इति भावानुरूपेण व्यवहारेण मुच्यते ॥ ३०
नाहं मांसं न चास्थीनि देहादन्यः परो ह्यहम् ।
इति निश्चयवानन्तः क्षीणाविद्य इहोच्यते ॥ ३१
प्रोत्तुङ्गसुरशैलाग्रवैदूर्यशिखरप्रभा ।
अथवार्कांशुदुर्भेदा तिमिरश्रीः स्थितोपरि ॥ ३२
कल्प्यते हि यथा व्योम्नः कालिमेति स्वभावतः ।
पुंसा धरणिसंस्थेन स्वसंकल्पनयेद्धया ॥ ३३
कल्पितैवमविद्येयमनात्मन्यात्मभावना ।
पुरुषेणाप्रबुद्धेन न प्रबुद्धेन राघव ॥ ३४

श्रीराम उवाच ।

मेरुनीलमणिच्छाया नेयं नापि तमःप्रभा ।
तदेतत्किंकृतं ब्रह्मन्नीलत्वं नभसो वद ॥ ३५

श्रीवसिष्ठ उवाच ।

न नाम नीलता व्योम्नः शून्यस्य गुणवत्स्थिता ।
अन्यरत्नप्रभाभावान्न चाप्येषा च मैरवी ॥ ३६
तेजोमयत्वादण्डस्य स्फारत्वादिव तेजसः ।
प्राकाश्यादण्डपारस्य तमसो नात्र संभवः ॥ ३७

सर्वानुगतसद्रूपम् ॥ १६ ॥ १७ ॥ तस्मिन्नात्मनि यैषा आम्लाना सावरणा चित् स्वभावातिगतं चित्स्वभावविरुद्धं जाड्यपरिच्छेदादिस्वभावं चेत्यं स्वयं संकल्प्य धावति सा विक्षेपम्लाना तत्प्रसिद्धं मनः स्मृतमित्यर्थः ॥१८॥ एतस्मान्मनोदेवात् ॥ १९ ॥ या संसृतिः ॥ २० ॥ वायुनेति । 'वायोरग्निः' इति श्रुतेरिति भावः ॥ २१ ॥ निदिध्यासनपरिपाकपौरुषोद्योगात्सिद्धेन साक्षात्कारप्रतिष्ठितेन असंकल्पनमात्रेण ॥२२॥ तथाच बन्धमोक्षावपि मनोधर्मावेव नात्मधर्माविल्याह—**नाह**मिति ॥ २३ ॥ नाहं ब्रह्मेति संकल्पं सर्वं ब्रह्मेति विरोधिसंकल्पप्रतिष्ठितज्ञानेन संविजित्येत्यर्थः ॥ २४ ॥ अत्राम्बरे या नास्ति सा नलिनीव बालेन मनःस्वार्थो मनोरथस्तेन विलासार्थं यथा दृढा कल्प्यते, तथैवेयं द्विविधाप्यविद्या इत्थं विकल्पजालिकेवासत्येवापि सत्समा बालेन मूढजनेन न सुखाय अत्यन्तदुःखायैव दृढा कलिता कल्पितेति चतुर्थेनान्वयः । नलिनीविशेषणानि स्पष्टानि ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ बन्धकल्पनाभेदान्प्रपञ्चयति—**कृश** इति ॥ २९ ॥ तन्मोक्षोपायकल्पनां दर्शयति—**नाह**मिति ॥ ३० ॥ ३१ ॥ अविद्यादिकल्पनाया दृष्टान्तान्तरमाह—**प्रोत्तुङ्गे**त्यादिना । वैदूर्यं नीलमणिविशेषस्तन्मयशिखरस्य प्रभा परितः प्रसृता व्योम्नः कालिमेति योगभाष्यकारमतेनोक्तम् । ज्यौतिषिकमतेनाप्याह—**अथवे**ति । दूरत्वादर्कांशुभिर्दुर्भेदा निरसितुमशक्या ब्रह्माण्डखर्परसंनिहितप्राग्वर्णिततिमिरस्य श्रीः कान्तिरेव व्योम्नः कालिमेति यथा धरणिसंस्थेन पुंसा कल्प्यते एवमियमविद्या इद्धया स्वसंकल्पनया कल्पितेत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ नीलमणिप्रभात्वे शरन्मेघनीरपटलादिष्वपि नीलिमप्रतिभासापत्तेरुत्तरतो नैल्याधिक्यप्रतीत्यापत्तेर्मेरोः पद्मरागादिमणिमयशृङ्गप्रभया रक्तिमादिप्रतिभासस्याप्यवर्जनाद्दिनिगमकाभावाच्च योगिकल्पना युक्तिमती । ब्रह्माण्डोर्ध्वाधःखर्परयोः स्वर्णरजतमयत्वात् 'तदण्डमभवद्धैमं सहस्रार्कसमद्युति' इति पुराणेषु ब्रह्माण्डस्य महाप्रकाशताश्रवणादूर्ध्वोर्ध्वं सत्यलोकादिलोकैर्भास्वरतरतमैर्व्याप्तत्वादाब्रह्माण्डखर्परमसति व्यवधाने आदित्यरश्मिव्याप्तेर्दुर्वारत्वान्मध्ये तिमिरासंभवाददतिदूरपातिनामादित्यरश्मीनामगम्ये दूरतमे देशे अस्मदादिचक्षुःप्रसरकल्पनाया असंभावनीयत्वान्निशि नक्षत्रादिदर्शने तमसो व्यवधायकत्वादर्शनाद्ब्रह्माण्डखर्परस्यापि दर्शनापत्तेरान्तरालिकसत्यादिलोकविमानादिदर्शनावर्जनप्रसङ्गाच्च न ज्यौतिषिककल्पनापि युक्तेति मन्यमानो रामस्तत्पक्षावाक्षिप्य नभोनैल्यतत्त्वं पृच्छति—**मेर्वि**ति ॥ ३५ ॥ रामाभिप्रेतयुक्तीरेवानूद्य दर्शयन्वसिष्ठः पक्षद्वयासंभवं स्वयमपि दर्शयति —**ने**ति । अन्येषां पद्मरागादिरत्नानां प्रभाया अभावात्तद्वन्मैरवी मेरुसंबन्धिनी नीलमणिप्रभापि नेत्यर्थः ॥ ३६ ॥ प्रथमपक्षं निरस्य द्वितीयं निरस्यति—**तेजोमयत्वा**दिति । इवशब्दो-

१ जायते तेन इति पाठः.

केवलं शून्यतैवैषा बह्वी सुभग लक्ष्यते ।
वयस्येवानुरूपा या अविद्याया असन्मयी ॥ ३८

स्वदृष्टिक्षयसंपत्तावक्ष्णोरेवोदितं तमः ।
वस्तुस्वभावात्तद्व्योम्नः कार्ष्ण्यमित्यवलोक्यते ॥ ३९

एतद्बुद्ध्वा यथा व्योम्नि दृश्यमानोऽपि कालिमा ।
न कालिमेति बुद्धिः स्यादविद्यातिमिरं तथा ॥ ४०

असंकल्पो ह्यविद्याया निग्रहः कथितो बुधैः ।
यथा गगनपद्मिन्याः स भाति सुकरः स्वयम् ॥ ४१

भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
अपुनःस्मरणं मन्ये साधो विस्मरणं वरम् ॥ ४२

नष्टोऽहमिति संकल्पाद्यथा दुःखेन नश्यति ।
प्रबुद्धोऽस्मीति संकल्पाज्जनो ह्येति यथा सुखम् ॥ ४३

तथा संमूढसंकल्पान्मूढतामेति वै मनः ।
प्रबोधोदारसंकल्पात्प्रबोधायानुधावति ॥ ४४

क्षणात्संस्मरणादेषा ह्यविद्योदेति शाश्वती ।
यस्माद्विस्मरणादन्तः परिणश्यति नश्वरी ॥ ४५

भावनी सर्वभावानां सर्वभूतविमोहिनी ।
भारिणी स्वात्मनो नाशे स्वात्मवृद्धौ विनाशिनी ॥ ४६

मनो यदनुसंधत्ते तत्सर्वेन्द्रियवृत्तयः ।
क्षणात्संपादयन्त्येता राजाज्ञामिव मन्त्रिणः ॥ ४७

तस्मान्मनोनुसंधानं भावेषु न करोति यः ।
अन्तश्चेतनयत्नेन स शान्तिमधिगच्छति ॥ ४८

यदादावेव नास्तीदं तदद्यापि न विद्यते ।
यदिदं भाति तद्ब्रह्म शान्तमेकमनिन्दितम् ॥ ४९

मननीयमतो नान्यत्कदा कस्य कथं कुतः ।
निर्विकारमनाद्यन्तमास्यतामपयन्त्रणम् ॥ ५०

परं पौरुषमाश्रित्य यत्नात्परमया धिया ।
भोगाशाभावनां चित्तात्समूलामलमुद्धरेत् ॥ ५१

यदुदेति परो मोहो जरामरणकारणम् ।
आशापाशशतोल्लासिवासना तद्विजृम्भते ॥ ५२

मम पुत्रा मम धनमयं सोऽहमिदं मम ।
इतीयमिन्द्रजालेन वासनैव विवलगति ॥ ५३

शून्ये एव शरीरेऽस्मिन्विलोलो जलवातवत् ।
अनन्यया वासनया त्वहंभावाहिरर्पितः ॥ ५४

परमार्थेन तत्त्वज्ञ ममाहमिदमित्यलम् ।
आत्मतत्त्वादृते सत्यं न कदाचन किंचन ॥ ५५

खाद्रिद्यूर्वीनदिश्रेण्यो दृष्टिसृष्ट्या पुनः पुनः ।
सैवान्येव विचित्रेयमविद्या परिवर्तते ॥ ५६

उदेत्यज्ञानमात्रेण नश्यति ज्ञानमात्रतः ।
सन्मात्रे परिविच्छेद्या रज्ज्वामिव भुजंगधीः ॥ ५७

खाद्यब्द्युर्वीनदी सेयं याऽविद्याऽज्ञस्य राघव ।
नाविद्या ज्ञस्य तद्ब्रह्म स्वमहिम्ना व्यवस्थितम् ॥ ५८

रज्जुसर्पविकल्पौ द्वावज्ञेनैवोपकल्पितौ ।
ज्ञेन त्वेकैव निर्णीता ब्रह्मदृष्टिरकृत्रिमा ॥ ५९

मा भवाज्ञो भव प्राज्ञो जहि संसारवासनाम् ।
अनात्मन्यात्मभावेन किमज्ञ इव रोदिषि ॥ ६०

कस्तवायं जडो मूको देहो भवति राघव ।
यदर्थं सुखदुःखाभ्यामवशः परिभूयसे ॥ ६१

---

ऽनर्थकः प्रसिद्धिद्योतको वा । प्राकाश्यात्सर्वतः प्रकाशव्याप्तत्वात् । अण्डपारस्य अण्डान्तर्वर्तिनभःपारस्य ॥ ३७ ॥ एवं पक्षद्वयमनूद्य सिद्धान्तमाह—**केवल**मिति । बह्वी विपुला । अविद्याया अनुरूपा वयस्या सखीव या लक्ष्यते ॥ ३८ ॥ अक्ष्णोरेव स्वदृष्टेः स्वीयदर्शनशक्तेः क्षयस्य दूरे कुण्ठीभावस्य संपत्तौ सत्यां यद्वस्तु स्वभावात्तमोऽदर्शनमुदितं तद्व्योम्नः कार्ष्ण्यं नैल्यमित्यवलोक्यत इत्यर्थः ॥ ३९ ॥ एतत् निदर्शनम् । तथेति बुध्यस्वेति शेषः ॥ ४० ॥ प्रासङ्गिकं समाधाय प्रकृतमनुसंधत्ते—**असंकल्प** इत्यादिना । सः असंकल्पः सुकरो भाति न दुष्कर इत्यर्थः ॥ ४१ ॥ एतदेवाभिप्रेत्य प्राक्प्रतिज्ञातमित्याह—**भ्रमस्ये**ति ॥ ४२ ॥ दुःखेन नश्यति स्वप्ने । प्रबुद्धो जाग्रदस्मीति संकल्पात्सुखं स्वाप्नदुःखापगमम् ॥ ४३ ॥ प्रबोधाय बोधैकरसब्रह्मभावाय ॥ ४४ ॥ संस्मरणादज्ञोऽस्मीति संकल्पनात् । शाश्वतीति अनाद्यविद्यावत्तदनादितापि तत्प्रतीतिक्षणकल्पितैवेति न नित्यमुक्तत्वविरोध इति सूचनाय । विस्मरणात्संकल्पवासनामूलोच्छेदान्नश्वरी नित्यनष्टा ॥ ४५ ॥ स्वात्मनो नाशे अदर्शने भारिणी गुरुतरा । वृद्धिशीलेति यावत् । स्वात्मनो वृद्धौ अपरिच्छिन्नस्वरूपावाप्तौ ॥ ४६ ॥ मनसो निरोधेऽपि कथमिन्द्रियैर्वासनोद्भवो न स्यात्तत्राह—**मन** इति ॥ ४७ ॥ अन्तश्चेतनयत्नो ब्रह्माहंभावना ॥ ४८ ॥ तमेवान्तश्चेतनयत्नप्रकारं दर्शयति—**यदि**त्यादिना ॥ ४९ ॥ अतो ब्रह्मणोऽन्यन्नास्ति । चतुर्भिः किंवृत्तैः कालसंबन्धिप्रकारनिमित्तानि व्युदस्यन्ते । अपयन्त्रणमपगतसंकोचं पूर्णतयेति यावत् ॥५०॥५१॥ परो मोहः स्वाज्ञानं तदेव जरामरणादिकारणे । यद्यत्कार्यात्मना उदेति तत्सर्वं वासनैव विजृम्भते न वस्तुसदित्यर्थः ॥ ५२ ॥ ५३ ॥ यथा जले वातेन तरङ्गाहिः कल्पितस्तथा वासनया आत्मनि अहंभावलक्षणोऽहिः कल्पितः ॥५४॥ हे तत्त्वज्ञ विवेकिन्, परमार्थेन दर्शनेन मम अहमिति द्वयमपि अलम् । नास्त्येवेत्यर्थः ॥ ५५ ॥ खं च अद्रयश्च द्यौश्च उर्वी च नदीश्रेण्यश्चेति द्वन्द्वः । दृष्टिसमकालया सृष्ट्या । जीवन्मुक्तानां दृष्ट्या दृष्टिसृष्टिवादस्यैव शास्त्रे प्रतिष्ठापनादिति भावः ॥ ५६ ॥ परितो विच्छेद्या त्रिविधपरिच्छेदवती ॥ ५७ ॥ खाद्रीत्यादिसमाहारद्वन्द्वः । आर्षं स्त्रीत्वम् । इयं या अविद्या सा अज्ञस्य । ज्ञस्य अविद्या नास्ति । तत् खादि ब्रह्मैवेत्यर्थः ॥ ५८ ॥ द्वौ व्यावहारिकप्रातिभासिकौ विकल्पौ । अकृत्रिमा स्वतःसिद्धा ॥ ५९ ॥ ६० ॥ अनात्मनि देहे आत्मताभ्रान्तिरेव सर्वदुःखनिदानमिति प्रथमं तां वारयति

यथा हि काष्ठजतुनोर्यथा बदरकुण्डयोः ।
श्लिष्टयोरपि नैकत्वं देहदेहवतोस्तथा ॥ ६२
भस्त्रादाहे यथा दाहो न भस्त्रान्तरवर्तिनः ।
पवनस्य तथा देहनाशे नात्मा न नश्यति ॥ ६३
दुःखितोऽहं सुखाढ्योऽहमिति भ्रान्तिं रघूद्वह ।
मृगतृष्णोपमां बुद्ध्वा त्यज सत्यं समाश्रय ॥ ६४
अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् ।
यदसत्यमविद्याख्यं तन्नूनं स्मृतिमागतम् ॥ ६५
प्रसरं त्वमविद्याया मा प्रयच्छ रघूद्वह ।
अनयोपहिते चित्ते दुष्पारेह कदर्थना ॥ ६६
मिथ्यैवानर्थकारिण्या मनोमननपीनया ।
अनया दुःखदायिन्या महामोहफलान्तया ॥ ६७
चन्द्रबिम्बे सुधार्द्रेऽपि कृत्वा रौरवकल्पनम् ।
नारकं दाहसंशोषदुःखं समनुभूयते ॥ ६८
जलकल्लोलकह्लारपुष्पसीकरवीचिषु ।
सरस्सु मृगतृष्णाढ्यं मरुत्वं परिदृश्यते ॥ ६९
नभोनगरनिर्माणपातोत्पातनसंभ्रमाः ।
स्वप्नादिष्वनुभूयन्ते विचित्राः सुखदुःखदाः ॥ ७०
संसारवासनाश्चेतो यदि नाम न पूरयेत् ।
तज्जाग्रत्स्वप्नसंरम्भाः किं नयेयुरिहापदम् ॥ ७१
दृश्यते रौरवा वीचिनरकानर्थशासना ।
मिथ्याज्ञाने गते वृद्धिं स्वप्नोपवनभूमिषु ॥ ७२
अनया वेधितं चेतो बिसतन्तावपि क्षणात् ।
पश्यत्यखिलसंसारसागरानर्थविभ्रमम् ॥ ७३
अनयोपहते चित्ते राज्य एव हि संस्थिताः ।
तास्ताहृश्यो जना यान्ति या न योग्याः श्वपाकिनः ॥ ७४
तस्माद्राम परित्यज्य वासनां भवबन्धनीम् ।
सर्वरागमयीं तिष्ठ नीरागः स्फटिको यथा ॥ ७५
तिष्ठतस्तव कार्येषु मास्तु रागेषु रञ्जना ।
स्फटिकस्येव चित्राणि प्रतिबिम्बानि गृह्णतः ॥ ७६
विदितकौतुकसङ्गससिद्ध्या
यदि करोषि सदैव सुशीलया ।
वरधिया गतप्राकृतिकक्रिय-
स्तदसि केन सहानुपमीयसे ॥ ७७

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे यथाकथितदोषपरिहारोपदेशो नाम चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

## पञ्चदशोत्तरशततमः सर्गः ११५

श्रीवाल्मीकिरुवाच ।
एवमुक्तो भगवता वसिष्ठेन महात्मना ।
रामः कमलपत्राक्ष उन्मीलित इवाबभौ ॥ १
विकासितान्तःकरणः शोभाममलमुपाययौ ।
आश्वस्तस्तमसि क्षीणे पद्मोऽर्कालोकनादिव ॥ २
बोधविस्मयसंजातसौम्यस्मितसिताननः ।
दन्तरश्मिसुधाधौतामिमां वाचमुवाच ह ॥ ३
श्रीराम उवाच ।
अहो नु चित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः ।
अविद्यमाना या विद्या तया सर्वे वशीकृताः ॥ ४

—क इति । जडत्वादेव मूको वागाद्यनधिष्ठाता ॥ ६१ ॥ जतु लाक्षा । श्लिष्टयोरपीत्यपिशब्दादत्यन्तासंश्लिष्टयोरध्यस्तासङ्गयोर्दूरनिरस्तमेकत्वमिति द्योत्यते ॥ ६२ ॥ विदेहत्वादेवात्मनो जन्ममरणादिसंभावनापि नास्तीत्याह—भस्त्रेति ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ अविद्याया आत्मविस्मृतेः । कदर्थना दुरुक्तिः । दुष्पारा दुरुत्तरा ॥ ६६ ॥ अविद्याया असंभावितानर्थसहस्रकारितां प्रपञ्चयति—मिथ्यैवेत्यादिना । अनया चन्द्रबिम्बेऽपि दाहसंशोषदुःखं समनुभूयते इति परेणान्वयः ॥ ६७ ॥ ६८ ॥ अनयेत्येतदत्रोत्तरश्लोके चानुषजते ॥ ६९ ॥ ७० ॥ न पूरयेत् इयमिति शेषः । तत्तर्हि । नयेयुरात्मानमिति शेषः ॥ ७१ ॥ शासना यातना । मिथ्याज्ञाने वृद्धिं गते सति ॥ ७२ ॥ ७३ ॥ न योग्याः नोचिताः ॥ ७४ ॥ सर्वरागः सर्वद्वैताकाररञ्जनं तन्मयीम् ॥ ७५ ॥ कार्येषु व्यवहारेषु । रागेषु रक्तिविषयेषु । रञ्जना आसक्तिः ॥ ७६ ॥ विदितं निरतिशयानन्दरूपत्वात्परमकौतुकं ब्रह्म यैस्ते विदितकौतुकास्तत्त्वविदस्तेषां सङ्गे समाजे पुनःपुनर्विचारेण समिद्धया दृढतरब्रह्माहंभावनिश्चयप्रदीप्तया अतएव सर्वत्र समदर्शनादिसुशीलया वरधिया अनासङ्गबुद्ध्या यदि करोषि सदा व्यवहरसि तत्तर्हि गता अपगताः प्राकृतिका अविद्याप्रयुक्ताः क्रिया जन्ममरणादिविभ्रमा यस्य तथाविधोऽसि । नित्यमुक्तस्वरूपोऽसीति यावत् । तदा केन जीवन्मुक्तेन महाप्रभावेण ब्रह्मणा हरिणा हरेण वा सह अनुपमीयसे नोपमां गच्छसि । नञ्स्तिङन्तेन समासश्छान्दसः । अनुपम आत्मा इष्यसे इति क्यचि कर्मणि अनुपम इवाचरसीति क्यङि वा च्छान्दसेनेत्वेन कथंचिद्योज्यम् । 'महानुपमीयसे' इति पाठस्तु ऋजुः । संयुक्तात्पूर्वं गुरु रहसंयुक्ताद्वेति च्छन्दःशिक्षावचनाद्गतप्राकृतिक इत्यत्र न वृत्तभङ्गः शङ्क्यः ॥७७॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे यथाकथितदोषपरिहारोपदेशो नाम चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

रामस्य बोधादाश्चर्यं मायातन्नाशसंस्थितिः ।
लवणापन्निदानं च पृष्टमत्र प्रकीर्त्यते ॥ १ ॥

उन्मीलितो विकासितः । अर्थात्पद्म इवेति गम्यते ॥ १ ॥ तदेव स्पष्टमाह—विकासितेति । आश्वस्तः समाधानतोषितः ॥ २ ॥ बोधप्रयुक्तविस्मयात्संजातेन सौम्येन स्मितेन सितं धवलितमाननं यस्य ॥ ३ ॥ अविद्यमाना अत्यन्तासती या

इदं तद्धन्नतां यातं तृणमात्रं जगत्त्रये ।
अविद्ययापि यन्नामासदेव सदिव स्थितम् ॥ ५
अस्याः संसारमायाया नद्यास्त्रिभुवनाङ्गणे ।
रूपं मदवबोधार्थं कथयानुग्रहात्पुनः ॥ ६
अन्यो यत्संशयोऽयं मे महात्मन्हृदि वर्तते ।
लवणोऽसौ महाभागः किं नामापदमाप्तवान् ॥ ७
संश्लिष्टयोराहतयोर्द्वयोर्वा देहदेहिनोः ।
द्वन्द्वक इव संसारी शुभाशुभफलैकभाक् ॥ ८
लवणस्य तथा दत्त्वा तामापदमनुत्तमाम् ।
किं गतश्चञ्चलारम्भः क्वासावैन्द्रजालिकः ॥ ९

श्रीवसिष्ठ उवाच ।

काष्ठकुड्योपमो देहो न किंचन इहानघ ।
स्वप्नालोक इवानेन चेतसा परिकल्प्यते ॥ १०
चेतस्तु जीवतां यातं चिच्छक्तिपरिभूषितम् ।
विद्यात्संसारसंरम्भं कपिपोतकचञ्चलम् ॥ ११
देही हि कर्मभाग्यो हि नानाकारशरीरधृक् ।
अहंकारमनोजीवनामभिः परिकल्प्यते ॥ १२
तस्येमान्यप्रबुद्धस्य न प्रबुद्धस्य राघव ।
सुखदुःखान्यनन्तानि शरीरस्य न कानिचित् ॥ १३
अप्रबुद्धं मनो नानासंज्ञाकल्पितकल्पनम् ।
वृत्तीरनुपतच्चित्रा विचित्राकृतितां गतम् ॥ १४
अप्रबुद्धं मनो यावन्निद्रितं तावदेव हि ।
संभ्रमं पश्यति स्वप्ने न प्रबुद्धं कदाचन ॥ १५
अज्ञाननिद्राक्षुभितो जीवो यावन्न बोधितः ।
तावत्पश्यति दुर्भेदं संसारारम्भविभ्रमम् ॥ १६
संप्रबुद्धस्य मनसस्तमः सर्वं विलीयते ।
कमलस्य यथा हार्दं दिनालोकविकासिनः ॥ १७
चित्ताविद्यामनोजीववासनेति कृतात्मभिः ।
कर्मात्मेति च यः प्रोक्तः स देही दुःखकोविदः ॥१८
जडो देहो न दुःखार्हो दुःखी देह्यविचारतः ।
अविचारो घनाज्ञानादज्ञानं दुःखकारणम् ॥ १९
शुभाशुभानां धर्माणां जीवो विषयतां गतः ।
अविवेकैकदोषेण कोशेनेव हि कीटकः ॥ २०
अविवेकामयोन्नद्धं मनो विविधवृत्तिमत् ।
नानाकारविहारेण परिभ्रमति चक्रवत् ॥ २१
उदेति रौति हन्त्यत्ति याति वल्गति निन्दति ।
मन एव शरीरेऽस्मिन्न शरीरं कदाचन ॥ २२
यथा गृहपतिर्गेहे विविधं हि विचेष्टते ।
न गृहं तु जडं राम तथा देहे हि जीवकः ॥ २३
सर्वेषु सुखदुःखेषु सर्वासु कलनासु च ।
मनः कर्तृ मनो भोक्तृ मानसं विद्धि मानवम् ॥ २४
अत्र ते शृणु वक्ष्यामि वृत्तान्तमिममुत्तमम् ।
लवणोऽसौ यथा यातश्चण्डालत्वं मनोभ्रमात् ॥ २५
मनः कर्मफलं भुङ्क्ते शुभं वाऽशुभमेव वा ।
यथैतद्बुद्ध्यसे नूनं तथाकर्णय राघव ॥ २६
हरिश्चन्द्रकुलोत्थेन लवणेन पुरानघ ।
एकं तेनोपविष्टेन चिन्तितं मनसा चिरम् ॥ २७
पितामहो मे सुमहान्राजसूयस्य याजकः ।
अहं तस्य कुले जातस्तं यजे मनसा मखम् ॥ २८
इति संचिन्त्य मनसा कृत्वा संभारमादृतः ।
राजसूयस्य दीक्षायां प्रविवेश महीपतिः ॥ २९
ऋत्विजश्चाह्वयामास पूजयामास सन्मुनीन् ।
देवानामन्त्रयामास ज्वालयामास पावकम् ॥ ३०
यथेच्छं यजमानस्य मनसोपवनान्तरे ।
ययौ संवत्सरः साग्रो देवर्षिद्विजपूजया ॥ ३१
भूतेभ्यो द्विजपूर्वेभ्यो दत्त्वा सर्वस्वदक्षिणाम् ।
विबुध्यत दिनस्यान्ते स्व एवोपवने नृपः ॥ ३२

---

तया ॥ ४ ॥ इदं दृश्यमानं तत् प्रसिद्धं संसारदुःखमविद्ययो-[2]पादानभूतयापि । नामेति किलार्थे ॥ ५ ॥ नद्या इव प्रवाहवत्याः संसारनिदानभूताया मायायाः । मदवबोधार्थं ममावबोधदार्ढ्यार्थं पुनः कथय ॥ ६ ॥ किं कस्मान्निमित्तात् । नामेति किलार्थे ॥ ७ ॥ तृतीयं पृच्छति—**संश्लिष्टयो**रिति । जतुकाष्ठवत्संश्लिष्टयोर्मल्लमेषवत्परस्पराहतयोर्वा देहदेहिनोर्मध्ये कः शुभाशुभकर्मफलयोरेकभाक् । मुख्यो भोक्तेत्यर्थः ॥ ८ ॥ चतुर्थः प्रश्नः स्पष्टः ॥ ९ ॥ एवं पृष्टो वसिष्ठो विवेकदार्ढ्यहेतुत्वप्रकर्षात्तृतीयं प्रश्नं प्रथमं समादधानोऽर्थात्प्रथममपि समाधत्ते—**काष्ठे**त्यादिना । न किंचन वस्तुसदित्यर्थः । तथाचाचेतनत्वादसत्त्वाच्च न देहस्य कर्मफलभोक्तृताप्रसक्तिरित्यर्थः ॥१०॥ किं तर्हि भोक्तृ तदाह—**चेतस्त्व**ति । तस्य जाड्यदोषं परिहरति—**चिच्छक्ती**ति । चिदाभासतादात्म्यापन्नमित्यर्थः। संसारे भोक्तृत्वे संरम्भोऽभिनिवेशो यस्य तत् ॥ ११ ॥ तदेव जीव इत्याह—**देही**ति ॥ १२ ॥ १३ ॥ नानावृत्तीरनुपतदिति नामभेदे निमित्तोक्तिः ॥ १४ ॥ तस्य चाप्रबोधो निमित्तमित्याह—**अप्रबुद्ध**मिति ॥ १५ ॥ १६ ॥ हार्दं हृदयस्थम् ॥ १७ ॥ दुःखस्य कोविदो भोक्ता ॥ १८ ॥ १९ ॥ कीटकः कौशेयकोशकाराख्यः ॥ २० ॥ अविवेकलक्षणेनामयेन रोगेणोन्नद्धं बद्धम् ॥ २१ ॥ भ्रमणमेव प्रपञ्चयति—**उदेती**ति ॥ २२ ॥ २३ ॥ मानवं जीवम् ॥२४॥ तदुपपादकत्वे द्वितीयप्रश्नोत्तरमवतारयति—**अत्रे**ति ॥ २५ ॥ २६ ॥ २७ ॥ बाह्यसंभारासामर्थ्याद्राजादिपीडानिमित्ते राजसूये मन्त्रिपुरोहिताद्यसंमतेर्वा मनसा यज्ञकल्पनमिति बोध्यम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ विबुध्यत बाह्यदृष्टिं प्रापेत्यर्थः । अडभावश्छान्दसः । स्वे स्वीये ॥ ३२ ॥

---

१ एकान्तेनेति इति पाठः.　　२ पाधिभूतयेति इति पाठः.

एवं स लवणो राजा राजसूयमवाप्तवान् ।
मनसैव हि तुष्टेन युक्तं तस्य फलेन च ॥ ३३
अतश्चित्तं नरं विद्धि भोक्तारं सुखदुःखयोः ।
तन्मनः पावनोपाये सत्ये योजय राघव ॥ ३४
पूर्णे देशे सुसंपूर्णः पुमान्नष्टे विनश्यति ।
देहोऽहमिति येषां तु निश्चयस्तैरलं बुधाः ॥ ३५
उच्चैर्विवेकवति चेतसि संप्रबुद्धे
दुःखान्यलं विगलितानि विविक्तबुद्धेः ।
भास्वत्करप्रकटिते ननु पद्मखण्डे
संकोचजाड्यतिमिराणि चिरं क्षतानि ॥ ३६

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० उत्पत्तिप्रकरणे सुखदुःखभोक्तृत्वोपदेशो नाम पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

## षोडशोत्तरशततमः सर्गः ११६

श्रीराम उवाच ।

राजसूयफलं प्राप्तं लवणेन किल प्रभो ।
प्रमाणं किमिवात्र स्यात्कल्पनाजालशम्बरे ॥ १

श्रीवसिष्ठ उवाच ।

यदा शाम्बरिकः काले संप्राप्तो लावणीं सभाम् ।
तदाहमवसं तत्र तत्प्रत्यक्षेण दृष्टवान् ॥ २
अहं सभ्यैस्ततस्तत्र गते शाम्बरिकर्मणि ।
किमेतदिति यत्नेन पृष्टश्च लवणेन च ॥ ३
चिन्तयित्वा मया दृष्ट्वा तत्र तत्कथितं ततः ।
शृणु तत्ते प्रवक्ष्यामि राम शाम्बरिकेहितम् ॥ ४
राजसूयस्य कर्तारो ये हि ते द्वादशाब्दिकम् ।
आपद्दुःखं प्राप्नुवन्ति नानाकारव्यथामयम् ॥ ५
अतः शक्रेण गगनाद्दुःखाय लवणस्य सः ।
प्रहितो देवदूतो हि राम शाम्बरिकाकृतिः ॥ ६
राजसूयक्रियाकर्तुस्तस्य दत्त्वा महापदम् ।
अगच्छत्स नभोमार्गं सुरसिद्धनिषेवितम् ॥ ७
तस्मात्प्रत्यक्षमेवैतद्राम नात्र संदेहोऽस्ति । मनो
हि विलक्षणानां क्रियाणां कर्तृ भोक्तृ च तदेव
निर्घृष्य संशोध्य चित्तरत्नमिह हिमकणमिवातपेन
विलीनतां विवेकेन नीत्वा परं श्रेयः प्राप्स्यसि ।

तस्य फलेन युक्तं भवितुमिति शेषः ॥ ३३ ॥ तत्तस्मात्कारणान्मनसः पावने विशोधने उपाये विचारनिरोधादौ । मन एव क्रियाशक्तिप्राधान्येन कर्तृ करणं क्रिया च । सैव सुखदुःखफलात्मना परिणता तत्फलं मन एव चिदाभासव्याप्त्या चिच्छक्तिप्राधान्येन भोक्तृ भोगश्चेति कर्तृभोक्तृभावप्रवाह एव मायानद्याः स्वरूपमित्यर्थात्प्रथमप्रश्नविषयोऽप्यनेन संदर्भेण संदर्शितो बोध्यः। चतुर्थप्रश्नं तूत्तरसर्गे समाधास्यति ॥ ३४ ॥ एवं रामं समाधाय देवादीन्सभ्यान्प्रति विस्तरेण वर्णितमर्थं पिण्डीकृत्याह—**पूर्ण** इति । हे बुधाः, अयं मनोरूपः पुमान्पूर्णे कालादिपरिच्छेदशून्ये दिशति स्वात्माकारं ददातीति देश आलम्बनं तत्र प्रतिष्ठितः सन्पूर्णो भवति । नष्टे नित्यनश्वरे परिच्छिन्ने देहादिदेशे प्रतिष्ठितस्तु तद्भावप्राप्त्या विनश्यति । अतो देहोऽहमिति येषां नश्वराहंभावनिश्चयस्तैरलम् । प्रयोजनं नास्तीत्यर्थः ॥३५॥ उपसंहरति—**उच्चै**रिति । शास्त्राचार्यपुरस्कृतसम्यग्विचारपरिपाकादुच्चैर्विवेकवति निरूढसारासारविवेके चेतसि संप्रबुद्धे नास्म्यहं कदापि देहादिस्वभावः किंतु पूर्णानन्दस्वप्रकाशैकरसं ब्रह्मैवाहमस्मीति सम्यक् प्रबुद्धे सति विविक्ता वृत्तीद्धबोधेन बाधिता बुद्धिवृत्तिरपि येन तथाविधस्य ब्रह्मीभूतस्याधिकारिणः सर्वदुःखानि अलं समूलं चिरं विगलितानि कदाचिदपि न भवन्तीत्यर्थः । पद्मखण्डे भास्वतः सूर्यस्य करैः प्रकटिते संकोचो मुकुलता, जाड्यं तुहिनम्लानता, तिमिरं कोशान्तर्बाह्यान्धकारश्च चिरं यथा क्षतानि नष्टानि भवन्ति तद्वदित्यर्थः ॥ ३६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सुखदुःखभोक्तृत्वोपदेशो नाम पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

तुर्यप्रश्नसमाधाने वर्णितार्थनिदर्शनात् ।
सोपोद्घातास्ततो योगभूमयोऽत्रावतारिताः ॥ १ ॥

चतुर्थप्रश्नस्योत्तरं जिज्ञासू रामस्तदुपोद्बलकं द्वितीयप्रश्नोत्तरे प्रमाणं पृच्छति—**राजसूयफल**मिति । लवणेन राज्ञा चण्डालभावादिकल्पनारूपे जालशम्बरे शाम्बरिकोपदर्शितमायाजाले राजसूयप्रयुक्तमनिष्टफलं प्राप्तम् । किलेत्यैतिह्येन यदुक्तमत्रास्मिन्नर्थे किमिव प्रमाणं स्यात् । इवशब्दस्तदसंभवद्योतनार्थः । न तावत्प्रत्यक्षम् । मदीयमानसराजसूयस्येदं फलमिति लवणेन स्वतो ज्ञातुमशक्यत्वात् । तद्वाप्यलिङ्गानामप्यप्रसिद्धेस्तेनान्यैर्वा ज्ञातुमशक्त्या तन्मूलशब्दस्य ऐतिह्यस्य वा तत्राप्रसरादित्यर्थः । 'कल्पनाजालमम्बरे' इति पाठे तु अम्बरे चित्ताकाशे कल्पनाजालात्मकं फलमित्यन्वयः ॥ १ ॥ यद्यप्यन्येषां तत्र प्रमाणाप्रसरस्तथापि योगबलात्स्वस्य तत्प्रत्यक्षमिति तन्मूलैवान्येषां प्रसिद्धिरिति वसिष्ठः समाधत्ते—**यदे**त्यादिना ॥ २ ॥ शाम्बरमस्यास्तीति शाम्बरि तथाविधं कर्म चरित्रं यस्य तस्मिन् । सभ्यैर्लवणेन च पृष्टः ॥३॥ दृष्ट्वा । योगबलेनेति शेषः । प्रासङ्गिकं प्रश्नं समाधाय प्राक्तनं चतुर्थप्रश्नसमाधानं प्रतिजानीते—**शृणु**विति। शाम्बरिकस्येहितमभिप्रायम् ॥४॥५॥६॥ महापदं शारीरराजसूयफलद्वादशाब्दिकापदपेक्षया पञ्चगुणां षष्टिवर्षकल्पनात्मिकामित्यर्थः । अनेन मानसराजसूयादेः स्वाराज्यादिसुखफलमपि शारीरापेक्षया पञ्चगुणमधिकमिति गम्यते ॥ ७ ॥ उक्तमुपसंहरन्प्रकृते योजयति—**तस्मादि**त्यादिना गद्येन । हठयोगेन निर्घृष्य राजयोगेन संशोध्य निर्विकल्पसमाधिना विलीनतां नीत्वा विवेकेन तत्त्वसाक्षात्कारेण परं श्रेयो मोक्षं प्राप्स्यसि । विवि-

चित्तमेव सकलभूताडम्बरकारिणीमविद्यां विद्धि । सा विचित्रकेन्द्रजालवशादिदमुत्पादयति । अविद्याचित्तजीवबुद्धिशब्दानां भेदो नास्ति वृक्षतरुशब्दयोरिवेति ज्ञात्वा चित्तमेव विकल्पनं कुरु । अभ्युदिते चित्तवैमल्यार्कबिम्बे सकलङ्कविकल्पोत्थदोषतिमिरापहरणं न तदस्ति राघव यन्न दृश्यते यन्नात्मीक्रियते यन्न परित्यज्यते यन्न म्रियते यन्नात्मीयं यन्न परकीयं सर्वं सर्वदा सर्वो भवतीति परमार्थः ॥ ८

भावराशिस्तथा बोधः सर्वो यात्येकपिण्डताम् ।
विचित्रमृद्भाण्डगणो यथाऽपक्वो जले स्थितः ॥ ९

श्रीराम उवाच ।

एवं मनःपरिक्षये सकलसुखदुःखानामन्तः प्राप्यत इति भवता प्रोक्तं तत्कथं महात्मंश्चपलवृत्तिरूपस्यास्य मनसोऽसत्ता भवति ॥ १०

श्रीवसिष्ठ उवाच ।

रघुकुलेन्दो शृणु मनःप्रशमने युक्तिं, यां ज्ञात्वा स्वखाचारदूरे मनःसंधिरयमेष्यसि ॥ ११

इह हि तावद्ब्रह्मणः सर्वभूतानां त्रिविधोत्पत्तिरिति तत्पूर्वोक्तम् ॥ १२

तत्रेदंप्रथमया मनःकल्पनया देहीति सा ब्रह्मरूपिणी संकल्पमयी भूत्वा यदेव संकल्पयति तदेव पश्यति तेनेदं भुवनाडम्बरं कल्प्यते ॥ १३

तत्र जननमरणसुखदुःखमोहादिकं संसरणं कल्पयन्ती कल्पानुरचना बहुनाममन्थरं स्थित्वा स्वयं विलीयते हिमकणिकेवातपगता ॥ १४

कालोदितः संकल्पवशात् पुनरन्यतया जायते सापि पुनर्विलीयते पुनरप्युदेति सैवेति भूयोभूयोऽनुसंसरन्ती स्वयमुपशाम्यति ॥ १५

इत्थमनन्ता ब्रह्मकोटयोऽस्मिन्ब्रह्माण्डेऽन्येषु च समतीता भविष्यन्तीति सन्ति चेतरा अनन्ता यासां संख्यापि न विद्यते ॥ १६

---

त्रकं विविधचित्ररचनाप्रकृतिभूतं यदिन्द्रजालमिव वासनारूपं तद्वशात् । विकल्पनं विगतकल्पनं कुरु । तिमिरापहरणं भविष्यतीति शेषः । ननु स्वचित्तलये स्वाविद्याक्षये वा स्वादृष्टार्जितस्य स्वाविद्याकार्यस्यैव निवृत्तिः स्यान्न सर्वादृष्टाविद्याकार्यस्य स्वचित्तादेस्तदकारणत्वादित्याशङ्क्य सर्वं सर्वादृष्टकार्यं सर्वोपभोग्यं चेति सर्वाविद्याकार्यं सर्वात्मकस्वात्मदर्शनात्सर्वं दृष्टं भवति सर्वमप्यात्मीकृतं भवति सर्वमपि त्यक्तं भवति सर्वमपि मारितं भवतीति नात्रासंभावना युक्तेत्याशयेनाह—**न तदस्ती**ति । तत्कुतस्तत्राह—**यन्नात्मीय**मिति । यतः सर्वमात्मीयं सर्वं परकीयं यस्मात्सर्वः सर्वदा सर्वो भवतीति परमार्था स्थितिरित्यर्थः । तथाच मधुब्राह्मणश्रुतिः 'इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु' इत्याद्या प्रसिद्धेत्याशयः ॥८॥ अतः समाधिपरिपाकजन्यबोधेन मनस्तत्कार्यप्रपञ्चयोरविद्यायाश्चैकरसब्रह्मात्मभावः परिशिष्यत इति पद्येनोपसंहरति—**भावराशि**रिति । भावराशिर्दृश्यपदार्थसमूहस्तथा तद्विषयकविचित्रवृत्तिरूपो बोधस्तदुपहितः सर्वो जीवश्चैकपिण्डतां ब्रह्मैकरसतां याति । यथा अपक्व इति च्छेदः ॥ ९ ॥ गुरूक्तेस्तात्पर्यसर्वस्वमनूद्य दर्शयन् रामो मनःसमुच्छेदं स्वबुद्धितर्कितोपायैरशक्यं मन्यमानस्तदुपायान्तरं जिज्ञासुर्गद्येन पृच्छति—**एव**मिति ॥ १० ॥ वसिष्ठस्तदुपायं वक्तुं प्रतिजानीते—**रघुकुलेन्दो** इति । स्वानि स्वानि बहिःप्रचारद्वाराणीन्द्रियाणि तेषामाचारः संचारस्तस्य दूरे तदविषये ब्रह्मणि मनःसंधिरयं मनोवृत्तिधाराम् । रलयोरभेदान्मनसः संधानेन लयं वा एष्यसि प्राप्स्यसि ॥११॥ ननु यस्यानादौ संसारे कदापि नाशो न प्रसिद्धस्तस्य कथमुच्छेदः संभाव्यत इत्याशङ्क्य तत्संभावनाय मध्ये मध्ये तस्य नाशप्रसिद्धिं परिणामिस्वभावतया इतरभूतादितुल्यतां च दर्शयितुं प्रागुक्तां सात्त्विकादिभेदेन त्रिविधां जीवसृष्टिं स्मारयति—**इह ही**त्यादिना । पूर्वोक्तं स्मर्तव्यमिति शेषः । यद्यपि द्वादशधा जीवजातयः प्रागुक्तास्तथापि सात्त्विकादित्रैविध्ये द्वादशानामन्तर्भावात्त्रिविधेत्युक्तम् । आध्यात्मिकाधिदैविकाधिभौतिकभेदाद्वा त्रिविधा । तासु त्रिविधास्वपि सृष्टिषु मूलकारणं हैरण्यगर्भं मनस्तत्संकल्पानुसारीण्यन्यानि मनांसीत्यपि प्रागुक्तम् ॥ १२ ॥ तत्र हैरण्यगर्भमनसः स्वसंकल्पवैचित्र्यब्रह्माण्डाकारपरिणतस्य कल्पान्ते विलयः प्रसिद्धस्तत्कार्याणां च भौतिकानां विलयदर्शनात्तस्यापि विलयस्वभावतानुमातुं शक्यते । एवं मूलकारणे मनसि विलयस्वभावतानिश्चये तत्तुल्यस्वभावतया अस्मदादिमनःस्वपि सा संभावयितुं शक्यत इत्याशयेनाह—**तत्रेदंप्रथमये**त्यादिना । इदंप्रथमया आद्यया । देही चतुर्मुखाकारदेहवानहमिति या ब्रह्मरूपिणी धातृस्वरूपा कल्पना सा तदेव पश्यति सत्यसंकल्पत्वादित्याशयः ॥ १३ ॥ अस्मदादिजन्ममरणादिसंसारोऽपि तदीयकल्पनैवेत्याह—**तत्रे**ति । कल्पेषु चतुर्युगसहस्रमितेषु स्वाहस्सु तत्तदनुकूलरचनाभी रचितानां देवासुरादीनां बहुभिर्नामभिर्मन्थरं गुरुतरं यथा स्यात्तथा स्थित्वा भोगिपर्यङ्कशायिनि विष्णौ स्वयं विलीयते आतपगता हिमकणिका यथा स्वकारणे तेजसि लीयते तद्वत् ॥ १४ ॥ पुनः सृष्टिकाले उदितो भगवन्नाभिपद्मादाविर्भूतश्चेत् पुनरन्यतया कल्पान्तरसर्गान्तरतया सा प्राक्तनी कल्पना जायते स पुनः कल्पान्ते विलीयते पुनरप्युदेति । इति यावदधिकारप्रारब्धक्षयं संसरन्ती तत्क्षये स्वतःसिद्धादात्मबोधाद्द्विपरार्धावसाने समूलं स्वयमुपशाम्यति ॥ १५ ॥ एवमन्येष्वपि हैरण्यगर्भमनस्सु नश्वरस्वभावता प्रमाणसिद्धेत्याह—**इत्थ**मित्यादिना । अस्मिन् ब्रह्माण्डेऽपि प्रतिपरमाणु ब्रह्माण्डकोटिकल्पनास्तीति

एवमस्यां तादृशि वर्तमानायामीश्वरादागत्य जीवो यथा जीव्यते विमुच्यते तच्छृणु ॥ १७

ब्रह्मणो मनःशक्तिरभ्युदिता पुरःस्थिताकाशशक्तिमवलम्ब्य तत्रस्थपवनतानुपातिनी घनसंकल्पत्वं गच्छति ॥ १८

ततः पुरःप्राप्तभूततन्मात्रपञ्चकतामेत्यान्तःकरणतां नीत्वा सात्वसूक्ष्मा प्रकृतिर्भूत्वा गगनपवनतेजोरूपतासंकल्पात्प्रालेयरूपतामुपेत्य शाल्योषधिं विशन्ती प्राणिनां गर्भतां च गच्छति ॥ १९

जायते तस्मात्ततः पुरुषः संपद्यते ॥ २०

तेन पुरुषेण जातमात्रेणैव बाल्यात्प्रभृति विद्याग्रहणं कर्तव्यं गुरवोऽनुगन्तव्याः ॥ २१

ततः क्रमात्पुंसस्तवैव चमत्कृतिर्जायते ॥ २२

स्वच्छदशा चित्तवृत्तेः पुरुषस्य हेयोपादेयविचार उत्पद्यते ॥ २३

तादृग्विवेकवति संकलिताभिमाने
पुंसि स्थिते विमलसत्त्वमयाग्र्यजातौ ।
सप्तात्मिकावतरति क्रमशः शिवाय
चेतःप्रकाशनकरी ननु योगभूमिः ॥ २४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षो० उत्पत्तिप्रकरणे साधकजन्मावतारो नाम षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

## सप्तदशोत्तरशततमः सर्गः ११७

**श्रीराम उवाच ।**

कीदृश्यो भगवन्योगभूमिकाः सप्तसिद्धिदाः ।
समासेनेति मे ब्रूहि सर्वतत्त्वविदांवर ॥ १

**श्रीवसिष्ठ उवाच ।**

अज्ञानभूः सप्तपदा ज्ञभूः सप्तपदैव हि ।
पदान्तराण्यसंख्यानि भवन्त्यन्यान्यथैतयोः ॥ २
स्वयत्नसाधकरसान्महासत्ताभरोन्नतेः ।

---

प्रागुक्तरीत्या बोध्यम् ॥१६॥ यथा समष्टिमनांसि पुरुषयत्नसाध्यैरेवोपासनज्ञानैरुपचीयन्ते शाम्यन्ति चैवं व्यष्टिजीवमनांस्यपि जन्ममरणबीजकामकर्मवासनासंकल्पैरुपचीयन्ते निरोधज्ञानाभ्यासप्रकर्षैः शाम्यन्तीति नासंभावनीयो मनोनाश इत्याशयेन सृष्ट्यादिकालादारभ्य मोक्षकल्पनान्तां जीवसंसृतिं संक्षेपविस्तराभ्यां प्रपञ्चयति—**एवमस्या**मित्यादिना । अस्यां प्रागुक्तायां समष्टिकल्पनायां तादृशि परमात्मनि वर्तमानायां सत्यां जीवो व्यष्टिजीवो जीव्यते जीवति । पदविकरणव्यत्ययश्छान्दसः ॥ १७ ॥ संक्षेपेण सूत्रितमर्थं विवरीतुकामः प्रथममीश्वरादागत्यंशं विवृणोति—**मनःशक्ति**रिति । प्रलये उपाधिविलयादव्याकृते लीनानां जीवानां संस्कारमात्रेण परिशिष्टा मनःशक्तिः प्रथममव्याकृतात् शब्दतन्मात्रात्मककाशशक्त्याविर्भावे सति पुरःस्थितां प्रथमोत्पन्नां तामवलम्ब्य स्वयमप्यभ्युदिता सती पवनशक्त्यात्मकस्पर्शतन्मात्रोत्पत्तौ तत्रत्यपवनतानुपातिनी ईषच्चलनयोग्यतालक्षणं घनसंकल्पत्वं गच्छति ॥ १८ ॥ ततः पुरःप्राप्तरूपरसगन्धात्मकतन्मात्रक्रमेण पञ्चकतामपञ्चीकृतपञ्चभूतात्मकतामेत्य अन्तःकरणतां मनोबुद्धिरहंकारश्चित्तमिति व्यवहारबीजजीवोपाधितां नीत्वा प्राप्य सा प्रागुक्तमनःशक्तिरसूक्ष्मोपचिता पञ्चीकृतस्थूलप्रकृतिर्भूत्वा पञ्चीकृतगगनपवनतेजोरूपतासंकल्पात् क्रमेण प्रालेयरूपतां नीहारवृष्ट्यादिजलरूपतामुपेत्य शालिगोधूमाद्योषधिं सस्यं विशन्ती अन्नभूता पुरुषैर्भुक्ता रेतोभावं प्राप्य स्त्रीयोनौ निषिक्ता कललबुद्बुदादिक्रमेण प्राणिनां गर्भतां च गच्छति ॥ १९ ॥ तस्माज्जायते प्रसूयते, ततो जन्मनः कदाचित्सुकृताधिक्यात्कर्मज्ञानाधिकृतः पुरुषः संपद्यत इत्यर्थः ॥ २० ॥ तेनेत्यादि निगदव्याख्यातम् ॥२१॥ तवेव चमत्कृतिर्विवेकवैराग्यादिसाधनसंपत्तिर्जायते ॥ २२ ॥ स्वच्छदशा चित्तवृत्तेः पुरुषस्य संसारानर्थो हेयो मोक्षोपाय उपादेय इति विचार उत्पद्यते ॥ २३ ॥ गद्योक्तार्थसारं पद्येनोक्त्वोपसंहरंस्तादृशे पुरुषे योगभूमिकामात्यन्तिकमनोनाशोपायभूतामवतारयति—**तादृग**िति । तादृक्साधनान्तरोपचितो यो विवेकस्तद्वति विमलसत्त्वमयी अग्र्यजातिर्ब्राह्मणाद्युत्तमजातिर्यस्य स तादृशोऽहमिति संकलितः स्वीकृतोऽभिमानोऽनेन तस्मिन्नधिकारिपुंसि स्थिते अचले सति शिवाय परमपुरुषार्थाय वक्ष्यमाणसप्तविध्यात्मिका चेतसः प्रकाशनं ज्ञानेनाभिज्वलनं तत्करणशीला योगभूमिः क्रमशश्चित्तोपरमतारतम्यक्रमेणावतरति । वक्ष्यमाणलक्षणैराविर्भवतीत्यर्थः ॥ २४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे साधकजन्मावतारो नाम षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

**ज्ञानभूमिप्रभेदानामुपोद्घातेन वर्ण्यते ।**
**अज्ञानभूमिका सप्तविधा यद्वा प्रसङ्गतः ॥ १ ॥**

समासेन संग्रहेण । इतिशब्दो लक्षणप्रभेदानां तदुपयोग्यर्थान्तराणां च प्रश्नस्य द्योतनाय ॥ १ ॥ तत्र इतिशब्दपृष्टं ज्ञानभूमिकाबोधोपयुक्तमज्ञानभूमिकाभेदं प्रथमं वक्तुकामो वसिष्ठो ज्ञानाज्ञानभूमिके विभज्य दर्शयति—**अज्ञाने**ति ॥२॥ स्वाभाविकप्रवृत्तिलक्षणः पुरुषप्रयत्नो भोगरागदार्ढ्यलक्षणो रसावेशश्चाज्ञानभूप्रतिष्ठायामसाधारणहेतू । शास्त्रीयसाधनचतुष्टयविशिष्टः श्रवणादिप्रयत्नो मुमुक्षादार्ढ्यलक्षणरसावेशश्च ज्ञानभूःप्रतिष्ठायाम् । अधिष्ठानब्रह्मसत्तोत्कर्षाधीनस्वसत्तालाभस्तूभयत्र

एते प्रतिपदं बद्धमूले संफलतः फलम् ॥ ३
तत्र सप्तप्रकारां त्वमज्ञानस्य भुवं शृणु ।
ततः सप्तप्रकारां त्वं श्रोष्यसि ज्ञानभूमिकाम् ॥ ४
स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहंत्ववेदनम् ।
एतत्संक्षेपतः प्रोक्तं तज्ज्ञत्वाज्ञत्वलक्षणम् ॥ ५
शुद्धसन्मात्रसंवित्तेः स्वरूपान्न चलन्ति ये ।
रागद्वेषोदयाभावात्तेषां नाज्ञत्वसंभवः ॥ ६
यत्स्वरूपपरिभ्रंशाच्चेत्यार्थे चितिमज्जनम् ।
एतस्मादपरो मोहो न भूतो न भविष्यति ॥ ७
अर्थादर्थान्तरं चित्ते याति मध्ये हि या स्थितिः ।
निरस्तमनना यासौ स्वरूपस्थितिरुच्यते ॥ ८
संशान्तसर्वसंकल्पा या शिलान्तरिव स्थितिः ।
जाड्यनिद्राविनिर्मुक्ता सा स्वरूपस्थितिः स्मृता ॥ ९
अहंतांशे क्षते शान्ते भेदे निःस्पन्दतां गते ।
अजडा या प्रकचति तत्स्वरूपमिति स्थितम् ॥ १०
तत्रारोपितमज्ञानं तस्य भूमीरिमाः शृणु ।
बीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च ॥ ११
जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत्सुषुप्तकम् ।
इति सप्तविधो मोहः पुनरेव परस्परम् ॥ १२
श्लिष्टो भवत्यनेकाख्यः शृणु लक्षणमस्य च ।
प्रथमे चेतनं यत्स्यादनाख्यं निर्मलं चितः ॥ १३
भविष्यच्चित्तजीवादिनामशब्दार्थभाजनम् ।
बीजरूपं स्थितं जाग्रद्बीजजाग्रत्तदुच्यते ॥ १४
एषा ज्ञप्तेर्नवावस्था त्वं जाग्रत्संसृतिं शृणु ।
नवप्रसूतस्य परादयं चाहमिदं मम ॥ १५
इति यः प्रत्ययः स्वस्थस्तज्जाग्रत्प्रागभावनात् ।
अयं सोऽहमिदं तन्म इति जन्मान्तरोदितः ॥ १६
पीवरः प्रत्ययः प्रोक्तो महाजाग्रदिति स्फुरन् ।
अरूढमथ वा रूढं सर्वथा तन्मयात्मकम् ॥ १७
यज्जाग्रतो मनोराज्यं जाग्रत्स्वप्नः स उच्यते ।
द्विचन्द्रशुक्तिकारूप्यमृगतृष्णादिभेदतः ॥ १८
अभ्यासात्प्राप्य जाग्रत्त्वं स्वप्नोऽनेकविधो भवेत् ।
अल्पकालं मया दृष्टमेवं नो सत्यमित्यपि ॥ १९
निद्राकालानुभूतेऽर्थे निद्रान्ते प्रत्ययो हि यः ।
स स्वप्नः कथितस्तस्य महाजाग्रत्स्थितेर्हृदि ॥ २०
चिरसंदर्शनाभावादप्रफुल्लबृहद्वपुः ।
स्वप्नो जाग्रत्तया रूढो महाजाग्रत्पदं गतः ॥ २१
अक्षतेवाक्षते देहे स्वप्नजाग्रन्मतं हि तत् ।
षडवस्थापरित्यागे जडा जीवस्य या स्थितिः ॥ २२

साधारणो हेतुः । एतेभ्यो हेतुभ्य एते भूमिके प्रतिपदं स्वस्वविषये बद्धमूले सत्यौ स्वस्वोचितं संसारस्थितिदुःखलक्षणं तन्मुक्तिनिरतिशयानन्दावाप्तिलक्षणं च फलं संफलतः । यथा अधोभुवनभुवः सप्तपदा उत्तरोत्तरं रजस्तमोदुःखबहुला नरकान्ताः, ऊर्ध्वभुवनभुवस्तूत्तरोत्तरं सत्त्वसुखज्ञानबहुलाः सत्यलोकान्ताः क्रमसुक्तिफलाश्च तद्वदित्यर्थाद्गम्यते ॥ ३॥ तत्र तयोर्भूमिकयोर्मध्ये ॥४॥ तत्र भूमिद्वयस्य प्रत्येकं फलतः सामान्यलक्षणमाह—**स्वरूपे**ति ॥५॥ तत्राद्यलक्षणं स्फुटयति—**शुद्धे**ति॥६॥द्वितीयं स्फुटयति—**यदि**ति ॥७॥ आद्यस्याप्रसिद्धिं वारयति—**अर्थादि**ति । पूर्वविषयाच्च्युतस्य विषयान्तरमननात्प्राङ् निरस्तमनना स्वरूपावस्थितिः प्रसिद्धेत्यर्थः ॥८॥ मूर्च्छासुषुप्त्योर्वारणाय विशिनष्टि—**जाड्यनिद्रे**ति ॥ ९ ॥ अन्तरहंतांशे बहिर्भेदे । उभयत्र निस्पन्दतां गते । अजडा स्वप्रकाशा या चिदिति शेषः ॥१०॥ तत्र तस्यां प्रत्यक्चिति । आरोपितमनादितयाध्यस्तम्॥११॥१२॥ पदान्तराण्यसंख्यानीति यदुक्तं तदुपपादयति—**पुनरेव परस्परं श्लिष्ट** इति । अस्य सप्तविधस्य मोहस्य प्रत्येकं लक्षणं शृण्वित्यर्थः । बीजजाग्रल्लक्षणमाह—**प्रथम**मिति । चितो मायाशबलचैतन्यात्सकाशात्सर्गादौ जागरादौ वा प्रथमं चेतनं चिदाभाससंवलितरूपं यत्स्यात्तत्प्राणधारणादिक्रियोपाधिना भविष्यच्चित्तजीवादिनामशब्दानां तदर्थानां च भाजनं वक्ष्यमाणजाग्रद्बीजभूतं स्थितं बीजजाग्रदिति परेणान्वयः ॥ १३ ॥ १४ ॥ जाग्रल्लक्षणं श्रावयति—**त्वमि**ति । नवप्रसूतस्य बीजजाग्रतः परात् परतः । अयं स्थूलदेहोऽहं, इदं देहभोग्यजातं मम इति यः प्रत्ययस्तज्जाग्रदित्यर्थः ॥१५॥ अयं सोऽहमिदं तन्मे इत्युक्तलक्षणस्य जाग्रत्प्रत्ययस्य जन्मानन्तरमुदितः । नकारलोपश्छान्दसः । अथवा सजातीयपूर्वपूर्वजन्मसंस्कारोद्बोधेन दृढतरोदितः, अतएव पीवरः अभ्यासादुपचितः । तथाहि ब्राह्मणादिजन्मसाधारण्येऽपि जन्मान्तराभ्यासात् केषांचिद्ब्राह्मणोचितक्रियास्वभिनिवेशः पाटवातिशयश्च दृश्यते न सर्वेषाम् । तथाचैहिकात्प्राक्तनाद्वा दृढाभ्यासपाटवादुपचिताभिनिवेशो जाग्रत्प्रत्ययो महाजाग्रदित्यर्थः ॥ १६ ॥ जाग्रत्स्वप्नं लक्षयति—**अरूढ**मिति । अरूढमनभ्यासपेलवं, रूढमभ्यासदृढम् । यथा लवणस्य॥१७॥ द्विचन्द्रशुक्तिरूप्यादिभ्रान्तयोऽपि जाग्रत्स्वप्नभेदा एवेत्याह—**द्विचन्द्रे**ति ॥१८॥ स्वप्नं लक्षयति—**अल्पकाल**मिति । निद्रान्ते निद्रामध्ये निद्रावसाने वा प्रतीयत इति प्रत्ययः । यः प्रत्ययोऽनुसंधीयते स स्वप्नः कथित इत्यर्थः । तस्याङ्गस्य । स च महाजाग्रत्स्थितेर्महाजाग्रदन्तर्गतस्थूलशरीरस्य हृदि कण्ठादिहृदयान्तनाडीप्रदेशे भवतीत्यर्थः ॥ १९ ॥ २० ॥ उक्तलक्षणोपपादनाय स्वप्नमेव पुनर्विशिनष्टि—**चिरसंदर्शनाभावादि**ति । स्वप्नजाग्रतोर्लक्षणमाह—**स्वप्नो जाग्रत्तये**ति । रूढो दृढाभिनिवेशाच्चिरकालस्थायित्वकल्पनाद्वा उपचितः, यथा हरिश्चन्द्रस्य द्वादशवर्षात्मकः । महाजाग्रत्पदं महाजाग्रत्साम्यं गतः सन्नित्यर्थः ॥ २१ ॥ स चास्य दैवाद्देहनाशेऽपि तथैवाग्रेऽप्यनुवर्तते इति सूचनाय क्षते देहे इत्युक्तम् । सुषुप्तिं लक्षयति—**षडवस्थे**ति । पूर्वाः षडवस्थाः कर्मफलभोगभूमित्वात्कर्मजाः । सुषुप्तिस्तु पूर्वोद्भूतकर्मणां भोगेन क्षये उत्तरेषामनुद्भवेऽन्तराले

भविष्यद्दुःखबोधाढ्या सौषुप्ती सोच्यते गतिः ।
एते तस्यामवस्थायां तृणलोष्टशिलादयः ॥ २३
पदार्थाः संस्थिताः सर्वे परमाणुप्रमाणिनः ।
सप्तावस्था इति प्रोक्ता मयाऽज्ञानस्य राघव ॥ २४
एकैका शतशाखात्र नानाविभवरूपिणी ।
जाग्रत्स्वप्नश्चिरं रूढो जागृतावेव गच्छति ॥ २५
नानापदार्थभेदेन सविकासं विजृम्भते ।
अस्यामप्युदरे सन्ति महाजाग्रद्दशादशः ॥ २६
तासामप्यन्तरे लोको मोहान्मोहान्तरं व्रजेत् ।
अन्तःपातिजलावर्ते इव धावति नौर्भ्रमम् ॥ २७
काश्चित्संस्तृतयो दीर्घं स्वप्नजाग्रत्तया स्थिताः ।
काश्चित्पुनः स्वप्नजाग्रज्जाग्रत्स्वप्नास्तथेतराः ॥ २८
अज्ञानभूमिरिति सप्तपदा मयोक्ता
नानाविकारजगदन्तरभेदहीना ।
अस्याः समुत्तरसि चारुविचारणाभि-
र्दृष्टे प्रबोधविमले स्वयमात्मनीति ॥ २९

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षोपायेषूत्पत्तिप्रकरणे अज्ञानभूमिकावर्णनं नाम सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

## अष्टादशोत्तरशततमः सर्गः ११८

श्रीवसिष्ठ उवाच ।
इमां सप्तपदां ज्ञानभूमिमाकर्णयानघ ।
नानया ज्ञातया भूयो मोहपङ्के निमज्जसि ॥ १
वदन्ति बहुभेदेन वादिनो योगभूमिकाः ।
मम त्वभिमता नूनमिमा एव शुभप्रदाः ॥ २
अवबोधं विदुर्ज्ञानं तदिदं सप्तभूमिकम् ।
मुक्तिस्तु ज्ञेयमित्युक्तं भूमिकासप्तकात्परम् ॥ ३
सत्यावबोधो मोक्षश्चैवेति पर्यायनामनी ।
सत्यावबोधो जीवोऽयं नेह भूयः प्ररोहति ॥ ४
ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया तु तृतीया तनुमानसा ॥ ५
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ ६
आसामन्ते स्थिता मुक्तिस्तस्यां भूयो न शोच्यते ।
एतासां भूमिकानां त्वमिदं निर्वचनं शृणु ॥ ७
स्थितः किं मूढ एवास्मि प्रेक्ष्येऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ ८
शास्त्रसज्जनसंपर्कवैराग्याभ्याससपूर्वकम् ।

छत्रापायवत्सर्वसूक्ष्मस्थूलप्रपञ्चविलये तद्बीजाज्ञानमात्रपरिशेषात्तदुपहितात्ममात्रपरिशेषरूपेत्याशयेनाह—**जडा जीवस्य या स्थितिरिति** ॥ २२ ॥ भविष्यद्दुःखानि बोधयन्ति अनुभावयन्तीति भविष्यद्दुःखबोधानि वासनाकर्माणि तैराढ्या संपन्ना सुषुप्तिरेव सौषुप्ती । सुषुप्तौ कारणे विलीनस्य जगतः संस्कारात्मना सत्वमेव नासत्वं पुनरुद्भवाभावप्रसङ्गादित्याशयेनाह–**एते इति** ॥ २३ ॥ उपसंहरति—**सप्तावस्था** इति ॥ २४ ॥ तास्वेकैकान्तरन्यान्याविर्भावात्परस्परं संवलनाच्चानन्तभेदाः संभवन्तीत्याह—**एकैकेति** । जागृतावेव गच्छति मिलति ॥ २५ ॥ अस्यां जाग्रद्भावापन्नायां जाग्रत्स्वप्नदशायाम् । उदरे अन्तः महाजाग्रद्दशालक्षणाः दशः प्रत्ययाः । दशः साक्षिणो महाजाग्रदृशः सन्तीति पृथक् पदच्छेदो वा ॥ २६ ॥ लोको जनः जीव इति यावत् । नद्यन्तःपातिजलावर्ते नौरिव भ्रमं धावति गच्छति ॥२७॥ दीर्घं दीर्घकालम् । स्वप्नजाग्रदिति जातावेकवचनम् ॥२८॥ वर्णितामज्ञानभूमिकामुपसंहरंस्तदुत्तरणोपायमाह—**अज्ञानभूमिरिति** । नानाविकारैर्जगदन्तरभेदैश्च हीना निन्द्या अवश्यहेयेति यावत् । इति उक्तवक्ष्यमाणप्रकाराभिश्चारुविचारणाभिः प्रबोधमले स्वयं प्रत्यक्त्वात्रैकरसे आत्मनि दृष्टे सति अस्या अविद्याभूमेः सकाशात्समुत्तरसि निर्गत एवासीत्यर्थः । स्वयमुत्तरसीति वा संबन्धः ॥ २९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे अज्ञानभूमिकावर्णनं नाम सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

इह सप्तपदा ज्ञानभूमिका लक्षणैः स्वकैः ।
आरूढलक्षणैश्चैव मोक्षान्ता साधु वर्ण्यते ॥ १ ॥

ज्ञातया अभ्यासक्रमेणानुभूतया ॥ १ ॥ ननु योगशास्त्रे यमनियमाद्यष्टाङ्गभेदभिन्ना योगभूमिकाः प्रसिद्धा एव, किं ता एवैता नेत्याह—**वदन्तीति** । वादिनो योगसांख्यवादिनः । ता योगभूमिकास्तुच्छसिद्धिफला अन्येषामभिमताः । मम तु इमा ज्ञानभूमिका एवाभिमताः । यतः परमपुरुषार्थलक्षणशुभप्रदा इत्यर्थः ॥ २ ॥ किं तज्ज्ञेयं किं वा ज्ञानं यद्भूमयो वर्ण्यन्ते इति ते लक्षयति—**अवबोधमिति** । अखण्डस्वाकारवृत्त्या रूढं ब्रह्म अज्ञाननिवर्तकत्वाज्ज्ञानं निवृत्ताज्ञानं तु तदेव ज्ञेयमित्युपचाराद्विधोच्यत इत्यर्थः ॥ ३ ॥ तथाच पूर्वापरावस्थाकल्पितावान्तरप्रवृत्तिनिमित्तभेदस्य मिथ्याभूतस्यापाये अवबोधमोक्षपदयोरेकार्थमात्रनिष्ठत्वात्पर्यायनामता फलिता । यतस्तादृशो जीवो न भूयः प्ररोहति येन भेदादपर्यायता स्यादित्याशयेनाह—**सत्यावबोध** इति ॥ ४ ॥ उद्देशः स्पष्टः ॥ ५ ॥ ६ ॥ उद्दिष्टानां लक्षणोक्तिं वक्तुं प्रतिजानीते—**एतासामिति** ॥ ७ ॥ प्रेक्ष्ये प्रेक्षिष्ये । इडभावश्छान्दसः । शास्त्रैर्विचारितवेदान्तवाक्यैः सज्जनैर्गुरुभिश्च । वैराग्यग्रहणं साधनचतुष्टयोपलक्षणम् । तथाच निषिद्धवर्जननिष्कामयज्ञदानाद्यनुष्ठानप्रयुक्ता संन्याससाधनचतुष्टयसंपत्तिसहिता मुक्तिपर्यवसिता श्रवणादिप्रवृत्तिफलोपहितात्मसाक्षात्कारोत्कटेच्छैव प्रथमा भूमिकेत्यर्थः ॥ ८ ॥ गुरुशुश्रूषाभिक्षाशनशौचादियतिधर्मपालनसहिते श्रवणमनने एवात्र

१ भविष्यदुःखेति मुद्रितपुस्तके पाठः.

सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ९
विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता ।
यात्र सा तनुता भावात्प्रोच्यते तनुमानसा ॥ १०
भूमिकात्रितयाभ्यासाच्चित्तेऽर्थे विरतेर्वशात् ।
सत्यात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता ॥ ११
दशाचतुष्टयाभ्यासादसंसङ्गफलेन च ।
रूढसत्त्वचमत्कारात्प्रोक्ताऽसंसक्तिनामिका ॥ १२
भूमिकापञ्चकाभ्यासात्स्वात्मारामतया दृढम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ १३
परप्रयुक्तेन चिरं प्रयत्नेनार्थभावनात् ।
पदार्थाभावनानाम्नी षष्ठी संजायते गतिः ॥ १४
भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भतः ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ १५
एषा हि जीवन्मुक्तेषु तुर्यावस्थेह विद्यते ।
विदेहमुक्तिविषयस्तुर्यातीतमतः परम् ॥ १६
ये हि राम महाभागाः सप्तमीं भूमिकां गताः ।
आत्मारामा महात्मानस्ते महत्पदमागताः ॥ १७
जीवन्मुक्ता न सज्जन्ति सुखदुःखरसस्थितौ ।
प्रकृतेनार्थकार्याणि किंचित्कुर्वन्ति वा न वा ॥ १८
पार्श्वस्थबोधिताः सन्तः सर्वाचारक्रमागतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदक्षतम् ॥ १९
आत्मारामतया तांस्तु सुखयन्ति न काश्चन ।
जगत्क्रियाः सुसंसुप्तान्रूपालोकाः स्त्रियो यथा ॥ २०
भूमिकासप्तकं चैतद्धीमतामेव गोचरम् ।
न पशुस्थावरादीनां न च म्लेच्छादिचेतसाम् ॥ २१
प्राप्ता ज्ञानदशामेतां पशुम्लेच्छादयोऽपि ये ।
सदेहा वाप्यदेहा वा ते मुक्ता नात्र संशयः ॥ २२
ज्ञप्तिर्हि ग्रन्थिविच्छेदस्तस्मिन्सति हि मुक्तता ।

सदाचारः । अन्यस्य चित्तशुद्धिमात्रहेतुत्वेन प्रागेव सिद्धत्वात् ॥ ९ ॥ अभ्यर्हितत्वाद्विचारणाशब्दस्य पूर्वनिपातः । भावनं भावो निदिध्यासनं तस्मात् । तथाच साधनचतुष्टयसंपत्त्यादिपूर्वकश्रवणमननाभ्यां सहितान्निदिध्यासनाद्या मनस इन्द्रियार्थेषु शब्दादिविषयेषु असक्तता अग्रहणपर्यन्ता तनुता सविकल्पसमाधिरूपा सूक्ष्मता सा तनुमानसाख्या भूमिका प्रोक्ता । तनु सूक्ष्मतमं मानसं यस्यामिति व्युत्पत्तेरित्यर्थः । अण्णन्तस्योपसर्जनत्वान्न ङीप् । तथाचोक्तं योगशास्त्रे 'श्रोत्रादिकरणैर्यावच्छब्दादिविषयग्रहः । तावद्ध्यानमिति प्रोक्तं समाधिः स्यात्ततः परः ॥' इति ॥१०॥ अर्थे बाह्यार्थे विषये संस्कारोच्छेदादात्यन्तिकी चित्ते या विरतिस्तद्वशात्तत्स्थैर्यात् । शुद्धे मायातत्कार्यादवस्थात्रयाच्च शोधिते सर्वाधिष्ठानसन्मात्ररूपे आत्मनि क्षीरोदकवत्त्रिपुटीविलयेन साक्षात्कारपर्यन्ता या स्थितिर्निर्विकल्पकसमाधिरूपा सा सत्त्वापत्तिर्मनसः परमात्मसत्त्वात्मनैवापन्नत्वादित्यर्थः । अत्र ह्यसौ ब्रह्मविदित्युच्यते ॥ ११ ॥ असंसङ्गश्चित्तस्य बाह्याभ्यन्तराकारैस्तत्संस्कारैश्चास्पर्शस्तल्लक्षणेन समाधिपरिपाकफलेन च हेतुना रूढ उपचितश्चित्ते निरतिशयानन्दनित्यापरोक्षब्रह्मात्मभावसाक्षात्कारलक्षणश्चमत्कारो यस्यां सा । यद्यप्युत्तमाधिकारिणां द्वितीयभूमिकायामपि साक्षात्कारः शाब्दापरोक्षात्प्रसिद्धस्तथापि पञ्चमभूमिकायामात्यन्तिकद्वैतसंस्कारोच्छेदप्रयुक्तोत्कर्षातिशयस्य मन्दमध्यमाधिकारिणामपि चतुर्थभूमिकान्तोत्पन्नसाक्षात्कारस्य पञ्चम्यां निरूढतरत्वोपपत्तेश्च सूचनाय रूढेति चमत्कारविशेषणम् । अतएव चतुर्थभूमिकान्ते क्वचित्पञ्चमीं भूमिकां प्राप्तो ब्रह्मविद्वर इत्युच्यते । न विद्यते अविद्यातत्कार्यसंसक्तिः सर्वथा यस्यामिति व्युत्पत्त्या असंसक्तिनामिका ॥ १२ ॥ अस्या एव परिपाकोत्कर्षादुत्तरे द्वे भूमिके भवत इत्याशयेनाह—**भूमिकापञ्चके**ति । वक्ष्यमाणं नाम अन्वर्थतया निर्वक्ति—**आभ्यन्तराणा**मिति ॥१३॥ तर्हि कथं देहयात्रासिद्धिस्तत्राह—**परप्रयुक्तेने**ति । अस्यां च भूमिकायां ब्रह्मविद्वरीयानित्याख्यायते ॥ १४ ॥ सप्तमीं भूमिकामाह—**भूमिषट्के**ति । परप्रयत्नेनापि भेदस्यानुपलम्भत इत्यर्थाद्गम्यते । 'तुर्यं जाग्रदाद्यवस्थात्रयनिर्मुक्तं शिवमद्वैतं चतुर्थं मन्यन्ते' इति श्रुत्या तादृशीविद्वदनुभवसिद्धत्वेन प्रतिपादितं ब्रह्म गच्छति आत्मतयानुभवत्यखण्डितं यस्यामवस्थायां सा तुर्यगा । तां तु प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते । सच ब्रह्मवित्प्रभृतिषु तुरीयस्तं गच्छतीति तुर्यगा ॥१५॥ इहास्मिन्नेव देहे विद्यते । अतोऽस्या अवस्थायाः परं विदेहमुक्तिविषयस्तुर्यातीतं ब्रह्मैवेति न भूमिकासु गण्यत इत्यर्थः॥१६॥१७॥ किंचित्कुर्वन्ति षष्ठभूमिकायां न वा कुर्वन्ति सप्तमभूमिकायामित्याशयः ॥१८॥ कुर्वन्ति वा नवेत्युक्तेर्यथेष्टाचारपरत्वाशङ्कां वारयन् स्वाशयं प्रकटयति—**पार्श्वस्थे**ति । सर्वेषां तत्तदाश्रमनिष्ठानामाचारक्रमेणागतमाचारं सदाचारमेवाचरन्ति आचरन्त्येवेति द्विविधोऽपि नियमोऽत्र विवक्षितः । अक्षतं आसङ्गेनादूषितम् । 'अक्षता' इति पाठे फलासक्तिलक्षणक्षतरहिता इत्यर्थः । तथाच न यथेष्टाचरणप्रसक्तिरिति भावः । तथाचाहुः—'विदितब्रह्मतत्त्वस्य यथेष्टाचरणं यदि । शुनां तत्त्वविदां चैव को भेदोऽशुचिभक्षणे ॥' इति ॥१९॥ अनासङ्गव्यवहारेण सुखदुःखानुदयं सदृष्टान्तमाह—**आत्मारामतये**ति । जगत्क्रियाव्यवहारास्तान् जीवन्मुक्तान्न सुखयन्ति । यथा सुसंसुप्तान् गाढनिद्रावशान् रूपेण सौन्दर्यातिशयेन आलोक्यन्त इति रूपालोकाः स्त्रियो न सुखयन्ति तद्वदित्यर्थः । 'जगत्क्रियासु संसुप्तान् रूपालोकः स्त्रियो यथा' इति पाठे तु 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति भगवदुक्तदिशा जगद्व्यापारेषु स्वप्नवन्मिथ्यात्वदर्शनात्सुप्तप्रायांस्तान् ब्रह्मादिसंपदोऽपि न सुखयन्ति । यथा स्त्रीरूपालोकोऽन्याः स्त्रियो न सुखयति तत्र रागाभावात्तद्वदित्यर्थः ॥ २० ॥ म्लेच्छादिवच्चेतो देहात्मबुद्धिर्येषां तेषां मनुष्यादीनां चेत्यर्थः ॥२१॥ पशवो हनुमत्प्रभृतयः । म्लेच्छा धर्मव्याधादयः, आदिपदादसुराः, प्रह्लादकर्कटीप्रभृतयश्च गृह्यन्ते ॥ २२ ॥ मृगतृष्णाम्बुबुद्बुदेरादिपदा-

मृगतृष्णाम्बुबुद्ध्यादि शान्तिमात्रात्मकस्त्वसौ ॥२३
ये तु मोहात्समुत्तीर्णा न प्राप्ताः पावनं पदम्।
आस्थिता भूमिकास्वासु स्वात्मलाभपरायणाः॥ २४
सर्वभूमिगताः केचित्केचिद्द्वित्रैकभूमिकाः।
भूमिषट्कगताः केचित्केचित्सप्तैकभूमिकाः॥ २५
भूमित्रयगताः केचित्केचिदन्त्यां भुवं गताः।
भूचतुष्टयगाः केचित्केचिद्भूमिद्वये स्थिताः॥ २६
भूम्यंशभाजनाः केचित्केचित्सार्धत्रिभूमिकाः।
केचित्सार्धचतुर्भूगाः सार्धषड्भूमिकाः परे॥ २७
विवेकिनो नरा लोके चरन्त इति भूमिषु।
ग्रहायतनतापस्य दशावेशेषु संस्थिताः॥ २८
ते हि धीराः सुराजानो दशास्वासु जयन्ति ये।
तृणायतेऽत्र दिग्दन्तिघटाभटपराजयः॥ २९
ये तासु भूमिषु जयन्ति हि ये महान्तो
वन्द्यास्त एव हि जितेन्द्रियशत्रवस्ते।
सम्राड्विराडपि च यत्र तृणायते वै
तस्मात्परं जगति ते समवाप्नुवन्ति॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०मोक्षोपायेषूत्पत्तिप्रकरणे ज्ञानभूमिकोपदेशो नामाष्टादशोत्तरशततमः सर्गः॥११८॥

---

## एकोनविंशोत्तरशततमः सर्गः ११९

श्रीवसिष्ठ उवाच।

ऊर्मिकासंविदा हेम यथा विस्मृत्य हेमताम्।
विरौति नाहं हेमेति तथात्माहंतयानया॥ १

श्रीराम उवाच।

ऊर्मिकासंविदुदयः कथं हेम्नो यथा मुने।
अहंता चात्मन इति यथावद्ब्रूहि मे प्रभो॥ २

श्रीवसिष्ठ उवाच।

सत एवागमापायौ प्रष्टव्यौ नासतः सता।
अहंत्वमूर्मिकात्वं च सती तु न कदाचन॥ ३

---

च्छुक्तिरूप्यबुद्धेश्च या शान्तिर्बाधः सैव मात्रा तुला यस्य तदात्मकः। तत्तुल्य इति यावत्॥ २३॥ यद्यपि द्वितीयादिभूमिषु चतुर्थभूमौ वा ज्ञानोदयेनाज्ञानावरणभङ्गान्मोहात्सम्यगुत्तीर्णा एव तथापि प्रबलप्रारब्धप्रयुक्तविक्षेपात्पावनमात्यन्तिकमनोनाशोपलक्षितनिरतिशयानन्दपूर्णतालक्षणं विदेहकैवल्यं न प्राप्ता इत्यर्थः॥ २४॥ एकस्मिन्नेव जन्मनि क्रमात्सर्वभूमिगताः। एवं सर्वत्र। सप्तैकभूमिकाः सप्तमैकभूमिकाः सनकादयः॥ २५॥ भूचतुष्टयगाः केचिदित्येतदन्यस्य पूर्वोक्तस्यैवानुवादः प्रपञ्चार्थः॥२६॥ भूम्यंशः पादभूम्यर्धभूम्यादिः॥२७॥ इति उक्तप्रकारासु भूमिषु चरन्तः सन्तो दशा भूमात्मदृष्ट्या गृह्णन्तीति ग्रहाः ग्रहातिग्रहाख्याः सान्तर्बाह्यकरणतद्विषयाः आयतनं तदाधारभूतं शरीरं च तत्प्रयुक्तस्य तापस्याध्यात्मिकादिभेदभिन्नस्य आवेशेषु बाधलक्षणेष्वात्मान्तःप्रवेशनेषु संस्थिता उद्युक्ताः सन्तीत्यर्थः॥ २८॥ सेन्द्रियमनोजय एव सर्वशत्रुजयादुत्कृष्टः स्वात्मसाम्राज्यमेव सर्वोत्कृष्टा राजता नान्येत्याह—**ते हीति**। शोभनाः सर्वोत्कृष्टा राजानः। 'न पूजनात्' इति न टच्। अत्र अस्याग्रे दिग्दन्तिघटासहितानां सर्वशत्रुभटानां पराजयस्तत्प्रयुक्तसप्तद्वीपराज्यं च तृणायते तुच्छीभवतीत्यर्थः॥ २९॥ उक्तमेवार्थं स्फुटं वदन्नुपसंहरति—**एतास्विति**। येनेष्टं राजसूयेन यश्चैकः सर्वभूमण्डलाधिपतिरन्येषां राज्ञां शासिता स सम्राट्। 'युवा स्यात्साधुयुवाध्यापकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः' इति श्रुत्युक्तलक्षणमानुषानन्दसंपन्न इत्यर्थः। विराट् ब्रह्मशरीरः प्रजापतिर्देवानन्दपरमावधिरपि यत्र सप्तमभूमौ तृणायते तस्मात्परं विदेहकैवल्यसुखं जगति इहैव यतस्ते समवाप्नुवन्तीत्यर्थः॥ ३०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ज्ञानभूमिकोपदेशो नामाष्टादशोत्तरशततमः सर्गः॥११८॥

निरस्य मायिकं रूपं सन्मात्रैकत्वदर्शनम्।
भूमिकासु स्थिरीकर्तुं युक्तिरत्र प्रपञ्च्यते॥ १॥

तदर्थं परमात्मनः सहजस्वपूर्णानन्दस्वप्रकाशभावविस्मरणे मायिकजीवजगद्भावारोपेण नानाविधदुःखशोकादिप्राप्तौ च दृष्टान्तमाह—**ऊर्मिकेति**। यथा हेम स्वतः सर्वतः कालत्रयेऽपि स्वर्णैकस्वभावं परमार्थतो लेशतोऽप्यस्वर्णशून्यमपि स्वात्मन्येव कल्पितया ऊर्मिकासंविदा अङ्गुलीयकभ्रान्त्या स्वां हेमतां हेमैकरसतां विस्मृत्य अदृष्ट्वा बाह्यमलसंपर्कप्रयुक्तकांस्यादिभावकल्पनया विरौति रोदिति। अचेतनस्य रोदनायोगात्कांस्योर्मिकादिशब्दाभिलापस्तत्स्वामिरोदनं वा तदीयरोदनत्वेनोपचर्यते। तथा आत्माप्यहंतया रोदितीत्यर्थः॥१॥ यथाशब्दोऽपि कथमित्यर्थे उत्तरान्वयी। तथाच आत्मनः अहंता च कथं इति दृष्टान्तं दार्ष्टान्तिकं च यथावदुपपत्तिभिर्ब्रूहि। व्यक्तं वर्णयेत्यर्थः॥ २॥ आगमापायावुत्पत्तिनाशौ स्वतःसिद्धेन द्रष्ट्रा द्रष्टुं शक्यौ अतस्तादृशावेव प्रष्टव्यौ त्वयेत्यर्थः। अयं भावः। षट्सु भावविकारेषु मध्यमाश्चत्वारः सत एव प्रसिद्धाः, नासतस्तद्वदुत्पत्तिनाशावपि सत एव वाच्यौ। नह्यसदुत्पत्तिक्रियां कर्तुं नाशक्रियाधारीभवितुं वा शक्नोति। यद्यसदुत्पद्येत नश्येद्वा तर्ह्यसद्धर्मावुत्पत्तिनाशावप्यसन्तौ स्याताम्। नहि तौ तदा द्रष्टुं शक्यौ। सतोऽसद्भिः संबन्धाभावात्। तस्मात्सदेव हेम ब्रह्म वा ऊर्मि-

हेमं हेम्न्यूर्मिकां च त्वं गृहाणेत्युदितो यदि ।
यद्दीयते सोर्मिकेण तत्तदस्ति न संशयः ॥ ४

श्रीराम उवाच ।

एवं चेत्तत्प्रभो किं स्यादूर्मिकात्वं तु कीदृशम् ।
अनयैवार्थनिश्चित्या ज्ञास्यामि ब्रह्मणो वपुः ॥ ५

श्रीवसिष्ठ उवाच ।

रूपं राघव नीरूपमसतश्चेन्निरूप्यते ।
तद्वन्ध्यातनयाकारगुणांस्त्वं समुदाहर ॥ ६
ऊर्मिकात्वं मुधा भ्रान्तिर्मायैषा सत्स्वरूपिणी ।
रूपं तदेतदेवास्याः प्रेक्षिता यन्न दृश्यते ॥ ७
मृगतृष्णाम्भसि द्वीन्दावहंतारूपकादिषु ।
एतावदेव रूपं यत्प्रेक्ष्यमाणं न लभ्यते ॥ ८
यः शुक्तौ रजताकारं प्रेक्षते रजतस्य सः ।
न संप्राप्नोत्यणुमपि कणं क्षणमपि क्वचित् ॥ ९
अपर्यालोकनेनैव सदिवासद्विराजते ।
यथा शुक्तौ रजतता जलं मरुमरीचिषु ॥ १०
यन्नास्ति तस्य नास्तित्वं प्रेक्ष्यमाणं प्रकाशते ।
अप्रेक्ष्यमाणं स्फुरति मृगतृष्णास्विवाम्बुधीः ॥ ११
असदेव च सत्कार्यकरं भवति च स्थिरम् ।
बालानां मरणायैव वेतालभ्रान्तिसंभ्रमः ॥ १२
हेमतां वर्जयित्वैकां विद्यते हेम्नि नेतरत् ।
ऊर्मिकाकटकादित्वं तैलादिसिकतास्विव ॥ १३
नेहास्ति सत्यं नो मिथ्या यद्यथा प्रतिभाव्यते ।
तत्तथार्थक्रियाकारि बालयक्षविकारवत् ॥ १४
सद्वा भवत्वसद्वापि सुरूढं हृदये हि यत् ।
तत्तदर्थक्रियाकारि विषस्येवामृतक्रिया ॥ १५
परमैषैव सा विद्या मायैषा संसृतिर्ह्यसौ ।
असतो निष्प्रतिष्ठस्य यदहंत्वस्य भावनम् ॥ १६
हेम्न्यस्ति नोर्मिकादित्वमहन्तास्ति नात्मनि ।
अहन्ताभाववस्त्वेमं स्वच्छे शान्ते सिते परे ॥ १७
न सनातनता काचिन्न च काचिद्विरिञ्चिता ।
न च ब्रह्माण्डता काचिन्न च काचित्सुतादिता ॥ १८
न लोकान्तरता काचिन्न च स्वर्गादिता क्वचित् ।
न मेरुता नासुरता न मनस्त्वं न देहता ॥ १९
न महाभूतता काचिन्न च कारणता क्वचित् ।
न च त्रिकालकलना न भावाभाववस्तुता ॥ २०
त्वत्ताहन्तात्मता तत्ता सत्ताऽसत्ता न काचन ।
न क्वचिद्भेदकलना न भावो न च रञ्जना ॥ २१
सर्वं शान्तं निरालम्बं जगत्त्वं शाश्वतं शिवम् ।
अनामयमनाभासमनामकमकारणम् ॥ २२
न सन्नासन्न मध्यान्तं न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं शून्याच्छून्यं सुखात्सुखम् ॥ २३

काहन्तादिविशेषेणोत्पद्यत इति ॥ ३ ॥ हानोपादानादिक्रियासंबन्धोऽपि सत एव दृष्टो नासत इत्याह—**हेमे**ति । गृहाण मूल्येन क्रीणीहि इति मूल्ये दापिते सोर्मिकेण विक्रेत्रा यत् हेम बहुमूल्येन दीयते तदस्ति सत्यम् । तथाच ब्रह्मैव सर्वव्यवहारगोचरो नाणुमात्रमपि तदन्यद्व्यवहारेऽपि निरूपयितुं शक्यमिति भावः ॥ ४ ॥ यदि हेमैव क्रयादिसर्वव्यवहारगोचरस्तर्हि तदनुभातस्योर्मिकाद्याकारस्य हेमस्वरूपातिरिक्तं किं स्वरूपं स्यात्कीदृशं किंप्रकारं वा यदूर्मिकादिशब्दैरभिलप्यत इति प्रश्नार्थः ॥ ५ ॥ अविचारितरमणीयं तत्, विचारिते तु न किंचिदित्याशयेनोत्तरमाह—**रूप**मिति ॥६॥ यद्यवश्यं रूपं वाच्यं तर्ह्यविचारकालमात्रस्थितिकत्वं मायाया रूपमित्याशयेनाह—**रूप**मिति । प्रेक्षिता विचार्य दृष्टा सती न दृश्यते तुच्छीभवतीति यत्तत्प्रसिद्धमेतदेवास्या रूपमित्यर्थः ॥७॥ तथा प्रसिद्धिमेवान्यत्रापि मायिके दर्शयति—**मृगतृष्णे**त्यादिना ॥ ८ ॥ ९ ॥ १० ॥ अप्रेक्ष्यमाणं नास्तित्वं स्फुरति रजतादिभावेनेति शेषः ॥ ११ ॥ नन्वसतः सत्कार्यकारिता स्थिरता च क्व दृष्टा तत्राह—**बालाना**मिति । भ्रान्तिप्रयुक्तः संभ्रमो भयरोदनादिः ॥ १२ ॥ १३ ॥ न वस्तुसत्ता अर्थक्रियाव्यवस्थाहेतुः, किंत्वारोपे अधिष्ठानसत्ताप्रतिभास एवेत्याशयेनाह—**नेहे**ति । सत्यमेवार्थक्रियाकारि मिथ्याभूतमेव वा अर्थक्रियाकारीति नियमो नास्तीत्यर्थः ॥ १४ ॥ इदं च प्राग्बहुश उक्तमेवेति स्मारयति—**सद्वे**ति ॥ १५ ॥ दृष्टान्तं व्युत्पाद्य दार्ष्टान्तिकेऽपि तत्साम्यमाह—**परमैषैवे**त्यादिना ॥१६॥ अभाववस्त्वसदेव वस्तु न परमार्थवस्त्वित्यर्थः ॥ १७ ॥ अवस्तुत्वं ब्रह्मातिरिक्तस्य सर्वस्य 'अथात आदेशो नेति नेति', 'स एष नेति नेत्यात्मा', 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्', 'नेह नानास्ति किंचन', 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इत्याद्यपवादकश्रुतिसहस्रसिद्धमित्याशयेनाह—**न सनातनते**त्यादिना । सर्वकालसंबन्धः सनातनता सा च कालातीते नास्ति । सुता ब्रह्मसूनवः प्रजापतयस्तदादिता ॥ १८ ॥ १९ ॥ ॥२०॥ भावो रागस्तत्कार्यं रञ्जना ॥ २१ ॥ सर्वं जगत्त्वं जगतः पारमार्थिकं रूपं शान्तमधिष्ठानसन्मात्रमित्यर्थः ॥ २२ ॥ सत् उत्पत्त्याख्यभावविकारवत् । असत् नाशाख्यभावविकारवत् । मध्यान्तं आन्तरालिकभावविकारवत् । अथवा सन्न नष्टम् असन्न स्थितम् अनयोर्मध्यं उत्पत्तिनाशौ अन्तौ अवधी यस्य तथा-

१ यदि हेम ग्राह्यं तर्हि हेम्नि हेमनिमित्तमूर्मिकां त्वं गृहाणेति मध्यस्थेन उदितो भवत्यर्थात्क्रेता तत्तदा सोर्मिकेणार्थाद्विक्रेत्रा यद्दीयते तदस्ति सत्यमित्यन्वयः । उदिते यदीति सप्तम्यन्तपाठेऽर्थात्क्रेतरि मध्यस्थेन इति उदिते सति इत्याद्यन्वयः । हेम्नीति 'निमित्तात्कर्मयोगे' इति सप्तमी.

२ भासव इति पाठः.

श्रीराम उवाच ।

अवबुद्धं समं ब्रह्म सर्वमेव मयाधुना ।
तथापि भूयः कथय सर्गः किमिव लोक्यते ॥ २४

श्रीवसिष्ठ उवाच ।

परे शान्ते परं नाम स्थितमित्थमिदंतया ।
नेह सर्गो न सर्गाख्या काचिदस्ति कदाचन ॥ २५
महार्णवाम्भसीवाम्बु संस्थिता परमेश्वरे ।
जलं द्रवत्वात्स्पन्दीव निस्पन्दं परमं पदम् ॥ २६
भाः स्वात्मनीव कचति न कचत्येव तत्पदम् ।
भासां तत्त्वं हि कचनं पदं त्वकचनं विदुः ॥ २७
अध ऊर्ध्वं वर्जयित्वा यथाब्धेरुदरे पयः ।
स्फुरत्येवं परे चित्त्वादिदं नानेव तत्परम् ॥ २८
ईषद्विदः स्वयं चित्त्वाचेत्यतामिव गच्छति ।
बुद्ध्यते सर्ग इत्येव समास्थास्यति शाश्वतम् ॥ २९
सर्गस्तु परमार्थस्य संज्ञेत्येव विनिश्चयः ।
नानास्ति नायमत्यन्तमम्बरस्य यथाम्बरम् ॥ ३०
चित्तात्सर्गसमापत्तिरचित्तात्सर्गसंक्षयः ।
परे परमसंशान्ते हेम्नीव कटकभ्रमः ॥ ३१
सन्नेव सर्गो सत्यत्वमेति चित्तशमोदये ।
असत्सत्तामवाप्नोति स्वतः संवेदनोदये ॥ ३२
संवेदनमहंतावत्सर्गसंभ्रमसंभ्रमः ।
असंवेदनमाशान्तं परं विद्धि न तज्जडम् ॥ ३३
नानेव सर्गो नानायं ज्ञस्यैकात्मशिवात्मकः ।
पुंस्त्वकर्मक्रिया सेना मृन्मयी शिल्पिनां यथा ॥ ३४
इदं पूर्णमनारम्भमनन्तमनघोदरम् ।
पूर्णे पूर्णपरापूरैः पूर्णमेवावतिष्ठते ॥ ३५
यदयं लक्ष्यते सर्गस्तद्ब्रह्म ब्रह्मणि स्थितम् ।
नभो नभसि विश्रान्तं शान्तं शान्ते शिवे शिवम् ॥ ३६
मुकुरप्रतिबिम्बस्थे नगरे नवयोजने ।
यथा दूरमदूरं च तथेशे तदतत्क्रमः ॥ ३७
असदभ्युदितं विश्वं सदप्यभ्युदितं सदा ।
प्रतिभासात्सदाभासमवस्तुत्वादसन्मयम् ॥ ३८
आदर्शनगराकारे मृगतृष्णाम्बुभास्वरे ।
द्विचन्द्रविभ्रमाभासे सर्गेऽस्मिन्कैव सत्यता ॥ ३९
मायाचूर्णपरिक्षेपाद्यथा व्योम्नि पुरभ्रमः ।
तथा संविदि संसारः सारोऽसारश्च भासते ॥ ४०

---

भूतम् ॥२३॥ इत्थं निष्प्रपञ्चे परमार्थैकरसे ब्रह्मणि बोधितेऽपि तत्र चित्तवृत्तिस्थिरीकरणाशक्तेः परावृत्तः पुनर्विपरीतभावनाकातरो रामः पृच्छति—**अवबुद्धम्** इति । **किमिव लोक्यत** इति । ज्ञानेनाज्ञाने नष्टे तन्मूलजगतोऽपि बाधात्पुनर्भानमनुपपन्नमिति भावः ॥२४॥ यदि त्वया तत्त्वं बुद्धं तर्हि पुनर्जगद्भानं ब्रह्मभानमेव ॥२५॥ तत्र सकृच्छेदस्य तदाख्यायाश्च निमित्तापायादेव असत्त्वादित्याशयेन वसिष्ठः परिहरति—**परे** इति । परं तत्त्वं परे शान्ते स्वस्वभावे एव स्थितं न ततः प्रच्युतम् । इत्थं च पूर्णतमभावात्सर्गस्तदाख्या च इदन्तया इह ब्रह्मणि नास्ति किंतु तत्स्वभावेनैवास्तीत्यर्थः । कदाचनेत्युक्त्यास्तादृशस्थितेः कादाचित्कत्वाभाव उक्तः । किमिव लोक्यते इति किं दृष्टान्तस्य प्रश्न उत निमित्तस्य । आद्ये बाधाद्ब्रह्मीभूतनामरूपस्य ब्रह्मस्वरूपे स्थितौ दृष्टान्तमुक्त्वा यस्ततो विशेषस्तमाह—**जलम्** इति ॥ २६ ॥ तस्य स्वप्रकाशत्वे दृष्टान्तमुक्त्वा तत्रापि पूर्ववद्विशेषमाह—**भा** इति । भाः सूर्यादिज्योतिः कचति दीप्यते । कचनं दीप्तिक्रिया भासां सूर्यादीनां तत्त्वं स्वभावः । अकचनं निष्क्रियम् ॥ २७ ॥ २८ ॥ द्वितीयेऽप्याह—**ईषद्** इति । ईषद्विदः अपरिपक्वबोधस्य तव । चेत्यतामिव गच्छतीत्यस्य विशदीकरणं बुध्यते सर्ग इत्येवेति । सच सर्गो ज्ञानपरिपाके शाश्वतं ब्रह्मस्वरूपं प्रतिष्ठास्यति ॥२९॥ यतस्तदा अयमज्ञदृष्टो नानाभेदः अत्यन्तं नास्ति । यथा अम्बरस्याकाशस्याम्बरमाकाशान्तरं नास्त्यनवस्थापातादतस्तथा परमार्थस्य परमार्थान्तराभावात्सर्गशब्दो ब्रह्मण एव संज्ञेति विद्धि निश्चय इत्यर्थः ॥ ३० ॥ तथा चात्यन्तिकचित्तविनाशाभाव एव

तव पुनः सर्गालोकने हेतुरित्याशयेनाह—**चित्ताद्** इति ॥३१॥ संवेदनं चित्तं तस्योदये ॥ ३२ ॥ अहंतावत् अभिमानयुक्तं संवेदनं चित्तमेव सर्गभ्रमणभ्रान्तिः ॥ ३३ ॥ ज्ञानिनामपि व्युत्थानदशायां चित्ताभासोदये कथं सर्गभानं तदाह—**नानेव** इति । तत्त्वदृशा अनानाभूतोऽपि सर्गः प्रातिभासिको नानेव भासत इति शेषः । यथा शिल्पिनां पुंस्त्वं पुरुषचातुरी तत्कर्मणा क्रियानिष्पत्तिर्यस्यास्तथाविधा मृन्मयी सेना वस्तुतो मृदपि सेनेव भासते तद्वदित्यर्थः । अथवा मृन्मयी पुरुषाकारा सेना पुंस्त्वकर्मक्रिया युद्धादिपुरुषार्थकारिणीव भाति तद्वदित्यर्थः ॥ ३४ ॥ तेषां पारमार्थिकदृष्टौ तु इदं जगत्पूर्णब्रह्मैवावतिष्ठते इत्यत्र 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति श्रुतिमर्थतो दर्शयति—**इदम्** इति । अनारम्भमनुत्पत्तिकम् । अनन्तं नाशरहितम् । अतएव विकारान्तरदोषरहितमुदरं मध्यं यस्य तथाभूतम् । यतः पूर्णस्यैव परमात्मन आपूरैः सर्वतोव्याप्तिभिः पूर्णमतः पूर्णं सत्पूर्णमेवावतिष्ठते नाणुमात्रमप्यपूर्णतां यातीत्यर्थः ॥ ३५ ॥ तदेव दृढीकाराय पुनराह—**यदयम्** इति । सामान्ये नपुंसकम् ॥ ३६ ॥ ईशे ब्रह्मणि । तस्य दूरत्वस्य अतस्य सामीप्यस्य वा क्रमः परिपाटीत्यर्थः ॥३७॥ एवं च सत एवासद्विश्वाकारेण भानात्तत्त्वदृशा सदेवाभ्युदितमतत्त्वदृशा असदेवाभ्युदितम् । यतो भेदप्रतिभासात्तत्सदाभासमसच्छेददर्शने त्वसन्मयमित्यर्थः ॥ ३८ ॥ ३९ ॥ ऐन्द्रजालिकैः परमोहनायाभिमन्त्रितमौषधचूर्णं मायाचूर्णम् । सारः सत्योऽसारो मृतश्च ॥ ४० ॥

यावद्विचारदहनेन समूलदाहं
दग्धा न जर्जरलतेव बलादविद्या ।
शाखाप्रतानगहनानि बहूनि ताव-
न्नानाविधानि सुखदुःखवनानि सूते ॥ ४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उत्पत्तिप्रकरणे हेमोर्म्युपदेशो नामैकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

## विंशत्युत्तरशततमः सर्गः १२०

श्रीवसिष्ठ उवाच ।

हेमोर्मिकादिवन्मिथ्या कथितायाः क्षयोन्मुखम् ।
त्वं महत्त्वमविद्यायाः शृणु राघव कीदृशम् ॥ १
लवणोऽसौ महीपालस्तथा दृष्ट्वा तदा भ्रमम् ।
द्वितीये दिवसे गन्तुं प्रवृत्तस्तां महाटवीम् ॥ २
यत्र दृष्टं मया दुःखमरण्यानीं स्मरामि ताम् ।
चित्तादर्शगतां विन्ध्यात्कदाचिल्लभ्यते हि सा ॥ ३
इति निश्चित्य सचिवैः प्रययौ दक्षिणापथम् ।
पुनर्दिग्विजयायेव प्राप्य विन्ध्यमहीधरम् ॥ ४
पूर्वदक्षिणपाश्चात्यमहार्णवतटस्थलीम् ।
बभ्राम कौतुकात्सर्वां व्योमवीथीमिवोष्णगुः ॥ ५
अथैकस्मिन्प्रदेशे तां चिन्तामिव पुरोगताम् ।
ददर्शोग्रामरण्यानीं परलोकमहीमिव ॥ ६
स तत्र विहरंस्तांस्तान्वृत्तान्तान्सकलानथ ।
दृष्टवान्पृष्टवांश्चैव ज्ञातवांश्च विसिस्मिये ॥ ७
तान्परिज्ञातवांश्चासीद्व्याधान्पुल्कसजान्पुनः ।
विस्मयाकुलया बुद्ध्या भूयो बभ्राम संभ्रमी ॥ ८
अथ प्राप्य महाटव्यां पर्यन्ते धूमधूसरे ।
तमेव ग्रामकं यस्मिन्सोऽभवत्पुष्टपुल्कसः ॥ ९
तत्रापश्यज्जनांस्तांस्तांस्ताः स्त्रियस्ताः कुटीरकाः ।
नानाकाराञ्जनाधारांस्तांस्तांश्च वसुधातटान् ॥ १०
तांश्चाकाण्डपरिभ्रष्टांस्तान्वृक्षांस्तांस्तवनुव्रजान् ।
तांस्तथैव समुद्देशांस्तान्व्याधानेकलान्सुतान् ॥ ११

अन्यासु वृद्धासु सबाष्पनेत्रा-
स्वार्तार्तियुक्तासु च वर्णयन्ती ।
अकालकान्तारविशीर्णबन्धु-
दुःखान्यसंख्यानि सखीषु वृद्धा ॥ १२
वृद्धा प्रवृद्धोज्ज्वलनेत्रबाष्पा
कष्टं बताशुष्ककुचा कृशाङ्गी ।
अवग्रहोग्राशनिदग्धदेशे
तत्रार्तनादा परिरोदितीदम् ॥ १३
हा पुत्रि पुत्रावृतसर्वगात्रे
दिनत्रयाभोजनजर्जराङ्गि ।
कृत्वासिना वर्मणि जीर्णदेहाः
कथं क्व मुक्ता भवतासवस्ते[1] ॥ १४
तालीदलालम्बनमम्बुदाद्रौ
दन्तान्तरस्थारुणसत्फलस्य ।

सवासनाविद्यानाशो यावत्सप्तमभूमिकाधिरोहणपर्यन्तो न संपन्नस्तावद्विक्षेपदुःखं तत्त्वज्ञानामपि भासत एवातो जीवन्मुक्तिसुखार्थिभिर्भूमिकाभ्यासः कार्य इत्याशयेनोपसंहरति—**यावदिति** ॥ ४१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे हेमोर्म्युपदेशो नामैकोनविंशत्युत्तरशततमः सर्गः ॥११९॥

लवणेन पुनर्गत्वा प्राग्दृष्टं विन्ध्यपक्कणम् ।
चण्डालीश्वश्रुसंवादः कृतोऽत्र प्रतिपाद्यते ॥ १ ॥

हेमोर्मिकानिदर्शनेन वर्णितं विश्वस्य ब्रह्मविवर्तत्वं तत्परीक्षितवतो लवणस्यानुभवसिद्धमिति त्वयापि विमृश्य द्रष्टव्यमित्याशयेनाह—**हेमोर्मिकेति** । मिथ्याशब्दोत्तरमितिशब्दोऽध्याहार्यः । विमर्शमात्रेण क्षयोन्मुखं महत्त्वमाश्चर्यभूतत्वम् ॥ १ ॥ असौ प्राग्वर्णितो लवणः । तामैन्द्रजालिकोपदर्शिताम् ॥ २ ॥ चित्तमेवादर्शो दर्पणस्तद्गताम् । विन्ध्यादिति ल्यब्लोपे कर्मण्यधिकरणे वा पञ्चमी । विन्ध्यं प्राप्य विन्ध्ये गत्वा वेत्यर्थः ॥३ ॥ ४ ॥ उष्णगुः सूर्यः ॥ ५ ॥ अरण्यानीं महारण्यम् । अरण्यान्महत्त्वे आनुक् ॥ ६ ॥ तांस्तान् प्रागनुभूतानित्यर्थः ॥७॥ संभ्रमी कुतूहली ॥ ८ ॥ ९ ॥ कुटीरकाः अल्पाः कुटीः । 'कुटीशमीशुण्डाभ्यो रः' स्वार्थे कन् ॥ १० ॥ अकाण्डे दुर्भिक्षे परिभ्रष्टान् दुर्दशाक्रान्तान् । अनुव्रजान् स्वानुगान् । एकलान् बन्धुवर्जितान् ॥ ११ ॥ तत्रत्यं वृत्तान्तं वर्णयति—**अन्यास्वित्या**दिना । वृद्धा अस्य श्वश्रूः । आर्तानां स्वबन्धूनामार्तिभिर्युक्तास्वन्यासु वृद्धासु सखीषु अकाले दुष्काले कान्तारेषु विशीर्णानां स्वबन्धूनां दुःखानि वर्णयन्ती सती इदं वक्ष्यमाणप्रकारं परिरोदितीति परेणान्वयः ॥ १२ ॥ तामेव विशिनष्टि—**वृद्धेति** । इतरवृद्धापेक्षया प्रकर्षेण वृद्धान्युज्ज्वलानि नेत्रबाष्पाणि यस्याः । अवग्रहोऽनावृष्टिस्तल्लक्षणेनोग्राशनिना दग्धप्राये देशे ॥ १३ ॥ रोदनप्रकारमेवाह—**हा पुत्री**त्यादिना । वर्मणि स्वकोशे असिनेव प्रवेशं कृत्वा भवता स्थितेन राज्ञा अतएव प्राणप्रियास्ते यूयं दुर्भिक्षजीर्णदेहाः कथं मुक्तास्त्यक्ताः क्व वा मुक्ता इति पुत्रैः सह बहुत्वोक्तिः । अथवा पूर्ववदसिना भवता राज्ञा जीर्णदेहा जर्जरशरीरा असवः स्वप्राणाः कथं मुक्ताः क्व मुक्ता इत्यर्थः । निर्विसर्गपाठे तु जीर्णदेहा त्वं कथं मुक्ता असवश्च ते कथं मुक्ता इति योज्यम् ॥ १४ ॥ इदानीं राज्ञः कुटुम्बभरणाय कृतं साहसकृत्यं स्मरन्त्याह—**तालीति** । अम्बुदवदुन्नते अद्रौ तालवृक्षमारुह्य फलं गृहीत्वा अवतरणकाले करद्वयस्यापि व्यापृतत्वा-

[1] कथावृता इति पाठः.

स्मरामि गुञ्जाफलदाम भर्तुः
पुरस्थमुद्रामरहासिनस्ते ॥ १५

कदम्बजम्बीरलवङ्गगुञ्जा-
कुञ्जान्तरतस्तु चरत्तरक्षोः ।
पश्यामि पुत्रस्य कदा नु भूयो
भयंकराण्युड्यतिवल्गितानि ॥ १६

न तानि कामस्य विलासिनीह
मुखेऽपि शोभालसितानि सन्ति ।
तमालनीले चिबुकैकदेशे
सुतस्य चान्यास्यगतामिषस्य ॥ १७

सुतापनीता सह तेन भर्त्रा
यमेन यस्या यमुना समाना ।
तमालवल्लीसहपुष्पगुच्छा
समीरणेनेव वने वरेण ॥ १८

हा पुत्रि गुञ्जाफलदामहारे
समुन्नताभोगपयोधराङ्गि ।
धातोल्लसत्कज्जललोलवर्णे
पर्णाम्बरे बादरजम्बुदन्ते ॥ १९

हा राजपुत्रेन्दुसमानकान्त
संत्यज्य शुद्धान्तविलासिनीस्ताः ।
रतिं प्रयातोऽसि ममात्मजायां
न सापि ते सुस्थिरतामुपेता ॥ २०

संसारनद्याः सुतरङ्गभङ्गैः
क्रियाविलासैर्विहितोपहासैः ।
किं नाम तुच्छं न कृतं नृपेशो
यद्योजितः पुष्कसकन्यकायाम् ॥ २१

सा त्रस्तसारङ्गसमाननेत्रा
स दृप्तशार्दूलसमानवीर्यः ।
उभौ गतावेकपदेन नाश-
माशा सहार्थेन यथा महेहा ॥ २२

मृतेश्वराश्वस्तनिजात्मजास्मि
दुर्देशयातास्मि च दुर्गताऽस्मि ।
दुर्जातिजातास्मि महापदेऽस्मि
साक्षाद्भयं भोऽस्मि महापदस्मि ॥ २३

नीचावमानप्रभवस्य मन्योः
क्षुधाप्रपन्नस्य कलत्रकस्य ।
शोकस्य वृत्तावनिवार्यवृत्ते-
र्नार्यस्म्यनेकायतनं विनाथा ॥ २४

दैवोपतप्तस्य विबान्धवस्य
मूढस्य रूढस्य महाधिभूमौ ।
यत्प्राणनं यन्मरणं महाप-
द्यस्यात्मनिर्जीवितमुत्तमं तत् ॥ २५

जनैर्विहीनस्य कुदेशवृत्ते-
र्दुःखान्यनन्तानि समुल्लसन्ति ।
सहस्रशाखारससंकुलानि
तृणानि वर्षास्विव पर्वतस्य ॥ २६

एवं लपन्तीं स्वकलत्रवृद्धां
दासीभिराश्वास्य नृपः स्त्रियं ताम् ।

---

त्फलधारणाशक्तेर्दन्तान्तरस्थं दन्तावष्टब्धं अरुणं सत् परिपक्वं फलं यस्य तथाविधस्य अतएव पुरस्थमुद्रया तत्कालोपस्थितवेषेण अमरं मरणवर्जितं हनूमन्तं हासिनः हसितुं शीलस्य ते तव दैवात्स्खलने तालीदलस्य सन्निहिततालान्तरशाखाया आलम्बनं साहसम् । 'तलालम्बनम्' इति पाठे तले मूले आलम्बनमवतरणं साहसं स्मरामीत्यर्थः ॥१५॥ कदम्बजम्बीरवृक्षाणां लवङ्गगुञ्जावल्लीनां च कुञ्जस्यान्तरन्तःप्रदेशे निलीय चरतस्तरक्षोर्व्याघ्रजातिभेदस्य भयंकराणि भयजनकानि पुत्रस्य पुत्रात्प्रियतमस्य जामातुः उड्यतिना उड्डयनेन वल्गितानि तद्वधार्थं गमनानि ॥ १६ ॥ इदानीं स्वपुत्र्यां सकामस्य तस्य मुखशोभां स्मृत्वा वर्णयति–न तानीति । पानादिकाले अन्यस्याः स्वप्रेयस्या आस्यात् गतं प्रीत्या प्राप्तमामिषं मांसशकलं येन तथाविधस्य सुतस्य अनुकंप्यस्य ते तच्चर्वणकाले तमालसदृशश्मश्रुभिर्नीले चिबुकैकदेशे यानि शोभायुक्तानि लसितानि विलासाः सन्ति तानि इह जगति विलासिनि कामस्य मन्मथस्य मुखे संपूर्णेऽपि न सन्तीत्यर्थः ॥ १७ ॥ इदानीं भर्त्रा सह पुत्र्या मरणं संभावयन्नाह—**सुते**ति । यस्याः यमुना वर्णेन समाना सा मम सुता तेन भर्त्रा सह यमेन अपनीता नूनमित्यर्थः । वरेण बलीयसा॥१८॥ पर्णान्येव अम्बरादिवस्त्रवत्परिधानादीनि यस्याः । बादराणि बदरबीजानि जम्बूनि तद्बीजानीव वा दन्ता यस्याः॥१९॥२०॥विहितः उचित उपहासो येभ्यस्तथाविधैः क्रियाविलासैः कर्मपरिपाकैः । सुतरङ्गभङ्गैरिति व्यस्तरूपकम् । किं नाम तुच्छं निन्द्यं फलं न कृतम् । तदेवाह—**नृपेश** इति ॥ २१ ॥ एकपदेन युगपत् यथा महेहा बहुमनोरथयुक्ता आशा अर्थेन धनेन सह नाशं गच्छति भाग्यविपर्यये तद्वदित्यर्थः ॥ २२ ॥ इदानीं स्वात्मानमनुशोचन्त्याह—**मृतेश्वरे**ति । आशु अस्तनिजात्मजा मृतस्वपुत्री । दुर्गता दरिद्रास्मि । महति अपदे विषमस्थाने अस्मि । किंच भो सख्यः, साक्षाद्भयमेवाहमस्मि । महापदेवाहमस्मीत्यतिशयद्योतनायाभेदारोपः ॥ २३ ॥ विनाथा अहं नीचावमानप्रभवस्य मन्योः कोपस्य क्षुधया प्रपन्नस्य कलत्रकस्य पोष्यवर्गस्य वृत्तौ आहारविषये अनिवार्यवृत्तेः शोकस्य चेत्याद्यनेकेषामायतनं गृहं नारीरूपं धात्रा निर्मितास्मीति शेषः ॥ २४ ॥ इदानीं स्वसदृशं जनमन्यमपि निन्दन्त्याह—**दैवे**ति । महत्यां आधिर्मानसदुःखं तल्लक्षणायां भूमौ रूढस्य प्रादुर्भूतस्य ईदृशस्य यस्य जनस्य यत्प्राणनं जीवनं यन्मरणं या च महापत् तत् ततः आत्मनिर्जीवितं स्वतो जीवशून्यं पाषाणादि उत्तमं श्रेष्ठमित्यर्थः ॥२५॥ जनैः स्वजनैर्विहीनस्य कुदेशे वृत्तिः स्थितिर्यस्य तथाविधस्य पुंसः । विशेषणे पुंस्पर्वतसाधारणे ॥ २६ ॥ लपन्तीं विलप-

पप्रच्छ किंवृत्तमिहैव का च
का ते सुता कश्च सुतस्तवेति ॥ २७
उवाच सा बाष्पविलोचनाथ
ग्रामस्त्वयं पुष्पसघोषनामा ।
इहाभवत्पुल्कसकः पतिर्मे
बभूव तस्येन्दुसमा सुतैका ॥ २८
सा दैवयोगात्पतिसिन्द्रतुल्य-
मिहागतं दैववशेन भूपम् ।
अयं विशीर्णं मधुकुम्भमाप
वने वराकी करभी यथैका ॥ २९
सा तेन सार्धं सुचिरं सुखानि
भुक्त्वा प्रसूता तनयाः सुतांश्च ।
वृद्धिं गता काननकोटरेऽस्मि-
स्तुम्बीलता पादपसंश्रितेव ॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे चण्डालीशोचनं नाम विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

---

## एकविंशत्युत्तरशततमः सर्गः १२१

चण्डाल्युवाच ।

केनचित्त्वथ कालेन ग्रामकेऽस्मिञ्जनेश्वर ।
अवृष्टिदुःखमभवद्भीषणं भग्नमानवम् ॥ १
महतानेन दुःखेन सर्वे ते ग्रामका जनाः ।
विनिर्गत्य गता दूरं सर्वे पञ्चत्वमागताः ॥ २
तेनेमा दुःखभागिन्यः शून्या वयमिह प्रभो ।
सौम्य शोचाम सद्बाष्पमाचान्तेक्षणधारया ॥ ३
इत्याकर्ण्याङ्गनावक्त्राद्राजा विस्मयमागतः ।
मन्त्रिणां मुखमालोक्य चित्रार्पित इवाभवत् ॥ ४
भूयो विचारयामास तदाश्चर्यमनुत्तमम् ।
भूयो भूयोऽथ पप्रच्छ बभूवाश्चर्यवानिति ॥ ५
तेषां समुचितैर्दानसन्मानैर्दुःखसंक्षयम् ।
कृत्वा करुणयाविष्टो दृष्टलोकपरावरः ॥ ६
स्थित्वा तत्र चिरं कालं विमृश्य नियतेर्गतीः ।
आजगाम गृहं पौरैर्वन्दितः प्रविवेश ह ॥ ७
प्रातस्तत्र सभास्थाने मामपृच्छदसौ नृपः ।
कथमेवं मुने स्वप्नः प्रत्यक्षमिति विस्मितः ॥ ८
यथावस्तुतया तस्य तत उक्तः स तादृशः ।
संशयो हृदयान्नुन्नो वातेनेवाम्बुदो दिवः[1] ॥ ९
इत्येवं राघवाविद्या महती भ्रमदायिनी ।
असत्सत्तां नयत्याशु सच्चासत्तां नयत्यलम् ॥ १०

श्रीराम उवाच ।

कथमेवं वद ब्रह्मन्स्वप्नः सत्यत्वमागतः ।
भ्रमोदार इवैषोऽर्थो न मे गलति चेतसि ॥ ११

श्रीवसिष्ठ उवाच ।

सर्वमेतदविद्यायां संभवत्येव राघव ।
घटेषु पटता दृष्टा स्वप्नसंभ्रमितादिषु ॥ १२
दूरं निकटवद्भाति मुकुरेऽन्तरिवाचलः ।
चिरं शीघ्रत्वमायाति पुनः श्रेष्ठेव यामिनी ॥ १३
असंभवच्च भवति स्वप्ने स्वमरणं यथा ।
असच्च सदिवाभाति स्वप्नेष्विव नभोगतिः ॥ १४
सुस्थितं सुष्ठु चलति भ्रमे भूपरिवर्तवत् ।
अचलं चलतामेति मदविक्षुब्धचित्तवत् ॥ १५
वासनावलितं चेतो यद्यथा भावयत्यलम् ।
तत्तथानुभवत्याशु न तदस्ति न वाप्यसत् ॥ १६
यदैवाभ्युदिता विद्या त्वहंत्वादिमयी मुधा ।

---

न्तीम् । स्वकलत्रवृद्धां पुल्कसीभूतस्वपोष्येषु वृद्धां श्वश्रूं दासीभिराश्वास्येति साक्षादसंभाष्यत्वद्योतनाय ॥ २७ ॥ २८ ॥ दैवयोगाद्भाग्यवशात् । दैववशेन दुरदृष्टवशेन अयं शुभावहं विधिं प्राप्येति शेषः । विशीर्णं विशीर्णमुखपिधानं मधुकुम्भं करभी गर्दभी उष्ट्री वा आप प्राप्तवती ॥ २९ ॥ तुम्बीलता अलाबुवल्ली ॥३०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चण्डालीशोचनं नाम विंशत्युत्तरशततमः सर्गः ॥१२०॥

तच्छ्रुत्वा विस्मितस्यात्र लवणस्य गृहागमे ।
विनिर्णयो वसिष्ठोक्त्या रामस्याप्यत्र कीर्त्यते ॥ १ ॥

अवृष्टिप्रयुक्तं दुर्भिक्षदुःखम् । भग्ना मानवा येन तत् ॥ १ ॥ पञ्चत्वं मरणम् ॥ २ ॥ तेन बन्धुमरणेन दुर्भिक्षेण च सद्बाष्पं सबाष्पं आचान्तयेव स्रवन्त्या ईक्षणधारया अश्रुधारया । 'सद्बाष्पाः' इति पाठे वयमित्यस्य विशेषणम् ॥ ३ ॥ ४ ॥ इतिशब्दः प्रश्नप्रकारबाहुल्यद्योतकः ॥ ५ ॥ तेषां पक्कणज[2]नानाम् ॥ ६ ॥ नियतेर्दैवस्य ॥ ७ ॥ प्रत्यक्षं दृष्ट इति शेषः ॥ ८ ॥ स तादृशः प्रश्नो मया यथावस्तु वस्तुयाथार्थ्यं तद्भावेन उक्तः समाहितः । दिवः अन्तरिक्षात् ॥ ९ ॥ १० ॥ सत्यत्वं जाग्रत्कालानुभवयोग्यताम् । 'भ्रमोदार इवैषोऽर्थं' इति पाठे न मे गलतीत्येतदुत्तरं संशयपदमध्याहार्यम् । 'संशयो भगवन्सोऽयम्' इति पाठे तु स्पष्टम् ॥११॥ संभवमेवोपपादयति— घटेष्वित्यादिना ॥ १२ ॥ श्रेष्ठा सुखनिद्राप्रयाता यामिनी रात्रिरिव ॥ १३ ॥ १४ ॥ सुस्थितं स्थिरम् । भ्रमे भ्रमणे । चित्तशब्देन तद्दृश्यं लक्ष्यते ॥ १५ ॥ १६ ॥ अनन्तता



---

१ सदिवोदेतीति इति पाठः. २ पक्कणेति पाठो मुद्रितपुस्तके सर्वत्र.

तदैवानादिमध्यान्ता भ्रमस्थानन्ततोदिता ॥ १७
प्रतिभासवशादेव सर्वो विपरिवर्तते ।
क्षणः कल्पत्वमायाति कल्पश्च भवति क्षणः ॥ १८
विपर्यस्तमतिर्जन्तुः पश्यत्यात्मानमेडकम् ।
बिभर्ति सिंहतामेडो वासनावशतः स्वयम् ॥ १९
विषमभ्रमदाविद्यामोहाहन्तादयः समाः ।
सर्वे चित्तविपर्यासफलसंपत्तिहेतुतः ॥ २०
काकतालीयवच्चेतोवासनावशतः स्वतः ।
संवदन्ति महारम्भा व्यवहाराः परस्परम् ॥ २१
वृत्तं प्राक्पक्कणे राज्ञः कस्यचिल्लवणस्य यत् ।
प्रतिभातं तदेतस्य सद्वासद्वा मनोगतम् ॥ २२
विस्मरत्यपि विस्तीर्णां कृतां चेतःक्रियां यथा ।
तथा कृतामप्यकृतामिति स्मरति निश्चितम् ॥ २३
तथा न भुक्तवानस्मि भुक्तवानिति चेतसि ।
स्वप्ने देशान्तरगमे प्राकृतोऽप्यवबुद्ध्यते ॥ २४
विन्ध्यपुष्कसग्रामे व्यवहारोऽयमीदृशः ।
प्रतिभासागतस्तस्य स्वप्ने पूर्वकथा यथा ॥ २५
अथवा लवणेनाशु दृष्टो यः स्वप्नविभ्रमः ।
स एव संविदं प्राप्तो विन्ध्यपुष्कसचेतसि ॥ २६
लावणी प्रतिभाऽऽरूढा विन्ध्यापुष्कसचेतसि ।
विन्ध्यपुष्कससंविद्वाऽऽरूढा पार्थिवचेतसि ॥ २७

यथा बहूनां सदृशं वचनं नाम मानसम् ।
तथा स्वप्नेऽपि भवति कालो देशः क्रियापि च ॥ २८
व्यवहारगतेस्तस्याः सत्तास्ति प्रतिभासतः ।
सत्ता सर्वपदार्थानां नान्या संवेदनादृते ॥ २९
संवेदनेतरा भाति वीचिर्वा जलसंगतिः ।
भूतभव्यभविष्यस्था तरुबीजे तरुर्यथा ॥ ३०
तस्याः सत्त्वमसत्त्वं च न सन्नासदिति स्थितम् ।
सत्सदेव हि संवित्तेरसंवित्तेरसन्मयम् ॥ ३१
नाविद्या विद्यते किंचित्तैलादि सिकतास्विव ।
हेम्नः किं कटकादन्यत्पदं स्याद्धेमतां विना ॥ ३२
अविद्ययात्मतत्त्वस्य संबन्धो नोपपद्यते ।
संबन्धः सदृशानां च यः स्फुटः स्वानुभूतितः ॥ ३३
जतुकाष्ठादिसंबन्धो यः समासमयोगतः ।
नान्योन्यानुभवायासौ तदेकस्पन्दमात्रकम् ॥ ३४
परमार्थमयं सर्वं यथा तेनोपलादयः ।
चिता समभिचेत्यन्ते संबन्धवशतः समाः ॥ ३५
यदा चिन्मात्रसन्मात्रमयाः सर्वे जगद्गताः ।
भावास्तदा विभान्त्येते मिथः स्वानुभवस्थितेः ॥ ३६
न संभवति संबन्धो विषमाणां निरन्तरः ।
न परस्परसंबन्धाद्विनानुभवनं मिथः ॥ ३७
सदृशे सदृशं वस्तु क्षणाद्गत्वैकतामलम् ।
रूपमास्फारयत्येकमेकत्वादेव नान्यथा ॥ ३८

असंख्येयता ॥१७॥१८॥ आत्मानं स्वं एडकं मेषम् ॥ १९ ॥ ॥ २० ॥ तथाच कल्पितत्वाविशेषेऽपि संवादविसंवादाभ्यामेव लोके सत्यत्वमिथ्यात्वव्यवहारो न परमार्थविमर्शेनेत्याशयेनाह—**काकतालीयवद्**िति ॥२१॥ तर्हि लवणव्यवहारे कया रीत्या संवादस्तमाह—**वृत्त**मिति । पक्कणे प्राक्कस्यचिद्यद्वृत्तं चाण्डालीविवाहादि तल्लवणस्य मनोगतं प्रतिभातमिति संवादभ्रम इत्यर्थः ॥ २२ ॥ अनुभूतविस्मृतिवदननुभूतस्मृतिरपि न दोषायेत्याशयेनाह—**विस्मरती**ति । यद्यपि लवणस्य भ्रान्तावनुभव एव न स्मृतिस्तथाप्यनुभवस्मृत्याद्यवान्तरवैलक्षण्यमपि कल्पनामात्रत्वान्न विमर्शक्षममिति सूचनायेत्थमुक्तम् ॥ २३ ॥ २४ ॥ प्रतिभाससंवादयोः पूर्वापरभावोऽपि कल्पनामात्रत्वान्न व्यवस्थित इत्याशयेनाह— **विन्ध्ये**ति द्वाभ्याम् । तस्य लवणस्य ॥ २५ ॥ २६ ॥ प्रतिभाभेदकल्पनमपि तथा एकत्र जाताया एवोभयत्र भानसंभवादित्याशयेनाह—**लावणी**ति । लवणस्येयं लावणी । उभयत्र आरूढेति च्छेदः ॥ २७ ॥ प्रतिभातद्विषययोः संवादे दृष्टान्तमाह—**यथे**ति । बहूनां कवीनां मानसोत्प्रेक्षारचितकाव्यार्थप्रतिपादकं वचनं कदाचित्सदृशं सच्छब्दतोऽर्थतश्च संवादि भवति तथा लवणपुल्कसभ्रान्तिरूपे स्वप्नेऽपि भवतीत्यर्थः ॥ २८ ॥ तर्हि किं सा व्यवहारगतिरत्यन्तासती नेत्याह—**व्यवहारे**ति । अधिष्ठानचित्सत्तयैव सर्ववस्तुसत्ता न स्वातन्त्र्येणेत्याह—**सत्ते**ति ॥२९॥ इत्यर्थे वाशब्दः । संवेदनसत्तैव भूतभव्यभविष्यत्प्रपञ्चगता सती संवेदनादितरेव भाति जले वीचिरिव बीजे तरुरिव चेत्यर्थः ॥ ३० ॥ तस्याः संवेदनेतरसत्तायाः । सत्त्वदृशा संवेदनात्सत्त्वं तथा असंवित्तेस्त्वसन्मयमिति । तत्सत्तासत्ते भ्रान्तिसंवेदनाधीने इत्यर्थः ॥ ३१ ॥ भ्रान्तिगोचरस्य चाविद्यामात्रत्वादसत्त्वमेव फलितमित्याशयेनाह—**ने**ति । पदं वस्तु स्यात्किं, नेत्यर्थः ॥ ३२ ॥ वस्तुसंबन्धाद्वस्तु कुतो न स्यात्तत्राह—**अविद्यये**ति ॥ ३३ ॥ पार्थिवत्वद्रवत्वाभ्यां समासमयोगतः यो जतुकाष्ठादिसंबन्धः असौ असदृशयोरन्योन्ययोः संबन्धोदाहरणाय न योग्यो यतस्तदुभयतस्तस्या अविद्याया एकस्या एव स्पन्दो विलासस्तन्मात्रमित्यर्थः ॥ ३४ ॥ यदि तु चिन्मयमेवाभ्युपगम्येत तर्हि समैस्तैश्चितः संबन्ध उपपद्यत इत्याह—**परार्थमय**मिति । यथा येन प्रकारेण परमार्थमयास्तेन हेतुना चिता समा इति संबन्धवशतश्चेत्यन्ते चिता प्रकाश्यन्ते इति भवेदित्यर्थः ॥३५॥ तस्मिन्पक्षेऽपि दोषमाह—**यदे**ति । तदा स्वानुभवस्थितेः स्वप्रकाशताबलादेव विभान्ति न चिदन्तरसंबन्धबलात् । दीपस्य स्वप्रथायां दीपान्तरसंबन्धापेक्षाभावादित्यर्थः ॥३६॥ उक्तमेव कल्पद्वयं श्लोकद्वयेन स्फुटं पुनराह—**न संभवती**ति ॥ ३७ ॥ द्वितीयकल्पे अणुमात्रस्याप्यचिदंशस्य भेदकस्याभावादखण्डब्रह्मस्वप्रकाशतैव

१ संगत इति पाठः. २ सदंशे इति पाठः.

चिच्चेत्यमिलिता दृश्यरूपयोदेति चेतनः ।
[ जडं जडेन मिलितं घनं संपद्यते जडम् ।]
न च चिज्जडयोरैक्यं वैलक्षण्यात्कचिद्भवेत् ॥ ३९
चिज्जडौ चित्र एकत्र न तौ संमिलतः कचित् ।
चिन्मयत्वाच्चिदालम्भश्चिदालम्भेन वेदनम् ॥ ४०
दारुपाषाणभेदानां ननु द्वैते चिदात्मकाः ।
पदार्थो हि पदार्थेन परिणाम्यनुभूयते ॥ ४१
जिह्वयैव रसास्वादः सजातीयामलोदयः ।
ऐक्यं च विद्धि संबन्धं नास्त्यसावसमानयोः ॥ ४२
जडचेतनयोस्तेन नोपलादि जडं मतम् ।
चिदेवोपलकुड्यादिरूपिणीति सिता चिता ॥ ४३
एकीभावं गता द्रष्टृदृश्यादि कुरुते भ्रमम् ।
काष्ठोपलाद्यशेषं हि परमार्थमयं यतः ॥ ४४
तदात्मना तत्संबन्धं दृश्यत्वेनोपलभ्यते ।
सर्वं सर्वप्रकाराढ्यमनन्तमिव यत्ततः ॥ ४५
विश्वं सन्मात्रमेवैतद्विद्धि तत्त्वविदां वर ।
असत्तात्यागनिष्ठेन विश्वं लक्षशतभ्रमैः ॥ ४६
पूरितं चिच्चमत्कारो नच किंचन पूरितम् ।
संकल्पनागरा नृणां मिथः स्पन्दन्ति नो यथा ॥ ४७
न देशकालरोधाय तथा सर्गेष्विति स्थितिः ।
भेदबोधे हि सर्गत्वमहंत्वादिभ्रमोदयः ॥ ४८

हेमसंवित्परित्यागे कटकादिभ्रमो यथा ।
कटकादिभ्रमो हेम्नि देशादेशं भवाद्भवम् ॥ ४९
दृग्दर्शनपरित्यागे नाविद्यास्ति पृथक्सदा ।
कटकादिमहाभेदमेकं हेम यथामलम् ॥ ५०
बोधैकत्वादयं सर्गस्तदेवासन्नयत्यलम् ।
सेना मृत्संविदा चित्रा मृन्मात्रमिव मृन्मयी ॥ ५१
जलमेकं तरङ्गादि दार्वेकं शालभञ्जिका ।
मृन्मात्रमेकं कुम्भादि ब्रह्मैकं त्रिजगद्भ्रमः ॥ ५२
संबन्धे दृश्यदृष्टीनां मध्ये द्रष्टुर्हि यद्वपुः ।
द्रष्टृदर्शनदृश्यादिवर्जितं तदिदं परम् ॥ ५३
देशादेशं गते चित्ते मध्ये यच्चेतसो वपुः ।
अजाड्यसंविन्मननं तन्मयो भव सर्वदा ॥ ५४
अजाग्रत्स्वप्ननिद्रस्य यत्ते रूपं सनातनम् ।
अचेतनं चाजडं च तन्मयो भव सर्वदा ॥ ५५
जडतां वर्जयित्वैकां शिलाया हृदयं हि तत् ।
अक्षुब्धो वाथवा क्षुब्धस्तन्मयो भव सर्वदा ॥ ५६
कस्यचित्किंचनापीह नोदेति न विलीयते ।
अक्षुब्धो वाथवा क्षुब्धः स्वस्थस्तिष्ठ यथासुखम् ॥ ५७
नाभिवाञ्छति नो द्वेष्टि देहे किंचित्कचित्पुमान् ।
स्वस्थस्तिष्ठ निराशङ्कं देहवृत्तिषु मा पत ॥ ५८
भविष्यद्ग्रामकग्राम्यकार्यव्यवसितो यथा ।

---

फलितेत्याशयेन क्षणाद्गत्वैकतामलमित्युक्तम् ॥ ३८ ॥ यो मूढानां चेतनस्य चिच्चेत्यचितितारूपेण दृश्यया त्रिपुट्या उदितत्वानुभवः स न चिज्जडयोरभेदसंबन्धमादायोपपादयितुं शक्य इत्याशयेनाह—**चिदि**ति ॥ ३९ ॥ नापि भेदसंबन्धमादायोपपादयितुं शक्यत इत्याह—**चिज्जडावि**ति । एकत्र एकस्मिंस्त्रिपुटीपटीचित्रे । नापि चिन्मयानां चिता संबन्ध इति पक्षमादायाप्युपपादयितुं शक्यत इत्याह—**चिन्मयत्वादि**ति । सादृश्याच्चिदालम्भसंभवेऽपि भेदकाभावाद्वैद्यत्वासिद्धेर्न दृश्यवेदनांशोपपत्तिरित्यर्थः ॥४०॥ ननु जडत्वेन साम्येऽपि यथा दारुपाषाणमृदामेकगृहघटकत्वेन योगो यथा वाऽऽप्यत्वेन साजात्येऽपि जिह्वारसयोर्योगस्तथा चित्त्वेन साम्येऽपि दृशो दृश्ययोगोऽस्तु तत्राह—**दार्वि**ति । दार्वादिजडपदार्थो गृहादिपदार्थभावेन परिणामी अनुभूयते ननु चिदित्यर्थः ॥ ४१ ॥ सजातीयाभ्यां जिह्वारसाभ्याममलः स्फुट उदयो यस्य तथाविधो रसास्वादो रासनचित्तवृत्तिरूपः परिणाम्यनुभूयते इत्यनुषङ्गः । किंचिदभिन्नयोरेकीभावो हि संबन्धः स च पक्षद्वयेऽपि दुर्घट इत्याह—**ऐक्यं चे**ति ॥ ४२ ॥ जडचेतनयोरिति पूर्वान्वयि । तेन किं फलितं तदाह—**तेने**ति । इति मिता सती ॥ ४३ ॥ परमार्थतस्त्वेकीभावं गता ॥ ४४ ॥ तर्हि परमार्थचिदात्मनां काष्ठपाषाणादीनां कथं गृहभावेन संबन्धो दृश्यते तत्राह—**तदात्मने**ति । कल्पितरूपेणैव तेषां संबन्धो दृश्यते न वास्तवचिद्रूपेणेत्यर्थः । यद्यस्माद्धेतोरनन्तं ब्रह्मैव सर्वप्रकाराढ्यं सर्वमिव भाति ततो हेतोर्विश्वं सन्मात्रमिति परेणान्वयः ॥ ४५ ॥ असत्तात्यागो मिथ्यात्वाग्रहणं स एव चिच्चमत्कारः ॥ ४६ ॥ ४७ ॥ ४८ ॥ कटकादि हेम्नि भ्रमो मिथ्यैव । यतस्तत् हेमदेशादेव देशं हेमभवनादेव भवं सत्तां च लभते इति शेषः ॥ ४९ ॥ कटकादिमहाभेदं हेम यथा भेददृग्दर्शनपरित्यागे एकं हेमैव तद्वदित्यर्थः ॥ ५० ॥ बोधव्यक्तेरेकत्वात् सदेव विश्वं असन्नयति असत्त्वमापादयति । असद्विश्वं वा सन्नयति सदैकरस्यं प्रापयति ॥५१॥ ॥ ५२ ॥ कुम्भाद्यनुस्यूतं निष्कृष्टमृत्स्वरूपमिव द्रष्ट्रादित्रिपुट्यनुस्यूतं तत्साक्षिचिन्मात्रं त्रिपुटीनिरासेन दर्शयति—**संबन्धे** इति । तत्प्राग्दर्शितं यत्परं ब्रह्म तदिदं निष्कृष्टप्रत्यक्स्वरूपमेवेत्यखण्डो वाक्यार्थो दर्शितो द्रष्टव्यः ॥ ५३ ॥ तस्य त्रिपुटीशून्यता कदा प्रसिद्धा तत्राह—**देशादि**ति । प्राग्व्याख्यातम् ॥५४॥ अचेतनं चित्तवृत्तिरहितम् । तन्मयस्तदेकरसः ॥५५॥ शिलाया हृदयं घनं चिदेकघनमिति यावत् । अक्षुब्धः समाधिस्थः, क्षुब्धो व्यवहरन् ॥५६॥ ननु क्षुब्धस्य कथं तन्मयता तिष्ठेत्तत्राह—**कस्यचिदि**ति । व्यवहारदशायामपि परमार्थदृष्टिमेवानुवर्तस्वेति भावः ॥ ५७ ॥ सामान्येनोक्तं विशिष्याह—**ने**ति । पुमान् आत्मा ॥ ५८ ॥ यथा अनागते व्यवहार्ये

---

१ चिच्चेत्यच्चिततारूपदृश्ययोदेति चेतन इति पाठष्टीकानुगुणः. २ जडं जडेन इति श्लोकार्धं कचिन्न पठ्यते. ३ तत्संबन्ध इति पाठः साधुः.

चित्तवृत्तिषु मा तिष्ठ तथा सत्यात्मतां गतः ॥ ५९
यथा देशान्तरनरो यथा काष्ठं यथोपलः ।
तथैव पश्य चित्तं त्वमचित्तैव यदात्मना ॥ ६०
यथा दृषदि नास्त्यम्बु यथाम्भस्यनलस्तथा ।
स्वात्मन्येवास्ति नो चित्तं परमात्मनि तत्कुतः ॥ ६१
प्रेक्ष्यमाणं न यत्किंचिच्चित्तेन यत्क्रियते क्वचित् ।
कृतं भवति तन्नेति मत्वा चित्तातिगो भवेत् ॥ ६२
अत्यन्तानात्मभूतस्य यश्चित्तस्यानुवर्तते ।
पर्यन्तवासिनः कस्मान्न म्लेच्छस्यानुवर्तते ॥ ६३
निरन्तरमनादृत्य त्वमाराच्चित्तपुष्कसम् ।
स्वस्थमास्स्व निराशङ्कं पङ्केनेव कृतो जडः ॥ ६४
चित्तं नास्त्येव मे भूतं मृतमेवाद्य वेत्ति वा ।
भव निश्चयवान्भूत्वा शिलापुरुषनिश्चलः ॥ ६५
प्रेक्षायामस्ति नो चित्तं तद्विहीनोऽसि तत्त्वतः ।
स किमर्थमनर्थेन तद्यर्थेन कदर्थ्यसे ॥ ६६
असता चित्तयक्षेण ये मुधा स्ववशे कृताः ।
तेषां पेलवबुद्धीनां चन्द्रादशनिरुत्थितः ॥ ६७
चित्तं दूरे परित्यज्य योऽसि सोऽसि स्थिरो भव ।
भव भावनया मुक्तो युक्त्या परमयान्वितः ॥ ६८
असतो येऽनुवर्तन्ते चेतसोऽसत्यरूपिणः ।
व्योममारणकर्मैकनीतकालान्धिगस्तु तान् ॥ ६९

व्यपगलितमना महानुभावो
भव भवपारगतो भवामलात्मा ।
सुचिरमपि विचारितं न लब्धं
मलममलात्मनि मानसात्म किंचित् ॥ ७०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे चित्ताभावप्रतिपादनं नामैकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

---

## द्वाविंशत्युत्तरशततमः सर्गः १२२

श्रीवसिष्ठ उवाच ।

प्रथमं जातमात्रेण पुंसा किंचिद्विकसितबुद्धिनैवं सत्संगमपरेण भवितव्यम् ॥ १

अनवरतप्रवाहपतितोऽयमविद्यानदीनिवहः शास्त्रसज्जनसंपर्कादृते न तरितुं शक्यते ॥ २

तेन विवेकतः पुरुषस्य हेयोपादेयविचार उपजायते ॥ ३

तदासौ शुभेच्छाभिधां विवेकभुवमापतितो भवति ॥ ४

ततो विवेकवशतो विचारणायाम् ॥ ५

सम्यग्ज्ञानेनासम्यग्वासनां त्यजतः संसारभावनातो मनस्तनुतामेति ॥ ६

तेन तनुमानसां नाम विवेकभूमिमवतीर्णो[1] भवति ॥ ७

---

चित्तस्यानासङ्गः स्वतःसिद्धस्तथा वर्तमानेऽपि मिथ्यात्वदृष्ट्या संपादनीय इत्याशयेनाह—**भविष्यदि**ति ॥५९॥ यथा दूरदेशस्थो नरः सन्नप्यसत्समः । काष्ठोपलं तु सन्निहितमप्यचेतनत्वादेवासङ्गाभिमानाद्यक्षमं तथैव चित्तं पश्येत्यर्थः । यद्यस्मादात्मना आत्मस्वरूपेण विविच्य दर्शने अचित्ततैव विदुषामनुभवसिद्धेत्यर्थः । छान्दसस्तलोपः ॥ ६० ॥ तदेव स्पष्टमाह—**यथे**ति ॥ ६१ ॥ चित्तस्यावस्तुत्वे चित्तकार्याणां सुतरामसत्त्वमित्याह—**प्रेक्ष्यमाण**मिति ॥६२॥ शुद्धस्यात्मनः अशुद्धचित्तानुवृत्तिरनुचितत्वादपि हेयेत्याशयेनाह–**अत्यन्ते**ति । पर्यन्ताः प्रत्यन्तदेशास्तद्वासिनः । 'तस्मान्न जननमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानि' इति श्रुत्या म्लेच्छानुवृत्तेर्निषिद्धत्वादिति भावः ॥ ६३ ॥ पङ्केन मृदा कृतो निर्मितः प्रतिमादिरिव ॥ ६४ ॥ नास्त्येवेति मुख्यः कल्पः । भूतं मृतमेव सत् अद्य वेत्ति मिथ्या पश्यतीति गौणः कल्पः ॥ ६५ ॥ प्रेक्षायां आत्मप्रेक्षायां चित्तप्रेक्षायां च ॥ ६६ ॥ अशनिर्वैद्युताग्निः ॥६७॥ युक्त्या मननेन, भावनया ध्यानेन ॥६८॥ मूढनिन्दात्राधिकारिप्रोत्साहनाय ॥ ६९ ॥ महानुभावस्तत्त्वावबोधकुशलः सन् प्रथमं व्यपगलितमना भव ततस्तत्त्वबोधेनामलात्मा सन् भवपारगतो भव । उक्तार्थं द्रढयितुं वसिष्ठो विचारविशुद्धं स्वानुभवमाह–**सुचिर**मिति । मया सुचिरमपि मनस्तत्त्वलाभाय विचारितं तथाप्यमलात्मनि मानसात्मकं मलं किंचिदपि न लब्धं तस्मान्नास्त्येवेति मद्वाक्यादपि स्थिरो भवेत्यर्थः ॥ ७० ॥

इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्ताभावप्रतिपादनं नामैकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

इहादौ वर्ण्यते पुंसो ज्ञानभूम्युदयक्रमः ।
रामस्य शोकमोहादिनिरासैर्बोधनं ततः ॥ १ ॥

तत्र ज्ञानभूमिकाक्रमं गद्यैर्विवक्षुस्तल्लाभोपायेषु प्रथमपीठिकामाह—**प्रथम**मिति किंचिद्विकसितबुद्धिना इह जन्मनि जन्मान्तरे वानुष्ठितैर्निष्कामकर्मभिः शुद्धचित्तेनेत्यर्थः ॥ १ ॥ सत्सङ्गात्साधनचतुष्टयसंपत्तिसहितोऽध्यात्मशास्त्रसंबन्धः सिद्ध्यति सैव प्रथमा भूमिकेत्याशयेनाह—**अनवरतेत्या**दिना ॥ २ ॥ ॥ ३ ॥ ४ ॥ तज्जयाद्द्वितीयभूमिकावतारं दर्शयति—**तत** इत्यादिना ॥ ५ ॥ तज्जयात्तृतीयभूमिकावतार इत्याह—**सम्यग्ज्ञा**-

---

[1] भवतीर्णो भवतीति पाठः।

यदैव योगिनः सम्यग्ज्ञानोदयस्तदैव सत्त्वापत्तिः ॥ ८

तद्वशाद्वासना तनुतां गता यदा तदैवासावसंसक्त इत्युच्यते कर्मफलेन न बध्यत इति ॥ ९

अथ तानववशादसत्ये भावनातानवमभ्यस्यति ॥ १०

यावन्न कुर्वन्नपि व्यवहरन्नप्यसत्येषु संसारवस्तुषु स्थितोऽपि स्वात्मन्येव क्षीणमनस्त्वादभ्यासवशाद्वाह्यं वस्तु कुर्वन्नपि न पश्यति नालम्बनेन सेवते नाभिध्यायति तनुवासनत्वाच्च केवलं मूढः सुप्तप्रबुद्ध इव कर्तव्यं करोति ॥ ११

तनुभावितमनस्कस्तेन योगभूमिकां भावनामधिरूढः ॥ १२

इत्यन्तर्लीनचित्तः कतिचित्संवत्सरानभ्यस्य सर्वथैव कुर्वन्नपि बाह्यपदार्थान्भावनां त्यजति तुर्यात्मा भवति ततो जीवन्मुक्त इत्युच्यते ॥ १३

नाभिनन्दति संप्राप्तं नाप्राप्तमभिशोचति ।
केवलं विगताशङ्कं संप्राप्तमनुवर्तते ॥ १४
त्वयापि राघव ज्ञातं ज्ञातव्यमखिलान्तरम् ।
ननु ते सर्वकार्येभ्यो वासना तनुतां गता ॥ १५
शरीरातीतवृत्तिस्त्वं शरीरस्थोऽथवा भव ।
मागाः शोकं च हर्षं त्वं त्वमात्मा विगतामयः ॥ १६
त्वय्यात्मनि सिते स्वच्छे सर्वगे सर्वदोदिते ।
कुतो दुःखसुखे राम कुतो मरणजन्मनी ॥ १७
अबन्धुरपि कस्मात्त्वं बन्धुदुःखानि शोचसि ।
अद्वितीये स्थिते ह्यस्मिन्बान्धवाः क इवात्मनि ॥ १८
दृश्यते केवले देहे परमाणुचयः परम् ।
देशकालान्यतापत्तेर्नात्मोदेति न लीयते ॥ १९
अविनाशोऽपि कस्मात्त्वं विनश्यामीति शोचसि ।
अमृत्युवसतौ स्वच्छे विनाशः क इवात्मनि ॥ २०
घटे कपालतां याते घटाकाशो न नश्यति ।
यथा तथा शरीरेऽस्मिन्नष्टेऽपि न विनश्यति ॥ २१
मृगतृष्णातरङ्गिण्यां क्षीणायामातपो यथा ।
न नश्यति तथा देहे नष्टे नात्मा विनश्यति ॥ २२
वाञ्छैवोदेति ते कस्माद्भ्रान्तिरन्तर्निरर्थिका ।
अद्वितीयो द्वितीयं किं यद्वस्त्वात्माभिवाञ्छतु ॥ २३
श्रव्यं स्पृश्यं तथा दृश्यं रस्यं घ्रेयं च राघव ।
न किंचिदस्ति जगति व्यतिरिक्तं यदात्मनः ॥ २४
सर्वशक्ताविमास्तस्मिन्नात्मन्येवाखिलाः स्थिताः ।
शक्तयो वितते व्यक्ते आकाश इव शून्यता ॥ २५
चित्ताद्राघव रूढेयं त्रिलोकीललनोदिता ।
त्रिविधेन क्रमेणेह जन्मना जनितभ्रमा ॥ २६
मनःप्रशमने सिद्धे वासनाक्षयनामनि ।
कर्मक्षयाभिधानैव मायेयं प्रविनश्यति ॥ २७

---

नेनेत्यादिना ॥ ६ ॥ ७ ॥ चतुर्थभूमिकावतारप्रकारमाह—**यदैवेति** ॥ ८ ॥ पञ्चम्यवतारमाह—**तद्वशादिति** । तन्नाम व्याचष्टे—**कर्मफलेनेति** ॥ ९ ॥ षष्ठ्यां भूमौ ततोऽवतारमाह—**अथेति** । असत्ये बाह्येऽर्थे भावनातानवं सदैवतान्तरमुखतयावस्थानेन ब्रह्माहंभाववासनोपचयेन बाह्यार्थस्य क्रमेण विस्मरणमित्यर्थः ॥ १० ॥ कियत्कालं तदभ्यासस्तत्राह—**यावदिति** । न कुर्वन् समाधिस्थोऽपि । व्यवहरन् व्युत्थितोऽपि । बाह्यं स्नानभोजनादि कुर्वन्नपि न पश्यति । अतएव नालम्बनेन रुच्या सेवते, नाभिध्यायति न स्मरति । मूढः शिशुरुन्मत्तो वा सुप्तप्रबुद्ध इव कर्तव्यं स्नानभोजनादि परेच्छया करोति ॥ ११ ॥ तनुभावितमनस्कः सूक्ष्मतमब्रह्मैकरसीकृतचित्तस्तेनोक्तलक्षणेन योगभूमिकां भावनां पदार्थाभावनाख्यां अधिरूढो भवतीति शेषः ॥ १२ ॥ सप्तमभूमिकावतारक्रममाह—**इत्यन्तर्लीनचित्त इति** । इति उक्तप्रकारेणान्तर्ब्रह्मणि लीनचित्तः परेच्छया कार्यमात्रेण कदाचिद्बाह्यपदार्थान्स्नानभोजनादीन्कुर्वन्नपि सर्वथैव तद्भावनां त्यजति । तुर्यात्मा स्वयमेव भवति । षष्ठभूमिकापर्यन्तं चित्तस्य ब्रह्माकारतास्थैर्ये लेशतो यत्नानुवृत्तिरस्ति । सप्तम्यां तु भूमिकायां सर्वथैव तन्निवृत्त्या स्वारसिकी प्रतिष्ठेति विशेष इति भावः । स एव जीवन्मुक्त इत्युच्यते ॥ १३ ॥ यद्यपि प्राक्तनभूमिष्वपि कृतसाक्षात्कारा जीवन्मुक्ता एव तथापि तेषां कदाचित्प्रबलप्रारब्धोपनीतप्रियाप्रियस्पर्शसत्त्वान्न मुख्यं जीवन्मुक्तिसुखं, सप्तम्यां तु भूमिकायां योगपरिपाकजन्यपुण्यातिशयेनात्युत्कटेन तिरस्कृतं प्रारब्धकर्म जीवनव्यवहाराभासमात्रे व्यवतिष्ठते न हर्षशोकादिजननाय प्रभवतीत्याशयेन तल्लक्षणं पर्येनाह—**नाभिनन्दतीति** ॥ १४ ॥ तव तु अत्यन्तशुद्धचित्तत्वाद्द्वितीयभूमिकायामेव स्वविचारेणैव प्रत्यगात्मतत्त्वं परिज्ञातमित्याशयेनाह—**त्वयेति** ॥ १५ ॥ शरीरातीतवृत्तिः सदैव समाधिस्थः । शरीरस्थो लोकसंग्रहव्यवहारी ॥ १६ ॥ सिते स्वयंप्रभे । स्वच्छे निर्मले ॥ १७ ॥ आत्मबोधेन मरणजन्मादिप्रयुक्तशोकजयेऽपि बान्धवसङ्गजः शोकः कथं जय्यस्तत्राह—**अबन्धुरिति** ॥ १८ ॥ बन्धूनां देहः शोकार्ह उतात्मा । नाद्य इत्याह—**दृश्यत इति** । केवले भस्मीभूते । परमाणुचयस्त्वचेतनत्वादेव न शोकार्ह इत्यर्थः । न द्वितीय इत्याह—**देशेति** ॥ १९ ॥ २० ॥ न विनश्यति आत्मेति शेषः ॥ २१ ॥ २२ ॥ ॥ २३ ॥ २४ ॥ नन्वातपे मृगतृष्णाभ्रमशक्तय इव जगच्छक्तयस्तर्हि पृथक् स्युस्तत्राह—**शक्तय इति** ॥ २५ ॥ तर्ह्यत्यन्तासतो जगतः प्ररोहे किं बीजमिति चेच्चित्तमेवेति प्रागुक्तमेवेत्याह—**चित्तादिति** । उदिता प्रागुक्ता । त्रिविधेन सात्त्विकादिना क्रमेण ॥ २६ ॥ अतएव चित्तक्षयात्तत्क्षय इत्याह—**मन**

---

१ स्वात्मन्यवक्षीण इति पाठः. २ सदैवान्तर्मुखतया इति पाठः. ३ पर इति पाठः.

संसारोग्रारघट्टेऽस्मिन्नारूढा यन्त्रवाहिनी ।
रज्जुस्तां वासनामेतां छिन्धि राघव यत्नतः ॥ २८
अपरिज्ञायमानैषा महामोहप्रदायिनी ।
परिज्ञाता त्वनन्ताख्या सुखदा ब्रह्मदायिनी ॥ २९
आगता ब्रह्मणो भुक्त्वा संसारमिह लीलया ।
पुनर्ब्रह्मैव संस्मृत्य ब्रह्मण्येव विलीयते ॥ ३०
शिवाद्राघव नीरूपादप्रमेयान्निरामयात् ।
सर्वभूतानि जातानि प्रकाशा इव तेजसः ॥ ३१
रेखावृन्दं यथा पर्णे वीचिजालं यथा जले ।
कटकादि यथा हेम्नि तथोष्णादि यथाऽनले ॥ ३२
तदेतद्भावनारूपे तथेदं भुवनत्रयम् ।
तस्मिन्नेव स्थितं जातं तस्मादेव तदेव च ॥ ३३
स एव सर्वभूतानामात्मा ब्रह्मेति कथ्यते ।
तस्मिञ्ज्ञाते जगज्ज्ञातं स ज्ञाता भुवनत्रये ॥ ३४
शास्त्रसंव्यवहारार्थं तस्यास्य वितताकृतेः ।
चिद्ब्रह्मात्मेति नामानि कल्पितानि कृतात्मभिः ॥ ३५
विषयेन्द्रियसंयोगे हर्षामर्षविवर्जिता ।
सैषा शुद्धानुभूतिर्हि सोऽयमात्मा चिदव्ययः ॥ ३६
आकाशातितराच्छाच्छ इदं तस्मिंश्चिदात्मनि ।
स्वाभोग एव हि जगत्पृथग्वत्प्रतिबिम्बति ॥ ३७
बुद्धिस्तद्व्यतिरेकेण लोभमोहादयो हि तान् ।
पात्यसद्व्यतिरेकेण ते च तस्मिंस्तदेव ते ॥ ३८
अदेहस्यैव ते राम निर्विकल्पचिदाकृतेः ।
लज्जाभयविषादेभ्यः कुतो मोहः समुत्थितः ॥ ३९
अदेहो देहजैरेभिर्लज्जादिभिरसन्मयैः ।
किं मूर्ख इव दुर्बुद्धिर्विकल्पैरभिभूयसे ॥ ४०
अखण्डचितिरूपस्य देहे खण्डनमागते ।
असम्यग्दर्शिनोऽप्यस्ति न नाशः किमु सन्मतेः ॥ ४१
आपतेदर्कमार्गेऽपि न निरुद्धगमागमम् ।
चित्तं नाम स विज्ञेयः पुरुषो न शरीरकम् ॥ ४२
शरीरे सत्यसति वा पुमानेव जगत्त्रये ।
ज्ञोऽप्यज्ञोऽपि स्थितो राम नष्टे देहे न नश्यति ॥ ४३
यानीमानि विचित्राणि दुःखानि परिपश्यसि ।
तानि देहस्य सर्वाणि नाग्राह्यस्य चिदात्मनः ॥ ४४
मनोमार्गादतीतत्वाद्यासौ शून्यमिव स्थिता ।
चित्कथं नाम दुःखैर्वा सुखैर्वा परिगृह्यते ॥ ४५
स्वास्पदात्मानमेवासौ विनष्टाद्देहपञ्जरात् ।
अभ्यस्तां वासनां यातः षट्पदः खमिवाम्बुजात् ॥ ४६
असच्चेदात्मतत्त्वं तदस्मिंस्ते देहपञ्जरे ।
नष्टे किं नाम नष्टं स्याद्राम केनानुशोचसि ॥ ४७

---

इति । कर्मणां क्रियादिशक्तीनां क्षयो निवासस्तदभिधाना ॥२७॥ आरघट्टे । पेषणयन्त्राधःशिलामध्यशङ्काविति यावत् । आरूढा तिर्यक्काष्ठप्रान्ते आरोपिता । अतएव यन्त्रमूर्ध्वपेषणपाषाणं वहति तच्छीला रज्जुः । तथाहि । पृथ्वी अधोयन्त्रशिलेव, मेरुस्तच्छङ्कुरिव, ज्योतिश्चक्रमूर्ध्वशिलायन्त्रमिव, वासनावष्टब्धं जगद्दृश्यत इति भावः ॥ २८ ॥ २९ ॥ संसारं भुक्त्वा स्वलीलाभूतयैव ब्रह्मविद्यया ब्रह्मैव संस्मृत्य ब्रह्मण्येव विलीयत इत्यन्वयः ॥ ३० ॥ ३१ ॥ रेखावृन्दं शिराजालम् ॥ ३२ ॥ भावनारूपे वासनावच्छिन्ने ब्रह्मणि ॥ ३३ ॥ तदेकविज्ञानेन सर्वं विज्ञातमित्याह—**तस्मिन्निति** । **स ज्ञाते**ति । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेरिति भावः ॥३४॥३५॥ प्रियाप्रियविषयाणामिन्द्रियैः सह दैवात्संयोगेऽपि तेषु मिथ्यात्वनिश्चयाद्धर्षामर्षविवर्जिता सैषोक्तलक्षणा जीवन्मुक्तानुभूतिरेव स प्रसिद्ध आत्मा नतु मूढैरनुभूयमानः संसारस्वभाव इत्यर्थः ॥ ३६ ॥ हर्षामर्षविवर्जितेति यदुक्तं तदुपपादनायाह—**इदं तस्मिन्नि**त्यादिना । स्वाभोगे स्वान्तरेव जगत्पृथग्वत् अन्यदिव प्रतिबिम्बति, तस्य च शुद्धसाक्षिणा प्रियाप्रियभागेन विवेक्तुमशक्यत्वात्तद्विवेकाय तदुभयव्यतिरेकेणान्तराले बुद्धिरन्तःकरणं प्रतिबिम्बति सैव प्रियाप्रियविकल्पनैर्लोभमोहादयो ये भावास्तान्याति न त्वात्मेत्यर्थः ॥ ३७ ॥ ते च जगत्तद्बुद्धितत्प्रयुक्तलोभमोहादयः असतैव व्यतिरेकेण परस्परभेदेन तस्मिंश्चिदात्मनि प्रतिबिम्बिता इति परमार्थतस्तदात्मरूपमेव । तेन हि 

न्तर्दृश्यमानाः पर्वतवननद्यादयः सन्तीत्यर्थः ॥ ३८ ॥ एवंच देहात्मबुद्धीनां मूढानामेव भयविषादादयो युक्ता नतु तवेत्याह—**अदेहस्यैवे**त्यादिना ॥ ३९ ॥ ४० ॥ ४१ ॥ असम्यग्दर्शिनोऽपि न नाश इति यदुक्तं तदुपपादयितुं देहाद्व्यतिरिक्तचित्तात्मानं व्युत्पादयति—**आपतेदि**ति । यच्चित्तं संचारस्वातन्त्र्यात्सर्वत्र आपतेत् । अर्कस्य मार्गे निरालम्बनेऽपि यन्न निरुद्धा गमागमाः संचारा यस्य तथाविधं तच्चित्तमेव पुरि शेते इति पुरुषः संसार्यात्मा विज्ञेयो नतु शरीरमित्यर्थः ॥ ४२ ॥ ४३ ॥ इदानीमसंसार्यात्मानं दर्शयितुं चित्तमपि देहकोटावेव निक्षिप्य देहस्यैव प्रियाप्रियस्पर्श इत्याह—**यानी**ति ॥ ४४ ॥ परिगृह्यते व्याप्यते ॥ ४५ ॥ ननु नष्टे देहे जीवः क्व याति तत्राह—**स्वास्पदात्मान**मिति । असौ जीवो विनष्टाद्देहपञ्जराद्विनष्टदेहाभिमानं परित्यज्य प्रथमं स्वास्पदं स्वप्रतिष्ठाभूतं परमात्मानमेव याति । 'मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति श्रुतेर्मनःप्राणाद्युपाधिविलयाद्बिम्बभूतेश्वरैक्यं गच्छतीत्यर्थः । तर्हि कुतो न मुच्यते तत्राह—**अभ्यस्ता**मिति । भेदवासनामूलोच्छेदिज्ञानानुदयान्न मुच्यत इति भावः ॥ ४६ ॥ ननु यदि जीवः प्रतिबिम्बस्तर्हि तस्योपाध्यतिरिक्तसत्त्वायोगादसत्त्वमुपाधिनाशेन नाशश्च स्यादिति चेदस्त्वेवं तथापि न त्वं जीव इति तदसत्त्वे नाशे वा न तव शोको युक्त इत्याह—**असदि**ति । तत्प्रसिद्धमात्मतत्त्वं जीवरूपम् ॥ ४७ ॥ वस्तुतस्तु प्रतिबिम्बो बिम्बमेव । बिम्बस्यैवोपाध्यनुप्रवेशभेदादिकल्पनया

सत्यं भावय तेन त्वं मा मोहमनुभावय ।
निरिच्छस्यात्मनो नेच्छा काचिदप्यनघाकृतेः ॥ ४८
साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि ।
निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा ॥ ४९
साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि ।
स्वयं जगन्ति दृश्यन्ते सन्मणाविव रश्मयः ॥ ५०
अनिच्छमपि संबन्धो यथा दर्पणबिम्बयोः ।
तथैवेहात्मजगतोर्भेदाभेदौ व्यवस्थितौ ॥ ५१
सूर्यसंनिधिमात्रेण यथोदेति जगत्क्रिया ।
चित्सत्तामात्रकेणेदं जगन्निष्पद्यते तथा ॥ ५२
पिण्डग्रहो निवृत्तोऽस्या एवं राम जगत्स्थितेः ।
आकाशमेषा संपन्ना भवतामपि चेतसि ॥ ५३
सत्तामात्रेण दीपस्य यथालोकः स्वभावतः ।
चित्तत्त्वस्य स्वभावात्तु तथेयं जागती स्थितिः ॥ ५४

पूर्वं मनः समुदितं परमात्मतत्त्वा-
त्तेनाततं जगदिदं स्वविकल्पजालैः ।
शून्येन शून्यमपि तेन यथाम्बरेण
नीलत्वमुल्लसितचारुतराभिधानम् ॥ ५५
संकल्पसंक्षयवशाद्गलिते तु चित्ते
संसारमोहमिहिका गलिता भवन्ति ।
स्वच्छं विभाति शरदीव खमागतायां
चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥ ५६
कर्मात्मकं प्रथममेव मनोऽभ्युदेति
संकल्पतः कमलजप्रकृतीस्तदेत्य ।
नानाभिधं जगदिदं हि मुधा तनोति
वेतालदेहकलनामिव मुग्धबालः ॥ ५७
असन्मयं सदिव पुरो विलक्ष्यते
पुनर्भवत्यथ परिलीयते पुनः ।
स्वयं मनश्चिति चितसंस्फुरद्वपु-
र्महार्णवे जलवलयावली यथा ॥ ५८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषूत्पत्तिप्रकरणे स्वरूपनिरूपणं नाम द्वाविंशत्युत्तरशततमः सर्गः ॥ १२२ ॥

प्रतिबिम्बत्वेन ग्रहणात् । जडोपाधिकार्यत्वे चिदाभासस्य जडत्वापत्तौ संसारभानाभोगाच । तेन त्वं जीवं तदुपाधिपरित्यागेन सत्यं ब्रह्मैवेति भावय संभावय, मोहं भ्रान्तिप्राप्तमसच्चश्वरदेहादिभावं मानुभावय । पूर्णब्रह्मभावतृप्तत्वादेव निरिच्छस्य ॥४८॥ तर्हीच्छां विना तस्य कथं सर्गादिसिद्धिस्तत्राह—**साक्षिभूते** इति ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ पिण्डग्रहो मूर्ताकारः । एवं उक्तोपदेशप्रकारेण । भवतामिति रामातिरिक्तान् श्रोतॄन् प्रत्युक्तिः ॥५३॥ आलोकः प्रभा ॥५४॥ विस्तरोक्तं प्रकरणार्थं संक्षिप्य दर्शयन्नुपसंहरति–**पूर्वं**मित्यादिना । यथा शून्येनाम्बरेणाकाशेन शून्यमसदपि नीलत्वं सर्वजनानुभवेनोल्लसितमवाङ्मुखीकृतस्निग्धेन्द्रनीलमणिमयमहाकटाहमिव नीलं नभो दृश्यते इत्युपमोत्प्रेक्षादियोग्यतया चारुतरमभिधानं वाग्व्यवहारो यस्मिंस्तथाविधमाततं विस्तारितं तथा तेन मनसापीदं जगदित्यर्थः॥५५॥ अतएव निमित्तापाये नैमित्तिकापायान्निर्मलात्ममात्रपरिशेषसिद्धिरित्याह—**संकल्पे**ति । मिहिकास्तुषाराः । शरदि समागतायां खमाकाशमिव स्वच्छं चिन्मात्रमन्तः प्रत्यगात्मस्वभावे ॥५६॥ व्यष्टिभ्रमकल्पनायामिव समष्टिसृष्टिकल्पनायामपि मनोधीनावेवाविर्भावतिरोभावाविति दर्शयति—**कर्मात्मक**मिति । सकलप्राणिकर्मसमष्ट्यात्मकं समष्टिक्रियाशक्तिप्रधानं च मनः प्रथममुदेति आविर्भवति । ततस्तत्र चित्प्रतिबिम्बात्कमलजमन्वादिरूपाः प्रकृतीः स्रष्टृशरीराण्येत्य स्वीकृत्य संकल्पतो नानाभिधं जगन्मुधा व्यर्थमेव तनोति सृजतीत्यर्थः ॥ ५७ ॥ तस्माद्दृश्यं सर्वं व्यष्टिसमष्टिभेदकल्पितमनोमात्रं मनश्चासदज्ञानकार्यत्वादित्यसत एवाधिष्ठानसाक्षिसत्तास्फूर्तिबलेन सत्तया स्फुरणमुत्पत्तिरिति रीत्या जगज्जन्मादिविवर्तोपादानत्वं ब्रह्मणस्तटस्थलक्षणं तेन निष्प्रपञ्चसचिदानन्दैकरसं पूर्णं ब्रह्मैव परमार्थभूतं लक्ष्यत इति सर्वसृष्टिश्रुतीनां तात्पर्यार्थ इति सिद्धमित्याशयेनाह—**असन्मय**मिति । असदज्ञानं तन्मयं तत्परिणामभूतं मनः स्वयमेव चिति स्वाधिष्ठानचैतन्ये चितेन उपचयेन संस्फुरज्जगद्वपुः पुरः सदिव साक्षिणा विलोक्यते । यथा महार्णवे पूर्णे तत्सत्तामात्रसिद्धापरिच्छिन्नजलवलयानां पङ्क्तिरित्यर्थः । तस्माद्दृश्यमात्रस्य वाचारम्भणत्वादृतत्वात्प्रत्यगेकरसं पूर्णं ब्रह्मैवाविकृतं सदास्ते इति सिद्धम् ॥ ५८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीमद्रामचन्द्रसरस्वतीपूज्यपादशिष्यश्रीमद्गङ्गाधरेन्द्रसरस्वतीपूज्यपादशिष्येण श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे स्वरूपनिरूपणं नाम द्वाविंशत्युत्तरशततमः सर्गः ॥ १२२ ॥

## समाप्तमिदमुत्पत्तिप्रकरणम् ॥



श्रीः ।

# योगवासिष्ठः ।

## श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशाख्यव्याख्यासंवलितः ।

## स्थितिप्रकरणं चतुर्थम् ।

### प्रथमः सर्गः १

अथोत्पत्तिप्रकरणादनन्तरमिदं शृणु ।
स्थितिप्रकरणं राम ज्ञातं निर्वाणकारि यत् ॥ १
एवं तावदिदं विद्धि दृश्यं जगदिति स्थितम् ।
अहं चेत्याद्यनाकारं भ्रान्तिमात्रमसन्मयम् ॥ २
अकर्तृकमरङ्गं च गगने चित्रमुत्थितम् ।
अद्रष्टृकं चानुभवमनिद्रं स्वप्नदर्शनम् ॥ ३
भविष्यत्पुरनिर्माणं चित्तसंस्थमिवोदितम् ।
मर्कटानलतापान्तमसदेवार्थसाधकम् ॥ ४
ब्रह्मण्यनन्यदन्याभमम्ब्वावर्तवदास्थितम् ।
सद्रूपमपि निःशून्यं तेजः सौरमिवाम्बरे ॥ ५
रत्नाभापुञ्जमिव खे दृश्यमानमभित्तिमत् ।
गन्धर्वाणां पुरमिव दृश्यं नित्यमभित्तिमत् ॥ ६
मृगतृष्णाम्बुवद्वासत्यं सत्यवत्प्रत्ययप्रदम् ।
संकल्पपुरवत्प्रौढमनुभूतमसन्मयम् ॥ ७
कथार्थप्रतिभानात्म न क्वचित्स्थितमस्थितम् ।
निःसारमप्यतीवान्तःसारं स्वप्नाचलोपमम् ॥ ८

सदभयनिजपूर्णानन्दसंवित्प्रतिष्ठं
यदिह निजमहिम्ना विश्वरूपाणि बिभ्रत् ।
विहरति च विमोहात्तेषु नानात्मबुद्ध्या
श्रुतिविदितसतत्त्वं तत्परं ब्रह्म वन्दे ॥ १ ॥

प्रसिद्धचित्रवैधर्म्यं जगच्चित्रस्य वर्ण्यते ।
सांख्यादिमतमुन्मृज्य साध्यते ब्रह्ममात्रता ॥ १ ॥

उत्पत्तिप्रकरणे 'यतो वा इमानि भूतानि जायन्ते' इत्यादीनां सर्वेषां सृष्टिप्रतिपादकवाक्यानामद्वये ब्रह्मणि जगदध्यारोपप्रदर्शनद्वारा तटस्थलक्षणतया तात्पर्यविश्रान्तिप्रदर्शनमुखेन जगज्जीवादिभेदं निरस्य प्रत्यग्ब्रह्मैकरस्यं व्युत्पादितम् । इदानीं 'येन जातानि जीवन्ति', 'येन द्यौः पृथिवी दृढा', 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः', 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादेष ह्येवानन्दयाति', 'भीषास्माद्वातः पवते', 'एको दाधार भुवनानि विश्वा', 'य एको जालवानीशत ईशनीभिः परमशक्तिभिः' 'अनुज्ञाता ह्ययमात्मास्य सर्वस्य स्वात्मानं दधाति' इत्यादि सांप्रतिकजगत्स्थितिनिर्वाहकताप्रतिपादकश्रुतीनाम्, 'सदेव सोम्येदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिप्रलयकालिकजगत्सत्तानिर्वाहकत्वप्रतिपादकश्रुतीनां च पुरुषमतिवैचित्र्यप्रभवनानातात्पर्योत्प्रेक्षणयुक्तभ्रान्तिवैचित्र्यनिरासेन सच्चिदानन्दैकरसे ब्रह्मणि सच्चिद्रूपतोपपादनेन तटस्थलक्षणतात्पर्यपर्यवसानप्रदर्शनमुखेनापि विस्तरोपपादितं ब्रह्मैक्यज्ञानं स्थिरीकर्तुं स्थितिप्रकरणमारभमाणो भगवान्वसिष्ठः संगतिं प्रदर्शयन्प्रतिजानीते—**अथेति** । उत्पत्तेः स्थितिहेतुत्वाद्धेतुतासंगतिरिति भावः । एवमेककार्यत्वसंगतिरप्यस्तीत्याशयेनाह—**ज्ञातमिति** । आनन्तर्याधिकारपरोऽप्यथशब्दः शङ्खवीणामृदङ्गध्वनिवत्स्वरूपतो मङ्गलमेवेति प्रकरणादौ मङ्गलमप्याचरितं बोध्यम् ॥ १ ॥ जगदुत्पत्तौ मिथ्यात्वप्रदर्शनाय व्युत्पादिता न्यायाः स्थितावपि तुल्या इत्यतिदेशेन दर्शयति—**एवं तावदि**त्यादिना ॥२॥ अकर्तृकं हेतुकरणोपकरणसंपन्नलेखकशून्यम् । अरङ्गमुपादानरञ्जकद्रव्यशून्यम् । गगने इत्यनेनाधारभित्त्यादिशून्यतापि चित्रस्य दर्शिता । द्रष्टुरपि दृश्यान्तःपातादद्रष्टृकम् । मोहनिद्रया प्रमातुरभिभवेऽपि साक्षिणोऽनभिभवादनिद्रम् ॥३॥ मर्कटैः कल्पितोऽनलो गुञ्जागैरिकादिसंचयरूपस्तत्तापोऽन्तो दृष्टान्तो यस्य । तेनापि तेषां शीतनिवृत्तिरैतिह्यप्रसिद्धेत्याशयेनोक्तमसदेवार्थसाधकमिति ॥ ४ ॥ सौरं तेज आलोको न त्वातपः ॥ ५ ॥ अभित्तिमदनाधारम् ॥ ६ ॥ प्रौढं विस्तृतम् । स्फुटमनुभूतमिति वा ॥ ७ ॥ कविकल्पित-

१ तद्रूपम् इति पाठः.

२ दृश्यमानं इति पाठः.

भूताकाशमिवाकारभासुरं शून्यमात्रकम् ।
शरदभ्रमिवाग्रस्थमलमक्षयमक्षतम् ॥ ९

वर्णो व्योममलस्येव दृश्यमानमवस्तुकम् ।
स्वप्नाङ्गनारताकारमर्थनिष्ठमनर्थकम् ॥ १०

चित्रोद्यानमिवोत्फुल्लमरसं सरसाकृति ।
प्रकाशमपि निस्तेजश्चित्रार्कानलवत्स्थितम् ॥ ११

अनुभूतं मनोराज्यमिवासत्यमवास्तवम् ।
चित्रपद्माकर इव सारसौगन्ध्यवर्जितम् ॥ १२

शून्ये प्रकचितं नानावर्णमाकारितात्मकम् ।
अपिण्डग्रहमाशून्यमिन्द्रचापमिवोत्थितम् ॥ १३

परामर्शेन शुष्यद्भिर्भूतपेलवपल्लवैः ।
कृतं जडमसारात्म कदलीस्तम्भभासुरम् ॥ १४

स्फुरितेक्षणदृष्टान्धकारचक्रकवर्तनम् ।
अत्यन्तमभवद्रूपमपि प्रत्यक्षवत्स्थितम् ॥ १५

वार्बुद्बुदमिवाभोगि शून्यमन्तःस्फुरद्वपुः ।
रसात्मकं चाप्यरसमविच्छिन्नक्षयोदयम् ॥ १६

नीहार इव विस्तारि गृहीतं सन्न किंचन ।
जडशून्यास्पदं शून्यं केषांचित्परमाणुवत् ॥ १७

किंचिद्भूतमयोऽसीति स्थितं शून्यमभूतकम् ।
गृह्यमाणोऽप्यसद्रूपो निशाचर इवास्थितम् ॥ १८

श्रीराम उवाच ।

महाकल्पक्षये दृश्यमास्ते बीज इवाङ्कुरः ।
परे भूय उदेत्येतत्तत एवेति किं वद ॥ १९

एवंबोधाः किमज्ञाः स्युरुत ज्ञा इति च स्फुटम् ।
यथावद्भगवन्ब्रूहि सर्वसंशयशान्तये ॥ २०

श्रीवसिष्ठ उवाच ।

इदं बीजेऽङ्कुर इव दृश्यमास्ते महाशये ।
ब्रूते य एवमज्ञत्वमेतत्तस्यास्ति शैशवम् ॥ २१

शृण्वेतत्किमसंबन्धं कथमेतदवास्तवम् ।
विपरीतो बोध एष वक्तुः श्रोतुश्च मोहकृत् ॥ २२

बीजे किलाङ्कुर इव जगदास्त इतीह या ।
बुद्धिः सा सत्प्रलापार्थं मूढा शृणु कथं किल ॥ २३

---

कथार्थनगरपर्वतादिसंस्थानप्रतिभानमिवात्मा स्वरूपं यस्य । क्वचिदपि देशे काले वा न स्थितमिति हेतोरस्थितमसत् । अन्तःसारमतिदृढम् ॥ ८ ॥ अवाङ्मुखीकृतेन्द्रनीलमहाकटाहाकारभासुरम् । यावदग्रस्थं तावदलमातपनिरोधादिसमर्थम् । क्षेतुमशक्यमक्षतमविच्छिन्नं च ॥ ९ ॥ व्योममलस्य कालिम्नो वर्णः स्निग्धता । राहोः शिर इतिवद्वा । 'व्योमतलस्य' इति पाठे स्पष्टम् । अर्थनिष्ठं भोगलक्षणार्थक्रियाकारि ॥१०॥ अरसं शुष्कं निर्मकरन्दं च ॥ ११ ॥ असत्यं स्वतः । अवास्तवं फलतोऽपि । सारो मकरन्दपरागादिः ॥ १२ ॥ पिण्डग्रहो मूर्तता तच्छून्यम् ॥ १३ ॥ परस्य परमात्मन आमर्शेनेषद्विचारेणापि । परस्यान्यस्य वाग्वातपजनादेरामर्शेनेषदभिघातेनापि च । कदलीस्तम्भः कदलीतरुः ॥ १४ ॥ स्फुरितेक्षणेनाक्षिरोगविशेषेण । अभवद्रूपमसंभवद्रूपम् ॥ १५ ॥ आभोगि कल्पिताकारम् । रस आपातरमणीयता तदात्मकमप्यरसं परिणामकटुकम् । तदेव प्रपञ्चयति—**अविच्छिन्नेति** । क्षयोदया जन्ममरणानि ॥१६॥ सांख्यानां केवलजडात्मकम् । जडशून्यमविद्या तदास्पदं वेदान्तिनाम् । शून्यं माध्यमिकानाम् । क्षणिकत्वात्कालतः परमाणुवद्योगाचार्याणाम् । कालतो देशतश्च परमाणुवत्सौत्रान्तिकवैभाषिकयोः । देशत एव परमाणुवत्कणादगौतमीययोः । अनियतस्वभावपरमाणुवदार्हतानामिति वादिभिर्बहुधा विकल्पितमित्यर्थः ॥ १७ ॥ बाह्ये जगत्युक्तन्यायमाध्यात्मिकेऽपि दर्शयन्नाह—**किंचिदिति** ॥ १८ ॥ नन्वेवं जगत्स्वतः सत्ताशून्यं ब्रह्मसत्ता च जगन्न स्पृशति तदा 'सदेव सोम्येदमग्र आसीत्' इत्यादीनां सत्कार्यवादिश्रुतीनां तदनुसारिव्यासकपिलाद्युपबृंहणानां कथं सामञ्जस्यं स्यादिति मन्यमानो रामः पृच्छति—**महाकल्पेति** । इति यद्व्यासादिभिरुक्तं तर्हि  मित्यर्थः ॥ १९ ॥ एवं प्रलये स्वसत्तया कारणे जगदस्तीति प्रकारेण बोधो येषां ते कपिलादयः ॥ २० ॥ महति शये शयने प्रलये । एतद्वक्ष्यमाणप्रकारं शैशवमसञ्जातमविवेचनेऽपि जगत्सत्यताविश्वासदार्ढ्यलक्षणं बाल्यमस्ति ॥ २१ ॥ एतद्वक्ष्यमाणयुक्तिजातं शृणु । कारणे प्रागुत्पत्तेः कार्यमस्तीति वदन्प्रष्टव्यः किं तत्सत्तासामान्येनास्ति उत बीजादिसत्तया उताङ्कुरादिसत्तया । आद्ये तदङ्कुरादि किमसंबन्धं केन असंबन्धो यस्य तथाविधम् । सामान्यसत्तायाः सर्ववस्तुसाधारण्याज्जायमानाङ्कुरादेः सर्वत्र संबन्धप्रसङ्ग इत्यर्थः । अस्त्विष्टापत्तिरिति चेत् एतदङ्कुरादिक्षेत्रे अङ्कुरितबीजे दृष्टमेव वास्तवम् । कुसूलस्थबीजे शिलाशकले वा भ्रान्तिदृष्टमवास्तवमित्येतत्कथमित्यर्थः । द्वितीयेऽपि बीजसत्ताया अङ्कुरसंबन्धस्य घटपटादिसंबन्धस्य च स्वरूपतो विशेषानिरूपणान्न विद्यते संबन्धो यस्य तदसंबन्धं किं वस्तु यद्बीजेन स्यादिति । व्रीह्यादिबीजे सर्वजगत्सत्त्वप्रसङ्गः । इष्टापत्तावङ्कुरितबीजेऽङ्कुराद्येव वास्तवं न घटपटादीत्येतत्कथमित्यर्थः । तृतीयेऽप्यङ्कुरस्वरूपसत्तया बीजसंबन्धस्य घटादिसंबन्धस्य च विशेषानिरूपणादसंबन्धं किं वस्तु । सर्वत्राङ्कुरसद्भावप्रसङ्ग इत्यर्थः । इष्टापत्तौ बीजादावेवाङ्कुरादि वास्तवं नान्यत्रेत्येतत्कथमित्यर्थः । किंच साधारणसत्तया असाधारणमङ्कुराद्यस्ति कारणसत्तया कार्यमस्ति कार्यसत्तया च कारणमस्तीति पक्षत्रयेऽप्युक्तिसंभवाघटनाद्विपरीत एवायं बोध इत्याशयेनाह—**विपरीत** इति ॥ २२ ॥ किंच बीजेऽङ्कुर इव प्रलये जगदस्तीति दृष्टान्तो विषमः । कूटस्थचिदेकरसस्यात्मनो बीजत्वस्यैवासंभवादित्याशयेनाह—**बीजे** इत्यादिना । सत्प्रलापार्थं प्रलये जगत्सत्त्वे दृष्टान्तोपन्यासार्थं या बुद्धिः सा मूढा भ्रान्तिः । दार्ष्टान्तिकवैषम्यादित्यर्थः ॥ २३ ॥

बीजं भवेत्स्वयं दृश्यं चित्तादीन्द्रियगोचरम् ।
यवधानादिधान्यानि युक्तः पत्राङ्कुरोद्भवः ॥ २४
मनःषष्ठेन्द्रियातीतं यत्स्यादतितरामणु ।
बीजं तद्भवितुं शक्तं स्वयंभूर्जगतां कथम् ॥ २५
आकाशादपि सूक्ष्मस्य परस्य परमात्मनः ।
सर्वाख्यानुपलम्भस्य कीदृशी बीजता कथम् ॥ २६
तत्सूक्ष्ममसदाभासमसदेव ह्यतादृशम् ।
कीदृशी बीजता तत्र बीजाभावे कुतोऽङ्कुरः ॥ २७
गगनाङ्गादपि स्वच्छे शून्ये तत्र परे पदे ।
कथं सन्ति जगन्मेरुसमुद्रगगनादयः ॥ २८
न किंचिद्यत्कथं किंचित्तत्रास्ति वस्तु वस्तुनि ।
अस्ति चेत्तत्कथं तत्र विद्यमानं न दृश्यते ॥ २९
न किंचिदात्मनः किंचित्कथमेति कुतोऽथवा ।
शून्यरूपाद्धटाकाशाज्जातोऽद्रिः क्व कुतः कदा ॥ ३०
प्रतिपक्षे कथं किंचिदास्ते च्छायातपे यथा ।
कथमास्ते तमो भानौ कथमास्ते हिमोऽनले ॥ ३१
मेरुरास्ते कथमणौ कुतः किंचिदनाकृतौ ।
तदतद्रूपयोरैक्यं क्व च्छायातपयोरिव ॥ ३२
साकारवटधानादावङ्कुराः सन्ति युक्तिमत् ।
नाकारे तन्महाकारं जगदस्तीत्ययुक्तिकम् ॥ ३३
देशान्तरे यच्च नरान्तरे च
बुद्ध्यादिसर्वेन्द्रियशक्ति दृश्यम् ।
नास्त्येव तत्तद्विधबुद्धिबोधे
न किंचिदित्येव तदुच्यते च ॥ ३४
कार्यस्य तत्कारणतां प्रयातं
वक्तीति यस्तस्य विमूढबोधः ।
कैर्नाम तत्कार्यमुदेति तस्मा-
त्स्वैः कारणाद्यैः सहकारिरूपैः ॥ ३५
दुर्बुद्धिभिः कारणकार्यभावं
संकल्पितं दूरतरे व्युदस्य ।
तदेव तत्सत्यमनादिमध्यं
जगत्तदेतत्स्थितसित्यवेहि ॥ ३६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषु स्थितिप्रकरणे जन्यजनिनिराकरणं नाम प्रथमः सर्गः ॥ १ ॥

---

वैषम्यमेव स्फुटयति—**बीज**मित्यादिना । यवधानाः सतुषयवास्तदादिबीजं दृश्यं दर्शनार्हम् । तथाच तत्राङ्कुराद्यन्वयव्यतिरेकस्य प्रत्यक्षसिद्धत्वात्सावयवत्वात्परिणामिस्वभावत्वादङ्कुरवैजात्यभेदनिर्वाहकजातिसंस्थानादिभेदवत्त्वाच्च युक्तोऽङ्कुरादिबीजभाव इत्यर्थः ॥ २४ ॥ दार्ष्टान्तिके तु न तथेत्याह—**मन** इति । स्वयमेव भवति स्वयं भवत्येवेति च स्वयंभूः कूटस्थाद्वितीयचिदात्मा । तथाच यस्य बीजत्वमेव दुर्घटं दूरे तत्र जगतः स्वसत्तया स्थितिरिति भावः ॥२५॥ २६ ॥ एवं तत्त्वज्ञदृशा बीजत्वासंभवमुक्त्वा अज्ञदृशापि तस्य तदसंभवमाह—**तदि**ति । वस्तुतः अतादृशं सदेकरसम पिसूक्ष्मत्वादज्ञदृशा असदाभासमित्यसदेवेत्यर्थः । अङ्कुरो जगदङ्कुरः ॥ २७ ॥ २८ ॥ २९ ॥ न किंचिदात्मनः 'अथात आदेशो नेति नेति' इति सर्वनिषेधात्मनः ॥ ३० ॥ चिदेकरससत्ताया जडानेकरससत्ताप्रतिपक्षत्वादपि तत्र न जगत्सत्ता संभावितेत्याह—**प्रतिपक्षे** इति ॥ ३१ ॥ ननु मास्तु भेदेन सत्तदैक्येन तु स्यात्तत्राप्याह—**तदतद्रूपयो**रिति । चिदचिद्रूपयोरित्यर्थः ॥ ३२ ॥ नाकारे अनाकारे । नायं नञ् किंतु नशब्दोऽन्यः प्रतिषेधार्थः समस्यते ॥ ३३ ॥ किंचायं सांख्यादिभिः कल्पितः कारणे जगत्सद्भावः स किं लौकिकप्रमाणबलादुत 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिबलात् । नाद्य इत्याह—**देशान्तरे** इति । यद्बुद्ध्यादिसर्वेन्द्रियशक्ति दृश्यं घटपटादि तदधिकरणदेशाद्देशान्तरे तदधिकरणकालात्कालान्तरे च साक्षात्स्वयं द्रष्टरि नरान्तरे वा द्रष्टरि सत्यसति च तत्तद्विधप्रत्यक्षानुमानादिबुद्धिवृत्तिलक्षणे बोधे नास्त्येव न भात्येव तद्दृश्यादर्शनादियोग्यानुपलब्धिवशान्न किंचिदसदेवेति सर्वैर्लौकिकप्रामाणिकैरुच्यते । अतः सर्वलौकिकानुपलम्भविरुद्धं प्रलये जगत्सद्भावकल्पनमित्यर्थः ॥ ३४ ॥ न द्वितीयोऽपीत्याह—**कार्यस्ये**ति । 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिषु न कार्यकारणयोर्द्वे सत्ते प्रतीयेते । 'एकमेवाद्वितीयम्' इति वाक्यशेषविरोधात् । तत्रैतद्विमृश्यताम्—किं कार्यमेव सत् तत्कार्यसत्त्वमेव कारणतां प्रयातं कारणे आरोपितं श्रुतिर्वक्तीति वा कारणमेव सत्तत्सत्त्वमेव कार्ये आरोपितमिति श्रुतिर्वक्तीति वा । अथवा सदेव सत् सत्सत्तैव कार्यकारणयोरारोपितेति । तत्र तस्य सांख्यस्य बोधः स आद्यपक्षानुसारी चेत् स विमूढबोधो भ्रम एव । 'वाचारम्भणं विकारो नामधेयम्' इत्यादिकार्यानृतत्वपरश्रुत्यननुगुणत्वात्कारणानृतत्वापादकत्वेन स्वसिद्धान्तबाधकत्वाच्चेत्याशयेनाह—**कैर्नामे**ति । कारणानां गुणानामेवानृतत्वे तन्महदादिकार्यं कैः कारणैरुदेत्युत्पद्यते नाम । कारणे असति कार्यस्योत्पत्तुमेवाशक्तेरित्यर्थः । अतएव न द्वितीयोऽपि । कार्ये असति तत्तत्कारणताया अपि तद्घटिताया निरूपयितुमशक्तेरिति परिशेषात्तृतीयकल्प एव श्रुत्यभिप्रेतो युक्तश्च परिग्राह्य इत्याह—**तस्मादि**त्याद्युत्तरश्लोकेन ॥ ३५ ॥ तस्मात्कार्यकारणभेदसत्यतायाः श्रुत्यसंमतत्वाद्दुर्बुद्धिभिः सांख्यादिभिः संकल्पितं कारणकार्यभावमुपादानोपादेयभावं स्वैः स्वीयैः सहकारिरूपैः कारणाद्यैर्निमित्तप्रयोजनादिभेदैः सह दूरं व्युदस्य मिथ्येति निरस्य यदेवावशिष्टमनादिमध्यान्तं सन्मात्रं वस्तु तदेवाहिकुण्डलवज्जगदिति स्थितं नान्यदित्यवेहीत्यर्थः ॥ ३६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जन्यजनिनिराकरणं नाम प्रथमः सर्गः ॥ १ ॥

---

१ युक्तस्तत्राङ्कुरोद्भव इति पाठः. २ शक्य इति पाठः.

## द्वितीयः सर्गः २

श्रीवसिष्ठ उवाच ।

अथैतदभ्युपगमे वच्मि वेद्यविदां वर ।
समस्तकलनातीते महाचिद्व्योम्नि निर्मले ॥ १
जगदाद्यङ्कुरस्तत्र यद्यस्ति तदसौ तदा ।
कैरिवोदेति कथय कारणैः सहकारिभिः ॥ २
सहकारिकारणानामभावे त्वङ्कुरोद्गतिः ।
वन्ध्याकन्येव दृष्टेह न कदाचन केनचित् ॥ ३
सहकारिकारणानामभावे यद्यवोदितम् ।
मूलकारणमेवाङ्ग तत्स्वभावस्थितिं गतम् ॥ ४
सर्गादौ सर्गरूपेण ब्रह्मैवात्मनि तिष्ठति ।
यथास्थितमनाकारं क्व जन्यजनकक्रमः ॥ ५
अथ पृथ्व्यादयोऽन्ये वा केचिदत्रोपकुर्वते ।
सहकारिकारणत्वं तत्पूर्वं चात्र दूषणम् ॥ ६
तस्मात्पदे जगच्छान्तमास्ते तत्सहकारिभिः ।
चित्तात्प्रसरतीत्युक्तिर्बालस्य न विपश्चितः ॥ ७
तस्माद्राम जगन्नासीन्न चास्ति न भविष्यति ।
चेतनाकाशमेवाशु कचतीत्थमिवात्मनि ॥ ८
अत्यन्ताभाव एवास्य जगतो विद्यते यदा ।
तदा ब्रह्मेदमखिलमिति तद्राम नान्यथा ॥ ९
पूर्वं प्रध्वंसनान्योन्याभावैर्यदुपशाम्यति ।
न शाम्यत्येव तच्चित्ते शाम्यत्येव तु दृश्यते ॥ १०
अत्यन्ताभाव एवास्य भावैर्यदुपशाम्यति ।
न शाम्यत्येव सच्चित्ते क्व शाम्यत्येव दृश्यता ॥ ११
अत्यन्ताभाव एवातो जगद्दृश्यस्य सर्वथा ।
वर्जयित्वेतरा युक्तिर्नास्त्येवानर्थसंक्षये ॥ १२
चिदाकाशस्य बोधोऽयं जगद्भातीति यत्स्थितम् ।
अयं सोऽहमिदं नाहं लोके चित्रकथा यथा ॥ १३
इदमब्ध्यादि पृथ्व्यादि तथेदं वत्सरादि च ।

तर्कैः स्वरूपभेदेन निरस्य जगतः स्थितम् ।
पूर्णानन्दात्म सन्मात्रस्थितिः शिष्टात्र वर्ण्यते ॥ १ ॥

एतस्य जगतः प्रलये पृथक्सत्त्वाभ्युपगमे वच्मि, दोषानिति शेषः । ननु यदि नास्ति जगत्तर्हि सर्ग एव न सिद्ध्येत् । उत्पत्तिक्रिया हि कर्तृसाध्या नह्यसति कर्तरि सिद्ध्यति । नचोत्पद्यमानादन्यत्कर्त्रस्ति । ब्रह्मैव सत्त्वात्तत्कर्तृ चेत्तदेवोत्पद्येत न जगत् । नच कूटस्थमुत्पत्त्यादिभिर्विकारैर्युज्यते । तस्मादुत्पत्तिसिद्धये प्रलये जगतोऽपि सत्ताभ्युपेयेत्याशङ्कामनूद्य निरस्यति—**समस्ते**त्यादिना ॥१॥ भवेत्कर्तृसत्ताकल्पनं यदि कर्तृमात्रादुत्पत्तिक्रिया सिद्ध्येत् । सा हि कर्तारमिव स्वसिद्धये करणोपकरणाधिकरणादीनि कारकान्तराण्यपि सहकारीण्यपेक्षते तदभावात्सत्त्वेन कल्पितमपि जगन्नोत्पत्तुं शक्नोतीत्याशयेनाह—**जगदादी**ति । आदिपदं वैचित्र्यप्रपञ्चार्थम् । इवकारस्त्वत्यन्तासंभावितत्वद्योतनार्थः ॥ २ ॥ ३ ॥ तस्माद्रज्जुसर्पादिवत्सहकारिकारणानामभावेऽपि अवोदितमाविर्भूतं यद्यभ्युपगच्छसि तर्हि मूलकारणमेव भ्रान्तिकृतजगत्स्वभावस्थितिं गतं न वस्तुतो जगत्सर्गोऽस्तीति व्यर्था तस्य प्रलये सत्त्वकल्पनेत्यर्थः ॥ ४ ॥ तदेव स्पष्टमाह—**सर्गादा**विति ॥ ५ ॥ ननु प्रलये सर्वजगत्सत्त्वस्वीकारान्न सहकारिदौर्लभ्यं, तदन्तर्गतैः पृथ्व्यादिभिः परस्परमुपकर्तुं शक्यत्वादित्याशङ्क्य परिहरति—**अथे**ति । तत्पूर्वं पृथ्व्याद्युत्पत्तिपूर्वकं वाच्यम् । नहि स्वयमेवानुत्पन्नमन्यस्योत्पत्तौ सहकारि भवितुं शक्नोति । तथाचोत्पत्तिसिद्धौ सहकारित्वसिद्धिस्तत्सिद्धावुत्पत्तिसिद्धिरित्यन्योन्याश्रयोऽत्र दूषणमित्यर्थः ॥६॥ इत्थं च सांख्यादिकल्पना बालिशकल्पनैवेत्युपसंहरति—**तस्मा**दिति । पदे सप्रकृतौ शान्तं प्रलये तिरोहितम् ॥ ७ ॥ परमते निरस्ते परिशिष्टं स्वसिद्धान्तं द्रढयति—**तस्मा**दिति

॥८॥ 'ब्रह्मैवेदममृतं पुरस्तात्' इत्यादिश्रुतीनामपि बाधायां सामानाधिकरण्यादत्रैव तात्पर्यमित्याशयेनाह—**अत्यन्ताभाव** इति । तत्प्रसिद्धं श्रुतितात्पर्यम् ॥९॥ एवंच श्रौतबाधात्पूर्वं जागतं घटपटादि मुद्गरप्रहारादिना प्रध्वंसैर्वैस्त्वन्तरात्मनान्योन्याभावैश्च यदुपशाम्यति इदमिदानीं नास्ति इदं न भवतीति गृह्यमाणमभाव रूप उपशमं भजते इति यत्तन्न शाम्यत्येव नासावुपशमः किंतु तिरोधानेन तस्य चक्षुरादिदृश्यताया एवोपरमः । यतश्चित्ते वासनात्मना न शाम्यत्येवेत्यर्थः । अयं न्यायः प्रागभावात्यन्ताभावयोरपि योज्यः । स्वसत्तया ब्रह्मसत्तया वा सतो घटादेर्बाधमन्तरेण क्वाप्यसत्त्वायोगान्मृत्पिण्डभूतलादावदर्शनस्य तिरोधानेनाप्युपपत्तेरिति ॥ १० ॥ यत् यदि दृश्यं भावैः कामकर्मवासनादिबीजैः सह उपशाम्यति तदाऽस्य दृश्यस्यात्यन्ताभाव आत्यन्तिकोच्छेद एव भवेत् । चित्ते तु सति कामादिभावानां दुर्वारत्वान्न शाम्यत्येव । अतो दृश्यता विना ज्ञानं क्व शाम्यति । तदुपशमो दुर्लभ एवेत्यर्थः ॥ ११ ॥ अतएव समूलमनोनाशान्तश्रौतबाधातिरिक्तः सर्वदृश्यानर्थसंक्षयरूपे मोक्षे उपायो नास्तीत्याह—**अत्यन्ते**ति । अत्यन्ताभावोऽधिष्ठानदर्शनेन बाध एवात्र युक्तिः । इमां युक्तिं वर्जयित्वा ॥१२॥ यत् यदा जगत्त्वसाक्षात्कारवशाच्चिदाकाशस्य बोधः । राहोः शिर इतिवत्षष्ठी । बोधैकरसश्चिदाकाश एव नाणुमात्रमप्यचिद्रूपमस्तीति स्थितं परिनिष्ठितं ज्ञानं भवति तदा अयं देवदत्तादिनामा देहः स विशिष्टमातापितृजन्यः प्रत्यभिज्ञायमान एवाहं इदं परकीयदेहकुड्यादि नाहमिति लोके प्रसिद्धः पामरव्यवहारश्चित्रकथा यथा तथा भाति । भित्तिलिखितचित्रस्य सर्वस्य परमार्थतो भित्तिमात्रत्वेऽपि चित्रप्रासादभित्तौ इयं भित्तिरिति भवति चित्रमनुष्यगजादौ नेयं भित्तिरिति तद्वदित्यर्थः ॥ १३ ॥ चित्रकथा-

अयं कल्पः क्षणश्चायमिमे मरणजन्मनी ॥ १४
अयं कल्पान्तसंरम्भो महाकल्पान्त एष सः ।
अयं स सर्गप्रारम्भो भाव्यभावक्रमस्त्वसौ ॥ १५
लक्ष्माणीमानि कल्पानामिमा ब्रह्माण्डकोटयः ।
एते चेमे परिगता इमे भूय उपागताः ॥ १६
इमानि धिष्ण्यजालानि देशकालकला इमाः ।
महाचित्परमाकाशमनावृतमनन्तकम् ॥ १७
यथापूर्वं स्थितं शान्तमित्येवं कचति स्वयम् ।
परमाणुसहस्रांशुभास एता महाचितेः ॥ १८
स्वयमन्तश्चमत्कारो यः समुद्दीर्यते चिता ।
तत्सर्गभानं भातीदमरूपं ननु भित्तिमत् ॥ १९
नोद्यन्ति नच नश्यन्ति नायान्ति नच यान्ति च ।
महाशिलासु लेखानां सन्निवेशा इवाचलाः ॥ २०
इमे सर्गाः प्रस्फुरन्ति स्वात्मनात्मनि निर्मले ।
नभसीव नभोभागा निराकारा निराकृतौ ॥ २१
द्रवत्वानीव तोयस्य स्पन्दा इव सदागतौ ।
आवर्ता इव चाम्भोधेर्गुणिनो वा यथा गुणाः ॥ २२
विज्ञानघनमेवैकमिदमेवमवस्थितम् ।
सोदयास्तमयारम्भमनन्तं शान्तमाततम् ॥ २३
सहकार्यादिहेतूनामभावे शून्यतो जगत् ।
स्वयंभूर्जायते चेति किलोन्मत्तकफूत्कृतम् ॥ २४
प्रशान्तसर्वार्थकलाकलङ्को
निरस्तनिःशेषविकल्पतल्पः ।
चिराय विद्रावितदीर्घनिद्रो
भवाभयो भूषितभूः प्रबुद्धः ॥ २५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु स्थितिप्रकरणे स्थितिबीजोपन्यासो नाम द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ३

श्रीराम उवाच ।

महाकल्पान्तसर्गादौ प्रथमोऽसौ प्रजापतिः ।
स्मृत्यात्मा जायते मन्ये स्मृत्यात्मैव ततो जगत् ॥१

न्यायमेव पृथ्व्यादिष्वपि प्रपञ्चयति—**इदमि**त्यादिना ॥ १४ ॥ एष दृश्यमानः स श्रुतिपुराणप्रसिद्धो भाव्यानां सृज्यानामाकाशादीनां भावक्रमः सृष्टिक्रमः ॥ १५ ॥ लक्ष्माणि लक्षणानि । परिगता अतीताः सर्गाः ॥ १६ ॥ धिष्ण्यजालानि चतुर्दशधा भिन्ना देवमनुष्यादिस्थानभेदाः । देशानां सप्तद्वीपानां कालानां कृतत्रेताद्वापरादीनां कलाः कल्पनाः ॥ १७ ॥ इत्येवं वर्णितेन चित्रकथान्यायेन महाचित्परमाकाशमेव स्वयं स्वात्मनि कचति स्फुरति नान्यदित्यर्थः । तर्हि किं महाचित्प्रकाश एतावानेव नेत्याह—**परमाण्वि**ति । यथा गवाक्षच्छिद्रान्तर्गतपरमाणुषु सहस्रांशोर्भासः प्रभाः परिच्छिन्नास्तथा मनोनिर्गतब्रह्माण्डकोटिषु परिच्छिन्ना एताश्चिद्भासः । यथा च नभोविस्तृतेन सूर्यप्रकाशेन परमाणुभेदभ्रमणादि दृश्यते तथा महाचित्परमाकाशेऽपीति भावः ॥ १८ ॥ तथाच मनःपरिच्छेदपीडिता चित् स्वान्तर्गतं जगद्भ्रमतीवेत्युत्प्रेक्षमाण आह—**स्वय**मिति ॥ १९ ॥ स्फटिकशिलान्तर्नयनदोषात्प्रतीयमाना रेखा इव न पदार्थभेदाः सन्तीत्याह—**नोद्यन्ती**त्यादिना ॥ २० ॥ नभसीवेत्यादयः पृथक्सत्ताशून्यत्वे दृष्टान्ताः ॥ २१ ॥ २२ ॥ सोदयास्तमयारम्भमिदं जगदेवमुक्तदृष्टान्तानुसारेण शान्तं ब्रह्मैवाततं विस्तृतम् ॥ २३ ॥ एवंच सहकार्यभावे सत्यपि कर्तरि उत्पत्त्याद्यसिद्धेः सांख्यानां कल्पना उन्मत्तचेष्टेवेत्युपसंहरति—**सहकारी**ति । स्वयं भवति अस्तीति स्वयंभूः । प्रागुत्पत्तेः पृथक्सत्त्वेनाभ्युपगतोऽपि पदार्थ इत्यर्थः । शून्यतः शून्यकल्पप्रधानादित्यर्थः । जायते चेति चकारो जन्युत्तरभाविनी सत्ता प्रागेवाभ्युपगता चेज्जनिकल्पनवैयर्थ्यमपीति दोषान्तरसमुच्चयार्थः ॥ २४ ॥ सर्वार्थस्वप्रदर्शनहेतुत्वाद्विकल्पास्तल्पमिव । तत्कल्पनेऽपि हेतुर्दीर्घनिन्द्रा अविद्या सैव स्वरूपजागरेण विद्राविता चेत्स्वाप्नव्याघ्रादिकल्पजन्ममृत्य्वादिभयहेतुबाधादभयः । तल्पादुत्थितेन राज्ञा स्वसभाभूरिव भूषिता अलंकृता ब्रह्मवित्सभाभूर्येन तथाविधो भवेत्युपदेश आशीश्च ॥ २५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे स्थितिबीजोपन्यासो नाम द्वितीयः सर्गः ॥ २ ॥

श्रीवसिष्ठ उवाच ।

महाप्रलयसर्गादावेवमेतद्रघूद्वह ।
स्मृत्यात्मैव भवत्यादौ प्रथमोऽसौ प्रजापतिः ॥ २

विवर्तत्वं प्रतिष्ठाप्याऽपवादोऽत्र प्रदर्श्यते ।
बोधदृष्ट्याऽज्ञदृष्ट्या तु जगदानन्त्यमुच्यते ॥ १ ॥

बाह्यघटाद्युत्पत्तावुत्पत्तिकर्त्रतिरिक्तसहकार्यपेक्षास्तु, जगत्तु त्वया हिरण्यगर्भमनःसंकल्पजं तदीयस्मृतिमनोराज्यकल्पमुक्तं, नच तत्र सहकार्यपेक्षा दृष्टा, एवं च प्रलये प्रकृतौ स्वसत्तायां तिरोभूय सन्नेव मनोरूपः प्रजापतिः स्मृत्यात्मा जायते, तस्मिंश्च संस्कारात्मना सदेव जगत्स्मृत्यात्मैव जायते चेत्को विरोध इति गूढाभिसंधिना रामः पृच्छति—**महाकल्पान्ते**ति ॥ १ ॥ अस्त्वेवं तथापि जगतो न प्रलये सत्त्वसिद्धिः, स्वप्नमनोरथस्त्त्वादिविषयस्य स्वकालेऽपि सत्त्वाप्रसिद्धेस्तद्बलेन प्रलये सत्त्वकल्पनासिद्धेरिति गूढाभिसंधिरेव गुरुरभ्युपगमेन समाधत्ते—

१ मनारंभं इति पाठः.

तत्संकल्पात्मकजगत्स्मृत्यात्मैवमिदं ततः ।
भाति संकल्पनगरं स्थितं पूर्वं प्रजापतेः ॥ ३
स्मृतिर्न संभवत्येव सर्गादौ परमात्मनः ।
जन्माभावात्कथं कुत्र नभसीव महाद्रुमः ॥ ४

श्रीराम उवाच ।

न संभवति किं ब्रह्मन्सर्गादौ प्राक्तनी स्मृतिः ।
महाप्रलयसंमोहैर्नश्यति प्राक्स्मृतिः कथम् ॥ ५

श्रीवसिष्ठ उवाच ।

ये महाप्रलये प्राज्ञाः सर्वे ब्रह्मादयः पुरा ।
किल निर्वाणमायातास्तेऽवश्यं ब्रह्मतां गताः ॥ ६
प्राक्तनः कः स्मृतेः कर्ता तस्मात्कथय सुव्रत ।
स्मृतिर्निर्मूलतां याता स्मर्तुर्मुक्ततया यतः ॥ ७
अतः स्मर्तुरभावेन स्मृतिर्वोदेति किं कथम् ।
अवश्यं हि महाकल्पे सर्वे मोक्षैकभागिनः ॥ ८
नानुभूतेऽनुभूते च स्वतश्चिद्व्योम्नि या स्मृतिः ।
सा जगद्भूरिति प्रौढा दृश्या सास्त्येव चित्प्रभा ॥ ९
भाति संवित्प्रभैवेयमनाद्यन्तावभासिनी ।
यत्तदेतज्जगदिति स्वयंभूरिति च स्थितम् ॥ १०
अनादिकालसंसिद्धं यद्धानं ब्रह्मणो निजम् ।
स आतिवाहिको देहो विराजो जगदाकृतिः ॥ ११
परमाणाविदं भाति त्रिजगत्सवनाभ्रखम् ।
देशकालक्रियाद्रव्यदिनरात्रिक्रमान्वितम् ॥ १२
परमाणुः प्रविततस्तस्यास्ते तादृगेव च ।
भाति भासुरताकारि तादृग्गिरिकुलं पुनः ॥ १३
तत्रापि तादृगाकारमेव प्रत्यनुसंततम् ।
दृश्यमाभाति भारूपमेतदज्ञ न वास्तवम् ॥ १४
इत्यस्त्यन्तो न सद्दृष्टेरसद्दृष्टेश्च वा क्वचित् ।
अस्यास्त्वभ्युदितं बुद्धं नाबुद्धं प्रति वानघ ॥ १५
बुद्धं प्रतीदं ब्रह्मैव केवलं शान्तमव्ययम् ।
अबुद्धं प्रति बुद्ध्यैतद्भासुरं भुवनान्वितम् ॥ १६
यथेदं भासुरं भाति जगदण्डकजृम्भितम् ।
यथा कोटिसहस्राणि भान्त्यन्यान्यण्णावणौ ॥ १७
यथा स्तम्भे पुत्रिकान्तस्तस्याः स्वाङ्गेषु पुत्रिका ।
तस्याश्च पुत्रिकास्त्यङ्गे तथा त्रैलोक्यपुत्रिका ॥ १८
नाभिन्ना नापि संख्येया यथाद्रौ परमाणुकाः ।
तथा ब्रह्म बृहन्मेरौ त्रैलोक्यपरमाणवः ॥ १९
सूर्यांशुषु संख्यातुं शक्यन्ते लघवोऽणवः ।
उत्पद्यन्ते चिदादित्ये त्रैलोक्यपरमाणवः ॥ २०

**महाप्रलयेति** ॥२॥ प्रजापतेः पूर्वं प्राथमिकं संकल्पनगरमेवैतज्जगदिति स्थितमित्यर्थः ॥ ३ ॥ तर्हि बाह्यविकारमनोतिरिक्तविषयात्मना जगन्माभूत्सत्यं मनोविकारात्मना तु सत्यमेव । यथा चित्रतुरगो मांसविकारात्मना ह्यसत्योऽपि रङ्गद्रव्यविकारात्मना सत्यस्तद्वदिति रामशङ्कां लिङ्गैरुपलक्ष्याह—**स्मृति**रिति । अयं भावः—सति हि स्मर्तरि स्मृत्यादयो मनःपरिणामाः स्युः । तत्र न तावत्परपरिकल्पितं प्रधानं स्मृतिसमर्थम् । मृदादिवदचेतनत्वात् । नापि पुरुषाः । परैस्तेषामसङ्गोदासीननिर्विकारत्वाभ्युपगमात् । परस्परव्यावर्तकधर्मानभ्युपगमेन भेदासिद्ध्या परमात्माभेदे तु सुतरां स्मृतिर्न संभवत्येव । जन्माभावात् विकारान्तराणां तत्पूर्वकत्वात् 'अप्राणो ह्यमनाः शुभ्रः' इत्यादिश्रुत्या तस्य मनोनिषेधात्तद्वारा स्मर्तृत्वासिद्धेस्तस्य स्मृतिर्नभोद्रुमकल्पैवेति ॥४॥ ननु यथा प्रात्यहिकी सुषुप्तिस्तथा प्रलयोऽपि तत्र च लीनस्य मनसो जागरादाविव सर्गादावप्याविर्भावात्तदवच्छिन्नप्रजापतेरन्यस्य वा स्मर्तृत्वे को विरोध इत्याशयेन रामः शङ्कते—**न संभवती**ति । प्राक्स्मृतिः पूर्वकल्पीयसंस्कारः ॥५॥ अभिसंधिमुद्घाटयन् वसिष्ठः परिहरति—**ये महाप्रलये** इत्यादिना । अयं भावः—इयं तव शङ्का किं हिरण्यगर्भजीव एक एव स्वमनसा नानाजीवशरीरादिभेदान्परिकल्प्य संसरतीति मतेन वा नानाजीवाः स्वस्वोपभोगयोग्यप्रपञ्चभागं कल्पयन्तो हिरण्यगर्भमपि स्वस्वबुद्ध्यनुसारेण सर्वेसद्यारं कल्पयन्तीति मतेन वा । तत्र द्वितीये 'महाकल्पान्तसर्गादौ प्रथमोऽसौ प्रजापतिः' इत्यादि त्वदीयशङ्कोपक्रमविरोधात्स्वदृष्टिश्रुत्यननुगुणत्वात् प्रथमकल्पः परिशिष्यते । तत्र च प्राक्तनकल्पीयजीवजगतां महाप्रलयकाले हिरण्यगर्भमुक्त्यैव मुक्तत्वाज्जीवान्तरापरिशेषात्स्मर्ता न कश्चिदस्तीति नैतत्सर्गसिद्धिरिति । अक्षरार्थः स्पष्टः ॥ ६ ॥ ७ ॥ ८ ॥ एवं पूर्वपूर्वकल्पीयसर्गा अपि स्मृतिरूपा न सिध्यन्तीति या स्मृतिरिति त्वया शङ्किता जगद्भूर्जगत्स्थितिः सा प्रौढा ब्रह्मचित्प्रभैव सास्त्येव सदेति सत्कार्यवादिनीनां श्रुतीनामाशय इत्यर्थः ॥ ९ ॥ उक्तार्थमेव स्पष्टमाह—**भाती**ति ॥ १० ॥ विराजो ब्रह्माण्डशरीरस्योपादानभूत आतिवाहिकः सूक्ष्मो देहः स परमात्मैवेत्यर्थः । तथाच ब्रह्मैव सूक्ष्मस्थूलभावारोपक्रमेण जगदात्मना भातीति भावः ॥ ११ ॥ अव्यवस्थितस्वभावत्वादपि जगतो न जगद्रूपेण सत्ता किंतु ब्रह्मरूपेणैवेत्याशयेनाव्यवस्थितस्वभावमुपपादयति—**परमाणा**विल्यादिना ॥ १२ ॥ तस्य पूर्वपरमाणोरन्तरन्यः प्रविततः परमाणुरास्ते स च तादृक् पूर्वपरमाणुसदृश एव, पुनस्तत्रापि तादृक् सवनाभ्रखं गिरिकुलं भातीत्येवं प्रत्यनुसंततिमिति परेणान्वयः ॥ १३ ॥ उपपादितेन यत्फलितं तदाह—**एतदि**ति ॥१४॥ एवंच सन्मात्रदृष्टिस्तत्त्वज्ञं प्रति स्वतो यथा अनन्ता एवमसदनृतजगद्दृष्टिरप्यज्ञं प्रति संख्यया अनन्तैवेत्याह—**इती**ति । अभ्युदितं परमाभ्युदयं प्राप्तम् । बुद्धं तत्त्वज्ञं प्रति । न आबुद्धं येन स नाबुद्धोऽज्ञस्तं प्रति वा ॥ १५ ॥ तदेव स्पष्टीकृत्य दर्शयति—**बुद्धं प्रती**त्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ शक्यन्ते यदीति शेषः । पूर्वश्लोकान्तेति वानुषञ्जनीयम् ॥ २० ॥

१ स्फुटं इति पाठः.

यथाणवो वहन्त्यर्कदीप्तिष्वप्सु रजःसु च ।
तथा वहन्ति चिद्व्योम्नि त्रैलोक्यपरमाणवः ॥ २१
शून्यानुभवमात्रात्म भूताकाशमिदं यथा ।
सर्गानुभवमात्रात्म चिदाकाशमिदं तथा ॥ २२
सर्गस्तु सर्गशब्दार्थतया बुद्धो नयत्यधः ।
स ब्रह्मशब्दार्थतया बुद्धः श्रेयो भवत्यलम् ॥ २३
विज्ञानात्मा शासिता विश्वबीजं
ब्रह्मैवालं स्वं चिदाकाशमात्रम् ।
यस्माज्जातं यत्तदेवेति विद्या-
द्वेद्यं स्वान्तर्बोधसंबोधमात्रम् ॥ २४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे जगदानन्त्यवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ४

श्रीवसिष्ठ उवाच ।

इन्द्रियग्रामसंग्रामसेतुना भवसागरः ।
तीर्यते नेतरेणेह केनचिन्नाम कर्मणा ॥ १
शास्त्रसत्संगमाभ्यासात्सविवेको जितेन्द्रियः ।
अत्यन्ताभावमेतस्य दृश्यस्याप्यवगच्छति ॥ २
एतत्ते कथितं सर्वं स्वरूपं रूपिणां वर ।
संसारसागरश्रेण्यो यथा यान्ति प्रयान्ति च ॥ ३
बहुनात्र किमुक्तेन मनःकर्मद्रुमाङ्कुरः ।
तस्मिंश्छिन्ने जगच्छाखी छिन्नः कर्मतनुर्भवेत् ॥ ४
मनः सर्वमिदं राम तस्मिन्नन्तश्चिकित्सिते ।
चिकित्सितो वै सकलो जगज्जालामयो भवेत् ॥ ५
तदेतज्जायते लोके मनोमननमाकुलम् ।
मनसो व्यतिरेकेण देहः क किल दृश्यते ॥ ६
दृश्यात्यन्तासंभवेन ऋते नान्येन हेतुना ।
मनःपिशाचः प्रशमं याति कल्पशतैरपि[1] ॥ ७
एतच्च संभवत्येव मनोव्याधिचिकित्सिते ।
दृश्यात्यन्तासंभवात्म परमौषधमुत्तमम् ॥ ८
मनो मोहमुपादत्ते म्रियते जायते मनः ।
तत्त्वचिन्ताप्रसादेन बध्यते मुच्यते पुनः ॥ ९
स्फुरतीदं जगत्सर्वं चित्ते मननमूर्छिते ।
शून्यमेवाम्बरे स्फारे गन्धर्वाणां पुरं यथा ॥ १०
मनसीदं जगत्कृत्स्नं स्फारं स्फुरति चास्ति च ।
पुष्पगुच्छ इवामोदस्तत्स्थं तस्मादिवेतरत् ॥ ११
यथा तिलकणे तैलं गुणो गुणिनि वा यथा ।

वहन्ति प्रवहन्ति । भ्रमन्तीति यावत् ॥२१॥ ननु निष्प्रपञ्चस्य कूटस्थस्य कथं सविकारसर्गात्मना भानमिति चेद्यथा नीरूपस्याशून्यस्य चाकाशस्य तद्विरुद्धरूपवच्छून्यतया भानं तद्वदित्याह—**शून्येति** । शून्यमावरणाभावः । असन्नैल्यं च तदनुभवमात्रात्म तथाऽनुभूयमानं नतु वास्तवपूर्णनीरूपानुभवात्मेत्यर्थः ॥ २२ ॥ **नयत्यध** इति । 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' इत्यादिश्रुतेः । **श्रेयो भवतीति** । 'तरति शोकमात्मवित्' इत्यादिश्रुतेरिति भावः ॥ २३ ॥ किं तटस्थतयापि ज्ञातं ब्रह्म श्रेयो भवति नेत्याह—**विज्ञानात्मेति** । यो विज्ञानात्मा जीवाख्यः प्रत्यगात्मा यश्च विश्वस्य बीजं कारणं शासिता चेश्वरस्तौ परमार्थदृशा परिशोधने अलं पूर्णं स्वं प्रत्यगेकरसं चिदाकाशमात्रं ब्रह्मैव । यतो हि बाह्यमाभ्यन्तरं च भेदकोपाधिद्वयं ब्रह्मणः सकाशादेव जातं श्रूयते । यद्यस्माज्जातं तत्तदेवेति च 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादिनावगतं तस्मात्सर्वं वेद्यं स्वान्तर्बोधे संबोधमात्रं शुद्धं चिन्मात्रमित्यर्थः ॥ २४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जगदानन्त्यवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

इह विश्वस्थितेर्मूलं सेन्द्रियं मन ईर्यते ।
तस्योच्छेदे जगच्छून्यं दृश्यासंभवदर्शनात् ॥ १ ॥

इन्द्रियग्रामाणां संग्रामो जयस्तल्लक्षणेन सेतुना ॥ १ ॥ इन्द्रियजये च विवेक उपायस्तत्र च सज्जनसच्छास्त्रैकनिष्ठतोपाय इत्याशयेनाह—**शास्त्रेति** ॥ २ ॥ विहितस्येन्द्रियजयस्य प्रकृतसंबन्धं वक्तुं प्रागुक्तं स्मारयति—**एतदिति** । रूपिणां सौन्दर्यवतां वर श्रेष्ठ । प्रयान्ति अपगच्छन्ति । 'न यान्ति' इति पाठेऽप्ययमेवार्थः ॥ ३ ॥ भोक्तुर्भोग्यभोगाकारपरिणतानि विहितनिषिद्धकर्माण्येव तनुः शरीरं यस्य तथाविधो जगच्छाखी संसारवृक्षश्छिन्नो भवेत् ॥ ४ ॥ जगज्जाललक्षण आमयो रोगः ॥ ५ ॥ ननु मनसि चिकित्सितेऽपि देहाधीने सुखदुःखे स्यातां तत्राह—**तदेतदिति** । मनसो देहाकारमननमेव स्वप्न इव आकुलं क्रियासमर्थं देहो जायते ॥ ६ ॥ तर्हि मनश्चिकित्सायां किमौषधं तदाह—**दृश्येति** । दृश्यस्य अत्यन्ताभावो बाधस्तस्मादृते । तृतीया छान्दसी ॥ ७ ॥ ननु मनोरोग आभ्यन्तरो दृश्यं तु बाह्यं तत् कथं बाह्यार्थात्यन्तासंभवादान्तरमनश्चिकित्सासंभवस्तत्राह—**एतदिति** । एतद्दृश्यात्यन्तासंभवात्मकं परमौषधं मनोव्याधिचिकित्सिते संभवत्येवोपाय इति शेषः । चिकित्सिते इति भावे क्तः ॥ ८ ॥ कथं संभवति तदाह—**मन** इति । नहि मनस आन्तरता अर्थानां बाह्यता च वास्तवी, किंतु मन एव तथा द्वैविध्यादिकल्पनया मोहं भ्रान्तिमुपादत्ते । जन्ममृत्युबन्धमोक्षादि च कल्पयतीत्यर्थः ॥९॥ कथमिदं ज्ञातमिति चेदन्वयव्यतिरेकाभ्यामित्याह—**स्फुरतीति** । मननेन मूर्छिते समुच्छ्रिते ॥ १० ॥ तथा च विमर्शो जगन्मनोधर्म एवेति न धर्मिनिवृत्तौ स्थातुमर्हतीत्याशयेन दृष्टान्तानाह—**मनसी**त्यादिना । धर्मेषु धर्मिभेदो न वास्तव इति द्योतना-

1 कल्पशतैरति इति पाठः.

यथा धर्मिणि वा धर्मस्तथेदं चित्तके जगत् ॥ १२
रश्मिजालं यथा सूर्ये यथालोकस्तु तेजसि ।
यथौष्ण्यं चित्रभानौ च मनसीदं तथा जगत् ॥ १३
शैत्यं यथैव तुहिने यथा नभसि शून्यता ।
यथा चञ्चलता वायौ मनसीदं तथा जगत् ॥ १४
मनो जगज्जगदखिलं तथा मनः
परस्परं त्वविरहिते सदैव हि ।
तयोर्द्वयोर्मनसि निरन्तरं क्षिते
क्षितं जगन्नतु जगति क्षिते मनः ॥ १५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० स्थितिप्रकरणे स्थित्यङ्कुरकलनं नाम चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ५

श्रीराम उवाच ।
भगवन्सर्वधर्मज्ञ पूर्वापरविदां वर ।
अयं मनसि संसारः स्फारः कथमिव स्थितः ॥ १
यथायं मनसि स्फारः संसारः स्फुरति स्फुरन् ।
दृष्टान्तदृष्ट्या स्फुटया तथा कथय मेऽनघ ॥ २
श्रीवसिष्ठ उवाच ।
यथैन्दवानां विप्राणां जगन्त्यवपुषामपि ।
स्थितानि जातदार्ढ्यानि मनसीदं तथा स्थितम् ॥ ३
लवणस्य यथा राज्ञश्चेन्द्रजालाकुलाकृतेः ।
चण्डालत्वमनुप्राप्तं तथेदं मनसि स्थितम् ॥ ४
भार्गवस्य चिरं कालं स्वर्गभोगबुभुक्षया ।
यथा भोगाधिनाथत्वं संसारित्वं बभूव च ॥ ५
भोगेश्वरत्वं च यथा तथेदं मनसि स्थितम् ।
श्रीराम उवाच ।
भगवन्भृगुपुत्रस्य स्वर्गभोगबुभुक्षया ॥ ६
कथं भोगाधिनाथत्वं संसारित्वं बभूव च ।
श्रीवसिष्ठ उवाच ।
शृणु राम पुरा वृत्तं संवादं भृगुकालयोः ॥ ७
सानौ मन्दरशैलस्य तमालविटपाकुले ।
पुरा मन्दरशैलस्य सानौ कुसुमसंकुले ॥ ८
अतप्यत तपो घोरं कस्मिंश्चिद्भगवान्भृगुः ।
तमुपास्ते स्म तेजस्वी बालः पुत्रो महामतिः ॥ ९
शुक्रः सकलचन्द्राभः प्रकाश इव भासुरः ।
भृगुर्वनवरे तस्मिन्समाधावेव संस्थितः ॥ १०
सर्वकालं समुत्कीर्णो वनोपलतलादिव ।
शुक्रः कुसुमशय्यासु कलधौताजिरेषु च ॥ ११
मन्दरोद्दामदोलासु बालो रमणलीलया ।
विद्याविद्यादृशोर्मध्ये शुक्रः प्राप्तमहापदः ॥ १२
त्रिशङ्कुरिव रोदोन्तरवर्तत तदाकुलः ।
निर्विकल्पसमाधिस्थे स कदाचित्पितर्यथ ॥ १३
अव्यग्रोऽभवदेकान्ते जितारिरिव भूमिपः ।
ददर्शाप्सरसं तत्र गच्छन्तीं नभसः पथा ॥ १४
क्षीरोदमध्यलुलितां लक्ष्मीमिव जनार्दनः ।
मन्दारमालावलितां मन्दानिलचलालकाम् ॥ १५
हारझाङ्कारिगमनां सुगन्धितनभोनिलाम् ।
लावण्यपादपलतां मदघूर्णितलोचनाम् ॥ १६
अमृतीकृततद्देशां देहेन्दूदयदीप्तिभिः ।
कान्तामालोक्य तस्याभूदुल्लसत्तरलं मनः ॥ १७

यान्त्य इवकारः ॥ ११ ॥ १२ ॥ चित्रभानौ अग्नौ ॥१३॥१४॥ मनोजगतोर्धर्मिधर्मभावेनाभेदेऽपि धर्मिमनोनाशादेव जगन्नाशो नतु वैपरीत्येन तथैव लोके दर्शनादित्याशयेनोपसंहरति—**मन** इति । अविरहिते अविनाभूते । क्षिते नष्टे सति क्षितं नष्टं भवति ॥ १५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे स्थित्यङ्कुरकलनं नाम चतुर्थः सर्गः ॥ ४ ॥

भृगावत्र समाधिस्थे शुक्रस्य क्रीडतो गिरौ ।
अप्सरोदर्शने मोहात्तन्मयीभाव ईर्यते ॥ १ ॥

कथं कीदृशदृष्टान्तप्रकारेणेव बहिः स्फुरन्नयं स्फारः संसारो मनसि यथा स्फुरति प्रत्यक्षं प्रतिभाति तथा दृष्टान्तदृष्ट्या दृष्टान्तप्रदर्शनेन कथयेत्यर्थः॥१॥२॥ उक्तान्येवात्रैन्दवादिजगन्ति दृष्टान्त इत्याह—**यथेति**॥३॥ आकुलाकृतेर्व्याकुलचित्तस्य ॥४॥ भार्गवोपाख्यानमप्यत्र दृष्टान्तत्वेनावतारयति—**भार्गवस्येति** । भोगाधिनाथत्वमप्सरोभोगलिप्सुत्वम् । संसारित्वं तदर्थं स्वर्गादिगन्तृत्वं जन्मान्तरवत्त्वं च । नाथतिरत्रोपयाञ्चायाम् ॥ ५ ॥ भोगेश्वरत्वं

स्वर्गे अप्सरोभोक्तृत्वम् । प्रश्नः स्पष्टः ॥ ६ ॥ ७ ॥ सानौ प्रस्थे जातं भृगुकालयोः संवादं शृण्विति पूर्वेणान्वयः । उक्तस्योपोद्घातमाह—**पुरे**त्यादिना ॥८॥९॥ सकलः पूर्णः । 'भास्कर' इति पाठे प्रकाशत इति प्रकाशः स्फुरन् भास्कर इव ॥ १० ॥ सर्वकालं संस्थित इति पूर्वेणान्वयः । वनोपलतलात्प्रकृतेः समुत्कीर्णष्टङ्कच्छेदनिष्पादित इवेति निश्चलत्वेनोत्प्रेक्षा । कलधौताजिरेषु रूप्यहेमवेदिकासु ॥ ११ ॥ विद्यादृक् पारमार्थिकात्मतत्त्वदर्शनं अविद्यादृक् पामरादिप्रसिद्धजगत्सत्यतादर्शनं तयोर्मध्ये ॥ १२ ॥ रोदस्योर्द्यावाभूम्योरन्तर्मध्ये विश्वामित्रनिर्मिते स्वर्गे त्रिशङ्कुराजर्षिरिव अवर्तत । अतएव रागादिना आकुलः ॥ १३ ॥ अव्यग्रो विषयान्तरे अव्याक्षिप्तचित्तः ॥ १४ ॥ क्षीरोदस्य मध्याल्लुलितां मथनेनोत्पादिताम् । लक्ष्म्या इवाप्सरसामपि क्षीरोदादुत्पत्तिप्रसिद्धेरुभयविशेषणम् ॥ १५ ॥ सुगन्धितौ नभोनिलौ यया । नभोग्रहणमपगतेऽप्यनिले तत्प्रदेशस्य चिरं सुगन्धित्वद्योतनार्थम् ॥ १६ ॥ देह-

१ तथा इति पाठः.

दृष्टनिर्मलपूर्णेन्दुवपुरम्बुनिधेरिव ।
साप्यालोक्य शुक्रमुखं तथा परवशा ह्यभूत् ॥ १८
मनसिजेषु पराहतमाशयं
स परिबोध्य मनस्तदनूशना ।
विगलितेतरवृत्तितयात्मना
स च वधूमय एव बभूव ह ॥ १९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे भार्गवोपाख्याने भार्गवस्खलनं नाम पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ६

श्रीवसिष्ठ उवाच ।

अथ तां मनसा ध्यायंस्तत्रैवामीलितेक्षणः ।
आरब्धवान्मनोराज्यमिदमेकः किलोशना ॥ १
एषा हि ललना व्योम्नि सहस्रनयनालये ।
संप्राप्तोऽयमहं स्वर्गमालोलसुरसुन्दरम् ॥ २
इमे ते मृदुमन्दारकुसुमोत्तंससुन्दराः ।
द्रवत्कनकनिष्यन्दविलासिवपुषः सुराः ॥ ३
इमास्ता लोचनोल्लासदृष्टनीलाब्जदृष्टयः ।
मुग्धहासविलासिन्यः कान्ता हरिणदृष्टयः ॥ ४
इमे ते कौसुमोद्द्योता अन्योन्यप्रतिबिम्बिताः ।
विश्वरूपोपमाकारा मरुतो मत्तकाशिनः ॥ ५
ऐरावणकटामोदविरक्तमधुपश्रुताः ।
इमास्ताः काकलीगीता गीर्वाणगणगीतयः ॥ ६
इयं सा कनकाम्भोजचलद्वैरिञ्चसारसा ।
मन्दाकिनीतटोद्यानविश्रान्तसुरनायका ॥ ७
एते ते यमचन्द्रेन्द्रसूर्यानलजलानिलाः ।
लोकपालास्तनुद्योतकीर्णदीप्तानलार्चिषः ॥ ८
अयं स रणवृत्तान्तहेतिकण्डूयिताननः ।
ऐरावणो रणे दन्तप्रोतदैत्येन्द्रमण्डलः ॥ ९
इमे ते भूतलस्थानाद्व्योम्नि तारकतां गताः ।
वैमानिकाश्चरच्चारुचामीकरमयातपाः ॥ १०
मेरूपलतलास्फालसीकराकीर्णदेवताः ।
एतास्ताः कीर्णमन्दारा गङ्गासलिलवीचयः ॥ ११
एताः प्रसृतमन्दारमञ्जरीपुञ्जपिञ्जराः ।
दोलालोलाप्सरःश्रेण्यः शक्रोपवनवीथयः ॥ १२
इमे ते कुन्दमन्दारमकरन्दसुगन्धयः ।
चन्द्रांशुनिकराकाराः पारिजातसमीरणाः ॥ १३
पुष्पकेसरनीहारपटवासरणोत्सुकैः ।
लताङ्गनागणैर्व्याप्तमिदं तन्नन्दनं वनम् ॥ १४
कान्तगीतरवानन्दप्रनर्तितसुराङ्गनौ ।
इमौ तौ वल्लकीस्निग्धस्वरौ नारदतुम्बुरू ॥ १५
इमे ते पुण्यकर्तारो भूरिभूषणभूषिताः ।
व्योमन्युड्डीयमानेषु विमानेषु च संस्थिताः ॥ १६

लक्षणादिन्दोरुदयो यासां ताभिर्दीप्तिभिः किरणैः ॥ १७ ॥ अम्बुनिधेर्वपुः संस्थानमिव उल्लसत् तरलं च ॥ १८ ॥ स च उशना तदनु अप्सरोदर्शनानन्तरं मनसिजस्येषुभिः पराहतमाशेते विषयेषु मुह्यतीत्याशयं मनो यथाशक्ति विवेकैः परिबोध्य बहिः शारीरकान्तानुसरणादिव्यापारान्निरुध्यैकाग्रतामापाद्यापि अन्तर्विगलितेतरवृत्तितया वध्वेकाग्रचित्तत्वात्तदात्मना वधूमय एव बभूव । 'यच्चित्तस्तन्मयो भवती'त्यादिश्रुतिस्मृत्यनुभवप्रसिद्धिद्योतनाय ह इति निपातः ॥ १९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे भार्गवस्खलनं नाम पञ्चमः सर्गः ॥५॥

इह शुक्रस्य मनसा स्वर्गे गमनमुच्यते ।
तत्र शक्रेण सन्मानात्संनिधावुपवेशनम् ॥ १ ॥

इदं वक्ष्यमाणप्रकारं मनोराज्यम् । एवकारः प्रकारान्तरवारणाद्देहविस्मृतिपर्यन्तताद्योतनार्थः ॥ १ ॥ एषा पुरोवर्तिनी मयानुगम्यमाना सहस्रनयनस्येन्द्रस्यालये स्वर्गे गच्छतीति शेषः । अयं तामनुगच्छन्नहम् ॥ २ ॥ कनकनिष्यन्दो द्रुतसुवर्णम् । तद्धि अत्यन्तं कान्तिमत्प्रसिद्धम् । तदिव विलासि शोभमानं वपुर्येषाम् ॥ ३ ॥ लोचनोल्लासेन प्रत्यक्षेण दृष्टानि नीलाब्जानीव दृष्टयो यासां ता इमाः कान्ता अप्सरसः ॥४॥ कौसुमैः पारिजातादिकुसुमरचितैर्माल्यैरुद्द्योतन्ते प्रकाशन्ते इति कौसुमोद्द्योताः।

'कौस्तुभोद्द्योताः'[1] इति पाठे कौस्तुभवद्बहुद्योतमानाः । अन्योन्यप्रतिबिम्बितत्वादेव विश्वरूपः सर्वाकारो हरिस्तदुपमाकाराः । मत्ता हृष्टाः काशन्ते दीप्यन्ते तच्छीलाः मरुतो देवाः । प्रागवर्णितानामपि देवानां प्रकारान्तरेण वर्णनान्न पौनरुक्त्यम् ॥ ५ ॥ ऐरावणस्यैरावतस्य कटौ गण्डौ । ताभ्यां मदजलं लक्ष्यते । तदामोदेऽपि विरक्तैरनासक्तैर्मधुपैः श्रुता आकर्णिताः काकल्या मधुरास्फुटध्वनिना गीता आलापिताः ॥ ६ ॥ कनकाम्भोजेषु चलन्तो भ्रमन्तो वैरिञ्चा विरिञ्चिसंबन्धिनो हंसाः सारसाश्च यस्याम् ॥ ७ ॥ तनुद्योतैः शरीरकान्तिभिः कीर्णाः परितः प्रसारिता दीप्तानलार्चिषो यैः ॥ ८ ॥ रणवृत्तान्तेषु युद्धप्रसङ्गेषु हेतिभिरायुधैः कण्डूयितमिव आननं यस्य ॥ ९ ॥ चरन्तः प्रसरन्तश्चारुचामीकरमया इव आतपा देहविमानादिकान्तयो येषाम् ॥ १० ॥ ११ ॥ १२ ॥ चन्द्रांशुनिकरा इव सुखस्पर्श आकारः शैत्यमान्द्यादियुक्तः संनिवेशो येषाम् ॥ १३ ॥ पुष्पैः केसरैर्नीहारैर्हिममकरन्दकणैः पटान्वासयन्ति सुगन्धयन्तीति पटवासाः परागास्तैश्च यः पवनान्दोलनक्रीडार्थं च परस्परताडनलक्षणो रणस्तत्र उत्सुकैरासक्तैर्लतागणैरङ्गनागणैश्च, लतालक्षणैरङ्गनागणैर्वा, लतासदृशैरङ्गनागणैर्वा व्याप्तम् ॥ १४ ॥ नारदतुम्बुरू गन्धर्वविशेषौ ऋषी वा ॥ १५ ॥१६॥

[1] कौस्तुभवद्बहुद्योतमानाः इति पाठः साधुः.

मदमन्मथमत्ताङ्ग्य इमास्ताः सुरयोषितः ।
देवेश्वरं निषेवन्ते वनं वनलता इव ॥ १७
इन्द्राश्मजालकुसुमाश्चिन्तामणिगुलुच्छकाः ।
कल्पवृक्षा इमे पक्कफलस्तबकदन्तुराः ॥ १८
इह तावदिमं शक्रमहमासनसंस्थितम् ।
द्वितीयमिव त्रैलोक्यस्रष्टारमभिवादये ॥ १९
इति संचिन्त्य शुक्रेण मनसैव शचीपतिः ।
तेनाभिवादितस्तत्र द्वितीय इव खे भृगुः ॥ २०
अथ सादरमुत्थाय शुक्रः शक्रेण पूजितः ।
गृहीतहस्त आनीय समीपमुपवेशितः ॥ २१
धन्यस्त्वदागमे नाथ स्वर्गोऽयं शुक्र शोभते ।
उष्यतां चिरमेवेह शक्र इत्थमुवाच तम् ॥ २२
अथ तत्रोपविश्यासौ भार्गवः शोभिताननः ।
श्रियं जहार शशिनः सकलस्यामलस्य च ॥ २३
सकलसुरगणाभिवन्दितोऽसौ
भृगुतनयः शतमन्युपार्श्वसंस्थः ।
चिरतरमतुलामवाप तुष्टिं
नरपतिसत्तमलालनं बभूव ॥ २४

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे भार्गवोपाख्याने भार्गवमनोराज्यं नाम षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ७

श्रीवसिष्ठ उवाच ।

इति शुक्रः पुरं प्राप्य वैबुधं स्वेन तेजसा ।
विसस्मार निजं भावं प्राक्तनं व्यसनं विना ॥ १
मुहूर्तमिव विश्रम्य तस्य पार्श्वे शचीपतेः ।
स्वर्गे विहर्तुमुत्तस्थौ स्वर्गाभिपरिमोदितः ॥ २
स्वःश्रियं स समालोक्य लोललोचनवाञ्छिताम् ।
स्त्रैणं द्रष्टुं जगामासौ नलिनीमिव सारसः ॥ ३
तत्र तां मृगशावाक्षीं कान्तामध्यगतामसौ ।
ददर्श विपिनान्तस्थां भृगुश्चूतलतामिव ॥ ४
सापि तं भार्गवं राम दृष्ट्वा परवशाभवत् ।
तामालोक्य लसल्लोलविलासवलिताकृतिम् ॥ ५
आसीद्विलीयमानाङ्गो ज्योत्स्नामिन्दुमणिर्यथा ।
विलीयमानसर्वाङ्गस्तामवैक्षत कामिनीम् ॥ ६
चन्द्रकान्त इव ज्योत्स्नां शीतलां खे विलासिनीम् ।
तेनावलोकिता सापि तत्परायणतां गता ॥ ७
निशान्ते चक्रवाकेन कान्तेव परिकूजिता ।
रसाद्विकसिता नूनमन्योन्यमनुरक्तयोः ॥ ८
प्रातरर्कनलिन्योर्या शोभा सैव तयोरभूत् ।
संकल्पितार्थदायित्वाद्देशस्याभूच्च तेन सा ॥ ९
सर्वाङ्गं विवशीकृत्य कामायैव समर्पिता ।
पेतुः स्मरशरास्तस्या मृदुष्वङ्गेषु भूरिशः ॥ १०
पलाशेष्विव पद्मिन्या धारा इव पयोमुचः ।
सा बभूव स्मरोद्भूता लोलालिवलयाकुला ॥ ११
मन्दवाताभिनुन्नाया मञ्जर्याः सहधर्मिणी ।
नीलनीरजनेत्रान्तां हंससारसगामिनीम् ॥ १२
मदनः क्षोभयामास गजः कमलिनीमिव ।
अथ तां तादृशीं दृष्ट्वा शुक्रः संकल्पितार्थभाक् ॥ १३

---

देवेश्वरमिन्द्रम् ॥ १७ ॥ इन्द्राश्मजालानीन्द्रनीलसमूहरूपाणि । 'चन्द्राश्म' इति पाठे चन्द्रकान्तसमूहसदृशानि कुसुमानि येषाम् । चिन्तामणय एव गुलुच्छकाः कलिकागुच्छानि येषाम् । पक्कैः फलस्तवकैर्दन्तुरा उन्नतदन्ता इव शोभमानाः ॥ १८ ॥ त्रैलोक्यस्रष्टारं ब्रह्माणम् ॥ १९ ॥ २० ॥ समीपमानीय उपवेशितः ॥ २१ ॥ २२ ॥ सकलस्य पूर्णस्य अमलस्य रजःकलङ्करहितस्य ॥ २३ ॥ नरपतिसत्तमस्य राजोत्तमस्येन्द्रस्य लालनं लालनीयः पुत्रादिरिव प्रियतम इति यावत् ॥ २४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे भार्गवमनोराज्यं नाम षष्ठः सर्गः ॥ ६ ॥

इह भूयः स्वकान्तायाः स्वर्गे शुक्रेण दर्शनम् ।
परस्परानुरागेण संगमश्चोपवर्ण्यते ॥ १ ॥

इति उक्तमनोराज्यप्रकारेण विबुधानां निवासं वैबुधं पुरं स्वर्गम् । स्वेन स्वकीयेन तेजसा पुण्यसामर्थ्येन । व्यसनं मरणदुःखं विनापि ॥ १ ॥ स्वर्गेण सुखातिशयेनाभितः परिमोदितो हर्षितः । 'स्वर्गाभिपरिमोदितः' इति पाठे स्वर्गसंचरणशीलैर्देवैरुत्साहित इत्यर्थः ॥ २ ॥ स्वःश्रियं स्वर्गशोभां स्वसौन्दर्यं च । लोललोचनस्य स्त्रीजनस्य वाञ्छितामभीप्सितमामिति समालोक्य विचार्य । स्त्रैणं स्त्रीसमूहम् ॥३॥ तां पूर्वदृष्टामप्सरसम् । भृगुर्भार्गवः ॥ ४ ॥ तामालोक्य स भार्गवोऽपि परवशोऽभवदित्यनुषङ्गः, परेण वान्वयः ॥ ५ ॥ स्वेदाख्यं संचारिभावं दर्शयति—**विलीयमानाङ्ग** इति ॥ ६ ॥ ७ ॥ निशि वियोगात्परितः कूजितं रुदितं यया सा कान्ता चक्रवाकिनी निशान्ते प्रातश्चक्रवाकेनावलोकितेव । रसात्प्रेमातिशयाद्विकसिता आविष्कृतशोभा । नूनमित्यमेदोत्प्रेक्षाद्योतनाय ॥ ८ ॥ देशस्य नन्दनोद्देशस्य ॥ ९ ॥ १० ॥ पलाशेषु पत्रेषु । तस्याः कम्पाख्यं संचारिभावं दर्शयति—**सेति** । स्मरेणोद्भूता कम्पिता ॥ ११ ॥ सहशब्दः सादृश्ये । सदृशधर्मिणीत्यर्थः ॥ १२ ॥ १३ ॥

तमः संकल्पयामास संहार इव भूतभुक् ।
त्रिविष्टपस्य देशोऽसौ बभूव तिमिराकुलः ॥ १४
भूलोकस्यान्धतमसा लोकालोकतटो यथा ।
लज्जान्धकारतीक्ष्णांशौ तस्मिंस्तिमिरमण्डले ॥ १५
प्रतिष्ठामागते तस्य मिथुनस्येव मण्डले ।
तेषु सर्वेषु भूतेषु गतेष्वभिमतां दिशम् ॥ १६
तस्मात्प्रदेशाद्भूलोके दिनान्ते विहगेष्विव ।
सा दीर्घचञ्चलापाङ्गी प्रवृद्धमदनव्यथा ॥ १७
आजगाम भृगोः पुत्रं मयूरी वारिदं यथा ।
धवलागारमध्यस्थे पर्यङ्के परिकल्पिते ॥ १८
विवेश भार्गवस्तत्र क्षीरोद इव माधवः ।
सा करावलम्ब्यास्य विवेशावनताननाः ॥ १९
रराज च सुरेभस्य हृदि लग्नेव पद्मिनी ।
उवाच चेदं मधुरं रसस्नेहाक्तया गिरा ॥ २०
वचो मधुरमानन्दविलासवलिताक्षरम् ।
पश्यामलेन्दुवदनमण्डलीकृतकार्मुकः ॥ २१
अबलामनुबध्नाति मामेष किल नाङ्गकः ।
पाहि मामबलां नाथ दीनां त्वच्छरणामिह ॥ २२
कृपणाश्वासनं साधो विद्धि सच्चरितव्रतम् ।
स्नेहदृष्टिमजानद्भिर्मूढैरेव महामते ॥ २३
प्रणया अवगण्यन्ते न रसज्ञैः कदाचन ।
अशङ्कितोपसंपन्नः प्रणयोऽन्योन्यरक्तयोः ॥ २४
अधःकरोति निष्यन्दं चन्द्रमाह्लादनं प्रिय ।
न तथा सुखयत्येषा चेतस्त्रिभुवनेशिता ॥ २५
यथा परस्परानन्दः स्नेहः प्रथमरक्तयोः ।
त्वत्पादस्पर्शनेनेयं समाश्वस्तास्मि मानद ॥ २६
चन्द्रपादपरामृष्टा यथा निशि कुमुद्वती ।
संस्पर्शामृतपानेन तव जीवामि सुन्दर ॥ २७
चन्द्रांशुरसपानेन चकोरी चपला यथा ।
मामिमां चरणालीनां भ्रमरीं करपल्लवैः ॥ २८
आलिङ्ग्यामृतसंपूर्णे स्वपद्महृदये कुरु ।
इत्युक्त्वा पुष्पमृद्वङ्गी सा तस्य पतितोरसि ।
व्याघूर्णितालिनयना सुतरोरिव मञ्जरी ॥ २९

तौ दम्पती तत्र विलासकान्ती
विवेशतुस्तासु वनस्थलीषु ।
किञ्जल्कगौरानिलघूर्णितासु
रक्तौ द्विरेफाविव पद्मिनीषु ॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे भार्गवोपाख्याने नवसंगमो नाम सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ८

श्रीवसिष्ठ उवाच ।

इति चित्तविलासेन चिरमुत्प्रेक्षितैः प्रियैः ।
प्रणयैर्भार्गवस्यासीत्तुष्टये सुसमागमः ॥ १
मन्दारमालाकलया विबुधासवमत्तया ।
तदा तेन तया सार्धं द्वितीयेनामलेन्दुना ॥ २
विहृतं मत्तहंसासु हेमपङ्कजिनीषु च ।
तटीष्वमरवाहिन्याः सह चारणकिंनरैः ॥ ३
पीतमिन्दुदलस्यन्दैर्देवैः सह रसायनम् ।
पारिजातलताजालनिलयेषु विलासिना ॥ ४
चारुचैत्ररथोद्यानलतालोलासुदोलया ।
चिरं विलसितं व्यग्रैः सह विद्याधरीगणैः ॥ ५

संहारे प्रलयकाले । भूतभुक् रुद्रः । त्रिविष्टपस्य स्वर्गस्यावयवोऽसौ नन्दनोद्देशः ॥१४॥ लज्जालक्षणस्यान्धकारस्य तीक्ष्णांशौ सूर्यवन्निवारके तिमिरमण्डले तस्मिन्मण्डले नन्दनप्रदेशे तस्य मिथुनस्य स्त्रीपुंसद्वन्द्वस्येव प्रतिष्ठां स्थैर्यं आगते प्राप्ते सतीति परेण सहान्वयः ॥ १५ ॥ भूतेषु तस्याः सखीजनेषु तस्मात्प्रदेशादभिमतां दिशं गतेषु सत्सु ॥ १६ ॥ १७ ॥ धवलागारं स्फाटिकगृहं तन्मध्यस्थे ॥ १८ ॥ १९ ॥ सुरेभस्यैरावणस्य ॥ २० ॥ २१ ॥ नाङ्गकोऽनङ्गकः । अबलां मामनुबध्नाति निर्बन्धयति । अतएव पाहि ॥ २२ ॥ २३ ॥ प्रणयाः प्रीत्यतिशयाः । अवगण्यन्ते न बहुमन्यन्ते । अशङ्कितं अन्यगोचरतासोपाधिकत्वविच्छेदापराधगणनादिशङ्कारहितं यथा स्यात्तथा उपसंपन्नः संजातः ॥ २४ ॥ निष्यन्दं देवसंजीवनामृतस्राविणम् । अधःकरोति संजीवकादाह्लादकाच्च चन्द्रसहस्रादपि प्रियतमप्रणय एवातिशेते इति यावत् । त्रिभुवनेशिता त्रैलोक्यैश्वर्यम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ अमृतसंपूर्णे स्नेहदयामृतभरिते हृत्पद्मान्तस्थे हृदये चित्ते । सुतरोः कल्पवृक्षस्य ॥ २९ ॥ विवेशतुः निर्विविशतुः । गुणश्छान्दसः । किञ्जल्कैः केसरैस्तदीयपरागैर्गौरेण पीतेनानिलेन घूर्णितासु कम्पितासु । वनस्थलीपद्मिन्योः साधारणं विशेषणम् ॥३०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे नवसंगमो नाम सप्तमः सर्गः ॥ ७ ॥

विविधस्वर्गभोगान्ते पतितस्यात्र भूरिशः ।
जन्मानि वासनायोगात्तापसत्वं च कीर्त्यते ॥ १ ॥

उत्प्रेक्षितैः कल्पितैः ॥ १ ॥ मन्दारमालाः आकलयति सर्वतो धारयतीति तथोक्तया । 'मन्दारमालालकया' इति पाठः स्पष्टः । विबुधासवममृतं देवभोग्यमासवान्तरं वा ॥ २ ॥ अमरवाहिन्या मन्दाकिन्याः ॥ ३ ॥ इन्दुदलानां चन्द्रकलानां स्यन्दैर्निष्यन्दरूपैश्चन्द्रकलारन्ध्रशरीरैरिति यावत् । लताजालनिलयेषु कुञ्जेषु ॥ ४ ॥ लताकल्पितया लीलार्थया सुदोलया विलसितं क्रीडितम्

नन्दनोपवनाभोगो मन्दरेणेव वारिधिः ।
भृशमालोड्यतां नीतः प्रथमैः सह शाम्भवैः ॥ ६
बालहेमलताजालजटालासु नदीषु च ।
भ्रान्तमुन्मत्तनागेन मैरवीष्वब्जिनीष्विव ॥ ७
कैलासवनकुञ्जेषु तया सह विलासिना ।
हरेन्दुधवला रात्र्यः क्षिपिता गणगीतिभिः ॥ ८
गन्धमादनशैलस्य विश्रम्योपरि सानुषु ।
सा तेन कनकाम्भोजैरापादमभिमण्डिता ॥ ९
लोकालोकतटान्तेषु विचित्राश्चर्यहारिषु ।
क्रीडितं कृतहासेन राम तेन तया सह ॥ १०
मन्दरान्तरकच्छेषु सार्धं हरिणशावकैः ।
अवसत्स समाः षष्टिं कल्पितामरमन्दिरे ॥ ११
क्षीरार्णवतटीष्वस्य वनितासहचारिणः ।
क्षीणं कृतयुगादर्धं श्वेतद्वीपजनैः सह ॥ १२
गन्धर्वनगरोद्यानलीलाविरचनैरसौ ।
स्रष्टानन्तजगत्स्रष्टेः कालस्यानुकृतिं गतः ॥ १३
अथावसदसौ शुक्रः पुरन्दरपुरे पुनः ।
सुखं चतुर्युगान्यष्टौ हरिणेक्षणया सह ॥ १४
पुण्यक्षयानुसंधानात्ततश्चावनिमण्डले ।
तयैव सह मानिन्या पपातोपहताकृतिः ॥ १५
परालूनसमस्ताङ्गो हृतस्यन्दननन्दनः ।
चिन्तापरवशो ध्वस्तः समितीव हतो भटः ॥ १६
पतितस्यावनौ तस्य चिन्तया सह दीर्घया ।
शरीरं शतधा जातं शिलापातीव निर्झरः ॥ १७
संशीर्णयोर्देहकयोश्चित्तके व्यसनाविले ।
विचेरतुस्तयोर्व्योम्नि निर्नीडौ विहगौ यथा ॥ १८
तत्राविविशतुश्चान्द्रं ते चित्ते रश्मिजालकम् ।
प्रालेयतामुपेत्याशु शालितामथ जग्मतुः ॥ १९
शालींस्तान्भुक्तवान्पक्वान्दशार्णेषु द्विजोत्तमः ।
स शुक्रः शुक्रतामेत्य तद्भार्यातनयोऽभवत् ॥ २०
ततो मुनीनां संसर्गात्तपस्युग्रे व्यवस्थितः ।
अवसन्मेरुगहने मन्वन्तरमनिन्दितः ॥ २१
तत्र तस्य समुत्पन्नो मृग्याः पुत्रो नराकृतिः ।
तत्स्नेहेन परं मोहं पुनरप्याययौ क्षणात् ॥ २२
पुत्रस्यास्य धनं मेऽस्तु गुणाश्चायुश्च शाश्वतम् ।
इत्यनारतचिन्ताभिर्जहौ सत्यामवस्थितिम् ॥ २३
धर्मचिन्तापरिभ्रंशात्पुत्रार्थं भोगचिन्तया ।
क्षीणायुषं तमहरन्मृत्युः सर्पं इवानिलम् ॥ २४
भोगैकचिन्तया सार्धं समुत्क्रान्तचेतनः ।
प्राप्य मद्रेशपुत्रत्वमासीन्मद्रमहीपतिः ॥ २५
मद्रदेशे चिरं कृत्वा राज्यमुत्सन्नशात्रवम् ।
जरामभ्याजगामात्र हिमाशनिरिवाम्बुजम् ॥ २६
मद्रराजतनुं चाहं तपोवासनया सह ।
तत्याज तेन जातोऽसौ तपस्वी तापसात्मजः ॥ २७
समङ्गाया महानद्यास्तटमासाद्य तापसः ।
तपस्तेपे महाबुद्धिः स राम विगतज्वरः ॥ २८

विविधजन्मदशां विविधाशयः
समनुभूय शरीरपरम्पराः ।
सुखमतिष्ठदसौ भृगुनन्दनो
वरनदीसुतटे दृढवृक्षवत् ॥ २९

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे भार्गवोपाख्याने शुक्रविविधजन्मानुभवो नामाष्टमः सर्गः ॥ ८ ॥

---

॥५॥शाम्भवैः शिवानुचरैः प्रमथैः सह आलोड्यतां परिभ्रान्तताम् ॥ ६ ॥ उन्मत्तनागेन मत्तगजेन । मैरवीषु मेरुसंबन्धिनीषु भूमिषु ॥ ७ ॥ हरस्येन्दुना चूडामणिना कृष्णपक्षेऽपि धवलाः । क्षिपिताः क्षिप्ताः । अतिवाहिता इति यावत् । इट् छान्दसः ॥ ८ ॥ सा वधूः ॥ ९ ॥ लोकालोको भूप्रान्तपर्वतः प्रसिद्धः ॥ १० ॥ कच्छेषु जलप्रायशिशिरदेशेषु । हरिणशावकैर्मृगपोतैः । षष्टिं समाः संवत्सरान् ॥ ११ ॥ १२ ॥ मनोरथमात्रेण शुक्र एव सर्वजगत्स्रष्टेः क्रमेण स्रष्टा सन् कालस्यानुकृतिं साम्यं गतः प्रापेत्यर्थः ॥ १३ ॥ १४ ॥ उपहता पतनप्रतिसंधानभयाद्गलिता आकृतिर्दिव्यशरीरं यस्य ॥ १५ ॥ परालूनानि द्रवीभावेन विच्छिन्नानि समस्ताङ्गानि यस्य । हृते देवैर्बलाद्गृहीते स्यन्दनं विमानं नन्दनं वनं वासोलङ्काराद्युपभोगानन्दसाधनं च यस्य । ध्वस्तः अधःपतितः । समिति युद्धे ॥ १६ ॥ शरीरं द्रवीभूतस्वरूपम् ॥ १७ ॥ चित्तके लिङ्गशरीरे द्वे । व्यसनेन दुःखेन आविले अस्वच्छे ॥ १८ ॥ तत्र व्योम्नि । आविविशतुः प्रविष्टे । प्रालेयतां हिमजलताम् ॥ १९ ॥ दशार्णेषु देशविशेषेषु । शुक्रतां रेतस्ताम् ॥ २० ॥ मेरुगहने इलावृतादिवर्षे ॥ २१ ॥ मृग्या इति अर्थात्साप्सराः शापान्मृगी संपन्नेति गम्यते ॥ २२ ॥ सत्यां श्रुत्यादिप्रमाणनियन्त्रितामवस्थितिं तपोध्यानदानादिनिष्ठां जहौ ॥ २३ ॥ अहरत् अग्रसत् ॥ २४ ॥ मद्रेशो मद्रराजस्तस्य पुत्रत्वं प्राक्तनब्राह्मण्यापेक्षया निकृष्टां क्षात्रयोनिमित्याशयः ॥ २५ ॥ अभ्याजगाम प्राप ॥ २६ ॥ तपोवासनया वानप्रस्थधर्मसंचिन्तयेत्यर्थाद्गम्यते ॥ २७ ॥ विगतज्वरः शान्त्यादिनिरस्तरागादिसंतापः ॥ २८ ॥ असौ प्रागुक्तो भृगुनन्दनः शुक्रो विविधाशयो नानाविधवासनावासितः संस्तत्तदनुसारिणीं विविधजन्मदशां प्राप्य शरीरपरम्पराः सम्यगनुभूय दैवाद्वैराग्यादिसाधनसंप्राप्त्या सुखं निर्विक्षेपं यथा स्यात्तथा वरनद्याः समङ्गायाः सुतटे दृढवृक्षवच्छेदनभेदनादिविक्षेपसहस्रेऽप्यचञ्चलवृत्तिरतिष्ठदित्यर्थः ॥२९॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे शुक्रविविधजन्मानुभवो नामाष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ९

श्रीवसिष्ठ उवाच ।

इति चिन्तयतस्तस्य शुक्रस्य पितुरग्रतः ।
जगामातितरां कालो बहुसंवत्सरात्मकः ॥ १
अथ कालेन महता पवनातपजर्जरः ।
कायस्तस्य पपातोर्व्यां छिन्नमूल इव द्रुमः ॥ २
मनस्तु चञ्चलाभोगं तासु तासु दशासु च ।
बभ्रामातिविचित्रासु वनराजिष्विवैणकः ॥ ३
भ्रान्तमुद्भ्रान्तमभितश्चक्रार्पितमिवाकुलम् ।
मनस्तस्य विशश्राम समङ्गासरितस्तटे ॥ ४
अनन्तवृत्तान्तघनां पेलवां सुदृढामपि ।
तां संसृतिदशां शुक्रो विदेहोऽनुभवन्स्थितः ॥ ५
मन्दराचलसानुस्था सा तनुस्तस्य धीमतः ।
तापप्रसरसंशुष्का चर्मशेषा बभूव ह ॥ ६
शरीररन्ध्रप्रवहद्वातसीत्काररूपया ।
चेष्टा दुःखक्षयानन्दात्काकल्येव प्रगायति ॥ ७
मनोवराकमवटे लुठितं भवभूमिषु ।
हसतीवेति शुभ्राभ्रसितया दन्तमालया ॥ ८
दर्शयन्ती जगच्छून्यं वपुरक्ष्णोरकृत्रिमम् ।
मुखारण्यजरत्कूपरूपया गर्तशोभया ॥ ९
तापोपतप्ता संसिक्ता वर्षाजलभरेण सा ।
प्रागनुस्मरणोल्लासमिव बाष्पं विमुञ्चति ॥ १०
चन्द्रानिलविलासेन लुलिता वनभूमिषु ।
धारानिकरपातेन विनुन्ना जलदागमे ॥ ११
प्रावृण्निर्झररूपेण प्लुता गिरिनदीतटे ।
पांशुना पवनोत्थेन दुष्कृतेनेव रूषिता ॥ १२
शुष्ककाष्ठवदालोला वातेषु कृतखाकृतिः ।
तारमारुतसीत्कारे वने तप इवास्थिता ॥ १३
वक्रा शुष्कान्त्रतन्त्री च भूतभाङ्कारकारिणी ।
अरण्यलक्ष्मीर्बाल्येव शून्या चर्ममयोदरी ॥ १४
रागद्वेषविहीनत्वात्तस्य पुण्याश्रमस्य तु ।
महातपस्त्वाच्च भृगोर्न भुक्ता मृगपक्षिभिः ॥ १५
यमनियमकृशीकृताङ्गयष्टि-
श्चरति तपः स्म भृगूद्वहस्य चेतः ।
तनुरथ पवनापनीतरक्ता
चिरमलुठन्महतीषु सा शिलासु ॥ १६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे भा० भार्गवकलेवरवर्णनं नाम नवमः सर्गः ॥ ९ ॥

---

इह शुक्रशरीरस्य भृगुसंनिधिवर्तिनः ।
मृतप्रायस्य पतनं शुष्कता चोपवर्ण्यते ॥ १ ॥

इति उक्तप्रकारेण चिन्तयतो मनोराज्यैः कल्पयतः । पितुर्भृगोरग्रतः ॥ १ ॥ पवनातपाभ्यां जर्जरः शिथिलीकृतः ॥२॥ तासु तासु स्वकल्पितस्वर्गगमनादिदशासु । एणको हरिणः ॥३॥ भोगकल्पनाभिर्भ्रान्तम् । जन्ममरणपरम्पराकल्पनयोद्भ्रान्तम् । विशश्राम विश्रान्तिं प्राप ॥ ४ ॥ मनःकल्पनामात्रत्वात्पेलवाम् । सत्यताभ्रान्त्या प्राक्तनदेहविस्मरणात्सुदृढाम् । विदेहः शुक्रदेहनिरपेक्षः ॥ ५ ॥ चर्मशेषा बहिः । अन्तस्त्वस्थिशेषा ॥ ६ ॥ सा तनुरभिमानदुःखक्षयप्रयुक्तादानन्दाद्धेतोः शरीररन्ध्रेषु वेणुरन्ध्रेष्विव प्रवहतः संचरतो वातस्य ये वेणुध्वनिवत्सीत्कारास्तैद्रूपया[1] काकल्या सूक्ष्माव्यक्तमधुरध्वनिना देहस्य ईदृशी गतिरिति तच्चेष्टाः प्रगायतीवेत्युत्प्रेक्षा ॥ ७ ॥ तामेव देहदशामुत्प्रेक्षान्तरैरपि वर्णयति—**मनोवराक**मित्यादिना । सा तनुर्भवभूमिषु भोगाशालक्षणे अवटे शुष्कपल्वले इति प्राग्वर्णितप्रकारेण लुठितं मनोवराकं शुभ्राभ्रसितया दन्तमालया हसतीव ॥ ८ ॥ सा तनुर्मुखमण्डलरूपे अरण्ये जरत्कूपसमूहरूपया नासानयनवक्त्रादिगर्तानां शोभया अकृत्रिमं स्वाभाविकं जगतः शून्यमसद्रूपतां विवेकिनां वपुरक्ष्णोः प्रत्यक्षं दर्शयन्तीव स्थितेत्यर्थः । वपुर्ग्रहणं तदाश्रितप्रमाणान्तरोपलक्षणार्थम् ॥ ९ ॥ प्राक्तापोपतप्ता पश्चात्संसिक्ता । प्रागनुस्मरणं स्वबन्धुभूतपूर्वपूर्वदेहपरम्परानुस्मरणं तत्प्रयुक्ताद्दुःखादानन्दाद्वा उल्लसतीति प्रागनुस्मरणोल्लासं बाष्पम्, अश्रुधूमाभासयोः श्लेषादभेदारोपः ॥ १० ॥ ११ ॥ प्रावृड्निर्झरस्य रूपेण धातुरागेण प्लुता रञ्जिता ॥ १२ ॥ खाकृतिर्विलोडनोत्थखड्शब्दकरणम् । अव्यक्तानुकरणाड्डाचि बहुलग्रहणान्न द्वित्वम् । भूतानां भाङ्कारो भयङ्करध्वनिस्तत्करणशीला अरण्यलक्ष्मीः अलक्ष्मीः । बाल्या बलिकर्मणा । आहारेणेति यावत् । ब्राह्मणादेराकृतिगणत्वात्कर्मणि ष्यञ् ङीष् । चर्ममयोदरी चर्ममात्रशेषोदरी ॥१३॥१४॥ तर्हि सा तनुः श्वापदगृध्रादिभिः कुतो न भक्षिता तत्राह—**रागे**ति । सप्रमाणत्वाच्च न विशीर्णेत्यपि द्रष्टव्यम् ॥ १५ ॥ यमनियमाभ्यां कृशीकृता अङ्गयष्टिः स्वकल्पितशरीरान्तरं येन । क्लीबेऽपि विभक्त्यलुक् छान्दसः । भृगूद्वहस्य शुक्रस्य चेतश्चित्तं तपश्चरति स्म समङ्गातटे । सा प्राक्तनी शुक्रतनुः ॥ १६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे भार्गवकलेवरवर्णनं नाम नवमः सर्गः ॥ ९ ॥

---

१ तद्भूतया इति क्वचित्.

## दशमः सर्गः १०

श्रीवसिष्ठ उवाच ।

अथ वर्षसहस्रेण दिव्येन परमेश्वरः ।
भृगुः परमसंबोधाद्विरराम समाधितः ॥ १
नापश्यदग्रे तनयं विनयावनताननम् ।
सामन्तं गुणसेनायाः पुण्यं मूर्तमिव स्थितम् ॥ २
अपश्यत्केवलं कायकङ्कालं पुरतो महत् ।
देहयुक्तमिवाभाग्यं दारिद्र्यमिव मूर्तिमत् ॥ ३
तापशुष्कवपुः कृत्तिरन्ध्रस्फुरिततित्तिरि ।
संशुष्कान्त्रोदरगुहाछायाविश्रान्तदर्दुरम् ॥ ४
नेत्रगर्तकसंसक्तप्रसूतनवकीटकम् ।
पर्शुकापञ्जरप्रोतकोशकारकृमिव्रजम् ॥ ५
प्राक्तनीमुपभोगेहामिष्टानिष्टफलप्रदाम् ।
धाराधौतान्त्रया तद्वद्धूरां शुष्कास्थिमालया ॥ ६
शिरोघटेन शुभ्रेण मसृणेनेन्दुवर्चसा ।
विडम्बयच्च कर्पूरासुतलिङ्गशिरःश्रियम् ॥ ७
ऋज्व्या संशुष्कशिरया स्वास्थिमात्रावशेषया ।
ग्रीवयात्मानुसृतया दीर्घीकुर्वेदिवाकृतिम् ॥ ८
मृणालिकापाण्डुरया धारावभृतमांसया ।
नासाग्रास्थिकया वक्त्रे कृतसीमाकृतिं दधत् ॥ ९
दीर्घकन्धरया नूनमुन्नतीकृतवक्त्रया ।
प्रेक्षमाणमिव प्राणानुत्क्रान्तानम्बरोदरे ॥ १०
जङ्घोरुजानुदोर्दण्डैर्द्विगुणां दीर्घतां गतैः ।
प्रतिष्ठानमिवाशान्तं दीर्घाध्वश्रमभीतितः ॥ ११
उदरेणातिरिक्तेन चर्मशेषेण शोषिणा ।
प्रदर्शयदिवाज्ञस्य हृदयस्यातिशून्यताम् ॥ १२
प्रेक्ष्य तच्छुष्ककङ्कालमालानं दुःखदन्तिनः ।
पूर्वापरपरामर्शमकुर्वन्भृगुरुत्थितः ॥ १३
आलोकसमकाले हि प्रतिभानं ततो भृगोः ।
चिरमुत्क्रान्तजीवः किं मत्पुत्रोऽयमिति क्षणात् ॥ १४
अचिन्तयत एवास्य भविष्यं तनयं ततः ।
कालं प्रति बभूवाशु कोपः परमदारुणः ॥ १५
अकाल एव मत्पुत्रो नीतः किमिति कोपितः ।
कालाय शापमुत्स्रष्टुं भगवानुपचक्रमे ॥ १६
अथाकलितरूपोऽसौ कालः कवलितप्रजः ।
आधिभौतिकमास्थाय वपुर्मुनिमुपाययौ ॥ १७
खड्गपाशधरः श्रीमान्कुण्डली कवचान्वितः ।
षड्भुजः षण्मुखो वह्व्या वृतः किङ्करसेनया ॥ १८
यच्छरीरसमुत्थेन ज्वालाजालेन वलगता ।
फुल्लकिंशुकवृक्षस्य बभाराद्रेः श्रियं नभः ॥ १९
यत्करस्थत्रिशूलाग्रनिःसृतैरग्निमण्डलैः ।
विरेजुरुदितैराशाः कानकैरिव कुण्डलैः ॥ २०
यत्परश्वसनापास्तशिखरा मेदिनीभृतः ।
दोलामिव समारूढाश्चेलुः पेतुश्च घूर्णिताः ॥ २१
यत्खड्गमण्डलोद्द्योतैः श्यामं बिम्बं विवस्वतः ।
कल्पदग्धजगद्धूमपर्याकुलमिवाबभौ ॥ २२

---

दृष्टपुत्रतनोः कोपो भृगोरत्रोपवर्ण्यते ।
कालं प्रत्यथ कालेन बोधनं चात्मविद्यया ॥ १ ॥

परमं परमात्मानं संबोधयति स्फुटं दर्शयतीति परमसंबोधः समाधिस्ततः ॥ १ ॥ गुणसेनाया गुणसमूहस्य सामन्तमधिष्ठातारम् ॥ २ ॥ कायलक्षणं कङ्कालं शवम् ॥ ३ ॥ कङ्कालमेव वर्णयति—तापेत्यादिना । तापेनातपेन शुष्कवपुः । राहुः सर्पशिरा इतिवद्बहुव्रीहिः । कृत्तिरन्ध्रेषु चर्मच्छिद्रेषु कृतनीडत्वात् स्फुरितास्तित्तिरयः पक्षिभेदा यत्र । संशुष्कान्त्राया उदरगुहायाश्छायायां विश्रान्ता दर्दुरा भेका यस्य ॥ ४ ॥ नेत्रगर्तके संसक्ता प्रसूता अपत्यपरम्पराभिर्वृद्धा नवकीटका यस्य । पर्शुकानि पार्श्वास्थीनि तल्लक्षणे पञ्जरे प्रोताः कोशकारकृमयः पूर्वदेशप्रसिद्धा लूता वा ॥ ५ ॥ उपभोगेहां भोगवासनां शुष्कास्थिमालया विडम्बयदित्युत्तरेणान्वयः । नानावैचित्र्यसंधिबन्धैर्देहारम्भकत्वेन चास्थ्नां वासनानां च साम्यात् ॥ ६ ॥ त्वचो विशीर्णत्वेनास्थिमात्रशेषादिन्दुवर्चसा पूजाविशेषे कर्पूरैराप्लुतस्याभिषिक्तस्य शिवलिङ्गशिरसः श्रियं शोभां विडम्बयत् अनुकुर्वत् ॥ ७ ॥ वासनाप्रसृतमात्मानमनुसृतयेव ॥ ८ ॥ वर्षधाराभिरवभृतमांसया शीर्णमांसया नासाग्रास्थिकया वक्त्रे मुखमण्डले कृतः सीमामध्यावधारणशङ्कुर्यस्य तदाकृतिं दधत् । नासास्थ्यग्रस्य मुखमण्डलमध्यत्वादित्यर्थः । 'नासाग्रस्थितया' इति पाठे अस्थिकयेति विशेष्यमध्याहार्यम् ॥ ९ ॥ दीर्घया कन्धरया ग्रीवया ॥ १० ॥ दण्डशब्दस्य प्राण्यङ्गवचनत्वाभावान्न द्वन्द्वैकवद्भावः । जङ्घादिभिरष्टभिः आशान्तं अष्टदिगन्तं प्रति प्रतिष्ठानं प्रतिष्ठमानं प्रस्थानं कुर्वाणमिव विश्लिष्य पलायनकाममिवेति यावत् । मुगभावश्छान्दसः । दीर्घाध्वश्रमभीतित इति तत्र हेतूत्प्रेक्षा । नहि दीर्घे परलोकाध्वनि कायवहनश्रमः सोढुं शक्यत इति भयादिवेत्यर्थः ॥ ११ ॥ १२ ॥ आलानं बन्धनस्तम्भम् ॥ १३ ॥ आलोकनमालोकस्तत्समकालं प्रतिभानं वक्ष्यमाणवितर्कः अभूदिति शेषः ॥ १४ ॥ भविष्यमवश्यभाव्यर्थमचिन्तयतः, तनयं मृतं दृष्ट्वेति शेषः ॥ १५ ॥ ॥ १६ ॥ अकलितरूपः अरूपोऽपीति यावत् । आकलितं कल्पितं रूपं येनेति वा ॥ १७ ॥ प्रतिपार्श्वं षड्भुजो द्वादशमासभुज इत्यर्थः । षड्ऋतुमुखः ॥ १८ ॥ १९ ॥ आशा दिशः । कानकैः कनकमयैः ॥ २० ॥ परेण प्रबलेन श्वसनेन श्वासवायुना अपास्तशिखराः ॥ २१ ॥ कल्पे प्रलयकाले दग्धस्य

स उपेत्य महाबाहो कुपितं तं महामुनिम् ।
कल्पक्षुब्धाब्धिगम्भीरं सान्त्वपूर्वमुवाच ह ॥ २३
विज्ञातलोकस्थितयो मुने दृष्टपरावराः ।
हेतुनापि न मुह्यन्ति किं नु हेतुं विनोत्तमाः ॥ २४
त्वमनन्ततपा विप्रो वयं नियतिपालकाः ।
तेन संपूज्यसे पूज्यः साधो नेतरयेच्छया ॥ २५
मा तपःक्षपयाऽबुद्धे कल्पकालमहानलैः ।
यो न दग्धोऽस्मि मे तस्य किं त्वं शापेन धक्ष्यसि ॥ २६
संसारावलयो ग्रस्ता निगीर्णा रुद्रकोटयः ।
भुक्तानि विष्णुवृन्दानि क न शक्ता वयं मुने ॥ २७
भोक्तारो हि वयं ब्रह्मन्भोजनं युष्मदादयः ।
स्वयं नियतिरेषा हि नावयोरेतदीहितम् ॥ २८
स्वयमूर्ध्वं प्रयात्यग्निः स्वयं यान्ति पयांस्यधः ।
भोक्तारं भोजनं याति सृष्टिं चाप्यन्तकः स्वयम् ॥ २९
इदमित्थं मुने रूपं ममेह परमात्मनः ।
स्वात्मनि स्वयमेवात्मा स्वत एव विजृम्भते ॥ ३०
नेह कर्ता न भोक्तास्ति दृष्ट्या नष्टकलङ्कया ।
बहवश्चेह कर्तारो दृष्ट्याऽनष्टकलङ्कया ॥ ३१
कर्तृताकर्तृते ब्रह्मन्केवलं परिकल्पिते ।
असम्यग्दर्शनेनैव न सम्यग्दर्शनस्य ते ॥ ३२

पुष्पाणि तरुखण्डेषु भूतानि भुवनेषु च ।
स्वयमायान्ति यान्तीह कल्पते हेतुनामभिः ॥ ३३
अबिम्बितस्य चन्द्रस्य चलने कैव कर्तृते ।
न सत्ये नानृते यद्वत्तद्वत्कालस्य सृष्टिषु ॥ ३४
मनो मिथ्याभ्रमाभोगे कर्तृताकर्तृतामयीम् ।
करोति कलनां रज्ज्वां भ्रान्तेक्षण इवाहिताम् ॥ ३५
तेन मागा मुने कोपमापदामीदृशः क्रमः ।
यद्यथा तत्तथैवाशु सत्यमालोकयाकुलः ॥ ३६
न वयं प्रतिभार्थेहा नाभिमानवशीकृताः ।
स्वतो हि तात वशगाः केवलं नियतौ स्थिताः ॥ ३७
प्रकृतव्यवहारेहानियतीर्नियतेर्वशात् ।
प्राज्ञाः समभिवर्तन्ते नाभिमानमहातमः ॥ ३८
कर्तव्यमेव नियतं केवलं कार्यकोविदैः ।
सुषुप्तिवृत्तिमाश्रित्य कदाचित्त्वं न नाशय ॥ ३९
क सा ज्ञानमयी दृष्टिः क महत्त्वं क धीरता ।
मार्गे सर्वप्रसिद्धेऽपि किमन्ध इव मुह्यसि ॥ ४०
स्वकर्मफलपाकोत्थामविचार्य दशां मुने ।
किं मूर्ख इव सर्वज्ञ मुधा मां शप्तुमिच्छसि ॥ ४१
देहिनामिह सर्वेषां शरीरं द्विविधं मुने ।
किं न जानासि तं देहमेकमन्यन्मनोभिधम् ॥ ४२

---

जगतो धूमेन पर्याकुलं मुखमिव विकृतम् ॥ २२ ॥ महाबाहो इति रामस्य राज्ञो वा संबोधनम् ॥ २३ ॥ हेतुना परापराधादिनिमित्तेन सतापि ॥ २४ ॥ इतरया शापभयादिनिमित्तया ॥ २५ ॥ शापदाने प्रत्युत तवैवानिष्टं स्यान्न ममेत्याशयेनाह—**मा तप** इति । अबुद्धे व्यर्थबुद्धे इति क्षेपच्छलेन ज्ञानबाधितत्वादविद्यमानबुद्धे इति प्रशंसा । 'समानवाक्ये युष्मदस्मदादेशा वक्तव्याः' इति कात्यायनवचनविरोधाद्भिन्नवाक्यस्थपदात्परस्य मे इत्यादेशश्छान्दसः ॥ २६ ॥ अप्रधृष्यतामुक्त्वा स्वस्याव्याहतशक्तितामाह—**संसारे**ति । संसारावलयो ब्रह्माण्डपङ्क्तयः । क कस्मिन्विषये न शक्तास्तमुदाहरेत्यर्थः । 'क नु शप्ता' इति पाठे तु क कस्मिन्नपराधे केन वा शापेनाभिभूता इत्यर्थः । स्वयं नियतिः स्वाभाविकी मर्यादा । ईहितमिच्छाद्वेषादिनिमित्तान्तरकृतमित्यर्थः ॥२७॥२८॥ सृज्यत इति सृष्टिस्तां जन्यभावमित्यर्थः । अन्तको विनाशकालः । 'स यद्यदेवासृजत तत्तदत्तुमध्रियते'ति श्रुतेरिति भावः ॥ २९ ॥ कुतस्तव सर्वभोक्तृता किं वा स्वरूपं तत्राह—**इद**मिति । ईदं मूर्तामूर्तं जगत्परमात्मनो मम इत्थं भोज्यस्वभावतयैव स्वस्मिन् कल्पितं रूपम् । यतः परमात्मा स्वात्मनि स्वयमेव जगदात्मना विजृम्भते । अतः स्वयमेवोपसंहरतीत्यर्थः ॥ ३० ॥ इदमप्यौपनिषदव्यवहारदृशोक्तं, परमार्थदृशा त्वाह—**नेहे**ति । कर्मठदृष्ट्या त्वाह—**बहव** इति । अनष्टकलङ्कयेति च्छेदः ॥ ३१ ॥ सम्यग्दर्शनं तत्त्वसाक्षात्कारो यस्य तस्य ते कर्तृताकर्तृते न स्तः ॥ ३२ ॥ 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः' इत्यादिभगवद्दर्शितं पक्षमाश्रित्याह—**पुष्पाणी**ति । हेतुनामभिः[4] कर्त्रादिशब्दैः । 'हेतुना विधिः' इति पाठे विधीयत इति विधिः प्राणिकर्मैव स्वाक्षिप्तेन हेतुना निमित्तवैचित्र्येण विचित्रकार्येऽपि कल्पते समर्थो भवतीत्यर्थः ॥ ३३ ॥ परमार्थदृशा अभावान्न सत्ये, व्यवहारसंवादान्नानृते । कालस्य कालरूपस्य परमात्मनः ॥ ३४ ॥ भ्रान्तेक्षणो दुष्टदृष्टिः ॥ ३५ ॥ तेन वर्णितरीत्या अपराधासंभवेन । आकुलः सन् कोपं मागाः ॥ ३६ ॥ रागाभिमानादिवशात्त्वत्पुत्रवधे अपराधिता स्यान्न च मे तौ स्त इत्याह—**न वय**मिति । प्रतिभार्थं भ्रान्तिकल्पितख्यातिपूजाद्यर्थं ईहा रागो येषाम् । 'अस्मदो द्वयोश्च' इति बहुवचनम् । त्वत्समीपागमनमपि न त्वत्क्रोधभयात्किंतु तपस्विनो मान्या इति नियतिवशादित्याशयेनाह—**स्वत** इति ॥ ३७ ॥ सर्वप्राज्ञानुसारित्वान्नियतिवश्यता ममोचिता तव तु क्रोधाभिमानतमोनुवृत्तिरनुचितेत्याशयेनाह—**प्रकृते**ति । जगन्मर्यादापालकेश्वरेच्छालक्षणमहानियतेर्वशादवान्तरप्रकृतव्यवहारेच्छानियतीः समनुवर्तन्त इत्यर्थः ॥ ३८ ॥ कार्यकोविदैर्व्यवहारचतुरैः कर्तव्यमेव अवश्यं कर्तव्यं नियतं स्वस्वोचितमर्यादापालनं त्वं सुषुप्तवृत्तिं तमोवृत्तिमाश्रित्य न नाशय । 'कदाचिदपि नाशय' इति पाठे स्पष्टम् ॥ ३९ ॥ सर्वप्राज्ञप्रसिद्धे ॥ ४० ॥ मुधा व्यर्थम् ॥ ४१ ॥ इत्थं भृगोर्मोहं

---

१ पर्याकुलमिवेत्येतावतैव निर्वाहे मुखमिवेत्याद्यधिकमत्रेति भाति.
२ इह इति मुद्रितपुस्तके पाठः.
३ कर्तृकर्तृते इति पाठः. ४ इह विषये कर्त्रादिशब्दैः काल एव कल्पते इति कालपदाध्याहारेण योजना कार्या ।

तत्र देहो जडोऽत्यर्थमाविनाशपरायणः ।
मनस्तुच्छं च नियतं कदर्थीक्रियते तव ॥ ४३
चतुरेण यथा साधो रथः सारथिनोह्यते ।
कुर्वता किंचन स्नेहाद्देहोऽयं मनसा तथा ॥ ४४
असत्संकल्पः क्रियते सच्छरीरं विनाश्यते ।
क्षणेन मनसा पङ्कपुरुषः शिशुना यथा ॥ ४५
चित्तमेवेह पुरुषस्तत्कृतं कृतमुच्यते ।
तद्वद्धं कलनाहेतोः कलनास्तं विमुच्यते ॥ ४६
अयं देह इवात्रस्थमिदमङ्गमिदं शिरः ।
इदं स्फारविकारं तन्मन एवाभिधीयते ॥ ४७
मनो हि जीवाज्जीवाख्यं निश्चयैकतया नु धीः ।
अहङ्कारोऽभिमन्तृत्वान्नानाता स्वयमेव हि ॥ ४८
देहवासनया चेतस्त्वन्यानि स्वानि चेच्छया ।
पार्थिवानि शरीराणि ह्यसन्ति परिपश्यति ॥ ४९
आलोकयति चेत्सत्यं तदा सत्यमयीं मनः ।
शरीरभावनां त्यक्त्वा परामायाति निर्वृतिम् ॥ ५०
तन्मनस्तव पुत्रस्य समाधौ त्वयि संस्थिते ।
स्वमनोरथमार्गेण दूराद्दूरतरं गतम् ॥ ५१
इममौशनसं त्यक्त्वा देहं मन्दरकन्दरे ।
प्रयातो वैबुधं सद्म नीडोड्डीनः खगो यथा ॥ ५२
तत्र मन्दरगुञ्जेषु पारिजाततलेषु च ।
नन्दनोद्यानखण्डेषु लोकपालपुरेषु च ॥ ५३
मुने चतुर्युगान्यष्टौ विश्वाचीं देवसुन्दरीम् ।
असेवत महातेजाः षट्पदः पद्मिनीमिव ॥ ५४
तीव्रसंवेगसंपन्नस्वसंकल्पोपकल्पिते ।
अथ पुण्यक्षये जाते नीहार इव शार्वरे[1] ॥ ५५
प्रम्लानकुसुमोत्तंसः खिन्नाङ्गावयवोल्लसः ।
स पपात तया सार्धं कालपक्वं फलं यथा ॥ ५६
वैबुधं तत्परित्यज्य नभस्येव शरीरकम् ।
भूताकाशमथासाद्य वसुधायां व्यजायत ॥ ५७
आसीद्विप्रो दशार्णेषु कोसलेषु महीपतिः ।
धीवरोऽथ महाटव्यां हंसस्त्रिपथगातटे ॥ ५८
सूर्यवंशे नृपः पौण्ड्रः सौरशाल्वेषु देशिकः ।
कल्पं विद्याधरः श्रीमान्धीमानथ मुनेः सुतः ॥ ५९
मद्रेष्वथ महीपालस्ततस्तापसबालकः ।
वासुदेव इति ख्यातः समङ्गायास्तटे स्थितः ॥ ६०
अन्यास्वपि विचित्रासु वासनावशतः स्वयम् ।
विषमास्वेव पुत्रस्ते चचारान्तरयोनिषु ॥ ६१
अभूद्विन्ध्यनगे भूयः किरातः कैकटेषु च ।
सौवीरेष्वथ सामन्तस्त्रिगर्तेषु च गर्दभः ॥ ६२
वंशगुल्मः किरातेषु हरिणश्चीनजङ्गले ।
सरीसृपस्तालवृक्षे तमाले वनकुक्कुटः ॥ ६३
अयं स पुत्रो भवतो भूत्वा मन्त्रविदां वरः ।
प्रजजाप पुरा विद्यां विद्याधरपुरप्रदाम् ॥ ६४
तेनासावभवद्ब्रह्मन्व्योम्नि विद्याधरो महान् ।
हारकुण्डलकेयूरलीलानिचयलालकः ॥ ६५
नायिकानलिनीभानुः पुष्पचाप इवापरः ।
विद्याधरीणां दयितो गन्धर्वपुरभूषणः ॥ ६६
स कल्पावधिमासाद्य द्वादशादित्यधामनि ।
जगाम भस्मशेषत्वं शलभः पावके यथा ॥ ६७
जगन्निर्माणरहिते स्फारे नभसि सा ततः ।
वासना तस्य बभ्राम निर्नीडा विहगी यथा ॥ ६८

---

विनिन्द्य प्रसुप्तं ज्ञानं प्रबोधयितुमुपक्रमते—**देहिना**मित्यादिना । तं प्रसिद्धं स्थूलम् ॥४२॥ आविनाशः ईषन्निमित्तेनापि विनाशः । नियतं आमोक्षस्थायि । तुच्छं प्रातिभासिकम् । कदर्थीक्रियते क्रोधादिना पीड्यते ॥ ४३ ॥ स्नेहादभिमानात्किंचन ईदृशमिति विशिष्य वक्तुमशक्यमन्तर्व्यापारं कुर्वता ॥ ४४ ॥ असद्देहान्तरविषयः संकल्पः क्रियते । सत् पूर्वसिद्धं विनाश्यते । पङ्कपुरुष आर्द्रमृत्पुत्रिका क्रीडार्था ॥ ४५ ॥ असत्संकल्पनमेव कलना तद्रूपाद्धेतोर्बद्धम् ॥ ४६ ॥ तस्य देहकलनाप्रकारमभिनयन्नाह—**अय**मिति ॥ ४७ ॥ एकमेव मनो यथा पूर्वपूर्वजीवाज्जीवान्तराख्यं भवति तथा जीवटोपाख्याने वक्ष्यते । मनःसंकल्पितेऽर्थे निश्चयैकतया मन एव तदनु धीर्भवति । अभिमन्तृत्वादहङ्कार इति मनः स्वयमेव नानाता नानात्वं भवतीत्यर्थः ॥ ४८ ॥ ४९ ॥ इदंच मनसो देहादिकल्पकत्वमात्मसाक्षात्कारपर्यन्तमेव नोत्तरत्रेत्याह—**आलोकयती**ति ॥ ५० ॥ एवं भृगुं प्रबोध्य मनोविलासमात्रकृतां तत्पुत्रकथां प्रस्तौति—**तदि**ति ॥ ५१ ॥ इमं त्वया दृश्यमानम् ॥ ५२ ॥ ५३ ॥ देवसुन्दरीमप्सरसम् ॥ ५४ ॥ स्वर्ग इव पुण्यक्षयात्तत्पातोऽपि मनःकल्पनयैवेत्याशयेनाह—**तीव्रे**ति ॥ ५५ ॥ स्वर्ग उत्तंसकुसुमम्लान्यादिकं स्वर्गे पुण्यक्षयचिह्नम् ॥ ५६ ॥ अजायत जन्म लेभे ॥ ५७ ॥ तस्य तत्तद्वासना कर्मानुसारीणि पूर्वमुक्तान्यनुक्तानि च बहूनि जन्मान्याह—**आसीदित्या**दिना ॥ ५८ ॥ पौण्ड्रः पुण्ड्रदेशाधिपतिः । देशिको मन्त्रसिद्धः अन्येषामुपदेष्टा । अतएव मन्त्रोपास्तिप्रभावात्कल्पं विद्याधरः । अथ अनन्तरं मुनेः सुतो जातः ॥५९॥६०॥ नैतावन्त्येवास्य जन्मानि किंत्वन्यान्यप्यासन्नित्याह—**अन्यास्वपी**ति ॥ ६१ ॥ सामन्तो मण्डलेश्वरः । तत्र कृतैः पापैस्तिर्यक्स्थावरादिजन्मान्यपि दर्शयति—**त्रिगर्तेष्वि**त्यादिना ॥ ६२ ॥ ६३ ॥ कल्पं विद्याधरोऽभवदिति यदुक्तं प्राक् तत्सनिमित्तं प्रपञ्चयति—**अयं स** इत्यादिना ॥ ६४ ॥ हारकेयूरादिभिर्लीलानिचयैश्च लालको विलासयिता स्त्रीणाम् ॥ ६५ ॥ अतएव स तासां प्रियतम इत्याशयेनाह—**नायिके**ति ॥ ६६ ॥ द्वादशादित्यधामनि कल्पान्ते युगपदुदितद्वादशादित्यार्चिषि भस्मताम् ॥६७॥६८॥

---

[1] 'शाम्बरे' इति पाठः.

अथ कालेन संजाते विचित्रारम्भकारिणि ।
संसाररचनारम्भे ब्राह्मे रात्रिविपर्यये ॥ ६९
सा मुने वासना तस्य वातव्याचलिता सती ।
कृते ब्राह्मणतामेत्य जातोऽद्य वसुधातले ॥ ७०
वासुदेवाभिधानोऽसौ मुने विप्रकुमारकः ।
जातो मतिमतां मध्ये समधीताखिलश्रुतिः ॥ ७१
कल्पं विद्याधरो भूत्वा नद्यास्त्वथ महामुने ।
तपश्चरति ते पुत्रः समङ्गायास्तटे स्थितः ॥ ७२
विविधविषयवासनानुवृत्त्या
खदिरकरञ्जकरालकोटरासु ।
जगति जठरयोनिषु प्रयातो
गहनतरासु च काननस्थलीषु ॥ ७३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे भार्गवोपाख्याने कालवचनं नाम दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ११

काल उवाच ।
अथोद्दामतरङ्गौघभाङ्काररणितानिले ।
तीर एव तरङ्गिण्यास्तपस्तपति ते सुतः ॥ १
जटावानक्षवलयी जितसर्वेन्द्रियभ्रमः ।
तत्र वर्षशतान्यष्टौ संस्थितस्तपसि स्थिरे ॥ २
यदीच्छसि मुने द्रष्टुं तं स्वप्नाभं मनोभ्रमम् ।
तत्समुन्मील्य विज्ञाननेत्रमाशु विलोकय ॥ ३
श्रीवसिष्ठ उवाच ।
इत्युक्ते जगदीशेन कालेन समदृष्टिना ।
मुनिः संचिन्तयामास ज्ञानाक्ष्णा तनयेहितम् ॥ ४
ददर्श च मुहूर्तेन प्रतिभानवशादसौ ।
पुत्रोदन्तमशेषेण बुद्धिदर्पणबिम्बितम् ॥ ५
पुनर्मन्दरसानुस्थां स्वस्थां कालाग्रसंस्थिताम् ।
समङ्गायास्तटादेत्य विवेश स्वतनुं भृगुः ॥ ६
विस्मयस्मेरया दृष्ट्या कालमालोक्य कान्तया ।
वीतरागमुवाचेदं वीतरागो मुनिर्वचः ॥ ७
भगवन्भूतभव्येश बाला वयमनुज्ज्वलाः ।
त्वादृशामेव धीर्देव त्रिकालामलदर्शिनी ॥ ८
नानाकारविकाराढ्या सत्येवासत्यरूपिणी ।
विभ्रमं जनयत्येषा धीरस्यापि जगत्स्थितिः ॥ ९
त्वमेव देव जानासि त्वदभ्यन्तरवर्ति यत् ।
रूपमस्या मनोवृत्तेरिन्द्रजालविधायकम् ॥ १०
मत्पुत्रस्यास्य भगवन्मृत्युः किल न विद्यते ।
तेनेमं मृतमालोक्य जातः संभ्रमवानहम् ॥ ११
अक्षीणाजीवितं पुत्रं कालो मे नीतवानिति ।
नियतेर्वशतो देव तुच्छापीच्छा ममोदिता ॥ १२
ननु विज्ञातसंसारगतयो वयमापदाम् ।
संपदां चैव गच्छामो हर्षामर्षवशं विभो ॥ १३
अयुक्तकारिणि क्रोधः प्रसादो युक्तकारिणि ।
कर्तव्य इति रूढेयं संसारे भगवन् स्थितिः ॥ १४
इदं कार्यमिदं नेति यावत्कार्यं जगद्भ्रमः ।
तस्यैतत्संपरित्यागो हेय एव जगद्गुरो ॥ १५

---

॥६९॥ कृते आद्ययुगे ॥७०॥७१॥७२॥ उपसंहरति—**विविधेति** । खदिरकरञ्जकण्टककरालगिरिकोटरकल्पासु जठरयोनिषु गर्भवासभेदेषु प्रयातो भ्रान्तः ॥७३॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे कालवचनं नाम दशमः सर्गः ॥१०॥

भृगोर्योगदशा सम्यक् पुत्रवृत्तान्तदर्शनात् ।
वर्ण्यते कालसंवादान्मनःक्रीडा जगत्स्थितिः ॥ १ ॥

तरङ्गौघानां भाङ्कारैर्मन्द्रध्वनिभिः रणिता ध्वनन्तोऽनिला यत्र । तरङ्गिण्याः समङ्गाया तपस्तपति करोति ॥ १ ॥ २ ॥ तं पुत्रचरित्रात्मकं पुत्रमनोभ्रमम् । विज्ञायते अनेनेति विज्ञानं योगस्तन्नेत्रं सम्यगुन्मील्य उद्घाट्य ॥ ३ ॥ तनयेहितं पुत्रचरित्रम् ॥ ४ ॥ पुत्रस्योदन्तं वृत्तान्तम् । योगजधर्मविशुद्धबुद्धिदर्पणे बिम्बितमिव प्रत्यक्षम् ॥ ५ ॥ अत्र भृगुः स्वदेहान्निर्गत्य तेषु तेषु प्रदेशेषु समङ्गातटान्तेषु पुत्रवृत्तान्तं क्रमेण दृष्ट्वा पुनरागत्य स्वदेहं विवेशेति न भ्रमितव्यम् । योगबलेन स्वस्थान एव सर्वदर्शनसंभवात् । निर्गत्य भ्रमणेऽप्यतीतानागतदर्शनायोगात् । तस्मात्समङ्गायास्तटादेत्य स्वतनुं विवेशेत्युक्तेस्तच्चिन्तात्यागस्व-

शरीरप्रतिसंधानमात्रे तात्पर्यं बोध्यम् ॥ ६ ॥ वीतरागः अपगतपुत्रस्नेहः ॥ ७ ॥ बाला अज्ञाः । यतोऽनुज्ज्वला रागादिमलिनचित्ताः ॥ ८ ॥ असत्यरूपिणी जगत्स्थितिः सत्येव परमार्थरूपेव भासमाना सती परमार्थवस्तुन्येव विभ्रमं जनयतीति वा । धीरस्य विदुषोऽपि ॥ ९ ॥ विषयजगत्स्थितिरिव करणीभूतं मनोरूपमपि मादृशां दुर्ज्ञेयमित्याह—**त्वमेवेति** । इन्द्रजालसदृशमायाव्यामोहविधायकम् ॥ १० ॥ स्वव्यामोहे द्वे निमित्ते आह—**मत्पुत्रस्येति** द्वाभ्याम् । न विद्यते । आकल्पमित्यर्थः ॥ ११ ॥ न क्षीणमाजीवितमायुर्यस्य तम् ॥ १२ ॥ विस्मयस्याप्यर्थस्य च द्योतको ननुशब्दः ॥ १३ ॥ नियतिरूपं द्वितीयहेतुं विवृणोति—**अयुक्तेति** । स्थितिर्नियतिः ॥१४॥ कियत्कालं सा रूढा तत्राह—**इदमिति** । यावत्कालं इदमवश्यं कर्तव्यमिदं न कर्तव्यमितीष्टानिष्टसाधनयोः कार्यं फलं सत्यमिति जगद्भ्रमस्तावदेव । तर्हि स किमिदानीमपि तवोचितो नेत्याह—**तस्येति** । एतत् एतर्हि तस्य भ्रमस्य तत्त्वबोधात्परित्यागो वृत्तः । अतस्तदर्थं क्रोधप्रसादकर्तव्यतानियमोऽपि हेय

केवलं तावकीं चिन्तामनालोक्य यदा वयम् ।
भगवन्भवते क्रुद्धा याताः स्मस्तेन बाध्यताम् ॥ १६
त्वयेदानीमहं देव स्मारितस्तनयेहितम् ।
समङ्गायास्तटे तेन दृष्टोऽयं तनयो मया ॥ १७
मनो जगति भूतानां द्वे शरीरेऽत्र सर्वगम् ।
मन एव शरीरं हि येनेदं भाव्यते जगत् ॥ १८

काल उवाच ।

सम्यगुक्तं त्वया ब्रह्मन् शरीरं मन एव च ।
करोति देहं संकल्पात्कुम्भकारो घटं यथा ॥ १९
करोत्यकृतमाकारं कृतं नाशयति क्षणात् ।
संकल्पेन मनोमोहाद्बालो वेतालकं यथा ॥ २०
तथा च संभ्रमस्वप्नमिथ्याज्ञानादिभासुराः ।
गन्धर्वनगराकारा दृष्टा मनसि शक्तयः ॥ २१
स्थूलदृष्टिदृशां त्वेतामवलम्ब्य महामुने ।
पुंसो मनः शरीरं च कार्यौ द्वाविति कथ्यते ॥ २२
मनो मननिर्माणमात्रमेतज्जगत्त्रयम् ।
न सन्नासदिव स्फारमुदितं नेतरन्मुने ॥ २३
चित्तदेहाङ्गलतया भेदवासनयेद्धया ।
द्विचन्द्रत्वमिवाज्ञानान्नानातेयं समुत्थिता ॥ २४
भेदवासनया पश्यत्पदार्थनिचयं मनः ।
भिन्नं पश्यति सर्वत्र घटावटपटादिकम् ॥ २५
कृशोऽतिदुःखी मूढोऽहमेताश्चान्याश्च भावनाः ।
भावयत्स्वविकल्पोत्थां याति संसारितां मनः ॥ २६
मनन कृत्रिमं रूपं ममतन्न यतोऽस्म्यहम् ।
इति तत्त्यागतः शान्तं चेतो ब्रह्म सनातनम् ॥ २७
यथा प्रविततास्भोधौ द्रुतां नैकतरङ्गिणि ।
शाम्यत्स्पन्दतयानेककल्लोलावलिशालिनि ॥ २८
वार्यात्मनि समे स्वच्छे शुद्धे स्वादुनि शीतले ।
अविनाशिनि विस्तीर्णे महामहिमनि स्फुटे ॥ २९
ह्रस्वस्तरङ्गः स्वं रूपं भावयन्स्वस्वभावतः ।
ह्रस्वोऽस्मीति विकल्पेन करोति स्वेन भावनाम् ॥ ३०
दीर्घस्तरङ्गः स्वं रूपं भावयन्स्वस्वभावतः ।
दीर्घोऽस्मीति विकल्पेन करोति स्वेन भावनाम् ॥ ३१
ह्रस्वश्चैव परिभ्रष्टरूपोऽस्मीति तलातलम् ।
भावयन्भूतलं याति तादृग्भावनया स्वया ॥ ३२
उत्पन्नश्च पलादूर्ध्वमुत्थितोऽस्मीति भावितः ।
सरश्मिरत्नजालस्तु शोभते दीप्तया श्रिया ॥ ३३
तुषारकरबिम्बस्थः शीतलोऽस्मीति बिम्बति ।
सतटाचलदावाग्निप्रतिबिम्बो ज्वलद्वपुः ॥ ३४
बिभेति बत दग्धोऽस्मीत्यात्तमौनश्च कम्पते ।
प्रतिबिम्बितवेलाद्रितटपक्षवनद्रुमः ॥ ३५
महदारम्भसंरम्भसंयुक्तोऽस्मीति राजते ।
विशालोलानिलात्यन्तध्वस्तलोलशरीरकः ॥ ३६
खण्डशः परियातोऽस्मीत्यात्तक्रन्द इवारवी ।
न चोर्मयस्ते जलधेर्व्यतिरिक्ताः पयोधरात् ॥ ३७
नचैकं रूपमेतेषां किंचित्सन्नाप्यसन्मयम् ।
नचैते ह्रस्वदैर्घ्याद्या गुणास्तेषु न तेषु ते ॥ ३८

---

एवेत्यनुचित एव क्रोध इत्यर्थः ॥१५॥ एवं सत्यप्यपराधे क्रोधो न युक्तः, असति तु तदारोपेण क्रोधे प्रत्युत क्रोद्धुरेव दण्डो युक्त इत्याशयेनाह—**केवल**मिति । चिन्तां वर्णितरूपं नियतिपरिपालनमात्राभिप्रायम् । बाध्यतां त्वद्दण्ड्यतां याताः स्मः ॥ १६ ॥ १७ ॥ हि यस्मान्मन एव भौतिकं शरीरं कल्पयति अतो मन एव द्वे शरीरे इत्यर्थः । येन मनसा ॥ १८ ॥ इत्थं विनीतवादेन स्वोपदिष्टसूक्ष्मार्थग्रहणेन च तोषितः कालस्तदुक्तिप्रशंसंस्तामेवोपपत्तिभिर्द्रढयति—**सम्यगुक्त**मित्यादिना ॥१९॥ ॥ २० ॥ मनसः असन्निर्माणशक्तिः सर्वानुभवप्रसिद्धेत्याह—**तथा चे**ति ॥२१॥ मन एव शरीरं हीत्युक्तेः सम्यक्त्वमुपपाद्य येनेदं भाव्यते जगदित्युक्तेस्ततोऽपि सम्यक्त्वमित्युपपादयितुं पूर्वां निन्दति—**स्थूलदृष्टिदृशा**मिति ॥२२॥ का तर्हि सूक्ष्मदृष्टिस्तामाह—**मन** इत्यादिना । यतो मन इव सत्त्वासत्त्वाभ्यामनिर्वचनीयमिदमुदितमित्यर्थः ॥२३॥ चित्तदेहस्य अवयवभूतया लतयेव प्रतन्यमानया । नानाता जगद्भिदा॥२४॥२५॥२६॥ संसरणक्रममुपपाद्य तन्निवृत्त्युपायमाह—**मनन**मिति । कृत्रिममननरूपत्यागे अकृत्रिमस्वरूपावस्थितेरर्थप्राप्तत्वादिति भावः ॥ २७ ॥ उक्तेऽर्थे विस्तरेण समुद्रतरङ्गदृष्टान्तं वर्णयितुमारभते—**यथे**त्यादिना । अत्रत्ययथाशब्दस्य चतुर्दशश्लोकस्थेन तथैवेत्यनेनान्वयः । वारिसामान्यात्मना अम्भोधिरूपेण तत्तत्प्रदेशे स्थितजलात्मना च दृश्यमानदूरप्रस्थानरूपस्पन्दाभावाच्छाम्यत्स्पन्दतया स्थिते । कल्लोलग्रहणं महत्त्वाद्गोबलीवर्दन्यायेन ॥ २८ ॥ २९ ॥ स्वं रूपं भावयन्नित्यादिः सर्वस्तार्किकोऽहंकारारोपवादः । यदि भावयति तदा वक्ष्यमाणभावनां करोतीत्यर्थः ॥ ३० ॥ ३१ ॥ तलातलं पातालं भावयन्पतनभयाद्भूतलं तीरभूमिमुद्दिश्य याति ॥ ३२ ॥ पलादल्पकालादूर्ध्वमनन्तरं उत्थितो भोगयोग्यं जन्म प्राप्तोऽस्मीति भावितोऽभिमन्यमानो दैवाद्गिरिरिव प्ररत्नरश्मिजालसहितः सन् शोभते । भूषितोऽस्मीति हृष्यतीत्यर्थः ॥३३॥ तस्यान्यान्यपि हर्षभयस्थानानि दर्शयति—**तुषारकरे**त्यादिना । तुषारकरस्य चन्द्रस्य बिम्बनं बिम्बस्तत्र उपाधित्वेन स्थितः सन् शीतलोऽस्मीति बिम्बत्यभिमन्यते । तटस्थाचलदावाग्निप्रतिबिम्बेन सहितस्तु ज्वलद्वपुरस्मीति बिभेति कम्पते चेति परेणान्वयः ॥ ३४ ॥ प्रतिबिम्बिताः वेलाद्रितटयोः पक्षप्राया वनद्रुमा यस्मिंस्तथाभूतः सन् महता राज्यप्राप्त्यादिफलारम्भाडम्बरेण संयुक्तः कृतार्थोऽस्मीति राजते इति परेणान्वयः ॥ ३५ ॥ ३६ ॥ आत्तक्रन्द आरब्धरोदन इव आरवी ध्वनिमान् । दृष्टान्ते आरोपमुक्त्वा अपवादं दर्शयति—**न चे**त्यादिना । पयोभराद्वारिसमूहरूपाज्जलधेः ॥ ३७ ॥ तेषूर्मिषु

नोर्मयः संस्थिता ह्यब्धौ न तत्तत्र न संस्थिताः ।
केवलं स्वस्वभावस्थसंकल्पविकलीकृताः ॥ ३९
नष्टानष्टाः पुनर्जाता जाताजाताः पुनः पुनः ।
परस्परपरामर्शान्नान्यतामुपयान्त्यलम् ॥ ४०
एकरूपाम्बुसामान्यमया एव निरामयाः ।
तथैवास्मिन्प्रविततं सिते शुद्धे निरामये ॥ ४१
ब्रह्ममात्रैकवपुषि ब्रह्मणि स्फाररूपिणि ।
सर्वशक्तावनाद्यन्ते पृथग्वदपृथक्कृताः ॥ ४२
संस्थिताः शक्तयश्चित्रा विचित्राचारचञ्चलाः ।
नानाशक्तिर्हि नानात्वमेति स्वे वपुषि स्थितिम् ॥ ४३
बृंहितं ब्रह्मणि ब्रह्म पयसीवोर्मिमण्डलम् ।
स्त्रीपुमान्व्यङ्गरूपेण ब्रह्मैव परिवर्तते ॥ ४४
कल्पनान्या जगन्नाम्नी नासीदस्ति भविष्यति ।
ब्रह्मणो जगतो भेदो मनागपि न विद्यते ॥ ४५
संपूर्णं खल्विदं ब्रह्म जगद्ब्रह्मैव केवलम् ।
इति भावय यत्नेन ह्यन्यत्सर्वं परित्यज ॥ ४६
नानारूपिण्येकरूपा वैरूप्यशतकारिणी ।
नियतिर्नियताकारा पदार्थमधितिष्ठति ॥ ४७
जडाजडमुपादत्ते चित्तमायाति चिन्मये ।
वासनारूपिणी शक्तिः स्वस्वरूपा स्थितात्मनः ॥ ४८
ब्रह्मैवानघ तेनेदं स्फाराकारं विजृम्भते ।
नानारूपैः प्रतिस्पन्दैः परिपूर्ण इवार्णवः ॥ ४९
नानातां स्वयमादत्ते नानाकारविहारतः ।
आत्मैवात्मन्यात्मनैव समुद्राम्भ इवाम्भसि ॥ ५०
व्यतिरिक्ता न पयसो विचित्रा वीचयो यथा ।
व्यतिरिक्ता न विश्वेशात्समग्राः कल्पनास्तथा ॥ ५१
शाखापुष्पलतापत्रफलकोरकयुक्तयः ।
यथैकस्मिंस्तथा बीजे सर्वदा सर्वशक्तिता ॥ ५२
विचित्रवर्णता यद्वद्दृश्यते कठिनातपे ।
विचित्रशक्तिता तद्वद्देवेशे सदसन्मयी ॥ ५३
विचित्ररूपोदेतीयमविचित्रात्स्थितिः शिवात् ।
एकवर्णात्पयोवाहाच्छक्रचापलता यथा ॥ ५४
अजडाज्जडतोदेति जाड्यभावनहेतुका ।
ऊर्णनाभाद्यथा तन्तुर्यथा पुंसः सुषुप्तता ॥ ५५
अचितश्चेतसः शक्तिं स्वबन्धायेच्छया शिवः ।
तनोति तान्तवं कोशं कोशकारक्रमिर्यथा ॥ ५६
स्वेच्छयात्मात्मनो ब्रह्मन्भावयित्वैष विस्मृतिम् ।
करोति कठिनं बन्धं कोशकारक्रमिर्यथा ॥ ५७
स्वेच्छयात्मात्मनो ब्रह्मन्भावयित्वा स्वकं वपुः ।
संसारान्मोक्षमाप्नोति स्वालानादिव वारणः ॥ ५८
यथैव भावयत्यात्मा सततं भवति स्वयम् ।
तथैवापूर्यते शक्त्या शीघ्रमेव महानपि ॥ ५९
भाविता शक्तिरात्मानमात्मतां नयति क्षणात् ।
अनन्तमखिलं प्रावृड्मिहिका महती यथा ॥ ६०
या शक्तिरुदिता शीघ्रं याति तन्मयतामजः ।
य एवर्तुः स्थितिं यातस्तन्मयो भवति द्रुमः ॥ ६१
न मोक्षो मोक्ष ईशस्य न बन्धो बन्ध आत्मनः ।
बन्धमोक्षदृशौ लोके न जाने प्रोत्थिते कुतः ॥ ६२
नास्ति बन्धो न मोक्षोऽस्ति तन्मयस्त्विव लक्ष्यते ।
ग्रस्तं नित्यमनित्येन मायामयमहो जगत् ॥ ६३

गुणा न सन्ति तेषु गुणेषु ऊर्मयश्च नेति दृष्टान्तार्थः ॥ ३८ ॥ तत्राब्धौ न संस्थिता इति यत्तत्र । अधिष्ठानात्मना सत्त्वाद्विवर्तात्मना तु प्रतियोग्यसिद्धावभावासिद्धेरिति भावः । के तर्हि ते ऊर्मयस्तत्राह—**केवल**मिति । विकलीकृता अल्पीकृताः । परिच्छेदभेदविकल्पिता इति यावत् ॥ ३९ ॥ परस्परपरामर्शादन्योन्यमेलनात् ॥ ४० ॥ दार्ष्टान्तिके योजयति—**तथैवे**त्यादिना । सिते भारूपे ॥ ४१ ॥ ब्रह्ममात्रैकवपुषि निरङ्कुशब्रह्मणैकस्वभावे । अतएव ब्रह्मणि । पूर्णत्वैवात्र बृंहणं न वृद्धिक्रियेत्याशयेन तद्व्याख्या स्फाररूपिणीति ॥ ४२ ॥ शक्तयः उपचाराज्जगन्ति अभेदोपचारे हेतुमाह—**नाने**ति ॥ ४३ ॥ व्यङ्गो नपुंसकः त्रिपदद्वन्द्वे विभक्त्यलुक् छान्दसः ॥ ४४ ॥ यौक्तिकदृष्ट्योपपाद्य परमार्थदृष्ट्याप्याह—**कल्पने**ति ॥४५॥४६॥ अन्यपरित्यागोपायतया सर्वाधिष्ठानसन्मात्रं व्युत्पादयति—**नाने**ति । नियताकारा सदा सर्वत्रैकरूपा । नियतिः सत्ता ॥ ४७ ॥ ननु जडाजडसाधारणी सत्ता कथं नियतैकरूपा स्यादित्याशङ्क्य न चित्तकृतजडाजडविकल्पाभ्यां सन्मात्रैकरूप्यक्षतिरित्याशयेनाह—**जडे**ति । चिन्मये चिदाभासे चित्तं आयाति । प्राप्ते सति तत्तद्व्याप्तमहं...न्मात्रं चानात्मतया मन्यमानमनाध्यात्मिकं जडमाध्यात्मिकं चाजडमिति भेदमुपादत्ते । सेयं चित्तस्य भेदवासनारूपिणी शक्तिरधिष्ठानसन्मात्रातिरेके मिथ्यात्वापत्तेरात्मनः स्वस्वरूपैव स्थितेति नैकरस्यहानिरित्यर्थः ॥ ४८ ॥ एवं च वर्णितदृष्टान्तदार्ष्टान्तिकसाम्यमव्याहतमित्याह—**ब्रह्मैवे**त्यादिना ॥ ४९ ॥ ५० ॥ ५१ ॥ एकस्मिन्बीजे ॥५२॥ परिणामवाददृष्टान्तेनोपपाद्य विवर्तवादप्रसिद्धदृष्टान्तेनाप्युपपादयति—**विचित्रे**त्यादिना ॥ ५३ ॥ पयोवाहान्मेघात् ॥ ५४ ॥ चेतनादचेतनोत्पत्तावपि वादद्वयानुरूपे द्वे दृष्टान्ते आह—**अजडा**दिति । सुषुप्तता स्वाप्नरथादिः ॥ ५५ ॥ ननु चित ऐकरूप्यात्तत्कार्ये अचिति कथं वैचित्र्यसिद्धिरित्यत उक्तं—**चेतसः शक्ति**मिति । वासनावैचित्र्यमित्यर्थः ॥ ५६ ॥ ५७ ॥ स्वकं वपुः स्वीयं पूर्णस्वरूपं भावयित्वा साक्षादनुभूय ॥ ५८ ॥ ॥ ५९ ॥ भाविता चिरभावनया दृढीकृता शक्तिर्वासना । आत्मतां स्वानुरूपताम् । अनन्तमाकाशम् । प्रावृण्मिहिका प्रसिद्धा ॥ ६० ॥ उक्तमेव स्फुटयति—**या शक्ति**रिति ॥६१॥ इयं बन्धमोक्षकल्पना अज्ञदृशा, तत्त्वदृशा तु तत्संभावनैव नास्तीत्याह—**ने**ति ॥ ६२ ॥ तन्मयो बन्धमोक्षविकारवानिव

यदैव चित्तं कलितं किलानेनाकलात्मना ।
कोशकारवदात्मायमनेनावलितस्तदा ॥ ६४
अन्योन्यरूपास्त्वत्यन्तं विकल्पितशरीरकाः ।
मनःशक्तय एतस्मादिमा निर्यान्ति कोटयः ॥ ६५
तज्ज्ञास्तत्स्थाः पृथग्रूपाः समुद्रादिव वीचयः ।
तज्ज्ञास्तत्स्थाः पृथक्स्थाश्च चन्द्रादिव मरीचयः ॥६६
अस्मिन्स्पन्दमये स्फारे परमात्ममहाम्बुधौ ।
चिज्जले विततभोगे चिन्मात्ररसमालिनि ॥ ६७
काश्चित्स्थिरा ब्रह्मविष्णू काश्चिद्रुद्रत्वमागताः ।
काश्चित्पुरुषतां प्राप्ताः काश्चिद्देवत्वमागताः ॥ ६८
[ लहर्यः[1] प्रस्फुरन्त्येताः स्वभावोद्भावितात्मकाः ।
काश्चिद्यममहेन्द्रार्कवह्निवैश्रवणादिकाः ॥
घ्नन्ति कुर्वन्ति तिष्ठन्ति लहर्यश्चपलैषणाः ।
काश्चित्किंनरगन्धर्वविद्याधरसुरादिकाः ॥
उत्पतन्ति पतन्त्युग्रा लहर्यः परिवल्गिताः ।
काश्चित्किंचित्स्थिराकारा यथा कमलजादिकाः ॥
काश्चिदुत्पन्नविध्वस्ता यथा सुरनरादिकाः ॥ ]
कृमिकीटपतङ्गाहिगोमशाजगरादिकाः ।
काश्चित्तस्मिन्महाम्भोधौ स्फुरन्त्येतेम्बुबिन्दुवत् ॥६९
काश्चिच्चला नरमृगगृध्रजम्बुलकादिकाः ।
स्फुरन्ति गिरिकुञ्जेषु वेलावनतटेष्विव ॥ ७०
सुदीर्घजीविताः काश्चित्काश्चिदत्यल्पजीविताः ।
अतुच्छकलनाः काश्चित्काश्चित्तुच्छशरीरकाः ॥ ७१
संसारस्वप्नसंरम्भे काश्चित्स्थैर्येण भाविताः ।
सुविकल्पहताः काश्चिच्छङ्कन्ते सुस्थिरं जगत् ॥७२
अल्पाल्पभावनाः काश्चिद्दैन्यदोषवशीकृताः ।
कृशोऽतिदुःखी मूढोऽहमितिदुःखैर्वशीकृताः ॥७३
काश्चित्स्थावरतां याताः काश्चिद्देवत्वमागताः ।
काश्चित्पुरुषतां प्राप्ताः काश्चिदर्णवतां गताः ॥ ७४
काश्चित्स्थिता जगति कल्पशतान्यनल्पाः
काश्चिद्व्रजन्ति परमं पदमिन्दुशुद्धाः ।
ब्रह्मार्णवात्समुदिता लहरीविलोला-
श्चित्संविदो हि मननापरनामवत्यः ॥ ७५

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे भार्गवोपाख्याने संसारप्रवृत्तिदर्शनं नामैकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः १२

काल उवाच ।
सुरासुरनराकारा इमा याः संविदो मुने ।
ब्रह्मार्णवादभिन्नास्ताः सत्यमेतन्मृषेतरत् ॥ १
मिथ्याभावनया ब्रह्मन्स्वविकल्पकलङ्किताः ।
न ब्रह्म वयमित्यन्तर्निश्चयेन ह्यधोगताः ॥ २
ब्रह्मणो व्यतिरिक्तत्वं ब्रह्मार्णवगता अपि ।
भावयन्त्यो विमुह्यन्ति भीमासु भवभूमिषु ॥ ३
या एताः संविदो ब्राह्म्यो मननैककलङ्किताः ।
एतत्तत्कर्मणां बीजमप्यकर्मैव विद्धि ताः ॥ ४
संकल्परूपयैवान्तर्मुने कलनयैतया ।

लक्ष्यते भ्रान्त्या । कुतः । यतोऽस्य नित्यं पूर्णात्मरूपमनित्येन आविद्यकेन वासनाध्यस्तभोक्तृभोग्यादिभावेन ग्रस्तं तिरोहितम् । तदेव मायामयं जगदित्यर्थः ॥ ६३ ॥ तत्र मुख्यं बन्धं दर्शयति—**यदैवेति** ॥ ६४ ॥ अन्ये बन्धास्तु तत्कृता एवेत्याह—**अन्योन्येति** ॥ ६५ ॥ पृथगिव भूताः । कर्मज्ञानेन्द्रियभेदात्तामससात्त्विकभेदाद्वा विभागविवक्षया क्रमादृष्टान्तद्वयोपन्यासः ॥ ६६ ॥ मुख्यामुख्यबन्धोपाधिकजीवाख्यसंविद्भेदानेव नामरूपक्रियादिवैचित्र्यैर्विस्तरेण दर्शयितुमुपक्रमते—**अस्मिन्नित्यादिना** ॥६७॥ पुरुषतां मनुष्यताम् ॥६८॥ मशा मशकाः । महाम्भोधौ यादोरूपेणेति शेषः । दृष्टान्तशेषो वा ॥ ६९ ॥ जम्बुलका जम्बुकाः । 'चञ्चुलका' इति पाठे पक्षिभेदाः । वेलावनतटेष्विव चला अस्थिराः । तेषु हि वायुप्राबल्यात्सदैव तरुगुल्मलतादीनां चलता प्रसिद्धा ॥ ७० ॥ अतुच्छा महती कलना देहसंस्थानकल्पना यासां ताः ॥ ७१ ॥ स्थैर्येण चिरस्थायित्वेन । सुविकल्पैर्दृढविकल्पैर्हता मोहिताः । शङ्कन्ते संभावयन्ति ॥ ७२ ॥ अल्पभावनामेव त्रिधा दर्शयति—**कृश** इति ॥ ७३ ॥ पुरुषतां सदेहताम् । अर्णवतां सुषुप्तिप्रलययोरिवानाविर्भूतवासनां मोहार्णवताम् ॥ ७४ ॥ इन्दुरिव ज्ञानामृतपूर्णत्वाच्छुद्धाः सत्यः परमं पदं पूर्णस्वरूपावस्थितिलक्षणं मोक्षं व्रजन्ति । लहर्य इव विलोलाश्चितः संविद औपाधिकसंवेदनभेदाः मननं मनस्तत्तादात्म्याध्यासात्तन्नामधेयाः ॥७५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे संसारप्रवृत्तिदर्शनं नामैकादशः सर्गः ॥ ११ ॥

तरङ्गाम्बुधिदृष्टान्तात्प्राप्तामात्मविकारताम् ।
वारयन् वक्ति मोहोत्थवैचित्र्यस्य विवर्तताम् ॥ १ ॥

तत्रादौ सर्वजीवानां ब्रह्मैक्यं भेदकप्रपञ्चमिथ्यात्वं चोपपादयितुं प्रतिजानीते—**सुरासुरेति** ॥१॥ यद्यभिन्नास्तर्हि कुतस्तथा नानुभवन्ति तत्राह—**मिथ्येति** । मिथ्याभावना अनात्मन्यात्मताभ्रान्तिस्तया हेतुनेत्यर्थः । अधोगताः निकृष्टां दशां प्राप्ताः ॥ २ ॥ व्यतिरिक्तत्वं परिच्छिन्नतां भावयन्त्यः कल्पयन्त्यः ॥ ३ ॥ मननं देहात्मभावस्य पुनःपुनरनुसंधानं तदेवैतत्कर्मणां पुण्यपापप्रवृत्तीनाम् । एवंभूता अपि ताः संविदः अकर्म निष्क्रियं ब्रह्मैवेति विद्धि ॥ ४ ॥ 'प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति' इति श्रुतेः कर्म-

[1] कोष्ठकविन्यस्ताः श्लोकाः प्रक्षिप्ता इति भाति.

कर्मजालकरञ्जानां बीजमुष्ट्या करालया ॥ ५
इमा जगति विस्तीर्णाः शरीरोपलपङ्क्तयः।
तिष्ठन्ति परिवल्गन्ति रुदन्ति च हसन्ति च ॥ ६
आब्रह्मस्तम्बपर्यन्तं स्पन्दनैः पवनो यथा।
उल्लसन्ति निलीयन्ते म्लायन्ति विहसन्ति च ॥ ७
ता एताः काश्चिदल्पच्छा यथा हरिहरादयः।
काश्चिदल्पविमोहस्था यथोरगनरामराः ॥ ८
काश्चिदत्यन्तमोहस्था यथा तरुतृणादयः।
काश्चिदज्ञानसंमूढाः कृमिकीटत्वमागताः ॥ ९
काश्चित्तृणवदुह्यन्ते दूरे ब्रह्ममहोदधेः।
अप्राप्तभूमिका एता यथोरगनगादयः ॥ १०
सत्त्वमात्रं समालोक्य काश्चिदेवमुपागताः।
जाताजाता निखन्यन्ते कृतान्तजरठाखुना ॥ ११
काश्चिदन्तरमासाद्य ब्रह्मतत्त्वमहाम्बुधेः।
गतास्तत्तां समं कार्यैर्हरिब्रह्महरादिकाः ॥ १२
अल्पमोहात्मिकाः काश्चित्तमेव ब्रह्मवारिधिम्।
अदृष्टपारभूम्यौघमवलम्ब्य व्यवस्थिताः ॥ १३
काश्चिद्भोक्तव्यजन्मौघभुक्तजन्मौघकोटयः।
वन्ध्याः प्रकाशतामस्यः संस्थिता भूतजातयः ॥ १४
काश्चिदूर्ध्वादधो यान्ति यथा हस्तान्महत्फलम्।
ऊर्ध्वादूर्ध्वतरं काश्चिदधस्तात्काश्चिदप्यधः ॥ १५

बहुसुखदुःखकराकराक्षयेयं
परमपदास्मरणात्समागतेह।
परमपदावगमात्प्रयाति नाशं
विहगपतिस्मरणाद्विषव्यथेव ॥ १६

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे भार्गवोपाख्याने संसारोत्पत्तिविस्तारवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः १३

काल उवाच।

एतासां भूतजातीनामूर्मीणामिव सागरात्।
विविधानां विचित्राणां लतानामिव माधवे ॥ १
भव्या जितमनोमोहा दृष्टलोकपरावराः।
जीवन्मुक्ता भ्रमन्तीह यक्षगन्धर्वकिंनराः ॥ २
अन्ये तु काष्ठकुड्याभा मूढाः स्थावरजंगमाः।
अपरे क्षीणमोहास्ते किं तेषां प्रविचार्यते ॥ ३
लोके प्रबुध्यमानानां भूतानामात्मसिद्धये।
विहरन्तीह शास्त्राणि कल्पितान्युदितात्मभिः ॥ ४
संप्रबुद्धाशया ये तु दुष्कृतानां परिक्षये।
तेषां शास्त्रविचारेषु निर्मला धीः प्रवर्तते ॥ ५

बीजप्ररोहवैचित्र्यव्यवस्थायामपि संकल्पो हेतुरित्याह—**संकल्परूपये**ति ॥ ५ ॥ ६ ॥ ७ ॥ इदानीं तरङ्गस्थानीयांश्चित्संविच्छब्दितान् जीवानुपाधिवैशद्यतारतम्येन ज्ञानभूमिकाभेदेन कर्मगतिवैचित्र्यप्रयुक्तसंसरणप्रकारभेदेन च विभज्योदाहरति—**ता एता** इत्यादिना । ज्ञानैश्वर्योत्कर्षावधिलाादल्पच्छाः। ज्ञानाधिकारयोग्यताप्राप्तेरल्पविमोहस्थाः ॥ ८ ॥ इष्टानिष्टयोः प्रवृत्तिनिवृत्तिक्षमत्वात् कृमिकीटादेः स्थावरवन्नात्यन्तमोहस्थतेति भावः ॥ ९ ॥ ब्रह्ममहोदधेर्मुक्तेर्दूरे उह्यन्ते प्रवाह्यन्ते शास्त्रप्रतिकूलप्रवृत्तिभिरित्यर्थः ॥ १० ॥ एवं संसरणक्रमेण नरादिभावमुपागताः सन्तः सत्त्वं संसरणश्रमविश्रान्तिहेतुभूतयोगभूमिकासद्भावस्तन्मात्रम् । 'तटमात्रम्' इति पाठेऽप्ययमेवार्थः। समालोक्य शास्त्रतः श्रुत्वा तदुन्मुखाः जाताजाता अपि कृतान्तो विघ्नकारि दुरदृष्टं तल्लक्षणेन जरठाखुना निखन्यन्ते। भूमिकादूषणेन पीड्यन्त इति यावत् ॥ ११ ॥ अन्तरं ईषद्भेदकं विशुद्धज्ञानोपाधिम् । कार्यैः समं तत्तां ब्रह्ममहाम्बुधिताम्। जीवन्मुक्तिमिति यावत् ॥ १२ ॥ न दृष्टा पारभूमिर्यस्य तथाविधः ओघः पूर्णता यस्य तं समाधिभिरवलम्ब्य ॥ १३ ॥ अधिकारिदेहप्राप्त्या प्रकाशेऽपि रागान्धत्वात्तामस्यः ॥ १४ ॥ ऊर्ध्वात् उत्कृष्टजन्मनः अधः निकृष्टजन्मनि ॥ १५ ॥

एवमनर्थसहस्रनिदानं जीवभावं प्रपञ्च्य तन्मूलं स्मारयंस्तन्निवृत्त्युपायमाह—**बह्विति**। बहवः सुखदुःखकराणां जन्मनां आकराः खनीभूता रागादयो यस्यां तथाविधा इयं जीवता परमपदस्य स्वात्मतत्त्वस्यास्मरणादपर्यालोचनदोषात्समागता ॥ १६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे संसारोत्पत्तिविस्तारवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥

उपवर्ण्य मनःशक्तीरथात्र भृगुकालयोः।
शुक्रस्य संनिधौ गन्तुमुत्थानं प्रतिपाद्यते ॥ १ ॥

उक्तासु जीवजातिषु जीवन्मुक्तानामेव कृतार्थता नान्येषामित्याह—**एतासा**मित्यादिना। सागरात् आविर्भूतानामिति शेषः। एतासां मध्ये ये जितमनोमोहास्ते भवन्तीति भव्याः कृतार्था इति परेणान्वयः । 'भव्यगेयप्रवचनीय-' इत्यादिना कर्तरि यत् । यक्षादित्रितयोपादानमुदाहरणार्थं नतु परिगणनाय। मनुष्यादिष्वपि संभवात् ॥ १ ॥ २ ॥ साधनचतुष्टयसंपन्ना अज्ञा एव शास्त्रविचारेऽधिकारिणो न तत्त्वज्ञा इत्याशयेनाह—**किं तेषा**मिति ॥ ३ ॥ किमर्थं तर्हि तेषां देहधारणमिति चेत् शास्त्रप्रकल्पनेनाज्ञोद्धारार्थमेवेत्याशयेनाह—**लोके** इति ॥ ४ ॥ 'ज्ञानमुत्पद्यते पुंसः क्षयात्पापस्य कर्मणः' इति स्मृतेः शास्त्रमपि शुद्धचित्तेष्वेव सफलं नान्येष्वित्याशयेनाह—**संप्र**-

विलीयते मनोमोहः सच्छास्त्रप्रविचारणात् ।
नभोविहरणाद्भानोः शार्वरं तिमिरं यथा ॥ ६
अक्षीयमाणं हि मनो मोहायैव न सिद्धये ।
नीहार इव संछाद्य वेताल इव वल्गति ॥ ७
सर्वेषामेव देहानां सुखदुःखार्थभाजनम् ।
शरीरं मन एवेह नतु मांसमयं मुने ॥ ८
योऽयं मांसास्थिसंघातो दृश्यते पाञ्चभौतिकः ।
मनोविकल्पनं विद्धि न देहः परमार्थतः ॥ ९
मनःशरीरेण तव पुत्रोऽयं कृतवान्मुने ।
तदेव प्राप्तवानाशु वयं नात्रापराधिनः ॥ १०
स्वया वासनया लोको यद्यत्कर्म करोति यः ।
स तथैव तदाप्नोति नेतरस्येह कर्तृता ॥ ११
स्वानुसंहितमन्तर्यन्मनोवासनया स्वया ।
को नाम भुवनेशोऽस्ति तत्कर्तुं यस्य शक्तता ॥ १२
ये सर्गा नरकाभोगा या जन्ममरणैषणाः ।
स्वमनोमननेनेदं स निष्पन्दोऽपि दुःखदः ॥ १३
बहुनात्र किमुक्तेन शब्दसंग्रहकारिणा ।
उत्तिष्ठ भगवन्यामो यत्र ते तनयः स्थितः ॥ १४
सर्वं चित्तशरीरेण भुक्त्वा शुक्रः क्षणादिव ।
तथेन्दुरश्मिसंघट्टात्समङ्गातापसः स्थितः ॥ १५
तत्प्राणपवनश्चित्तान्मुक्त इन्दंशुवत्फलम् ।
अवश्यायतया भूत्वा वीर्यं तेनान्तरास्थितः ॥ १६
इत्युक्त्वा भगवान्कालो हसन्निव जगद्गतिम् ।
हस्ताद्धस्तेन जग्राह भृगुमिन्दुमिवांशुमान् ॥ १७
अहो नु चित्रा नियतेर्व्यवस्थेति वदञ्छनैः ।
भगवान्भृगुरुत्तस्थावुदयाद्रेर्यथा रविः ॥ १८

तेजोनिधी ह सममङ्ग समुत्थितौ तौ
भातस्तदाम्बरतले सतमालजाले ।
तुल्योदयाविव नभस्यमले विहर्तु-
मभ्युत्थितौ सजलदौ सकलेन्दुसूर्यौ ॥ १९

श्रीवाल्मीकिरुवाच ।

इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ २०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे भार्गवोपाख्याने भृगुसमाश्वासनं नाम त्रयोदशः सर्गः ॥ १३ ॥

## अष्टमो दिवसः ॥

## चतुर्दशः सर्गः १४

श्रीवसिष्ठ उवाच ।

अथ कालभृगू देवौ मन्दराचलकन्दरात् ।
गन्तुं प्रवृत्ताववनौ समङ्गासरितस्तटम् ॥ १
तौ शैलादवरोहन्तौ दृष्टवन्तौ महाद्युती ।
नवहैमलताजालकुसुमस्तनभश्चरान् ॥ २
वल्लीवलयदोलाभिः क्रीडतो गगनाङ्गणे ।
हरिणीमुग्धमुग्धाक्षिप्रेक्षितस्मारितोत्पलान् ॥ ३
सिद्धानध्यासितोत्तुङ्गशिलाशकलविष्टरान् ।

बुद्धेति ॥ ५ ॥ शर्वर्यां भवं शार्वरम् ॥ ६ ॥ नीहार इवेलावरणे, वेताल इवेति विक्षेपे दृष्टान्तौ । वल्गति नृत्यति ॥ ७ ॥ देहानां तदात्मतापन्नजीवानाम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ मनोवासनया अनुसंधानमात्रेणापि क्षणाद्यत्क्रियते तदस्माभिर्महतापि यत्नेन चिरेणापि कर्तुं न शक्यत इति नास्मास्वपराधसंभावनापीत्याशयेनाह—**स्वानुसंहित**मिति ॥ १२ ॥ स मननात्मको निष्पन्द ईषच्चलनमपि दुःखदः ॥१३॥ शब्दसंग्रहः श्रवणं तत्कारिणा नत्वर्थप्रदर्शकेनेत्यर्थः । याम इति 'अस्मदो द्वयोश्च' इति वा अनुचरसाहित्याद्वा बहुवचनम् ॥१४॥ सर्वं स्वर्गभोगं चित्तकल्पितशरीरेण भुक्त्वा अथ आकाशादिक्रमेण भूमाववतीर्णं इन्दुरश्मिसंपर्कादोषधीः प्रविश्यान्नादिभावक्रमेण जन्मपरम्परां प्राप्य संप्रति समङ्गायां तापसो भूत्वा स्थित इत्यर्थः ॥ १५ ॥ इन्दुरश्मिसंघट्टादिति यदुक्तं तद्विशदयति—**तत्प्राणे**ति । तस्य शुक्रस्य प्राणपवनश्चित्ताच्चेतनशक्तेर्मुक्तः संमूर्च्छितः सन् अवश्यायतया नीहारभावेन इन्दंशुसंपर्कात्तद्द्वारेण भूत्वा सस्यद्वारा तत्फलं व्रीह्यादि भूत्वा पुरुषं प्रविश्य वीर्यं रेतो भूत्वा अन्तरा स्त्रीगर्भे स्थित इत्यर्थः ॥ १६ ॥ हस्तादिति ल्यब्लोपे पञ्चमी । हस्तं प्रसार्येत्यर्थः । दृष्टान्तपक्षे लक्षितलक्षणया हस्तशब्देन करशब्दवाच्यकिरणपरिग्रहः ॥१७॥ नियतेर्दैवस्य कर्मणो वा ॥ १८ ॥ ह इति किलेत्यर्थे निपातः, अङ्गेति संबोधने। सतमालजाले मन्दरे समं समं युगपत्समुत्थितौ तेजोनिधी तौ भृगुकालौ सजलदे अम्बरतले तुल्योदयौ सकलः पूर्ण इन्दुश्च सूर्यश्च ताविव भातः प्रकाशत इत्यर्थः ॥१९॥२०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे भृगुसमाश्वासनं नाम त्रयोदशः सर्गः ॥ १३ ॥

गत्वा ताभ्यां समाधिस्थशुक्रस्यात्र प्रबोधनम् ।
स्मारणं पूर्ववृत्तस्यागमनेच्छा च कीर्त्यते ॥ १ ॥

अवनौ अवतीर्येति शेषः ॥ १ ॥ नभश्चरान् देवगणान्पक्षिणश्च ॥ २ ॥ हरिणीनामिव मुग्धमुग्धैः अक्षिप्रेक्षितैः कटाक्षैः स्मारितान्युत्पलानि यैः । सदृशदर्शनस्य स्मृतिहेतुत्वात्सादृश्यं गम्यते ॥ ३ ॥ अध्यासितान्याश्रितान्युत्तुङ्गशिलाशकलान्येव विष्टराणि आसनानि यैः । धृताकारान् स्वीकृतशरीरान् उत्साहा-

धृताकारानिवोत्साहान्हेलादृष्टजगत्त्रयान् ॥ ४
कृताजस्रपतत्पुष्पधारासारनिमज्जनान् ।
तालोत्तालकृतोद्धस्तहस्तान्हस्तिघटापतीन् ॥ ५
मदावलेपनिद्रालून्मदान्मूर्तानिव स्थितान् ।
पुष्पकेसररक्ताङ्गपवनारुणवालधीन् ॥ ६
चञ्चलांश्चमरांश्चारून्भूभृन्मण्डलचामरान् ।
कृताजस्रपतत्पुष्पधारासारनिमज्जनान् ॥ ७
किन्नरान्भूमखर्जूराञ्शाखासरलतां गतान् ।
परस्परफलाघातक्ष्वेडावर्जितकीचकान् ॥ ८
धातुपाटलदुर्वक्रान्मर्कटान्नटनोत्कटान् ।
लतावितानसंछन्नसानूपवनमन्दिरान् ॥ ९
सिद्धानमरनारीभिर्मन्दारकुसुमाहतान् ।
धातुपाटलनिर्द्वारपयोदपटसंवृतान् ॥ १०
तटानजनसंसर्गान्बौद्धान्प्रव्रजितानिव ।
सरितः कुन्दमन्दारपिनद्धलहरीघटाः ।
सागरोत्कतयेवात्तमधुमासप्रसाधनाः ॥ ११
पुष्पभारपिनद्धाङ्गान्वृक्षान्पवनकम्पितान् ।
क्षीवानिव मधुप्राप्तौ घूर्णन्मधुकरेक्षणान् ॥ १२
शैलराजश्रियं स्फीतां पश्यन्तौ तावितस्ततः ।
प्राप्तवन्तौ वसुमतीं पुरपत्तनमण्डिताम् ॥ १३
क्षणादवापतुस्तत्र पुष्पलोलतरङ्गिणीम् ।
समङ्गां सरितं साधु सर्वपुष्पमयीमिव ॥ १४
ददर्शाथ तटे तस्मिन्कस्मिंश्चित्तनयं भृगुः ।
देहान्तरपरावृत्तं भावमन्यमुपागतम् ॥ १५
शान्तेन्द्रियं समाधिस्थमचञ्चलमनोमृगम् ।
सुचिरादिव विश्रान्तं सुचिरश्रमशान्तये ॥ १६
चिन्तयन्तमिवानन्ताश्चिरभुक्ताऽचिरोज्झिताः ।
संसारसागरगतीर्हर्षशोकनिरन्तराः ॥ १७
नूनं निश्चलतां यातमतिभ्रमितचक्रवत् ।
अनन्तजगदावर्तविवर्तातिशयादिव ॥ १८
एकान्तसंस्थितं कान्तं कान्त्यैकाकिनमाश्रितम् ।
उपशान्तेहसंभग्नचित्तसंभ्रमसंगमम् ॥ १९
निर्विकल्पसमाधिस्थं विरतं द्वन्द्ववृत्तितः ।
हसन्तमखिलां लोकगतिं शीतलया धिया ॥ २०
विगताखिलवृत्तान्तं विगताशेषभोक्तृतम् ।
निरस्तकल्पनाजालमालम्बितमहापदम् ॥ २१
अनन्तविश्रान्तितते पदे विश्रान्तमात्मनि ।
प्रतिबिम्बमगृह्णन्तं सितं मणिमिवास्थितम् ॥ २२
हेयोपादेयसंकल्पविकल्पाभ्यां समुज्झितम् ।
संप्रबुद्धमतिं धीरं ददर्श तनयं भृगुः ॥ २३
तमालोक्य भृगोः पुत्रं कालो भृगुमुवाच ह ।
वाक्यमम्बुधिध्वनिनिभं तव पुत्रस्त्वसाविति ॥ २४
विबुध्यतामिति गिरा समाधेर्विरराम सः ।
भार्गवोऽम्भोदघोषेण शनैरिव शिखण्डभृत् ॥ २५
उन्मील्य नेत्रे सोऽपश्यदन्ते कालभृगू प्रभू ।
समोदयाविवायातौ देवौ शशिदिवाकरौ ॥ २६
कदम्बलतिकापीठादथोत्थाय ननाम तौ ।
समौ समागतौ कान्तौ विप्रौ हरिहराविव ॥ २७
मिथःकृतसमाचाराः शिलायां समुपाविशन् ।
मेरुपृष्ठे जगत्पूज्या ब्रह्मविष्णुहरा इव ॥ २८

निव स्थितान् । हेलया लीलया दृष्टं जगत्त्रयं यैः ॥ ४ ॥ [1]तालवृक्षा इवोत्तालाः स्थूलदीर्घाः कराः शुण्डादण्डा येषां तान् हस्तिघटापतीन् गजयूथपान् तौ दृष्टवन्तौ इति सर्वत्र संबध्यते ॥ ५ ॥ तानेव विशिनष्टि—**मदेति** । पुष्पकेसरैः रक्ताङ्गेन रञ्जितेन पवनेन परागैः पूरणादरुणवालधीनिति देहलीदीपन्यायेन पूर्वोत्तराभ्यां संबध्यते ॥ ६ ॥ चमरान्मृगविशेषान् । भूभृन्मण्डलस्य पर्वतराजसमूहस्य चामरानिव स्थितान् ॥ ७ ॥ किन्नरान्दृष्टवन्ताविति पूर्वत्र संबन्धः । भूमखर्जूरान् खर्जूरोत्तमजातिभेदान् शाखापर्यन्तं सरलतामृजुतां गतान् । परस्परस्य खर्जूरफलैराघातास्ताडनानि तल्लक्षणाभिः क्रीडाभिरावर्जिताः सफलीकृता अधःप्ररूढाः कीचका वेणवो यैस्तान्मर्कटान् ॥ ८ ॥ धातुगैरिकमिव पाटलानि दुर्वक्राणि विकृतमुखानि येषां तान् । नटने अवस्पन्दने उत्कटान् शौण्डान् ॥९॥ सिद्धान् देवयोनिविशेषान् । अमरनारीभिरप्सरोभिः रतिकालज्ञापनाय मन्दारकुसुमैराहतान् । अतएव धातुपाटलैर्निर्द्वारैरच्छिद्रैः पयोदपटैः संवृतान् ॥ १० ॥ तटान् प्रपातदेशान् । अजनसंसर्गान् जनसंचारानर्हान् । बौद्धप्रव्रजितदृष्टान्तो वृथापतनयोग्यताविवक्षया । सागरे कान्ते उत्कतया सोत्कण्ठतया हेतुनेव आत्तानि गृहीतानि मधुमासश्चैत्रस्तत्संबन्धीनि प्रसाधनानि पुष्पपल्लवाद्यलंकारा याभिस्ताः । 'उत्कटताचान्तमधुमांसप्रसाधना' इति पाठे तु सागरस्योत्कटतायै उपभोगमदाय आचान्तैरुपयुक्तैर्मधुमांसैः प्रसाधनं यासां ताः ॥ ११ ॥ ॥ १२ ॥ १३ ॥ पुष्पलोलतरङ्गामिति बहुव्रीहिणैव मत्वर्थलाभे अतिशयनित्ययोगद्योतनार्थं इनिप्रत्ययः । तदेव स्पष्टीकर्तुमाह—**सर्वपुष्पमयीमिवेति** ॥१४॥ अन्यं भावं अशुक्रताम् ॥ १५ ॥ सुचिरश्रमः अनादिसंसारश्रमस्तस्य शान्तये ॥१६॥ चिरं भुक्ता अचिरात् उज्झितास्त्यक्ताः ॥ १७ ॥ अतिभ्रमितचक्रवदिति दृष्टान्तो रागोपरमक्रमेण चित्तं स्वयमेव विश्राम्यतीति द्योतनाय ॥ १८ ॥ चक्रदृष्टान्ताभिप्रायमेव स्पष्टमाह—**उपशान्तेहेति** ॥ १९ ॥ द्वन्द्ववृत्तितः शीतोष्णसुखदुःखादेः ॥ २० ॥ वृत्तान्तानि प्रवृत्तयः । भोक्तृतास्तत्फलानि । महापदं अपरिच्छिन्नात्मसुखम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ शिखण्डभृत् मयूरः ॥२५॥ अन्ते अन्तिके । समोदयौ संमुखोदितौ नत्वसमोदितौ ॥ २६ ॥ विप्रौ विप्रवेषौ ॥२७॥ मिथः अन्योन्यं कृताः समाचारास्तत्कालोचितगौरवाभिनन्दनाद्याचारा यैः ॥२८॥

[1] इयं व्याख्या न मूलानुसारिणी

अथ शान्तजपो राम स समङ्गातटे द्विजः ।
तावुवाच वचः शान्तममृतस्यन्दसुन्दरम् ॥ २९
भवतोर्दर्शनेनाहमद्य निर्वृतिमागतः ।
सममागतयोर्लोके शीतलोष्णरुचोरिव ॥ ३०
यो न शास्त्रेण तपसा न ज्ञानेनापि विद्यया ।
विनष्टो मे मनोमोहः क्षीणोऽसौ दर्शनेन वाम् ॥ ३१
न तथा सुखयन्त्यन्तर्निर्मलामृतवृष्टयः ।
यथा प्रहर्षयन्त्येता महतामेव दृष्टयः ॥ ३२
चरणाभ्यामिमं देशं भवन्तौ भूरितेजसौ ।
कौ पवित्रितवन्तौ नः शशाङ्कार्काविवाम्बरम् ॥ ३३
इत्युक्तवन्तं प्रोवाच भृगुर्जन्मान्तरात्मजम् ।
स्मरात्मानं प्रबुद्धोऽसि नाज्ञोऽसीति रघूद्वह ॥ ३४
प्रबोधितोऽसौ भृगुणा जन्मान्तरदशां निजाम् ।
मुहूर्तमात्रं सस्मार ध्यानोन्मीलितलोचनः ॥ ३५
अथासौ विस्मयात्स्मेरमुखो मुदितमानसः ।
वितर्कमन्थरां वाचमुवाच वदतां वरः ॥ ३६
जगत्यविदितारम्भा नियतिः परमात्मनः ।
यद्वशादिदमाभोगि जगच्चक्रं प्रवर्तते ॥ ३७
ममानन्तान्यतीतानि जन्मान्यविदितान्यपि ।
दशाफलान्यनन्तानि कल्पान्तकलितादिव ॥ ३८
दृष्टाः कठिनसंरम्भा विभवोऽप्यर्जनभ्रमाः ।
विहृतं वीतशोकासु चिरं मेरुस्थलीषु च ॥ ३९
पीतमामोदि मन्दारकेसरारुणितं पयः ।
मन्दाकिन्याः सकह्लारं तटीष्वमरभूभृतः ॥ ४०
भ्रान्तं मन्दरकुञ्जेषु फुल्लहेमलतालिषु ।
मेरोः कल्पतरुच्छायापुष्पसुन्दरसानुषु ॥ ४१
न तदस्ति न यद्भुक्तं न तदस्ति न यत्कृतम् ।
न तदस्ति न यद्दृष्टमिष्टानिष्टासु वृत्तिषु ॥ ४२
ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमक्षतम् ।
विश्रान्तोऽथ चिरं श्रान्तो गतो मे सकलो भ्रमः ॥ ४३
उत्तिष्ठ तात गच्छामः पश्यामो मन्दरस्थिताम् ।
तां तनुं तावदाशुष्कां शुष्कां वनलतामिव ॥ ४४
न समीहितमस्तीह नासमीहितमस्ति मे ।
नियतेः रचनां द्रष्टुं केवलं विहराम्यहम् ॥ ४५
यदतिसुभगमार्यसेवितं त-
त्स्थिरमनुयामि यदेकभावबुद्ध्या ।
तदलमभिमता मतिर्ममास्तु
प्रकृतमिमं व्यवहारमाचरामि ॥ ४६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे भा० भार्गवजन्मान्तरस्मरणवर्णनं नाम चतुर्दशः सर्गः ॥१४॥

## पञ्चदशः सर्गः १५

श्रीवसिष्ठ उवाच ।
विचारयन्तस्तत्त्वज्ञा इति ते जागतीर्गतीः ।
समङ्गायास्तटात्तस्मात्प्रचेलुश्चञ्चलासवः ॥ १
क्रमादाकाशमाक्रम्य निर्गत्याम्बुदकोटरैः ।
संप्रापुः सिद्धमार्गेण क्षणान्मन्दरकन्दरम् ॥ २

शान्तजपः समापितसमाधिः । 'जप मानसे च' इति धात्वर्थदर्शनात् । इदमर्धं पाठक्रमादार्थक्रमबलीयस्त्वात्कदम्बलतिकापीठादित्यतः प्राग्योज्यम् ॥ २९ ॥ निर्वृतिं सुखम् ॥ ३० ॥ ज्ञानेन उपासनेन । विद्यया ब्रह्मविद्यया । अतिशयोक्तिरियं प्रशंसार्था । वां युवयोः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ध्यानेन उन्मीलितं उद्घाटितं दिव्यं लोचनं यस्य सः ॥ ३५ ॥ विस्मयादाश्चर्यदर्शनात् ॥ ३६ ॥ नियतिः कर्मफलव्यवस्थाहेतुर्मायाशक्तिः ॥ ३७ ॥ दशाफलानि मरणमूर्च्छादिदुर्दशाफलानि दुःखमोहादीनि । कल्पान्तः प्रलयस्तेन कलितात्संपन्नाद्दर्पवातदाहादेरिव ॥ ३८ ॥ कठिनः संरम्भः क्रोधः उद्योगश्च येषु ते विभवो राजानो द्रव्यार्जनभ्रमा अपि ॥ ३९ ॥ पयो वारि ॥ ४० ॥४१॥ **न तदस्तीति** । सर्वं कृतं भुक्तं दृष्टं चेत्यर्थः । इष्टानिष्टासु अनुकूलप्रतिकूलासु वृत्तिषु दशासु ॥ ४२ ॥ एकविज्ञानेनापि सर्वविज्ञानं दर्शयति—**ज्ञातमिति** । चिरं श्रान्तोऽहं संप्रति विश्रान्तः ॥ ४३ ॥ ४४ ॥ किं ते तया तन्वा समीहितं तत्राह—**नेति** ॥ ४५ ॥ ननु नियते रचनां द्रष्टुं विहरतस्तव तत्राभिनिवेशात्पुनः पूर्ववद्दर्पसरोमनोरथानुगमनादिसंसारापत्तिरित्याशङ्क्य दृढतरतत्त्वज्ञानबाधितानुवृत्तिमात्रत्वान्न पूर्ववदभिनिवेशप्रसक्तिरित्याह—**यदिति** । यद्यस्मात्कारणादहमेकभावबुद्ध्या एक एवात्मा भावः परमार्थसत्यो नान्यदिति दृढनिश्चयेन यच्चरित्रमतिसुभगमत्यन्तशुभावहमार्यैरन्यैश्च जीवन्मुक्तैः सेवितं तदेव स्थिरं यथा स्यात्तथा अनुयाम्यनुसरामि न पूर्ववन्मूढवृत्तं, तत्तस्मात्तव मम च अभिमता पूर्वदेहजीवनादिरूपा मतिरलं सम्यगस्तु नाम न काचित्तया क्षतिः । तया प्रकृतं प्रारब्धशेषभोजकव्यवहारमाचरामि न मूढवदभिनिवेक्ष्यामीत्यर्थः ॥४६॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे भार्गवजन्मान्तरवर्णनं नाम चतुर्दशः सर्गः ॥ १४ ॥

अत्र तां तनुमालोक्य शुक्रस्य परिदेवनम् ।
तन्निमित्तविशेषोक्त्या स्वभावश्चोपदिश्यते ॥ १ ॥

इति प्रागुक्तप्रकाराः जागतीः सांसारिकीर्गतीर्विचारयन्तः सन्तः समङ्गातटाद्भृग्वाश्रमं प्रति प्रचेलुः प्रचलिताः । चञ्चलासव इत्यनेन प्राणक्रिययैव तेषां चलनोपचारो नत्वात्मनि क्रियास्तीति द्योतनाय ॥ १ ॥ अम्बुदकोटरैर्मेघच्छिद्रैः ॥ २ ॥

अधित्यकायां तस्याद्रेरार्द्रपर्णावगुण्ठिताम् ।
ददर्श भार्गवः शुष्कां पूर्वजन्मोद्भवां तनुम् ॥ ३
उवाचेदं च हे तात तन्वी तनुरियं हि सा ।
या त्वया सुखसंभोगैः पुरा समभिलालिता ॥ ४
इयं सा मत्तनुर्यस्याः कर्पूरागुरुचन्दनैः ।
अङ्गमङ्गीकृतस्नेहा धात्री चिरमलेपयत् ॥ ५
इयं सा मत्तनुर्यस्या मन्दारकुसुमोत्करैः ।
रचिता शीतला शय्या मेरूपवनभूमिषु ॥ ६
इयं सा मत्तनुर्मत्तदेवस्त्रीगणलालिता ।
सरीसृपमुखक्षुण्णा पश्य शेते धरातले ॥ ७
चन्दनोद्यानखण्डेषु मम तन्वा ययानया ।
चिरं विलसितं सेयं शुष्ककङ्कालतां गता ॥ ८
सुराङ्गनाङ्गसंसर्गादुत्तुङ्गानङ्गभङ्गया ।
चेतोवृत्त्या रहितया तन्वाद्य मम शुष्यते ॥ ९
तेषु तेषु विलासेषु तासु तासु दशासु च ।
तथा तद्भावनाबन्धः कथं स्वस्थोऽसि देहक ॥ १०
हा तनो शवनामासि तापसंशोषमागता ।
कङ्कालतां प्रयातासि मां भीषयसि दुर्भगे ॥ ११
देहेनाहं विलासेषु येनैव मुदितोऽभवम् ।
कङ्कालतामुपगतात्तस्मादेव बिभेम्यहम् ॥ १२
ताराजालसमाकारो यत्र हारोऽभवत्पुरा ।
ममोरसि निलीयन्ते तत्र पश्य पिपीलिकाः ॥ १३
द्रवत्काञ्चनकान्तेन लोभं नीता वराङ्गनाः ।
येन मद्वपुषा तेन पश्य कङ्कालतोह्यते ॥ १४
पश्य मे विततास्येन तापसंशुष्ककृत्तिना ।
मत्कङ्कालकुवक्रेण वित्रास्यन्ते वने मृगाः ॥ १५
पश्यासि संशुष्कतया शवोदरदरी मम ।
प्रकाशार्कांशुजालेन विवेकेनेव शोभते ॥ १६
मत्तनुः परिशुष्केयं स्थितोत्तानाचलोपले ।
वैराग्यं नयतीवात्मतुच्छत्वेनान्तरं सताम् ॥ १७
शब्दरूपरसस्पर्शगन्धलोभाद्विमुक्तया ।
निर्विकल्पसमाध्येव तदेतच्छुष्यते गिरौ ॥ १८
मुक्ताचित्तपिशाचेन नूनं सुखमिवास्थिता ।
तनुर्दैवतभङ्गेभ्यो न बिभेति मनागपि ॥ १९
संशान्ते चित्तवेताले यामानन्दकलां तनुः ।
याति तामपि राज्येन जागतेन न गच्छति ॥ २०
पश्य विश्रान्तसंदेहं विगताशेषकौतुकम् ।
निरस्तकलनाजालं सुखं शेते कथं वने ॥ २१
चित्तमर्कटसंरम्भसंक्षुब्धः कायपादपः ।
तथा वेगेन चलति यथाऽऽमूलान्निकृन्तति ॥ २२
चित्तानर्थविमुक्तोऽद्रौ गजाभ्रहरिविग्रहम् ।
नाद्य पश्यति मे देहः परानन्द इव स्थितः ॥ २३

अधित्यकायां ऊर्ध्वभागभूमौ ॥ ३ ॥ इदं वक्ष्यमाणप्रकारं वाक्यम् । तन्वी कृशा ॥ ४ ॥ सुखसंभोगैरिति यदुक्तं तत्प्रपञ्चयति—**कर्पूरे**त्यादिना ॥५॥६॥ सरीसृपमुखैः सर्पवृश्चिकप्रभृतिकीटैः क्षुण्णा संचूर्णिता । छिद्रितेति यावत् ॥ ७ ॥ चन्दनानां हरिचन्दनानामुद्यानखण्डेषु विलसितं क्रीडाभिः शोभितम् । 'नन्दना' इति पाठे स्पष्टम् ॥ ८ ॥ उत्तुङ्गा अनङ्गभङ्गाः कामतरङ्गा यस्यां तथाविधया चेतोवृत्त्या रहितया त्यक्तया शुष्यते । भावे लट् ॥ ९ ॥ इदानीं देहमेव संबोध्यानुशोचति—**तेषु ते**ष्वित्यादिना । तेषु तेषु विचित्रेषु अवकाशेषु देवोद्यानादिप्रदेशेषु । तासु तासु विचित्रासु बाल्ययौवनादिदशासु । तथा प्रागभूतप्रकारास्तत्तत्सौन्दर्यालंकारगीतहास्यरतिविलासादिभावनासंबन्धा यस्य स तथाविधो भूत्वा संप्रति कथं स्वस्थोऽसि । कुतस्त्वन्नानुशोचसीत्यर्थः ॥ १० ॥ कङ्कालतां अस्थिमात्रावशेषताम् ॥ ११ ॥ १२ ॥ हारो मुक्तावली ॥ १३ ॥ द्रवत्काञ्चनं द्रुतं सुवर्णमिव कान्तेन भासुरेण । लोभं कामभोगस्पृहाम् । उह्यते धार्यते । पश्येति पुनः पितरं प्रत्युक्तिः ॥ १४ ॥ कुवक्रेण विकृतेन मुखेन ॥ १५ ॥ अन्तःप्रविष्टत्वात्प्रकाशेन प्रकाशमानेनार्कांशुजालेन शोभते । पश्यामीत्यस्य पश्य मृगो धावतीत्यत्रेव वाक्यार्थः कर्म ॥ १६ ॥ आत्मनः स्वस्यास्तुच्छत्वेन फल्गुत्वेन । कुत्सितरूपताप्रदर्शनेनेति यावत् । नयत्युपदिशतीव ॥ १७ ॥ गन्धान्तानां लोभादभिलाषाद्विमुक्तया मत्तन्वा तदेतावत्कालं मत्परोक्षमेतदिदानीं मत्प्रत्यक्षं च निर्विकल्पः समाधिर्यस्यास्तयेव शुष्यते तप्यते ॥ १८ ॥ सुखं स्वस्थम् । दैवतोपपादितेभ्यो भङ्गेभ्यो विपद्भ्यः ॥ १९ ॥ आनन्दस्य कलां चमत्कृतिम् । जागतेन त्रैलोक्यसंबन्धिना राज्येनापीत्यन्वयः ॥ २० ॥ २१ ॥ संरम्भेण कामादिचापलेन संक्षुब्धो न केवलं विवेकसद्वासनादिशाखापल्लवादीन्येव स्वस्य यथा विशातयति तथा चलति किंतु आमूलाद्यथा निकृन्तति उन्मूलितो भवति तथा चलति । विवेकाद्यनधिकृतस्थावरादियोनिष्वेव जीवं पातयतीत्यर्थः ॥ २२ ॥ अद्रौ अस्मिन्मन्दरे मे देहश्चित्तलक्षणेनानर्थेन विमुक्तः सन्नद्य गजानामभ्रैर्मेघैर्हरिभिः सिंहैश्च विग्रहं वैरं युयुत्साप्रतिगर्जनाभिगमनादिलक्षणं न पश्यति । प्राक्कौतुकदर्शनपरानन्दे स्थित इव यथा प्राग्बहिः कौतुकदर्शनेन नन्दति तथाद्य नेत्यर्थः । अथवा अद्रौ स्फटिकशिलासु प्रतिबिम्बितं गजाभ्रहरीणां विग्रहं युद्धं मूर्तिं वाद्य न पश्यतीत्यर्थः । 'नाव्यं पश्यति' इति पाठे तु यथा परानन्दे परमात्मनि स्थितो जीवन्मुक्तः प्रथमं गजमिव स्थूलं अभ्रमिव सूक्ष्मं हरिमिव कारणं च विग्रहाः शरीराणि यस्मिंस्तथाविधमात्मनटस्य नाव्यं पश्यति तथा मम देहोऽपि चित्तानर्थविमुक्तत्वादेव पृथक् स्थितेन मदात्मना असिअद्रौ...[1] क्वचिदभ्राणि क्वचिद्रयः सिंहमर्कटादय इति

१ अलमिति पाठः.

सर्वाशाज्वरसंमोहमिहिकाशरदागमम् ।
अचित्तत्वं विना नान्यच्छ्रेयः पश्यामि जन्तुषु ॥ २४
त एव सुखसंभोगसीमान्तं समुपागताः ।
महाधिया शान्तधियो ये याता विमनस्कताम् ॥ २५
सर्वदुःखदशामुक्तां संस्थितां विगतज्वराम् ।
दिष्ट्या पश्याम्यमननां वने तनुमिमामहम् ॥ २६

श्रीराम उवाच ।

भगवन्सर्वधर्मज्ञ भार्गवेण तदा किल ।
सुबह्वन्युपभुक्तानि शरीराणि पुनःपुनः ॥ २७
भृगुणोत्पादिते काये तत्तस्मिंस्तस्य किं पुनः ।
महानतिशयो जातः परिदेवनमेव वा ॥ २८

श्रीवसिष्ठ उवाच ।

शुक्रस्य कलना राम यासौ जीवदशां गता ।
कर्मात्मिका समुत्पन्ना भृगोर्भार्गवरूपिणी ॥ २९
सा हीदंप्रथमत्वेन समुपेत्य परात्पदात् ।
भूताकाशपदं प्राप्य वातव्यावलिता सती ॥ ३०
प्राणापानप्रवाहेण प्रविश्य हृदयं भृगोः ।
क्रमेण वीर्यतामेत्य संपन्नौशनसी तनुः ॥ ३१
विहितब्राह्मसंस्कारा तत्र सा पितुरग्रगा ।
कालेन महता प्राप्ता शुष्ककङ्कालरूपताम् ॥ ३२
इदंप्रथममायाता यदासौ ब्रह्मणस्तनुः ।
अतस्तां प्रति शुक्रेण तदा तत्परिदेवितम् ॥ ३३
वीतरागोऽप्यनिच्छोऽपि समङ्गाविप्ररूपवान् ।
स शुशोच तनुं शुक्रः स्वभावो ह्येष देहजः ॥ ३४
ज्ञस्याज्ञस्य च देहस्य यावद्देहमयं क्रमः ।
लोकवद्व्यवहारोऽयं सत्तयासत्तयाथवा सदा ॥ ३५
ये परिज्ञातगतयो ये चाज्ञाः पशुधर्मिणः ।
लोकसंव्यवहारेषु ते स्थिता लोकजालवत् ॥ ३६
व्यवहारे यथैवाज्ञस्तथैवाखिलपण्डितः ।
वासनामात्रभेदोऽत्र कारणं बन्धमोक्षदम् ॥ ३७
यावच्छरीरं तावद्धि दुःखे दुःखं सुखे सुखम् ।
असंसक्तधियो धीरा दर्शयन्त्यप्रबुद्धवत् ॥ ३८
सुखेषु सुखिता नित्यं दुःखिता दुःखवृत्तिषु ।
महात्मानो हि दृश्यन्ते दृश्य एवाप्रबुद्धवत् ॥ ३९
सूर्यस्य प्रतिबिम्बानि क्षुभ्यन्ति न पुनः स्थिरम् ।
चलाचलतया तज्ज्ञो लोकवृत्तिषु तिष्ठति ॥ ४०

---

नानाविग्रहमात्मनटस्य नाट्यं पश्यतीत्यर्थः ॥२३॥ सर्वे आशारूपा ये ज्वरास्तन्निदानभूतो यो मोहस्तल्लक्षणाया मिहिकाया अभ्रबीजस्य शरदागमभूतम् । सर्वासामाशानां दिशां वा, सर्वास्वाशासु दिक्षु वा ज्वरभूताया मोहमिहिकायाः शरदागमम् । अचित्तत्वं मनोनाशं विना ॥ २४ ॥ सुखसंभोगा हैरण्यगर्भानन्दान्ता विषयसुखभोगास्तेषां सीमान्तं परमावधिं भूमानन्दम् । अपरिच्छिन्नब्रह्मसाक्षात्कारत्वान्महाधिया । रागादिधीकार्योपशमाच्छान्तधियः ॥ २५ ॥ स्वदेहे जीवन्मुक्तदेहसाम्यं संभाव्याभिनन्दति—**सर्वेति** । दिष्ट्या भाग्योदयेन ॥ २६ ॥ रामस्य प्रश्नाशयः स्पष्टः ॥ २७ ॥ तत्तेभ्यः शरीरेभ्यः । तस्मिन्काये किं कस्माद्धेतोः महान् प्रवृद्धः । अतिशयः स्नेहस्येति शेषः ॥ २८ ॥ शुक्रस्य सांप्रतिकग्रहपदाधिकारोपभोगप्रयोजकप्राक्कल्पानुष्ठितसत्कर्मणामुत्क्रान्तिकाले एतत्कल्पभाविभृगूत्पाद्यशरीराकारेण परिणतानां तादृशाकारवासनात्मनैव प्रलये चिरमवस्थानादाकाशादिक्रमेणैतत्कल्पे भृगुशरीरोत्पत्तौ अन्नद्वारा प्राणापानप्रवाहेण तद्धृदयं प्रविश्य रेतोरूपपरिणामद्वारा चिराभ्यासदृढीकृतप्राक्तनकामकर्मवासनानुसारेणैव शुक्रदेहारम्भात्तेन कतिपयकर्मभोगेऽपि भोक्तव्यप्रारब्धकर्मणां बहूनामवशिष्टत्वाद्युक्तस्तस्मिन्स्नेहातिशयो न देहान्तरेषु, तद्भोग्यकर्मणामनवशेषादित्याशयेनोत्तरं वसिष्ठ आह—**शुक्रस्येत्यादिना** । कलना प्राक्तनोत्क्रान्तिकालिकी भाविदेहाकारकलना । भार्गवरूपिणी भृगूत्पाद्यदेहाकारा या प्राक्कल्पे आसीदिति शेषः ॥ २९ ॥ सा हि सैवेदानीमौशनसी तनुः संपन्नेति परेणान्वयः । केन क्रमेण तमाह—**इदंप्रथमत्वेनेत्यादिना** । परात्पदात्प्रलयकालपरिशिष्टान्मायाशबलेश्वरात् इदंप्रथमत्वेन एतत्कल्पीयप्रथमशरीरभावेन समुपेत्य सिक्तोच्छूनबीजान्तराङ्कुरशक्तिवदीषदाविर्भूय क्रमादाकाशादिपदं तत्तद्भूतसाम्यं प्राणवातेन वृष्टिद्वारा अन्नादिभावेन व्यावलिता अन्तर्भाविता सती ॥ ३० ॥ प्राणक्रियाविशेषात्मना अन्नग्रासिना अपानप्रवाहेण ॥ ३१ ॥ विहिता विधिवदनुष्ठिता ब्राह्मा ब्राह्मणजन्मोचिता गर्भाधानपुंसवनजातकर्मान्नप्राशनचौलोपनयनादयः संस्कारा यस्याम् । नह्यसंस्कृततया ग्रहाधिकारो भोक्तुं शक्यत इति भावः ॥ ३२ ॥ ब्रह्मणः सकाशादुक्तरीत्या इदं प्रथमं यथा स्यात्तथा यदा यस्माद्धेतोरायाता अतः अकाले । पञ्चम्या अपि च्छान्दसो दाप्रत्ययः ॥ ३३ ॥ ज्ञानिनोऽपि न प्रारब्धमतिवर्तन्त इत्याशयेनाह—**वीतेति** ॥ ३४ ॥ यावद्देहं यावज्जीवनं सदा सर्वकाले क्रमो मर्यादानियमः न कदाचिद्व्यभिचरतीत्यर्थः । ज्ञस्य सत्तया अज्ञस्य त्वसत्तयेति विशेष इत्यर्थः ॥ ३५ ॥ अत एवेतरव्यवहारेष्वपि तयोस्तुल्यतैवेत्याह—**ये** इति ॥ ३६ ॥ तर्हि द्वयोः साम्ये एकस्य बन्धोऽपरस्य मोक्ष इति विशेषः कुतस्तत्राह—**वासनेति** ॥ ३७ ॥ दुःखे दुःखनिमित्तप्राप्तौ । दर्शयन्ति विडम्बयन्ति ॥ ३८ ॥ दुःखवृत्तिषु दुःखनिमित्तेषु दुःखिता दुःखिता इव । दृश्ये व्यवहारविषये एवाप्रबुद्धवद्वर्तन्ते स्वात्मतत्त्वे तु सुस्थिरा नाज्ञवद्वर्तन्त इत्यर्थः ॥ ३९ ॥ एकस्यैकदैव स्थिरास्थिरवृत्तिविरोधवारणाय दृष्टान्तमाह—**सूर्यस्येति** । यथा सूर्यस्य जलस्थानि प्रतिबिम्बवपूंष्येव क्षुभ्यन्ति संचलन्ति नतु नभस्थं स्थिरं बिम्बवपुस्तद्वदित्यर्थः । त्वर्थे पुनःशब्दः ॥ ४० ॥

अवस्थित इव स्वस्थः प्रतिबिम्बेषु भास्करः ।
संत्यक्तलोककर्मापि बुद्ध एवाप्रबुद्धधीः ॥ ४१
मुक्तबुद्धीन्द्रियो मुक्तो बद्धकर्मेन्द्रियोऽपि हि ।
बद्धबुद्धीन्द्रियो बद्धो मुक्तकर्मेन्द्रियोऽपि हि ॥ ४२
सुखदुःखदशो लोके बन्धमोक्षदशस्तथा ।
हेतुर्बुद्धीन्द्रियाण्येव तेजांसीव प्रकाशने ॥ ४३
बहिर्लोकोचिताचारस्त्वन्तराचारवर्जितः ।
समो ह्यतीव तिष्ठ त्वं संशान्तसकलैषणः ॥ ४४
सर्वैषणाविमुक्तेन स्वात्मनात्मनि तिष्ठता ।
कुरु कर्माणि कार्याणि नूनं देहस्य संस्थितिः ॥ ४५

आधिव्याधिमहावर्तगर्तसंसारवर्त्मनि ।
ममतोग्रान्धकूपेऽस्मिन्मा पतातापदायिनि ॥ ४६
न त्वं भावेषु नो भावास्त्वयि तामरसेक्षण ।
शुद्धबुद्धस्वभावस्त्वमात्मान्तःसुस्थिरो भव ॥ ४७
त्वं ब्रह्म ह्यमलं शुद्धं त्वं सर्वात्मा च सर्वकृत् ।
सर्वं शान्तमजं विश्वं भावयन्वै सुखी भव ॥ ४८
व्यपगतममतामहान्धकारः
पदममलं विगतैषणं समेत्य ।
प्रभवसि यदि चेतसो महात्मं-
स्तदतिधिये महते सते नमस्ते ॥ ४९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्र० भार्गवोपा० भार्गवपरिदेवनप्रसङ्गेनोपदेशकरणं नाम पञ्चदशः सर्गः ॥१५॥

## षोडशः सर्गः १६

श्रीवसिष्ठ उवाच ।

अथाक्षिप्य वचस्तस्य तनयस्य तथा भृगोः ।
उवाच भगवान्कालो वचो गम्भीरनिःस्वनः ॥ १

काल उवाच ।

समङ्गातापसीमेतां तनुं संत्यज्य भार्गव ।
प्रविशेमां तनुं साधो नगरीमिव पार्थिवः ॥ २
काले पूर्वजया तन्वा तपः कृत्वा तया पुनः ।
गुरुत्वमसुरेन्द्राणां कर्तव्यं भवतानघ ॥ ३
महाकल्पान्त आयाते भवता भार्गवी तनुः ।
अपुनर्ग्रहणायैषा त्याज्या प्रम्लानपुष्पवत् ॥ ४
जीवन्मुक्तपदं प्राप्तस्तन्वा प्राक्तनरूपया ।
महासुरेन्द्रगुरुतां कुर्वंस्तिष्ठ महामते ॥ ५
कल्याणमस्तु वां यामो वयं त्वभिमतां दिशम् ।
न किंचिदपि यच्चित्तं यस्य नाभिमतं भवेत् ॥ ६

---

यथा प्रतिबिम्बेष्ववस्थितो भास्करः स्वस्थ एवास्वस्थोऽभिन्नश्चल इव भवति तद्वद्बुद्ध एव व्यवहारस्थोऽप्रबुद्धधीर्भवतीत्यर्थः ॥४१॥ तर्ह्यज्ञवद्विहितनिषिद्धकर्मभिस्तस्य बन्धोऽपि स्यादित्याशङ्क्य बुद्धीन्द्रियासङ्गपूर्वककर्मणामेव बन्धकता नान्येषामित्याशयेनाह—**मुक्ते**ति । इदमेव भगवतोक्तम् 'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥' इत्यादिना ॥ ४२ ॥ सुखदुःखदशः सुखदुःखभोगस्य ॥ ४३ ॥ ननु तर्हि मया कथं स्थेयं तत्राह—**बहि**रिति । आचारवर्जितः कूटस्थात्मदृढनिष्क्रियः । अतएव समो वैषम्यशून्यः ॥ ४४ ॥ एषणा कर्मफलासङ्गस्तद्विमुक्तेन आत्मनि ब्रह्मणि तिष्ठता प्रतिष्ठितेनात्मना मनसा कर्माणि कुरु । नूनमिति हेतौ । यतो देहस्य कार्याणि कर्माणि संस्थितिः स्वभाव इत्यर्थः । 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इति भगवताप्युक्तम् ॥ ४५ ॥ आधयो मानसदुःखानि । व्याधयः शारीरदुःखानि । महान्त आवर्ता मरणजन्मभ्यां परिवर्तनानि तान्येव गर्ताः श्वभ्राणि यस्मिंस्तथाविधे संसारवर्त्मनि ममतोग्रान्धकूपे मा पत ॥ ४६ ॥ तदपतने उपायमाह—**न त्वमि**त्यादिना । भावेषु दृश्यवस्तुषु देहादिषु तिष्ठसीत्यर्थः । त्वयि सन्तीति शेषः ॥ ४७ ॥ भावयन् विचारेणानुभवन्सन् ॥ ४८ ॥ हे महात्मन् विगतैषणं सकलैषणानिवर्तकं पूर्णानन्दममलमविद्यादिशून्यं पदं समेत्य सम्यगनुभवेन प्राप्य व्यपगतममतामहान्धकारः संश्चेतसश्चित्तस्य यदि वशे प्रभवसि समर्थः स्यास्तर्हि अतिधिये अपरिमितबुद्धये महते पूर्णाय सते परमार्थसत्यब्रह्मभूताय ते नमः । अस्मदादीनामपि सदा वन्द्यो भविष्यसीत्याशयः ॥४९॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे भार्गवपरिदेवनप्रसङ्गेनोपदेशकरणं नाम पञ्चदशः सर्गः ॥ १५ ॥

कालवाक्याद्गते काले प्रवेशः स्वतनौ पुनः ।
शुक्रस्य दैत्यगुरुता जीवन्मुक्तिश्च वर्ण्यते ॥ १ ॥

तथा प्राग्वर्णितप्रकारं भृगोस्तनयस्य शुक्रस्य वचः परिदेवनवाक्यमाक्षिप्य अयुक्तत्ववर्णनेन निरस्य ॥ १ ॥ २ ॥ काले आधिकारिकप्रारब्धोद्बोधकाले । पूर्वजया इदंप्रथमया ॥३॥ कदा तर्हि सा त्याज्या तदाह—**महाकल्पान्ते** इति । महतः सहस्रयुगपरिमितस्य कल्पस्य ब्रह्मदिनस्यान्ते । अपुनर्ग्रहणाय पुनः शरीरान्तराग्रहणाय । उपभुक्तम्लानपुष्पवत् ॥ ४ ॥ प्राक्तनरूपया पूर्वकल्पार्जितकर्मारब्धया ॥ ५ ॥ कल्याणं शुभं वां युवाभ्यामस्तु । वयमिति 'अस्मदो द्वयोश्च' इत्येकस्मिन्बहुवचनमनुचरसाहित्यविवक्षया वा । अभिमतामिति दिग्विशेषणमनभिमतव्यावृत्तये नोपात्तं पूर्णात्मनोऽनभिमतस्यैवाप्रसिद्धेः । यस्य तु चित्तस्येदमभिमतमिदं नाभिमतमिति विकल्पो भवेत्तद्यदनभिमतं विहायाभिमतमुपसर्पच्चित्तं पर्यालोच्यमानं न किंचिद्वस्तुरूपमस्ति तस्मादभिमतां दिशमित्यस्य परमप्रेमास्पदमात्मभावावस्थानं याम इति स्वाशयसूचनाय विशेषणमुपात्त-

इत्युक्त्वा मुञ्चतोर्बाष्पं तयोः सोऽन्तरधीयत ।
तप्ताङ्ग्योरिव रोदस्योः सममंशुभिरंशुमान् ॥ ७
गते तस्मिन्भगवति कृतान्ते भवितव्यताम् ।
विचार्य भार्गवोऽमेयां नियतेर्नियतां गतिम् ॥ ८
कालकारणसंशुष्कां भाविपुष्पशुभोदयाम् ।
विवेश तां तनुं बालां सुलतामिव माधवः ॥ ९
सा ब्राह्मणीतनुर्भूमौ विवर्णवदनाङ्गिका ।
पपात कम्पिता तूर्णं छिन्नमूला लता यथा ॥ १०
तस्यां प्रविष्टजीवायां पुत्रतन्वां महामुनिः ।
चकाराप्यायनं मन्त्रैः स कमण्डलुवारिभिः ॥ ११
सर्वा नाड्यस्ततस्तन्वास्तस्याः पूर्णा विरेजिरे ।
सरितः प्रावृषीवाम्बुपूरपूरितकोटराः ॥ १२
नलिनी प्रावृषीवासौ मधाविव नवा लता ।
यदा पूर्णा तदा तस्याः प्रान्ताः पल्लविता बभुः ॥ १३
अथ शुक्रः समुत्तस्थौ वहत्प्राणसमीरणः ।
रसमारुतसंयोगादापूर्ण इव वारिदः ॥ १४
पुरोऽभिवादयामास पितरं पावनाकृतिम् ।
प्रथमोल्लासितो मेघः स्तनितेनेव पर्वतम् ॥ १५
पिताथ प्राक्तनीं तन्वा आलिलिङ्गाकृतिं ततः ।
स्नेहार्द्रवृत्तिर्जलदश्चिरादद्रितटीमिव ॥ १६
भृगुर्ददर्श सस्नेहं प्राक्तनीं तानवीं तनुम् ।
मत्तो जातेयमित्यास्थां हसन्नपि महामतिः ॥ १७
मत्पुत्रोऽयमिति स्नेहो भृगुमप्यहरत्तदा ।
परमात्मीयता देहे यावदाकृतिभाविनी ॥ १८
बभूवतुः पितापुत्रौ तावथान्योन्यशोभितौ ।
निशावसानमुदितावर्कपद्माकराविव ॥ १९
चिरसंगमसंबद्धाविव चक्राह्वदम्पती ।
घनागमनसस्नेहौ मयूरजलदाविव ॥ २०
चिरकालदृढोत्कण्ठौ तुल्ययोग्यतया तया ।
स्थित्वा तत्र मुहूर्तं तावथोत्थाय महामती ॥ २१
समङ्गाद्विजदेहं तं भस्मसात्तत्र चक्रतुः ।
को हि नाम जगज्ज्ञातमाचारं नानुतिष्ठति ॥ २२
एवं तौ कानने तस्मिन्पावने भृगुभार्गवौ ।
संस्थितौ तापसौ दीप्तौ दिवीव शशिभास्करौ ॥ २३
चेरतुर्ज्ञातविज्ञेयौ जीवन्मुक्तौ जगद्गुरू ।
देशकालदशौघेषु सुसमौ सुस्थिरौ ततः ॥ २४
अथासुरगुरुत्वं स शुक्रः कालेन लब्धवान् ।
भृगुरप्यात्मनो योग्ये पदेऽतिष्ठदनामये ॥ २५
शुक्रोऽसौ प्रथममिति क्रमेण जात-
स्तस्मात्तत्परमपदादुदारकीर्तिः ।
स्वेनाशु स्मृतिपदविभ्रमेण पश्चा-
दन्येषु प्रविलुलितो दशान्तरेषु ॥ २६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे भार्ग० शुक्रस्य पुनर्जीवनं नाम षोडशः सर्गः ॥ १६ ॥

---

मिति दर्शयन्नाह—**न किंचिदिति** ॥ ६ ॥ तयोर्भृगुशुक्रयोः स्नेहाद्बाष्पं मुञ्चतोः । 'षष्ठी चानादरे' इति भावलक्षणे षष्ठी सप्तमी वा ॥ ७ ॥ कृतान्ते काले । भवितव्यतामवश्यभाविकर्मगतिम् । नियतेरीश्वरेच्छाया नियतामनिवार्यां गतिं च विचार्येत्यर्थः ॥ ८ ॥ कालश्चिरकालो हेमन्तशिशिरकालश्च तेन कारणेन निमित्तेन संशुष्काम् । माधवो वसन्तः ॥ ९ ॥ सा वासुदेवाभिधाना समङ्गा तापसतनुः ॥ १० ॥ तस्यां शुक्राख्यायां पुत्रतन्वां प्रविष्टो जीवो यस्यां तथाविधायां सत्याम् ॥ ११ ॥ ततः आप्यायनानन्तरम् ॥ १२ ॥ प्रान्ता अङ्गुलिनखकेशादयः पल्लविताः पल्लववन्निर्गताः सन्तो बभुः ॥ १३ ॥ रसस्य जलस्य मारुतस्य पुरोवातस्य च संयोगात् ॥ १४ ॥ स्तनितेनेवेति दृष्टान्तबलान्नामगोत्रकीर्तनपूर्वकता अभिवादने गम्यते ॥ १५ ॥ तन्वाः पुत्रतन्वाः । शोषविशीर्णाकृत्यपेक्षया प्राक्तनीं । पूर्ववद्यौवनसौन्दर्यादिशालिनीमिति यावत् । आकृतिं आकारम् ॥ १६ ॥ बालत्वात्तनुः सूक्ष्मा सैव तानवी तां तनुं पुत्रदेहम् । तत्त्वदृशा अनौचित्यचिन्तनाद्धसन्नपि । चकारेति शेषः ॥ १७ ॥ यावदाकृति यावज्जीवं भाविनी । आवश्यके णिनिः । प्रारब्धप्राबल्यादवश्यभाविनीत्यर्थः ॥ १८ ॥ १९ ॥ चक्राह्वदम्पती चक्रवाकजायापती । घनशब्देन तत्कालो लक्ष्यते । बभूवतुरित्यनुषङ्गः ॥ २० ॥ चिरकालवियोगाद्दृढीकृतसमागमोत्कण्ठौ । तया जगत्प्रसिद्धया वर्णितरूपया च तुल्यानन्दभरयोग्यतया मुहूर्तं स्थित्वा जडीभूय ॥ २१ ॥ आचारं सदाचारम् । तथाचाचारपरिपालनमेव दाहादिफलं न फलान्तरमत्रेत्यर्थः ॥ २२ ॥ २३ ॥ देशकालानां शुभाशुभादिदशौघेषु समौ हर्षविषादवैषम्यरहितौ । यतः स्वरूपे सुस्थिरावित्यर्थः ॥ २४ ॥ असुरगुरुत्वग्रहणं ग्रहाधिकारस्याप्युपलक्षणम् । पदे प्राजापत्याधिकारे ॥ २५ ॥ उक्तां शुक्रगतिं संक्षिप्योपसंहरति—**शुक्र** इति । स्वेन स्वीयेन स्मृतिपदं पुनः पुनः स्मरणारूढा अप्सरास्तत्प्रयुक्तेन मनोराज्यविभ्रमेण ॥ २६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे शुक्रस्य पुनर्जीवनं नाम षोडशः सर्गः ॥ १६ ॥

१ फलोदयामिति पाठः.

# सप्तदशः सर्गः १७

श्रीराम उवाच ।

भगवन्भृगुपुत्रस्य प्रतिभासानुभूतितः ।
यथैषा सफला जाता तथान्यस्य न किं भवेत् ॥ १

श्रीवसिष्ठ उवाच ।

इयं प्रथममुत्पन्ना सा तनुर्ब्रह्मणः पदात् ।
शुद्धा जातिर्भार्गवस्य नान्यजन्मकलङ्किता ॥ २
सर्वेषणानां संशान्तौ शुद्धचित्तस्य या स्थितिः ।
तत्सत्यमुच्यते सैषा विमला चिदुदाहृता ॥ ३
मनोनिर्मलसत्त्वात्म यद्भावयति यादृशम् ।
तत्तथाशु भवत्येव यथावर्तो[1] भवेत्पयः ॥ ४
यथा भृगुसुतस्यैव विभ्रमः प्रोत्थितः स्वयम् ।
प्रत्येकमप्येवमेव दृष्टान्तोऽत्र भृगोः सुतः ॥ ५
बीजस्थाङ्कुरपत्रादि स्वं चमत्कुरुते यथा ।
सर्वेषां भूतसङ्घानां भ्रमखण्डास्तथैव हि ॥ ६
यदिदं दृश्यते विश्वमेवमेवाखिलं जगत् ।
प्रत्येकमुदितं मिथ्या मिथ्यैवास्तमुपैति च ॥ ७
नास्तमेति नचोदेति जगत्किंचन कस्यचित् ।
भ्रान्तिमात्रमिदं मायामुग्धेव परिजृम्भते ॥ ८
यथा संप्रतिभासस्थः स्वयं संसारखण्डकः ।
तथा तेषां सहस्राणि मिथ्या दृष्टानि सन्ति हि ॥ ९
स्वप्नसंकल्पनगरव्यवहाराः परस्परम् ।
पृथग्यथा न दृश्यन्ते तथैते संसृतिभ्रमाः ॥ १०
एवं नगरवृन्दानि नभस्संकल्परूपिणि ।
सन्ति तानि न दृश्यन्ते मिथ्याज्ञानदृशं विना ॥ ११
पिशाचयक्षरक्षांसि सन्त्येवंरूपकाणि ह ।
संकल्पमात्रदेहानि सुखदुःखमयानि च ॥ १२
एवमेव वयं चेमे संपन्ना रघुनन्दन ।
स्वसंकल्पात्मकाकारा मिथ्यासत्यत्वभाविनः ॥ १३
एवंरूपैव हि परे विद्यते सर्गसंततिः ।
न वास्तवी वस्तुता तु संस्थितैवमवस्तुनि ॥ १४
प्रत्येकमुदितं विश्वमेवमेव मुधैव हि ।
वनगुल्मकरूपेण वसन्तैकरसो यथा ॥ १५
प्रथमोऽयं स्वसंकल्पः प्रथामभ्यागतो यथा ।
तथातिपरमार्थेन दृष्टेनेत्थं विभाव्यते ॥ १६
प्रत्येकमुदितं चित्तं स्वस्वभावोदरस्थितम् ।
इदमित्थं समारम्भं जगत्पश्यन्विनश्यति ॥ १७
प्रतिभासवशादस्ति नास्ति वस्त्ववलोकनात् ।
दीर्घस्वप्नो जगज्जालमालानं चित्तदन्तिनः ॥ १८
चित्सत्तैव जगत्सत्ता जगत्सत्तैव चित्तकम् ।
एकाभावाद्द्वयोर्नाशः स च सत्यविचारणात् ॥ १९

---

शुद्धानामिह चित्तानां सत्यसंकल्पतोच्यते ।
वासनादृष्टतुल्यत्वे मेलनं च परस्परम् ॥ १ ॥

ननु शुकस्याप्सरःस्वर्गादिमनोराज्यस्य चिरं भोगेन साफल्यमिवान्येषामपि तस्य तथात्वं किं न स्यादिति रामः शङ्कते—**भगवन्नि**ति । या मानोरथिकी प्रतिभा सैषा यथा स्वर्गाद्यनुभूतितः सफला जाता तथा अन्येषामपि किं न भवेदित्यन्वयः ॥ १ ॥ प्रतिभानां फलोपभोगसंवादेन सफलत्वे द्वौ हेतू सत्यसंकल्पत्वयोग्या चित्तशुद्धिः, उत्क्रान्तिकालोद्बुद्धपरिपक्वभाविभोगप्रदकर्मोद्भावितत्वं च । तत्राद्यं शुकस्य दर्शयन्समाधत्ते—**इयं प्रथम**मित्यादिना । शुकस्य प्राक्कल्पीयसर्वदोषाणां तच्चरमजन्मानुष्ठितकर्मोपासनैः क्षयादस्मिन्कल्पे सेयं तनुः प्रथममुत्पन्नेत्येतत्कल्पीयदोषाप्रसक्तेर्ब्रह्मणः पदादेवाधिकारभोगार्थं धातुः संकल्पाज्जातत्वेन तत्सांकल्पिकदोषस्याप्रसक्तेरुभयकुलशुद्धा ब्राह्मणजातिरिति बीजगर्भजात्यादिदोषस्याप्यप्रसक्तेर्नासत्यसंकल्पताप्राप्तिरित्यन्येभ्योऽस्य विशेष इत्यर्थः ॥ २ ॥ अन्येषां ब्रह्मविदामपि सत्यसंकल्पत्वे रागादिदोषक्षयप्रयुक्तशुद्ध्या चित्तस्य सत्यात्मभावापत्तिरेव हेतुरित्याशयेनाह—**सर्वैषणाना**मिति ॥ ३ ॥ ४ ॥ अन्येषां चित्तशुद्ध्यभावात्सत्यसंकल्पत्वासिद्ध्या आद्यकल्पासंभवेऽपि द्वितीयकल्पानुसारात्प्राक्तनमरणोद्बुद्धकर्मवासनाद्यनुगुणसुखदुःखभोगानुकूलजगत्प्रतिभासे शुकसाम्यमस्त्येवेत्याशयेनाह—**यथे**ति ॥ ५ ॥ भ्रमखण्डा भ्रान्तिकृतद्वैतविभागाः ॥ ६ ॥ दृश्यते अस्माभिरिति शेषः । प्रत्येकं प्रतिजीवम् ॥ ७ ॥ परमार्थदृशा त्वाह—**नास्त**मिति । मुग्धा उन्मत्तेव ॥ ८ ॥ एकैकस्यापि जीवस्यानेकं जगदनुभवसिद्धमित्याह—**यथे**ति । संप्रति जागरे भासोऽपरोक्षावभासस्तत्र तिष्ठतीति भासस्थः । अस्माकमिति शेषः । तेषां संसारखण्डानाम् । सन्ति स्वप्नभ्रमादावित्यर्थः । अथवा यदि प्रतिजीवं संसाराः प्रत्येकमुदितास्तर्हि कुतो न भासन्त इति चेत् भासन्त एवेत्याह—**यथे**ति । सम्यक्प्रतिभासः स्फुटानुभवस्तत्स्थः अस्माकमिति शेषः । तेषां जीवान्तराणां सहस्राणि संसाराणामिति शेषः ॥ ९ ॥ तर्हि सर्वैः परस्परं संसाराः पृथक्कुतो न दृश्यन्ते तत्राह—**स्वप्ने**ति । यथान्यस्य स्वप्नोऽन्यैर्न दृश्यते तद्वदित्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ एवमेव शुकवदेव ॥ १३ ॥ व्यष्टेः परे हिरण्यगर्भेऽपि एवमन्धपरम्परयैव संस्थिता ॥ १४ ॥ सर्वजीवजगदाकारेण ब्रह्मैवोदितमित्याह—**प्रत्येक**मिति ॥ १५ ॥ प्राथमिकः स्वसंकल्प एव जगदाकारप्रथामभ्यागत इति कथं ज्ञायते तत्राह—**प्रथम** इति । तत्त्वदर्शनेन ज्ञायत इत्यर्थः ॥ १६ ॥ स्वस्य स्वभावः अनाद्यज्ञानं तदुदरस्थितं चित्तमेव जगदिति पश्यन्विनश्यति स्वयमित्यर्थः ॥ १७ ॥ तथाच प्रतिभासकालिक्येव जगत्सत्ता न वास्तवाधिष्ठानदर्शने स्थातुमर्हतीत्याह—**प्रतिभासे**ति ॥ १८ ॥ तर्हि जगति किं प्राक्प्रतिभाता सत्ता [illegible]तासती नेत्याह—**चित्सत्तैवे**ति । 'चित्सत्तैव

---

१ सोत्थितः इति पाठः.

शुद्धस्य प्रतिभासो हि सत्यो भवति चेतसः ।
प्रमार्जनादिव मणेर्मलिनस्येह युक्तितः ॥ २०
चिरमेकदृढाभ्यासाच्छुद्धिर्भवति चेतसः ।
अनाक्रान्तस्य संकल्पैः प्रतिभोदेति चेतसः ॥ २१
सुवर्णं न स्थितिं याति मलवत्यंशुके यथा ।
एका दृष्टिः स्थितिं याति न म्लाने चित्तके तथा ॥ २२

श्रीराम उवाच ।

प्रतिभासात्मनि जगत्येते कालक्रियाक्रमाः ।
सोदयास्तमया जाताः कथं शुकस्य चेतसः ॥ २३

श्रीवसिष्ठ उवाच ।

यादृग्जगदिदं दृष्टं शुकेण पितृशास्त्रतः ।
तादृकस्य स्थितं चित्ते मयूराण्डे मयूरवत् ॥ २४
स्वभावकोशस्थमिदं तदेतेन क्रमोदितम् ।
बीजेनाङ्कुरपत्रादिलतापुष्पफलं यथा ॥ २५
जीवो यद्वासनाबद्धस्तदेवान्तः प्रपश्यति ।
स्वरूपं चात्र दृष्टान्तो दीर्घस्वप्नस्त्विदं जगत् ॥ २६
प्रत्येकमुदितो राम नूनं संसृतिखण्डकः ।
रात्रौ सैन्यनरस्वप्नजालवत्स्वात्मनि स्फुटः ॥ २७

श्रीराम उवाच ।

एष संसृतिखण्डोत्थो मिथः स मिलति स्वयम् ।
नो वा मिलति तन्मे त्वं यथावद्वक्तुमर्हसि ॥ २८

श्रीवसिष्ठ उवाच ।

मलिनं हि मनोऽवीर्यं न मिथः श्लेषमर्हति ।
अयोऽयसि च संतप्ते शुद्धे तप्तं तु लीयते ॥ २९
चित्ततत्त्वानि शुद्धानि संमिलन्ति परस्परम् ।
एकरूपाणि तोयानि यान्त्यैक्यं नाविलानि हि ॥ ३०
शुद्धिर्हि चित्तस्य विवासनत्व-
मभूतसंवेदनमेकरूपम् ।
तस्याशु शुद्ध्या भवति प्रबुद्ध-
स्तन्मात्रयुक्त्या परसंगमेति ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थि० भार्गवोपाख्याने मनोराज्यसंमेलनं नाम सप्तदशः सर्गः ॥ १७ ॥

---

हि जगत्' इति पाठे आलानं चित्तदन्तिन इति यदुक्तं तदाशयं स्फुटयति—**चित्तसत्तैवे**ति । तत्फलमाह—**एकाभावा-दि**ति ॥ १९ ॥ चित्तसत्तया जगत्सत्ता क दृष्टेति चेच्छुद्ध-चित्तानां सत्यसंकल्पोत्थे वस्तुनि दृष्टेत्याशयेनाह—**शुद्धस्ये**ति । मणेः प्रमार्जनान्मणिकार्यस्य प्रकाशविषनिर्हरणादेरिवेत्यर्थः । युक्तित उपायतः ॥ २० ॥ एकदृढाभ्यास ऐकाग्र्यदार्ढ्या-भ्यासः । प्रतिभा स्वच्छताप्रयुक्तभास्वरता ॥ २१ ॥ सुवर्णं शोभनवर्णं रञ्जकद्रव्यं द्रुतस्वर्णं वा । मलवत्यंशुके मलिनवस्त्रे । एका दृष्टिरद्वैतात्मज्ञानम् ॥ २२ ॥ वासनानुसारी जगद्भ्रम इत्युक्तं तत्राननुभूते स्वर्गाप्सरोजन्मपरम्परादिवैचित्र्यक्रमे वास-नारूपबीजासंभवाच्छुकस्य कथं तदारोपक्रमः संपन्न इत्या-शयेन रामः पृच्छति—**प्रतिभासात्मनी**ति । शुकस्य चेत-सश्चित्तस्य प्रतिभासात्मनि प्रातिभासिककल्पनात्मके जगति कथं केन हेतुना जाताः । सोदयास्तमया इत्यनेन प्रतिभासोदयास्त-मययोः प्रतिभासकाले ग्रहणायोगादप्रतिभासकाले च तयोरप्य-नुभवासिद्धेः सुतरां तद्गोचरवासनाऽसिद्धिस्तदसिद्धौ क्रमस्याप्य-सिद्धिरित्याशयः सूचितः ॥ २३ ॥ पितृतः पितृजन्यचक्षुरा-दिवशात्पितृवाक्याच्च । शास्त्रतः श्रुतिस्मृत्यादिभ्यश्च यादृक् यादृशोत्पत्तिनाशादिविशिष्टमस्तीत्यवगतमैहिकं पारलौकिकं च तस्य चित्ते तादृगेव संस्काररूपेण स्थितम् । तथाच पितृशास्त्रादि-प्रमाणतदाभासैरेव[1] वासनोदयस्तस्याप्यासीदेवेत्यर्थः । उत्पत्ति-नाशक्रमगोचरसंस्कारः साक्षिणैव सेत्स्यतीति भावः ॥ २४ ॥ स्वभावकोशश्चिदधिष्ठिता सजीवा अविद्या । एतेन पितृशास्त्रनि-मित्तेन ॥ २५ ॥ स्वरूपं स्वप्ने स्वकल्पितं शरीरम् । ननु नायं स्वप्नो नेत्याह—**दीर्घे**ति ॥ २६ ॥ यथा सैन्यस्था नरा दिवा सैन्यवासनावासिता रात्रौ स्वप्ने प्रत्येकं सैन्यं स्वस्ववासना-कल्पितं नानासैन्यं पश्यन्तोऽपि ऐक्यं मन्यन्ते तद्वदित्यर्थः ॥२७॥ नन्वेवं सति नरस्तदीयसंसारश्च परैर्न द्रष्टुं शक्यत इति गुरूणां शिष्योद्धाराय प्रवृत्तिः शास्त्रप्रणयनं च स्वप्रकृतपरो-पकार इव न शिष्यं प्राप्नुयात्, तथा चोपदेशालाभाच्छिष्यस्यानि-र्मोक्षप्राप्तौ तुल्ययुक्त्या गुरोरपि स्वगुरुपदेशालाभादनिर्मोक्ष-दोषानिर्मोक्ष इति मूलघातिन्येवेयं कल्पनेत्याशयेन रामः पृच्छति—**एष** इति । यदि न मिलति तदोक्तदोषः, यदि मिलति तर्हि साधारणोऽयं संसारो नैकैकस्य ज्ञानेन बाधितुं शक्य इत्युभयतस्पाशा रज्जुरित्याशयः ॥२८॥ दोषद्वयास्पर्शाय व्यव-स्थयोत्तरमाह—**मलिन**मिति । अयं भावः—मलिनं हि मनः शुद्धे मनसि मिथः परस्परसंश्लेषं मेलनं नार्हति । कुतः । यतः अवीर्यं शुद्धमेलनयोग्यसौक्ष्म्यसामर्थ्यहीनम् । तप्तं कषायपाचन-शुद्धं तु संतप्ते अयसि संतप्तमय इव लीयते ऐक्यं गच्छति । यतस्तत्समाधिज्ञानाभ्यस्तसौक्ष्म्येण सवीर्यमित्याशयः । तथाच सवीर्यत्वादेव देवानां परकीयस्वप्नप्रवेशेन वरदानानुग्रह इव शिष्यमनःकल्पितजगदन्तःप्रवेशेन बोधनसमर्थमेवेति नाद्यो दोषः । साधारणत्वानभ्युपगमान्न द्वितीयदोषोऽपीति भावः ॥ २९ ॥ ३० ॥ चित्तशुद्धेः परां काष्ठां दर्शयंस्तत्प्राप्त्यैव तत्त्वज्ञता दृढा परमप्राप्तिश्च प्रतिष्ठिता भवति नान्यथेत्युपसं-हरति—**शुद्धिर्ही**ति । विवासनत्वमात्यन्तिकवासनाक्षय एव चित्तस्य परमा शुद्धिरित्यर्थः । तस्य चित्तस्य तन्मात्रस्य तादृश-चिन्मात्रपरिशेषलक्षणशुद्धिमात्रस्य युक्त्या लाभेन परेण पर-मकैवल्यात्मना सङ्गं मोक्षमेतीति यावत् ॥ ३१ ॥ इति श्रीवा-सिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे मनोराज्यसंमेलनं नाम सप्तदशः सर्गः ॥ १७ ॥

[1] प्रमाणतयाभासैः इति पाठः ।

# अष्टादशः सर्गः १८

श्रीवसिष्ठ उवाच ।

सर्वसंसृतिखण्डेषु भूतबीजकलात्मनः ।
तन्मात्रप्रतिभासस्य प्रतिभासेन भिन्नता ॥ १
प्रवृत्तिर्वा निवृत्तिर्वा तन्मात्रावृत्तिपूर्वकम् ।
सर्वस्य जीवजातस्य सुषुप्तत्वादनन्तरम् ॥ २
प्रवृत्तिभाजो ये जीवास्ते तन्मात्रप्रदर्शिनः ।
तन्मात्रैकतया सर्गान्मिथः पश्यन्ति कल्पितान् ॥ ३
तन्मात्रैक्यप्रणालेन चित्राः सर्गजलाशयाः ।
परस्परं संमिलन्ति घनतां यान्ति चाभितः ॥ ४
केचित्पृथक्स्थितिगताः पृथगेव लयं गताः ।
केचिन्मिथः संमिलिता जगद्गुञ्जा स्थिताक्षता ॥ ५
जगद्गुञ्जासहस्राणि यत्रासंख्यान्यणावणौ ।
अपरस्परलग्नानि काननं ब्रह्म नाम तत् ॥ ६
मिथः संमिलनेनैता घनतां समुपागताः ।
यद्यद्यत्र यथा रूढं तत्तत्पश्यति नेतरत् ॥ ७
वर्तमानं मनोराज्यं नैष्फल्यं समुपागता ।
सा कृत्तिर्मनसो ज्ञेया तस्य जीवपरम्परा ॥ ८
परस्परं संमिलतां सर्गाणां रूढभाविनाम् ।
देहसत्ता भृशं रूढा देहाभावस्तु विस्मृतिः ॥ ९
देहत्वपरिरूढत्वाच्चिद्धेम्ना विस्मृतात्मना ।
मिथ्यानुभूताऽविद्या तु शुद्धा कटकतामिता ॥ १०
यथा शुद्धः प्राणमरुत्परप्राणादिवेदनात् ।
वेत्ति वेद्यं मनोराज्यं तथा सर्गान्तराश्रयम् ॥ ११
सर्वेषां जीवराशीनामात्मावस्थात्रयं श्रितः ।
जाग्रत्स्वप्नसुषुप्त्याख्यमत्र देहो न कारणम् ॥ १२

मलिनानां तु मलिनैर्योगोऽवस्थाविशोधतः ।
तन्मात्रयुक्तिर्विज्ञस्य परसङ्गश्च वर्ण्यते ॥ १ ॥

शुद्धमनोराज्यस्य शुद्धैर्मलिनैश्च संमेलनप्रकार उक्तः । इदानीं मलिनानां मलिनैर्मेलनप्रकारं जाग्रदाद्यवस्थानां द्रष्टृदृश्यादीनां च विशोधनेन चरमश्लोकोक्ततन्मात्रयुक्तिं[१] तया परसङ्गप्राप्तिं च व्युत्पादयितुं प्रागुक्तं जाग्रदादिप्रपञ्चभेदमसाधारणस्वात्मप्रतिभासाधीनप्रतिभासेन साधयति—**सर्वेति** । सर्वेषां जीवानां स्वस्वकल्पितसंसृतिरूपेषु सृष्टिसंसृतेः खण्डेषु शकलेषु भूतात्मनः स्थूलस्य बीजात्मनः सूक्ष्मस्य कलनं कला लिङ्गभावोन्मुखता तदात्मनः कारणरूपस्य प्रपञ्चस्य प्रतिजीवं भिन्नता योक्ता सा स एव तन्मात्रः प्रतिभासते नान्यदिति तन्मात्रप्रतिभासः स्वप्रकाशचिदेकरस आत्मा तस्य प्रतिभासेन प्रतिनियताकारकल्पनया न वस्तुवृत्त्येत्यर्थः ॥१॥ तत्कुतोऽवगम्यते तत्राह—**प्रवृत्ति**रिति । यतः सर्वस्य जीवजातस्य सुषुप्तत्वादनन्तरमव्यवहितोत्तरक्षणे ह्यनादिद्वैतव्यवहारा यया प्रवृत्तिर्या च स्वप्ने जागरे च वननद्याद्यभिमुखी प्रवृत्तिस्ततो निवृत्तिः परावृत्तिर्वा सा सर्वापि तन्मात्रस्य चिदेकरसस्य या आसमन्ताद्वृत्तिर्व्याप्तिस्तत्पूर्वकमेव प्रसिद्धा अतो हेतोरित्यर्थः ॥ २ ॥ प्रवृत्तिं भजन्ते व्यवहरन्ति ये ये जीवास्ते सर्वेऽपि तन्मात्रेण चिन्मात्रेणैव प्रदर्शिनः अर्थप्रकाशवन्तो नान्येन ज्योतिषा । अस्त्वेवं तथापि कथमन्यस्यान्यमनोराज्यप्रपञ्चदर्शनसिद्धिस्तत्राह—**तन्मात्रेति** । तन्मात्रस्य स्वस्वसाक्षिचिन्मात्रस्योपाधिमेलनेन ब्रह्मैक्यदार्ढ्येन वा एकतया एकत्वप्राप्त्या मिथः परस्परसर्गान्पश्यन्ति नान्यथेत्यर्थः ॥ ३ ॥ उक्तलक्षणेन चिन्मात्रैकप्रणालेन । एकमार्गेणेति यावत् । घनतां परकीयव्यवहारसंवादादिना सत्यताभ्रान्तिदार्ढ्यान्निबिडताम् ॥ ४ ॥ पृथक्सर्गान्तरमेलनं विनैव केचिन्मिथः संवलिताः एवंरीत्या जगत् ब्रह्माण्डं तल्लक्षणा गुञ्जा प्रसिद्धा ॥ ५ ॥ अणावणौ प्रतिपरमाणु । ब्रह्म मायाशबलम् । काननं वनम् ॥ ६ ॥ एता जगद्गुञ्जाः घनतां निबिडीभावात्साधारणव्यवहारयोग्यताम् । किं सर्वभावाः सर्वेषां दर्शनयोग्या नेत्याह—**यद्यदिति** । यावतां प्राणिनां यादृशकर्मभोगानुकूलं यत्र यथा रूढं तत्र तावदेव पश्यति नेतरत् । देशान्तरीयं लोकान्तरीयमित्यर्थः ॥ ७ ॥ अतएव चित्तभेदस्तदुपाधिजीवभेदश्च सिध्यतीत्याशयेनाह—**वर्तमान**मिति । एकस्य मनसो मनोन्तरे वर्तमानं मनोराज्यं प्रति नैष्फल्यं तद्दर्शनोपभोगाद्यसमर्थतालक्षणं निष्फलतां समुपागता या स्थितिः सैव कृत्तिर्विच्छित्तिर्मनोभेदहेतुर्ज्ञेयेत्यर्थः । तस्या एव सकाशाज्जीवपरम्परा जीवभेदा अपि ज्ञेया इत्यनुषज्यते ॥ ८ ॥ एवं विभिन्नमनोराज्यरूपाणां सर्गाणां तुल्यकर्मवासनादीनां युगपत्फलोन्मुख्येन मेलनेन व्यष्टिसमष्टिस्थूलदेहसत्तापि निरूढा ज्ञेया, तद्विस्मृतौ तु देहाभाव एव स्वाभाविक इत्यर्थः ॥ ९ ॥ स्थूलदेहभावे निरूढे स्वाभाविकात्मस्थितिर्विस्मृता काल्पनिकी सांसारिकस्थितिः स्वीकृता चेत्याह—**देहत्वेति** । चिदेव हेम चिद्धेम तेन विस्मृतात्मना शुद्धा केवला कटकतामिता कटकत्वसदृशी संसारलक्षणा अविद्या मिथ्यैवानुभूतेत्यर्थः ॥ १० ॥ एवमशुद्धानामपि परस्परं क्वचिन्मेलनमुपपाद्य शुद्धानां परमनोराज्यवेदने दृष्टान्तमाह—**यथेति** । यथा हठयोगाभ्यासेन शुद्धः प्राणमरुत् परकायप्रवेशेन परप्राणानां आदिपदात्तदीयदेहेन्द्रियाणां च स्ववश्यतावेदनात्तैर्वेद्यं शब्दादि वेत्ति तथा शुद्धं मनोऽपि सर्गान्तराश्रयं मनोराज्यं वेत्तीत्यर्थः ॥ ११ ॥ ननु यदि मनोराज्यानां परस्परसंमिलनादेव स्थूलदेहसत्ता रूढा तदसंमिलने देहाभावात् 'नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं समाविशेत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ॥' इति श्रुतिबोधितदेहप्रदेशभेदाधीना जाग्रदाद्यवस्था अपि न स्युरित्याशङ्क्याह—**सर्वेषामिति** । जीवत्वस्वभावादेवावस्थात्रयकल्पना न देहमपेक्ष्य । जाग्रत्कल्पनां

१ युक्तितया इति पाठः.

एवमात्मनि जीवत्वे सत्यवस्थात्रयात्मनि ।
नचाम्भसीव वीचित्वमस्मिन्कचति देहता ॥ १३
चित्कलापदमासाद्य सुषुप्तान्तपदस्थितम् ।
बुद्धो निवर्तते जीवो मूढः सर्गे प्रवर्तते ॥ १४
द्वयोरेकस्वरूपैव स्वसौहार्दनिदर्शनात् ।
अज्ञः सुषुप्तोऽसंबुद्धो जीवः कश्चित्स सर्गभाक् ॥ १५
संवेगत्वाच्चितः कश्चित्परसर्गेण नीयते ।
सर्गे सर्गे पृथग्रूपं सन्ति सर्गान्तराण्यपि ॥ १६
तेष्वप्यन्तस्थसर्गौघाः कदलीदलपीठवत् ।
सर्वसर्गान्तरादूरं पत्रपीवरवृत्तिमत् ॥ १७
स्वभावशीतलं ब्रह्म कदलीदलमण्डपः ।
कदल्यामन्यता नास्ति यथा पत्रशतेष्वपि ॥ १८
ब्रह्मतत्त्वेऽन्यता नास्ति तथा सर्गशतेष्वपि ।
बीजमेव रसात्फुल्लं भूत्वा बीजं पुनर्भवेत् ॥ १९
तथा ब्रह्म मनो भूत्वा बोधाद्ब्रह्म परं भवेत् ।
रसकारणकं बीजं फलभावेन जृम्भते ॥ २०
ब्रह्मकारणको जीवो जगद्रूपेण जृम्भते ।
रसस्य कारणं किं स्यादिति वक्तुं न युज्यते ॥ २१
ब्रह्मणः कारणं किं स्यादिति वक्तुं न युज्यते ।
स्वभावो निर्विशेषत्वात्परो वक्तुं न युज्यते ॥ २२
नाकारणे कारणादि परे वस्त्वादिकारणे ।
विचारणीयः सारो हि किमसारविचारणैः ॥ २३
बीजं जहद्बीजवपुः फलीभूतं विलोक्यते ।
ब्रह्माजहन्निजवपुः फलं बीजे च संस्थितम् ॥ २४
बीजस्याकृतिमत्सर्वं तेनानाकृतिमत्पदम् ।
न युज्यते समीकर्तुं तस्मान्नास्त्युपमा शिवे ॥ २५

विना देहासिद्धावन्योन्याश्रयापत्तेः । श्रुतिस्तु परदृष्टिसिद्धदेहानुवादेन तदेकदेशदृश्यत्वान्न जाग्रदादिप्रपञ्चविस्तारः सत्य इत्येवंपरा न देहस्य तद्धेतुत्वपरेति भावः ॥ १२ ॥ अम्भ एव वीच्याद्यात्मकं प्रथते इति तत्त्वदर्शने सति ततः पृथग्वीच्यादिवस्त्विव जीव एवावस्थात्रयात्मेति पर्यालोचनेऽपि न जीवादन्या देहता वस्तुभूता परिशिष्यत इत्याह—**एवम्**इति ॥ १३ ॥ एवमेव बुद्धस्तत्त्ववित् सुषुप्तस्यान्तमवसानभूतं यत्तुर्यं पदं स्वरूपं तत्र स्थितं चित्कलापदं चैतन्यैकरसस्वभावमासाद्य ज्ञानेन प्राप्य जीवभावान्निवर्तते । यस्तु मूढः अतत्त्ववित् स एव स्वकल्पनया पुनर्देहाद्याकारकल्पनारूपे सर्गे प्रवर्तत इत्यर्थः ॥ १४ ॥ तर्हि किं ज्ञाज्ञयोः सुषुप्तिरपि भिद्यते नेत्याह—**द्वयोः**इति । एकस्वरूपैव सुषुप्तिरिति शेषः । स्वस्याज्ञस्यापि सौहार्दस्य संप्रसादस्य श्रुतौ निरतिशयानन्दमोक्षनिदर्शनत्वेनोपन्यासात् । तर्हि सैकस्य सर्गबीजमन्यस्य नेति कुतो विशेषस्तत्राह—**अज्ञ** इति । तयोर्मध्ये अज्ञः सुषुप्तोऽसंबुद्धो वास्तवात्मज्ञानहीनो देहाद्यात्मताभ्रमवासनावासितश्चेत्यस्मादेव विशेषात्स जीवः सर्गभागित्यर्थः ॥ १५ ॥ तत्राप्यवान्तरविशेषमाह—**संवेगत्वा**दिति । नीयते अन्तः प्रवेश्यते । पृथग्रूपमिति क्रियाविशेषणम् ॥ १६ ॥ कदलीदलस्य पीठान्याधारभूतास्त्वक्कोशास्तद्वदन्तरन्तः सन्तीत्यर्थः । ब्रह्म तु सर्वसर्गेष्वप्यैकरूप्येण संनिहितं कदलीदलमण्डपवदित्याह—**सर्वे**त्यादिना । सर्वेषामान्तराणां सर्गाणां बाह्यसर्गान्तराणां च अदूरं बहिर्विस्तीर्णैः पत्रैरिव पीवरवृत्तिमत् बृहदिति परेणान्वयः ॥ १७ ॥ दृष्टान्तं विवृणोति—**कदल्या**मिति ॥ १८ ॥ इत्थं जगद्भावापन्नस्य ब्रह्मणः पुनः स्वभावापत्तौ दृष्टान्तमाह—**बीज**मिति । यथा वटादिबीजमेव रसाज्जलादिसंसर्गात्फुल्लं वृक्षादि भूत्वा तद्विटपप्रसरफलादिद्वारा पुनः प्राक्तनबीजभावेनाविर्भवति तथा ब्रह्मापि कामकर्मादिरससंपर्कान्मनो भूत्वा जन्ममरणादिकल्पनया अधिकारिदेहप्राप्तौ श्रवणमननादिक्रमेण बोधोदयात्प्राक्तनब्रह्मभावेनाविर्भवतीत्यर्थः ॥ १९ ॥ यदि तस्यापि बीजस्य रससंपर्कैः पुनर्वृक्षभाववन्मुक्तस्यापि पुनर्जीवभावः स्यादिति बीजमदृष्टान्तं मन्यसे तर्हि रस एव दृष्टान्तोऽस्त्वित्याह—**रसकारणक**मिति ॥ २० ॥ एवंच सति ब्रह्मणः कारणं किं स्यादिति शङ्काया अपि न प्रसर इत्याह—**रसस्ये**ति ॥ २१ ॥ ननु पत्रकाण्डवृक्षपुष्पफलादीनां सरसतादर्शनात्तत्स्वभावभूतो रसस्तेषां कारणमिव जगत्कारणं ब्रह्मापि जगद्धर्मस्वभावविशेष एव स्यात्तथाच ब्रह्मकारणतासाधनं स्वभावकारणतावादेनार्थान्तरितं स्यादित्याशङ्क्याह—**स्वभाव** इति । न युज्यते । कुतः । निर्विशेषत्वात्कारणस्य कार्यसहोत्पत्तिकासाधारणधर्मविशेषरूपतत्स्वभावरूपत्वायोगादित्यर्थः ॥ २२ ॥ तर्हि चिद्ब्रह्ममात्रेण कारणेन जगति जाड्यादिस्वभावत्वासिद्धेर्जाड्यदुःखादिस्वभावं ब्रह्मणि जगतः कारणान्तरं वैचित्र्यहेतूनि निमित्तान्तराणि चाभ्युपेयानि स्युरिति चेन्नेत्याह—**ने**ति । निर्विकाराद्वितीयासङ्गत्वाद्वस्तुतोऽकारणे सर्वप्रपञ्चारोपस्यादिकारणे ब्रह्मणि कारणनिमित्तादि वस्त्वपि न संभवति तत्स्वभावविरोधादेवेत्यकारणविवर्तरूपं जगदनृतमेवेत्यर्थः । तर्हि जडानृतदुःखरूपस्य जगतो जडानृतदुःखरूपमेवादिकारणमुचितमिति तदेव विचार्यतां किमकारणब्रह्मविचारणेनेति चेत्तत्राह-**विचारणीय** इति । असारविचारणैः किं । कः पुरुषार्थ इत्यर्थः ॥ २३ ॥ अकारणमादिकारणमिति यदुक्तं तदाशयोद्घाटनाय प्रागुक्तबीजदृष्टान्तापेक्षया ब्रह्मणि यो विशेषस्तमाह—**बीज**मिति । बीजं बीजवपुर्बीजाकारं जहत् त्यजत् सत् अङ्कुरादिफलीभूतं लोके विलोक्यते न तथा ब्रह्मेति । अतएव तद्विवर्तोपादानं स्वसमसत्ताककार्याभावादकारणमित्युक्तमित्याशयः ॥ २४ ॥ विशेषान्तरमपि दर्शयन्निर्विशेषस्योपचारादेवोपमोपन्यस्ता न वस्तुवृत्त्येत्याह—**बीजस्ये**ति । सर्वं स्वरूपमवयवगुणादि च आकृतिमत् इतरव्यावर्तकजातिसंस्थानादिमत् । तेन बीजेन समीकर्तुं

१ सर्गगत्वात् इत्युभयत्र पाठः.

२ बृहदित्यस्य परश्लोकस्थेन ब्रह्मेत्यनेनान्वय इत्यर्थः.

स्वमेव जायतेऽस्वाभं न च तज्जायतेऽन्यदक् ।
अतो न जातं नाजातं विद्धि ब्रह्म नमो जगत् ॥ २६
दृश्यं पश्यन्स्वमात्मानं न द्रष्टा संप्रपश्यति ।
प्रपञ्चाक्रान्तसंवित्तेः कस्योदेति निजा स्थितिः ॥ २७
मृगतृष्णाजलभ्रान्तौ सत्यां कैव विदग्धता ।
विदग्धतायां सत्यां तु कैवासौ मृगतृष्णिका ॥ २८
आकाशविशदो द्रष्टा सर्वाङ्गोऽपि न पश्यति ।
नेत्रं निजमिवात्मानं दृशीभूतमहो भ्रमः ॥ २९
आकाशविशदो द्रष्टा सर्वाङ्गोऽपि न पश्यति ।
तेषां निजमिवात्मानं दृशीभूतमिवाभ्रमः ॥ ३०
आकाशविशदं ब्रह्म यत्नेनापि न लभ्यते ।
दृश्ये दृश्यतया दृष्टे त्वस्य लाभः सुदूरतः ॥ ३१
तादृग्भावस्वरूपेण विना यत्र न दृश्यते ।
तत्रापि दूरोदस्तैव द्रष्टुः सूक्ष्मस्य दृश्यता ॥ ३२
दृश्यं च दृश्यते तेन द्रष्टा राम न दृश्यते ।
द्रष्टैव संभवत्येको ननु दृश्यमिहास्ति हि ॥ ३३
द्रष्टा सर्वात्मको दृश्ये स्थितश्चेत्कैव द्रष्टृता ।
सर्वशक्तिमता राज्ञा यद्यत्संपद्यते यथा ॥ ३४
तत्तथानुभवत्याशु स एवोदेति तत्तथा ।
यथा मधुरसोल्लासः खण्डो भवति भासुरः ॥ ३५
रसतामजहच्चैव फलपुष्पलतोन्नतः ।
चिदुल्लासस्तथा जीवो भूयो भवति देहकः ॥ ३६
चिन्मात्रतां तामजहदेव दर्शनदृङ्मयम् ।
अन्तःस्वानुभवश्चैव जगत्स्वप्नं प्रपश्यति ॥ ३७
अहंतादिरसे भौमे खण्डकत्वमिवात्मनि ।
नानाखण्डसहस्रौघैरद्वितीयैर्निजात्मनः ॥ ३८
यथोदेति रसो भौमश्चित्तथोदेत्यसंभ्रमम् ।
चिद्रसोल्लासवृक्षाणां कचतामात्मनात्मनि ॥ ३९
दृश्यशाखाशताढ्यानामिह नान्तोऽवगम्यते ।
खण्डः प्रत्येकमेवायं यथा रसचमत्कृतिम् ॥ ४०
स्वादयत्येवमेषा चित्पृथक्पश्यति संस्थितिम् ।
या योदेति यथा यस्या जीवशक्तेः स्वसंसृतिः ॥ ४१
तां तां तथैति सा स्वात्मचिद्रूपभुवनस्थितिम् ।
जीवसंसृतयः काश्चित्प्रमिलन्ति परस्परम् ॥ ४२

---

तुलयितुम् ॥ २५ ॥ तर्ह्युपमोपचारस्य किं फलं तदाह—**स्वमे**वेति । अस्वाभं अनात्माभासम् ॥ २६ ॥ यदि स्वमेव जगदाभासं पश्यति तर्हि कुतोऽस्यानर्थप्राप्तिर्यतस्तत्परिहाराय शास्त्रं सफलं स्यात्तत्राह—**दृश्य**मिति । यथाभूतं स्वमात्मानं न पश्यतीत्यत एवानर्थ इत्यर्थः ॥ २७ ॥ भ्रान्त्युदये स्वाभाविक्यप्यस्य पूर्णानन्दस्वप्रकाशता वृथा संपन्नेत्याशयेनाह—**मृगतृष्णे**ति । विदग्धता विद्वत्ता ॥ २८ ॥ निर्मलस्वप्रकाशसर्वगतस्वभावत्वात्सर्वेषां सर्वदा स्फुटदर्शनार्होऽप्यात्मा कदापि केनापि तत्त्वतो न वीक्ष्यते अहो बहिर्मुखानां भ्रान्तिप्राबल्यमित्याह—**आकाशे**ति । यथा नेत्रं पराक्प्रवणत्वात्स्वमात्मानं न पश्यति तद्वत् ॥२९॥ ननु बहिर्मुख आन्तरं स्वमात्मानं न पश्यतु बाह्यानां तु परेषामात्मानं पश्यत्विति चेन्नेत्याह—**आकाशे**ति । निजात्मानमिव तेषां सर्वेषां बाह्यानामप्यात्मानं पारमार्थिकरूपं न पश्यति । यथा अभ्रमः निःशेषनिवृत्तभ्रान्तिर्मुक्तः दृशीभूतं दृश्यतापन्नं द्वैतं न पश्यति तद्वदित्यर्थः ॥ ३० ॥ तथाच दृश्यं दृश्यतया न द्रष्टव्यं किंतु दृङ्मात्रतयेति भावः ॥ ३१ ॥ ननु प्रमातुरान्तर आत्मा विषयाभिमुखेन तेन न दृश्यतां घटादिविषयाधिष्ठानभूतस्तु बहिर्वृत्तिव्याप्त्या दृश्यताम्, तत्र प्रत्यङ्मुखत्वस्यानुपयोगादित्याशङ्क्याह—**तादृगि**ति । यत्र घटादिविषयप्रदेशे वृत्त्यवच्छिन्नस्य द्रष्टुर्वृत्तेर्बाह्यघटाद्याकारानुरञ्जनात्स्वस्यापि तादृग्भावस्वरूपेण विना घटादि द्रष्टुं न शक्यते तत्रापि द्रष्टुर्दृश्यता दर्शनार्हता दूरोदस्ता दूरान्निरस्तैव । तत्र हेतुगर्भं विशिनष्टि—**सूक्ष्मस्ये**ति । विषयवृत्तितद्रूप्यानुरक्तस्वरूपाद्विविच्य सूक्ष्मचिन्मात्रस्यावधारणाशक्तेरिति भावः ॥ ३२ ॥ यदि सर्वथा द्रष्टा न दृश्यते तर्हि कथं तन्मात्रयुक्त्या तल्लाभसिद्धिरित्याशङ्क्य तदुपायमाह—**द्रष्टैव संभवती**त्यादिना ॥३३॥ कुतो नास्ति तदाह—**स्वप्ने**ति । दृश्यप्रदेशास्थितस्य द्रष्टृत्वे अतिप्रसङ्गात् 'सर्वभूताधिवासः साक्षी चेता' इत्यादिश्रुतेश्च सर्वात्मा दृश्ये स्थितश्च द्रष्टावश्यं वाच्यः । एवं चेत्तस्य स्वात्मभूते सर्वस्मिन्दृश्ये स्वात्मनि क्रियाविरोधात् कुतो द्रष्टृतेत्यर्थः । यदि तु सर्वशक्तिमत्त्वात्समर्थो राजेव दृश्यं संपाद्य तत्तथानुभवन् द्रष्टा भविष्यतीति ब्रूयास्तर्हि स्वातिरिक्तोपकरणापेक्षत्वे शक्तिसंकोचापत्तेरविकृतः स एव तत्तद्दृश्यरूपेण तथा तथोदेतीति पक्षस्यैव परिशेषान्न द्रष्टृतेत्यतिरिक्तवस्तुसिद्धिरित्याशयेनाह—**सर्वशक्तिमते**ति ॥ ३४ ॥ उक्तेऽर्थे समञ्जसं दृष्टान्तमुपवर्ण्य प्रकृते योजयति—**यथे**त्यादिना । मधुरसस्य मधुररसस्यैक्षवरसस्य प्रसिद्धमधुरूपस्य वा रसस्य देशविशेषे मधुनोऽपि खण्डशर्करोत्पत्तिप्रसिद्धेः । खण्डः खण्डशर्करा ॥ ३५ ॥ [1]फलपुष्पादिरसैर्मधुमक्षिकाहृतैरुन्नतः । अथवा मधुरसो वसन्तकाले वृक्षप्रविष्टरसः फलपुष्पलतात्मनोन्नतो वनखण्डो यथा भवति तद्वदिति व्याख्येयम् ॥३६॥३७॥ आत्मनि अहंतादिभौमे रसे लवणादौ खण्डकत्वमिवेति प्रतिज्ञातस्यार्थस्य नानाखण्डसहस्रौघैरित्यादि चित्तथोदेत्यसंभ्रममित्यन्तमुपपादनम् । निजात्मनो लवणादेरद्वितीयैरभिन्नैः ॥३८॥ नानाखण्डसहस्रौघैरित्यनेन ब्रह्माण्डानन्त्यं दर्शितमित्याशयेनाह—**चिद्रसे**ति ॥३९॥ तेषु तेषु भोगचमत्कारा अप्यनन्ता इति दर्शयति—**खण्ड** इति । अयं दृश्यमानः खण्ड एतद्ब्रह्माण्डलक्षणो वनखण्डो यथा यथा स्वरसचमत्कृतिं स्वादयति अनुभावयति एवं तथा तथा एषा चित् पश्यत्यनुभवतीति परेणान्वयः ॥ ४० ॥ पृथगिति वीप्सितं बोध्यम् । प्रतिब्रह्माण्डमित्यर्थः । चमत्कृतिवैचित्र्ये तत्कल्पकविचित्रतत्तज्जीवसंस्कारोद्बोध एव हेतुरित्याह—**या ये**ति ॥ ४१ ॥ तत्र समाना-

[1] मूले फलपुष्पलताशब्देन लक्षणया तद्रसो गृह्यते.

स्वयं विहृत्य संसारे शाम्यन्ति चिरकालतः ।
सूक्ष्मया परया दृष्ट्या त्वं पश्य ज्ञानचेतसा ॥ ४३
जगज्ज्वालसहस्राणि परमाण्वन्तरेष्वपि ।
चित्ते नभसि पाषाणे ज्वालायामनिले जले ॥ ४४
सन्ति संसारलक्षाणि तिले तैलमिवाखिले ।
सिद्धिमेति यदा चेतस्तदा जीवो भवेच्चितिः ॥ ४५
शुद्धा च सा सर्वगता तेन तन्मेलनं मिथः ।
सर्वेषां पद्मजादीनां स्वसत्ताभ्रमरूपकः ॥ ४६
जगद्दीर्घमहास्वप्नः सोऽयमन्तः समुत्थितः ।
स्वप्नात्स्वप्नान्तरं यान्ति काश्चिद्भूतपरम्पराः ॥ ४७
तेनोपलम्भः कुड्यादावसौ दृढतरः स्थितः ।
यद्यत्र चिद्भावयति तत्तत्राशु भवत्यलम् ॥ ४८
तया स्वप्नेऽपि यद्दृष्टं तत्काले सत्यमेव तत् ।
चिदणोरन्तरे सन्ति समस्तानुभवाणवः ॥ ४९
[ [1]यथा बीजान्तरे पत्रलतापुष्पफलाणवः ] ।
परमाणुजगत्यन्तर्मन्ये चित्परमाणवः ।
लीनमाकाशमाकाशे द्वैतैक्यभ्रममुत्सृज ॥ ५०
देशकालक्रियाद्रव्यैः स्वैरेवाणुभिरेव चित् ।
अणूननुभवत्यन्तरितराणि नसंभवात् ॥ ५१
स्वयं सर्गस्य कचितः स्वप्ने चिदणुखण्डकः ।
ब्रह्मादेः कीटनिष्ठस्य देहदृष्ट्यानुभावितः ॥ ५२
कचितं किंचिदेवेह वस्तुतस्तु न किंचन ।
स्वयं सत्यं स्वादयन्ते द्वैतं चित्परमाणवः ॥ ५३
स्वयं प्रकचति स्फारदेहश्चिदणुखण्डकः ।
नेत्रादिकुसुमद्वारैः संविदामोदमुद्गिरन् ॥ ५४
संपश्यतितरां कश्चिद्बहीरूपेण चिद्घटः ।
सर्वगत्वादनाशित्वाद्दृश्यबीजस्य वै चितेः ॥ ५५
अन्तरेवाखिलं कश्चित्पश्यत्यविमलं जगत् ।
तत्रातिकालकलनादुन्मज्जति निमज्जति ॥ ५६
स्वप्नात्स्वप्नान्तरं तत्र तथा पश्यन्पुनःपुनः ।
मिथ्या वटेषु लुठति शिलेव शिखरच्युता ॥ ५७
केचित्संमिलिताः केचिदात्मन्येवाभ्रमे स्थिताः ।
मग्नाः स्वसंवित्प्रसरे स्फुरन्तो देहखण्डकाः ॥ ५८
स्वयमन्तः प्रपश्यन्ति ये जगज्जीवविभ्रमम् ।
तैस्तैः कैश्चित्ततं दृश्यमसत्स्वप्नवदाश्रितम् ॥ ५९
सर्वात्मत्वात्स्वभावस्य तद्दृश्यं सत्यमात्मनि ।
सर्वगं विद्यते यत्र तत्र सर्वमुदेति हि ॥ ६०
जीवान्तः प्रतिभासस्य सर्वस्य पुनरन्तरे ।
जीवखण्ड उदेत्युच्चैस्तस्यान्तरितरोऽपि च ॥ ६१
जीवान्तर्जायते जीवस्तस्यान्तरपि जीवकः ।
सर्वत्र रम्भादलवज्जीवो जीवान्तरेव हि ॥ ६२
दृश्यबुद्धिपरावृत्तौ समसेतदनन्तरम् ।
हेम्नीव कटकादित्वं परिज्ञातं विनश्यति ॥ ६३
विचारो यस्य नोदेति कोऽहं किमिदमित्यलम् ।

---

कारवासनोद्भवेऽज्ञजीवानामपि संसृतयो मिलन्तीति जीवसंसृतिमेलनमुपवर्णितमुपसंहरति—**जीवसंसृतय** इति ॥४२॥ मम तर्हि परसंसृतिसहस्रदर्शने क उपायस्तमाह—**सूक्ष्मये**त्यादिना । **ज्ञानचेतसे**ति । प्रागुक्तेन शुद्धचित्तानां दर्शनोपायेनेत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ पद्मजादीनामस्मदादिसंसारदर्शनं शुद्धिवशादेवेत्याह—**शुद्धा चे**ति । सर्वगतब्रह्मैकरसत्वात्सर्वगता । मेलनमपि स्वकीयपरकीयस्वप्नानां दैवात्क्वचित्संवादवत्स्वान्तःकल्पनात्मकमेवेत्याशयेनाह—**सर्वेषा**मित्यादिना ॥ ४६ ॥ ४७ ॥ तेन स्वप्नपरम्पराभ्रमणेन । तद्वासनादार्ढ्याद्दृढतरः । चितो वासनोद्भवानुरूपविवर्तसामर्थ्यं सार्वत्रिकमिति दर्शयति—**यद्यत्रे**ति ॥ ४८ ॥ अतएव चित्सत्तायास्तत्रानुवेधानुभव इत्याह—**तये**ति । अनुभवाणवः सूक्ष्मीभूतानुभवाः, जगदाकारवासना इति यावत् ॥ ४९ ॥ **परमाण्वि**ति । तथाच चिज्जगतोः कार्त्स्न्येन परस्परान्तःप्रविष्टत्वमाश्चर्यं मन्ये इत्यर्थः । अथवा नेदमाश्चर्यं चिदाकाशस्यैव जगद्भ्रमैर्भेदेन गृहीतस्य स्वात्मनि लीनत्वादित्याशयेनाह—**लीन**मिति ॥ ५० ॥ उक्तमेव प्रपञ्चयति—**देशे**त्यादिना । अणुभिः सूक्ष्मैः स्वैरेव चिदंशैः स्वात्मभूतानेवेतराणीवानुभवति नतु वस्तुत इतराणि । इतरेषां नसंभवादसंभवात् ॥ ५१ ॥ ब्रह्मादेः कीटनिष्ठस्य कीटान्तस्यस्य साधारणस्तत्तदन्तःकरणोपाधिवशाच्चिदणुखण्डकः प्रलयकाले अस्फुटोऽपि सर्गस्य स्वप्ने प्रसक्ते तत्तद्देहदृष्ट्यानुभावितो भवतीत्यर्थः ॥ ५२ ॥ यदनुभूयते किं तदिति तत्राह—**कचित**मिति । किंचिदेवेत्यनिर्वचनीयमित्यर्थः । तर्हि तत्किं तत्राह—**स्वयं सत्य**मिति । यथा कश्चिद्भ्रान्तः स्वयं स्वस्कन्धमारुरुक्षति तद्वच्चित्परमाणवो जीवाः स्वयं सत्यमात्मरूपमेव द्वैतं मन्यमाना भ्रान्त्या स्वादयन्तीत्यर्थः ॥ ५३ ॥ चिदेवाण्वन्तःकरणपरिच्छेदादणुखण्डकः ॥ ५४ ॥ कश्चिद्व्यष्टिरूपश्चिदेव घटसदृशस्थूलदेहपरिच्छेदाच्चिद्घटः । देशतः कालतश्च बहीरूपेण । तत्र क्रमाद्धेतु:—**सर्वगत्वा**दनाशित्वाचेति ॥ ५५ ॥ कश्चित्समष्ट्यात्मा ब्रह्माण्डरूपः । अतिकालकलनाच्चिराभ्यासात्तादात्म्याभिमानेन निमज्जति लीयते उन्मज्जति पुनराविर्भवति ॥ ५६ ॥ ५७ ॥ ५८ ॥ अन्तर्दृश्यद्रष्टॄणां तन्मिथ्यात्वज्ञानं विशेष इत्याशयेनाह—**स्वय**मिति ॥ ५९ ॥ तेषामन्तरेव विश्वोदये चान्तस्तत्सत्ताहेतुर्बहिः केषांचित्तद्दर्शने तु बहिरेव तत्सत्ताहेतुरिति बीजव्यवस्थां हृदि निधायाह—**सर्वात्मत्वा**दिति ॥६०॥ जीवान्तर्जीवान्तरस्य तत्र तत्र च जीवान्तरस्य सप्रपञ्चस्यानवस्थितस्योदयेऽपि तत्रत्यचिति तत्तत्सत्त्वाज्ञानसहिता हेतुर्ज्ञाते तु न किंचित्काप्यासीदस्ति भविष्यति वेत्याशयेनाह—**जीवान्त**रित्यादिना ॥ ६१ ॥ ६२॥ बुद्धेः परावृत्तौ पराक्प्रवणतां त्यक्त्वा प्रत्यक्प्रवणत्वे सति समं युगपदेव चैतदान्तरं बाह्यं च तत्त्वतः परिज्ञातं सद्विनश्यति ॥ ६३ ॥ एवं तत्त्वदर्शनलक्षणां तन्मात्रयुक्तिं दर्शयित्वा

---

[1] कोष्ठकविन्यस्तोऽयं पाठः प्रक्षिप्त इति भाति, आदर्शान्तरे- ष्वदर्शनाट्टीकाकर्त्रसंमतत्वाच.

तस्यान्तर्न विमुक्तोऽसौ दीर्घो जीवज्वरभ्रमः ॥ ६४
विचारः सफलस्तस्य विज्ञेयो यस्य सन्मतेः ।
दिनानुदिनमायाति तानवं भोगगृध्नुता ॥ ६५
यथा देहोपयुक्तं हि करोत्यारोग्यमौषधम् ।
तथेन्द्रियजयेऽभ्यस्ते विवेकः फलितो भवेत् ॥ ६६
विवेकोऽस्ति वचस्येव चित्रेऽग्निरिव भास्वरः ।
यस्य तेनापरित्यक्ता दुःखायैवाविवेकिता ॥ ६७
यथा स्पर्शेन पवनः सत्तामायाति नो गिरा ।
तथेच्छातानवेनैव विवेकोऽस्य विबुध्यते ॥ ६८

चित्रामृतं नामृतमेव विद्धि
चित्रानलं नानलमेव विद्धि ।
चित्राङ्गना नूनमनङ्गनेति
वाचा विवेकस्त्वविवेक एव ॥ ६९
पूर्वं विवेकेन तनुत्वमेति
रागोऽथ वैरं च समूलमेव ।
पश्चात्परिक्षीयत एव यत्नः
स पावनो यत्र विवेकितास्ति ॥ ७०

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे जीवनखण्डकावतारो नामाष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः १९

श्रीवसिष्ठ उवाच ।

जीवबीजं परं ब्रह्म सर्वत्र खमिव स्थितम् ।
तेन जीवोदरजगत्यपि जीवोऽस्त्यनेकधा ॥ १
चिद्घनैकघनात्मत्वाज्जीवान्तर्जीवजातयः ।
कदलीदलवत्सन्ति कीटा इव धरोदरे ॥ २
यो यो नाम यथा ग्रीष्मे कल्पस्वेदाद्भवेत्क्रमिः ।
यद्यद्दृश्यं शुद्धचित्त्वं तज्जीवो भवति स्वतः ॥ ३
यथा यथा यतन्ते ते जीवकाः स्वात्मसिद्धये ।
तथा तथा भवन्त्याशु विचित्रोपासनक्रमैः ॥ ४
देवान्देवयजो यान्ति यक्षा यक्षान्व्रजन्ति हि ।
ब्रह्म ब्रह्मयजो यान्ति यदतुच्छं तदाश्रयेत् ॥ ५
स मुक्तो भृगुपुत्रो हि निर्मलत्वात्स्वसंविदः ।
बद्धः प्रथमदृष्टेन दृश्येनाशु स्वभावतः ॥ ६
भुवि जाता परिम्लाना बाला यत्प्रथमं पुरः ।

तत्प्राप्तिप्रतिष्ठोपायानिन्द्रियजयादिविचारान्तान्व्युत्क्रमेण वक्तुमुपक्रमते—**विचार** इति ॥ ६४ ॥ वैराग्यपूर्वकविचार एव फलपर्यवसायी न रागीकृत इत्याह—**सफल** इति ॥ ६५ ॥ इन्द्रियजयाभ्यासपूर्वकमेव वैराग्यं विवेकहेतुर्नान्यादृशमित्याह—**यथेति** । देहेनोपयुक्तं पथ्याशनादिनियमैः सेवितम् ॥ ६६ ॥ विवेकोऽपि वैराग्यमुमुक्षौत्कण्ठ्यापादनेन संन्यासश्रवणादिफलपर्यवसित एव तन्मात्रयुक्तिजन्मप्रतिष्ठयोरुपयुज्यते न वाङ्मात्रपल्लवित इति दर्शयति—**विवेक** इत्यादिना । यस्य वचस्येव विवेकोऽस्ति न मनसि तेन अविवेकिता अपरित्यक्तेति सा दुःखायैव भवतीत्यर्थः ॥ ६७ ॥ तर्हि मनःप्रतिष्ठितेऽस्य विवेके किं लिङ्गमिति चेद्वैराग्यदार्ढ्यमेवेत्याह—**यथेति** । यथा प्रत्यक्षः स्पर्शः पवनलिङ्गं न वाङ्मात्रं तद्वदित्यर्थः । तानवं अपक्षयक्रमेण नाशः ॥ ६८ ॥ रागिणा वाङ्मात्रदर्शितो विवेकस्तु अविवेकशाखोपशाखात्मकत्वादविवेक एवेति तुल्योक्त्या दर्शयति—**चित्रामृत**मिति । चित्रलिखितममृतं पीयूषं वारि वा ॥ ६९ ॥ यत्न इष्टानिष्टप्राप्तिपरिहारानुकूला प्रवृत्तिर्ज्ञानोदयेन मूलोच्छेदात्परिक्षीयत एव । तस्माद्यत्र विवेकितास्ति स एव पुमांस्तन्मात्रयुक्तिप्रतिष्ठायोग्यः पावन इत्यर्थः ॥ ७० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जीवनखण्डकावतारो नामाष्टादशः सर्गः ॥ १८ ॥

यथोपास्तिफलावाप्तिर्बोधात्स्वात्मसंस्थितिः ।
जाग्रत्स्वप्नसुषुप्तीनां स्थितिस्तुर्यस्य चोच्यते ॥ १ ॥

ननु जीवान्तर्जीवपरम्पराकल्पनायां बाह्यबाह्यजीवस्य आन्तरान्तरजीवजगतामधिष्ठानत्वाद्बीजं स्युस्तथान्तरान्तराणां बाह्यबाह्यजीवात्मभावबोधात्तत्तद्भावप्राप्तिक्रमेण सर्वबाह्यजीवस्य ब्रह्मबोधोदये मुक्तिर्युक्ता नान्तराणां साक्षाद्ब्रह्मबोधाद्ब्रह्मणस्तत्र तत्रासंनिधानेनाधिष्ठानत्वलक्षणबीजत्वासंभवात्तत्संभवे च सर्वेषां तुल्यतया तत्तदन्तःसत्त्वकलना निर्मूला स्यादित्याशङ्क्य जीवोदरजगज्जीवानामपि ब्रह्मैवाधिष्ठानत्वाद्बीजमिति साधयति—**जीवबीज**मिति । तेन सर्वत्र स्थितत्वेन हेतुना ॥ १ ॥ एकान्तरेऽन्तस्तदन्तरप्येक इति परम्पराकल्पनायां कदलीदलवदेकैकान्तर्वद्व इति परम्पराकल्पनायां तु धरोदरे कीटा इवेति भेदः ॥ २ ॥ तुल्याधिष्ठानकत्वे आन्तरत्वकल्पना निर्मूलेत्यस्य कः परिहार इति चेत्तमाह—**यो य** इति । ग्रीष्मे कल्कान्मलात् स्वेदाच देहान्तर्वर्तिनो निमित्ताद्यो यः क्रमिः स तत्तदन्तरेव भवति तथा शुद्धचित्त्वमपि आन्तरं बाह्यं वा यद्यदेव यत्र दृश्यं भवति तत्तद्भोक्ता तत्र तत्र जीवो भवतीत्यर्थः ॥ ३ ॥ प्राक्तनपुरुषप्रयत्नरूपकर्मवशाद्वा सर्वव्यवस्थासिद्धिरित्याशयेनाह—**यथेति** ॥ ४ ॥ कर्मोपासनातारतम्यानुसारिदेवताजीवसायुज्येष्वपि तत्तद्देवजीवान्तस्तारतम्येन भोगप्रसिद्धिः शास्त्रप्रामाण्यात्सिद्धेत्याशयेनाह—**देवा**निति । ब्रह्म हिरण्यगर्भाख्यं परं च । तेषु किं हेयं किमुपादेयं तदाह—**यदि**ति ॥ ५ ॥ भार्गवोपाख्यानमप्युक्तेऽर्थेऽनुकूलमित्याह—**स** इति । प्रथमदृष्टेनाप्सरोरूपेण शुक्रो बद्धोऽभूदित्यर्थः ॥ ६ ॥ तथैवाव्युत्पन्ना बाला संविद्यथैव व्युत्पाद्यते तथैव भवतीति वास्तवब्रह्मात्मभावेनैव सा व्युत्पाद्या न मिथ्याजीवादिभावेनेत्याशयेनोपसंहरति—

संवित्प्राप्नोति तद्रूपा भवत्यन्या न काचन ॥ ७

श्रीराम उवाच ।

जाग्रत्स्वप्नदशाभेदं भगवन्वक्तुमर्हसि ।
कथं च जाग्रज्जाग्रत्स्यात्स्वप्नो जाग्रत्क्रमः कथम् ॥ ८

श्रीवसिष्ठ उवाच ।

स्थिरप्रत्ययुक्तं यत्तज्जाग्रदिति कथ्यते ।
अस्थिरप्रत्ययं यत्स्यात्तत्स्वप्नः समुदाहृतः ॥ ९
जाग्रत्त्वे क्षणदृष्टः स्यात्स्वप्नः कालान्तरे स्थितः ।
तज्जाग्रत्स्वप्नतामेति स्वप्नो जाग्रत्त्वमृच्छति ॥ १०
जाग्रत्स्वप्नदशाभेदो न स्थिरास्थिरते विना ।
समः सदैव सर्वत्र समस्तोऽनुभवोऽनयोः ॥ ११
स्वप्नोऽपि स्वप्नसमये स्थैर्याज्जाग्रत्त्वमृच्छति ।
अस्थैर्याज्जाग्रदेवास्ते स्वप्नस्तादृशबोधतः ॥ १२
स्वप्नोऽपि जाग्रद्बुद्ध्यंशो जाग्रत्त्वमनुगच्छति ।
स्वप्नता स्वप्नबुद्ध्या तु यथासंवेदनं स्थितम् ॥ १३
यत्तु यावत्स्थिरं बुद्धं तत्तावज्जाग्रदुच्यते ।
क्षणभङ्गात्तु तत्स्वप्नो यथा भवति तच्छृणु ॥ १४
जीवधातुः शरीरेऽन्तर्विद्यते येन जीव्यते ।
तेजो वीर्यं जीवधातुरित्याद्यभिधमङ्ग यत् ॥ १५
व्यवहारी यदा कायो मनसा कर्मणा गिरा ।
भवेत्तदा मरुत्क्षुब्धो जीवधातुः प्रसर्पति ॥ १६
तस्मिन्प्रसर्पत्यङ्गेषु सर्वा संविदुदेति हि ।
दृष्टत्वात्प्रैति चित्ताख्यमन्तर्लीनजगद्भ्रमम् ॥ १७
ईक्षणादिषु रन्ध्रेषु प्रसरन्ती बहिर्मयम् ।
नानाकारविकाराढ्यं रूपमात्मनि पश्यति ॥ १८
स्थिरत्वात्तत्तथैवाथ जाग्रदित्यवगम्यते ।
जाग्रत्क्रम इति प्रोक्तः सुषुप्तादिक्रमं शृणु ॥ १९
मनसा कर्मणा वाचा यदा क्षुभ्यति नो वपुः ।
शान्तात्मा तिष्ठति स्वस्थो जीवधातुस्तदा त्वसौ ॥ २०
समतामागतैर्वातैः क्षोभ्यते न हृदम्बरे ।
निर्वातसदने दीपो यथाऽऽलोकैककारकः ॥ २१
ततः सरति नाङ्गेषु संवित्क्षुभ्यति तेन नो ।
न चेक्षणादीन्यायाति रन्ध्राण्यायाति नो बहिः ॥ २२
जीवोऽन्तरेव स्फुरति तैलसंविद्यथा तिले ।
शीतसंविद्धिम इव स्नेहसंविद्यथा घृते ॥ २३
जीवाकारा कला काचिच्चितिः स्वच्छतयात्मनि ।
दशामायाति सौषुप्तिं सौम्यवातां विचेतनाम् ॥ २४
ज्ञात्वा वैचित्त्युपरते[1] साम्यं व्यवहरन्नपि ।
जाग्रत्स्वप्नसुषुप्तेषु संबुद्धस्तुर्यवान्स्मृतः ॥ २५

**भुवी**ति । सांसारिकव्यसनतापैर्यावदपरिम्लानेत्यर्थः ॥ ७ ॥ संवित्कदा बाला कदा वा प्रौढेति विशेषं ज्ञातुं जाग्रत्स्वप्नदशावैलक्षण्यहेतुं श्रीरामः पृच्छति—**जाग्रदि**ति । अपरोक्षावभासत्वाविशेषेऽपि जाग्रत्कथं केन हेतुना जाग्रत्सत्यताव्यवहारहेतुः । स्वप्नस्तु जाग्रदाकारो भ्रम इति कथमित्यर्थः ॥८॥ स्थिरप्रतीतियोग्यतैव पुनःपुनः संवादिप्रत्यभिज्ञोपनीता जाग्रदर्थेषु सत्यताव्यवहारहेतुरिति वसिष्ठः समाधत्ते—**स्थिरे**ति ॥९॥ स्वप्नोऽपि चेत्कालान्तरे स्थितः स्यात्तदा जाग्रत्त्वे क्षणेन जाग्रदेवेदमिति प्रत्यक्षानुभवेन दृष्टः स्यादेवं जाग्रदपि कालान्तरे यदि न स्थितं स्यात्तर्हि स्वप्न एव स्यादिति जाग्रत्स्वप्नतां स्वप्नश्च जाग्रत्त्वं ऋच्छति गच्छतीत्यर्थः ॥ १० ॥ अनुभवः अनुभवांशस्त्वनयोः समः ॥ ११ ॥ **अस्थैर्यादि**ति । यथा जाग्रन्मनोरथादिः ॥ १२ ॥ जाग्रद्बुद्ध्यंशो जाग्रद्बुद्धिग्राह्यस्थैर्यांशो यथा हरिश्चन्द्रस्य द्वादशवार्षिकः । तर्हि तस्य कथं स्वप्नता तत्राह—**स्वप्नते**ति ॥ १३ ॥ यथासंवेदनं स्थिरमित्येतद्विशदयति—**यत्त्वि**त्यादिना ॥ १४ ॥ प्रतिज्ञातवर्णनोपोद्घातेन तद्द्रष्टृजीवभावं साधयति—**जीवधातु**रिति । येन जीव्यते इत्यनेन जीवनमेव तत्सद्भावसाधकं लिङ्गं दर्शितम् । तेज इति नाम्ना शरीरोष्मा तल्लिङ्गं वीर्यमिति नाम्ना शरीरचेष्टानिमित्तं बलं तल्लिङ्गमुक्तम् । जीवधातुरित्यनेन जीवनहेतुः सारो निरुपाधिप्रेमा तल्लिङ्गमुक्तम् । आदिपदादहमित्यभिमाननिमित्तं ज्ञानाद्यपि तथा प्रसिद्धं दर्शितं बोध्यम् ॥ १५ ॥ अस्तु देहे जीवस्तस्य रूपादिदर्शनार्थप्रवृत्तौ किं निमित्तं तदाह—**व्यवहारी**ति । प्रसर्पति हृदयात्कुल्याद्वारा सरो जलमिव निर्गत्य संचरतीत्यर्थः ॥१६॥ तत्रास्य वासनोद्भवात्स्वप्नदर्शनमित्याह—**तस्मिन्नि**ति । अङ्गेषु अङ्गान्तर्गतनाडीषु ॥ १७ ॥ तस्य जागरणमाह—**ईक्षणादिष्वि**ति । अनुभवकाले प्रत्ययस्य स्वप्नाविशेषेऽप्यथ प्रात्यहिकप्रत्यभिज्ञानन्तरं स्थिरत्वकल्पना जाग्रदित्यवगम्यत इत्यर्थः ॥१८॥ सुषुप्तादीत्यादिपदात्तुरीयक्रमं च ॥१९॥ वाचिककायिकविक्षेपोपरमे स्वप्नोदयो मानसविक्षेपस्याप्युपरमे तु सुषुप्तिरित्याशयेनाह—**मनसे**त्यादिना ॥ २० ॥ आलोकैककारकः निर्विक्षेपप्रकाशमात्रनिमित्तम् ॥ २१ ॥ पूर्वार्धेन स्वप्ननिमित्ताभाव उत्तरार्धेन जाग्रन्निमित्ताभाव उक्तः ॥ २२ ॥ ननु 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति श्रुत्या सुषुप्तौ जीवस्य ब्रह्मण्यप्ययः श्रूयते तत्कथं तदा दीपवज्जीवस्थानमुच्यते तत्राह—**जीव** इति । जीवोऽहमिति संस्कारसचिव एव ब्रह्माप्येति न तद्विमुक्त इति तिले तैलसंविदिव तद्भावापन्नः स्फुरतीत्यर्थः ॥२३॥ ननु तर्हि 'तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति सलिल एको द्रष्टाऽद्वैतो भवति' इत्यादिश्रुतिभिरात्यन्तिकब्रह्मैक्योक्तेस्तर्हि का गतिस्तत्राह—**जीवाकारे**ति । प्रागुक्तजीवाकारा या काचिच्चितिः सा कला उपाधिविलयात्स्वच्छतया ब्रह्मात्मनि विचेतनां पृथक्चेतनशून्यां दशामायातीत्यंशमादाय ताः श्रुतयः प्रवृत्ता न भेदवासनाविलयाभिप्रायेणेत्यर्थः । प्राणवातकृतविक्षेपमाशङ्क्य विशिनष्टि—**सौम्यवाता**मिति ॥ २४ ॥ प्रसङ्गात्तस्य तुर्यावस्थां दर्शयति—**ज्ञात्वे**ति । चित्ते[1] उपरते

[1] चेतस्युपरते इति पाठः.

सुषुप्ते सौम्यतां यातैः प्राणैः संचाल्यते यदा ।
स जीवधातुः सा संवित्ततश्चित्ततयोदिता ॥ २६
स्वान्तःसंस्थजगज्जालं भावाभावैः क्रमभ्रमैः ।
पश्यति स्वान्तरेवाशु स्फारं बीज इव द्रुमम् ॥ २७
जीवधातुर्यदा वातैः किंचित्संक्षुभ्यते भृशम् ।
ततोऽस्म्यहं क्षुप्त इति पश्यत्यात्मनि खे गतिम् ॥ २८
यदाम्भसा प्लाव्यतेऽसौ तदा वार्यादिसंभ्रमम् ।
अन्तरेवानुभवति स्वामोदं कुसुमं यथा ॥ २९
यदा पित्तादिनाक्रान्तस्तदा ग्रीष्मादिसंभ्रमम् ।
अन्तरेवानुभवति स्फारं बहिरिवाखिलम् ॥ ३०
रक्तापूर्णो रक्तवर्णान्देशान्कालान्बहिर्यथा ।
पश्यत्यनुभवात्मत्वात्तत्रैव च निमज्जति ॥ ३१
सेवते वासनां यां तां सोऽन्तः पश्यति निद्रितः ।
पवनक्षोभितो रन्ध्रैर्बहिरक्षादिभिर्यथा ॥ ३२
अनाक्रान्तेन्द्रियच्छिद्रो यतः क्षुब्धोऽन्तरेव सः ।
संविदानुभवत्याशु स स्वप्न इति कथ्यते ॥ ३३
समाक्रान्तेन्द्रियच्छिद्रो यः क्षुब्धो वायुना यदा ।
परिपश्यति तज्जाग्रदित्याहुर्मुनिसत्तमाः ॥ ३४
इति विदितवता त्वयाधुनान्तः
प्रथितमहामतिनेह सत्यताख्या ।
असति जगति नैव भावनीया
मृतिहतिसंहतिदोषभावनी या ॥ ३५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० स्थितिप्रकरणे जाग्रत्स्वप्नसुषुप्तितुरीयस्वरूपविचारो नामैकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः २०

श्रीवसिष्ठ उवाच ।
एतत्ते कथितं सर्वं मनोरूपनिरूपणम् ।
मया राघव नान्येन केनचिन्नाम हेतुना ॥ १
दृढनिश्चयवच्चेतो यद्भावयति भूरिशः ।
तत्तां यात्यनलाश्लेषादयःपिण्डोऽग्नितामिव ॥ २
भावाभावग्रहोत्सर्गदृशश्चेतनकल्पिताः ।
नासत्या नापि सत्यास्ता मनश्चापलकारिताः ॥ ३
मनो मोहे तु कर्तृ स्यात्कारणं च जगत्स्थितेः ।
विश्वरूपतयैवेदं तनोति मलिनं मनः ॥ ४
मनो हि पुरुषो नाम तं नियोज्य शुभे पथि ।

सर्वव्यवहारोपरमवति चिति साम्यं अवैषम्यं शाश्वतो ज्ञात्वा विचारैकाग्र्याभ्यां स्वप्रयत्नैः संबुद्धः प्राप्तसाक्षात्कारो योगी जाग्रत्स्वप्नसुषुप्तेषु प्रसिद्धेषु प्रागुक्तभूमिकाभेदेषु वा व्यवहरन् । अपिशब्दात्समाधिस्थोऽपि बोधदार्ढ्यबलात्तुर्यात्मस्वभावादप्रच्युतः सदैव तुर्यावस्थावान् स्मृत इत्यर्थः ॥ २५ ॥ प्रस्तुतां सुषुप्तिमेवानूद्य ततः प्रागुक्तस्वप्नावतारं प्रपञ्चयितुं चित्तोत्पत्तिमाह—सुषुप्ते इति । सौम्यतां प्राप्तैः प्राणैरुपलक्षितः स जीवधातुर्यदा भोजकादृष्टपरिपाकापादितवैषम्यैस्तैरेव चाल्यते तदा सा जीवचित्तत्तद्भोगानुकूलप्राक्तनसंस्कारोद्बोधाचित्ततयोदिता । आविर्भूता भवतीत्यर्थः ॥ २६ ॥ ततः स्वप्नदर्शनमाह—स्वान्तःसंस्थेति । बीज इव यथा योगी बीजे स्थितं द्रुमं योगशक्त्या भाविविस्तारयुक्तं विविच्य पश्यति तद्वत् ॥ २७ ॥ उक्तमेव स्फुटमनूद्य चित्तादहंकारोत्पत्तिं भ्रान्तिभेदनिमित्तानि चाह—जीवेति । सुप्तः पुरुषो यदा वातैः किंचित्संक्षुभ्यते तदा अहमस्मीति पश्यति । यदा तु भृशं संक्षुभ्यते तदा खे गतिमाकाशगमनं पश्यतीत्यर्थः ॥ २८ ॥ अम्भसा नाड्यन्तर्गतश्लेष्मद्रवेण ॥ २९ ॥ ३० ॥ रक्तेन नाड्यन्तर्गतरुधिरेणापूर्ण आप्लुतः सन् देशान् गैरिकादिव्याप्तदेशान्, कालान् रक्ताभ्रव्याप्तसंध्यादिकालान् ॥ ३१ ॥ ३२ ॥ न आक्रान्तानीन्द्रियच्छिद्राणि चक्षुरादिस्थानानि येन स तथाविधः सन् । सः आन्तरार्थानुभवः ॥ ३३ ॥ तस्य जाग्रत्प्राप्तिलक्षणमाह—समाक्रान्तेति । यो जीवो यदा क्षुब्धः सन् समाक्रान्तेन्द्रियच्छिद्रो भूत्वा बहिः शब्दादीन्परिपश्यति तद्दर्शनं जाग्रदित्याहुरित्यर्थः ॥ ३४ ॥ जाग्रदादिभेदैः प्रपञ्चिते जगति सत्यताबुद्धिरेवाभिनिवेशहेतुत्वादनर्थ इति सैव हेयेत्याह—इतीति । इह असति जगति सत्यताख्या दृष्टिर्नैव भावनीया । कुतः । यतो या दृष्टिर्मृतिराध्यात्मिकनिमित्तैर्मरणं, हतिराधिभौतिकैर्निमित्तैर्मरणं, संहतिराधिदैविकैर्निमित्तैर्मरणं तद्धेतवश्च ये दोषास्तेषां भावनी अवश्यं संपादयित्रीत्यर्थः ॥ ३५ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जाग्रत्स्वप्नसुषुप्तितुरीयस्वरूपविचारो नामैकोनविंशः सर्गः ॥ १९ ॥

विश्वं हि मनसो भ्रान्तिः सत्यात्मानवलम्बिनः ।
सत्यात्मालम्बने चेतो विश्वं चात्मेति वर्ण्यते ॥ १ ॥

प्राग्वर्णितजाग्रदादिस्वरूपवर्णनस्य प्रस्तुतार्थसंबन्धं दर्शयति—एतदिति । मनोरूपं निरूप्यते यथावद्बोध्यते येन उपायेन तत्तथाभूतम् । मनःस्वभावपरिज्ञानाय जाग्रदादिवर्णनं प्रस्तुतं नान्येन प्रयोजनेनेत्यर्थः ॥ १ ॥ अनेन मनसः कीदृशः स्वभावः परिज्ञात इति चेद्दृढभावितार्थाकारधारणस्वभाव इत्याह—दृढेति ॥ २ ॥ तेन सदसद्रूपहेयोपादेयप्रत्ययविषयाः सर्वे मनःकल्पनामात्रत्वात्सदसद्विलक्षणा इति सिद्धमित्याह—भावेति ॥ ३ ॥ तत्र मनसो व्यष्टिरूपेण भ्रान्तिकर्तृता समष्टिरूपेण तद्विषयजगदुपादानतेति विशेषमाह—मन इति । विश्वरूपतया व्यष्टिसमष्टिरूपतया ॥ ४ ॥ तत्र कर्त्रंशः शुभे पथि नियुक्तश्चेदुपादानांशगता अणिमादिभूतयस्तत्त्वबोधश्च वशे

१ देशकालान् इति पाठः.

तज्जयैकान्तसाध्या हि सर्वा जगति भूतयः ॥ ५
पुरुषश्चेच्छरीरं स्यात्कथं शुक्रो महामतिः ।
अगमद्विविधाकारं जन्मान्तरशतभ्रमम् ॥ ६
अतश्चित्तं हि पुरुषः शरीरं चैत्यमेव हि ।
यन्मयं च भवत्येतत्तदवाप्नोत्यसंशयम् ॥ ७
यदतुच्छमनायासमनुपाधि गतभ्रमम् ।
यत्नात्तदनुसंधानं कुरु तत्तामवाप्स्यसि ॥ ८
अभिपतति मनःस्थितं शरीरं
नतु वपुराचरितं मनः प्रयाति ।
अभिपततु तवात्र तेन सत्यं
सुभग मनः प्रजहात्वसत्यमन्यत् ॥ ९

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपाये स्थितिप्रकरणे मनोरूपवर्णनं नाम विंशतितमः सर्गः ॥ २० ॥

## एकविंशः सर्गः २१

श्रीराम उवाच ।
भगवन्सर्वधर्मज्ञ संशयो यो महानयम् ।
हृदि व्यावर्तते लोलः कल्लोल इव सागरे ॥ १
दिक्कालाद्यनवच्छिन्ने तते नित्ये निरामये ।
म्लाना संविन्मनोनाम्नी कुतः केयमुपस्थिता ॥ २
यस्मादन्यन्न नामास्ति न भूतं न भविष्यति ।
कुतः कीदृक्कथं तत्र कलङ्कस्तस्य विद्यते ॥ ३
श्रीवसिष्ठ उवाच ।
साधु राम त्वया प्रोक्तं जाता ते मोक्षभागिनी ।
मतिरुत्तमनिष्यन्दा नन्दनस्येव मञ्जरी ॥ ४
पूर्वापरविचारार्थतत्परेयं मतिस्तव ।
संप्राप्स्यसि पदं प्रोच्चैर्यत्प्राप्तं शंकरादिभिः ॥ ५
प्रश्नस्यास्य तु हे राम न कालस्तव संप्रति ।
सिद्धान्तः कथ्यते यत्र तत्रायं प्रश्न उच्यते ॥ ६
सिद्धान्तकाले भवता प्रष्टव्योऽहमिदं परम् ।
करामलकवत्तेन सिद्धान्तस्ते भविष्यति ॥ ७
सिद्धान्तकाले प्रश्नोक्तिरेषा तव विराजते ।
प्रावृषीव हि केकोक्तिर्युक्ता शरदि हंसगीः ॥ ८
सहजो नीलिमा व्योम्नि शोभते प्रावृषः क्षये ।
प्रावृषि त्वतनूदभ्रपयोदपटलोत्थितः ॥ ९

भवन्तीत्याह—**मन** इति ॥ ५ ॥ ननु देह एव पुरुषोऽस्तु न मन इति चेन्नेत्याह—**पुरुष** इति ॥६॥ शरीरस्य पुरुषत्वासंभवे घटकुड्यादिवच्चैत्यतैव परिशेषादित्याह—**अत** इति । एतच्चित्तम् ॥ ७ ॥ मनः सर्वावाप्तिसमर्थमस्तु ततो मम को लाभस्तत्राह—**यदि**ति । मोक्षप्रयत्ने कृते तव तल्लाभो भविष्यतीत्यर्थः ॥८॥ उक्तमेवार्थं संक्षिप्योपसंहरति—**अभिपतती**ति । मनःस्थितं मनोभिलषितं देशं विषयं वा शरीरमभिपतति वपुषाचरितं तु देशं विषयं वा मनो न नियमेन प्रयाति, अतो मनसः स्वाभिलषितसिद्धौ देहेन्द्रियादिनियमनसमर्थत्वात्तवापि मनस्सत्यं परमार्थभूतमात्मतत्त्वमभिपततु तत्प्राप्तये यतताम् । तेन देहेन्द्रियाद्यसत्यं द्वैतभ्रमं प्रजहात्वित्यर्थः ॥ ९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे मनोरूपवर्णनं नाम विंशतितमः सर्गः ॥ २० ॥

विशुद्धे कल्पकाभावान्मनःक्लृप्तिर्न युज्यते ।
अविशुद्धे मनःसिद्धेर्नानामतविकल्पनाः ॥ १ ॥

'यदतुच्छमनायासमनुपाधि गतभ्रमम् । यत्नात्तदनुसंधानं कुर्वि'ति गुरुणोक्तो रामः स्वबुद्धिकौशलेन तदनुसंधाय तत्र मनःकल्पनायोग्यतामपश्यन्प्रागुक्तायां तत्र मनःकल्पनायामाश्वासमलभमानोऽर्धविकासितमतिः प्रष्टुकामो गुरुमभिमुखीकृत्य संशयं दर्शयति—**भगवन्नि**ति । सर्वधर्मज्ञेति शिष्याशयपरिज्ञानकौशलद्योतनाय विशेषणम् ॥ १ ॥ दिक्कृतपरिच्छेदाभावात्तते, कालकृतपरिच्छेदाभावान्नित्ये, आदिपदोपात्तवस्तुकृतपरिच्छेदविरहान्निरामये । म्लाना विषयाकारकलुषा । कुत इति कारणासंभवः, केति स्वरूपासंभवः, इयमित्यपरोक्षता च मनसो दर्शिता॥२॥ यद्यविद्याकलङ्कवशादिति ब्रूयुस्तत्राप्याह—**यस्मादि**ति । यत्र कालत्रयेऽपि द्वितीयं नास्ति तत्र निमित्ततः स्वतः प्रकारतोऽपि कलङ्कसद्भावो न संभावित इत्यर्थः ॥ ३ ॥ एवं पृष्टो वसिष्ठो वस्तुपरिचयचमत्कारि रामबुद्धिकौशलं प्रथमं प्रशंसति—**साध्वि**ति । उत्तमो मकरन्दनिष्यन्द इव वस्त्वनुभवचमत्कारो यस्याः ॥ ४ ॥ ५ ॥ शुद्धे चिदात्मन्यविद्याकलङ्को न युक्त इति प्रश्नः शुद्धात्मानमनुभूतवतः शोभेत । नच तं प्रति वयं मनो निरूपयामो येन स तथा पृच्छेत् । यस्तु शुद्धं नानुभूतवान् विद्वांसमेवात्मानं मन्यमानस्तेन स्वानुभवविरुद्धा आत्मनः शुद्धिरेव कथमिति शङ्कितव्यं नत्वनुभवविरुद्धां शुद्धिमभ्युपगम्य शुद्धे मालिन्यं कथमिति नाज्ञोपदेशकाले विज्ञवत्प्रश्नावसर इत्याशयेनाह—**प्रश्नस्ये**ति । यत्र निर्वाणप्रकरणे तवात्मदर्शनसमाधिप्रतिष्ठानन्तरं सिद्धान्तोऽनुभवारूढ एवार्थो मया स्वानुभवसंवादाय कथ्यते तत्रायं प्रश्न उच्यते । समाधीयत इत्यर्थः ॥६॥ वक्ष्यामि नवेत्यनाश्वासे पुनर्वा अहं प्रष्टव्य इत्याह—**सिद्धान्तकाले** इति । तेन प्रश्नेन मया समाहितेन सिद्धान्तः अनुभवारूढतत्त्व आत्मा भविष्यति ॥७॥ शरदि तु हंसगीर्युक्ता नतु केकोक्तिस्तद्वदज्ञानुरूप एव प्रश्नो युक्तः । सर्वेषां श्रोतॄणामद्याप्यात्मतत्त्वप्रतिबोधानुदयादिति भावः ॥ ८ ॥ सांप्रतं त्वयं प्रश्नः प्रावृषि नभसः सहजनीलिमवर्णनवदित्याह—**सहज** इति ॥९॥

१ जनान्तर इति पाठः.

२ ब्रूयाः इति पाठः.

अयं प्रकृत आरब्धो मनोनिर्णय उत्तमः ।
यद्वशाज्जनताजन्म तदाकर्णय सुव्रत ॥ १०
एवं प्रकृतिरूपेयं मनोमननधर्मिणी ।
कर्मेति राम निर्णीतं सर्वैरेव मुमुक्षुभिः ॥ ११
शृणु दर्शनभेदेन तन्नामाभिमताकृतिम् ।
वाग्मिनां वदतां यातं चित्राभिः शास्त्रदृष्टिभिः ॥ १२
यं यं भावमुपादत्ते मनो मननचञ्चलम् ।
तत्तामेति घनामोदमन्तःस्थः पवनो यथा ॥ १३
ततस्तमेव निर्णीय तमेव च विकल्पयन् ।
अन्तःस्थया रञ्जनया रञ्जयन्स्वामहंकृतिम् ॥ १४
तन्निश्चयमुपादाय तत्रैव रसमृच्छति ।
यन्मयत्वं शरीरे तु ततो बुद्धीन्द्रियेषु च ॥ १५
यन्मयं हि मनो राम देहस्तदनु तद्वशः ।
तत्तामायाति गन्धान्तः पवनो गन्धतामिव ॥ १६
बुद्धीन्द्रियेषु वल्गत्सु कर्मेन्द्रियगणस्ततः ।
स्फुरति स्वत एवोर्वी रजोलोल इवानिले ॥ १७
कर्मेन्द्रियगणे क्षुब्धे स्वशक्तिं प्रणयत्यलम् ।
कर्म निष्पद्यते स्फारं पांसुजालमिवानिले ॥ १८
एवं हि मनसः कर्म कर्मबीजं मनः स्मृतम् ।
अभिन्नैव तयोः सत्ता यथा कुसुमगन्धयोः ॥ १९
यादृशं भावमादत्ते दृढाभ्यासवशान्मनः ।
तथा स्पन्दाख्यकर्माख्यप्रथाशाखा विमुञ्चति ॥ २०
तथा क्रियां तत्फलतां निष्पादयति चादरात् ।
ततस्तमेव चास्वादमनुभूयाशु बध्यते ॥ २१
यं यं भावमुपादत्ते तं तं वस्त्विति विन्दति ।
तत्तच्छ्रेयोऽन्यन्नास्तीति निश्चयोऽस्य च जायते ॥ २२
धर्मार्थकाममोक्षार्थं प्रयतन्ते सदैव हि ।
मनांसि दृढभिन्नानि प्रतिपत्त्या स्वयैव च ॥ २३
मनो वै कापिलानां तु प्रतिपत्तिनिजामलम् ।
उररीकृत्य निर्णीय कल्पिताः शास्त्रदृष्टयः ॥ २४
मोक्षे तु नान्यथा प्राप्तिरिति भावितचेतसः ।
स्वां दृष्टिं प्रतिबिम्बन्ति स्थिताः स्वनियमभ्रमैः ॥ २५
वेदान्तवादिनो बुद्ध्या ब्रह्मेदमिति रूढया ।
मुक्तिः शमदमोपेता निर्णीय परिकल्पिता ॥ २६
मुक्तौ तु नान्यथा प्राप्तिरिति भावितचेतसः ।
स्वां दृष्टिं प्रविवृण्वन्ति स्वैरेव नियमभ्रमैः ॥ २७
विज्ञानवादिनो बुद्ध्या स्फुरत्स्वभ्रमपूरया ।
मुक्तिः शमदमोपेता निर्णीय परिकल्पिता ॥ २८

एवं समाधाय प्रस्तुतश्रवणे राममनुकूलयति—**अय**मिति ॥ १० ॥ एवं प्रागुक्तदिशा मालिन्यस्याज्ञानुभवसिद्धत्वात्तदुपहिता इयं चित् व्याक्रियमाणा प्रकृतिरूपा भवति । मननधर्मिणी सती मनो भवति । पश्यन्ती चक्षुर्भवति । शृण्वन्ती श्रोत्रम् । 'पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः' इत्यादिश्रुतेः । एवं कर्मेन्द्रियभावापन्ना व्यापारेण धर्माधर्माख्यकर्मापि स्वयमेव भवतीति मुमुक्षुभिः श्रुत्यादिप्रमाणैर्निर्णीतमित्यर्थः ॥ ११ ॥ बहुभिर्वादिभिः स्वस्वाभिमतनामरूपाकारेणान्यथाप्युत्प्रेक्ष्यमाणं तदेवेत्याह—**शृण्व**िति ॥ १२ ॥ तर्हि एकमूलत्वे कुतस्तेषां सिद्धान्तभेद इति शङ्कापरिहारव्याजेन कर्मेति निर्णीतमिति यदुक्तं तद्दर्शयति—**यं य**मित्यादिना । यं यं भावं यादृशयादृशवासनोद्भवम् । यथा सुरभिपूत्युग्रनिर्हार्यादिनानागन्धवत्कुसुमान्तःस्थः पवनस्तद्गन्धात्मकतामेति तद्वत् ॥ १३ ॥ तं स्वस्ववासनाकल्पितमेव युक्तिभिर्निर्णीय रञ्जनया स्वकल्पितार्थे स्वीयतारागेण स्वामहंकृतिं रञ्जयंस्तद्भावमिवापादयन् ॥ १४ ॥ रसं पुनःपुनरास्वादनचमत्कारम् । विषयिणां विषयास्वादरसेऽप्येषैव गतिरित्याशयेन तदनुरूपदेहधारणामाह—**यन्मयत्व**मिति ॥१५॥ गन्धान्तः गन्धवद्द्रव्यान्तः प्रविष्टः पवनस्तद्गन्धरूपतामिव ॥ १६ ॥ मनोनुसारिदेहधारणे तत्र ज्ञानेन्द्रियाविर्भावे तत्पर्यालोचितविषयप्राप्तिहेतुक्रियानिमित्तकर्मेन्द्रियप्रादुर्भाव इत्याह—**बुद्धीन्द्रियेष्व**िति । वल्गत्सु आविर्भूय स्वस्वविषये वल्गत्सु । रजोलोले अनिले वल्गति तदन्तर्गतरजोरूपा उर्वीव ॥१७॥ स्वशक्तिं क्रियाशक्तिम् । प्रणयति प्रकटयति ॥ १८ ॥ उपपादितम्[…] मनसः कर्मरूपतां प्राप्तिमुपसंहरन् कर्ममनसोः परस्परबीजतामभिन्नसत्तां चाह—**एव**मिति ॥ १९ ॥ एवं वासनाकर्मतत्फलानुभवानामपि समानरूपत्वादेका सत्तेत्याह—**यादृश**मिति द्वाभ्याम् ॥ २० ॥ २१ ॥ अस्त्वेवं तथाप्यसारेऽपि स्वस्याभिमते कथं पक्षपातः प्राणिनां वादिनां च तत्राह—**यं य**मिति ॥२२॥ ॥ २३ ॥ तत्र कापिलानां मनस्तु विवेकित्वादसङ्गचिन्मात्रत्वंपदार्थमात्रप्रतिपत्त्या निजया अमलं निर्मलमेव । तत्पदार्थविषये तु श्रुत्यनवलम्बनेन व्यामोहात्स्वबुद्ध्यैव सुखदुःखमोहात्मकस्य जडस्य जगतस्तादृशमेवोपादानं त्रिगुणात्मकं प्रधानं भवितुमर्हतीत्युररीकृत्य पुनःपुनरास्वादनेन तदेव तत्त्वमिति निर्णीय तथैव तेषां शास्त्रदृष्टयः कल्पिता इत्यर्थः ॥ २४ ॥ अन्यथा स्वोक्तोपायमन्तरेण मोक्षे कस्यापि प्राप्तिर्नास्तीति निश्चितचेतसः स्वकल्पितनियमभ्रमैः स्थिता उपायान्तरमतिभ्यो निवृत्ताः सन्तः स्वां दृष्टिं ग्रन्थनिर्माणादिना प्रकाशयन्तः प्रतिबिम्बन्ति, परबुद्धिषु संक्रामयन्तीत्यर्थः ॥ २५ ॥ एवं वेदान्तिनोऽपीत्याह—**वेदान्तवादिन** इति । श्रुतिप्रामाण्यादध्यारोपापवादन्यायेनेदं जगद्ब्रह्मैव नान्यद्ब्रह्मणोऽणुमात्रमप्यस्तीति रूढया । शमः सर्वानर्थनिवृत्तिः, दमो वास्तवनिरतिशयानन्दापरिच्छिन्नब्रह्मात्मभावेनाविर्भावस्ताद्रूप्येण उप समीपे स्वस्थान एव इता प्राप्ता नत्वर्चिरादिमार्गेण दूरगमनेनेत्यर्थः । शमदमोपेता वेदान्तिन इति वा । परिरुपर्यर्थे । सर्वोत्कृष्टतया समर्थितेत्यर्थः ॥२६॥ नियमभ्रमैरित्यनेन वेदान्तिनामुपेयतत्त्वमात्रं वास्तवमुपायप्रक्रियाभेदास्तु पाणिनेरिव कल्पिता एवेति सूचितम् ॥२७॥ शमेन सांवर्तिकोपप्लवोपशमेन दमेनेन्द्रियद्वारसंवरणेन चोपेता युक्ता

मुक्तौ तु नान्यथा प्राप्तिरिति भावितचेतसः ।
स्वां दृष्टिं प्रविवृण्वन्ति स्वैरेव नियमभ्रमैः ॥ २९
आर्हतादिभिरन्यैश्च स्वयाभिमतयेच्छया ।
चित्राश्चित्रसमाचारैः कल्पिताः शास्त्रदृष्टयः ॥ ३०
निर्निमित्तोत्थसौम्याम्बुबुद्बुदौघैरिवोत्थितैः ।
स्वनिश्चितैरिति प्रौढा नानाकारा हि रीतयः ॥ ३१
सर्वासामेव चैतासां रीतीनामेवमाकरः ।
मनो नाम महाबाहो मणीनामिव सागरः ॥ ३२
न निम्बेक्षू कटुस्वादू शीतोष्णौ नेन्दुपावकौ ।
यद्यथा परमाभ्यस्तमुपलब्धं तथैव तत् ॥ ३३
यस्त्वकृत्रिम आनन्दस्तदर्थं प्रयतैर्नरैः ।
मनस्तन्मयतां नेयं येनासौ समवाप्यते ॥ ३४
दृश्यं संपरिडिम्भं स्वं तुच्छं परिहरन्मनः ।
तज्जाभ्यां सुखदुःखाभ्यां नावश्यं परिकृष्यते ॥ ३५
अपवित्रमसद्रूपं मोहनं भयकारणम् ।
दृश्यमाभासमाभोगि बन्धमाभावयानघ ॥ ३६
मायैषा सा ह्यविद्यैषा भावनैषा भयावहा ।
संविदस्तन्मयत्वं यत्तत्कर्मेति विदुर्बुधाः ॥ ३७

दृष्ट्वा दृश्यैकतानत्वं विद्धि त्वं मोहनं मनः ।
प्रमार्जयैव तन्मिथ्या महामलिनकर्दमम् ॥ ३८
दृश्यतन्मयता यैषा स्वभावस्यानुभूयते ।
संसारमदिरा सेयमविद्येत्युच्यते बुधैः ॥ ३९
अनयोपहतो लोकः कल्याणं नाधिगच्छति ।
भास्वरं तापनालोकं पटलान्धेक्षणो यथा ॥ ४०
स्वयमुत्पद्यते सा च संकल्पाद्व्योमवृक्षवत् ।
असंकल्पनमात्रेण भावनायां महामते ॥ ४१
क्षीणायां स्वरसादेव विमर्शेन विलासिना ।
असंसङ्गः पदार्थेषु सर्वेषु स्थिरतां गतः ॥ ४२
सत्यदृष्टौ प्रपन्नायामसत्ये क्षयमागते ।
निर्विकल्पचिदच्छात्मा स आत्मा समवाप्यते ॥ ४३
न सत्ता यस्य नासत्ता न सुखं नापि दुःखिता ।
केवलं केवलीभावो यस्यान्तरुपलभ्यते ॥ ४४
अभव्यया भावनया न चित्तेन्द्रियदृष्टिभिः ।
आत्मनोऽनन्यभूताभिरपि यः परिवर्जितः ॥ ४५
वासनाभिरनन्ताभिर्व्योमेव घनराजिभिः ।
संदिग्धायां यथा रज्ज्वां सर्पतत्त्वं तथैव हि ॥ ४६

सर्वज्ञबुद्धिधारानुप्रवेशलक्षणा । शमदमादिप्रसिद्धसाधनैरुपेता प्राप्तेति वा ॥ २८ ॥ नियमभ्रमैः प्रक्रियानियमभ्रमैस्तप्तशिलारोहणादिसाधननियमभ्रमैर्वा ॥ २९ ॥ आर्हतादिभिरित्यादिपदात्कापिलकौलिकादयो गृह्यन्ते । जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षादिपदार्थविभागकल्पनैः स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति नास्ति चावक्तव्यश्च' इत्यादिसप्तभङ्गीनयकल्पनैश्च चित्राः । चित्रैः समाचारैर्विवसनभिक्षाचर्याद्याचारैः ॥ ३० ॥ सर्वेषां कल्पनावैचित्र्याणां न मानमेये मूलं किंतु चिराभ्यासरूढा मनःकल्पनैवेत्याह—**निर्निमित्ते**ति द्वाभ्याम् ॥ ३१ ॥ ३२ ॥ **शीतोष्णा**विति । अतएव हि चन्द्रमण्डले अर्काग्निमण्डलादिषु च वसतां देवानां न शीतोष्णादिपीडेति भावः । परमाभ्यस्तं भोजकादृष्टफलोत्पादपर्यन्तमभ्यस्तमित्यर्थः ॥ ३३ ॥ एवं तुच्छेऽपि फले दृढाभ्यासापेक्षा चेत्किं वाच्यमनादिसांसारिकविपरीतभावनातिरस्कृते अकृत्रिमानन्दमोक्षफले दृढाभ्यासापेक्षेत्याशयेनाह—**यस्त्वि**ति ॥ ३४ ॥ कस्य तर्हि दृढाभ्यासो मुक्तये कार्य इति चेद्दृश्यमार्जनस्यैवेत्याशयेनाह—**दृश्य**मित्यादिना । सम्यक्परिरभ्य डिम्भमर्भकमिव स्नेहात्करोतीति संपरिडिम्भं एवंरूपं स्वं मनस्तद्दृश्यं परिहरत्त्यजत्सद्दृश्यजाभ्यां सुखदुःखाभ्यां न परिकृष्यते । अवश्यमित्यवधारणे ॥ ३५ ॥ ३६ ॥ तन्मयत्वं दृश्यप्रायत्वं यत्तदेव प्रागुक्तक्रमेण बन्धकं कर्म भवतीति विदुरित्यर्थः ॥ ३७ ॥ ३८ ॥ दृश्येन किमपराद्धं यदर्थं तन्मार्जनमुच्यत इति चेत्तत्राह—**दृश्ये**ति ॥ ३९ ॥ तपनः सूर्यस्तस्येमं तापनमालोकम् ॥ ४० ॥ दृश्यमार्जने चासंकल्पनं हेतुरित्याह—**स्वय**मिति ॥ ४१ ॥ विमर्शेन विचारेण श्रवणमननात्मना । विलासिना समाध्यभ्यासदार्ढ्यविलासवता ॥ ४२ ॥ अच्छात्मा स्वच्छस्वभावः स परमार्थसत्य आत्मा । अहं स आत्माहं स आत्मेति वा पाठान्तरे[3] च्छेदः । उभयत्रापि प्रत्यगात्मेत्यर्थः ॥ ४३ ॥ सत्ता व्यक्तता । असत्ता अव्यक्तता । सुखं सात्त्विकचित्तवृत्तिरूपम् । अन्तः स्वहृदि स्वानुभवादेवोपलभ्यते ॥ ४४ ॥ अभव्यया अनर्थहेतुभूतया देहाद्यहंभावनया यो नोपलभ्यत इत्यनुषज्यते । आत्मनस्तादात्म्याध्यासादनन्यभूताभिः ॥ ४५ ॥ अपिशब्दानुकर्षाद्वासनाभिरपि परिवर्जित इति पूर्वेणान्वयः । एतदन्तविशेषणानां सर्वेषां स आत्मा समवाप्यते इति व्यव-

१ बन्धं माभावय इति पाठः. २ आर्हतमते हि जीवादयो मोक्षान्ताः सप्त पदार्थाः । तत्र जीवश्चेतनः शरीरपरिमाणः १, अजीवोऽश्मादिः २, आस्रवती जीवोऽनेनेत्यास्रव इन्द्रियवर्गः ३, संवृणोतीति संवरो विवेकः, यमनियमादिरित्यन्ये ४, निःशेषतया जीर्यति कामादिरनेनेति निर्जरः केशोल्लुञ्चनादितपः ५, बन्धो मुहुर्जन्ममरणे ६, मोक्षस्तदुच्छेदादलोकाकाशे सदोर्ध्वगमनं ७, इति । एषां सप्तानां साधकः सप्तभङ्गीन्यायः सद्वादी १, असद्वादी २, सदसद्वादी ३, अनिर्वचनीयवादी ४, इति चतुर्विधा वादिनः अनिर्वचनीयवादेऽपि सदादिभेदात्पुनस्त्रिविधा इति संकलनया सप्त वादिनः । तत्र सद्वादिना आर्हतं प्रति तव मते मोक्षादिरस्तीति पृष्टे स ब्रूते स्यादस्तीति । स्यादिति तिङन्तप्रतिरूपकमीषदर्थकं कथंचिदर्थकं वाऽव्ययं सर्वत्र । एवमसद्वाद्यादीन्प्रति क्रमेण स्यान्नास्तीत्यादीन्युत्तराणि । तेन तेषां तूष्णींभाव इत्यार्हतमनोरथः इति । इदं च काश्मीरस्थपुस्तके टिप्पणीरूपेणोपलब्धम्. ३ निर्विकल्पचिदच्छोऽहं स आत्मा समवाप्यते इत्येवंरूपे.

चिदाकाशात्मना बन्धस्त्वबन्धेनैव कल्पितः ।
कल्पितं कल्पितं वस्तु प्रतिकल्पनयान्यथा ॥ ४७
तदेवान्यत्वमादत्ते खमहोरात्रयोरिव ।
यदतुच्छमनायासमनुपाधि गतभ्रमम् ॥ ४८
तत्तत्कल्पनयातीतं तत्सुखायैव कल्पते ।
शून्य एव कुसूले तु सिंहोऽस्तीति भयं यथा ॥ ४९
शून्य एव शरीरेऽन्तर्बद्धोऽस्मीति भयं तथा ।
शून्य एव कुसूले तु प्रेक्ष्य सिंहो न लभ्यते ॥ ५०
तथा संसारबन्धार्थः प्रेक्षितोऽसौ न लभ्यते ।
इदं जगदयं चाहमिति संभ्रान्तमुत्थितम् ॥ ५१
बालानां मध्यमे काले छाया वैतालिकी यथा ।
कल्पनावशतो जन्तोर्भावाभावशुभाशुभाः ॥ ५२
क्षणादसत्तामायान्ति सत्तामपि पुनः क्षणात् ।
मातैव गृहिणीभावगृहीता कण्ठलम्बिनी ॥ ५३
करोति गृहिणीकार्यं सुरतानन्ददा सती ।
कान्तैव मातृभावेन गृहीता कण्ठलम्बिनी ॥ ५४
नूनं विस्मारयत्येव मन्मथं मातृभावनात् ।
भावानुसारिफलदं पदार्थौघमवेक्ष्य च ॥ ५५
न क्वेनेह पदार्थेषु रूपमेकमुदीर्यते ।
दृढभावनया चेतो यद्यथा भावयत्यलम् ॥ ५६
तत्तत्फलं तदाकारं तावत्कालं प्रपश्यति ।
न तदस्ति न यत्सत्यं न तदस्ति न यन्मृषा ॥ ५७
यद्यथा येन निर्णीतं तत्तथा तेन लक्ष्यते ।
भाविताकाशमातङ्गं व्योमहस्तितया मनः ॥ ५८
व्योमकाननमातङ्गीं व्योमस्थामनुधावति ।
तस्मात्संकल्पमेव त्वं सर्वभावमयात्मकम् ॥ ५९
त्यज राम सुषुप्तस्थः स्वात्मनैव भवात्मनः ।
मणिर्हि प्रतिबिम्बानां प्रतिषेधक्रियां प्रति ॥ ६०
न शक्तो जडभावेन नतु राम भवादृशः ।
यदात्मनि जगद्राम तवेह प्रतिबिम्बति ॥ ६१
तदवस्त्विति निर्णीय मा तेनागच्छ रञ्जनम् ।
तदेव सत्यमिति वाप्यभिन्नं परमात्मनः ॥ ६२
मत्वान्तस्त्वमनाद्यन्तं भावयात्मानमात्मना ।
चेतसि प्रतिबिम्बन्ति ये भावास्तव राघव ।
रञ्जयन्त्वन्यसक्तत्वान्मा ते त्वां स्फटिकं यथा ॥ ६३

स्फटिकममननं यथा विशन्ति
प्रकटतया न च रञ्जना विचित्रा ।
इह हि विमननं तथा विशन्तु
प्रकटतया भुवनैषणा भवन्तम् ॥ ६४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे विज्ञानवादो नामैकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः २२

श्रीवसिष्ठ उवाच ।
जन्तोः कृतविचारस्य विगलद्वृत्तिचेतसः ।
मननं त्यजतो ज्ञात्वा किंचित्परिणतात्मनः ॥ १

हितेन संबन्धः । बन्धनिरासोपायं प्रपञ्च्य बन्धकल्पनाकर्तारमाह—**संदिग्धायामि**त्यादिना । सर्पतत्त्वं सर्पत्वम् ॥४६॥ चिदाकाशात्मना स्वात्मनीति शेषः । कल्पितवस्त्वनुवेधात्प्रतिवस्तु ब्रह्मैव नानावैचित्र्यमिव गतं दुःखसंसारात्मना विभाव्यत इत्याशयेनाह—**कल्पितं कल्पित**मिति ॥४७॥ तदेव कल्पनात्यागे परमपुरुषार्थसुखं परिशिष्यत इत्याह—**यदतुच्छ**मिति॥४८॥४९॥ अभयेऽप्यज्ञानाद्भयदर्शने प्रेक्षणमात्रेण तन्निवृत्तौ च दृष्टान्तमाह—**शून्य एवे**त्यादिना ॥ ५० ॥ अयं देहादिसंघातः ॥५१॥ अतिशैशवयौवनयोर्मध्यमे त्रिचतुर्हायनादिकाले प्रकाशनिशयोर्मध्यमे मन्दान्धकारकाले वा । छाया वृक्षमूलादिप्रदेशस्थगाढान्धकारः । वैतालिकी वेतालाकारा । भावो वैभवमभावो दारिद्र्यं तद्रूपाः शुभाशुभा भावाः ॥५२॥ असत्तां तिरोभावं पुनः सत्तामाविर्भावमप्यायान्तीत्यर्थः । पदार्थानां कल्पनानुसार्यर्थक्रियाकारिता प्रसिद्धैवेत्याह—**मातैवे**त्यादिना ॥५३॥५४॥५५॥५६॥ ॥५७॥ भावितः आकाशो मातङ्गो येन तथाविधं मनस्तस्मिन्कल्पितया व्योमहस्तितया आकाशगजभावेन कामातुरं सत् व्योमकल्पितकाननचारिणीं स्वसंकल्पितां मातंगीं करेणुमनुधावत्यनुसरतीति परेणान्वयः ॥ ५८ ॥ तस्मात्संकल्पत्यागेनैव स्वात्मप्रतिकात्मभावेन स्थितिरित्युपसंहरन्नुपदिशति—**तस्मादि**ति ॥५९॥ आत्मनः स्वस्य पारमार्थिकेनाद्वयानन्दात्मनैव भव नत्वपारमार्थिकदुःखात्मनेत्यर्थः । ननु मया सह संकल्पैस्त्यक्ता अपि द्वैतभावा अनिच्छेऽपि मयि मणौ प्रतिबिम्बा इव दुर्वाराः स्युरित्याशङ्क्य विशेषमाह—**मणिरि**ति ॥ ६० ॥ निरुद्धे चेतसि दैवात्कदाचिद्द्वैतप्रतिबिम्बनेऽपि तस्य मिथ्यात्वानुसंधानेन तादृप्यरञ्जनं त्याज्यमित्याह—**यदे**ति ॥ ६१ ॥ तस्य चिदैक्यानुसंधानेन प्रविलापनं वा कार्यमित्याह—**तदेवे**ति । एवकारो भिन्नक्रमः । तत्सत्यं ब्रह्मैवेत्यर्थः ॥ ६२ ॥ ते त्वां मा रञ्जयन्तु ॥६३॥ अस्तु वा द्वैतप्रतिभासस्तथापि निर्विकारात्मबोधात्स्फटिकस्येव न तैस्तव रञ्जनास्तित्याह—**स्फटिक**मिति । मननं प्रतिबिम्बितार्थानां पुनःपुनरनुसंधाने रागादिवासनाधानं तद्रहितम् । भुवनैषणाः प्रारब्धभोगोचितजगद्व्यवहारेच्छाः ॥ ६४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे विज्ञानवादो नामैकविंशः सर्गः ॥ २१ ॥

इह प्ररूढबोधस्य सर्वदोषपरिक्षयः ।
प्रसादः सुविशुद्धात्मदर्शनं चोपवर्ण्यते ॥ १ ॥

ज्ञानफलजीवन्मुक्तावस्थानुभवप्रकारं प्रपञ्चयिष्यन् श्रवण-

दृश्यं संत्यजतो हेयमुपादेयमुपेयुषः ।
द्रष्टारं पश्यतो दृश्यमद्रष्टारमपश्यतः ॥ २
जागर्तव्ये परे तत्त्वे जागरूकस्य जीवतः ।
सुप्तस्य घनसंमोहमये संसारवर्त्मनि ॥ ३
पर्यन्तात्यन्तवैराग्यात्सरसेष्वरसेष्वपि ।
भोगेष्वाभोगरम्येषु विरक्तस्य निराशिषः ॥ ४
व्रजत्यात्माम्भसैकत्वं जीर्णजाड्ये नभस्थलम् ।
गलत्यपगतासङ्गे हिमापूर इवातपे ॥ ५
तरङ्गितासु कल्लोलजललोलान्तरासु च ।
शाम्यन्तीष्वथ तृष्णासु नदीष्विव घनात्यये ॥ ६
संसारवासनाजाले खगजाल इवाखुना ।
त्रोटिते हृदयग्रन्थौ श्लथे वैराग्यरंहसा ॥ ७
कातकं फलमासाद्य यथा वारि प्रसीदति ।
तथा विज्ञानवशतः स्वभावः संप्रसीदति ॥ ८
नीरागं निरुपासङ्गं निर्द्वन्द्वं निरुपाश्रयम् ।
विनिर्याति मनो मोहाद्विहगः पञ्जरादिव ॥ ९
शान्ते संदेहदौरात्म्ये गतकौतुकविभ्रमम् ।
परिपूर्णान्तरं चेतः पूर्णेन्दुरिव राजते ॥ १०
जनितोत्तमसौन्दर्या दूरादस्तमयोन्नता ।
समतोदेति सर्वत्र शान्ते वात इवार्णवे ॥ ११
अन्धकारमयी मूका जाड्यजर्जरितान्तरा ।
तनुत्वमेति संसारवासनेवोदये क्षपा ॥ १२
दृष्टचिद्भास्करा प्रज्ञापद्मिनी पुण्यपल्लवा ।
विकसत्यमलोद्योता प्रातर्द्यौरिव रूपिणी ॥ १३
प्रज्ञा हृदयहारिण्यो भुवनाह्लादनक्षमाः ।
सत्त्वलब्धाः प्रवर्धन्ते सकलेन्दोरिवांशवः ॥ १४
बहुनात्र किमुक्तेन ज्ञातज्ञेयो महामतिः ।
नोदेति नैव यात्यस्तमभूताकाशकोशवत् ॥ १५
विचारणा परिज्ञातस्वभावस्योदितात्मनः ।
अनुकम्प्या भवन्तीह ब्रह्मविष्ण्विन्द्रशंकराः ॥ १६
प्रकटाकारमप्यन्तर्निरहंकारचेतसम् ।
नाप्नुवन्ति विकल्पास्तं मृगतृष्णामिवैणकाः ॥ १७
तरङ्गवदिमे लोकाः प्रयान्त्यायान्ति चेतसः ।
क्रोडीकुर्वन्ति चाज्ञं ते न ज्ञं मरणजन्मनी ॥ १८
आविर्भावतिरोभावौ संसारो नेतरक्रमः ।
इति ताभ्यां समालोको रमते स निबध्यते ॥ १९
न जायते न म्रियते कुम्भे कुम्भनभो यथा ।
भूषिते दूषिते वापि देहे तद्वदिहात्मवान् ॥ २०

मननाद्युपचयक्रमेण यथा यथा ज्ञानदार्ढ्यं तथा तथा दोषक्षय-प्रकर्षं प्रथमं दर्शयति—**जन्तो**रित्यादिना । समाध्यभ्यासेन क्रमाद्बाह्यमननमात्ममननं च त्यजतः किंचित्परिणतो विशुद्धात्माकारतया विश्रान्त आत्मा मनो यस्य तथाविधस्य जन्तोरधिकारिणो जीर्णजाड्ये आत्माम्भसा एकत्वं व्रजति सति विज्ञानवशतः स्वभावः [1]प्रसीदतीत्यनेनान्वयः ॥ १ ॥ हेयमज्ञानभूमिकाभेदं संत्यजतः । उपादेयं ज्ञानभूमिकाविशेषमुपेयुषः । द्रष्टारं प्रमातारमपि दृश्यं साक्षिचिद्वेद्यं पश्यतः । अथवा सर्वं दृश्यं द्रष्टारं भासकं चिन्मात्रमेवेति पश्यतः, अद्रष्टारं भासकच्चिद्व्यतिरिक्तमपश्यतः ॥ २ ॥ घने संमोहमये अज्ञानविकारात्मके सुप्तस्य । 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति भगवद्वचनात् ॥ ३ ॥ सर्वसुखलत्रावधि विरञ्चिपदपर्यन्तमत्यन्तवैराग्यात् सरसेषु क्रममुक्तिरसवत्सु अरसेषु तद्रहितेषु आभोगं भोगकालपर्यन्तमेव रम्येषु भोगेषु भोगसाधनेषु स्रक्चन्दनादिषु विरक्तस्य । अतएव लोकसंग्रहार्थं क्रियमाणकर्मफलेषु प्रारब्धोपनीतभोगेषु च निराशिषः । आविरिञ्चसुखेषु वैराग्यात्तत्साधनाप्सरोविमानादिविषयेषु ऐहिकभोगेषु च विरक्तस्येति पिण्डितार्थः ॥ ४ ॥ जीर्णजाड्ये अनादिजडे नभसि अज्ञानाकाशे गलति सति । किं जले सैन्धवखण्डवद्रसावशेषेण नेत्याह—**आत्माम्भसा एकत्वं व्रजती**ति । आतपे हिमखण्डवन्निरवशेषमित्यर्थः ॥ ५ ॥ तरङ्गितास्विति द्वे नदीतृष्णयोर्द्वयोरपि विशेषणे । तृष्णापक्षे कल्लोलजलमिव लोलान्तरासु ॥ ६ ॥ खगजाले पक्षिबन्धनानाये । आखुना मूषकेण ॥ ७ ॥ कातकं कतकसंबन्धि फलं । तद्रज इति यावत् । स्वभावोऽत्र मनः ॥ ८ ॥ रागः कामः । उप आसंजयति प्रसंजयति विषयेष्वित्युपासङ्गो विषयगुणानुसंधानम् । द्वन्द्वं भार्यादिजनसाहित्यम् । उपाश्रयः पुनःपुनर्भोगलाभभूमिः । इत्येतेभ्यः प्रथमं निर्गतं पश्चान्मोहादज्ञानाद्विनिर्याति ॥ ९ ॥ विनिर्गतस्य पुनः कीदृशी स्थितिस्तां वर्णयति—**शान्ते** इत्यादिना ॥१०॥ समता समदृष्टिता ॥११॥ मूका बोधवाग्व्यवहारशून्या । क्षपापक्षे जाड्येन तुषारशैत्येन वासनापक्षे मौर्ख्येण जर्जरान्तरा । तनुत्वमपक्षयम् । उदये सूर्योदये क्षपेवेत्यन्वयः ॥ १२ ॥ दृष्टः चिद्भास्करो यया । पुण्यानि गुरुसेवाश्रवणसमाध्यभ्यासादिसुकृतान्येव पल्लवाः किसलयानि यस्यास्तथाविधा । हृदयसरसि प्रज्ञापद्मिनी विवेकपद्मिनी विलसति । द्यौर्व्योमेव ॥ १३ ॥ हृदयहारिण्यो मनोहराः सत्त्वगुणोपचयाल्लब्धाः प्रज्ञाः प्रवर्धन्ते ॥ १४ ॥ अभूतो वाय्वादिभूतचतुष्टयरहितो य आकाशकोशस्त[2]द्वदपरिच्छिन्न इत्यर्थः ॥१५॥ तस्य महाप्रभावतामाह—**विचारणे**ति । सर्गावताराद्यधिकारक्लेशदर्शनादनुकम्प्याः ॥ १६ ॥ तस्य पुनः प्रमादात्पूर्ववद्विक्षेपप्रसक्तिं वारयति—**प्रकटाकार**मिति । मृगतृष्णा तत्सलिलपानं लक्षणया ॥ १७ ॥ एवं जन्ममरणप्रसक्तिमपि वारयति—**तरङ्गवदि**ति । आयान्ति जायन्ते । प्रयान्ति म्रियन्ते । चेतसः स्वचित्तवासनावशात् ॥ १८ ॥ इतरस्मिन्नज्ञभिन्ने तत्त्वज्ञे क्रमते इति क्रमस्तथाविधो न इति ज्ञात्वेति शेषः । सम्यगालोको वस्तुतत्त्वदर्शनं यस्य स तत्त्ववित् । मायाव्याघ्रादिकौतुकदर्शनेनैव रमते सोऽज्ञस्तु निबध्यते ॥ १९ ॥ २० ॥

१ अष्टमश्लोकस्थेनेत्यर्थः. २ तद्वदपरिच्छिन्न इति पाठः.

विवेक उदिते शीते मिथ्या भ्रममरूदिता ।
क्षीयते वासना साग्रे मृगतृष्णा माराविव ॥ २१
कोऽहं कथमिदं चेति यावन्न प्रविचारितम् ।
संसाराडम्बरं तावदन्धकारोपमं स्थितम् ॥ २२
मिथ्याभ्रमभरोद्भूतं शरीरं पदमापदाम् ।
आत्मभावनया नेदं यः पश्यति स पश्यति ॥ २३
देशकालवशोत्थानि न ममेति गतभ्रमम् ।
शरीरे सुखदुःखानि यः पश्यति स पश्यति ॥ २४
अपारपर्यन्तनभो दिक्कालादिक्रियान्वितम् ।
अहमेवेति सर्वत्र यः पश्यति स पश्यति ॥ २५
वालाग्रलक्षभागाच्च कोटिशः परिकल्पितात् ।
अहं सूक्ष्म इति व्यापी यः पश्यति स पश्यति ॥ २६
आत्मानमितरच्चैव दृष्ट्वा नित्याविभिन्नया ।
सर्वं चिज्ज्योतिरेवेति यः पश्यति स पश्यति ॥ २७
सर्वशक्तिरनन्तात्मा सर्वभावान्तरस्थितः ।
अद्वितीयश्चिदित्यन्तर्यः पश्यति स पश्यति ॥ २८
आधिव्याधिभयोद्विग्नो जरामरणजन्मवान् ।
देहोऽहमिति यः प्राज्ञो न पश्यति स पश्यति ॥ २९
तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा मम ।
द्वितीयो न ममास्तीति यः पश्यति स पश्यति ॥ ३०
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
चित्तं तु नाहमेवेति यः पश्यति स पश्यति ॥ ३१
नाहं न चान्यदस्तीति ब्रह्मैवास्ति निरामयम् ।
इत्थं सदसतोर्मध्ये यः पश्यति स पश्यति ॥ ३२
यन्नाम किंचित्त्रैलोक्यं स एवावयवो मम ।
तरङ्गोऽब्धाविवेत्यन्तर्यः पश्यति स पश्यति ॥ ३३
शोच्या पाल्या मयैवेयं स्वसेयं मे कनीयसी ।
त्रिलोकी पेलवेत्युच्चैर्यः पश्यति स पश्यति ॥ ३४
आत्मतापरते त्वत्तामत्ते यस्य महात्मनः ।
भवादुपरते नूनं स पश्यति सुलोचनः ॥ ३५
चेत्यानुपातरहितं चिद्भैरवमयं वपुः ।
आपूरितजगज्जालं यः पश्यति स पश्यति ॥ ३६
सुखं दुःखं भवो भावो विवेककलनाश्च याः ।
अहमेवेति वा नूनं पश्यन्नपि न हीयते ॥ ३७
स्वात्मसत्तापरापूर्णे जगत्यंशेन वर्तिना ।
किं मे हेयं किमादेयमिति पश्यन्सुदृङ्नरः ॥ ३८
अप्रतर्क्यमनाभासं सन्मात्रमिदमित्यलम् ।
हेयोपादेयकलना यस्य क्षीणा स वै पुमान् ॥ ३९
य आकाशवदेकात्मा सर्वभावगतोऽपि सन् ।
न भावरञ्जनामेति स महात्मा महेश्वरः ॥ ४०
तमःप्रकाशकलनामुक्तः कालात्मतां गतः ।
यः सौम्यः सुसमः स्वस्थस्तं नौमि पदमागतम् ॥४१

---

साग्रे अग्रभागोदितचन्द्रसहिते प्रदोषे । 'सायें' इति वा पाठः ॥ २१ ॥ २२ ॥ कीदृशस्थित्या तर्हि निःसंसारान्धकारं पूर्णात्मानं पश्यति तामाह—**मिथ्ये**त्यादिना । नेदमिति बाधितमित्यर्थः ॥ २३ ॥ देववशोत्थान्याधिभौतिकानि कालवशोत्थान्याधिदैविकानि शरीरे उत्थान्याध्यात्मिकानि च सुखदुःखानि न ममेति यः पश्यति ॥ २४ ॥ अपारपर्यन्तं यन्नभोदिक्कालादि यच्च तत्र परिच्छिन्नमुत्पत्तिचलतादिक्रियान्वितं तत्र सर्वत्राहमेवेति यः पश्यति ॥ २५ ॥ यो व्यापी सन् कोटिशः परिकल्पिताद्वालाग्रलक्षभागात् । तुशब्दोऽप्यर्थे ॥ २६ ॥ आत्मानं स्वात्मत्वेन प्रसिद्धं जीवं इतरत्तद्दृश्यं च सर्वं चिज्ज्योतिरिति तेन नित्यमविभिन्नया दृष्ट्या यः पश्यतीत्यर्थः ॥ २७ ॥ २८ ॥ ॥ २९ ॥ महिमा विस्तारः ॥ ३० ॥ चिदेव तन्तुस्तेन प्रोते सर्वमहमेवेति वा चित्तमन्तःकरणं तु नाहमेवेति वा ॥ ३१ ॥ अहमेवेति पश्यतीत्युक्ते चित्परित्यागेन अहंकार एव परिगृहीतो माभूदिति सहाहंकारेण जगत्प्रतिषेधेन चिदेकरसं ब्रह्मैव परिशेष्य द्रष्टव्यमित्याह—**नाह**मिति । सतो वर्तमानस्यासतोऽतीतस्य भविष्यतश्च मध्ये । सतो व्यक्तस्यासतोऽव्यक्तस्येति वा ॥३२॥ **अवयव** इति । 'पादोऽस्य सर्वा भूतानि' इति श्रुतेः 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति [illegible]

॥ ३३ ॥ स्वतः सत्ताशून्यत्वेन मृतप्रायत्वाच्छोच्या । अतएव स्वसत्तास्फूर्त्यर्पणेन पाल्या । स्वसा अनुजा कनीयसो अल्पा । 'युवाल्पयोः कनन्यतरस्याम्' इति कनादेशः । दृष्टिमात्रेणापि पीड्यमानत्वात्पेलवा ॥ ३४ ॥ भवः सांसारिकदेहादिस्तस्मादुपरते विवेकबाधाभ्यां निवृत्ते ॥ ३५ ॥ चेत्यानुपातो दृश्यसंवलनं तद्रहितम् । अतएव निष्प्रत्यूहस्वभावस्फूर्त्या आपूरितं प्रभया तम इव सर्वतो व्याप्तं जगज्जालं येन ॥ ३६ ॥ भवः अधिकारिदेहस्तत्र भावो गुरुदैवतशास्त्रादिश्रद्धा तत्र नित्यानित्यादिविवेकस्तेन कलनाः श्रवणादिक्रमेणात्मपरिचयतारतम्यभेदाश्च सर्वं अहमेवेति यः पश्यति ॥ ३७ ॥ आत्मसत्तयैव परया निरतिशयानन्दघनया आपूर्णे ब्रह्मादिस्तम्बपर्यन्ते आनन्दलवार्पणेन तर्पिते जगति अंशेनैकदेशेन वर्तिना ऐहिकपारलौकिकभोग्यवस्तुना मे किं दुःखमस्ति यद्धेयं किंवान्यत्सुखमस्ति यदुपादेयमिति पश्यन्सुदृक् अभ्रान्तदृष्टिरित्यर्थः ॥३८॥ अप्रतर्क्यं तर्कागम्यम् । अनाभासं वृत्तिभेदप्रतिफलनरहितं निर्विक्षेपमिति यावत् ॥ ३९ ॥ महानीश्वरो निरतिशयस्वानन्दोपभोगसमर्थः शिव इत्यर्थः ॥ ४० ॥ तमः सुषुप्तिः प्रकाशो जागरः कलना स्वप्नस्तैर्मुक्तः । कालस्य मृत्योरप्यात्मतां निरति[illegible]पदतां गतः । स्वस्थस्तुरीयावस्थाप्रतिष्ठो यस्तम्

यस्योदयास्तमयसंकलनाकलासु
चित्रासु चारुविभवासु जगद्गतासु ।
वृत्तिः सदैव सकलैकमतेरनन्ता
तस्मै नमः परमबोधवते शिवाय ॥ ४२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे अनुत्तमपदविश्रान्तिवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥

## त्रयोविंशः सर्गः २३

श्रीवसिष्ठ उवाच ।

य उत्तमपदालम्बी चक्रभ्रमवदास्थितः ।
शरीरनगरीराज्यं कुर्वन्नपि न लिप्यते ॥ १
तस्येयं भोगमोक्षार्थं तज्ज्ञस्योपवनोपमा ।
सुखायैव न दुःखाय स्वशरीरमहापुरी ॥ २

श्रीराम उवाच ।

नगरीत्वं शरीरस्य कथं नाम महामुने ।
एतां चाधिवसन्योगी कथं राजसुखैकभाक् ॥ ३

श्रीवसिष्ठ उवाच ।

रम्येयं देहनगरी राम सर्वगुणान्विता ।
अस्यानन्तविलासाढ्या स्वालोकार्कप्रकाशिता ॥ ४
नेत्रवातायनोद्द्योतप्रकाशभुवनान्तरा ।
करप्रतोलीनिस्तारप्राप्तपादोपजाङ्गला ॥ ५
रोमराजीलतागुल्मा त्वचाजालकमालिता ।
गुल्फाङ्गुल्यां प्रविश्रान्तजङ्घोरुस्तम्भमण्डला ॥ ६
रेखाविभक्तपादाग्रशिलाप्रथमनिर्मिता ।
चर्ममर्मशिरासारसंधिसीमामनोरमा ॥ ७
उरूरुतनुभागाग्रनिर्मितोपस्थनिम्नगा ।
कचत्केशावलीकाचदलप्रस्थवनावृता ॥ ८
भ्रूललाटोष्ठसच्छायवदनोद्यानशोभिता ।
दृष्टिपातोत्पलाकीर्णकपोलविपुलस्थली ॥ ९
वक्षःस्थलसरःस्यूतकुचपङ्कजकोरका ।
घनरोमावलीच्छन्नस्कन्धक्रीडाशिलोच्चया ॥ १०
उदरश्वभ्रनिक्षिप्तस्वान्नेष्टा भक्ष्यतत्परा ।
दीर्घकण्ठबिलोद्गीर्णवातसंरम्भशब्दिता ॥ ११
हृदयापणनिर्णीतयथाप्राप्तार्थभूषिता ।
अनारतनवद्वारप्रवहत्प्राणनागरा ॥ १२
आस्यस्फारवदादृष्टदन्तास्थिशकलाकुला ।

॥ ४१ ॥ सकलेऽपि जगत्येकं ब्रह्मेति मतिर्यस्य । जगद्गतासु चित्रासूदयः सर्गोऽस्तमयः प्रलयः संकलना स्थितिस्तल्लक्षणासु वृत्तिर्ब्रह्माकारदृष्टिरनन्ता अपरिच्छिन्ना । तस्मै परमबोधवते जीवन्मुक्तविग्रहाय साक्षाच्छिवाय नम इत्यर्थः ॥ ४२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे अनुत्तमपदविश्रान्तिवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥

शरीरनगरे राज्यं प्रबुद्धस्यात्र वर्ण्यते ।
विनोदोसक्तसद्भोगैर्मनोजयसुखोदयः ॥ १ ॥

जीवन्मुक्तस्य शरीरनगरीराज्यं वर्णयिष्यन् रामस्य तज्जिज्ञासां प्रश्नप्रयोजिकामुत्थापयति—शरीरेति । निवृत्ते घटोत्पादनप्रयोजने यावद्वेगं कुलालचक्रभ्रमवद्यावत्प्रारब्धक्षयं देहधारणव्यवहारमास्थितो जीवन्मुक्त इत्यर्थः । न लिप्यते सत्यत्वाभिमानाभावादिति भावः ॥ १ ॥ क्रीडाविनोदहेतुत्वादुपवनोपमा ॥ २ ॥ एतां त्वदुक्तां शरीरनगरीमधिवसन्नधिष्ठाय पालयन् । एकपदस्वारस्यात्सुखमेव भजते नतु राजान इव तद्दुःखलेशमपीत्यर्थः ॥ ३ ॥ स्वालोक आत्मज्योतिः स एवार्कः ॥ ४ ॥ नेत्रे एव वातायने तत्रस्थाभ्यामुद्द्योताभ्यामिन्द्रियप्रदीपाभ्यां प्रकाशन्ते इति प्रकाशानि भुवनान्तराणि यस्याम् । करावेव प्रतोल्यौ रथ्ये तद्विस्तारेण प्राप्तं जानुपर्यन्ततालक्षणं पादोपजाङ्गलं यस्याः ॥ ५ ॥ त्वचागतैः शिराजालकैर्मालिता । गुल्फौ पादजङ्घासंधिग्रन्थी ताभ्यां पार्ष्णिर्लक्ष्यते तत्सहितायामङ्गुल्याम् । जाताविकवचनम् ॥ ६ ॥ पादाग्रपदेनात्र पादाधस्तनी कठिना त्वगुच्यते, सैव स्तम्भमूल[illegible] । रेखाविभक्तया नानालक्षणया तया प्रथमनिर्मिता । प्रथमाधारनिर्माणेन निर्मितेत्यर्थः । बहिश्चर्म अन्तर्मर्माणि सीमानः मध्ये मध्ये शिराणां साराः शाखाप्ररोहाः सीमानः अस्थिषु तु संधयः सीमानः, ताभिर्मनोरमा ॥ ७ ॥ उर्वोः ऊर्वोस्तनोर्मध्यकायस्य च यः संधिभागस्तस्याग्रे पुरोभागे निर्मिता उपस्थेन्द्रियरूपा निम्नगा नगरमध्यनदी यस्याः । कचन्ती केशावल्येव काचवन्नीलानि दलानि येषु तथाविधैः क्रीडाशैलप्रायशिरःप्रस्थेन श्मश्रुकक्षादिरोमवनैश्चावृता ॥ ८ ॥ नीलच्छदसदृशाभ्यां भ्रूभ्यां पाण्डुनवच्छदसदृशेन ललाटेन पुष्पसदृशाभ्यामोष्ठाभ्यां च सच्छायं कान्तिमद्यद्वदनलक्षणमुद्यानं कदलीवनं तेन शोभिता । दृष्टिपाताः कटाक्षास्तल्लक्षणैरुत्पलैराकीर्णौ यौ कपोलौ तल्लक्षणे विहारस्थल्यौ यत्र ॥ ९ ॥ स्कन्धावेव क्रीडाशिलोच्चयौ यस्याम् ॥ १० ॥ उदरलक्षणे कोशागारश्वभ्रे निक्षिप्तानि यानि स्वप्रारब्धप्रापितान्यन्नानि तान्येव स्वानि धनानि अन्नानि धान्यादीनीष्टानि प्रियाणि वसनाभरणादीनि च यस्याम् । भक्ष्यमनिषिद्धविषयोपभोगं तन्वन्तीति भक्ष्यततो रसनश्रोत्रादयः पराः शिरःसौधवातायनोपविष्टनागरस्थानीया यस्याम् । दीर्घमूर्ध्वमुखं यत्कण्ठबिलं तद्द्वारा उद्गीर्णो यः प्राणवातस्तत्कृतेन संरम्भेण कण्ठद्वारकपाटोद्घाटनेन शब्दिता ॥ ११ ॥ हृदयापणशब्देन तत्स्था विचारलक्षणा रत्नादिपरीक्षकजना गृह्यन्ते । तैर्निर्णीताः परीक्ष्य गृहीताश्चक्षुरादिद्वारा यथायोग्यं प्राप्ता ये शब्दाद्यर्थास्तैर्वासनारूपैः पण्यैर्भूषिता ॥ १२ ॥ आस्ये स्फारवत् द्वारभक्तिरचना गजदन्तविभागवीथदृष्टैर्दन्त-

मुखास्पदाभ्रमजिह्वाचण्डीचर्वितभोजना ॥ १३
रोमशष्पतरच्छन्ना कर्णकोटरकूपका ।
स्फिक्शृङ्खलास्थितोपान्तपृष्ठविस्तीर्णजङ्गला ॥ १४
गुदोत्थानारघट्टान्तप्रद्रुतानन्तकर्दमा ।
चित्तोद्यानमहीवल्गदात्मचिन्तावराङ्गना ॥ १५
धीवरत्राद्दढाबद्धचपलेन्द्रियमर्कटा ।
वदनोद्यानहसनपुष्पोद्गममनोरमा ॥ १६
स्वशरीरमनोज्ञस्य सर्वसौभाग्यसुन्दरी ।
सुखायैव न दुःखाय परमाय हिताय च ॥ १७
अज्ञस्येयमनन्तानां दुःखानां कोशमालिका ।
ज्ञस्य त्वियमनन्तानां सुखानां कोशमालिका ॥ १८
किंचिदस्यां प्रनष्टायां ज्ञस्य नष्टमरिन्दम ।
स्थितायां संस्थितं सर्वं तेनेयं ज्ञसुखावहा ॥ १९
यदेनां ज्ञः समारुह्य संसारे विहरत्यलम् ।
अशेषभोगमोक्षार्थं तेनेयं ज्ञरथः स्मृतः ॥ २०
शब्दरूपरसस्पर्शगन्धबन्धुश्रियो यतः ।
अनयैव हि लभ्यन्ते तेनेयं ज्ञस्य लाभदा ॥ २१
सुखदुःखक्रियाजालं यदेषोद्वहति स्वयम् ।
तदेषा राम सर्वज्ञसर्ववस्तुभरक्षमा ॥ २२
तस्यां शरीरपुर्यां हि राज्यं कुर्वन्गतज्वरः ।
ज्ञस्तिष्ठति गतव्यग्रः स्वपुर्यामिव वासवः ॥ २३
न क्षिपत्यवटाटोपे मनोमत्ततुरङ्गमम् ।
न लोभदुर्द्रुमादाय प्रज्ञापुत्रीं प्रयच्छति ॥ २४
अज्ञानपरराष्ट्रं च न रन्ध्रं त्वस्य पश्यति ।
संसाराभयस्यान्तर्मूलान्येव निकृन्तति ॥ २५
तृष्णासारपरावर्ते कामसंभोगदुर्ग्रहे ।
न निमज्जति पर्यस्तः सुखदुःखप्रदेवने ॥ २६
करोत्यविरतं स्नानं बहिरन्तरवीक्षणात् ।
सरित्संगमतीर्थेषु मनोरथगतः क्रमात् ॥ २७
सकलाक्षजनादृश्यसुखप्रेक्षापराङ्मुखः ।
ध्याननाम्नि सुखं नित्यं तिष्ठत्यन्तःपुरान्तरे ॥ २८
सुखावहैषा नगरी नित्यं वै विदितात्मनः ।
भोगमोक्षप्रदा चैषा शक्रस्येवामरावती ॥ २९
स्थितया संस्थितं सर्वं किंचिन्नष्टं न नष्टया ।
यया पुर्या महीयस्या सा कथं न सुखावहा ॥ ३०
विनष्टे देहनगरे ज्ञस्य नष्टं न किंचन ।
आक्रान्तकुम्भाकाशस्य खस्य कुम्भक्षये यथा ॥ ३१
विद्यमानं घटं वायुः किंचित्स्पृशति नास्थितम् ।
यथा तथैव देही स्वां शरीरनगरीमिमाम् ॥ ३२
अत्रस्थः पुरुषो भोगानात्मा सर्वगतोऽपि सन् ।
विश्वकल्पकृतान्भुक्त्वा पुंसामधिगतार्थभाक् ॥ ३३
कुर्वन्नपि न कुर्वाणः समस्तार्थक्रियोन्मुखः ।
कदाचित्प्रकृतान्सर्वान्कार्यार्थाननुतिष्ठति ॥ ३४

लक्षणैरस्थिशकलैराकुला । मुखास्पदया आसमन्ताद्भ्रमन्त्या जिह्वालक्षणया चण्ड्या काल्या चर्वितानि आस्वादितानि भोजनानि चतुर्विधान्यन्नानि यस्याम् ॥ १३ ॥ रोमलक्षणैः शष्पतरैर्दीर्घतृणैश्छन्ना ॥१४॥गुदादुत्थानमुद्गमो यस्य मलस्य तदेव मूत्रस्थानलक्षणस्य आरघट्टस्य घटीयन्त्रस्यान्ते प्रान्ते प्रद्रुतः प्रवहन्ननन्तो दूरतः कर्दमो यस्याम् । चित्तलक्षणायामुद्यानमह्यां वल्गन्ती सदाक्रीडमाना आत्मचिन्तालक्षणा वराङ्गना पुरस्वामिनी यस्याम्॥१५॥धीरेव वरत्रा चर्मरज्जुस्तया दृढा बद्धाश्चपलेन्द्रियमर्कटा यस्याम् । वदनोद्याने हसनमेव पुष्पोद्गमस्तेन मनोरमा ॥ १६ ॥ स्वशरीरमनसी जानातीति स्वशरीरमनोज्ञस्तत्त्ववित्तस्य सुखायैव परमहितमुपदेशादिना परोद्धारस्तस्मै च ॥ १७ ॥ १८ ॥ ज्ञस्यानन्तसुखायेति यदुक्तं तद्दर्शयति—किंचिदिति । किंचिदल्पं तुच्छमेव नष्टं न सत्यवस्त्वित्यर्थः । सर्वं भोगमोक्षसुखम् ॥१९॥ ज्ञस्य रथ इव रथः ॥ २० ॥ २१ ॥ सर्वं पूर्णमात्मानं जानातीति सर्वज्ञस्तत्त्ववित्तस्य सर्वेषां भोगमोक्षोपायवस्तूनां भरणं भरः संग्रहस्तत्क्षमा ॥ २२ ॥ व्यग्रशब्दो भावप्रधानः । तथाच गतव्यग्रः स्वस्थ इत्यर्थः ॥ २३ ॥ अवटे योनिगर्ते आटोपः पराक्रमो यस्य कामस्य तद्विषये । न क्षिपति न प्रेरयति । लोभ एव दुर्दुर्विषवृक्षस्तमादाय शुल्कत्वेन गृहीत्वा प्रज्ञालक्षणां पुत्रीं कन्यां मोहाधर्मादिदौष्कुलेयेभ्यो न प्रयच्छति । अथवा दुर्द्रुमशब्देन तत्फलं लक्ष्यते । लोभलक्षणदुर्द्रुमफलमत्ति अशुभमतीति लोभदुर्द्रुमादः अधार्मिकजनस्तस्मै प्रज्ञां विवेकवती बुद्धिस्तल्लक्षणां पुत्रीं न प्रयच्छति । तेषु स्वप्रज्ञां गूहमानश्चरतीत्यर्थः ॥ २४ ॥ संसारलक्षणारिभयस्य मूलानि स्नेहास्तानि निकृन्तति ॥ २५ ॥ तृष्णानद्याः सरणं सारः प्रवाहस्तस्य महत्यावर्ते कामसंभोगलक्षणदुष्टग्राहवति अन्तर्मुखत्वात्पर्यस्तो बहिर्मुखः सन् न निमज्जति । सुखलवलक्षणैर्दुःखैः प्रदेवने परिदेवनसाधने ॥ २६ ॥ बहिरन्तश्च अस्य वासुदेवस्य परमात्मन ईक्षणादाधिभौतिकेष्वाध्यात्मिकेषु च सरित्संगमतीर्थेषु अविरतं सार्वकालिकं स्नानं करोति । तथाचाहुर्वृद्धाः—'स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्ताऽवनिर्यज्ञानां च कृतं सहस्रमयुतं देवाश्च संपूजिताः । संसाराच्च समुद्धृताः स्वपितरः सर्वस्य पूज्यो ह्यसौ यस्य ब्रह्मविचारणे क्षणमपि प्राप्नोति धैर्यं मनः ॥' इति । मनोरथोऽत्र मानसब्रह्माकारवृत्तिस्तद्गतस्तदारूढः ॥ २७ ॥ सकलैरक्षलक्षणैर्जनैरादृश्येषु आपातदृश्येषु विषयेषु सुखानां प्रेक्षायां पराङ्मुखः ॥ २८ ॥ २९ ॥ ३० ॥ आक्रान्तः स्वसात्कृतः कुम्भाकाशो येन तस्य खस्य ॥ ३१ ॥ यस्य स्थितिदशायामपि न सम्यक् स्पर्शस्तस्य नाशे स्पर्शो नेति किं वाच्यमिति दृष्टान्तेनाह—विद्यमानमिति ॥३२॥ अत्रास्यां शरीरनगर्यां तिष्ठतीत्यत्रस्थ आत्मा तत्त्ववित् विश्वकल्पनं विश्वकल्पस्तत्कृतान्प्रारब्धभोगान्भुक्त्वा अधिगतं प्राक्साक्षात्कृतं पूर्णं स्वात्मरूपमर्थं परमपुरुषार्थं मोक्षं भजत इत्यधिगतार्थभाग्भवतीति शेषः ॥ ३३ ॥ व्यवहारदशा कुर्वन्नपि

कदाचिल्लीलया लोलं विमानमधिरोहति ।
अनाहतगतिः कान्तं विहर्तुममलं मनः ॥ ३५
तत्रस्थो लोकसुन्दर्या सततं शीतलाङ्गया ।
रमते रामया मैत्र्या नित्यं हृदयसंस्थितः ॥ ३६
द्वे कान्ते तिष्ठतः सम्यक् पार्श्वयोः सत्यतैकते ।
इन्दोरिव विशाखे द्वे समाह्लादितचेतसी ॥ ३७
क्षपितानखिलाँल्लोकान्दुःखक्रकचदारितान् ।
वल्लीवनस्थान्नभसः पृष्ठादर्क इवेक्षते ॥ ३८
चिरं पूरितसर्वाशः सर्वसंपत्तिसुन्दरः ।
अपुनःखण्डनायेन्दुः पूर्णाङ्ग इव राजते ॥ ३९
सेव्यमानोऽपि भोगौघो न खेदायास्य जायते ।
कालकूटः किलेशस्य कण्ठे प्रत्युत राजते ॥ ४०
परिज्ञातोपभुक्तो हि भोगो भवति तुष्टये ।
विज्ञाय सेवितो मैत्रीमेति चोरो न शत्रुताम् ॥ ४१
नरनारीनटौघानां[1] विरहे दूरगामिनाम् ।
ज्ञेन यात्रेव सुभगा भोगश्रीरवलोक्यते ॥ ४२
अशङ्कितोपसंप्राप्ता ग्रामयात्रा यथाध्वगैः ।
प्रेक्ष्यन्ते तद्वदेव ज्ञैर्व्यवहारमयाः क्रियाः ॥ ४३
अयत्नोपनतेऽप्यक्षि पदार्थेषु यथा पुनः ।
नीरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ ४४

इन्द्रियाणां न हरति प्राप्तमर्थं कदाचन ।
नाददाति तथाऽप्राप्तं संपूर्णो ज्ञोऽवतिष्ठते ॥ ४५
अप्राप्तचिन्ताः संप्राप्तसमुपेक्षाश्च सन्मतिम् ।
न कम्पयन्ति तरलाः पिच्छाघाता इवाचलम् ॥ ४६
संशान्तसर्वसंदेहो गलिताखिलकौतुकः ।
संक्षीणकल्पनादेहो ज्ञः सम्राडिव राजते ॥ ४७
आत्मन्येव न मात्यन्तः स्वात्मनात्मनि जृम्भते ।
संपूर्णोऽपारपर्यन्तः क्षीरार्णव इवार्णवे ॥ ४८
भोगेच्छाकृपणाञ्जन्तून्दीनान्दीनेन्द्रियाणि च ।
अनुन्मत्तमनाः शान्तो हसत्युन्मत्तकानिव ॥ ४९
इच्छतोऽन्योज्झितां जायां यथैवान्येन हस्यते ।
इन्द्रियस्येच्छतो भोगं तद्वज्ज्ञेन विहस्यते ॥ ५०
त्यजत्स्वात्मसुखं सौख्यं मनो विषयविद्रुतम् ।
अङ्कुशेनेव नागेन्द्रं विचारेण वशं नयेत् ॥ ५१
भोगेषु प्रसरो यस्या मनोवृत्तेश्च दीयते ।
साप्यादावेव हन्तव्या विषस्येवाङ्कुरोद्गतिः ॥ ५२
ताडितस्य हि यः पश्चात्संमानः सोऽप्यनन्तकः ।
शालेर्ग्रीष्माभितप्तस्य कुसेकोऽप्यमृतायते ॥ ५३
अनार्तेन हि सन्मानो बहुमानो न बुध्यते ।
पूर्णानां सरितां प्रावृट्पूरः स्वल्पो न राजते ॥ ५४

---

परमार्थदृशा न कुर्वाणः ॥ ३४ ॥ तस्य देहनगर्यां कान्तादिभोगफलान्याह—**कदाचिदि**ति । विमानं विमानतुल्यं हृत्पुण्डरीकम् । कान्तं भोगकौतुकवन्मनो विहर्तुं विनोदयितुम् ॥ ३५ ॥ तत्रस्थः पूर्ववत् । मैत्र्या मैत्रीलक्षणया । रामया प्रियया ॥ ३६ ॥ ३७ ॥ स्वर्गिणो नारकिदुःखदर्शितामिव तस्याज्ञजनदुःखदर्शितामाह—**क्षपितानि**ति । वल्लीभिर्वनमिव परस्परं संवेष्ट्य स्थितान् । नभसः पृष्ठे स्थितोऽर्क इवेति दृष्टान्तात्तत्त्वविदोऽपि संसारवनविप्रकर्षो गम्यते ॥ ३८ ॥ आशा दिशो मनोरथाश्च । सर्वाः संपत्तयस्ताभिः सर्वात्मभावसंपत्त्या च सुन्दरः । अपुनःखण्डनाय पुनःक्षयाभावाय ॥ ३९ ॥ भोगौघः स्रक्चन्दनादिभोगौघः । खेदाय पुनर्जन्मादिदुःखाय । अथवा भोगौघो दुष्प्रारब्धः भोगौघः खेदाय तात्कालिकदुःखाय । **प्रत्युते**ति । तत्त्वविदोऽपि तपआदिक्लेशः प्रत्युताज्ञजनशिक्षामहाफलो राजते इति भावः ॥ ४० ॥ परिज्ञाय भोगे प्रत्युत तस्य सुखहेतुतैवेत्याशयेनाह—**परिज्ञाते**ति ॥ ४१ ॥ तत्कुतस्तत्राह—**नरे**ति । विरहे समाजविघटने दूरगमनशीलानां समाजमिलितनरनारीनटौघानां यात्रा समाज इव । भोगश्रीर्भोग्यपुत्रधनादिश्रीः ॥४२॥ ॥ ४३ ॥ यथा अक्षि चक्षुरयत्नोपनते यत्नाविरचिते पर्वतवनपुष्करिण्यादौ तद्गततरुगुल्मतामरसादिपदार्थेषु ममत्वाभिमानाभावाच्छेदभेदापहारादिदर्शनेऽपि दुःखादर्शनान्नीरागमेव पतति तद्वद्धीरस्य विदुषो धीः स्वपुत्रमित्रादिव्यवहारकार्येष्वपि नीरागमेव पततीत्यर्थः ॥ ४४ ॥ कथं तर्हि प्रवर्तते तदाह—**इन्द्रियाणा**मिति । प्राप्तं प्रारब्धोपस्थापितमर्थं विषयं न हरति न वारयति । अप्राप्तं च यत्नपूर्वकं नाददाति न संपादयति । यथाप्राप्तोपयोगेन जीवतीत्यर्थः ॥ ४५ ॥ तत्कुतस्तत्राह—**अप्राप्ते**ति । यतः अप्राप्तचिन्ताः प्राप्तोपेक्षाः पश्चात्तापाश्च तं न कम्पयन्ति न तरलीकुर्वन्त्यज्ञमिवेत्यर्थः । पिच्छाघाता मयूरबर्हघाताः ॥ ४६ ॥ सर्वसंदेहकारणाज्ञाननाशादेव संशान्तसर्वसंदेहः । सर्वभोगेषु मिथ्यात्वदर्शनाद्गलिताखिलकौतुकः । संक्षीणौ तदुभयकल्पनाहेतू स्थूलसूक्ष्मदेहौ यस्येति हेतुगर्भं विशेषणम् । सम्राट् राजसूयफलं स्वाराज्यपदं प्राप्तवानिव । 'स स्वराड्भवति' इति श्रुतेः ॥ ४७ ॥ पामरदृशा स्वाराज्यदृष्टान्तस्तत्त्वदृशा तु नास्ति दृष्टान्तः परिच्छेदाभावादित्याशयेनाह—**आत्मन्येवे**ति । अर्णवे स्वात्मनीत्यर्थः ॥ ४८ ॥ अनुन्मत्तमनाः प्रशान्तचित्तः संभोगेच्छाकृपणान् जन्तून् दीनानि स्वपरेन्द्रियाणि च उन्मत्तकानिव हसति ॥ ४९ ॥ तत्त्वविदोज्झितं भोगमिच्छत इन्द्रियस्य । हस्यते प्रवृत्तिरित्युभयत्र शेषः ॥ ५० ॥ ननु मन्दज्ञानेन पुरुषेण विषयेषु द्रुतं मनः कथं निग्राह्यं तत्राह—**त्यजदि**ति ॥ ५१ ॥ दीयते यया भोगतृष्णयेति शेषः ॥ ५२ ॥ ननु निग्रहपीडितं[3] मनो रुष्टो बाल इव स्वात्मन्यपि न रज्येतेति चेत्तत्राह—**ताडितस्ये**ति । चिरोन्मादलालितस्य सकृन्निग्रहे पुनः परित्यागे हि तथा स्याच्चिरनिग्रहेण निराशतां नीतस्य तु न तथेति भावः । कुसेकोऽपीत्यपिशब्दात्सुसेके किं वाच्यमिति गम्यते ॥ ५३ ॥ उक्तमेव भावं प्रकाशयति—**अनार्तेने**ति ।

---

१ नदौघानां इति पाठः. २ जीवभाव भोगः.

३ सकृन्निग्रहपीडितं इति पाठः.

पूर्णस्तु प्राकृतोऽप्यन्यत्पुनरप्यभिवाञ्छते ।
जगत्पूरणयोग्यास्वपि यृहलात्येवार्णवो जलम् ॥ ५५
मनसोऽभिगृहीतस्य या पश्चाद्भोगमण्डना ।
तामेवालब्धविस्तारां क्लिष्टत्वाद्बहु मन्यते ॥ ५६
बन्धमुक्तो महीपालो ग्रासमात्रेण तुष्यति ।
परैरबद्धो नाक्रान्तो न राज्यं बहु मन्यते ॥ ५७
हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च ।
अङ्गान्यङ्गैरिवाक्रम्य जयेच्चेन्द्रियशात्रवान् ॥ ५८
जेतुमन्यं कृतोत्साहैः पुरुषैरिह पण्डितैः ।
पूर्वं हृदयशत्रुत्वाज्जेतव्यानीन्द्रियाण्यलम् ॥ ५९
एतावति धरणितले
सुभगास्ते साधुचेतनाः पुरुषाः ।
पुरुषकलासु च गण्या
न जिता ये चेतसा स्वेन ॥ ६०
हृदयबिले कृतकुण्डल-
कलनाविवशो मनोमहाभुजगः ।
यस्योपशान्तिमागत-
मलमुदितं तं मुनिर्मलं वन्दे ॥ ६१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे शरीरनगरविभूतियोगो नाम त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः २४

श्रीवसिष्ठ उवाच ।

महानरकसाम्राज्ये मत्तदुष्कृतवारणाः ।
आशाशरशलाकाढ्या दुर्जया हीन्द्रियारयः ॥ १
स्वाश्रयं प्रथमं देहं कृतघ्ना नाशयन्ति ये ।
ते कुकार्यमहाकोशा दुर्जयाः स्वेन्द्रियारयः ॥ २
कलेवरालयं प्राप्य विषयामिषगृध्नुकाः ।
अक्षगृध्रा विवल्गन्ति कार्याकार्योग्रपक्षिणः ॥ ३
विवेकतन्तुजालेन गृहीता येन ते शठाः ।
तस्याङ्गानि न लुम्पन्ति पाशा नागबलं यथा ॥ ४
आपातरमणीयेषु रमते विषयेषु यः ।
विवेकधनवानस्मिन्कुकलेवरपत्तने ॥ ५
इन्द्रियारिभिरन्तस्थैरवशो नाभिभूयते ।
न तथा सुखिता भूपा मृन्मयोग्रपुरीजुषः ॥ ६
यथा स्वाधीनमनसः स्वशरीरपुरीश्वराः ।
आक्रान्तेन्द्रियभृत्यस्य सुगृहीतमनोरिपोः ॥ ७
वसन्त इव मञ्जर्यो वर्धन्ते शुद्धबुद्धयः ।
प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ॥ ८
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ।
तावन्निशीथवेताला वल्गन्ति हृदि वासनाः ॥ ९
एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ।
भृत्योऽभिमतकर्तृत्वान्मन्त्री सत्कार्यकारणात् ॥ १०

॥ ५४ ॥ ॥ ५५ ॥ अभिगृहीतस्य सर्वतो निगृहीतस्य । भोगमण्डनाभिक्षाशनाद्यल्पविषयार्पणेन लालनम् । लब्धविस्तारात्प्राक्तनभोगाद्बहु अधिकं मन्यते ॥ ५६ ॥ उक्तेऽर्थे दृष्टान्तमाह—**बन्धमुक्त** इति ॥ ५७ ॥ तस्माच्चिरनिग्रहेण बोधेन च समूलमनोजयाय प्रथममिन्द्रियजय एव सर्वप्रयत्नैः कार्य इत्याह—**हस्त**मिति ॥ ५८ ॥ न मनोजयार्थमेव बाह्यशत्रुजयार्थमपीन्द्रियजय आवश्यक इत्याह—**जेतु**मिति ॥ ५९ ॥ इन्द्रियनिग्रहफलं मनोजयमाश्रयप्रशंसावन्दनाभ्यां प्रशंसति—**एतावती**ति द्वाभ्याम्। ये चेतो जयन्ति त एव चेतसा न जितास्त एव सुभगाः पुरुषाणां कलासु स्वबन्धमोक्षकौशलेषु गण्या इत्यर्थः ॥ ६० ॥ हृदयबिले कृतया कुण्डलकलनया विवशो गर्वपरवशो महाभुजगो मनो यस्य उपशान्तिमात्यन्तिकनाशमागतं महामुनिं अलं स्वेन रूपेणोदितमाविर्भूतं सुनिर्मलं तं तत्त्वविदं वन्दे इत्यर्थः ॥ ६१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे शरीरनगरविभूतियोगो नाम त्रयोविंशः सर्गः ॥ २३ ॥

इह प्राबल्यमक्षाणां जयोपायश्च वर्ण्यते ।
तेन प्रसादबोधाभ्यां वासनाक्षय ईर्यते ॥ १ ॥

तत्रेन्द्रियजये उपायप्रयत्नाधिक्यं विधित्सुरिन्द्रियाणां दुर्जयतामाह—**महानरके**ति । तपनाऽवीचिमहारौरवरौरवसंघातकालसूत्रसंज्ञकमहानरकभेदलक्षणे साम्राज्ये प्रत्येकमभिषिक्ता इति शेषः । मत्ता दुष्कृतान्येव वारणा गजा येषाम् । आशास्तृष्णास्ता एव शरशलाकास्ताभिराढ्याः ॥ १ ॥ कुकार्याणि पापानि तान्येव महान्तः कोशा धनसंचया येषाम् ॥ २ ॥ कलेवरलक्षणमालयं कुलायम् । विषयलक्षणेष्वामिषेषु गृध्नुका अभिकाङ्क्षिणः । अक्षीणीन्द्रियाण्येव गृध्राः । कार्यं कर्तुं योग्यमनिषिद्धं कर्म, अकार्यं निषिद्धं कर्म ते एवोग्रपक्षौ ताभ्यामुग्रपक्षिणः ॥ ३ ॥ शठा धूर्तास्ते इन्द्रियारयो येन गृहीता निगृहीतास्तस्य पुंसोऽङ्गानि शान्त्यादीनि न लुम्पन्ति । नागबलं गजघटाम् ॥ ४ ॥ तानरीन् जेतुं प्रथमं विवेकधनसंचयः कार्य इत्याशयेनाह—**आपाते**ति ॥ ५ ॥ मृन्मयोग्रत्वाभ्यां पुरीविशेषणं स्वशरीरपुर्यास्तद्विलक्षणत्वेनोत्कर्षप्रतिपादनार्थम् ॥ ६ ॥ इन्द्रियादिनिग्रहस्य फलान्याह—**आक्रान्ते**त्यादिना ॥ ७ ॥ ८ ॥ निशीथपदेनाज्ञानान्धकारो गम्यते ॥ ९ ॥ स्वदेहनगरीसाम्राज्ये

१ तामेव लब्धविस्तारात् इति टीकानुगुणः पाठः क्वचित् ।

सामन्तश्चेन्द्रियाक्रान्तेर्मनो मन्ये विवेकिनः।
लालनात्स्निग्धललना पालनात्पावनः पिता ॥ ११
सुहृदुत्तमविश्वासान्मनो मन्ये मनीषिणाम्।
स्वालोकितः शास्त्रदृशा बुद्ध्यान्तः स्वानुभावितः॥१२
प्रयच्छति परां सिद्धिं त्यक्त्वात्मानं मनःपिता।
सुदृष्टः सुपरामृष्टः सुदृढः सुप्रबोधितः ॥ १३
सुगुणे योजितो भाति हृदि हृद्यो मनोमणिः।
जन्मवृक्षकुठाराणि तथोदर्कोदयानि च ॥ १४
दिशत्येवं मनोमन्त्री कर्माणि शुभकर्मणि।
एवं मनोमणिं राम बहुपङ्ककलङ्कितम् ॥ १५
विवेकवारिणा सिद्ध्यै प्रक्षाल्यालोकवान्भव।
भवभूमिषु भीमासु विवेकविकलो वसन् ॥ १६
मा पतोत्पातपूर्णासु विवशः प्राकृतो यथा।
संसारमायामुदितामनर्थशतसंकुलाम् ॥ १७
मा महामोहमिहिकामिमां त्वमवधीरय।
विवेकं परमाश्रित्य बुद्ध्या सत्यमवेक्ष्य च ॥ १८
इन्द्रियारीनलं जित्वा तीर्णो भव भवार्णवात्।
असत्येव शरीरेऽस्मिन्सुखदुःखेष्वसत्सु च ॥ १९
दामव्यालकटन्यायो मा ते भवतु राघव।
भीमभासदृढस्थित्या त्वं यास्यसि विशोकताम् ॥ २०
अयमहमिति निश्चयो वृथा य-
स्तमलमपास्य महामते स्वबुद्ध्या।
यदितरदवलम्ब्य तत्पदं त्वं
व्रज पिब भुङ्क्ष्व न बध्यसे मनस्कः ॥ २१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे मनस्यसत्ताप्रतिपादनं नाम चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः २५

श्रीवसिष्ठ उवाच।
अस्मिन्विहरतो लोके लोकारामस्य धीमतः।
श्रेयसे तिष्ठतो यत्नमुत्तमार्थाभिधायिनः ॥ १

भृत्यमन्त्रिसामन्तादिकार्यं शुद्धं मन एव निर्वाहयतीत्याह—**भृत्य** इति ॥१०॥ स्निग्धा स्नेहवती। ललना भार्या ॥ ११ ॥ मनसः पितृत्वे हेत्वन्तरमप्याह—**स्वालोकित** इति। शास्त्रदर्शितया देवतादृशा अनुलङ्घ्यशासनत्वेन चिन्मात्रस्पन्दत्वेन च स्वालोकितः। बुद्ध्या स्नेहबुद्ध्या विवेकबुद्ध्या च॥१२॥परां स्वार्जितधनादिलक्षणां तत्त्वज्ञानलक्षणां च सिद्धिम्। आत्मानं देहं मनोरूपं च त्यक्त्वा। सुदृढ इति विशेषणाद्वज्रमणिरिति गम्यते। आदौ शास्त्रदर्शितपरीक्षादृशा सुदृष्टः खनिस्थाने भाग्यादृष्टश्च। तत आचार्यसतीर्थ्यादिसहायेन स्वानुभवपर्यन्तं सुपरामृष्टः सम्यक् शाणोल्लेखनपरामृष्टश्च। ततो निदिध्यासनेन सुदृढो घनघातसहस्राभेद्यश्च। ततस्तत्त्वसाक्षात्कारेण सुप्रबोधितस्तेजोव्यञ्जकरसक्षालनसुप्रबोधितश्च ॥१३॥ ततः सुगुणे पञ्चमादिभूमिकाभेदे योजितः शोभनगुणवति स्वर्णहारादौ योजितश्च। मणिरूपकप्रस्तावेऽपि रामस्यान्तरा 'मन्त्री सत्कार्यकारणा'दिति प्रागुक्ते सत्कार्यविशेषजिज्ञासामुपलक्ष्याह—**जन्मे**ति। शुभकर्मणि शास्त्रीये प्रवृत्तस्येति शेषः। अनर्थपरम्परालक्षणानां जन्मवृक्षाणां कुठाराणि च्छेदकानि तथा उदर्कस्तदुत्तरफलभूत उदयो निरतिशयानन्दाविर्भावो येभ्यस्तथाविधानि च साधनचतुष्टयसंपत्त्यादिसाक्षात्कारान्तानि कर्माणि सत्कार्याणि दिशति। कारयतीत्यर्थः ॥ १४ ॥ इत्थं रामं समाधाय प्रस्तुतं मणिरूपकमेवावलम्ब्योपसंहरति—**एवमि**ति। अथवा मणिमन्त्रौषधीनामचिन्त्यप्रभावत्वान्मन्त्रकार्यसिद्धिवैचित्र्याणां मणिनापि संभवान्मनोमणिरेव मन्त्रीत्युक्तः। तस्य च जन्मवृक्षच्छेदो निरतिशयानन्दोदयश्च सिद्धिवैचित्र्ये इति तात्पर्येण मणिरूपकानुसारेणैव योज्यम् ॥ १५ ॥ एवं विवेकस्य निरतिशयशुभोदर्कतामुक्त्वा महानर्थोदर्कात्तत्प्रमादाद्रामं वारयति—**भवभूमिष्वि**त्यादिना ॥१६॥ उत् ऊर्ध्वात्पातयन्तीत्युत्पाता रागादयस्तैः पूर्णासु ॥ १७ ॥ मावधीरय महारोगमिव नोपेक्षयावमंस्था इत्यर्थः। प्रस्तुतमिन्द्रियारिजयोपायोपदेशमुपसंहरति—**विवेक**मिति ॥ १८ ॥ ननु उत्पत्तिप्रकरणे देहेन्द्रियादीनामसत्त्वमुपपादितं तत्कुतोऽत्र तज्जयोपाय उपदिश्यते तत्राह—**असत्येवे**ति ॥ १९ ॥ तत्त्वदृशा असत्त्वेऽपि मोहदृशा तत्सत्त्वस्यानुभविकत्वादचिकित्सने वासनादार्ढ्येन दामव्यालकटन्यायेनानर्थप्राप्तिर्दुर्वारा। विवेकाभ्यासेन तच्चिकित्सने तु भीमभासदृढन्यायात्तन्नानर्थप्राप्तिरित्याह—**दामे**ति ॥२०॥ अयं दृश्यभूतो देहादिरेवाहमिति यो वृथा निश्चयो मिथ्याभिमानस्तं स्वबुद्ध्या स्वतत्त्वनिश्चयेन अलमपास्य यदिदं वस्तुन इतरत् प्रत्यगेकरसं तदेवावलम्ब्य तत्स्वभावेन स्थितत्वादमनस्कः सन् व्रजनादिव्यवहारं कुर्वन्नपि न बध्यसे मुक्त एवासीत्यर्थः ॥ २१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे मनस्यसत्ताप्रतिपादनं नाम चतुर्विंशः सर्गः ॥२३॥

सेनापतीनां त्रिदशैः शम्बरस्यात्र सूदनम्।
दामव्यालकटोत्पत्तिस्तैर्जयाशा च वर्ण्यते ॥ १ ॥

निर्वासनस्यापि शनैर्वासनासंचयेन देहाद्यभिमानजनने जन्ममरणपरम्परा भवति, किं पुनर्विवेकविरलवासनस्येति कैमुतिकन्यायप्रदर्शनमुखेनेषदात्मव्युत्पन्नानामलब्धपूर्णनिष्ठानां मन्दमध्यमाधिकारिणां वासनोच्छेदप्रयत्नदार्ढ्यावश्यकताप्रदर्शनपरां दामव्यालकटाख्यायिकां विवक्षुर्वसिष्ठो रामस्य तच्छुश्रूषोत्पादनायोक्तमेव विविच्य पुनरनुवदति—**अस्मिन्नि**ति द्वाभ्याम्। लोका जना आरमन्ते विश्राम्यन्त्यस्मिन्निति लोकारामस्तस्य ... तिष्ठतः अनुतिष्ठतः उत्तमान् शमदमाद्यर्थानभिधत्ते



१ पातोत्पात इति पाठः।

दामव्यालकटन्यायो मा ते भवतु राघव ।
भीमभासदृढस्थित्या त्वं विशोको भवेति च ॥ २
श्रीराम उवाच ।
दामव्यालकटन्यायो मा ते भूदित्युदाहृतम् ।
ब्रह्मन् किमेतद्भवता भवतापापहारिणा ॥ ३
भीमभासदृढस्थित्या त्वं विशोको भवेति च ।
प्रभो किमुक्तं भवता भवतापापहारिणा ॥ ४
उदारयैतया शुद्धं संप्रबोधय मां गिरा ।
घनस्तापापहारिण्या प्रावृषीव कलापिनम् ॥ ५
श्रीवसिष्ठ उवाच ।
दामव्यालकटन्यायं भीमभासदृढस्थितिम् ।
शृणु राघव तच्छ्रुत्वा यदिष्टं तत्समाचर ॥ ६
आसीत्पातालकुहरे सर्वाश्चर्यमनोरमे ।
शम्बरो नाम दैत्येन्द्रो मायामणिमहार्णवः ॥ ७
आकाशनगरोद्यानरचितासुरमन्दिरः ।
कृत्रिमोत्तमचन्द्रार्कभूषितात्मीयमण्डलः ॥ ८
शिलाशकलसंभूतपद्माद्यैरमराचलः ।
अनन्तविभवारम्भपरिपूरितदानवः ॥ ९
गृहरत्नाङ्गनागेयजितामरवधूध्वनिः ।
चन्द्रबिम्बकलापूर्णक्रीडोपवनपादपः ॥ १०
फुल्लनीलोत्पलव्यूहकरालरमणालयः ।
रत्नहंसध्वनाहूतहेमाम्बुरुहसारसः ॥ ११
हेमपादपशाखाग्रकृताम्भोरुहकुड्मलः ।
करञ्जजालप्रपतन्मन्दारकुसुमाकरः ॥ १२
तर्कुयन्त्रमयानन्तदैत्यनिर्जितवासवः ।
हिमशीतानलज्वालानिर्मितोद्यानमण्डपः ॥ १३
सर्वत्र कुसुमोद्यानजितानन्दननन्दनः ।
मायासर्वेहृतव्यालमलयाचलचन्दनः ॥ १४
हेमश्रीलोकलावण्यनिर्जितान्तःपुराङ्गनः ।
नानाकुसुमसंभारजानुदघ्नगृहाङ्गणः ॥ १५
क्रीडार्थमृन्मयेशानजितचक्रगदाधरः ।
अजस्रोड्डीनरत्नौघताराढ्यखपुरान्तरः ॥ १६
निशीथाखिलपातालशतचन्द्रनभस्तलः ।
खशालभञ्जिकालोकगीतगीतिरणोत्कटः ॥ १७
मायैरावणनागेन्द्रविद्रुतामरवारणः ।
त्रैलोक्यविभवोत्कर्षपूरितान्तःपुरान्तरः ॥ १८
सर्वसंपत्तिसुभगः सर्वैश्वर्यनमस्कृतः ।
समस्तदैत्यसामन्तवन्दितोग्रानुशासनः ॥ १९
महाभुजवनच्छायाविश्रान्तासुरमण्डलः ।
सर्वबुद्धिगणाधाररत्नमण्डलमण्डितः ॥ २०
तस्योत्सादितदेवस्य कठिनोड्डामराकृतेः ।
बभूव विपुलं सैन्यमासुरं सुरनाशनम् ॥ २१
तस्मिन्मायाबले सुप्ते देशान्तरगते तथा ।
तत्सैन्यं तरसा जघ्नुश्छिद्रं प्राप्य किलामराः ॥ २२
अथ शम्बरदैत्येन मुण्डिक्रोधद्रुमादयः ।
रक्षार्थमथ सामन्ताः स्वसेनासु नियोजिताः ॥ २३
तानप्यन्तरमासाद्य जघ्नुर्देवा भयानकाः ।
व्योमान्तरगताः श्येनाः कलविङ्कानिवाकुलान् ॥२४
सेनापतीन्पुनश्चान्यांश्चकारासुरसत्तमः ।
चपलानुद्भटारावांस्तरङ्गानिव सागरः ॥ २५
देवास्तानपि तस्याशु जघ्नुस्तेन स कोपवान् ।
जगामामरनाशाय परिपूर्णं त्रिविष्टपम् ॥ २६

स्वात्मनि प्रकाशयति तच्छीलस्य ॥ १ ॥ दामव्यालकटन्यायो माभूदिति भीमभासदृढस्थित्या विशोको भवेति च उदाहृतं प्रागिति शेषः ॥ २ ॥ एवं पुनरनुवादेनोत्थापितजिज्ञासो रामस्तदुभयोक्तिविस्तरं पृच्छति—दामेत्यादिना ॥ ३ ॥ ४ ॥ एतया एतत्कथाद्वयवर्णनरूपया । घनो मेघः । कलापिपक्षे संप्रबोधनमुल्लासनम् ॥ ५ ॥ ६ ॥ मायालक्षणानां मणीनां महार्णव इवाकरः ॥ ७ ॥ तत्त्वमेव प्रपञ्चयति—आकाशेत्यादिना । आकाशकल्पिते नगरे उद्यानेषु रचितान्यसुरमन्दिराणि येन ॥८॥ शिलाशकलानीव संभूतैः सुलभैः पद्माद्यैः पद्मरागाद्यैर्मणिभिर्निधिश्च अमराचलो मेरुरिव संपन्नः ॥ ९ ॥ गृहे रत्नभूतानामङ्गनानां गेयैर्गीतैर्जिता अमरवधूनां ध्वनयो गीतिसंपदो यस्य ॥ १० ॥ फुल्लैर्नीलोत्पलव्यूहैः करालः कामिभयंकरो रमणालयः क्रीडागृहं यस्य । ध्वननं ध्वनो ध्वनिस्तेनाहूतः ॥ ११ ॥ १२ ॥ तर्कुयन्त्रं कर्तरीयन्त्रं तन्मयैरनन्तैर्बहुभिर्दैत्यैर्निर्जितो वासवो येन । हिममिव शीतैरनलज्वालैर्निर्मितो रचित उद्यानमण्डपो येन ॥ १३ ॥ मायया सर्वाणि हृतानि व्यालसहितानि मलयाचलचन्दनानि येन ॥ १४ ॥ हेम्नः श्रीर्लोकलावण्यानि च निर्जितानि याभिस्तथाविधा अन्तःपुराङ्गना यस्य । निष्ठापरनिपातश्छान्दसः ॥ १५ ॥ क्रीडार्थेन मृन्मयेनेशानेन जितश्चक्रगदाधरो विष्णुर्येन । अजस्रमुड्डीनैः खद्योतवद्भ्रमद्भिः रत्नौघैस्ताराढ्यं तारकितं खं पुरान्तरं च यस्य ॥ १६ ॥ अमावास्यादिनिशीथेष्वखिले पाताले शतचन्द्रं नभस्तलं यस्य । खरचितशालभञ्जिकामर्चा आलोकयन्तीति खशालभञ्जिकालोकास्तैः खशालभञ्जिकालक्षणैर्लोकैर्वा गीता गीतिः प्रबन्धो यस्य तथाविधो रणोत्कटो युद्धशौण्डीर्यं यस्य ॥ १७ ॥ विभवेषु स्त्रीहस्त्यश्वादिषूत्कर्षैः रत्नभूतैः स्त्रीरत्नादिभिः ॥ १८ ॥ १९ ॥ वनग्रहणादिच्छया मायिकसहस्रायुतादिभुजसंपत्तिर्गम्यते ॥ २० ॥ तस्य शम्बरस्य । कठिना दुःसहा उड्डामरा भीषणा नभश्चरी वा आकृतिर्यस्य ॥ २१ ॥ माया बलं यस्य तथाविधे तस्मिन्मये ॥ २२ ॥ सामन्ताः सेनापतयः ॥ २३ ॥ २४ ॥ २५ ॥ परिपूर्णं देवैरित्यर्थाद्गम्यते ॥ २६ ॥

१ अपि इति क्वचित् पठ्यतेऽत्र. २ जाम्बः इति पाठः.

तस्मात्तन्मायया भीताः सुरास्तेऽन्तर्धिमाययुः ।
मेरुकाननकुञ्जेषु मृगा गौरीहरेरिव ॥ २७
क्रन्दत्क्षुद्रामरगणं बाष्पक्लिन्नाप्सरोमुखम् ।
शून्यं ददर्श स स्वर्गं कल्पक्षीणजगत्समम् ॥ २८
विहरन्कुपितस्तत्र लब्धमाहृत्य सुन्दरम् ।
लोकपालपुरीं दग्ध्वा जगामात्मीयमालयम् ॥ २९
एवं दृढतरीभूते द्वेषे दानवदेवयोः ।
देवाः स्वर्गं परित्यज्य दिक्षु जग्मुरदर्शनम् ॥ ३०
अथ शम्बरदैत्येन ये ये सेनाधिनायकाः ।
क्रियन्ते यत्नतस्तांस्तु जघ्नुर्यत्नपराः सुराः ॥ ३१
यावदुद्वेगमायातः शम्बरः कोपवान्भृशम् ।
तार्णोऽतिमात्रमनल इव जज्वाल सोच्छ्वसन् ॥ ३२
त्रैलोक्यमपि चान्विष्यन्न देवाँल्लब्धवानथ ।
परेणापि प्रयत्नेन निधानमिव दुष्कृती ॥ ३३
ससर्ज मायया घोरानसुरांस्त्रीन्महाबलान् ।
बलरक्षार्थमुदितान्कालान्मूर्तिमिव स्थितान् ॥ ३४
निर्वृत्ता मायया भीमा बलपादपवाहिनः ।
उद्गुस्ते महामायाः पक्षक्षुब्धा इवाद्रयः ॥ ३५
दामो व्यालः कटश्चेति नामभिः परिलाञ्छिताः ।
यथाप्राप्तैककर्तारश्चेतनामात्रधर्मिणः ॥ ३६
अभावात्कर्मणां ते च प्राक्तना नच वासनाः ।
निर्विकल्पकचिन्मात्रपरिस्पन्दैकधर्मकाः ॥ ३७
कर्मजीवकलां तन्वीमसारां च मनोभिदाम् ।
अपुष्टां कृत्रिमामन्तश्चोदयोदयमागताः ॥ ३८
ते ह्यन्धपारम्पर्येण काकतालीयवद्भटाः ।
प्रकृतामनुवर्तन्ते क्रियामुज्झितवासनाः ॥ ३९
अर्धसुप्ता यथा बालाः स्वाङ्गे रिङ्गन्ति केवलम् ।
वासनात्माभिमानाभ्यां हीनास्ते तद्वदेव हि ॥ ४०
नाभिपातं न चापातं न विदुस्ते पलायनम् ।
न जीवितं न मरणं न रणं न जयाजयौ ॥ ४१
केवलं सैनिकानग्रे दृष्ट्वाहननोद्यतान् ।
अभिजग्मुः परानाजौ प्रहारदलिताद्रयः ॥ ४२
शम्बरश्चिन्तयामास परितुष्टमनाः परम् ।
विजेष्यते हि मे सेना मायासुरसुरक्षिता ॥ ४३

---

गौरीहरेर्गौरीवाहनसिंहाद्भीता मृगा इव ॥ २७ ॥ २८ ॥ तत्र स्वर्गे लुण्ठनेन लब्धं सुन्दरं रत्नादि आहृत्य आदाय ॥२९॥ अदर्शनमन्तर्धानम् ॥ ३० ॥ तांस्तान् जघ्नुर्यावच्छम्बर उद्वेगमायातः सन् जज्वालेति परेणान्वयः ॥ ३१ ॥ सोच्छ्वसन्निति 'सोचि लोपे चेत्पादपूरणम्' इति सोर्लोपः ॥ ३२ ॥३३॥ बलं सैन्यं तस्य रक्षार्थमुदितानुद्युक्तान् । कालान् भूतो भविष्यन् वर्तमान इति त्रिधा प्रसिद्धान् ॥ ३४ ॥ बलमिव पादपान्वहन्ति तच्छीलानित्यद्रिपक्षे ॥ ३५ ॥ दमयति शत्रूनिति दमः स एव दामः । व्याल इव वेष्टयति परानिति व्यालः । कटत्यावृणोति परास्त्रेभ्यः स्वानिति कट इति व्युत्पत्त्यान्वर्थैर्नामभिः परिलाञ्छिता अङ्किताः ॥ ३६ ॥ पूर्वेभ्यस्तेषु कोऽतिशये हेतुस्तमाह—**अभावादि**त्यादिना । ते दामादयः प्राक्तनाः पूर्वसिद्धजीवा न । नच वासनास्तेषां सन्ति । कुतः । कर्मणां धर्मादीनामभावात् । किंतु निर्विकल्पको भयशङ्कापलायनादिविकल्पशून्यो यश्चिन्मात्रसंनिधाननिमित्तदेहपरिस्पन्दस्तदेकधर्मकाः ॥ ३७ ॥ ननु यदि तेषां कर्मकामवासना न सन्ति तर्हि जन्मबीजाभावाज्जन्मैव न स्यात् । यदि च बीजाभावेऽपि जन्म स्यात्तर्हि मुक्तानामपि पुनर्जन्म स्यादिति । तथा चाग्रेऽपि वक्ष्यति 'विद्यते वासना यत्र तत्र सा याति पीनताम्' इति । अतोऽसंगतं कर्माद्यभाववचनमित्याशङ्क्याह—**कर्मजीवकला**मिति । नैते स्वतन्त्रा जीवाः, किंतु अन्तश्चोदयति प्रेरयतीत्यन्तश्चोदा अन्तर्यामिचित् तया [illegible] कर्मजीवस्य शम्बरस्य कलां कौशलरूपां तन्वीमल्पपरिमाणामपुष्टां कर्मवासनाद्यनुपचितां कृत्रिमां मायाकल्पनारूपामत एवासारां भोगसारशून्यां मनोभिदां सर्गसंकल्पवृत्तिमादाय उदयमाविर्भावमागताः । तथा चैन्द्रजालिकसृष्टपुरुषान्तराणामिव स्वतन्त्रकर्माभावेऽप्याविर्भावलक्षणं जन्मोपपद्यत इति भावः । अथवा विपश्चिदुपाख्यानवक्ष्यमाणन्यायेन शम्बरजीवस्यैवाग्निविस्फुलिङ्गवदन्तश्चाद्बहिश्च विभागात्कर्मजीवस्य कलामंशभूतां तत्र कर्मवासनादीनामत्यल्पत्वादपुष्टां मनो मनःप्रायां कृत्रिमां भिदां प्राप्य देहाद्युपाध्युदयादुदयं जन्म आगताः प्राप्ताः । तथाच योगिदेहभेदवच्छम्बरकामकर्मवासनाबीजवशादेवैषां जन्मसिद्धेर्न पृथक्तदपेक्षास्ति । एतावांस्तु विशेषः । योगिनां देहभेदे तत्त्वज्ञानेन बाधितत्वान्न प्रतिशरीरं कामादिजन्मबीजोपचयो दामव्यालकटादिदेहे त्वज्ञत्वात्तदुपचये जन्मपरम्पराप्राप्तिरिति न काचिदनुपपत्तिरिति भावः ॥ ३८ ॥ अतएव योगिवदेव तेषां यावद्वासनोपचयं व्यवहार इत्याह—**ते ही**ति ॥ ३९ ॥ अप्रबुद्धवासनानां क्व चेष्टा दृष्टेति चेत्तत्राह—**अर्धसुप्ता** इति । रिङ्गन्ति चेष्टन्ते ॥ ४० ॥ अभिपातं युद्धकाले आभिमुख्येन शत्रूणां पतनम् । आपातं विश्रान्तविश्वस्तेषु अकस्माच्छत्रूणां पतनम् ॥ ४१ ॥ यदि न विदुस्तर्हि स्वयं कथं शत्रूनभिपेतुस्तत्राह—**केवल**मिति। अभिपत्य प्रहर्तव्यमित्येतादृशशम्बरसंकल्पवासनामात्रशरीरत्वादभिमुखशत्रुदर्शनेन तावन्मात्रोद्बोधादभिजग्मुरिति भावः ॥ ४२ ॥ मायाकृतैरसुरैः सुरक्षिता

अतिबलासुरदोर्द्रुमपालिता
मम चमूः स्थिरतामलमेष्यति ।
अमरवारणदन्तविघट्टने-
ष्वमरपर्वतहेमशिला यथा ॥ ४४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे दामव्यालकटोत्पत्तिवर्णनं नाम पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः २६

श्रीवसिष्ठ उवाच ।
इति निर्णीय दैत्येन्द्रो दामव्यालकटान्विताम् ।
सेनां संप्रेषयामास भूतलं देवनाशिनीम् ॥ १
दैत्याः सागरकुञ्जेभ्यः कन्दरेभ्यश्च सायुधाः ।
उदगुर्भीमनिर्ह्रादाः सपक्षगिरिलीलया ॥ २
रोदसीकोटरं हस्तप्रहारहतभास्करम् ।
दानवाः पूरयामासुर्दामव्यालकटैधिताः ॥ ३
अथोत्तस्थुर्निकुञ्जेभ्यः कन्दरेभ्यः सुराचलात् ।
प्रलयान्त इवाक्षुब्धा भीमाः स्वर्वासिनां गणाः ॥ ४
देवासुरपताकिन्योस्तद्युद्धमभवत्तयोः ।
अकालोल्बणकल्पान्तभीषणं भुवनान्तरे ॥ ५
पेतुः प्रलयपर्यस्तचन्द्रार्का इव दीप्तयः ।
शिरांसि कुण्डलोद्द्योततेजःपीततमांस्यथ ॥ ६
जुघूर्णुर्भटनिर्मुक्तसिंहनादविराविताः ।
प्रलयानिलसंपूरैः स्फुटहासा इवाद्रयः ॥ ७
रेणुः शैलशिलातुल्यहेतिघातास्तभित्तयः ।
कुलाचलतटाभीरुविश्रान्तहरिमण्डलाः ॥ ८
चेरुः परस्पराघातहतहेतिसमुत्थिताः ।
लोलानलकणाः कल्पविशीर्णा इव तारकाः ॥ ९
विलेसू रक्तमांसौघपूर्णैकार्णवतीरगाः ।
कल्पतालवदुत्ताला वेतालास्तालतालिताः ॥ १०
प्रस्फुरद्रुधिरासारशान्तपांसुपयोधरे ।
व्योम्नि हेतिहतक्षुण्णा मौलिकुण्डलकोटयः ॥ ११
बभूवुर्भास्कराकारैः कल्पभूरुहधारिभिः ।
प्रहारदलिताद्रीन्द्रैर्दैत्यैर्निर्विवरा दिशः ॥ १२
जग्मुर्ज्वलदसिप्रान्तवातपातितभित्तयः ।
कणप्रकरतां शैलाः कल्पाग्निदलिता इव ॥ १३
देवास्ते च समाजग्मुरश्रमेधैधिता इव ।
असुरानस्त्रविभ्रष्टाञ्जलदानिव वायवः ॥ १४
जगृहुस्तानथाक्रम्य जरठाखूनिवौतवः ।
तेऽपि ताञ्जगृहुर्मत्तानृक्षारूढानिव द्रुमान् ॥ १५
दोर्वृक्षविलसद्धेतिकुसुमाः शस्त्रपल्लवाः ।
रेजुः सुरासुराः फुल्ला वनलोला इव द्रुमाः ॥ १६
अन्योन्यं पूरयामासुः शस्त्रपूरैर्दिशो दश ।
वनानि कुसुमव्रातैः सुमेराविव मारुतः ॥ १७
घोरं समभवद्युद्धं देवदानवसेनयोः ।
रोदोरन्ध्रोदुम्बरान्तर्महामशकसंघयोः ॥ १८
अथोदपतदुत्तालैर्लोकपालेभमण्डलैः ।

॥ ४३ ॥ अमरवारणा दिग्गजास्तेषां दन्तविघट्टनेष्वमरपर्वतो मेरुस्तदीया हेमशिलेव शत्रुप्रहारेष्वपि अलमत्यन्तं स्थिरतामेष्यति प्राप्स्यति ॥ ४४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दामव्यालकटोत्पत्तिवर्णनं नाम पञ्चविंशः सर्गः ॥२५॥

दामव्यालकटादीनामुद्भूतानां रसातलात् ।
दैवतैः सह संग्रामो वर्ण्यतेऽत्र महोद्भटः ॥ १ ॥

इति विजेष्यते इत्यादिपूर्वोक्तप्रकारेण ॥ १ ॥ सागरेभ्यो वेलावनकुञ्जेभ्यो गिरिकन्दरेभ्यश्च यथामार्गलाभं उदगुः ऊर्ध्वं निश्चक्रमुः ॥ २ ॥ हस्तप्रहारैर्हतो निस्तेजस्कः कृतो भास्करो यस्मिंस्तथाविधं रोदस्योर्द्यावापृथिव्योः कोटरमन्तरालाकाशम् । दामव्यालकटैरेधिता वर्धिताः ॥ ३ ॥ उत्तस्थुर्युद्धायेति शेषः ॥ ४ ॥ अकाले उल्बणो दुःसहः कल्पान्तः प्रलय इव भीषणम् ॥ ५ ॥ कुण्डलोद्द्योततेजोभिः पीततमांसि शिरांसि प्रलयपर्यस्तचन्द्रार्का दीप्तय इव कबन्धात्पेतुः ॥ ६ ॥ प्रलयानिलानां संपूरैर्महाप्रवाहैः स्फुटनं स्फुटः । घञर्थे कविधानात्कः । स एवान्तरधातुवैचित्र्यदन्तप्रकाशसाम्याद्धासो येषाम् ॥ ७ ॥ भीरवः अतएव विश्रान्ता अन्तर्निलीना हरिमण्डलाः सिंहसमूहा येषु तथाविधाः शैलशिलासदृशहेतीनां घातैरस्तभित्तयो भग्नवप्राः[1] । कुलाचलानां हिमवदादीनां तटाः रेणुः दध्वनुः । रणतेर्लिट् ॥ ८ ॥ ९ ॥ कल्पः संवर्तस्तदीयोत्पातभूततालवृक्षवदुत्तालाः प्रांशवो वेतालास्तालैः करतालैस्तालिताः नर्तने संजाततालाः ॥ १० ॥ शान्ताः पयोधरा इव पांसवो यस्मिन्व्योम्नि मौलिकुण्डलकोटयो भास्कराकारैरुपलक्षिता बभूवुरिति देहलीदीपन्यायेन संबध्यते ॥ ११ ॥ प्रहरणायोत्पाटितकल्पभूरुहधारिभिः ॥ १२ ॥ असिप्रान्तलक्षणैर्ज्वलत्तैर्झञ्झापवनैः पातिता भित्तयो वप्राणि येषाम् । कणप्रकरतां चूर्णसमूहताम् ॥ १३ ॥ १४ ॥ तानसुरान् जरठाखून्वृद्धमूषकान् ओतवो मार्जारा इव ते असुरास्तान् देवान् द्रुमान् रूढानारूढान् मत्तान् प्रमत्तपुरुषान् ऋक्षा भल्लूका इव जगृहुः ॥ १५ ॥ दोर्लक्षणेषु वृक्षेषु विलसन्त्यो हेतयः शस्त्राण्येव कुसुमानि येषाम् ॥ १६ ॥ १७ ॥ रोदोरन्ध्ररूपो य उदुम्बरान्तःप्रदेशस्तत्र महामशकसंघप्राययोर्देवदानवसेनयोः ॥ १८ ॥ इदानीं दिग-

[1] भङ्गवप्राः इति पाठः.

कल्पाभ्रस्फूर्जिताकारो दारुणः समरारवः ॥ १९
पिण्डग्रहेण नभसि भूभागमिव कुट्टिमम् ।
मुष्टिग्राह्यो महामेघमन्थरोदरपीवरः ॥ २०
रथसंपातसंपिष्टशस्त्रशैलरटन्नटः ।
त्रुटद्धृदयनिःसत्त्वकर्कशाक्रन्दघर्घरः ॥ २१
प्रलयप्रत्ययोल्लासिकल्पान्तारावबृंहणः ।
द्वादशादित्यसंघट्टद्रवत्काञ्चनपर्वतः ॥ २२
ब्रह्माण्डकुण्डसंघट्टात्परावृत्त्या च निर्गतः ।
महास्रोतःपयःपूरः सत्त्वाहत इवाकरः ॥ २३
चञ्चत्सपक्षशैलेन्द्रपक्षपातचलद्ध्वनिः ।
कठिनापूरणोद्भूतस्फुटच्छैलेन्द्रकन्दरः ॥ २४
मन्दरोद्भूतदुग्धाब्धिसंक्षोभसदृशाङ्गकः ।
रतिश्रुद्धुंधुमास्फोटघटितद्वीपजन्तुभूः ॥ २५
सेनयोः क्षुब्धयोरासीद्युद्धमुद्धतदानवम् ।
निष्पिष्टनगरग्रामगिरिकाननमानवम् ॥ २६
महाहेतिशतच्छिन्नदानवाचलपूर्णदिक् ।
अन्योन्याहतहेत्यादिचूर्णपूर्णाम्बरोदरम् ॥ २७
भुशुण्डीमण्डलास्फोटस्फुटन्मेरुशिरःशतम् ।
शरमारुतनिर्लूनदैत्यदेवमुखाम्बुजम् ॥ २८
चक्रावर्तशतभ्रान्तदेवदैत्यजरत्तृणम् ।
सेनाप्रहारकल्लोलवलनावलिताम्बरम् ॥ २९
हेत्युग्रवातनिष्पिष्टपतद्वैमानिकव्रजम् ।
अस्त्रोदिताब्धिवार्योघप्लावितव्योमपत्तनम् ॥ ३०
वहन्महास्त्रपातासिशूलशक्तिनदीशतम् ।
शैलपक्षोद्भटास्फोटलुठद्ब्रह्माण्डमण्डपम् ॥ ३१
दैत्यपार्ष्णिप्रहारौघपतल्लोकेशपत्तनम् ।
नारीहलहलारावरणत्कङ्कणमन्दिरम् ॥ ३२
लुठद्दैत्यवलोद्धूतमत्तास्त्रौघजलान्वितम् ।
रक्तधौतनरौघोग्रमुक्तनादद्रवज्जनम् ॥ ३३
लोकपानीकपाम्भोजच्छन्नाच्छन्नयमान्वितम् ।
पुनः सुरासुरैर्घातैर्दृष्टसैन्यकुलाकुलम् ॥ ३४
सपक्षपर्वताकारदानवाद्रिगमागमैः ।
वहच्छवशवाशब्दभूरिभाङ्कारभीषणम् ॥ ३५
आयुधाग्रविभिन्नोग्रदैत्यपर्वतनिर्झरैः ।
रक्तैररुणिताशेषवसुधार्णवपर्वतम् ॥ ३६
उत्सन्नराष्ट्रनगरविपिनग्रामगह्वरम् ।
धृतासंख्यासुरेभाश्वमनुष्यशवपर्वतम् ॥ ३७
सुतालोत्तालनाराचराजिरोचितवारणम् ।
मुष्टिप्रहारपिष्टांसमत्तैरावणवारणम् ॥ ३८
कल्पाभ्रपटलासारधारादलितपर्वतम् ।
महाशनिविनिष्पेषपिष्टोड्डीनकुलाचलम् ॥ ३९
कुपिताग्निज्वलज्ज्वालाजालज्वलितदानवम् ।
एकाञ्जलिपुटानीतसमुद्रोत्सादितानलम् ॥ ४०
चण्डदैत्यातिसंभारशिलीकृतमहाज्वलम् ।
वनव्यूहेन्धनाग्न्यर्चिर्द्राविताम्बुशिलोच्चयम् ॥ ४१
अस्त्रनिर्मितदुर्वारतमःकल्पान्तरात्रिकम् ।
मायासूर्यगणोद्द्योतैः पीतातनुतमःपटम् ॥ ४२

---

जादिप्रमृद्यमानजनरणकोलाहलं वर्णयति—**अथेत्यादिसप्तभिः** ॥ १९ ॥ पिण्डग्रहेण घनीभावस्वीकारेण नभसि कुट्टिमं भूभागमिव कुर्वाण इति शेषः । क्वचित्प्रदेशे मुष्टिग्राह्य इव क्वचिच्च मेघानां मन्थरं जलभारमन्थरमुदरमिव पीवरो गम्भीर इति यावत् ॥ २० ॥ रथसंपातेन संपिष्टैः शस्त्रैः शैलेषु रटन् नट इव तालल्यानुसारी । त्रुटद्धृदयानां निस्सत्त्वानां कर्कशाक्रन्दैर्घर्घरः ॥ २१ ॥ प्रलयस्य प्रत्ययैः कारणैरग्निवाय्वादिभिरुल्लासी यः कल्पस्य ब्रह्माह्नोऽन्ते प्रसिद्ध आरावस्तस्य बृंहणः प्रतिगर्जनप्रायः । द्वादशादित्यानां संघट्टनेन मेलनेन द्रवन् यः काञ्चनपर्वतस्तदीयशब्द इवेत्यर्थः ॥ २२ ॥ संघट्टादिति ल्यब्लोपे पञ्चमी । संघट्टं प्राप्य परावृत्त्या चकारेण स्वस्थानाच्च निर्गतः सत्त्वैः प्राणिभिराहतः आकरः सत्त्वाकरः महास्रोतसः पयःपूरध्वनिरिव ॥ २३ ॥ चञ्चतां चलतां सपक्षशैलेन्द्राणां पक्षवातेनेव चलन् ध्वनिर्यत्र । कठिनैर्दुःश्रवैरापूरणैरुद्भूता उद्भिन्नाः स्फुटन्तः श्रोत्रप्रायाः शैलेन्द्रकन्दराः येन ॥ २४ ॥ अमृतार्थं मथने मन्दरेणोद्धूतस्य दुग्धाब्धेः संक्षोभध्वनिना सदृशमङ्गं स्वरूपं यस्य । तत्रैवामृतोत्पत्तौ रत्या तदासक्त्या शृण्वन्ति ये देवासुरास्तेषां हर्षोत्कर्षे घुंघुमा इव ध्वनन्त आस्फोटा [illegible]



शब्दास्तैर्घटिता व्याप्ताः सप्तद्वीपलक्षणा जन्तुभुवः प्राण्यावासा येन ॥२५॥ इत आरभ्य आसर्गसमाप्तेर्युद्धमेव वर्णयति—**सेनयोरित्यादिना** ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ हेतय एवोग्रवातास्तैर्निष्पिष्टाः पतन्तश्च वैमानिकव्रजा यत्र । अस्त्रैर्वारुणास्त्रादिभिरुदितस्याब्धेर्वार्योघैः प्लावितानि व्योमपत्तनान्यमरावत्यादीनि यत्र ॥ ३० ॥ शैलानां पक्षेषु पार्श्वेषु उद्भटैरास्फोटैर्लुठन् कम्पमानो ब्रह्माण्डमण्डपो यत्र ॥ ३१ ॥ ३२ ॥ ३३ ॥ लोकपानामिन्द्रादीनामनीकपाः सेनानायकास्तल्लक्षणेष्वम्भोजेषु भ्रमर इव कदाचिन्मृतानां प्राणहरणाय च्छन्नः कदाचिद्युद्धार्थमच्छन्नः प्रकटश्च यो यमस्तेनान्वितम् । पलायनकाले घातैः प्रहारैः पुनः परावृत्त्य दृष्टेनार्थात्प्रहरता सैन्यकुलेनाकुलम् । ॥ ३४ ॥ शवशवेत्यनुकरणशब्दरूपैर्भूरिभिर्भाङ्कारैर्भीषणम् ॥ ३५ ॥ ३६ ॥ धृता असंख्यसुरेभाश्वमनुष्यशवा यैस्तथाविधाः पर्वता मेर्वादयो यत्र ॥ ३७ ॥ ३८ ॥ ३९ ॥ कुपिताग्नीति देवपराक्रमः । एकाञ्जलीत्यसुरपराक्रमः ॥ ४० ॥ चण्डैर्दैत्यैः शैलशिलाद्यतिसंभारैः प्रक्षिप्तैः शिलीकृतः महान् ज्वलतीति ज्वलोऽग्निर्यत्रेति दैत्यपराक्रमः । वनव्यूहलक्षणेन्धनप्रयुक्ताभिरग्न्यर्चिर्भिर्द्राविता अतएवाम्बुप्रायाः शिलोच्चया यत्रेति

---

१ बलोद्धत इति पाठः.

मायाग्निवर्षनिष्पीतकलाभ्रघनवर्षणम् ।
ससीत्काराग्निवमनशस्त्रसंघट्टवर्षणम् ॥ ४३
वज्रवर्षास्त्रनिर्धूतशैलवर्षास्त्रसंभ्रमम् ।
निद्रावोधास्त्रयुद्धाढ्यं संघर्षावग्रहाश्रयम् ॥ ४४
वहत्ककचवृक्षास्त्रं जलाग्न्यस्सरणान्धितम् ।
ब्रह्मास्त्रयुद्धविषमं तमस्तेजोस्त्रसारितम् ॥ ४५
अस्त्रोद्दीर्णायुधानीकनीरन्ध्रसकलाम्बरम् ।
शिलावर्षास्त्रदलितं वह्निवर्षास्त्रभासुरम् ॥ ४६
पताकास्पृष्टशशिकैश्चक्रचीत्कारगर्जितैः ।
मुहूर्तेन रथैर्लङ्घितोदयास्तमयाचलम् ॥ ४७
वज्रप्रहाराविरतम्रियमाणमहासुरम् ।
शुक्रामरमहाविद्याजीवमानमहासुरम् ॥ ४८
विद्रवद्देवसंघातं जयप्रोड्डामरामरम् ।
शुभग्रहमहाकेतुमालिकानामितस्ततः ॥ ४९
उत्पातमङ्गलौघानां बुद्धेरुद्धरकन्धरम् ।
साद्रिखोर्वीसमुद्रद्युजगद्रुधिरवारिधि ॥ ५०
फुल्लैककिंशुकवनं कुर्वेद्दुर्वारवैरतः ।
पर्वतप्रतिमासंख्यं शवपूर्णमहार्णवम् ॥ ५१
समग्रतरुशाखाग्रलम्बलोलमहारावम् ।
दीप्यमानैः स्ववातार्तैः पक्षपुष्पैर्लसत्फलैः ॥ ५२
तालोत्तालैः शरव्रातवनैर्व्याप्तनभस्थलम् ।
पर्वतप्रतिमासंख्यकबन्धशतबाहुभिः ॥ ५३
नृत्यद्भिः पातिताम्भोदविमानसुरतारकम् ।
शरशक्तिगदाप्रासपट्टिशप्रोतपर्वतम् ॥ ५४
लोकसप्तकविभ्रष्टकुड्यखण्डचिताम्बरम् ।
अनारतरसन्मत्तकल्पाभ्रढढदुन्दुभि ॥ ५५
एवं शब्दशतोन्नादपातालतलवारणम् ।
विनायककराकृष्टदीर्घदानवपर्वतम् ॥ ५६
एकदिक्करनिष्पन्दसिद्धसाध्यमरुद्गणम् ।
पलायमानगन्धर्वकिन्नरामरचारणम् ॥ ५७

वबुरशनिनिपातखण्डिताङ्गा
दलितशिलाशकलाः ककुम्मुखेषु ।
प्रलयसमयसूचकाः सुराणां
सुरतरुघर्घरघस्मराः समीराः ॥ ५८

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे दामव्यालकटसंग्रामवर्णनं नाम षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः २७

श्रीवसिष्ठ उवाच ।
तस्मिंस्तदा वर्तमाने घोरे समरसंभ्रमे ।
देवासुरशरीरेषु गर्तेष्वभ्रोदरेष्विव ॥ १
वहत्स्वसृक्प्रवाहेषु गङ्गापूरेष्विवाम्बरात् ।
दाम्नि वेष्टितदेवौघकृतक्ष्वेडाघनारवे ॥ २
व्याले निजकराकृष्टिपिष्टसर्वसुरालये ।

देवपराक्रमः । एवमग्रेऽपि यथायोग्यं बोध्यम् ॥ ४१ ॥ ४२ ॥ कला मायाकौशलं तत्प्रयुक्तानामभ्राणां घनं वर्षणं यत्र ॥४३॥ संघर्षः पराभिभवः स एवावग्रहः प्रागुक्तवर्षप्रतिबन्धस्तदाश्रयम् ॥ ४४ ॥ जलाग्न्योरस्सरणेन व्यामोहेनान्धितम् ॥ ४५ ॥ आसुरपैशाचाद्यस्त्रैरुद्दीर्णैस्तोमरमुसलमुद्गराद्यायुधानीकैर्नीरन्ध्रं सकलाम्बरं यत्र ॥ ४६ ॥ ४७ ॥ शुक्रस्य अमराख्या महाविद्या मृतसंजीवनविद्या तया जीवमाना महासुरा यत्र ॥४८॥ क्वचिद्विद्रवद्देवसंघातं क्वचिज्जयप्रोड्डामरामरम् । क्वचिच्छुभग्रहाणां महतीनां केतुमालिकानां च बुद्धेर्दर्शनार्थमितस्तत उद्धरकन्धरं उन्नमितकण्ठम् ॥ ४९ ॥ क्वचित्तु उत्पातानां मङ्गलौघानां बुद्धेर्दर्शनार्थमुद्धरकन्धरम् । फलस्यापि हेतुत्वविवक्षणाद्बुद्धेरिति पञ्चमी । अद्रिभिः खेन समुद्रेण दिवा च सहितं जगदेव रुधिरवारिधिर्यत्र ॥ ५० ॥ जगदित्यनुवर्तते । कुर्वेदिति पूर्वोत्तरार्धान्वयि । उभयत्रापि रुधिरेणेति शेषः ॥ ५१ ॥ शरव्रातस्य वनत्वेन रूपणाय विशिनष्टि—**दीप्यमानै**रित्यादि । अर्करश्मिप्रतिबिम्बपल्लवैर्दीप्यमानैः स्वस्य वेगवातेनार्तैश्चञ्चलैः कङ्कादिपक्षा गरुत एव पुष्पाणि येषां तैः । लसन्ति फलानि लोहभागा एव श्लेषात्फलानि येषां तैः ॥ ५२ ॥ तालेभ्योऽप्युत्तालैरुच्छ्रितैः ॥ ५३ ॥ कबन्धशतबाहुभिः पातिता अम्भोदा विमानानि सुरास्तारकाश्च यत्र । पट्टिशान्तैः प्रोताः संतताः पर्वता यत्र ॥ ५४ ॥ यद्यप्यूर्ध्वं षडेव लोकास्तथापि भूलोकस्थकुड्यखण्डानामप्युड्डयनेन भ्रंशसंभवाल्लोकसप्तकेत्युक्तम् ॥ ५५ ॥ एवं प्रागुक्तप्रकारैः शब्दशतैरुन्नादाः प्रतिगर्जन्तः पातालतलवारणा दिग्गजा यत्र ॥ ५६ ॥ दिग्भेदकराणां सूर्येन्द्रादीनामेकस्यां दिशि दैवान्मिलने एकदिक्करा असुरभयान्निष्पन्दाश्च सिद्धसाध्यमरुद्गणा यत्र ॥ ५७ ॥ इदानीमौत्पातिकं झंझापवनं वर्णयति—**ववुरि**ति । अशनिनिपातैर्वैद्युताग्निपातनैः खण्डितप्राण्यङ्गा दलितशिलाशकलाश्च । सुराणां प्रलयसमयस्य सूचकाः सुरतरुघर्घराणां कल्पवृक्षसंबन्धिभ्रमरकोकिलादिध्वनीनां घस्मरा भक्षकास्तिरोधायका इति यावत् । समीरा झंझामारुता ववुः ॥५८॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे दामव्यालकटसंग्रामवर्णनं नाम षड्विंशः सर्गः ॥ २६ ॥

देवाः पराजितास्तेभ्यः प्रपन्नेभ्योऽत्र पद्मभूः ।
प्राह दैत्यवधोपायं वासनोपचयं चिरात् ॥ १ ॥

देवासुरशरीरेषु जातेषु गर्तेषु व्रणेषु असृक्प्रवाहेषु वहत्स्विति परेणान्वयः ॥ १ ॥ वेष्टितदेवौघं यथा स्यात्तथा कृतः क्ष्वेडा सिंहनादरूपो महारवो येन ॥ २ ॥ आकृष्टिराकर्षणं

कटे कठिनसंरम्भसङ्गरक्षपितामरे ॥ ३
ऐरावते क्षीणरवे पलायनपरायणे ।
प्रवृद्धे दानवानीके मध्याह्न इव भास्करे ॥ ४
पतिताङ्गव्यथार्तानि प्रस्रवद्रुधिराणि च ।
पयांसीवावसेतूनि देवसैन्यानि दुद्रुवुः ॥ ५
दामव्यालकटास्तानि चिरमन्तर्हितानि च ।
अनुजग्मुर्लसन्नादमिन्धनानीव पावकाः ॥ ६
अन्विष्टानपि यत्नेन नालभन्तासुराः सुरान् ।
घनजालवनोड्डीनान्सिंहा हरिणकानिव ॥ ७
अलब्धेष्वमरौघेषु दामव्यालकटास्तदा ।
जग्मुः पातालकोशस्थं प्रभुं प्रमुदिताशयाः ॥ ८
अथ देवा विषण्णास्ते क्षणमाश्वास्य वै ययुः ।
जयोपायाय विजिता ब्रह्माणममितौजसम् ॥ ९
तेषामाविरभूद्ब्रह्मा रक्तरक्ताननश्रियाम् ।
सायं रक्तीकृताम्बूनामब्धीनामिव चन्द्रमाः ॥ १०
प्रणम्य ते सुरास्तस्मा अनर्थं शम्बरेहितम् ।
सम्यक्प्रकथयामासुर्दामव्यालकटक्रमम् ॥ ११
तदाकर्ण्याखिलं ब्रह्मा विचार्य स विचारवित् ।
उवाचेदं सुरानीकमाश्वासनकरं वचः ॥ १२

श्रीब्रह्मोवाच ।

शतवर्षसहस्रान्ते शम्बरेण हरेः करात् ।
मर्तव्यं समरेशस्य तत्कालं संप्रतीक्षताम् ॥ १३
दामव्यालकटानेतानद्य त्वमरसत्तमाः ।
योधयन्तः पलायध्वं मायायुद्धेन दानवान् ॥ १४
युद्धाभ्यासवशादेषां मुकुराणामिवाशये ।
अहंकारचमत्कारः प्रतिबिम्बमुपैष्यति ॥ १५
गृहीतवासनास्त्वेते दामव्यालकटाः सुराः ।
सुजेया वो भविष्यन्ति लग्नजालाः खगा इव ॥ १६
अद्य त्ववासना ह्येते सुखदुःखविवर्जिताः ।
धैर्येणारीन्विनिघ्नन्तो देवा दुर्जयतां गताः ॥ १७
वासनातन्तुबद्धा ये आशापाशवशीकृताः ।
वश्यतां यान्ति ते लोके रज्जुबद्धाः खगा इव ॥ १८
ये भिन्नवासना धीराः सर्वत्रासक्तबुद्धयः ।
न हृष्यन्ति न कुप्यन्ति दुर्जयास्ते महाधियः ॥ १९
यस्यान्तर्वासनारज्ज्वा ग्रन्थिबन्धः शरीरिणः ।
महानपि बहुज्ञोऽपि स बालेनापि जीयते ॥ २०
अयं सोऽहं ममेदं तदित्याकलिपतकल्पनः ।
आपदां पात्रतामेति पयसामिव सागरः ॥ २१
इयन्मात्रपरिच्छिन्नो येनात्मा भव्यभावितः ।
स सर्वज्ञोऽपि सर्वत्र परां कृपणतां गतः ॥ २२
अनन्तस्याप्रमेयस्य येनेयत्ता प्रकल्पिता ।
आत्मनस्तस्य तेनात्मा स्वात्मनैवावशीकृतः ॥ २३
आत्मनो व्यतिरिक्तं यत्किंचिदस्ति जगत्त्रये ।
यत्रोपादेयभावेन बद्धा भवतु वासना ॥ २४
आस्थामात्रमनन्तानां दुःखानामाकरं विदुः ।
अनास्थामात्रमभितः सुखानामाकरं विदुः ॥ २५
दामव्यालकटा यावदनास्था भवसंस्थितौ ।
तावन्न नाम जेयावो मशकानामिवानलाः ॥ २६
अन्तर्वासनया जन्तुर्दीनतामनुयातया ।
जितो भवत्यन्यथा तु मशकोऽप्यमराचलः ॥ २७
विद्यते वासना यत्र तत्र सा याति पीनताम् ।
गुणो गुणिनि हि द्वित्वं सतो दृष्टं हि नासतः ॥ २८
अयं सोऽहं ममेदं चेत्येवमन्तः सवासनम् ।
यथा दामादयः शक्र भावयन्ति तथा कुरु ॥ २९
या या जनस्य विपदो भावाभावदशाश्च याः ।
तृष्णाकरञ्जवल्लयास्ता मञ्जर्यः कटुकोमलाः ॥ ३०

---

तया पिष्टाः संचूर्णिताः सर्वसुरालया येन ॥ ३ ॥ ४ ॥ अवसेतूनि अवसन्नसेतूनि ॥ ५ ॥ अन्तर्हितानि दूरं तिरोहितानि । लसन्नादं भ्राजमानाधिक्षेपध्वनि यथा स्यात्तथा ॥ ६ ॥ घनानि निबिडानि लतादिजालानि यस्मिंस्तथाविधे वने उड्डीनान् उत्प्लुत्य लीनान् ॥ ७ ॥ निर्वासनत्वात्स्वत एव प्रमुदिताशयता जयलाभनिमित्तकत्वेनोपचर्यते ॥ ८ ॥ जयोपायाय जयोपायप्रश्नाय ॥ ९ ॥ रक्ते रुधिरे रक्ता शोणा आननश्रीर्येषां तेषाम् ॥ १० ॥ शम्बरस्येहितमिच्छा । सृष्ट्यात्मकं दामव्यालकटक्रमम् ॥ ११ ॥ १२ ॥ तत्कालमिति 'कालाध्वनोः' इति द्वितीया ॥ १३ ॥ १४ ॥ अहमित्याकारा प्रथमान्तःकरणवृत्तिरहंकारचमत्कारः ॥ १५ ॥ तया वृत्त्या गृहीताः क्रमेणोपचिता वासना येषाम् ॥ १६ ॥ अवासनाः शम्बरसंकल्पेन प्रतिबन्धादनाविर्भूतवासना नत्वत्यन्ता वासनाः । ज्ञानं विना आत्यन्तिकवासनोच्छेदासंभवात् । निर्वासनानां जन्मानुपपत्तेश्चेति बोध्यम् ॥ १७ ॥ १८ ॥ भिन्नवासना नष्टवासनाः ॥ १९ ॥ २० ॥ २१ ॥ सर्वदुर्वासनानां मध्ये आत्मनो देहादितादात्म्येन परिच्छिन्नताभ्रान्तिवासनैव महामौर्ख्यकार्पण्यजन्ममरणादिबीजत्वान्महाननर्थ इत्याह—**इयन्मात्रे**त्यादिना ॥ २२ ॥ अवशीकृतो विवशीकृतः । संसारानर्थविह्वलीकृत इति यावत् ॥ २३ ॥ यद्यदि आत्मनो व्यतिरिक्तं किंचिदस्ति तर्हि तत्र उपादेयभावेन उपादातुं योग्यतया वासना भवतु नाम नतु तदस्तीत्यर्थः ॥ २४ ॥ तथा चासद्वस्तुन्यास्था त्याज्येत्याशयेनाह—**आस्थामात्र**मिति ॥ २५ ॥ उक्तं प्रकृते योजयति—**दामे**ति ॥ २६ ॥ देहाद्यहंभावग्राहिण्या अन्तर्वासनया देहादिनाशेनात्मनाशसंभावनया दीनतां कातरताम् । अन्यथा तादृशवासनाभावे तु मशकोऽप्यमराचलो मेरुरिवाप्रकम्प्यो भवतीत्यर्थः ॥ २७ ॥ हि यस्माद्गुणिनि धर्मिणि सति पीनत्वाख्यो गुणो भवति । किंचोपचयमन्तरा न पीनत्वसिद्धिः । उपचयश्च द्वितीयावयवसिद्धौ । तच्च द्वित्वं सतो द्रव्यस्य दृष्टं नासत इत्यर्थः ॥ २८ ॥ दामादयो यथा येनोपायेन । अयं देहादिरेव स प्रसिद्धोऽहम् । इदं

वासनातन्तुबद्धो यो लोको विपरिवर्तते ।
सा प्रवृद्धातिदुःखाय सुखायोच्छेदमागता ॥ ३१
धीरोऽप्यतिबहुज्ञोऽपि कुलजोऽपि महानपि ।
तृष्णया बध्यते जन्तुः सिंहः शृङ्खलया यथा ॥ ३२
देहपादपसंस्थस्य हृदयालयगामिनः ।
तृष्णा चित्तखगस्येयं वागुरा परिकल्पिता ॥ ३३
दीनो वासनया लोकः कृतान्तेनापकृष्यते ।
रज्जेव वालेन खगो विवशो भृशमुच्छ्वसन् ॥ ३४
अलमायुधभारेण संगरभ्रमणेन च ।
वासनाया विपर्यासं युक्त्या यत्नाद्रिपोः कुरु ॥ ३५
अन्तरा[1] क्षुभिते धैर्ये रिपोरमरनायक ।
न शस्त्राणि न चास्त्राणि न शास्त्राणि जयन्ति च ॥३६
दामव्यालकटास्त्वेते युद्धाभ्यासवशेन च ।
अहंकारमयीं मत्तास्ते ग्रहीष्यन्ति वासनाम् ॥ ३७
यदा तेऽत्यज्ञपुरुषाः शम्बरेण विनिर्मिताः ।
वासनामाश्रयिष्यन्ति तदा यास्यन्ति जेयताम् ॥३८
तत्तावद्युक्तियुद्धेन तान्प्रबोधयतामराः ।
यावदभ्यासवशतो भविष्यन्ति सवासनाः ॥ ३९
ततो वश्या भविष्यन्ति भवतां बद्धवासनाः ।
तृष्णाऽप्रोताशया लोके न च केचन पेलवाः ॥ ४०
समविषममिदं जगत्समग्रं
समुपनतं स्थिरतां स्ववासनान्तः ।
चलचललहरीभरो यथाब्धा-
वत इह सैव चिकित्स्यतां प्रयाता ॥ ४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे पितामहवाक्यं नाम सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः २८

श्रीवसिष्ठ उवाच ।
इत्युक्त्वा भगवान्देवांस्तत्रैवान्तर्धिमाययौ ।
वेलावनितटे शब्दं कृत्वेवाम्बुतरङ्गकः ॥ १
सुरास्त्वाकर्ण्य तद्वाक्यं जग्मुः स्वाभिमतां दिशम् ।
कमलामोदमादाय वनमालामिवानिलाः ॥ २
दिनानि कतिचित्स्वेषु कान्तेषु स्थिरकान्तिषु ।
द्विरेफा इव पद्मेषु मन्दिरेषु विशश्रमुः ॥ ३
कंचित्कालं समासाद्य स्वात्मोदयकरं शुभम् ।
चक्रुर्दुन्दुभिनिर्घोषं प्रलयाभ्ररवोपमम् ॥ ४
अथ दैत्यैर्महाव्योम्नि तैः पातालतले स्थितैः ।
कालक्षेपकरं घोरं पुनर्युद्धमवर्तत ॥ ५
ववुरसिशरशक्तिमुद्गरौघा
मुसलगदापरशूग्रचक्रशङ्खाः ।
अशनिगिरिशिलाहुताशवृक्षा
अहिगरुडादिमुखानि चायुधानि ॥ ६
मायाकृतायुधमहाम्बुघनप्रवाहा
क्षिप्रावहा प्रतिदिशं किल निर्जगाम ।
पाषाणपर्वतमहीरुहलक्षवृक्ष-
क्षुब्धाम्बुपूरघनघोषवती नदी द्राक् ॥ ७
मध्यप्रवाहवहदुल्मुकशूलशैल-
प्रासासिकुन्तशरतोमरमुद्गरौघा ।

जयपराजयपूजाजीवनादि मम इति भावयन्त्यभिमंस्यन्ते तथा तदुपायं कुर्वित्यर्थः ॥ २९ ॥ ३० ॥ यो विपरिवर्तते तस्य सा वासना अतिदुःखायेत्यर्थः ॥ ३१ ॥ ३२ ॥ हृदयपुण्डरीकमेवालयो नीडं तद्गामिनश्चित्तोपलक्षितजीवखगस्य ॥ ३३ ॥ रज्ज्वा तन्तुनेव ॥ ३४ ॥ वासनायाः शम्बरसंकल्पाहितनिरभिमानवासनायाः । विपर्यासं वैपरीत्यम् । अभिमानोपचयमिति यावत् । रिपोर्दामादेः ॥ ३५ ॥ शत्रोरन्तः अक्षुभिते धैर्ये सतीति शेषः । शास्त्राणि औशनसादीनि नीतिशास्त्राणि ॥ ३६ ॥ अहंकारमयीं वासनां ते एते संकल्पाद्ग्रहीष्यन्ति ॥ ३७ ॥ तत्त्वज्ञेभ्यस्तेषु कोऽपकर्षो येन ते वासनां गृह्णीयुस्तत्राह—अत्यज्ञेति ॥ ३८ ॥ प्रबोधयत व्यवहारपदेषु जागरूकान्कुरुत ॥ ३९ ॥ केचन केचिदपि तृष्णया अप्रोताशयाश्चेन्न च ते पेलवाः ॥ ४० ॥ यथा जलाशयान्तश्चलचलानामत्यन्तचपलानां विचित्रलहरीणां भरोऽतिशयो जलात्मनैवास्ति तथा स्ववासनान्तरिदं समविषमं स्थिरतां प्रवाहनित्यतां समुपनतं समुपगतं स्थितमित्यर्थः ॥ ४१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे पितामहवाक्यं नाम सप्तविंशः सर्गः ॥ २७ ॥

विश्रान्तानां पुनर्युद्धं विस्तरेणात्र वर्ण्यते ।
देवानां दानवानां च चिरमावासनोदयात् ॥ १ ॥

अम्बुनस्तरङ्गको वेलापदसान्निध्यात्समुद्रतरङ्ग इति गम्यते ॥ १ ॥ स्वाभिमतां स्वाभिप्रेतां तत्तद्दिक्पालाधिष्ठितदिशम् । स्वाभिमतामित्येतद्वनमालाया अपि विशेषणम् ॥ २ ॥ विशश्रमुर्विश्रान्ताः ॥ ३ ॥ ४ ॥ अथ दुन्दुभिरवं श्रुत्वा सन्नद्धदैत्येषूर्ध्वमागतेषु सत्सु । महाव्योम्न्यन्तरिक्षे ॥५॥ आसर्गसमाप्तेर्युद्धमेव वर्णयति—ववुरित्यादिना । शङ्खाः शङ्खाकारा आयुधविशेषाः । परप्राणहारित्वादायुधप्रायाः शङ्खशब्दा वा । गिरीणां शिलासहिताः गिरिप्रायाः शिला गिरयः शिलाश्चेति वा वृक्षान्ताः । अहिगरुडादिमुखान्यायुधानि च महाव्योम्नि ववुः जग्मुः ॥ ६ ॥ तदेव वर्णयति—मायेति । मायाकृतान्यायुधान्येव महाम्बूनि तेषां घनः प्रवाहो यस्याः । अतएव क्षिप्रान् शीघ्रहस्तानावहति जयायेति क्षिप्रावहा । पाषाणैः पर्वतैर्महीरुहलक्षैस्तेष्वपि प्रधानैर्वृक्षैश्च क्षुब्धाम्बुपूरेव घनघोषवती नदी द्राक् निर्जगामेत्यर्थः ॥ ७ ॥ तामेव

[1] अन्तरक्षुभिते इति पाठष्टीकाकृत्संमत इति भाति ।

गङ्गोपमाम्बुवलितामरमन्दिरेण
सर्वासु दिक्ष्वशनिवर्षनिकर्षणेन ॥ ८
पृथ्व्यादिदारुणशरीरमपि प्रहार-
दानग्रहा गहनराशिशरीरकैव ।
मायोपशाम्यति सुरासुरसिद्धसन्ना
मायाकृतिः पुनरुदेति नचैव सैव ॥ ९
शैलोपमायुधविघट्टितभूधराणि
रक्ताम्बुपूरपरिपूर्णमहार्णवानि ।
देवासुरेन्द्रशवशैलविरूढकुन्त-
तालीवनानि ककुभां वदनानि चासन् ॥१०
उद्गीर्णकुन्तशरशक्तिगदासिचक्र-
हेलानिगीर्णसुरदानवमुक्तशैला ।
काषोल्लसत्ककचदन्तनखाग्रमाला
जीवान्विता ह्यपतदायससिंहसृष्टिः ॥ ११
उज्ज्वाललोचनविषज्ज्वलनातपौघ-
दिग्दाहदर्शितयुगान्तदिनेशसेना ।
उड्डीयमानपरिदीर्घमहामहीध्र-
मग्नाब्धिवद्विषधरावलिरुल्ललास ॥ १२
उन्नादवज्रमकरोत्करकर्कशान्तः-
क्षुब्धाब्धिवीचिवलयैर्वलिताचलेन्द्रैः ।
आसीज्जगत्सकलमेव सुसंकटाङ्ग-
मावृत्तिभिर्विविधहेतिनदीप्रवाहैः ॥ १३
शैलास्त्रशस्त्रगरुडाचलचालितोच्च-
नागं महासुरगणाङ्गणमन्तरिक्षम् ।
आसीत्क्षणं जलधिभिः क्षणमग्निपूरैः
पूर्णं क्षणं दिनकरैः क्षणमन्धकारैः ॥ १४
गरुडगुडगुडाकुलान्तरिक्ष-
प्रविसृतहेतिहुताशपर्वतौघैः ।
जगदभवदसह्यकल्पकाले
ज्वलितसुरालयभूतलान्तरालम् ॥ १५
उदपतन्नसुरा वसुधातला-
द्गगनमद्रितटादिव पक्षिणः ।
अतिवलादपतन्विबुधा भुवि
प्रलयचालितशैलशिला इव ॥ १६
शरीररूढोन्नतहेतिवृक्ष-
वनावलीलग्नमहाग्निदाहाः ।

---

नदीं पुनर्वर्णयति—**मध्येति** । अम्बुभिर्जलैरिव वलितं वेष्टितं अमरमन्दिरं मेर्वादि येन तथाविधेनाशनिप्रमुखायुधवर्षप्रयुक्तेन निकर्षणेन वप्रच्छेदनेन गङ्गोपमा । मेर्वादिगिरिपृष्ठप्रवहद्गङ्गासदृशीत्यर्थः ॥ ८ ॥ संप्रति सुरासुराणां परस्परव्यामोहनाय विचित्रमायानिर्माणं प्रतीकारैश्च तदुपशमं पुनःपुनस्तत्सदृशमायान्तरोद्भवोपशमं चाह—**पृथ्व्यादी**ति । पृथ्वी मही तन्मयी आदिपदाज्जलतेजोवाय्वाकाशमयीव माया । यथेयं पृथिवी भ्रमतीव पततीव निरुणद्धीवाप्स्विव निमज्जन्त्यग्निनेव दह्यन्ते वायुनेवोड्डीयन्ते महागर्ताकाश इव निपतन्ति जना इति । दारुणानि रक्षःपिशाचादिशरीराणि तन्मयीव । यथा तानि निपतन्तीव धावन्तीव युध्यन्तीव खादन्तीवेत्येवंरूपा दारुणशरीरमयी । प्रहाराणां दानं ग्रहो ग्रहणं च बहुशो यस्यां तथाविधान्या । गहनानि परैर्दुस्तराणि राशीभूतानीव बहुत्वमापन्नानि शरीरकाणि प्रतियोधशरीराणि यस्यां सा तथाविधैवान्या । एवंविधापि प्रयुक्ता माया सुरैरसुरैः सिद्धैश्च प्रतीकारैः सन्ना विनाशिता सती उपशाम्यति पुनस्तादृश्येव मायाकृतिरुदेति सा किं सैव पूर्वोत्पन्नैव मायाकृतिरुत न चैव नैव च सा किंत्वन्यैवेति तत्त्वतो दुर्लक्ष्येत्यर्थः ॥ ९ ॥ देवलक्षणेष्वसुरेन्द्रशवलक्षणेषु च शैलेषु निखातानि कुन्तलक्षणतालीवनानि येषु तथाविधानि च ककुभां दिशां वदनानि मुखान्यासन् ॥ १० ॥ उद्गीर्णैः कुन्तशरशक्तिगदासिचक्रैर्हेलया निगीर्णाः सुरैर्दानवैश्च मुक्ताः शैला यस्याम् । काषेण घर्षणेनोल्लसतां ककचानां दन्ता एव नखाग्रमाला यस्यास्तथाविधा । परजीवग्राहित्वाज्जीवान्विता आयसानामयोविकारायुधमयानां हिंस्रत्वात्सिंहानां सृष्टिरपतत् । निष्पपातेत्यर्थः ॥ ११ ॥ इदानीं सर्पास्त्रनिर्मितदृष्टिविषमायासर्पसमूहं वर्णयति—**उज्ज्वाले**ति । उद्गता ज्वाला येभ्यस्तथाविधानां लोचनविषज्वलनानामातपौघेन ये दिशां दाहास्तैर्दर्शिता युगान्ते युगपदुदितद्वादशदिनेशानां सेना यया तथाविधा विषधराणां सर्पाणामावलिः उड्डीयमानैः परितो दीर्घैरुच्छ्रयेण महद्भिर्महीध्रैर्मग्नेन व्याप्तेनाब्धिना तुल्यं मग्नाब्धिवत् उल्ललास शुशुभे ॥ १२ ॥ इदानीं सामुद्रास्त्रमायया समुद्रवेष्टनं वर्णयति—**उन्नादे**ति । वलितो वेष्टितोऽचलेन्द्रो मेरुर्यैस्तथाविधैर्विविधैर्हेतिनदीप्रवाहैः उन्नादस्य वज्रादिरत्नैर्मकरोत्करैश्च कर्कशान्तःक्षुब्धस्याब्धेर्वीचिवलयैः सकलमेव जगत् आवृत्तिभिः परिवर्तनैः सुसंकटाङ्गं पीडितसर्वावयवमासीत् ॥ १३ ॥ महतां सुराणामसुराणां च युद्धाङ्गणभूतमन्तरिक्षं शैलास्त्रैः शस्त्रैर्मायारचितगरुडैर्बलादुत्पाट्य प्रक्षिप्तैरचलैश्च चालिताः पलायिताः प्राग्वर्णितदृष्टिविषनागा यस्मात्तथाविधं सत्क्षणं जलधिभिः पूर्णमासीत् । क्षणमग्निपूरैः पूर्णमासीत् । क्षणं दिनकरैः पूर्णमासीत् । क्षणमन्धकारैः पूर्णमासीदिति प्रागुक्तस्यैवानुवादः ॥ १४ ॥ गारुडास्त्रप्रभवैर्गरुडैः । गुडगुडेत्यव्यक्तानुकरणम् । गुडगुडेति ध्वनिभिराकुलेन्तरिक्षे प्रविसृतैर्हेतिहुताशपर्वतानामोघैः प्रवाहैः पुनरपि जगदसह्यकल्पकाल इव ज्वलितसुरालयभूतलान्तरालमभवत् ॥ १५ ॥ असुरा वसुधातलात् गगनं उत् ऊर्ध्वं अपतन् । विबुधास्तु ऊर्ध्वदेशाद्भुवि अपतन् ॥ १६ ॥ शरीरे संरूढैरुन्नतहेतिवृक्षैः संपन्नासु वनावलीषु लग्नो महा-

सुरासुराः प्रापुरथाम्बरान्तः
कल्पानिलान्दोलितशैलशोभाम् ॥ १७
सुरासुराद्रीन्द्रशरीरमुक्तै
रक्तप्रवाहैरभितो भ्रमद्भिः।
बभार पूर्णं परितोऽम्बरोऽद्रेः
संध्याकरौघक्षतमङ्ग गङ्गाम् ॥ १८
गिरिवर्षणमम्बुवर्षणं
विविधोग्रायुधवर्षणं तथा।
विषमाशनिवर्षणं च ते
सममन्योन्यमथाग्निवर्षणम् ॥ १९
अनयन्नयमार्गकोविदा
दलिताशेषगिरीन्द्रभित्तयः।
ससृजुश्च समं समन्ततः
करिकुम्भेष्विव पुण्यवर्षणम् ॥ २०
देवासुराः समरसंभ्रममाकुलास्ते
अन्योन्यमङ्गदलनाकुलहेतिहस्ताः।
नागेन्द्रडिम्भपृतनापृथुपीठपेषैः
कीर्णश्रियो नभसि बभ्रमुरक्षिपन्तः ॥ २१
छिन्नैः शिरःकरभुजोरुभरैर्भ्रमद्भि-
राकाशकाष्ठशलभैरशिवैस्तदानीम्।
आसीज्जगज्जठरमभ्रभरैरिवोग्रै-
राभास्करस्थगितदिक्तटशैलजालम् ॥ २२

रटद्भटास्फोटकटिस्फुटद्भिः
समीरितैर्हेतिकलासितौघैः।
परस्पराघातहतैः पतद्भि-
र्जगाम शीर्णा दलशो धरित्री ॥ २३
अन्योन्यमायुधशिलाचलवृक्षवर्षै-
र्मेरुप्रमाणकठिनाङ्गनिघर्षणैश्च।
आसीद्रणं चटचटास्फुटदन्तरिक्षं
कल्पक्षयान्तमिव भीमभरोग्रनादैः ॥ २४
मत्तानिलक्षुब्धजलानलार्क-
दलद्द्वयं दीर्घसुरासुरौघम्।
ब्रह्माण्डमाखण्डितकुड्यकोण-
मकालकल्पान्तकरालमासीत् ॥ २५
भ्रान्तैर्भृशं भरितदिक्तटमद्रिकूटै-
रात्मप्रमाणघनहेतिहतै रणद्भिः।
कूजद्भिरार्तिभिरिवोग्रगुहोच्चवातैः
क्रन्दद्भिरापतितसिंहरवैरदभ्रैः ॥ २६
मायानदीजलधियोधघनाग्निदाहै-
र्वृक्षैः सुरासुरशवैरचलैः शिलोच्चैः।
भ्रान्तैः शरासिशितशक्तिगदास्त्रशस्त्रै-
र्वातावकीर्णवनपर्णवदन्तरन्तः ॥ २७
अद्रीन्द्रपक्षपरिमाणगमाक्षमोक्त-
दुर्वारहस्तिबलदारुणदेहकैर्द्राक्।

नग्निदाहो येषां तथाविधाः सुरासुराः कल्पानिलैरान्दोलितानां भ्राम्यमाणानामर्थाज्ज्वलतां शैलानां शोभां प्रापुः ॥ १७ ॥ अद्रेर्मेरोः परितोऽभितश्चतुर्दिशमम्बर आकाशो नायकः। व्यत्ययेन पुंस्त्वम्। सुरासुरलक्षणानामद्रीन्द्राणां शरीरेभ्यो मुक्तैरभितो भ्रमद्भिः रक्तप्रवाहैः पूर्णं संध्याया नायिकायाः। करौघपदेन करजौघा लक्ष्यन्ते। तेषां क्षतं बभार। अथवा तथाविधरक्तप्रवाहैः पूर्णां गङ्गां बभारेत्युत्प्रेक्षयोर्विकल्पः। अङ्गेति संबोधने। पूर्णमित्येतन्नखक्षतगङ्गयोर्द्वयोरपि विशेषणम्। स्त्रीनपुंसकयोः 'नपुंसकमनपुंसकेन' इत्येकशेषे एकवद्भावः ॥ १८ ॥ ते सुरासुराः अनयन् इति परेणान्वयः ॥ १९ ॥ पुण्ये पुण्यके उत्सवविशेषे क्रीडार्थं नलिकायन्त्रैर्लाक्षाकुङ्कुमचन्दनादिरसवर्षणमिवेत्यर्थः ॥२०॥ अन्योन्यं समरसंभ्रमं युद्धोत्साहमक्षिपन्तः अत्यजन्तो देवासुरा अङ्गदलने आकुला व्यग्रा हेतियुक्ता हस्ता येषां तथाविधाः सन्तो नागेन्द्राणामैरावतादिदिग्गजानां डिम्भानां सन्ततिभूतानां गजानां पृतनायाः समूहस्य पृथूनां पीठानां पीठसदृशपृष्ठानां पेषैरिव पीडाकरैर्गुरुतरसंभारसंभृतारोहणैः कीर्णश्रियो विस्तारितशोभा नभसि बभ्रमुरित्यर्थः ॥ २१ ॥ आकाशस्य काष्ठानां दिशां च समाहार आकाशकाष्ठं तत्र शलभैः औत्पातिकरक्तपतङ्गविशेषभूतैः आकाशस्यैव फलपुष्पपर्णायनवशेषात्काष्ठसदृशस्य शलभैरिति वा। अभ्राणां मेघानां भरैरतिशयैरिव। 'अभ्रभरैः' इति पाठे

ऽपि अपां भ्रमरैर्मेघैरित्येवार्थः। आभास्करं भास्करपर्यन्तं स्थगितान्याच्छादितानि दिक्तटानि शैलजालानि च यत्र तथाविधमासीत् ॥ २२ ॥ सम्यगीरितैः प्रहृतैः रटतां भटानामास्फोटेनास्फालनेन कटिप्रदेशेषु स्फुटद्भिस्त्रुट्यद्भिस्तथा परस्परास्फालहतैरतएव पतद्भिर्हेतिभिः कलाभिर्यन्त्रक्षेपण्यादिकौशलैरसितानां क्षिप्तानां शिलापर्वतादीनामोघैः। इद छान्दसः। धरित्री शीर्णा सती दलशः खण्डशो जगाम। खण्डिताभूदित्यर्थः ॥ २३ ॥ मेरुप्रमाणानां कठिनानामङ्गानां देहानां निघर्षणैः परस्परसंघट्टनैश्च जनितैर्भीमो भरोऽतिशयो येषां तथाविधैरुग्रनादैः रणं कल्पक्षयान्तमिवासीदित्यर्थः ॥ २४ ॥ मत्तेन प्रचण्डेनानिलेन क्षुब्धा जलानलावधः अर्कश्च ऊर्ध्वं यत्र तथाविधं दलद्द्वयं यत्र। दीर्घा मायाविभवैः प्रवृद्धाः सुरासुरौघा यत्र। आखण्डिता विदारिताः प्रान्तकुड्यकोणा यत्र तथाविधं ब्रह्माण्डमकालप्रवृत्तकल्पान्त इव करालं भीषणमासीत् ॥ २५ ॥ पुनस्तत्कीदृशमासीत्तदाह—भ्रान्तैरिति। आत्मप्रमाणैः स्वसदृशायामैर्घनैर्हेतिभिर्हतैः। अतएव भृशं भ्रान्तैः। भ्रमणे च रणद्भिरुग्रगुहोच्चवातैरार्तिभिः कूजद्भिरिव अदभ्रैस्तारैः। आपतितसिंहरवैः क्रन्दद्भिरिव स्थितैरद्रिकूटैर्भरितदिक्तटमासीत् ॥ २६ ॥ वातावकीर्णवनपर्णवदन्तरन्तर्भ्रान्तैः शरासिप्रभृतिभिर्भरितमासीदित्यनुवर्तते ॥ २७ ॥ पुनस्तत्कीदृशमासीत्तदाह—अद्रीन्द्रेति। अद्रीन्द्रस्य मेरोः पक्षाः प्रलयन्तपर्वता-

आसीत्पतद्भटशरीरगिरीन्द्रवात-
विभ्रष्टदेवपुरपूर्णजलार्णवौघम् ॥ २८
घनघुंघुमपूरितान्तरिक्षा
क्षतजक्षालितभूधरा धरा च ।
रुधिरह्रदवृत्तिवर्तिनी वा
भुवनाभोगगुहा तदाकुलाभूत् ॥ २९
अनन्तदृक्प्रसृतविकारकारिणी
क्षयोदयोन्मुखसुखदुःखशंसिनी ।
रणक्रियासुरसुरघट्टसंकटा
तदाभवत्खलु सदृशीह संसृतेः ॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे दामव्यालकटपुनर्युद्धवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः २९

श्रीवसिष्ठ उवाच ।
एवंप्रायाकुलारम्भैरसुरैरसुहारिभिः ।
सहसा हृतसंरब्धैरारब्धः सुमहान् रणः ॥ १
माययाथ विवादेन सन्धिना विग्रहेण च ।
पलायनेन धैर्येण च्छन्नगोपायनेन च ॥ २
कार्पण्येनास्त्रयुद्धेन स्वान्तर्धानैश्च भूरिशः ।
धृतः स संगरो देवैस्त्रिंशद्वर्षाणि पञ्चकम् ॥ ३
वर्षाणि दिवसान्मासान्दशाष्टौ सप्त पञ्च च ।
वर्षाणि पेतुर्वृक्षाग्निहेत्येकाशनिभूभृताम् ॥ ४
एतावता तु कालेन दृढाभ्यासादहंकृतेः ।
दामादयोऽहमित्यास्थां जगृहुर्ग्रस्तचेतसः ॥ ५
नैकट्यातिशयाद्यद्वद्दर्पणं बिम्बवद्भवेत् ।
अभ्यासातिशयात्तद्वत्ते साहंकारतां गताः ॥ ६
यद्वद्दूरगतं वस्तु नादर्शे प्रतिबिम्बति ।
पदार्थवासना तद्वदनभ्यासान्न जायते ॥ ७
यदा दामादयो जाता अहंकारात्मवासनाः ।
तदा मे जीवितं मेऽर्थ इति दैन्यमुपागताः ॥ ८
भववासनया ग्रस्ता मोहवासनया ततः ।
आशापाशनिबद्धास्ते ततः कृपणतां गताः ॥ ९
मुग्धेव ह्यनहंकारैर्ममत्वमुपकल्पितम् ।
रज्ज्वां भुजङ्गत्वमिव दामव्यालकटैस्ततः ॥ १०
आपादमस्तको देहः कथं मे भवतु स्थिरः ।
ममेति तृष्णाकृपणा दीनतां ते समाययुः ॥ ११
स्थिरो भवतु मे देहः सुखायास्तु धनं मम ।

---

स्तत्सदृशपरिमाणैरतएव गमनं गमो मनुष्यादीनां संचारस्तन्निरोधकत्वात्तदक्षमैः पूर्वोक्तानां दुर्वारहस्तिबलानां हस्तियूथानां देहकैः शवैर्भरितदिक्तटमासीत् । किंच पतद्भिर्भटशरीरैर्गिरीन्द्रैर्वातविभ्रष्टदेवपुरैश्च पूर्णजलार्णवौघमासीत् ॥ २८ ॥ किंच तदा भुवनाभोगस्य ब्रह्माण्डस्योदरगुहा घनैर्घुंघुमैर्ध्वनिभिः पूरितान्तरिक्षा । क्षतजैः क्षालिता भूधरास्तदधराः पृथ्वीपातालादयश्च यस्यां तथाविधा । रुधिरह्रद एव वृत्तिराहारो येषां रक्षःपिशाचादीनां त इव वर्तनशीला वा सती आकुलाभूत् ॥ २९ ॥ अनन्तदृशामिन्द्रादिदेवानां प्रसृतभयादिविकारकारिणी । अनन्तायां त्रिविधपरिच्छेदशून्यायां दृशि आत्मचैतन्ये प्रसृतजगद्विकारकारिणी च । क्षयोन्मुखानामुदयोन्मुखानां च व्युत्क्रमात्सुखदुःखशंसिनी असुराणां अशास्त्रीयचित्तवृत्तीनां, सुराणां शास्त्रीयतद्वृत्तीनां प्रसिद्धानां चासुरसुराणां घट्टनं घट्टः परस्परसमागमस्तेन संकटा दुस्तरा रणक्रिया संसृतेरविद्यादिसंसारस्य सदृशी अभवत् ॥३०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दामव्यालकटपुनर्युद्धवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥

ग्रस्तदेहाभिमानानां दामादीनां सुरैर्मृधे ।
विषादो वर्ण्यते पश्चात्पलायनपराजयौ ॥ १ ॥

एवंप्रायाः प्राग्वर्णितप्रकारा आकुला व्यग्रप्राया आरम्भा येषां तैरसुहारिभिरसुरैः सुमहान् रणः आरब्धः ॥ १ ॥ स संगरो देवैः कदाचिन्मायया विवादेन वाग्युद्धमात्रेण दानाद्युपायैः सन्धिना कदाचिद्विग्रहेण कदाचित्पलायनेन प्रच्छन्नतया स्थित्वा स्वजनगोपायनेन ॥ २ ॥ कदाचित्कार्पण्येन कृपणवच्छरणागतियाञ्चादिना स संगरो विधृतः । तत्राद्यः संग्रामस्त्रिंशद्वर्षाणि विधृतः । द्वितीयस्तु पञ्चकं वर्षाणि अष्टौ मासान्दश दिवसान्विधृतः । तृतीयस्तु सप्त पञ्च चेति द्वादशदिवसान्विधृतः । तावत्कालं द्वयोरपि सेनयोर्वृक्षाणामग्नीनां हेतीनामेकेषां मुख्यानामशनीनां भूभृतां पर्वतानां च वर्षाणि वृष्टयः पेतुरित्यर्थः ॥३॥४॥ ग्रस्तचेतसो वासनयेति शेषः ॥५॥ अभिमानाभ्यासस्याहंकारदार्ढ्यहेतुतां दृष्टान्तेन दर्शयति—**नैकट्यादि**ति ॥६॥ उत्पन्नापि वासना चिरमभ्यासत्यागेन नश्यतीत्याशयेनाह—**यद्वदि**ति । दूरगतं दूरपरित्यक्तं न प्रतिबिम्बति प्रतिबिम्बभावादपैति । अनभ्यासादभ्यासपरित्यागात् ॥ ७ ॥ अहंकार एवात्मेति वासना येषां ते अहंकारात्मवासनाः । जीवितं जीवनं मे स्यात् तदर्थं मे अर्थो धनं स्यादित्याशया दैन्यमुपागताः ॥ ८ ॥ ततः भवत्यस्मादिति भवो विहितनिषिद्धप्रवृत्तिस्तद्वासनया ग्रस्ताः । देहो मे सदैवारोगदृढभोगक्षमोऽस्त्वित्यादिमोहवासनया ॥ ९ ॥ 'मुग्धेव ह्यनहंकारैः' इति पाठे मुग्धेव कृपणतां गता इति पूर्वेणान्वयः । 'शुद्धैरप्यनहंकारैः' इति पाठे तु वस्तुतः शुद्धैरपि दामादिभिर्ममत्वमुपकल्पितमिति स्पष्टोऽर्थः ॥ १० ॥ ममेति तृष्णाया एव विवरणमापादमस्तक

इति बद्धधियां तेषां धैर्यमन्तर्द्धिमाययौ ॥ १२
सवासनत्वाद्वपुषामल्पसत्त्वात्सुरद्विषाम् ।
या तु प्रहारपरता मार्जितेवाशु साभवत् ॥ १३
कथं सुरा जगत्यस्मिन्भवाम इति चिन्तया ।
विवशा दीनतां जग्मुः पद्मा इव निरम्भसः ॥ १४
तेषां योषान्नपानेन स्वाहंकृतिमतां रतिः ।
बभूव भावभावस्था भीषणा भवभाजिनी ॥ १५
अथ तस्मिन्रणे भीत्या सापेक्षत्वमुपाययुः ।
मत्तेभघनसंरब्धे वने हरिणका इव ॥ १६
मरिष्यामो मरिष्याम इति चिन्ताहताशयाः ।
मन्दं मन्दं किल भ्रेमुः कुपितैरावणे रणे ॥ १७
शरीरैकार्थिनां तेषां भीतानां मरणादपि ।
अल्पसत्त्वतया मूर्ध्नि कृतमेव परैः पदम् ॥ १८
अथ प्रम्लानसत्त्वास्ते हन्तुमग्रगतं भटम् ।
न शेकुरिन्धने क्षीणे हविर्दग्धुमिवाग्नयः ॥ १९
विबुधानां प्रहरतां मशकत्वमुपागताः ।
क्षतविक्षतसंघातास्तस्थुः सामान्यसङ्कटाः ॥ २०
बहुनात्र किमुक्तेन मरणाद्भीतचेतसः ।
दैत्या देवेषु वल्गत्सु दुद्रुवुः समराजिरात् ॥ २१
तेषु द्रवत्सु भीतेषु सर्वतो दानवादिषु ।
दामव्यालकटाख्येषु विख्यातेषु सुरालये ॥ २२
तद्दैत्यसैन्यं न्यपतद्विद्रुतं खादितस्ततः ।
कल्पान्तपवनोद्धूतं[1] ताराजालमिवाभितः ॥ २३
अमराचलकुञ्जेषु शिखराणां शिखासु च ।
तटेषु वारिराशीनां पयोदपटलेषु च ॥ २४
सागरावर्तगर्तेषु श्वभ्रेषूद्यत्सरित्सु च ।
जङ्गलेषु दिगन्तेषु ज्वलत्सु विपिनेषु च ॥ २५
तद्बाणोच्छिन्नदेशेषु ग्रामेषु नगरेषु च ।
अटवीषूग्रपक्षासु मरुभूमिदवाग्निषु ॥ २६
लोकालोकाचलान्तेषु पर्वतेषु ह्रदेषु च ।
आन्ध्रद्रविडकाश्मीरपारसीकपुरेषु च ॥ २७
नानाम्भोधितरङ्गासु गङ्गाजलघटासु च ।
द्वीपान्तरेषु जालेषु जम्बूखण्डलतासु च ॥ २८
सर्वतः पर्वताकाराः पतितास्ते सुरारयः ।
विस्फोटिताङ्घ्रचरणा विभिन्नकरबाहवः ॥ २९
शाखालग्नान्त्रतन्त्रीका मुक्तरक्तभरच्छटाः ।
व्यस्तशेखरमूर्धानो निष्क्रान्ताः कुपितेक्षणाः ॥ ३०
सायुधा बलमायेषुच्छिन्नकङ्कटहेतयः ।
दूरापातविपर्यस्तपतन्नानायुधांशुकाः ॥ ३१
कण्ठलम्बिशिरस्त्राणचटत्कारोग्रभीतयः ।
शिखाशतशिलाप्रोता देहभागविलम्बिनः ॥ ३२
शाल्मल्युग्रदृढापातकटत्कण्टकसंकटाः ।
सुशिलाफलकास्फालशतधाशीर्णमस्तकाः ॥ ३३
सर्व एव सकलायुधशस्त्र-
पातमात्रसमनन्तरमेव ।
दिक्षु नाशमगमन्नसुरेन्द्राः
पांसवोऽम्बुदनिधौ पयसीव ॥ ३४

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे दामव्यालकटोपाख्याने असुरपरिभ्रंशो नामैकोनत्रिंशः[2] सर्गः ॥ २९ ॥

---

इति ॥ ११ ॥ १२ ॥ सुरद्विषां दामादीनां या प्राक् प्रसिद्धा प्रहारपरता सा अल्पसत्त्वात्न्यूनबलत्वान्मार्जितेव लिपिः कार्याक्षमा अभवत् ॥ १३ ॥ सुरा अमराः कथं भवाम इति चिन्तया ॥ १४ ॥ भावा विषयास्तेषां भावनं भावस्तत्स्था अतएव भवं भाजयति प्रापयति तच्छीला ॥ १५ ॥ सापेक्षत्वं जीवने इति शेषः । मत्तैभैर्युद्धाय घनं संरब्धे कुपिते ॥ १६ ॥ कुपितः ऐरावण ऐरावतो यत्र ॥ १७ ॥ परैः शत्रुभिः ॥ १८ ॥ १९ ॥ सामान्या इतरे सङ्कटा इव सामान्यसङ्कटाः ॥ २० ॥ वल्गत्सु अभिपतत्सु ॥ २१ ॥ २२ ॥ खात् नभसः ॥ २३ ॥ अमराचलकुञ्जेष्वित्यादिसप्तम्यन्तपदानां सर्वेषां 'पतितास्ते सुरारय' इत्यत्र संबन्धः ॥ २४ ॥ उद्यन्तीषु प्रवृद्धासु सरित्सु । कर्मधारये पुंवद्भावः ॥ २५ ॥ तेषां देवासुराणां बाणैरुच्छिन्नेषु देशेषु । उग्राणां क्रूराणां सिंहव्याघ्ररक्षसां पक्षासु परिग्रहभूतासु ॥ २६ ॥ २७ ॥ सहस्रमुखैर्गङ्गायाः समुद्रप्रवेशादेकोऽप्यम्भोधिः प्रदेशभेदेन नानेति नानाम्भोधिषु तरङ्गा यासां तासु । द्वीपान्तरेषु मत्स्यबन्धनाय प्रसारितेषु जालेषु । जम्बूखण्डा देशभेदाः ॥ २८ ॥ पतितानेव विशिनष्टि—**विस्फोटिताङ्घ्र** इत्यादिना ॥ २९ ॥ मुक्ता रक्तभरच्छटा यैः । निष्क्रान्ता नितरां विक्षिप्तपादाः ॥ ३० ॥ बलैर्मायाभिरिषुभिश्च छिन्नाः कङ्कटा वारबाणा हेतयश्च येषाम् । दूरमापातेन पलायनेन विपर्यस्ताः पतन्तो नानायुधानामंशुकानां च समाहारा येषाम् ॥ ३१ ॥ कण्ठविलम्बिनां शिरस्त्राणानां चटत्कारैरुग्रा भीतिर्येषाम् । ग्रन्थिताग्रैः शिखाशतैः पर्वताग्रशिलासु प्रोताः । अतएव देहभागैर्विलम्बिनो लम्बमानाः ॥ ३२ ॥ शाल्मलीषु सकण्टकत्वाद्दृढापाते कटद्भिः कण्टकैः संकटं दुःखं येषाम् ॥ ३३ ॥ उपसंहरति—**सर्व एवेति** । इत्थं सर्व एवासुरेन्द्राः सकलानामायुधानां शस्त्राणां च पातमात्राद्युद्धारम्भात्समनन्तरमेव दिक्षु नाशमदर्शनमगमन् । यथाम्बुदानां निधौ वर्षतौ पयसि जले पांसवो नाशं गच्छन्ति तद्वदित्यर्थः ॥ ३४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे असुरपरिभ्रंशो नामैकोनत्रिंशः सर्गः ॥ २९ ॥

[1] पवनोद्धूतं इति पाठः. [2] एकोनत्रिंशश्लोकी इति भावः.

## त्रिंशः सर्गः ३०

श्रीवसिष्ठ उवाच ।
इति तुष्टेषु देवेषु दानवेषु हतेषु च ।
दामव्यालकटा दीना बभूवुर्भयविह्वलाः ॥ १
जज्वाल कुपितः केति कल्पान्ताग्निरिव ज्वलन् ।
शम्बरः शमितानीको दामव्यालकटान्प्रति ॥ २
शम्बरस्य भयाद्गत्वा पातालमथ सप्तमम् ।
दामव्यालकटास्तस्थुस्त्यक्त्वाथ निजमण्डलम् ॥ ३
यमस्य किङ्करा यत्र ये कालत्रासनक्षमाः ।
कुतूहलेन तिष्ठन्ति नरकार्णवपालकाः ॥ ४
ते तेषामथ यातानां दत्त्वा भयमभीरवः ।
चिन्ता इव घनाकाराः कुमारीश्च ददुः क्रमात् ॥ ५
तैः सार्धं नीतवन्तस्ते तत्र दामादयोऽवधिम् ।
दशवर्षसहस्रान्तमात्तानन्तकुवासनाः ॥ ६
इयं मे कामिनी कन्या ममेयं प्रभुतेति च ।
दुरूढस्नेहबन्धानां कालस्तेषां व्यवर्तत ॥ ७
धर्मराजोऽथ तं देशं कदाचित्समुपाययौ ।
महानरककार्याणां विचारार्थं यदृच्छया ॥ ८
अपरिज्ञातमेनं ते धर्मराजं त्रयोऽसुराः ।
न प्रणेमुर्विनाशाय सामान्यमिव किङ्करम् ॥ ९
अथ वैवस्वतेनैते ज्वलितासूग्रभूमिषु ।
विहितभ्रूपरिस्पन्दमात्रेणैव निवेशिताः ॥ १०
तत्र ते करुणाक्रन्दाः ससुहृद्दारबन्धवः ।
प्रदग्धाः पर्णविटपा वृक्षा इव वनानिलैः ॥ ११
स्वया वासनया जातास्तयैव क्रूरया पुनः ।
बन्धकर्मकराकाराः किराता राजकिङ्कराः ॥ १२
तज्जन्माथ परित्यज्य जाताः श्वभ्रेषु वायसाः ।
तदन्ते गृध्रतां यातास्ततोऽपि शुकतां गताः ॥ १३
सूकरत्वं त्रिगर्तेषु मेषत्वं पर्वतेषु च ।
मगधेष्वथ कीटत्वं बभ्रुस्ते[2] च कुबुद्धयः ॥ १४
अनुभूयेतरामन्यां चित्रां योनिपरम्पराम् ।
अद्य मत्स्याः स्थिता राम काश्मीरारण्यपल्वले ॥ १५
दावाग्निक्कथितालपालपपङ्ककल्पाम्बुपायिनः ।
न म्रियन्ते न जीवन्ति जरज्जम्बालजर्जराः ॥ १६
विचित्रयोनिसंरम्भमनुभूय पुनःपुनः ।
भूत्वा भूत्वा पुनर्नष्टास्तरङ्गा जलधाविव ॥ १७
भवजलधिगतास्ते वासनातन्तुनुन्ना-
स्तृणमिव चिरमूढा देहरूपैस्तरङ्गैः ।
उपशममुपयाता राम नाद्याप्यनन्तं
परिकलय महत्त्वं दारुणं वासनायाः ॥ १८

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपाये स्थितिप्रकरणे दामव्यालकटजन्मान्तरचित्रवर्णनं नाम त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ३१

श्रीवसिष्ठ उवाच ।
अतः प्रबोधाय तव वच्मि राम महामते ।
दामव्यालकटन्यायो मा तेऽस्त्विति तु लीलया ॥ १
अविवेकानुसंधानाच्चित्तमापदमीदृशीम् ।

पाताले यमदग्धानामत्र जन्मपरम्परा ।
काश्मीरदेशमत्स्यान्ता दामादीनां प्रकीर्त्यते ॥ १ ॥

इत्यनया रीत्या दानवेषु हतेषु सत्सु। देवेषु तुष्टेष्विति पाठक्रमादर्थक्रमबलीयस्त्वाद्योज्यम् । दीना विषण्णाः ॥ १ ॥ शम्बरो दामव्यालकटान्प्रति कुपितः सन् केति पृच्छन् जज्वालेत्यर्थः ॥२॥ ३ ॥ सप्तमं पातालमेव विशिनष्टि—**यमस्येति**। तत्रापि शम्बराद्भयं किं न स्यादिति शङ्कां वारयितुं कालत्रासनक्षमा इति । कालो मृत्युरिवान्येषां त्रासनक्षमा इत्यर्थः ॥ ४ ॥ यातानां शरणमिति शेषः । त्रिभ्यस्तिस्रः कुमारीः कन्या घनाकारा मूर्तिमतीश्चिन्ता इव स्थिता इत्यर्थः ॥ ५ ॥ अवधिं आयुःशेषम् ॥ ६ ॥ आत्तानन्तकुवासनाः प्रपञ्चयति—**इयमिति** ॥ ७ ॥ धर्मराजो यमः ॥ ८ ॥ छत्रचामरादिलिङ्गादर्शनाद्यमराजोऽयमित्यपरिज्ञातम् ॥ ९ ॥ ज्वलितासु रौरवाद्युग्रनरकभूमिषु । तासु हि शतयोजनपर्यन्तं जानुमितज्वलदङ्गारादयः प्रसिद्धाः ॥ १० ॥ पर्णान्येव विटपाः शाखा येषां ते पर्णविटपाः । बाला इति यावत् ॥ ११ ॥ वधबन्धकर्मकरयमकिङ्करसहवासात्तादृशवासनया बन्धकर्मकराकाराः किङ्कराश्च । एवमग्रेऽप्यूहम् ॥ १२ ॥ १३ ॥ ते बभ्रुः । दधुरित्यर्थः ॥ १४ ॥ मत्स्या भूत्वेति शेषः ॥ १५ ॥ जरज्जम्बाले जीर्णपङ्कस्तेषु जर्जराः श्लथदेहाः ॥ १६ ॥ उक्तमेवानुवदति—**विचित्रेति** ॥ १७ ॥ उपसंहरति—**भवजलधीति** । वासनातन्तुभिर्नुन्नाः प्रेरिताः सन्तो देहरूपैस्तरङ्गैस्तृणमिव चिरं ऊढा नानाप्रदेशं प्रापितास्ते अद्यापि अनन्तं अपरिच्छेद्यफलं उपशमं नोपयाताः । वासनाया दारुणं विदारुणं महत्त्वं । महानर्थरूपत्वमिति यावत् । परिकलय । अनेनैव दृष्टान्तेन सर्वत्र पश्येत्यर्थः ॥ १८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दामव्यालकटजन्मान्तरचित्रवर्णनं नाम त्रिंशः सर्गः ॥ ३० ॥

अर्थच्युतिरनर्थाप्तिरहंमानादिहोच्यते ।
तथा दामादिभावानां सत्त्वासत्त्वनिराक्रिया ॥ १ ॥

पूर्वोक्तं स्मारयन् प्रकृतकथां तत्र योजयति—**अत इति** ॥ १ ॥ अविवेकानुसंधानाद्विवेकानुसंधानाभावात् । ईदृशीं अभि-

१ दामव्यालकटादीनां इति षष्ठीबहुवचनान्तः पाठः प्राप्तु-द्रिते आदर्शान्तरे च लभ्यते, तत्स्वारस्येषु [illegible] समधिगन्तव्यम्. २ ते वक्रबुद्धय इति पाठः.

अनन्तभवदुःखाय परिगृह्णाति हेलया ॥ २
क्व किलामरविध्वंसिशिरस्वरानीकनाथता ।
क्व तापतप्तजम्बालजालजर्जरमीनता ॥ ३
क्व धैर्यममरानीकविद्रावणकरं महत् ।
क्व किरातमहीपालक्षुद्रकिङ्कररूपता ॥ ४
क्व नाम निरहङ्कारचित्सत्त्वोदारधीरता ।
क्व मिथ्यावासनावेशादहङ्कारकुकल्पना ॥ ५
शाखाप्रतानगहना संसारविषमञ्जरी ।
अहङ्काराङ्कुरा देव समुदेतीयमातता ॥ ६
अहङ्कारमतो राम मार्जयान्तः प्रयत्नतः ।
अहं न किंचिदेवेति भावयित्वा सुखी भव ॥ ७
अहङ्काराम्बुदच्छन्नं परमार्थेन्दुमण्डलम् ।
रसायनमयं शीतमदृश्यत्वमुपागतम् ॥ ८
अहङ्कारपिशाचार्ता दामव्यालकटास्त्रयः ।
गताः सत्तामसन्तोऽपि मायामाहात्म्यदानवाः ॥ ९
काश्मीरेषु महारण्यसरसीवनपल्वले ।
अद्य मत्स्याः स्थिता राम शैवाललवलालसाः ॥ १०

श्रीराम उवाच ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
ते ह्यसन्तः कथं सत्तां संपन्ना इति मे वद ॥ ११

श्रीवसिष्ठ उवाच ।

एवमेतन्महाबाहो नासत्संभवति क्वचित् ।
कदाचित्किंचिदप्येव बृहत्संपद्यते तनु ॥ १२
किमसत्संस्थितं ब्रूहि किं तत्सद्वाथ संस्थितम् ।
सम्यङ्गिदर्शनेनैव करिष्ये तव बोधनम् ॥ १३

श्रीराम उवाच ।

सन्त एव स्थिताः सन्तो ब्रह्मन्वयमिमे किल ।
दामादयस्त्वसन्तोऽपि वक्षि सन्तः स्थिता इति ॥ १४

श्रीवसिष्ठ उवाच ।

यथा दामादयो राम स्थिता मायामया इति ।
असत्या एव सत्याभा मृगतृष्णाम्बुपूरवत् ॥ १५
तथैवेमे वयमपि ससुरासुरदानवाः ।
असत्या एव वल्गामो याम आयाम एव च ॥ १६
अलीकमेव त्वद्भावो मद्भावोऽलीकमेव च ।
अनुभूतोऽप्यसद्रूपः स्वप्ने स्वमरणं यथा ॥ १७
मृतो बन्धुर्यथा स्वप्नेऽप्यनुभूतोऽप्यसन्मयः ।
मृतोऽयमिति चेज्ज्ञप्तिर्भवेदेवमिदं जगत् ॥ १८
एषातिमूढविषय उक्तिरेव न राजते ।
अभ्यासेन विनोदेति नानुभूतेरपह्नवः ॥ १९
निश्चयोऽन्तःप्ररूढो यः संपन्नोऽभ्यसनं विना ।
नाशमायाति लोकेऽस्मिन्न कदाचन कस्यचित् ॥ २०
इदं जगदसद्ब्रह्म सत्यमित्येव वक्ति यः ।
तमुन्मत्तमिवोन्मत्तो विमूढोऽपि हसत्यलम् ॥ २१
अक्षीबक्षीबयोरैक्यं क्व किलेहाज्ञतज्ज्ञयोः ।
अन्धप्रकाशयोर्बोधे स्याच्छायातपयोरिव ॥ २२
यत्नेनाप्यनुभूतोऽर्थः सत्ये कर्तुमपह्नवम् ।

---

मानलक्षणां आपदम् ॥ २ ॥ प्राक्तननिरभिमानितायाः पश्चात्तनाभिमानस्य च फलतो महदन्तरं दर्शयति—**क्व किले**त्यादिना ॥ ३ ॥ ४ ॥ स्वरूपतोऽप्यन्तरमाह—**क्व नामे**ति ॥५॥ मञ्जरीपदेन तत्प्रधाना वल्ली गृह्यते ॥ ६ ॥ केनोपायेन तन्मार्जनं तमाह—**अहं न किंचिदेवे**ति । दृश्ये जडे सर्वत्रेदंत्वस्यैव दर्शनादहंत्वायोगाद्दृक्स्वरूपे अहङ्कारादिसर्वसाक्षिण्यभिमानधर्मैकत्वाघटनेनाहंत्वायोगाद्दृग्दृश्यव्यतिरिक्तस्य चालीकत्वादहंत्वास्पदं न किंचिदेवेति तत्त्वतो भावयित्वेत्यर्थः ॥ ७ ॥ अहङ्कारस्यानर्थहेतुतामुक्त्वा अर्थविघातकतामाह—**अहङ्कारे**ति । रसायनमयमानन्दैकरसम् । अमृतमयं शीततापत्रयशून्यं च ॥ ८ ॥ सत्तां जन्ममरणप्रवाहे स्थितिम् । प्राक्तत्रासन्तोऽपि मायामाहात्म्यप्रयुक्ता दानवा दामादयः ॥ ९ ॥ शैवाललवेषु लालसा अत्यन्तं साभिलाषाः ॥ १० ॥ असन्तोऽपि सत्तां गता इत्येतच्छ्रुत्वा रामस्तदनुपपत्तिं शङ्कते—**नासत** इति ॥ ११ ॥ स्वाभिप्रेतं विशेषं वक्तुं प्रथमं रामोक्तिमभ्युपगम्य वसिष्ठः परिहारमारभते—**एवमेतदि**ति । सत्यं कदाचिदपि किंचिदपि नासत्संभवति, किंतु तनु सूक्ष्ममेव सदाविर्भावेन बृहत्संपद्यते सैवोत्पत्तिर्बृहत्तिरोभावेन तनु संपद्यते स एव विनाश इत्यर्थः ॥१२॥ अस्त्वेवं तथापि अनात्मवस्तुषु सत्त्वासत्त्वविभाग एव दुर्निरूप इति विवक्षू रामं पृच्छति—**कि**मिति ॥ १३ ॥ ननु अस्मदादीनां सत्त्वं प्रत्यक्षादिप्रमाणसिद्धं, दामादीनां मायामात्रत्वादसत्त्वं त्वयैवोक्तं, तथाच कथं तेषां पुनः सत्त्वं विप्रतिषिद्धं वदसि को वा तवाभिप्राय इत्यर्थः ॥ १४ ॥ यद्यस्मदादिशरीराणां व्यावहारिकप्रमाणव्यवहारयोग्यत्वात्सत्त्वं मन्यसे तर्हि दामादीनामपि तत्तुल्यम् । अथ तत्त्वज्ञानबाध्यत्वाद्दुर्वचत्वाद्वा असत्त्वं मन्यसे तदपि तुल्यमिति न विप्रतिषेध इत्याशयेन वसिष्ठ उत्तरमाह—**यथे**त्यादिना॥१५॥१६॥त्वद्भावो रामशरीरभावः, मद्भावो वसिष्ठशरीरभावः ॥१७॥१८॥ जगत्सत्यतानिश्चयवानतिमूढस्तद्विषये तं प्रति एषा अलीकत्वोक्तिर्न राजत एव। कुतस्तत्राह—**अभ्यासेने**ति। परमार्थतत्त्वविचाराभ्यासेन विना जगत्सत्यत्वानुभूतेरपह्नवोऽपलापो नोदेति ॥१९॥ एवं पूर्वोत्पन्नदुःसंस्कारनाशोऽपि शास्त्रार्थतत्त्वाभ्यासं विना नोदेतीत्याह—**निश्चय** इति ॥ २० ॥ अतएव ह्यनधिकारिण्युपदेशवाक्यमुन्मत्तप्रलपितप्रायत्वादज्ञानामभिज्ञानां चोपहासयोग्यमेव भवतीत्याह—**इद**मिति ॥ २१ ॥ यद्यज्ञान्नोपदिशेत्तैः सहाज्ञचेष्टाभिरेव ज्ञोऽपि व्यवहरेत्तर्हि सोऽप्यज्ञः स्यात्, तथा चाज्ञतज्ज्ञयोरैक्यं स्यादित्याशङ्क्याह—**अक्षीबे**ति। क्षीबो मदिरामत्तः अक्षीबो विमदस्तयोरैक्यं क्व स्यात् । अन्धयतीत्यन्धं तमः । प्रकाशः सूर्यादिः ॥ २२ ॥ इतोऽप्यज्ञो नोपदेश्य इत्याह—**यत्ने**नेति । अज्ञो महतापि यत्नेन बोध्यमानोऽपि अन्तर्बहिश्च

---

१ अत्र शीतं तापत्रयशून्यं च इति पाठः साधीयान्.

अज्ञोऽन्तश्च न शक्नोति शवमाक्रमणं यथा ॥ २३
ब्रह्म सर्वं जगदिति वक्तुं नाज्ञस्य युज्यते ।
तपोविद्याननुभवे स तदेवानुभूतवान् ॥ २४
अबुद्धविषये ह्येषा राम वाक्प्रविराजते ।
बुद्धस्यासीति रूपेण किल नास्त्येव किंचन ॥ २५
ब्रह्मैवेदं परं शान्तमित्येवानुभवन्सुधीः ।
अपह्नवः स्वानुभूतेः कर्तुं तस्य क्व युज्यते ॥ २६
परस्माद्व्यतिरेकेण नाहमात्मनि किंचन ।
हेमनीवोर्मिकादित्वं न मय्यस्ति विशिष्टता ॥ २७
भूतता व्यतिरेकेण मूढे नात्मनि किंचन ।
ऊर्म्यादिबुद्धौ हेमेव ज्ञे नास्ति परमार्थता ॥ २८
मिथ्याहंतामयो मूढः सत्यैकात्ममयः सुधीः ।
युज्यते न क्वचिन्नाम स्वभावापह्नवोऽनयोः ॥ २९
यो यन्मयस्तस्य तस्मिन्युज्यतेऽपह्नवः कथम् ।
पुरुषस्य घटोऽसीति वाक्यमुन्मत्तमेव हि ॥ ३०
तस्मान्नेमे वयं सत्या नच दामादयः क्वचित् ।
असत्यास्ते वयं चेमे नास्ति नः खलु संभवः ॥ ३१
सत्यं संवेदनं शुद्धं बोधाकाशं निरञ्जनम् ।
सत्यं सर्वगतं शान्तमस्त्यनस्तमयोदयम् ॥ ३२

सर्वं शान्तं च निःशून्यं न किंचिदिव संस्थितम् ।
तत्र व्योम्नि विभान्तीमा निजा भासोऽङ्ग सृष्टयः ॥ ३३
यथा तैमिरिकाक्षस्य सहजा एव दृष्टयः ।
केशोण्ड्रकादिवद्भान्ति तथेमास्तत्र दृष्टयः ॥ ३४
स आत्मानं यथा वेत्ति तथानुभवति क्षणात् ।
चिदाकाशस्ततोऽसत्यमपि सत्यं तदीक्षणात् ॥ ३५
न सत्यमस्ति नासत्यमिति तस्माज्जगत्त्रये ।
यद्यथा वेत्ति चिद्रूपं तत्तथोदेत्यसंशयम् ॥ ३६
यथा दामादयस्तद्वदेवमभ्युदिता वयम् ।
सत्यासत्याः किमत्राङ्ग तान्प्रत्यपि विकल्पना ॥ ३७
अस्यानन्तस्य चिद्व्योम्नः सर्वगस्य निराकृतेः ।
चिदुदेति यथा यान्तस्तथा सा तत्र भात्यलम् ॥ ३८
यत्र दामादिरूपेण संवित्प्रकचिता स्वयम् ।
तथा सा तत्र संपन्ना तथाकारानुभूतितः ॥ ३९
अस्मदादिस्वरूपेण संविद्यत्रोदिता स्वयम् ।
तथासौ तत्र संपन्ना तथाकारानुभूतितः ॥ ४०
स्वस्वप्नप्रतिभासस्य जगदित्यभिधा कृता ।
चिद्व्योम्नो व्योमवपुषस्तापस्येव मृगाम्बुता ॥ ४१
यत्र प्रबुद्धं चिद्व्योम तत्र दृश्याभिधा कृता ।

मनोबुद्ध्यादिभेदेन रूपरसादिभेदेन चानुभूतो द्वैतरूपो योऽर्थस्तस्य सत्ये अधिष्ठाने अपह्नवं नेतिनेतीति बाधं कर्तुं न शक्नोति। यथा शवं कुणपं आक्रमणं स्वपद्भ्यां भ्रमणं कर्तुं न शक्नोति तद्वत् । नचाध्यस्तापह्नवं विना अधिष्ठानतत्त्वं बोद्धुं शक्यमिति व्यर्थस्तदुपदेशः स्यादित्यर्थः ॥ २३ ॥ 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति ज्ञानाधिकारसिद्धये तपउपासनादिविधानादपि तदसंस्कृतोऽज्ञो नोपदेशार्ह इत्याह—**ब्रह्मेति** । यतस्तपोविद्यादीनामननुभवे अनुभवप्रयुक्तसंस्काराभावे सति सोऽज्ञस्तत्प्रसिद्धं संसारिदेहाद्यात्मभावमेवानादिकालमनुभूतवान्न कदापि असंसार्यात्मभावमित्यर्थः ॥२४॥ क्व तर्ह्युपदेशवाग्विराजते तत्राह—**अबुद्धेति** । अनुदरा कन्येतिवदल्पार्थो नञ् समस्यते । अल्पबुद्धविषये इत्यर्थः । बुद्धस्य सम्यग्बोधवतस्तु असीति अहंकारपरामर्शिरूपेण परामृष्टुं किंचिदपि नास्त्येवेति सोऽपि नोपदेशार्ह इत्यर्थः। तथाचोक्तमुपक्रमे 'नात्यन्तमज्ञो नोत ज्ञः सोऽस्मिञ्छास्त्रेऽधिकारवान्' इति ॥ २५ ॥ असीति बोद्धुमशक्त्याहं ब्रह्मास्मीति वाक्यार्थबोधज्ञस्यानधिकारवन्निषेध्याप्रसिद्धेर्नेतीत्यपह्नववाक्यार्थबोधेऽपि ज्ञस्यानधिकारमाह—**ब्रह्मैवेति** ॥ २६ ॥ ननु हेमन्यूर्मिकादेरिवाहंकारस्यैव ब्रह्मण्यपह्नवोऽज्ञेन कुतो न क्रियते तत्राह—**परस्मादिति** । यतः आत्मनि अहंपदवाच्यं परस्माद्व्यतिरेकेणोर्मिकादिकमिव प्रातीतिकमपि ज्ञस्य किंचिन्नास्तीत्यर्थः । **न मयीति** । यतोऽद्वये मयि विशिष्टता भ्रान्त्यापि नास्ति यत्र विशेषणापह्नवः क्रियेतेत्यर्थः ॥ २७ ॥ ज्ञदृष्ट्या जगदिवाज्ञदृष्ट्या परमार्थोऽप्यत्यन्तासन्नेवेति तस्य तदस्तिता न बोधयितुं शक्येत्याशयेनाह—**भूततेति** । भूतता पाञ्चभौतिककार्यकारणमात्रात्मता ॥ २८ ॥ उक्तमेव संक्षिप्य स्फुटमाह—**मिथ्येति** द्वाभ्याम् ॥ २९ ॥ अन्यात्मतानिश्चयवतस्तदन्यात्मतोपदेशवैयर्थ्ये दृष्टान्तमाह—**पुरुषस्येति** ॥ ३० ॥ औपोद्घातिकं समाप्य प्रस्तुतमुपपादितमुपसंहरति—**तस्मादिति** । इमे प्रत्यक्षगम्यवसिष्ठरामादिदेहात्मना प्रसिद्धा वयं शास्त्रदृशा न सत्याः । विद्वदनुभवदृशाप्यसत्याः । यौक्तिकदृशापि न संभवः । सद्भावो नास्तीत्यर्थः ॥ ३१ ॥ किं तर्हि सत्यं तदाह—**सत्यमिति** । [1]संवेदनमेव शास्त्रदृशापि सत्यं विद्वदनुभवतोऽपि सत्यं यौक्तिकदृशापि तदेवानस्तमयोदयमस्तीत्यर्थः ॥ ३२ ॥ सर्वं जगच्छान्तं उपरतम् । किं शून्यपरिशेषेण नेत्याह—**निःशून्यमिति** । निरस्तशून्यम् । तर्हि कथं शान्तं तत्राह—**न किंचिदिवेति** । सर्वशून्यमिव नतु शून्यमेव । सन्मात्रपूर्णभावेन स्थितमित्यर्थः । निजाः भासः अन्यथाप्रथाः ॥ ३३ ॥ सतः असत्सदाकारेण प्रथा क्व दृष्टेति चेत्तदाह—**यथेति** ॥ ३४ ॥ स सत्यात्मा आत्मानं यथा येन येन प्रकारेण वेत्ति तथैव क्षणादनुभवति । ततस्तस्मात्तदीक्षणात् सत्यात्मदृष्टिबलादसत्यमपि सत्यमिव क्षणाद्भवतीत्यर्थः ॥ ३५ ॥ यदि सत्येक्षणात्सत्यं स्वतस्तर्हि जगत्किंरूपमस्ति तत्राह—**न सत्यमिति** ॥ ३६ ॥ एवं प्रसिद्धेन वसिष्ठरामाद्याकारेण । तान् दामादीन् । अपिशब्द एवकारार्थे ॥ ३७ ॥ या चित् अन्तः यथा यादृशाकारेण उदेति ॥३८॥ उक्तमेवोदाहृत्य दर्शयति—**यत्रेति** ॥ ३९ ॥ ४० ॥ तापस्य मरुमयूखस्य ॥ ४१ ॥ यत्र [illegible] प्रबुद्धं जागरूकम् । बाह्यार्थोपलब्धिरूपमिति यावत् ।

१ संवेदनमिव इति पाठः.

यत्र सुप्तं तु तेनैव तत्र मोक्षाभिधा कृता ॥ ४२
न च तत्क्वचिदासुप्तं न प्रबुद्धं कदाचन ।
चिद्व्योम केवलं दृश्यं जगदित्यवगम्यताम् ॥ ४३
निर्वाणमेव सर्गश्रीः सर्गश्रीरेव निर्वृतिः ।
नानयोः शब्दयोरर्थभेदः पर्याययोरिव ॥ ४४
परमार्थो जगदिति रूपं वेत्ति स्वयं स्वकम् ।
यथा तैमिरिकं चक्षुः केशोण्डूकमिवेक्षते ॥ ४५
न तत्केशोण्डूकं किंचित्सा हि दृष्टिस्तथा स्थिता ।
नेदं दृश्यमिदं किंचिदित्थं चिद्व्योम संस्थितम् ॥ ४६

सर्वत्र सर्वमिदमस्ति यथानुभूतं
नो किंचन क्वचिदिहास्ति न चानुभूतम् ।
शान्तं सदेकमिदमाततमित्थमास्ते
संत्यक्तशोकभयभेदमतस्त्वमास्स्व ॥ ४७
शिलोदराकारघनं प्रशान्तं
महाचिते रूपमिदं स्वमच्छम् ।
नैवास्ति नास्तीति दृशौ क्वचित्तु
यच्चास्ति तत्साधु तदेव भाति ॥ ४८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु स्थितिप्रकरणे सदसन्निराकरणं नामैकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ३२

श्रीराम उवाच ।
सतामप्यसतामेव बालयक्षपिशाचवत् ।
दामव्यालकटादीनां दुःखस्यान्तः कथं भवेत् ॥ १
श्रीवसिष्ठ उवाच ।
दामव्यालकटुम्बैस्तैस्तदेव यमकिङ्करैः ।
प्रार्थितेन यमेनोक्तमिदं शृणु रघूद्वह ॥ २
यदा वियोगमेष्यन्ति श्रोष्यन्ति च निजां कथाम् ।
दामादयस्तदा मुक्ता भविष्यन्तीत्यसंशयम् ॥ ३
श्रीराम उवाच ।
स्ववृत्तान्तमिमं कुत्र कदा कथयते कथम् ।
श्रोष्यन्ति भगवंस्ते वा वर्णयेदं यथाक्रमम् ॥ ४
श्रीवसिष्ठ उवाच ।
काश्मीरेषु महापद्मसरसीतीरपल्वले ।
भूयोभूयोऽनुभूयैव मत्स्ययोनिपरम्पराम् ॥ ५

आलोलिताशया लोलाः कालेन लयमागताः ।
तत्रैव पद्मसरसि ते भविष्यन्ति सारसाः ॥ ६
तत्र कह्लारमालासु सरोजपटलीषु च ।
शैवालवरवल्लीषु तरङ्गवलनासु च ॥ ७
चलत्कुसुमदोलासु नीलोत्पललतासु च ।
सीकरौघाभ्रलेखासु शीतलावर्तवर्तिषु ॥ ८
सारसाः सरसंभोगान्भुक्त्वा भुवनभूषणाः ।
विहृत्य सुचिरं कालमलमागतशुद्धयः ॥ ९
ते वियुक्ता भविष्यन्ति मुक्तये लब्धबुद्धयः ।
रजःसत्त्वतमांसीव भेदं प्राप्य यदृच्छया ॥ १०
काश्मीरमण्डलस्यान्तर्नगरं नगशोभितम् ।
नाम्नाधिष्ठानमित्येव श्रीमत्तस्य भविष्यति ॥ ११
प्रद्युम्नशिखरं नाम तस्य मध्ये भविष्यति ।
शृङ्गं लघु सरोजस्य कोशचक्रमिवोदरे ॥ १२

यत्र अद्वितीयस्वप्रकाशे स्वात्मनि प्रसुप्तं बाह्योपलब्धिरहितं तत्र तेनैव चिद्व्योम्नैव । तथाच श्रुतिः 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति ॥ ४२ ॥ इदं तु बोधनायावस्थाद्वयं सादृश्यकल्पनयोक्तं, परमार्थतस्त्वाह—**नचे**ति । कथं तर्ह्यवगन्तव्यं तत्राह—**चिद्व्योमे**ति ॥४३॥ यदा दृश्यं केवलं चिद्व्योमैव तदा सर्गनिर्वाणयोर्भेदो निवृत्त इत्याह—**निर्वाणमेवे**ति ॥ ४४ ॥ उक्तमुपपादयति—**परमार्थ** इति द्वाभ्याम् । स्वयं अज्ञानोपहित आत्मा ॥ ४५ ॥ ४६ ॥ अध्यारोपदृष्टौ सर्वत्रगे चिद्व्योम्नि सर्वारोपसंभवात्सर्वत्र सर्वमस्ति अपवाददृष्टौ तु क्वचिदपि किंचिन्नास्ति । इत्थमुक्तप्रकारद्वयेऽपि इदं जगत् शान्तं निरस्तभेदं अतएवैकं सत् ततं पूर्णमास्ते । अतस्त्वमपि संत्यक्तशोकभयभेदं यथा स्यात्तथा पूर्ण आस्स्वेत्यर्थः ॥ ४७ ॥ तदेव पुनः स्थिरीकुर्वन्वर्णयति—**शिले**ति । स्फटिकशिलाया उदरमिव शून्याकारं भासमानमपि घनं तत्र प्रतिबिम्बवनगिरिनद्यादिस्वरूप इवास्ति नास्तीति दृशौ तु क्वचिन्नैव । यच्च प्रतिभानमात्रेणास्ति तच्चितिरूपमेव तथा भातीत्यर्थः ॥ ४८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे सदसन्निराकरणं नामैकत्रिंशः सर्गः ॥ ३१ ॥

मत्स्यसारसजन्माप्त्या वियुक्ता राजसद्मनि ।
मशकादितनुष्वासञ्ज्ञानास्ते मुक्तिमाययुः ॥ १ ॥

अज्ञबुद्ध्या सतामपि परमार्थतोऽसतामेव दुःखस्यान्तो मोक्षः कथं भवेत् । कदा भविष्यतीति यावत् ॥ १ ॥ दामव्यालकटानां कुटुम्बैर्बान्धवभूतैर्यमकिङ्करैः ॥ २ ॥ निजां स्वीयां शम्बरमायाकल्पितजीवभावनिर्वासनाद्वयचिन्मात्रस्वभावाव्यकथाम् । तदा स्वतत्त्वं बुद्ध्वा मुक्ता भविष्यन्तीति असंशयं निःसंशयं यमेनोक्तमित्यर्थः ॥ ३ ॥ ते दामादयः । त्वर्थे वाशब्दः । कथयते कथयतः सकाशात् । व्यत्ययेन पञ्चम्यर्थे चतुर्थी ॥४॥५॥ आलोलितः ग्रीष्मे महिषसूकरादिभिरालोडित आशयः पल्वलं येषां तथाविधाः सन्तः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ लब्धबुद्धयः प्राप्तविचारबुद्धयः । यथा रजःसत्त्वतमांसि विवेकदृशा पर्यालोच्यमानानि मुक्तये भेदं विवेकं प्राप्नुवन्ति तद्वत् ॥ १० ॥ नगैर्वृक्षैः शोभितम् ॥ ११ ॥ लघु लङ्घनार्हं स्वारोहमिति

तस्य मूर्ध्नि गिरेर्गेहं कश्चिद्राजा भविष्यति ।
अभ्रंकषमहाशालं श्रृङ्गे श्रृङ्गमिवापरम् ॥ १३
गृहस्येशानकोणेऽस्ति शिरोभित्तिव्रणोदरे ।
तस्यानिशमविश्रान्तवाताधूततृणान्तिके ॥ १४
आलये दानवो व्यालः कलविङ्को भविष्यति ।
प्रथमाल्पश्रुतशास्त्र इवार्थरहितारवः ॥ १५
तस्मिन्नेव तदा काले तत्र राजा भविष्यति ।
श्रीयशस्करदेवाख्यः शक्रः स्वर्ग इवापरः ॥ १६
दानवो दामनामात्र मशकस्तस्य सद्मनि ।
भविष्यति बृहत्स्तम्भपृष्ठच्छिद्रे मृदुध्वनिः ॥ १७
अधिष्ठानाभिधे तस्मिन्नेवान्तर्नगरे तदा ।
रत्नावलीविहाराख्यो विहारोऽपि भविष्यति ॥ १८
तस्मिंस्तद्भूमिपामात्यो नरसिंह इति श्रुतः ।
करामलकवद्दृष्टबन्धमोक्षो निवत्स्यति ॥ १९
भविष्यति गृहे तस्य क्रीडनः क्रकरः खगः ।
कटो मायासुरो नाम कृतराजतपञ्जरः ॥ २०
स नृसिंहो नृपामात्यश्लोकैर्विरचितामिमाम् ।
दामव्यालकटादीनां कथयिष्यति सत्कथाम् ॥ २१
सकटः क्रकरः श्रुत्वा तत्कथासंस्मृतात्मभूः ।
शान्तमित्थं महाशान्तं परं निर्वाणमेष्यति ॥ २२
प्रद्युम्नशिखरप्रान्तवास्तव्यः कलविङ्ककः ।
तत्रत्यैश्च कथां श्रुत्वा परं निर्वाणमेष्यति ॥ २३
राजमन्दिरदार्वन्तर्व्रणवास्तव्यतां गतः ।
मशकोऽपि प्रसङ्गेन श्रुत्वा शान्तिमुपैष्यति ॥ २४
प्रद्युम्नशृङ्गाच्चटको मशको राजमन्दिरात् ।
विहारात्क्रकरश्चेति मोक्षमेष्यन्ति राघव ॥ २५
एष ते कथितः सर्वो दामव्यालकथाक्रमः ।
मायैवमेव संसारशून्यैवात्यन्तभासुरा ॥ २६
भ्रमयत्यपरिज्ञानान्मृगतृष्णाम्बुधीरिव ।
महतोऽपि पदादेवं नानाज्ञानवशादधः ॥ २७
पतन्ति मोहिता मूढा दामव्यालकटा इव ।
क भ्रूक्षेपविनिष्पिष्टमेरुमन्दरसन्नता ॥ २८
क राजगृहदार्वन्तर्व्रणे मशकरूपता ।
क चपेटभुजामात्रपातितार्केन्दुबिम्बता ॥ २९
क प्रद्युम्नगिरौ गेहे भित्तिव्रणविहङ्गता ।
क पुष्पलीलया लोलकरतोलितमेरुता ॥ ३०
क वा शृङ्गे नृसिंहस्य गृहे क्रकरपोतता ।
चिदाकाशोऽहमित्येव रजसा रञ्जितप्रभः ॥ ३१
स्वरूपमत्यजन्नेव विरूपमपि बुध्यते ।
स्वयैव वासनाभ्रान्त्या सत्ययैवाप्यसत्यया ॥ ३२
मृगतृष्णाम्बुबुद्ध्येव याति जन्तुरिवान्तरम् ।
तरन्ति ते भवाम्भोधिं स्वप्रवाहधियैव ये ॥ ३३
शास्त्रेणासादितं दृश्यमिति निर्वाणसंस्थिताः ।
नानादुःखविकाराणि शुष्कतर्कमतानि ये ॥ ३४
यान्ति श्वभ्रं जलानीव खलाभं नाशयन्ति ते ।
स्वानुभूतिप्रसिद्धेन मार्गेणागमगामिना ॥ ३५
न विनाशो भवत्यङ्ग गच्छतां परमां गतिम् ।
इदं मे स्यादिदं मे स्यादितिबुद्धेर्[3]महामते ॥ ३६

यावत् । कोशचक्रं कर्णिकेव ॥ १२ ॥ तस्य गिरेर्मूर्ध्नि कश्चित्किंचिद्गेहं अन्येषां गृहाणां राजेव राजा भविष्यति । अभ्रमाकाशं कषति च्छिद्रीकरोतीवेत्यभ्रंकषे महति शालवृक्षस्य शृङ्गे मध्यमशाखाग्रे । अभ्रंकषा महत्यः शालाः प्रासादा यत्र तथाविधे गिरिशृङ्गे अपरं शृङ्गमिवेत्युत्प्रेक्षा वा ॥ १३ ॥ शिरोभित्तेरूर्ध्वकुड्यस्य व्रणो विदीर्णशिलासंधिभागस्तस्योदरे अस्ति नीडमिति शेषः ॥ १४ ॥ आलये तस्मिन्नीडे कलविङ्कश्चटकः । प्रथममल्पं श्रुतं शास्त्रं येन तथाविधो द्विज इव अर्थरहितो निरर्थक आरवो यस्य । चीचीकूचीत्यव्यक्तवाशित इति यावत् ॥ १५ ॥ १६ ॥ १७ ॥ विहरन्त्यस्मिञ्जना इति विहारः क्रीडागृहम् ॥ १८ ॥ करामलकवत् दृष्टौ श्रुतियुक्तिगुरूपदेशस्वानुभवैः परीक्ष्य रत्नतत्त्वमिव निश्चितौ बन्धमोक्षौ येन ॥१९॥ तस्यामात्यस्य क्रीडनः क्रीडासाधनभूतः क्रकरः शारिकाभेदः कटो नाम मायासुर इत्यन्वयः ॥ २० ॥ २१ ॥ संस्मृत आत्मैव सर्वतः सर्वदा भवतीत्यात्मभूरपरिच्छिन्नात्मा येन । शान्तं बाधितशम्बरकलितजीवरूपम् । इत्थमेव महाशान्तं मूलतः शान्तं संसाररूपं यत्र तथाविधं परं मोक्षम् ॥ २२ ॥ प्रद्युम्नस्य गिरेः शिखरप्रान्ते वसतीति वास्तव्यः । 'वसेस्तव्यत्कर्तरि णिच्च' इति तव्यत्प्रत्ययः । तत्रत्यैश्चादन्यैश्च वर्ण्यमानामिति शेषः । कथां स्वपूर्ववृत्तान्तघटितब्रह्मकथाम् ॥ २३ ॥ दार्वन्तः स्तम्भपृष्ठे । शान्तिं मोक्षम् ॥२४॥ २५ ॥ २६॥ इतरपदेभ्यो महतोऽपि पदात् अपरिपक्वज्ञानदशातः ॥ २७ ॥ निर्वासनत्वप्रयुक्तप्राक्तनोत्कर्षस्य पश्चात्तनमशकादिजन्मनश्च महदन्तरं दर्शयति—क्वेत्यादिना ॥ २८ ॥ चपेटः करतलेन प्रहारस्तेन भुजामात्रेण बाहुमात्रेण । विनैव प्रहरणानीति यावत् ॥ २९ ॥ पुष्पलीलया पुष्पवल्लोलेन करेण तोलितो भारेयत्तयावधारितो मेरुर्येस्तद्भावः क ॥३०॥ नृसिंहस्य मन्त्रिणः । इदानीं राजसाहंकाररञ्जनेन चिदाकाशस्य देहाद्याकाराभिमानावतारप्रकारं दर्शयति—**चिदाकाश** इति ॥३१॥ स्वरूपं स्वाभाविकस्वप्रकाशताम् । विरूपं अहंकारप्राणदेहेन्द्रियादिरूपम् ॥ ३२ ॥ अन्तरं चिद्रूपाद्भेदमिव याति । इदानीं तत्तरणोपायमाह—**तरन्ती**ति । स्वप्रवाहधिया प्रत्यक्प्रवणबुद्ध्या ॥ ३३ ॥ शास्त्रेण महावाक्यादिलक्षणेन । किमिति महावाक्यावलम्बस्तर्कैरेव तन्निर्णयः कुतो न स्यात्तत्राह—**नाने**ति ॥ ३४ ॥ खलाभं पारमार्थिकात्मभावस्थितिलक्षणपरमपुरुषार्थलाभम् । औपनिषदमार्गमनुभूतिरपि संवदति न तार्किकमित्याशयेनाह—**स्वानुभूती**ति । आगमगामिना श्रुत्यनुसारिणा ॥ ३५ ॥ अङ्गेत्यामन्त्रणे । केन तर्हि पुरुषार्थविनाशस्तदाह—**इद**मिति । इतिबुद्धेः पुरुषस्य ॥ ३६ ॥

१ शालशृङ्गे इति टीकानुगुणः पाठः. २ श्वभ्रं इत्यपि पाठः. ३ बुद्धिरित्यत्र बृद्धैरिति क्वचित्पठ्यते.

खेन दौर्भाग्यदैन्येन न भस्माप्युपतिष्ठते ।
वेत्ति नित्यमुदारात्मा त्रैलोक्यमपि यस्तृणम् ॥ ३७
तं त्यजन्त्यापदः सर्वाः सर्पा इव जरत्त्वचम् ।
परिस्फुरति यस्यान्तर्नित्यं सत्त्वचमत्कृतिः ॥ ३८
ब्राह्ममण्डमिवाखण्डं लोकेशाः पालयन्ति तम् ।
अप्यापदि दुरन्तायां नैव गन्तव्यमक्रमे ॥ ३९
राहुरप्यक्रमेणैवं पिबन्नप्यमृतं मृतः ।
सच्छास्त्रसाधुसंपर्कमर्कमुग्रप्रकाशदम् ॥ ४०
ये श्रयन्ते न ते यान्ति मोहान्ध्यस्य पुनर्वशम् ।
अवश्या वश्यतां यान्ति यान्ति सर्वापदः क्षयम् ॥४१
अक्षयं भवति श्रेयः कृतं येन गुणैर्यशः ।
येषां गुणेष्वसंतोषो रागो येषां श्रुतं प्रति ॥ ४२
सत्यव्यसनिनो ये च ते नराः पशवोऽपरे ।
यशश्चन्द्रिकया येषां भासितं जन्तुहृत्सरः ॥ ४३
तेषां क्षीरसमुद्राणां नूनं मूर्तौ स्थितो हरिः ।
भुक्तं भोक्तव्यमखिलं दृष्टा द्रष्टव्यदृष्टयः ॥ ४४
किमन्यद्भवभङ्गाय भूयो भोगेषु लुब्धता ।
यथाक्रमं यथाशास्त्रं यथाचारं यथास्थिति ॥ ४५
स्थीयतां मुच्यतामन्तर्भोगजालमवास्तवम् ।
संस्तवः क्रियतां कीर्त्या गुणैर्गगनगामिभिः ॥ ४६
त्रायेते मृत्युतो ह्येते न कदाचन भोगकाः ।
गायन्ति सिद्धसुन्दर्यो येषामिन्दुसितं यशः ॥ ४७
गीतिभिर्गगनाभोगैस्ते जीवन्ति मृताः परे ।
परमं पौरुषं यत्नमास्थायादाय सूद्यमम् ॥ ४८
यथाशास्त्रमनुद्वेगमाचरन्को न सिद्धिभाक् ।
यथाशास्त्रं विहरता त्वरा कार्या न सिद्धिषु ॥ ४९
चिरकालपरिपक्का सिद्धिः पुष्टफला भवेत् ।
वीतशोकभयायासमगर्वमपयन्त्रणम् ॥ ५०
व्यवहारो यथाशास्त्रं क्रियतां मा विनश्यताम् ।
जीवो जीर्णान्धकूपेषु भवेष्वन्तमिवागतः ॥ ५१
भवतां भूरिसज्ञानामधुनेन्द्रियदामतः ।
इतःप्रभृति मा भूयो गम्यतामधमादधः ॥ ५२
इदं विचार्यतां शास्त्रमस्त्रमापन्निवारणम् ।
रणे शितशरश्रेणिशतनिर्लूनवारणे ॥ ५३
जीवमुद्रा च किं पङ्के भोगगन्धो निरस्यताम् ।
किमर्थमात्रया कार्यमार्याः शास्त्रमवेक्ष्यताम् ॥ ५४

---

दौर्भाग्यप्रयुक्तदैन्येनेत्यर्थः । नष्टस्य च पुरुषार्थस्य भस्मापि नोपतिष्ठत इति सर्वथा नैराश्यमित्यर्थः । एवं स्पृहाया अनर्थत्वमुक्त्वा वैराग्यस्य सर्वानर्थनिवर्तकत्वमाह—**वेत्ती**ति ॥३७॥ विरक्तस्य चेज्ज्ञानकलापि स्यात्तर्हि तस्य दूरे आपच्छङ्का, प्रत्युत सर्वे देवाः स्वोपजीव्यं स्वाधारं ब्रह्माण्डमिव सदा तं पालयन्त्यपीत्याह—**परिस्फुरती**ति ॥ ३८ ॥ न क्रम्यत इत्यक्रमेऽसन्मार्गे ॥ ३९ ॥ कस्तर्हि मार्गस्तमाह—**सच्छास्त्रे**ति । सच्छास्त्रमुपनिषदस्तदुपबृंहणानि च तदर्थनिष्ठाः साधवस्तदुभयेन संपर्कः सदा तन्निषेवणं तमेवार्कं सूर्यं निर्दयं निःशेषसंसारसंहारकत्वादुग्रः शिवः परमात्मा तस्य प्रकाशदं साक्षात्कारहेतुं तमोनभिभवनीयं प्रकाशदं च ॥ ४० ॥ मोहलक्षणस्यान्ध्यस्यान्धकारस्य । इदानीं वैराग्यादिगुणान्पुनः प्रशंसति—**अवश्या** इति ॥ ४१ ॥ येन पुरुषश्रेष्ठेन वैराग्यशमदमादिगुणैर्यशः सत्स्वग्रगण्यत्वेन विख्यातिः । उक्तगुणेषु येषामसंतोषः अनलंबुद्धिः । श्रुतमध्यात्मशास्त्रश्रवणाभ्यासादि प्रति येषां सदा राग इच्छा ॥४२॥ ये च सत्यं सत्यवाक्यं ब्रह्म च तयोर्व्यसनिनस्त एव नरजन्मसार्थकीकरणान्नराः, अपरे तु नरा अपि पशुवद्व्यर्थजन्मत्वात्पशव इत्यर्थः । येषां यशोलक्षणस्य चन्द्रस्य चन्द्रिकया जन्तूनां प्राणिनां हृत् हृदयलक्षणं सरो भासितं आह्लादकैरवोन्मेषैः प्रकाशितम् ॥ ४३ ॥ त एव क्षीरसमुद्रा अतएव तेषां मूर्तौ हरिर्विष्णुः परमात्मा स्फुटं स्थित इत्यर्थः । इदानीं जगतो हितैषी पितृमातृभ्योऽप्याप्ततमः श्रीवसिष्ठः सर्वैरनादौ संसारे पुनःपुनः सहानर्थपरम्पराफलैरनुभूतेषु विषयेषु दृश्यकौतुकविशेषेषु च नापूर्वं किंचिदवशिष्टमिति दर्शयन्वैराग्यशास्त्राचारनिष्ठामेव प्रशंसमानः प्ररोचयति—**भुक्त**मित्यादिना ॥ ४४ ॥ अन्यद्भवेषु भाविजन्मपरम्परासु भङ्गाय स्वात्मविनाशाय भूयोऽपि भोगेषु लुब्धता किं युक्ता । सर्वथा न युक्तेत्यर्थः । अन्यद्भवेत्यत्र दुक् छान्दसः । यथाक्रमं स्वस्वाधिकारानुरूपम् । यथाशास्त्रं तादृशाधिकारिकचित्तशुद्ध्याद्यनुकूलशास्त्रानुरूपम् । तत्रापि यथाचारं पूर्वपूर्वाचार्यप्रवर्तितसंप्रदायानुरूपम् । यथास्थिति तत्राप्येकैकभूमिकायां यावत्परिपाकं स्थितिमनतिक्रम्येत्यर्थः ॥४५॥ संस्तवः साधुजनमुखेषु स्वसाधुवादः । गगनगामिभिः स्वर्गपर्यन्तप्रख्यातैः ॥ ४६ ॥ एते संस्तवकीर्ती । स्त्रीशेषश्छान्दसः सामान्ये नपुंसकं वा ॥ ४७ ॥ गगनाभोगैर्गगनवत्सर्वदेशकालव्यापिभिः । यशः कथं संपादयितुं शक्यते तत्राह—**परम**मिति ॥ ४८ ॥ आचरन् । साधनानीति शेषः ॥ ४९ ॥ अपयन्त्रणं शीघ्रतानिर्बन्धरहितम् ॥ ५० ॥ ५१ ॥ भूरिसज्ञानां भवतां जीव इन्द्रियदामतः अन्तं मृत्युमिवागतः सन् भवलक्षणेषु जीर्णान्धकूपेषु मा विनश्यतामिति पूर्वत्रान्वयः ॥५२॥ शितैस्तीक्ष्णैः शरश्रेणिशतैर्निर्लूनाश्छिन्ना वारणा गजा यत्र तथाविधेऽपि रणे सद्यः प्रसक्तमहाभयमृत्य्वाद्यापदामपि निवारणमजरामरनित्यनिरतिशयानन्दात्मप्रदर्शकमिदं शास्त्रमवश्यं विचार्यतामित्यर्थः ॥५३॥ किं पङ्के ग्रीष्मोष्मसंतप्तपल्वलदुर्गन्धिपङ्कसदृशे संसारे पुनः पुनर्मृतोज्जीवितजरन्मण्डूकवज्जीवमुद्रा जीविताशेति यावत् । किं अतितुच्छेत्यर्थः । 'मुद्यसि' इति पाठे स्पष्टम् । अतो भोगगन्धो भोगवासना हृदयादपनीयताम् । तदर्थया अर्थमात्रया द्रव्यलेशेन किं कार्यम् । हे आर्याः, सर्वं परित्यज्य मोक्षशास्त्र-

इदं बिम्बमिदं बिम्बमिति सत्यं विचार्यताम्।
धिया परप्रेरणया यातमापशवो यथा॥ ५५
दौर्भाग्यदायिनी दीना शुभहीना विचारणा।
घनदीर्घमहानिद्रा त्यज्यतां संप्रबुध्यताम्॥ ५६
सुप्तं मास्थीयतां वृद्धकच्छपेनेव पल्वले।
उत्थानमङ्गीक्रियतां जरामरणशान्तये॥ ५७
अनर्थायार्थसंपत्तिर्भोगौघो भवरोगदः।
आपदः संपदः सर्वाः सर्वत्रानादरो जयः॥ ५८
लोकतन्त्रानुसारेण विचाराद्व्यवहारिणाम्।
शास्त्राचारानुसारेण कर्मणा सत्फलाय च॥ ५९
आचारचारुचरितस्य विविक्तवृत्तेः
संसारसौख्यफलदुःखदशास्त्रगृध्नोः।
आयुर्यशांसि च गुणाश्च सहैव लक्ष्म्या
फुल्लन्ति माधवलता इव सत्फलाय॥ ६०

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे दामव्यालकटोपाख्याने सदाचारनिरूपणं नाम द्वात्रिंशः सर्गः॥ ३२॥

## त्रयस्त्रिंशः सर्गः ३३

श्रीवसिष्ठ उवाच।
सर्वातिशयसाफल्यात्सर्वं सर्वत्र सर्वदा।
संभवत्येव तस्मात्त्वं शुभोद्योगं न संत्यज॥ १
मित्रस्वजनबन्धूनां नन्दिनानन्ददायिना।
सरसीशानमासाद्य मृत्युरप्युपनिर्जितः॥ २
सर्वोत्कर्षेण संपन्ना देवा अपि विमर्दिताः।
दानवैर्दानवार्थाढ्यैर्गजैः पद्माकरा इव॥ ३
मरुत्तनृपतेर्यज्ञे संवर्तेन महर्षिणा।
ब्रह्मणेवापरः सर्गो भावितः ससुरासुरः॥ ४
महातिशययुक्तेन विश्वामित्रेण विप्रता।
भूयोभूयः प्रयुक्तेन दुष्प्रापा तपसार्जिता॥ ५

मेवावेक्ष्यतामित्यर्थः॥ ५४॥ विषयाकारवृत्तिप्रतिफलितचिदाभासानामन्तःकरणावच्छिन्नं चैतन्यं बिम्बम्। अन्तःकरणोपहितचिदाभासस्य तु शुद्धं ब्रह्मचैतन्यमेव बिम्बम्। प्रतिबिम्बतदुपाधी असत्ये बिम्बं तु सत्यम्। तत्रान्तःकरणोपाध्यसत्यत्वे तदवच्छिन्नबिम्बचैतन्यस्य तत्समनियतचिदाभासबिम्बभूतब्रह्मचैतन्यस्य च भेदो मिथ्यैवेत्यखण्डं सत्यं प्रत्यगभिन्नं ब्रह्मचैतन्यमेव परिशिष्यत इति विचार्यतामित्यर्थः। ननु परे सांख्यपातञ्जलगौतमकणादबुद्धार्हदादयो नोक्तप्रतिबिम्बताप्रक्रियामिच्छन्ति किंत्वन्यथान्यथैव निरूपयन्तस्तत्रैव जनान्प्रेरयन्ति, तत्प्रेरणापि किमुपादेया नेत्याह—**धियेति**। 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्' इत्यादिस्वतन्त्रश्रुतिप्रमाणानुसारिणां पशुवत्परप्रेरणया यानमनुचितमेवेति भावः॥५५॥ एवं शास्त्रार्थविचारणां विधाय संप्रति जीवनधनपशुपुत्रादिसांसारिकविचारणां दर्शनान्तरविचारणां च त्याजयितुं निन्दति—**दौर्भाग्येति**। उदर्के दौर्भाग्यदायिनी स्वकाले कार्पण्यहेतुत्वाद्दीना तुच्छफलत्वात्फलहीना गाढतमोमात्रनिवेशाद्घनदीर्घमहानिद्रा त्यज्यताम्॥ ५६॥ ५७॥ पूर्वोत्तरार्धयोराद्यवाक्यार्थयोः प्रथमौ विधेयौ द्वितीयवाक्यार्थयोस्तद्वैपरीत्यम्॥ ५८॥ **लोकतन्त्रं** जनवृत्तं तदनुसारेण तदविरोधिना। शास्त्राचारौ अनुसरति तथाविधेन कर्मणा तत्फलाय चोत्थानमङ्गीक्रियतामिति व्यवहितानुषङ्गः॥५९॥ उक्तमर्थं संक्षिप्योपसंहरति—**आचारेति**। विविक्तबुद्धेर्विवेकिबुद्धेः। अगृध्नोरनभिलाषस्य। फुल्लन्ति विकसन्ति। माधवलता वसन्तकालपल्लवितलता इव। सत्फलाय उत्तमफलाय॥६०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे सदाचारनिरूपणं नाम द्वात्रिंशः सर्गः॥ ३२॥

वर्ण्यतेऽत्र शुभोद्योगसाधुसच्छास्त्रवैभवम्।
बन्धोऽहङ्कारतस्तस्य त्यागान्मुक्तिश्च विस्तरात्॥ १॥

वक्ष्यमाणस्य शुभोद्योगादेः सेवनोत्कर्षे फलावश्यंभावं दर्शयितुं सामान्यन्यायं दर्शयति—**सर्वेति**। सर्वेषां साधनातिशयानां साफल्यनियमात्सर्वत्र दृष्टकृषिसेवादिसाधने शास्त्रीयमोक्षसाधने शुभोद्योगादौ च सर्वं स्वस्वानुरूपं फलं संभवत्येव न कदापि वैफल्यं, तस्मान्मोक्षफलार्थी त्वमपि शुभोद्योगं कदापि न संत्यजेत्यर्थः॥ १॥ तत्र शास्त्रीयशुभोद्योगस्यासाध्यं किंचिन्नास्त्येवेति दर्शयितुं नन्दीश्वरोपाख्यानादि संक्षिप्योदाहरति—**मित्रे**त्यादिना। 'शिलादनामा किल मुनिः सर्वज्ञं पुत्रं कामयमानस्तपसा भगवन्तं रुद्रं प्रसादयामास। तस्मै चिरेण तपसा प्रसन्नो वरं दास्यन्किल स भगवानुवाच। न मत्तोऽन्यः सर्वज्ञः संभवत्यतोऽहमेवांशेनावतीर्णस्ते पुत्रो भविष्यामि स ते मदंशजः पुत्रः षोडशवर्षे मृत्युपदं यातेति। तच्छ्रुत्वा शिलादस्तद्वचनं प्रतिकूलयितुमशक्नुवंस्तमेव शरणं गतस्तथास्त्वित्यनुमेने। अथ तस्य सर्वज्ञः पुत्रो नन्दिनामा बभूव। स बाल एव पितुः सकाशात्स्वस्य भाविमृत्युपाशबन्धनं श्रुत्वा तपसा तमेव रुद्रमाराधयामास। अथ षोडशे वर्षे सरस्तीरे लिङ्गार्चनकाले मृत्युना पाशैर्बध्यमानस्तत्रैवाविर्भूतेन शिवेन मृत्युं वामपादाग्रेण हत्वा पाशांश्छित्त्वा स जरामृत्युवर्जितः स्वानुचरः कृतः' इति लैङ्गे प्रसिद्धम्॥ २॥ दानवैर्बलिप्रभृतिभिः दानवैः सैनिकैरर्थैर्धनैश्चाढ्यैः संपन्नतरैः॥ ३॥ यद्यपि महाभारते मरुत्तयज्ञे विघ्नं चिकीर्षोः सुरसैन्यसहितस्येन्द्रस्य संवर्तेन स्वसंकल्पमात्रेण वशीकृतस्य देवैः सह यज्ञपरिचारकत्वं कृतमित्येवं प्रसिद्धम्, तथापि पुराणान्तरे सुरासुरसर्गारम्भोऽपि क्वचिच्छ्रूयत

१ दशास्त्रगृध्नोः इति पाठष्टीकानुगुणः सुसमीचीनश्चेति प्रतीयते, अथवा मूलेऽनर्थापातष्टीकाननुगुणत्वं चापतेत.

पिष्टसेकाम्बु दुष्प्रापं रसायनवदश्नता ।
दुर्भगेनेदृशेनाप्तः क्षीरोद उपमन्युना ॥ ६
त्रैलोक्यमल्लांस्तृणवदश्नन्विष्णवब्जादिकान् ।
भक्त्यातिशयदार्ढ्येन कालः श्वेतेन कालितः ॥ ७
प्रणयेन यमं जित्वा कृत्वा वचनसंगमम् ।
परलोकादुपानीतः सावित्र्या सत्यवान्पतिः ॥ ८
न सोऽस्त्यतिशयो लोके यस्यास्ति न फलं स्फुटम् ।
भवितव्यं विचार्यान्तः सर्वातिशयशालिना ॥ ९
आत्मज्ञानमशेषाणां सुखदुःखदशादृशाम् ।
मूलकाषकरं तस्माद्भाव्यं तत्रातिशायिना ॥ १०
नाशायापद्गतार्थिन्या दृष्ट्या दृश्यादिदृष्टयः ।
दुःखादृते निराबाधं सुखं किं चिदवाप्यते ॥ ११
अशमः परमं ब्रह्म शमश्च परमं पदम् ।
यद्यप्येवं तथाप्येनं प्रथमं विद्धि शंकरम् ॥ १२
अभिमानं परित्यज्य शममाश्रित्य शाश्वतम् ।
विचार्य प्रश्नयार्यत्वं कुर्यात्सज्जनसेवनम् ॥ १३
न तपांसि न तीर्थानि न शास्त्राणि जयन्ति च ।
संसारसागरोत्तारे सज्जनासेवनं विना ॥ १४
लोभमोहरुषां यस्य तनुतानुदिनं भवेत् ।
यथाशास्त्रं विहरति स्वस्वकर्मसु सज्जनः ॥ १५
अथात्मविदुषां सङ्गात्तस्य साधोः प्रवर्तते ।
अत्यन्ताभाव एवास्य यथा दृश्यस्य दृश्यते ॥ १६
दृश्यात्यन्ताभावतस्तु परमेवावशिष्यते ।
अन्याभाववशादाशु जीवस्तत्रैव लीयते ॥ १७
नचोत्पन्नं नचैवासीदृश्यं नच भविष्यति ।
वर्तमानेऽपि नैवास्ति परमेवास्त्यवेधितम् ॥ १८
एवं युक्तिसहस्रेण दर्शितं दृश्यतेऽपि च ।
सर्वैरेवानुभूतं च दर्शयिष्यामि चाधुना ॥ १९
तथेदममलं शान्तं त्रिजगत्संविदम्बरम् ।
इदं तत्त्वमतत्त्वादि कुतोऽत्र स्यात्कथं च वा ॥ २०

एवेति कल्पान्तरकथात्वान्न विरोधः ॥ ४ ॥ ५ ॥ पिष्टसेकाम्बु पिष्टमिश्रितोदकं तदपि रोदनादियत्नप्राप्यत्वाद्दुष्प्रापम्[1] । ईदृशेन दुर्भगेन भाग्यहीनेनाप्युपमन्युना क्षीरोदः क्षीरसमुद्रस्तपसा शिवप्रसादादाप्तः प्राप्त इति भारतादौ प्रसिद्धम् ॥६॥ त्रैलोक्यमल्लान् । अतिबलत्वेन ख्यातानिति यावत् । तथाविधानपि विष्ण्वब्जजादिकांस्तृणवदश्नन्ग्रसन् । तथाच भार्गवाख्याने कालवचनं 'संसारावलयो भुक्ताः' इत्यादि । श्वेतेन श्वेताख्येन मुनिना कालो मृत्युः कालितो निर्जितः । इदमपि लैङ्गे प्रसिद्धम् ॥ ७ ॥ सावित्र्या राजकन्यया प्रणयेन भर्तृप्राणानुगमनस्तुत्यादिप्रीणनोपायेन यमं जित्वा वशीकृत्य ऋते सत्यवतः प्राणादन्यं वरं वृणीष्वेति यमवचनस्य स्वस्याः सत्यवतः शतपुत्रोत्पत्तिवरप्रार्थनावचनेन संगमं संबन्धम् । सावित्र्युपाख्यानमपि भारते प्रसिद्धमेव ॥८॥ अतिशयः शास्त्रीयशुभोद्योगातिशयः । तर्हि नानाविधशुभोद्योगेषु दर्शितेषु मादृशेन कुत्रातिशायिना भाव्यं तत्राह—**भवितव्य**मित्यादिना । अधिकारिणा न मूढवत्क्षुद्रफलप्रार्थनया फल्गुना भवितव्यं, किंत्वन्तर्मनसि फलतारतम्यं विचार्य सर्वातिशायिफललाभेन सर्वातिशयशालिना भवितव्यमित्यर्थः ॥ ९ ॥ सर्वातिशयश्चात्मज्ञानादेव यतस्तदशेषाणां सुखदुःखजन्ममरणादिदशाभ्रान्तिदृष्टीनां मूलोच्छेदकरं तस्मात्तत्रैव शुभोद्योगातिशयशालिना भाव्यमित्यर्थः ॥१०॥ तत्रादौ भोगरागदृष्टीनां विनाशाय तत्तद्विषयदोषदृष्टयोऽन्वेष्टव्या इत्याह—**नाशाये**ति । क्षुत्तृष्णाकामाद्यापद्गतानर्थयति विषयोपहारेणानुगृह्णातीत्यापद्गतार्थिन्या दृष्ट्याः भोगदृष्टेर्नाशाय प्रथमं तद्विरोधिविषयदोषदृष्टयो दृश्या अन्वेष्टव्याः । हिशब्दस्तदावश्यकत्वद्योतनार्थः । ननु तदन्वेषणे विषयत्यागपर्यवसानात्सद्यो दुःखं स्यादिति चेत्तत्राह—**दुःखादि**ति । वैराग्याभ्यासादिदुःखादृते निराबाधं भूमानन्दसुखं चित् किं अवाप्यते । नावाप्यत एवेत्यर्थः । किंचिदिति च्छेदे तु काकुर्बोध्यः ॥११॥ ननु सर्वविषयदुःखत्यागमप्यङ्गीकृत्य वैराग्येण रागादिदोषप्रशमोऽवश्यं संपाद्यः स्याद्यदि प्राप्यं ब्रह्म सशममेव पुरुषार्थः स्यात् । नतु तथा । शमस्यापि सात्त्विकचित्तवृत्तिभेदस्यान्तःकरणधर्मस्याद्वितीये ब्रह्मण्यभावात्सुखैकरसब्रह्मातिरिक्तस्य दृश्यतया परमपुरुषार्थघटकत्वाभावाच्चेत्याशङ्कामर्धाङ्गीकारेण परिहरन् शमस्यावश्यकत्वं दर्शयति—**अशम** इति । सत्यमशमश्चिदात्मैव परमं ब्रह्म तथापि शमोऽपि सनिदानसंसारानर्थनिवृत्तिरूपः परमं पदं परमपुरुषार्थो भवत्येव । यद्यप्येवं द्वयमपि सममिति प्राप्तं तथापि एनं प्रशमं शं भूमानन्दब्रह्मसुखं करोत्यभिव्यनक्तीति शंकरं विद्धि । नह्यनभिव्यक्तसुखस्य पुरुषार्थतेति तदुपयोगिताया अधिकेति भावः ॥ १२ ॥ इदानीं प्रशमोपायमाह—**अभिमान**मिति । शाश्वतं यत्कैवल्यमविचालि आर्यत्वं मोक्षयोग्याभ्यर्हितजन्मादिशालितां स्वस्य विचार्य परिशील्य ॥ १३ ॥ चित्तशुद्ध्यर्थं सेवितानां तपआदीनामपि सज्जनसेवनद्वारैव ज्ञानोपयोगो नान्यथेत्याशयेनाह—**ने**ति । जयन्ति । ज्ञानोत्पत्तये प्रभवन्तीति यावत् ॥ १४ ॥ इदानीं सज्जनलक्षणमाह—**लोभे**ति । यस्य सेवनादिति शेषः ॥ १५ ॥ सदा सज्जनसेवापरायणस्य कदाचिदात्मवित्सङ्गोऽप्यवश्यं भवति येन ज्ञानलाभ इत्याह—**अथे**ति ॥ १६ ॥ तेन तस्य परमपुरुषार्थोऽपि सिद्ध्यतीत्याह—**दृश्ये**ति ॥ १७ ॥ परमेवावशिष्यते इति यदुक्तं तद्दृश्यात्यन्ताभावोपपादनेन समर्थयति—**नचे**त्यादिना । अवेधितमंतोदितं, अपीडितमिति यावत् ॥ १८ ॥ यथोत्पत्त्यादिकं न संभवति तथोत्पत्तिप्रकरणेऽपि युक्तिभिरुपपादितमुपपादयिष्यते चेत्याह—**एव**मिति । यथा सर्वैर्विद्वद्भिरनुभूतं च तथा ते इदं त्रिजगत्संविदम्बरं अधुना दर्शयिष्यामि चेति परेण सहान्वयः ॥ १९ ॥ तदेव दर्शयति—**इदं तत्त्व**मिति । इदं संविदम्बरं तत्त्वं परमार्थरूपम्, अत्र अतत्त्वं माया तदेव आदि मूलकारणं यस्य तद्वियदादि कुतः स्यात् । किं सत उत

१ प्राप्येति पदं क्वचिन्न पठ्यते.

चिच्चमत्कुरुते चारु चञ्चलाऽचञ्चलात्मनि ।
यत्तयैव तदेवेदं जगदित्यवबुध्यते ॥ २१
त्रैलोक्यभूयोनुभवश्चिदादित्यांशुमण्डलम् ।
को वा स्वांशुमतोर्भेदो निर्विकल्पः स कथ्यताम् ॥ २२
स्वाभावतोऽस्याश्चिद्दृष्टेर्ये उन्मेषनिमेषणे ।
जगद्रूपानुभूतेस्तावेतावस्तमयोदयौ ॥ २३
अहमर्थोऽपरिज्ञातः परमार्थाम्बरे मलम् ।
परिज्ञातोऽहमर्थस्तु परमात्माम्बरं भवेत् ॥ २४
अहंभावः परिज्ञातो नाहंभावो भवत्यलम् ।
एकतामम्बुनेवाम्बु याति चिन्नभसात्मना ॥ २५
अहमादिजगद्दृश्यं किल नास्त्येव वस्तुतः ।
अवश्यमेव तत्तस्माच्छिष्यतेऽहंविचारतः ॥ २६
बाध्यते चामलधियामपिशाचे पिशाचधीः ।
शिशूनां तावदाध्वान्तःकरणानां विचारणा ॥ २७
चिज्ज्योत्स्ना यावदेवान्तरहंकारघनावृता ।
विकासयति नो तावत्परमार्थकुमुद्वतीम् ॥ २८
प्रमार्जितेऽहमित्यस्मिन्पदे स्वार्थे स्वयं विना ।
नरकस्वर्गमोक्षादितृष्णायाः कल्पनैव का ॥ २९
हृदि यावदहंभावो वारिदः प्रविजृम्भते ।
तावद्विकासमायाति तृष्णाकुटजमञ्जरी ॥ ३०
आक्रम्य चेतनां नित्यमहंकाराम्बुदे स्थिते ।
जाड्यमेव स्थितिं याति न प्रकाशः कदाचन ॥ ३१
असन्नयमहंकारः स्वयं मिथ्या प्रकल्पितः ।
दुःखायैव न हर्षाय बालसंभ्रमयक्षवत् ॥ ३२
मुधैव कल्पितो मोहमहंभावः प्रयच्छति ।
अनन्तसंसारकरं दामादिष्विव दुर्मतौ ॥ ३३
अयं सोऽहमिति स्फारान्मोहादन्यतरत्तमः ।
अनर्थभूतं संसारे न भूतं न भविष्यति ॥ ३४
यत्किंचिदिदमायाति सुखदुःखमलं भवे ।
तदहंकारचक्रस्य प्रविकारो विजृम्भते ॥ ३५
अहंकाराङ्कुरः कृष्टो हृदयेनावरोपितः ।
सहस्रशाखं दुश्छेदं तस्य संसृतिनाशनम् ॥ ३६
अहंभावोऽङ्कुरो जन्म वृक्षाणामक्षयात्मनाम् ।
ममेदमिति विस्तीर्णास्तेषां शाखाः सहस्रशः ॥ ३७
करटापातविस्फोटा भ्रान्त्यर्था वासनादयः ।
विचार्यचारुरववत्तरङ्गवरपङ्क्तिवत् ॥ ३८
अहंभावनया भाति त्वमहंभाववर्जितः ।
संसारचक्रवहनमात्मनः परिरोधया ॥ ३९

---

असत उत मायायाः । आद्ययोरविकारत्वान्माययोत्पादे मिथ्यात्वापत्तेरनुत्पत्तिपक्षस्यैव परिशेषात् । एवं कथं वा स्यात् । अच्छिद्रे कूटस्थनित्ये चिदात्मनि छिद्रस्वभावस्य वियतष्टङ्कसहस्रैरप्युत्पादयितुमशक्यत्वादित्यर्थः ॥ २० ॥ यदि नोत्पन्नमेव कथं तर्हि जगदिति सर्वैरवबुध्यते तत्राह—**चिदि**ति । अचञ्चलात्मनि कल्पितचाञ्चल्येन चञ्चला मायाप्रतिबिम्बचिद्यच्चमत्कुरुते जगद्भावमिव कल्पयति तदेव जगदिति तयैवावबुध्यत इत्यर्थः ॥ २१ ॥ नन्वियं जगदवबोधचित्सविकल्पा ब्रह्मचिन्निर्विकल्पेति जगद्भेदमपलपितुं प्रवृत्तस्य ते प्रत्युत चित्यपि भेदः प्रसक्त इत्याशङ्क्याह—**त्रैलोक्ये**ति । त्रैलोक्ये यावान्भूयाननुभवः स सर्वोऽपि ब्रह्मचिदादित्यस्यांशुमण्डलं किरणसमूह इव वस्तुतो न भिद्यत इत्यर्थः । स्वस्यांशुमण्डलस्यांशुमतश्च को वा भेदः । विकल्पानां मिथ्यात्वे स त्रैलोक्यभूयोनुभवोऽपि निर्विकल्पक एव कथ्यतामित्यर्थः ॥२२॥ अस्याः सविकल्पायाश्चिद्वृत्तेश्चिदाभासस्य उन्मेषो जगदनुभूतेरुदयो निमेषोऽस्तमय इत्यार्थक्रमप्राबल्यात्पाठव्युत्क्रमेण योज्यम् । अथवास्या निर्विकल्परूपायाश्चिद्वृत्तेश्चरमसाक्षात्कारस्य उन्मेषो जगद्रूपानुभूतेरस्तमयो निमेषोऽनाविर्भावस्तूदय इति पाठक्रमेणैव योज्यम् ॥ २३ ॥ तस्मान्निमेष एव प्रतीचोऽविद्यामल उन्मेषश्च नैर्मल्यलक्षणो मोक्ष इत्याशयेनाह—**अहमर्थ** इति ॥ २४ ॥ नन्वहमर्थोऽहंकारः स कथं परिज्ञातोऽपि परमात्माम्बरं स्यात्तत्राह—**अहमर्थ** इति । यावत्तत्त्वतो न परिज्ञातस्तावदेवाहंकारः सः, परिज्ञाते तु न तथेत्यर्थः ॥२५॥ परिज्ञातो बाध्येत तर्हि किं शिष्यते तदाह—**अवश्यमेवे**ति । तच्चिन्नभः शिष्यते परिशिष्यते । विचारतः कोऽयमहंपदार्थः स्यादिति प्रमाणपूर्वकविचारजन्यज्ञानात् ॥२६॥ अपिशाचे पिशाचधीः अमलधियां प्रौढबुद्धीनां बाध्यते । आध्वान्तःकरणानां ईषन्मार्गप्रवृत्तबुद्धीनां तु शतशो नायं पिशाच इत्युपदिष्टेऽपि विचारणा संशय एव भवति नतु बाध्यत इत्यर्थः ॥ २७ ॥ यथा बालानां मोहो बोधनिरोधी तद्वत्प्रौढानामभिमानोऽपि तन्निरोधीत्याशयेनाह—**चिज्ज्योत्स्ने**ति ॥ २८ ॥ अहमभिमानापाये भयरागमुमुक्षाहेतुकद्वेषरागगोचरनरकस्वर्गमोक्षतृष्णाप्यपैतीत्याह—**प्रमार्जिते** इति ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ मोहं भ्रमम् । दुर्मतौ अभिमानदूषितान्तःकरणे ॥ ३३ ॥ तत्राप्ययं देहोऽहमिति भ्रमः सर्वानर्थनिदानमित्याह—**अय**मिति ॥ ३४ ॥ प्रविकारो मुख्यः परिणामस्तदर्थत्वात्परिणामान्तराणाम् ॥ ३५ ॥ येन अहंकारलक्षणो दुर्वृक्षाङ्कुरो हृदयेन विचारपरिष्कृतमनसैव हलेन कृष्टः कर्षणेन मूलशैथिल्यमापादितः सन्नवरोपित उत्खाय निरस्तस्तस्यार्थादात्मक्षेत्रे संसृतिनाशनं ज्ञानसस्यं सहस्रशाखं प्रवृद्धं फलतीति शेषः ॥ ३६ ॥ तदनुच्छेदेऽनर्थमाह—**अहंभाव** इति । अक्षयात्मनां ज्ञानकुठारमन्तरेणानुच्छेद्यस्वभावानाम् ॥३७॥ ज्ञानमात्रोच्छेद्यत्वादतिनिःसाराश्च ते इत्याह—**करटापाते**ति । करटानां काकानामापात ईषत्पतनं तेनापि विस्फुटन्ति विशीर्यन्ते इति करटापातविस्फोटाः । विचार्यो विमृश्यश्चारुः रवो विस्फोटनशब्दो यस्य तथाविधपक्वशाल्मलीफलादिवत् । तरङ्गाणां वरा रम्या याः पङ्क्तयस्तद्वच्चापातभङ्गुराः फल्गव इत्यर्थः ॥ ३८ ॥ वस्तुतस्त्वहंभाववर्जित एवात्मा आत्मनः परिरोधया

---

१ चिद्वृत्तेरिति पाठश्चेत्तर्हि व्याख्यानुकूलः स्यात् ।

अहंभावतमो यावज्जन्मारण्ये विजृम्भते ।
तावदेता विवल्गन्ति चिन्तामत्ताः पिशाचिकाः ४०
अहंकारपिशाचेन गृहीतो यो नराधमः ।
न शास्त्राणि न मन्त्राश्च तस्याभावस्य सिद्धये ॥ ४१

श्रीराम उवाच ।

केनोपायेन भगवन्नहंकारो न वर्धते ।
तं त्वं कथय मे ब्रह्मन्संसारभयशान्तये ॥ ४२

श्रीवसिष्ठ उवाच ।

चिन्मात्रदर्पणाकारे निर्मले स्वात्मनि स्थिते ।
इति भावानुसंधानादहंकारो न वर्धते ॥ ४३
मिथ्येयमिन्द्रजालश्रीः किं मे स्नेहविरागयोः ।
इत्यन्तरानुसंधानादहंकारो न जायते ॥ ४४
नाहमात्मनि नो यस्य दृश्यश्रिय इति स्वयम् ।
शान्तेन व्यवहारेण नाहंकारः प्रवर्धते ॥ ४५
अहं हि जगदित्यन्तर्हेयादेयदृशोः क्षये ।
समतायां प्रसन्नायां नाहंभावः प्रवर्धते ॥ ४६
अहं चिज्जगदित्यन्तर्हेयादेयदृशोः क्षये ।
समतायां प्रसन्नायां नाहंभावः प्रवर्धते ॥ ४७

श्रीराम उवाच ।

किमाकृतिरहंकारः कथं संत्यज्यते प्रभो ।
सशरीरोऽशरीरश्च त्यक्ते तस्मिंश्च किं भवेत् ॥ ४८

श्रीवसिष्ठ उवाच ।

त्रिविधो राघवास्तीह त्वहंकारो जगत्त्रये ।
द्वौ श्रेष्ठावितरस्त्याज्यः शृणु त्वं कथयामि ते ॥ ४९
अहं सर्वमिदं विश्वं परमात्माहमच्युतः ।
नान्यदस्तीति परमा विज्ञेया सा ह्यहंकृतिः ॥ ५०
मोक्षायैषा न बन्धाय जीवन्मुक्तस्य विद्यते ।
सर्वस्माद्व्यतिरिक्तोऽहं वालाग्रशतकल्पितः ॥ ५१
इति या संविदेषासौ द्वितीयाहंकृतिः शुभा ।
मोक्षायैषा न बन्धाय जीवन्मुक्तस्य विद्यते ॥ ५२
अहंकाराभिधा या सा कल्प्यते ननु वास्तवी ।
पाणिपादादिमात्रोऽयमहमित्येष निश्चयः ॥ ५३
अहंकारस्तृतीयोऽसौ लौकिकस्तुच्छ एव सः ।
वर्ज्य एव दुरात्मासौ शत्रुरेव परः स्मृतः ॥ ५४
अनेनाभिहतो जन्तुर्न भूयः परिरोहति ।
रिपुणानेन बलिना विविधाधिप्रदायिना ॥ ५५
कष्टीकृतमतिर्लोकः संकटेष्वेव मज्जति ।
अनया दुरहंकृत्या भावात्संसक्तया चिरम् ॥ ५६
शिष्टाहंकारवाञ्जन्तुर्भगवान्याति मुक्तताम् ।
लोकाहंकारवद्दोषवपुरस्मिन्निरूपणः ॥ ५७

तिरोधात्र्याहंभावनया स्वयमेव संसारचक्रे वहनं भ्रमणमिव भातीत्यर्थः ॥ ३९ ॥ चिन्तालक्षणा मत्ताः पिशाचिका विवल्गन्ति विधावन्ति ॥ ४० ॥ तस्याहंकारपिशाचस्याभावस्य निवृत्तेः सिद्धये प्रभवन्तीति शेषः ॥ ४१ ॥ तं उपायम् ॥ ४२ ॥ इति उक्तप्रकारस्य भावस्य स्वात्मस्वभावस्यानुसंधानात् सदा स्मरणात्स्वात्मनि चिन्मात्रदर्पणाकारे निर्मले स्थिते सति अहंकारो न वर्धते ॥ ४३ ॥ स्नेहविरागयोः रागद्वेषाभ्यां किं, न किंचित्प्रयोजनमित्यन्तर्मनस्यनुसंधानात् ॥ ४४ ॥ यस्य पुंस आत्मनि नाहं अहंकारो नास्ति दृश्यश्रियश्च नो सन्ति इति स्थित्या स्वयमेव शान्तेन ॥ ४५ ॥ अन्तरहमिति बहिर्जगदिति हेयादेयव्यवहारनिमित्तयोर्दृशोः क्षये सति समतायामवैषम्यलक्षणायां प्रसन्नायाम् ॥ ४६ ॥ अहं द्रष्टा, चिद्दर्शनं, जगद्दृश्यं, इति त्रिपुटीप्रत्यये तत्रापीदं हेयं शत्रुभूतमिदमादेयं मित्रभूतमिति दृशोः क्षये समतायां सर्वात्मतालक्षणायाम् ॥ ४७ ॥ सशरीरो जाग्रदहंकारः । अशरीरः स्वाप्नमानोरथिकाहंकारश्च । अथवा सशरीरो देहमात्राहंभावलक्षणः । अशरीरो देहव्यतिरिक्तबुद्धिमात्रोपाधिकाहंभावलक्षणः सर्वाहंभावलक्षणश्चेत्यर्थः । कथं केनोपायेन संत्यज्यते ॥ ४८ ॥ अशास्त्रीयस्याहंकारस्य त्याजनार्थं शास्त्रीयौ द्वावहंकारौ विहितौ सूक्ष्मात्मविषयः सार्वात्म्यविषयश्च तयोस्तत्त्वदर्शनाप्रतिकूलत्वात्सांप्रतिकत्वेन सुत्यजत्वादपरिच्छिन्नात्मदर्शनद्वारत्वाच्च श्रेष्ठता । इतरस्य देहमात्राहंभावरूपस्यानर्थरूपत्वात्त्याज्यता चेत्यर्थः ॥ ४९ ॥ अहं सर्वमिदं विश्वमिति कार्यब्रह्मविषया परमात्माहमच्युत इति कारणविषया तत्पदवाच्यार्थलक्ष्यार्थविषया वा । अन्यदनहंभूतं जगति नास्तीत्यर्थः ॥ ५० ॥ जीवन्मुक्तस्य चतुर्थपञ्चमभूमिकास्थस्य । यद्यपीयं[3] अभ्यासदशापन्नस्यापि भवति तथापि जीवन्मुक्तेषु पक्वेति भावः । वालाग्रस्य केशाग्रभागस्य शततमभाग इति कल्पितः । शोधनेन निरवयवः समर्थित इति यावत् । स्थौल्यविरहे बुद्धिसौक्ष्म्योपाधिकसौक्ष्म्यकाष्ठायां वाऽयं दृष्टान्तो नत्वणुपरिमाणत्वे । तस्यावैदिकत्वात् । 'स चानन्त्याय कल्पत' इति श्रुतिविरोधाच्चेति बोध्यम् ॥ ५१ ॥ अतएवाह—**जीवन्मुक्तस्येति** । षष्ठभूमिकास्थस्येत्याशयः ॥ ५२ ॥ ये तु सप्तमभूमिकारूढास्तेषु जीवनान्यथानुपपत्त्या या कल्प्यते ननु वास्तवी सा कल्पना । कल्पयित्रा वेदित्रा वा प्रत्यक्षमननुभवात् । अतोऽत्यन्तासत्त्वादहंकार इति नाममात्रपरिशेषादहंकाराभिधामात्रमित्याह—**अहंकाराभिधेति** । तृतीयं दर्शयति—**पाणिपादादीति** । अयं देह एवाहमित्येष निश्चयो मिथ्याभिमानः ॥ ५३ ॥ ५४ ॥ न परिरोहति नापरिच्छिन्नस्वभावेनाविर्भवति । आधिग्रहणं प्राधान्याद्दुःखमात्रोपलक्षणम् ॥ ५५ ॥ भावात्स्वभावादेव चिरमनादिकालादारभ्य संसक्तया कष्टीकृतमतिर्दुर्वासनाप्रचयदुष्प्रवृत्त्याद्यापादनेन पीडितचित्तः ॥ ५६ ॥ केन तर्हि तस्माज्जन्तुर्मुच्यते तदाह—**शिष्टेति** । शिष्टौ प्रागुक्तौ यौ शुद्धाहंकारौ तद्वान्सन् दोषान्ममताप्रयुक्तरागादीन्वपति सर्वतश्छिनत्तीति दोषवपुः सन् अस्मिन्सर्वात्मभावाहंकारेऽपि लोकप्रसिद्धदेहात्मभावाहंकारवन्निरूपयतीति निरूपणो दृढीभूतः सन्

१ प्रपन्नायां इत्युभयत्र पाठः क्वचित्.

२ कन्दः संसारसंततेः इति पाठः. ३ यं तुर्दीयेत्यपि पाठः.

न देहोऽस्मीति निर्णीय वर्जनं महतां मतम्।
प्रथमं द्वावहंकारावङ्गीकृत्यान्त्यलौकिकौ॥ ५८
प्रथमं द्वावहंकारावङ्गीकृत्यान्त्यलौकिकौ।
तृतीयाहंकृतिस्त्याज्या लौकिकी दुःखदायिनी॥५९
अनया दुरहंकृत्या दामव्यालकटाः किल।
तां दशां समनुप्राप्ता या कथास्वपि खेददा॥ ६०
श्रीराम उवाच।
तृतीयां लौकिकीमेतां त्यक्त्वा चित्तादहंकृतिम्।
किंभावः पुरुषो ब्रह्मन्प्राप्नुयादात्मनो हितम्॥ ६१
श्रीवसिष्ठ उवाच।
एषा तावत्परित्याज्या त्यक्त्वैतां दुःखदायिनीम्।
यथा यथा पुमांस्तिष्ठेत्परमेति तथा तथा॥ ६२
अहंकारदशावेते पूर्वोक्ते भावयन्यदि।
तिष्ठेदुपैति परमं तत्पदं पुरुषोऽनघ॥ ६३
अथ ते अपि संत्यज्य सर्वाहंकृतिवर्जितः।
संतिष्ठेत तथात्युच्चैः पदमेवाधिरोहति॥ ६४
सर्वदा सर्वयत्नेन लौकिकी दुरहंकृतिः।
परमानन्दबोधाय वर्जनीयाऽनया धिया॥ ६५
शरीरास्थामयापुण्यदुरहंकारवर्जनम्।
अत्यन्तपरमं श्रेय एतदेव परं पदम्॥ ६६
भावादहंकृतिं त्यक्त्वा स्थूलामेतां हि लौकिकीम्।
तिष्ठन्व्यवहरन्वापि न नरः प्रपतत्यधः॥ ६७
संशान्ताहंकृतेर्जन्तोर्भोगा रोगा महामते।
न स्वदन्ते सुतृप्तस्य यथा प्रतिविषा रसाः॥ ६८
भोगेष्वस्वदमानेषु पुंसः श्रेयः पुरो गतम्।
क्षीणेऽन्धकारे किं नाम मनसोऽन्यत्प्रवर्तते॥ ६९
अहंकारानुसंधानवर्जनादेव राघव।
पौरुषेण प्रयत्नाच्च तीर्यते भवसागरः॥ ७०
नाहं न तेन मम किंचिदपीति मत्वा
सर्वं च मे सकलमप्यहमेव चेति।
लब्धास्पदं मनसि संविदमेवमीड्यां
नीत्वा स्थितिं परमुपैति पदं महात्मा॥ ७१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे दामव्यालकटोपाख्यानेऽहंकारविचारो नाम त्रयस्त्रिंशः सर्गः॥ ३३॥

## चतुस्त्रिंशः सर्गः ३४

श्रीवसिष्ठ उवाच।
अत्र ते शृणु वक्ष्यामि दामादिषु गतेष्वथ।
यद्वृत्तं शम्बरस्यैव नगरे नगसंनिभे॥ १
तथा गगनविभ्रष्टे समस्ते ध्वस्तसंस्थितौ।
विनष्टे शम्बरानीके शरदीवाब्दमण्डले॥ २

भगवान् हिरण्यगर्भ ईश्वरो वा स्वयमेव भावनया संपन्नो देहाहंभावाहंकारमुक्ततां यातीत्यर्थः॥ ५७॥ अयमेव प्रकारोऽन्येषां ब्रह्मनिष्ठानां संमत इत्याह—**न देह** इति। अन्त्यो देहात्मभावाहंकार इव लौकिकौ निरूढतमौ आद्यौ द्वावहंकारौ प्रथममङ्गीकृत्य न देहोऽस्मीति विचारतोऽपि निर्णीय तदहंकारवर्जनं कार्यमिति महतां पूर्वेषामपि मतमित्यर्थः॥ ५८॥ उक्तमेवार्थं पुनरनूद्योपसंहरति—**प्रथम**मिति॥ ५९॥ तत्रोक्तोपाख्यानमपि निदर्शनमित्याह—**अनये**ति॥ ६०॥ प्रश्नद्वये समाहिते रामस्तृतीयं प्रश्नमर्थात्तृतीयाहंकारनिवृत्तिफलप्रश्नतया पर्यवसन्नमध्यवस्यंस्तादृशपुरुषस्थितिप्रकारभेदान्पृच्छति—**तृतीया**मिति। के भावाः स्थितिप्रकारा यस्य स किंभावः॥ ६१॥ यथा यथा सर्वाहंभावेन शुद्धाहंभावेन श्रवणगुरुशुश्रूषादिपरतया सप्तभूमिकाभेदेषु वा येन येन प्रकारेण स्थातुं शक्नोति तथा तथा स्वरूपसुखाभिव्यक्त्युत्कर्षलाभात्परमेतीत्यर्थः॥६२॥ तदेव प्रपञ्चयति—**अहंकारे**त्यादिना। पूर्वोक्ते आद्ये द्वे॥ ६३॥ ६४॥ ज्ञातकृत्वोऽपि पथ्यं वक्तव्यमिति न्यायात्पुनर्देहात्मभावनात्यागगुणान्कीर्तयंस्तदावश्यकत्वं दर्शयति—**सर्वदे**त्यादिना॥ ६५॥ शरीरास्थामयः अपुण्यः पापरूपो यो दुरहंकारस्तस्य वर्जनम्॥ ६६॥ भावनं भावो विचारस्तस्मात्॥ ६७॥ प्रतिपन्नविषाः प्रतिविषाः। विषसंपृक्ता इति यावत्॥ ६८॥ प्रतिबन्धनिवृत्तौ रोगतमिव भवतीति शेषः। मनसः अन्धकारे अन्धकारवद्ग्रहणान्यथाग्रहणनिमित्तेऽहंकारे क्षीणे सत्यन्यत्किं प्रतिबन्धकं प्रवर्तते येन श्रेयःप्राप्तिविघातः स्यात्। न किंचिदित्यर्थः॥ ६९॥ पौरुषेण धैर्येण श्रवणादिप्रयत्नाच्च॥ ७०॥ प्रथमं सकलमप्यहमेव तेन सर्वं च मे इति मत्वा तेन देहादि नाहं तत्संबन्धि च किंचिदपि मम न इति मत्वा तेन सर्वप्रतिबन्धक्षयान्मनसि लब्धास्पदं यथा स्यात्तथा ईड्यां पूज्यां एवं प्रागिवस्तरोक्तप्रकारां शुद्धात्मसंविदं नीत्वा प्रापय्य क्रमेण सप्तभूमिकास्थितिं प्राप्य महानपरिच्छिन्न आत्मा स्वयं सन् परं पदं विदेहकैवल्यमुपैति प्राप्नोतीत्यर्थः॥ ७१॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे अहंकारविचारो नाम त्रयस्त्रिंशः सर्गः॥ ३३॥

भीमभासदृढैः कृत्तैर्देवैरभ्यर्थितो हरिः।
शम्बरं निजघानात्र ते च मुक्ता विवासनाः॥ १॥

ज्ञानविवेकयोरभावे संपन्नमपि निर्वासनत्वं दुरभ्यासेन विहन्यते। तयोर्दार्ढ्ये तु 'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति' इति श्रुत्युक्तदिशा न देवैरपि पुनर्बन्धः कर्तुं शक्य इत्यर्थे भीमभासदृढन्यायं निदर्शयितुमुपक्रमते—**अत्रे**त्यादिना। अत्र भावादहंकृतिं त्यक्त्वेत्यादिवर्णितेऽर्थे। नगसंनिभे संपदा मेरुसदृशे॥ १॥ तथा वर्णितप्रकारेण। गगनाद्विभ्रष्टे अधःपतिते सति। ध्वस्तसंस्थितौ भिन्नमर्यादे॥ २॥

देवनिर्जितसैन्योऽसौ नीत्वा कतिपयाः समाः ।
पुनर्देववधोद्युक्तश्चिन्तयामास दानवः ॥ ३
दामादयस्तु रचिता ये मया मायया सुराः ।
मौर्ख्यात्तैर्भाविता युद्धे मिथ्यैव दुरहंकृतिः ॥ ४
इदानीं संसृजाम्यन्यान्दानवान्माययोदितान् ।
तानप्यध्यात्मशास्त्रज्ञान्सविवेकान्करोम्यहम् ॥ ५
ततस्तत्त्वपरिज्ञानान्मिथ्याभावनयोज्झिताः ।
नाहंकारं प्रयास्यन्ति विजेष्यन्ति च तान्सुरान् ॥ ६
इति संचिन्त्य दैत्येन्द्रस्तादृशान्दानवान्धिया ।
माययोत्पादयामास बुद्बुदानिव वारिधिः ॥ ७
सर्वज्ञा वेद्यवेत्तारो वीतरागा गतैनसः ।
यथाप्राप्तैककर्तारो भावितात्मान उत्तमाः ॥ ८
भीमो भासो दृढ इति नामभिः परिलाञ्छिताः ।
जगत्तृणमिवाशेषं पश्यन्तः पावनाशयाः ॥ ९
ते दैत्या भुवनं प्राप्य च्छादयामासुरम्बरम् ।
गर्जन्तो हेतितडितः प्रावृषीव पयोधराः ॥ १०
अयुध्यन्त समं देवैरपि वर्षगणान्बहून् ।
विवेकवशतो जग्मुर्नाहंकारं कदाचन ॥ ११
तेषां यावदुदेत्यन्तर्ममेदमिति वासना ।
तावत्कोऽयमहं चेति विचाराद्यात्यसत्यताम् ॥ १२
असच्छरीरं विबुधाः कोऽसावहमिति स्थितिः ।
विचारादित्थमेतेषां प्रोदगुर्न भयादयः ॥ १३
असच्छरीरं नास्तीदं चिच्छुद्धैवात्मनि स्थिता ।
अहंनाम न चान्योऽस्ति निश्चित्यैवासुरा ययुः ॥ १४
ततस्तैर्निरहंकारैर्जरामरणनिर्भयैः ।
प्राप्तार्थकारिभिर्धीरैर्वर्तमानानुसारिभिः ॥ १५

असक्तबुद्धिभिर्नित्यं हतान्यैरप्यहन्तृभिः ।
वासनाजालनिर्मुक्तैः कृतकार्यैरकर्तृभिः ॥ १६
प्रभोः कार्यमिदं कार्यमिति संगरतत्परैः ।
वीतरागैर्गतद्वेषैः सर्वदा समदृष्टिभिः ॥ १७
सा दैवी दानवैः सेना भीमभासदृढादिभिः ।
हता भुक्ता हता क्षुण्णा स्वान्नश्रीरिव भोक्तृभिः ॥ १८
भीमभासदृढक्षुण्णा जाता गीर्वाणवाहिनी ।
परिदुद्राव वेगेन गङ्गेव हिमवच्च्युता ॥ १९
सा सुरानीकिनी देवं क्षीरोदार्णवशायिनम् ।
जगाम शरणं शैलं वातार्तेवाब्दमालिका ॥ २०
हरिराश्वासयामास तां भीतां देववाहिनीम् ।
भुजङ्गैर्भिवृतामेकां रमणीमिव नायकः ॥ २१
अथ क्षीरोदकुहरे तावत्स्था सुरवाहिनी ।
उवास यावद्भगवांस्तन्निरासार्थमुद्ययौ ॥ २२
बभूव दारुणं युद्धं शौरिशम्बरयोस्ततः ।
अकाल इव कल्पान्ते समुड्डीनकुलाचलम् ॥ २३
शशाम समरे तस्मिन्दैत्यः सबलवाहनः ।
नारायणहतो यातः शम्बरो वैष्णवीं पुरीम् ॥ २४
भीमभासदृढास्ते तु तस्मिन्विषमसंगरे ।
विष्णुनैव शमं नीताः पवनेनेव दीपिकाः ॥ २५
ते हि निर्वासना एव यदा शान्तिमुपागताः ।
न तदैषां गतिर्ज्ञाता दीपानामिव शाम्यताम् ॥ २६
तस्माद्वासनया बद्धं मुक्तं निर्वासनं मनः ।
राम निर्वासनीभावमाहरस्व विवेकतः ॥ २७
सम्यगालोकनात्सत्याद्वासना प्रविलीयते ।
वासनाविलये चेतः शममायाति दीपवत् ॥ २८

---

असौ दानवः शम्बरः ॥ ३ ॥ चिन्ताप्रकारमेवाह—**दामादय** इत्यादिना ॥ ४ ॥ तानध्यात्मशास्त्रज्ञान् सविवेकानपि करोमीत्यन्वयः ॥ ५ ॥ ६ ॥ वरप्राप्तिविद्याबलवशीकृताविद्यालक्षणया मायया ॥ ७ ॥ एकविज्ञानेन सर्वविज्ञानात्सर्वज्ञाः । वेद्यात्मतत्त्ववेत्तृत्वादेव वीतरागादिविशेषणाः ॥ ८ ॥ ९ ॥ भुवनमूर्ध्वभुवनम् । हेतितडित इत्युपमानपक्षे इवार्थगर्भो बहुव्रीहिः ॥ १० ॥ ११ ॥ १२ ॥ येभ्यो भेतव्यं यदर्थे च तदुभयं मिथ्येति विचाराद्भयाद्यनुदय इत्याह—**असदि**ति । शरीरं विबुधाश्च असत् । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्येकशेषैकवद्भावः ॥ १३ ॥ १४ ॥ १५ ॥ हता अन्ये यैस्तथाविधैरपि हन्तृत्वाभिमानाभावादहन्तृभिः ॥ १६ ॥ तर्हि तेषां कुतः संगरे प्रवृत्तिस्तत्राह—**प्रभो**रिति । प्रभोः शम्बरस्य दृशा इदं कार्यम् । तस्याज्ञत्वादित्यर्थः । अथवा सेवकीभूतैः सदसद्वा प्रभोः कार्यमवश्यं कार्यमिति नियतिरिति हेतोः संगरतत्परैर्नतु फलाभिलाषयेत्यर्थः ॥ १७ ॥ भुक्ता जवेन वशीकृत्य सेवादिनोपभुक्तेत्यर्थः ॥ १८ ॥ १९ ॥ सुराणां अनीकिनी सेना ॥ २० ॥ भुजङ्गैर्विटैर्बलादुपभोगायाभिवृताम् । भीतामित्यस्या अपि विशेषणम् । नायको भर्ता ॥ २१ ॥ क्षीरोदस्य कुहरे श्वेतद्वीपे । तावत् यावच्छम्बरस्यायुःक्षयस्तावत् । तस्य शम्बरस्य निरासो वधस्तदर्थम् ॥ २२ ॥ कल्पान्त इव अकालेऽपि समुड्डीनकुलाचलं युद्धम् ॥ २३ ॥ शशाम । मृत इति यावत् । वैष्णवीं पुरीं यातः । 'ये ये हताश्चक्रधरेण दैत्यास्त्रैलोक्यनाथेन जनार्दनेन । ते ते गता विष्णुपुरं नरेन्द्र क्रोधोऽपि देवस्य वरेण तुल्यः ॥' इति शास्त्रादित्यर्थः ॥ २४ ॥ शमं विदेहकैवल्यम् ॥ २५ ॥ तेषामपि शम्बरवत्प्रसक्तां देशान्तरगतिं प्रतिषेधति—**ते ही**ति । वासना हि गतिकारणम् । 'तदेष सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य' इति श्रुतेः । निर्वासनत्वात्तेषां गत्यभावादेव गतिर्न ज्ञातेत्यर्थः ॥ २६ ॥ उक्तां कथां प्रकृते योजयन्नुपसंहरति—**तस्मादि**ति । आहरस्व आनय । अवश्यं संपादयेति यावत् ॥ २७ ॥ तदाहरणे क उपायस्तमाह—**सम्यगि**ति । सत्याद्यथाभूतार्थगोचरात्सम्यगालोकनाद्दृढतत्त्वसाक्षात्कारवच्चिरविचारप्रणिधानजनितसाक्षात्कार-

न सत्यं किंचिदेवेह सद्भावो भावयत्यलम् ।
नास्त्येव भावना तस्मादित्येतत्सम्यगीक्षणम् ॥ २९
आत्मैवेदं जगत्सर्वं कः किं भावयतु क वा ।
भावना नाम नास्त्येव तदेतत्सम्यगीक्षणम् ॥ ३०
वासनाचित्तनामानौ शब्दावर्थसमन्वितौ ।
सत्यावलोकनायत्र विलीनौ तत्परं पदम् ॥ ३१
वासनावलितं चित्तमिह स्थितिमुपागतम् ।
तदेव तद्विनिर्मुक्तं विमुक्तमिति कथ्यते ॥ ३२
नानाघटपटाकारैश्चेतःस्थितिमुपागतम् ।
तदेवाशु शमं नेयं मिथ्यायक्ष इवोत्थितः ॥ ३३
दामव्यालकटाकारैश्चेतः परिणतं यथा ।
भीमभासदृढन्यायो राघवास्त्वचलस्तव ॥ ३४
दामव्यालकटन्यायो मा ते भवतु राघव ।
एतद्राम पुरा प्रोक्तं पित्रा कमलजेन मे ॥ ३५
भवते यन्मया प्रोक्तं शिष्यायात्यन्तधीमते ।
दामव्यालकटन्यायस्तस्मान्मा तेऽस्तु राघव ।
भीमभासदृढन्यायो नित्यमस्तु तवानघ ॥ ३६

अविरलसुखदुःखसंकटेयं
भवपदवी भवतापनोपयाता ।
व्यवहरणवतो विभूतियातौ
सततमसक्ततयैव नश्यतीति ॥ ३७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे दामव्यालकटोपाख्यानसमाप्तिर्नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ३५

श्रीवसिष्ठ उवाच ।

जयन्ति ते महाशूराः साधवो यैर्विनिर्जितम् ।
अविद्यामेदुरोल्लासैः स्वमनो विषयोन्मुखम् ॥ १
संसारस्यास्य दुःखस्य सर्वोपद्रवदायिनः ।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः ॥ २
श्रूयतां ज्ञानसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते ॥ ३
किमन्यैः शास्त्रसंदर्भैः क्रियतामिदमेव तु ।
यद्यत्स्वाद्विह तत्सर्वं दृश्यतां विषवह्निवत् ॥ ४
विषमा विषयाभोगाः प्रविचार्य पुनःपुनः ।
उपरिष्टात्परित्यज्य सेव्यमानाः सुखावहाः ॥ ५
दोषान्प्रसवति स्फारान्वासनावलिता मतिः ।
कीर्णकण्टकबीजा भूः कण्टकप्रसरं यथा ॥ ६
अलग्नवासनाजाला मतिः प्रसरवर्जिता ।
अदृष्टरागद्वेषा या शममेति शनैः परम् ॥ ७
शुभाशुभानसद्ग्लानीन्प्रसूते सुगुणान्सदा ।

---

दित्यर्थः । चेतो मनः । शमं नाशम् ॥ २८ ॥ सम्यगालोकनप्रकारमिदानीं दर्शयति—**न सत्य**मिति । अलं पूर्णः सद्भावः परमार्थसत्यश्चिदात्मा यदिदं दृश्यं भावयति तत्किंचिदपि न सत्यम् । तस्मात्तस्य दृश्यस्य भावना दर्शनमपि दृश्यविशेषिताकारा नास्त्येव इति एतत्स्वप्रकाशचिन्मात्रपरिशेषदर्शनमेव सम्यगीक्षणमित्यर्थः ॥ २९ ॥ कः किं भावयत्विति त्रिपुटीनिषेधः । केत्याधारनिषेधः । भावनेति तत्संस्कारनिषेधः ॥ ३० ॥ वासना चित्तमितिशब्दावपि राहोः शिर इतिवद्वैकल्पिकभेदकल्पनात्तन्नामानौ ॥ ३१ ॥ विमुक्तं जीवन्मुक्तम् । विदेहकैवल्ये चित्तस्याभावात् ॥ ३२ ॥ मिथ्यायक्षो बालवेताल इव ॥ ३३ ॥ 'देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते' इति न्यायाद्दामव्यालकटदेहात्मभावनया यथा तेषां चेतः परिणतं तथैव ब्रह्मात्मभावनया भीमभासदृढन्यायस्तवाचलोऽस्त्वित्यर्थः ॥ ३४ ॥ स्वोक्तार्थे सादरग्रहणसिद्धये पितृप्रसादलब्धतां दर्शयन्पुनः स्नेहातिशयात्तमेवार्थं स्थिरयन्नुपदिशति—**दामे**त्यादिना ॥ ३५ ॥ ॥ ३६ ॥ इति उक्तप्रकारेण भीमभासदृढन्यायेन व्यवहरणवतस्तव सर्वव्यवहारविषयेष्वसक्ततयैव विभूतेस्तत्त्वबोधपरिपाकलक्षणस्यैश्वर्यस्य यातौ प्राप्तौ सत्यां अविरलसुखदुःखसंकटा भवेषु जन्मपरम्परासु तापनाय त्रिविधताप[illegible] भवपदवी मूलोच्छेदेन नश्यति नान्यथेत्यर्थः ॥ ३७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दामव्यालकटोपाख्यानसमाप्तिर्नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥

**इह चित्तशमोपायो भोगेच्छात्याग उच्यते ।**
**सत्संगमविवेकात्मबोधरूढसमाधियुक् ॥ १ ॥**

तत्र मनोनिग्रह एव मुख्योपायोऽन्ये तदर्था इत्याशयेन तमेव प्रथमं प्रशंसन्प्रस्तौति—**जयन्ती**ति द्वाभ्याम् ॥ १ ॥ २ ॥ मनोनिग्रहोपायेषु भोगेच्छात्यागो मुख्य इत्याह—**श्रूयता**मिति ॥ ३ ॥ तस्मिंश्च विषयेषु दोषदर्शनाद्बीभत्सा उपाया इत्याशयेनाह—**किमन्यै**रिति ॥ ४ ॥ तत्राविचार्य सहसा विषयत्यागो दुःखद एव विचार्य गुरुशास्त्रोक्तक्रमेण त्यागस्त्वापातकटुकोऽप्युदर्के महासुख इत्याह—**विषमा** इति । विषयाणामभोगास्त्यागा विषमाः । विनाविचारमिति शेषः । पुनःपुनः प्रविचार्य सहनाभ्यासादुपरिष्टात्क्रमेण भोगवासनाः परित्यज्य सेव्यमानास्तु परिपाके सुखावहा इत्यर्थः ॥ ५ ॥ भोगवासनासु सतीषु का हानिस्तत्राह—**दोषा**निति । दोषान् रागादीन् प्रसवति पुनःपुनर्विषयस्मारणेनोत्पादयति । कीर्णानि कण्टकद्रुमबीजानि यस्याम् ॥ ६ ॥ अतो या मतिरलग्नवासनाजाला अतएवादृष्टरागद्वेषा अतएव प्रसरश्चाञ्चल्यं तद्वर्जिता सती सा शनैः शममेतीत्यर्थः ॥ ७ ॥ शुभा मतिः असती अविद्यमाना ग्लानि-

फलदानङ्कुरान्काले श्रेष्ठबीजवतीव भूः ॥ ८
शुभभावानुसंधानात्प्रसन्ने मनसि स्थिते ।
शनैः शनैः प्रशान्ते च मिथ्याज्ञानघनाम्बुदे ॥ ९
वृद्धिं याते च सौजन्ये यक्षे शुक्ल इवोडुपे ।
विवेके प्रसृते पुण्ये नभसीवार्कतेजसि ॥ १०
धृतावन्तर्विवृद्धायां मुक्तायामिव कीचके ।
स्थितावन्तः कृतार्थायां मधाविव निशाकरे ॥ ११
फलिते शीतलच्छाये सत्सङ्गसफलद्रुमे ।
स्रवत्यानन्दसुरसे समाधिसरलद्रुमे ॥ १२
मनो भवति निर्द्वन्द्वं निष्कामं निरुपद्रवम् ।
प्रशान्तचापलानर्थशोकमोहभयामयम् ॥ १३
क्षीणशास्त्रार्थसंदेहं विगताशेषकौतुकम् ।
निरस्तकल्पनाजालं मोहमुक्तमलेपकम् ॥ १४
निरीहं निरुपाक्रोशं निरपेक्षं निराधिकम् ।
संशान्तशोकनीहारमसक्तं ग्रन्थिवर्जितम् ॥ १५
संदेहोग्रसुतं साग्रं सतृष्णादारपञ्जरम् ।
नाशयित्वा स्वमात्मानं साधयत्यर्थमैश्वरम् ॥ १६
आत्मपीवरताहेतून्विकल्पांश्चायमुज्झति ।
संस्मृत्य प्रभुतामेषु जहाति तृणवत्तनुम् ॥ १७
मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
ज्ञमनो नाशमभ्येति मनोऽज्ञस्य विवर्धते ॥ १८
मनोमात्रं जगच्चक्रं मनः पर्वतमण्डलम् ।
मनो व्योम मनो देवो मनो मित्रं मनो रिपुः ॥ १९
विकल्पकलुषा या स्याच्चित्तत्वस्यात्मविस्मृतिः ।
मन इत्युच्यते सेयं वासना भवभागिनी ॥ २०
चेत्यानुपातकलितचिन्मात्रे तिष्ठताभिधम् ।
मनाग्विकल्पकलुषं चित्तत्वं जीव उच्यते ॥ २१
चेत्यप्रपतितं रूढसंज्ञमज्ञत्वमागतम् ।
तदेवाधिकनिःसारं कल्प्यतेऽन्तर्मनस्तया ॥ २२
नात्मा संसारिपुरुषो न शरीरं न शोणितम् ।

दुःखं येभ्यस्तथाविधान्सुगुणान् शान्तिदान्त्यादिसद्गुणयुक्तान् शुभानेव ज्ञानसमाधिविश्रान्तिलक्षणान्मोक्षफलदानङ्कुरान्सूते । यथा शाल्यादि श्रेष्ठबीजवती भूमिरित्यर्थः ॥ ८ ॥ दयादाक्षिण्यक्षमादिशुभभावाभ्यासमारभ्य समाधिपर्यन्तानि मनोविश्रान्तिसाधनानि क्रमेणाह—**शुभे**त्यादिना । सर्वेषां भावलक्षणसप्तम्यन्तानां मनो भवति निर्द्वन्द्वमित्यत्रान्वयः ॥ ९ ॥ उडुपे चन्द्रे ॥ १० ॥ धृतौ इन्द्रियनिग्रहधैर्ये । कीचके वेणौ । 'करीन्द्रजीमूतवराहशङ्खमत्स्यादिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥' इत्यष्टसु मुक्ताप्रकारेषु वेणूनामपि रत्नशास्त्रे परिगणितत्वात् । अन्तर्हृदि मनसि स्थितौ आत्मसौख्यलाभेन कृतार्थायाम् ॥ ११ ॥ सत्सङ्गो गुर्वादिसमागमः ॥ १२ ॥ १३ ॥ कौतुकं विचित्रविषयदर्शनोत्कण्ठा ॥ १४ ॥ कामो बीजावस्था । अपेक्षा प्रवृत्त्युन्मुखावस्था । ईहा प्रवृत्त्यवस्थेति भेदान्न पौनरुक्त्यम् । ग्रन्थिभिरासङ्गैर्वर्जितं भवतीति सर्वत्रानुकृष्यते ॥ १५ ॥ एवंभूतं मनः किं करोति तदाह—**संदेहे**ति । क आत्मा कीदृशो वा कैः साधनैर्वा लभ्यः कर्मभिर्ज्ञानेन वा कीदृशं वा ज्ञानं साधनानि च तस्य कानि स्युर्नानावादिभिरन्यथान्यथा निरूपणादित्यादिबहुविधसंदेहा एव उग्राः सुता दुष्पुत्रा यस्य तथाविधम् । अग्रैः शाखाप्रायैर्नानामनोरथारम्भैः सहितम् । तृष्णालक्षणा ये दाराः पञ्जरं स्थूलशरीरं च तत्सहितं आत्मानं स्वं मनःस्वरूपं नाशयित्वा स्वस्यैश्वरो यः प्रत्यगात्मा तत्संबन्धिनमर्थं जीवन्मुक्तिलक्षणं परमपुरुषार्थं साधयतीत्यर्थः ॥ १६ ॥ मनः केन क्रमेण स्वात्मानं नाशयति तमाह—**आत्मे**ति । प्रथममात्मनः स्वस्य पीवरता पुष्टिस्तद्धेतूनरिमित्रसाध्वसाध्वादिविकल्पानुज्झति । कथम् । एषु विकल्पेषु स्वस्य उत्पादन इव निग्रहेऽपि प्रभुतां समर्थतां संस्मृत्य विचिन्त्येत्यर्थः । ततस्तनुं देहाकारं स्वीयं कल्पितरूपं तृणवज्जहाति । यावदेव हि देहाहंभावेन वासितं मनो देहाकारं भवति तावदेव देहानुकूलप्रतिकूलविषयेषु रागद्वेषातिप्रभवैर्विकल्पसहस्रैर्वर्धते तास्मिंस्तु क्षीणे क्षीयत इति भावः ॥ १७ ॥ ननु स्वनाशस्याभ्युदयत्वाभावात्प्रत्युतानर्थरूपत्वात्तत्र मनः कथं प्रवर्ततां तत्राह—**मनस** इति । अयं भावः—नहि मनः स्वातन्त्र्येणाभ्युदयमिच्छति किंत्वात्मभूतत्वात् आत्मभूतस्य च मनोभावोऽनर्थस्तन्नाशस्तु सर्वानर्थप्रहाणरूपत्वान्निरतिशयानन्दस्वरूपपरिशेषाच्चाभ्युदय एवेति । प्रत्यगात्मनस्तु स्वरूपलाभान्महोदयत्वं निर्विवादमेवेत्याशयेनाह—**मनोनाश** इति । तर्हि देहाहंकारत्यागमात्रं कार्यं किं ब्रह्मात्मताज्ञानेन तत्राह—**ज्ञमन** इति । ज्ञस्य ब्रह्मात्मैक्यज्ञस्य । **अज्ञस्ये**ति । अज्ञानरूपे मलेऽनुच्छिन्ने मनो भूयः प्ररोहत्येवेति भावः ॥ १८ ॥ प्ररोहतां का हानिस्तत्राह—**मनोमात्र**मिति । जगदनर्थप्राप्तिरेव हानिरिति भावः ॥ १९ ॥ तर्हि तस्य मनसः किं स्वरूपं यदवश्योच्छेद्यं तदाह—**विकल्पे**ति । आत्माप्रतिसंधाननिमित्तनानाविकल्पवासना एव तत्स्वरूपमित्यर्थः ॥ २० ॥ अस्त्वेवंविधं मनस्तेन बध्यो जीवः कस्तमाह—**चेत्ये**ति । मनसि चेत्यस्य विषयस्य योऽनुपातो वासनात्मना प्रवेशस्तेन कलिते परिच्छिन्ने चिन्मात्रे । तिष्ठतीति तिष्ठस्तद्भावस्तिष्ठता । व्यत्ययेन कर्तरि शः । स्थितिरित्यभिधाशब्दव्यवहारयोग्यता यस्मिंस्तथाविधं मनाग्विकल्पवासनाकलुषं ब्रह्म तदेव जीव इत्युच्यत इत्यर्थः ॥ २१ ॥ यतश्चेत्ये प्रपतितं तत्रैव चिराभ्यासाद्रूढा संज्ञा आत्मत्वाभिमानो यस्य तथाविधं यदज्ञत्वं स्वरूपविस्मरणमागतं यज्जीवरूपं तदेव विकल्पसहस्रैर्मोमुह्यमानतया सारभूतसुखस्वभावतापहारायदा अधिकनिःसारं भवति तदा जीवोपकरणमनस्तया भेदेन कल्प्यत इत्यर्थः ॥ २२ ॥ एवं जीवतदुपाधी प्रदर्श्य तद्विविक्तं शुद्धात्मस्वरूपं दर्शयति—

१ मुक्ताकरेषु इति पाठः. २ त्रयोदशे श्लोके निष्काममित्युक्त्वात्र ... ३ निरीहनिरपेक्षत्वप्रतिपादनात्प्राप्तं पौनरुक्त्यं परिहरति ।

जडं सर्वं शरीरादि देही खवदलेपकः ॥ २३
शरीरे कणशः कृत्ते नास्त्यन्यद्रुधिरादिकात् ।
निर्भिन्ने कदलीस्तम्भे नास्त्यन्यत्पल्लवादृते ॥ २४
मनो जीवो नरं विद्धि तदेवाकारमागतम् ।
आत्मनात्मानमादत्ते स्वविकल्पात्मकल्पितम् ॥ २५
स्वविकल्पान्नरस्तत्र प्रसार्य रचयत्यलम् ।
जालमात्मनिबन्धाय कोशकारकृमिर्यथा ॥ २६
इमं देहभ्रमं त्यक्त्वा देशकालान्तरे पुनः ।
शरीरत्वमथादत्ते पल्लवत्वमिवाङ्कुरः ॥ २७
यादृग्वासनमेतत्स्यान्मनस्तादृक्प्रजायते ।
जातं स्वपिति यच्चित्तं तत्स्वप्ने निशि तिष्ठति ॥ २८
अम्लं मधुरसासिक्तं मधुरं मधुरञ्जितम् ।
बीजं प्रतिविषाकल्कसिक्तं च कटु जायते ॥ २९
शुभवासनया चेतो महत्या जायते महत् ।
भवतीन्द्रमनोराज्य इन्द्रता स्वप्नभाङ्करः[1] ॥ ३०
क्षुद्रवासनया चेतःक्षुद्रतामपि पेलवाम् ।
पिशाचविभ्रमात्स्वप्ने पिशाचान्निशि पश्यति ॥ ३१
सरसि स्फारनैर्मल्ये कालुष्यं याति न स्थितिम् ।
तथैव स्फारकालुष्ये प्रसादो याति न स्थितिम् ॥ ३२
मनसि स्फारकालुष्ये तद्रूपं जायते फलम् ।
तथैव स्फारनैर्मल्ये तद्रूपं जायते फलम् ॥ ३३
त्यजत्युदारां न गतिं क्षीणोऽप्यनिशमुत्तमः ।
उद्योगवानविरतं पूरणाशामिवोडुपः ॥ ३४
नेह बन्धो न मोक्षोऽस्ति नाबन्धोऽस्ति न बन्धता[2] ।
मिथ्योत्थितैव मायेयमिन्द्रजाललता यथा ॥ ३५
गन्धर्वनगराकारा मृगतृष्णा इवोत्थिता ।
द्विचन्द्रविभ्रमाभासा द्वैतैकत्वविवर्जिता ॥ ३६
सर्वैव ब्रह्मसत्तेयमित्येषा परमार्थता ।
परिस्फुरति निःसारः संसारोऽयमसन्मयः ॥ ३७
नानन्तोऽहं वराकोऽहमिति दुर्निश्चयोदितः ।
अनन्तोऽसीश्वरोऽसीति निश्चयेन विलीयते ॥ ३८
सर्वगे स्वात्मनि स्वच्छे एषोऽहमिति भावना ।
एतत्तद्बन्धनं लोके स्वविकल्पोपकल्पितम् ॥ ३९
बन्धमोक्षदशाहीना द्वित्वैकत्वविवर्जिता ।
सर्वैव ब्रह्मसत्तेयमित्येषा परमार्थता ॥ ४०
नैर्मल्यप्राप्तमरणमसक्तं सर्वदृष्टिषु ।
अमनस्त्वमिहापन्नं ब्रह्म पश्यति नान्यथा ॥ ४१
मनो निर्मलतां यातं शुभसंतानवारिभिः ।
ब्राह्मीं दृष्टिमुपादत्ते रागं शुक्लपटो यथा ॥ ४२
सर्वमेव समात्मेति सर्वभावनयानघ ।
हेयादेयबले क्षीणे बन्धमोक्षौ विमुच्यताम् ॥ ४३
शुद्धस्य मनसः कायशास्त्रवैराग्यबुद्धिभिः ।
अभिजातोपलस्येव जगत्तस्येति[3] विद्युतिः ॥ ४४
पदार्थैनैकतामेत्य मनसो नैकतानता ।
असत्यज्ञानदृष्टिं तां विद्धि क्षणविनाशिनीम् ॥ ४५

नेत्यादिना । संसारिपुरुषो जीवस्वभावो वस्तुतो न भवतीत्यर्थः ॥ २३ ॥ जडत्वमेव स्फुटयति—**शरीरे** इति । कृत्ते छिन्ने । पल्लवात्पल्लवप्रकृतित्वक्संघातात् ॥२४॥२५॥ विकल्पान् विकल्पवासनाः । प्रसार्य उद्भाव्य । नरो जीवः ॥२६॥ तद्देहात्मकत्वाभावे युक्तिमाह—**इमम्**िति । शरीरत्वं देहान्तरभावम् ॥२७॥ शरीरस्य वासनामयत्वे युक्तिमाह—**यादृग्**िति । चित्तं यज्जातं सत्स्वपिति स्वप्ने तदेव भूत्वा तिष्ठतीत्यन्वयः ॥२८॥ विषयस्य वासनाधायकत्वे दृष्टान्तमाह—**अम्लम्**िति । अम्लं तिन्तिण्याद्यम्लं बीजं मधुरसासिक्तं चेदङ्कुरादिक्रमेण वृक्षीभूय फलकालेऽपि मधुरञ्जितं सत् मधुरं जायते तदेव बीजं प्रतिविषायाः विषप्रतिनिधिभूतधत्तूरकरञ्जादिवल्ल्याः कल्केन रसेन सिक्तं चेत् फलकालेऽपि कटु जायते इति लोके आरामशास्त्रे च प्रसिद्धमित्यर्थः ॥२९॥३०॥ पेलवां पश्यतीत्यपकृष्यते ॥३१॥ नैर्मल्ये कृतेऽपि पुनर्व्युत्थाने द्वैतदर्शनात्कालुष्यप्रसक्तिमाशङ्क्याह—**सरसी**ति । एतेनाल्पविवेकादिना नैर्मल्यस्थितिप्रसक्तिरपि वारितेत्याशयेनाह—**तथैवे**ति ॥ ३२ ॥ ३३ ॥ ननु तर्हि देशोपप्लवादिना चिरसमाधिभङ्गे पुनः कालुष्यं स्यादित्याशङ्क्याह—**त्यजती**ति । क्षीणो दारिद्र्याद्युपप्लुतोऽपि । उदारां शान्तिसमाधानादिचित्तप्रसादनगतिम् ॥ ३४ ॥ अथवा तत्त्वबोधबाधितत्वादेव नोपप्लवसहस्रेऽपि कालुष्यप्रसक्तिरित्याशयेनाह—**नेहे**ति ॥३५॥ मायामेव विशिनष्टि—**गन्धर्वे**ति । द्वैतैकत्वविवर्जितेत्युत्तरान्वयि ॥३६॥ का तर्हि परमार्थता तामाह—**सर्वै**वेति ॥३७॥ अहमनन्तोऽपरिच्छिन्नो न । अतएव वराकः क्षुद्रः ॥३८॥ एषः एतद्देहमात्रः ॥ ३९ ॥ ४० ॥ नैर्मल्यातिशयेन प्राप्तं सन्निहितं मरणं स्वनाशो यस्य तथाविधं अतएवामनस्त्वमापन्नं मन इह अस्मिन्नधिकारिशरीर एव ब्रह्म पश्यति ॥ ४१ ॥ शुभसंतानं समाध्यभ्यासजन्यधर्मोपचयस्तल्लक्षणवारिभिः । ब्राह्मीं दृष्टिं सर्वत्र ब्रह्मदृष्टिम् । रागं रञ्जकद्रव्यवर्णम् ॥ ४२ ॥ बन्धसापेक्षो मोक्षोऽपि विमुच्यताम् ॥ ४३ ॥ ननु कायादिबन्धः सत्यः किं न स्यादिति चेन्न । मनोविकारमात्रत्वान्मानोरथिकप्रासादादिवदित्याशयेनमाह—**शुद्धस्ये**ति । आदावनधिकार्यधिकारिशरीराभिमानात्कायात्मना, ततः सच्छास्त्रश्रवणाभिमानाच्छास्त्रात्मना वैराग्यात्मना, तत आत्मबोधाद्बोधात्मना च । शुद्धस्य मनस एव अभिजातोपलस्य स्फटिकस्येव इति विद्युतिर्विविधप्रतिभास एव जगत्संसार इत्यर्थः ॥४४॥ द्वैतदर्शनक्षण एव बन्धप्राप्तिमात्मदर्शनक्षण एव सद्योमोक्षप्राप्तिं च

१ स्वप्नभाङ्कुरः इति क्वचित्. २ न बोध्यो न च बन्धनं इति पाठः । आद्ये न बन्धतेत्यत्र बन्धशब्दादर्शआद्यच्चि बन्धवत्तेत्यर्थः.

३ जगत्तस्यैवेति पाठः.

सबाह्याभ्यन्तरं त्यक्त्वा सर्वां दृश्यदृशं यदा ।
मनस्तिष्ठति तल्लीनं संप्राप्तं तत्पदं तदा ॥ ४६
दृश्यदृष्टिः स्फुटा येयं सा ह्यवश्यमसन्मयी ।
तन्मयत्वं च मनसः स्वरूपं विद्धि नेतरत् ॥ ४७
आद्यन्तयोर्विनाशित्वान्मध्येऽपि तदसन्मयम् ।
अज्ञातमनसस्तेन दुःखिता हस्तसंस्थिता ॥ ४८
आत्मैवेदं जगदिति विना भावेन दुःखदा ।
दृश्यश्रीरन्यथा त्वेषा भोगमोक्षप्रदायिनी ॥ ४९
जलमन्यत्तरङ्गोऽन्य इति नानातयाऽज्ञता ।
जलमेव तरङ्गोऽयमित्येकत्वात्किल ज्ञता ॥ ५०
दुःखमायात्यसदिति हेयोपादेयरूपि यत् ।
तदभावेन तु ज्ञानादानन्त्यमवशिष्यते ॥ ५१
संकल्पकल्पितत्वाच्च मनोरूपमसन्मयम् ।
असन्मयविनाशे तु कः शोको वद राघव ॥ ५२
अवत्सलो यथा बन्धुररागद्वेषया धिया ।
दृश्यते पश्य तद्वत्त्वं तत्त्वं पञ्जरमात्मनः ॥ ५३
अवत्सलाद्यथा बन्धोः सुखदुःखैर्न लिप्यते ।
तत्त्वेन संपरिज्ञानात्तथा तत्त्वचयात्मनः ॥ ५४
तदनादि शिवं ज्ञानं यन्मध्यं द्रष्टृदृश्ययोः ।
तस्मिन्सत्ये मनः शान्तं पांसुर्वायुक्षये यथा ॥ ५५
उपशान्ते मनोवायौ देहपांसुः प्रशाम्यति ।
पुनः संसारनगरे न नीहारः प्रवर्तते ॥ ५६
वासनाप्रावृषि क्षीणे संस्थितौ राममागते ।
जाड्ये जनितहृत्कम्पे पङ्के शोषमुपागते ॥ ५७
शुष्के तृष्णावटे शान्ते मन्दे हृदयकानने ।
क्षीणेष्वक्षकदम्बेषु मिथ्याज्ञानघने क्षते ॥ ५८
क्षीयते मोहमिहिका प्रभात इव शर्वरी ।
क्वापि गच्छति तज्जाड्यं विषं मन्त्रहतं यथा ॥ ५९
देहाद्रौ न भयक्षुद्राः सरितः प्रसरन्त्यलम् ।
नोल्लसन्ति लसत्पक्षाः संकल्पोग्रकलापिनः ॥ ६०
परां निर्मलतामेति संविदाकाशगोचरः ।
राजतेऽतितरामच्छो जीवादित्यो महोदयः ॥ ६१
घनमोहभरोन्मुक्ता विविक्तत्वं परं गताः ।
समये ह्यतिशोभन्ते धौता आशा महादिशः ॥ ६२
भृशमाभाति विमला मुदिताकाशमञ्जरी ।
शीतलीकृतदिक्चक्रा शरज्ज्योत्स्नेव चन्द्रिका ॥ ६३
सर्वसंपत्प्रकाशेन परमानन्ददायिना ।
भृशं सफलतामेति सुविविक्ता विवेकभूः ॥ ६४
सपर्वतवनाभोगं परमालोकसुन्दरम् ।
अच्छाच्छं शीतलच्छायं जायते भुवनान्तरम् ॥ ६५
विस्तारितं सुसुमतां स्फारितं स्फटिकाकृतिम् ।
उपैति हृत्सरः स्वच्छं नीरजोम्बुजकोशकम् ॥ ६६

---

करतलामलकवद्विविच्य दर्शयति—**पदार्थैनेति** श्लोकद्वयेन ॥ ४५ ॥ ४६ ॥ तन्मयत्वं दृश्यदृष्टिप्रचुरत्वम् ॥ ४७ ॥ दृश्यदृष्टेरसन्मयत्वं कुतस्तत्राह—**आद्यन्तयो**रिति । विनाशित्वात् असत्त्वात् । एवमसदित्यज्ञातं मनो येन तस्य हस्तसंस्थिता करप्राप्तेव न दुरन्वेषेत्यर्थः ॥ ४८ ॥ इति भावेन बोधेन विना दृश्यश्रीर्दुःखदा । अन्यथा तादृशबोधसत्त्वे तु भोगग्रहणमज्ञभोगवद्दुर्वासनाधानप्रयुक्तदुःखबीजत्वाभावात्प्रारब्धक्षपणेन मोक्षोपयोगाच्च पुरुषार्थ एव भोग इति द्योतनार्थम् ॥ ४९ ॥ लोकवदेव शास्त्रेऽज्ञताज्ञते बोध्ये नापूर्वे इत्याह—**जल**मिति ॥ ५० ॥ नानाता कुतो हेया एकता च कुत उपादेया तत्राह—**दुःख**मिति । हेयोपादेयरूपि यन्नानात्वं तदसदविद्यमानमिति हेतोर्दुःखं जन्ममरणाद्यायाति अनुसरति अतो हेयम् । तदभावेन त्वात्मतत्त्वज्ञानादानन्त्यमपरिच्छिन्नात्मरूपमवशिष्यते अतस्तदुपादेयमित्यर्थः ॥ ५१ ॥ ननु प्रियतममनोबुद्ध्यादिद्वैतस्य सत्यत्वादात्मोपकरणत्वाच्च तन्नाशे धनादिनाश इव शोकः स्यात्तत्राह—**संकल्पे**ति ॥ ५२ ॥ किंच रागद्वेषयोः सतोरिष्टहानादनिष्टप्राप्तेश्च शोकः स्यात्तौ त्यक्त्वा उदासीनदृशा देहत्रयपञ्जरं पश्यतो न शोकप्रसक्तिरित्याशयेनाह—**अवत्सल** इति । अवत्सलो निःस्नेहः । तत्त्वं पृथिव्यादिभूततत्त्वरूपम् ॥ ५३ ॥ तत्त्वचयात्मनो भूतराशिमात्रस्वभावाद्देहद्वयपञ्जरात् ॥ ५४ ॥ यस्मिन्नधिष्ठाने मनःक्षयस्तत्स्वरूपमाह—**तद**दिति । शिवं नित्यनिरतिशयानन्दरूपम् । द्रष्टृदृश्ययोर्मध्यं दृग्रूपमित्यर्थः ॥५५॥ मनोनाशे स्थूलदेहोऽप्यसन्भवतीत्याह—**उपशान्ते** इति । संसारस्य नगरवदधिष्ठाने प्रतीचि नीहारो नीहारवदावरिका अविद्या क्षीणत्वान्न प्रवर्तते ॥५६॥ तत्क्षयप्रकारमेव शरत्कालत्वेनोपपादयति—**वासने**त्यादिना । क्षीणे इति पदसंस्कारपक्षे सामान्ये नपुंसकम् । संस्थितौ स्वरूपस्थितौ रमणं रामो विहारस्तमागते प्राप्ते मनसीति शेषः । रागमिति पाठे ताद्रूप्यरञ्जनमित्यर्थः । जनितो हृत्कम्पो भयं येन तथाविधे जाड्ये मौढ्ये । पक्षान्तरे शैत्ये तद्रूपे पङ्के शोषमुपागते सति ॥५७॥ मन्दे रागादिगुल्मविरले । अक्षकदम्बेषु इन्द्रियसमूहलक्षणकदम्बवृक्षेषु क्षीणेषु क्षीणफलेषु ॥ ॥ ५८ ॥ ५९ ॥ भयलक्षणाः क्षुद्राः सरितः कुल्याः । कलापिनो मयूराः ॥ ६० ॥ स्वरूपसंविल्लक्षणे आकाशे गोचरः अपरोक्षं स्फुरन् ॥ ६१ ॥ विविक्तत्वं विवेकितां विभक्ततां च । समये समाध्यादिकाले सूर्यचन्द्रोदयकाले च । धौता रजोभिरदूषिता आशास्तृष्णास्तल्लक्षणा महादिशः ॥ ६२ ॥ मुदिता पुण्यफलानुशायिनी चित्तवृत्तिस्तल्लक्षणा चित्ताकाशस्य मञ्जरी ॥ ६३ ॥ सर्वाः संपदो विषयानन्दलवान् स्वान्तर्भावेण प्रकाशयतीति सर्वसंपत्प्रकाश आत्मा तल्लक्षणेन फलेन, सस्यफलपक्षे तु सर्वेषां कृषीवलादीनां भाविसंपदः प्रकाशयतीति तेनेति योज्यम् । सुविविक्ता सम्यक्परिशोधिता केदारभेदैर्विभक्ता च ॥ ६४ ॥ परमालोकेनात्मप्रकाशेन सूर्यचन्द्रज्योतिषा च, तत्त्वपक्षे शीतला त्रिविधतापशून्या छाया चिदाभासो यस्मिन्नित्यर्थः । शरत्पक्षे स्पष्टम् ॥ ६५ ॥ परिच्छेदापगमाद्विस्तारितम् । विवेकजलोपचयात्स्फा-

---

१ ज्ञानेनेति पाठान्तरम्.

हृत्पद्मकोशान्मलिनः स्वाहंकारमधुव्रतः ।
अपुनर्दर्शनायैव चञ्चलः क्वापि गच्छति ॥ ६७
भवत्यपगताक्षेपः सर्वगः सर्वनायकः ।
निर्वासनः शान्तमनाः स्वदेहनगरेश्वरः ॥ ६८
विचारणासमधिगतात्मदीपको
मनस्यलं परिगलितेव धीरधीः ।
विलोकयन्क्षयभवनीरसा गती-
गतज्वरो विलसति देहपत्तने ॥ ६९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपाये स्थितिप्रकरणे उपशमवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ३६

श्रीराम उवाच ।
यथेदशं स्थितं विश्वं विश्वातीते चिदात्मनि ।
तन्मे कथय हे ब्रह्मन् पुनर्बोधविवृद्धये ॥ १
श्रीवसिष्ठ उवाच ।
यथोर्मयोऽनभिव्यक्ता भाविनः पयसि स्थिताः ।
न स्थिताश्चात्मनोऽन्यत्वाच्चित्तत्वे सृष्टयस्तथा ॥ २
यथा सर्वगतः सौक्ष्म्यादाकाशो नोपलक्ष्यते ।
तथा निरंशश्चिद्भावः सर्वगोऽपि न लक्ष्यते ॥ ३
सुस्थितेवास्थितेवान्तः प्रतिभास्ति मणौ यथा ।
न सत्यभूता नासत्या तथेयं सृष्टिरात्मनि ॥ ४
स्वाधारैरम्बुदैः स्वस्थैर्न स्पृष्टं गगनं यथा ।
चित्स्थैः सर्गैश्चिदाधारैर्न स्पृष्टा चित्परा तथा ॥ ५
जलधिष्ठिततत्तेजो यथाङ्ग प्रतिबिम्बति ।
तथा पुर्यष्टकेष्वेव चिद्धि देहेषु लक्ष्यते ॥ ६
सर्वसंकल्परहिता सर्वसंज्ञाविवर्जिता ।
सैषा चिदविनाशात्मा तच्चेत्यादिकृताभिधा ॥ ७
आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी ।
सकलाकलसंसारस्वरूपैकात्म्यदर्शिनी ॥ ८
तरङ्गादिमयी स्फारा नानाता सलिलार्णवे ।
तस्मान्न व्यतिरेकेण यथा भावविकारिणी ॥ ९
त्वत्तामत्तामयी स्फारा नानातेयं चिदर्णवे ।
चिन्मात्रव्यतिरेकेण तथा नैव प्रकाशते ॥ १०
चिच्चिनोति चितं चेत्यं तेनेदं स्थितमात्मनि ।
अज्ञेऽज्ञे त्वन्यदायातमन्यदस्तीति कल्पना ॥ ११
अज्ञेष्वसत्स्वभावोग्रसंसारगणगर्भिणी ।
ज्ञेषु प्रकाशरूपैव सकलैकात्मिका सती ॥ १२

रितम् । हृन्मनस्तल्लक्षणं सरः । निर्गतरजोगुणो हृदयाम्बुजकोशो यत्र । शरत्पक्षे स्पष्टम् ॥ ६६ ॥ नीरजस्त्वं कार्यतोऽप्याह—हृदिति ॥ ६७ ॥ अपगत आक्षेपः संकोचो यस्य अतएव सर्वगः ॥ ६८ ॥ एवं वासनाक्षयफलानि प्रपञ्च्य तैरेव जीवन्मुक्तस्थितिं दर्शयति—विचारणेति । अवमत्य स्वदोषान् धीरा धीर्यस्य तथाविधः सन् क्षयेषु मृत्युषु भवेषु जन्मसु च पारलौकिकीरैहलौकिकीश्च नीरसा गतीर्विलोकयन् विचारणासमधिगतात्मदीपको भूत्वा जीवन्मुक्तो गतज्वरः सन् नेहपत्तने स्वशरीरनगरे विलसति विराजते इत्यर्थः ॥ ६९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे उपशमवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

**स्वतः स्थिता ह्यसत्यैव चित्सर्वत्र स्थितोच्यते ।**
**चित्स्थित्या सर्वभावानां स्थितिर्न पृथगित्यपि ॥ १ ॥**

इदानीं मुख्यं प्रकरणार्थं जगत्स्थितिस्वरूपं जिज्ञासुः श्रीरामः पृच्छति—यथेति । ईदृशं प्राग्वर्णितप्रकारम् ॥ १ ॥ ब्रह्मसत्तयैव जगत्स्थितिर्न पृथक् । प्राणिनां पृथक्स्वसत्तया जगत्स्थितिप्रत्ययस्तु ब्रह्मस्वरूपस्थित्यबोधनिबन्धन इति समाधातुकामो वसिष्ठस्तदनुरूपं दृष्टान्तमाह—यथेत्यादिना । सद्रूपादात्मनोऽन्यत्वात्स्वतः सत्त्वशून्यत्वाच्च न स्थिताः ॥ २ ॥ यद्यात्मस्थित्यैव सर्वस्थितिस्तर्हि सर्वत्रात्मा कुतो न लक्ष्यते तत्राह—यथेति । निरंश इति सौक्ष्म्ये उपपत्तिः ॥ ३ ॥ सुस्थिते निरावरणस्थिते आस्थिते आवृतस्थिते । प्रतिभा प्रतिबिम्बम् । मणौ स्फटि-

कादौ । सुस्थिता इव आस्थिता इवेति प्रतिभाविशेषणे वा ॥४॥ असङ्गत्वे दृष्टान्तमाह—स्वेति । अन्योन्यतादात्म्याध्यासाचित आधारैः ॥ ५ ॥ तर्हि सूक्ष्माचिद्घटादाविव देहेऽपि न लक्ष्येत, लक्ष्यते तु तत्र को हेतुस्तत्राह—जलधिष्ठितेति । अङ्गेति संबोधने । यथा जले संयुक्ताः किरणाः संपृक्ततया स्फुटं न लक्ष्यन्ते प्रतिबिम्बात्मना तु स्फुटं लक्ष्यन्ते तद्वत्पुर्यष्टकात्मकेषु देहेष्वित्यर्थः ॥६॥ तस्याः प्रतिबिम्बता तदधीनकामसंकल्पनामरूपभाक्त्वाच्च न वास्तवीत्याह—सर्वेति । किंकृता तर्हि जीवाद्यभिधा तदाह—तदिति । आदिपदादाभासग्रहः ॥७॥ चित्सौक्ष्म्यस्वाच्छ्यपर्यालोचने आकाशोऽपि शतगुणस्थूलोऽस्वच्छश्च स्यादिति विद्वदनुभवेनाह—आकाशेति । सकलमप्यकलं निष्कलं संसारस्वरूपं यत्र तथाविधैकात्म्यदर्शनशीलेति विद्वदनुभवाभिनयः । 'अमले'ति पाठे मायामलरहितमित्यर्थः ॥८॥ अतएव तत्र भ्रान्तिदृष्टा भावविकारास्तद्व्यतिरेकेण न सन्तीत्याह—तरङ्गेति द्वाभ्याम् ॥ ९ ॥ १० ॥ यदि चित् चेत्यं चिनोति उपचिनोतीति मन्यसे तर्हि चिच्चितमेव चिनोतीति मन्यस्व नचेत्यमन्यदस्तीति । एवं मनने तेन चितः स्वात्मनि व्यापारायोगेन हेतुना इदं चित्स्वरूपमात्मन्येव स्थितं न किंचिच्चिनोतीति फलतीत्यर्थः । सेयं परमार्थदृष्टिः । यस्त्वज्ञ एव सन् ज्ञोऽस्मीत्यभिमन्यते तस्यैव चिद्व्यतिरिक्तं सर्गेष्वन्यदायातमस्तीति च कल्पनेत्यर्थः । अज्ञेऽज्ञे इति वीप्सा वा ॥११॥ तामेव ज्ञाज्ञयोः कल्पनया चितं पुनर्विभज्याह—अज्ञेष्विति ॥ १२ ॥

अनुभूतिवशान्नित्यमर्कादीनां प्रकाशिनी ।
स्वादिनी सर्वभूतानां भाविनी भवभोगिनाम् ॥ १३
नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति ।
न चायाति न वा याति न चेह नच नेह चित् ॥ १४
सैषा चिदमलाकारा स्वयमात्मनि संस्थिता ।
तद्वचेत्थं प्रपञ्चेन जगन्नाम्ना विजृम्भते ॥ १५
तेजःपुञ्जैर्यथा तेजः पयःपूरैर्यथा पयः ।
परिस्फुरति संस्पन्दैस्तथा चित्सर्गविभ्रमैः ॥ १६
तत्स्वभावेन चिन्नाम्ना सर्वगेनोदितात्मना ।
प्रकाशेनाप्रकाशेन निरंशेनांशधारिणा ॥ १७
स्वयं स्वकलनाभोगादनन्तं पदमुज्झता ।
अहमस्मीति भावेन गच्छता ज्ञपदं शनैः ॥ १८
नानातायां प्ररूढायामस्यां संसृतिपूर्वकम् ।
भावाभावग्रहोत्सर्गपदे स्थितिमुपागते ॥ १९
पुर्यष्टकस्पन्दशतैः करोति न करोति च ।
उत्सेधमेति भूकोशकोटरस्थोऽङ्कुरोत्करः ॥ २०
व्योम सौषिर्यमादत्ते सर्वमूर्त्यविरोधि यत् ।
स्पन्दैकधर्मवान्वातो रसरूपतया जलम् ॥ २१
दृढोर्वी प्रकटं तेजः स्थितिमन्ति जगन्ति च ।
प्रतिबन्धाभ्यनुज्ञासु कालः कलनया स्थितः ॥ २२

पुष्पेषु गन्धतां याति शनैः संचितकेसरम् ।
मृत्कोटररसोल्लासः स्थाणुतामेति भूतले ॥ २३
मूलस्थाः फलमायान्ति पेलवा रसलेशकाः ।
संनिवेशं व्रजन्त्येता रेखाः पल्लवपालिषु ॥ २४
नवतामनुगृह्णाति शक्रबाणासनेन च ।
यो यो भवत्यविरतं संस्थानेन वनेन च ॥ २५
वसन्तमुपतिष्ठन्ति पुष्पपल्लवराशयः ।
निदाघविधिमायान्ति दैवदाहविभूतयः ॥ २६
प्रावृट्समयमीहन्ते नीला जलदराशयः ।
शरदं चानुधावन्ति समग्राः फलराशयः ॥ २७
हेमन्ते हिमहासिन्यो भवन्ति ककुभो दश ।
नयन्त्युपलतामम्बु शिशिरे शीतलानिलाः ॥ २८
न जहाति स्वमर्यादां कालो युगमयीमिमाम् ।
तरङ्गिणीतरङ्गौघलीलया यान्ति सृष्टयः ॥ २९
नियतिः स्थितिमायाति स्थैर्यचातुर्यकारिणी ।
तिष्ठत्याप्रलयं धीरा धराधरणधर्मिणी ॥ ३०
चतुर्दशविधानीह भूतानि भुवनान्तरे ।
नानाचारविहाराणि नानाविरचनानि च ॥ ३१
पुनःपुनर्विलीयन्ते जायन्ते च पुनःपुनः ।
धारापरम्परा याति विना वारीव बुद्बुदाः ॥ ३२

तस्या एव चितो जगत्प्रकाशभोगजन्मनिर्वाहकतामाह—**अनुभूती**ति । स्वादिनी विषयस्वादने निमित्तभूता । भवभोगिनां जीवानां भाविनी जन्मादौ निमित्तभूता च । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति श्रुतेः ॥१३॥ अज्ञानां जन्मादिनिमित्तभावेऽपि ज्ञदृशा कूटस्थापरिच्छिन्नैकरूपैव सेत्याह—**नास्तमेती**ति ॥१४॥ विजृम्भते विवर्तते ॥१५॥ चिद्विवर्तोऽपि परमार्थदृशा चिदेवेत्याशयेन दृष्टान्तावाह-**तेजःपुञ्जै**रिति ॥१६॥ स्वतःशुद्धस्याप्यविद्यया सर्गविभ्रमैः परिस्फुरणमेव सर्गकर्तृत्वं नान्यादृशमिति दर्शयितुं तदुपयोगिनी द्वे रूपे आह—**तदि**ति । स्वभावेन चिन्नाम्ना । व्यवहारतः सर्वगेन । परमार्थतः प्रकाशेन । नाहं जानामीति व्यवहारादप्रकाशेन । एवमग्रेऽपि ॥ १७ ॥ स्वकलना अविद्यायां स्वप्रतिबिम्बस्तल्लक्षणादाभोगात्कृत्रिमवेषात् । अनन्तं पदमपरिच्छिन्नस्वरूपमुज्झतेवाप्रतिसंदधानेन । अज्ञपदं जीवताम् ॥१८॥ इदमस्ति इदं नास्तीति भावाभावौ । इदं ग्राह्यमिदं त्याज्यमितीष्टानिष्टयोर्ग्रहोत्सर्गौ च । तेषां पदे स्थाने देहात्मभावे ॥ १९ ॥ अध्यस्तात्मभावपुर्यष्टकस्पन्दशतैर्विहितनिषिद्धकर्मभिर्भोग्यं जगत्करोति न करोतीति । वस्तुतः तत्तद्वस्तुभावेन करणप्रकाशने प्रपञ्चयति—**उत्सेध**मित्यादिना । उत्सेधमुपचयेनौन्नत्यम् ॥ २० ॥ भुवोऽङ्कुरात्मनोत्सेधे भूतान्तरभावेन तदानुकूल्याचरणमाह—**व्योमे**ति । यदि व्योम सौषिर्यं नादद्यान्निरवकाशोऽङ्कुरो न निर्गच्छेत् । एवं स्पन्दात्मको वायुराकर्षति येनाङ्कुरो निर्गच्छतीत्याह—**स्पन्दे**ति । एवं जलं स्वरसेनाङ्कुरं क्लेदयतीत्याशयेनाह—**रसे**ति ॥ २१ ॥ एवमुर्वी स्वदार्ढ्यदानेनाङ्कुरमनुगृह्णातीत्याशयेनाह—**दृढे**ति । तेजश्च रूपदानेन प्रकटीकरोतीत्याशयेनाह—**प्रकट**मिति । एवं सर्वजगन्ति तत्तत्कार्याणां स्थित्यविघाताभ्यामनुग्राहकाणीत्याशयेनाह-**स्थितिमन्ती**ति । कालो हेमन्तादिर्यवाङ्कुरादिविरोधितृणाद्युद्गमप्रतिबन्धेन यवाङ्कुरोद्गमाभ्यनुज्ञाने न चानुग्राहक इत्याह—**प्रतिबन्धे**ति । कलनया परिणामकतया ॥ २२ ॥ पूर्वपुण्यादिभावापन्ना चिद्गन्धाद्यात्मना विवर्तत इत्याह—**पुष्पेष्वि**ति । मृदन्तर्गतरसभावापन्ना चित् स्थाणुतां तरूपचयेन तन्मूलदारुताम् ॥ २३ ॥ मूलस्थरसभावापन्ना च फलभावं याति । त एव रसाः पल्लवपालिषु प्रविष्टा रेखाः शिरा भूत्वा पत्रादिसंनिवेशं व्रजन्ति ॥ २४ ॥ शक्रबाणासनेनेन्द्रचापेन समामिति शेषः । नवतां वृक्षस्य नूतनतां च संपादयन्ननुगृह्णाति ॥ २५ ॥ तस्या ऋतुरूपेणापि कार्यानुग्राहकत्वं प्रपञ्चयति—**वसन्त**मित्यादिना । दैवस्य सौरस्य तेजसो दाहविभूतयस्तापशक्तयः ॥ २६ ॥ समग्राः क्षेत्रेषु प्रचुरीभूता धान्यादिफलराशयः ॥ २७ ॥ २८ ॥ संवत्सरयुगादिकालात्मना च तस्याः सर्गादिमर्यादानुग्राहकत्वमाह—**न जहाती**ति ॥ २९ ॥ नियत्यादिरूपेणापि तस्या जगन्मर्यादाव्यवस्थापकत्वमाह—**नियति**रिति । स्थैर्यचातुर्यकारित्वमेव धरादावुदाहृत्य दर्शयति—**तिष्ठती**ति—धरणधर्मिणी सर्वजनाधारस्वभावा ॥३०॥ चतुर्दशलोकवासित्वाच्चतुर्दशविधानि भूतानि प्राणिनः ॥ ३१ ॥ भूतानां धारा परम्परा जन्ममरणप्रवाहपरम्परा यात्यपगच्छति

१ योयो नूतनतासंपादनपूर्वकोऽनुग्रहः

आयाति याति परितिष्ठति लीलयाऽति-
स्वार्थानुपार्जयति धावति जन्मनाशैः ।
उन्मत्तवद्विहितभावनमाहितेहा
मुग्धा कृतान्तविवशा जनता वराकी ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे चिदादिलयस्वरूपवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ३७

श्रीवसिष्ठ उवाच ।

इत्थं स्थिरतराकाराः संसारावलयोऽभितः ।
स्वभावाद्ब्रह्मणः सर्वाः पुनरायान्ति यान्ति च ॥ १
स्वतः सर्वमिदं जातमन्योन्यं हेतुतां गतम् ।
अन्योन्यमभिनश्यत्तत्स्वत एव विलीयते ॥ २
स्वतोऽस्पन्दोऽपि तु स्पन्दो यथाऽगाधजलोदरे ।
तथैवेयमसत्सच्च चिदेव परिदृश्यते ॥ ३
व्योमन्येव निराकारे निदाघात्सरितो यथा ।
लक्ष्यन्ते तद्वदेवेमाश्चित्तत्त्वे सृष्टिदृष्टयः ॥ ४
यथा मदवशादात्मा सोऽन्यवत्प्रतिभासते ।
तथैव चित्त्वाच्चिद्धातुः स एवाऽस इव स्थितः ॥ ५
न चेदं सदसन्नेदं तत्स्थातत्स्थतया चितः ।
नातिरिक्तातिरिक्ता च कटकादिषु हेमता ॥ ६
येन शब्दं रसं रूपं गन्धं जानासि राघव ।
सोऽयमात्मा परं ब्रह्म सर्वमापूर्य संस्थितः ॥ ७
नानैकत्वादतीतात्तु सर्वगादमलात्मनः ।
द्वितीया कलना नास्ति काचिन्नेतरथा क्वचित् ॥ ८
राम भावनादन्यस्य भावाभावाः शुभाशुभाः ।
सृष्टयः परिकल्प्यन्तेऽनात्मन्येवाथवात्मनि ॥ ९

यस्मादात्मनो व्यतिरिक्ते वस्तुनि सिद्धे सति तत्रेच्छा प्रवर्तते । यत्र स्वात्मनो व्यतिरिक्तं न किंचिदपि संभवति तत्रात्मा किमिव वाञ्छन्किमनुसरन्धावतु किमुपैतु ॥ १०

अत इदमीहितमिदमनीहितमित्यात्मानं न स्पृशन्ति विकल्पाः । अतो निरिच्छतायामात्मा न किंचिदपि करोति कर्तृकरणकर्मणामेकत्वात्, न क्वचित्तिष्ठत्याधाराधेययोरेकत्वात्, नच [1]निरिच्छस्यात्मनो नैष्कर्म्यमभिमतम्, द्वितीयायाः कल्पनाया अभावात् ॥ ११

नेतरा जानासि राम त्वमियं ब्रह्मसंस्थितिः ।
सर्वद्वन्द्वविनिर्मुक्तः कर्ता भव गतज्वरः ॥ १२

तत्त्वज्ञानेनेति शेषः ॥ ३२ ॥ उक्तमेवार्थं प्रपञ्चयन्नुपसंहरति—**आयाती**ति। ब्रह्माण्डकोटिलक्षणा तदन्तर्गतप्राणिलक्षणा च शोच्यत्वाद्वराकी जनता विहितभावनं यथा स्यात्तथा। प्राक्तनसंकल्पवासनारागादिति यावत् । आहितेहा उद्भूतकामा स्वरूपविचारवार्तानभिज्ञत्वान्मुग्धा उन्मत्तवदिह लोके जन्मभिरायाति परलोकं याति परितश्च स्थावरादिजन्मभिस्तिष्ठति लीलया भोगकौतुकेन अतिशयितान् ऐहिकामुष्मिकभोगोपायधनधर्मादिलक्षणान्स्वार्थानुपार्जयति जन्मनाशैर्धावति संसारे इत्थं भ्रमतीत्यर्थः ॥ ३३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे चिदादिलयस्वरूपवर्णनं नाम षट्त्रिंशः सर्गः ॥३६॥

**आत्मनोऽनात्मभावोऽयमविद्याकामकर्मभिः ।**
**बोधादकामान्नैष्कर्म्यात्स्वरूपावस्थितिस्ततः ॥ १ ॥**

चित्स्वरूपस्थितिरेव जगत्स्थितिश्चित एव जगद्रूपेणावस्थानादिति वक्तुं प्रागुक्तमनुवदति—**इत्थ**मिति ॥ १ ॥ अन्योन्यं हेतुतां गतमिदं जगत्स्वतः स्वाधिष्ठानचैतन्यादेव जातम् । एवमग्रेऽपि ॥ २ ॥ यथा अगाधजलोदरे जलव्याप्तदेशाभावाजलस्य स्पन्दोऽप्यस्पन्दस्तथेत्यर्थः ॥ ३ ॥ सरितो मृगतृष्णाः ॥ ४ ॥ स एव स्वात्मा अन्यवत् अघूर्णमानोऽपि घूर्णमान इव । चिद्धातुश्चित्सारः । असः अचिदिव ॥ ५ ॥ उक्तार्थं स्थिरयितुं जगतोऽनिर्वचनीयस्वभावतां दर्शयति—**न चे**ति । सत्तैव तद्द्वेषधारणादसत्त्वं दुर्वचनं बाध्यत्वाच्च सत्त्वं दुर्वचनमित्याशयेनाह—**तत्स्थातत्स्थत**येति ॥ ६ ॥ ननु ब्रह्मणो जगद्विवर्तः श्रूयते न प्रत्यक्चित इत्याशङ्क्य सैव ब्रह्मेति दर्शयति—**येने**ति । 'येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यत ॥ एतद्वै तत्' इति काठकश्रुतौ ब्रह्मण एव प्रत्यगात्मताभिधानादिति भावः ॥ ७ ॥ ननु प्रतीचां नानात्वाद्ब्रह्मणश्चैकत्वात्कथमैक्यमित्याशङ्क्य नानैकत्वयोर्मिथ्यात्वान्नायं दोष इत्याशयेनाह—**नानैकत्वादतीता**दिति ॥ ८ ॥ यतोऽन्यस्य वस्तुनो भावाः सद्भावा अभावाः शुभाशुभाः सृष्टयश्च भावनाद्वासनावशादेव परिकल्प्यन्ते । ताश्च मायिकदृशा अनात्मभूतमायायामेव । अथवा तत्त्वदृशा आत्ममात्रत्वादात्मन्येव ॥ ९ ॥ अथवात्मनीति यत्पद्ये पक्षान्तरमुक्तं तद्युक्तिप्रयोजनाभ्यां गद्यैरुपपादयति—**यस्मादि**त्यादिना । यदा आत्मरूपा सृष्टिरात्मन्येवास्ते इति पक्षस्तदा आत्मान्या सृष्टिर्नास्त्येवेति फलितम् । इच्छापूर्विका हि सृष्टिः । 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादिश्रुतेः । नचात्मन आत्मनीच्छासिद्धत्वात् । नचात्मनोऽन्यत्प्रसिद्धमस्ति यदिच्छन्नात्मा स्रष्टुं प्रवर्तेत । नचाप्रवर्तमानः कश्चित्स्रष्टुं शक्नोतीत्याशयः । किमुपैतु धावनेन वा किं फलं प्राप्नोतु ॥ १० ॥ ननु नैष्कर्म्यसिद्धिस्तत्फलमस्तु तत्राह—**नचे**ति । '**निरिच्छे**ति। अनिच्छे कर्मप्रसिद्धौ नैष्कर्म्यफलं स्यान्नच सास्तीत्याशयेनाह—**द्वितीयाया** इति ॥ ११ ॥ इतरा उक्तप्रकारेभ्योऽन्या साक-

[1] निरिच्छति इति मूले, टीकायां च निरिच्छेति [illegible]

अन्यच्च राघव पुनः

पुनः कृत्वा कृत्वा बहुविधमिदं कर्म तरसा
त्वया प्राप्यं किं तद्वद यदुचितं भूतकरणात् ।
अकर्तृत्वे वास्था भवतु तव चाप्यागमवतो
भव स्वस्थः स्वच्छः स्तिमित इव निर्वातजलधिः ॥ १३

गत्वा सुदूरमपि यत्नवता जवेन
नासाद्यते तदिह येन सुपूर्णतैति ।
मत्वेति मा व्रज पदार्थगणान्धिया त्वं
न त्वं त्वमेव परमार्थतया चिदात्मा ॥ १४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे उपशमवर्णनं नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

## अष्टत्रिंशः सर्गः ३८

श्रीवसिष्ठ उवाच ।

एवं स्थिते तु तज्ज्ञानां यदेतत्कर्तृत्वं दृश्यते सुखदुःखादिषु योगादिषु वा तदसन्नतु मूर्खाणाम् ॥ १

यतः कर्तृत्वं नाम किमुच्यते । यो ह्यन्तस्थाया मनोवृत्तेर्निश्चय उपादेयताप्रत्ययो वासनाभिधानस्तत्कर्तृत्वशब्देनोच्यते ॥ २

चेष्टावशात्तादृक्फलभोक्तृत्वं वासनानुरूपं स्पन्दते पुरुषः स्पन्दानुरूपं फलमनुभवति । फलभोक्तृत्वं नाम कर्तृत्वादिति सिद्धान्तः ॥ ३

तथाच ।

कुर्वतोऽकुर्वतो वापि स्वर्गेऽपि नरकेऽपि वा ।
या दृग्वासनमेतत्स्यान्मनस्तदनुभूयते ॥ ४

तस्मादज्ञाततत्त्वानां पुंसां कुर्वतामकुर्वतां च कर्तृता नतु ज्ञाततत्त्वानामवासनत्वात् ॥ ५

ज्ञाततत्त्वो हि शिथिलीभूतवासनः कुर्वन्नपि फलं नानुसंदधाति । अथच स्पन्दनमात्रं केवलं करोत्यसक्तबुद्धिः संप्राप्तमपि फलमात्मैवेदं सर्वमेव कर्मफलमनुभवत्यकुर्वन्नपि करोति मग्नमनाः ॥ ६

मनो यत्करोति तत्कृतं भवति यन्न करोति तन्न कृतं भवति अतो मन एव कर्तृ न देहः ॥ ७

चित्तादेवायं संसार आगतश्चित्तमय एव चित्त-

---

त्यादिकल्पना न नास्त्येव । इयं हि ब्रह्मसंस्थितिः । यद्यत्र त्वमितरां जानासि तर्हि सर्वद्वन्द्वविनिर्मुक्तो गतज्वरोऽपि सन् कर्ता भव, नाहं निवारयामीति भावः ॥१२॥ अज्ञातादशायामपि भौतिकशरीरपरिग्रहणकर्तृत्वे भूतैरेव भूतानि कृत्वा भौतिकानि फलानि प्राप्तानि नत्वसङ्गोदासीनेनात्मना, किं वाच्यं तस्य प्रबोधदशायां क्रियातत्फलयोरसंभव इति न तत्रास्थोचितेत्याशयेन गद्योक्तार्थसमर्थनाय पद्यमवतारयति—**अन्यच्चेति** । द्वितीयं पुनःशब्दमारभ्य पद्यं बोध्यम् । हे राघव, त्वया तरसा कर्तृत्वाभिनिवेशेन पुनःपुनः कृत्वा कृत्वा भूतकरणात् विषयभूतैर्देहभूतोपचयादेरन्यत्किं फलं प्राप्यं यत्ते तव नित्यनिरातिशयानन्दात्मन उचितं फलं स्यादित्यर्थः । अतः सर्वकर्तृत्वाभिनिवेशं हित्वा स्वस्वरूपोचिते अकर्तृत्व एवास्था भवतु । एवार्थे वाशब्दः । तदुपपत्तये हेतुगर्भं विशिनष्टि—**आगमवत** इति । श्रुतिगुरुवाक्यैरात्मप्रबोधवत इति यावत् । अपिशब्दान्मुख्याधिकारवत्तानुक्ता समुच्चीयते । अतः स्वच्छः स्वस्थो भवेत्यर्थः ॥ १३ ॥ विस्तरोक्तमर्थं संक्षिप्योपसंहरति—**गत्वेति** । येन सुपूर्णता अपरिच्छिन्नसुखलाभेन पूर्णकामता एति तत्साधनं सुदूरं दिशामन्तमपि गत्वा भ्रमित्वा अत्यन्तयत्नवतापि नासाद्यत इति मत्वा निश्चित्य त्वं धिया मनसापि बाह्यपदार्थगणान्मा व्रज । इत्थं क्रियाः सर्वास्त्याजयित्वा स्वस्थान एव परमपुरुषार्थं दर्शयति—**न त्वमिति** । न त्वं निरस्तपराग्रूपस्त्वमेव परमार्थतया दृष्टः पूर्णानन्दचिदात्मा परमपुरुष इत्यर्थः ॥१४॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे उपशमवर्णनं नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

असङ्गात्मानभिज्ञस्य मनःसङ्गेन कर्तृता ।
ज्ञस्याकर्तुरभोक्तृत्वान्न बन्धोऽस्तीत्युदीर्यते ॥ १ ॥

ननु तत्त्वविदामपि लौकिकेषु शास्त्रीयेषु च कर्मसु कर्तृत्वं दृश्यते तच्चावश्यमिष्टानिष्टभोक्तृत्वं प्रापयिष्यतीत्यज्ञात्को विशेषस्तत्राह—**एवं स्थिते** इति । सुखदुःखादिषु सुखदुःखभोगफलेषु कर्मसु योगादिषु समाध्यभ्यासपरिपाकभूमिकाभेदेषु वा तज्ज्ञानां तत्त्वविदां तद्दृश्यमानं कर्म असत् नास्त्येव नतु मूर्खाणां तत्तथेत्ययमेव विशेष इत्यर्थः ॥ १ ॥ तदुभयमुपपादयितुं कर्तृत्वरूपं विमृशति—**यत** इत्यादिना । **यो हीति** । शारीरक्रिया न कर्तृता । अबुद्धिपूर्वचेष्टायां करोमीति प्रत्ययादर्शनात् किंतु मानसी पूर्वपूर्वकर्तृता वासनारागात्मकमनोवृत्तेरुद्भूता कार्यमिदमिति निश्चयात्मकवृत्तिरूपेण परिणता क्रियाभिधानेत्यर्थः ॥ २ ॥ भोक्तृत्वमपि तदधीनचेष्टावशात्तत्तद्वासनानुरूपफलास्वादगोचरोद्भूतवासनैवेत्याह—**चेष्टावशादिति** । यतो वासनानुरूपं स्पन्दते पुरुषः ॥ ३ ॥ उक्तेऽर्थे श्लोकमुदाहरति—**तथाचेति** । स्वर्गे नरकेऽपि वा तदनुभूयत इति संबन्धः ॥४॥ अस्तु वासनैव कर्तृता भोक्तृता च तथापि कथं ज्ञाज्ञयोर्विशेषसिद्धिस्तत्राह—**तस्मादिति** ॥ ५ ॥ ज्ञे विशेषमुक्तमुपपादयति—**ज्ञाततत्त्वो हीति** । एवं तस्य भोक्तृत्वमप्यसदित्येतदुपपादयति—**संप्राप्तमपीति** । मग्नमना भोगासक्तचित्तोऽज्ञस्तु अकुर्वन्नपि करोति ॥६॥७॥ विज्ञातं विचार्य निर्धारितं प्रागिति शेषः । सर्वो विषयश्च वृत्तिभेदश्चेत्युभयमुपशान्तं

मात्रं चित्त एव स्थित इति विज्ञातम् । विषयश्च सर्वमुपशान्तमभूद्वासनैवेति ज्ञ एवास्तीति ॥ ८

आत्मविदां हि तन्मनः परमुपशममागतं मृगतृष्णाजलमिव वर्षति जलदे हिमकण इव चण्डातपे विलीनं तुर्यदशामुपागतं स्थितम् ॥ ९

नानन्दं न निरानन्दं न चलं नाचलं स्थिरम् ।
न सन्नासन्न चैतेषां मध्यं ज्ञानिमनो विदुः ॥ १०

न वासनामये स्पन्दरसे गज इव पल्वले मज्जति तज्ज्ञो मूर्खमनोभोगभूमिमेव पश्यति न सत्तत्त्वं ॥ ११

तथाचायमत्रापरो दृष्टान्तः । अकुर्वन्नपि श्वभ्रपतनं शय्यासनगतोऽपि श्वभ्रपातवासनावासिते चेतसि श्वभ्रपतनदुःखमनुभवति । अपरस्तु कुर्वन्नपि श्वभ्रपतनं परममुपशममुपगतवति मनसि शय्यासनसुखमनुभवति । एवमनयोः शय्यासनश्वभ्रपातयोरेकः श्वभ्रपतनस्याकर्तापि कर्ता संपन्नो द्वितीयश्च श्वभ्रपतनस्य कर्ताप्यकर्ता संपन्नश्चित्तवशात्तस्माद्यच्चित्तं तन्मयो भवति पुरुष इति सिद्धान्तः ॥ १२

तेन तत्र कर्तुरकर्तुर्वा नित्यमसंसक्तं भवतु चेतो नहि किंचिदस्त्यात्मतत्त्वव्यतिरिक्तं यत्र संसक्तिर्भाव्यते । यत्किंचिदिदं जगद्गतं तत्सर्वं शुद्धचित्तत्वादाभासमवेहि ॥ १३

एवं चास्य ज्ञातज्ञेयस्य पुंसो नामात्मा सुखदुःखानां न गम्य इति निश्चये जाते नात्मव्यतिरिक्ता आधाराधेयदृष्टयो विद्यन्त इति निश्चये जाते कर्ता भोक्ता सर्वपदार्थव्यतिरिक्तो वालाग्रसहस्रभागोऽहमिति निश्चये जाते यत्किंचिदिदं तत्सर्वमहमेवेति वा निश्चये जाते सर्वसत्त्वावभासकः सर्वगस्तिष्ठाम्येवाहमिति निश्चये जाते नाहं सुखदुःखानां गम्य इति विगतज्वरतया चित्तवृत्तिर्लीलयैव तिष्ठते व्यवहारेषु ॥ १४

तज्ज्ञस्य संकटे च मुदितैव केवलं ज्योत्स्नेव भुवनभावमलंकरोति येन चित्तादृते तु ज्ञः कुर्वन्नप्यकर्ता संपन्नो मनसोऽलेपकत्वान्नासौ पादपाण्यादिविक्षेपस्य यत्नकृतस्यापि कर्मणः फलमनुभवति ॥ १५

एवं मनः सर्वकर्मणां सर्वहितानां सर्वभावानां सर्वलोकानां सर्वगतीनां बीजं तस्मिन्परिहृते सर्वकर्माणि परिहृतानि भवन्ति सर्वदुःखानि क्षीयन्ते सर्वकर्माणि लयमुपयान्ति । मानसेनापि कर्मणा यत्कृतेनापि ज्ञो नाक्रम्यते न विवशीक्रियते न रञ्जनामुपैत्यव्यतिरिक्तात् ॥ १६

यथा बालो मनसा नगरस्य निर्माणं निर्मृष्टं च कुर्वन्नगरनिर्माणं मनःकृतमकृतमिव लीलयानुभवति नोपादेयतयासुखदुःखमकृत्रिममिति पश्यति नगरनिर्मथनं च मनःकृतं कृतमिति पश्यतीति दुःखमपि लीलयानुभवन्नपि न दुःखमिति पश्यति । एवमसौ परमार्थतः कुर्वन्नपि न लिप्यत एवेति ॥ १७

---

सद्वासनैवाभूत्तदा तदुपहितो ज्ञो जीव एवास्ति ॥ ८ ॥ तेषु जीवेष्वात्मविदां तन्मनः वर्षति जलदे प्रावृषि मृगतृष्णाजलमिवोपशममागतं सत् चण्डातपे हिमकण इव निलीनं तुर्यदशामुपागतं सत्तद्भावेनैव स्थितमिति विशेष इत्यर्थः ॥९॥ उक्तमनोदशावर्णनपरं श्लोकमुदाहरति—**नानन्दमिति** । आनन्दं विषयसुखविश्रान्तं न । नापि स्वरूपानन्दशून्यम् । अचलं शिलादिवज्जडावस्थं न । एतेषां उक्तानन्दनिरानन्दचलाचलसदसतां मध्यं संध्यवस्थारूपं च न किंतु परिशेषाद्भूमात्मसुखैकरसमित्यर्थः ॥ १० ॥ ज्ञाज्ञयोर्विशेषान्तरमप्याह—**न वासने**त्यादिना । न सत्तत्त्वं परमार्थतत्त्वम् ॥ ११ ॥ अज्ञमनसो दुर्वासनादुःखमज्जने स्वप्नो दृष्टान्त इत्युक्त्वोपपादयति—**तथाचे**त्यादिना । तथाच श्रुतिरपि 'अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छादयति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते' इति । अपरस्तत्त्वज्ञस्तु । उक्तमुपसंहृत्य प्रकृते योजयति—**तस्मादिति** ॥१२॥ भवतु चेतः । तवेति शेषः । तत्त्वदृशस्तव यत्र संसक्तिः संभाव्यते तदात्मतत्त्वव्यतिरिक्तं नह्यस्ति ॥१३॥ नामेत्यवधारणे निपातः । सुखदुःखानामगम्य एवेति निश्चये जाते इत्यस्योपपादक [illegible] निश्चयस्तदुपपादको देहातिरिक्तवालाग्रमात्रात्मनिश्चयः सर्वाहंभावनिश्चयो वा तद्विशोधनफलभूतः सर्वगतात्मनिश्चयस्तद्द्वारा प्रागुक्तेनाहं सुखदुःखानां गम्य इति निश्चये जाते विगतेष्टानिष्टप्राप्तिपरिहारचिन्ताज्वरतया चित्तवृत्तिरात्मन्येव लीलया प्रारब्धभोगार्थं लीलां प्रकाशयन्ती व्यवहारेषु तिष्ठते । 'प्रकाशनस्थेयाख्ययोश्च' इति तङ् ॥ १४ ॥ अतस्तत्त्वज्ञस्य संकटेष्वपि न दुःखभोक्तृत्वं प्रत्युतानन्द एवेत्याह—**तज्ज्ञस्येति** । तत्र हेतुमाह—**येने**त्यादिना ॥ १५ ॥ मनसः सर्वकार्यमनोबुद्धितद्विषयतद्गतीनां बीजत्वात्तत्त्यागे सर्वसंसारपरिहारः सिद्ध इत्याह—**एवमिति** । सर्वकर्माणि सर्वाश्चेष्टाः सर्वकर्माणि सर्वाणि पुण्यपापानि लयमुपयान्ति मानसेन सांकल्पिकेन कृते शारीरेणापि कर्मणा यद्यस्मात् ज्ञो नाक्रम्यते तत्र हेतुर्न वशीक्रियत इति । तत्र हेतुर्न रञ्जनामुपैतीति । तत्फले रक्तो हि तत्साधनक्रियया स्वसिद्ध्यै वशीकृत्य प्रवर्त्यते । प्रवृत्तश्च तत्कृतगुणदोषैराक्रम्यते । कुतः । अव्यतिरिक्तात् परमार्थतः स्वव्यतिरिक्तस्याभावात् ॥ १६ ॥ कृतस्याप्यकृतत्वे दृष्टान्तमाह—**यथे**त्यादिना । निर्मृष्टं निर्मितस्य परिष्कारम् । नगरस्य निर्मथनं प्रवि[illegible] निवृत्तिम् । कृतं वास्तवम् । दार्ष्टान्तिके उक्तं

सर्वभावेषु हेयोपादेयताभ्यां जगति किं कारणं दुःखस्य न चोपादेये किंचिदपि संभवति यदविनाशं व्यतिरिक्तं चात्मनस्तस्मादयमात्माऽकर्ताऽभोक्ताऽतत्त्वतो यदेतत्कर्तृत्वं च स्वध्यारोप्यते ॥ १८

आवश्यकं तत्सम्यग्दर्शनमोहान्न वस्तुत इति यथाभूतवस्तुविचारणात्कर्तृत्वभोक्तृत्वे न स्तः । इन्द्रियैरिन्द्रियार्थद्वेषाभिलाषादिका दृष्टयस्तद्दृष्टीनां दृश्यन्ते नातद्दृष्टीनाम् ॥ १९

मोक्षोऽस्ति न संसारे स्वसंसक्तमनसामिहासंसक्तमनसां त्वेतत्सर्वमेवास्ति ॥ २०

यथास्थितं ज्ञस्य केवलमात्मतत्त्वमेवोल्लसति तद्द्वित्वैकत्ववादिसिद्धे द्वित्वैकत्वे करोति सत्त्वासत्त्वे करोति शक्तिजालादभिन्नां सर्वशक्तितां च दर्शयति तस्य ॥ २१

न बन्धोऽस्ति न मोक्षोऽस्ति नाबन्धोस्ति न बन्धनम् ।
अप्रबोधादिदं दुःखं प्रबोधात्प्रविलीयते ॥ २२

संकल्पिता जगति मोक्षमतिर्मुधैव
संकल्पिता जगति बन्धमतिर्मुधैव ।
संत्यज्य सर्वमनहंकृतिरात्मनिष्ठो
धीरो धिया व्यवहरन्भुवि राम तिष्ठ ॥ २३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे उपशमवर्णनं नाम अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

## एकोनचत्वारिंशः सर्गः ३९

श्रीराम उवाच ।

भगवन्नेवं स्थिते परे ब्रह्मण्येव विद्यमाने कुत एवाभित्तिचित्ररूपायाः सृष्टेरागम इति कथय महात्मन् ॥ १

श्रीवसिष्ठ उवाच ।

राजपुत्र ब्रह्मतत्त्वमेवेदमावर्तते यस्मात्सर्वशक्ति तत्तस्मात्सर्वाः शक्तयो ब्रह्मणि दृश्यन्ते ॥ २

सत्त्वमसत्त्वं द्वित्वमेकत्वमनेकत्वमाद्यत्वमन्तत्वमिति ॥ ३

तच्च नान्यत् । यथा जलराशेर्जलाशय उल्लासप्रफुल्लासेन नानाकारतां दर्शयन्प्रकटतां गच्छति ॥ ४

---

योजयति—**एव**मिति ॥ १७ ॥ इत्थं कर्तृत्वं विचार्य दुःखकारणं विमृशति—**सर्वभावेष्वि**ति । जगति सर्वभावेषु हेयोपादेयताभ्यां व्यवह्रियमाणेषु दुःखस्य कारणं किम् । नच हेयं दुःखकारणम् । उपादानपूर्वकत्वाद्धानस्य । हेयस्योपादेयत्वाभावादेव ततो दुःखाप्रसक्तेरिति परिशेषादुपादेयं दुःखहेतुरिति स्यात् । नच तदपि संभवतीत्याह—**नचोपादेय** इति । नश्वरादुपादेयाद्दुःखमविनाशिनो विनाशिनो वा । नाद्यः । विनाशिनः स्वरक्षणे असमर्थस्य क्वापि कारणत्वायोगात् । न द्वितीयोऽपि । नह्युपादेये जगति तादृशं किंचिदपि संभवति यदविनाशि । 'अतोऽन्यदार्तम्' इति श्रुत्या आत्मव्यतिरिक्तस्य विनाशित्वोक्तेरित्याशयेन हेतुगर्भं विशिनष्टि—**व्यतिरिक्तं चात्मन** इति । आत्मनो हानोपादानतायोग्यत्वादुपादेयस्य तद्व्यतिरिक्तस्य नश्वरत्वादित्यर्थः । एवं भोग्यदुःखस्य कारणानिरूपणादप्यात्मा अकर्ता अभोक्ता चेति सिद्धमित्याह—**तस्मादि**ति । चकारो भिन्नक्रमः । एतच्च कर्तृत्वं यदनुभूयते तत् अतत्त्वतः सु अध्यारोप्यते इत्यन्वयः ॥१८॥ आवश्यकं जीवता अनिवार्यम् । 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इति न्यायादित्यर्थः । आवश्यकत्वं कुतस्तत्राह—**इन्द्रिये**ति । इन्द्रियैरिन्द्रियार्थेषु द्वेषाभिलाषादिकैस्तन्निमित्तैः पुण्यपापादृष्टैश्चायस्ता विवशीकृता बुद्धिर्येषामज्ञानां तेषामेवेत्यर्थः ॥१९॥ अतएव तत्त्वविदां न मोक्षकल्पनाप्यस्तीत्याह—**मोक्ष** इति । स्वस्मिन्पूर्णात्मन्येव संसक्तं मनो येषाम् । इह स्वात्मन्यसंसक्तमनसामभ्यासदशापन्नानां तु दृष्ट्या

एतद्बन्धमोक्षादि सर्वमेवास्ति ॥२०॥ ज्ञस्य दृशा तर्हि किमस्ति तदाह—**यथास्थित**मिति । कथं तर्हि तस्य व्यवहारसिद्धिरिति चेत्परदृष्टिप्रसिद्धद्वित्वैकत्वादेस्तात्कालिकेनाभ्युपगममात्रेणेत्याह—**तद्द्वित्वैकत्वे**ति । तदात्मतत्त्वमेव तस्य तत्त्वज्ञस्य जीवनादिव्यवहारसिद्धये द्वित्वैकत्ववादिदृष्टिसिद्धे द्वित्वैकत्वे तत्कालं करोति ॥ २१ ॥ फलितार्थं पद्येनाह—**न बन्ध** इति । बन्धनं बन्धकारणं कामकर्मादि ॥ २२ ॥ उक्तां पूर्णात्मनिष्ठामुपसंहरन् रामायोपदिशति—**संकल्पिते**ति । स्पष्टोऽर्थः ॥ २३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे उपशमवर्णनं नाम अष्टत्रिंशः सर्गः ॥ ३८ ॥

**ब्रह्मणः सर्वशक्तित्वं रामव्यामोहविस्तरः ।**
**तद्बोधाय वसिष्ठस्य विमर्शोदीह कीर्त्यते ॥ १ ॥**

अज्ञदृष्ट्यावेव स्थितो रामो गुरुवचनविश्वासात्परोक्षतयैव पूर्णतास्थितिं पर्यालोच्य विरोधं मन्यमानः शङ्कते—**भगवन्नि**ति । एवं त्वदुक्तरीत्या बन्धमोक्षादेरसंभवे स्थिते सति ॥ १ ॥ किमसावज्ञदृष्ट्यावस्थितः शङ्कते उताभिज्ञतां कांचित्प्राप्तोऽन्तरालवर्ती सन्निति परीक्षितुं वसिष्ठः सर्वशक्तितावादाभ्युपगमेन परिहरति—**राजपुत्रे**त्यादिना । आवर्तते निवर्तते । दृश्यन्ते कार्यलिङ्गैरनुमीयन्ते ॥ २ ॥ तथाचाशक्तानामेव विरोधो न सर्वशक्तेरित्यभिप्रेत्योदाहरति—**सत्त्वमसत्त्व**मित्यादि ॥ ३ ॥ यथा जलराशेः समुद्रस्य जलाशयो जलपूर उल्लासेन चन्द्रोदयनिमित्तकेन स्वाविर्भावेण प्रफुल्लतीति प्रफुल्ल । 'फुल्ल विकसने'

---

१ नानाकारतादीति पाठः.

२ [illegible] दृष्टिपदस्यायं पर्यायार्थः

तथा चिद्घनश्चित्तं चित्त्वाच्च सर्वाः शक्तीः कर्ममयीर्वासनामयीर्मनोमयीश्चिनोति दर्शयति बिभर्ति जनयति क्षिपयति चेति ॥ ५

सर्वेषामेव जीवानां सर्वासाममितो दृशाम् ।
समग्राणां पदार्थानामुत्पत्तिर्ब्रह्मणोऽनिशम् ॥ ६
लोकात्परादुपायान्ति तस्मिंश्चित्त्वाद्विशन्त्यलम् ।
तन्मया एव सततं तरङ्गा इव सागरे ॥ ७

श्रीराम उवाच ।

भगवंस्त्वातिगहनेयं वचनव्यक्तिर्न खल्वद्य वाक्यार्थमवगच्छामि ॥ ८

क किलातीतमनःषष्ठेन्द्रियवृत्ति ब्रह्मतत्त्वं क भङ्गुरेयं तज्जा पदार्थश्रीरिति वचनरचना। यदि चायमारम्भो ब्रह्मण आपतितस्तदनेन तत्सदृशेनैव भवितव्यम् ॥ ९

यो यस्माज्जायते स तत्सदृश एव भवति ॥ १०
यथा दीपाद्दीपः पुरुषात्पुरुषः सस्यात्सस्यम् ॥ ११
यतो निर्विकाराद्यदागतं निर्विकारेणैवानेन भवितव्यम् ॥ १२

अथैतद्व्यतिरिक्तं चिदात्मनस्तन्निष्कलङ्कस्य परमेश्वरस्य येयं कलङ्कापत्तिरित्याकर्ण्य भगवान् ब्रह्मर्षिरुवाच[1] ॥ १३

ब्रह्मैवेदं स्थितं नाम मलमस्तीह नानघ ।
तरङ्गौघगणैरम्भः सिन्धौ स्फुरति नो रजः ॥ १४
द्वितीया कल्पनैवेह[2] न रघूद्वह विद्यते ।
ब्रह्ममात्रादृते वह्नावौष्ण्यमात्रादृते यथा ॥ १५

श्रीराम उवाच ।

निर्दुःखं ब्रह्म निर्द्वन्द्वं तज्जं दुःखमयं जगत् ।
अस्पष्टार्थमिदं ब्रह्मन्न वेद्मि वचनं तव ॥ १६

श्रीवाल्मीकिरुवाच ।

इत्युक्ते तत्र रामेण चिन्तयामास चेतसा ।
वसिष्ठो मुनिशार्दूलो राघवस्योपदेशने ॥ १७
परं विकासमायाता नास्य तावदियं मतिः ।
किंचिन्निर्मलतां प्राप्ता प्रोह्यते चेह वस्तुनि ॥ १८
यो व्युत्पन्नमनास्तस्य ज्ञातज्ञेयस्य धीमतः ।
मोक्षोपायगिरां पारं प्रयातस्य विवेकतः ॥ १९
न कश्चित्कस्यचिद्दोषो नास्ति विद्यात्मनि ह्यलम् ।
यावन्नोक्तं न विश्रान्तिं तावदेत्येष राघवः ॥ २०
अर्धव्युत्पन्नबुद्धेस्तु नैतद्युक्तं हि शोभते ।
दृश्यानया भोगदृशा भावयन्नेष नश्यति ॥ २१
परां दृष्टिं प्रयातस्य भोगेच्छा नाभिजायते ।
सर्वं ब्रह्मेति सिद्धान्तः काले नामास्य युज्यते ॥ २२
आदौ शमदमप्रायैर्गुणैः शिष्यं विशोधयेत् ।
पश्चात्सर्वमिदं ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥ २३
अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।
महानरकजालेषु स तेन विनियोजितः ॥ २४
प्रबुद्धबुद्धेः प्रक्षीणभोगेच्छस्य निराशिषः ।
नास्त्यविद्यामलमिति युक्तं वक्तुं महात्मनः ॥ २५
अपरीक्ष्य च यः शिष्यं प्रशास्त्यतिविमूढधीः ।
स एव नरकं याति यावदाभूतसंप्लवम् ॥ २६

क्विप् । विकस्वरः सन् । लासेन तरङ्गनृत्येन ॥ ४ ॥ चित्तं चित्तोपाधिकं जीवभावम् । तस्यापि चिदाभासरूपस्य चित्त्वाच्च । चिनोत्येकैकशः संचिनोति । संचितांश्च फलमुखेन दर्शयति—उपभोगैर्बिभर्ति पुनस्तिरोभावेन क्षिपयति ॥५॥ उक्तेऽर्थे श्लोकावुदाहरति—**सर्वेषामेवे**ति ॥६॥ पराल्लोकात्परमात्मनः ॥७॥ एवं शक्तिवादेन समाधीयमानोऽपि रामो वह्नौ शैत्यशक्तिमिव जले दहनशक्तिमिव विरुद्धां चिति जाड्यशक्तिं अदृश्ये दृश्यताशक्तिं नित्ये अनित्यताशक्तिं च ब्रह्मण्यसंभावयन् शङ्कते—**भगवन्नि**त्यादिना । वचनव्यक्तिर्वाक्यार्थावगतिः । अतिगहना दुःसंपादा विरोधसत्त्वादित्यर्थः ॥८ ॥ विरोधानेव दर्शयति—**क किले**ति । वचनरचना नामसृष्टिः । आरम्भो रूपसृष्टिः । सदृशेनैव भवितव्यं नतु विरुद्धेनेत्यर्थः ॥९॥ भवति लोके इति शेषः ॥१०॥११॥१२॥ अथशब्दो यदीत्यर्थे । तत्तर्हि निष्कलङ्कस्य परमेश्वरस्य या जगद्भावापत्तिस्त्वयोक्ता इयं कलङ्कापत्तिरुक्ता स्यादित्यर्थः ॥१३॥ तत्त्वदृशा वसिष्ठो जगतश्चिद्भावमेवमविकारतां च पश्यन्समाधत्ते—**ब्रह्मैवेद**मिति ॥१४॥१५॥ अज्ञदृष्टावेव स्थितो रामः सर्वथा आनन्दैकरसस्वभावे तद्विरुद्धदुःखजगद्रूपता ब्रह्मणो दुर्वचैवेति प्रत्यवतिष्ठते—**निर्दुःख**मिति ॥१६॥ एवं निरुत्तरीकृतस्य वसिष्ठस्य रामप्रबोधनोपायचिन्तां वाल्मीकिर्दर्शयति—**इत्युक्ते** इत्यादिना ॥ १७ ॥ १८ ॥ यः पुरुषो व्युत्पन्नमना जगतो जडभावं विहाय चिदेकरसतां द्रष्टुं समर्थ इति यावत् ॥१९॥ तस्य दृशा कस्यचिद्वस्तुनः कश्चिदपि दोषो विरोधो नास्ति । यतो जगद्विरुद्धरूपं विद्यात्मनि क्वचिदपि नास्ति । अलं सम्यक् यावन्नोक्तं नोपदिष्टमस्माभिस्तावदेव राघवो विश्रान्तिं नैति न प्राप्नोति । अतोऽवश्यमुपदेष्टव्य इत्यर्थः ॥२०॥ परंतु अर्धव्युत्पन्नदृष्टेरेतत् प्रागुक्तं सर्वं ब्रह्मेत्युपदेशनं न शोभते। कुतः। यत एषोऽर्धव्युत्पन्नो दृश्यान्यानयत्युपस्थापयति संजीवयतीति वा दृश्याना । अनितेः क्विपि 'आपं चैवं हलन्तानाम्' इति टाप् । तथाविधया भोगदृशा सदैव अर्थाद्दृश्यान्येव भावयन्सन्नश्यति । तत्त्वबोधाद्भ्रश्यतीति यावत् ॥२१॥ कस्य तर्हि तादृशोपदेशो युज्यते तमाह—**परा**मिति । सिद्धान्तः परिनिष्ठितोपदेशः ॥२२॥ कथं तर्ह्यर्धव्युत्पन्न उपदेश[illegible]—**आदा**विति ॥२३॥२४॥२५॥ अतत्त्वज्ञ एवान-

१ एतदग्रे श्रीवसिष्ठ उवाचेति क्वचित् पठ्यते. २ संहितायां 'हलो यमाम्' इत्यनेन मध्यवर्तिलकलोप इति [illegible]

इति संचिन्त्य भगवानज्ञानतिमिरापहः ।
तमुवाच मुनिश्रेष्ठो वसिष्ठो भूमिभास्करः ॥ २७

श्रीवसिष्ठ उवाच ।

कलङ्ककलना ब्रह्मण्यस्ति नास्तीति वानघ ।
सिद्धान्तकाले वक्तव्यं स्वयं ज्ञास्यसि राघव ॥ २८
ब्रह्म सर्वशक्ति सर्वव्यापि सर्वगतं सर्वोहमेवेति २९

यथेन्द्रजालिनः पश्यसि चित्रा मायया क्रिया जनयन्तः सदसत्तां नयन्त्यसच सत्तां नयन्ति तथैवात्मा अमायामयोऽपि मायामय इव परम ऐन्द्रजालिको घटं पटं करोति पटं च घटं करोति उपले लतां जनयति मेरौ कनकतटे नन्दनवनमिव लतायामुपलमुत्पादयति कल्पपादपेषु रत्नस्तवकमिव व्योम्नि काननमध्यारोपयति ॥ ३०

गन्धर्वउद्यानमिव तस्मिन् जगति भविष्यति गगने कल्पनया नगरतां जनयति नष्टच्छायाञ्जनमिव व्योम धरातलं नयतीति ॥ ३१

गन्धर्वनगरराजगृहे विपुलाङ्गनाजनमिव भूतले व्योम निवेशयति ॥ ३२

रक्तकुट्टिमेष्वाकाशप्रतिबिम्बमिव किंचिदस्ति जगति भविष्यति वा बभूव ॥ ३३

यदीश्वरो व्यक्तरूपो विचित्रतामुपेत्य निदर्शयति ॥ ३४

सर्वमेव सर्वथा सर्वत्र यथा संभवत्येकमेवेह वस्तु विद्यत इति तस्माद्धर्षामर्षविस्मयानां क वाऽवसरो राम ॥ ३५

समतयैव सततं धृतिमता स्थातव्यम् ॥ ३६
विस्मयस्मयसंमोहहर्षामर्षविकारिताम् ।
समतावलितस्तज्ज्ञो न कदाचन गच्छति ॥ ३७

अपर्यवसाने देशकालवति चित्रा हि जगति युक्तयो दृश्यन्ते ॥ ३८

एताश्च युक्तीर्नामासावात्मा यत्नेन रचनां करोति न चोत्पन्नां तिरस्करोति सागर इव वीचीः ॥ ३९

किं तर्हि क्षीर इव घृतं घट इव मृदि पट इव तन्तुषु वट इव धानायातमन्येच स्थिताः शक्तयः प्रकटतामागता व्यवह्रियन्तेऽविरचितमेव तरङ्गवत् ॥ ४०

नात्र कश्चित्कर्ता न भोक्ता न विनाशमेति ॥ ४१

केवलमात्मतत्त्वे साक्षिणि निरामये समतयात्मनि नित्यमसंक्षुब्धे तिष्ठति सत्येवं संपद्यते ॥ ४२

सति दीप इवालोकः सत्यर्क इव वासरः ।
सति पुष्प इवामोदः स्वतः संपद्यते जगत् ॥ ४३
आभासमात्रमेवेदं परिदृश्यत एव च ।
स्पन्दः समीरणस्येव न सन्नासदवस्थितम् ॥ ४४

निर्दोषवदेव जागतीनां दृष्टीनां परमार्थतो भगवान्स्थितो विनष्टानां पुनः कर्ता कृतानां वा नाशयिता स केवलं कदाचित्प्रकटाः कदाचिदल्पप्रकटाः कदाचिदप्रकटास्तारका इव कुसुमराशयः ॥ ४५

---

धिकार्युपदेशे प्रवर्तते तस्य शिष्यप्रतारकस्य युक्तो नरकपात इत्याशयेनाह—**अपरीक्ष्ये**ति । एवकारो भिन्नक्रमः । स यात्येवेति ॥ २६ ॥ २७ ॥ स्वयमेव ज्ञास्यसि । यदि न ज्ञास्यसि तर्हि सिद्धान्तकाले वक्तव्यं नाधुनेत्यर्थः ॥ २८ ॥ सांप्रतमर्धव्युत्पन्नयोरयं ब्रह्मणः प्रागुक्तसर्वशक्तित्वादि प्रतीचः सर्वोहंभावदर्शनं च प्रथममुपदिशति—**ब्रह्म सर्वशक्ती**ति ॥ २९ ॥ मायैवास्य सर्वशक्तिता प्रतीचः सार्वात्म्यं चेति प्रपञ्चयति—**यथेन्द्रजालिन** इत्यादिना । असंभावितसंभावनाय लोकशास्त्रप्रसिद्धं दृष्टान्तमाह—**कनकतटे** इति । यद्वद्देवशक्त्या असंभावितान्यपि नन्दनवनरत्नस्तबकादीनि संभाव्यन्ते तद्वदात्मशक्त्यापि संभाव्यतामिति भावः ॥ ३० ॥ वस्तुव्यत्यय इव देशकालव्यत्ययोऽपि मायाशक्त्यैव संभावनीय इत्याशयेनाह—**भविष्यति गगने** इति । व्योम नष्टच्छायाञ्जनं निरस्तनैल्यकज्जलं कृत्वा धरातलं भूप्रदेशं नयति प्रापयति । इतिशब्दस्तत्राप्यसंभावितसहस्रसंभावनार्थः ॥ ३१ ॥ तर्हि किं गगनस्याधो निवेशाय भूतलमन्यतो नयति नेत्याह—**गन्धर्वनगरे**ति ॥ ३२ ॥ जगति यत्किंचिदस्ति भविष्यति बभूव तत्सर्वं रक्तकुट्टिमेषु पद्मरागमणिमयसौधभावेषु आकाशप्रतिबिम्बमिवाधिष्ठानरक्तिम्ना रक्तं स्वतोऽसदपि ब्रह्मसत्तया सदिव भवतीत्यर्थः ॥ ३३ ॥ तत्र हेतुमाह—**यदीश्वर** इति । निदर्शयति स्वात्मानमित्यर्थः ॥ ३४ ॥ एवं चैकमेव वस्तु सर्वथा सर्वं भवतीति नासंभावना हर्षामर्षादयश्च युक्ता इत्याह—**सर्वमेवे**ति ॥ ३५ ॥ एवमसंभावनां रामस्य निरस्य प्रागुक्तसमतास्थितिमेव विधत्ते—**समतयैवे**ति ॥ ३६ ॥ तदेव हर्षादेरात्यन्तिकक्षय इत्याशयेन श्लोकमुदाहरति—**विस्मये**ति ॥ ३७ ॥ अपर्यवसाने समताया इति शेषः । युक्तयो दृश्यरजनात्मिका दृश्यन्ते ॥ ३८ ॥ सामग्रीयुक्तावस्थायुक्तिः फलावस्थारचनेति प्रवृत्तिनिमित्तभेदाद्युक्तीः, रचनां करोतीति सामानाधिकरण्यम् । अयमात्मा न तिरस्करोति ॥ ३९ ॥ किं तर्ह्यनेन प्रकटतामागताः शक्तयो व्यवह्रियन्ते इति कथंचियोज्यम् । इयं च व्यवहारदृष्टिः कल्पनैव, परमार्थतस्तु अविरचितमेव जगत् ॥ ४० ॥ नात्र कर्तेत्यादि स्पष्टम् ॥ ४१ ॥ तादृशेऽपि परमार्थे सति जगत्संपत्तौ दृष्टान्तप्रदर्शकौ श्लोकाववतारयति—**सत्येव(?)संपद्यत** इति ॥४२॥ श्लोकौ स्पष्टौ ॥४३॥ **न सन्नासदि**ति । अनिर्वचनीयमित्यर्थः ॥४४॥ एवं च स्वसंनिधिमात्राज्जायमानजगद्दोषैरलिप्यमान एवात्मा जगतः कर्तेव हर्तेव नियन्तेव नभ इव तारकाकुसुमराशीनां भवतीत्याह—**निर्दोषवदे**वेत्यादिना । केवले नभसि तारकाः कुसुमराशय इव कदाचित्प्रकटास्तस्मिन्भवन्तीति सर्वत्र शेषः ॥ ४५ ॥

नश्यतीह हि तद्वस्तु नात्मभूतं यदात्मनः।
कथं नश्यति तद्वस्तु स्वात्मभूतं यदात्मनः॥ ४६
जायते नैव तद्वस्तु नात्मभूतं यदात्मनः।
जायते चैव तद्वस्तु स्वात्मभूतं यदात्मनः॥ ४७
कथं तज्जायते तस्मात्स्वात्मभूतं यदात्मनः॥ ४८

तस्मात्सम्यग्ज्ञानवशाद्ब्रह्मणः सर्वपदार्थानामागमः॥ ४९

अवतीर्णानां च तेषामवतरणसमकालमेवाविद्योदेति तत्त्वज्ञानं दृढतामेति तदनु शतसहस्रस्कन्धो विचित्रशुभाशुभफलभरफलितो भूरिशाखः स्फारतामेति संसारद्रुमः॥ ५०

आशामञ्जरिताकृतिं विफलितं दुःखादिभिर्दारुणैर्भोगैः पल्लवितं जराकुसुमितं तृष्णालताभासुरम्।
संसाराभिधवृक्षमात्मनिगडं छित्त्वा विवेकासिना मुक्तस्त्वं विहरेह वारणपतिः स्तम्भादिवोन्मोचितः

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे सर्वैकत्वप्रतिपादनं नामैकोनचत्वारिंशः सर्गः॥ ३९॥

## चत्वारिंशः सर्गः ४०

श्रीराम उवाच।

उत्पत्तिः कथमेतेषां जीवानां ब्रह्मणः पदात्।
कियती कीदृशी चेति विस्तरेण वद प्रभो॥ १

श्रीवसिष्ठ उवाच।

उत्पद्यन्ते यथा चित्रा ब्रह्मणो भूतजातयः।
यथा नाशं प्रयान्त्येता यथा मुक्ता भवन्ति हि॥ २
यथा च परिवर्धन्ते तिष्ठन्त्यन्तर्हिता यथा।
संक्षेपेण महाबाहो शृणु वक्ष्यामि तेऽनघ॥ ३
ब्राह्मी चिच्छक्तिरमला कल्पयन्ती यदृच्छया।
सर्वशक्तिः स्वयं चेत्यं भवत्याकलनात्मकम्॥ ४
कलनाद्घनतामेत्य यत्किंचिदपि सा स्वयम्।
संकल्पयति पश्चात्तत्तत्तामेति मनःपदम्॥ ५
मनःसंकल्पमात्रेण गन्धर्वपुरवत्क्षणात्।
तनोतीदमसद्दृश्यं ब्राह्मीं स्थितिमिव त्यजत्॥ ६
चित्स्वरूपं परिकचच्छून्यमेवावतिष्ठते।
यत्तद्दृश्यं स्थितं तत्स्याद्दृश्यमाकाशमेव तत्॥ ७
कृत्वा पद्मजसंकल्पं रूपं पश्यति पद्मजम्।
ततो जगत्कल्पयति सप्रजापतिपूर्वकम्॥ ८
चतुर्दशविधानन्तभूतजातसघुंघुमा।
सृष्टिरेवमियं राम चित्तनिर्मितिमागता॥ ९
चित्तमात्रमयी शून्या व्योममात्रशरीरिका।
संकल्पमात्रनगरी भ्रान्तिमात्रात्मिका सती॥ १०

---

इत्थं चासतो जगतः असत्तात्मको नाशः स्वत एव सत्तात्मिका उत्पत्तिः स्थितिश्च ब्रह्मसत्तैवेति विभागे फलितमाह—**नश्यती**त्यादिसार्धश्लोकद्वयेन॥ ४६॥ जायत इत्येतत्स्थितेरप्युपलक्षणम्॥ ४७॥ तर्हि किमात्मा जन्यो नेत्याह—**कथ**मिति॥ ४८॥ आत्मसत्ताया जगत्यध्यासो जगतो जन्म नात्मनो भेदाभावादित्याशयेनोक्तमुपसंहरति—**तस्मादि**ति। सम्यग्ज्ञानवशात्परमार्थसत्यचित्स्वरूपबलात्। आगमोऽवतारः उत्पत्तिरिति यावत्॥ ४९॥ अस्तु पदार्थानामवतारस्तैरात्मनः कथं संसारप्राप्तिरिति तद्दर्शयति—**अवतीर्णाना**मिति। अविद्यात्र तदभिमानः। तत्तु अज्ञानं अभिमानलक्षणं कालेन दृढतामेति॥ ५०॥ संसारद्रुममेव निर्वर्ण्य तदुच्छेदोपायमाह—**आशे**ति। आशाभिर्मञ्जरिता संजातमञ्जरीका आकृतिर्यस्य दुःखादिभिर्विविधं फलितम्। प्रकृत्या चारुरित्यादिवदभेदे 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया। लताः शाखाः वल्ल्यश्च। आत्मनो निगडं बन्धस्थानम्। शिष्टं स्पष्टम्॥ ५१॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे सर्वैकत्वप्रतिपादनं नामैकोनचत्वारिंशः सर्गः॥ ३९॥

वर्ण्यते जीवभेदानामिहोत्पत्तिरुपाधिभिः।
तेषां तदुपधीनां च ब्रह्मभावश्च विस्तरात्॥ १॥

प्रश्नः स्पष्टः। यद्यपि जीवभेदानामुत्पत्तिरुत्पत्तिप्रकरणे विस्तरेण वर्णितेति न पुनः प्रश्नार्हा तथापि करिष्यमाणस्याक्षेपस्योत्थानाय विशेषबुभुत्सया च पुनः प्रश्नो बोध्यः॥ १॥ अत एव वसिष्ठः संक्षिप्य तत्समाधिं प्रतिजानीते—**उत्पद्यन्ते** इत्यादिद्वाभ्याम्॥ २॥ ३॥ कल्पनाबीजप्राक्तनवासनोद्बोधस्यानियतरूपताप्रदर्शनाय **यदृच्छये**ति। भाविदेहाद्याकारस्येषत्स्फुरणमाकलना तदात्मकम्॥ ४॥ तस्यैव सम्यगहंभावेन स्फुरणं घनतामेत्य प्राप्य सा घनतैव मनो जीवोपाधिश्चेत्याशयेनाह—**मन** इति॥ ५॥ ब्राह्मीं स्थितिं दृग्रूपतां दृश्याहंकारादिकल्पनया त्यजदिव॥ ६॥ ततः किं वृत्तं तदाह—**चित्स्वरूप**मिति। परितः कचत् स्वप्रकाशमपि चित्स्वरूपं परागदृष्ट्या दृश्यमानं शून्यं रिक्तघटोदरसदृशमेवावभासते। तदवस्थया स्थितं तादृग्रूपमेव सर्वजनदृश्यं तत्प्रसिद्धमाकाशमित्युच्यत इत्यर्थः॥ ७॥ तस्मिन्नाकाशे चतुर्मुखादिस्थूलदेहस्य भुवनानां च कल्पनां दर्शयति—**कृत्वे**ति। प्रजापतयो दक्षादयः॥ ८॥ ॥ ९॥ इत्थं चोपाध्युत्पत्तेर्मिथ्यात्वे तत्प्रयुक्ता जीवोत्पत्तिः सुतरां मिथ्येत्याशयेनाह—**चित्तमात्रे**ति॥ १०॥ तत्र शास्त्रा-

इह काश्चिन्महामोहा भूतानां जातयः स्थिताः ।
काश्चिदभ्युदितज्ञानाः काश्चिन्मध्ये स्खलन्ति हि ॥ ११
भुवि संबध्यमानानां यान्त्येनामुपदेश्यताम् ।
सर्वासां भूतजातीनां या एता नरजातयः ॥ १२
बह्वाधयो दुःखमया मोहद्वेषभयातुराः ।
तासां सम्यक्प्रवक्ष्यामि तावद्राजससात्त्विकीः ॥ १३
यत्तदप्यमृतं ब्रह्म सर्वव्यापि निरामयम् ।
चिदाभासमनन्ताख्यमनादि विगतभ्रमम् ॥ १४
निस्पन्दवपुषस्तस्य स्पन्दः सत्तैकदेशतः ।
घनतामेति सौम्येऽब्धौ चलता चलतामिव ॥ १५

श्रीराम उवाच ।

अनन्तस्यात्मतत्त्वस्य एकदेशः क उच्यते ।
कथं विकारिता वा स्यात्कथं वा द्वयविक्रमः ॥ १६

श्रीवसिष्ठ उवाच ।

तेन जातं ततो जातमितीयं रचना गिराम् ।
शास्त्रसंव्यवहारार्थं न राम परमार्थतः ॥ १७
विकारितावयवितादिक्सत्तादेशतादयः ।
क्रमा न संभवन्तीशे दृश्यमानोदया अपि ॥ १८
तं विना कल्पनैवान्या नास्ति नापि भविष्यति ।
कुतस्त्यौ क्रमशब्दार्थावुक्तयो व्यवहारजाः ॥ १९
या येह कलना योऽर्थो यः शब्दो यो गिरां गणः ।
तज्जत्वात्तन्मयत्वाच्च तत्तत्पदमिवेष्यते ॥ २०
तज्ज्ञः स एव भवति वह्नेर्वह्निरिवोत्थितः ।
जन्योऽयं जनकश्चायमित्युक्ता भेदकल्पना ॥ २१
अयमस्मात्समुत्पन्न इतीयं या जगत्स्थितिः ।
आधिक्यं तत्क्रियाशक्तौ जन्यं जनकमेव वा ॥ २२
इदमन्यदिदं चान्यदिति शब्दार्थविक्लवः ।
उक्तावेव न देवेऽस्ति प्रमितौ भिन्नता यतः ॥ २३
तज्जयैव मनःशक्त्या स्वतः संज्ञा प्रवर्तते ।
दृढभावनया तस्मादिष्टोऽर्थः प्रतिपद्यते ॥ २४
अग्नेः शिखाया एकस्या द्वितीया जनकेति या ।
उक्तिवैचित्र्यमेवैतन्नोक्त्यर्थेऽत्रास्ति सत्यता ॥ २५
न जन्यजनकाद्यास्ताः संभवन्त्युक्तयः परे ।
एकमेव ह्यनन्तत्वात्किं कथं जनयिष्यति ॥ २६
उक्तेरेव स्वभावोऽयमुक्तेरुक्तिरनन्तरम् ।
प्रतियोगिव्यवच्छेदसंख्याद्यर्थे न युज्यते ॥ २७
ऊर्मिजालमिवाम्भोधौ परे यः परिदृश्यते ।
शब्दोऽर्थकलनाकारस्तद्ब्रह्मैव विदुर्बुधाः ॥ २८
ब्रह्म चिद्ब्रह्म च मनो ब्रह्म विज्ञानवस्तु च ।
ब्रह्मार्थो ब्रह्म शब्दश्च ब्रह्म चिद्ब्रह्म धातवः ॥ २९
ब्रह्म सर्वमिदं विश्वं विश्वातीतं च तत्पदम् ।
वस्तुतस्तु जगन्नास्ति सर्वं ब्रह्मैव केवलम् ॥ ३०
अयमन्योऽयमन्योऽयं भाग इत्यम्बरात्मनि ।
मिथ्याज्ञानविकल्पोक्तिर्वाचि सत्यार्थताऽत्र का ॥ ३१

---

धिकारिदौर्लभ्यप्रदर्शनाय जीवांस्त्रिधा विभजते—**इहे**ति । इह भुवनेषु । अभ्युदितज्ञानाः सनकादयः । मध्ये आन्तरालिकदशायां स्थिता मोक्षाय यतमाना अपि पुनःपुनर्विघ्नैः स्खलन्ति । वैराग्यदार्ढ्याभावादित्यर्थः ॥ ११ ॥ क तर्हि शास्त्राधिकारप्रयोजकं वैराग्यं सुलभं तानाह—**भुवी**ति । निर्धारणे षष्ठ्यः । एता भरतखण्डस्थाः ॥ १२ ॥ तासां वैराग्यसंभवे हेतूनाह—**बह्वाधय** इति । तासां नरजातीनां मध्ये तामसीनां शास्त्रानधिकारादुपदेशयोग्या राजससात्त्विकीर्द्विचत्वारिंशे सर्गे जीवावतरणक्रमवर्णने प्रवक्ष्यामीत्यर्थः ॥१३॥ यदमृतं ब्रह्म तच्चिदाभासं जीवरूपं यथा जातं तदपि तत्रैव वक्ष्यामीत्यर्थः ॥१४॥ निस्पन्दवपुषस्तस्य परमात्मनः । सौम्ये निश्चलेऽब्धौ चलतां तरङ्गाणां चलता चाञ्चल्यमिव सत्तैकदेशतो जीवभावेन स्पन्दो यथा घनतामेति तथा तदपि तत्रैव प्रवक्ष्यामीत्यर्थः ॥१५॥ स्पन्दः सत्तैकदेशत इति यदुक्तं तदयुक्तम् । अखण्डपूर्णसत्तैकरसे ब्रह्मणि सत्तैकदेशस्य स्पन्दस्य चासंभाव्यत्वादिति रामः शङ्कते—**अनन्तस्ये**ति ॥१६॥ जीवब्रह्मैक्यस्य वास्तवस्य व्युत्पादनायायमुत्पत्त्येकदेशस्पन्दादिव्यवहारः शास्त्रे कल्पितः, अतो न वस्तुवृत्त्याश्रयेण तस्यां विरोध उद्भावनीय इत्याशयेन वसिष्ठ उत्तरमाह—**तेन जात**मित्यादिना । तेन निमित्तेन । तत उपादानात् ॥१७॥ कुतो न परमार्थतस्तत्राह—**विकारिते**ति । देशता एकदेशता । दृश्यमानोदयाः प्रत्यक्षेणोत्पद्यमानतया दृश्यमाना अपि ॥१८॥ यदि तत्र न संभवन्ति तर्हि जगतामन्यदेव मूलं कल्प्यतां तत्राह—**तं विने**ति । अन्यकल्पनाया अपि चित्प्रकाशं विनाऽयोगादित्यर्थः । हेतुकार्ये क्रमशब्दार्थौ व्यवहारजा उक्तयश्च कुतस्त्या इति विपरिणम्यते ॥१९॥ शब्दो नामानि । गिरां गणो वाक्यानि । तन्मयत्वात्सन्मयत्वात् । पदं सद्वस्त्विव ॥२०॥ एवंच सत्ताभेदाभावाद्भिदप्रत्ययो मिथ्यैवेत्याह—**तज्ज** इत्यादिना ॥ २१ ॥ कथं तर्हि दीपाद्दीपान्तरमिदमुत्पन्नमिति व्यवहारस्तत्राह—**अय**मिति । एकस्यैव दीपस्य मायया द्विधा स्वरूपनिर्माणक्रियाशक्तौ यदाधिक्यमतिशयस्तदेव जन्यं जनकमिति द्विधा भासत इत्यर्थः ॥ २२ ॥ शब्दार्थविक्लवो नामरूपव्यवहारश्रमः उक्तौ वाङ्मात्रेऽस्ति न देवे परमात्मन्यस्ति । 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः । यतः प्रमितौ परिच्छेदे सति भिन्नता स्यादित्यर्थः ॥ २३ ॥ तज्जया क्रियाशक्तिजन्ययैव मनःशक्त्या स्वतः स्वभावत एव संज्ञा नामविभागोऽपि प्रवर्तते । इष्टोऽर्थो व्यवहारः प्रतिपद्यते संपद्यते ॥२४॥ उक्तमेवार्थमुदाहृत्य दर्शयति—**अग्ने**रिति ॥ २५ ॥ २६ ॥ प्रतियोगी स्वाश्रयतादात्म्यविरोधी । व्यवच्छेदो भेदः । संख्या द्वित्वादिः ॥ २७ ॥ २८ ॥ कस्तर्हि सिद्धान्तस्तमाह—**ब्रह्मे**त्यादिना । चित्प्रत्यगात्मा विज्ञानवस्तु बुद्धिवृत्तिभेदाः । चित्

वह्नेः शिखेव जातेयं शिखेति मनसोऽभिधा ।
चापलोत्थविकल्पश्रीर्वस्तुतः स्यान्न सिद्ध्यति ॥ ३२
असत्यैव विकल्पोक्तिः सत्यभावो विकल्पते ।
तमोपहतदृष्टित्वाद्द्विचन्द्रज्ञानदोषवत् ॥ ३३
सर्वस्मात्सर्वगात्तस्मादनन्ताद्ब्रह्मणः पदात् ।
नान्यत्किंचित्संभवति तदुत्थं यत्तदेव तत् ॥ ३४
ब्रह्मतत्त्वं विना नेह किंचिदेवोपपद्यते ।
सर्वं च खल्विदं ब्रह्मेत्येषैव परमार्थता ॥ ३५
एवंप्रायश्च हे प्राज्ञ सिद्धान्तस्ते भविष्यति ।
तत्रैवोदाहरिष्यामः सिद्धान्तार्थोक्तिपञ्जरम् ॥ ३६
इहाविद्यादिकाः केचिद्भिद्यन्ते नेतरक्रमाः ।
ज्ञास्यस्यलमशेषार्थांस्तत्तदज्ञानसंक्षये ॥ ३७
अवस्तुसंक्षये वस्तु यथावस्तु प्रसीदति ।
यथा च दृश्यते दृश्यं जगन्नैशतमःक्षये ॥ ३८
यदिदमखिलमाततं कुदृष्ट्या
तदुपशमे तव राम निर्मलाभे ।
अवितथपदनिर्मले भविष्य-
त्यवितथमेव न संशयोऽत्र कश्चित् ॥ ३९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे ब्रह्मैवेदं सर्वं जगदिति प्रतिपादनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकचत्वारिंशः सर्गः ४१

श्रीराम उवाच ।

क्षीरोदकुक्षितुल्याभिः शीतलामलदीप्तिभिः ।
तवोक्तिभिर्विचित्राभिर्गम्भीराभिरिवाभितः ॥ १
क्षणमान्ध्यमिवाप्नोमि क्षणं यामि प्रकाशताम् ।
शान्तातपलवः प्रावृड्लोलाभ्र इव वासरः ॥ २
अनन्तस्याप्रमेयस्य सर्वस्यैकस्य भास्वतः ।
अनस्तमितसारस्य कलना कथमागता ॥ ३

श्रीवसिष्ठ उवाच ।

यथाभूतार्थवाक्यार्थाः सर्वा एव ममोक्तयः ।
नासमर्था विरूपार्थाः पूर्वापरविरोधदाः ॥ ४
ज्ञानदृष्टौ प्रसन्नायां प्रबोधे विततोदये ।
यथावज्ज्ञास्यसि स्वस्थो मद्वाग्दृष्टिबलाबलम् ॥ ५
उपदेश्योपदेशार्थं शास्त्रार्थप्रतिपत्तये ।
शब्दार्थवाक्यरचनाभ्रमो मा तन्मयो भव ॥ ६
यदा पुरा ज्ञास्यसि तत्सत्यमत्यन्तनिर्मलम् ।
वाच्यवाचकशब्दार्थभेदं त्यक्ष्यसि वै तदा ॥ ७

---

ईश्वरः साक्षी अर्थप्रथा वा ॥ २९ ॥ ३० ॥ ३१ ॥ सिद्ध्यति नित्यसिद्धकूटस्थे ॥ ३२ ॥ विकल्पते भ्रान्त्या प्रथते ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥ भविष्यति बुद्धौ प्रतिष्ठास्यति । तत्रैव तदैव । उदाहरिष्यामो निर्वाणप्रकरणे ॥ ३६ ॥ इह अस्यां परमार्थतायाम् । अलं पूर्णब्रह्मभावेन । एकस्याप्यज्ञानस्य संशयभेदैः सह बहुत्वविवक्षया तत्तदज्ञानसंक्षये इति वीप्सोक्तिः ॥ ३७ ॥ दृश्यं चक्षुषा दर्शनार्हम् । जगत्स्थाण्वादि ॥ ३८ ॥ उक्तं सर्वमुपसंहरति—यदिदिति । कुदृष्ट्या अज्ञानदूषितदृष्ट्या यदिदमखिलं जगदाततं सर्वतो विस्तृतं भाति तस्य सर्वस्य सद्धाज्ञानेन नाशे सति निर्मलदर्पणाभे अवितथे परमार्थभूते परमपदे निर्मले अवितथं तदेव भविष्यति स्थास्यति ॥ ३९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे ब्रह्मैवेदं सर्वं जगदिति प्रतिपादनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

कलनादिविशेषाणां माया मूलमिहोच्यते ।
दुर्वचा सा चिकित्स्यैव न विचिन्त्या मृषेत्यपि ॥ १ ॥

पूर्वं सर्वत्र कलनैव मनआदिद्वैतकल्पनाया मूलमित्युक्तम्, इदानीं निर्विकारेऽद्वये कलनाया निमित्तमसंभावयंस्तत्प्रष्टुकामो रामो गुरोरादराय प्राक्तनोक्तीः प्रशंसमानः प्रथमं स्वव्यामोहमुद्गिरति—क्षीरोदेति द्वाभ्याम् । क्षीरोदस्य कुक्षिर्गर्भस्तेन तत्प्रसूतश्चन्द्रो लक्ष्यते । चन्द्रतुल्याभिरित्यर्थः । अतएव शीतलामलदीप्तिभिरिति विशेषणम् । आन[illegible] लोलान्यभ्राणि यस्मिन् ॥ १ ॥ २ ॥ अनन्तत्वादेवाप्रमेयस्य प्रमाणापरिच्छेद्यस्य । सर्वस्य पूर्णस्य । भास्वतः स्वतः सदा प्रथमानस्य । न अस्तमितः सारः परमार्थस्वरूपप्रथा यस्य । तथाच प्रथमानेऽद्वितीयपूर्णस्वभावे परिच्छिन्नकलनात्मको विकारो वस्तुतः कल्पनया वा न संभाव्य इति तत्र हेतुर्वाच्य इत्यर्थः ॥ ३ ॥ तवायं व्यामोहो न मद्वाक्यदोषात्किंतु ते तात्पर्यानवधानदोषादेवेति दर्शयन्वसिष्ठः समाधत्ते—यथाभूतेत्यादिना । यथाभूतो यथास्थितोऽर्थ एव वाक्यार्थो यासाम् । असामर्थ्यं पदानामाकाङ्क्षायोग्यतासत्तिराहित्यम् । वैरूप्यं तु अवान्तरवाक्यानां महावाक्यार्थापर्यवसानम् । विरोध उपक्रमोपसंहारयोः परस्परव्याघातस्तैर्वर्जिता इत्यर्थः ॥ ४ ॥ कदा तर्हि मम तात्पर्यावधानं स्यात्तत्राह—ज्ञानदृष्टाविति । मद्वाचां तत्प्रयुक्ततत्त्वदृष्टेश्च इतरवाग्दृष्ट्यपेक्षया बलाबलं प्राबल्यम् ॥ ५ ॥ ननु यथा स्वमाता वन्ध्या, स्वमुखे जिह्वा नास्ति, मूकोऽहमिति वाक्यं हेतुस्वसत्ताबाधितार्थकं तथा 'नेह नानास्ति किंचन', 'एकमेवाद्वितीयम्' इत्यादिश्रुतिशास्त्रं तद्वाक्यानि चेति कथं विरोधपरिहार इति चेत्तत्राह—उपदेश्येति । असत्यस्यापि स्वप्नादेः सत्यार्थप्रतिपत्त्युपायतादर्शनान्मिथ्याभूतशब्दार्थवाक्यरचनाभ्रमोऽपि सत्यशास्त्रार्थप्रतिपत्तिहेतुः संभवतीति व्यामूढतया तन्मयो भ्रममयो मा भवेत्यर्थः ॥ ६ ॥ कियत्कालं तर्हि शब्दार्थवाक्यरचनाभ्रमोऽ[illegible]माह—यदेति । यावद्वाक्यार्थापरोक्षोदयमिति भावः

भेदकृद्वाक्प्रपञ्चोऽयमुपदेश्येषु कल्पितः ।
उपदेश्योपदेशार्थं शास्त्रार्थप्रतिपत्तये ॥ ८
शब्दार्थवाक्प्रपञ्चोऽयमुपदेशेषु कल्पितः ।
सदाऽज्ञेषु न तज्ज्ञेषु विद्यते पारमार्थिकः ॥ ९
कलनामलमोहादि किंचिन्नात्मनि विद्यते ।
नीरागं ब्रह्म परमं तदेवेदं जगत्स्थितम् ॥ १०
एतद्विचित्ररूपाभिर्युक्तिभिर्बहुशः पुनः ।
विस्तरेणैव वक्तव्यं सिद्धान्तावसरेऽनघ ॥ ११
वाक्प्रपञ्चं विना त्वेतदज्ञानमतुलं तमः ।
भेत्तुमन्योन्यमुदितं यत्नं कर्तुं न शक्यते ॥ १२
अविद्ययैवोत्तमया स्वात्मनाशोद्यमेच्छया ।
विद्या सा प्रार्थ्यते राम सर्वदोषापहारिणी ॥ १३
शाम्यति ह्यस्त्रमस्त्रेण मलेन क्षाल्यते मलः ।
शमं विषं विषेणैति रिपुणा हन्यते रिपुः ॥ १४
ईदृशी राम मायेयं यां स्वनाशेन हर्षदा ।
न लक्ष्यते स्वभावोऽस्याः प्रेक्ष्यमाणैव नश्यति ॥ १५
विवेकमाच्छादयति जगन्ति जनयत्यलम् ।
नच विज्ञायते कैषा पश्याश्चर्यमिदं जगत् ॥ १६
अप्रेक्ष्यमाणा स्फुरति प्रेक्षिता तु विनश्यति ।
मायेयमपरिज्ञायमानरूपैव वल्गति ॥ १७
अहो नु खलु चित्रेयं माया संसारबन्धनी ।
असत्यैवातिसत्येव सज्ञानं विहितं तया ॥ १८
अत्यभिन्नपदे तस्मिंस्तन्वाना भेदमाततम् ।
संसारमाया येनासौ तेनासौ पुरुषोत्तमः ॥ १९
नास्त्येषा परमार्थेन त्वेवं भावनयेद्धया ।
ज्ञो भूत्वा ज्ञेयसंप्राप्तो ज्ञास्यस्यस्यास्त्वमाशयम् ॥ २०
यावत्तु न प्रबुद्धस्त्वं तावन्मद्वचसैव ते ।
निश्चयो भवतूद्दामो नास्त्यविद्येति निश्चलः ॥ २१
यदिदं दृश्यतां यातं मानसं मननं महत् ।
असन्मात्रमिदं यस्मान्मनोमात्रविजृम्भितम् ॥ २२
सत्तद्ब्रह्मेति यस्यान्तर्निश्चयः सोऽपि मोक्षभाक् ।
चलाचलाकृतिर्या या दृष्टिरावद्धभावना ॥ २३
सा समग्रजगद्भूतखगबन्धनवागुरा ।
यः स्वप्नभूमिवद्भ्रान्तमसत्सद्येकनिश्चयः ॥ २४
जगत्पश्यत्यसक्तात्मा न स दुःखे निमज्जति ।
यस्यैतास्वस्वरूपासु भावना स्वात्मभावना ॥ २५
अस्वरूपस्य तस्यापि सा ह्यविद्यैव विद्यते ।
विकारितादयो दोषा न केचन महात्मनि ॥ २६
परमात्मनि विद्यन्ते पयसीवेह पांसवः ।
भावनाशब्दशब्दार्थैरस्त्रनेयं जगद्गता ॥ २७
व्यवहारार्थमुत्पन्ना व्यतिरिक्ता च नात्मनः ।
अनेन व्यवहारेण विनैताः शास्त्रदृष्टयः ॥ २८

---

॥७॥ तत्कुतस्तत्राह—**भेदे**ति द्वाभ्याम् ॥ ८ ॥ ९ ॥ प्रागुक्ता कलना चितश्चेत्योन्मुखता । तन्निमित्ते मले पूर्वसंस्कारकर्मणी । मोहोऽविद्या ॥ १० ॥ सिद्धान्तावसरे असंभावनोच्छेदानन्तरं निर्वाणप्रकरणे ॥ ११ ॥ तर्हीदानींतनो वाक्प्रपञ्चस्ते किमर्थस्तत्राह—**वाक्प्रपञ्च**मिति । अज्ञानं साधनाज्ञानं अतुलं तमोमूलाज्ञानं चान्योन्यं परस्परसहायेन भ्रान्तिसहस्रशाखाप्ररोहैरुदितं प्ररूढं भेत्तुं तत्साधनेषु यत्नं कर्तुं च न शक्यत इत्यर्थः ॥१२॥ तर्हि उपदेशवाक्प्रपञ्चस्य तज्जन्यविद्यायाश्चाविद्याकार्यत्वाविशेषात्कथमविद्याविरोधिता स्वविरोधिविद्यां वा कथमविद्या प्रार्थयेदिति चेत्तत्राह—**अविद्ययैवे**ति । उत्तमया बहुजन्मसंचितसुकृतविशुद्धान्तःकरणाकारपरिणतया । तथाच स्वशरीरविरोधेऽपि स्वात्महितत्वाद्विवेकिन्याः पतिव्रतायाः पतिचितारोहणेनेव तत्प्रार्थनोपपत्तिरिति भावः ॥१३॥ विरोधितामुपपादयति—**शाम्यती**ति । मलेन क्षारेण ॥ १४ ॥ तस्याः स्वनाशकत्वे कर्मकर्तृताविरोधमाशङ्क्य क्रियायां स विरोधो न ज्ञानेनाज्ञानबाधे इत्याशयेनाह—**ईदृशी**ति ॥ १५ ॥ तस्या असंभावितानन्तकार्यदर्शनादपि न विरोधसंभावनेत्याशयेनाह—**विवेक**मित्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ येन हेतुना असौ अक्षराख्या माया तस्मिन् अत्यभिन्नपदे आत्मनि क्षरात्मकं आततं सर्वतो विस्तृतं तन्वाना आस्ते तेन हेतुना असौ क्षराक्षरलक्षणपुरुषातीत आत्मा पुरुषोत्तम इत्यर्थः ॥ १९ ॥ एषा माया परमार्थे न वस्तुत्वा[illegible] नास्ति एवं भावनया इद्धया आचार्यश्रुतितर्कस्वानुभवाभ्यासप्रदीपितया त्वं ज्ञस्तत्त्वविद्भूत्वा ज्ञेयं स्वात्मवास्तवरूपं विस्मृतकण्ठचामीकरवत् संप्राप्तः सन्नस्या मदुक्तेराशयं ज्ञास्यसि संभावयिष्यसि ॥ २० ॥ इदानीं तु मद्वचनविश्वासात्परोक्षकल्प एव मदुक्तोऽर्थो ग्राह्य इत्याह—**याव**दिति ॥२१॥ निश्चयस्य निश्चलतासंपादने उपायमाह—**यदिद**मिति ॥२२॥ मानसं मनोवृत्तिरूपं यदिदं दृश्यतां साक्षिप्रत्ययवेद्यतां यातं सर्वव्यवहारबीजत्वान्महत् मननं अतीतानागतानेकार्थप्रतिसंधानं इदं असन्मात्रं असदेवेत्यर्थः । तत्र हेतुमाह—**यस्मा**दिति । मनननिरासे मनो निरिन्धनाग्निवत्स्वयमेव शाम्यतीति ब्रह्मसन्मात्रपरिशेषे प्रागुक्तनिश्चयनैश्चल्यात्पुरुषार्थसिद्धिरित्याशयेनाह—**सत्त**दिति । उक्तमर्थं स्थिरीकर्तुं बाह्यार्थमननदृष्टीनां बन्धहेतुतामाह—**चलाचले**ति ॥२३॥ समस्ते जगति भूतखगानां जीवपक्षिणाम् । असति अनागतातीते सति वर्तमाने चेति द्विरूपेऽपि मननविषये सदेवेदमसदेवेदमिति वा एकरूपो दृढनिश्चयो यस्य तथाविधो योऽधिकारी जगत्स्वप्नभूमिवद्भ्रान्तिमात्रमिति पश्यति स न निमज्जतीत्यर्थः ॥ २४ ॥ कस्तर्हि निमज्जति तमाह—**यस्ये**ति । अस्वरूपासु मिथ्याभुतासु देहेन्द्रियादिद्वैतभावनासु आत्मभावना अहमिति बुद्धिः ॥ २५ ॥ मिथ्यात्मदर्शिनस्तस्य अविद्यामज्जनमेव दण्ड इत्याशयेनाह—**अस्वरूपस्ये**ति ॥२६॥ तर्हि तत्त्वविदां पूर्वापरार्थभावनाभावाद्व्यवहारासिद्धिरित्याशङ्क्याह—**भावने**ति । शब्देषु नामसु शब्दार्थेषु रूपेषु च

संस्थितिं नाधिगच्छन्ति पटा इव वितन्तवः।
उह्यमानो ह्यविद्यायामात्मा नेहोपलक्ष्यते ॥ २९
आत्मज्ञानादृते तच्च शास्त्रार्थात्समवाप्यते।
अविद्यासरितः पारमात्मलाभादृते किल ॥ ३०
राम नासाद्यते तद्धि पदमक्षयमुच्यते।
यतःकुतश्चिज्जातेयमविद्या मलदायिनी ॥ ३१
नूनं स्थितिमुपायाता समासाद्य पदं स्थिता।
कुतो जातेयमिति ते राम मास्तु विचारणा ॥ ३२
इमां कथमहं हन्मीत्येषा तेऽस्तु विचारणा।
अस्तं गतायां क्षीणायामस्यां ज्ञास्यसि राघव ॥ ३३
यत एषा यथा चैषा यथा नष्टेत्यखण्डितम्।
वस्तुतः किल नास्त्येषा विभात्येषा न वेक्षिता ॥ ३४
असतो भ्रान्ततां सत्यरूपां जानातु कः कुतः।
जातेयं प्रौढिमापन्ना दोषायैवातताकृतिः ॥ ३५
बलात्प्रणाशय त्वेनां परिज्ञास्यसि वै ततः।
अपि शूरा अतिप्राज्ञास्ते न सन्ति जगत्त्रये ॥ ३६
अविद्यया ये पुरुषा न नाम विवशीकृताः।
तदस्या रोगशीलाया यत्नं कुरु विनाशने ॥ ३७
यथैषा जन्मदुःखेषु न भूयस्त्वां नियोक्ष्यति।
सर्वापदामेकसखीमज्ञानतरुमञ्जरीम्।
अनर्थसार्थजननीमविद्यामलमुद्धर ॥ ३८
भयविषाददुराधिविपत्प्रदां
हृदयमोहमहापटलाङ्कुराम्।
भृशमपास्य कुदृष्टिमिमां बला-
द्भव भवार्णवपारमुपागतः ॥ ३९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे अविद्याकथनं नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

---

## द्विचत्वारिंशः सर्गः ४२

श्रीवसिष्ठ उवाच।
कुपितस्यासतोऽप्यस्य प्रेक्षामात्रविनाशिनः।
अविद्यावितत्व्याधेरौषधं शृणु राघव ॥ १
यां तां कथयितुं जातिं राम राजससात्त्विकीम्।
मनोवीर्यविचारार्थं प्रस्तुतोऽस्मीह तां शृणु ॥ २
यत्तदप्यमृतं ब्रह्म सर्वव्यापि निरामयम्।
चिदाभासमनन्ताख्यमनादि विगतभ्रमम् ॥ ३
चित्स्पन्दवपुषस्तस्य स्पन्दस्तस्माच्चिदेव हि[1]।
प्रदेशाद्घनतामेति सौम्योऽब्धिश्चलनादिव ॥ ४
अन्तरब्धेर्जलं यद्वत्स्पन्दास्पन्दवदीहते।
सर्वशक्तिस्तथैकत्र गच्छति स्पन्दशक्तिताम् ॥ ५
आत्मन्येवात्मना व्योम्नि यथा सरति मारुतः।
तथेहात्मात्मशक्त्यैव स्वात्मन्येवैति लोलताम् ॥ ६
स्वशिखास्पन्दशक्त्यैव दीपः सौम्यो यथोन्नतम्।
एति तद्वदसावात्मा तत्त्वे वपुषि वल्गति ॥ ७
जलान्तरेऽम्बुधिर्यद्वल्लसद्वारीव चञ्चलः।

---

स्फटिकवद्रञ्जना तात्कालिकानुषङ्गः ॥ २७ ॥ २८ ॥ यद्यविद्यादि नास्त्येव तर्हि किमर्थं शास्त्रमिति चेत्तत्राह—**उह्यमान** इति। अविद्यानद्यां उह्यमानः प्रवाह्यमाण आत्मा आत्मज्ञानादृते नैवोपलक्ष्यते अनुभूयते ॥ २९ ॥ तच्च आत्मज्ञानं तु ॥ ३० ॥ नन्वियमविद्या परमात्मनि कुतो जाता तत्राह—**यतःकुतश्चिद्**िति ॥ ३१ ॥ ३२ ॥ तर्हीयमनादिरुत सादिः। आद्ये आत्मवन्नित्या स्यात्, द्वितीये तु हेतुर्वाच्यः। एवं किं सत्या उतासत्या। आद्येऽज्ञानादनिवृत्तिः, द्वितीये संवादिव्यवहारहेतुत्वानुपपत्तिरित्याद्याशङ्कासहस्रस्यापि तन्नाशादेव निवृत्तिरित्याशयेनाह—**अस्तं गताया**मिति ॥ ३३ ॥ ३४ ॥ असतः सत्यवद्विमर्शः स्वाप्नपुरुषगोत्रचिन्तावद्वृथैवेत्याशयेनाह—**असत** इति ॥ ३५ ॥ तर्हि स्वाप्नपुरुषवधोद्योगवत्तन्निवृत्तौ यत्नातिशयो वृथेत्याशङ्क्य तद्विलक्षणमनर्थप्राबल्यमाह—**अपी**ति ॥ ३६ ॥ ॥ ३७ ॥ ३८ ॥ उपसंहरति—**भये**ति। हृदयपदेन तत्स्था आत्मदृष्टिरुपलक्ष्यते। तस्या मोहलक्षणान्ध्यहेतूनां महतां पटलत्वकस्थानीयानां स्थूलदेहादीनामङ्कुरवत्कारणभूतां कुदृष्टिमविद्याम् ॥ ३९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे अविद्याकथनं नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

अनन्तशक्तेश्चिद्भूम्नो वासनाघनताक्रमात्।
वर्ण्यते विस्तरेणात्र जीवावतरणक्रमः ॥ १ ॥

एवमविद्याव्याधिमुपवर्ण्य तच्चिकित्सोपायं बहुभिः सर्गैर्वक्तुं प्रतिजानीते—**कुपितस्ये**ति ॥ १ ॥ तदर्थं जीवावतरणक्रमं वर्णयितुं चत्वारिंशे सर्गे 'तासां सम्यक्प्रवक्ष्यामि तावद्राजससात्त्विकीः' इति यत्प्रतिज्ञातं तच्छेषवर्णनमिति स्मारयति—**यां ता**मिति ॥ २ ॥ यत्तदपीति श्लोकस्तत्रैव व्याख्यातः ॥ ३ ॥ स्पन्दत इति स्पन्दश्चिदाभासः। प्रदेशादौपाधिकैकदेशात्। यथा सौम्य एवाब्धिश्चलनात्तरङ्गादिघनतामेति तद्वत् ॥ ४ ॥ शक्तिवैचित्र्याणां सत्त्वादिगुणोपचयापचयमिश्रणतारतम्यकृतत्वादुपचयादेश्च राजसक्रियाशक्तिमूलकत्वात्प्रथमं क्रियाशक्त्युद्भवं दर्शयति—**अन्तरब्धे**रिति ॥ ५ ॥ स्वतः कूटस्थेऽप्याध्यासिकचलनाविरोधमाह—**आत्मन्येवे**ति ॥ ६ ॥ स्पन्दशक्तेरस्पन्दप्रकाशशक्त्याप्यविरोधे दृष्टान्तमाह—**दीप** इति। सौम्यो वाय्वाद्यविक्षिप्तः उन्नतमूर्ध्वदेशमेति। वल्गति चलति प्रकाशते दीति यावत् ॥ ७ ॥ शरदातपादिसंपर्काल्लसति स्फुरति वारिप्रदेशे

---

[1] अत्र निस्पन्दवपुष इति पाठो युक्तः।

सर्वशक्तिर्वपुष्येव तथा स्पन्दविलासवान् ॥ ८
यथोल्लसति भाश्चक्रैः कचन्कनकसागरः ।
तथात्मनि परिस्पन्दैः स्फुरत्यक्षैश्चिदर्णवः ॥ ९
लक्ष्यते मौक्तिकस्पन्दो यथा व्योम्नि दृशोऽदृशि ।
तथा भाति लसद्रूपा चिच्छक्तिश्चिन्महाम्बरे ॥ १०
किंचित्क्षुभितरूपा सा चिच्छक्तिश्चिन्महार्णवे ।
तन्मयी चित्स्फुरत्यच्छा तत्रैवोर्मिरिवार्णवे ॥ ११
आत्मनोऽव्यतिरिक्तैव व्यतिरिक्तेव तिष्ठति ।
आलोकश्रीरिवालोककोटरे यत्ततां गता ॥ १२
क्षणं स्फुरति सा देवी सर्वशक्तितया तया ।
चेतति स्वां स्वयं शक्तिं कलेन्दोः शीततामिव ॥ १३
उदितैषा प्रकाशाख्या चिच्छक्तिः परमात्मनः ।
देशकालक्रियाशक्तीर्वयस्याः संप्रकर्षति ॥ १४
स्वस्वभावं विदित्वैवमनाद्यन्तपदे स्थिता ।
रूपं परिमितेवासौ भावयत्यविभाविता ॥ १५
यदैवंभावितं रूपं तया परमसत्तया ।
तदैवैनामनुगता नामसंख्यादिका दृशः ॥ १६
चिदेवैतदवस्त्वेव व्यतिरिक्ता तथात्मनः ।
अनन्ता तद्गतैवाशु लहरीव महार्णवात् ॥ १७
यथा कटककेयूरैर्भेदो हेम्नो विलक्षणः ।
तथात्मनश्चितो रूपं भावयन्त्याः स्वमांशिकम् ॥ १८
यथा दीपेन दीपानां जातानामात्मनां तथा ।
देशकालकलामात्रभेदः स्वाभाविकश्चितेः ॥ १९
देशकालपरिस्पन्दशक्तिसन्दीपिताथ चित् ।
संकल्पमनुधावन्ती प्रयाति कलनापदम् ॥ २०
विकल्पकलिताकारं देशकालक्रियास्पदम् ।
चितो रूपं महाबाहो क्षेत्रज्ञ इति कथ्यते ॥ २१
क्षेत्रं शरीरमित्याहुस्तदसौ वेत्त्यखण्डितम् ।
सबाह्याभ्यन्तरं तेन क्षेत्रज्ञ इति कथ्यते ॥ २२
वासनां कलयन्सोऽपि यात्यहंकारतां पुनः ।
अहंकारोऽपि निर्णेता कलङ्की बुद्धिरुच्यते ॥ २३
बुद्धिः संकल्पकलिता प्रयाति मनसः पदम् ।
मनो घनविकल्पं तु गच्छतीन्द्रियतां शनैः ॥ २४
पाणिपादमयं देहमिन्द्रियाणि विदुर्बुधाः ।
देहोऽसौ ज्ञायते लोके सूयतेऽपि च जीवति ॥ २५
एवं जीवो हि संकल्पवासनारज्जुवेष्टितः ।
दुःखजालपरीतात्मा क्रमादायाति चित्तताम् ॥ २६
क्रमेण पाकवशतः फलमेति यथान्यताम् ।
अवस्थयैव नाकृत्या जीवो मलवशात्तथा ॥ २७
जीवोऽहंकारतां प्राप्तस्त्वहंकारश्च बुद्धिताम् ।
संकल्पजालकलितां मनस्तां बुद्धिरागता ॥ २८
मनो हि संकल्पमयं संस्थाग्रहणतत्परम् ।
प्रतियोगिव्यवच्छिन्नप्राप्तिसत्यैरपीहितैः ॥ २९
इच्छाद्याः शक्तयश्चेतो गावो वृषमिवोन्मदम् ।

चञ्चल इव न सर्वतस्तद्वदिति कल्पितैकदेशे चलनारोपे दृष्टान्तः ॥ ८ ॥ परमार्थतोऽन्यथैव सतः कल्पितरूपान्तरेण स्फुरणेऽप्ययमेव दृष्टान्त इत्याशयेनाह—**यथे**ति । भासां शरदातपानां चक्रैः समूहैः कचन् दीप्यन् द्रवीभूतकनकमिव सागरः स्फुरति । अक्षैरैन्द्रियकप्रकाशैः ॥ ९ ॥ अतीन्द्रिये ऐन्द्रियकरूपस्फुरणेऽपि तमाह—**लक्ष्यत** इति । अदृशि अतीन्द्रिये ॥ १० ॥ ११ ॥ ऐन्द्रियकचिच्छक्तिः परमार्थचिदेव जन्यतारोप एव केवलमौपाधिक इत्याशयेनाह—**आत्मन** इति । अव्यतिरिक्तैवेति च्छेदः । आलोककोटरे सूचीपाशादिकल्पितालोकच्छिद्रे । यत्ततां उपाधिपारवश्यम् ॥ १२ ॥ अतएव तस्याः कालिकपरिच्छेदः शक्तिशक्तिमत्तादिभेदविभावनं चोपपन्नमित्याशयेनाह—**क्षण**मिति ॥ १३ ॥ शक्त्यन्तराणां चिच्छक्त्युदयाधीनैव प्रवृत्तिर्न स्वातन्त्र्येणेत्याह—**उदिते**ति । वयस्याः सखीः ॥ १४ ॥ एवं स्वस्वभावं विदित्वा अनाद्यन्तपदे स्थिता भवति । अविभाविता सती एवमुक्तलक्षणं कल्पितरूपं भ्रान्त्या स्वस्वभावं गृहीत्वा परिमिता परिच्छिन्नास्मीति स्वात्मानं भावयति । दृढं वासयतीत्यर्थः ॥ १५ ॥ **नामे**ति । तथाच श्रुतिः ‘प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः’ इति । संख्या रूपभेदाः । आदिपदादिष्टानिष्टादिसर्वजगत्कल्पना गृह्यन्ते ॥ १६ ॥ एवंच चिति कल्पितस्य सर्वस्य चिन्मात्रतैव परमार्थरूपमिति फलितमित्याह—**चिदेवे**त्यादिना । आत्मनः सद्रूपाद्व्यतिरिक्ता कल्पना यतो  स्वचित्तभावापन्नं रागद्वेषादिदोषैरास्कन्द्यत

शेषः ॥ १७ ॥ आंशिकं अंशकल्पनाधीनं सर्वजगद्रूपमित्यर्थः ॥ १८ ॥ वर्तिकाद्युपाधिदेशेन देशः तत्कालेन कालस्तत्कलाभिस्तदवयवैः कलाश्चेति तन्मात्रयुक्तो भेदो न दीपाग्निस्वरूपे, तथा चितेरपि उपाधिस्वभावादागतः स्वाभाविकः ॥ १९ ॥ दृष्टान्तोक्तं चित्युपपादयति—**देशे**ति ॥ २० ॥ अतएव क्षेत्रोपाधिकल्पनाधीनं चितः क्षेत्रज्ञत्वं प्रसिद्धमित्याह—**विकल्पे**ति ॥ २१ ॥ २२ ॥ क्षेत्रकल्पनाक्रमं दर्शयति—**वासना**मित्यादिना । निर्णेता अध्यवसाता । अतएव कल्पनान्तरकलङ्की ॥ २३ ॥ २४ ॥ देहं देहतां गच्छन्तीति विपरिणम्यानुषज्जते ॥ २५ ॥ चित्ततां बाह्यार्थचेतनसमर्थताम् ॥ २६ ॥ फलं बदरादि । अन्यतां वैलक्षण्यम् । अवस्थया रूपरसपरिणामादिगुणपरावृत्त्यैव न त्वाकृत्या बदरत्वादिजात्या, तथा जीवः क्षेत्रज्ञोऽप्यविद्यामलपरिणामवशाद्वैलक्षण्यं याति नापरिणामिचित्स्वभावेनेत्यर्थः ॥ २७ ॥ एवं क्षेत्रसिद्धिमुपवर्ण्य जीवस्याहंकारादिक्षेत्रे तादात्म्यसंसर्गाध्यासलक्षणं बन्धं क्रमेणाह—**जीव** इत्यादिना ॥ २८ ॥ संस्थानं संस्था स्त्रीपुत्रादिशरीराकारस्तस्य ग्रहणे तदाकारवृत्तिद्वारा संस्कारात्मना धारणे तत्परम् । सत्यैः सफलैः अपिशब्दाद्विफलैरपि ईहितैर्मनोरथैः प्रतियोगिभ्यो वस्त्वन्तरेभ्यो व्यवच्छिन्ना व्यावृत्ता प्राप्तिरर्थग्रहो यस्य । परिच्छिन्नतुच्छविषयासक्तं भवतीत्यर्थः ॥ २९ ॥ तदासक्तौ तान्वि-

अनुधावन्ति दोषाय सरितः सागरं यथा ॥ ३०
इति शक्तिमयं चेतो घनाहंकारतां गतम् ।
कोशकारक्रिमिरिव स्वेच्छया याति बन्धनम् ॥ ३१
स्वसंकल्पानुसंधानात्पाशैरिव नयन्वपुः ।
कष्टमस्मिन्स्वयं बन्धमेत्यात्मा परितप्यते ॥ ३२
बद्धमसीति कलयद्विद्यातत्त्वं जहच्छनैः ।
अविद्यां जनयत्यन्तर्जगज्जङ्गलराक्षसीम् ॥ ३३
स्वसंकल्पिततन्मात्रज्वालाभ्यन्तरवर्ति च ।
परां विवशतामेति शृङ्खलाबद्धसिंहवत् ॥ ३४
विचित्रकार्यकर्तृत्वमाहरद्वासनावशात् ।
स्वेच्छामात्रानुरचिता दशाश्चानुपतत्तथा ॥ ३५
क्वचिन्मनः क्वचिद्बुद्धिः क्वचिज्ज्ञानं क्वचित्क्रियाः ।
क्वचिदेतदहंकारः क्वचित्पुर्यष्टकं स्मृतम् ॥ ३६
क्वचित्प्रकृतिरित्युक्तं क्वचिन्मायेति कल्पितम् ।
क्वचिन्मलमिति प्रोक्तं क्वचित्कर्मेति संस्थितम् ॥ ३७
क्वचिद्बन्धमिति ख्यातं क्वचिच्चित्तमिति स्फुटम् ।
प्रोक्तं क्वचिदविद्येति क्वचिदिच्छेति संस्थितम् ॥ ३८
तदेतदाबद्धमिह चित्तं राघव दुःखितम् ।
तृष्णाशोकसमाविष्टं रागायतनमाततम् ॥ ३९
जरामरणमोहान्तर्भवभावनयाहतम् ।
ईहितानीहितैर्ग्रस्तमविद्यारागरञ्जितम् ॥ ४०
इच्छासंक्षुभिताकारं कर्मवृक्षवनाङ्कुरम् ।
सुविस्मृतोत्पत्तिपदं कल्पितानर्थकल्पितम् ॥ ४१
कोशकारवदाबद्धं शोकाकारपदं गतम् ।
तन्मात्रवृन्दावयवमनन्तनरकातपम् ॥ ४२
स्वदृश्यमपि शैलेन्द्रसमभारभयावहम् ।
जरामरणशाखाढ्यं संसारविषदुर्द्रुमम् ॥ ४३
इमं संसारमखिलमाशापाशविधायकम् ।
दधदन्तः फलैर्हीनं वटधाना वटं यथा ॥ ४४
चिन्तानलशिखादग्धं कोपाजगरचर्वितम् ।
कामाब्धिकल्लोलहतं विस्मृतात्मपितामहम् ॥ ४५
मृगं यूथादिव भ्रष्टं शोकोपहतचेतनम् ।
पतङ्गकमिव ज्वालादग्धं विषयपावके ॥ ४६
छिन्नमूलमिवाम्भोजं परमां म्लानिमागतम् ।
छिन्नाङ्गमात्मनः स्थानाद्विशेषासङ्गदुःस्थितम् ॥ ४७
विषयादिषु मध्यस्थं चित्ररूपेषु शत्रुषु ।
दशास्वेतास्वनन्तासु लुठितं संकटास्विति ॥ ४८
दुःखे निपतितं घोरे विहङ्गः सागरे यथा ।
स्वबन्धास्थं जगज्जाले शून्ये गन्धर्वपत्तने ॥ ४९
उह्यमानमनास्थाब्धौ मनो विषयविद्रुतम् ।
उद्धरामरसंकाश मातङ्गमिव कर्दमात् ॥ ५०
बलीवर्दवदामग्नं मनो मदनपल्वले ।
आलूनशीर्णावयवं बलाद्राम समुद्धर ॥ ५१

शुभाशुभप्रसरपराहताकृतौ
ज्वलज्जरामरणविषादमूर्च्छिते ।
व्यथेह यस्य मनसि भो न जायते
नराकृतिर्जगति स राम राक्षसः ॥ ५२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे जीवावतरणं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

इत्याह—**इच्छाद्या** इति । अनुधावन्त्यनुसरन्ति ॥ ३० ॥ इति उक्तक्रमेण रागद्वेषादिशक्तिप्रचुरं चेतः शाखाप्ररोहशतकोटिभिरभिमानवृद्ध्या घनाहंकारतां गतं सत् ॥ ३१ ॥ पाशैर्बडिशजालादिपाशैः स्ववपुर्मृत्यवे नयन्मत्स्यादिरिव । एत्य प्राप्य । आत्मा मनः प्रकृतत्वात् ॥ ३२ ॥ अस्मीति कलयत् परमार्थसत्यमिति पश्यत् । विद्यातत्त्वं पारमार्थिकमात्मरूपं जहत् त्यजत् । स्वप्नेऽप्यविचारयदिति यावत् । अविद्यां जन्ममरणादिभ्रान्तिपरम्पराम् ॥ ३३ ॥ तन्मात्राणि शब्दादिविषयास्तदिन्धना रागादिज्वालास्तदभ्यन्तरवर्ति मनः । चकारः पूर्वोक्ताविद्यान्तसमुच्चयार्थः ॥ ३४ ॥ विचित्राणां विहितनिषिद्धनानारूपाणां कार्याणां कर्मणां कर्तृत्वमाहरद्यत्नैः संपादयत् । दशाः नानायोनिनरकादिदुर्दशाः वक्ष्यमाणमननादिदशाश्च अनुपतद्विवशतामेतीति प्राक्तनेनान्वयः ॥ ३५ ॥ तस्यैव मननादिवृत्तिभेदैर्मनआदिशब्दभाक्त्वं नान्यस्येत्याह—**क्वचिदि**त्यादिना ॥ ३६ ॥ ३७ ॥ ३८ ॥ तथाच बद्धत्वमपि तस्यैव नात्मन इति प्रपञ्चयति—**तदेतदि**त्यादिना ॥ ३९ ॥ ४० ॥ सुष्ठु विस्मृतं स्वोत्पत्तिनिमित्तं परमात्मपदं येन ॥ ४१ ॥ ४२ ॥ स्वस्यात्मनो दृश्यमपि [illegible] शैलेन्द्रसमेन भारेण गौरवेण भयावहम् । विषमयं दुर्द्रुमं दुष्टवृक्षम् ॥ ४३ ॥ फलैः पुरुषार्थैर्हीनम् ॥ ४४ ॥ विस्मृतः आत्मस्वरूपः पितामहो मूलकारणं येन ॥ ४५ ॥ ४६ ॥ आत्मनः स्वस्य स्थानान्निवासभूताद्देहभेदान्मृत्युनापनयने तत्तद्देहाभिमानविच्छेदाच्छिन्नाङ्गम् । अतएव तत्तद्देहविशेषासङ्गाद्दुःस्थितम् ॥ ४७ ॥ विषयेन्द्रियदेहादिलक्षणेषु चित्ररूपेषु नानावैचित्र्यैः स्ववधोद्यतेषु शत्रुषु तद्विश्वासेन तन्मध्यस्थम् । इति प्रपञ्चितप्रकारास्वित्यर्थः ॥ ४८ ॥ स्वस्य बन्धे बन्धनहेतौ तत्साधनदेहादौ च आस्था स्नेहातिशयो यस्य तत् ॥ ४९ ॥ तत्त्वज्ञानतत्साधनादावनास्थानादरस्तद्रूपेऽब्धावुह्यमानं प्लवमानं मनस्तदास्थोपोद्बलनेनोद्धर ॥ ५० ॥ चिरविषयभोगप्रयुक्तपुण्यक्षये परलोकगतिसाधनाभावादालूनशीर्णपादाद्यवयवप्रायम् । बलीवर्दपक्षे स्पष्टम् ॥ ५१ ॥ प्रागुक्तानास्था परनिन्दनेनोपसंहरति—**शुभाशुभे**ति । शुभानां काम्यसुकृतानामशुभानां निषिद्धकर्मणां च प्रसरैः पराहता मलिनीकृता आकृतिर्यस्य । ज्वलद्भिर्जरामरणविषादैर्मूर्च्छिते ईदृशे स्वमनसि सति यस्य व्यथा तदुद्धारफलचिन्ताप्रयुक्तपीडा

# त्रिचत्वारिंशः सर्गः ४३

श्रीवसिष्ठ उवाच ।

एवं जीवाश्रितो भावा भवभावनयोहिताः ।
ब्रह्मणः कल्पिताकाराल्लक्षशोऽप्यथ कोटिशः ॥ १
असंख्याताः पुरा जाता जायन्ते चापि वाद्य भोः ।
उत्पतिष्यन्ति चैवाम्बुकणौघा इव निर्झरात् ॥ २
स्ववासनादशावेशादाशाविवशतां गताः ।
दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥ ३
अनारतं प्रतिदिशं देशे देशे जले स्थले ।
जायन्ते वा म्रियन्ते वा बुद्बुदा इव वारिणि ॥ ४
केचित्प्रथमजन्मानः केचिज्जन्मशताधिकाः ।
केचिद्धाऽजन्मसंख्याकाः केचिद्द्वित्रिभवान्तराः ॥ ५
भविष्यज्जातयः केचित्केचिद्भूतभवोद्भवाः ।
वर्तमानभवाः केचित्केचित्त्वभवतां गताः ॥ ६
केचित्कल्पसहस्राणि जायमानाः पुनः पुनः ।
एकामेवास्थिता योनिं केचिद्योन्यन्तरं श्रिताः ॥ ७
केचिन्महादुःखसहाः केचिदल्पोदयाः स्थिताः ।
केचिदत्यन्तमुदिताः केचिदर्कादिवोदिताः ॥ ८
केचित्किंनरगन्धर्वविद्याधरमहोरगाः ।
केचिदर्केन्द्रवरुणाख्यक्षाधोक्षजपद्मजाः ॥ ९
केचित्कूश्माण्डवेतालयक्षरक्षःपिशाचकाः ।
केचिद्ब्राह्मणभूपाला वैश्यशूद्रगणाः स्थिताः ॥ १०
केचिच्छ्वपचचाण्डालकिरातावेशपुष्कसाः ।
केचित्तृणौषधी केचित्फलमूलपतङ्गकाः ॥ ११
केचिच्चित्रलतागुल्मतृणोपलदृशोऽभितः ।
केचित्कदम्बजम्बीरशालतालतमालकाः ॥ १२
केचिद्विभवसंसारमन्त्रिसामन्तभूमिपाः ।
केचिच्चीराम्बराच्छन्ना मुनिमौनमुपस्थिताः ॥ १३
केचिद्भुजङ्गगोनासकृमिकीटपिपीलिकाः ।
केचिन्मृगेन्द्रमहिषमृगाजचमरैणकाः ॥ १४
केचित्सारसचक्राह्वबलाकाबककोकिलाः ।
केचित्कमलकह्लारकुमुदोत्पलतां गताः ॥ १५
केचित्कलभमातङ्गवराहवृषगर्दभाः ।
केचिद्द्विरेफमशकाः पुत्तिकादंशवंशजाः ॥ १६
केचिदापद्बलाक्रान्ताः केचित्संपदमागताः ।
केचित्स्थिताः स्वर्गपुरे केचिन्नरकमास्थिताः ॥ १७
ऋक्षचक्रगताः केचिद्वृक्षरन्ध्रगताः परे ।
वातभूताः स्थिताः केचित्केचिद्व्योमपदे स्थिताः ॥ १८
सूर्यांशुषु स्थिताः केचित्केचिदिन्द्वंशुषु स्थिताः ।
केचित्तृणलतागुल्मरसस्वादुष्ववस्थिताः ॥ १९
जीवन्मुक्ता भ्रमन्तीह केचित्कल्याणभाजनाः ।
चिरमुक्ताः स्थिताः केचिन्नूनं परिणताः परे ॥ २०
केचिच्चिरेण कालेन भविष्यन्मुक्तयः शिवाः ।
केचिद्द्विषन्ति चिद्भावाः केवलीभावमात्मनः ॥ २१
केचिद्विशालाः ककुभः केचिन्नद्यो महारयाः ।
केचित्स्त्रियः कान्तदृशः केचित्पण्डनपुंसकाः ॥ २२
केचित्प्रबुद्धमतयः केचिज्जडतराशयाः ।
केचिज्ज्ञानोपदेष्टारः केचिदात्तसमाधयः ॥ २३
जीवाः स्ववासनावेशविवशाशयतां गताः ।

---

न जायते स पुमान् नराकृतिप्रतिच्छन्नो राक्षस एवेत्यर्थः ॥ ५२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जीवावतरणं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

जीवानां कर्मगतयः प्रपञ्च्यन्तेऽत्र विस्तरात् ।
विवेकादेः सुदौर्लभ्यान्मुक्तिः केषांचिदिल्पपि ॥ १ ॥

एवं मनसः स्वबन्धकत्वप्रकारमुपवर्ण्य तदुपहितचिद्रूपजीवानामामोक्षं संसारस्थितिप्रकारवैचित्र्यं वर्णयिष्यंस्तत्संगतिप्रदर्शनाय प्रागुक्तजीवोत्पत्तिं प्रकारभेदैरनुवदति—एवमित्यादिना । चितः भावा औपाधिका विभावरूपा जीवा भवभावनया संसारवासनया ऊहिताः प्रवाहिताः । इद्र छान्दसः । पूर्ववासनानुसारेण कल्पिताकाराद्ब्रह्मणः सकाशाज्जाता इत्यादिपरेणान्वयः ॥ १ ॥ अद्य संप्रति जायन्ते । भो इति रामसंबोधनम् ॥ २ ॥ ३ ॥ अनारतं सततम् । वाशब्दौ पर्यायार्थौ ॥ ४ ॥ प्रथमजन्मानः अस्मिन्कल्पे एकमेव जन्म प्राप्ताः । न विद्यते जन्मसंख्या येषां ते अजन्मसंख्याकाः ॥ ५ ॥ भविष्यन्ती जातिर्जन्म येषां ते भविष्यज्जातयः । अस्मिन् कल्पे अद्याप्यनुत्पन्ना इत्यर्थः । भूता अतीता भवोद्भवा येषां ते ... इति यावत् । अभवतां विदेहमुक्तिम् ॥ ६ ॥ योनिं देहजातिम् ॥ ७ ॥ महादुःखसहा नारकाः । अल्पोदया अल्पसुखा मर्त्याः । अत्यन्तमुदिता देवाः । अर्कादिवोदिताः सत्यलोकगाः ॥ ८ ॥ त्र्यक्षादिग्रहणं त्र्यक्षादिसारूप्यप्राप्तजीवाभिप्रायम् ॥ ९ ॥ ॥ १० ॥ किरातावेशाः किरातयोनिप्रविष्टास्त एव । तृणौषधी इति जात्योर्द्विवचनम् । फलमूलग्रहणं तदन्तर्गतबीजावस्थजीवाभिप्रायेण ॥ ११ ॥ पुनस्तृणग्रहणं तदवान्तरजातिप्रपञ्चार्थम् । उपलं पश्यन्ति स्वदेहतयेत्युपलदृशः पर्वतादयः ॥ १२ ॥ विभवैः संसरन्ति भ्रमन्तीति विभवसंसाराः । अम्बरदौर्लभ्यात्तपोर्थं वा चीराम्बराच्छन्नाः ॥ १३ ॥ गोनासा अजगराः ॥ १४ ॥ ॥ १५ ॥ कलभः करिशावः । पुत्तिका पतङ्गिका ॥ १६ ॥ १७ ॥ ऋक्षचक्रं नक्षत्रचक्रं तद्गताः । वातभूता आवहप्रवहादिवाय्वधिकारं प्राप्ताः । व्योमपदे आकाशाधिकारे ॥ १८ ॥ सूर्यांशुषु रसादानाद्यधिकारे । इन्द्वंशुषु ओषध्याद्याप्यायनाधिकारे । तृणादीनां रसः स्वादुर्यत्र पश्वादियोग्ये विषयलांपट्ये इति यावत् ॥ १९ ॥ परे परमात्मनि परिणतास्तद्भावं प्राप्ता विदेहमुक्ताः ॥ २० ॥ चिद्भावा जीवा भोगलम्पटाः सन्तः केवलीभावं कैवल्यं द्विषन्ति ॥ २१ ॥ ककुभो दिग्देवताः ॥ २२ ॥ २३ ॥ एते सर्वेऽपि संसरण-

एतास्वेतास्ववस्थासु संस्थिता बद्धभावनाः ॥ २४
विहरन्ति जगत्केचिन्निपतन्त्युत्पतन्ति च।
कन्दुका इव हस्तेन मृत्युनाऽविरतं हताः ॥ २५
आशापाशशताबद्धा वासनाभावधारिणः।
कायात्कायमुपायान्ति वृक्षाद्वृक्षमिवाण्डजाः ॥ २६
अनन्तानन्तसंकल्पकल्पनोत्पादमायया।
इन्द्रजालं वितन्वाना जगन्मयमिदं महत् ॥ २७
तावद्भ्रमन्ति संसारे वारिण्यावर्तराशयः।
यावन्मूढा न पश्यन्ति स्वमात्मानमनिन्दितम् ॥ २८
दृष्ट्वात्मानमसत्त्यक्त्वा सत्यामासाद्य संविदम्।
कालेन पदमागत्य जायन्ते नेह ते पुनः ॥ २९
भुक्त्वा जन्मसहस्राणि भूयः संसारसंकटे।
पतन्ति केचिदबुधाः संप्राप्यापि विवेकिताम् ॥ ३०
केचिच्छक्रत्वमप्युच्चैः प्राप्य तुच्छतया धिया।
पुनस्तिर्यक्त्वमायान्ति तिर्यक्त्वान्नरकानपि ॥ ३१
केचिन्महाधियः सन्त उत्पद्य ब्रह्मणः पदात्।
तदैव जन्मनैकेन तत्रैवाशु विशन्त्यलम् ॥ ३२
ब्रह्माण्डेष्वितरेष्वन्ये तेष्वन्ये जीवराशयः।
प्रयान्ति पद्मोद्भवतामन्ये च हरतामपि ॥ ३३
अन्ये प्रयान्ति तिर्यक्त्वमन्ये च सुरतामपि।
अन्येऽपि नागतां राम यथैवेह तथैव हि ॥ ३४
यथेदं हि जगत्स्फारं तथान्यानि जगन्त्यपि।
विद्यन्ते समतीतानि भविष्यन्ति च भूरिशः ॥ ३५
अन्येनान्येन चित्रेण क्रमेणान्येन हेतुना।
विचित्राः सृष्टयस्तेषामापतन्ति पतन्ति च ॥ ३६
कश्चिद्गन्धर्वतां याति कश्चिद्गच्छति यक्षताम्।
कश्चित्प्रयाति सुरतां कश्चिदायाति दैत्यताम् ॥ ३७
येनैव व्यवहारेण ब्रह्माण्डेऽस्मिन्जनाः स्थिताः।
तेनैवान्येषु तिष्ठन्ति सन्निवेशविलक्षणाः ॥ ३८
स्वस्वभाववशावेशादन्योन्यपरिघट्टनैः।
सृष्टयः परिवर्तन्ते तरङ्गिण्या इवोर्मयः ॥ ३९
आविर्भावतिरोभावैरुन्मज्जननिमज्जनैः।
सृष्टयः परिवर्तन्ते तरङ्गिण्या इवोर्मयः ॥ ४०
निर्यान्त्यविरतं तस्मात्परस्माज्जीवराशयः।
अनिर्देश्याः स्वसंवेद्यास्तत्रैवाशु स्फुरन्ति च ॥ ४१
दीपादिवालोकदृशः सूर्यादिव मरीचयः।
कणास्तप्तायस इव स्फुलिङ्गा इव पावकात् ॥ ४२
कालादिवर्तवश्चित्रा आमोदाः कुसुमादिव।
शीतला इव वर्षाणुपूरादब्धेरिवोर्मयः ॥ ४३
उत्पत्त्योत्पत्त्य कालेन भुक्त्वा देहपरम्पराम्।
स्वत एव पदे यान्ति निलयं जीवराशयः ॥ ४४

अविरतमियमातता तथोच्चै-
र्भवति विनश्यति वर्धते मुधैव।
त्रिभुवनरचनादिमोहमाया
परमपदे लहरीव वारिराशौ ॥ ४५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे जीवनिचयस्थानोपदेशो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

नर्थवासनावशादेवेति सैव समूलमुच्छेद्येत्याशयेनोपसंहरति—**जीवा** इति। उक्तानुक्तसर्वसंग्रहार्थमेतास्वेतास्विति वीप्सा ॥२४॥ विहरन्ति भुवि। निपतन्ति नरके। उत्पतन्ति स्वर्गे। अतएव कन्दुका इव ॥ २५ ॥ वासनारूपान्भावान्भाविदेहादीन्धारयन्ति तच्छीलाः ॥ २६ ॥ अनन्तेषु विषयेषु अनन्तसंकल्पकल्पनोत्पादनहेतुभूतया मायया अविद्यया ॥ २७ ॥ आवर्तराशय इवेति शेषः ॥ २८ ॥ विवेकिनां तर्ह्यात्मदर्शनात्को लाभस्तमाह—**दृष्ट्वे**ति। कालेन भूमिकादार्ढ्यक्रमेण ॥ २९ ॥ विवेकभ्रष्टानां या गतिस्तामाह—**भुक्त्वे**ति ॥ ३० ॥ शक्रत्वं प्रशस्तजन्मदेशकालप्रतिभाविनयसत्समागमादिसंपन्नताम्। उच्चैर्देवगन्धर्वब्राह्मणाद्युत्कृष्टसंपद्रूपम्। तुच्छतया तुच्छविषयलंपटतया धिया स्वबुद्ध्यैव। 'शक्रत्वम्' इति पाठे नहुषः उदाहार्यः ॥ ३१ ॥ महाधियः सनकादयः। तदैव तस्मिन्नेव कल्पे। तत्र मोक्षाख्ये ब्रह्मपदे ॥ ३२ ॥ इतरेषु स्वोत्पत्तिब्रह्माण्डान्तरेषु यथैन्दवाः। तेषु स्वोत्पत्तिस्थानब्रह्माण्डेषु। हरतां हरसारूप्यम् ॥ ३३ ॥ नागतां सर्पतां गजतां वा। यथैवेह ब्रह्माण्डे तथैव ब्रह्माण्डान्तरेऽपीति शेषः ॥ ३४ ॥ इदं जगत् ब्रह्माण्डम्। जगन्ति ब्रह्माण्डानि ॥ ३५ ॥ आपतन्त्याविर्भवन्ति पतन्ति तिरोभवन्ति च ॥ ३६ ॥ अत्रैव ब्रह्माण्डान्तरेष्वपि कर्मवैचित्र्याज्जीवगतिर्विचित्रैवेत्याशयेनाह—**कश्चिदि**ति ॥ ३७ ॥ येनैव मनुष्यादियोग्यव्यवहारेण। द्वीपान्तरीयजनवत्सन्निवेशेन संस्थानभेदेन परं विलक्षणाः ॥ ३८ ॥ अस्त्वेवं तथापि कथं तेषामुत्तमाधमादिभावेन परस्परस्नेहविरोधादिना च सृष्टिपरिवृत्तिस्तत्राह—**स्वस्वभावे**ति। सात्त्विकराजसतामसादिस्वस्वभाववशात्तत्तदनुकूलव्यवहाराभिनिवेशात्प्रवृत्तानामेकविषये स्पर्धया अन्योन्यपरिघट्टनैः सृष्टिपरिवृत्तिरित्यर्थः ॥ ३९ ॥ तत्रापि हेतुमाह—**आविर्भावे**ति। रजस आविर्भावे सृष्टेरुन्मज्जनं सत्त्वतमसोर्निमज्जनं तमस आविर्भावेन रजसस्तिरोभावे सृष्टेर्निमज्जनमन्तरा सत्त्वाविर्भावे तावत्कालं पालनमिति हेतुपरिवृत्त्या परिवर्तन्त इत्यर्थः ॥ ४० ॥ गुणाधीनान्तःकरणादिसृष्ट्या तदुपाधिकजीवनिर्गमप्रसिद्धिरित्याशयेनाह—**निर्यान्ती**ति। तत्र परस्मिन्नेव स्फुरन्ति स्फुटं व्यवहरन्ति च ॥४१॥ तत्र श्रुत्यादिप्रसिद्धदृष्टान्तमाह—**दीपादि**ति ॥ ४२ ॥ शीतलास्तुषारा इव ॥ ४३ ॥ प्रलये शान्ते पदे बीजभूते। निलयं निलीनताम् ॥ ४४ ॥ उक्तं जीवजगत्सर्गं संक्षिप्योपसंहरति—**अविरतमि**ति। इयं त्रिभुवनरचनाभ्रान्तिलक्षणा माया परमपदे

## चतुश्चत्वारिंशः सर्गः ४४

श्रीराम उवाच ।

क्रमेणानेन येनाप्ता जीवेन स्थितिरात्मनः ।
स कथं भगवन्देहं समाधत्तेऽस्थिपञ्जरम् ॥ १

श्रीवसिष्ठ उवाच ।

पूर्वमेव मया प्रोक्तं राम किं नावबुध्यसे ।
पूर्वापरविचारार्हा शेमुषी क्व गता तव ॥ २
यदिदं हि शरीरादि जगत्स्थावरजङ्गमम् ।
आभासमात्रमेवैतदसत्स्वप्नमिवोत्थितम् ॥ ३
दीर्घस्वप्नो ह्ययं राम मिथ्यैवानघ दृश्यते ।
द्विचन्द्रविभ्रमाकारं भ्रमान्तर्भ्रान्तशैलवत् ॥ ४
प्रशान्ताज्ञाननिद्रस्तु नूनं गलितभावनः ।
प्रबुद्धचेताः संसारस्वप्नं पश्यन्न पश्यति ॥ ५
स्वभावकल्पितो राम जीवानां सर्वदैव हि ।
आमोक्षपदसंप्राप्ति संसारोऽस्त्यात्मनोऽन्तरे ॥ ६
जीवस्य तरलः काय आवर्तः पयसो यथा ।
यथा बीजेऽङ्कुरः स्फारः पल्लवः स्वाङ्कुरे यथा ॥ ७
पल्लवे च यथा पुष्पं पुष्पकोशे फलं यथा ।
यतः स कल्पनारूपो देहोऽस्ति मनसोऽन्तरे ॥ ८
बहुरूपतया राम यतोऽस्त्येकतमः स्फुटः ।
स एव प्रतिभासोऽस्य मनसः किल जायते ॥ ९
स एवाशु भवत्येतन्मृतिपिण्डो घटकोपमः ।
आदिसर्गे पुरा कायः प्रतिभासोऽस्य चोत्तमः ॥ १०
यस्मादेष विभुर्ब्रह्मा पद्मकोशगृहस्थितः ।
तत्संकल्पक्रमेणैव ततः स्थितिमुपागता ॥ ११
इयं सृष्टिरपर्यन्ता मायेव घनमायया ।

श्रीराम उवाच ।

जीवो मनःपदं प्राप्य वैरिञ्चं पदमागतः ॥ १२
यथा ब्रह्मंस्तथा सर्वं विस्तरेण वदाशु मे ।

श्रीवसिष्ठ उवाच ।

ब्राह्मे शृणु महाबाहो शरीरग्रहणे क्रमम् ॥ १३
निदर्शनेन तेनैव जागतीं ज्ञास्यसि स्थितिम् ।
दिक्कालाद्यनवच्छिन्नमात्मतत्त्वं स्वशक्तितः ॥ १४
लीलयैव यदादत्ते दिक्कालकलितं वपुः ।
तदैव जीवपर्यायं वासनावेशतत्परम् ॥ १५
मनः संपद्यते लोलं कलनाकलनोन्मुखम् ।
कलयन्ती मनःशक्तिरादौ भावयति क्षणात् ॥ १६
आकाशभावनामच्छां शब्दबीजरसोन्मुखीम् ।
ततस्तां घनतां यातं घनस्पन्दक्रमान्मनः ॥ १७
भावयत्यनिलस्पन्दं स्पर्शबीजरसोन्मुखम् ।
ताभ्यामाकाशवाताभ्यामदृष्टाभ्यां मनोदृशा ॥ १८

---

अविरतं संततं मुधैव आतता सर्गेण विस्तृता वर्धते तथा उच्चैर्भवति विपरिणमते विनश्यति च । वारिराशौ लहरीवेति मुधात्वे दृष्टान्तः ॥४५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जीवनिचयस्थानोपदेशो नाम त्रिचत्वारिंशः सर्गः ॥४३॥

मुक्तिप्रलयसाम्येऽपि विशेषोऽत्र प्रकीर्त्यते ।
तथा विरिञ्चिजीवस्य शरीरग्रहणक्रमः ॥ १ ॥

प्रलये स्वत एव प्रदेशान्ते जीवराशयो विलयं यान्तीति यदुक्तं तत्र रामः शङ्कते—**क्रमेणे**ति । अनेन 'उत्पत्त्योत्पत्त्य कालेन भुक्ता देहपरम्परा'मिति त्वदुक्तेन क्रमेण येन जीवेन प्रलये स्वत एव परमपदे आत्मनः स्थितिराप्ता स मुक्त एवेति पुनः कथं देहमादत्ते । परमपदं प्राप्तस्य पुनरावृत्तौ मुक्तावप्यनाश्वासप्रसङ्गात् । न चाज्ञानावृतस्य बीजभावकृतो विशेषः । अबीजस्य शिलाशकलादेरज्ञानमात्रावरणेनाङ्कुरादिबीजत्वादर्शनादित्यर्थः ॥१॥ स्वसमसत्ताकं बीजत्वादर्शनेऽपि आवरणसमसत्ताकसर्पादिकं प्रति आवृतरज्ज्वादेर्बीजत्वदर्शनान्मिथ्याबीजत्वमावरणमात्रकृतं विशेषेणानुक्तमपि स्वबुद्ध्यैव त्वयोहितुं शक्यमिति न प्रश्नार्हमेतदित्याशयेन परिहारमाह—**पूर्वमेवे**ति ॥ २ ॥ आभासो विवर्तस्तावन्मात्रम् ॥ ३ ॥ चिरस्थायिनां ब्रह्माण्डभुवनादीनां कथमाभासमात्रता तत्राह—**दीर्घे**ति ॥ ४ ॥ अज्ञानात्मनो बीजभावात्पुनः संसारस्वप्नदर्शनेऽपि ज्ञस्य न तत्प्रसक्तिरित्याशयेनाह—**प्रशान्ते**ति । [illegible] पश्यन्नपि परमार्थदृशा न पश्यति ॥५॥ बीजभूते अज्ञानात्मनि भाविसंसारस्यामोक्षं सूक्ष्मरूपेण सत्त्वादपि पुनर्जन्मोपपत्तिरित्याशयेनाह—**स्वभावे**ति ॥ ६ ॥ जीवस्यान्तरे तरलः कायोऽस्ति यथा पयसोऽन्तरे आवर्त इत्यादिदृष्टान्ताः ॥७॥ कुतो जीवान्तः कायोऽस्ति तत्राह—**यत** इति । अन्तरे मध्ये ॥ ८ ॥ तत्रापि देहः कथं संभाव्यते तत्राह—**बहुरूपतये**ति । मनसो बहुरूपतया प्रसिद्धेर्देहरूपस्यापि वासनात्मना तत्र संभवादित्यर्थः । तर्हि बहूनि शरीराणि युगपत्कुतो न जायन्ते तत्राह—**यत** इति । यतो बहुषु वासनात्मना स्थितेषु य एवैकतमः परिपक्वैः कर्मभिः स्फुटोऽभिव्यक्तः क्रियते स एव प्रतिभासोऽस्य प्रायेण काले जायते न सर्वे इत्यर्थः ॥ ९ ॥ एतन्मनः स एव देहो भवति । तत्रोत्तमकर्मपरिपाके उत्तम एव देहो भवतीत्येतदादिसर्गमारभ्य दर्शयति—**आदिसर्ग** इति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ कलनाकलनोन्मुखमिति यदुक्तं तद्विवृणोति—**कलयन्ती**त्यादिना । पूर्वसर्गे आकाशादिक्रमाविर्भूतहिरण्यगर्भाहंग्रहोपासनसंस्कृतं मनस्तथैवाव्याकृते लीनं मनः शक्तिरित्युच्यते सा तेनैव क्रमेण स्वाविर्भावं कल्पयन्ती सतीत्यर्थः ॥१६॥ शब्दानां बीजं शब्दतन्मात्रं रसः श्रोत्रेन्द्रियम् । तां तादृशाकाशभावनां प्राप्य घनतामुपचयं यातं मनः ॥ १७ ॥ अनिलात्मना स्पन्दमीषच्चलनम् । स्पर्शबीजेत्यादि प्राग्वत् । अपञ्चीकृतत्वेन सूक्ष्मतमत्वान्मनोदृशा मनोवच्छिन्न

शब्दस्पर्शस्वरूपाभ्यां संघाताज्जन्यतेऽनलः ।
मनस्तद्धनतां प्राप्य ततो भावयति क्षणात् ॥ १९
प्राकाश्यममलालोकमालोकस्तेन वर्धते ।
मनस्तावद्गुणगतं रसतन्मात्रवेदनम् ॥ २०
क्षणार्धेन त्वपां शैत्यं जलसंवित्ततो भवेत् ।
ततस्तादृग्गुणगतं मनो भावयति क्षणात् ॥ २१
स्वरूपं गन्धवत्स्थूलं येनोदेष्यति मेदिनी ।
अथेत्थंभूततन्मात्रवेष्टितं तनुतां जहत् ॥ २२
वपुर्वह्निकणाकारं स्फुरितं व्योम्नि पश्यति ।
अहंकारकलायुक्तं बुद्धिबीजसमन्वितम् ॥ २३
तत्पुर्यष्टकमित्युक्तं भूतहृत्पद्मषट्पदम् ।
तस्मिंस्तु तीव्रसंवेगाद्भावयद्भास्वरं वपुः ॥ २४
स्थूलतामेति पाकेन मनो बिल्वफलं यथा ।
मूषास्थद्रुतहेमाभं स्फुरितं विमलाम्बरे ॥ २५
सन्निवेशमुपादत्ते तत्तेजः स्वस्वभावतः ।
तस्मिन्स्वसन्निवेशे च तेजःपुञ्जमये पुनः ॥ २६
भजते भावनां स्फारां निश्चितामाततास्वराम् ।
ऊर्ध्वं शिरःपीठमयीमधःपादमयीं तथा ॥ २७
पार्श्वयोर्हस्तसंस्थानां मध्ये चोदरधर्मिणीम् ।
प्रकटावयवो बालो ज्वालामालामलाकृतिः ॥ २८
मनोरथवशोपात्तवपुस्तिष्ठत्यसावथ ।
एव स्ववासनाविशेषितकलिताङ्गो मनोमुनिः ॥ २९
नयत्युपचयं देहं स्वस्वभावमृतुर्यथा ।
कालेन स्फुटतामेति भवत्यमलविग्रहः ॥ ३०
बुद्धिसत्त्वबलोत्साहविज्ञानैश्वर्यसंस्थितः ।
स एव भगवान्ब्रह्मा सर्वलोकपितामहः ॥ ३१
द्रवत्कनकसंकाशः परमाकाशसंभवः ।
यथासौ परमाकाशे तिष्ठत्यपररूपवान् ॥ ३२
जनयत्यात्मनो मोहमात्मस्थं चित्तलीलया ।
कदाचित्केवलं व्योम परमं पारवर्जितम् ॥ ३३
अनादिमध्यपर्यन्तं कदाचिदमलं पयः ।
कदाचित्कल्पकालाग्निज्वालाभास्वरमण्डकम् ॥ ३४
कदाचित्काननं कार्ष्ण्यं कालं कमलकुड्मलम् ।
अन्यान्यन्यान्यनेकानि प्रतिजन्मावधिः प्रभुः ॥ ३५
कल्पयन्पालयत्येष नानारूपाणि हेलया ।
तत्रेदंप्रथमत्वेन यदैष ब्रह्मणः पदात् ॥ ३६
अवतीर्णस्तदाऽज्ञानात्तथैव सुखमस्मृतम् ।
गर्भनिद्राव्यपगमे वपुः पश्यति भास्वरम् ॥ ३७
प्राणापानप्रवाहाढ्यं द्रव्यैरिव विनिर्मितम् ।
रोमकोटिभिराकीर्णं द्वात्रिंशद्दशनान्वितम् ॥ ३८
त्रिस्थूणं पञ्चदैवत्यमधश्चरणलाञ्छितम् ।
पञ्चभागं नवद्वारं त्वग्लेपमसृणाङ्ककम् ॥ ३९

---

चैतन्यात्मना जीवेनादृष्टाभ्याम् ॥ १८ ॥ संघातात् उपचयादभिघाताच्च । अनलो रूपबीजरसात्मकः ॥१९॥ तावद्गुणगतं तावद्भिराकाशवायुतेजोभिर्गुणनं गुण उपचयस्तं गतं प्राप्तम् ॥२०॥ अपां शैत्यं रसतन्मात्रं प्राप्य जलमिति संवेद्यत इति संवित्प्रत्यर्हं भवेदित्यर्थः । तादृशामुक्तप्रकाराणां चतुर्णां गुणं संघातभावं गतम् ॥२१॥ उदेष्यतीति पूर्वभूतजन्मकालमपेक्ष्य भविष्यत्त्वविवक्षणाल्लृट् । भूततन्मात्रवेष्टितमिदं पञ्चकं मिलितं सत्तनुतां सौक्ष्म्यं जहत्त्यजत् ॥२२॥ यद्वपुः पश्यति तल्लिङ्गाख्यं पुर्यष्टकमित्यन्वयः ॥ २३ ॥ 'कर्मज्ञानेन्द्रियगणौ भूतप्राणमनोगणाः । अविद्याकामकर्माणि [2]लिङ्गः पुर्यष्टकं विदु' । वक्ष्यमाणदेहभावनया लिङ्गस्यैव हि पञ्चीकरणेन घनत्वे स्थूलदेहताविभावनमित्याह—**तस्मिंस्त्विति** ॥ २४ ॥ मूषा प्रतिमाकारनभोगर्भमृत्पिण्डस्तदन्तर्निषिक्तद्रुतहेमाभं बहिः स्थूलभास्वरमन्तः सूक्ष्मभास्वरं स्थूलदेहसंवलितं वक्ष्यमाणसंनिवेशमुपादत्ते तत्तेजो लिङ्गं कर्तृ ॥२५॥ तत्र मनसो विशेषकल्पनाभिनिवेशशाखोपशाखाप्रचय इत्याह—**तस्मिन्नि**त्यादिना ॥२६॥ आततताम्बरां व्याप्ताकाशां भूयसीमिति यावत् । तत्र क्रमाच्छिरआद्यवयवकल्पनामाह—**ऊर्ध्वमि**ति ॥ २७ ॥ अङ्गुल्यादिनिष्पत्त्या प्रकटावयवः ॥२८॥ असौ ब्रह्मा । मुनिः पूर्वोपासितप्रकारमननशीलः ॥२९॥३०॥ 'ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥' इति स्मृतिप्रसिद्धविशेषणसिद्धिं तस्य दर्शयति—**बुद्धी**ति ॥३१॥ परमाकाशे ब्रह्मण्यसौ यथा यादृश्या स्वसत्तया तिष्ठति तथा तादृश्यैव व्यवहारक्षमसत्तया आत्मनो मोहमज्ञानमेव चित्तलीलया पञ्चीकृतस्थूलव्योमादिवक्ष्यमाणरूपेण जनयतीत्यर्थः ॥ ३२ ॥ तस्य कालभेदेन नानाविधाः कल्पना दर्शयति—**कदाचिदि**ति । पारं परावधिः आदिः पूर्वावधिः पर्यन्तौ पार्श्वतोऽवधिस्तदभावादेव मध्यमावधिरहितं च केवलं व्योम कल्पयतीत्यर्थः ॥ ३३ ॥ दैनंदिनप्रलयकाले तु अमलं पय एव कल्पयति । कदाचित्कल्पान्ते दाहकाले ॥ ३४ ॥ कदाचित्पृथिवीसर्गोत्तरं भूतसर्गात्प्राक्काले कृष्णमेव कार्ष्ण्यम् । चातुर्वर्ण्यमितिवत्स्वार्थे ष्यञ् । हरितवर्णं काननं वृक्षव्याप्तां कृत्स्नां भुवमित्यर्थः । कदाचित्पाद्मे कल्पे श्यामभूपद्मप्रकृतित्वात्कालं श्यामं विष्णुनाभ्युत्थं कमलकुड्मलम् । अन्यान्यन्यानि भुवनार्णवजनादिरूपाण्यनेकानि संस्थानानि कल्पयन्विष्ण्वादिरूपेण स्वयमेव पालयति ॥ ३५ ॥ तस्य प्रथमकल्पमारभ्य प्रतिदिनं सुप्तोत्थितस्य स्वदेहकल्पनाक्रमं दर्शयति—**तत्रे**त्यादिना । सर्वेषां ब्रह्माण्डानां तदभिमानिब्रह्मणां च कालानवच्छिन्नब्रह्मपदादेवाविर्भावात्तद्दृशा न पौर्वापर्यमस्तीति प्राथम्यमेवेत्यभिप्रेत्येदंप्रथमत्वेनेत्युच्यते ॥ ३६ ॥ यदावतीर्णस्तदाप्रभृति ब्रह्माण्डगर्भे विष्णुकुक्षिगर्भे वा सुखं सौषुप्तसुखोपलक्षितमस्मृतं प्राक्तनवास्तवरूपस्य देहव्यवहारादेश्चास्मरणरूपं सुषुप्तमभूदिति शेषः ॥ ३७ ॥ द्रव्यैः पञ्चभूतस्वच्छभागैः ॥ ३८ ॥ सक्थिपृष्ठास्थिभिस्त्रिस्थूणम् । पञ्चभिः प्राणैः पञ्च-

---

१ मन इत्यपि पाठः. [2] लिङ्गं इति पाठः.

युक्तमङ्गुलिविंशत्या नखविंशतिलाञ्छितम् ।
द्विबाहुं द्विस्तनं त्र्यक्षं बह्वक्षिभुजमेव च ॥ ४०
नीडं चित्तविहङ्गस्य नीडं मन्मथभोगिनः ।
तृष्णापिशाच्या निलयं जीवकेसरिकन्दरम् ॥ ४१
अभिमानगजालानं मानसाम्भोजशोभितम् ।
अथालोच्य वपुर्ब्रह्मा कान्तमात्मीयमुत्तमम् ॥ ४२
चिन्तयामास भगवांस्त्रिकालामलदर्शनः ।
अस्मिन्नाकाशकुहरे तते मधुपलाञ्छिते ॥ ४३
अदृष्टपारपर्यन्ते प्रथमं किमभूदिति ।
इति चिन्तितवान्ब्रह्मा सद्यो जातोऽमलात्मदृक् ॥ ४४
अपश्यत्सर्गवृन्दानि समतीतान्यनेकशः ।
अथ सस्मार सकलान्सर्वान्धर्मगणान्क्रमात् ॥ ४५
वसन्तः कुसुमानीव वेदानादाय संस्तुतान् ।
लीलया कल्पयामास चित्रसंकल्पजाः प्रजाः ॥ ४६
नानाचारसमाचारं गन्धर्वनगरे यथा ।
तासां स्वर्गापवर्गार्थं धर्मकामार्थसिद्धये ॥ ४७
अनन्तानि विचित्राणि शास्त्राणि समकल्पयत् ।
दृष्टिरेवमियं राम सर्गेऽस्मिन्स्थितिमागता ।
विरिञ्चिरूपान्मनसः पुष्पलक्ष्मीर्मधोरिव ॥ ४८
विविधविरचनैः क्रियाविलासैः
कमलजरूपधरेण चेतसैव ।
रघुसुत परिकल्पनेन नीता
स्थितिमतुलां जगतीह सर्गलक्ष्मीः ॥ ४९

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे संसारावतरणप्रतिपादनोपदेशो नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः ४५

श्रीवसिष्ठ उवाच ।
जगत्संपन्नमेवेदं संपन्नं किंचिदेव न ।
शून्यमेव च भामात्रं मनोविलसितं स्थितम् ॥ १
न देशकालावेतेन ब्रह्माण्डेनावृतौ स्थितौ ।
मनागपि महारूपवताप्याकाशरूपिणा ॥ २
एतत्संकल्पमात्रात्म स्वप्नदृष्टपुरोपमम् ।
यत्रैव तत्र तच्छून्यं केवलं व्योम संस्थितम् ॥ ३
अभित्तिरागरचनमपि दृष्टमसन्मयम् ।
अकृतं कृतमेवैतद्व्योम्नि चित्रं विचित्रकम् ॥ ४
मनसा कल्पितं सर्वं देहादिभुवनत्रयम् ।
संस्मृतौ कारणं चैतच्चक्षुरालोकने यथा ॥ ५
आभासमात्रं हि जगद्घटावटपटभ्रमैः ।
आवर्तते न सद्रूपात्पृथक्कुड्यादयः स्थिताः ॥ ६
मनसेदं शरीरं हि वासनार्थं प्रकल्पितम् ।
कृमिकोशप्रकारेण स्वात्मकोश इव स्वयम् ॥ ७

दैवत्यम् । पाणिपादशिरोवक्षःकुक्षिणा पञ्चभागम् ॥ ३९ ॥ इच्छया कदाचिद्बह्वक्षिभुजमपि ॥ ४० ॥ ४१ ॥ ४२ ॥ मधुपपदेन तत्सदृशश्यामता लक्ष्यते तया लाञ्छिते ॥ ४३ ॥ प्रथमं मदुत्पत्तेः पूर्वम् । इतिशब्दद्वयं वीप्सया सर्वपूर्वविशेषचिन्तालाभार्थम् । अमला निर्मलत्वादतीतानागतदर्शने क्षमा आत्मदृग् यस्य ॥४४॥ अथ तत्कारणचिन्तानन्तरम् । सकलान् साङ्गोपाङ्गान् । धर्मगणग्रहणमधर्माणामप्युपलक्षणम् ॥ ४५ ॥ अतएव तस्योत्तरकाले सर्गोऽपि वेदोक्तक्रमेणैव सुकरोऽभूदित्याशयेनाह—लीलयेति ॥४६॥४७॥ मनस एव सर्वसृष्टिरिति यत्प्रतिज्ञातं तदेवंरीत्या समर्थितमित्युपसंहरति—दृष्टिरिति ॥ ४८ ॥ हे रघुसुत रघुसंतते, परिदृश्यमाना सर्गलक्ष्मीः कमलजरूपधरेण चेतसा मनसैव स्वपरिकल्पनेन अतुलां सत्यतुच्छविलक्षणत्वादसदृशीं स्थितिं नीतेत्यर्थः ॥४९॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे संसारावतरणप्रतिपादनोपदेशो चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

मनोरथादौ दृष्टत्वान्मनःकार्यं न सत्क्वचित् ।
असत्तस्माज्जगद्रूपं सत्सदेवेति वर्ण्यते ॥ १ ॥

संपन्नं परिनिष्ठितमेव सन्न किंचिदेव संपन्नम् । यतो मनोविलसितं सर्वं भामात्रं प्रतिभासमात्रं स्थितम् । तद्व्यतिरेकेण शून्यमेवेत्यर्थः ॥१॥ कुतश्च प्रतिभासव्यतिरेकेण शून्यता तस्येति तत्राह—नेति । यतः प्रतिभासदेशकालौ एतेन परिच्छिन्नेन ब्रह्माण्डेन नावृतौ न व्याप्तौ । अतीतानागतबहिःस्थितब्रह्माण्डकोटीनामपि त्रसरेणूनामातपान्तरिव प्रतिभासान्तःस्फुरणदर्शनात् । किं बहुना । महारूपवता परममहत्त्वेन प्रसिद्धेनाप्याकाशरूपिणा प्रथमभूतेन तस्य तौ न व्याप्तौ । 'ज्यायानाकाशात्' इति श्रुतेः अप्रतिभासमाने आकाशे ज्यायस्त्वे मानाभावेन प्रतिभासान्तरेव तस्य भानस्यावश्यवाच्यत्वे प्रतिभासमानानन्तकोटिष्वेकतमभूतस्य तस्य निरस्ता प्रतिभासदेशकालव्यापकतेति सूचनाय मनागपीत्युक्तिरिति बोध्यम् ॥ २ ॥ पूर्वोत्तरदेशकालाव्याप्तिरास्तां नाम, स्वाश्रययोर्देशकालयोरपि अध्यस्तेनाधिष्ठानासंस्पर्शान्न प्रतिभासव्याप्तिप्रसक्तिरित्याशयेनाह—एतदिति । यत्रैव देशे काले च जगच्चिति भासति तत्रैव तदधिष्ठानं चित् जगच्छून्यं केवलं व्योमैव संस्थितमित्यर्थः ॥ ३ ॥ अतएवेदं गन्धर्वनगरचित्रवदिति प्रागुक्तमित्याह—अभित्तीति ॥ ४ ॥ किंच मनसः स्मृतिमात्रे हेतुत्वात्तद्रचितमिदं स्मृतितुल्यमिति न स्वकालेऽर्थरूपं सदित्याह—मनसेति । एतत् मनः ॥ ५ ॥ कुड्यादिजगतः सतः पृथक्कृत्य दर्शयितुमशक्यत्वादपि सद्व्यतिरेकेणासत्त्वमित्याह—आभासेति ॥ ६ ॥ यथा स्वात्मनः

न तदस्ति च यन्नाम चेतःसंकल्पमम्बरम् ।
न करोति न चाप्नोति दुर्गमप्यतिदुष्करम् ॥ ८
सर्वशक्तिधरे देवे का नाम ननु शक्तयः ।
न संभवन्त्याश्रियन्ते याभिरन्तर्मनोगुहाः ॥ ९
सत्तासत्ते पदार्थानां सर्वेषां सर्वदैव हि ।
महाबाहो संभवतः सर्वशक्तौ विभौ सति ॥ १०
पश्य भावनया प्राप्तं मनसैवात्मजं वपुः ।
तस्मात्तत्कलनां राम सर्वशक्तियुतां विदुः ॥ ११
स्वसंकल्पकृताः सर्वे देवासुरनरादयः ।
स्वसंकल्पोपशमने शाम्यन्त्यस्नेहदीपवत् ॥ १२
आकाशसदृशं सर्वं कलनामात्रजृम्भितम् ।
जगत्पश्य महाबुद्धे सुदीर्घं स्वप्नमुत्थितम् ॥ १३
न जायते न म्रियते इह किंचित्कदाचन ।
परमार्थेन सुमते मिथ्या सर्वं तु विद्यते ॥ १४
न वृद्धिमेति नो ह्रासं यन्न किंचित्कदाचन ।
किं वा तनु भवेत्तत्र कस्य का नाम खण्डना ॥ १५
भूमभूतं स्वकायोत्थमपश्यन्निपुणं दृशा ।
राघवाऽमहता स्वान्तः किमज्ञ इव मुह्यसि ॥ १६
मृगतृष्णा यथा तापान्मनसो निश्चयात्तथा ।
असन्त इव दृश्यन्ते सर्वे ब्रह्मादयोऽप्यमी ॥ १७
द्विचन्द्रविभ्रमप्रख्या मनोरथवदुत्थिताः ।
मिथ्याज्ञानघनाः सर्वे जगत्याकारराशयः ॥ १८
यथा नौयायिनो मिथ्या स्थाणुस्पन्दमतिस्तथा ।
असत्यैवोत्थिता नित्यमाकाराणां परम्परा ॥ १९
इन्द्रजालमिदं विद्धि मायारचितपञ्जरम् ।
मनोमनननिर्माणं न सन्नासदिव स्थितम् ॥ २०
ब्रह्मैवेदं जगत्सर्वमन्यतायास्ततः कुतः ।
प्रसङ्गः कीदृशः कोऽसौ क्व वा सा परितिष्ठति ॥ २१
अयं गिरिरयं स्थाणुरित्याडम्बरविभ्रमः ।
मनसो भावनादार्ढ्यादसन्सन्निव लक्ष्यते ॥ २२
प्रपञ्चपतनारम्भं प्रमत्तस्य इदं जगत् ।
सकामतृष्णामननं त्यक्त्वान्यद्राम भावय ॥ २३
यथा स्वप्नो महारम्भो भ्रान्तिरेव न वस्तुतः ।
दीर्घस्वप्नं तथैवेदं विद्धि चित्तोपपादितम् ॥ २४
दृश्यमानमहाभोगं गृह्यमाणमवस्तुकम् ।
कोशमाशाभुजङ्गानां संसाराडम्बरं त्यज ॥ २५
असदेतदिति ज्ञात्वा माऽत्र भावं निवेशय ।
अनुधावति न प्राज्ञो विज्ञाय मृगतृष्णिकाम् ॥ २६
स्वसंकल्पात्स्वरूपाढ्यां मनोरथमयीं श्रियम् ।
योऽनुगच्छति मूढात्मा दुःखस्यैव स भाजनम् ॥ २७
वस्तुन्यसति लोकोऽयं यातु काममवस्तुनि ।
यस्तु वस्तु परित्यज्य यात्यवस्तु स नश्यति ॥ २८
मनोव्यामोह एवेदं रज्ज्वामहिभयं यथा ।
भावनामात्रवैचित्र्याच्चिरमावर्तते जगत् ॥ २९
असदभ्युदितैर्भावैर्जलान्तश्चन्द्रचञ्चलैः ।
वञ्च्यते बाल एवेह न तत्त्वज्ञो भवादृशः ॥ ३०
य इमं गुणसंघातं भावयन्सुखमीहते ।

---

स्वयं कोश इव प्रकल्पितं तथैव इदं शरीरं स्वस्य वासनार्थं स्थित्यर्थं कृमिकोशप्रकारेण नीडभूतं कल्पितमित्यर्थः ॥७॥ चेतसः संकल्पमात्रेणासद्रचनाप्राप्तिशक्तिप्रसिद्धेरप्युक्तार्थोपपत्तिरित्याह—**न तदि**ति । यदिति सामान्ये नपुंसकम् । अम्बरमर्थशून्यं संकल्पं संकल्परूपं यन्न करोति नाप्नोति चेत्यन्वयः । दुर्गं दुरापम् ॥८॥ याभिः शक्तिभिर्मनोगुहा अन्तर्नाश्रियन्ते ताः शक्तयो देवे जगदीश्वरेऽपि का नाम संभवन्तीत्यन्वयः ॥ ९ ॥ यदि सदैव जगदसद्ब्रह्म सदैव सत्परस्परं च तयोः सदैवासंस्पर्शस्तर्हि कथं जगति कादाचित्के सत्तासत्ते तत्राह—**सत्तासत्ते** इति । न कादाचित्के अपि तु सदातने । तयोः परस्पराभिभवेन पर्यायेणावेशकल्पनमेवाचिन्त्यं मायाशक्तिकृतमिति भावः ॥ १० ॥ सेयमैश्वरी सर्वशक्तिः स्वमनस्येव प्रत्यक्षं दृश्यतामित्याह—**पश्ये**ति । जगति विचित्रपदार्थशक्तयोऽपि सर्वशक्तिमन्मनःकल्पनादेवेत्याह—**तस्मादि**ति । कलनां कल्पनाम् ॥ ११ ॥ अतएव न देवादिशक्तिभिरपि मुक्तिः प्रतिबद्धुं शक्येत्याशयेनाह—**स्वसंकल्पे**ति ॥ १२ ॥ १३ ॥ १४ ॥ ननु खण्डनेनाल्पीकृतम् । नह्यखण्डे खण्डनमन्तरेण परिच्छेदप्रसक्तिः, नच खण्डनं वा संभवतीत्यर्थः ॥ १५ ॥ बहोर्भावो भूमा तथाभूतम् । अपरिच्छिन्नमिति यावत् । स्वकायादुत्थं मुञ्जेषीकावत् पृथक्कृतमपश्यन् अमहता परिच्छिन्नात्मदर्शनेन किं मुह्यसि ॥ १६ ॥ तापात् मरुमयूखात् । निश्चयात् संकल्पात् ॥१७॥ आकारराशयो दृश्याकारसमूहाः ॥१८॥१९॥ नासदिव सत्यमिव ॥ २० ॥ अन्यतायाः भेदस्य । चतुर्भिः किंवृत्तैः प्रमाणप्रकारस्वरूपाधाराणां निषेधः । सा अन्यता ॥ २१ ॥ उपचयावधिर्गिरिरपचयावधिः स्थाणुस्ताभ्यां सर्वे तदान्तरालिकपरिच्छेदाडम्बरविभ्रमा अप्युपलक्ष्यन्ते ॥ २२ ॥ प्रमत्तस्य विचारहीनस्य पुंसः सकामतृष्णामननमिदं जगत् प्रपञ्चे स्वर्गनरकतिर्यगादिजन्मसु पतनमारभत इति प्रपञ्चपतनारम्भं भवतीति शेषः । अतस्त्वं विवेकेन जगत्त्यक्त्वा अन्यत् निष्प्रपञ्चमात्मानं भावयेत्यर्थः ॥ २३ ॥ २४ ॥ दृश्यमानावस्थं महाभोगं बहुविस्तीर्णं रमणीयमिव । तेषु कतिपयानामेव ग्रहीतुं शक्यत्वाद्गृहीतेष्वपि कदाचित्कस्यचिदेवोपभोगात्तदुत्तरक्षण एव क्षयाच्च अवस्तुकं तुच्छम् । अभुक्तेषु पूर्वदृष्टेष्वदृष्टेषु च विषयेषु तृष्णाविषोत्कटानामाशाभुजङ्गानां कोशं वल्मीकमिव स्थितम् ॥२५॥ कथं त्याज्यं तत्राह—**असदि**ति । भावं रागम् ॥२६॥ तदनुधावनेऽनर्थमाह—**स्वसंकल्पे**ति ॥२७॥ न केवलमनर्थप्राप्तिरेव किंत्वर्थनाशोऽपि तस्यास्तीत्याह—**यस्त्वि**ति । नश्यति परमपुरुषार्थाद्भ्रश्यति ॥ २८ ॥ २९ ॥ ३० ॥ गुणानां शब्दा-

प्रमार्ष्टि स जडो जाड्यं वह्निभावनया स्वया ॥ ३१
असदेवेदमाभोगि दृश्यते जलपञ्जरम् ।
मनोमनननिर्माणहृदये नगरं यथा ॥ ३२
इदं चित्तेच्छयोदेति लीयते तदनिच्छया ।
मिथ्यैवं दृश्यते स्फीतं गन्धर्वनगरं यथा ॥ ३३
राम नष्टे जगत्यस्मिन्न किंचिदपि नश्यति ।
युक्तेऽपि च जगत्यस्मिन्न किंचिदपि युज्यते ॥ ३४
मनःप्रकल्पिते भग्ने हृदि विस्तीर्णपत्तने ।
वृद्धिं चोपगते ब्रूहि किं वृद्धं कस्य किं क्षतम् ॥ ३५
क्रीडार्थेन यथोदेति बालानां हृदि वर्तनम् ।
मनसा तद्वदेवेदमुदेत्यविरतं जगत् ॥ ३६
न किंचित्कस्यचिन्नष्टमिन्द्रजालजले यथा ।
भ्रष्टे नष्टे तथैवास्मिन्संसारे वितथोत्थिते ॥ ३७
यदसत्तदसत्स्याच्चेन्न किं कस्य किल क्षतम् ।
ततो हर्षविषादानां संसारे नाम नास्पदम् ॥ ३८
असदेव यदत्यन्तं तस्मात्किं नाम नश्यति ।
नाशाभावे हि दुःखस्य कः प्रसङ्गो महामते ॥ ३९
सदेव वा यदत्यन्तं तस्य किं नाम नश्यति ।
ब्रह्मैवेदं जगत्सर्वं सुखदुःखे किमुत्थिते ॥ ४०
असद्वापि यदत्यन्तं वृद्धिः स्यात्तस्य कीदृशी ।
वृद्धेरभावे हर्षस्य कः प्रसङ्गो महामते ॥ ४१
सर्वत्रासत्यभूतेऽस्मिन्प्रपञ्चैकान्तकारिणि ।
संसारे किमुपादेयं प्राज्ञो यदभिवाञ्छतु ॥ ४२
सर्वत्र सत्यभूतेऽस्मिन्ब्रह्मतत्त्वमयेऽपि च ।
किं स्यात्त्रिभुवने हेयं प्राज्ञाः परिहरन्तु यत् ॥ ४३
असत्सद्वा जगद्यस्य तेनासौ सुखदुःखयोः ।
अगम्य एव मूर्खस्तु तद्विनाशेन दुःखितः ॥ ४४
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
योऽभिवाञ्छत्यसद्राम तस्यासत्त्वैव दृश्यते ॥ ४५
आदावन्ते च यत्सत्यं वर्तमाने सदेव तत् ।
यस्य सर्वं सदेव स्यात्तस्य सत्त्वैव दृश्यते ॥ ४६
असत्यभूतं तोयान्तश्चन्द्रव्योमतलादिकम् ।
बाला एवाभिवाञ्छन्ति मनोमोहाय नोत्तमाः ॥ ४७
बालो हि वितताकारैर्वस्तुरिक्तैः प्रयोजनैः ।
संतोषमेत्यनन्ताय दुःखाय न सुखाय तु ॥ ४८
तस्मान्मा त्वं भवो बालो राम राजीवलोचन ।
अविनाशमिहालोक्य नित्यमाश्रय सुस्थिरम् ॥ ४९

दीनां संघातं देहादि भावयन् अहंममेत्यभिमन्यमानः । जाड्यं शीतम् । वह्निभावनया । मनोरथकल्पितवह्निनेति यावत् ॥ ३१ ॥ जलपञ्जरं लडयोरभेदाज्जडसंघातभूतं देहादि ॥ ३२ ॥ यदीदमैच्छिकसंकल्पवशादुदितं तर्हि ऐच्छिकनिवृत्तिसंकल्पादेव कुतो न निवर्तते तत्राह—**लीयत** इति । तस्य चित्रस्यानिच्छया रागक्षयमात्रेण । एवंविधं लोके मिथ्यैव दृश्यते । गन्धर्वनगरग्रहणं मनोरथकल्पितनगरोपलक्षणम् ॥ ३३ ॥ अतो नास्य नाशे समृद्धौ वा शोकहर्षौ कार्याविति आशयेनाह—**रामे**त्यादिना । युक्ते समृद्धे ॥ ३४ ॥ ३५ ॥ क्रीडार्थेन पुत्रिकादिना वर्तनं पुत्रपश्वादिव्यवहाराभासकल्पनं यथा न शोच्यते इति शेषः ॥ ३६ ॥ ३७ ॥ यदसदलीकं तदसदविद्यमानमेव चेत्स्यात् कस्य किं क्षतम् । न किंचिदिति शेषः । इवार्थे वा नकारः । अतः संसारे हर्षविषादानामास्पदं न किंचिन्नामेत्यन्वयः ॥ ३८ ॥ इत्थं नाशाभ्युपगमेन शोकानर्हतामुक्त्वा वस्तुतो नाश एव कस्यचिन्नास्तीति तामाह—**असदेवे**ति । यद्यतोऽसदेव तस्मात्ततः ॥ ३९ ॥ अध्यस्तदृष्ट्या नाशासंभवमुपपाद्य अधिष्ठानदृष्ट्यापि तमुपपादयति—**सदेवे**ति । सुखदुःखे किंनिमित्तमुत्थिते । नोत्थिते एवेत्यर्थः ॥ ४० ॥ उत्पत्तिनिरासादेव वृद्ध्यादिविकारा अपि निरस्ता एवेति तन्निमित्तहर्षस्याप्यंयुक्ततेत्याह—**असदि**ति । वापी अवधारणे ॥ ४१ ॥ इष्टप्राप्तौ हि हर्षः स्यादिष्टमेव मायामये नास्तीत्याह—**सर्वत्रे**ति ॥ ४२ ॥ एवं सर्वमानन्दैकरसेन पश्यतो हेयमपि नास्तीत्याह—**सर्वत्रे**ति । ब्रह्मतत्त्वमये । स्वार्थे मयट् । परिहरन्तु त्यजन्तु ॥ ४३ ॥ तस्य पक्षद्वयेऽपि विनाशानर्हस्य पुत्रमित्रादेर्विनाशेन स्वभ्रान्तिकल्पितेन दुःखितः ॥ ४४ ॥ इदानीमसत्सत्पक्षयोस्तुल्ये उपपत्ती दर्शयति—**आदा**विति द्वाभ्याम् । 'असद्वा इदमग्र आसीत्', 'नैवेह किंचनाग्र आसीत्' इत्यादिश्रुतिभिर्गगनपवनभुवनादीनामाद्यन्तयोरसत्त्वं श्रूयते घटादेश्च प्रत्यक्षमनुभूयते चिरं चोभयतश्चासत्त्वमचिरं सकृच्च सत्त्वं प्रतिव्यक्ति प्रसिद्धम् । ते च परस्परोच्छित्तिस्वभावेन सत्त्वासत्त्वे नैकवस्तुन्येकतरप्रहाणमन्तरेण निविशेते इत्यवश्यमेकतरस्मिन्प्रहातव्ये आद्यन्तयोश्चिरतरमसत्त्वप्रसिद्धेर्वर्तमानदशायामप्यसत्त्वमेव सर्वव्यक्तीनामिति असत्त्वपक्षेच्छुना असत्त्वमेव श्रुतियुक्त्यनुभवैर्दृश्यत इत्यर्थः ॥ ४५ ॥ 'सदेव सोम्येदमग्र आसीत् कथमसतः सज्जायेत' इत्यादिश्रुतिभिः सत्सदित्येव प्रमाणप्रवृत्तिकाले सर्ववस्त्वनुभवादाद्यन्तकालयोः सत्तानभिव्यक्तितिरोधानमात्रकल्पनेनापि 'असद्वा इदमग्र आसीत्' इत्यादिश्रुतियुक्त्योरुपपत्तेः सत्त्वश्रुतियुक्त्योरन्यथोपपादयितुमशक्यत्वाच्च सदातनी सार्वत्रिकी च सर्ववस्तूनां सत्ता लाघवादेकैव युक्तेति सत्तैक्ये सिद्धे आदावन्ते च कारणब्रह्मसत्तयैव सर्वस्य सत्त्वाद्वर्तमानकाले तत्तथैवेति सद्वादिना अखण्डब्रह्मसत्तैव सर्वत्र दृश्यत इत्यर्थः ॥ ४६ ॥ देशकालपरिच्छिन्नसत्ताकल्पनं पक्षद्वयबहिष्कृतं सर्वश्रुतियुक्तिविरुद्धं मूर्खसहस्रैरन्धपरम्परया परिकल्पितं सर्वानर्थकारीति बालिशानां तेषामेवोचितं न तवेत्याशयेनाह—**असत्यभूत**मित्यादिना ॥ ४७ ॥ वस्तुरिक्तैरर्थशून्यैः । प्रयोजनैः सुखसाधनैः ॥ ४८ ॥ मा भवः मा भूः । लुङ्विषये व्यत्ययेन लङ्

१ प्युक्तता इति पाठः.

असदिदमखिलं मया समेतं
त्विति विगणय्य विषादितास्तु मा ते ।
सदिह हि सकलं मया समेतं
त्विति च विलोक्य विषादितास्तु मा ते ॥५०॥

श्रीवाल्मीकिरुवाच ।
इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ५१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे यथाभूतार्थयोगोपदेशो नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## ॥ नवमो दिवसः ॥

## षट्चत्वारिंशः सर्गः ४६

श्रीवसिष्ठ उवाच ।
रम्ये धनेषु दारादौ शोकस्यावसरो हि कः ।
इन्द्रजालेक्षणादृष्टे नष्टे का परिदेवना ॥ १
गन्धर्वनगरस्यार्थे दूषिते भूषिते तथा ।
अविद्यांशे सुतादौ वा कः क्रमः सुखदुःखयोः ॥ २
रम्ये धनेऽथ दारादौ हर्षस्यावसरो हि कः ।
वृद्धायां मृगतृष्णायां किमानन्दो जलार्थिनाम् ॥ ३
धनदारेषु वृद्धेषु दुःखं युक्तं न तुष्टयः ।
वृद्धायां मोहमायायां कः समाश्वासवानिह ॥ ४
यैरेव जायते रागो मूर्खस्याधिकतागतैः ।
तैरेव भोगैः प्राज्ञस्य विराग उपजायते ॥ ५
नष्टे धनेऽथ दारादौ हर्षस्यावसरो हि कः ।
पारावलोकिनस्त्वेतैर्विरागं यान्ति साधवः ॥ ६
अतो राघव तत्त्वज्ञो व्यवहारेषु संसृतेः ।
नष्टं नष्टमुपेक्षस्व प्राप्तं प्राप्तमुपाहर ॥ ७
अनागतानां भोगानामवाञ्छनमकृत्रिमम् ।
आगतानां च संभोग इति पण्डितलक्षणम् ॥ ८
संसारसंभ्रमे ह्यस्मिंश्छन्नात्मन्याततायिनि ।
तथा विहर संबुद्धो यथा नायासि मूढताम् ॥ ९
संसाराडम्बरस्यास्य प्रपञ्चरहिते क्रमे ।
सम्यग्ज्ञा नानुपश्यन्ति ये हतास्ते कुबुद्धयः ॥ १०

॥ ४९ ॥ इदानीं दर्शितयोः सदसत्पक्षयोर्द्वारभेदेनैकप्रयोजनावसाने फलतः समुच्चयं दर्शयन्नुपसंहरति—**असदि**ति । मायामूढैरात्मत्वेन कल्पितेनाहंकारेण समेतं सहितमिदमखिलं जगदसदेवेति मत्वा श्रुतिगुरुयुक्तिस्वानुभवैरवधार्य पुत्रमित्रधनादिनाशे विषादिता शोकः । विषमिव परिणामदुःखदान्विषयानत्तुं भोक्तुं शीलमस्येति विषादी रागी तद्भावो विषादिता रागश्च मास्तु । तथाच शोकरागादिनिरासद्वारा ऐकात्म्यदर्शने प्रपञ्चासत्त्ववाद उपयुज्यत इति भावः । एवमन्यार्थेनासद्वादप्रस्तावेन निस्तत्त्वमेव जगदिति न मन्तव्यं किंतु सकलं सदेव । सत्त्वस्याप्रसिद्धौ तत्प्रतिक्षेपकस्यासत्त्वस्याप्रसिद्धेः । प्रसिद्धौ च तत्प्रतिक्षिप्तत्वादेवासत्त्वासिद्धेः । एवं सर्वत्र सत्तया प्रतिक्षिप्तमसत्त्वं निरास्पदं न क्वचित्कस्यचित्परिच्छेदाय प्रभवतीत्यपरिच्छिन्नसदेकरसे सिद्धे घटपटादिपरिच्छेदकाकारस्य पृथगनवशेषान्मया शोधितचिन्मात्रैकरसेन प्रतीचा अखण्डैक्येन समेतं सदेव भूमाख्यमहमिति विलोक्य स्वात्मप्रतिष्ठस्य ते तव विषादिता पुनःसांसारिकजन्ममरणादिविषादावाप्तिर्मास्तु । कालत्रयेऽपि न संभावितेत्यर्थः ॥ ५० ॥ ५१ ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे यथाभूतार्थयोगोपदेशो नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

**विहरन्नपि संसारे यैर्गुणैर्न निमज्जति ।**
**ते रामायात्र कीर्त्यन्ते जीवन्मुक्तेषु ये स्थिताः ॥ १ ॥**

तत्र सर्ववस्तुष्वनास्थया नष्टोपेक्षणानागतावाञ्छनलक्षणौ गुणौ प्रथममुपदिदिक्षुः पूर्वप्रस्तावस्य तदुपयोगं दर्शयितुमाह—**रम्ये** इत्यादिना । रम्ये इति पदसंस्कारपक्षे एकवचनं वचनसर्वनामेत्यनुशासनादेकवचनं आवृत्त्योभयान्वयि ॥ १ ॥ क्रमणं क्रमः प्रसरः ॥२॥ धनदारादौ च समृद्धे सतीति शेषः । आनन्दो जलक्रीडादिसुखाधिक्यं किम् ॥ ३ ॥ तद्वृद्धौ संसाररोगवृद्धिसंभावनया दुःखमेव कर्तुमुचितं न हर्ष इत्याह—**धने**ति ॥ ४ ॥ अधिकतां अभिवृद्धिं आगतैः ॥ ५ ॥ नष्टे नश्वरस्वभावे । पारावलोकिनः नश्वरतानरकहेतुत्वाद्युदर्ककटुकतादर्शिनः ॥ ६ ॥ यदर्थमयं प्रस्तावस्तं दर्शयति—**अत** इति । उपाहर उपयुङ्क्ष्व । प्राप्तोपयोगोऽर्थप्राप्तत्वान्न विधेयो गुणः ॥ ७ ॥ गुणान्तरमाह—**अनागतानाम्**िति ॥ ८ ॥ अप्रमादलक्षणं गुणान्तरमुपदिशति—**संसारे**ति । संसारे संभ्रमयतीति संसारसंभ्रमः कामस्तल्लक्षणे च्छन्नात्मनि जिघांसया प्रच्छन्ने आततेन विषशस्त्राग्न्यादिना हन्तुं अयते उपगच्छतीत्याततायी शत्रुस्तस्मिन् । तदुक्तम् 'उद्यतासिं विषाग्निं च शापोद्यतकरं तथा । आथर्वणेन हन्तारं पिशुनं राजसद्मसु । भार्यातिक्रमिणं चैव विद्यात्सप्ताततायिनः ॥' इति । संबुद्धः प्रबोधे अप्रमत्तः ॥ ९ ॥ प्रपञ्चरहिते क्रम्यत इति क्रमः परमपदं तस्मिन्सम्यग्ज्ञा अपि ये प्रमादादस्य संसाराडम्बरस्य वञ्चनां नानुपश्यन्ति ते कुबुद्धयः । प्रमादेन हता इत्यर्थः । अथवा प्रपञ्चरहिते ब्रह्मणि विवेकवैराग्यप्रबोधाप्रमादादिगुणार्जनक्रमे ये सम्यग्ज्ञास्तेऽस्य संसाराडम्ब-

१ मूले 'हर्षस्यावसरो हि कः' इति पाठः । टीकायां च उभयान्वयीत्यस्यानन्तरं-दारादाविन्द्रजाले क्षणदृष्टे सति हर्षस्यावसरः कः, विनष्टे वा का परिदेवनेत्यन्वयः इति पाठोऽधिकः क्वचित्.

यया कयाचिद्युक्त्यैव दृश्याद्यस्य गता रतिः ।
परिमज्जति तस्यास्था न क्वचिद्विमला मतिः ॥ ११
यस्यासदिदमित्यास्था निवृत्ता सर्ववस्तुषु ।
क्रोडीकरोति सर्वेशं नाविद्या तमवास्तवी ॥ १२
अहं जगच्चैकमिदं सर्वमेवेति यस्य धीः ।
आस्थानास्थे परित्यज्य संस्थिता स न मज्जति ॥ १३
शुद्धं सदसतोर्मध्यं पदं बुद्ध्वाऽवलम्ब्य च ।
सबाह्याभ्यन्तरं दृश्यं मा गृहाण विमुञ्च मा ॥ १४
अत्यन्तविरतः स्वस्थः सर्ववासविवर्जितः ।
व्योमवत्तिष्ठ नीरागो राम कार्यपरोऽपि सन् ॥ १५
यस्य नेच्छा न वानिच्छा ज्ञस्य कर्मणि तिष्ठतः ।
न तस्य लिप्यते प्रज्ञा पद्मपत्रमिवाम्बुभिः ॥ १६
दर्शनस्पर्शनादीनि मा करोतु करोतु च ।
तवेन्द्रियमनो गौणं त्वमनिच्छो भवात्मवान् ॥ १७
ममेदमित्यसद्भूतमिन्द्रियार्थे भवन्मनः ।
मा निमज्जत्वमग्नः सन्मा करोतु करोतु वा ॥ १८
यदा ते नेन्द्रियार्थश्रीः स्वदते हृदि राघव ।
तदा विज्ञातविज्ञानः समुत्तीर्णभवार्णवः ॥ १९
आस्वादितेन्द्रियार्थस्य सतनोरतनोरपि ।
अनिच्छतोऽपि संपन्ना मुक्तिरर्थवशात्तव ॥ २०
उच्चैःपदाय परया प्रज्ञया वासनागणात् ।
पुष्पाद्गन्धमिवोदारं चेतो राम पृथक्कुरु ॥ २१

संसाराम्बुनिधावस्मिन्वासनाम्बुपरिप्लुते ।
ये प्रज्ञा नावमारूढास्ते तीर्णा ब्रुडिताः परे ॥ २२
क्षुरधाराप्रमितया धिया परमधीरया ।
प्रविचार्यात्मनस्तत्त्वं ततः स्वपदमाविश ॥ २३
यथा तत्त्वविदः प्राज्ञा ज्ञानबृंहितचेतसः ।
विहरन्ति तथा राम विहर्तव्यं न मूढवत् ॥ २४
जीवन्मुक्ता महात्मानो नित्यतृप्ता महाधियः ।
आचारैरनुगन्तव्या न भोगकृपणाः शठाः ॥ २५
न त्यजन्ति न वाञ्छन्ति व्यवहारं जगद्गतम् ।
सर्वमेवानुवर्तन्ते पारावारविदो जनाः ॥ २६
प्रभावस्याभिमानस्य गुणानां यशसः श्रियः ।
न क्वचित्कृपणा लोके महान्तस्तत्त्वदर्शिनः ॥ २७
सुशून्येऽपि न खिद्यन्ते देवोद्याने नसङ्गिनः ।
नियतिं च न मुञ्चन्ति महान्तो भास्करा इव ॥ २८
विगतेच्छा यथाप्राप्तव्यवहारानुवर्तिनः ।
विचरन्ति समुन्नद्धाः स्वस्था देहरथे स्थिताः ॥ २९
त्वमपि प्राप्तवान् राम विवेकमिममाततम् ।
प्रज्ञाबलेन चानेन ज्ञाने स्वस्थोऽसि सुन्दर ॥ ३०
स्पष्टां दृष्टिमवष्टभ्य निर्मानो गतमत्सरः ।
विहरास्मिन्भुवः पीठे परां सिद्धिमवाप्स्यसि ॥ ३१
स्वस्थः सर्वहितत्यागी दूरालोकनवाञ्छनः ।
परां शीतलतामन्तरादाय विहरानघ ॥ ३२

रस्य । कर्मण एव शेषत्वविवक्षया षष्ठी । इमं संसाराडम्बरं नानुपश्यन्ति । ये तु कुबुद्धय उक्तगुणहीनास्ते हता इत्यर्थः ॥१०॥ दृश्यदर्शनारतिलक्षणमपरं गुणमुपदिशति—**ययेति** । चित्तरञ्जनद्वैतवासनाधानस्वरूपप्रच्यावननरकाद्यनर्थहेतुत्वमिथ्यात्वानामन्यतमोपपादिकया यया कयाचिद्युक्त्या । गता निवृत्ता आस्था परमार्थाभिनिविष्टा विमला विपापा मतिर्न परिमज्जति मोहाब्धौ ॥ ११ ॥ एवं बाह्यार्थाभिनिवेशत्यागोऽपि गुण इत्याशयेनाह—**यस्येति** । असदिदमिति निश्चयेनेति शेषः । आस्था अभिनिवेशः ॥१२॥ ऐक्यात्मदर्शनमपि गुण इत्याह—**अहमिति** । अनास्थापरित्यागो यथाप्राप्तानुवर्तनम् ॥ १३ ॥ उक्तमेव विवृणोति—**शुद्धमिति** । सदसतोर्व्यक्ताव्यक्तयोर्मध्यमनुगतम् । शुद्धं सत्तामात्रम् । पदं तदेव प्रत्यगात्मेत्यवलम्ब्य॥१४॥ उपरतिसंतोषानिकेतनत्वासङ्गत्वगुणानुपदिशति—**अत्यन्तेति** ॥ १५ ॥ कथं नीरागः स्यात्कथं वा असङ्गस्तत्राह—**यस्येति** । ॥ १६ ॥ बाधितानुवृत्तिमात्रत्वेनामुख्यत्वाद्गौणं तव इन्द्रियसहितं मनो दर्शनादीनि करोतु न करोतु वा ॥१७॥ इन्द्रियार्थे ममतात्यागलक्षणं गुणमुपदिशन्ननास्थामुपपादयति—**ममेति** । अमग्नः सन्निति पुंस्त्वं छान्दसम् । 'त्वमग्नः सन्नि'ति पाठे तु त्वं मनः मा निमज्जयेत्यर्थः ॥ १८ ॥ स्वस्य जीवन्मुक्तताप्राप्तिप्रत्यये लिङ्गमाह—**यदेति** । न स्वदते अनर्थहेतुत्वाप्रतिसंधानेऽपि स्वत एव न रोचते ॥१९॥ आ अस्वादितेति च्छेदः । आसमन्तात् ऐहलौकिकाः पारलौकिकाश्च अस्वादिताः अरुचिविषयीकृता इन्द्रियार्था विषया यस्य धीरस्य । सतनोर्व्युत्थाने देहभानवतः । अतनोः समाधिना तद्रहितस्यापि । अर्थवशात् अनायासेनेति यावत् ॥ २० ॥ तस्यां जीवन्मुक्तौ वासनाभ्यश्चित्तस्य निष्कर्ष एव मुख्यं साधनमित्याह—**उच्चैःपदायेति** । उदारं विवेकवैराग्योत्कृष्टं चेतो मनः ॥ २१ ॥ ब्रुडिता निमग्नाः ॥ २२ ॥ कीदृशी सा प्रज्ञानौस्तां दर्शयति—**क्षुरधारेति** । विवेकवैराग्यादितीक्ष्णीकृतयेत्यर्थः । धीरया द्वन्द्वसहने धैर्यवत्या ॥ २३ ॥ २४ ॥ शठाः स्वपरवञ्चकाः ॥२५॥ पारं ब्रह्मतत्त्वमवारं जगत्तत्त्वं तद्विदः ॥ २६ ॥ ननु विदुषामपि क्वचित्कार्पण्यं स्यान्नेत्याह—**प्रभावस्येति** । प्रभावो विद्यातपःपराक्रमाद्युत्कर्षः । गुणा दाक्ष्यकुलशीलादयः । श्रियः संपदः । एतेषां हि विषये लोके कार्पण्यं प्रसिद्धम् । तत्त्वदर्शिनः प्रभावादीनां मिथ्यात्वादपुरुषार्थतादर्शिनः ॥२७॥ सुशून्ये सर्वनाशेऽपि । देवोद्याने सर्वकामसमृद्धनन्दनादावपि नसङ्गिनो नासक्ताः । नियतिं शास्त्रमर्यादाम् । भास्करपक्षे सुशून्ये आकाशे । नियतिं स्वमार्गमर्यादाम् ॥ २८ ॥ समुन्नद्धाः 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः' इत्यादिश्रुत्युक्तसाधनसन्नद्धाः ॥२९॥ मयि तर्हि ते गुणाः सन्ति न वेति संदेहकातरं राममाश्वासयति—**त्वमपीति** ॥३०॥३१॥ दूराः आलोकनवासनाविषयकौतुकदर्शनेच्छा यस्य तथाविधो भूत्वेत्यर्थः ॥३२॥ उपदिष्टार्थरहस्यानां रामस्यान्तरुन्मेषादाविर्भावं वाल्मीकिराह—

श्रीवाल्मीकिरुवाच ।

इत्थं गिरा विमलया विमलाशयस्य
रामो मुनेः सपदि मृष्ट इवाबभासे ।
ज्ञानामृतेन मधुरेण विराजितान्तः
पूर्णः शशाङ्क इव शीतलतां जगाम ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे जीवन्मुक्तस्थितगुणवर्णनं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

## सप्तचत्वारिंशः सर्गः ४७

श्रीराम उवाच ।

भगवन्सर्वधर्मज्ञ सर्ववेदाङ्गपारग[1] ।
आश्वस्त इव तिष्ठामि शुद्धाभिर्भवदुक्तिभिः ॥ १
उदाराणि विविक्तानि पेशलान्युदितानि च ।
श्रोतुं तृप्तिं न गच्छामि वचांसि वदतस्तव ॥ २
जात्या राजससात्त्विक्याः कथनावसरान्तरे ।
उत्पत्तिर्भवता प्रोक्ता शास्त्रैः कमलजन्मनः ॥ ३

श्रीवसिष्ठ उवाच ।

बहूनि ब्रह्मलक्षाणि शंकरेन्द्रशतानि च ।
नारायणसहस्राणि समतीतानि राघव ॥ ४
अन्येषु च विचित्रेषु ब्रह्माण्डेषु च भूरिशः ।
नानाचारविहाराणि विहरन्ति सहस्रशः ॥ ५
तुल्यकालमनन्तेषु कालान्तरभवेषु च ।
जगत्सु प्रोद्भविष्यन्ति बहून्यन्यानि भूरिशः ॥ ६
तेषामब्जोद्भवादीनां ब्रह्माण्डेषु दिवौकसाम् ।
उत्पत्तयो महाबाहो विचित्राभ्युत्थिता इव ॥ ७
कदाचित्सृष्टयः शार्व्यः कदाचित्पद्मजोद्भवाः ।
कदाचिदपि वैष्णव्यः कदाचिन्मुनिनिर्मिताः ॥ ८
कदाचित्पद्मजो ब्रह्मा कदाचित्सलिलोद्भवः ।
अण्डोद्भवः कदाचित्तु कदाचिज्जायतेऽम्बरात् ॥ ९
कस्मिंश्चिदण्डे त्र्यक्षोऽर्कः कस्मिंश्चिदपि वासवः ।
कस्मिंश्चित्पुण्डरीकाक्षः कस्मिंश्चित्त्र्यक्ष एव हि ॥ १०
कस्यांचिद्भूरभूत्सृष्टौ नीरन्ध्रतरुसंकटा ।
कस्यांचिन्नरनीरन्ध्रा कस्यांचिद्भूधरावृता ॥ ११
भूरभून्मृन्मयी काचित्काचिदासीद्दृषन्मयी ।
आसीद्धेममयी काचित्काचित्ताम्रमयी तथा ॥ १२
इहैव कानि चित्राणि जगन्त्यन्यान्यथान्यथा ।
अन्यान्यैकैकलोकानि निर्महांस्यपि कानिचित् ॥ १३
अनन्तानि जगन्त्यस्मिन्ब्रह्मतत्त्वमहाम्बरे ।
अम्भोधिवीचिजलवन्निमज्जन्त्युद्भवन्ति च ॥ १४
यथा तरङ्गा जलधौ मृगतृष्णा मरौ यथा ।
कुसुमानि यथा चूते तथा विश्वश्रियः परे ॥ १५

---

इत्थमिति । विमलाशयस्य मुनेर्वसिष्ठस्येत्थमुक्तप्रकारया गिरा रामो मृष्टः परिमार्जितो दर्पण इव आबभासे । ज्ञानामृतेन विराजितान्तःकरणः सन्[2] पूर्णः शशाङ्क इव शीतलतां तापत्रयोपशान्तिं जगाम प्राप ॥ ३३ ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे जीवन्मुक्तस्थितगुणवर्णनं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

अतीता भाविनः सन्तो ब्रह्म ब्रह्माण्डकोटयः ।
देवाद्याश्चात्र वर्ण्यन्ते नियतानियतक्रमाः ॥ १ ॥

आश्वस्तः अपनीतभाराध्वक्षुच्छ्रमः पुरुष इव ॥ १ ॥ उदाराण्युत्तमभूर्यर्थप्रदानि । विविक्तानि वर्णपदवाक्यप्रकरणभेदैर्व्यक्तानि । पेशलानि विचित्रकथायुक्तिसंदर्भचतुराणि । उदितानि आत्मतत्त्वप्रकाशकत्वेन हृदयपद्मविकासत्वेन च सूर्यादिवदुद्गतानि ॥ २ ॥ एवं प्रशंसया गुरुमुत्साह्य प्रासङ्गिकं ब्रह्मादिदेवतैश्वर्यतत्त्वं जिज्ञासुः पृच्छति—**जात्या** इति । राजससात्त्विक्या जात्याः जीवजातेः कथनावसरे भवता शास्त्रैर्नानाविधसृष्टिप्रतिपादकश्रुतिपुराणादिप्रमाणैः कमलजन्मन उत्पत्तिर्या प्रोक्ता प्रस्तुता तां स्फुटं वर्णयेति शेषः ॥ ३ ॥ बहूनीत्यस्य सर्वत्र संबन्धाच्छतसहस्रादिपदान्यप्यनन्तपराणि ॥ ४ ॥ अन्येषु ब्रह्माण्डेषु चादस्मिन्नपि नानाचारविहाराणि सुरासुरादिशरीराणीति शेषः ॥ ५ ॥ ६ ॥ विचित्रे इन्द्रजाले अभ्युत्थिता इव ॥ ७ ॥ शार्व्यो रुद्रपूर्वाः । पद्मजादेव प्रथमजादुद्भवो यासां ताः । वैष्णव्यो विष्णुपूर्वाः । तथाचोक्तं पुराणे 'तपसा तोषयित्वेशं ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायन्ते परस्परजयैषिणः ॥' इति । मुनिनिर्मिता इत्यवान्तरसर्गाभिप्रायम् ॥ ८ ॥ ब्रह्मादीनामाविर्भावस्थानान्यप्यनियतानीत्याह—**कदाचिदि**ति । पाद्मकल्पे पद्मजः, सलिलोद्भव आपवाख्यः, अण्डोद्भवः प्रसिद्धः । **अम्बरादि**ति । तथाच 'आकाशप्रभवो ब्रह्मा' इति सूर्यवंशादिप्रस्तावे पूर्वरामायणे उक्तम् ॥ ९ ॥ एवमर्कादिपदाधिकारिष्वप्यनियम इत्याह—**कस्मिंश्चिदि**ति । त्र्यक्ष एव सर्वदेवताधिकारेष्विति एवकारबलाल्लभ्यते । हिशब्दस्तस्यैवान्यत्रापि देवतान्तरभावकल्पना नान्यस्येति द्योतनार्थः ॥ १० ॥ नीरन्ध्रतरुसंकटा प्रथममिति सर्वत्र शेषः ॥ ११ ॥ प्राचुर्ये मयट् ॥ १२ ॥ इहास्मिन्ब्रह्माण्डे एव कानि कियन्ति चित्राण्याश्चर्याणि । अथ अन्यान्यपि जगन्ति ब्रह्माण्डानि । अन्यथा अन्यैः प्रकारैः ! बह्वाश्चर्याणीत्यर्थः । एकैक एव सूर्यादिवल्लोकः आलोकः प्रकाशात्मा येषु निर्महांसि निष्प्रभाणि ॥ १३ ॥ निमज्जन्ति लीयन्ते ॥ १४ ॥ १५ ॥ आलोल-

---

१ वेदवेदाङ्गपारग इति पाठः. २ संपूर्णं इति पाठः.

भानोर्गणयितुं शक्या रश्मिषु त्रसरेणवः ।
आलोलवपुषो ब्रह्म तत्त्वेन जगतां गणाः ॥ १६
यथा मशकजालानि वर्षादिष्वाकुलानि तु ।
उत्पत्योत्पत्य नश्यन्ति तथेमा लोकसृष्टयः ॥ १७
नच विज्ञायते कस्मात्कालात्प्रभृति चागताः ।
नित्यागमापायपरा एताः सर्गपरम्पराः ॥ १८
अनादिमत्योऽविरतं प्रस्फुरन्ति तरङ्गवत् ।
पूर्वात्पूर्वं किलाभूवंस्ततः पूर्वतरं यथा ॥ १९
भूत्वा भूत्वा प्रलीयन्ते ससुरासुरमानवाः ।
सरित्तरङ्गभङ्ग्येव समस्ता भूतजातयः ॥ २०
यथेदमण्डं वैरिञ्चं तथा ब्रह्माण्डपङ्क्तयः ।
याः सहस्राः परिक्षीणा नाडिका वत्सरेष्विव ॥ २१
अन्याः संप्रति विद्यन्ते वर्तमानशरीरकाः ।
प्रान्ते ब्रह्मपुरस्यास्य वितते ब्रह्मणः पदे ॥ २२
ब्रह्मण्यन्या भविष्यन्ति ब्राह्मयो ब्रह्मपुरश्रियः ।
पुनस्ताश्च विनङ्क्ष्यन्ति भूत्वा भूत्वा यथा गिरः ॥ २३
ब्रह्मण्यन्या भविष्यन्त्यः स्थिताः सर्गपरम्पराः ।
घटा इव मृदो राशावङ्कुरे पल्लवा इव ॥ २४
यावद्ब्रह्म चिदाकाशे तथा त्रिभुवनश्रियः ।
स्फाराकारविकाराढ्याः प्रेक्ष्यमाणा न किंचन ॥ २५
उन्मज्जन्त्यो निमज्जन्त्यो न सत्या नाप्यसच्छ्रियः ।
जडारम्भा वितन्वन्त्यस्ता एव खलता इव ॥ २६
तरङ्गसमधर्मिण्यो दृष्टनष्टशरीरकाः ।
सर्वासां सृष्टिराशीनां चित्राकारविचेष्टिताः ॥ २७
चित्राकारविकाराश्च चित्ररूपा हि सृष्टयः ।
व्यतिरिक्ता न सर्वेषां समस्ताः सृष्टिदृष्टयः ॥ २८
तत्त्वज्ञविषये राम सलिलादिव वृष्टयः ।
आयान्ति सृष्टयो देवाज्जलदादिव वृष्टयः ॥ २९
व्यतिरिक्ता न सर्वेषां समस्ताः सृष्टिदृष्टयः ।
व्यतिरिक्ता द्रवाम्भोधिस्वाष्ठीलाः शाल्मलेरिव ॥ ३०
इह सृष्टिषु पुष्टासु निकृष्टासु च राघव ।
परमात्रभसो जातास्तन्मात्रमलमालिका ॥ ३१
कदाचित्प्रथमं व्योम प्रतिष्ठामधिगच्छति ।
ततः प्रजायते ब्रह्मा व्योमजोऽसौ प्रजापतिः ॥ ३२
कदाचित्प्रथमं वायुः प्रतिष्ठामधिगच्छति ।
ततः प्रजायते ब्रह्मा वायुजोऽसौ प्रजापतिः ॥ ३३
कदाचित्प्रथमं तेजः प्रतिष्ठामधिगच्छति ।
ततः प्रजायते कर्ता तेजसोऽसौ प्रजापतिः ॥ ३४
कदाचित्प्रथमं वारि प्रतिष्ठामधिगच्छति ।
ततः प्रजायते ब्रह्मा वारिजोऽसौ प्रजापतिः ॥ ३५
कदाचित्प्रथमं पृथ्वी स्फारतामधिगच्छति ।
ततः प्रजायते ब्रह्मा पार्थिवोऽसौ प्रजापतिः ॥ ३६
इदं चत्वारि संपीड्य पञ्चमं वर्धते यदा ।
तदा तज्जात एवैष कुरुते जागतीं क्रियाम् ॥ ३७
कदाचिदप्सु वायौ वा सुस्फारे वापि तेजसि ।
स्वयं संपद्यतेऽकस्मात्पुमान्प्रकृतिभावितः ॥ ३८

वपुषश्चञ्चलाः ॥१६॥१७॥ तेषां सर्गाणां प्रवाहानादितामाह—**नचे**त्यादिना । नित्यमेव आगमापायावाविर्भावतिरोभावौ तत्पराः ॥ १८ ॥ १९ ॥ सरित्तरङ्गाणां भङ्ग्या रीत्या ॥ २० ॥ सहस्राः सहस्रशः । नाडिका घटिकाः ॥ २१ ॥ सर्वेषां ब्रह्माण्डानां लीलोपाख्यानोक्तरीत्या हृदयाकाशस्थे ब्रह्मण्येव कल्पनमित्याह—**अन्या** इति । अन्या ब्रह्माण्डपङ्क्तयः । संप्रति इदानीमपि । अस्य ब्रह्मोपलब्धिस्थानत्वाद्ब्रह्मपुरस्य शरीरस्य प्रान्ते हृदयपुण्डरीकदेशे स्थिते वितते अत्यन्तविस्तीर्णे ब्रह्मणः पदे ब्रह्मणि वर्तमानशरीरकाः परिवर्तमानमूर्तयः सत्यो विद्यन्ते । 'अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' इति श्रुतेरिति भावः ॥२२॥ ब्रह्मपुरोपलक्षितहृदयाकाशस्य श्रियः शोभाभूताः ब्राह्मयो ब्रह्मनिर्मिता ब्रह्माण्डपङ्क्तयः । यथा गिरो ध्वनिभेदा आकाशे भूत्वा भूत्वा नश्यन्ति तद्वत् ॥२३॥ दृष्टान्तान्तरोक्त्यर्थमुक्तमेवाह—**ब्रह्मणी**ति ॥ २४ ॥ यावत्तत्त्वज्ञानेन प्रेक्ष्यमाणा न किंचनेति बाधस्तावत्कालं भविष्यन्तीत्यर्थः ॥ २५ ॥ जडारम्भाः मूर्खैरध्यस्ताः । वितन्वन्त्यो विस्तीर्यमाणाः खलता व्योमलता इव ॥ २६ ॥ सृष्टिराशीनां स्वान्तर्गतसृष्टिसमष्टिभूतानां ब्रह्माण्डानां सृष्टयश्चित्राकाराणि विचेष्टितानि तदन्तर्गतप्राणिचेष्टा यासां ताः ॥ २७ ॥ सर्वेषां ब्रह्माण्डानां समस्ताः सृष्टिदृष्टयस्तत्त्वज्ञविषये सलिलाद्वृष्टय इव न व्यतिरिक्ता इति परेणान्वयः ॥ २८ ॥ अतत्त्वज्ञदृष्ट्या तु जलदाद्वृष्टय इव देवात्तटस्थेश्वरादायान्ति ॥२९॥ परमार्थतस्तु अज्ञानां तत्त्वविदां च सर्वेषां न व्यतिरिक्ताः । मूलकृष्टानि द्रवरूपाणि भूमेरम्भांसि धारयन्तीति द्रवाम्भोधयः शिरास्ताश्च स्वाः स्वीयास्त्वक्कीनाटपत्राद्यश्च अष्ठीलादारुवीजादिग्रन्थयश्च शाल्मलेर्वृक्षाद्यथा न व्यतिरिक्तास्तद्वत् ॥३०॥ पुष्टासु स्थूलभूतारब्धासु देहादिषु निकृष्टासु सूक्ष्मभूतारब्धाखिन्द्रियादिषु च परमात्रभसः अव्याकृताकाशाज्जाताः भूतसूक्ष्माख्यपञ्चतन्मात्रलक्षणस्य मायामलस्य सूत्रस्थानीयस्य स्फटिकरुद्राक्षग्रथिता मालिका इव सर्वभावा इत्यर्थः ॥ ३१ ॥ कदाचित्पद्मजो ब्रह्मेति यदुक्तं तत्र यथायोगं पञ्चीकरणोत्तरमाविस्थूलव्योमादीनां प्रथमाविर्भावक्रमो नियामक इत्याह—**कदाचिदि**त्यादिना । प्रतिष्ठां स्थूलीभावेन स्थितिम् । एवं सर्वत्र ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ इदानीमेकैकस्योक्तव्योमादेः प्रथममाविर्भावे युक्तिमाह—**इद**मिति । इदं स्वातिरिक्तं चत्वारि भूतचतुष्टयं संपीड्य स्वांशोपबृंहणेन तिरोभूतमिव कृत्वा पञ्चमं यदेव भूतं यदा वर्धते तदा तज्जात एवैष ब्रह्मा जागतीं तदुत्तरसृष्ट्यादिक्रियां कुरुत इत्यर्थः ॥३७॥ सर्वेषां पञ्चभूतकार्यतया पञ्चात्मकत्वे सति तदुद्भवस्य प्रजापतेः कथमेकैकजत्वव्यपदेश इति चेद्वैशेष्यादिति न्यायेनेत्याह—**कदाचिदि**ति । सुस्फारे अधिकभागवति सति तदुपाधिः

तस्याथ शब्दो वदनात्कदाचिज्जायते पदात् ।
कदाचिदंशात्पृष्ठाद्वा कदाचिल्लोचनात्करात् ॥ ३९
कदाचित्पुरुषस्यास्य नाभौ पद्मं प्रजायते ।
तस्मिन्संवर्धते ब्रह्मा पद्मजोऽसौ प्रकीर्तितः ॥ ४०
मायेयं स्वप्नवद्भ्रान्तिर्मिथ्यारचितचक्रिका ।
मनोराज्यमिवालोलसलिलावर्तसुन्दरी ॥ ४१
किमिवास्यां वद ज्ञप्तौ कथं संभवतीह ते ।
क्वचिद्बालमनोराज्यसिदं पर्यनुयुज्यते ॥ ४२
कदाचिदम्बरे शुद्धे मनस्तत्त्वानुरञ्जनात् ।
सौवर्णं ब्रह्मगर्भं च स्वयमण्डं प्रवर्तते ॥ ४३
कदाचिदेवं पुरुषो वीर्यं सृजति वारिणि ।
तस्मात्प्रजायते पद्मं ब्रह्माण्डमथवा महत् ॥ ४४
तस्मात्प्रजायते ब्रह्मा कदाचिद्भास्करोऽप्यसौ ।
कदाचिद्वरुणो ब्रह्मा कदाचिद्वायुरण्डजः ॥ ४५
एवमन्तर्विहीनासु विचित्रास्विह सृष्टिषु ।
विचित्रोत्पत्तयो राम ब्रह्मणो विविधा गताः ॥ ४६
निदर्शनार्थं सृष्टेस्तु मयैकस्य प्रजापतेः ।
भवते कथितोत्पत्तिर्न तत्र नियमः क्वचित् ॥ ४७
मनोविजृम्भणमिदं संसार इति संमतम् ।
संबोधनाय भवतः सृष्टिक्रम उदाहृतः ॥ ४८
सात्त्विकीप्रभृतयो याश्च जातयश्चेत्थमागताः ।
इति ते कथनायैष सृष्टिक्रम उदाहृतः ॥ ४९
पुनः सृष्टिः पुनर्नाशः पुनर्दुःखं पुनः सुखम् ।
पुनरज्ञः पुनस्तज्ज्ञो बन्धमोक्षदृशः पुनः ॥ ५०
पुनः सृष्टिकराऽवीतवीतस्नेहदृशः पुनः ।
दीपा इव कृतालोकाः प्रशाम्यन्त्युद्भवन्ति च ॥ ५१
देहोत्पत्तौ विनाशे च दीपानां ब्रह्मणामपि ।
कालेनाधिकतां त्यक्त्वा नाशे भेदो न कश्चन ॥ ५२
पुनः कृतं पुनस्त्रेता पुनः स द्वापरः कलिः ।
पुनरावर्तते सर्वं चक्रावर्ततया जगत् ॥ ५३
पुनर्मन्वन्तरारम्भाः पुनः कल्पपरम्पराः ।
पुनः पुनः कार्यदशाः प्रातः प्रातरहो यथा ॥ ५४
लोकालोककलाकालकलनाकलितान्तरम् ।
पुनःपुनरिदं सर्वं न किंचन पुनःपुनः ॥ ५५
अनाहते प्रतप्तेऽयःपिण्डेऽनलकणा इव ।
इमे भावाः स्थिता नित्यं चिदाकाशे स्वभावतः ॥ ५६
कदाचिदनभिव्यक्तं कदाचिद्व्यक्तिमागतम् ।
इदमस्ति परे तत्त्वे सर्वं वृक्ष इवार्तवम् ॥ ५७
चित्स्पन्द एव सर्वात्मा सर्वदैवेदृशाकृतिः ।
यदस्माज्जायते सर्गो द्वीन्दुत्वमिव लोचनात् ॥ ५८
चितः सर्वाः समायान्ति संतताः सृष्टिदृष्टयः ।
तत्स्था एवाप्यतत्स्थाभाश्चन्द्रादिव मरीचयः ॥ ५९
न कदाचन संसारः किलायं राम सत्सदा ।
सर्वशक्तावसंसारशक्तिता विद्यते यतः ॥ ६०

पुमान्प्रजापतिः प्रकृत्या पूर्वोपासनक्रमानुसारिस्वभावेन भावितो वासितः स्वयमेव आपवो वायुजस्तैजस इत्याद्याकारेणाकस्मात्संपद्यत इत्यर्थः ॥ ३८ ॥ तस्य देहावयवेभ्यः सर्गप्रवृत्तिं दर्शयति—**तस्येति** । अथानन्तरम् । शब्दो नामरूपयोरप्युपलक्षणम् । तथाच मुखाद्यवयवेभ्यो ब्राह्मणादिशब्दाः सहार्थैर्यथायोगं जायन्ते । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतेरित्यर्थः । अंशात्पुरोभागात् । पृष्ठात्पश्चाद्भागात् ॥ ३९ ॥ अस्यैव नारायणाख्यस्य पुरुषस्य । तत्र तस्यैव पद्मे जन्मवशात्पद्मजाख्येत्याह—**तस्मिन्निति** ॥४०॥ सतस्तत एव तस्य कथं जन्म घटतामिति पर्यनुयुञ्जानं रामं प्रत्याह—**मायेयमिति** ॥ ४१ ॥ यदि सतः पुरुषस्य स्वनाभिपद्मे जन्म न संभवति तर्हि अस्यां असङ्गाद्वितीयायां ज्ञप्तौ ब्रह्मणि ते तव किमिव द्वितीयं जगद्रूपं संभवति कथं च संभवति तद्वदेत्यर्थः । तथाच तव पर्यनुयोगो बालमनोराज्यपर्यनुयोगसम एवेत्याह—**क्वचिदिति** । काकुः ॥ ४२ ॥ पद्मजोत्पत्तिवद्व्योमजोत्पत्तिमपि मनसोऽचिन्त्यरचनाशक्तिमवलम्ब्य समर्थयति—**कदाचिदिति** ॥ ४३ ॥ पद्मं भूपद्मम् ॥४४॥ भास्करः प्राक्कल्पे सूर्याधिकारस्थोऽस्मिन्कल्पे ब्रह्मा भवति । एवं वरुणादयोऽपि ॥४५॥ अन्तः प्रत्यगात्मनि विहीनासु असतीषु । ब्रह्मणः प्रस्तुतहिरण्यगर्भस्य विचित्रा उत्पत्तयो गताः । 'ब्रह्माणः' इति पाठः स्पष्टः ॥ ४६ ॥ एकस्येदं वर्णनमन्येषामपि स्थालीपुलाकन्यायेन निदर्शनार्थमित्याह—**निदर्शनेति** ॥ ४७ ॥ संमतं सिद्धान्तः । तस्य सम्यग्बोधनाय ॥ ४८ ॥ पूर्ववर्णिता जीवजातिभेदा अपि निदर्शनार्थमेवेत्याह—**सात्त्विकीति** । सृष्टिक्रमवर्णनमपि एतदर्थमेवेत्याह—**इतीति** ॥४९॥ यावदेतन्मनः समूलं नोन्मूल्यते तावत्संसारपरम्परायाः कदाप्युनुपरम इति दर्शयति—**पुनः सृष्टिरित्यादिना** । मोक्षदृशो मोक्षास्तित्वकल्पनाः ॥ ५० ॥ अवीतेषु वर्तमानागामिप्रियेषु वीतेष्वतीतप्रियेषु स्नेहदृशः ॥५१॥ ननु दीपा अल्पकालस्थायिनो द्विपरार्धायुषां ब्रह्मादिशरीराणां कथमुपमास्तत्राह—**देहोत्पत्ता**विति । दीपपक्षे देहोत्पत्तिश्च प्रकलिकाकारसंस्थाननिष्पत्तिः । उत्पत्तिनाशौ आद्यन्तक्षणिकभावविकारौ नाशस्त्वनाद्यन्तयोः पूर्वोत्तरकालयोरसत्त्वमिति न पौनरुक्त्यम् ॥ ५२ ॥ चक्रमिवावर्तत इति चक्रावर्तस्तद्भावेन ॥ ५३ ॥ ५४ ॥ लोकालोकौ दिनरात्री कलास्त्रिंशत्काष्ठात्मको मुहूर्तद्वादशभागस्य क्षणस्य त्रिंशो भागस्तद्घटिताभिः प्राण्यायुःकालकलनाभिः कलिताः परिच्छिन्ना आन्तराः सर्वपदार्था यस्मिन् ॥ ५५ ॥ अनाहते शिलाद्याघातरहिते । स्वभावतो मायाबीजस्वभावात् ॥ ५६ ॥ आर्तवं तत्तदृतुभवं फलपुष्पादीव ॥ ५७ ॥ चित्स्पन्दश्चिद्विवर्तः । द्वीन्दुत्वमिन्दुद्वित्वम् ॥ ५८ ॥ ॥ ५९ ॥ असंसारशक्तिता असंसारस्वभावता । असङ्गाद्वितीयस्वभावतेति यावत् । विद्यते परमार्थत इति शेषः ॥ ६० ॥

१ एष इति पाठः.

न चैवेदं कदाचित्तु साधो जगदनीदृशम् ।
सर्वशक्तौ हि संसारशक्तिता विद्यते यतः ॥ ६१
महाकल्पावधिः कालेन संसारितयेद्धया ।
न भविष्यति संसार इदानीमिति युज्यते ॥ ६२
ज्ञदृष्ट्या सर्वमेवेदं ब्रह्मैवेति महामते ।
नास्ति संसार इत्येतदुपपद्यत एव च ॥ ६३
अज्ञदृष्ट्या त्वविच्छिन्नसंसारत्वादनारतम् ।
नित्या संसारमायेयं मिथ्यापीहोपपद्यते ॥ ६४
पुनःपुनश्च भावित्वान्न कदाचिदनीदृशम् ।
जगदित्येतदित्युक्तं न मृषा रघुनन्दन ॥ ६५
अनारतपतद्रूपा दिशो दृष्टा विनश्वराः ।
विनाशीदं जगत्सर्वमिति किं नोपपद्यते ॥ ६६
सर्वत्रोदितचन्द्रार्का दिशो दृष्टाः स्थिराचलाः ।
अविनाशि जगत्सर्वमित्यप्यवितथोपमम् ॥ ६७
न तदस्ति न यत्तस्मिन्नेकस्मिन्विततात्मनि ।
संकल्पकलनाजालमनाख्ये नोपपद्यते ॥ ६८
पुनःपुनरिदं सर्वं पुनर्मरणजन्मनी ।
पुनः सुखं पुनर्दुःखं पुनः करणकर्मणी ॥ ६९
पुनराशाः पुनर्व्योम पुनरम्भोधयोऽद्रयः ।
अभ्युदेति पुनः सृष्टिः खवदर्कप्रभा यथा ॥ ७०
पुनर्दैत्याः पुनर्देवाः पुनर्लोकान्तरक्रमाः ।
पुनः स्वर्गापवर्गेहाः पुनरिन्द्रः पुनः शशी ॥ ७१
पुनर्नारायणो देवः पुनर्दनुसुतादयः ।
पुनराशाचलच्चारुचन्द्रार्कवरुणानिलाः ॥ ७२
सुमेरुकर्णिकाकान्ता सह्यकेसरशालिनी ।
पूर्णा स्फीतोदरोदेति रोदसी नलिनी पुनः ॥ ७३
व्योमकाननमाक्रम्य वल्गत्यंशुनखोत्करैः ।
तमःकरिघटा भेत्तुं पुनर्भास्करकेसरी ॥ ७४
पुनरिन्दुश्चलत्स्वच्छमञ्जरीसुन्दरैः करैः ।
करोत्यमृतमाह्लादि दिग्वधूमुखमण्डनम् ॥ ७५
पुनः स्वर्गतरोः पुण्यक्षयवातसमीरिताः ।
पतन्तीह विनुन्नाङ्गाः पुण्यकृत्पुष्पराशयः ॥ ७६
पुनः कार्यक्रियापक्षैः संसारारम्भनामकम् ।
किंचित्पटपटं कृत्वा याति कालकपिञ्जलः ॥ ७७
पुनरिन्द्रादिके याते सज्जमास्थाय केवलम् ।
आयात्यपरदेवेन्द्रषट्पदः स्वर्गपङ्कजम् ॥ ७८
पुनः कालं कृतापूतं[2] कलुषीकुरुते कलिः ।
सचक्रिणमिवाम्भोधिं प्रवृद्धोऽवकरानिलः ॥ ७९
पुनः कालकुलालेन कृतभूतशरावकम् ।
चक्रमावर्त्यते वेगादजस्रं कल्पनामकम् ॥ ८०
पुनर्नीरसतामेति जगदस्तशुभस्थिति ।
अभ्यासीभूतसंकल्पं संशुष्कमिव काननम् ॥ ८१
पुनरर्कगणेष्वग्निदग्धानन्तकलेवरम् ।
सर्वभूतास्थिसंपूर्णं जगदेति श्मशानताम् ॥ ८२
पुनः कुलाचलाकारपुष्करावर्तवर्षणैः ।
नृत्यद्भवबृहत्फेनां यात्येकार्णवतां जगत् ॥ ८३

---

संसारशक्तिता जगद्बीजमर्यादा ॥६१॥ इद्धया अधिष्ठानचैतन्यदीप्तया संसारितया कालेन चोपलक्षितः संसारो महाकल्पो वैज्ञानिको मोक्षाख्यः प्रलयस्तदवधिर्विद्यते अग्रे न भविष्यतीति व्यवहार इदानीं युज्यत इत्यन्वयः ॥६२॥ संसारासत्त्वसत्त्वयोर्विरोधमाशङ्क्य दृष्टिभेदेन विरोधमाह—**ज्ञदृष्ट्ये**त्यादिना ॥६३॥ ॥६४॥ अतएव कर्ममीमांसकानां न कदाचिदनीदृशं जगदिति जगत्प्रवाहनित्यव्यवहारोऽप्युपपन्न इत्याह—**पुन**रिति । इति अनया दृष्ट्या न मृषा । तदीप्सितकर्मकाण्डप्रामाण्योपपादकत्वादित्यर्थः ॥ ६५ ॥ अज्ञदृष्टीनां विचित्रत्वाद्बुद्धादिभिः स्वस्वप्रक्रियानिर्वाहाय कल्पिताः क्षणिकपरमाण्वादिव्यवहारा अपि तद्दृष्ट्या उपपद्यन्त एवेत्याह—**अनारते**ति । दिशो दिक्षूदिता विद्युदादयः अनारतं सदा पतद्रूपाः क्षणप्रध्वंसिस्वभावा दृष्टाः । तथैव सर्वत्र कल्पनादित्यर्थः । किमिति काकुः ॥ ६६ ॥ एवं चन्द्रार्कादिस्फीतालोकासु दिक्षु पर्वतभूम्यब्धीनां स्थिरतादर्शनात्सदैव स्वसत्तया सदेव जगदिति सांख्यादिकल्पनाप्युपपद्यत एवेत्याह—**सर्वत्रे**ति ॥ ६७ ॥ तथाच ब्रह्मणि तत्तत्संकल्पितेष्वर्थेष्वनुपपन्नं किमपि नास्ति संकल्पकलनाजालमेव परं नोपपद्यत इत्याह—**न तदस्ती**ति ॥ ६८ ॥ प्रासङ्गिकं सर्वसंभवमुपपाद्य प्रस्तुतं सर्गपौनःपुन्यमेव वर्णयति—**पुन**रित्यादिना ॥ ६९ ॥ खवत्सु गवाक्षच्छिद्रवत्सु गृहेषु प्रविष्टार्कप्रभा यथा नानात्वेनोदेति तथा ॥ ७० ॥ ७१ ॥ ७२ ॥ पूर्णा प्राणिपुण्यामोदैर्भोगमकरन्दैश्च स्फीतोदरा विशालकुक्षिः । द्यावापृथिव्यौ रोदस्यौ तल्लक्षणा नलिनी ॥७३॥ वल्गत्युद्गच्छति ॥ ७४ ॥ आह्लादि सर्वप्राणिसुखकरं अमृतं करोत्युपचिनोति ॥ ७५ ॥ पुण्यानि कृन्तन्ति भोगैश्छिन्दन्तीति पुण्यकृतः स्वर्गिणस्तल्लक्षणाः पुष्पराशयः ॥७६॥ पटपटं कृत्वा । ननु 'अनुकरणं चानितिपरम्' इति गतिसंज्ञायां 'कुगतिप्रादयः' इति नित्यं समासे ल्यपा भाव्यम् । सत्यम् । किंचिदिति विशेषणदर्शनात् 'सविशेषणानां वृत्तिर्न' इति महाभाष्योक्तेर्न समासः । कालः सृष्टिकालस्तल्लक्षणः कपिञ्जलः पक्षिविशेषः ॥ ७७ ॥ पूर्वेन्द्रलक्षणे अलिके क्षुद्रभ्रमरे याते निवृत्ताधिकारे सति । सज्जं नूतनतत्तन्मन्वन्तराधिकारिदेवतागणान्तरसन्नद्धमैरावताद्यास्थाय । 'राज्यम्' इति पाठे स्पष्टम् । केवलं पूर्वदेवगणशून्यम् ॥७८॥ कृतेन युगेन आपूतं सर्वतः पूतम् । कलिरधर्मः । सचक्रिणं स्वान्तःशयानविष्णुसहितम् । अवकिरति पांसूनित्यवकरोऽनिलः प्रलयवायुः ॥ ७९ ॥ कृताः प्राणिशरावा यस्मिन् ॥ ८० ॥ नीरसतां धर्मरसहीनताम् । अभ्यासीभूतसंकल्पं यस्य यद्विषये पूर्वाभ्यासस्तदनुगुणीभूताः संकल्पा यस्मिन् ॥८१॥८२॥ नृत्यन् भवः संहाररुद्र एव शुभ्रत्वाद्बृहन् फेनो यस्याम् ॥ ८३ ॥ ८४ ॥

---

१ आशाश्चलत् इति पाठः. २ कृपापूतं इति क्वचित्.

पुनः संशान्तवाय्वम्बुरिक्तं सकलवस्तुभिः ।
तदपूर्वमिवाकाशं जगदायाति शून्यताम् ॥ ८४
पुनः कतिपया भुक्त्वा समाः समरसाशयः ।
जीवितं जीर्णया तन्वा पुनः स्वात्मनि लीयते ॥ ८५
पुनरन्येन कालेन तथैव जगतां गणान् ।
मनस्तनोति वै शून्ये गन्धर्वनगरं यथा ॥ ८६
पुनः सर्गसमारम्भः प्रलये सर्वसंभवः ।
सर्वं पुनरिदं राम चक्रवत्परिवर्तते ॥ ८७

किमेतस्मिन्महामायाडम्बरे दीर्घशम्बरे ।
राम सत्यमसत्यं वा निर्णयं यदिहोच्यते ॥ ८८
दाशूराख्यायिकेवेयं राम संसारचक्रिका ।
कल्पनारचिताकारा वस्तुशून्या न वस्तुतः ॥ ८९
अविरलमिदमाततं विकल्पै-
रसदुदितैरपि तैर्द्विचन्द्रकल्पैः ।
विरचितमसतानुपन्नसत्यं
जगदिह तेन विमूढता किमुत्था ॥ ९०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे जगद्भासनिर्णययोगोपदेशो नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ४८

श्रीवसिष्ठ उवाच ।

क्रियाविशेषबहुला भोगैश्वर्यहताशयाः ।
नापेक्षन्ते यदा सत्यं न पश्यन्ति शठास्तदा ॥ १
ये तु पारं गता बुद्धेरिन्द्रियैर्न वशीकृताः ।
त एनां जागतीं मायां पश्यन्ति करबिल्ववत् ॥ २
तुच्छां तां जागतीं मायां दृष्ट्वा जीवो विचारवान् ।
अहंकारमयीं मायां त्यजत्यहिरिव त्वचम् ॥ ३
असक्ततां ततोऽभ्येत्य पुना राम न जायते ।
क्षेत्रेष्वपि चिरं तिष्ठन्बीजं दग्धमिवाग्निना ॥ ४
आधिव्याधिपरीताय प्रातर्वाद्य विनाशिने ।
प्रयतन्ते शरीराय हितमज्ञास्तु नात्मने ॥ ५
त्वमप्यज्ञवदज्ञस्य शरीरस्य समीहितम् ।
मा संपादय दुःखाय भवात्मैकपरायणः ॥ ६

श्रीराम उवाच ।

दाशूराख्यायिकेवेयं सुखसंसारचक्रिका ।
कल्पनारचिताकारा वस्तुशून्येति किं प्रभो ॥ ७

श्रीवसिष्ठ उवाच ।

जगन्मायास्वरूपस्य वर्णनाव्यपदेशतः ।
दाशूराख्यायिकां राम वर्ण्यमानां मया शृणु ॥ ८
अस्त्यस्मिन्वसुधापीठे विचित्रकुसुमद्रुमः ।
मागधो नाम विख्यातः श्रीमाञ्जनपदो महान् ॥ ९
कदम्बवनविस्तारलीलावलितजङ्गलः ।
विचित्रविहगव्यूहसर्वाश्चर्यमनोहरः ॥ १०
सस्यसंकटसीमान्तः पुरोपवनमण्डितः ।
कमलोत्पलकह्लारपूर्णसर्वसरित्तटः ॥ ११
उद्यानदोलाविलसल्ललनागेयघुंघुमः ।
निशोपभुक्तकुसुमनीरन्ध्रविशिखावनिः ॥ १२

जीवितं भुक्त्वा अनुभूय ॥ ८५ ॥ ८६ ॥ पुनः प्रलये सति सर्गसमारम्भः ॥ ८७ ॥ दीर्घशम्बरे दीर्घभ्रमे किं निर्णयं विचार्येत्थमिति निश्चेयं न किंचिदित्यर्थः । 'निर्णयम्' इति पाठे निर्युक्तिकमित्यर्थः ॥ ८८ ॥ उक्तेऽर्थे दाशूराख्यायिकामुदाहरिष्यामीत्याशयेनाह—**दाशूरे**ति ॥ ८९ ॥ येन हेतुना इदं जगदसतोऽज्ञानादुदितैर्विकल्पैरविरलमविच्छिन्नप्रवाहं यथा स्यात्तथा आततं तथा असता अविद्यमानेनैव कर्त्रा विरचितमनुत्पन्नमनुसृतमधिष्ठानब्रह्म सत्यं येन तथाविधं तेन हेतुना ते विमूढता किमुत्था कस्मान्निमित्ताज्जाता । यन्निमित्तं त्वं पश्यसि तन्नास्त्येव, यत्त्वस्ति परमार्थतस्तदभयं ब्रह्मैवेति न ते निर्निमित्तो मोहोऽयं युक्त इत्युपसंहारः ॥ ९० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जगद्भासनिर्णययोगोपदेशो नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

**भोगादिलिप्सा कुत्सात्र दाशूरस्याथ संभवः ।**
**प्रसन्नाच्चानलात्तस्य वरप्राप्त्यन्तमीर्यते ॥ १ ॥**

यदि इयं संसारचक्रिका कल्पनामात्रम्, यदि च ब्रह्मैव तत्त्वतोऽस्ति तर्हि तथा किमिति मेधाप्रतिभाकौशलशालिष्वपि महाजनेषु कोऽपि न पश्यति तत्र को हेतुरिति चेत्तदनपेक्षा तद्विरुद्धभोगैश्वर्याद्यभिनिवेशश्च हेतुरित्याह—**क्रियाविशेषे**ति । ऐहिकामुष्मिकभोगैश्वर्योपायभूतैर्लौकिकैर्वैदिकैश्च क्रियाविशेषैर्बहुला उपचितकामाः शठाः स्वपरवञ्चकाः ॥ १ ॥ तर्हि के पश्यन्ति तानाह—**ये त्वि**ति । मायाग्रहणं सत्यस्याप्युपलक्षणम् ॥ २ ॥ जागतीं बाह्यां ममेत्यभिनिवेशहेतुभूताम् । अहंकारमयीमान्तरीमहमित्यभिनिवेशहेतुभूताम् ॥ ३ ॥ ४ ॥ भोगैश्वर्यप्रसक्तस्य कारागृहदार्ढ्यायेव देहरक्षणाय वृथानर्थाय च प्रयासं परमपुरुषार्थोपेक्षां चात्यन्तानुचितां दृष्ट्वा तमनुशोचति—**आधी**ति । प्रातः अद्य वा विनाशिने । 'चतुर्थी तदर्थार्थ—' इति हितशब्दयोगे चतुर्थी ॥ ५ ॥ ६ ॥ प्राक् प्रस्तुतां दाशूराख्यायिकां शुश्रूषू रामः पृच्छति—**दाशूरे**ति । विषयसुखार्था संसारचक्रिका वस्तुशून्या इति यत्त्वयोक्तं तत्किं कीदृशम् । यादृशं तथा वर्णयेत्यर्थः ॥ ७ ॥ वर्णनाया व्यपदेशतः । उदाहरणतयेत्यर्थः ॥ ८ ॥ मगधानां निवासो जनपदो मागधः । 'तस्य निवासः' इत्यण् ॥ ९ ॥ १० ॥ सस्यैः संकटा निबिडिताः सीमान्ता ग्रामसीमावधयो यस्मिन् ॥ ११ ॥ निशाया उपभुक्तैरिव म्लानो-

१ सर्वसमारंभः इति पाठः. २ प्राप्त्यर्थं इति पाठः.

तत्रैकस्मिन्गिरितटे कर्णिकारसमाकुले ।
कदलीखण्डनीरन्ध्रनीपगुल्मविराजिते ॥ १३
पुष्पौघस्फूर्जदनिले केसरारुणधूलिनि ।
कारण्डवकृतारावे रसत्सरससारसे ॥ १४
तस्मिन्नगवरे पुण्ये विचित्रविहगद्रुमे ।
कश्चित्परमधर्मात्मा मुनिरासीन्महातपाः ॥ १५
दाशूरनामा महता तपोयोगेन संयुतः ।
कदम्बपृष्ठवास्तव्यो वीतरागो महामतिः ॥ १६

श्रीराम उवाच ।

असौ तपस्वी भगवन्विपिने केन हेतुना ।
कथं चाप्यवसत्पृष्ठे कदम्बस्य महातरोः ॥ १७

श्रीवसिष्ठ उवाच ।

शरलोमेति विख्यातः पिता तस्य बभूव ह ।
रामाऽपर इव ब्रह्मा तस्मिन्नेवावसद्गिरौ ॥ १८
तस्यासावेकपुत्रोऽभूत्कचो देवगुरोरिव ।
तेन सार्धं स पुत्रेण नीतवाञ्जीवितं वने ॥ १९
अथासौ शरलोमात्र भुक्त्वा युगगणं ययौ ।
त्यक्तदेहः सुरागारं मुक्तनीडः खगो यथा ॥ २०
एक एव वने तस्मिन्दाशूरः प्ररुरोद ह ।
दशापनीतपितृकः करुणं कुररो यथा ॥ २१
मातापितृवियोगेन शोकसंतापिताशयः ।
म्लानिमभ्याययौ नूनं हेमन्त इव पङ्कजम् ॥ २२
बालोऽसावतिदीनात्मा वनदेवतया वने ।
इत्थमाश्वासितो राम तदाऽदृश्यशरीरया ॥ २३
ऋषिपुत्र महाप्राज्ञ किमज्ञ इव रोदिषि ।
संसारस्य न कस्मात्त्वं स्वरूपं वेत्सि चञ्चलम् ॥ २४
सर्वैवेदृशी साधो संसारे संसृतिश्चला ।
जायते जीव्यते पश्चादवश्यं च विनश्यति ॥ २५
यद्यत्किंचिद्दृश्यदृशि ब्रह्मादिकमिदं मुने ।
गन्तव्यस्तेन सर्वेण विनाशो नात्र संशयः ॥ २६
तदर्थं मा कृथा व्यर्थं विषादं मरणे पितुः ।
अवश्यभाव्यस्तमयो जातस्याहर्पतेरिव ॥ २७
अशरीरामिति श्रुत्वा गिरमारक्तलोचनः ।
धैर्यमासादयामास शिखण्डी स्तनितादिव ॥ २८
उत्थायावश्यकं कृत्वा पाश्चात्यं पितुरादरात् ।
चकार तपसे बुद्धिं दृढामुत्तमसिद्धये ॥ २९
ब्राह्मेण कर्मणा तस्य विपिने चरतस्तपः ।
अनन्तसंकल्पमयं श्रोत्रियत्वं बभूव ह ॥ ३०
अज्ञातज्ञेयबुद्धेस्तु श्रोत्रियस्य तया तया ।
न विशश्राम चेतोऽस्य पवित्रेऽपि धरातले ॥ ३१
केवलं सर्वमेवेदमपि शुद्धं धरातलम् ।
अशुद्धमिव पश्यन्स न रेमे क्वचिदेव हि ॥ ३२
अथ संकल्पयामास स्वसंकल्पनयैव सः ।
वृक्षाग्रमेव संशुद्धं स्थितिस्तत्रोचिता मम ॥ ३३
तदिदानीं तपस्तप्स्ये तपसा येन शाखिषु ।
खगवत्स्थितिमाप्नोमि शाखासु च दलेषु च ॥ ३४
इति संचिन्त्य संज्वाल्य हुताशमतिभास्वरम् ।
जुहाव तस्मिन्प्रोत्कृत्य मांसं स्वस्कन्धभित्तितः ॥ ३५
अथ गीर्वाणवृन्दस्य समग्रा गलभित्तयः ।
मन्मुखत्वेन मा यान्तु विप्रमांसेन भस्मताम् ॥ ३६
इति संचिन्त्य भगवान्सप्तार्चिस्तस्य देवता ।
पुरो बभूव दीप्तांशुर्दीप्तांशुर्वाक्पतेरिव ॥ ३७

स्रष्टैः कुसुमैर्नीरन्ध्रा विशिखा मन्मथशरा यस्यां तथाविधा अवनिर्यस्मिन् ॥ १२ ॥ तत्र तस्मिन् जनपदे । नीपैः कदम्बैरन्यैश्च गुल्मैर्विराजिते ॥ १३ ॥ पुष्पेषु ओघैः प्रवाहैः स्फूर्जन्तो ध्वनन्तोऽनिला यस्मिन् । रसन्तः सरसाः सानुरागाः सारसा यस्मिन् ॥ १४ ॥ १५ ॥ तपःसहितेन योगेन । कदम्बपृष्ठे कदम्बाग्रे वसतीति वास्तव्यः । 'वसेस्तव्यत्कर्तरि णिच्' इत्यनुशासनात् ॥ १६ ॥ कथं केन प्रभावेन प्रकारेण च ॥ १७ ॥ १८ ॥ जीवितमायुर्नीतवान् ॥ १९ ॥ युगगणं अयनयुगलात्मकवत्सरगणं, सुखदुःखादिद्वन्द्वगणं वा भुक्त्वा अनुभूय ॥२०॥ एक एवेत्युक्त्या मातापितरमन्वगादिति गम्यते। दशया चरमभावविकारेण ग्रहदशाविशेषेण वा अपनीतः पिता यस्य, दशभिः प्राणैर्वा देहादपसृत्य नीतः परलोकाय पिता यस्य । कुररः पक्षिभेदः ॥ २१ ॥ २२ ॥ इत्थं वक्ष्यमाणप्रकारेण । अदृश्यशरीरया अन्तर्हितयेति यावत् ॥ २३ ॥ चञ्चलमशाश्वतम् ॥ २४ ॥ जीव्यते जीवति । विकरणपदव्यत्ययश्छान्दसः ॥ २५ ॥ दृश्यदृशि व्यवहारदृष्टौ यद्यत्किंचित्सिद्धमिति शेषः । गन्तव्यः प्राप्तव्यः ॥ २६ ॥ तदर्थं तस्माद्धेतोः । अहर्पतेः सूर्यस्य । 'अहरादीनां पत्यादिषु वा रेफो वक्तव्यः' इति रत्वम् ॥ २७ ॥ स्तनितात् मेघगर्जितात् ॥ २८ ॥ आवश्यकं पुत्रेणावश्यं कर्तव्यं पितुरौर्ध्वदेहिकम् ॥ २९ ॥ अनन्तसंकल्पमयं बहुतरशुद्ध्यशुद्ध्यादिकल्पनाप्रचुरम् । श्रोत्रियत्वं वेदाध्ययनतदर्थविचारानुष्ठाननिष्ठत्वम् ॥ ३० ॥ न ज्ञातमवश्यज्ञेयं ब्रह्म यया तथाविधा बुद्धिर्यस्य । तया तया शुद्ध्यशुद्ध्यादिकल्पनया ॥३१॥ क्वचिदेवेत्यप्यर्थे एवकारः ॥ ३२ ॥ ३३ ॥ तत् तदर्थम् । खगवत्पक्षिवद्देववद्वा स्थितिमवस्थानसामर्थ्यम् ॥ ३४ ॥ तपस्तप्स्ये इति संकल्पदर्शनात्तपोनन्तरं ततः शीघ्रं सिद्ध्यदर्शनादयं होमसाहसारम्भ इति गम्यते ॥ ३५ ॥ अथ भगवान्सप्तार्चिः इति संचिन्त्येति परेणान्वयः । चिन्ताप्रकारमेव दर्शयति—गीर्वाणवृन्दस्येत्यादिना । मन्मुखत्वेन अग्निमुखत्वेन । 'अग्निमुखा वै देवाः' इति श्रुतेः । समग्रा गलभित्तयः कण्ठदेशा विप्रमांसेन जघेन भस्मतां मा यान्तु न प्राप्नुवन्त्विति संचिन्त्येत्यन्वयः ॥ ३६ ॥ दीप्तांशुर्भास्वरप्रभो दीप्तांशुः सूर्यो

उवाच वचनं धीरं कुमाराभिमतं वरम् ।
गृहाण स्थापितं साधो कोशाकाशान्मणिं यथा ॥ ३८
इत्युक्तवन्तमनलमर्घपुष्पेण शोभिना ।
संपूज्य स्तुतिवादेन प्राह विप्रकुमारकः ॥ ३९
भगवन् भूतपूर्णाया भुवः पावनमण्डलम् ।
नाप्नोमि तेन वृक्षाणामुपरि स्थितिरस्तु मे ॥ ४०
इत्युक्ते मुनिपुत्रेण सर्वदेवमुखं शिखी ।
एवमस्तु तवेत्युक्त्वा जगामान्तर्द्धिमीश्वरः ॥ ४१
तस्मिन्नन्तर्हिते देवे क्षणात्सान्ध्य इवाम्बुजे ।
पूर्णकामः कुमारोऽसौ पूर्णेन्दुरिव चावभौ ॥ ४२
अधिगताभिमताननमण्डल-
द्युतिभरेण जहास स तुष्टिमान् ।
शशिनमाप्तकलाकुलमम्बुजं
विकसितं च सितस्मितशोभिना ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे दाशूरो० दाशूरवरप्रदानवर्णनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ४९

श्रीवसिष्ठ उवाच ।

अथ काननमध्यस्थं चुम्बिताम्बुदमण्डलम् ।
मध्याह्नखिन्नसूर्याश्वसेवितस्कन्धमण्डलम् ॥ १
वितानमिव दिक्कुक्षिदीर्घं विटपबाहुभिः ।
आलोकयन्तं ककुभो विकासिकुसुमेक्षणैः ॥ २
वातावधूलितानल्पभ्रमद्भ्रमरकुन्तलम् ।
प्रमार्जयन्तमाशानां मुखं पल्लवपाणिभिः ॥ ३
कच्छैरुरुगुडुच्छाच्छमञ्जरीपुञ्जकञ्जरैः ।
आस्यैरिव सताम्बूलैर्हसन्तं वनमालिकाः ॥ ४
लताविलसितोल्लासैः पुष्पकेसरधूलिभिः ।
आबद्धमण्डलाभोगं पूर्णेन्दुमिव दीप्तिभिः ॥ ५
संकटं विटपावल्या कुञ्जकूजच्चकोरया ।
छन्नया सिद्धवीथ्येव जगदुच्चतया श्रितम् ॥ ६
स्कन्धपीठोपविष्टानां लम्बमानैः कलापिनाम् ।
कलापैः शोभितं व्योम सेन्द्रचापैरिवाम्बुदैः ॥ ७
मग्नोन्मग्नैः प्रतिस्कन्धमाश्रितैश्चमरैः सितैः ।
पूर्णं मुहुर्दृष्टनष्टैः संवत्सरमिवेन्दुभिः ॥ ८
कपिञ्जलकुलालापैः कलकोकिलकूजितैः ।
जीवंजीवविरावैश्च प्रगायन्तमिवोच्छ्रितैः ॥ ९
कादम्बककदम्बैश्च कुलायकृतकेलिभिः ।
स्वर्गकोटरविश्रान्तैः सिद्धैर्जगदिवावृतम् ॥ १०
प्रवालचलहस्ताभिरलिनेत्राभिराश्रितम् ।
अप्सरोभिरिव स्वर्गं मञ्जरीभिरितस्ततः ॥ ११
सेन्द्रचापविलासेन कुमुदोत्कररेणुना ।
मञ्जरीपिञ्जराश्यामं विद्युत्वन्तमिवाम्बुदम् ॥ १२
सहस्रभुजशाखाढ्यं पूरिताकाशकोटरम् ।

वाक्पतेर्बृहस्पतेरिव ॥ ३७ ॥ [1]धीरेति साहसानुरूपं संबोधनम् । स्थापितं त्वत्संकल्पसिद्धं त्वयि स्थितमेव गृहाण । कोशाकाशात्कोशोदरान्मणिं यथा तत्स्वामी गृह्णाति तद्वत् ॥ ३८ ॥ ३९ ॥ विशुद्धिदूषकैः शूद्रचाण्डालश्वमार्जारादिभूतैः पूर्णायाः । पावनमण्डलं पवित्रप्रदेशम् ॥ ४० ॥ शिखी अग्निदेवः ॥ ४१ ॥ ४२ ॥ तन्मुखशोभामेव वर्णयति—**अधिगतेति** । अधिगतेन प्राप्तेनाभिमतेन वरेण प्रयुक्तेनाननमण्डलद्युतिभरेण स दाशूरः शशिनमम्बुजं च जहासेत्युत्प्रेक्षा ॥ ४३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दाशूरवरप्रदानवर्णनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

**शाखापल्लवपुष्पौघफलपक्षिमनोहरः ।**
**इहोत्प्रेक्षाद्यलङ्कारैः कदम्ब उपवर्ण्यते ॥ १ ॥**

मध्याह्ने खिन्नैरिव सूर्याश्वैः सेवितानि स्कन्धमण्डलानि यस्य ॥ १ ॥ वितानमिव कुर्वाणमिति शेषः । विटपवितानावृतो देशः परिशिष्टोऽन्योऽस्ति न वेति परितः ककुभो दिश आलोकयन्तम् ॥ २ ॥ वातैरवधूलिता निष्परागीकृता अनल्पा भ्रमद्भ्रमरा एव कुन्तलाः केशा यस्य । आशानां दिक्कान्तानाम् ॥ ३ ॥ कं हिमजलं छ्यन्ति बिन्दुभावेन परिच्छिन्दन्तीति कच्छाः पल्लवप्रदेशास्तैः उरुभिर्गुडुच्छानां लताविशेषाणां अच्छैर्दन्तपङ्क्तिवत्स्थितैर्मञ्जरीपुञ्जैः कञ्जरैः केसरितैः ॥ ४ ॥ लतानां विलसितेन शोभातिशयेन उल्लासैरुल्लसद्भिः पुष्पकेसरनिविष्टपरागैराबद्धो मण्डलाकारवेषो येन ॥ ५ ॥ कुञ्जेषु लतापिहितप्रदेशेषु कूजन्तश्चकोरा यस्यां तथाविधया । विटपानां शाखानामावल्या पङ्क्त्या संकटं निबिडितम् । ग्रहनक्षत्रताराविमानादिच्छन्नया सिद्धवीथ्या स्वातीपथवीथ्या उच्चतया ऊर्ध्वभावेन श्रितं जगद्ब्रह्माण्डमिव स्थितमित्यर्थः ॥ ६ ॥ कलापिनां मयूराणां कलापैर्बर्हैः ॥ ७ ॥ प्रतिस्कन्धं प्रतिस्कन्धकोटरमाश्रितैर्विश्रान्तैरन्तर्गतकायार्धेन मग्नैर्बहिर्निःसृतकायार्धेनोन्मग्नैः कैश्चित्प्रविष्टैः कैश्चिद्बहिष्टैर्वा । अत एव दृष्टनष्टैर्दृष्टादृष्टैश्चमरैर्मृगभेदैः । एतेन परितोऽधः स्कन्धानां बृहत्त्वं भूसंलग्नता च गम्यते । इन्दुपक्षे मग्नोन्मग्नैरस्तमितोदितैरत एव दृष्टनष्टैः ॥ ८ ॥ जीवंजीवाश्चकोराः ॥ ९ ॥ कादम्बकाः कलहंसाः । कुलायेषु नीडेषु कृतकेलिभिः क्रीडद्भिः सिद्धैर्देवैरावृतं जगद्ब्रह्माण्डमिव स्थितम् ॥ १० ॥ प्रवालेत्यादिविशेषणे अप्सरसां मञ्जरीणां च श्लेषात्साधारणे योज्ये ॥ ११ ॥ कुमुदग्रहणं कुमुदनीलोत्पलकोकनदादिसदृशनानावर्णलतापुष्पोपलक्षणम् । अतएवेन्द्रचापविलाससहितेन तद्रेणुना उपलक्षितं स्वमञ्जरीभिश्च पिञ्जरं आसमन्तात् पत्रैः श्यामम् । विद्युत्वन्तमिति 'तसौ मत्वर्थे' इति भत्वान्न जश् ॥ १२ ॥ स्वं विश्वरूपं दर्शयन्तं विष्णुमिव स्थितमित्यर्थः । अथवा विश्वरूपं जगत्स्व-

१ 'धीरं' इति द्वितीयैकवचनस्थाने धीरेति [illegible] रस्याच्च स एव पाठः समीचीनः.

विश्वरूपमिवोद्भूतं चन्द्रार्ककृतकुण्डलम् ॥ १३
तले निषण्णनागेन्द्रं व्योम्नि तारागणाकुलम् ।
लतापुष्पमयं मध्ये खमण्डलमिवापरम् ॥ १४
पितामहमिवाशेषशैलकाननशालिनम् ।
फलपल्लवपुष्पाणां कोशमेकमिवावनौ ॥ १५
दधानं कलिकाजालं स्थगितं पुष्पधूलिभिः ।
कच्छेष्वर्ककरच्छन्नताराजालमिवाम्बरम् ॥ १६
विलोलविहगैः स्कन्धैः कुलायकुलसंकुलैः ।
वलितं भूतलं लोके पूर्णैर्जनपदैरिव ॥ १७
मञ्जरीसुपताकाढ्यं लतामण्डलमण्डितम् ।
पुष्पमङ्कोलधवलं पुष्पप्रकरपूरितम् ॥ १८
कूजच्चकोरभ्रमरशुककोकिलसारिकम् ।
घनस्तवकसंछन्नकुहरोग्रगवाक्षकम् ॥ १९
संचरत्पक्षिबहुलं जनमन्थरकोटरम् ।
सर्वासां वनदेवीनामन्तःपुरमिवोत्तमम् ॥ २०
कूजद्भृङ्गतरङ्गौघैः पुष्पकेसरराजिभिः ।
राजमानं पतन्तीभिः सरिद्भिरिव पर्वतम् ॥ २१
भ्रमद्भिः पुष्पपत्रौघैर्मन्दवातविलासिभिः ।
वर्धमानैर्वृतस्कन्धं शुभ्राभ्रैरिव भूधरम् ॥ २२
मातङ्गकटघृष्टेन जानुस्तब्धेन पीठिना ।
आभोगिना बद्धपदं तरुणेव महाचलम् ॥ २३
विचित्रवर्णपक्षाणां स्कन्धकोटरचारिणाम् ।
वृतं खगानां वृन्देन भूतानामिव शार्ङ्गिणम् ॥ २४

स्तवकाङ्गुलिजालेन लोलेनाभिनयक्रियाम् ।
दिशन्तमिव वल्लीनां प्रनृत्तानां वनानिलैः ॥ २५
कश्चिदेव निवासो मे नार्थिनामिति तुष्टितः ।
नृत्यन्तमिव बह्वाढ्यलतावलयवल्गनैः ॥ २६
लताकान्तैककान्तत्वाच्छृङ्गाररसनिर्भरम् ।
काकल्येव प्रगायन्तं मत्तालिनिजनिःस्वनैः ॥ २७
आदरोन्मुक्तकुसुमं सिद्धानां व्योमचारिणाम् ।
स्वागतानीव कुर्वाणं कोकिलालिकुलारवैः ॥ २८
लतापुष्पफलोल्लासं प्रान्तपञ्चमहीरुहाम् ।
विहसन्तमिवाच्छाभिः पुष्पकुड्मलदीप्तिभिः ॥ २९
पारिजातमिवाजेतुमूर्ध्वगैः खगमण्डलैः ।
व्योमान्तराभिधावन्तमलमुद्धतकन्धरम् ॥ ३०
मध्यभागस्फुरत्तुङ्गैः स्तबकैर्घनपङ्क्तिभिः ।
सहस्राक्षत्वमतुलैर्जेतुमिन्द्रमिवोद्यतम् ॥ ३१
कचित्कुसुमगुच्छाच्छफणामणिगणावृतम् ।
पातालादुत्थितं शेषमिव व्योमदिदृक्षया ॥ ३२
रजसोद्धूलिताकारं द्वितीयमिव शंकरम् ।
छायया फलशालिन्या समस्तजनशंकरम् ॥ ३३
निबिडदलनिवाहभिन्नकोशैः
कुसुमलतानवमण्डपैरुपेतम् ।
पुरमिव गगने कदम्बवृक्षं
खगकुलनागरसंकुलं ददर्श ॥ ३४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे दाशूरो० दाशूरकदम्बवर्णनं नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

रूपमिव स्थितमित्यर्थः ॥ १३ ॥ खमण्डलं ब्रह्माण्डोदराकाशम् । तदपि हि तले भूमेरधो निषण्णा निविष्टा नागेन्द्राः शेषादयो दिग्गजाश्च यस्मिंस्तत् । शिष्टं स्पष्टम् ॥ १४ ॥ पितामहपक्षे स्वसृष्टैरशेषैः प्राणिभिः शैलैः काननैश्च शालिनं शोभमानम् । कदम्बपक्षे अशेषैः शैलस्य काननैः शोभमानमित्यर्थः ॥ १५ ॥ प्रागुक्तेषु कच्छेषु पुष्पधूलिभिः स्थगितमाच्छादितं कलिकाजालं कोरकसमूहं दधानम् ॥ १६ ॥ वलितं व्याप्तम् ॥ १७ ॥ अन्तःपुरसाम्यमाह—**मञ्जरी**त्यादित्रिभिः । मङ्कोलं गृहलेपनचूर्णम् ॥ १८ ॥ अन्तःपुरपक्षे घनैर्बहुभिः रत्नादिस्तबकैः संछन्नकुहराः पूरितगर्भाः । लोहार्गलवर्षवरगुप्तत्वादुग्रा अप्रधृष्या गवाक्षाः कुड्यापवरकाणि यत्र । वृक्षपक्षे सर्पगर्भत्वादुग्राः ॥ १९ ॥ वृक्षपक्षे छायोपसेविभिर्जनैर्मन्थरकोटरं विलोडिततलम् ॥ २० ॥ २१ ॥ वर्धमानैः प्रत्यहमुपचीयमानैः ॥ २२ ॥ इदानीं मूलबन्धं वर्णयति—**मातङ्गे**ति । मातङ्गकटघृष्टेनेत्यनेन मूलबन्धस्य तावदौन्नत्यं गम्यते । ऊर्ध्वज्ञुजानुवत्स्तब्धेन पीठिना पीठवत्प्रसृतेन आभोगिना विस्तीर्णेन मूलबन्धेन बद्धपदं अवष्टब्धस्थानम् । तरुणा उपत्यकाप्ररूढतरुवृन्देन ॥ २३ ॥ भूतानां पार्षदानां वृन्देनेव ॥ २४ ॥ अभिनया नाट्यशास्त्रप्रसिद्धा भावव्यञ्जककरनेत्रादिचेष्टाविशेषास्तेषां क्रियां निष्पादनप्रकारं दिशन्तमुपदिशन्तमिव ॥२५॥ मूलकोटरस्कन्धशाखापत्रपुष्पादिप्रदेशानां मध्ये मे मम कश्चिदेक एव अर्थिनां मनुष्यमृगपक्ष्यादीनां निवासो न । अन्यः सर्वोऽपि निवासत्वेनोपयुक्तः कदाचित्कश्चिदेकः परिशिष्यते । अहो मे परोपकारे सर्वाङ्गसाफल्यमिति तुष्टितो हर्षपारवश्येन हेतुना ॥२६॥ लतालक्षणानां बह्वीनां कान्तानामेककान्तत्वाद्धेतोः । काकल्या कलध्वनिना ॥२७॥ आदरोन्मुक्तकुसुमं यथा स्यात्तथा ॥२८॥ प्रान्तस्थानां पञ्चमहीरुहां वटोदुम्बरप्लक्षाम्रपलाशाख्यानां पञ्चपुण्यवृक्षाणाम् । उत्तरप्रान्तस्थानां मन्दारादिपञ्चकल्पतरूणां वा । लताद्युल्लासं हसन्तमिव ॥ २९ ॥ अलमत्यर्थमुद्धतकन्धरमुन्नमितग्रीवं यथा स्यात्तथा व्योमान्तरा आकाशोदरे अभिधावन्तमिव ॥ ३० ॥ घनपङ्क्तिभिर्निबिडश्रेणिभिः । सहस्राक्षत्वं असंख्यनेत्रत्वं प्राप्येति शेषः । अतुलैः शोभया संख्यया चेन्द्रनेत्रेभ्योऽधिकत्वात्तैस्तुलयितुमशक्यैः ॥३१॥ कुसुमगुच्छलक्षणैः कुसुमगुच्छसदृशैश्च अच्छफणामणिभिर्व्योमदिदृक्षया हेतुना पातालादुत्थितं शेषमिव स्थितम् ॥३२॥ भगवांस्तु भक्तानामेव शंकरः अयं तु समस्तजनशंकर इत्यतिशयः ॥ ३३ ॥ निबिडानां दलानां निवाहा निवहास्तेषु भिन्नकोशैर्विकासित-

१ स्फारद्रुमैः इति पाठः. २ प्रास्तैः इति पाठः.

## पञ्चाशः सर्गः ५०

श्रीवसिष्ठ उवाच ।

तमथासौ तथा बुद्धिफलपल्लवशालिनम् ।
आनन्दमन्थरमनाः पुष्परूपाचलोपमम् ॥ १
कदम्बं रोदसीस्तम्भमारुरोह वनस्थितम् ।
एकार्णवगतं शौरिर्वटवृक्षमिवोन्नतम् ॥ २
तत्रासौ व्योमलग्नायाः शाखायाः प्रान्तपल्लवे ।
विवेश विगताशङ्कमेकाग्रं तप आस्थितः ॥ ३
अथोपविश्य मृदुनि नवपल्लवविष्टरे ।
क्षणमालोकितास्तेन दिशः कौतुकचञ्चलम् ॥ ४
सरिदेकावलीरम्याः शैलेन्द्रस्तनकुड्मलाः ।
निर्मलाकाशकबरा लोलनीलाम्बुदालकाः ॥ ५
नीलपल्लववसनाः पुष्पपूरावतंसिकाः ।
गृहीतसागरापूर्णकलशाः पुरुभूषणाः ॥ ६
धृतप्रफुल्लपद्मिन्यः सुगन्धिमुखमारुताः ।
नीलघुंघुमकाकल्यो निर्झरारावनूपुराः ॥ ७
द्युमूर्धानो महीपादा वनालीरोमराजयः ।
जङ्गलोरुनितम्बिन्यश्चन्द्रार्ककृतकुण्डलाः ॥ ८
शालिसंसारकेदाराश्चन्दनस्थालिकान्विताः ।
शिखरोरसिजालग्नहिमशुभ्राम्बुदांशुकाः ॥ ९
महार्णवपयःपूरनवमण्डनदर्पणाः ।
ऋक्षौघघर्मपुलका भुवनान्तःपुरान्तराः ॥ १०
आर्तवस्तनधारिण्यो लग्नसूर्यांशुकुङ्कुमाः ।
विचित्रकुसुमोपेताश्चन्द्रांशुसितचन्दनाः ॥ ११
गगनगतलतादलोपविष्टः
प्रसृतवनावनिवारिवाहवेषाः ।
त्रिभुवनवनिता ददर्श हृष्टः
कुसुमनिरन्तरमण्डिता दशाशाः ॥ १२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे दा० दाशूरदिगवलोकनं नाम पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ५१

श्रीवसिष्ठ उवाच ।

ततःप्रभृति तत्रासौ प्रसिद्धस्तापसाश्रमे ।
कदम्बदाशूर इति शूरस्तपसि दारुणे ॥ १
तस्मिँल्लतादले स्थित्वा विलोक्य ककुभः क्षणात् ।
दृढपद्मासनं बद्ध्वा दिग्भ्यः प्रत्याहृतात्मना ॥ २
अज्ञातपरमार्थेन क्रियामात्रे च तिष्ठता ।
फलकार्पण्ययुक्तेन मनसा सोऽकरोन्मखम् ॥ ३
नभोगतलतापत्रसंस्थितेनान्तरात्मना ।
सर्वाः स्वमनसा तेन कृता यज्ञक्रियाः क्रमात् ॥ ४
तत्रासौ दश वर्षाणि मनसैवायजत्सुरान् ।
गवाश्वनरमेधाद्यैर्यज्ञैर्विपुलदक्षिणैः ॥ ५
कालेनामलतां याते वितते तस्य चेतसि ।

---

मुकुलैर्निबिडदलनिवहभेदेन भिन्नसंस्थानैश्च कुसुमलतानां नवमण्डपैरुपेतं घटितम् । खगकुलक्षणैर्नागरैर्जनैः संकुलम् गगने रचितं पुरमिव स्थितं कदम्बवृक्षं ददर्शेत्यर्थः ॥ ३४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दाशूरकदंबवर्णनं नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥

तत्कदम्बाग्रसंस्थेन दाशूरेण विलोकिताः ।
दिशोऽत्र वनिताकारा वर्ण्यन्ते गुणविस्तरैः ॥ १ ॥

असौ दाशूरः । तथा प्रागुक्तप्रकारा भूम्यपवित्रताबुद्धिर्यस्य ॥ १ ॥ रोदस्योर्द्यावापृथिव्योः स्तम्भमिव वने स्थितम् ॥ २ ॥ विगतापाविम्यविक्षेपाशङ्कं यथा स्यात्तथा ॥ ३ ॥ नवपल्लवकल्पिते विष्टर आसने । कौतुकेन चञ्चलं चपलेक्षणं यथा स्यात्तथा ॥ ४ ॥ अत्र सर्वत्र विशेषणान्युभयत्र योज्यानि । सरिल्लक्षणाभिरेकावलीभिर्हारभेदैः रम्याः ॥ ५ ॥ पुरुभूषणा बहुभूषणाः ॥ ६ ॥ नीलानां भ्रमरकोकिलादीनां घुंघुमा ध्वनय एव काकल्यो मधुराव्यक्तभाषितानि यासां ताः ॥ ७ ॥ ८ ॥ शाल्यादिसस्यकम्पैः संसाराः स्पन्दमानाः केदाराः क्षेत्राङ्गभक्तयो यासाम् । चन्दनस्थैश्चन्दनाश्रितैरलिकैर्ललाटैरन्विताः । पर्वतशिखरलक्षणेषूरसिजेषु स्तनेष्वासमन्ताल्लग्नानि हिममिव शुभ्राण्यम्बुदांशुकानि यासाम् ॥ ९ ॥ महार्णवानां पयःपूरा एव नवमण्डनदर्शनार्था दर्पणा यासाम् । ऋक्षौघा नक्षत्रपङ्क्तय एव घर्मपुलकाः स्वेदबिन्दवो यासाम् ॥ १० ॥ आर्तवानि तत्तदृतूत्पन्नकुसुमपल्लवादीन्येव स्तनधारिण्यः कूर्पासका यासाम् ॥ ११ ॥ गगनगताया लतायाः शाखाया दलेषूपविष्टः सन् प्रसृता विस्तीर्णा वनानि अवनयो वारिवाहाश्च वेषाः कृत्रिमाकारभेदकालंकारा यासां तथाविधास्त्रिभुवनस्थजनोपभोग्यत्वात्त्रिभुवनवनिताः दश आशा दिशो ददर्शेत्यर्थः ॥ १२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दाशूरदिगवलोकनं नाम पञ्चाशः सर्गः ॥ ५० ॥

मनोयज्ञैरात्मबोधो वनदेव्यां सुतोद्भवः ।
दाशूरस्यात्र पुत्राय ज्ञानदानं च कीर्त्यते ॥ १ ॥

दारुणे तपसि शूरः अपराङ्मुखः । सदोद्युक्त इति यावत् ॥ १ ॥ ककुभो दिशः । प्रत्याहृतात्मना परावर्तितेन ॥ २ ॥ ३ ॥ नभोगताया लतायाः शाखायाः पत्रेषु स्थितेन तेन सर्वा आधानाद्यश्वमेधान्ताः ॥ ४ ॥ ५ ॥ अमलतां रागादिदोषशून्यताम् ।

बलादवततारान्तर्ज्ञानमात्मप्रसादजम् ॥ ६
ततो विशीर्णावरणो विगलद्वासनामलः ।
स ददर्शैकदा तस्यां लतायामग्रतः स्थिताम् ॥ ७
वनदेवीं विशालाक्षीमालोककुसुमाम्बराम् ।
कामिनीं कान्तवदनां मंदघूर्णितलोचनाम् ॥ ८
नीलोत्पलामोदवतीमतीव सुमनोहराम् ।
तामुवाचानवद्याङ्गीं स मुनिर्विनताननाम् ॥ ९
कोकिलाकुसुमापूरनतां वनलतामिव ।
का त्वमुत्पलपत्राक्षि कान्तिविक्षोभितस्मरा ॥ १०
वयस्यामिव पुष्पाढ्यां लतां किमिव तिष्ठसि ।
इत्युक्ते मृगशावाक्षी गौरपीनपयोधरा ॥ ११
मुनिमाह मनोहारि मुग्धाक्षरमिदं वचः ।
यानि यानि दुरापानि वाञ्छितानि महीतले ॥ १२
प्राप्यन्ते तानि तान्याशु महतामेव याञ्चया ।
अहमस्मिँल्लताकीर्णे त्वत्कदम्बाश्यलंकृते ॥ १३
लतालीलालया ब्रह्मन्विपिने वनदेवता ।
यश्चैत्रसितपक्षस्य त्रयोदश्यां स्मरोत्सवे ॥ १४
बभूव वनदेवीनां समाजो नन्दने वने ।
तत्राहमगमं नाथ त्रैलोक्यललनासदः ॥ १५
तत्र दृष्टा मया सर्वा वयस्या मदनोत्सवे ।
अपुत्रया पुत्रयुतास्तेनाहं दुःखिता भृशम् ॥ १६
त्वयि सर्वार्थसार्थस्य बृहत्कल्पतरौ स्थिते ।
अनाथेव कथं नाथ किल शोचाम्यपुत्रिका ॥ १७
देहि मे भगवन्पुत्र नो चेद्देहमिहाग्नये ।
प्रकरोम्याहुतिं पुत्र दुःखदाहोपशान्तये ॥ १८
तामित्युक्तवतीं तन्वीं विहस्य मुनिपुङ्गवः ।
प्राह हस्तगतं पुष्पं तस्यै दत्त्वा दयान्वितः ॥ १९
गच्छ तन्वङ्गि मासेन पूजार्हमलिलोचनम् ।
प्रसोष्यसे सुतं कान्तं प्रसूनमिव सल्लता ॥ २०
किंत्वसौ मरणावेशयायिन्या नस्त्वया सुतः ।
याचितः कृच्छ्रं संप्राप्य ज्ञाता तेन भविष्यति ॥ २१
इत्युक्त्वा स मुनिस्तन्वीं प्रसन्नमुखमण्डलाम् ।
परिचर्यां करोमीति प्रार्थनोत्कां व्यसर्जयत् ॥ २२
सा जगामात्मसदनं सोऽतिष्ठत्स्वात्मना सह ।
अवहत्क्रमशः काल ऋतुसंवत्सराङ्कितः ॥ २३
अथ दीर्घेण कालेन सैवोत्पलविलोचना ।
द्वादशाब्दमुपादाय सुतं मुनिमुपाययौ ॥ २४
सा प्रणम्योपविश्याग्रे मुनिमिन्दुसमाननम् ।
उवाच कलया वाचा चूतद्रुममिवालिनी ॥ २५
अयं स भगवन्भव्यः कुमारः पुत्र आवयोः ।
कृतो मया समग्राणां कलानां किल कोविदः ॥ २६
प्रभो केवलमेतेन ज्ञानं नाधिगतं शुभम् ।
येन संसारचक्रेऽस्मिन्न पुनः परिपीड्यते ॥ २७
ज्ञानं त्वमेवास्य विभो कृपयोपदिशाधुना ।
को हि नाम कुले जातं पुत्रं मौर्ख्येण योजयेत् ॥ २८
एवं वदन्तीं स मुनिः सच्छिष्यमबले सुतम् ।
इहैव स्थापयैनं त्वमित्युक्त्वा तां व्यसर्जयत् ॥ २९
तस्यां गतायां स पितुरन्तेवासितया तया ।
अतिष्ठत्संयतो धीमानर्कस्येवारुणः पुरः ॥ ३०
कदर्थः प्राप्य विज्ञानं ततश्चित्राभिरुक्तिभिः ।
चिरकालमसौ तत्र मुनिः पुत्रमबोधयत् ॥ ३१
आख्यायिकाख्यानशतैर्दृष्टान्तैर्दृष्टिकल्पितैः ।
तथेतिहासवृत्तान्तैर्वेदवेदान्तनिश्चयैः ॥ ३२

---

एवं प्रतिबन्धक्षये सति बलात् प्राग्जन्मकृतश्रवणसंस्कारोद्बोधबलात् ॥ ६ ॥ ततो ज्ञानाद्विशीर्णाज्ञानावरणः । तदभ्यासाच्च विगलद्वासनामलो जीवन्मुक्तः सन्नित्यर्थः ॥ ७ ॥ ८ ॥ भक्तिप्रणामलज्जाभिर्विनताननाम् ॥ ९ ॥ कोकिलया कुसुमापूरैश्च नताम् ॥ १० ॥ लतां अवष्टभ्येति शेषः ॥ ११ ॥ १२ ॥ याञ्चया प्रार्थनया ॥ १३ ॥ लताकुञ्जा एव लीलार्था आलया यस्याः । का त्वमिति प्रश्नस्योत्तरमुक्त्वा स्वागमनप्रयोजनमाह—य इत्यादिना । स्मराराधनाय प्रवर्तिते गीतवादित्रनाट्यबलिभोज्याद्युत्सवे ॥ १४ ॥ त्रैलोक्यस्थानां ललनानां वनदेवीनां सदः समाजम् ॥ १५ ॥ तेनापुत्रत्वेन ॥ १६ ॥ सर्वेषामर्थानां पुरुषार्थानां सार्थस्य सङ्घस्य । अजन्तुसंघे सार्थशब्दो गौणः ॥ १७ ॥ दाहोपशान्तय इति मानसदाहापेक्षया शरीरदाहः सुखायत इति भावः ॥ १८ ॥ दयान्वितो नतु धैर्याच्च्युत इति भावः ॥ १९ ॥ पूजार्हं जगत्पूज्यम् ॥ २० ॥ कृच्छ्रं प्राणसंकटं संप्राप्य मरणावेश आत्मघातसंकल्पस्तेन यायिन्या आगतया त्वया नः असक्तो याचितस्तेन हेतुना ज्ञाता तत्त्वज्ञः । नत्वन्यवनदेवीपुत्रवदसौ भोगलम्पट इत्यर्थः ॥ २१ ॥ परिचर्यां संगमसेवाद्युपचारम् ॥ २२ ॥ स्वात्मना सहेत्यसहाय इति यावत् । अवहत् अतिचक्रमे ॥ २३ ॥ २४ ॥ अलिनी भ्रमरी ॥ २५ ॥ कलानां वेदादिसर्वविद्यानाम् ॥ २६ ॥ ज्ञानं ब्रह्मविद्या ॥ २७ ॥ **मौर्ख्येणे**ति । इतरविद्यानामतत्त्वविषयत्वादविद्यात्वमेवेति न मौर्ख्यनिस्तारस्ताभिरिति भावः ॥ २८ ॥ सच्छिष्यमुत्तमशिष्यगुणसंपन्नम् ॥ २९ ॥ अन्तेवासितया गुरुशुश्रूषणव्रतेन संयतः स्थिरनियमः सन् । अरुणो गरुडाग्रजः ॥ ३० ॥ कदर्थः शुश्रूषाव्रतचर्यादिक्लेशैः कदर्थितः सन् विज्ञानं उपायभूतशास्त्रजन्यं परोक्षज्ञानं प्राप्य स्थित इति शेषः । ततस्तदनन्तरं तं पुत्रं चिरकालं अबोधयत् । अपरोक्षीभावायोपदिदेशेत्यर्थः । अथवा पिता प्राक्तपःकदर्थितः सन् विज्ञानं प्राप्य पुत्रोऽप्येवं कदर्थितो माभूदिति स्वयमबोधयदित्यर्थः ॥ ३१ ॥ स्वोपलब्धार्थकथानिबन्धा आख्यायिकाः । पराख्यानादिकथानिबन्धा आख्यानानि । तेषां शतैः । दृष्टिकल्पितैः साम्यदर्शन-

---

१ दाहदुःखमल्पमिति पाठः.

अनुद्वेगितया नित्यं विस्तरेण कथाक्रमैः ।
अनुभूतिमुपारूढे रूढिमेति यथा मयि ॥ ३३
अनुभवशतो रसातिरिक्तै-
रलमुचितार्थवचोगणैर्महात्मा ।
जलद इव शिखण्डिनं पुरःस्थं
तनयमबोधयदम्बरे महर्षिः ॥ ३४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे दाशूरो॰ दाशूरसुतानुबोधनं नामैकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ५२

श्रीवसिष्ठ उवाच ।
कदाचिदथ मार्गेण तेन कैलासवासिनीम् ।
अहं स्नातुमदृश्यात्मा व्योमवीथीगतोऽगमम् ॥ १
निर्गत्य नभसः सप्तमुनिमण्डलकोटरात् ।
रात्रौ प्राप्तोऽस्मि सुमते दाशूरतरुमुन्नतम् ॥ २
यावच्छृणोमि विटपकुहरात्कानने वचः ।
कुड्मलाम्भोजलग्नस्य षट्पदस्येव निःस्वनम् ॥ ३
शृणु पुत्र महाबुद्धे वस्तुतोऽस्य समासिमाम् ।
वर्णयामि महाश्चर्यामेकामाख्यायिकां तव ॥ ४
अस्ति राजा महावीर्यो विख्यातो भुवनत्रये ।
नाम्ना खोत्थ इति श्रीमाञ्जगदाक्रमणक्षमः ॥ ५
अस्यानुशासनं सर्वे भुवनेष्वपि नायकाः ।
शिरोभिर्धारयन्त्युच्चैश्चूडामणिमिवार्थिनः ॥ ६
यः साहसैकरसिको नानाश्चर्यविहारवान् ।
केनचित्त्रिषु लोकेषु न महात्मा वशीकृतः ॥ ७
अस्यारम्भसहस्राणि सुखदुःखप्रदान्यलम् ।
संख्यातुं केन शक्यन्ते कल्लोला जलधेरिव ॥ ८
यस्य वीर्यं सुवीर्यस्य न शस्त्रैर्न च पावकैः ।
केनचिद्भुवने क्रान्तमाकाशमिव मुष्टिना ॥ ९
यदीयां विततारम्भां लीलां निर्माणभासुराम् ।
न मनागनुवर्तन्ते शक्रोपेन्द्रहरा अपि ॥ १०
त्रयस्तस्य महाबाहो देहा विहरणक्षमाः ।
जगदाक्रम्य तिष्ठन्ति ह्युत्तमाधममध्यमाः ॥ ११
व्योमन्येवातिवितते जातोऽसौ त्रिशरीरकः ।
तत्रैव च स्थितिं यातः शब्दपातश्च पक्षिवत् ॥ १२
तत्रैवापारगगने नगरं तेन निर्मितम् ।
चतुर्दशमहारथ्यं विभागत्रयभूषितम् ॥ १३
वनोपवनमालाढ्यं क्रीडाशिखरिसुन्दरम् ।
मुक्तालताविवलितवापीसप्तकभूषितम् ॥ १४
शीतलोष्णात्मकाक्षीणदीपद्वयविराजितम् ।
ऊर्ध्वाधोगतिरूपेण वणिङ्मार्गेण संकुलम् ॥ १५
तस्मिन्नेवातिविपुले पत्तने तेन भूभृता ।

---

कल्पितैर्भारतादीतिहासप्रसिद्धैर्वृत्तान्तैः निश्चयैः सिद्धान्तैः ॥३२॥ मयि प्रत्यगात्मनि रूढिं व्युत्पत्तिदार्ढ्यं यथा धिया पुत्र एति प्राप्नोति तथा इतिहासदृष्टान्तादिभिरबोधयदिति पूर्वत्रान्वयः ॥३३॥ अनुभवः स्वात्मबोधचमत्कारस्तद्वशतः सर्वरसेभ्योऽतिरिक्तैरतिशयितैः । उचितः परमपुरुषार्थरूपत्वादवश्यबोधार्हः अर्थो येषां तथाविधैर्वचोगणैः । जलदपक्षे अनुभववशतः श्रवणमात्रेण शिखण्डिनां प्रीतिजननादन्यरसाधिकैः । उचितः शिखण्डिनीसहनृत्याद्यर्थो येभ्यस्तथाविधैर्वचोगणैर्गर्जितसमूहैः । अम्बरे वृक्षाग्रे अन्तरिक्षे च ॥ ३४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे दाशूरसुतानुबोधनं नामैकपञ्चाशत्तमः सर्गः ॥ ५१ ॥

खोत्थस्य राज्ञश्चरितं कल्पयित्वेह वर्ण्यते ।
संकल्पकल्पितं विश्वं मिथ्यैवेति विवक्षया ॥ १ ॥

तेन दाशूरकदम्बोपलक्षितेन मार्गेण । कैलासवासिनीं मन्दाकिनीमिति शेषः ॥ १ ॥ सप्तर्षिमण्डलं कोटरमिवैकदेशो यस्य तथाविधान्नभसो द्युलोकाकाशात् ॥ २ ॥ यावदिति साकल्ये निपातः ॥ ३ ॥ यद्वचः श्रुतं तदेवाह—शृणु पुत्रेत्यादिना । अस्य संसारस्य समासुपमानभूताम् ॥ ४ ॥ खात् अव्याकृताकाशात् कालत्रयेऽपि जगच्छून्याद्ब्रह्माकाशाद्वा उत्थः उत्तरसर्गेऽस्य व्याख्या मूले स्पष्टेति न विस्तरेणात्र व्याख्यायते ॥ ५ ॥ नायका ईश्वरा ब्रह्मादयोऽपि । अर्थिनो धनिनः ॥ ६ ॥ ७ ॥ ८ ॥ क्रान्तमभिभूतमनुसृतं वा ॥ ९ ॥ अल्पेऽपि प्रयोजने बहुतरकल्पनासहस्रसंकुलत्वाद्विततारम्भाम् । स्वप्नमनोरथादिनिर्माणैर्भासुराम् । अनुवर्तन्ते अनुकर्तुं शक्नुवन्तीति यावत् ॥ १० ॥ सात्त्विकराजसतामसभेदात्त्रयः । विहरणक्षमाः सर्वव्यवहारक्रीडासमर्थाः ॥११॥ व्योमन्यव्याकृताकाशे । यथा पक्षी व्योमन्येवाण्डपिण्डगरुन्मयदेहत्रयात्मकः क्रमाज्जातः सर्वतः परिभवशङ्की निःसारपिप्पलादिफलास्वादलोलुपः शब्दमात्रादुत्पतति नत्वर्थतत्त्वं विमृशति तद्वदयमपि स्थूलसूक्ष्मकारणात्मकत्रिशरीरको व्योमनि ब्रह्माकाशे जातः सन् सर्वतो भीतस्तुच्छविषयासक्तो विधिनिषेधशब्दानुपाती भ्रमतीत्यर्थः ॥ १२ ॥ नगरं ब्रह्माण्डरूपं चतुर्दशलोकात्मकमहारथ्यं चतुर्दशविद्यात्मकरथ्यामार्गविभक्तं च। एवं कर्मकरणव्युत्पत्तिभ्यां विभागत्रयेण त्रिलोकात्मना त्रय्यात्मना च भूषितम् ॥ १३ ॥ वनानां नन्दनादीनाम् । शिखरिभिर्मेर्वादिभिः । वापीसप्तकं समुद्राः ॥ १४ ॥ दीपद्वयं चन्द्रसूर्यौ । शास्त्रीयैः कर्मभिरूर्ध्वगतिरशास्त्रीयैरधोगतिरित्येवंरूपेण ॥ १५ ॥ संसारिणो जङ्गमाः । मुग्धा विषयव्यामूढा

---

१ मूलतः इति पाठः, तत्र सार्वविभक्तिकस्त[illegible]

संसारिणो विरचिता मुग्धापवरका गणाः ॥ १६
ऊर्ध्वं केचिदधः केचित्केचिन्मध्ये नियोजिताः ।
केचिच्चिरेण नश्यन्तः केचिच्छीघ्रविनाशिनः ॥ १७
असितच्छादनच्छन्ना नवद्वारविभूषिताः ।
अनारतवहद्वाता बहुवातायनान्विताः ॥ १८
दीपपञ्चकसालोकास्त्रिस्थूणाः शुक्लदारवः ।
मसृणालेपमृदवः प्रतोलीभुजसंकुलाः ॥ १९
मायया रचितास्तेन राज्ञा तेषु महात्मना ।
रक्षितारो महायक्षा नित्यमालोकभीरवः ॥ २०
अथापवरकौघेषु चलत्सु स महीपतिः ।
करोति विविधां क्रीडां नीडेष्विव विहङ्गमः ॥ २१
त्रिशरीरशतेष्वन्तस्तैर्यक्षैः सह पुत्रक ।
लीलावशमुषित्वा तु पुनर्निर्गम्य गच्छति ॥ २२
तस्येच्छा जायते वत्स कदाचिच्चलचेतसः ।
पुरं भविष्यन्निर्माणं किंचिद्यामीति निश्चला ॥ २३
भूताविष्ट इवावेगात्तत उत्थाय धावति ।
पुरं तदप्ययथाप्नोति गन्धर्वैरिव निर्मितम् ॥ २४
तस्येच्छा जायते पुत्र कदाचिच्चलचेतसः ।
विनाशं संप्रयामीति तेनाशु स विनश्यति ॥ २५
पुनरुत्पद्यते तूर्णं स्वात्मनोर्मिरिवाम्भसः ।
व्यवहारं तनोत्युच्चैः पुनरारम्भमन्थरम् ॥ २६
स्वयैव व्यवहृत्याथ कदाचित्परिभूयते ।
किंकरोम्यहमज्ञोऽस्मि दुःखितोऽस्मीति शोचति ॥
मुदमेत्य कदाचिच्च स्वयमायाति दीनताम् ।
प्रावृड्वर्षकलोल्लासपूरादिव नदीरयः ॥ २८
जयति गच्छति वल्गति जृम्भते
स्फुरति भाति न भाति च भासुरः ।
सुत महामहिमा स महीपतिः
पतिरपामिव वातरयाकुलः ॥ २९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे दाशूरो० खोत्थविभववर्णनं नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

## त्रिपञ्चाशः सर्गः ५३

श्रीवसिष्ठ उवाच ।
अथापृच्छत्सुतस्तत्र जम्बूद्वीपे महानिशि ।
कदम्बाग्रावचूडस्थं पितरं पावनाशयम् ॥ १
पुत्र उवाच ।
कोऽसौ खोत्थ इति ख्यातो भूपस्तातोत्तमाकृतिः ।
कथितं च किमेतन्मे त्वयेति ब्रूहि तत्त्वतः ॥ २
क भविष्यति निर्माणं वर्तमाने क गम्यता ।
उभयार्थविरुद्धत्वान्मन्मोहाय वचस्तव ॥ ३
दाशूर उवाच ।
शृणु पुत्र यथाभूतमेतत्ते कथयाम्यहम् ।

अपवरकवदात्माकाशपरिच्छेदकत्वादपवरका देवमानुषादिदेहगणाः ॥१६॥१७॥ असितैश्छादनैः केशतृणैश्छन्नाः । बहुभिर्वातायनैरूर्ध्वच्छिद्रैः ॥ १८ ॥ दीपपञ्चकैर्ज्ञानेन्द्रियैः सालोकाः सप्रकाशाः—ऊरू कसेरुका[३] चेति तिस्रः स्थूणाः स्तम्भा येषाम् । शुक्लान्यस्थीन्येव वंशदारुस्थानीयानि येषु । मसृणैः स्निग्धैरालेपमृत्तिकास्थानीयैश्चर्मभिः । प्रतोल्यो रथ्यास्तद्रूपैर्भुजैः संकुलाः ॥ १९ ॥ तेषां अपवरकाणां अभिमानेन रक्षितारो यक्षाः कार्यकरणैः पूज्याः स्वामिभूता अहंकाराः । आलोकादात्मविवेकाद्भीरवः । ततस्तत्क्षयादित्यर्थः ॥२०॥ चलत्सु व्यवहारवत्सु स महीपतिः संकल्पात्मा जीवः ॥ २१ ॥ लीलाभिरवशमस्वाधीनं यथा स्यात्तथेत्युषित्वा निर्गम्य चेत्युभयान्वयि ॥ २२ ॥ भविष्यन्निर्माणं अविद्यमानं स्वप्नादिजगत् । निश्चला यावत्तद्भोगं स्थिरा ॥ २३ ॥ आवेगान्निद्रायावेशात् उत्थाय जाग्रद्देहाद्यभिमानं त्यक्त्वा धावति । 'स तत्र बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव' इति श्रुतेः गन्धर्वैर्निर्मितं पुरं गन्धर्वनगरमिव मिथ्याभूतमित्यर्थः ॥ २४ ॥ विनाशं संकल्पलयावस्थां सुषुप्तिम् । विनश्यति कारणाविद्यायां कर्मबीजसंस्कारशेषं करकवद्विलीयते ॥ २५ ॥ स्वात्मना पूर्वस्वभावेनैव । स एवाहमिति सुषुप्तोत्थितस्य प्रत्यभिज्ञानुभवादिति भावः ॥ २६ ॥ परिभूयते शत्रुरोगदारिद्र्यादिभिः ॥ २७ ॥ मुदं पूर्वानुभूतसुखमेत्य अतिक्रम्य स्मृत्वा वा ॥ २८ ॥ हे सुत, महात्मा स पूर्वोक्तो महीपतिः सति पराभिभवसामर्थ्ये परान् गच्छति जयति च संपदः प्राप्य जृम्भते स्फुरति संचलति भाति च जाग्रत्स्वप्नयोः सुषुप्तिप्रलयसमाधिमुक्तिषु न भाति च । अन्तर्गतेनात्मज्योतिषा भासुरः अतएव महामहिमा अपां पतिः समुद्र इव ॥ २९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे खोत्थविभववर्णनं नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

खोत्थाख्यानस्य तात्पर्यं विस्तरेणेह वर्ण्यते ।
संकल्पकथितं विश्वमित्युक्तार्थे निदर्शनम् ॥ १ ॥

कदम्बस्याग्रे अवचूड उत्तंस इव स्थितमित्युपमितसमासः ॥१॥२॥ यथाश्रुतार्थे तात्पर्यं नास्ति किंतु अन्यत्र तात्पर्यमिति त्वया कुतो ज्ञातमिति चेत् 'पुरं भविष्यन्निर्माणं किंचिद्यामीति निश्चला' इत्याद्युक्तौ भविष्यत्त्ववर्तमानत्वयोर्यौगपद्यविरोधादनन्वितार्थकत्वदर्शनादित्याह—केति ॥ ३ ॥ अवबुध्यसे अव-

१ तदाप्यमाप्नोति इति पाठः. २ पूर्णं इति पाठः. ३ कसेरुका=पृष्ठास्थि.

येन संसारचक्रस्य तत्त्वमस्यावबुध्यसे ॥ ४
असदप्युत्थितारम्भमवस्तुमयमाततम् ।
संसारसंस्थानमिदमेवमाकथितं मया ॥ ५
परमान्नभसो जातः संकल्पः खोत्थ उच्यते ।
जायते स्वयमेवासौ स्वयमेव विलीयते ॥ ६
तत्स्वरूपमिदं सर्वं जगदाभोगि विद्यते ।
जायते तत्र जाते तु तस्मिन्नष्टे विनश्यति ॥ ७
ब्रह्मविष्ण्विन्द्ररुद्राद्यांस्तस्यैवावयवान्विदुः ।
विटपानिव वृक्षस्य शृङ्गाणीव महीभृतः ॥ ८
शून्ये व्योमनि तेनेदं निर्मितं त्रिजगत्पुरम् ।
प्रतिभासानुसंधानमात्रेणैत्य विरिञ्चिताम् ॥ ९
यत्रेमे विततालोका लोककोशाश्चतुर्दश ।
वनोपवनमालाश्च यत्रोद्यानपरम्पराः ॥ १०
क्रीडाशिखरिणो यत्र सह्यमन्दरमेरवः ।
शीतोष्णदीप्ती चन्द्रार्कौ दीपौ यत्रानलाकृती ॥ ११
सूर्यांशुकचदालोलतरङ्गोत्तुङ्गमौक्तिकाः ।
वहन्ति सरितो यत्र सन्मुक्तावलयश्चलाः ॥ १२
इक्षुक्षीरादिसलिला मणिरत्नविसाङ्कुराः ।
और्वानलाम्बुजा यत्र वाप्यः सप्त महार्णवाः ॥ १३
अध उर्व्यां तथोर्ध्वं खे पुण्यापुण्यधनश्रियः ।
नरामरकिराटानां यत्रान्तः क्रयविक्रयौ ॥ १४
तस्मिन्नेव जगत्यस्मिन्पुरे संकल्पभूभृता ।
क्रीडार्थमात्मनश्चित्रा देहापवरकाः कृताः ॥ १५
केचिद्गीर्वाणनामान ऊर्ध्वे एव नियोजिताः ।
नरनागादयः केचिदध एव नियोजिताः ॥ १६
वातयन्त्रप्रवाहेण चलन्तो मांसमृन्मयाः ।
सितास्थिदारवश्चित्रास्त्वग्लेपमसृणामलाः ॥ १७
केचिच्चिरेण नश्यन्ति केचिच्छीघ्रविनाशिनः ।
केचित्केशोलपोल्लासरचिताच्छादनश्रियः ॥ १८
कर्णाक्षिनासाप्रमुखैर्द्वारैर्नवभिरन्विताः ।
अनारतवहत्प्राणपवनेनोष्णशीतलाः ॥ १९
कर्णनासास्यताल्वादिवातायनगणान्विताः ।
भुजाद्यङ्गप्रतोलीकाः पञ्चेन्द्रियकुदीपकाः ॥ २०
मायया रचितास्तेषु संकल्पेन महामते ।
अहङ्कारमहायक्षाः परमालोकभीरवः ॥ २१
देहापवरकेष्वन्तर्महाहङ्कारयक्षकैः ।
सह संक्रीडते ऽत्यर्थं स सदैवासदुत्थितैः ॥ २२
यथा कुसूले मार्जारो भस्त्रायां भुजगो यथा ।
मुक्ताफलं यथा वेणावहङ्कारस्तथा तनौ ॥ २३
क्षणमभ्युदयं यान्ति क्षणं शाम्यन्ति दीपवत् ।
देहगेहेषु संकल्पतरङ्गाः सागरेष्विव ॥ २४

भोत्स्यसे ॥ ४ ॥ असतः परमार्थसत्ताशून्यादेवाज्ञानादभ्युद्यतारम्भं अतएवावस्तु माया तन्मयम् । एवमस्यार्थस्य बोधनाय आकथितं पारोक्ष्येण वर्णितम् ॥ ५ ॥ संकल्पः संकल्पप्रधानं मनः । समष्टिव्यष्टिमनसोरेकीकारेण खादव्यक्ताकाशादुत्थ इति व्युत्पत्त्या खोत्थ उच्यत इत्यर्थः । स्वयमेव स्वसंकल्पजन्यप्रवृत्तिवासनोद्भवादेव जायते निवृत्तिवासनादार्ढ्याच्च स्वयमेव लीयत इत्यर्थः ॥६॥ तत्स्वरूपं तत्परिणामः । उक्तार्थं तदन्वयव्यतिरेकानुविधानप्रदर्शनेन द्रढयति—**जायत** इति ॥७॥ ननु ब्रह्मविष्ण्वादिभ्यः सकाशाज्जगदुत्पन्नमिति श्रुतं तत्कथमन्यस्मादुच्यते तत्राह—**ब्रह्मेति** । विटपान्स्कन्धान् ॥ ८ ॥ शून्ये त्रैकालिकजगदभाववति व्योमनि ब्रह्मणि । अचेतनस्यास्य कुतो निर्माणशक्तिरिति चेदधिष्ठानचैतन्यानुग्रहेण चेतनविरिञ्च्याकारताप्राप्तेरित्याह—**प्रतिभासेति** ॥ ९ ॥ तदेव त्रिजगत्पुरं प्राग्वर्णितमित्याह—**यत्रे**त्यादिना । विततालोकाः सूर्यादिप्रभादीप्ताः । प्रसिद्धवनोपवनमाला यत्र उद्यानपरम्परा वर्णिता इत्यर्थः ॥ १० ॥ अनलाकृती दीप्यमानौ । 'अनिलाक्षतौ' इति पाठे स्पष्टम् ॥ ११ ॥ मुक्तालताविवेलितवापीसप्तकभूषितमित्युक्तेरर्थमाह—**सूर्ये**ति । तरङ्गाणां मुक्तासाम्ये उपपत्तिः सूर्यांशुकचदालोलत्वम् ॥ १२ ॥ मणिरत्नानि मणिश्रेष्ठा एव विसाङ्कुरा यासु । और्वानला वडवाग्नय एव अम्बुजानि यासु । यत्र नगरे ॥ १३ ॥ 'ऊर्ध्वाधोगतिरूपेण वणिङ्मार्गेण संकुल'मिति यदुक्तं तस्यार्थमाह—**अध इति** । पुण्यान्यपुण्यानि पापानि च धनश्रियो येषां तेषां नराणां कर्मोपासनाधिकारिणामार्याणाममराणां च 'देवान् भावयतानेन ते देवा भावयन्तु वः' इति भगवदुक्तन्यायेन पुण्यतत्फलक्रयविक्रयौ । किराटानां प्रत्यन्तदेशवासिनां कर्माधिकारबहिष्कृतानां पापतत्फलस्थावरतिर्यगादिभिः परस्परोपकारबाहुल्यात्क्रयविक्रयौ बोध्यौ ॥१४॥ 'संसारिणो विरचिता मुग्धापवरका गणा' इत्युक्तेस्तात्पर्यमाह—**तस्मिन्नेवे**त्यादिना ॥ १५ ॥ १६ ॥ वातयन्त्राणि प्राणास्तत्प्रवाहेण । मांसान्येव मृदस्तद्विकाराः । सितान्यस्थीन्येव दारूणि यत्र । त्वचो लिप्यन्ते यैस्तैलोद्वर्तनादिभिस्ते त्वग्लेपास्तैर्मसृणाश्चिक्कणा अमलाश्च ॥ १७ ॥ केशलक्षणानां उलपानां तृणविशेषाणां उल्लासेन रचिता आच्छादनश्रीर्येषामिति असितच्छादनच्छन्ना इत्युक्तेर्विवरणम् ॥ १८ ॥ नवद्वारविभूषिता इत्युक्तिं विवृणोति—**कर्णे**ति । अनारतवहद्वाता इत्युक्तिं विवृणोति—**अनारते**ति । प्राणस्योष्णत्वमपानस्य च शीतत्वं प्रत्यक्षसिद्धम् ॥ १९ ॥ बहुवातायनान्विता इत्यादि विवृणोति—**कर्णनासे**त्यादिना । कुदीपकेति विवरणेन दीपपञ्चकेत्यत्र संघार्थे जातः कन् तन्त्रेण कुत्सामपि द्योतयतीति तात्पर्यं सूचितम् ॥२०॥ रक्षितारो महायक्षा इत्येतद्विवृणोति—**मायये**ति । परमालोकभीरव इत्यस्य परमात्मदर्शनेन हृदयग्रन्थ्यात्मकाहङ्कारक्षयश्रुतेः परमस्यालोकनाद्भीरवो बिभ्यत इति तात्पर्यमित्यर्थः ॥ २१ ॥ २२ ॥ ननु देह एवाहङ्कारो नान्यो नेत्याह—**यथे**ति ॥ २३ ॥ संक्रीडनप्रकारमाह—**क्षण**मिति ।

१ विगलित इति पाठः.

भविष्यन्नवनिर्माणं स व्याप्नोति तदा पुरम् ।
यदा संकल्पितं वस्तु क्षणादेव प्रपश्यति ॥ २५
असंकल्पनमात्रेण स्वेनैवाशु विनश्यति ।
श्रेयसे परमायस्य नाशत्वेन तु संभवः ॥ २६
स्वयं संकल्पनामात्रं जायते वालयक्षवत् ।
अनन्तायात्मदुःखाय नानन्दाय कदाचन ॥ २७
इदं स्फारं जगद्दुःखं प्रतनोत्यात्मसत्तया ।
असत्तया नाशयति घनमान्ध्यं यथा तमः ॥ २८
स्वयैव दुःखदायिन्या चेष्टया परिरोदिति ।
काष्ठावष्टब्धवृषणः कीलोत्पाटी कपिर्यथा ॥ २९
संकल्पितानन्दलवस्तिष्ठत्युद्धुरकन्धरम् ।
अकस्मात्प्रच्युतमधुबिन्दुभुक्करभो यथा ॥ ३०
क्षणं विरतिमायाति रतिमेति क्षणं स्वयम् ।
क्षणं विकारमायाति संकल्पेनैव बालवत् ॥ ३१
एनं सकलभावेभ्यः कृत्वा निर्मूलमादरात् ।
मतिरन्तःपदं याति यथा पुत्र तथा कुरु ॥ ३२
त्रयस्तस्या मतेर्देहा अधमोत्तममध्यमाः ।
तमःसत्त्वरजःसंज्ञाः कारणं जगतः स्थितेः ॥ ३३
तमोरूपो हि संकल्पो नित्यं प्राकृतचेष्टया ।
परां कृपणतामेत्य प्रयाति कृमिकीटताम् ॥ ३४
सत्त्वरूपो हि संकल्पो धर्मज्ञानपरायणः ।
अदूरकेवलीभावं स्वाराज्यमधितिष्ठति ॥ ३५
रजोरूपो हि संकल्पो लोकसंव्यवहारवान् ।
परितिष्ठति संसारे पुत्रदारानुरञ्जितः ॥ ३६
त्रिविधं तु परित्यज्य रूपमेतन्महामते ।
संकल्पः परमायाति पदमात्मपरिक्षये ॥ ३७
सर्वा दृष्टीः परित्यज्य नियम्य मनसा मनः ।
सबाह्याभ्यन्तरार्थस्य संकल्पस्य क्षयं कुरु ॥ ३८
यदि वर्षसहस्राणि तपश्चरसि दारुणम् ।
यदि वा विलयात्मानं शिलायां चूर्णयस्यलम् ॥ ३९
यदि वाग्निं प्रविशसि वडवाग्निमथापि वा ।
यदि वा पतसि श्वभ्रे खड्गधाराजवे तथा ॥ ४०
हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।
अत्यन्तकरुणाक्रान्तो लोकनाथोऽथवा यतिः ॥ ४१
पातालस्थस्य भूस्थस्य स्वर्गस्थस्यापि तत्त्व ।
नान्यः कश्चिदुपायोऽस्ति संकल्पोपशमादृते ॥ ४२
अनाबाधेऽविकारे च सुखे परमपावने ।
संकल्पोपशमे यत्नं पौरुषेण परं कुरु ॥ ४३
संकल्पतन्तावखिला भावाः प्रोताः किलानघ ।
छिन्ने तन्तौ न जाने ते क यान्ति विशाराघव ॥ ४४
असत्सत्सदसत्सर्वं संकल्पादेव नान्यतः ।
संकल्पं सदसच्चैवमिह सत्यं किमुच्यताम् ॥ ४५

संकल्पस्य तरङ्गा वृत्तयः ॥२४॥ तस्येच्छा जायते इत्यादेस्तात्पर्यं पुत्रोक्तविरोधपरिहारेण वर्णयति—**भविष्यदिति** ॥ २५ ॥ तेनाशु स विनश्यतीत्यस्य तात्पर्यमाह—**असंकल्पनेति**। जाग्रत्स्वप्नावस्थयोः परं अत्यन्तं आयस्य भ्रमणप्रयुक्तमायासं प्राप्य श्रेयसे विश्रान्तिसुखाय असंकल्पनमात्रेण सुषुप्तौ नाशत्वेन प्रविलयेन कारणीभूताविद्यामात्रभावेन संभवः सत्तेत्यर्थः। अथवा नानाजन्मकोटिष्वायस्य दैवान्निर्विण्णः शास्त्राचार्यसमाध्यभ्यासादिबलादात्मतत्त्वसाक्षात्कारे सति संकल्पमूलोच्छेदादेवासंकल्पनमात्रेण श्रेयसे मोक्षाय संभवो निर्वृतिः । 'परमायास्य' इति पाठे तु अस्य संकल्पस्य नाशत्वेन वासनाक्षयप्रयुक्तशून्यभावेन संभवः अभिनिष्पत्तिः परमाय श्रेयसे भवतीति सर्वत्र शेषः ॥ २६ ॥ पुनरुत्पद्यते इत्युक्तेस्तात्पर्यमाह—**स्वयमिति** ॥२७॥ ॥ २८ ॥ किं करोमीत्यादिशोकोक्तिबीजमाह—**स्वयैवेति** । दुःखदायिन्या निषिद्धाचरणाभिमानादिरूपया । काष्ठावष्टब्धेत्युत्पत्तिप्रकरणे व्याख्यातम् ॥ २९ ॥ करभो गर्दभः । अनेन विषयसुखमपि रासभस्य मधुलेहनवदतिदुर्लभं किं पुनर्मोक्षसुखमिति ध्वनितम् ॥ ३० ॥ ३१ ॥ खोत्थाख्यायिकावर्णनप्रयोजनमाह—**एनमिति** । सकलभावेभ्यः सर्वबाह्यवस्तुभ्यः परावृत्त्य समाध्यभ्यासेन तत्त्वज्ञानेन च निर्मूलं निर्वासनाऽज्ञानं कृत्वा मतिः अन्तःपदं प्रत्यग्भूतं ब्रह्म यथा यात्यवलम्ब्य विश्राम्यति तथा कुर्वित्यर्थः ॥ ३२ ॥ प्राग्ये त्रयो देहा उक्तास्तान्प्रपञ्चयति—**त्रय इति** । मतेः संकल्पात्मनो मनसः ॥३३॥ प्राकृतचेष्टया स्वाभाविकप्रवृत्त्या परां कृपणतां नरकेषु पतिद्धाम् । कृमिकीटग्रहणं स्थावरादीनामप्युपलक्षणम् ॥ ३४ ॥ ज्ञानमत्रोपासनं शास्त्रीयप्रवृत्तिनियम इति यावत् । अदूरकेवलीभावं संनिहितमोक्षं स्वाराज्यं हैरण्यगर्भभावान्तदेवतापदम् ॥ ३५ ॥ लोकसंव्यवहारो मनुष्यजन्मना तद्योग्यव्यवहारस्तद्वान् ॥ ३६ ॥ परं पदं मोक्षम् । आत्मपरिक्षये आत्यन्तिकसंकल्पोच्छेदे सति ॥ ३७ ॥ तर्हि संकल्पक्षये क उपायस्तमाह—**सर्वा** इति । दृष्टीर्बाह्यार्थदर्शनानि बाह्येन्द्रियाणि वैराग्येण निरुध्येति यावत् ॥ ३८ ॥ ननु संकल्पक्षयो दुष्करः, अन्य एवोपायो मोक्षार्थमुपदिश्यतां नेत्याह—**यदि वे**त्यादिना । विलयस्वभावं आत्मानं स्वदेहम् ॥ ३९ ॥ ४० ॥ लोकनाथो यतिः श्रीदत्तात्रेयो दुर्वासा वा अत्यन्तकरुणाक्रान्तः सन्नुपदेष्टा स्यात् । अथवा अत्यन्तकरुणाक्रान्त इति विशेषणस्वारस्यादात्यन्तिकाहिंसोपदेष्टा बुद्धोऽत्र यतिः । तस्यात्र ग्रहणं त्ववैदिकमार्गेष्वपि मोक्षप्रत्याशावारणार्थम् ॥ ४१ ॥ ४२ ॥ सच संकल्पोपशमो ब्रह्मस्वरूप एवेत्याशयेन विशिनष्टि—**अनाबाध** इत्यादि । परं यत्नं साधनचतुष्टयसंपत्तिश्रवणमनननिदिध्यासनलक्षणम् ॥ ४३ ॥ ननु संकल्पमात्रोच्छेदेन सर्वजगद्बन्धनिवृत्तिः कुतस्तत्राह—**संकल्पेति** । तर्हि ते नष्टा भावाः क यान्ति तत्राह—**न जाने** इति । आरोपितभावानामधिष्ठाने बाधेऽन्यत्र गमनाप्रसिद्धेरिति भावः ॥ ४४ ॥ नन्वियं संकल्पादिसर्वभावनिवृत्तिरसती सती सदसती वा ।

१ कोके इति क्वचित्पठ्यते.

संकल्प्यते यथा यद्यत्तत्तथा भवति क्षणात्।
मा किंचिदपि तत्त्वज्ञ संकल्पय कदाचन ॥ ४६
निःसंकल्पो यथाप्राप्तव्यवहारपरो भव।
चिदचेत्योन्मुखत्वं हि याति संकल्पसंक्षये ॥ ४७
उत्थाय सत्त्वरूपेण योन्या सत्यमयात्मकम्।
न तज्जगद्दुःखमिदं व्यर्थं सदृशमात्मनः ॥ ४८
तेन दुःखाय महते किं मृतेन तवानघ।
यद्दुःखाय तत्प्राज्ञाः संश्रयन्तीह नेतरत् ॥ ४९
अधिगतपरमार्थतामुपेत्य
प्रसभमपास्य विकल्पजालमुच्चैः।
अधिगमय पदं तदद्वितीयं
विततसुखाय सुषुप्तचित्तवृत्तिः ॥ ५०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थिति० दाशूरो० संसारनगरविकल्पयोगविचारो नाम त्रिपञ्चाशः सर्गः ५३

## चतुःपञ्चाशः सर्गः ५४

पुत्र उवाच।
कीदृशस्तात संकल्पः कथमुत्पद्यते प्रभो।
कथं च वृद्धिमाप्नोति कथं चैष विनश्यति ॥ १
दाशूर उवाच।
अनन्तस्यात्मतत्त्वस्य सत्तासामान्यरूपिणः।
चितश्चेत्योन्मुखत्वं यत्तत्संकल्पाङ्कुरं विदुः ॥ २
लेशतः प्राप्तसत्ताकः स एव घनतां शनैः।
याति चित्तखमापूर्य दृढजाड्याय मेघवत् ॥ ३
भावयन्ती चितिश्चेत्यं व्यतिरिक्तमिवात्मनः।
संकल्पतामुपायाति बीजमङ्कुरतामिव ॥ ४
संकल्पेन हि संकल्पः स्वयमेव प्रजायते।
वर्धते स्वयमेवाशु दुःखाय न सुखाय तु ॥ ५
संकल्पमात्रं हि जगज्जलमात्रं यथार्णवः।
ऋते संकल्पमन्या ते नास्ति संसारदुःखिता ॥ ६
काकतालीययोगेन संजातोऽस्ति मुधैव हि।
मृगतृष्णाद्विचन्द्रत्वमिवासत्यं च वर्धते ॥ ७
निगीर्णमातुलिङ्गस्य कनकप्रत्ययो यथा।
स्वयमस्थ्येत्यसत्योऽन्तः संकल्पस्ते तथा हृदि ॥ ८
असत्यमेव जातस्त्वमसत्यमपि वर्तसे।
अस्मिञ्ज्ञाते च विज्ञाने ह्यसत्यं संविलीयते ॥ ९
असौ सोऽहमिमे भावाः सुखदुःखमया मम।
व्यर्थमेवेति नानास्था येनान्तः परितप्यसे ॥ १०
असन्नेवास्य जातोऽसि कुतो जन्मविलासतः।
व्यर्थमेवावमूढोऽसि संकल्पवशतः स्वतः ॥ ११

आद्ये मोक्षासिद्धिर्द्वितीये मोक्षेऽपि द्वैतापत्तिस्तृतीये पाक्षिकबन्धद्वैतयोरवारणमिति न मोक्षे निर्व्रणतासिद्धिरित्यादिदोषगणानेकोक्त्या परिहरति—**असदि**ति। सदसत्त्वादयः सर्वे विकल्पाः संकल्पादेव सहभावैरुत्पन्नाः संकल्पमेव सदसच्चेत्येवं विकल्पितुं न शक्नुवन्ति, इह परमार्थसत्यसंकल्पं ब्रह्म न स्पृशन्तीति किं वाच्यम्। कार्याणां यत्र खसङ्गिनि कारणेऽप्यान्तरे कुण्ठीभावस्तत्र किं वाच्यमसङ्गे परमात्मनीति भावः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ननु मोक्षसंपादने का क्षतिस्तत्राह—**उत्थाये**ति। सत्यमयात्मकं सत्यैकस्वभावं ब्रह्म असत्यमायावशात् योन्या सुरनरतिर्यगादिचतुरशीतियोनिद्वारेण सत्त्वरूपेण तत्तत्प्राणिभेदरूपेणोत्थाय व्यर्थमेव जगद्दुःखमनुभवति, इदमात्मनः स्वस्य न सदृशं, न युक्तमित्यर्थः ॥४८॥ तेन नानायोनिजन्मना निमित्तेन दुःखाय दुःखार्थं मृतेन पुनःपुनर्मरणेन च तव किं फलम् ॥४९॥ तर्हि मया किं कार्यं तत्राह—**अधिगते**ति। त्वं अधिगतपरमार्थतां तत्त्वज्ञतामुपेत्य प्राप्य प्रसभं मूलोच्छेदबलाद्विकल्पजालमपास्य यदद्वितीयं पदं मोक्षाख्यं तद्विततसुखाय निरतिशयानन्दावाप्तये अधिगमय, स्वप्रयत्नेन साधयेत्यर्थः। मुखं व्यादाय स्वपितीतिवत्पूर्वकालत्वारोपेण ल्यप् ॥ ५० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे संसारनगरविकल्पयोगविचारो नाम त्रिपञ्चाशत्तमः सर्गः ॥ ५३ ॥

संकल्पस्य यथोत्पत्तिर्यद्रूपं घनता यथा।
येनोपायेन चोच्छेदस्तत्सर्वमिह कीर्त्यते ॥ १ ॥

प्रश्नः स्पष्टः ॥ १ ॥ २ ॥ चेत्योन्मुखत्वं यत्प्राज्ञन इति व्याख्यातं तदेव संकल्पवृक्षस्याविद्याबीजोद्भेदं[1] प्रथमाङ्कुरं विदुरित्यर्थः। चित्तखं तमेव चित्ताकाशं आपूर्य सर्वतो व्याप्य दृढजाड्याय अधिष्ठानचितश्चित्स्वभावतातिरोधानेन जडप्रपञ्चाकारसंपत्तये इति यावत् ॥ ३ ॥ एवं समष्टिसंकल्पाज्जगदुद्भवमुक्त्वा तथैव बुद्ध्यहंकारप्राणेन्द्रियदेहाद्याकारव्यष्टिसंकल्पोत्पत्तिमाह—**भावयन्ती**ति ॥ ४ ॥ ततो मूलाङ्कुराच्छाखाङ्कुराणामिव बाह्यविषयाकारसंकल्पपरम्पराभिर्वृद्धिं दुःखान्तामाह—**संकल्पेने**ति ॥ ५ ॥ ६ ॥ ननु निर्विकाराद्वये वस्तुनि कथं निर्बीजजगदुद्भवस्तत्राह—**काकतालीये**ति। विवर्तवादाश्रयेण चायं दोषः परिहार्य इत्याशयेनाह—**मृगतृष्णे**ति ॥७॥ पूर्वानुभूतविषयवासनोद्बोधाद्वेया जगद्भ्रान्तिरित्याशयेनाह—**निगीर्णे**ति। मातुलिङ्गं फलविशेषः। तद्धि चाक्षुषं पित्तमुद्दीपयच्छुक्ले पीतभ्रमं जनयति ॥ ८ ॥ अस्मिन्मदुपदेशात्मके विज्ञायते अनेनेति विज्ञाने शास्त्रे ॥९॥ असौ यो वेदान्तेषु प्रसिद्धः पूर्णात्मा सः अहमेव, मम इमे सुखदुःखमया जन्मादिभावा व्यर्थं मिथ्यैव इत्यनास्था येनाज्ञानेन हेतुना नास्ति तेन परितप्यसे ॥ १० ॥ अस्य जन्मादेः संबन्धी कदाप्यसन्नेव भ्रान्त्या

[1] बीजोद्भेदं इत्यपि पाठः.

मा संकल्पय संकल्पं भावं भावय मा स्थितौ ।
एतावतैव भावेन भव्यो भवति भूतये ॥ १२
संकल्पनाशयत्नेन न भयान्यनुगच्छति ।
भावनाभावमात्रेण संकल्पः क्षीयते स्वयम् ॥ १३
सुमनःपल्लवामर्दे किंचिद्व्यतिकरो भवेत् ।
सुसाध्यो भावमात्रेण नतु संकल्पनाशने ॥ १४
पुष्पाक्रान्तौ करस्पन्दयत्नः पुत्रोपयुज्यते ।
तदप्युपकरोत्यस्मिन्न संकल्पपरिक्षये ॥ १५
संकल्पो येन हन्तव्यस्तेन भावविपर्ययात् ।
अप्यर्धेन निमेषेण लीलयैव निहन्यते ॥ १६
भावमात्रोपसंपन्ने स्वात्मनि स्थितिमागते ।
साध्यते यदसाध्यं तत्कस्य स्यात्किमिवाङ्ग ते ॥ १७
संकल्पेनैव संकल्पं मनसा स्वमनो मुने ।
छित्वा स्वात्मनि तिष्ठ त्वं किमेतावति दुष्करम् ॥ १८
उपशान्ते हि संकल्पे उपशान्तमिदं भवेत् ।
संसारदुःखमखिलं मूलादपि महामते ॥ १९
संकल्पो हि मनो जीवश्चित्तं बुद्धिः सवासना ।
नाम्नैवान्यत्वमेतेषां नार्थेनार्थविदां वर ॥ २०

संकल्पनादृते नेह किंचिदेवास्ति कुत्रचित् ।
तमेव हृदयाच्छिन्धि किमेतत्परिशोचसि ॥ २१
यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ।
असन्मयविकल्पोत्थे उभे एते तते यतः ॥ २२
असिद्धं सर्वमेवैतदसिद्धेनैव साधितम् ।
संकल्पेन जगद्यस्माद्भावना क्वावतिष्ठताम् ॥ २३
[ सत्यास्थायामसत्यां तु किंनिष्ठा वासना भवेत् । ][2]
भावनाक्षयतः सिद्धिस्ततः प्राप्यं न शिष्यते ।
तस्मादसदिदं सर्वं विज्ञेयं हेलयेद्धया ॥ २४
तनुभावनया तेन सुखदुःखैर्न लिप्यते ।
अवस्त्विवति च निर्णीय स्नेहास्था न प्रवर्तते ॥ २५
आस्थाक्षये न जायेते हर्षामर्षौ भवाभवौ ।
तस्मादसदिदं सर्वं सुखदुःखादिविभ्रमैः ॥ २६
मनो जीवः स्फुरत्युच्चैर्मानसं नगरं जगत् ।
भविष्यद्वर्तमानं च भूतं च परिवर्तयन् ॥ २७
वासनावलितं लोके स्फुरच्छक्ति मनः स्थितम् ।
करोति स्वाशयेनेमां व्यवस्थां मलिनश्चलः ॥ २८

जातोऽसि । विलासतस्तात्त्विकपूर्णतालक्षणस्वविलसनात्तु कुतो जन्म ॥ ११ ॥ तर्ह्यस्य भ्रमस्य निवृत्तौ क उपायस्तमाह—**मा संकल्पये**ति । पूर्वानुभूतं सुखदुःखादिभावं सांप्रतिकस्थितौ मा भावय मा स्मर । स्मृतेर्हि पूर्वभावे तदुपादानहानाद्यर्थसंकल्पोदयः स्यादेवेति भावः ॥ १२ ॥ तथाच संकल्पक्षयात्सर्वभयक्षयः । पूर्वभावाभावनाच्च संकल्पक्षय इति क्रमः सिद्ध इत्याह—**संकल्पे**ति ॥ १३ ॥ अयमुपायोऽत्यन्तसुकर इति प्रशंसति—**सुमन** इत्यादिना । सुमनसां शिरीषादिपुष्पाणां पल्लवस्य दलस्यामर्दने कश्चिच्चासौ व्यतिकरश्च किंचिद्व्यतिकरः प्रयत्नः सुसाध्यः सुकरोऽपि भवेत् संभावितो नतु अभावोऽभावना तन्मात्रेण साध्ये संकल्पनाशने तत्संभावनेत्यर्थः ॥ १४ ॥ उक्तमेव व्याचष्टे—**पुष्पे**ति । तदपि सोऽपि तावानपीति यावत् । नोपकरोति ॥ १५ ॥ भावो भावना स्मृतिस्तस्य विपर्ययादस्मरणात् ॥ १६ ॥ ननु संकल्पक्षयाद्दुःखक्षयेऽपि निरतिशयानन्दावाप्तिः केनोपायेन साध्या तत्राह—**भावे**ति । भावो भावना निरन्तरं स्वपूर्णानन्दात्मताचिन्तनं तन्मात्रेणोपसंपन्ने प्राप्ते स्वात्मनि स्थितिं स्वरूपाप्रच्युतिमागते सति यदसाध्यं तदपि साध्यते । नन्वसाध्यं साध्यत इति विप्रतिषिद्धं तत्राह—**कस्ये**ति । स्वतःसिद्धं तन्नापैतीत्याशयेन साध्यं स्यादित्युक्तं नतूत्पद्यत इत्याशयेन । भावानां ह्यपगमो द्वेधा । परेणापहारे वा, नाशेन भावान्तरप्राप्तौ वा । हे अङ्ग, ते तव आत्मा अन्येनापह्रियमाणः कस्य स्यात् । नह्यद्वितीयात्मनोऽन्यः प्रसिद्धः, विनश्यन्वा किमिव स्यात् । घटो हि विनश्यन् कपालं भवति । आत्मा तु किं स्यात् । यत्स्यात्तन्न नष्टेन द्रष्टुं शक्यम् । नचात्मान्यो द्रष्टास्ति । तस्मादात्मनाशो निःसाक्षिको न [illegible] मोक्षः स्वतःसिद्धो नापैष्यतीत्यर्थः ॥ १७ ॥ असंकल्पनसंकल्पेनैव सर्वसंकल्पं आत्मतत्त्वमननरूपेण मनसैव स्वमनश्छित्त्वेत्यर्थः ॥ १८ ॥ उक्तोपायद्वयेन मूलादप्युपशान्ते सति दुःखमपि मूलादुपशान्तं भवेदित्यर्थः ॥ १९ ॥ ननु संकल्पे उपशान्तेऽपि जीवचित्तवासनादिवशाद्दुःखं स्यादेवेत्याशङ्क्य तेषां संकल्पेऽन्तर्भावमाह—**संकल्प** इति ॥ २० ॥ २१ ॥ ननु संकल्पस्यैव जीवजगदात्मकत्वे तत्क्षये नैरात्म्यलक्षणशून्यतापत्तिः, नहि जीवान्य आत्मा नामास्तीत्याशङ्क्याह—**यथैवे**ति । मरुमरीचिकाच्छेदेऽपि न मरुभूः शून्यात्मिका यथेदं निदर्शनं तथा जगज्जीवादिदृश्यमात्रबाधेऽपि न दृग्रूप आत्मा शून्यात्मकः । एते मरीचिकाजगती उभे समे तते आरोपणविस्तृते ॥ २२ ॥ ननु बाधितमपि भावनया पुनः स्यादित्याशङ्क्याह—**असिद्ध**मिति बाधितेऽर्थे भावनैव नावतरतीत्यर्थः ॥ २३ ॥ तस्माज्जगन्मिथ्यात्वदर्शनं भावनोच्छेदार्थिना प्रथमं साध्यमित्याशयेनाह—**भावने**ति । इद्धया अभ्यासदृढीकृतया । हेलया दृश्यावहेलनया ॥ २४ ॥ तेन दृश्यावहेलनेन तनुभावनया देहात्मताप्रतिसंधानेन प्रागुक्तैः सुखदुःखैः । तनुसंबन्धिपुत्रमित्राद्यप्यवस्त्विवति विज्ञाय तेषु स्नेहास्था च न प्रवर्तत इत्यर्थः ॥ २५ ॥ २६ ॥ मन एव चित्प्रतिबिम्बाज्जीवः सन् जगल्लक्षणं मानसं नगरं परिवर्तयन् रचयन् परिणमयन् विनाशयंश्च स्फुरतीत्यर्थः ॥ २७ ॥ कुतस्तथा परिवर्तयन्स्फुरति तत्राह—**वासने**ति । यतोऽस्य मनोविषयसंबन्धात्तत्तद्वासनाभिरावलितमधिष्ठानचित्संबन्धात्स्फुरणशक्तिकं च स्थितमतो मलिनश्चलश्च सन् स्वाशयेन कामेन इमां प्रागुक्तां रचनादिव्यवस्थां करोतीत्यर्थः ॥ २८ ॥

१ किमन्यत इति पाठः. २ इदमर्धमधिकं क्वचित्.

आत्मनः सदृशीं लीलां जीवो हृद्वनमर्कटः ।
दीर्घमाकारमादाय निमेषाद्याति ह्रस्वताम् ॥ २९
ग्रहीतुं च न शक्यन्ते संकल्पजलवीचयः ।
मनाग्दृष्टा विवर्धन्ते हसन्ति सपरिच्छदाः ॥ ३०
तृणमात्रेण दीप्यन्ते संकल्पा वह्निशेषवत् ।
जगत्यप्रकटाकाराः प्रदीप्ताः क्षणभङ्गुराः ॥ ३१
भ्रमदा जडसंस्थानाः संकल्पास्तडिदभ्रयः ।
यदेवासन्मयं पुत्र तदेवाशु चिकित्सितुम् ॥ ३२
शक्यते नात्र संदेहो नासत्सद्भवति क्वचित् ।
संस्थितो यदि संकल्पो दुश्चिकित्स्यः स्वतो भवेत् ३३
किंत्वसद्भूत एवैष सुचिकित्स्यस्तदा भवेत् ।
अकृत्रिमं चेत्संसारमलमङ्गारकार्ष्ण्यवत् ॥ ३४
तदेतत्क्षालने साधो कः प्रवर्तेत दुर्मतिः ।
किंत्वेतत्तण्डुलेष्वेव तुषकञ्चुकवत्स्थितम् ॥ ३५
यतस्ततः प्रयत्नेन पौरुषेण विनश्यति ।
अकृत्रिममपि प्राप्तं भृशं पुत्र तथा पुनः ॥ ३६
सुखोच्छेद्यतया ज्ञस्य संसारमलमाततम् ।
तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा ॥ ३७
नश्यति क्रियया पुत्र पुरुषस्य तथा मलम् ।
नश्यत्येव न संदेहस्तस्मादुद्यमवान्भव ॥ ३८
असत्कल्पैर्विकल्पैर्यत्संसारो न जितो मुधा ।
स्तोकेनाशु लयं याति कासद्वस्तु चिरं स्थितम् ॥ ३९
असत्यामेति संसारः स्वव्यवस्थां विचारतः ।
दीपालोकादिवान्धस्य द्वीन्दुत्वं स्वीक्षितादिव ॥ ४०
नासौ तव न चास्य त्वं भ्रान्तिं पुत्र परित्यज ।
असत्ये सत्यवद्दृष्टे भावना मा स्म हीदृशः ॥ ४१
मम गुरुविभवोज्ज्वला विलासा
इति तव मास्तु वृथैव विभ्रमोऽन्तः ।
त्वमपि च विततास्च ते विलासा
विलसति सर्वमिदं तदात्मतत्त्वम् ॥ ४२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे दाशूरो० संकल्पचिकित्सा नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ५५

श्रीवसिष्ठ उवाच ।
इत्याकर्ण्य तदा तत्र रात्रावालपनं द्वयोः ।
अहं रघुकुलाकाशशशाङ्क रघुनन्दन ॥ १
पतितः स्वात्कदम्बाग्रे पत्रपुष्पफलाकुले ।
तूर्ष्णीं निर्वृष्टमुक्तात्मा शृङ्गाग्र इव तोयदः ॥ २

तर्हीष्टमेव कुतो न करोति अनिष्टं च कुतः करोति तत्राह—**आत्मन** इति ॥ २९ ॥ कुतोऽस्य वृद्धिह्रासौ तत्राह—**ग्रहीतुमिति** । नियन्तुमित्यर्थः । दृष्टाः विषयदर्शनोद्बुद्धाः । विषयदर्शनस्मरणत्यागे तु सपरिवारा हसन्ति ॥ ३० ॥ तृणमात्रेण तृणसदृशेनाल्पेनापि विषयेणेति यावत् । वह्निशेषोऽग्निकणः । जगतीत्याद्युत्तरान्वयि ॥ ३१ ॥ भ्रमदाः स्थाण्वादौ चोरादिभ्रान्तिहेतवः जडेषु विषयेषु लडयोरभेदान्मेघजलेषु च संस्थानं येषाम् । इत्थं 'कीदृशस्तात संकल्पः' इत्यादिप्रश्नानामुत्तरमुपवर्ण्य 'कथं चैष विनश्यति' इति चरमप्रश्नस्योत्तरं विवक्षुर्वर्णितस्य संकल्पस्य सुचिकित्स्यतामाह—**यदेवे**त्यादिना । असन्मयं असत्याज्ञानविकारभूतम् ॥ ३२ ॥ शक्यते ज्ञानेनेति शेषः । संस्थितः परमार्थभूतो यदि भवेत् ॥ ३३ ॥ जगत्सत्यतापक्षे तु आत्मनोऽपि जगदविशेषान्मलिनस्वभावत्वापत्तौ ज्ञानेन सत्यनिरास एव सर्वप्रमाणविरुद्ध इत्यनिर्मोक्षप्रसङ्गः । विरुद्धस्याप्यभ्युपगमे अङ्गारकार्ष्ण्यस्य सशेषक्षालने मलिनस्यैव परिशेषो निःशेषक्षालने तु शून्यावसानतेतिवत्पुरुषार्थो परिशेषश्चेत्याशयेनाह—**अकृत्रिम**मिति । कृतिर्मिथ्याकल्पना तया निर्वृत्तं कृत्रिमं तद्भिन्नमकृत्रिमं सत्यम् ॥ ३४ ॥ तुषकञ्चुकं यथा अतण्डुलभूतमेव तण्डुले निरस्यते तद्वदसदेव सति निरस्यमित्यर्थः ॥ ३५ ॥ कृतिः कारणव्यापारस्तया निर्वृत्तं कृत्रिमं तद्भिन्नं अनादिभूतमपीत्यर्थः । उक्तो 'द्वितः क्त्रिः', क्त्रेर्मम्नित्यम्' इति निर्वृत्तार्थे मप् ॥ ३६ ॥ ज्ञस्य तत्त्वविदः सुखेन अनायासेनैव उच्छेद्यतया उच्छेदार्हतया आततं विस्तीर्णम् । अनाद्यज्ञानजस्यातिविस्तीर्णस्य च रजतस्वप्नादिविभ्रमस्य प्रबोधमात्रेणोच्छेददर्शनादिति भावः । असंभावनाविपरीतभावनादिमलं तु ज्ञानभूमिकाभ्यासलक्षणपुरुषप्रयत्नेनापि नश्यतीत्याशयेनाह—**तण्डुलस्ये**त्यादिना ॥ ३७ ॥ ३८ ॥ असत्कल्पैर्विकल्पैरुपलक्षितः संसारो यदेतावन्तं कालं त्वया न जितस्तन्मुधैवोपायापरिज्ञानादित्यर्थः ॥ ३९ ॥ असत्यां स्वव्यवस्थां स्वनिष्ठां बाधामिति यावत् । अन्धस्य तमस्तिरोभूतचक्षुषो दीपालोके सति आन्ध्यमिवेति शेषः ॥ ४० ॥ असौ संसारः । हि यस्मादसत्ये सत्यवद्दृष्टे सति ईदृशः एतादृशस्य भावना पुनश्चिन्ता मा स्म न खलु युक्तेति शेषः ॥ ४१ ॥ मम संसारिस्वभावस्य एते गुरुभिर्महद्भिर्विभवैः संपद्भिरुज्ज्वला दीप्यमाना भोगविलासाः सत्याः शाश्वताश्चेति विभ्रमस्तव मास्तु । त्वं संसारी अपि च ते विलासाश्चकारादन्यदपि जननमरणादिदृश्यमात्रं तदात्मतत्त्वमेव तथा विलसति न दृश्यरूपं सदन्यदस्तीत्यर्थः ॥ ४२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे संकल्पचिकित्सा नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

दाशूरेण वसिष्ठस्य पूजितस्य मिथः कथाः ।
कदम्बशोभावीक्षात्र प्रातर्यानं च वर्ण्यते ॥ १ ॥

आलपनं व्यक्तसंभाषणम् ॥ १ ॥ स्वात्तूर्ष्णीं निःशब्दं

अपश्यं तत्र दाशूरं शूरमिन्द्रियनिग्रहे ।
परेण तपसा युक्तं तेजसेव हुताशनम् ॥ ३
तेजोभिर्देहनिष्क्रान्तैः काञ्चनीकृतभूतलम् ।
तापयन्तं प्रदेशं तं भुवनं भास्करो यथा ॥ ४
मामथालोक्य संप्राप्तं दाशूरोऽर्घसपर्यया ।
वितीर्णविष्टरं पत्रपूजया पर्यपूजयत् ॥ ५
ततः पूर्वकथास्तेन सह दाशूर भास्वता ।
कृतास्तनयसंबोधाः संसारोत्तरणक्षमाः ॥ ६
दृष्टवांस्तमहं वृक्षं कोरकोत्तरकोटरम् ।
दाशूरस्येच्छया सर्वैरयतद्भिर्मृगव्रजैः ॥ ७
सेव्यमानं वनमिव लतामण्डलमण्डितम् ।
स्मितेन विस्फुटमिव श्वसनस्फुरितच्छदम् ॥ ८
लताकोटिगतैर्भ्रान्तैश्चामरैरिन्दुसुन्दरैः ।
शुभ्राभ्रखण्डनिकरैः शरन्नभ इवावृतम् ॥ ९
प्रालेयकणपद्धत्या मुक्तावल्याभ्यलंकृतम् ।
सर्वावयवमेवाच्छपुष्पपूरैः प्रपूरितम् ॥ १०
स्वरेणुचन्दनालेपैः समालब्धमखण्डितम् ।
स्वच्छदाभोगविपुलरक्ताम्बरपरिच्छदम् ॥ ११
विवाहायेव वेषेण पुष्पभारातिभारिणा ।
लताङ्गनानुषक्तेन नागरेण कृतोपमम् ॥ १२
मुनिबद्धोटजाकारलतामण्डपमण्डितम् ।
मञ्जरीभिः पताकाभिर्युक्तं पुरमहोत्सवे ॥ १३
मृगकण्डूयनध्वस्तपुष्पधूलिविधूसरम् ।
प्रोत्सारितोपान्तवनं वृषमल्लमिवोत्थितम् ॥ १४
बर्हिभिः कुसुमोद्भ्रान्तपरागपरिपाटलैः ।
निक्षेपक्षिप्तसंध्याभ्रबालवालमिवाचलैः ॥ १५
प्रवालारुणहस्तेन कुसुमस्मितशोभिना ।
मधुना घूर्णमानेन प्रान्तेन पुलकत्विषा ॥ १६
नीरन्ध्रपुष्पपूर्णेन घूर्णितेन वनानिलैः ।
निद्रालुकुड्मलदृशा स्तवकस्तनधारिणा ॥ १७
पुष्पजालरजःपुञ्जकुङ्कुमारुणवाससा ।
लतावितानिलयवातायननिषङ्गिणा ॥ १८
नीलपुष्पलतादोलालीलालास्यविलासिना ।
आपादमस्तकप्रान्तं सर्वतो निर्मितालयम् ॥ १९
वृन्देन वनदेवीनां कोकिलालापशालिना ।
संदिग्धमञ्जरीजालमलिनेत्रेण भासिना ॥ २०
अवश्यायोपशमितरतिखेदैर्मदालसैः ।
पुष्पधूलिसमालब्धैराश्लिष्टैर्निबिडं मिथः ॥ २१
पुष्पान्तरान्तःपुरगैः किमपि प्रणयोचितम् ।
ध्वनद्भिरभितः स्वच्छमत्तालियुगलैर्वृतम् ॥ २२

पतितोऽवतीर्णः । निर्वृष्टेन वृष्टिजलवेषेण मुक्तः अधोवतारित आत्मा येन तोयदेन ॥ २ ॥ ३ ॥ तापयन्तं भासयन्तम्[1] ॥ ४ ॥ वितीर्णो विष्टर आसनं यस्मै तम् । पत्रग्रहणं पुष्पफलादीनामप्युपलक्षणम् ॥ ५ ॥ पूर्वकथाः प्राक्प्रस्तुतब्रह्मचर्चाः । तनयं सम्यग्बोधयन्तीति तनयसंबोधाः । कर्मण्यण् । गतिकारकोपपदानां कृद्भिः सह समासवचने कृद्ग्रहणे गतिपूर्वकस्यापि ग्रहणात्सोपसर्गेण सह समासः ॥ ६ ॥ अयतद्भिः अन्याकुलयद्भिरिति यावत् ॥ ७ ॥ तं कदम्बं वधूश्लिष्टवरवेषेण वर्णयति—**स्मितेने**त्यादिना । यतः कोरकोत्तरकोटरं श्वसनस्फुरितपल्लवं च अतएव स्मितेन स्फुटमिव स्थितम् ॥ ८ ॥ लतानां कोटिषु शाखाग्रेषु गतैः संक्रान्तैश्चामरैश्चमरपुच्छैः ॥ ९ ॥ सर्वावयवं अभिव्याप्येति शेषः ॥ १० ॥ समालब्धं लिप्तम् । स्वस्य च्छदाभोगैः पल्लवविस्तारैर्विपुला रक्ताः शोणा अम्बरपरिच्छदा अन्तरीयोत्तरीयकञ्चुकोष्णीषादयो यस्य ॥ ११ ॥ १२ ॥ मुनिभिर्बद्धानामुटजानामाकार इवाकारो येषां तैर्लतामण्डपैर्मण्डितम् । पुरमहोत्सवे पताकाभिर्युक्तं अर्थात्पुरमिवेत्यनुषज्यते । 'पुरमिवोत्सवे' इति पाठः साधुः ॥ १३ ॥ मृगकण्डूयनकम्पेन ध्वस्तैः स्खलितैः पुष्पधूलिभिर्विधूसरम् । प्रोत्सारितं स्वोत्कर्षेण न्यग्भावितं उपान्तवनं येन । वृषमल्लं वृषश्रेष्ठम् ॥ १४ ॥ बर्हिभिर्मयूरैः । अचलैः पर्वतैर्निक्षेपभूताः क्षिप्ताः स्थापिताः संध्याभ्रपोतलक्षणा वालाः स्वकेशा यस्मिंस्तथाविधमिवेत्युत्प्रेक्षा ॥ १५ ॥ इदानीमलिनेत्रेण भासिनेत्यन्तैः साधारणैर्विशेषणैर्विलासिपुरुषरूपेण कदम्बं वसन्तं वनदेवीवृन्दं वा वर्णयंस्तदालयत्वेन तं वर्णयति—**प्रवाले**त्यादिना । तत्राद्यकल्पे स्वेन स्वदेहेनेति वा विशेष्यमन्तेऽध्याहार्यम् । मधुना श्लेषान्मकरन्देन मद्येन च मदेनेव घूर्णमानेन । प्रान्तेनार्थात्केसरपूर्णेन हेतुना पुलकशोभावता ॥ १६ ॥ नीरन्ध्रं निरन्तरं पुष्पैः पूर्णेन । लतास्तबकस्तनान्धारिणा पल्लवकरैः परामृशता ॥ १७ ॥ लतारचितवितानलक्षणानां निलयानां गृहाणां वातायनेषु प्रासादगवाक्षद्वारकेषु निषङ्गिणा अनुरक्तेन ॥१८॥ नीलासु स्निग्धहरितच्छदासु पुष्पयुक्तलतादोलासु लीलालास्ये कौतुकान्दोलनविषये विलासिपुरुषभूतेन । कोकिलालापशालिना वनदेवीनां वृन्देन वृतेनेति वा पाठयोरन्यतरदध्याहार्यम् । ईदृशेन स्वेन स्वदेहेन वा आपादमस्तकप्रान्तं सर्वतः सर्वेऽवयवाः निर्मिता आलयाः पुष्पफलपक्ष्यादिभूषणाश्रया येन तम् । द्वितीये उक्तविशेषणगणवता मधुना वसन्तेन सर्वतः सर्वदा सर्वाङ्गे निर्मितालयमिति योज्यम् । तृतीयेऽपि उक्तविशेषणगणवता वनदेवीनां वृन्देन सर्वतो निर्मितालयमिति परेण सह योज्यमिति ॥ १९ ॥ अलीनां पर्यायेण लताकदम्बमञ्जरीषूपवेशनात्किमेतानि लतानेत्राणि उत कदम्बनेत्राणीति संदेहास्पदीभूतमञ्जरीजालयुक्तमित्यर्थः । अथवा वनदेवीनामलिसदृशनेत्रेण वृन्देन किमेतानि वनदेवीनां नेत्राण्युत भ्रमरयुता मञ्जर्य इति संदिग्धमञ्जरीजालमिति योज्यम् ॥ २० ॥ पुष्पधूलिभिः समालब्धैर्लिप्तैः । मिथः अन्योन्यं रहसि च निबिडमाश्लिष्टैः ॥ २१ ॥ पुष्प-

१ त्रासयन्तं इति पाठः.

काननोपान्तनगरीघुंघुमाकर्णनेच्छया ।
क्षणमुत्कर्णमाशान्तचारुवर्वणटांकृतैः ॥ २३
क्षणं दलाग्रविश्रान्तमुग्धमुग्धशिरस्तया ।
पश्यद्भिरिन्दुंशुकवज्जालामर्णवमेखलाम् ॥ २४
वनस्थलीनां तनयैर्नयैर्मूर्तिमिवास्थितैः ।
शुभैः पत्रपुटेष्वन्तर्मृगैः सारतलान्तरम् ॥ २५
नीडश्वसत्सुविश्वस्तसुप्तमात्रकपक्षिणम् ।
पाकच्युतफलोपान्तभूतकञ्चुकमण्डली ॥ २६
संदिग्धमूकभ्रमरं गुच्छैः पूजाक्षसूत्रकैः ।
श्यामलीकृतपर्यन्तं नीडैः पल्लवमण्डितैः ॥ २७
सुगन्धिताशेषवनं पुष्पमेघीकृताम्बरम् ।
धूलीकदम्बशवलफलौघवलितं तले ॥ २८
बहुनात्र किमुक्तेन न किंचिदपि विद्यते ।
पत्रं यत्र तरौ यत्र नोष्यते वा न युज्यते ॥ २९
पत्रे पत्रे मृगाः सुप्ता विश्रान्ताश्च पदे पदे ।
कच्छे कच्छे खगा लीनास्तस्य भूरुहभूपतेः ॥ ३०
एवंगुणविशिष्टं तं समालोकयतो मम ।
महोत्सवेन सदृशी सा बभूव तमस्विनी ॥ ३१
ततः कथाभी रम्याभिः स तस्य तनयो मया ।
विज्ञानालोकरम्याभिर्नीतो बोधं परं पुनः ॥ ३२
आवयोस्तत्र चित्राभिः कथाभिरितरेतरम् ।
शर्वरी सा व्यतीयाय मुहूर्त इव कान्तयोः ॥ ३३
प्रातः प्रतनुतां याते पुष्पर्द्धिघनजालके ।
स्वर्गाङ्गनाङ्गभोगाभे तारकानिकरे शनैः ॥ ३४
आकदम्बवनभोगमुपयातं सुतान्वितम् ।
अहं विसृज्य दाशूरं ततोऽमरनदीं गतः ॥ ३५
तत्राभिमतमासाद्य स्थानमेत्य नभस्तलम् ।
प्रविश्य खं मुनीनां च मध्यं स्वस्थ इव स्थितः ॥ ३६
दाशूराख्यायिकैषा ते कथिता रघुनन्दन ।
जगतः प्रतिबिम्बाभा सत्याकाराप्यसन्मयी ॥ ३७
दाशूराख्यायिकेवेयमित्येतत्कथितं मया ।
तुभ्यं राघव बोधाय जगद्रूपनिरूपणे ॥ ३८
तस्मादवास्तवीं त्यक्त्वा वास्तवीमपि रञ्जनाम् ।
दाशूरसिद्धान्तदृशा सदोदारो भवात्मवान् ॥ ३९

तस्माद्विकल्पं मलमात्मनस्त्वं
निर्धूय पश्यामलमात्मतत्त्वम् ।
आसादयिष्यस्यचिरात्पदं त-
द्भविष्यसीज्यो भुवनेषु येन ॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे दाशूरो० वसिष्ठदाशूरमेलनं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

## दाशूरोपाख्यानं समाप्तम् ।

---

स्यान्तरो गर्भ एवान्तःपुरम् । मत्तालीनां युगलैर्मिथुनैः ॥ २२ ॥ आशान्तेषु दिक्प्रदेशेषु चारुभिर्मधुरैर्वर्वणानां नीलमक्षिकाणां निवेदकपुरुषस्थानीयानां टांकृतैर्ध्वनिभिः काननोपान्तलक्षणायाः स्वनगर्या घुंघुमस्य मृगपक्ष्याद्याक्रोशस्याकर्णनेच्छया क्षणं उत्कर्णमूर्ध्वीकृतकर्णमिव स्थितमित्यर्थः ॥ २३ ॥ दलाग्रेषु पल्लवेषु उपधानस्थानीयेषु निद्रावेशाच्चापलाच्च क्षणं विश्रान्तानि मुग्धमुग्धानि दर्शनीयतमानि शिरांसि येषां तद्भावेन । इन्दुना अंशुकवन्ति किरणपटैराच्छादितानि वनाद्यवयवजालानि यस्यास्तथाविधामर्णवमेखलां भूमिं निशापगमप्रतीक्षया पश्यद्भिः ॥ २४ ॥ वनस्थलीनां तनयैः पुत्रभूतैर्मुनिप्रभावान्मूर्तिमाश्रितैर्नयैर्विनयैरिव स्थितैः पत्रपुटेषु पर्णजालोदरेषु अन्तर्लीनैर्मृगैः शाखामृगादिभिः साराः शोभमानाः सार्थकीभूताश्च तलमधोभूभाग आन्तराः शाखाद्यवयवाश्च यस्य तम् ॥ २५ ॥ नीडेषु श्वसन्तः मुनिप्रभावनिर्भयत्वात्सुविश्वस्तं यथा स्यात्तथा सुप्तमात्रकाः । अज्ञाते कन् । सुप्तत्वादलक्ष्यमाणा इति यावत् । पक्षिणो यत्र तम् । पूर्वं भ्रमराविष्टेषु दैवात्पाकवशादधश्च्युतेषु फलेषु उपान्तस्थितमृगादिभूतैः कञ्चुकवत्सर्वतो व्याप्तमण्डलीभ्यो भक्षणोपमर्दादिशङ्कया संदिग्धाः भयान्मूकाश्च भ्रमरकीटा यस्य तमित्युत्तरेण सह समासः ॥ २६ ॥ पूजापदेन तत्कालिको जपो लक्ष्यते । तत्राक्षसूत्रकलैः लम्बमानैरित्यर्थः गुच्छैः गुच्छैर्मकर- अशेषं वनं येन ॥२७॥ तले मूलभुवि धूलीकदम्बशबलैः फलौघैर्वलितं व्याप्तम् ॥ २८ ॥ यत्र तरौ यत्र यस्मिन्पत्रे प्राणिभिर्नोष्यते न युज्यते नोपयुज्यते वा तादृशं पत्रमपि किंचिन्न विद्यते किं वाच्यं शाखाफलपुष्पादीत्यहोऽस्य सर्वथा परोपकारेण जन्मसार्थक्यमिति भावः ॥ २९ ॥ पत्रे पत्रे । अधोगलितपत्रेषु सर्वेष्वित्यर्थः । कं अवश्यायजलं छ्यति छिनत्तीति कच्छः पत्राद्यधोदेशः । 'छो छेदने' इत्यस्मादातोऽनुपसर्गे कः ॥३०॥ दिव्यदृशा समालोकयतः । **तमस्विनी**ति । यद्यपि प्रागिन्दुंशुकवज्जालामित्युक्तत्वाज्ज्योत्स्नावत्येव तथापि रात्रित्वमात्रविवक्षयैवमुक्तम् ॥ ३१ ॥ ३२ ॥ मम तस्य च आवयोः । 'त्यदादीनि सर्वैर्नित्यम्' इत्यस्मच्छब्दशेषः ॥ ३३ ॥ पुष्पर्द्धिघनजालप्रतिकृतौ तारकानिकरे । 'इवे प्रतिकृतौ' इति कन् ॥ ३४ ॥ उपयातमनुयातम् । 'ओदकान्तात्प्रियं पान्थमनुव्रजेत्' इति स्मृतेः । गृहं प्रति विसृज्य निवर्त्य ॥ ३५ ॥ ३६ ॥ ३७ ॥ आख्यायिकायाः प्रागुक्तां संगतिं स्मारयति—**दाशूरे**ति ॥ ३८ ॥ दाशूरोपदिष्टसिद्धान्तदृशा ॥ ३९ ॥ विकल्पं तद्धर्मिमनस्तद्धेतुभूतं मलमज्ञानं च निर्धूय । येन आसादनेन इज्यः पूज्यो भविष्यसि ॥ ४० ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे वसिष्ठदाशूरमेलनं नाम पञ्चपञ्चाशः सर्गः ॥५५॥

१ मागम् इति पाठः.

## षट्पञ्चाशः सर्गः ५६

श्रीवसिष्ठ उवाच ।

नास्तीदमिति निर्णीय सर्वतस्त्यज रञ्जनाम् ।
यन्नास्ति तत्प्रति किल कैवास्थेह विचारिणाम् ॥ १
दृश्यमानमथेदं चेदस्ति सत्तामुपागतम् ।
तिष्ठ स्वात्मनि बध्नासि त्वं किमत्र किलात्मताम् ॥ २
अथ चेदस्ति नास्तीदमिति निश्चयवानसि ।
तथापि भावनासङ्गः कथं युक्तश्चलाचले ॥ ३
नेदमस्ति जगद्राम तव नास्ति महामते ।
केवलं स्वच्छमेवेत्थमाततं मितमीदृशम् ॥ ४
नेदं कर्तृकृतं किंचिन्न वा कर्तृकृतक्रमम् ।
स्वयमाभासते चेदं कर्त्रकर्तृपदं गतम् ॥ ५
अकर्तृकं जगज्जालं भवत्वथ सकर्तृकम् ।
मा त्वमेतेन शबलं भावयन्नास्व चेतसि ॥ ६
सर्वेन्द्रियविहीनात्मा कर्तेव स जडोपमः ।
अकर्तृ च तदा मन्ये काकतालीयवज्जगत् ॥ ७
काकतालीययोगेन जातं यत्किंचिदेव तत् ।
तस्मिन्भावानुसंधानं बालो बध्नाति नेतरः ॥ ८
न कदाचिदिदं शान्तं जगद्राम न च क्षयि ।
अजस्रं दृश्यमानत्वाद्भावित्वाच्च पुनःपुनः ॥ ९
न कदाचिदिदं चास्ति जगद्राम न च क्षयि ।
अजस्रं क्षीयमाणत्वान्नास्तित्वाच्चानुमानतः ॥ १०
सर्वेन्द्रियपदातीतो यदा कर्तेह विज्वरः ।
कुर्वाणः सर्वदा खेदं न कदाचन गच्छति ॥ ११
तेनेयं नियतिः प्रौढा भावाभावदशामयी ।
ईदृश्येव स्थिरा दीर्घा मिथ्योत्थापि च दृश्यते ॥ १२
अपर्यन्तस्य कालस्य कश्चिदंशः शरच्छतम् ।
तावन्मात्रमहाश्चर्यः किमर्थं सोऽनुधावति ॥ १३
स्थिराश्चेज्जगतां भावास्तत्त्वादास्था न शोभते ।
कथमन्योन्यसंश्लेषो जडचेतनयोः किल ॥ १४
अस्थिराश्चेज्जगद्भावास्तदप्यास्था न शोभते ।

---

सत्तासत्ते जडस्यात्र कर्तृताकर्तृते चितः ।
विमृश्य सर्वथा दृश्ये रञ्जनास्था निवार्यते ॥ १ ॥

इदं जडं जगत् । रञ्जनामहंममेतिसंसर्गतादात्म्याध्यासलक्षणामास्थाम् । विचारिणां विवेकिनां ॥ १ ॥ किं दृश्यं सदथ सदसत् उतासदेव । पक्षत्रयेपि तत्राहंतादिरञ्जनं नोचितमित्याह—**दृश्यमान**मिति त्रिभिः । इदं देहादि त्वत्सत्तानिरपेक्षसत्तामुपागतं यद्यस्तीति मन्यसे तर्हि त्वमपि तत्सत्तानिरपेक्षे असङ्गोदासीनचिद्रूपे स्वात्मनि तिष्ठ । अत्र त्वं निरपेक्षे देहादौ अध्यासेनात्मतां किं बध्नासि । नचेदं तवोचितमित्यर्थः । 'तिष्ठत्वात्मनि' इति पाठे तु यदि सत्तामुपागतमस्ति तर्हि आत्मनि स्वीयजडस्वभावे तिष्ठतु नाम । त्वमत्रेत्यादि प्राग्वत् ॥ २ ॥ भावनासङ्गः प्रागुक्ताध्यासः । चलाचले सत्त्वासत्त्वयोः परस्परोच्छित्तिरूपत्वादनियतस्वभावे ॥ ३ ॥ अथ चेदित्यनुकृष्यते । अथ चेन्नेदं जगदस्ति तर्हि तव बन्धो नास्त्येव केवलं स्वच्छमेवात्मतत्त्वमित्थंरीत्या आततं सर्वतो विस्तीर्णं मितं प्रमितमिति नान्यरञ्जनावकाश इत्यर्थः ॥ ४ ॥ किंचेदं जगत्सकर्तृकमुताकर्तृकमथ कर्त्रकर्तृसाधारणं उदासीनात्मसंनिधिमात्रलब्धस्वरूपम् । त्रिष्वपि पक्षेषु तव तद्रञ्जना न युक्तेत्याह—**नेद**मिति द्वाभ्याम् ॥ ५ ॥ शबलं अन्योन्यतादात्म्याध्यासादैक्यमिवापन्नं भावयन् देहाद्यात्मभावं पश्यंश्चेतसि बुद्ध्युपाधिपरिच्छेदे मा आस्व न तिष्ठेत्यर्थः ॥ ६ ॥ ननु 'यतो वा इमानि भूतानि जायन्ते' 'विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादिश्रुतिविरुद्धोऽयमकर्तृकत्वपक्षः कथमुत्थितः किमर्थं वा त्वयोपन्यस्तस्तत्राह—**सर्वे**ति । 'यत्तदद्रेश्यमग्राह्यमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम् । तदव्ययं यद्भूतयोनिं परिपश्यन्ति' इत्यादिश्रुतिभिरसङ्गोदासीनस्वभावस्यैवात्मनः आत्मा मेरुः सूर्यं परिवर्तयतीतिवत्कर्तेवोपचर्यते जगन्मिथ्यात्वव्युत्पादनायेति यदा सर्वासां सकर्तृकत्वप्रतिपादकश्रुतीनां हृदयं ज्ञातं तदेत्यर्थः ॥ ७ ॥ यत्किंचिदेव अनिर्वचनीयमेव । भावोऽहंताद्यभिमानस्तेन पुनःपुनरनुसंधानं स्मरणम् । बालो बालिशः ॥ ८ ॥ अनिर्वचनीयत्वमेव युक्त्या दर्शयति—**नेत्या**दिना । शान्तमत्यन्ताभावात्मकशून्यस्वभावम् । क्षयि प्रध्वंसप्रयुक्तशून्यस्वभावं च न । शून्यस्य दर्शनायोग्यत्वाज्जगतश्च सदा प्रवाहरूपेण दृश्यमानत्वाद्धस्तस्योत्पत्तिविरोधाज्जगतश्च पुनःपुनरुत्पद्यमानत्वादित्यर्थः ॥ ९ ॥ तर्ह्यात्मवत्सदा सत्स्वभावं क्षणिकसत्तास्वभावं वास्तु तत्राह—**ने**ति । अस्ति नित्यसत्तास्वभावम् । क्षयि क्षणिकसत्तास्वभावम् । आद्ये अजस्रं प्रतिक्षणं परिणामभेदेन क्षीयमाणत्वानुभवविरोधात् । द्वितीये अनाद्यनन्तयोः पूर्वोत्तरकालयोरसतो वर्तमानत्वाभिमतक्षणेऽप्यसतः सत्त्वायोगेनासत्त्वानुमानादित्यर्थः ॥ १० ॥ अस्तु वास्य नियतिप्रयुक्तसर्गादौ संनिधिमात्रेण कर्तृत्वं तथापि सृज्याभिमानेन तत्र खेदो न युक्त इत्याह—**सर्वेन्द्रिये**ति द्वाभ्याम् ॥ ११ ॥ ॥ १२ ॥ शरच्छतं मानुषदेहजीवनपरमावधिः कालः । अनाद्यनन्तयोः पूर्वोत्तरकालयोः कदाप्यसत्त्वादत्यन्तासंभावितं तावत्कालमात्रं महदतिदृढं मनुष्यदेहात्मतालक्षणमाश्चर्यं यस्य तथाविधः सन् स सर्वेन्द्रियपदातीत आत्मा किमर्थमनुधावति । सर्वथेदमनुचितमित्यर्थः ॥ १३ ॥ इदानीमकर्तृकत्वपक्षे स्थिरत्वाभ्युपगमेऽप्यास्था नोचितेत्याह—**स्थिरा** इति । तत्त्वात् स्थिरत्वादेव हानोपादानायोग्यत्वादित्यर्थः । असङ्गचितो जडसंबन्धाघटनादपि तत्र सा अनुचितेत्याशयेनाह—**कथ**मिति ॥ १४ ॥ इदानीमकर्तृकास्थिरत्वपक्षेऽप्यास्था नोचितेत्याह—**अस्थिरा** इति । यतस्ते अस्थिरे आस्थां बध्नतः पयःफेनलक्षण-

पयःफेनास्थिरस्यान्ते दुःखमेषा ददाति ते ॥ १५
आस्थाबन्धो महाबाहो जगद्भावत्वमात्मनः।
न स्थिरास्थिरयोः फेनशैलयोरिव राजते ॥ १६
सर्वकर्ताप्यकर्तैव करोत्यात्मा न किंचन।
तिष्ठत्येवमुदासीन आलोकं प्रति दीपवत् ॥ १७
कुर्वन्न किंचित्कुरुते दिवाकार्यमिवांशुमान्।
गच्छन्न गच्छति स्वस्थः स्वास्पदस्थो रविर्यथा ॥ १८
यतः कुतश्चिदेवेदं संपन्नमिव लक्ष्यते।
अरुणातीरवद्वारिपूरावर्तवदाततम् ॥ १९
इति चेद्भवता राम नैपुण्येनावधारितम्।
प्रमाणपरिशुद्धेन चेतसा च विचारितम् ॥ २०
तथापि भावनां साधो पदार्थं प्रति नार्हसि।
अलातचक्रे स्वप्ने च भ्रमे वा केव भावना ॥ २१
अकस्मादागतो जन्तुः सौहार्दस्य न भाजनम्।
भ्रमोद्भूतं जगज्जालमास्थायास्तन्न भाजनम् ॥ २२
औष्ण्येन्दौ शीतले भानौ मृगतृष्णाजले तथा।
यथा न भावयस्यास्थामेवं भावय मा स्थितौ ॥ २३
संकल्पपुरुषस्वप्नजनद्वीन्दुत्वविभ्रमम्।
यथा पश्यसि पश्य त्वं भावजातमिदं तथा ॥ २४
अन्तरास्थां परित्यज्य भावश्रीभावनामयीम्।
योऽसि सोऽसि जगत्यस्मिँल्लीलया विहरानघ ॥ २५
अकर्तृत्वपदं पीत्वा पीत्वेच्छामपि कुर्वतः।
सर्वभावान्तरस्थस्य सर्वातीतस्य चात्मनः ॥ २६
इयं संनिधिमात्रेण नियतिः परिजृम्भते।
दीपसंनिधिमात्रेण निरिच्छैव प्रकाशते ॥ २७
अभ्रसंनिधिमात्रेण कुटजानि यथा स्वयम्।
आत्मसंनिधिमात्रेण त्रिजगन्ति तथा स्वयम् ॥ २८
सर्वेच्छारहिते भानौ यथा व्योमनि तिष्ठति।
जायते व्यवहारश्च सति देवे तथा क्रिया ॥ २९
निरिच्छे संस्थिते रत्ने यथालोकः प्रवर्तते।
सत्तामात्रेण देवे तु तथैवायं जगद्गणः ॥ ३०
अतः स्वात्मनि कर्तृत्वमकर्तृत्वं च संस्थितम्।
निरिच्छत्वादकर्तासौ कर्ता संनिधिमात्रतः ॥ ३१
सर्वेन्द्रियाद्यतीतत्वात्कर्ता भोक्ता न सन्मयः।
इन्द्रियान्तर्गतत्वात्तु कर्ता भोक्ता स एव हि ॥ ३२
द्वे एवात्मनि विद्येते कर्तृताकर्तृतानघ।
यथैव पश्यसि श्रेयस्तामाश्रित्य स्थिरो भव ॥ ३३
सर्वस्थोऽहमकर्तेति दृढभावनयानया।
प्रवाहपतितं कार्यं कुर्वन्नपि न लिप्यते ॥ ३४
याति नीरसतां जन्तुरप्रवृत्तेश्च चेतसः।
यस्याहं किंचिदेवेह न करोमीति निश्चयः ॥ ३५
भोगौघकामवांस्तत्र कः करोतु जहातु वा।
तस्मान्नित्यमकर्ताहमिति भावनयेद्धया ॥ ३६

---

स्याप्यस्थिरस्यान्ते नाशे एषा आस्था प्रसक्ता सती दुःखं ददाति दातुं प्रसज्जेतेति यावत्। तथाच पयःफेनास्थया तन्नाशे शोक उचितश्चेद्देहाद्यास्थया तन्नाशेऽपि स उचितः स्यादिति भावः ॥ १५ ॥ आत्मनो जगद्भावत्वं जगत्स्वभावता। जन्मनाशादिस्वभावतेति यावत्। साच अन्योन्यतादात्म्यसंसर्गाध्यासलक्षण आस्थाबन्ध एव न तदन्यो निरूपयितुं शक्यः। सच तत्त्वविमर्शे स्थिरास्थिरपक्षयोर्द्वयोरपि न राजते। न शोभते इत्यर्थः। अथवा स्थिरास्थिरयोरात्मजगतोस्तादात्म्यलक्षण आस्थाबन्धो न राजते फेनशैलयोरिवेत्यर्थः ॥ १६ ॥ ननु कर्तृत्वपक्षे कथमनास्थोपपत्तिस्तत्राह—**सर्वे**ति। अकर्ता शैल इव। औदासीन्यांशेऽयं दृष्टान्तः। कार्यनिर्वाहात्तु कर्तेत्युच्यत इति सदृष्टान्तमाह—**तिष्ठती**त्यादिना ॥१७॥ दिवाकार्यं सर्वप्राणिदिनकृत्यनिर्वाहम् ॥ १८ ॥ नन्वादित्यो दिनकृत्यनिमित्तमात्रं कर्तारस्तु जनास्तद्भिन्ना दृश्यन्ते, जगन्निर्माणे तु नान्ये कर्तारः सन्तीति वैषम्यमाशङ्क्याह—**अरुणे**ति। अरुणाख्या नदी तस्यास्तीरं स्वभावत एव शिलाविषममुदासीनं च। वारिपूरोऽपि निम्नानुसारिस्वभावो न प्रवाहवैषम्यकर्ता। द्वयोस्तयोः सन्निधाने जायमान आवर्तो यतः कुतश्चिदेव आकस्मिकः संपन्नस्तद्वच्चिज्जडसन्निधौ जगदपीति नात्र कस्यचिच्छिरसि तत्कर्तृताभार आरोपयितुं शक्य इति भावः। आद्यो वतिरिवार्थे सप्तम्यन्तात्। द्वितीयस्तु तेन तुल्यमिति तृतीयान्तात् ॥१९॥ एवं विमर्शे तु सुतरां जगत्यास्था नोचितेत्याह—**इती**ति त्रिभिः ॥२०॥२१॥ सौहार्दस्य मैत्र्याः ॥२२॥ अनृतत्वाच्च तत्रास्था नोचितेत्याह—**औष्ण्ये**ति। यथा शीतार्त औष्ण्यभ्रान्तिगृहीते इन्दौ। तापार्तो भ्रान्तिकृतशीतले भानौ तृषार्तश्च त्वं मृगतृष्णाजले आस्थां न भावयसि एवं जगत्स्थितावपीत्यर्थः ॥ २३ ॥ २४ ॥ भावश्रीः स्त्र्यादिवस्तुसौन्दर्यं तच्चिन्तनप्रचुराम् ॥ २५ ॥ अकर्तृत्वपदं तदिच्छां अपिशब्दात्कर्तृत्वपदं तदिच्छां च पीत्वा निगीर्य योऽसि परिशिष्टः सोऽसीति पूर्वेणाप्यन्वयः। लीलया विहरेति यदुक्तं तद्विवृणोति—**अकर्तृत्वपद**मिति। कुर्वतो व्यवहारे औदासीन्येन कर्तृभूतस्य ते सन्निधिमात्रेण निरिच्छैव नियतिः परिजृम्भते। व्यवहाराकारेण प्रथते इति यावत् ॥ २६ ॥ तत्र दृष्टान्तानाह—**दीपे**ति। निरिच्छैव प्रभेति शेषः ॥२७॥ कुटजानि कुटजपुष्पाणि। उभयत्र जायन्त इति शेषः ॥ २८ ॥ देवे परमात्मनि ॥ २९ ॥ ३० ॥ कर्तृत्वाकर्तृत्वोक्त्योर्बीजं दर्शयन्नुपसंहरति—**अत** इति ॥३१॥ बीजान्तरे च दर्शयति—**सर्वे**ति। कर्ता भोक्ता च न अकर्ता अभोक्ता चेत्युक्त इत्यर्थः ॥ ३२ ॥ कर्तृता अकर्तृता चेत्यध्याहार्यम् ॥ ३३ ॥ द्वयोरपि श्रेयस्त्वं प्रत्येकं दर्शयति—**सर्वस्थ** इत्यादिना ॥ ३४ ॥ कथं न लिप्यते तदाह—**याती**ति। नीरसतां विरागम् ॥३५॥३६॥

परमामृतनाम्नी सा समतैवावशिष्यते ।
अथ सर्वं करोमीति महाकर्तृतया तया ॥ ३७
यदीच्छसि स्थितिं राम तत्तामप्युत्तमां विदुः ।
अहो यन्न करोमीमं समग्रं जागतं भ्रमम् ॥ ३८
रागद्वेषक्रमस्तत्र कुतोऽन्यस्यात्यसंभवात् ।
यदन्येन शरीरं तु दग्धमन्येन लालितम् ॥ ३९
सोऽस्मदारम्भ एवातः कः खेदोल्लासयोः क्रमः ।
मत्सुखासुखविस्तारे जगज्जालक्षयोदये ॥ ४०
अहं कर्तेति मत्वान्तः कः खेदोल्लासयोः क्रमः ।
खेदोल्लासविलासेषु स्वात्मकर्तृतयैतया ॥ ४१
स्वयमेव लयं याते समतैवावशिष्यते ।
समता सर्वभूतेषु यासौ सत्या परा स्थितिः ॥ ४२
तस्यामवस्थितं चित्तं न भूयो जन्मभाङ्नाक् ।
अथवा सर्वकर्तृत्वमकर्तृत्वं च राघव ॥ ४३
सर्वं त्यक्त्वा मनः पीत्वा योऽसि सोसि स्थिरो भव ।
अहं सोऽहमयं नाहं करोमीदमिदं तु न ॥ ४४
इति भावानुसंधानमयी दृष्टिर्न तुष्टये ।
सा कालसूत्रपदवी सा महावीचिवागुरा ॥ ४५
सासिपत्रवनश्रेणी या देहोऽहमिति स्थितिः ।
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ॥ ४६
स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुक्कसी ।
तया सुदूरोज्झितया दृष्टौ पटललेखया ॥ ४७
उदेति परमा दृष्टिर्ज्योत्स्नेव विगताम्बुदा ।
ययाभ्युदितया राम तीर्यते भवसागरः ॥ ४८
कर्ता नास्मि न चाहमस्मि स इति ज्ञात्वैवमन्तः स्फुटं ।
कर्ता चास्मि समग्रमस्मि तदिति ज्ञात्वाथवा निश्चयं ॥
कोप्येवास्मि न किंचिदेवमिति वा निर्णीय सर्वोत्तमे ।
तिष्ठ त्वं स्वपदे स्थिताः पदविदो यत्रोत्तमाः साधवः ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे कर्तृत्वविचारयोगोपदेशकरणं नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ५७

श्रीराम उवाच ।
सत्यमेतत्त्वया ब्रह्मन्यदुक्तं सूक्तिसुन्दरम् ।
अकर्तैव हि कर्तात्मा भोक्ताभोक्तैव भूतकृत् ॥ १
सर्वेश्वरः सर्वगश्च चिन्मात्रममलं पदम् ।
स्थानं भुवि वपुर्देवः सर्वभूतान्तरस्थितः ॥ २

द्वितीयकल्पस्यापि श्रेयस्त्वं दर्शयति—**अथे**त्यादिना ॥ ३७ ॥ तत्तां तादृशीं स्थितिमपि । प्रथमकल्पे रागद्वेषाद्यप्रसक्तिं दर्शयति—**अहो** इति ॥ ३८ ॥ क्रमः प्रसङ्गो मम कुतः । यतः स्यात्तस्य मदन्यस्य अत्यन्तमसंभवादित्यर्थः । 'अन्यसंभवात्' इति पाठे तु अकर्तुरन्यस्य कर्तुरेवान्यस्य रागादेः संभवादित्यर्थः । द्वितीयकल्पेऽपि तदप्रसक्तिं दर्शयति—**यदि**ति ॥ ३९ ॥ अस्मदारम्भोऽस्मत्कृत एव अतः खेदोल्लासयोर्दुःखहर्षयोः । जगज्जालस्य क्षये उदये च अहं कर्ता ॥ ४० ॥ मत्वा स्थितस्येति शेषः । अस्त्वेवं तथापि कथं समतालाभस्तत्राह—**खेदे**ति ॥ ४१ ॥ लयं याते यातेषु । व्यत्ययेनैकवचनं छान्दसम् ॥ ४२ ॥ अभ्यासदशा दृष्टी द्वे व्युत्पाद्य परिनिष्ठितदृष्टिं दर्शयति—**अथवे**ति ॥ ४३ ॥ एतद्दृष्टिदशा पूर्वदृष्ट्योरल्पतां दर्शयति—**अय**मिति । अयं एतद्देहे प्रसिद्धो हंसः सर्वदेहात्मकसमष्टिरूप इति द्वितीयकल्पे समष्टिपरिच्छेदस्य कर्तृत्वाभिमानस्य चानपगमादपूर्णता, आद्यकल्पे तु इदं देहेन्द्रियाद्यहं न, अत इदं किंचिदपि न करोमीत्यध्यात्मपरिच्छेदस्य कर्तृत्वादेश्च निरासेन शोधितत्वंपदार्थमात्रनिष्ठत्वेऽपि तत्पदार्थशोधनस्य वाक्यार्थनिष्ठायाश्चालाभादपूर्णतेति दृष्टिद्वयमपि तुष्टये नेत्यर्थः ॥ ४४ ॥ यदि ते न तुष्टये तर्हि किमर्थमुपन्यस्ते इति चेत्सर्वानर्थमूलदेहाहंभावविमोचनोपायत्वेनोपन्यस्ते इत्याशयेन देहाहंभावस्यानर्थरूपतां सर्वथा त्याज्यतां च दर्शयति—**से**त्यादिना । कालसूत्रावीच्यसिपत्रवनानि नरकभेदाः । कार्यकारणयोरायुर्घृतमितिवदभेदारोपात्सामानाधिकरण्यम् ॥ ४५ ॥ ४६ ॥ श्वमांसेन सहिता सश्वमांसा । देहाहंमतेरपि श्वमांससदृशकामाद्यशुचिदूषितत्वादिति भावः । विशुद्धात्मदृष्टौ स्वाधिष्ठाने पटललेखावदावरणविक्षेपहेतुभूतयेति यावत् ॥ ४७ ॥ ४८ ॥ इदानीं दृष्टित्रयं संगृह्य तासु स्वाधिकारानुरूपामैच्छिकीं स्थितिमुपदिशन्नुपसंहरति—**कर्ते**ति । सः कर्तृताप्रयोजको देहादिश्चाहं नास्मि । समग्रमिति पदं तन्त्रेण द्वितीयाप्रथमान्तं देहलीदीपन्यायेन पूर्वोत्तरयोः संबध्यते । तथाच समग्रं सर्वं कर्ता अहमेवास्मि । समग्रं सर्वसमष्टिभूतं तद्ब्रह्माण्डमप्यहमेवास्मीत्यर्थः । एवं प्रसिद्धदृश्यरूपं न किंचिदस्मि किंतु कोऽप्येव लोकप्रसिद्धपरिच्छिन्नजडदुःखस्वभावात्मविलक्षणः पूर्णानन्दचिदात्मास्मीत्यर्थः । निर्णीयेत्यनेन पूर्वदृष्ट्योरप्येतत्पर्यवसानमावश्यकमिति ध्वनितम् । पदविदो ब्रह्मविदः ॥ ४९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे कर्तृत्वयोगो नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

रामप्रश्नानवसरो वासनावर्जनक्रमः ।
तदेकोपायसिद्धानां प्रशंसा चात्र विस्तरात् ॥ १ ॥

वक्ष्यमाणप्रश्नकामो रामः प्रागुक्तार्थानामनुवादप्रशंसाभ्यां स्वस्य तदवबोधं दर्शयति—**सत्य**मित्यादिना । तुल्यन्यायेनानुक्रमस्याभोक्तृत्वं सर्वभोक्तृत्वं चेत्येतदपि मयावगतमिति सूचयति—**भोक्ते**ति ॥ १ ॥ तिष्ठन्ति सर्वभूतान्यस्मिन्निति स्थानम् । यथा भुवि वपुश्चतुर्विधभूतग्रामशरीरं तिष्ठति तद्वदिलभ्याद्यस

हृदयंगमतां प्राप्तमिदानीं ब्रह्म मे विभो ।
त्वदुक्तिभिर्यथाम्भोदधाराभिर्भूभृदव्यथः ॥ ३
औदासीन्यादनिच्छत्वान्न भुङ्क्ते न करोति च ।
समग्रालोककारित्वाद्भुङ्क्ते देवः करोति च ॥ ४
किंत्वयं भगवन्स्फारः संशयो मे हृदि स्थितः ।
तं त्वं छिन्धि गिरा ब्रह्मन्दीधित्येन्दुर्यथा तमः ॥ ५
इदं सत्तदिदं वाऽसदयं सोऽहमिदं ननु ।
अयमेको द्वितीयोऽयमित्यादिकलनामयम् ॥ ६
एकस्मिन्विद्यतेऽध्वान्ते नीहार इव भास्करे ।
इदं प्रथममेवाच्छे कथमात्मनि संस्थितम् ॥ ७
श्रीवसिष्ठ उवाच ।
सिद्धान्तकाल एवास्य संप्रश्नस्योत्तरं स्थिरम् ।
कथयिष्यामि ते राम येन ज्ञास्यसि तत्त्वतः ॥ ८
मोक्षोपायस्य सिद्धान्तमसंप्राप्य न राघव ।
श्रोतुं प्रश्नोत्तराण्येतान्यलं योग्यो भविष्यसि ॥ ९
कान्तागीतगिरां राम तरुणो भाजनं यथा ।
प्रज्ञानामुत्तमोक्तीनां पुण्यकृद्भाजनं तथा ॥ १०
वृथा भवति बालेषु यथा रागमयी कथा ।
निरर्थकाल्पबोधेषु तथोदारोदया कथा ॥ ११
कस्मिंश्चिदेव समये किंचित्पुंसो विराजते ।
फलमाभाति वृक्षस्य शरद्येव न माधवे ॥ १२
उपदेशगिरो वृद्धे रञ्जना निर्मले पटे ।
लगन्त्युदारविज्ञानकथा चाधिगतात्मनि ॥ १३
प्रश्नस्यास्योत्तरं पूर्वं लेशतः कथितं मया ।
न विस्तरेण तेनैतन्न ज्ञातं भवता स्फुटम् ॥ १४
यदि त्वमात्मनात्मानमधिगच्छसि तं स्वयम् ।
एतत्प्रश्नोत्तरं साधु जानास्यत्र न संशयः ॥ १५
मया सिद्धान्तकाले तु प्राप्तबोधे त्वयि स्थिते ।
वक्तव्यो विस्तरेणैव साधो प्रश्नोत्तरक्रमः ॥ १६
जानात्यात्मानमात्मैव कृत आत्मात्मनैव हि ।
आत्मैव संप्रसन्नः सन्नात्मानं प्रतिपद्यते ॥ १७
तदेतत्कथितं राम कर्त्रकर्तृविचारणम् ।
अज्ञातत्वात्तु तामेतामक्षीणवासनो भवेत् ॥ १८
बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ।
वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ॥ १९
तामसीर्वासनाः पूर्वं त्यक्त्वा विषयवासिताः ।
मैत्र्यादिभावनानाम्नीं गृहाणामलवासनाम् ॥ २०

---

कथंचिद्योज्यम् । स्वयं च सर्वभूतान्तरस्थितः ॥ २ ॥ तथाच 'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ।' इति श्रुत्युक्तार्थस्यापि तुल्ययुक्त्यैव मयावगतत्वाद्ब्रह्म मे अनुभवपदमारूढमित्याह—**हृदयंगमता**मिति । यथा अम्भोदधाराभिर्भूभृत्पर्वतोऽव्यथो निरस्तग्रीष्मताप आस्ते तथा त्वदुक्तिभिरिदानीमहमासे इति शेषः ॥३॥ भोक्तृत्वाभोक्तृत्वयोरविरोधेऽपि त्वदुक्तोपपत्तिस्तुल्येति मयावगतमिति दर्शयति—**औदासीन्या**दिति ॥४॥ अयं वक्ष्यमाणप्रकारः ॥ ५ ॥ प्रश्नोपयोगितया पूर्वसर्गोक्तं जगतः सत्त्वासत्त्वदृष्टिपक्षं व्यष्ट्यहंतापरित्यागेन समष्ट्यहंभावपक्षं चानूद्य पृच्छति—**इद**मिति । इदं जगत्सत्तदिदमसद्वा त्वदुक्तदिशा । सोऽयं प्रसिद्धः समष्टिरेवाहमिदं व्यष्टिदेहमात्रं तु न इत्येतद्वा । अयं प्रपञ्चः समष्टिदृशा एको व्यष्टिदृशा तु द्वितीयो नाना वा । इत्याद्यनिध्यतबहुरूपकल्पनामयमेकस्मिन्नियतैकस्वभावे अध्वान्ते स्वप्रकाशत्वादेव स्वतः परिहृतमोहान्धकारे अच्छे निर्मले आत्मनि भास्करे नीहार इव विरुद्धं कथं सांप्रतं विद्यते । यदि ब्रूयाः प्रथमं मायाशबलब्रह्मोदरे स्थितमिदं सांप्रतमभिव्यक्तं विद्यत इति तत्रापि पृच्छामि—इदं प्रथममेव वा कथं स्थितम् । विरोधस्य तदानीमपि तुल्यत्वादित्यर्थः ॥६॥७॥ रामवाक्यबलादेव रामस्य स्वप्रकाशप्रत्यगात्मदर्शनं तस्य सर्वशरीरेष्वेकताज्ञानं जगतोऽनिर्वचनीयताबोधश्च वृत्तो वासनाक्षयाभावात्तु सर्वसंशयमूलाविद्योच्छेदी प्रत्यगात्मब्रह्मैक्यलक्षणाखण्डाकारानुभवो न वृत्त इति निश्चित्य वसिष्ठस्तदुपायतया वासनोच्छेदोपायान्विवक्षुरस्योत्तरं वक्तुं नायमवसर इत्याह—**सिद्धान्त** इत्यादिना । सिद्धान्ते निर्वाणप्रकरणस्योत्तरार्धे पाषाणाख्यायिकादौ ॥ ८ ॥ मोक्षोपायस्योपदेशस्य सिद्धान्तं परिनिष्ठारूपमखण्डाकारबोधम् ॥९॥ सांप्रतमुच्यमानमपि न ते चित्तमधिरोक्ष्यतीत्याशयेनाह—**कान्ते**ति । पुण्यकृत्सर्वकर्मफलपरिनिष्ठात्मज्ञानवान् ॥ १० ॥ उदार उदयो निःश्रेयसं यस्याः सकाशात्सा ॥ ११ ॥ तथा प्रश्नोऽप्ययं तदैव राजते इत्याशयेनाह—**कस्मिंश्चि**दिति । वृक्षस्य नारङ्गपूगजम्बीरादेः ॥ १२ ॥ उपदेशगिरो वैराग्योपदेशाः वृद्धे ज्ञानवृद्धे विवेकिनि नतु रागिणि लगन्तीत्यर्थः ॥ १३ ॥ भार्गवोपाख्यानान्ते प्रागारब्धमप्यस्योत्तरमनधिकारमालोक्यैवोपेक्षितमित्याह—**प्रश्नस्ये**ति ॥ १४ ॥ अखण्डार्थबोधे जाते मदुक्तिं विनाप्यस्योत्तरं स्वयमेव ज्ञास्यसीत्याह—**यदी**ति । स्वयं स्वयमेव जानासि ज्ञास्यसि ॥ १५ ॥ तर्हि त्वं किमुपेक्षिष्यसे, नेत्याह—**मये**ति ॥ १६ ॥ मदुपदेशो द्वारप्रदर्शनमात्रं त्वया त्वात्मनैवात्मा प्रणिधानेन द्रष्टव्य इत्याशयेनाह—**जानाती**ति । संसारिणमप्यात्मानमात्मैव जानाति । हि यस्मादात्मनैवात्मा अप्रसादात्तथा कृतः स आत्मैवात्मबोधात्संप्रसन्नः सन् वास्तवं पूर्णमात्मानं प्रतिपद्यत इत्यर्थः ॥ १७ ॥ कर्त्रकर्त्रात्मविचारणमपि मया तदेतदखण्डब्रह्मबोधमुद्दिश्यैव कथितम् । कथितेऽपि तामेतामखण्डात्मतामज्ञातत्वान्न ज्ञातवानित्यतस्तु नूनं भवानक्षीणवासनो भवेत् । संभावनायां लिङ् । वासनाक्षयस्तव न जात इति संभावयामीत्यर्थः ॥१८॥ इदानीं बन्धमोक्षरहस्ये दर्शयन्वासनोच्छेदोपायक्रममाह—**बद्ध** इत्यादिना ॥ १९ ॥ तत्र वासनाक्षये प्रथमपीठिका वैराग्यदार्ढ्यमित्याह—**तामसी**रिति । तामसीः तमःप्रधानतिर्यग्योन्यादि-

तामप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तःशान्तसमस्तेहो भव चिन्मात्रवासनः ॥ २१
तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् ।
शेषे स्थिरसमाधानो येन त्यजसि तत्त्यज ॥ २२
चिन्मयः कलनाकालप्रकाशतिमिरादिकम् ।
वासनां वासितारं च प्राणस्पन्दनपूर्वकम् ॥ २३
समूलमपि संत्यक्त्वा व्योमसौम्यप्रशान्तधीः ।
यस्त्वं भवसि सद्बुद्धे स भवानस्तु सत्कृतः ॥ २४
हृदयात्संपरित्यज्य सर्वमेव महामतिः ।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥ २५
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ २६
नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥ २७
विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ २८
दृष्टं द्रष्टव्यमखिलं भ्रान्त्वा भ्रान्त्वा दिशो दश ।
जनाः कतिपया एव यथावस्त्ववलोकिनः ॥ २९
यद्यदालोक्यते किंचित्कश्चिद्यत्तन्न विद्यते ।
ईप्सितानीप्सितादन्यन्न तत्र यतते जनः ॥ ३०
ये केचन समारम्भा ये जनस्य क्रियाक्रमाः ।
ते सर्वे देहमात्रार्थमात्मार्थं ननु किंचन ॥ ३१
पाताले ब्रह्मलोके च स्वर्गे च वसुधातले ।
व्योम्नि कतिपया एव दृश्यन्ते दृष्टदृष्टयः ॥ ३२
इदं हेयमुपादेयमिदमित्यसदुत्थितौ ।
निश्चयौ गलितौ यस्य स्वस्यासावतिदुर्लभः ॥ ३३
करोतु भुवने राज्यं विशत्वम्भोदमम्बु वा ।
नात्मलाभादृते जन्तुर्विश्रान्तिमधिगच्छति ॥ ३४
ये महामतयः सन्तः शूराश्चेन्द्रियशत्रुषु ।
जन्मज्वरविनाशाय त उपास्या महाधियः ॥ ३५
सर्वत्र पञ्चभूतानि षष्ठं किंचिन्न विद्यते ।
पाताले भूतले स्वर्गे रतिमेतु क धीरधीः ॥ ३६

---

गतिप्रदाः । राजसमनुष्यादिजन्मप्रदानामप्युपलक्षणमेतत् । विषयैर्वासिता आहिताः। मैत्रीकरुणामुदितोपेक्षा मैत्र्यादयस्तद्भावनानाम्नीम् । तथाच पातञ्जलसूत्रम् 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यफलानां भावनातश्चित्तप्रसादनम्' इति॥२०॥ अन्तश्चिन्मात्रव्यतिरेकेण मैत्र्यादयोऽपि न सन्तीति दर्शनेन बहिस्ताभिर्मैत्र्यादिभिर्व्यवहरन्नपि चिन्मात्रमेवाहमिति संप्रज्ञातसमाध्यभ्यासदृढीकृतवासनो भव ॥ २१ ॥ मनोबुद्धिग्रहणं चित्ततद्वृत्तीनामप्युपलक्षणम् । शेषे आत्मत्वादेव त्यक्तुमशक्यत्वादवश्यं परिशिष्यमाणे प्रत्यक्तत्त्वे स्थिरं समाधानं विश्रान्तिर्यस्य तथाविधः । असंप्रज्ञातसमाधौ विश्रान्त इति यावत् । येन कलनाख्येन द्वैतकल्पनामूलस्तम्भभूतेनाहंकारेण प्रागुक्तं सर्वं त्यजसि तदपि त्यज । सर्वस्यापि हि त्यागस्तत्र तत्राहं ममेत्यभिमानवर्जनमेव । तच्चाहंकारेऽपि शुद्धचिन्मात्ररूपानहंभूतपूर्णात्मदर्शनेन मूलाज्ञानोच्छेदात्स्वयमेव भवतीति न तत्र कारणान्तरापेक्षेति नानवस्थेति भावः ॥ २२ ॥ प्राणस्पन्दनपूर्वकं कलनाकालप्रकाशतिमिरादिकं वासनां वासितारं विषयं चकारात्तद्द्वाराणीन्द्रियाणि च समूलमहंकारमपि चोन्मूल्य व्योमेव सौम्या निर्मला प्रशान्तविक्षेपा च ब्रह्मात्माखण्डैकाकारा धीर्यस्य तथाविधः सन् यश्चिन्मयस्त्वं भवसि संपद्यसे स एव परमार्थरूपो भवानस्त्विवति परेण सहान्वयः । सत्कृतः सर्वपूजितः ॥ २३ ॥ २४ ॥ ईदृशीं स्थितिं प्राप्तस्य पूज्यतामेव प्रशंसाभिर्दर्शयति—**हृदया**दित्यादिना । गतो व्यग्रः सर्वविक्षेपहेतुरभिमानो यस्य ॥ २५ ॥ एवमभ्यासपरिपाकेन सप्तमीं भूमिकामारूढस्य सिद्धस्य कृतकृत्यतैव न कर्तव्यान्तरपरिशेषोऽस्तीत्याह—**समाधि**मिति । अस्ता निरस्ताः सर्वा आस्थाः प्रागुक्ताभिमानाध्यासा येन सः ॥२६॥२७॥ कतिपयकालानुष्ठितश्रवणमननध्यानैर्वासनाक्षय[illegible] कृतकृत्यता-

भ्रमात्परावृत्तिं वारयन्नाह—**विचारित**मिति । मिथः परस्परं विद्वद्भिः सह संवादेनोद्ग्राहितं दृढमुपन्यासक्षमं कृतम् ।महता परिश्रमेण सर्वविद्वत्संमत्या चेदमेव मोक्षशास्त्ररहस्यमिति निर्णीतमित्यर्थः । मौनाद्बाल्यपाण्डित्यशब्दवाच्यश्रवणमननपरिपाकजन्यप्रागुक्तनिर्विकल्पासंप्रज्ञातसमाधिपरिपाकान्तान्मुनिभावादृते परं पदं ब्राह्मणाख्यं परिनिष्ठिततत्त्वज्ञानं नास्तीति निर्णीतमित्यर्थः । तथाच श्रुतिः 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं निर्विद्याथ मुनिरमौनं मौनं च निर्विद्याथ ब्राह्मणः' इति । 'एष नित्यो महिमा ब्राह्मणस्य' इति च ॥ २८ ॥ अतएव तत्त्वज्ञा विरला दुर्लभाश्चेत्याह—**दृष्ट**मिति ॥ २९ ॥ सर्वजनानां बहिर्मुखत्वाद्बहिश्चेप्सितानीप्सितयोरेव दर्शनात्तत्प्राप्तिपरिहारोपायप्रवणतैव दृष्टा नात्मप्रवणतेत्याह—**यद्यदि**ति। यद्यत्किंचिदालोक्यते तत् ईप्सितानीप्सितादन्यन्न विद्यते तदन्यद्यदविषयमात्मतत्त्वं तत्र तु कश्चिदपि जनो न यतते किंत्वीप्सितानीप्सितयोरेवेत्यर्थः ॥ ३० ॥ स चानात्मविषये यत्नोऽनात्मदेहमात्रार्थत्वात्पुनःपुनर्देहारम्भानर्थहेतुरेवेत्याशयेनाह—**ये केचने**ति । समारम्भा लौकिकगृहप्रासादादिविषयाः । क्रियाक्रमा वैदिकयज्ञादयः ॥ ३१ ॥ व्योम्नि अन्तरिक्षलोके । दृष्टा दृष्टिश्चिदेकरसं ब्रह्म यैस्ते पुरुषाः ॥ ३२ ॥ असदुत्थितौ स्वात्माज्ञानादुद्भूतौ ॥ ३३ ॥ ननु संसारेऽप्युत्तमराज्यादिपदलाभे विश्रान्तिर्दृश्यते किमात्मदर्शनेन नेत्याह—**करोत्वि**ति। इन्द्रपदलाभेन वृष्ट्यधिकारे अम्भोदं विशतु । वरुणपदलाभेनाम्बु वा योगसिद्धिभिर्वा भूतजयात्सर्वत्र विशतु ॥ ३४ ॥ तर्हि विश्रान्त्यर्थिना के उपास्यास्तानाह—**ये** इति ॥ ३५ ॥ तदुपासनेन तत्त्वबोधेऽपि पुनर्भोगभूमिषु रतिः केन वार्यते तत्राह—**सर्वत्रे**ति । 'अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यम्' इति श्रुत्युक्तदिशासर्वभौतिकानां भूतमात्रतालक्षण-

युक्त्या वै चरतो ज्ञस्य संसारो गोष्पदाकृतिः।
दूरसंत्यक्तयुक्तेस्तु महामत्ताणवोपमः॥ ३७
कदम्बगोलकैस्तुल्यं ब्रह्माण्डं स्फारचेतसः।
किं प्रयच्छति किं भुङ्क्ते प्राप्तेऽस्मिन्सकलेपि सः॥ ३८
एतदर्थमबुद्धीनां यन्महासमरक्रियाः।
तन्मन्ये राम धिक्कार्यं द्वन्द्वलक्षक्षयावहम्॥ ३९
कल्पमात्रेण कालेन सुमहापेलवोदरे।
तस्मिन्नपि हि यो नाशः सर्वाधिरमहाधियाम्॥ ४०
आत्मनो ज्ञस्य सर्गादेर्यन्मनागपि नोद्गतम्।
तस्मिञ्जगत्रये प्राप्ते किं चिदात्मा बली भवेत्॥ ४१
इतः शैलशतैर्व्याप्ता तथेतो जलराशिभिः।
कियानस्य भुवो देहो येनोदारं प्रपूरयेत्॥ ४२
न तदस्ति जगत्यस्मिन्सपातालसुरालये।
यन्नामात्मवतो ज्ञस्य किंचित्कार्यतरं भवेत्॥ ४३
एकतामनुयातस्य व्योमवद्विततस्य च।
स्वस्थस्यात्मवतो ज्ञस्य स्थितस्यात्मन्यचेतसः॥ ४४
शरीरजालनीहारधूसरा शून्यकोटरा।
शान्तसंसारसुभगा त्रिलोकीविपुलातटी॥ ४५
स्फारब्रह्मामलाम्भोधिफेनाः सर्वे कुलाचलाः।
चिदादित्यमहाभासमृगतृष्णाजलश्रियः॥ ४६
आत्मतत्त्वमहाम्भोधिवीचयः सर्गराजयः।
अनुत्तमपदाम्भोदवृष्टयः शास्त्रदृष्टयः॥ ४७
चन्द्राग्नितपनालोका घटकाष्ठादिसंनिभाः।
प्रकाशनीयाश्चिद्रूपत्विषो मलकणास्तथा॥ ४८
विहरन्ति स्वमात्मानः संसारवनचारिणः।
कामभोगोलपग्रासमृगा नरसुरासुराः॥ ४९
अस्थिखण्डार्गलामूर्धपिधानाः स्नायुशृङ्खलाः।
जगद्देहा जरज्जीवरक्तमांससमुद्गकाः॥ ५०
वनमालामृगा मुग्धाः पुरसंचारसंस्थितौ[1]।
बालबुद्धिविनोदाय योजिताश्चर्मपुत्रिकाः॥ ५१

---

मिथ्यात्वबोधे तेषु रत्यनुदयादिति भावः ॥३६॥ तर्हि भूतानामेव परिशिष्टानामानन्त्यात्तदुत्तरणासंभव इति चेत्सत्यमिदमज्ञानामेवमेव। तत्त्वविदां तु 'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ' इति श्रुतिदर्शितयुक्त्या सर्वाधिष्ठानब्रह्मदर्शनेन भूतानामप्यनृतत्वनिश्चयात्तदुत्तरणं सुलभमेवेत्याशयेनाह—युक्त्येति। मत्तार्णवः प्रलयार्णवः ॥ ३७ ॥ किंचापरिच्छिन्नात्मानन्ददृष्ट्या ब्रह्माण्डस्याल्पतरत्वदर्शनादपि कदम्बगोलकमशकभोग्येष्विव तुच्छेषु धनदारादिषु न दानभोगादिवाञ्छाप्रसक्तिरित्याह—कदम्बेति ॥ ३८ ॥ राज्यादिसुखं समरायनथैर्योधद्वन्द्वलक्षाणां क्षयावहत्वात्तत्त्वविदा दयालुना धिक्कार्यमेव न सत्कार्यमित्याह—एतदर्थमिति। यच्छब्दार्थे एतच्छब्दः। अबुद्धीनां मूढानाम्। तद्राज्यसुखमिति शेषः ॥ ३९ ॥ ननु महाकल्पावसानचिरकालभोग्ये ब्राह्मे पदे तस्य रतिः स्यान्नेत्याह—कल्पेति। द्विपरार्धावधिना महाकल्पान्तमात्रेण कालेनापि शीर्यमाणत्वात्सुमहापेलवोदरे तस्मिन्नपि पदे सर्वप्राणिनां प्रलयनिमित्तत्वादाधिर्मानसव्यथानिमित्तभूतो नाशः सोऽमहाधियां मूढानामेव। स्पृहणीयो न तत्त्वविदामित्यर्थः ॥ ४० ॥ किंच ज्ञस्य तत्त्वविदो दृशा यज्जगत्त्रयं सर्गादेरुपायान्मनागीषदपि नोद्गतं नोत्पन्नमेव। 'न निरोधो न चोत्पत्तिः' इत्यादिश्रुतेः। तस्मिंस्तुच्छे वन्ध्यापुत्रप्राये जगत्त्रये प्राप्ते चिदात्मा किं बली बलवान् भवेत्। येन तत्र रागः स्यादित्यर्थः ॥४१॥ असारबहुलत्वादुपयुक्तांशाल्पत्वादपि सार्वभौमादिपदस्य न स्पृहणीयतेत्याशयेनाह—इत इति। उदारं सर्वत्यागरिक्तविपुलाशयम् ॥ ४२ ॥ कार्यतरं अवश्यकर्तव्यम्। सर्वकामावाप्त्या कृतकृत्यत्वादित्यर्थः ॥ ४३ ॥ यथा मृगतृष्णा सवितुः प्रकाशमपेक्ष्य सिद्ध्यन्ती सवितारमपेक्षते नतु सविता मृगतृष्णानिमित्तभूतोऽपि तामपेक्षते तथा तत्त्वविदश्चित्प्रकाशमपेक्ष्य प्रसिद्ध्यज्जगदेव प्रत्युत तत्त्वविदमपेक्षतां तत्त्वविन्तु पूर्णानन्दारामः कटाक्षेणापि जगन्न पश्यति दूरे तस्य तदपेक्षेत्याशयेनाह—एकतामित्यादिना। अचेतसो निर्मनस्कस्यात्मवतस्त्रिलोकीलक्षणा विपुला मृगतृष्णानदीतटी शान्तसर्वसंसारसुभगा सती शून्यकोटरा आकाशोदरनिभैव न मूर्तरूपास्तीत्यर्थः। असतामपि बाधितानुवृत्त्या यावत्प्रारब्धक्षयं प्रतिभासनिर्वाहाय विशिनष्टि—शरीरजालनीहारेति ॥ ४४ ॥ ४५ ॥ जगतस्तत्त्वविदात्मप्रकाशापेक्षां प्रपञ्चयति—स्फारेत्यादिना। जलश्रियो नदीसमुद्रादयः ॥ ४६ ॥ शास्त्रदृष्टयः श्रौतस्मार्तधर्मब्रह्मादितत्त्वप्रतिभासाः। यद्यपि लौकिकचाक्षुषादिदृष्टयोऽपि प्रकाशात्मकत्वाद्ब्रह्माम्भोदवृष्टिकल्पा एव तथापि सुक्षेत्रे वृष्टिवच्छास्त्रदृष्टीनामेव पुरुषार्थोपयोगात्ता एवोपात्ताः ॥ ४७ ॥ अधिष्ठानत्वेन तदपेक्षामुक्त्वा जडानां प्रकाशार्थमपि तदपेक्षामाह—चन्द्रेति। यदा निर्मला आदित्यादयोऽपि तत्प्रकाशापेक्षास्तदा अत्यन्तमलिनत्वान्मलकणप्रायाः पार्थिवादिधातवस्तमपेक्षन्त इति किं वाच्यमित्याशयेन मलकणास्तथेत्युक्तम् ॥ ४८ ॥ 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः सर्वप्राणिनां जीवनहेतुविषयानन्दार्थमपि तदपेक्षामाह—विहरन्तीति। स्वो देहस्तदात्मना मीयते परिच्छिद्यते अनुभूयते हिंस्यते वा यः स स्वप्रस्तथाविध आत्मा येषां कामभोगलक्षणानां उलपानां तृणराजीनां ग्रासे मृगा इव मृगाः भवन्तीति शेषः ॥ ४९ ॥ मृगाणां वने विहारे स्वातन्त्र्यमस्ति। नरसुरासुरजीवानां तु देहपञ्जरे बद्धत्वादत्यन्तपारतन्त्र्यदुःखमेवेत्याशयेनाह—अस्थीति। जगतां सर्वेषां नरसुरासुरादिदेहा जरतामनादिसंसारकान्तारे जीर्णानां जीवानां पर्यायेण बन्धनार्थाः रक्तमांसनिर्मिताः समुद्गकाः संपुटकाः। पञ्जराणीति यावत्। कृता धात्रेति शेषः। पञ्जरसामग्रीमेवाह—अस्थीति। अस्थिखण्डा एव अर्गला विष्कम्भदारूणि येषाम्। मूर्धैव पिधानमूर्ध्वफलकं येषाम्। स्नायवः शिराः शृङ्खला लोहबन्धनानि येषाम् ॥ ५० ॥ एवं जीवाविष्टाश्चर्म-



१ संचारितास्थितौ इति पाठः.

नैवंविधोदारमना मनागपि महामतिः ।
न श्लथति भोगौघैर्मन्दवातैरिवाचलः ॥ ५२
तस्मिन्किल पदे राम स्तिष्ठति महोत्तमे ।
यस्मिंश्चन्द्रार्कदेशोऽपि न पातालमिव स्थितः ॥ ५३
यस्यालोकाल्लोकपालाः समालोकाः सुवेदिनः ।
शरीरं पान्त्ययमिव पश्यन्मूढाः क्षपार्णवे ॥ ५४
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
अप्यभ्यासगताः स्फारहृदयं खमिवाम्बुदाः ॥ ५५
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
मर्कटा इव नृत्यन्तो गौरीलास्यार्थिनं हरम् ॥ ५६
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
प्राक्तनप्रतिबिम्बश्री रत्नं कुम्भगतं यथा ॥ ५७
वज्रार्पितोपममसन्मयमम्बुभङ्ग-
तुङ्गं तरङ्गकृतबिम्बमिवावलोक्य ।
लीलां तदीहितसुखेषु रतिं न याति
तज्ज्ञः कुशैवललवेष्विव राजहंसः ॥ ५८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु स्थितिप्रकरणे पूर्णाशयस्वरूपवर्णनं नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

## अष्टपञ्चाशः सर्गः ५८

श्रीवसिष्ठ उवाच ।
अत्रैव वस्तुन्युदिता शृणु राघव पूर्वजाः ।
कचेन गाथा या गीता बार्हस्पत्येन पावनाः ॥ १
कस्मिंश्चिन्मेरुगहनेऽतिष्ठन्सुरगुरोः सुतः ।
कदाचिदभ्यासवशाद्विश्रान्तिं प्राप चात्मनि ॥ २
सम्यग्ज्ञानामृतापूर्णा मतिर्नारमतास्य सा ।
पञ्चभूतमयेऽमान्ये दृश्येऽस्मिन्पेलवात्मनि ॥ ३
स तेन निर्विण्ण इव सदात्मत्वादृते पदम् ।
अपश्यन्समुवाचेदमेको गद्गदया गिरा ॥ ४
किं करोमि क गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा ॥ ५
दुःखमात्मा सुखं चैव खमाशासुमहत्तया ।
सर्वमात्ममयं ज्ञातं नष्टकष्टोऽहमात्मना ॥ ६

पुत्रिका एव संसारवनमालामृगास्त एव मुग्धा देहविवेकशून्या बालानां स्वस्वबुद्धीनां भोगपल्लवग्रासैर्विनोदाय तत्तद्भोगभूमिलक्षणपुरसंचारसंस्थितौ धात्रा योजिता इत्यर्थः ॥५१॥ तत्त्वविदोऽपि देहदर्शनात्सोऽपि किं तथा नेत्याह—**नैवंविधे**ति । उदारमनाः सर्वत्यागी, प्रागुक्तमहामतिस्तु एवंविधो मनागपि न । यलोपस्यासिद्धत्वात्संधिरार्षः । दारेषु दारोपलक्षितभोगेषु मनो यस्य एवंविधो नेति वा ॥ ५२ ॥ चन्द्रार्कमण्डलप्रदेशः पातालमिव परिहृतप्रकाशोऽपि न स्थितः किं वाच्यं प्रकाशमानो न स्थित इति । अथवा चन्द्रार्कसंचारदेशो विपुल आकाशोऽपि पातालं भूच्छिद्रमिवाल्पभावेनापि न स्थित इति । तादृशमहापदे स्थितस्याकाशोदरैकदेशपरिच्छिन्नेषु पदेषु का तृष्णेत्यर्थः ॥ ५३ ॥ यस्य तत्त्वविद आलोकाच्चित्प्रकाशाल्लोकपाला ब्रह्मादयः समालोकाः सर्वजगत्साधारणप्रकाशाः सन्तश्चक्षुरादिद्वारा बहिरन्तर्बुद्ध्या च सुवेदिनः सम्यग्व्यवहारोचितबोधशालिनः सन्तः क्षपार्णवे अज्ञानसमुद्रे मग्नाः पश्यन्मूढा अशरीरं स्वात्मानं विविच्य पश्यन्तोऽपि मूढाः सन्तः अयमज्ञजन इव शरीरात्मभावेन शरीरं पान्ति रक्षन्ति । दृढाभ्यस्तभोगवासनासहकृताधिकारिकप्रारब्धप्राबल्यादित्यर्थः ॥ ५४ ॥ तत्त्वज्ञं तु वैराग्यदार्ढ्येन भोगवासनाक्षयात्स्फारहृदयं निर्वासनशुद्धान्तःकरणं केचन लोकपालभोग्या अप्यमी त्रैलोक्यराज्यादिजगद्भावा अभ्यासगताः पुनःपुनः परिशील्यमाना अपि न रञ्जयन्तीत्यर्थः ॥ ५५ ॥ ५६ ॥ प्राक्तनी कुम्भाद्बहिः स्थितिदशायां रत्नान्तर्दृश्यमाना स्तम्भकुड्यादिप्रतिबिम्बश्रीः ॥ ५७ ॥

उक्तमेवार्थं संक्षिप्योपसंहरति—**वज्रे**ति । तज्ज्ञस्तत्त्ववित् । ब्रह्मलोकान्तं सर्वं जगद्वैभवमज्ञदृशा अतिदुर्भेदत्वाद्वज्रार्पितोपमम् । विवेकदृशाम्बुभङ्गेषु जलविलासेषु तुङ्गमुच्छ्रितं तरङ्गेण स्वाग्रे कृतं चन्द्रादिप्रतिबिम्बमिवानिर्वचनीयमस्थिरम् । तत्त्वदृशा त्वसन्मयं तुच्छमवलोक्य अज्ञ इव तदीहितसुखेषु लीलां लौल्यवतीं रतिं न याति यथा मद्गुभोग्येषु कुत्सितशैवलखण्डेषु राजहंसो रतिं न बध्नाति तद्वदित्यर्थः ॥ ५८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे पूर्णाशयस्वरूपवर्णनं नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

आरूढस्य पदं पूर्णं सार्वात्म्यस्थितिबोधिनी ।
रामायात्र वसिष्ठेन कचगाथोपदिश्यते ॥ १ ॥

अत्रैव प्रागुक्ते वस्तुनि विषये पूर्वजाः पूर्वकालवृत्ताः । बार्हस्पत्येन बृहस्पतिपुत्रेण । अनन्तरापले पत्युत्तरपदलक्षणो ण्यः ॥ १ ॥ अभ्यासवशात् श्रुतायां ब्रह्मविद्याया मनननिदिध्यासनपरिपाकादिति यावत् ॥ २ ॥ अमान्ये अनादरार्हे ॥ ३ ॥ तेन दृश्यारमणेन सदात्मत्वात् ऋते विना सदैकात्म्यातिरिक्तं पदं वस्तु अपश्यन् एकमात्रपरिशेषान्निर्विण्ण इवेत्युत्प्रेक्षा । हर्षगद्गदया गिरा इदं वक्ष्यमाणं समुवाच ॥ ४ ॥ यदुवाच तदाह—**किं करोमी**त्यादिना ॥ ५ ॥ ननु जीवात्मनो यानि सुखसाधनानि तानि कुरु । यत्र तानि प्राप्यन्ते तत्र गच्छ । सुखं तत्साधनानि च गृहाण दुःखसाधनानि दुःखं च त्यजेति चेत्तत्राह—**दुःखमि**ति । दुःखं तदुपभोक्तात्मा जीवस्तदभिलषणीयं सुखं चेत्यादि सर्वं जगन्मूलान्वेषणे खमाकाशमात्रं सदाशाभ्यो दिग्भ्यो मनोरथेभ्यश्च सुमहत्तया आत्ममयम् । स्वार्थे मयट् । आत्मैवेति ज्ञातमतस्तेनैवानन्दैकरसेनात्मन

१ दृश्यः इति पाठः.

सबाह्याभ्यन्तरे देहे अधश्चोर्ध्वं च दिक्षु च ।
इत आत्मा ततश्चात्मा नास्त्यनात्ममयं कचित् ॥ ७
सर्वत्रैव स्थितो ह्यात्मा सर्वमात्ममयं स्थितम् ।
सर्वमेवेदमात्मैवमात्मन्येव भवाम्यहम् ॥ ८
यन्नाम नाम तत्किंचित्सर्वमेवाहमान्तरः ।
आपूरितापारनभाः सर्वत्र सन्मयः स्थितः ॥ ९
पूर्णस्तिष्ठामि मोदात्मा सुखमेकार्णवोपमः ।
इत्येवं भावयंस्तत्र कनकाचलकुञ्जके ॥ १०
उच्चारयन्नोङ्कारं च घण्टास्वनमिव क्रमात् ।
ॐकारस्य कलामात्रं पाश्चात्यं बालकोमलम् ।
नान्तरस्थो न बाह्यस्थो भावयन्परमे हृदि ॥ ११

व्यपगतकलनाकलङ्कशुद्धो
हृदयनिरन्तरलीनवातवृत्तिः ।
गतघनशरदाशयोपमानः
स्थित इति राम कचः स गायमानः ॥ १२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे कचगाथानामाष्टपञ्चाशः सर्गः ॥ ५८ ॥

## एकोनषष्टितमः सर्गः ५९

श्रीवसिष्ठ उवाच ।
अन्नपानाङ्गनासङ्गादृते नास्तीह किंचन ।
शुभमस्त्विति संवादि महान्किमिव वाञ्छतु ॥ १
तिर्यञ्चः पशवो मूढा ये न तुष्यन्त्यसाधवः ।
भोगैः कृपणसर्वस्वैरादिमध्यान्तपेलवैः ॥ २
विश्वासं यान्ति ये लोके तैरलं नरगर्दभैः ।
इतः केशा इतो रक्तमितीयं प्रमदातनुः ॥ ३
एतया तोषमायान्ति सारमेया न मानवाः ।
मृन्महीदारुतरवो देहा मांसमया अपि ॥ ४
अधो भूरम्बरं पृष्ठे किमपूर्वं सुखाय तु ।
मात्रास्पर्शानुसारिण्यो विवेकपदभङ्गुराः ॥ ५
मोहायैवापरामृष्टाः सकला लोकसंविदः ।
सर्वस्या एव पर्यन्ते सुखाशायाश्च संस्थितम् ॥ ६

नष्टसर्वदुःखोऽस्मीति न हानोपादानप्रयोजनमस्तीत्यर्थः ॥ ६ ॥ बाह्यैराधिभौतिकादिभिराभ्यन्तरैराध्यात्मिकैश्च सहिते उभयविभागनिमित्तभूते देहे अधः ऊर्ध्वं प्राच्यादिदिक्षु तत्त्वतो दृश्यमानेष्वात्मैव सर्वमित्यर्थः । तथाच श्रुतिः 'आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम्' इति ॥ ७ ॥ सर्वत्रैवाधिष्ठानभावेन स्थितो विवर्तात्मककल्पितविकारदर्शने सर्वमात्ममयं तत्त्वदर्शने तु सर्वमात्मैव । एवमनया दृशा अहं परमार्थात्मनि भवामि वर्ते सर्वदैवेत्यर्थः ॥ ८ ॥ यन्नाम चेतनं प्रसिद्धं यत्किंचिदचेतनं च नाम प्रसिद्धं तत्सर्वमित्यर्थः । सन्मय इति सदंशस्य सर्वानुगतत्वेन सर्वाधिष्ठानत्वादित्यर्थः ॥ ९ ॥ मोदात्मेत्यस्य विवरणं सुखमित्यादि ॥ १० ॥ इदं तेन केन प्रमाणेन दृष्टं तदाह—**उच्चारयन्नि**ति । तथाच श्रुतिः 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' इति । ॐकारेऽकारादिमात्राणां विराडादिवाचकत्वात्तुरीयं केनांशेन दृष्टं तमाह—**ॐकारस्ये**ति । पूर्वपूर्वमात्राविराडादिस्वार्थैः सहोत्तरोत्तरत्र प्रविलाप्य वालः केश इवोङ्कारस्य शिरसि लक्ष्यमाणं सूक्ष्मं कोमलं च पाश्चात्यमर्धमात्राख्यं कलामात्रं सर्वप्रविलयावधिभूततुरीयलक्षणं[१] तुरीयात्मनैव भावयंस्तद्भावापन्नः सन्नान्तरकारणस्थो न बाह्यकार्यस्थश्च वक्ष्यमाणरीत्या स्थित इत्यर्थः ॥ ११ ॥ तामेव स्थितिं दर्शयन्नुपसंहरति—**व्यपगते**ति । वातवृत्तिः प्राणस्पन्दः । सा च कलना निरोधे स्वत एव निलीनेति भावः । गता घना मेघा यस्मात्तथाविधो यः शरदाशयः शरदाकाशस्तदुपमानः स्थित इत्यर्थः ॥ १२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे कचगाथानामाष्टपञ्चाशः सर्गः ॥ ५८ ॥

विषयासारता ब्राह्मात्संकल्पाद्विश्वकल्पना ।
धातुर्निर्वेदविश्रान्तिः शास्त्रसर्गश्च कीर्त्यते ॥ १ ॥

प्रासङ्गिकीं कचगाथां समाप्य प्रकृतं भोगजातस्य तत्त्वविद्वाञ्छाययोग्यत्वोपपादनमेवानुवर्तमानो वसिष्ठो वैराग्योपदेशाय विषयासारतां प्रपञ्चयति—**अन्नपाने**त्यादिना । इह संसारे अन्नपानाङ्गनालक्षणैर्विषयैर्जिह्वोपस्थादीन्द्रियाणां यः सङ्गस्तस्मादृते शुभं पुरुषार्थरूपमन्यन्नास्ति इति श्रुतिस्मृत्याप्तोपदेशानुभवसंवादि यथा स्यात्तथा निश्चित्य महान्परमपदारूढ एतेषु भोगेषु किमिव वाञ्छतु । न किंचित्तद्वाञ्छायोग्यमत्रास्तीत्यर्थः ॥ १ ॥ ननु मोक्ष इव कामोऽपि पुरुषार्थ एवेति सर्वैर्वाञ्छनीय एवेति ये प्राहुस्तान्प्रत्याह—**तिर्यञ्च** इत्यादि ॥ २ ॥ ३ ॥ सरमा देवशुनी तत्संततिजाः सारमेयाः शुनकाः । सर्वा मही मृदेव । सर्वेऽपि तरवो दारुकाष्ठमेव । सर्वेऽपि देहा मांसमया एव ॥ ४ ॥ पृष्ठे ऊर्ध्वभागे अम्बरमाकाशमेव । अपूर्वं सारभूतं किमस्ति यत्सुखायेत्यर्थः । मिन्वन्ति विषयानिति मात्रा इन्द्रियाणि तत्स्पर्शानुसारिण्यः । विवेकस्य पदे स्थाने तत्त्वे भङ्गुरा बाध्यमानाः ॥५॥ अपरामृष्टा अविचाररमणीयाः । लोकसंविदो जनव्यवहाराः । सर्वस्याः सुखाशाया विषयलाभेनालाभेन वा पर्यन्ते । चस्त्वर्थे । मालिन्यं पापविषयादिकालुष्यं वियोगविषादिप्रयुक्तदुःखमपि एवं सांप्रतिकसुखान्तवदेव संस्थितमिति परे



१ लक्षकं इति पाठः.

मालिन्यं दुःखमप्येवं ज्वालाया इव कज्जलम् ।
आगमापायिनोऽनित्या मनःषष्ठेन्द्रियक्रियाः ॥ ७

लता नागेन्द्रमृदिता धारयन्ति न संपदः ।
पुत्रिका रक्तमांसस्य कान्तेयमिति सादरम् ॥ ८

स्वदेहनाम्नाऽस्थिचये श्लिष्यते मोहकक्रमः ।
सर्वं सत्यमिदं राम स्थिरमज्ञस्य तुष्टये ॥ ९

ज्ञस्यास्थैर्यमसत्यं च जगद्राम न तुष्टये ।
अभुक्तेऽपि विषा येषा विषमूर्च्छां प्रयच्छति ॥ १०

तां परित्यज्य भोगास्थां स्वात्मैकत्वगतिं भज ।
अनात्ममयभावेन चित्तं स्थितिमुपागतम् ।
यदा तदैतदाजातं जगज्जालमसन्मयम् ॥ ११

वासनावशतो ब्रह्ममनसा कल्पितं वपुः ।
तेजसा श्रितकुड्येन हेमाभत्वमिवात्मनः ॥ १२

श्रीराम उवाच ।

वैरिञ्चपदमासाद्य मनो ब्रह्मन्महामते ।
इदं जगत्सुघनतां कथमानयति क्रमात् ॥ १३

श्रीवसिष्ठ उवाच ।

गर्भतल्पात्समुत्थाय पद्मजः प्रथमः शिशुः ।
ब्रह्मेति शब्दमकरोद्ब्रह्मा तेन स उच्यते ॥ १४

संकल्पजालरूपस्य मनसा कल्पिताकृतेः ।
अंकरोत्तस्य संकल्पलक्ष्मीः पदमथोत्तरे ॥ १५

ततः संकल्पयामास पूर्वं तेजो महाप्रभम् ।
शरदन्ते लताचक्रचक्रीकृतदिगन्तरम् ॥ १६

पक्षप्रतिमनिस्यूतकर्मणातिगुणाक्षरम् ।
पुञ्जपिञ्जरपर्यन्तं हेमज्ञाननिभाम्बरम् ॥ १७

जालहेमलताजालजटालनिजमन्दिरम् ।
कचत्प्रसरदुद्यानाकारकुण्डलमण्डितम् ॥ १८

तं शरीरं मनस्तस्मिंस्तत्तस्तेजसि भास्वरे ।
आत्माकारसमाकारं भास्वरं समकल्पयत् ॥ १९

स ततस्तेजसस्तस्मादभ्युदेति दिवाकरः ।
जालमण्डलमध्यस्थो ज्वलत्कनककुण्डलः ॥ २०

ज्वलज्जटाभारधरोपान्तविस्फारपावकः ।
ज्वालाविशालावयवः पूरिताकाशमण्डलः ॥ २१

---

सहान्वयः ॥ ६ ॥ इन्द्रियशक्तिक्षयाद्विषयसंपत्क्षयाद्वा भोगक्षयोऽवश्यमापततीत्याशयेनाह—**आगमे**ति ॥ ७ ॥ संपदो विषयसंपदो नित्यमुपभुज्यमाना नागेन्द्रमृदितलताप्रायाः सत्यो न धारयन्ति क्षीयन्त इत्यर्थः । न केवलमनित्यत्वमेव कान्तादिभोग्यस्याशुचिनरकरूपत्वमपीत्याह—**पुत्रिके**ति । अस्थिचये स्वदेहनाम्ना पुरुषेण रक्तमांसस्य पुत्रिका इयं कान्ता इति बुध्या सादरं श्लिष्यते । मोहकस्य कामस्यायं क्रम इत्यर्थः ॥ ८ ॥ अतएवाज्ञस्यैव भोगस्तुष्टये न ज्ञस्येत्याह—**सर्व**मिति ॥ ९ ॥ अस्थिरमेवास्थैर्यम् । अभुक्ते अभोगेऽप्येषा भोगतृष्णा विषा[2] या विषवन्मूर्च्छां प्रयच्छति किं पुनर्भुक्ते सतीत्यर्थः ॥१०॥ भोगवासनयैवात्मनः अनात्मदेहादिमयात्मभावनया यदा चित्तं स्थितिमुपागतं तदेत्यर्थः ॥ ११ ॥ ननु अस्मच्चित्तस्थित्यनुसारिदेहादिजगज्जातमिति कथमुच्यते विरिञ्चिसंकल्पजातस्य तन्मनोनुसारित्वस्यैवौचित्यादित्याशङ्क्याह—**वासने**ति । ब्रह्मणो विरिञ्चेर्मनसा अस्मद्वासनाकर्मादिवशतस्तदनुसारेणैव संकल्पाज्जगद्वपुः कल्पितमित्यर्थः ॥ १२ ॥ अन्यस्यान्यानुसारिरूपकल्पने दृष्टान्तमाह—**तेजसे**ति । यथा आश्रितहेमरजतेन्द्रनीलादिकुड्येन तेजसा सूर्याद्यालोकेन तत्तदनुसारिस्वरूपं कल्पितं तद्वदित्यर्थः । प्रसङ्गाद्रामो विरिञ्चिमनसो जगत्कल्पनाक्रमं पृच्छति—**वैरिञ्चे**ति । पूर्वोपासकस्य मनः प्राक्तनं व्यष्ट्यभिमानं समष्ट्यात्मताभावनाप्रचयजन्यसंस्कारपरिपाकेन निरस्य समष्ट्यात्मनाभिनिष्पत्तिलक्षणं वैरिञ्चपदमासाद्य कार्यब्रह्मभूतं सत् इदं जगत्कथं क्रमात्सुघनतां चतुर्विधभूतग्रामनिबिडताम् । अवान्तरसर्गविषयोऽयं प्रश्नः । आद्यसर्गक्रमस्य प्रागबहुश उक्तत्वात् ॥१३॥ गर्भः पद्मकोशस्तल्लक्षणात्तल्पात् । संकल्पजालं संकल्पात्मकमनःसमष्टिस्तद्रूपस्य मनसा स्वेनैव कल्पितचतुर्मुखाकृतेः ॥ १४ ॥ अथ उत्थानलक्षणजागरणकल्पनानन्तरं उत्तरे सर्गे पदं व्यवसायमकरोत् ॥ १५ ॥ सर्वव्यवहाराणामादित्याद्यालोकाधीनत्वात्प्रथममादित्यसर्गं विवक्षुस्तदुपादानसर्वनभोव्यापितेजःसर्गमुक्त्वा तदेव तेजो वर्णयति—**तत** इत्यादिना । शरत्कालान्ते हिमपाण्डुरैर्लताचक्रैरिव चक्रीकृतं दिगन्तरालं येन ॥१६॥ पक्षप्रतिमनि प्रसारितपक्षिपक्षसदृशे पार्श्वद्वये स्यूतकर्मणा तन्तुसंतानकरणेन अतिगुणं बहुतन्तुकमिव अक्षरं क्षयधर्मवर्जितं शून्यात्मकमाकाशं येन । प्रसृतैस्तेजःपुञ्जैर्दिगन्तगतचक्रवालगिरिशिखरचित्रधातुसंभेदात्पिञ्जरा दिक्पर्यन्ता येन । हेमेव भास्वरमनावृतापरिच्छिन्नप्रकाशैकरसत्वाद्ब्रह्मज्ञाननिभं चाम्बरमाकाशं येन ॥१७॥ विकासाय दलकोटरेषु प्रविष्टैः किरणैर्जालेषु वातायनेषु कल्पितैर्हेमलताजालैरिव भास्वरैः केसरैर्जटालं निजमन्दिरं वैरिञ्चपद्मं येन । एकार्णवतरङ्गेषु प्रतिफलनेन कचद्भिर्दीप्यमानैः प्रसरदुद्यानवनाकारैश्च कुण्डलैः किरणावर्तैर्मण्डितम् ॥ १८ ॥ तस्मिंस्तेजसि हिरण्यगर्भस्य स्वसदृशमूर्त्यन्तरकल्पनेन प्रवेशमाह—**त**मिति । ततस्तेजोमण्डलसर्गानन्तरं चतुर्मुखशरीराकारेण स्थितं प्रागुक्तं मनस्तस्मिंस्तेजसि भास्वरं तेजोमयं तं पुराणादिप्रसिद्धमात्माकारसमाकारं समकल्पयत् ॥ १९ ॥ स देवस्ततस्तस्मात्तेजसः पिण्डीभूताद्दिवाकरः सन्नद्यापि प्रत्यक्षमभ्युदेति । प्रभाजालात्मकस्य मण्डलस्य मध्यस्थः । ज्वलती कनककुण्डले यस्य । अथवा दिग्जाललक्षणस्य वधूमण्डलस्य मध्यस्थः साधारणः । ज्वलन् प्रकाशमानः कनककुण्डलभूत इत्यर्थः ॥ २० ॥ ज्वलन्तो जटाभारधरा ज्वालावलीधारिण उपान्तेषु विस्फारा

---

१ नाम्ना स्थितये इत्यपि क्वचित्पठ्यते, तत्तु सङ्गतिविकलमिति प्रतीयते. २ विशब्दादर्शआद्यन्वि विषवतीत्यर्थः.

अथ ब्रह्मा महाबुद्धिरन्यास्तास्तेजसः कलाः ।
अपाल्य यदसद्ब्रह्मा तरङ्गानिव सागरः ॥ २२
तेऽपि संकल्पसंप्राप्तसिद्धयः समशक्तयः ।
यथासंकल्पितं वस्तु क्षणादृष्ट्वापुरग्रतः ॥ २३
संकल्पयन्तो यान्यांस्ते नानाभूतगणान्बहून् ।
भूतेष्वन्यांस्तु तेष्वन्यांस्तेष्वन्यान्विविधानपि ॥ २४
संस्मृत्य वेदांस्तदनु यज्ञक्रमगुणान्बहून् ।
जगद्व्यूहादयं ब्रह्मा मर्यादां समकल्पयत् ॥ २५
ब्राह्मं रूपमुपादाय मनोनाम महद्वपुः ।
तनोतीत्थमिमां दृष्टिं भूतसंततिसंकुलाम् ॥ २६
समुद्राचलवृक्षाढ्यां कृतलोकोत्तरक्रमाम् ।
मेरुभूपीठदिक्कुञ्जजटालोदरमण्डलाम् ॥ २७
सुखदुःखजराजन्ममरणव्याधिबोधिताम् ।
रागद्वेषमयोद्विग्नां गुणत्रयमयात्मिकाम् ॥ २८
मनोहस्तैर्विरिंचोत्थैर्यद्यथा कल्पितं पुरा ।
तत्तथैवाखिलं द्रष्टुं दृश्यतेऽद्यापि मायया ॥ २९
इत्थं सर्वेषु भूतेषु केषुचित्त्वथवा पुनः ।
संकल्पयति संसारं परं पश्यति चित्स्थितम् ॥ ३०
मोह एवंमयो मिथ्या जागतः स्थिरतां गतः ।
संकल्पनेन मनसा कल्पितोऽचिरतः स्वयम् ॥ ३१
संकल्पवशतः सर्वाः प्रसवन्ति जगत्क्रियाः ।
संकल्पवशतो देवा निर्यान्ति नियतिस्थिताः ॥ ३२

कोपितायाः प्रजानाथैर्जगत्सृष्टेः कुलोद्भवः ।
ब्रह्मा संचिन्तयत्येष पद्मासनगतः प्रभुः ॥ ३३
मनःस्पन्दनमात्रेण चित्रं चित्तं यदुत्थितम् ।
सृष्टिर्वा भोगिनी स्फारा व्यवहारविकारिणी ॥ ३४
रुद्रोपेन्द्रमहेन्द्राद्या[1] शैलसागरसंकुला ।
पातालरोदोदिक्स्वर्गमार्गसंकटकोटरा ॥ ३५
संकल्पजालमत्यन्तं मयेदमभितस्ततम् ।
अधुना विरतोऽस्म्यस्माद्विकल्पोल्लासनक्रमात् ॥ ३६
इति निश्चित्य विरतः कल्पनानर्थसंकटात् ।
अनादिमत्परं ब्रह्म स्मरत्यात्मानमात्मना ॥ ३७
तमासाद्य तदाभासे पदे गलितमानसे ।
सुखं तिष्ठति शान्तात्मा तल्पेऽधः श्रमवानिव ॥ ३८
निर्ममो निरहंकारः परां शान्तिमुपागतः ।
अविक्षुब्ध इवाम्भोधिरात्मनात्मनि तिष्ठति ॥ ३९
ध्यानात्कदाचिद्भगवान्स्वयं विरमति प्रभुः ।
बन्धनात्सलिलस्यन्दात्सौम्यत्वादिव वारिधिः ॥ ४०
विचारयति संसारं सुखदुःखसमन्वितम् ।
आशापाशशतैर्बद्धं रागद्वेषभयातुरम् ॥ ४१
ततः स करुणाक्रान्तमना भूतविभूतये ।
करोतीह महार्थानि शास्त्राणि विविधानि च ॥ ४२
अध्यात्मज्ञानगर्भाणि वेदवेदाङ्गसंग्रहम् ।
पुराणादीनि चान्यानि मुक्तये सर्वदेहिनाम् ॥ ४३

---

पावका यस्य ॥२१॥ तदनन्तरं मरीच्यादिप्रजापतिसर्गमाह—**अथेति**। ब्रह्मा विश्वबृंहणकर्ता महाबुद्धिः सर्वज्ञः समष्टिबुद्ध्यात्मा वा ब्रह्मा स चतुर्मुखः अन्या आदित्यनिर्माणावशिष्टास्तेजसस्ताः कलाः । अपाल्य अपवार्य । विभज्येति यावत् । यन्नवधा असत् क्षिप्तवान् । तेऽपि तेजःखण्डास्तत्संकल्पवशादेव संप्राप्तसर्वसिद्धयस्तत्समानशक्तयः प्रजापतयः सन्तो यथा संकल्पितं वस्तु क्षणादेवाग्रतो दृष्ट्वा आपुः प्रापुरिति परेणान्वयः । अपपूर्वादलं भूषणपर्याप्तिशक्तिवारणनिषेधेष्विति धातोर्ल्यप् । 'असु क्षेपणे' इति धातोः 'ऊदितो वा' इत्यङि आट्श्रुकोरभावश्छान्दसः ॥ २२ ॥ २३ ॥ तेभ्यो देवदानवयक्षराक्षसमानवादिसर्गप्रवृत्तिरित्याह—**संकल्पयन्त** इति । ते प्रजापतयो यान् यान् पुत्रपौत्रपरम्परया देवदानवादिजातिभेदैर्नानाविधान् व्यक्तिभेदाच्च बहून्भूतगणान् संकल्पयन्तो बभूवुस्तांस्तान् आपुरित्यनुषज्यते । तेष्वग्रे मैथुनसृष्टिप्रवृत्तिं दर्शयति—**भूतेष्विति** ॥ २४ ॥ संकल्पयन्त आपुरित्यत्राप्यनुवर्तते । ततो यज्ञादिकर्मप्रवृत्तिं दर्शयति—**संस्मृत्येति** ॥ २५ ॥ २६ ॥ २७ ॥ शारीरैः सुखदुःखजराजन्ममरणैः स्वैर्मानसैश्चाधिभिः सर्वथा हेयोऽयं संसार इति बोधिताम् ॥२८॥ ननु सर्वस्य व्यवहारस्य विरिञ्चिमनःकृतत्वे यज्ञादीनां शारीरत्वमुपासनादीनां मानसत्वमिति व्यवस्थायां को हेतुस्तमाह—**मनोहस्तैरिति** । विरिञ्चोत्थैर्मनोवृत्तिभिर्हस्तैर्वा यद्वस्तु यथा द्रष्टुं [illegible] पुरा

कल्पितं तत्तथैवाद्यापि व्यवस्थितं दृश्यते प्राप्यते च । तत्कल्पनानुसारेणैवान्येषामपि कल्पनानियतेरित्यर्थः ॥ २९ ॥ समष्टिदृष्ट्या सर्वेषु भूतेषु व्यष्टिदृष्ट्या एकजीवपक्षेण वा केषुचित्स्थितं मनः संकल्पयति चित्पश्यति । अथवा मन एव चित्स्थितं संकल्पयति परं पश्यति च ॥ ३० ॥ एवंमय उक्तप्रकारः । अचिरतः शीघ्रमेव संकल्पितः ॥ ३१ ॥ ३२ ॥ इत्थं सर्गविस्तारं प्रपञ्च्य तदुपरमे शास्त्रनिर्माणे च कारणं वक्तुं पीठिकां रचयति—**कोपितायाः** इति । इन्द्रविरोचनादिभिर्देवासुरप्रजानाथैः स्वस्वोत्कर्षाय मनुष्यादिप्रजासु धर्माधर्माभिवृद्धये यतमानैर्बलात्सात्त्विकराजसतामसवृत्तिषु प्रवर्तनाद्वधबन्धजन्मजरामयादिक्लेशसहस्रैः कोपिताया अतिपीडिताया जगत्सृष्टेः सकाशान्निर्विण्णः, सर्वप्रजाकुलान्युद्भवन्त्यस्मादिति कुलोद्भव एष प्रागुक्तो ब्रह्मा वक्ष्यमाणप्रकारेण संचिन्तयतीत्यर्थः ॥३३॥ मनःस्पन्दनमात्रेण यच्चित्तं व्यष्टिजीवोपाधिभूतम् । तदुपभोगार्था भोगिनी स्फारा विस्तीर्णा भुवनादिसृष्टिर्वेति यदुत्थितं इदं सर्वं मया स्वसंकल्पजालमेवाभितस्ततमिति परेणान्वयः ॥३४॥३५॥३६॥ विरत इति शमं प्राप्तः सन् ॥ ३७ ॥ तं परमात्मानं स्मृतिमात्रेण आसाद्य प्राप्य तदेव आसमन्ताद्भासते यस्मिंस्तथाविधे गलितमानसे सप्तमभूमिकालक्षणे पदे सुखं तिष्ठतीत्यर्थः । अधःसंवृतापवरके क्लृप्ते तल्पे । रहसीति यावत् ॥ ३८ ॥ ३९ ॥ बन्धनात् एकाकारवृत्तिधारणानिर्बन्धलक्षणाद्ध्यानात् ॥ ४० ॥

---

[1] महेन्द्राद्या इति पाठः.

पुनस्तत्पदमालम्ब्य परमापद्विनिर्गतः।
स्वस्थस्तिष्ठति शान्तात्मा निर्मन्दर इवार्णवः॥ ४४
अवलोक्य जगच्चेष्टां मर्यादां विनियोज्य च।
ब्रह्मा कमलपीठस्थः पुनः स्वात्मनि तिष्ठति॥ ४५
कदाचित्केवलं सर्वसंकल्पपरिहीनया।
यदृच्छयानुग्रहार्थं लोकक्रमवदास्थितः॥ ४६
नार्जवं नास्य संत्यागो वपुषो न च संग्रहः।
नाना न चेतनं नेह न स्थितिर्नास्थितिः स्थिता॥ ४७
सर्वभावसमारम्भः समः सर्वासु वृत्तिषु।
परिपूर्णार्णवाकारो मुक्तशेषोऽवतिष्ठते॥ ४८
कदाचित्केवलं सर्वसंकल्पपरिहीनया।
यदृच्छयानुग्रहार्थं लोकानां प्रतिबुध्यते॥ ४९
एषा ब्राह्मी स्थितिः पुण्या या मयोक्ता महामते।
यातां विधिसुरानीकौ तामेतां सात्त्विकीमपि॥ ५०
चित्सर्गोपरमाकाशे ब्रह्मणो यन्मनःफलम्।
उदेति प्रथमः सैव ब्रह्मत्वं समवाश्नुते॥ ५१
सर्गे स्थितिं गते त्वन्या योदेति कल्पनापरा।
सा व्योमानिलमाश्रित्य प्रविश्यौषधिपल्लवान्॥ ५२
काचित्सुरत्वमायाति काचिदायाति यक्षताम्।
उदेति प्रथमं सैषा ब्रह्मत्वं समवाश्नुते॥ ५३
या यत्सत्त्वं समन्वेति सा तदेवाशु जायते।
जाता संसर्गवशतस्तस्मिन्नेव च जन्मनि।
बध्यते मुच्यते वासौ स्वयमन्वारमेदतः॥ ५४

इत्थं गतास्थितिरियं किल रामभद्र
सृष्टिः स्फुटप्रकटसंकटकर्मलब्धा।
आविर्भवेद्विविधवेगविहारभार-
संरम्भगर्भविधुता कलनापदे सा॥ ५५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे कमलजव्यवहारवर्णनं नामैकोनषष्टितमः सर्गः॥ ५९॥

---

॥ ४१॥ ४२॥ ४३॥ तत्प्रागुक्तं सप्तमभूमिकालक्षणं परं पदम्। सृष्टिविक्षेपलक्षणास्य आपद्यो विनिर्गतः॥४४॥४५॥ केवलमनुग्रहार्थमेवेत्यर्थः॥ ४६॥ तर्हि तस्य समाधिकाले आर्जवं सर्गसंहारादिकाले तु तस्य संत्यागो देहादिसंग्रहः सर्गरूपेण नानात्वं व्युत्थानकाले चेतनं पद्मे स्थितिरन्यत्र चास्थितिरिति नानाभावसमारम्भेषु चित्तवृत्तिषु चाज्ञवदेव वैषम्यं प्राप्तमित्याशङ्क्य क्रमात्परिहरति—नार्जवमित्यादिना॥ ४७॥ ॥ ४८॥ ४९॥ उपसंहरति—एषेति। इदानीं मानसः प्रजापतीनां सर्गस्ते हि संकल्पसंप्राप्तसिद्धयः स्वयं प्रज्ञातज्ञानयोगैश्वर्याः प्रथमो विध्यनीकः। मैथुनसर्गेऽपि देवगन्धर्वयक्षादीनां सात्त्विकत्वात्सकृदुपदेशप्राप्तज्ञानैश्वर्यः सुरानीको मध्यमः। मनुष्यादिस्तु रजस्तमोग्रस्तः प्रयत्नसहस्रसाध्यज्ञानैश्वर्यो नरानीकोऽधम इत्यनीकत्रयविभागं मनसि निधाय तेषां स्वकारणासादितचित्तशुद्ध्यनुरूपज्ञानोदयेन ब्रह्मप्राप्तिं विभज्य दर्शयति—यातामित्यादिना। तां वर्णितप्रकारां एतां सात्त्विकीं सत्त्वोत्कर्षप्राप्यां ब्राह्मीं स्थितिं विधिसुरानीकावपि यातां प्राप्नुयाताम्॥५०॥ तत्र प्रथमानीकस्य मानसोपासनाफलत्वान्मनोमात्रजन्यत्वेन सौक्ष्म्यात्तत्प्राप्तौ विशेषमाह—चित्सर्गेति। यद्यस्मात् प्रथमोऽनीकश्चिद्रूपे सर्वसर्गोपरसरूपे सर्वब्रह्माकाशे ब्रह्मणो विरिञ्चेर्मनःकल्पितं फलमिव मनःफलं सत्प्रथममुदेति अतः सैव स एव। 'सोचि लोपे चेत्पादपूरणम्' इति सुलोपः। स्वतःसिद्धज्ञानैश्वर्येण प्रथमं सम्यगवगम्याश्नुते इत्यर्थः॥ ५१॥ द्वितीयानीकस्यौषधिपल्लवविकारभूतसोमाज्यपयःसाध्यकर्मफलत्वेन तत्परिणामतया प्राकृतापेक्षया स्थौल्यादुपदेशमात्रमपेक्ष्य ब्रह्मप्राप्तिरिति विशेषं दर्शयति—सर्गे इत्यादिना। प्रजापतीनामोषध्यादीनां च सर्गे स्थितिं गते सति या सुरानीकलक्षणान्या अपरा प्रथमापेक्षया न्यूना कल्पनोदेति सा प्रथमं चन्द्रकलात्मना व्योमानिलं चाश्रित्यौषधिपल्लवान्प्रविश्य सोमाज्यपयोभावेनाग्नौ हूयमाना सूर्यमण्डले अमृताकारपरिणता प्रजापतिप्रभृतिभिरुपभुक्ता तद्रेतोरूपपरिणता मैथुनद्वारेणेन्द्रादिसुरत्वं कुबेरादियक्षादिदेवयोनितां चायातीति परेणान्वयः॥ ५२॥ सैषा सात्त्विकत्वान्मनुष्याद्यपेक्षया प्रथमं प्रजापतीनामनुग्रहोपदेशादिना ज्ञानैश्वर्यसंपदा उदेति। अतः प्रथममेव ब्रह्मत्वं समवाश्नुत इत्यर्थः॥ ५३॥ तर्हि किं सर्वेषां देवानां मुक्तिर्नेत्याह—येति। देवेषु मानवेषु वा जाता या व्यक्तिर्यत्सत्त्वं ज्ञानवैराग्यसंपन्नं भोगलम्पटं वा मैत्र्यादिना समन्वेति सा तत्संगत्या आशु तदेव जायते तादृशगुणवती भवतीत्यर्थः। भोगलम्पटसंसर्गवशतः स्वयमपि तथाभूता सती बध्यते तद्विपरीतसंगत्या स्वयमपि ज्ञानवैराग्यसंपन्ना मुच्यत इत्यर्थः। तर्हि तृतीयानीकैः किं कार्यं तदाह—स्वयमिति। अतो बन्धमोक्षयोः सङ्गानुरूपत्वात्स्वयमेव पौरुषप्रयत्नेन साधुसंगमसच्छास्त्रश्रवणादीनिन्द्रियमनोजयोपायांश्चान्वारभेत। यावत्फलोदयमभ्यस्येदित्यर्थः॥ ५४॥ उक्तं सर्वं संक्षिप्योपसंहरति—इत्थमिति। स्फुटानि प्रकाशबहुलानि उपासनानि प्रकटानि सर्वजनप्रसिद्धानि यज्ञादीनि संकटान्यनर्थफलानि कर्माणि निषिद्धमिश्राणि तैर्निमित्तैः क्रमाल्लब्धा विविधैः प्रारब्धवेगैर्विहारभारैः क्रीडाकौतुकैः संरम्भगर्भैः क्रोधलोभसंभ्रमैश्च व्यवहारैः क्रमाद्विधुता अवष्टब्धा सती कलनापदे सर्गोन्मुखे ब्रह्मणि इत्थं प्रागुक्तसंकल्पकल्पनयैव गता प्राप्ता आस्थितिः सत्ता यया तथाविधा सेयं त्र्यनीकात्मिका सृष्टिराविर्भवेदित्यर्थः॥५५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे कमलजव्यवहारवर्णनं नामैकोनषष्टितमः सर्गः॥ ५९॥

## षाष्टितमः सर्गः ६०

श्रीवसिष्ठ उवाच ।
अस्मिन्भगवति ब्रह्मंश्चपलं पदमाश्रिते ।
पितामहे महाबाहो कृतसर्गव्यवस्थितौ ॥ १
जगज्जीर्णारघट्टेऽस्मिन्वहति स्वव्यवस्थया ।
विप्रेतभूतघटया रज्वा जीविततृष्णया ॥ २
ब्रह्मोत्थेषु च भूतेषु विशत्सु भवपञ्जरम् ।
आवर्तेष्वीश्वरव्योमवालमध्यविवर्तिषु ॥ ३
मनःस्वन्येषु वातान्तलोलाहतकणेष्विव ।
अनारतं विनिर्यान्ति विशन्त्यन्ये तथाभितः ॥ ४
राम ब्रह्मणि जीवौघास्तरङ्गा इव वारिधौ ।
अनाद्यन्तपदोत्पन्नाः कलनापदमागताः ॥ ५
भूताकाशं विशन्त्येते धूमश्रीरिव चाम्बुदम् ।
एकतां यान्ति जीवौघा ब्रह्मण्याकाशमारुतैः ॥ ६
दिनं तन्मात्रवातेन तत्प्राणात्मतया यथा ।
आक्रम्यन्ते प्रचण्डेन दैत्यौघेनामरा इव ॥ ७
भूतप्राणानिलं तेन गन्धवाहेन तेन च ।
निविशन्ति शरीरेषु जीवा गच्छन्ति वीर्यताम् ॥ ८
ततो जगति जायन्ते भवन्ति प्राणिनोऽस्फुटाः ।
अन्या धूमादिमाजाता राम जीवपरम्परा ॥ ९
तन्मात्रवति तावद्भिरशून्येऽम्बरकोटरे ।
उदेति यावद्भगवानिन्दुरुद्दाममण्डलः ॥ १०
क्षीराम्बुधिनिधौ लोलैः पाण्डवद्रश्मिभिर्जगत् ।
ततस्तेष्वतिरम्येषु चन्द्ररश्मिषु संपतत् ॥ ११
करोति विहगी लोला वने प्रेष्यान्तरेष्विव ।
तेभ्योऽपि स्वरसेनैव यान्ति पीवरतामपि ॥ १२
फलेषु तेषु बध्नाति पदमिन्दुकरात्क्षता ।
जीवाली क्षीरपूर्णेषु मातुः स्तनभरेष्विव ॥ १३
ताः फलावलयः पक्वा भविष्यन्ति मरीचिभिः ।
तेष्वेव वीर्यमागत्य तिष्ठन्त्यप्राप्तबोधिताः ॥ १४
प्रसुप्तवासनाजालजीवतागर्भपञ्जरम् ।
अधितिष्ठति बीजश्रीः सुप्तपत्रा यथा वटम् ॥ १५

---

ब्रह्मोत्थितानां जीवानामिह देहग्रहक्रमः ।
वर्ण्यते सात्त्विकानां च प्राधान्याद्बोधभागिनाम् ॥ १ ॥

प्रागुक्तत्र्यनीकसृष्टिं सा व्योमानिलमाश्रित्येति संक्षेपोक्तक्रमप्रपञ्चनेन वर्णयितुं भूमिकां रचयति—अस्मिन्नित्यादिना । ब्रह्मन् ब्रह्मणि पितामहे । 'सुपां सुलुक्' इति सप्तम्या लुकि'न ङिसंबुद्ध्योः' इति नलोपनिषेधः । चपलं पदं समाधिव्युत्थानम् ॥ १ ॥ आरघट्टे घटीयन्त्रे विप्रेतानां मृतानां भूतानां घटया समूहलक्षणया, विप्रेतानि भूतान्येव घटा यस्यां तथाविधया वा घटीमालारज्वा जीवितं पुनर्देहग्रहणेन जीवनं जलं च तद्विषयतृष्णया आरोहावरोहाभ्यां वहति परिवर्तमाने ॥ २ ॥ अन्येषु मनःसु ईश्वरस्य मायाशबलब्रह्मणो बालः पुत्रभूतं प्रथमजं यद्व्योम तन्मध्ये विवर्तिषु भ्रमणशीलेषु सत्सु ॥ ३ ॥ हे राम, ब्रह्मणि जीवौघा अनारतं सततं केचन उपाधिविनिर्गमादग्निविस्फुलिङ्गवद्विनिर्यान्ति । केचित्त्वन्ये उपाधिविलयात्सुप्ताविव विश्रान्तये प्रविशन्तीत्यर्थः ॥ ४ ॥ उत्पन्ना इत्यस्य व्याख्या कलनापदमागता इति ॥५॥ तत्र पूर्वसर्गेऽनुक्तं तृतीयानीकोत्पत्तिक्रमं प्रथमं प्रपञ्चयति—भूताकाशमित्यादिना । ब्रह्मणि अध्यस्तैराकाशमारुतैः सह क्षीरोदकवदेकतां यान्ति ॥ ६ ॥ ततस्तेजोम्बुभुवासुत्पत्तौ सत्यां दिनं प्रकाशं प्राप्य शब्दस्पर्शरूपरसगन्धलक्षणतन्मात्रसहितेन प्रागुक्तवायुना तथा तदुपभोगहेतवमुख्यमुख्योभयविधप्राणात्मतया च आक्रम्यन्ते वशीक्रियन्ते ॥ ७ ॥ एवं लिङ्गदेहतां प्राप्तास्तेन प्राणात्मभावेन तेन गन्धवाहेन भूततन्मात्रसहितवायुना च सहान्नोदकादिद्वारा चतुर्विधभूतग्रामाणां प्राणानिलमन्नग्रासकमपानवृत्तिमेवं प्राप्य शरीरेषु निविशन्ति । 'नेविंशः' इति तङ्भावश्छान्दसः । वीर्यतां रेतोभावम् ॥ ८ ॥ अस्फुटा अनभिव्यक्तज्ञानैश्वर्याः । तृतीयानीकस्य सर्गक्रममुक्त्वा द्वितीयानीकस्य तमाह—अन्या इति । अस्या अपि लिङ्गदेहप्राप्तिपर्यन्तं प्रागुक्त एव क्रमः । ओषधिवनस्पतिप्रवेशेन क्षीराज्यादिपरिणत्याग्नौ हुता आहुतिर्धूमद्वारा सूर्यमण्डलं प्राप्य सूर्यकिरणद्वारा चन्द्रानुप्रवेशेन वा रंहत्यधिकरणन्यायेनाहुत्यप्परिवेष्टितयजमानप्राणानां धूमादिमार्गेण चन्द्रमण्डलानुप्रवेशाद्वा धूमादिं मार्गं आजाता अनुप्रविष्टा ॥ ९ ॥ सापि चन्द्रकलात्मतां प्राप्ता कल्पवृक्षफलेषु रसभावेनानुप्रवेशात्तदुपभोक्तृवीर्यभावपरिणामेन देवगर्भे जायते इति क्रममभिप्रेत्याह—तन्मात्रवतीत्यादिना । प्रागुक्ततन्मात्रात्मकलिङ्गदेहवति । उद्दाममण्डलः पूर्णो भगवानिन्दुर्यावत् यावद्भी रश्मिभिर्जगद्धासयन्नुदेति तावद्भिर्लोलैः पाण्डुरूपवद्रश्मिभिरशून्ये पूर्णे अतएव क्षीराम्बुधेर्निधौ आश्रयभूते प्रतिनिधिभूते वा अम्बरकोटरे सा तिष्ठतीति शेषः ॥ १० ॥ ततस्तदनन्तरं तेषु चन्द्ररश्मिषु नन्दनादिवने संपतत् संपतत्सु । छान्दसः सुपो लुक् । रश्म्यनुसारेण संपतन्ती तस्मिन्वने प्रेष्या दासी आन्तरेषु गृहाभ्यन्तरकक्ष्येष्विव लोला व्यग्रा विहगी पक्षिणीप्राया करोति प्रवेशमिति शेषः ॥ ११ ॥ ततस्तस्मिन्वने फलानि तेभ्यश्चन्द्ररश्मिभ्योऽपिशब्दाद्रविरश्मिभ्यश्च निमित्तेभ्यः स्वरसेनैव पीवरतां क्रमादुपचयं माधुर्यमपि यान्ति ॥ १२ ॥ एवं रसपूर्णेषु प्रागुक्ता जीवाली इन्दुकरात् क्षता विभक्ता सती तेषु फलेषु पदं स्थितिं बध्नाति । यथा शिशुर्मातुः स्तनभरेषु पदं बध्नाति तद्वत् ॥ १३ ॥ मरीचिभिः रविरश्मिभिः । तेष्वेव फलेषु कश्यपादिभिरुपभुक्तेषु वीर्यं वीर्यतामागत्य प्राप्य । अप्राप्तबोधिताः मूर्च्छितप्रायाः ॥१४॥ मूर्च्छितजीवानां प्रबुद्ध

यथा काष्ठे स्थितश्चाग्निर्यथा मृदि घटाः स्थिताः।
अनेकक्रमयोगेन परागत्य महेश्वरात्॥ १६
अदृष्टान्यशरीरश्रीः क्रमते यो न चोदति।
स हि सत्येव जातिः स्यादुदारव्यवहारवान्॥ १७
तेनैव मोक्षभागी चेज्जन्मना स तु सात्त्विकः।
अथैतां योनिमासाद्य कृत्यां जन्मपरम्पराम्॥ १८
रक्षार्थं प्राप्तजन्मा चेत्तमोराजससात्त्विकः।
पाश्चात्यजन्मना पुंसो राम वक्ष्यामि चाधुना॥ १९
प्राधान्येन यथाऽऽयातः संसारमिति सात्त्विकः।
स कदाचिन्न कश्चिच्च संभवत्यनघाकृते॥ २०
संभवन्तीह पुरुषा राम राजससात्त्विकाः।
प्रविचार्य समायाता मन्तव्यं चेह तद्धिया॥ २१
प्राधान्येन समायाता ये यदा परमात्मनः।
दुर्लभाः पुरुषा राम ते महागुणशालिनः॥ २२
ये चान्ये विविधा मूढा मूकास्तामसजातयः।
तेषां स्थावरतुल्यानां किंच राम विचार्यते॥ २३
कतिपया न गता भवभावनं
नरसुराः प्रकृतक्रमजन्मनि।
अहमिव प्रविचारणयोग्यता-
मनुगतो ननु राजससात्त्विकः॥ २४
स्थितस्य ते महापदाविचार्यैवमायता।
विचारय त्वमञ्जसा तदद्य चेह न द्वयम्॥ २५

इत्यार्षे वासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थिति० विचारपुरुषनिर्णयप्रसङ्गोपदेशजीवावतारो नाम षष्टितमः सर्गः॥६०॥

## एकषष्टितमः सर्गः ६१

श्रीवसिष्ठ उवाच।
ये हि राजससात्त्विक्या जाता भुवि महागुणाः।
ते नित्यमेव मुदिताः प्रकाशाः ख इवेन्दवः॥ १

पितृमातृगर्भस्थितौ दृष्टान्तमाह—**बीजश्री**रिति। यथा सुप्तपत्रा अनाविर्भूताङ्कुरविटपपत्रा वटबीजश्रीराविर्भूतविटपाङ्कुरपत्रफलं वटमधिष्ठाय तिष्ठति तद्वदित्यर्थः॥१५॥ न केवलं गर्भ एव मूर्च्छितानामन्यमाश्रित्य तिरोहितस्थितिः किंतु महेश्वरात् प्रलये उपाधिप्रविलयेन प्राप्तादव्यक्तात्परागत्य निर्गम्याकाशादिभावे लिङ्गारम्भकाले चन्द्ररश्म्याद्यनुप्रवेशकाले च अनेकक्रमयोगेन प्रवृत्तेस्तथैव स्थितिरित्यर्थः॥ १६॥ एवं गर्भे प्राप्तानां जन्मनि निमित्तभेदाद्विशेषं दर्शयति—**अदृष्टे**त्यादिना। प्राग्जन्मनि न दृष्टा अन्यस्य स्त्रीपुत्रादिशरीरस्य श्रीर्यैन तथाविधः सर्वतो विरक्तः सन् यो मरणान्तं कालं क्रमते, यश्च रागादिभिर्बहुभिः कर्मकाण्डादिशास्त्रैश्चैहिकपारलौकिकभोगसाधनलौकिकवैदिककर्मसु चोद्यमानोऽपि न चोदति न प्रवर्तते स हि धीरः पुरुषधौरेयः प्रागुक्तक्रमाद्देवगर्भे जायमानः सती अत्यन्तसात्त्विक्येव जातिः संस्तत्र ज्ञानं प्राप्य उदारजीवन्मुक्तोचितव्यवहारवान्स्यादित्यर्थः॥ १७॥ देवपदाधिकारप्राप्त्यनुकूलकर्मोपासनानुष्ठायिनां त्वाह—**अथै**ति। एतां देवयोनिमासाद्य कृत्यां छेत्तुं शक्यामपि जन्मपरम्परां भोगलाम्पट्याद्कृन्तन्स्वाधिकारभोगरक्षार्थमेव प्राप्तजन्मा चेत् तमोयुक्तो राजससात्त्विक इत्यर्थः॥१८॥ इदानीं प्रथमानीकजानां केवलसात्त्विकत्वमपुनर्जन्मतां चाह—**पाश्चात्ये**ति। पाश्चात्येन चरमेण जन्मना नरसुरानीकापेक्षया प्राधान्येन प्राजापत्याधिकारेण संसारमायातः केवलसात्त्विको विध्यनीको यथा मुच्यते इति तथा वक्ष्यामीत्यन्वयः॥१९॥ स प्रथमानीकजः पुमान् कश्चिदपि कदाचिदपि न पुनः संभवति मुच्यत एवेत्यर्थः॥ २०॥ के तर्हि संभवन्ति तानाह—**संभवन्ती**ति। केवलसात्त्विकस्य पुनर्जन्माभावे को हेतुस्तमाह—**प्रविचार्ये**ति। यतस्ते प्राग्जन्मन्यप्यात्मतत्त्वं श्रवणाद्युपायैः प्रविचार्य प्रतिबन्धमात्रक्षयाय तद्योग्यं सात्त्विकं जन्म समायाता इह जन्मन्यपि तेषां धिया सदैवात्मतत्त्वमेव मन्तव्यं मननेन परिशीलनीयं तस्मादित्यर्थः॥ २१॥ अतएव ते दुर्लभा इत्याह—**प्राधान्येने**ति॥२२॥ ये विधिसुरनरानीकेभ्योऽन्ये रक्षःपिशाचादयस्तिर्यञ्चश्च तेषां स्थावरादितुल्यत्वाज्ज्ञानाधिकारकथायां विचारयोग्यतैव नास्तीति तेनोपन्यस्ता इत्याह—**ये चान्ये** इति॥२३॥ तत्त्वदौर्लभ्यमेवोपपादयन्नुपसंहरति—**कतिपया** इति। प्रकृते क्रमेण प्राप्तेऽपि उत्तमजन्मनि कतिपया एव नराः सुराश्च भवभावनं सांसारिकभोगरुचिं न गताः। तथाच वैराग्यमेवातिदुर्लभमित्यर्थः। किंबहुना। अप्यर्थे ननुशब्दः। तेष्वहमिव जन्मप्रभृत्येव शमदमादिसर्वगुणसंपत्त्या प्रकर्षेणात्मविचारणयोग्यतामनुगतोऽपि निरन्तरसमाधिसुखविघ्नभूतराजकुलपौरोहित्याद्यधिकारप्रारब्धयोगाद्राजससात्त्विक ईषद्रजोयुक्तसात्त्विक एव न शुद्धसात्त्विक इत्यतिदौर्लभ्यद्योतनाय निरभिमानादतिशयोक्तिः॥ २४॥ ममेव तवापि वैराग्यशमदमादिसंपत्तिपूर्णत्वमस्त्येव किंतु महतः परमात्मपदस्य अविचार्यया अविचारणया स्थितस्यैवमुक्तप्रकारा संसारभ्रान्तिरायता विस्तीर्णा। तत्पदं इह मत्पुरतः अद्यैव अञ्जसा शीघ्रं विचारय। विचारमात्रेण त्वमेव च इह प्रत्यक्षं न द्वयमद्वयं तत्परमपदमसीत्यर्थः। अविचार्ये या महती आपदा आपत् ते आयता आयाता इति वा योज्यम्॥२५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे विचारपुरुषनिर्णयप्रसङ्गोपदेशजीवावतारो नाम षष्टितमः सर्गः॥६०॥

मुक्तियोग्याः प्रशस्यन्ते जना राजससात्त्विकाः।
तेषां विवेकवैराग्यक्रमश्चात्रोपदिश्यते॥ १॥

ये प्रविचारणयोग्यतामनुगताः पुरुषा राजससात्त्विक्या

न खेदमभिगच्छन्ति व्योमभागो मलं यथा ।
नापदा ग्लानिमायान्ति निशि हेमाम्बुजं यथा ॥ २
नेहन्ते प्रकृतादन्यत्ते नान्यत्स्थावरो यथा ।
रमन्ते स्वसदाचारैः स्वार्थेभ्यः पादपा यथा ॥ ३
नित्यमापूर्यतां याति सुधायामिन्दुसुन्दरी ।
राम राजससत्त्वस्य मोक्षमायात्यसौ यथा ॥ ४
आपद्यपि न मुञ्चन्ति शशिवच्छीततामिव ।
प्रकृत्यैव विराजन्ते मैत्र्यादिगुणकान्तया ॥ ५
नवस्तबकभाविन्या लतयेव वनद्रुमाः ।
समाः समरसाः सौम्याः सततं साधुसाधवः ॥ ६
अब्धिवद्धृतमर्यादा भवन्ति भवता समाः ।
अतस्तेषां महाबाहो पदमापदवासनम् ॥ ७
सततं तत्तु गन्तव्यं गन्तव्यं नापदर्णवे ।
तथा तथेह जगति विहर्तव्यमखेदिना ॥ ८
आत्मोदयाश्च वर्धन्ते यथाऽराजससात्त्विकाः ।
अचिन्त्यगत्या सच्छास्त्रं विचार्य च पुनःपुनः ॥ ९
अनित्यता स्वमनसा विविधैवाशु भावतः ।
आदावन्ते च यां नित्यं क्रियां त्रैलोक्यवर्तिनीम् ॥ १०
पदार्थानापदेवाशु भावयेन्नेतरत्सुधीः ।
असम्यग्दर्शनं त्यक्त्वा व्यर्थमज्ञानसंततिम् ॥ ११
सतव्यं सम्यगेवेदं ज्ञानमर्थमनन्तकम् ।
कोऽहं कथमिदं जातं संसाराडम्बरं विभो ॥ १२
प्रविचार्य प्रयत्नेन प्राज्ञेन सह साधुभिः ।
न च कर्मसु मङ्क्तव्यं नानर्थेन सहावसेत् ॥ १३
द्रष्टव्यः सर्वविच्छेदः संसारानुगतः सदा ।
साधुरेवानुगन्तव्यो मयूरेणाम्बुदो यथा ॥ १४
अहंकारस्य देहस्य संसारस्याप्लवस्य च ।
स्वविचारमलंकृत्य सत्यमेवावलोकयेत् ॥ १५
शरीरमस्थिरमपि संत्यक्त्वा घनशोभनम् ।
वीतमुक्तावलीतन्तुं चिन्मात्रमवलोकयेत् ॥ १६
तस्मिन्पदे नित्यतते सर्वगे सर्वभाविते ।
शिवे सर्वमिदं प्रोतं सूत्रे मणिगणा यथा ॥ १७
येव चिद्भुवनाभोगे भूषणे व्योम्नि भास्करे ।
धराविवरकोशस्थे सैव चित्कीटकोदरे ॥ १८
कुम्भव्योम्नां न भेदोऽस्ति यथेह परमार्थतः ।
चितौ शरीरसंस्थानां न भेदोऽस्ति तथानघ ॥ १९
सर्वेषामेव भूतानां तिक्तकट्वादिभेदिनाम् ।
एकत्वादनुभूतेर्हि कुतश्चिन्मात्रभिन्नता ॥ २०
एकस्मिन्नेव सततं स्थिते सन्मात्रवस्तुनि ।
जातोऽयमयमुन्नष्ट इति तेषां तवेह धीः ॥ २१

---

प्राक्तनकर्मोपासनया भुवि जाताः ॥ १ ॥ खेदं मानसं दुःखम् । म्लानिं शारीरं दुःखम् ॥ २ ॥ यथा स्थावरो वृक्षादिः प्रारब्धभोगादन्यन्नेहते तद्वत्ते प्रकृतात् ज्ञानतत्साधनसंपदोऽन्यन्नेहन्ते । स्वार्थेभ्यः स्वीयपुष्पफलादिभ्यो हेतुभ्यः ॥ ३ ॥ राजससत्त्वस्योक्तपुरुषस्य धीः शान्त्यादिसुधायामुपचितायामापूर्यतामुपचेयतां याति । अतएव शुक्लपक्षेन्दुरिव सुन्दरी ॥४॥ शीततामिव स्थितां सौम्यतां शशिवन्न मुञ्चन्ति ॥ ५ ॥ नवैः स्तनकल्पैः स्तबकैर्भावः प्रेमा तद्वत्या लतयेव नित्याश्लिष्टया गुणकान्तयेति पूर्वेणान्वयः । साधुभ्योऽपि साधवः ॥ ६ ॥ यत एवंगुणसंपन्ना अतस्तेषामापदामवासनमनधिकरणं यत्पदं तत्तु तदेव यथा गन्तव्यं तथेह जगति अखेदिना मनसा विहर्तव्यमिति परेणान्वयः ॥७॥८॥ अराजसा रजःक्षयोपेताः सात्त्विका आत्मोदयाः स्वानन्दलाभा यथा वर्धन्ते तथा अचिन्त्यगत्या मूढचिन्तनार्हविषयगतिपरित्यागेन पुनःपुनः सच्छास्त्रं विचार्यं भवतीत्यर्थः ॥ ९ ॥ एवं भावतः अत्यादरेण सर्ववस्तूनां विविधा नानानिमित्तोपपाद्या अनित्यतापि आशु विचार्या भवतीति विपरिणम्यते । एतावन्तं कालमुदारप्रशंसामुखेन रामाय सद्गुणानुपदिश्येदानीं साक्षादेवोपदिशति—आदावित्यादिना । एवमनित्यतां विचारयन् सुधीर्विशुद्धबुद्धिः आदौ ऐहिकोपभोगायोपयुक्तां लौकिकीमन्ते मरणोत्तरकाले उपयुक्तां पारलौकिकीं च त्रैलोक्यवर्तिनीं क्रियां तत्फलभूतान्पशुपुत्रधनस्वर्गविमानाप्सरःप्रभृतिपदार्थांश्च आपदेवेति भावयेत् [illegible] संप्रदिग्धमिति भावयेदिति परेणान्वयः ॥१०॥११॥ इदं वक्ष्यमाणप्रकारं विचारात्मकं ज्ञानमनन्तकमर्थं प्राप्तुमिति शेषः । विधिवदुपगतेन साधुभिः सतीर्थ्यैः सह प्रयत्नेन सेवादिना प्रसादितेन प्राज्ञेन गुरुणा हे प्रभो, कोऽहमित्यादिसविनयप्रश्नपूर्वकं विचार्य स्तर्तव्यमिति संबन्धः ॥१२॥ श्रवणाङ्गतया कर्मसंन्यासमाह—न चेति । मङ्क्तव्यं मज्जनीयम् । मस्जेर्भावे तव्यः 'मस्जिनशोर्झलि' इति नुम् ॥ १३ ॥ सर्वस्य प्रियस्य विच्छेदोऽवश्यंभावीति द्रष्टव्यः ॥ १४ ॥ आन्तरस्याहंकारस्य ततो बाह्यस्य देहस्य ततोऽपि बाह्यस्य पुत्रमित्रादिसंसारस्य चाप्लवार्णवत्रयकल्पस्य प्लवभूतं स्वविचारं अलं पूर्णभावावसानं कृत्वा ॥१५॥ सत्यमेवावलोकयेदिति यदुक्तं तत्रोपायमाह—शरीरमिति । अपिशब्दादहंकारमपि संत्यक्त्वा । ल्यबकरणं छान्दसम् । घनशोभनं अत्यन्तं शुभम् । वीता व्याप्ता मुक्तावली येन तथाविधम् । छान्दसत्वादुपसर्जनह्रस्वाभावः । 'भूते'ति पाठे स्पष्टम् । तदन्तर्गततन्तुमिव सर्वदेहाहंकारसाधारणमन्तर्गतं साक्षिचिन्मात्रमित्यर्थः ॥१६॥ दृष्टान्तसाम्यं दर्शयति—तस्मिन्नित्यादिना ॥ १७ ॥ १८ ॥ चिद्भेदाशङ्कां निरस्यति—कुम्भेति । शरीरसंस्थानां जीवानाम् । चितौ चिति ॥ १९ ॥ यथा एकपुरुषास्वादनीयतिक्तकट्वादिरसभेदेऽपि नानुभवभेदस्तद्वद्देहादिभेदेष्वपीत्याशयेनाह—सर्वेषामिति ॥ २० ॥ चेतनेषु चिद्भेद इव सर्ववस्तुषु सत्स्वरूपभेदोऽपि नास्तीत्याशयेनाह—

---

१ [illegible]दिना इति पाठः.

नच तन्नाम वस्त्वस्ति यद्भूत्वा संप्रलीयते ।
आभासमात्रमेवेदं न सन्नासच्च राघव ॥ २२
उद्भूतेनाप्रशान्तेन चेतसा सपदि स्थितम् ।
नेह मोहान्त आमोक्षान्नेदं यत्तदवस्तु च ॥ २३
किं किलासति रामेह मोहजाले समुज्झति ।
यत्किंचित्सङ्गसङ्गत्या विमोहे कारणं हि तत् ॥ २४
[असति जगति किं किलेह मोहः
सति च किमङ्ग विमोहकारणं तत् ।
जननमरणसंस्थितिष्वतस्त्वं
भव खमिवातिसमः सदोपशान्तः ॥]

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे जननमरणसंस्थितिर्नामैकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ६२

श्रीवसिष्ठ उवाच ।

धीरो विचारवान्साक्षादादावेव महाधिया ।
शास्त्रेण विदुषा शास्त्रं सुजनेन विचारयेत् ॥ १
सुजनेन वितृष्णेन विदुषा महता सह ।
प्रविचार्य महायोगात्पदमासाद्यते परम् ॥ २
शास्त्रार्थसुजनासङ्गवैराग्याभ्याससत्कृतः ।
पुरुषस्त्वमिवाभाति निजविज्ञानभाजनम् ॥ ३
त्वमुदारनिजाचारो धीरो गुणगणाकरः ।
अधितिष्ठसि निर्दुःखं वीतसर्गमनोमलः ॥ ४
नूनमुत्सर्जिताभ्रेण शरज्ज्योत्स्ना समो भवान् ।
भव भावनया मुक्तो युक्त उत्तमसंविदा ॥ ५
चिन्तामुक्तकलावत्या मुक्तकल्पनया स्थितम् ।
मनो मुक्तविभागं च मुक्तमेव न संशयः ॥ ६
तवोत्तमानुभावस्य त इदानीं नरा भुवि ।
चेष्टामनुसरिष्यन्ति रागद्वेषविहीनया ॥ ७
बहिर्लोकोचिताचारा विहरिष्यन्ति ये जनाः ।
भवार्णवं तरिष्यन्ति धीमन्तः पोतकान्विताः ॥ ८
तव तुल्यमतिर्यः स्यात्सुजनः समदर्शनः ।
योग्योऽसौ ज्ञानदृष्टीनां मयोक्तानां सुदृष्टिमान् ॥ ९
यावद्देहं धिया तिष्ठ रागद्वेषविहीनया ।
बहिर्लोकोचिताचारस्त्वन्तस्त्यक्ताखिलैषणः ॥ १०

एकस्मिन्निति । तेषां जातादिवस्तूनाम् । तव इह मूढजनेषु प्रसिद्धा धीर्न शास्त्रीयेत्यर्थः ॥ २१ ॥ कीदृशी तर्हि शास्त्रीयधीस्तामाह—**नचेति** ॥ २२ ॥ न सन्नासच्चेत्युक्तिमुपपादयति—**उद्भूतेनेति** । यत आमोक्षात् उद्भूतेनाभिव्यक्तेन अप्रशान्तेन च चेतसा स्फुटं गृह्यमाणं सपदि स्वकाले स्थितं अतो नासत् । मोहस्यान्ते निवृत्तौ तु आमोक्षात्प्रसिद्धे इह पूर्वकाले इदं नास्ति मोक्षकाले त्विदं सुतरां नास्तीत्यवस्तु चेति न सदपीत्यर्थः ॥ २३ ॥ ज्ञानसाफल्यपर्यालोचनेऽपि मोहादेः सत्त्वमत्यन्तासत्त्वं वा दुर्वचमित्यनिर्वचनीयतैव फलितेत्याह—**किं किलेति** । मोहजाले अत्यन्तासति ज्ञानेन किं किल समुज्झति निरस्यति । निरस्याभावे निरासकसाफल्यायोगात् । एवमत्यन्तसत्त्वे वा ज्ञानेन किं समुज्झति । सत्यस्य ज्ञाननिरस्यत्वादर्शनात् । तस्माद्यः कश्चिच्चासौ सङ्गश्च यत्किंचित्सङ्गोऽनिर्वचनीयाध्यासस्तल्लक्षणया संगत्या रज्जुसर्पादीव तत् दृश्यजातं विमोहे कारणमिति परिशेषात्सिद्धमित्यर्थः ॥ २४ ॥ इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे जननमरणसंस्थितिर्नामैकषष्टितमः सर्गः ॥ ६१ ॥

रामस्य सर्वशास्त्रोक्तगुणसंपत्तिरुच्यते ।
अवरस्यापि सत्सङ्गपौरुषाभ्यां वरस्थितिः ॥ १ ॥

'अचिन्त्यगत्या सच्छास्त्रं विचार्यं च पुनःपुन'रिति प्रागुक्तं तत्कथं विचार्यं तदाह—**धीर इति** । धीरो बाह्याभ्यन्तरद्वन्द्वसहिष्णुः । विचारवान् ऊहापोहकुशलः । साक्षात्स्वयमेव 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः' इत्यादिशास्त्रेणोपगतेन विदुषा सुजनेन शिष्यापराधसहिष्णुना गुरुणा सह शास्त्रमादौ विचारयेदित्यर्थः ॥ १ ॥ सुजनेन शोभनाभिजनेन । महायोगान्मनोनाशान्तात्समाधेः ॥ २ ॥ शास्त्राणां वेदान्तोपयोगिशास्त्रान्तराणामर्थानां सत्कर्मसदाचारादीनां सुजनासङ्गवैराग्यादीनां च निरन्तराभ्यासैः सत्कृतः संस्कृतो यः पुरुषस्त्वमिवाभाति स प्रकृतशास्त्रश्रवणे निजस्य प्रत्यक्तत्त्वविषयस्वविज्ञानस्य भाजनमित्यर्थः । अथवा अध्यात्मशास्त्रादिभिः सत्कृतो निजविज्ञानभाजनं भूत्वा त्वमिवाभातीति योजना ॥ ३ ॥ उक्तगुणास्त्वयि सन्त्येवेत्याह—**त्वमिति** ॥ ४ ॥ इदानीं रामस्य प्रबोधाज्जीवन्मुक्ततां संभावयन्नाह—**नूनमित्यादिना** ॥५॥ तत्संभावनाबीजं मुक्तमनसो लक्षणमाह—**चिन्तेति** । सर्वबाह्यार्थचिन्तासिर्मुक्तया अन्तश्च परमात्मना क्षीरोदकवदेकीभावात् कलावत्या ब्रह्माकारपरिणतिलक्षणकौशलवत्या मुक्तानामनुभवसिद्धया कल्पनया स्थितं मनो मुक्तमेव नात्र संशय इत्यर्थः ॥ ६ ॥ एवं मुक्तमनसस्तव चेष्टान्ते प्रागुक्ता जीवन्मुक्ता इदानीं रागद्वेषविहीनया प्रागुक्तकल्पनया अनुसरिष्यन्ति ॥७॥ पोतका ज्ञानप्लवास्तैरन्विताः ॥ ८ ॥ ९ ॥ किं तर्हि जीवन्मुक्तस्य मम शरीरत्यागो यथेष्टाचरणं वास्तु नेत्याह—**यावद्देहमिति** । लोकोचितो धर्मशास्त्रसद्वृत्तानुसारी आचारो यस्य ॥ १० ॥

१ इदमन्तिमं पद्यं क्वचिद्दृश्यते ।

परां शान्तिमुपागच्छ यथान्ये गुणशालिनः ।
अविचार्यास्त एवेह गोमायुशिशुधर्मकाः ॥ ११
ये स्वभावा महासत्त्वा नृणां सात्त्विकजन्मनाम् ।
तान्भजन्पुरुषो याति पाश्चात्योदारजन्मताम् ॥ १२
यानेव सेवते जन्तुरिह जातिगुणान्सदा ।
[१]अथान्यजातिजातोऽपि जातिं भजति तां क्षणात् १३
प्राक्तनानखिलान्भावान्यान्ति कर्मवशं गताः ।
पौरुषेणावजीयन्ते धराधरमहाकुलाः ॥ १४
धैर्येणाभ्युद्धरेद्बुद्धिं पङ्कान्मुग्धगवीमिव ।
तामसीं राजसीं चैव जातिमन्यामपि श्रितः ॥ १५
स्वविवेकवशाद्यान्ति सन्तः सात्त्विकजातिताम् ।
अतश्चित्तमणौ स्वच्छे यद्राघव नियोज्यते ॥ १६
तन्मयो विभवत्येवं तस्माद्भवति पौरुषम् ।
पौरुषेण प्रयत्नेन महार्हगुणशालिनः ॥ १७
मुमुक्षवो भवन्तीह पाश्चात्यशुभजातयः ।
न तदस्ति पृथिव्यां वा दिवि देवेषु वा क्वचित् ॥ १८
पौरुषेण प्रयत्नेन यन्नाप्नोति गुणान्वितः ।
ब्रह्मचर्येण धैर्येण वीर्यवैराग्यरंहसा ।
युक्त्या युक्तेन हि विना न प्राप्नोषि तदीहितम् ॥ १९

हितं महासत्त्वतयात्मतत्त्वं
विधाय बुद्ध्या भव वीतशोकः ।
तव क्रमेणैव ततो जनोऽयं
मुक्तो भविष्यत्यथ वीतशोकः ॥ २०

पाश्चात्यजन्मनि विवेकमहामहिम्ना
युक्ते त्वयि प्रसृतसर्वगुणाभिरामे ।
सत्त्वस्थकर्मणि पदं कुरु रामभद्र
मैषा करोतु भवसङ्गविमोहचिन्ता ॥ २१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते द्वात्रिंशत्साहस्र्यां संहितायां मोक्षोपायेषु स्थितिप्रकरणे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

गोमायुधर्मकाः स्वार्थकौशलेन परवञ्चकाः । शिशुधर्मका यथेष्टाचारिणो मूढाः ॥ ११ ॥ शुद्धसात्त्विकजन्मनां जीवन्मुक्तानां ये स्वभावाः स्वाभाविकाः शमदमादिगुणास्तान्भजन् अर्जयन्साधारणोऽपि पुरुषः क्रमात् ज्ञानं प्राप्य पाश्चात्योदारजन्मतां चरमजीवन्मुक्तशरीरं प्राप्नोतीत्यर्थः ॥ १२ ॥ तत्कुतस्तत्राह—**यानेवे**ति । उत्कृष्टजातिगुणसेवने उत्कृष्टजातौ जन्म लभते निकृष्टजातिगुणसेवने निकृष्टमिति नियमादित्यर्थः ॥ १३ ॥ **प्राक्तनानि**ति । 'यं यं वापि स्मरन्भावम्' इति न्यायादित्यर्थः । अवश्यं निकृष्टतमेनापि मोक्षायैव यत्नः कार्यः पौरुषादनुपरतस्य फलसिद्धेरवश्यंभावादित्याशयेनाह—**पौरुषेणे**ति । धराधरा राजानः पर्वताश्च तेषां महाकुलाः सेनावनानि च नीतिशास्त्रानुसारिपौरुषेण च्छेदनादिना चावजीयन्ते लोके ॥१४॥ अभ्युद्धरेद्विषयेभ्यो निवर्तयेत् । तामसीं रक्षःपिशाचशूद्रादिरूपां जातिं योनिं राजसीं क्षत्रियवैश्यादिरूपामन्यां सत्त्वतमोमिश्रं सर्पादिजातिमपि श्रितः प्राप्तः पुरुषः ॥ १५ ॥ उक्तमेव प्रपञ्चयति—**स्वविवेके**त्यादिना । चित्तमणौ चित्तस्फटिके । नियोज्यते आसज्यते ॥१६॥१७॥१८॥१९॥ उक्तं संक्षिप्योपसंहरति—**हितमि**ति । सर्वप्राणिनामात्यन्तिकदुःखोपशमोपलक्षितनिरतिशयानन्दरूपत्वादत्यन्तहितमिदमुपदिष्टमात्मतत्त्वं महासत्त्वतया विशुद्धसत्त्वगुणोपचयोपाये प्रणिधानवत्या बुद्ध्या विधाय आत्मभावेन स्थिरीकृत्य वीतशोको भवेत्युपदेश आशीश्च । तवोपदिष्टेन क्रमेणान्योऽप्ययमधिकारिजनो मुक्तो भविष्यतीत्यर्थः ॥ २० ॥ हे रामभद्र, त्वं विवेकमहामहिम्ना युक्ते प्रसृतैः पल्लवितैः सर्वैः शान्तिदान्त्यादिगुणैरभिरामेऽस्मिन्पाश्चात्यजन्मनि प्राप्ते सति सत्त्वस्थानां जीवन्मुक्तानां कर्मणि सप्तमभूमिकालक्षणे पदं स्थानं कुरु । एषा वैराग्यप्रकरणोपवर्णिता सर्वजनप्रसिद्धा च भवसङ्गविमोहचिन्ता त्वयि पदं स्थानं मा करोत्वित्यर्थः ॥२१॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे द्विषष्टितमः सर्गः ॥ ६२ ॥

१ अथान्त्यजातिजातोऽपि इति पाठः.

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरामचन्द्रसरस्वतीपूज्यपादशिष्यश्रीमद्गङ्गाधरेन्द्रसरस्वतीपूज्यपादशिष्येण श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणं समाप्तम् ॥

**समाप्तमिदं स्थितिप्रकरणम् ॥**

श्रीः ।

# योगवासिष्ठः ।



## श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशाख्यव्याख्यासंवलितः ।



## उपशममप्रकरणं पञ्चमम् ।

### प्रथमः सर्गः १

श्रीवसिष्ठ उवाच ।
अथ स्थितिप्रकरणादनन्तरमिदं शृणु ।
उपशमप्रकरणं ज्ञातं निर्वाणकारि यत् ॥ १
श्रीवाल्मीकिरुवाच ।
शरत्तारकिताकाशस्तिमितायां सुसंसदि ।
कथयत्येवमाह्लादि वसिष्ठे पावनं वचः ॥ २
श्रवणार्थित्वमौनस्थपार्थिवे संसदन्तरे ।
निर्वात इव निस्पन्दकमले कमलाकरे ॥ ३
विलासिनीषु संशान्तमदमोहबलासु च ।
शममन्तः प्रयान्तीषु चिरप्रव्रजितास्विव ॥ ४
कराम्भोरुहहंसेषु लीनेषु श्रवणादिव ।
मुक्तघुर्घुरवादेषु वायसेषु तराविव ॥ ५
नासाग्रपरिविश्रान्ततर्जन्यङ्गुलिकोटिषु ।
विचारयत्सु विज्ञानकलां तज्ज्ञेषु राजसु ॥ ६
रामे विकासमायाते प्रभात इव पङ्कजे ।
परित्यक्ततमःपीठे सूर्योदय इवाम्बरे ॥ ७
आकर्णयति वासिष्ठीर्गिरो दशरथे रसात् ।
कलापिनीव जीमूतनिर्ह्रादान्मुक्तवर्षणात् ॥ ८
आहृत्य सर्वभोगेभ्यो मनो मर्कटचञ्चलम् ।
श्रवणं प्रति यत्नेन सारेण मन्त्रिणि स्थिते ॥ ९

भुवनरचनपालनोपशान्तिप्रथितमहाविभवस्वभावपूर्णम् ।
निगमहृदयसाक्षि निष्प्रपञ्चं निजसुखबोधघनं शिवं प्रपद्ये ॥१॥

मध्याह्नशङ्खध्वनिना सभोत्थानमिहोच्यते ।
वसिष्ठस्याह्निकं रात्रौ विश्वामित्रसहस्थितिः ॥ १ ॥

उत्पत्तिप्रकरणे सर्वसृष्टिश्रुतितात्पर्योद्घाटनाय मनोधीनैव सर्वप्रपञ्चरचनेति दर्शितम् । स्थितिप्रकरणे च सर्वजगत्स्थितिप्रतिपादकश्रुतितात्पर्यप्रदर्शनाय मनःस्थित्यधीनैव सर्वप्रपञ्चस्थितिरिति दर्शितम् । इदानीं 'यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छत एतस्मिंस्तेजोमण्डल एकीभवन्ति' 'सुषुप्तिकाले सकले विलीने' 'यत्प्रयन्त्यभिसंविशन्ति' 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय' 'गताः कलाः पञ्चदश प्रतिष्ठाम्' 'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इत्यादीनां सुषुप्तिप्रलयसमाधिसाक्षात्कारविदेहकैवल्येषु प्रपञ्चोपशमाजीवस्य ब्रह्मस्वभावताप्राप्तिप्रतिपादनेन प्रत्यग्ब्रह्मैकरसाखण्डवस्तुलक्षकश्रुतीनामपि मनउपशमादेव सर्वप्रपञ्चोपशमेन स्वरूपप्रतिष्ठायां तात्पर्यमिति रहस्योद्घाटनायोपशमप्रकरणमारभमाणः पूर्वोत्तरप्रकरणयोः संगतिं दर्शयन् विषयप्रयोजने निर्दिश्य शिष्यमवधानयन्प्रतिजानीते—अथेति ।

अथ स्थितिप्रतिपादकश्रुतितात्पर्यवर्णनानन्तरमुपसंहारबोधकश्रुतितात्पर्यवर्णनस्यावसरसंगतिरित्यर्थः । **ज्ञातं निर्वाणकारी**ति । तथाच पूर्वप्रकरणप्रयोजनमेवास्यापीत्येककार्यकारितासंगतिरपि दर्शिता बोध्या ॥ १ ॥ शरत्तारकितेत्यादिकथासंदर्भः समयोचिताचारावश्यकत्वद्योतनार्थः । शरदि तारकितः संजाततारक आकाश इव स्तिमितायाम् । सर्वेषां सप्तम्यन्तपदानां मध्याह्नशङ्खानां स्वन उदभूदिति चतुर्दशे श्लोके संबन्धः ॥ २ ॥ श्रवणार्थित्वेन मौनस्थाः पार्थिवा यत्र । संसदन्तरे सभामध्ये ॥ ३ ॥ ४ ॥ संनिधानाद्विलासिनीनां कराम्भोरुहेषु हंसायमानेषु चामरेषु श्रवणाच्छ्रुतार्थे समाधिना लीनेष्विवेति निःस्पन्दत्वदर्शनादुत्प्रेक्षा । मुक्तघुर्घुरवादेषु त्यक्तकङ्कणकिङ्किणीरवेषु । वयांसीव वायसास्तेषु । तराविति सदस उपमा ॥५॥ तज्ज्ञेषु विचारज्ञेषु ॥ ६ ॥ तमसो भूमावेव घनत्वादुपरितनाम्बरपीठत्वेनोत्प्रेक्षा । यथा आचार्यागमने शिष्य उत्तिष्ठन् पीठं परित्यजति तद्वत्सूर्यस्योदये परित्यक्ततमःपीठे सतीत्यर्थः ॥ ७ ॥ **रसात्** प्रेमार्द्रभावात् । तस्योपमा मुक्तवर्षणादिति । मुक्तवर्षणप्रयुक्तार्द्रीभावादिति यावत् ॥ ८ ॥ यत्नेन आहृत्य परावर्त्य स्थिते

वसिष्ठोक्त्या परिज्ञातस्वात्मनीन्दुकलामले ।
लक्ष्मणे विलसल्लक्ष्ये शिक्षाबलविचक्षणे ॥ १०
शत्रुघ्ने शत्रुदलने चेतसा पूर्णतां गते ।
अलमानन्दमायाते राकाचन्द्रोपमे स्थिते ॥ ११
सुमित्रे मित्रतां याते मानसे दुःखशीलिते ।
विकासिहृदये जाते तत्काल इव पङ्कजे ॥ १२
तत्रस्थेषु तथान्येषु तदा मुनिषु राजसु ।
सुधौतचित्तरत्नेषु प्रोल्लसत्स्विव चेतसा ॥ १३
उदभूत्पूरयन्नाशाः कल्पाभ्रखमांसलः ।
अथ मध्याह्नशङ्खानामब्धिघोषसमः स्वनः ॥ १४
महता तेन शब्देन तिरोधानं मुनेर्गिरः ।
ययुर्जलदनादेन कोकिलध्वनयो यथा ॥ १५
मुनिरन्तरयांचक्रे स्वां वाचमथ संसदि ।
जितसारो गुणः केन महता समुदीर्यते ॥ १६
मुहूर्तमात्रं विश्रम्य श्रुत्वा मध्याह्ननिःस्वनम् ।
घने कोलाहले शान्ते रामं मुनिरुवाच ह ॥ १७
रामाद्यतनमेतावदाह्निकं कथितं मया ।
प्रातरन्यत्तु वक्ष्यामो वक्तव्यमरिमर्दन ॥ १८
इदं नियतितः प्राप्तं कर्तव्यं तद्द्विजन्मनाम् ।
मध्याह्नमुपपन्नं यत्कर्तव्यं नावसीदति ॥ १९
त्वमप्युत्तिष्ठ सुभग समस्ताचारसत्क्रियाम् ।
आचराचारचतुरस्नानदानार्चनादिकाम् ॥ २०
इत्युक्त्वा मुनिरुत्तस्थौ समं दशरथः प्रभुः ।
ससदाः सेन्दुरादित्य उदयाद्रितटादिव ॥ २१
तयोरुत्तिष्ठतोः सर्वा सभोत्थातुमकम्पत ।
मन्दवातपरामृष्टा नलिनीवालिलोचना ॥ २२
उत्तस्थौ सावतंसौघभृङ्गमण्डलमण्डिता ।
करिसेनेव सन्ध्याद्रावालोलकरपुष्करा ॥ २३
परस्पराङ्गसंघट्टचूर्णिताङ्गदमण्डली ।
रत्नपूर्णारुणाम्भोदसन्ध्यासमयसूचनी ॥ २४
पतदुत्तंसविभ्रान्तभृङ्गोपहितघुंघुमा ।
मुकुटोद्दामविद्योतशक्रचापीकृताम्बरा ॥ २५
कान्तालताहस्तदलचारुचामरमञ्जरी ।
वनलेखेव विक्षुब्धवरवारणमण्डला ॥ २६
कचत्कटकभारक्तीकृतान्योन्यततताम्बरा ।
वातव्याधूतपुष्पेव मन्दारवनमालिका ॥ २७
कर्पूरकणनीहाररचितामलवारिदा ।
शरद्दिक्कटमालेव प्रसृताशेषभूमिका ॥ २८
लोलमौलिमणिप्रान्तपाटलाम्बरकोटरा ।
संध्येवाफुल्लनीलाब्जा कार्यसंहारकारिणी ॥ २९
रत्नांशुसलिलापूरमुखपद्मनिरन्तरा ।
पद्मिनीवालिवलिता नूपुरारवसारसा ॥ ३०
संतता सा सभोत्तस्थौ भूभृच्छतसमाकुला ।
भूतसंततिसंभ्रान्ता सृष्टिर्नवमिवोदिता ॥ ३१
प्रणम्याथ नृपं भूपा निर्ययुर्नृपमन्दिरात् ।
शक्रचापीकृता रत्नैरम्बुधेरिव वीचयः ॥ ३२
सुमन्त्रो मन्त्रिणश्चैव वसिष्ठमथ भूमिपम् ।
प्रणम्य जग्मुः स्नानाय रसविज्ञानकोविदाः ॥ ३३
वामदेवादयश्चान्ये विश्वामित्रादयस्तथा ।
वसिष्ठं पुरतः कृत्वा तस्थुरावर्जनोन्मुखाः ॥ ३४
राजा दशरथस्तत्र पूजयित्वा मुनिव्रजम् ।
तद्विसृष्टो जगामाथ स्वकार्यार्थमरिन्दमः ॥ ३५

---

॥ ९ ॥ शिक्षाबलविचक्षणत्वादेव विलसद्धृदि स्फुरल्लक्ष्यं ब्रह्म यस्य तथाभूते ॥ १० ॥ अलं पूर्णमानन्दमायाते प्राप्ते ॥ ११ ॥ सुमित्रे मन्त्रिविशेषे दुःखशीलिते मानसे मित्रतां वश्यतां याते सति विकासिहृदये जाते । अम्बुजपक्षे आप्रातर्मानसे सरसि मनसि च दुःखेन शीलिते चिन्तिते शोभने मित्रे सूर्ये मित्रतामुदयेन प्रीतिकरतां याते सति तत्काले विकासिहृदये जाते ॥ १२ ॥ प्रोल्लसत्स्विव जातेष्विति यथायोगं विपरिणामेन सर्वत्रानुषज्यते ॥ १३ ॥ आशा दिशः । कल्पाभ्रख इव मांसलो बलवान् ॥ १४ ॥ मुनेर्वसिष्ठस्य ॥ १५ ॥ अन्तरयांचक्रे तिरोदधे उपसंजहारेति यावत् । जितोऽभिभूतः सारो जनाह्लादकांशो यस्य तथाविधो गुणः केन महता अभिज्ञेनाभ्युदीर्यते प्रकटीक्रियते ॥ १६ ॥ १७ ॥ अद्य निर्वृत्तमाह्निकम् । वक्ष्यामो वयमिति शेषः ॥ १८ ॥ मध्याह्नं मध्याह्ने यदुपपन्नं युक्तं द्विजन्मनां नियतितः प्राप्तं कर्तव्यं कर्म नावसीदतीति यत् तदिदं मयापि कर्तव्यमित्यन्वयः ॥ १९ ॥ २० ॥ मुनिना समं ससदाः सभासदंजनसहितो दशरथोऽप्युत्तस्थौ । सभाया अपि विशेषणम् ॥ २२ ॥ अत्रत्यमध्याह्नकाले अस्ताचले सूर्योदयकालः करिणामुत्थानयोग्य इत्याशयेन संध्याद्राविति । 'विन्ध्याद्रा'विति पाठे स्थानोपमा ॥ २३ ॥ यतो रत्नपूर्णा अतः साद्दश्यादरुणाम्भोदसंध्यासमयस्य सूचनी । स्मारिकेति यावत् ॥ २४ ॥ पतद्भिरुत्तंसविभ्रान्तैर्भृङ्गैराहितघुंघुमा । मुकुटानामुद्दामैर्नानामणिविद्योतैः शक्रचापीकृतमम्बरमाकाशं वस्त्रजातं वा यया सा ॥ २५ ॥ कान्तालक्षणानां लतानां हस्तलक्षणेषु दलेषु पल्लवेषु चारुचामरलक्षणा मञ्जर्यो यस्यां तथाविधा वनलेखेवेत्यर्थः ॥ २६ ॥ कचन्तीभिः कटकभाभिः रक्तीकृतान्यन्योन्यमाकर्षणात्ततानि विस्तृतान्यम्बराणि यस्याम् ॥ २७ ॥ कर्पूरकणलक्षणैस्तत्सदृशैश्च नीहारैर्हिमकणैरुड्डीयमानै रचिता अमलाः शुभ्रा वारिदा यया । अतएव नीहारकाशपुष्पादिभिर्व्याप्ताशेषभूमिका शरद्दिक्कटमालेव स्थिता ॥ २८ ॥ कार्याणां दिनकृत्यानामुपसंहारकारिणी ॥ २९ ॥ ३० ॥ भूभृतां राज्ञां पर्वतानां च शतैः ॥ ३१ ॥ ३२ ॥ रसे ब्रह्मरसे जले च विहारविज्ञाने कोविदाः ॥ ३३ ॥ आवर्जनमनुज्ञा तदुन्मुखास्तत्प्रतीक्षाः ॥ ३४ ॥ ३५ ॥

वनं वनास्पदा जग्मुर्व्योम व्योमनिवासिनः ।
नगरं नागराश्चैव प्रातरागमनाय ते ॥ ३६
महीपतिवसिष्ठाभ्यां प्रणयात्प्रार्थितः प्रभुः ।
वसिष्ठसद्मनि निशां विश्वामित्रोऽप्यवाहयत् ॥ ३७
वसिष्ठः सह विप्रेन्द्रैः पार्थिवैर्मुनिभिस्तथा ।
उपास्यमानो रामाद्यैः सर्वैर्दशरथात्मजैः ॥ ३८
जगाम स्वाश्रमं श्रीमान्सर्वलोकनमस्कृतः ।
अनुयातः सुरौघेन ब्रह्मलोकमिवाब्जजः ॥ ३९
तस्मात्प्रदेशाद्रामादीन्पुनर्दशरथात्मजान् ।
सर्वान्विसर्जयामास पादोपान्ते नतानसौ ॥ ४०
नभश्चरान्धरणिचरानधश्चरा-
न्विसृज्य संस्तुतगुणगोचरांश्च तान् ।
यथाक्रमं स्वगृहमुदारसत्त्ववां-
श्चकार तां द्विजजनवासरक्रियाम् ॥ ४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो० उपशमप्रकरणे आह्निकवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः २

श्रीवाल्मीकिरुवाच ।

ते समेत्य गृहं गत्वा राजपुत्राः शशित्विषः ।
चक्रुः सर्वमशेषेण स्वसद्मसु दिनक्रमम् ॥ १
वसिष्ठो राघवश्चैव राजानो मुनयो द्विजाः ।
इति चक्रुः स्वकार्याणि तथा स्वगृहवीथिषु ॥ २
सस्नुः कमलकह्लारकुमुदोत्पलहारिषु ।
जलाशयेषु चक्राह्वहंससारसराजिषु ॥ ३
गोभूतिलहिरण्यानि शयनान्यासनानि च ।
ददुर्दानानि विप्रेभ्यो भाजनान्यंशुकानि च ॥ ४
हेमरत्नविचित्रेषु स्वेषु चामरसद्मसु ।
आनर्चुरच्युतेशानहुताशार्कादिकान्सुरान् ॥ ५
पुत्रपौत्रसुहृद्भृत्यबन्धुमित्रगणैः सह ।
तत आस्वादयामासुर्भोजनान्युचितानि वै ॥ ६
एतस्मिन्समये चास्मिन्नगरे दिवसोऽभवत् ।
तनुरष्टाङ्गशेषत्वाद्दृष्टो न च मनोहरः ॥ ७
सायन्तनदिनान्तं ते तत्कालोचितचेष्टया ।
अनयन्नंशुभिः सार्धं यावदस्तं ययौ रविः ॥ ८
संध्यां ववन्दिरे सुष्टु जेपुश्चैवाघमर्षणम् ।
पेठुः स्तोत्राणि पुण्यानि जगुर्गाथा मनोहराः ॥ ९
ततश्चाभ्युदिता श्यामा कामिनीशोकहारिणी ।
क्षीरोदादिव माहेन्द्री चन्द्रावश्यायदायिनी ॥ १०
शनैरास्तीर्णपुष्पेषु कीर्णकर्पूरमुष्टिषु ।
दीर्घेन्दुबिम्बरम्येषु तस्थुस्तल्पेषु राघवाः ॥ ११
अथ रामादृतेऽन्येषां तत्र तद्व्यवहारिणी ।
व्यतीयाय शनैः श्यामा मुहूर्त इव शोभना ॥ १२
तस्थौ रामस्तु तामेव वासिष्ठीं वचनावलीम् ।
चिन्तयन्मधुरोदारां करिणीं कलभो यथा ॥ १३
किमिदं नाम संसारभ्रमणं किमिमे जनाः ।
भूतानि च विचित्राणि किमायान्ति प्रयान्ति किं ॥ १४
मनसः कीदृशं रूपं कथं चैतत्प्रशाम्यति ।
मायेयं सा किमुत्था स्यात्कथं चैव निवर्तते ॥ १५
निवृत्तयानया कः स्याद्गुणो दोषोऽथ वा भवेत् ।
कथमात्मनि चैवायं तते संकोच आगतः ॥ १६
किमुक्तं स्याद्भगवता मुनिना मनसः क्षये ।
किं चेन्द्रियजये प्रोक्तं किमुक्तमथवात्मनि ॥ १७
जीवश्चित्तं मनो मायेत्येवमादिभिराततैः ।
रूपैरात्मैव संसारं तनोतीममसन्मयम् ॥ १८
एभिरेवं मनोमात्रतन्तुबद्धैः क्षयं गतैः ।

वनास्पदा वानप्रस्थाः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ तस्मादाश्रमप्रदेशात् ॥ ४० ॥ अधश्चरान्नागान् । संस्तुतानां प्रशस्तानां गुणानां गोचरानाश्रयानिति यावत् । यथाक्रमं विसृज्य स्वगृहं प्रविश्येति शेषः । द्विजजनानां वासरोचितां पञ्चयज्ञक्रियां चकारेत्यर्थः ॥ ४१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे आह्निकवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

इहाह्निकक्रिया रात्रौ रामस्य श्रुतचिन्तनम् ।
बुद्धेः श्रुतार्थे स्थैर्यार्थं प्रार्थना चोपवर्ण्यते ॥ १ ॥

दिनक्रममाह्निकम् ॥ १ ॥ इति वक्ष्यमाणप्रकारेण चक्रुः । स्वगृहेषु वीथिषु तथा बहिश्च यान्युचितानीत्यर्थः ॥२॥३॥४॥ अमरसद्मसु देवालयेषु । स्वेषु स्वगृहेषु च ॥५॥ ६ ॥ दिवसस्तनुः सूक्ष्मोऽभवत् । अष्टाङ्गशेषत्वादष्टमभागशेषत्वात् ॥ ७ ॥ तत्कालोचितचेष्टया पुराणधर्मशास्त्रावलोकनादिरूपया ॥८॥९॥ तत इत्युपात्तस्य तदुत्तरकालस्य क्षीरोदः कामिन्या ऐन्द्री दिक् कान्तसंगमप्रयुक्तशोकहरणानन्दस्य चन्द्रसंगमप्रयुक्तस्तापोपशमनोऽवश्याय इति क्रमेणोपमानानि ॥ १० ॥ दीर्घीभूतमिन्दुबिम्बमिव रम्येषु ॥ ११ ॥ तद्व्यवहारिणी तत्कालोचितविषयभोगनिद्रादिव्यवहारवती ॥ १२ ॥ कलभः करिशावः करिणीं मातरं यथा ॥ १३ ॥ चिन्ताप्रकारमेव प्रपञ्चयति—**किमित्यादिना** ॥ १४ ॥ १५ ॥ सर्वभोग्यभोक्तृभोगनिवृत्तेर्दोषः पुरुषार्थविघातो भवेत् । तते आकाशादपि विस्तीर्णे ॥ १६ ॥ किं साधनं फलं चोक्तं स्यात् । आत्मनि विज्ञाते इति शेषः ॥१७॥ ॥ १८ ॥ दुःखोपशान्तिः सिध्यतीति शेषः । एतानि मनो

दुःखोपशान्तिरेतानि सुचिकित्स्यानि नः कथम् ॥ १९
भोगाभ्रमालावलयां धीवलाकामिमां कथम् ।
पृथक्करोमि पयसो धारां हंस इवाम्भसः ॥ २०
भोगास्त्यक्तुं न शक्यन्ते तत्त्यागेन विना वयम् ।
प्रभवामो न विपदामहो संकटमागतम् ॥ २१
मनोमात्रमिदं प्राप्यं तच्चैवेदं प्रयोजनम् ।
संपन्नं नो गिरिगुरु मौर्ख्याद्यक्षः शिशोरिव ॥ २२
परमां शान्तिमागत्य गतसंसारसंभ्रमा ।
बालेव लब्धदयिता कंचित्प्राप्स्यति नो मतिः ॥ २३
कदोपशान्तसंरम्भं विगताशेषकौतुकम् ।
अपापमात्मविश्रान्तं[1] मम स्यात्पावनं मनः ॥ २४
कलाकलापसंपूर्णाच्छशाङ्कादपि शीतले ।
पदे सुरूढं विश्रम्य भ्रमिष्यासि कदा जगत् ॥ २५
कलनापेलवं रूपमुत्सृज्यालीनमात्मनि ।
कदैष्यति मनः शान्तिमम्भसीव तरङ्गकः ॥ २६
तृष्णातरङ्गाकुलितमाशामकरमालिनम् ।
कदा संसारजलधिं तीर्त्वा स्यामहमज्वरः ॥ २७
कदोपशमशुद्धासु पदवीषु विचक्षणाः ।
मुमुक्षूणां मिथस्त्यागो निःशोकं समदर्शनाः ॥ २८
संतापितसमस्ताङ्गः सर्वधातुभयंकरः ।
संसृतिज्वर आदीर्घः कदा नाशमुपैष्यति ॥ २९
निर्वातदीपलेखेव कदा चित्तं गतव्यथम् ।
शममेष्यति हे बुद्धे सुप्रकाशघनान्तरम् ॥ ३०
कदेन्द्रियाणि दुःखेभ्यः संतरिष्यन्ति हेलया ।
दुरीहादग्धदेहानि गरुत्मन्त इवार्णवान् ॥ ३१
अयं सोऽहं रुदन्मूढ इति व्यर्थाहितो भ्रमः ।
शरदीवासितो मेघः कदा नाशमुपैष्यति ॥ ३२
मन्दारवनलेखासु या मतिः सा तृणायते ।
याचे तत्पदमात्मीयं संप्राप्स्यामः कदा वयम् ॥ ३३
वीतरागजनप्रोक्ता निर्मला ज्ञानदृष्टयः ।
कच्चित्पदं त्वयि मनः करिष्यन्तीति मे वद ॥ ३४
हा तात मातः पुत्रेति गिरामासामहं पुनः ।
भाजनं चित्त माभूवं भोजनं दुःखभोगिनाम् ॥ ३५
हे बुद्धे भगिनि भ्रातुरर्थितां पूरयाशु मे ।
आवयोर्दुःखमोक्षाय विचारय मुनेर्गिरः ॥ ३६
त्वां पादपतितः प्रीत्या याचे सति सुते मते ।

---

मायादिरूपाणि ॥ १९ ॥ भुज्यन्त इति भोगा विषयास्त एव संस्कारात्मना घनीभूय चित्ताकाशावरकत्वाद्दुःखसहस्रधारावर्षित्वाच्चाभ्राणि तान्यनुसृत्य मालेव वलयति वेष्टयतीति मालावलयां धीवृत्तिलक्षणां बलाकां बकीं कथं पृथक्करोमि । विवेकेन परावर्तयामीति यावत् । पयसो दुग्धस्य धारां भागमिति यावत् ॥ २० ॥ ननु किं विमर्शेन त्यज्यन्तां भोगास्तत्राह—**भोगा** इति । विपदां प्रतीकारे इति शेषः । सर्वात्मना भोगत्यागे जीवनासिद्धेस्तदर्थमल्पस्यापि भोगस्योपादाने वासनावृद्धेः संकटमागतमित्यर्थः ॥२१॥ संकटान्तरमप्याह—**मनोमात्र**मिति । इदं प्राप्यमवश्यप्राप्तव्यमात्मतत्त्वं मन एव मीयते प्रमीयतेऽनयेति मात्रा प्रमाणं यस्य तथाविधम् । तच्च मनो नोऽस्माकमिदं बाह्यमेव विषयजातमेव प्रयुज्यते येन तत्प्रयोजनं निष्पत्तिहेतुभूतं पुरुषार्थभूतं च यस्य तथाविधं सन्मौर्ख्याद्गिरितोऽपि गुरु दुरुद्धरं संपन्नम् । यथा शिशोर्मौर्ख्यात्कल्पितो यक्षः । तथाच विषयाधीनसिद्धिकं मनस्तेभ्यो निवर्तयितुमेवाशक्यं निःस्वरूपतापत्तेस्तदनिवृत्तौ तु न तत्त्वसाक्षात्कारे प्रमाणं तत्कर्तुं शक्यमिति संकटान्तरमित्यर्थः ॥२२॥ यदि तु निर्वासनं सर्वविषयोपशमेऽपि ब्रह्माकारतामात्रावलम्बनेन मनोऽवस्थापयितुं शक्येत तदा स्यादभिलषितसिद्धिरिति चिन्तयन्नाह—**परमा**मिति । लब्धो दयितः कान्तो यया तथाविधा बाला तरुणीव लब्धब्रह्माकारा सती कंचिदन्यं नो प्राप्स्यति । न स्मरिष्यतीत्यर्थः ॥ २३ ॥ तां दशां प्राप्तुमुत्कण्ठते—**कदे**त्यादिना । संरम्भः क्रोधः । कौतुकं कामः । पापग्रहणं पुण्यतदुभयकार्याणामप्युपलक्षणम् ॥ २४ ॥ सप्तमभूमिकापर्यन्तं सुरूढं यथा स्यात्तथा विश्रम्य । जीवन्मुक्तिसुखं प्राप्येति यावत् ॥ २५ ॥ आत्मनि आलीनं तिरोहितं सत् ॥२६॥२७॥ मुमुक्षूणां प्राप्यासु पदवीषु पदेषु ॥२८॥ अङ्गानि स्त्रीपुत्रपश्वादीनि हस्तपादादीनि च धातवः स्वर्णरूप्यादयस्त्वगसृङ्मांसादयश्च तेभ्यः क्षीयमाणेभ्यो भयंकरः ॥ २९ ॥ ३० ॥ विषयाभिमुखाकर्षणलक्षणदुरीहाभिर्दुश्चेष्टाभिर्दग्धो देहो यैस्तथाविधानीन्द्रियाणि विषयहेलया कदा दुःखानि संतरिष्यन्तीत्यर्थः । अथवा इन्द्रियाणि कर्तृणि । दुरीहा दुष्टविषयाभिलाषस्तत्प्रयुक्तानि दग्धदेहानि भाविनानाशरीराणि कर्मभूतानि विषयहेलया दुःखेभ्यः दुःखानि परिहर्तुं कदा तरिष्यन्तीति योजना । दुःखेभ्य इति 'सुखदुःखतत्क्रियायाम्' इति चौरादिकाद्दुःखधातोर्भावे घञि 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥ ३१ ॥ पशुपुत्रधनान्नपानादीनामलाभवियोगादिना रुदति मूढे मयि रोदननिमित्तभूतोऽयं देह एव स प्रसिद्ध आत्मा अहं चेति व्यर्थं पूर्वपूर्वदेहवासनाकामकर्मपरम्पराहितो भ्रमः प्रबोधवैमल्ये शरदि प्रवृत्तायां वार्षिकोऽसितो मेघ इव कदा नाशमुपैष्यतीत्यर्थः ॥ ३२ ॥ उत्कटया मुमुक्षया स्वर्गोऽपि स्वस्य तृणवद्भातीत्याह—**मन्दारे**ति । मतिः सुखानुभवः । अहं याचे वाञ्छामीति यावत् । वयमिति 'अस्मदो द्वयोश्च' इति बहुवचनम् ॥ ३३ ॥ इदानीं मनआदीन्विवेकग्रहणाय प्रार्थयते—**वीतरागे**त्यादिना । हे मनः, त्वयि पदं स्थानं कच्चित्करिष्यन्ति ॥ ३४ ॥ अहं दुःखलक्षणानां भोगिनामजगराणां भोजनं भक्ष्यं सन्नासामाक्रन्दगिरां पुनर्भाजनं माभूवमित्यन्वयः ॥३५॥ जीवबुद्ध्योरेकाविद्योदरोद्भूतत्वाद्भगिनीति संबोधनम् । मुनेर्वसिष्ठस्य ॥३६॥ सति साध्वि । शास्त्रसज्जनप्रसादेन पश्चादुत्पन्नत्वात्सुते पुत्रि । मते सन्मते । तेन मत्प्रार्थनेन । भवोच्छेदो-

---

[1] अपापपदविश्रान्तं इति पाठः.

तेन भव्ये भवोच्छेदभूतये सुस्थिरा भव ॥ ३७
वसिष्ठमुनिना प्रोक्ता विरक्ताः प्रथमं गिरः ।
ततो मुमुक्षोराचार उत्पत्तीनां क्रमस्ततः ॥ ३८
ततः स्थितिप्रकरणं समं दृष्टान्तसुन्दरम् ।
विज्ञानगर्भसुलभं यथावत्स्मर हे मते ॥ ३९

कृतमति शतशो विचारितं य-
द्यदि तदुपैति न मानसस्य बुद्धिः ।
भवति तदफलं शरद्घनाभं
सततमतो मतिरेव कार्यसारः ॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे उपदेशानुवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ३

श्रीवाल्मीकिरुवाच ।

तस्यैवंप्रायया तत्र ततयोदारचिन्तया ।
सा व्यतीयाय रजनी पद्मस्येवार्ककाङ्क्षिणः ॥ १
किंचित्तमःकडारासु किंचिदप्यरुणासु च ।
नभोविरलतारासु दिक्षु संमार्जितास्विव ॥ २
प्रभाततूर्यघोषेण सममिन्दुसमाननः ।
उत्तस्थौ राघवः श्रीमान्पद्मः पद्माकरादिव ॥ ३
प्रातःस्नानविधिं कृत्वा संपाद्य भ्रातृभिः पुनः ।
प्रहिताल्पपरीवारो वसिष्ठसदनं ययौ ॥ ४
समाधिसंस्थमेकान्ते मुनिमात्मपरायणम् ।
दूर एवाननामासौ रामो विनतकन्धरः ॥ ५
तं प्रणम्याङ्गणे तस्थुस्तस्मिंस्ते विनयान्विताः ।
यावत्तमः समालूनं व्यक्तं दिङ्मुखमण्डलम् ॥ ६
राजानो राजपुत्राश्च ऋषयो ब्राह्मणास्ततः ।
आययुः सदनं मौनं ब्रह्मलोकमिवामराः ॥ ७
तद्वसिष्ठस्य सदनं बभूव जनसंकुलम् ।
हस्त्यश्वरथसंबाधं पार्थिवाचारशोभनम् ॥ ८
क्षणाद्वसिष्ठो भगवान्विरराम समाधितः ।
आचारेणोपचारेण जग्राह प्रणतं जनम् ॥ ९
तथानुयातो मुनिभिर्विश्वामित्रान्वितो मुनिः ।
आरुरोह रथं श्रीमान्सहसाब्जमिवाब्जजः ॥ १०
ययौ गृहं दाशरथं सैन्येन महता वृतः ।
ब्रह्मेव शक्रनगरं समस्तसुरमालितः ॥ ११
विवेशावनतां तत्र रम्यां दाशरथीं सभाम् ।
हंसयूथानुवलितो राजहंस इवाब्जिनीम् ॥ १२
त्रीणि तत्र पदान्याशु तदा दशरथो नृपः ।
निर्जगाम महावीरः सिंहासनसमुत्थितः ॥ १३
विविशुस्तत्र ते सर्वे नृपा दशरथादयः ।
वसिष्ठाद्याश्च मुनयो ऋषयो ब्राह्मणास्तथा ॥ १४
मन्त्रिणश्च सुमन्त्राद्याः सौम्याद्याश्च विपश्चितः ।
राजपुत्राश्च रामाद्या मन्त्रिपुत्राः शुभादयः ॥ १५
अमात्याद्याः प्रकृतयः सुहोत्राद्याश्च नागराः ।
मालवाद्यास्तथा भृत्याः पौराद्याश्चैव मालिनः ॥ १६
अथ तेषूपविष्टेषु स्वेषु स्वेष्वासनेषु च ।
सर्वेष्वेवोपविष्टेषु वसिष्ठोन्मुखदृष्टिषु ॥ १७

---

पलक्षितपूर्णतासंपदे ॥ ३७ ॥ एवं प्रार्थनया स्थिरीकृतां मतिं वैराग्यप्रकरणादिप्रकरणचतुष्टयार्थस्मरणे क्रमान्नियुङ्क्ते—**वसिष्ठेति**। प्रोक्ता मन्मुखेन वादिताः स्वयंप्रोक्ताश्च स्थितिप्रकरणान्ता गिरः ॥ ३८ ॥ विज्ञानगर्भं सुलभं सरलं च । विज्ञानगर्भैरधिकारिभिराख्यानैर्वा सुलभं सुबोधमिति वा ॥ ३९ ॥ ननु मनसः प्राक्प्रार्थितत्वात्तत एव प्रकरणचतुष्टयार्थावधारणसिद्धेः किमर्थं तद्व्यतिरेकेण पुनर्मतिः प्रार्थ्यते तत्राह—**कृतमतीति** । मानसस्य मनसः कृतमतिनिपुणं यथा स्यात्तथा शतशो यद्वस्तु विचारितं भवति तद्बुद्धिरध्यवसानमतिर्यदि नोपैति नाङ्गीकरोति तर्हि तत्तथा विचारितमप्यफलं शरद्घनवन्नश्यत्येव न स्थिरीभवतीत्यर्थः । अतः श्रवणेन विचारितेऽपि तत्त्वे मतिर्मननकृताध्यवसायबुद्धिरेव सततं कार्ये कर्तव्यार्थविषये सारो मुख्यो भवतीति मननाय पृथक् तत्प्रार्थनं युक्तमेवेत्यर्थः ॥ ४० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उपदेशानुवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

उषःस्नानगृहायातरामप्रभृतिभिः सह ।
वसिष्ठस्य सभायानं प्रस्तावश्चात्र कीर्त्यते ॥ १ ॥

स्य रामस्य । एवंप्रायया उक्तप्रकारया । ततया विस्तृतयता चिन्तया ॥ १ ॥ तमोभिः कडारासु कपिशवर्णासु ॥ २ ॥ ३ ॥ संपाद्य निर्वर्त्य संध्यावन्दनादिकमित्यौचित्याद्गम्यते । भ्रातृभिः प्रहितः प्रेषितः अल्पः परीवारः परिजनो यस्य । भ्रातृभिः सह प्रहितः आप्ततमोऽल्पः परीवारो यस्येति वा ॥ ४ ॥ **समाधिसंस्थमिति** । पूर्वमेव स्नात्वा प्रातःकृत्यं निर्वर्त्य समाधिसंस्थमिति गम्यते ॥ ५ ॥ ते रामादयो यावत्तमः सम्यगालूनं छिन्नं भवति तावत्तस्थुः ॥ ६ ॥ मौनं निःशब्दं यथा स्यात्तथा ॥ ७ ॥ पार्थिवोचिताचारेऽपि पार्थिवसदनमिव शोभनं शोभमानम् ॥ ८ ॥ विनयाद्याचारेण प्रियवचनाद्युपचारेण ॥ ९ ॥ १० ॥ ॥ ११ ॥ अवनतां प्रणम्रजनाम् ॥ १२ ॥ निर्जगाम अभिजगाम ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ तेषु मुनिनृपमन्त्रिप्रभृतिषु प्रथममुपविष्टेषु सत्सु पश्चादन्येष्वपि सर्वेषूपविष्टेष्वित्यर्थः । सर्वेष्वेवेत्यादीनां सर्गसमाप्तिपर्यन्तं सर्वेषां सप्तम्यन्तानामुत्तर-

सभाकलकले शान्ते मौनसंस्थेषु बन्दिषु ।
वृत्तासु स्थितिवार्तासु सौम्ये तस्मिन्सभान्तरे ॥ १८
स्फुरत्पवनमालासु विशत्स्वम्भोजकोटरात् ।
परागेषु विलोलेषु मुक्तादामसु चञ्चलम् ॥ १९
बृहत्कुसुमदोलाभ्यः प्रसृताभ्यः समंततः ।
वाति मांसलमामोदमादाय मधुरानिले ॥ २०
वातायनेषु मृदुषु कुसुमाकीर्णभूमिषु ।
पर्यङ्केषूपविष्टासु पश्यन्तीषु पुरंध्रिषु ॥ २१
जालागतार्ककरलोलविलोचनासु
रत्नप्रभानिकरपिङ्गलकोमलासु ।
संत्यक्तचापललवं चपलासु तासु
मौनस्थितासु सितचामरधारिणीषु ॥ २२
मुक्ताफलप्रतिफलप्रतिमार्करश्मि-
रागोदराखजिरभूमिषु पुष्पकौघम् ।
नासादयत्यभिनवातपबिम्बबुद्ध्या
भ्रान्ते भ्रमत्यलिकुले नभसीव मेघे ॥ २३
पुण्यैर्वसिष्ठवदनप्रसृतं श्रुतं य-
त्सत्संततिप्रसृतविस्मयमार्यलोके ।
सत्संगमे मृदुपदाक्षरमुग्धवाक्य-
मन्योन्यमीप्सितमनल्पगुणाभिरामम् ॥ २४
दिग्भ्यः पुराच्च गगनाच्च वनाच्च सिद्ध-
विद्याधरार्यमुनिविप्रगणे वसिष्ठम् ।
मौनप्रणाममभितः प्रविशत्यशब्दं
सोपांशु गौरववता सह जातवाक्ये ॥ २५
उन्निद्रकोकनदकोमलकोशकृष्ट-
मग्नालिजालमकरन्दसुवर्णरागैः ।
आपिङ्गले मरुति वाति विलोलघण्टा-
टांकारगीतविनिपीतनिशान्तगीते ॥ २६
अगुरुतगरधूमे चन्दनामोदमिश्रे
सरसकुसुमदामोद्दामगन्धाङ्किताभ्रे ।
सरति सति वितानाम्भोरुहामोदलेशै-
श्चलकुसुमरजोङ्के शब्दविज्ञातभृङ्गम् ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे सभासंस्थानवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ४

श्रीवाल्मीकिरुवाच ।
मेघगम्भीरया वाचा विश्रब्धपदसुन्दरम् ।
इदं दशरथो वाक्यमुवाच मुनिनायकम् ॥ १
भगवन्व्यस्तनेन त्वं वाक्यसंदर्भजन्मना ।

सर्गस्थ 'इदं दशरथो वाक्यमुवाचे'त्यत्र संबन्धः ॥ १७ ॥ सभायाः कलकले कोलाहले । स्थितिवार्तासु परस्परं रात्रिसुखावस्थितिप्रश्नप्रतिवचनवार्तासु वृत्तासु सतीषु ॥ १८ ॥ अम्भोजकोटरान्निर्गत्य सभां विशत्स्विति शेषः । अतएवाम्भोजानां परागेषु मुक्तादामसु चञ्चलं यथा स्यात्तथा विलोलेषु लम्पटेषु ॥ १९ ॥ २० ॥ मृदुषु पर्यङ्केषु ॥ २१ ॥ 'जालागतैरर्ककरैरवलोकनप्रतिघाताल्लोलानि विलोचनानि यासाम् । रत्नप्रभानिकरैः पिङ्गलासु कोमलासु सुकुमारीषु तासु प्रागुक्तासु सितचामरधारिणीषु संत्यक्तचापललवं यथा स्यात्तथा मौनस्थितासु ॥ २२ ॥ नानारत्नखचिताखजिरभूमिषु मुक्ताफलानां प्रतिफलानि प्रतिच्छायास्तत्प्रतिमा अर्करश्मिरागा उदरे यासां तथाविधासु नानापुष्पाकारचित्रासु जातासु अभिनवातपबिम्बा एवेमे इति भ्रान्तिबुद्ध्या अलिकुले पुष्पकौघं विकीर्णपुष्पसमूहं नासादयति अलभमाने अतएव भूम्यस्पर्शान्नभसि मेघ इव भ्रमति सति ॥ २३ ॥ तस्मिन्सत्संगमे सतां समाजे आर्यलोके बहुमतजने प्राक्संचितैः पुण्यैर्यद्वसिष्ठवदनप्रसृतं वचनं श्रुतं तस्य संतत्या हृदि विस्तारेण प्रसृतविस्मयमुद्भूताश्चर्यं यथा स्यात्तथा अन्योन्यमीप्सितमस्मितमनल्पगुणाभिरामं मृदुपदाक्षरमुग्धवाक्यं भाषमाणे सतीति शेषः ॥ २४ ॥ वनाच्च समागते इति शेषः । विद्याधराणामार्यमुनीनामन्येषां च विप्राणां गणे वसिष्ठमभितो मौनप्रणामं मौनेन प्रणम्य अशब्दं प्रविशत्यस्मिन् यथा स्यात्तथा प्रविशति सति । ततो गौरववता गरीयसा अवश्यसंभाष्येण सह सोपांशु अतिमन्दस्वरं कर्णसन्निधौ जातवाक्ये सति । वसिष्ठमभित इति 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति षष्ठ्यर्थे द्वितीया ॥ २५ ॥ उन्निद्राणां कोकनदानां रक्तकमलानां कोमलेभ्यः कोशेभ्यः कृष्टानां प्राक्तदन्तर्मग्नानामलिजालानां मकरन्दानां सुवर्णानां परागाणां च रागै रञ्जनैरापिङ्गले ईषत्पिङ्गलवर्णे मरुता स्वाभिमर्शाद्विलोलानां गृहप्रान्तघण्टानां टांकारगीतैर्विनिपीतान्यभिभूतानि निशान्तानां गृहाणां गीतानि येन तथाविधे मरुति वाति सति । घण्टाजिह्वाग्रे पिप्पलपत्राकाररचनान्मन्दवातैरपि गृहपटलघण्टावलिध्वननं दक्षिणदेशे नेपाले च प्रसिद्धम् ॥ २६ ॥ चन्दनामोदैर्मिश्रे चलकुसुमरजोभिरङ्कत इत्यङ्कस्तथाविधे अतएव सरसानां कुसुमदाम्नामुद्दामैर्गन्धैरङ्कितानि सुरभितान्यभ्राणि येन तथाविधे अगुरुतगरनिर्यासधूमे तन्नीलिम्ना तिरोहितवर्णत्वाच्छब्दैरेव विज्ञाता नतु साक्षाद्दृष्टा भृङ्गा यस्मिन्कर्मणि तद्यथा स्यात्तथा वितानबद्धानामम्भोरुहाणामामोदलेशैः सह सरति ऊर्ध्वं प्रवहति सतीत्यर्थः ॥ २७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सभासंस्थानवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

राज्ञा वसिष्ठवाक्यानां प्रशंसा मुनिवाक्यतः ।
रामेण चिन्तितार्थानामनुवादश्च वर्ण्यते ॥ १ ॥

विश्रब्धैर्निःश्वासातिशयप्रकाशकैः पदैः सुन्दरम् ॥ १ ॥ व्यस्त-

कच्चिन्मुक्तोऽसि खेदेन तपःकार्श्यातिशायिना ॥ २
ह्यस्तनोक्तो य आनन्दी विविक्तो वचसां गणः ।
अमृतावर्षणेनेव तेनैवाश्वासिता वयम् ॥ ३
चन्द्रांशव इवोत्सार्य तमांस्यमृतनिर्मलाः ।
अन्तःशीतलयन्त्येता महताममला गिरः ॥ ४
अपूर्वाह्लाददायिन्य उच्चैस्तरपदाश्रयाः ।
अतिमोहापहारिण्यः सूक्तयो हि महीयसाम् ॥ ५
आत्मरत्नावलीकैकदीपिका सत्त्वात्मिका ।
यस्माद्युक्तिलतोदेति स वन्द्यः सुजनद्रुमः ॥ ६
दुरीहितं दुर्विहितं सर्वं सज्जनसूक्तयः ।
प्रमार्जयन्ति शीतांशोस्तमःकाण्डमिवाङ्क्रयः ॥ ७
तृष्णालोभादयोऽस्माकं संसारनिगडा मुने ।
तवोक्त्या तनुतां याताः शरदीवासिताम्बुदाः ॥ ८
संप्रवृत्ता वयं द्रष्टुमात्मानमपकल्मषम् ।
रसाञ्जनानीतदृशो जात्यन्धा इव काञ्चनम् ॥ ९
संसारवासनानाम्नी मिहिका हृदयाम्बरे ।
प्रवृत्ता तनुतां गन्तुं त्वदुक्तिशरदेव नः ॥ १०
मुने मन्दारमञ्जर्यस्तरङ्गा वामृताम्भसः ।
न तथा ह्लादयन्त्यन्तर्यथोदारधियां गिरः ॥ ११
यद्यद्राघव संयाति महाजनसपर्यया ।
दिनं तदिह सालोकं शेषास्त्वन्धा दिनालयः ॥ १२
राम राजीवपत्राक्ष प्रकृतार्थमिहाव्ययम् ।
मुनिमाबोधय पुनः प्रसादे समवस्थितम् ॥ १३
इत्युक्तो भूभृता तत्र रामाभिमुखमास्थितः ।
उवाचेदमुदारात्मा वसिष्ठो भगवान्मुनिः ॥ १४

श्रीवसिष्ठ उवाच ।

राघव स्वकुलैकेन्दो यन्मयोक्तं महामते ।
कच्चित्स्मरसि वाक्यार्थं पूर्वापरविचारितम् ॥ १५
उत्पत्तीनां विचित्राणां सत्त्वादिगुणभेदतः ।
कच्चित्स्मरसि सर्वासां विभागमरिमर्दन ॥ १६
कश्चित्सर्वमसर्वं च सदसच्च सदोदितम् ।
रूपं स्मरसि वेत्स्येव विविक्तं परमात्मनः ॥ १७
यथेदमुदितं विश्वं विश्वेशादेव चेश्वरात् ।
कच्चित्स्मरसि तत्साधो साधुवादैकभाजन ॥ १८
रूपं कच्चिदविद्याया बलाद्धङ्कुरमाततम् ।
अनन्तमन्तवच्चैव सम्यक्स्मरसि सन्मते ॥ १९
चित्तमेव नरो नान्यदिति यत्प्रतिपादितम् ।
लक्षणादिविचारेण कच्चित्स्मरसि साधु तत् ॥ २०
वाक्यार्थश्चाखिलः कच्चित्त्वया राम विचारितः ।
ह्यस्तनस्य विचारस्य रात्रौ हृदि निवेशितः ॥ २१
भूयोभूयः परामृष्टं हृदये सुनियोजितम् ।
प्रयोजनं फलत्युच्चैर्न हेलाहतसंस्थितेः ॥ २२
भाजनं त्वं विविक्तानां वचसां शुद्धिशालिनाम् ।
विविक्तहृदयः कण्ठे मुक्तानामिव राघव ॥ २३

श्रीवाल्मीकिरुवाच ।

कमलासनपुत्रेण मुनिना समहौजसा ।
एवं वितीर्णावसरो रामो वाक्यमुवाच ह ॥ २४

श्रीराम उवाच ।

भगवन्सर्वधर्मज्ञ तवैवैतद्विजृम्भितम् ।
यदहं परमोदारो बुद्धवान्वचनं तव ॥ २५
यदादिशसि तत्सर्वं तथैव न तदन्यथा ।
अपास्तनिद्रेण मया वाक्यार्थो हृदि चिन्तितः ॥ २६

---

नेन पूर्वेद्युर्भवेन वाक्यसंदर्भोच्चारणजन्मना खेदेन श्रमेण ॥२॥ आनन्दी श्रोत्रानन्दनशीलः । विविक्तो विशदः ॥ ३ ॥ तमांसि अज्ञानान्यन्धकारांश्च ॥ ४ ॥ इदानीं चन्द्रांशुभ्योऽप्युत्कर्षमाह—अपूर्वेति । अपूर्वः अनास्वादितपूर्वः कारणशून्यश्चानन्दो ब्रह्मसुखं प्रयोजनम् । तदेव मानुषानन्दादिहैरण्यगर्भानन्दान्तविषयसुखेभ्य उच्चैस्तरं पदं तदाश्रयास्तद्विषयाः । अतिमोहापहारिण्य इत्यनर्थनिवृत्तिरूपं प्रयोजनान्तरं तासामुक्तम् ॥ ५ ॥ युक्तिलक्षणा ज्योतिर्लता यस्मादुदेति यमाश्रित्योदेति ॥६॥ दुरीहितं मानसदोषम् । दुर्विहितं शारीरदोषम् । सर्वं समस्तेन्द्रियदोषम् । शीतांशोश्चन्द्रस्याङ्घ्रयः किरणाः ॥७॥ तानेव स्पष्टमाह—तृष्णेति । तनुतामल्पावशेषताम् ॥ ८ ॥ रसः सिद्धरसस्तद्रचितैः सिद्धाञ्जनैरानीतदृशो ब्रह्मरसाभ्यञ्जनेनानीतप्रत्यग्दृशश्च ॥९॥ हृदयाम्बरे स्थितेति शेषः । रूपकबलादेवान्तर्भूते । इवार्थे गम्यमाने पुनरिवशब्दप्रयोग उत्प्रेक्षाद्योतनार्थः ॥ १० ॥ अमृताम्भसः अमृताम्भोधेः ॥ ११ ॥ यद्युदिनं महतां जनानां ब्रह्मविदां सपर्यया पूजया संयात्यपयाति । सालोकं सप्रकाशम् । अन्धास्तमोवृताः ॥ १२ ॥ आबोधय पृच्छ ॥ १३ ॥ आस्थित उपविष्टः ॥ १४ ॥ १५ ॥ सर्वासां प्रागुक्तजीवजातीनाम् ॥ १६ ॥ सर्वं नटवन्मायया जगद्वेषेण स्थितं ब्रह्म । असर्वं निष्प्रपञ्चम् । सत्स्थूलमसत्सूक्ष्मं सत्त्वासत्त्वरूपं वा मदुक्तं स्मरसि स्वबुद्ध्या दृश्येभ्यो विविक्तं वेत्स्येव वा ॥ १७ ॥ विश्वेशात्सर्वशक्तिसंपन्नादीश्वराद्ब्रह्मणः । एवकारः सांख्याद्यभिमतप्रधानादिकारणवादनिरासार्थः । साधुवादाः प्रशंसाः सदुपदेशाश्च ॥ १८ ॥ बलात्कालबलात् । संख्यया अनन्तं देशकालादिना त्वन्तवत् ॥ १९ ॥ २० ॥ ह्यस्तनस्य विचारस्य श्रवणस्य विषयो वाक्यार्थो विचारितो मननेन परिष्कृतः ॥ २१ ॥ हेलया अनादरेण हता संस्थितिरुपदिष्टार्थधारणं येन तथाविधस्य पुरुषाधमस्य न फलतीत्यर्थः ॥ २२ ॥ विविक्तहृदयो विवेकशालिमनाः विशालवक्षाश्च ॥ २३ ॥ २४ ॥ विजृम्भितं प्रभाविस्तारः ॥ २५ ॥ तथैव कृतमिति शेषः । तदेव स्पष्टमाह—अपास्तेति ॥ २६ ॥

भवान्धकारक्षतये भवतोक्तिविवस्वता ।
ह्यःप्रसादितमाह्लादि वाग्रश्मिपटलं प्रभो ॥ २७
तदतीतमदीनात्मन्सर्वमन्तःकृतं मया ।
रम्यं पुण्यं पवित्रं च रत्नवृन्दमिवान्वितम् ॥ २८
हितानुबन्धि हृद्यं च पुण्यमानन्दसाधनम् ।
शिरसा ध्रियते कैर्नो सिद्धैस्त्वदनुशासनम् ॥ २९
प्रतिक्षिपन्तः संसारमिहिकावरणं वयम् ।
प्रसन्नास्त्वत्प्रसादेन वर्षान्त इव वासराः ॥ ३०
आपातमधुरारम्भं मध्ये सौभाग्यवर्धनम् ।
अनुत्तमफलोदर्कं पुण्यं त्वदनुशासनम् ॥ ३१
विकासिसितमम्लानमाह्लादितशुभाशुभम् ।
त्वद्वचःकुसुमं नित्यं श्रीमत्फलदमस्तु नः ॥ ३२
सकलशास्त्रविचारविशारद
प्रसृतपुण्यजलैकमहाह्रद ।
भज भृशं विततव्रत संप्रति
प्रसृततां हतकिल्बिष संततिम् ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये उपशमप्रकरणे राघवप्रश्नो नाम चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ५

श्रीवसिष्ठ उवाच ।

इदमुत्तमसिद्धान्तसुन्दरं सुन्दराकृते ।
उपशान्तिप्रकरणं शृणुष्वावहितो हितम् ॥ १
दीर्घसंसारमायेयं राम राजसतामसैः ।
धार्यते जन्तुभिर्नित्यं सुस्तम्भैरिव मण्डपः ॥ २
सत्त्वस्थजातिभिर्धीरैस्त्वादृशैर्गुणबृंहितैः ।
हेलया त्यज्यते पक्वा मायेयं त्वगिवोरगैः ॥ ३
ये सत्त्वजातयः प्राज्ञास्तथा राजससात्त्विकाः ।
विचारयन्ति ते साधो जगत्पूर्वपरम्पराम् ॥ ४
शास्त्रसज्जनसत्कार्यसङ्गेनोपहतैनसाम् ।
सारावलोकिनी बुद्धिर्जायते दीपिकोपमा ॥ ५
स्वयमेव विचारेण विचार्यात्मानमात्मना ।
यावन्नाधिगतं ज्ञेयं न तावदधिगम्यते ॥ ६
प्रज्ञावतां नयवतां धीराणां कुलशालिनाम् ।
जात्या राजससत्त्वानां मुख्यस्त्वं रघुनन्दन ॥ ७
स्वयमालोकय प्राज्ञ संसारारम्भदृष्टिषु ।
किं सत्यं किमसत्यं वा भव सत्यपरायणः ॥ ८

भवता कर्त्रा उक्तिलक्षणेन विवस्वता सूर्येण करणेन । उक्तौ उपदेशेनार्थप्रकाशनविषये विवस्वता सूर्यभूतेन भवतेति सामानाधिकरण्यं वा । आह्लादि जाड्यशीतापनयसुखकरम् ॥ २७ ॥ अन्तःकृतं हृदि कृतम् । अन्वितं क्रमयुक्तम् ॥२८॥ सर्वानिष्टह्रानानुबन्धित्वान्मधुरतरत्वात्परमपुरुषार्थसाधनत्वादनुल्लङ्घ्यशासनत्वाच्च तव वचनमवश्यं शिरसा प्रणम्य हृदि कार्यमित्याशयेनाह—**हितानुबन्धी**ति । सिद्धैर्देवभेदैर्योगमन्त्रादिसिद्धैः स्वतःसिद्धैः सनकादिभिर्वा कैर्न शिरसा ध्रियते ॥२९॥ स्वस्मिन्नुपदेशस्य नैष्फल्यशङ्कां वारयन्नाह—**प्रतिक्षिपन्त** इति । निरस्यन्त इत्यर्थः । वर्षान्ते शरदि ॥ ३० ॥ उपदेशस्य कालत्रयेऽपि हितकारितामाह—**आपाते**ति । आपाते श्रवणकाले । मध्ये मनननिदिध्यासनकाले । सौभाग्यस्य अन्तर्मुखताप्रयुक्तस्य शमादिसंपत्सुखस्य । अनुत्तमं मोक्षाख्यं फलं यत्र तथाविध उदर्क उत्तरकालो यस्य तत् ॥ ३१ ॥ सितं स्वच्छं शुभ्रं च । आह्लादितानि आनन्दैकरसीकृतानि शुभाशुभानि पुण्यपापानि तत्फलानि च येन । आह्लादिताः शुभा देवा अशुभाः सर्पादयश्च येन । त्वद्वचोलक्षणं कुसुमं कल्पवृक्षपुष्पम् ॥ ३२ ॥ इदानीं गुरुं तीर्थत्वान्महाह्रदत्वेन रूपयन्संबोध्य पुनः शिष्यार्थोपदेशवाक्प्रवाहं प्रार्थयते—**सकले**ति । देश[2]कालशास्त्रविचारेषु विशारद हे प्रसृताचारपुण्यजलानामेकमहाह्रद, विततव्रत, मां [3]प्रति संप्रति प्रसृततां उपदेशवाक्प्रसरं भजेत्यर्थः । ह्रदपक्षे सकलशास्त्रलक्षणानां वीनां हंसादिपक्षिणां चारैर्विशारद शोभमान । विततानि विस्तारितानि व्रतानि मुनिभिर्यत्र । स्नातॄणां हतानि किल्बिषाणि येन । एवंविध हे प्रसृतपुण्यजलैकमहाह्रद, त्वं संप्रति इदानीं संततिं वाक्संतानरूपां प्रसृततां प्रवाहं भजेत्यर्थः । मां प्रतीत्यन्ते पाठे मद्विशुद्धये इत्यर्थः ॥३३॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे राघवप्रश्नो नाम चतुर्थः सर्गः ॥४॥

**अविवेकप्रवृद्धाया मनोमात्रजगत्स्थितेः ।**
**इहोपशमनोपायक्रमः सम्यगुदीर्यते ॥ १ ॥**

अवहितः सावधानचित्तः ॥ १ ॥ प्रागुक्तमनूद्य प्रस्तुतेन संगमयति—**दीर्घे**ति । राजसतामसैः प्रागुक्तजीवैर्धार्यते । 'पुरुषो वा अक्षितिः सहीदमन्नं धियाधिया जनयते कर्मभिः' इत्यादिश्रुतेरिति भावः ॥ २ ॥ प्रागुक्तलक्षणैः सत्त्वस्थजातिभिः राजससात्त्विकैः शुद्धसात्त्विकैश्च ॥ ३ ॥ केनोपायेन त्यज्यते तमाह—**ये** इति । पूर्वपरम्परां मूलपरम्परां 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ' इत्यादिश्रुतिदर्शिताम् ॥ ४ ॥ सत्कार्याणि 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इति भगवदुक्तानि ॥ ५ ॥ **स्वयमेवे**ति । 'उद्धरेदात्मनात्मानं' इति न्यायादिति भावः । नाधिगतं न ज्ञातम् । अधिगम्यते प्राप्यते ॥ ६ ॥ त्वयि तु तत्प्राप्तियोग्यतास्त्येवेत्याह—**प्रज्ञावता**मिति । नयवतां [illegible]नाम् ॥ ७ ॥ आलोकय विचारेण पश्य ॥ ८ ॥

---

१ तुच्छे इति पाठः. २ देशकालेति सकलशब्दार्थः. ३ अयं संततिपदस्यार्थः, तथाच त्वत्संततिं मां प्रतीत्यर्थः । रामस्य विद्यावंशत्वेन वसिष्ठसंतानत्वात् ।

आदावन्ते च यन्नास्ति कीदृशी तस्य सत्यता ।
आदावन्ते च यन्नित्यं तत्सत्यं नाम नेतरत् ॥ ९
आद्यन्तासन्मये यस्य वस्तुन्यासज्जते मनः ।
तस्य मुग्धपशोर्जन्तोर्विवेकः केन जन्यते ॥ १०
जायते मन एवेह मन एव विवर्धते ।
सम्यग्दर्शनदृष्ट्या तु मन एव हि मुच्यते ॥ ११

श्रीराम उवाच ।

ज्ञातमेतन्मया ब्रह्मन्यथास्मिन्भुवनत्रये ।
मन एव हि संसारिजरामरणभाजनम् ॥ १२
यस्तस्योत्तरणोपायस्तन्मे ब्रूहि सुनिश्चितम् ।
हार्दं तमस्त्वयार्केण राघवाणां विनाश्यते ॥ १३

श्रीवसिष्ठ उवाच ।

पूर्वं राघव शास्त्रेण वैराग्येण परेण च ।
तथा सज्जनसङ्गेन नीयतां पुण्यतां मनः ॥ १४
सौजन्योपहितं चेतो यदा वैराग्यमागतम् ।
तदानुगम्या गुरवो विज्ञानगुरवोऽपि ये ॥ १५
ततस्तस्योपदिष्टेन कृत्वा ध्यानार्चनादिकम् ।
क्रमेण पदमाप्नोति तद्यत्परमपावनम् ॥ १६
विचारेणावदातेन पश्यत्यात्मानमात्मना ।
इन्दुना शीतलेनान्तर्विश्वं खमिव तेजसा ॥ १७
तावद्भवमहाम्भोधौ जनस्तृणवदुह्यते ।
विचारतटविश्रान्तिमेति यावन्न चेतसा ॥ १८
विचारेण परिज्ञातवस्तुनोऽस्य जनस्य धीः ।
सर्वानधःकरोत्याधीन्सौम्याम्भ इव वालुकाः ॥ १९
इदं रुक्ममिदं भस्म परिज्ञातमिति स्फुटम् ।
न यथा हेमकारस्य हेमज्ञानात्मनस्तथा ॥ २०
अक्षयोऽयं मनागात्मा स्वात्मन्यवगते चिरम् ।
भवतीति नरस्येह मोहस्यावसरः कुतः ॥ २१
अपरिज्ञातसारे हि मनोऽन्तर्यदि मुह्यते ।
ज्ञातसारे त्वसंदिग्धमसती किल मूढता ॥ २२
हे जना अपरिज्ञात आत्मा वो दुःखसिद्धये ।
परिज्ञातस्त्वनन्ताय सुखायोपशमाय च ॥ २३
मिश्रीभूतमिवानेन देहेनोपहतात्मना ।
व्यक्तीकृत्य स्वमात्मानं स्वस्था भवत मा चिरम् ॥ २४
देहेनास्य न संबन्धो मनागेवामलात्मनः ।
हेम्नः पङ्कलवेनेव तद्गतस्यापि मानवाः ॥ २५
पृथगात्मा पृथग्देही जलपद्मलवोपमौ ।
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ॥ २६
जडधर्मि मनो यावद्वर्तकच्छपवत्स्थितम् ।
भोगमार्गवदामूढं विस्मृतात्मविचारणम् ॥ २७
तावत्संसारतिमिरं सेन्दुनापि सवह्निना ।
अर्कद्वादशकेनापि मनागपि न भिद्यते ॥ २८

---

अस्तीति सत् सदेव सत्यमसत्ताविरुद्धस्वभावं तद्विरुद्धं नास्तिस्वभावं कथं संभवेत् । स्वभावविपर्यासायोगादिति भावः । नित्यं नियतसत्स्वभावम् ॥ ९ ॥ आसज्जते सत्यबुद्ध्या रज्यते ॥ १० ॥ मनोरथरचितप्रासादवन्मनोमात्रकार्यत्वादपि न सत्यताप्रसक्तिर्जगत इत्याशयेनाह—**जायत** इति ॥ ११ ॥ प्रश्नः स्पष्टः ॥ १२ ॥ १३ ॥ प्रथमं शास्त्रसज्जनसङ्गाभ्यां वैराग्यादिसाधनचतुष्टयं संपादयमित्याह—**पूर्व**मिति । पुण्यतां ज्ञानोदययोग्यतापादिकां विशुद्धिम् ॥ १४ ॥ सौजन्यं निरभिमानिता । ये गुरवो विज्ञानेन सर्वशास्त्ररहस्यज्ञानेन गुरवो गरीयांसोऽपि शब्दादुपदेशकौशलेन शिष्यबोधनसमर्थाश्च भवन्ति ते विधिना अनुगम्याः ॥ १५ ॥ 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' इत्यादिश्रुतेः प्रथमं गुरूपदिष्टमार्गेण सगुणेश्वरध्यानार्चनादिकं कृत्वा तदनुग्रहाद्वक्ष्यमाणविचारादिक्रमेणेत्यर्थः ॥ १६ ॥ विश्वं कृत्स्नं खमिन्दुना तेजसा पूर्णमिव ॥ १७ ॥ चेतसा बुद्धिप्लवेन विचारलक्षणे तटे यावद्विश्रान्तिं स्थैर्यं नैति ॥ १८ ॥ आधीन् मानसदुःखानि । अधःकरोति निरस्यतीति यावत् । सौम्यं निम्नप्रसन्नम् ॥ १९ ॥ भस्मनि गूढं हेम अन्यैर्विवेक्तुमशक्यमपि यथा हेमज्ञानात्मनः सदा हेमपरिशोधनेन तद्विवेककुशलात्मनो हेमकारस्य इदं रुक्ममिदं भस्मेति स्फुटं परिज्ञातमिति न तदलाभमोहस्यावसरस्तथा अयमज्ञदृशा प्रसिद्धो मनागात्मा परिच्छिन्नजीवश्चिरं विचारेण विविच्य स्वात्मनि अवगते सति अक्षयः कालादिपरिच्छेदशून्यः स्वत एव स्फुटं भवतीति कुतो मोहस्यावसर इति परेणान्वयः ॥ २० ॥ ॥ २१ ॥ अपरिज्ञातसारे पुरुषे । यदि मुह्यति तर्हि मुह्यतां नामेति शेषः । असती असंभावितैव किलेत्यर्थः ॥ २२ ॥ इदानीमनुक्रोशात्सर्वश्रोतृजनान्प्रत्याह—**हे जना** इति । 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति तत्त्वेव भयं विदुषोऽमन्वानस्य' इत्यादिश्रुतेरिति भावः । **परिज्ञातस्त्वि**ति । 'रसꣳ ह्येवायं लब्ध्वानन्दी भवति । सर्वान्कामानाप्त्वाऽमृतः समभवत् । ज्ञात्वा तं मृत्युमत्येति । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इत्यादिश्रुतेरिति भावः ॥ २३ ॥ व्यक्तीकृत्य पञ्चकोशविवेकेन दृष्ट्वा ॥ २४ ॥ व्यक्तीकरणमेव स्फुटयति—**देहेने**त्यादिना । अप्यर्थे एवकारः ॥ २५ ॥ आत्मा ब्रह्म देही जीवश्च यथा पद्माधारमहाजलं पद्मपत्रनिविष्टजललवश्चोपाधित एव पृथङ्ग वस्तुतस्तद्वदित्यर्थः । ननु महाजलस्य पद्मपत्रारोहपरिच्छेदादौ वाय्वादिनिमित्तं प्रसिद्धम् । पूर्णात्मनः परिच्छेदेन देहारोहणे किं निमित्तमिति चेदसकृदुद्घोषितं पापिष्ठं मन एव । अतस्तन्नाशायैव यत्नः कार्य इत्याशयेनानुक्रोशादाक्रोशति—**ऊर्ध्वबाहु**रित्यादिना ॥ २६ ॥ दुर्वासनापङ्कगर्ते कच्छपवन्निलीनं कठोरं च भोगप्राप्तौ मार्गवद्द्वारभूतैरिन्द्रियैर्विषयेष्वामूढं मनो यावत्स्थितं तावत्संसारतिमिरं सेन्दुना सवह्निना अपिशब्दान्नक्षत्रमण्यादिसर्वतेजःसहितेन अर्कद्वादशकेनापि मनाक् ईषदपि न भिद्यते इति परेण सहान्वयः ॥ २७ ॥ २८ ॥

संप्रबुद्धे हि मनसि स्वां विवेचयति स्थितिम् ।
नैशमर्कोदय इव तमो हार्दं पलायते ॥ २९
नित्यमुत्तमबोधाय योगशय्यागतं मनः ।
बोधयेद्भवभेदाय भवो ह्यत्यन्तदुःखदः ॥ ३०
यथा रजोभिर्गगनं यथा कमलमम्बुभिः ।
न लिप्यते हि संश्लिष्टैर्देहैरात्मा तथैव च ॥ ३१
कर्दमादि यथा हेम्ना श्लिष्टमेति पृथक्स्थितम् ।
नान्तःपरिणतिं याति जडो देहस्तथात्मना ॥ ३२
सुखदुःखानुभावित्वमात्मनीत्यवबुध्यते ।
असत्यमेव गगने बिन्दुताम्लानते यथा ॥ ३३
सुखदुःखे न देहस्य सर्वातीतस्य नात्मनः ।
एते ह्यज्ञानकस्यैव तस्मिन्नष्टे न कस्यचित् ॥ ३४
न कस्यचित्सुखं किंचिद्दुःखं च नच कस्यचित् ।
सर्वमात्ममयं शान्तमनन्तं पश्य राघव ॥ ३५
इमा याः परिदृश्यन्ते विततः सृष्टिदृष्टयः ।
पयसीव तरङ्गास्ते पिच्छं व्योम्नीव चात्मनि ॥ ३६
यथा मणिर्ददात्यात्मच्छायाः स्वयमकारणम् ।
तेजोमयीस्तथैवायमात्मा सृष्टीः प्रयच्छति ॥ ३७
आत्मा जगच्च सुमते नैकं न द्वैतमप्यसत् ।
आभासमात्रमेवेदमित्थं संप्रति जृम्भते ॥ ३८
समस्तं खल्विदं ब्रह्म सर्वमात्मैवमाततम् ।
अहमन्यदिदं चान्यदिति भ्रान्तिं त्यजानघ ॥ ३९
तते ब्रह्मघने नित्ये संभवन्ति न कल्पनाः ।
विच्छित्तयः पयोराशौ यथा राम न सन्मराः ॥ ४०
एकस्मिन्नेव सर्वस्मिन्परमात्मनि वस्तुनि ।
द्वितीया कल्पना नास्ति वह्नौ हिमकणो यथा ॥ ४१
भावयन्नात्मनात्मानं चिद्रूपेणैव चिन्मयम् ।
ऋजूज्ज्वलमये ह्यात्मा स्वयमात्मनि जृम्भते ॥ ४२
न शोकोऽस्ति न मोहोऽस्ति न जन्मास्ति न जन्मवान् ।
यदस्तीह तदेवास्ति विज्वरो भव राघव ॥ ४३
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ।
अद्वितीयो विशोकात्मा विज्वरो भव राघव ॥ ४४
समः स्वस्थः स्थिरमतिः शान्तशोकमना मुनिः ।
मौनी वरमणिस्वच्छो विज्वरो भव राघव ॥ ४५
विविक्तः शान्तसंकल्पो धीरधीर्विजिताशयः ।
यथाप्राप्तानुवर्ती च विज्वरो भव राघव ॥ ४६
वीतरागो निरायासो विमलो वीतकल्मषः ।
नादाता न परित्यागी विज्वरो भव राघव ॥ ४७
विश्वातीतपदं प्राप्तः प्राप्तप्राप्तव्यपूरितः ।
पूर्णार्णववदक्षुब्धो विज्वरो भव राघव ॥ ४८
विकल्पजालनिर्मुक्तो मायाञ्जनविवर्जितः ।
आत्मनात्मनि तृप्तात्मा विज्वरो भव राघव ॥ ४९
अनन्तापारपर्यन्तवपुरात्मविदांवर ।
धराधरशिरोधीरो विज्वरो भव राघव ॥ ५०
यथाप्राप्तानुभवनात्सर्वत्रानभिवाञ्छनात् ।
त्यागादानपरित्यागाद्विज्वरो भव राघव ॥ ५१
आत्मन्येवात्मनौदार्यं भज पूर्णं इवार्णवः ।
आत्मन्येवात्मनाह्लादं भज पूर्णेन्दुबिम्बवत् ॥ ५२

विश्वप्रपञ्चरचनेयमसत्यरूपा
नासत्यरूपमनुधावति राम तज्ज्ञः ।
तज्ज्ञोऽसि शान्तकलनोऽसि निरामयोऽसि
नित्योदितोऽसि भव सुन्दर शान्तशोकः ॥५३

स्वां पारमार्थिकीं स्थितिं विवेचयति अनृताद्विविच्य पश्यति सति ॥२९॥ योगो देहादितादात्म्याध्यासस्तल्लक्षणायां शय्यायां गतं सुप्तं समाधिविश्रान्तिं कृत्वेति वा ॥३०॥ कथं बोधयेत्तदाह—यथेति ॥ ३१ ॥ हेमतादात्म्यापत्तिलक्षणां परिणतिमन्तर्वस्तुतो न याति ॥ ३२ ॥ अनुभावित्वमनुसारित्वमनुभवितृत्वं च इत्यवबुध्यते मूढ इति शेषः । बिन्दुता 'तद्यथावटरकाणि संपतन्तीव दृश्यन्ते' इति श्रुत्यनुभवसिद्धा बिन्दुसहस्राकारता । म्लानता मालिन्यम् ॥ ३३ ॥ यदि नात्मनः सुखदुःखे तर्हि किं देहस्य नेत्याह—**सुखदुःखे** इति । तर्हि कस्य तत्राह—**एते** इति । अज्ञानमेवाज्ञानकं तस्यैव ॥ ३४ ॥ आत्ममयमात्मविवर्तम् । शान्तं नित्यप्रशान्तम् ॥ ३५ ॥ विवर्ततां दृष्टान्तेन दर्शयति—**इमा** इति । व्योम्नि पिच्छं अर्धनिमीलिताक्षस्य सूर्याभिमुखं शयानस्य भ्रान्त्या प्रसिद्धम् ॥३६॥ तेजोमयीरात्मच्छायाः स्वकान्तीर्ददाति प्रसारयति । अकारणमक्रियाव्यापृत इति यावत् । प्रयच्छति प्रसारयति ॥ ३७ ॥ नैकं नाद्वयम् न द्वैतं न नानापि यतो जगद्रूपमसत् । नह्यसता सतोऽभेदो भेदो वा निरूपयितुं शक्यत इत्यर्थः । संप्रति जृम्भते ॥३८॥ परमार्थतस्तु भ्रान्तेरपि पृथग्दुर्निरूपत्वात् 'ब्रह्मैवेदं सर्वमात्मैवेदं सर्वम्' इति श्रुत्युक्तदृशा ब्रह्मैव सर्वमित्याह—**समस्त**मिति ॥३९॥ तते दैशिकपरिच्छेदरहिते । ब्रह्मघने वस्तुकृतपरिच्छेदरहिते । नित्ये कालिकपरिच्छेदशून्ये ॥४०॥ वास्तवैकत्वविरोधादपि न द्वैतकल्पना सतीत्याह—**एकस्मिन्नेवे**ति ॥४१॥ इदानीं तादृशात्मपरिचयेन तत्र विश्रान्तये सदा तद्भावना कार्येत्याह—**भावयन्नि**ति । तद्रूपेण क्षीरोदकवत्तद्रूपापन्नेनैव मनसा । ऋजूज्ज्वलमये मायाकौटिल्यमालिन्यरहिते इति यावत् ॥४२॥ तद्भावापन्नस्य जीवन्मुक्तिविश्रान्तिं दर्शयति—**न शोक** इत्यादिना ॥ ४३ ॥ निर्द्वन्द्वः शीतोष्णादिशारीरद्वन्द्वविक्षेपरहितः । नित्यसत्त्वे स्थितत्वाद्रजस्तमःप्रयुक्तमानसविक्षेपरहितः । अतएव तद्भयपरिहारोपाययोगक्षेमचिन्तोज्झितः ॥ ४४ ॥ ४५ ॥ विविक्तः अविद्यातत्कार्यनिर्णिक्तः । विजिताशयः स्वाधीनचित्तः ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ ४९ ॥ धराधराणां शिर इव श्रेष्ठो मेरुः स इव धीरः ॥ ५० ॥ ५१ ॥ औदार्यमकार्पण्यम् । पूर्णकामतामिति यावत् । आह्लादं सर्वतापोपशमसुखम् ॥ ५२ ॥ उक्तमर्थं संक्षेपेणोपदिशन्नुपसंहरति—**विश्वे**ति । स्पष्टोऽर्थः ॥ ५३ ॥

एकातपत्रमवनौ गुरुणोपदिष्टं
सम्यक्सुपालय चिरं समयेह दृष्ट्या ।
राज्यं समस्तगुणरञ्जितराजलोक-
स्त्यागो न युक्त इह कर्मसु नापि रागः ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु उपशमप्रकरणे प्रशमोपदेशो नाम पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ६

श्रीवसिष्ठ उवाच ।

इमं विश्वपरिस्पन्दं करोमीत्यस्तवासनम् ।
प्रवर्तते यः कार्येषु स मुक्त इति मे मतिः ॥ १
पौरुषीं तनुमाश्रित्य केचिदेतत्क्रियारताः ।
स्वर्गान्नरकमायान्ति स्वर्गं च नरकात्पुनः ॥ २
केचित्त्वकर्मणि रता विरता अपि कर्मणः ।
नरकान्नरकं यान्ति दुःखाद्दुःखं भयाद्भयम् ॥ ३
केचित्स्ववासनातन्तुबद्धाः कर्मफलोदिताः ।
तिर्यक्त्वात्स्थावरतनुं यान्ति तिर्यक्तनुं ततः ॥ ४
केचिदात्मविदो धन्या विचारितमनोदृशः ।
विच्छिन्नतृष्णानिगडा यान्ति निष्केवलं पदम् ॥ ५
पुरा कतिपयान्येव भुक्त्वा जन्मानि राघव ।
अस्मिञ्जन्मनि यो मुक्तस्तस्माद्राजससात्त्विकः[1] ॥ ६
जातोऽसौ वृद्धिमभ्येति पार्वणश्चन्द्रमा इव ।
कुटजं प्रावृषीवैनं सौभाग्यमनुगच्छति ॥ ७
यस्येदं जन्म पाश्चात्यं तमाश्वेव महामते ।
विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम् ॥ ८
आर्यता हृद्यता मैत्री सौम्यता करुणा ज्ञता ।
समाश्रयन्ति तं नित्यमन्तःपुरमिवाङ्गनाः ॥ ९
यः कुर्वन्सर्वकार्याणि पुष्टे नष्टेऽथ तत्फले ।
समः सन्सर्वकार्येषु न तुष्यति न शोचति ॥ १०
तमांसीव दिवा यान्ति तत्र द्वन्द्वानि संक्षयम् ।
शरदीव घनास्तत्र गुणा गच्छन्ति शुद्धताम् ॥ ११
पेशलाचारमधुरं सर्वे वाञ्छन्ति तं जनाः ।
वेणुं मधुरनिध्वानं वने वनमृगा इव ॥ १२
नरं पाश्चात्यजन्मानमेवंप्राया गुणश्रियः ।
जातमेवानुधावन्ति बलाका इव वारिदम् ॥ १३
ततोऽसौ गुणसंपूर्णो गुरुमेवानुगच्छति ।
स तमेवं विवेके वै नियोजयति पावने ॥ १४
विचारवैराग्यवता चेतसा गुणशालिना ।
देवं पश्यत्यथात्मानमेकरूपमनामयम् ॥ १५

---

यदि तज्ज्ञोऽसत्यं नानुधावति तर्हि किं मम राज्यादिना, पारिव्राज्यमेव युक्तमिति रामाशयमालक्ष्याह—**एकेति**। गुरुणा पित्रा उपदिष्टमाज्ञप्तमेकातपत्रं राज्यं समस्तगुणरञ्जिता राजानो लोकाः प्रजाश्च येन तथाविधः सन् समया दृष्ट्या चिरं सम्यक् सुपालय । प्रारब्धत्वादवश्यभोक्तव्येषु कर्मसु तत्फलेषु च त्यागो न युक्तो नापि रागो युक्त इत्यर्थः । 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥' इति भगवद्वचनादिति भावः ॥ ५४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रशमोपदेशो नाम पञ्चमः सर्गः ॥५॥

इह कर्मगतीः पूर्वमुक्त्वा चरमजन्मनाम् ।
जीवन्मुक्त्यै गुणावाप्तौ सामान्यक्रम ईर्यते ॥ १ ॥

गुणार्जनक्रमस्य वक्ष्यमाणस्य प्रकृतसंबन्धं दर्शयितुं प्रस्तुतं निरासङ्गविहिताप्रतिषिद्धकार्यप्रवृत्त्या जीवन्मुक्तं लक्षयति—**इममिति** । विश्वं कृत्स्नं परिस्पन्दं श्रुतिस्मृतिसदाचारप्राप्तव्यवहारमयस्कान्तवत्सन्निधिमात्रेण करोमीत्यस्तवासनं प्रवर्तते नतवज्ञ इव कर्तृत्वाभिनिवेशेनेत्यर्थः ॥ १ ॥ कर्मफलासङ्गादेवाज्ञानामनर्थप्राप्तिरिति दर्शयति—**पौरुषीमिति** । पौरुषीं मानुषीं तनुं देहमाश्रित्य प्राप्यापि केचिन्मूढा एतस्यां निरासङ्गकर्मानुष्ठानलक्षणायां क्रियायामरताः कामात्मानः काम्यकर्मभिः स्वर्गं भुक्त्वा ततः कैतिपयकर्मानुशयावशेषेण नरकमायान्ति ॥ २ ॥ अकर्मणि निषिद्धकर्मणि रताः । कर्मणः सत्कर्मणो विरताः । तथाच स्मृतिः—'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥' इति ॥ ३ ॥ नरकोपभुक्तदुष्कर्मफलक्रमेण तिर्यग्योनिषु उदिता जाताः ॥ ४ ॥ राजसतामसान् शुद्धतामसांश्चोक्त्वा शुद्धसात्त्विकजीवानाह—**केचिदिति** । विचारितो मनोदृक् मनःसाक्ष्यात्मा यैस्ते निष्केवलं परमकैवल्यरूपं पदम् ॥ ५ ॥ राजससात्त्विकान्दर्शयति—**पुरेति** । कतिपयान्युत्तरोत्तरोत्कृष्टानि मानुषजन्मानि ॥ ६ ॥ तस्य शान्त्यादिगुणैरभिवृद्धिमाह—**जात** इत्यादिना । सौभाग्यं साधनचतुष्टयम् । कुटजपक्षे पुष्पश्रीः ॥ ७ ॥ विद्या ब्रह्मविद्योपायसर्वविद्याः । वेणुमिवेति वेणुविशेषस्यापि मुक्ताकरत्वप्रसिद्धेः ॥ ८ ॥ ज्ञता परोक्षप्रायं ज्ञानम् ॥ ९ ॥ तस्योपक्रमोक्तजीवन्मुक्तलक्षणोपक्रममाह—**य** इति । पुष्टे प्रवृद्धे ॥१०॥ द्वन्द्वानि सुखदुःखादीनि । प्राञ्जलिना अपि धृतिश्रद्धाहीप्रभृतयो गुणाः[2] ॥ ११ ॥ वेणुं कीचकम् । मारुतपूर्णरन्ध्रत्वेन मधुरनिध्वानम् ॥ १२ ॥ जातमेवेति बाल्यात्प्रभृत्येवेति यावत् ॥ १३ ॥ एवंगुणसंपत्तौ गुरुमुखाच्छ्रवणाधिकारो नापक्वचित्तानामित्याशयेनाह—**तत** इति । एवं प्राञ्जदुक्तप्रकारे आत्मानात्मतत्त्वविवेके उपायानुपदिश्य स्वबुद्ध्यापि कार्ये मनने नियोजयतीत्यर्थः ॥ १४ ॥ एवंगुणसंपन्नस्यैव गुरुपूर्वकश्रवणादिना साक्षात्कारलाभं दर्शयति—**विचारे**ति । एकरूपमानन्दैकरसम् ॥१५॥

---

[1] तस्माद्राजस इत्यत्र स स्याद्राजस इति पाठो युक्तः । [2] कुपूय इति पाठः

तनोत्ययं विचारेण चारुणा शान्तचेतसा ।
प्रबोधनाय प्रथमं मनोमननमान्तरम् ॥ १६
ये हि पाश्चात्यजन्मानस्ते हि सुप्तं मनोमृगम् ।
प्रबोधयन्ति प्रथमं गुणहीनं महागुणाः ॥ १७
प्रथितगुणान्सुगुरूनिषेव्य यत्ना-
दमलधिया प्रविचार्य चित्तरत्नम् ।
गतिममलामुपयान्ति मानवास्ते
परमवलोक्य चिरं प्रकाशमन्तः ॥ १८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे प्रथमोपदेशो नाम षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ७

श्रीवसिष्ठ उवाच ।

एष तावत्क्रमः प्रोक्तः सामान्यः सर्वदेहिनाम् ।
इममन्यं विशेषं त्वं शृणु राजीवलोचन ॥ १
अस्मिन्संसारसंरम्भे जातानां देहधारिणाम् ।
अपवर्गक्षमौ राम द्वाविमावुत्तमौ क्रमौ ॥ २
एकस्तावद्गुरुप्रोक्तादनुष्ठानाच्छनैः शनैः ।
जन्मना जन्मभिर्वापि सिद्धिदः समुदाहृतः ॥ ३
द्वितीयस्त्वात्मनैवाशु किंचिद्व्युत्पन्नचेतसा ।
भवति ज्ञानसंप्राप्तिराकाशफलपातवत् ॥ ४
नभःफलनिपाताभज्ञानसंप्रतिपत्तये ।
तत्रेमं शृणु वृत्तान्तं प्राक्तनं कथयामि ते ॥ ५
शृणु सुभग कथां महानुभावा
व्यपगतपूर्वशुभाशुभार्गलौघाः ।
खपतितफलवत्परं विवेकं
चरमभवा विमलं समश्नुवन्ति ॥ ६

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षोपायेषूपशमप्रकरणे आकाशफलप्राप्तिवज्ज्ञानसंप्राप्तिक्रमसूचनं नाम सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ८

श्रीवसिष्ठ उवाच ।

अस्त्यस्तमितसर्वापदुद्यत्संपदुदारधीः ।
विदेहानां महीपालो जनको नाम वीर्यवान् ॥ १
कल्पवृक्षोऽर्थिसार्थानां मित्राब्जानां दिवाकरः ।
माधवो बन्धुपुष्पाणां स्त्रीणां मकरकेतनः ॥ २
द्विजकैरवशीतांशुर्द्विषत्तिमिरभास्करः ।
सौजन्यरत्नजलधिर्भुवं विष्णुरिवास्थितः ॥ ३
प्रफुल्लबाललतिके मञ्जरीपुञ्जपिञ्जरे ।
स कदाचिन्मधौ मत्ते कोकिलालापलासिनि ॥ ४
ययौ कुसुमिताभोगं सुविलासलताङ्गनम् ।
लीलयोपवनं कान्तं नन्दनं वासवो यथा ॥ ५

नियोजयतीत्यत्र सूचितं मननं विवृणोति—**तनोतीति** ॥ १६ ॥ गुणहीनं निर्गुणं ब्रह्मैव यथा भवति तथा प्रबोधयन्तीत्यर्थः ॥ १७ ॥ उक्तमर्थं संक्षिप्योपसंहरति—**प्रथितेति** । ते उक्तगुणसंपन्नाश्चरमजन्मानो मानवाः प्रथितगुणान् प्रख्यातजीवन्मुक्तलक्षणगुणान् सुगुरून् यत्नान्निषेव्य तद्दर्शितयुक्तिभिरमलधिया चित्तान्तर्गतं रत्नं प्रत्यगात्मानं प्रविचार्य रत्नपरीक्षावन्मननेन परीक्ष्य चित्तान्तःप्रकाशं परं प्रत्यगभिन्नं ब्रह्म चिरमवलोक्य साक्षादनुभूय तत्साक्षात्कारमात्रेण तद्भावलाभलक्षणाममलां मायातत्कार्यसर्वमलनिर्मुक्तां परमपुरुषार्थलक्षणां गतिमुप समीपे स्वस्थान एव यान्ति लभन्ते नोपासकवदुत्क्रम्य लोकान्तरं गत्वेत्यर्थः ॥ १८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रथमोपदेशो नाम षष्ठः सर्गः ॥ ६ ॥

इह स्वेन विचारेण किंचिद्व्युत्पन्नचेतसः ।
वर्ण्यते ज्ञानसंप्राप्तिप्रकाशफलपातवत् ॥ १ ॥

उक्तं सामान्यक्रममनूद्य कस्यचिद्भाग्यवतो विनैव तं दैवोपनीतेन स्वविचारमात्रेणैव सहसा सर्वगुणसंपत्सहितज्ञानोदयलक्षणं विशेषं दर्शयति—**एष** इत्यादिना ॥१॥ अपवर्गक्षमौ मोक्षफलोपहितौ । इमौ उक्तवक्ष्यमाणौ ॥ २ ॥ एकेन जन्मना बहुभिर्वा जन्मभिः सिद्धिदो मोक्षप्रापकः समुदाहृतः । प्रागुक्त इत्यर्थः ॥३॥ आत्मना स्वेनैव दैवोपनीतजीवजगत्तत्त्वविचारवता इत्यर्थः ॥ ४ ॥ द्वितीये क्रमे जनकाख्यायिकामुदाहरिष्यन्भूमिकां रचयति—**नभःफलेति** ॥५॥ हे सुभग, चरमभवाश्चरमजन्मानो महानुभावाः पुरुषाः परं विवेकं यथा खपतितफलवत्समश्नुवन्ति तथा वक्ष्यमाणां कथां शृण्वित्यर्थः ॥ ६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे आकाशफलप्राप्तिवज्ज्ञानसंप्राप्तिक्रमसूचनं नाम सप्तमः सर्गः ॥ ७ ॥

जनकेन वसन्तेऽत्र वने विहरता क्वचित् ।
सिद्धगीताः शुभाः श्लोकाः श्रुता इत्युपवर्ण्यते ॥ १ ॥

विदेहानां जनपदानां महीपालो राजा ॥ १ ॥ अर्थिसार्थानां याचकजनसङ्घानाम् । बन्धुलक्षणानां पुष्पाणां माधवो वसन्तः ॥ २ ॥ भुवं विष्णुर्भवानिव आस्थितः पालनार्थमाश्रितः ॥ ३ ॥ प्रफुल्ला बाललतिका यत्र । अनुकम्पायां कन् । मत्ते मत्तवद्विजृम्भमाणे अतएव कोकिलालापैर्लासिनि नृत्यतीव स्थिते मधौ वसन्ते ॥ ४ ॥ सुविलासा लता एवाङ्गनालता अङ्गनाश्च वा

तस्मिन्वरवने हृद्ये केसरोद्दाममारुते ।
दूरस्थानुचरः सानुकुञ्जेषु विचचार ह ॥ ६
अथ शुश्राव कस्मिंश्चित्तमालवनगुल्मके ।
सिद्धानामप्रदृश्यानां स्वप्रसङ्गादुदाहृताः ॥ ७
विविक्तवासिनां नित्यं शैलकन्दरचारिणाम् ।
इमाः कमलपत्राक्ष गीता गीतात्मभावनाः ॥ ८
सिद्धा ऊचुः ।
द्रष्टृदृश्यसमायोगात्प्रत्ययानन्दनिश्चयः ।
यस्तं स्वमात्मतत्त्वोत्थं निःस्पन्दं समुपास्महे ॥ ९
अन्ये ऊचुः ।
द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ।
दर्शनप्रथमाभासमात्मानं समुपास्महे ॥ १०
अन्ये ऊचुः ।
द्वयोर्मध्यगतं नित्यमस्तिनास्तीति पक्षयोः ।
प्रकाशनं प्रकाश्यानामात्मानं समुपास्महे ॥ ११

यत्र ॥ ५ ॥ केसरेषूद्दामा रजःसौगन्ध्यमकरन्दकणापहरणसमर्था नतु पांसुविकिरणादौ । मन्दसुरभिशीता इति यावत् । तथाविधा मारुता यत्र । सानुकुञ्जेषु क्रीडाशैलप्रस्थप्ररूढेषु लतागृहेषु ॥ ६ ॥ अप्रदृश्यानामन्तर्हितानाम् । स्वप्रसङ्गात् स्वानुग्रहार्थमिति यावत् ॥ ७ ॥ श्रुतिस्मृतिपुराणेतिहासैर्गीतमात्मानं श्रवणमात्रेण भावयन्ति यथा स्वयमेव साक्षाद्भवति तथा कुर्वन्तीति गीतात्मभावनाः । गीताः स्वार्तोपनिषदः शुश्राव ॥ ८ ॥ द्रष्टुश्चक्षुरादिद्वारा विषयप्रमातुर्दृश्येन स्रक्चन्दनवनितादिविषयेण समायोगात्संनिकर्षाज्जाते प्रत्यये विषयाकारबुद्धिवृत्तौ स्वयं प्रथमानो य आनन्दरूपो निश्चयस्तं तत्स्वभावमेव आत्मतत्त्वपरिशोधनेन उत्थं निरतिशयभूमात्मनाविर्भूतं स्वमात्मानं निःस्पन्दं निर्विकल्पसमाधिनिरस्तबाह्यान्तःकरणस्पन्दं यथा स्यात्तथा समुपास्महे निरन्तरमनुभवामः । अयं भावः—विषयाकारवृत्तौ स्वयं प्रथमान आनन्दो न विषयकोटौ । जडत्वप्रसङ्गात् । नापि कर्तृकरणवृत्तिकोटौ । तेषां कारकत्वेन तच्छेषतानुभवविरोधात् । तस्मात्साक्षिकोटावेव । साक्ष्येव ह्यविद्यावरणमन्दीकृतचिदानन्दस्वभावोऽन्यमहंकारात्मानं कल्पयित्वा तच्छेषतामिवापन्नो विषयाकारवृत्त्याविर्भूतं स्वानन्दं तच्छेषतामिव नयन् न स्वात्मानं निरतिशयानन्दं प्रतिबुध्यते अतस्तमेव स्वतत्त्वविचारोत्थनिरतिशयानन्दस्वभावं समाहितेन मनसा वयमुपास्महे 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेर्ब्रह्मानन्दस्यैवाविद्यया विषयाकारवृत्तिपरिच्छेदेन विषयानन्दत्वविभावनादिति । अथवा द्रष्टुः पुरुषस्य दृश्यस्य वियदादेश्च बाह्याध्यात्मिकवैषम्यप्रविलापनेन समे परिशिष्टसन्मात्रस्वभावे आत्यन्तिकाभेदापत्तिलक्षणादायोगान्मेलनारूढायोगादिति व्युत्पत्त्या निर्विकल्पकसमाधिपरिपाकाद्वा प्रत्ययः प्रत्येयः स्वानुभवादेव विश्वसनीयो भूमानन्दनिश्चयो यस्तमात्मनस्तत्त्वेन यथार्थरूपेणोत्थं प्रकटीभूतं स्वं निस्पन्दं समुपास्महे इत्यर्थः । अथवा द्रष्टुर्बुद्धेर्दृश्यानां विषयाणां चोपचयापचयजाड्यप्रियाप्रियादिरूपसाम्येन समादायोगात्संबन्धात्तदुभयान्तरालिकस्तदुभयविलक्षणत्वात्प्रत्यय एवानन्द इति निश्चीयत इत्यानन्दनिश्चयस्तं निस्पन्दं सक्रियवृत्त्युपाधिनिर्मुक्तमतएवात्मतत्त्वोत्थं स्वीययथार्थरूपेणाविर्भूतं चिदानन्दैकरसं स्वं प्रत्यगात्मानं समुपास्मह इत्यर्थः । अथवा य आत्मा अहमिति द्रष्टा इदं ममेति दृश्यश्चा-न्योन्यतादात्म्यसंसर्गाध्यासलक्षणात्समायोगात्प्रतीयते अनुभूयते शुनकसूकरादिभिरपीति प्रत्ययो विषयानन्द एव पुरुषार्थ इति निश्चयवान्संसरति । स्वा स्वीया या मा प्रमा वेदान्तजन्याखण्डाकारवृत्तिस्तया आत्मतत्त्वोत्थं स्वीयपारमार्थिकरूपेणाविर्भूतं कृत्वा निस्पन्दं निश्चलं समुपास्मह इत्यर्थः । अथवा यः प्रत्ययः स्वप्रकाश आनन्दैकरसः स्वरूपनिश्चयो द्रष्टृदृश्यसमायः सन् द्रष्टृदृश्याकारमायासहितो भूत्वा अगात् स्वरूपप्रच्युतोऽभूत्तमानन्दनिश्चयं चरमसाक्षात्कारवृत्त्यारूढा या स्वात्मभूतैव मा तया द्रष्टृदृश्यमायानिरासेनात्मतत्त्वेनोत्थमित्यादि प्राग्वत् । अथवा द्रष्टृदृश्यसमाः यः अगादिति च्छेदः । य आत्मा 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मात्' इत्यादिश्रुत्यनुभवसिद्धात्परमप्रेमास्पदत्वप्रत्ययादानन्दरूपत्वेन निश्चेतुं योग्योऽपि विवेकविचारादिप्रत्ययाभावाद्द्रष्टृदृश्यसमा भोक्तृभोग्यप्रायाः संसारदशा अगात् तं यस्तम् । 'यसु प्रयत्ने' क्तः । विवेकवैराग्यश्रवणमननादिप्रयत्नैः साक्षात्कृतं स्वेनैव मिमीते परिच्छिनत्ति हिनस्ति वा सर्वं द्रष्टृदृश्यद्वैतजातमिति स्वमं यदात्मतत्त्वं तद्भावेनोत्थितं निस्पन्दं पुनः संसारप्रसक्तिशङ्काशून्यं सम्यगुपेत्य सर्वसामीप्यावधि प्रत्यगात्मतया प्राप्य आस्महे तिष्ठामह इत्यर्थः ॥ ९ ॥ तमेवात्मानं निष्कृष्य करतलामलकवद्दर्शयन्त इवान्ये प्राहुः—**द्रष्टृदर्शने**ति । द्रष्ट्रादित्रिपुटीत्यागेनावस्थाद्वयनिरासः । वासनया सहेत्यनेन तु तदुभयबीजवासनासंभृतसौषुप्ताज्ञानस्यापि निरास उक्तः । दर्शनाच्चाक्षुषमानसादिवृत्तेः प्रथमं पूर्वमेव तदुत्पत्तिसाक्षितया भासमानमित्यनेन पूर्वसिद्धस्त्रिपुटीसाक्षी सर्वानुभवसिद्धो विविच्य दर्शितः । तमेव सबीजत्रिपुटीत्यागात्तुरीयमात्मानं समुपास्मह इत्यर्थः ॥ १० ॥ दर्शनप्रथमाभासे साक्षिणि ये अस्तिनास्तीति विप्रतिपद्यन्ते तान्प्रत्यपि तदुभयपक्षाविरुद्धं साक्षिणं दर्शयन्तोऽन्ये प्राहुः—**द्वयो**रिति । ये तावदस्ति दर्शनप्रथमाभासः परंतु सोऽपि जन्य एव न नित्य इत्याहुस्तेषां पूर्वपूर्वतदाभासानां स्वप्रकाशत्वे स्वविषयत्वे वा स्वमात्राभानपरिक्षीणत्वात्पूर्वोत्तरविज्ञानास्पर्शित्वाच्च न तदुत्पत्त्यादिसाक्षिता निर्वहतीति तत्साक्षी अन्य आवश्यक इति तत्पक्षमध्यगतं तदविरुद्धं येऽपि नास्तीत्याहुस्तेषां नास्तिताया अपि निःसाक्षिकाया असिद्धेस्तत्पक्षसाधकत्वेन तन्मध्यगतमित्यर्थः । अथवा जगतः अस्तित्वं आविर्भूतावस्थाकार्यम् । नास्तित्वं तु तिरोभावावस्थाकारणम् । 'असद्वा

अन्ये ऊचुः ।

यस्मिन्सर्वं यस्य सर्वं यतः सर्वं यस्मायिदम् ।
येन सर्वं यद्धि सर्वं तत्सत्यं समुपास्महे ॥ १२

अन्ये ऊचुः ।

अशिरस्कं हकारान्तमशेषाकारसंस्थितम् ।
अजस्रमुच्चरन्तं स्वं तमात्मानमुपास्महे ॥ १३

अन्ये ऊचुः ।

संत्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये ।
ते रत्नमभिवाञ्छन्ति त्यक्तहस्तस्थकौस्तुभाः ॥ १४

अन्ये ऊचुः ।

सर्वाशाः किल संत्यज्य फलमेतदवाप्यते ।
येनाशाविषवल्लीनां मूलमाला विलूयते ॥ १५

अन्ये ऊचुः ।

बुद्ध्वाप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः ।
बध्नाति भावनां भूयो नरो नासौ स गर्दभः ॥ १६

अन्ये ऊचुः ।

उत्थितानुत्थितानेतानिन्द्रियाहीन्पुनः पुनः ।
हन्याद्विवेकदण्डेन वज्रेणेव हरिर्गिरीन् ॥ १७

अन्ये ऊचुः ।

उपशमसुखमाहरेत्पवित्रं
सुशमवतः शममेति साधुचेतः ।
प्रशमितमनसः स्वके स्वरूपे
भवति सुखे स्थितिरुत्तमा चिराय ॥ १८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे सिद्धगीतानामाष्टमः सर्गः ॥ ८ ॥

---

इदमग्र आसीत्ततो वै सदजायत' इति श्रुतेः । तयोरुभयोरयौगपद्यात्पक्षयोः पाक्षिकयोरनुगतसन्मात्ररूपेण मध्यगतमित्यर्थः अथवा अस्तिनास्तीति पक्षयोः कल्पितविरुद्धकोट्योर्द्वयोरप्यधिष्ठानतया मध्यगतमित्यर्थः । अतएव कल्पितानास्तित्वस्याधिष्ठानस्पर्शान्नित्यं प्रकाश्यानां भावाभावानां प्रकाशकम् ॥ ११ ॥ **यस्मिन्सर्वं**मिति । यस्मै इदमिति च्छेदः । सप्तमीविभक्तिमारभ्य व्युत्क्रमेण सर्वा विभक्तयः षण्णां कारकाणां संबन्धप्रातिपदिकार्थाभेदस्य च प्रदर्शनायात्र निर्दिष्टाः । तथाच यद्ब्रह्म सर्वाधारत्वात्सर्वस्वामित्वादेः सर्वोपादाननिमित्तावधिभावात्सर्वपारार्थ्यसंप्रदानादिभावनिर्वाहकत्वात्सर्वकर्तृकरणादिभावाच्च मायया सर्वजगद्व्यवहारनिर्वाहकं सर्वात्मकं च भवति तत्सर्वाधिष्ठानं परमार्थसत्यं प्रत्यगात्मैवेति बोधेन सम्यगुपेत्य तद्भूता आस्महे इत्यर्थः ॥ १२ ॥ अः शिर इव प्रथमो यस्य तमकारादिमित्यर्थः । हकारोऽन्ते यस्य तं हकारान्तमहंपदमशेषवस्तुप्रकाशकवेदशास्त्रादिशब्दजालप्रकृतिभूतानामशेषवर्णानामक्षरसमाम्नाये अकारहकारान्तरालनिवेशादशेषजगदाकारे सप्रपञ्चे ब्रह्मणि न हन्यते न हीयते इति व्युत्पत्त्या 'अह व्याप्ता'विति धातुनिष्पत्त्या च न शिष्यते आकारो यस्मिन्नित्यशेषाकारे निर्गुणे च संस्थितं तात्पर्यनिष्ठां प्राप्तमजस्रं क्रियमाणेषु स्वव्यवहारेषु उच्चरन्तं अहंकारोपाधिनिरासेन तं वर्णिताहंपदार्थं 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुतिप्रसिद्धब्रह्मात्मानमुपास्महे निरन्तरं भावयाम इत्यर्थः । अथवा अशेषवस्त्वाकारसंस्थितं लंवंरंयंहं इति हकारान्तं पञ्चबीजप्रतिपाद्यपञ्चमहाभूतात्मकं जगत् अशिरस्कं शिरोभूतमूलाज्ञानरहितं कर्तुमिव अस्त्यस्यति वा मायान्तं जगदिति व्युत्पत्त्याऽस्मच्छब्दनिष्पन्नमकारशिरस्कहकारान्तमहंपदमजस्रमुच्चरन्तम् । 'युष्यसिभ्यां मदिक्'इत्यस्तेरस्यतेर्वास्मच्छब्दव्युत्पादनादित्यर्थः । अथवा अशेषजगदाकारसंस्थितं निष्प्रमाणकत्वेन निर्मूलत्वाच्छुतिशिरोबाह्यत्वाच्चाशिरस्कं हकारान्तं सोऽहं परमार्थासङ्गचिदेकरसत्वादजस्रमुच्चरन्तं उदस्य चरन्तमुद्धृत्य भक्षयन्तं वा स्वं प्रत्यग्रूपमात्मानमुपास्महे इत्यर्थः । संग्रहे तु सशिरस्कं हकारादिमिति पाठः । तस्य च सुरनरतिर्यगाद्यशेषशरीराकारेषु संस्थितं सशिरस्कं हकारादिं हंस इति मन्त्रमजपागायत्रीरूपेण षट्शताधिकैकविंशतिसहस्रसंख्यया अजस्रं प्रत्यहं श्वासोच्छ्वासच्छलेनोच्चरन्तमित्यर्थः । 'उदश्चरः सकर्मकात्' इत्यात्मनेपदविषये लटः शत्रादेशश्छान्दसः । अथवा पूर्वरूपेणापहारान्न शिष्यते अकारो यत्र तदशेषाकारं सो इति पदं तत्र संस्थितं अतएव अशिरस्कं शिरोभूतप्रथमवर्णरहितं हकारान्तं हकारमात्रावशेषं अहंपदं सोहंमन्त्रमिति यावत् । अजस्रमुच्चरन्तमित्यादि प्राग्वत् ॥१३॥ हृद्गुहेशानं 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ईशानो भूतभव्यस्य स एवाद्य स उश्वः' इत्यादिश्रुतिप्रसिद्धमिति भावः ॥ १४ ॥ अन्ये तत्प्राप्तौ वैराग्यमेव मुख्यं साधनमित्याहुः—**सर्वाशा** इति । एतत् हृदयस्थं ज्ञानफलं ब्रह्म अवाप्यते लभ्यते । येन तल्लाभेन मूलमालावासनाजालजटिलहृदयग्रन्थिः । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवद्वचनादिति भावः॥१५॥ पदार्थेषु भोग्यविषयेषु । भावनां भोगतृष्णाम् ॥१६॥ अन्ये इन्द्रियनिग्रह एव मुख्यं साधनमित्याशयेनाहुः—**उत्थितानि**ति । हरिरिन्द्रः । तथाच ब्रह्मवैवर्ते 'एकमेकं कालकूटमिन्द्रियं नाशकृत्पुनः । तदेव शोधितं साक्षाद्विषमप्यमृतं यथा' इति । तथाच भारतेऽपि—'इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ । निगृहीतविसृष्टानि स्वर्गाय नरकाय च' ॥ १७ ॥ अन्ये तु उपशम एव मुख्यं साधनमितरत्सर्वं तदर्थमित्याशयेनोपसंहरन्ति—**उपशमे**ति । उपशमो बाह्याभ्यन्तरेन्द्रियव्यापारोपरमस्तेन विक्षेपदुःखोपशमवदाविर्भूतमात्मसुखमाहरेत्संपादयेत् । तद्धि न विषयसुखवद्दोषहेतुः किंतु चित्तप्रसादहेतुत्वा-

१ यस्मा इदम् इति क्वचित्.

# नवमः सर्गः ९

श्रीवसिष्ठ उवाच ।

इति सिद्धगणोद्गीता गीताः श्रुत्वा महीपतिः ।
विषादमाजगामाशु भीरू रणरवादिव ॥ १
जगाम परिवारं स्वमाकर्षन्स्वगृहं प्रति ।
स्वतीरवृक्षानुगतः सरिदोघ इवार्णवम् ॥ २
परिवारमशेषेण विसृज्य स्वं स्वमालयम् ।
एक एवारुरोहाग्र्यं गृहमर्क इवाचलम् ॥ ३
तत्र प्रोड्डयनालोलखगपक्षतिचञ्चलाः ।
आलोकयँल्लोकगतीर्विललापेदमाकुलः ॥ ४
हा कष्टमतिकष्टासु लोकलोलदशास्वयम् ।
पाषाणेष्विव पाषाणा आलुठामि बलादहम् ॥ ५
अपर्यन्तस्य कालस्य कोऽप्यंशो जीव्यते मया ।
तस्मिन्भावं निबध्नामि धिङ्मामधमचेतनम् ॥ ६
कियन्मात्रमिदं नाम राज्यमाजीवितं मम ।
किमेतेन विना दुःखं तिष्ठामि हतधीर्यथा ॥ ७
आदावन्तेऽप्यनन्तोऽहं मध्ये पेलवजीवितः ।
बालश्चित्रेन्दुनेवाहं किं मुधा धृतिमास्थितः ॥ ८
प्रपञ्चरहितेनाहमिन्द्रजालेन जालिना ।
हा कष्टमतिमुह्यामि केनास्मि परिमोहितः ॥ ९
यद्वस्तु यच्च वा रम्यं यदुदारमकृत्रिमम् ।
किंचित्तदिह नास्त्येव किंनिष्ठेह मतिर्मम ॥ १०
दूरस्थमप्यदूरस्थं यन्मे मनसि वर्तते ।
इति निश्चित्य बाह्यार्थभावनां संत्यजाम्यहम् ॥ ११
लोकाजवं जवीभावः सलिलावर्तभङ्गुरः ।
दृष्टोऽप्यापि हि दुःखाय केयमास्था सुखं प्रति ॥ १२
प्रत्यब्दं प्रतिमासं च प्रत्यहं च प्रतिक्षणम् ।
सुखानि दुःखपिण्डानि दुःखानि तु पुनः पुनः ॥ १३
परामृष्टं विशिष्टं हि दृष्टं नष्टं न भावितम् ।
अत्रस्थं न तदस्तीह सतां यत्रास्तु संस्थितिः ॥ १४
अद्य ये महतां मूर्ध्नि ते दिनैर्निपतन्त्यधः ।
हतचित्तमहत्तायां कैषा विश्वस्तता बत ॥ १५
अरज्जुरेव बद्धोऽहमपङ्कोऽस्मि कलङ्कितः ।

त्पविभ्रम् । शमवशतो निरिन्धनाग्निवच्चेतः शमसुपक्षयं प्रयाति । एवं प्रशमितमनसः सुखे निरतिशयानन्दे स्वके स्वीये परमार्थस्वरूपे स्थितिर्भूमिका परम्परारोहणक्रमेणोत्तमा सप्तमभूमिकाप्रतिष्ठालक्षणा चिराय विदेहकैवल्यावधि भवतीत्यर्थः ॥ १८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सिद्धगीतानामाष्टमः सर्गः ॥ ८ ॥

इह श्रुतवतो राज्ञो निर्वेदाद्गृहमीयुषः ।
विमर्शेनार्थमूलानां मनोनिर्णय ईर्यते ॥ १ ॥

भीरुर्भयशीलः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ॥ १ ॥ स्वं स्वीयं परिवारम् ॥ २ ॥ स्वं स्वमालयं गृहं प्रति विसृज्य । गृहं गृहप्रासादम् । अचलमुदयाद्रिम् ॥ ३ ॥ प्रोड्डयने आलोलाः खगानां पक्षतयः पक्षमूलानीव चञ्चलाः । सोद्वेगं भङ्गुरा इति यावत् । लोकगतीर्देहादिदृश्यपदार्थस्थितीः । इदं वक्ष्यमाणप्रकारं विललाप ॥ ४ ॥ लोकानां जीवानां लोलासु जन्मजराभयमरणादिना लोलासु दशासु । पाषाणदृष्टान्तो मौर्ख्यकठोरताद्योतनार्थः ॥ ५ ॥ जीवधातोरकर्मकत्वेऽपि 'कालभावाध्वगन्तव्याः कर्मसंज्ञास्त्वकर्मणां' इति कात्यायनवचनाज्जीव्यते इति काले कर्मणि लः । तस्मिंस्तादृशेऽपि जीवने भावमाशाम् ॥ ६ ॥ आजीवितं जीवितावधि राज्यम् । एतेनैतावन्मात्रेण संतुष्टः सन् हतधीर्मूर्ख इव दुःखं भाविदुःखप्रतीकारचिन्तां विना किं तिष्ठामीत्यर्थः । अथवा एतेन एतावन्मात्रेण हतधीर्विनष्टबुद्ध्युपाधिर्जीवन्मुक्त इव विना दुःखं निर्दुःखं तिष्ठामि किं इति काका योज्यम् ॥ ७ ॥ ननु देह एवात्मा तस्य नाशे सहैव तेन सर्वदुःखनिवृत्तिः किं न स्यान्नेत्याह—**आदा**विति । कामकर्मवासनाबीजमन्तरेण भोगवैचित्र्यप्रयोजकजन्मासिद्धेर्विधिनिषेधमोक्षशास्त्रप्रामाण्यानुरोधाच्चानादिरनन्तश्चाहं न देहमात्र इत्यर्थः । चित्रलिखितेनानिन्दुनैवेन्दुबुद्ध्या गृहीतेन बाल इवानात्मनैवात्मतया गृहीतेन देहेनेत्यर्थः । धृतिमाश्वासम् ॥८॥ केन जालिना ऐन्द्रजालिकेन परिमोहितोऽस्मि ॥ ९ ॥ वसतीति वस्तु सत्यम्, रम्यं सुखैकरूपम्, उदारमपरिच्छिन्नम्, अकृत्रिममजन्यं च तत्तादृशं किंचिदपि इह जगति नास्त्येव । कस्मिन् निष्ठा विश्रान्तिर्यस्याः सा किंनिष्ठा भवत्विति शेषः ॥ १० ॥ ननु दूरदेशे तादृशं वस्तु प्रसिद्धं स्यान्नेत्याह—**दूरस्थ**मिति । दूरस्थत्वेन प्रसिद्धमपि यत्किंचिद्वस्तु अदूरस्थमेव । कुतः । यद्यस्मान्मे मनसि वर्तते । नहि मनो देहाद्बहिर्दूरं व्रजति । तथा सति दूरे एव तत्प्रथानुभूयेत न हृदि । हृद्येव हि सर्वे बाह्यवस्तुबोधमनुभवन्ति । तस्माद्दूरादिकल्पनाप्यन्तर्भासमाना न वास्तवीत्यनर्थ एवेति तद्भावना त्याज्यैव नोपादेयेत्यर्थः ॥ ११ ॥ लोकानां जनानां भोगार्थं धनार्जनादिप्रवृत्तिरूप आजवं जवीभावः सलिलावर्त इव भङ्गुरो नश्वरफलो जन्ममरणादिदुःखहेतुश्च बहुशो दृष्टः । सुखं विषयसुखं प्रति ॥ १२ ॥ उक्तमेव प्रपञ्चयति—**प्रत्यब्द**मित्यादिना । दुःखपिण्डानि दुःखनिबिडानि । एवार्थे तुशब्दः ॥ १३ ॥ अत्र संसारे तिष्ठतीत्यत्रस्थं किंचित्कालं दृष्टं सद्य एव नष्टं स्वराज्यादिपदं तुच्छत्वान्न भावितं न चिन्तितमेव । हि यतो विशिष्टं सर्वोत्कृष्टत्वेन प्रसिद्धमैन्द्रप्राजापत्यादिपदमपि परामृष्टं विचारितं सतां विवेकिनां संस्थितिरात्यन्तिकविश्रान्तिर्यत्रास्तु तादृशमिह नास्त्येवेत्यर्थः ॥ १४ ॥ हतेत्यधिक्षेपार्थं चित्तविशेषणम् । महत्तायां राज्यादिवैभवोत्कर्षे । 'हतचित्तमहंतायाम्' इति पाठे तु हतचित्तं यथा स्यात्तथा अहंतायां राज्याभिमाने इति योज्यम् ॥ १५ ॥ आत्मन्निति संबोधनम् । आत्मनि

पतितोऽस्म्युपरिस्थोऽपि हा ममात्मन्हता स्थितिः॥ १६
कस्मादकस्मान्मोहोऽयमागतो धीमतोऽपि मे ।
असितः पिहितालोको भास्कराग्रमिवाम्बुदः ॥ १७
क्व इमे मे महाभोगाः क्व इमे मम बान्धवाः ।
बालो भूतमयेनैव संकेतेनाहमाकुलः ॥ १८
स्वयमेव निबध्नामि जरामरणरागिणीम् ।
किमिमामहमेतेषु धृतिमुद्वेगकारिणीम् ॥ १९
यातु तिष्ठतु वा सम्यङ् ममैतां प्रति को ग्रहः ।
बुद्बुदश्रीरिवैषा हि मिथ्यैवेत्थमुपस्थिता ॥ २०
ते महाविभवा भोगास्ते सन्तः स्निग्धबान्धवाः ।
सर्वं स्मृतिपथं प्राप्तं वर्तमानेऽपि का धृतिः ॥ २१
क्व धनानि महीपानां ब्रह्मणः क्व जगन्ति वा ।
प्राक्तनानि प्रयातानि केयं विश्वस्तता मम ॥ २२
गिलितानीन्द्रलक्षाणि बुद्बुदानीव वारिणि ।
मां जीवितनिबद्धास्थं विहसिष्यन्ति साधवः ॥ २३
ब्रह्मणां कोटयो याता गताः सर्गपरम्पराः ।
प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीविते ॥ २४
संसाररात्रिदुःस्वप्ने चैत्ये[१] देहमये भ्रमे ।
आस्थां चेदनुबध्नामि तत्रेमां तु धिगस्थितिम् ॥ २५
अयं सोऽहमिति व्यर्थकल्पनाऽसत्स्वरूपिणी ।
अहंकारपिशाचेन किमज्ञवदहं स्थितः ॥ २६
हतं हतमिदं कस्मादायुरातततयानया ।
पश्यन्नपि न पश्यामि सूक्ष्मया काललेखया ॥ २७
पादपीठे कृतेशानाः शार्ङ्गिक्रीडनकन्दुकाः ।
कालकापालिकाग्रस्ताः किमास्थे मयि वल्गसि॥ २८
अजस्रमुपयान्त्येते यान्ति चाद्यापि वासराः ।
अविनष्टैकसद्वस्तुर्दृष्टो नाद्यापि वासरः ॥ २९
सारसाः सरसीवैते सर्वस्मिञ्जनचेतसि ।
भोगा एव स्फुरन्त्यन्तर्न तु स्वपददृष्टयः ॥ ३०
कष्टात्कष्टतरं प्राप्तो दुःखाद्दुःखतरं गतः ।
अद्यापि न निरस्तोऽसि हा धिङ्मामधमाशयम् ॥ ३१
येषु येषु दृढा बद्धा भावना भव्यवस्तुषु ।
तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥ ३२
यन्मध्ये यच्च पर्यन्ते यदापाते मनोरमम् ।
सर्वमेवापवित्रं तद्विनाशामेध्यदूषितम् ॥ ३३
येषु येषु पदार्थेषु धृतिं बध्नाति मानवः ।
तेषु तेष्वेव तस्यायं दृष्टो नाशोदयो भृशम् ॥ ३४
श्वःश्वः पापीयसीमेष श्वःश्वः क्रूरतरामपि ।
श्वःश्वः खेदकरीमेति दशामिह जडो जनः ॥ ३५
अज्ञानैकहतो बाल्ये यौवने मदनाहतः ।
शेषे कलत्रचिन्तार्तः किं करोति कदा जडः ॥ ३६
आगमापायि विरसं दशावैषम्यदूषितम् ।

स्वस्वभावे स्थितिर्हतेति सुब्लुकि सप्तम्यन्तं वा योज्यम् ॥ १६ ॥ असितः श्यामः । भास्करस्य अग्रं पुरोदेशम् ॥ १७ ॥ संकेतेन ममतालक्षणसंबन्धकल्पनेन ॥ १८ ॥ एतेषु भोगादिषु जरामरणयोः रागिणीं प्रियसखीमिवानयित्रीम् । धृतिं आस्थाम् ॥१९॥ एतां भोगबान्धवादिसंपदं प्रति को ग्रह आग्रहः ॥२०॥ ते चक्रवर्तिनां पृथुमरुत्तादीनां प्रसिद्धा महाविभवाः । सन्तः सद्गुणाः । सर्वमिति सामान्ये नपुंसकम् । का धृतिरास्था ॥ २१ ॥ ब्रह्मणः प्राक्तनहिरण्यगर्भस्य । जगन्ति भुवनानि क्व प्रयातानि मम निधनादिष्विति शेषः ॥ २२ ॥ गिलितानि कालेनेति शेषः । 'गलितानि' इति वा पाठः । साधवो विवेकिनः ॥ २३ ॥ कोटिग्रहणमानन्त्योपलक्षणम् संसारस्यानादित्वात् । धृतिरास्था ॥ २४ ॥ संसार एव रात्रिस्तमोमयत्वात्तत्र ये दुःस्वप्नभूते देहमये देहप्रचुरे अहंममताव्यवहारभ्रमे अस्थितिममर्यादामविवेकितामिति यावत् ॥ २५ ॥ अयमिति देहसंनिहिते अपरोक्षताकल्पनम् । स इति तद्विप्रकृष्टे परोक्षताकल्पना । अहमिति देहे आत्मताकल्पना । सा त्रिविधापि असत्स्वरूपिण्येव । अतः अहंकारपिशाचेन मोहित इति शेषः । अहमज्ञवत्किं किमर्थं निर्विचार एतावन्तं कालं स्थित इत्यर्थः ॥ २६ ॥ सूक्ष्मया क्षणलवमुहूर्तादिरूपया काललेखया इदमायुर्हतं हतं प्रतिक्षणं मुहुर्मुहुश्छिन्नं पश्यन्नपि कस्मान्न पश्यामि न विमृशामीत्यर्थः ॥ २७ ॥ पादपीठे पादपीठवदञ्चितेषु भुवनेषु कृताः प्रतिमावदञ्चिता नमिता वा ईशाना ईश्वरा ब्रह्मादयोऽपि यैः । शार्ङ्गिणो विष्ण्वादिदेहाः क्रीडनकन्दुका इव मुहुर्मुहुर्युद्धादिव्यवहारेषु नभस्युत्क्षिप्ता यैः । तथाविधा महाकल्पलक्षणकालरूपा ब्रह्मकपालपाणित्वात्कापालिका रुद्रास्तेऽपि महाकालेन ग्रस्ताः । आस्थे हे जीविताशे, मयि किं वल्गसि नृत्यसि ॥ २८ ॥ उपयान्ति आगच्छन्ति । अद्यास्मिन्नपि वयसि यान्ति वृथैवापगच्छन्ति । अविनष्टं नित्यमेकं सन्निर्दोषमानन्दैकरसं वस्तु लब्धं यस्मिंस्तथाविधो वासरोऽद्यापि अद्यतनकालावधि न दृष्टः ॥ २९ ॥ स्वं प्रत्यगात्मभूतं यत्परमं पदं तस्य दृष्टयः साक्षात्काराः ॥ ३० ॥ रागलोभादिदूषितत्वादधम आशयो मनो यस्य तम् ॥ ३१ ॥ भावना प्रीतिः । भव्येषु रमणीयेषु वस्तुषु विषयेषु ॥ ३२ ॥ मध्ये मनोरमं वयः । पर्यन्ते मनोरमो धर्मः । आपाते मनोरमा विषयाः ॥ ३३ ॥ धृतिमास्थाम् । तस्य मानवस्य । अयं प्रसिद्धः । नाशोदयो दुःखप्रादुर्भावः ॥ ३४ ॥ अज्ञस्योत्तरकालेऽपि विश्रान्तिप्रत्याशा नास्तीत्याह—**श्वःश्व** इति । रागलोभाद्यभिवृद्ध्या पापीयसीम् । हिंसादिप्रवृत्त्या क्रूरतराम् । तत्फलकाले खेदकरीम् ॥ ३५ ॥ शेषे वयसि । कलत्रं तदुपलक्षितं कुटुम्बं तद्भरणादिचिन्तया आर्तः । 'वित्तार्तः' इति पाठे कलत्रवित्तादिक्षयेणार्तः । कदा किं स्वोद्धारसाधनं करोति । न कदाचिदपीत्यर्थः ॥ ३६ ॥ आगमापायि आद्यन्तयोरसत् । भोगकालेऽपि विरसम् । दारिद्र्यरोगवार्धकादिदशावैषम्यैर्दूषितम् । असारमेव

१ चैत्यदेहमये इति पाठः.

असारसारं संसारं किं तत्पश्यति दुर्मतिः ॥ ३७
राजसूयाश्वमेधाद्यैरिष्ट्वा यज्ञशतैरपि ।
महाकल्पान्तमप्यंशं स्वर्गं प्राप्नोति नाधिकम् ॥ ३८
कोऽसौ स्वर्गोऽस्ति भूमौ वा पाताले वा प्रदेशकः ।
न यत्राभिभवन्त्येता दुर्भ्रमर्य इवापदः ॥ ३९
निजचेतोबिलव्यालाः शरीरस्थलपल्लवाः ।
आधयो व्याधयश्चैते निवार्यन्ते कथं किल ॥ ४०
सतोऽसत्ता स्थिता मूर्ध्नि मूर्ध्नि रम्येष्वरम्यता ।
सुखेषु मूर्ध्नि दुःखानि किमेकं संश्रयाम्यहम् ॥ ४१
जायन्ते च म्रियन्ते च प्राकृताः क्षुद्रजन्तवः ।
धरा तैरेव नीरन्ध्रा दुर्लभाः साधुसाधवः ॥ ४२
नीलोत्पलालिनयनाः परमप्रेमभूषणाः ।
हासायैव विलासिन्यः क्षणभङ्गितया स्थिताः ॥ ४३
येषां निमेषणोन्मेषैर्जगतां प्रलयोदयौ ।
तादृशाः पुरुषाः सन्ति मादृशां गणनैव का ॥ ४४
सन्ति रम्यतराद्रम्याः सुस्थिरादपि सुस्थिराः ।
चिन्तापर्यवसानेयं पदार्थश्रीः किमीहसे ॥ ४५
संपदश्च विचित्रा यास्ताश्चेच्चित्तेन संमताः ।
तत्ता अपि महारम्भा हन्त मन्ये महापदः ॥ ४६
आपदोऽपि विचित्रा यास्ताश्चेन्मनसि संमताः ।
तत्ता अपि महारम्भा मन्ये मनसि संपदः ॥ ४७
मनोमात्रविवर्तेऽस्मिञ्जगत्यब्धीन्दुभङ्गुरे ।
ममेदमित्यपूर्वेयं कुतस्त्याऽक्षरमालिका ॥ ४८
काकतालीययोगेन संपन्नायां जगत्स्थितौ ।
धूर्तेन कल्पिता व्यर्थं हेयोपादेयभावना ॥ ४९
इयत्ताच्छिन्नतप्तासु सुखनाम्नीषु दृष्टिषु ।
कास्वेतास्वनुरक्तोऽसि पतङ्गोऽग्निशिखास्विव ॥ ५०
वरमेकान्तदाहेषु लुठनं रौरवाग्निषु ।
नत्वालूनविवर्तासु स्थितं संसारवृत्तिषु ॥ ५१
संसार एव दुःखानां सीमान्त इति कथ्यते ।
तन्मध्यपतिते देहे सुखमासाद्यते कथम् ॥ ५२
अकृत्रिममहादुःखे संसारे ये व्यवस्थिताः ।
त एतेऽन्यानि दुःखानि जानते मधुराण्यलम् ॥ ५३
अहमप्यधमोत्कृष्टकाष्ठलोष्टसमस्थितिः ।
अज्ञैरेवागतः साम्यं परमामृष्टवस्तुभिः ॥ ५४
सहस्राङ्कुरशाखात्मफलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमहाङ्कुरः ॥ ५५

---

सारं सारबुद्ध्या गृहीतम् । किं वृथा पश्यति । यत्पश्यति तत्किंनिमित्तमिति वार्थः ॥ ३७ ॥ ननु 'यन्न दुःखेन संभिन्नम्' इत्यादिश्रुत्युक्तलक्षणः स्वर्गः सारभूतः किं न स्यात्तत्राह—**राजसूये**ति । महाकल्पान्तं ब्रह्मादिभोग्यमपि स्वर्गं महाकालदृशा अंशं क्षणभोग्यप्रायमल्पमेव प्राप्नोति नत्वधिकमपरिच्छिन्नमित्यसार एव स इत्यर्थः ॥ ३८ ॥ 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः स्वर्गिणामप्यसुरादिपीडाश्रुतेश्च न दुःखासंभिन्नत्वमपि तस्य संभवतीत्याशयेनाह—**कोऽसावि**ति ॥ ३९ ॥ किंच देहाभिमाने सत्याधिव्याध्योर्दुर्निवारत्वान्न क्वाप्यज्ञस्य विश्रान्तिरस्तीत्याशयेनाह—**निजे**ति ॥ ४० ॥ भङ्गुरत्वदुःखग्रस्तत्वाभ्यां सर्वस्यामङ्गलतामेव प्रपञ्चयति—**सत** इत्यादिना । सतः वर्तमानकालदृश्यस्य । असत्ता नाशः ॥ ४१ ॥ प्राकृताः प्रकृतिस्वाभाविकमज्ञानं तन्मोहिताः । नीरन्ध्रा निबिडितेति यावत् ॥ ४२ ॥ हासायैव योग्या इति शेषः ॥ ४३ ॥ ननु राजत्वात्सर्वेनियमनसमर्थस्योत्तमपुरुषस्य तव कुतो नाश्वासस्तत्राह—**येषा**मिति ॥ ४४ ॥ चिन्ता अर्जनरक्षणवियोगादिना । चिन्तैव पर्यवसानं फलं यस्यास्तथाविधेयं पदार्थश्रीरतस्तां किमीहसे इच्छसि ॥ ४५ ॥ या नानारत्नगजवाजिधनदारादिभेदेन विचित्राः संपदस्ताश्चेच्चित्तेन संमता बहुमताः स्युस्तत्तर्हि ता अपि महारम्भा बहुप्रयत्नलभ्या दुःखरक्ष्या अवश्यापायिन्यश्चेति महापद इत्येव मन्ये इत्यर्थः ॥ ४६ ॥ एवं या दारिद्र्यबन्धुराज्यादिनाशलक्षणा आपदोपि यदि साधुसङ्गतीर्थतपःप्रबोधादिप्रापणेन विचित्राः श्रेय एवेति मनसि संमतस्थिता अपि विवेक-वैराग्यादिमहारम्भाः संपद एव मन्ये इत्यर्थः ॥ ४७ ॥ तस्मादसत्ये जगति ममताभिवृद्धिरेव विपत् । विवेकात्तत्परिक्षय एव संपदित्याशयेन जगतो ममतानर्हत्वं दर्शयति—**मनोमा**त्रेति । अब्धौ प्रतिबिम्बित इन्दुरिव भङ्गुरे भङ्गस्वभावे मिथ्याभूते च । अक्षरमालिका पदवाक्यात्मिका वर्णपङ्क्तिः कुतस्त्या । निरर्थिकेति यावत् ॥ ४८ ॥ काकतालीययोगेन काकागमनमिव तच्छिरसि तालपतनमिवाविचारमात्रकृतेन स्वसंबन्धेन । धूर्तेन भोगलम्पटेन मनसा ॥ ४९ ॥ देशकालवस्तुकृतया इयत्तया आच्छिन्नासु परिच्छिन्नासु त्रिविधतापग्रस्तत्वात्तप्तासु । दीपाग्निशिखापक्षे स्पष्टम् ॥ ५० ॥ निरन्तरदुःखभोगोऽभ्यासात्सह्योऽपि स्यात् सुखभोगविच्छिन्नाभ्यासो दुःखभोगोऽयं दुःसह एवेत्याशयेनाह—**वर**मिति । आलूना विच्छिन्नाः सुखदुःखपरिवर्ता यासु । स्थितं स्थितिः । भावे क्तः ॥ ५१ ॥ विषयसुखानां सुखता नास्त्येव किंतु दुःखविशेषरूपतैवेति युक्त्योपपादयति—**संसार** इति ॥ ५२ ॥ कथं तर्हि सुखत्वानुभवस्तत्र युक्तिमाह—**अकृत्रिमे**ति । खड्गाघातानुभवात्कशाघातानुभवः सुखमितिवद्दुःखान्येव मधुराणि सुखानि जानते मन्यन्त इत्यर्थः ॥ ५३ ॥ श्रुतिस्मृत्यादिप्रमाणकुशलो मेधावी विचारपटुरप्यहं परमत्यन्तमेव न मृष्टानि न विचारितानि शास्त्रलोकप्रमाणवस्तूनि यैस्तैरज्ञैर्मूर्खैः साम्यमित्यर्थः ॥ ५४ ॥ इदानीं स्वस्य प्रमाणकुशलतां संसारमूलावधारणेन सफलयति—**सहस्रे**ति । अङ्कुराः संकल्पाः शाखा देहभुवनादयः । आत्मा शरीरमस्य विराट् । फलानि सुखदुःखे । पल्लवा रागलोभास्तैः

संकल्पमेव तन्मन्ये संकल्पोपशमेन तत् ।
शोषयासि यथा शोषमेति संसारपादपः ॥ ५६

आकारमात्ररम्यासु मनोमर्कटवृत्तिषु ।
परिज्ञाताखिहाद्यैव न रमे नाशनीष्वहम् ॥ ५७

आशापाशशतप्रोताः पातोत्पातोपतापदाः ।
संसारवृत्तयो भुक्ता इदानीं विश्रमाम्यहम् ॥ ५८

हा हतोऽस्मि विनष्टोऽस्मि मृतोऽस्मीति पुनःपुनः ।
शोचितं गतमेवाहमिदानीं नानुरोदिमि ॥ ५९

प्रबुद्धोऽस्मि प्रहृष्टोऽस्मि दृष्टश्चोरोऽयमात्मनः ।
मनो नाम निहन्म्येनं मनसास्मि चिरं हतः ॥ ६०

एतावन्तमिमं कालं मनोमुक्ताफलं मम ।
अविद्धमासीदधुना विद्धं तु गुणमर्हति ॥ ६१

मनस्तुषारकणिका विवेकार्कातपेन मे ।
चिरप्रवृत्तये नूनमचिराल्लयमेष्यति ॥ ६२

विविधैः साधुभिः सिद्धैरहं साधु प्रबोधितः ।
आत्मानमनुगच्छामि परमानन्दसाधनम् ॥ ६३

आत्मानं मणिमेकान्ते लब्ध्वैवालोकयन्सुखम् ।
तिष्ठाम्यस्तमितान्येहः शारदीवाचलेऽम्बुदः ॥ ६४

अयमहमिदमाततं ममेति
स्फुरितमपास्य बलादसत्यमन्तः ।
रिपुमतिबलिनं मनो निहत्य
प्रशममुपैमि नमोऽस्तु ते विवेक ॥ ६५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० उपशमप्रकरणे जनकवितर्को नाम नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः १०

श्रीवसिष्ठ उवाच ।

इति चिन्तयतस्तस्य पुरः संप्रविवेश ह ।
प्रतीहारः परो भानोः स्यन्दनाग्र इवारुणः ॥ १

प्रतीहार उवाच ।

देव दोःस्तम्भविश्रान्तसमस्तवसुधाभर ।
संपादयोत्तिष्ठ दिनव्यापारं नृपतोचितम् ॥ २

एताः कुसुमकर्पूरकुङ्कुमाम्बुघटाः स्त्रियः ।
स्नानभूमौ स्थिताः सज्जा नद्यो मूर्तियुता इव ॥ ३

एताः कमलकह्लारकाननभ्रान्तषट्पदाः ।
कृताः कमलिनीपाशरचितांशुकमण्डपाः ॥ ४

एताः कमलिनीतीरभुवश्छत्रैः प्रपूरिताः ।
सचामररथेभाश्वैः स्नानावसरसेविनाम् ॥ ५

समग्रसुमनःपूर्णै रत्नौषधिपरिप्लुतैः ।
सज्जीकृताः पटलकैर्देवार्चनगृहास्तथा ॥ ६

स्नातः पवित्रहस्तश्च परिजप्याघमर्षणः ।
त्वामेव प्रेक्षते देव दक्षिणार्हो द्विजव्रजः ॥ ७

---

शालिनः शोभमानस्य ॥ ५५ ॥ मनसोऽपि रहस्यं स्वेन ज्ञातमेवेत्याह—**संकल्पमेवे**ति ॥ ५६ ॥ मनोमर्कटस्य वृत्तिषु चापलेषु । अद्यैव अद्यप्रभृति ॥ ५७ ॥ पातोऽधोगतिः । उत्पात ऊर्ध्वगतिः अपकर्षोत्कर्षौ वा । उपतापो दुःखम् ॥ ५८ ॥ इति मया यत्पुनःपुनः प्राक् शोचितं तद्गतमेव । अहमिदानीं नानुरोदिमि न शोचामीत्यर्थः ॥ ५९ ॥ कुतो नानुशोचसि तत्राह—**प्रबुद्धोऽस्मी**ति । आत्मनः स्वपारमार्थिकरूपधनस्य चोरोऽपहर्ता । न केवलं चोरत्वादेव निहन्म्यपि तु वैरित्वादपीत्याह—**मनसे**ति ॥ ६० ॥ अविद्धमलक्षीकृतम् । मुक्ताफलपक्षे अच्छिद्रितम् । गुणं शमदमादिम् । मुक्तापक्षे सूत्रम् ॥ ६१ ॥ चिरं अनादिब्रह्मतत्त्वं तत्र प्रवृत्तये प्रतिष्ठार्थम् । तुषारकणिकापक्षे चिरप्रवृत्तिः सदागतिर्वायुस्तत्प्राप्तये । 'यदा वा आप उच्छुष्यन्ति वायुमेवापियन्ति' इति श्रुतेरित्यर्थः ॥ ६२ ॥ विविधैरुपदेशैः । सिद्धविशेषणं वा । अनुगतिमात्रेण परमानन्दस्य स्वस्यैव साधनम् । अभेदेऽप्युपचारात्करणता ॥ ६३ ॥ अतः परमात्मनिष्ठां कदापि न त्यक्ष्यामीत्याह—**आत्मान**मिति । अचले हिमवदादौ ॥ ६४ ॥ इदानीमुक्तं संक्षिप्योपसंहरन् विवेकगुरुं नमस्यति—**अय**मिति । अयं देहोऽहमिति इदं धनराज्यादि ममेति स्फुरितमातत[illegible]  समाध्यभ्यासेनातिबलिनं मनोरिपुं निःशेषं हत्वा सप्तमभूमिकाविश्रान्तिलक्षणं प्रशममुपैमि प्राप्नोमि ॥ ६५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे जनवितर्को नाम नवमः सर्गः ॥ ९ ॥

द्वाःस्थेन प्रार्थितेऽन्यत्र माध्याह्निकविधिक्रमे ।
तूष्णीं विचारो भूयोऽपि जनकस्योपवर्ण्यते ॥ १ ॥

प्रतीहारो द्वारपालः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः ॥ १ ॥ दोःस्तम्भयोर्विश्रान्तः समस्तवसुधाभरो यस्य । नृपताया उचितमनुरूपम् ॥ २ ॥ तत्र सामग्रीसिद्धिमाह—**एता** इत्यादिना ॥ ३ ॥ कमलिनीपाशैः सपद्मबिसरज्जुभी रचिताः परितश्चारुनिर्मिताः कनकचित्रांशुमण्डपा यासु तथाविधा अत एव एताः कर्बुरवर्णाः कमलिन्याः कमलवत्याः सरस्यास्तीरभुव इति परेणान्वयः ॥ ४ ॥ तथा स्नानावसरे सेवन्ते तच्छीलानां जनानां चामरै रथैरिभैरश्वैश्च सहितैश्छत्रैश्च प्रपूरिताः । अनेन हंससारसनक्रपद्मादिसहितसरसीसाम्यापत्तिस्तीरभुवोऽर्थाद्गम्यते ॥ ५ ॥ समग्रैः सुमनोभिः पुष्पैराप्तभृत्यैश्च पूर्णैः । अन्नैः पक्वैरोषधिभिर्यवाङ्कुरादिभिश्च परिप्लुतैः परिष्कृतैः । 'रत्नौषधी'ति पाठे स्पष्टम् । पटलकैः प्रान्तभागैः । हे देवेति संबुद्धिः । अर्चनगृहा देवब्राह्मणातिथिपूजागृहाः । देवार्चनगृहाः इत्यैकपद्यं वा ॥ ६ ॥ तव स्नानकाले परितो जप्या जपितव्या अघमर्षणमन्त्रा

लसच्चामरहस्ताभिः पाल्यते परमेश्वर ।
सज्जीकृतास्ते कान्ताभिः शीता भोजनभूमयः ॥ ८
शीघ्रमुत्तिष्ठ भद्रं ते नियतं कार्यमाचर ।
न कालमतिवर्तन्ते महान्तः स्वेषु कर्मसु ॥ ९
प्रतीहारपतावित्थमुक्तवत्यथ पार्थिवः ।
तथैव चिन्तयामास चित्रां संसारसंस्थितिम् ॥ १०
कियन्मात्रमिदं नाम राज्यं सुखमिति स्थितम् ।
न प्रयोजनमेतेन ममेह क्षणभङ्गिना ॥ ११
सर्वमेव परित्यज्य मिथ्याशम्बरडम्बरम् ।
एकान्त एव तिष्ठामि संशान्त इव वारिधिः ॥ १२
अलमेभिरसत्प्रायैर्मम भोगविजृम्भितैः ।
त्यक्त्वा सर्वाणि कर्माणि सुखं तिष्ठामि केवलम् ॥ १३
चित्त चातुर्यमेतस्माद्भोगाभ्यासकुसंभ्रमात् ।
त्यज जन्मजराजाड्यजालजम्बालशान्तये ॥ १४
दशासु यासु यास्वेव संभ्रमं चित्त पश्यसि ।
ताभ्य एवाभिरचितं परमं दुःखमेष्यसि ॥ १५
प्रवृत्तं सन्निवृत्तं सद्भूयोभूयश्चिरंचिरम् ।
भोगभूमिषु सर्वासु चित्तं तृप्तिं न गच्छति ॥ १६
तस्मात्पापालमनया तुच्छया भोगचिन्तया ।
भवत्यकृत्रिमा तृप्तिर्येनाभिपत तं ततः ॥ १७
इति संचिन्त्य जनकस्तूष्णीमेव बभूव ह ।
शान्तचापलचेतस्त्वाल्लिपिकर्मार्पितोपमः ॥ १८
प्रतीहारोऽपि नोवाच गौरवेण भयेन च ।
पुनर्वाक्यं महीपानां चित्तवृत्तिषु शिक्षितः ॥ १९
तूष्णीमथ क्षणं स्थित्वा जनको जनजीवितम् ।
पुनः संचिन्तयामास मनसा शमशालिना ॥ २०
किमुपादेयमस्तीह यत्नात्संसाधयाम्यहम् ।
कस्मिन्वस्तुनि बध्नामि धृतिं नाशविवर्जिते ॥ २१
किं मे क्रियापरतया किं मे निष्क्रिययापि वा ।
न तदस्ति विनाशेन वर्जितं यत्किलोदितम् ॥ २२
क्रियावानक्रियो वास्तु कायोऽयमसदुत्थितः ।
समस्थितस्य शुद्धस्य चितः का नाम मे क्षतिः ॥ २३
नाभिवाञ्छाम्यसंप्राप्तं संप्राप्तं न त्यजाम्यहम् ।
स्वस्थ आत्मनि तिष्ठामि यन्ममास्ति तदस्तु मे ॥ २४
न ममेह कृतेनार्थो नाकृतेनेह कश्चन ।
क्रिययाऽक्रियया वापि यत्प्राप्तं तदसन्मयम् ॥ २५
अकुर्वतः कुर्वतो वा युक्तायुक्ताः क्रिया मम ।
नाभिवाञ्छितमस्तीह यदुपादेयतां गतम् ॥ २६
तदुत्थाय क्रमप्राप्तां कायोऽयं प्रकृतां क्रियाम् ।
करोत्वस्पन्दिताङ्गस्तु किमयं साधु शुष्यति ॥ २७
स्थिते मनसि निष्कामे समे विगतरञ्जने ।
कायावयवजौ कार्यौ स्पन्दास्पन्दौ फले समौ ॥ २८
कर्मजासु फलश्रीषु मनसा कर्तृभोक्तृते ।
तस्मिन्प्रशान्तिमायाते कृतमप्यकृतं नृणाम् ॥ २९
यो निश्चयोऽन्तः पुरुषस्य रूढः
क्रियास्वसौ तन्मयतामुपैति ।
अनामयं मे पदमाहता धी-
रधीरतामन्तरलं त्यजामि ॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपाये उपशमप्रकरणे जनकनिश्चयो नाम दशमः सर्गः ॥ १० ॥

---

येन अतएव दक्षिणार्हः ॥ ७ ॥ लेपनचन्दनोदकसेकादिपरिष्कृतत्वाच्छीताः शीतलाः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ शम्बरपदेन शाम्बरीमाया लक्ष्यते । मिथ्याशम्बरं मृगतृष्णाजलं तत्सदृशं वा ॥ १२ ॥ १३ ॥ हे चित्त, चातुर्यं सुखलवास्वादचतुरतां त्यज ॥ १४ ॥ यासु दशासु विषयाभिलाषतत्प्रयत्नतदुपभोगतदनुस्मरणादिरूपासु । संभ्रमं सुखलवास्वादभ्रान्तिंमुत्साहं वा ॥ १५ ॥ भोगाशया प्रवृत्तं सत् भोगशक्तिकुण्ठीभावाल्लोकशास्त्रादिभयाच्च निवृत्तं सत् ॥ १६ ॥ ततः कृत्रिमसुखानामनर्थबीजत्वाद्येन हेतुना अकृत्रिमा प्रीतिर्भवति तं हेतुं पत । लभस्वेति यावत् ॥ १७ ॥ १८ ॥ चित्तवृत्तिषु चित्तानुवर्तनेषु ॥ १९ ॥ जनजीवितं प्राणिजीवननिदानम् । 'येन जातानि जीवन्ति' इति श्रुतेः ॥ २० ॥ २१ ॥ अपि वा कार्यमिति शेषः । यत्किल उदितं जन्म प्राप्तं तत् विनाशेन वर्जितं नास्ति । जन्यभावस्य विनाशनियमादिति भावः ॥ २२ ॥ समस्थितस्य देहचलनाचलनदशयोस्तुल्यरूपस्थितेः । चितश्चिन्मात्रस्वभावस्य ॥ २३ ॥ यन्मम प्रारब्धोपनीतमस्ति तदेवास्तु नान्यदित्यर्थः । अथवा यन्मम निरतिशयानन्दरूपमान्तरमस्ति तदेवास्तु न बाह्यं किंचिदित्यर्थः ॥ २४ ॥ अकृतेन उपेक्षणेन । कश्चन अनर्थ इति शेषः । अक्रियया उपेक्षया । प्राप्तं दुःखमसन्मयं मायामयम् । मिथ्यैवेति यावत् ॥ २५ ॥ युक्ताः शास्त्रविहिताः । अयुक्ता लोकप्राप्ताः ॥ २६ ॥ पूर्वपूर्वव्यवहारक्रमप्राप्ताम् । अस्पन्दिताङ्गस्त्वयं देहः शुष्यति तत्किं साधु आवश्यकं नेत्यर्थः ॥ २७ ॥ कार्यौ प्रारब्धकर्मोपनीतौ । पुण्यपापानुदयलक्षणे फले समौ ॥ २८ ॥ तत्कुतस्तत्राह—**कर्मजास्विति**। कृतमप्यकृतं भुक्तमप्यभुक्तमित्यपि योज्यम् ॥ २९ ॥ पुरुषस्यान्तर्य एव निश्चयः कर्ता भोक्तेति वा असौ पुरुषः सर्वासु देहादिक्रियासु तन्मयतां स्वनिश्चितार्थमयतामुपैतीति वस्तुस्थितिः । सांप्रतं तु मे मम धीरनामयं कर्तृभोक्तृतारोगशून्यमात्मपदमाहता आविद्धा तद्दृढनिश्चयासंपन्नेत्यर्थः । अतः अन्तश्चित्ते कृताकृतफलावश्यंभावाय पुनर्जन्मादिप्राप्तिशङ्कानिमित्तामिष्टानिष्टप्राप्तिविघातनिमित्तां चाधीरतामलमत्यन्तमेव त्यजामीत्यर्थः ॥ ३० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे जनकनिश्चयो नाम दशमः सर्गः ॥ १० ॥

## एकादशः सर्गः ११

श्रीवसिष्ठ उवाच ।

इति संचिन्त्य जनको यथाप्राप्तां क्रियामसौ ।
असक्तः कर्तुमुत्तस्थौ दिनं दिनपतिर्यथा ॥ १
इष्टानिष्टाः परित्यज्य चेतसा वासनाः स्वयम् ।
यथाप्राप्तं चकारासौ जाग्रत्येव सुषुप्तवत् ॥ २
संपाद्य तदहःकार्यमार्यावर्जनपूर्वकम् ।
अनयच्छर्वरीमेकस्त्वयैव ध्यानलीलया ॥ ३
मनः समरसं कृत्वा संशान्तविषयभ्रमम् ।
शर्वर्यां क्षीयमाणायामित्थं चित्तमबोधयत् ॥ ४
चित्त चञ्चल संसार आत्मनो न सुखाय ते ।
शममेहि शमाच्छान्तं सुखं सारमवाप्यते ॥ ५
यथा यथा विकल्पौघान्संकल्पयसि हेलया ।
तथा तथैति स्फारत्वं संसारस्तव चिन्तया ॥ ६
शतशाखत्वमायाति सेकेन विटपी यथा ।
अनन्ताधित्वमायासि शठभोगेच्छया तथा ॥ ७
चिन्ताजालविलासोत्था[2] जन्मसंसारसृष्टयः ।
तस्मात्त्यक्त्वा विचित्रां त्वं चिन्तामुपशमं व्रज ॥ ८
संसारसृष्टितरलामिमां तुलय सुन्दर ।
अस्यां चेत्सारमाप्नोषि तदेतामेव संश्रय ॥ ९
आस्थां यस्मात्परित्यज्य दृश्यदर्शनलालसात् ।
मैतद्गृहाण मा मुञ्च स्वेच्छया विहरेच्छया ॥ १०
इदं दृश्यमसत्सद्वाप्युदेत्वस्तमुपैतु वा ।
साधो विषमतां गच्छ मैतदीयैर्गुणागुणैः ॥ ११
मनागपि न संबन्धस्तव दृश्येन वस्तुना ।
अविद्यमानरूपेण संबन्धः कोऽयमीदृशः ॥ १२
असत्त्वमेतच्च न सद्वयोरेवासतोः सतोः ।
संबन्ध इति चित्रेयमपूर्वैवाक्षरावली ॥ १३
असदेतत्तु सच्चेत्त्वं तथापि किल सुन्दर ।
सङ्गः सदसतोः कीदृग्वद त्वं मर्त्यजीवयोः ॥ १४
चित्त त्वमथ दृश्यं च द्वे एव यदि सन्मये ।
सदास्थिते तत्प्रसरः कुतो हर्षविषादयोः ॥ १५
तस्मान्महाधिं मुञ्च त्वं मूकमुल्लासमाहर ।
संक्षुब्धाम्बुधिमाविष्टां त्यजाभ्यासिमां स्थितिम् ॥
कन्दुकालातवद्व्यर्थमात्मनैव परिज्वलन् ।
मा मोहमलमासाद्य मन्दतां गच्छ सन्मते ॥ १७
न तदिहास्ति समुन्नतमुत्तमं
व्रजसि येन परां परिपूर्णताम् ।
तदवलम्ब्य बलादतिधीरतां
जहिहि चञ्चलतां शठ रे मनः ॥ १८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे चित्तानुशासनं नामैकादशः सर्गः ॥ ११ ॥

---

कृताह्निकस्य राज्ञोऽत्र निशान्ते वर्ण्यते पुनः ।
विवेकैर्बहुभिश्चित्रैः स्वचित्तस्य प्रबोधनम् ॥ १ ॥

असक्तः कर्तृत्वभोक्तृत्वाभिमानलक्षणासङ्गरहितः ॥ १ ॥ इदं मे इष्टमिदं मेऽनिष्टमिति कल्पनानिमित्तभूता वासनाः । **सुषुप्तवदिति** । स्थूलसूक्ष्मदेहाद्यभिमानाभावे जाग्रत्सुषुप्तयोर्विशेषाभावादिति भावः ॥ २ ॥ आर्याणां पूज्यानां देवब्राह्मणादीनामावर्जनं पूजादानादिना समाधानम् । अहःकार्यमाह्निकम् ॥ ३ ॥ समरसं समाहितं कृत्वा । इत्थं वक्ष्यमाणदिशा ॥ ४ ॥ शान्तं निर्विक्षेपं सारभूतमात्मसुखम् ॥ ५ ॥ ६ ॥ अनन्ताधित्वमसंख्यव्यथाशालितामायासि प्राप्नोषि त्वम् ॥ ७ ॥ यतो जन्मसंसारसृष्टयो विषयचिन्ताजालविकल्पोत्था इति पूर्वेणान्वयः ॥ ८ ॥ हे सुन्दर विवेकिन्, इमां संसारसृष्टिं शमसुखं च तुलय तुलामारोप्येव बुद्ध्या कः सार इति परीक्षस्व । तरलामित्यनेन नश्वरत्वाद्विक्षेपदुःखजटिलत्वाच्च नास्त्यत्र सार इति सूचितम् ॥ ९ ॥ यस्मादियमसारा तस्मादस्यामास्थां परित्यज्य एतदसारं दृश्यं दर्शनयोग्यमेतदिति दर्शनलालसात्प्रियं मा गृहाण अप्रियं च दर्शनानर्हमिति द्वेषान्मा मुञ्च किंतूभयसाक्षिस्वात्ममात्रेच्छया आत्मकामः सन् इच्छया स्वैरं विहर ॥ १० ॥ असत्प्रागविद्यमानं सुखदुःखसाधनमुदेतु सांप्रतं सद्विद्यमानमस्तं नाशमुपैतु वा । मा तदागमापायप्रयुक्तहर्षविषादलक्षणां विषमतां गच्छेत्यर्थः ॥ ११ ॥ ननु सति तत्संबन्धे कथं तत्प्रयुक्तवैषम्यवर्जनसंभवस्तत्राह—**मनागपीति** ॥ १२ ॥ हे मनः, त्वमसत् । एतद्दृश्यं च न सत् । अप्यर्थे एवकारः । अतो द्वयोरपि वन्ध्यापुत्रखपुष्पयोरिवासतोः सतोर्निःस्वरूपस्थितिकयोः संबन्ध इत्यक्षरावली उक्तिः अपूर्वा । आश्चर्यैवेत्यर्थः ॥ १३ ॥ यदि मन्यसे नाहमसत् सत्य आत्मैवाहं दृश्यमेवासदिति तथापि न संबन्धघटनेत्याह—**असदिति** । मर्त्यजीवयोः सदा मृतजीवतोः ॥ १४ ॥ द्वयोरपि सत्त्वमेव नासत्त्वं कस्यचिदपीति कल्पेऽपि कदापीष्टवियोगाभावान्न हर्षविषादप्रसक्तिरित्याह—**चित्तेति** । हे चित्त, त्वं इति च्छेदः ॥ १५ ॥ महान्तमाधिं विषादं मूकं तूष्णींभूतं सदात्मस्वरूपस्थितावुत्साहमाहर समाध्यभ्यासेन संपादय । संक्षुब्धं संक्षोभो विक्षेपस्तल्लक्षणमम्बुधिम् ॥ १६ ॥ कन्दुकालातमुत्सवेषु जनकौतुकार्थमाग्नेयद्रव्यरचितं कन्दुकाकारमलातयन्त्रम् । तद्धि स्वत एव ज्वलत्पुनःपुनरुच्छलति । मोहं अलमिति वा मोहलक्षणं मलमिति वा ॥ १७ ॥ इह दृश्यवर्गमध्ये येन लब्धेन त्वं परिपूर्णतां व्रजसि तत्तादृशं कि-

---

१ मेकान्तयैव इति पाठः.

२ अत्र विकल्पोत्था इति पाठः.

# द्वादशः सर्गः १२

श्रीवसिष्ठ उवाच ।

एवं विचारयंस्तत्र स्वराज्ये जनको नृपः ।
चकाराखिलकार्याणि न मुमोह च धीरधीः ॥ १
न मनः प्रोल्ललासास्य क्वचिदानन्दवृत्तिषु ।
केवलं सुषुप्तसंस्थं सदैव व्यवतिष्ठत ॥ २
ततःप्रभृत्यसौ दृश्यं नाजहार न वात्यजत् ।
केवलं विगताशङ्कं वर्तमाने व्यवस्थितः ॥ ३
अनारतविवेकेन तेन सद्यः सनातनम् ।
पुनः कलङ्कं नैवाप्तमस्वरेणेव राजसम् ॥ ४
स्वविवेकानुसंधानादिति तस्य महीपतेः ।
सम्यग्ज्ञानमनन्ताभमलं विमलतां ययौ ॥ ५
अनामृष्टविकल्पांशुश्चिदात्मा विगतामयः ।
उदियाय हृदाकाशे तस्य व्योम्नीव भास्करः ॥ ६
स ददर्शाखिलान्भावांश्चिच्छक्तौ समवस्थितान् ।
आत्मभूताननन्तात्मा सर्वभूतात्मकोविदः ॥ ७
प्रहृष्टो न बभूवासौ क्वचिन्न च सुदुःखितः ।
प्रकृतेर्व्यवहारत्वात्सदैव सममानसः ॥ ८
जीवन्मुक्तो बभूवासौ ततःप्रभृति मानदः ।
जनको जरठज्ञानी ज्ञातलोकपरावरः ॥ ९
राज्यं कुर्वन्विदेहानां जनको जनजीवितम् ।
नैव हर्षविषादाभ्यां सोऽवशः परितप्यते ॥ १०
नास्तमेति न चोदेति गुणदोषविचेष्टितैः ॥ ११
अर्थानर्थैः स राज्योत्थैर्न ग्लायति न हृष्यति ।
कुर्वन्नपि करोत्येष न किंचिदपि कुत्रचित् ।
स तिष्ठत्येव सततं सर्वदैवान्तरे चितः ॥ १२
सुषुप्तावस्थितस्यैव जनकस्य महीपतेः ।
भावनाः सर्वभावेभ्यः सर्वथैवास्तमागताः ॥ १३
भविष्यं नानुसंधत्ते नातीतं चिन्तयत्यसौ ।
वर्तमाननिमेषं तु हसन्नेवानुवर्तते ॥ १४
स्वविचारवशेनैव तेन तामरसेक्षण ।
प्राप्तं प्राप्यमशेषेण राम नेतरयेच्छया ॥ १५
तावत्तावत्स्वकेनैव चेतसा प्रविचार्यते ।
यावद्यावद्विचाराणां सीमान्तः समवाप्यते ॥ १६
न तद्गुरोर्न शास्त्रार्थान्न पुण्यात्प्राप्यते पदम् ।
यत्साधुसङ्गाभ्युदिताद्विचारविशदाद्धृदः ॥ १७
सुन्दर्या निजया बुद्ध्या प्रज्ञयेव वयस्यया ।
पदमासाद्यते राम न नामक्रिययान्यया ॥ १८
यस्योज्ज्वलति तीक्ष्णाग्रा पूर्वापरविचारिणी ।
प्रज्ञादीपशिखा जातु जाड्यान्ध्यं तं न बाधते ॥ १९
दुरुत्तरा या विपदो दुःखकल्लोलसंकुलाः ।
तीर्यते प्रज्ञया ताभ्यो नावापज्ञो महामते ॥ २०

मपि नास्ति । कथं तर्हि पूर्णतालाभस्तमुपायमाह—**तदिति** । तत्तस्मादभ्यासवैराग्यबलादतिधीरतामवलम्ब्य तद्ध्यानावलम्ब्यातिधीरतां प्राप्येति वा । चञ्चलतां जहिहि त्यज ॥ १८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे चित्तानुशासनं नामैकादशः सर्गः ॥ ११ ॥

वर्ण्यते जनकस्यात्र जीवन्मुक्ततया स्थितिः ।
विचारप्रज्ञयोश्चित्रं माहात्म्यमपि विस्तरात् ॥ १ ॥

न मुमोह अहंममताभ्यां पूर्ववदित्यर्थः ॥ १ ॥ आनन्दवृत्तिषु हर्षस्थानेषु । सुषुप्ताविव संस्था निर्विक्षेपस्थितिर्यस्मिन्निति व्यवस्थितिक्रियाविशेषणम् ॥ २ ॥ वर्तमाने तत्कालोपस्थिते दृश्ये । व्यवस्थितः अलंबुद्ध्या स्थितः ॥ ३ ॥ अनारतविवेकेन सदा विचारवता । सनातनं अनाविस्वभावप्राप्तम् । कलङ्कमहंममाभिमानमालिन्यम् । राजसं रजोगुणेन धूलिभिश्च प्रसञ्जितम् ॥ ४ ॥ अनन्ताभमपरिच्छिन्नब्रह्माकारम् ॥ ५ ॥ विक्षेपैर्मेघपटलैश्च अनामृष्टविकल्पा असंपादितरञ्जनभेदा अंशवः प्रकाशा यस्य । विगता देहभेदनिरोधप्रयुक्ता आमया दुःखानि यस्य ॥ ६ ॥ चिच्छक्तौ चिदात्मनि समवस्थितानध्यस्तान् अतएव परमार्थदशा आत्मभूतान् ॥ ७ ॥ प्रकृतेर्मायाया एव सर्वव्यवहाररूपत्वादसङ्गात्मासंस्पर्शदर्शनात्सममानसः ॥ ८ ॥ जरठज्ञानी ज्ञानवृद्ध इति यावत् ॥ ९ ॥ जनानां जीवितमिव प्रियमिति यावत् ॥ १० ॥ मानसैर्गुणदोषविचेष्टितैरस्तं स्वरूपतिरोधानं उदयं पुनस्तदाविर्भावं च नैति, बाह्यैश्च राज्योत्थैरर्थानर्थैर्न हृष्यति न ग्लायतीति व्युत्क्रमेणान्वयः ॥ ११ ॥ न किंचिदपि करोति अकर्त्रात्मभूतत्वादित्यर्थः । तदेवाह—**स** इति ॥ १२ ॥ भावना रागादिवासनाः ॥ १३ ॥ वासनाक्षयफलमाह—**भविष्यमिति** । वासनावशात्पूर्वोत्तरानुसंधानं तेन प्राक्तनानिष्टकारिषु द्वेष आगामिप्रियार्थं रागस्ततः प्रवृत्तिरिति सर्वानर्थप्रसक्तिः । वर्तमानमात्रदर्शनं तु दुःखस्याप्युपेक्षया नाप्रियतानुसंधानमिति सहजानन्दानुवृत्त्या हसन्नेवेत्यर्थः ॥ १४ ॥ आख्यानोपक्रमबीजं स्मारयन्नुपसंहरति—**स्वविचारे**ति । अशेषेण निरवशेषेण प्राप्तं ज्ञानमात्रेण विस्मृतकण्ठचामीकरवल्लभ्यम् । तेन जनकेन ॥१५॥ तथाच फलपर्यन्तं विचारः कार्यो नान्तरा निर्वेदाद्धेय इत्याह—**तावदिति** । प्रविचार्यते प्रविचारयेदित्यर्थः ॥ १६ ॥ गुर्वादीनां साधनानामसाधनत्ववादो विचारप्राधान्यबोधनार्थः । 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इतिवत् ॥ १७ ॥ सुन्दर्या सच्छास्त्रविवेकादिपरिष्कृतया । ऊहापोहकुशला मतिः प्रज्ञा तया वयस्यया सख्या ॥ १८ ॥ जाड्यमज्ञानं तल्लक्षणमान्ध्यं तमः ॥ १९ ॥ ताभ्यो विपद्भ्यः

प्रज्ञाविरहितं मूढमापदल्पापि बाधते ।
पेलवाचानिलकला सारहीनमिवोलपम् ॥ २१
प्रज्ञावानसहायोऽपि विशास्त्रोऽप्यरिमर्दन ।
उत्तरत्येव संसारसागराद्राम पेलवात् ॥ २२
प्रज्ञावानसहायोऽपि कार्यान्तमधिगच्छति ।
दुष्प्रज्ञः कार्यमासाद्य प्रधानमपि नश्यति ॥ २३
शास्त्रसज्जनसंसर्गैः प्रज्ञां पूर्वं विवर्धयेत् ।
सेकसंरक्षणारम्भैः फलप्राप्तौ लतामिव ॥ २४
प्रज्ञाबलबृहन्मूलः काले सत्कार्यपादपः ।
फलं फलत्यतिस्वादु भासो बिम्बमिवैन्दवम् ॥ २५
य एव यत्नः क्रियते बाह्यार्थोपार्जने जनैः ।
स एव यत्नः कर्तव्यः पूर्वं प्रज्ञाविवर्धने ॥ २६
सीमान्तं सर्वदुःखानामापदां कोशमुत्तमम् ।
बीजं संसारवृक्षाणां प्रज्ञामान्द्यं विनाशयेत् ॥ २७
स्वर्गाद्यद्यच्च पातालाद्राज्याद्यत्समवाप्यते ।
तत्समासाद्यते सर्वं प्रज्ञाकोशान्महात्मना ॥ २८
प्रज्ञयोत्तीर्यते भीमात्तस्मात्संसारसागरात् ।
न दानैर्न च वा तीर्थैस्तपसा नच राघव ॥ २९
यत्प्राप्ताः संपदं दैवीमपि भूमिचरा नराः ।
प्रज्ञापुण्यलतायास्तत्फलं स्वादु समुत्थितम् ॥ ३०
प्रज्ञया नखरालूनमत्तवारणयूथपाः ।
जम्बुकैर्विजिताः सिंहाः सिंहैर्हरिणका इव ॥ ३१
सामान्यैरपि भूपत्वं प्राप्तं प्रज्ञावशान्नरैः ।
स्वर्गापवर्गयोग्यत्वं प्राज्ञस्यैवेह दृश्यते ॥ ३२
प्रज्ञया वादिनः सर्वे स्वविकल्पविलासिनः ।
जयन्ति सुभटप्रख्यान्नरानप्यतिभीरवः ॥ ३३
चिन्तामणिरियं प्रज्ञा हृत्कोशस्था विवेकिनः ।
फलं कल्पलतेवैषा चिन्तितं संप्रयच्छति ॥ ३४
भव्यस्तरति संसारं प्रज्ञयापोह्यतेऽधमः ।
शिक्षितः पारमाप्नोति नावा नाप्नोत्यशिक्षितः ॥ ३५
धीः सम्यग्योजिता पारमसम्यग्योजिताऽऽपदम् ।
नरं नयति संसारे भ्रमन्ती नौरिवार्णवे ॥ ३६
विवेकिनमसंमूढं प्राज्ञमाशागणोत्थिताः ।
दोषा न परिबाधन्ते सन्नद्धमिव सायकाः ॥ ३७
प्रज्ञयेह जगत्सर्वं सम्यगेवाङ्ग दृश्यते ।
सम्यग्दर्शनमायान्ति नापदो नच संपदः ॥ ३८
पिधानं परमार्कस्य जडात्मा विततोऽसितः ।
अहंकाराम्बुदो मत्तः प्रज्ञावातेन बाध्यते ॥ ३९

पदमतुलमुपैतुमिच्छतोच्चैः
प्रथमसियं मतिरेव लालनीया ।
फलमभिलषता कृषीवलेन
प्रथमतरं ननु कृष्यते धरैव ॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे प्रज्ञामाहात्म्यं नाम द्वादशः सर्गः ॥ १२ ॥

---

प्रज्ञया नावा तीर्यते जनैरिति प्रसिद्धम् ॥ २० ॥ पेलवा मृदुला अनिलस्य कला लेशः । उलपं तृणविशेषम् ॥ २१ ॥ असहायो गुर्वादिसहायशून्यः । विशास्त्रः शास्त्रश्रवणशून्योऽपि । इयमपि प्रशंसार्थमेवात्युक्तिः । 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इत्यादिश्रुतिविरोधात् । हे राम, पेलवाज्ज्ञानमात्रबाध्यत्वेनातिकोमलात् ॥ २२ ॥ लोकेऽपि प्रज्ञावतो मन्त्र्यादेर्बलान्तरवद्भ्यः प्राबल्यं प्रसिद्धमित्याह—**प्रज्ञावानिति** । प्रधानं बहुतरसेनादिबलमुख्योऽपि सन्नश्यति । अथवा प्रज्ञा चरमसाक्षात्कारवृत्तिस्तद्वानात्मा सर्वेषां कार्यप्रपञ्चानामन्तं बाधं सर्वेषामवश्यकर्तव्यपुरुषार्थानामन्तमवधिं परमपुरुषार्थं च अधिगच्छति । दुष्प्रज्ञो मोहस्तु सर्वप्रपञ्चसंतानलक्षणं कार्यजातमासाद्य तन्मूलत्वात्प्रधानं सदपि ज्ञानमात्रेण नश्यतीत्यर्थः । ज्ञाज्ञपक्षभेदेन[1] वा योज्यम् ॥ २३ ॥ प्राज्ञता तर्हि केनोपायेन लभ्या तत्राह—**शास्त्रेति** ॥ २४ ॥ प्रज्ञाबलमेव बृहत् मूलं यस्य तथाविधः । सत्कार्यं सत्कर्म प्राक्तनभाग्यं तल्लक्षणः पादपः । भासः सूर्यप्रकाशः स यथा शुक्लपक्षे क्रमेण चन्द्रमण्डलं प्रविष्टः पूर्णममृतमयं चन्द्रबिम्बं फलति तद्वत् । अथवा ऐन्दवं बिम्बं कर्तृ । तद्यथा जगत्तिमिरापहा भासश्चन्द्रिकाः फलति तद्वन्मूलाज्ञाननिवर्हणक्षममात्मज्ञानं फलतीत्यर्थः ॥ २५ ॥ यो यादृशः यत्न उद्योगः । स तादृशः । तथाच नाधिकः श्रमोऽस्तीत्यर्थः ॥ २६ ॥ सर्वेषां दुःखानां दुर्दशानां सीमान्तं परमावधिम् ॥ २७ ॥ एवं प्रज्ञाकोशस्यापि सर्वसंपदवधित्वमिति दर्शयति—**स्वर्गादिति** । यत्समवाप्यते सुखमिति शेषः । 'स्वर्लोकादपि रम्याणि पातालानीति नारदः । जगाद द्युसदां मध्ये पातालेभ्यः समागतः ॥' इति पौराणिकवचनात्पातालेऽपि सुखातिशयः प्रसिद्धः ॥ २८ ॥ आत्यन्तिकदुःखक्षयोऽपि प्रज्ञैकफलमित्याह—**प्रज्ञयेति** । दानतपःप्रभृतीनामल्पपापक्षयफलत्वादिति भावः ॥ २९ ॥ यच्चान्यत्स्वर्गादि दानादिकर्मणां फलं तदपि प्रज्ञाफलमेवेत्याह—**यदिति** । भूमिचरा अपि नरा दैवीं नभश्चरत्वादिलक्षणां संपदं प्राप्ता इति यत्तदपीत्यर्थः ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ सुभटप्रख्यान् वादशूरानिति यावत् ॥ ३३ ॥ ॥ ३४ ॥ शिक्षितो नौकानयनशिक्षावान्कैवर्तः ॥ ३५ ॥ धीर्नौरिव सम्यग्विवेकवैराग्यादिसन्मार्गे योजिता चेत्पारं नयति । असम्यग् रागद्वेषलोभाद्यसन्मार्गे योजिता तु आपदं नयति प्रापयतीत्यर्थः ॥ ३६ ॥ आशा तृष्णा तत्पक्षीया गणा लोभमोहक्रोधचिन्तादयस्तेभ्य उत्थिता दोषा द्वेषचिन्ताविषादादयः । संनद्धं वर्मनद्धम् ॥ ३७ ॥ सम्यक् गुणदोषतत्त्वविवेकेन दृश्यते । सम्यग् दर्शनं यस्य तं सम्यग्दर्शनं पुरुषम् ॥ ३८ ॥ परमः परमात्मा तल्लक्षणस्यार्कस्य पिधानं तिरोधायकः । लडयोरभेदादम्बुदपक्षे जलात्मा । विततो विस्तीर्णः ।

[1] ज्ञानपक्ष इति क्वचित्.

# त्रयोदशः सर्गः १३

श्रीवसिष्ठ उवाच ।

एवं जनकवद्राम विचार्यात्मानमात्मना ।
पदं विदितवेद्यानामविघ्नेनाधिगच्छसि ॥ १
ये हि पाश्चात्यजन्मानः प्राज्ञा राजससात्त्विकाः ।
प्राप्नुवन्ति स्वयं प्राप्यं ते जना जनका इव ॥ २
तावत्तावद्विजित्यारीनिन्द्रियाख्यान्पुनःपुनः ।
यावदात्मात्मनैवायमात्मन्येव प्रसीदति ॥ ३
प्रसन्ने सर्वगे देवे देवेशे परमात्मनि ।
स्वयमालोकिते सर्वाः क्षीयन्ते दुःखदृष्टयः ॥ ४
मुष्टयो मोहबीजानां वृष्टयो विविधापदाम् ।
कुदृष्टयः क्षयं यान्ति दृष्टे तस्मिन्परावरे ॥ ५
सदा जनकवद्राम सर्वारम्भवदात्मना ।
प्रज्ञयात्मानमालक्ष्य लक्ष्मीवानुत्तमो भव ॥ ६
नित्यमन्तर्विचारस्य पश्यतश्चञ्चलं जगत् ।
जनकस्येव कालेन स्वयमात्मा प्रसीदति ॥ ७
न दैवं नच कर्माणि न धनानि न बान्धवाः ।
शरणं भवभीतानां स्वप्रयत्नादृते नृणाम् ॥ ८
ये दैवनिष्ठाः कृत्यादौ कुविकल्पपरायणाः ।
तेषां मन्दा मतिस्तात नानुगम्या विनाशनी ॥ ९
विवेकं परमाश्रित्य विलोक्यात्मानमात्मना ।
धिया विरागोद्धुरया संसारजलधिं तरेत् ॥ १०
एषा सा कथिता राम नभःफलनिपातवत् ।
सुखदा ज्ञानसंप्राप्तिरज्ञानतरुशातनी ॥ ११
जनकस्येव सद्बुद्धेः स्वयमेव विलोकिनः ।
विकासमेत्ययं देही देवः प्रातरिवाम्बुजम् ॥ १२
संसारमननं चित्रं विचारेण विलीयते ।
गलद्वशीकृतस्पर्शमातपेन हिमं यथा ॥ १३
अयमेवाहमित्यस्या निशाया उदिते क्षये ।
स्वयं सर्वगतः स्फारः स्वालोकः संप्रवर्तते ॥ १४
अयमेवाहमित्यस्मिन्संकोचे विलयं गते ।
अनन्तभुवनव्यापी विस्तार उपजायते ॥ १५
जनकेन परित्यक्ता यथाहंकारवासना ।
तथा त्वमपि सद्बुद्धे विचार्यान्तः परित्यज ॥ १६
अहंकाराम्बुदे क्षीणे चिद्व्योम्नि विमले तते ।
नूनं संप्रौढतामेति स्वालोको भास्करः परः ॥ १७
एतावदेवातितमो यदहंभावभावनम् ।
तस्मिंश्च शममानीते प्रकाश उपजायते ॥ १८
नाहमस्ति न चान्योस्ति नच नास्तीति भावितम् ।
मनः प्रशान्तिमायातं नोपादेयेषु मज्जति ॥ १९
उपादेयानुपतनं हेयैकान्तविवर्जनम् ।

---

असितोऽस्वच्छो नीलश्च ॥ ३९ ॥ लालनीया बाल इव क्रमाद्विवेकशिक्षणेन शोधनीया । फलं कृषिफलं धान्याभिवृद्धिम् । नन्विति प्रसिद्धौ ॥ ४० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रज्ञामाहात्म्यं नाम द्वादशः सर्गः ॥१२॥

जनकस्य विचारं तं दृष्टान्तीकृत्य विस्तरात् ।
चित्तप्रशमनोपायाः कीर्त्यन्त इह युक्तिभिः ॥ १ ॥

अविघ्नेन असंभावनादिप्रतिबन्धकनिरासेन ॥१॥ रजसा पुरुषप्रयत्नसंभवात्सत्त्वेन च चित्तप्रसादोपचयाद्राजससात्त्विका एव स्वविवेकेनाकाशफलपातवज्ज्ञानप्राप्तावप्यधिकारिण इति भावः ॥२॥ ते कथं प्राप्नुवन्ति तदाह—**तावत्तावदिति**। सत्त्वोपचयाद्यावदात्मा आत्मनि प्रसीदति तावत्तावद्रजसो विष्टम्भशक्त्या इन्द्रियारीन्पुनःपुनर्विजित्येत्यर्थः ॥ ३ ॥ अध्यात्माधिकारात्सर्वेषां देवानामिन्द्रियाणामीशे वशिनि देवे परमात्मनि स्वयमालोकिते सति ॥ ४ ॥ मोहबीजानां दुर्वासनानां मुष्टयो मुष्टिवदन्तर्दृढं संग्राहकाश्चित्तक्षेत्रे उप्यमानाश्च । विविधानामाध्यात्मिकादिभिन्नानामापदां दुःखानां वृष्टयो वृष्टिवदकस्मात्सर्वतः क्षारयित्र्यः । कुदृष्टयोऽहंममतादिप्रत्ययलक्षणा हृदयग्रन्थयः । परा मानुषानन्दादिहैरण्यगर्भानन्दान्ताः सुखोत्कर्षा अवरा न्यूना यस्मात्तथाविधे । तथाच श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति ॥ ५ ॥ प्रज्ञया विवेकबुद्ध्या आत्मानं स्वं [illegible]



[illegible]दुत्पत्त्याद्यधिष्ठानं ब्रह्म तदात्मना आलक्ष्य साक्षादनुभूय परमपुरुषार्थलक्ष्मीवानुत्तमः सर्वोत्कृष्टो भवेत्यर्थः ॥ ६ ॥ इदानीमात्मप्रसादोपाये विचार एव मुख्य इत्याह—**नित्यमिति**। चञ्चलमनित्यं भ्रमणस्वभावं च ॥ ७ ॥ विचारस्यापि मूलं पुरुषप्रयत्न एवेत्याशयेनाह—**नेति** ॥ ८ ॥ ननु दैववशात्स्वयमेव कालेन ज्ञानं भविष्यति किमस्मत्प्रयत्नेनेति ये मन्यन्ते तान्निन्दति—**य** इति । कृतिर्यत्नः । आदिपदाद्विवेकवैराग्यविचारादयस्तेषु । दैवे प्रतिकूले किं स्वप्रयत्नसहस्रेण सेत्स्यति बहूनां यतमानानां दैवोपहतानां काममन्युभिर्भ्रंशदर्शनादित्यादिकुविकल्पपरायणाः ॥ ९ ॥ १० ॥ एषा जनकाख्यायिकोदाहरणप्रपञ्चिता ॥११॥ देही देहान्तर्हृदि स्थितो देवः परमात्मा ॥ १२ ॥ संसारस्य मननं विकल्पनं चिन्तनं वा । वशीकृतस्पर्शमपहृतशैत्यम् ॥१३॥ देहाहंभावत्याग एव पूर्णात्मदर्शने मुख्यं साधनमित्याह—**अयमिति** ॥ १४ ॥ १५ ॥ १६ ॥ नूनं निश्चयेन अवश्यमिति यावत् । स्वालोकात्मा भास्करः सूर्यः संप्रौढतां शरदीव स्फुटप्रकाशताम् ॥ १७ ॥ अतितमः तमसो मुख्यं बलमिति यावत् ॥ १८ ॥ अहमहंता नास्ति । अस्मच्छब्दार्थस्याप्यहंकारस्याप्रत्यक्त्वविवक्षणान्न तदभिधानायोत्तमपुरुषः कृतः । अहमर्थस्य तदन्यस्य च निषेधे शून्यताप्रसक्तिमाशङ्क्योक्तं नच नास्तीति । उभयसाक्षिणः सत्त्वादिति भावः । उपादेयेषु उपादानार्हेषु [illegible] ॥ १९ ॥ उपादेयेषु रागो हेयेषु द्वेषश्च मानसः पुरुषस्य

यदेतन्मनसो राम तद्बन्धं विद्धि नेतरत् ॥ २०
मा खेदं भज हेयेषु नोपादेयपरो भव ।
हेयादेयदृशौ त्यक्त्वा शेषस्थः स्वच्छतां व्रज ॥ २१
येषामिदमुपादेयमिदं हेयमिति स्थितिः ।
विलीना ते न वाञ्छन्ति त त्यजन्तीह किंचन ॥ २२
हेयोपादेयकलने क्षीणे यावन्न चेतसः ।
न तावत्समता भाति साभ्रे व्योम्नीव चन्द्रिका ॥ २३
अवस्त्विदमिदं वस्तु यस्येति लुलितं मनः ।
तस्मिन्नोदेति समता शाखोट इव मञ्जरी ॥ २४
युक्तायुक्तैषणा यत्र लाभालाभविलासिनी ।
समता स्वच्छता तत्र कुतो वैराग्यभासिनी ॥ २५
एकस्मिन्ब्रह्मतत्त्वेऽस्मिन्विद्यमाने निरामये ।
नानाऽनानातया नित्यं किमयुक्तं क्व युक्तता ॥ २६
ईप्सितानीप्सिताशङ्के मर्कट्यौ चित्तपादपे ।
चञ्चले स्फुरतो यस्मिन्कुतस्तस्येह सौम्यता ॥ २७
निराशता निर्भयता नित्यता समता ज्ञता ।
निरीहता निष्क्रियता सौम्यता निर्विकल्पता ॥ २८
धृतिर्मैत्री मतिस्तुष्टिर्मृदुता मृदुभाषिता ।
हेयोपादेयनिर्मुक्ते ज्ञे तिष्ठन्त्यपवासनम् ॥ २९
धावमानमधोभागे चित्तं प्रत्याहरेद्बलात् ।
प्रत्याहारेण पतितमधो वारीव सेतुना ॥ ३०
बाह्यानर्थानिमांस्त्यक्त्वा तिष्ठन्गच्छन्स्वपञ्श्वसन् ।
सर्वथा सर्वदा सर्वानान्तरांश्च विचारय ॥ ३१
गृहीततृष्णाशफरि वासनाजालमाविलम् ।
संसारवारिप्रसृतं चिन्तातन्तुभिराततम् ॥ ३२
अनया तीक्ष्णया तात छिन्धि बुद्धिशलाकया ।
वात्ययेवाम्बुदं काले वहन्त्या वितते पदे ॥ ३३
अस्य संसारवृक्षस्य मूलं दोषाङ्कुरास्पदम् ।
भव्यधीरेण धैर्येण प्रोद्धरोद्धुरया धिया ॥ ३४
मनसैव मनश्छित्त्वा कुठारेणेव पादपम् ।
पदं पावनमासाद्य सद्य एव स्थिरो भव ॥ ३५
मनसैव मनश्छित्त्वा विस्मृत्या चरमं मनः ।
वर्तमानमपि छित्त्वा छिन्नसंसारतां व्रज ॥ ३६
मोहो विस्मृत्य संसारं न भूयः परिरोहति ।
चित्तं विस्मृत्य संसारो न भूयः परिरोहति ॥ ३७

बन्धो नान्य इत्याह—**उपादेयेति** ॥२०॥ हेयादेयदृशौ राग-
द्वेषात्मकवृत्ती । शेषस्तत्साक्षी तत्स्थस्तदेकनिष्ठः सन् स्वच्छतां
विक्षेपकालुष्यशून्यताम् ॥ २१ ॥ इति स्थितिरेवंरूपा व्यवस्था
येषां सर्वत्राहेयानुपादेयात्ममात्रतादर्शनाद्विलीना ते पुरुषाः
॥२२॥ समता अविषमब्रह्मात्मता ॥ २३ ॥ अवस्तु अप्रशस्तं
वस्तु अतो हेयं, वस्तु प्रशस्तं वस्तु अत उपादेयमिति यस्य
मनः अन्तर्लुलितं लोलतां गतमित्यर्थः । शाखोटो वृक्षविशेषः
महापुष्पफलपल्लवोऽनुपजीव्यच्छायः प्रसिद्धः ॥ २४ ॥ युक्तम-
नुकूलमत इदं मे भूयादित्येषणालाभविलासिनी । अयुक्तं प्रति-
कूलमिदमतो मे कदापि माभूदित्यरागविलासिनी एषणा इच्छा
द्वेषश्च यत्र यस्मिन्पुरुषे ॥२५॥ तत्र समतास्वच्छतयोः संभावने
को विरोधस्तमाह—**एकस्मिन्निति** । नानाऽनानातया भेदाभे-
दविकल्पनया । यद्यसङ्गाद्वितीयानन्दा अभिन्नास्तर्हि आत्म-
त्वादेव सर्वेऽप्यनुकूला एव । यदि भिन्नास्तथाप्यात्मास्पर्शान्नानु-
कूला न वा प्रतिकूला इति न तदापि तयोरवकाश इति भावः
॥ २६ ॥ तस्य चित्तपादपस्य । सौम्यता निष्कम्पता ॥ २७ ॥
इदानीं जीवन्मुक्तलक्षणभूतान्पञ्चदशगुणानाह—**निराशतेति**
द्वाभ्याम् । निरीहता मनश्चापलाभावः । निष्क्रियता शारीरक-
र्तृत्वाभिनिवेशाभावः । सौम्यता सदाप्रसन्नता ॥ २८ ॥ मैत्री
सर्वभूतसुहृत्त्वम् । मतिर्मननशीलता । यदि गुणास्तिष्ठन्ति तर्हि
तद्वासनयैव तस्य बन्धः स्यादित्याशङ्क्याह—**अपवासन**मिति ।
वासनाबीजस्याज्ञानस्य नष्टत्वादिति भावः ॥२९॥ इदानीं रामस्य
तद्गुणार्जने उपायमाह—**धावमान**मित्यादिना । अधोभागे निकृ-
ष्टेषु विषयेषु । प्रत्याहारेण विषयेभ्यः सर्वबाह्येन्द्रियाणां परा-
वर्तनेन । अधःपतितं प्रवाहोन्मुखं वारि सेतुनेव ॥ ३० ॥ बाह्य-
ष्वर्थेष्वात्मताभ्रान्त्यप्रसक्तेस्त्याग एवोपायः । आन्तरेषु तु तत्प्र-
सक्तेः । सर्वदा सर्वप्रकारेण तत्र रत्नतत्त्वपरीक्षावद्विचारः कार्य
इत्याह-बाह्यानिति । तथाचाहुर्वृद्धाः-'गच्छतस्तिष्ठतो वापि जाग्रतः
स्वपतोऽपि वा । न विचारपरं चेतो यस्यासौ मृत उच्यत' इति
॥३१॥ अनया मदुपदिष्टया बुद्धिलक्षणया शलाकया कर्तर्या वास-
नालक्षणं जालमानायं छिन्धीति परेणान्वयः । गृहीतास्तृष्णाश-
फर्यो येन मोहशैवालैराविलं मलिनम् । संसारलक्षणे वारिणि प्रसृतं
प्रसारितम् । चिन्तालक्षणैस्तन्तुभिराततं निर्मितम् ॥३२॥ वितते
विस्तीर्णतरे पदे आकाशे ब्रह्मणि च वहन्त्येति वात्याशलाक-
योर्विशेषणम् ॥ ३३ ॥ हे भव्य, धीरेण चिराभ्यासदृढीकृतेनै-
कात्मस्थैर्यलक्षणेन चित्तधैर्येण संपन्नया अतएवोद्धुरया अनादि-
कालनिमग्नात्मोद्धारसमर्थया अपरोक्षसाक्षात्कारधिया संसार-
वृक्षस्य मूलं सवासनमज्ञानं छिन्धीत्यर्थः ॥३४॥ ननु सति विक्षे-
पहेतौ मनसि कथं मूलच्छेदस्तत्राह—**मनसैवेति** । यथा अग्र-
निविष्टलोहेन पादपावयवकाष्ठात्मना कुठारेण पादपश्छिद्यते तद्व-
दग्रनिवेशितवृत्तीद्धब्रह्मचैतन्येन मनसैव मनश्छित्त्वेत्यर्थः ॥३५॥
ननु पूर्वसिद्धमनस उक्तोपायेन च्छेदनेपि भाविमनोवृत्तीनां
वर्तमानब्रह्माकारमनोवृत्तेर्वा कथं छेदनं तत्राह—**विस्मृत्येति** ।
विस्मृतिर्वासनोच्छेदस्तया चरममुत्तरकालप्रसक्तं वृत्तिरूपम् ।
असत्यां वासनायामग्रेऽपि वृत्त्यनुदयात् । वर्तमानं कतकरेणु-
न्यायेन स्वेनैव स्वस्य निरासाच्छित्त्वा ॥३६॥ नन्वेवमपि तत्त्व-
विदो जीवनसिद्धये तदुपादानभूताविद्याख्यो मोहोऽवश्यमभ्युप-
गन्तव्यः स एव पुनः संसारं प्ररोहयिष्यतीत्याशङ्क्याह-**मोह**
इति । परिरोहति प्ररोहति । वासनाक्षयलक्षणे विस्मरणे सति
[illegible] बीजनाशत्त्वभावादिति भावः । तर्हि संसारस्तस्मिन्मोहक्षेत्रे

तिष्ठन्गच्छन्स्वपञ्जाग्रन्निवसन्नुत्पतन्पतन् ।
असदेवेदमित्यन्तर्निश्चित्यास्थां परित्यज ॥ ३८
समतामलमाश्रित्य संप्राप्तं कार्यमाहरन् ।
अचिन्तयंस्तथाऽप्राप्तं विहरेह हि राघव ॥ ३९
यथा शर्वोऽपि लिङ्गानि न बिभर्ति बिभर्ति च ।
त्वमेवमिह कार्याणि कुरु मा कुरु चानघ ॥ ४०
त्वमेव वेत्ता त्वमजस्त्वमात्मा त्वं महेश्वरः ।
आत्मनोऽव्यतिरिक्तः संस्त्वयेत्थमिदमाततम् ॥ ४१
येनात्मदृश्यसद्भावादभितो भावनोज्झिता ।
स न संगृह्यते दोषैर्हर्षामर्षविषादजैः ॥ ४२
रागद्वेषविनिर्मुक्तः समलोष्टाश्मकाञ्चनः ।
मुक्त इत्युच्यते योगी त्यक्तसंसारवासनः ॥ ४३
स यत्करोति यद्भुङ्क्ते यद्ददाति निहन्ति यत् ।
तत्र मुक्तधियस्तस्य समता सुखदुःखयोः ॥ ४४
प्राप्तं कर्तव्यमेवेति त्यक्तेष्टानिष्टभावनः ।
प्रवर्तते यः कार्येषु न स मज्जति कुत्रचित् ॥ ४५
चित्सत्तामात्रमेवेदमिति निश्चयवन्मनः ।
त्यक्तभोगाभिमननं शममेति महामते ॥ ४६
मनः प्रकृत्यैव जडं चित्तत्त्वमनुधावति ।
मांसगर्धेन मार्जारो वने मृगपतिं यथा ॥ ४७
सिंहवीर्यवशाल्लब्धं मांसं भुङ्क्तेऽनुगो हरेः ।
चिद्वीर्यवशतः प्राप्तं दृश्यमाश्रयते मनः ॥ ४८
मन एवमसत्कल्पं चित्प्रसादेन जीवति ।
भावयन्विश्वमेवैकं चिन्तामेत्य चिदप्युत ॥ ४९
जडं यत्किल निर्हीनं चिता दीपिकयौजसा ।
तन्मनः शवसंकाशमचिदुत्तिष्ठते कथम् ॥ ५०
चित्स्वभावपरामृष्टा स्पन्दशक्तिरसन्मयी ।
कल्पना चित्तमित्युक्त्या कथ्यते शास्त्रदृष्टिभिः ॥ ५१
यश्चित्तफणिफूत्कारः सैवेयं कलनोच्यते ।
चिदेवाहमिति ज्ञात्वा सा चित्तामेव गच्छति ॥ ५२
चेत्येन रहिता यैषा चित्तद्ब्रह्म सनातनम् ।
चेत्येन सहिता यैषा चित्सेयं कलनोच्यते ॥ ५३
किंचिदामृष्टरूपं यद्ब्रह्म तच्च स्थिरं मनः ।
कल्पना सत्सदैवैतत्सदिवोपस्थिता हृदि ॥ ५४
चित्तमित्येव रूढेयं यदैव कलनोदिता ।
तदैव चित्त्वं विस्मृत्य सा जडेव व्यवस्थिता ॥ ५५
संपन्ना कलनानाम्नी संकल्पानुविधायिनी ।
अवच्छेदवती वाग्रा हेयोपादेयधर्मिणी ॥ ५६

स्वयमेव प्ररोहतु तत्राह—**चित्त**मिति । चित्तसंस्कारोच्छेदलक्षणे चित्तविस्मरणे सति न चेत्यस्य प्ररोहः संभवति । चित्तसंस्कारस्यापि चेत्यारोपबीजत्वादिति भावः ॥ ३७ ॥ चित्तचेत्योभयविस्मरणे तदास्थात्याग एवोपाय इत्याह—**तिष्ठन्नि**ति ॥ ३८ ॥ आस्थापरित्यागे समतापि सिध्यतीत्याशयेनाह—**समता**मिति । तथा अप्राप्तमिति च्छेदः ॥ ३९ ॥ यथा शर्वो महेश्वरः क्षित्याद्यष्टमूर्तिलक्षणानि लिङ्गानि शुद्धचिन्मात्रदृशा न बिभर्ति जगदाकारविवर्तमायाधिष्ठानत्वात्सन्निधिमात्रेण बिभर्ति च तेन सर्वकर्ता च भवति, एवं त्वमपि राज्यादिकार्याण्यनास्थया सन्निधिमात्रेण कुरु, अकर्त्रात्मनिश्चयान्मा कुरु चेत्यर्थः ॥ ४० ॥ किंच 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इत्यादिश्रुतेः सर्वे शरीरेषु त्वमेव वेत्ता वेदिता । इडभावश्छान्दसः । सत्तार्थाद्विद्यतेर्वा तृच् । परमार्थसन्नित्यर्थः । अजो जन्मादिविक्रियाशून्यः । सर्वस्यात्मा प्रत्यक्चिद्रसः प्रागुक्तो महेश्वरश्च त्वमेव । आत्मनः स्वस्वभावादव्यतिरिक्तः अप्रच्युतस्वभाव एव सन् । एवंभूतेन त्वया स्वमोहादित्थमिदमाततं विस्तारितं नान्येनेत्यर्थः ॥ ४१ ॥ यदि मयैवेदमाततं तर्हि कथं ममात्र हर्षामर्षदोषोदयस्तत्राह—**येने**ति । येन तत्त्वविदा आत्मदृश्यस्य सद्भावात्परमार्थसन्मात्रताभावनादभितोऽन्यदिति भावना उज्झिता त्यक्ता स न दोषैः संगृह्यते अतस्त्वमप्युज्झेत्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ इदं जगत् स्वयं च । भोगाभिमननं भोगचिन्ता सा त्यक्ता येन ॥ ४६ ॥ चित्सत्तामात्रमेवेदमिति यदुक्तं तदुपपादयति—**मन** इत्यादिना । यतो जडं अतः स्वतः सेद्धुं परं साधयितुं चासमर्थत्वात्स्वसिद्धये स्वविषयसिद्धये च स्वसाक्षिभूतं स्वप्रकाश-

चिद्रूपं तत्त्वं पारमार्थिकं वस्तु अनुधावत्यनुसरति । यथा स्वजीवनाय स्वपुत्रादिभरणाय च मार्जारः सिंहमनुसरति तद्वदित्यर्थः ॥ ४७ ॥ दृश्यं स्वं स्वविषयं च आश्रयते उपजीवति ॥ ४८ ॥ अस्त्वेवं किं ततस्तत्राह—**मन** इति । एवंच सति मनः असत्कल्पं शून्यप्रायं मिथ्येति सिद्धमित्यर्थः । कथं जीवति तदाह—**भावयन्नि**ति । एकमद्वितीयमात्मानं विस्मृत्य विश्वं जगदाकारमेव भावयन् । छान्दसो लिङ्गव्यत्ययः । कल्पयत्सज्जगदाकारं भूत्वा जीवतीत्यर्थः । अतएव चिन्तामात्मस्मृतिमेत्य प्राप्य उत पुनश्चिदपि भवति मनस्त्वं जहातीत्यर्थः ॥ ४९ ॥ मनसः प्रकाशशक्तिरिव स्पन्दशक्तिरपि चिदधीनैवेत्याह—**जड**मिति । चिल्लक्षणया दीपिकया ओजसा बलेन च विना । उत्तिष्ठते स्पन्दते ॥ ५० ॥ अतएव चिति स्पन्दकल्पनैव मन इति विद्वत्प्रवादोऽप्यस्तीत्याह—**चित्स्वभावे**ति ॥ ५१ ॥ स्पन्दशक्तेरेव विलासश्चित्तं तद्वृत्तयश्चेत्याह—**य** इति । फूत्कारग्रहणं विषस्याप्युपलक्षणम् । तथाच चित्तादित्रिपुटी दृश्याकारतैव कलनेत्यर्थः । चित्तां शुद्धचिन्मात्रताम् ॥ ५२ ॥ तथाच चित्तश्चेत्यत्याग एव ब्रह्मता पर्यवसन्नेत्याह—**चेत्येने**ति ॥ ५३ ॥ कलनैव मननान्मनो भवतीत्याह—**किंचिदि**ति । तद्ब्रह्मैव किंचिदामृष्टरूपं कलना सत् सदैव हृदि सदिव उपस्थिता संकल्पविकल्पकल्पना भूत्वा स्थिरं एतत्प्रसिद्धं मनो भवतीत्यर्थः ॥ ५४ ॥ नित्यानुभवस्वभावस्य स्वरूपविस्मरणे कलनैव स्मृतित्वमापन्नचित्ततां गच्छतीत्याह—**चित्त**मिति । तदा परोक्षतापत्तियोग्या जडताप्यस्याः संपन्नेत्याह—**जडेवे**ति ॥ ५५ ॥ ...कल्पनेन चित्ततामिव अनागतविषयाकार-

सैषा चिदेव जगतामागतेव स्वशक्तितः ।
न संप्रबोधिता यावद्रूपं तावन्न बुध्यते ॥ ५७
अतः शास्त्रविचारेण वैराग्येण परेण च ।
निग्रहेणेन्द्रियाणां च बोधयेत्कलनां स्वयम् ॥ ५८
कलना सर्वजन्तूनां विज्ञानेन शमेन च ।
प्रबुद्धा ब्रह्मतामेति भ्रमतीतरथा जगत् ॥ ५९
व्यामोहमदिरामत्तां लुठितां विषयावटे ।
आत्मावेदनसंसुप्तां कलनामेव बोधयेत् ॥ ६०
अप्रबुद्धा यदा ह्येषा न किंचिदवबुध्यते ।
संकल्पकलनेवान्तर्दृश्यमानाप्यसन्मयी ॥ ६१
तया परमया दृष्ट्या कलनैषान्तरस्थया ।
मञ्जरी गन्धशक्त्येव पदार्थेषु विराजते ॥ ६२
तनुः संकल्पिता यैषा कलनेति जगत्त्रये ।
सा हि किंचिद्विजानाति नित्यं ज्ञानैकधर्मिणी ॥ ६३
चेतनेन जडा राम कलनोपलरूपिणी ।
पद्मिनीवातपेनासौ परेणैव प्रबोध्यते ॥ ६४
यथा शिलामयी कन्या चोदितापि न नृत्यति ।
तथेयं कलना देहे न किंचिदवबुध्यते ॥ ६५
लिपिकर्मनृपैर्युद्धं क कृतं घर्घरारवम् ।
कचिन्न चन्द्रकिरणैरोषध्यः प्रतिबोधिताः ॥ ६६
असृगालिप्तगात्रैश्च शवैः क परिवल्गितम् ।
क गीतं मधुरध्वानं वनपाषाणखण्डकैः ॥ ६७
क पुंसा विहितैरर्कैः क्षपितं यामिनीतमः ।
क संकल्पमयैश्छाया क्रियते व्योमकाननैः ॥ ६८
क जडैरुपलाकारैर्मिथ्याभ्रमभरोत्थितैः ।
मृगतृष्णामयैरेभिर्मनोभिः क्रियते क्रिया ॥ ६९
यथातपे क्षते स्फारे मृगतृष्णातरङ्गिणी ।
कलना तद्वदेवेयं स्फुरत्यात्मनि सत्यलम् ॥ ७०
यदेतत्स्पन्दितं नाम तन्मनोऽधिगतं शठैः ।
मरुतां विद्धि तां शक्तिमन्तः प्राणशरीरिणीम् ॥ ७१
येषां संविदनाक्रान्ता संकल्पलवनिश्चयैः ।
अनाक्षिप्तरसाकारा प्रभैषा पारमात्मिकी ॥ ७२
अयं सोऽहमिदं तन्म इति या कलनाविला ।
प्राणात्मतत्त्वयोस्तस्याः संज्ञा जीवेति कथ्यते ॥ ७३

कल्पनेन संकल्पविकल्पानुविधानान्मनस्तामपि सा प्राप्तेत्याशयेनाह—संपन्नेति । एवमवच्छेदवती द्विधा परिच्छिन्ना सती प्राक्तनेष्टानिष्टसाधनसाजात्यमध्यवस्य भावीष्टानिष्टसाधनतां संकल्प्य हेयोपादेयधर्मिणी अग्रा मुख्या चिदेव संपन्नेत्यर्थः ॥ ५६ ॥ मनः प्रकृत्यैवेत्यादिनोपपादितं चित्सत्तामात्रमेवेदमित्यंशं पिण्डीकृत्योपसंहरति—सैषेति । स्वशक्तितः स्वीयमायाशक्तिवशात् । गुरुशास्त्रस्वविचारैर्यावन्न संप्रबोधिता तावद्वास्तवं पूर्णानन्दाद्वयरूपं न बुध्यत इत्यर्थः ॥ ५७ ॥ बोधयेज्जडाकारकलनालक्षणादवस्थात्रयस्वप्राद्व्यावर्तयेदित्यर्थः ॥ ५८ ॥ विज्ञानेन शास्त्रजन्यज्ञानेन । शमेन शमादिसाधनसहितमनननिदिध्यासनाभ्याम् । इतरथा विज्ञानशमाभ्यामप्रबोधने ॥ ५९ ॥ व्यामोहो रागः । आत्मनः अवेदनमज्ञानं निद्रा तेन संसुप्ताम् ॥ ६० ॥ ननु कलना यदि सुप्ता कथं जगदवबुध्यते, अवबोधे वा तस्याः प्रसिद्धचित्स्वभावात्कोऽतिशयस्तत्राह—अप्रबुद्धेति । यन्मन्यसे जगदवबुध्यत इति तन्न किंचिदवबुध्यते । जगतोऽनवबोधमात्रविलसितत्वात् । यतो दृश्यमानापि जगत्स्थितिः सांकल्पिकप्रासादकलनेव असन्मयीत्यर्थः ॥ ६१ ॥ विषयांशपरित्यागेऽवशिष्टा कलनैवात्मेत्युक्ते वृत्तिज्ञानमेवायमात्मेति मा ग्राहीति तत्साक्षिणीं तदान्तरीं शुद्धचितिं विविच्य दर्शयति—तयेत्यादिना । एषा चित्तवृत्तिरूपा कलना अन्तरस्थया तया सर्वसाक्षिण्या परमया दृष्ट्या व्याप्ता सती पदार्थेषु स्वस्वविषयेषु विराजते प्रकाशनसमर्था भवति न स्वत इत्यर्थः ॥ ६२ ॥ यदि सा सर्वसाक्षिणी कुतस्तत्तदन्तःकरणधर्मानेव प्रकाशयति न सर्वं तत्राह—तनुःसंकल्पितेति । या एषा ज्ञानैकधर्मिणी नित्यबोधस्वभावा साक्षिचित्सा परिच्छिन्नवृत्ति-

कलनोपाधिवशात्तनुरल्पैवेति जगत्त्रयेऽपि तैस्तैः प्राणिभिः संकल्पिता अतः किंचिदल्पमेव तत्तदन्तःकरणादि विजानातीत्यर्थः ॥ ६३ ॥ वृत्तिरूपा तु कलना विवेके उपलरूपिणी पाषाणकल्पा जडैव । अतएव चेतनेन साक्षिणा प्रबोध्यते ॥ ६४ ॥ ये तु नैयायिकप्रभृतयो नित्यसाक्षिणमजानानाः परप्रकाशस्यैवानित्यज्ञानस्य अर्थप्रकाशतां मन्यन्ते तान्बहुभिर्दृष्टान्तैरुपहसति—यथेत्यादिना ॥ ६५ ॥ अचेतनस्यान्तःकरणतद्वृत्त्यादेर्नित्यचित्संनिधानाभावे विषयोन्मुखप्रवृत्तिरेव दुर्लभा, दूरे तत्प्रकाशकतेत्याशयेनाह—लिपिकर्मेति । लिपिकर्मभिश्चित्रलिखितैर्नृपैः । प्रतिबोधिता आप्यायिताः ॥ ६६ ॥ परिवल्गितं धावितम् ॥ ६७ ॥ पुंसा विहितैः शिलादिना निर्मितैः ॥ ६८ ॥ ॥ ६९ ॥ नित्यचिदात्मानभ्युपगमे कलनाद्यध्यास एव न सिद्ध्येदित्याशयेनाह—यथेति ॥ ७० ॥ चितः परिच्छेदस्पन्दकल्पनैव मन इत्युक्तम्, इदानीं सैव चिदचिदंशविवेके चिदंशस्यात्ममात्रत्वाज्जडांश एव परिशिष्यते तथाविधा तु स्पन्दशक्तिः प्राण एवेति तन्निरोधे कृते न मनो नाम पृथग्विरोध्यमस्तीति वक्तुं भूमिकां रचयति—यदेतदिति । शठैः स्ववञ्चकैरज्ञैः । अन्नमयान्तःप्राणशरीरिणीं प्राणमयकोशात्मिकाम् ॥ ७१ ॥ सा प्राणशक्तिः संकल्पादुत्थिता निःसंकल्पानां योगिनां चिदात्मैव सा पृथगस्तीत्याह—येषामिति । न आक्षिप्तः कल्पितः रस्यन्त इति रसा विषयास्तदाकारो यया ॥ ७२ ॥ सैव अहंममेत्याक्षिप्तरसाकारा यदा तदा विना स्पन्दं तदाक्षेपायोगात्स्पन्दात्मकप्राणतत्त्वस्य चिदात्मकस्यात्मतत्त्वस्य च पृथगिव संज्ञा...विवेकात्पुनरैक्याध्यासेनाविला जडसंवलितचिद्रूपा कलना 'जीव प्राणधारणे' इति धात्वर्थानुगमाज्जीवतीति जीवेति

धीश्चित्तं जीव इत्येताः संकल्पस्यासतो मताः ।
संज्ञाः संकल्पितास्तज्ज्ञैर्न राम परमार्थतः ॥ ७४
मनो नो न मतिर्नापि धीरेषा न शरीरकम् ।
अस्तीह परमार्थेन स्वात्मैवेहास्ति सर्वदा ॥ ७५
आत्मैवेदं जगत्सर्वमात्मा कालक्रमस्तथा ।
स चाकाशादच्छतरो नास्तीवास्त्येव चामलः ॥ ७६
अच्छत्वादसदाभासः संविद्रूपतया तु सत् ।
आत्मा सर्वपदातीतः स्वानुभूत्यानुभूयते ॥ ७७
मनस्तत्र परिक्षीणं यत्र संवित्परात्मनः ।
अन्धकारक्षयस्तत्र यत्रालोकः प्रवर्तते ॥ ७८
यत्रात्मसंविदोऽच्छायाः संकल्पोत्थतया मताः ।
तत्रात्मनो विस्मरणं स्मरणं चित्तजन्मनः ॥ ७९
परस्य पुंसः संकल्पमयत्वं चित्तमुच्यते ।
अचित्तत्वमसंकल्पान्मोक्षस्तेनाभिजायते ॥ ८०
एतावच्चेतसो जन्म बीजं संसारभूतये ।
संकल्पोन्मुखतां यातः संविदो वा किलात्मनः ॥ ८१
निर्विकल्पाच्चितः सत्ता संकल्पाङ्ककलङ्किता ।
कलनेत्युच्यते तेन पुंस्त्ववद्बुध्यते मनः ॥ ८२
प्राणशक्तौ निरुद्धायां मनो राम विलीयते ।
द्रव्यच्छायानु तद्द्रव्यं प्राणरूपं हि मानसम् ॥ ८३
देशान्तरानुभवनं प्राणो वेत्ति हृदि स्थितम् ।
स्पन्दवेदनतो यत्तन्मन इत्यभिधीयते ॥ ८४
वैराग्यात्कारणाभ्यासाद्युक्तितो व्यसनक्षयात् ।
परमार्थावबोधाच्च रोध्यन्ते प्राणवायवः ॥ ८५
दृषदो विद्यते शक्तिः कदाचिच्चलनैधसाम् ।
न पुनर्मनसामस्ति शक्तिः स्पन्दावबोधने ॥ ८६
स्पन्दः प्राणमरुच्छक्तिश्चलद्रूपैव सा जडा ।
चिच्छक्तिः स्वात्मनः स्वच्छा सर्वदा सर्वगैव सा ॥ ८७
चिच्छक्तेः स्पन्दशक्तेश्च संबन्धः कल्प्यते मनः ।
मिथ्यैव तत्समुत्पन्नं मिथ्या ज्ञानं तदुच्यते ॥ ८८
एषा ह्यविद्या कथिता मायैषा सा निगद्यते ।
परमेतत्तदज्ञानं संसारादिविषप्रदम् ॥ ८९

संज्ञा कथ्यत इत्यर्थः ॥ ७३ ॥ एवमन्या अपि संज्ञास्तस्याः प्रसिद्धा इत्याह—**धीरिति** ॥७४॥ कुतो न परमार्थतस्तत्राह—**मन** इति । यतः परमार्थेन मनश्चित्तं बुद्धिः शरीरमित्येतदुपलक्षितं दृश्यमात्रमिहात्मनि नास्ति 'अप्राणो ह्यमनाः शुभ्रः', 'अकायमव्रणमस्नाविरम्', 'अस्थूलमनणु' इत्यादिश्रुतिशतेन विद्वदनुभवैर्युक्तिभिश्च बाधितत्वादिति भावः ॥ ७५ ॥ यद्यात्मैवास्ति तर्हि स कुतो न भाति जगद्रूपेण वा को भाति तत्राह—**आत्मैवेति** ॥७६॥ कुतो नास्तीव कुतश्चास्त्येवेति निश्चयस्तत्राह—**अच्छत्वादिति** । अच्छत्वाच्चक्षुरादियोग्यताप्रयोजकस्थौल्यनैल्याद्यभावादसन्निवाभासत इत्यसदाभासः । चिद्रूपतया स्वपरप्रथानिर्वाहकत्वात्तु सत् । अतएव स्वानुभूत्यैवानुभूयते न करणैरित्यर्थः ॥ ७७ ॥ स्थौल्याद्यभावात्करणान्तराणि तत्र न प्रवर्तन्तां मनस्तु सूक्ष्मतयार्थनिर्णयनिमित्तत्वेन प्रसिद्धं कुतो न प्रवर्तते तत्राह—**मन** इति । सत्यं तत्र मनः प्रवर्तेत यदि तद्दर्शनकाले स्वयं न नश्येत्, मनसस्त्वज्ञानकार्यत्वात्तद्दर्शनवृत्त्युदयसमकालमेवाविद्यया सह क्षयान्न तद्दर्शनशक्ततेत्यर्थः ॥ ७८ ॥ क्व तर्हि मनसः प्रवृत्तिशक्तिस्तदाह—**यत्रेति** । यत्र यस्यां दशायामच्छायाः स्वच्छतराया आत्मरूपायाः संविदः संकल्पवशाद्बाह्यविषयाकारोत्थतया बाह्यार्थाः प्रकाश्यत्वेनाभिमतास्तत्र पारमार्थिकस्यात्मनो विस्मरणं चित्तजन्मनो मिथ्यार्थस्य स्मरणं दर्शनमित्यादिप्रसिद्धमित्यर्थः ॥ ७९ ॥ स्वोद्भवप्रतिकूलत्वादपि न मनस आत्मदर्शनशक्तिरस्तीत्याह—**परस्येति** । संकल्पमयत्वाधीनोद्भवं मनः सर्वसंकल्पक्षयोपलक्षिते मोक्षात्मनि कथं प्रवर्तेतेति भावः ॥८०॥ अतएव संकल्पचित्तजन्मबीजमित्यसकृदावेदितमित्याह—**एतावदिति** । संकल्पोन्मुखतां यातो गच्छत आत्मनो यत् संविदश्चित्स्वभावाद्वा विकल्पनमीषदन्यथाभावलक्षणमेतावदेव चेतसो जन्म किलेत्यन्वयः ॥ ८१ ॥ उक्तमेव स्फुटीकुर्वन्नाह—**निर्विकल्पादिति** । निर्विकल्पात्प्रच्युतेति शेषः । यथा स्त्र्यादिसंकल्पकलनया पुंस्त्वं पुंव्यञ्जनं बुध्यते प्रजाप्रसवार्थमाविर्भवति तथा मनोऽपि जगत्प्रसवार्थमित्यर्थः । तथाच बादरायणस्यापि सूत्रम् 'पुंस्त्वादिवदपि हि लोके' इति ॥ ८२ ॥ यदेतत्स्पन्दितं नामेत्यादिना यत् प्रस्तुतं तस्य प्रयोजनमाह—**प्राणशक्ताविति** । यथा द्रव्यस्य दर्पणादेः संबन्धिनी छाया प्रतिच्छाया तस्मिन्द्रव्ये विलीने तद्द्रव्यमनु विलीयते तद्वत् । तत्कुतः । यतो यथा प्रतिबिम्बं दर्पणस्यैव कल्पितं रूपं तथा मानसं मनोऽपि प्राणस्यैव रूपमित्यर्थः ॥ ८३ ॥ प्राणरूपं मानसमिति कुतो ज्ञातं तत्राह—**देशान्तरेति** । यतः प्राणो जीवन्पुरुषो दूरदेशान्तरस्यानुभवनं मानसानुभवं हृदि स्थितं वेत्ति हृदि मे तस्य देशस्यानुभवोऽस्तीत्यनुभवति । तत्र देशान्तरसंबन्धस्य स्पन्दमन्तरेणासिद्धेर्वेदनांशस्य चित्संवलनमन्तरेणायोगात्स्पन्दवेदनोभयशक्तियोगात्प्राण एव मन इत्यभिधीयत इत्यर्थः ॥८४॥ इत्थं प्राणनिरोधेन मनोनिरोधसिद्धये तयोरैक्यं व्युत्पाद्येदानीं निरोधोपायमाह—**वैराग्यादिति** । कारणं प्राणायामस्तस्याभ्यासात् । योगो युक्तिः समाधिस्तस्मात् । चित्तस्य बाह्यविषयोपसर्पणदुरभ्यासो व्यसनं तस्य क्षयात् ॥ ८५ ॥ इदानीं 'अन्नमयं हि सोम्य मन आपोमयः प्राणः' इति श्रुत्या भिन्नोपादानकयोः प्राणमनसोर्भेद इति पक्षेऽपि मनसः स्वतःस्पन्दशक्तेश्चिच्छक्तेश्चाभावात्प्राणचिदात्माधीने एव ते इति प्राणनिरोधे निरोधोपपत्तिरित्याशयेनाह—**दृषद** इति । एधःशब्देन काष्ठवाचिना तत्कार्यज्वलनशक्तिर्लक्ष्यते । दृषदः शिलाया अपि कदाचिच्चलनशक्तिर्ज्वलनशक्तिश्च विद्यते संभवेत् नतु मनसां स्पन्दविषये अवबोधविषये वा शक्तिरस्तीत्यर्थः ॥ ८६ ॥ कयोस्तर्हि ते शक्ती तावाह—**स्पन्द** इति ॥ ८७ ॥ किं तर्हि मनस्तदाह—**चिच्छक्तेरिति** ॥ ८८ ॥ अविद्या कार्याविद्या । माया विक्षेपशक्तिः ।

चिच्छक्तेः स्पन्दशक्तेश्च सङ्गे संकल्पकल्पनम्।
न कृतं चेत्परिक्षीणास्तदिमा भवभीतयः॥ ९०
वायुतः स्पन्दशक्तिर्या सा चिता चेत्यते यदा।
सचेत्या चित्तदैवान्तः संकल्पाद्याति चित्तताम्॥ ९१
चित्ततैषा चितो मिथ्या कल्पिता बालयक्षवत्।
अखण्डमण्डलाकारस्पन्दरूपा चिदेव यत्॥ ९२
सैषा चित्ता तदन्येन केन संबाध्यते किल।
अखण्डशक्तेरिन्द्रस्य केन स्यात्सह संगरः॥ ९३
अतः संबन्धिनोऽभावात्संबन्धोऽत्र न विद्यते।
संबन्धेन विना कस्य सिद्धं तत्कीदृशं मनः॥ ९४
चित्स्पन्दयोरेकतायां किं नाम मन उच्यते।
का सेना हयमातङ्गसङ्घसंघट्टनं विना॥ ९५
तस्मान्नास्त्येव दुष्टात्म चित्तं राम जगत्त्रये।
सैषा सम्यक्परिज्ञानाच्चेतसो जायते क्षतिः॥ ९६
मुधा मैवमनर्थाय मनः संकल्पयानघ।
मनो मिथ्यासमुदितं नास्त्यत्र परमार्थतः॥ ९७
मा त्वमन्तः क्वचित्किंचित्संकल्पय महामते।
मनः संकल्पकं राम यस्मान्नास्तीह कुत्रचित्॥ ९८
असम्यग्ज्ञानसंभूता कल्पना मृगतृष्णिका।
हृन्मरौ तव संशान्ता सम्यगालोकनान्मुने॥ ९९
जडत्वान्निःस्वरूपत्वात्सर्वदैव मृतं मनः।
मृतेन मार्यते लोकश्चित्रेयं मौर्ख्यचक्रिका॥ १००
यस्य नात्मा न देहोऽस्ति नाधारो नापि चाकृतिः।
तेनेदं भक्ष्यते सर्वं चित्रेयं मौर्ख्यवागुरा॥ १०१
सर्वसामग्र्यहीनेन हन्यते मनसापि यः।
नीलोत्पलदलाघातैर्मन्ये दलितमस्तकम्॥ १०२
जडेन मूकेनान्धेन निहतो मनसापि यः।
मन्ये स दह्यते मूढः पूर्णचन्द्रमरीचिभिः॥ १०३
विद्यमानोऽपि यः शूरो लोकस्तेनाभिभूयते।
अविद्यमानमेवेदं हन्यते मुग्धतोदिता॥ १०४
मिथ्यासंकल्पकलितं मिथ्यावस्थितिमागतम्।
अन्विष्टमपि नो दृष्टं का तस्य किल शक्तता॥ १०५
अहो नु खलु चित्रेयं मायामयविधायिनी।
चेतसाप्यतिलोलेन लोकोऽयमभिभूयते॥ १०६
मौर्ख्यं यदापदान्विष्टः का हि नापदजानतः।
पश्य मौर्ख्यादियं सृष्टिरज्ञानेनैव जन्यते॥ १०७
हा कष्टमपि दुर्बुद्धेः सृष्टिर्मौर्ख्यवशं गता।
असतैव यदेतेन जीवेनाप्युपपाद्यते॥ १०८

एतन्मन एवाज्ञानसर्वस्वनिर्वाहकत्वादज्ञानम्॥ ८९॥ संकल्पकल्पनं संकल्पकल्पननिमित्तमिति यावत्। अतएव निमित्ताजनने नैमित्तिकापायसिद्धिरित्याह—**न कृतं चेदि**ति॥ ९०॥ वायोरिति वायुतः। षष्ठ्यन्तात्सार्वविभक्तिकस्तसिः॥ ९१॥ न विद्यन्तेऽखण्डमण्डलाकारस्पन्दरूपाणि यस्यां तथाविधा चिदेव यद्यस्मात्परमार्थ इत्यर्थः॥ ९२॥ सा उक्ताखण्डपूर्णतालक्षणा चित्ता चित्स्वभावता तदन्येन केन संबाध्यते खण्ड्यते। किलेति तदसंभावनाद्योतनार्थः। किं तदधीनसिद्धिकेन उतान्येन अन्यस्याप्रसिद्धेः। चिदधीनसिद्धिकस्य चिद्बाधनाशक्तेर्बाधस्यापि सिद्धेश्चित्सत्ताधीनत्वाच्चित्खण्डनमन्तरेण चिदन्तराले अचित्सिद्ध्ययोगाच्चेति भावः। 'तद्विदन्ते' इति पाठे तु तां तादृशीं चित्स्वभावतां स्वस्य वेत्तीति तद्वित् अन्ते सकार्याविद्यानाशे सति केन संबाध्यते इति योज्यम्। इन्द्रस्य देवराजस्य परमेश्वरस्य वा॥ ९३॥ अतोऽचितश्चिदविरोधायोगाद्विरोधे चित्सत्ताबाधितस्थितिकत्वाच्च कीदृशं मनः। यदि जडमपि स्वसत्तायामन्यनिरपेक्षं स्वतःसिद्धमुच्येत तथापि तदनुभवितुस्तत्संबन्धिनश्चेतनस्यान्यस्याभावाच्चिरसंबन्धेन विना तन्मनः कस्य सिद्धं कीदृशं वा तत्स्यात्। अनुभवानारोहे अलीकस्य तस्य च विशेषासिद्धेरिति भावः॥ ९४॥ इत्थं चित्स्पन्दयोर्भेदपक्षे मनसोऽलीकतामुक्त्वा एकतापक्षे तु सुतरां तथेत्याह—**चित्स्पन्दयो**रिति। चित्स्पन्दयोरेकता चिदपलापेन तावदशक्या वक्तुम्। स्पन्दसाधकाभावप्रसङ्गात्। परिशेषात्स्पन्दापलापेनैकत्वोक्तौ राजातिरिक्तगजतुरगाद्यपलापे सेनास्वरूपासिद्धिवन्मनसः सुतरामसिद्धिरित्यर्थः॥ ९५॥ तस्मात्पक्षद्वयेऽप्यसंभवाच्चित्तं मनो नास्त्येव तत्त्वज्ञानान्नास्तीति

निश्चय एव मनोनाश इत्यर्थः॥ ९६॥ ९७॥ ९८॥ हृत्पदेन हृदयान्तस्थप्रत्यगात्मोच्यते। तल्लक्षणे मरौ। असम्यग्ज्ञानेन संभूता। मुने इति रामसंबोधनं मननप्रवणताविधानार्थम्॥ ९९॥ मरणं यदि चैतन्यनिवृत्तिर्यदि वा निःस्वरूपतापत्तिस्तदुभयमपि मनस्यस्तीति नित्यमृतम्। मौर्ख्यचक्रिका चक्रवत्परिवर्तमाना मौर्ख्यपरम्परा॥ १००॥ आत्मा स्वरूपम्। आकृतिरवयवसंस्थानं जातिर्वा॥ १०१॥ सामग्र्यं शस्त्रास्त्रदेहहस्तपादादियुद्धसामग्री तेन हीनेन। दलितमस्तकं तं इति शेषः॥ १०२॥ १०३॥ तेन अविद्यमानेन मनसा विद्यमानः। शूरः शत्रुजयसर्वसामग्रीसंपन्नोऽपि लोको मूढजनोऽभिभूयते। विवेकिभिश्च वैराग्यादिभिर्महाप्रयत्नसंपाद्यैः साधनैर्महता योगध्यानसमाध्यभ्याससाक्षात्कारोपायेनाविद्यमानमेव हन्यते इतीयं सर्वा विकल्पना मुग्धतैवोदिता न पारमार्थिकीत्यर्थः। तथाचाहुः स्वामिनः 'समसरमिति निरविदमिति समतरमिति चेह सहजसान्द्रसुखे। केवलचिद्गगने मयि केयमहो विफलबहुविकल्पलता॥' इति॥ १०४॥ शक्तता अभिभवितुमिति शेषः॥ १०५॥ महामायावित्वेन प्रसिद्धस्य मयस्यापि विधायिनी निर्मात्री॥ १०६॥ यदा मौर्ख्यं तदा स पुरुषः सर्वेणाप्यापदा अन्विष्टः परिमृग्य आश्रितो नात्र विप्रतिपत्तिः। हि यस्मादजानतो मूर्खस्य का आपन्नास्ति, सर्वाप्यस्त्येवेत्यर्थः। न विद्यते ज्ञानं यस्य सः अज्ञानः मूर्खात्मा तेन मौर्ख्याद्दुष्कर्मादिद्वारा इयं सर्वापन्निधिभूता सृष्टिः। 'आपदां निष्ठे'ति पाठे तु स्पष्टम्॥ १०७॥ इयं सृष्टिर्मनोदेहादिदुर्बुद्धेर्निमित्तान्मौर्ख्यस्य वशं गता मौ-

१ अत्र सर्वयाप्यापदा। सर्वेणापि प्रकारेणेत्यर्थ इति युक्तम्।

मन्ये मौर्ख्यमयी सृष्टिरियमत्यन्तपेलवा ।
वास्तरङ्गप्रवाहेण कणशः परिशीर्यते ॥ १०९
नीलाञ्जनालवालेन यन्त्रेणैव विचूर्ण्यते ।
इन्दोराभोगपूर्णस्य करस्पर्शेन मुह्यति ॥ ११०
रिपुभिर्नयनोन्मुक्तैर्दष्टः सूत्रैर्निबध्यते ।
संकल्पकृतया शूरसेनया परिभूयते ॥ १११
तस्मात्किलेयं मनसा न स्थितेनैव कुत्रचित् ।
कल्पितेन सुधान्येन कृपणेन निहन्यते ॥ ११२
मूर्खलोकमयी सृष्टिर्मन एवासदुत्थितम् ।
यः शक्तो न वशीकर्तुं नासौ रामोपदिश्यते ॥ ११३
अभिजाताऽस्वरूपैषा प्रज्ञा क्षोदेषु न क्षमा ।
नोपदेशगिरां योग्या परिपूर्णैव संस्थिता ॥ ११४
बिभेत्येषापि वीणायास्तन्त्रीगुणतनुध्वनेः ।
बन्धोरपि सनिद्रस्य बिभेति वदनच्युतेः ॥ ११५
असतोऽपि जनादुच्चैर्गीताद्भीता पलायते ।
स्वेनैव मनसाप्यज्ञा किलैषा विवशीकृता ॥ ११६
सुखलवविवशा द्विषेव तप्ता
हृदयगतेन निजेन चेतसैव ।
विधुरितधिषणा न वेत्ति सत्यं
तदपि कथं परिमोहितो मुधैव ॥ ११७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे मनोविनिवारणं नाम त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः १४

श्रीवसिष्ठ उवाच ।
संसारसागरासारकल्लोलैरुह्यमानया ।
मतेर्मौनद मूकत्वं यया जनतयार्जितम् ॥ १
आत्मलाभमयोदारकलाभिरिह सा मया ।
विचारोक्तिभिरेताभिः शास्त्रेऽस्मिन्नोपदिश्यते ॥ २
न पश्यत्येव योऽस्त्यर्थं तस्य कः खलु दुर्मतिः ।

स्वैर्येण पीड्यमानाप्येतेन प्रसिद्धेन जीवेनाप्यसता असन्मार्गानुवर्तनेनैवोत्तरोत्तरदुःखायोपपाद्यते । तथाचान्धस्येव जडस्य मनआदेः स्वाभाविकमौर्ख्यात्पीडितस्य पुनस्तद्दुःखाभिज्ञेन जीवेनापि पीडनं कष्टात्कष्टतरमनुचितमित्यर्थः ॥ १०८ ॥ अत्यन्तपेलवा अविचारमात्रसिद्धत्वाद्विचारमात्रेण बाधितुं शक्येति यावत् । तत्र तादृशान्विचारमात्रनिरस्यान्दृष्टान्तानाह—**वारि**त्यादिना । यथा वाः वारि स्वकल्पितेन तरङ्गप्रवाहेण पिष्यमाणं कणशः परिशीर्यते इति भ्रान्तिवदित्यर्थः ॥ १०९ ॥ तदेव वारि यत्रावर्तस्तत्र नीलाञ्जनवर्णेन आलवालेन मध्यच्छिद्रवता पेषणयन्त्रेणैव विचूर्ण्यते । तदेव वारि यत्र कम्पते तत्र आभोगेन मण्डलेन पूर्णस्येन्दोः करस्पर्शेन मुह्यति उन्मादपरवशतां गच्छतीति च भ्रान्तिर्यथा तद्वदित्यर्थः ॥ ११० ॥ रिपुभिर्दष्टो दृष्टमात्रः पुरुषो नयनोन्मुक्तैर्नेत्रसृष्टैः सूत्रैर्बध्यत इत्यादिभ्रान्तिवदित्यर्थः । अथवा मन्ये इत्यादि असती मृगतृष्णावास्तरङ्गप्रवाहादिनापीयं सृष्टिर्विनाशयितुं शक्यते किं पुनः शास्त्रीयोपायेनेति मन्ये इत्येवं योज्यम् ॥ १११ ॥ तस्मादतिपेलवत्वादियं मूर्खलोकमयी सृष्टिर्निहन्यत इति परेण सहान्वयः ॥ ११२ ॥ तस्मान्मनोवशीकरणाशक्तो नाध्यात्मशास्त्राधिकारीत्याह—**मन एवे**ति ॥ ११३ ॥ कुतो नोपदिश्यते तत्राह—**अभिजाते**ति । यतस्तस्यैषा प्रज्ञा अभितो जाता अभिजाता बाह्यविषयेष्वेव निरूढा तावतैव परिपूर्णेव संस्थिता न मनोनिग्रहोद्युक्ता । अस्वरूपा न विद्यते आन्तरं स्वरूपं यस्यास्तथाविधा प्रत्यक्प्रवणा न भवतीत्यर्थः । अतएव क्षोदेषु सूक्ष्मार्थविचारेषु न क्षमा ॥ ११४ ॥ अतएव धैर्यहेत्वभावात्सर्वतो बिभेतीत्याह—**बिभेती**ति ॥ ११५ ॥ असतोऽपि शत्रुजनात्प्रतारकादिभिरायातस्ते शत्रुजन इत्युच्चैर्गीताद्भीता सती पलायते । किं बहुना स्वेन स्वीयेनैव मनसापि विवशीकृता भीषिता किमन्येनेत्यर्थः ॥ ११६ ॥ इदानीं सा दुष्प्रज्ञा बिभेतु नाम तथापि न तद्वशेन पुरुषस्य व्यामोहो युक्त इति प्राक्प्रस्तुतमेवोपसंहरति—**सुखे**ति । यतः सा प्रज्ञा विषसंपृक्तमोदकास्वादसुखलवप्रायेण विषयसुखलवेन मरणोन्मुखीव विवशा द्विषेव प्रहरता हृदयगतेन चेतसैव तप्ता संतापिता विधुरिता शून्या धिषणा विवेकबुद्धिर्यस्यास्तथाविधा सत्यं तु सुतरां न वेत्ति तत्तथाभूतयापि तया पुरुषो मुधैव परिमोहितः स्वच्छचित्तात्स्वजनासंतप्ताद्विवेकबुद्धिमतः सत्यस्वरहस्यवेदिनः शत्रोः सकाशान्मोहो युक्तो ननु तद्विपरीताया दुष्प्रज्ञायाः सकाशादिति भावः ॥ ११७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे मनोनिवारणं नाम त्रयोदशः सर्गः ॥ १३ ॥

उपेक्ष्यानुपदेशार्हाज्ञानायोनिषु दुःखिनः ।
मनोनिर्मार्जनोपायस्तदर्हेभ्योऽत्र वर्ण्यते ॥ १ ॥

तत्रादौ 'मन एवासदुत्थितम् । यः शक्तो न वशीकर्तुं नासौ रामोपदिश्यते' इति प्राक्प्रस्तुतानुपदेशानधिकारिजनानेवोपेक्षणीयतया वर्णयति—**संसारे**त्यादिना । संसारसागरस्य असारकल्लोलभूतैर्विषयसुखाभिलाषैरुह्यमानया निरन्तरं प्रवर्त्यमानया यया जनतया मनोनिग्रहविवेकवैराग्यादिविषये अपेक्षाभावाद्विदुषः प्राप्यापि प्रश्नप्रार्थनाद्यकरणान्मतेर्मूकत्वमेवाश्रितं सा जनता मया आत्मलाभोपायप्रचुरोत्कृष्टकलाशालिभिर्विचारोक्तिभिरिह जगत्यस्मिन् शास्त्रे नोपदिश्यते इति द्वयोरन्वयः ॥ १ ॥ २ ॥ योऽन्ध इत्येव वक्तव्ये नित्यं न पश्यतीत्युक्ति-

१ यो नित्यं इति पाठः.

विचित्रमञ्जरी चित्रं संदर्शयति काननम् ॥ ३
कः कुष्ठघर्घरघ्राणं नानामोदविचारणे ।
मूर्खमात्मोपदेशेन प्रमाणीकुरुतेऽमतिः ॥ ४
विपर्यस्तेन्द्रियं मत्तं मदिराघूर्णितेक्षणम् ।
धर्मनिर्णयसाक्षित्वे कः प्रमाणीकरोत्यधीः ॥ ५
कः शवं वा श्मशानस्थं समवायकथाशतम् ।
परिपृच्छति संदेहे कश्च मूर्खं प्रशास्ति च ॥ ६
येनाशयबिलस्थोऽपि मूकोन्धोऽपि न निर्जितः ।
मनोव्यालः स दुर्बुद्धिः कथं नामोपदिश्यते ॥ ७
जितमेव मनो विद्धि वस्तुतो यन्न विद्यते ।
निकटात्सा चिरास्तैव या शिला नैव विद्यते ॥ ८
मनो न विजितं राम येनासदपि दुर्धिया ।
तेनाग्रस्तविषेणैव म्रियते विषमूर्छया ॥ ९
ज्ञः पश्यति सदैवात्मा स्पन्दने प्राणशक्तयः ।
इन्द्रियाणि स्वधर्मेषु मनो राम किमुच्यते ॥ १०
प्राणानां स्पन्दनी शक्तिर्ज्ञानशक्तिः परात्मनः ।
इन्द्रियाणां निजा शक्तिरेकः कोऽत्र निबध्यते ॥ ११
सर्वास्तदंशवस्तस्य सर्वशक्तेः किलात्मनः ।[1]
पृथक्ता वाच्यता चेयं कुतो नाम तवोत्थिता ॥ १२
किं नाम जीव इत्युक्तं येनेहान्धीकृतं जगत् ।
चित्तं चैवासदेव त्वं विद्धि का तस्य शक्तता ॥ १३
मनोनिर्दग्धदृष्टीनां दृष्ट्वा दुःखपरम्पराम् ।
मतिर्मे करुणाक्रान्ता राम मुग्धेव तप्यते ॥ १४
कः किलात्र कुतः खेदो यन्मूर्खः परितप्यते ।
दुःखायैव हि जायन्ते करभाः प्राकृतास्तथा ॥ १५
विनाशायैव जायन्ते जडा देहेष्ववबुद्धयः ।
अनारतोदयाः पापा बुद्बुदा जलधेरिव ॥ १६
कियन्तः पश्य पशवः प्रत्यहं प्रतिमण्डलम् ।
सूनावद्भिर्निहन्यन्ते कैवात्र परिदेवना ॥ १७
अर्बुदान्यनिलो हन्ति क्षमाजातेषु चान्वहम् ।
दंशानां मशकानां च कैवात्र परिदेवना ॥ १८
दिशं प्रति गिरीन्द्रेषु पुलिन्दाद्या वने वने ।
निघ्नन्ति मृगलक्षाणि कैवात्र परिदेवना ॥ १९
जले जलचरव्यूहान्सूक्ष्मान्स्थूलो निकृन्तति ।
ग्रासार्थं निर्दयो मत्स्यः कैवात्र परिदेवना ॥ २०
लिक्षामणुकणक्षामां क्षुधा खादति मक्षिका ।
तां कोशकारः क्षुधितो दंशास्तमपि चञ्चलम् ॥ २१

श्चक्षुष्मानपि यो दुरदृष्टद्वेषादिना न पश्यति तस्यापि तत्प्रदर्शनमनुचितमिति सूचनार्थम् ॥ ३ ॥ कुष्ठरोगविशीर्णघर्घरस्वननादिघ्राणं यस्य तं पुरुषं कोऽमतिर्निर्बुद्धिर्नानामोदानां विचारणे परीक्षणे प्रमाणीकुरुते आमोदतत्त्वनिर्णेतृत्वेनाश्रयतीत्यर्थः ॥४॥ ॥ ५ ॥ समवाया जनसमूहास्तत्रत्यं कथाशतम् ॥ ६ ॥ आशेते अस्मिन्नित्याशयो हृदयं तद्बिलस्थः ॥ ७ ॥ तर्हि किं विवेकिनोऽपि मनोजयोऽशक्यो नेत्याह—**जितमेवे**ति । निकटात्स्वसंनिधेः अस्ता दूरनिरस्तैव ॥ ८ ॥ अग्रस्तविषेणेति सर्पदंशाद्यभावस्याप्युपलक्षणम् ॥ ९ ॥ वस्तुतो यन्न विद्यते इत्येतदुपपादयति—**ज्ञ** इति । किमर्थप्रथार्थं मन उत स्पन्दार्थमुत ज्ञानकर्मेन्द्रियप्रयोजनसिद्धये । तत्त्रयमपि प्राणप्रेरितैरिन्द्रियरुपनीतानामर्थानां साक्षिणैव प्रथासंभवान्न मनसः कृत्यमस्तीति भावः ॥ १० ॥ ननु सर्वशक्तिभिर्निबद्धं मनः किं न स्यादिति चेन्न, इयमुक्तिर्विवेके घटते वीणामधुरध्वनिवत्समाजेनापि समुदितव्यवहारसिद्धेरित्याशयेनाह—**प्राणाना**मिति । तथाच यथा तैर्थिकसमाजस्नानदानगानस्तवनादिव्यवहारो न सर्वशक्तिमदेकप्रयुक्तस्तद्वदयमपीत्यर्थः ॥ ११ ॥ यदि कश्चिद्ब्रूयात्संघातस्य संहन्तृपरार्थत्वनियमादत्रापि कश्चिदपेक्षित इति तर्ह्यस्यापि संघातस्य जगत्संघातान्तःपातात्सर्वेषां सर्वा व्यवहारशक्तयः सर्वनिर्मातुरीश्वरस्यात्मन एवांशव इति तादर्थ्यमेवास्यापि सिद्ध्येन्नाचेतनमनोर्थत्वमिति न प्रतिशरीरभिन्ना चेतनमनःसिद्धिरित्याशयेनाह—**सर्वा** इति । वाच्यता मनआदिशब्दवाच्यता ॥ १२ ॥ तर्ह्यस्तु जीवश्चेतनोऽस्याधिष्ठाता, स च न चित्ताख्यमनःप्रग्रहेण विना इन्द्रियाश्वानधिष्ठातुं शक्नोतीति चित्तमपि सिद्धमेवेति चेत्तत्राह—**किं नामे**ति । जीव इति चित्तमेव चेति यत्त्वयोक्तं तदुभयं किं नाम । किमात्मातिरिक्तं चेतनान्तरमुताचेतनम् । नाद्यः 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इति श्रुत्या ब्रह्मातिरिक्तचेतनान्तरस्य प्रतिषेधात् । द्वितीये त्वाह—**का तस्य शक्तते**ति । अचेतनस्य चेतनार्थत्वावश्यकतया इन्द्रियेभ्यो विशेषाभावात्तदधिष्ठानशक्त्यभावात् । अतस्त्वं तदुभयमसदेव विद्धीत्यर्थः ॥ १३ ॥ स्वकल्पितेन मनसा निर्दग्धा परमार्थदृष्टिर्येषाम् । तद्दुःखनिवारणोपायस्यान्वेषणे वर्षकोटिभिरप्यलाभान्मुग्धा व्यामोहमिवापन्ना ॥ १४ ॥ सनिमित्तकं हि दुःखं निमित्तनिवारणेन वारयितुं शक्यम्, मूर्खाणां तु निर्निमित्तमेव दुःखमतो दुर्वारमेवेत्याशयेनाह—**कः किले**ति । करभा गर्दभाः प्रकृता मूर्खाश्च अतः शोच्या एवेत्यर्थः । अथवा नैते शोच्याः ईदृशां मूढयोनीनामसंख्यातानां दर्शनेन तद्वदेवोपेक्षार्हत्वादित्याशयेन इयमुक्तिः ॥ १५ ॥ उक्तार्थविवरणाय नानायोनिभेददुःखिन उदाहर्तुं पीठिकां रचयति—**विनाशायै**वेति । पापाः यतः पापकारिण इत्यर्थः ॥ १६ ॥ अज्ञानां योनिभेदेषु दुःखवैचित्र्याणि वैराग्यदार्ढ्यायोदाहरति—**कियन्त** इत्यादिना । प्रतिमण्डलं प्रतिदेशम् । सूना पशुहिंसास्थानं तद्वद्भिस्तदधिष्ठितैः पुरुषैः ॥ १७ ॥ क्षमाजातेषु भूम्युद्भवजन्तुषु मध्ये अनिलो दंशानां मशकानां चार्बुदान्यसंख्यातानि हन्ति ॥ १८ ॥ दिशं प्रति प्रतिदिशम् । वीप्सायां द्विर्वचनस्याव्ययीभावारम्भसामर्थ्याद्विकल्पितत्वेऽप्यन्यतरस्यावश्यकत्वादुभयाभावश्छान्दसः ॥ १९ ॥ २० ॥ इदानीं दुर्बलानां प्रबलैः

[1] सर्वास्ता अंशव इति पाठः.

तं दंशं दर्दुरो भुङ्क्ते व्यालस्तमपि दर्दुरम् ।
सर्पमुग्रं खगो हन्ति बभ्रुश्चैनं निकृन्तति ॥ २२
बभ्रुं हिनस्ति मार्जारो मार्जारं श्वा निकृन्तति ।
ऋक्षः कौलेयकं हन्ति ऋक्षं व्याघ्रो निकृन्तति ॥ २३
सिंहोऽभिभवति व्याघ्रं शरभः सिंहमत्ति च ।
शरभो नाशमायाति मत्तमेघविलङ्घने ॥ २४
मेघा वातैर्विधूयन्ते वायवो गिरिभिर्जिताः ।
गिरयो वज्रनिष्पिष्टाः शक्रस्य वशगः पविः ॥ २५
विष्णुना क्रियते शक्रो विष्णुर्गच्छति जन्तुताम् ।
सुखदुःखदशामेतां जरामरणपालिताम् ॥ २६
जन्तवोऽपि महाकाया अपि विद्यायुधान्विताः ।
लिक्षाभिरङ्गलग्नाभिरुपजीव्यन्त एव हि ॥ २७
अजस्रमेवमालूनविशीर्णं भूतजङ्गलम् ।
परस्परमलं मोहादद्यते रक्ष्यतेऽपि च ॥ २८
अनारतं विनश्यन्ति विविधा भूतजातयः ।
अनारतं च जायन्ते लिक्षायूकापिपीलिकाः ॥ २९
जलकोशेषु जायन्ते मत्स्येभमकरादयः ।
भूमावन्तः प्रजायन्ते कीटौघा वृश्चिकादयः ॥ ३०
अन्तरिक्षेऽपि जायन्ते आकाशविहगादयः ।
वनवीथिषु जायन्ते सिंहव्याघ्रमृगादयः ॥ ३१

प्राण्यङ्गेष्वपि जायन्ते विचित्राः ककुभं प्रति ।
स्थावरेष्वपि जायन्ते घुणा जघनकादयः ॥ ३२
शिलान्तरेषु जायन्ते कीटभेकघुणादयः ।
विष्ठायामपि जायन्ते नानाकीटगणास्तथा ॥ ३३
एवमेतेष्वसंख्येषु जन्मक्षयचयेषु च ।
अजस्रं करुणावन्तो नन्दन्तु प्ररुदन्तु वा ॥ ३४
अनारतमृतावस्मिन्ननारतसमुद्भवे ।
संसारसंभ्रमे युक्ता न तुष्टिर्न च दुःखिता ॥ ३५
पङ्क्तयस्त्वेवमेवेमा वृक्षपर्णगणैः समाः ।
उत्पत्योत्पत्य लीयन्ते भूतानां भूरिसंभवाः ॥ ३६
यः प्रवृत्तः कुबुद्धीनां दयावान्दुःखमार्जने ।
स्वगतच्छत्रनिर्मृष्टसूर्यांशु खिद्यते नभः ॥ ३७
न तिर्यक्समधर्माण उपदेश्या नरा भुवि ।
कथार्थकथनेनार्थः कः स्थाणुनिकटे वने ॥ ३८
किं किल स्फारमनसां पशूनां च विशेषणम् ।
कृष्यन्ते पशवो रज्ज्वा मनसा मूढचेतसः ॥ ३९
स्वचित्तपङ्कमग्नानां स्वनाशारब्धकर्मणाम् ।
मूर्खाणामापदं दृष्ट्वा प्ररुदन्त्युपला अपि ॥ ४०
अनिर्जितात्मचित्तानां समन्ताद्दुःखदा दशाः ।
तन्मार्जनं कृतप्रज्ञो नाऽतः संप्रतिपद्यते ॥ ४१

पीडनं परम्परयोपपादयति—**लिक्षे**त्यादिना । अणुकणवत्क्षामां लिक्षां वस्त्रयूकां मक्षिका क्षुधा बुभुक्षया खादति । कोशकार ऊर्णनाभिः कीटविशेषो वा । दंशो वनमक्षिका ॥ २१ ॥ दर्दुरो भेकः । खगो गरुडादिः । बभ्रुर्नकुलश्चैनं सर्पम् ॥ २२ ॥ ऋक्षो भल्लूकः । 'रिच्छ' इति पाठे श्वापदविशेषः ॥ २३ ॥ मत्तस्य गर्जतो मेघस्य विलङ्घने स्वोपरिभागे गमने प्रसक्ते तदसहनेनोत्पत्य शिलातले निपातान्नाशमायातीति प्रसिद्धमित्यर्थः ॥ २४ ॥ वज्रेण निष्पिष्टाः खण्डिताः । पविर्वज्रोऽपि शक्रस्य वशगः । शक्रेण बलाद्वशीकृत इति यावत् ॥ २५ ॥ क्रियते वशग इत्यनुवर्तते । जन्तुतां मत्स्यकूर्मवराहादितिर्यग्जन्त्ववतारान् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति संकल्प्य जीवात्मना विष्णोरेव प्रवेशाज्जीवभावेन सर्वजन्तुशरीरित्वात्सर्वजन्त्वात्मकतां वा । अतएव विशिनष्टि—**सुखदुःखे**ति जरामरणाभ्यां स्वभोज्यमन्नमिव यावदायुःपालिताम् ॥ २६ ॥ लिक्षाग्रहणं मशकमत्कुणमक्षिकाकव्यादाद्युपलक्षणम् । उपजीव्यन्ते भक्ष्यन्ते ॥ २७ ॥ आधिभौतिकैरालूनं आध्यात्मिकैराधिदैविकैश्च दुःखैर्विशीर्णं भूतजङ्गलं प्राणिवृन्दम् । अद्यते भक्ष्यते उत्तरकाले भक्षणायेदानीं रक्ष्यते । अपिशब्दादर्धं भक्षयित्वार्धं रक्ष्यते ॥ २८ ॥ अनारतं संततम् । यूकाः शिरोरुहजाः । लिक्षायूकापिपीलिका इति 'क्षुद्रजन्तवः' इत्येकवद्भावाकरणं छान्दसम् । नच 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्' इत्यत्र बहुवचनग्रहणेन ज्ञापनात्सिद्धमिति युक्तम् । ज्ञापकस्य सजातीयापेक्षत्वेन तस्याप्राप्तविभाषात्वादन्यथा प्राणितूर्याङ्गद्वन्द्वेऽपि विभाषापत्तेरिति ॥ २९ ॥ बाधकपरम्परां समाप्य प्रकृतमनुवर्तते—**जलकोशे**ष्विति । जलकोशेषु जलाशयेषु । इभा इभाकारा जलजन्तुविशेषाः ॥ ३० ॥ आकाशविहगाः क्षुद्रपक्षिविशेषास्ते हि सदा भ्रमन्तोऽन्तरिक्ष एव प्रसूयन्ते प्रसूतं चाण्डमधःपातात्प्रागेव भित्त्वा निर्गताः शावकाः सद्यः संजातपक्षा अन्तरिक्षमेवोत्पत्य भ्रमन्तीति लोकप्रवादप्रसिद्धम् । आदिपदात्पिशाचा भूतवेतालादयो ग्राह्याः ॥ ३१ ॥ प्राण्यङ्गेषु कृमियूकादयः । ककुभं प्रति प्रतिदिशम् । घुणाः काष्ठकृमयः जघनका भ्रमरिकाकाराः काष्ठकीटाः । आदिपदात्पत्रफलपुष्पाद्युद्भवाः कृमिमशकभेदा गृह्यन्ते ॥ ३२ ॥ ३३ ॥ उपसंहृत्य प्रस्तुते योजयति—**एव**मिति । नन्दन्तु प्ररुदन्तु वेति द्वेषाभावात्परपीडाभिनन्दनमिव स्नेहाभावाद्रोदनमप्यनुचितमित्युपेक्षैव युक्तेति भावः ॥ ३४ ॥ उक्तमेव स्पष्टमाह—**अनारते**ति ॥ ३५ ॥ भूतानां पङ्क्तयः समूहाः । एवमेव वृथैवेत्यर्थः ॥ ३६ ॥ यः दयावान्सन्कुबुद्धीनां दुःखमार्जने प्रवृत्तः सः नभः कृत्स्नमाकाशं स्वगतेन च्छत्रेण निर्मृष्टसूर्यांशु निवारितातपं कर्तुं खिद्यते श्राम्यतीत्यर्थः । 'खिद्यते न सः' इति पाठे तु किं न खिद्यते इति काक्वा योज्यम् ॥ ३७ ॥ ३८ ॥ स्फारमनसां विषयविस्तारितमनसाम् । विशेषणं विशेषः ॥ ३९ ॥ उपलाः पाषाणा अपि प्ररुदन्ति किं पुनः सचेतना इत्यतिशयोक्तिः ॥ ४० ॥ समन्तात्सर्वदेशेषु सर्वदा च दुःखदा दशाः पूर्णाः सन्तीति शेषः । अतः कृत्स्नभूमिपांसुसंमार्जनवदशक्यत्वान्न संप्रतिपद्यत इत्यर्थः ॥ ४१ ॥

विनिर्जितात्मचित्तानां दुःखानि रघुनन्दन ।
सुविचार्याणि तेनात्र ज्ञातज्ञेयः प्रवर्तताम् ॥ ४२
मनो नास्ति महाबाहो मा मुधोप प्रकल्पय ।
अनेन कल्पितेन त्वं वेतालेनेव हन्यसे ॥ ४३
यावद्विस्मृतवानात्मतत्त्वं मूढो भवद्भवान् ।
तावत्तव मनोव्यालो बभूवाभ्युदितस्ततः ॥ ४४
इदानीं भवता ज्ञातं यथाभूतमरिंदम ।
संकल्पाद्वर्धते चित्तं तदेवाशु परित्यज ॥ ४५
दृश्यमाश्रयसीदं चेत्तत्सचित्तोऽसि बान्धवान् ।
दृश्यं संत्यजसीदं चेत्तत्सचित्तोसि मोक्षवान् ॥ ४६
अयं गुणसमाहारो बन्धायैव समाश्रितः ।
संत्यक्तो भव मोक्षाय यथेच्छसि तथा कुरु ॥ ४७
नाहं नेदमिति ध्यायंस्तिष्ठ त्वमचलाचलः ।
अनन्ताकाशसंकाशहृदयो हृदयेश्वरः ॥ ४८
आत्मनो जगतश्चास्य त्वमङ्ग कलनामलम् ।
राम द्वित्वमयीं त्यक्त्वाशेषस्थः सुस्थिरो भव ॥ ४९
आत्मनो जगतश्चान्तर्द्रष्टृदृश्यदशान्तरे ।
दर्शनाख्ये स्वमात्मानं सर्वदा भावयन्भव ॥ ५०
स्वाद्यस्वादकसंत्यक्तं स्वाद्यस्वादकमध्यगम् ।
स्वादनं केवलं ध्यायन्नित्यमात्ममयो भव ॥ ५१
रामानुभवनीयस्य तथानुभवितुः स्वयम् ।
अवलम्ब्य निरालम्बं मध्यं मध्ये स्थिरो भव ॥ ५२
भवभावनया हीनं भावाभावदशोज्झितम् ।
भावयन्नेवमात्मानमात्मसंस्थः स्वयं भव ॥ ५३
आत्मसत्तां त्यजन्नेतां चेत्यं भावयसि स्वयम् ।
यदा राम तदा यासि चित्ततामतिदुःखदाम् ॥ ५४
चित्ततां शृङ्खलामेतां स्वरूपज्ञानयुक्तितः ।
विलाच्चित्तान्महाबाहो स्वात्मसिंहं विमोचय ॥ ५५
परमात्मदशां त्यक्त्वा चेत्यं परिपतन्नलम् ।
यदा गच्छसि संकल्पं चेत्यं संपश्यसे तदा ॥ ५६
आत्मनो व्यतिरिक्तं स्वचित्तमित्यङ्ग संविदा ।
मनः संपद्यते दुःखि क्षीयते त्यक्तया तया ॥ ५७
आत्मैवेदं जगत्सर्वमित्यन्तः संविदोदये ।
क्व चेता क्व च वा चित्तं किं चेत्यं चेतनं च किम् ५८
अहमात्मेति जीवोऽसीत्येतावच्चित्तकं विदुः ।
अनेनेत्थमनाद्यन्तं दुःखं राघव तन्यते ॥ ५९
अहमात्मा न जीवाख्याः सत्ताः सन्तीतराः क्वचित् ।
इत्येव चित्तोपशमः परमं सुखमुच्यते ॥ ६०
आत्मैवेदं जगदिति जाते राघव निश्चये ।
असत्ता चेतसो जाता भवत्येव न संशयः ॥ ६१
एवं सत्यावबोधेन स्वात्मैवेदमिति स्थितिः ।
मनः सुगलितं विद्धि सूर्यभासा तमो यथा ॥ ६२

---

सुविचार्याणि रलयोरभेदात्सुविचाल्यानि । सुखनिरस्यानीत्यर्थः तेन हेतुना । अत्र तन्मार्जने । ज्ञातज्ञेयस्तत्त्ववित् ॥ ४२ ॥ प्रासङ्गिकीमधिकारिचिन्तां समाप्य प्रस्तुतमेवानुवर्तमान आह—**मन** इति ॥ ४३ ॥ यदि नास्ति तर्हि प्रतियोग्यप्रसिद्धौ निषेधानवकाशमाशङ्क्याह—**यावदि**ति । तथाच प्राक्तनीमज्ञदशामादाय प्रसिद्धिरुपपन्नेत्यर्थः ॥ ४४ ॥ यथाभूतं परमार्थात्मरूपम् ॥ ४५ ॥ बन्धमोक्षरहस्यमाह—**दृश्य**मिति ॥ ४६ ॥ किं तर्हि दृश्यतत्त्वं तदाह—**अय**मिति । त्रिगुणात्मकमायामय इत्यर्थः ॥ ४७ ॥ अहमित्यान्तरं दृश्यं इदमिति बाह्यं च नास्त्येवेति ध्यायन् । अचलः पर्वत इवाचलः स्थिरः । हृदयेश्वर आत्मा ॥ ४८ ॥ अहमिदमिति द्वित्वमयीं कलनां अलं सर्वात्मना त्यक्त्वेत्यर्थः ॥ ४९ ॥ ननु तदुभयकलनात्यागे किमवशिष्यते यत्र स्थितिरुपदिश्यते तदाह—**आत्मन** इति । द्रष्टृदृश्यदशयोरन्तरे अन्तराले इत्येतावत्युक्ते वृत्तिज्ञानस्याप्यान्तरालिकत्वाद्ग्रहणं स्यात्तन्माभूदित्यात्मनो जगतश्चान्तरिति । तथाच त्रिपुट्यनुस्यूतसन्मात्ररूपे दर्शनाख्ये त्रिपुटीसाक्षिस्वभावे स्थितं स्वमात्मानं भावयन् भव आस्व ॥५०॥ चाक्षुषत्रिपुटीवद्रासनादित्रिपुटीष्वपि स एव तत्साक्षी परिचेय इत्याशयेनाह—**स्वाद्ये**ति । पूर्ववद्योजना ॥ ५१ ॥ अनुमित्याद्यनुभवान्तरेष्वप्येवं बोध्यमित्याशयेनाह—**रामे**ति । निरालम्बं आलम्बो विषयभूतत्रिपुट्यंशस्तद्व्यतिरिक्तं मध्यं तदान्तरं हृदयमध्ये अवलम्ब्य स्थिरो भवेत्यर्थः ॥ ५२ ॥ भवस्य भावना संस्कारवशाद्दर्शनं स्वप्नदशेति यावत् । भावदशा जाग्रत् । अभावदशा सुप्तिः । 'भावाभावदशोज्झितम्' इति पाठे तदुभयदर्शनोज्झितमित्यर्थः ॥ ५३ ॥ एतां शुद्धचिन्मात्रस्वभावामात्मसत्तां प्रमादात्त्यजन् यदा चेत्यं तदतिरिक्तं भावयसि तदा चित्ततां यासीत्यन्वयः ॥ ५४ ॥ स्वरूपज्ञानयुक्तितो भङ्क्त्वेति शेषः । चित्ताच्चित्तलक्षणाद्बिलात्पञ्जरात् । 'बलादि'ति पाठे तु मननादिकृतज्ञानदार्ढ्यबलात् ॥ ५५ ॥ संपश्यसे पश्यसि । पदव्यत्ययश्छान्दसः ॥ ५६ ॥ कथं चेत्यपरिपतनं तेन च कथं संकल्पगमनं कथं वा तत्क्षयस्तदाह—**आत्मन** इति । हे अङ्ग, यदा चित्तं पूर्वानुभवजनितदृश्यसंस्कारोद्बोधे सति चिदेव किंचित्स्थौल्यमिवापन्नं चित्तमिति संविदा आत्मनो व्यतिरिक्तं सत् सिद्धं भवति तदेव पुनःपुनर्मननाद्दृढीभूतं संकल्पसमर्थं सन्मनः संपद्यते तदेव दुःखि । तया स्वव्यतिरिक्तसत्तासंविदा त्यक्तया तु क्षीयते ॥ ५७ ॥ एतदेव स्पष्टमाह—**आत्मैवेद**मिति । संविदेव संविदा । भागुरिमतेन हलन्ताट्टाप् । तस्या उदये सति चेता चेतिता उपहितः, चित्तमुपाधिः, चेत्यं तद्वृत्तिव्याप्यम् । चेतनं वृत्तिरिति चतुष्कमपि किं । न किंचिदवशिष्यत इत्यर्थः ॥ ५८ ॥ इति एवमनुभूयमानदेहेन्द्रियादिशाली जीवोऽस्मि ॥ ५९ ॥ आत्मा ब्रह्मैव न जीवाख्या ब्रह्मेतराः सत्ताः परमार्थसत्याः सन्ति ॥ ६० ॥ सर्वस्य जगतो ब्रह्मभावे तदन्तर्गतचित्तस्याप्यसत्ता अर्थात्संपन्ना भवत्येवेत्याह—**आत्मैवेद**मिति ॥ ६१ ॥ मनोनाशोपायमुक्तमुपसंहरति—**एव**मिति

मनःसर्पः शरीरस्थो यावत्तावन्महद्भयम् ।
तस्मिन्नुत्सारिते योगाद्भयस्यावसरः कुतः ॥ ६३
भ्रान्तिमात्रोत्थितश्चित्ते वेतालोऽतिबलोऽनघ ।
सम्यग्ज्ञानेन मन्त्रेण प्रसभं विनिपात्यताम् ॥ ६४
देहगेहाद्गते चित्तयक्षे बलवतां वरे ।
निराधिर्विगतोद्वेगस्तिष्ठ नास्ति भयं तव ॥ ६५
नीराग एव निरुपार्जन एव चासी-
त्येतावतैव गलिता तव चित्तसत्ता ।
निर्दुःखमुत्तमपदं परमं गतोऽसि
तिष्ठोपशान्तपरमैषण एवमन्तः ॥ ६६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु उपशमप्रकरणे स्वचित्तनिरूपणं नाम चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः १५

श्रीवसिष्ठ उवाच ।

एतामनुसरन्राम चित्तसत्तामपावनीम् ।
संसारबीजकणिकां जीवबन्धनवागुराम् ॥ १
आत्मा त्यक्तात्मरूपाभो मलिनामपि तद्दृशम् ।
चित्तं समनुसंधत्ते धत्ते च कलनामलम् ॥ २
वर्धमानमहामोहदायिनी भयकारिणी ।
तृष्णा विषलतारूपा मूर्च्छामेव प्रयच्छति ॥ ३
यदा यदोदेति तदा महामोहप्रदायिनी ।
तृष्णा कृष्णानिशेवेयमनन्तात्मविकारिणी ॥ ४
कल्पानलशिखादाहं सोढुं शक्ता हरादयः ।
तृष्णानलशिखादाहं सोढुं शक्ता न केचन ॥ ५
तीक्ष्णा कृष्णा सुदीर्घा च वहत्यङ्गं सदा निजम् ।
शीतलैवासुखोदर्का घोरा तृष्णाकृपाणिका ॥ ६
यान्येतानि दुरन्तानि दुर्जराण्युन्नतानि च ।
तृष्णावल्ल्याः फलानीह तानि दुःखानि राघव ॥ ७
अदृश्यैवात्ति मांसास्थिरुधिरादि शरीरकात् ।
मनोबिलविलीनैषा तृष्णावनशुनी नृणाम् ॥ ८
क्षणमुल्लासमायाति क्षणमायाति शून्यताम् ।
जडा विदलयत्याशु तृष्णाप्रावृट्तरङ्गिणी ॥ ९
दृष्टदैन्यो हतस्वान्तो हतौजा याति नीचताम् ।
मुह्यते रौति पतति तृष्णयाभिहतो जनः ॥ १०
न स्थिता कोटरे यस्य तृष्णाकृष्णभुजङ्गमी ।
तस्य प्राणानिलाः स्वस्थाः पुंसो हृदयरन्ध्रगाः ॥ ११
नूनमस्तंगतो यत्र तृष्णाकृष्णनिशाक्रमः ।
पुण्यानि तत्र वर्धन्ते शुक्लपक्ष इवेन्दवः ॥ १२
यो न तृष्णाघुणावल्ल्या क्षतः पुरुषपादपः ।
पुण्यप्रसूनैः स सदा दशां याति विकासिनीम् ॥ १३
अनन्ताकुलकल्लोला विवर्तावर्तसंकुला ।
प्रवहत्याशयारण्ये तृष्णान्धानां नदी नृणाम् ॥ १४

---

॥ ६२ ॥ अथ तत्फलान्याह—**मनःसर्प** इत्यादिना । योगात्समाधेः प्रतीचो ब्रह्मैक्यलक्षणमिलनाद्वा । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इत्यादिश्रुतेरिति भावः ॥ ६३ ॥ ६४ ॥ आधिग्रहणं सर्वदुःखोपलक्षणम् । उद्वेगो दुःखासहिष्णुतया व्याकुलता ॥ ६५ ॥ आत्मलाभेनावाप्तसर्वकामत्वान्नीरागोऽतएव निरुपार्जनो बाह्यसुखसाधनोपार्जनशून्यः । एवंच मुमुक्षापि न परिशिष्टेति न तदर्थमपि प्रवृत्तिप्रसक्तिरित्याशयेनाह—**उपशान्तपरमैषण** इति ॥६६॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे स्वचित्तनिरूपणं नाम चतुर्दशः सर्गः ॥ १४ ॥

आत्मा मनस्त्वमापन्नो बध्यते संसृतौ यया ।
सा तृष्णाऽनर्थबीजानां सुविचित्रोपवर्ण्यते ॥ १ ॥

चित्तनाशने परमपुरुषार्थप्राप्तिरुक्ता, इदानीं चित्तानुसरणे तृष्णाभिवृद्ध्या अनर्थपरम्पराप्राप्तिरिति दर्शयितुं भूमिकां रचयति—**एता**मित्यादिना । आत्मा एतां चित्तसत्तामनुसरन् संस्त्यक्तस्वीयब्रह्मात्मरूपाभो भूत्वा मलिनामविद्यापिहितामिन्द्रियवृत्त्यधीनाभिव्यक्तिकां दृशं ज्ञानमापतच्चित्तमेवानुरुध्य चित्तकल्पितदेहादिसंघातमात्रोऽहमिति संधत्ते चित्तोपनीतनानाविषयकलनाप्रयुक्तं रागद्वेषवासनामलं च धत्ते इति द्वयोरन्वयः ॥ १ ॥ २ ॥ धत्तां नाम किं ततस्तत्राह—**वर्धमाने**ति । मरणमूर्च्छाभ्रान्तिसहस्रहेतुत्वाद्विषलतारूपा तृष्णा अस्मै कलनामलधारिणे आत्मने मूर्च्छामेव प्रयच्छति न सुखलेशमपीत्यर्थः ॥ ३ ॥ वर्धमानमहामोहदायिनीत्येतद्विवृणोति—**यदे**ति । कृष्णानिशा वार्षिकीतमिस्रा । सापि हि अनन्तात्मन्याकाशे मेघविस्फूर्जितवृष्ट्याद्यनेकविकारिणी ॥ ४ ॥ भयकारिणीत्येतदपि विवृणोति—**कल्पानले**ति । न केचन धीरा इति शेषः ॥ ५ ॥ कृपाणिका असिः । तीक्ष्णेत्याद्यसित्वोपपादनम् । निजमङ्गं सदा वहति कृंततीति यावत् । असुखः उदर्कः फलकालो यस्याः ॥६॥ विषलतेत्येतद्विशदयति—**यानी**ति । दुर्जराणि जरयितुमशक्यानि । दुर्निवाराणीति यावत् ॥७॥ वनशुनी वृकी ॥८॥ क्षणमुल्लासं वृद्धिम् । विशेषणान्युभयत्र योज्यानि । जडा शीतला मलिना च । विदलयति शिलाकण्टकारण्यादिप्रवेशं नीत्वा खण्डयति । प्रावृट्तरङ्गिणी वर्षाभिवृद्धनदी ॥९॥ मूर्च्छामेव प्रयच्छतीत्येतद्विवृणोति—**दृष्टदैन्य** इति ॥ १० ॥ तृष्णाक्षये सर्वदुःखहानिः सर्वपुण्योदयश्च सिध्यतीत्याह—**न स्थिते**त्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ अन्धानां विवेकदृष्टिहीनानां नृणामाशयश्चित्तं तल्लक्षणेऽरण्ये अनन्तव्याकुलतालक्षणकल्लोल-

तृष्णयेमे जनाः सर्वे सूत्रयन्त्रपतत्रिवत्।
भ्राम्यन्ते प्रविशीर्यन्ते संह्रियन्ते च भूरिशः॥ १५
मूलान्यपि सुसूक्ष्माणि कठिनाशयकर्कशा।
तृष्णा परशुधारेव वल्गन्ती विनिकृन्तति॥ १६
निपतत्यवटे मूढस्तृष्णामनुसरञ्जनः।
नीलामनुपतञ्छ्वभ्रतृणशाखां यथैणकः॥ १७
नोन्मत्तापि जरा चक्षुस्तथा जरयति क्षणात्।
यथा जरयति क्षामा तृष्णा हृदयरूपिका॥ १८
तृष्णयाशयकौशिक्या ह्यमङ्गलभूतया।
रूढया भगवानेष विष्णुर्वामनतां गतः॥ १९
कयाचिदेव दैविक्या हृदि ग्रथितयानया।
तृष्णया भ्राम्यते व्योम्नि रज्ज्वेवार्कोऽन्वहं किल २०
सर्वदुःखमयाकारां जगतीजीवनच्छिदम्।
तृष्णां परिहरेत्क्रूरामुरगीमिव दूरगः॥ २१
तृष्णया वायवो वान्ति शैलास्तिष्ठन्ति तृष्णया।
तृष्णयैव धरा धात्री त्रैलोक्यं तृष्णया धृतम्॥ २२
सर्वैव लोकयात्रेयं प्रोता तृष्णावरत्रया।
रज्जुबन्धाद्विमुच्यन्ते तृष्णाबन्धान्न केचन॥ २३
तस्माद्राघव तृष्णां त्वं त्यज संकल्पवर्जनात्।
मनस्त्वकल्पनं नास्ति निर्णीतमिति युक्तितः॥ २४
अयं त्वमहमित्येव प्रथमं तावदाशये।
मां दुराशां महाबाहो संकल्पय तमोमयीम्॥ २५
एतां दुःखप्रसविनीमनात्मन्यात्मभावनाम्।
न भावयसि चेद्राम तदा तज्ज्ञेषु गण्यसे॥ २६
एतामहंभावमयीमपुण्यां
छित्त्वानहंभावशलाकयैव।
स्वभावनां भव्य भवान्तभूमौ
भवाभिभूताखिलभूतभीतिः॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे तृष्णावर्णनं नाम पञ्चदशः सर्गः॥ १५॥

## षोडशः सर्गः १६

श्रीराम उवाच।
स्वभावगम्भीरमेतद्भगवन्वचनं तव।
यदहंकारतृष्णां त्वं मा गृहाणेति वक्षि माम्॥ १
यद्यहंकारसंत्यागं करोमि तदिदं प्रभो।
त्यजामि देहनामानं संनिवेशमशेषतः॥ २
जानुस्तम्भेन महता धार्यते सुतरुर्यथा।
अहंकारेण देहोऽयं तथैव किल धार्यते॥ ३
अहंकारक्षये देहः किलावश्यं विनश्यति।
मूले क्रकचसंलूने सुमहानिव पादपः॥ ४
तत्कथं संत्यजाम्येनं जीवामि च कथं मुने।
एनमर्थं विनिश्चित्य वद मे वदतां वर॥ ५
श्रीवसिष्ठ उवाच।
सर्वत्र वासनात्यागो राम राजीवलोचन।
द्विविधः कथ्यते तज्ज्ञैर्ज्ञेयो ध्येयश्च मानद॥ ६

वती भ्रान्तिलक्षणैरावर्तैश्च संकुला तृष्णानदी नूनं वहति प्रवहति॥ १४॥ सूत्रेण यन्त्र्यते बध्यते इति सूत्रयन्त्रः पतत्री पक्षी तद्वत्। प्रथमं वित्तस्यार्जनाय भ्राम्यन्ते ततो रक्षणव्ययक्षयचिन्ताशोकैः पक्षलुञ्चनैरिव प्रविशीर्यन्ते अन्ते च संह्रियन्ते मार्यन्ते॥ १५॥ धर्मज्ञानमूलानि दयाविवेकादीनि सुसूक्ष्माणि ईषदङ्कुरितान्यपि कठिनेन निर्दयेनाशयेन कर्कशा। वल्गन्ती तत्कालं निपतन्ती॥ १६॥ अवटे नरकान्धकूपे। नीलां हरिताम्। श्वभ्रस्य कूपस्य मुखे रूढस्य तृणस्य शाखामनुपतन् एणको हरिण इव॥ १७॥ उन्मत्ता प्ररूढतमापि जरा चक्षुर्जरयत्यन्धयति। हृदयस्था रूपिका पिशाची॥ १८॥ अमङ्गलभूतया हृदि रूढया कृतनीडया॥ १९॥ दैविक्या देवेनेश्वरेण प्रयुक्तया देवभोग्यसुखलवविषयया वा तृष्णया रज्ज्वेव बद्ध इति शेषः॥ २०॥ जगतीपदेन जगतीस्थाः सर्वप्राणिनो लक्ष्यन्ते॥ २१॥ सर्वसंसारस्थितिस्तृष्णावशादेवेत्याशयेनाह—**तृष्णये**ति॥ २२॥ वरत्रा चर्ममयी रज्जुः॥ २३॥ संकल्पवर्जनमात्रेण कथं तृष्णात्यागसिद्धिस्तत्राह—**मन** इति। अकल्पनं संकल्परहितं मनो नास्ति। मनसोऽभावे कुतस्तृष्णेति सद्युक्तिरिति भावः॥ २४॥ त्वं अयं देहोऽहमिति दुराशां सर्वदुराशानिमित्तमभिमानं मा संकल्पय॥ २५॥ २६॥ अनहंभावलक्षणया शलाकया कर्तर्या अहंभावमयीमेतां तृष्णां छित्त्वा हे भव्य, भवस्यान्तो बाधस्तद्भूमौ ब्रह्मणि सप्तमभूमिकाभेदे वा भव आस्स्वेत्यर्थः॥ २७॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे तृष्णावर्णनं नाम पञ्चदशः सर्गः॥ १५॥

वर्ण्यते वासनात्यागो ध्येयज्ञेयविभागतः।
तेनात्र जीवन्मुक्तानां विदेहानां च लक्षणम्॥ १॥

जीवता देहेऽहंभावस्य त्यक्तुमशक्यत्वाच्छिष्यमरणे गुरोस्तात्पर्यायोगादेतामहंभावमयीं तृष्णां छित्त्वेत्याद्युक्तेस्तात्पर्यमनवधारयन् रामः पृच्छति—**स्वभावे**त्यादिना॥ १॥ **अशेषत** इति। प्राणाहंकारयोरेकतापत्तेस्त्वयैवोक्तत्वात्प्राणान्परिशेष्याहंकारत्यागासंभवात्प्राणानामप्यनवशेषणेनेत्यर्थः॥ २॥ जानुस्तम्भेन जानुवत्प्रसृतमूलबन्धविष्टम्भेन॥ ३॥ तदेव व्यतिरेकेण द्रढयति—**अहंकारे**ति॥ ४॥ ५॥ ज्ञेयो विदुषां समाधिकाले विदेहकैवल्ये च ज्ञानबाधितः। अधिष्ठानमात्रपरिशेषात्मा ध्येयः। व्युत्थानकाले वाक्यजन्याखण्डाकारवृत्त्या समानसंज्ञानस्य बाधेऽपि जीवन्मुक्तिशास्त्रानुरोधात्प्रारब्धफलभोगशेषाच्च तन्निर्वाहाय बाधितानुवृत्तेरविद्यालेशपरिशेषस्य

अहमेषां पदार्थानामेते च मम जीवितम् ।
नाहमेभिर्विना कश्चिन्न मयैते विना किल ॥ ७
इत्यन्तर्निश्चयं कृत्वा विचार्य मनसा सह ।
नाहं पदार्थस्य न मे पदार्थ इति भाविते ॥ ८
अन्तःशीतलया बुद्ध्या कुर्वत्या लीलया क्रियाम् ।
यो नूनं वासनात्यागो ध्येयो राम स कीर्तितः ॥ ९
सर्वं समतया बुद्ध्वा यं कृत्वा वासनाक्षयम् ।
जहाति निर्ममो देहं ज्ञेयोऽसौ वासनाक्षयः ॥ १०
अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः ।
तिष्ठति ध्येयसंत्यागी जीवन्मुक्तः स उच्यते ॥ ११
निर्मूलकलनां त्यक्त्वा वासनां यः शमं गतः ।
ज्ञेयत्यागमयं विद्धि मुक्तं तं रघुनन्दन ॥ १२
ध्येयं तं वासनात्यागं कृत्वा तिष्ठन्ति लीलया ।
जीवन्मुक्ता महात्मानः सुजना जनकादयः ॥ १३
ज्ञेयं तु वासनात्यागं कृत्वोपशममागताः ।
विदेहमुक्तास्तिष्ठन्ति ब्रह्मण्येव परावरे ॥ १४
द्वावेव राघव त्यागौ समौ मुक्तपदे स्थितौ ।
द्वावेतौ ब्रह्मतां यातौ द्वावेव विगतज्वरौ ॥ १५
युक्तायुक्तमती स्वासे केवलं विमलेऽनघ ।
एकः स्थितः स्फुरद्देहः शान्तदेहः स्थितोऽपरः ॥१६
एकः सदेहो निर्मुक्तस्तिष्ठत्यपगतज्वरः ।
त्यक्तदेहो विमुक्तोऽन्यो वर्ततेऽज्ञेयवासनः ॥ १७
आपतत्सु यथाकालं सुखदुःखेष्वनारतम् ।
न हृष्यति ग्लायति यः स मुक्त इति होच्यते ॥ १८
ईप्सितानीप्सिते न स्तो यस्येष्टानिष्टवस्तुषु ।
सुषुप्तवच्चरति यः स मुक्त इति कथ्यते ॥ १९
हेयोपादेयकलने ममेत्यहमिहेति च ।
यस्यान्तः संपरिक्षीणे स जीवन्मुक्त उच्यते ॥ २०
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ॥ २१

सुषुप्तवत्प्रशमितभाववृत्तिना
स्थितं सदा जाग्रति येन चेतसा ।
कलान्वितो विधुरिव यः सदा मुदा
निषेव्यते मुक्त इतीह स स्मृतः ॥ २२

श्रीवाल्मीकिरुवाच ।

इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ २३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे तृष्णाचिकित्सा नाम षोडशः सर्गः ॥ १६ ॥

## एकादशो दिवसः ॥

विक्षेपांशाबाधस्य वाभ्युपगमादनध्यस्ताहंभावेन देहेन भोगहेतुव्यवहारासिद्धेस्तात्कालिकाहंकाराभासानुवृत्तेर्विद्वदनुभवसिद्धत्वात्तद्दशायां तद्बाधानुसंधानस्य यत्नसाध्यत्वेन ध्यानप्रायत्वाद्ध्येय इव ध्येय इति द्विविध इत्यर्थः ॥६॥ तत्र द्वितीयमुपपादयति—**अहमिति**। विवेकिदशात्र द्वावहंप्रत्ययगोचरौ प्रतीयेते । एको देहेन्द्रियबुद्धिमनःसापेक्षः संघातात्मा पुत्रमित्रकलत्रधनादिममतानिरूपकः । अपरोऽखण्डैकस्वभावोऽवस्थात्रयमरणमूर्च्छाजन्मान्तरसाधारणश्चिन्मात्रस्वभावो विवेकपरिशिष्टः । तत्राद्यस्य स्वरूपं प्रथमं विचार्य निर्धार्यमित्याह—**अहमिति**। एषां देहेन्द्रियादीनां बाह्यान्नपानादीनां चोपभुक्तानां पदार्थानां संघातात्मेत्यर्थः । एते देहादयोऽन्नादयश्च मम जीवितं स्वरूपसिद्धिनिमित्तम् । अतएवैभिर्विनाऽहं न कश्चिद्व्यवहारपदे प्रसिद्धोऽस्मीत्यन्तःप्रथमस्याहंपदार्थस्य निश्चयं कृत्वा मनसा सह पृथक्करणे संघातात्मानमत्यन्तासद्रूपमेव विचार्य द्वितीये परिशिष्टचिद्रूपेणाहंपदार्थस्य न मे एते पदार्था इति निष्कृष्टबोधेन तथैव भाविते सति यो भावनात्मा वासनात्यागः स ध्येय इति मया कीर्तित इति त्रयाणामर्थः ॥ ७ ॥ ८ ॥ ९ ॥ प्रथमं वासनाक्षयमुपपादयति—**सर्वमिति**। सर्वं जगत्समतया समं ब्रह्म तद्भावेन बुद्ध्वा साक्षात्कृत्य भूमिकाभ्यासक्रमेण यं वासनाक्षयं कृत्वा निर्ममो निरहंकारश्च निर्विकल्पकसमाधिस्थ  पूर्णकलो विधुश्चन्द्र इव प्रसादेन निषे-

येण वा यत्सर्वथा देहं जहाति असौ ज्ञेयो वासनाक्षय इत्यर्थः ॥१०॥ तत्र द्वितीयमुदाहरति—**अहंकारेति**। लीलया लोकसंग्रहोचितव्यवहारेण यस्तिष्ठति स ध्येयसंत्यागी ध्येयवासनात्यागवान् ॥ ११ ॥ आद्यमुदाहरति—**निर्मूलेति**। मूलाज्ञानेन सह कलनां त्यक्त्वेत्यर्थः । ज्ञेयत्यागमयं ज्ञानबाधितसवासनाज्ञानपरिशिष्टचिन्मात्रप्रधानम् ॥१२॥ उक्तमेव प्रपञ्चयति—**ध्येयमित्यादिना**। लीलया व्यवहारेण ॥ १३ ॥ १४ ॥ अप्यर्थे एवकारः ॥ १५ ॥ युक्तमतिः समाध्यारूढः । अयुक्तमतिर्व्युत्थानव्यवहारवान् । एतौ युक्तायुक्तमती द्वावपि सुखेन आस्यते विश्रम्यते अस्मिन्निति स्वासे विमले अविद्यामलनिर्मुक्ते ब्रह्मण्येव केवलं स्थितौ । कस्तर्हि विशेषस्तमाह—**एक** इति । एको व्युत्थितः । अपरः समाहितः ॥ १६ ॥ अज्ञेयवासन इतिच्छेदः ॥ १७ ॥ व्यवहरतो मुक्तस्य लक्षणान्याह—**आपतत्स्वित्यादिना** ॥ १८ ॥ ईप्सितानीप्सिते इच्छाद्वेषौ । अज्ञदृशा इष्टानिष्टत्वेन संमतेषु वस्तुषु सुषुप्तवदनासक्त इति यावत् ॥१९॥ इह देहे तत्संबन्धिनि च अहमिति ममेति च कलने इति योजना ॥ २० ॥ २१ ॥ येन पुंसा सुषुप्तवत्प्रशमिता भाववृत्तयः पदार्थेष्वास्था यस्य तथाविधेन चेतसोपलक्षितेन जाग्रति जागरेपि सदा स्थितम् । भावे क्तः । यश्च सदा मुदा स्वाभा-

## सप्तदशः सर्गः १७

श्रीवसिष्ठ उवाच ।

विदेहमुक्ता ये राम ते गिरासिह गोचरे ।
नैव तिष्ठन्ति तस्मात्त्वं जीवन्मुक्तिमिमां शृणु ॥ १

प्राकृतान्येव कर्माणि यया वर्जितवाञ्छया ।
क्रियन्ते तृष्णयेमानि तां जीवन्मुक्ततां विदुः ॥ २

या स्थितिस्तृष्णया जन्तोर्बाह्यार्थे बद्धभावया ।
तं बन्धमाहुराचार्याः संसारनिगडं दृढम् ॥ ३

नूनमुज्झितसंकल्पा हृदि बाह्ये विहारिणी ।
वासना योदिता सेह जीवन्मुक्तशरीरिणी ॥ ४

बाह्यार्थव्यसनोच्छूना तृष्णा बद्धेति राघव ।
सर्वार्थव्यसनोन्मुक्ता तृष्णा मुक्तेति कथ्यते ॥ ५

पूर्वं यस्यास्तु तृष्णाया वर्तमानेऽपि शाश्वती ।
निर्दुःखता निष्कलता सा मुक्तेति बुधैः स्मृता ॥ ६

इदमस्तु ममेत्यन्तर्यैषा राघव भावना ।
तां तृष्णां शृङ्खलां विद्धि कलनां च महामते ॥ ७

तामेतां सर्वभावेषु सत्स्वसत्सु च सर्वदा ।
संत्यज्य परमोदारः परमेति महामनाः ॥ ८

बन्धाशामथ मोक्षाशां सुखदुःखदशामपि ।
त्यक्त्वा सदसदाशां च तिष्ठाक्षुब्धमहाब्धिवत् ॥ ९

अजरामरमात्मानं बुद्ध्वा बुद्धिमतां वर ।
जरामरणशङ्काभिर्मा मनः कलुषं कृथाः ॥ १०

पदार्थतत्त्वं नेदं ते नायं त्वमसि राघव ।
किंचित्तदन्यदेवेदमन्य एवासि राघव ॥ ११

असदभ्युदिते विश्वे सतीवासति संस्थिते ।
त्वयि तत्तामतिगते तृष्णायाः संभवः कुतः ॥ १२

अन्यच्च राम मनसि पुरुषस्य विचारिणः ।
जायते निश्चयः साधो स्फाराकारश्चतुर्विधः ॥ १३

आपादमस्तकमहं मातापितृविनिर्मितः ।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ॥ १४

अतीतः सर्वभावेभ्यो वालाग्रादप्यहं तनुः ।
इति द्वितीयो मोक्षाय निश्चयो जायते सताम् ॥ १५

जगज्जालपदार्थात्मा सर्वमेवाहमक्षयः ।
तृतीयो निश्चयश्चेत्थं मोक्षायैव रघूद्वह ॥ १६

अहं जगद्वा सकलं शून्यं व्योमसमं सदा ।
एवमेष चतुर्थोऽन्यो निश्चयो मोक्षसिद्धये ॥ १७

निश्चयेषु चतुर्ष्वेषु बन्धाय प्रथमः स्मृतः ।
त्रयो मोक्षाय कथिताः शुद्धभावनयोत्थिताः ॥ १८

एतेषां प्रथमः प्रोक्तस्तृष्णाया बन्धयोग्यता ।
शुद्धतृष्णास्त्रयः स्वच्छा जीवन्मुक्तविलासिनः ॥ १९

---

च्यते स इह जगति मुक्तो जीवन्मुक्त इति स्मृत इत्यर्थः ॥ २२ ॥ २३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे तृष्णाचिकित्सा नाम षोडशः सर्गः ॥ १६ ॥

यादृशैर्निश्चयैर्युक्तो जीवन्मुक्तो न बध्यते ।
अज्ञश्च बध्यते भूयस्तद्विभागोऽत्र वर्ण्यते ॥ १ ॥

रामस्येङ्गितैर्विदेहमुक्तलक्षणजिज्ञासां प्रतिलक्ष्य तस्यैकरूप्येण लक्षणाद्यभावाद्वाचां कुण्ठीभावोक्त्यैव निरतिशयस्वप्रकाशभूमानन्दमात्रपरिशेषस्तत्स्वरूपलक्षणमिति सूचयन् जीवन्मुक्तिलक्षणेष्वेवावश्योपादेयान्विशेषान्वक्तुं प्रतिजानीते—**विदेहमुक्ता** इति ॥ १ ॥ ननु तर्हि जीवन्मुक्तानां तत्तद्वर्णाश्रमोचितकर्मफलतृष्णा यद्यस्ति तर्हि अज्ञवदेव तद्भोगाय पुनर्देहबन्धोऽपि स्यात् । यदि नास्ति तर्हि प्रवृत्तिरेव न स्यात् 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायादिति दोषं परिहर्तुं ज्ञाज्ञयोः प्रवर्तकशुद्धाशुद्धतृष्णावैलक्षण्यमुपपादयितुमुपक्रमते—**प्राकृतान्येवे**त्यादिना । प्राकृतानि तत्तद्वर्णाश्रमस्वभावप्रापितानि । वाञ्छा विषयास्वादनोत्साहः ॥ २ ॥ बद्ध उत्साहदृढीकृतो भावः संसारसत्यताबुद्ध्या भोगोत्साहो यया ॥ ३ ॥ भोग्यवर्गाणामनृतत्वनिश्चयेन हृदि उज्झितभोगसंकल्पा बाह्ये लोकसंग्रहमात्रप्रयोजनेन विहारिणी वासना तृष्णा जीवन्मुक्तानां शरीरमात्राश्रितेत्यर्थः ॥ ४ ॥ उक्तलक्षणे एव तृष्णे स्वरूपतः

पिण्डीकृत्याह—**बाह्येति** । व्यसनं लाम्पट्यम् ॥ ५ ॥ पूर्वं विषयप्राप्तेः प्राक्काले । विषयनाशोत्तरकालस्याप्युपलक्षणमेतत् । निर्दुःखता रागविरहादिप्रयुक्तदुःखशून्यता । विषयप्राप्तिकालेऽपि निष्कलता निरुच्छूनता ॥ ६ ॥ ७ ॥ परं जीवन्मुक्तिपदम् ॥ ८ ॥ बध्नन्तीति बन्धा देहादयस्तदाशाम् । मोक्षस्तन्निवृत्तिस्तदाशाम् । बन्धमिथ्यात्वनिश्चये तन्निवृत्तेरनाशास्यत्वान्नहि जागरूकः स्वाप्ननिगडबन्धमोक्षमाशास्त इति भावः । सुखदुःखदशानामपि मिथ्यात्वनिश्चय एवात्र त्यागः ॥ ९ ॥ १० ॥ आशात्यागे उपायमाह—**पदार्थे**ति । इदं दृश्यं पदार्थतत्त्वं पदार्थरूपं ते तव न । त्वमपि न । तत्तस्मात्परमार्थसत्यादन्यदेव किंचित्तुच्छमित्यर्थः ॥ ११ ॥ १२ ॥ हे राम, अन्यच्च वक्ष्यमाणं चतुर्विधनिश्चयभेदं शृण्विति शेषः । तमेवाह—**मनसी**ति ॥ १३ ॥ १४ ॥ सर्वेभ्यो देहेन्द्रियादिभेदेभ्योऽतीतोऽतिरिक्तः । तनुः सूक्ष्मः स्थौल्यरहित इति यावत् । त्वंपदार्थशोधनविधयास्य मोक्षहेतुत्वम् ॥ १५ ॥ **तृतीय** इति । अस्याप्याध्यात्मिकपरिच्छिन्नात्मताभ्रमनिवृत्त्या तत्पदार्थेन सहैव शोधनसंभवान्मोक्षोपयोगः ॥ १६ ॥ अहमित्याध्यात्मिकपरिच्छेदोपाधिः । जगदिति आधिदैविकाद्युपाधिः । सदा कालत्रयेऽपि एषः सर्वदृश्यबाधात्मनिश्चयः ॥ १७ ॥ १८ ॥ तृष्णाभेदनिरूपणेऽस्य विभागस्य का प्रसक्तिस्तत्राह—**एतेषा**मिति । अस्मिन्सत्येव तृष्णाया बन्धकत्वादयमेव बन्धहेतुरित्यर्थः

---

१ कार्याणीति पाठः।

सर्वमात्माहमेवेति निश्चयो यो महामते ।
तमादाय विषादाय न भूयो याति मे मतिः ॥ २०
तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमात्मनः ।
सर्वमात्मेति तेनान्तर्निश्चयेन न बध्यते ॥ २१
शून्यं तत्प्रकृतिर्माया ब्रह्मविज्ञानमित्यपि ।
शिवः पुरुष ईशानो नित्य आत्मैव कथ्यते ॥ २२
सदा सर्वं सदेवेदं नेह द्वित्वान्यते क्वचित् ।
विद्यते विद्यया व्याप्तं जगन्नेतरया धिया ॥ २३
आपातालमनन्तात्मा पूरितोऽम्भोधिरम्बुभिः ।
आब्रह्मस्तम्बपर्यन्तं जगदापूर्णमात्मना ॥ २४
अतः सत्यमृतं नित्यं नानृतं विद्यते क्वचित् ।
वार्येव सकलाम्भोधिर्न तरङ्गादयः क्वचित् ॥ २५
पृथक्कटककेयूरनूपुरादि न काञ्चनात् ।
भिन्नास्तरुतृणाकारकोटयश्चैव नात्मनः ॥ २६
द्वैताद्वैतसमुद्भेदैर्जगन्निर्माणलीलया ।
परमात्ममयी शक्तिरद्वैतैव विजृम्भते ॥ २७
आत्मीये परकीये च सर्वस्मिन्नेव सर्वदा ।
नष्टे वोपचिते कार्ये सुखदुःखे गृहाण मा ॥ २८
भावाद्वैतमुपाश्रित्य सत्ताद्वैतमयात्मकः ।
कर्माद्वैतमनादृत्य द्वैताद्वैतमयो भव ॥ २९
भवभूमिषु भीमासु भावभावनवात्यया ।
मा पतोत्पातपूर्णासु दरीष्वन्तः करी यथा ॥ ३०
द्वैतं न संभवति चित्तमयं महात्म-
न्नात्मन्यथैक्यमपि न द्वितयोदितात्म ।
अद्वैतमैक्यरहितं सततोदितं स-
त्सर्वं न किंचिदपि चाहुरतः स्वरूपम् ॥ ३१
नैवाहमस्ति नच नाम जगन्ति सन्ति
सर्वं च विद्यत इदं ननु निर्विकारम् ।
विज्ञानमात्रमवभासत एव शान्तं
नासन्न सज्जगदिदं च सदेति विद्धि ॥ ३२
परममृतमनाद्यं भासनं सर्वभासा-
मजरमजमचिन्त्यं निष्कलं निर्विकारम् ।
विगतकरणजालं जीवनं जीवशक्तेः
सकलकलनहीनं कारणं कारणानाम् ॥ ३३
सततमुदितमीशं व्यातते चित्प्रकाशे
स्थितमनुभवबीजं स्वात्मभावोपदेश्यम् ।
स्वदनमनुचितोऽन्तर्ब्रह्म सर्वं सदैव
त्वमहमपि जगच्चेत्यस्तु ते निश्चयोन्तः ॥ ३४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपाये उपशमप्रकरणे तृष्णाविच्छेदोपदेशो नाम सप्तदशः सर्गः ॥ १७ ॥

---

शुद्धा निर्दोषा तृष्णा येषु ते शुद्धतृष्णाः उत्तरे त्रयो निश्चयाः ॥ १९ ॥ तत्र तृतीयस्य प्रयोजनमाह—**सर्व**मिति ॥२०॥२१॥ चतुर्थस्य शून्यवादिमतप्रविष्टतां वारयन्नाह—**शून्य**मिति । परिशिष्टात्मैव वादिभिः शून्यादिशब्दैः कथ्यते नावस्त्वित्यर्थः ॥२२॥ विद्यया परमार्थस्वरूपदृष्ट्या जगद्व्याप्तं ग्रस्तम् । इतरया पूर्वव्रान्तिधिया न ॥२३॥ यथा अनन्तात्मा अपरिच्छेद्यपरिणाहोऽम्भोधिरापातालमम्बुभिः पूरितस्तथेत्यर्थः ॥ २४ ॥ अस्त्वापूर्णं किं ततस्तत्राह—**अत** इति । अतः ऋतं प्रमाणबोधितं ब्रह्मैक्यमेव नित्यं सत्यम् । तद्व्यतिरेकेणानृतं जगद्रूपं न विद्यत इति सिद्धमित्यर्थः ॥२५॥ काञ्चनान्न पृथक् । आत्मनः पृथिव्यात्मनः सकाशान्न भिन्नाः ॥ २६ ॥ कथं तर्हि जलसमुद्रादौ जगति भेदाभेदप्रत्ययस्तत्राह—**द्वैताद्वैते**ति । अद्वैता परमात्ममयी शक्तिर्ब्रह्मसत्तैवाज्ञान्प्रति द्वैताद्वैतसमुद्भेदैर्विजृम्भत इत्यर्थः ॥ २७ ॥ अस्त्वेवं किं ततस्तत्राह—**आत्मीये** इति । स्वीये परकीये वा पुत्रमित्रादौ सर्वस्मिन् जगति च उपचिते नष्टे वा सुखदुःखे अभिज्ञस्त्वं मा गृहाणेत्यर्थः ॥ २८ ॥ कथं तर्हि मया व्यवहर्तव्यमिति चेद्ब्रह्मवद्द्वैताद्वैतालम्बनेनैवेति तद्विभज्याह—**भावाद्वैत**मिति । ब्रह्मवदेव त्वं परमार्थतः सत्ताद्वैतमयात्मक एव सन् व्यवहारकालेऽपि भावनया अद्वैतमेवोपाश्रित्य तत्तत्प्राणिकर्मफलदाने ब्रह्मेव वर्णाश्रमधर्मव्यवस्थापनकर्मविषये अद्वैतं सर्वथैवानादृत्य व्यवहरन् यथोचितं द्वैताद्वैतोभयपरो भवेत्यर्थः । अद्वैते कर्मणामेवासिद्धेरैकरूप्येण सर्वत्र कथंचिदद्वैताचरणे जगद्व्यवस्थाधर्मशास्त्रादिबाधप्रसङ्गाच्च तत्र द्वैताश्रयणमेवोचितमिति भावः ॥ २९ ॥ भावेऽपि द्वैताश्रयणे का क्षतिस्तत्राह—**भवे**ति । उत्पातैरशुभनिमित्तैः पूर्णासु । दरीग्रहणेन गर्तो लक्ष्यते । तथाच संसारगर्तपात एव तत्र क्षतिरिति भावः॥३०॥ सत्ताद्वैतमुक्तमुपपादयति—**द्वैत**मिति । द्वैतं परमार्थसन्न संभवति। यतस्तच्चित्तमयं चित्तकल्पितमेव न वस्तुस्पर्शि परैरप्यपेक्षाबुद्धिजन्यत्वाभ्युपगमात्तन्नाशे नाशाभ्युपगमाच्च । एवमात्मन्यैक्यमेकत्वाख्यसंख्यागुणोऽपि न संभवति यतस्तदपि द्वित्वादिव्यावर्तकत्वेनैव कल्पितत्वाद्द्वितयादेवोदित आत्मा स्वरूपं यस्य तथाभूतम् । अतः अद्वैतमैक्येन च रहितं स्वसिद्धावप्यन्यनिरपेक्षत्वात्सततोदितं सत्सन्मात्रं ब्रह्म ऐक्यनिरासात्सर्वं द्वैतनिरासान्न किंचिदपीति च । 'तस्मात्तत्सर्वमभवत्' 'नेह नानास्ति किंचन'इत्यादिश्रुतयस्तदनुभविनश्च लक्षणया आहुरित्यर्थः ॥ ३१ ॥ अहमिति युष्मदात्मप्रविभक्तरूपं नैवास्ति, अस्मदर्थप्रविभक्तरूपाणि युष्मदादिजगन्ति च न सन्ति, किंतु सर्वमिदं निर्विकारं विज्ञानमात्रमेव विद्यते । तदवभासतस्तत्साक्षात्कारमात्रतः शान्तमिदं तु जगत्सदा नासत् न सच्चेति विद्धीत्यर्थः ॥ ३२ ॥ पुनस्तन्निश्चयमेव दृढमाशिषापि संपादयति—**पर**मिति द्वाभ्याम्। जीवशक्तेः प्राणस्य जीवनं प्राणनव्यवहारनिमित्तम् । 'प्राणस्य प्राणम्' इत्यादिश्रुतेः ॥ ३३ ॥ अनुभवानां चाक्षुषादीनां बीजं मूलभूतम् । स्वात्मभावः स्वस्वरूपावस्थितिस्तेन दशमस्त्वमसीतिवच्छब्दादपरोक्षापादनेनोपदेश्यं अन्तःस्वदनमान्तरानन्दैक-

# अष्टादशः सर्गः १८

श्रीवसिष्ठ उवाच ।

युक्ताशयानां महतामहतानां कुदृष्टिभिः ।
स्वभावोऽयं महाबाहो लीलया चरतामिह ॥ १
विहरन्नपि संसारे जीवन्मुक्तमना मुनिः ।
आदिमध्यान्तविरसा विहसेज्जागतीर्गतीः ॥ २
सर्वप्रकृतकार्यस्थो मध्यस्थः सर्वदृष्टिषु ।
ध्येयं तं वासनात्यागमवलम्ब्य व्यवस्थितः ॥ ३
सर्वत्र विगतोद्वेगः सर्वार्थपरिपोषकः ।
विवेकोद्द्योतदृष्टात्मा प्रबोधोपवनस्थितिः ॥ ४
सर्वातीतपदालम्बी पूर्णेन्दुशिशिराशयः ।
नोद्वेगी नच तुष्टात्मा संसारे नावसीदति ॥ ५
सर्वशत्रुषु मध्यस्थो दयादाक्षिण्यसंयुतः ।
प्राप्तकर्मकरोऽग्र्याणां संसारे नावसीदति ॥ ६
नाभिनन्दति न द्वेष्टि न शोचति न काङ्क्षति ।
मौनस्थः प्रकृतारम्भी संसारे नावसीदति ॥ ७
पृष्टः सन्प्रकृतं वक्ति न पृष्टः स्थाणुवत्स्थितः ।
ईहितानीहितैर्मुक्तः संसारे नावसीदति ॥ ८
सर्वस्याभिमतं वक्ता चोदितः पेशलोक्तिमान् ।
आशयज्ञश्च भूतानां संसारे नावसीदति ॥ ९
युक्तायुक्तदृशा ग्रस्तमाशोपहतचेष्टितम् ।
जानाति लोकदृष्टान्तं करकोटरविल्ववत् ॥ १०
परं पदमुपारूढो भङ्गुरां जागतीं स्थितिम् ।
अन्तःशीतलया बुद्ध्या हसन्निव निरीक्षते ॥ ११
जितचित्ता महात्मानो ये हि दृष्टपरावराः ।
स्वभाव ईदृशस्तेषां कथितस्तव राघव ॥ १२
वयं तु वक्तुं मूर्खाणामजितात्मीयचेतसाम् ।
भोगकर्दममग्नानां न विद्मोऽभिमतं मतम् ॥ १३
तेषामभिमता नार्यो भावाभावविभूषिताः ।
ज्वालानरकवह्नीनां यास्ताः कनकरोचिषः ॥ १४
अनर्थगहनाश्चार्था व्यर्थानर्थकदर्थनाः ।
दिशन्तो दुःखसंरम्भमभितः प्रहितापदः ॥ १५
फलसंधीनि कर्माणि नानाचारमयानि च ।
सुखदुःखावपूर्णानि तानि वक्तुं न शक्नुमः ॥ १६

रसं ब्रह्मैव त्वमहं जगच्च न ततोऽन्यदस्तीत्यनुसृत्य चित उपचितो निश्चयस्तेऽन्तरस्त्वित्याशीरुपदेशश्च ॥ ३४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे तृष्णाविच्छेदोपदेशो नाम सप्तदशः सर्गः ॥ १७ ॥

यया स्थित्या स्थितो विद्वान्संसारे नावसीदति ।
सा स्थितिर्विस्तरेणात्र राघवायोपदिश्यते ॥ १ ॥

युक्ताशयानां समाहितमनसाम् । कामलोभादिकुदृष्टिभिरहतानामदूषितानामयं वक्ष्यमाणप्रकारः स्वभावः स्थितिः श्रूयतामिति शेषः ॥ १ ॥ आदौ जन्मादिदुःखैर्मध्ये आध्यात्मिकादिदुःखैरन्ते मृत्युनरकादिदुःखैर्विरसाः । विहसेत् हासयोग्यतया तुच्छीकृत्य पश्येत् ॥ २ ॥ सर्वेषु प्रकृतेषु तत्तत्कालप्रसक्तेषु कार्येषूचिताचरणेषु तिष्ठतीति स्थः सर्वासु शत्रुमित्रादिदृष्टिषु मध्यस्थः समः तं ज्ञेयो ध्येयश्चेति द्विधा वर्णितवासनात्यागयोर्मध्ये ध्येयं वासनात्यागमवलम्ब्येत्यर्थः ॥ ३ ॥ सर्वेषामर्थस्याभिमतस्य परिपोषको न कस्यचिद्विप्रियकारी । प्रबोधलक्षणे उपवने स्थितिर्यस्य ॥ ४ ॥ ५ ॥ 'समः शत्रौ च मित्रे चे'ति पाठः स्पष्टः । अग्र्याणां गुरुप्रभृतीनां समयोचितप्राप्तसेवापरिपालनादिकर्मकरः ॥ ६ ॥ मौनस्थो मितभाषी । प्रकृतारम्भी आवश्यककार्येष्वनलसः ॥ ७ ॥ तदेवाह—**पृष्ट** इति ॥ ८ ॥ अभिमतं प्रियं वक्ता । चोदित आक्षिप्तः पेशलोक्तिमान् चतुरं समाधाता ॥ ९ ॥ इदं युक्तमिदमयुक्तमिति वैषम्यदृशा । जानाति अपक्षपातितया पश्यति । अतएव करकोटरः करतलगर्तस्तत्प्रतिष्ठितविल्वफलवत्स्पष्टमित्युक्तम् । एकतरपक्षपाते तु तत्पक्षदोषा अपरपक्षगतगुणाश्च रागद्वेषपिहितत्वान्न स्पष्टं भासन्त इति ॥ १० ॥ अतएव वैषम्यदर्शनादेः फलमपि जनानां हसन्निव ताटस्थ्येनैव पश्यतीत्याह—**पर**मिति ॥ ११ ॥ उपसंहरति—**जिते**ति ॥ १२ ॥ मुक्तस्थितिरिव बद्धस्थितिरपि तदाशयोद्घाटनेन वर्ण्यतामिति चेन्मूर्खमनोरथभ्रान्तीनां तत्प्रयुक्तदुश्चेष्टानां तत्फलदुःखवैचित्र्याणां चानन्त्यान्न सा वर्णयितुं शक्येत्याशयेनाह—**वय**मिति चतुर्भिः ॥ १३ ॥ तेषां मूर्खाणां नार्यः स्त्रियोऽभिमता अभिलषिता याः भावानां विवेकबुद्धीनामत्यन्ताभावैः पूर्वसंचितसुकृतानां प्रध्वंसाभावैः संभावितसुकृततपःसंयमादीनां प्रागभावपरिपालनैश्च विभूषिता आपादमस्तकमलंकृताः । अतएव नरकवह्नीनां कनकसमानरोचिषो ज्वाला एव ता इत्यर्थः ॥ १४ ॥ तथा मूर्खाणामभिलषिता अर्था धनानि ते च अनर्थगहना अर्जने पालने व्यये नाशे च बह्वायासाधर्मराशिनिमित्तभूताः । व्यर्था अनर्थप्रयोजककलहवैरादिकदर्थनाश्च येभ्यस्तथाविधाश्चेत्यर्थः ॥ १५ ॥ ननु तेषां तादृशैरप्यर्थैर्यज्ञादिसत्कर्माचरणसिद्धेर्निस्तारः स्यान्नेत्याह—**फलसंधीनी**ति । यानि मूर्खाणां यज्ञादिकर्माणि तान्यपि फलाभिसंधियुक्तान्येव न निरभिसंधीनि । नानाविधैर्दम्भमानमदमात्सर्याद्याचारैर्दुराचारैश्च प्रचुराणि अतएव पुनर्जन्मादिप्रयुक्तसुखदुःखैरवपूर्णानीति मूर्खाणां किंचिदपि निस्तारनिमित्तं वक्तुं न शक्नुम इत्यर्थः ॥ १६ ॥



१ मूलस्थितपाठे सर्वशत्रुषु मध्यस्थपदमहिम्ना मित्रेषु च मध्यस्थः उभयत्र रागद्वेषशून्यत्वात्सम इत्यर्थः.

पूर्णां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् ।
जीवन्मुक्ततया स्वस्थो लोके विहर राघव ॥ १७
अन्तः संत्यक्तसर्वाशो वीतरागो विवासनः ।
बहिः सर्वसमाचारो लोके विहर राघव ॥ १८
उदारः पेशलाचारः सर्वाचारानुवृत्तिमान् ।
अन्तः सर्वपरित्यागी लोके विहर राघव ॥ १९
प्रविचार्य दशाः सर्वा यदतुच्छं परं पदम् ।
तदेव भावेनालम्ब्य लोके विहर राघव ॥ २०
अन्तर्नैराश्यमादाय बहिराशोन्मुखेहितः ।
बहिस्तप्तोऽन्तराशीतो लोके विहर राघव ॥ २१
बहिः कृत्रिमसंरम्भो हृदि संरम्भवर्जितः ।
कर्ता बहिरकर्तान्तर्लोके विहर राघव ॥ २२
ज्ञातवानसि सर्वेषां भावानां सम्यगन्तरम् ।
यथेच्छसि तथा दृष्ट्या लोके विहर राघव ॥ २३
कृत्रिमोल्लासहर्षस्थः कृत्रिमोद्वेगगर्हणः ।
कृत्रिमारम्भसंरम्भो लोके विहर राघव ॥ २४
त्यक्ताहंकृतिराश्वस्तमतिराकाशशोभनः ।
अगृहीतकलङ्काङ्को लोके विहर राघव ॥ २५
आशापाशशतोन्मुक्तः समः सर्वासु वृत्तिषु ।
बहिः प्रकृतिकार्यस्थो लोके विहर राघव ॥ २६
न बन्धोऽस्ति न मोक्षोऽस्ति देहिनः परमार्थतः ।
मिथ्येयमिन्द्रजालश्रीः संसारपरिवर्तिनी ॥ २७
भ्रान्तिमात्रमिदं मोहाज्जगद्राघव दृश्यते ।
जनितप्रत्ययं स्फारं जलं तीव्रातपे यथा ॥ २८
अबद्धस्यैकरूपस्य सर्वगस्यात्मनः कथम् ।
बन्धः स्यात्तदभावे तु मोक्षः कस्य विधीयते ॥ २९
अतत्त्वज्ञानजातेयं संसारभ्रान्तिरातता ।
तत्त्वज्ञानात्क्षयं याति रज्ज्वामिव भुजङ्गधीः ॥ ३०
ज्ञातवानसि तत्त्वं त्वमेकया सूक्ष्मया धिया ।
जातोऽसि निरहंकारो व्योमवत्तिष्ठ निर्मलः ॥ ३१
ज्ञोऽसि त्वित्थं तदखिलाः सुहृद्बान्धववासनाः ।
संत्यजासत्स्वभावस्य का नाम किल भावना ॥ ३२
अपि चेत्थं तदन्यस्त्वं सत्त्ववाननुमीयसे ।
इदं प्रथमतः प्राप्तं परमादपि कारणात् ॥ ३३
भोगबन्धुजगद्भावैः कर्मभिश्च शुभाशुभैः ।
आत्मनो नास्ति संबन्धः किमेताननुशोचसि ॥ ३४
आत्मतत्त्वैकसारोऽहमिति जातधियो भयैः ।
न ते रामास्ति संबन्धः किं बिभेषि जगद्भ्रमात् ॥ ३५
अजातस्य सतो बन्धोर्बन्धुदुःखसुखभ्रमैः ।
कस्ते राघव संबन्धो यदेताननुशोचसि ॥ ३६
त्वं चेद्बभूविथ पुरा तथेदानीं भविष्यसि ।
अद्य चेह स्थितोऽसीति ज्ञातवानसि निश्चयम् ॥ ३७

---

अतस्त्वमपि विद्वच्चरित्रेणैव विहर नान्येनेत्याह—**पूर्णा**मित्यादिना ॥१७॥१८॥ सर्वेषामज्ञानामपि कर्मायाचारेषु अनुवृत्तिमान् । 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्' इति भगवद्वचनादिति भावः ॥ १९ ॥ सर्वाः संसारदशाः परमार्थस्वरूपावस्थिति-भूमिकाभेददशाश्च ॥ २० ॥ आशोन्मुखानामिव ईहितानि चेष्टा यस्य । सर्वात्मना नैराश्यप्रकटने धनमित्रादिसंग्रहायोगा-द्राज्यपरिपालनानिर्वाहादिति भावः । अतएव धनादिनाशे बहि-स्तप्त इव तप्तः । अन्तस्तु आशीतः सर्वतः शीतलः ॥२१॥२२॥ अन्तरं व्यवहारतः परमार्थतश्च सारासारतारतम्यम् । अतः सद्व्यवहारे अतिसर्गस्तवेत्याह—**यथेच्छसी**ति ॥२३॥२४॥ चन्द्रस्तु रात्रावहमेव प्रकाशक इति गृहीताहंकृतिः क्षयरोगि-त्वादनाश्वस्तमतिर्गृहीतकलङ्कलाञ्छनश्च, त्वं तु न तथेति व्यति-रेकः ॥२५॥ प्रकृतिस्तत्तद्वर्णाश्रमस्वभावस्तदुचितकार्यस्थः प्रजा-हितकार्यस्थो वा ॥ २६ ॥ 'समः सर्वासु वृत्तिष्वि'ति यदुक्तं तद्बन्धमोक्षादिवैषम्यप्रतिषेधेनोपपादयति—**न बन्ध** इत्यादिना ॥२७॥ जलं मृगतृष्णोदकम् ॥२८॥ कुतो न बन्धोऽस्ति तत्र युक्तिमाह—**अबद्धस्ये**ति । असङ्गस्येत्यर्थः । विधीयते यत्नेन संपाद्यते ॥ २९ ॥ तर्हि किं तत्त्वज्ञानं व्यर्थं नेत्याह—**अत-त्त्वे**ति ॥ ३० ॥ ३१ ॥ ज्ञः साक्ष्यसि तत्तस्मात्सुहृद्बान्धववि-षया ममतावासनाः । असत्स्वभावस्य अविद्यमानस्वरूपस्य सुहृ-दादेर्भावना चिन्तना का नाम । न युक्तेत्यर्थः । अपि च इत्थं मदुक्तप्रकारेण वासनात्यागे ताभ्योऽन्यः परिशिष्टः साक्षी त्वं परमार्थसत्त्ववान्परिशेषादनुमीयसे । प्रथमतः वास-नात्यागात्पूर्वं ते परमात्कारणाद्ब्रह्मणः प्रलयसुषुप्त्योर्नित्यप्रा-प्तादपि इदं परिच्छिन्नासत्यरूपमेव प्राप्तं न परमार्थसत्यरूपमिति वासनात्याग एव तत्प्राप्तिहेतुर्नान्य इत्यर्थः । अथवा अपि चेति समुच्चये । तदन्यस्त्वस्मादसत्स्वभावादन्यः परमार्थस-त्स्वभावस्त्वं स्वभावेनैवासत्स्वभावेभ्योऽविद्यातत्कार्येभ्यः सत्त्व-वान् बलवाननुमीयसे । अतः परमादाद्यादविद्यालक्षणात्कार-णादपि इदं प्रथमतः अनादिकालात्प्राप्तं बन्धमपि इत्थं वास-नावदेव संत्यजेत्यनुपज्यते ॥ ३३ ॥ भोगैस्तत्साधकैर्बन्धुभिर्ज-गद्भावैः स्रक्चन्दनादिभिस्तत्प्राप्तिनिमित्तैः शुभाशुभैः कर्मभिश्च ॥ ३४ ॥ आत्मतत्त्वमेवैकः सारः सत्यः परमानन्दो यस्य तथाविधोऽहमिति जाता धीर्यस्य । भयैर्भयहेतुभिः ॥ ३५ ॥ मम तत्त्वविदः स्वतो दुःखं माभूत् बन्धूनामज्ञत्वेन दुःखित्वात्त-द्दुःखसमागमैर्दुःखं तु दुर्वारमिति चेत्तत्राह—**अजातस्ये**ति । मिथ्यात्वाद्बन्धौ अजाते सतीत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । अथवा बन्धोः संबन्धितयाऽजातस्य तवेति योज्यम् ॥ ३६ ॥ एवमात्मनोऽसङ्गत्वाद्द्वितीयत्वदर्शने शोकासंभव उक्तः, इदानीमस्त्वात्मा सङ्गी तथापि स किं नित्य उत क्षणिक उत प्रागभाववद्घटादिवद्वा कालान्तरे नश्वरः, सर्वेष्वपि पक्षेषु बन्धु-शोको न युक्त इति प्रौढ्या समाधित्सुराद्ये कल्पे तावदाह—**त्वं चेदि**ति । पुरा पूर्वजन्मसु बभूविथ तथा भाविजन्मसु भविष्यसि । अद्येदानीमिह जन्मनि च स्थितोऽसीत्येवंस्वभावमात्मानं यदि

तदानन्तरगानन्यान्प्राणादीन्निकटस्थितान् ।
बन्धूनतीतान्सुबहून्कस्मात्त्वं नानुशोचसि ॥ ३८
पूर्वमन्यस्तथेदानीं बभूविथ भविष्यसि ।
यदि राम तथापि त्वं सद्रूपं किं विमुह्यसि ॥ ३९
पुरा भूत्वाद्य भूत्वा च भूयश्चेन्न भविष्यसि ।
तथापि क्षीणसंसारः किमर्थमनुशोचसि ॥ ४०
तस्मान्न दुःखिता युक्ता प्राकृते जागते क्रमे ।
तथैव मुदिता युक्ता युक्तं कार्यानुवर्तनम् ॥ ४१
मा गच्छ दुःखितां राम सुखितामपि मा व्रज ।
समतामेहि सर्वत्र परमात्मा हि सर्वगः ॥ ४२
अनन्तः सत्स्वरूपस्त्वं खमिवाततिततान्तरम् ।
प्रकाशो नित्यशुद्धस्त्वं ज्वालानामिव कोटरम् ॥ ४३
जागतानां पदार्थानामदृष्टात्मतनुस्तनुः ।
दृत्स्थोऽसि हारमुक्तानामेकस्तन्तुरिवाततः ॥ ४४
संसारस्थितिरेवेयं यद्भूत्वा भूयते पुनः ।
अज्ञेनैव न तज्ज्ञेन ज्ञोऽसि राम सुखी भव ॥ ४५
स्वरूपमिदमस्यास्तु संसृतेः सतताधिमत् ।
अज्ञानात्स्फारतामेति ज्ञातवानसि सन्मते ॥ ४६
रूपं किमन्यद्भवतु भ्रममात्रादृते भ्रमे ।
स्वप्नमात्रादृते स्वप्ने भवत्यन्यो हि कः क्रमः ॥ ४७
सर्वशक्तेरियं शक्तिर्भ्रममात्रमयं तथा ।
राम दृश्यत एवेदमाभानमतिभास्वरम् ॥ ४८
सुबन्धुः कस्यचित्कः स्यादिह नो कश्चिदप्यरिः ।
सदा सर्वे च सर्वस्य सर्वं सर्वेश्वरेच्छया ॥ ४९

आलूनशीर्णमखिलमिदमन्योन्यसंश्रितम् ।
अनारतं याति जगत्तरङ्गौघ इवाम्भसः ॥ ५०
अध ऊर्ध्वत्वमायाति यात्यूर्ध्वत्वमधस्तथा ।
संसारस्य चलस्यास्य चक्रनेमिरिवाश्रितः ॥ ५१
स्वर्गस्था नरकं यान्ति नारकाश्च त्रिविष्टपम् ।
योनेर्योन्यन्तरं यान्ति द्वीपाद्द्वीपान्तरं जनाः ॥ ५२
धीराः कार्पण्यमायान्ति कृपणा यान्ति धीरताम् ।
परिस्फुरन्ति भूतानि पातोत्पातशतभ्रमैः ॥ ५३
एकरूपस्थिरं चक्रं स्वच्छं संतापवर्जितम् ।
नेह संप्राप्यते किंचिदग्नौ हिमकणो यथा ॥ ५४
ये ये नाम महाभागा बहवो बान्धवास्तथा ।
विनष्टा एव दृश्यन्ते ते ते कतिपयैर्दिनैः ॥ ५५
परतात्मीयतान्यत्वत्वत्त्वमस्वादिभावना ।
नेह सत्या महाबाहो द्विचन्द्रादिदृशो यथा ॥ ५६
अयं बन्धुः परश्चायमयं चाहमयं भवान् ।
इति मिथ्यादृशो राम विगलन्तु तवाधुना ॥ ५७
क्रीडार्थं व्यवहारस्य एताभिर्हतदृष्टिभिः ।
आमूलमन्तश्छिन्नाभिर्बहिर्विहर हेलया ॥ ५८
संसारसरणावस्यां तथा विहर सुव्रत ।
न यथैव श्रमश्रान्तो वासनाभारवानिव ॥ ५९
यथा यथैषा कार्याणि वासनाक्षयकारिणी ।
विचारणा तवोदेति संशाम्यन्ति तथा तथा ॥ ६०
अयं बन्धुरयं नेति गणना लघुचेतसाम् ।
उदारचरितानां तु विगतावरणैव धीः ॥ ६१

निश्चयं दृढं ज्ञातवानसि तदा अनन्तरगान्वर्तमानान्निकटस्थितान्सन्निहितान्बन्धून् प्राणादीनित्यध्याहारः । अनन्तजन्मस्वतीतान्सुबहून् कस्मान्नानुशोचसि । विनिगमनाविरहात्सर्वशोकाशक्तेश्च न क्वापि शोको युक्त इति भावः ॥ ३७ ॥ ३८ ॥ द्वितीयेऽप्याह—**पूर्वमि**ति। इदानीमन्यः अग्रेऽप्यन्यो भविष्यसि इति क्षणिकमात्मानं यदि जानासि तथापि त्वं किं सद्रूपमालम्ब्य विमुह्यसि शोचसि । द्वितीयक्षणे शोच्यस्य शोचितुश्चासत्त्वेन शोकावसराभावादित्यर्थः ॥ ३९ ॥ तृतीयेऽप्याह—**पुरे**ति। तथाप्यात्मनाशादेव क्षीणसंसारः ॥४०॥ यदा आत्मनो जन्मादिसङ्गित्वेऽपि शोको न युक्तस्तदा किं वाच्यमसङ्गोदासीननित्यकूटस्थस्वप्रकाशपूर्णानन्दैकरसत्वे स न युक्त इतीत्याशयेनोपसंहरति—**तस्मादि**ति। मुदिता सहजसंतोषवृत्तिः॥४१॥४२॥ यथा ज्वालानां कोटरे सर्वतः प्रभाव्याप्ते तमसो नावकाशस्तद्वत्त्वय्यपि तमोदुःखादेरिति भावः ॥ ४३ ॥ त्वमेव सर्वान्तर इत्याह—**जागताना**मिति। न दृष्टा आत्मनस्तनुः स्वरूपं यस्य। तनुः सूक्ष्मः हारभूतमुक्ताफलानां तन्तुरिवाततोऽनुस्यूतः ॥४४॥ पुनर्जन्मशङ्कां वारयति—**संसारे**ति । भूत्वा उत्पद्य पुनर्भूयते ॥ ४५ ॥ स्वरूपं स्वभावः । सततमाधिमत् दुःखबहुलम् ॥४६॥ स्वरूपं तत्त्वमिति न मन्तव्यमित्याह—**रूप**मिति। भ्रान्त्यन्तरेषु तत्त्वाप्रसिद्धेरत्रापि न तत्त्वमस्तीत्यर्थः ॥ ४७ ॥ ननु निस्तत्त्वं कथं सदिति दृश्यते तत्राह—**सर्वे**ति। आभानं जगदाकारभानम् । अतिभास्वरं व्यक्तम् ॥४८॥ जगतो भ्रान्तिमात्रताप्रदर्शनायानियतस्वभावतां दर्शयति—**सुबन्धुरि**त्यादिना । सर्वस्य सर्वेऽपि सर्वे अरयो मित्राणि उदासीनाश्चेत्यर्थः ॥४९॥ अन्योन्यसंश्रितं परस्परनिमित्तम् ॥ ५० ॥ **अध** इति। प्रत्यक्षं चेदं ज्योतिश्चक्रभागानां भूमेश्चेति भावः ॥५१॥ एवमुत्कर्षापकर्षावप्यनियतावेवेत्याह—**स्वर्गस्था** इति ॥ ५२ ॥ धीरा अप्रार्थनशीलाः ॥ ५३ ॥ उपसंहरति—**एकरूपे**ति । चक्रं पदार्थमण्डलम् ॥ ५४ ॥ विनाशस्तु सर्वत्र नियत इत्याह—**ये ये** इति ॥ ५५ ॥ अस्त्वनियतता किं ततस्तत्राह—**परते**ति ॥ ५६ ॥ विगलन्तु विशीर्यन्ताम् ॥ ५७ ॥ हतदृष्टिभिर्बाधितानुवृत्तिदृष्टिभिः । आमूलमज्ञानवासनाभ्यां सह अन्तश्छिन्नाभिः ॥ ५८ ॥ वासनाभारवान् अज्ञ इव श्रमश्रान्तो यथा न भवस्येव तथा अस्यां संसारसरणौ विहर ॥ ५९ ॥ कदा तर्हि मम व्यवहारोपरमो भविष्यति तत्राह—**यथा यथे**ति। वासनाक्षयकारिणी विचारणा यथा यथोदेति तथा तथा कार्याणि व्यवहाराः प्रशाम्यन्ति उपरंस्यन्त इत्यर्थः ॥६०॥ विगतं अयमेव बन्धुरिति परिच्छेदलक्षणं आवरणं यस्यास्तादृश्येव सर्वत्र समतादर्शि-

न तदस्ति न यत्राहं न तदस्ति न यन्मम ।
इति निर्णीय धीराणां विगतावरणेव धीः ॥ ६२
नास्तमेति न चोदेति यश्चिदाकाशवन्महान् ।
सर्वं संपश्यति स्वस्थः स्वस्थो भूमितलं यथा ॥ ६३
सर्वा एव हि ते भूतजातयो राम बन्धवः ।
अत्यन्तासंयुता एतास्तव राम न काश्चन ॥ ६४
विविधजन्मशताहितसंभ्रमे
जगति बन्धुरबन्धुरितीक्षणम् ।
भ्रमदशैव विवल्गति वस्तुत-
स्त्रिभुवनं चिरबन्धुरबन्धवपि ॥ ६५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे जीवन्मुक्तवर्णनं नामाष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः १९

श्रीवसिष्ठ उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
भ्रात्रोस्त्रिपथगातीरे संवादं मुनिपुत्रयोः ॥ १
अयं बन्धुरयं नेति कथाप्रस्तावतः स्मृतम् ।
इतिहासमिमं पुण्यमाश्चर्यं शृणु राघव ॥ २
अस्त्यस्य जम्बूद्वीपस्य कस्मिंश्चिद्गिरिकुञ्जके ।
वनव्यूहमहोत्तंसो महेन्द्रो नाम पर्वतः ॥ ३
कल्पद्रुमवनच्छायाविश्रान्तमुनिकिंनरः ।
शृङ्गैराततमाकाशं जितवान्यः समुन्नतैः ॥ ४
ब्रह्मलोकान्तरप्राप्तशृङ्गकन्दरचारिभिः ।
सामवेदप्रतिध्वानघुंघुमैर्गायतीव यः ॥ ५
यः पयोमेदुरैर्मेघैर्लसितैः शृङ्गकोटिषु ।
लताकुसुमसंप्रोतैः कुन्तलैरिव राजते ॥ ६
यस्तटोड्डयनोत्कानां शरभाणां विजृम्भितैः[1] ।
विस्फूर्जति[2] गुहावक्त्रैः कल्पाभ्राणि हसन्निव ॥ ७
येन निर्झरनिर्ह्रादैः कन्दरान्तरचारिभिः ।
समुद्रजलकल्लोलविलासो विजितोऽभितः ॥ ८
तस्यैकदेशे वितते रत्नसानौ मनोरमे ।
मुनिभिः स्नानपानार्थं व्योमगङ्गावतारिता ॥ ९
तस्यास्त्रिपथगायास्तु तीरे विकसितद्रुमे ।
रत्नाद्रितटविद्योते कचत्कनकपिञ्जरे ॥ १०
आसीदभ्युदितज्ञानस्तपोराशिरुदारधीः ।
मुनिर्दीर्घतपा नाम तपो मूर्तमिवापरम् ॥ ११
मुनेर्बभूवतुस्तस्य पुत्रौ द्वाविन्दुसुन्दरौ ।
पुण्यपावननामानौ द्वौ कचाविव वाक्पतेः ॥ १२
स ताभ्यां सह पुत्राभ्यां भार्यया च सहैकया ।
उवास सरितस्तीरे तस्मिन्सफलपादपे ॥ १३
अथ काले तयोस्तस्य पुत्रयोर्ज्ञानवानभूत् ।
पुण्यो नाम च यो ज्येष्ठो गुणज्येष्ठश्च राघव ॥ १४
पावनोऽर्धप्रबुद्धोऽभूत्पूर्वसंध्याम्बुजं यथा ।
मौर्ख्यादधिगतो नाप्तः पदे दोलायितः स्थितः ॥ १५
ततो वहत्यकलिते काले कलितकारणे ।
संवत्सरशते जीर्णदीर्घदेहलतायुषि ॥ १६
अस्माद्भङ्गुरभूताढ्याद्वृत्तान्तशतभीषणात् ।

नीत्यर्थः ॥ ६१ ॥ उक्तमेवार्थं कारणोपन्यासेन विवृणोति—**न तदिति** ॥ ६२ ॥ स्वस्थः स्वरूपप्रतिष्ठितो विक्षेपदुःखोपशमस्वास्थ्यवान्वा ॥ ६३ ॥ **सर्वा** इति । अनादौ संसारे सर्वयोनिषु स्वस्य बहुशो जन्मानुभवादित्यर्थः । बन्धुत्वेनात्यन्तमसंयुताः काश्चन काश्चिदपि न पर्यायेण सर्वैः सह संबन्धादित्यर्थः । अथवा देहद्वारकपरम्परासंबन्धापेक्षया सर्वजीवैः सह साक्षादैकात्म्यसंबन्धस्यान्तरङ्गत्वात्तेन संबन्धेनात्यन्तासंयुता न काश्चनेत्यर्थः ॥ ६४ ॥ उक्तमेवार्थं संक्षिप्य विवृण्वन्नुपसंहरति—**विविधे**ति । विविधैर्नानायोनिविचित्रैर्जन्मशतैराहिताः संभ्रमा यस्मिंस्तथाविधे जगति अयं बन्धुरयमबन्धुरिति ईक्षणं भेददर्शनं भ्रमदशैव विवल्गति विजृम्भते । वस्तुतस्तु जीवभावदृष्टौ त्रिभुवनं त्रिभुवनस्थं जीवजातं निजबन्धुर्ब्रह्मभावदृष्टौ तु स्वयमेव सर्वमित्यबन्ध्वपि तदेवेत्यर्थः॥६५॥इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे जीवन्मुक्तवर्णनं नामाऽष्टादशः सर्गः १८

इहोक्तसिद्धये पुण्यपावनाख्यानमुच्यते ।
पुण्यो यत्पितृशोकार्तं पावनं समबोधयत् ॥ १ ॥

अत्र उक्तार्थविषये ॥ १ ॥ २ ॥ गिरिकुञ्जके गिरिजालमध्ये । निर्धारणे सप्तमी । 'पुञ्जके' इति पाठः स्पष्टः ॥ ३ ॥ आततं विस्तीर्णमप्याकाशं शृङ्गैर्जितवान् व्याप्तवान् ॥ ४ ॥ ब्रह्मलोकेत्यतिशयोक्तिः ॥५॥ पयोमेदुरैर्नीलैरिति यावत् । लसितैर्विद्युद्भिर्विराजमानैः । कुन्तलैः केशैः ॥ ६ ॥ तटेषु उड्डयने उत्कानां सोत्कण्ठानां शरभाणामष्टापदानां विजृम्भितैर्विस्फूर्जति गर्जति ॥७॥ कन्दरान्तरेषु चारिभिः प्रतिध्वनितैरिति यावत् । कल्लोलानां विलासः सगर्जितनृत्यम् ॥ ८ ॥ रत्नमये सानौ प्रस्थदेशे । व्योमगङ्गा मन्दाकिनी ॥ ९ ॥ रत्नाद्रेर्मेरोस्तटमिव विद्योतमाने ॥ १० ॥ अभ्युदितं ज्ञानं परमात्मबोधो यस्य । मूर्तं धृतशरीरम् ॥ ११ ॥ द्वौ कचाविवेत्यभूतोपमा । वाक्पतेर्बृहस्पतेः ॥ १२ ॥ १३ ॥ ज्ञानवान् तत्त्ववित् ॥ १४ ॥ अर्धप्रबुद्ध इत्यस्य विवरणं मौर्ख्यादधिगतो निर्गतः । पदे परमात्मवस्तुनि चानाप्तः । अन्तराले दोलायितः स्थितः ॥१५॥ अकलिते प्राणिभिरायुःक्षयत्वेनालक्षिते । संवत्सरशतात्मके । देहलता च आयुश्च देहलतायुषी जीर्णे देहलतायुषी येन तथाविधे काले वहत्यतिक्रामति सति मुनिर्देहं जहाविति व्यवहितेन संबन्धः ॥ १६ ॥ जन्मजरामरणस्वर्गपातनरकादिवृत्तान्तशतैर्भीषणात्सं-

१ यस्तटोड्डयनोत्कानां इति टीकाकृत्संमतः पाठः.
२ गर्जति इति क्वचित्पठ्यते.

रतिमुत्सृज्य संसाराज्जराजर्जरजीवितः ॥ १७
कलनापक्षिणी नीडं देहं दीर्घतपा मुनिः ।
जहौ गिरिगुहागेहे भारं वैवधिको यथा ॥ १८
प्रशान्तकलनारम्भं चेत्यरिक्तचिदास्पदम् ।
पदं जगाम नीरागं पुष्पगन्ध इवाम्बरम् ॥ १९
अथ भार्या मुनेर्देहं प्राणापानविवर्जितम् ।
दृष्ट्वा विलुलितं भूमौ विनालमिव पङ्कजम् ॥ २०
चिरमभ्यस्तया योगयुक्त्या पतिवितीर्णया ।
तत्याज तनुमम्लानां षट्पदी पद्मिनीमिव ॥ २१
भर्तारमेवानुययौ जनस्यादृष्टतां गता ।
प्रभागगनकोशस्थमस्तं यातमिवोडुपम् ॥ २२
मातापित्रोस्तु गतयोरौर्ध्वदेहिककर्मणि ।
पुण्य एव स्थितोऽव्यग्रः पावनो दुःखमाययौ ॥ २३
शोकोपहतचित्तोऽसौ भ्रमन्काननवीथिषु ।
ज्यायांसमनवेक्ष्यैव पावनो विललाप ह ॥ २४
अथौर्ध्वदेहिकं कृत्वा मातापित्रोरुदारधीः ।
आययौ विपिने पुण्यः पावनं शोकलालसम् ॥ २५

पुण्य उवाच ।

किं पुत्र घनतां शोकं नयस्यान्ध्यैककारणम् ।
बाष्पधाराधरं घोरं प्रावट्काल इवाम्बुजम् ॥ २६
पिता तव महाप्राज्ञ गतः सार्धं त्वदम्बया ।
स्वामेव परमात्मात्मपदवीं मोक्षनासिकाम् ॥ २७
तत्स्थानं सर्वजन्तूनां तद्रूपं विजितात्मनाम् ।
स्वभावमभिसंपन्ने किं पितर्यनुशोचसि ॥ २८
ईदृशी तु त्वया बद्धा भावनेह विमोहजा ।
संसारे यदशोच्योऽपि त्वया तातोनुशोच्यते ॥ २९
न सैव भवतो माता नासावेव पिता तव ।
न भवानेष तनयस्तयोर्निःसंख्यपुत्रयोः ॥ ३०
मातापितृसहस्राणि समतीतानि ते सुत ।
बहून्यम्बुप्रवाहस्य निम्नानीव वने वने ॥ ३१
असंख्यपुत्रयोर्नैव भवानेव सुतस्तयोः ।
सरित्तरङ्गवत्पुत्र गताः पुत्रगणा नृणाम् ॥ ३२
असत्पित्रोरतीतानि पुत्रलक्षाण्यनेकशः ।
पत्रकोरकवृन्तानि लताविटपयोरिव ॥ ३३
मित्रबान्धववृन्दानि जन्तोर्जन्मनि जन्मनि ।
ऋतावृतावतीतानि फलानीव महातरोः ॥ ३४
शोचनीया यदि स्नेहान्मातापितृसुताः सुत ।
तदतीता न शोच्यन्ते किमजस्रं सहस्रशः ॥ ३५
प्रपञ्चोऽयं महाभाग दृश्यते जागते भ्रमे ।
परमार्थेन ते प्राज्ञ नास्ति मित्रं न बान्धवाः ॥ ३६
न नाश इव हि भ्रातः परमार्थेन विद्यते ।
महत्यपि चिरातप्ते मराविव पयोलवाः ॥ ३७
एता याः प्रेक्षसे लक्ष्मीश्छत्रचामरचञ्चलाः ।
स्वप्न एव महाबुद्धे दिनानि त्रीणि पञ्च वा ॥ ३८
दृष्ट्या तु पारमार्थिक्या पुत्र सत्यं विचारय ।
नैव त्वं न वयं चैव भ्रान्तिमन्तः परित्यज ॥ ३९
अयं गतो मृतश्चायमिति दुर्दृष्टयः पुरः ।
स्वसंकल्पोपतापोत्था दृश्यन्ते न तु सत्यतः ॥ ४०

सारादृतिमुत्सृज्य कलनालक्षणायाः पक्षिण्या नीडं देहं जहाविति परेणान्वयः ॥ १७ ॥ यथा वैवधिको वीवधवाहको गेहे वीवधभारं जहाति तथेत्यर्थः । विवधवीवधशब्दावुभयतो बद्धशिक्ये स्कन्दवाह्ये काष्ठविशेषे वर्तेते ॥ १८ ॥ प्रशान्ताः कलनारम्भा यत्र । चेत्यैः रिक्ता रहिता याश्रितस्तत्तज्जीवचैतन्यानि तेषामास्पदं प्रतिष्ठाभूतं परमपदम् । यथा पुष्पगन्धोऽम्बरमाकाशं गच्छति तद्वत् ॥ १९ ॥ २० ॥ पत्या वितीर्णया उपदिष्टया योगयुक्त्या । अम्लानां रोगजरादिम्लानिरहितामपि तनुं तत्याज ॥ २१ ॥ ब्रह्मीभूतं भर्तारमेव अनुययौ स्वयमपि ब्रह्मीभावं प्रापेति यावत् । नहि ब्रह्मविदां देशान्तरे गतिरस्ति । 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति श्रुतेः ॥२२॥ अव्यग्रो विशोकः ॥ २३ ॥ ज्यायांसं ज्येष्ठभ्रातरं अनवेक्ष्य । तद्वद्धैर्यमनालम्ब्येति यावत् ॥२४॥२५॥ पितृसमो ज्येष्ठ इति शास्त्रात्पुत्रेति संबोधनम् । शोकं दुःखमूष्माणं च । घनतां निबिडतां मेघतां च । अतएव बाष्पधाराधरमान्ध्यैककारणमिति च श्लेषात् साधारणे विशेषणे । आम्बुजं अम्बुजसंबन्धितम्बुजसदृशनेत्रसंबन्धिनं च ॥ २६ ॥ २७ ॥ स्थानं उत्पत्त्यादिकालत्रयेऽप्याधारभूतम् । जन्तूनां जननधर्मिणां प्राणिनाम् । विजितात्मनां ब्रह्मविदाम् । रूपं स्वरूपम् । अतएव न पितुः शोच्यतेत्याह—**स्वभाव**मिति ॥ २८ ॥ ईदृशी इयमेव मम माता अयमेव मम पितेत्येवंरूपा । यत् यया भावनया ॥२९॥ निःसंख्याः संख्यातुमशक्याः पुत्रा ययोः ॥३०॥ निम्नानि गम्भीरस्थानानीव ॥ ३१ ॥ हे पुत्र, नृणामन्येषामपि ॥३२॥ विटपग्रहणेन विटपी लक्ष्यते । 'विटपिनोरिवे'ति वा पाठः ॥३३॥ ॥ ३४ ॥ न शोच्यन्ते त्वयेति शेषः ॥ ३५ ॥ जागते जगत्कल्पनानिमित्ते भ्रमे मोहे सत्येव दृश्यते । परमार्थेन परमार्थतस्तु ते तव न । तथाचोक्तं वार्तिके—'अविद्यास्तीत्यविद्यायामेवासित्वा प्रकल्प्यते । ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन युज्यते' इति ॥ ३६ ॥ परमार्थेन परमार्थदृष्ट्या मरीमरुत्वादेव पयोलवा न सन्ति तत्र चिरातप्ते सुतराम् । तथा ब्रह्मस्वाभाव्यादेव नाशो नास्ति तत्र तत्त्वबोधे सुतरामिति द्योतनायापिशब्दः ॥ ३७ ॥ लक्ष्मीः राज्यादिसंपदः । स्वप्न एव ता इति शेषः ॥३८॥३९॥ स्वसंकल्पलक्षणो य उपतापः संनिपातभ्रमस्तदुत्थाः पुरो

अज्ञानविस्तीर्णमरौ विलोलं
शुभाशुभस्यन्दमयैस्तरङ्गैः ।
सवासनानाममरीचिवारि
परिस्फुरत्येतदनन्तरूपम् ॥ ४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे पावनबोधनं नामैकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः २०

पुण्य उवाच ।

कः पिता किं च वा मित्रं का माता के च बान्धवाः ।
स्वबुद्ध्यैवावधूयन्ते वात्यया जनपांसवः ॥ १
बन्धुमित्रसुतस्नेहद्वेषमोहदशामयः ।
स्वसंज्ञामात्रकेणैव प्रपञ्चोऽयं वितन्यते ॥ २
बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः ।
विषामृतदशेवेह स्थितिर्भावनिबन्धनी ॥ ३
एकत्वे विद्यमानस्य सर्वगस्य किलात्मनः ।
अयं बन्धुः परश्चायमित्यसौ कलना कुतः ॥ ४
रक्तमांसास्थिसंघाताद्देहादेवास्थिपञ्जरात् ।
कोऽहं स्यामिति चित्तेन स्वयं पुत्र विचारय ॥ ५
दृष्ट्या तु पारमार्थिक्या न कश्चित्त्वं न वास्म्यहम् ।
मिथ्याज्ञानमिदं पुण्यः पावनश्चेति वल्गति ॥ ६
कस्ते पिता कश्च सुहृत्का माता कश्च वा परः ।
खस्यानन्तविलासस्य किमस्वं किं स्वमुच्यताम् ॥ ७
असि चेत्त्वं तदन्येषु यातेषु बहुजन्मसु ।
ये बन्धवो ये विभवाः किं तानपि न शोचसि ॥ ८
बभूवुस्ते सुपुष्पासु स्थलीषु मृगयोनिषु ।
बहवो बन्धवो मार्गास्तान्कथं नानुशोचसि ॥ ९
बभूवुस्ते सपद्मासु तटीष्वम्भोजिनीषु ते ।
हंसस्य बन्धवो हंसास्तान्कथं नानुशोचसि ॥ १०
बभूवुस्तेऽलमन्यत्र चित्रासु वनराजिषु ।
बहवो बन्धवो वृक्षास्तान्कथं नानुशोचसि ॥ ११
बभूवुस्ते महोग्रेषु शिखरेषु महीभृताम् ।
बहवो बान्धवाः सिंहास्तान्कथं नानुशोचसि ॥ १२
बभूवुस्ते स्रवन्तीषु सरःस्वम्भोजिनीषु च ।
बहवो बन्धवो मत्स्यास्तान्कथं नानुशोचसि ॥ १३
बभूविथ दशार्णेषु कपिलो वनवानरः ।
राजपुत्रस्तुषारेषु पुण्ड्रेषु वनवायसः ॥ १४
हैहयेषु च मातङ्गस्त्रिगर्तेषु च गर्दभः ।
शाल्वेषु सरमापुत्रः पतत्री सरलद्रुमे ॥ १५
विन्ध्याद्रौ पिप्पलो भूत्वा घुणो भूत्वा महावटे ।
मन्दरे कुक्कुटो भूत्वा विप्रो जातोऽसि कन्दरे ॥ १६

---

दृश्यन्ते ॥ ४० ॥ अज्ञानलक्षणेनातपेन विस्तीर्णे आच्छन्ने मरौ मरुभूमिसदृशे आत्मनि । स्वसंकल्पवासनानामकं मरीचिवारि मृगतृष्णोदकम् ॥४१॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे पावनबोधनं नामैकोनविंशः सर्गः ॥१९॥

नानायोनिषु जन्मानि पावनस्यात्मनस्तथा ।
इह पुण्येन कीर्त्यन्ते शोकमोहापनुत्तये ॥ १ ॥

शोकस्य मोहमूलकत्वान्मोहापनयनेनैवास्य शोकोऽपनेय इति मन्यमानः पुण्यस्तद्विषयाणां पित्रादीनामनिर्वचनीयत्वान्मिथ्यात्वं प्रतिज्ञाय ज्ञानापनोद्यतामाह—**कः पित्ते**ति । कः किंस्वरूपः । तत्त्वतो निर्वक्तुमशक्याः सर्वेऽपीत्यर्थः । स्वबुद्ध्या स्वभ्रान्त्यैवावधूयन्ते उत्थाप्यन्ते । अथवा स्वविवेकबुद्धिलक्षणया वात्यया स्वजनपांसवोऽवधूयन्ते निरस्यन्ते ॥ १ ॥ स्नेहद्वेषमोहदशालक्षण आमयो रोगः । स्वसंज्ञा स्वकृतः संकेतस्तन्मात्रकेणैव ॥ २ ॥ उक्तमुपपादयति—**बन्धुत्वे** इति । भावितो दृढभावनया संकेतितः । परत्वे शत्रुत्वे । यथा विषकृमिभिर्विषस्य जीवनहेतुत्वेन दृढभावनात्तान्प्रति अमृतदशा अन्यैस्तद्विपरीतभावनाद्विषदशा चेति भावनिबन्धनी स्थितिस्तद्वदित्यर्थः ॥३॥ आस्तां बन्धुतत्त्वचिन्ता तदनुशोचिनस्तव स्वतत्त्वविमर्शमात्रेण ते निरसितुं शक्या इत्याशयेनाह—**एकत्वे** इति । सर्वदेहेष्वेकत्वे अभिन्नत्वे ॥ ४ ॥ नन्वहं कथं सर्वदेहेष्वेक इति चेदहं-
प्रत्ययवेद्यमेव कोऽसाविति विमृशेत्याह—**रक्ते**ति । रक्तादिजडसंघाताद्देहादन्यश्चेतनस्वभावः कोऽहं स्यामिति विचारयेत्यर्थः ॥५॥ त्वं पावनशब्दवाच्यो देहादिर्न कश्चित् । अहं पुण्यशब्दवाच्यः । मिथ्याज्ञानं देहात्मताभ्रम एव वल्गति प्रथते ॥ ६ ॥ एवं पित्रादिशरीरमपि विमर्शे भ्रान्तिरेवेत्याह—**क** इति । यदि तु देहाद्युपाधिनिष्कृष्टं चिदाकाशमेवाहं त्वं पित्रादयश्चेति मन्यसे तदा मम पिता मम भ्रातेत्यादिभेदघटितः स्वत्वादिसंबन्धो न घटत एवेत्याह—**खस्ये**ति । खस्य चिदाकाशस्य ॥ ७ ॥ लिङ्गशरीराण्येवाहं मद्बान्धवाश्चेति चेत्तत्राह—**असि चेदि**ति । त्वं मद्व्यावृत्तलिङ्गात्मा असि चेत्तदा यातेष्वतीतेषु किं किमर्थं न शोचसि ॥ ८ ॥ जन्मान्तरबन्धून्प्रपञ्चयति—**बभूवु**रित्यादिना । मार्गाः मृगयोनिजा जीवाः ॥ ९ ॥ अम्भोजिनीषु पद्मवनीषु नद्यादितटीषु हंसस्य ते ते तत्कालप्रसिद्धा हंसा बन्धवो बभूवुः । 'तटीष्वम्भोधियोषिताम्' इति पाठे नदीनां तटीष्वित्यर्थः ॥ १० ॥ अन्यत्रान्येषु जन्मसु । अलमत्यन्तं बन्धवो बभूवुः ॥ ११ ॥ १२ ॥ स्रवन्तीषु नदीषु ॥ १३ ॥ इदानीं भ्रातुर्जन्मभेदान्योगबलेन दृष्टान्विशिष्य स्मारयन्नाह—**बभूवि**थेति । दशार्णतुषारपुण्ड्रादयो देशविशेषाः ॥ १४ ॥ सरमा शुनी तस्याः पुत्रः । पतत्री पक्षी अर्थाच्छालत्रेष्वेव ॥ १५ ॥ घुणः काष्ठकीटकः अर्थान्मन्दरस्यैव कन्दरे दरीप्रदेशे ॥१६॥

कोसलेषु द्विजो भूत्वा भूत्वा वङ्गेषु तित्तिरिः ।
अश्वो भूत्वा तुषारेषु जातस्त्वं ब्रह्मणोऽध्वरे ॥ १७
यः कीटस्तालकन्दान्तर्मशको य उदुम्बरे ।
यः प्राग्बको विन्ध्यवने स त्वं पुत्र ममानुजः ॥ १८
हिमवत्कन्दरे भूर्जतनुत्वग्ग्रन्थिकोटरे ।
पिपीलिको यः षण्मासान्सोऽयं त्वमनुजो मम ॥ १९
स्थितः सीमान्तकुग्रामगोमये यश्च वृश्चिकः ।
सार्धसंवत्सरं साधो सोऽयं त्वमनुजो मम ॥ २०
पुलिन्दीस्तनपीठेषु निलीनं येन कानने ।
षट्पदेनेव पद्मेषु सोऽयं त्वमनुजो मम ॥ २१
एतास्वन्यासु बह्वीषु जनयोनिषु पुत्रक ।
जातोऽसि जम्बूद्वीपेऽस्मिन्पुरा शतसहस्रशः ॥ २२
इत्थं तवात्मनश्चैव प्राक्तनं वासनाक्रमम् ।
पश्यामि सूक्ष्मया बुद्ध्या सम्यग्दर्शनशुद्धया ॥ २३
ममापि बह्वयो बहुधा योनयो मोहमन्थराः ।
समतीताः स्मराम्यद्य ता ज्ञानोदितया दृशा ॥ २४
त्रिगर्तेषु शुको भूत्वा भेको भूत्वा सरित्तटे ।
वनेषु लावको भूत्वा जातोऽहमिह कानने ॥ २५
भुक्त्वा पुलिन्दतां विन्ध्ये कृत्वा वङ्गेषु वृक्षताम् ।
उष्ट्रत्वमपि विन्ध्याद्रौ जातोऽहमिह कानने ॥ २६
यश्चातको हिमगिरौ यो राजा पौण्ड्रमण्डले ।
व्याघ्रो यः सह्यकुञ्जेषु स एवाहं तवाग्रजः ॥ २७
यो गृध्रो दशवर्षाणि यो ग्राहो मासपञ्चकम् ।
यः समानां शतं सिंहः स एवेह[१] तवाग्रजः ॥ २८
आन्ध्रग्रामचकोरेण तुषारनृपराजिना ।
श्रीशैलाचार्यपुत्रेण दम्भवत्कथ्यते मया ॥ २९

सर्वे विविधसंसारा विविधाचारचेष्टिताः ।
विलासा जन्मनो भ्रान्तेः स्मर्यन्ते प्राक्तना मया ॥ ३०
एवं स्थिते जगज्जाता बान्धवाः शतशो गताः ।
पितरो मातरश्चैव भ्रातरः सुहृदस्तथा ॥ ३१
कांस्तान्समनुशोचावो न शोचावश्च कानपि ।
बन्धूनिहातिशोचाव ईदृश्यैव जगद्गतिः ॥ ३२
अनन्ताः पितरो यान्ति यान्त्यनन्ताश्च मातरः ।
इह संसारिणां पुंसां वनपादपपर्णवत् ॥ ३३
किं प्रमाणमतः पुत्र दुःखस्यात्र सुखस्य च ।
तस्मात्सर्वं परित्यज्य तिष्ठावः स्वच्छतां गतौ ॥ ३४
प्रपञ्चभावनां त्यक्त्वा मनस्यहमिति स्थिताम् ।
तां गतिं गच्छ भद्रं ते यां यान्ति गतिकोविदाः ॥ ३५
इहार्जवं जवीभावं पतनोत्पतनात्मकम् ।
न[२] च शोचन्ति सुधियश्चिरं वल्गन्ति केवलम् ॥ ३६
भावाभावविनिर्मुक्तं जरामरणवर्जितम् ।
संस्मरात्मानमव्यग्रो मा विमूढमना भव ॥ ३७
न ते दुःखं न ते जन्म न ते माता न ते पिता ।
आत्मैवासि न सद्बुद्धे त्वमन्यः कश्चिदेव हि ॥ ३८
अस्यां संसारयात्रायां नानाभिनयदायिनः ।
अज्ञा एव नराः साधुरसभावसमन्विताः ॥ ३९
मध्यस्थदृष्टयः स्वस्था यथाप्राप्तार्थदर्शिनः ।
तज्ज्ञास्तु प्रेक्षका एव साक्षिधर्मे व्यवस्थिताः ॥ ४०
कर्तारोऽपि न कर्तारो यथा दीपा निशागमे ।
आलोककर्मणामेवं तज्ज्ञा लोकस्थिताविह ॥ ४१
प्रतिबिम्बे न दृश्यन्ते स्वात्मबिम्बगतैरपि ।
यथा दर्पणरत्नाद्यास्तथा कार्ये महाधियः ॥ ४२

पुष्करेषु प्रसिद्धे ब्रह्मणः प्रजापतेरध्वरे जातः पशुरिति शेषः । 'यातः' इति वा पाठः ॥ १७ ॥ तालतरोः कन्दो मूलं तदन्तः । त्रीण्यपि जन्मानि विन्ध्यवने ॥ १८ ॥ भूर्जवृक्षस्य तन्वी मृदुला या त्वक् तद्ग्रन्थिप्रभवे कोटरे बिले ॥ १९ ॥ अर्थात्स्वदेशसीमाया अन्ते यः कुग्रामस्तत्रत्ये शुष्कगोमयोत्करे ॥ २० ॥ लीनं अर्थात्पुलिन्दीशिशुजन्म प्राप्येति गम्यते ॥ २१ ॥ २२ ॥ २३ ॥ भ्रातृजन्मोक्तीरुपसंहृत्य स्वजन्मभेदान्वक्तुमारभते—**ममापी**ति । मोहमन्थरा अज्ञानजडाः ॥ २४ ॥ लावकः क्षुद्रपक्षिविशेषः ॥ २५ ॥ वृक्षतां कृत्वा वृक्षजन्म भुक्त्वेत्यर्थः । उष्ट्रत्वमुष्ट्रजन्म । 'न्युब्जत्वम्' इति पाठेऽपि न्युब्जपृष्ठमुष्ट्रत्वमेव भुक्त्वेह जात इत्यर्थः ॥ २६ ॥ २७ ॥ इहास्मिञ्जन्मनि ॥ २८ ॥ तुषारेषु हिमवत्प्रदेशेषु नृपवद्विराजनशीलेन माण्डलिकेनेत्यर्थः । अपुण्यस्य स्वस्य लोकवञ्चनाय पुण्यनाम्ना प्रख्यापनं दम्भस्तद्वत्स्थितेन मयेत्युत्प्रेक्षा । 'मयेदं कथ्यते तव' इति पाठे तु स्पष्टम् ॥ २९ ॥ जन्मनः जन्मभेदरूपाया भ्रान्तेर्विलासाः ॥ ३० ॥ उपसंहृत्य प्रकृते योजयति—**एवं स्थिते** इति ॥ ३१ ॥ तान् प्राक्तनान्बन्धून्कान् शोचावः । तान्बन्धूनतिक्रम्य इह कान् शोचावः । न कांश्चिदपि शोचावः । यत ईदृश्येव जगद्गतिरित्यर्थः ॥ ३२ ॥ ३३ ॥ किं प्रमाणमवधिः । सर्वं शोकं दृश्यमात्रं वा ॥ ३४ ॥ गतिकोविदा आत्मावगतिकुशलाः ॥ ३५ ॥ पतनमधोगतिरुत्पतनमूर्ध्वगतिस्तदात्मकं आर्जवं जवीभावमविश्रान्तभ्रमणम् । केवलं निरभिमानतया वल्गन्ति व्यवहरन्ति ॥ ३६ ॥ ३७ ॥ त्वमात्मैवासि नान्यः अनात्मभूतदेहादिः कश्चित्त्वमसीत्यर्थः ॥ ३८ ॥ नर्तकवन्नानाभिनया अभिनिवेशचेष्टास्तद्दायिनस्तत्कारिणोऽज्ञा मूढा एव नराः साधुरसभावः पुरुषार्थसारताबुद्धिस्तत्समन्विता इत्यर्थः ॥ ३९ ॥ तज्ज्ञास्तत्त्वज्ञास्तु तटस्थदृष्टय उदासीनाः प्रेक्षका एव । अतएव साक्षिधर्मे व्यवस्थिताः ॥ ४० ॥ निशाया आगमे आगमने सति आलोककर्मणां प्रकाशनक्रियाणां यथा दीपाः संनिधिमात्रेण कर्तारोऽपि अव्याप्रियमाणत्वादकर्तार एवं तज्ज्ञा लोकव्यवहारस्थिताविलयर्थः ॥ ४१ ॥ दृष्टान्तान्तरमाह—**प्रतिबिम्बे** इति । यथा करादिगतदर्पणा रत्नाद्याः प्रति-

१ स एवेह इति पाठः.

२ नानुशोचन्ति इति पाठः.

सर्वैषणामयकलङ्कविवर्जितेन
स्वस्थात्मभावकलितेन हृदब्जमध्ये ।
पुत्रात्मनात्मनि महामुनिनामुनैव
संत्यज्य संभ्रममलं परितोषमेहि ॥ ४३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु उपशमप्रकरणे पावनबोधो नाम विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः २१

श्रीवसिष्ठ उवाच ।

एवं प्रबोधितस्तेन तदा पुण्येन पावनः ।
प्रबोधमाप प्राकाश्यं प्रभात इव भूतलम् ॥ १
उभावपि ततः सिद्धौ ज्ञानविज्ञानपारगौ ।
विचेरतुर्वने तस्मिन्यावदिच्छमनिन्दितौ ॥ २
ततः कदाचित्कालेन निर्वाणपदमागतौ ।
तौ विदेहौ गतस्नेहौ दीपाविव शमं गतौ ॥ ३
एवं प्राग्भुक्तदेहानामनन्ता जनबन्धुता ।
आः कैः किं गृह्यते ताभ्यः किं वा संत्यज्यतेऽनघ ॥ ४
तस्मादासामनन्तानां तृष्णानां रघुनन्दन ।
उपायस्त्याग एवैको न नाम परिपालनम् ॥ ५
चिन्तनेनैधते चिन्ता त्विन्धनेनेव पावकः ।
नश्यत्यचिन्तनेनैव विनेन्धनमिवानलः ॥ ६
ध्येयत्यागरथारूढः करुणोदारया दृशा ।
लोकमालोकयन्दीनमातिष्ठोत्तिष्ठ राघव ॥ ७
एषा ब्राह्मी स्थितिः स्वच्छा निष्कामा विगतामया ।
एनां प्राप्य महाबाहो विमूढोऽपि न मुह्यति ॥ ८
एकं विवेकं सुहृदमेकां प्रौढसखीं धियम् ।
आदाय विहरन्नेवं संकटेषु न मुह्यति ॥ ९
विनिवारितसर्वार्थादपहस्तितबान्धवात् ।
न स्वधैर्यादृते कश्चिदभ्युद्धरति संकटात् ॥ १०
वैराग्येणाथ शास्त्रेण महत्त्वादिगुणैरपि ।
यत्नेनापद्विघातार्थं स्वयमेवोन्नयेन्मनः ॥ ११
न तत्त्रिभुवनैश्वर्यान्न कोशाद्रत्नधारिणः ।
फलमासाद्यते चित्ताद्यन्महत्त्वोपबृंहितात् ॥ १२
तदेतस्मिञ्जगत्कुक्षौ पातोत्पातनदोलनैः ।
पतन्ति पुरुषा ये वै मनस्तेषां गतज्वरम् ॥ १३
पूर्णे मनसि संपूर्णं जगत्सर्वं सुधाद्रवैः ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ १४
वैराग्यात्पूर्णतामेति मनो नाशावशानुगम् ।

बिम्बोपाधयः स्वात्मनो बिम्बभूतसर्वदेहगतैः सर्वैर्धर्मैः सहापि स्वात्मनि कृते प्रतिबिम्बे बिम्बधर्मान्तरवत्स्वयं निविष्टा न दृश्यन्ते तद्वत्स्वात्मन्यध्यस्ते कार्ये कर्तारोऽपि महाधियः स्वयमभिनिविष्टा न भवन्तीत्यर्थः ॥ ४२ ॥ हे पुत्र, सर्वैरेषणामयकलङ्कैर्विवर्जितेन अतएव मुनिना मननशीलेन आत्मना स्वेनैव हृदब्जमध्ये स्वस्थात्मस्वभावेन कलितेन साक्षात्कृतेन संसारसंभ्रमं अलं निःशेषं त्यक्त्वा अमुना परिशिष्टेनात्मनैव परितोषमेहीत्यर्थः ॥ ४३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे पावनबोधो नाम विंशः सर्गः ॥ २० ॥

तृष्णापाशक्षयो मोक्षो ह्याशया चित्तवृत्तयः ।
निराशस्यात्मपूर्णस्य स्वतो मुक्तिरितीर्यते ॥ १ ॥

प्रबोधं परिनिष्ठितमात्मनिश्चयम् ॥ १ ॥ यावदिच्छं प्रारब्धक्षयपर्यन्तमिति यावत् ॥ २ ॥ गतस्नेहौ क्षीणतैलौ ॥ ३ ॥ उक्तमाख्यानमुपसंहृत्य प्रकृते योजयति—**एवमिति** । जनबन्धुता सुहृज्जनबन्धुसमूहः । आः इति विस्मये निपातः । गृह्यते शोच्यत्वेनोपादीयते ॥४॥ आसां सर्वशोकादिमूलभूतानां प्रतिविषयमनन्तानाम् । परिपालनं विषयसंपादनैरभिवर्धनम् ॥५॥ विषयाचिन्तनमेव तत्परित्याग इत्याशयेनाह—**चिन्तनेनेति** । एधते वर्धते ॥ ६ ॥ ध्येयत्यागः प्राग्वर्णितध्येयवासनात्यागः । करुणा सर्वभूतानुकम्पा । आतिष्ठ अनुतिष्ठ । प्रकृतव्यवहारमिति शेषः ॥७॥ विमूढो व्यवहारेष्वचतुरोऽपि न मुह्यति ॥८॥ विवेकलक्षणं सुहृदं मित्रम् । धियं परमार्थबोधलक्षणां प्रियसखीम् ॥ ९ ॥ विनिवारिताः परित्यक्ताः सर्वे अर्था धनानि येन । अपहस्तिता अन्तःस्नेहविच्छेदादपहस्तिता हस्तेन ककुदि प्रणोद्य निरस्ता इव बान्धवा येन । अभ्युद्धरति संकटादुन्नयति स्वमिति शेषः ॥ १० ॥ उन्नयेत् उत्कर्षं नयेत् विषयगर्तादुद्धरेद्वा ॥ ११ ॥ तत् सर्वदुःखप्रशमनोपलक्षितनिरतिशयानन्दलाभलक्षणं फलम् । महत्त्वं तुच्छविषयानभिलाषस्तेनोपबृंहितादुपचितात् ॥१२॥ पाता अधोगतयः उत्पतनान्यूर्ध्वगतयः दोलनानि मर्त्यलोकेष्वेव जन्मपरम्परया भ्रमणानि च तैस्तन्निमित्तभूतैर्विषयाभिलाषैर्ये पतन्ति तेषां मनः सदैव गतज्वरं प्राप्तसंतापमेव न कदाचिद्विश्राम्यतीत्यर्थः । अथवा पूर्वश्लोकान्नेत्यनुवर्त्य, ये न पतन्ति तेषां मनोगतज्वरं निःसंतापमिति व्याख्येयम् । 'पुनन्ति यतन्ते' इति वा पाठे पातयन्त्युत्पातयन्ति च ये विषयरागास्ते पातोत्पातनास्तेभ्यो दोलनैरुत्क्षेपणैः प्रत्याहारोपायैरात्मनि स्थैर्यापादनेन ये मनः पुनन्ति यतन्ते वा तेषां मनोगतज्वरं शान्तत्रिविधतापं भवतीति व्याख्येयम् ॥ १३ ॥ ननु संतापहेतुष्वाध्यात्मिकाधिदैविकाधिभौतिकेषु रोगवर्षातपचोरसर्पादिषु सत्सु कथं मनःप्रशान्तिमात्रेण सर्वतापनिवृत्तिस्तत्राह—**पूर्णे** इति । त्रिविधा अपि संतापा मनोदोषमूला एव । मनसि विशुद्धब्रह्मामृतरसपूर्णे सति सर्वं जगदानन्दपूर्णमेव भाति । यथा मृदुलोपानद्भ्यां संवृतचरणस्य कुशकण्टकादिसंकुलापि सर्वा भूर्मृदुलतरचर्मास्तृतैव भाति तद्वदित्यर्थः ॥ १४ ॥ न आशावशानुगमिति च्छेदः । रिक्ततां शुष्कार्णवो-

आशया रिक्ततामेति शरदेव सरोमलम् ॥ १५
हृदयं शून्यतामेति प्रकटीकृतकोटरम् ।
अगस्तिपीतार्णववदाशाविवशचेतसाम् ॥ १६
यस्य चित्ततरौ स्फारे तृष्णाचपलमर्कटी ।
न वल्गति महत्तस्य राजते हृद्वनं ततम् ॥ १७
पद्माक्षकोशं त्रिजगद्गोष्पदं योजनव्रजम् ।
निमेषार्धं महाकल्पः स्पृहारहितचेतसाम् ॥ १८
शीतता सा न शीतांशोर्न हिमाचलकन्दरे ।
न रम्भाचन्दनावल्यां निःस्पृहेषु मनःसु या ॥ १९
न तथा भाति पूर्णेन्दुर्न पूर्णः क्षीरसागरः ।
न लक्ष्मीवदनं कान्तं स्पृहाहीनं यथा मनः ॥ २०
यथाब्दलेखा शशिनं सुधालेपं मषी यथा ।
दूषयत्येवमेवान्तर्नरमाशापिशाचिका ॥ २१
आशाख्याश्चित्तवृक्षस्य शाखाः स्थगितदिक्तटाः ।
तासु च्छिन्नास्वरूपत्वं याति चित्तमहाद्रुमः ॥ २२
छिन्नतृष्णामहाशाखे चित्तस्थाणौ स्थितिं गते ।
एकरूपतया धैर्यं प्रयाति शतशाखताम् ॥ २३

अनस्तमितधैर्येण तेन चित्ते क्षयं गते ।
तत्पदं प्राप्यते राम यत्र नाशो न विद्यते ॥ २४
एतासां चित्तवृत्तीनामाशानामुत्तमाशयः ।
न ददासि प्ररोहं चेत्तद्भयं नास्ति राघव ॥ २५
चित्तं वृत्तिविहीनं ते यदा यातमचित्तताम् ।
तदा मोक्षमयीमन्तः सत्तामाप्नोषि तां तताम् ॥ २६
चित्तकौशिकपक्षिण्या तृष्णया क्षुब्धयान्तरे ।
अमङ्गलानि विस्तारमलमायान्ति राघव ॥ २७
चिन्तनं वृत्तिरित्युक्तं वर्तते चित्तमाशया ।
चित्तवृत्तिमतो ह्याशां त्यक्त्वा निश्चित्ततां व्रज ॥ २८
यो यया वर्तते वृत्त्या स तयैव विना क्षयी ।
अतश्चित्तोपशान्त्यर्थं तद्वृत्तिं प्रक्षयं नय ॥ २९

प्रशमितसकलैषणो महात्म-
न्भव भवबन्धमपास्य मुक्तचित्तः ।
मनसि निगडरज्जवः कदाशाः
परिगलितासु च तासु को न मुक्तः ॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे तृष्णाविचिकित्सायोगोत्पत्तिर्नामैकविंशः सर्गः ॥ २१ ॥

---

दरकल्पताम् । सरोमलं भिन्नतडागपङ्कः । 'सरोजलम्' इति वा पाठः ॥ १५ ॥ रिक्ततामेतीत्येतद्दृष्टान्तेन विवृणोति—**हृदय**मिति । कोटरस्य प्रकटीकरणपत्रान्तर्गतलोभदैन्यादिदोषाणां ग्राहभुजङ्गादीनां च स्फुटं प्रकाशनम् ॥ १६ ॥ स्फारे धर्मज्ञानवैराग्यशान्तिदान्त्यादिपुष्पफलपल्लवादिसमृद्धे चित्ततरौ मनोवृक्षे । हृद्वनं मनोबुद्धिरहंकारश्चित्तमिति चतुर्विधवृक्षघटितमन्तःकरणवनम् ॥ १७ ॥ निःस्पृहं प्रशंसति—**पद्माक्ष**येत्यादिना । त्रिजगत्त्रैलोक्यमपि पद्मबीजकोशवदल्पमिति यावत् । अपरिच्छिन्नब्रह्मसुखदृशा ब्रह्माण्डान्तर्गतसुखलवानामल्पतरत्वात् । एवं नित्यसर्वगतब्रह्मदृशा देशकालपरिच्छिन्नाधिपत्यादिविभवोऽप्यल्प एवेत्याशयेनाह—**गोष्पद**मिति ॥१८॥ शीतता निस्तापाह्लादः । रम्भाः कदल्यश्चन्दनतरवश्च तदावल्यां तद्वने यथायोग्यं तत्संश्लेषे वा ॥ १९ ॥ २० ॥ अब्दलेखा मेघराजिः । मषी कज्जलद्रवः । दूषयति मलिनयति ॥ २१ ॥ स्थगितदिक्तटा आच्छादितदिगन्ताः । अरूपत्वं ब्रह्मतां स्थाणुतां च ॥ २२ ॥ निरोधकककुवृक्षे च्छिन्ने तदधः प्ररूढः सद्वृक्ष इव पश्चाद्धैर्यं शतशाखतां प्रयाति । वर्धत इति यावत् ॥ २३ ॥ अस्तु धैर्याभिवृद्धिः किं ततस्तत्राह—**अनस्तमिते**ति । अनस्तमितधैर्येण अभिवृद्धवैराग्यजितेन्द्रियत्वद्वन्द्वसहिष्णुत्वादिधैर्यवता पुरुषेण ॥ २४ ॥ प्ररोहं पुनः प्ररोहावकाशं न ददासि चेत्तर्हि जन्मादिभयं नास्तीत्यर्थः ॥ २५ ॥ ततां पूर्णाम् ॥ २६ ॥ चित्ते प्रविष्टया कौशिकपक्षिण्या उलूक्या  उलूकी प्रविष्टा चेन्मृत्युदारिद्र्योपप्लवाद्यमङ्गलानि भवन्तीति ज्योतिःशास्त्रादौ प्रसिद्धम् । सा चेद्देहान्तश्चित्ते निरन्तरं प्रविश्य सर्वव्यवहारेषु क्षुब्धा तिष्ठति तदा तया अमङ्गलानि सर्वाण्येव अलं विस्तारमायान्तीति किं वाच्यमिति भावः ॥ २७ ॥ ननु आशात्यागमात्रेण कथं चित्तोपशमः संकल्पविचिकित्साधृत्यधृत्यादिवृत्त्यन्तरैरपि तत्प्ररोहस्य दुर्वारत्वादित्याशङ्कां सर्ववृत्तीनामाशामूलताप्रदर्शनेन परिहरति—**चिन्तन**मिति । समाध्यारम्भकाले बाह्यकरणानां निरुद्धत्वान्न चाक्षुषादिवृत्तिप्रसक्तिरस्तीति चिन्तनमेव तदा चित्तस्य वृत्तिः परिशिष्यत इति प्रागुक्तम् । चिन्तने च चित्तमाशयैव प्रवर्तते । आशास्थानामेव विषयाणां चिन्तनदर्शनात् । संकल्पादिवृत्तीनां च चिन्तितार्थविषयतया चिन्तापूर्वकत्वाच्चिन्तामूलभूतामाशाख्यां चित्तवृत्तिं त्यक्त्वा निश्चित्ततां व्रजेत्यर्थः ॥२८॥ ज्वालौष्ण्यक्षये वह्नेरिव वृत्तिक्षये मनस उपशमः सिद्ध्यतीत्याह—**यो यये**ति । तयैव विना तद्वृत्तेरात्यन्तिकनिरोधेन क्षयी अपक्षयक्रमेण नश्यति ॥२९॥ उक्तमर्थं संगृह्योपसंहरति—**प्रशमिते**ति । हे महात्मन्, त्वं प्रशमितपुत्रवित्तलोकादिसकलैषणः सन् भवबन्धमाशाख्यमपास्य मुक्तचित्तो जीवन्मुक्तो भव । यतः कुत्सिता आशा मनसि विद्यमाना आत्मनो निगडरज्जवो निगडवद्रज्जुवच्च बन्धनहेतवः । तासु परिगलितासु सतीषु को न मुक्तः। सर्वोऽपि जन्तुर्मुच्यत एवेत्यर्थः॥३०॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे तृष्णाविचिकित्सायोगोत्पत्तिर्नामैकविंशः सर्गः ॥ २१ ॥

# द्वाविंशः सर्गः २२

श्रीवसिष्ठ उवाच ।
अथवा रघुवंशाख्यनभःपूर्णनिशाकर ।
बलिवद्बुद्धिभेदेन ज्ञानमासादयामलम् ॥ १
श्रीराम उवाच ।
भगवन्सर्वधर्मज्ञ त्वत्प्रसादान्मया हृदि ।
प्राप्तं प्राप्तव्यमखिलं विश्रान्तं चामले पदे ॥ २
शारदीवाम्बुवराद्भ्रमदभ्रं मम चेतसः ।
विभो व्यपगतं सर्वं तृष्णाख्यं तन्महातमः ॥ ३
अमृतापूरितः स्वस्थः शीतलात्मा महाद्युतिः ।
तिष्ठाम्यानन्दवानन्तः सायं पूर्ण इवोडुराट् ॥ ४
अशेषसंशयाम्भोदशरत्समय किंत्वहम् ।
तृप्तिमेषां न गच्छामि वचसां वदतस्तव ॥ ५
बलेर्विज्ञानसंप्राप्तिं पुनर्मद्बोधवृद्धये ।
विभो कथय खिद्यन्ते सन्तो नावनतं प्रति ॥ ६
श्रीवसिष्ठ उवाच ।
शृणु राघव ते वक्ष्ये बलेर्वृत्तान्तमुत्तमम् ।
श्रुतेन येन तं तत्त्वबोधं प्राप्स्यसि शाश्वतम् ॥ ७
अस्त्यस्मिञ्जगतः कोशे कस्मिंश्चिद्दिङ्निकुञ्जके ।
पातालमिति विख्यातो लोको भूमेरधः स्थितः ॥ ८
क्षीरोदार्णवजाताभिर्दिग्धाभिरमृतांशुभिः ।
क्वचिद्दानवकन्याभिर्भाति निर्विवरान्तरः ॥ ९
जिह्वागणोद्दामरवैर्विलोलरसनायुगैः ।
क्वचिद्भोगिभिरापूर्णः सहस्रशतमस्तकैः ॥ १०
देहाद्रिवलिताशेषविश्वोद्धरणघस्मरैः ।
क्वचिदनुसुतैर्व्याप्तश्चलद्भिरिव मेरुभिः ॥ ११
कुम्भकूटाग्रविश्रान्तवसुधामण्डलोदरैः ।
क्वचिद्दिग्दन्तिभिर्दन्तद्रुमाद्रिभिरुपाश्रितः ॥ १२
महाकटकटाशब्दत्रस्तभूतपरम्परैः ।
क्वचिद्दुर्गन्धभूताभैरधोनारकमण्डलैः ॥ १३
आभूतलमभिप्रोतसप्तपातालमण्डलैः ।
क्वचिद्रत्नाकरैर्व्याप्तः पातालैर्विवरैरिव ॥ १४
सुरासुरशिरःसुप्तपादाम्भोरुहपांसुना ।
क्वचिद्भगवता तेन कपिलेन पवित्रितः ॥ १५
आसुरीसंभृतानन्तपूजनक्रीडनैषिणा ।
क्वचिद्भगवता तेन हाटकेशेन पालितः ॥ १६
तस्मिन्नसुरदोस्तम्भधार्यमाणमहाभरे ।
बभूव दानवो राजा विरोचनसुतो बलिः ॥ १७
साक्रन्देन समं सर्वैः सुरविद्याधरोरगैः ।

बल्याख्यानमुपक्रम्य पातालमिह वर्ण्यते ।
बलेश्च राज्यं निर्वेदान्मेरुशृङ्गे विचारणा ॥ १ ॥

इदानीं पद्माक्षकोशं त्रिजगदिति विवेकोदये त्रैलोक्यैश्वर्यस्याप्यल्पत्वं यदुक्तं तदुपपादनाय बल्याख्यानं वक्तुकामो वसिष्ठो भूमिकां रचयति—**अथवेति** । बुद्धिभेदेन अकस्माद्विचारोदयेन ॥ १ ॥ प्राप्तव्यमखिलं सर्वात्मकं ब्रह्म हृदि प्राप्तं तस्मिन्नेवामले पदे विश्रान्तं च ॥ २ ॥ अदभ्रमनल्पं तृष्णाख्यं तत्प्रसिद्धं महातमो मम चेतसः सकाशादपगतम् ॥ ३ ॥ अमृतापूरित इत्यादिविशेषणानि स्वस्य उडुराजस्य च साधारणानि ॥ ४ ॥ अशेषाणां संशयलक्षणानामम्भोदानां शरत्समय इव निवारक इति गुरुसंबोधनम् । वदतस्तव एषां वचसां श्रवणविषये तृप्तिं अलंबुद्धिं न गच्छामि ॥ ५ ॥ विज्ञानस्य संप्राप्तिं प्राप्तिप्रकारम् । अवनतं प्रणामोपनतं शिष्यं प्रति उपदेशने इति शेषः ॥ ६ ॥ तं तादृशं तत्त्वबोधं विचारपूर्वकतत्त्वावधारणम् । शाश्वतं नित्यात्मलाभफलम् । शाश्वतं नित्यं तत्त्वभूतमात्मस्वरूपबोधमिति वा ॥ ७ ॥ जगतः कोशे ब्रह्माण्डे । दिग्लक्षणे निकुञ्जके अल्पे कुञ्जे ॥ ८ ॥ क्षीरोदार्णवे क्षीरसमुद्रे जाताभिः । दानवानामर्णवोदरेऽपि निवासप्रसिद्धेः । अतएव तत्रोत्पन्नस्यामृतस्यांशुभिरवयवैर्दिग्धाभिरुपचिताभिरिव रम्याभिः । निर्विवरान्तरः पूर्ण इति यावत् ॥ ९ ॥ द्व्यादिद्विसहस्रान्तसंख्याकैर्जिह्वागणैरितरापेक्षया द्विगुणं व्याकरणच्छन्दःशास्त्रादिव्याख्यानादुद्दामरवैः । अतएव विलोलरसनायुगैः । भोगिभिः शेषादिभिः ॥ १० ॥ देहाद्रिभिर्वलितं व्याप्तमशेषं जगद्येषां तथाविधैर्विश्वोद्धरणस्य धर्मस्य यज्ञहविषो वा घस्मरैर्बलाद्भक्षकैः । कर्मधारयः ॥ ११ ॥ कुम्भलक्षणानां कूटानां शिखराणामग्रेषु विश्रान्तं वसुधामण्डलस्योदरं मध्यं येषाम् । उदरग्रहणादधोजम्बूद्वीपप्रान्तेष्वेव दिक्षु मध्यतनमण्डपस्तम्भवद्दिग्गजानां भूमिधारणे निवेश इति गम्यते । अतएव जम्बूद्वीपभुवं खनद्भिः सगरपुत्रैः प्रतिदिशं दिग्गजा दृष्टा इति पूर्वरामायणेऽप्युक्तम् । दन्तलक्षणानां द्रुमाणामद्रिभिः पर्वतवदाश्रयभूतैः ॥ १२ ॥ दुर्गन्ध इति भूतानां नारकिप्राणिनां आभाः स्वकर्मकृताः प्रतिभासा यत्र । अधः सर्वाधः । तत्र हि पुराणेषु नरकाः प्रसिद्धाः ॥ १३ ॥ क्वचित् अधस्तननारकप्रदेशमारभ्य आभूतलं उपरितनास्मदीयभूतलपर्यन्तं सप्तापूपप्रोतलोहशलाकावत् प्रोतसप्तपातालमण्डलैः रत्नानामाकरभूतैर्मैर्वादिगिरिपादैर्व्याप्तः । क्वचिच्च विवरैरिव संकुचितप्रायैः पातालैः पातालावयवैर्व्याप्तः ॥ १४ ॥ सुराणामसुराणां च शिरःसु सुप्ता इव विश्रान्ताः पादाम्भोरुहपांसवो यस्य तथाविधेन । त्रैलोक्यवन्दितेनेति यावत् ॥ १५ ॥ आसुरीभिरसुरस्त्रीभिः सेनाभिर्वा संभृतैरनन्तैर्बहुविधोपकरणैः पूजनानि क्रीडनानि च एष्टुमभिलषितुं शीलं यस्य तथाविधेन हाटकेशेन स्वर्णलिङ्गात्मना पुराणेषु प्रसिद्धेन शिवेन ॥ १६ ॥ तस्मिन् पाताललोके । असुराणां दोस्तम्भैर्धार्यमाणो महान् भरो राज्यभारो यत्र ॥ १७ ॥ तस्य पराक्रममाह—**साक्रन्देनेति** । आक्रन्दो रोदनं तत्सहितेन । वाञ्छितं बल-

१ राज्यभार इत्यस्मिन्ने पदं क्वचिन्न लभ्यते.

पादसंवाहनं यस्य सुरराजेन वाञ्छितम् ॥ १८
कोशस्त्रैलोक्यरत्नानां पाता सर्वशरीरिणाम् ।
धर्ता भुवनधर्तॄणां यस्य पालयिता हरिः ॥ १९
ऐरावणस्य संशोषं यन्नाम्ना कटभित्तयः ।
केकयेवाहिहृन्नाड्यो जग्मुराजग्मुरार्तताम् ॥ २०
प्रतापोग्रोष्मभिर्यस्य कल्पकाल इवाब्धयः ।
ययुः शोषोन्मुखाः सप्त सप्ततां कुपिताकृतेः ॥ २१
यदध्वराग्र्यधूमाभ्रराजयो वलिताब्धयः ।
ब्रह्माण्डकोटरस्यास्य सदा कवचतां ययुः ॥ २२
यस्य दृष्टिदृढाघातनुन्नाधारकुलाचलाः ।
विनमन्ति दिशः सर्वा लताः फलनता इव ॥ २३
लीलाविजितनिःशेषभुवनाभोगभूषणः ।
दशकोटीः स वर्षाणि दैत्यो राज्यं चकार ह ॥ २४
अथ गच्छत्स्वनल्पेषु युगेष्वावर्तवृत्तिषु ।
सुरासुरमहौघेषु प्रोत्पतत्सु पतत्सु च ॥ २५
अजस्रमतिभुक्तेषु त्रैलोक्योदारवृत्तिषु ।
भोगेष्वभजदुद्वेगं बलिर्दानवनायकः ॥ २६
मेरुशृङ्गशिखारत्नकृतवातायनस्थितः ।
एकदा चिन्तयामास स्वयं संसारसंस्थितिम् ॥ २७
कियन्तमिदमक्षुण्णशक्तिनैव मयाधुना ।
साम्राज्यमिह कर्तव्यं विहर्तव्यं जगत्त्रये ॥ २८
महता मम राष्ट्रेण त्रैलोक्याद्भुतकारिणा ।
किं वा भवति भुक्तेन भूरिभोगातिहारिणा ॥ २९
आपातमात्रमधुरमावश्यकपरिक्षयम् ।
भोगोपभोगमात्रं मे किं नामेदं सुखावहम् ॥ ३०
पुनर्दिनैककलनाशर्वरीसंस्थितिः पुनः ।
पुनस्तान्येव कर्माणि लज्जायै नच तुष्टये ॥ ३१
पुनरालिङ्ग्यते कान्ता पुनरेव च भुज्यते ।
सेयं शिशुजनक्रीडा लज्जायै महतामिह ॥ ३२
तमेव भुक्तविरसं व्यापारौघं पुनःपुनः ।
दिवसे दिवसे कुर्वन्प्राज्ञः कस्मान्न लज्जते ॥ ३३
पुनर्दिनं पुना रात्रिः पुनः कार्यपरम्पराः ।
पुनःपुनरहं मन्ये प्राज्ञस्येयं विडम्बना ॥ ३४
ऊर्मितां पुनरासाद्य पुनरेति निरूर्मिताम् ।
यथा जलं तथैवायं तां तामेति क्रियां जनः ॥ ३५
उन्मत्तचेष्टिताकारा पुनःपुनरियं क्रिया ।
जनं हासयते प्राज्ञं बाललीलोपमा मुहुः ॥ ३६
कृतयाप्यनया नित्यं क्रियया कृतकार्यया ।
कोऽर्थः स्यात्तादृशो येन पुनः कर्म न विद्यते ॥ ३७
कियन्तमथवा कालमिदमाडम्बरं महत् ।
इहास्माभिरनुष्ठेयं किं तावत्समवाप्यते ॥ ३८
अनन्तेयं शिशुक्रीडा वस्तुशून्यैव वस्तुतः ।
आवृत्त्या क्रियते व्यर्थमनर्थप्रसरार्थिभिः ॥ ३९
फलमेकं महोदारं नेह पश्यामि किंचन ।
कार्यमस्तीतरत्प्राप्ते यस्मिन्नाम न किंचन ॥ ४०
भोगादृते किमन्यत्स्यात्तद्लभ्यमविनाशि यत् ।
एवं संचिन्तयास्याशु दध्यौ मत्वेत्यसौ बलिः ॥ ४१

दिति शेषः ॥ १८ ॥ कुतस्तस्येदृशं सामर्थ्यं तत्राह—**कोश** इति । त्रैलोक्यलक्षणानां रत्नानां कोश इव स्वोदरे रक्षिता । भुवनधर्तॄणां त्रैलोक्यपालकानां इन्द्रमनुशेषादीनां धर्ता आधारभूतः । यस्य बलेः ॥ १९ ॥ ऐरावणस्यैरावतस्य । कटभित्तयः गण्डस्थलानि । बहुवचनं सप्तानां मदस्थानानामुपलक्षणार्थम् । यन्नाम्ना श्रुतेनेति शेषः । केकया मयूरवाण्या अहीनां हृन्नाड्यो हृदयशिरा इव शोषं जग्मुरार्ततां भयखिन्नतां चाजग्मुः ॥२०॥ कुपिताकृतेर्यस्य प्रतापस्य उग्रैर्दुःसहैरूष्मभिरुष्णस्पर्शैः सप्त महाब्धयः शोषोन्मुखाः सन्तः कल्पकाल इव गर्तसंख्यामात्रेण सप्ततां ययुर्न जलादिपूरसंख्ययेत्यर्थः ॥ २१ ॥ अध्वराग्र्याः अश्वमेधास्तदीयधूमप्रभवा अभ्रपङ्क्तयः । जलपानाय वलिता अब्धयो याभिः । कोटरपदेन तत्स्थाः प्राणिनो गृह्यन्ते । वृष्ट्या जगत्पालनहेतुत्वादावरकत्वाच्च कवचतां वर्मताम् ॥२२॥ दृष्ट्या दृढाघातस्तिर्यक्प्रेक्षणं तेन नुन्ना भूम्याधारकुलाचला यासां तथाविधा दिशः । भूमेर्नमने दिशामधःप्रदेशे दर्शनान्नमनोत्प्रेक्षा ॥२३॥ लीलया विजिता अशेषाणां भुवनाभोगानां लोकसंस्थानानां भूषणभूता इन्द्रादयो येन ॥ २४ ॥ आवर्तवृत्तिषु जलावर्तसदृशस्वभावेषु ॥ २५ ॥ त्रैलोक्येऽप्युदारवृत्तिषूत्कृष्टस्थितिषु भोगेषु भुक्तेषु सत्सु विषयभूतेषु च उद्वेगं [illegible]मभजत् ॥ २६ ॥

मेरुशृङ्गस्य शिखायामग्रभागे रत्नकृतहर्म्यवातायने स्थित उपविष्टः सन् ॥ २७ ॥ न क्षुण्णा परैरकुण्ठिता शक्तिर्यस्य तथाविधेन मया ॥ २८ ॥ राष्ट्रेण भुक्तेन किं वा भवति । भूरिभिर्भोगैरतिशयेन हारिणा मनोहारिणा ॥ २९ ॥ भोगोपभोगमात्रं कृत्स्नोपभोगः । पुरुषार्थान्तरव्यावृत्तये वा मात्रशब्दः ॥ ३० ॥ तान्येव स्नानभोजनशयनादीनि । नाभिनवं किंचित्कर्म सुखं वास्तीत्यर्थः । अतो महतां पुरो लाम्पट्यं लज्जायै नतु तुष्टये ॥३१॥ उक्तमेव स्फुटयति—**पुन**रित्यादिना ॥ ३२ ॥ ३३ ॥ प्राज्ञस्य दृश्या इयं विडम्बना पुनःपुनः कृतानुकरणमिवोपहासहेतुरित्यर्थः ॥ ३४ ॥ व्यर्थकृतानुकरणे दृष्टान्तमाह—**ऊर्मिता**मिति ॥ ३५ ॥ ३६ ॥ येन लब्धेन पुनः कर्म न विद्यते कृतकृत्यता स्यात्तादृशोऽर्थः कः स्यात् ॥ ३७ ॥ महदाडम्बरं दृष्टादृष्टार्थकर्मजातम् ॥ ३८ ॥ अनन्ता प्रवाहानन्ता । उत्पन्नप्रध्वंसस्वभावत्वात् । वस्तुतः परमार्थतो वस्तुशून्यैव इयं शिशुक्रीडा अनर्थप्रसरो दुःखपरम्पराप्राप्तिस्तदर्थिभिः क्रियते ॥ ३९ ॥ यस्मिन्प्राप्ते सति इतरन्न किंचन कार्यं कर्तव्यमस्ति तादृशं फलं पुरुषार्थमिह न किंचन पश्यामि ॥ ४० ॥ भोगात् क्षणिकतुच्छविषयसुखादृतेऽन्यद्यदविनाशि नित्यं तल्लभ्यं सुखं किं स्या-[illegible]स्यामीति मत्वा असौ बलिराशु दध्याविल्यन्वयः

# चतुर्विंशः सर्गः २४

वलिरुवाच ।
केनोपायेन बलवान्स तात परिजीयते ।
कोऽसावतिमहावीर्यः सर्वं प्रकथयाशु मे ॥ १
विरोचन उवाच ।
मन्त्रिणस्तस्य तनय नित्याजेयस्थितेरपि ।
शृणु वच्मि सुसाधत्वं येनासौ परिजीयते ॥ २
पुत्र युक्त्या गृहीतोऽसौ क्षणादायाति वश्यताम् ।
युक्तिं विना दहत्येष आशीविष इवोद्धतः ॥ ३
बालवल्लालयित्वैनं युक्त्या नियमयन्ति ये ।
राजानं तं समालोक्य पदमासादयन्ति ते ॥ ४
दृष्टे तस्मिन्महीपाले स मन्त्री वशमेति च ।
तस्मिंश्च मन्त्रिण्याक्रान्ते स राजा दृश्यते पुनः ॥ ५
यावन्न दृष्टो राजासौ तावन्मन्त्री न जीयते ।
मन्त्री च यावन्न जितस्तावद्राजा न दृश्यते ॥ ६
राजन्यदृष्टे दुर्मन्त्री स दुःखाय फलत्यति ।
मन्त्रिण्यनिर्जिते राजा सोऽत्यन्तं यात्यदृश्यताम् ॥ ७
अभ्यासेनोभयं तस्मात्सममेव समारभेत् ।
राजसंदर्शनं तस्य मन्त्रिणश्च पराजयम् ॥ ८
पौरुषेण प्रयत्नेन स्वभ्यासेन शनैःशनैः ।
द्वयं संपाद्य यत्नेन देशमाप्नोषि तं शुभम् ॥ ९
त्वमभ्यासे फलीभूते तं देशमभिगच्छसि ।
यदि दैत्येन्द्र तद्भूयो मनागपि न शोचसि ॥ १०
संशान्तसकलायासा नित्यप्रमुदिताशयाः ।
साधवस्तत्र तिष्ठन्ति प्रशान्ताशेषसंशयाः ॥ ११
शृणु कः पुत्र देशोऽसौ सर्वं प्रकटयामि ते ।
देशनाम्ना मयोक्तस्ते मोक्षः सकलदुःखहा ॥ १२
राजा तु तत्र भगवानात्मा सर्वपदातिगः ।
तेन मन्त्री कृतः प्राज्ञो मनो नाम महामते ॥ १३
मनोनिष्ठतया विश्वमिदं परिणतिं गतम् ।
घटत्वेनेव मृत्पिण्डो धूमोऽम्बुदतयैव च ॥ १४
तस्मिञ्जिते जितं सर्वं सर्वमासादितं भवेत् ।
दुर्जयं तद्विजानीयाद्युक्त्यैव परिजीयते ॥ १५
बलिरुवाच ।
या युक्तिर्भगवंस्तस्य चित्तस्याक्रमणे स्फुटम् ।
तां मे कथय तत्तावद्यथा जेष्यामि दारुणम् ॥ १६
विरोचन उवाच ।
विषयान्प्रति भोः पुत्र सर्वानेव हि सर्वथा ।
अनास्था परमा ह्येषा सा युक्तिर्मनसो जये ॥ १७
एषैव परमा युक्तिरनयैव महामदः ।
स्वमनोमत्तमातङ्गो द्रागित्येवावदम्यते ॥ १८
एषा ह्यत्यन्तदुष्प्रापा सुप्रापा च महामते ।
अनभ्यस्तातिदुष्प्रापा स्वभ्यस्ता प्राप्यते सुखम् ॥ १९
क्रमादभ्यस्यमानैषा विषयारतिरात्मज ।
सर्वतः स्फुटतामेति सेकसिक्ता लता यथा ॥ २०
नासाद्यते ह्यनभ्यस्ता काङ्क्षतापि शठात्मना ।
पुत्र शालिरिवाऽनुप्ता तस्मादेनां समाहर ॥ २१
तावद्भ्रमन्ति दुःखेषु संसारावटवासिनः ।
विरतिं विषयेष्वेते यावन्नायान्ति देहिनः ॥ २२
अभ्यासेन विना कश्चिन्नाप्नोति विषयारतिम् ।
अप्यत्यन्तबलो देही देशान्तरमिवागतिः ॥ २३
ध्येयत्यागमतोऽजस्रं ध्यायता देहधारिणा ।
भोगेष्वरतिरभ्यासाद्वृद्धिं नेया लता यथा ॥ २४
पुरुषार्थाद्दते पुत्र नेह संप्राप्यते शुभम् ।
क्रियाफलं परिप्राप्तुं हर्षामर्षविवर्जितम् ॥ २५

इह दुर्मन्त्रिणस्तस्य जयोपायः प्रकीर्त्यते ।
राजसंदर्शनोपायवैराग्यादिसमन्वितः ॥ १ ॥

प्रश्नः स्पष्टः ॥१॥ सुसाधत्वं सुखजयोपायमिति यावत् ॥२॥ ॥३॥ लालयित्वा अल्पविषयप्रदानेन मुहुर्विषयदोषख्यापनेन च वञ्चयित्वा । युक्त्या राजयोगाख्यया । पदं राजपदम् ॥ ४ ॥ पुनःशब्दो वाक्यालंकारार्थः ॥ ५ ॥ ६ ॥ अति दुःखाय रागद्वेषादीन्फलति ॥ ७ ॥ संदर्शनपराजयशब्दौ तत्तदुपायपरौ ॥८॥ द्वयं राजसंदर्शनं मन्त्रिपराजयं च ॥ ९ ॥ फलीभूते सफलीभूते, ज्ञानफलात्मना परिणते वा ॥ १० ॥ तत्र के तिष्ठन्ति तानाह—**संशान्ते**ति । निवृत्तसर्वानर्था निरतिशयनित्यानन्दपूर्णाश्च ये साधवस्ते तत्र तिष्ठन्तीत्यर्थः ॥११॥ इदानीं गूढोक्तिं विवरीतुमाह—**शृण्वि**ति ॥ १२ ॥ सर्वाणि मानुषानन्दादिहैरण्यगर्भानन्दान्तपदान्यतीत्य गच्छतीति सर्वपदातिगः सर्ववाङ्मनसागोचरश्च । प्राज्ञः सर्वप्रज्ञासमष्टिरूपः ॥ १३ ॥ मनोनिष्ठतया मनसि वासनात्मकसूक्ष्मभावेन स्थिततयेत्यर्थः । परिणतिः स्थौल्यम् । घटत्वेन घटभावेन । मृत्पिण्डः पिण्डान्तर्गतमृद्भागः ॥ १४ ॥ जेतव्यं सर्वं जितमासादयितव्यं सर्वमासादितं भवेदित्यर्थः ॥ १५ ॥ आक्रमणे आस्कन्दने । जये इति यावत् ॥ १६ ॥ अनास्था अस्पृहा । युक्तिरुपायः ॥ १७ ॥ द्रागित्येव झटित्येव । अवदम्यते अवमत्य दम्यते । 'मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज' इत्यभियुक्तोक्तेः ॥१८॥ एषा युक्तिः ॥१९॥ विषयेष्वरतिर्विरक्तिः । स्फुटतां शान्त्यादिविटपविस्तारव्यक्तताम् ॥ २० ॥ शठात्मना भोगलुब्धमनसा । अनुप्ता सुक्षेत्रेष्वनुप्ता । समाहर अभ्यासेन स्थिरीकुरु ॥ २१ ॥ विरतिं वैराग्यम् ॥ २२ ॥ अगतिर्गमनशून्यः ॥ २३ ॥ ध्येयत्यागं प्रागुक्तजीवन्मुक्तिहेतुध्येयवासनात्यागम् । ध्यायता वाञ्छता ॥ २४ ॥ नाकस्मात्सर्वे विषयास्त्यक्तुं शक्याः किंतु क्रमेणैकैकं विषयं चिरं सक्त्वा सकृत्सकृत्कदाचित्सेवमानः क्रमात्सर्वं वैराग्य-

भोक्तुं न किंचिच्छक्नोति न च जानाति किंचन ।
राजार्थं केवलं सर्वं करोत्यज्ञोऽपि सन्सदा ॥ ८
स एव सर्वकार्यैककर्ता तस्य महीपतेः ।
राजा केवलमेकान्ते स्वस्थ एवावतिष्ठते ॥ ९

बलिरुवाच ।

आधिव्याधिविनिर्मुक्तः कः स देशो महामते ।
कथमासाद्यते चापि केन वाधिगतः प्रभो ॥ १०
कः स तादृग्विधो मन्त्री राजा चापि महाबलः ।
हेलालूनजगज्जालैर्योऽस्माभिरपि नो जितः ॥ ११
अपूर्वमेतदाख्यानं ममामरभयप्रद ।
कथयापनयास्माकं हृद्व्योम्नः संशयाम्बुदम् ॥ १२

विरोचन उवाच ।

स तत्र मन्त्री बलवान्देवासुरगणैः सुत ।
समेतैर्लक्षगुणितैरपि नाक्रम्यते मनाक् ॥ १३
नासौ सहस्रनयनो न यमो न धनेश्वरः ।
नामरो नासुरो वापि यदि पुत्रक जीयते ॥ १४
तत्रासिमुसलप्रासवज्रचक्रगदादयः ।
हेतयः कुण्ठतां यान्ति दृषदीवोत्पलाहतिः ॥ १५
गम्योऽसौ नास्त्रशस्त्राणां न भटोद्भवकर्मणाम् ।
तेन देवासुराः सर्वे सर्वदैव वशीकृताः ॥ १६
अविष्णुनापि तेनेह हिरण्याक्षादयोऽसुराः ।
पातिताः कल्पवातेन मेरुकल्पद्रुमा इव ॥ १७
नारायणादयो देवा अपि सर्वावबोधिनः ।
तेनाक्रम्य यथाकाममवटेषु निवेशिताः ॥ १८
तत्प्रसादेन साटोपं पञ्चमात्रशरः स्मरः ।
त्रैलोक्यमिदमाक्रम्य सम्राडिव विवल्गति ॥ १९
सुरासुरौघगृह्योऽपि गुणहीनोऽपि दुर्मतिः ।
दुराकृतिरपि क्रोधस्तत्प्रसादेन जृम्भते ॥ २०
देवासुरसहस्राणां संगरो यः पुनः पुनः ।
तदेतत्क्रीडनं तस्य मन्त्रिणो मन्त्रशालिनः ॥ २१
स मन्त्री केवलं पुत्र तेनैव प्रभुणा यदि ।
जीयते तत्सुजेयोऽसावन्यथा त्वचलोपमः ॥ २२
तस्यैव तत्प्रभोः काले जेतुं तं मन्त्रिणं निजम् ।
इच्छा संजायते तेन जीयतेऽसावयत्नतः ॥ २३
त्रैलोक्यबलिनां मल्लमुच्छ्वासितजगत्त्रयम् ।
जेतुं चेदस्ति ते शक्तिस्तत्पराक्रमवानसि ॥ २४
तस्मिन्नभ्युदिते सूर्ये त्रैलोक्यकमलाकराः ।
इमे विकासमायान्ति विलीयन्तेऽस्तमागते ॥ २५
तमेवमेकया बुद्ध्या व्यामोहपरिहीनया ।
यदि जेतुं समर्थोऽसि धीरस्तदसि सुव्रत ॥ २६
तस्मिञ्जिते जिता लोका भविष्यन्त्यजिता अपि ।
अजिते त्वजिता एते चिरकालजिता अपि ॥ २७
तस्मादनन्तसिद्ध्यर्थं शाश्वताय सुखाय च ।
तज्जये यत्नमातिष्ठ कष्टयापि हि चेष्टया ॥ २८
ससुरदनुजनागयक्षसंघं
सनरमहोरगकिन्नरं समेतम् ।
त्रिजगदपि वशीकृतं समन्ता-
दतिबलिना ननु हेलयैव तेन ॥ २९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे विरोचनवचनं नाम त्रयोविंशः सर्गः ॥ २३ ॥

---

लापयति ॥७॥ अज्ञोऽपि जडोऽपि सन् ॥ ८ ॥ एकान्ते अद्वितीयस्वभावे ॥ ९ ॥ बलिप्रश्ना निगदव्याख्याताः ॥ १० ॥ ॥ ११ ॥ कथया अस्माभिस्तदजये निमित्तकथनेन ॥ १२ ॥ तत्रादावन्ते पृष्टं तदजये निमित्तमेव विस्तरेणाह—**स तत्रे**त्यादिना । मनाक् ईषदपि ॥ १३ ॥ स मन्त्री किं द्वितीय इन्द्र उत यम उत कुबेर उत कश्चिदमरोऽसुरो वा महानुभावो यतो जेतुमशक्यो नेत्याह—**नासा**विति । यदि सहस्राक्षादिः कश्चित्स्यात्तर्हि त्वया जीयत एवेत्यर्थः ॥ १४ ॥ किं मम आयुधानि भटा वा न सन्ति सन्तु नाम नासौ तद्विषय इत्याह—**तत्रे**ति ॥ १५ ॥ प्रत्युत त्वदादयस्तेनैव जिता इत्याह—**तेने**ति ॥१६॥ अस्मत्पूर्वजादयोऽपि तेनैव वशीकृत्य विष्णुना घातिता इत्याशयेनाह—**अविष्णुनापी**ति । कल्पवातेन प्रलयवायुना ॥ १७ ॥ सर्वेषामवबोधिनो विवेकोपदेष्टारोऽपि तेनैव भृगुशापादिनिमित्तापादनेनाक्रम्य वशीकृत्य । अवटेषु गर्भश्वभ्रेषु ॥ १८ ॥ स्मरः कामः पञ्चमात्रशरोऽपि तत्प्रसादेनेदं त्रैलोक्यमाक्रम्य जित्वा विवल्गति विजृम्भते ॥ १९ ॥ सुरासुरौघा गृह्या अस्वैरिणो येन । 'पदास्वैरिबाह्यापक्ष्येषु च' इति क्यप् ॥ २० ॥ २१ ॥ प्रभुणा आत्मना । यदि जीयते तत्तदा सुजेयो जय्यः ॥ २२ ॥ काले बहुतरसुकृतपरिपाकाद्विवेकोदयकाले । अयत्नतो ज्ञानमात्रतः ॥ २३ ॥ त्रैलोक्ये यावन्तो बलिनस्तेषां मल्लं बलेन जेतारम् । उच्छ्वासितं म्रियमाणजन्तुवदूर्ध्वश्वसनशीलं कृतं जगत्त्रयं येन । तत्तर्हि ॥ २४ ॥ तस्य न सर्वजयशक्तिमात्रं किंतु त्रैलोक्यजननादिशक्तिरप्यस्तीत्याह—**तस्मिन्नि**ति । तस्मिन् सूर्ये इति व्यस्तरूपकम् ॥ २५ ॥ एकया निश्चितया एकाग्रया च । तत्तर्हि धीरोऽसि ॥ २६ ॥ २७ ॥ अनन्ता याः सिद्धयस्तदर्थम् । अन्तो मृत्युस्तदभावोऽनन्तं मृत्युजयस्तत्सिद्ध्यर्थं च । कष्टया श्रमसाध्ययापि सर्वत्यागादिचेष्टया ॥ २८ ॥ पुनस्तत्प्रभावमेवोक्तमनूद्योपसंहरति—**ससु**रेति । नागा दिग्गजाः । महोरगाः शेषादयः ॥ २९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे विरोचनवचनं नाम त्रयोविंशः सर्गः ॥ २३ ॥

# चतुर्विंशः सर्गः २४

बलिरुवाच ।
केनोपायेन बलवान्स तात परिजीयते ।
कोऽसावतिमहावीर्यः सर्वं प्रकथयाशु मे ॥ १
विरोचन उवाच ।
मन्त्रिणस्तस्य तनय नित्याजेयस्थितेरपि ।
शृणु वच्मि सुसाधत्वं येनासौ परिजीयते ॥ २
पुत्र युक्त्या गृहीतोऽसौ क्षणादायाति वश्यताम् ।
युक्तिं विना दहत्येष आशीविष इवोद्धतः ॥ ३
बालवल्लालयित्वैनं युक्त्या नियमयन्ति ये ।
राजानं तं समालोक्य पदमासादयन्ति ते ॥ ४
दृष्टे तस्मिन्महीपाले स मन्त्री वशमेति च ।
तस्मिंश्च मन्त्रिण्याक्रान्ते स राजा दृश्यते पुनः ॥ ५
यावन्न दृष्टो राजासौ तावन्मन्त्री न जीयते ।
मन्त्री च यावन्न जितस्तावद्राजा न दृश्यते ॥ ६
राजन्यदृष्टे दुर्मन्त्री स दुःखाय फलत्यति ।
मन्त्रिण्यनिर्जिते राजा सोऽत्यन्तं यात्यदृश्यताम् ॥ ७
अभ्यासेनोभयं तस्मात्सममेव समारभेत् ।
राजसंदर्शनं तस्य मन्त्रिणश्च पराजयम् ॥ ८
पौरुषेण प्रयत्नेन स्वभ्यासेन शनैःशनैः ।
द्वयं संपाद्य यत्नेन देशमाप्नोषि तं शुभम् ॥ ९
त्वमभ्यासे फलीभूते तं देशमभिगच्छसि ।
यदि दैत्येन्द्र तद्भूयो मनागपि न शोचसि ॥ १०
संशान्तसकलायासा नित्यप्रमुदिताशयाः ।
साधवस्तत्र तिष्ठन्ति प्रशान्ताशेषसंशयाः ॥ ११
शृणु कः पुत्र देशोऽसौ सर्वं प्रकटयामि ते ।
देशनाम्ना मयोक्तस्ते मोक्षः सकलदुःखहा ॥ १२
राजा तु तत्र भगवानात्मा सर्वपदातिगः ।
तेन मन्त्री कृतः प्राज्ञो मनो नाम महामते ॥ १३
मनोनिष्ठतया विश्वमिदं परिणतिं गतम् ।
घटत्वेनेव मृत्पिण्डो धूमोऽम्बुदतयैव च ॥ १४
तस्मिञ्जिते जितं सर्वं सर्वमासादितं भवेत् ।
दुर्जयं तद्विजानीयाद्युक्त्यैव परिजीयते ॥ १५
बलिरुवाच ।
या युक्तिर्भगवंस्तस्य चित्तस्याक्रमणे स्फुटम् ।
तां मे कथय तत्त्वाद्यथा जेष्यामि दारुणम् ॥ १६
विरोचन उवाच ।
विषयान्प्रति भोः पुत्र सर्वानेव हि सर्वथा ।
अनास्था परमा ह्येषा सा युक्तिर्मनसो जये ॥ १७
एषैव परमा युक्तिरनयैव महामदः ।
स्वमनोमत्तमातङ्गो द्रागित्येवावदम्यते ॥ १८
एषा ह्यत्यन्तदुष्प्रापा सुप्रापा च महामते ।
अनभ्यस्तातिदुष्प्रापा स्वभ्यस्ता प्राप्यते सुखम् ॥ १९
क्रमादभ्यस्यमानैषा विषयारतिरात्मज ।
सर्वतः स्फुटतामेति सेकसिक्ता लता यथा ॥ २०
नासाद्यते ह्यनभ्यस्ता काङ्क्षतापि शठात्मना ।
पुत्र शालिरिवाद्युप्ता तस्मादेनां समाहर ॥ २१
तावद्भ्रमन्ति दुःखेषु संसारावटवासिनः ।
विरतिं विषयेष्वेते यावन्नायान्ति देहिनः ॥ २२
अभ्यासेन विना कश्चिन्नाप्नोति विषयारतिम् ।
अप्यत्यन्तबलो देही देशान्तरमिवागतिः ॥ २३
ध्येयत्यागमतोऽजस्रं ध्यायता देहधारिणा ।
भोगेष्वरतिरभ्यासाद्वृद्धिं नेया लता यथा ॥ २४
पुरुषार्थादृते पुत्र नेह संप्राप्यते शुभम् ।
क्रियाफलं परिप्राप्तुं हर्षामर्षविवर्जितम् ॥ २५

---

इह दुर्मन्त्रिणस्तस्य जयोपायः प्रकीर्त्यते ।
राजसंदर्शनोपायवैराग्यादिसमन्वितः ॥ १ ॥

प्रश्नः स्पष्टः ॥१॥ सुसाधत्वं सुखजयोपायमिति यावत् ॥२॥ ॥३॥ लालयित्वा अल्पविषयप्रदानेन मुहुर्विषयदोषख्यापनेन च वञ्चयित्वा । युक्त्या राजयोगाख्यया । पदं राजपदम् ॥ ४ ॥ पुनःशब्दो वाक्यालंकारार्थः ॥ ५ ॥ ६ ॥ अति दुःखाय रागद्वेषादीन्फलति ॥ ७ ॥ संदर्शनपराजयशब्दौ तत्तदुपायपरौ ॥८॥ द्वयं राजसंदर्शनं मन्त्रिपराजयं च ॥ ९ ॥ फलीभूते सफलीभूते, ज्ञानफलात्मना परिणते वा ॥ १० ॥ तत्र के तिष्ठन्ति तानाह—**संशान्ते**ति । निवृत्तसर्वानर्था निरतिशयनित्यानन्दपूर्णाश्च ये साधवस्ते तत्र तिष्ठन्तीत्यर्थः ॥११॥ इदानीं गूढोक्तिं विवरीतुमाह—**शृण्वि**ति ॥ १२ ॥ सर्वाणि मानुषानन्दादिहैरण्यगर्भानन्दान्तपदान्यतीत्य गच्छतीति सर्वपदातिगः सर्ववाङ्मनसागोचरश्च । प्राज्ञः सर्वप्रज्ञासमष्टिरूपः ॥ १३ ॥ मनोनिष्ठतया मनसि वासनात्मकसूक्ष्मभावेन स्थिततयेत्यर्थः । परिणतिः स्थौल्यम् । घटत्वेन घटभावेन । मृत्पिण्डः पिण्डान्तर्गतमृद्भागः ॥ १४ ॥ जेतव्यं सर्वं जितमासादयितव्यं सर्वमासादितं भवेदित्यर्थः ॥ १५ ॥ आक्रमणे आस्कन्दने । जये इति यावत् ॥ १६ ॥ अनास्था अस्पृहा । युक्तिरुपायः ॥ १७ ॥ द्रागित्येव झटित्येव । अवदम्यते अवमत्य दम्यते । 'मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज' इत्यभियुक्तोक्तेः ॥१८॥ एषा युक्तिः ॥१९॥ विषयेष्वरतिर्विरक्तिः । स्फुटतां शान्त्यादिविटपविस्तारव्यक्तताम् ॥ २० ॥ शठात्मना भोगलुब्धमनसा । अन्युप्ता सुक्षेत्रेष्वनुप्ता । समाहर अभ्यासेन स्थिरीकुरु ॥ २१ ॥ विरतिं वैराग्यम् ॥ २२ ॥ अगतिर्गमनशून्यः ॥ २३ ॥ ध्येयत्यागं प्रागुक्तजीवन्मुक्तिहेतुध्येयवासनात्यागम् । ध्यायता वाञ्छता ॥ २४ ॥ नाकस्मात्सर्वे विषयास्त्यक्तुं शक्याः किंतु क्रमेणैकैकं विषयं चिरं त्यक्त्वा सकृत्सकृत्कदाचित्सेवमानः क्रमात्सर्वं वैराग्य-

दैवमित्युच्यते लोके न दैवं देहवत्क्वचित् ।
अवश्यं भवितव्याख्या स्वेहया नियतिश्च या ॥ २६
उच्यते दैवशब्देन सा नरैरेव नेतरैः ।
यद्यस्येह यदा यत्र संपन्नं समतां गतम् ॥ २७
हर्षामर्षविनाशाय तद्दैवमिति कथ्यते ।
दैवं नियतिरूपं च पौरुषेणोपजीयते ॥ २८
सम्यग्ज्ञानविलासेन मृगतृष्णाभ्रमो यथा ।
यथा संकल्प्यते यद्यत्पौरुषेण तथैव तत् ॥ २९
फलवत्तागृहीतत्वे फलवत्तासुखप्रदम् ।
कर्ता नो मन एवेह यत्कल्पयति तत्तथा ॥ ३०
नियतिं यादृशीमेतत्संकल्पयति सा तथा ।
नियतानियतान्कांश्चिदर्थाननियतानपि ॥ ३१
करोति चित्तं तेनैतच्चित्तं नियतियोजकम् ।
नियत्यां नियतिं कुर्वन्कदाचित्स्वार्थनामिकाम् ॥ ३२
स्फुरत्यस्मिञ्जगत्कोशे जीवो व्योम्नीव मारुतः ।
नियत्या विहितं कुर्वन्कदाचिन्नियतिं चरः ॥ ३३
संज्ञार्थं रूढनियतिशब्दः स्फुरति सानुवत् ।
तस्माद्यावन्मनस्तावन्न दैवं नियतिर्न च ॥ ३४
मनस्यस्तंगते साधो यद्भवत्यस्तु तत्तथा ।
जीवो हि पुरुषो जातः पौरुषेण स यद्यथा ॥ ३५
संकल्पयति लोकेऽस्मिंस्तत्तथा तस्य नान्यथा ।
पुरुषार्थादृते पुत्र न किंचिदिह विद्यते ॥ ३६
परं पौरुषमाश्रित्य भोगेष्वरतिमाहरेत् ।
न भोगेष्वरतिर्यावज्जायते भवनाशनी ॥ ३७
न परा निर्वृतिस्तावत्प्राप्यते जयदायिनी ।
विषयेषु रतिर्यावत्स्थिता संमोहकारिणी ॥ ३८
तावद्भवदशादोला विलोलान्दोलनस्थितिः ।
अभ्यासेन विना पुत्र न कदाचन दुःखदा ॥ ३९
भोगभोगिभरप्रोता कदाशा विनिवर्तते ॥ ४०

बलिरुवाच ।

भोगेष्वरतिरेवान्तः कथं सर्वासुरेश्वर ।
स्थितिमायाति जीवस्य दीर्घजीवितदायिनी ॥ ४१

विरोचन उवाच ।

आत्मावलोकनलता फलिनी फलति स्फुटम् ।
जीवस्य भोगेष्वरतिं शरदीव महालता ॥ ४२

---

परिपाके त्यजेत्, तत्र च पुरुषप्रयत्नदार्ढ्यं पुनर्हर्षामर्षलौल्यप्रसङ्गवारकमावश्यकमित्याशयेनाह—**पुरुषार्था**दिति । पुरुषार्थः पुरुषप्रयत्नस्तस्मादृते हर्षामर्षविवर्जितं क्रियाफलं परिप्राप्तुमनुकूलं शुभं साधनं न संप्राप्यते ॥ २५ ॥ ननु दैवादेव तत्प्राप्तिः किं न स्यात्तत्राह—**दैव**मिति । स्वा स्वीया या नियतिप्रयुक्ता शुभाशुभक्रिया सैव नरैर्मानुषदृष्टिभिर्दैवशब्देनोच्यते न इतरैर्दिव्यशास्त्रीयदृष्टिमद्भिरिति परेणान्वयः ॥ २६ ॥ ननु विनापि प्रयत्नं दैवादेव केषांचिद्धर्षामर्षोपशमो दृश्यते तत्कथं तत्राह—**यदि**ति । हर्षामर्षहेतुकर्मक्षये सति यदेव हर्षामर्षविनाशाय संपन्नं तदेव जनैर्दैवमिति कथ्यत इत्यर्थः ॥ २७ ॥ अस्तु त्वदुक्तमेव दैवं किं ततस्तत्राह—**दैव**मिति । मदुक्तं नियतिरूपं दैवं तु वैराग्यदार्ढ्याभ्यासादिपौरुषेण उप समीपे अल्पकालेनैव जीयते मरुभूमितत्त्वज्ञानविलासेन मृगतृष्णाभ्रम इवेत्यर्थः ॥ २८ ॥ ननु यदि दैवाख्या नियतिः पौरुषाख्यया तया जीयते तर्हि तस्याः फलनियमाभावादनियतत्वप्रसङ्ग इति चेदिष्टापत्तिः । सर्वेषु मनःसंकल्पजेष्वसति बाधके प्रमाणैः फलवत्तया गृहीतत्वे फलवत्ता सुखप्रदमित्येव नियमाभ्युपगमादित्याह—**यथे**ति ॥ २९ ॥ नचैवमनियतित्वप्रसङ्गः मनसा कर्त्रा ईदृशनियमस्यैव कल्पनान्नियतित्वव्यवहारसिद्धेरित्याशयेनाह—**कर्ते**ति । कर्ता जीवो नः अस्माकं मते मन एव ॥ ३० ॥ नियतिं यादृशीमेतत्संकल्पयतीत्येतदुपपादयति—**नियतानियताँ**निति । उत्सर्गतः फलनियतानपवादविषयेष्वनियतान् व्यावहारिकानर्थाननियतान् अत्यन्तं फलानियतान् प्रातिभासिकानपि करोतीति परेणान्वयः ॥ ३१ ॥ तेन हेतुना एतच्चित्तं स्वसंकल्पितार्थानुसारेण फलनियतेरपि योजकमुपपादकमित्यर्थः । अतएवार्थस्य पारमार्थिकत्वे तद्विषयबोधस्य नियतफलत्वमेव न दैववत्कर्मवद्वा अनियतफलत्वमित्याशयेनाह—**नियत्या**मिति । अयं चित्तात्मा जीवः कदाचिन्मोक्षाधिकृतजन्मनि नियत्यां नित्यनियतैकस्वभावे परमात्मनि स्वार्थनामिकां प्रत्यक्परमार्थगोचरसाक्षात्कारनामिकां नियतिं समानाकारवृत्तिधारां निर्विकल्पकसमाधिमिति यावत् । कुर्वन्नस्मिन् जगत्कोशे व्योम्नि मारुत इव असङ्गः स्फुरति स्वस्वभावे प्रकाशत इत्यर्थः ॥ ३२ ॥ कदाचिद्व्युत्थानकाले नियत्या शास्त्रलक्षणया विहितं स्वस्वाश्रमोचितं कर्म कुर्वन् संज्ञार्थमज्ञजनबोधनार्थमेते याज्ञिकाः शिष्टाः सदाचारप्रवर्तका इत्यादिना लोके रूढः प्रख्यातो नियतिशब्दो यस्य तथाविधः सन्स्फुरति । यथा सानुर्गिरिप्रस्थः स्वयमचलस्वभावोऽपि पवनवेगाच्चलत्सु वृक्षेषु चल इव स्थिरेषु च स्थिर इव स्फुरति तद्वदित्यर्थः ॥ ३३ ॥ अतस्त्वयापि यावज्जीवं चरमोक्तचरितद्वयमवलम्ब्यतामित्याह—**तस्मा**दिति ॥ ३४ ॥ तदुत्तरं किं भविष्यति तत्राह—**मनसी**ति । पुरुषो जातः कर्मज्ञानाधिकारिशरीरं प्राप्तः सन्यद्यथा संकल्पयति तत्तथा भवतीति स्वायत्ते संकल्पे पौरुषेण वैराग्यादिसाधनानि संपाद्य परमपुरुषार्थात्मकब्रह्मात्मभाव एव संकल्पनीयो न संसार्यात्मभाव इत्याशयेनाह—**पुरुषार्थादृते** इत्यादिना ॥ ३५ ॥ ३६ ॥ ३७ ॥ यावद्विषयेषु रतिरस्ति तावद्विलोलान्दोलनस्थितिर्भोगलक्षणैर्भोगिभरैः सर्पभारैः प्रोता ग्रथिता अतएव दुःखदा कदाशालक्षणा भवदशादोला प्रेङ्खोलिका वैराग्यश्रवणसमाध्याद्यभ्यासेन विना कदाचन कदापि न निवर्तते नावरितुं शक्येति परेण सहान्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ दीर्घजीवितं नित्यात्मभावेन स्थितिः ॥ ४१ ॥ फलिनी

---

१ स्वेह या नियतिक्रिया इति टीकाकारसंमतः पाठः।

आत्मावलोकनेनैषा विषयारतिरुत्तमा ।
हृदये स्थितिमायाति श्रीरिवाम्भोजकोटरे ॥ ४३
तस्मात्प्रज्ञानिकाषेण विचारेणातिचारुणा ।
देवमालोकयेद्भोगाद्रतिं चावहरेत्समम् ॥ ४४
चित्तस्य भोगैर्द्वौ भागौ शास्त्रेणैकं प्रपूरयेत् ।
गुरुशुश्रूषया चैकमव्युत्पन्नस्य सत्क्रमे ॥ ४५
किंचिद्व्युत्पत्तियुक्तस्य भागं भोगैः प्रपूरयेत् ।
गुरुशुश्रूषया भागौ भागं शास्त्रार्थचिन्तया ॥ ४६
व्युत्पत्तिमनुयातस्य पूरयेच्चेतसोऽन्वहम् ।
द्वौ भागौ शास्त्रवैराग्यैर्द्वौ ध्यानगुरुपूजया ॥ ४७
साधुतामागतो जीवो योग्यो ज्ञानकथाक्रमे ।
निर्मलाकृतिरादत्ते पट उत्तमरञ्जनाम् ॥ ४८
शनैः शनैर्लालनीयं युक्तिभिः पावनोक्तिभिः ।
शास्त्रार्थपरिणामेन पालयेच्चित्तबालकम् ॥ ४९
परे परिणतं ज्ञाने शिथिलीभूतदुर्ग्रहम् ।
ज्योत्स्नाऽहीनस्फटिकवच्चेतः शीतं विराजते ॥ ५०
प्रज्ञया परया ऋज्व्या भोगानामीश्वरस्य च ।
सममेवाथ देहस्य रूपमाश्ववलोकयेत् ॥ ५१
प्रज्ञाविचारवशतः सममेव सदा सुत ।
आत्मावलोकनं तृष्णासंत्यागं च समाहरेत् ॥ ५२
परदृष्टौ वितृष्णत्वं तृष्णाभावे च दृक्परा ।
एते मिथः स्थिते दृष्टी तेजोदीपदशे यथा ॥ ५३
भोगपूगे गतास्वादे दृष्टे देवे परावरे ।
परे ब्रह्मणि विश्रान्तिरनन्तोदेति शाश्वती ॥ ५४
विषयाकलितानन्दमनन्तोदेति निर्वृतिः ।
न कदाचन जीवानामात्मविश्रवणादृते ॥ ५५
यज्ञदानतपस्तीर्थसेवाभिर्जायते सुखम् ।
न तपोभिर्न दानेन न तीर्थैरपि जायते ॥ ५६
भोगेषु विरतिर्जन्तोः स्वभावालोकनादृते ।
कयाचिदपि नो युक्त्या बुद्धिरात्मावलोकने ॥ ५७
स्वप्रयत्नादृते पुंसः श्रेयसे संप्रवर्तते ।
भोगसंत्यागसंप्राप्तपरमार्थादृते सुत ॥ ५८
न ब्रह्मपदविश्रान्तिसुखमासाद्यते परम् ।
आब्रह्मस्तम्बपर्यन्ते जगत्यस्मिन्न कुत्रचित् ॥ ५९
तद्वदाश्वस्यते भाते परमे कारणे यथा ।
पौरुषं यत्नमाश्रित्य दैवं कृत्वा सुदूरतः ॥ ६०
भोगान्विगर्हयेत्प्राज्ञः श्रेयोद्वारदृढार्गलान् ।
प्रौढायां भोगगर्हायां विचार उपजायते ॥ ६१

---

मोक्षफलवती भोगेष्वरतिं वैराग्यमवान्तरफलं फलति । यथा द्राक्षादिमहालता शरदि शलाटुं फलति तद्वत् ॥ ४२ ॥ श्रीर्लक्ष्मीः । अम्भोजकोटरे पद्मगर्भे ॥ ४३ ॥ प्रज्ञामणेर्निकाषेण शाणस्थानीयेन विचारेण । समं तुल्यकालम् ॥ ४४ ॥ तत्र चित्तपरिपाकभेदानुसारेण भूमिकाभेदान् विवक्षुः प्रथमभूमिकामाह—**चित्तस्ये**ति । भोगैर्देहमात्रोपायैर्द्वौ दिनस्य कालभागौ शास्त्रेण श्रवणेन । अव्युत्पन्नस्य चित्तस्य सत्क्रमे सन्मार्गारम्भे शास्त्रोक्तक्रमे इति वा ॥ ४५ ॥ तज्जये तदुत्तरभूमिकामाह—**किंचिदि**ति । आत्मज्ञाने लब्धचमत्कारस्येति यावत् । अतएव भोगेष्वनास्थोदयाद्भागन्यूनतापत्तिः । गुरुशुश्रूषायां च भागान्तरवृद्धिः । चिरं गुरुसंनिधाने सत्यवसरे गुरुषु स्वसंदेहप्रश्नसंभवादिति भावः ॥ ४६ ॥ तज्जये तदुत्तरभूमिकामाह—**व्युत्पत्ति**मिति । रत्नतत्त्ववच्चिरपरीक्षणेन तत्त्वतोऽवधारणं व्युत्पत्तिस्तामनुयातस्य चेतसो द्वौ भागौ शास्त्रवैराग्यैः समुचितैः पूरयेत् । द्वौ तु ध्यानैर्गुरुपूजनेन च क्रमात्पूरयेत् ॥४७॥ चतुर्विधेऽपि क्रमे शुद्धचित्त एवाधिकारी नान्य इत्याह—**साधुता**मिति । पटो निर्मलाकृतिः सम्यक्परिशुद्धसंस्थान एवोत्तमां कुसुम्भकिंशुकादिरञ्जनामादत्ते न मलिन इत्यर्थः ॥ ४८ ॥ ईषन्मलिनस्य तर्हि कथं तत्राह—**शनै**रिति । युक्तिभिर्दुःखान्वयव्यतिरेकप्रदर्शनैः पावनोक्तिभिः श्रुतिस्मृतिगुरूक्तिभिः शास्त्रार्थे चित्तस्य परिणामश्चिरपरिशीलनेन शर्करामलकवन्मधुरीकरस्य परिणतिस्तेन ॥४९॥ शिथिलीभूतो दुर्ग्रहो बाह्यमलिनजडाकारग्रहणं यस्य । ज्योत्स्नया अहीनेन अपृथग्भूतेन स्फटिकेन तुल्यं चित्प्रकाशसमरसमिति यावत् । 'लीनं' ति पाठे स्पष्टम् ।

शीतं निस्तापम् ॥ ५० ॥ कीदृशी परे परिणतिस्तां दर्शयति—**प्रज्ञये**ति । ऋज्व्या गलितभेदवैषम्यकौटिल्यया परया ब्रह्माकारया प्रज्ञया भोगानां करणकर्मभावव्युत्पत्तिभिरिन्द्रियविषयतद्वृत्तीनामीश्वरस्य तत्स्वामिनो जीवस्य अथ देहस्य भोगायतनस्य च समं तुल्यं सच्चिदानन्दाद्वयैकरसमधिष्ठानब्रह्मस्वरूपमेवावलोकयेत् समं तुल्यकालमेवाधिष्ठानरूपमवलोकयेदिति वा ॥५१॥ विचारफलवृष्णासंत्यागोऽप्यात्यन्तिकस्तदैव भवतीत्याशयेनाह—**प्रज्ञे**ति॥५२॥ विचारफलं पुरुषापराधनिवृत्तिर्ज्ञानफलं मूलाविद्यानिवृत्तिश्च न पृथक्सिध्यत इत्याह—**परदृष्टावि**ति । यथा वह्नेस्तेजोदशा प्रभावस्था दीपदशा दीपाकारावस्था च तिमिरतैलोभयनिवर्तिके मिथः अन्योन्ययौगपद्येन स्थिते तद्वदित्यर्थः ॥ ५३ ॥ आस्वाद्यत इत्यास्वादो रसः । गतरस इत्यर्थः ॥ ५४ ॥ भोगास्वादलम्पटानां तु नात्मानन्दप्राप्तिरस्तीत्याह—**विषये**ति । विषयेष्वेव आकलितः सारतया गृहीत आनन्दो यस्मिन्कर्मणि तथा आस्वादयतां जीवानां कदाचन कदापि न निर्वृतिर्निरतिशयानन्दो नास्ति ॥ ५५ ॥ 'आत्मावलोकनेनैषा विषयारतिरुत्तमा । हृदये स्थितिमायाती'ति यदुक्तं तत्केचिन्न मृष्यन्ति यज्ञादिभिरेव चित्तशुद्ध्या विषयारतिसंभवादिति तान्प्रत्याह—**यज्ञे**ति । यज्ञादिभिरदृष्टद्वारा विषयसुखमेव जायते न भोगेषु विरतिर्जायत इति परेणान्वयः ॥ ५६ ॥ एवं भोगवैराग्याभ्यासपुरुषप्रयत्नं विना केनाप्युपायान्तरेण आत्मावलोकनेऽपि बुद्धिर्न प्रवर्तत इत्याह—**कयाचि**दिति ॥ ५७ ॥ ५८ ॥ ५९ ॥ आश्वस्यते विश्रम्यते । भाते स्वात्मतया अभिव्यक्ते परमे कारणे परमात्मनि ॥ ६० ॥ विचारः सदसद्विवेकः ॥ ६१ ॥

वृद्धायां प्रावृषि श्रीमाञ्शरत्काल इवामलः ।
विचारो भोगगर्हातो विचाराद्भोगगर्हणम् ॥ ६२
अन्योन्यमेते पूर्यंते समुद्रजलदाविव ।
भोगगर्हाविचारश्च स्वात्मालोकश्च शाश्वतः ॥ ६३
अन्योन्यं साधयन्त्यर्थं सुस्निग्धाः सुहृदो यथा ।
पूर्वं दैवमनादृत्य पौरुषेण प्रयत्नतः ॥ ६४
दन्तैर्दन्तान्प्रसंपीड्य भोगेष्वरतिमाहरेत् ।
देशाचाराविरुद्धेन बान्धवैकमतेन च ॥ ६५
पौरुषेण क्रमेणादौ धनानि समुपार्जयेत् ।
धनैरभ्याहरेद्भव्यान्सुजनान्गुणशालिनः ॥ ६६
प्रवर्तते समासङ्गात्तेषां भोगविगर्हणा ।
ततो विचारस्तदनु ज्ञानं शास्त्रार्थसंग्रहः ॥ ६७
ततः क्रमेण परमपदप्राप्तिः प्रजायते ।
यदा तूपरते काले विषयेभ्यो विरम्यसे ॥ ६८
तदा विचारवशतः परमं पदमेष्यसि ।
सम्यक्प्राप्स्यसि विश्रान्तिमात्मन्यत्यन्तपावने ॥ ६९
न पुनः कल्पनापङ्के दुःखाय निपतिष्यसि ।
स्थितापि नास्था ते शुद्ध नमस्तेऽस्तु सदाशिव ॥ ७०
देशक्रमेण धनमल्पविगर्हणेन
तेनाङ्ग साधुजनमर्जय मानपूर्वम् ।
तत्संगमोत्थविषयाद्यवहेलनेन
सम्यग्विचारविभवेन तवात्मलाभः ॥ ७१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे चित्तविचिकित्सायोगोपदेशो नाम चतुर्विंशः सर्गः ॥२४॥

## पञ्चविंशः सर्गः २५

बलिरुवाच ।
एतन्मे कथितं पूर्वं पित्रा चारुविचारिणा ।
इदानीं संस्मृतं दिष्ट्या संप्रबोधमहं गतः ॥ १
अद्येयं मम संजाता भोगान्प्रत्यरतिः स्फुटम् ।
दिष्ट्या शमसुखं स्वच्छं विशाम्यमृतशीतलम् ॥ २
पुनरापूरयन्नाशां पुनरप्याहरन्धनम् ।
पुनरावर्जयन्कांतां खिन्नोऽस्मि विभवस्थितौ ॥ ३
अहो नु खलु रम्येयं शमभूः शीतलान्तरा ।
सर्वा एव शमं यान्ति सुखदुःखदशाः शमे ॥ ४
शाम्यामि परिनिर्वामि सुखमासे शमे[१] स्थितः ।
अयमन्तः प्रहृष्यामि चन्द्रबिम्ब इवार्पितः ॥ ५

वृद्धायां सस्याद्यभिवृद्धियुक्तायाम् । शाल्यादिफलसंपदा श्रीमान् । तयोरप्यन्योन्याधीना अभिवृद्धिरिति युगपद्वर्धनीयतेत्याह—**विचार** इति ॥ ६२ ॥ यथा समुद्रेण रश्मिद्वारा जलदाः पूर्यन्ते जलदैश्च वृष्टिद्वारा समुद्रस्तद्वत् । इदानीं त्रयाणां युगपद्वर्धनीयतामाह—**भोगगर्हे**ति । आत्मालोक आत्मदर्शनम् ॥६३॥६४॥ प्रथमं भोगारतिरेव महता प्रयत्नेनावश्यं साध्येत्याह—**दन्तै**रिति । तदर्थमुपायमाह—**देशे**ति । तत्तद्वर्णविहितप्रतिग्रहाद्युपायेषु देशबन्धुजनसंमत एव परिग्राह्यो नान्य इत्याशयः ॥६५॥ पौरुषेण तत्तद्वर्णोत्पन्नपुरुषोचितेन प्रतिग्रहादिक्रमेण । अभ्याहरेत् । आराध्य वशीकुर्यादिति यावत् ॥ ६६ ॥ तदनु विचारानन्तरं ज्ञानं विचारितवाक्यार्थज्ञानं तदनु गतिसामान्यन्यायालोचनाच्छास्त्रार्थसंग्रहः सर्वश्रुतीनामद्वितीये ब्रह्मणि तात्पर्यनिर्णयो भवतीत्यर्थः ॥६७॥ ततो मनननिदिध्यासनक्रमेण, भूमिकारोहणक्रमेण वा इत्थं सांप्रतं विषयविरामेण परमपदप्राप्त्युपाय उक्तः । विषयांस्त्यक्तुमसमर्थश्चेद्यौवनकाले उपरते सति यदा विषयेभ्यो विरम्यसे तदैव विचारवशतः परमं पदमेष्यसि नाधुनेत्यर्थः ॥ ६८ ॥ एवं विषयोपरमावश्यकत्वे सतीदानीमेवोपरमस्ते युक्त इत्याशयेनाह—**सम्यगि**ति ॥ ६९ ॥ हे शुद्ध, ते तव । भोगस्थानस्थितापि यया कालान्तरप्रतीक्षा स्यादतस्त्वं सदाशिव एव अतस्ते सांप्रतमेव ब्रह्मभूताय नमोऽस्त्वित्यनुचितोऽपि पुत्रदृशा नमस्कारो ब्रह्मदृष्ट्या कृतः ॥ ७० ॥ उक्तमर्थं संक्षिप्योपसंहरति—**देशे**ति । देशाचाराविरुद्धक्रमेण धनं अर्जयेति शेषः । तेन धनेन अल्पस्य तुच्छतरस्य भोगस्य विगर्हणेन । भोगार्थं धनव्ययमकृत्वेति यावत् । साधुजनं ब्रह्मविज्जनं प्रणिपातसेवान्नाच्छादनादिसन्मानपूर्वकं अर्जय । 'शास्त्रपूर्व'मिति पाठे तु 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति शास्त्रोक्तरीत्येत्यर्थः । ततः सत्संगमोत्थेन विषयतद्रागद्वेषाद्यवहेलनेन साधनचतुष्टयसंपत्त्या प्रवृत्तेन सम्यगध्यात्मशास्त्रविचारस्य विभवेन ते तव आत्मलाभो विस्मृतकण्ठचामीकरलाभवद्भविष्यतीत्यर्थः ॥ ७१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे चित्तविचिकित्सायोगो नाम चतुर्विंशः सर्गः ॥ २४ ॥

इह भूयो बलेरन्तर्विवेकेन्दुशुभोदयः ।
संदेहशान्तये शुक्रचिन्तेच्छातोऽनुवर्ण्यते ॥ १ ॥

अवान्तराख्यानमुपसंहृत्य प्रकृते योजयति—**एतदि**ति ॥ १ ॥ २ ॥ पुनरिति वीप्सितम् । पुनःपुनरित्यर्थः । आवर्जयन् प्रार्थनादिना अनुकूलयन् । विभवस्थितौ संपत्परिपालनविषये खिन्नः संतप्तोऽस्मि ॥ ३ ॥ शमे शान्तिगुणे । सर्वा एव सुखदुःखदशाः शमं नाशं यान्ति ॥ ४ ॥ शमे स्थितः प्रतिष्ठितोऽहं शाम्यामीति सर्वतापोपशमोक्तिः । चन्द्रबिम्बेऽर्पित इव परिनिर्वामीति चित्तस्य निरतिशयसुखपारवश्योक्तिः । सुखमास इति तद्धेतुसुखात्मना स्थित्युक्तिः । अन्तरिति सर्वत्र सं·

१ मुद्रितपुस्तकेषु प्रायः 'समे' इत्येव पाठो [illegible] 'शमे' इत्ययं पाठः टीकाकृदनुमत्यादृतः।

उत्ताण्डवन्मनोरंहःप्रोषितोरुशरीरकम् ।
अनारतपरिक्षोभं हा दुःखं विभवार्जनम् ॥ ६
अङ्गमङ्गेन संपीड्य मांसं मांसेन च स्त्रियः ।
पुराहमभवं प्रीतो यत्तन्मोहविजृम्भितम् ॥ ७
दृष्टान्तदृष्टयो दृष्टा भुक्तं भोक्तव्यमक्षतम् ।
आक्रान्तमखिलं भूतं जातं किमिव शोभनम् ॥ ८
पुनस्तान्येव तान्येव तत्रेहान्यत्र वापि च ।
इतश्चेतश्च वस्तूनि नापूर्वं नाम किंचन ॥ ९
सर्वमेव परित्यज्य परिहृत्य धिया स्वयम् ।
स्वस्थ एवावतिष्ठेऽहं पूर्णात्पूर्ण इवात्मनि ॥ १०
पाताले भूतले स्वर्गे स्त्रियो रत्नोपलादयः ।
सारं तदपि तुच्छेन कालेनाशु निगीर्यते ॥ ११
एतावन्तमहं कालं भृशं बालोऽभवं पुरा ।
यः कुर्वन्द्वेषममरैस्तुच्छया जगदिच्छया ॥ १२
मनोनिर्माणमात्रेण जगन्नाम्ना महाधिना ।
त्यक्तेनानेन कोऽर्थः स्यात्को नु रागो महात्मनः ॥ १३
कष्टं चिरतरं कालमनर्थोऽर्थधिया मया ।
अज्ञानमदमत्तेन कालेन स्वेन सेवितः ॥ १४
तरत्तरलतृष्णेन किमिवास्मिञ्जगत्त्रयम् ।
मया न कृतमङ्गेन पश्चात्तापाभिवृद्धये ॥ १५
एतया तदलं मेऽस्तु तुच्छया पूर्वचिन्तया ।
पौरुषं याति साफल्यं वर्तमानचिकित्सया ॥ १६
अद्यापरिमिताकारकारणैकतयात्मनि ।
सर्वतः सुखमभ्येति रसायनमिवार्णवे ॥ १७
कोऽयं तावदहं किं स्यादात्मेत्यात्मावलोकनम् ।
पृच्छाम्यौशनसं नाथं नूनमज्ञानशान्तये ॥ १८
संचिन्तयामि परमेश्वरमाशु शुक्र-
मुद्यत्प्रसादमथ तेन गिरोपदिष्टे ।
तिष्ठाम्यनन्तविभवे स्वयमात्मनात्म-
न्यक्षीणमर्थमुपदेशगिरः फलन्ति ॥ १९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उपशमप्रकरणे बलिचिन्तासिद्धान्तयोगोपदेशो नाम पञ्चविंशः सर्गः ॥ २५ ॥

---

वक्ष्यते । अयं प्रहृष्यामीति हर्षलिङ्गपुलकायतिशयोक्तिः ॥ ५ ॥ उत्ताण्डवशब्दात् 'सर्वप्रातिपदिकेभ्य आचारे क्विब्वक्तव्यः' इति क्विपि लटः शत्रादेशः । भोगोत्कण्ठया उत्ताण्डवतो मनसो रंहोभिः प्रोषितं दग्धं देशभ्रमणशीलं वा उरु प्रधानं शरीरं उरुशरीरं वा यस्मिन् अतएवानारतपरिक्षोभं विभवार्जनं दुःखमेव । हा इति खेदे ॥ ६ ॥ इदानीं तत्फलस्त्र्यादिभोगस्वरूपमप्यसारतया विविच्य परिशोचति—अङ्गमित्यादिना ॥ ७ ॥ सर्वेषां विभवानां दृष्टान्तभूतमहाविभवदृष्टयः स्वेन दृष्टाः । अक्षतं परैरव्याहतं भोक्तव्यं राज्यभोगादि भुक्तम् । अखिलं भूतं प्राणिजातमाक्रान्तं स्वसामर्थ्येन नामितमिति यावत् । तथापि किमिव शोभनं शाश्वतसुखं जातम् । अनादौ संसारे सर्वेषामपि कदाचिदेवं वैभवसंभवात्स्वस्यापि पूर्ववच्छतशो दुर्दशासहस्राण्यपि संभावितत्वाच्च न किंचिच्छोभनमित्यर्थः ॥ ८ ॥ अभिनवचमत्कारान्तरादर्शनाच्चर्वितचर्वणप्रायत्वाच्च नैहिकामुष्मिकभोगानां सारतास्तीत्याह—पुनरिति । तत्र स्वर्गादौ । इह भुवि । अन्यत्र नागलोकादौ ॥ ९ ॥ पूर्णात्स्वरूपाद्बोधतः प्राप्तात्पूर्ण इवेत्यपूर्णताभ्रान्तिनिरास एव नापूर्वपूर्णताप्राप्तिरस्तीति द्योतनाय । अथवा पूर्णाच्चन्द्रान्निमित्तात्पूर्णः क्षीराब्धिरिवेत्यर्थः ॥ १० ॥ यदपि भोग्यमज्ञदृष्ट्या सारत्वेन गृहीतं तदपि नश्वरत्वाद्दुःखाय पर्यवसितं तद्दृशाप्यसारमेवेत्याशयेनाह—पाताल इति ॥ ११ ॥ तुच्छया जगदाधिपत्येच्छया अमरैः सह द्वेषं कुर्वन्नहं भृशं बालो मूर्ख एवाभवमित्यर्थः ॥ १२ ॥ जगन्नाम्ना जगदाधिपत्यनाम्ना महता आधिना मानसदुःखेन । अत्यक्तेनेति च्छेदः । अर्थः पुरुषार्थः स्यात् । अनुरागे हि सति तत्र पुरुषार्थतावुद्धिः स एव नास्तीत्याह—क इति ॥ १३ ॥ कालेन स्वमृत्युभूतेन स्वेनैव मया अनर्थः अर्थधिया सेवित इत्यर्थः ॥ १४ ॥१५॥ अथवा किं मम गतशोकेन, सांप्रतिकमोहचिकित्सया पुरुषजन्मसाफल्योपायं चिन्तयामीत्याह—एतयेति ॥१६॥ अपरिमिताकारं अपरिच्छिन्नस्वरूपं यत्कारणं ब्रह्म तदेकतया तदभेदस्थित्या आत्मनि सर्वतः पूर्णं सुखमर्णवे क्षीरसमुद्रे रसायनममृतमथनेनेव यथा सर्वतः अभ्येत्याविर्भवति तथा अद्य औशनसं शुक्रं पृच्छामीति परेणान्वयः ॥ १७ ॥ अयं प्रपञ्चः कः । अहं अहंप्रत्ययवेद्यं जीवतत्त्वं किम् । इत्यात्मा अवलोक्यते येन तदात्मावलोकनमुपायं नाथं कुलगुरुत्वात्कुलस्येश्वरमुशनसमेवौशनसं पृच्छामि प्रक्ष्यामि ॥ १८ ॥ अहं परमेश्वरं योगसिद्धत्वात्सर्वकामेश्वरम् । स्वाश्रितेष्वाशु उद्यत्प्रसादं शुक्रं संचिन्तयामि । तेन शुक्रेण गिरा उपदिष्टे अनन्तविभवे आत्मनि स्वयमात्मनैव तिष्ठामि स्थास्यामि । वर्तमानसामीप्ये लट् । तत्रावस्थाने केन हेतुना तवाश्वासस्तत्राह—अक्षीणमिति । यतो महतामुपदेशगिरोऽक्षीणमक्षयमर्थं फलन्ति, न कदाचिद्विफलीभवन्तीत्यर्थः ॥ १९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे बालचिन्तासिद्धान्तयोगोपदेशो नाम पञ्चविंशः सर्गः ॥ २५ ॥

१ पूर्वार्धेन मिलितोच्चारणात्.

वृद्धायां प्रावृषि श्रीमाञ्शरत्काल इवामलः ।
विचारो भोगगर्हातो विचाराद्भोगगर्हणम् ॥ ६२
अन्योन्यमेते पूर्यंते समुद्रजलदाविव ।
भोगगर्हाविचारश्च स्वात्मालोकश्च शाश्वतः ॥ ६३
अन्योन्यं साधयन्त्यर्थं सुस्निग्धाः सुहृदो यथा ।
पूर्वं दैवमनादृत्य पौरुषेण प्रयत्नतः ॥ ६४
दन्तैर्दन्तान्प्रसंपीड्य भोगेष्वरतिमाहरेत् ।
देशाचाराविरुद्धेन बान्धवैकमतेन च ॥ ६५
पौरुषेण क्रमेणादौ धनानि समुपार्जयेत् ।
धनैरभ्याहरेद्भव्यान्सुजनान्गुणशालिनः ॥ ६६
प्रवर्तते समासङ्गात्तेषां भोगविगर्हणा ।
ततो विचारस्तदनु ज्ञानं शास्त्रार्थसंग्रहः ॥ ६७
ततः क्रमेण परमपदप्राप्तिः प्रजायते ।
यदा तूपरते काले विषयेभ्यो विरंस्यसे ॥ ६८
तदा विचारवशतः परमं पदमेष्यसि ।
सम्यक्प्राप्स्यसि विश्रान्तिमात्मन्यत्यन्तपावने ॥ ६९
न पुनः कल्पनापङ्के दुःखाय निपतिष्यसि ।
स्थितापि नास्था ते शुद्ध नमस्तेऽस्तु सदाशिव ॥ ७०
देशक्रमेण धनमल्पविगर्हणेन
तेनाङ्ग साधुजनमर्जय मानपूर्वम् ।
तत्संगमोत्थविषयाद्यवहेलनेन
सम्यग्विचारविभवेन तवात्मलाभः ॥ ७१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे चित्तविचिकित्सायोगोपदेशो नाम चतुर्विंशः सर्गः ॥२४॥

## पञ्चविंशः सर्गः २५

बलिरुवाच ।
एतन्मे कथितं पूर्वं पित्रा चारुविचारिणा ।
इदानीं संस्मृतं दिष्ट्या संप्रबोधमहं गतः ॥ १
अद्येयं मम संजाता भोगान्प्रत्यरतिः स्फुटम् ।
दिष्ट्या शमसुखं स्वच्छं विशाम्यमृतशीतलम् ॥ २
पुनरापूरयन्नाशां पुनरप्याहरन्धनम् ।
पुनरावर्जयन्कांतां खिन्नोऽस्मि विभवस्थितौ ॥ ३
अहो नु खलु रम्येयं शमभूः शीतलान्तरा ।
सर्वा एव शमं यान्ति सुखदुःखदशाः शमे ॥ ४
शाम्यामि परिनिर्वामि सुखमासे शमे[1] स्थितः ।
अयमन्तः प्रहृष्यामि चन्द्रबिम्ब इवार्पितः ॥ ५

वृद्धायां सस्याद्यभिवृद्धियुक्तायाम् । शाल्यादिफलसंपदा श्रीमान् । तयोरप्यन्योन्याधीना अभिवृद्धिरिति युगपद्वर्धनीयतेत्याह—**विचार** इति ॥ ६२ ॥ यथा समुद्रेण रश्मिद्वारा जलदाः पूर्यन्ते जलदैश्च वृष्टिद्वारा समुद्रस्तद्वत् । इदानीं त्रयाणां युगपद्वर्धनीयतामाह—**भोगगर्हे**ति । आत्मालोक आत्मदर्शनम् ॥६३॥६४॥ प्रथमं भोगारतिरेव महता प्रयत्नेनावश्यं साध्येत्याह—**दन्तै**रिति । तदर्थमुपायमाह—**देशे**ति । तत्तद्वर्णविहितप्रतिग्रहाद्युपायेषु देशबन्धुजनसंमत एव परिग्राह्यो नान्य इत्याशयः ॥६५॥ पौरुषेण तत्तद्वर्णोत्पन्नपुरुषोचितेन प्रतिग्रहादिक्रमेण । अभ्याहरेत् । आराध्य वशीकुर्यादिति यावत् ॥ ६६ ॥ तदनु विचारानन्तरं ज्ञानं विचारितवाक्यार्थज्ञानं तदनु गतिसामान्यन्यायालोचनाच्छास्त्रार्थसंग्रहः सर्वश्रुतीनामद्वितीये ब्रह्मणि तात्पर्यनिर्णयो भवतीत्यर्थः ॥६७॥ ततो मनननिदिध्यासनक्रमेण, भूमिकारोहणक्रमेण वा इत्थं सांप्रतं विषयविरामेण परमपदप्राप्त्युपाय उक्तः । विषयांस्त्यक्तुमसमर्थश्चेद्यौवनकाले उपरते सति यदा विषयेभ्यो विरंस्यसे तदैव विचारवशतः परमं पदमेष्यसि नाधुनेत्यर्थः ॥ ६८ ॥ एवं विषयोपरमावश्यकत्वे सतीदानीमेवोपरमस्ते युक्त इत्याशयेनाह—**सम्यगि**ति ॥ ६९ ॥ हे शुद्ध, ते तव । भोगस्थानस्थितापि यया कालान्तरप्रतीक्षा स्यादतस्त्वं सदाशिव एव अतस्ते सांप्रतमेव ब्रह्मभूताय नमोऽस्त्वित्यनुचितोऽपि पुत्रदृशा नमस्कारो ब्रह्मदृष्ट्या कृतः ॥ ७० ॥ उक्तमर्थं संक्षिप्योपसंहरति—**देशे**ति । देशाचाराविरुद्धक्रमेण धनं अर्जयेति शेषः । तेन धनेन अल्पस्य तुच्छतरस्य भोगस्य विगर्हणेन । भोगार्थं धनव्ययमकृत्वेति यावत् । साधुजनं ब्रह्मविज्जनं प्रणिपातसेवान्नाच्छादनादिसन्मानपूर्वकं अर्जय । 'शास्त्रपूर्व'मिति पाठे तु 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति शास्त्रोक्तरीत्येत्यर्थः । ततः सत्संगमोत्थेन विषयतद्रागद्वेषाद्यवहेलनेन साधनचतुष्टयसंपत्त्या प्रवृत्तेन सम्यगध्यात्मशास्त्रविचारस्य विभवेन ते तव आत्मलाभो विस्मृतकण्ठचामीकरलाभवद्भविष्यतीत्यर्थः ॥ ७१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे चित्तविचिकित्सायोगो नाम चतुर्विंशः सर्गः ॥ २४ ॥

इह भूयो बलेरन्तर्विवेकेन्दुशुभोदयः ।
संदेहशान्तये शुक्रचिन्तेच्छातोऽनुवर्ण्यते ॥ १ ॥

अवान्तराख्यानमुपसंहृत्य प्रकृते योजयति—**एतदि**ति ॥ १ ॥ २ ॥ पुनरिति वीप्सितम् । पुनःपुनरित्यर्थः । आवर्जयन् प्रार्थनादिना अनुकूलयन् । विभवस्थितौ संपत्परिपालनविषये खिन्नः संतप्तोऽस्मि ॥ ३ ॥ शमे शान्तिगुणे । सर्वा एव सुखदुःखदशाः शमं नाशं यान्ति ॥ ४ ॥ शमे स्थितः प्रतिष्ठितोऽहं शाम्यामीति सर्वतापोपशमोक्तिः । चन्द्रबिम्बेऽर्पित इव परिनिर्वामीति चित्तस्य निरतिशयसुखपारवश्योक्तिः । सुखमास इति तद्धेतुसुखात्मना स्थित्युक्तिः । अन्तरिति सर्वत्र सं-

१ मुद्रितपुस्तकेषु प्रायः 'समे' इत्येव पाठो लभ्यते [illegible] 'शमे' इत्ययं पाठः टीकाकृदनुमत्यादृतः।

उत्ताण्डवन्मनोरंहःप्रोषितोरुशरीरकम् ।
अनारतपरिक्षोभं हा दुःखं विभवार्जनम् ॥ ६
अङ्गमङ्गेन संपीड्य मांसं मांसेन च स्त्रियः ।
पुराहमभवं प्रीतो यत्तन्मोहविजृम्भितम् ॥ ७
दृष्टान्तदृष्टयो दृष्टा भुक्तं भोक्तव्यमक्षतम् ।
आक्रान्तमखिलं भूतं जातं किमिव शोभनम् ॥ ८
पुनस्तान्येव तान्येव तत्रेहान्यत्र वापि च ।
इतश्चेतश्च वस्तूनि नापूर्वं नाम किंचन ॥ ९
सर्वमेव परित्यज्य परिहृत्य धिया स्वयम् ।
स्वस्थ एवावतिष्ठेऽहं पूर्णात्पूर्ण इवात्मनि ॥ १०
पाताले भूतले स्वर्गे स्त्रियो रत्नोपलादयः ।
सारं तदपि तुच्छेन कालेनाशु निगीर्यते ॥ ११
एतावन्तमहं कालं भृशं बालोऽभवं पुरा ।
यः कुर्वन्द्वेषममरैस्तुच्छया जगदिच्छया ॥ १२
मनोनिर्माणमात्रेण जगन्नाम्ना महाधिना ।
त्यक्तेनानेन कोऽर्थः स्यात्को नु रागो महात्मनः ॥ १३
कष्टं चिरतरं कालमनर्थोऽर्थधिया मया ।
अज्ञानमदमत्तेन कालेन स्वेन सेवितः ॥ १४
तरत्तरलतृष्णेन किमिवास्मिञ्जगत्त्रयम् ।
मया न कृतमज्ञेन पश्चात्तापाभिवृद्धये ॥ १५
एतया तदलं मेऽस्तु तुच्छया पूर्वचिन्तया ।
पौरुषं याति साफल्यं वर्तमानचिकित्सया ॥ १६
अद्यापरिमिताकारकारणैकतयात्मनि ।
सर्वतः सुखमभ्येति रसायनमिवार्णवे ॥ १७
कोऽयं तावदहं किं स्यादात्मेत्यात्मावलोकनम् ।
पृच्छाम्यौशनसं नाथं नूनमज्ञानशान्तये ॥ १८
संचिन्तयामि परमेश्वरमाशु शुक्र-
मुद्यत्प्रसादमथ तेन गिरोपदिष्टे ।
तिष्ठाम्यनन्तविभवे स्वयमात्मनात्म-
न्यक्षीणमर्थमुपदेशगिरः फलन्ति ॥ १९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उपशमप्रकरणे बलिचिन्तासिद्धान्तयोगोपदेशो नाम पञ्चविंशः सर्गः ॥ २५ ॥

---

वक्ष्यते । अयं प्रहृष्यामीति हर्षलिङ्गपुलकाद्यतिशयोक्तिः ॥ ५ ॥ उत्ताण्डवशब्दात् 'सर्वप्रातिपदिकेभ्य आचारे क्विब्वक्तव्यः' इति क्विपि लटः शत्रादेशः । भोगोत्कण्ठया उत्ताण्डवतो मनसो रंहोभिः प्रोषितं दग्धं देशभ्रमणशीलं वा उरु प्रधानं शरीरं उरुशरीरं वा यस्मिन् अतएवानारतपरिक्षोभं विभवार्जनं दुःखमेव । हा इति खेदे ॥ ६ ॥ इदानीं तत्फलस्त्र्यादिभोगस्वरूपमप्यसारतया विविच्य परिशोचति—अङ्गमित्यादिना ॥ ७ ॥ सर्वेषां विभवानां दृष्टान्तभूतमहाविभवदृष्टयः स्वेन दृष्टाः । अक्षतं परैरव्याहतं भोक्तव्यं राज्यभोगादि भुक्तम् । अखिलं भूतं प्राणिजातमाक्रान्तं स्वसामर्थ्येन नामितमिति यावत् । तथापि किमिव शोभनं शाश्वतसुखं जातम् । अनादौ संसारे सर्वेषामपि कदाचिदेवं वैभवसंभवात्स्वस्यापि पूर्ववच्छतशो दुर्दशासहस्रस्याग्रेऽपि संभावितत्वाच्च न किंचिच्छोभनमित्यर्थः ॥ ८ ॥ अभिनवचमत्कारान्तरादर्शनाच्चर्वितचर्वणप्रायत्वाच्च नैहिकामुष्मिकभोगानां सारतास्तीत्याह—**पुन**रिति । तत्र स्वर्गादौ । इह भुवि । अन्यत्र नागलोकादौ ॥ ९ ॥ पूर्णात्स्वरूपाद्बोधतः प्राप्तात्पूर्ण इवेत्यपूर्णताभ्रान्तिनिरास एव नापूर्वपूर्णताप्राप्तिरस्तीति द्योतनाय । अथवा पूर्णाच्चन्द्रान्निमित्तात्पूर्णः क्षीराब्धिरिवेत्यर्थः ॥ १० ॥ यदपि भोग्यमज्ञदृष्ट्या सारत्वेन गृहीतं तदपि नश्वरत्वाद्दुःखाय पर्यवसितं तद्दृशाप्यसारमेवेत्याशयेनाह—**पाताल** इति ॥ ११ ॥ तुच्छया जगदाधिपत्येच्छया अमरैः सह द्वेषं कुर्वन्नहं भृशं बालो मूर्ख एवाभवमित्यर्थः ॥ १२ ॥ जगन्नाम्ना जगदाधिपत्यनाम्ना महता आधिना मानसदुःखेन । अत्यक्तेनेति[1] च्छेदः । अर्थः पुरुषार्थः स्यात् । अनुरागे हि सति तत्र पुरुषार्थताबुद्धिः स एव नास्तीत्याह—**क** इति ॥ १३ ॥ कालेन स्वमृत्युभूतेन स्वेनैव मया अनर्थः अर्थधिया सेवित इत्यर्थः ॥ १४ ॥१५॥ अथवा किं मम गतशोकेन, सांप्रतिकमोहचिकित्सया पुरुषजन्मसाफल्योपायं चिन्तयामीत्याह–**एतये**ति ॥१६॥ अपरिमिताकारं अपरिच्छिन्नस्वरूपं यत्कारणं ब्रह्म तदेकतया तदभेदस्थित्या आत्मनि सर्वतः पूर्णं सुखमर्णवे क्षीरसमुद्रे रसायनममृतमथनेनेव यथा सर्वतः अभ्येत्याविर्भवति तथा अद्य औशनसं शुक्रं पृच्छामीति परेणान्वयः ॥ १७ ॥ अयं प्रपञ्चः कः । अहं अहंप्रत्ययवेद्यं जीवतत्त्वं किम् । इत्यात्मा अवलोक्यते येन तदात्मावलोकनमुपायं नाथं कुलगुरुत्वात्कुलस्येश्वरमुशनसमेवौशनसं पृच्छामि प्रक्ष्यामि ॥ १८ ॥ अहं परमेश्वरं योगसिद्धत्वात्सर्वकामेश्वरम् । स्वाश्रितेष्वाशु उद्यत्प्रसादं शुक्रं संचिन्तयामि । तेन शुक्रेण गिरा उपदिष्टे अनन्तविभवे आत्मनि स्वयमात्मनैव तिष्ठामि स्थास्यामि । वर्तमानसामीप्ये लट् । तत्रावस्थाने केन हेतुना तवाश्वासस्तत्राह—**अक्षीण**मिति । यतो महतामुपदेशगिरोऽक्षीणमक्षयमर्थं फलन्ति, न कदाचिद्विफलीभवन्तीत्यर्थः ॥ १९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे बालचिन्तासिद्धान्तयोगोपदेशो नाम पञ्चविंशः सर्गः ॥ २५ ॥

---

१ पूर्वार्धेन मिलितोच्चारणात्.

## षड्विंशः सर्गः २६

श्रीवसिष्ठ उवाच ।

इति संचिन्त्य बलवान्बलिरामीलितेक्षणः ।
दध्यौ कमलपत्राक्ष शुक्रमाकाशमन्दिरम् ॥ १
सर्वस्थं चिन्तयानं तु नित्यध्यानोऽथ भार्गवः ।
चेतःस्थं ज्ञातवान् शिष्यं बलिं गुर्वर्थिनं पुरे ॥ २
अथ सर्वगतानन्तचिदात्मा भार्गवः प्रभुः ।
आनिनाय स देहं स्वं रत्नवातायनं बलेः ॥ ३
गुरुदेहप्रभाजालपरिमृष्टतनुर्बलिः ।
बुबुधे प्रातरर्कांशुसंबोधितमिवाम्बुजम् ॥ ४
तत्र रत्नार्घ्यदानेन मन्दारकुसुमोत्करैः ।
पादाभिवन्दनैरेनं पूजयामास भार्गवम् ॥ ५
रत्नार्घ्यपरिपूर्णाङ्गं कृतमन्दारशेखरम् ।
महार्हासनविश्रान्तमथोवाच गुरुं बलिः ॥ ६

बलिरुवाच ।

भगवंस्त्वत्प्रसादोत्था प्रतिभेयं पुरस्तव ।
नियोजयति मां वक्तुं कार्यं कर्तुमिवार्कभाः ॥ ७
भोगान्प्रति विरक्तोऽस्मि महासंमोहदायिनः ।
तत्तत्त्वं ज्ञातुमिच्छामि महासंमोहहारि यत् ॥ ८
कियन्मात्रमिदं भोगजालं किंमयमेव वा ।
कोऽहं कस्त्वं किमेते वा लोका इति वदाशु मे ॥ ९

शुक्र उवाच ।

बहुनात्र किमुक्तेन खं गन्तुं यत्नवानहम् ।
सर्वदानवराजेन्द्र सारं संक्षेपतः शृणु ॥ १०
चिदिहास्ति हि चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति संग्रहः ॥ ११
भव्योऽसि चेत्तदेतस्मात्सर्वमाप्नोषि निश्चयात् ।
नो चेत्तद्बह्वपि प्रोक्तं त्वयि भस्मनि हूयते ॥ १२
चितश्चेत्यकलनाबन्धस्तन्मुक्तिर्मुक्तिरुच्यते ।
चिदचेत्याखिलात्मेति सर्वसिद्धान्तसंग्रहः ॥ १३
एनं निश्चयमादाय विलोकयसि हेलया ।
स्वयमेवात्मनात्मानमनन्तं पदमाप्स्यसि ॥ १४
खं व्रजाम्यहमत्रैव मुनयः सप्त संगताः ।
केनापि सुरकार्येण वस्तव्यं तत्र वै मया ॥ १५
राजन्यावदयं देहस्तावन्मुक्तधियामपि ।
यथाप्राप्तक्रियात्यागो रोचते न स्वभावतः ॥ १६
इति कथितवताथ भार्गवेण
स्फुटजलराशिपथा महाजवेन ।
प्लुतमलिशबले नभोन्तराले
तरलतरङ्गवदाकुले ग्रहौघैः ॥ १७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे बल्युपदेशयोगो नाम षड्विंशः सर्गः ॥ २६ ॥

---

स्मृत्या यातस्य शुक्रस्य संक्षेपेण बलिं प्रति ।
तत्त्वसारोपदेशोऽथ नभोगतिरिहेर्यते ॥ १ ॥

आकाशो ब्रह्माकाश एव मन्दिरं विश्रान्तिस्थानं यस्य तम् ॥ १ ॥ अथ नित्यध्यानोऽभीक्ष्णं ध्यानपरो भार्गवः सर्वान्तरब्रह्मरूपत्वात्सर्वस्थं स्वं चिन्तयानं स्वचेतःस्थं बलिं शिष्यं गुर्वर्थिनं तत्त्वजिज्ञासया स्वदर्शनेच्छुं ज्ञातवानित्यन्वयः ॥ २ ॥ अथ स भार्गवः स्वं देहं बलेः रत्नवातायनं रत्नगवाक्षस्थानं प्रति आनिनाय । स्वयमाजगामेति यावत् ॥३॥ परिमृष्टतनुः संस्पृष्टशरीरः । संबोधितं विकासितम् ॥ ४ ॥ ५ ॥ ६ ॥ प्रतिभा नवनवोन्मेषशालिनी बुद्धिः । यथा प्रातरुदिता अर्कभा ब्राह्मणादीन् संध्यावन्दनादिकार्यं कर्तुं सन्निधानमात्रेण नियोजयति तद्वत् ॥ ७ ॥ यत्स्वज्ञानमात्रेण महासंमोहहारि तत्तादृशं तत्त्वम् ॥ ८ ॥ कियती मात्रा उत्कर्षावधिर्यस्य तत् । भोगजालं विषयसुखम् । किंमयं किंप्रकृतिकमिति भोगतत्त्वप्रश्नः । कोऽहं कस्त्वमिति भोक्तृतत्त्वप्रश्नः । किमेते लोका इति भोग्यतत्त्वप्रश्नः । लोक्यन्ते इति लोका इति व्युत्पत्तेः ॥ ९ ॥ भोक्रादित्रिपुटीभेदस्यैकस्यां चिति कल्पितत्वात्संक्षेपतस्तदुपदेशेनैव प्रश्नत्रयस्याप्युत्तरं सुवचमित्याशयं द्योतयन्नाह—**बहुनेति** । खं आकाशमार्गम् । सारं प्रश्नत्रयसारम् ॥ १० ॥ इह जगति चिदस्ति । हिशब्दस्तत्सिद्धेरन्यनिरपेक्षत्वप्रसिद्धिद्योतनाय । अत इदं चिद्दृश्यं चिदधीनसिद्धिकं भोगजातं चिदेव मात्रा उत्कर्षावधिर्यस्य तथाविधम् । 'यतो वाचो निवर्तन्ते' इति श्रुत्या पूर्णचित एव सर्वानन्दोत्कर्षावधित्वोक्तेः । 'चित्येव भेदवैचित्र्याध्यासाच्चिन्मयमेव च' 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । एवं 'तत्त्वमस्यहं ब्रह्मास्मि एष ब्रह्मैष इन्द्रः' 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इत्यादिश्रुतिशतेभ्यस्त्वमहमादिभोक्तृतत्त्वमपि चिन्मात्रमेवेत्याह—**चित्त्वमिति** । एवं भोग्यजातमपि परमार्थतश्चिदेव तत्सत्तास्फूर्त्योश्चिदधीनत्वात् 'ब्रह्मैवेदं विश्वमिदं वरिष्ठं' इत्यादिश्रुतेश्चेत्याशयेनाह—**एते चेति** ॥११॥ भवतीति भव्यः श्रद्दधानो विवेकी ॥ १२ ॥ चितश्चेत्याकारकलनैव बन्धः, अचेत्या चेत्याकारनिर्मुक्ता । अखिलात्मा पूर्णात्मा ॥ १३ ॥ विलोकयसि चेदिति शेषः । आत्मना अखण्डाकारवृत्त्या रूढप्रतीचा ॥ १४ ॥ खं देवलोकः । वस्तव्यं अवश्यं संनिधातव्यम् । भावे तव्यः ॥१५॥ ननु मुक्तधियः कृतकृत्यस्य तव तत्र अगमने का क्षतिस्तत्राह—**राजन्निति** ॥१६॥ अथ इति कथितवता भार्गवेण ग्रहौघैराकुले अतएव पुष्परेणुव्याप्तोऽलिरिव शबले किर्मीरे नभोन्तराले स्फुटेन जलराशेर्मेघस्य समुद्रस्य च पथा उपरिमार्गेण तरलतरङ्गवन्महाजवेन प्लुतं उड्डीनम् । भावे क्तः ॥ १७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे बल्युपदेशयोगो नाम षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः २७

श्रीवसिष्ठ उवाच ।

सुरासुरसभाज्येष्ठे तस्मिन्भृगुसुते गते ।
मनसा चिन्तयामास बलिर्बुद्धिमतां वरः ॥ १
युक्तमुक्तं भगवता चिदेवेदं जगत्त्रयम् ।
चिदहं चिदिमे लोकाश्चिदाशाश्चिदियं क्रिया ॥ २
सबाह्याभ्यन्तरं सर्वं चिदेव परमार्थतः ।
अस्ति चिद्व्यतिरेकेण नेह किंचन कुत्रचित् ॥ ३
अयमादित्य इत्यर्कों न चिता यदि चेत्यते ।
तदर्कतमसोर्भेदः क इहेवोपलभ्यते ॥ ४
इयं भूरिति भूरेषा चिता यदि न चेत्यते ।
भूमेः किं नाम भूमित्वं तद्भव्ये भव्यतां गतम् ॥ ५
इमा दिशो दिश इति चेत्यन्ते न चिता यदि ।
तत्किं नाम दिशां दिक्त्वं शैलानां चापि काद्रिता ॥ ६
इदं जगज्जगदिति चिता यदि न चेत्यते ।
तत्किं जगत्त्वं जगतो नभस्त्वं नभसोऽथ किम् ॥ ७
कायोऽयं पर्वताकारश्चिता यदि न चेत्यते ।
तत्किं नाम शरीरत्वं शरीरस्य शरीरिणाम् ॥ ८
चिदिन्द्रियाणि चित्कायश्चिन्मनश्चित्तदेषणा ।
चिदन्तश्चिद्बहिश्चित्खं चिद्भावाश्चिद्भवस्थितिः ॥ ९
चितैवैनमहं सर्वं स्पर्शनैषणपूर्वकम् ।
करोमि मात्रासंस्पर्शं शरीरेण न किंचन ॥ १०
किमनेन शरीरेण काष्ठलोष्टसमेन मे ।
अशेषजगदेकात्मा चिदहं चेतनात्मकः ॥ ११
अहं चिदम्बरे भानावहं चिद्भूतपञ्जरे ।
सुरासुरेषु चिदहं स्थावरेषु चरेषु च ॥ १२
चिदस्तीह द्वितीया हि कल्पनैव न विद्यते ।
द्वित्वस्यासंभवाल्लोके कः शत्रुः कश्च वासुहृत् ॥ १३
बलिनाम्नः शरीरस्य छिन्ने शिरसि भासुरे ।
चितः किं तद्भवेच्छिन्नं सर्वलोकावपूरणात् ॥ १४
चिता संचेतितो द्वेषो द्वेषो भवन्ति नान्यथा ।
तस्माद्द्वेषादयः सर्वे भावाभावाश्चिदात्मकाः ॥ १५
न चितो व्यतिरेकेण प्रविचार्यापि किंचन ।
आसाद्यते किल स्फारादस्मात्त्रिभुवनोदरात् ॥ १६
न द्वेषोऽस्ति न रागोऽस्ति न मनो नास्य वृत्तयः ।
चिन्मात्रस्यातिशुद्धस्य विकल्पकलना कुतः ॥ १७
चिदहं सर्वगो व्यापी नित्यानन्दमयात्मकः ।
विकल्पकलनातीतो द्वितीयांशविवर्जितः ॥ १८
चितश्चिदिति यन्नाम निर्नामाया न नाम तत् ।
शब्दात्मिकैषा चिच्छक्तिः परिस्फुरति सर्वगा ॥ १९
दृश्यदर्शननिर्मुक्तकेवलामलरूपवान् ।
नित्योदितो निराभासो द्रष्टास्मि परमेश्वरः ॥ २०
कल्पनाविकलाकारः कालक्रान्तकलामयः ।
आभासमात्रमुदितो नित्याभासविवर्जितः ॥ २१

---

शुक्रोपदिष्टमार्गेण सर्वं विमृशतो बलेः ।
चित्पूर्णानन्दविश्रान्त्या चिरं स्थितिरिहोच्यते ॥ १ ॥

सुरासुरसभासु ज्येष्ठे प्रशस्यतमे । 'ज्यचे'ति प्रशस्यशब्दस्येष्ठनि ज्यादेशः ॥१॥ यच्चिन्तयामास तदाह—**युक्त**मित्यादिना ॥२॥३॥ युक्ततामुपपादयति—**अयमादित्य** इत्यादिना। चेत्यते संज्ञायते। तमोघटदीपादिर्व्यावृत्ततया[1] यदि न प्रकाश्यत इत्यर्थः । भेदो व्यावृत्तिर्विच्छित्तिर्वैधर्म्यं च । इवशब्दो वाक्यालंकारार्थः ॥४॥ भूमित्वं जलादिव्यावृत्तरूपं किम् । एवमग्रेऽपि सर्वत्र । भव्यतां निरूढतां गतं प्राप्तम् ॥ ५ ॥ शैलेष्वपि इमे शैला इति यदि न चेत्यन्ते इत्यर्थाद्गम्यते ॥ ६ ॥ जगत् क्रियावन्मूर्तद्रव्यं नभस्त्वमूर्तम् ॥ ७ ॥ भूतेषूक्त्वा भौतिकेष्वाह—**काय** इति । पर्वताकारः । स्थूल इति यावत् ॥ ८ ॥ खं शून्यमसत् । भावास्तद्विलक्षणाः सन्तः । भवस्थितिस्तदुभयसंवलनात्कादाचित्की सत्ता ॥ ९ ॥ स्पर्शनैषणं भोगेच्छा तत्पूर्वकं मात्राणां शब्दादिविषयाणां संस्पर्शं भोगम् । **शरीरेणे**ति । अचेतनस्य भोक्तृत्वायोगादिति भावः ॥ १० ॥ यदि शरीरेण न किंचन तर्हि शरीराभिमानो वृथैवेति त्याज्य एवेत्याह—**किमनेने**ति । तत्त्यागे निरुपाधिचितां भेदकाभावात्सर्वचिदैकात्म्यसिद्धिरपरो लाभ इत्याशयेनाह—**अशेषे**ति । **चेतनात्मक** इति । चेतना चित् तदात्मकत्वस्य सर्वत्राविशेषादिति हेतुप्रदर्शनार्थम् ॥११॥ अम्बरे आकाशे । भानौ सूर्यादितेजसि । भूतपञ्जरे अवशिष्टभूतत्रये । सुरासुरादिस्थावरजङ्गमदेहेषु च । या चित्सा अहमेव सैवाहमिति वार्थः ॥ १२ ॥ एवं सर्वचिदैक्ये भेदप्रत्ययानां पृथगनवशेषाद्व्याघाताच्च द्वित्वस्यासंभवाच्छत्रुमित्रादिकल्पनापि दूरनिरस्तेत्याह—**चिदस्ती**ति ॥१३॥ अस्तु वा देहादिद्वैतं तथाप्यसङ्गपूर्णचिन्मात्ररूपस्य मम न तत्क्षत्या कापि क्षतिरस्तीत्याह—**बलिनाम्न** इति ॥१४॥ अस्तु वा तच्चित एव च्छिन्नं तथापि च्छेद्यच्छेदनादिभावाभावानां तद्गोचररागद्वेषादीनां च चिदधीनकल्पनत्वेन चिदव्यतिरेकान्न चित्प्रतिकूलं किंचिदापन्नमित्याशयेनाह—**चिते**ति ॥१५॥१६॥१७॥ प्रतिकूलाप्रसिद्धौ चितो नित्यानुकूलप्रथमानतालक्षणा आनन्दात्मना स्वत एव परिशिष्यत इत्याशयेन नित्यानन्दमयात्मक इत्युक्तिः ॥१८॥ जगद्रूपनामकल्पनावच्चितः स्वनामकल्पनापि स्वविवर्त एवेत्याह—**चित** इति । सर्वगा सर्वनामरूपकल्पनाधिष्ठानचिच्छक्तिरेव स्वनामशब्दात्मिकेव परिस्फुरतीत्यर्थः ॥ १९ ॥ एवं च कोऽहमिति प्रश्नोत्तरमपि स्वयमेव मयावगतमित्याह—**दृश्ये**ति ॥ २० ॥ ईदृशे भारूपैकस्वरूपे अस्मिन्मयि नित्यस्वात्मावभासविवर्जितः के जले अलकान्ते केशाग्रे वा प्रतिबिम्बित-

---

[1] व्यावृत्तता इत्यपि क्वचित्.

**भारूपैकस्वरूपेऽस्मिन्स्वरूपेण जयाम्यहम् ।**
**चेत्यरञ्जनरिक्ताय विमुक्ताय महात्मने ॥ २२**
**प्रत्यक्चेतनरूपाय स्वरूपाय नमोऽस्तु ते ।**
**चितये चेत्यमुक्ताय युक्त्या युक्ताय योग्यया ॥ २३**
**सर्वावभासदीपाय मह्यमेव नमोऽस्तु ते ।**
**चेत्यनिर्मुक्तचिद्रूपं विश्वग्विश्वावपूरकम् ॥ २४**
**संशान्तसर्वसंवेद्यं सच्चिन्मात्रमहं महत् ।**
**आकाशवदनन्तोऽहमप्यणोरणुराततः ॥ २५**
**नासादयन्ति मामेताः सुखदुःखदशा दशः ।**
**संवेदनमसंवेद्यमचेत्यं चेतनं ततम् ॥ २६**
**न शक्ता मां परिच्छेत्तुं भावाभावा जगद्गताः ।**
**अथ चैते जगद्भावाः परिच्छिन्दन्तु मामिमम् ॥ २७**
**यथाभिमतमेवैते मत्तो न व्यतिरेकिणः ।**
**यदि स्वभावभूतेन वस्तुना वस्तु नीयते ॥ २८**
**ह्रियते दीयते वापि तत्किं कस्य किल क्षतम् ।**
**सर्वदा सर्वमेवाहं सर्वकृत्सर्वसंगतः ॥ २९**
**चेत्यमस्म्यहमेवैतन्न किंचिदपि चोदितम् ।**
**किं संकल्पविकल्पाभ्यां चितं चिदियमेकिका ॥ ३०**
**संक्षोभयाम्यहं तावच्छाम्याम्यात्मनि पावने ।**
**इति संचिन्तयन्नेव बलिः परमकोविदः ॥ ३१**
**ओंकारादर्धमात्रार्थं भावयन्मौनमास्थितः ।**
**संशान्तसर्वसंकल्पः प्रशान्तकलनागणः ॥ ३२**
**निःशङ्कमपि दूरास्तचेत्यचिन्तकचिन्तनः ।**
**ध्यातृध्येयध्यानहीनो निर्मलः शान्तवासनः ॥ ३३**
**बभूवावातदीपाभो बलिः प्राप्तमहापदः ।**
**उपशान्तमनास्तत्र रत्नवातायने बलिः ।**
**अवसद्बहुकालं स समुत्कीर्ण इवोपले ॥ ३४**

**प्रशमितैषणया परिपूर्णया**
**मननदोषदशोज्झितयैतया ।**
**बलिरराजत निर्मलसत्तया**
**विघनमच्छतयेव शरन्नभः ॥ ३५**

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो० उपशमप्रकरणे बलिविश्रान्तिर्नाम सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः २८

श्रीवसिष्ठ उवाच ।
**अथ ते दानवास्तत्र बलेरनुचरास्तदा ।**
**तद्गेहं स्फाटिकं सौधमुच्चैरारुरुहुः क्षणात् ॥ १**
**डिम्भाद्या मन्त्रिणो धीराः सामन्ताः कुमुदादयः ।**
**सुराद्याश्चैव राजानो वृत्ताद्या बलहारिणः ॥ २**
**हयग्रीवादयः सैन्याश्चाक्राजाद्याश्च[3] बान्धवाः ।**

चन्द्रकलाप्रायः शुक्लपक्षकाले उपचयात्कान्ताः कला यस्य चन्द्रस्य तत्प्रायो वा स्वकल्पनारूपो विकलाकारः परिच्छिन्नजीवभावो य उदितः स आभासमात्रं भ्रान्तिरेव न वास्तव इत्यर्थः ॥ २१ ॥ अतएव तं जीवभावं चरमसाक्षात्कारवृत्तीद्धेन स्वरूपेणैवाहं जयाम्यभिभवामि । जितजीवभावः स्वात्मैव परमेश्वर इति तं नमस्यति—**चेत्ये**त्यादिना ॥ २२ ॥ योग्यया युक्त्या प्रत्यक्परागभेदान्वययोग्येनाखण्डाभेदेन युक्ताय साक्षात्कारयोग्यया मनननिदिध्यासनयुक्त्या युक्तायेति वा मह्यं प्रत्यग्रूपाय[1] ते ब्रह्मणे नमोऽस्तु ॥ २३ ॥ २४ ॥ २५ ॥ वर्तमानविषये संवेदनमसंवेद्यं अतीतानागतविषये अचेत्यं चेतनम् । उभयत्र चाक्षुषादिवृत्तीनां स्मृत्यादिवृत्तीनां च व्यावृत्तये असंवेद्यमचेत्यमिति च विशेषणे ॥ २६ ॥ परिच्छेत्तुं देशतः कालतो वस्तुतो वा इयत्त्वे व्यवस्थापयितुं न शक्ताः । भावाभावयोः प्रत्युत साक्षिपरिच्छेद्यत्वादिति भावः । यदि ब्रूया न वयमियत्त्वे व्यवस्थापनं परिच्छेदं ब्रूमः किंतु तत्त्वावधारणं तदनुकूलाश्च प्रमाणादयो जगद्भावास्तत्त्वतः परिच्छिन्दन्त्वेवात्मानमिति तत्राह—**अथ चे**ति । प्रकारान्तरद्योतनार्थोऽथशब्दः ॥ २७ ॥ एवं परिच्छेदनं मम यथाभिमतं संमतमेव । यतस्ते मत्स्वरूपपरिच्छेदमात्रेण मत्तो न व्यतिरेकिणो मदेकपरिशेषाः । अहमेव संपद्यन्त इत्यर्थः । एवंभूतैश्च परिच्छेदे वामहस्तगतस्य धनस्य दक्षिणहस्तेन नयने हरणे परावृत्य दाने वा हस्तद्वयाभिन्नस्य देहात्मकस्य देवदत्तस्य यथा न धनक्षतिस्तद्वन्न काचित्क्षतिरित्याह—**यदी**ति ॥ २८ ॥ वस्तुतस्तु तत्त्वबोधात्पूर्वमपि जगत्स्वयमेवेति प्रागपि न किंचिदुदितं क्षतं वेत्याशयेनाह—**सर्वदे**ति ॥२९॥ अहमेकिका चित् चिद्भूतस्य च मम संकल्पविकल्पाभ्यां किं चितमुपचितमपचितं वा ॥ ३० ॥ अज्ञानात्संक्षोभयामि तत्त्वबोधाच्च शाम्यामि इति संचिन्तयन्बलिः ओंकारात्स्थूलसूक्ष्मसंक्षोभाभ्यां तद्बीजाज्ञानेन च संवलितं चैतन्यं बोधयदकारादिमात्रात्रयं विहाय परमर्धमात्रार्थं तुरीयं भावयन् स्वात्मतयानुभवंस्तत्र समाहितः स्थितः ॥ ३१ ॥ ३२ ॥ दूरे अस्तानि चेत्यचिन्तकचिन्तनानि येन । त्रिपुटीमात्रत्यागोपलक्षणमेतत् । तत्र हेतुः-**ध्यात्रि**ति ॥३३॥ उपले समुत्कीर्णः टङ्कच्छेदनिष्पादितः पुरुष इव ॥ ३४ ॥ बलिः प्रशमितैषणया अतएव परिपूर्णया अतएव विषयमननदोषदशाभिरुज्झितया एतया निर्मलब्रह्मभावप्राप्तिलक्षणया सत्तया विघनं गतमेघं शरन्नभ इव अराजत ॥ ३५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे बलिविश्रान्तिर्नाम सप्तविंशतितमः सर्गः ॥ २७ ॥

**निश्चेष्टं बलिमालोक्य विषण्णैर्दानवैः स्मृतः ।**
**शुक्रस्तत्स्थितिमाख्याय तेषां शोकमिहाहरत् ॥ १ ॥**

तस्य बलेर्गेहं आश्रयभूतं सौधम् ॥ १ ॥ अनुचरानेव

१ रूपाय इति पाठः. २ मयि इत्यपि क्वचित्पाठः. ३ ...जाद्यास्तथापि पाठः.

लडुकाद्याश्च सुहृदो वल्लूकाद्याश्च लालकाः ॥ ३
कुबेरयमशक्राद्या उपायनकराः सुराः ।
यक्षविद्याधरा नागाः सेवावसरकाङ्क्षिणः ॥ ४
रम्भातिलोत्तमाद्याश्च चामरिण्यो वराङ्गनाः ।
सागराः सरितः शैला दिशश्च विदिशस्तथा ॥ ५
सेवार्थमाययुस्तस्य तं प्रदेशं तदा बलेः ।
अन्ये च बहवः सिद्धास्त्रैलोक्योदरवासिनः ॥ ६
ध्यानमौनसमाधिस्थं चित्रार्पितमिवाचलम् ।
नमत्किरीटावलयो ददृशुर्बलिमादृताः ॥ ७
तं दृष्ट्वा कृतकर्तव्यप्रणामास्ते महासुराः ।
विषादविस्मयानन्दभयमन्थरतां ययुः ॥ ८
मन्त्रिणः प्रविचार्यात्र किं प्राप्तमिति दानवाः ।
भार्गवं चिन्तयामासुर्गुरुं सर्वविदांवरम् ॥ ९
चिन्तनानन्तरं दैत्या भार्गवं भास्वरं वपुः ।
ददृशुः कल्पितं प्राप्तं गन्धर्वनगरं यथा ॥ १०
पूज्यमानोऽसुरगणैर्निविष्टो गुरुविष्टरे ।
ददर्श ध्यानमौनस्थं भार्गवो दानवेश्वरम् ॥ ११
विश्रम्य स क्षणमिव प्रेमवानवलोक्य च ।
बलिं विचारयन्दृष्ट्वा परिक्षीणभवभ्रमम् ॥ १२
देहरश्मिशतैर्दत्तदीप्तिभिः क्षीरसागरम् ।
क्षिपन्निव सभामाह हसन्वाक्यमिदं गुरुः ॥ १३
अतिमात्रमिदं दैत्याः स्वविचारणयैव यत् ।
संप्राप्तविमलावासः सिद्धोऽयं भगवान्बलिः ॥ १४
अयं तदेवमेवेह तिष्ठन्दानवसत्तमाः ।
स्वात्मनि स्थितिमाप्नोतु पदं पश्यत्वनामयम् ॥ १५
श्रान्तो विश्राममायातः क्षीणचित्तभवभ्रमः ।
शान्तसंसारनीहारो वाचनीयो न दानवाः ॥ १६
स्व एवालोक एतेन संप्राप्तोऽज्ञानसंकटे ।
शान्तेऽत्र संभ्रमे सौरो दिनेनेव करोत्करः ॥ १७
स्वयमेव हि कालेन प्रबोधमयमेष्यति ।
बीजकोशात्स्वसंवित्त्या सुप्तमूर्तिरिवाङ्कुरः ॥ १८
कुरुध्वं स्वामिकार्याणि सर्वे दानवनायकाः ।
बलिर्वर्षसहस्रेण समाधेर्बोधमेष्यति ॥ १९
इत्युक्ता गुरुणा तत्र हर्षामर्षविषादजाम् ।
दैत्याश्चिन्तां जहुः शुष्कां मञ्जरीमिव पादपाः ॥ २०
वैरोचनिसभासंस्थां विधाय प्राग्व्यवस्थया ।
स्वव्यापारपरास्तस्थुः सर्व एवासुरास्ततः ॥ २१
नरा मही महिपतयो रसातलं
ग्रहा नभस्त्रिदशगणास्त्रिविष्टपम् ।
दिशोऽद्रयो दिक्पतयश्च कंदरा-
न्वनेचरा गगनचराश्च खं ययुः ॥ २२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे बलिसमाधानवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥

---

नामभिरुद्दिशति—**डिम्भाद्या** इत्यादिना ॥ २ ॥ ३ ॥ ४ ॥ दिशो विदिशश्च दिगधिदेवतास्तास्वधिकृता जनाश्च ॥५॥ सिद्धाः देवयोनिविशेषाः ॥ ६ ॥ शिरोनमनान्नमन्त्यः किरीटावलयो येषाम् । आदृताः सादराः ॥ ७ ॥ कृतः अवश्यकर्तव्यः प्रणामो यैः । सुहृदो विषादमन्थरताम्, उदासीना विस्मयमन्थरताम्, तत्त्वविदस्त्वानन्दमन्थरताम्, अनभिज्ञोपजीविनस्तुभयमन्थरतां ययुः । अथवा प्राणसंशयाद्विषादमन्थरताम्, सुखप्रसाददर्शनाद्विस्मयमन्थरताम्, रोमाञ्चाद्यानन्दलिङ्गदर्शनादानन्दमन्थरताम् चिरमनुत्थाने त्राणादर्शनाद्भयमन्थरतां ययुरित्यर्थः ॥ ८ ॥ ॥९॥ कल्पितं सप्तर्षिसभागतेनैव भार्गवेण योगबलाद्बलिसौधदेशे प्राप्तत्वेन कल्पितम् ॥ १० ॥ ११ ॥ इवशब्दो विश्रान्तेरपि कल्पितत्वद्योतनार्थः ॥ १२ ॥ क्षिपन् प्रसारयन् निन्दन्वा । सभां तत्स्थान्दैत्यान् हसन्ननभिज्ञताख्यापनायोपहसन् ॥ १३ ॥ हे दैत्याः, अयं बलिः स्वविचारणयैव संप्राप्तो विमल आवासः सर्वाधिष्ठानं ब्रह्म येन तथाविध इति यत्तदतिमात्रम् । अतिशयोऽस्य सुखविश्रान्तेरित्यर्थः ॥ १४ ॥ तत्तस्मादयमेव समाहितस्तिष्ठन् निरतिशयानन्दे स्वात्मनि स्थितिं निरावस्थानमाप्नोतु ॥ १५ ॥ न वाचनीयो न संभाषणीयः तूष्णीमाध्वमिति यावत् ॥ १६ ॥ अत्र भुवि रात्र्यन्धकारनिद्रादिसंभ्रमे शान्ते सति दिनेन दिवसेन सौरः करोत्करः किरणसमूह इव । एतेन बलिना अज्ञानसंकटे शान्ते सति स्व एवालोकः संप्राप्तः ॥१७॥ बीजकोशाद्बीजपुटात् स्वसंवित्त्या मूर्च्छितावस्थाप्रच्युत्या। अङ्कुराहंभावप्रबोधेनेति यावत् ॥१८॥ स्वामिकार्याणि राज्यतन्त्राणि ॥ १९ ॥ दैत्यग्रहणं देवानामप्युपलक्षणम् । अतएव दुर्हृदो हर्षजां, द्विषोऽमर्षजां, सुहृदुपजीविनश्च विषादजां चिन्तां जहुः ॥ २० ॥ प्राग्व्यवस्थया पूर्वक्लृप्तराज्यतन्त्रव्यवहारक्रमेण ॥ २१ ॥ आगन्तुका नरनागादयस्तदा किं चक्रुस्तदाह—**नरा** इति । ययुरिति सर्वत्र संबध्यते । अद्रयः कुलाचलाधिदेवता दिक्पतयो दिक्पालाश्च स्वाः स्वा दिशो ययुः । वनेचरा ऋक्षवानरादियूथपतयः किष्किन्धादिकन्दरान् ययुः । गगनचरा गरुडसंपातिजटायुप्रभृतयः ॥२२॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे बलिसमाधानवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥



१ अस्मिन्पद्ये छन्दोभेदः.

# एकोनत्रिंशः सर्गः २९

श्रीवसिष्ठ उवाच ।

अथ वर्षसहस्रेण दिव्येनासुर[1]पुङ्गवः ।
देवदुन्दुभिनिर्घोषैर्बुबुधे भगवान्बलिः ॥ १
बलौ प्रबुद्धे तद्बालं विरेजे नगरं तदा ।
वैरिञ्च इव सूर्यौघ उदिते कमलाकरः ॥ २
बलिः प्रबुद्ध एवासौ यावन्नायान्ति दानवाः ।
तावत्संचिन्तयामास समाधिसदने क्षणम् ॥ ३
अहो नु रम्या पदवी शीतला पारमार्थिकी ।
अहमस्यां क्षणं स्थित्वा परां विश्रान्तिमागतः ॥ ४
तदेतामेव पदवीमवलम्ब्य करोम्यहम् ।
भवतीहोपभुक्ताभिः किं मे बाह्यविभूतिभिः ॥ ५
ऐन्दवेष्वपि बिम्बेषु न तथानन्दवीचयः ।
तोषयन्ति यथान्तर्मे संसिद्धिभवभूतयः ॥ ६
इति भूयोऽपि विश्रान्त्यै कुर्वाणं गलितं मनः ।
बलिमावारयामासुर्दैत्याश्चन्द्रमिवाम्बुदाः ॥ ७
तानालोक्य पुनर्दध्यौ तत्प्रणामाकुलेक्षणः ।
तैः कुलाचलसंकाशैः परिवीतवपुस्त्विदम् ॥ ८
चितः क्षीणविकल्पस्य किमुपादेयमस्ति मे ।
मनस्तदभिपातित्वाद्याति तद्रसतामलम् ॥ ९
मोक्षमिच्छाम्यहं कस्माद्बद्धः केनास्मि वै पुरा ।
अबद्धो मोक्षमिच्छामि केयं बालविडम्बना ॥ १०
न बन्धोस्ति न मोक्षोस्ति मौर्ख्यं मे क्षयमागतम् ।
किं मे ध्यानविलासेन किं वा ध्यानेन मे भवेत् ॥ ११
ध्यानाध्यानभ्रमौ त्यक्त्वा पुंस्त्वं स्वमवलोकयत् ।
यदायाति तदायातु न मे वृद्धिर्न वा क्षयः ॥ १२
न ध्यानं नापि वाऽध्यानं न भोगान्नाप्यभोगिताम्[2] ।
अभिवाञ्छामि तिष्ठामि सममेव गतज्वरः ॥ १३
न मे वाञ्छा परे तत्त्वे न मे वाञ्छा जगत्स्थितौ ।
न मे [3]ध्यानदशाकार्यं न कार्यं विभवेन मे ॥ १४
नाहं मृतो न जीवामि न सन्नासन्न सन्मयः ।
नेदं मे नैव चान्यन्मे नमो मह्यमहं बृहत् ॥ १५
इदमस्तु जगद्राज्यं तिष्ठाम्यत्र तु संस्थितः ।
नेह वास्तु जगद्राज्यं तिष्ठाम्यात्मनि शीतलः ॥ १६
किं मे ध्यानदशा कार्यं किं राज्यविभवश्रिया ।
यदायाति तदायातु नाहं किंचन मे क्वचित् ॥ १७
न किंचिदपि कर्तव्यं यदि नाम मयाधुना ।
तत्कस्मान्न करोमीदं किंचित्प्रकृतकर्म वै ॥ १८
इति निर्णीय पूर्णात्मा बलिर्ज्ञानवतां वरः ।
दैत्यानालोकयामास पद्मानीव दिवाकरः ॥ १९
दृष्टिपातविभागेन सर्वेषां दनुजन्मनाम् ।
शिरःप्रणामाञ्जग्राह पुष्पामोदानिवानिलः ॥ २०
अथ वैरोचनिस्तत्र ध्येयत्यागमयात्मना ।
मनसा सकलान्येव राजकार्याणि संव्यधात् ॥ २१
द्विजान्देवान्गुरूंश्चैव पूजयामास पूजया ।
संमानयामास सुहृद्बन्धुसामन्तसज्जनान् ॥ २२

---

जीवन्मुक्तस्य राज्यश्रीः पाताले रोधनं बलेः ।
रामाय बलिवत्पूर्णस्थितिश्चात्रोपदिश्यते ॥ १ ॥

वर्षसहस्रेणेति समाधेर्वर्षसहस्रेणात्यन्तसंयोगादपवर्गे तृतीया ॥ १ ॥ बलेरिदं बालं नगरं वैरिञ्चे विरिञ्चिरायतनभूतगगने सूर्यौघे सूर्यकिरणप्रवाहे उदिते सति कमलाकरः पद्माकर इव विकासश्रीमानित्यर्थः । 'सर्गौघे' 'सर्वौघे' इति पाठयोस्तु सर्वं पदार्थजातं सर्गं वा ओघयति समर्थयतीति व्युत्पत्त्या सूर्य एव ग्राह्यस्तस्मिन्नुदिते सतीत्यर्थः । 'ओघृ सामर्थ्ये' इति धातोर्ण्यन्तात्कर्मण्यण् ॥ २ ॥ समाधिसदने प्रागुक्तसमाधिस्थाने ॥ ३ ॥ समाधिसुखमग्नस्य दिव्यवर्षसहस्रमपि क्षणवद्गतमिति क्षणं स्थित्वेत्युक्तिः ॥ ४ ॥ करोमि विश्रान्तिमिति शेषः । बाह्यविभूतिभिरुपभुक्ताभिर्मे किं भवति । न किंचिदीदृशं विश्रान्तिसुखमित्यर्थः ॥ ५ ॥ तदेवाह—**ऐन्दवेष्विति** । संसिद्धिः समाधिपरिपाकस्तद्भवा भूतय आनन्दाः । एकस्मिन्नेव इयत्तया अपरिच्छेद्यत्वाद्बहुत्वकल्पनया बहुवचनम् ॥ ६ ॥ आवारयामासुरागत्य परिवव्रुः ॥ ७ ॥ पुनःशब्दः पूर्वसमाधिसंकल्पपरावृत्तिद्योतनार्थः ॥ ८ ॥ उपादेयबुद्ध्या हि बाह्यार्थदर्शने मनस्तदभिपातित्वात्तद्रागितालक्षणं मलं याति न दर्शनमात्रेणेत्यर्थः ॥ ९ ॥ ननु मोक्षेच्छया समाध्यवलम्बनियमोऽस्तु तत्राह—**मोक्ष**मिति । ज्ञानेन त्रैकालिके अविद्यातत्कार्यबाधे सति बन्धस्यैवादर्शनादिति भावः । बालानां मूर्खाणां विडम्बना चेष्टानुकृतिः ॥ १० ॥ ॥ ११ ॥ स्वं प्रत्यग्रूपं पुंस्त्वमात्मतत्त्वं दृक्स्वभावादेव बहिर्प्यौदासीन्येनावलोकयत्सद्यद्वस्तु प्रति आयाति तदायातु स्फुरतु नाम नैतावता मेऽज्ञानामिव देहादितादात्म्याध्यासात्तद्वृद्धिक्षयप्रयुक्तौ वृद्धिक्षयौ स्तो येनानर्थः स्यादित्यर्थः । अयं श्लोकः क्वचिदेवास्ति न सर्वत्र ॥ १२ ॥ १३ ॥ १४ ॥ देहसंबन्धाभावान्न मृतः । प्राणसंबन्धाभावान्न जीवामि । सन्मूर्तः । सन्मयस्तद्विकारः । इदं देहभुवनादि । अन्यद्देहान्तरभुवनान्तरादि ॥ १५ ॥ १६ ॥ १७ ॥ कर्तव्यं कर्तृत्वास्थया निर्वर्तनीयम् । तत्तर्हि किंचित् अनास्थितचेष्टासाध्यं प्रकृतं कर्म राज्यपरिपालनं किं कुतो न करोमि ॥ १८ ॥ १९ ॥ दृष्टिपातानां विभागेन तत्तदुचितवैचित्र्येण ॥ २० ॥ ध्येयो वासनात्यागः प्राग्वर्णितस्तन्मयात्मना तद्विलासप्रचुरेण ॥ २१ ॥ पूजा पाद्यार्घ्यादि, उचितदानसंभावनादिसत्कारः संमाननमिति भेदः ॥ २२ ॥

---

१ सत्तम इति पाठः. २ नाथ भोगिता इति पाठः. ३ अत्र ध्यानदृशा कार्यं इति साधु.

अथैनापूरयामास भृत्यानर्थिगणांस्तथा ।
ललना लालयामास विचित्रविभवार्पणैः ॥ २३
इत्यसौ ववृधे तस्मिन्राज्ये सकलशासने ।
यज्ञं प्रति बभूवाथ मतिरस्य कदाचन ॥ २४
तर्पिताशेषभुवनं देवर्षिगणपूजितम् ।
सह शुक्रादिभिर्मुख्यैः स चकार महामखम् ॥ २५
बलिर्भोगभरस्यार्थी नेति निर्णीय माधवः ।
बलेरीहितसिद्ध्यर्थं सिद्धिदस्तन्मखं ययौ ॥ २६
भोगैककृपणायैदं जगज्जङ्गलखण्डकम् ।
दातुं शोच्याय शक्राय वयोज्येष्ठाय कार्यवित् ॥ २७
क्रममाणो बलेनात्र वञ्चयित्वा बलिं हरिः ।
बबन्ध पातालतले भूगेह इह वानरम् ॥ २८
अद्यासौ संस्थितो राम पुनरिन्द्रत्वहेतुना ।
जीवन्मुक्तवपुः स्वस्थो नित्यं ध्यानविषण्णधीः ॥ २९
पातालकुहरे तिष्ठञ्जीवन्मुक्तगतिर्बलिः ।
आपदं संपदं दृष्ट्या समयैव स पश्यति ॥ ३०
नास्तमेति न चोदेति तत्प्रज्ञा सुखदुःखयोः ।
समा स्थिरकरा चित्रलेख्या सूर्यावलिर्यथा ॥ ३१
आविर्भावतिरोभावसहस्राणीह जीवताम् ।
तन्मनश्चिरमालोक्य भोगेषु विरतिं गतम् ॥ ३२
दशकोटीश्च वर्षाणामनुशास्य जगत्त्रयम् ।
अन्ते विरक्ततां प्राप्तमुपशान्तं बलेर्मनः ॥ ३३
ऊहापोहसहस्राणि भावाभावशतानि च ।
बलिना परिदृष्टानि क समाश्वासमेत्यसौ ॥ ३४
भोगाभिलाषं संत्यज्य बलिः संपूर्णमानसः ।
आत्मारामस्थितो नित्यं मध्ये पातालकोटरे ॥ ३५

पुनरेतेन बलिना जगदिन्द्रतयाखिलम् ।
अनुशास्यमिदं राम बहून्वर्षगणानिह ॥ ३६
न तस्येन्द्रपदप्राप्त्या तुष्टिः समुपजायते ।
न तस्य स्वपदभ्रंशादुद्वेग उपजायते ॥ ३७
समः सर्वेषु भावेषु सर्वदैवोदिताशयः ।
संप्राप्तमाहरन्स्वस्थ आकाश इव तिष्ठति ॥ ३८
बलेर्विज्ञानसंप्राप्तिरेषा ते कथिता मया ।
एतां दृष्टिमवष्टभ्य त्वमप्यभ्युदितो भव ॥ ३९
बलिवत्प्रविवेकेन नित्योऽहमिति निश्चयात् ।
पदमासादयाद्वैतं पौरुषेणैव राघव ॥ ४०
द्वे चाष्टौ चैव वर्षाणां कोटीर्भुक्त्वा जगत्त्रयम् ।
अन्ते वैरस्यमापन्नो बलिरप्यसुरोत्तमः ॥ ४१
तस्मादवश्यवैरस्यं भोगभारमरिंदम ।
संत्यज्य सत्यमानन्दमवैरस्यं पदं व्रज ॥ ४२
इमा दृश्यदृशो राम नानाकारविकारदाः ।
नेह कान्ततया ज्ञेया दूराच्छैलशिला इव ॥ ४३
धावमानमिहामुत्र लुठितं लोकवृत्तिषु ।
संस्थापय निबध्यैतच्चेतो हृदयकोटरे ॥ ४४
चिदादित्यो भवानेव सर्वत्र जगति स्थितः ।
कः परस्ते क आत्मीयः परिस्खलसि किं मुधा ॥ ४५
त्वमनन्तो महाबाहो त्वमाद्यः पुरुषोत्तमः ।
त्वं पदार्थशताकारैः परिस्फूर्जसि चिद्वपुः ॥ ४६
त्वयि सर्वमिदं प्रोतं जगत्स्थावरजंगमम् ।
बोधे नित्योदिते शुद्धे सूत्रे मणिगणा यथा ॥ ४७
न जायसे न म्रियसे त्वमजः पुरुषो विराट् ।
चिच्छुद्धा जन्ममरणभ्रान्तयो मा भवन्तु ते ॥ ४८

॥२३॥ असौ बलिः सकलानां देवासुरादीनां शासने आज्ञापनविषये राज्ये ववृधे। राज्याज्ञाद्यभिवृद्धिं प्रापेत्यर्थः। अथ कदाचन यज्ञं प्रति अस्य मतिरिच्छा बभूव ॥ २४ ॥ महामखं अश्वमेधम् ॥ २५ ॥ २६ ॥ भोगे एकस्मिन्नेव आसक्तत्वात्कृपणाय अतएव शोच्याय । कार्यमवश्यकर्तव्यं शक्रसुकृतफलप्रदानं वेत्तीति कार्यवित् भिक्षणचातुर्यविद्वा ॥ २७ ॥ बलेन मायाबलेन क्रममाणस्त्रीन् लोकानिति शेषः ॥ २८ ॥ अद्य अद्यापि । असौ बलिः पाताले पुनरिन्द्रत्वहेतुना प्रारब्धेनोपलक्षित इति शेषः । स्थितः । ध्याने निर्विकल्पसमाधौ विषण्णा गलिता धीर्यस्य ॥ २९ ॥ ३० ॥ समा उदयास्तमयरहिता । स्थिराः करा मरीचयो यस्याः । चित्रस्य लेखनं चित्रलेख्या तत्संबन्धिनी सूर्यावलिः सूर्यमण्डलं यथा तथेत्यर्थः ॥ ३१ ॥ जीवतां जीवनास्थावतां भोगलम्पटानां विभवानां जन्मादीनां चाविर्भावतिरोभावसहस्राणि चिरमालोक्य तस्य बलेर्मनो विरतिं वैराग्यं गतम् ॥ ३२ ॥ ३३ ॥ सुखदुःखयोरूहापोहयोरागमापाययोः सहस्राणि । भावाभावयोः संपद्विपदोः शतानि च । सहस्रशतशब्दावसंख्येयपरौ ॥ ३४ ॥ सप्तपातालानां मध्यभूते रसातलाख्ये पातालकोटरे यावद्विपत्क्षयं स्थितः ॥ ३५ ॥ अनुशास्यं स्वामिभावेन आज्ञाप्यं भविष्यतीत्यर्थः ॥३६॥३७॥ उदिताशयः संतुष्टचित्तः । संप्राप्तं प्रारब्धोपनीतमाहरनुपभुञ्जानः ॥ ३८ ॥ बलिचरित्रमुपसंहृत्य रामायोपदिशति—बलेरित्यादिना । अभ्युदितो जीवन्मुक्त्यभ्युदयवान् ॥ ३९ ॥ प्रविवेकेन स्वविचारेण ॥ ४० ॥ द्वे चाष्टौ च । दशकोटीरिति यावत् ॥ ४१ ॥ अवश्यं वैरस्यं दुःखपर्यवसानं यस्य । अवैरस्यं निर्दुःखम् ॥४२॥ कान्ततया रम्यतया। तत्र 'दूरस्थाः पर्वता रम्याः' इति प्रसिद्धं दृष्टान्तमाह—दूरादिति ॥ ४३ ॥ इह ऐहिकभोगेषु अमुत्र पारलौकिकभोगेषु धावमानम् । लोकवृत्तिषु पामरचेष्टासु लुठितं प्रवृत्तम् ॥४४॥ ननु शत्रुमित्रयोः कथं समदृष्टिः स्यात्तत्राह—चिदादित्य इति। आदित्य इव सर्वावभासिका चित् चिदादित्यः । तथाच त्वमेव शत्रुदेहादावपि प्रकाशक आत्मेति न वैषम्ये हेतुरस्तीति भावः ॥ ४५ ॥ ननु जीवस्य मम कथमीश्वरात्मसमदर्शनं तत्राह—त्वमिति । जडवैषम्यमप्यानन्त्येनैव नाशङ्क्यमित्याशयेनाह—त्वं पदार्थशताकारैरिति ॥४६॥ तत्संभावनार्थमाह—त्वयीति ॥ ४७ ॥ कालकृतवैषम्याण्यपि

समस्तजन्मरोगाणां प्रविचार्य बलाबलम् ।
तृष्णामुत्सृज्य भोगानां भोक्तैव भव केवलम् ॥ ४९
त्वयि स्थिते जगन्नाथे चिदादित्ये सदोदिते ।
इदमाभासते सर्वं संसारस्वप्नमण्डनम् ॥ ५०
मा विषादं कृथा व्यर्थं सुखदुःखेषणा न ते ।
शुद्धचित्तोऽसि सर्वात्मा सर्ववस्त्ववभासकः ॥ ५१
पूर्वमिष्टमनिष्टं त्वमनिष्टं चेष्टमित्यपि ।
परिकल्प्य तदभ्यासात्तत्ततोऽपि परित्यज ॥ ५२
इष्टानिष्टदृशोस्त्यागे समतोदेति शाश्वती ।
तया हृदयवर्तिन्या पुनर्जन्तुर्न जायते ॥ ५३
येषु येषु प्रदेशेषु मनो मज्जति बालवत् ।
तेभ्यस्तेभ्यः समाहृत्य तद्धि तत्त्वे नियोजयेत् ॥ ५४
एवमभ्यागताभ्यासं मनोमत्तमतंगजम् ।
निबध्य सर्वभावेन परं श्रेयोऽधिगम्यते ॥ ५५
मा शरीरयथार्थज्ञैर्मिथ्यादृष्टिहताशयैः ।
धूर्तैः संकल्पविक्रीतैर्विमूढैः समतां व्रज ॥ ५६
अकिंचनात्स्वनिर्णीतौ लम्बमानात्परोक्तिषु ।
न मौर्ख्यादधिको लोके कश्चिदस्तीह दुःखदः ॥ ५७
त्वमेतदविवेकाभ्रमुदितं हृदयाम्बरे ।
विवेकपवनेनाशु दूरं नय महामने ॥ ५८
आत्मनैव प्रयत्नेन यावदात्मावलोकने ।
न कृतोऽनुग्रहस्तावन्न विचारोदयो भवेत् ॥ ५९
वेदवेदान्तशास्त्रार्थतर्कदृष्टिभिरण्ययम् ।
नात्मा प्रकटतामेति यावन्न स्वमवेक्षितम् ॥ ६०
त्वमात्मन्यात्मना राम प्रसादे समवस्थितः ।
प्राप्तोऽसि विततं बोधं मद्वचस्येव बुध्यसे ॥ ६१
विकल्पांशविहीनस्य त्वयैषा चिद्विवस्वतः ।
गृहीता वितता व्याप्तिर्मदुक्त्या परमात्मनः ॥ ६२
विलीनसर्वसंकल्पः शान्तसंदेहविभ्रमः ।
क्षीणकौतुकनीहारो जातोऽसि विगतज्वरः ॥ ६३
यदुपगच्छसि पासि निहंसि वा
पिबसि विस्मयसे च विवर्धसे ।
तदपि तेन तदास्तु यदा मुने
विगतबोधकलङ्कविशङ्कितः ॥ ६४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उपशमप्रकरणे बलेर्विज्ञानप्राप्तिर्नामैकोनत्रिंशः सर्गः ॥ २९ ॥

---

परिहर्तुमाह—**न जायसे** इति ॥ ४८ ॥ तृष्णावृद्धौ जन्मादिरोगाणां प्राबल्यं तृष्णापक्षये च तेषां दौर्बल्यमित्यन्वयव्यतिरेकाभ्यां परीक्ष्येत्यर्थः । भोगानां तृष्णामुत्सृज्य भोक्ता भोगसाक्षिचिन्मात्रमेव भव ॥ ४९ ॥ त्वदीयचिद्बलादेव जगत्सिद्धमित्याह—**त्वयीति** ॥ ५० ॥ शुद्धचित्तः प्रबुद्धचित्तः ॥५१॥ यद्यशुद्धचित्तोऽसि तथापि तच्छुद्धये क्रमादुपायं शृण्वित्याह—**पूर्वमिति** । यद्यदिष्टं मनःप्रियं तदनिष्टमनर्थसाधनं यच्चानिष्टमप्रियं मनसस्तपःक्लेशेन्द्रियसंयमप्राणायामादि तत्सर्वमिष्टमावश्यकं ममेति प्रथमं परिकल्प्य सप्तमभूमिकापरिपाकपर्यन्तं तदभ्यासात्तज्जये सति तत् तां कल्पनामपि ततः परित्यजेत्यर्थः ॥५२॥ तत्त्यागफलमाह—**इष्टेति** । हृदयवर्तिन्या अभ्यासाद्धृदये स्थिरीकृतया ॥ ५३ ॥ तत्त्वे तत्तदधिष्ठानचिन्मात्रे । तथाच भगवताप्युक्तम् 'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥' इति ॥५४॥ सर्वभावेन सर्वप्रयत्नेन सर्वात्मभावेन च । निबध्य निरुध्य ॥५५॥ शरीरमेव यथार्थं परमार्थं इति ये जानन्ति तैः । भोगसंकल्पेभ्यो विक्रीतैरिव तत्परवशैः ॥ ५६ ॥ पराधीनप्रज्ञानां स्वयंविचारासमर्थानां मौर्ख्यमेव महाननर्थ इत्याह—**अकिंचनादिति** । स्वस्यात्मतत्त्वस्य निर्णीतौ निर्णयविषये अकिंचनात् विवेकवैराग्याद्युपायदरिद्रात् । परेषां प्रतारकाणां मूर्खाणां चोक्तिषु अन्धगोलाङ्गूलन्यायेनावलम्बमानात् ॥ ५७ ॥ एतन्मौर्ख्यलक्षणमविवेकाभ्रमणादविवेकाभ्रम् ॥ ५८ ॥ **मौर्ख्यनिरासहेतुर्विचारः** स च बहुजन्मसंचितसुकृतपरिपाकजादात्मानुग्रहादेव भवतीत्याह—**आत्मनैवेति** । प्रयत्नेन श्रवणवैराग्यादिपुरुषप्रयत्नेन ॥५९॥ सत्यपि वैराग्यविचारश्रवणादौ बहिर्मुखदृष्टेर्ज्ञानानुदयात्प्रत्यग्दृष्टिरप्यावश्यकीत्याशयेनाह—**वेदेति** । तथाचोक्तं वार्तिके 'अपामार्गलतेवायं विरुद्धफलदो भवः । प्रत्यग्दृशां विमोक्षाय विबन्धाय पराग्दृशाम् ॥' इति ॥६०॥ तर्हि प्रत्यग्दृष्टिरेवैका ज्ञानायास्तु किं गुरूपदेशेनेत्याशङ्क्याह—**मद्वचस्येवेति** । मदुपदेशे सत्येवेत्यर्थः । 'बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः' इतिन्यायाद्गुरुशास्त्रोक्तिसंवादे सत्येव स्वप्रत्यये विश्वासादसंदिग्धबोधसिद्धिरिति द्योतनायैवकारः ॥ ६१ ॥ अमुमेवार्थं स्पष्टमाह—**विकल्पेति** । संदेहादिचित्तविकल्पैरविषयीकृतस्येत्यर्थः । वितता व्याप्तिर्बाधाप्यपरिच्छिन्नता ॥ ६२ ॥ कौतुकं बाह्यार्थचमत्कारकुतूहलमात्मतत्त्वजिज्ञासाकुतूहलं च स एव नीहारोऽवश्यायः ॥ ६३ ॥ हे मुने मननशील राम, त्वं यदा विगतो बोधस्य बोधैकरसस्यात्मतत्त्वस्य कलङ्क आवरणं विशङ्कितं विक्षेपश्च यस्य तथाविधो भविष्यसि तदा ते यदप्राप्तं ज्ञानं तत्साधनं च विचारगुरुशास्त्रोपदेशाद्युपगच्छसि मोक्षार्थं स्वीकरोषि, यच्च विवेकवैराग्यादि पासि यत्नेन रक्षसि, यच्चालस्यप्रमादादिदोषजातं निहंसि यत्नेन जयसि, यच्च समाधिसुखामृतं पिबसि, यच्चोत्तरोत्तरभूमिकाधिरोहणेन विस्मयसे, यच्च सप्तमभूमिकाविश्रान्त्या पूर्वपूर्वावस्थाधिकसुखोत्कर्षाद्विवर्धसे तदपि तदा नास्तु किंतु ब्रह्मैव यथास्थितं तिष्ठेत्यर्थः ॥ ६४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे बलेर्विज्ञानप्राप्तिर्नामैकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ३०

श्रीवसिष्ठ उवाच ।
अथेमं परमं राम विज्ञानाभिगमे क्रमम् ।
शृणु दैत्येश्वरः सिद्धः प्रह्लादः स्वात्मना यथा ॥ १
आसीत्पातालकुहरे विद्रावितसुरासुरः ।
हिरण्यकशिपुर्नाम नारायणपराक्रमः ॥ २
आक्रान्तभुवनाभोगः स जहार हरेर्जगत् ।
षट्पदस्य बृहत्पत्रं राजहंस इवाम्बुजम् ॥ ३
चकार जगतां राज्यं समाक्रान्तसुरासुरः ।
दन्ती निरस्तहंसौघो नलिन्यामलिनामिव ॥ ४
अथासावसुराधीशः कुर्वंस्त्रिभुवनेशताम् ।
कालेन सुषुवे पुत्रानङ्कुरानिव माधवः ॥ ५
तेऽवर्धन्ताचिरेणैव तेजस्यूर्जितबालकाः ।
दशार्कांशुशतानीव व्योमाक्रान्तिविलासिनः ॥ ६
प्रह्लादनामा बलवान्प्रधानात्मा बभूव ह ।
तेषां मध्ये महार्हाणां मणीनामिव कौस्तुभः ॥ ७
तेनाराजत पुत्रेण हिरण्यकशिपुर्भृशम् ।
सर्वसौन्दर्ययुक्तेन वसन्तेनेव वत्सरः ॥ ८
अथ पुत्रसहायोऽसौ बलकोशसमन्वितः ।
आजगाम मदं दैत्यस्त्रिगण्डगलितेभवत् ॥ ९
तत्तापाक्रान्तितापेन त्रिजगन्ति विकासिना ।
कल्पान्तसूर्यगणवन्नवयैव करश्रिया ॥ १०
अखिद्यन्तास्य तेनाथ सूर्येन्दुप्रमुखाः सुराः ।
दुर्विलासविलोलस्य बालस्येव स्वबन्धवः ॥ ११
प्रार्थयांचक्रिरेऽथाजं दैत्येन्द्रेभपतेर्वधे ।
न क्षमन्ते महान्तोपि पौनःपुन्येन दुष्क्रियाम् ॥ १२
ततः प्रलयपर्यस्तजगद्घर्घरजृम्भितम् ।
दिग्दन्तिदशनप्रख्यनखवज्रादिजृम्भितम् ॥ १३
स्थिरविद्युल्लताजालभासुरद्विजमण्डलम् ।
दशदिक्कोटरोद्भ्रान्तज्वलज्ज्वलनकुण्डलम् ॥ १४
समस्तकुलशैलेन्द्रपिण्डपीठोद्भटोदरम् ।
दोर्द्रुमाधूतनिर्धूतस्फुरद्ब्रह्माण्डखर्परम् ॥ १५
वदनोदरनिष्क्रान्तवातोत्सारितपर्वतम् ।
त्रिजगद्दहनोयुक्तकोपकल्पाग्निगर्वितम् ॥ १६
सटाविकटपीनांसस्पन्दप्रेरितभास्करम् ।
रोमकूपलसद्धेतिपुञ्जापिञ्जरपर्वतम् ॥ १७
कुलाचलमहाकुड्यघटनोद्भटदिक्तटम् ।
सर्वावयवनिष्क्रान्तपट्टिशप्रासतोमरम् ॥ १८
नारसिंहं वपुः कृत्वा माधवोऽहन्महासुरम् ।

---

हिरण्यकशिपोर्वीर्यं प्रह्लादादिसुतोद्भवः ।
नृसिंहेन वधः शोकादौर्ध्वदेहिकमुच्यते ॥ १ ॥

इत्थं केवलं काकतालीयन्यायप्रवृत्तात्स्वविचाराच्छास्त्राचार्योपदेशानुगृहीताच्च ज्ञानोदयक्रमो निरूपितः । इदानीमुपासितेश्वरानुग्रहजन्याद्विचाराज्ज्ञानोदयप्रकारं वर्णयितुं प्रह्लादोपाख्यानमाचिख्यासुर्वसिष्ठस्तच्छ्रवणे राममवधापयति—अथेति । विज्ञानस्याभिगमे आभिमुख्येन प्राप्तौ । निष्प्रत्यूहप्राप्ताविति यावत् । तथाच भगवतैवोक्तम् 'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्नम्' इति ॥ १ ॥ नारायणस्य पराक्रम इवेत्यर्थे पूर्वपदं लक्षणया वर्तते । उष्ट्रमुखः खरमुख इत्यत्रोष्ट्रशब्दस्तन्मुखसदृशार्थ इवेति बोध्यम् । इवार्थवृत्तिमध्यमपदलोपी वा बहुव्रीहिः ॥ २ ॥ नारायणपराक्रमत्वोपपादकं विशेषणमाक्रान्तभुवनाभोग इति । भुवनपदेन त्रीण्यपि भुवनानि गृह्यन्ते । स हिरण्यकशिपुर्हरेरिन्द्रादाच्छिद्य जगत्त्रिभुवनैश्वर्यं जहार । षट्पदस्य रात्रौ गृहभूतं प्रातर्विकासेन बृहत्पत्रमम्बुजं राजहंस इव सुरासुरशब्दस्तत्तदधिपतिपरः ॥ ३ ॥ नलिन्यां अलिनां भ्रमराणां राज्यं निरस्तहंसौघो दन्तीवेत्युपमानुरोधाज्जगदुद्वेजकता गम्यते ॥ ४ ॥ माधवो वसन्तकालः ॥ ५ ॥ तेजस्यूर्जिता वयसा बालकाः । दश दशसंख्याकानि अर्कस्यांशुशतानीव । व्योमाक्रान्तिराकाशव्याप्तिः सुरलोकाक्रमणं च तया विलासिनः ॥ ६ ॥ तेषां मध्ये प्रह्लादनामा प्रधानात्मा युवराजो बभूव । हेत्यतिशे ॥ ७ ॥ ८ ॥ त्रीणि गण्डोपलक्षितमुखाश्रितानि गलितानि मदधारा यस्य तथाविधो य इभस्तद्वत् । यद्यपि सप्त मदस्थानानि प्रसिद्धानि तथापि प्राधान्यात्त्रीण्युपात्तानि । 'उक्तस्त्रिगण्डगलितो यो गजः षष्टिहायनः' इत्यभियुक्तवचनात् षष्टिहायने भवदिति वा ॥ ९ ॥ विकासिना विजृम्भमाणेन । आक्रान्तिरास्कन्दनं तत्प्रयुक्तेन तापेन पीडनेन । नवया तरुणया नित्याभिनवया च करश्रिया किरणकान्त्या करग्रहणप्रयुक्तसंपदा च ॥ १० ॥ तेन आक्रान्तितापेन ॥ ११ ॥ पौनःपुन्येन पुनःपुनर्भावेन कृतां दुष्क्रियामपराधम् ॥ १२ ॥ ततस्तदनन्तरं माधवः प्रलयपर्यस्तेत्यादिविशेषणविशिष्टं नारसिंहं वपुः कृत्वा महासुरं हिरण्यकशिपुं अहन् इति सप्तमेन संबन्धः । प्रलये पर्यस्तं जगदिव घर्घरं ध्वनत् जृम्भितं गात्रविनमनं यस्य तत् । दिग्दन्तिदशनप्रख्यैर्नखैर्वज्रादिभिरिव जृम्भितं यत्र ॥ १३ ॥ स्थिराण्यचञ्चलानि विद्युल्लताजालानीव भासुराणि द्विजानां दन्तानां मण्डलानि यस्य । दिक्श्रोत्रकत्वाद्दशसु दिक्कोटरेषूद्भ्रान्तज्वलज्ज्वलनाः कुण्डलानीव यस्य ॥ १४ ॥ समस्तानां कुलशैलेन्द्राणां पिण्डपीठं पिण्डाकारसंस्थानमिवोद्भटं भीषणमुदरं यस्य । दोर्द्रुमाणामाधूतैः परिवर्तनैर्निर्धूतमतएव स्फुरत्संचलद्विदीर्यमाणं ब्रह्माण्डखर्परं यस्य ॥ १५ ॥ वदनेन उदरान्निष्क्रान्तैः श्वासवातैरुत्सारिताः पर्वता यस्य ॥ १६ ॥ १७ ॥ कुलाचलैरुत्खातैर्महाकुड्यस्य घटनायां रचनायामिव उद्भटानि उद्युक्तानि दिक्तटानि यत्र । सर्वावयवेभ्यो निष्क्रान्तानि पट्टिशप्रासतोमराण्यायुधविशेषा यस्य ॥ १८ ॥ तथाविधं नारसिंहं

लसत्कटकटारावं तुरङ्गममिव द्विपः ॥ १९
पौरमासुरमुद्भ्रान्तैर्ददाहेक्षणवह्निभिः ।
स सर्वभूतकल्पान्ते जगज्जालमिवानलः ॥ २०
नृसिंहमारुते तस्मिन्भृशं क्षोभमुपागते ।
विस्फूर्जितघनास्फोटैरेकार्णव इवाकुले ॥ २१
दुद्रुवुर्दानवौघास्ते दिग्ज्वलन्मशका इव ।
उपाययुरदृश्यत्वं दीपा इव गतत्विषः ॥ २२
अथ विद्रुतदैत्येन्द्रं दग्धान्तःपुरमण्डलम् ।
बभूव पातालतलं कल्पक्षुण्णजगत्समम् ॥ २३
अकालकल्पान्तविधौ हत्वा दैत्यं शनैर्विभौ ।
क्वापि याते समाश्वस्तसुरसंरम्भपूजिते ॥ २४

मृतशिष्टा दनुसुताः प्रह्लादपरिपालिताः ।
दग्धं तं देशमाजग्मुः सरः शुष्कमिवाण्डजाः ॥ २५
तत्र कालोचितां कृत्वा स्वनाशपरिदेवनाम् ।
और्ध्वदैहिकसत्कारं चक्रुः प्रेतेषु बन्धुषु ॥ २६
हतबन्धुजनं प्लुष्टबन्धुबान्धवमण्डलम् ।
शनैराश्वासयामासुर्मृतशिष्टं स्वकं जनम् ॥ २७
चित्रार्पितोपमदुराकृतयो निरीहा
दीनाशया हि महताम्बुरुहोपमानाः ।
शोकोपतप्तमनसोऽसुरनायकास्ते
दग्धद्रुमा इव निरस्तविकारमासन् ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० उपशमप्रकरणे प्रह्लादविश्रान्तौ हिरण्यकशिपुवधो नाम त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ३१

श्रीवसिष्ठ उवाच ।
अथ दुःखपरीतात्मा हरिणा हतदानवे ।
प्रह्लादश्चिन्तयामास मौनी पातालकोटरे ॥ १
को न्वस्माकमुपायः स्याद्य एवेहासुराङ्कुरः ।
तीक्ष्णाग्रो जायते तं तं भुङ्क्ते शाखामृगो हरिः ॥ २
न कदाचन पाताले दैत्या दोर्दण्डशालिनः ।
स्थिरा बभूवुरुद्भिन्नाः पद्मा इव हिमाचले ॥ ३
उत्पत्त्योत्पत्त्य नश्यन्ति भासुराकारघर्घराः ।
क्षीणप्रस्फुरितारम्भास्तरङ्गा इव वारिधेः ॥ ४

सबाह्याभ्यन्तरं कष्टं समग्रालोकहारिणः ।
रिपवः प्रौढिमायाता अपूर्वैतिमिरभ्रमाः ॥ ५
तमःप्रपूर्णहृदयाः संकुचत्पत्रसंपदः ।
सुहृदः खेदमायान्ति निशीथकमलाकराः ॥ ६
तातस्य मलिनैर्नूनं पादपीठोपमर्दकैः ।
सुरैर्विषय आक्रान्तो मृगैरिव महावनम् ॥ ७
निरुद्यमा गतश्रीका दीनाः प्रकटिताशयाः ।
बान्धवा न विराजन्ते पद्माः प्लुष्टदला इव ॥ ८
स्फुरन्त्यसुरवीराणां गृहेष्वविरतानिलैः ।

---

वपुः कृत्वेत्यर्थः । अहन् हतवान् । हन्तेर्लङि तिप इतो लोपे हल्ङ्यादिलोपः । लसत्कटकटारावमिति क्रियाविशेषणम् । तेन विदार्याहन्निति गम्यते । तुरंगमस्यापि द्विपेन विदारणं युद्धेषु प्रसिद्धम् ॥ १९ ॥ आसुरं पौरं पुरवास्तव्यसर्वजन्तुं पुरोपकरणं च । ईक्षणवह्निभिर्नेत्रानलैः ॥ २० ॥ विस्फूर्जितसदृशैर्घनरास्फोटैर्बाहुध्वनिभिः । प्रलयपक्षे घनानां संवर्तमेघानामास्फोटैर्गर्जितैः । एकार्णवे जलप्रलये ॥ २१ ॥ दिक्षु ज्वलन्तो मशका इव ॥ २२ ॥ कल्पेन प्रलयकालेन क्षुण्णं चूर्णितं यज्जगत्तत्समम् ॥ २३ ॥ अकाले कल्पान्तविधानसदृशे युद्धे दैत्यं हिरण्यकशिपुं हत्वा समाश्वस्तैः सुरैः संरम्भेण आदरनिर्भरेण पूजिते विभौ नृसिंहे क्वापि वाचामगोचरे स्वपदे याते सति ॥ २४ ॥ अण्डजाः पक्षिणः ॥ २५ ॥ स्वानां बान्धवानां नाशप्रयुक्तां परिदेवनां विलापम् ॥ २६ ॥ प्लुष्टं दग्धं सप्राणं बन्धूनां तद्बान्धवानां च मण्डलं समूहम् ॥ २७ ॥ निरीहाश्चिन्तया निश्चेष्टाः अतएव चित्रार्पितोपमाः दुःखिता आकृतयो येषां ते प्रह्लादादयोऽसुरनायका दग्धा दग्धपत्रशाखा द्रुमा इव निरस्तविकारं निश्चेष्टं आसन् । स्थाणूनां वायुना चलनाभावः प्रसिद्धः ॥२८॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे हिरण्यकशिपुवधो नाम त्रिंशत्तमः सर्गः ॥३०॥

हरिविक्रमचिन्तात्र स्वजनक्षेमचिन्तनम् ।
प्रह्लादस्य हरेर्भक्त्या तद्भावश्चोपवर्ण्यते ॥ १ ॥

हता दानवा यस्मिंस्तथाविधे पातालकोटरे ॥ १ ॥ उपैतीत्युपायः सहायः । तीक्ष्णाग्रः संपत्पल्लवोद्गमक्षमो य एवासुरवृक्षाणामङ्कुरप्रायस्तेजस्वी जायते तं तं भुङ्क्ते । हरिपदस्य शाखामृगपदेन व्याख्यानमङ्कुरविनाशकत्वोपपादनार्थमधिक्षेपार्थं च ॥ २ ॥ उद्भिन्ना अङ्कुरिता वीर्यविकसिता वा ॥ ३ ॥ नश्यन्त्यसुरा इत्यनुषज्यते ॥ ४ ॥ कष्टमिति खेदे । आलोकयन्त इत्यालोका बाह्यराज्यादिसंपदः । आभ्यन्तरा उत्साहहर्षप्रसादसुखविश्रान्त्यादिसंपदश्च त एव आलोकाः प्रकाशास्तेषां हारिणोऽपहरणशीलाः । अतएव अपूर्वस्तिमिरभ्रमो येषु तथाविधा रिपवो देवाः प्रौढिमुत्कर्षम् ॥ ५ ॥ तमसा कश्मलान्धकारेण प्रपूर्णहृदयाः संकुचन्त्यः पत्रस्थानीयाः संपदो येषां तथाविधाः सुहृल्लक्षणा निशीथकमलाकराः खेदमायान्ति ॥ ६ ॥ मलिनैर्द्वेषकलुषैस्तातस्य प्रणामकाले पादपीठोपमर्दकैः सुरैर्विषयो देश आक्रान्तो नूनमिति वितर्के । महावनं सिंहवनम् ॥ ७ ॥ प्रकटिताशयाः ख्यापितहार्ददुःखाः । प्लुष्टदला ग्रीष्मदग्धपत्राः ॥८॥ अविरतैरनिलैरुत्पातवातैः कीर्यमाणा भस्मलक्षणा नीहाराः

धूसरा भस्मनीहारा धूपधूमभरा इव ॥ ९
हृतद्वारकपाटासु दैत्यान्तःपुरभित्तिषु ।
प्रभा मरकतस्येव जाता नवयवाङ्कुराः ॥ १०
त्रिलोकीनाभिनलिनीमत्तेभा दानवा अपि ।
देववद्दैन्यमायाताः किमसाध्यमहो विधेः ॥ ११
मनाक्चलति पर्णेऽपि दृष्टारिभयभीतयः ।
वध्वस्त्रस्यन्ति विध्वस्ता मृग्यो ग्रामगता इव ॥ १२
आसुरीकर्णपूरार्थं फुल्ला रत्नगुलुच्छकाः ।
नरसिंहकरालूनाः स्थाणुतामागता द्रुमाः ॥ १३
दिव्याम्बरलतापत्रा रत्नस्तबकदन्तुराः ।
पुनरारोपितास्तत्र नन्दने कल्पपादपाः ॥ १४
पुरा त्वमरवन्दीनामसुरैः संस्तुतं मुखम् ।
अद्य त्वसुरवन्दीनां सुरैरालोकितं मुखम् ॥ १५
मन्ये दानमहानद्यः सुरेभकटभित्तिषु ।
प्रवृत्तास्ता भविष्यन्ति शैलसानुष्विवापगाः ॥ १६
अस्माकमिभगण्डेषु दानदाहविभूतयः ।
लसन्ति मरुखण्डेषु संशुष्केष्विव धूलयः ॥ १७
विकासिसितमन्दारमकरन्दारुणानिलाः ।
ते मेरुशिखरैस्तुल्या दैत्या दुर्लभतां गताः ॥ १८
सुरगन्धर्वसुन्दर्यो दानवान्तःपुरोचिताः ।
अद्य मेरौ स्थितिं याता मञ्जर्य इव पादपे ॥ १९
कष्टं तात पुरंध्रीणां शुष्कास्मुरुहनीरसाः ।
विलासाः सुरनारीभिर्भर्त्स्यन्ते लास्यलीलया ॥ २०
पूर्वं यैरेव मत्तात्मश्चामरैरुपवीजितः ।
सहस्रनयनः स्वर्गे कष्टं तैरेव वीज्यते ॥ २१

इयमस्माकमप्यापदागता दैन्यदायिनी ।
तस्यैकस्य प्रसादेन दुष्पौरुषगतेर्हरेः ॥ २२
तद्दोर्वनघनच्छायालब्धविश्रान्तयः सुराः ।
न कदाचन तप्यन्ते हिमाद्रेरिव सानवः ॥ २३
शौरिशौर्याग्रशिखरसंश्रयेणाश्रितश्रियः ।
अस्मान्समुपरुन्धन्ति शुनः शाखामृगा इव ॥ २४
तेनासुरपुरन्ध्रीणां नित्यं मण्डनमण्डने ।
मुखपद्मे स्थितं बाष्पमब्जिनीनां हिमं यथा ॥ २५
शीर्णभिन्नलुठद्भित्तिर्जगज्जरठमण्डपः ।
अयं नीलमणिस्तम्भैस्तद्भुजैरेव धार्यते ॥ २६
स धर्ता सुरसैन्यस्य मज्जतो विपदर्णवे ।
क्षीरोदोदरमग्नस्य मन्दरस्येव कच्छपः ॥ २७
एते तातादयः सर्वे तेनैवासुरसत्तमाः ।
पातिताः क्षुब्धकल्पान्तवातेनेव कुलाचलाः ॥ २८
स एक एव संहारकर्मक्षमभुजानलः ।
सुरसार्थगुरुः श्रीमान्विषमो मधुसूदनः ॥ २९
दैत्यदोर्दण्डपरशोस्तस्य वीर्येण वीर्यवान् ।
दानवान्बाधते शक्रो बालकानिव मर्कटः ॥ ३०
दुर्जयः पुण्डरीकाक्षः प्रविमुक्तायुधोऽपि सन् ।
नासौ शस्त्रास्त्रविच्छेदैर्वज्रसारो विदीर्यते ॥ ३१
अभ्यस्ता बहवस्तेन मिथः प्रेरितपर्वताः ।
भीमाः समरसंरम्भाः सममस्मत्पितामहैः ॥ ३२
तासु तास्वतिघोरासु विततास्वतिराजिषु[1] ।
यो न भीत इदानीं स भयमेष्यति का कथा ॥ ३३
उपायमेकमेवेमं हरेराक्रमणे स्फुटम् ।

प्राक्तनधूपधूमभरा इव स्फुरन्ति ॥ ९ ॥ प्राक्मरकतस्य प्रभा इव सांप्रतं यवानां नवाङ्कुरा जाताः ॥ १० ॥ त्रिलोक्या नाभिनलिनी मेरुस्तदुपमर्दे मत्तेभभूता अपि दानवाः प्राग्देवा इव दैन्यमायाताः । किमित्याक्षेपे । असाध्यं नास्तीत्यर्थः ॥ ११ ॥ वध्वो दैत्यसीमन्तिन्यस्त्रस्यन्ति उद्विजन्ति ॥ १२ ॥ रत्नमया गुलुच्छकाः स्तबका येषां तथाविधा द्रुमा दिव्यवृक्षाः ॥ १३ ॥ दिव्यान्यम्बराणि येषु तथाविधा लताः शाखाः पत्राणि च येषाम् । रत्नस्तबकैर्दन्तुराः । 'दन्त उन्नत उरच्' । पुनरित्यनेन पूर्वं तत आनीता इति गम्यते ॥ १४ ॥ बन्दीनां बन्दीकृतस्त्रीणाम् । संस्तुतं सप्रशंसं दृष्टम् ॥ १५ ॥ दानानि मदधारालक्षणा महानद्यः । मन्ये इति वितर्के ॥ १६ ॥ दानस्य मदस्य दाहस्तत्प्रयुक्ता विभूतयो भस्मानि ॥ १७ ॥ विकासिनां सितमन्दाराणां सपरागैर्मकरन्दैररुणा रञ्जिता अङ्गस्पर्शिनोऽनिला येषाम् । अतएव मेरुशिखरैस्तुल्याः ॥१८॥१९॥ लास्यलीलया नृत्येषु विडम्बनलीलया ॥ २० ॥ २१ ॥ अस्माकं महाप्रभावाणामपि दुःखा पौरुषगतिः पराक्रमस्मरणमपि यस्य ॥ २२ ॥ तप्यन्ते वयमिव संतप्यन्ते ॥ २३ ॥ शौरेर्हरेः शौर्यं पराक्रमस्तदेव गिरेस्तरोर्वा शिखरस्तममग्रशिखरं तत्सं-

श्रयेण आश्रितश्रियः प्राप्तसंपदो देवा गिरितरुशिखरसंश्रयाः शाखामृगा मर्कटाः शुनः कुकुरानिवास्मान्बलवतोऽपि समुपरुन्धन्ति पाताले नियच्छन्ति ॥ २४ ॥ मण्डनानामलंकाराणामपि मण्डनभूते मुखपद्मे बाष्पमस्रं तेन शौरिशौर्येण हेतुना नित्यं स्थितम् । अब्जिनीनां मुखभूते पद्मे हिममवश्यायबिन्दुर्यथा यद्वदित्यर्थः ॥ २५ ॥ अर्थादसुरविक्रमैः शीर्णो विदारितोऽतएव लुठद्भित्तिर्जगल्लक्षणो जरठमण्डपो जीर्णालयो नीलमणिस्तम्भप्रायैस्तस्य शौरेर्भुजैरेव धार्यते अवष्टभ्यते ॥ २६ ॥ कच्छपः कच्छपावतारः स इव स शौरिर्धर्ता धारयिता ॥२७॥ ॥ २८ ॥ विषम आक्रमितुमशक्य इति यावत् ॥२९॥ दैत्यदोर्दण्डखण्डने परशुभूतस्य । यथा महामर्कटवीर्येण वीर्यवान्मर्कटो बालकान्बाधते तद्वत् ॥ ३० ॥ शस्त्रास्त्रकृतैर्विच्छेदैः खण्डनैः । वज्रादपि सारो दृढतरः ॥ ३१ ॥ प्रेरिताः क्षिप्ताः पर्वता यत्र तथाविधाः समरसंरम्भा युद्धकौशलविशेषा अस्मत्पितामहैः सह युद्धा अभ्यस्ताः शिक्षिता इत्युत्प्रेक्षा ॥३२॥ भयमेष्यति इति का कथा, कः प्रसङ्ग इत्यर्थः ॥ ३३ ॥ आक्रमणे वशीकरणे ।

१ अरिराजिषु इति पाठो युक्तः.

मन्ये तद्व्यतिरेकेण विद्यते न प्रतिक्रिया ॥ ३४
सर्वात्मना सर्वधिया सर्वसंरम्भरंहसा ।
स एव शरणं देवो गतिरस्तीह नान्यथा ॥ ३५
न तस्मादधिकः कश्चिदस्ति लोकत्रयान्तरे ।
प्रलयस्थितिसर्गाणां हरिः कारणतां गतः ॥ ३६
अस्मान्निमेषादारभ्य नारायणमजं सदा ।
संप्रपन्नोऽस्मि सर्वत्र नारायणमयो ह्यहम् ॥ ३७
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ।
नापैति मम हृत्कोशादाकाशादिव मारुतः ॥ ३८
हरिराशा हरिर्व्योम हरिरुर्वी हरिर्जगत् ।
अहं हरिरमेयात्मा जातो विष्णुमयो ह्यहम् ॥ ३९
अविष्णुः पूजयन्विष्णुं न पूजाफलभाग्भवेत् ।
विष्णुर्भूत्वा यजेद्विष्णुमयं विष्णुरहं स्थितः ॥ ४०
हरिः प्रह्लादनामा यो मत्तो नान्यो हरिः पृथक् ।
इति निश्चयवानन्तर्व्यापकोऽहं च सर्वतः ॥ ४१
अनन्तमिदमाकाशमापूर्य विनतासुतः ।
कनकाङ्गो ममाङ्गानामयमासनतां गतः ॥ ४२
करशाखैकविश्रान्तसर्वहेतिविहंगमाः ।
नखांशुमञ्जरीकीर्णा महामरकतद्रुमाः ॥ ४३
इमे ते मृदुमन्दारदामदिग्धांसमण्डलाः ।
मन्दराघृष्टकेयूराश्चत्वारो मम बाहवः ॥ ४४
चलच्छशिकलापूरचारुचामरधारिणी ।
इयं मे पार्श्वगा लक्ष्मीः क्षीरोदकुहरोत्थिता ॥ ४५
हेलाविलुब्धभुवना त्रैलोक्यतरुमञ्जरी ।
इयं मे पार्श्वगा कीर्तिरचलामलभासिनी ॥ ४६
अनारतजगज्जालनवनिर्माणकारिणी ।
इयं मे पार्श्वगा माया स्वेन्द्रजालविलासिनी ॥ ४७
इयं सा हेलयाक्रान्तत्रैलोक्यतरुखण्डिका ।
जया स्फुरति मे पार्श्वे लता कल्पतरोरिव ॥ ४८
इमौ मे नित्यशीतोष्णौ देवौ शीतांशुभास्करौ ।
प्रकटीकृतसंसारौ मुखमध्ये विलोचने ॥ ४९
ममेयमुत्पलश्यामा पीनाम्भोधरसुन्दरी ।
श्यामीकृतककुप्चक्रा देहदीप्तिर्विसर्पिणी ॥ ५०
अयं मम करे शङ्खः पाञ्चजन्यः स्फुरद्ध्वनिः ।
मूर्तं खमिव शब्दात्मा क्षीरोद इव संस्थितः ॥ ५१
अयं मे कर्णिकाकोशनिलीनब्रह्मषट्पदः ।
पद्मः करतले श्रीमान्खनाडीकुहरोद्भवः ॥ ५२
इयं मे रत्नचित्राङ्गी सुमेरुशिखरोपमा ।
हेमाङ्गदा गदा गुर्वी दैत्यदानवमर्दिनी ॥ ५३
अयं मे भास्कराकार उदयदंशुः सुदर्शनः ।
ज्वालाजटिलपर्यन्तपरिपाटलदिक्तटः ॥ ५४
अयं मे केतुमद्वह्निसुन्दरो ज्वलितोऽसितः ।
कुठारो दैत्यवृक्षाणां नन्दयन्नन्दकः स्थितः ॥ ५५
इदं मे शरधाराणां पुष्करावर्तकोपमम् ।
शार्ङ्गं धनुरहीन्द्राभमिन्द्रकार्मुकसुन्दरम् ॥ ५६
इमान्यहमनन्तानि जगन्ति जठरे चिरम् ।

प्रतिक्रिया तत्कृतपीडाप्रतीकारः ॥३४॥ कुतो न विद्यते तत्राह—**सर्वात्मने**ति। इह जगति सर्वात्मना सर्ववस्तुस्वभावेन सर्वधिया सर्वबुद्धिभेदेन सर्वसंरम्भरंहसा सर्वक्रियोद्योगेन च शरणार्थिनां स एव शरणं नान्यथा गतिरस्तीत्यर्थः ॥३५॥ नन्वन्ये शरणं किं न स्युस्तत्राह—**ने**ति ॥ ३६ ॥ इति निश्चित्य सर्वभावेन तत्प्रतिपत्तिं संकल्पयति—**अस्मादि**ति । किं देशकालवस्तुभेदेन प्रपद्यसे नेत्याह—**सर्वत्रे**ति । सर्वदेशकालवस्तुष्वहं नारायणमयः ॥३७॥ निरन्तरतत्प्रतिपत्तिधारणानुस्मरणजपसाधनं श्रौतं तन्मन्त्रमनुस्मृत्य निरन्तरं तज्जपं संकल्पयति—**नमो नारायणाये**ति। सप्रणवोऽयं शुचेः शुद्धे देशादावेव जपार्हो न निरन्तरमिति निष्प्रणवोपादानम् । हृत्कोशादित्युक्तिर्मानसजपमुख्यताद्योतनार्था ॥ ३८ ॥ सर्वत्र नारायणमयो ह्यहमित्युक्तं विशदयति—**हरिरि**ति । आशा दिशः । विष्णुमयो भावनेन विष्णुप्रायः । स्त्रीमयो जाल्म इतिवद्भावनाकृततद्भावलक्षणे प्राचुर्ये मयट् ॥३९॥ किमर्थमेवं कल्पयसि तत्राह—**अविष्णु**रिति । 'नाविष्णुः पूजयेद्विष्णुं नाशिवः पूजयेच्छिवम्' इति विध्यनुरोधादित्यर्थः ॥४०॥ यो हरिः स एव प्रह्लादनामा। 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेः । मत्तः प्रतीचश्चान्यो हरिः पृथक् आत्मान्तरभूतो नास्ति ॥ ४१ ॥ इदानीं हरेर्वाहनायुधाभरणशरीरादीनि स्वात्मनः कल्पयति—**अनन्त**मित्यादिना । आपूर्य स्थित इति शेषः । कनकमिवाङ्गं यस्य स्वर्णवर्ण इत्यर्थः ॥ ४२ ॥ कराणां शाखास्वङ्गेषु एकविश्रान्ता नित्यविश्रान्ताः सर्वे हेतयश्चक्रगदानन्दकाद्यायुधलक्षणा विहङ्गमाः पक्षिणो येषाम् । नखकान्तिलक्षणमञ्जरीभिः कीर्णा अतएव महामरकतद्रुमभूताः । मृदुमन्दारदामदिग्धे अंसमण्डले मूलप्रदेशौ येषाम् । समुद्रमथनकाले मन्दरेणाघृष्टकेयूरा मम हरेश्चत्वार एते बाहव इति द्वयोरन्वयः ॥ ४३ ॥ ४४ ॥ ४५ ॥ हेलया अयत्नेनैव विलुब्धानि विलोभितानि श्रवणसस्पृहीकृतानि भुवनानि तत्स्था जना यया । अतएव त्रैलोक्यलक्षणतरोर्मञ्जरीव विराजमाना हरेः कीर्तिर्मूर्तिमती मे पार्श्वगा वर्तते ॥ ४६ ॥ पार्श्वगा पार्श्वान्तरे स्थिता जयानाम्नी लक्ष्मीसखी ॥ ४७ ॥ ४८ ॥ ४९ ॥ देहदीप्तिः शरीरकान्तिः ॥ ५० ॥ क्षीरोद इव शुभ्र इति शेषः ॥ ५१ ॥ खस्य नाडीकुहरं नाभिस्तदुद्भवः । तथाच नाभिपद्ममेव कदाचित्करेण धार्यते कदाचिन्नाभाविति गम्यते ॥ ५२ ॥ हेमाङ्गदा हेमपिनद्धा गदा ॥ ५३ ॥ परितः पाटलवर्णानि दिक्तटानि यस्मात् । अनेनासुररुधिराक्तता गम्यते ॥ ५४ ॥ केतुमान् धूमरेखावान्वह्निरिव सुन्दरः । अतएवासितः । दैत्यवृक्षाणां कुठार इव च्छेत्ता । देवान् नन्दयन् नन्दको भगवत्खड्गः ॥ ५५ ॥ इन्द्रकार्मुकमिव सुन्दरं नानामणिचित्रम् ॥ ५६ ॥ सांप्रतं जातानि

१ जरज्जाल इत्यपि पाठः. २ भास्वराकार इति पाठः.

बिभर्मि जातनष्टानि वर्तमानान्यनेकशः ॥ ५७
इमौ मही मे चरणाविदं मे गगनं शिरः ।
इदं वपुर्मे त्रिजगदिमे मे कुक्षयो दिशः ॥ ५८
साक्षादयमहं विष्णुर्नीलमेघोदरद्युतिः ।
सुपर्णपर्वतारूढः शङ्खचक्रगदाधरः ॥ ५९
एते मत्तः पलायन्ते समग्रा दुष्टचेतसः ।
तार्णास्तरलसंचाराः पवनादिव राशयः ॥ ६०
अयं नीलोत्पलश्यामः पीतवासा गदाधरः ।
लक्ष्मीवान्गरुडारूढः स्वयमेवाहमच्युतः ॥ ६१
को मामेति विरुद्धात्मा त्रैलोक्यदहनक्षमम् ।
स्वनाशाय ततः क्षुब्धं कालाग्निं शलभो यथा ॥ ६२
इमे मे तैजसीं सृष्टिं ममाग्रस्थाः सुरासुराः ।
न शक्नुवन्ति संरोद्धुं चक्षुर्मन्दाः प्रभा इव ॥ ६३
इमं मामीश्वरं विष्णुं ब्रह्मेन्द्राग्निहरादयः ।
स्तुवन्त्यनन्तया वाचा बहुवक्त्रसमुत्थया ॥ ६४
अयं विजृम्भितैश्वर्यो जातोऽहमजिताकृतिः ।
सर्वद्वन्द्वपदातीतो महिम्ना परमेण हि ॥ ६५

त्रिभुवनभवनोदरैकमूर्ति
प्रसभविभिन्नसमस्तदुष्टसत्त्वम् ।
घनगिरितृणकाननान्तरस्थं
सकलभयापहरं वपुः प्रणौमि ॥ ६६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० उपशमप्रकरणे प्रह्लादनिर्वाणे नारायणीकरणं नामैकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ३२

श्रीवसिष्ठ उवाच ।

प्रह्लाद इति संचिन्त्य कृत्वा नारायणीं तनुम् ।
पुनः संचिन्तयामास पूजार्थमसुरद्विषः ॥ १
वपुषो वैष्णवादस्मान्मा भून्मूर्तिः परावरा ।
अयं प्राणप्रवाहेण बहिर्विष्णुः स्थितोऽपरः ॥ २
वैनतेयसमारूढः स्फुरच्छक्तिचतुष्टयः ।
शङ्खचक्रगदापाणिः श्यामलाङ्गश्चतुर्भुजः ॥ ३
चन्द्रार्कनयनः श्रीमान्कान्तनन्दकनन्दनः ।
पद्मपाणिर्विशालाक्षः शार्ङ्गधन्वा महाद्युतिः ॥ ४
तदेनं पूजयाम्याशु परिवारसमन्वितम् ।
सपर्यया मनोमय्या सर्वसंभाररम्यया ॥ ५
तत एनं महादेवं पूजयिष्याम्यहं पुनः ।
पूजया बाह्यसंभोगमहत्या बहुरत्नया ॥ ६
प्रह्लाद इति संचिन्त्य संभारभरभारिणा ।
मनसा पूजयामास माधवं कमलाधवम् ॥ ७
रत्नौघपात्रपटलैश्चन्दनादिविलेपनैः ।
धूपैर्दीपैर्विचित्रैश्च नानाविभवभूषणैः ॥ ८
मन्दारमालावलनैर्हैमाब्जपटलोत्करैः ।
कल्पवृक्षलतागुच्छै रत्नस्तबकमण्डलैः ॥ ९
पल्लवैर्दिव्यवृक्षाणां नानाकुसुमदामभिः ।
किंकिरातैर्बकैः कुन्दैश्चम्पकैरसितोत्पलैः ॥ १०
कह्लारैः कुमुदैः काशैः खर्जूरैश्चूतकिंशुकैः ।
अशोकैर्मदनैर्बिल्वैः कर्णिकारैः किरातकैः ॥ ११

चिरनष्टानि चिरजातवर्तमानानि च । भविष्यतामप्युपलक्षणमेतत् ॥ ५७ ॥ इदानीं हरेर्विराड्रूपमपि स्वस्यैवेत्याह—**इमा**विति । मही मे इमौ चरणावित्यन्वयः । कुक्षय इति बहुत्वं दिग्बहुत्वाददितिः पाशानितिवत् ॥ ५८ ॥ ५९ ॥ तार्णा राशयः शुष्कतृणराशयः ॥ ६० ॥ ६१ ॥ विरुद्धात्मा द्विषन् एति युद्धायागच्छति । य आगच्छति स यतः स्वनाशायैवागच्छति नान्यत्तदागमनफलमित्यर्थः ॥ ६२ ॥ तैजसीं सृष्टिं तेजोज्वालाप्रसरं संरोद्धुं प्रशमयितुं सोढुं वा ॥ ६३ ॥ ॥ ६४ ॥ अजितो विष्णुस्तदाकृतिः परमेण महिम्ना प्रभावेण परमार्थस्वभावेन च । 'एष नित्यो महिमा' इति श्रुतेः ॥ ६५ ॥ त्रिभुवनभवनमुदरे यस्य तथाविधैका मूर्तिर्यस्य तत् । घना मेघाः गिरयस्तृणानि काननानि चेत्येतदादि सर्ववस्तूनामान्तरे अधिष्ठानभावे स्थितं अतएव तत्त्वतः साक्षात्कारमात्रेण सकलभयापहरं वैष्णवं वपुर्विराड्रूपं देवतारूपं परब्रह्मात्मकं चाहमेवेति मां प्रणौमीत्यर्थः ॥ ६६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे नारायणीकरणं नामैकत्रिंशः सर्गः ॥ ३१ ॥

विष्णोर्मानसपूजात्र बाह्यपूजाऽसुरैः सह ।
श्रुत्वा विस्मितदेवानां हरेः पृच्छा च वर्ण्यते ॥ १ ॥

स्वतनुं भावनया नारायणीं नारायणात्मिकां कृत्वा ॥ १ ॥ अस्मान्मया परिकल्पितात्त्रिविधाद्वैष्णवाद्वपुषोऽन्या परा समष्टिरूपा अवरा व्यष्टिदेवतारूपा वा मा भूत् किंत्वयमेव मद्रूपो विष्णुर्हृदयात्प्राणप्रवाहेण पुष्पाञ्जलिभावनया बहिरावाहितः सन् यावत्पूजाकालमपर इव स्थितः कल्प्यत इत्यर्थः ॥ २ ॥ स कीदृशस्तमाह—**वैनतेये**ति द्वाभ्याम् । स्फुरत् क्रियाज्ञानेच्छानुग्रहाख्यं शक्तिचतुष्टयं यस्य ॥ ३ ॥ कान्तेन नन्दकेन खड्गेन नन्दनः स्वजनानन्दनः ॥ ४ ॥ परिवारैः संकर्षणप्रद्युम्नादिव्यूहैः पार्षदैश्च समन्वितम् ॥ ५ ॥ महादेवं पूज्यं देवं स्वकुलदेवशिवाभिन्नं वा । बाह्यैः संभोगैः संभारैर्महत्या विस्तृतया ॥ ६ ॥ कमला लक्ष्मीस्तस्या धवं पतिम् ॥ ७ ॥ रत्नौघखचितानां पात्राणां पटलैः प्रान्तैरभिषेचनैरिति शेषः । नानाविभवैर्भूषणैरलंकारैः ॥ ८ ॥ ९ ॥ किंकिरातादयो यथायोगं पुष्पजातिभेदा बोध्याः ॥ १० ॥ ११ ॥

कदम्बैर्बकुलैर्निम्बैः सिन्दुवारैः सयूथकैः।
पारिभद्रैर्गुग्गुलीभिर्बिन्दुकैः पुष्पकोत्करैः॥ १२
प्रियङ्गुपटलैः पाटैः पाटलैर्धातुपाटलैः।
आम्रैराम्रातकैर्गव्यैर्हरीतकविभीतकैः॥ १३
शालतालतमालानां लताकुसुमपल्लवैः।
कोमलैः कलिकाजालैः सहकारैः सकुङ्कुमैः॥ १४
केतकैः शतपत्रैश्च तथैलामञ्जरीगणैः।
सर्वसौन्दर्यसंमानैः स्वयमात्मार्पणैरपि॥ १५
हरिं परमया भक्त्या जगद्विभवभव्यया।
मनसा पूजयामास प्रह्लादोऽन्तःपुरे पतिम्॥ १६
अथ देवगृहे तस्मिन्बाह्यार्थैः परिपूर्णया।
पूजया पूजयामास दानवेशो जनार्दनम्॥ १७
बहिर्द्रव्यैरनेनैव क्रमेण परमेश्वरम्।
पुनःपुनः पूजयित्वा तुष्टिमान्दानवोऽभवत्॥ १८
ततस्ततः प्रभृत्येव प्रह्लादः परमेश्वरम्।
तथैव प्रत्यहं भक्त्या पूजयामास पूर्णया॥ १९
अथ तस्मिन्पुरे दैत्यास्ततः प्रभृति वैष्णवाः।
सर्वे एवाभवन्भव्या राजा ह्याचारकारणम्॥ २०
जगाम वार्ता गगनं देवलोकमथारिहन्।
विष्णोर्द्वेषं परित्यज्य भक्ता दैत्याः स्थिता इति॥ २१
देवा विस्मयमाजग्मुः शक्राद्याः समरुद्गणाः।
गृहीता वैष्णवी भक्तिर्दैत्यैः किमिति राघव॥ २२
क्षीरोदे भोगिभोगस्थं विबुधा विस्मयाकुलाः।
जग्मुरम्बरमुत्सृज्य हरिमाहवशालिनम्॥ २३
तत्रैनं दैत्यवृत्तान्तं कथयामासुरस्य ते।
पप्रच्छुश्चैनमासीनमपूर्वाश्चर्यविस्मयम्॥ २४

विबुधा ऊचुः।

किमेतद्भगवन्दैत्या विरुद्धा ये सदैव ते।
ते हि तन्मयतां याता मायेयमिति भाव्यते॥ २५
क्व किलात्यन्तदुर्वृत्ता दानवा दलिताद्रयः।
क्व पाश्चात्यमहाजन्मलभ्या भक्तिर्जनार्दने॥ २६
प्राकृतो गुणवाञ्जात इत्येषा भगवन्कथा।
अकालपुष्पमालेव सुखायोद्वेजनाय च॥ २७
नोपपन्नं हि यद्यत्र तत्र तन्न विराजते।
मध्ये काचकलापस्य महामूल्यो मणिर्यथा॥ २८
यो यो यादृग्गुणो जन्तुः स तामेवैति संस्थितिम्।
सदृशेष्वप्यजेषु श्वा न मध्ये रमते क्वचित्॥ २९
न तथा दुःखयन्त्यङ्गे मज्जन्त्यो वज्रसूचयः।
वैसादृश्येन संबद्धा यथैता वस्तुदृष्टयः॥ ३०
यद्यत्र क्रमसंप्राप्तमुपपन्नमनिन्दितम्।
तदेव राजते तत्र जलेऽम्भोजं न तु स्थले॥ ३१
क्वाधमः प्राकृतारम्भो हीनकर्मरतिः सदा।
वराको दानवो हीनजातिर्भक्तिः क्व वैष्णवी॥ ३२

कमलिनी परुषोषरभूगता
सुखयतीह यथा न दुराश्रया।
दितिसुतोऽपि हि माधवभक्तिमा-
निति कथा न तथेश सुखाय नः॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे विबुधवाक्यं नाम द्वात्रिंशः सर्गः॥ ३२॥

---

॥ १२॥ १३॥ सकुङ्कुमैः काश्मीरद्रवाक्तैः॥ १४॥ सर्वैर्धूपदीपनैवेद्यताम्बूलदर्पणच्छत्रचामरनीराजनपुष्पाञ्जलिप्रदक्षिणानमस्कारादिभिः सौन्दर्ययुक्तैः संमानैरुपचारैः॥ १५॥ जगति ये ये विभवाः प्रसिद्धास्तैस्तैरुपकरणीकृतैर्भव्यया भक्त्या पतिं जगत्पतिं स्वस्वामिनं वा॥ १६॥ अथ मानसपूजानन्तरम्। तस्मिन्नन्तःपुरे स्थिते देवगृहे॥ १७॥ अनेन मानसपूजोक्तेनैव क्रमेण॥ १८॥ १९॥ **राजा हीति**। 'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः। तद्धर्ममनुवर्तन्ते यथा राजा तथा प्रजाः॥' इति न्यायादित्यर्थः॥ २०॥ वार्ता जगाम चारमुखादित्यर्थाद्गम्यते॥ २१॥ **किं** कस्माद्गृहीतेति॥ २२॥ अम्बरं अमरावतीम्॥ २३॥ अस्य अस्मै हरये। एनं हरिम्॥ २४॥ ते विरुद्धास्त्वां द्विषन्त इति यावत्। तन्मयतां त्वन्मयताम्॥ २५॥ द्वेषाद्दलिताः अद्रयस्त्वद्भक्तदेवमुन्यावासा यैः॥ २६॥ प्राकृतः पामरः। एषा कथा। औत्पातिकी अकालपुष्पमालेव॥ २७॥ न उपपन्नं युक्तम्॥ २८॥ ननु कश्यपवंश्यत्वाद्युष्मत्सदृशा एव ते इति चेद्गुणवैषम्यान्नेत्याशयेनाहुः—**यो य** इति। तामसस्तामसीं राजसो राजसीं सात्त्विकस्तु सात्त्विकीं संस्थितिमेतीति युक्तमित्यर्थः॥ २९॥ वैसादृश्येन अनौचित्येन। तथाच हरिणोक्तम्—'शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः। प्रभुर्धनपरायणः सततदुर्गतिः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥' इति॥ ३०॥ क्रमो योग्यता तया संप्राप्तम्॥ ३१॥ हीनजातिस्तामसयोनिः॥ ३२॥ कमलिनी परुषायां तप्तायामूषरभुवि गता इति कथा यथा श्रोतॄन् सुखयति तथा हे ईश, दितेः सुतः संततिरपि माधवे भक्तिमानिति। दुराश्रया अधमाश्रयविषया कथापि नः तथैव न सुखायेत्यर्थः॥ ३३॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे विबुधवाक्यं नाम द्वात्रिंशः सर्गः॥ ३२॥

१ तथैव इत्यपि क्वचित्. २ दानवस्तुच्छजातिः इति क्वचित्पाठः.

# त्रयस्त्रिंशः सर्गः ३३

श्रीवसिष्ठ उवाच ।

गर्जन्तमतिसंरब्धं सुरलोकमथारिहा ।
उवाच माधवो वाक्यं शिखिवृन्दमिवाम्बुदः ॥ १

श्रीभगवानुवाच ।

विबुधा मा विषण्णाः स्थ प्रह्लादो भक्तिमानिति ।
पाश्चात्यं जन्म तस्येदं मोक्षार्होऽसावरिंदमः ॥ २
अत उत्तरमेतेन गर्भता दनुजन्मना ।
न कर्तव्या प्रदग्धेन बीजेनेवाङ्कुरक्रिया ॥ ३
गुणवान्निर्गुणो जात इत्यनर्थक्रमं विदुः ।
निर्गुणो गुणवाञ्जात इत्याहुः सिद्धिदं क्रमम् ॥ ४
आत्मीयानि विचित्राणि भुवनान्यमरोत्तमाः ।
प्रयात नासुखायैषा प्राह्लादी गुणितेह वः ॥ ५

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा विबुधांस्तत्र क्षीरोदार्णववीचिषु ।
अन्तर्धानं ययौ देवस्तटतापिच्छगुच्छवत् ॥ ६
सोऽपि संपूजितहरिः सुरौघो व्रजदम्बरम् ।
पुनर्मन्दरनिर्धूतात्कणजालमिवार्णवात् ॥ ७
प्रह्लादं प्रति गीर्वाणास्ततः स्निग्धत्वमाययुः ।
महान्तो यत्र नोद्विग्नास्तत्र विश्वासवन्मनः ॥ ८
प्रत्यहं पूजयामास देवदेवं जनार्दनम् ।
मनसा कर्मणा वाचा प्रह्लादो भक्तिमानिति ॥ ९
अथ पूजापरस्यास्य समवर्धन्त कालतः ।
विवेकानन्दवैराग्यविभवप्रमुखा गुणाः ॥ १०
नाभ्यनन्ददसौ भोगपूगं शुष्कमिव द्रुमम् ।
न चारमत कान्तासु मृगो लोकमहीष्विव ॥ ११
न रेमे लोकचर्यासु शास्त्रार्थकथनादृते ।
न जायते रतिस्तस्य दृश्ये स्थल इवाब्जिनी ॥ १२
न विशश्राम चेतोऽस्य भोगरोगानुरञ्जने ।
मुक्ताफलमसंश्लिष्टं मुक्ताफल इवामले ॥ १३
त्यक्तभोगादिकलनं विश्रान्तिमनुपागतम् ।
चेतः केवलमस्यासीद्दोलायामिव योजितम् ॥ १४
प्राह्लादीं तां स्थितिं विष्णुर्देवः क्षीरोदमन्दिरात् ।
विवेद सर्वगतया धिया परमकान्तया ॥ १५
अथ पातालमार्गेण विष्णुराह्लादिताग्रतः ।
पूजादेवगृहं तस्य प्रह्लादस्य समाययौ ॥ १६
विज्ञायाभ्यागतं देवं पूजया द्विगुणेद्धया ।
दैत्येन्द्रः पुण्डरीकाक्षमादरात्पर्यपूजयत् ॥ १७
पूजागृहगतं देवं प्रत्यक्षावस्थितं हरिम् ।
प्रह्लादः परमप्रीतो गिरा तुष्टाव पुष्टया ॥ १८

प्रह्लाद उवाच ।

त्रिभुवनभवनाभिरामकोशं
सकलकलङ्कहरं परं प्रकाशम् ।
अशरणशरणं शरण्यमीशं
हरिमजमच्युतमीश्वरं प्रपद्ये ॥ १९

---

हरिभक्त्यात्र दैत्यस्य विवेकादिगुणोदयः ।
हरिं प्रसन्नं दृष्ट्वाग्रे स्तवश्चैवोपवर्ण्यते ॥ १ ॥

अनुचितदर्शनादतिसंरब्धं कुपितमतएव गर्जन्तं प्रागुक्तप्रकारेण उच्चैराक्रुश्य पृच्छन्तं सुरलोकमथ माधव उवाचेत्यन्वयः ॥ १ ॥ स्वत एव बलिनो दैत्यास्त्वद्भक्त्याप्युपस्कृता बलवत्तरा भविष्यन्ति कुतो न विषादस्तत्राह—**मोक्षार्ह** इति । यतो मोक्षार्हस्ततो न वस्तुच्छं राज्यसुखं स वाञ्छतीत्यर्थः ॥२॥ एतेन दनुजन्मना अतोऽस्माज्जन्मन उत्तरकालं गर्भता मातृगर्भे वसतिर्न कर्तव्या ॥३॥ देवैरुक्तं तस्य भगवद्भक्त्यनौचित्यदोषं परिहरति—**गुणवानिति** । जातश्चेति[1] शेषः । अनर्थक्रमं अनर्थपर्यवसितं पुरुषार्थविघातकं च क्रमं विदुः आहुश्च विद्वांसः ॥ ४ ॥ प्राह्लादी प्रह्लादसंबन्धिनी मद्भक्त्यादिगुणिता वः असुखाय न ॥ ५ ॥ तटोत्पन्नतापिच्छस्य नीलं गुच्छं यथा उन्नतासु वीचिषु व्यवधानादन्तर्धानं याति तद्वत् ॥ ६ ॥ पूर्वमम्बरादर्णवे पतितं कणजालं मन्दरनिर्धूतादर्णवात्पुनरम्बरमिव ॥ ७ ॥ स्निग्धत्वं सौहृदम् । यत्र यस्मिन्पुरुषे विषये वा महान्तः स्वपूज्याः पित्राचार्यादयो नोद्विग्नास्तत्र तस्मिन्बालानामपि मनो विश्वासवत्प्रसिद्धमित्यर्थः ॥ ८ ॥ ९ ॥ आनन्दो यथाप्राप्तेन संतोषः ॥ १० ॥ लोकमहीषु जनाकीर्णभूमिष्विव ॥ ११ ॥ लोकचर्यासु अशास्त्रीयलोकवृत्तेषु । दृश्ये दर्शनार्हे समाजोत्सवादिकौतुके ॥१२॥ भोगरूपाणां रोगाणां विषयापथ्यसेवनेनानुकूलाचरणे । असंश्लिष्टमग्रथितमच्छिद्रितं वा ॥१३॥ कथं तर्हि चेत आसीत्तदाह—**त्यक्तेति** । दोलायां योजितमिव नैकतरभागविश्रान्तमन्तरालालम्बीत्यर्थः ॥ १४ ॥ परमकान्तया शुद्धसत्त्वात्मिकया धिया ज्ञानशक्त्या विवेद विदितवान् ॥ १५ ॥ आह्लादिता भक्ताह्लादकर्ता । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः सर्वानन्दकर्ता वा । पूजादेवगृहं गत्वा प्रह्लादस्य अग्रतः समाययौ ॥ १६ ॥ द्विगुणेनोपकरणोपचारेण इद्धया दीप्तया ॥ १७ ॥ पुष्टया हर्षोपचितया ॥ १८ ॥ त्रिभुवनस्य यद्भवनं सुरक्षितस्थितिस्तदनुकूलमभिरामं कोशगृहम् । स्वान्तःस्थितत्रिभुवनस्य स्वेनैव पालनात् । सकलस्य बाह्याभ्यन्तरस्य कलङ्कस्य तमसः हरं अपहर्तारम् । परं सूर्यचन्द्राग्निवाक्करणप्रकाशेभ्योऽप्युत्कृष्टं स्वयंज्योतिः प्रकाशम् । न विद्यतेऽन्यच्छरणं येषां ते अशरणास्तेषां शरणं रक्षकम् । अविनाशित्वाच्छरण्यं शरणार्हम् । ईशं सर्वशक्तिसंपन्नम् । अतएव रजसा अजं सत्त्वेनाच्युतं तमसा चेश्वरं सर्वदुःखहरत्वाद्धरिं त्वां

---

[1] चेदिति इत्यपि पाठः.

कदम्बैर्बकुलैर्निम्बैः सिन्दुवारैः सयूथकैः ।
पारिभद्रैर्गुग्गुलीभिर्बिन्दुकैः पुष्पकोत्करैः ॥ १२
प्रियङ्गुपटलैः पाटैः पाटलैर्धातुपाटलैः ।
आम्रैराम्रातकैर्गव्यैर्हरीतकबिभीतकैः ॥ १३
शालतालतमालानां लताकुसुमपल्लवैः ।
कोमलैः कलिकाजालैः सहकारैः सकुङ्कुमैः ॥ १४
केतकैः शतपत्रैश्च तथैलामञ्जरीगणैः ।
सर्वसौन्दर्यसंमानैः स्वयमात्मार्पणैरपि ॥ १५
हरिं परमया भक्त्या जगद्विभवभव्यया ।
मनसा पूजयामास प्रह्लादोऽन्तःपुरे पतिम् ॥ १६
अथ देवगृहे तस्मिन्बाह्यार्थैः परिपूर्णया ।
पूजया पूजयामास दानवेशो जनार्दनम् ॥ १७
बहिर्द्रव्यैरनेनैव क्रमेण परमेश्वरम् ।
पुनःपुनः पूजयित्वा तुष्टिमान्दानवोऽभवत् ॥ १८
ततस्ततः प्रभृत्येव प्रह्लादः परमेश्वरम् ।
तथैव प्रत्यहं भक्त्या पूजयामास पूर्णया ॥ १९
अथ तस्मिन्पुरे दैत्यास्ततः प्रभृति वैष्णवाः ।
सर्वे एवाभवन्भव्या राजा ह्याचारकारणम् ॥ २०
जगाम वार्ता गगनं देवलोकमथारिहन् ।
विष्णोर्द्वेषं परित्यज्य भक्ता दैत्याः स्थिता इति ॥ २१
देवा विस्मयमाजग्मुः शक्राद्याः समरुद्गणाः ।
गृहीता वैष्णवी भक्तिर्दैत्यैः किमिति राघव ॥ २२
क्षीरोदे भोगिभोगस्थं विबुधा विस्मयाकुलाः ।
जग्मुरम्बरमुत्सृज्य हरिमाहवशालिनम् ॥ २३
तत्रैनं दैत्यवृत्तान्तं कथयामासुरस्य ते ।
पप्रच्छुश्चैनमासीनमपूर्वाश्चर्यविस्मयम् ॥ २४

विबुधा ऊचुः ।

किमेतद्भगवन्दैत्या विरुद्धा ये सदैव ते ।
ते हि तन्मयतां याता मायेयमिति भाव्यते ॥ २५
क्व किलात्यन्तदुर्वृत्ता दानवा दलिताद्रयः ।
क्व पाश्चात्यमहाजन्मलभ्या भक्तिर्जनार्दने ॥ २६
प्राकृतो गुणवाञ्जात इत्येषा भगवन्कथा ।
अकालपुष्पमालेव सुखायोद्वेजनाय च ॥ २७
नोपपन्नं हि यद्यत्र तत्र तन्न विराजते ।
मध्ये काचकलापस्य महामूल्यो मणिर्यथा ॥ २८
यो यो यादृग्गुणो जन्तुः स तामेवैति संस्थितिम् ।
सदृशेष्वप्यजेषु श्वा न मध्ये रमते क्वचित् ॥ २९
न तथा दुःखयन्त्यङ्गे मज्जन्त्यो वज्रसूचयः ।
वैसादृश्येन संबद्धा यथैता वस्तुदृष्टयः ॥ ३०
यद्यत्र क्रमसंप्राप्तमुपपन्नमनिन्दितम् ।
तदेव राजते तत्र जलेऽम्भोजं नतु स्थले ॥ ३१
क्वाधमः प्राकृतारम्भो हीनकर्मरतिः सदा ।
वराको दानवो हीनजातिर्भक्तिः क्व वैष्णवी ॥ ३२

कमलिनी परुषोषरभूगता
सुखयतीह यथा न दुराश्रया ।
दितिसुतोऽपि हि माधवभक्तिमा-
निति कथा न तथेश सुखाय नः ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे विबुधवाक्यं नाम द्वात्रिंशः सर्गः ॥ ३२ ॥

---

॥ १२ ॥ १३ ॥ सकुङ्कुमैः काश्मीरद्रवाक्तैः ॥ १४ ॥ सर्वैर्धूपदीपनैवेद्यताम्बूलदर्पणच्छत्रचामरनीराजनपुष्पाञ्जलिप्रदक्षिणानमस्कारादिभिः सौन्दर्ययुक्तैः संमानैरुपचारैः ॥ १५ ॥ जगति ये ये विभवाः प्रसिद्धास्तैस्तैरुपकरणीकृतैर्भव्यया भक्त्या पतिं जगत्पतिं स्वस्वामिनं वा ॥ १६ ॥ अथ मानसपूजानन्तरम् । तस्मिन्नन्तःपुरे स्थिते देवगृहे ॥ १७ ॥ अनेन मानसपूजोक्तेनैव क्रमेण ॥ १८ ॥ १९ ॥ **राजा** **हीति** । 'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । तद्धर्ममनुवर्तन्ते यथा राजा तथा प्रजाः ॥' इति न्यायादित्यर्थः ॥ २० ॥ वार्ता जगाम चारमुखादित्यर्थाद्गम्यते ॥ २१ ॥ किं कस्माद्गृहीतेति ॥ २२ ॥ अम्बरं अमरावतीम् ॥ २३ ॥ अस्य अस्मै हरये । एनं हरिम् ॥ २४ ॥ ते विरुद्धास्त्वां द्विषन्त इति यावत् । तन्मयतां त्वन्मयताम् ॥ २५ ॥ द्वेषाद्दलिताः अद्रयस्त्वद्भक्तदेवमुन्यावासा यैः ॥ २६ ॥ प्राकृतः पामरः । एषा कथा । औत्पातिकी अकालपुष्पमालेव ॥ २७ ॥ न उपपन्नं युक्तम् ॥ २८ ॥ ननु कश्यपवंश्यत्वाद्युष्मत्सदृशा एव ते इति चेद्गुणवैषम्यान्नेत्याशयेनाहुः—**यो य** इति । तामसस्तामसीं राजसो राजसीं सात्त्विकस्तु सात्त्विकीं संस्थितिमेतीति युक्तमित्यर्थः ॥ २९ ॥ वैसादृश्येन अनौचित्येन । तथाच हरिणोक्तम्—'शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतिः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥' इति ॥ ३० ॥ क्रमो योग्यता तया संप्राप्तम् ॥ ३१ ॥ हीनजातिस्तामसयोनिः ॥ ३२ ॥ कमलिनी परुषायां तप्तायामूषरभुवि गता इति कथा यथा श्रोतॄन्न सुखयति तथा हे ईश, दितेः सुतः संततिरपि माधवे भक्तिमानिति । दुराश्रया अधमाश्रयविषया कथापि नः तथैव न सुखायेत्यर्थः ॥ ३३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे विबुधवाक्यं नाम द्वात्रिंशः सर्गः ॥ ३२ ॥

---

१ तथैव इत्यपि क्वचित्.

१ दानवस्तुच्छजातिः इति क्वचित्पाठः.

# त्रयस्त्रिंशः सर्गः ३३

श्रीवसिष्ठ उवाच ।

गर्जन्तमतिसंरब्धं सुरलोकमथारिहा ।
उवाच माधवो वाक्यं शिखिवृन्दमिवाम्बुदः ॥ १

श्रीभगवानुवाच ।

विबुधा मा विषण्णाः स्थ प्रह्लादो भक्तिमानिति ।
पाश्चात्यं जन्म तस्येदं मोक्षार्होऽसावरिंदमः ॥ २
अत उत्तरमेतेन गर्भता दनुजन्मना ।
न कर्तव्या प्रदग्धेन बीजेनेवाङ्कुरक्रिया ॥ ३
गुणवान्निर्गुणो जात इत्यनर्थक्रमं विदुः ।
निर्गुणो गुणवाञ्जात इत्याहुः सिद्धिदं क्रमम् ॥ ४
आत्मीयानि विचित्राणि भुवनान्यमरोत्तमाः ।
प्रयात नासुखायैषा प्राह्लादी गुणितेह वः ॥ ५

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा विबुधांस्तत्र क्षीरोदार्णववीचिषु ।
अन्तर्धानं ययौ देवस्तटतापिच्छगुच्छवत् ॥ ६
सोऽपि संपूजितहरिः सुरौघो व्रजदम्बरम् ।
पुनर्मन्दरनिर्धूतात्कणजालमिवार्णवात् ॥ ७
प्रह्लादं प्रति गीर्वाणास्ततः स्निग्धत्वमाययुः ।
महान्तो यत्र नोद्विग्नास्तत्र विश्वासवन्मनः ॥ ८
प्रत्यहं पूजयामास देवदेवं जनार्दनम् ।
मनसा कर्मणा वाचा प्रह्लादो भक्तिमानिति ॥ ९
अथ पूजापरस्यास्य समवर्धन्त कालतः ।
विवेकानन्दवैराग्यविभवप्रमुखा गुणाः ॥ १०
नाभ्यनन्ददसौ भोगपूगं शुष्कमिव द्रुमम् ।
न चारमत कान्तासु मृगो लोकमहीष्विव ॥ ११
न रेमे लोकचर्यासु शास्त्रार्थकथनादृते ।
न जायते रतिस्तस्य दृश्ये स्थल इवाब्जिनी ॥ १२
न विशश्राम चेतोऽस्य भोगरोगानुरञ्जने ।
मुक्ताफलमसंश्लिष्टं मुक्ताफल इवामले ॥ १३
त्यक्तभोगादिकलनं विश्रान्तिमनुपागतम् ।
चेतः केवलमस्यासीद्दोलायामिव योजितम् ॥ १४
प्राह्लादीं तां स्थितिं विष्णुर्देवः क्षीरोदमन्दिरात् ।
विवेद सर्वगतया धिया परमकान्तया ॥ १५
अथ पातालमार्गेण विष्णुराह्लादिताग्रतः ।
पूजादेवगृहं तस्य प्रह्लादस्य समाययौ ॥ १६
विज्ञायाभ्यागतं देवं पूजया द्विगुणेद्धया ।
दैत्येन्द्रः पुण्डरीकाक्षमादरात्पर्यपूजयत् ॥ १७
पूजागृहगतं देवं प्रत्यक्षावस्थितं हरिम् ।
प्रह्लादः परमप्रीतो गिरा तुष्टाव पुष्टया ॥ १८

प्रह्लाद उवाच ।

त्रिभुवनभवनाभिरामकोशं
सकलकलङ्कहरं परं प्रकाशम् ।
अशरणशरणं शरण्यमीशं
हरिमजमच्युतमीश्वरं प्रपद्ये ॥ १९

---

हरिभक्त्यात्र दैत्यस्य विवेकादिगुणोदयः ।
हरिं प्रसन्नं दृष्ट्वाग्रे स्तवश्चैवोपवर्ण्यते ॥ १ ॥

अनुचितदर्शनादतिसंरब्धं कुपितमतएव गर्जन्तं प्रागुक्तप्रकारेण उच्चैराक्रुश्य पृच्छन्तं सुरलोकमथ माधव उवाचेत्यन्वयः ॥ १ ॥ स्वत एव बलिनो दैत्यास्त्वद्भक्त्याप्युपस्कृता बलवत्तरा भविष्यन्ति कुतो न विषादस्तत्राह—**मोक्षार्ह** इति । यतो मोक्षार्हस्ततो न वस्तुच्छं राज्यसुखं स वाञ्छतीत्यर्थः ॥२॥ एतेन दनुजन्मना अतोऽस्माज्जन्मन उत्तरकालं गर्भता मातृगर्भे वसतिर्न कर्तव्या ॥३॥ देवैरुक्तं तस्य भगवद्भक्त्यनौचित्यदोषं परिहरति—**गुणवानिति** । जातश्चेति शेषः । अनर्थक्रमं अनर्थपर्यवसितं पुरुषार्थविघातकं च क्रमं विदुः आहुश्च विद्वांसः ॥ ४ ॥ प्राह्लादी प्रह्लादसंबन्धिनी मद्भक्त्यादिगुणिता वः असुखाय न ॥ ५ ॥ तटोत्पन्नतापिच्छस्य नीलं गुच्छं यथा उन्नतासु वीचिषु व्यवधानादन्तर्धानं याति तद्वत् ॥ ६ ॥ पूर्वमम्बरादर्णवे पतितं कणजालं मन्दरनिर्धूतादर्णवात्पुनरम्बरमिव ॥ ७ ॥ स्निग्धत्वं सौहृदम् । यत्र यस्मिन्पुरुषे विषये वा महान्तः स्वपूज्याः पित्राचार्यादयो नोद्विग्नास्तत्र तस्मिन्बालानामपि मनो विश्वासवत्प्रसिद्धमित्यर्थः ॥ ८ ॥ ९ ॥ आनन्दो यथाप्राप्तेन संतोषः ॥ १० ॥ लोकमहीषु जनाकीर्णभूमिष्विव ॥ ११ ॥ लोकचर्यासु अशास्त्रीयलोकवृत्तेषु । दृश्ये दर्शनार्हे समाजोत्सवादिकौतुके ॥१२॥ भोगरूपाणां रोगाणां विषयापथ्यसेवनेनानुकूलाचरणे । असंश्लिष्टमग्रथितमच्छिद्रितं वा ॥१३॥ कथं तर्हि चेत आसीत्तदाह—**त्यक्तेति** । दोलायां योजितमिव नैकतरभागविश्रान्तमन्तरालालम्बीत्यर्थः ॥ १४ ॥ परमकान्तया शुद्धसत्त्वात्मिकया धिया ज्ञानशक्त्या विवेद विदितवान् ॥ १५ ॥ आह्लादिता भक्ताह्लादकर्ता । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः सर्वानन्दकर्ता वा । पूजादेवगृहं गत्वा प्रह्लादस्य अग्रतः समाययौ ॥ १६ ॥ द्विगुणेनोपकरणोपचारेण इद्धया दीप्तया ॥ १७ ॥ पुष्टया हर्षोपचितया ॥ १८ ॥ त्रिभुवनस्य यद्भवनं सुरक्षितस्थितिस्तदनुकूलमभिरामं कोशगृहम् । स्वान्तःस्थितत्रिभुवनस्य स्वेनैव पालनात् । सकलस्य बाह्याभ्यन्तरस्य कलङ्कस्य तमसः हरं अपहर्तारम् । परं सूर्यचन्द्राग्निवाक्करणप्रकाशेभ्योऽप्युत्कृष्टं स्वयंज्योतिः प्रकाशम् । न विद्यतेऽन्यच्छरणं येषां ते अशरणास्तेषां शरणं रक्षकम् । अविनाशित्वाच्छरण्यं शरणार्हम् । ईशं सर्वेशक्तिसंपन्नम् । अतएव रजसा भज सत्त्वेनाच्युतं तमसा चेश्वरं सर्वदुःखहरत्वाद्धरिं त्वां

१ चेदिति इत्यपि पाठः.

कुवलयदलनीलसंनिकाशं
शरदमलाम्बरकोटरोपमानम्।
भ्रमरतिमिरकज्जलाञ्जनाभं
सरसिजचक्रगदाधरं प्रपद्ये ॥ २०

विमलमलिकलापकोमलाङ्गं
सितदलपङ्कजकुड्मलाभशङ्खम्।
श्रुतिरणितविरिञ्चिचञ्चरीकं
स्वहृदयपद्मदलाश्रयं प्रपद्ये ॥ २१

सितनखगणतारकावकीर्णं
स्मितधवलाननपीवरेन्दुबिम्बम्।
हृदयमणिमरीचिजालगङ्गं
हरिशरदम्बरमाततं प्रपद्ये ॥ २२

अविरलकृतसृष्टिसर्वलीनं
सततमजातमवर्धनं विशालम्।
गुणशतजरठाभिजातदेहं
तरुदलशायिनमर्भकं प्रपद्ये ॥ २३

नवविकसितपद्मरेणुगौरं
स्फुटकमलावपुषा विभूषिताङ्गम्।
दिनशमसमयारुणाङ्गरागं
कनकनिभाम्बरसुन्दरं प्रपद्ये ॥ २४

दितिसुतनलिनीतुषारपातं
सुरनलिनीसततोदितार्कबिम्बम्।
कमलजनलिनीजलावपूरं
हृदि नलिनीनिलयं विभुं प्रपद्ये ॥ २५

त्रिभुवननलिनीसितारविन्दं
तिमिरसमानविमोहदीपमग्र्यम्।
स्फुटतरमजडं चिदात्मतत्त्वं
जगदखिलार्तिहरं हरिं प्रपद्ये ॥ २६

श्रीवसिष्ठ उवाच।

इति गुणबहुलाभिर्वाग्भिरभ्यर्चितोऽसौ
हरिरसुरविनाशः श्रीनिषण्णांसदेशः।
जलद इव मयूरं प्रीतिमान्प्रीयमाणं
कुवलयदलनीलः प्रत्युवाचासुरेन्द्रम् ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे नारायणागमनं नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ३४

श्रीभगवानुवाच।

वरं गुणनिधे दैत्यकुलचूडामहामणे।
गृहाणाभिमतं भूयो जन्म दुःखोपशान्तये ॥ १

प्रह्लाद उवाच।

सर्वसंकल्पफलद सर्वलोकान्तरस्थित।
यदुदारतमं वेत्सि तदेवादिश मे विभो ॥ २

प्रपद्ये इत्यर्थः ॥ १९ ॥ कुवलयदलेनोत्पलेन नीलमणिना च संनिकाशं समानकान्तिम् ॥ २० ॥ अलिकलापमिव कोमलानि सुन्दराण्यङ्गानि यस्य। सितदलपङ्कजस्य पुण्डरीकस्य कुड्मलमिव आभातीति सितदलपङ्कजकुड्मलाभः शङ्खो यस्य। श्रुतय एव रणितानि गुञ्जारवा यस्य तथाविधो विरिञ्चिनामा चञ्चरीको नाभिपद्मे भृङ्गो यस्य। स्वानां स्वभक्तानां हृदयपद्मदलान्याश्रय आधारो यस्य तम् ॥२१॥ हरिलक्षणं शरदम्बरं शरत्कालाकाशं प्रपद्ये। शरदम्बरत्वोपपादनाय विशिनष्टि—सितनखेत्यादि। स्मितेन धवलमाननलक्षणं पीवरं पूर्णमिन्दुबिम्बं यस्य। हृदयमणिः कौस्तुभस्तन्मरीचिजालान्येव गङ्गा मन्दाकिनी यत्र ॥२२॥ अविरला निबिडा कृता सृष्टिः सर्वाप्यसंबाधं लीना निविष्टा यस्मिन्। स्वयं तु सततमजातमनुत्पन्नमत एवाऽवर्धनं वृद्ध्यादिविकारशून्यम्। कथं तस्य देहित्वं तत्राह—गुणेति। सत्त्वादिमायागुणप्रयुक्तैर्गुणशतैरनन्तकल्याणगुणैर्जरठोऽतिचिरंतनोऽभिजातः सुन्दरो देहो यस्य तथाविधम्। प्रलयकाले वटतरुदले शायिनमर्भकं प्रपद्ये इत्यर्थः ॥ २३ ॥ नवविकसितस्य नाभिपद्मस्य रेणुभिर्गौरं पीतमर्थादुदरदेशे। स्फुटेन प्रकाशमानेन कमलयाः लक्ष्म्या वपुषा विभूषितमङ्गं वक्षो यस्य। दिनशमसमयः सायंकाल इवारुणो रक्तचन्दनकाश्मीरायङ्गरागो यस्य ॥ २४ ॥ कमलजो ब्रह्मा तन्नलिन्या जलेनावपूर्यत इति जलावपूरस्तडागस्तद्रूपम्। हृदि प्रसिद्धा नलिनी हृत्पद्ममिति यावत् ॥ २५ ॥ त्रिभुवननलिन्याः सिते अरविन्दे करे यस्य सूर्यस्य तथाभूतम्। अतएव तिमिरसमानस्य विमोहस्य दीपम्। अग्र्यं श्रेष्ठम्। किं भौतिकप्रकाशोऽसौ नेत्याह—स्फुटतरमिति। स्फुटतरं नित्यस्वप्रकाशमतएवाजडं चिद्रूपमात्मतत्त्वमतएव साक्षात्कारमात्रेण जगतां जगद्गतजीवानामखिलार्तिहरम् ॥ २६ ॥ इति उक्तप्रकाराभिर्गुणैर्बहुलाभिः स्तुतिवाग्भिरभ्यर्चितः। श्रिया निषण्ण आलिङ्गितोऽसदेशो यस्य तथाविधो हरिर्जलदो मयूरमिव असुरेन्द्रं प्रह्लादं प्रत्युवाच ॥ २७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे नारायणागमनं नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

हरेर्वरादिह प्राप्य प्रह्लादः सुविचारणाम्।
निरस्यानात्मवर्गं स्वमपश्यच्चित्सदद्वयम् ॥ १ ॥

हे दैत्यकुलचूडामहामणे, त्वं वरं गृहाण ॥ १ ॥ सर्वेषां लोकानां प्राणिनामन्तरे हृदये स्थित। उदारतमं सर्वकार्पण्यनिवारकमिति यावत्। आदिश आज्ञापयेति विनयोक्त्या याचनम्

श्रीभगवानुवाच ।

सर्वसंभ्रमसंशान्त्यै परमाय फलाय च ।
ब्रह्मविश्रान्तिपर्यन्तो विचारोऽस्तु तवानघ ॥ ३

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा दितिपुत्रेन्द्रं विष्णुरन्तरधीयत ।
कृतघर्घरनिर्ह्रादस्तरङ्गस्तोयधेरिव ॥ ४
विष्णावन्तर्हिते देवे पूजायां कुसुमाञ्जलिम् ।
पाश्चात्यं दानवस्त्यक्त्वा मणिरत्नपरिष्कृतम् ॥ ५
पद्मासनस्थोऽतिमुदा ह्युपविश्य वरासने ।
स्तोत्रपाठविधावन्तश्चिन्तयामास चेतसा ॥ ६
विचारवानेव भवान्भवत्विति भवारिणा ।
देवेनोक्तोऽस्मि तेनान्तः करोम्यात्मविचारणम् ॥ ७
किमहं नाम तावत्स्यां योऽस्मिन्भुवनडम्बरे ।
वच्मि गच्छामि तिष्ठामि प्रयत्नेनाहरामि च ॥ ८
जगत्तावदिदं नाहं सवृक्षतृणपर्वतम् ।
यद्बाह्यमलमत्यन्तं तत्स्यां कथमहं किल ॥ ९
असन्नभ्युदितो मूकः पवनैः स्फुरितः क्षणम् ।
कालेनाल्पेन विलयी देहो नाहमचेतनः ॥ १०
जडया कर्णशष्कुल्या कल्प्यमानः क्षणक्षयी ।
शून्याकृतिः शून्यभवः शब्दो नाहमचेतनः ॥ ११
त्वचा क्षणविनाशिन्या प्राप्यमप्राप्यमप्यथ ।
चित्प्रसादोपलब्धात्मस्पर्शनं नास्म्यचेतनम् ॥ १२
बद्धात्मा जिह्वया तुच्छो लोलया लोलसत्तया ।
स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहमचेतनः ॥ १३
दृश्यदर्शनयोर्लीनं क्षयिक्षणविनाशिनोः ।
केवले द्रष्टरि क्षीणं रूपं नाहमचेतनम् ॥ १४
नासयाप्यन्धजडया क्षयिण्या परिकल्पितः ।
पेलवोऽनियताकारो गन्धो नाहमचेतनः ॥ १५
निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ।
शुद्धचेतन एवाहं कलाकलनवर्जितः ॥ १६
चेत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ।
सबाह्याभ्यन्तरव्यापी निष्कलामलसन्मयः ॥ १७
अनेन चेतनेनेमे सर्वे घटपटादयः ।
सूर्यान्ता अवभास्यन्ते दीपेनोत्तमतेजसा ॥ १८
आ इदानीं स्मृतं सत्यमेतत्तदखिलं मया ।
निर्विकल्पचिदाभास एष आत्मास्मि सर्वगः ॥ १९
अनेनैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः[1] ।
तेजसान्तःप्रकाशेन यथाग्निकणपङ्क्तयः ॥ २०
अनेनैताः [2]स्फुरन्तीह विचित्रेन्द्रियपङ्क्तयः ।
सर्वगेन निदाघेन यथा मरुमरीचिकाः ॥ २१
अनेनैतत्पदार्थानां वस्तुत्वं प्रतिपाद्यते ।
शुक्लादिगुणवत्त्वं स्वं प्रदीपेनेव वाससाम् ॥ २२
असावेव हि भूतानां सर्वेषामेव जाग्रताम् ।
सर्वानुभविताभूमिरात्मा मुकुरवत्स्थितः ॥ २३

---

॥ २ ॥ एवं प्रार्थितो विष्णुः स्वविचारोत्पन्नब्रह्मात्मतत्त्वसाक्षात्कारविश्रान्तिमन्तरेण नात्यन्तिककार्पण्यनिवृत्तिरिति मन्यमानस्तदनुरूपं वरं दिशति—**सर्वेति** । सर्वसंभ्रमसंशान्तिरात्यन्तिकानर्थनिवृत्तिः । परमं फलं निरतिशयानन्दावाप्तिः ॥ ३ ॥ ४ ॥ ॥ ५ ॥ वरासने उपविश्य पद्मासनस्थः संस्तोत्रपाठविधानकाले अन्तर्वक्ष्यमाणप्रकारेण चिन्तयामास ॥ ६ ॥ भवः संसारस्तदरिणा तन्निवारकेण । तेन हेतुना ॥ ७ ॥ तत्र सर्वस्य दृश्यस्यात्मार्थत्वादात्मन एव प्राधान्यं निश्चित्य स एवास्मिन् कः स्यादिति विचारयति-**किमहमित्यादिना** । प्रयत्नेन सर्वोद्योगेन । आहरामि विषयानुपभुञ्जे ॥ ८ ॥ तत्र देहाद्बाह्यं तावन्नात्मेत्याह—**जगदिति** ॥ ९ ॥ देहोऽपि नाहमित्याह—**असन्निति** । मूकोऽनभिज्ञत्वादेव वक्तुमसमर्थः । पवनैः प्राणवायुभिः क्षणं स्वसंचारक्षणे स्फुरितः संचलितः ॥ १० ॥ एवं शब्दादिविषया अपि नात्मेत्याह—**जडयेत्यादिना** । जडया अचिद्रूपया कल्प्यमानस्तारो मन्द्रः पदं वाक्यमित्यादिभेदैः समर्थ्यमानः । क्षयित्वादेव शून्याकृतिः । शून्यादाकाशाद्भवतीति भवः । यद्यप्याकाशो न शून्यस्वभावस्तथाप्यात्मसत्तातः पृथक्करणे निःस्वरूप इति शून्यत्वोक्तिः ॥११॥ प्राप्यमप्राप्यमपि कदाचित्प्राप्यम् । स्पर्शनं उष्णत्वादि । न नित्यप्राप्तस्वभाव आत्मा भवितुमर्हतीति भावः ॥ १२ ॥ लोलसत्तया अनित्यया लोलया चलया जिह्वया बद्धात्मा संबद्धस्वभावो रसनेन्द्रियाधीनसिद्धिक इति यावत् । स्वल्पो जिह्वाग्रात्कण्ठपर्यन्तः स्पन्द आस्वादप्रसरो यस्य ॥ १३ ॥ दृश्ये द्रव्ये दर्शने चक्षुषि च लीनं तदुभयाधीनसिद्धिकमिति यावत् । क्षणविनाशिनोरनित्ययोः । केवले द्रष्टरि उपभोगजननेन क्षीणमुपक्षीणम् ॥ १४ ॥ अन्धवज्जडया अप्रकाशया । नासया घ्राणेन्द्रियेण । कालेनान्यथा परिणामादनियताकारः ॥ १५ ॥ शब्दादिविषयाणामनात्मत्ववचनं वचनादानादीनामपि समानं सत्सर्वत्र त्रिपुटीनां न्यायसाम्यादनात्मत्वोपलक्षणम् । तेनाहंकारमनोबुद्धिचित्तत्रिपुट्या अप्यनात्मत्वेन निरासे शुद्धचिन्मात्रमेवात्मा परिशिष्ट इत्याशयेनाह-**निर्मम** इति ॥१६॥ चेतनपदेन चेतनावतो जडांशस्यापि ग्रहणं माभूदिति तत्परिशोधायाह—**चेत्येति** । सन्मयः सन्मात्रः ॥१७॥ इत्थं त्वंपदार्थं परिशुद्धं विचार्य तन्मुखेनैव तत्पदार्थमपि परिशोध्यावधारयितुमुपक्रमते—**अनेनेत्यादिना** । अन्यनिरपेक्षत्वादुत्तमतेजसा चेतनेन दीपेन ॥ १८ ॥ निर्विकल्पो वियदादिविकल्पशून्यश्चिल्लक्षण आभासः प्रकाश एष आत्मास्मीति अनात्मेश्वरनिरासः ॥ १९ ॥ अग्निभूता अङ्गारकणपङ्क्तयो यथेत्यर्थः ॥ २० ॥ ॥२१॥ सर्वपदार्थानां स्फूर्तिरिव सत्ताप्येतदधीनैवेत्याह—**अनेनेति** । सत्तोपपादने प्रदीपदृष्टान्तः स्फूर्तिसत्तयोरभेदद्योतनार्थः ॥ २२ ॥ जाग्रतां सचेतसामिति यावत् । सर्वासामनुभव एषामस्तीत्यनुभविनो देहेन्द्रियमनोबुद्ध्यादयस्तद्भावानां

---

१ पङ्क्तय इत्यपि पाठः. २ स्फुररितः इति पाठः.

तस्यैकस्याविकल्पस्य चिद्दीपस्य प्रसादतः ।
उष्णोऽर्कः शिशिरश्चन्द्रो घनोऽद्रिर्विद्रुतं पयः ॥ २४
सातत्येनानुभूतानां सर्वेषां च जगत्स्थितौ ।
एतत्कारणमाद्यं तत्कारणं नास्य विद्यते ॥ २५
सातत्येनानुभूतानां पदार्थानामनेन तत् ।
पदार्थत्वमुदेत्युच्चैः प्रतापेनेव तप्तता ॥ २६
अनाकारात्कारणाच्च सर्वकारणकारणात् ।
एतस्मादिदमुत्पन्नं जगच्छैत्यं हिमादिव ॥ २७
ब्रह्मविष्ण्वन्द्ररुद्राणां कारणानां जगत्स्थितौ ।
एतत्कारणमाद्यं तत्कारणं नास्य विद्यते ॥ २८
चिच्चेत्यद्रष्टृदृश्यादिनामभिर्वर्जितात्मने ।
स्वयं सकृद्विभाताय मह्यमस्मै नमो नमः ॥ २९
एतस्मिन्सर्वभूतानि निर्विकल्पचिदात्मनि ।
गुणभूतानि भूतेशे तिष्ठन्ति विविशन्ति च ॥ ३०
यत्किलानेन कलितं चेतनेनान्तरात्मना ।
तत्तद्भवति सर्वत्र नेतरत्सदपि स्थितम् ॥ ३१
यच्चिता कलितं किंचित्तदाप्नोति निजं पदम् ।
यच्चिताकलितं नेह तत्सदप्यन्तमागतम् ॥ ३२
इमे घटपटाकाराः पदार्थशतपङ्क्तयः ।
जागत्यो विपुलादर्शे ह्यस्मिन्व्योमनि बिम्बिताः॥ ३३
एतद्वृद्धं वृद्धतरे क्षयि क्षयिणि जायते ।
पदार्थे सदसच्चापि प्रतिबिम्बार्कवत्स्थितम् ॥ ३४
अदृश्यं सर्वभूतानां प्राप्यं गलितचेतसाम् ।
एतत्तद्दृश्यते सद्भिः परं व्योमातिनिर्मलम् ॥ ३५
इयमभ्युदयं याति नानादृश्यसुमञ्जरी ।
आचारचञ्चरीकाढ्या एतस्मात्कारणद्रुमात् ॥ ३६
अस्मादियमुदेत्युच्चैः संसाररचनाचला ।
विचित्रतरुगुल्माढ्या शैलादिव वनावली ॥ ३७
सर्वेषामविभिन्नोऽसौ त्रैलोक्योदरवर्तिनाम् ।
ब्रह्मादीनां तृणान्तानां चिदात्मा संप्रकाशकः ॥ ३८
एकोऽसावहमाद्यन्तरहितः सर्वगाकृतिः ।
चराचराणां भूतानामन्तः स्वानुभवः स्थितः ॥ ३९
अस्य तस्य ममेमानि स्थावराणि चराणि च ।
परिसंख्यादिहीनानि शरीराणि बहूनि च ॥ ४०
एकोऽसावनुभूत्यात्मा स्वानुभूतिवशात्स्वयम् ।
सर्वदृग्द्रष्टृदृश्यत्वात्सहस्रकरलोचनः ॥ ४१
एषोऽसावहमाकाशे सूर्यदेहेन चारुणा ।
विहरामीतरेणापि वायुदेहेन वायुना ॥ ४२
ममैतद्वपुरानीलं शङ्खचक्रगदाधरम् ।
सर्वसौभाग्यसीमान्तं ह्यस्मिञ्जगति वल्गति ॥ ४३
अहमस्मिन्समुद्भूतः पद्मासनगतः सदा ।
निर्विकल्पसमाधिस्थः परां निर्वृतिमागतः ॥ ४४
अहं त्रिनेत्रयाऽऽक्रान्त्या गौरीवक्त्राब्जषट्पदः ।
सर्गान्ते संहरामीदं कूर्मोऽङ्गपटलं यथा ॥ ४५
अहमिन्द्रेण रूपेण त्रिलोकीमखिलामिमाम् ।
पालयामि क्रमप्राप्तां मठिकामिव तापसः ॥ ४६

अनुभवितानामनुभवानां भूमिः परं विश्रान्तिस्थानम् । यथा मुकुरः सर्ववस्तुप्रतिबिम्बविश्रान्तिभूस्तद्वत् ॥ २३ ॥ पदार्थानां स्वभाववैचित्र्याण्यप्येतदधीनसिद्धिकानीत्याह—**तस्ये**ति । घनः कठिनः । विद्रुतं द्रवम् ॥ २४ ॥ सातत्येन 'आकाशाद्वायुर्वायोरग्निरग्नेरापः' इत्यादिक्रमेण श्रुतिप्रत्यक्षादिना अनुभूतानां सर्वेषां पदार्थानां जगति उत्पत्त्यादिव्यवस्थितौ एतदाद्यं कारणम् । तनोतीति तत् सद्रूपेण सर्वकार्यव्यापकम् ॥ २५ ॥ तत् प्रसिद्धं वियदादिपदार्थत्वम् । प्रतापेन ग्रीष्मार्कतापेन भूम्यादेस्तप्ततेव ॥ २६ ॥ परमार्थतोऽनाकारात्कारणत्वाद्याकारशून्यात् अविद्यया कारणभूताच्च सर्वेषां ब्रह्मादिकारणानां कारणादेतस्मात्प्रत्यग्ब्रह्मण इदं जगदुत्पन्नम् ॥ २७ ॥ सर्वकारणकारणादित्वेतद्विवृणोति—**ब्रह्मविष्ण्व**ति ॥ २८ ॥ सकृद्विभाताय नित्यस्वप्रकाशाय ॥ २९ ॥ कारणत्वात्सर्गहेतुत्ववत्स्थितिप्रलयहेतुत्वमप्यस्यैवेत्याह—**एतस्मि**न्निति । गुणभूताःप्रधानभूतानि गुणवदपृथक्सत्ताकानि वा विविशन्ति प्रविशन्ति । तथाच 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्युक्तब्रह्मलक्षणस्यास्मिन्नेव समन्वय इत्यर्थः ॥३०॥ कारणे सूक्ष्मरूपेण स्थितमिदानीं सद्वर्तमानमपि यदनेनेश्वरेण चेतनेनान्तरात्मनोत्तरक्षणेऽस्त्विति कलितं संकल्पितं तत्तद्भवत्युत्तरक्षणे नेतरदित्यर्थः ॥ ३१ ॥ कलितं स्वीयसत्तास्फूर्तिप्रदानेनोज्जीवितम् । निजं घटोऽस्तीत्यादिव्यवहारपदम् । अन्तमसत्त्वलक्षणं नाशमागतं प्राप्तम् ॥ ३२ ॥ ॥ ३३ ॥ एवं वृद्ध्यादिभावविकारा अप्येतस्मिन्नेवाध्यस्ता इत्याह—**एतद्**िति । यथा प्रतिबिम्बार्के क्षयवृद्धी तद्रूपेण स्थिते बिम्बे एवाध्यस्ते अन्यवृत्तितयेव विभाव्येते तद्वदित्यर्थः ॥३४॥ सर्वेषां भूतानामज्ञानाम् । गलितचेतसां दृश्यमिति वक्तव्ये प्राप्यमित्युक्तिर्दर्शनप्राप्त्योर्भेदाभावद्योतनायेत्याशयेन व्याचष्टे —**एतत्त**दिति ॥ ३५ ॥ ये तु कारणस्यैकदेशे परिणामो जगदिति कल्पयन्ति तेषां कल्पनाप्यस्मिन्नेव नान्यत्रेत्याशयेनाह— **इयमि**ति द्वाभ्याम् ॥ ३६ ॥ ३७ ॥ अस्मिन्नेव कल्पनेति कुतो ज्ञातमिति चेदेतदभिन्नस्फूर्तिकत्वाज्जगत इत्याह—**सर्वेषा**मिति ॥ ३८ ॥ ३९ ॥ परिच्छिद्य संख्यागणना व्यतीयत्ता । आदिपदाद्देशेयत्ताकालेयत्ते गृह्येते ॥ ४० ॥ स्वानुभूतिवशात्स्वात्मनि क्रियाविरोधेनानुभूत्यन्तरा घटनात्स्वप्रकाशानुभूत्यात्मायमित्यर्थः । परप्रकाशनेऽप्यस्य संकोचाभावेन सर्वदृग्द्रष्टृदृश्यासाक्षितया भासा यस्य तथाविधत्वात्प्रतिशरीरमात्मभेदासिद्धावयमेव सर्वेषां करलोचनैः सहस्रकरलोचन इत्यर्थः ॥४१॥ सर्वात्मभावं स्वस्य प्रत्येकमाह—**एषोऽसावि**ति । एष प्रत्यक्षोऽसावीश्वरभूतोऽहं सूर्यभूतः सन्सूर्यदेहेन विहरामि । एवं वायुना वायुदेहेन ॥ ४२ ॥ वल्गति व्यवहरति ॥ ४३ ॥ ४४ ॥ आक्रान्त्या मूर्त्या ॥ ४५ ॥ क्रमप्राप्तां मन्वन्तरक्रमप्राप्ताम् ॥ ४६ ॥

१ द्रुतम् इति पाठः.

स्त्रीपुमानहमेवैतत्कुमारो ह्यहमित्यपि ।
जीर्णोऽहं देहधारित्वाज्जातोऽहं विश्वतोमुखः ॥ ४७
अहं तृणलतागुल्मजालं रसतया स्थितः ।
उत्थापयामि चिद्भूमेः कूपोऽन्तरलतामिव ॥ ४८
स्वलीलार्थमिदं चारु जगदाडम्बरं ततम् ।
मयाभिजातबालेन पङ्कक्रीडनकं यथा ॥ ४९
मयेदमाप्यते सर्वं सत्ता मां प्राप्य गच्छति ।
मत्परित्यक्तमेतच्च सदप्येव न किंचन ॥ ५०
मयि स्फारे चिदादर्शे प्रतिबिम्बं यदागतम् ।
तदस्ति नेतरद्यस्मान्मत्तोऽन्यन्नेह विद्यते ॥ ५१
कुसुमेष्वहमामोदः पुष्पपत्रेष्वहं छविः ।
छविष्वहं रूपकला रूपेष्वनुभवोऽप्यहम् ॥ ५२
यत्किंचिदिदं दृश्यं जगत्स्थावरजङ्गमम् ।
सर्वसंकल्परहितं तच्चित्तत्त्वमहं परम् ॥ ५३
आद्या रसमयी शक्ती रसौघो विस्तृतो यया ।
सा यथा दारुकुड्येषु तथाहं सर्ववस्तुषु ॥ ५४
परमां तामहं सर्वपदार्थान्तरवर्तिताम् ।
उपेत्य संविद्वैचित्र्यं प्रतनोमि स्वयेच्छया ॥ ५५
घृतं यथान्तः पयसो रसशक्तिर्यथा जले ।
चिच्छक्तिः सर्वभावेषु तथान्तरहमास्थितः ॥ ५६
इदं जगत्त्रिकालस्थं चिति मध्ये च संस्थितम् ।
चेत्योपचाररहितं वस्तुजातमिवावनौ ॥ ५७
भरिताशेषदिकुक्षिस्त्यक्तसंकोचविभ्रमः ।
सर्वस्थः सर्वकर्ता च विराट् सम्राडहं स्थितः ॥ ५८
अपूर्वमनिबद्धेन्द्रमशस्त्रदलितामरम् ।
अप्रार्थितं मे संप्राप्तं जगद्राज्यमिदं ततम् ॥ ५९
अहो नु विततात्मास्मि न माम्यप्यात्मनात्मनि ।
कल्पान्तपवनाधूत एकार्णव इवार्णवे ॥ ६०
नात्मन्यन्तमवाप्नोमि स्वस्थेऽन्तः स्वदिते स्वयम् ।
क्षीरवारिनिधौ पङ्गुः सरीसृप इव स्फुरन् ॥ ६१
स्वल्पेयं मठिका ब्राह्मी जगन्नाम्नी सुसंकटा ।
गजो बिल्व इव स्वाङ्गे न माति विपुलं वपुः ॥ ६२
विरिञ्चिभवनात्पारे तत्त्वान्तेऽप्याहरत्पदम् ।
प्रसरत्येव मे रूपमद्यापि न निवर्तते ॥ ६३
अयं नामाहमित्यन्तः कुतो निरवलम्बना ।
अपर्यन्ताकृतेरेषा किलासीत्स्वल्पता मम ॥ ६४
भवानयमयं चाहमिति मिथ्यैव विभ्रमः ।
को देहः कोऽप्यदेहो वा को मृतः कश्च जीवति ॥ ६५
वराकाः पेलवधियो बभूवुर्मे पितामहाः ।
ये साम्राज्यमिदं त्यक्त्वा रेमिरे भवभूमिषु ॥ ६६
केयं किल महादृष्टिर्भरिता ब्रह्मबृंहिता ।
क सरीसृपभीमाशा भीमा राज्यविभूतिभिः ॥ ६७

'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' इति श्रुतिं स्वात्मनि स्वानुभवेन संवादयति—**स्त्रीति** ॥ ४७ ॥ रसतया जीवसारतया जलतया च । कूपो जीर्णकूपः ॥ ४८ ॥ अभिजातेन क्रीडनकनिर्माणकुशलेन बालेन ॥ ४९ ॥ आप्यते कारणभावेन व्याप्यते । कार्यस्य च सत्ताप्रविलयेन मां प्राप्य गच्छति तिरोभवति । मया स्वतत्त्वदर्शनेन परित्यक्तमेतज्जगजीवन्मुक्तव्यवहारे सदपि न किंचन ॥ ५० ॥ ५१ ॥ इदानीमीश्वरभूतस्य स्वस्य विभूतिविस्तरमुपभोगेनुभवान्तरमाह—**कुसुमेष्विति** ॥ ५२ ॥ दृश्यं दर्शनार्हं स्थावरं जंगमं वा विभूतिमच्छ्रीमदूर्जितं वा तस्य सर्वस्योत्कर्षनिमित्तं चिदात्मतत्त्वं अहमेव किं संकल्पादिदूषितजीवरूपेण, नेत्याह—**सर्वसंकल्परहितमिति** । अतएव परम् ॥५३॥ रसमयी आद्या शक्तिः रसतन्मात्रा यथा सागरनदी सरःकूपादिरसौघो जलौघः सन् विस्तृतः सैव जलभूता शक्तिर्दारुषु वृक्षेषु शाखापल्लवाद्युद्भवनिमित्ततया कुड्येषु च तृणयवाङ्कुराद्युद्भवनिमित्ततया प्रसृता तथाहं सर्ववस्तुषु तत्तत्कार्योद्भवनिमित्ततया प्रसृत इत्यर्थः ॥ ५४ ॥ स्वसृष्टकार्यान्तरानुप्रवेशेन जीवसंविद्वैचित्र्येऽपि स्वयमेव हेतुरित्याह—**परमामिति** ॥ ५५ ॥ ५६ ॥ चेत्योपचारश्चेत्यप्रथा तद्रहितं जडमिति यावत् । त्रिकालस्थमतीतं वर्तमानं भविष्यच्चेदं जगत् चिति चिद्रूपे मयि मध्ये एकांशे व्यवस्थितम् । यथा तृणकाष्ठलोष्टादिवस्तुजातमवनौ तद्वत् ॥ ५७ ॥ विविधो व्यष्टिभेदेन राजत इति विराट् । सम्यक्समष्टिभावेन राजत इति सम्राट् । अथवा विशेषेण राजान्तरेभ्यो राजत इति विराट् । सम्राट् सर्वेषां राज्ञामाज्ञापयिता ॥५८॥ इन्द्राधिकराज्यप्राप्तेः कथं सम्राट्त्वं तत्राह—**अपूर्वमिति** ॥ ५९ ॥ न मामि कुसूले धान्यमिव समावेशं न प्राप्नोमि । अर्णवे प्राक्तनार्णवपरिमाणे ॥ ६० ॥ अन्तः स्वयं स्वदिते स्वेनैव निरतिशयानन्दात्मना स्वदमाने । पङ्गुः कुण्ठितगतिः सरीसृपः सर्पः स्फुरन् संचरन् ॥ ६१ ॥ ब्राह्मी मठिका ब्रह्माण्डः । सुसंकटा संकुचितगर्भा । विपुलं विस्तृतं वपुर्मत्स्वरूपं न माति न समाविशति ॥ ६२ ॥ उत्तरोत्तरदशगुणपार्थिवाद्यावरणावृताद्ब्रह्माण्डलक्षणाद्विरिञ्चिभवनात्पारे परतश्चतुर्विंशतिसंख्यानां सांख्यवैष्णवादितन्त्रप्रसिद्धानां षट्त्रिंशत्संख्यानां शैवपाशुपताभिमतानां वा तत्त्वानामन्तेऽपि पदमाहरत् क्रममाणमिति यावत् । मे रूपं प्रसरत्येवेति वास्तवस्यैव विस्तारस्य प्रसारत्वेन कल्पना ॥६३॥ अयं देहादिरहमिति कल्पना कुत आसीदियन्तं कालमित्यर्थः ॥ ६४ ॥ देहस्यैवाप्रसिद्धावदेहोऽपि कः । वन्ध्यापुत्रस्येव तद्धन्तुरप्यप्रसिद्धेः । एवं को मृतः प्राणस्यैवाप्रसिद्धौ कस्तेन वियुक्तः । कश्च जीवति प्राणान् धारयति ॥ ६५ ॥ मिथ्या साम्राज्यासक्तान्स्वपितामहादीनिदानीमनुशोचति—**वराका** इति । पेलवधियः क्षुद्रधिय इति यावत् ॥ ६६ ॥ सरीसृपाः सर्पा इव भीमाभिराशाभिर्भीमाः

१ विभूतयः इति पाठोऽस्त्वसाधु.

अनन्तानन्दसंभोगा परोपशमशालिनी।
शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥ ६८
सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने।
प्रत्यक्चेतनरूपाय मह्यमेव नमो नमः ॥ ६९
जयास्यहमजो जातो जीर्णसंसारसंसृतिः।
प्राप्तप्राप्यो महात्मायं जीवामि च जयामि च ॥ ७०
इदमुत्तमसाम्राज्यं बोधं संत्यज्य शाश्वतम्।
न रमेऽहमरम्यासु राज्यदुःखविभूतिषु ॥ ७१
दारुवारिदृषन्मात्रे लुलितो यो धरातले।
धिग्वराकमनात्मज्ञं तं कुदानवकीटकम् ॥ ७२
अविद्यैकात्मभिर्द्रव्यैरविद्यामयमङ्गकम्।
अन्नेन संतर्पयता किं नाम गुरुणा कृतम् ॥ ७३
वर्षाणि कतिचित्प्राप्य जगच्छ्रीमठिकामिमाम्।
किं नाम प्रापदुचितं हिरण्यकशिपुः किल ॥ ७४
अनास्वाद्येदमानन्दं जगद्राज्यशतान्यपि।
समास्वादयता नेह किंचिदास्वादितं भवेत् ॥ ७५
न किंचिद्येन संप्राप्तं तेनेदं परमामृतम्।
संप्राप्यान्तः प्रपूर्णेन सर्वं प्राप्तमखण्डितम् ॥ ७६
त्यक्त्वा पदमिदं मूर्खो मितमेति न पण्डितः।
उष्ट्रो हि त्यक्तसुलतः कण्टकं याति नेतरः ॥ ७७
परां दृष्टिमिमां त्यक्त्वा दग्धराज्ये रमेत कः।
कस्त्यक्त्वेक्षुरसं प्राज्ञः कटु निम्बपयः पिबेत् ॥ ७८
मूर्खा एव हि ते सर्वे बभ्रुवुर्मे पितामहाः।
इमां दृष्टिं परित्यज्य रेमिरे राज्यसंकटे ॥ ७९
क्व फुल्लानन्दनस्थलयः क्व दग्धमरुभूमयः।
क्वेमा बोधदृशः शान्ताः क्व भोगेष्वात्मबुद्धयः ॥ ८०
न किंचिदपि त्रैलोक्ये यद्राज्यमपि वाञ्छते।
सर्वमस्त्येव चित्तत्त्वे तत्कसान्नानुभूयते ॥ ८१
चिता सर्वस्थया स्वस्थसमया निर्विकारया।
सर्वथा सर्वदा सर्वं सर्वतः साधु लभ्यते ॥ ८२
भासिनी तैजसी शक्तिरमृतप्राप्तिरैन्दवी।
ब्राह्मी महत्ता महती शार्की त्रैलोक्यराजता ॥ ८३
परमा पूर्णता शार्वी जयलक्ष्मीश्च वैष्णवी।
मानसी शीघ्रगतिता बलवत्ता च वायवी ॥ ८४
आग्नेयी दाहकलना पायसी रसनिर्वृतिः।
मौनी महातपःसिद्धिर्विद्या बार्हस्पती तथा ॥ ८५
वैमानिकी व्योमगतिः स्थिरता चापि पार्वती।
गम्भीरताथ सामुद्री मैरवी च महोन्नतिः ॥ ८६
शमश्रीः सौगती सौम्या मादिरी मदलोलता।
माधवी पुष्पमयता वार्षिकी घनशब्दिता ॥ ८७
याक्षी च मायामयता नाभसी निष्कलङ्कता।
शीततापि च तौषारी नैदाघी तापतप्तता ॥ ८८
एताश्चान्यास्तथा बह्व्यो देशकालक्रियात्मिकाः।
नानाकारविकारोत्थास्त्रिकालोदरसंस्थिताः ॥ ८९
विचित्राः शक्तयः स्वस्थसमया निर्विकारया।
चिता क्रियन्ते परया कलाकलनयुक्तया ॥ ९०
विकल्पहीना चित्सर्वा पदार्थशतदृष्टिषु।
सममेवाभिपतति प्रभा प्राभाकरी यथा ॥ ९१

॥ ६७ ॥ ६८ ॥ ६९ ॥ यतोऽहं चिरभुक्तमन्नमिव जीर्णा संसारसंसृतिर्येन तथाविधः सन् अजो जातः अतो जयामि सर्वतो जेतव्यजयफलं सर्वानर्थनिवृत्तिं प्राप्तोऽस्मि। किंच प्राप्तानि प्राप्तव्यानि सर्वाणि सुखानि येन तथाविधः सन् जीवामि जीवितसाफल्यं प्राप्तोऽस्मि। अतएव जयामि सर्वोत्कर्षेण वर्ते चेत्यर्थः ॥ ७० ॥ ७१ ॥ वनदुर्गे दारुणि जलदुर्गे वारिगिरिदुर्गे च दृषदः मिन्वन्तीति मात्राः विपत्सु शरणं यत्र तथाविधे धरातले भूतले स्वामित्वाभिमानेन यो लुलितो लोलतां गतस्तं कुदानवलक्षणं कीटकम्। कीटकेष्वपि दारुकीटकानां दारुभिर्दुर्गभूतैर्वारिकीटकानां वारिणा दृषत्संधिगतवृश्चिकादिकीटकानां दृषद्भिश्च त्राणदर्शनात्स्वतः स्वत्राणशक्तेस्तुल्यत्वादित्यर्थः ॥ ७२ ॥ कार्यकारणयोरभेदादविद्यैकात्मकैः। द्रव्यैरन्नपानादिविषयैः। गुरुणा पित्रा ॥ ७३ ॥ जगत्त्रैलोक्यं तल्लक्षणां श्रीयुक्तां मठिकाम्। उचितं काश्यपे कुले जन्मनोनुरूपं परमपुरुषार्थम् ॥ ७४ ॥ अयमात्मैवानन्द इदमानन्दस्तम्। इदं जडदुःखरूपमपि देहेन्द्रियविषयाद्यानन्दयति आनन्दरूपतयानुभावयतीति वा इदमानन्दस्तम् ॥ ७५ ॥ एकसंप्राप्त्यैव विनैव विषयं सर्वविषयसुखप्राप्तिमाह—न किंचिदिति। अखण्डितं निरन्तरम् ॥ ७६ ॥ त्यक्ता सुलता फलभरानतद्राक्षादिवल्ली येन तथाविधः सन् ॥ ७७ ॥ निम्बपयः पिचुमन्दपत्ररसम् ॥ ७८ ॥ रेमिरे ये इति शेषः ॥ ७९ ॥ भोगेषु भोगायतनदेहादिषु ॥ ८० ॥ न किंचिदपि सुखमिति शेषः। राज्यमपि प्राप्येति शेषः ॥ ८१ ॥ सर्वं सुखं तत्साधनं च ॥ ८२ ॥ तत्कुतस्तत्राह—भासिनीत्यादिना। यतः भासिन्यादयस्तत्तत्सुखनिमित्ता विचित्राः शक्तयः परया चिता क्रियन्ते इत्यष्टमेनान्वयः। ब्राह्मी हैरण्यगर्भी। महत्ता मान्यता। महती सर्वोत्कृष्टा ॥ ८३ ॥ शार्वः शिवस्तत्संबन्धिनी परमा पूर्णता निरतिशयज्ञानैश्वर्यानन्दशक्तिसंपूर्णता ॥ ८४ ॥ पायसी जलसंबन्धिनी रसनिर्वृत्तिराप्यायकता। मौनी भृग्वादिमुनिसंबन्धिनी विद्या वाक्पतिता ॥ ८५ ॥ ॥ ८६ ॥ सौगती सुगतराद्धान्तसिद्धा शमश्रीः शून्यतालक्षण सर्वोपप्लवशान्तिः। अथवा शोभना गतिः सुगतिर्ब्रह्मसाक्षात्कारस्तत्संबन्धिनी शमश्रीः सर्वानर्थनिर्वापणशक्तिः ॥ ८७ ॥ मायामयता मायाप्रचुरता। निष्कलङ्कता निर्लेपता ॥ ८८ ॥ त्रिकालोदरसंस्थिता अतीता अनागता वर्तमानाश्चेत्यर्थः ॥ ८९ ॥ स्वस्थया स्वभावादप्रच्युतया अतएव समया एकरूपया। निर्विकारया वास्तवविकारशून्यया चिता। कलाकलनं तच्छक्तिकार्यानुसंधानं तद्युक्तया ॥ ९० ॥ ननु विचित्राणामर्थानां वि-

१ शारदी घनसस्वतेति पाठः।

सर्वाशाकोशविश्रान्तां पदार्थपटलीं महीम् ।
कालत्रयेहाकलितां यथानुभवति क्षणात् ॥ ९२
तथा समस्तसंसारबृहद्दृश्यदशाश्रियम् ।
कालत्रयस्थाममला चिच्चेतति तदात्मिका ॥ ९३
तुल्यकालपरामृष्टा त्रिकालकलनाशता ।
अनन्तभुवनाभोगा परिपूर्णैव शुद्धचित् ॥ ९४
परामृष्टत्रिकालाया दृष्टानन्तदृशाश्रितः ।
समतापरपर्याया पूर्णतैवावशिष्यते ॥ ९५
तुल्यकालावबुद्धेन स्वादुना कटुनापि चित् ।
समेन समतामेति मधुनिम्बानुभूतिवत् ॥ ९६
त्यक्तसंकल्पकलया सूक्ष्मया चिद्व्यवस्थया ।
सर्वभावानुगतया सत्ताद्वैतैकरूपया ॥ ९७
विचित्रापि पदार्थश्रीरन्योन्यवलितान्तरा ।
तुल्यकालानुभवना साम्येनैवानुभूयते ॥ ९८
भावेनाभावमाश्रित्य भावस्त्यजति दुःखताम् ।
प्रेक्ष्य भावमभावेन भावस्त्यजति दुष्टताम् ॥ ९९
कालत्रयमपश्यन्त्या हीनायाश्चेत्यबन्धनैः ।
चितश्चेत्यमुपेक्षिण्याः समतैवावशिष्यते ॥ १००
याति वाचामगम्यत्वादसत्तामिव शाश्वतीम् ।
नैरात्म्यसिद्धान्तदशामुपयातेव तिष्ठति ॥ १०१
भवत्यात्मा तथा ब्रह्म न किंचिच्चाखिलं च वा ।
परमोपशमेऽलीना मोक्षनाम्ना परोच्यते ॥ १०२
संकल्पकलिता त्वेषा मन्दाभासतया जगत् ।
न सम्यक्पश्यतीदं चिद्दृष्टिः पटलिनी यथा ॥ १०३
ईहानीहामयैरन्तर्या चिदावलिता मलैः ।
सा हि नोड्डयितुं शक्ता पाशबद्धेव पक्षिणी ॥ १०४
संकल्पकलनेनैव ये केचन जना इमे ।
पतिता मोहजालेषु विनेत्रा इव पक्षिणः ॥ १०५
संकल्पजालवलितैर्विषयावटपातिभिः ।
पदवी गतबाधेयं न दृष्टा मत्पितामहैः ॥ १०६
दिनैः कतिपयैरेव स्फुरिता धरणीतले ।
वराकास्तेन ते नष्टा मशकाः कुहरेष्विव ॥ १०७
यद्यज्ञास्यन्निमे तत्त्वं भोगदुःखार्थिनस्तदा ।
भावाभावान्धकूपेषु नापतिष्यन्हताशयाः ॥ १०८
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ।
धराविवरमग्नानां कीटानां समतां गताः ॥ १०९

---

चित्रप्रथादर्शनात्कथं चितः समता तत्राह—**विकल्पे**ति । सर्वा सर्ववृत्तिप्रविष्टापि चित्तवृत्तिगतैर्विकल्पवैचित्र्यैर्लिप्यते । यथा प्राभाकरी प्रभा न वृत्तिकृतैः स्थाणुपुरुषादिविकल्पैस्तद्वदित्यर्थः ॥ ९१ ॥ दिक्कालभेदप्रयुक्तमपि वैषम्यमस्या नास्तीत्याह—**सर्वाशे**ति । महीं बह्वीम् । अनुभवति प्रकाशयति सौरी प्रभा यथा तथा चिदपि चेतति प्रथयतीति परेणान्वयः ॥९२॥९३॥ देशकालभेदाश्च स्वाप्नदेशकालदैर्घ्ये इवाभिन्नकालयैव चिता भास्यन्त इत्याह—**तुल्यकाले**ति । तुल्य शब्दोऽभिन्नपरः । तथा च परिपूर्णा अखण्डैव शुद्धचिदभिन्नकालपरामृष्टैव सती अतीतादित्रिकालकलनाशतभिन्नेव प्रत्यक्षानुमित्युपमित्याद्यनन्तमानमेयपुरुषभेदभिन्नाभोगेव च भातीत्यर्थः ॥ ९४ ॥ अतएव कालभेदे वृत्तिभेदेऽपि च तत्साक्षिण्याश्चितो न भेद इति पूर्णतैवेत्याह—**परामृष्टे**ति ॥ ९५ ॥ अतएव मधुरद्वयस्य तिक्तद्वयस्य वा युगपदास्वादे विषयभेदेऽपि नानुभूतिभेद इति विषयादिभेदो न चिद्भेदप्रयोजक इत्याह—**तुल्यकाले**ति । समेन तुल्यरसेन स्वादुना मधुरद्वयेन । तत्र मधुनिम्बाद्येकैकानुभूतिवदिति चिदभेदे दृष्टान्तः ॥ ९६ ॥ घटपटादिविचित्रा पदार्थश्रीरपि त्यक्तपरस्परव्यावर्तकभेदसंकल्पकलया सूक्ष्मया सत्ताद्वैतैकरूपया चिद्व्यवस्थया तुल्यकालमनुभूयमाना साम्येनैवानुभूयते न भेदवैषम्येणेति न विषयादिभेदश्चिद्भेदक इति द्वयोरर्थः ॥ ९७ ॥ ९८ ॥ भेदसंकल्पकलात्यागे उपायमाह—**भावेने**ति । भावेन चित्तेन वाचारम्भणश्रुत्या नेतिनेत्यादिश्रुत्या आचार्योपदेशस्वविचारादिना च दृश्यजातस्याभावमाश्रित्य स चित्तरूपो भावो दुःखतां शोकमोहादिपरिणामं सद्यस्त्यजति । तथापि रागादिसंस्कारदुष्टतया कालान्तरे पुनः शोकाद्युद्भवः स्यादतः सर्वदृश्यप्रतिषेधलक्षणेनाभावेन भावं परमार्थसदद्वैतानन्दस्वभावमात्मानं प्रेक्ष्य स चित्तलक्षणो भावो रागादिदुष्टतामपि जहाति । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवद्वचनात् । अतो बीजाभावाद्भेदसंकल्पकलात्यागः सिद्ध इत्यर्थः ॥ ९९ ॥ उक्तमर्थं भङ्ग्यन्तरेणोपपादयति—**कालत्रय**मिति । वर्तमानं चेत्यं दृश्यं उपेक्षिण्या अतीतचेत्यवासनाबन्धनैर्हीनायाश्चेत्याधारं कालत्रयमप्यपश्यन्त्याश्चितो न भाव्यपि चेत्ययोगः संभाव्यत इति समतैव परिशिष्यत इत्यर्थः ॥ १०० ॥ **उपयातेवे**ति । वस्तुतस्तु नोपयाता यतस्तिष्ठति सतोऽसत्त्वायोगादिति भावः ॥ १०१ ॥ यस्तिष्ठति स शास्त्रीयव्यवहारे प्रत्यक्त्वादात्मा भवति तथा बृहत्त्वाद्ब्रह्म भवति । परमार्थदृशा तु वाचां प्रवृत्त्यभावान्न किंचित् । यदि च प्रवृत्तिनिमित्तकल्पनया शब्दप्रवृत्तिरुच्येत तदा संकोचकारणभावात्सर्वप्रवृत्तिनिमित्तकल्पनादखिलं च । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह', 'तस्मात्तत्सर्वमभवत्' इति च श्रुतौ द्वेधापि निरूपणादिति भावः । सर्वदृश्यानां परमोपशमे सति तदवधित्वादलीना परा समता मोक्षनाम्नोच्यत इत्यर्थः ॥ १०२ ॥ इत्थं भेदसंकल्पकलनात्यागः सोपायो वर्णितः । इदानीं संकल्पकलने चितो मान्द्यप्रसरक्रममाह—**संकल्पे** इत्यादिना । जगत्सम्यक्पारमार्थिकरूपेण न पश्यति । पटलिनी पटलावरणवती ॥ १०३ ॥ ईहानीहामयैरिष्टानिष्टसंकल्पनरूपैर्मलैः उड्डयितुं सर्वनभो व्याप्तुं नभसा गन्तुं च ॥ १०४ ॥ १०५ ॥ इयं गतबाधा निर्दुःखा अपरिच्छिन्नात्मपदवी न दृष्टा ॥ १०६ ॥ तेन आत्मपदव्यदर्शनेन । ते मत्पितामहाः ॥ १०७ ॥ हताशया दुर्बुद्धयः । इमे मत्पितामहा यदि आत्मतत्त्वमज्ञास्यंस्तदा नापतिष्यन् । हेतुहेतुमत्त्वे लिङ्गनिमित्ते क्रियातिपत्तौ लृङ् ॥ १०८ ॥ द्वन्द्व-

ईहितानीहिताकाराः कलनामृगतृष्णिकाः ।
सत्यावबोधमेघेन यस्य शान्ताः स जीवति ॥ ११०
कुतः किलास्याः शुद्धाया अविच्छिन्नामलाकृतेः ।
चन्द्रिकाया रुचः कोष्णाः कलङ्काः कलनाश्रितः ॥१११
आत्मनेऽस्तु नमो मह्यमविच्छिन्नचिदात्मने ।
लोकालोकमणे देव चिरेणाधिगतोऽस्यहो ॥ ११२
परामृष्टोऽसि लब्धोऽसि प्रोदितोऽसि चिराय च ।
उद्धृतोसि विकल्पेभ्यो योसि सोसि नमोस्तु ते ११३
मह्यं तुभ्यमनन्ताय मह्यं तुभ्यं शिवात्मने ।
नमो देवाधिदेवाय पराय परमात्मने ॥ ११४

गतघनपरिपूर्णमिन्दुबिम्बं
गतकलनावरणं स्वमेव रूपम् ।
स्ववपुषि मुदिते स्वयं स्वसंस्थं
स्वयमुदितं स्ववशं स्वयं नमामि ॥ ११५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे प्रह्लादात्मोपदेशयोगो नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ३५

प्रह्लाद उवाच ।

ओमित्येकोचिताकारो विकारपरिवर्जितः ।
आत्मैवायमिदं सर्वं यत्किंचिज्जगतीगतम् ॥ १
मेदोस्थिमांसमज्जासृगतीतोऽप्येष चेतनः ।
अन्तरस्थो हि सूर्यादीन्प्रकाशयति दीपकः ॥ २
उष्णीकरोति दहनं रसयत्यमृतं रसम् ।
इन्द्रियानुभवान्भुङ्क्ते भोगानिव महीपतिः ॥ ३
तिष्ठन्नपि हि नासीनो गच्छन्नपि न गच्छति ।
शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते ॥ ४
पूर्वमद्य तथेदानीमिहामुत्रोभयत्र च ।
विहितोऽविहितोऽप्येष समः सर्वासु वृत्तिषु ॥ ५
उद्भवत्यभयो भावं भुवनानि ततस्ततः ।
ब्रह्मादितृणपर्यन्तं जगदावर्तयन्स्थितः ॥ ६

मोहेन सुखदुःखशीतोष्णाद्यर्जनप्रतीकाराभिनिवेशेन ॥ १०९ ॥ सत्यावबोधमेघेन द्वन्द्वतापोपशान्त्या शान्ताः । स जीवति सार्थकजीवन इति यावत् ॥ ११० ॥ सत्यावबोधमात्रेण कथं तच्छान्तिरिति चेदसत्त्वादेवेत्याह—**कुत** इति । कोष्णा मन्दोष्णाः । कलङ्काः श्यामिकाः ॥ १११ ॥ इदानीमखण्डवाक्यार्थं साक्षात्कृत्य तद्भावेऽवस्थितमात्मानमतिदुर्लभमधिगतं प्रणयान्नमस्यति—**आत्मने** इति । लोकस्यालोको ज्ञानप्रकाशस्तन्निमित्तभूतमणे । **चिरेणेति** । तथाचोक्तं स्वाराज्यसिद्धौ 'अपि भूपरमाणुभूरिसंख्येष्वपयातेषु चतुर्मुखेष्वलब्धात् । अपदुःखनिरन्तसौख्यसिन्धोर्न च लाभोऽस्ति परो निजात्मलाभात् ॥' इति ॥११२॥ प्रोदितः स्वीयपरमार्थरूपेणाभिव्यक्तः ॥ ११३ ॥ प्रथमे मह्यंतुभ्यमिति पदे परस्परविशेषणेन शोधनार्थे । अतएवानन्ताय । द्वितीये तु अखण्डैकरसतालक्षणः वाक्यार्थलाभार्थे । अतएव शिवात्मने देवानां ब्रह्मादीनां सर्वेन्द्रियप्राणमनसां चाधिदेवाय अधिष्ठाय प्रकाशकाय ॥ ११४ ॥ गतघनं निरस्तमेघावरणं परिपूर्णमिन्दुबिम्बमिवेति शेषः । स्ववपुषि स्वात्मनि मुदिते आनन्दैकरसे स्वयमनन्याधारतया स्वेन पारमार्थिकरूपेण संस्थं विश्रान्तम् । निराधारमिति यावत् । स्वयमुदितं स्वप्रकाशं स्ववशं स्वाधीनस्वानन्दं स्वयमनन्योऽहं नमामि । सर्वोत्कर्षेणानुसंदधे इत्यर्थः ॥ ११५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रह्लादात्मोपदेशयोगो नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥

साक्षात्कृतमिहात्मानं निर्वर्ण्यान्तः प्रणम्य च ।
तद्बलेन जितान्बन्धाननुसंधाय नन्दति ॥ १ ॥

**ओमिति** । 'ओमिति ब्रह्म', 'ओमितीदं सर्वं', 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्यादिश्रुतेः सर्वाध्यारोपवद्ब्रह्मबोधकः सर्वापवादपरिशिष्टतद्बोधकश्च ओमित्येक एव उचितः स्वानुरूपः अभिधानाकारो यस्य । जगती जगत् तद्गतं यत्किंचित्तत्सर्वमयमनुभूयमान आत्मैव ॥ १ ॥ देहमात्रान्तर्गतोऽयं कथं बाह्यं सूर्यादि सर्वमिदं स्यादिति चेत्तत्प्रकाशकत्वादित्याह—**मेद** इति । नायं मेदोऽस्थ्याद्यात्मकदेहपरिमितः किंतु तदतीतोऽपि । यतः सूर्याद्यन्तरस्थः ॥ २ ॥ कथं तत्प्रकाश्यत्वमात्रेण सर्वं तदात्मकं तत्राह—**उष्णीकरोतीति** । यतो दहनादेरुष्णादिस्वभावता चिदधीनोष्णताभानाधीना अतश्चिदात्मैव स्वसत्तया दहनमुष्णीकरोति । एवं रसं जलं स्वसत्तयैवामृतं लब्धसत्ताकं रसयति रसतया विभावयति । एवमन्यानपि इन्द्रियानुभवान्स्पर्शादिस्वभावानर्थान्स्वसत्तयैव संपाद्य भुङ्क्ते ॥ ३ ॥ तिष्ठन् सदा निष्क्रियोऽपि न आसीन उपविष्ट इव धावनादिव्यवहारादुपरतः । वाय्वादित्यात्मना सदागतित्वात् । तथा कालात्मना सदा गच्छन्नपि कुलालचक्रमिव न तिलमात्रमन्यतो गच्छति । शान्तो निर्व्यवहारोऽपि सर्वव्यवहारस्थः ॥ ४ ॥ ननु पूर्वकृतेनाद्य सुखदुःखाभ्यां लिप्यते । इदानीमिहकृतेनाग्रेऽमुत्र लिप्स्यते तत्कथं कुर्वन्नपि न लिप्यत इत्युच्यते तत्राह—**पूर्व**मिति । इहास्मिन् लोके अमुत्र परलोके उभयत्र इहलोकसंधिभूते स्वप्नस्थाने च विहितः शास्त्रानिषिद्धशुभकर्मफलभुक् अविहितः शास्त्रनिषिद्धाशुभकर्मफलभुगपि सन् सर्वासु भोगवृत्तिषु सम एव । दृश्यैर्भोगैर्दृशो विकारासिद्धेरित्यर्थः ॥ ५ ॥ भोक्तृस्पर्शिभिर्भोगैः कथं कर्मणां साफल्यं तत्राह—**उद्भवतीति** । वस्तुतोऽभय एवात्मा तत्तत्कर्मानुरूपं स्वयमुद्भवति उद्भूतं च ब्रह्मादितृणपर्यन्तं भोक्तृभोग्यभावं तदधिष्ठानानि चतुर्दशभुवनानि चेति जगत्स्वसंनिधिमात्रेणावर्तयन्

१ आत्मने तु नमो इति पाठः.

नित्यस्पन्दमयो नित्यमपि देवात्सदागतेः।
स्थाणोरप्यक्रियो नित्यमाकाशादप्यलेपकः॥ ७
मनांसि क्षोभयत्येष पल्लवानीव मारुतः।
वाहयत्यक्षपङ्क्तिं स्वामश्वालीमिव सारथिः॥ ८
अतिदुर्विधवद्देहगेहे कर्मरतः सदा।
सम्राडिवात्मनि स्वस्थः संस्थितो भोगभुग्विभुः॥ ९
एष एव सदाऽन्विष्यः स्तुत्यो ध्यातव्य एव तु।
जरामरणसंमोहादनेनोत्तीर्य गम्यते॥ १०
सुलभश्चायमत्यन्तं सुज्ञेयश्चाप्तबन्धुवत्।
शरीरपद्मकुहरे सर्वेषामेव षट्पदः॥ ११
अनाकृष्टोऽप्यनाहूतः स्वदेहादेव लभ्यते।
मनागेवोपहूतोऽपि क्षणाद्भवति सन्मुखः॥ १२
नास्य संसेव्यमानस्य सर्वसंपत्तिशालिनः।
धनानामीश्वरस्येव स्मयो गर्वो यथा भवेत्॥ १३
आमोद इव पुष्पेषु तैलं तिलकणेष्विव।
रसजातिष्विवास्वादो देवो देहेषु संस्थितः॥ १४
अविचारवशादेष हृदयस्थोऽपि चेतनः।
न ज्ञायते चिराद्दृष्टो दृष्टबन्धुरिवाग्रतः॥ १५
विचारणापरिज्ञात एतस्मिन्परमेश्वरे।
अभ्युदेति परानन्दो लब्धे प्रियजने यथा॥ १६
अस्मिन्दृष्टे परे बन्धावुद्दामानन्ददायिनि।
आयान्ति दृष्टयस्तास्ता याभिर्भङ्गो विलीयते॥ १७
त्रुट्यन्ते सर्वतः पाशाः क्षीयन्ते सर्वशत्रवः।
न कृन्तन्ति मनांस्याशा गृहाणीव दुराखवः॥ १८
अस्मिन्दृष्टे जगद्दृष्टं श्रुतेऽस्मिन्सकलं श्रुतम्।
स्पृष्टे चास्मिञ्जगत्स्पृष्टं स्थितेऽस्मिन्संस्थितं जगत्॥ १९
एष जागर्ति सुप्तानां प्रहरत्यविवेकिनाम्।
हरत्यापदमार्तानां वितरत्यमहात्मनाम्॥ २०
विचरत्येष लोकेषु जीव एव जगत्स्थितौ।
विलसत्येव भोगेषु प्रस्फुरत्येव वस्तुषु॥ २१
आत्मनात्मानमेवातः शान्तेनानुभवन्भवी।
स्थितः सर्वेषु देहेषु तीक्ष्णत्वं मरिचेष्विव॥ २२
चेतनाकलनारूपी सबाह्याभ्यन्तराश्रितः।
जगत्पदार्थसंभारे सत्तासामान्यमास्थितः॥ २३
एष शून्यत्वमाकाशे स्पन्द एष सदागतौ।
प्रकाशश्चैव तेजस्तु पयस्स्वेष रसः परः॥ २४
काठिन्यमवनावेवमौष्ण्यमेव हुताशने।
शैत्यमेष निशानाथे सत्ता चैष जगद्गणे॥ २५
मषीपिण्डे यथा कार्ष्ण्यं शैत्यं हिमकणे यथा।
यथा पुष्पेषु सौगन्ध्यं देहे देहपतिस्तथा॥ २६
यथा सर्वगता सत्ता कालः सर्वगतो यथा।
प्रभुशक्तिर्मही यस्य सर्वदेशगता यथा॥ २७
रूपालोकमनस्कारयुक्तं सत्त्वं तथात्मनः।
नित्यः सोऽयं महादेवो देवानामेव बोधकः॥ २८
अहमेवास्मि मे नास्ति कलनापि किलेतरा।
रेणुनेवाणुना व्योम्नि पद्मपत्रमिवाम्भसा॥ २९
संभ्रमेणेव पाषाणे संबन्धो मयि नेतरैः।
सुखदुःखश्रियो देहे मा पतन्तु पतन्तु वा॥ ३०

स्थितस्तद्देवास्य कर्मफलमित्यर्थः॥ ६॥ नन्वस्पन्दः कथमावर्तयेत्तत्राह—नित्येति। नित्यात्मसत्ताया एव स्पन्दसत्तात्वान्नित्यं स्पन्दमयो नित्यमक्रियो नित्यमलेपकश्च॥७॥ ननु मन इन्द्रियाणि वा देहादि प्रवर्तयन्ति नात्मा तत्राह—मनांसीति। अक्षपङ्क्तिमिन्द्रियपङ्क्तिम्॥ ८॥ अत्यन्ता दुर्विधा दुर्दशा यस्य तद्वत्। इवशब्दो दुर्विधाया मिथ्यात्वद्योतनार्थः पूर्वविरुद्धदशास्वपि योज्यः॥ ९॥ अनेन अन्विष्टेनेति शेषः॥१०॥ सुलभो ज्ञानमात्रेण लब्धुं शक्यः। सुज्ञेयः स्मृतिमात्रेण वशीकर्तुं योग्यः॥ ११॥ दूरस्थस्य मित्रादेराकृष्याह्वानाल्लाभः। ईषद्दूरस्थस्य त्वाह्वानमात्रादस्य तु लाभेन तदुभयापेक्षेति भावः। उपहूतः प्रणवोच्चारणेनानुस्मृतः॥ १२॥ धनानामीश्वरस्य धनिकस्य यथा स्मयो मानो गर्वः परावहेलना संभाव्यते तथास्य नेत्यर्थः॥ १३॥ कथमयं देहेऽस्ति तदाह—आमोद इति। आस्वादो माधुर्यम्॥ १४॥ चिरं प्रागदृष्टः संप्रत्यग्रतो दृष्टो बन्धुः पित्रादिरिव॥ १५॥ १६॥ भङ्गो मरणादिविच्छेदः॥१७॥ पाशाः स्नेहादयः। शत्रवः कामादयः। आशास्तृष्णाः॥ १८॥ तदेकविज्ञानेन सर्वविज्ञानमाह—अस्मिन्निति। स्थितेऽस्मिन्निति तरसत्ताधीनसत्ताकं जगदित्यर्थः॥१९॥ 'एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति श्रुतिमालम्ब्याह—एष इति। अमहात्मनां परिच्छिन्नात्मकेश्वरोपासकानाम्। आर्तानामापदं हरति, वितरति वाञ्छितमिति शेषः॥ २०॥ जगत्स्थितौ एष आत्मा जीव एव भूत्वा विचरति भोगेषु विलसति। वस्त्रालंकारसमाजोत्सवादिवस्तुषु स्फुरति शोभते॥ २१॥ असाधारणजीवभेदभ्रमदशायामप्यस्य न साधारणैकात्म्यस्फूर्तिक्षतिरित्याह—आत्मनेति॥ २२॥ पूर्वोत्तरानुसंधानं चेतना वर्तमानदर्शनं कलना तद्रूपी सबाह्येष्वाभ्यन्तरेषु चेतनोपाधिषु आश्रितः। जगत्पदार्थानां संभारे तु अधिष्ठानसत्तासामान्यमात्रस्वभावं सर्वानुगतमास्थितः॥ २३॥ ॥२४॥२५॥ तथा देहपतिरात्मा देहे प्रकाशत इत्यर्थः॥२६॥ प्रकाशतामेव मनइन्द्रियादिव्यावृत्तां सर्वक्षेत्रसाधारणीं दृष्टान्तैर्दर्शयति—यथेति द्वाभ्याम्॥२७॥ यथैते दृष्टान्तास्तथा रूपालोकैश्चक्षुरादिव्यापारैर्मनस्कारैर्मानसव्यापारैश्च युक्तं यद्बाह्याभ्यन्तरप्रकाशनं तदात्मनः कृत्स्नमिति प्रकाशैकस्वभावः स इत्यर्थः। एवमधिदैवं सर्वदेवानां सूर्येन्द्रचन्द्रादीनामपि बोधकोऽयं प्रसिद्धो महादेवोऽहमेवास्मीति परेणान्वयः॥ २८॥ अणुना सूक्ष्मतमेन रेणुना॥ २९॥ संभ्रमेण भयकम्पादिना॥ ३०॥

१ चिरादृष्टो इत्यपि पाठः.

तुम्बकोपरि धाराश्च का नः क्षतिरुपस्थिता ।
दीपाङ्गातिगतो रज्वा नालोको बध्यते यथा ॥ ३१
तथा नायमहं बद्धः सर्वभावगणातिगः ।
संबन्धः कोऽस्तु नः कामैर्भावाभावैरथेन्द्रियैः ॥ ३२
केन संबध्यते व्योम केन संबाध्यते मनः ।
शरीरे शतधा याते खण्डना का शरीरिणः ॥ ३३
कुम्भे भग्ने क्षते क्षीणे कुम्भाकाशस्य का क्षतिः ।
पिशाचक इवादृश्यो मनो नामोदितं मुधा ॥ ३४
जडे तस्मिन्क्षते बोधात्का नः क्षतिरुपस्थिता ।
सुखदुःखमयी यस्य वासना तन्मनो मम ॥ ३५
अभवत्पूर्वमद्यैका संपन्नाऽतनुनिर्वृतिः ।
अन्यो भुङ्क्तेऽन्य आदत्तेऽप्यन्यस्यानर्थसंकटः ॥ ३६
अन्यः पश्यत्यहो मौर्ख्यं कस्येयं खलु चक्रिका ।
भुङ्क्ते प्रकृतिरादत्ते मनोदेहस्य संकटः ॥ ३७
दुष्टात्मा मौर्ख्यमस्तीह न किंचित्कैवले क्षतिः ।
न मे भोगस्थितौ वाञ्छा न च भोगविवर्जने ॥ ३८
यदायाति तदायातु यत्प्रयाति प्रयातु तत् ।
सुखेषु मम नापेक्षा नोपेक्षा दुःखवृत्तिषु ॥ ३९
सुखदुःखान्युपायान्तु यान्तु वाप्यहमेषु कः ।
वासना विविधा देहे त्वस्तं चोदयमेव वा ॥ ४०
प्रयान्तु नाहमेतासु न चैता मम काश्चन ।
एतावन्तमहं कालमज्ञानरिपुणा हतः ॥ ४१
हृत्वा विवेकसर्वस्वमेकान्तमवपोथितम् ।
वैष्णवेन प्रसादेन स्वसमुत्थेन चारुणा ॥ ४२
इदानीं संपरिज्ञाय मयैष परिमोषितः ।
अहंकारपिशाचोऽयं शरीरतरुकोटरात् ॥ ४३
परावबोधमन्त्रेण मयेदानीमपाकृतः ।
निरहंकारयक्षोऽयं मच्छरीरमहाद्रुमः ॥ ४४
पुण्यतामलमायातः प्रफुल्ल इव राजते ।
प्रशान्तमोहदारिद्र्यो दुराशादोषसंक्षये ॥ ४५
विवेकधनसंभारान्स्थितोऽस्मि परमेश्वरः ।
ज्ञातं ज्ञातव्यमखिलं दृष्टा द्रष्टव्यदृष्टयः ॥ ४६
तत्प्राप्तमधुना येन नाप्राप्तमवशिष्यते ।
दिष्ट्या दूरोज्झितानर्थामपेतविषयोरगाम् ॥ ४७
संशान्तमोहनीहारां शान्ताशामृगतृष्णिकाम् ।
रजोरहितसर्वाशां शीतलोपशमद्रुमाम् ॥ ४८
प्राप्तोऽस्मि विततां भूमिमुन्नतां पारमार्थिकीम् ।
स्तुत्या प्रणत्या विज्ञप्त्या शमेन नियमेन च ॥ ४९
लब्धोऽयं भगवानात्मा दृष्टश्चाधिगतः स्फुटम् ।
अहंकारपदातीतश्चिरात्संस्मृतिमागतः ॥ ५०
स्वभावाद्भगवानात्मा विष्णोर्ब्रह्म सनातनम् ।
इन्द्रियोरगगर्तेषु मरणश्वभ्रभूमिषु ॥ ५१
तृष्णाकरञ्जकुञ्जेषु कामकोलाहलेषु च ।
वासनावनजालेषु जन्मकूपान्तरेषु च ॥ ५२
दुःखदावाग्निदाहेषु दुःखदावाग्निहारिषु ।
पातोत्पातदशालक्षैर्मज्जनोन्मज्जनभ्रमैः ॥ ५३
आविर्भावतिरोभावैराशापाशविचेष्टनैः ।
अहं चिरमहंकारद्विषा समवमोषितः ॥ ५४
निशायामल्पवीर्यात्मा पिशाचेनेव जङ्गले ।
स्वयमेव त्वयेदानीं क्रियाशक्त्या स्वयैव हि ॥ ५५
शौरिणा व्यपदेशेन विवेकश्रीर्विबोधिता ।
प्रबुद्धे भवतीशाने तमहंकारराक्षसम् ॥ ५६
न पश्यामि नभोदीपे ज्वलिते तिमिरं यथा ।
तस्याहंकारयक्षस्य मनोविवरवासिनः ॥ ५७

---

तुम्बकः अलाबूः । इवार्थे चकारः । जलधारा इवेत्यर्थः । नः अस्माकं तुम्बकाकाशकल्पानामिति भावः । दीपाङ्गानि तैलवर्तिपात्राण्यतिक्रम्य निर्गतो दीपालोको यथा रज्वा न बध्यते ॥ ३१ ॥ ३२ ॥ संबाध्यते अभिहन्यते । अमूर्तत्वादिति भावः ॥ ३३ ॥ कपालशो भग्ने, छिद्रीभावेन क्षते, मृदपचयेन क्षीणे ॥ ३४ ॥ बोधान्मनोव्यतिरिक्तात्मदर्शनात् । यस्य सुखदुःखमयी वासना तत्तादृशं मनः पूर्वमज्ञतादशायामभवन्नेदानीमस्तीत्यर्थः ॥ ३५ ॥ अतनुरपरिच्छिन्ना निर्वृतिः सुखविश्रान्तिः ॥ ३६ ॥ एषां भोक्त्रादीनामैक्याद्ध्यासलक्षणं मौर्ख्यं कस्यैन्द्रजालिकस्य चक्रिका चक्रवत्परिवर्तनचातुरीत्यर्थः । भोक्त्रादिभेदं दर्शयति—भुङ्क्ते इति ॥ ३७ ॥ प्रकृत्यादिदुष्टः दोषारोपित आत्मा । विमर्शेन किंचिन्मौर्ख्यमस्ति तेनाक्षतिरित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ एता वासनाः ॥ ४१ ॥ अज्ञानरिपुणावपोथितं हिंसितम् । 'अवबोधितम्' इति पाठे अविवेकसर्वस्वमिति च्छेदः । वैष्णवेन प्रसादेनानुग्रहेण मे अविवेकसर्वस्वं हृत्वा एकान्तं नियतैकस्वभावं ब्रह्म अवबोधितम् ॥४२॥ परिमोषितोऽपहारितः ॥४३॥ इदानीं मच्छरीरमहाद्रुमो निर्गतोऽहंकारयक्षो यस्मात्तथाविधः सन् पुण्यतामायातः ॥ ४४ ॥ ४५ ॥ विवेकधनसंभारान् प्राप्येति शेषः ॥ ४६ ॥ ४७ ॥ ४८ ॥ विष्णोः स्तुत्या प्रणत्या विज्ञप्त्या प्रार्थनया च वरमुखेन लब्धः ॥४९॥५०॥ विष्णोः प्रसादाद्ब्रह्म आत्मा संस्मृतिमागत इति पूर्वेणान्वयः । इन्द्रियेत्यादेरहं समवमोषित इति चतुर्थेनान्वयः । इन्द्रियाण्येवोरगगर्ताः सर्पबिलानि येषु । एवमुत्तरत्रापि बहुव्रीहयः ॥ ५१ ॥ वासनावनजालेष्विति सर्वसप्तम्यन्तानां विशेष्यम् ॥५२॥ दुःखान्येव दावाग्निदाहो यत्र । दुःखाः दावाग्नय इव हारिणः परधनप्राणापहारिणश्चोरा यत्र । पातोत्पातसदृशैर्विपत्संपद्दशालक्षैः । मज्जनप्रायैरधोगतिभिरुन्मज्जनप्रायैः सद्गतिभिः ॥ ५३ ॥ अहं चिरमहंकारलक्षणेन द्विषा सम्यगवमोषितः आत्मप्रमोषेण पीडितः ॥ ५४ ॥ शौरिणा व्यपदेशेन प्रसन्नविष्णुव्याजेन स्वयं स्वेनैव विवेकश्रीः प्रबोधिता उद्दीपिता । तया विवेकश्रिया ईशाने ईश्वरे स्वात्मनि प्रबुद्धे

---

१. कण्ठक इत्यपि पाठः । एवमुत्तरश्लोकेऽपि

दीपस्येव प्रशान्तस्य न वेद्मि गतिमीश्वरः ।
दृष्ट एव त्वयीशाने पलायनपरायणः ॥ ५८
संपन्नो मदहंकारश्चोरः सूर्योदये यथा ।
असदभ्युत्थिते तस्मिन्नहंकारे पिशाचवत् ॥ ५९
गते तिष्ठाम्यहं स्वस्थो निर्गोनस इव द्रुमः ।
शाम्यामि परिनिर्वामि जगत्यस्मिन्प्रबोधवान् ॥ ६०
तस्करेणोज्झितोऽस्मीति निर्वृतोऽस्मि चिरोदयम् ।
शैत्यमभ्यागतोस्म्यन्तः शान्ताशामृगतृष्णिकः ॥ ६१
प्रावृडम्बुभरस्नातः शान्तदाव इवाचलः ।
प्रमार्जितेहमित्यस्मिन्पदे स्वार्थविचारतः ॥ ६२
को मोहः कानि दुःखानि काः कदाशाः क आधयः ।
नरकस्वर्गमोक्षादिभ्रमाः सत्यामहंकृतौ ॥ ६३
भित्तावेव प्रवर्तन्ते चित्रेहा न नभस्तले ।
अहंकारकलापित्ते चित्ते ज्ञानचमत्कृतिः ।
न राजतेंऽशुके म्लाने यथा कुङ्कुमरञ्जना ॥ ६४
निरहंकारजलदे तृष्णासारविवर्जिते ।
भाति चित्तशरद्व्योम्नि स्वच्छता कान्तिशालिनी ६५
निरहंकारपङ्काय संप्रसन्नान्तराय च ।
मह्यमानन्दसरसे तुभ्यमात्मन्नमो नमः ॥ ६६
शान्तेन्द्रियोग्रग्राहाय क्षीणचित्तौर्ववह्नये ।
आनन्दाम्बुधये तुभ्यं मह्यमात्मन्नमो नमः ॥ ६७
गताहंकारमेघाय शान्ताशादाववह्नये ।
मह्यमानन्दशैलाय विश्रान्ताय नमो नमः ॥ ६८

प्रफुल्लानन्दपद्माय शान्तचिन्तामयोर्मये ।
मह्यं सन्मानसायात्मंस्तुभ्यमन्तर्नमो नमः ॥ ६९
संविदाभासपक्षाय पद्मकोटरवासिने ।
सर्वमानसहंसाय स्वात्मनेऽन्तर्नमो नमः ॥ ७०
कलाकलितरूपाय निष्कलायामृतात्मने ।
सदोदिताय पूर्णात्मन् शशिने ते नमो नमः ॥ ७१
सदोदिताय शान्ताय महाहृद्ध्वान्तहारिणे ।
सर्वगायाप्यदृश्याय चित्सूर्याय नमो नमः ॥ ७२
अस्नेहस्नेहदीपाय वृत्तिनिष्क्रान्तवर्तिने ।
स्वभावाधारधीराय चिद्दीपाय नमो नमः ॥ ७३
मदनानलसंतप्तं शीतेन मनसा मनः ।
भग्नमन्तर्मया तप्तमयसेव बलादयः ॥ ७४
इन्द्रियेणेन्द्रियं छित्त्वा छित्त्वा च मनसा मनः ।
अहंकृतिमहंकृत्या छित्त्वा शेषो जयाम्यहम् ॥ ७५
भावेनाभावमाच्छिद्य हित्वा तृष्णामतृष्णया ।
निष्पिष्य प्रज्ञयाऽप्रज्ञां ज्ञोऽज्ञः सत्योसि ते नमः ॥ ७६
मनसा मनसि च्छिन्ने निरहंकारतां गते ।
भावेन गलिते भावे स्वच्छस्तिष्ठामि केवलः ॥ ७७
निर्भावं निरहंकारं निर्मनस्कमनीहितम् ।
केवलं स्पन्दशुद्धात्मन्येव तिष्ठति मे वपुः ॥ ७८[1]
हेलानुकम्पितानन्तविश्वेशादतिशायिनी ।
परमोपशमोपेता जातेयं मम निर्वृतिः ॥ ७९

भवति प्रबुद्धे सति ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ असतोऽज्ञानात्प्रागभ्युत्थिते संप्रति गते सति निर्गतो गोनसोऽजगरो यस्मात्तथाविधो द्रुमो वृक्षवान् आराम इव । द्रुशब्दाद्वृक्षवाचकान्मत्वर्थे 'द्युद्रुभ्यां मः' इति मप्रत्ययः ॥ ५९ ॥ ६० ॥ तस्करेण आत्मप्रमोषकेणाहंकारेण ॥ ६१ ॥ शान्तदावो निर्वाणदवाग्निरचलः पर्वत इव ॥ ६२ ॥ के आधयो मानसव्यथाः । परलोकदुःखादिचिन्तया कुतो नाधयः स्युस्तत्राह—**नरके**ति ॥ ६३ ॥ ननु सत्येवाहंकारे मोहादिप्रशमचमत्कृतिः किं न स्यात्तत्राह—**अहंकारे**ति । अहंकारकलालक्षणे पित्ते पित्तजोन्मादे सति ॥ ६४ ॥ इदानीं सरःसमुद्रादिनानाभावैरात्मानं रूपयन्नमस्यति—**निरहंकारे**त्यादिना । कान्तिशालिनी आत्मचन्द्रप्रकाशशालिनी । स्वच्छता नैर्मल्यम् ॥ ६५ ॥ मह्यं प्रत्यगात्मभूताय । तुभ्यं ब्रह्मणे । एवमग्रेऽपि ॥ ६६ ॥ ६७ ॥ विश्रान्ताय अचलाय ॥ ६८ ॥ सद्ब्रह्म तल्लक्षणाय । मानसाय देवसरसे ॥ ६९ ॥ संविदाभासौ बुद्धितद्वृत्तिप्रतिबिम्बचैतन्ये एव पक्षौ यस्य ॥ ७० ॥ कलाभिः 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुत्युक्ताभिः सप्तदशभिः 'षोडशकलः सोम्य पुरुषः' इति श्रुतिदर्शिताभिर्वा । चन्द्रपक्षे तु प्रसिद्धाभिः । निष्कलाय निरवयवाय । चन्द्रपक्षे कलाव्यतिरिक्तदेवतात्मने ॥ ७१ ॥ चित्सूर्ये प्रसिद्धसूर्यात्सदोदितायेत्यादिविशेषणैर्विशेषो दर्शितः । शान्ताय अतापकाय । अदृश्याय दृश्यविलक्षणाय ॥ ७२ ॥ अस्नेहो निस्तैलः । स्नेहं परमप्रेमाणं दीपयतीति स्नेहदीपः । अथवा पुत्रमित्रधनादिष्वस्नेहाः यतयस्तेषां स्नेहेन दीप्यते । सर्ववस्तुस्वभावानामाधाराय । धीराय धीप्रकाशकाय ॥ ७३ ॥ इदानीं स्वपौरुषं सफलमित्यभिनन्दति—**मदने**त्यादिना । यथा अयसा कार्ष्णायसटङ्केन तप्तमयो भज्यते तथा शीतेन शमादियुक्तेन मनसा मदनानलसंतप्तं मनो मया भग्नमित्यर्थः ॥ ७४ ॥ प्रत्यक्प्रवणेनेन्द्रियेण चक्षुरादिना पराक्प्रवणं तदेव छित्त्वा । एवं मनोहंकारयोरपि बोध्यम् । शेषोऽवशिष्टचिन्मात्रोऽहम् ॥ ७५ ॥ भावेन श्रद्धया । अभावमश्रद्धाम् । ऊहापोहवती बुद्धिः प्रज्ञा तया अविचारसंदेहादिलक्षणामप्रज्ञाम् । अज्ञो ज्ञातृत्वाभिमानशून्यो ज्ञो ज्ञप्तिमात्रस्वभाव एव सत्योऽसि तादृशाय ते[2] तुभ्यं नमः ॥ ७६ ॥ भावेन ब्रह्माहंभावेन देहाद्यहंभावे गलिते ॥ ७७ ॥ निर्भावं भावनाहेतुबुद्धिशून्यम् । अनीहितं इच्छाहेतुचित्तशून्यम् । स्पन्दः प्राणनक्रिया तन्मात्रेण शुद्ध आत्मा यस्य तथाविधे जीवन्मुक्तात्मनि तिष्ठति जीवति । तथा च श्रुतिः 'तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च' इति ॥ ७८ ॥ हेलयैव अनुकम्पिता भोगैश्वर्यदानेनानुगृहीता अनन्ताः स्वभक्ता

१ आत्मन्येतत्तिष्ठति इति पाठः.

२ अत्र मह्यं इति क्वचित्पठ्यते.

प्रशान्तमोहवेतालो गताहंकारराक्षसः ।
कदाशारूपिकोन्मुक्तो जातोऽस्मि विगतज्वरः ॥ ८०
तृष्णारज्जुगुणं छित्त्वा मच्छरीरकपञ्जरात् ।
न जाने क गतोड्डीय दुरहंकृतिपक्षिणी ॥ ८१
उद्धूलिते घनाज्ञानकुलाये कायपादपात् ।
न जाने गत उड्डीय क्वाहंभावविहंगमः ॥ ८२
दुराशादीर्घदौरात्म्यधूसरा भोगभस्मना ।
भयभोगिहिता दिष्ट्या भूयस्यो वासनाः क्षताः ॥ ८३
एतावन्तमहं कालं कोऽभूवं चित्रमीदृशम् ।
येनाहमेष मिथ्यैव दृढाहंकारतां गतः ॥ ८४
अद्याहमस्मि जातोऽयमहमद्य महामतिः ।
अहंकारमहाभ्रेण यत्कृष्णेनालमुज्झितः ॥ ८५
दृष्टोऽयमात्मा भगवांस्तथैवाधिगतो मया ।
आलब्धश्चानुभूतोऽङ्गं स्वानुभूतौ नियोजितः ॥ ८६
गतास्पदं गतमननं गतैषणं
तिरस्कृतं निपुणमहंकृतिभ्रमैः ।
निरीहितं व्यपगतरागरञ्जनं
विकौतुकं प्रशममिदं गतं मनः ॥ ८७
दुरुत्तराः समविषमा महापदः
सुदुःसहाः प्रभवनदीर्घदोषदाः ।
गताः क्षयं समधिगतो महेश्वर-
श्चिदद्वयोऽपगतमचित्त्वमन्तरे ॥ ८८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे ब्रह्मात्मचिन्ता[1] नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ३६

प्रह्लाद उवाच ।
आत्मा सर्वपदातीतश्चिरात्संस्मृतिमागतः ।
दिष्ट्या लब्धोऽसि भगवन्नमस्तेस्तु महात्मने ॥ १
अभिवन्द्याथ चालोक्य चिरमालिङ्ग्यसे मया ।
कोऽन्यः स्यात्त्वदृते बन्धुर्भगवन्भुवनत्रये ॥ २
हंसि पासि ददासि त्वं स्तौषि यासि विवल्गसि ।
अयं प्राप्तोसि दृष्टोसि किं करोषि क्व गच्छसि ॥ ३
स्वसत्तापूरिताशेषविश्व विश्वजनीन भोः ।
सर्वत्र लक्ष्यसे नित्यमधुना क्व पलायसे ॥ ४
आवयोरन्तरं भूरि जन्मव्यवहितान्तरम् ।
अदूरमद्य संपन्नं दिष्ट्या दृष्टोऽसि बान्धव ॥ ५

येन तथाविधाद्विश्वेशाद्ब्रह्मविष्ण्वादेरप्यतिशायिनी उत्कृष्टा निर्वृतिर्निरतिशयानन्दविश्रान्तिः ॥ ७९ ॥ रूपिका पिशाची तयोन्मुक्तः । अतएव विगतज्वरः ॥ ८० ॥ ८१ ॥ उद्धूलिते ज्ञानाभ्यासपेषणेन धूलीकृत्योड्डायिते ॥ ८२ ॥ दुराशाभिर्दीर्घैर्दौरात्म्यैर्दुष्टदेहाद्यात्मत्वाभिमानैश्च धूसरा मलिना । भयलक्षणानां भोगिनां सर्पाणां हिता । भूयस्यो दुर्वासनाः भोगान्भस्मयतीति भोगभस्म समाधिस्तेन क्षता उच्छिन्नाः ॥ ८३ ॥ इदानीं निद्राक्षये स्वाप्नदुर्दशामिव प्राक्तनीमहंकारदशां स्मृत्वा विस्मयते—एतावन्तमिति । चित्रमाश्चर्यम् ॥ ८४ ॥ अद्याहमयमनुभूयमाननिरतिशयानन्दस्वभावो जातः प्रादुर्भूतः । यद्यतोऽहं महती अपरिच्छिन्नब्रह्माकारा मतिः साक्षात्कारवृत्तिर्यस्य तथाविधः सन्नहंकारमहाभ्रेणालं निःशेषमुज्झितः । निर्मुक्त इत्यर्थः ॥ ८५ ॥ महामतिरित्येतद्विशदयति—दृष्ट इति । वाक्यप्रमाणेन दृष्टो मननेनाधिगतः समाधौ मनसा चिराश्लेषमालब्धसमाध्यनुभूतश्चाङ्गं स्वदेहमिव सदा स्वानुभूतौ नियोजितः । तथाचाहुः 'देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥' इति ॥ ८६ ॥ सांप्रतं निर्दोषविक्षेपं स्वमनः प्रशमं गतमित्याह—गतास्पदमिति । गतास्पदं निर्विषयम् । विषयाणां मननाद्धि तेष्वेषणा प्रसिद्धेति मूलोच्छित्त्या गतमननं गतैषणं च । निपुणं नितरां तिरस्कृतं निराकृतमुज्झितमिति यावत् । अतएव निरीहितं निश्चेष्टम् । कौतुकं भोगोत्कण्ठा तद्रहितम् । अतएव निरिन्धनाग्निवत्प्रशमं गतमित्यर्थः ॥ ८७ ॥ मनःप्रशमादेव सर्वापन्निवृत्तिं निरतिशयानन्दात्मावाप्तिं च वदन्नुपसंहरति—दुरुत्तरा इति । प्रभवनानि नानायोनिजन्मपरंपराः दीर्घा दोषाः कामलोभमोहादयस्तत्प्रदाः समाश्चिरकालैकरूपदुःखाः विषमाः प्रतिक्षणविचित्रदुःखाः महापदः क्षयं गताः । चिदद्वयो महेश्वरः पूर्णानन्दात्मा समधिगतः प्राप्तः । तत्कुतः । यतः अन्तरे प्रत्यगात्मन्यचित्त्वमज्ञानजाड्यं ज्ञानेनापगतं बाधितमित्यर्थः ॥ ८८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे ब्रह्मात्मचिन्ता नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

आत्मानं दुर्लभं प्राप्य प्रह्लादः प्रणमन्मुहुः ।
स्तौति नन्दति कान्तेव कान्तेन रमते रहः ॥ १ ॥

सर्वेभ्यो मानुषानन्दादिहैरण्यगर्भान्तेभ्यः पदेभ्यः सुखोत्कर्षस्थानेभ्योऽप्यतीतो निरतिशयानन्दरूपः आत्मा प्रत्यक् । महात्मने अपरिच्छिन्नस्वभावाय ॥ १ ॥ चिरमालिङ्ग्यसे क्षीरोदकवत्समरसवृत्त्या समाधावनुभूयसे । बन्धुः परमप्रियः ॥ २ ॥ यावन्न प्राप्तो न दृष्टश्च तावन्मृत्युर्भूत्वा अभक्तान् हंसि । भक्तान्पासि । उपासनाकर्मभिराराधितो ददासि । स्तावकादिरूपेण स्तौषि । गन्तृरूपेण यासि । सर्वरूपेण च विवल्गसि व्यवहरसि । मया तु अयं नित्यापरोक्षस्वभावः प्राप्तो दृष्टश्च । अतः परं मां प्रति किं करोषि क्व वा गच्छसि । न त्वयेदानीमन्यतो गन्तुं किंचित्कर्तुं वा पूर्ववच्छक्यमित्यर्थः ॥ ३ ॥ विश्वेभ्यो जनेभ्यो हित विश्वजनीन ॥ ४ ॥ अन्तरमन्तर्धायकमज्ञानम् । अभूदिति शेषः । अद्य तन्नाशाददूरमत्यन्ताभेदलक्षणमतिसामीप्यं संपन्नम् ॥ ५ ॥

[1] ब्रह्मतात्मलाभचिन्ता इति पाठः.

नमस्ते कृतकृत्याय कर्त्रे भर्त्रे नमोस्तु ते ।
नमः संसारवृन्ताय नित्याय विमलात्मने ॥ ६
नमश्चक्राब्जहस्ताय नमश्चन्द्रार्धधारिणे ।
नमो विबुधनाथाय नमस्ते पद्मजन्मने ॥ ७
वाच्यवाचकदृष्ट्यैव भेदो योऽयमिहावयोः ।
असत्या कल्पनैवैषा वीचिवीच्यम्भसोरिव ॥ ८
त्वमेवानन्तयानन्तवस्तुवैचित्र्यरूपया ।
भावाभावविलासिन्या नित्ययैव विजृम्भसे ॥ ९
नमो द्रष्ट्रे नमः स्रष्ट्रे नमोऽनन्तविकासिने ।
नमः सर्वस्वभावाय नमस्ते सर्वगात्मने ॥ १०
प्रतिजन्म चिरं बह्वयो दीर्घदुःखवता मया ।
त्वया मयोपदिष्टेन दग्धेनापहतौजसा ॥ ११
आलोकिता लोकदशो दृष्टा दृष्टान्तदृष्टयः ।
न प्राप्तस्त्वयाऽनेन किंचिदासादितं भवेत् ॥ १२
सर्वं मृत्काष्ठपाषाणवारिमात्रमिदं जगत् ।
नेहास्ति त्वदृते देव यत्प्राप्तौ नाभिवाञ्छति ॥ १३
देवायमद्य लब्धोऽसि दृष्टोऽस्यधिगतोऽसि च ।
संप्राप्तोऽसि गृहीतोऽसि नमस्तेस्तु न मुह्यसि ॥ १४
योऽक्ष्णोः कनीनिकारश्मिजालप्रोतवपुः स्थितः ।
देव दर्शनरूपेण कथं सोऽत्र न दृश्यते ॥ १५
यस्त्वक्स्पर्शौ स्पृशन्सर्वं गन्धं तैलं तिले यथा ।
स्पर्शमन्तःकरोत्येष स कथं नानुभूयते ॥ १६
यः शब्दश्रवणादन्तः शब्दशक्तिं परामृशन् ।
रोमाञ्चं जनयत्यङ्गे स दूरस्थः कथं भवेत् ॥ १७
जिह्वापल्लवलग्नानि स्वदितस्याग्रतोऽपि च ।
स्वदन्ते यस्य वस्तूनि स्वदते स न कस्य च ॥ १८
पुष्पगन्धानुपादाय घ्राणहस्तेन देहकम् ।
य आलोकयति प्रीत्या कस्यासौ न करे स्थितः ॥ १९
वेदवेदान्तसिद्धान्ततर्कपौराणगीतिभिः ।
यो गीतः स कथं ह्यात्मा विज्ञातो याति विस्मृतिं ॥ २०
सैवेह देहभोगाली सुभगापीयमद्य मे ।
अन्तर्न स्वदते स्वच्छे त्वयि दृष्टे परावरे ॥ २१
त्वया विमलदीपेन भानुः प्रकटतां गतः ।
त्वया शीततुषारेण चन्द्रः शिशिरतां गतः ॥ २२
त्वयैते गुरवः शैलास्त्वयैते द्युचरा धृताः ।
त्वयैवेयं धरा धीरा त्वयैवाम्बरमम्बरम् ॥ २३
दिष्ट्या मत्तामसि प्राप्तो दिष्ट्या त्वत्तामहं गतः ।
अहं त्वं त्वमहं देव दिष्ट्या भेदोऽस्ति नावयोः ॥ २४
अहं त्वमितिशब्दाभ्यां पर्यायाभ्यां महात्मनः ।
तव वा मम वा शाखा संयुक्ताभ्यां नमो नमः ॥ २५
नमो मह्यमनन्ताय निरहंकाररूपिणे ।
नमो मह्यमरूपाय नमः समसमात्मने ॥ २६
मय्यात्मनि समे स्वच्छे साक्षिभूते निराकृतौ ।
दिक्कालाद्यनवच्छिन्ने स्वात्मन्येवेह तिष्ठसि ॥ २७

संसारलक्षणस्य पर्णस्य वृन्ताय ॥ ६ ॥ विबुधनाथायेन्द्ररूपाय ॥ ७ ॥ वाच्यवाचकदृष्ट्या व्यवहारदृष्ट्या । एषा व्यवहारदृष्टिर्भिदा च ॥ ८ ॥ अनन्तया कल्पनयेति शेषः । नित्यया प्रवाहानाद्यया[1] ॥ ९ ॥ आदौ सृज्यपदार्थानां द्रष्ट्रे । ततः स्रष्ट्रे । सृष्ट्वा चानन्तरूपैर्विकासिने । अतएव सर्वस्वभावाय । अधिष्ठानतया सर्वगात्मने ॥ १० ॥ एतावन्तं कालं मद्रूपेण त्वमेव मच्छन्दानुवर्तनाच्छान्त इदानीं त्वयैव त्वं विश्रान्तये लब्ध इत्याह—**प्रतिजन्मेति**। मया मद्भावापन्नेन जीवभूतेन त्वया मया स्वकामादिदोषानुसारेणोपदिष्टेनासन्मार्गेण प्रवृत्तत्वाद्दग्धेन अतएवापहतौजसा तिरोहितेश्वरभावेन ॥ ११ ॥ त्वया लोकदृश ऊर्ध्वाधोमध्यलोकसंचारभ्रमास्तेषु विवेकानुकूलदृष्टान्तदृष्टयश्च आलोकिताः । तत्तस्माद्बहिर्लोकदर्शनात्त्वं त्वया न प्राप्तः । अनेन लोकत्रयदर्शनेन च किंचित्स्वल्पमपि पुरुषार्थरूपमासादितं न भवेत् नाभूदिति द्वयोरर्थः ॥१२॥ कुतो नाभूत्तत्राह—**सर्वमिति**। नाभिवाञ्छति पुरुषार्थेच्छा पूर्णा भवति, तत्तादृशं वस्तु त्वदृते त्वां विना इह जगति अन्यन्नास्तीत्यर्थः ॥ १३ ॥ न मुह्यसि । मोहनिस्तीर्णोऽसीति यावत् ॥१४॥ कथमहं दृष्ट इति चेच्चाक्षुषादिसर्ववृत्तिप्रथारूपेण प्रतिबोधविदितं मतमिति श्रुतिदर्शितोपायेनेत्याह—**य** इति । चक्षुर्द्वारान्तःकरणस्य घटादिदेशनिर्गमने तदवच्छिन्नचैतन्यात्माऽक्षिकनीनिकारश्मिजालप्रोतवपुःस्थित इत्यर्थः । एवमग्रेऽप्यूह्यम् ॥ १५ ॥ त्वचं स्पर्शमौष्ण्यादिकं च स्पृशन् स्पार्शनवृत्त्या व्याप्नुवन् यथा तिलेऽन्तर्गतं तैलं तिलसंयुक्तपुष्पगन्धमन्तःकरोति गृह्णाति तद्वत्स्पर्शं शीतादि अन्तःकरोति व्याप्य प्रकाशयति ॥ १६ ॥ शब्दशक्तिं गानकाव्यादिगुणचमत्कारम् । परामृशन् प्रकाशयन् ॥ १७ ॥ वस्तूनि मधुराम्लादीनि अग्रतः पुरस्तादेव स्वदितस्य स्वारसिकप्रेमविषयस्य स्वदन्ते । स्वदते सुखात्मना स्फुरति ॥ १८ ॥ घ्राणहस्तेन हस्तवदुपादानकारणेन घ्राणेन कण्ठधृतस्रजः पुष्पाणां गन्धानुपादाय मालालंकृतं स्वं देहकमालोकयति पश्यति । करे स्थित इव, स्फुटं प्रत्यक्ष इत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ 'येन सूर्यस्तपति तेजसेद्धः' इत्यादिश्रुतिदृशाप्याह—**त्वयेति** ॥२२॥ द्युचरा नभश्चरा वाय्वादयः । धीरा निश्चला । अम्बरमवकाशदम् ॥२३॥ दिष्ट्या भाग्येन । अहं त्वं त्वमहमिति व्यतिहारेणाभेदो दृढीकृतः ॥ २४ ॥ इदानीमखण्डार्थे प्रमाणतया संपन्नावहंत्वंशब्दौ नमस्यति—**अहमिति** । लक्ष्यस्य महात्मनो बोधने पर्यायाभ्याम् । तव कारणोपाधिविशिष्टस्य वाच्यार्थस्य मम कार्योपाधिविशिष्टस्य वाच्यार्थस्य वा शाखावदेकदेशभूताभ्यामुपाधिभ्यां भेदकल्पनात्संयुक्ताभ्यां सामानाधिकरण्येनान्विताभ्यामहंत्वमिति शब्दाभ्याम् । नमो नम इत्यादराभ्यासः । द्वौ वाशब्दौ शाखाद्वयसंबन्धयोर्मिथ्यात्वद्योतनार्थौ ॥ २५ ॥ इदानीमखण्डार्थं प्रत्यक्प्राधान्येन प्रणम्य तस्यैव ब्रह्मतां दर्शयति—**नम** इत्यादिना ॥ २६ ॥ हे ब्रह्मन्, त्वं मय्यात्मनि

[1] प्रवाहनद्या इत्यपि क्वचित्.

मनः प्रक्षोभमायाति स्फुरन्तीन्द्रियवृत्तयः ।
शक्तिरुल्लसति स्फारा प्राणापानप्रवाहिनी ॥ २८
वहन्ति देहयन्त्राणि कृष्टान्याशावरत्रया ।
चर्ममांसास्थिदिग्धानि मनःसारथिमन्ति च ॥ २९
अयं संविद्वपुरहं न काचिन्न कृतास्पदः ।
देहः पततु वोदेतु यथाभिमतयेच्छया ॥ ३०
चिरादहमहं जातः स्वात्मलाभश्चिरादयम् ।
चिरादुपशमं याति कल्पस्यान्ते जगद्यथा ॥ ३१
चिरात्संसारगामित्वाद्दीर्घे संसारवर्त्मनि ।
विश्रान्तोऽस्मि चिरं श्रान्तः कल्पस्यान्त इवानलः ३२
सर्वातीताय सर्वाय तुभ्यं मह्यं नमो नमः ।
तेभ्योऽपि च नमस्तेस्तु ये मां त्वां प्रवदन्ति च॥३३
अखिलानन्तसंभोगा न स्पृष्टा दोषवृत्तिभिः ।
जयत्यकृतसंरम्भा साक्षिता परमात्मनः ॥ ३४
आत्मन्पुष्प इवामोदो भस्त्रापिण्ड इवानिलः ।
तिले तैलमिवासिस्त्वं सर्वत्र वपुषि स्थितः ॥ ३५
हंसि पासि ददासि त्वमवस्फूर्जसि वल्गसि ।
अनहंकृतिरूपोऽपि चित्रेयं तव मायिता ॥ ३६
जयामीशज्वलद्दीप्तिः सर्वमुन्मीलयञ्जगत् ।
जयाम्युपरतारम्भो जगद्भूयो निमीलयन् ॥ ३७
परमाणोस्तवैवान्तरिदं संसारमण्डलम् ।
वटत्वं वटधानायां बभूवास्ति भविष्यति ॥ ३८

हयद्विपरथाकारैर्यद्वत्खे दृश्यतेऽम्बुदः ।
तद्वदालोक्यसे देव पदार्थशतविभ्रमैः ॥ ३९
भावानां भूरिभङ्गानामभवाय भवाय च ।
भव भावविमुक्तात्मा भावाभावबहिष्कृतः ॥ ४०
जहि मानं महाकोपं कालुष्यं क्रूरतां तथा ।
न महान्तो निमज्जन्ति प्राकृते गुणसंकटे ॥ ४१
प्राक्तनीं दीर्घदौरात्म्यदशां स्मृत्वा पुनःपुनः ।
कोहं किं तद्बभूवेति हसन्मुक्ताच्छटासितम् ॥ ४२
ते प्रयाताः समारम्भा गतास्ते दग्धवासराः ।
येषु चिन्तानलज्वालाजालाकीर्णो भवानभूत् ॥ ४३
अद्य त्वं देहनगरे राजा स्फारमनोरथः ।
न दुःखैर्गृह्यसे नापि सुखैर्व्योम करैरिव ॥ ४४
अद्येन्द्रियदुरश्वांश्च जित्वा जितमनोगजः ।
भोगारिमभितो भङ्क्त्वा साम्राज्यमधितिष्ठसि॥४५
अपाराम्बरपान्थस्त्वमजस्रास्तमयोदयः ।
अवभासकरो नित्यं बहिरन्तश्च भास्करः ॥ ४६
सर्वदैवासि संसुप्तः शक्त्या संबोध्यसे विभो ।
भोगालोकनलीलार्थं कामिन्या कामुको यथा ॥ ४७
दृक्क्षुद्राभिरुपानीतं दूराद्रूपमधु त्वया ।
पीयते स्वीकृतं शक्त्या नेत्रवातायनस्थया ॥ ४८
ब्रह्माण्डकोटराध्वान्ताः प्राणापानपरैस्त्वया ।
गतागतैर्ब्रह्मपुरे संप्रेक्ष्यन्ते प्रतिक्षणम् ॥ ४९

प्रत्यक्स्वभाव एव तिष्ठसि न कदाचित्पराग्भावे इत्यर्थः ॥२७॥ तत्कुतो ज्ञातं तत्राह—**मन** इति । 'केनेषितं पतति प्रेषितं मनः' इत्यादिश्रुतिदर्शितेन मनःप्रभृतीनामयस्कान्तवत्प्रवर्तकत्वेन ज्ञातमित्यर्थः ॥ २८ ॥ २९ ॥ तर्हि त्वं किं प्राणनादिशक्तिरुत देहकृतास्पदोऽहंकारादिर्वा नेत्याह—**अय**मिति । अयमहं संविद्वपुरेव नतु काचिच्छक्तिर्नापि [1]ध्येयकृतास्पदः । तर्हि ते किं देहेनेति चेन्न किंचिदित्याह—**देह** इति ॥ ३० ॥ उपशमं याति, भ्रम इति शेषः ॥ ३१ ॥ संसारगामित्वात्संसारे भ्रमणशीलत्वात् । एतावत्कालं संसारवर्त्मनि श्रान्तोऽहं संप्रति विश्रान्तः ॥ ३२ ॥ ये गुरवो वेदान्ताश्च त्वां मां मद्रूपमेव प्रवदन्ति ॥ ३३ ॥ अखिला अनन्ताः संभोगाः प्रकाश्या यस्यास्तथाविधापि प्राकाश्यदोषवृत्तिभिरस्पृष्टा । न कृतः संरम्भोऽभिनिवेशो यया । उदासीनेत्यर्थः । अतएव जयति ॥३४॥ त्वमेव सर्वत्र सार इत्याह—**आत्मन्नि**ति ॥३५॥ सर्वकर्तापि त्वमेवेत्याह—**हंसी**ति ॥ ३६ ॥ सर्गकाले ईशेन त्वया चिदात्मना ज्वलद्दीप्तिर्बहिरन्तश्चार्थप्रकाशनेनोज्वलितोऽहं जीवभावेनानुप्रविश्य नामरूपात्मकं सर्वं जगदुन्मीलयन्व्याकुर्वंस्त्वद्रात्मनैव जयामि वशीकृत्य पालयामि । प्रलयकाले चाहमुपरतारम्भो जगद्भूयः पुनर्निमीलयन्नुपसंहरन्नपि त्वदात्मनैव जयाम्यभिभवामीत्यर्थः ॥ ३७ ॥ परमाणोरत्यन्तसूक्ष्मस्य । दुर्लक्ष्यस्येत्यर्थः । वटत्वं वटव्यक्तिसंवलिता जातिः ॥ ३८ ॥ ३९ ॥

इदानीं स्वयं मुक्तात्मा स्वाभिन्नाय बद्धात्मने मोक्षोपायमुपदिशति—**भावाना**मित्यादिना । भूरिभङ्गानां बहुविधविकारस्वभावानां अभवाय बाधाय भवाय निरतिशयानन्दस्वरूपाविर्भावाय च असङ्गात्मदर्शनेन भावाभावाभ्यां बहिष्कृतो विविक्तः संस्तद्भावेनैव सदा विमुक्तात्मा भव । मा पुनर्बन्धं प्रतिपद्यस्वेत्यर्थः ॥ ४० ॥ तदुपायभूतां पूर्वपीठिकामुपदिशति—**जही**त्यादिना ॥४१॥इति विचार्येति शेषः । मुक्तानां छटाः कणा इव सितं शुभ्रं यथा स्यात्तथा हसन् प्राक्तनीं दीर्घदौरात्म्यदशां जहीति पूर्वेणान्वयः ॥ ४२ ॥ ४३ ॥ करैर्मुष्टिभिर्व्योमेव ॥ ४४ ॥ ४५ ॥ बहिः अविद्यादृशि अन्तः स्वरूपदृशि च यथाक्रममजस्रमस्तमय उदयश्च यस्य । अथवा अजस्रमभीक्ष्णं जगतः अस्तमयोदयौ प्रलयसर्गौ यस्मादित्यर्थः । भास्करपक्षे स्पष्टम् ॥ ४६ ॥ यद्येवं तर्हि सर्वत्र तथा कुतो नावगच्छामि तत्राह—**सर्वदै**वेति । सर्वदा अनादिकालात्सुप्तोऽसि । शक्त्या भोजकादृष्टशक्त्या भोगालोकनलीलार्थं तावन्मात्रं संबोध्यसे न पूर्णात्मरूपेणेत्यर्थः ॥४७॥ भोगालोकनलीलामेव विशदयति—**दृक्क्षुद्राभि**रिति । दृश इन्द्रियवृत्तयस्तल्लक्षणाभिः क्षुद्राभिर्मधुमक्षिकाभेदैः । रूपादिलक्षणं मधु क्षौद्रम् । नेत्रादिवातायनस्थया चिच्छक्त्या ॥ ४८ ॥ योगिनामुत्क्रमणकाले सुषुम्नादिमार्गप्रकाशोऽपि त्वदधीन एवेत्याह—**ब्रह्माण्डे**ति । प्राणापानशब्दाभ्यां तन्निरोधाभ्यासो लक्ष्यते । तत्परैर्योगिभिर्ब्रह्मोपलब्धिस्थानत्वाद्ब्रह्मपुरे देहे प्रतिक्षणमभ्यस्तै-

[1] देहकृत इति पाठः.

देहपुष्पे त्वमामोदो देहेन्दौ त्वमृतामृतम् ।
रसस्त्वं देहविटपे शैत्यं देहहिमे भवान् ॥ ५०
त्वय्यस्ति विस्मयस्नेहः शरीरक्षीरसर्पिषि ।
त्वमन्तरस्य देहस्य दारुण्यग्निरिव स्थितः ॥ ५१
त्वमेवानुत्तमास्वादः प्राकाश्यं तेजसामपि ।
अवगन्ता त्वमर्थानां त्वं भासामवभासकः ॥ ५२
स्पन्दस्त्वं सर्ववायूनां त्वं मनोहस्तिनो मदः ।
प्रज्ञानलशिखायास्त्वं प्राकाश्यं तैक्ष्ण्यमेव च ॥ ५३
त्वद्वशादियमात्मीया वाचा संप्रविलीयते ।
दीपवत्पुनरन्यत्र समुदेति कुतोऽपि सा ॥ ५४
त्वयि संसारवर्तिन्यः पदार्थावलयस्तथा ।
कटकाङ्गदकेयूरशुक्तयः कनके यथा ॥ ५५
भवानयमयं चाहंत्वंशब्दैरेवमादिभिः ।
स्वयमेवात्मनात्मानं लीलार्थं स्तौषि वक्षि च ॥ ५६
मन्दानिलविनुन्नोऽब्दो गजाश्वनरदृष्टिभिः ।
यथा संलक्ष्यते व्योम्नि तथा त्वं भूतदृष्टिभिः ॥ ५७
यथा हयगजाकारैर्ज्वाला लसति वह्निषु ।
तथैवाव्यतिरिक्तैस्त्वं दृश्यसे भुवि सृष्टिषु ॥ ५८
त्वं ब्रह्माण्डकमुक्तानामच्छिन्नस्तन्तुराततः ।
क्षेत्रं त्वं भूतसस्यानां चिद्रसायनसेवितम् ॥ ५९
असत्तदनभिव्यक्तं पदार्थानां प्रकाश्यते ।
त्वया तत्त्वं यथा पक्त्या मांसानां स्वादवेदनम् ॥ ६०
विद्यमानापि वस्तुश्रीर्न स्थिता त्वयि न स्थिते ।
वनितारूपलावण्यसत्तेव गतचक्षुषः ॥ ६१
सदपीह न सत्तायै वस्तु नावर्जितं त्वया ।
तृप्तये न स्वलावण्यं मुकुरात्प्रतिबिम्बितम् ॥ ६२
लुठति त्वां विना देहः काष्ठलोष्टसमः क्षितौ ।
सन्नप्यसन्नगोच्छ्रायः श्यामास्विव रविं विना ॥ ६३
सुखदुःखक्रमः प्राप्य भवन्तं परिनश्यति ।
प्राकाश्यमासाद्य यथा तमस्तेजोऽथवा हिमम् ॥ ६४
त्वदालोकनयैवैते स्थितिं यान्ति सुखादयः ।
सूर्यालोकनया प्रातर्वर्णाः शुक्लादयो यथा ॥ ६५
लब्धात्मानो विनश्यन्ति संबन्धक्षण एव ते ।
ते तमांसीव दीपस्य दृष्टा एव व्रजन्त्यलम् ॥ ६६
तमस्ता तमसो दीपासत्तायां स्फुटतां गता ।
दीपसंबन्धसमये सा चोत्पद्य विनश्यति ॥ ६७
तदेवं सुखदुःखश्रीर्दृष्ट्वैव त्वामनामयम् ।
जायते जातमात्रैवं सर्वनाशेन नश्यति ॥ ६८

हृदि संपिण्डितानां प्राणानामुत्क्रम्य परकायप्रवेशलोकान्तरसंचाराद्यनुकूलैर्नानानाडीमार्गेषु गतागतैः संचारैर्ब्रह्माण्डान्तरं गन्तुमर्चिरादिमार्गेण सूर्यमण्डलं गन्तुं वा ब्रह्माण्डकोटरस्य ब्रह्मरन्ध्रस्य च संबन्धिनः अध्वान्ताः सुषुम्नादिमार्गपर्वाणि त्वयैव स्वयंज्योतिषा करणेन संप्रेक्ष्यन्ते स्फुटं दृश्यन्ते । 'हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामती'ति श्रुतेर्यद्यपि सर्वेषां मरणेन[1] नाडीद्वारप्रकाश आत्मज्योतिरधीन एव तथाप्ययोगिनां पीडापारवश्यादिना तदवधानाशक्तेर्योगिनां चाभ्यासकाले मरणकाले च सावधानत्वात्त एवोदाहृताः ॥ ४९ ॥ ऋतं परमार्थसत्यभूतममृतम्[2] । देहलक्षणे विटपे शाखायां रागादिपल्लवोद्गमनिमित्तभूतो रसः ॥ ५० ॥ सर्वप्राणिनां शरीरे स्मयस्य गर्वस्य निमित्तभूतः स्नेहो योऽस्ति स शरीरलक्षणस्य क्षीरस्य सर्पिषि घृतवत्सारभूते त्वय्येव सोऽस्ति । त्वया तदभिमानत्यागे स्नेहादर्शनादित्यर्थः ॥ ५१ ॥ अनुत्तमास्वादोऽतिमधुरोऽमृतस्वरूप इति यावत् । तेजसां सूर्यादीनाम् । अधिदैवं प्राकाश्यं प्रकाशनिमित्तम् । अध्यात्मं च भासां चक्षुरादिकरणानामवभासकः ॥ ५२ ॥ वायूनां प्राणानां स्पन्दयतीति स्पन्दः । मनोलक्षणस्य हस्तिनो मद इव भ्रान्तिनिमित्तम् । तैक्ष्ण्यमौष्ण्यनिमित्तम् ॥ ५३ ॥ वाचा वाणी । 'आपं चैव हलन्तानाम्' इति भागुरिमतेन टाप् । त्वद्वशात्त्वयोपसंहारात्संप्रविलीयते उपशाम्यति मरणमूर्च्छास्वप्नेषु । अन्यत्र देहान्तरेषु ॥ ५४ ॥ पदार्थावलयः समुद्यन्तीति विपरिणामेनानुषज्यते ॥ ५५ ॥ त्वयैव स्वात्मनि मदादिशब्दैर्व्यवहारः क्रियते न त्वत्तोऽन्योऽस्तीत्याह—**भवानिति**। स्तौषि गुणैः । वक्षि अन्यत् ॥ ५६ ॥ अब्दो मेघः ॥ ५७ ॥ प्रत्येकं ज्वलत्सु काष्ठेषु कासांचिज्ज्वालानां हयाद्याकारतापि कदाचिद्दृश्यते ॥५८॥ ब्रह्माण्डलक्षणानां मुक्तानां मुक्ताफलानाम् । जलतेजआवरणाभ्यां चाकचक्येन वर्तुलत्वेन च साम्यात् ॥ ५९ ॥ क्षेत्रत्वमुपपादयति—**त्वयेति**। त्वया अनभिव्यक्तमतएवासत्प्रायमविद्याबीजान्तस्थानां सृज्यपदार्थानां तत्प्रसिद्धं तत्त्वं स्वरूपं सर्गेण प्रकाश्यते । यथा पक्त्या पाकेन मांसानां स्वादवेदनमास्वादनार्हा स्वादुता प्रकाश्यते तद्वत् ॥ ६० ॥ एवं चित्प्रकाशानाकलितं सदप्यसत्प्रायमेवेत्याह—**विद्यमानेति**। वनितासंबन्धिनी रूपलावण्यसत्तेव ॥ ६१ ॥ अनावर्जितं अर्थक्रियाशक्त्या अननुगृहीतं सत्प्रतीतमपि न सत्तायै अर्थक्रियायै समर्थमित्यर्थः । मुकुराद्दर्पणान्निमित्तात्प्रतिबिम्बितं स्वलावण्यं स्वमुखसौन्दर्यं कान्तानां चुम्बनाधरास्वादनाद्यर्थक्रियाप्रयुक्ततृप्तये कामोपशमाय नालमित्यर्थः ॥ ६२ ॥ नगस्य गिरेर्वृक्षस्य चोच्छ्राय औन्नत्यं सन् विद्यमानोऽप्यभानादसन्नसत्प्रायः । श्यामासु तमिस्रासु ॥ ६३ ॥ प्राप्य साक्षादनुभूय । प्राकाश्यं सूर्यप्रकाशम् । तेजो दीपनक्षत्रादिप्रभा ॥ ६४ ॥ यतस्त्वदालोकनयैव लब्धात्मानस्ते सुखादयः अतश्चरमसाक्षात्कारेद्धस्य ते तव संबन्धक्षण एव विनश्यन्ति परंतु त्वया दृष्टा एव व्रजन्त्यपगच्छन्ति नोपायान्तरेणेत्यर्थः ॥ ६५ ॥ ६६ ॥ दीपस्यासत्तायामविद्यमानतायां स्फुटतां गता तमसस्तमस्ता दीपालोकसंबन्धसमये सैवोत्पद्य स्वधर्मिणो वियुज्य विनश्यति, तद्धर्मी तु सन्मात्रस्वभावो न नश्यतीत्यर्थः । एवार्थे चकारः ॥ ६७ ॥ दृष्टान्तोक्तं

१ मरणे इति पाठः. २ सत्यभूतामृतम् इति पाठः.

भङ्गुरत्वादिह स्थातुं कालं नाणुमपि क्षमा ।
निमेषलक्षभागाख्या तन्वी कालकला यथा ॥ ६९
गान्धर्वी नगरी तन्वी सुखदुःखादिभावना ।
स्फुरति त्वत्प्रसादेन त्वयि दृष्टे विलीयते ॥ ७०
त्वदालोकेक्षणोद्भूता त्वदालोकेक्षणक्षया ।
मृतेव जाता जातेव मृता केनोपलक्ष्यते ॥ ७१
क्षणमप्यस्थिरं वस्तु कथं कार्यकरं भवेत् ।
तरङ्गैरुत्पलाकारैर्माला कथमवेक्ष्यते ॥ ७२
यदा वा जातनिर्णष्टं क्रियां वस्तु करिष्यते ।
तदा रमेत लोकोऽयं मालां कृत्वा तडिद्गुणैः ॥ ७३
इमां सुखादिकां लक्ष्मीं विवेकिजनचेतसि ।
स्थितः सन्नेव गृह्णासि न जहासि समस्थितिम् ॥ ७४
अविवेकिषु योऽसि त्वं सहजातमन्यदृच्छया ।
तद्रूपकथनेनालं ममानल्पपदास्पद ॥ ७५
निरीहेण निरंशेन निरहंकृतिना त्वया ।
सता वाप्यसता वापि कर्तृत्वमुररीकृतम् ॥ ७६
जय प्रोड्डामराकार जय शान्तिपरायण ।
जय सर्वागमातीत जय सर्वागमास्पद ॥ ७७
जय जात जयाजात जय क्षत जयाक्षत ।
जय भाव जयाभाव जय जेय जयाजय ॥ ७८
उल्लसाम्युपशाम्यामि तिष्ठाम्यधिगतोऽस्मि च ।
जयी जयाय जीवामि नमो मह्यं नमोऽस्तु ते ॥ ७९

त्वयि स्थिते मयि विगतामयात्मनि
स्वसंस्थितौ व्यपगतरागरञ्जने ।
क्व बन्धनं क्व च विपदः क्व संपदो
भवाभवौ क्व शममुपैमि शाश्वतम् ॥ ८०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे आत्मस्तवनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ३७

श्रीवसिष्ठ उवाच ।

इति संचिन्तयन्नेव प्रह्लादः परवीरहा ।
निर्विकल्पपरानन्दसमाधिं समुपाययौ ॥ १
निर्विकल्पसमाधिस्थश्चित्रार्पित इवाचलः ।
शैलादिव समुत्कीर्णो बभौ स्वपदमास्थितः ॥ २
तथानुतिष्ठतस्तस्य कालो बहुतरो ययौ ।
स्वगृहे भुवनस्थस्य मेरोरिव सुरद्विषः ॥ ३

दार्ष्टान्तिके योजयति—**तदेवमिति**। **सर्वनाशेनेति**। बीजभावेन सहेत्यर्थः ॥ ६८ ॥ सुखदुःखश्रीर्विषयापगमे स्वरसभङ्गुरत्वादिह नित्यनिरतिशयानन्दप्रकाशात्मनि अणुमपि कालं क्षणमपि स्थातुं न क्षमा । यथा निमेषकालस्य लक्षतमभागत्वेन प्रसिद्धा तन्वी अतिसूक्ष्मा कालकला स्वत एव नश्यति तद्वदित्यर्थः ॥ ६९ ॥ एवमतिसूक्ष्मकालत्वाल्लक्षयितुमशक्या गान्धर्वनगरीव मिथ्याभूतापि सुखदुःखादिभावना अज्ञातत्वत्प्रसादेन स्थिरेव सत्येव स्फुरति, त्वयि दृष्टे सति विलीयते नश्यतीत्यर्थः ॥ ७० ॥ अज्ञातत्वदालोकलक्षणेनेक्षणेन दुष्टचक्षुषोद्भूता । सुज्ञातत्वदालोकेक्षणक्षया । एवंभूतेयं मृता स्वप्ने पुनर्जातेव स्वप्नजाता जागरे पुनर्मृतेवेत्यर्थः ॥ ७१ ॥ मिथ्यावस्तूनां क्षणस्थायित्वस्यापि दुर्घटत्वादर्थक्रियाकारित्वमत्याश्चर्यमित्याह—**क्षणमपीति**। उत्पलाकारैरुत्पलबुद्ध्या कल्पिताकारैः ॥ ७२ ॥ ननु सौगतदर्शनवदत्रापि क्षणिकैरर्थक्रिया किं न स्यात्तत्राह—**यदा वेति**। न प्रामाणिकी सौगतैरप्यर्थक्रिया साधयितुं शक्येति भावः ॥ ७३ ॥ इमामुक्तरीत्या दुर्घटामपि सुखदुःखादिकां लक्ष्मीं तद्दुर्घटताभिज्ञानां विवेकिजनानां चेतसि स्थितः सन् गृह्णास्येव । अविवेकिभ्यो विवेकिषु यो विशेषस्तमाह—**न जहासीति**॥७४॥ अविवेकिषु तर्हि कीदृशोऽहमिति प्रश्ने तु नोत्तरमस्ति अविवेकिकल्पनानामानन्त्यादनियतत्वाच्चेत्याह—**अविवेकिष्विति**। यदृच्छया आकस्मिकनानावासनोद्बोधेन निमित्तेन मम वाणीति शेषः । नालं न समर्था हे अनल्पानामनन्तानां पदानां रूपभेदानां नाम्नां च आस्पद इत्यसामर्थ्योपपादकं संबोधनम् ॥७५॥ अनल्पपदास्पदत्वे च कर्तृत्वाध्यासो मूलमित्याशयेनाह—**निरीहेणेति**। सता मूर्तस्थूलदेहोपाधिना । असता अमूर्तसूक्ष्मदेहोपाधिना । वाशब्दः स्वप्ने सूक्ष्मस्य स्वातन्त्र्यद्योतनार्थः । अपिशब्दो जागरे देहद्वयसमुच्चयेन कर्तृत्वद्योतनार्थः ॥ ७६ ॥ इदानीं विवेक्यविवेकिप्रसिद्धरूपद्वयेनापि स्तौति—**जयेति** द्वाभ्याम् । प्रोड्डामरो ब्रह्माण्डायतिविस्तृत आकारो यस्य । आगमग्रहणं सर्वप्रमाणोपलक्षणम् । सर्वागमास्पद सर्वप्रमाणवेद्य ॥ ७७ ॥ जेय आविद्यकरूपेण जेतुं योग्य । स्वाभाविकेन त्वजय अजय्य ॥७८॥ अतएवाहमाविद्यकरूपजयवत्त्वाज्जयी । प्रारब्धशेषस्यापि जयाय जीवामि ॥ ७९ ॥ त्वत्स्वरूपेणावस्थितौ मम सर्वानर्थनिराससिद्धिः संपन्नेत्युपसंहरति—**त्वयीति** । मयि विगतामयात्मनि अतएव स्वयं स्थिते त्वयि त्वत्स्वभावे स्थिते सति भवाभवौ जन्ममरणे क्व । अतः शाश्वतं शमं सुखविश्रान्तिमुपैमि प्राप्नोमीत्यर्थः ॥ ८० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे आत्मस्तवनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

इह भूयः समाधिस्थे प्रह्लादे दानवं पुरम् ।
अनायकं दस्युहतं दुर्दशापन्नमीर्यते ॥ १ ॥

इति वर्णितप्रकारमात्मानं संचिन्तयन् ॥ १ ॥ स्वपदं स्वरूपसाम्राज्यम् ॥ २ ॥ स्वगृहे तथा समाधौ तिष्ठतस्तस्य सुरद्विषः प्रह्लादस्य भुवनमध्यस्थरूपमेरोरिव बहुतरः कालो ययौ ॥ ३ ॥

बोधितोऽप्यसुराधीशैर्नाबुध्यत महामतिः।
अकाले बहुसेकोऽपि बीजकोशादिवाङ्कुरः॥ ४
एवं वर्षसहस्राणि पीनात्माऽतिष्ठदेकदृक्।
शान्त एवासुरपुरे मार्तण्ड इव चोपले॥ ५
परानन्ददशैकान्तपरिणामितया तया।
निरानन्दं पराभासमिवाभासपदं गतः॥ ६
एतावताथ कालेन तद्रसातलमण्डलम्।
बभूवाराजकं तीक्ष्णं मात्स्यन्यायकदर्थितम्॥ ७
हिरण्यकशिपौ क्षीणे समाधौ तत्सुते स्थिते।
न बभूवापरः कश्चिद्राजा दनुसुतालये॥ ८
असुरेशार्थिनां तेषां दानवानां समाधितः।
परेणापि प्रयत्नेन प्रह्लादो न व्यबुध्यत॥ ९
न प्रापुर्विकसद्रूपं पतिं तममरारयः।
लसत्पत्रलताजालं निशि पद्ममिवालयः॥ १०
संविद्वादो न तस्यान्तरबोध्यत विचेतसः।
भुवश्चेष्टाक्रम इव पौरुषो गतभास्वतः॥ ११
अथोद्विग्नेषु दैत्येषु गतेष्वभिमतां दिशम्।
विचरत्सु यथाकाममराजनि पुरे पुरा॥ १२
चिराय पातालमभूदभूपालतया तया।
मात्स्यन्यायविपर्यस्तमस्तंगतगुणक्रमम्॥ १३
बलिमुक्ताबलपुरं मर्यादाक्रमवर्जितम्।
सर्वार्तांशेषवनितं परस्परहृताम्बरम्॥ १४
प्रलापाक्रन्दपुरुषं विसंस्थानपुरान्तरम्।
लुठदुद्यानननगरं व्यर्थानर्थकदर्थितम्॥ १५
चिन्तापरासुरगणं निरन्नफलबान्धवम्।
अकाण्डोत्पातविवशं ध्वस्ताशामुखमण्डलम्॥ १६
सुरार्भकपराभूतं भूतैराक्रान्तमन्त्यजैः।
भूतरिक्तमलक्ष्मीकमुच्छिन्नप्रायकोटरम्॥ १७
अनियतवनितार्थमन्त्रयुद्धं
हृतधनदारविरावितं समन्तात्।
कलियुगसमयोद्भटोत्कटाभं
तदसुरमण्डलमाकुलं बभूव॥ १८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे असुरमण्डलव्याकुलीभवनं नाम सप्तत्रिंशः सर्गः॥ ३७॥

## अष्टत्रिंशः सर्गः ३८

श्रीवसिष्ठ उवाच।
अथाखिलजगज्जालक्रमपालनदेवनः।
क्षीरोदनगरे शेषशय्यासनगतो हरिः॥ १
प्रावृण्निद्राव्युपरमे देवार्थमरिसूदनः।
धिया विलोकयामास कदाचिज्जागतीं गतिम्॥ २
त्रिविष्टपं स्वमनसा पार्थिवं चावलोक्य सः।
आचारमाजगामाशु पातालमरिपालितम्॥ ३

बीजकोशाद्बीजपुटात्॥ ४॥ पीनं प्रवृद्धतमं ब्रह्म तदात्मा। 'पीनांस' इति पाठे स्पष्टम्। एकदृक् बाह्यदृक्। शून्य इति यावत्। उपले उत्कीर्णो मार्तण्डः सूर्य इव। निश्चल इति यावत्॥ ५॥ तया परानन्दो भूमाख्यस्तद्दशायामेकान्तमेकरसं परिणामी परिणतस्तत्तया निरानन्दमत्यन्तासत्प्राय आनन्दो यस्मिंस्तथाविधं परः परमात्मा न भासते यस्मिंस्तथाविधं मरणमिव प्राप्तो देहमात्रावशेषमाभासपदं द्रष्टृजनप्रतीतियोग्यत्वं गतः॥६॥ मात्स्यन्यायो बलवद्भिः स्वजातीयैरन्यैश्च दुर्बलानां निष्कारणं वधादिस्तेन कदर्थितं पीडितम्॥ ७॥ तत्कुतस्तत्राह—**हिरण्यकशिपाविति**। दनुसुतालये दैत्यपुरे॥८॥ दानवानां परेणापि प्रयत्नेन प्रह्लादः समाधितो नावबुध्यत॥ ९॥ विकसद्रूपं प्रबोधवन्तमिति यावत्। न प्रापुर्नापश्यन्॥१०॥ संविद्वादः प्रबोधवार्तापि। विचेतसो गलितचित्तस्य। गतो भास्वान्सूर्यो यस्याः सकाशात्तथाविधाया भुवो भूमेरन्तः पौरुषः सुषुप्तपुरुषसंबन्धी स्नानदानप्रस्थानधावनादिचेष्टाक्रम इव॥११॥ उद्विग्नेषु दुर्बलेषु दैत्येषु गतेषु बलवत्सु च दैत्येषु यथाकामं दस्युवद्यथेच्छं विचरत्सु व्यवहरत्सु सत्सु पातालं चिराय मात्स्यन्यायविपर्यस्तमभूदिति परेणान्वयः॥१२॥१३॥ मात्स्यन्यायमेव तत्रोपपादयति—**बलीत्यादिना**। बलिभिर्बलवद्भिर्मुक्तान्यपहृतान्यबलानां पुराणि यत्र। सर्वेभ्य आर्ताः पीडिता अशेषा वनिताः स्त्रियो यत्र॥ १४॥ विसंस्थानं भग्नसंनिवेशम्। उद्याननगरपदाभ्यां तत्स्था वृक्षा जनाश्च लक्ष्यन्ते॥ १५॥ ध्वस्तानि रेणुव्याप्तान्याशानां दिशां मुखमण्डलानि यत्र॥ १६॥ सुराणामर्भकैरपि पराभूतं तिरस्कृतम्। अन्त्यजैस्तामसैर्भूतैश्चण्डालश्वशृगालरक्षःपिशाचादिभिः॥ १७॥ न नियतानि नियमवन्ति वनिता अर्था धनानि मन्त्राः सौहार्दसंकेता युद्धानि तन्निमित्तवैराणि च यस्य। कलियुगसमये उद्भटाः परस्वहरणशूरा ये उत्कटाः क्रूरा दस्यवस्तदाभम्। अतएवाकुलं सर्वतो भयोद्विग्नं बभूव॥ १८॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे असुरमण्डलव्याकुलीभवनं नाम सप्तत्रिंशः सर्गः॥ ३७॥

जगद्व्यवस्थासिद्ध्यर्थं हरेश्चिन्तोपवर्ण्यते।
इह दैत्यकुलं त्रातुं प्रह्लादस्य प्रबोधने॥ १॥

अखिलानां जगज्जालसंबन्धिनां क्रमाणां नियतीनां पालनमेव देवनं क्रीडनं यस्य॥ १॥ प्रावृण्निद्राव्यपगमे। कार्तिकान्ते इति यावत्। देवानामर्थं प्रयोजनं साधयितुमिति शेषः। अनेन देवैः काले स्तुत्वा प्रबोधित इति गम्यते। जागतीं त्रैलोक्यसंबन्धिनीं गतिं तात्कालिकस्थितिम्॥ २॥ विलोकनक्रम-

१ मुक्ताबल इति पाठोऽपेक्षितः।

तत्र स्थिरसमाधाने स्थिते प्रह्लाददानवे ।
दृष्ट्वा संपदमिन्द्रस्य पुरे प्रौढिमुपागताम् ॥ ४
व्यालतल्पतलस्थस्य क्षीरोदार्णवशायिनः ।
शङ्खचक्रगदापाणेर्देहस्यान्तरचारिणः ॥ ५
पद्मासनस्थस्य मनः शरीरेणातिभास्वता ।
इदं संचिन्तयामास त्रैलोक्याब्जमहालिना ॥ ६
प्रह्लादे पदविश्रान्ते पाताले गतनायके ।
कष्टं सृष्टिरियं प्रायो निर्दैत्यत्वमुपागता ॥ ७
दैत्याभावे सुरश्रेणी निर्जिगीषुपदं गता ।
शममेष्यत्यदृष्टाब्दपटलेषु सरिद्यथा ॥ ८
मोक्षाख्यं निर्गतद्वन्द्वं ततो यास्यति तत्पदम् ।
क्षीणाभिमानविरसा लतेव प्रविशुष्कताम् ॥ ९
देवौघे शान्तिमायाते भुवि यज्ञतपःक्रियाः ।
अदेवत्वफलाः सर्वाः शममेष्यन्त्यसंशयम् ॥ १०
क्रियास्वथोपशान्तासु भूर्लोकोऽस्तमुपैष्यति ।
असंसारप्रसङ्गोऽथ तस्य नाशे भविष्यति ॥ ११
आकल्पान्तं त्रिभुवनं यदिदं कल्पितं मया ।
नाशमेष्यत्यकालेन तापे हिमकणो यथा ॥ १२
किमेवमस्मिन्नाभोगे विलीय क्षयमागते ।
कृतं मयेह भवति स्वलीलाक्षयकारिणा ॥ १३
ततोऽहमपि शून्येऽस्मिन्नष्टचन्द्रार्कतारके ।
वपुःप्रशान्तिमाधाय स्थितिमेष्यामि तत्पदे ॥ १४
अकाण्ड एवमेवं हि जगत्युपशमं गते ।
नेह श्रेयो न पश्यामि मन्ये जीवन्तु दानवाः ॥ १५
दैत्योद्योगेन विबुधास्ततो यज्ञतपःक्रियाः ।
तेन संसारसंस्थानं न संसारक्रमोऽन्यथा ॥ १६
तस्माद्रसातलं गत्वा यथावत्स्थापयाम्यहम् ।
स्वे क्रमे दानवाधीशमृतुः पुनरिव द्रुमम् ॥ १७
विना प्रह्लादमथ चेदितरं दानवेश्वरम् ।
करोमि तदसौ मन्ये देवानासादयिष्यति ॥ १८
प्रह्लादस्य त्वयं देहः पश्चिमः पावनो महान् ।
आकल्पमिह वस्तव्यं देहेनानेन तेन च ॥ १९
एवं हि नियतिर्दैवी निश्चिता पारमेश्वरी ।
प्रह्लादेन यथाकल्पं स्थातव्यमिह देहिना ॥ २०
तस्मात्तमेव गत्वा तु दैत्येन्द्रं बोधयाम्यहम् ।
गर्जन्गिरिनदीसुतं मयूरमिव वारिदः ॥ २१
जीवन्मुक्तसमाधिस्थः करोत्वसुरनाथताम् ।
मनोर्मुक्तमनस्कारः प्रतिबिम्बक्रियामिव ॥ २२
नहि नश्यति सर्गोऽयमेवं सह सुरासुरैः ।
भविष्यति च तद्वन्द्वं तन्मे क्रीडा भविष्यति ॥ २३

---

मेव विविच्याह—**त्रिविष्टप**मित्यादिना । पार्थिवं भूलोकसंबन्धिनमाचारं जनानां शुभाशुभाचरणम् । मनसा पातालमाजगाम, पातालस्थितिं पर्यालोचितवानिति यावत् ॥ ३ ॥ तत्र पाताले प्रह्लाददानवे स्थिरे समाधाने समाधौ स्थिते सति इन्द्रस्य पुरे स्वर्गे प्रौढिमभिवृद्धिमुपागतां संपदं दृष्ट्वा पूर्वं क्षीरोदार्णवशायिनः पश्चात्प्रबुध्य व्यालतल्पतलस्थस्य तत्रापि पद्मासनबन्धेन स्थितस्य शङ्खचक्रगदापाणेर्विष्णोर्मनः स्वकल्पितेनातिभास्वता त्रैलोक्याब्जस्य महता अलिना भ्रमरभूतेन शरीरेण इदं वक्ष्यमाणप्रकारं कर्तव्यं संचिन्तयामासेति त्रयाणामन्वयः ॥ ४ ॥ ५ ॥ ॥ ६ ॥ पदं समाधिसाम्राज्यपदं तत्र विश्रान्ते ॥ ७ ॥ शममरागद्वेषताम् । न दृष्टान्यब्दपटलानि येषु तथाविधेषु अनावृष्टिकालेषु ॥८॥ ततः शमान्निर्गतद्वन्द्वं गतशीतोष्णादिद्वन्द्वोपप्लवमद्वितीयमिति वा । विरसा स्वर्गसुखाद्विरक्ता जलसेकशून्या च ॥९॥ द्वेष्याभावात्स्वर्गसुखे दुर्लभत्वादर्शनादुपेक्षापत्तेः स्वतः सात्त्विकत्वाच्च देवौघे शान्तिमायाते सति । 'मुक्तेश्च बिभ्यतो देवा मोहेनापि दधुर्नरान् । तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः । तस्मादेतेऽसुरा विघ्नमाचरन्ति शपन्ति च' । 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥' इत्यादिश्रुतिस्मृतिवार्तिकादिप्रसिद्धदेवसंदूषिताशयत्वासिद्धेर्मनुष्याणामपि शमादिप्रसङ्गे भुवि यज्ञतपःक्रिया अदेवत्वफलाः सत्यः शममुत्सादमेष्यन्तीत्यर्थः ॥ १० ॥ अस्तु क्रियोत्सादः का क्षतिस्तत्राह—**क्रियास्विति** । भूर्लोकग्रहणं कर्मभूमिपरम् । अस्तं वैयर्थ्यं तस्य नाशे वैयर्थ्ये कर्माधीनसंसारस्योच्छेदप्रसङ्ग इत्यर्थः ॥ ११ ॥ अस्त्वेवं किं ततस्ते क्षतं तत्राह—**आकल्पान्त**मिति ॥ १२ ॥ अस्मिन् आभोगे जगत्संस्थाने विलीय क्षयमागते सति स्वलीलायाः क्षयकारिणा मया किमुचितं कृतं भवति न किंचिदित्यर्थः ॥ १३ ॥ ततः स्वलीलाक्षयादहमपि लीलार्थस्य वपुषः प्रशममुपसंहारमाधाय संपाद्य अपुनःसंसारोद्भवाय तस्मिन्पूर्णात्मपदे स्थितिमेष्यामि प्राप्स्यामि । संभावनाधिकेऽपि भविष्यति लृडेव ॥ १४ ॥ एवमेवमुक्तनानाप्रकारभेदेन अकाण्डे अनवसरे जगत्युपशमं गते सति इह देवमनुष्यादिजीववर्गे श्रेयो न पश्यामीति न अपितु पश्याम्येव । 'वैराग्यात्प्रकृतौ लयः' इति स्मृतेः प्रकृतिलये सुषुप्ताविव सर्वदुःखोपशमलक्षणश्रेयःसिद्धेः किंतु 'तमेवैतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इत्यादिश्रुतिस्मृतिसिद्धानेकजन्मानुष्ठितनिष्कामकर्मसाध्यविविदिषातत्त्वसाक्षात्काराभावान्मूलाज्ञानावरणानिवृत्तेर्बीजे सति पुनरावृत्तिशङ्काप्रसक्तेश्च न निरतिशयानन्दावाप्तिलक्षणं श्रेयः कस्यचित्सिध्यतीति मन्ये । अतः क्रमेण सर्वेषां तल्लाभार्थं दानवा जीवन्त्वित्यर्थः ॥१५॥ तमेव क्रमं पुनः संक्षिप्याह—**दैत्येति** । विबुधा देवाः । ततस्तेभ्यो विबुधेभ्यः ॥ १६ ॥ यथावत् यथापूर्वम् । ऋतुर्वसन्तादिः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ गर्जन्वारिदः ॥ २१ ॥ जीवन्मुक्तानां यः सदातनः असंसक्तिलक्षणः समाधिस्तत्स्थः । मुक्तमनस्कारः मनस्तच्चेष्टारहितः । प्रतिबिम्बक्रियां स्वस्मिन् सन्निहितवस्तुप्रतिबिम्बधारणम् ॥२२॥ तत् प्रसिद्धम् । द्वन्द्वपदेन तत्क्रिया युद्धं लक्ष्यते ॥२३॥

सर्गक्षयोदयावेतौ सुसमौ मम यद्यपि ।
तथापीदं यथासंस्थं भवत्वन्येन किं मम ॥ २४
भावाभावेषु यत्तुल्यं तन्नाशे तत्स्थितौ च वा ।
यः प्रयत्नस्त्वबुद्धित्वात्तद्योगगमनं भवेत् ॥ २५
तस्मात्प्रयामि पातालं बोधयाम्यसुरेश्वरम् ।
स्थैर्यं यामि न संसारलीलां संपादयाम्यहम् ॥ २६
असुरपुरमवाप्य प्रोद्धताचारघोरं
कमलमिव विवस्वान्दैत्यमुद्बोधयामः ।
जगदिदमखिलं स्वस्थैर्यमभ्यानयामो
घनविधिरिव शैले चञ्चलं मेघजालम् ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे परमेश्वरवितर्को नामाष्टत्रिंशः सर्गः ॥ ३८ ॥

## एकोनचत्वारिंशः सर्गः ३९

श्रीवसिष्ठ उवाच ।
इति संचिन्त्य सर्वात्मा क्षीरोदादात्मकात्पुरात् ।
चचाल परिवारेण सह सानुरिवाचलः ॥ १
क्षीरोदतलरन्ध्रेण तेनैव स्तम्भिताम्भसा ।
प्रह्लादनगरं प्राप शक्रलोकमिवापरम् ॥ २
हेममन्दिरकोशस्थं ददर्शात्रासुरं हरिः ।
अथ शैलगुहालीनं समाधिस्थमिवाब्जजम् ॥ ३
तत्र ते तेजसा दैत्या वैष्णवेनावधूलिताः ।
दूरं ययुर्दिनेशांशुवित्रस्ता इव कौशिकाः ॥ ४
द्वित्रैः सहासुरैर्मुख्यैः परिवारयुतो हरिः ।
प्रविवेशासुरगृहं तारावानिव खं शशी ॥ ५
वैनतेयासनस्थोऽसौ लक्ष्मीविधुतचामरः ।
स्वायुधादिपरीवारो देवर्षिमुनिवन्दितः ॥ ६
महात्मन्संप्रबुध्यस्वेत्येवं विष्णुरुदाहरन् ।
पाञ्चजन्यं प्रदध्मौ च ध्वनयन्ककुभां गणम् ॥ ७
महता तेन शब्देन वैष्णवप्राणजन्मना ।
तुल्यकालपरिक्षुब्धकल्पाभ्रार्णवरंहसा ॥ ८
आसुरी जनता भूमौ पपातागतसंभ्रमा ।
मत्तलीलाभ्रनादेन राजहंसावली यथा ॥ ९
जहर्ष जनितानन्दा वैष्णवी गतसंभ्रमा ।
जनता जलदध्वानफुल्लेव कुटजावली ॥ १०
बभूव संप्रबुद्धात्मा दानवेशः शनैःशनैः ।
मेघावसर उत्फुल्लकदम्ब इव कानने ॥ ११
ब्रह्मरन्ध्रकृतोत्थाना प्राणशक्तिरथासुरम् ।
शनैराक्रमयामास गङ्गा सर्वमिवार्णवम् ॥ १२
क्षणादाक्रमयामास प्राणश्रीः सर्वतोऽसुरम् ।
उदयानन्तरं सौरी प्रभेव भुवनान्तरम् ॥ १३
प्राणेषु रन्ध्रनवके प्रवृत्तेष्वथ तस्य चित् ।
चेत्योन्मुखी बभूवान्तः प्राणदर्पणबिम्बिता ॥ १४
चेतनीयोन्मुखी चेत्यं चिन्मनस्तामुपाययौ ।
द्वित्वं मुकुरसंक्रान्ता मुखश्रीरिव राघव ॥ १५
किंचिदङ्कुरिते चित्ते नेत्रे विकसनोन्मुखे ।
शनैर्बभूवतुस्तस्य प्रातर्नीले यथोत्पले ॥ १६
प्राणापानपरामृष्टानाडीविवरसंविदः ।

---

सर्गस्य सृज्यस्य जगतः क्षयोदयौ । प्राक्तनसर्गसंस्थामनतिक्रम्येति यथासंस्थम् । पदार्थानतिवृत्तावव्ययीभावः ॥ २४ ॥ ननु योगनिद्रया स्वरूपसुखगमनं मुक्त्वा दैत्यपुरगमनं तवानुचितमित्याशङ्क्याह—**भावे**ति । अबुद्धित्वादभिनिवेशविरहाद्यो गमनादिप्रयत्नस्तद्योगगमनमेव भवेन्नान्यतो गमनम् । यतो यद्योगनिद्राप्राप्यं सुखं गमनयत्नादेर्भावाभावेषूत्पत्त्यनुत्पत्तिषु तन्नाशे तत्स्थितौ च सममित्यर्थः ॥ २५ ॥ गच्छन्नप्यहं स्थैर्यमचलत्वमेव यामि यतो नाज्ञवत्संसारलीलां संपादयामीत्यर्थः ॥ २६ ॥ प्रोद्धतानां निर्मर्यादानां दस्यूनामाचारेण घोरं भयानकमसुरपुरमवाप्य गत्वा विवस्वान्सूर्यः कमलमिव दैत्यं प्रह्लादं समाधेरुद्बोधयामः । तेन चेदमखिलं जगत्प्रागुक्तरीत्या स्थैर्यमभ्यानयामः । यथा घनान्विधत्ते इति घनविधिर्वर्षर्तुश्चञ्चलं मेघजालं शैले हिमवदादौ स्थैर्यमभ्यानयति तद्वदित्यर्थः ॥ २७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे परमेश्वरवितर्को नामाष्टत्रिंशः सर्गः ॥ ३८ ॥

हरिर्दैत्यपुरं गत्वा शङ्खनादप्रबोधितम् ।
प्रह्लादमवदद्राज्यमाकल्पं पाल्यतामिति ॥ १ ॥

क्षीरोदान्तर्गतश्वेतद्वीपान्तर्गतादात्मकादात्मीयात्पुरात् । परिवारेण सहेति शेषः । सानुः प्रस्थस्तेन सहितः अचलो मन्दर इव । अचलः परमार्थतश्चलनशून्य इति वा ॥ १ ॥ धातृसंकल्पादेव स्तम्भितं पातालकुहराप्रवेशि अम्भो यस्मिंस्तथाविधेन क्षीरोदस्य तलरन्ध्रेणाधश्छिद्रेण । शक्रलोकमिव रम्यमित्यर्थः ॥२॥ अथ अत्र प्रह्लादनगरे । असुरं प्रह्लादम् । शैलस्य मेरोर्गुहायां लीनमब्जजं ब्रह्माणमिव ॥ ३ ॥ अवधूलिताः धूलिवदवधूताः । कौशिका उलूकाः ॥ ४ ॥ ५ ॥ ६ ॥ ककुभां दिशाम् ॥ ७ ॥ प्राणो बलं तज्जन्मना । तुल्यकालपरिक्षुब्धानि प्रलयाभ्राणि प्रलयार्णवाश्च तद्रंहसा । रंहःशब्देन तत्प्रभवो ध्वनिर्लक्ष्यते ॥ ८ ॥ आगतसंभ्रमा प्रोद्भूतभयमूर्च्छा ॥ ९ ॥ १० ॥ दानवेशः प्रह्लादः ॥ ११ ॥ संप्रबोधक्रमं प्रपञ्चयति—**ब्रह्मरन्ध्रे**त्यादिना । आक्रमयामास आपूरयामास ॥ १२ ॥ १३ ॥ प्राणेषु इन्द्रियेषु । प्राणो लिङ्गदेहस्तल्लक्षणे दर्पणे बिम्बिता प्रतिफलिता ॥ १४ ॥ चेतनीयविषयोन्मुखी चित् चेत्याकारसंस्कारोद्बोधाच्चेत्यमिव भूत्वा चिज्जडोभयरूपतालक्षणां मनस्तामुपाययौ प्राप ॥ १५ ॥ तस्य नेत्रे शनैर्विकसनोन्मुखे बभूवतुः ॥ १६ ॥ प्राणापानाभ्यामन्तःप्रविष्टाभ्यां परामृष्टाया उद्बोधिताया आसमन्तान्नाडीविवरेषु संविदः

वातार्तस्येव पद्मस्य स्पन्दोऽस्य समजायत ॥ १७
निमेषान्तरमात्रेण मनः पीवरतां ययौ ।
तस्मिन्प्राणवशात्पूर्णे तरङ्ग इव वारिणि ॥ १८
अथासौ विकसन्नेत्रमनःप्राणवपुर्बभौ ।
अर्धोदित इवादित्ये सरः स्फुरितपङ्कजम् ॥ १९
अस्मिन्नवसरे यावद्बुध्यस्वेत्यवदद्विभुः ।
प्रबुद्धस्तावदेषोऽभूद्बर्ही घनरवादिव ॥ २०
प्रफुल्लनयनं जातमननं पीवरस्मृतिम् ।
उवाचैनं त्रिलोकेशः पुरा नाभ्यब्जजं यथा ॥ २१
साधो स्मर महालक्ष्मीमात्मीयां स्मर चाकृतिम् ।
अकाण्ड एव किं देहविरामः क्रियते त्वया ॥ २२
हेयोपादेयसंकल्पविहीनस्य शरीरगैः ।
भावाभावैस्तवार्थः किमुत्तिष्ठोत्तिष्ठ संप्रति ॥ २३
स्थातव्यमिह देहेन कल्पं यावदनेन ते ।
वयं हि नियतिं विद्मो यथाभूतामनिन्दिताम् ॥ २४
जीवन्मुक्तेन भवता राज्य एवेह तिष्ठता ।
क्षेपणीया गतोद्वेगमाकल्पान्तमियं तनुः ॥ २५
तन्वां कल्पान्तशीर्णायां खे महिम्नि त्वयानघ ।
वस्तव्यं स्फुटिते कुम्भे कुम्भाकाशेन खे यथा ॥ २६
कल्पान्तस्थायिनी शुद्धा दृष्टलोकपरावरा ।
इयं तव तनुर्जाता जीवन्मुक्तविलासिनी ॥ २७
नोदिता द्वादशादित्या न प्रलीनाः शिलोच्चयाः ।
न जगज्ज्वलितं साधो तनुं त्यजसि किं मुधा ॥ २८
वायुर्वहति नोन्मत्तस्त्रिलोकीभस्मधूसरः ।
लोलामरकपालाङ्कस्तनुं त्यजसि किं मुधा ॥ २९
अशोक इव मञ्जर्यः पुष्करावर्तविद्युतः ।
न स्फुरन्ति जगत्कोशे तनुं त्यजसि किं मुधा ॥ ३०
धरासाररणच्छैलाः प्रज्वलज्ज्वलनोज्ज्वलाः ।
ककुभो न विशीर्यन्ते तनुं त्यजसि किं मुधा ॥ ३१
न ब्रह्मविष्णुरुद्राख्यत्रयीशेषमिदं स्थितम् ।
जगज्जरठजीमूतं तनुं त्यजसि किं मुधा ॥ ३२
न चेहाद्रिदलश्रेणिमात्रैकानुमितान्तराः ।
दिशो जर्जरतां यातास्तनुं त्यजसि किं मुधा ॥ ३३
स्फुटदद्रीन्द्रटंकाराः कराः सौरा भ्रमन्ति खे ।
कल्पाभ्राणि न गर्जन्ति तनुं त्यजसि किं मुधा ॥ ३४
अहं भूतावकीर्णासु सालोकासु खगध्वजः ।
विहरामि दशाशासु मा देहमवधीरय ॥ ३५
इमे वयमिमे शैला भूतानीमान्ययं भवान् ।
इदं जगदिदं व्योम मा देहमवधीरय ॥ ३६
पीवराज्ञानयोगेन यस्य पर्याकुलं मनः ।
दुःखानि विनिकृन्तन्ति मरणं तस्य राजते ॥ ३७
कृशोऽतिदुःखी मूढोऽहमेताश्चान्याश्च भावनाः ।
मतिं यस्यावलुम्पन्ति मरणं तस्य राजते ॥ ३८
आशापाशनिबद्धोऽन्तरितश्चेतश्च नीयते ।
यो विलोलमनोवृत्त्या मरणं तस्य राजते ॥ ३९
यस्य तृष्णाः प्रभञ्जन्ति हृदयं हतभावनाः ।
प्ररोहमिव गर्धेभ्यो मरणं तस्य राजते ॥ ४०

---

संवेदनान्निमित्तात्। वातेनार्तस्य नुन्नस्य पद्मस्येव अस्य तद्देहस्य स्पन्द ईषच्चलनं समजायत ॥ १७ ॥ १८ ॥ १९ ॥ बर्ही मयूरः। घनरवान्मेघशब्दात् ॥ २० ॥ जातमननं संजातप्रह्लादाहंभावप्रत्यभिज्ञम्। पीवरी सम्यगुपचिता पूर्वावस्थादिस्मृतिर्यस्य तम् ॥ २१ ॥ महतीं लक्ष्मीं दैत्यराज्यश्रियमात्मीयां स्वीयामाकृतिं देहाकारं च स्मर। त्वया देहविस्मरणेनाऽकाण्डेऽनवसर एव देहस्य विरामोऽवसानं किं किमर्थं क्रियते ॥ २२ ॥ ननु 'न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः सर्वजनानां तथानुभवाच्चानर्थहेतुर्देहस्मरणमिति चेत्तत्राह—**हेयेति**। हेयोपादेयसकल्पत्यागे सत्यपि देहे प्रियाप्रियैर्भावाभावैस्तवार्थो नास्तीति नानर्थप्रसक्तिरित्यर्थः ॥ २३ ॥ कियत्कालं तर्हि देहधारणं तत्राह—**स्थातव्य**मिति। नियतिं त्वदायुर्नियमम् ॥ २४ ॥ क्षेपणीया व्यवहारे प्रेरणीया ॥ २५ ॥ कल्पान्ते तर्हि मया कथं स्थेयं तदाह—**तन्वा**मिति। खे महिम्नि स्वात्मभूते निरतिशयमहत्त्वे। खे महाकाशे ॥२६॥२७॥ तर्हि किं कल्पान्तः संनिहितो नेत्याह—**नोदिता** इत्यादिना ॥ २८ ॥ लोलान्यमराणां शिरःकपालान्यङ्कश्चिह्नं यस्य तथाविधः ॥ २९ ॥ पुष्करावर्ताख्येषु संवर्तमेघेषु विद्युतस्तडितो न स्फुरन्ति। इदानीमिति सर्वत्रानुषङ्गः ॥ ३० ॥ धराया भूमेर्दह्यमानाया आसमन्तात्सरणं सारः प्रकम्पस्तेन विदीर्यमाणत्वाद्रणन्तः शैला यासु। ककुभो दिशः। अमूर्तानां विशरणायोगाद्दिगन्तस्था ब्रह्माण्डभित्तयो गृह्यन्ते ॥ ३१ ॥ इदं जगत् जरठाः प्रवृद्धा जीमूताः प्रलयमेघा यस्मिंस्तथाविधं सत् ब्रह्मविष्णुरुद्राख्यदेवत्रयीमात्रशेषं भूत्वा न स्थितम् ॥ ३२ ॥ अद्रेर्लोकालोकाचलस्य भूपद्मदलप्रायैः शृङ्गैरनुमितमन्तरं भेदो यासां न सूर्योदयादिना तथाविधा दिशो ब्रह्माण्डभित्तयः ॥ ३३ ॥ स्फुटतो दीर्यमाणस्याद्रीन्द्रस्य मेरोरिव टंकारा ध्वनयो येषां सौरा द्वादशादित्यसंबन्धिनः कराः किरणा न भ्रमन्तीति नञनुषज्यते ॥ ३४ ॥ भूतावकीर्णाखण्डजादिचतुर्विधप्राणिव्याप्तासु। अहं विष्णुर्विहरामि। मा अवधीरय त्यज। तथा चेदानीं तव मरणं न शोभत इत्यर्थः ॥ ३५ ॥ ३६ ॥ कस्य तर्हि मरणमुचितं तमाह—**पीवरे**त्यादिना। यस्य मनः अज्ञानयोगेन दुःखानि विनिकृन्तन्ति तस्य मरणं राजते। 'अत्यन्तपीडितो जीवः स्थूलदेहं विमुञ्चति' इति स्मृतिसिद्धमरणहेतूपपत्तेरित्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ हतभावना अपहृतविवेकाङ्कुरास्तृष्णा यस्य हृदयं प्रभञ्जन्ति आमृद्नन्ति यथा महाफलं शाल्याद्यङ्कुरप्ररोहं गर्धेभ्यस्तदभिलाषि-

चित्तवृत्तिलता यस्य तालोत्तालमनोवने ।
फलिता सुखदुःखाभ्यां मरणं तस्य राजते ॥ ४१
रोमराजीलताजालं यस्येमं देहदुर्द्रुमम् ।
अनर्थौघो हरत्युच्चैर्मरणं तस्य राजते ॥ ४२
यस्य स्वदेहविपिनमाधिव्याधिदवाग्नयः ।
दहन्ति लीलाङ्गलतं मरणं तस्य राजते ॥ ४३
कामकोपात्मका यस्य स्फूर्जन्त्यजगरास्तनौ ।
अन्तःशुष्कद्रुमस्येव मरणं तस्य राजते ॥ ४४
योऽयं देहपरित्यागस्तल्लोके मरणं स्मृतम् ।
न सता नासता तेन कारणं वेद्यवेदनम् ॥ ४५
यस्य नोत्क्रामति मतिः स्वात्मतत्त्वावलोकनात् ।
यथार्थदर्शिनो ज्ञस्य जीवितं तस्य शोभते ॥ ४६
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
यः समः सर्वभावेषु जीवितं तस्य राजते ॥ ४७
योऽन्तःशीतलया बुद्ध्या रागद्वेषविमुक्तया ।
साक्षिवत्पश्यतीदं हि जीवितं तस्य राजते ॥ ४८
येन सम्यक्परिज्ञाय हेयोपादेयमुज्झता ।
चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥ ४९
अवस्तुसदृशे वस्तुन्यसक्तं कलनामले ।
येन लीनं कृतं चेतो जीवितं तस्य शोभते ॥ ५०
सत्यां दृष्टिमवष्टभ्य लीलयेयं जगत्क्रिया ।
क्रियतेऽवासनं येन जीवितं तस्य राजते ॥ ५१
नान्तस्तुष्यति नोद्वेगमेति यो विहरन्नपि ।
हेयोपादेयसंप्राप्तौ जीवितं तस्य शोभते ॥ ५२
शुद्धपक्षस्य शुद्धस्य हंसौघः सरसो यथा ।
यस्माद्गुणौघो निर्याति जीवितं तस्य शोभते ॥ ५३
यस्मिञ्श्रुतिपथं प्राप्ते दृष्टे स्मृतिमुपागते ।
आनन्दं यान्ति भूतानि जीवितं तस्य शोभते ॥ ५४
यस्योदयेषु हृदयेन[1] जनाम्बुजानि
जीवालिमन्ति सकलानि विलासवन्ति ।
तस्यैव भाति परिजीवितमक्षयेन्दो-
रापूर्णतेव दनुजेश्वर नेतरस्य ॥ ५५

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षो० उपशमप्रकरणे प्रह्लादनिर्वाणे नारायणवचनोपन्यासो नामैकोनचत्वारिंशः सर्गः ॥३९॥

---

## चत्वारिंशः सर्गः ४०

श्रीभगवानुवाच ।
स्थैर्यं देहस्य दृष्टस्य जीवितं प्रोच्यते जनैः ।
देहान्तरार्थं देहस्य संत्यागो मरणं स्मृतम् ॥ १

---

पश्वादिभ्यो मूढाः प्रभज्जन्ति तद्वत् ॥ ४० ॥ तालवृक्षवदुत्ताले रागाद्युच्छ्रायवति मनोलक्षणे वने ॥ ४१ ॥ रोमराज्येव लताजालं शाखासमूहो यास्मिंस्तथाविधं देहलक्षणं दुर्द्रुमं विषवृक्षं कामाद्यनर्थलक्षण ओघश्चण्डमारुतप्रवाहो हरति ॥ ४२ ॥ ॥ ४३ ॥ अन्तः कोटरान्तः ॥ ४४ ॥ मरणस्वरूपपर्यालोचनेऽपि तत्त्वज्ञस्य तन्न संभवतीत्याह—**योऽयमिति**। स्मृतं प्रसिद्धम्। तच्च तत्त्वविदो न सता आत्मना संपादयितुं शक्यं, नाप्यसता तेन देहेन संपादयितुं शक्यं, सदात्मनो निष्क्रियतया त्यागक्रियायोगात्। असङ्गस्य देहसङ्गाप्रसिद्धेश्च असता स्वपरित्यागस्य दूरनिरस्तत्वाच्च। ननु देहस्यासत्त्वे किं कारणं तदाह—**कारणमिति**। वेद्यस्य प्रमाणैरवश्यवेदनार्हस्य स्वात्मनो वेदनं ज्ञानमेव देहाद्यसत्त्वे कारणम्। देहादिसद्भावप्रत्ययस्याज्ञाननिबन्धनत्वादित्यर्थः ॥४५॥ कस्य तर्हि जीवितं शोभते तमाह—**यस्येत्यादिना** । तथाच न देहात्प्राणोत्क्रमणं किंत्वात्मतत्त्वान्मतेरुत्क्रमणमेव, तच्च ज्ञस्य नास्त्येवेति सदैव तस्य जीवितं शोभते । अज्ञस्य तु मतिः सदैव स्वात्मतत्त्वादुत्क्रामतीत्यसौ नित्यमृतस्वरूप इति भावः ॥ ४६ ॥ किंचैकदेहाभिमाने तत्त्यागो मरणं स्यात्, यस्य तु स नास्ति यस्य बुद्धिस्तदीयप्रियाप्रियैर्न लिप्यते स सर्वेषु भावेषु देहेषु विषयेषु च समः साधारणात्मा तस्य मरणासंभवाज्जीवितमेव राजते इत्यर्थः । एवमग्रेऽप्यूह्यम् ॥ ४७ ॥ ४८ ॥ सम्यगसारतया परिज्ञाय। चित्तस्यान्ते अवसानभूते साक्षिणि ॥ ४९ ॥ अवस्तु शुक्तिरजतादि तत्सदृशे वस्तुनि वस्तुवद्भासमाने बाह्यार्थकलनात्मकमले असक्तं चेतो ब्रह्मण्येव लीनं घृतकाठिन्यमिव विलीनं कृतमित्यर्थः ॥ ५० ॥ जगत्क्रिया जगतो व्यवहारः ॥ ५१ ॥ हेयस्य दुःखहेतोः संप्राप्तौ नोद्वेगमेति । उपादेयस्य सुखसाधनस्य प्राप्तौ नान्तस्तुष्यति ॥ ५२ ॥ शुद्धास्तत्त्वविद एव पक्षाः स्वीया यस्य स्वयं च शुद्धस्य । सरःपक्षे शुद्धाः शुभ्रा हंसा बकादयः पक्षा यस्य । स्वतःशुद्धस्य निर्मलस्य पवित्रस्य च । गुणाः शान्तिक्षमामाधुर्यादयः शैत्यसौरभ्यादयश्च ॥ ५३ ॥ श्रुती कर्णौ तत्पथम् ॥ ५४ ॥ यस्य उदयेषु संपत्सु उद्गमनेषु च जीवलक्षणभ्रमरवन्ति जनलक्षणान्यम्बुजानि कुमुदानि विलासवन्ति आनन्दितानि भवन्ति । अक्षयेन्दोः क्षयरोगनिर्मुक्तचन्द्रस्य आपूर्णतेव तस्यैव तत्त्वविदो जीवितं राजते नेतरस्याज्ञस्येत्यर्थः ॥५५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे नारायणवचनोपन्यासो नामैकोनचत्वारिंशः सर्गः ॥३९॥

सदेहोऽपि विदेहोऽत्र कूटस्थोऽपि क्रियापरः ।
यथा व्यवहरेज्ज्ञानी स क्रमो हरिणोच्यते ॥ १ ॥

जीवन्मुक्तस्यापि प्रह्लादस्य संनिधिमात्रेण राज्यपरिपालननिर्वाहोपायमुपदिदिक्षुर्भगवान्वासुदेवः सत्यपि देहे तस्य तत्संबन्धाभावात्प्रागुक्ते जीवितमरणे गौणे एव न मुख्ये इति वक्तुं जीवनमरणयोर्लोकप्रसिद्धं स्वरूपमाह—**स्थैर्यमिति** । देहान्तरार्थं पुनर्देहान्तरग्रहणाय पूर्वदेहस्य संत्याग उत्क्रम्य गमनं

[1] हृदयेषु इति पाठः।

द्वाभ्यां चैवासि पक्षाभ्यामाभ्यां मुक्तो महामते ।
किं ते मरणमस्तीह किं वा जीवितमस्ति ते ॥ २
निदर्शनार्थमेतत्तु मयोक्तमरिमर्दन ।
न त्वं जीवसि सर्वज्ञ म्रियसे न कदाचन ॥ ३
देहसंस्थोऽप्यदेहत्वाददेहोऽसि विदेहदृक् ।
व्योमसंस्थोऽप्यसक्तत्वादव्योमेव हि मारुतः ॥ ४
स्पर्शसंबोधकारित्वाद्देह एवास्ति सुव्रत ।
उत्सेधारोधकत्वेन खमुत्सेधस्य कारणम् ॥ ५
प्रबुद्धो ज्ञातवस्तुत्वाद्देहः क्व शमिनामिह ।
इदं त्वेकं परिच्छिन्नं रूपमज्ञेषु दुःस्थितम् ॥ ६
सर्वदा सर्वमेवासि चित्प्रकाशः परैकधीः ।
को देहः कोऽप्यदेहस्ते यं गृह्णासि जहासि च ॥ ७
समुदेतु वसन्तो वा वातु वा प्रलयानिलः ।
भावाभावविहीनस्य किमभ्यागतमात्मनः ॥ ८
प्रलुठत्स्वपि शैलेषु कल्पाग्निषु दहत्स्वपि ।
वहत्सूत्पातवातेषु स्वात्मन्येव हि तिष्ठति ॥ ९
सर्वभूतानि तिष्ठन्तु सर्वमेव प्रयातु वा ।
नश्यन्तु वाथ वर्धन्तामात्मन्येवाभितिष्ठति ॥ १०
क्षीयते न क्षयं प्राप्ते वर्धमाने न वर्धते ।
न स्पन्दते स्पन्दमाने देहेऽस्मिन्परमेश्वरः ॥ ११
देहस्याहमहं देहीति क्षीणे चित्तविभ्रमे ।
त्यजामि न त्यजामीति किं मुधा कलनोदिता ॥ १२
इदं कृत्वा करोमीदमिदं त्यक्त्वेदमित्यलम् ।
इति तत्त्वविदां तात संकल्पाः संक्षयं गताः ॥ १३
प्रबुद्धाः सर्वकर्तारः करिष्यन्तीह किंचन ।
न तस्याकरणे नित्यमकर्तृत्वपदं गताः ॥ १४
अकर्तृत्वादभोक्तृत्वमर्थादेव समागतम् ।
संगृहीतं किलानुप्तं केनेह भुवनत्रये ॥ १५
शान्ते कर्तृत्वभोक्तृत्वे शान्तिरेवेह शिष्यते ।
प्रौढिमभ्यागता सैव मुक्तिरित्युच्यते बुधैः ॥ १६
प्रबुद्धाश्चिन्मयाः शुद्धाः सर्वमाक्रम्य संस्थिताः ।
किं त्यक्तं परिगृह्णन्तु किं गृहीतं त्यजन्तु वा ॥ १७
ग्राह्यग्राहकसंबन्धप्रमितावयविक्रमैः ।
हीनः प्रमेयावयवैः किं गृह्णातु जहातु किम् ॥ १८
ग्राह्यग्राहकसंबन्धे क्षीणे शान्तिरुदेत्यलम् ।
स्थितिमभ्यागता शान्तिर्मोक्षनाम्नाभिधीयते ॥ १९
तत्र स्थिताः सदा शान्तास्त्वादृशाः पुरुषोत्तमाः ।
सुषुप्तावयवस्पन्दसाधर्म्येण चरन्ति हि ॥ २०

---

प्राणानां मरणं स्मृतम् । 'मृङ् प्राणत्यागे' इति धात्वर्थप्रसिद्धेरित्यर्थः ॥ १ ॥ द्वाभ्यां देहस्थैर्यप्राणोत्क्रमणपक्षाभ्याम् । अशरीरं शरीरेषु' 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति श्रुतेरिति भावः ॥ २ ॥ कथं तर्हि जीवितं तव शोभते मरणं न शोभते इति त्वयोक्तं तत्राह—**निदर्शनार्थ**मिति । ज्ञानाज्ञानगुणदोषप्रपञ्चनार्थमित्यर्थः ॥ ३ ॥ अदेहत्वे विदेहदृक् विगतदेहदृष्टिरिति हेतुः । असक्तत्वादासङ्गविरहात् ॥४॥ देहसंस्थत्वं कथं ज्ञायते तत्राह—**स्पर्शे**ति । देहे शीतोष्णादिस्पर्शसंवेदननिमित्तत्वादन्यत्र तददर्शनाद्देह एवास्ति भवानिति शेषः । त्वाचे स्पर्शसंवेदने कथमसङ्गात्मा कारणमिति तत्र दृष्टान्तमाह—**उत्सेधे**ति । यथा तरूत्सेधे अरोधकत्वात्खमुत्सेधकारणमित्युच्यते तद्वदित्यर्थः ॥५॥ अदेहत्वं तर्हि कथं तत्राह—**प्रबुद्ध** इति । त्वं ज्ञाततत्त्वत्वात्प्रबुद्धः प्रबोधे च सति शमिनां सर्वद्वैतोपशमवतां देहः क्व वर्तते । नहि स्वप्नोपशमे स्वाप्नदेहोऽस्ति । इदं त्वेकं परिच्छिन्नं देहरूपमज्ञेष्वप्रबोधवत्सु दुःस्थितमसंभाव्यमपि स्थितमित्यर्थः ॥६॥ यद्यज्ञोऽपि देहे स्थित्वा देही तर्ह्यहमपि देहे स्पर्शवेदनादिस्थितस्तद्वात्किं न स्यां तत्राह—**सर्वदे**ति । प्रकाशकत्वेन स्थितिः सर्वदा सर्ववस्तुष्वपि तुल्येति सर्वमेव त्वमसि नाज्ञवद्देहमात्रमित्यर्थः । एवंच तव कः पदार्थो देहः स्याद्यमहंबुद्ध्या गृह्णासि गृह्णीयाः । अदेहोऽपि कः स्याद्यमनहंबुद्ध्या जहासि त्यजेरित्यर्थः ॥ ७ ॥ ननु यदुपचयात्स्वस्य हर्षोपचयो यन्नाशनिमित्तदर्शनाच्च विषादः स देह इतरस्त्वदेह इति भेदः किं न स्यादिति चेन्न । तत्त्वविदो हर्षविषादहेत्वसंभवादित्याह—**समुदेत्वि**त्यादिना । भाव्यते प्रीत्या स्मर्यत इति भावः प्रियम् । न भाव्यते इत्यभावोऽप्रियं तदुभयविहीनस्येत्यर्थः ॥ ८ ॥ तिष्ठति तत्त्वज्ञ इति शेषः ॥ ९ ॥ १० ॥ ११ ॥ देहस्य संबन्धिन्यहमिति तादात्म्याध्यासलक्षणे देहीति तद्धर्मसंसर्गाध्यासलक्षणे च चित्तविभ्रमे क्षीणे सति मुधा निर्हेतुका निष्फला च त्यजामि न त्यजामीति कलना किमुदिता स्यात् । नैवोदेतीत्यर्थः ॥ १२ ॥ त्यक्त्वेदं त्यक्ष्यामीति शेषः ॥१३॥ सर्वकर्तारोऽपि किंचन किंचिदपि न करिष्यन्तीति पूर्वार्धे नञोऽन्वयः । तस्य कदाप्यकरणे नित्यमेव ते अकर्तृत्वपदं गतास्तिष्ठन्तीत्यर्थः ॥१४॥ तत्फलमाह—**अकर्तृत्वादि**ति । अनुप्तं वापादिना अनिष्पादितं व्रीह्यादि॥१५॥शान्तिर्निर्विक्षेपता । प्रौढिं कर्तृत्वमूलोच्छेदेन प्ररूढताम् ॥ १६ ॥ उक्तं व्यक्तमुपपादयति—**प्रबुद्धा** इत्यादिना । आक्रम्य परमार्थस्वरूपाविर्भावेण परिभूय त्यक्तं अप्राप्तं किं फलमैहिकं परिगृह्णन्तु ॥ १७ ॥ ग्राह्यग्राहकतत्संबन्धलक्षणैरज्ञदशाप्रमितक्रियाकारकसंबन्धघटितावान्तरवाक्यार्थलक्षणावयविक्रमैर्महावाक्यप्रमेयावयवैरङ्गप्रधानक्रियाकलापलक्षणविकारैर्हीनः कूटस्थात्मा तद्घटितसाङ्गप्रधानक्रियानिष्पादनसाध्यं पारलौकिकं स्वर्गादिफलं वा किं गृह्णातु किं जहात्वित्यर्थः ॥ १८ ॥ ऐहिकामुष्मिकेष्टानिष्टसाधनहानोपादाननिमित्तग्राह्यग्राहकसंबन्धोपशमे रागादिविक्षेपशान्तिरुदेति, सैव रागादिमूलोच्छेदेन स्थितिमभ्यागता मोक्षनाम्नोच्यत इत्युक्तोपपादनोपसंहारः ॥१९॥ एवं स्थितानामपि यावत्प्रारब्धक्षयं व्यवहारसिद्धौ दृष्टान्तमाह—**सुषुप्ते**ति । यथा सुषुप्ताः स्वाप्ययेन ब्रह्मप्राप्ता अपि प्राणोदरान्नरसादिस्पन्दं जीवनादृष्टात्मसंनिधिमात्रेणाचरन्तीत्युच्यते तद्वज्जीव-

---

१ त्वन्नि इति क्वचित्.

परावबोधविश्रान्तवासनो जगति स्थितिम् ।
अर्धसुप्त इवेहेमां त्वं पश्यात्मस्थया धिया ॥ २१
न रमन्ते हि रम्येषु स्वात्मन्येव गताशयाः ।
नोद्विजन्तेऽन्यदुःखेषु स्वात्मन्येकरसायनाः ॥ २२
नित्यप्रबुद्धा गृह्णन्ति कार्याणीमान्यसङ्गिनः ।
मुकुरा इव बिम्बानि यथाप्राप्तान्यवाञ्छया ॥ २३
जाग्रति स्वात्मनि स्वस्थाः सुप्ताः संसारसंस्थितौ ।
बालवत्प्रविवेपन्ते सुषुप्तसदृशाशयाः ॥ २४
त्वमजितपदवीमुपागतोऽन्तः
कमलजवासरमेकमेव भुक्त्वा ।
गुणगणकलितामिहैव लक्ष्मीं
व्रज परमास्पदमच्युतं महात्मन् ॥ २५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे प्रह्लादबोधनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

## एकचत्वारिंशः सर्गः ४१

श्रीवसिष्ठ उवाच ।
जगद्रत्नसमुद्गेन त्रैलोक्याद्भुतदर्शिना ।
इत्युक्ते पद्मनाभेन ज्योत्स्नाशीतलया गिरा ॥ १
प्रह्लादनामा देहोऽसौ विकाशिनयनाम्बुजः ।
मुदोवाच वचो धीरो गृहीतमननक्रमः ॥ २
प्रह्लाद उवाच ।
हिताहितविचारेण राजकार्यशतेन च ।
अस्म्यहं श्रमितो देव क्षणं विश्रामतां गतः ॥ ३
भगवंस्त्वत्प्रसादेन स्थितिः सम्यगथागता ।
समाधावसमाधौ च रूपेणाहं समः सदा ॥ ४
चिरमन्तर्महादेव दृष्टोऽस्यमलया धिया ।
पुनर्बहिरयं दृष्ट्या दिष्ट्या देव प्रदृश्यसे ॥ ५
अहमासमनन्तायामस्यां दृष्टौ महेश्वर ।
सर्वसंकल्पमुक्तायां व्योम व्योम्नीव निर्मले ॥ ६
न शोकेन न मोहेन न च वैराग्यचिन्तया ।
न देहत्यागकार्येण न संसारभयेन च ॥ ७
एकस्मिन्विद्यमाने हि कुतः शोकः कुतः क्षतिः ।
कुतो देहः क्व संसारः क्व स्थितिः क्व भयाभये ॥ ८
यथेच्छयैवामलया केवलं स्वयमुत्थया ।
एवमेवाहमवसं वितते पावने पदे ॥ ९
हा विरक्तोऽस्मि संसारं त्यजामीतीयमीश्वर ।
अप्रबुद्धदशां चिन्ता हर्षशोकविकारदा ॥ १०
देहाभावे न दुःखानि देहे दुःखानि मे मतिः ।
इति चिन्ताविषव्याली मूर्खमेवावलुम्पति ॥ ११

न्मुक्ता अपि चरन्ति । व्यवहरन्तीत्यर्थः ॥ २० ॥ तद्वत्त्वमपि राज्यपालनमाचरेत्याशयेनाह—**परावबोधे**ति । अर्धसुप्तः सुषुप्तजाग्रत्संधिस्थः ॥ २१ ॥ रम्येषु अनात्मस्विति शेषः । आत्मान्येषु आत्मास्पर्शिषु दुःखेषु । स्वात्मन्येव एकं रसायनमिव मधुरं सुखं येषाम् । तथाचोक्तं वार्तिके 'दुःखी यदि भवेत्साक्षी कः साक्षी दुःखितो भवेत् । दुःखिनः साक्षिता नास्ति साक्षिणो दुःखिता कुतः' इति ॥२२॥ सुखदुःखाभावे तत्प्राप्तिपरिहारार्थानि कार्याणि कथं गृह्णन्ति तत्राह—**नित्ये**ति । अवाञ्छया अनास्थया ॥ २३ ॥ तर्हि ते किं स्वात्मन्यप्यास्थाशून्या नेत्याह—**जाग्रती**ति । तथाच 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इति भगवतापि तेषामात्मास्था दर्शिता । प्रविवेपन्ते प्रकम्पन्ते । व्यवहरन्तीति यावत् ॥ २४ ॥ विवक्षितार्थं संक्षिप्योपसंहरति—**त्व**मिति । हे महात्मन्, त्वमन्तः अजितस्य विष्णोः पदवीं परमात्मपदं समागत प्राप्तवान्सन्नेकं कमलजवासरं कल्पपर्यन्तमिहैव पाताले गुणगणैः कलितां राज्यलक्ष्मीं भुक्त्वा अच्युतं विदेहकैवल्याख्यं च्युतिरहितं परमास्पदं परमपदं व्रजेत्यर्थः ॥२५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रह्लादबोधनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

गृहीतशासनाद्दैत्यात्पूजां संप्राप्य सानुगः ।
दैत्यराज्येऽभिषिच्यैनं वैरैरच्छन्दयद्धरिः ॥ १ ॥

प्रलये जगल्लक्षणानां रत्नानां स्वान्तः प्रवेशनात्समुद्गेन संपुटकेन सृष्टिकाले त्रैलोक्यलक्षणाद्भुतप्रदर्शनशीलेन पद्मनाभेन विष्णुदेहेन इति प्रागुक्तप्रकारेणोक्ते सति ॥ १ ॥ प्रह्लादनामा असौ प्रागुक्तो देहो गृहीतमननक्रमः सन् मुदा उवाच । देहग्रहणमात्मनि व्यवहर्तृतावारणार्थम् ॥२॥ असुराणां किं हितं देवानां किमहितमिति विचारेण श्रमितः श्रमं प्रापितः । क्षणमिति समाधौ कालदैर्घ्याप्रत्ययादुक्तम् ॥ ३ ॥ स्थितिस्तत्त्वबोधेन स्वरूपावस्थितिः । रूपेण पारमार्थिकस्वरूपेण । सदा समाध्यसमाध्योः सदेहविदेहमुक्त्योश्च ॥ ४ ॥ इमौ श्लोकौ क्वचिदेव पुस्तके दृश्येते । अन्तर्धिया अखण्डमानससाक्षात्कारवृत्त्या दृष्टोऽसि । बहिर्दृष्ट्या चक्षुषा दिष्ट्या भाग्यवशेन दृश्यसे ॥५॥ अस्यामान्तर्यां दृष्टौ ॥६॥ तत्र शोकमोहादिनिमित्तवशादहं समाधिं नाश्रितो येन मम देहत्यागप्रसक्तिः स्यादित्याह—**न शोकेने**ति ॥ ७ ॥ दृष्ट एव ते पितृराज्यादिनाशादिः शोकहेतुस्तं कथमपलपसि तत्राह—**एकस्मिन्नि**ति । सत्यमत्र दृष्टो नत्वद्वैतात्मनि स इति न तद्धेतुको मे समाधिरित्यर्थः ॥ ८ ॥ तर्हि समाधेस्ते को हेतुरिति चेद्विचारजा विश्रान्तीच्छैवेत्याह—**यथेच्छये**ति । एवमेव देहत्यागाद्यभिसन्धिं विनैव ॥ ९ ॥ नच वैराग्यचिन्तयेति वैराग्यापह्नवो न युक्तस्तस्य विचारपूर्वके समाधावनुकूलत्वादिति चेत्तत्राह—**हा विरक्त** इति ॥ १० ॥ वैराग्यस्य समाधिहेतुत्वे रागवद्देहस्यापि दुःखहेतुत्वानुभवात्त्यागस्यापि समाधिनिमित्तता स्यात् सोऽप्यतत्त्वविद एव

इदं सुखमिदं दुःखमिदं नास्तीदमस्ति मे ।
इति दोलायितं चेतो मूढमेव न पण्डितम् ॥ १२
अहमन्योऽन्य एवायमित्यज्ञानां तु वासना ।
दूरोदस्तात्मबुद्धीनां जयत्यसुमतामिह ॥ १३
इदं त्याज्यमिदं ग्राह्यमिति मिथ्या मनोभ्रमः ।
नोन्मत्ततां नयत्यन्तर्ज्ञमज्ञमिव दुर्धियः ॥ १४
सर्वस्मिन्नात्मनि तते त्वयि तामरसेक्षण ।
हेयोपादेयपक्षस्था द्वितीया कलना कुतः ॥ १५
विज्ञानाभासमखिलं जगत्सदसदुत्थितम् ।
किं हेयं किमुपादेयमिह यत्त्यज्यते न वा ॥ १६
केवलं स्वस्वभावेन द्रष्टृदृश्ये विचारयन् ।
क्षणं विश्रान्तवानन्तः परमात्मात्मनात्मनि ॥ १७
भावाभावविनिर्मुक्तो हेयोपादेयवर्जितः ।
एवमासमहं पूर्वमधुनेत्थं व्यवस्थितः ॥ १८
स मयात्मीयमापन्नं सर्वमात्मात्मतां गतः ।
करोम्यहं महादेव तुभ्यं यत्परिरोचते ॥ १९
त्वमयं पुण्डरीकाक्षः पूज्यस्तावज्जगत्त्रये ।
तन्मत्तः प्रकृतिप्राप्तां पूजामादातुमर्हसि ॥ २०
इत्युक्त्वा दानवाधीशः पुरः क्षीरोदशायिनः ।
शैलेन्द्र इव पूर्णेन्दुमर्घपात्रमुपाददे ॥ २१
सायुधं साप्सरोवृन्दं ससुरं सखगाधिपम् ।
पूजयामास गोविन्दं सत्रैलोक्यमथाग्रगम् ॥ २२
सबाह्याभ्यन्तरभ्रान्तभुवनं भुवनेश्वरम् ।
पूजयित्वाथ तिष्ठन्तमुवाच कमलापतिः ॥ २३

श्रीभगवानुवाच ।

उत्तिष्ठ दानवाधीश सिंहासनमुपाश्रय ।
यावदाश्वभिषेकं ते स्वयमेव ददाम्यहम् ॥ २४
पाञ्चजन्यरवं श्रुत्वा य इमे समुपागताः ।
सिद्धाः साध्याः सुरौघास्ते कुर्वन्तु तव मङ्गलम् ॥ २५
इत्युक्त्वा पुण्डरीकाक्षो दानवं सिंहविष्टरे ।
योजयामास योग्यं तं मेरुशृङ्ग इवाम्बुदम् ॥ २६
अथैनं हरिराहूतैः क्षीरोदाद्यैर्महाब्धिभिः ।
गङ्गादिभिः सरित्पूरैः सर्वतीर्थजलैस्तथा ॥ २७
सर्वविप्रर्षिसङ्घैश्च सर्वसिद्धगणैः सह ।
पुनर्विद्याधरयुतो लोकपालसमन्वितः ॥ २८
अभ्यषिञ्चदमेयात्मा दैत्यराज्ये महासुरम् ।
मरुद्गणैः स्तूयमानं पूर्वं स्वर्गे हरिं यथा ॥ २९
सुरासुरैः स्तूयमानं स्तूयमानः सुरासुरैः ।
अभिषिक्तमुवाचेदं प्रह्लादं मधुसूदनः ॥ ३०

श्रीभगवानुवाच ।

यावन्मेरुर्धरा यावद्यावच्चन्द्रार्कमण्डले ।
अखण्डितगुणश्लाघी तावद्राजा भवानघ ॥ ३१
इष्टानिष्टफलं त्यक्त्वा समदर्शनया धिया ।
वीतरागभयक्रोधो राज्यं समनुपालय ॥ ३२
राज्येऽस्मिन्भोगसंपूर्णे दृष्टानुत्तमभूमिना ।
न गन्तव्यस्त्वयोद्वेगः स्वर्गे मानवकेऽथवा ॥ ३३
देशकालक्रियाकारैर्यथाप्राप्तासु दृष्टिषु ।
प्रकृतं कार्यमातिष्ठ त्यक्त्वा मानसमास्स्व भो ॥ ३४

---

वाञ्छितो न ममेत्याह—**देहाभाव** इति ॥ ११ ॥ अतएव सुखलिप्सया दुःखनिवृत्तिलिप्सयापि वा न समाधिरित्याह—**इदमिति** । मूढमेव अवलुम्पतीत्यनुकृष्यते ॥ १२ ॥ तर्ह्यस्तु भेदवासनाक्षयेच्छया समाधिस्तत्राह—**अहमन्य** इति । दूरोदस्ता आत्मबुद्धिस्तत्त्वज्ञानं यैस्तेषामज्ञानामेव जयति न तत्त्वविदामित्यर्थः । असुमतां प्राणिनाम् ॥ १३ ॥ तर्हि संसारत्यागाय मोक्षग्रहणाय वा समाधिरस्त्विति चेत्तत्राप्याह—**इदमिति** । इति प्रसिद्धो दुर्धियः संबन्धी भ्रमः अज्ञमिव ज्ञं नोन्मत्ततां नयतीत्यन्वयः ॥ १४ ॥ तत्कुतस्तत्राह—**सर्वस्मिन्नि**त्यादिना ॥ १५ ॥ भ्रान्तिविज्ञाने शुक्तिरजतादिवदाभासते न परमार्थत इति विज्ञानाभासम् । सत आत्मनोऽसतो मायायाश्चान्योन्यतादात्म्याध्यासलक्षणान्मिथुनीकरणादुत्थितम् ॥ १६ ॥ अतएव मम तत्त्वविचारविश्रान्तिरेव समाधिः संपन्न इत्याह—**केवल**मिति ॥ १७ ॥ पूर्वं समाधिकाले । अधुना व्युत्थानकाले । इत्थं त्वदाज्ञप्तार्थोपादानयोग्यतया व्यवस्थितोऽस्मीत्यर्थः ॥ १८ ॥ स आत्मतां स्वस्वभावं गत आत्मा अहं मया आत्मीयं स्वकर्तव्यतां प्राप्तं सर्वं त्वदाज्ञप्तं कार्यं करोमि । किं स्वरापेण करिष्यसि, नेत्याह—**तुभ्य**मिति । त्वदिच्छानुवर्तितयेत्यर्थः ॥ १९ ॥ यथा त्वदाज्ञप्तं राज्यं नियतिप्राप्तमहमङ्गीकरोमि तथा त्वमपि मद्दत्तां पूजां सर्वेश्वरत्वात्तव नियतिप्राप्तां गृहाणेत्याह—**त्व**मिति । प्रकृतिः शास्त्रलोकप्रसिद्धा नियतिः ॥ २० ॥ शैलेन्द्र उदयाद्रिः ॥ २१ ॥ सत्रैलोक्यमुदरान्तःस्थितत्रैलोक्यसहितम् । अग्रगं पुरःस्थितम् ॥ २२ ॥ बाह्येषु रोमकूपादिषु आभ्यन्तरेषु बस्तिजठरहृदयादिषु च भ्रान्तानि परिवर्तमानानि भुवनानि यस्य तम् ॥ २३ ॥ २४ ॥ २५ ॥ सिंहविष्टरे सिंहासने ॥ २६ ॥ २७ ॥ पुनःशब्दस्वारस्यात्पूर्वं स्वयमेक एवाभ्यषिञ्चद्विद्याधरादिभिः सह पुनरुत्साहातिशयादभ्यषिञ्चदिति गम्यते ॥ २८ ॥ हरिमिन्द्रम् ॥ २९ ॥ ३० ॥ धरा पृथ्वी । धराः अन्ये पर्वताश्चेति वा ॥ ३१ ॥ ३२ ॥ दृष्टा अनुत्तमा निरतिशयानन्दभूमिर्येन तथाविधेन त्वया राज्ये उद्वेगः अरतिलक्षणो न गन्तव्यस्तथा पित्रादिवत्स्वर्गे देवलोके मानवे भूलोके च उद्वेगो न गन्तव्यो न गमयितव्यः ॥ ३३ ॥ यथाप्राप्तासु प्रजाशात्रवादिनिग्रहानुग्रहादिदृष्टिषु तत्तत्पुरुषानुरूपैर्देशकालक्रियाकारैः प्रकृतं प्रसज्जितं वधबन्धदण्डादिकार्यमातिष्ठ अनुतिष्ठ । मानसं रागादि-

अतिदेहतयेदंताममतापरिवर्जितम् ।
भावाभावे समं कार्यं कुर्वन्निह न बाध्यसे ॥ ३५
दृष्टसंसारपर्यायस्तुलितातुलतत्पदः ।
सर्वं सर्वत्र जानासि किमन्यदुपदिश्यते ॥ ३६
वीतरागभयक्रोधे त्वयि राजनि राजति ।
नेदानीं दुःखदुर्ग्रन्थिर्नासुरान्दलयिष्यति ॥ ३७
बाष्पश्रीर्नासुरीकर्णमञ्जरीः प्लावयिष्यति ।
वनराजिमिवोन्मत्ता सरित्तारतरङ्गिणी ॥ ३८
अद्यप्रभृत्यसंप्राप्तदानवामरसंगरम् ।
निर्मन्दराम्भोनिधिवज्जगत्स्वस्थमिव स्थितम् ॥ ३९
देवासुरकुटुम्बिन्यो भर्तृष्वन्तःपुरेषु च ।
स्वेष्वेव यान्तु विश्वासमपरस्परमाहृताः ॥ ४०
भवबहुलनिशानितान्तनिद्रा-
तिमिरमपास्य सदोदिताशयश्रीः ।
दनुसुत वनिताविलासरम्यां
चिरमजितामुपभुङ्क्ष्व राज्यलक्ष्मीम् ॥ ४१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे प्रह्लादाभिषेको नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः ४२

श्रीवसिष्ठ उवाच ।
इत्युक्त्वा पुण्डरीकाक्षः सनरामरकिन्नरः ।
द्वितीय इव संसारश्चचालासुरमन्दिरात् ॥ १
प्रह्लादादिविनिर्मुक्तैः पश्चात्पुष्पाञ्जलिव्रजैः ।
पूर्यमाणो विहङ्गेशपाश्चात्याङ्गरुहोत्करैः ॥ २
क्रमात्क्षीरोदमासाद्य विसृज्य सुरवाहिनीम् ।
भोगिभोगासने तस्थौ श्वेताब्ज इव षट्पदः ॥ ३
भोगिभोगासने विष्णुः शक्रः स्वर्गे सहामरैः ।
पाताले दानवाधीश इति तस्थुर्गतज्वराः ॥ ४
एषा ते कथिता राम निःशेषमलनाशिनी ।
प्राह्लादी बोधसंप्राप्तिरैन्दवद्रवशीतला ॥ ५
तां तु ये मानवा लोके बहुदुष्कृतिनोऽपि हि ।
धिया विचारयिष्यन्ति ते प्राप्स्यन्त्यचिरात्पदम् ॥ ६
सामान्येन विचारेण क्षयमायाति दुष्कृतम् ।
योगवाक्यविचारेण को न याति परं पदम् ॥ ७
अज्ञानमुच्यते पापं तद्विचारेण नश्यति ।
पापमूलच्छिदं तस्माद्विचारं न परित्यजेत् ॥ ८
इमां प्रह्लादसंसिद्धिं प्रविचारयतां नृणाम् ।
सप्तजन्मकृतं पापं क्षयमायात्यसंशयम् ॥ ९
श्रीराम उवाच ।
परे पदे परिणतं पाञ्चजन्यस्वनैर्मनः ।
कथं प्रबुद्धं भगवन्प्रह्लादस्य महात्मनः ॥ १०
श्रीवसिष्ठ उवाच ।
द्विविधा मुक्तता लोके संभवत्यनघाकृते ।
सदेहैका विदेहान्या विभागोऽयं तयोः शृणु ॥ ११
असंसक्तमतेर्यस्य त्यागादानेषु कर्मणाम् ।
नैषणा तत्स्थितिं विद्धि त्वं जीवन्मुक्ततामिह ॥ १२

---

वैषम्यं त्यक्त्वा आस्स्व ॥ ३४ ॥ अतिदेहतया देहातिरिक्तात्मभावेन । भावाभावे लाभालाभे ॥ ३५ ॥ व्यवहारे परमार्थे च त्वमेव निपुणोऽसीति नोपदेश्यं तवास्तीत्याह—**दृष्टेति** ॥ ३६ ॥ अनेन तव पूर्वमनोरथोऽपि सेत्स्यतीत्याह—**वीतेति** । दुःखदुर्ग्रन्थिरसुरेष्विदानीं न स्थास्यति देवस्वश्च स मद्द्वारा असुरान्न दलयिष्यतीत्यर्थः ॥ ३७ ॥ उन्मत्ता वर्षाभिवर्धिता सरिन्नदी । तारतरङ्गिणी बृहत्तरङ्गा ॥ ३८ ॥ जगत्स्वास्थ्यमपि सेत्स्यतीत्याह—**अद्येति** । निर्मन्दरो निर्गतमन्थाचलो योऽम्भोनिधिस्तद्वत् ॥ ३९ ॥ अपरस्परमाहृताः परस्परभर्तृभिरबन्दीकृताः ॥ ४० ॥ हे दनुसुत, त्वं बहुलनिशा कृष्णपक्षरात्रिस्तत्र्यत्यनितान्तनिद्रातिमिरप्रायमज्ञानान्धकारमपास्य सदा उदिता आशयश्रीः स्वप्रकाशब्रह्मात्मस्फूर्तिर्यस्य तथाविधः सन् वनितानाम् सुरस्त्रीणां संभजनीयशान्त्यादीनां च विलासैः रम्याम् । अजितां शत्रुभिः कामादिषड्वैश्चापराभूतां राज्यलक्ष्मीं स्वाराज्यलक्ष्मीं च चिरमुपभुङ्क्ष्वेत्याशीः ॥ ४१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रह्लादाभिषेको नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

विष्णोः क्षीरोदगमनमाख्यानफलमुत्तमम् ।
समाधिमुक्तव्युत्थाने हेतुश्चात्रोपवर्ण्यते ॥ १ ॥

सनरामरकिन्नरत्वादेव द्वितीयः संसार इव विस्तृतः । चचाल जगाम ॥ १ ॥ विहङ्गेशस्य गरुडस्य पाश्चात्येष्वङ्गरुहेषु उत्करवद्राशीभूतैः पुष्पाञ्जलिव्रजैः ॥ २ ॥ ३ ॥ ४ ॥ ऐन्दवो द्रवोऽमृतमिव शीतला ॥ ५ ॥ ६ ॥ दुष्कृतपदेन पापं तन्मूलमज्ञानं च ॥ ७ ॥ मयोक्तं न पापमेवेत्याह—**अज्ञानमिति** ॥ ८ ॥ सप्तजन्मकृतमित्यापातविचारफलमेतत् । ज्ञानफलपर्यन्तेन तु विचारेण प्रारब्धफलातिरिक्तसर्वपापक्षयः प्रसिद्ध एवेति ॥ ९ ॥ समाधिमुक्तस्य विदेहमुक्तेन सह विश्रान्तिसुखादिसाम्ये पुनर्व्युत्थानहेतुं जिज्ञासमानो रामः पृच्छति—**परे इति** । मनसो विलये पाञ्चजन्यस्वनश्रवणमपि दुर्लभमिति कथं तेन प्रबोध इति भावः ॥ १० ॥ प्रारब्धशेषोद्बोधितशुद्धवासनासहितभगवदिच्छैव तत्प्रबोधे हेतुरिति विशेषं वक्तुं सदेहविदेहमुक्ती विभज्य दर्शयति—**द्विविधेत्यादिना** । विभागो विभाजकलक्षणभेदः । अयं वक्ष्यमाणप्रकारः ॥ ११ ॥ कर्मणामिष्टानिष्टानां त्यागादानेषु विषयेषु एषणा रागो नास्ति ।

सैव देहक्षये राम पुनर्जननवर्जिता।
विदेहमुक्तता प्रोक्ता तत्स्था नायान्ति दृश्यताम् ॥ १३
भृष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिताः।
हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥ १४
पावनी परमोदारा शुद्धसत्त्वानुपातिनी।
आत्मध्यानमयी नित्यं सुषुप्तस्थेव तिष्ठति ॥ १५
अपि वर्षसहस्रान्ते तयैवान्तरवस्थया।
सति देहे प्रबुध्यन्ते जीवन्मुक्ता रघूद्वह ॥ १६
प्रह्लादोऽन्तस्थया शुद्धसत्त्ववासनया स्वया।
बोधमाप महाबाहो शङ्खशब्दावबुद्धया ॥ १७
हरिरात्मा हि भूतानां तस्य यत्प्रतिभासते।
तत्तथैव भवत्याशु सर्वमात्मैव कारणम् ॥ १८
प्रबोधमेतु प्रह्लादो यदैवेति विचिन्तितम्।
निमेषाद्वासुदेवेन तदैवैतदुपस्थितम् ॥ १९
आत्मन्यकारणेनैव भूतानां कारणेन च।
सृष्ट्यर्थं वपुरात्तं हि वासुदेवमयात्मना ॥ २०
आत्मावलोकनेनाशु माधवः परिदृश्यते।
माधवाराधनेनाशु स्वयमात्मावलोक्यते ॥ २१
एतां दृष्टिमवष्टभ्य राघवात्मावलोकने।
विहराशु विचारात्मा पदं प्राप्स्यसि शाश्वतम् ॥ २२
दुःखासारवती राम संसारप्रावृडातता।
जाड्यं ददाति परमं विचारार्कमपश्यताम् ॥ २३
प्रसादादात्मनो विष्णोर्मायेयमतिभासुरा।
प्रबाधते न धीरांस्तु यक्षी मन्त्रवतो यथा ॥ २४
आत्मेच्छयैव घनतां समुपागतान्त-
रात्मेच्छयैव तनुतामुपयाति काले।
संसारजालरचनेयमनन्तमाया-
ज्वालेह वातवलयादिव पावकस्य ॥ २५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो० उपशमप्रकरणे प्रह्लादव्यवस्था नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ४३

श्रीराम उवाच।
भगवन्सर्वधर्मज्ञ शुद्धैस्त्वद्वचनांशुभिः।
निर्वृताः स्म शशाङ्कस्य करैरोषधयो यथा ॥ १
कर्णाभिवाञ्छ्यमानानि पवित्राणि मृदूनि च।
सुखयन्ति गृहीतानि पुष्पाणीव वचांसि ते ॥ २
पौरुषेण प्रयत्नेन सर्वमासाद्यते यदि।
प्रह्लादस्तत्कथं बुद्धो न माधववरं विना ॥ ३

तस्य तां स्थितिं जीवन्मुक्ततां विद्धि ॥ १२ ॥ देहपदेन तद्धारणहेतुः प्रारब्धशेषो लक्ष्यते। तस्य भोगेन क्षये सतीत्यर्थः ॥ १३ ॥ भृष्टानि भर्जितानि बीजान्युपमा येषामिति पुनर्दृश्यतानवाप्तौ हेतुगर्भं विशेषणम्। जीवन्मुक्तेषु तु समाधिव्युत्थानेन पुनर्देहदृश्यतायां हेतुरस्तीत्याह—**हृदी**ति। शुद्धा आसङ्गमालिन्यनिर्मुक्ता ॥ १४ ॥ पावनी शुद्धब्रह्मात्मभावना पवित्रा परमोदारा तृष्णाकार्पण्यरहिता। अन्तःकरणस्य ब्रह्मणि लयेऽपि वासनास्थितौ दृष्टान्तमाह—**सुषुप्तस्थेवे**ति ॥ १५ ॥ देहपदेनात्रापि तद्धारणहेतुः प्रारब्धशेषो लक्ष्यते ॥१६॥ सैव प्रह्लादबोधेऽपि हेतुरित्याह—**प्रह्लाद** इति ॥ १७ ॥ लीने श्रोत्रे शङ्खशब्दस्याप्यग्रहात्तावन्मात्रेण कथं बोध इत्याशङ्कां परिहरन्नाह—**हरि**रिति। आत्मा कारणात्मा। सत्यसंकल्प इति यावत् ॥ १८ ॥ १९ ॥ अकारणेनैव शुद्धात्मना भूतानां कारणेनाव्याकृतेन चकारात्कामकर्मादिना च निमित्तेन आत्मन्येव जगत्सृष्ट्यर्थं वासुदेवमयात्मना वपुः शरीरमात्रं गृहीतम्। हिशब्दस्तथा श्रुतिस्मृतिपुराणप्रसिद्धिद्योतनार्थः ॥ २० ॥ अतएव तद्वपुर्दर्शने आत्मदर्शनं सिध्यत्यात्मदर्शने च तद्दर्शनं सुलभमित्याह—**आत्मे**ति ॥ २१ ॥ विहर यतस्व ॥ २२ ॥ दुःखान्येव आसारा धारासंपातास्तद्वती। जाड्यं मौर्ख्यं रोगं च ॥ २३ ॥ यक्षीग्रहणं सर्वपिशाचाद्युपलक्षणम्। मन्त्रवतो मन्त्रसिद्धान् ॥ २४ ॥ संसारजालरचनालक्षणा अनन्तस्य विष्णोरियं माया तस्यैवात्मन इच्छयैव घनतां देहादिघनानर्थभावं समुपागता। सा च निर्व्याजभक्तिप्रणिधानाद्याराधितस्य तस्यात्मन इच्छयैव विवेकविचारादिजन्मकाले तनुतां ह्रासमुपयाति। यथा पावकस्य ज्वाला वातवलयादेव घनतामुपयाति अन्ते च तद्वशादेव तनुतामुपयाति तद्वत्। अत ईश्वरप्रसादजनितविचारादिनैवावश्यं ज्ञानलाभ इत्याख्यानतात्पर्यमिति भावः। तथाच भगवतो बादरायणस्य सूत्रम् 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति। 'मत्तः स्मृतिर्ज्ञानमपोहनं च' इति भगवद्वचनं चेति भावः ॥ २५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रह्लादव्यवस्था नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

**ईशप्रसादलभ्येऽपि नेश्वरे दीयतां भरः।**
**पौरुषेणेन्द्रियाक्रान्त्या साध्यं ज्ञानमितीर्यते ॥ १ ॥**

निर्वृता आह्लादिताः स्म ॥ १ ॥ कर्णाभ्यां श्रवणायावर्तनाय चाभिवाञ्छ्यमानानि। पुष्पपक्षे गुरुदेवतादिप्रसादरूपतया पापापहारित्वात्पवित्राणि पुष्पाण्युत्पलादीनीव ॥ २ ॥ तर्हि प्रह्लादो माधवस्य वरं विनापि स्वपौरुषेणैव कथं न प्रबुद्धवान्। अतः स्वपौरुषादेव सर्वत्र ज्ञानलाभ इति प्रागुक्त-

१ जन्मान्तरेति पाठः।

श्रीवसिष्ठ उवाच ।

यद्यद्राघव संप्राप्तं प्रह्लादेन महात्मना ।
तत्तदासादितं तेन पौरुषादेव नान्यतः ॥ ४
आत्मा नारायणश्चैव न भिन्नास्तिलतैलवत् ।
तथैव शौक्ल्यपटवत्कुसुमामोदवत्तथा ॥ ५
यो हि विष्णुः स एवात्मा यो ह्यात्मासौ जनार्दनः ।
विष्ण्वात्मशब्दौ पर्यायौ यथा विटपिपादपौ ॥ ६
प्रह्लादनामा प्रथममात्मैव स्वयमात्मना ।
स्वयैव परया शक्त्या विष्णुभक्तौ नियोजितः ॥ ७
प्रह्लादो ह्यात्मनैवैनं वरमर्जितवान्स्वयम् ।
स्वयं विचारणं कृत्वा स्वयं विदितवान्मनः ॥ ८
कदाचिदात्मनैवात्मा स्वयं शक्त्या प्रबुध्यते ।
कदाचिद्विष्णुदेहेन भक्तिलभ्येन बोध्यते ॥ ९
चिरमाराधितोऽप्येष परमप्रीतिमानपि ।
नाविचारवतो ज्ञानं दातुं शक्नोति माधवः ॥ १०
मुख्यः पुरुषयत्नोत्थो विचारः स्वात्मदर्शने ।
गौणो वरादिको हेतुर्मुख्यहेतुपरो भव ॥ ११
पूर्वमेव बलात्तस्मादाक्रम्येन्द्रियपञ्चकम् ।
अभ्यसन्सर्वयत्नेन चित्तं कुरु विचारवत् ॥ १२
यद्यदासाद्यते किंचित्केनचित्क्वचिदेव हि ।
स्वशक्तिसंप्रवृत्त्या तल्लभ्यते नान्यतः क्वचित् ॥ १३
पौरुषं यत्नमाश्रित्य प्रोल्लङ्घ्येन्द्रियपर्वतम् ।
संसारजलधिं तीर्त्वा पारं गच्छ परं पदम् ॥ १४
विना पुरुषयत्नेन दृश्यते चेज्जनार्दनः ।
मृगपक्षिगणं कस्मात्तदासौ नोद्धरत्यजः ॥ १५
गुरुश्चेदुद्धरत्यज्ञमात्मीयात्पौरुषादृते ।
उष्ट्रं दान्तं बलीवर्दं तत्कस्मान्नोद्धरत्यसौ ॥ १६
न हरेर्न गुरोर्नार्थात्किंचिदासाद्यते महत् ।
आक्रान्तमनसः स्वस्माद्यदासादितमात्मनः ॥ १७
अभ्यासवैराग्ययुतादाक्रान्तेन्द्रियपन्नगात् ।
नात्मनः प्राप्यते यत्तत्प्राप्यते न जगत्त्रयात् ॥ १८
आराधयात्मनात्मानमात्मनात्मानमर्चय ।
आत्मनात्मानमालोक्य संतिष्ठस्वात्मनात्मनि ॥ १९
शास्त्रयत्नविचारेभ्यो मूर्खाणां प्रपलायिनाम् ।
कल्पिता वैष्णवी भक्तिः प्रवृत्त्यर्थं शुभस्थितौ ॥ २०
अभ्यासयत्नौ प्रथमं मुख्यो विधिरुदाहृतः ।
तदभावे तु गौणः स्यात्पूज्यपूजामयक्रमः ॥ २१
अस्ति चेदिन्द्रियाक्रान्तिः किं प्राप्यं पूजनैः फलम् ।
नास्ति चेदिन्द्रियाक्रान्तिः किं प्राप्यं पूजनैः फलम् ॥ २२
विचारोपशमाभ्यां हि न विनासाद्यते हरिः ।
विचारोपशमाभ्यां च मुक्तस्याब्जकरेण किम् ॥ २३

---

नियमभङ्ग इत्यर्थः ॥ ३ ॥ स्वपौरुषसाध्यायां पुरुषार्थसिद्धौ माधववरोऽपि द्वारविशेष एव न स्वतन्त्र इति नोक्तनियमभङ्ग इत्याशयेन संक्षिप्योत्तरमाह—**यद्यदिति** ॥ ४ ॥ अथवा विष्णोः प्रह्लादात्मभेदाभावात्तत्प्रयत्नप्राप्तो वरः प्रह्लादप्रयत्नादेवेति वात्र परिहारः सुलभ इत्याशयेनाह—**आत्मेत्यादिना** । यथा तिलान्तर्गतं ततो निःसारितं च तैलं न भिन्नं तद्वत् । नन्वेवं सति विकारिता स्यादिति दृष्टान्तान्तरमाह—**शौक्ल्यपटवदिति** । यथा कुसुमानां सार आमोदस्तद्वज्जीवानां परमार्थसारो विष्णुरिति वा अभेदो ज्ञेय इत्याह—**कुसुमेति** ॥ ५ ॥ अथवा कार्यकारणोपाधित्यागे परिशिष्टचिन्मात्रस्यात्यन्ताभेद एवेति लक्ष्यपरयोर्विष्ण्वात्मशब्दयोः पर्यायतैवेत्याह—**य** इति । विटपवत्त्वपादकरणकपानकर्तृत्वोपाधिभेदेऽप्यखण्डवृक्षस्वरूपे यथा विटपिपादपशब्दयोः पर्यायता तद्वदित्यर्थः ॥ ६ ॥ ॥ ७ ॥ आत्मना स्वात्मभूतेनैव विष्णुना स्वमनः स्वयमेव विचारणं कृत्वा स्वात्मानं स्वयमेव विदितवानित्यर्थः ॥ ८ ॥ शक्त्या स्वप्रयत्नकृतविचारबलेन । भक्तिलक्षणप्रयत्नलभ्येन विष्णुदेहद्वारेणेत्यर्थः ॥ ९ ॥ अन्वयेन दर्शितमर्थं व्यतिरेकस्यापि प्रदर्शनेन द्रढयति—**चिरमिति** ॥ १० ॥ आत्मावबोधपर्यन्तो विचारोऽस्त्विति वरं ददतो हरेः पुरुषप्रयत्नोत्थो विचार एव मुख्योऽभिमतो न वरः । अन्यथा ज्ञानमस्त्वित्येव वरदानप्रसङ्गादित्याशयेनाह—**मुख्य** इति ॥ ११ ॥ यद्विषयप्रयत्नाद्विचारोदयस्तं दर्शयति—**पूर्वमिति** । पञ्चकग्रहणं दशकोपलक्षणम् ॥ १२ ॥ स्वस्य शक्तिर्यत्नस्तत्प्रयुक्तया संप्रवृत्त्या शुभाचरणेन ॥ १३ ॥ १४ ॥ दृश्यते तत्त्वतः साक्षात्क्रियते । नोद्धरति नात्मतत्त्वं दर्शयति । आत्मदर्शनमेवोद्धार इत्याशयः ॥ १५ ॥ विनैव शिष्यप्रयत्नं शक्तिपातादिना गुरुस्तमुद्धरतीति योगशास्त्रादौ सिद्धमिति तत्रानैकान्त्यमाशङ्क्याह—**गुरुश्चेदिति** । गुरुभक्त्यादियत्न एव तत्रापि ज्ञानजनने गुर्वनुग्रहं द्वारीकरोतीति भावः ॥ १६ ॥ अर्थाद्धनात् । 'अमृतत्वस्य तु नाशास्ति वित्तेन' इति श्रुतेरिति भावः । आक्रान्तमनसो ज्ञानदार्ढ्येन बाधितमनसो यदात्मनः स्वस्मान्महत्परमपुरुषार्थरूपमासादितं तत् ॥ १७ ॥ यत्परमपुरुषार्थरूपम् ॥ १८ ॥ आराधय उत्कृष्टबुद्ध्या श्रवणादिना साधय सिद्धं च निरन्तरानुसंधानेनार्चय । आलोक्य तत्त्वतः साक्षात्कृत्य संतिष्ठस्व तत्रैव सम्यगवतिष्ठस्व । तद्भावान्न च्यवस्वेत्यर्थः ॥ १९ ॥ यदि स्वप्रयत्नजविचारादेव ज्ञानोदयस्तर्हि किमर्थं शास्त्रेषु विष्ण्वादिभक्तिविधानं तत्राह—**शास्त्रेति** । विषयासक्तिप्राबल्याद्ध्यात्मशास्त्रेभ्य इन्द्रियजयादियत्नेभ्यो विचारेभ्यश्च प्रपलायिनां दूरीभूतानां मूर्खाणां कथंचिच्छुभस्थितौ सन्मार्गे प्रवृत्त्यर्थमित्यर्थः ॥ २० ॥ उक्तमेवार्थमुपपत्तिभिर्द्रढयति—**अभ्यासेत्यादिना** ॥ २१ ॥ २२ ॥ आसाद्यते स्वात्मभावेन तत्त्वतो लभ्यते । हरिः पूर्णानन्दात्मा । विचारोपशमाभ्यामेव मुक्तस्य परमपुरुषार्थं प्राप्तस्याब्जकरेण हरिदेहेन किमधिकं प्राप्यमस्तीत्यर्थः । अथवा विचारोपशमाभ्यां मुक्तस्य रहितस्य विषयासक्तस्य अब्जकरेणेश्वरेणापि किं हितं कर्तुं शक्यमित्यर्थः ।

विचारोपशमोपेतं चित्तमाराधयात्मनः।
तस्मिन्सिद्धे भवान्सिद्धो नो चेत्त्वं वनगर्दभः॥ २४
क्रियते माधवादीनां प्रणयप्रार्थना स्वयम्।
तथैव क्रियते कस्मान्न स्वकस्यैव चेतसः॥ २५
सर्वस्यैव जनस्यास्य विष्णुरभ्यन्तरे स्थितः।
तं परित्यज्य ये यान्ति बहिर्विष्णुं नराधमाः॥ २६
हृद्गुहावासिचित्तत्त्वं मुख्यं सानातनं वपुः।
शङ्खचक्रगदाहस्तो गौण आकार आत्मनः॥ २७
यो हि मुख्यं परित्यज्य गौणं समनुधावति।
त्यक्त्वा रसायनं सिद्धं साध्यं संसाधयत्यसौ॥ २८
यस्तु भोः स्थितिमेवास्यामात्मज्ञानचमत्कृतौ।
नासादयति संमत्तमनाः स रघुनन्दन॥ २९
अप्राप्तात्मविवेकोऽन्तरज्ञचित्तवशीकृतः।
शङ्खचक्रगदापाणिमर्चयेत्परमेश्वरम्॥ ३०
तत्पूजनेन कष्टेन तपसा तस्य राघव।
काले निर्मलतामेति चित्तं वैराग्यकारिणा॥ ३१
नित्याभ्यासविवेकाभ्यां चित्तमाशु प्रसीदति।
आम्र एव दशामेति साहकारीं शनैः शनैः॥ ३२
एतदध्यात्मनैवात्मा फलमाप्नोति भावितम्।
हरिपूजाक्रमाख्येन निमित्तेनारिसूदन॥ ३३
वरमाप्नोति यो वापि विष्णोरमिततेजसः।
तेन स्वस्यैव तत्प्राप्तं फलमभ्यासशाखिनः॥ ३४
सर्वेषामुत्तमस्थानां सर्वासां चिरसंपदाम्।
स्वमनोनिग्रहो भूमिर्भूमिः सस्यश्रियामिव॥ ३५
अप्युर्वीखननोत्कस्य कर्षतोऽपि शिलोच्चयम्।
स्वमनोनिग्रहादन्यो नोपायोऽस्तीह कश्चन॥ ३६
तावज्जन्मसहस्राणि भ्रमन्ति भुवि मानवाः।
यावन्नोपशमं याति मनोमत्तमहार्णवः॥ ३७
ब्रह्मविष्ण्विन्द्ररुद्राद्याश्चिरसंपूजिता अपि।
उपप्लवान्मनोव्याधेर्न त्रायन्तेऽपि वत्सलाः॥ ३८
आकारभासुरं त्यक्त्वा बाह्यमान्तरमप्यजम्।
कुरु जन्मक्षयायाशु संविन्मात्रैकचिन्तनम्॥ ३९
संवेद्यनिर्मुक्तनिरामयैक-
संविन्मयास्वादमनन्तरूपम्।
सन्मात्रमास्वादय सर्वसारं
पारं परं प्राप्स्यसि जन्मनद्याः॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे प्रह्लादविश्रान्तिर्नाम त्रिचत्वारिंशः सर्गः॥ ४३॥

## चतुश्चत्वारिंशः सर्गः ४४

श्रीवसिष्ठ उवाच।
रामापर्यवसानेयं माया संसृतिनामिका।
आत्मचित्तजयेनैव क्षयमायाति नान्यथा॥ १

॥ २३॥ आराधय प्रसादय। सिद्धे प्रसन्ने सति भवानपि सिद्धः परमपुरुषार्थलक्षणां सिद्धिं प्राप्तः॥ २४॥ क्रियते यथेति शेषः॥२५॥ मनोभक्तिरेव मुख्या विष्णुभक्तिर्नतु बाह्येत्याह—सर्वस्येत्यादिना॥ २६॥ चिल्लक्षणं तत्त्वमबाधितं वस्तु सनातनमेव सानातनं शाश्वतं वपुः स्वरूपे। गौणो मायागुणकल्पित आगन्तुक इति यावत्॥ २७॥ रसायनममृतम्। साध्यमोदनादि संसाधयति कृष्यादिनोत्पादयति॥ २८॥ कस्तर्हि बाह्यविष्णुभक्तावधिकारी तमाह—यस्त्विति द्वाभ्याम्। य आत्मतत्त्वचमत्कृतौ स्थितिं नासादयत्येव स शङ्खचक्रगदापाणिं परमेश्वरमर्चयेदित्यन्वयः॥ २९॥ ३०॥ वैराग्यकारिणा तपसा॥ ३१॥ आशुग्रहणं प्रसादावश्यंभावद्योतनार्थम्। सहकारः पुष्पफलाद्यतिसौरभस्वाद्वावलक्षणां दशाम्॥ ३२॥ शास्त्रे हरिपूजाक्रमाख्येन निमित्तेन यत्फलं भाषितमेतदध्यात्मना स्वेनैव संकल्पितं प्राप्नोतीत्यर्थः॥ ३३॥ योऽपि विष्णोः सकाशाद्वरं प्राप्नोति तेनापि स्वस्य स्वीयस्यैवाभ्यासशाखिनः फलं प्राप्तं नाकस्मिकमित्यर्थः॥ ३४॥ उत्तमस्थानां प्रशस्तपुरुषार्थाभिनिवेशानां चिरसंपदां चिरभोग्यमन्वादिसंपदां च स्वमनोनिग्रह एव भूमिरुद्भवस्थानमित्यर्थः॥ ३५॥ उर्वीखननोत्कस्य सगरसुतादेः, शिलोच्चयं मन्थाचलं कर्षतो देवासुरादेरपि। निधिरत्नादिलाभायोर्वीखननाद्युत्कस्य वा। मनस ऐकाग्र्यं विना महाकार्यासिद्धेरित्याशयः॥ ३६॥ ३७॥ वत्सला दयावन्तोऽपि ब्रह्माद्या मनोव्याधेरुपप्लवान्न त्रायन्ते॥ ३८॥ बाह्यं बहिरिन्द्रियगम्यमान्तरमन्तःकरणगम्यं चाकारभासुरं विषयरूपं त्यक्त्वा अजं जन्मादिविक्रियाशून्यम्। संविन्मात्रस्यैकमखण्डाकारं चिन्तनं कुर्वित्यर्थः॥ ३९॥ उक्तमेव व्यक्तोक्त्योपसंहरति—संवेद्येति। हे राम, त्वं संवेद्यैर्बाह्यान्तरविषयैर्निर्मुक्तं यन्निरामयैकसंविन्मयं स्वयमेवास्वदते निरतिशयानन्दात्मना स्फुरति तथाविधं सन्मात्रं निरन्तरं तदाकारवृत्त्या आस्वादय। एवमास्वादयन् जन्मनद्याः परं पारं प्राप्स्यसीत्यर्थः॥ ४०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रह्लादविश्रान्तिर्नाम त्रिचत्वारिंशः सर्गः॥४३॥

मनोनैराश्यसिद्ध्यर्थं मृषा दुःखस्वरूपता।
इदयस्य विस्तरेणास्मिन्गाधयाख्याने प्रदर्श्यते॥ १॥
तत्र विष्णुवराद्गाधेर्जले मायानिरीक्षणे।
गृहे मृतस्य नीतस्य श्मशाने दाह ईर्यते॥ २॥

अपर्यवसाना अपरिमितभ्रान्तिहेतुरिति यावत्॥ १॥

१ स्वस्य इति पाठः।

जगन्मायाप्रपञ्चस्य वैचित्र्यप्रतिपत्तये ।
इतिहासमिमं वक्ष्ये शृणुष्वावहितोऽनघ ॥ २
अस्त्यस्मिन्वसुधापीठे कोसलो नाम मण्डलः ।
कल्पवृक्षवनं मेराविव रत्नगणाकरः ॥ ३
तत्राभूद्ब्राह्मणः कश्चिद्गुणी गाधिरिति श्रुतः ।
परमश्रोत्रियो धीमान्धर्मस्मूर्तिरिव स्थितः ॥ ४
आबाल्यात्प्रविरक्तेन चेतसा स व्यराजत ।
निष्कलङ्कावदातेन भुवनं नभसा यथा ॥ ५
किमप्यभिमतं कार्यं विनिधाय स्वचेतसि ।
बन्धुवृन्दाद्विनिष्क्रम्य तपस्तप्तुं वनं ययौ ॥ ६
उत्फुल्लकमलं प्राप सरस्तत्र स विप्रराट् ।
चन्द्रः प्रसन्नविमलं तारासारमिवाम्बरम् ॥ ७
आशौरिदर्शनं तस्मिंस्तपोर्थं सरसि द्विजः ।
आकण्ठमम्बुनिर्मग्नः प्रावृट्पद्म इवाविशत् ॥ ८
ययौ मासाष्टकं तस्य मग्नस्य सरसोऽम्भसि ।
वासपङ्कजसंकोचमनाग्भग्नमुखच्छवेः ॥ ९
अथैनं तपसा तप्तमाजगामैकदा हरिः ।
निदाघार्तं घनः श्यामः प्रावृषीव धरातलम् ॥ १०

श्रीभगवानुवाच ।

विप्रोत्तिष्ठ पयोमध्याद्गृहाणाभिमतं वरम् ।
अभीप्सितफलोपेतो जातस्ते नियमद्रुमः ॥ ११

ब्राह्मण उवाच ।

असंख्येयजगद्भूतहृत्पद्मकुहरालिने ।
जगत्त्रयैकनलिनीसरसे विष्णवे नमः ॥ १२
मायामिमां त्वद्रचितां भगवन्पारमात्मिकीम् ।
द्रष्टुमिच्छामि संसारनाम्नीमान्ध्यैककारिणीम् ॥ १३

श्रीवसिष्ठ उवाच ।

इमां द्रक्ष्यसि मायां त्वं ततस्त्यक्ष्यसि चेत्यजः ।
उक्त्वा ययावदृश्यत्वं गान्धर्वमिव पत्तनम् ॥ १४
गते विष्णौ समुत्तस्थौ जलात्स ब्राह्मणेश्वरः ।
शीतलामलमूर्तित्वादिन्दुः क्षीरोदकादिव ॥ १५
बभूव परितुष्टात्मा दर्शनेन जगत्पतेः ।
दर्शनस्पर्शनैरिन्दोरुत्फुल्लमिव कैरवम् ॥ १६
अथास्य कतिचित्तस्मिन्दिवसा निर्ययुर्वने ।
हरिसंदर्शनानन्दवतो ब्राह्मणकर्मणा ॥ १७
एकदाऽध्यवान्स्नानं सरस्युदितपङ्कजे ।
चिन्तयन्वैष्णवं वाक्यं महर्षिरिव मानसे ॥ १८
अथ स्नानविधावन्तर्जलमेष चकार ह ।
सकलाघविघातार्थं परिवर्तमिवात्मना ॥ १९
अन्तर्जलविधौ तस्मिन्विस्मृतध्यानमन्त्रधीः ।
पर्यस्तसंवित्प्रसरः सोऽपश्यज्जलमध्यतः ॥ २०
मृतमात्मानमात्मीये सदने शोच्यतां गतम् ।
पतितं वातवेगेन कन्दरान्तरिव द्रुमम् ॥ २१
प्राणापानप्रवाहेण मुक्तमन्तमुपागतम् ।
संशान्तावयवस्पन्दं निर्वात इव खण्डकम् ॥ २२
पाण्डुराननमाम्लानं वृक्षपर्णमिवारसम् ।
शवीभूतमिवाम्लानं छिन्ननालमिवाम्बुजम् ॥ २३
विपर्यस्तेक्षणं प्रातर्मग्नतारमिवाम्बरम् ।
सावग्रहमिव ग्रामं सर्वतः पांसुधूसरम् ॥ २४
बाष्पक्लिन्नमुखैर्दीनैः करुणाक्रन्दकारिभिः ।
आवृतं बन्धुभिः खिन्नैः कुररैरिव पादपम् ॥ २५
सेतुभङ्गगलद्वारिह्रियमाणमुखाब्जया ।
नलिन्या समधर्मिण्या भार्यया पादयोः श्रितम् ॥ २६
ताराक्रन्दरणद्रेफप्रलापालापलुब्धया ।

---

अवहितः सावधानचित्तः ॥ २ ॥ मण्डलो देशविशेषः । मेरौ कल्पवृक्षवनं नन्दनादीव ॥ ३ ॥ तत्र तस्मिन्मण्डले ॥ ४ ॥ निष्कलङ्कावदातेनेति नभसोऽपि विशेषणम् ॥ ५ ॥ कार्यं तपःप्रयोजनम् ॥ ६ ॥ तत्र वने । तारा अश्विन्याद्याः सारादर्शनीयतमा यस्मिन् ॥ ७ ॥ आशौरिदर्शनं विष्णुदर्शनपर्यन्तं तपोर्थं सरसि प्रावृटपद्म इव आकण्ठमम्बुनिर्मग्नः सन् आविशत् प्रविश्य स्थित इत्यर्थः ॥ ८ ॥ वासो निवासस्थानं तत्रत्यानां पङ्कजानां सूर्यवियोगेन संकोचे तत्संवासस्नेहान्मनाग्भग्ना मुखच्छविर्यस्य ॥ ९ ॥ श्याम इति हरेरपि विशेषणम् ॥ १० ॥ नियमद्रुमस्तपोवृक्षः । अभीप्सितेन फलेन उपेतः फलितो जात इत्यर्थः ॥ ११ ॥ असंख्येयानां जगति विद्यमानानां भूतानां प्राणिनां हृत्पद्मकुहरस्थाय श्यामत्वादलिने भृङ्गाय ॥ १२ ॥ पारमात्मिकीं परमात्मन्यध्यस्ताम् ॥ १३ ॥ मायादर्शनमात्रेण परमपुरुषार्थफलकस्य स्वाराधनतपसः सार्थक्यालाभात्ततस्त्यक्ष्यसि चेत्यप्रार्थितोऽपि भगवता द्वितीयो वरो दत्तः । अदृश्यत्वमन्तर्धानम् ॥ १४ ॥ १५ ॥ दर्शनस्पर्शनैरित्युक्तेः स्थावराणामपि चाक्षुषादिज्ञानमस्तीति गम्यते ॥ १६ ॥ ब्राह्मणकर्मणा तपःस्वाध्यायातिथिपूजनादिना ॥ १७ ॥ उदितपङ्कजे फुल्लपद्मे । यथा महर्षिर्योगबलेनातीतानागतं द्रष्टुं मानसे चिन्तयति तद्वत् ॥ १८ ॥ सकलाघविघातार्थमघमर्षणार्थमन्तर्जलं परिवर्तमावर्तमिव सकुशेन करेण चकारेत्यर्थः ॥ १९ ॥ अन्तर्जलं निमज्ज्य प्रणवादिमन्त्रस्मरणलक्षणे अघमर्षणविधौ पर्यस्तो विपरीतग्रहणोन्मुखः संवित्प्रसरो यस्य तथाविधः सन् ॥ २० ॥ कन्दरान्तर्दरीगर्भे पतितं द्रुममिव ॥ २१ ॥ मृतमित्यस्य विवरणं प्राणापानेति । निर्वातपतितं कदल्यादिखण्डकमिव ॥ २२ ॥ शवीभूतं । इवकारो मिथ्यात्वपरो नोपमार्थः ॥ २३ ॥ अवग्रहो वर्षप्रतिरोधस्तेनोद्वस्तं ग्राममिव ॥ २४ ॥ करुणया आक्रन्दो रोदनं तत्कारिभिः । कुररैः पक्षिविशेषैः ॥ २५ ॥ सेतुभङ्गाद्गलद्भिः प्रवहद्भिर्वारिभिर्ह्रियमाणं मुखमिव अब्जं यस्यास्तथाविधया नलिन्या कमलिन्या ॥ २६ ॥ तारेणोच्चतरेणाक्रन्देन रणन्तो रेफा द्विरेफा इव प्रलापे अनर्थ-

मात्रा गृहीतं चिबुके नवव्यञ्जनलाञ्छिते ॥ २७
अन्यैः पार्श्वगतैर्दीनैः स्रवदश्रुमुखैर्जनैः ।
श्रितं गलदवश्यायैः शुष्कपर्णैरिव द्रुमम् ॥ २८
वियोगभीत्या संयोगपरिहारपरैरिव ।
दूरं विप्रसृतैरङ्गैरनात्मीयैरिवावृतम् ॥ २९
परस्परमलग्नाभ्यामोष्ठाभ्यां दशनैः सितैः ।
सविरागमिवाम्लानैर्हसन्तं स्वात्मजीवितम् ॥ ३०
मौनध्यानमिवापन्नं पङ्कादिव विनिर्मितम् ।
अप्रबोधाय संसुप्तं विश्राम्यन्तमिवोच्चकैः ॥ ३१
बान्धवाक्रन्दसंरम्भकोलाहलगता गिरः ।
स्नेहभावविचारार्थं शृण्वन्तमिव यत्नतः ॥ ३२
अथ तत्कालकल्लोलप्रलापाकुलचेष्टितैः ।
सोरस्ताडनमूर्च्छोत्थनेत्रवारिवहाप्लुतैः ॥ ३३
क्रमेण स्वजनैः क्षुब्धैस्ताराक्रन्दादिघर्घरैः ।
निष्कालितममङ्गल्यमपुनर्दर्शनाय वै ॥ ३४
नीतं श्मशानं मांसान्त्रवसापङ्ककलङ्कितम् ।
शुष्काशुष्करसक्लिन्नं कंकालशतसंकुलम् ॥ ३५
गृध्राभ्रच्छन्नसूर्यांशुचिताज्वलननिस्तमः ।
शिवाशिवमुखज्वालाजालपल्लवितावनि ॥ ३६
वहद्रक्तसरित्स्नातमग्नकङ्कोग्रवायसम् ।
रक्तार्द्रतन्त्रीप्रसरजालाबद्धजरत्खगम् ॥ ३७
तत्र ते ज्वलने दीप्ते चक्रुस्तं भस्मसाच्छवम् ।
बान्धवाः सलिलापूरं समुद्रा इव वाडवे ॥ ३८
चितिश्चटचटास्फोटैः शवमाशु ददाह सा ।
शुष्केन्धनबहूच्छूनज्वालाजालजटावली ॥ ३९

अभ्युल्लसत्कटकटारवमुक्तगन्ध-
व्याप्ताम्बुवाहपटलोऽस्थिचयं हुताशः ।
दन्ती सरन्ध्रमिव वेणुवनं समन्ता-
दुद्भ्रान्तमेदुररसं दलयांचकार ॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते गाधिविनाशो नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः ४५

श्रीवसिष्ठ उवाच ।

अथापश्यदसौ गाधिः स्वाधिपीवरया धिया ।
अन्तर्जलस्थ एवान्तरात्मनात्मनि निर्मले ॥ १
भूतमण्डलपर्यन्तग्रामोपान्तनिवासिनाम् ।
श्वपचानां स्त्रिया गर्भे स्थितिमात्मानमाकुलम् ॥ २
गर्भवासभराक्रान्तं पीडितं पेलवाङ्गकम् ।
श्वपचीहृदये सुप्तं स्वविष्ठायामिवाकुलम् ॥ ३
शनैः पक्वतया काले प्रसूतं मेचकच्छविम् ।
श्वपच्या प्रावृषेवाब्दं श्याममावलितं मलैः ॥ ४
संपन्नं श्वपचागारे शिशुं श्वपचवल्लभम् ।
इतश्चेतश्च गच्छन्तमुत्पीडमिव यामुनम् ॥ ५
द्वादशाब्ददशां यातं संस्थितं षोडशाब्दिकम् ।
पीवरांसमुदाराङ्गं पयोदमिव मेदुरम् ॥ ६
सारमेयपरीवारं विहरन्तं वनाद्वनम् ।

---

कव्यक्तवाक्ये दीर्घस्वरालापे च लुब्धया आसक्तया । नवैर्व्यञ्जनैः श्मश्रुभिर्लाञ्छिते चिह्निते ॥ २७ ॥ श्रितं परिवेष्टितम् ॥ २८ ॥ 'संयोगा विप्रयोगान्ताः' इति न्यायप्रापितवियोगभीत्या संयोगपरिहारपरैरिवेत्युत्प्रेक्षा । अङ्गैर्हस्तपादादिभिः । अनात्मीयैरस्वीयैरस्वजनैरिव वेत्युपमा ॥ २९ ॥ आम्लानैरीषन्मलिनैर्दशनैः स्वात्मजीवितमेतावत्कालं वृथेति हसन्तं सविरागं विरक्तपुरुषमिव ॥ ३० ॥ मौनध्यानमित्याद्याश्चतस्र उत्प्रेक्षाः ॥ ३१ ॥ बान्धवेषु कस्याधिकः स्नेहः कस्याल्प इति तत्तदाशयविमर्शार्थं यत्नतोऽवहितमनस्कतया तूष्णीं तदाक्रन्दाञ्शृण्वन्तमिव ॥ ३२ ॥ अथ क्रमेण स्वजनैर्निष्कालितं गृहाद्बहिर्निष्कासितमिति परेणान्वयः ॥ ३३ ॥ ३४ ॥ मांसान्त्रेत्यादिजरत्खगमित्यन्तानि श्मशानविशेषणानि ॥ ३५ ॥ शिवानामशिवैर्मुखनिर्गतज्वालाजालैः पल्लवितेवावनिर्यस्य ॥ ३६ ॥ वहद्रक्तसरित्सु केचित्स्नाताः केचिन्मग्नाश्च कङ्का उग्रवायसाश्च यत्र । रक्तैरार्द्राणां तन्त्रीणां प्रसरलक्षणैर्जालैरानाय्यैराबद्धा जरत्खगा वृद्धपक्षिणो यत्र ॥ ३७ ॥ वाडवे वडवाग्नौ समुद्राः स्वसलिलापूरं यथा भस्मसाचक्रुस्तद्वत् ॥ ३८ ॥ शुष्कैरिन्धनैर्बहु उच्छ्रिता अभिवृद्धा ज्वालाजाललक्षणा जटावलिर्यस्याः सा चितिश्चिता चटचटाशब्दैस्तं शवमाशु ददाह ॥ ३९ ॥ अभ्युल्लसद्भिः कटकटारवैर्मुक्तैर्गन्धैश्च व्याप्तान्यम्बुवाहपटलानि येन तथाविधो हुताशोऽग्निः समन्तादुद्भ्रान्ता उद्गीर्णा मेदुरा उपचिता रसा यस्मात्तथाविधमस्थिचयं दन्ती सरन्ध्रं वेणुवनमिव दलयांचकार । विदलयामासेत्यर्थः ॥ ४० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे गाधिविनाशो नाम चतुश्चत्वारिंशः सर्ग. ॥ ४४ ॥

इहास्य पुल्कसीकुक्षौ जन्म कैरातकी स्थितिः ।
मृतबन्धोः कीरपुरे राज्यप्राप्तिश्च वर्ण्यते ॥ १ ॥

स्वस्याधिभिर्मानसदुःखैः पीवरया उपचितया । इत आरभ्य सर्वेषां कारकाणां विंशतितमश्लोकस्थे अपश्यदित्यत्र क्रमेणान्वयः ॥ १ ॥ भूतमण्डलाख्यो देशभेदस्तस्य पर्यन्तः सीमा तत्रत्यग्रामस्य उपान्ते संनिहितभूमौ निवासिनाम् ॥ २ ॥ गर्भवासपदेन तत्रत्यदुःखानि लक्ष्यन्ते तद्भरेणाक्रान्तम् । पीडितमित्यादिस्तस्यैव प्रपञ्चः ॥ ३ ॥ श्वपच्या काले प्रसूतम् । अब्दं मेघम् ॥ ४ ॥ यामुनं यमुनाप्रवाहपतितमुत्पीडमुत्तंसोत्पलमिव ॥ ५ ॥ ६ ॥ सारमेयाः श्वान एव मृगयाद्यर्थं परीवारो यस्य ।

निघ्नन्तं मृगलक्षाणि पौलिन्दीं स्थितिमागतम् ॥ ७
तमाललतयेवाथ श्रितं श्वपचकान्तया ।
स्तनस्तबकशालिन्या नवपल्लवहस्तया ॥ ८
श्यामया मलिनाकारदशनामलमालया ।
वनपल्लवया भूरिविलासवलिताङ्गया ॥ ९
विलसन्तं वनान्तेषु तया सह नवेष्टया ।
श्यामलं श्यामया भृङ्गं भृङ्ग्येव कुसुमर्द्धिषु ॥ १०
वनपर्णलतापत्रे वसन्तं व्यसनातुरम् ।
विन्ध्यकान्तारमाकारमभ्यागतमिवोद्भटम् ॥ ११
विश्रान्तं वनकुञ्जेषु सुप्तं गिरिदरीषु च ।
निलीनं पत्रपुञ्जेषु गुल्मकेषु कृतालयम् ॥ १२
किंकिरातावतंसाढ्यं यूथिकास्रग्विभूषितम् ।
केतकोत्तंससुभगं सहकारस्रगाकुलम् ॥ १३
लुलितं पुष्पशय्यासु श्रान्तमद्रितटीषु च ।
तज्ज्ञं काननकोशेषु बहुज्ञं मृगमारणे ॥ १४
प्रसूतमथ शैलेषु पुत्रान्निजकुलाङ्कुरान् ।
अत्यन्तविषमोदन्तान्खदिरः कण्टकानिव ॥ १५
कलत्रवन्तं संपन्नं स्थितं प्रक्षीणयौवनम् ।
शनैर्जर्जरतां यातं वृष्टिहीनमिव स्थलम् ॥ १६
ततो भूतग्रहग्रामजन्मदेशमुपेत्य तम् ।
संस्थितं मठिकां पर्णैः कृत्वा दूरे मुनीन्द्रवत् ॥ १७
जराजरठतां यातं स्वदेहसमपुत्रकम् ।
जीर्णप्रायरसश्वभ्रतमालतरुसंनिभम् ॥ १८
प्रौढं श्वपचगार्हस्थ्यं कुर्वाणं बहुबान्धवम् ।
क्रूरनामार्थवचनं परां वृद्धिमुपागतम् ॥ १९
अथापश्यदसौ गाधिर्यावत्तस्य कलत्रिणः ।
जरठः श्वपचेभ्यश्च स्वात्मनो भ्रमहारिणः ॥ २०
तत्कलत्रमशेषेण नीतमावृत्य मृत्युना ।
आसारसलिलेनाशु वनपर्णगणो यथा ॥ २१
प्रलपत्येक एवासावटव्यां दुःखकर्शितः ।
वियूथ इव सारङ्गो विगतास्थोऽश्रुलोचनः ॥ २२
दिनानि कतिचित्तत्र नीत्वा शोकपरीतधीः ।
जहौ स्वदेशं संशुष्कपद्मं सर इवाण्डजः ॥ २३
विजहार बहून्देशाननास्थश्चिन्तयान्वितः ।
प्रेर्यमाण इवान्येन वातनुन्न इवाम्बुदः ॥ २४
एकदा प्राप कीराणां मण्डले श्रीमतीं पुरीम् ।
खेचरो विहरञ्शून्ये सद्विमानमिवाम्बरे ॥ २५
नृत्यद्रत्नांशुकच्छन्नमार्गवृक्षलताङ्गनम् ।
आगुल्फाकीर्णकुसुमं चन्दनागुरुसुन्दरम् ॥ २६
सामन्तैर्ललनाभिश्च नागरैश्च निरन्तरम् ।
स्वर्गमार्गोपमं राजमार्गमध्यमवाप सः ॥ २७
मणिरत्नकृतागारं तत्र मङ्गलहस्तिनम् ।
ददर्शामरशैलेन्द्रमिव संचारचञ्चलम् ॥ २८
मृते राजनि राजार्थं विहरन्तमितस्ततः ।
रत्नज्ञमिव रत्नार्थं चिन्तामणिदिदृक्षया ॥ २९
तमसौ श्वपचो नागं कौतुकोद्धुरया दृशा ।
चिरमालोकयामास स्पन्दयुक्ताचलोपमम् ॥ ३०
आलोकयन्तमादाय तं करेण स वारणः ।
स्वकटेऽयोजयन्मेरुस्तटेऽर्कमिव सादरम् ॥ ३१
तस्मिन्कटगते नेदुर्जयदुन्दुभयोऽभितः ।

---

पौलिन्दीं कैरातीं स्थितिं वृत्तिम् ॥ ७ ॥ अथ श्वपचकन्यया श्रितम् । कृतोद्वाहमिति यावत् ॥ ८ ॥ दन्तधावनाभावान्मलिनाकारा स्वाभाविकशौक्ल्यादमला दशनमाला यस्यास्तया । वनपल्लवान् यान्त्यनुगच्छन्ति तथाविधैर्भूरिविलासैर्वलिताङ्गया । वनपल्लवशब्दे उपपदे यातेः क्विप् ॥ ९ ॥ नवत्वादेवेष्टया, नवं नित्याभिनवं यथा स्यात्तथा इष्टया वा । कुसुमर्द्धिषु पुष्पसमृद्धिमत्सु वनान्तेषु ॥ १० ॥ आकारमभ्यागतं गृहीतपुरुषाकारं विन्ध्यकान्तारमिवेत्युत्प्रेक्षा ॥ ११ ॥ ॥ १२ ॥ किंकिरातादिपदैस्तत्तन्मञ्जर्यो गृह्यन्ते ॥ १३ ॥ काननकोशेषु विषयेषु तज्ज्ञमसाधारणज्ञानवन्तमित्यर्थः । बहुज्ञं पण्डितम् ॥ १४ ॥ अत्यन्तं विषमाः श्रोतुमप्यशक्या उदन्ताश्चरित्राणि येषाम् ॥ १५ ॥ १६ ॥ भूतग्रहो भूतमण्डलाख्यो देशस्तदीयग्रामसंबन्धिनीं जन्मभूमिमुपेत्य दूरे तालादिपर्णैर्मठिकां कुटीं कृत्वा स्थितम् ॥ १७ ॥ स्वदेहसमप्रमाणाः पुत्रा यस्य । जीर्णप्राया रसा यस्य तथाविधेन श्वभ्रोत्पन्नतमालतरुणा संनिभं सदृशम् ॥ १८ ॥ क्रूराणि नामान्याख्या अर्थाः क्रियावचनानि च यस्य । परां कुटुम्बवृद्धिमुपागतं स्वं अपश्यदिति । एतदन्तानां सर्वविशेषणानां परेणान्वयः ॥ १९ ॥ अन्येभ्यः श्वपचेभ्यो जरठोऽसौ गाधिः । अथानन्तरं भ्रमहारिणः भ्रान्तिमेवानुवर्तमानस्य कलत्रिणः कुटुम्बिनः स्वात्मनः स्वस्य यावत्कलत्रं कुटुम्बमभूत्तन्मृत्युना आवृत्य अशेषेण निःशेषतया नीतमपश्यदिति द्वयोरन्वयः । यथा आसारसलिलेन वृष्टिजलप्रवाहेण वनपतितशुष्कपर्णगणो नीयते तद्वदित्यर्थः ॥ २० ॥ २१ ॥ अथासौ जरठ एक एव अटव्यां प्रलपति रोदिति ॥ २२ ॥ अण्डजो हंसादिः ॥ २३ ॥ अन्येन प्रेर्यमाणः पराधीन इव ॥ २४ ॥ कीराणां जानपदानामावासभूते मण्डले । शून्ये अम्बरे विहरन् संचरन् ॥ २५ ॥ नृत्यन्तो रत्नैरंशुकैश्च च्छन्ना मार्गस्था वृक्षा लता अङ्गनाश्च यस्मिंस्तथाविधं राजमार्गमध्यमवापेति परेणान्वयः ॥ २६ ॥ निरन्तरं निबिडितम् ॥ २७ ॥ मणिरत्नैर्मणिश्रेष्ठैः कृतागारं कृताश्रयं कृतजालकम् । शैलेन्द्रपक्षे कृतदेवसदनम् । अमरशैलेन्द्रं मेरुम् ॥ २८ ॥ इतस्ततो विहरन्तं संचरन्तम् । रत्नज्ञं रत्नपरीक्षाकुशलं पुरुषम् ॥ २९ ॥ असौ श्वपचः ॥ ३० ॥ स्वस्य कटे गण्डस्थले अयोजयत् आरोहयामास ॥ ३१ ॥ महान्तोऽर्णवाः

कल्पाम्बुद इवाकाशमधिरूढे महार्णवाः ॥ ३२
पूरिताशो बभौ राजा जयतीति जनस्वनः ।
उदभूत्संप्रबुद्धानां विहगानामिवारवः ॥ ३३
उदभूद्वन्दिवृन्दानां घनकोलाहलस्ततः ।
वेलाविलुलिताम्बूनामम्बुधीनामिव ध्वनिः ॥ ३४
तं तत्रावरयामासुर्मण्डनार्थं वराङ्गनाः ।
क्षीरोदगतविभ्रान्ता लहर्य इव मन्दरम् ॥ ३५
मानिन्यस्तं गुणप्रोतैर्नानारत्नैरपूरयन् ।
नानाप्रभाप्रभाताकां वेला इव तटाचलम् ॥ ३६
तुषारशिशिरस्पर्शैस्तास्तं हारैरभूषयन् ।
श्यामा वननदीपूरैर्वर्षाः शृङ्गमिवोत्तमम् ॥ ३७
विचित्रवर्णसौगन्ध्यैः पुष्पैरावलयन्स्त्रियः ।
वनं मधुश्रिय इव तं लोलकरपल्लवाः ॥ ३८
नानावर्णरसामोदैस्तास्तमाशु विलेपनैः ।
अलेपयन्प्रभाजालैर्नगोऽभ्रमिव धातुभिः ॥ ३९
रत्नकाञ्चनकान्तोऽसावाददे चित्तमाततम् ।
संध्याभ्रतारेन्दुनदीव्याप्तं मेरुरिवाम्बरम् ॥ ४०
भूषितः सविलासाभिर्बालवल्लीभिरावृतः ।
रत्नपुष्पांशुकाकीर्णः कल्पवृक्ष इवाबभौ ॥ ४१
तादृशं तमुपाजग्मुः परिवारसमन्विताः ।
सर्वाः प्रकृतयः फुल्लं मार्गद्रुममिवाध्वगाः ॥ ४२
ता एनमासने सैंहे तत्राभिषिषिचुः क्रमात् ।
तस्मिन्नेव गजे शक्रमैरावत इवामराः ॥ ४३
एवं स श्वपचो राज्यं प्राप कीरपुरान्तरे ।
आरण्यं हरिणं पुष्टमप्राणमिव वायसः ॥ ४४
कीरीकरतलाम्भोजप्रमृष्टचरणाम्बुजः ।
सर्वाङ्गे कुङ्कुमालेपैः संध्याम्बुधरशोभनः ॥ ४५
जज्वाल कीरनगरे नागरीगणवानसौ ।
सिंहीगणयुतः सिंहो यथा कुसुमिते वने ॥ ४६

हरिहतकरिकुम्भोन्मुक्तमुक्ताकलाप-
प्रविरचितशरीरः शान्तचिन्ताविषादः ।
अरमत सह सद्भिस्तत्र भोगैः सरस्यां
रविकरमदतप्तो वारिपूरैरिवेभः ॥ ४७
परिविसृतनृपौजाः सर्वदिक्संस्थिताज्ञः
कतिपयदिवसैहासिद्धदेशव्यवस्थः ।
प्रकृतिभिरलमूढाशेषराजन्यभारः
स गवल इति नाम्ना तत्र राजा बभूव ॥४८

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते श्वपचराज्यलाभो नाम पञ्चचत्वारिंशः सर्गः ॥४५॥

## षट्चत्वारिंशः सर्गः ४६

श्रीवसिष्ठ उवाच ।

विलासिनीभिर्वलितो मन्त्रिमण्डलपूजितः ।
वन्दितः सर्वसामन्तैश्छत्रचामरलालितः ॥ १
सिद्धानुशासनः कान्तो ज्ञातराज्यगुणक्रमः ।
वीतशोकभयायासप्रज्ञः[1] प्राप्तमहादशः ॥ २
विस्मृतात्मस्वभावोऽभूदनिशं स्तवमङ्गलैः ।
आनन्दपूर्णया वृत्त्या भृशं क्षीव इवासवैः ॥ ३
कीरेषु श्वपचो राज्यं वर्षाण्यष्टौ चकार ह ।
आर्यवृत्तमशेषेण तावत्कालं बभार ह ॥ ४

समुद्रा इव ॥ ३२ ॥ आशा दिशो मनोरथाश्च ॥ ३३ ॥ ३४ ॥ आवरयामासुः परिवव्रुः । क्षीरोदस्य गतेन मथनकृतक्षोभेण विभ्रान्ताः ॥ ३५ ॥ गुणेषु सूत्रेषु प्रोतैर्ग्रथितैर्मालाभूतैरिति यावत् । नानावर्णमणिषु प्रतिबिम्बनात्तत्तत्प्रभाभिः प्रभातोऽर्को यासु तथाविधाः वेलाः स्वतटस्थमचलं गिरिमिव ॥ ३६ ॥ श्यामाः युवत्यः । वर्षाः वृष्ट्यो वननदीनां पूरैस्तन्मध्यपतितं गिरिशृङ्गमिव ॥ ३७॥ ३८ ॥ नगो गिरिर्धातुभिर्लक्षणया धातुसंबन्धिभिः प्रभाजालैरभ्रमाकाशं मेघमिव वा ॥३९॥ रत्नकाञ्चनभूषणैः कान्तो भूषितोऽसौ राजा चित्तमाददे तासामिति शेषः ॥ ४० ॥ ४१ ॥ ४२ ॥ ताः प्रकृतयः सैंहे आसने उपवेश्य क्रमाद्ब्राह्मणादिवर्णक्रमादभिषिषिचुः । अभिषिच्य च तस्मिन्प्रागुक्ते गजे उपवेश्यानुजग्मुरिति शेषः ॥४३॥४४॥४५॥४६॥ हरिणा सिंहेन हृतादिदारितात्करिकुम्भादुन्मुक्तानां मुक्ताफलानां कलापैः प्रविरचितं भूषितं शरीरं यस्य । शान्ताः प्राक्तनचिन्ता विषादाश्च यस्य तथाविधः संस्तत्र नगरे सद्भिर्मन्त्रिपौरादिभिः सह भोगैररमत रेमे । यथा रविकरैर्मदेन च तप्त इभः सरस्यां वारिपूरै रमते तद्वत् ॥ ४७ ॥ परितो विसृतं प्रसृतं नृपौजो राजशक्तिर्यस्य । अतएव सर्वदिक्षु संस्थिता आज्ञा यस्य । कतिपयदिवसैरीहया स्वेच्छयैव सिद्धा राज्यव्यवस्था यस्य स श्वपचो गवल इत्यभिनवेन नाम्ना प्रसिद्धस्तत्र कीरदेशे राजा बभूवेत्यर्थः॥४८॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे श्वपचराज्यलाभो नाम पञ्चचत्वारिंशः सर्गः ॥४५॥

इह तं श्वपचाच्छुत्वा श्वपचं ज्वलनं जने ।
प्रविष्टे सोऽपि निर्दग्धः प्रबुद्धो गाधिरीर्यते ॥ १ ॥

विलासिनीभिर्वलित इत्यादिविशेषणः स विस्मृतात्मस्वभावोऽभूदिति तृतीयेनान्वयः ॥ १ ॥ सिद्धमप्रतिहतमनुशासनमाज्ञापनं यस्य । वीतशोकभयायासाः प्रजा यस्य ॥ २ ॥ क्षीबो मत्त इव ॥ ३ ॥ आर्यवृत्तं दयादाक्षिण्यशौचादि ॥ ४ ॥

[1] प्रजः इति साधीयानत्र.

यदृच्छयैकदाथासावतिष्ठत्त्यक्तभूषणः ।
अतमस्तारकेन्द्वर्कतेजोऽम्भोदमिवाम्बरम् ॥ ५
बह्वमन्यत नो हारकेयूरवलयान्यसौ ।
प्रभुतावृंहितं चेतो नाहार्यमभिनन्दति ॥ ६
एक एवाजिरं बाह्यं तादृग्वेषः स निर्ययौ ।
मुख्याङ्गणान्नभोभागादस्तं गच्छन्निवांशुमान् ॥ ७
तत्रापश्यद्घनं श्यामं पीनं श्वपचपेटकम् ।
गायन्मृदु वसन्तोत्थं कोकिलानामिव व्रजम् ॥ ८
धुनानं वल्लकीतन्त्रीं करपल्लवलीलया ।
मृदुरेफं रणद्रेफामलिश्रेणिमिव द्रुमम् ॥ ९
एकस्तस्मात्समुत्तस्थौ जरावान्रक्तलोचनः ।
काचशृङ्गहिमापूर्णमिव श्वपचनायकः ॥ १०
भो कटंजेति सहसा वदन्कीरमहीपतिम् ।
इह राजा भवन्तं वा कच्चिद्धेयक्रियाविदम् ॥ ११
रक्तकण्ठं मानयति रागवानिव कोकिलम् ।
आपूरयति वा कच्चिद्गृहवस्त्रासनार्पणैः ॥ १२
मधु रसालविटपं फलपुष्पभरैरिव ।
दर्शनेन तवाद्याहं परां निर्वृतिमागतः ॥ १३
पद्मं सूर्योदयेनेव चन्द्रोदय इवौषधी ।
आनन्दानामशेषाणां लाभानां महतामपि ॥ १४
विश्रामाणामनन्तानां सीमान्तो बन्धुदर्शनम् ।
श्वपचे प्रवदत्येवं राजा यावत्तया तया ।
चकार तत्कालजया चेष्टयैवावधीरणम् ॥ १५
तावद्वातायनगताः कान्ताः प्रकृतयस्तथा ।
श्वपचोऽयमिति ज्ञात्वा म्लानतामलमाययुः ॥ १६
पद्मास्तुषारप्रावृष्ट्या ग्रामाः सावग्रहा इव ।
दाववन्त इवाद्रीन्द्रा नागरा न विरेजिरे ॥ १७
नृपोऽवधीरयामास तां तां श्वपचसंकथाम् ।
वृक्षाग्रगतमार्जारफेत्कारं मृगराडिव ॥ १८
सत्वरं प्रविवेशान्तःपुरमाम्लानमानवम् ।
राजहंस इवावर्षे सीदत्सरसिजं सरः ॥ १९
सर्वावयवविश्रान्तां म्लानतामयमाययौ ।
जानुस्तम्भान्तरमहारन्ध्राग्निरिव दुर्द्रुमः ॥ २०
तत्रापश्यदसौ सर्वं विषण्णवदनं जनम् ।
जालं कुङ्कुमपुष्पाणां भुक्तमूलमिवाखुना ॥ २१
मन्त्रिणो नागरा नार्यस्ततस्ते तं महीपतिम् ।
नास्प्राक्षुरपि तिष्ठन्तं गृह एव शवं यथा ॥ २२
भृत्याश्चाकृतसत्कारं दूर एनमथात्यजन् ।
दुःखयुक्ता घनस्नेहा अपि बालाः शवं यथा ॥ २३
अनानन्दमुखं श्यामं शरीरं श्रीविवर्जितम् ।
दग्धं स्थलमिवैनं ते बह्वमन्यन्त नाकुलाः ॥ २४
धूमायमानदेहस्य परितापदशावती ।
नाढौकतास्य जनता पार्श्वमग्निर्गिरेरिव ॥ २५
मन्दोत्साहाः समुद्भूताः सभ्यसंघातवर्जिताः ।
न तदाज्ञाः पदं प्रापुर्भस्मनीवाम्बुविप्रुषः ॥ २६
क्रूरकर्मकराकारात्संगताशुभदायिनः ।
तस्माद्विशेषेण जना राक्षसादिव दुद्रुवुः ॥ २७
एक एव बभूवासौ जनमध्यगतोऽपि सन् ।
अर्थादिगुणनिर्मुक्तः परदेश इवाध्वगः ॥ २८
भृशमालपतेऽप्यस्मै नालापं नागरा ददुः ।

---

न विद्यन्ते तमस्तारकेन्द्वर्कतेजांस्यम्भोदाश्च यस्मिंस्तथाविधमम्बरमिव सर्वतो नीलः ॥ ५ ॥ किमर्थं त्यक्तभूषणस्तत्राह—बह्विति । प्रभुतया वृंहितमुपचितम् । आहार्यं कृत्रिमं भूषणादि नाभिनन्दति ॥ ६ ॥ आन्तरान्मुख्यजनाश्रितादङ्गणाद्बाह्यं नीचजनसाधारणमजिरमङ्गणं निर्ययौ । यथा अस्तं गच्छन्गमिष्यन्नंशुमान्मुख्याद्गगनाङ्गणात्प्रान्तनभोभागं निर्याति तद्वत् ॥ ७ ॥ श्वपचानां पेटकं संघम् । मृदु मधुरं गायत् ॥ ८ ॥ वल्लक्या वीणायास्तन्त्रीं गुणम् । मृदुरेफं मृदुस्वरम् । द्रुमं धुनानां कम्पयन्तीम् । रणन्तो रेफाः पक्षा यस्यास्तथाविधामलिश्रेणिं भ्रमरपङ्क्तिमिव ॥ ९ ॥ हिमैरापूर्णं काचमयं गिरेः शृङ्गमिव स्थितः श्यामो धूलिधूसर इति यावत् ॥ १० ॥ कटंजेति पूर्वनाम्ना वदन् संबोधयन् ॥ ११ ॥ रक्तकण्ठं मधुरकण्ठध्वनिम् । मानयति बहुमन्यते किम् । रागवान् स्वरवित् कान्ताद्यनुरागवान्वा । गृहस्य वस्त्रासनानां चार्पणैर्दानैः ॥ १२ ॥ मधुर्वसन्तः । रलोपे दीर्घः । निर्वृतिं सुखम् ॥ १३ ॥ १४ ॥ सीमान्तः परमावधिः । 'सीमन्तः केशवेशे' इत्युक्तेः पररूपाभावः । अवधीरणं तिरस्कारं तद्व्याजेन गूहनमिति यावत् ॥ १५ ॥ अलमत्यन्तम् । म्लानतां क्षीणहर्षताम् ॥ १६ ॥ तुषारैः प्राति पूरयतीति तया तुषारप्रावृष्ट्या । इवेत्यत्रापि संबध्यते । 'प्रा पूरणे' इत्यस्मात्क्विपि तृतीयैकवचने 'आतो धातोः' इत्यालोपः । सावग्रहा अनावृष्टिपीडिताः दवे भवो दावोऽग्निस्तद्वन्त इव ॥ १७ ॥ अवधीरयामास निर्भर्त्सयामास । संकथां संभाषाम् ॥ १८ ॥ सीदत्सरसिजं शुष्यत्पङ्कजम् ॥ १९ ॥ सर्वेष्ववयवेषु विश्रान्तां व्याप्ताम् । जान्विव स्तभ्नाति विष्टभ्नोतीति जानुस्तम्भो मूलभागस्तदन्तरालस्थे महारन्ध्रे कोटरे अग्निर्यस्य । दुर्द्रुमः शाल्मल्यादिः ॥ २० ॥ जालपदेन पुष्पजालास्पदं गुल्मं गृह्यते । आखुना मूषकेण भुक्तमूलं खण्डितमूलम् ॥ २१ ॥ गृहे एव तिष्ठन्तमपि नास्प्राक्षुर्न स्पृष्टवन्तः ॥ २२ ॥ २३ ॥ दग्धं स्थलं श्मशानदेशमिव ॥ २४ ॥ जनता जनसमूहोऽस्य पार्श्वं नाढौकत नासर्पत । गिरेः पार्श्वं वप्रशिलाभागमग्निरिव ॥ २५ ॥ स आज्ञाशक्त्या तां कुतो न वशीचकार तत्राह—**मन्दोत्साहा** इति । सभ्यैर्भटादिसंघातैश्च वर्जिता उपेक्षितास्तदाज्ञाः पदं विषयमाज्ञापनयोग्यं पुरुषं न प्रापुः ॥ २६ ॥ संगतेन अशुभस्य पापस्य वधादेश्च दायिनः । राक्षसादिव सीता इति शेषः ॥ २७ ॥ अर्था धनानि । आदिपदात्स्वजनसुहृदादयो गृह्यन्ते ॥ २८ ॥ वेणूनामपि मुक्ताकरत्वान्मुक्ताजाल-

१ मुख्यं इति क्वचिन्न पठ्यते.

मुक्ताजालयुतायापि कीचकायाध्वगा इव ॥ २९
अथ सर्वे वयं दीर्घकालं श्वपचदूषिताः ।
प्रायश्चित्तैर्न शुद्ध्यामः प्रविशामो हुताशनम् ॥ ३०
इति निर्णीय नगरे नागरा मन्त्रिणस्तथा ।
अभितो ज्वालयामासुश्चिताः शुष्केन्धनैधिताः ॥ ३१
ज्वलितास्वभितस्तासु तारकास्विव खे तदा ।
बभूव नगरं सर्वमाक्रन्दपरमानवम् ॥ ३२
करुणारावमुखरैः कलत्रैर्बाष्पवर्षिभिः ।
अवष्टब्धं ज्वलत्कुण्डोपान्तमन्दरुदत्प्रजम् ॥ ३३
अग्निकुण्डप्रविष्टानां मन्त्रिणां भृत्यरोदनैः ।
रुदत्क्रन्ददृढतरमरण्यमिव मारुतैः ॥ ३४
चितादीपितविप्रेन्द्रमांसमांसलगन्धया ।
जातनीहारमुत्पातवात्ययावकरोद्धतैः ॥ ३५
वातदीर्घवसागन्धदूरानीतखगोर्जितैः ।
चक्रैर्व्योमाभवच्छन्नभास्करं जलदैरिव ॥ ३६
वातोद्धूतचितावह्निप्रज्वलद्व्योममण्डलम् ।
उड्डीनाग्निकणव्राततारासारदिगन्तरम् ॥ ३७
प्रमत्ततस्करक्रन्दद्वेल्लद्बालकुमारकम् ।
संत्रस्तनागरापास्तजीविताख्यमसंस्थिति ॥ ३८
अलक्षितगृहं चौरलुण्ठिताखिलसंचयम् ।
त्यक्तपुत्रकलत्रं तन्मरणव्यग्रनागरम् ॥ ३९
तस्मिंस्तथा वर्तमाने कष्टे विधिविपर्यये ।
अशेषजनताशेषकल्पान्तसदृशस्थितौ ॥ ४०
राज्यसज्जनसंपर्कपवित्रीकृतधीरधीः ।
गवलश्चिन्तयामास शोकेनाकुलचेतनः ॥ ४१
मदर्थे हि कदर्थोऽयं देशेऽस्मिन्स्थितिमागतः ।
अकालकल्पान्तमयः सर्वनायकनाशनः ॥ ४२
किं मे जीवितदुःखेन मरणं मे महोत्सवः ।
लोकनिन्द्यस्य दुर्जन्तोर्जीवितान्मरणं वरम् ॥ ४३
इति निश्चित्य गवलो ज्वलिते ज्वलने पुनः ।
पतङ्गवदनुद्वेगमकरोदाहुतिं वपुः ॥ ४४
तस्मिन्बलाद्गवलनाम्नि हुताशराशौ
देहे पतत्यवयवाकुलतां प्रयाते ।
स्वाङ्गावदाहदहनस्फुरणानुरोधा-
दन्तर्जले झटिति बोधमवाप गाधिः ॥ ४५

श्रीवाल्मीकिरुवाच ।

इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमितो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ४६

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० उपशमप्रकरणे गाधिवृत्तान्ते राज्यभ्रंशो नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## ॥ द्वादशो दिवसः ॥

## सप्तचत्वारिंशः सर्गः ४७

श्रीवसिष्ठ उवाच ।

मुहूर्तद्वितयेनाथ गाधिराधिभवभ्रमात् ।
प्रशशामाकुलीभावो वेलावर्त इवाम्बुधेः ॥ १
मनोनिर्माणसंमोहात्तस्मात्स विरराम ह ।
कल्पान्तसमये ब्रह्मा जगद्विरचनादिव ॥ २

युताय वायुना कूजते कीचकाय वेणुजातिभेदाय ॥ २९ ॥ ॥ ३० ॥ शुष्कैरिन्धनैरेधिता वर्धिताः ॥ ३१ ॥ तारकास्विव ज्वलितासु दीप्यमानासु सतीषु । अकर्मकत्वात्कर्तरि क्तः । नगरपदेन तत्स्था जना लक्ष्यन्ते ॥ ३२ ॥ तदेव नगरं वर्णयति—**करुणेत्याद्यष्टभिः**। अवष्टब्धं कराद्यवलम्बेन विष्टब्धम्। ज्वलतां कुण्डानामुपान्ते मन्दा व्यामूढा रुदन्तश्च प्रजा यत्र ॥ ३३ ॥ रुदत् अश्रून्विमुञ्चत् । क्रन्दत् आक्रुशदिति भेदः । मारुतैः सावश्यायझञ्झानिलैः ॥ ३४ ॥ चितास्वादीपितानां विप्रेन्द्राणां मांसैर्मांसल उपचितो गन्धो यस्यास्तया वात्यया अवकरेभ्य उत्करेभ्य उत्थितै रजोभिर्जातनीहारमुद्धूतमिहिकमिव स्थितम् ॥ ३५ ॥ वातेन दीर्घैर्दूरप्रसृतैर्वसागन्धैर्दूरादानीतैः खगैः पक्षिभिः पिशाचादिभिश्चोर्जितैस्तेषां चक्रैर्मण्डलैर्जलदैरछन्नभास्करं व्योमेव नगरमभवत् ॥ ३६ ॥ ३७ ॥ पुनः कीदृशं तदभवत्तदाह—**प्रमत्तेति**। प्रमत्तैरुद्धतैस्तस्करैर्भूषणाद्यपहारकाले क्रन्दन्तो वेल्लन्तः कम्पन्तो बालाः कुमारा इत्यर्थो-

श्च यत्र । संत्रस्तैर्नागरैरपास्तं त्यक्तं जीवितं आख्या स्वनाम च यत्र । असंस्थिति निर्मर्यादम् ॥ ३८ ॥ मरणाय व्यग्रास्त्वरमाणा नागरा यत्र तथाविधमभवदित्यनुषज्यते ॥ ३९ ॥ ॥ ४० ॥ ४१ ॥ अयं कदर्थोऽनर्थः ॥ ४२ ॥ ४३ ॥ वपुः स्वशरीरं ज्वलितेऽनले आहुतिमकरोत् ॥ ४४ ॥ तस्मिन् गवलनाम्नि देहे निर्वेदबलाद्धुताशराशौ पतति सति स्वाङ्गानां हस्तपादादीनामवदाहे दहने यानि स्फुरणानि संचलनानि तदनुरोधादघमर्षणं कुर्वन्गाधिरन्तर्जले झटिति बोधमवापेत्यर्थः ॥ ४५ ॥ ॥४६॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे राज्यभ्रंशो नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गाधिः स्वमतिथेः श्रुत्वा तत्कीरनृपचेष्टितम् ।
गत्वा दृष्ट्वा मुहुः पृष्ट्वा विस्मितोऽभूदितीर्यते ॥ १ ॥

आधिरूपात्प्रागुक्तभवभ्रमात्प्रशशाम । आकुलीभवत्यस्मिन्नित्याकुलीभावः । अधिकरणे घञ् । वेलासन्निहित आवर्त इव ॥१॥२॥

१ [illegible]ति पाठः.

बोधमाप शनैः शान्तः स्वमेवोन्निद्रधीरिव ।
क्षीबतायां प्रशान्तायां यथा परिणताशयः ॥ ३
अयं सोऽहमिदं कार्यमिदं नेति ददर्श ह ।
निशाव्यपगमे लोको यथा क्षीणे तमःपटे ॥ ४
स्मृतस्वरूपोऽथ पदमुद्दध्रे स जलान्तरात् ।
शिशिरान्ते प्रवृत्तास्यं सरोजमिव माधवः ॥ ५
एतद्वारिककुब्व्योमवतीं वसुमतीमिमाम् ।
अन्यामिव पुनः पश्यन्विस्मयं परमं ययौ ॥ ६
कोऽहं किमिव पश्यामि किमकार्षमहं किल ।
एवं विचारयंश्चित्रं सभ्रूभङ्गमभूत्क्षणम् ॥ ७
श्रान्तस्तत्क्षणमात्रेण संभ्रमं दृष्टवानहम् ।
इति विज्ञाय सलिलादुदस्थादुदयार्कवत् ॥ ८
चिन्तयामास च तदा क्व सा माता क्व सा प्रिया ।
यदाहं मृतिमायातो मध्ये मातृमहेलयोः ॥ ९
बालस्य मातापितरौ नष्टौ किल ममामतेः ।
वातनीतस्य पत्रस्य वल्लीवृक्षमिवासिना ॥ १०
अविवाहोऽस्मि जानामि न स्वरूपमपि स्त्रियः ।
दुष्टायाः क्षोभकारिण्या मदिराया इव द्विजः ॥ ११
अतिदूरतरीभूताः स्वदेशस्य स्वबान्धवाः ।
के नाम मम येषां ते मध्ये जीवं त्यजाम्यहम् ॥ १२
तस्मादेतत्समुद्भूतमहं किं नाम दृष्टवान् ।
विविधारम्भसंरम्भं गन्धर्वनगरं यथा ॥ १३
तदास्तामेतदेषा हि बन्धुमध्ये मृतस्थितिः ।
मायामोहे मनागस्मिन्न सत्यमुपलभ्यते ॥ १४
नित्यमेवमनन्तासु भ्रान्तिदृष्टिषु देहिनाम् ।
चेतो भ्रमति शार्दूलो वनराजिष्विवोन्मदः ॥ १५
अवधार्येति तं चित्ते मोहं गाधिर्निनाय सः ।
दिनानि कतिचित्तस्मिन्स्वक एवाश्रमे तदा ॥ १६
एकदा गाधिमगमत्कश्चित्तत्र प्रियोऽतिथिः ।
ब्रह्माणमिव दुर्वासाः स विशश्राम सश्रमः ॥ १७
परमां तुष्टिमानीतः फलपुष्परसाशनैः ।
सोऽतिथिर्गाधिना तेन वसन्तेनेव पादपः ॥ १८
मिथो वन्दितसंध्यौ तौ कृतजाप्यावुभावपि ।
क्रमाच्छयनमासाद्य तस्थतुर्मृदुपल्लवम् ॥ १९
ततः प्रावर्तते[1] शान्ता तयोस्तापसयोः कथा ।
स्वव्यापारोचिता पुष्पश्रीरिवर्तुत्वमाशयोः ॥ २०
तं पप्रच्छातिथिं गाधिः प्रसङ्गपतितं वचः ।
किं ब्रह्मन्सुकृशाङ्गस्त्वं किमिति श्रमवानसि ॥ २१

अतिथिरुवाच ।

ममातिकार्श्यश्रमयोर्भगवन् शृणु कारणम् ।
कथयामि तथाभूतं वयं नासत्यवादिनः ॥ २२
अस्त्यस्मिन्वसुधापीठे उत्तराशानिकुञ्जके ।
कीरो नामातिविख्यातः श्रीमाञ्जनपदो महान् ॥ २३
तत्राहमवसं मासं पूज्यमानः पुरे जनैः ।
नानात्मस्वादलोलात्मा चित्तवेतालमोहितः ॥ २४
एकदैकेन तत्रोक्तं कथाप्रस्तावतः क्वचित् ।
इहाभूच्छ्वपचो राजा वर्षाण्यष्टौ द्विजेति मे ॥ २५
ततो ग्रामेषु तत्पृष्टैः प्रोक्तं सकलजन्तुभिः ।
राजा बभूव श्वपचो वर्षाण्यष्टाविहेति तैः ॥ २६
सोऽगमन्ते परिज्ञातः प्रविष्टो ज्वलनं जवात् ।
ततो द्विजशतानीह प्रविष्टानि हुताशनम् ॥ २७
इति तेषां मुखाच्छ्रुत्वा तस्मान्निर्गत्य मण्डलात् ।

---

स्वं प्राक्तनगाध्यहंभावलक्षणं बोधमाप । उन्निद्रा व्यपेतनिद्रा धीर्यस्य स इव । क्षीबतायां मदिरादिमदे । परिणताशयः स्वच्छचित्तः ॥ ३ ॥ यो जले स्नानायावतीर्णः सोऽयं गाधिरहम् । स्नानशेषतर्पणादिकृत्यं मे कार्यम् । इदं प्राग्दृष्टचण्डालराज्यादि न कार्यम् । लोको जनो यथा पश्यति तद्वत् ॥ ४ ॥ पदं पादमुद्दध्रे उद्धृतवान् । शिशिरान्ते शीतापगमे प्रवृत्तास्यं संजातमुकुलमुखम् । माधवो वसन्तः ॥ ५ ॥ एषा चासौ वारिककुब्व्योमवती चेति वा एतैः परिदृश्यमानैर्वार्यादिभिस्तद्वतीमिति वा विग्रहः ॥ ६ ॥ सभ्रूभङ्गं एवमन्तर्विचारयन्नभूत् ॥७॥ तस्मात्तस्माच्छ्रान्तिवशात् क्षणमात्रेण । संभ्रमं महाभ्रमम् । उदस्थात् । लुङि 'गातिस्था' इति सिचो लुक् । उदयो गिरिः कालो वा तत्रत्यार्कवत् ॥ ८ ॥ चिन्ताप्रकारमेव दर्शयति—क्केत्यादिना । महिलाशब्दस्यैव महेलेति च्छान्दसो गुणः ॥९॥ अमतेः अप्रौढचित्तावस्थस्य । वातनीतस्य पत्रस्य पर्णस्य मातापितृस्थानीयं वल्लीवृक्षं असिनेव मृत्युना नष्टौ ॥ १० ॥ द्विजो विप्रो मदिरायाः स्वरूपं रसमिव ॥ ११ ॥ स्वदेशस्य जन्मभूमेः । स्वा बान्धवाः ज्ञातयः । येषां मध्ये अहं जीवं त्यजामि मरणं दृष्टवानस्मि ते के नामेति संबन्धः ॥ १२ ॥ विविधं आरभ्यत इत्यारम्भं पदार्थजातं संरम्भं जन्माद्यभिनिवेशं च किं नाम दृष्टवान् ॥ १३ ॥ स्वप्नस्येव बाधान्मिथ्यात्वं निश्चित्योपेक्षते—तदास्तामिति । तत्तस्मादेषा भ्रान्तिरास्तां नामेत्यर्थः ॥ १४ ॥ १५ ॥ स्वक एवाश्रमे कतिचिद्दिनानि निनाय ॥ १६ ॥ कृशत्वात्सश्रमः सोऽतिथिस्तदाश्रमे विशश्राम विश्रान्तिमकरोत् । सायमुवासेति यावत् ॥ १७ ॥ तुष्टिं तृप्तिम् ॥ १८ ॥ १९ ॥ स्वस्वतपोध्यानादिव्यापाराणामुचिता अनुरूपा कथा प्रावर्तत । 'ई' इति खल्वर्थे निपातः । शान्ता शान्तिरसप्रधाना । स्वक्रियया ऋतूनामृतुत्वं मिनोति परिच्छिनत्तीति ऋतुत्वमः सूर्यस्तस्य आशाया उत्तरदिशश्च योगे वसन्ते तदुचिता पुष्पश्रीरिव ॥ २० ॥ तयोर्वार्ताप्रसङ्गपतितम् ॥२१॥ वयं । 'अस्मदो द्वयोश्चे'ति बहुवचनम् ॥ २२ ॥ ॥ २३ ॥ नानाविधा आत्मनः स्वदन्ते रोचन्त इति नानात्मस्वादा भोज्यभेदास्तेषु लोभो गार्ध्यं तदात्मा तत्प्रधानः सन् । कुतस्त्वमेवमभूस्तत्राह—चित्तेति ॥ २४ ॥ २५ ॥ २६ ॥ स श्वपचः । अन्ते अष्टमवर्षान्ते ॥ २७ ॥ शुद्ध्यै तद्देशवासदोष-

---

[1] प्रावर्तत ई इति छेदः.

प्रयागेऽकरवं शुद्ध्यै प्रायश्चित्तमहं द्विज ॥ २८
कृत्वा चान्द्रायणस्यान्ते तृतीयस्याद्य पारणम् ।
इहाहमागतस्तेन श्रान्तोस्म्यतिकृशोस्मि च ॥ २९

श्रीवसिष्ठ उवाच ।

इति श्रुतवता तेन गाधिना स तदा द्विजः ।
भूयः पृष्टोऽप्येतदेव कथयामास नान्यथा ॥ ३०
अथ विस्मयवान्गाधिस्तां नीत्वा तत्र शर्वरीम् ।
जगद्गेहमहादीपे रवावुदयमागते ॥ ३१
कृतप्रातःस्नानविधावापृच्छ्य स्वातिथौ गते ।
इदं संचिन्तयामास विस्मयोद्धुरया धिया ॥ ३२
यन्मया संभ्रमे दृष्टं सत्यभूतं द्विजेन तत् ।
उक्तं ममेति किं नाम स्यान्मायाशम्बरक्रमः ॥ ३३
यद्बन्धुमध्ये मरणं मया तद्दृष्टमात्मनः ।
सा मायैव न संदेहः शेषं पश्यामि तस्य तम् ॥ ३४
तदात्मश्वपचोदन्तं द्रष्टुं तावदखिन्नधीः ।
भूतमण्डलपर्यन्तग्रामं गच्छामि सत्वरम् ॥ ३५
इति संचिन्तयन्गन्तुं मण्डलान्तरमादरात् ।
उत्तस्थौ भास्करः पार्श्वे मेरोर्द्रष्टुमिवोद्यतः ॥ ३६
मनोराज्यमपि प्राज्ञा लभन्ते व्यवसायिनः ।
गाधिना स्वप्नसंदृष्टं गत्वा लब्धमखण्डितम् ॥ ३७
सर्वमध्यवसायेन दुष्प्रापमपि लभ्यते ।
पश्यन्गाधिर्जगन्मायां प्रमेयीकर्तुमुद्यतः ॥ ३८
विनिर्गत्याभवन्मार्गे प्रावृडोघजवेन सः ।
देशानुलङ्घयामास बहून्वाततुरङ्गवत् ॥ ३९
तच्चेदृशनिजाचारं भूतमण्डलमागतः ।
करभः कण्टकार्थ्येकः कारञ्जमिव काननम् ॥ ४०
तत्र संवित्स्थितेनैव संनिवेशेन वै पुनः ।
अपश्यद्ग्रामकं कंचिद्गन्धर्व इव पत्तनम् ॥ ४१
ददर्श तस्य पर्यन्ते तमेव श्वपचालयम् ।
अधस्ताद्भुवनस्येव पाताले नरकव्रजम् ॥ ४२
चित्तचिन्तितविस्तारं तन्निवेशमयं परम् ।
गन्धर्ववदसावात्मश्वपचत्वं च दृष्टवान् ॥ ४३
तेनैव संनिवेशेन प्राग्दृष्टं श्वपचास्पदम् ।
तस्य कामपि वैराग्यपदवीमनयन्मनः ॥ ४४
प्रावृडासारलुठितं भित्तिजातयवाङ्कुरम् ।
पर्यस्तच्छादनार्धाङ्कं किंचिदादृष्टतल्पकम् ॥ ४५
दारिद्र्यं तद्दृढमिव दौर्भाग्यमिव कुड्यमत् ।
भ्रष्टाङ्गमिव दौरात्म्यं दौःस्थित्यमिव खण्डितम् ४६
गाधिर्दन्तावदलितैर्गवाश्वमहिषास्थिभिः ।
धवलैर्व्याप्तपर्यन्तं साक्ष्यं कर्तुमिव स्थितैः ॥ ४७
भुक्तं पीतं पुरा तेन येषु खर्परकेषु वै ।
तैरस्पन्दाभ्रसलिलैः पानपूर्णैरिवावृतम् ॥ ४८
ताभिरेवान्त्रतन्त्रीभिः संशुष्काभिर्लतावृतैः ।
तृष्णाभिरिव दीर्घाभिः परितः परिवेष्टितम् ॥ ४९
चिरमालोकयामास स तदात्मगृहं जवात् ।
प्राक्तनं शुष्कशवतां यातं देहमिवात्मवान् ॥ ५०
अतिविस्मयमातस्थौ ग्रामकं समुपाययौ ।
उल्लङ्घ्य म्लेच्छनगरमार्यदेशमिवाध्वगः ॥ ५१
तत्रापृच्छज्जनं साधो कच्चित्स्मरति भो भवान् ।
प्राग्वृत्तमस्य ग्रामस्य पर्यन्ते श्वपचक्रमम् ॥ ५२
सर्वे एव हि धीमन्तश्चिरवृत्तमपि स्फुटम् ।
करस्थमिव पश्यन्ति मयेति सुजनाच्छ्रुतम् ॥ ५३

शान्त्यै ॥ २८ ॥ २९ ॥ ३० ॥ अथ गाधिः रवौ उदयमागते स्वातिथौ आपृच्छ्य गते सति विस्मयेनोद्धुरया गरीयस्या धिया इदं वक्ष्यमाणं संचिन्तयामासेति परेण संबन्धः ॥ ३१ ॥ ॥ ३२ ॥ मया यत्संभ्रमे भ्रान्तिदशायां दृष्टं तद्द्विजेनातिथिना सत्यभूतमुक्तं मम इति एवंरूपमिदं किं मायालक्षणः शम्बरस्यासुरस्य रचनाक्रमः स्यात् । संभावनायां लिङ् ॥ ३३ ॥ सा माया मिथ्यैव तत्र न संवादो द्रष्टुं शक्यः । शेषमवशिष्टं तस्यातिथेश्चान्द्रायणनिमित्तं तमात्मश्वपचोदन्तं पश्यामि द्रक्ष्यामीत्यर्थः ॥ ३४ ॥ तदेवाह—तदिति । तस्य तदवस्थस्यात्मनः श्वपचस्य उदन्तं वृत्तान्तम् ॥ ३५ ॥ इति संचिन्तयन् गाधिर्मण्डलान्तरं द्रष्टुमुत्तस्थौ । उद्यत उद्युक्तः ॥ ३६ ॥ तत्कथं द्रष्टुं शक्यमिति चेत्पुरुषप्रयत्नस्यालभ्यं नास्तीत्याह—मनोराज्यमिति ॥ ३७ ॥ प्रमेयीकर्तुं चक्षुःप्रमाणगोचरीकर्तुम् ॥ ३८ ॥ स मार्गे प्रावृषि य ओघो जलप्रवाहस्तज्जवेन त्वरमाणोऽभवत् । वात एव तुरंगो वाहनं यस्य मेघस्य तद्वत् ॥ ३९ ॥ ईदृशः प्रागदृष्टप्रकारो निजाचारो यस्मिंस्तद्भूतमण्डलं च प्रथममागतः ॥ ४० ॥ संविदि बुद्धौ स्थितेनैव स्मर्यमाणेनैव संनिवेशेन [illegible] स्थितं कंचिद्ग्रामकमपश्यत् ॥ ४१ ॥ ४२ ॥ चित्ते चिन्तितो जन्मादिविस्तारो यत्र तथाविधं स प्राग्दृष्टो यो गृहादिनिवेशस्तत्प्रचुरं आत्मनः श्वपचत्वं च लिङ्गैः पुनर्दृष्टवानित्यर्थः ॥ ४३ ॥ तच्छ्वपचास्पदं कर्तृ तस्य मनः कामपि वैराग्यपदवीमनयत्प्रापयामास ॥ ४४ ॥ तदेव वर्णयति—प्रावृडित्यादिना । किंचिदादृष्टं प्रत्यभिज्ञातं तल्पकं शयनकटखण्डादि यस्मिन् ॥ ४५ ॥ कुड्यमत् भित्त्यवशेषगृहाकारमिति यावत् । यवादित्वादवत्वम् । भ्रष्टाङ्गं स्खलितावयवं चौर्यादिदौरात्म्यमिव । दौःस्थित्यं दुर्दशाम् । खण्डितं छिन्नैकदेशम् ॥ ४६ ॥ गाधिश्चिरमालोकयामासेति तृतीयेन संबन्धः ॥ ४७ ॥ अस्पन्दान्यभ्रसलिलानि दैवागतवृष्टिजलानि येषु तैः ॥ ४८ ॥ लतावृतैर्लतावत्स्तम्भादिपरिवेष्टनैः परितः परिवेष्टितम् । 'आत्ततन्त्रीभिः' इति पाठे लतानामावृतैरावरणैरात्ताभिस्तन्त्रीभिः प्रतानैः परिवेष्टितमित्यर्थः ॥ ४९ ॥ शुष्कशवप्रायतां यातं स्वदेहमिव । आत्मवान् तत्त्ववित् ॥ ५० ॥ तत्स्वगृहमुल्लङ्घ्य । तत्समीपस्थं ग्रामकं कुग्रामम् ॥ ५१ ॥ श्वपचक्रमं श्वपचवृत्तान्तम् ॥ ५२ ॥ पश्यन्ति स्फुटं स्मरन्तीति [illegible]ीति कश्चित्.

अत्र श्वपचमेकान्ते वासिनं वृद्धमुत्तमम् ।
स्मरस्येनं किमुत भो दुःखानामिव देहकम् ॥ ५४
यदि जानासि भोः साधो तन्मे कथय तत्त्वतः ।
पान्थ संशयविच्छेदे महत्पुण्यफलं स्मृतम् ॥ ५५
भूयो भूय इति ग्राम्याः पृष्टा गाधिद्विजन्मना ।
अनल्पस्मयसंरम्भमार्तेनेव चिकित्सकाः ॥ ५६
ग्राम्या ऊचुः ।
यथा कथयसि ब्रह्मंस्तत्तथा न तदन्यथा ।
कटंजनामा श्वपच इहाभूद्दारुणाकृतिः ॥ ५७
पुत्रपौत्रसुहृद्भृत्यबन्धुस्वजनपेटकम् ।
यस्यातिविस्तीर्णमभूत्पत्रवृन्दं तरोरिव ॥ ५८
यस्य वृद्धस्य तत्सर्वं कलत्रं मृत्युराच्छिनत् ।
अद्रेः पुष्पफलोपेतं दावो वनमिवानलः ॥ ५९
यस्ततो देशमुत्सृज्य ययौ कीरपुरान्तरम् ।
वर्षाण्यष्टावनुद्वेगं तत्र राजा बभूव सः ॥ ६०
यस्तत्रार्थं परिज्ञाय जनैर्दूरे निराकृतः ।
यथा राशिरनर्थस्य यथा ग्रामे विषद्रुमः ॥ ६१
ततो जनेऽग्निं प्रविशत्यात्मना यो हुताशनम् ।
आर्यतामार्यसंसर्गादागतः प्रविवेश ह ॥ ६२
किं त्वमेव प्रयत्नेन श्वपचं पृच्छसि प्रभो ।
किं ते बन्धुरसौ कच्चिदभवस्त्वं स्वतोऽथवा ॥ ६३
एवं कथयतो ग्राम्यान्गाधिः पृच्छन्पुनःपुनः ।
सर्वेषु तत्र प्रान्तेषु मासमेकमुवास सः ॥ ६४
यथा तेनानुभूतं तच्छ्वापचं तत्तथैव तैः ।
ग्रामीणैस्तस्य कथितं सर्वैरेवावखण्डितम् ॥ ६५
अव्याहतं सकलभूतमुखादथैत-
दाकर्ण्य सम्यगवलोक्य यथानुभूतम् ।
गाधिः शशाङ्कमलवद्धृदयेऽधिरूढं
गूढाकृतिः परमविस्मयमाजगाम ॥ ६६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते प्रत्यक्षावलोकनं नाम सप्तचत्वारिंशः सर्गः ४७

## अष्टचत्वारिंशः सर्गः ४८

श्रीवसिष्ठ उवाच ।
लुठितं श्वपचागारे पुनर्विस्मयमाययौ ।
गाधेर्मनो हि नायाति तृप्तिमाश्चर्यदर्शने ॥ १
तत्रावलोकयामास स्थानानि सदनानि च ।
कल्पक्षोभविवृत्तानि जगन्तीवाम्बुजोद्भवः ॥ २
उवाच स्वात्मनैवेदमरण्ये लुठितालये ।
शुष्कास्थिमालावलिते पिशाचक इव द्रुमे ॥ ३
इमास्ता मृतमातङ्गदन्तमाला वृतौ कृताः ।
अद्यापि संस्थिताः कल्पं प्रतिमेरुशिखा इव ॥ ४
इह तद्वानरीमांसं पक्ववंशाङ्कुरैः सह ।
भुक्तं पुरासवोन्मत्तैः सह श्वपचबन्धुभिः ॥ ५
आलिङ्ग्य श्वपचश्यामामिह केसरिचर्मणि ।
सुप्तमापीय मैरेयं तिक्तं गजमदेन च ॥ ६
कौलेयककुटुम्बिन्यः पिण्याकपलवर्धिताः ।
इह बद्धा वरत्राभिर्मृतेभरदकाष्ठके ॥ ७
इह वारणमुक्तानां दृदासीत्पिठरत्रयम् ।
पिनद्धं माहिषेणोग्रचर्मणाम्बुदशोभिना ॥ ८
स्थलीष्वेतासु तास्वत्र सह श्वपचबालकैः ।
चिरं विलुठितं चूतपत्रपुञ्जे पिकैरिव ॥ ९

यावत् ॥५३॥५४॥५५॥ अनल्पः स्मयो विस्मयः संरम्भः प्रश्नोद्योगश्च यस्मिन्कर्मणीति क्रियाविशेषणम् । आर्तेन रोगार्तेन ॥५६॥५७॥५८॥ दवे भवो दावः ॥ ५९ ॥ ६० ॥ ६१ ६२॥ स ते बन्धुः किमभवत् । अथवा त्वं स्वतः स्वयमेव तद्बन्धुरभवः ॥ ६३ ॥ तत्र ग्रामे । सर्वेषु प्रान्तेषु तत्तद्ग्रामपर्यायगृहेष्विति यावत् ॥ ६४ ॥ ६५ ॥ सकलभूतमुखादव्याहतममृषार्थकं वाक्यमाकर्ण्य स्वयं चाबाधितप्रत्यभिज्ञया यथानुभूतमवलोक्य लज्जया गूढाकृतिर्गाधिः शशाङ्कस्येन्दोर्मलवत्कलङ्कमिव स्वहृदये अधिरूढं परमं विस्मयमाजगाम प्रापेत्यर्थः ॥ ६६ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे प्रत्यक्षावलोकनं नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

गाधिना कीरनगरं गत्वा दृष्ट्वा च विस्मयात् ।
तपसा तोषितो विष्णुः सर्वं मायेत्युवाच तम् ॥ १ ॥

लुठितं परिवृत्तम् । चिरमासक्तमिति यावत् ॥ १ ॥ कल्पः संवर्तस्तदीये क्षोभे उपप्लवे विवृत्तानि भग्नानि । अम्बुजोद्भवो ब्रह्मा ॥ २ ॥ लुठितालये भग्नगृहे । स्वमनसैव उवाच । द्रुमे श्मशानवृक्षे ॥ ३ ॥ यदुवाच तदाह—इमास्ता इत्यादिना । वृतौ प्राकारे कृताः शूलवन्निखाता मृतमातङ्गदन्तमालास्ता इमाः । प्रत्यक्षं प्रत्यभिज्ञायन्त इत्यर्थः । कल्पं प्रलयकालं प्रति लक्षीकृत्य मेरोः शिखाः शिखराणीव ॥ ४॥ पक्वैर्वंशाङ्कुरैः करीरव्यञ्जनैः सह ॥ ५ ॥ केसरिणोऽश्वस्य चर्मणि । गजमदेन तिक्तमित्युक्त्या हस्तिपकात्क्रीतं मैरेयमिति गम्यते । मैरेये मदशक्त्युत्कर्षाय हस्तिपका गजमदमपि मेलयन्तीति प्रसिद्धम् ॥ ६ ॥ कौलेयककुटुम्बिन्यः शुन्यः । पिण्याकैः पलैर्मांसैश्च वर्धिताः । वरत्राभिश्चर्मरज्जुभिः ॥ ७ ॥ वारणमुक्तानां गजमौक्तिकानां पिठरत्रयं उखात्रयप्रमाणं दत् गजदन्तरचितं पात्रमिहासिन्स्थले आसीत् ॥ ८ ॥ एतासु दृश्यमानासु । तासु पूर्वदृष्टासु । अत्रास्मिन् ग्रामान्ते । विलुठितं पांसुक्रीडाखिलर्थः ॥ ९ ॥

अत्र तद्बालनिःश्वासरणद्वंशप्रवृत्तवत् ।
गीतं पीतं शुनीरक्तं साधिता शवभूषितः ॥ १०
अत्र सार्धं कुटुम्बेन जन्यत्रेषु कुटुम्बिना ।
भुक्तं तत्कृतमुन्नादं कल्लोलैर्जलधाविव ॥ ११
अत्रोड्डयनलीलानां काकभासपतत्रिणाम् ।
धृतानामन्यदाशार्थं ग्रथितं वंशपञ्जरम् ॥ १२

श्रीवसिष्ठ उवाच ।

एवंप्रायाः स्मरन्गाधिः प्राक्तनीः श्वपचक्रियाः ।
विस्मयोत्कम्पितशिरा धातुश्रेष्ठां परामृशत् ॥ १३
चचाल तस्माद्दीर्घेण देशात्कालेन कार्यवित् ।
भूतमण्डलमुत्सृज्य प्राप देशान्तरं क्रमात् ॥ १४
समुल्लङ्घ्य नदीशैलमण्डलारण्यसंततिम् ।
आससाद तुषाराद्रिरत्नं किल जनास्पदम् ॥ १५
तत्र प्राप महीपालनगरं नगसंनिभम् ।
जगद्भ्रमणखिन्नात्मा स्वर्लोकमिव नारदः ॥ १६
अथात्मनानुभूतानि दृष्टान्यासेवितानि च ।
स्थानानि नगरे पश्यन्पप्रच्छ जनमादृतः ॥ १७
साधो स्मरसि किंचित्त्वमिह श्वपचमीश्वरम् ।
यदि जानासि तत्त्वं मे वर्णयाशु यथाविधि ॥ १८

नागरा ऊचुः ।

अभूदिहाष्टौ वर्षाणि श्वपचो भूमिपो द्विज ।
राजत्वमर्पितं यस्य नाम मङ्गलहस्तिना ॥ १९
अन्ते च संपरिज्ञातः स प्रविष्टो हुताशनम् ।
अद्य द्वादशवर्षाणि समतीतानि तापस ॥ २०
यं यं पृच्छत्यसौ गाधिर्जनं जातकुतूहलः ।
तस्य तस्य मुखादेव शृणोत्यास्वादयत्यपि ॥ २१
अथापश्यत्पुरे तस्मिन्नृपं सबलवाहनम् ।
देवं चक्रधरं विष्णुं मन्दिरान्निर्गतं बहिः ॥ २२
स दृष्ट्वा स्थगिताकाशं चलरेणुपयोधरैः ।
प्राक्तनीं राजतां स्मृत्वा समुवाचातिविस्मयः ॥ २३
इमास्ताः कीरकामिन्यः पन्नगर्भोपमत्वचः ।
कनकद्रववर्णिन्यो लोलनीलोत्पलेक्षणाः ॥ २४
चामरौघा इमे चन्द्रकरसंपिण्डपाण्डुराः ।
स्थिरनिर्झरसंकाशाः काशपुष्पचया इव ॥ २५
कान्ताभिरवधूयन्ते बालव्यजनराजयः ।
इमास्ता वनवल्लीभिर्दीप्यमाना इवर्द्धयः ॥ २६
इमास्ता मत्तमातङ्गघटा घटितदिक्तटाः ।
संकल्पपादपा मेरोरिव शृङ्गपरम्पराः ॥ २७
एते ते यमवारीशकुबेरप्रतिमौजसः ।
सामन्ता वासवस्येव लोकपाला महीभृतः ॥ २८
इमास्ताः सर्ववस्त्वोघाः सर्वाभिमतदास्तताः ।
कल्पवृक्षलताकुञ्जसुन्दर्यो गृहपङ्क्तयः ॥ २९
इदं तत्कीरजनताराज्यं प्राग्भुक्तमद्य मे ।
आत्मजन्मान्तराचार इव प्रत्यक्षतां गतम् ॥ ३०
सत्यं स्वप्न इवायं मे जाग्रद्भूतः पुनः स्थितः ।
न जाने किंकृतोत्थाना मायेयं प्रविजृम्भते ॥ ३१
अहो नु खलु दीर्घेण मनोमोहेन वल्गता ।
वैवश्यमुपनीतोऽहं जालेनेव शकुन्तकः ॥ ३२
हा धिक्कष्टमबुद्धं मे मनो वासनया हतम् ।
पश्यति भ्रमजालानि विततानि शिशोरिव ॥ ३३

बालानां निःश्वासैर्मुखवातैः रणतां वंशानां प्रवृत्तं स्वरतालप्रवृत्तिस्तद्वत्तदनुरूपतया गीतम् । शवान् भूषयितुं शीलं यस्येति शवभूषि श्मशानमाल्यचन्दनादि तस्मादिति ततः । साधिता सर्वेषामलंक्रियेति शेषः ॥ १० ॥ जन्यत्रेषु विवाहेषु ॥ ११ ॥ अन्यदा अशनं आशः दिनान्तरे भक्षणं तदर्थम् । 'दासार्थम्' इति पाठे तु 'दसु हिंसायाम्'इत्यस्मादेव्म् । दिनान्तरे हिंसनार्थमित्यर्थः ॥ १२ ॥ परामृशत् तर्कितवान् ॥ १३ ॥ १४ ॥ तुषाराद्रिकुक्षौ रत्नमिव श्रेष्ठं जनास्पदं जनपदं प्राग्दृष्टकीरदेशमित्यर्थः ॥ १५ ॥ नगसंनिभं पर्वतवदुन्नतप्रासादं रत्नाद्याढ्यं च ॥ १६ ॥ अनुभूतानि स्वगृहप्रासादादीनि । दृष्टानि परगृहप्रासादादीनि । आसेवितान्यारामस्थानशालादीनि स्थानानि ॥ १७ ॥ यथाविधि विधिं विधानमनतिक्रम्येत्यर्थः ॥ १८ ॥ नामेति प्रसिद्धौ ॥ १९ ॥ २० ॥ अन्तः स्वप्रत्यभिज्ञासंवादादास्वादयति चमत्कारमनुभवत्यपीत्यर्थः ॥ २१ ॥ तस्य भगवदनुग्रहात्तस्मिन्पुरे राजरूपेण भगवद्दर्शनमभूदित्याह—अथेति । सबलवाहनं पूर्वेस्वदृष्टबलवाहनसहितम् । मन्दिराद्राजसदनाद्बहिर्निर्गतम् । दर्शनव्यामोहचित्तस्य तस्य दृष्टायामपि भगवन्मूर्तौ तत्र भावो विचारोऽपि वा नाभूत्किंतु प्राक्तनेषु स्वानुभूतस्रीच्छत्रचामरादिषु प्रत्यभिज्ञाकौतुकेष्वेव चित्तं बभ्रामेत्याशयेनाह—स इति । चलैरुद्वृत्तै रेणुलक्षणैः पयोधरैर्मेघैः स्थगितमाच्छादितमाकाशं येन तथाविधं तत्सैन्यं दृष्ट्वेत्यर्थः ॥ २३ ॥ ता इमाः प्रत्यभिज्ञाताः कीरनृपतेः कामिन्यो वेश्याः ॥ २४ ॥ चन्द्रकराणां संपिण्डः पिण्डीभाव इव पाण्डुराः । स्थिरा मूर्तीभावात्स्थैर्यमापन्ना ये निर्झरा गिरिवारिप्रपातास्तत्संकाशाः ॥ २५ ॥ ऋद्धयः पुष्पमञ्जरीसमृद्धय इव ॥ २६ ॥ मत्तमातङ्गानां घटाः सङ्घाः । घटिता दन्ताग्रनिर्भिन्ना दिक्तटा याभिस्ताः । संभावनयातिशयोक्तिः । संकल्पानुसारिफलदाः पादपा येषु ॥ २७ ॥ वासवस्य यमादयो लोकपाला इव महीभृत एते सामन्ता अवान्तरदेशाधीशाः ॥ २८ ॥ सर्वं धनधान्यादिवस्त्वोघा यासु ॥ २९ ॥ प्राग्भुक्तमद्यजन्मान्तराचारो जन्मान्तरचरित्रमिव प्रत्यक्षतां गतम् ॥ ३० ॥ सत्यं निश्चितं प्राक्स्वप्न इव दृष्टः पुनर्जाग्रद्भूतः स्थितः । किं केन किमर्थं वा कृतमुत्थानमाविर्भावो यया ॥ ३१ ॥ वैवश्यमस्वाधीनताम् ॥ ३२ ॥ अबुद्धमप्रबुद्धम् ॥ ३३ ॥

१ 'चन्द्रकरसंपिण्डन' इति क्वचित्पाठः.

एषा हि माया महती तेन मे चक्रधारिणा ।
दर्शितेत्यधुना साधु मया स्मृतमखण्डितम् ॥ ३४
तदिदानीं तथा यत्नं करिष्ये गिरिकन्दरे ।
यथा कुसंभ्रमस्यास्य जाने जन्म तथा स्थितिम् ॥ ३५
इति संचिन्त्य नगराद्गाधिस्तस्माज्जगाम ह ।
कन्दरं प्राप्य शैलस्य तस्थौ विश्रान्तसिंहवत् ॥ ३६
तत्र संवत्सरं सार्धं पयश्चुलुकभोजनम् ।
तपश्चक्रे महातेजास्तुष्टये शार्ङ्गधन्वनः ॥ ३७
अथास्य पुण्डरीकाक्षः पयोमूर्तिरुपाययौ ।
प्रसादमुत्पलश्यामः शारदीव महाह्रदः ॥ ३८
तमाजगाम शैलेन्द्रकन्दरं द्विजमन्दिरम् ।
पयोधरवदच्छाच्छच्छविर्व्योमन्यथावसत् ॥ ३९

श्रीभगवानुवाच ।

गाधे कच्चित्त्वया दृष्टा माया मम गरीयसी ।
दृष्टं त्वया जगज्जालचेष्टितं दैष्टिकात्मकम् ॥ ४०
चित्ताभिगत एतस्मिन्प्राप्ते सम्यगनिन्दितः ।
तपो गिरितटे कुर्वन्किमन्यदभिवाञ्छसि ॥ ४१

श्रीवसिष्ठ उवाच ।

एवं वदन्तमालोक्य हरिं गाधिर्द्विजोत्तमः ।
अर्चां कुसुमपूरेण पादयोः पर्यपूरयत् ॥ ४२
दत्त्वार्घ्यं कीर्णकुसुमः प्रणम्याशु प्रदक्षिणैः ।
विष्णुमाह द्विजो वाक्यमम्भोदमिव चातकः ॥ ४३

गाधिरुवाच ।

देव येषा त्वया माया दर्शिताऽतितमोमयी ।
महीं प्रातरिवादित्यस्तां मे प्रकटतां नय ॥ ४४
भ्रमं यं पश्यति मनो वासनामलमालितम् ।
स्वप्नवत्स कथं देव जाग्रत्यपि हि दृश्यते ॥ ४५
मुहूर्तमुपलब्धश्च जलान्तः स्वप्नविभ्रमः ।
कथं प्रत्यक्षतां प्राप्तो ममामलपदास्पद ॥ ४६
दैर्घ्यादैर्घ्येऽस्य कालस्य शरीरस्य भवाभवाः ।
कथमन्तःस्थिता न स्युर्मदीयैः श्वपचभ्रमैः ॥ ४७

श्रीभगवानुवाच ।

गाधे स्वाधिविधूतस्य स्वरूपस्यैतदात्मकम् ।
चेतसोऽदृष्टतत्त्वस्य यत्पश्यत्युरुविभ्रमम् ॥ ४८
बहिर्न किंचिदप्यस्ति खाद्र्यब्ध्युर्वीदिगादिकम् ।
एतत्स्वचित्त एवास्ति पत्रपुञ्जमिवाङ्कुरे ॥ ४९
फलादि स्फारतामेति यथैव बहिरङ्कुरात् ।
बहिः प्रकटतां याति तथा पृथ्व्यादि चेतसः ॥ ५०
सत्यं पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन ।
अङ्कुरस्थः पल्लवस्तु तस्माद्यस्मात्फलश्रियः ॥ ५१
रूपालोकमनस्कारतत्ताकालक्रियात्मकम् ।
कुम्भकारो घटमिव चेतो हन्ति करोति च ॥ ५२
आबालमेतत्पुरुषैः सर्वैरेवानुभूयते ।
स्वप्नभ्रममदावेगरागरोगादिदृष्टिषु ॥ ५३
चित्ते वृत्तान्तलक्षाणि संस्थितान्यात्तवासने ।
पादपे फलपुष्पाणि मूलाक्रान्तावनाविव ॥ ५४
त्यक्तावनेर्विटपिनो भूयः पत्राणि नो यथा ।
निर्वासनस्य जीवस्य पुनर्जन्मादि नो तथा ॥ ५५
यत्रानन्तजगज्जालं संस्थितं तेन तेजसा ।
श्वपचत्वं प्रकटितं यदि तद्विस्मयोऽत्र किम् ॥ ५६

तेन प्राक्प्रसादितेन चक्रधारिणा विष्णुना ॥ ३४ ॥ जन्मस्थितिपदाभ्यां तन्निमित्तं लक्ष्यते ॥ ३५ ॥ ३६ ॥ पयश्चुलुकस्य भोजनं पानं कुर्वन्निति शेषः । शार्ङ्गधन्वनो विष्णोः । 'धनुषश्च' इत्यनङ् ॥ ३७ ॥ पय इव प्रसादस्वभावा मूर्तिर्यस्य । ह्रदपक्षे पय एव मूर्तिः स्वरूपं यस्य ॥ ३८ ॥ द्विजस्य गाधेर्मन्दिरं निवासभूतं कन्दरम् । पयोधरवदच्छादप्यच्छा निर्मलतरा छविः कान्तिर्यस्य । पयोधरवद्व्योमन्यावसदतिष्ठदिति वा ॥ ३९ ॥ दिष्टं दैवमेव मतिः प्रतीतिनिमित्तं यस्य न वस्तुतदात्मकम् ॥ ४० ॥ चित्तेनाभिगते वाञ्छिते एतस्मिन् मन्मायादर्शने प्राप्ते सति पुनर्गिरितटे तपः कुर्वन्ननिन्दितः शुद्धस्त्वमन्यत्किमभिवाञ्छसीत्यन्वयः ॥ ४१ ॥ अर्चां नित्यं पूज्यमानां भगवत्प्रतिमां पादयोरर्चां पूजां कुसुमपूरेण करोन्मुक्तपुष्पप्रवाहेण पयःपूरवत् पूर्णां चकारेति वा । अनेन पूजाकाले भगवदागमनं गम्यते ॥ ४२ ॥ अर्घ्यं उत्तरार्घ्यम् । प्रदक्षिणैः सह प्रणम्य प्रणामान्तां पूजां समाप्य ॥ ४३ ॥ ४४ ॥ यत्तत्र ज्ञातव्यांशस्तमाह—भ्रममिति । भ्रमं मिथ्याविषयजातम् ॥ ४५ ॥ प्रत्यक्षतां चिरं चक्षुरादिगोचरताम् । अमलमविद्यामलरहितं पदमास्पदं प्रतिष्ठा यस्य ॥ ४६ ॥ मदीयैः श्वपचभ्रमैः कृते अस्य कालस्य दैर्घ्यादैर्घ्ये तथा श्वपचशरीरस्य भवाभवा उत्पत्तिनाशाश्च अन्तर्मनस्येव स्थिताः कथं न स्युः, बहिस्ते कथं तिष्ठन्तीत्यर्थः ॥ ४७ ॥ हे गाधे, भवान्यत् उरु महज्जगद्विभ्रमं पश्यति तत् अदृष्टतत्त्वस्य अतएव स्वनिष्ठैराधिभिर्वासनारोगैर्गृहीतस्य चेतसश्चित्तभावापन्नस्यात्मस्वरूपस्य एतदात्मकं रूपं भासते तद्वस्तुतो नान्तर्न वा बहिर्नाल्पं न वा दीर्घमित्यर्थः ॥ ४८ ॥ यदि चास्तीति मन्यसे तर्हि स्वचित्त एवास्तीत्याह—बहिरिति । खमाकाशम् अद्रयः पर्वताः उर्वी पृथ्वी दिशश्चेत्यादिकं जगदित्यर्थः ॥ ४९ ॥ ५० ॥ यस्माद्धेतोः फलश्रियस्तस्मादुद्यन्ते इति शेषः ॥ ५१ ॥ वर्तमानविषये चक्षुरादिना रूपालोकः । भाविनि च मनसा समर्थनान्मनस्कारः । अतीते च स्मर्यमाणे तत्ता तन्निरूपकास्त्रिविधाः कालास्तद्व्यञ्जिका च सूर्यादिक्रियेत्येवमात्मकम् । हन्ति स्वात्मन्युपसंहरति करोति सृजति च ॥ ५२ ॥ सर्वानुभवसिद्धं चेदमित्याह—आबालमिति ॥ ५३ ॥ मूलैराक्रान्ता अवनिः पृथ्वी येन तथाविधे पादपे इवेति मनसोऽप्यधिष्ठानसदवष्टम्भबलाज्जगद्धारकत्वमिति द्योतनार्थम् ॥ ५४ ॥ त्यक्तावनेरुन्मूलितस्येति यावत् ॥ ५५ ॥ तथा चेदं श्वपचत्वं मनःस्थितानन्तवासनाजाले एकदेशप्रकटनमित्याह—यत्रेति ॥ ५६ ॥

अवबुद्धा श्वपचता प्रतिभासवशात्त्वया ।
यथैवानल्पसंरम्भा विचित्राधिविकारदा ॥ ५७
तथैवातिथिरायातो भुक्तवान्सुप्तवान्द्विजः ।
कथां कथितवांश्चेति दृष्टवानसि संभ्रमम् ॥ ५८
तथैवोत्थाय गच्छासि प्राप्तोऽहं भूतमण्डलम् ।
इमे भूता इमे ग्रामा दृष्टवानसि संभ्रमम् ॥ ५९
तथैवेदं कटंजस्य प्राक्तनं लुठितं गृहम् ।
जनैरुक्तं कटंजस्य दृष्टवानसि संभ्रमम् ॥ ६०
तथैव कीरनगरं प्राप्तोऽसि कथितं च मे ।
कीरैः श्वपचराजत्वं दृष्टवानसि सभ्रमम् ॥ ६१
एवं सर्वं त्वया दृष्टं मोहजालं द्विजोत्तम ।
यत्सत्यमिति जानासि यच्चासत्यमवैषि च ॥ ६२
वासनावलितं चेतः किं नामान्तरं पश्यति ।
साधितं दृश्यते स्वप्ने वर्षसाध्यं प्रयोजनम् ॥ ६३
नातिथिर्न च भूतास्ते न कीरास्ते न तत्पुरम् ।
सर्वमेतन्महाबुद्धे व्यामोहाद्दृष्टवानसि ॥ ६४
गच्छता भवता भूतदेशं पान्थेन कन्दरे ।
कस्मिंश्चिद्विप्र विश्रान्तं कुरङ्गेणेव कानने ॥ ६५
तत्रैव श्रममूढत्वादिदं तद्भूतमण्डलम् ।
इदं तच्छ्वपचागारमिति दृष्टं न सत्यतः ॥ ६६
तथैव कीरनगरं दृष्टवानसि तत्तथा ।
तदैव चान्यदा वापि मायार्थं हि भवान्द्विज ॥ ६७
सर्वदैव समग्रासु विहरन्नसि दृष्टवान् ।
दिक्षु प्रोन्मत्तक इव विभ्रमं मनसा मुने ॥ ६८
तदुत्तिष्ठ निजं कर्म कुर्वंस्तिष्ठोपशान्तधीः ।
न स्वकर्म विना श्रेयः प्राप्नुवन्तीह मानवाः ॥ ६९

श्रीवसिष्ठ उवाच ।

इति निगदितवान्स पद्मनाभो
भुवनगतापसवृन्दपूज्यमानः ।
विबुधमुनिगणैः पवित्रहस्तै-
र्वृत उदधिं निजमास्पदं जगाम ॥ ७०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते मायामहत्त्वकथनं नामाष्टचत्वारिंशः सर्गः ॥४८॥

---

## एकोनपञ्चाशः सर्गः ४९

श्रीवसिष्ठ उवाच ।

अथ गाधिर्गते विष्णौ पुनर्भूतादिकं क्रमात् ।
स्वयं मोहविचारार्थं बभ्रामाभ्रमिवाम्बरे ॥ १
उपलभ्य तथैवात्मवृत्तान्तं जनतस्ततः ।
हरिमाराधयामास पुनरद्रिगुहां गतः ॥ २
आजगामैनमल्पेन कालेनाथ जनार्दनः ।
सकृदाराधनेनैव साधवो यान्ति बन्धुताम् ॥ ३
उवाच गाधिं भगवान्मयूरमिव वारिदः ।
किं त्वं प्रार्थयसे भूयस्तपसेति प्रसादवान् ॥ ४

गाधिरुवाच ।

भ्रान्तोऽस्मि देव षण्मासान्भूतकीरजनास्पदम् ।
तत्र व्यभिचरत्यस्मद्वृत्तान्तो न कथास्वपि ॥ ५

---

तव सत्यत्वेनाभिमतमतिथ्यागमनादिप्रपञ्चजातमपि श्वपचत्ववन्मनःस्थमेवेत्याह—अवबुद्धेत्यादिना ॥ ५७ ॥ ५८ ॥ इमे ग्रामा इति संभ्रमं दृष्टवानसीति सर्वत्र इतिशब्दोऽध्याहार्यः ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ साधितं क्षणेनैव सिद्धम् ॥ ६३ ॥ ॥ ६४ ॥ किंच त्वयेदानीमपि न भूतमण्डले कीरनगरे वा गतं किंत्वतिथिवाक्यं श्रुत्वा भूतदेशं प्रति गच्छता प्रस्थितेन पान्थेन त्वया पथि कस्मिंश्चिद्गिरिकन्दरे विश्रान्तं तत्रैव श्रमेण मूढत्वात्परवशचित्तत्वात्स्वप्नवदिदं तद्भूतमण्डलमिदं तच्छ्वपचागारमित्यादि दृष्टं न परमार्थत इति द्वयोरर्थः ॥ ६५ ॥ ६६ ॥ तत्तस्मिन्कन्दरे तदैव श्रमकाले कीरनगरं दृष्टवानसि, अन्यदा अघमर्षणकाले वापि तथैव मायामयमर्थं भवान् दृष्टवानित्यर्थः ॥ ६७ ॥ [1]एके कन्दरे तदेति च देशकालनियमो भ्रमस्य नास्ति यावत्तत्त्वबोधं सर्वदा सर्वत्र भ्रान्त्यैव विहरणादिव्यवहारदर्शनादित्याशयेनाह—सर्वदैवेति ॥ ६८ ॥ निजं ब्रह्मचर्याश्रमोचितमग्निकार्यस्वाध्यायादि कर्म ॥ ६९ ॥ भुवनगैस्त्रिभुवनगतैस्तापसवृन्दैः पूज्यमानः स पद्मनाभ इति उक्तप्रकारेण निगदितवान्सन् भगवच्चरणस्पर्शसेवादिना पवित्रहस्तैर्विबुधमुनिगणैर्वृतः सन् निजमास्पदं गृहभूतं क्षीरोदधिं जगामेत्यर्थः ॥७०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे मायामहत्त्वकथनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गाधिर्देशौ पुनर्गत्वा हरिं पृष्ट्वा पुनः पुनः ।
सर्वं मायेति निश्चित्य जीवन्मुक्तोऽभवत्क्रमात् ॥ १ ॥

'तथैवोत्थाय गच्छामि प्राप्तोऽहं भूतमण्डलम् । इमे भूता इमे ग्रामा दृष्टवानसि संभ्रमम् ॥ नातिथिर्न च भूतानि न कीरास्ते न तत्पुरम् ॥' इत्यादिभगवद्वचनार्थं त्वसंभावनाविपरीतभावनादार्ढ्यादप्रतिपद्यमानो गाधिर्जगदधिष्ठानात्मतत्त्वसाक्षात्कारं विनैव पूर्वदृष्टदेशादीनां बाधोऽस्ति न वेति परीक्ष्यानुभवितुकामः पुनर्भूतमण्डलादिदेशान् बभ्रामेत्याह—अथेति । भूतादिकं भूतमण्डलादिदेशम् । आत्मनः स्वस्य श्वपचत्वादिवृत्तान्तं तथा पूर्वानुभूतवदेवोपलभ्य ॥ १ ॥ श्रुत्वा लिङ्गैर्दृष्ट्वा च भगवद्वाक्यतात्पर्यबोधाय पुनर्हरिमाराधयामासेत्यर्थः ॥ २ ॥ ३ ॥ प्रसादवान् प्रसन्नः ॥४॥ कथासु जनप्रवादेषु । अपिपदालिङ्गप्रत्यभिज्ञादिसंवादे-

[1] जलकन्दरे तदा इति पाठः.

मायया भूतभूर्दृष्टा त्वयेत्युक्तोऽस्मि किं प्रभो ।
मोहनाशाय महतां वचो नो मोहवृद्धये ॥ ६

श्रीभगवानुवाच ।

काकतालीययोगेन चेतसि श्वपचस्थितिः ।
सर्वेषां भूतकीराणां तवेव प्रतिबिम्बति ॥ ७
तेनाङ्ग तव वृत्तान्तं यथावत्कथयन्ति ते ।
प्रतिभासो हि नायाति पुनरप्रतिभासताम् ॥ ८
केनचिच्छ्वपचेनान्ते ग्रामस्य रचितं गृहम् ।
तत्त्वया दृष्टमाविष्टमिष्टकाखण्डतां गतम् ॥ ९
कदाचित्प्रतिभैकैव बहूनामपि जायते ।
काकोलतालस्थितिवद्विचित्रा हि मनोगतिः ॥ १०
तथाहि बहवः स्वप्नमेकं पश्यन्ति मानवाः ।
स्वापभ्रमदमैरेयमदमन्थरचित्तवत् ॥ ११
एकस्यामेव लीलायां रमन्ते बहुबालकाः ।
एकस्यामेव नीलायां वनस्थल्यामिवैणकाः ॥ १२
बहवस्तुल्यकालं च प्रतिभासेन कर्मणाम् ।
जना यतन्ते स्वफलपाकेऽतिबहुलाकृतौ ॥ १३
प्रतिबन्धाभ्यनुज्ञानां कालो दातेति या श्रुतिः ।
विप्र संकल्पमात्रोऽसौ कालो ह्यात्मनि तिष्ठति ॥ १४
अमूर्तो भगवान्कालो ब्रह्मैव तमजं विदुः ।
न जहाति न चादत्ते किंचित्कस्य कदेति च ॥ १५
लौकिको यस्त्वयं कालो वर्षकल्पयुगात्मकः ।
संकल्प्यते पदार्थौघैः पदार्थौघश्च तेन तु ॥ १६
समानप्रतिभासोत्थसंभ्रमं भ्रान्तचेतसः ।
तथा तं दृष्टवन्तस्ते भूतकीरजनोच्चयाः ॥ १७
स्वव्यापारपरो भूत्वा धियात्मानं विचारय ।
साधो गतमनोमोहमिहैवास्व व्रजाम्यहम् ॥ १८
इत्युक्त्वा भगवान्विष्णुर्जगामान्तर्धिमीश्वरः ।
अतिष्ठत्कन्दरे गाधिराधिपीवरया धिया ॥ १९
ततः कतिपयेष्वद्रौ मासेष्वतिगतेषु सः ।
पुनराराधयामास पुण्डरीककरं द्विजः ॥ २०
ददर्श चैकदा नाथमागतं प्रणनाम तम् ।
पूजयामास मनसा चोक्तेनोवाच चेश्वरम् ॥ २१

गाधिरुवाच ।

भगवन्संस्मरंश्चैतामात्मनः श्वपचस्थितम् ।
इमां संसारमायां च परिमुह्यामि चेतसा ॥ २२
तदुक्त्वास्व यथावस्तु महामोहनिवृत्तये ।
एकस्मिन्नेव विमले मां नियोजय कर्मणि ॥ २३

---

ष्वपि न व्यभिचरतीत्यर्थः ॥ ५ ॥ अस्तु तथा किं ततस्तत्राह—**माययेति**। मायादृष्टार्था अवश्यं कालान्तरे व्यभिचरन्ति अव्यभिचारिणश्चैतेऽर्थाः कथं मायेत्यवधारयितुं शक्या इति मोहवृद्धये त्वद्वचनं संपन्नमिति भावः ॥ ६ ॥ मायिकस्यापि कथास्वव्यभिचारे उपपत्तिमाह—**काकतालीयेति**। प्रसिद्धभूतदेशजानां कीरदेशजानां च जनानां चेतसि तव चेतसीव कटंजकश्वपचस्य स्थितिरपरोक्षतया भ्रान्त्या प्रतिबिम्बतीत्यर्थः ॥७॥ तथाच तेऽपि स्वभ्रान्त्यैव तथा वदन्तीत्यार्थसमाजप्रस्तस्तद्वचनसंवादो न सत्यतापादक इत्याह—**तेनेति**। **प्रतिभास** इति। विना बाधमिति शेषः ॥ ८ ॥ प्रत्यभिज्ञासंवादस्य तर्हि का गतिस्तामाह—**केनचिदिति**। आविष्टं मयेदं प्राग्रचितमिति भ्रान्त्यभिनिवेशविषयीकृतम् ॥ ९ ॥ प्रतिभा भ्रान्तिरूपः प्रतिभास एका एकरूपैव । काकोलो द्रोणकाकाख्यः काकजातिभेदस्तस्य ताले पक्वतालफले तालमूले वा स्थितिरुपवेशनं तद्वत् ॥ १० ॥ स्वापो निद्रा तद्वद्भ्रमदेन मैरेयमदेन मन्थरचित्ता यथा बहवस्तुल्यरूपा घूर्णमाना इव दिशः पश्यन्ति तद्वत् ॥ ११ ॥ एकस्यामेव सिकतादिसंनिवेशसंकेतकल्पितगृहप्रासाददुर्गादिभ्रमलीलायां बहवो बालका रमन्ते । नीलायां शाद्वलश्यामलायां वनस्थल्याम् । एणका मृगपोताः ॥ १२ ॥ अतिबहुलाकृतौ वधबन्धपराजयपलायनादिनानाकारे स्वप्रारब्धफलपाके लभ्येऽपि बहवः सैनिकादिजनास्तुल्यकालं जयलाभभोगादीनां तुल्यरूपाणां कर्मणां प्रयोजनानां भ्रान्त्या प्रतिभासेन तल्लोभाद्युद्धादिना यतन्ते इति प्रसिद्धमित्यर्थः ॥ १३ ॥ यदि मानसकल्पनैव जगत्तर्हि हेमन्तादिः कालो व्रीह्याद्यङ्कुरोदयस्य प्रतिबन्धको यवादीनां चाभ्यनुज्ञातेति लोकप्रसिद्धेर्बाधः स्यान्मानसकल्पनायां बाह्यकालस्य व्यवस्थापकत्वायोगादित्याशङ्कां गाधेः परिहरन्नाह—**प्रतिबन्धेति**। श्रुतिर्लौकिकप्रवादश्रवणम् । सा न विरुध्यत इति शेषः । यतोऽसौ प्रतिबन्धाभ्यनुज्ञानहेतुरपि कालः संकल्पमात्रः । दिग्विशेषावच्छिन्नां सूर्यक्रियां दृष्ट्वा मनसैव यथाशास्त्रं मासर्त्वादिभेदकल्पनादिति भावः । कस्तर्ह्यकल्पितः कालस्तमाह—**काल** इति । यस्त्वकल्पितोऽखण्डः कालः परमात्मा स स्वात्मन्येव तिष्ठति न कस्यचित्प्रतिबन्धमभ्यनुज्ञां वा ददातीत्यर्थः ॥ १४ ॥ अमुमेवार्थं स्पष्टयति—**अमूर्त** इत्यादिना ॥१५॥ आद्यस्य संकल्पात्मतामुपपादयति—**लौकिक** इति। जन्यमात्रस्य कालोपाधित्वात्सूर्यक्रियाचन्द्रपिण्डादिपदार्थौघैः संकल्प्यते । तेन च प्रतिबन्धानुज्ञाभ्यां सर्वपदार्थौघस्तत्क्रियाफलादिव्यवस्था च संकल्प्यत इत्यर्थः । तुशब्दश्चार्थे ॥ १६ ॥ प्रासङ्गिकीं शङ्कां परिहृत्य प्रकृतमालम्ब्याह—**समानेति**। भूतदेशजाः कीरदेशजाश्च जनोच्चया जनसमूहाः ॥ १७ ॥ तर्हि मया किं कार्यं तत्राह—**स्वव्यापारेति**। स्ववर्णाश्रमोचिताचरणपर इत्यर्थः ॥ १८ ॥ आधिपीवरया चिन्तोपचितया ॥ १९ ॥ २० ॥ मनसा चकाराद्वचसा कर्मणा च पूजयामास उक्तेन प्रश्नानुज्ञावाक्येनोवाच पप्रच्छ च ॥ २१ ॥ इमां जननमरणाद्यनर्थबहुलां संसारमायां च संस्मरन् ॥२२॥ तत्तस्माद्धेतोर्महामोहस्य निवृत्तये उपायमुक्त्वा झटिति न गच्छ किंतु यावत्संशयमोहोच्छेदमास्व तिष्ठे-

श्रीभगवानुवाच ।

ब्रह्मन् जगदिदं मायामहाशम्बरडम्बरम् ।
सर्वा आश्चर्यकलनाः संभवन्तीह विस्मृतेः ॥ २४
भूतकीरपुरे मोहाद्दृष्टवांस्तत्तथा भवान् ।
इत्येतत्संभवत्येव दृश्यते हि जनैर्भ्रमः ॥ २५
भूतास्त्वमिव कीराश्च दृष्टवन्तस्तथा भ्रमम् ।
मुधैवेत्यपि सत्याभं समकालादिसंभवात् ॥ २६
इदं तु शृणु वक्ष्यामि यथाभूतमनिन्दितम् ।
यथैति तनुतां चिन्ता मार्गशीर्षलतेव ते ॥ २७
योऽसौ कटंजको नाम श्वपचो भूतमण्डले ।
तेनैव संनिवेशेन स तथैवाभवत्पुरा ॥ २८
तथैव विकलत्रत्वं प्राप्य देशान्तरं गतः ।
बभूव कीरनृपतिः प्रविवेशानलं ततः ॥ २९
भवतः केवलं चित्ते जलान्तर्वर्तिनस्तदा ।
प्रतिभाता तथाभूता कटंजाचारसंस्थितिः ॥ ३०
द्रष्टानुभूतमप्यर्थं कदाचिद्विस्मरत्यलम् ।
कदाचिदप्यदृष्टं तु चेतः पश्यति दृष्टवत् ॥ ३१
यथा स्वप्नमनोराज्यधातुसंस्थितिविभ्रमाः ।
जाग्रत्यपि तथैवाङ्ग दृश्यन्ते मनसा स्वयम् ॥ ३२
भविष्यद्भूतकालस्थं यथा त्रैकाल्यदर्शिनः ।
प्रतिभामेति गाधे यत्कटंजाचरितं तथा ॥ ३३

अयं सोऽहमिदं तन्म इति मज्जति नात्मवान् ।
अयं सोऽहमिदं तन्म इति मज्जत्यनात्मवान् ॥ ३४
सर्वमेवाहमेवेति तत्त्वज्ञो नावसीदति ।
न गृह्णाति पदार्थेषु विभागानर्थभावनम् ॥ ३५
तेनासौ भ्रमयोगेषु सुखदुःखविलासिषु ।
न निमज्जति मग्नोऽपि तुम्बीपात्रमिवाम्भसि ॥ ३६
त्वं तावद्वासनाजालग्रस्तचित्तो विचेतनः ।
किंचिच्छेषमहाव्याधिरिव न स्वस्थमागतः ॥ ३७
ज्ञानस्यापरिपूर्णत्वान्न शक्नोषि मनोभ्रमम् ।
विनिवारयितुं मेघमसस्यग्यत्नवानिव ॥ ३८
यदेव ते मनोमात्रे सहसा प्रतिभासते ।
तरुरुच्चजनेनेव तेनैवाक्रम्यसे क्षणात् ॥ ३९
चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः ।
स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ॥ ४०
त्वमुत्तिष्ठ गिरेः कुञ्जे दशवर्षाण्यखिन्नधीः ।
तपः कुरु ततो ज्ञानमनन्तं समवाप्स्यसि ॥ ४१
इत्युक्त्वा पुण्डरीकाक्षस्तत्रैवान्तरधीयत ।
वाताभ्रवद्दीपकवद्यमुनोत्पीडवत्क्षणात् ॥ ४२
गाधिर्विवेकवशजं वैराग्यपदमागतः ।
शरत्समयपर्यन्ते वैरस्यमिव पादपः ॥ ४३
विचित्रं चेष्टितं धातुरसमञ्जसमागतम् ।
भ्रमद्भ्रमभरोन्मुक्तमतिर्मन्दमगर्हयत् ॥ ४४

त्यर्थः ॥२३॥ विस्मृतेः स्वात्मतत्त्वविस्मरणात् । आवरणनिमित्तादज्ञानादिति यावत् ॥ २४ ॥ मायायां चासंभावितसहस्रमपि संभवत्येवेत्याह—**भूते**ति । तच्छ्वपचत्वादि तथा तत्तत्प्रकारेण दृष्टवानित्येतन्मोहादज्ञानात्संभवत्येव । तथाहि जनैर्निद्रादावसंभावितगोचरोऽपि भ्रमो दृश्यत इत्यर्थः ॥२५॥ मुधा मिथ्यैव । इति एवं मिथ्यास्वभावमपि सत्याभं दृष्टवन्त इत्यर्थः । समेन संकल्पेन समकालादेः संभवादित्यर्थः ॥ २६ ॥ यथाभूतं यथास्थितम् । अनिन्दितं तव श्वपचनिन्दासंबन्धनिवारकमित्यर्थः । तनुतामपक्षयम् ॥ २७ ॥ तेन त्वद्दृष्टसदृशेनैव संनिवेशेन शरीरग्रामगृहदाराद्याकारेण तथैव युक्तोऽभवदित्यर्थः ॥ २८ ॥ तथैवेति सर्वत्रानुषञ्जनीयम् ॥ २९ ॥ यदि तथाभूतोऽन्योऽभूत्तर्हि मम कथं तदनुभवपथं प्राप्तं तत्राह—**भवत** इति । जलान्तर्वर्तिनो भवतश्चित्ते सा कटंजाचारसंस्थितिर्भ्रान्त्या केवलं प्रतिभाता मत्संकल्पवशादित्यर्थः ॥ ३० ॥ कदाप्यदृष्टस्य देशान्तरस्थस्यातीतस्य च कथं पुरोवर्तमानतया दर्शनं तत्राह—**द्रष्टे**ति । यथा ह्यनुभूतमपि विस्मरति तथा अदृष्टमपि पश्यतीत्यर्थः ॥ ३१ ॥ धातुसंस्थितिः संनिपातः ॥ ३२ ॥ यथा त्रैकाल्यदर्शिनो योगिनो दृष्ट्या भविष्यदपि वस्तु तदुत्तरकालिकेषु दृश्यमानेषु भूतकालस्थं भवति तथा हे गाधे, अतीतमपि कटंजाचरितं वर्तमानप्रतिभामेतीत्यर्थः ॥ ३३ ॥ नन्वनात्मन्यनात्मीये च कटंजके तदीयगृहकलत्रादौ च मम स एवाहं तदीयमेव तन्मे मदीयमिति कथं मज्जनमिति चेदत्यल्पमिदमुच्यते । अनात्मविदां सर्वेषामप्यनात्मनि देहे अनात्मीये च गृहकलत्रादावहंममेत्यभिमानदर्शनादात्मविद एव केवलं तन्मज्जनाभावादित्याशयेनाह—**अय**मिति ॥३४॥ सर्वाहंभावनयापि तत्त्वविदस्तत्र न मज्जनं परिच्छिन्नाहंभावस्यैव मज्जनहेतुत्वादित्याह—**सर्वमेवे**ति ॥ ३५ ॥ सर्वाहंभावेऽप्यहंकारसत्त्वान्मग्नप्रायोऽपि ॥ ३६ ॥ अहं तर्हि कीदृश इति चेदान्तरालिक इत्याह—**त्व**मिति । स्वस्थं स्वरूपावस्थितमात्मानमागतः प्राप्तः ॥ ३७ ॥ मेघपदेन तत्कार्यं वृष्टिर्लक्ष्यते । गृहरचनपरगृहप्रवेशादिसम्यग्यत्नशून्यः पुरुष इव ॥ ३८ ॥ आक्रम्यसे तदभिमानेन परिभूयसे ॥३९॥ नाभिर्मध्यम् । सर्वतो भ्रमत इति शेषः । तच्चित्तमाक्रम्य आत्मनि प्रविलापनेन तिरस्कृत्य । तन्मायाचक्रं किंचिदपि न प्रबाधते ॥४०॥ तपश्चित्तनिरोधाभ्यासम् ॥४१॥ वातलीनाभ्रवन्निर्वाणदीपकवद्यमुनातरङ्गवच्चेति मालोपमा ॥४२॥ वैरस्यमस्निग्धताम् ॥ ४३ ॥ भ्रमता भ्रमभरेणोन्मुक्ता मतिर्यस्य तथाविधः सन् धातुः प्राक्तनकर्मलक्षणस्य दैवस्यासमंजसमयुक्तश्वपचभावादिप्रदर्शनरूपं विचित्रं चेष्टितमगर्हयत् ॥ ४४ ॥

जगाम करुणार्द्रात्मा नियमायोत्तमश्रिये ।
विश्रान्त्यै ऋष्यमूकं तु पयोधर इवाचलम् ॥ ४५
निरस्ताशेषसंकल्पस्तपस्तत्र चकार ह ।
दशवर्षाणि तेनासावात्मज्ञानमवाप ह ॥ ४६
अरमत तदनु स्वां प्राप्य सत्तां महात्मा
ह्यपगतभयशोको भोगभूमावनीषु ।
सततमुदितजीवन्मुक्तरूपः प्रशान्तः
सकल इव शशाङ्को घूर्णितापूर्णचेताः ॥ ४७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते गाधेर्ज्ञानप्राप्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥

गाध्युपाख्यानं संपूर्णम् ।

## पञ्चाशः सर्गः ५०

श्रीवसिष्ठ उवाच ।
एवमेषातिवितता दुर्ज्ञाना रघुनन्दन ।
महामोहमयी माया विषमा पारमात्मिकी ॥ १
क मुहूर्तद्वयस्वप्नसंभ्रमाल्लोकदृष्टता ।
कानेकवर्षसंभुक्तश्वपचावनिपभ्रमः ॥ २
क संभ्रमोपलब्धत्वं क प्रत्यक्षनिदर्शनम् ।
कासत्यत्वमसंदिग्धं क सत्यपरिणामिता ॥ ३
अतो वच्मि महाबाहो मायेयं विषमान्वहम् ।
असावधानमनसं संयोजयति संकटे ॥ ४
श्रीराम उवाच ।
एवमस्य कथं ब्रह्मन्मायाचक्रस्य रोधनम् ।
कुर्युः प्रवहतो वेगात्सर्वाङ्गच्छेदकारिणः ॥ ५
श्रीवसिष्ठ उवाच ।
अस्य संसाररूपस्य मायाचक्रस्य राघव ।
चित्तं विद्धि महानाभिं भ्रमतो भ्रमदायिनः ॥ ६
तस्मिन्द्रुतमवष्टब्धे धिया पुरुषयत्नतः ।
गृहीतनाभिवहनान्मायाचक्रं निरुध्यते ॥ ७
अवष्टब्धमनोनाभिमोहचक्रं न गच्छति ।
यथा रज्ज्वां निरुद्धायां कीलकं रज्जुवेष्टितम् ॥ ८
चक्रयुद्धैकतज्ज्ञोऽसि कस्माज्जानासि नानघ ।
चक्रं नाभाववष्टब्धं वशमायाति नान्यथा ॥ ९
चित्तं नाभिमवष्टभ्य तस्माद्यत्नेन राघव ।
संसारचक्रं वहनादात्मनः परिरोधय ॥ १०
एतां युक्तिं विना दुःखमनन्तमितमात्मनः ।
अस्यां दृष्टौ क्षणादन्तं गतमेवावलोकय ॥ ११
चित्ताक्रमणमात्रात्तु परमादौषधादृते ।
प्रयत्नेनापि संसारमहारोगो न शाम्यति ॥ १२
तस्माद्राघव संत्यज्य तीर्थदानतपःक्रियाः ।
श्रेयसे परमायान्तश्चित्तमेव वशं कुरु ॥ १३
चित्तान्तरेव संसारः कुम्भान्तः कुम्भखं यथा ।
चित्तनाशे न संसारः कुम्भनाशे न कुम्भखम् ॥ १४
चिरं संसरणाकाशकोटरं चित्तकुम्भखम् ।
विनाश्यातुलिताकाशस्वरूपं रूपमाविश ॥ १५

नियमाय चित्तनियमनाभ्यासाय । ऋष्यमूकं मतङ्गाश्रमस्थमचलम् ॥ ४५ ॥ तपः 'मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः' इति प्रसिद्धम् ॥ ४६ ॥ तदनु आत्मज्ञानप्राप्त्यनन्तरं महात्मा गाधिः स्वां पारमार्थिकीं सत्तां प्राप्य अपगतभयशोकः सन् सततमुदितं जीवत एव मुक्तरूपं यस्य तथाविधः अतएवापरिच्छिन्नस्वानन्दमदेन घूर्णितमापूर्णं च चेतो यस्य तथाविधः सन् सकलः कलापूर्णः शशाङ्क इवापरिच्छिन्ने ब्रह्माकाशे अरमत विजहार । विश्रान्तिं प्रापेत्यर्थः ॥ ४७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे गाधेर्ज्ञानप्राप्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥

चित्तस्याक्रमणोपाया ज्ञानमाहात्म्यमुत्तमम् ।
चेतोहिपीनतादोषहेतवश्चात्र कीर्तिताः ॥ १ ॥

वर्णितं गाध्युपाख्यानं प्रकृते योजयति—**एव**मित्यादिना । दुर्ज्ञाना अचिन्त्या । पारमात्मिकी परमात्ममात्राश्रयविषया ॥ १ ॥ दुर्ज्ञानतामेव त्रेधा दर्शयति—**क्वे**ति द्वाभ्याम् ॥ २ ॥ ॥ ३ ॥ ४ ॥ 'चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः । स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ॥' इति यद्भगवतान्ते उपदिष्टं तदुपायं जिज्ञासू रामः पृच्छति—**एव**मिति । कुर्युरधिकारिण इति शेषः । पूर्णानन्दात्मनः परिच्छेददुःखापादनमेवाङ्गच्छेदसाम्यादङ्गच्छेदस्तत्कारिणः ॥ ५ ॥ भगवदुपदिष्टमायाचक्रावष्टम्भप्रकारं प्रथमं प्रपञ्चयितुमुक्तमनुवदति—**अस्ये**त्यादिना ॥ ६ ॥ मायाचक्रं गृहीता नाभिर्यस्य तत्तथाविधं सद्वहनाद्भ्रमणान्निरुध्यते । निवर्तते इति यावत् ॥ ७ ॥ यथा बालानां कांस्यादिमयं क्रीडाचक्रं तन्तुवेष्टितनाभिकीलकं तर्जन्यग्रनिबद्धायां रज्ज्वां तन्तौ निरुद्धायां न गच्छति न भ्रमति तद्वत् ॥ ८ ॥ किंच हे राघव, त्वं चक्रयुद्धेष्वेको मुख्यस्तज्ज्ञश्च विष्टम्भभ्रमणाद्यभिज्ञोऽसि अतः कस्मादुक्तदृष्टान्तं न जानासि ॥ ९ ॥ आत्मनो वहनाज्जन्मपरम्पराप्रापणात् सम्यङ्निरोधय निरुन्धि ॥ १० ॥ एतां चित्तरोधनलक्षणां युक्तिं योगमुपायं विना आत्मनोऽनन्तं दुःखमितं प्राप्तम् । तच्च दुःखमस्यां दृष्टौ प्राप्तायां सत्यामन्तं नाशं गतमेव अवलोकय । मदुक्तार्थे संशये त्वं तथा कृत्वा पश्येत्यर्थः ॥ ११ ॥ उपायान्तरं च नास्तीत्याह—**चित्ते**ति ॥ १२ ॥ १३ ॥ तत्रोपपत्तिमाह—**चित्तान्त**रिति ॥ १४ ॥ यथा कुम्भखे निरुद्धो मशः

श्रीभगवानुवाच ।

ब्रह्मन् जगदिदं मायामहाशम्बरडम्बरम् ।
सर्वा आश्चर्यकलनाः संभवन्तीह विस्मृतेः ॥ २४
भूतकीरपुरे मोहाद्दृष्टवांस्तत्तथा भवान् ।
इत्येतत्संभवत्येव दृश्यते हि जनैर्भ्रमः ॥ २५
भूतास्त्वमिव कीराश्च दृष्टवन्तस्तथा भ्रमम् ।
मुधैवेत्यपि सत्याभं समकालादिसंभवात् ॥ २६
इदं तु शृणु वक्ष्यामि यथाभूतमनिन्दितम् ।
यथैति तनुतां चिन्ता मार्गशीर्षलतेव ते ॥ २७
योऽसौ कटंजको नाम श्वपचो भूतमण्डले ।
तेनैव संनिवेशेन स तथैवाभवत्पुरा ॥ २८
तथैव विकलत्रत्वं प्राप्य देशान्तरं गतः ।
बभूव कीरनृपतिः प्रविवेशानलं ततः ॥ २९
भवतः केवलं चित्ते जलान्तर्वर्तिनस्तदा ।
प्रतिभाता तथाभूता कटंजाचारसंस्थितिः ॥ ३०
द्रष्टानुभूतमप्यर्थं कदाचिद्विस्मरत्यलम् ।
कदाचिदप्यदृष्टं तु चेतः पश्यति दृष्टवत् ॥ ३१
यथा स्वप्नमनोराज्यधातुसंस्थितिविभ्रमाः ।
जाग्रत्यपि तथैवाङ्ग दृश्यन्ते मनसा स्वयम् ॥ ३२
भविष्यद्भूतकालस्थं यथा त्रैकाल्यदर्शिनः ।
प्रतिभामेति गाधे यत्कटंजाचरितं तथा ॥ ३३
अयं सोऽहमिदं तन्म इति मज्जति नात्मवान् ।
अयं सोऽहमिदं तन्म इति मज्जत्यनात्मवान् ॥ ३४
सर्वमेवाहमेवेति तत्त्वज्ञो नावसीदति ।
न गृह्णाति पदार्थेषु विभागानर्थभावनम् ॥ ३५
तेनासौ भ्रमयोगेषु सुखदुःखविलासिषु ।
न निमज्जति मग्नोऽपि तुम्बीपात्रमिवाम्भसि ॥ ३६
त्वं तावद्वासनाजालग्रस्तचित्तो विचेतनः ।
किंचिच्छेषमहाव्याधिरिव न स्वस्थमागतः ॥ ३७
ज्ञानस्यापरिपूर्णत्वान्न शक्नोषि मनोभ्रमम् ।
विनिवारयितुं मेघमसस्यग्यत्नवानिव ॥ ३८
यदेव ते मनोमात्रे सहसा प्रतिभासते ।
तरुरुच्चजनेनेव तेनैवाक्रम्यसे क्षणात् ॥ ३९
चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः ।
स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ॥ ४०
त्वमुत्तिष्ठ गिरेः कुञ्जे दशवर्षाण्यखिन्नधीः ।
तपः कुरु ततो ज्ञानमनन्तं समवाप्स्यसि ॥ ४१
इत्युक्त्वा पुण्डरीकाक्षस्तत्रैवान्तरधीयत ।
वाताभ्रवद्दीपकवद्यमुनोत्पीडवत्क्षणात् ॥ ४२
गाधिर्विवेकवशजं वैराग्यपदमागतः ।
शरत्समयपर्यन्ते वैरस्यमिव पादपः ॥ ४३
विचित्रं चेष्टितं धातुरसमञ्जसमागतम् ।
भ्रमद्भ्रमभरोन्मुक्तमतिर्मन्दमगर्हयत् ॥ ४४

---

त्यर्थः ॥२३॥ विस्मृतेः स्वात्मतत्त्वविस्मरणात् । आवरणनिमित्तादज्ञानादिति यावत् ॥ २४ ॥ मायायां चासंभावितसहस्रमपि संभवत्येवेत्याह—भूतेति । तच्छ्वपचत्वादि तथा तत्तत्प्रकारेण दृष्टवानित्येतन्मोहादज्ञानात्संभवत्येव । तथाहि जनैर्निद्रादावसंभावितगोचरोऽपि भ्रमो दृश्यत इत्यर्थः ॥२५॥ मुधा मिथ्यैव । इति एवं मिथ्यास्वभावमपि सत्याभं दृष्टवन्त इत्यर्थः । समेन संकल्पेन समकालादेः संभवादित्यर्थः ॥ २६ ॥ यथाभूतं यथास्थितम् । अनिन्दितं तव श्वपचनिन्दासंबन्धनिवारकमित्यर्थः । तनुतामपक्षयम् ॥ २७ ॥ तेन त्वद्दृष्टसदृशेनैव संनिवेशेन शरीरग्रामगृहदाराद्याकारेण तथैव युक्तोऽभवदित्यर्थः ॥ २८ ॥ तथैवेति सर्वत्रानुषञ्जनीयम् ॥ २९ ॥ यदि तथाभूतोऽन्योऽभूत्तर्हि मम कथं तदनुभवपथं प्राप्तं तत्राह—भवत इति । जलान्तर्वर्तिनो भवतश्चित्ते सा कटंजाचारसंस्थितिर्भ्रान्त्या केवलं प्रतिभाता मत्संकल्पवशादित्यर्थः ॥ ३० ॥ कदाप्यदृष्टस्य देशान्तरस्थस्यातीतस्य च कथं पुरोवर्तमानतया दर्शनं तत्राह—द्रष्टेति । यथा अनुभूतमपि विस्मरति तथा अदृष्टमपि पश्यतीत्यर्थः ॥ ३१ ॥ धातुसंस्थितिः संनिपातः ॥ ३२ ॥ यथा त्रैकाल्यदर्शिनो योगिनो दृष्ट्या भविष्यदपि वस्तु तदुत्तरकालिकेषु दृश्यमानेषु भूतकालस्थं भवति तथा हे गाधे, अतीतमपि कटंजाचरितं वर्तमानप्रतिभामेतीत्यर्थः ॥ ३३ ॥ नन्वनात्मन्यनात्मीये च कटंजके तदीयगृहकलत्रादौ च मम स एवाहं तदीयमेव तन्मे मदीयमिति कथं मज्जनमिति चेदत्यल्पमिदमुच्यते । अनात्मविदां सर्वेषामप्यनात्मनि देहे अनात्मीये च गृहकलत्रादावहंममेत्यभिमानदर्शनादात्मविद एव केवलं तन्मज्जनाभावादित्याशयेनाह—अयमिति ॥३४॥ सर्वाहंभावनयापि तत्त्वविदस्तत्र न मज्जनं परिच्छिन्नाहंभावस्यैव मज्जनहेतुत्वादित्याह—सर्वमेवेति ॥ ३५ ॥ सर्वाहंभावेऽप्यहंकारसत्त्वान्मग्नप्रायोऽपि ॥ ३६ ॥ अहं तर्हि कीदृश इति चेदान्तरालिक इत्याह—त्वमिति । स्वस्थं स्वरूपावस्थितमात्मानमागतः प्राप्तः ॥ ३७ ॥ मेघपदेन तत्कार्यं वृष्टिर्लक्ष्यते । गृहरचनपरगृहप्रवेशादिसम्यग्यत्नशून्यः पुरुष इव ॥ ३८ ॥ आक्रम्यसे तदभिमानेन परिभूयसे ॥३९॥ नाभिर्मध्यम् । सर्वतो भ्रमत इति शेषः । तच्चित्तमाक्रम्य आत्मनि प्रविलापनेन तिरस्कृत्य । तन्मायाचक्रं किंचिदपि न प्रबाधते ॥४०॥ तपश्चित्तनिरोधाभ्यासम् ॥४१॥ वातलीनाभ्रवन्निर्वाणदीपकवद्यमुनातरङ्गवच्चेति मालोपमा ॥४२॥ वैरस्यमञ्जिरधताम् ॥ ४३ ॥ भ्रमता भ्रमभरेणोन्मुक्ता मतिर्यस्य तथाविधः सन् धातुः प्राक्तनकर्मलक्षणस्य दैवस्यासमंजसमयुक्तश्वपचभावादिप्रदर्शनरूपं विचित्रं चेष्टितमगर्हयत् ॥ ४४ ॥

जगाम करुणार्द्रात्मा नियमायोत्तमश्रिये ।
विश्रान्त्यै ऋष्यमूकं तु पयोधर इवाचलम् ॥ ४५
निरस्ताशेषसंकल्पस्तपस्तत्र चकार ह ।
दशवर्षाणि तेनासावात्मज्ञानमवाप ह ॥ ४६

अरमत तदनु स्वां प्राप्य सत्तां महात्मा
ह्यपगतभयशोको भोगभूमावनीषु ।
सततमुदितजीवन्मुक्तरूपः प्रशान्तः
सकल इव शशाङ्को घूर्णितापूर्णचेताः ॥ ४७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते गाधेर्ज्ञानप्राप्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥

## गाध्युपाख्यानं संपूर्णम् ।

## पञ्चाशः सर्गः ५०

श्रीवसिष्ठ उवाच ।
एवमेषातिवितता दुर्ज्ञाना रघुनन्दन ।
महामोहमयी माया विषमा पारमात्मिकी ॥ १
क मुहूर्तद्वयस्वप्नसंभ्रमाल्लोकदृष्टता ।
कानेकवर्षसंभुक्तश्वपचावनिपभ्रमः ॥ २
क संभ्रमोपलब्धत्वं क प्रत्यक्षनिदर्शनम् ।
कासत्यत्वमसंदिग्धं क सत्यपरिणामिता ॥ ३
अतो वच्मि महाबाहो मायेयं विषमान्वहम् ।
असावधानमनसं संयोजयति संकटे ॥ ४
श्रीराम उवाच ।
एवमस्य कथं ब्रह्मन्मायाचक्रस्य रोधनम् ।
कुर्युः प्रवहतो वेगात्सर्वाङ्गच्छेदकारिणः ॥ ५
श्रीवसिष्ठ उवाच ।
अस्य संसाररूपस्य मायाचक्रस्य राघव ।
चित्तं विद्धि महानाभिं भ्रमतो भ्रमदायिनः ॥ ६
तस्मिन्द्रुतमवष्टब्धे धिया पुरुषयत्नतः ।
गृहीतनाभिवहनान्मायाचक्रं निरुध्यते ॥ ७

अवष्टब्धमनोनाभिमोहचक्रं न गच्छति ।
यथा रज्ज्वां निरुद्धायां कीलकं रज्जुवेष्टितम् ॥ ८
चक्रयुद्धैकतज्ज्ञोऽसि कस्माज्जानासि नानघ ।
चक्रं नाभाववष्टब्धं वशमायाति नान्यथा ॥ ९
चित्तं नाभिमवष्टभ्य तस्माद्यत्नेन राघव ।
संसारचक्रं वहनादात्मनः परिरोधय ॥ १०
एतां युक्तिं विना दुःखमनन्तमितमात्मनः ।
अस्यां दृष्टौ क्षणादन्तं गतमेवावलोकय ॥ ११
चित्ताक्रमणमात्रात्तु परमादौषधादृते ।
प्रयत्नेनापि संसारमहारोगो न शाम्यति ॥ १२
तस्माद्राघव संत्यज्य तीर्थदानतपःक्रियाः ।
श्रेयसे परमायान्तश्चित्तमेव वशं कुरु ॥ १३
चित्तान्तरेव संसारः कुम्भान्तः कुम्भखं यथा ।
चित्तनाशे न संसारः कुम्भनाशे न कुम्भखम् ॥ १४
चिरं संसरणाकाशकोटरं चित्तकुम्भखम् ।
विनाश्यातुलिताकाशस्वरूपं रूपमाविश ॥ १५

नियमाय चित्तनियमनाभ्यासाय । ऋष्यमूकं मतङ्गाश्रमस्थमचलम् ॥ ४५ ॥ तपः 'मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः' इति प्रसिद्धम् ॥ ४६ ॥ तदनु आत्मज्ञानप्राप्त्यनन्तरं महात्मा गाधिः स्वां पारमार्थिकीं सत्तां प्राप्य अपगतभयशोकः सन् सततमुदितं जीवत एव मुक्तरूपं यस्य तथाविधः अतएवापरिच्छिन्नस्वानन्दमदेन घूर्णितमापूर्णं च चेतो यस्य तथाविधः सन् सकलः कलापूर्णः शशाङ्क इवापरिच्छिन्ने ब्रह्माकाशे अरमत विजहार । विश्रान्तिं प्रापेत्यर्थः ॥ ४७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे गाधेर्ज्ञानप्राप्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥

चित्तस्याक्रमणोपाया ज्ञानमाहात्म्यमुत्तमम् ।
चेतोहिपीनतादोषहेतवश्चात्र कीर्तिताः ॥ १ ॥

वर्णितं गाध्युपाख्यानं प्रकृते योजयति—एवमित्यादिना । दुर्ज्ञाना अचिन्त्या । पारमात्मिकी परमात्ममात्राश्रयविषया ॥ १ ॥ दुर्ज्ञानतामेव त्रेधा दर्शयति—क्वेति द्वाभ्याम् ॥ २ ॥ ॥ ३ ॥ ४ ॥ 'चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः । स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ॥' इति यद्भगवतान्ते

उपदिष्टं तदुपायं जिज्ञासू रामः पृच्छति—एवमिति । कुर्युरधिकारिण इति शेषः । पूर्णानन्दात्मनः परिच्छेददुःखापादनमेवाङ्गच्छेदसाम्यादङ्गच्छेदस्तत्कारिणः ॥ ५ ॥ भगवदुपदिष्टमायाचक्रावष्टम्भप्रकारं प्रथमं प्रपञ्चयितुमुक्तमनुवदति—अस्येत्यादिना ॥ ६ ॥ मायाचक्रं गृहीता नाभिर्यस्य तत्तथाविधं सद्वहनाद्भ्रमणान्निरुध्यते । निवर्तते इति यावत् ॥ ७ ॥ यथा बालानां कांस्यादिमयं क्रीडाचक्रं तन्तुवेष्टितनाभिकीलकं तर्जन्यप्रनिबद्धायां रज्ज्वां तन्तौ निरुद्धायां न गच्छति न भ्रमति तद्वत् ॥ ८ ॥ किंच हे राघव, त्वं चक्रयुद्धेष्वेको मुख्यस्तज्ज्ञश्च विष्टम्भभ्रमणाद्यभिज्ञोऽसि अतः कस्मादुक्तदृष्टान्तं न जानासि ॥ ९ ॥ आत्मनो वहनाज्जन्मपरम्पराप्रापणात् सम्यङ्निरोधय निरुन्धि ॥ १० ॥ एतां चित्तरोधनलक्षणां युक्तिं योगमुपायं विना आत्मनोऽनन्तं दुःखमितं प्राप्तम् । तच्च दुःखमस्यां दृष्टौ प्राप्तायां सत्यामन्तं नाशं गतमेव अवलोकय । मदुक्तार्थे संशये त्वं तथा कृत्वा पश्येत्यर्थः ॥ ११ ॥ उपायान्तरं च नास्तीत्याह—चित्तेति ॥ १२ ॥ १३ ॥ तत्रोपपत्तिमाह—चित्तान्तरिति ॥ १४ ॥ यथा कुम्भखे निरुद्धो मश-

वर्तमानमनायासं भजद्व्राह्यधिया क्षणम् ।
भूतं भविष्यदभजद्याति चित्तमचित्तताम् ॥ १६
संकल्पांशानुसंधानवर्जनं चेत्प्रतिक्षणम् ।
करोषि तदचित्तत्वं प्राप्त एवासि पावनम् ॥ १७
यावत्संकल्पकलना तावच्चित्तविभूतयः ।
यावज्जलदविस्तारस्तावत्खजलबिन्दवः ॥ १८
सचित्तं चेतनं यावत्तावत्संकल्पकल्पनम् ।
सचन्द्रांशु जगद्यावत्तावत्प्रालेयलेशकाः ॥ १९
चेतनं चित्तरिक्तं चेद्भावितं तत्स्वसंसृतेः ।
आमूलमेव दग्धानि विद्धि मूलानि सिद्धवत् ॥ २०
चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते ।
निर्मनस्कस्वभावं तन्न तत्र कलनामलः ॥ २१
सा सत्यता सा शिवता सावस्था पारमात्मिकी ।
सर्वज्ञता सा सा दृष्टिर्नतु यत्र मनः क्षतम् ॥ २२
मनो यत्र तु तत्राशास्तत्र दुःखसुखानि च ।
सदा संनिधिमायान्ति श्मशान इव वायसाः ॥ २३
वस्तुतत्त्वावबोधेन सर्वभावव्यवस्थितेः ।
संसृतिव्रततेर्बीजं संकल्पेनोपजायते ॥ २४
शास्त्रसज्जनसंपर्कसंतताभ्याससयोगतः ।
जागतानामवस्तुत्वं भावानामवगम्यते ॥ २५

अविवेकादुपाहृत्य चेतसोद्यमनिश्चयैः ।
बलात्कारेण संयोज्यं शास्त्रसत्पुरुषक्रमैः ॥ २६
मुख्यं कारणमात्मैव परमात्मावलोकने ।
अगाधे पतितं रत्नं रत्नेनैवावलोक्यते ॥ २७
स्वानुभूतानि दुःखानि स्वात्मैव त्यक्तुमिच्छति ।
तेनात्मैवात्मविज्ञाने हेतुरेकः परः स्मृतः ॥ २८
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
निरस्तमनननानन्तसंविन्मात्रपरो भव ॥ २९
जायमानस्तथा जीवन्म्रियमाणः क्रियारतः ।
स्वात्मन्यमलतां प्राप्ते संविदंशे स्थिरो भव ॥ ३०
ममेदं तदयं सोऽहमिति संत्यज्य वासनाः ।
एकनिष्ठतयान्तस्थसंविन्मात्रपरो भव ॥ ३१
वर्तमानभविष्यन्त्योः स्थित्योरादेहमेकधीः ।
स्वसंवित्त्यानुसंधानसमाधानपरो भव ॥ ३२
बाल्ययौवनवृद्धेषु दुःखेषु च सुखेषु च ।
जाग्रत्स्वप्नसुषुप्तेषु स्वसंवित्तिपरो भव ॥ ३३
मलं संवेद्यमुत्सृज्य मनो निर्गलयन्परम् ।
आशापाशमलं छित्वा स्वसंवित्तिपरो भव ॥ ३४
शुभाशुभस्वसंकेतसंशान्ताशाविषूचिकः ।
नष्टेष्टानिष्टदृष्टिस्त्वं संवित्सारपरो भव ॥ ३५

कादिः स्वदुःखसंसरणाकाशकोटरं दैवात्कुम्भनाशेन विनाश्या-तुलितमनुपमं महाकाशस्वरूपमाविश्य मुक्तबन्धः सुखी भवति तथा त्वमपि चित्तनाशेन चित्तकुम्भखं विनाश्य अतुलितं ब्रह्माकाशमाविशेत्यर्थः ॥ १५ ॥ चित्तनाशे तर्हि क उपायस्तमाह—**वर्तमान**मिति । भूतभविष्यद्विषयानुसंधानत्यागादेव क्रमाच्चित्तं क्षीयत इत्यर्थः ॥ १६ ॥ भाविविषयसंकल्पस्य तदंशभूतार्थानुसंधानस्य च वर्जनं प्रतिक्षणं सावधानतया करोषि चेत्तत्तर्हि ॥ १७ ॥ खजलस्य वर्षस्य बिन्दवः ॥१८॥ एवं संकल्पा अपि सति चित्ते दुर्वारा इत्याह—**सचित्त**मिति । चेतनं चिदात्मरूपम् ॥ १९ ॥ चित्तरिक्तं चित्तात्पृथक्कृतं कूटस्थमिति यावत् । तत्तदा स्वसंसृतेर्मूलानि कामकर्मवासनादीनि आमूलं मूलाज्ञानेन सह दग्धानीति सिद्धवत्कारेण महासिद्धसाम्येन वा विद्धीत्यर्थः ॥ २० ॥ नन्वस्तु दाहस्तथापि चेतने पुनः कलनामलवशाच्चित्तादिसमुद्भवः किं न स्यादित्याशङ्क्याह—**चेतन**मिति ॥ २१ ॥ चित्तरहितचेतनस्वरूपं यत्सैव परमार्थसत्यता । शिवता निरतिशयानन्दरूपता । सैव परमात्मस्वभावभूता अवस्था । सर्वज्ञता सर्वावभासकचिद्रूपता । दृष्टिः परमार्थदृक् । यत्र यस्यामवस्थायाम् । क्षतमिति निन्दार्थं विशेषणम् ॥ २२ ॥ निन्द्यतावीजान्येव दर्शयति—**मन** इति ॥ २३ ॥ ननु विदुषामपि मनोऽस्ति तत्राप्याशादीनि कुतो नोपजायन्ते तत्राह-**संसृती**ति । सत्यमस्ति तथापि तेषां मानसे संकल्पे आ[illegible]

स्थापिकायाः संसारवल्ल्या वासनात्मकं बीजमेव न जायते वस्तुतत्त्वाववोधेन बाधितत्वादित्यर्थः ॥ २४ ॥ वस्तुत्वेनावगतानां केनोपायेनावस्तुत्वावगमलक्षणो बाधस्तमाह—**शास्त्रे**ति ॥ २५ ॥ उपाहृत्य निवर्त्य । उद्यमः पुरुषयत्नस्तत्सहितैरवश्यमस्मिञ्जन्मनि ज्ञानं साधयामीति दृढनिश्चयैः ॥ २६ ॥ किं मुख्यं कारणमवलम्ब्य शास्त्रादिनाप्यात्मान्वेष्य इति चेत्स्वयंज्योतीरूपं प्रत्यगात्मानमेव । तद्वेद्यवैलक्षण्येन तस्यैव स्वतः प्रथमानत्वादित्याशयेनाह—**मुख्य**मिति । रत्नेन प्रकाशमानेन स्वेनैवेत्यर्थः ॥ २७ ॥ उक्तां मुख्यकारणतां स्फुटयति—**स्वे**ति। स्वेनानुभूतानि दृश्यजातानि दुःखान्येवेति विवेकेन येन हेतुना त्यक्तुमिच्छति तेनैव हेतुना स्वात्मावलोकने तत्प्रतिकूलस्वभावः स्वयं मुख्यो हेतुः। नहि स्वयमप्यसुखजडस्वभावत्वे तत्प्रतिकूलः स्यादिति भावः ॥ २८ ॥ तस्मात्त्वं सदा तदेकप्रवणो भव तल्लाभायेत्याह—**प्रलपन्नि**त्यादिना ॥ २९ ॥ जन्ममरणग्रहणं तत्समसुखदुःखदुर्दशान्तरेष्वप्यात्मप्रवणताया अविस्मरणविधानार्थम् । शोधनेनामलतां प्राप्ते संविन्मात्रांशे ॥ ३० ॥ इदं पुरोवर्ति तद्दूरस्थं च मम । अयं स प्रत्यभिज्ञायमानो देहोऽहमिति वासनाः सम्यक् त्यक्त्वा ॥ ३१ ॥ वर्तमाना बाल्यादिस्थितिर्भविष्यन्ती यौवनराज्यादिस्थितिस्तयोरनुसंधानं ध्यानं समाधानं समाधिः ॥ ३२ ॥ उक्तमेव स्पष्टमाह—**बाल्ये**ति ॥ ३३ ॥ संवेद्यं बाह्यविषयलक्षणम् ॥ ३४ ॥ शुभाशुभलक्षणौ यौ स्वसंकल्पकृतसंकेतौ तयोः संशान्ता आशाविषूचिका यस्य ।

सकर्तृकर्मकरणान्स्वास्पर्शानन्तरा स्पृशन् ।
निर्विकल्पनिरालम्बः स्वचिन्मात्रपरो भव ॥ ३६
जाग्रत्येव हि संसुप्तां भावयन्सुस्थिरां स्थितिम् ।
सर्वमस्मीति संचिन्त्य सत्तैकात्मवपुर्भव ॥ ३७
नानाऽनानादशामुक्तो युक्तो मुक्ततया समे ।
समग्रकलनादीपः स्वचिन्मात्रपरो भव ॥ ३८
आत्मतापरते त्यक्त्वा निर्विभागो जगत्स्थितौ ।
वज्रस्तम्भवदात्मानमवलम्ब्य स्थिरो भव ॥ ३९
स्थित्वान्तर्मानसान्पाशानाशारूपानुदारया ।
धिया धैर्यैकधर्मिण्या निर्धर्माधर्मतां व्रज ॥ ४०
समास्वादयतस्तत्त्वं स्वसंवेदनधर्मिणः ।
विषं हालाहलमपि यास्यत्यमृततामथ ॥ ४१
तदोदेति महामोहः संसृतिभ्रमकारणम् ।
निर्मलाया निरंशायाः संवित्तेश्चामतिर्यदा ॥ ४२
तदा संक्षीयते मोहः संसारभ्रमकारणम् ।
निर्मलायां निरंशायां स्वसंवित्तौ स्थितिर्यदा ॥ ४३
स्वरूपमनुयातस्य तीर्णस्याशामहार्णवम् ।
प्रसरिष्यति ते संवित्सूर्यांशुरिव सर्वतः ॥ ४४
स्वभावमालोकयत आनन्दाद्वयसंस्थितेः ।
रसायनमपि स्वादु राम प्रतिविषायते ॥ ४५
तैर्नो भजामहे पुंभिर्ये स्वभावमुपागताः ।
शेषाः पुरुषनामानो गर्दभा दीर्घबाहवः ॥ ४६
पर्वतात्पर्वतं यान्ति पुरोऽद्रेरिव दन्तिनः ।
परां कोटिं प्रयातस्य स्वसंवित्त्युन्नतस्थितेः ॥ ४७
अदृष्टादृश्यसीमानोऽन्तः सूर्यादीन्यखिलान्यपि ।
न तेजांस्युपकुर्वन्ति स्वसंचिद्दिव्यचक्षुषः ॥ ४८
अवस्तुतां व्रजन्त्येते माध्याह्ना इव दीपकाः ।
अर्कादयो महालोका विद्ययाधिगतात्मनः ॥ ४९
तेजोंशुषु प्रभावेषु बलिष्वपि महत्स्वपि ।
सर्वेषून्नतियुक्तेषु तत्त्वज्ञः परमोन्नतः ॥ ५०
भान्तीह भासा यस्यार्कवह्नीन्दुमणितारकाः ।
तथा जगति राजन्ते ज्ञातज्ञेया नरोत्तमाः ॥ ५१
धराविवरकीटेभ्यो गर्दभेभ्योऽपि मानवः ।
तिर्यग्भ्यश्चाप्यतत्त्वज्ञा राम तुच्छतराः स्मृताः ॥ ५२
तावत्संमोहवेतालो देही यावदनात्मवान् ।
आत्मज्ञ एव संयुक्तश्चेतनेनेति तद्विदः ॥ ५३
अनात्मज्ञो हि दुःखेहः प्रस्फुरन्नपि भूतले ।
शव एव भ्रमत्युच्चैरात्मज्ञस्तु सचेतनः ॥ ५४
दूरादात्मज्ञता याति चित्ते पीवरतां गते ।
आलोकलक्ष्मीरभितो महामेघ इवोत्थिते ॥ ५५

---

अतएव नष्टेष्टानिष्टा दृष्टिर्यस्य ॥ ३५ ॥ कर्ता विज्ञानमयः, कर्म बाह्यविषयाः, करणानीन्द्रियाणि तत्सहितान् । स्वं न स्पृशन्तीति स्वास्पर्शानेवंविधसंसारान् स्वस्यान्तरा मध्ये मणिः स्वान्तर्गतप्रतिबिम्बानिव स्पृशन्प्रथयन् ॥ ३६ ॥ संसुप्तां सुषुप्तवन्निर्विकल्पाम् ॥ ३७ ॥ नानादशा जाग्रत्स्वप्नौ अनानादशा सुषुप्तिस्ताभ्यां सृष्टिप्रलयदशाभ्यां वा मुक्तः । समग्रस्य दृश्यस्य कलनायां प्रथायां दीपः । समस्तानां सकलनानाबुद्धिवृत्तीनां दीपवत्प्रकाशक इति वा ॥ ३८ ॥ आत्मता स्वता परता तदन्यता ते त्यक्त्वा ॥३९॥ निर्धर्माधर्मतां धर्माधर्मरहितताम् ॥ ४० ॥ सर्वस्यामृतत्वे संपन्ने विषस्याप्यमृतताया अर्थसिद्धत्वादिति भावः ॥४१॥ अमतिर्विस्मृतिः । अज्ञानमिति यावत् ॥ ४२ ॥ ४३ ॥ **तीर्णस्येति** । स्वरूपप्राप्त्यैवाशामहार्णवतरणात् 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवद्वचनादिति भावः ॥ ४४ ॥ मुक्तस्यान्यत्राशासंभावना दूरे, प्रत्युतामृतादिरसायनास्वादेऽप्यात्मानन्दास्वादविघ्नत्वसंभावनया विषवद्धेयताबुद्ध्युदयादित्याशयेनाह—**स्वभावमिति** । प्रतिकूलं विषमिवाचरति प्रतिविषायते ॥ ४५ ॥ ये पुरुषा नोऽस्माकं स्वभावं प्रत्यगात्मभावमुपागता जीवन्मुक्ताः पुंजन्मसार्थकीकरणात्पुरुषार्थसाधनात्सफलपौरुषत्वाच्च पुंभिस्तैः पुरुषधौरेयैः सह भजामहे सदा मैत्रीमिति शेषः । अन्ये तु पुरुषार्थोपयोगिपौरुषहीनत्वान्नाममात्रेण पुरुषा नार्थलेशेनापीति गर्दभवदुपेक्ष्या एव न दर्शनादियोग्या अपीत्याशयेनाह—**शेषा इति** ॥४६॥ नन्वन्येऽपि योगिन उपासकाश्च जगति महान्तः सन्त्येव तेभ्यो-

ऽपि तत्त्वविद एव क उत्कर्षस्तत्राह—**पर्वतादिति**। स्वसंवित्त्या सर्वोन्नतस्थितेरतएव परां कोटिमुत्कर्षकाष्ठां प्रयातस्य तत्त्वविदः पुरो योगिप्रभृतयो ज्ञानार्थं तांस्तान्महत उपसर्पन्तोऽद्रेर्मेर्वादेः पुरो दन्तिनः प्रत्यन्तपर्वतात्पर्वतान्तरं यान्तीव भासन्ते, न मेरुरिव सर्वोन्नता दृढविश्रान्ताश्चेत्यर्थः ॥४७॥ स्वसंवित्त्या उन्नतस्थितिमुपपादयति—**अदृष्टेति** । प्राक्केनाप्यदृष्टाः सांप्रतमग्रे च अदृश्या द्रष्टुमशक्याः सीमानोऽवधयो यस्य तथाविधस्य स्वसंविल्लक्षणं दिव्यं चक्षुर्यस्य तस्य तत्त्वविदः अन्तः कल्पितानि सूर्यादीन्यखिलान्यपि तेजांसि नोपकुर्वन्तीति स्वसंवित्त्यैव तस्योन्नतस्थितिरित्यर्थः ॥ ४८ ॥ न केवलं नोपकर्तुं शक्नुवन्ति किंतु तत्पुरतोऽवस्तुतामेव गच्छन्तीत्याह—**अवस्तुतामिति** ॥ ४९ ॥ अत उक्तं सिद्धमित्याह—**तेजोंशुष्विति** । तेजसः अंशुषु कार्येषु प्रकाशनेषु योगसिद्धिवशित्वादिप्रभावेषु बलिषु शरीरादिबलवत्सु ऐश्वर्यायुरादिना महत्सु अन्येष्वपि वाग्मित्वाद्युन्नतियुक्तेषु सर्वेषु मध्ये परमोन्नतः । सर्वौन्नत्यानामेतस्मिन्नध्यस्तत्वादिति भावः ॥ ५० ॥ यस्य जगदीश्वरस्य भासा भान्ति तथा तत्तुल्यतयेत्यर्थः ॥ ५१ ॥ तुच्छतरा मूढतराः । तत्त्वज्ञानाभावे ततोऽप्यधमतमयोनिकोटिप्राप्तेर्दुर्वारत्वादिति भावः ॥ ५२ ॥ सतोऽप्यात्मनोऽज्ञानेनासत्त्वापादनादनात्मवान् अतएवासावचेतन इति आत्मज्ञ एव चेतनेन संयुक्त इति तद्विद आहुरिति शेषः ॥ ५३ ॥ दुःखदाहार्था ईहा चेष्टा यस्य । एवार्थे तुशब्दः ॥ ५४ ॥ चित्ते पीवरतां स्थौल्यं गते सति ।

भोगाभोगतिरस्कारैः कार्श्यं नेयं शनैर्मनः ।
रसापहारैस्तज्ज्ञेन कालेनाजीर्णपर्णवत् ॥ ५६

अन्यात्मन्यात्मभावेन देहमात्रास्थयानया ।
पुत्रदारकुटुम्बैश्च चेतो गच्छति पीनताम् ॥ ५७

अहंकारविकारेण ममतामलहेलया ।
इदं ममेति भावेन चेतो गच्छति पीनताम् ॥ ५८

जरामरणदुःखेन व्यर्थमुन्नतिमीयुषा ।
दोषाशीविषकोशेन चेतो गच्छति पीनताम् ॥ ५९

आधिव्याधिविलासेन समाश्वासेन संसृतेः ।
हेयादेयप्रयत्नेन चेतो गच्छति पीनताम् ॥ ६०

स्नेहेन धनलोभेन लाभेन मणियोषिताम् ।
आपातरमणीयेन चेतो गच्छति पीनताम् ॥ ६१

दुराशाक्षीरपानेन भोगानिलवलेन च ।
आस्वादानेन चारेण चित्ताहिर्याति पीनताम् ॥ ६२

आगमापायवपुषा विषवैषम्यशंसिना ।
भोगाभोगेन भीमेन चेतो गच्छति पीनताम् ॥ ६३

शरीरदुःश्वभ्रचिरप्ररूढं
चिन्ताचयोच्चाकृतिमञ्जरीकम् ।
जरामृतिव्याधिफलौघनम्रं
कामोपभोगौघविकासिपुष्पम् ॥ ६४

विचारसारक्रकचेन चित्त-
विषद्रुमं त्वद्धुतमद्रिकल्पम् ।
आशामहाशाखमशङ्कमेनं
छिन्धि प्रसह्यात्र विकल्पपत्रम् ॥ ६५

मत्तेक्षणं चैकतटोपवेशं
विश्रान्तिसौख्येष्वसमर्थमुग्रम् ।
आलोकनोत्कं सुजनक्रमाब्ज-
खण्डस्य चण्डं सुखदुःखगण्डम् ॥ ६६

चेतोगजं कायकुकाननस्थं
सुतीक्ष्णया धीकरजाग्रपङ्क्त्या ।
विदारयादीर्घविकारदन्तं
क्रियाकरं राघव राजसिंह ॥ ६७

रतिं गतं नित्यमसत्प्रदेशे
शरीरमांसग्रसनेन पुष्टम् ।
दुष्टक्रियाकर्कशचञ्चुदण्ड-
मेकेक्षणं पुष्टतमोंशुकृष्णम् ॥ ६८

दूरे समुत्सारय भारभूतं
दुश्चेष्टितं कर्कशमारटन्तम् ।
गन्धोद्धतं कायकुलायकोशा-
द्वोपशान्त्यै निजचित्तकाकम् ॥ ६९

तृष्णापिशाच्या परिचर्यमाणं
विश्रान्तमज्ञानमहावटेषु ।
भ्रान्तं चिरं देहशतेष्वटव्यां
स्वसंसृतौ चेतनवर्जितेषु ॥ ७०

---

आत्मज्ञता ईषत्संपादितापि दूरायाति ॥ ५५ ॥ अतः कारणान्मनः प्राप्तानां भोगानां विषयाणामाभोगः सेवनं तत्तिरस्कारैरप्राप्तानां रसस्याभिलाषस्यापहारैश्च चिराभ्यस्तैः कालेन आजीर्णपर्णवत्कार्श्यमपचयं नेयमित्यर्थः ॥ ५६ ॥ के ते मनःपीनताहेतवो यद्वर्जनेन तत्कार्श्यं स्यात्तानाह—**अनात्मनी**त्यादिना ॥ ५७ ॥ विकारेण विकासेन । ममतालक्षणे मले हेलया लीलया आसक्त्येति यावत् । सर्वममतामूलमाह—**इदं**मिति । इदं शरीरं मम आत्मा भोगायतनं वेति भावेनेत्यर्थः ॥ ५८ ॥ तमेव भावं विशिनष्टि—**जरे**ति ॥ ५९ ॥ संसृतेः समाश्वासेन रम्यताचिरस्थायितादिविश्वासेन ॥ ६० ॥ ६१ ॥ चारेण नानाविषयसंचारेण ॥ ६२ ॥ आगमापायौ वपुःस्वभावौ यस्य विषेणेव वैषम्यं दाहमूर्च्छादिव्याकुलता तच्छंसिना । तत्पर्यवसितेनेति यावत् । भोगानामाभोगेन प्राग्व्याख्यातेन ॥ ६३ ॥ शरीरलक्षणे दुष्टश्वभ्रे चिराय प्ररूढमेनं चित्तविषद्रुमं त्वमशङ्कं विचारसारक्रकचेन च्छिन्धीति परेणान्वयः । चिन्ताचया एव उच्चाकृतयो मञ्जर्यो यस्मिन् । ‘नद्यृतश्च’ इति कप् ॥ ६४ ॥ विकल्पा एव पत्राणि यस्मिन् ॥६५॥ इदानीं तदेव चेतो गजत्वेन वर्णयति—**मत्तेक्षण**मिति द्वाभ्याम् । हे राघवराजसिंह, त्वमुक्तदशविशेषणविशिष्टं चेतोगजं सुतीक्ष्णया धीकरजाग्रपङ्क्त्या विदारयेति द्वितीयेनान्वयः । मत्ते स्वविवेकप्रमादवती मदघूर्णे च आगमानुमानलक्षणे ईक्षणे यस्य तम् । एकस्मिन् बहिर्मुखलक्षणे संसाराद्रितटे उपवेशनमुपवेशो यस्य तम् । अत एवान्तर्मुखविश्रान्तिसौख्येष्वसमर्थम् । द्वेषासूयादिभीषणत्वादुग्रम् । सुजनैः क्रम्यन्त इति सुजनक्रमाः शमदमतितिक्षादयस्तल्लक्षणस्याब्जखण्डस्य पद्मवनस्यालोकने उत्कं सोत्कण्ठं परंतु चण्डमतिकोपनं तद्रक्षणायोग्यमिति यावत् । सुखदुःखे एव शीतोष्णवाष्पमदस्राविणौ गण्डौ यस्य ॥ ६६ ॥ आदीर्घाः कामादिविकारा एव दन्तौ यस्य अतएव धैर्यादिवप्रविदारणक्रियाकरम् ॥ ६७ ॥ असति कुत्सिते स्त्रीव्यञ्जनश्मशानादिप्रदेशे रतिमासक्तिं गतम् । शरीरलक्षणस्य मांसस्य ग्रसनेनेवान्तर्भावापादनेन पुष्टमुपचितम् । दुष्टक्रिया परमर्मतोदनं तत्र कर्कशश्चञ्चुदण्डस्त्रोट्यग्रं तत्सदृशौष्ठव्यापारो यस्य । एकस्मिन्स्वार्थ एव ईक्षणं दर्शनं यस्य । पुष्टैस्तमोंशुभिस्तामसवृत्तिभिः कृष्णं मलिनम् । काकपक्षे चत्वारि विशेषणानि स्पष्टानि । पुष्टास्तमोंशवोऽन्धकारभागा इव कृष्णं निजचित्तकाकं कायकुलायकोशाद्दूरे समुत्सारयेत्युत्तरेणान्वयः ॥ ६८ ॥ वोढुरात्मनो वृक्षादेश्च वृथाश्रमहेतुत्वाद्भारभूतम् । गन्धेभ्यो दुर्वासनाभ्य उद्धतमाविर्भूतं प्रस्थितं च ॥६९॥ तदेव चित्तं पिशाचत्वेन रूपयंस्तदनुत्सादने मोक्षासिद्धिमाह—**तृष्णे**ति द्वाभ्याम् । अज्ञानलक्ष[illegible] महत्सु [illegible]वटेषु वा । देहशतेषु अनन्तकोटिदेहलक्षणाया

विवेकवैराग्यगुरुप्रयत्न-
मन्त्रैः स्वतन्त्रैः स्वचिदात्मगेहात् ।
नोत्सादयेच्चित्तपिशाचमेनं
यावत्कुतस्तावदिहात्मसिद्धिः ॥ ७१

शुभाशुभास्यं हतमानवौघं
चिन्ताविषं कायकुकञ्चुकं च ।
अजस्रमच्छश्वसनाशनं च
सर्वस्य नानाभयनाशदं च ॥ ७२

हृदब्जदुःशाल्मलिकोटरस्थ-
ममोघया चित्खगमन्त्रशक्त्या ।
नीत्वा शमं राम मनोमहाहिं
भयं भृशं प्रोज्झ्य भवाभयात्मा ॥ ७३

अमङ्गलाकारधरः शरीर-
शवावलीसंततसेवनेन ।
दिगावलीसंभ्रमणश्रमार्तः
श्मशानसेवी वपुषा क्षतेन ॥ ७४

भोगामिषो दिक्ष्वभिधावमान
उत्कन्धरो धीरविवृद्धगर्धः ।
उड्डीय वै गच्छति चित्तगृध्रो
देहद्रुमात्तन्निपुणं जयस्व ॥ ७५

भ्रान्तं वनान्तेषु दिगन्तरेषु
फलार्थिनं चञ्चलमाकुलाङ्गम् ।
जन्मावनेर्जन्ममहीं प्रयातं
संसारबन्धं जनतां हसन्तम् ॥ ७६

द्रुमेऽक्षिनासाकुसुमे भुजादि-
शाखे विलोलाङ्गुलिजालपत्रे ।
समुल्लसन्तं परिमारयान्त-
र्मनोमहामर्कटमङ्ग सिद्ध्यै ॥ ७७

अभ्युत्थितं सत्फलसंक्षयाय
लसन्मुखासङ्गितडित्प्रकाशम् ।
वर्षन्तमासारमनर्थसार्थ-
मान्दोलितं वासनवात्ययान्तः ॥ ७८

संकल्पसंकल्पनवर्जनोग्र-
मन्त्रप्रभावाद्धृदयाम्बरस्थम् ।
सोत्साहमुत्सादय चित्तमेघं
बृहत्फलं प्राप्य भवालमाद्यः ॥ ७९

ग्रन्थीकृतं कर्मभिरात्मसृष्टै-
र्मन्त्रैरभेद्यं ज्वलनैरदग्धम् ।
पीडां परमात्मनि कल्पयन्तं
समस्तजात्यन्तरदीर्घदाम ॥ ८०

संप्रोतनिःसंख्यशरीरमालं
बलादसंकल्पनमात्रशस्त्रैः ।
छित्त्वा स्वयं राघव चित्तपाशं
यथासुखं त्वं विहरास्तशङ्कः ॥ ८१

मटव्यामिति व्यस्तरूपकम् । स्वस्य चित्तस्य संसृतावपसरणे चेतनवर्जितेषु । प्रत्यक्षमचेतनेष्विति यावत् । ईदृशमेनं चित्तपिशाचं स्वचिदात्मनो गेहभूताद्धृदयाद्यावन्नोत्सारयेत्तावदात्मस्वभावभूता सिद्धिर्मुक्तिः कुत इत्युभयोरन्वयः ॥ ७० ॥ ७१ ॥ इदानीं मनोऽहित्वेन रूपयंस्त्याजयति—**शुभेति** द्वाभ्याम् । शुभाशुभलक्षणमास्ये भवमास्यम् । शरीरावयवायत् । दंष्ट्राद्वयं यस्य । अच्छः श्रमादिदोषापरामृष्टः श्वसनः प्राणवायुरशनं यस्य पवनाशनत्वात् । नानाविधं भयं नाशं मरणं च ददातीति नानाभयनाशदम् ॥ ७२ ॥ ईदृशं मनोलक्षणं महाहिममोघया चित्खगस्य चिदेकरसगरुडस्य बोधका ये 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिमन्त्रास्तेषां शक्त्या शमं मूलाज्ञानेन सहोच्छेदं नीत्वा भयं भृशं निःशेषं प्रोज्झ्य विहाय अभवोऽभयो वा आत्मा भवेत्यर्थः ॥ ७३ ॥ तदेव चित्तं गृध्रत्वेन रूपयति—**अमङ्गलेति** द्वाभ्याम् । शरीरलक्षणानां शवावलीनां संततं सेवनेनानुसंधानेन भक्षणेन च । काककङ्कचञ्चुप्रहारैरपमानव्ययशोकभयादिभिश्च क्षतेन वपुषा सुषुप्तौ श्मशानवृक्षं तत्सदृशसुप्तदेहं च सेवते तच्छीलः ॥ ७४ ॥ अधीरो विवृद्धश्च गर्धोऽभिलाषो यस्य ईदृशश्चित्तगृध्रो यदि ते देहद्रुमादुड्डीय गच्छति तर्हि ते निपुणं नितरां जय इत्यर्थः ॥ ७५ ॥ तदेव मन इदानीं मर्कटत्वेन रूपयति—**भ्रान्तमिति** द्वाभ्याम् । एकस्या जन्मभूमेर्जन्मभूम्यन्तरं प्रयातम् । जनतां जनसमूहं तदीयसंसारबन्धं च हसन्तं स्वचेष्टितैर्विडम्बयन्तम् ॥ ७६ ॥ अक्षिनासयोः समाहारोऽक्षिनासं तदेव आसमन्तात्कुसुमानि यस्मिन् । भुजकरादयः शाखा यस्मिन् । विलोलाङ्गुलिजालं पत्राणि यस्मिन् । ईदृशे देहवृक्षे समुल्लसन्तं मनोमहामर्कटं परितोऽभिरोधेन मारयेत्यर्थः ॥ ७७ ॥ इदानीं तदेव चित्तं मेघत्वेन रूपयति—**अभ्युत्थित**मिति द्वाभ्याम् । सत्फलस्य परमार्थसुखस्य पक्वसस्यफलस्य च क्षयाय अकाले समुपस्थितम् । मुखे मुखसदृशबहिर्मुखवृत्त्यग्रे आसङ्गी प्रतिबिम्बनेन विषक्तस्तडित्सदृशश्चिदाभासप्रकाशो यस्य । अनर्थसार्थरूपमासारं वर्षन्तम् । वासनानि वासनास्तल्लक्षणया वात्यया अन्तः आन्दोलितं परिवर्तितम् ॥ ७८ ॥ हृदयाम्बरस्थमीदृशं चित्तमेघं संकल्पानां यानि सम्यक्कल्पनानि पुनःपुनःसमर्थनानि तेषां वर्जनरूपादुग्रमन्त्रप्रभावात् सोत्साहं उत्सारय तेन च बृहज्जीवन्मुक्तिफलं प्राप्य आद्यः पूर्वसिद्धस्वभावो नित्यमुक्तात्मैव अलं सम्यग्भवेत्यर्थः ॥ ७९ ॥ इदानीं तदेव चित्तं पाशत्वेन रूपयति—**ग्रन्थीकृत**मिति द्वाभ्याम् । आ आत्मसृष्टेरात्मोपादानकं कल्पादिसर्गं मर्यादीकृत्य अद्यतनकालपर्यन्तं कृतैः सुकृतदुष्कृतकर्मभिर्निरन्तरं ग्रन्थीकृतं ग्रन्थिदानेन दृढीकृतम् । अतएव समस्तानां जात्यन्तराणां नानायोनिजन्मभेदानां क्रमाद्बन्धनाय दीर्घदामेव स्थितम् ॥ ८० ॥ अतएव संप्रोता निःसंख्याः शरीरमाला यस्मिन् ।

१ 'अभवात्मा' इति पाठः. २ परितो निरोधेन इत्यपि पाठः.

फूत्कारदग्धाखिलपान्थलोक-
मत्यन्तदुष्प्रापपरप्रबोधम् ।
आशीविषं शोषितलोकखण्डं
व्यात्त्यामिषोद्धूतशरीरदण्डम् ॥ ८२
आमन्थरं देहगुहासु गुप्तं
संकल्पघोराजगरं जवेन ।
अकामनानाममहानलेन
बलेन दग्ध्वा विभवो भव त्वम् ॥ ८३
चित्तेन चेतः शममाशु नीत्वा
शुद्धेन घोरास्त्रसिवास्त्रयुक्त्या ।
चिराय साधो त्यज चञ्चलत्वं
विमर्कटो वृक्ष इवाक्षतश्रीः ॥ ८४
अमलमिति च कृत्वा चेतसा वीतशङ्क-
मुपशमितमनोऽन्तः सर्वभादेहमेव ।
तृणलवलघु पश्यँल्लीलया हेयदृष्ट्या
पिब विहर रमस्व प्राप्तसंसारपारः ॥ ८५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे राघवाशयविनियोगो नाम पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ५१

श्रीवसिष्ठ उवाच ।

परिदीर्घासु तन्वीषु सुतीक्ष्णासु सितासु च ।
क्षुरधारोपमानासु चित्तवृत्तिषु तिष्ठ मा ॥ १
कालेन महता क्षेत्रे जातेयं बुद्धिवल्लरी ।
वृद्धिं विवेकसेकेन नय तां नयकोविद ॥ २
यावन्म्लायति नो कायलतिका कालभास्वता ।
भूतलेऽपतितां तावदेनामुद्धृत्य धारय ॥ ३
मद्वाक्यार्थैकतत्त्वज्ञ मद्वाक्यार्थैकभावनात् ।
सुखमाप्नोषि सर्पारिर्यथाभ्रवभावनात् ॥ ४
उद्दालकवदालूनं विशीर्णं भूतपञ्चकम् ।
कृत्वा कृत्वा धिया धीरधीरयान्तर्विचारय ॥ ५

अस्तशङ्कः पुनर्जन्मशङ्काशून्यः ॥ ८१ ॥ इदानीं तत्संकल्पमजगरत्वेन रूपयंस्तद्वधोपायमाह—**फूत्कारे**ति द्वाभ्याम् । फूत्कारेण क्रोधादिरूपसविषश्वासेन दग्धा अखिलाः पान्थलोका दक्षिणोत्तरमार्गगा जीवा येन । आशीविषं विषधरम् । अतएव शोषिताः संतापिता लोकखण्डा भुवनभेदा येन । व्यात्त्या तृष्णालक्षणमुखव्यादानेन विषयामिषार्थं उद्धूतः कम्पितश्चतुर्विधशरीरदण्डो येन ॥ ८२ ॥ मोक्षोद्योगालसत्वादामन्थरं मन्दगतिमीदृशं संकल्पघोराजगरं अकामना परवैराग्यं तन्नाम्ना महता अनलेन वह्निना दग्ध्वा भस्मीकृत्य निजे पूर्णानन्दविभवः त्वं भवेत्यर्थः ॥ ८३ ॥ वैराग्येण संकल्पजये चित्तशुद्धौ सत्यां तथैव बोधसमाधिक्रमेण चित्तजयोऽपि सिध्यतीत्याह—**चित्तेने**ति । सहसा कृतार्थताबुद्ध्या प्रयत्नोपरमो माभूदिति चिरायेति । तत्फलमाह—**त्यजे**ति ॥ ८४ ॥ आत्यन्तिकचित्तोपशमो निःशेषं देहादावहंममताभिमानत्यागसिद्धा जीवन्मुक्तिविहारसुखं सिध्यतीत्याशयेनोपसंहरति—**अमलमि**ति । इति उक्तप्रकारेण चकारात्प्रागुपदिष्टतत्त्वावबोधेन च अन्तः प्रत्यगात्मन्युपशमितमनोऽमलं निरस्तरागादिमलं कृत्वा तादृशेन चेतसा आदेहं स्थूलसूक्ष्मकारणदेहपर्यन्तं सर्वमेव दृश्यं हेयदृष्ट्या तृणलवादपि लघु तुच्छतरं स्वाप्नशरीरादिवदत्यन्तोपेक्षादृमसदेवेति पश्यन् प्राप्तसंसारपारस्त्वं प्रारब्धशेषभोगार्थया 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' इति श्रुतिदर्शितया लीलया लोकसंग्रहाय सोमादि पिब ऋत्विगादिर्यिषु विहर शास्त्राविरुद्धे लौकिकेपि रमस्व च न तेन तव पुनर्बन्धप्रसक्तिरित्यर्थः॥८५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे राघवाशयविनियोगो नाम पञ्चाशः सर्गः ॥५०॥

उद्दालकमुनेः शान्ते पदे विश्रान्तिमिच्छतः ।
युञ्जानस्य मनोदोषैर्विक्षेपो बहुधेर्यते ॥ १ ॥

श्रवणमननाभ्यामवधारितेप्यात्मतत्त्वे चित्तविश्रान्तिमन्तरेण निर्विक्षेपजीवन्मुक्तिसुखाप्राप्तिरिति तदर्थं समाध्यभ्यासेष्वप्रमादेन बोधवर्धनमावश्यकमित्युद्दालकचरित्रवर्णनमुखेनोपदिदिक्षुस्तदवताराय प्रथमं चित्तचरित्रेष्वविश्वसनीयतामाह—**परिदीर्घास्वि**ति । ऐहिकामुष्मिकदूरस्थविषयासङ्गात्परिदीर्घासु वासनाप्रचुरत्वात्तन्वीषु प्रमाद्यतो झटित्येव समाधिसुखविच्छेदक्षतहेतुत्वात्सुतीक्ष्णासु आत्मप्रतिबिम्बग्रहणयोग्यतालक्षणनैर्मल्यात्सितासु अतएव क्षुरधारोपमानासु चित्तस्य वृत्तिषु चारित्र्येषु प्रमादाद्विश्वस्तो मा तिष्ठेत्यर्थः ॥ १ ॥ सत्कुलक्षेत्रे जातायां कायलतायां चित्तशुद्धिश्रवणादिदोहदोपायैरियं परमात्मपरिचयलक्षणा बुद्धिवल्लरी तव जाता तां बाह्यदृश्यव्यावृत्तिलक्षणविवेकामृतसेकेन वृद्धिं नयेत्यर्थः ॥ २ ॥ सा च बाल्यात्प्रभृति सिच्यमाना वर्धते, वार्धकादिना कायलताम्लानौ पतनसंभावनात्तदुद्धारोऽप्यशक्यो दूरे तन्मञ्जरीवर्धनमित्याशयेनाह—**यावदि**ति । भूतले अपतितां एनां कायलतां गुरुशुश्रूषाश्रवणादिना उद्धृत्य बुद्धिवल्लरीं पालयेत्यर्थः ॥ ३ ॥ विवेकसेकश्च वक्ष्यमाणाख्यानरूपमद्वाक्यार्थस्यैव श्रुत्वावधार्य पुनःपुनर्भावनं तत्रैव सर्वमननयुक्तीनां सत्त्वादित्याशयेनाह—**मद्वाक्ये**ति । सर्पारिर्मयूरो यथा अभ्रवस्य मेघगर्जितस्य भावनात्सुखमाप्नोति तद्वदित्यर्थः ॥ ४ ॥ तामेवाख्यायिकामवतार्य तदर्थविचारकर्तव्यतामाह-**उद्दालकवदि**ति । देहाद्यारम्भकं बाह्यप्रपञ्चारम्भकं च भूतपञ्चकं तत्त्वंपदार्थशोधपरया धिया 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ' इति श्रुतिदर्शितयुक्त्या कारणव्यतिरिक्त-

१ तत्र इति पाठः।

श्रीराम उवाच ।

केन क्रमेण भगवन्मुनिनोद्दालकेन तत् ।
भूतपञ्चकमाल्लूनं कृत्वान्तः प्रविचारितम् ॥ ६

श्रीवसिष्ठ उवाच ।

शृणु राम यथापूर्वं भूतवृन्दविचारणात् ।
उद्दालकेन संप्राप्ता परमा दृष्टिरक्षता ॥ ७
जगज्जीर्णगृहस्यास्य कोणे कस्मिंश्चिदातते ।
भूमेरनिलदिङ्नाम्नि भूभृद्भाण्डसमाकुले ॥ ८
गन्धमादनशैलेन्द्रनाम्नि काचित्किल स्थली ।
विद्यते कीर्णकुसुमा द्रुमकर्पूरकेसरा ॥ ९
विचित्रवर्णविहगा नानावल्लीविलासिनी ।
वनेचरव्याप्ततटी पुष्पकेसरभासिनी ॥ १०
क्वचित्स्फीतमहारत्ना क्वचिल्लोलाम्बुजोत्पला ।
क्वचिन्नीहारकवरी सरसीदर्पणा क्वचित् ॥ ११
तत्र कस्मिंश्चिदुदिते सानौ सरलपादपे ।
आगुल्फाकीर्णकुसुमे स्निग्धच्छायमहाद्रुमे ॥ १२
उद्दालको नाम मुनिर्मौनी मानी महामतिः ।
अप्राप्तयौवनः पूर्वमुवासोद्दामतापसः ॥ १३
प्रथमं तु बभूवासावल्पप्रज्ञो विचारवान् ।
अप्राप्तपदविश्रान्तिरप्रबुद्धः शुभाशयः ॥ १४
ततः क्रमेण तपसा शास्त्रार्थनियमैः क्रमैः ।
विवेक आजगामैनं नवर्तुरिव भूतलम् ॥ १५
अथेमं चिन्तयामास संसारामयभीरुधीः ।
एकान्त एव निवसन्कदाचित्कान्तमानसः ॥ १६
किं तत्प्राप्यं प्रधानं स्याद्यद्विश्रान्तौ न शोच्यते ।
यत्प्राप्य जन्मना भूयः संबन्धो नोपजायते ॥ १७
कदाहं त्यक्तमनने पदे परमपावने ।
चिरं विश्रान्तिमेष्यामि मेरुशृङ्ग इवाम्बुदः ॥ १८
कदा शममुपैष्यन्ति ममान्तर्भोगसंविदः ।
आलोलकल्लोलरवा ऊर्मयोऽम्बुनिधाविव ॥ १९
इदं कृत्वेदमप्यन्यत्कर्तव्यमिति कल्पनाम् ।
कदान्तर्विहसिष्यामि पदविश्रान्तया धिया ॥ २०
कदा विकल्पजालं मे न लगिष्यति चेतसि ।
स्थितमप्युज्झितासङ्गं पयः पद्मदले यथा ॥ २१
कदा बहुलकल्लोलां नावा परमया धिया ।
परितीर्णो भविष्यामि मत्तां तृष्णातरङ्गिणीम् ॥ २२
कदेमां जागतैर्भूतैः क्रियमाणामसन्मयीम् ।
क्रियामपहसिष्यामि बाललीलामिवाकुलाम् ॥ २३
कदा विकल्पपर्यस्तं मनो दोलावदोलनम् ।
शममेष्यति मे शान्तवातौजस इव भ्रमः ॥ २४
कदोदितवपुर्भासा विहसञ्जागतीर्गतीः ।
अन्तः संतोषमेष्यामि विराडात्मेव पूर्णधीः ॥ २५
अन्तः समसमाकारः सौम्यः सर्वार्थनिस्पृहः ।
कदोपशममेष्यामि मन्थमुक्तामृताब्धिवत् ॥ २६
कदेमामचलां दृश्यश्रियमाशाशतात्मिकाम् ।
सर्वां सुषुप्तवत्पश्यन्भविष्याम्यन्तरातत[1]ः ॥ २७
सबाह्याभ्यन्तरं सर्वं शान्तकल्पनया धिया ।
पश्यंश्चिन्मात्रमखिलं भावयिष्याम्यहं कदा ॥ २८
कदोपशान्तचित्तात्मा चित्तामुपगतः पराम् ।
परमालोकमेष्यामि जात्यन्धविगमादिव ॥ २९
कदाभ्यासोपलभ्येन चित्प्रकाशेन चारुणा ।
दूरादालोकयिष्यामि तन्वीं कालकलामिमाम् ॥ ३०
ईहितानीहितैर्मुक्तो हेयोपादेयवर्जितः ।
कदान्तस्तोषमेष्यामि स्वप्रकाशपदे स्थितः ॥ ३१

---

कार्याङ्कुरापलापादाल्लूनं मूलाविद्याविशरणाद्विशीर्णं च कृत्वा तदधिष्ठानसन्मात्रान्वेषणे धीरेभ्योऽपि धीरया धिया अन्तर्विचारयेत्यर्थः ॥ ५ ॥६॥७॥ भूभृत एव न्युब्जीकृतभाण्डानि तैः समाकुले इति गृहकोणसाम्योपपादकं विशेषणम् ॥ ८ ॥ पुष्पितद्रुमा एव कर्पूरसदृशपरागैः केसरैश्च सर्वतो व्याप्तत्वात्कर्पूरकेसरा यस्याम् ॥ ९ ॥ १० ॥ सरस्यो महासरांस्येव दर्पणानि यस्याम् ॥ ११ ॥ सानौ प्रस्थप्रदेशे ॥ १२ ॥ मानी अवश्यं यत्नैः पुरुषार्थं साधयिष्यामीत्यभिमानवान् आगमानुमानादिमानकुशलश्च । महामतिरक्षुद्रमनाः ॥ १३ ॥ शुभाशयः प्रबोधानुकूलसुकृतसंभृतान्तःकरणः ॥ १४ ॥ क्रमैरभ्यासपरिपाकक्रमैः । नवर्तुराद्यर्तुर्वसन्तः ॥ १५ ॥ इमं वक्ष्यमाणप्रकारं चिन्तयामास । कान्तमानसः शुभचित्तः । 'क्लान्तमानसः' इति पाठे स्पष्टम् ॥ १६ ॥ प्राप्यानां पुरुषार्थानां मध्ये प्रधानं प्राप्यं मोक्षाख्यं किं तत्स्यात् ॥ १७ ॥ त्यक्तानि मननानि मनोव्यापारा यत्र ॥ १८ ॥ भोगसंविदो भोगतृष्णाः ॥ १९ ॥ २० ॥ आभासमात्रेण स्थितमप्युपेक्ष्यमाणत्वादुज्झितासङ्गम् ॥ २१ ॥ मत्तां अविवेकप्रवृद्धाम् ॥ २२ ॥ क्रियां बाह्यप्रवृत्तिम् । आकुलां व्यग्रचित्ताम् ॥ २३ ॥ विकल्पैः पर्यस्तं विक्षिप्तम् । दोलेव अवदोलनं यस्य तदविश्रान्तम् । शान्तवातौजसः प्रशान्तोन्मादवातरोगस्य भ्रमो विक्षिप्ततेव ॥२४॥ उदितवपुष आविर्भूतस्वरूपस्य भासा स्वप्रकाशस्फुरणेन । विराड्ब्रह्माण्डशरीर आत्मेव स्वान्तः पूर्णधीः ॥ २५ ॥ समेन परमात्मना सम एकरसः, समेन समाहितेन विष्णुना समः सश्रीकश्च आकारो यस्य । सर्वेष्वर्थेषु धर्मार्थकामेषु अमृतकौस्तुभादिषु च निस्पृहः । मन्थेन मथनविक्षेपेण मुक्तोऽमृताब्धिः क्षीरार्णवस्तद्वत् ॥ २६ ॥ सुषुप्तवत्सन्मात्रात्मना पश्यन् ॥२७॥ भावयिष्यामि तद्भावनया स्थिरो भविष्यामि ॥ २८ ॥ परां चित्तां चिदेकरसताम् । परं परमात्मानं पुरःस्थितपुरुषान्तरं च । जात्यन्ध इति भावप्रधानो निर्देशः । जात्यन्धतासदृशानादिमूलाज्ञानापगमादिति भावः ॥ २९ ॥ तन्वीं बाधितानुवृत्तिरूपत्वात्तुच्छामल्पावशिष्टां चायुःशेषलक्षणां कालकलामात्मास्पर्शित्वाद्दूरादेवालोकयिष्यामीत्यर्थः ॥ ३० ॥ ३१ ॥

---

१. अन्तरानत इति पाठः।

कदाशाकौशिकीकीर्णा जाड्यजीर्णहृदम्बुजा।
क्षयमेष्यति कृष्णेयं कदा मे दोषयामिनी ॥ ३२
कदोपशान्तमननो धरणीधरकन्दरे।
समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना ॥ ३३
कदा मे मानमातङ्गः स्वाभिमानमहामदः।
सत्त्वावबोधहरिणा हतो नाशमुपैष्यति ॥ ३४
निरंशध्यानविश्रान्तेर्मूकस्य मम मूर्धनि।
कदा तार्णं करिष्यन्ति कुलायं वनघूर्णिकाः ॥ ३५
कदा निःशङ्कमुरसि ध्यानधीरधियः खगाः।
मम विश्रान्तिमेष्यन्ति शैलस्थाण्वचलस्थितेः ॥ ३६
तृष्णाकरञ्जजटिलां जन्मजर्जरगुल्मिकाम्।
संसारारण्यसरसीं त्यक्त्वा यास्याम्यहं कदा ॥ ३७
इति चिन्तापरवशो वन उद्दालको द्विजः।
पुनः पुनस्तूपविशन्ध्यानाभ्यासं चकार ह ॥ ३८
विषयैर्नीयमाने तु चित्ते मर्कटचञ्चले।
न स लेभे समाधानप्रतिष्ठां प्रीतिदायिनीम् ॥ ३९
कदाचिद्बाह्यसंस्पर्शपरित्यागादनन्तरम्।
तस्यागच्छच्चित्तकपिः प्रोद्वेगं सत्त्वसंस्थितौ ॥ ४०
कदाचिदान्तरान् स्पर्शान्परित्यज्य मनःकपिः।
लोलत्वात्तस्य संयातो विषयं विषदग्धवत् ॥ ४१
कदाचिदुदितार्काभं तेजो दृष्ट्वान्तरे मनः।
विषयोन्मुखतां यातं तस्य तामरसेक्षण ॥ ४२
आन्तरान्ध्यतमस्त्यागं कृत्वा विषयलम्पटम्।
तस्योड्डीय मनो याति कदाचिन्नस्तपक्षिवत् ॥ ४३
बाह्यानाभ्यन्तरान्स्पर्शांस्त्यक्त्वा निद्रां च तन्मनः।
तमस्तेजोन्तिके लेभे कदाचिच्छाश्वतीं स्थितिम् ॥ ४४
इति पर्याकुलस्यान्तः स खलु ध्यानवृत्तिषु।
दरीष्वन्वहमुग्रासु वातमग्न इव द्रुमः ॥ ४५
अतिष्ठद्ध्यानसंरूढमननः संकटे यथा।
दोलायितवपुस्तुच्छतृष्णातीरतरङ्गकैः ॥ ४६
अथ पर्याकुलमना विजहार मुनिर्गिरौ।
प्रत्यहं दिवसाधीशो महामेराविवैककः ॥ ४७
समस्तभूतदुष्प्रापामेकदा प्राप कन्दराम्।
संशान्तसर्वसंचारां मुनिर्मोक्षदशामिव ॥ ४८
अपर्याकुलितां वातैरप्राप्तमृगपक्षिणीम्।
अदृष्टां देवगन्धर्वैः परमाकाशशोभनाम् ॥ ४९
पुष्पप्रकरसंछन्नां मृदुशाद्वलकोमलाम्।
ज्योतीरसाश्मसंप्रोतैः कृतां मरकतैरिव ॥ ५०
सुस्निग्धशीतलच्छायां प्रकटां रत्नदीपकैः।
सुगुप्तां वनदेवीनामन्तःपुरकुटीमिव ॥ ५१
कुलम्बनाहिमालोकां नात्युष्णां नातिशीतलाम्।
शारदस्योदितार्कस्य हेमगौरीं प्रभामिव ॥ ५२
बालालोकपरिम्लानां कोमलाशब्दमारुताम्।
मञ्जरीजटिलोपेतां बालां मालावतीमिव ॥ ५३

जाड्येन मौर्ख्येण हिमेन च जीर्णं जरितं हृदम्बुजं यया। दोषोऽविद्यातमस्तल्लक्षणा यामिनी रात्रिः ॥३२॥ निर्विकल्पसमाधिना शान्तमननश्चिदेकरस्यविगलितमनोवृत्तिः ॥ ३३ ॥ मानोहंकारस्तल्लक्षणो मातङ्गः स्वे स्वांशभूता अभिमानवृत्तय एव महान्तो मदप्रवाहा यस्य। सत्त्वं परमार्थसन्मात्रं तदवबोधलक्षणेन हरिणा सिंहेन ॥ ३४ ॥ निरंशे निर्विकल्पे ध्याने विश्रान्तिर्यस्य। मूकस्य मौनव्रतिनो मम मूर्धनि। तार्णं तृणमयं कुलायं नीडम्। घूर्णिकाः पक्षिभेदाः ॥ ३५ ॥ ध्याने धीरा स्थिरा धीर्यस्य। उरसि उरोलम्बिजटाग्रग्रचितनीडे इति यावत् ॥३६॥ तृष्णालक्षणैस्तीररुहैः करञ्जैर्जटिलाम्। जन्मान्येव कामादिमृगसंचारजर्जराणि गुल्मान्तराणि यस्याम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रत्याहारेण बाह्यानां विषयसंस्पर्शानां त्यागादनन्तरं सत्त्वगुणप्रधानसमाधिसंस्थितौ प्रसक्तायां रजसा क्षोभ्यमाणं भयात्त्यात्स्यादिरूपं प्रोद्वेगमगमत्। अथवा सत्त्वसंस्थितौ सात्त्विकदेवादिभोग्ये विषये सात्त्विकवृत्तिसुखास्वादे वा प्रोद्वेगं मनोरथैश्चलनमगमत् ॥ ४० ॥ आन्तरान् समाधिसुखस्पर्शान्। विषेण दग्धो मृतो यथा लोकान्तरं प्रयाति तद्वत्। तत्पक्षे आन्तरान् जाठराग्निसंबन्धिनः स्पर्शान् देहोष्मणः ॥४१॥ आन्तरे हार्दब्रह्मणि उदितार्काभं तेजो दृष्ट्वा। तथा च श्रुतिः—'नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनाम्। एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे' इति ॥४२॥ आन्तरस्यान्ध्यतमसोऽज्ञानान्धकारस्य ईषद्ब्रह्माभिव्यक्त्या त्यागं ईषत्प्रशमं कृत्वा तदानीमेव विषयवासनोद्बोधात्तल्लम्पटं भूत्वेत्यर्थः ॥ ४३ ॥ बाह्याभ्यन्तरस्पर्शौ व्याख्यातौ। तमसोऽज्ञानस्य तेजस आत्मज्योतिषश्चान्तराले संधौ लीनं सन्निद्रामेव शाश्वतीं चिरानुवृत्तां स्थितिं लेभे ॥ ४४ ॥ दरीषु ध्यानसंरूढमननः सः पर्याकुलस्य मनसो मध्ये मध्ये वातेन सन्निहितजले मग्नो मज्जितो द्रुमो यथा तथा तृष्णालक्षणैस्तीरतरङ्गकैर्दोलायितवपुः सन् संकटे अतिष्ठदिति परेण सहान्वयः ॥ ४५ ॥ ४६ ॥ विजहार संचचार। महामेरौ सदैवार्कपादसंबन्धदर्शनात्तत्रार्कविहरणकल्पनयोपमोक्तिः ॥ ४७ ॥ समस्तभूतदुष्प्रापामतएव संशान्तसर्वसंचाराम्। कन्दरामोक्षदशासाधारणे विशेषणे। आसर्गसमाप्तेः कन्दरैव विशेष्यते ॥ ४८ ॥ परमाकाशो ब्रह्मेव शोभमानाम् ॥ ४९ ॥ ज्योतीरूपो रसश्चन्द्रस्तदश्मभिश्चन्द्रकान्तैः सह संप्रोतैर्घटितैर्मरकतमणिभिः कृतामिव ॥ ५० ॥ द्वारि सुस्निग्धशीतलच्छायाम् ॥ ५१ ॥ कौ द्वारभूमौ लम्बन्ते प्रसरन्तीति कुलम्बनाः। अहिमाः शीतनिवारणमात्रक्षमा आलोका यस्याम्। अतएव नात्युष्णां नातिशीतलाम्। उदितार्कस्य बालसूर्यस्य। हेमेव गौरीं पीताम् ॥ ५२ ॥ बालेन आलोकेन परिम्लानां शुष्काम्। अनेन गुहा प्राङ्मुखीति गम्यते। कोमलो मन्दः अशब्दश्च मारुतो यस्याम्। तेन प्रत्यग्भागेऽपि गवाक्षवत्ता गम्यते। मञ्जरीजटिलैस्तरुभिरुपेताम्। अनेन

१ 'मनसः पर्याकुलस्य' इत्यपि पाठः.

उपशमपदवीमिवानुरूपां
कमलजविश्रमणाय योग्यरूपाम् ।
कुसुमनिकरकोमलाभिरामां
सरसिजकोटरकोमलां समन्तात् ॥ ५४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे उद्दालकमनोरथो नामैकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ५२

श्रीवसिष्ठ उवाच ।

स तां विवेश धर्मात्मा गन्धमादनकन्दराम् ।
चित्रभ्रमणसंप्राप्तामलिः पद्मकुटीमिव ॥ १
समाधानोन्मुखतया प्रविशन्स व्यराजत ।
सर्गव्यापारविरतावात्मपुर्यामिवाब्जजः ॥ २
चकारासनमम्लानैः पत्रैरन्तस्त्रगुच्छकम् ।
मृदुमेघविधिर्वृन्दमम्भोदमिव तत्र सः ॥ ३
स तत्प्रस्तारयामास पृष्ठे चारु मृगाजिनम् ।
नीलरत्नतटे मेरुस्तारासारमिवाम्बरम् ॥ ४
स तत्रोपाविशद्वृत्तीश्चेतसस्तनुतां नयन् ।
अन्तःशुद्धवपुः शृङ्गे वृष्य मूक इवाम्बुदः ॥ ५
बुद्धवत्सुदृढं बद्धपद्मासन उदङ्मुखः ।
पार्ष्णिभ्यां वृषणौ धृत्वा चकार ब्राह्ममञ्जलिम् ॥ ६
वासनाभ्यः समाहृत्य मनोमृगमुपप्लुतम् ।
निर्विकल्पसमाध्यर्थं चकारेमां विचारणाम् ॥ ७
अयि मूर्ख मनः कोऽर्थस्तव संसारवृत्तिभिः ।
धीमन्तो न निषेवन्ते पर्यन्ते दुःखदां क्रियाम् ॥ ८
अनुधावति यो भोगांस्त्यक्त्वा शमरसायनम् ।
संत्यज्य मन्दारवनं स याति विषजङ्गलम् ॥ ९
यदि यासि महीरन्ध्रं ब्रह्मलोकमथापि वा ।
तत्र निर्वाणमायासि विनोपशमनामृतम् ॥ १०
आशाशतावपूर्णत्वे त्वमेवं सर्वदुःखदम् ।
त्यज्य याहि परं श्रेयः परमेकान्तसुन्दरम् ॥ ११
इमा विचित्राः कलना भावाभावमयात्मिकाः ।
दुःखायैव तवोग्राय न सुखाय कदाचन ॥ १२
शब्दादिकाभिरेताभिः किं मूर्ख हतवृत्तिभिः ।
भ्रमस्यविरतं व्यर्थं मेघे मण्डूकिका यथा ॥ १३
मनोमण्डूकिके व्यर्थमियन्तं कालमन्धया ।
भ्रमन्त्या भुवनं क्षिप्रं किं समासादितं त्वया ॥ १४
यस्मात्किंचिदवाप्नोषि यस्मिन्वहसि निर्वृतिम् ।
तस्मिंश्चेतः शमे मूर्ख नानुबध्नासि किं पदम् ॥ १५
आगत्य श्रोत्रतां मूर्ख व्यर्थोत्थानोपबृंहिताम् ।
धिया शब्दानुसारिण्या मृगवन्मा क्षयं व्रज ॥ १६

सुरभिता गम्यते । स्वयंवरोद्युक्तां मालावतीं बालां राजकन्यामिव स्थितामित्यर्थः ॥ ५३ ॥ सरसिजकोटरमिव कोमलाम् । अतएव कमलजस्य धातुर्विश्रमणाय योग्यरूपाम् । समन्तात्कुसुमनिकरैश्च कोमलां रम्याम् । उपशमपदवीमिव सदैवाश्रयितुमनुरूपां कन्दरां प्रापेति पूर्वत्र संबन्धः ॥ ५४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उद्दालकमनोरथो नामैकपञ्चाशः सर्गः ॥ ५१ ॥

गुहायामासनस्थेन समाधिं प्रविविक्षता ।
चित्तप्रबोधनोपायाश्चिन्तिता इह वर्णिताः ॥ १ ॥

चित्रेण बहुविधेन भ्रमणेनान्वेषणेन । पद्मकुटीमिवेत्यनेन प्रविष्टस्य तत्र निरतिशयानन्दरसपानविश्रान्तिर्भविष्यतीति गम्यते ॥१॥ आत्मनः पुर्यां सत्यलोकस्थायामपराजिताख्यायां भगवन्नाभिपद्मलक्षणायां वा ॥२॥ अन्ते मध्ये स्वं शरीरं गुच्छमिव यस्मिन्भासते तथाविधं अन्तेषु स्वानि तत्तत्पत्रसंबद्धानि पुष्पगुच्छानि वा यस्मिन् तथाविधमासनम् । मेघान्विदधातीति मेघविधिरिन्द्रोऽम्भोदं मेघं वृन्दं कदम्बितमिव । तत्पक्षे अन्तेषु प्रसृतानि स्वगुच्छानीव विद्युतो यस्मिन्निति योज्यम् ॥ ३ ॥ तत्तस्यासनस्य पृष्ठे उपरि तत्स्वकक्षास्थं मृगाजिनमिति वा । तारा एव सारा बहुमूल्यरत्नानि यस्मिन् । अनेन तत्प्रैषताजिनमिति गम्यते ॥ ४ ॥ चेतसो वृत्तीर्जडविषयत्यागेन तनुतां लघुताम् । यथा अम्बुदो वृष्य वृष्ट्वा स्वजाड्यं विहाय शुद्धवपुः शुभ्ररूपो मूको निर्गर्जनः सन् गिरिशृङ्गे उपविशति तद्वत् । वृष्येत्यसमासे ल्यप् छान्दसः । 'ऋष्यमूक' इति पाठे ऋष्यमूकाख्ये सह्यशृङ्गे ॥ ५ ॥ बुद्धवत्प्रबुद्धकपिलादिवत् । पद्मासनग्रहणं सिद्धासनोपलक्षणम् । पार्ष्णिभ्यां वृषणौ धृत्वेत्युक्तेस्तत्रैवोपपत्तेः । ब्राह्ममञ्जलिं ब्रह्मादिगुरुपरम्पराप्रणामाञ्जलिम् ॥६॥ उप समीपे विषयेषु प्लुतं धावितम् ॥ ७ ॥ अयीति कोमलामन्त्रणे ॥ ८ ॥ मन्दारा देवतरुभेदास्तेषां वनम् ॥ ९ ॥ महीरन्ध्रं पातालम् । निर्वाणं निरतिशयसुखविश्रान्तिम् ॥ १० ॥ त्वं भोगाशाशतेनावपूर्णत्वे सति एवं प्रागुक्तरीत्या सर्वदुःखदं भवसि । अतः परं भोगाशास्त्यज्य त्यक्त्वा । ल्यप् छान्दसः । निर्दुःखनिरतिशयानन्दरूपत्वादेकान्तसुन्दरं परं श्रेयो निर्वाणं याहि ॥ ११ ॥ इष्टसंपादनं भावः, अनिष्टनिवारणमभावः, तत्प्रचुरा विचित्राः कलना विषयाः ॥ १२ ॥ हतशब्दो निन्द्यार्थः । मण्डूकिका यथा मेघे शब्दादिकाभिर्व्यर्थवृत्तिभिर्भ्रमति तथेत्यर्थः ॥ १३ ॥ तदेव स्पष्टमाह—**मन** इति । भुवनं जगज्जलं च ॥ १४ ॥ किंचिदवाङ्मनसगम्यं विदेहकैवल्यसुखम् । निर्वृतिं जीवन्मुक्तिविश्रान्तिसुखं वहसि प्राप्नोषि तस्मिन् शमे सर्ववृत्त्युपरमलक्षणे समाधौ हे चेतः, पदं व्यवसायं किं नानुबध्नासि ॥ १५ ॥ कलना दुःखायैवेति यदुक्तं तत्प्रत्येकं दृष्टान्तोदाहरणैः प्रपञ्च-

१ पुरुषताजिनं इति पाठः.

त्वक्तामागत्य दुःखाय स्पर्शोन्मुखतया धिया ।
मूर्ख मा बद्धतामेहि गजीलुब्धगजेन्द्रवत् ॥ १७
रसनाभावमागत्य गर्द्धेनान्ध दुरन्धसाम् ।
मा नाशमेहि बडिशपिण्डीलम्पटमत्स्यवत् ॥ १८
चाक्षुषीं वृत्तिमाश्रित्य प्रभारूपचयोन्मुखीम् ।
मा गच्छ दग्धतां मुग्ध कान्तिलुब्धपतङ्गवत् ॥ १९
घ्राणमार्गमुपाश्रित्य शरीराम्भोजकोटरे ।
गन्धोन्मुखतया बन्धं मा त्वं संश्रय भृङ्गवत् ॥ २०
कुरङ्गालिपतङ्गेभमीनास्त्वेकैकशो हताः ।
सर्वैर्युक्तैरनर्थैस्तु व्याप्तस्याज्ञ कुतः सुखम् ॥ २१
हे चित्त वासनाजालं बन्धाय भवतोहितम् ।
स्वात्मनः सहजः फेनस्ततः कुक्रुमिणा यथा ॥ २२
शरदभ्रवदागत्य शुद्धिं त्यक्तभवामयाम् ।
यदि शाम्यसि निर्मूलं तदनन्तो जयस्तव ॥ २३
क्षयोदयदशाधात्रीं पर्यन्तपरितापिनीम् ।
जानन्नपि जगत्सृष्टिं न त्यक्ष्यसि विनंक्ष्यसि ॥ २४
करोम्यथ किमर्थं वा तवैतदनुशासनम् ।
विचारणवतः पुंसश्चित्तमस्ति हि नानघ ॥ २५

यावदज्ञानघनता तावत्प्रघनचित्तता ।
यावत्प्रावृड्जलदता तावन्नीहारभूरिता ॥ २६
यावदज्ञानतनुता तावच्चित्तस्य तानवम् ।
प्रावृट्परिक्षयो यावत्तावन्नीहारसंक्षयः ॥ २७
यावत्तानवमायातं शुद्धं चित्तं विचारतः ।
तावत्तत्क्षीणमेवाहं मन्ये शारदमेघवत् ॥ २८
अनुशासनमेतद्यदसतो नश्यतोऽथ वा ।
क्रियते तन्नभोवारिपवनाहननैः समम् ॥ २९
तस्मात्त्वंक्षीयमाणत्वात्त्यजामि त्वामसन्मयम् ।
मौर्ख्यं परममेवाहुः परित्याज्यानुशासनम् ॥ ३०
निर्विकल्पोऽस्मि चिद्दीपो निरहंकारवासनः ।
त्वयाहंकारबीजेन न संबद्धोऽस्म्यसन्मय ॥ ३१
अयं सोऽहमिति व्यर्थं दुर्दृष्टिरवलम्बिता ।
त्वया मूढविनाशाय शङ्काविषविषूचिका ॥ ३२
अनन्तस्यात्मतत्त्वस्य तन्वीति मनसि स्थितिः ।
न संभवति बिल्वान्तर्वासितादन्तिनोर्यथा ॥ ३३
महाश्वभ्रीव गम्भीरा दुःखदा वासनाश्रिता ।
त्वयैषा बत चित्तेति नैनामनुसराम्यहम् ॥ ३४

यति—आगत्येत्यादिना । व्यर्थेन बहिर्मुखतालक्षणेनोत्थानेन उपबृंहितामुपचितां श्रोत्रेन्द्रियतादात्म्यापत्तिरूपां श्रोत्रतामागत्य प्राप्य । 'प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं' इति लिङ्गादात्मनः श्रवणादिकाले श्रोत्रादिभावः श्रुतेरिति भावः । लुब्धकगीतघण्टास्वनमोहितमृगवत् ॥ १६ ॥ त्वक्तां त्वगिन्द्रियताम् । गजी करेणुस्तस्यां तत्स्पर्शलुब्धगजेन्द्रवत् । सुशिक्षितया करिण्या वनगजेन्द्रं प्रलोभ्याकृष्य गर्तपातादिना हस्तिपका बध्नन्तीति प्रसिद्धम् ॥ १७ ॥ हे अन्ध, दुरन्धसां दुरन्नानां गर्द्धेनाभिलाषेण ॥ १८ ॥ चाक्षुषीं वृत्तिं चक्षुष्टाम् । प्रभा कान्तिस्तत्संबन्धी यो रूपचयो नानारूपभेदस्तदुन्मुखीं तत्प्रवणाम् ॥ १९ ॥ गजोन्मृदितपद्मगर्भस्थभृङ्गवत् ॥ २० ॥ एकैकसक्तस्याप्येवमनर्थे सर्वसक्तस्य तव दुर्वारमेव निरतिशयदुःखमित्याह—कुरङ्गेति । अनर्थैरनर्थसाधनैः शब्दादिभिर्युक्तैर्मिलितैः । हे अज्ञेति चित्तसंबोधनम् ॥ २१ ॥ कुत्सितेन कृमिणा कोशकारकीटेन सहजः स्वाभाविकः स्वलालाफेनः स्वात्मनो बन्धाय यथा कोशात्मना ततो विस्तारितस्तथा वासनाजालं स्वात्मनो बन्धाय ऊहितं कुवितर्कनिर्मितमित्यर्थः । भवतः अहितमिति वा छित्त्वा ततमिति लिङ्गविपरिणामेन योज्यम्॥२२॥ कथं तर्हि प्रमादकृतस्यास्य बन्धस्य जयस्तत्राह—शरदभ्रेति । प्रथमं कर्मोपासनादिभिः शरदभ्रवच्छुद्धिमागत्य ततः श्रवणादिपरिपाकाज्ज्ञानोदयेन निर्मूलं यदि शाम्यसि तत्तदा अनन्तो जय इत्यर्थः ॥ २३ ॥ वक्तव्यं सर्वं पिण्डीकृत्यैकोक्त्याह—क्षयेति । क्षयोदयौ जन्ममरणे दशा बाल्याद्या दारिद्र्याद्याश्च तासां धात्रीम् । पर्यन्ते मरणोत्तरमपि नरकस्थावरादिष्वपि परितापनशीलाम् । जगत्सृष्टिं जागतीं प्रवृत्तिम् ॥ २४ ॥ अथवा अहितस्य चित्तस्य नानुशासनं कार्यं किंतु बलान्निगृह्य विचारेणोच्छेद एव कार्य इत्याशयेनाह—करोमीति । अनुशासनं हितोपदेशम् ॥२५॥ अथवा न चित्तोच्छेदेऽपि पृथग्यत्नः कार्यस्तस्य मूलाज्ञानान्वयव्यतिरेकानुविधायितया तदुच्छेदेनैवोच्छेदः साध्य इत्याशयेनाह—यावदिति त्रिभिः ॥ २६ ॥ उत्तरौ यावत्तावदिति निपातौ यावांस्तावानित्यर्थकौ ॥ २७ ॥ तानवं वासनाक्षयेण सौक्ष्म्यम् ॥ २८ ॥ अविवेकिनश्चित्तमनुशासनायोग्यमेव, विवेकिनस्तु नश्यदवस्थं नष्टं वा तत्सुतरां तथेत्याशयेनाह—अनुशासनमिति । नभसो वारिणः पवनस्य च आहननैस्ताडनैः समं व्यर्थमिति यावत् ॥ २९ ॥ उक्तमेवानुवादेनोपसंहरति—तस्मादिति ॥ ३० ॥ आत्मनस्तदसंबन्धदर्शनमेव तत्त्याग इत्याशयेनाह—निर्विकल्प इति ॥३१॥ मम कोऽपराधो येन मां विनाशाय परित्यजसीति चेद्देहादावहंतादुर्दृष्ट्यवलम्बनमेवेत्याह—अयमिति । सा च दुर्दृष्टिः शङ्काविषप्रयुक्ता विषूचिकेव मिथ्याहेतुकापि मूढानां विनाशायैव संपद्यत इत्यपराध इत्यर्थः ॥ ३२ ॥ कुतो मिथ्यात्वमिति चेदनुपपन्नत्वादेवेत्याह—अनन्तस्येति । इति एवंरूपे परिच्छिन्ने मनसि तन्वी परिच्छिन्ना स्थितिर्देहाद्यहंभावेन स्थितिर्न संभवति नोपपद्यत इत्यर्थः । वासिता करिणी दन्ती च तयोर्बिल्वान्तस्थितिर्यथा न संभवति तथेत्यर्थः ॥ ३३ ॥ चित्तस्य त्याज्यत्वे हेत्वन्तरमप्याह—महाश्वभ्रीति । हे चित्त, त्वया महती श्वभ्री जीर्णकूपादिरिव गम्भीरा अदृश्यतला कामक्रोधलोभादिसर्पवृश्चिकपिशाचालयत्वाद्दुःखदा दुर्वासनैव स्वालयत्वेनाश्रिता । बतेति खेदे ।

कः किलायं मुधा मोहो बालस्येवाविचारिणः ।
अयं सोऽहमिति भ्रान्तिस्त्वहंतापरिकल्पिता ॥ ३५
पादाङ्गुष्ठाच्छिरो यावत्कणशः प्रविचारितम् ।
न लब्धोऽसावहं नाम कः स्यादहमिति स्थितः ॥ ३६
भरिताशेषदिक्कुञ्जं यत्स्यामेकं जगत्त्रये ।
संवेदनमसंवेद्यं सर्वत्रविगतात्मकम् ॥ ३७
दृश्यते यस्य नेयत्ता न नाम परिकल्पना ।
नैकता नान्यतैवेह न महत्ता न चाणुता ॥ ३८
वेद तत्त्वां स्वसंवेद्यमाततं दुःखकारणम् ।
विवेकजेन बोधेन तदिदं हन्यसे मया ॥ ३९
इदं मांसमिदं रक्तमिमान्यस्थीनि देहके ।
इमे ते श्वासमरुतः कोऽसावहमिति स्थितः ॥ ४०
स्पन्दो हि वातशक्तीनामवबोधो महाचितः ।
जरा मृतिश्च कायेऽस्मिन्कोऽसावहमिति स्थितः ॥ ४१
मांसमन्यदसृक्चान्यदस्थीन्यन्यानि चित्त हे ।
बोधोऽन्यः स्पन्दनं चान्यत्कोसावहमिति स्थितः ॥ ४२
इदं घ्राणमियं जिह्वा त्वगियं श्रवणे इमे ।
इदं चक्षुरसौ स्पर्शः कोऽसावहमिति स्थितः ॥ ४३
यथाभूततया नाहं मनो न त्वं न वासना ।
आत्मा शुद्धचिदाभासः केवलोऽयं विजृम्भते ॥ ४४
अहमेवेह सर्वत्र नाहं किंचिदपीह वा ।
इत्येव सन्मयी दृष्टिर्नैतरो विद्यते क्रमः ॥ ४५
चिरमज्ञानधूर्तेन पोथितोऽस्मि त्वहंतया ।
वृकेण दृसेनाटव्यां लब्धेन पशुपोतकः ॥ ४६
दिष्ट्येदानीं परिज्ञातो मयैवाज्ञानतस्करः ।
पुनर्न संश्रयाम्येनं स्वरूपार्थापहारिणम् ॥ ४७
निर्दुःखो दुःखयोग्यस्य नाहं तस्य न चैष मे ।
कश्चिद्भवति शैलस्य तत्स्थ एव यथाम्बुदः ॥ ४८
भूत्वा त्वहमिदं वच्मि वेद्मि तिष्ठामि यामि च ।
आत्मावलोकनेनाहमनहंकारतां गतः ॥ ४९
नूनमेवाहमेवैते मन्ये ज्ञाश्चक्षुरादयः ।
यान्तु तिष्ठन्तु वा देहे ममैते तु न किंचन ॥ ५०
कष्टं कोऽयमहं नाम कथं केनोपकल्पितः ।
जगद्बालकवेतालस्तालोत्तालातुलाकृतिः ॥ ५१
एतावन्तं चिरं कालं व्यर्थमालुठितोऽवटे ।
अहमत्र तृणोन्मुक्ते दुरद्रौ हरिणो यथा ॥ ५२
स्वार्थमालोकने चक्षुर्यदितून्मुखतां गतम् ।
तदहं नाम कोसौ स्याद्योऽस्मिन्दुःखे न मोहितः ॥ ५३
स्पर्शनाय निजे तत्त्वे यदि जाता त्वगुन्मुखी ।
तत्कोयं स्यादहं नाम कुपिशाच इवोदितः ॥ ५४
रसेष्वभिनिषण्णेऽस्मिन्स्वक्रमे रसनेन्द्रिये ।
अहं मृष्टभुगित्येष कुतस्त्यः कुत्सितो भ्रमः ॥ ५५
शब्दशक्ति गते श्रोत्रे वराके स्वार्थपीडिते ।
तदहंकारदुःखस्य निर्बीजस्य क आगमः ॥ ५६

---

अहं तु एनां नानुसरामीति तदनुसारिणं त्वां त्यजामीत्यर्थः ॥ ३४ ॥ किं चायं देहः स आत्माहमिति भ्रान्तिस्तु या त्वया अहंतापरिकल्पिता अयं बालस्येवाविचारिणो मोहो विचारिणो मम कः किल । न कश्चिदपीति नास्त्येवेत्यर्थः ॥ ३५ ॥ तन्नास्तित्वमेव विमृश्य विशदयति—**पादाङ्गुष्ठादि**त्यादिना । कणशो विविच्येति शेषः ॥ ३६ ॥ यद्यहंपदार्थो नास्त्येव तर्हि कस्त्वं तत्राह—**भरितेति** द्वाभ्याम् । भरिताशेषदिक्कुञ्जं दिक्कृतपरिच्छेदरहितम् । एकं वस्तुकृततद्रहितम् । असंवेद्यं क्रमसंवेद्यावस्थात्रयलक्षणकालकृतपरिच्छेदशून्यम् । अतएव सर्वत्र सर्वेषु प्रकारेषु विगतो वस्त्वन्तरात्मा यस्य । ईदृशं संवेदनमेवाहं स्यामित्यर्थः ॥ ३७ ॥ इयत्ता परिच्छिन्नं रूपम् । एकता एकत्वसंख्या । अन्यता तदन्यसंख्या । महत्ताणुते परिमाणे ॥ ३८ ॥ यतोऽहं संवेदनात्मा तत्तस्मात्साक्षिभूतेन स्वेन संवेद्यं त्वां चित्तं वेद पश्यामि । ततो दुःखकारणत्वादेव इदं वक्ष्यमाणं विवेकमादाय हन्यसे ॥ ३९ ॥ विवेचनप्रकारमेव दर्शयति—**इद**मित्यादिना ॥ ४० ॥ स्पन्दांशः सर्वोऽपि वातशक्तीनां प्राणानाम् । अवबोधांशस्तु महाचितः परमात्मनः । जरा मृतिश्चेत्येते कायकोटौ ॥ ४१ ॥ अन्यदहंपदार्थाद्व्यतिरिक्तम् ॥ ४२ ॥ ४३ ॥ यथाभूततया परमार्थतया विचारे मनः अहं न । न त्वं चित्तमहं वासनापि नाहम् । आत्मा तु सर्वथा अहंतया न स्पृष्ट इत्याह—**आत्मेति** ॥ ४४ ॥ तस्मिन्नात्मनि यद्यध्यारोपदृष्टिस्तर्ह्यहमेव सर्वत्राधिष्ठानमिति सर्वमेवाहम् । यद्यपवाददृष्टिस्तर्हि नाहं किंचिदपीति नैकदेहमात्रपरिच्छिन्नाहंभावलक्षण इतरोऽहंकारक्रमो विद्यत इत्यर्थः ॥ ४५ ॥ अज्ञानलक्षणेन धूर्तेन कितवेनाहंतया वञ्चनया चिरं पोथितः संक्लेशितोऽस्मि । लब्धेनेति भावे क्तः । विप्रलम्भेनेत्यर्थः । मृगपोतक इवेति शेषः । 'लब्ध्वेव' इति पाठः साधुः । पोतको वत्सः ॥ ४६ ॥ स्वं पारमार्थिकं यद्रूपं तल्लक्षणस्यार्थस्य धनस्यापहारिणम् ॥ ४७ ॥ परस्परविरुद्धस्वभावयोः संबन्धोऽपि नास्ति दूरे ऐक्यमित्याशयेनाह—**निर्दुःख** इति । शैलस्याम्बुदो यथा कश्चिदपि न भवति तद्वत् ॥ ४८ ॥ यदि ते सर्वथाहंकारादिर्नास्ति तर्हि कथं वचनादिना व्यवहरसि तत्राह—**भूत्वेति** । नट इव तात्कालिकेन तद्भावकल्पनेनाहंकारो भूत्वा इदं त्वदुपदेशवचनादि वच्मि चक्षुरादिना वेद्मि ॥ ४९ ॥ नूनं निश्चितमेव मन्ये । इमे चक्षुरादयस्तत्त्वतोऽहमेव । यदि मद्व्यतिरिक्तास्तर्ह्यज्ञा जडा देहे तिष्ठन्तु यान्तु वा नैते मम किंचनेत्यर्थः ॥ ५० ॥ तालादप्युत्ताला दीर्घा अतुला आकृतिर्यस्य ॥ ५१ ॥ इदानीं प्राक्तनीमविचारदशामनुशोचति—**एतावन्त**मिति ॥ ५२ ॥ इदानीं प्रतीन्द्रियविषयसंबन्धमहंप्रत्ययास्पदं मृगयति—**स्वार्थ**मित्यादिना ॥ ५३ ॥ निजे तत्त्वे विषये ॥ ५४ ॥ स्वक्रमे स्वविषये । सामान्ये एकवचनं पदसंस्कारपक्षाश्रयात् ॥ ५५ ॥ शब्दशक्तिं शब्दलक्षणविषयम् । स्वार्थः श्रवणतृष्णा तेन

आत्मंभरित्वेन निजे घ्राणे स्वं गन्धमागते ।
अहं घ्रातेति यो माता तं चौरं नैव वेद्म्यहम् ॥ ५७
मृगतृष्णाक्रमेणैषा भावना व्यर्थभाविनी ।
भावस्तस्यामसत्यायां यः सोऽयमिति संभ्रमः ॥५८
वासनाहीनमप्येतच्चक्षुरादीन्द्रियैः स्वतः ।
प्रवर्तते बहिः स्वार्थे वासना नात्र कारणम् ॥ ५९
वासनारहितं कर्म क्रियते ननु चित्त हे ।
केवलं नानुभूयन्ते सुखदुःखदृशोऽग्रगाः ॥ ६०
तस्मान्मूर्खाणीन्द्रियाणि त्यक्त्वान्तर्वासनां निजाम् ।
कुरुध्वं कर्म हे सर्वे न दुःखं समवाप्स्यथ ॥ ६१
भवद्भिरेव दुःखाय वासनावासिता मुधा ।
बालैः पङ्कक्रीडनकं विनाशेनेव खिन्नता ॥ ६२
वासनाया दशः सर्वा व्यतिरिक्तास्तु नात्मनः ।
जलादिव तरङ्गाद्या ज्ञस्यैवान्यस्य नानघ ॥ ६३
तृष्णयैव विनष्टाः स्थ व्यर्थमिन्द्रियबालकाः ।
कोशकारकुक्रमयस्तन्तुनेव स्वयंभुवा ॥ ६४
तृष्णयैवेह लुठथ जरामरणसंकटे ।
भ्रमदृष्टयेव शिखरिपथिकाः श्वभ्रभूमिषु ॥ ६५
वासनैवेह भवतां हेतुरेकत्र बन्धने ।
रज्जुः शून्याशयप्रोता मुक्तानामातता यथा ॥ ६६
कल्पनामात्रकलिता सत्यैषा हि न वस्तुतः ।
असंकल्पनमात्रेण दात्रेणेव विलूयते ॥ ६७
एषा हि भवतामेव विमोहाय क्षयाय च ।
वातलेखेव दीपानां स्फुरतामपि तेजसाम् ॥ ६८
हे चित्त सर्वेन्द्रियकोश तस्मा-
त्सर्वेन्द्रियैरैक्यमुपेत्य नूनम् ।
आलोक्य चात्मानमसत्स्वरूपं
निर्वाणमेवामलबोधमास्स्व ॥ ६९
विषयविषविषूचिकामनन्तां
निपुणमहंस्थितिवासनामपास्य ।
अभिमतपरिहारमन्त्रयुक्त्या
भव विभवो भगवान्भियामभूमिः ॥ ७०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उपशमप्रकरणे उद्दालकविचारो नाम द्विपञ्चाशः सर्गः ॥५२॥

## त्रिपञ्चाशः सर्गः ५३

उद्दालक उवाच ।
अपारपर्यन्तवपुः परमाण्वणुरेव च ।
चिदचेत्या तदाक्रान्तौ न शक्ता वासनादयः ॥ १

पीडिते वशीकृते । आगमः प्रसङ्गः ॥५६॥ आत्मंभरितया स्वोदरपूरकतया गर्धेनेति यावत् । मातात्राभिमन्ता ॥ ५७ ॥ एषा उक्तस्थलेषु प्रसिद्धा भावना अहंताकल्पना । तस्यां भावनायामसत्यायां निर्विषयायां सत्यामयं देहः सः अहमिति भावः । संभ्रमो भ्रान्तिरेवेति सर्वथा देहाहंभाववासना त्याज्येत्यर्थः ॥ ५८ ॥ ननु वासनाभावे बाह्यप्रवृत्तीनां सर्वथोपरमः स्यादिति जीवनमेव पुरुषस्य न स्यात्तत्राह—**वासनाहीनमपी**ति । एतत् शरीरं स्वार्थे जीवनहेतौ कर्मणि वासनाहीनमपि प्रवर्तते । दामव्यालकटानां प्राग्युद्धादिप्रवृत्तिवर्णनादिति भावः ॥ ५९ ॥ यदि प्रवर्तते तर्हि तत्प्रयुक्तं दुःखमपि भविष्यत्येवेति वासनात्यागात्को गुणस्तत्राह—**वासने**ति । तात्कालिकभोगाभासे अहं दुःखीति नाभिमानः, अग्रगाः भाविन्यस्तु सुखदुःखदृशो नानुभूयन्त इति तत्प्रयुक्ता शोकमोहभयविषादचिन्तोद्वेगादिसर्वसंतापशान्तिरेवास्य गुण इति भावः ॥ ६० ॥ इदानीमिन्द्रियाणि संबोध्यामुमर्थं विविच्योपदिशति—**तस्मादि**त्यादिना ॥ ६१ ॥ बालैः प्रथमं पङ्कक्रीडनकमिव पश्चात्तद्विनाशेन खिन्नतेव च भवद्भिर्विषयार्जने तद्विनाशे च दुःखायैव भोगवासनाऽज्ञात्मनि वासितेत्यर्थः ॥ ६२ ॥ अतएव विदुषामज्ञानबाधिताः सह स्वकार्यैः शुद्धात्मैव संपन्ना इति न पृथक्संतीत्याह-**वासनाद्या** इति । आद्यपदेन तत्कार्यरागप्रवृत्त्यादिर्गृह्यते । ज्ञस्यैव ता न सन्ति नान्यस्याज्ञस्येत्यर्थः ॥ ६३ ॥ अतएवाज्ञस्तृष्णयैवेन्द्रियाणि नाशितानीत्याह—**तृष्णयैवे**ति । स्वयंभुवा स्वतं एवोद्भूतया ॥ ६४ ॥ [illegible]स्तिलादिः कुसुमादिभिर्वास्यते आत्मचित्तु न

इह अधःसंसारशिलाकण्टकभुवि लुठथ । यथा शिखरिपथिकाः पर्वतशिखरे गच्छन्तः पित्तवशाद्भ्रमन्त्या दृष्ट्या शिखरात्पतिता अधो विषमेषु लुठन्ति तद्वत् ॥ ६५ ॥ यथा मुक्तानां शून्ये छिद्रिते आशये गर्भे प्रोता आतता दीर्घा रज्जुस्तन्तुर्बन्धने हेतुस्तद्वत् ॥ ६६ ॥ कल्पनाद्भ्रान्तिस्तन्मात्रेण कलिता संपादिता । एषा वासना ॥ ६७ ॥ भवतां चित्तेन्द्रियाणाम् । वर्धमाना विमोहाय । क्षयाय मरणादिदुःखाय । स्फुरतां तेजसामुल्काविद्युदादीनामपि ॥ ६८ ॥ तस्मादुक्तहेतोः सर्वेन्द्रियाणां कोशवदाधार हे चित्त, त्वं सर्वेन्द्रियैः सह ऐक्यमैकमत्यमुपेत्य नूनं निश्चयेनात्मानं स्वमसत्स्वरूपं मिथ्याभूतमित्यालोक्य स्वसाक्षिनिर्वाणामलबोधमात्रं तत्त्वतो भूत्वा आस्स्व न भूयश्चित्तरूपमादत्स्वेत्यर्थः ॥ ६९ ॥ सर्वशास्त्रतत्त्वज्ञाभिमता ये द्वैतवासनापरिहारास्तल्लक्षणया अभिलषितविषयत्यागलक्षणया मन्त्रयुक्त्या अनन्तामसंख्यदुःखामहंस्थितिरहंकारस्तद्वासनालक्षणां विषमविषसदृशाज्ञानप्रयुक्तां विषूचिकां निपुणमपास्य विभवो विसंसारः सन् भियां मरणादिसर्वभयानामभूमिरनास्पदं भगवान्पूर्णानन्दात्मैव भवेत्यर्थः ॥७०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उद्दालकविचारो नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

वासनाभिरलेपित्वमहंकारेण चात्मनः ।
शरीरमनसोर्वैरमित्याद्यत्रोपपाद्यते ॥ १ ॥

मनः शेमुष्यहंकारप्रतिबिम्बैर्जडेन्द्रियैः ।
वासनावितताः शून्या वेतालत्रासनोद्यताः ॥ २
तत्कृतेभ्यो विचारेभ्योऽनुभूतेभ्योऽपि भूरिशः ।
भूयोऽप्यनुभवत्यन्तरहं हि चिदलेपिका ॥ ३
स्वदुर्भावोपरचितां देहः संसारसंस्थितिम् ।
गृह्णात्वथ त्यजतु वाप्यहं हि चिदलेपिका ॥ ४
चितो न जन्ममरणे सर्वगायाश्चितः किल ।
किं नाम म्रियते जन्तुर्मार्यते केन वापि किम् ॥ ५
चितो न जीवितेनार्थः सर्वात्मा सर्वजीवितम् ।
किं प्राप्स्यति कदात्मैषा प्रायता यदि जीवितम् ॥ ६
जीव्यते म्रियते चेति कुविकल्पकमालिनी ।
कलना मनसामेव नात्मनो विमलात्मनः ॥ ७
यो ह्यहंभावतां प्राप्तो भावाभावैः स गृह्यते ।
आत्मनो नास्त्यहंभावो भावाभावाः कुतोऽस्य ते ॥ ८
अहंभावो मुधा मोहो मनश्च मृगतृष्णिका ।
जडः पदार्थसंभारः कस्याहंकारभावना ॥ ९
रक्तमांसमयो देहो मनो नष्टं विचारणात् ।
जडाश्चित्तादयः सर्वे कुतोऽहंभावभावना ॥ १०
आत्मंभरितया नित्यमिन्द्रियाणि स्थितान्यलम् ।
पदार्थाश्च पदार्थत्वे कुतोऽहंभावभावना ॥ ११
गुणा गुणार्थे वर्तन्ते प्रकृतौ प्रकृतिः स्थिता ।
सदेव सति विश्रान्तं कुतोऽहंभावभावना ॥ १२
सर्वगं सर्वदेहस्थं सर्वकालमयं महत् ।
केवलं परमात्मानं चिदात्मैवेह संस्थितः ॥ १३
एवं किमाकृतिः को वा किमादेशश्च किंकृतः ।
किंरूपः किंमयः कोऽहं किं गृह्णामि त्यजामि किम् ॥ १४
तेनाहं नाम नेहास्ति भावाभावोपपत्तिमान् ।
अनहंकाररूपस्य संबन्धः केन मे कथम् ॥ १५
असत्यलमहंकारे संबन्धः कस्य केन कः ।
संबन्धाभावसंसिद्धौ विलीना द्वित्वकल्पना ॥ १६
एवं ब्रह्मात्मकमिदं यत्किंचिज्जगति स्थितम् ।
सदेवास्मि तदेवास्मि परिशोचामि किं मुधा ॥ १७
एकस्मिन्नेव विमले पदे सर्वगते स्थिते ।
अहंकारकलङ्कस्य कथं नामोदयः कुतः ॥ १८

विद्यते पारं परावधिः पर्यन्ताः पूर्वपश्चिमपार्श्वावधयश्च यस्यास्तथाविधस्वरूपा । तथा स्थूलाः पृथिव्यप्तेजोवायवः कस्तूर्यादिना वासन्ते चित्तु परमाणोरपञ्चीकृताकाशादव्याकृताकाशाच्चाणुः सूक्ष्मतमा अतस्तस्या आक्रान्तौ ईषदपि स्पर्शे वासनादयो न शक्ता इत्यर्थः । साक्षात्तत्स्पर्शाशक्तावपि तच्चेत्यस्पर्शद्वारा तत्संबन्धप्रसक्तिशङ्कावारणाय विशिनष्टि—अचेत्येति ॥ १ ॥ ननु त्वदप्रकाशितविषये वासनोदयादर्शनात्त्वयैव वितताः कथं त्वदस्पर्शिन्यस्तत्राह—मन इति । न मया ताः वितताः किंतु जडेन्द्रियैरुपात्तानां विषयाणां शेमुष्यां बुद्धौ अहंकारे च चित्प्रतिबिम्बैर्हेतुभिस्तत्सूक्ष्मावस्थारूपा अतएव शून्या असद्रूपा अपि वेताला इव त्रासनोद्यता वासनावितता विस्तारिता मनः अनुभवतीति परेणान्वयः ॥ २ ॥ जागरे भूरिशः कृतेभ्यो विषयविचारेभ्योऽनुभूतेभ्यश्च विषयेभ्यो भूयोऽपि स्वप्नेऽन्तर्नाडीच्छिद्रान्तर्वासनामयानेव विषयांस्तन्मनः अनुभवति । नच बुद्ध्यहंकारकृतेन मनोनुभूतेन वा मम लेपः । हि यस्मादलेपिका चिदेवाहं न मनआदिसंघातात्मेत्यर्थः । तथाच श्रुतिः—'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' इति ॥ ३ ॥ एवं स्थूलदेहकृतेनापि न लेप इत्याह—स्वदुर्भावेति । दुर्भावा दुश्चेष्टास्तैरुपरचिताम् ॥ ४ ॥ अतएव जन्ममरणे अपि स्वस्य न स्त इत्याह—चित इति । सर्वगत्वाच्चित्त्वाच्चेति हेतुगर्भे विशेषणे इति द्योतनाय किलेति निपातः । अविनाश्यद्वितीयात्मदर्शने वध्यघातकबुद्धिर्निर्विषयैव संपद्यत इत्यात्यन्तिकाभयसिद्धिरित्याशयेनाह—किं नामेति ॥ ५ ॥ यस्य हि जीवितेनार्थस्तस्य मरणाद्भयं स्यान्न त्वसौ चित इत्याह—चित इति । यतः सर्वात्मा चिदेव सर्ववस्तूनां जीवितम् । एवमस्याः सर्वदेशकालवस्तुषु प्रायता विस्तृता स्वरूपचिदेव यदि जीवितं तदा तेन जीवितेन कदा किमन्यदप्राप्तं प्राप्स्यति यदर्थं तदिच्छेदित्यर्थः ॥ ६ ॥ मरणजीवनयोर्मनःकल्पनामात्रत्वादपि न तद्द्वेषवाञ्छाप्रसक्तिरित्याह—जीव्यत इति ॥ ७ ॥ यो हि देहाहंभावतां प्राप्तः स देहभावाभावरूपैर्जन्ममरणैर्गृह्यते ॥ ८ ॥ देहाहंभावना किमहंकारस्य उत मनस उत पदार्थवर्गस्य । तत्राद्यौ न प्रमाणवेद्यावित्यसद्रूपौ । पदार्थास्त्वत्यन्तजडा नाभिमानयोग्या इति निर्विषया निराश्रया च सेत्याह—अहंभाव इति । अहंभावोऽहंकारः ॥ ९ ॥ उक्तमेवार्थं भङ्ग्यन्तरेण विस्तरेणाह—रक्तेत्यादिना ॥ १० ॥ आत्मंभरितया स्वस्वविषयमात्रव्यापृततालक्षणस्वोदरमात्रपूरकतया नाहंकारपुष्टिलक्षणपरोपकारितयेत्यर्थः । पदार्थत्वे पदार्थस्वरूपे ॥ ११ ॥ गुणाः सत्त्वादयो गुणानामर्थे प्रकाशप्रवृत्तिमोहलक्षणे स्वव्यापारे । प्रकृतौ गुणसाम्यावस्थालक्षणे स्वभावे । प्रकृतिः प्रधानाख्या माया । सद्ब्रह्म सति स्वात्मभूते सत्स्वभावे एव विश्रान्तम् ॥ १२ ॥ इहास्मिन्देहे यश्चिदात्मा सोऽपि सर्वगत्वादिविशेषणं परमात्मानमेवाहमिति संधाय स्थितः । सोऽपि नाहंकारास्पदमित्यर्थः ॥ १३ ॥ एवं सति अहमित्येतद्देहमात्राभिमानी किमाकृतिः किंजातीयः कीदृशसंस्थानो वा तत्त्वतः को वा किमादेशः क इति निर्देशार्हः केन हेतुना वा कृतः किंवर्णः कस्य विकारः । तद्भावेन किं वा गृह्णामि अतद्भावेन किं वा त्यजामि ॥ १४ ॥ अतो निरंकुशमयोग्यत्वान्मिथ्यैवाहंकार इति नात्मनस्तत्संबन्ध इत्याह—तेनेति । भावत्वे अभावत्वे वा उपपत्तिमान् ॥ १५ ॥ द्वित्वकल्पना त्वमहमिति द्वैविध्यकल्पना ॥ १६ ॥ एवं सद्वस्तुव्यतिरिक्तेदंपदार्थपरिमार्गणेऽपि तस्य मिथ्यात्वमेव पर्यवस्यतीति सद्ब्रह्माद्वैतसाम्राज्यं प्रतिष्ठितमिति न शोकस्यावकाश इत्याह—एवमिति ॥ १७ ॥ सदद्वैतसिद्धिबलादप्यहंकारो निरसितुं शक्य

नास्त्येव हि पदार्थश्रीरात्मैवास्तीह सर्वगः ।
पदार्थलक्ष्म्यां सत्यां च संबन्धोस्ति न कस्यचित् १९
इन्द्रियैरिन्द्रियैरङ्गैर्मनो मनसि वल्गति ।
चिदलिप्तवपुः केन संबन्धः कस्य किं कथम् ॥ २०
उपलायःशलाकानां संबन्धो न यथा मिथः ।
तथैवात्रापि दृष्टानां देहेन्द्रियमनश्चिताम् ॥ २१
असदभ्युत्थिते व्यर्थमहंकारमहाभ्रमे ।
ममेदमिदमस्येति विपर्यस्तमिदं जगत् ॥ २२
अतत्त्वालोकजातेयमहंकारचमत्कृतिः ।
तापेन हिमलेखेव तत्त्वालोके विलीयते ॥ २३
आत्मनो व्यतिरेकेण न किंचिदपि विद्यते ।
सर्वं ब्रह्मेति मे तत्त्वमेतत्तद्भावयाम्यहम् ॥ २४
अहंकारभ्रमस्यास्य जातस्याकाशवर्णवत् ।
अपुनःस्मरणं मन्ये नूनं विस्मरणं वरम् ॥ २५
समूलं संपरित्यज्य चिरायाहंकृतिभ्रमम् ।
तिष्ठाम्यात्मनि शान्तात्मा शरत्खं शरदीव खे ॥ २६
ददात्यनर्थनिचयं विस्तारयति दुष्कृतम् ।
विस्तारयति संतापमहंभावोनुसंहितः ॥ २७
स्फुरत्यहंकारघने हृद्व्योम्नि सलिलात्मनि ।
विकसत्यभितः कायकदम्बे दोषमञ्जरी ॥ २८
मरणं जीवितोपान्तं जीवितं मरणान्तगम् ।
भावोऽभावाद्व्यवच्छिन्नः कष्टेयं दुःखवेदना ॥ २९
इदं लब्धमिदं प्राप्स्यामीत्यार्तिर्दाहकारिणी ।
न शाम्यत्यर्करत्नानां ग्रीष्मेऽग्निरिव दुर्धियाम् ॥ ३०
नास्तीदमिदमस्तीति चिन्ता धावत्यहंकृतिम् ।
जडाशया जडामभ्रमाला शैलावलीमिव ॥ ३१
अहंभावे परिक्षीणे शुष्कः संसारपादपः ।
भूयः प्रयच्छत्यरसो न पाषाणवदङ्कुरम् ॥ ३२
स्वतृष्णाकृष्णभोगिन्यो देहद्रुमकृतालयाः ।
क्वापि यान्ति विचारात्मन्यागते विनतासुते ॥ ३३
असदभ्युत्थिते विश्वे तज्जाते भ्रमसन्मये ।
असन्मयपरिस्पन्दे त्वहं त्वं चेति कः क्रमः ॥ ३४
इदं जगदुदेत्यादावकारणमकारणात् ।
यदकारणमुद्भूतं[1] तत्सदित्युच्यते कथम् ॥ ३५
अपर्यन्तपुराकाले मृदि कुम्भ इवाकृतिः ।
देहोऽभवदिदानीं तु तथैवास्ति भविष्यति ॥ ३६
मध्येतरपयोमात्रं कंचित्कालं चलाचलम् ।
आद्यन्तसौम्यते त्यक्त्वा वारि वीचितया यथा ॥ ३७
अस्मिन्क्षणपरिस्पन्दे देहे विसरणोन्मुखे ।
तरङ्गे च निबद्धास्था ये हतास्ते कुबुद्धयः ॥ ३८
प्राक्पुरस्ताच्च सर्वाणि सन्ति वस्तूनि नाभितः ।
मध्ये स्फुटत्वमेतेषां कैवास्था हतरूपिणी ॥ ३९

---

इत्याशयेनाह—**एकस्मिन्निति** ॥१८॥ अस्तु वा पदार्थलक्ष्मीस्तथापि संबन्धो दुर्वच इति न तत्साधकप्रमाणादिप्रसरात्तत्सिद्धिरिति प्रौढिं निदर्शयन्नाह—**पदार्थलक्ष्म्या**मिति ॥ १९ ॥ असंबन्धमेवोपपादयति—**इन्द्रियै**रिति । अङ्गैः स्वावयवत्वेन कल्पितैरिन्द्रियैरिन्द्रियैः सर्वेन्द्रियैर्मनो मनस्येव स्वप्नवद्वल्गति न बाह्यार्थान्स्प्रष्टुं क्षमते । चित्तु इन्द्रियैर्बाह्यार्थैश्च अलिप्ततनुरसङ्गस्वभावा । एवंच कस्य केन सह संबन्धः कथं वा केन वा सिध्यतीत्यर्थः ॥२०॥ असंबन्धे दृष्टान्तमाह—**उपले**ति ॥२१॥ कुतस्तर्हि लौकिकानां ममेदं धनमित्यादिव्यवहारस्तत्राह—**असदि**ति । विपर्यस्तं भ्रान्तम् ॥ २२ ॥ २३ ॥ इति मे मम प्रतीचस्तत्त्वं यदनुभवसिद्धं वा तत्त्वम् ॥ २४ ॥ इदानीमहंकारमार्जनोपायमाह—**अहंकारे**ति । प्राग्व्याख्यातम् ॥ २५ ॥ शरत्खं शरदि खे निर्मले स्वस्वभाव इव ॥ २६ ॥ सति तस्मिन्का क्षतिस्तामाह—**ददाती**त्यादिना ॥ २७ ॥ सलिलात्मनि दुर्वासनासलिलगर्भे ॥ २८ ॥ मरणं मरणादिपारलौकिकदुःखम् । जीवितं पुनर्जन्म तदुपान्तं तदवधिकम् । एवं जीवितमैहिकदुःखं मरणान्तगं मरणावधिकम् । भावो भोग्यवर्गः अभावान्नाशाद्व्यवच्छिन्नः खण्डितः ॥ २९ ॥ अर्करत्नानां सूर्यकान्तमणीनां ग्रीष्मकाले अग्निरिव न शाम्यति नित्यमुद्भवत्येवेत्यर्थः ॥ ३० ॥ जडाशया जडाश्रया जलाश्रया च । धावत्यनुसरति । शैलावलीपक्षे जडां गुरुतराम् ॥ ३१ ॥ न प्रयच्छति न जनयति । यतः अरसः रागलक्षणाङ्कुरजननशक्तिशून्यः अतएव पाषाणतुल्यः ॥ ३२ ॥ विचारात्मनि विचाररूपे । विनतासुते गरुडे ॥ ३३ ॥ असतो मिथ्याभूतादज्ञानादभ्युत्थिते अतएव भ्रमादध्यासादेव सन्मये । विश्वस्यासत्त्वेपि तत्प्रयुक्तो व्यवहारः सत्यः स्यादित्यत आह—**असन्मयपरिस्पन्दे** इति । भेदव्यवहारमात्रस्यासन्मयत्वे त्वमहमिति क्रमो भेदव्यवहारोऽपि कः ॥ ३४ ॥ अतएवाकारणं सत्यप्रयोजनशून्यमेव अकारणात्कारणत्वानर्हादेवाज्ञानादुदेति । ततः किं तत्राह—**यदि**ति ॥ ३५ ॥ एवंचोत्पत्तेः पुरो देहादेर्यादृशी स्थितिस्तादृश्येव सर्वदेति सिद्धमित्याह—**अपर्यन्ते**ति । मृदि कुम्भरूपा आकृतिः संस्थानमिव । तुशब्दोऽप्यर्थे ॥ ३६ ॥ उक्तेऽर्थे दृष्टान्तमाह—**मध्ये**ति । यथा वारि मध्येतरयोः पूर्वोत्तरकालयोरविकृतपयोमात्रं मध्ये तु कंचित्कालं चलाचलं चञ्चलं सदाद्यन्तयोः पूर्वोत्तरकालयोः प्रसिद्धे सौम्यते त्यक्त्वा वीचितया स्थितं वार्येव न वस्त्वन्तरं तद्वद्देहाद्यपि कालत्रयेऽपि ब्रह्मैव न वस्त्वन्तरमस्तीत्यर्थः ॥ ३७ ॥ क्षणपरिस्पन्दे अस्मिन्देहे विसरणोन्मुखे तरङ्गे च ये अहंत्वेन निबद्धास्थास्ते कुबुद्धयस्तन्नाशेनैव हता इत्यर्थः ॥ ३८ ॥ देशतः परिच्छिन्नत्वादपि देहादिवस्तुषु नास्था युक्तेत्याह—**प्रागि**ति । मध्ये स्वाधिकरणवितस्त्यादिमितदेशमात्रे स्फुटत्वं विद्यमानतया प्रतीयमानत्वं तदपि कार्त्स्न्यैकदेशाभ्यां विकल्प्य विमर्शे दुर्वचमेवेति तत्रापि निर्विषयत्वाद्धतरूपिणी आस्था कैव । अनु-

---

१ कारणमुच्छूनमित्यपि पाठः.

चित्तं पूर्वं पुरस्ताच्च चिद्देशं शान्तमित्यपि ।
सदसद्वा खसंलीनं मध्येऽस्मिन्किं तवोदितम् ॥ ४०
यथा स्वप्नविकारेषु यथा संभ्रमदृष्टिषु ।
यथा वा मदलीलासु यथा नौयानसंभ्रमे ॥ ४१
यथा धातुविकारेषु यथा चेन्द्रियविक्लवे ।
यथातिसंभ्रमानन्दे दोषावेशदशासु च ॥ ४२
दृश्यते क्षीयते चैव रूपं सदसतोश्चलम् ।
तथैवेयमिह त्वेषा काले न्यूनातिरिक्तता ॥ ४३
सा च त्वया कृता नित्यं चित्त दुःखसुखोदये ।
यथा वियोगयामिन्यो मतयो हन्ति रागिणम् ॥ ४४
मयैवेहासदभ्यासान्मिथ्या सदिव लक्ष्यसे ।
मृगतृष्णेव तेनैतत्त्वत्कृतं मत्कृतं भवेत् ॥ ४५
यदिदं किंचिदाभोगि तत्सर्वं दृश्यमण्डलम् ।
अवस्त्वेति विनिर्णीय मनो यात्यमनःपदम् ॥ ४६
अवस्त्विदमिति स्फारे रूढे मनसि निश्चये ।
हेमन्त इव मञ्जर्यः क्षीयन्ते भोगवासनाः ॥ ४७
चिरत्वादृष्टात्मना नूनं संत्यक्तमननौजसा ।
मनसा वीतरागेण स्वयं स्वस्थेन भूयते ॥ ४८
परमात्मानले क्षिप्तं संवृत्यावयवं स्वयम् ।
दग्ध्वात्मानमलं चित्तं शुद्धतामेति शाश्वतीम् ॥ ४९
देहमन्यतया दृष्ट्वा त्यक्त्वा विषयवासनाम् ।
विनाशमुररीकृत्य मनो जयति वीरवत् ॥ ५०
मनः शत्रुः शरीरस्य शरीरं मनसो रिपुः ।
एकाभावेन नश्येते आधाराधेयकार्यवत् ॥ ५१
रागद्वेषवतोर्नित्यमन्योन्यातिविरुद्धयोः ।
एतयोर्मूलकाषेण विनाशः परमं सुखम् ॥ ५२
एतयोरेकसंस्थाने मृतिरित्येव या कथा ।
सा व्योम्न्यया स्त्रिया भुक्ता धरेति कथया समा ५३

---

चितैवेति भावः ॥ ३९ ॥ उक्तं न्यायं लिङ्गेपि दर्शयंस्तस्यापि तथात्वमाह—**चित्त**मिति । चित्तं चित्तोपलक्षितं लिङ्गं स्वोत्पत्तेः पूर्वं पूर्वकाले पुरस्तात्पुरोदेशे च चिद्देहं स्वसाक्षिचिन्मात्रस्वभावम् । एवं उत्तरकाले देशान्तरे च शान्तं नष्टं इति [1]अनयैव देशतः परिच्छिन्नमपि खे संलीनमिवात्यन्ततिरोहितं सदसद्वेति दुर्वचम् । एवंविधं चित्तं मध्ये सांप्रतमेतद्देशे सद्व्यतिरिक्तं किमुदितम् । न किंचिदित्यर्थः ॥ ४० ॥ यदि स्थूलसूक्ष्मदेहाद्यसदेव कीदृशस्तर्हि तत्प्रतिभासस्तत्राह—**यथे**त्यादिना । संभ्रमा व्याघ्रचोरादिभयानि तद्दृष्टिषु असत्स्वपि व्याघ्रादिषु सर्वत्र व्याघ्रादिशङ्का भवति तद्वत् ॥ ४१ ॥ धातुविकारेषु वातपित्तादिसन्निपातेषु । चक्षुरादीन्द्रियस्य तिमिरादौ विक्लवे दोषे द्विचन्द्रादिभ्रमे । अतिसंभ्रमहेतौ अतिप्रियतमलाभादिप्रयुक्ते आनन्दे । विधुरादीनां कामादिदोषावेशदशासु च यथा सदसतोर्भावाभावयो रूपं चलं प्रतीतिकालमात्रस्थायि किंचित्कामिन्यादिरूपं दृश्यते झटित्येव बाधात्क्षीयते च तथैव एषा भ्रान्तिरिति परेणान्वयः ॥ ४२ ॥ यो विशेषस्तमाह—**इह त्वि**ति । स्वप्नादयोऽल्पकालाः जगद्भ्रमस्तु यावन्मोक्षमिति काले न्यूनातिरिक्ततैव विशेष इत्यर्थः ॥ ४३ ॥ हे चित्त, सा काले न्यूनातिरिक्तता त्वया व्यावहारिकवस्तुषु सत्यताभ्रान्त्या वियोगसंयोगाभ्यां नित्यं दुःखसुखयोरुदये निमित्ततया कृता सती त्वां हन्ति पीडयति । यथा असत्यपि भार्यापुत्रादिमरणे प्रतारकवाक्यादुत्पन्नास्तन्मरणमतयस्तत्कल्पितवियोगयामिन्यश्च रागिणं घ्नन्ति तद्वदित्यर्थः ॥ ४४ ॥ अथवा नायं तवापराधः किंतु त्वय्यहंभावाभ्यासिनो ममैवापराधो येन मिथ्याभूतमपि त्वं सदिव लक्ष्यसे । त्वत्कृतं च सर्वं मत्कृतं संपन्नमित्यर्थः ॥ ४५ ॥ अतएव त्वदीयविवेकज्ञानादेव मदपराधरूपस्य तव शान्तिरित्याह—**यदिद**मिति ॥ ४६ ॥ त्वद्धेतुभोगवासनानामपि तत एव क्षय इत्याह—**अवस्त्वि**ति ॥ ४७ ॥ अथवा चित्प्रतिबिम्बग्रहणेन चित्त्वाद्वीतरागेण अतएव संत्यक्तमननव्यसनेन चरमसाक्षात्कारवृत्त्या दृष्टात्मना मनसा स्वयमेव स्वस्थेन मोक्षविश्रान्तिमता भूयते न मया सदैकरूपत्वादित्याशयेनाह—**चिरत्वादि**त्यादिना ॥ ४८ ॥ चित्तं स्वयमेव बहिः प्रवृत्तं स्वावयवमिन्द्रियादि संवृत्य तत्त्वबोधेन परमात्मानलक्षिप्तं सदात्मानं चित्तस्वरूपं दग्ध्वा अलमत्यन्तं शाश्वतीं नित्यां शुद्धतामेतीत्यर्थः ॥ ४९ ॥ यथा वीरः पुरुषो युद्धे स्वदेहं स्वर्गगामिस्वान्यतया दृष्ट्वा तद्देहसंबन्धिगृहक्षेत्रधनादिविषयवासनां च त्यक्त्वा मरणमप्यङ्गीकृत्य ब्रह्मलोकं जयति तद्वन्मनोऽपीत्यर्थः ॥ ५० ॥ इदानीं देहमनसोः परस्परतप्यतापकतया विरोधं परस्परतादात्म्याभिमानात्परस्पराभिवृद्ध्या परस्परोपजीव्यतामेकतराभिमानोच्छेदेनोभयोच्छेदं च विस्तरेण दर्शयितुमुपक्रमते—**मन** इति । शत्रुरिपुशब्दौ तापकपरौ । एकाभावेन एकतरवासनोच्छेदेन । यथा आधाराधेययोर्जलघटयोः कार्यभूतः संयोग एकतरनाशेन नश्यति तद्वत् ॥ ५१ ॥ तथाच परस्परोपजीवित्वाद्रागवतोः परस्परोपतापकत्वाद्द्वेषवतोर्व्याघ्रयोः सतोर्वनहरिणस्येव एतयोः सतोर्न जीवस्य सुखं किंत्वेतयोर्मूलकाषेण मूलाज्ञाननाशेन विनाश एव परमं सुखमित्यर्थः ॥ ५२ ॥ ननु मरणेन भोगायतनदेहनाशादेव सर्वदुःखपरिहारः किं न स्यात्तत्राह—**एतयो**रिति । देहनाशेऽप्येकस्य मनसः संस्थाने देहकल्पनाया अनिवारणान्मृतिरिति कथा व्योम्नि अया गच्छन्त्या स्त्रिया धरा भूमिर्भुक्ता ग्रस्ता इति कथया समा । असंभावितार्थेत्यर्थः । अयतेः क्विपि यलोपे टापि सवर्णदीर्घे आ तया अया । 'अयःस्त्रिया' इति पाठे तु अयोविकारभूतया स्त्रीप्रतिमया व्योम्नि धरा भुक्तेति कथया समेत्यर्थः । अयःप्रतिमाया व्योम्नि गमनं तत्र धराभक्षणं च यथा अत्यन्तासंभावितं तथा मनसि सति मरणमपीति भावः ॥ ५३ ॥

---

[1] अनयैवेत्यादिर्विचार्योंशः.

अकृत्रिमविरोधस्थौ यत्र संघटितावुभौ ।
धारा इव पतन्त्येव तत्रानर्थपरम्पराः ॥ ५४
मिथो विरुद्धसंसर्गे रतिमेत्यधमो हि यः ।
त्यक्तव्यः स पतद्वारावग्निराशावलेपने ॥ ५५
संकल्पेन मनः पुष्ट्वा शरीरं बालयक्षवत् ।
आयुरेवाशनान्यस्मै स्वदुःखानि प्रयच्छति ॥ ५६
तैर्दुःखैस्तापितो देहो मनो हन्तुमथेच्छति ।
पुत्रोऽपि हन्ति पितरमाततायिपदं गतम् ॥ ५७
नास्ति शत्रुः प्रकृत्यैव न च मित्रं कदाचन ।
सुखदं मित्रमित्युक्तं दुःखदाः शत्रवः स्मृताः ॥ ५८
देहो दुःखान्यनुभवन्स्वमनो हन्तुमिच्छति ।
देहं मनः स्वदुःखानां संकेतं कुरुते क्षणात् ॥ ५९
एवं मिथो दुःखदयोः श्लिष्टयोः कः सुखागमः ।
एतयोर्देहमनसोर्जात्यैवातिविरुद्धयोः ॥ ६०
मनस्येव परिक्षीणे न देहो दुःखभाजनम् ।
तत्क्षयोत्कतया नित्यं देहोऽपि परिधावति ॥ ६१
नष्टानष्टमनर्थाय शरीरं पदमापदाम् ।
अलब्धात्मविवेकेन मनसा सुप्रजायते ॥ ६२
एते मनःशरीरे हि मिथः पीवरतां गते ।
जडरूपे हि वपुषा पयोदसरसी यथा ॥ ६३
मिथो दुःखाय संपन्न एकरूपे द्विधा स्थिते ।
व्यवहारपरे सार्धं लोके वार्यनलाविव ॥ ६४
चित्ते क्षयिणि संक्षीणे देहो ह्यामूलितो भवेत् ।
वर्धमाने तरुरिव शतशाखः प्रवर्तते ॥ ६५
क्षीयते मनसि क्षीणे देहः प्रक्षीणवासनः ।
मनो न क्षीयते क्षीणे देहे तत्क्षपयेन्मनः ॥ ६६
संकल्पपादपं तृष्णालतं छित्त्वा मनोवनम् ।
विततां भुवमासाद्य विहरामि यथासुखम् ॥ ६७
प्रक्षीयमाणमेवेदं न मनो मनसि स्थितम् ।
प्रशाम्यद्वासनाजालं प्रावृडन्त इवाम्बुदः ॥ ६८
धातूनां संनिवेशोऽयं देहनामा रिपुर्मम ।
प्रक्षीयमाणे मनसि गलत्वेषोऽवतिष्ठतु ॥ ६९
यदर्थं किल भोगश्रीर्वाञ्छते स्वकलेवरम् ।
तन्मे नापि न तस्याहं कोऽर्थः सुखलवेन मे ॥ ७०
नाहं देह इति त्वस्मिन्युक्तिमाकर्णय क्रमे ।
सर्वाङ्गेष्वपि सत्स्वेव शवः कस्मान्न वल्गति ॥ ७१
तस्माद्देहादतीतोऽहं नित्योऽनस्तमितद्युतिः ।
यः सङ्गं भास्वता प्राप्य वेद्मि व्योमनि भास्करम् ७२
नाज्ञोऽहं नच मे दुःखं नानर्थो न च दुःखिता ।
शरीरमस्तु मावास्तु स्थितोस्मि विगतज्वरः ॥ ७३

तयोः सतोः का क्षतिस्तत्राह—**अकृत्रिमे**ति । युध्यतोरन्तराले स्थितस्य देहे खड्गशरादिधारा इव ॥५४॥ मिथो विरुद्धे देहमनसी संसृज्येते अस्मिन्निति विरुद्धसंसर्गो वैषयिकसुखभोगस्तस्मिन् योऽधमो रतिमास्थामेति स पुरुषः अलेपने निरावरणे पतद्वारौ पतन्ति वारीणि समुद्रोदकानि यस्मिंस्तथाविधे अग्निराशौ वडवानले त्यक्तव्यः । स तत्रापि रतिमेष्यतीत्यर्थः ॥५५॥ रागद्वेषवतोरिति यदुक्तं तत्र मनसो देहे रागद्वेषांशौ दर्शयति—**संकल्पेने**ति । मनः स्वसंकल्पेन बालो यक्षमिव शरीरं परिकल्प्य अस्मै आ आयुः यावदायुःकालं अशनं परिकल्प्य पुष्ट्वा स्वाभिनिवेशनिमित्तानि सर्वदुःखानि प्रयच्छतीत्यर्थः ॥ ५६ ॥ देहस्यापि मनसि द्वेषांशं सहनिमित्तेन दर्शयति—**तै**रिति । दुर्विषयसेवनेन मनसि रागद्वेषशोकमोहपापादिजननेन तत्पीडयितुमिच्छतीत्यर्थः । ननु मनोजनितत्वात्पुत्रप्रायो देहः पितृस्थानीयं मनः कथं हन्तुमिच्छति तत्राह—**पुत्र** इति । 'उद्यतासिं विषाग्निं च शापोद्यतकरं तथा । आथर्वणेन हन्तारं पिशुनं चैव राजसु । भार्यातिक्रमिणं चैव विद्यात्सप्तातातायिनः ।' इति विष्णुकात्यायनोक्तानामाततायिनां पदं स्वपीडाव्यवसायं गतं प्राप्तमित्यर्थः ॥ ५७ ॥ तस्य शत्रुतां लोकप्रसिद्धन्यायेनोपपादयति—**नास्ती**ति ॥५८॥ संकेतं निकेतम् । भोगायतनमिति यावत् ॥ ५९ ॥ विरोधमुपपादितमनूद्य तत्र सुखदौर्लभ्यमुक्तमुपसंहरति—**एव**मिति ॥ ६० ॥ मनसि क्षीणे तु न देहस्य दुःखप्रसक्तिरस्तीत्याह—**मनसी**ति । अतस्तत्क्षये उत्कतया सोत्कण्ठतया ज्ञानतत्साधनोपायेषु परिधावति । यतते इति यावत् ॥ ६१ ॥ तर्हि मनोऽपि देहनाशायैव कुतो न यतते तत्राह—**नष्टे**ति । अलब्धात्मविवेकेन मनसा नष्टं नाशितमनाशितं वा शरीरमापदां पदं सदनर्थायैव सुप्रजायते इति तन्नाशान्मनसो नेष्टसिद्धिरित्यर्थः ॥ ६२ ॥ मिथः अनुग्रहादिति शेषः । सरस्यपि हविर्यज्ञादिनिष्पत्तिद्वारा पयोदानुग्राहिका क्वचित्संभवेदित्युपमोपपत्तिः ॥ ६३ ॥ मिथो विरुद्धयोरनयोः किमर्थं सहभाव इति चेद्वारिवह्न्योः पाकार्थमिव पुरुषस्य भोगमोक्षोपायव्यवहारार्थमित्याशयेनाह-**मिथ** इति । विरुद्धतया द्विधा स्थिते अप्येते अन्योन्यतादात्म्याध्यासादेकरूपे सती दुःखाय दुःखानि भोक्तुं परिहर्तुं च साकं भोगमोक्षव्यवहारसाधनपरे संपन्ने इत्यर्थः ॥ ६४ ॥ देहस्य चित्ताधीनतोक्तेः फलमाह—**चित्ते** इति ॥६५॥६६॥ अतो मन एव नाशयामीत्याह—**संकल्पे**ति ॥६७॥संकल्पनाशे च मनो मनसि मनःस्वभावेन स्थितमिति प्रशाम्यद्वासनाजालं सत् प्रावृडन्तेऽम्बुद इव नङ्क्ष्यतीत्यर्थः ॥६८॥ त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राख्यानां धातूनां संनिवेशात्मकोऽयं देहो मनसि प्रक्षीयमाणे गलतु तिष्ठतु वा, न काचित्क्षतिरित्यर्थः ॥ ६९ ॥ तिष्ठति देहे दुःखमपि किं न स्यादिति चेत्तत्संबन्धहेतोर्मनसो नाशात्संबन्ध एव नास्ति दूरे दुःखप्रसक्तिरित्याशयेनाह—**यदर्थ**मिति ॥ ७० ॥ नाहं देह इत्यस्मिन् क्रम्यते बुध्यत इति क्रमोऽवश्यज्ञातव्यार्थस्तस्मिन्युक्तिमुपपत्तिम् । वल्गति दर्शनश्रवणादिना व्यवहरति ॥ ७१ ॥ तस्माच्छवस्य बोधाद्यदर्शनात् । यो विभुत्वेन सूर्यमण्डलेऽपि सत्त्वाद्भास्वता सङ्गं प्राप्य व्योमनि भास्करं वेद्मि स एव चिद्रूपोऽहमित्यर्थः ॥ ७२ ॥ ७३ ॥

यत्रात्मा तत्र न मनो नेन्द्रियाणि न वासनाः ।
पामराः परितिष्ठन्ति निकटे न महीभृतः ॥ ७४
पदं तदनुयातोऽस्मि केवलोस्मि जयाम्यहम् ।
निर्वाणोस्मि निरंशोस्मि निरीहोस्मि निरीप्सितः ७५
इदानीमस्म्यसंबद्धो मनोदेहेन्द्रियादिभिः ।
पृथक्कृतस्य तैलस्य तिलैर्विगलनैरिव ॥ ७६
स्वस्रात्पदवराद्स्त्राल्लीलया चलितस्य मे ।
पृथक्कृतमतेः किंच परिवारो ह्ययं शुभः ॥ ७७
स्वच्छतोर्जितता सत्ता हृद्यता सत्यता ज्ञता ।
आनन्दितोपशमिता सदा च मृदुभाषिता ॥ ७८
पूर्णतोदारता सत्या कान्तिमत्तैकतानता ।
सर्वैकता निर्भयता क्षीणद्वित्वविकल्पता ॥ ७९
नित्योदिताः समाः स्वस्थाः सुन्दर्यः सुभगोदयाः ।
ममैकात्ममतेर्नित्यं कान्ता हृदयवल्लभाः ॥ ८०
सर्वथा सर्वदा सर्वं सर्वस्मिन्संभवत्यतः ।
सर्वं प्रति मम क्षीणे वाञ्छावाञ्छे सुखासुखे ॥ ८१
विगतमोहतया विमनस्तया
गतविकल्पनचित्ततया स्फुटम् ।
उपरमाम्यहमात्मनि शीतले
घनलवः शारदीव नभस्तले ॥ ८२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे उद्दालकविचारविलासो नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुःपञ्चाशः सर्गः ५४

श्रीवसिष्ठ उवाच ।

इति निर्णीय ततया धिया धवलया मुनिः ।
बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनः ॥ १
ओमित्येतत्परं ब्रह्म निर्णीय स मुनिस्तदा ।
ॐकारोच्चारितो येन तेनाप्तं परमं पदम् ॥ २
ॐकारमकरोत्तारस्वरमूर्ध्वगतध्वनिम् ।
सम्यगाहतलाङ्गूलं घण्टाकुण्डमिवारवम् ॥ ३
ओमुच्चारयतस्तस्य संवित्तत्त्वे तदुन्मुखे ।
यावदोंकारमूर्धस्थे वितते विमलात्मनि ॥ ४
सार्धत्र्यंशात्ममात्रस्य प्रथमेंऽशे स्फुटारवे ।
प्रणवस्य समाक्षुब्धप्राणारणितदेहके ॥ ५
रेचकाख्योऽखिलं कायं प्राणनिष्क्रमणक्रमः ।
रिक्तीचकार पीताम्बुरगस्त्य इव सागरम् ॥ ६
अतिष्ठत्प्राणपवनश्छिद्रसापूरिताम्बरे ।

भूम्नि तु मनआदेः प्रसक्तिरेव नास्तीत्याह—यत्रेति । श्रेष्ठसंनिधौ क्षुद्राणामनवस्थाने लोकप्रसिद्धिमुदाहरति—पामरा इति । महीभृतो राज्ञः ॥ ७४ ॥ तत्पदमनुयातः प्राप्तोऽस्मि ॥ ७५ ॥ ॥ ७६ ॥ किंच प्रारब्धशेषभोगलीलया स्वात्मरूपात्पदवराद्व्यवहाराभासे चलितस्य पूर्ववासनया पृथक्कृतमतेरयं देहेन्द्रियादिर्मे परिवारः परिजन इव विनोदहेतुरित्यर्थः ॥ ७७ ॥ तस्यां लीलायां स्वच्छतादिगुणसंपदः स्वस्य हृदयवल्लभाः कान्ता इति रूपयति—स्वच्छतेत्यादित्रिभिः । ऊर्जितता पूर्णकामता । ज्ञता विदितात्मता ॥ ७८ ॥ उदारता निर्लोभता । सत्या अबाधितस्वभावता ॥ ७९ ॥ एता मम नित्यमुदिता अभ्युदयशालिन्यः कान्ताः ॥ ८० ॥ संभवति कल्पनयेति शेषः । अतः सर्वं विषयजातं प्रति वाञ्छावाञ्छे रागद्वेषौ । सुखासुखे तत्फले सुखदुःखे ॥ ८१ ॥ अतोऽहं शरदि नभस्तले घनलवो मेघखण्ड इव शीतले निस्तापे आत्मनि दृश्यभावं परित्यज्य विश्राम्यामीत्यर्थः ॥ ८२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उद्दालकविचारविलासो नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥

दहनाप्लावनाद्यैः स्वां भावयन्वैष्णवीं तनुम् ।
धृत्वा विकल्पान्विश्रान्तः समाधौ स इतीर्यते ॥ १ ॥

धवलया विशुद्धया ततया अक्षुद्रया धिया इति उक्तरीत्या निर्णीय ॥ १ ॥ स मुनिरुद्दालकः । येन ॐकार उच्चारितस्तेन परमं पदमाप्तं प्राप्तमेव । यलोपासिद्धेः संधिरार्षः । यत ओमित्येतदक्षरं परस्य ब्रह्मणोऽभिधानत्वात्प्रतीकत्वाच्च परमेव ब्रह्म इति निर्णीय तार उच्चैः स्वरो यस्य तथाविधम् । ऊर्ध्वगतो ध्वनिर्यस्य तथाविधं ओङ्कारं अकरोत् उच्चारितवानिति परेणान्वयः ॥ २ ॥ सम्यगाहतं लाङ्गूलं लम्बमानजिह्वाकारं लोहं यस्मिंस्तथाविधं घण्टायाः कुण्डं मुखाकाशमारवं नादमिव ॥ ३ ॥ कियत्कालमोंकारमकरोत्तत्राह—ओमिति । ॐकारं पुनःपुनरुच्चारयतस्तस्योद्दालकस्य मूलाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं प्रसिद्धायामस्योंकारस्य मूर्धस्थे अर्धमात्रोपरमोर्ध्वमभिव्यक्ते वितते अमलात्मनि ब्रह्मणि संविदोंकाराकारवृत्त्युपहितं चैतन्यं तत्त्वं कूटस्थजीवचैतन्यं च यावत्तदुन्मुखे अखण्डब्रह्मचैतन्योन्मुखे भवतस्तावत्कालमोंकारमकरोदिति पूर्वेण संबन्धः ॥ ४ ॥ तत्र निर्विकल्पसमाधिप्रतिष्ठायोग्यतासिद्ध्यर्थं प्रथमं तेनैव प्रणवेन स्थूलदेहस्य शोषणदहनदुष्टभस्मांशनिरसनाप्लावनदिव्यदेहान्तरनिर्माणायापि प्रथमं तद्भावनया वृत्तमित्याह—सार्धत्र्यंशेत्यादिना । सार्धत्र्यंशा अर्धमात्रासहिता अकारोकारमकाराख्या आत्ममात्राः स्वावयवा यस्य तथाविधस्य प्रणवस्य प्रथमेंऽशे उदात्ते अकारभागे स्फुटारवे उच्चैःस्वरेणाभिव्यक्तताराभावे अतएव सम्यगाक्षुब्धैर्बहिर्निर्गमनोद्युक्तैः प्राणैर्मूलाधारमारभ्य ओष्ठपुटावधि रणितदेहके जाते सति रेचकाख्यः प्राणनिष्क्रमणक्रमोऽखिलं कायं रिक्तीचकार रेचनेन शोषयामासेति द्वयोरर्थः ॥ ५ ॥ ६ ॥ तस्य रेचितः प्राणपवनः क्वातिष्ठत्तत्राह—

१ निरीहोस्मि निरंशोस्मि इति व्युत्क्रमेण क्वचित्पठ्यते.

२ अर्धे मात्रोपरमो० इति पाठः.

त्यक्तदेहः परित्यक्तनीडः खग इवाम्बरे ॥ ७
हृदयाग्निर्ज्वलज्ज्वालो ददाह निखिलं वपुः ।
उत्पातपवनोद्भूतो दावः शुष्कमिव द्रुमम् ॥ ८
यावदित्थमवस्थैषा प्रणवप्रथमक्रमे ।
बभूव न हठादेव हठयोगो हि दुःखदः ॥ ९
अथेतरांशावसरे प्रणवस्य समस्थितौ ।
निष्कम्पकुम्भको नाम प्राणानामभवत्क्रमः ॥ १०
न बहिर्नान्तरे नाधो नोर्ध्वे नाशासु तत्र ते ।
संक्षोभमगमन्प्राणा आपः संस्तम्भिता इव ॥ ११
दग्धदेहपुरो वह्निः शशामाशनिवत्क्षणात् ।
अदृश्यत सितं भस्म शारीरं हिमपाण्डुरम् ॥ १२
यत्र कर्पूरशय्यायां सुप्तानीव सुखोचितम् ।
शरीरास्थीनि लक्ष्यन्ते निष्पन्दानि सितानि च ॥ १३
तद्भस्म पवनानीतं सास्थि वायुरयोजयत् ।
स्वदेहे भृशमुत्सन्ने त्रिनेत्रव्रतवानिव ॥ १४
तच्चण्डपवनोद्भूतमावृत्य गगनं क्षणात् ।
शरदीवाभ्रमिहिका कापि भस्मास्थिमद्ययौ ॥ १५
यावदित्थमवस्थैषा प्रणवस्यापरे क्रमे ।
बभूव न हठादेव हठयोगो हि दुःखदः ॥ १६
ततस्तृतीयावसरे प्रणवस्योपशान्तिदे ।
पूरणात्पूरको नाम प्राणानामभवत्क्रमः ॥ १७
आसिन्नवसरे प्राणाश्चेतनामृतमध्यगाः ।
व्योम्नि शीतलतामीयुर्हिमसंस्पर्शसुन्दरीम् ॥ १८
क्रमाद्गगनमध्यस्थाश्चन्द्रमण्डलतां ययुः ।
धूमा गगनकोशस्थाः शीतलाम्बुदतामिव ॥ १९
कलाकलापसंपूर्णे ते तस्मिंश्चन्द्रमण्डले ।
पुण्यराशाविवापूर्णे रसायनमहार्णवे ॥ २०
रसायनमया धाराः संपन्नाः प्राणवायवः ।
मणियष्टिसमाकारा जालेष्विन्दोरिवांशवः ॥ २१
सा पपाताम्बराद्धारा शेषे शारीरभस्मनि ।
रसायनी हरशिरःपतितेव सुरापगा ॥ २२
उदभूदिन्दुबिम्बाभं चतुर्बाहुवपुस्तया ।
प्रस्फुरन्मन्दरादब्धेः पारिजात इव द्रुमः ॥ २३
उद्दालकशरीरं तन्नारायणतयोदितम् ।
प्रफुल्लनेत्रवक्त्राब्जमावभौ दीप्तिसुन्दरम् ॥ २४
रसायनमयाः प्राणास्तच्छरीरमपूरयन् ।
सलिलौघा इव सरो वृक्षं मधुरसा इव ॥ २५
अन्तःकुण्डलिनीं प्राणाः पूरयामासुराहताः ।
चक्रानुवर्तप्रसृतां पयांसीव सरिद्वराम् ॥ २६
प्रकृतस्थं बभूवास्य तच्छरीरं द्विजन्मनः ।
प्रावृट्शरीरविगमे धौतं तलमिवावनेः ॥ २७

---

**अतिष्ठदि**ति । चिद्रसेन ब्रह्मभावनाभिव्यक्तहार्दरसेन आपूरिते अम्बरे बाह्याकाशे ॥ ७ ॥ तदानीं भावनया यद्वृत्तं तदाह—**हृदयाग्नि**रिति । प्राणानां निष्क्रमणसंघर्षणाद्धृदये भावनयोद्भूतो वह्निः । दवे अरण्ये भवो दावोऽग्निः ॥ ८ ॥ प्रणवस्य पूर्वोक्ते प्रथमक्रमे प्रथमेंशे । इदं च सर्वं भावनया वृत्तं न हठादेव । तत्कुतस्तत्राह—**हठयोग** इति । हठात्प्राणानां निर्गमने मूर्च्छामरणादिप्रसङ्गादिति भावः ॥ ९ ॥ इतरोंश उकारभागस्तस्य अनुदात्तमन्द्रोच्चारणावसरे कुम्भस्थजलवन्निश्चलपूर्णत्वात्कुम्भको नाम क्रमः ॥ १० ॥ उक्तं कुम्भकनाम विशदयति—**न बहि**रिति ॥ ११ ॥ अशनिवद्वैद्युताग्निवत् ॥ १२ ॥ यत्र यस्यामवस्थायां शरीरास्थीनि कर्पूरधूलिरचितायां शय्यायां सुप्तानीव भावनादृशा लक्ष्यन्ते ॥ १३ ॥ वात्या पवनैरूर्ध्वमानीतं सास्थि अस्थिसहितं तद्भस्म वायुरूर्ध्वप्रवाही चण्डपवनस्त्रिनेत्रस्य रुद्रस्य व्रतमस्थिभस्मधारणं तद्वानिव भृशमुत्सन्ने तपःकृश इव अलक्ष्ये स्वदेहे अयोजयत् । उद्धूलयामासेति यावत् ॥ १४ ॥ तत् अस्थिमद्भस्म क्वापि ययौ ॥ १५ ॥ प्रणवस्य मध्यमभागसाध्ये कुम्भकाख्ये क्रमे इत्थमेषाप्यवस्था भावनयैव बभूव नतु हठात् ॥ १६ ॥ तृतीयावसरे तृतीयभागोच्चारणावसरे । यद्यपि रेचकपूरककुम्भकेषु समग्रस्यैव प्रणवस्य साधनत्वं प्रसिद्धं तथापि रेचके आदिभाग एव तायते कुम्भके मध्यमभाग एव पूरके चरमभाग एव । कण्ठान्निर्गच्छता प्राणेन कण्ठ्यभागस्यैवाभिव्यक्तेः संकुचद्भ्यामोष्ठाभ्यामुकारभागस्यैवाभिव्यक्तेरोष्ठसंपुटिते मकारभागाभिव्यक्तौ पुनः प्रविशत्यपि प्राणे तत्संस्कारस्यैवानुवर्तनादिति तत्तद्भागावसरविभागोक्तिरिति बोध्यम् ॥ १७ ॥ चेतना जीवचित् तस्यां भावितं यदमृतं तन्मध्यगाः । व्योम्नि बहिराकाशे ॥ १८ ॥ गगनकोशस्था धूमा नीहारभागाः शीतलाम्बुदभावमिव ॥ १९ ॥ अमृतमयानां कलानां कलापैः संघातैः संपूर्णे अतएव रसायनमहार्णवे तस्मिंश्चन्द्रमण्डले पुण्यराशौ धर्ममेघाख्यसमाधाविवाह्लादेनापूर्णे ते प्राणवायवो रसायनमया अमृतमयाः किरणधाराः संपन्ना इति परेणान्वयः ॥ २० ॥ मणियष्टिः स्फटिकदण्डस्तत्समाकाराः ॥ २१ ॥ शेषे पवनावधूतावशिष्टे । रसानामयनी प्रवहणी ॥ २२ ॥ तया धारया । मथनेन प्रस्फुरन्मन्दरो यस्मिंस्तथाविधादब्धेः पारिजातो द्रुम इव ॥ २३ ॥ नारायणतया नारायणशरीरतया ॥ २४ ॥ मधौ वसन्ते पल्लवोद्गमहेतवो भौमा रसाः वृक्षमिव चेति परमोपमा ॥ २५ ॥ चक्राकारैरनुवृत्तैरावर्तैः प्रसृतां प्रवहन्तीं सरिद्वरां गङ्गाम् । 'सरित्पतिम्' इति पाठे प्रसृतमिति पाठ्यम् ॥ २६ ॥ दहनप्लावनादिना विष्णुशरीरात्मनोत्पत्तिकथनस्य प्रयोजनमाह—**प्रकृतस्थ**मिति । यथा अवनेस्तलं शरदि चरमवृष्ट्या धौतं सद्यःशोषितं च सत् प्रावृट्कालप्रसिद्धस्य पङ्कशैवलादिदूषितस्य शरीरस्य स्वाकारस्य विगमे प्रसन्नं निर्मलं च स्नानव्रतिनां प्रकृतयात्रादिकार्ययोग्यं भवति तथा अस्य तत्

अथ पद्मासनगतः कृत्वा देहे स्थितिं दृढम् ।
आलान इव मातङ्गं निबध्येन्द्रियपञ्चकम् ॥ २८
निर्विकल्पसमाध्यर्थं व्यवसायमुपाददे ।
स्वभावं स्वच्छतां नेतुं शरत्काल इवामलम् ॥ २९
प्रशान्तवातहरिणमाशादिगणगामिनम् ।
चिन्तया हृदयं निन्ये दूराद्रज्जेव कीलकम् ॥ ३०
धावमानमधो मत्तं चित्तं विमलमाकुलम् ।
बलात्संरोधयामास सेतुर्जलमिव द्रुतम् ॥ ३१
निमिमील दृशावर्धं परिपक्ष्मलपक्ष्मके ।
निस्पन्दतारामधुरे संध्याकाल इवाम्बुजे ॥ ३२
सौम्यतामनयन्मौनी प्राणापानजवं मुखे ।
श्वसनं श्रेयसे देशे प्रशस्तः समयो यथा ॥ ३३
तिलेभ्य इव तैलानि पृथक्कृ चक्रे प्रयत्नतः ।
इन्द्रियाणीन्द्रियार्थेभ्यः कूर्मोऽङ्गानीव गोपयन् ३४
बाह्यस्पर्शानशेषेण जहौ दूरे स धीरधीः ।
सहसा कुण्डकच्छन्नो मणिर्दूरत्विषो यथा ॥ ३५
विलीनानान्तरांश्चक्रे स्पर्शानुज्झितदर्शनात् ।
रसान्विटपकोशस्थान्मार्गशीर्ष इव द्रुमः ॥ ३६
रुरोध गुदसंकोचान्नवद्वारानिलानथ ।
मुखसंस्थगितः कुम्भो रन्ध्रकोशानिवेतरान् ॥ ३७
स्वात्मरत्नप्रकाशाढ्यां स्पष्टां कुसुमलाञ्छिताम् ।
दधार कन्धरां धीरो मेरुः शृङ्गशिखामिव ॥ ३८
बभार हृदयाकाशे मनः संयममागतम् ।
विन्ध्यखात इवोन्मत्तं गजं युक्तिवशीकृतम् ॥ ३९
शरन्नभोवदासाद्य निर्मलामतिसौम्यताम् ।
जहार परिपूर्णाब्धेर्निर्वातस्याचलां श्रियम् ॥ ४०
दुधावातिविकल्पौघान्प्रतिभासमुपेयुषः ।
पुरः परिस्फुरद्रूपान्मशकानिव मारुतः ॥ ४१
आगच्छतो यथाकामं प्रतिभासान्पुनः पुनः ।
अच्छिनन्मनसा शूरः खड्गेनेव रणे रिपून् ॥ ४२
विकल्पौघे परालूने सोऽपश्यद्धृदयाम्बरे ।
तमच्छन्नविवेकार्कं लोलकज्जलमेचकम् ॥ ४३
तमप्युन्मार्जयामास सम्यक्स्वान्तविवस्वता ।
सम्यग्ज्ञानोदितेनाशु पवनेनेव कज्जलम् ॥ ४४
तमस्युपरते कान्तं तेजःपुञ्जं ददर्श सः ।
शार्वरे तिमिरे शान्ते प्रातःसंध्यामिवाम्बुजम् ॥ ४५
तल्लुलाव स्थलाब्जानां वनं बाल इव द्विपः ।
अपिबच्चाप्यसृक्पूरं वेताल इव वेगतः ॥ ४६

शरीरमपि दहनप्लावनादिभावनाधौतं विकलुषं सत्प्रकृतसमाधिकार्यस्थं बभूवेत्यर्थः ॥२७॥ पद्मासनबन्धेन स्थितिं कृत्वा देहे इन्द्रियपञ्चकं दृढं बद्ध्वा ॥ २८ ॥ स्वभावं स्वात्मानं स्वमनो वा ॥ २९ ॥ स्वभावमेव विशिनष्टि—**प्रशान्ते**ति । प्राणायामाभ्यासात्प्रशान्ताः प्राणादिवातहरिणा यस्मिन् । आशा तृष्णा-लोभ उत्कलिका प्रतीक्षेत्यादिभेदप्रसिद्धेन गणेन बहिर्गमनशीलं स्वभावं प्रशान्तवातहरिणं कृत्वा स्वच्छतां नेतुं व्यवसायमुपाददे इति पूर्वेणान्वयः । एवं कुर्वतो यद्वृत्तं तदाह—**चिन्तये**ति । तस्य हृदयं मनः पूर्वानुभूतगृहक्षेत्रपुत्रमित्रादिचिन्तया निन्ये । यथा अदृढनिखातमश्वादिबन्धनकीलकं तदाकृष्टया रज्ज्वा उत्खायापनीयते तद्वत् ॥ ३० ॥ तदा स यच्चकार तदाह—**धावमान**मिति । धावमानं चित्तं विवेकबलाद्विमलं कृत्वा संरोधयामासेत्यर्थः । द्रुतं द्रवणोन्मुखं जलं सेतुरालिरिव । द्रुतं शीघ्रमिति वा ॥ ३१ ॥ ततः स किं चकार तदाह—**निमिमीले**ति । परस्पराग्रग्रथनात्परित उभयतः पक्ष्मलानि पक्ष्मवन्तीव पक्ष्माणि ययोस्तथाविधे । निस्पन्दाभ्यां ताराभ्यां कनीनिकाभ्यां मधुरे सुन्दरे दृशौ अर्धं निमिमील निमीलितवान् । अम्बुजपक्षे निस्पन्दौ तारे कनीनिके इव मधु रातः पिबत इति मधुरौ भ्रमरौ ययोस्ते ॥ ३२ ॥ तस्य प्रथमं राजयोगानुकूलं वाक्प्राणापाननिरोधमाह—**सौम्यता**मिति । यथा चक्रवर्तिनां जन्मादिनिमित्तभूतः प्रशस्तः समयो जगच्छ्रेयसे शुभसूचनाय शैत्यमान्द्यादिगुणं श्वसनं वायुं तज्जन्मदेशे समं स्तिमितं नयति तद्वत् । तथाचोक्तं भगवता—'प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ' इति ॥ ३३ ॥ तस्य प्रत्याहारक्रममाह—**तिलेभ्य** इत्यादिना । इन्द्रियाणीत्येतद्गोपयन्नित्यत्रापि संबध्यते ॥ ३४ ॥ **बाह्ये**ति । कुण्डकेन अल्पपिठरेणाच्छन्नः पिहितो मणिर्दूरप्रसृतास्त्विषो रश्मीन् ॥३५॥ आन्तरान्मनोवासनारूपान् स्पर्शान्विषयानधिष्ठानतत्त्वे आकर्षणेन बाधाद्विलीनांश्चक्रे ॥३६॥ पार्ष्णिना मूलाधारावष्टम्भेन गुदसंकोचान्नवद्वारानिलान् हृदये रुरोध । यथा अधोमुखपूर्णकुम्भो मुखे दृढं संस्थगितः पिहितोऽन्तर्वायुप्रवेशमन्तरेण च्छिद्रान्तरेभ्यो जलक्षरणायोगादितरान् रन्ध्रकोशान् रुणद्धि तद्वत् ॥३७॥ स्वात्मैव रत्नं तत्प्रकाशेन स्वात्मनो रत्नानां प्रकाशैश्च आढ्याम् । रजस्तमोभ्यामनावरणात्स्पष्टाम् । प्रसन्नमुखपद्मकुसुमेन कल्पद्रुमकुसुमैश्च लाञ्छिताम् । यथा मेरुस्तथाविधां स्वशृङ्गलक्षणां शिखां धारयति तद्वत् ॥३८॥ धारणामाह—**बभारे**ति । एकविषये धारणाध्यानसमाधयः संयमस्तं प्रति आगतमुन्मुखम् । युक्तिभिः प्रत्याहारोपायैर्वशीकृतम् ॥ ३९ ॥ धारणया चित्तप्रसादात्परिपूर्णात्मध्यानविश्रान्तिमाह—**शरन्नभोवदि**ति ॥ ४० ॥ ब्रह्माकारकतिपयचित्तवृत्तिधाराविच्छेदिनो मध्ये मध्ये प्रतिभासमुपेयुषो विपरीतभावनाविकल्पौघान् दुधाव निरस्तवान् ॥ ४१ ॥ ॥ ४२ ॥ तमस्तमोगुणोद्रेकप्रयुक्तमन्धकारम् ॥ ४३ ॥ सत्त्वगुणोद्भावनप्रदीप्तसम्यग्ज्ञानोदितेन स्वान्तं मनस्तद्रूपेण विवस्वता सूर्येण ॥ ४४ ॥ सत्त्वगुणोद्भावनव्यग्रस्य तदनुरूपस्तेजःपुञ्जभ्रमस्तस्याभूदित्याह—**तमसी**ति । अम्बुजं कर्तृ उद्यदर्कोपलक्षितां प्रातःसंध्यामिव ॥४५॥ तत्किं तद्विरोधिरजोगुणद्युद्भवेन लुलाव नेत्याह—**अपिबदि**ति । अधिष्ठानतत्त्वदर्शनेन बाधादप्रस-

१. क्षोभवैषम्यादिरहिततताम्.

तेजस्युपरते तस्य घूर्णमानं मनो मुनेः ।
निशाब्जवदगान्निद्रां लोलं क्षीबवदेव वा ॥ ४७
मेघमालामिव मरुद्व्यालो नीलाब्जिनीमिव ।
यामिनीमिव तीक्ष्णांशुस्तामप्याशु लुलाव सः ॥ ४८
निद्राव्यपगमे तस्य भावयामास तन्मनः ।
व्योमश्यामलदृग्जन्तुर्नभसीव शिखण्डकान् ॥ ४९
पयोद इव तापिच्छं नीहारमिव मारुतः ।
दीपस्तम इवाच्छात्म तदप्याशु ममार्ज सः ॥ ५०
व्योम[1]संविदि नष्टायां मूढं तस्याभवन्मनः ।
निद्रायां तु विलीनायां मैरेयमदवानिव ॥ ५१
मोहमप्येष मनसस्तं ममार्ज महाशयः ।
यामिनीजनितं जाड्यं भुवनादिव भास्करः ॥ ५२
ततस्तेजस्तमोनिद्रामोहादिपरिवर्जितम् ।
कामप्यवस्थामासाद्य विशश्राम मनः क्षणम् ॥ ५३
विश्रम्याशु पपाताङ्ग संविदं विश्वरूपिणीम् ।
सेतुरुद्धं सरोवारि प्रतीपं स्वमिवास्पदम् ॥ ५४
चिरानुसंधानवशात्स्वदनाच्च स्वसंविदः ।
ततश्चिन्मयतामागाद्धेम नूपुरतामिव ॥ ५५
चित्तत्वमथ संत्यज्य चित्तं चित्तत्त्वतां गतम् ।
अन्यदेव बभूवाशु पङ्कः कुम्भस्थितो यथा ॥ ५६
चेत्यं संत्यज्य चिच्छुद्धा चित्सामान्यमथाययौ ।
त्यक्तवीच्यादिभेदोऽब्धिर्वाःसामान्यमिवैकधीः ५७
त्यक्तभूतौघमननं ततो विश्वंभरं महत् ।
चिदाकाशं ततः शुद्धं सोऽभवद्बोधमागतः ॥ ५८
तत्र प्रापदथानन्दं दृश्यदर्शनवर्जितम् ।
अनन्तमुत्तमास्वादं रसायनमिवार्णवम् ॥ ५२
शरीरात्समवेतोऽसौ कामप्यवनिमागतः ।
सत्तासामान्यरूपात्मा बभूवानन्दसागरः ॥ ६०
द्विजचेतनहंसोऽसावानन्दसरसि स्थितः ।
अतिष्ठच्छरदच्छे खे कलापूर्ण इवोडुपः ॥ ६१
बभूवावातदीपाभो लिपिकर्मार्पितोपमः ।
वीतवीच्यम्बुधिप्रख्यो वृष्टमूकाम्बुदस्थितिः ॥ ६२
अथैतस्मिन्महालोके तिष्ठन्नुद्दालकश्चिरम् ।
अपश्यद्व्योमगान्सिद्धानमरानपि भूरिशः ॥ ६३
आगतानि विचित्राणि सिद्धिजालानि चाभितः ।
शक्रार्कपददातॄणि नीरन्ध्राण्यप्सरोगणैः ॥ ६४

दित्यर्थः । असृक्पूरं रक्तप्रवाहम् । तेजसो लोहितवर्णत्वादसृगुपमा ॥ ४६ ॥ रजसा समाधानाच्चालितस्य चित्तस्य विषयालाभेन विलयान्निद्रामज्जनमाह—**तेजसी**ति । लोलं तरङ्गैर्निद्रानुकूलतया आन्दोलितम् । क्षीबो मदिरामत्तस्तद्वदेव वा ॥४७॥ व्यालशब्देन भुजंगनागपर्यायेण पिङ्गो गजो वा लक्ष्यते । लुलाव विवेकप्रबोधेनेति भावः ॥ ४८ ॥ व्योम श्यामलं पश्यतीति व्योमश्यामलदृक् । यदा सूर्यातपसंमुखे व्योम्नि प्रसारितदृष्टिर्जन्तुः केशोण्ड्रवटरकाभासमयूरशिखण्डकाकारान् विभावयति तद्वन्मनो नानावासनापरिकल्पितरूपवद्व्योम भावयामासेत्यर्थः ॥ ४९ ॥ तापिच्छं तमालपुष्पं तद्धि वृष्ट्या शीर्यते श्यामतां च जहातीति । अच्छात्म स्वच्छस्वभावं तद्व्योमापि ममार्ज ॥ ५० ॥ मूढं कश्मलोपहतम् ॥ ५१ ॥ ममार्ज विशोध्यापनिन्ये ॥ ५२ ॥ कामपि वाचामगोचरां निर्विकल्पसमाध्यवस्थाम् । विशश्राम विश्रान्तिं प्राप । क्षणमल्पकालम् ॥ ५३ ॥ विक्षेपसंस्कारप्राबल्यात्तत्र स्थैर्यं न प्रापेत्याह—**विश्रम्ये**ति । अङ्गेति संबोधनम् । विश्वरूपिणीं बाह्यप्रपञ्चसमाकारां वृत्तिसंविदं पपात प्रापेति यावत् । प्राग्बाह्याकारादाकृष्य पूर्णात्मनि निरुद्धस्य परावृत्त्य पुनर्बाह्याकारापत्तावनुरूपं दृष्टान्तमाह—**सेत्वि**ति । यथा सरोवारि कुल्याद्वारा केदारे प्रवेशितं केदारमापूर्य तत्सेतुरुद्धं सत्कुल्याद्वारा परावृत्य प्रतीपं प्रतिकूलप्रवाहं सत्पुनः स्वास्पदं सर एव प्रविशति तद्वदित्यर्थः ॥ ५४ ॥ बाह्यसंविदः परावृत्य पुनः स्वसंविदं प्रति नीयमानस्य अन्तराले सविकल्पकसमाधिप्राप्तिमाह—**चिरे**ति । प्राग्ध्यानादिना चिरानुसंधानवशात्समाधावानन्दानुभवेन स्वदनाच्च हेतोस्तत्संस्कारेण पुनस्तत्राकृष्यमाणं मनस्ततोऽन्तराले चिन्मयतां चित्प्रचुरसविकल्पसमाधिरूपतामागात् । यथा हेम चरणवलयतानुरूपां नूपुरतां याति तद्वदित्यर्थः ॥ ५५ ॥ एवं सविकल्पकसमाधिना क्रमेण निरिन्धनाग्निवत् प्रक्षीयमाणं क्षीरोदकवच्चिदैकरस्यं जगामेत्याह—**चित्तत्व**मिति । चित्तं स्वीयं चित्तत्वं संत्यज्य चिदेव यत्तत्त्वं तद्भावं गतं सत् पूर्वावस्थातोऽन्यदेव बभूव । यथा कुम्भस्थितपङ्किलजलपङ्को जलशोषे कुम्भमालिप्य कुम्भभावमेव गच्छति तद्वदित्यर्थः ॥ ५६ ॥ चित्तस्य चित्तभावापगमे तत्प्रतिबिम्बचैतन्यस्य बिम्बचित्सामान्यैक्यं वृत्तमित्याह—**चेत्य**मिति । चेत्यं स्वावभास्यं वृत्त्याकारं संत्यज्य प्रतिबिम्बचिच्छुद्धा सती सर्ववृत्तिसाधारणसाक्षिचित्सामान्यभावमुपाययौ, यतः सा एकधीः एकरसीभूता स्वोपाधिबुद्धिर्यस्यास्तथाविधेत्यर्थः ॥ ५७ ॥ एवं निर्विकल्पसमाधिप्रतिष्ठितस्योद्दालकस्य तत्परिपाकात्तत्त्वसाक्षात्कारं तत्फलं 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतिदर्शितं ब्रह्मभावं च दर्शयति—**त्यक्ते**ति । ततस्तदनन्तरं उद्दालकस्ततस्तादृशस्य समाधेर्बोधं तत्त्वसाक्षात्कारमागतः सन् विश्वंभरं सर्वजगदधिष्ठानं त्यक्तभूतौघमननं द्वैतप्रतिभासरहितं शुद्धं महच्चिदाकाशमभवत् ॥ ५८ ॥ तद्भाव एव निरतिशयानन्दावाप्तिरिति दर्शयति—**तत्रे**ति । उत्तमैर्ब्रह्मादिभिरास्वाद्यत इत्युत्तमास्वादम् । रसानां सर्वविषयसुखकणानामयनमाधारभूतमर्णवमिव स्थितम् ॥ ५९ ॥ तामेव दशां वर्णयति—**शरीरा**दित्यादिना । शरीरात्सम्यगवमत्य इतो निर्गत इव शोधित इति यावत् ॥ ६० ॥ उडुपश्चन्द्रः ॥ ६१ ॥ पूर्वं वृष्टः पश्चाच्छरदि मूको निर्गतजलश्च योऽम्बुदस्तत्सदृशस्थितिः ॥ ६२ ॥ तत्पदारूढो ब्रह्मलोकान्तसिद्धिगणान्

१ संविद्विनष्टायां इत्यपि पाठः.

तानि नादरयांचक्रे सिद्धिवृन्दानि स द्विजः ।
गम्भीरमतिरक्षुब्धो विलासानिव शैशवान् ॥ ६५
सिद्धिसार्थमनादृत्य तस्मिन्नानन्दमन्दिरे ।
अतिष्ठदथ षण्मासान्दिक्तटेऽर्क इवोत्तरे ॥ ६६
जीवन्मुक्तपदं तत्तद्यावत्संप्राप्तवान्द्विजः ।
तत्र सिद्धाः सुराः साध्याः स्थिता ब्रह्महरादयः ॥ ६७
आनन्दे परिणामित्वादनानन्दपदं गतः ।
नानन्दे न निरानन्दे ततस्तत्संविदाबभौ ॥ ६८
क्षणं वर्षसहस्रं वा तत्र लब्ध्वा स्थितिं मनः ।
रतिमेति न भोगौघे दृष्टस्वर्ग इवावनौ ॥ ६९
तत्पदं सा गतिः शान्ता तच्छ्रेयः शाश्वतं शिवम् ।
तत्र विश्रान्तिमाप्तस्य भूयो नो बाधते भ्रमः ॥ ७०
तत्पदं साधवः प्राप्य दृश्यदृष्टिमिमां पुनः ।
नायान्ति खदिरोद्यानं लब्धचैत्ररथा इव ॥ ७१
तां महानन्दपदवीं चित्तादासाद्य देहिनः ।
दृश्यं न बहु मन्यन्ते राजानो दीनतामिव ॥ ७२
चेतस्तत्पदविश्रान्तं बुद्धं दृश्यदशां प्रति ।
कदर्थाद्बोधमायाति नायात्येवाथवानघ ॥ ७३
उद्दालकोऽत्र षण्मासान्दूरोत्सारितसिद्धिभूः ।
उषित्वोन्मिषितोऽम्भोदकोशादर्को मधाविव ॥ ७४
ददर्श संप्रबुद्धात्मा पुनः परमतेजसः ।
प्रणामलालसाः स्निग्धाश्चन्द्रबिम्बवपुर्धराः ॥ ७५
रमणीर्गौरमन्दाररेणुभ्रमरचामराः ।
स्फुरत्पताकापटला द्युविमानपरम्पराः ॥ ७६
अस्मदादीन्मुनीन्दर्भपवित्राङ्ककराम्बुजान् ।
विद्याधरीभिर्वेलितान्विद्याधरपतीनपि ॥ ७७
ते तमूचुर्महात्मानमुद्दालकमुनिं तथा ।
प्रसादेन प्रणामाप्तो भगवन्नवलोकय ॥ ७८
आरुह्येदं विमानं त्वमेहि त्रैविष्टपं पुरम् ।
स्वर्ग एव हि सीमान्तो जगत्संभोगसंपदाम् ॥ ७९
आकल्पमुचितान्भुङ्क्ष्व भोगानभिमतान्विभो ।
स्वर्गादिफलभोगार्थमेवाशेषतपःक्रियाः ॥ ८०
हारचामरधारिण्यो विद्याधरवराङ्गनाः ।
पश्यैमास्त्वामुपासीनाः करिण्यः करिणं यथा ॥ ८१
कामो धर्मार्थयोः सारः कामसाराः सुयोषितः ।
वसन्त इव मञ्जर्यः स्वर्ग एव भवन्ति ताः ॥ ८२
एवं कथयतः सर्वानतिथीन्नित्यसौ मुनिः ।
परिपूज्य यथान्यायमतिष्ठद्गतसंभ्रमम् ॥ ८३
नाभ्यनन्दन्न तत्याज तां विभूतिं स धीरधीः ।
भो सिद्धा व्रजतेत्युक्त्वा स्वव्यापारपरोऽभवत् ॥ ८४
अथ स्वधर्मनिरतं भोगेष्वरतिमागतम् ।
तमुपास्य ययुः सिद्धा दिनैः कतिपयैः स्वयम् ॥ ८५
जीवन्मुक्तः स च मुनिर्विजहार यथासुखम् ।
यावदिच्छं वनान्तेषु मुनीनामाश्रमेषु च ॥ ८६
मेरुमन्दरकैलासहिमवद्विन्ध्यसानुषु ।
द्वीपोपवनदिक्कुञ्जजङ्गलारण्यभूमिषु ॥ ८७
ततःप्रभृति संप्राप्तपदमुद्दालको द्विजः ।
गुहासु गिरिकुक्षीणामवसद्ध्यानलीलया ॥ ८८
कदाचिदह्ना मासेन कदाचिद्वत्सरेण च ।
कदाचिद्वत्सरौघेण ध्यानासक्तो व्यबुध्यत ॥ ८९
उद्दालकस्तदारभ्य व्यवहारपरोऽपि सन् ।
सुसमाहित एवासौ चित्तत्त्वैकत्वमागतः ॥ ९०

---

पादपातेन प्रार्थयतोऽपि कटाक्षेणापि न पश्यतीत्येतद्दर्शयति—अथेत्यादिना ॥ ६३ ॥ ६४ ॥ ६५ ॥ आनन्दस्य मन्दिरे । तस्मिंस्तादृशसमाधौ । उत्तरे उत्तरायणाधारे दिक्तटेऽर्क इव षण्मासम् ॥ ६६ ॥ तत्तदुत्तरोत्कृष्टं सप्तमभूमिकाप्रतिष्ठम् । सुरा देवाः सिद्धा देवयोनिभेदाः साध्या गणदेवताः । सुरेभ्यस्तेषां पृथग्ग्रहणं गोबलीवर्दन्यायेन ॥ ६७ ॥ तस्मिंश्चानन्दे रसास्वादलक्षणचित्तपरिणामशून्यत्वान्न विद्यते आनन्दोऽस्येति व्युत्पन्नमनानन्दपदं गतः प्राप्तः । ततस्तस्माद्धेतोस्तस्य संविदात्मचैतन्यं न विषयिणामिव क्षुद्रानन्दे बभौ नापि निरानन्दे दुःखे किंतु स्वप्रकाशैकरसपूर्णमवतस्थे इत्यर्थः ॥ ६८ ॥ तत्प्राप्तौ न पुनः क्षुद्रानन्दस्पृहोद्भव इत्याह—**क्षण**मिति । दृष्टस्वर्गोऽनुभूतस्वर्गविभवः पुरुषः । अवनौ भूलोकसुखे ॥ ६९ ॥ तदेव सर्वोत्कृष्टमिति वर्णयति—**तदि**त्यादिना ॥ ७० ॥ ७१ ॥ श्रवणमननसमाधिपरिष्कृताच्चित्तादासाद्य अपरोक्षतया प्राप्य । 'वित्तात्' इति पाठे विचारितशास्त्रात् ॥ ७२ ॥ बुद्धं चित्तं दृश्यदशां समाधिव्युत्थानदशां प्रति कदर्थात् परेषां महतः प्रयत्नाद्बोधमायाति षष्ठभूमिकायाम् । नायात्येव सप्तमभूमिकायाम् ॥७३॥ अम्भोदकोशान्नीहारपटलात् । मधौ चैत्रे ॥७४॥ प्राग्दृष्टा एव रमणीर्द्युविमानपरम्पराश्च पुनर्ददर्शेति परेणान्वयः ॥ ७५ ॥ गौरमन्दाररेणुच्छन्ना भ्रमराश्चामराणि च यासाम् । स्फुरन्ति पताकापटलानि यास्विति च साधारणे विशेषणे ॥ ७६ ॥ विद्याधरपतीनपि ददर्शेत्यनुकृष्यते ॥ ७७ ॥ ते वैमानिका मुनयश्च तमुद्दालकमूचुर्हे भगवन्, नः अस्मान् प्रणामात्प्रसादेनानुग्रहदृशा अवलोकय ॥ ७८ ॥ एहि आगच्छ । स्वर्गस्यानुपेक्षायां हेतुमाहुः—**स्वर्ग एवे**ति ॥ ७९ ॥ आकल्पं द्विपरार्धावसानान्तकालम् । अनेनैव सर्वेषां तपःक्लेशादिसार्थक्यमित्याहुः—**स्वर्गादी**ति ॥ ८० ॥ ८१ ॥ धर्मार्थयोः फलत्वात्सारः ॥ ८२ ॥ गतसंभ्रमं मिथ्यात्वादिनिश्चयाद्विगतकुतूहलं यथा स्यात्तथा अतिष्ठत् ॥ ८३ ॥ स्वव्यापारः समाधिस्तत्परोऽभवत् ॥ ८४ ॥ उपास्य चिरप्रतीक्षाप्रणामप्रशंसादिनोपचर्य ॥ ८५ ॥ ८६ ॥ ८७ ॥ संप्राप्तपदं यथा स्यात्तथा अवसत् । ध्यानलीलयेत्यनेन ध्यानमपि तस्य लीलैव न तेनापि तस्य साध्यमस्तीति सूचितम् ॥ ८८ ॥ ध्यानासक्तः समाधिमारूढः ॥ ८९ ॥ व्यवहारकालेऽपि सुसमाहित एव नाज्ञवद्विक्षेप-

चित्तत्त्वैकघनाभ्यासान्महाचित्त्वमुपेत्य सः।
बभूव सर्वत्र समस्तेजः सौरमिवावनौ ॥ ९१
चित्सामान्यचिराभ्यासात्सत्तासामान्यमेत्य सः।
दृश्येऽस्मिंश्चित्ररविवन्नास्तमायान्न चोदयम् ॥ ९२
शमपरपदलाभप्राप्तिसंशान्तचेता
गलितजननपाशः क्षीणसंदेहदोलः।
शरदि खमिव शान्तं व्याततं चोर्जितं च
स्फुटममलमचेतस्तद्वपुः संबभार ॥ ९३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे उद्दालकविश्रान्तिर्नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ५५

श्रीराम उवाच।
आत्मज्ञानदिनैकार्क मत्संशयतृणानल।
अज्ञानदाहशीतांशो सत्तासामान्यमीश किम् ॥ १
श्रीवसिष्ठ उवाच।
यदा संक्षीयते चित्तमभावात्यन्तभावनात्।
चित्सामान्यस्वरूपस्य सत्तासामान्यता तदा ॥ २
नूनं चेत्यांशरहिता चिद्यदात्मनि लीयते।
असद्रूपवदत्यच्छा सत्तासामान्यता तदा ॥ ३
यदा सर्वमिदं किंचित्सबाह्याभ्यन्तरात्मकम्।
अपलप्य वसेच्चेतः सत्तासामान्यता तदा ॥ ४
यदा सर्वाणि दृश्यानि सत्तासामान्यवेदनम्।
स्वरूपेण स्वरूपाभं सत्तासामान्यता तदा ॥ ५
कूर्मोऽङ्गानीव दृश्यानि लीयन्ते स्वात्मनात्मनि।
अभावितान्येव यदा सत्तासामान्यता तदा ॥ ६
दृष्टिरेषा हि परमा सदेहादेहयोः सदा।
मुक्तयोः संभवत्येव तुर्यातीतपदोपमा ॥ ७
व्युत्थितस्य भवत्येषा समाधिस्थस्य चानघ।
ज्ञस्य केवलमज्ञस्य न भवत्येव बोधजा ॥ ८
अस्यां दृशि स्थिताः सर्वे जीवन्मुक्ता महाशयाः।
सिद्धा रसा इव भुवि व्योमवीथ्यामिवानिलाः ॥ ९

वानित्यर्थः ॥ ९० ॥ चित्तत्त्वमन्तःकरणतद्वृत्त्यनुगततत्साक्षिचिन्मात्रं तस्यैव विविच्य दर्शनधारालक्षणात्समाधिरूढाभ्यासान्महाचित्त्वमपरिच्छिन्नचिद्भावम्। सर्वत्र सर्वभूतेषु स्नेहद्वेषवर्जनात्कारुण्यादविषमब्रह्मभावदर्शनाच्च समः। अनेन तस्य क्रमात्पञ्चमभूमेः षष्ठभूमिकाप्राप्तिरुक्ता ॥ ९१ ॥ अथास्य सप्तमभूमिकाविश्रान्तिं दर्शयति—चित्सामान्येति। सर्वथा दृश्यस्य तत्संस्कारस्य चोच्छेदे तत्प्रथारूपत्वलक्षणचित्त्वव्यवहारस्याप्युपरमात्स्वप्रकाशनिरतिशयानन्दसन्मात्रपरिशेषात्सत्तासामान्यमेत्य प्राप्य चित्ररविवदस्मिन् दृश्ये 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति' इत्यादिश्रुतिदर्शितमाविर्भावतिरोभावलक्षणमस्तमयमुदयं च नायात्। तद्बीजाविद्याकामकर्मवासनानामत्यन्तोच्छेदादिति भावः ॥ ९२ ॥ एतामेव स्थितिं प्रपञ्चयन्नुपसंहरति—शमेति। सर्वविक्षेपोपशमनान्निरतिशयानन्दरूपपरपदलाभप्राप्तेश्च सम्यक् शान्तं गलितं मनो यस्य। अतएव सर्वकर्मबीजक्षयाद्गलितजननपाशः क्षीणाः संदेहदोलावस्थाश्च यस्य तथाविधः सन् शरदि खमिव शान्तं प्रशान्ताविद्यामेघडम्बरम्। व्याततमपरिच्छिन्नमत एव निरङ्कुशबृहत्त्वान्निरतिशयसत्तास्फूर्तिसुखोत्कर्षाद्दूर्जितं निरावरणत्वात् स्फुटं प्राक्तनदशाया अत्यन्तविस्मरणादचेतस्तद्ब्रह्मस्वभावापन्नं वपुः स्वरूपं संबभार न प्रागिवोद्दालकवपुरित्यर्थः ॥ ९३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उद्दालकविश्रान्तिर्नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

सत्तासामान्यलक्ष्मास्य युक्त्या देहोज्झनक्रमः।
त्यक्तदेहेन खिखिन्या भूपाङ्कुशिश्च वर्ण्यते ॥ १ ॥

गुरुं स्तुतिभिः प्रसाद्य रामश्चरमपर्यायोक्तसत्तासामान्यं लक्षणैर्जिज्ञासमानः पृच्छति—आत्मज्ञानेति। अज्ञानप्रयुक्ततापत्रयलक्षणस्य दाहस्य संतापस्य शीतांशो। अज्ञानान्धकारोच्छेदे तत्प्रयुक्तसंशयविपर्ययाद्युच्छेदे तत्प्रयुक्तसर्वदुःखोच्छेदे च त्वमेव समर्थ इति विशेषणत्रयतात्पर्यार्थः। ईशेत्युक्तिर्गुरावीश्वरदृष्टिरेव सदा कार्या न साधारणबुद्धिरिति द्योतनाय ॥ १ ॥ षष्ठभूमिकायां चिदवान्तरभेदान्परिमृज्य चित्सामान्यस्वरूपभूतस्य चेत्याभावस्यात्यन्तभावनाच्चेत्यसंस्काराणामात्यन्तिकोच्छेदे सति यदा चित्तं संक्षीयते तदा स्वमात्रसत्तया स्वतः सिद्ध्यन्ती परिशिष्टा चिदचिदुभयानुगतसत्तैव सत्तासामान्यमित्यर्थः ॥ २ ॥ सर्ववृत्तिप्रतिबिम्बिता चित् सर्वदृश्यबाधे चेत्यांशैर्वृत्तितद्विषयै रहिता सती यदा स्वात्मनि बिम्बचैतन्ये लीयते तदा तस्य बिम्बस्य असद्रूपं यस्मिंस्तदसद्रूपमाकाशस्तद्वदत्यच्छा सत्तासामान्यता बोध्येत्यर्थः ॥ ३ ॥ चेतश्चित्तवृत्त्यभिव्यक्ताखण्डचैतन्यम् ॥ ४ ॥ यदा सर्वाणि भूतानि स्वपारमार्थिकरूपेण स्वरूपमेव आभा स्वप्रथा यस्य नान्या तथाविधं सत्तासामान्यात्मकं वेदनं चिन्मात्रं भवतीति शेषः ॥ ५ ॥ अभावितानि भावनयत्नं विनैव सहजदर्शेत्यर्थः ॥ ६ ॥ एषा सप्तमभूमिकारूढदृष्टिर्यतस्तुर्यातीतपदोपमा अतः सदेहादेहमुक्तयोः समानस्वरूपस्थितौ विशेषोऽस्तीत्यर्थः ॥ ७ ॥ सेयं दृष्टिः पञ्चमादिभूमिकास्वपि समाधिस्थस्य भवति सप्तमभूमिकारूढस्य तु व्युत्थितस्यापि। केवलमज्ञस्य न भवत्येवेत्यर्थः ॥ ८ ॥ सर्वेऽपि जीवन्मुक्ता अस्यां दृशि स्थिताः सन्तो भुवि सिद्धा रसाः पारदादय इव व्योमवीथ्यामनिला इव च ऐहिकामुष्मिकभोगतृष्णारजोभिरस्पृष्टास्तिष्ठन्ती-

१ चाश इत्यपि पाठः. २ संदेहाः दोला° इत्यपि पाठः.

अस्मत्प्रभृतयः सर्वे नारदाद्याश्च राघव ।
ब्रह्मविष्ण्वीश्वराद्याश्च दृष्टावस्थां व्यवस्थिताः ॥ १०
एतामालम्ब्य पदवीं समस्तभयनाशिनीम् ।
उद्दालकोऽसाववसद्यावदिच्छं जगद्गृहे ॥ ११
अथ कालेन बहुना बुद्धिस्तस्य बभूव ह ।
विदेहमुक्तस्तिष्ठामि देहं त्यक्त्वेति निश्चला ॥ १२
एवं चिन्तितवानद्रेर्गुहायां पल्लवासने ।
बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनः ॥ १३
संयम्य गुदसंरोधाद्द्वाराणि नव चेतसः ।
मात्रास्पर्शान्विचिन्वानो भावितस्वाङ्गचिद्धनः ॥ १४
संरुद्धप्राणपवनः समसंस्थानकन्धरः ।
तालुमूलतलालग्नजिह्वामूलो लसन्मुखः ॥ १५
न बहिर्नान्तरे नाधो नोर्ध्वे नार्थे न शून्यके ।
संयोजितमनोदृष्टिर्दन्तैर्दन्तानसंस्पृशन् ॥ १६
प्राणप्रवाहसंरोधसमः स्वच्छाननच्छविः ।
अङ्ग चित्संविदुत्तानरोमकण्टकिताङ्गभूः ॥ १७
अङ्गचित्संविदाभ्यासाच्चित्सामान्यमुपाददे ।
तदभ्यासादवापान्तरानन्दस्पन्दमुत्तमम् ॥ १८
तदास्वादनतो लीनचित्सामान्यदशाक्रमम् ।
विश्वंभरमनन्तात्म सत्तासामान्यमाययौ ॥ १९
तस्थौ समसमाभोगः परां विश्रान्तिमागतः ।
अनानन्दसमानन्दमुग्धमुग्धमुखद्युतिः ॥ २०
संशान्तानन्दपुलकः पदं प्राप्यामलं गतः ।
चिरकालपरिक्षीणमननादिभवभ्रमः ॥ २१
बभूव स महासत्त्वो लिपिकर्मार्पितोपमः ।
समः कलावपूर्णेन शरदच्छाम्बरेन्दुना ॥ २२

उपशशाम शनैर्दिवसैरसौ
कतिपयैः स्वपदे विमलात्मनि ।
तरुरसः शरदन्त इवामले
रविकरौजसि जन्मदशातिगः ॥ २३
गतसकलविकल्पो निर्विकारोऽभिरामः
सकलमलविलासोपाधिनिर्मुक्तमूर्तिः ।
विगलितसुखमाद्यं तत्सुखं प्राप यस्मि-
स्तृणमिव जलराशावूह्यते शक्रलक्ष्मीः ॥ २४
अपरिमितनभोन्तर्व्यापिदिग्व्यापि पूर्णं
भुवनभरणशीलं भूरिभव्योपसेव्यम् ।
कथनगुणमतीतं सत्यमानन्दमाद्यं
परमसुखमनन्तं ब्राह्मणोऽसौ बभूव ॥ २५

---

त्यर्थः ॥ ९ ॥ तानेवोदाहरति—**अस्मत्प्रभृतय** इति । अस्मत्प्रभृतयो भुवि नारदाद्या व्योमवीथ्यां ब्रह्माद्यास्तदूर्ध्वलोकेष्वित्यर्थः ॥ १० ॥ यावदिच्छमाप्रारब्धक्षयम् ॥ ११ ॥ निश्चला दृढा ॥१२॥ चिन्तितवान् चिन्तितार्थदृढनिश्चयवान्सन् ॥१३॥ मात्रास्पर्शान्शब्दस्पर्शादिगोचरवृत्तीर्विचिन्वानो बदराणीवैकैकश उपसंहृत्य हृदि निवेशयन्, हृदि निविष्टानां च तेषां परमार्थरूपो भावितः स्वाङ्गमिव स्वात्मनैकीकृतश्चिद्रूपो घनः सैन्धवघनवदेकरसो येन ॥ १४ ॥ समसंस्थाना कन्धरा कण्ठो यस्य । तालुमूलतले आलग्नेन कण्ठच्छिद्रे कवाटवन्निवेशितेन जिह्वामूलेनोन्नतमिव लसन्मुखं यस्य ॥१५॥ अर्थे रूपादिविषये । न संयोजिते मनोदृष्टी येन ॥ १६ ॥ प्राणादिप्रवाहाणां संरोधेन समस्तक्रियाकृतदेहमनःकरणचाञ्चल्यशून्यः स्वच्छाननच्छविः प्रसन्नवदनः । अङ्गेति संबोधने । चित्संविदा चिद्रूपब्रह्मानन्दानुभवेन उत्तानैरूर्ध्वजुभी रोमभिः कण्टकिता संजातकण्टका अङ्गभूर्यस्य ॥ १७ ॥ तस्यानन्दाविर्भावे पूर्वोक्तमेव क्रममाह—**अङ्गे**ति । अङ्गेष्वन्तःकरणैकदेशभूतवृत्तिभेदेषु प्रतिबिम्बिता चित् अवच्छिन्ना संविदा च स्वोपाधिभूतवृत्तिभेदानां विलयाभ्यासाद्बिम्बभूतचित्सामान्यमुपाददे प्रविवेश । बिम्बभूतचिन्मात्रानुसंधानाभ्यासाच्च अन्तर्हृदि उत्तमं सर्वोत्कृष्टमानन्दस्पन्दं अवाप अन्वभूदित्यर्थः ॥ १८ ॥ तस्य पूर्ववत् सत्तासामान्यानुप्रवेशमाह—**तदास्वादनत** इति । यावन्न निरतिशयानन्दास्वादनं तावदेव चित्तं निरोधक्लेशासहिष्णुतया बहिः प्रवर्तते । आस्वादिते त्वानन्दे तत्रैव गुडपिपीलिकान्यायेनासक्तं स्वरूपमपि विस्मृत्य स्वानुगतं चित्सामान्यं निरतिशयस्वप्रकाशसत्तासामान्यभावं नयति स एव चित्सामान्यदशाक्रमस्य लयस्तस्य सत्तासामान्यप्राप्तिश्चेति भावः ॥ १९ ॥ तत्रैव तस्यापुनरावर्तिनीं स्थितिमाह—**तस्था**विति । समेभ्योऽपि सम आत्यन्तिकविक्षेपवैषम्यशून्य आभोगः स्वरूपं यस्य । न विद्यन्ते आनन्दाः समा यस्य तथाविधानन्देन प्रसन्नतमत्वान्मुग्धेभ्यः सुन्दरेभ्योऽपि मुग्धा मुखद्युतिर्यस्य तथाविधः सन् ॥ २० ॥ आनन्दाविर्भावलिङ्गरोमाञ्चादीनामपि क्रमादुपरममाह—**संशान्ते**ति । जीवन्नेव पदं प्राप्य प्रारब्धभोगहेतुमलशेषक्षयादमलं गतः सन् ॥ २१ ॥ कलाभिरवपूर्णेन ॥ २२ ॥ 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति श्रुत्युक्तरीत्या तत्रैव तत्प्राणानां तप्तोदकौष्ण्यवत्क्रमादुपशममभिप्रेत्याह—**उपशशामे**ति । शरदन्ते हेमन्ते तरूणां रसो रविकरौजसीव विमले स्वपदे उपशशाम ॥ २३ ॥ प्राणाद्युपशमे परिशिष्टं तत्स्वरूपं वर्णयति—**गते**त्यादिना । अग्निविस्फुलिङ्गवत्प्राग्उपाधिभिर्विगलितानि निःसृतानि हैरण्यगर्भान्तविषयसुखानि यस्मात्तथाविधं आद्यं तद्वाचामगोचरं सुखं स प्राप । यस्मिन्सुखे शक्रलक्ष्मीरप्यब्धौ तृणमिव ऊह्यते प्रवाह्यते तर्क्यते वा तद्दर्शिभिरित्यर्थः ॥ २४ ॥ असौ ब्राह्मण उद्दालकः प्रतिब्रह्माण्डं भेदादपरिमितान्यनन्तानि नभांसि अन्तः स्वोदरे व्याप्नुवन्ति या दिशस्ता अपि व्याप्तुं शीलमस्य । अनेन देशकृतपरिच्छेदनिरासः । सर्वदा सर्ववस्तुषु पूर्णम् । सर्ववस्त्वाधारभुवनानां भरणं धारणं पोषणं च शीलं यस्य । अनेन सर्वाधिष्ठानतोक्त्या वस्तुकृतभेदनिरासः । भूरिभिर्भव्यैर्भाग्यैरुत्तमजनैश्चोपसेव्यम् । कथनगुणं वाक्प्रवृत्ति-

---

१ आधे उ उह्यत इति च्छेदः.

गतवति पदमाद्यं चेतसि स्वच्छभावं
द्विजतनुरथ मासैः सोपविष्टैव षड्भिः ।
रविकरपरितप्ता वातभांकाररम्या
तनुतरुभुजतन्त्री शैलवीणा बभूव ॥ २६
अथ बहुतरकालेनैतदद्रेर्भुवं ता-
मुपययुरगकन्यासंयुता मातरः खात् ।
अभिमतफलसिद्ध्यै संयुता एव सर्वा
अनलमिव शिखानां पङ्क्तयः पिङ्गकेश्यः २७
दिनकरकरशुष्कं विप्रकंकालकं त-
ज्झटिति मुकुटकोटौ खड्गखट्वाङ्गमध्ये ।
सकलविबुधवन्द्या खिंखिनी देवदेवी
निशि नवतरवृत्ता कान्तकान्ति चकार ॥ २८
इत्युद्दालकदेहकं सुविलसन्मायूरबर्हव्रज-
व्यालोलाब्दलवे नवैर्विवलिते मन्दारमालागणैः ।
शेते खिंखिनिका महाभगवती लीलाललामे लता-
जाले भृङ्ग इवान्तपुष्पपटले पश्चादुपागच्छति ॥ २९
एषोद्दालकचित्तवृत्तिकलनावल्ली विवेकस्फुर-
त्स्वानन्दप्रविकासभासिकुसुमा हृत्कानने विस्तृता ॥
रूढा यस्य कदाचिदेव विहरन्नप्येव स्वच्छायया
नासावेति वियोगमेति सफलेनोच्चैस्तरां संगमम् ॥ ३०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो० उपशमप्रकरणे उद्दालकनिर्वाणं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

## षट्पञ्चाशः सर्गः ५६

श्रीवसिष्ठ उवाच ।
क्रमेणानेन विहरन्विचार्यात्मानमात्मना ।
विश्रान्तिमेहि वितते पदे पद्मदलेक्षण ॥ १
शास्त्रार्थगुरुचेतोभिस्तावत्तावद्विचार्यते ।
सर्वदृश्यक्षयाभ्यासाद्यावदासाद्यते पदम् ॥ २
वैराग्याभ्यासशास्त्रार्थप्रज्ञागुरुमयक्रमैः[1] ।
पदमासाद्यते पुण्यं प्रज्ञयैवैकयाथवा ॥ ३

निमित्तधर्मान् अतीतं अनन्तमाद्यं कालकृतपरिच्छेदहीनमत एव सत्यादिलक्षणम् । आनन्दयति सुखैकरसीकरोत्यखिलमित्यानन्दं भूमाख्यं परमसुखं बभूवेत्यर्थः ॥ २५ ॥ अथ तच्चेतसि जीवे स्वच्छभावं निर्मलस्वरूपमाद्यं पदं गतवति सति तस्य द्विजस्य तनुः शरीरं तत्रोपविष्टैव सती षड्भिर्मासै रविकरैः परितप्ता शुष्का सती प्रवहद्वातघट्टनजैर्भांकारैः क्वणिते रम्या तनुतरूणां बालवृक्षलक्षणानां भुजानां वादनयोग्याभिः शिरातन्त्रीभिः शैलस्य पर्वतस्य वीणेव विलासहेतुर्बभूवेत्युत्प्रेक्षा ॥ २६ ॥ अथ बहुतरकालेन । षण्मासेनेति यावत् । एतत् वृत्तम् । किम् । खान्नभस्तलादगकन्यासंयुताः परस्परसहचारितानियमात्सर्वाः संयुताः सदा मिलिता एव स्थिता ब्राह्मयाद्या मातरः कस्यचिद्भक्तस्याभिमतफलसिद्ध्यै शिखानां ज्वालानां पङ्क्तयः अनलमिव तामद्रेर्भुवमुपययुः ॥ २७ ॥ तासां मातॄणां मध्ये निशि रात्रौ नवनवभूषावैचित्र्यान्नवतराणि लास्यादिवृत्तानि यस्यास्तथाविधा । सकलैर्ब्रह्मादिभिर्विबुधैर्वन्द्या । देवानामपि देवी पूज्या । खिंखिनी चामुण्डा । दिनकरस्य करैः शुष्कं तद्विप्रस्योद्दालकस्य कंकालकं शवं झटिति उद्यतयोः खड्गखट्वाङ्गयोर्मध्ये अन्तरालस्थायां स्वमुकुटस्य किरीटस्य कोटौ कान्तकान्ति भूषणं चकारेत्यर्थः ॥ २८ ॥ यस्य मूढदृष्टिकल्पितो मलमांसादिमयः स्थूलदेहोऽपि त्रिजगद्वन्द्याया देव्याः शिरोभूषणतया सर्वोत्कर्षं प्राप्तस्तेन सर्वोत्कृष्टं पदं प्राप्तमिति किं वाच्यमिति ज्ञानमाहात्म्योत्कर्षं दर्शयन्नाह—इतीति । इति उक्तरीत्या उद्दालकस्य कुत्सितो देहो देहकं सुष्ठु विलसति विराजमाने मायूरबर्हाणां व्रजः समूहस्तल्लक्षणा व्यालोलाः कम्पमाना अब्दलवा मेघखण्डा यस्मिन् । नवैः प्रत्यग्रैर्मन्दारमालागणैर्विवलिते वेष्टिते खिंखिनिकाख्याया महत्या भगवत्या लीलार्थे ललामे शिरोभूषणमाल्ये अन्तेषु अग्रभागेषु पुष्पपटलानि यस्य तथाविधे वेणीच्छलात्पश्चात्पृष्ठत उपागच्छति लताजाले भृङ्ग इव शेते सुखविश्रान्तिं भजते इत्युत्प्रेक्षा ॥ २९ ॥ उक्तमुद्दालकाख्यानमुपसंहरंस्तत्परिशीलनपराणां संसारतापोपशमं परमपुरुषार्थफललाभं च दर्शयति—एषेति । सर्वदृश्यविवेके स्फुरन्यः स्वानन्दः स एव प्रविकासैर्भासीनि कुसुमानि यस्यास्तथाविधा एषा दर्शितप्रकारा उद्दालकचित्तवृत्तेर्विदेहकैवल्यप्राप्त्यन्तसकलचरित्रस्य[2] कलना आदरनैरन्तर्याभ्यां शिक्षा तल्लक्षणा कल्पवल्ली यस्य हृत्कानने रूढा प्रादुर्भूता सती उत्तरोत्तरभूमिकाधिरोहणक्रमेण विस्तृता असौ पुरुषस्तापत्रयार्कसंकुले व्यवहारकान्तारे विहरन्संचरन्नपि सत्यशान्तिदान्त्यादिगुणसुरभिशीतलया सहजसंतोषलक्षणया छायया । अप्यर्थे एवकारः । कदाचिदपि वियोगं नैति न प्राप्नोत्येव । किंच स उच्चैस्तरां सर्वोत्कृष्टतमेन मोक्षफलेन संगमं पुनरावृत्तिरहितं स्वात्मभावेन संबन्धमेति प्राप्नोतीत्यवश्यं सा वल्ली हृदि संरोप्य विस्तारणीयेत्यर्थः ॥ ३० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उद्दालकनिर्वाणं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

निर्मृष्टमायातिमिरः प्रबुद्धो ध्वस्तवासनः ।
व्यवहारप्रसक्तोऽपि समाधिस्थ इतीर्यते ॥ १ ॥

अनेन उक्तप्रकारेण विचारवैराग्यसमाध्यभ्यासक्रमेण विहरन् ॥ १ ॥ शास्त्रश्रवणेन अर्थतत्त्वपरीक्षणेन गुरुवचनविश्वासेन स्वचित्तशोधनेन च सर्वदृश्यबाधेन परमपदविश्रान्तिपर्यन्तमवश्यं विचारः कर्तव्य इति तात्पर्यार्थः ॥ २ ॥ ३ ॥

१ गुरुयमक्रमैरिति पाठः । तत्र यमशब्देन [illegible]. २ उद्दाल[illegible]चित्तवृत्तेः इति पाठः.

संप्रबोधवती तीक्ष्णा कलङ्करहिता मतिः ।
सर्वसामग्र्यहीनापि पदं प्राप्नोति शाश्वतम् ॥ ४

श्रीराम उवाच ।

भगवन्भूतभव्येश कश्चिज्जातसमाधिकः ।
प्रबुद्ध इव विश्रान्तो व्यवहारपरोऽपि सन् ॥ ५
कश्चिदेकान्तमाश्रित्य समाधिनियतः स्थितः ।
तयोस्तु कतरः श्रेयानिति मे भगवन्वद ॥ ६

श्रीवसिष्ठ उवाच ।

इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तःशीतलता यासौ समाधिरिति कथ्यते ॥ ७
दृश्यैर्मनसि संबन्ध इति निश्चित्य शीतलः ।
कश्चित्संव्यवहारस्थः कश्चिद्ध्याने व्यवस्थितः ॥ ८
द्वावेतौ राम सुखितावन्तश्चेत्परिशीतलौ ।
अन्तःशीतलता या स्यात्तदनन्ततपःफलम् ॥ ९
समाधिस्थानकस्यास्य चेतश्चेद्वृत्तिचञ्चलम् ।
तत्तस्य तत्समाधानं सममुन्मत्तताण्डवैः ॥ १०
उन्मत्तताण्डवस्थस्य चेतश्चेत्क्षीणवासनम् ।
तदस्योन्मत्तवृत्तं तत्समं बुद्धसमाधिना ॥ ११
व्यवहारी प्रबुद्धो यः प्रबुद्धो यो वने स्थितः ।
द्वावेतौ सुसमौ नूनमसंदेहं पदं गतौ ॥ १२
अकर्तृ कुर्वदप्येतच्चेतः प्रतनुवासनम् ।
दूरं गतमना जन्तुः कथासंश्रवणे यथा ॥ १३
अकुर्वदपि कर्तैव चेतः प्रघनवासनम् ।
निस्पन्दाङ्गमपि स्वप्ने श्वभ्रपातस्थिताविव ॥ १४
चेतसो यदकर्तृत्वं तत्समाधानमुत्तमम् ।
तं विद्धि केवलीभावं सा शुभा निर्वृतिः परा ॥ १५

चेतश्चलाचलत्वेन परमं कारणं स्मृतम् ।
ध्यानाध्यानदशोस्तेन तदेवानङ्कुरं कुरु ॥ १६
अवासनं स्थिरं प्रोक्तं मनोध्यानं तदेव तु ।
स एव केवलीभावः शान्ततैव च सा सदा ॥ १७
तनुवासनमत्युच्चैः पदायोद्यतमुच्यते ।
अवासनं मनो कर्तृपदं तस्मादवाप्यते ॥ १८
घनवासनमेतत्तु चेतः कर्तृत्वभाजनम् ।
सर्वदुःखप्रदं तस्माद्वासनां तनुतां नयेत् ॥ १९
प्रशान्तजगदास्थोऽन्तर्वीतशोकभयैषणः ।
स्वस्थो भवति येनात्मा स समाधिरिति स्मृतः ॥ २०
चेतसा संपरित्यज्य सर्वभावात्मभावनाम् ।
यथा तिष्ठसि तिष्ठ त्वं तथा शैले गृहेऽथवा ॥ २१
गृहमेव गृहस्थानां सुसमाहितचेतसाम् ।
शान्ताहंकृतिदोषाणां विजनावनभूमयः ॥ २२
अरण्यसदने तुल्ये समाहितमनोदृशाम् ।
भवतामिह भूतानां भूतानां महतामिव ॥ २३
शान्तचित्तमहाभ्रस्य जनज्वालोज्ज्वलान्यपि ।
नगराण्यपि शून्यानि वनान्यवनिपात्मज ॥ २४
वृत्तिमच्चित्तमत्तस्य विजनानि वनान्यपि ।
नगराणि महालोकपूर्णानि परवीरहन् ॥ २५
व्युत्थितं चित्तमभ्येति भ्रमस्यान्तः सुषुप्तताम् ।
निर्वाणमेति निर्वाणं यथेच्छसि तथा कुरु ॥ २६
सर्वभावपदातीतं सर्वभावात्मकं च वा ।
यः पश्यति सदात्मानं स समाहित उच्यते ॥ २७
ईहितानीहिते क्षीणे यस्यान्तर्विततात्कृतेः ।
सर्वे भावाः समा यस्य स समाहित उच्यते ॥ २८

---

प्रज्ञास्वरूपमाह—**संप्रबोधवती**ति । प्राप्नोति प्रापयति ॥ ४ ॥ कश्चित्प्रबुद्धो व्यवहारपरोऽपि सन् जातसमाधिक इव विश्रान्त इत्यन्वयः ॥ ५ ॥ ६ ॥ अन्तःशीतलता पूर्णकामता ज्ञानप्रतिष्ठाफलं तल्लाभे विक्षेपप्रसक्त्यभावात्सैव समाधिरभिधीयत इत्यर्थः । मनसि सति दृश्यैर्विक्षेपहेतुः संबन्धः स्यान्नतु मम तदस्तीति निश्चित्येत्यर्थः ॥७॥ 'दृश्यैर्मननसंबन्धः' इति पाठस्तु स्पष्ट एव ॥८॥ ९ ॥ १० ॥ ११ ॥ असंदेहं सर्वसंदेहोच्छेदि परमपदं गतौ तत्र प्रतिष्ठितौ चेत्यर्थः ॥ १२ ॥ व्यवहारिणः कर्तृत्वप्रयुक्तो बन्धः किं न स्यात्तत्राह—**अकर्त्रि**ति । प्रतनुवासनं निर्वासनम् । यथा कान्तादिकथासंश्रवणे अन्यत्र प्रसक्तमनाः कुर्वन्नपि रागादिविकारानुदयात्तत्प्रयुक्तैर्दोषैर्न बध्यते तद्वदित्यर्थः ॥ १३ ॥ निस्पन्दान्यङ्गानि देहावयवा यस्य तथाविधमपि सुप्तस्य मनः श्वभ्रपाते तत्र स्थितौ च यथा कर्तृ तद्वत् ॥ १४ ॥ निर्वृतिः सुखविश्रान्तिः ॥ १५ ॥ ध्यानाध्याने समाध्यसमाधी तद्दृष्ट्योः । अनङ्कुरं अङ्कुरबीजवासनाशून्यमिति यावत् ॥ १६ ॥ १७ ॥ तनुवासनं चतुर्थादिभूमिकासु क्षीयमाणवासनम् । अवासनं क्षीणवासनं पदं सप्तमभूमिकाप्रतिष्ठा ॥ १८ ॥ १९ ॥ प्रशान्ता जगति देहादिदृश्ये आस्था अहंममताभिनिवेशो यस्य । स्वस्थः स्वरूपप्रतिष्ठो येनोपायेन भवति ॥ २० ॥ सर्वेषु भावेषु आत्मभावनां अहंममताध्यासम् । शैले समाहितो गृहे व्यवहरन्वा ॥ २१ ॥ २२ ॥ इह नित्यापरोक्षे प्रत्यगात्मनि भूतानां स्थितानाम् । महतां भूतानामाकाशादीनामिव ॥ २३ ॥ शान्तचित्तमहाभ्रस्य शरदाकाशकल्पस्येत्यर्थः ॥२४॥ रागादिवृत्तिमता चित्तेन मत्तस्य ॥२५॥ व्युत्थितं रागादिविक्षिप्तं चित्तं नानाविधविषयभ्रमस्यान्तर्लयेन पुनर्व्युत्थानसहस्रबीजभूतां सुषुप्ततामेति । निर्वाणं शान्तरागादिवासनं तु चित्तं निर्वाणं मोक्षमेति ॥ २६ ॥ तर्हि प्राक्कथं व्यवहार्यव्यवहारिणोस्तत्त्वविदोस्तुल्यः समाधिरुक्तस्तत्राह—**सर्वे**ति । तत्त्ववित्समाधौ सर्वभावपदातीतं पश्यति, व्यवहारे तु सर्वभावात्मकं पश्यतीत्येकपिण्डमात्राहंमानाभावान्न तस्य रागादिरिति न विक्षेपप्रसक्तिरिति भावः ॥ २७ ॥ उक्तमेवार्थं फलत आह—**ईहिते**ति । ईहितानीहिते रागद्वेषौ ॥ २८ ॥

---

१ संपन्नाविति पाठः. २ तत्तर्हीत्यर्थः.

सदात्मना सदेवेदं जगत्पश्यति नो मनः ।
यथा स्वप्ने तथैवास्मिञ्जाग्रत्यपि जनेश्वर ॥ २९
यथा विपणिकालोका विहरन्तोऽप्यसत्समाः ।
असंबन्धात्तथा ज्ञस्य ग्रामोपि विपिनोपमः ॥ ३०
अन्तर्मुखमना नित्यं सुप्तो बुद्धो व्रजन्नपि ।
पुरं जनपदं ग्राममरण्यमिव पश्यति ॥ ३१
सर्वमाकाशतामेति नित्यमन्तर्मुखस्थितेः ।
सर्वथानुपयोग्यत्वाद्भूताकुलमिदं जगत् ॥ ३२
अन्तःशीतलतायां तु लब्धायां शीतलं जगत् ।
विज्वराणामिव नृणां भवत्याजीवितस्थितेः ॥ ३३
अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत् ।
भवत्यखिलजन्तूनां यदन्तस्तद्बहिः स्थितम् ॥ ३४
द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
अन्तःकरणतत्त्वस्य भागा बहिरिव स्थिताः ॥ ३५
वटधाना वट इव यदन्तःस्थं सदात्मनः ।
तद्बहिर्भासते भास्वद्विकासे पुष्पगन्धवत् ॥ ३६
न बहिष्ठं न चान्तःस्थं[1] कचित्किंचन विद्यते ।
यद्यथा कचितं चित्त्वात्तत्तथा तत्त्वमुत्थितम् ॥ ३७
आत्मतत्त्वान्तरं भाति बहिष्ठेन जगत्तया ।
कर्पूरमिव गन्धेन संकोचे प्रविकासि च ॥ ३८
आत्मैव स्फुरति स्फारं जगत्त्वेनाप्यहंतया ।
बाह्यत्वेनान्तरत्वेन स च नासन्न सन्विभुः ॥ ३९
बहिष्ठेनान्तरं बाह्यमन्तःस्थेनान्तरस्थितम् ।
यथाविदितमात्मायं स्वचित्तमनुपश्यति ॥ ४०
सबाह्याभ्यन्तरं शान्तमात्मनो भेदितं जगत् ।
अहन्त्वादिस्थिते भेदे भूरिभङ्गभयं तु तत् ॥ ४१
द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
कल्पादिरेव ज्वलितं सर्वमाधिहतात्मनः ॥ ४२
यस्त्वात्मरतिरेवान्तः कुर्वन्कर्मेन्द्रियैः क्रियाः ।
न वशो हर्षशोकाभ्यां स समाहित उच्यते ॥ ४३
यः सर्वगतमात्मानं पश्यन्समुपशान्तधीः ।
न शोचति ध्यायति वा स समाहित उच्यते ॥ ४४
स पूर्वापरपर्यन्तां यः पश्यन्नागतीं गतिम् ।
दृष्टिष्वेतासु हसति स समाहित उच्यते ॥ ४५
समे परेऽपि नाहंता न जगज्जन्मनो मयि ।
वीचिवृन्देष्विवातप्ता नाकाशे फलधातवः ॥ ४६
यस्यान्तरस्थिताहन्त्वं न विभागादि नो मनः ।
न चेतनाचेतनत्वे सोऽस्ति नास्तीतरो जनः ॥ ४७

कथं सर्वे भावाः समास्तद्दर्शयति—सदात्मनेति । तस्य मनो यथा स्वप्ने तथा जाग्रत्यपि इदं दृश्यं सदात्मना सदेव पश्यति । जगत् सद्व्यतिरिक्तरूपं नो पश्यतीत्यर्थः ॥ २९ ॥ नगराण्यपि शून्यानीति यदुक्तं तदुपपादयति—यथेति । विपणिका पण्यवीथिका तत्र समवेता अपि बहवो जनाः स्वस्वकार्ये व्यवहरन्तोऽप्युदासीनस्यानुपकारित्वादसत्प्रायास्तद्वत् ॥ ३० ॥ ३१ ॥ भूतैः प्राणिभिः पृथिव्यादिभिश्चाकुलमपि बाधितत्वादाकाशतां शून्यताम् ॥ ३२ ॥ आजीवितस्थितेः यावज्जीवम् ॥ ३३ ॥ यस्मादन्तर्यद्यादृशं तप्तं शीतलं वा चित्तं तदेव बहिर्जगदाकारेण स्थितमित्यर्थः ॥ ३४ ॥ तदेवाह—द्यौरिति ॥ ३५ ॥ ॥ ३६ ॥ अध्यारोपदृष्ट्योक्त्वा अपवाददृष्ट्या आह—न बहिष्ठमिति । कथं तर्हि तत्र जगदाकारभानं तत्राह—यदिति । यद्वस्तु प्राग्वासनाबलाद्यथा कचितं तथा तद्वेषेण परमार्थतत्त्वमेवोत्थितमित्यर्थः ॥ ३७ ॥ आत्मतत्त्वरूपं यदान्तरं वस्तु तदेव बहिष्ठेन जगत्तया भाति । तत्तदुपाध्यनुसारिसंकोचेऽपि सति प्रविकासि च भवति । यथा संपुटान्तःस्थं कर्पूरं गन्धरूपेण तथा भाति भवति चेत्यर्थः ॥ ३८ ॥ न असन् चक्षुराद्यदृश्याहंकारादिरूपः । नापि सन् तद्दृश्यबाह्यस्थूलरूपः । किंतु विभुरुभयानुस्यूतसन्मात्ररूप इत्यर्थः ॥ ३९ ॥ अतएवायमात्मा आन्तरं स्वचित्तमेव यथा विदितं पूर्वपूर्ववेदनानुसारेण बहिष्ठेन बहिर्मुखेन चक्षुरादिना बाह्यं जगदाकारमनुपश्यति । अन्तःस्थेन जाग्रद्वासनादिना आन्तरे हृदि स्थितं स्वप्नराज्याद्यनुपश्यतीत्यर्थः ॥ ४० ॥ 'न बहिष्ठं न चान्तःस्थ'मिति यदुक्तं तद्युक्त्यानुभावयति—सबाह्येति । सबाह्याभ्यन्तरं द्विविधमपि जगदुभयानुस्यूतसदात्मनः सकाशाद्भेदितं पृथक्कृतं सदसदेवेति शान्तं मृतमेवेत्यर्थः । तत्पृथक्करणाभावे तु तत्सत्तयैव बाह्याभ्यन्तरभेदे स्थिते सति तदहंममताध्यासात्तद्भङ्गे भूरिभङ्गभयं भवेदित्यर्थः ॥ ४१ ॥ भूरिभङ्गभयमुपपादयति—द्यौरिति । तत्तदाधिभिर्हतात्मनो द्युक्षमादि सर्वं वस्तु तापत्रयज्वालाज्वलितं सत् तथाविधः कल्पादिः प्रलयारम्भसमय एव सदा संपद्यत इत्यर्थः ॥ ४२ ॥ सन्मात्रात्मदर्शने तु कर्मेन्द्रियैर्व्यवहारेऽपि अभिमानाभावान्न हर्षशोकादिविक्षेपलेशस्यापि प्रसक्तिरिति सदासमाधिस्थतुल्यतैव फलतीत्याशयेनाह—यस्त्वित्यादिना ॥ ४३ ॥ ४४ ॥ पूर्वपर्यन्त उत्पत्तिः, अपरपर्यन्तो नाशः, तत्सहिताम् । एतासु मूढजनप्रसिद्धास्वहंममतादृष्टिषु ॥ ४५ ॥ किमर्थं हसतीति चेदहंममेति दृष्टिगोचरयोरभिमानाभिमन्तव्यलक्षणयोरहंताजगतोराश्रयस्यैवासिद्ध्या मिथ्यात्वादित्याह—समे इति । ते हि सर्वानुभवसिद्धप्रत्यक्स्वभावे मयि वा स्यातां श्रुतिसिद्धब्रह्मस्वभावे वा । न तावन्मयि । दृशो दृश्याश्रयत्वायोगान्नापि परे ब्रह्मणि । असङ्गाद्वयकूटस्थस्वरूपे समे तस्मिन्नहंताजगज्जन्मादिवैषम्याधारत्वायोगात् । यथा शरदातपसंभिन्नेषु दूराद्दृश्यमानेषु वीचिवृन्देषु दृश्यमाना आतप्ता प्रतप्तद्रुतरजतप्राया विस्फुरन्ती पुञ्जीभूता कान्तिर्न वीचिवृन्देष्वन्तरस्ति, समीपोपसर्पणे तेषु निमज्यान्वेषणे चादर्शनात् । नापि तदन्तर्बहिष्ठे आकाशे असङ्गकूटस्थे चतुर्विधक्रियाफलधात्वदर्शनेन वीचिक्रियाजन्यफलाश्रयत्वस्य दूरनिरस्तत्वात् । अतः सा कान्तिरिवाहंताजगतो अपि निराश्रयत्वान्मिथ्यैवेत्यर्थः ॥ ४६ ॥ अहंताजगद्भेदं निरस्य तद्द्रष्टृभेदं निरस्यति—यस्येति । यस्य ज्ञस्य अन्तः आन्तरं प्रत्यगात्मरूपं

१ न वान्तस्थं इत्यपि क्वचित्पठ्यते.

व्योमस्वच्छो बहिष्ठेहां सम्यगाचरतीह यः ।
हर्षामर्षविकारेषु काष्ठलोष्टसमः शमः ॥ ४८
आत्मवत्सर्वभूतानि परद्रव्याणि लोष्टवत् ।
स्वभावादेव न भयाद्यः पश्यति स पश्यति ॥ ४९
अर्थोऽतनुस्तनुर्वापि नासद्रूपेण चेत्यते ।
सद्रूपो नानुभूतोऽज्ञे न ज्ञेनैव न तत्तया ॥ ५०
ईदृशाशयसंपन्नो महासत्त्वपदं गतः ।
तिष्ठतूदेतु वा यातु मृतिमेतु न तत्स्थितिम् ॥ ५१
वसतूत्तमभोगाढ्ये स्वगृहे वा जनाकुले ।
सर्वभोगोज्झिताभोगे सुमहत्यथवा वने ॥ ५२
उद्दाममन्मथं पानतत्परो वापि नृत्यतु ।
सर्वसङ्गपरित्यागी सममायातु वा गिरौ ॥ ५३
चन्दनागुरुकर्पूरैर्वपुर्वा परिलिम्पतु ।
ज्वालाजटिलविस्तारे निपतत्वथवाऽनले ॥ ५४
पापं करोतु सुमहद्बहुलं पुण्यमेव च ।
अद्य वा मृतिमायातु कल्पान्तनिचयेन वा ॥ ५५
नासौ किंचिन्न तत्किंचित्कृतं तेन महात्मना ।
नासौ कलङ्कमाप्नोति हेम पङ्कगतं यथा ॥ ५६

संवित्पुरुषशब्दार्थैः स कलङ्कैः कलङ्क्यते ।
अहंत्ववासनारूपैः शुक्तिकारजतोपमैः ॥ ५७
समस्तवस्तुप्रशमात्सम्यग्ज्ञानाद्यथास्थितेः ।
स्वभावस्योपशान्तोन्तःकलङ्कोऽसत्तया स्वतः ॥ ५८
अहंत्ववासनानर्थप्रसूतेः संविदात्मनः ।
पुरुषस्य विचित्राणि सुखदुःखानि जन्मनि ॥ ५९
रज्ज्वां सर्पभ्रमे शान्तेऽहिर्नेति निर्वृतिर्यथा ।
अहंत्वभावसंशान्तौ तथान्तः समता मता ॥ ६०
यत्करोति यदश्नाति यद्ददाति जुहोति वा ।
न तज्ज्ञस्य न तत्र ज्ञो मा करोतु करोतु वा ॥ ६१
कर्मणास्ति न तस्यार्थो नार्थस्तस्यास्त्यकर्मणा ।
यथास्वभावावगमात्स आत्मन्येव संस्थितः ॥ ६२
इच्छास्ततः समुद्यन्ति न मज्जर्य इवोपलात् ।
याश्चोद्यन्ति च ताः सर्वाः स एवाप्स्विव वीचयः ॥ ६३

सकलमिदमसावसौ च सर्वं
जगदखिलं न विभागितात्र काचित् ।
परमपुरुषपावनैकरूपी
स सदिति तत्सदकिंचिदेव नासौ ॥ ६४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे ध्यानविचारो नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

न स्थितं अहन्त्वं यस्मिंस्तथाविधं संपन्नं दृश्यजगद्विभागादिकं मनश्च नास्ति तस्य तदधीनकल्पने चेतनाचेतने अपि न स्तः । अतः स एक एव सर्वात्मास्ति तदितरो जनश्चेतनधातुर्नास्ति । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेरित्यर्थः ॥४७॥ तस्य लक्षणान्याह—**व्योमे**ति द्वाभ्याम् । सम्यक् शास्त्रशिष्टाचाराविरोधेन । शमः शान्तिस्वभावः ॥ ४८ ॥ ४९ ॥ तत्त्वज्ञस्यैव समदर्शित्वे उपपत्तिमाह—**अर्थ** इति । अज्ञेन मूढेन अतनुर्महान् हिरण्यगर्भैश्वर्यान्तस्तनुरल्पः काकिणीमात्रोपि वा कनककामिन्यादिरर्थो विषयः असद्रूपेण मिथ्यात्वेन न चेत्यते न दृश्यते तदधिष्ठानसद्रूपश्च नानुभूत इति न तत्तयासन्मात्रस्वभावेनापि चेत्यते । ज्ञेन तत्त्वविदैव तथा दृश्यत इति तस्यैवोभयथापि समदर्शित्वमुपपद्यत इत्यर्थः ॥ ५० ॥ यस्याशये समदर्शनं निरूढं स सर्वत्र सर्वास्वप्यवस्थासु न हर्षविषादादिना लिप्यत इत्याह—**ईदृशे**त्यादिना । तिष्ठत्वकिंचनः । उदेतु ऐश्वर्यायभ्युदयं प्राप्नोतु वा । मृतिं पुत्रबान्धवादिमरणम् । तत्स्थितिं अभ्युदयस्थितिं नैतु ॥ ५१ ॥ ५२ ॥ उद्दाममन्मथमिति क्रियाविशेषणम् । समं निर्विकारम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ असौ समदर्शी । किंचिन्मरणदुःखादिविकारैर्देहमनआदिरहंताश्रयः । अतएव तेन न किंचित्कृतम् ॥ ५६ ॥ अज्ञेषु तर्हि कस्य कलङ्कस्तं दर्शयति—**संविदि**ति । सकलङ्कैः शास्त्रानभ्यनुज्ञातसेवनदूषितैर्वासनारूपैरैन्द्रियकसंविद्भिस्तदायतनेन पुरुषेण देहेन तद्भोग्यैः शब्दार्थरूपैर्विषयैश्च अहन्त्वमहंकारप्रधानलिङ्गात्मा ॥ ५७ ॥

कस्मादुपायादन्तःकलङ्कोपशमस्तमाह—**समस्ते**ति । स्वभावस्य चित्तस्य कलङ्को बाधादसत्तया स्वतः प्रशान्तो भवतीति शेषः ॥ ५८ ॥ संसारदुःखप्राप्तेस्तर्हि किं कारणं तदाह—**अहंत्वे**ति । अहंत्वाध्यासाद्वासनालक्षणानामनर्थानां प्रसूतेरुद्बोधात्पुरुषस्य जन्मनि सन्तीत्यर्थः ॥ ५९ ॥ अतएवाहन्त्वशान्त्या संसारदुःखनिवृत्तिरित्याह—**रज्ज्वा**मिति । समता सर्वदुःखवैषम्यशून्यता ॥ ६० ॥ दुष्कृतफलमिव सुकृतफलमपि ज्ञस्य नास्तीति तस्य सर्वकर्तव्यहानिरित्याह—**यदि**त्यादिना ॥ ६१ ॥ अकर्मणा कर्मत्यागेन ॥ ६२ ॥ फलेच्छया हि तदुपाये कर्मणि प्रवृत्तिः स्यात्सैव तस्य पूर्णत्वान्नोदेतीत्याह—**इच्छा** इति । कदाचिद्वासनाभ्यासादुदिता अपीच्छाः परमार्थदृशा तस्य स्वात्मभूता एवेत्याह—**याश्चे**ति ॥ ६३ ॥ तस्य सर्वात्मतां सर्वस्य तदात्मतां च द्रढयन्नुभयोर्निष्प्रपञ्चचिन्मात्रतैव परमार्थतः फलितेति दर्शयति—**सकल**मिति । अखिलमखण्डम् । यतोऽत्र जगति विभागिता त्रिविधपरिच्छेदशालिता काचिन्नास्ति । एवं भेदकानां कार्यकारणोपाधीनां तत्तत्साक्षिचिन्मात्रत्वे स तत्त्ववित् सर्वजगदधिष्ठानसन्मात्रमेव । यतोऽसौ परमः पूर्णत्वात्पुरुषः सर्वदोषास्पर्शाच्च पावनो यः परमात्मा तदेकरूपीति अनया रीत्या अकिंचित्सर्वद्वैतबन्धनिर्मुक्तसत्स्वरूपमात्रपरिशिष्टोऽसौ नित्यमुक्तः संपन्न इत्यर्थः ॥६४॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे ध्यानविचारो नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ५७

श्रीवसिष्ठ उवाच ।

यदात्ममरिचस्यान्तश्चित्त्वात्तीक्ष्णत्ववेदनम् ।
तदहंतादि भेदादि देशकालादि चेत्यतः ॥ १
यदात्मलवणस्यान्तश्चित्त्वाल्लवणवेदनम् ।
तदहंतादि भेदादि देशकालादि मत्स्थितम् ॥ २
स्वतो यदन्तरात्मेक्षोश्चित्त्वान्माधुर्यवेदनम् ।
तदहंतादि भेदादि जगत्तत्त्वादि जृम्भितम् ॥ ३
स्वतो यदात्मदृषदश्चित्त्वात्काठिन्यवेदनम् ।
तदहंतादि भेदादि देशकालादितां गतम् ॥ ४
स्वतो यदात्मशैलस्य ज्ञतया जाड्यवेदनम् ।
तदहंतादि भेदादि भुवनादीति संस्थितम् ॥ ५
स्वतो यदात्मतो यस्य चिद्द्रवत्वादिवर्तनम् ।
तदावर्ताद्यहंतादिभेदाद्याकारिता इव ॥ ६
स्वतो यदात्मवृक्षस्य शाखादिस्तस्य वेदनम् ।
तदहंतादि भेदादि भुवनादीव सत्स्फुरत् ॥ ७
यदात्मगगनस्यान्तश्चित्त्वाच्छून्यत्ववेदनम् ।
तदहंतादि भेदादि भुवनादीति भावनम् ॥ ८
यदात्मगगनस्यान्तश्चित्त्वात्सौषिर्यवेदनम् ।
तदहंतादि भेदादि शरीरादि च दीपितम् ॥ ९
स्वतो यदात्मकुड्यस्य नैरन्तर्यं निरन्तरम् ।
तदहंतादिभेदेन चित्ताद्बहिरिव स्थितम् ॥ १०
स्वतो यदात्मसत्तायाश्चित्त्वात्सत्त्वैकवेदनम् ।
तदहंतादि भेदादि चेतनानीतिवत्स्थितम् ॥ ११
अन्तरात्मप्रकाशस्य स्वतो यदवभासनम् ।
तदहंतादि चित्त्वादि जीव इत्येव वेद सः ॥ १२
अन्तरस्ति यदात्मेन्दोश्चिद्रूपं चिद्रसायनम् ।
स्वत आस्वादितं तेन तदहंतादिनोदितम् ॥ १३
परमात्मगुडस्यान्तर्यच्चित्स्वादूदयात्मकम् ।
तदेवास्वाद्यते तेन स्वतोऽहंतादि नान्तरे ॥ १४
परमात्ममणेश्चित्त्वाद्यदन्तः कचनं स्वयम् ।
चेतनात्मपदे चान्तरहमित्यादि वेत्त्यसौ ॥ १५
न च किंचन वेत्त्यन्तर्वेद्यस्यासंभवादिह ।
न चास्वादयति स्वादु स्वाद्यस्यासंभवादयम् ॥ १६
न च किंचिच्चिनोत्यन्तश्चेत्यस्यासंभवे सति ।
विन्दते न च वा किंचिद्वेद्यस्यासंभवादसौ ॥ १७
असदाभास एवात्मा अनन्तो भरिताकृतिः ।
स्थितः सदैवैकघनो महाशैल इवात्मनि ॥ १८
अनया तु वचोभङ्ग्या मया ते रघुनन्दन ।
नाहंतादिजगत्तादिभेदोऽस्तीति निदर्शितम् ॥ १९
न चित्तमस्ति नो चेता न जगत्तादिविभ्रमः ।
वृष्टमूकाम्बुदसितं शान्तं शाम्यति केवलम् ॥ २०
यथावर्तादितामेति द्रवत्वाद्वारि वारिणि ।
तदाहंतादितामेति ज्ञप्ता ज्ञप्तौ ज्ञ आत्मनि ॥ २१
यथा द्रवत्वं पयसि यथा स्पन्दः सदागतौ ।
अहंतादेशकालादि तथा ज्ञे ज्ञप्तिमात्रके ॥ २२
ज्ञो ज्ञतायां शिवं ज्ञानं जानाति ज्ञानबृंहया ।
ज्ञायतेऽहंतादि ज्ञेन जीवादीत्यभिजीवनैः ॥ २३

---

अज्ञातस्वस्वभावा चिद्दृक्त्वाद्दृश्यस्वभावताम् ।
यां धत्ते सा चिदेवेति चिदन्यन्नेति वर्ण्यते ॥ १ ॥

एवं सर्वजगतश्चिदभेदे परमार्थतः सिद्धे व्यवहारेऽपि जगद्वैचित्र्यं तत्तद्रूपचित्स्वभाव एवेति फलितमित्याह—**यदि**त्यादिना । आत्मैव स्वप्रकाशतैक्ष्ण्यं मरिचं तस्य चित्त्वात्तैक्ष्ण्यप्रथारूपं यद्वेदनं तत्स्थानीयं अज्ञातब्रह्मस्वभाव एव अहंतात्वंतादिरूपं घटकुड्यभेदादिरूपं तदाधारदेशकालादिरूपं च जगदिति । अतश्चिदभेदसाधनात्फलितमित्यर्थः ॥ १ ॥ २ ॥ तत्त्वादिना तत्तदाकारभेदेन जृम्भितमभिव्यक्तम् ॥ ३ ॥ ४ ॥ जाड्यं गौरवम् ॥ ५ ॥ आकारितास्तत्तदाकारवत्ता इव स्थितमित्यनुषज्यते ॥ ६ ॥ सत् वर्तमानं तथा स्फुरद्भासमानम् ॥ ७ ॥ भावनं कल्पनम् ॥ ८ ॥ द्रव्याद्बहिःशून्यत्वम्, मूर्तद्रव्यान्तश्छिद्रता तु सौषिर्यमिति भेदः ॥ ९ ॥ नैरन्तर्यं निबिडता । बहिर्दृश्यत्वाच्चिद्व्यतिरिक्तमिवेत्यर्थः ॥ १० ॥ चेतनानि चिदाभासाः ॥ ११ ॥ चित्त्वं वृत्तिभेदभिन्नचिदाभासेष्वनुगतं सामान्यं वेद कल्पयति स जीवः ॥ १२ ॥ रसायनममृतम् । स्वत आस्वादितं स्वप्रकाशतया अनुभूतम् । उदितमाविर्भूतम् ॥ [illegible]

स्वात्मन्येव ॥ १४ ॥ चेतनारूपे आत्मपदे स्वरूपे ॥ १५ ॥ मायिकजगदाकारानुभवस्य स्वप्रकाशस्वात्मानुभवमात्रत्वव्युत्पादनाय पश्यति वेत्त्यास्वादयत्यास्वाद्यते इति कर्मकर्तृभावव्यपदेशो न तद्भेदसाधनाशयेनेत्याह—**न चे**ति ॥ १६ ॥ चिनोति चैतन्यान्तरात्मना विकरोति । वेद्यस्य लभ्यस्य ॥ १७ ॥ असन् आभासत इत्याभासो जगदाकारो यस्मिंस्तथाविध एव ॥ १८ ॥ तर्हि यदात्ममरिचस्येत्याद्युक्तेः कोऽभिप्रायस्तमाह—**अनये**ति ॥ १९ ॥ पूर्वं वृष्टो वृष्टवान्पश्चाच्छरदि मूकस्तूष्णींभूतोऽम्बुद इव सितं शुद्धमधिष्ठानसन्मात्रतया परिशिष्टं बाधितं जगत् शान्तमेव शाम्यतीत्यर्थः ॥ २० ॥ ज्ञप्ता मायावी ज्ञः सर्वज्ञः स्वमायावृते ज्ञप्तिरूपे आत्मनि अहंतादिरूपतां जीवजगद्भावमिति यावत् ॥ २१ ॥ सदागतौ वायौ । परमार्थतो ज्ञप्तिमात्ररूपे ज्ञे सर्वज्ञेश्वरे ॥ २२ ॥ यदि जीवजगद्रूपे ज्ञप्तेरनन्ये तर्हि ज्ञप्ते जीवेश्वरभावयोः को विशेषस्तमाह—**ज्ञ** इति । ज्ञ ईश्वरो ज्ञतायामीश्वरभावे शिवं निरतिशयानन्दरूपं स्वरूपज्ञानं ज्ञानबृंहया अनावरणापरिच्छेदलक्षणया ज्ञानाभिवृद्ध्या सदैव जानाति । अहंतादि अहंकारस्थूलदेहरूपजीवभावे तु ज्ञेन चेतनभूतेनापि अभिजीवनैर्जीवन-

---

१ [illegible]ानंदया इति मुद्रितपुस्तके पाठः.

यथोदेति यया ऽज्ञस्य तृप्तिर्ज्ञानेन यादृशी ।
अनन्ये वान्यता बुद्धा स तथा जृम्भते तया ॥ २४
जीवनं ज्ञातता ज्ञाता जीवनं जीवजीवनम् ।
अत्यन्तमस्ति नो भेदश्चिद्रूपत्वे ज्ञजीवयोः ॥ २५
यथा ज्ञजीवयोर्नास्ति भेदो नाम तथैतयोः ।
भेदोऽस्ति न ज्ञशिवयोर्विद्धि शान्तमखण्डितम् २६
सर्वं प्रशान्तमजमेकमनादिमध्य-
माभास्वरं स्वदनमात्रमचेत्यचिह्नम् ।
सर्वं प्रशान्तमिति शब्दमयी तु दृष्टि-
र्बोधार्थमेव हि मुधैव तदोमितीदम् ॥ २७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे भेदनिरासो नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

## अष्टपञ्चाशः सर्गः ५८

श्रीवसिष्ठ उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
किरातेशस्य सुरघोर्वृत्तान्तं विस्मयास्पदम् ॥ १
उत्तरस्या दिशो मेदः कर्पूरपटलं भुवः ।
संभूतं हसनं शार्वं शुक्लो वा चान्द्र आतपः ॥ २
हिमाद्रेः शृङ्गमस्तीह कैलासो नाम पर्वतः ।
शैलकुञ्जरनिर्मुक्तकलापस्येव नायकः ॥ ३
विष्णोः क्षीरोदक इव स्वर्गः सुरपतेरिव ।
अब्जजस्येव नाभ्यब्जं गृहं यः शशिमौलिनः ॥ ४
रुद्राक्षवृक्षदोलाभिः साप्सरोभिर्विभाति यः ।
लोलरत्नशलाकाभिर्लहरीभिरिवार्णवः ॥ ५
गणाङ्गनानामनिशं मत्तानां चरणैर्हताः ।
अशोका इव राजन्ते यत्राशोका विलासिनः ॥ ६
संचरच्छंकरो दिक्षु भृगुष्विन्दुमणिद्रवैः ।
निवर्तन्ते प्रवर्तन्ते यत्राजस्रं च निर्झराः ॥ ७
यो लतावृक्षगुल्मौघवापीह्रदनदीनदैः ।
मृगैर्मृगगणैर्भूतैर्ब्रह्माण्डवदिवावृतः ॥ ८

हेतुभिः प्राणकरणविषयसंबन्धाध्यासैर्जीवादिरूप एवात्मेति ज्ञायते न तत्त्वत इति विशेष इत्यर्थः ॥ २३ ॥ अतएव जीवस्य यथा यथा भ्रान्तिस्तथा तथेश्वरो विवर्तत इत्याह—**यथे**ति । यया यया कामकर्मवासनया यादृशविषयज्ञानेन अज्ञस्य यथा येन येन दर्शनलाभोपभोगवैचित्र्यप्रकारेण यादृशी प्रियमोदप्रमोदादिनानाप्रकारा तृप्तिरुपभोग उदेति, अनन्ये स्वरूपे भोक्तृभोग्यभोगवैचित्र्यरूपा अन्यता वा ज्ञेन बुद्धा, स परमेश्वरस्तया तया तदीयकामादिवासनया तथा तथा जृम्भते स्वगात्राणि विनामयति विवर्तते । वैचित्र्यं धत्ते इति यावत् ॥ २४ ॥ यदा त्वनेन सच्छास्त्रसद्गुरूपदेशाद्भोग्यस्य जगतो ज्ञातता अधिष्ठानसन्मात्ररूपा स्फूर्तिरेव जीवनं सारः परमार्थस्थितिर्ज्ञाता, जीवानां सर्वेषां यदधीनं जीवनं तादृशानन्दरूपमेव जीवनं भोक्तुः सारो ज्ञातस्तदा भोग्यभोक्त्रधिष्ठानयोर्द्वयोरपि चिद्रूपत्वे परिशिष्टे ज्ञजीवयोर्जीवेश्वरयोर्भेदोऽत्यन्तं नास्ति । सर्वथैव निवर्तत इत्यर्थः ॥ २५ ॥ जीवेश्वरभेदकाज्ञाने नष्टे प्राज्ञतुरीयभेदोऽपि निवृत्त इत्यखण्डपूर्णानन्दैकरसचिन्मात्रसाम्राज्यं सिद्धमित्याह—**यथे**ति ॥ २६ ॥ निष्कृष्टार्थमनूद्योपसंहरति—**सर्वं**मिति । सर्वं जगत् आसमन्तात् भास्वरं पूर्णस्वप्रकाशरूपं स्वदनमात्रमानन्दैकरसं चेत्यैर्विषयैश्चिह्नैन स्वव्यावर्तकधर्मेण च रहितं प्रशान्तं ब्रह्म तदेव, सर्वं प्रशान्तमिति तात्कालिकशब्दमयी पदवाच्यार्थभेदसंसर्गगोचरा आहार्या भेददृष्टिः साक्षात्प्रयोजनशून्यत्वान्मुधैव । हि यस्मात्कारणाद्विरोधप्रतिसंधाने भागत्यागलक्षणाश्रयद्वारा लक्ष्यार्थाखण्डबोधार्थमेव । तद्वाक्यबोध्यमखण्डार्थरूपं तु ओमिति ओंकारं जगद्ब्रह्म चैकीकृत्य विराड्ढिरण्यगर्भाव्याकृततुरीयात्मकान् अकारोकारमकारार्धमात्रापादांश्चतुर्धा विभज्य पूर्वपूर्वपादानुत्तरोत्तरेषु प्रविलाप्यार्धमात्रया यदद्वयं पूर्णानन्दैकरसं नित्यापरोक्षप्रत्यक्चिन्मात्ररूपं लक्ष्यते इदमेव न संसृष्टरूपमित्यर्थः ॥ २७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे भेदनिरासो नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

किरातेशस्य सुरघोर्निर्वेदोऽत्रोपवर्ण्यते ।
माण्डव्येनोपदेशश्च सर्वत्यागाद्युपायतः ॥ १ ॥

अत्रास्मिन् शब्दमयी दृष्टिर्बोधार्थमेवेत्युक्तेऽर्थे ॥ १ ॥ सुरघोर्निवासदेशं वक्तुं तत्संनिहितं हिमवच्छृङ्गं वर्णयति—**उत्तरस्या** इत्यादिना । मेदः सार इति यावत् । भुवः संभूतं निर्गतं कर्पूराणां पटलं राशिः । शार्वं हसनं चान्द्र आतपो वेति प्रत्येकमुत्प्रेक्षा । अथवा दिशो मेदः शार्वं हसनं चान्द्र आतपो वा भुवः भूमिं प्राप्य कर्पूरपटलं संभूतमित्यौत्प्रेक्षिकवैकल्पिकनानाहेतूपपाद्या एकैव विशिष्टोत्प्रेक्षा ॥ २ ॥ हिमाद्रेः शृङ्गमिति विशेषणान्मेरुसंनिहितप्रसिद्धरजताद्रेरयमन्य इति गम्यते । शैलकुञ्जरेण पर्वतश्रेष्ठेन हिमवता निर्मुक्तस्य धृतस्य शृङ्गपरम्परालक्षणस्य मुक्ताकलापस्य नायको मणिरिव स्थित इत्यर्थः । शैलस्थकुञ्जरेभ्यो निर्गलितस्य मुक्ताकलापस्य नायकः संग्राहको राशिरिवेति वा ॥ ३ ॥ नाभ्यब्जं विष्णुनाभिकमलम् । गृहं श्वशुरकल्पितमित्यर्थाद्गम्यते ॥ ४ ॥ रुद्राक्षवृक्षेषु लम्बमानाभिर्दोलाभिः प्रेङ्खोलिकाभिः । लोलरत्नशलाकाभिरिति लहरीणामपि विशेषणम् ॥ ५ ॥ गणाङ्गनानां प्रमथस्त्रीणाम् ॥ ६ ॥ यत्र य. सु दिक्षु संचरन् भवति तत्र भृगुषु प्रपातस्थलेषु प्रवर्तन्ते अन्यासु निवर्तन्ते ॥ ७ ॥ **ब्रह्माण्डवदिवे**ति । उक्तार्थानामपि प्रयोगो दृश्यते । यथा द्वावपूपावानयेति महाभाष्योक्ति-

तस्य हेमजटा नाम किराताः संस्थिताः स्थले ।
पिपीलिका वटतरोर्मूलकोशगता इव ॥ ९
कैलासपादारण्यानां रुद्राक्षैस्तरुगुल्मकैः ।
वसन्ति घूकवत्क्षुद्रास्ते वै निकटजीविनः ॥ १०
आसीत्तेषामुदारात्मा राजा परपुरंजयः ।
जयलक्ष्म्या भुज इव यः प्रजायाश्च दक्षिणः ॥ ११
सुरघुर्नाम बलवान्सुरघोरारिदर्पहा ।
अर्कः पराक्रम इव मूर्तिमानिव मारुतः ॥ १२
जितो वै राज्यविभवैर्धनैर्गुह्यकनायकः ।
शतक्रतुगुरुर्बोधैः काव्यैरसुरदेशिकः ॥ १३
स चक्रे राजकार्याणि निग्रहानुग्रहक्रमैः ।
यथाप्राप्तान्यखिन्नाङ्गो दिनानीव दिवाकरः ॥ १४
तज्जाभ्यां सुखदुःखाभ्यामथ तस्याभ्यभूयत ।
स्वगतिर्वागुराबन्धैः श्लिष्टाङ्गस्येव पक्षिणः ॥ १५
किमार्तं पीडयाम्येनं तिलान्यन्त्रमिवौजसा ।
सर्वेषामेव भूतानां ममेवार्तिः प्रजायते ॥ १६
धनमस्मै प्रयच्छामि धनेनानन्दवाञ्जनः ।
भवत्यहमिवाशेषस्तदलं मेऽतिनिग्रहैः ॥ १७
अथवा निग्रहं प्राप्तं करोम्येतेन वै विना ।
वर्तते न प्रजैवेयं विना वारि सरिद्यथा ॥ १८
हा कष्टमेव[1] निग्राह्यो नित्यानुग्राह्य एव मे ।
दिष्ट्याद्य सुखवानस्मि कष्टमद्यास्मि दुःखवान् ॥ १९
इति दोलायितं[2] चेतो न विशश्राम भूपतेः ।
एकत्राम्बुमहावर्ते चिरतृणमिव भ्रमत् ॥ २०
अथैकदा गृहं तस्य माण्डव्यो मुनिराययौ ।
भ्रान्ताशेषककुप्कुञ्जो वासवस्येव नारदः ॥ २१
तमसौ पूजयामास पप्रच्छ च महामुनिम् ।
संदेहदुर्द्रुमस्तम्भपरशुं सर्वकोविदम् ॥ २२

सुरघुरुवाच ।

भवदागमनेनास्मि मुने निर्वृतिमागतः ।
परमां वसुधापीठं संप्राप्त इव माधवे ॥ २३
अद्य तिष्ठाम्यहं नाथ धन्यानां धुरि धर्मतः ।
विकासि रविणेवाब्जं यत्त्वयास्म्यवलोकितः ॥ २४
भगवन्सर्वधर्मज्ञ चिरं विश्रान्तवानसि ।
तदमुं संशयं छिन्धि ममार्कस्तिमिरं यथा ॥ २५
महतां संगमेनार्तिः कस्य नाम न नश्यति ।
संदेहं तु परमार्तिमाहुरार्तिविदो जनाः ॥ २६
मन्निग्रहानुग्रहजा मद्भृत्यवपुषि स्थिताः ।
कषन्ति मामलं चिन्ता गजं हरिनखा इव ॥ २७
तद्यथा समतोदेति सूर्यांशुरिव सर्वदा ।
मतौ मम मुने नान्या तथा करुणया कुरु ॥ २८

माण्डव्य उवाच ।

स्वयत्नेन स्वसंस्थेन स्वेनोपायेन भूपते ।
एषा मनःपेलवता हिमवत्प्रविलीयते ॥ २९
स्वविचारणयैवाशु शाम्यत्यन्तर्मनोज्वरः ।
शरदागममात्रेण मिहिका महती यथा ॥ ३०
स्वेनैव मनसा स्वानि स्वशरीरगतानि च ।
विचारयेन्द्रियाण्यन्तः कीदृशान्यथ कानि च ॥ ३१
कोऽहं कथमिदं किंवा कथं मरणजन्मनी ।
विचारयान्तरेवं त्वं महत्तामलमेष्यसि ॥ ३२
विचारणा परिज्ञातस्वभावस्य सतस्तव ।
हर्षामर्षदशाश्चेतस्तोलयिष्यन्ति नाचलम् ॥ ३३

---

दर्शनात् । द्योतकानां बहूनामपि 'उद्यन्तं वा आदित्यमग्निरनुसमारोहति' इतिवत्सहप्रयोगसंभवाद्वतिनोक्तेऽपि सादृश्ये इवशब्दप्रयोगः । अण्डवद्विराडाकारविशिष्टं ब्रह्मवेति मतुबन्तं वा योज्यम् ॥ ८ ॥ तस्य हिमवच्छृङ्गस्य । स्थले मूलदेशे ॥ ९ ॥ तेषां जीवनोपायमाह—**कैलासे**ति । कैलासाख्यश्रृङ्गस्य पादाः प्रत्यन्तपर्वतास्तदीयानामरण्यानां संबन्धिभी रुद्राक्षैरन्यैश्च तरुगुल्मकैः फलपुष्पकाष्ठमूलाद्युपजीवनेन निकटजीविनः ॥ १० ॥ जयलक्ष्म्या भुज इव परपुरंजयः प्रजायाः पालने च दक्षिणो राजा वक्ष्यमाणविशेषणैर्ब्रह्मविद्याधिकारदर्शनाच्चासौ क्षत्रिय इति गम्यते ॥ ११ ॥ पराक्रमे अर्क इवेति योजना ॥ १२ ॥ राज्यविभवैर्धनैश्च गुह्यकनायको राजराजो धनेश्वरोऽपि जितस्तेनेति शेषः । काव्यैः रसालंकारादिशालिप्रबन्धरचनैरसुरदेशिकः शुक्रः ॥ १३ ॥ १४ ॥ १५ ॥ दुःखवशाच्चिन्ताशोकाद्युद्भवं दर्शयति—**किमार्त**मिति । एनं प्रजाजनम् ॥ १६ ॥ कर्तव्यसंशये प्रथमां कोटिं दर्शयति—**धन**मिति । तत्तस्माद्धेतोः । आर्तायास्मै जनाय धनं प्रयच्छामि । अतिनिग्रहैश्च अलं । प्रयोजनं नास्तीत्यर्थः ॥ १७ ॥ द्वितीयां दर्शयति—**अथ**वेति । एतेन निग्रहेण विना प्रजा न वर्तेत एव । स्वस्वमर्यादायामिति शेषः ॥ १८ ॥ निग्राह्यो वधबन्धादिना दण्ड्यः ॥ १९ ॥ एकत्र न विशश्राम । यथा तृषितनिद्राणस्य चिरतृष्णं मनः अम्बुमहावर्ते भ्रमति तद्वत् ॥ २० ॥ भ्रान्तान्यशेषाणि ककुप्कुञ्जानि दिङ्मण्डलानि येन ॥ २१ ॥ २२ ॥ परमां निर्वृतिं सुखम् । माधवे वसन्ते विष्णौ वा ॥ २३ ॥ ॥ २४ ॥ यदि विश्रान्तवान् गतश्रमोऽसि तत्तर्हि । अथवा परमपदे चिरं विश्रान्तवानसि तत्तस्माद्धेतोः ॥ २५ ॥ २६ ॥ भृत्यग्रहणं शत्रुमित्रादिसर्वोपलक्षणम् । वपुषि विषये स्थिता निरूढाः । कषन्ति पीडयन्ति ॥ २७ ॥ समता समदृष्टिः । अन्या विषमदृष्टिर्यथा नोदेति तथा ॥ २८ ॥ वैराग्यत्यागादिरूपेण स्वयत्नेन श्रवणमननादिना स्वव्यञ्जकोपायेन । स्वसंस्थेन स्वात्मबोधपर्यवसितेन । पेलवता मृदुता । हर्षविषादस्थानकण्टकसहस्रवेधार्हतेति यावत् ॥ २९ ॥ ३० ॥ स्वानि स्वीयानि पुत्रमित्रादीनि स्वशरीरगतानीन्द्रियाणि चादन्यानि च तत्त्वतः कानि युक्तितः कीदृशानि चेति विचारयेत्यर्थः ॥ ३१ ॥ अवि-[illegible]तापगमान्महत्ताम् ॥ ३२ ॥ सतः परमार्थ-

---

[1] कष्टमेष इत्यपि क्वचित्पाठः. [2] लोलायितं इति पाठः.

मनः स्वरूपमुत्सृज्य शममेष्यति विज्वरम् ।
भूतपूर्ववपुर्भूत्वा तरङ्गः पयसीव ते ॥ ३४
तिष्ठदेव मनोरूपं परित्यक्ष्यति तेऽनघ ।
कलङ्कविकलं कालं मन्वन्तरगताविव ॥ ३५
अनुकम्प्या भविष्यन्ति श्रीमन्तः सर्व एव ते ।
दृष्टतत्त्वस्य तुष्टस्य जनाः पितुरिवावनौ ॥ ३६
विवेकदीपदृष्टात्मा मेर्वेध्विनभसामपि ।
अधो करिष्यसि नृप महत्तामुत्तमार्थदाम् ॥ ३७
महत्तामागते चेतस्तव संसारवृत्तिषु ।
न निमज्जति हे साधो गोष्पदेष्विव वारणः ॥ ३८
कृपणं तु मनो राजन्पेलवेऽपि निमज्जति ।
कार्ये गोष्पदतोयेऽपि जीर्णाङ्गो मशको यथा ॥ ३९
चेतोवासनया पङ्के कीटवत्परिमज्जसि ।
हृदयमात्रावलम्बिन्या स्वया दीनतया तया ॥ ४०
तावत्तावन्महाबाहो स्वयं संत्यज्यतेऽखिलम् ।
यावद्यावत्परालोकः परमात्मैव शिष्यते ॥ ४१
तावत्प्रक्षाल्यते धातुर्यावद्धेमैव शिष्यते ।
तावदालोक्यते सर्वं यावदात्मैव लभ्यते ॥ ४२
सर्वैः सार्विकया बुद्ध्या सर्वं सर्वत्र सर्वदा ।
सर्वथा संपरित्यज्य स्वात्मनात्मोपलभ्यते ॥ ४३
यावत्सर्वं न संत्यक्तं तावदात्मा न लभ्यते ।
सर्वावस्थापरित्यागे शेष आत्मेति कथ्यते ॥ ४४
यावदन्यन्न संत्यक्तं तावत्सामान्यमेव हि ।
वस्तु नासाद्यते साधो स्वात्मलाभे तु का कथा ४५
यत्र सर्वात्मनैवात्मा लाभाय यतति स्वयम् ।
त्यक्तान्यकार्यं प्राप्नोति तन्नाम नृप नेतरत् ॥ ४६
स्वात्मावलोकनार्थं तु तस्मात्सर्वं परित्यजेत् ।
सर्वं किंचित्परित्यज्य यद्दृष्टं तत्परं पदम् ॥ ४७
सकलकारणकार्यपरम्परा-
मयजगद्गतवस्तुविजृम्भितम् ।
अलमपास्य मनः स्ववपुस्ततः
परिविलाप्य यदेति तदेव तत् ॥ ४८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे सुरघुवृत्तान्ते माण्डव्योपदेशो नामाष्टपञ्चाशः सर्गः ॥५८॥

## एकोनषष्टितमः सर्गः ५९

श्रीवसिष्ठ उवाच ।
इत्युक्त्वा भगवानेनं सुरघुं रघुनन्दन ।
ययौ स्वमेव रुचिरं माण्डव्यो मौनमण्डलम् ॥ १
गते वरमुनौ राजा गत्वैकान्तमनिन्दितम् ।
धिया संचिन्तयामास को नामाहमिति स्वयम् ॥ २
नाहं मेरुर्न मे मेरुर्जगन्नाहं न मे जगत् ।
नाहं शैला न मे शैला धरा नाहं न मे धरा ॥ ३

वस्तुभूतस्य तव अचलं चेतो न तोलयिष्यन्ति । तुलायामिव नोन्नमनानमनाभ्यामनियतस्थितिं करिष्यन्तीत्यर्थः ॥ ३३ ॥ विज्वरं ते मनः स्वं मनोरूपमुत्सृज्य भूतपूर्ववपुः पूर्वसिद्धब्रह्मस्वभावं भूत्वा शमं निर्विक्षेपतामेष्यति ॥ ३४ ॥ तर्हि किं मनसः सत्तैव नङ्क्ष्यति, नेत्याह—**तिष्ठदेवे**ति । यथा पूर्वमनोरन्ते कलिकालं प्राप्य कलङ्कैः पापैर्विकलं भुवनं पुनर्मन्वन्तरगतौ सत्यां तिष्ठदेव कलङ्कं त्यजति तद्वन्मनोऽपि जीवन्मुक्तव्यवहारक्षमतया तिष्ठदेव पूर्वतनं मनोरूपं त्यजतीत्यर्थः ॥ ३५ ॥ न केवलं दुःखनिवृत्तिरेव ज्ञानफलं किंतु निरतिशयानन्दसाम्राज्यमपि यत्र ब्रह्मादयोऽप्यनुकम्प्या इत्याह—**अनुकम्प्या** इति ॥ ३६ ॥ यदा आकाशादीनामपि महत्ता तत्सत्ताधीना तदा तस्य निरतिशयं महत्त्वं किं वाच्यमित्याशयेनाह—**विवेके**ति । विवेकजन्येन ज्ञानदीपेन दृष्ट आत्मा येन ॥ ३७ ॥ ३८ ॥ कृपणं कामकार्पण्यदूषितम् । पेलवे क्षुद्रेऽपि कार्ये । निमज्जति मुह्यति ॥ ३९ ॥ तया प्रसिद्धया ॥ ४० ॥ तर्हि कियत्सु विषयेषु कियत्कालं वा वैराग्यं कर्तव्यमिति चेत्तत्राह—**तावदि**ति । स्वयंज्योतिरात्ममात्रपरिशेषानुभवपर्यन्तमित्यर्थः ॥४१॥ नानाश्रुतिशास्त्रपर्यालोचनमप्यात्मदर्शनपर्यन्तमेवेत्याह—**तावदि**ति । धातुः स्वर्णाकरधातुः । सर्वमध्यात्मशास्त्रम् ॥ ४२ ॥ सार्विकया सर्ववस्तुभूतया बुद्ध्या सर्वदा सर्वत्र देशे सर्वं दृश्यं सर्वथा परित्यज्य सर्वैः पूर्णात्मा स्वात्मनैवोपलभ्यते न कदाचित्कुत्रचित्कथंचित्कतिपयविषयत्यागमात्रेणेत्यर्थः ॥ ४३ ॥ उक्तमेवार्थं व्यतिरेकमुखेनापि द्रढयति—**यावदि**ति । तत्कुतस्तत्राह—**स**र्वे**ति ॥ ४४ ॥ सामान्यं लोकव्यवहारसाधारणं गोधनादि । अप्यर्थे एवकारः । यावदन्यत्तद्विरोधि वस्तु न संत्यक्तं तावन्नासाद्यते ॥ ४५ ॥ यत्र यस्मिन्विषये । तत् तं विषयम् ॥ ४६ ॥ सर्वं दृश्यं परित्यज्य यत्किंचित्सर्वथा परित्यक्तुमशक्यं दृष्टं तदेव परं पदमित्यर्थः ॥ ४७ ॥ मनः सकलकारणकार्यपरम्परामये जगति मणिषु सूत्रमिवानुगते सन्मात्रे स्वकल्पनया विजृम्भितं सद्व्यतिरिक्तं सर्वं रूपं अलं निःशेषमपास्य ततस्तदनन्तरं स्ववपुर्मनोरूपमपि मूलाज्ञाननाशाद्बाधेन परिविलाप्य यत्सच्चिन्मात्रैकरसं वस्तु एति प्राप्नोति तदेव तद्ब्रह्मरूपमित्यर्थः ॥ ४८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे माण्डव्योपदेशो नामाष्टपञ्चाशः सर्गः ॥ ५८ ॥

बाह्यमाभ्यन्तरं चैव दृश्यं संत्यजतो रहः ।
इह राज्ञो विचारेण स्वात्मलाभ उदीर्यते ॥ १ ॥

उक्त्वा उपदिश्य । स्वं स्वीयं मौनमण्डलं मुन्यावासदेशम् ॥ १ ॥ २ ॥ तत्रादौ बाह्ये दृश्ये आत्मतामात्मीयतां च

१ अधो इति पाठः।

किरातमण्डलं नेदं मम नाहं च मण्डलम्।
निजसंकेतमात्रेण केवलं देश एव मे ॥ ४
त्यक्तो मयैष संकेतो नाहं देशो न वैष मे।
इदानीं नगरं शिष्टमेष एवात्र निश्चयः ॥ ५
पताकावनपङ्क्त्याढ्या भृत्योपवनसंकुला।
गजाश्वसामन्तयुता पुरी नाहं न मे पुरी ॥ ६
व्यर्थसंकेतसंबन्धं संकेतविगमे क्षतम्।
भोगवृन्दं कलत्रं च नाहं नैतन्ममाखिलम् ॥ ७
एवं सभृत्यं सबलं सवाहनपुरान्तरम्।
नाहं राज्यं न मे राज्यं संकेतो ह्ययमाकुलः ॥ ८
देहमात्रमहं मन्ये हस्तपादादिसंयुतम्।
तदिदं तावदाश्वन्तरलमालोकयाम्यहम् ॥ ९
तदत्र तावन्मांसास्थि नाहमेतदचेतनम्।
न चैतन्मम संश्लेषमेत्यब्जस्य यथा जलम् ॥ १०
मांसं जडं न तदहं नैवाहं रक्तमप्यलम्।
जडान्यस्थीनि नैवाहं न चैतानि मम क्वचित् ॥ ११
कर्मेन्द्रियाणि नैवाहं न च कर्मेन्द्रियाणि मे।
जडं यत्किल देहेऽस्मिंस्तदहं नैव चेतनः ॥ १२
नाहं भोगा न मे भोगा न मे बुद्धीन्द्रियाणि च।
जडान्यसत्स्वरूपाणि न च बुद्धीन्द्रियाण्यहम् ॥ १३
मूलं संसृतिदोषस्य मनो नाहं जडं हि तत्।
अथ बुद्धिरहंकार इति दृष्टिर्मनोमयी ॥ १४
मनोबुद्धीन्द्रियाद्यन्तो भूतकोशश्चलद्वपुः।
नाहमेवं शरीरादि शिष्टमालोकयाम्यहम् ॥ १५
शेषस्तु चेतनो जीवः स चेच्चेत्येन चेतति।
अन्येन बोध्यमानोऽसौ नात्मतत्त्ववपुर्भवेत् ॥ १६
एवं त्यजामि संवेद्यं चेत्यं नाहं हि तत्किल।
शेषो विकल्परहितो विशुद्धचिदहंस्थितः ॥ १७
चित्रमेषोऽस्मि लब्धात्मा जातः कालेन कार्यवान्।
एष सोऽहमनन्तात्मा नान्तोऽस्य परमात्मनः ॥ १८
ब्रह्मणीन्द्रे यमे वायौ सर्वभूतगणे तथा।
स एष भगवानात्मा तन्तुर्मुक्तास्विव स्थितः ॥ १९
चिच्छक्तिरमला सैषा चेत्यामयविवर्जिता।
भरिताशेषदिक्कुञ्जा भैरवाकारधारिणी ॥ २०
सर्वभावगता सूक्ष्मा भावाभावविवर्जिता।
आब्रह्मभुवनान्तःस्था सर्वशक्तिसमुद्गिका ॥ २१
सर्वसौन्दर्यसुभगा सर्वप्राकाश्यदीपिका।
सर्वसंसारमुक्तानां तन्तुराततरूपिणी ॥ २२
सर्वाकारविकाराढ्या सर्वाकारविवर्जिता।
सर्वभूतौघतां याता सर्वदा सर्वतां गता ॥ २३
चतुर्दशविधान्येषा भूतानि भुवनोदरे।
एतन्मयीयं कलना जागती वेदनात्मिका ॥ २४
मिथ्यावभासमात्रं तु सुखदुःखदशागतिः।
नानाकारमयाभासः सर्वमात्मैव चित्परा ॥ २५
सोऽयमात्मा मम व्यापी सेयं यदवबोधनम्।
सेयमाकलिताङ्गाभा करोति नृपविभ्रमम् ॥ २६
अस्या एव प्रसादेन मनो देहरथे स्थितम्।
संसारजाललीलासु याति वल्गति नृत्यति ॥ २७
इदं मनःशरीरादि न किंचिदपि वस्तुतः।
नष्टे न किंचिदप्यस्मिन्परिनश्यति पेलवे ॥ २८
जगज्जालमयं नृत्तमिदं चित्तनटैस्ततम्।
एतयैवैकया बुद्ध्या दृश्यते दीपलेखया ॥ २९

विचार्य निरस्यति—**नाहमित्यादिषड्भिः**। जगत्पदेन ऊर्ध्वाधोलोका गृह्यन्ते ॥ ३ ॥ निजः संकेतः सर्वजनसंमत्या पट्टाभिषेकादिना अहं राजेति कल्पना तावन्मात्रेण ॥ ४ ॥ अत्र एतस्मिन्नगरेऽपि संकेतत्यागादेव एव निश्चयः ॥ ५ ॥ तमेव निश्चयं स्फुटमाह—**पताकेति** ॥ ६ ॥ व्यर्थेन संकेतेन संबध्यत इति संबन्धम् ॥ ७ ॥ आकुलः काकिणीकार्षापणसंबन्धवदन्धपरम्पराव्यवहारसिद्ध इति यावत् ॥ ८ ॥ संकेतमात्रत्यागोपायेन बाह्यैः संबन्धं निरस्य अचेतनत्वहेतुना देहेन्द्रियादिभिरपि तं निरसितुमारभते—**देहमात्रमित्यादिना**। ॥ ९ ॥ संश्लेषं संबन्धमपि नैति। असङ्गत्वादित्यर्थः ॥ १० ॥ ॥ ११ ॥ १२ ॥ बुद्धीन्द्रियाणि ज्ञानेन्द्रियाणि ॥ १३ ॥ अथ बुद्धिरहंकार इति या दृश्यत इति दृष्टिः सापि नाहं न ममेत्यनुषज्यते। यतः सा मनोमयी अन्तःकरणावस्था। भेदरूपेति यावत् ॥ १४ ॥ शरीरादिमनोबुद्धीन्द्रियाद्यन्तो भूतकोशः स्थूलसूक्ष्मभूतसंघात एवमुक्तरीत्या नाहम्। शिष्टमवशिष्टमालोकयामि। दृष्ट्वा विचारयामीति यावत् ॥ १५ ॥ चेतनः प्रमाता चेत्येन प्रमेयेण सह चेतति। तथाच अहमिदं चेतयामीति त्रिपुटीसाक्षिणा बोध्यमानोऽसौ प्रमाता नात्मनस्तत्त्ववपुस्तात्त्विकं रूपमिति संभाव्यत इत्यर्थः ॥ १६ ॥ एवमनयैव युक्त्या साक्षिसंवेद्यं प्रमितिं प्रमेयं च त्यजामि। हि यस्माच्चेत्यं नाहं किलेति प्रसिद्धम्। विशुद्धचित् शुद्धसाक्षी अहमात्मेति स्थितः। निश्चये प्रतिष्ठित इत्यर्थः ॥ १७ ॥ तद्दर्शनमात्रेण कण्ठचामीकरवत्तल्लाभमाश्चर्यभूतं दर्शयति—**चित्रमिति**। कालेनानादिकालादारभ्य यतमानोऽप्यद्य कार्यवान् परमपुरुषार्थफलवान् जातोऽस्मीत्यर्थः ॥ १८ ॥ 'एष ब्रह्मैष इन्द्रः' इत्यादिश्रुतिगणाननुभवेन संवादयति—**ब्रह्मणीति** ॥ १९ ॥ अज्ञानां भयहेतुत्वाद्भैरवाकारधारिणी ॥ २० ॥ सर्वेषु भावेषु मनोवृत्तिषु गता। 'प्रतिबोधविदितं मतम्' इति श्रुतेः ॥ २१ ॥ सर्वसौन्दर्यं निरतिशयानन्दस्तेन सुभगा पूर्णा। संसारलक्षणानां मुक्तानां मुक्ताफलानाम् ॥ २२ ॥ २३ ॥ भुवनसंख्यया चतुर्दशविधानि भूतानि धत्ते इति शेषः ॥ २४ ॥ २५ ॥ व्यापी जगदनुगतः। अवबोधनं मद्बुद्धिसाक्षी। सेयं चिद्दृष्टदृश्यभेदेनाकलितशरीरा सती नृपोऽहमिति विभ्रमं करोति। प्राकृतवदित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ एतया उक्तया साक्षिरूपया

कथं मुधैव मे चिन्ता निग्रहानुग्रहस्थितौ ।
बभूव देहनिष्ठेह न किंचिदपि देहकम् ॥ ३०
अहो त्वहं प्रबुद्धोऽस्मि गतं दुर्दर्शनं मम ।
दृष्टं द्रष्टव्यमखिलं प्राप्तं प्राप्यमिदं मया ॥ ३१
सर्वं किंचिदिदं दृश्यं दृश्यते यज्जगद्गतम् ।
चिन्निष्पन्दांशमात्रांशान्नान्यत्किंचन शाश्वतम् ॥ ३२
क्व तौ कीदृग्विधौ वापि किंनिष्ठौ वा किमात्मकौ ।
निग्रहानुग्रहौ लोके हर्षामर्षक्रमौ तथा ॥ ३३
किं सुखं किं नु वा दुःखं सर्वं ब्रह्मेदमाततम् ।
अहमासं मुधा मूढो दिष्ट्या मूढोऽस्म्यहं स्थितः ॥ ३४
किमस्मिन्नेवमालोके शोच्यते किं विमुह्यते ।
किं प्रेक्ष्यते किं क्रियते स्थीयते वाथ गम्यते ॥ ३५
किंचिदेवमिदं नाम चिदाकाशं विराजते ।
नमो नमस्ते निस्तत्त्व दिष्ट्या दृष्टोऽसि सुन्दर ॥ ३६
अहो नु संप्रबुद्धोऽस्मि सम्यग्ज्ञातमलं मया ।
नमो मह्यमनन्ताय सम्यग्ज्ञानोदयाय च ॥ ३७
विगतरञ्जननिर्विषयस्थिति-
गतभवभ्रमरञ्जितवर्जिते ।
स्थिरसुषुप्तकलाभिगतस्ततः
समसमं निवसाम्यहमात्मनि ॥ ३८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे सुरघुवृ०सुरघुविश्रान्तिर्नामैकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ६०

श्रीवसिष्ठ उवाच ।
इति हेमजटाधीशो लेभे पदमनुत्तमम् ।
विवेकाध्यवसायेन ब्राह्मण्यमिव गाधिजः ॥ १
अनर्थाकारकार्यासु नासीच्चेष्टासु खेदवान् ।
भूयोभूयः प्रयुक्तासु दिनमालास्विवेश्वरः ॥ २
ततःप्रभृति सोऽतिष्ठत्सर्वदा विगतज्वरः ।
समासमे स्वके कार्ये जलौघाग्र इवाचलः ॥ ३
हर्षामर्षविनिर्मुक्तः प्रत्यहं कार्यमाहरन् ।
उदारगम्भीरवपुर्जहाराम्बुनिधेः श्रियम् ॥ ४
सुषुप्तपदधर्मिण्या चित्तवृत्त्या व्यराजत ।
निष्कम्पया प्रकाशिन्या दीपः स्वशिखयेव सः ॥ ५
न निर्घृणो दयावान्नो न द्वन्द्वी नाथ मत्सरी ।
न सुधीर्नासुधीर्नार्थी नानर्थी स बभूव ह ॥ ६
समदर्शनया नित्यं वृत्त्याऽचापलधीरया ।
अन्तःशीतलया रेजे परिपूर्णार्णवेन्दुवत् ॥ ७
सर्वं चित्तत्वकलनं जगदित्यवलोक्य सः ।
प्रशान्तसुखदुःखश्रीस्तस्य पूर्णा मतिर्बभौ ॥ ८
उल्लसन्विकसन्पूर्णस्तिष्ठन्गच्छन्विशन्स्वपन् ।
अभूत्समसमाधिस्थः प्रबुद्धश्चिल्लयं गतः ॥ ९
स कुर्वन्विगतासङ्गं राज्यं राजीवलोचनः ।
अतिष्ठदक्षताकारो भूरिवर्षशतान्यथ ॥ १०

॥ २९ ॥ ३० ॥ ३१ ॥ चितो यो निष्पन्दो मायया जीवभावभ्रमस्तदंशः सप्तदशकलिङ्गभ्रमस्तस्य मात्रा बाह्यान्तःकरणभेदभ्रमास्तदंशो जाग्रत्स्वप्नदृश्यभ्रमस्तस्मादन्यत्किंचिच्छाश्वतं कालत्रयाबाध्यं दृश्यं न विद्यत इत्यर्थः ॥ ३२ ॥ एवं जगतो मृषात्वे निग्रहानुग्रहक्रमौ तत्प्रयोजकहर्षामर्षक्रमौ च निराश्रयौ निष्प्रकारौ निर्विषयौ निःस्वरूपौ च संपन्नावित्याह—क्वेति ॥ ३३ ॥ स्वमोहेऽपगते सुखदुःखादिप्रसक्तिरेव नास्तीत्याह—किमिति । सांप्रतममूढः स्वरूपे स्थितोऽस्मीत्यर्थः ॥ ३४ ॥ एवमानन्दैकरसपूर्णस्वभावेनालोक्यते अनुभूयत इत्येवमालोकस्तस्मिन् । किंशब्दा आक्षेपे । शोकादिसंभावनैव नास्तीत्यर्थः ॥ ३५ ॥ किंचिदलौकिकचमत्कारम् । इदं चिदाकाशम् ॥ ३६ ॥ सम्यग्ज्ञाने उदय आविर्भावो यस्य तथाविधाय । चकारः पूर्वश्लोकनमस्कार्यसमुच्चयार्थः । सम्यग्ज्ञानलक्षणायाभ्युदयाय चेति वा ॥ ३७ ॥ विगतरञ्जनत्वादेव निर्मृष्टावस्थात्रयविषयस्थितिरिति शोधितत्वंपदार्थनिर्देशः । गतभवभ्रमत्वादेव वियदाद्यध्यारोपरञ्जितवर्जिते इति शोधिततत्पदार्थनिर्देशः । भावे क्तः । स्थिरया सुषुप्तिकलया स्वाप्ययश्रुत्येव उपाधिविगमाद्भिगत एकीभूत इत्यखण्डैक्यनिर्देशः । ततस्तस्मादहमात्मनि प्रत्यग्ब्रह्मणि समसममात्यन्तिकाभेदलक्षणपरमसाम्येन निवसामि न कदाचिदपि मे पुनर्वैषम्यप्रसक्तिरिति फलावस्थानिर्देशः ॥ ३८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सुरघुविश्रान्तिर्नामैकोनषष्टितमः सर्गः ॥ ५९ ॥

आदेहपातं सुरघोरसङ्गाचार उच्यते ।
जीवन्मुक्तस्य तस्याथ देहशान्तौ स्ववस्थितिः ॥ १ ॥

गाधिजो विश्वामित्रः ॥ १ ॥ भूयोभूयः पुनःपुनः प्रयुक्तासु अनुष्ठितासु धर्मार्थप्राप्त्युपायचेष्टासु परिचेष्टितैर्दैवादनर्थाकाराणि विफलानि दुःखपर्यवसितानि वा कार्याणि फलानि यासां तथाविधासु सतीषु खेदवान्नासीत् । ईश्वरो दिनेश्वरः सूर्यः ॥ २ ॥ समासमे अनुग्रहनिग्रहरूपे निजे राजोचिते कार्ये यथा नदीमध्यगतः पर्वतो निष्कम्पस्तिष्ठति तद्वत् ॥ ३ ॥ कार्यमायव्ययादि । आहरन् कुर्वन् ॥ ४ ॥ सुषुप्ताविव निश्चलयेति यावत् ॥ ५ ॥ 'अमत्सरी' इति पाठे अत्यन्तनिर्मत्सरत्वपरदोषोपेक्षकः ॥ ६ ॥ अचापलधीरयेति च्छेदः । परिपूर्णौ यौ अर्णवेन्दू तद्वत् ॥ ७ ॥ स इत्यस्य समसमाधिस्थोऽभूदिति परेणान्वयः । तत्र हेतुर्यतस्तस्य परिपूर्णा मतिर्बभाविति ॥ ८ ॥

संनिवेशमिमं देहनामकं तदनु स्वयम् ।
स जहौ तेजसाक्रान्तो रूपं हिमकणो यथा ॥ ११
विवेश परमाद्यन्तकारणं कारणेश्वरम् ।
प्रज्ञया सरितां वारि परिपूर्णमिवाम्बुधिम् ॥ १२
अधिगतविमलैकरूपतेजा
विजनदशां समुपेत्य शान्तशोकः ।
अलमभवदसौ परस्वरूपं
घटखमिवाम्बरसंयुतं महात्मा ॥ १३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे सुरघुवृत्तान्ते सुरघुनिर्वाणं नाम षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ६१

श्रीवसिष्ठ उवाच ।
एवमुत्पलपत्राक्ष राघवाघविपर्यये ।
पदमासाद्याद्वन्द्वं विशोको भव भूतये ॥ १
एतां दृष्टिमवष्टभ्य न मनः परितप्यते ।
घोरे तमसि निर्मग्नं लब्धदीपं शिशुर्यथा ॥ २
विवेकावस्थया चेतस्तथैवायाति निर्वृतिम् ।
पतच्छ्वभ्रे दृढतृणप्रचयालम्बनादिव ॥ ३
अथैतां पावनीं दृष्टिं भावयित्वाप्युदाहरन् ।
नित्यमेकसमाधानो भव भूषितभूतलः ॥ ४
श्रीराम उवाच ।
कथमेकसमाधानं कीदृशं वा मुनीश्वर ।
वाताहतमयूराङ्गरुहलोलं मनो भवेत् ॥ ५
श्रीवसिष्ठ उवाच ।
शृणु तस्यैव सुरघोः प्रबुद्धस्य सतस्तदा ।
पर्णादस्य च राजर्षेः संवादमिममद्भुतम् ॥ ६
राघवैकसमाधानबोधितायोजितात्मनोः ।
परस्परं समालापमिमं प्रकथयामि ते ॥ ७
बभूव पारसीकानां पार्थिवः परवीरहा ।
परिघो नाम विख्यातः परिघः स्यन्दने यथा ॥ ८
स बभूव परं मित्रं सुरघो रघुनन्दन ।
नन्दनोद्यानसंस्थस्य मदनस्येव माधवः ॥ ९
कदाचित्परिघस्याभूदवर्षं मण्डले महत् ।
कल्पान्त इव संसारे प्रजादुष्कृतदोषजम् ॥ १०
विनेशुर्जनतास्तत्र बह्व्यः क्षुत्क्षामजीविताः ।
ज्वलिते विपिने वह्नौ यथा भूतपरम्पराः ॥ ११
तद्दुःखं परिघो दृष्ट्वा विषादमतुलं ययौ ।
तत्याजाश्वखिलं राज्यं दग्धं ग्राममिवाध्वगः ॥ १२
प्रजानाशप्रतीकारेष्वसमर्थो विरागवान् ।
जगाम विपिने कर्तुं तपोऽजिनमुनीन्द्रवत् ॥ १३
पौराणामपरिज्ञाते कस्मिंश्चिद्दूरकानने ।
समुवास विरक्तात्मा लोकान्तर इवापरे ॥ १४
तपश्चरञ्छान्तमतिर्दान्तः कन्दरमन्दिरे ।
स्वयं शीर्णानि शुष्काणि तत्र पर्णान्यभक्षयत् ॥ १५
चिरं हुताशवच्छुष्कपर्णान्येवाथ भक्षयन् ।

उल्लसन्वपुषा । विकसश्चेतसा ॥९॥१०॥ आक्रान्तः शोषितः । रूपं मूर्ताकारम् ॥ ११ ॥ सर्वेषामेवान्तःकारणानां हिरण्यगर्भादीनामीश्वरं नियन्तारम् । सर्वजगतामाद्यन्तयोः सृष्टिप्रलययोः कारणं परं ब्रह्म प्रज्ञया साक्षात्कारवृत्त्या जन्मादिहेतुबीजशक्त्यविद्यावरणबाधेन सरितां वारि कूलद्वयपरिच्छेदत्यागेन पूर्णमर्णवमिव विवेशेत्यर्थः ॥ १२ ॥ तत्प्रविश्यासौ कीदृग्भूत्तदाह—अधिगतेति । असौ सुरघुः प्रज्ञया अधिगतं स्वात्मतया प्राप्तं विमलमेकरूपमानन्दैकरसं तेजः स्वप्रकाशात्मरूपं येन तथाविधः सन् विजनां जन्मादिविक्रियाहीनां दशां समुपेत्य शान्तसर्वशोकः सन् घटभङ्गे घटखमम्बरेण महाकाशेन संयुतमेकीभूतमिव परस्वरूपमेव अभवत् । तदेवास्य निर्वाणमित्यर्थः ॥ १३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सुरघुनिर्वाणं नाम षष्टितमः सर्गः ॥ ६० ॥

सहजैकसमाधानलक्षणप्रतिपत्तये ।
परिघेणात्र संवादः सुरघोरुपवर्ण्यते ॥ १ ॥

हे राघव, एवं सुरघुवत्त्वमपि अघस्य हर्षशोकादिनिमित्तस्य पापस्य विपर्यये तत्त्वबोधेन समूलमुच्छेदे सति ॥ १ ॥ शिशुर्बाल इव घोरे अज्ञानतमसि निर्मग्नं मन एतां दृष्टिमवष्टभ्य लब्धदीपं प्राप्तप्रकाशं सत्र परितप्यते ॥ २ ॥ श्वभ्रे मोहान्धकूपे पतन्मनस्तथा तादृश्या सुरघूपवर्णितप्रकारयैव विवेकावस्थया दृढस्य तृणप्रचयस्य कक्षस्य आलम्बनादिव निर्वृतिं विश्रान्तिसुखम् ॥ ३ ॥ भावयित्वा पुनःपुनः परिशीलनेन स्वयं दृढीकृत्यान्येभ्योऽप्युदाहरन्नुपदिशन् ॥ ४ ॥ वातैराहतं मयूराङ्गरुहं बर्हमिव लोलं चपलं मन एकसमाधानं कथं केन प्रकारेण भवेत् ॥ ५ ॥ ६ ॥ हे राघव, एकसमाधाने बोधित आयोजित आत्मा ययोः ॥ ७ ॥ पारसीका देशविशेषाः । पार्थिवो राजा । स्यन्दने रथे परिघोऽक्षदण्ड इवाधारभूतः ॥ ८ ॥ माधवो वसन्तः ॥ ९ ॥ अवर्षमनावृष्टिः । किं राजदोषान्नेत्याह—प्रजेति ॥ १० ॥ ११ ॥ १२ ॥ अजिनप्रधाना मुनीन्द्रा अजिनमुनीन्द्रास्तद्वत् ॥ १३ ॥ अपरे द्वितीये लोकान्तरे परलोक इवेत्युत्प्रेक्षा ॥ १४ ॥ अतिविरक्तत्वात्पर्णकुट्यादिपरिग्रहोऽप्यस्य नाभूदिति सूचनाय कन्दरमन्दिरे इत्युक्तम् ॥ १५ ॥ असौ

१ २ परिघस्य नामान्तरमेतत्.

पर्णाद इति नामासौ प्राप मध्ये तपस्विनाम् ॥ १६
ततःप्रभृति पर्णादनामा राजर्षिसत्तमः ।
जम्बूद्वीपे बभूवासौ विख्यातो मुनिसद्मसु ॥ १७
ततो वर्षसहस्रेण तपसा दारुणात्मना ।
प्रापदभ्यासवशतो ज्ञानमात्मप्रसादजम् ॥ १८
बभूव विगतद्वन्द्वो निराशः शान्तमानसः ।
नीरागो निरनुक्रोशो जीवन्मुक्तः प्रबुद्धधीः ॥ १९
विजहार यथाकामं त्रिलोकीमठिकामिमाम् ।
सिद्धसाध्यैः समं साधो सहंसालिरिवाब्जिनीम् ॥ २०
एकदा तस्य सदनं हेमचूडमहीपतेः ।
प्राप रत्नविनिर्माणं मेरोः शृङ्गमिवापरम् ॥ २१
ते तत्र प्राक्तने मित्रे पूजामकुरुतां मिथः ।
पूर्णौ विज्ञातविज्ञेयौ मौर्ख्यगर्भाद्विनिर्गतौ ॥ २२
अहो नु बत कल्याणैः फलितं मम पावनैः ।
संप्राप्तवानहं यत्त्वामित्यन्योन्यमथोचतुः ॥ २३
आलिङ्गितशरीरौ तावन्योन्यानन्दिताकृती ।
एकासने विविशतुश्चन्द्रार्काविव भूधरे ॥ २४

परिघ उवाच ।

परमानन्दमायातं चेतस्त्वद्दर्शनेन मे ।
इन्दुबिम्ब इवोन्मग्नं मनः शीतलतां गतम् ॥ २५
अकृत्रिमसुखं प्रेम वियोगे शतशाखताम् ।
प्रयाति पल्वलतटेऽच्छिन्नमूल इव द्रुमः ॥ २६
विश्रब्धास्तान्कथालापांस्ता लीलास्तच्च चेष्टितम् ।
संस्मृत्य प्राक्तनं साधो हृष्यामि च पुनःपुनः ॥ २७
ज्ञानमेतन्मया प्राप्तं त्वया ज्ञातं यथाऽनघ ।
माण्डव्यस्य प्रसादेन परमात्मप्रसादजम् ॥ २८
अद्य कच्चिददुःखस्त्वं कच्चिद्विश्रान्तवानसि ।
परमे कारणे मेराविव भूमण्डलाधिपः ॥ २९
कच्चित्परमकल्याण आत्मारामतया तव ।
प्रसादो जायते चित्ते शरदीव सरोम्भसि ॥ ३०
कच्चित्करोषि समया सुप्रसन्नगभीरया ।
दृष्ट्वा सुभग कार्याणि कार्याण्येव नराधिप ॥ ३१
निराधिव्याधयो धीराः कच्चित्संपन्नशालयः ।
जनतास्तव देशेषु तिष्ठन्ति विगतज्वरम् ॥ ३२
कच्चिदुद्दामफलिनी फलिनीव फलानता ।
धरा तव फलापूरैर्भृशं धारयति प्रजाः ॥ ३३
कच्चित्तव दिगन्तेषु चन्द्रस्येवांशुपञ्जरम् ।
तुषारनिकराकारं प्रसृतं पावनं यशः ॥ ३४
कच्चिद्गुणगणैरेता दिशो निर्विवरीकृताः ।
त्वया सरोम्भसाऽवाह्या बिसानामिव भूमयः ॥ ३५
कच्चित्कलमकेदारकोणस्थानेषु हृष्यतीः ।
प्रतिग्रामं कुमार्यस्ते गायन्त्यानन्दनं यशः ॥ ३६
कुशलं तव धान्येषु धनेषु विभवेषु च ।
भृत्येषु च कलत्रेषु पुत्रेषु नगरेषु च ॥ ३७
आधिव्याधिविहीनेयं कच्चित्कायलता तव ।
फलं फलति पुण्याख्यं यदिहामुत्र चोदितम् ॥ ३८
आपातरमणीयेषु वर्तेतात्यन्तवैरिषु ।
कच्चिद्विषयसर्पेषु सविरागं मनस्तव ॥ ३९
अहो बत चिरं कालमावां विश्लेषमागतौ ।
कालेन श्लेषितौ भूयो वसन्ताद्रितटाविव ॥ ४०
न ता जगति विद्यन्ते सुखदुःखदशाः सखे ।
जीवद्भिर्या न दृश्यन्ते संयोगजवियोगजाः ॥ ४१
तथैतास्वतिदीर्घासु दशास्वन्यत्वमागताः ।
भूयो वयमपि श्लिष्टाश्चित्रो हि नियतेर्विधिः ॥ ४२

---

परिघः ॥ १६ ॥ १७ ॥ आत्मप्रसादश्चित्तशुद्धिरीश्वरानुग्रहश्च तस्माज्जातं तत्त्वज्ञानं प्रापत्प्राप्तवान् ॥ १८ ॥ १९ ॥ सिद्धैरारूढैः साध्यैरारुरुक्षुभिश्च कदाचित्परिवृतः । हंसैः सहितः सहंसोऽलिर्भ्रमरोऽब्जिनीं कमलिनीमिव ॥ २० ॥ हेमचूडः स्वर्णजटाख्यो देशस्तन्महीपतेः सुरघोः ॥ २१ ॥ मौर्ख्यगर्भः संसारस्तस्माद्विनिर्गतौ जीवन्मुक्तावित्यर्थः ॥ २२ ॥ कल्याणैः सुकृतैः । फलितमिति भावे क्तः ॥ २३ ॥ २४ ॥ चितिशक्तिप्रधाने आनन्दाविर्भावो मननशक्तिप्रधाने तापोपशम इति विशेषद्योतनाय चेतो मन इति भेदोक्तिः ॥ २५ ॥ अच्छिन्नमूलश्छिन्नशाखो द्रुमः इवेति योज्यम् ॥ २६ ॥ विश्रब्धान् विश्वासगर्भान् । तान् प्राक्तनान्सुखदुःखकथालापान् ॥ २७ ॥ त्वया यथा माण्डव्यस्य प्रसादेन ज्ञातं तथैव मया परमात्मन ईश्वरस्य तपसाऽऽराधितस्य प्रसादजमेतज्ज्ञानं प्राप्तम् ॥ २८ ॥ परमे कारणे विवर्तोपादानत्वोपलक्षिते ब्रह्मणि कच्चिदुत्तरोत्तरभूमिकापरिपाकेन विश्रान्तवानसि ॥ २९ ॥ प्रसादो रजस्तमोभ्यामनावरणम् ॥ ३० ॥ कार्याणि सर्वजनहितत्वादवश्यकर्तव्यान्येव कार्याणि कर्माणि करोषि ॥ ३१ ॥ जनताः प्रजासमूहाः ॥ ३२ ॥ धरा पृथ्वी उद्दामफलिनी उत्कृष्टसस्यादिफलवती फलैरानता फलिनी कल्पलतेव तव प्रजाः फलापूरैः काले काले तत्तदभिलषितफलपूरणैर्भृशमतिशयेन धारयति बिभर्ति पोषयति कच्चित् ॥ ३३ ॥ चन्द्रस्य अंशुपञ्जरं किरणजालमिव ॥ ३४ ॥ सरोम्भसा तडागोदकेन अवाह्याः स्वान्तर्गता बिसानां मृणालानां भूमय इव त्वया दिशो गुणगणैर्यशोभिर्निर्विवरीकृताः पूरिताः कच्चित् ॥ ३५ ॥ कलमकेदाराणां कोणाश्चतुष्कसंधयस्तत्रत्येष्वासन्दीस्थानेषु । हृष्यतीर्हृष्यन्त्यः । छान्दसो विभक्तिव्यत्ययः ॥ ३६ ॥ ३७ ॥ इह ऐहिकफलत्वेन चोदितं कारीर्यादि । अमुत्र पारलौकिकफलत्वेन चोदितं ज्योतिष्टोमादि ॥ ३८ ॥ तव मनो विषयसर्पेषु कच्चित्सविरागं वर्तेत वर्तते ॥ ३९ ॥ ४० ॥ इष्टानिष्टजनसंयोगजास्तद्वियोगजाश्च सुखदुःखदशाः ॥ ४१ ॥ अन्यत्वं वियोगमागताः प्राप्ताः । नियतेः प्राणिकर्मानुसारिण्या

सुरघुरुवाच ।
भगवन्नियतेरस्या गतिं सर्पगतेरिव ।
दैविक्याः को हि जानाति गम्भीरां विस्मयप्रदाम् ॥
त्वमहं च व्यपोह्येति दूरे दूरदशासु च ।
अद्य संघटितौ भूयः किमसाध्यमहो विधेः ॥ ४४
वयं त्वद्य महासत्त्व भृशं कुशलिनः स्थिताः ।
त्वदागमनपुण्येन परां पावनतां गताः ॥ ४५
पश्य त्वदागमक्षीणपापानां पुण्यपादपैः ।
तथा फलितमस्माकं न यथा वयमाकुलाः ॥ ४६
सर्वाः संपत्तयोऽस्माकं राजर्षे संस्थिताः पुरे ।
भवदागमनेनाद्य प्रयाताः शतशाखताम् ॥ ४७
विकिरति परितो रसायनाना-
मिव निकरं मधुरं महानुभाव ।
तव वचनमवेक्षणं च पुण्यं
परमपदप्रतिमो हि साधुसङ्गः ॥ ४८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे सुरघुवृ० सुरघुपरिघसमागमो नामैकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ६२

श्रीवसिष्ठ उवाच ।
अथैवंप्रायया तत्र विश्रम्भकथया चिरम् ।
प्राक्तनस्नेहगर्भिण्या स्थित्वोवाचायुधाभिधः ॥ १
परिघ उवाच ।
यद्यत्संसारजालेऽस्मिन्क्रियते कर्म भूमिप ।
तत्समाहितचित्तस्य सुखायान्यस्य नानघ ॥ २
कच्चित्संकल्परहितं परं विश्रमणास्पदम् ।
परमोपशमं श्रेयः समाधिमनुतिष्ठसि ॥ ३
सुरघुरुवाच ।
एतन्मे ब्रूहि भगवन्सर्वसंकल्पवर्जितम् ।
परमोपशमं श्रेयः समाधिर्हि किमुच्यते ॥ ४
यो ज्ञो महात्मन्सततं तिष्ठन्व्यवहरंश्च वा ।
असमाहितचित्तोऽसौ कदा भवति कः किल ॥ ५
नित्यं प्रबुद्धचित्तास्तु कुर्वन्तोऽपि जगत्क्रियाः ।
आत्मैकतत्त्वसंनिष्ठाः सदैव सुसमाधयः ॥ ६
बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि ।
अविश्रान्तस्वभावस्य कः समाधिः कथं च वा ॥ ७
तत्त्वावबोधो भगवन्सर्वाशातृणपावकः ।
प्रोक्तः समाधिशब्देन नतु तूष्णीमवस्थितिः ॥ ८
समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ।
साधो समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ९

ईश्वरेच्छाया विधिर्विलासश्चित्रः अद्भुतः ॥ ४२ ॥ परिघोक्तमर्थमनुमोदमानः सुरघुरपि तमेवाह—भगवन्नित्यादिना । दैविक्याः देव ईश्वरस्तदिच्छारूपायाः ॥ ४३ ॥ देशतो दूरे कालतश्च दूरदशासु इति एवं व्यपोह्य वियोज्य ॥ ४४ ॥ ४५ ॥ तथा तादृशचित्तसमाधानात्मना फलितं यथा वयं न व्याकुलाः सर्वव्याकुलतानिर्मुक्ताः कृतकृत्याः संपन्नाः ॥ ४६ ॥ शतशाखतां । सर्वतः फलोन्मुखतामिति यावत् ॥ ४७ ॥ हे महानुभाव, पुण्यं तव वचनमवेक्षणं दर्शनं च परितो रसायनानाममृतानां निकरं विकिरति वर्षतीव । हि यस्मात्साधूनां सङ्गः समागमः परमपदप्रतिमः । मोक्षसुखप्राप्तितुल्य इत्यर्थः ॥ ४८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सुरघुपरिघसमागमो नामैकषष्टितमः सर्गः ॥ ६१ ॥

अज्ञानावरणे ध्वस्ते नित्यचित्स्फुरणस्थितेः ।
सदैवैकसमाधानं विदुषामत्र वर्ण्यते ॥ १ ॥

आयुधस्याभिधेव अभिधा नाम यस्य स आयुधाभिधः परिघः ॥ १ ॥ किमयं तत्त्वविदो व्यवहारसमाध्योः सुखतारतम्यं वक्ष्यत्युत नेति परीक्षणाय प्रथमं स्वानुभवमुद्घाटयति—यद्यदिति । अन्यस्य अज्ञस्य ॥ २ ॥ एवं स्वानुभवमुद्घाट्य तत्संवादयसंवादी वेति परानुभवं जिज्ञासमानः समाधौ विश्रान्त्याधिक्यमिव दर्शयन्पृच्छति—कच्चिदिति । विक्षेपदुःखानां परममुपशमं सांसारिकसुखेभ्यश्च श्रेयः प्रशस्यतरम् । सामान्ये व्यत्ययेन वा क्लीबता ॥ ३ ॥ समाहितचित्तस्य सर्वं कर्म सुखायेति पश्यतस्ते समाधौ विश्रान्त्याधिक्यदर्शनं व्यवहारसमाधिभेदाभ्युपगमेन प्रश्नश्चानुपपन्न एवेति त्वदनुभवसंवाद्येव ममाप्यनुभव इत्याशयेन सुरघुः संकल्परहितं परमोपशमं श्रेय इति तदुक्तांशस्यात्मस्वरूपेऽपि संभवात्तावदभ्युपगच्छन् विश्रमणास्पदं समाधिमनुतिष्ठसीत्यंशस्य समाधेयस्याविश्रमहेतोर्मनसो बाधितत्वादेवासंभवं मन्यमान आक्षिपति—एतदिति । सर्वसंकल्पवर्जितं परमोपशमं श्रेय इत्येतन्मे मह्यं युक्तत्वाद्ब्रूहि । समाधिरनुष्ठेय इति किमर्थं त्वयोच्यत इत्यर्थः ॥ ४ ॥ यो ज्ञस्तत्त्ववित् स व्यवहरन्नपि कः किंस्वरूपः किल । यतः सदैवानावृताद्वयचित्स्वभावोऽसौ कदा असमाहितचित्तो भवति । न कदाचिदपीत्यर्थः ॥ ५ ॥ यदि तु निश्चलात्मस्वरूपावस्थितिरेव समाधिस्तेऽभिमतः स्यात्तर्हि स सदैवास्तीति नानुष्ठेयं किंचिदस्तीत्याह—नित्यमिति ॥ ६ ॥ यदि त्वं मामज्ञं मन्यसे तदापि समाध्युपदेशोऽनुपपन्न इत्याशयेनाह—बद्धेति । कथं केनोपायेन वा । यत्र चित्तं समाधेयं तस्यैवापरिचयादित्यर्थः ॥ ७ ॥ तत्त्वावबोध इति । सम्यक् समूलसर्वाशाविषयबाधेन आत्मनः परमार्थस्वरूपे आधानं समाधिरिति भावः ॥ ८ ॥ अबाधितात्मदर्शनरूपा

अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी ।
प्रोक्ता समाधिशब्देन मेरोः स्थिरतराकृतिः ॥ १०
निश्चिन्ताधिगताभीष्टा हेयोपादेयवर्जिता ।
प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः ॥ ११
यतःप्रभृति बोधेन युक्तमात्यन्तिकं मनः ।
तदारभ्य समाधानमव्युच्छिन्नं महात्मनः ॥ १२
नहि प्रबुद्धमनसो भूत्वा विच्छिद्यते पुनः ।
समाधिर्दूरमाकृष्टो बिसतन्तुः शिशोरिव ॥ १३
समग्रं दिनमालोकाद्विरमत्यक्षयो यथा ।
आजीवितान्तं नो प्रज्ञा तथा तत्त्वावलोकनात् ॥ १४
अजस्रमम्बुवहनाद्यथा नद्या न रुध्यते ।
तथा विज्ञानदृग्बोधात्क्षणमात्रं न रुध्यते ॥ १५
न विस्मरत्यविरतं यथा कालः कलागतिम् ।
न विस्मरत्यविरतं स्वात्मानं प्राज्ञधीस्तथा ॥ १६
न विस्मरति सर्वत्र यथा सततगो गतिम् ।
न विस्मरति निश्चेयं चिन्मात्रं प्राज्ञ धीस्तथा ॥ १७
गतिं कालकला यद्वच्चिन्वाना समवस्थिता ।
चिच्चितिश्चेत्यरहिता चिन्वाना गतयस्तथा ॥ १८
यथा सत्ताविहीनात्मा पदार्थो नोपलभ्यते ।
तथात्मज्ञानहीनात्मा कालो ज्ञस्य न लभ्यते ॥ १९
न संभवति संसारे गुणहीनो गुणी यथा ।
न संभवत्यात्मसंविद्वर्जितो ह्यात्मवांस्तथा ॥ २०
सर्वदैवासि संबुद्धः सर्वदैवासि निर्मलः ।
सर्वदैवासि शान्तात्मा सर्वदासि समाहितः ॥ २१
भेदः केन समाधेर्मे जन्यते कथमेव वा ।
आत्मनोऽव्यतिरेकेण नित्यमेव सदात्मता ॥ २२
तस्मात्कदाचिदपि मे नासमाधिमयं मनः ।
न वा समाहितं नित्यमात्मतत्त्वैकसंभवात् ॥ २३
सर्वगः सर्वदैवात्मा सर्वमेव च सर्वथा ।
असमाधिर्हि कोऽसौ स्यात्समाधिरपि कः स्मृतः २४
नित्यं समाहितधियः सुसमा महान्त-
स्तिष्ठन्ति कार्यपरिणामविभागमुक्ताः ।
तेनासमाहितसमाहितभेदभङ्ग्या
नित्योदितः क नु स उत्तमवाक्प्रपञ्चः २५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे समाधिनिश्चयो नाम द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ६३

परिघ उवाच ।
राजन्नूनं प्रबुद्धोऽसि प्राप्तवानसि तत्पदम् ।
संशीतलान्तःकरणः पूर्णेन्दुरिव राजसे ॥ १
आनन्दमधुसंपूर्णो लक्ष्म्या च परया श्रितः ।
शीतलः स्निग्धमधुरो राजीवमिव राजसे ॥ २
निर्मलो विततः पूर्णो गम्भीरः प्रकटाशयः ।
वेलानिलविलासेन मुक्तोऽब्धिरिव राजसे ॥ ३
स्वच्छ आनन्दसंपूर्णो नष्टाहंकारवारिदः ।

परा प्रज्ञा ॥ ९ ॥ तामेव फलतो वर्णयति—**अक्षुब्धे**ति द्वाभ्याम् ॥ १० ॥ ११ ॥ सा तु मम पूर्वमेव सिद्धेति नानुष्ठेयेत्याशयेनाह—**यत** इत्यादिना ॥ १२ ॥ यथा दूरमाकृष्टो बिसतन्तुः क्रीडतः शिशोर्हस्ताद्विच्छिद्यते तद्वदिति व्यतिरेके दृष्टान्तः ॥ १३ ॥ ननु ब्रह्माकारवृत्तिविच्छेदे व्युत्थानातसमाधिविच्छेदस्तस्य स्यात्तत्राह—**समग्र**मिति । अक्षयः सूर्यः उत्तरार्धस्थं नो इति पदं पूर्वार्धेऽपि नो विरमतीति संबध्यते । तथा प्रज्ञा ब्रह्माकारवृत्तिरपि आजीवितान्तं विदेहकैवल्यपर्यन्तं तत्त्वावलोकनान्नो विरमति । दृढसंस्कारबलादनुवर्तेत एवेत्यर्थः ॥ १४ ॥ स्वरूपाच्छादकस्याज्ञानस्य सकृदुदितया वृत्त्या निःशेषनाशे पुनरावरकाभावाद्वा तस्य न स्वरूपनिरोधलक्षणसमाधिभङ्गप्रसक्तिरित्याशयेनाह—**अजस्र**मिति । न रुध्यते आवरणेन न प्रतिबध्यते ॥ १५ ॥ परमप्रेमास्पदत्वाद्वा सकृल्लब्धस्य तस्य न विस्मरणप्रसक्तिरित्याशयेनाह—**न विस्मरती**ति द्वाभ्याम् ॥ १६ ॥ १७ ॥ भग्नावरण आत्मैव यावज्जीवं स्वाकारवृत्तिपरम्परां जनयन्नेवास्ते इत्याशयेनाह—**गति**मिति । कालस्य कला मूर्तिः सूर्यादिः । चिच्चितिश्चैतन्यस्फूर्तिः । राहोः शिर इतिवदुपचारः । गतयः स्वाकारवृत्तीः । छान्दसो विभक्तिव्यत्ययः ॥ १८ ॥ बोधस्य तज्जीवनकालधर्मत्वाद्वा न विच्छेदप्रसक्तिरित्याशयेनाह—**यथे**ति ॥ १९ ॥ अग्न्यौष्ण्यवत्तत्स्वभावत्वाद्वा न विच्छेदप्रसक्तिरित्याशयेनाह—**न संभवती**ति ॥ २० ॥ ॥ २१ ॥ भेदो विच्छेदः । मत्समाधेरात्मस्वरूपादव्यतिरेकेण हेतुनेत्यर्थः । सदात्मता सत्ता सिद्धेत्यर्थः ॥ २२ ॥ यदि मनोऽस्तीति मन्यसे तर्हि सदा समाहितमेव, यदि तु नास्तीति तदा समाधिरपि मास्तु विक्षेपहेतोरेवाप्रसक्तेरित्याशयेनोपसंहरति—**तस्मा**दिति ॥ २३ ॥ २४ ॥ सम्यक् पृथक्त्वबाधेनाहिता धीर्यैः । तेन हेतुना असमाहितसमाहितभेदभङ्ग्या प्रवृत्तस्तद्वाक्यप्रपञ्चः क नु कस्मिन्नर्थे व्यवतिष्ठेत । अतो मिथ्यैवोदित इत्यर्थः ॥ २५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे समाधिनिश्चयो नाम द्विषष्टितमः सर्गः ॥ ६२ ॥

परिघेण परीक्ष्यात्र स्तुतः स सुरघुर्निजाम् ।
सहजस्थितिमेवात्र वर्णयामास विस्तरात् ॥ १ ॥

नूनं निश्चयेन प्रबुद्धस्तत्त्वविदसि । परीक्षणेन मया प्रबुद्धस्त्वमसीति वा ॥ १ ॥ आनन्दलक्षणेन मधुना मकरन्देन संपूर्णः । राजीवं पद्ममिव राजसे ॥ २ ॥ निर्मलत्वादेव प्रकटः स्पष्टदृश्य

१ आनन्दमधुसंपूर्णलक्ष्म्या इति पाठः.

स्फुटो विस्तीर्णगम्भीरः शरत्खमिव राजसे ॥ ४
सर्वत्र लक्ष्यसे स्वस्थः सर्वत्र परितुष्यसि ।
सर्वत्र वीतरागोऽसि राजन्सर्वत्र राजसे ॥ ५
सारासारपरिच्छेदपारगस्त्वं महाधिया ।
जानासि सर्वमेवेदं यथास्थितमखण्डितम् ॥ ६
भावाभावपरिच्छेदतत्त्वज्ञमुदिताशयम् ।
गमागमदशालौल्यमुक्तं तव वपुः स्थितम् ॥ ७
वस्तुनाऽवस्तुनेवान्तरमृतेनेव सागरः ।
अपुनःप्रक्षयायैव परे तृप्तोऽसि सुन्दर ॥ ८

सुरघुरुवाच ।

न तदस्ति मुने वस्तु यत्रोपादेयतास्ति नः ।
यावत्किंचिदिदं दृश्यं तावदेतन्न किंचन ॥ ९
उपादेयस्य चाभावाद्धेयमप्यस्ति किं किल ।
प्रतियोगि व्यवच्छेद्यं विना हेयं किमुच्यते ॥ १०
तुच्छत्वात्सर्वभावानामतुच्छत्वाच्च कालतः ।
चिरं मम परिक्षीणे तुच्छातुच्छे मनःस्थिती ॥ ११
देशकालवशादेव तुच्छस्यातुच्छतामिह ।
अतुच्छस्य तु तुच्छत्वं वर्ज्ये निन्दास्तुती बुधैः ॥ १२
रागान्निन्दास्तुती लोके रागश्च परिवाञ्छितम् ।
वाञ्छिते च महोदारं वस्तु शोभनबुद्धिना ॥ १३
त्रैलोक्ये च स्त्रियः शैलाः समुद्रवनराजयः ।
भूतानि वस्तुशून्यानि सारो नास्त्यत्र वस्तुतः ॥ १४
मांसास्थिदारुमृद्रत्नमये जगति जर्जरे ।
वाञ्छनीयविहीनेऽस्मिञ्शून्ये किमिव वाञ्छयते ॥ १५
वाञ्छायां विनिवृत्तायां संक्षयो द्वेषरागयोः ।
दिनलक्ष्म्यां व्यपेतायामालोकातपयोरिव ॥ १६

अलमतिविततैर्वचःप्रपञ्चै-
रियमुचितेह सुखाय दृष्टिरेका ।
उपशमितरसं समं मनोऽन्त-
र्यदि मुदितं तदनुत्तमा प्रतिष्ठा ॥ १७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो० उपशमप्रकरणे सुरघुपरिघनिश्चयो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥

## चतुःषष्टितमः सर्गः ६४

श्रीवसिष्ठ उवाच ।

सुरघुः परिघश्चैव विचार्येति जगद्भ्रमम् ।
मिथः प्रपूजितौ तुष्टौ स्वव्यापारपरौ गतौ ॥ १
तदेव राघव श्रुत्वा परमं बोधकारणम् ।
अनेनैव विबोधेन भव लब्धास्पदः स्फुटम् ॥ २
परया प्रज्ञया धीरविचारगततीक्ष्णया ।
गलत्यलमहंकारकालमेघे हृदम्बरे ॥ ३
समस्तलोकानुमते सफले ह्लादकारिणि ।
निर्मले वितते चेतः शरत्काल उपस्थिते ॥ ४
ध्येये शरण्ये सुगमे सकलानन्दसंपदि ।
सुप्रसन्ने चिदाकाशे स्थीयते परमात्मनि ॥ ५
यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी ।
नित्यं चिदनुसंधानो मनःशोकैर्न बाध्यते ॥ ६

आशयोऽन्तःप्रदेशो मनश्च यस्य ॥ ३ ॥ ४ ॥ सर्वत्र इष्टानिष्टविषये ॥५॥ परिच्छेदो विचार्य निर्णयस्तत्पारगः । अखण्डितमपरिच्छिन्नब्रह्मरूपम् ॥ ६ ॥ तत्त्वज्ञेत्यन्तं संबोधनम् । उदिताशयमिति वा छेदः । गमागमौ आरोहावरोहौ तत्प्रयोजिका भोगरागिता-दशा तया तत्प्रयुक्तलौल्येन च मुक्तम् ॥ ७ ॥ न विद्यते वस्तु परमार्थवस्तु यस्मात्तथाविधेन वस्तुना स्वात्मना स्वान्तःस्थेन अमृतेन सागर इव पदे स्वे महिम्नि तृप्तोऽसि ॥ ८ ॥ तदुक्तं सर्वं युक्तिभिः समर्थयन्ननुमोदमानः सुरघुरुवाच—**न तदि**त्यादिना । न किंचन । अनृतमित्यर्थः ॥ ९ ॥ उपात्तस्य त्यागो हि हानं तत्र प्रतियोगि हानप्रतिकूलं हानेन व्यवच्छेद्यं विनाश्यं उपादानं विना हेयमिति किमुच्यते वक्तुं शक्यते । न किंचिदित्यर्थः ॥ १० ॥ ननु तुच्छं हेयमतुच्छमुपादेयं किं न स्यात्तत्राह—**तुच्छत्वाद्**िति । यथाहुः 'बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति । स एव पूर्वं संपूर्णो न राज्यं बहु मन्यते ॥' इति ॥ ११ ॥ इह मन्यन्ते इति शेषः । अतो न किंचित्तुच्छातुच्छबुद्ध्या निन्द्यं स्तुत्यं वेत्याह—**वर्ज्ये** इति ॥ १२ ॥ १३ ॥ वस्तुशब्दो भावप्रधानः । सत्यत्वशून्यानीत्यर्थः ॥ १४ ॥ अध्यात्मं मांसास्थिमये अधिभूतं च दारुमृद्रत्नादिमये । रत्नशब्दः शिलापरः ॥ १५ ॥ १६ ॥ यदि सर्वमेवासारं किं तर्हि सारभूतं सेवितुमुचितं तदाह—**अल**मिति । यदि मन उपशमितरसं सर्वतो नीरागं समं विक्षेपवैषम्यरहितं सदन्तः स्वात्मन्येव मुदितं तत्तर्हि सैवोत्तमा प्रतिष्ठा विश्रान्तिरियमेवैकदृष्टिः सुखाय सदा सेवितुमुचितेत्यर्थः ॥ १७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सुरघुपरिघनिश्चयो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥

**यैरुपायैरुपायज्ञो मनोदोषैर्न बाध्यते ।**
**आत्मा चोद्ध्रियते दुःखात्त उपाया इहोदिताः ॥ १ ॥**

इति वर्णितप्रकारेण विचार्य ॥ १ ॥ तत् वर्णितसंविवादरूपं बोधकारणं श्रुत्वा । एतावदेव श्रुत्वावधारितं बोधाय पर्याप्तमिति सूचनाय प्रथम एवकारः । एतावद्बोध एव सुप्रतिष्ठितः परमपदप्राप्तये पर्याप्त इति द्योतनाय द्वितीयः ॥ २ ॥ धीरैर्विद्वद्भिः सह विचारेण धीरेण निश्चलेन स्वविचारेण च गततीक्ष्णया प्राप्तनिशितभावया हृदम्बरे अहंकारलक्षणे कालमेघे गलति सति ॥ ३ ॥ समस्तेत्यादिविशेषणानि शरत्कालेऽपि योज्यानि ॥ ४ ॥ सर्वानर्थनिवर्तकत्वाच्छरण्ये ॥ ५ ॥ अध्यात्ममय आत्मैकविचारप्रचुरः । अन्तर्मुखो बाह्यासक्तिशून्यः । चिदेवानुसंधानं पुनःपुनरादरादास्वादनं यस्य ॥ ६ ॥

व्यवहारपरोऽप्युच्चै रागद्वेषमयोऽपि सन् ।
नान्तःकलङ्कमायाति पद्मो जलगतो यथा ॥ ७
सम्यग्विज्ञानवाञ्शुद्धो योऽन्तःशान्तमना मुनिः ।
न बाध्यते स मनसा करिणेव मृगाधिपः ॥ ८
भोगैकशरणं दीनं न चित्तं ज्ञस्य विद्यते ।
नन्दने दुर्द्रुम इव ज्ञचित्तं हि महावपुः ॥ ९
विरक्तो जन्ममरणे यथा दुःखी न मानवः ।
परिज्ञाताखिलाविद्यं तथा चित्तं न दुःखितम् ॥ १०
परिज्ञातमनोमोहो जगद्भावोद्भवात्मना ।
स्पृश्यते नैनसा साधो रजसेव नभस्तलम् ॥ ११
अविद्यासंपरिज्ञातमिदमेव महौषधम् ।
अविद्याविततव्याधेस्तिमिरस्येव दीपकम् ॥ १२
अविद्या संपरिज्ञाता यदैव हि तदैव हि ।
सा परिक्षीयते भूयः स्वप्नेनेव हि भोगभूः ॥ १३
व्यवहारपरोऽप्यन्तरसक्तमतिरेकधीः ।
स्पृश्यते नैनसा साधुर्मत्स्येक्षणमिवाम्भसा ॥ १४
प्राप्ते चिद्भासुरालोके प्रक्षीणाऽज्ञानयामिनी ।
शेमुषी परमानन्दमागता ज्ञस्य राजते ॥ १५
अज्ञाननिद्रोपशमे जनो ज्ञानार्कबोधितः ।
तत्प्रबोधमवाप्नोति पुनर्येन न मुह्यति ॥ १६
दिनानि जीव्यते तानि सानन्दास्ते क्रियाक्रमाः ।
आत्मचन्द्रोदिता येषु चिज्ज्योत्स्ना हृदयाम्बरे ॥ १७
नरो मोहसमुत्तीर्णः सततं स्वात्मचिन्तया ।
अन्तःशीतलतामेति स्वामृतेनेव चन्द्रमाः ॥ १८
तानि मित्राणि शास्त्राणि तानि तानि दिनानि च ।
विरागोल्लासवान्येभ्य आत्मचित्तोदयः स्फुटम् ॥ १९
चिरं शोचन्ति ते दीना जन्मजङ्गलवीरुधः ।
आत्मावलोकने हेला येषामविगतैनसाम् ॥ २०
आशापाशशतैर्बद्धं भोगोलपसुलालसम् ।
जराजर्जरिताकारं शोकोच्छ्वासकदर्थितम् ॥ २१
व्यूढदुःखमहाभारं जन्मजङ्गलजीवितम् ।
कुकर्मकर्दमालिप्तं मोहपल्वलशायिनम् ॥ २२
रागदंशावलीदष्टं कृष्टं तृष्णावरत्रया ।
मनोवणिङ्निकेतस्थं बन्धुबन्धननिश्चलम् ॥ २३
पुत्रदारजराजीर्णं मग्नोन्मग्नं कुकर्दमे ।
श्रान्तं विगतविश्रामं भग्नमादीर्घवर्त्मनि ॥ २४
गमागमपरिक्षीणं संसारारण्यचारिणम् ।
अलब्धशीतलच्छायं तीव्रतापोपतापितम् ॥ २५
आकारभासुरं दीनं बाह्यैराक्रान्तमिन्द्रियैः ।
कर्मघण्टारवाक्रान्तं क्रान्तं दुष्कृतताडनैः ॥ २६
आविर्भावतिरोभावचक्रावर्तधुरोद्वहम् ।
अज्ञानविकटाटव्यां लुठितं सन्नगात्रकम् ॥ २७
निजानर्थसदामग्नं सीदमानमकिंचनम् ।
सन्नाङ्गं कर्मभारेण करुणाक्रन्दकारिणम् ॥ २८
राम जीवबलीवर्दमिमं संसारपल्वलात् ।
परमं यत्नमास्थाय चिरमुत्तारयेद्बलात् ॥ २९
तत्त्वावलोकनात्क्षीणे चित्ते नो जायते पुनः ।
जीवः कदाचन तदा भवेत्तीर्णभवार्णवः ॥ ३०
महानुभावसंपर्कात्संसारार्णवलङ्घने ।
युक्तिः संप्राप्यते राम स्फुटा नौरिव नाविकात् ३१

---

रागद्वेषमयो रागद्वेषप्रचुर इव मूढैः कल्प्यमानोऽपि ॥ ७ ॥ ८ ॥ दुर्द्रुमो विषकण्टकवृक्षः । हि यस्माज्ज्ञस्य चित्तं महावपुः । क्षुद्रसुखलवनिःस्पृहमिति यावत् ॥ ९ ॥ यथा विरक्तो मानवो जायामरणे सति कामुक इव न दुःखी तथा परितो विचार्य ज्ञाता अखिला विषयेन्द्रियशरीरादिसर्वदृश्यरूपा अविद्या मिथ्याभ्रान्तिर्येन तथाविधं ज्ञचित्तं न दुःखितं भवतीत्यर्थः ॥ १० ॥ तस्य भाविदुःखहेतुपापसंबन्धोऽपि नास्तीत्याह—**परिज्ञाते**ति । जगति व्यवहारपदे भावः कर्तृत्वाभिमानस्तस्मादुद्भवतीति जगद्भावोद्भवं तदात्मना एनसा पापेन ॥ ११ ॥ अविद्यालक्षणजगदाकारविस्तीर्णव्याधेरविद्यामात्रं जगदिति सम्यक्परिज्ञातं विचारजन्यं ज्ञानमेव महौषधमित्यर्थः ॥१२॥ यथा स्वप्नोऽयमिति परिज्ञातेन स्वप्नेन तद्भोगभूः परिक्षीयते तद्वत् ॥ १३ ॥ मत्स्यानामीक्षणं चक्षुरम्भसा न स्पृश्यते तद्वत् । तत्स्पर्शे पिहिताक्षाणां तेषां जले दर्शनादिव्यवहारो न स्यादिति भावः ॥ १४ ॥ शेमुषी प्रज्ञा ॥ १५ ॥ ज्ञायतेऽनेनेति ज्ञानं शास्त्रं तद्रूपेणार्केण बोधितः । तत्तादृशं प्रबोधम् ॥ १६ ॥ इदानीं विद्यां स्तौति—**दिनानी**त्यादिना । जीव्यते इति भावे लः । दिनानीति कालाध्वनोरत्यन्तसंयोगे द्वितीया नतु कर्मणि । येषु दिनेषु चिज्ज्योत्स्ना हृदयाम्बरे आह्लादयति विराजतेवेति शेषः ॥ १७ ॥ १८ ॥ येभ्यो मित्रादिभ्यो निमित्तेभ्यो विरागोल्लासवान् आत्माकारवृत्तिलक्षणश्चित्ताभ्युदयः स्फुटं सिध्यतीति शेषः ॥ १९ ॥ हेला अवहेलनम् । उपेक्षेति यावत् । अविगतैनसामक्षीणपापानाम् ॥२०॥ इत आरभ्य सर्वेषां द्वितीयान्तपदानां नवमश्लोकस्थे जीवबलीवर्दं उत्तारयेदित्यत्र संबन्धः । उलपास्तृणविशेषाः ॥ २१ ॥ विशेषेण ऊढो दुःखमहाभारो येन ॥ २२ ॥ वरत्रया चर्ममय्या नासारज्ज्वा । मनोलक्षणस्य वणिजो निकेते आज्ञालक्षणे संकेते निवासे च स्थितम् । बन्धुजनलक्षणैर्बन्धनैर्निश्चलं चलितुमशक्तम् ॥ २३ ॥ कुकर्दमे गोमयपङ्के ॥ २४ ॥ ॥ २५ ॥ बहिराकारमात्रेण भासुरमन्तस्तु दीनम् । बाह्यैरिन्द्रियैश्चक्षुरादिभिराक्रान्तमारूढम् । कर्मपदेन काम्यकर्मप्ररोचकार्थवादा लक्ष्यन्ते । तल्लक्षणेन घण्टारवेणाक्रान्तं भ्रमितम् ॥ २६ ॥ चक्रावर्तधुरा शकटभारः । सा हि शकटचक्रैरावर्तते तदुद्वहम् ॥ २७ ॥ करुणं यथा स्यात्तथा आक्रन्दकारिणम् ॥ २८ ॥ चिरं परमं यत्नमास्थाय ज्ञानबलादुत्तारयेदित्यर्थः ॥ २९ ॥ उत्तारितस्य पुनः पङ्कमज्जनशङ्कां वारयति—**तत्त्वे**ति ॥ ३० ॥ उत्तारणोपायज्ञानलाभस्तु सद्गुरोरभिगमनात्सिध्यती-

यस्मिन्देशमरौ तज्ज्ञो नास्ति सज्जनपादपः ।
सफलः शीतलच्छायो न तत्र निवसेद्बुधः ॥ ३२
स्निग्धशीतवचःपत्रे सच्छाये स्मितपुष्पके ।
क्षणाद्विश्रम्यते राम भृशं सुजनचम्पके ॥ ३३
तदभावे महामोहतापसंपत्तिदायिनि ।
किंचिज्जातविवेकेन स्वप्तव्यं नेह धीमता ॥ ३४
आत्मैव ह्यात्मनो बन्धुरात्मनात्मैवमुद्धरेत् ।
नात्मानमवलेपेन जन्मपङ्कार्णवे क्षिपेत् ॥ ३५
किमिदं कथमायातं किंमूलमिति किंक्षयम् ।
देहदुःखमिति प्राज्ञैः प्रेक्षणीयं प्रयत्नतः ॥ ३६
न धनानि न मित्राणि न शास्त्राणि न बान्धवाः ।
नराणामुपकुर्वन्ति मग्नस्वात्मसमुद्धृतौ ॥ ३७
मनोमात्रेण सुहृदा सदैव सहवासिना ।
सह किंचित्परामृश्य भवत्यात्मा समुद्धृतः ॥ ३८
वैराग्याभ्यासयत्नाभ्यां स्वपरामर्शजन्मना ।
तत्त्वालोकनपोतेन तीर्यते भवसागरः ॥ ३९
शोच्यमानं जनैर्नित्यं दह्यमानं दुराशया ।
नात्मानमवमन्येत प्रोद्धरेदेनमादरात् ॥ ४०
अहंकारमहालानं तृष्णारज्जुं मनोमदम् ।
जन्मजम्बालनिर्मग्नं जीवदन्तिनमुद्धरेत् ॥ ४१
अयमेतावतैवात्मा त्रातो भवति राघव ।
यदपास्य विमूढत्वमहंकारः प्रमार्ज्यते ॥ ४२
एतावतैव सन्मार्गे याति प्रकटतामलम् ।
यदपास्य मनोजालमहंभावो विलूयते ॥ ४३
एतावतैव देवेशः परमात्मावगम्यते ।
काष्ठलोष्टसमत्वेन देहो यदवलोक्यते ॥ ४४
अहंकाराम्बुदे क्षीणे दृश्यते चिद्दिवाकरः ।
ततस्तत्परिणामेन तत्पदं समवाप्यते ॥ ४५
यथा ध्वान्तसमुच्छेदे स्वयमालोकवेदनम् ।
तथाहंकारविच्छेदे स्वयमात्मावलोकनम् ॥ ४६
अहंकारे परिक्षीणे यावस्था सुखमोदजा ।
सावस्था भरिताकारा सा सेव्या संप्रयत्नतः ॥ ४७
परिपूर्णार्णवप्रख्या न वा गोचरमेति नः ।
नोपमानमुपादत्ते नानुधावति रञ्जनम् ॥ ४८
केवलं चित्प्रकाशांशकलिका स्थिरतां गता ।
तुर्या चेत्प्राप्यते दृष्टिस्तत्तया सोपमीयते ॥ ४९
अदूरगतसादृश्यात्सुषुप्तस्योपलक्ष्यते ।
सावस्था भरिताकारा गगनश्रीरिवातता ॥ ५०
मनोहंकारविलये सर्वभावान्तरस्थिता ।
समुदेति परानन्दा या तनुः पारमेश्वरी ॥ ५१
सा स्वयं योगसंसिद्धा सुषुप्तादूरभाविनी ।
न गम्या वचसां राम हृद्येवेहानुभूयते ॥ ५२
अनुभूतिं विना तत्त्वं खण्डादेर्नानुभूयते ।
अनुभूतिं विना रूपं नात्मनश्चानुभूयते ॥ ५३
अखिलमिदमनन्तमात्मतत्त्वं
दृढपरिणामिनि चेतसि स्थितेऽन्तः ।
बहिरुपशमिते चराचरात्मा
स्वयमनुभूयत एव देवदेवः ॥ ५४

त्याशयेनाह—**महानुभावे**ति ॥ ३१ ॥ देशो मरुरिव देशमरुस्तस्मिन् ॥ ३२ ॥ सुजनलक्षणे चम्पकवृक्षे । विशेषणान्युभयसाधारण्येन योज्यानि ॥ ३३ ॥ तदभावे स्वात्मलाभविश्रान्त्यभावे इह संसारे न स्वप्तव्यम् ॥ ३४ ॥ एवमनेनोपायेन उद्धरेदात्मानमित्यर्थः । अवलेपेन देहाभिमानगर्वेण ॥ ३५ ॥ कस्मात्क्षयो यस्य किंक्षयम् । देहाधीनं दुःखं प्रेक्षणीयं स्वबुद्ध्या शास्त्रसज्जनसहायेन च विचारणीयम् । द्वाविति शब्दौ विचार्यविचारप्रकारबाहुल्यद्योतनार्थौ ॥ ३६ ॥ शास्त्राण्यनात्मशास्त्राणि ॥ ३७ ॥ किं तर्ह्युपकरोति तदाह—**मनोमात्रेणे**ति । सुहृदा परिशुद्धेनेति यावत् ॥ ३८ ॥ ३९ ॥ नावमन्येत नोपेक्षेत ॥ ४० ॥ आलानं गजबन्धनस्तम्भः । जम्बाले पङ्के निर्मग्नम् ॥ ४१ ॥ विमूढत्वं स्वात्माज्ञानम् ॥ ४२ ॥ सतः परमात्मनो मार्गणं मार्गो बोधपर्यन्तो विचारस्तस्मिन् प्रकटतां स्फुटावलोकनताम् । मनोरचितं बाह्याध्यात्मिकासक्तिजालम् ॥ ४३ ॥ तत्रापि दुस्त्यजदेहाभिमानत्याग एव मुख्य इत्याशयेनाह—**एतावतैवे**ति ॥४४॥ तस्य दर्शनस्य परिणामेन भूमिकापरिपाकेन चिद्दिवाकरभावापत्त्या वा ॥ ४५ ॥ अवलोकनं सिद्ध्यतीति शेषः ॥ ४६ ॥ सुखमोदो निरतिशयानन्दविश्रान्तिस्तज्जा तादृूप्येणाविर्भूता निर्विकल्पावस्था ॥ ४७ ॥ तामेव वर्णयति—**परिपूर्णे**त्यादिना । रञ्जनं दृश्योपरागम् ॥ ४८ ॥ तयैव सोपमीयते नान्यत्तदुपमानमस्तीत्यर्थः ॥ ४९ ॥ केन तर्हि निदर्शनेन तत्संभावना स्यात्तदाह—**अदूरे**ति । निर्विक्षेपत्वांशे सन्निहितात्सादृश्यादित्यर्थः । उप समीपे लक्ष्यते । अज्ञानावरणं चेत्तदा न स्यात्तर्हि तुर्यावस्थैव स्यादित्यनया रीत्येत्यर्थः ॥ ५० ॥ घटविलये तदाकाशस्य महाकाशत्वमिव मनोहंकारोपाधिविलये त्वंपदलक्ष्यस्य तत्पदलक्ष्यात्मस्वभावता सिद्ध्यतीत्याह—**मन** इति ॥ ५१ ॥ सुषुप्तस्य अदूरभाविनी संनिहिता हृद्येवानुभूयते स्वानुभवातिरिक्तं तत्परिचायकं नास्तीत्यर्थः ॥ ५२ ॥ यथा खण्डाद्यसाधारणगवादिस्वरूपपरिचये नानुभवादन्यन्मानं तथा आत्मन्यपीत्याह—**अनुभूति**मिति । आत्मनो रूपं परमार्थस्वरूपम् । चोऽप्यर्थः ॥ ५३ ॥ इदमखिलमात्मतत्त्वमेव तर्हि तत्कथमनुभूयते तत्राह—**दृढे**ति । चेतसि बहिर्विषयेषूपशमिते अन्तः प्रत्यगात्मनि क्षीरोदकवदैकरस्येन दृढं परिणामिनि स्थिते निश्चले सति चराचराणामात्मा प्रत्यग्भूतो देवानां चक्षुरादीनां

तदनु विषयवासनाविनाश-
स्तदनु शुभः परमः स्फुटप्रकाशः ।
तदनु च समतावशात्स्वरूपे
परिणमनं महतामचिन्त्यरूपम् ॥ ५५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषूपशमप्रकरणे उपदेशो नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ६५

श्रीवसिष्ठ उवाच ।
मनसैव मनश्छित्त्वा यद्यात्मा नावलोक्यते ।
ममेत्यहमिति त्यक्त्वा तत्तामरसलोचन ॥ १
नास्त्येवेति जगद्दुःखं यथा चित्रगतो रविः ।
आयात्यापदनन्तत्वं महार्णववदातता ॥ २
पुनःपुनरुपायाति जलकल्लोलकारणम् ।
मेघनीलतमःश्यामा संसृतिप्रावृडाकुला ॥ ३
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
संवादं सुहृदोः सह्यसानौ भासविलासयोः ॥ ४
अस्त्युत्सेधजिताकाशः पीठेन जितभूतलः ।
तलेन जितपातालस्त्रिलोकविजयो गिरिः ॥ ५
असंख्यकुसुमापूरोऽसंख्यनिर्मलनिर्झरः ।
गुह्यकारक्षितनिधिः सह्यनामाऽविषह्यभाः ॥ ६
मुक्तापटलसंपूर्णैर्भानुभासुरभित्तिभिः ।
भासुरः काञ्चनतटैः कटैरिव सुरद्विपः ॥ ७
क्वचित्पुष्पभरासारो धातुसाराततः क्वचित् ।
क्वचित्फुल्लसरःसारो रत्नशालिशिलः क्वचित् ॥ ८
इतो रटन्निर्झरवानितः क्वणितकीचकः ।
इतो रटद्गुहावात इतः षट्पदघुंघुमः ॥ ९
सानौ गीतोऽप्सरोवृन्दैर्वने मृगखगारवः ।
अधित्यकायां मत्ताभ्रो गगनेषु खगारवः ॥ १०
विद्याधराश्रितगुहो भृङ्गगीताम्बुजाकरः ।
किरातगीतपर्यन्तः खगगीतवनद्रुमः ॥ ११
स्कन्धेषु देवैर्वलितः पादेषु वलितो नरैः ।
पाताले वलितो नागैर्जगद्गृहमिवापरम् ॥ १२
कन्दरेषु श्रितः सिद्धैर्निधानैरन्तराश्रितः ।
चन्दनेषु श्रितो नागैः सिंहैः शृङ्गशिखासु च ॥ १३
पुष्पाभ्रसंवीतवपुः पुष्परेणवभ्रपांसुलः ।
पुष्पवात्याभ्रद्धक्रान्तः पुष्पपादपपाण्डुरः ॥ १४
धातुधूल्यभ्रकपिलो रत्नोपलतलस्थितैः ।
मन्दारगैरिव पुरस्त्रीगणैरलमाश्रितः ॥ १५
अभ्रनीलांशुकच्छन्ना मूकरत्नविभूषणाः ।
शिलाः कनकसुन्दर्यो यत्र शृङ्गाभिसारिकाः ॥ १६
तत्रोत्तरतटे सानौ विनम्रफलपादपे ।
रत्नपुष्करिणीजालवहन्निर्झरवारिणि ॥ १७
चूतद्रुमलतोन्मुक्तपुष्पस्तबकदन्तुरे ।
विफुल्लाङ्कोलपुन्नागनीलनीरजदिक्तटे ॥ १८

देवः साक्षितया प्रकाशयिता स्वयं साक्षादनुभूयत एव नात्र संशयः कार्य इत्यर्थः ॥ ५४ ॥ एवं चतुर्थभूमिकायामात्मानुभवे तदनु पञ्चमभूमिकायामात्यन्तिकविषयवासनाविनाशस्तदनु षष्ठभूमिकायां विनैव यत्नं शुभः परमपुरुषार्थरूपः स्वात्मनः स्फुटः प्रकाशः सदैव पूर्णभावानुभवः सिद्ध्यति । तदनु सप्तमभूमिकायां समाध्यसमाध्योः समतावशादात्यन्तिकवैषम्यनिवृत्तेः समुद्रान्तर्विलीनसैन्धवघनवत्सुखैकरसतया परिणमनं सिद्ध्यति तत्तु महतां ब्रह्मादीनामपि इयत्तयाऽचिन्त्यरूपम् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेरित्यर्थः ॥ ५५ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उपदेशो नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥

सह्याख्यशैलस्तत्रात्रेराश्रमस्तत्र वर्ण्यते ।
विलासभासयोर्जन्मकर्मशोकोदयक्रमः ॥ १ ॥

आत्मदर्शनोपायोपेक्षणे शोकमोहादिदुःखपरम्परा दुर्वारेत्यर्थे भासविलासाख्यायिकामवतारयिष्यन्नाह—मनसैवेति । यदि नावलोक्यते तर्हि जगद्दुःखं यथा चित्रगतो रविर्नास्त्येति तथा नास्त्येवेतीति परेणान्वयः ॥ १ ॥ आपदनन्तत्वमपरिच्छेद्यत्वमायाति ॥ २ ॥ मेघैर्नीलतमोभिश्च श्यामा संसृतिलक्षणा प्रावृद् वर्षर्तुः ॥ ३ ॥ सुहृदोर्मित्रयोः शुद्धचित्तयोश्च ॥ ४ ॥ पीठेन उपत्यकाभागेन तलेन भूम्यन्तः प्रविष्टमूलभागेन । जितशब्द आक्रान्तपरः ॥ ५ ॥ अविषह्या दृक्प्रसरप्रतिघातिनी भा रत्नादिदीप्तिर्यस्मिन् ॥ ६ ॥ भानुभिः सूर्यरत्नादिकिरणैर्भासुरभित्तिभिर्दीप्तवप्रैः । 'पाटलभित्तिभिः' इति पाठेऽप्येवम् । काञ्चनैस्तटैर्नितम्बैः कटैर्गण्डैः । 'जात्याख्यायां' इति बहुवचनम् ॥ ७ ॥ धातुसारैर्हरितालमनःशिलागैरिकादिभिराततः ॥ ८ ॥ इत इत इति प्रदेशभेदोक्तिः ॥ ९ ॥ सानौ प्रस्थे । मत्तानीव गर्जन्त्यभ्राणि यस्मिन् ॥ १० ॥ ११ ॥ जगत्पदेन लोकत्रयवासिनो लक्ष्यन्ते । तेषां गृहमिव त्रैलोक्यलक्षणं ब्रह्माण्डगृहमिवेति वा स्थित इति शेषः ॥ १२ ॥ निधानैर्निखातधनैः ॥ १३ ॥ अधःपतितपुष्पाणि सद्यःपतितपुष्पाणामन्तरिक्षस्था रेणवः पतमानपुष्पाणि वृक्षस्थपुष्पाणि चाभ्रत्वेन क्रमाद्वर्ण्यन्ते ॥ १४ ॥ मन्दाराः कल्पवृक्षभेदस्तद्वैस्तदारुढैरिव ॥ १५ ॥ शिला एवाभिसारिकात्वेनोत्प्रेक्षते—अभ्रेति । क्वणन्मञ्जीरादिखचितरत्नानामभिसारविरोधित्वान्मूकरत्नविभूषिताः । शृङ्गैरभिसारिका इवाश्लिष्टत्वात् शृङ्गाभिसारिकाः ॥ १६ ॥ तत्र उत्तरतटे अत्रेराश्रमोऽस्तीति चतुर्थेन संबन्धः ॥ १७ ॥ चूतद्रुमाणां लताभिः

लतावितानच्छन्नार्के रत्नांशुभरभास्वरे ।
स्रवज्जम्बूरसस्यूते स्वर्लोकाह्लादकारिणि ॥ १९
ब्रह्मलोकसमः स्वर्गरम्यः शिवपुरोपमः ।
अत्रेरस्त्याश्रमः श्रीमान्सिद्धश्रमहरो महान् ॥ २०
महत्यत्राश्रमे तस्मिंस्तापसौ द्वौ बभूवतुः ।
कोविदौ तु नभोमार्ग इव शुक्रबृहस्पती ॥ २१
तयोरथैकास्पदयोस्तत्राभूतां सुतावुभौ ।
फुल्लाङ्कुरौ शुद्धतनू सरस्यम्बुजयोरिव ॥ २२
विलासभासनामानौ वृद्धिमाययतुः क्रमात् ।
तौ पित्रोः पल्लवे दीर्घे लतापादपयोरिव ॥ २३
आस्तामन्योन्यसुस्निग्धौ सुहृदौ वल्लभौ मिथः ।
तिलतैलवदाश्लिष्टौ तौ पुष्पामोदवत्स्थितौ ॥ २४
नाऽयुक्तौ पुत्रयुक्तौ तु सुरक्ताविव दंपती ।
एकं द्वित्वमिवापन्नं सममासीत्तयोर्मनः ॥ २५
तौ तथान्योन्यमुदितौ मनोहरतराकृती ।
तस्थतुः स्वाश्रमे मौने सरोज इव षट्पदौ ॥ २६
प्रापतुर्यौवनं बाल्यमुत्सृज्य नववल्लभौ ।
कालेनाल्पतरेणैव चन्द्रसूर्याविवोदितौ ॥ २७
जग्मतुर्देहमुत्सृज्य ततस्तौ पितरौ तयोः ।
स्वर्गं जरातांबुड्डीय नीडादिव विहंगमौ ॥ २८
पञ्चत्वं गतयोः पित्रोर्दीनवक्त्रौ बभूवतुः ।
तत्राङ्गौ विगतोत्साहौ पद्माविव जलोद्धृतौ ॥ २९
तत्रौर्ध्वदैहिकं कृत्वा चक्राते परिदेवनम् ।
लोकस्थितिरलङ्घ्या हि महतामपि मानद ॥ ३०
कृत्वौर्ध्वदैहिकमथो व्यथयाभिभूतौ
शोकोत्थया करुणयार्तगिरा विलप्य ।
चित्रार्पिताविव निरस्तसमस्तचेष्टौ
तौ संस्थितौ सुखमशून्यहृदौ विवृत्तौ ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षोपायेषूपशमप्रकरणे भासविलासवृत्तान्ते सह्यगिरिवर्णनं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ६६

श्रीवसिष्ठ उवाच ।
अतिशोकपराभूतौ तस्थतुर्दृढतापसौ ।
तापसंशुष्कसर्वाङ्गौ तावरण्यद्रुमाविव ॥ १
विरक्तौ विपिने कालं क्षेपयामासतुर्द्विजौ ।
वियूथाविव सारङ्गावनास्थामागतौ पराम् ॥ २
जग्मुर्दिनानि मासाश्च वर्षाण्यथ तयोस्तदा ।
क्रमाद्द्वावपि संयातौ जरां श्वभ्रद्रुमाविव ॥ ३
अप्राप्तविमलज्ञानौ चिराज्जर्जरतापसौ ।
तावेकदा संघटिताविदमन्योन्यमूचतुः ॥ ४
विलास उवाच ।
जीविताग्र्यद्रुमफल हृदावासामृताम्बुधे ।
जगत्यस्मिन्महाबन्धो भास स्वागतमस्तु ते ॥ ५
एतावन्त्यो दिनावल्यो मद्वियोगवता त्वया ।
वद क्व क्षपिताः साधो कच्चित्ते सफलं तपः ॥ ६
कच्चित्ते विज्वरा बुद्धिः कच्चिज्ज्ञातस्त्वमात्मवान् ।
कच्चित्फलितविद्यस्त्वं कच्चित्कुशलवानसि ॥ ७
श्रीवसिष्ठ उवाच ।
इत्युक्तवन्तं संसारसमुद्विग्नमलं तथा ।
प्राहाप्राप्तमहाज्ञानं सुहृत्सुहृदमादरात् ॥ ८
भास उवाच ।
साधो स्वागततायैव दिष्ट्या दृष्टोऽसि मानद ।
कुशलं तु कुतोऽस्माकं संसारे तिष्ठतामिह ॥ ९
यावन्नाधिगतं ज्ञेयं यावत्क्षीणा न चित्तभूः ।
यावत्तीर्णो न संसारस्तावन्मे कुशलं कुतः ॥ १०

शाखाभिरुन्मुखैरूर्ध्वभागे प्रसारितैः पुष्पस्तबकैर्दन्तुरे उन्नतदन्तवत्स्थिते । नीलनीरजानि नीलोत्पलानि ॥ १८ ॥ स्वर्लोकः स्वर्गस्थानमिवाह्लादकारिणि ॥ १९ ॥ २० ॥ महति विस्तीर्णे । कोविदौ विद्वांसौ । शुक्रबृहस्पती इति तयोर्नामनिर्देशोऽपि ॥ २१ ॥ अम्बुजयोः पद्मगुल्मयोः फुल्लाङ्कुरौ पुष्पप्रकृतिभूते कलिके इव ॥ २२ ॥ लतापादपयोः पल्लवे इव वृद्धिमाययतुः ॥ २३ ॥ ॥ २४ ॥ नायुक्तौ न वियुक्तौ । पुत्रार्थं युक्तौ परस्परं च सुरक्तौ दंपती इव ॥ २५ ॥ मौने मुद्रिते मुनियुक्ते च ॥ २६ ॥ ॥ २७ ॥ २८ ॥ पञ्चत्वं मरणं गतयोः सतोः ॥ २९ ॥ और्ध्वदैहिकमित्यनुशतिकादित्वादुभयपदवृद्धिः । परिदेवनं विलापम् ॥ ३० ॥ निरस्तसमस्तचेष्टौ चेत्किं मृतौ नेत्याह—अशून्यहृदाविति । तथाच मूर्छितौ विवृत्तौ संपन्नावित्यर्थः ॥ ३१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सह्यगिरिवर्णनं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

अप्रबुद्धमतेरत्र दुःखाब्धौ परिवर्तनम् ।
भासस्य वचनेनात्र विस्तरेण प्रकाश्यते ॥ १ ॥

अरण्यद्रुमपक्षे तापेनातपसंबन्धिना ग्रीष्मातपेन दावाग्निना च संशुष्कसर्वाङ्गौ ॥ १ ॥ अनास्थां गृहक्षेत्रधनादावनासक्तिम् ॥ २ ॥ ३ ॥ संघटितौ कंचित्कालं दैवाद्वियुज्य पुनर्मिलितौ ॥ ४ ॥ जीविताग्र्यं श्रेष्ठं जीवनं तल्लक्षणद्रुमफलभूत, हृदि आवासो यस्य तथाविधामृताम्बुधे इति मैत्र्यतिशयोद्दीपने विशेषणे ॥ ५ ॥ ६ ॥ आत्मवान् प्रबोधलब्धात्मा अतएव फलितविद्यः ॥ ७ ॥ अलं स्पष्टं प्राह ॥ ८ ॥ ९ ॥ चित्ते भवतीति

आशा यावदशेषेण न लूनाश्चित्तसंभवाः ।
वीरुधो दात्रकेणेव तावन्नः कुशलं कुतः ॥ ११
यावन्नाधिगतं ज्ञानं यावन्न समतोदिता ।
यावन्नाभ्युदितो बोधस्तावन्नः कुशलं कुतः ॥ १२
आत्मलाभं विना साधो विना ज्ञानमहौषधम् ।
उदेति पुनरेवेयं दुःसंसृतिविषूचिका ॥ १३
शैशवाङ्कुरितोज्जृम्भान्नवयौवनपल्लवः ।
जराकुसुमितोऽभ्येति पुनः संसारदुर्द्रुमः ॥ १४
कायजीर्णतरोरस्माद्बान्धवाक्रन्दषट्पदा ।
जराकुसुमितोदेति पुनर्मरणमञ्जरी ॥ १५
भुक्तकर्मर्तुविरसा पुराणदिवसोम्भिता ।
नीयते नीरसप्राया पुनः संवत्सरावली ॥ १६
महादरीषु देहाद्रेस्तृष्णाकण्टकितास्वपि ।
फलव्यालासु च पुनः क्रियासु परिलुभ्यते ॥ १७
दुःखैः सुखलवाकारैर्दीर्घादीर्घैः शुभाशुभैः ।
अपर्याप्तागमापायाः प्रयान्त्यायान्ति रात्रयः ॥ १८
अयथार्थक्रियारम्भैः कदाशावेशपल्लवैः ।
क्षीयते कर्मभिस्तुच्छैरायुराहतकर्मभिः ॥ १९
उन्मूलिताश्रयालानो मनोमत्तमतङ्गजः ।
तृष्णाकरेणुकोन्निद्रो दूरं विपरिधावति ॥ २०
जिह्वाचपलतालग्नः कायद्रुममहालये ।
पतच्चिन्तामणौ वृद्धो गर्द्धगृध्रो विवर्धते ॥ २१
नीरसा निःसुखा लघ्वी पतत्पेलवगात्रिका ।
जीर्णपर्णसवर्णेयं क्षीयते दिवसावली ॥ २२
अवमानरजोध्वस्तमस्तंगतवपुःश्रियम् ।
मुखं धूसरतामेति हिमैः पद्ममिवाहतम् ॥ २३
शुष्यतः कायसरसः प्रगलद्यौवनाम्भसः ।
राजहंसः क्षणादायुरनिवार्ति पलायते ॥ २४
कालानिलबलोद्धूताज्जर्जराज्जीवितद्रुमात् ।
भोगपुष्पाणि दिवसपर्णानि निपतन्त्यधः ॥ २५
भोगभोगिश्रितेष्वन्तर्दुःखदर्दुरधारिषु ।
मनोमोहान्धकूपेषु पूरेषु विनिमज्जति ॥ २६
नानानुरञ्जनास्पृष्टा तृष्णा तरलपेलवा ।
चैत्यमग्रपताकेव दूरं समधिरोहति ॥ २७
अस्य संसारतन्त्रस्य बृहत्कालबिलास्पदः ।
जीविताशामयं तन्तुमन्तकाखुर्निकृन्तति ॥ २८
यौवनोत्कटकल्लोला वहल्लोलासिफेनिला ।
परावर्तमहावर्ता याति जीवितदुर्नदी ॥ २९

चित्तभूः कामसंकल्पादिः ॥ १० ॥ वीरुधो लतापाशाः । दात्रकेण शङ्कुलादिना ॥११॥ ज्ञानं शोधिततत्त्वं पदार्थज्ञानम्, बोधोऽखण्डवाक्यार्थ इति भेदः ॥१२॥ १३ ॥ शैशवलक्षणमङ्कुरितस्योज्जृम्भणमुज्जृम्भस्तमतीत्येति ल्यब्लोपे हेतौ वा पञ्चमी ॥ १४ ॥ बान्धवानामाक्रन्दा एव षट्पदा लक्षणया तद्गुञ्जारवा यस्याम् । जरया कुसुमिता संजातकुसुमा ॥ १५ ॥ मरणोत्तरं दैवान्नरकस्थावरतिर्यग्जन्मप्राप्तौ भुक्तानि दुष्कृतकर्माणि येषु तथाविधैः शीतोष्णवातवर्षादंशमशकादिसंकुलैर्वसन्तादिऋतुभिर्विरसा । दैवात्स्वर्गादिप्राप्तावपि तत्र पुण्यसंचयानधिकारात्पूर्वसंचितपुण्यव्ययाद्धर्षामर्षासूयाकामादिदोषबहुलत्वाच्च शमदमाद्यसंभवेन ज्ञानस्यापि दौर्लभ्यात्केवलभोगैकलम्पटतया पुराणैः प्राग्बहुशोऽनुभूतत्वादभिनवविषयाभावात्पुरातनप्रायैरेव दिवसैः उम्भिता पूरिता अतएव नीरसप्राया संवत्सरावली पुनर्वृथैव नीयते इत्यर्थः ॥ १६ ॥ दैवात्पुनर्मानुष्ये तत्रापि दुर्लभतमे ब्राह्मणादिशरीरे प्राप्तेऽपि सांप्रतिके देह इव भोगलम्पटतयैव भ्रमणं दुर्वारमित्याशयेनाह—**महादरी**ष्विति । विषयभोगलक्षणानि फलान्येव व्याला यासु । तत्तृष्णासहस्रैः संजातकण्टकासु देहलक्षणस्याद्रेर्महाभीषणदरीप्रायच्छिद्रस्थेन्द्रियासक्तिषु ऐहिकामुष्मिकभोगोपायलौकिकवैदिकक्रियासु च परिलुभ्यते न तत्राप्यात्मविवेकसंभावनास्तीत्यर्थः ॥ १७ ॥ चिराल्पकालभोग्यत्वाभ्यां दीर्घादीर्घैर्दुःखैः अपर्याप्ता असमाप्ता आगमापाया यासु । रात्रिग्रहणं कालमात्रोपलक्षणम् । प्रयान्ति सर्वजन्मस्विति शेषः ॥ १८ ॥ उक्तमेव तत्कारणमुखेनाह—**अयथा**र्थेति । अयथार्था मिथ्याभूताः क्रियाभिरारभ्यन्त इति क्रियारम्भाः फलानि येषां तथाविधैः कर्मभिः आहतानि मृषाभूतानि कर्माणि येषां तथाविधैर्जन्तुभिरायुः क्षीयते विनाश्यते ॥ १९ ॥ जन्मनि जन्मनि विवेकविरोधि प्राबल्यं तत्सहायदौर्बल्यं च प्रपञ्चयति—**उन्मूलिते**त्यादिना । आश्रयः परमात्मा तत्र बन्धनहेतुर्विवेक आलानं तदुन्मूलितं येन । तृष्णापदेन तद्विषयो लक्ष्यते । तल्लक्षणायां करेणुकायां सकामत्वादुन्निद्रो निर्निद्रः ॥ २० ॥ व्यर्थं पतन् परमपुरुषार्थोपयोगी आयुर्लक्षणो विवेकलक्षणश्च चिन्तामणिर्यस्मात्तथाविधे कायलक्षणद्रुमस्थे महति हृदयलक्षणे आलये नीडे गर्द्धः स्वाद्वन्नाद्यभिलाषः स एव गृध्रः ॥ २१ ॥ श्रमदौर्बल्यामयादिना पतन्ति पेलवानि कार्याक्षमाणि भवन्ति गात्राणि यस्याम् । दिवसावलीपदेन तत्परिच्छिन्ना कायलता गृह्यते ॥ २२ ॥ वार्धक्ये पुत्रभृत्यावमानैः रजोभिश्च ध्वस्तम् । अस्तं गता वपुःश्रीर्यस्य तथाविधम् । क्लीबे अमोऽलुक् छान्दसः ॥ २३ ॥ राजहंस इवेति शेषः ॥ २४ ॥ भोगलक्षणानि पुष्पाणि दिवसरूपाणि पर्णानि च अधो निपतन्ति । अपयान्तीति यावत् ॥२५॥ भोगेषु निवृत्तेष्वपि भोगाशा तदशक्तिदुःखं तत्प्रयुक्तचिन्ताशोकमोहाविश्च वर्धत एवेत्याशयेनाह—**भोगे**त्यादिना ॥ २६ ॥ चैत्यं देवायायतनम् । अग्रे बद्धा पताकेव दूरमुच्छ्रितं यथा स्यात्तथा ॥ २७ ॥ संसारलक्षणस्य तन्त्रस्य प्रवाण्याः जीविताशाप्रचुरमायुस्तन्तुम् ॥ २८ ॥ वहल्लोलासिसदृशक्रोधद्वेषभयादिना फेनिला । परावर्ता लोभतृष्णादिना भ्रमणान्येव महान्त आवर्ता यस्याः ॥ २९ ॥

१ पुष्पसितेति पाठः.

कलाकुलजगत्कार्यकल्लोलाकुलसंकुला ।
क्रियासरिदपर्यन्ता वहत्याकुलकोटरा ॥ ३०
अनन्ता बन्धुजनतानद्यो गम्भीरकोटरे ।
अजस्रं निपतन्त्येता वितते कालसागरे ॥ ३१
देहरत्नशलाकेयं नाशपङ्कार्णवोदरे ।
न ज्ञायते क मग्नेति तात जन्मनि जन्मनि ॥ ३२
चिन्ताचक्रे चिरं बद्धं कुक्रियाचारचञ्चुरम् ।
चेतो भ्रमति सामुद्रे गर्तावर्ते तृणं यथा ॥ ३३
उह्यमानमनन्तेषु चेतः कार्यमहोर्मिषु ।
क्षणमेति न विश्रान्तिं चिन्ताताण्डवितारायम् ॥ ३४
इदं कृतं करोमीदं करिष्यामीदमित्यलम् ।
कलनाजालवलिता मूर्च्छिता मतिपक्षिणी ॥ ३५
अयं सुहृदयं शत्रुरिति द्वन्द्वमहाद्विपः ।
विनिकृन्तति मर्माणि यथा नीलोत्पलानि मे ॥ ३६
चिन्तानद्या महावर्ते वीचिकानिचये चिरम् ।
क्षणादुच्छूनतामेति मनोमीनः क्षणाद्गतिः ॥ ३७
अनात्मीयानि दुःखानि बहून्येवंविधान्ययम् ।
आत्मबुद्ध्या विचिन्वानो जनो गच्छति दीनताम् ॥
बहुविधसुखदुःखमध्यपाती
विततजरामरणप्रवातभग्नः ।
जगदुदरगिरौ लुठञ्जनोऽयं
गतरसपर्णवदेति जर्जरत्वम् ॥ ३९

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० उपशमप्रकरणे भासविलासवृत्तान्ते अनित्यताप्रतिपादनं नाम षट्षष्टितमः सर्गः ६६

## सप्तषष्टितमः सर्गः ६७

श्रीवसिष्ठ उवाच ।

एवं तौ कुशलप्रश्नं कृतवन्तौ परस्परम् ।
कालेनासाद्य विमलं ज्ञानं मोक्षं ततो गतौ ॥ १
ततो वच्मि महाबाहो यथा ज्ञानेतरा गतिः ।
नास्ति संसारतरणे पाशबन्धस्य चेतसः ॥ २
इदं भव्यमतेर्दुःखमनन्तमपि पेलवम् ।
कुखगस्याऽतरोऽम्भोधिः सर्पारेर्गोष्पदायते ॥ ३
देहातीता महात्मानश्छिन्मात्रस्वात्मनि स्थिताः ।
दूराद्देहं समीक्षन्ते प्रेक्षको जनतामिव ॥ ४
देहे दुःखातिसंक्षुब्धे का नः क्षतिरुपस्थिता ।
रथे विधुरिते भग्ने सारथेः केव खण्डना ॥ ५
मनसि क्षुब्धतां याते चित्त्वस्याङ्ग किमागतम् ।
तरङ्गजलसंताने वैपरीत्यं किमम्बुधेः ॥ ६
केऽभवन्पयसां हंसाः पयसामुपलाश्च के ।
काः शिलाः किल दारूणां के भोगाः परमात्मनः ॥ ७
संबन्धः क इव श्रीमन् शैलापरसमुद्रयोः ।
अन्तरे गिरिसंबाधे कश्च चित्तत्त्वबन्धयोः ॥ ८
अप्युत्सङ्गोह्यमानानि पद्मानि सरिदम्भसाम् ।
कानि नाम भवन्तीह शरीराणि तथात्मनः ॥ ९
संघट्टात्काष्ठपयसोर्यथोत्तुङ्गाः कणादयः ।
देहात्मनोः समायोगात्तथैताश्चित्तवृत्तयः ॥ १०
संबन्धाद्दारुपयसां प्रतिबिम्बानि दारुणः ।

शिल्पतर्कनीतिशास्त्रादिभिः कलाकुलैः कौशलवृन्दैर्जगद्व्यवहारकार्यलक्षणैश्च कल्लोलैराकुला संकुला च क्रिया प्रवृत्तिस्तल्लक्षणा सरित् प्रतिजन्म एवमेव वहतीत्यर्थः ॥ ३० ॥ ३१ ॥ देह एव परमपुरुषार्थसाधनत्वाद्रत्नशलाका ॥ ३२ ॥ गर्तावर्ते सच्छिद्रावर्ते ॥ ३३ ॥ ३४ ॥ कलनाजाले वलिता बद्धा सती मूर्च्छिता मोहितः ॥ ३५ ॥ नीलोत्पलानि यथा विनिकृन्तति तथा मे मम मर्माण्यपि ॥ ३६ ॥ उच्छूनतां विवृद्धिम् । क्षणान् अतन्ति गतयो यस्य स क्षणाद्गतिश्चपल इत्यर्थः ॥ ३७ ॥ अनात्मीयान्यात्मासंस्पर्शीनि अनात्मदेहादिनिमित्तानि च । देहादावात्मबुद्ध्या ॥ ३८ ॥ सर्वजन्मसु दुःखस्थानानामानन्त्यं दर्शयन्नुपसंहरति—बहुविधेति । जरामरणलक्षणेन प्रवातेन चण्डवायुना भग्नः पुनःपुनरामर्दितो जगल्लक्षणे उदयगिरौ लुठन्नयं जनो गतरसपर्णवत् शुष्कपर्णवत् ॥ ३९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे अनित्यताप्रतिपादनं नाम षट्षष्टितमः सर्गः ॥ ६६ ॥

देहात्मनोरसंबन्धं समर्थयितुमीर्यते ।
अन्तःसक्तिकृतो बन्धस्तत्यागाच्च निवर्त्यते ॥ १ ॥

एवमुक्तप्रकारसंसारासारताविचारबहुलं कुशलप्रश्नम् ॥ १ ॥ पाशा इव बन्धा बन्धनहेतवो यस्मिंस्तथाविधस्य चेतसः संसरणं संसारस्तस्य तरणे गतिरुपायः ॥ २ ॥ इदं वर्णितप्रकारं दुःखं भव्यमतेर्विवेकिनः पेलवं कोमलम् । सुखोच्छेद्यमिति यावत् । अतरो दुस्तरः । सर्पारेर्गरुडस्य ॥ ३ ॥ देहद्वयाभिमानत्याग एव तदुच्छेदोपाय इत्याशयेनाह—देहातीता इत्यादिना ॥ ४ ॥ 'दुःस्थितिः' इति पाठे दुःस्थितिः क्षतिरित्यर्थः ॥ ५ ॥ चित्त्वस्य चित्स्वभावस्यात्मनः । वैपरीत्यं पूर्णतास्वरूपप्रच्युतिः ॥ ६ ॥ अहंतात्यागे कस्यापि क्वापि ममताप्रसक्तिरेव नास्तीत्याशयेनाह—केऽभवन्नित्यादिना । नह्यचेतनानामसङ्गचितो वा ममताप्रसक्तिरस्तीति भावः ॥ ७ ॥ अन्तरे मध्ये । गिरिभिः संबाधे संकुलत्वेऽपि । चित्तत्त्वं परमात्मा बन्धः संसारस्तयोः कः संबन्धः । नह्याकाशः पाशैर्बध्यत इति भावः ॥ ८ ॥ उत्सङ्गे अङ्के इव उह्यमानानि धार्यमाणान्यपि पद्मानि ॥ ९ ॥ संघट्टादभिघातात् । समायोगादन्योन्यतादात्म्याध्यासात् सुखदुःखादिचित्तवृत्तयः ॥ १० ॥ देहसंबन्धस्याध्यासिकत्वे दृष्टान्तमाह—संबन्धादिति । संबन्धात्संनिधिमात्रान्निमित्तात् ॥ ११ ॥

१ आन्तरोऽम्भोधिः इति पाठश्चिन्त्यः.

यथा पयसि लक्ष्यन्ते शरीराणि तथात्मनि ॥ ११
यथा दर्पणवीच्यादौ प्रतिबिम्बानि वस्तुतः ।
नासत्यानि च सत्यानि शरीराणि तथात्मनः ॥ १२
दारुवार्युपलास्फोटे दुःखिता न यथा क्वचित् ।
संयुक्तेषु वियुक्तेषु न तथा पञ्चसु क्षतिः ॥ १३
दारुसंश्लेषितात्तोयात्कम्पशब्दादयो यथा ।
प्रजायन्ते तथैवास्माद्देहाच्चित्परिबोधितात् ॥ १४
न शुद्धजडयोरेताः संविदश्चिच्छरीरयोः ।
एता ह्यज्ञानमात्रस्य तस्मिन्नष्टे चिदेव नः ॥ १५
यथा न कस्यचिद्वारिदारुश्लेषेऽनुभूतयः ।
तथा न कस्यचिद्देहदेहिसङ्गेऽनुभूतयः ॥ १६
अज्ञस्यायं यथा दृष्टः संसारः सत्यतां गतः ।
न ज्ञस्यायं यथाभूतः संसारः सत्यतां गतः ॥ १७
अन्तःसङ्गविहीनास्तु यथा स्नेहा दृषज्जले ।
तथासक्तमनोवृत्तौ बाह्यभोगानुभूतयः ॥ १८
अन्तःसङ्गेन रहितो यद्वत्सलिलकाष्ठयोः ।
संबन्धस्तद्वदेवान्तरसङ्गो देहदेहिनोः ॥ १९
अन्तःसङ्गेन रहितः संबन्धो जलकाष्ठयोः ।
स देहदेहिनोश्चैवं प्रतिबिम्बाम्भसोस्तथा ॥ २०
स्थिता सर्वत्र संवित्तिः शुद्धा संवेद्यवर्जिता ।
द्वित्वोपलाञ्छिता त्वन्या दुःसंवित्तिर्न विद्यते ॥ २१
अदुःखमेति दुःखित्वमन्तःसंवेदना स्फुटम् ।
स्फारो भवति वेतालो वेतालत्वेन भावितः ॥ २२
असंबन्धोऽपि संबन्धो भवत्यन्तर्विनिश्चयात् ।
स्वप्नाङ्गनासुरतवत्स्थाणुवेतालसङ्गवत् ॥ २३
असत्प्रायो हि संबन्धो यथा सलिलकाष्ठयोः ।
तथैव मिथ्यासंबन्धः शरीरपरमात्मनोः ॥ २४

अन्तःसङ्गं विना नाम्बु काष्ठपातैः प्रगृह्यते ।
आत्माऽङ्गसङ्गरहितो देहदुःखैर्न दह्यते ॥ २५
देहभावनयैवात्मा देहदुःखवशे स्थितः ।
तत्त्यागेन ततो मुक्तो भवतीति विदुर्बुधाः ॥ २६
अन्तःसङ्गविहीनत्वाद्दुःखवन्त्यङ्ग नो यथा ।
पत्राम्बुमलदारूणि श्लिष्टान्यपि परस्परम् ॥ २७
अन्तःसङ्गेन रहिता यान्ति निर्दुःखतां पराम् ।
श्लिष्टान्यपि तथैवात्मदेहेन्द्रियमनांस्यलम् ॥ २८
अन्तःसङ्गो हि संसारे सर्वेषां राम देहिनाम् ।
जरामरणमोहानां तरूणां बीजकारणम् ॥ २९
अन्तःसंसङ्गवाञ्जन्तुर्मग्नः संसारसागरे ।
अन्तःसंसक्तिमुक्तस्तु तीर्णः संसारसागरात् ॥ ३०
अन्तःसंसङ्गवच्चित्तं शतशाखमिवोच्यते ।
अन्तःसंसङ्गरहितं विलीनं चित्तमुच्यते ॥ ३१
भग्नस्फटिकवद्विद्धि मनः सक्तमपावनम् ।
अभग्नस्फटिकाभासमसक्तं विद्धि मे मनः ॥ ३२
असक्तं निर्मलं चित्तं मुक्तं संसार्यपि स्फुटम् ।
सक्तं तु दीर्घतपसा युक्तमप्यतिबन्धवत् ॥ ३३
अन्तःसक्तं मनो बद्धं मुक्तं सक्तिविवर्जितम् ।
अन्तःसंसक्तिरेवैकं कारणं बन्धमोक्षयोः ॥ ३४
अन्तःसंसक्तिमुक्तस्य कुर्वतोऽपि न कर्तृता ।
गुणदोषवती तोये दारुवाहननौर्यथा ॥ ३५
अन्तःसंसक्तितो जन्तोरकर्तुरपि कर्तृता ।
सुखदुःखवति स्वप्ने संभ्रमोन्मुखता यथा ॥ ३६
चित्ते कर्तरि कर्तृत्वमदेहस्यापि विद्यते ।
स्वप्नादाविव विक्षुब्धसुखदुःखदृशोपमम् ॥ ३७

॥ १२ ॥ पञ्चसु देहाद्याकारपरिणतेषु भूतेषु कशाचन्दनादिसंयुक्तेषु स्त्रीपुत्रादिवियुक्तेषु च क्षतिर्दुःखादिप्रसक्तिः ॥ १३ ॥ चिता संनिधिमात्रेणाधिष्ठाय परितो बोधितात् ॥ १४ ॥ भासमानाः सुखदुःखादिसंविदः कस्य तर्हीति चेन्न कस्यापीत्याह—नेति ॥ १५ ॥ अनुभूतयः सुखदुःखानुभवाः । देहदेहिनोर्देहतदभिमानिनोः सङ्गे ॥ १६ ॥ तर्हि ज्ञाज्ञयोरविशेषः किं न स्यात्तत्राह—अज्ञस्येति ॥ १७ ॥ कीदृश्यस्तर्हि ज्ञस्य प्रारब्धभोगानुभूतयस्तत्राह—अन्तरिति । अन्तःसङ्गोऽभिमानोऽन्तरनुप्रवेशश्च । स्नेहाः संबन्धाः । दृषदां जलानां च समाहारे ॥ १८ ॥ असङ्गः परमार्थसङ्गशून्यः ॥ १९ ॥ जलकाष्ठयोर्यद्वदिति शेषः । स संबन्धः । चकारोऽप्यर्थः । पूर्वं सलिलकाष्ठोपन्यासः संसर्गाभावे दृष्टान्तार्थं इह तादात्म्याभावे इत्यपौनरुक्त्यम् ॥ २० ॥ ननु सुखदुःखादिसंवित्तिनिषेधे संवित्त्यन्तराप्रसिद्धेः शून्यता स्यादित्याशङ्क्याह—स्थितेति । न विद्यते तद्विषयानिरूपणादित्यर्थः ॥ २१ ॥ असतोऽप्यज्ञानाद्भ्रान्त्या अस्तीति भानं प्रसिद्धमित्याह—अदुःखमिति ॥२२॥ संबन्धआध्यासिकयोगः । आद्यः संसर्गाध्यासे द्वितीयस्तादात्म्याध्यासे दृष्टान्तः ॥ २३ ॥ २४ ॥ अन्तःसङ्गं विना अहंताध्यासाभावात् । न प्रगृह्यते न पीड्यते यथेत्यर्थः । अङ्गसङ्गरहितो देहाध्यासशून्यः ॥ २५ ॥ २६ ॥ दार्वन्तान्यर्थात्पल्वलपतितानि ॥ २७ ॥ रहिता रहितानि । शसश्छान्दसो डादेशः 'ता ता पिण्डानां प्रजुहोमी'तिवत् ॥ २८ ॥ २९ ॥ ३० ॥ शतशाखमनन्तशाखम् । कामवृत्तीनामानन्त्यात् ॥ ३१ ॥ यथा भग्नमन्तर्विदीर्णं स्फटिकलिङ्गादि अपावनं पूजाद्ययोग्यं तद्वत् ॥३२॥ ॥ ३३ ॥ ३४ ॥ दारूणि काष्ठभारा वाह्यन्ते उत्तार्यन्ते यया तथाविधा नौर्यथा स्वयं दारुभूतापि दारुगतैश्छेदभेददाहादिगुणदोषैर्जलगतैश्चलनपरिवर्तननैर्मल्यपङ्किलत्वादिगुणदोषैश्च न तद्वती तथेत्यर्थः॥ ३५॥ संभ्रमोन्मुखता व्याघ्रादिभयपलायनादिव्याकुलता ॥ ३६ ॥ अदेहस्य देहचेष्टाशून्यस्यापि स्वपुत्रभृत्ययुद्धादि पश्यतो जाग्रतोऽपि स्वप्नादाविव कर्तृत्वं विद्यते । यतो विक्षुब्धसुखदुःखदर्शनेन मुख्यकर्त्रुपममेव तदपीत्यर्थः ॥३७॥

१ संसारः इत्यपि पाठः. २ कर्तृत्वं देहस्यापि हि इति पाठश्चिन्त्यः.

अकर्तरि मनस्यन्तरकर्तृत्वं स्फुटं भवेत् ।
शून्यचित्तो हि पुरुषः कुर्वन्नपि न चेतति ॥ ३८
चेतसा कृतमाप्नोषि चेतसा न कृतं तु न ।
न क्वचित्कारणं देहो न च चित्तेन कर्तृता ॥ ३९
असंसक्तमकर्तैव कुर्वदेव मनो विदुः ।
न कर्मफलभोक्तृत्वमसक्तं प्रतिपद्यते ॥ ४०
ब्रह्महत्याश्वमेधाभ्यामसंसक्तो न लिप्यते ।
दूरस्थकान्तासंलीनमनाः कार्यैरिवाग्रगैः ॥ ४१
अन्तःसंसक्तिनिर्मुक्तो जीवो मधुरवृत्तिमान् ।
बहिःकुर्वन्नकुर्वन्वा कर्ता भोक्ता न हि क्वचित् ॥ ४२
अन्तःसंसक्तिमुक्तं यन्मनः स्यात्तदकर्तृकम् ।
तद्विमुक्तं प्रशान्तं तत्तद्युक्तं तदलेपकम् ॥ ४३
तस्मात्सर्वपदार्थानां श्लिष्टानां निश्चितं बहिः ।
सर्वदुःखकरीं क्रूरामन्तःसक्तिं विवर्जयेत् ॥ ४४
विरहितमलमन्तःसङ्गदोषेण चेतः
शममुपगतमाद्यं व्योमवन्निर्मलाभम् ।
सकलमलविमुक्तेनात्मनैकत्वमेति
स्थिरमणिनिभमम्भोवारिणी वारिनीले ॥ ४५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे अन्तःसंसङ्गविचारो नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥

## अष्टषष्टितमः सर्गः ६८

श्रीराम उवाच ।

कीदृशो भगवन्सङ्गः कथं बन्धाय वा नृणाम् ।
कश्च मोक्षाय कथितः कथं वैष चिकित्स्यते ॥ १

श्रीवसिष्ठ उवाच ।

देहदेहिविभागैकपरित्यागेन भावनात् ।
देहमात्रे तु विश्वासः सङ्गो बन्धार्ह उच्यते ॥ २
अनन्तस्यात्मतत्त्वस्य सपर्यन्तत्वनिश्चये ।
यत्सुखार्थित्वमन्तः स सङ्गो बन्धार्ह उच्यते ॥ ३
सर्वमात्मेदमखिलं किं वाञ्छामि त्यजामि किम् ।
इत्यसङ्गस्थितिं विद्धि जीवन्मुक्ततनुस्थितिम् ॥ ४
नाहमस्मि न चान्योऽस्ति मा भवन्तु भवन्तु वा ।
सुखान्यसक्त इत्यन्तः कथ्यते मुक्तिभाङ्नरः ॥ ५
नाभिनन्दति नैष्कर्म्यं न कर्मस्वनुषज्जते ।
सुसमो यः फलत्यागी सोऽसंसक्त इति स्मृतः ॥ ६
आत्मतत्त्वैकनिष्ठस्य हर्षामर्षवशं मनः ।
यस्य नायात्यसक्तोऽसौ जीवन्मुक्तः स कथ्यते ॥ ७
सर्वकर्मफलादीनां मनसैव न कर्मणा ।
निपुणं यः परित्यागी सोऽसंसक्त इति स्मृतः ॥ ८
असंसङ्गेन सकलाश्चेष्टा नाना विजृम्भिताः ।
चिकित्सिता भवन्तीह श्रेयः संपादयन्ति च ॥ ९

न चेतति नाभिमन्यते । 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इति भगवद्वचनात् ॥ ३८ ॥ **न चे**ति । हेतौ चकारः । नहि चित्ते कर्तृताशक्तिर्नास्ति येन देहः कर्ता कल्प्येतेत्यर्थः ॥ ३९ ॥ अप्यर्थे द्वितीय एवकारः ॥ ४० ॥ अग्रगैः पुरोगतैः शीतोष्णानुभवादिकार्यैः । तच्चोर्वश्यासक्तस्य पुरूरवसः प्रसिद्धमिन्द्राहल्याख्याने च प्राक्प्रपञ्चितमिति भावः ॥ ४१ ॥ मधुरवृत्तिर्निर्विक्षेपसौख्यं तद्वान् ॥ ४२ ॥ संसक्तित्यागमात्रेण सर्वे जीवन्मुक्तगुणा मनसि सिद्ध्यन्तीत्याशयेनाह—**अन्त**रिति ॥ ४३ ॥ उपसंहरति—**तस्मा**दिति । सर्वान्तरस्यात्मनो बहिर्बहिःश्लिष्टानां पञ्चकोशलक्षणानां भोग्यवर्गलक्षणानां च बन्धभूतानां सर्वपदार्थानां निरासे इदमेवैकं मुख्योपायतया निश्चितं यत्सर्वदुःखकरीमन्तःसक्तिं विवर्जयेत् । विवर्जनमित्यर्थः ॥४४॥ अन्तःसङ्गः संसक्तिस्तद्दोषेणालमत्यन्तं विरहितमतएवाद्यसंसारदशातः प्राक्तनं शमं प्रपञ्चोपशमरूपं प्रत्यक्तत्त्वमुपगतं चेत्परात्मना एकत्वमैकरस्यमेति । यथा स्थिरमणिः स्फटिकस्तन्निभमम्भः अरा निशितधारा येषां सन्ति ते अरिणः खड्गादय इव नीले यमुनादिवारिणि मिलितमेकत्वमेति तद्वदित्यर्थः ॥४५॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे अन्तःसंसङ्गविचारो नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥

लक्ष्मसंसक्त्यसंसक्त्योश्चिकित्सोपायसंयुतैः ।
बन्धाबन्धाविभागश्च फलं चात्रोपवर्ण्यते ॥ १ ॥

कथं केन प्रकारेण किंप्रकारश्च बन्धाय कश्च कीदृशश्च मोक्षाय कथं केनोपायेन चिकित्स्यते ॥ १ ॥ देहस्य क्षेत्रस्य देहिनः क्षेत्रज्ञस्य च यो जाड्यचित्स्वभावतालक्षणो विभागो विरुद्धस्वभावता तस्य एकपरित्यागेनात्यन्तापर्यालोचनेनान्योन्यतादात्म्यधर्मविनिमयभावनाद्देहमात्रे आत्मताविश्वासो यः स एव बन्धार्हो बन्धहेतुः सङ्ग इत्यर्थः ॥ २ ॥ लक्षणान्तराण्याह—**अनन्तस्ये**त्यादिना । सपर्यन्तत्वं त्रिविधपरिच्छेदसहितत्वं तन्निश्चये सति स्वापरिच्छिन्नसुखस्वभावविस्मरणाद्विषयेभ्यः सुखार्थित्वमित्यर्थः ॥३॥ तद्विरोधिनीमसङ्गस्थितिं लक्षयति—**सर्व**मिति ॥४॥ अहं अहंकारपरिच्छिन्नो नास्मि । मदन्यश्च नास्ति । अतो मिथ्याभूते देहादौ विषयसुखानि मा भवन्तु भवन्तु वा । अहं तु देहाद्यसङ्गस्वभाव इत्येवं दृढनिश्चयादसक्तः ॥ ५ ॥ नैष्कर्म्यं सर्वकर्मत्यागम् । फलमनुलक्ष्य सजते अभिनिविशते । सुसमः सिद्ध्यसिद्ध्योरिति शेषः ॥ ६ ॥ ७ ॥ लोकसंग्रहस्यावश्यकत्वद्योतनाय न कर्मणेति ॥८॥ त्रीन्प्रश्नान्समाधाय चतुर्थप्रश्नं समाधत्ते—**असंसङ्गे**नेति । चेष्टा दुश्चेष्टाः नानाविधाः फलरागैर्विजृम्भिताः । श्रवणादिचेष्टाश्च निर्विघ्नतया

संसक्तिवशतः सर्वे वितता दुःखराशयः ।
प्रयान्ति शतशाखत्वं श्वभ्रकण्टकवृक्षवत् ॥ १०
रज्जुकृष्टघनघ्राणो यद्गत्या पथि गर्दभः ।
भारं वहति भीतात्मा तत्संसक्तिविजृम्भितम् ॥ ११
शीतवातातपक्लेशमेकदेशनिषण्णया ।
तरुर्वहति यत्तन्वा तत्संसक्तिविजृम्भितम् ॥ १२
धराविवरनिर्मग्नो यत्कीटः पीडिताङ्गकः ।
क्षिणोति विकलः कालं तत्संसक्तिविजृम्भितम् ॥ १३
क्षुत्क्षामकुक्षिः क्षपयत्यायुर्व्याघातभीरुधीः ।
पक्षी वृक्षशिखाशायी तत्संसक्तिविजृम्भितम् ॥ १४
दूर्वाङ्कुरतृणाहारः किरातशरपीडया ।
जहाति यन्मृगो देहं तत्संसक्तिविजृम्भितम् ॥ १५
कृमिकीटत्वमायान्ति जायमानाः पुनःपुनः ।
यदिमा जनता जीर्णास्तत्संसक्तिविजृम्भितम् ॥ १६
उत्पत्योत्पत्य लीयन्ते तरङ्गिणि तरङ्गवत् ।
भूतानि यदनन्तानि तत्संसक्तिविजृम्भितम् ॥ १७
वीरुत्तृणदशां याता म्रियन्ते यत्पुनःपुनः ।
नरा विगतसंचारास्तत्संसक्तिविजृम्भितम् ॥ १८
रसातलरसायोगात्तृणगुल्मलतादयः ।
जनयन्ति यदाकारं तत्संसक्तिविजृम्भितम् ॥ १९
स्वानर्थान्तरसंकाशपदार्थशतसंकुला ।
यत्संसारनदी मत्ता तत्संसक्तिविजृम्भितम् ॥ २०
संसक्तिर्द्विविधा प्रोक्ता वन्द्या वन्ध्या च राघव ।
वन्ध्या सर्वत्र मूढानां वन्द्या तत्त्वविदां निजा ॥ २१
आत्मतत्त्वाववोधेन हीना देहादिवस्तुजा ।
भूयः संसारसक्तिर्या दृढा वन्ध्येति कथ्यते ॥ २२
आत्मतत्त्वाववोधेन सत्यभूतविवेकजा ।
वन्द्या हि कथ्यते सक्तिर्भूयः संसारवर्जिता ॥ २३
शङ्खचक्रगदाहस्तो देवो विविधयेहया ।
वन्द्यसंसक्तिवशतः परिपाति जगत्त्रयम् ॥ २४
अनारतनिरालम्बं व्योम वर्त्मनि पान्थताम् ।
वन्द्यसंसक्तिवशतः करोति रविरन्वहम् ॥ २५
महाकल्पसमाधानचिरकल्पितकल्पनम् ।
वन्द्यसंसक्तिवशतो ब्राह्मं स्फुरति वै वपुः ॥ २६
लीलया ललनालानलीनं भूतिविभूषितम् ।
वन्द्यसंसक्तिवशतः शरीरं शाङ्करं स्थितम् ॥ २७
विज्ञानगतयः सिद्धा लोकपालास्तथेतरे ।
वन्द्यसंसक्तिवशतस्तिष्ठन्ति जगतोऽङ्गणे ॥ २८
धत्ते शारीरयन्त्रौघमन्या भुवनसंततिः ।
वन्द्यसंसक्तिवशतो जरामृतिविवर्जितम् ॥ २९
मनः पतति भोगेषु गृध्रो मांसलवेष्विव ।
वन्द्यसंसक्तिवशतो व्यर्थया रम्यशङ्कया ॥ ३०
संसक्तिवशतो वाति वायुर्भुवनकोटरे ।
पञ्चभूतानि तिष्ठन्ति वहतीयं जगत्स्थितिः ॥ ३१
दिवि देवा भुवि नराः पाताले भोगिनोऽसुराः ।
ब्रह्माण्डोदुम्बरफले स्फुरन्मशकवत्स्थिताः ॥ ३२
जायन्ते च म्रियन्ते च निपतन्त्युत्पतन्ति च ।
भूतानि यदनन्तानि तरङ्गिणि तरङ्गवत् ॥ ३३
उत्पत्त्योत्पत्त्य लीयन्ते तत्संसक्तिविजृम्भितम् ।
भूतानि विरसं भूयो निर्झराम्बुकणा इव ॥ ३४
परस्परनिगीर्णाङ्गा जनता जाड्यजर्जरा ।
संभ्रान्ता प्रभ्रमत्यङ्ग शीर्णपर्णमिवाम्बरे ॥ ३५
नक्षत्रचक्रं गगने द्रुमे मशकसंततिः ।
स्फुरत्यावर्तवृत्त्यैव पातालेऽङ्ग जलौघवत् ॥ ३६
पातोत्पातदशाजीर्णं कालबालककन्दुकम् ।
अद्यापि न जहातीन्दुर्जलमामलिनं वपुः ॥ ३७

---

श्रेयः संपादयन्ति ॥ ९ ॥ इदानीं संसक्तिफलानि प्रपञ्चयति—**संसक्तिवशत** इत्यादिना ॥ १० ॥ गर्दभानामपि नासारज्जुर्देशभेदे प्रसिद्धा । ग्राम्यपशुजन्ममात्रोपलक्षणमेतत् । एवमग्रेऽपि । संसक्तेर्विजृम्भितं फलविस्तारः ॥ ११ ॥ एकदेशे निषण्णया तन्वा स्थावरदेहेन वहति । अनुभवतीति यावत् ॥ १२ ॥ १३ ॥ व्याघातः शरपाषाणमृद्गुटिकाद्यभिघातस्तस्मात्प्रतिक्षणं भीरुर्भयवती धीर्यस्य ॥ १४ ॥ १५ ॥ जनताः पुण्यपापाधिकारिजनसमूहाः ॥ १६ ॥ तरङ्गिणि तरङ्गवति जलाशये तरङ्गवत् ॥ १७ ॥ वीरुत् लता ॥ १८ ॥ रसाया भूमेस्तले निपतितस्य रसस्य जलस्य आयोगादुपयोगान्मूलैः पानात् । जनयन्तीति यत्तदिति संबन्धः ॥ १९ ॥ स्वस्याः अनर्थान्तराण्यनर्थादनर्थान्तराण्यनर्थपरंपरास्तत्संकाशैर्विच्छेदभ्रान्तिनिपातादिविक्षेपसहस्रहेतुभिर्बाह्याभ्यन्तरपदार्थशतैः संकुला । मत्ता प्रवृद्धा ॥ २० ॥ वन्द्या प्रशस्या । वन्ध्या पुरुषार्थफलशून्या ॥ २१ ॥ या दृढा संसारे सक्तिः सा वन्ध्या ॥ २२ ॥ २३ ॥ वन्द्यसंसक्तेर्जीवन्मुक्तव्यवहारादिसर्वोत्कर्षनिर्वाहकत्वं प्रपञ्चयति—**शङ्ख** इत्यादिना ॥ २४ ॥ अनारतं संततम् । रविः पान्थतां करोति । संचरतीति यावत् ॥ २५ ॥ महाकल्पः प्राकृतप्रलयस्तत्र समाधानं विदेहकैवल्यविश्रान्तिस्तदर्थं चिरं द्विपरार्धकालं कल्पिताः सर्गादिकल्पना येन । ब्राह्मं हैरण्यगर्भं वपुः स्फुरति व्यवहरति ॥ २६ ॥ ललना गौरी तल्लक्षणे आलाने बन्धनस्तम्भे लीलयैव लीनं सक्तम् ॥ २७ ॥ विज्ञाने ब्रह्मतत्त्वबोधे गतिर्दृढप्रतिष्ठा येषाम् ॥ २८ ॥ लोकत्रयादन्या । भुवनसंततिपदेन महर्जनस्तपःसत्यादिलोकस्थास्तत्त्वविदो लक्षणयोच्यन्ते ॥ २९ ॥ वन्ध्यसंसक्तेर्वन्ध्यात्वमुपपादयति—**मन** इति ॥ ३० ॥ मुक्तामुक्तसाधारणं व्यवहारमात्रं संसक्तिनिर्वाह्यमिति प्रपञ्चयन् दर्शयति—**संसक्तिवशत** इत्यादिना ॥ ३१ ॥ ३२ ॥ ३३ ॥ विरसं यथा स्यात्तथा उत्पत्त्योत्पत्त्य ॥ ३४ ॥ मात्स्यन्यायेन परस्परनिगीर्णाङ्गा ॥ ३५ ॥ मशकसंततिरिवेति शेषः । अङ्गेत्यामन्त्रणे ॥ ३६ ॥ पातोत्पातौ उदयास्तमयौ वृद्धिक्षयौ

नानापार्युगावर्तदुःखालोकनकर्कशम् ।
न लुनाति मनःखण्डं दुःखिगीर्वाणमण्डलम् ॥ ३८
वासनामात्रवशतः परे व्योमनि केनचित् ।
इदमारचितं चित्रं विचित्रं पश्य राघव ॥ ३९
मनःसङ्गैकरङ्गेण शून्ये व्योम्नि जगन्मयम् ।
यदिदं रचितं चित्रं तत्सत्यं न कदाचन ॥ ४०
संसक्तमनसामस्मिन्संसारे व्यवहारिणाम् ।
अत्ति तृष्णा शरीराणि तृणान्यग्निशिखा यथा ॥ ४१
परिसक्तमतेर्देहान्सिकताः पत्युरम्भसाम् ।
कः शक्तः परिसंख्यातुं त्रसरेणुगणं यथा ॥ ४२
मुक्तालतायां गङ्गाया मेरोरापादमस्तकम् ।
तरङ्गमुक्ता गण्यन्ते न देहाः सक्तचेतसाम् ॥ ४३
संसक्तमनसामेता रम्यान्तःपुरपङ्क्तयः ।
रचिता रौरवा वीचिकालसूत्रादिनामिकाः ॥ ४४
सक्तचित्तं जनं दुःखशुष्कमिन्धनसंचयम् ।
ज्वलतां नरकाग्नीनां विद्धि तेन ज्वलन्ति ते ॥ ४५
दुःखजालमिदं नाम यत्किंचिज्जगतीगतम् ।
संसक्तमनसामर्थे तत्सर्वं परिकल्पितम् ॥ ४६
संसक्तचित्तमायान्ति सर्वा दुःखपरम्पराः ।
जलकल्लोलवलिता महानद्य इवाम्बुधिम् ॥ ४७
मनःसंसर्गरूपिण्या भारभूतशरीरया ।
क्षयोदयदशार्थिन्या सर्वं ततमविद्यया ॥ ४८
असंसङ्गेन भोगानां सर्वा राम विभूतयः ।
परं विस्तारमायान्ति प्रावृषीव महापगाः ॥ ४९
अन्तःसंसङ्गमङ्गानामङ्गारं विद्धि राघव ।
अनन्तःसङ्गमङ्गानां विद्धि राम रसायनम् ॥ ५०
संसङ्गेनान्तरस्थेन दह्यते प्रकृतिः स्वयम् ।
स्वकलोत्थैर्नैरकाङ्क्षी पावकेन यथौषधिः ॥ ५१
सर्वत्रासक्तमाशान्तमनन्तमिव संस्थितम् ।
असत्कल्पं सदाभासं सुखायैव मनो भवेत् ॥ ५२
विद्यादृशि प्रोदयमागतेन
क्षयं त्वविद्याविषये गतेन ।
सर्वत्र संसक्तिविवर्जितेन
स्वचेतसा तिष्ठति यः स मुक्तः ॥ ५३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे सङ्गविचारयोगोपदेशो नामाष्टषष्टितमः सर्गः ॥ ६८ ॥

## एकोनसप्ततितमः सर्गः ६९

श्रीवसिष्ठ उवाच ।
सर्वदा सर्वसंस्थेन सर्वेण सह तिष्ठता ।
सर्वकर्मरतेनापि मनः कार्यं विजानता ॥ १

पतनोत्पतने च सदैव तद्दशया जीर्णं शिथिलं अतएव कालरूपबालकस्य कन्दुकभूतं जलं जलमयं लडयोरभेदाज्जडं च आमलिनं कलङ्कम्लानं चेति बहुदोषत्वाद्धातुं योग्यमपि वपुः संसक्तिवशादेवाद्यापि न जहाति ॥ ३७ ॥ नानाविधानामपाराणां युगावर्तदुःखानामालोकनेन पुनःपुनरनुभवेन कर्कशं कठोरं मनोलक्षणं खण्डकं छेदनचिकित्स्यं व्रणविशेषं तद्दुःखेन सदा दुःख्यपि गीर्वाणमण्डलमिन्द्रादिदेवसमूहः संसक्तिवशादेव न लुनाति च्छेदनेन न चिकित्सते ॥ ३८ ॥ संसक्तिश्च विवेकमात्रजन्यबोधेनोच्छेत्तुं शक्येति दर्शयितुं तद्विषयस्य जगतो वासनामात्रकल्पितत्वमाह—**वासने**ति ॥ ३९ ॥ मनसः सङ्गः संसक्तिस्तल्लक्षणेनैकेनैव रङ्गेण रञ्जकद्रव्येण ॥ ४० ॥ तृष्णा शरीराण्यत्ति भक्षयति ॥ ४१ ॥ संसक्तिदोषात्प्राप्तानां तृष्णया भक्षितानां देहानामानन्त्यमाह—**परिसक्ते**ति । परितो विषयेषु सक्तमतेर्जीवस्य । अम्भसां पत्युः समुद्रस्य सिकताः परिसंख्यातुं गणयितुम् ॥ ४२ ॥ मेरोरापादमस्तकं लम्बिन्या अतएव मुक्तालतात्वेनोत्प्रेक्ष्याया गङ्गायास्तरङ्गलक्षणा मुक्ता गण्यन्ते कदाचिद्गणयितुं शक्यन्ते सक्तचेतसां देहास्तु नेत्यर्थः ॥ ४३ ॥ अग्निशस्त्रादिप्रदीप्तत्वाद्रम्याः यातनाख्यनायिकाःसंभोगस्थानत्वादन्तःपुरपङ्क्तयो रचिताः [illegible]र्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ संसक्तचित्तं प्रति आयान्ति ॥ ४७ ॥ संसर्गः संसक्तिस्तद्विषयः अतएव स्वयं शिरसि गृहीतः शिलादिभार इव अवश्यवोढव्यत्वेन भारभूतं शरीरं यया । क्षयो मरणं उदयो जन्म तदुभयदुर्दशां जीवस्य प्रार्थयन्त्येव स्थितया अविद्यया सर्वं दुःखजालं ततमित्यर्थः ॥ ४८ ॥ संसक्तित्यागस्तु सर्वसुखावह इत्याह—**असंसङ्गे**नेत्यादिना ॥ ४९ ॥ अनन्तःसङ्गमन्तःसङ्गपरित्यागम् ॥ ५० ॥ एरा एरकास्तृणविशेषास्तानवलम्बनाय काङ्क्षते इति एरकाङ्क्षी । कर्मण्यण् । ओषधिर्लता यथा स्वं कलयन्ति मिश्रयन्ति यानि तृणानि तदुत्थेन पावकेन दह्यते तथा प्रकृतिकार्यदेहादिसंसङ्गात्प्रकृतिभूतः स्वयं जीवोऽपि दह्यत इत्यर्थः ॥ ५१ ॥ असक्तं मनः सर्वत्र सुखायैव । अनन्तमाकाशमिव संस्थितम् ॥ ५२ ॥ असत्कल्पतां सदाभासतां च विषयविभागेन विवृण्वन्नुपसंहरति—**विद्यादृशी**ति । प्रकृष्टमुदयं सूर्यादिवदाविर्भावम् ॥ ५३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सङ्गविचारयोगोपदेशो नामाष्टषष्टितमः सर्गः ॥ ६८ ॥

मनः सर्वार्थसंसक्तित्यागाच्चिन्मात्रसुस्थिरम् ।
चिन्मात्रशेषं येन स्यात्स क्रमोऽत्र निगद्यते ॥ १ ॥

विजानता विवेकिना सर्वदा तत्तत्कालोचितसर्वव्यवहारसंस्थेन तत्तद्व्यवहारोचितेष्टमित्रभृत्यपुत्रदारादिना सर्वेण सह तिष्ठता अनिषिद्धलौकिकशास्त्रीयसर्वकर्मरतेनापि मनो वक्ष्यमाण-

न सक्तमिह चेष्टासु न चिन्तासु न वस्तुषु ।
नाकाशे नाप्यधो नाग्रे न दिक्षु न लतासु च ॥ २
न बहिर्विपुलाभोगे न चैवेन्द्रियवृत्तिषु ।
नाभ्यन्तरे न च प्राणे न मूर्धनि न तालुनि ॥ ३
न भ्रूमध्ये न नासान्ते न मुखे न च तारके ।
नान्धकारे न चाभासे न चास्मिन्हृदयाम्बरे ॥ ४
न जाग्रति न च स्वप्ने न सुषुप्ते न निर्मले ।
नासिते न च वा पीतरक्तादौ शबले न च ॥ ५
न चले न स्थिरे नादौ न मध्ये नेतरत्र च ।
न दूरे नान्तिके नाग्रे न पदार्थे न चात्मनि ॥ ६
न शब्दस्पर्शरूपेषु न मोहानन्दवृत्तिषु ।
न गमागमचेष्टासु न कालकलनासु च ॥ ७
केवलं चिति विश्रम्य किंचिच्चेत्यावलम्बिनि ।
सर्वत्र नीरसमिव तिष्ठत्यात्मरसं मनः ॥ ८
तत्रस्थो विगतासङ्गो जीवोऽजीवत्वमागतः ।
व्यवहारमिमं सर्वं मा करोतु करोतु वा ॥ ९
अकुर्वन्नपि कुर्वाणो जीवः स्वात्मरतिः क्रियाः ।
क्रियाफलैर्न संबन्धमायाति खमिवाम्बुदैः ॥ १०
अथवा तमपि त्यक्त्वा चेत्यांशं शान्तचिद्घनः ।
जीवस्तिष्ठतु संशान्तो ज्वलन्मणिरिवात्मनि ॥ ११
निर्वाणमात्मनि गतः सततोदितात्मा
जीवोऽरुचिर्व्यवहरन्नपि रामभद्र ।
नो सङ्गमेति गतसङ्गतया फलेन
कर्मोद्भवेन सहतीव च देहभारम् ॥ १२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे शान्तिसमायातयोगोपदेशो नामैकोनसप्ततितमः सर्गः ६९

## सप्ततितमः सर्गः ७०

श्रीवसिष्ठ उवाच ।
असंसङ्गसुखाभ्याससंस्थितैर्विततात्मभिः ।
व्यवहारिभिरप्यन्तर्वीतशोकभयैः स्थितम् ॥ १
प्रक्षुब्धाक्षुब्धदेहस्याविसंवादेन संविदः ।
अन्तःपूर्णस्य वदने श्रीरिन्दोरिव लक्ष्यते ॥ २
चेत्यहीनं चिदालम्बं मनो यस्य गतज्वरम् ।
तेनाम्बु कतकेनेव जनता संप्रसीदति ॥ ३
नित्यमात्मदृशा लीनो ज्ञः स्वस्थश्चञ्चलोऽपि सन् ।
क्षुब्धो दृश्यत एवासौ प्रतिबिम्बार्कवन्मुधा ॥ ४
आत्मारामा महात्मानः प्रबुद्धाः परमोदयाः ।
बहिः पिच्छाग्रतरला अन्तर्मेरुरिवाचलाः ॥ ५

लक्षणं कार्यमित्यर्थः । अथवा एकैककालदेशमित्रभृत्यादिसाह्येन कतिपयकर्मरतत्वापादकपरिच्छिन्नसंसक्तिनिवारणाय प्रथमं सर्वदेशकालादिसर्वोपकरणसंपत्त्या सर्वजगद्व्यवहारकर्मरतेनापि स्वेन भूत्वा पश्चाद्वक्ष्यमाणप्रकारं मनः कार्यमित्यर्थः ॥ १ ॥ चेष्टादिकालकलनान्तेषु मनः सक्तं न कार्यमिति संबन्धः । साध्यविषयासु चेष्टासु । अतीतविषयासु चिन्तासु । वर्तमानेषु वस्तुषु । अग्रे मध्ये । लतासु दिक्शाखाप्रायासु विदिक्षु ॥ २ ॥ बहिराधिभौतिके । विपुले आभुज्यत इत्याभोगे कलत्रभृत्यादिविषये । तद्भोगलक्षणाखिन्द्रियवृत्तिषु । आभ्यन्तरे आध्यात्मिके । प्राणमूर्धादीनि योगशास्त्रोक्तानि तत्तत्काम्यसिद्ध्यनुकूलानि धारणास्थानानि तेष्वपि ॥ ३ ॥ तारके दक्षिणाक्षिकनीनिकायाम् ॥ ४ ॥ निर्मले शुद्धसत्त्वगुणे । असिते तमसि । पीतरक्तादौ रजसि । शबले गुणसमाहारे ॥ ५ ॥ चले कार्यवर्गे । स्थिरे कारणे अव्यक्ते । आदिमध्येतराः सर्गादिकालास्तेषु । दूरादिषु दिक्परिच्छेदेषु । पदार्थे नामरूपसमाहारे । आत्मनि जीवे ॥ ६ ॥ रूपान्तग्रहणं रसगन्धयोरप्युपलक्षणम् । मोहो विषयाभिलाषपारवश्यम् । आनन्दवृत्तयो विषयोपभोगफलानि तेष्वपि । गमागमचेष्टासु खेचरत्वादिसिद्धिषु । कालकलनासु अतीतानागतज्ञताचिरजीवनादिसिद्धिषु ॥ ७ ॥ किंचिच्चेत्यं निश्चला बुद्धिस्तदवलम्बिनि तत्साक्षिणि । आत्मरसं भूमानन्दप्रवणमतएव सर्वत्र नीरसम् । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवद्वचनात् । इवकारस्त्वादृशमनःस्थितेरपि मिथ्यात्वद्योतनार्थः ॥ ८ ॥ अजीवत्वं ब्रह्मताम् ॥ ९ ॥ स्वात्मरतिः स्वात्मैकप्रियः ॥ १० ॥ चेत्यांशं प्रागुक्तं बुद्धिसाक्षित्वम् ॥ ११ ॥ अरुचिर्व्यवहारफलेच्छाशून्यो जीवो गतसंगतया सङ्गनिमित्ताविद्याकामकर्मवासनाशून्यतया हेतुना कर्मोद्भवेन फलेन सङ्गं नो एति किंतु यावत्प्रारब्धक्षयं देहभारमात्रं सहतीव । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यादिश्रुतेरिति भावः ॥ १२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे शान्तिसमायातयोगोपदेशो नामैकोनसप्ततितमः सर्गः ॥ ६९ ॥

असङ्गसुखविश्रान्तो व्यवहारसमुद्भवैः ।
यथा न दूयते दोषैस्तथा युक्त्योपपाद्यते ॥ १ ॥

असंसङ्गसुखस्याभ्यासो निरन्तरमास्वादनं तत्र स्थितैर्विश्रान्तैः ॥ १ ॥ तेषां तथा स्थितिः केन लिङ्गेन ज्ञाता तदाह—प्रक्षुब्धेति । यतः प्रक्षोभनिमित्तैः पुत्रधननाशबन्धनापमानादिभिः प्रक्षुब्धदेहवल्लक्ष्यमाणस्यापि वस्तुतस्तद्रहितस्य संविदश्चित्तवृत्तेः । परमार्थसुखे अविसंवादेन अविप्रलम्भेन हेतुना अन्तःपूर्णस्य । इन्दुपक्षे ज्योतिश्चक्रस्थादिगत्या प्रक्षुब्धदेहस्यापि स्वासने स्थिरत्वादक्षुब्धदेहस्य । संवेदयतीति संवित्सूर्यस्तस्य अविसंवादेन पौर्णमास्यामत्यन्तसांमुख्यादवैषम्येणान्तरमृतैः पूर्णस्य वदनसदृशे बिम्बे ॥ २ ॥ यदनुग्रहादन्येऽपि क्षोभमालिन्यान्मुच्यन्ते तस्य निर्विक्षोभत्वं किं वाच्यमित्याशयेनाह—

चित्तमात्मत्वमायातं सुखदुःखानुरञ्जनम् ।
नोपैति रङ्गसंयुक्तो मसृणः स्फटिको यथा ॥ ६
संसारदृष्टिरुदितं ज्ञातलोकपरावरम् ।
न रञ्जयति सच्चित्तं जललेखा यथाम्बुजम् ॥ ७
आत्मध्यानमयोऽध्याने प्रबोधं परमात्मनः ।
कलनामलनिर्मुक्तः खसक्त इति कथ्यते ॥ ८
आत्मारामतया जीवो यात्यसंसङ्गतामिह ।
आत्मज्ञानेन संसङ्गस्तनुतामेति नान्यथा ॥ ९
जाग्रत्येव सुषुप्तस्थो जीवो भवति राघव ।
अस्यां दृशि गतोऽद्वन्द्वो नित्यानस्तमयोदयः ॥ १०
अत्र प्रौढिमुपायातः सूर्यतामेति पावनीम् ।
परिणामवशादिन्दुरमावास्यार्कतामिव ॥ ११
चित्ते चित्तदशाहीने या स्थितिः क्षीणचेतसाम् ।
सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥ १२
तां सुषुप्तदशामेत्य जीवन्व्यवहरन्नरः ।
सुखदुःखवरत्राभिर्न कदाचन कृष्यते ॥ १३
जाग्रत्येव सुषुप्तस्थो यः करोति जगत्क्रियाम् ।
तं यन्त्रपुत्रकमिव नायाति सुखदुःखदृक् ॥ १४
चित्तस्य बाधिका शक्तिर्भावाभावोपतापदा ।
आत्मतामागते चित्ते तस्य किं बाधते कथम् ॥ १५
सुषुप्तबुद्धिः कर्माणि पूर्वमेवावहेलया ।
कुर्वन्न बध्यते जीवो जीवन्मुक्ततया स्थितः ॥ १६
सौषुप्तीं वृत्तिमाश्रित्य कुरु मा कुरु वानघ ।
कर्म प्रकृतिजं पाकवशादुपगतं स्थितम् ॥ १७
नादानं न परित्यागः कर्मणोऽज्ञाय रोचते ।
तिष्ठन्त्यवगतात्मानो यथाप्राप्तानुवर्तिनः ॥ १८
कुर्वन्नपि न कर्तासि सुषुप्त्यैकस्थया धिया ।
अकर्तापि च कर्तासि यथेच्छसि तथा कुरु ॥ १९
यथा न किंचित्कलयन्मञ्चके स्पन्दते शिशुः ।
तथा फलान्यकलयन्कुरु कर्माणि राघव ॥ २०
अचेत्यचित्पदस्थो जाग्रत्यपि सुषुप्तधीः ।
यद्यत्करोति लब्धात्मा तस्मिंस्तस्य न कर्तृता ॥ २१
दशामासाद्य सौषुप्तीं स्वचित्ते च निवासनः ।
अन्तः शीतलतामेति ज्ञो रसेन यथा शशी ॥ २२
सुषुप्तस्थो महातेजाः पूर्णः पूर्णेन्दुबिम्बवत् ।
समः सर्वास्ववस्थासु भवत्यद्रिर्यथर्तुषु ॥ २३
सुषुप्तसंस्थो धीरात्मा बहिरायाति लोलताम् ।
क्रियासु नो भवत्कम्पः प्रस्पन्दित इवाचलः ॥ २४
सुषुप्तावस्थितो भूत्वा देहं विगतकल्मषः ।
पातयाश्वथ वा दीर्घं कालं धारय शैलवत् ॥ २५
एषैव राम सौषुप्ती स्थितिरभ्यासयोगतः ।
प्रौढा सती तुर्यमिति कथिता तत्त्वकोविदैः ॥ २६
आनन्दमय एवान्तः प्रक्षीणसकलामयः ।
अत्यन्तास्तं गतमना भवति ज्ञो महोदयः ॥ २७
तत्रस्थो ज्ञः प्रमुदितः परमानन्दघूर्णितः ।
लीलामिवेमां रचनां सदा समनुपश्यति ॥ २८

---

चेत्येति ॥ ३ ॥ ४ ॥ ५ ॥ विक्षोभदर्शनेऽपि तदभावे दृष्टान्तमाह—**चित्त**मिति । रङ्गो रञ्जकोपाधिर्जपाकुसुमादिः । मसृणः स्निग्धः ॥ ६ ॥ उदितं निरतिशयानन्दाभ्युदयं प्राप्तवन्तम् । ज्ञातं लोकानां परं ईश्वरतत्त्वमवरं जीवतत्त्वं च येन ॥ ७ ॥ यावदयमन्तः खसक्तो न भवति तावद्बाह्येषु असंसक्तिर्दुर्लभेत्याशयेन खसंसक्तलक्षणमाह—**आत्मे**ति । यदा अयं परमात्मनः प्रबोधं प्राप्य कलनाहेतुभिर्मलैर्निर्मुक्तः सन् अध्यानेऽपि निरतिशयानन्दात्मनः स्वतःस्फुरणान्निर्विकल्पसमाधाविव सदैव आत्मध्यानमय इव सुखमग्नो भवति तदा खसक्त इति कथ्यत इत्यर्थः ॥ ८ ॥ ज्ञानपरिपाकोत्कर्षादात्मसक्त्युत्कर्षक्रमेण संसङ्गः क्षीयत इत्याह—**आत्मारामतये**ति ॥ ९ ॥ अस्यां उक्तलक्षणायां स्वसंसक्तिदृशि गतः परिणतः । अद्वन्द्वः प्रियाप्रियरहितः ॥ १० ॥ प्रौढिं अभ्यासक्रमात्प्ररूढताम् । परिणामः क्रमात्कलापचयस्तद्वशाज्जलमये मण्डले सूर्यप्रतिबिम्बात्मा इन्दुर्यथा अमावास्यायां स्वबिम्बभूतार्कतामेति तद्वदित्यर्थः ॥ ११ ॥ जाग्रत्येव सुषुप्तस्थ इति यदुक्तं तद्विशदयति—**चित्ते** इति ॥ १२ ॥ ॥ १३ ॥ निरहंभावसाम्याद्यन्त्रपुत्रको नर्तकप्रतिमा तत्तुल्यदेहम् ॥ १४ ॥ चित्तस्य बाधिका पीडाकरी अहंभावलक्षणैव शक्तिः, सा हि अनिष्टानामिष्टानां च भावाभावाभ्यामागमापायाभ्यामुपतापदा ॥ १५ ॥ पूर्वं साधनदशामारभ्यैवावहेलया अभिनिवेशत्यागेन ॥ १६ ॥ प्रकृतिर्वर्णाश्रमस्वभावस्तज्जं तदुचितं प्रारब्धपाकवशादुपगतं प्राप्तं लोकशास्त्रस्थितम् ॥ १७ ॥ ये त्वाश्रमोचितमपि कर्म त्याज्यमेवेति मन्यन्ते तान्प्रत्याह—**नादान**मिति ॥ १८ ॥ यदि तत्त्वज्ञो यदि वा अतत्त्वज्ञ इति पूर्वोत्तरवाक्ययोः शेषः ॥ १९ ॥ न किंचित्प्रयोजनं कलयन्संकल्पयन् । सहजानन्दलीलयैव स्पन्दते ॥ २० ॥ तच्छब्दो वीप्सितो बोध्यः ॥ २१ ॥ २२ ॥ यथा अद्रिः षट्स्वपि ऋतुषु अविकृतत्वात्समस्तद्वत्सर्वासु आपत्संपदवस्थासु समो भवतीत्यर्थः ॥ २३ ॥ धीरात्मा लौकिकवैदिकक्रियासु बहिरेवमेव लोलतामिवायाति नोऽन्तर्भवन् कम्पो यस्य तथाविधो भवति । तथा वायुना बहिर्वृक्षतृणादौ प्रस्पन्दितोऽचलः पर्वतस्तद्वदित्यर्थः ॥ २४ ॥ क्रियास्विव तस्य मरणजीवनयोरप्यविकारिता तुल्येत्याशयेनाह—**सुषुप्ते**ति ॥ २५ ॥ ननु विदुषां सदैव तुर्यस्थितिर्युक्ता न सौषुप्ते सेति शङ्कामालक्ष्याह—**एषैवे**ति ॥ २६ ॥ तर्हि सौषुप्ती स्थितिरित्युक्तेः कोऽभिप्रायस्तमाह—**आनन्दमय** इति । निर्दुःखत्वे सति निरतिशयसुखसमृद्धता सौषुप्ते आनन्दमये सत्त्वात्तद्विवक्षया तथोक्तिरित्यर्थः ॥ २७ ॥ तत्स्थस्य कीदृशं

---

१ स्वच्छ इति पाठः.

वीतशोकभयायासो गतसंसारसंभ्रमः ।
तुर्यावस्थामुपारूढो भूयः पतति नात्मवान् ॥ २९
प्राप्य स्वां पदवीं पुण्यां यथेदं भ्रमितं जगत् ।
शैलसंस्थ इवाधःस्थं हसन्पश्यति धीरधीः ॥ ३०
अस्यां तु तुर्यावस्थायां स्थितिं प्राप्याविनाशिनीम् ।
आनन्दैकान्तलीनत्वादनानन्दपदं गतः ॥ ३१
अनानन्दमहानन्दकलातीतस्ततोऽपि हि ।
मुक्त इत्युच्यते योगी तुर्यातीतं पदं गतः ॥ ३२
परिगलितसमस्तजन्मपाशः
सकलविलीनतमोमयाभिमानः ।
परमरसमयीं प्रयाति सत्तां
जलगतसैन्धवखण्डवन्महात्मा ॥ ३३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे असंसङ्गविकल्पोपदेशो नाम सप्ततितमः सर्गः ॥७०॥

## एकसप्ततितमः सर्गः ७१

श्रीवसिष्ठ उवाच ।
यावत्तुर्यपरामर्शस्तावत्केवलतापदम् ।
जीवन्मुक्तस्य विषयो वचसां च रघूद्वह ॥ १
अत ऊर्ध्वमदेहानां मुक्तानां वचसां तथा ।
विषयो न महाबाहो पुरुषाणामिवाम्बरम् ॥ २
सा हि विश्रान्तिपदवी दूरेभ्योऽपि दवीयसी ।
गम्या विदेहमुक्तानां खलेखेव नभस्वताम् ॥ ३
सुषुप्तावस्थया कंचित्कालं भुक्त्वा जगत्स्थितिम् ।
तुर्यतामेति तदनु परमानन्दघूर्णितः ॥ ४
तुर्यातीतदशां तज्ज्ञा यथा यान्त्यात्मकोविदाः ।
तथाधिगच्छ निर्द्वन्द्वं पदं रघुकुलोद्वह ॥ ५
सुषुप्तावस्थया राम भव संव्यवहारवान् ।
चित्रेन्दोरिव ते न स्तः क्षयोद्वेगावरिन्दम ॥ ६
शरीरसंनिवेशस्य क्षये स्थैर्ये च संविदः ।
मा गृहाण भ्रमो ह्येष शरीरमिति जृम्भते ॥ ७
देहनाशेन कोऽर्थस्ते कोऽर्थस्ते देहसंस्थया ।
भव त्वं प्रकृतारम्भस्तिष्ठत्वेष यथास्थितम् ॥ ८
ज्ञातवानसि तत्सत्यं बुद्धवानसि तत्पदम् ।
प्राप्तवानसि रूपं स्वं विशोको भव भूतये ॥ ९
ईप्सितानीप्सितं त्यक्त्वा शीतलालोकशोभया ।
अन्धकारात्तथाम्भोदान्मुक्तं खमिव शोभते ॥ १०
मनस्त्वात्मसंपन्नं नाधः समनुधावति ।
योगमन्त्रतपःसिद्धः पुरुषः खादिवावनिम् ॥ ११

जगद्दर्शनं तदाह—**तत्रे**ति ॥ २८ ॥ ननु तां लीलां पश्यंस्तत्र स पुनः पतेदपि, नेत्याह—**वीते**ति ॥ २९ ॥ कुतो न पतति तत्राह—**प्राप्ये**ति । यतो दोषदृष्ट्या हसन्पश्यति न पुरुषार्थबुद्ध्येत्यर्थः ॥ ३० ॥ ३१ ॥ इत्थं यावज्जीवं तस्य तुरीयस्थितिमुक्त्वान्ते विदेहस्य तुर्यातीतस्थितिमाह—**अनानन्दे**ति । अनानन्दमवस्थात्रयपदं तदपेक्ष्य तुर्यपदं महानन्दमिति तज्जीवन्मुक्तस्य सदा भवति। विदेहमुक्तौ तु अनानन्दस्मरणायोगात्तदपेक्षया महत्त्वकलनायोगात्तदतीतस्ततोऽपि मुक्तस्तुर्यातीतपदं गत इत्युच्यत इत्यर्थः ॥ ३२ ॥ तामेव स्थितिं वर्णयन्नुपसंहरति—**परिगलिते**ति । यतः सकला विलीनास्तमोमया अभिमाना यस्य अतएव परिगलितसमस्तजन्महेतुकामकर्मवासनापाशो महात्मा जलगतसैन्धवखण्डवत्खिलयभावविलयात्परमो रस्यत इति रस आनन्दो रसनैकवेद्यांशश्च तन्मयीं सत्तां परमार्थस्थितिं प्रयातीत्यर्थः ॥ ३३ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे असंसङ्गसविकल्पोपदेशो नाम सप्ततितमः सर्गः ॥ ७० ॥

परस्याव्यवहार्यत्वात्तुर्यमत्रोपवर्ण्यते ।
शरीरादिनिरासेन यथा मोहाजनिक्रमः ॥ १ ॥

तुर्यातीतपदस्य वागादिव्यवहाराविषयत्वं दर्शयितुं भूमिकां रचयति—**यावदि**ति। अवस्थात्रयपादान्परामृश्य तत्साक्षिचिन्मात्रे तद्विलापनक्रमेण चिन्मात्रपरिशेषावस्थितिलक्षणतुर्यस्य यावत्परामर्शः साक्षादनुभवस्तावन्मात्रं केवलतापदं जीवन्मुक्तस्य श्रुत्यादिवचसां च विषयः । वाक्यजन्याखण्डाकारवृत्तेस्तावत्येव पर्यवसानादिति भावः ॥ १ ॥ तत ऊर्ध्वं अदेहानां मुक्तानां प्राप्यमपि तुर्यातीतपदं तेषां वेदवचसां च विषयो न, तद्विषयतापादनहेतोर्मनसः क्षयात् । यथा वायुगम्यमम्बरमाकाशं पुरुषाणां मनुष्याणां विषयो न तद्वदित्यर्थः ॥ २ ॥ गम्या प्राप्या । खलेखा व्योमवीथी । नभस्वतां वायूनामिव ॥ ३ ॥ अतः सदेहमुक्तानां पञ्चमभूमिकाक्रमेण सप्तमान्तभूमिकास्वेव स्थितिरित्याह—**सुषुप्ते**ति ॥४॥ ज्ञानदार्ढ्ये तु तुर्यातीतपदविश्रान्तिपर्यन्तं त्वया कार्यं नान्तरालिकभूमिकामात्रपर्यवसितमित्याह—**तुर्यातीते**ति ॥ ५ ॥ तत्र प्रथमं पञ्चमभूमिकैव शास्त्रीयव्यवहारनिर्वाहार्थमभ्यसनीयेत्याशयेनाह—**सुषुप्तावस्थये**ति । क्षयो मृत्युः कलापचयश्च । उद्वेगो भयं राहूपरोधश्च ॥ ६ ॥ ननु देहनाशे संविन्नाशस्याप्यवर्जनात्कथं संविदात्मनो मे न क्षयस्तत्राह—**शरीरे**ति । संविदः क्षयं स्थैर्यं चेति शेषः ॥ ७ ॥ यदि देह इति भ्रमस्तर्हि स एव नश्यतां तत्राह—**देहे**ति । प्रकृते स्वात्मबोधस्थैर्ये आरम्भः प्रयत्नो यस्य तथाविधो भव । एष देहः ॥ ८ ॥ स्वात्मबोधे संदेहं वारयति—**ज्ञातवानसी**ति । सत्यं जगदधिष्ठानतत्त्वम् । पदं अवस्थात्रयाधिष्ठानम् । स्वं रूपं अखण्डवाक्यार्थस्वरूपम् ॥ ९ ॥ खं अर्थाच्छरद्राकाकाशम् ॥ १० ॥ अधः अर्वाक्तनविषयसुखे । सिद्धः खेचरसिद्धिं प्राप्तः

१ शोभसे इति पाठश्चेदनुगुणः स्यात्.

इह शुद्धा चिदेवास्ति पारावारविवर्जिता ।
अयं सोऽहमिदं तन्म इति ते मास्तु विभ्रमः ॥ १२
आत्मेति व्यवहारार्थमभिधा कल्पिता विभोः ।
नामरूपादिभेदस्तु दूरमस्सादलं गतः ॥ १३
जलमेव यथाम्भोधिर्न तरङ्गादिकं पृथक् ।
आत्मैवेदं तथा सर्वं न भूतोयादिकं पृथक् ॥ १४
यथा समस्ताज्जलधौ जलादन्यन्न लभ्यते ।
तथैव जगतः स्फारादात्मनोऽन्यन्न लभ्यते ॥ १५
अयं सोऽहमिति प्राज्ञ क करोषि व्यवस्थितिम् ।
किं तत्त्वं किं च वा ते स्यात्किं तत्त्वं किं च वा न ते १६
न द्वित्वमस्ति नो देहाः संबन्धो न च तैः स्थितः ।
संभाव्यते कलङ्को वा भानोरिव तमःपटैः ॥ १७
द्वित्वमभ्युपगम्यापि कथयामि तवारिहन् ।
देहादिभिः सद्भिरपि न संबन्धो विभोर्भवेत् ॥ १८
छायातपप्रसरयोः प्रकाशतमसोर्यथा ।
न संभवति संबन्धस्तथा वै देहदेहिनोः ॥ १९
यथा शीतोष्णयोर्नित्यं परस्परविरुद्धयोः ।
न संभवति संबन्धो राम देहात्मनोस्तथा ॥ २०
अविनाभाविनोर्यस्तु संबन्धः कथमेतयोः ।
जडचेतनयोर्देहदेहिनोरनुभूयते ॥ २१
चिन्मात्रस्यात्मनो देहसंबन्ध इति या कथा ।
सैषा दुरवबोधार्था दावाग्नौ जलधिर्यथा ॥ २२
सत्यावलोकनेनैषा मिथ्यादृष्टिर्विनश्यति ।
अवलोकनया साम्यमातपे जलधिर्यथा ॥ २३
चिदात्मा निर्मलो नित्यः स्वावभासो निरामयः ।
देहस्त्वनित्यो मलवांस्तेन संबध्यते कथम् ॥ २४
स्पन्दमायाति वातेन भूतैर्वा पीवरीकृतः ।
देहस्तेन न संबन्धो मनागेव सहात्मना ॥ २५
सिद्धे द्वित्वेऽपि देहस्य न संबन्धस्य संभवः ।
द्वित्वासिद्धौ तु सुमते कलनैवेदृशी कुतः ॥ २६
इत्येतदेव तत्सत्त्वे तत्रैवान्तःस्थितिं कुरु ।
न बन्धोऽस्ति न मोक्षोऽस्ति कदाचित्कस्यचित्कचित्
सर्वमात्ममयं शान्तमित्येवं प्रत्ययं स्फुटम् ।
सबाह्याभ्यन्तरं राम सर्वत्र दृढतां नय ॥ २८
सुखी दुःखी विमूढोऽस्मीत्येता दुर्दृष्टयः स्मृताः ।
आसु चेद्वस्तुबुद्धिस्ते तच्चिरं दुःखमिच्छसि ॥ २९
यः क्रमः शैलतृणयोः कौशेयोपलयोस्तथा ।
साम्यं प्रति स एवोक्तः परमात्मशरीरयोः ॥ ३०

---

खात् खं विहाय यथा अवनिं न समनुधावति तद्वत् ॥ ११ ॥ पारावारे परार्वाचीतीरे । परिच्छेद इति यावत् ॥ १२ ॥ यदि शुद्धा चिदेकैवास्ति तर्ह्यात्मेति तद्व्यतिरिक्ता अभिधा कथं तत्राह—**आत्मे**ति ॥ १३ ॥ १४ ॥ समस्तात्पूर्णाज्जलात् । जगतः स्फाराज्जगदात्मना विस्तृतात् ॥ १५ ॥ देहादिभावेषु यत्त्वं यच्च ते तत्किम् । यत्र त्वं यच्च वा न ते तत्किम् । अध्यासदृशा कस्यापि त्वदात्मतायास्त्वत्संसृष्टतायाश्चासंभवादधिष्ठानदृशा सर्वत्रैव तत्संभवाच्चेति भावः ॥ १६ ॥ परमार्थतस्तु द्वित्वमेव नास्तीति तदधीना देहतत्संबन्धतदुपादानकलङ्कादिसंभावना दूरनिरस्तेत्याह—**ने**ति ॥ १७ ॥ अभ्युपगतेऽपि द्वैते देहादिसत्यत्वे च चिदात्मनस्तत्संस्पर्शो न संभवत्येवेति प्रौढिमादर्शयन्नाह—**द्वित्व**मित्यादिना ॥ १८ ॥ आद्य एकप्रदेशप्रसरणलक्षणे संसर्गे द्वितीयस्तादात्म्ये दृष्टान्तः ॥ १९ ॥ ॥ २० ॥ मास्तु संयोगस्तादात्म्यं वा समवायस्तु किं न स्यात्तत्राह—**अविनाभाविनो**रिति । अयुतसिद्धयोरित्यर्थः ॥ २१ ॥ या कथा उक्तिः । देहस्य चिदाश्रयत्वे विषयत्वायोगादस्फुरणापत्तेर्विषयत्वे चाश्रयत्वायोगात्समवायाद्यसिद्धेर्विषयतासंबन्धस्य च मिथ्यार्थसाधारणस्य सत्यत्वायोगाद्दुरवबोधार्थेत्यर्थः । अग्नौ जलधिरिति कथेति शेषः ॥ २२ ॥ तर्ह्यस्त्वध्यस्त एव संबन्धस्तत्राप्याह—**सत्ये**ति । देहात्मसंबन्धाध्यासस्य आत्माधिष्ठानकत्वे आत्मदर्शनादेव बाधः स्यादित्यर्थः । साम्यं अध्यस्तवैषम्यं बाधं यथा यातीति शेषः ॥ २३ ॥ 'शुद्धमपापविद्धम्' इत्यादिश्रुतिसिद्धस्वाभाविकशुद्ध्या विरोधादप्यात्मा नाशुद्धं देहादि स्पृशतीत्याह—**चिदात्मे**ति ॥ २४ ॥ नन्वात्मसंबन्धाभावे देहस्य स्पन्दादिः कथं मृतदेहे तददर्शनादिति चेत्तत्राह—**स्पन्द**मिति । वातेन प्राणवायुना । भूतैरन्नादिभिः प्राणावष्टम्भहेतुभिः पीवरीकृत उपचितः । आहितबल इति यावत् । तथाच स्पन्दे प्राणो बलं वा हेतुर्नात्मेत्यर्थः । अप्यर्थे एवकारः । न संबन्धो देहस्य ॥ २५ ॥ एवं द्वैतसत्यत्वाभ्युपगमे यदा न संबन्धस्तदा किं वक्तव्यं तदनभ्युपगमे इति प्रौढिवादमुपसंहरन्नाह—**सिद्धे** इति । सिद्धे सत्ये ॥ २६ ॥ ननु द्वित्वासिद्धिरेव कुत इत्याशङ्क्य संबन्धदूषणार्थं दर्शिता युक्तीस्तत्राप्यतिदिशति—**इत्ये**ति । तस्य द्वित्वस्य सत्त्वे सत्यत्वे केनचिदाशङ्क्यमाने सति इति प्रागुक्तमेतदेव युक्तिजातमुपन्यसनीयम् । द्वितीयसिद्धौ हि द्वित्वं स्यात् । द्वितीयं चिच्चेत्तत्र भेदकाभावः । जडं चेच्छायातपादिवद्विरोधात्पूर्वसिद्धचिद्विरुद्धं न सिध्यति । चिच्च स्वासंबद्धं जडं साधयतीति कथा दुरवबोधार्था । अध्यस्तं चेत्सत्यचिदवलोकनमात्राद्विनश्येत् । निर्मलासङ्गत्वाद्यात्मस्वभावविरुद्धं च मलिनं जडं असङ्गेन कथं साध्येतेत्यादियुक्तीनामत्रापि साम्यादिति भावः । अतो द्वैतभ्रमं विहाय तत्र अद्वितीयचिन्मात्र एव स्थितिं कुरु । तत्र च बन्धमोक्षादिशङ्कैव नास्तीत्यर्थः ॥ २७ ॥ कीदृशी सा स्थितिर्या मया कार्या तामाह—**सर्व**मिति ॥ २८ ॥ सर्वात्मदृष्टिश्च विरुद्धदुर्दृष्टिनिरासे दृढीभवति नान्यथेत्याशयेनाह—**सुखी**ति । तत् तर्हि ॥ २९ ॥ ननु देहदुःखादयोऽपि प्रत्यक्षादिभिः पुरस्कृताः आत्मापि श्रुतियुक्तिभिः पुरस्कृतस्तदनयोस्तुल्यत्वे को विशेषो येनात्मदृष्टिमवलम्ब्य देहादिदृष्टिर्निरसनीयेत्युच्यते तत्राह—**य** इति । क्रमो विशेषः । यथा चक्षुषा दूराच्छैलतृणयोर्मध्ये मह-

यथा तेजस्तिमिरयोर्न संबन्धो न तुल्यता ।
अत्यन्तभिन्नयो राम तथैवात्मशरीरयोः ॥ ३१
यथा शीतोष्णयोरैक्यं कथास्वपि न दृश्यते ।
जडप्रकाशयोः श्लेषो न तथात्मशरीरयोः ॥ ३२
देहश्चलति वातेन तेनैवायाति गच्छति ।
शब्दं करोति वातेन देहनाडीविलासिना ॥ ३३
शब्दः कचटतप्रायः स्फुरत्यन्तः समीरणैः ।
यथा प्रजायते वंशाद्देहरन्ध्रात्तथैव हि ॥ ३४
कनीनिकापरिस्पन्दश्चक्षुःस्पन्दस्य मारुतात् ।
इन्द्रियस्फुरणात्सैव संवित्केवलमात्मनः ॥ ३५
आकाशोपलकुड्यादौ सर्वत्रात्मदशा स्थिता ।
प्रतिबिम्बमिवादर्शे चित्त एवात्र दृश्यते ॥ ३६
शरीरालयमुत्सृज्य यत्र चित्तविहंगमः ।
स्ववासनावशाद्याति तत्रैवात्मानुभूयते ॥ ३७
यत्र पुष्पं तत्र गन्धसंविदः संस्थिता यथा ।
यत्र चित्तं हि तत्रात्मसंविदः संस्थितास्तथा ॥ ३८
सर्वत्र स्थितमाकाशमादर्शे प्रतिबिम्बति ।
यथा तथात्मा सर्वत्र स्थितश्चेतसि दृश्यते ॥ ३९
अपामवनतं स्थानमास्पदं भूतले यथा ।
अन्तःकरणमेवात्मसंविदामास्पदं तथा ॥ ४०
सत्यासत्यं जगद्रूपमन्तःकरणबिम्बिता ।
आत्मसंवित्तनोतीदमालोकमिव सूर्यभा ॥ ४१
अन्तःकरणमेवातः कारणं भूतसंसृतौ ।
आत्मा सर्वातिगत्वात्तु कारणं सदकारणम् ॥ ४२
अविचारणमज्ञानं मौर्ख्यमाहुर्महाधियः ।
संसारसंसृतौ सारमन्तःकरणकारणम् ॥ ४३
असम्यक्प्रेक्षणान्मोहाच्चेतःसत्तां गृहीतवत् ।
संमोहबीजकणिकां तमोऽर्कादिव दृश्यते ॥ ४४
यथा भूतात्मतत्त्वैकपरिज्ञानेन राघव ।
असत्तामेत्यलं चेतो दीपेनेव तमः क्षणात् ॥ ४५
संसारकारणमितः स्वयं चेतो विचारयेत् ।
जीवोऽन्तःकरणं चित्तं मनश्चेत्यादिनामकम् ॥ ४६

श्रीराम उवाच ।

एताः संज्ञाः प्रभो ब्रह्मंश्चेतसो रूढिमागताः ।
कथमित्येव कथय मयि मानद सिद्धये ॥ ४७

श्रीवसिष्ठ उवाच ।

सर्वे भावा इमे नित्यमात्मतत्त्वैकरूपिणः ।
चित्तात्तरङ्गकगणा जलैककलिता यथा ॥ ४८

त्वात्स्थिरत्वाच्च शैलदृष्टिः सुकरा । चलत्वात्पेलवत्वाच्च तृणदृष्टिर्दुष्करा । यथा वा त्वचा मृदुत्वात्सुखस्पर्शत्वाच्च कौशेयस्पर्श उपादेयः कठोरत्वाद्दुःखदत्वाच्च उपलस्पर्शो हेयस्तथा अपरिच्छिन्नत्वात्सदा स्वप्रकाशत्वादानन्दरूपत्वाच्च परमात्मदृष्टिः सुकरा उपादेया च । देहाद्यनात्मदृष्टिस्तु पेलवत्वादस्थिरत्वान्मनआदिसापेक्षत्वाच्च दुष्करा हेया चेति महदन्तरमस्तीति न साम्यमित्यर्थः ॥ ३० ॥ विरुद्धत्वादपि संबन्धवत्सादृश्यमपि निरसितुं शक्यमित्याशयेनाह—यथेति ॥ ३१ ॥ विरोधादेव तादात्म्यशङ्कायाः प्रसक्तिरेव नास्तीत्याशयेनाह—यथेति । श्लेषः संयोगस्तस्याप्यसंभवे ऐक्यं दूरनिरस्तमित्याशयः ॥ ३२ ॥ पूर्वमात्मसंबन्धाभावेऽपि देहचेष्टादेर्वातेन गतार्थतोक्ता, अत्र तु आत्मैक्याभावेऽपीति न पौनरुक्त्यम् ॥ ३३ ॥ देहरन्ध्रं कण्ठस्तदुद्गतैः प्राणसमीरणैः कण्ठताल्वादिस्थानेषु जिह्वादिनाभिहत्य निःसार्यमाणैः कवर्गचवर्गटवर्गादिः शब्दः स्फुरतीति प्रत्यक्षसिद्धमित्यर्थः । वंशात्सच्छिद्रकीचकात् ॥ ३४ ॥ एवं चक्षुरादिसर्वेन्द्रियस्पन्दोऽपि वायुत एव । आत्मनस्तु केवलं संविदेव कृत्यं नान्यदित्याह—कनीनिकेति । विषयप्रदेशे चक्षुःस्पन्दस्य निमित्तभूतः कनीनिकापरिस्पन्दोऽपि मारुतादेव । एवं सर्वेन्द्रियस्फुरणाज्जायमाना सा स्फूर्तिलक्षणा संविदेव केवलमात्मनो नान्यदित्यर्थः ॥ ३५ ॥ यद्यपि सा संवित्सर्वगता सदातनी च तथापि चित्ततद्वृत्तिष्वेवाभिव्यक्ता नान्यत्रेत्याह—आकाशेति ॥ ३६ ॥ अतएव तद्गमनादेवात्मनः परलोकगमनादिव्यवहारोऽपीत्याह—शरीरेति ॥ ३७ ॥ ३८ ॥ ३९ ॥ अवनतं निम्नम् । आत्मसंविदां चित्प्रतिबिम्बानाम् ॥ ४० ॥ सत्यं व्यावहारिकम् । असत्यं प्रातिभासिकम् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेरिति भावः ॥ ४१ ॥ अन्तःकरणं तत्समष्ट्यात्मा हिरण्यगर्भः । प्रतिबिम्बद्वारा कारणं सदपि स्वतः अकारणम् ॥ ४२ ॥ अन्तःकरणस्य तर्हि किं कारणं तदाह—अविचारणमिति । पर्यायत्रयोपादानं प्रसिद्धिद्योतनार्थम् ॥ ४३ ॥ असम्यक्प्रेक्षणादन्यथा ग्रहणसंस्कारबलान्मोहात् । संमोहानां भ्रमाणां बीजधानाभूताम् । चेतःसत्तां चित्ताकारपरिणामम् । यतः संमोहादर्कात्तम इवात्यन्तासंभावितापि जन्मजरामरणाद्यनर्थपरम्परा दृश्यत इत्यर्थः । अथवा अज्ञानं सर्वैः स्वात्मनि अहमज्ञ इति प्रत्यक्षं दृश्यते । यथा अर्कात्तद्ग्रासि तमो राहुर्दृश्यते तद्वदित्यर्थः ॥ ४४ ॥ केन तर्हि चित्तनाशस्तदाह—यथेति ॥ ४५ ॥ केनोपायेनात्मतत्त्वपरिज्ञानं तदाह—संसारेति । इत एतस्माद्धेतोः संसारकारणमज्ञानं इतः प्राप्तोऽधिकारी स्वयमिति वा यं विचारयेत्तमाह—जीव इति । जीवादीनि नामानि यस्य तम् । आदिपदादुत्पत्तिप्रकरणोक्तनामान्तराणामपि संग्रहः ॥ ४६ ॥ रूढिं योगरूढिम् । कथं केन योगेन । सिद्धये तदुक्तविचारसिद्धये ॥ ४७ ॥ तत्रादौ रूढियोगांशाभ्यां जीवनाम निर्वक्तुं वसिष्ठः पीठिकां रचयति—सर्वे भावा इत्यादिना । भावाः पदार्था आत्मतत्त्वेन सह ऐक्याध्यासादेकरूपिणः समष्टिचित्तादेवोत्पन्ना इति प्रागुक्-

आत्मा स्पन्दैकरूपात्मा स्थितस्तेषु कचित्कचित् ।
तरङ्गेषु विलोलेषु पयोधेः सलिलं यथा ॥ ४९
कचिदस्पन्दरूपात्मा स्थितस्तेषु महेश्वरः ।
तरङ्गत्वमयातेषु जलभावो जलेष्विव ॥ ५०
तत्रोपलादयो भावा अलोलाः स्वात्मनि स्थिताः ।
सुराफेनवदुत्स्पन्दा लोलास्तु पुरुषादयः ॥ ५१
तत्र तेषु शरीरेषु सर्वशक्तिस्तदात्मनः ।
कलिताऽज्ञानकलना तेनाज्ञानमसौ स्थितः ॥ ५२
तदज्ञानमनन्तात्मभूषितं जीव उच्यते ।
स संसारे महामोहमायापञ्जरकुञ्जरः ॥ ५३
जीवनाज्जीव इत्युक्तोऽहंभावः स्वात्त्वहंतया ।
बुद्धिर्निश्चायकत्वेन संकल्पकलनान्मनः ॥ ५४
प्रकृतिः प्रकृतित्वेन देहो दिग्धतया स्थितः ।
जडः प्रकृतिभावेन चेतनः स्वात्मसत्तया ॥ ५५
जडाजडदृशोर्मध्यं यत्तत्त्वं पारमात्मिकम् ।
तदेतदेव नानात्वं नानासंज्ञाभिराततम् ॥ ५६
एवं स्वरूपं जीवस्य बृहदारण्यकादिषु ।
बहुधा बहुषु प्रोक्तं वेदान्तेषु किलानघ ॥ ५७

अज्ञैस्त्वेतासु संज्ञासु कुविकल्पकुतार्किकैः ।
मोहाय केवलं मूढैर्व्यर्थमास्थाः प्रकल्पिताः ॥ ५८
एवमेष महाबाहो जीवः संसारकारणम् ।
मूकेनातिवराकेण देहकेनेह किं कृतम् ॥ ५९
आधाराधेययोरेकनाशे नान्यस्य नष्टता ।
यथा तथा शरीरादिनाशे नात्मनि नष्टता ॥ ६०
एकपर्णरसे क्षीणे रसो नैति यथा क्षयम् ।
याति पर्णरसश्चार्करश्मिजालान्तरे यथा ॥ ६१
शरीरसंक्षये देही न क्षयं याति कस्यचित् ।
निर्वासनश्चेत्तद्व्योम्नि तिष्ठत्यात्मपदे तथा ॥ ६२
देहनाशे विनष्टोऽस्मीत्येवं यस्याऽमतेर्भ्रमः ।
मातुः स्तनतटात्तस्य मन्ये वेताल उत्थितः ॥ ६३
यस्य ह्यात्यन्तिको नाशः स्यादसावुदितः स्मृतः ।
चित्तनाशो हि नाशः स्यात्स मोक्ष इति कथ्यते ॥ ६४
मृतो नष्ट इति प्रोक्तो मन्ये तच्च मृषा ह्यसत् ।
स देशकालान्तरितो भूत्वा भूत्वानुभूयते ॥ ६५
इहोह्यन्ते जनैरेवं तरङ्गान्तस्तृणैरिव ।
मरणव्यपदेशासु देशकालतिरोहितैः ॥ ६६

स्मारणम् ॥ ४८ ॥ उत्पन्नानां च स्थावरविभागे निमित्तमाह—आत्मेत्यादिना ॥ ४९ ॥ ५० ॥ ५१ ॥ कलितस्य कल्पितस्याज्ञानस्य कलना प्रसिद्धा । तेन हेतुना तत्स्वकल्पितमज्ञानं स्वयमेव भूत्वा प्रलयसुषुप्त्योः स्थितः ॥५२॥ अनन्तेनात्मना प्रतिबिम्बभावापन्नेन भूषितमिव स्फुरत् । स एव रूढ्यंशेन जीव उच्यते ॥५३॥ तत्र योगांशमाह—**जीवनादिति** । प्राणधारणादित्यर्थः । अहंनाम निर्वक्ति—**अहंभावादिति** । 'सोऽहमित्यग्रे व्याहरत्तस्मादहंनामाभवत्' इति श्रुतेः । नामान्तराण्यपि निराह—**बुद्धिरित्यादिना** ॥५४॥ दिग्धतया उपचिततया । प्रकृतिभावेन अज्ञानांशप्राधान्येन । स्वात्मसत्तया चित्प्राधान्येन ॥ ५५ ॥ जडाजडदृशोरज्ञानतत्साक्षिणोर्मध्यमान्तरालिकं साभासं मनस्तदेतदेव नानात्वं प्राप्य जीवबुद्धिमनश्चित्ताहंकारादिनानासंज्ञाभिराततमित्यर्थः ॥ ५६ ॥ परमात्मन एवोपाधिप्रवेशेन औपाधिकनानासंज्ञालाभे श्रुतीः प्रमाणयति—**एवमिति** । 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्युपक्रम्योक्तम् 'प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव' इति । तथा 'स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव स धीः स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि' इति । तथा श्रुत्यन्तरे 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' । 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' इति । 'तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्' इति । तैत्तिरीयके 'स एतं सीमानं विदार्यैतया द्वारा प्रापद्यत तस्मादिदन्द्रो नाम । यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानम्' इत्यादैतरेयके । 'त्वमेकोऽसि बहूननुप्रविष्टः' । 'एको देवो बहुधा विचार' 'एकः सन् बहुधा विचार' इत्यादिश्रुतिशतेषु च बहुधा प्रोक्तमित्यर्थः ॥ ५७ ॥ अतएवावैदिककुतार्किकाणामन्यथान्यथा जीवस्वरूपकल्पना नादर्तव्येत्याशयेनाह—**अज्ञैरिति** । आस्थाः अभिनिवेशाः ॥ ५८ ॥ एवं च न शुद्धात्मनः संसारिता नापि देहस्य किंत्वान्तरालिकस्य जीवस्यैवेति सिद्धमित्याशयेनाह—**एवमिति** । मूकेन वागादिशून्येन । जडेनेति यावत् ॥ ५९ ॥ अतएव देहनाशेऽपि न जीवनाश इत्याह—**आधारेति** । नाशे न इति च्छेदः ॥ ६० ॥ ६१ ॥ सवासनश्चेत् शरीरसंक्षये वासनायां तिष्ठति । निर्वासनश्चेद्व्योम्नि ब्रह्माकाशस्वभावे तिष्ठतीत्यर्थः ॥ ६२ ॥ अमतेर्मूर्खस्य यस्य । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतेरभयहेतौ देहनाशे भयहेतुत्वलक्षणविपरीतदर्शिनो मूढस्य मातुः स्तनादपि वेतालोत्थानसंभावनया स्तन्यपानेन जीवनमपि दुर्लभं स्यादित्याशयः ॥ ६३ ॥ देहस्य जीवव्यतिरिक्तत्वान्मास्तु तन्नाशाद्भयं, चित्तस्य जीवस्वरूपत्वात्तन्नाशात्तु जीवस्य भयं युक्तमेवेति चेत्तत्राह—**यस्येति** । यस्य उपाधेर्वज्रनिगडवद्बन्धनभूतस्यात्यन्तिको नाशः स्याच्चेदसौ जीवः स्मृतः प्रत्यभिज्ञातब्रह्मभावः सन्नुदितो निरतिशयानन्दलक्षणमभ्युदयं प्राप्तो भवति, तादृशचित्तनाशो हि जीवस्य विनाशः स्यात्संभाव्यते स च तस्य मोक्षः परमपुरुषार्थ इति शास्त्रे कथ्यते । अतस्तस्मादपि भयसंभावना अत्यन्तमनुचितैवेत्यर्थः ॥६४॥ स जीवः । अनुभूयते पुनर्देहान्तरग्रहणे दृश्यते ॥ ६५ ॥ इह संसारे मरणव्यपदेशासु नदीषु तरङ्गान्तस्तृणायमानैर्जनैर्जीवैरिह संसारे देशकालतिरोहितैः स्वरूपैः एवं वर्णितप्रकारा मृतो नष्टो जातोऽभिवृद्धः सुखी दुःखीत्यादिभावा ऊह्यन्ते

वासनावस्थितो जीवो यात्युत्सृज्य शरीरकम् ।
कपिर्वेनतरुं त्यक्त्वा तवैन्तरमिवास्थितः ॥ ६७
पुनस्तदपि संत्यज्य गच्छत्यन्यदपि क्षणात् ।
अन्यस्मिन्विततं देशे कालेऽन्यस्मिंश्च राघव ॥ ६८
इतश्चेतश्च नीयन्ते जीवा वासनया स्वया ।
चिरं तदपिजीविन्या धूर्त्या धात्र्येव बालकाः ॥ ६९
वासनारज्जुवलिता जीर्णाः पर्वतकुक्षिषु ।
जरयन्त्यतिदुःखेन जीवितं जीवजीविकाः ॥ ७०
जरठजरदुपोढदुःखभाराः
परिणतिजर्जरजीविताश्च सत्यः ।
हृदयजनितवासनानुवृत्त्या
नरकभरे जनताश्चिरं पतन्ति ॥ ७१
श्रीवाल्मीकिरुवाच ।
इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ७२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूपशमप्रकरणे संसारोपदेशो नामैकसप्ततितमः सर्गः ॥ ७१ ॥

## ॥ त्रयोदशो दिवसः ॥

## द्विसप्ततितमः सर्गः ७२

श्रीवसिष्ठ उवाच ।
देहे जाते न जातोऽसि देहे नष्टे न नश्यसि ।
त्वमात्मन्यकलङ्कात्मा देहस्तव न कश्चन ॥ १
यः कुण्डबदरन्यायो यो घटाकाशसंस्थितिः ।
तत्रैकस्मिन्क्षते क्षीणे द्वे इति व्यर्थकल्पना ॥ २
विनाशिनि विनष्टेऽस्मिन्देहे स्वां स्थितिमागते ।
विनश्यामीति यः खेदी तं धिगस्त्वन्धचेतसम् ॥ ३
यादृशो रश्मिरथयोः स्नेहोद्वेगविवर्जितः ।
संबन्धस्तादृशो देहचित्तेन्द्रियसुखैश्रितेः ॥ ४
गतेतरेतरापेक्षः सरःपङ्कामलाम्भसाम् ।
यथा राघव संबन्धस्तथा देहेन्द्रियात्मनाम् ॥ ५
यादृशोऽध्वा गताध्वानां निरास्थापरिदेवनः ।
संयोगो विप्रयोगश्च तादृशो देहदेहिनोः ॥ ६
यथा कल्पितवेतालविकारभयभीतयः ।
मिथ्यैव कल्पिता एते तथा स्नेहसुखादयः ॥ ७
भूतपञ्चकसंपिण्डाद्रचिता जनताः पृथक् ।
एकस्मादेव विटपाद्विचित्रा इव पुत्रिकाः ॥ ८
काष्ठेतरत्काष्ठभारे किंचिदन्यन्न दृश्यते ।
भूतपिण्डेतरद्देहे किंचिदन्यन्न दृश्यते ॥ ९
भूतपञ्चकविक्षोभनाशोत्पादेषु हे जनाः ।
हर्षामर्षविषादानां किं भवन्तो वशं गताः ॥ १०
को नामातिशयः पुंसां स्त्रीनाम्न्यपरनाम्नि च ।
पेलवे भूतसंघाते प्रोद्भूतजनपातवत् ॥ ११
संनिवेशांशवैचित्र्यमज्ञानामेव तुष्टये ।

भ्रान्त्या वितर्कयन्त इत्यर्थः ॥ ६६ ॥ तथा ऊहनवैचित्र्ये वासनावैचित्र्यं हेतुरित्याशयेनाह—**वासने**ति ॥ ६७ ॥ ६८ ॥ तान् जीवानपिधाय तिरस्कृत्य जीवितुं शीलं यस्याः सा तदपिजीविनी तथाविधया वासनया धूर्त्या । पुंयोगान्ङीष् । धूर्तासक्तया धात्र्या उपमात्रा ॥ ६९ ॥ वासनारज्जुभिर्वलिता वेष्टिताः जीवा एव परस्परोपयोगाज्जीविका जीवनोपायो येषां तथाविधा जीवाः पूर्वं जीर्णाः सांप्रतं जरयन्ति ॥ ७० ॥ जनता जीवा हृदयविहितवासनानुवृत्त्या निमित्तेन जरठेभ्योऽपि जरन्तो जीर्णाः सन्त उपोढा दारिद्र्यरोगवियोगादिदुःखभारा यैस्तथाविधाः परिणत्या नानायोनिदुर्दशापरिणामैर्जर्जरं दुःखैः खण्डनेन शिथिलीकृतमिव जीवितं यासां तथाविधाश्च सत्यो नरकभरेषु चिरं पतन्ति वसन्तीत्यहो वासनादोषप्रयुक्ता अनन्ता दुर्दशेत्यर्थः ॥ ७१ ॥ ७२ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे संसारोपदेशो नामैकसप्ततितमः सर्गः ॥ ७१ ॥

भौतिकत्वाच्छरीरस्य शोकमोहाद्ययोग्यता ।
दृश्यदर्शनसंबन्धः साक्षी शुद्धश्च वर्ण्यते ॥ १ ॥

पूर्वार्धार्थे उत्तरार्धार्थो हेतुः ॥ १ ॥ ननु गौरोऽहं स्थूलोऽहमिति आत्मनि देहतादात्म्यानुभवाद्देहनाशे कथमात्मस्थितिस्तत्राह—**य** इति । संस्थितिर्मर्यादा सैवात्र ग्राह्या न तादात्म्यम् । तत्रैवं सति एकस्मिन्कुण्डे घटे वा क्षते नष्टे सति द्वे अपि क्षीणे इति मूढानां व्यर्थकल्पनेत्यर्थः ॥ २ ॥ विनाशिनि नश्वरस्वभावे ॥ ३ ॥ यद्यात्मनो देहादितादात्म्यं नास्ति तर्हि कथं शाखाकम्पेन वृक्ष इव तत्प्रवृत्त्यायं संसरति तत्राह—**यादृश** इति । स्नेहः प्रीतियोग्यता उद्वेगो द्वेषयोग्यता ताभ्यां विवर्जितः ॥ ४ ॥ इतरेतरापेक्षा परस्परानुरागः ॥ ५ ॥ गताध्वानामध्वगानां आस्था अहंममताभिमानः परिदेवनं तद्वियोगजो विलापः तदुभयायोग्य इत्यर्थः ॥ ६ ॥ तत्कुतस्तत्राह—**यथे**ति । कल्पितवेतालस्य विकाराः करालवदनदशनन्यादानादयस्तज्जन्यात्प्रथमभयात्पुनःपुनस्तत्स्मरणेन बालस्य भीतयः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ स्वदेहे स्नेहाद्ययोग्यत्वमुपपाद्य स्त्र्यादिपिण्डेऽपि तद्दर्शयति—**क** इति । पतङ्गवद्यामोहरागाभ्यां प्रोद्भूतानां जनानां विषयाग्नौ पातवद्दृश्यमाना चेष्टा येनातिशयेनोपपद्येत सोऽतिशयः को नामेत्यर्थः ॥ ११ ॥ सुकुमारसुन्दरावयवसंनिवेशविशेष एव सोऽतिशयो दृश्यते तत्राह—**संनि**-

तज्ज्ञानां तु यथाभूतभूतपञ्चकदर्शनम् ॥ १२
मिथः शिलापुत्रकयोर्यथैकोपलपुत्रयोः ।
श्लिष्टयोरपि नो रागस्तथा चित्तशरीरयोः ॥ १३
मृत्पुंसां यादृशोऽन्योन्यमाशयः संगमे भवेत् ।
बुद्धीन्द्रियात्ममनसां संगमे तादृशोऽस्तु ते ॥ १४
नान्योन्यस्नेहसंबन्धभाजनं शैलपुत्रकाः ।
देहेन्द्रियात्मप्राणाश्च कस्यात्र परिदेवना ॥ १५
इतश्चेतश्च जातानि यथा संश्लेषयन्त्यलम् ।
तरङ्गास्तृणजालानि तथा भूतानि देहदृक् ॥ १६
संयुज्यन्ते वियुज्यन्ते तृणान्यब्धिजले यथा ।
मुक्तान्तःकलनं देहे भूतान्यात्मनि वै तथा ॥ १७
आत्मा चित्ततया देहभूतान्याश्लेषयन्स्थितः ।
तृणान्यावृत्तवृत्तान्तकलनोत्सिक्तमब्धिवत् ॥ १८
प्रबोधाच्चेत्यतां त्यक्त्वा व्रजत्यात्मात्मतां स्वयम् ।
स्वस्पन्दवशतो वारि त्यक्त्वाच्छत्वमिवाच्छताम् ॥ १९
ततो विश्लिष्टभूतौघो देहं संप्रति पश्यति ।
वायुस्कन्धगतो जन्तुर्वसुधामण्डलं यथा ॥ २०
पृथग्भूतगणं दृष्ट्वा देहातीतो भवत्यजः ।
परं प्रकाशमायाति सूर्यकान्तिरिवाहनि ॥ २१
जानात्यथात्मनात्मानं मानमेयामयोज्झितम् ।
मुक्तक्षीबतयेवान्तः स्वां संविदमनुस्मरन् ॥ २२
आत्मैव स्पन्दते विश्वं वस्तुजातैरिवोदितम् ।
तरङ्गकणकल्लोलैरनन्तास्म्बवम्बुधाविव ॥ २३
एवंप्रायमहाबोधा वीतरागा गतैनसः ।
जीवन्मुक्ताश्चरन्तीह महासत्त्वपदं गताः ॥ २४
यथा चरन्ति विविधैर्मणिरत्नैर्महोर्मयः ।
निरस्तवासनाश्चित्तव्यवहारैस्तथोत्तमाः ॥ २५
न कूलकाष्ठैर्जलधिर्न रजोभिर्नभस्तलम् ।
न म्लायति निजैर्लोकव्यवहारैरिहात्मवान् ॥ २६
गतैरभ्यागतैः स्वच्छैश्चपलैर्मलिनैर्जडैः ।
न रागो नाम्बुधेर्द्वेषो भोगैश्चाधिगतात्मनः ॥ २७
यन्मनोमननं किंचित्समग्रं जगति स्थितम् ।
तच्चेत्योन्मुखचित्तत्वविलासोल्लसनं विदुः ॥ २८
यदहं यच्च भूतादि कालत्रितयभावि यत् ।
दृश्यदर्शनसंबन्धविस्तारैस्तद्विजृम्भते ॥ २९
यद्दृश्यं तदसत्सद्वा दृष्टिमेकामुपाश्रितम् ।
अन्यत्त्वलेपकं तस्माद्धर्षशोकदशौ कुतः ॥ ३०
असत्यमेवासत्यं हि सत्यं सत्यं सदैव हि ।
सत्यासत्यमसद्विद्धि तदर्थं किं नु मुह्यसि ॥ ३१
असम्यग्दर्शनं त्यक्त्वा सम्यक्पश्य सुलोचन ।
न कश्चिन्मुह्यति प्रौढः सम्यग्दर्शनवानिह ॥ ३२
दृश्यदर्शनसंबन्धविस्तारैस्तद्विजृम्भते ।
दृश्यदर्शनसंबन्धे यत्सुखं पारमार्थिकम् ॥ ३३
अनुभूतिमयं तस्मात्सारं ब्रह्मेति कथ्यते ।
दृश्यदर्शनसंबन्धे सुखसंविदनुत्तमा ॥ ३४
ददात्यज्ञाय संसारं ज्ञाय मोक्षं सदोदयम् ।

---

**वेश** इति ॥ १२ ॥ भ्रात्रादिषु रागं वारयति—**मिथ** इति । एकोपलपुत्रयोरेकोपलजन्ययोः । श्लिष्टयोराश्लिष्टयोः ॥ १३ ॥ मृन्निर्मितानां पुंसां प्रतिमानां संगमे सत्यपि यादृशो ममतादिशून्य आशयो भावो भवेदित्याशयकल्पनयोक्तिः ॥ १४ ॥ ॥ १५ ॥ इतश्च इतश्च भिन्नप्रदेशयोर्जातानि तृणजालानि ॥ १६ ॥ मुक्तान्तःकलनं निर्मुक्तरागाभिमानं यथा स्यात्तथा भूतानि पुत्रपश्वादिप्राणिनः पृथिव्यादीनि वा स्वारब्धे देहे स्वाधिष्ठाने आत्मनि च तथा संयुज्यन्ते वियुज्यन्ते चेत्यर्थः ॥ १७ ॥ यथा अब्धिरावृत्तवृत्तान्त आवर्ताकारस्तत्कल्पनेन उत्सिक्तमुपचितं वेषं प्राप्य तृणकाष्ठादीन्याश्लेषयन् स्थितस्तथा आत्मापि चित्ततया चित्तवेषं प्राप्येत्यर्थः ॥ १८ ॥ केनोपायेन तर्हि आत्मा भूताश्लेषनिमित्ताच्चित्तभावान्मुच्यते तमाह—**प्रबोधादि**त्यादिना । त्यक्त्वा आच्छत्वमनच्छत्वम् । नञ्तत्पुरुषे नकारलोपे सवर्णदीर्घो नुडभावश्छान्दसः ॥ १९ ॥ विश्लिष्टभूतौघो मनःकृतभूताश्लेषनिर्मुक्तः । संप्रति प्रबोधकाले । वायुस्कन्धे गतः खेचरो देवादिः ॥ २० ॥ तत्फलमाह—**पृथगि**ति ॥ २१ ॥ मुक्तक्षीबतया निर्मुक्तमदिरामदतया ॥ २२ ॥ ॥ २३ ॥ २४ ॥ विविधैर्मणिश्रेष्ठैः संबध्यमाना अपि तदनासत्तया तेषु शिलाशकलादिसाम्येन यथा चरन्ति व्यवहरन्ति ॥ २५ ॥ यथा तद्वदिति पदे अत्राध्याहार्ये ॥ २६ ॥ स्वच्छैर्न रागो मलिनैर्न द्वेषः । विशेषणान्युभयत्र योज्यानि । अधिगतात्मनस्तत्त्वविदः ॥ २७ ॥ कुतो न रागस्तत्राह—**यदि**ति । मनोमननं सर्वं चिद्विलास एवेति ते यतो विदुरित्यर्थः ॥ २८ ॥ यदहमादि सर्वं दृश्यदर्शनसंबन्धविस्तारैर्भाति तत्केवलं मन एव विजृम्भते नान्यदित्यर्थः ॥ २९ ॥ इह दृक् दृश्यं चेति द्वयमध्ये एकां दृष्टिमुपाश्रितं तदधीनसिद्धिकं यद्दृश्यं तदसत्सद्वेत्यनिर्णीतत्वाद्धर्षशोकायोग्यम् । अन्यत्स्वतःसिद्धं दृग्रूपं त्वलेपकमसङ्गमुत्पन्नाभ्यामपि हर्षशोकाभ्यां न युज्यत इति तयोरुभयथापि संभावनैव नास्तीत्यर्थः ॥ ३० ॥ किंचासत्ये विषये हर्षशोकौ सत्ये वा सत्यासत्ये वा न त्रिष्वपि कल्पेषु तद्योग्यतेत्याह—**असत्यमेवे**ति । असत्यमसत्यमेव । तत्र हर्षशोकयोर्निर्विषयता स्पष्टैव । सत्यं तु नित्यसत्त्वाल्लाभप्रयुक्तहर्षस्यापगमप्रयुक्तशोकस्य चायोग्यं स्पष्टमेव । यत्तु तृतीयं सत्यासत्यं तच्च विरुद्धैक्यायोगादसदेवेत्याद्यकल्पमेव प्रविशति । तथाच न किंचित्तद्योग्यं जगत्यस्तीति तद्विषये मोहोऽयुक्त एवेत्यर्थः ॥ ३१ ॥ ॥ ३२ ॥ किंच भोगसुखार्थं सर्वैर्दृश्यदर्शनयोर्विषयेन्द्रिययोः संबन्ध इष्यते तत्राभिव्यज्यमानं पारमात्मिकमेव स्वप्रकाशत्वादनुभूत्यभिन्नं वृत्त्युपाधिकृतभेदतारतम्यादिनिरासेनाखण्डैक्ये ब्रह्मैव तदित्याह—**दृश्यदर्शने**त्यादिना ॥ ३३ ॥ ३४ ॥ विषयाकारवृत्त्या आस्वाद्यमानं विषये रागादिदोषजननेन संसारं

दृश्यदर्शनसंबन्धसुखमात्मवपुर्विदुः ॥ ३५
तद्दृश्यवलितं बन्धस्तन्मुक्तं मुक्तिरुच्यते ।
दृश्यदर्शनसंबन्धसुखसंविदनामया ॥ ३६
क्षयातिशयमुक्ता चेत्तन्मुक्तिः सोच्यते बुधैः ।
दृश्यदर्शनसंबन्धे यानुभूतिः स्वगोचरा ॥ ३७
दृश्यदर्शननिर्मुक्ता तामालम्ब्य भवाभवः ।
सौषुप्ती दृष्टिरेषा हि यात्येवं संप्रकाशते ॥ ३८
एवं च याति तुर्यत्वमेवं मुक्तिरिति स्मृता ।
दृश्यदर्शनमुक्तायां युक्तायां परया धिया ॥ ३९
दृश्यदर्शनसंबन्धसंविदस्यां तु राघव ।
नात्मा स्थूलो न चैवाणुर्न प्रत्यक्षो न चेतरः ॥ ४०
न चेतनो न च जडो न चैवासन्न सन्मयः ।
नाहं नान्यो न चैवैको नानेको नाप्यनेकवान् ॥ ४१
नाभ्याशस्थो न दूरस्थो नैवास्ति न च नास्ति च ।
न प्राप्यो नाति चाप्राप्यो न वा सर्वो न सर्वगः ॥ ४२
न पदार्थो नापदार्थो न पञ्चात्मा न पञ्च च ।
यदिदं दृश्यतां प्राप्तं मनःषष्ठेन्द्रियास्पदम् ॥ ४३
तदतीतं पदं यत्स्यात्तन्न किंचिदिवेह तत् ।
यथाभूतमिदं सम्यग्ज्ञस्य [1]संपश्यतो जगत् ॥ ४४
सर्वमात्ममयं विश्वं नास्त्यनात्ममयं क्वचित् ।
काठिन्यद्रवणस्पन्दखावकाशावलोकनैः ॥ ४५
आत्मैव सर्वं सर्वेषु भूवार्यनिलखाग्निषु ।
सत्तैवास्ति न वस्तूनां या या राम चिता विना ।
व्यतिरिक्तं ततोऽस्तीति विद्धि प्रोन्मत्तजल्पितम् ॥ ४६

एको जगन्ति सकलानि समस्तकाल-
कल्पक्रमान्तरगतानि गतागतानि ।
आत्मैव नेतरकलाकलनास्ति काचि-
दित्थंमतिर्भव तयातिगतो महात्मन् ॥ ४७

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषूपशमप्रकरणे मोक्षस्वरूपोपदेशो नाम द्विसप्ततितमः सर्गः ॥७२॥

## त्रिसप्ततितमः सर्गः ७३

श्रीवसिष्ठ उवाच ।

एवंविचारया दृष्ट्या द्वैतत्यागेन राघव ।
स्वभावः प्राप्यते तज्ज्ञैस्तज्ज्ञैश्चिन्तामणिर्यथा ॥ १
अथेमामपरां दृष्टिं शृणु रामानया यथा ।
दृश्यस्यात्मानमचलं भविष्यसि च दिव्यदृक् ॥ २
अहं खमहमादित्यो दिशोऽहमहमप्यधः ।
अहं दैत्या अहं देवा लोकाश्चाहमहं महः ॥ ३
अहं तमोऽहमभ्राणि भूः समुद्रादिकं त्वहम् ।
रजो वायुरथाग्निश्च जगत्सर्वमिदं त्वहम् ॥ ४
जगत्त्रयेऽहं सर्वत्र य आत्मैव किलास्थितः ।
कोऽहं किमन्यद्देहादि द्वित्वमेकस्य कीदृशम् ॥ ५
इति निश्चयवानन्तर्भूतमात्मतया जगत् ।
पश्य हर्षविषादाभ्यां नावशः परिभूयसे ॥ ६
तन्मयेऽस्मिन्किल जगत्यखिले संस्थितेऽनघ ।
किमात्मीयं परं किं स्यात्कमलेक्षण कथ्यताम् ॥ ७
किं तज्ज्ञव्यतिरेकेण विद्यते यदुपागतम् ।

ददाति । तद्विवेकेनाखण्डैकात्मभावेन गृह्यमाणं तु मोक्षमित्यर्थः ॥ ३५ ॥ ३६ ॥ क्षयातिशयौ पुण्यतारतम्यप्रयुक्तवृत्तिनाशवैशयोत्कर्षप्रयुक्तौ तन्मुक्ता चेत् । स्वगोचरा अखण्डपूर्णानन्दस्फुरणात्मिका ॥ ३७ ॥ एवमुक्तस्वरूपालंबने सौषुप्ती स्वरूपावरणदृष्टिर्याति अपगच्छति । एषा स्वरूपदृष्टिः संप्रकाशते ॥ ३८ ॥ ३९ ॥ दृश्यदर्शनसंबन्धसंवित् । एवं तुर्यत्वमेतीति पूर्वत्रान्वयः । तुर्यतालक्षणायां मुक्तौ यादृश आत्मा परिशिष्यते तं दर्शयति—**अस्यां** त्वित्यादिना ॥ ४० ॥ चेतनश्चैतन्यवान् । सन्मयः अस्तित्वाख्यद्वितीयभावविकारप्रचुरः । एकः एकत्वसंख्यागुणाश्रयः ॥ ४१ ॥ अभ्याशे समीपे तिष्ठतीत्यभ्याशस्थः । अस्ति सत्ताश्रयः ॥ ४२ ॥ न पदार्थो वाच्यत्वायोगात् । नापदार्थस्तुर्यादिपदलक्ष्यत्वात् । पञ्चानां भूतानामात्मा नेति न । पञ्चभूतस्वभावश्च नेत्यर्थः । उक्तार्थे उपपत्तिमाह—**यदिद**मिति ॥ ४३ ॥ यथाभूतं यथास्थितं सम्यक् तत्त्वतः संपश्यतः ॥ ४४ ॥ कथं तर्हि भूम्यादिभूतता दृश्यते तत्राह—**काठिन्ये**ति । आत्मैव स्वस्मिन् काठिन्यद्रवणस्य स्पन्दस्य खारूयबृहच्छिद्रस्य अवकाशस्य प्रकाशस्य च अवलोकनैः क्रमाद्भूवार्यादिषु जगद्भावेषु नटवस्थित इत्यर्थः ॥ ४५ ॥ कथमात्मैवैवं स्थित इति निश्चितं तत्राह—**सत्तैवे**ति । वस्तूनां या या सत्ता सा चिता तत्प्रथात्मना विना यतो नास्ति तत इत्यर्थः ॥ ४६ ॥ उक्तं सर्वं पिण्डीकृत्योपसंहरति—**एक** इति । समस्ते काले अनन्तेषु कल्पक्रमेषु च अन्तरे मध्ये गतानि निविष्टानि जगन्ति तेषु सकलानि गतागतानि जीवसंसरणानि च एक आत्मैव । इतरकलाकलना काचिन्नास्त्येव । हे महात्मन्, त्वं इत्थंमतिः संस्तया मत्या संसारमतिगतो भवेत्यर्थः ॥ ४७ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे मोक्षस्वरूपोपदेशो नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥

द्वे अहंभावने ग्राह्ये त्याज्याहंभावना परा ।
अहंभावत्रयापाये मुक्त्यनिच्छा च कीर्त्यते ॥ १ ॥

स्वभावः स्वस्वरूपावस्थितिलक्षणा मुक्तिः । तज्ज्ञैरात्मज्ञैः । तज्ज्ञैश्चिन्तामणितत्त्वज्ञैर्दैवैः ॥ १ ॥ सर्वाहंभावदृष्टिं दर्शयितुं प्रक्रमते—**अथे**ति ॥ २ ॥ महश्चन्द्रादिप्रभा ॥ ३ ॥ रजो रेणुः ॥ ४ ॥ सर्वातिरिक्तः परिच्छिन्नः कोऽहम् । मदन्यद्देहादि किम् । सर्वभूतस्यैकस्य मम द्वित्वं स्वगतभेदरूपं कीदृशम् ॥ ५ ॥ इति विचार्य निश्चयवान्संस्तदनन्तरं स्वान्तर्भूतं जगदात्मतया पश्य ॥ ६ ॥ तन्मये आत्ममये । स्वार्थे मयट् ॥ ७ ॥ यदुपागतं चेदिति

[1] संपश्यते इति मुद्रितपुस्तके पाठः.

हर्षमेतु विषादं वा विषादेऽज्ञो जगन्मयः ॥ ८
अहंकारदशावेते सात्त्विके द्वेऽतिनिर्मले ।
तत्त्वज्ञानात्प्रवर्तेते मोक्षदे पारमार्थिके ॥ ९
परोऽणुः सकलातीतरूपोऽहं चेत्यहंकृतिः ।
प्रथमा सर्वमेवाहमित्यन्योक्ता रघूद्वह ॥ १०
अहंकारदृगन्या तु तृतीया विद्यतेऽनघ ।
देहोऽहमिति तां विद्धि दुःखायैव न शान्तये ॥ ११
अथ चैतन्नयमपि त्यक्त्वा सकलसिद्धये ।
यच्छेषं तदुपालभ्य तिष्ठावष्टब्धतत्परः ॥ १२
सर्वातीतस्वरूपोऽपि सर्वसत्तातिगोऽपि च ।
असत्तापूरितजगदस्त्येवात्मा प्रकाशकः ॥ १३
स्वानुभूत्यैव पश्याशु स एवासि सदोदितः ।
आशयं हृदयग्रन्थिं त्यज तत्त्वविदांवर ॥ १४
नात्मास्त्यनुमया राम न चाप्तवचनादिना ।
सर्वदा सर्वथा सर्वं स प्रत्यक्षोऽनुभूतितः ॥ १५
यदिदं स्पर्शनं स्पन्दं किंचिद्यत्संविदाद्यपि ।
तत्सर्वमात्मा भगवान्दृश्यदर्शनवर्जितः ॥ १६
न सन्नासन्नसौ देवो नाणुर्नापि महानसौ ।
नाप्येतयोर्दृशोर्मध्यं स एवेदं च सर्वतः ॥ १७
स एव चैवं वदति स च वक्तुं न युज्यते ।

न तदन्यदिदं तात पश्यात्मानमनामयम् ॥ १८
नात्मायमयमप्यात्मा संज्ञाभेद इति स्वयम् ।
तेनैव सर्वगतया शक्त्या स्वात्मनि कल्पितः ॥ १९
संस्थितः स हि सर्वत्र त्रिषु कालेषु भास्करः[1] ।
सूक्ष्मत्वात्सुमहत्त्वाच्च केवलं न विभाव्यते ॥ २०
सत्स्वनन्तपदार्थेषु जीवत्वेनाभिबिम्बति ।
आत्मा पुर्यष्टकादर्शे स्वभाववशतः स्वतः ॥ २१
पुर्यष्टकोदयादेव स्वयमात्मानुभूयते ।
सर्वदा सर्वसंस्थः खे घनास्पन्दादिवानिलः ॥ २२
चिदात्मा सर्वगो व्यापी न क्वचिन्नाम संस्थितः ।
यद्वत्सर्वपदार्थानां सत्ता तद्वन्महेश्वरः ॥ २३
सति पुर्यष्टके तस्मिञ्जीवः स्फुरति नोपले ।
सति वायाविव रजः सति दीप इवेक्षणम् ॥ २४
इयं पुर्यष्टके स्वेच्छा स्वात्मन्येवात्मनि स्थिते ।
सति स्फुरत्यभ्युदिते भानाविव जनैषणा ॥ २५
यदि सूर्ये स्थिते व्योम्नि तादृशोचितसंस्थितिः ।
नश्यति व्यवहारोऽयं भास्करे तत्किमागतम् ॥ २६
यद्यात्मनि स्थिते देवे तत्सत्ता लब्धसंस्थितिः ।
देहो नाशमुपायाति तत्किं नष्टमिहात्मनि[2] ॥ २७
न जायते न म्रियते नादत्ते नाभिवाञ्छति ।

शेषः । विषादे तु दृश्यमाने अज्ञ एवासौ । यतो जगन्मयो न चिन्मय इत्यर्थः ॥ ८ ॥ एते वक्ष्यमाणे । संधिरार्षः ॥ ९ ॥ अणुः आकाशवदस्थूलस्वभावः । सकलादवस्थात्रयदृश्याददतीतः ॥ १० ॥ विद्यते स्वभावतो न शास्त्रतः ॥ ११ ॥ यत् शेषं शिष्यमाणं निरहंभावं पूर्णचिन्मात्रम् ॥ १२ ॥ शोधनेन सर्वातीतस्वरूपो बाधनेन तु सर्वासत्तां गतः । सर्वबाधे आत्मापरिशेषशङ्कां वारयति—**असत्तेति** । असत्तया जगद्बाधोपायेनैव स्वेन आपूरितं जगद्येन ॥ १३ ॥ युक्तयः शास्त्राणि गुरुवचनानि च दिक्प्रदर्शनमात्रं तत्परिचयस्तु स्वानुभवेनैवेत्याशयेनाह—**स्वानुभूत्येति** । आशया देहादिवासनास्तत्सहितं हृदयग्रन्थिमहंकारतादात्म्याध्यासम् ॥ १४ ॥ ननु 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेर्धर्माधर्मादिवच्छ्रुतितद्दर्शितयुक्तिमात्रविश्वासादलौकिक आत्मास्तीति ज्ञायते स कथं स्वानुभववेद्यः स्यात्तत्राह—**नेति** । न धर्मादिवदत्यन्तपरोक्षात्मसद्भावं प्रतिपादयितुं श्रुत्यादयः प्रवृत्ताः किंतु सर्वानुभवसिद्धसत्ताकमात्मानं विवेचयितुमिति भावः ॥ १५ ॥ सर्वेषां स प्रत्यक्ष इति यदुक्तं तदुपपादयति—**यदिदमिति** । बाह्याभ्यन्तरविषयेषु अन्तःकरणवृत्तिस्पन्दनात्स्पन्दि यद्दर्शनं साक्षादर्थप्रथारूपमपरोक्षं प्रसिद्धं यच्च किंचिदनुमित्युपमितिशाब्दसंविदाद्यपि प्रसिद्धं तत्सर्वं दृश्यस्य विषयस्य दर्शनस्यान्तःकरणवृत्त्युपाधेश्च वर्जने भगवान्स्वप्रकाश आत्मैव नित्यापरोक्षः सर्वानुभवसिद्धः परिशिष्यत इत्यर्थः । तथाच श्रुतिः 'प्रतिबोधविदितं मतममृतत्वं हि विन्दते' इति ॥ १६ ॥ तस्य प्रत्यक्षपरोक्षवेद्यव्यक्ताव्यक्तोभय-

वैलक्षण्योक्त्या दृश्यदर्शननिर्मुक्ततामुपपादयति—**न सन्नास-न्निति** । तस्मिन् जगद्बाधप्रदर्शनेनापि तदुपपादयति—**स एवेति** ॥१७॥ एवं वागादिकर्मेन्द्रियप्रवृत्तिनिमित्ततया च तदव्यवहार्यं तं परिचीय वागादेस्तद्विषयस्य च तत्र बाधेन स एव परिशेष्य इत्याशयेनाह—**स एवेति** । इदं वागादि तद्व्यवहार्यं च ॥१८॥ आत्मानात्मनामरूपविभागस्तेनैव स्वाज्ञानशक्त्या कल्पित इति बाध्यत्वोपपत्तिरित्याशयेनाह—**नेति** ॥ १९ ॥ नित्यापरोक्षस्वप्रकाशपूर्णस्वभावोऽपि सूक्ष्मत्वात्स्थूलासक्तबुद्धिभिः स न विभावयितुं शक्य इत्यर्थः ॥ २० ॥ स्थूलासक्तौ तु तस्य मोहात्पुर्यष्टकोपाधौ प्रतिबिम्बनेन जीवभावापत्तिर्निमित्तमित्याशयेनाह—**सत्स्विति** । सत्सु सर्गक्रमेणोत्पन्नेषु भोग्यभोगायतनाद्यनेकपदार्थेषु ॥ २१ ॥ अनुभूयते अहमित्यभिव्यक्तस्वरूपः क्रियते । घनेन मूर्तेन व्यजनादिना । आस्पन्दान्नोदनात् ॥२२॥ नामेत्यवधारणे । क्वचिद्देहे एव संस्थित इति नेत्यर्थः ॥ २३ ॥ परिच्छिन्नाहंतया स्फुरणे तु पुर्यष्टकं हेतुरित्याह—**सतीति** ॥२४॥ पुर्यष्टके इयं प्रसिद्धा स्वेच्छाप्रीतिर्विचित्रभोगेच्छा च परमप्रेमास्पदे निरतिशयानन्दे स्वात्मनि स्थिते स्फुरति । यथा भानौ सूर्ये नभसि स्थिते सति सर्वजनानां तत्तत्क्रियाफलैषणा स्फुरति तद्वत् । 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतेरात्मैव सर्वव्यवहारदूरोऽपि प्रियाप्रियादिसर्वव्यवहारनिर्वाहक इत्यर्थः ॥ २५ ॥ अस्त्वेवं किं ततस्तत्राह—**यदीति** । तादृशे तत्तदेषणाफले उचिता अनुरूपा स्थितिर्यस्य ॥ २६ ॥ २७ ॥ आत्मा



१ भास्वरः इति पाठः. २ नष्टमिहात्मन इति पाठः.

न मुक्तो न च बद्धोऽयमात्मा सर्वस्य सर्वदा ॥ २८
आत्माप्रबोधाभ्युदिता निरात्मन्यात्मतां गता ।
सर्परज्जुभ्रमाकारा भ्रान्तिर्दुःखाय केवलम् ॥ २९
अनादित्वान्न जातोऽयमजातत्वान्न नश्यति ।
आत्मात्मव्यतिरिक्तं तु नाभिवाञ्छत्यसंभवात् ॥ ३०
दिक्कालाद्यनवच्छेदान्न बद्धोऽयं कदाचन ।
बन्धाभावे क्व मुक्तिः स्यादमोक्षस्तेन संस्थितः ॥ ३१
एवंगुणविशिष्टोऽयमात्मा सर्वस्य राघव ।
अविचारवशान्मूढो लोकोऽयं परिरोदिति ॥ ३२
सम्यगालोकिताशेषपूर्वापरजगत्क्रमः ।
मा शोकं गच्छ सुमते मौर्ख्योपगतलोकवत् ॥ ३३
द्वे एव कलने त्यक्त्वा मोक्षबन्धात्मिके यथा ।
विदुषा व्यवहर्तव्यं यन्त्रेणेवात्ममौनिना ॥ ३४
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
मोक्षो हि चेतो विमलं सम्यग्ज्ञानविबोधितम् ॥ ३५
सकलाशास्वसंसक्त्या यत्स्वयं चेतसः क्षयः ।
स मोक्षनाम्ना कथितस्तत्त्वज्ञैरात्मदर्शिभिः ॥ ३६
यावत्प्रबोधो विमलो नोदितस्तावदेव सः ।
मौर्ख्यादीनतया राम भक्त्या मोक्षोऽभिवाञ्छ्यते ॥ ३७
परं प्रबोधमासाद्य चित्ते चित्तत्त्वतां गते ।
दश मोक्षा न वाञ्छयन्ते किमुतैको हि मोक्षकः ॥ ३८
अयं मोक्षस्त्वयं बन्धः पेलवां कलनामिति ।
परित्यज्य महात्यागी स त्वमेव भवाभव ॥ ३९
परिगलितविकल्पनां प्रयातः
सगरसुतौघनिखातमेखलाङ्कम् ।
अवनिवलयमन्तरस्तसङ्ग-
श्चिरमनुपालय सर्वदोदितश्रीः ॥ ४०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे स्वात्मविचारो नाम त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## चतुःसप्ततितमः सर्गः ७४

श्रीवसिष्ठ उवाच ।
लीलयाऽपश्यति वपुः कालेनात्मनि जायते ।
रम्यस्यापश्यतो वक्त्रं हृदि दौरूप्यधीरिव ॥ १
तद्वशादियमायाता महती मेदुरोदरा ।
माया मदमहाशक्तिः सुरास्वादलवादिव ॥ २
तयानया विकारिण्या तदतद्भावभूतया ।
इदं संपन्नमखिलं तापादिव मरौ पयः ॥ ३
मनो बुद्धिरहंकारो वासनाश्चेन्द्रियाण्यपि ।
एवंकलितनामाङ्कैः स्फुरत्यात्माब्धिरम्बुभिः ॥ ४
चित्ताहंकारयोर्द्वित्वं वचस्यस्ति न वस्तुतः ।
यच्चित्तं स ह्यहंकारो योऽहंकारो मनो हि तत् ॥ ५
व्यतिरिक्तं हिमाच्छौक्ल्यमिति संकल्प्यते यथा ।

तर्हि स्वतः कीदृशस्तमाह—नेति ॥ २८ ॥ अतएव तस्याज्ञानादेवानर्थभ्रान्तिरित्याह—आत्मेति ॥ २९ ॥ प्रबोधे तर्हि कीदृशस्तमाह—अजातत्वादिति ॥ ३० ॥ ३१ ॥ एवंगुणविशिष्ट इत्थंस्वभाव इति यावत् ॥ ३२ ॥ मौर्ख्येणोपगता ये लोका जनास्तद्वत् ॥ ३३ ॥ यथा पर्वतदेशे जलयन्त्रेण पेषणे प्रवृत्ते तत्संनिधिमात्रेण तत्कुर्वाणेनेव स्थितेन आत्मना स्वतस्तु मौनिना कामादिव्यापारशून्येन पुरुषेण स्थीयते तथा विदुषा देहादिना व्यवहर्तव्यमित्यर्थः ॥ ३४ ॥ सम्यग्ज्ञानेन विबोधितं बोधात्ममात्रतां नीतम् ॥ ३५ ॥ आशास्वाशास्यमानेषु विषयेष्वसंसक्त्या । स्वयं स्वपरिणामबोधवृत्त्या क्षयः ॥ ३६ ॥ दीनतया कार्पण्येन । भक्त्या नित्यप्राप्तेऽप्यप्राप्तिकल्पनया ॥ ३७ ॥ चित्तत्त्वतां पारमार्थिकचिन्मात्रताम् । स्वात्मव्यतिरिक्ता दशमोक्षाश्चेत्स्युस्तेऽपि न वाञ्छयन्ते किमुत एकोऽल्पो मोक्षो मोक्षको वाञ्छयते इत्यर्थः ॥ ३८ ॥ हे अभव, सः मोक्षस्त्वमेव भव ॥ ३९ ॥ परिगलिता विकल्पना यत्र तथाविधां दशां प्रयातस्त्वं सगरसुतैर्निखाता मेखला समुद्रस्तदङ्कं तच्चिह्नितमवनिवलयं चिरमनुपालय । यतस्त्वमन्तः अस्तसङ्गस्ततस्ते राज्यादिपालनं न दोषायेत्यर्थः ॥ ४० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे स्वात्मविचारो नाम त्रिसप्ततितमः सर्गः ॥ ७३ ॥

प्रमादात्संसृतिभ्रान्तिः प्रबोधात्पूर्णता सदा ।
जीवन्मुक्तिगुणालिश्च विस्तरेणात्र वर्ण्यते ॥ १ ॥

'अविचारवशान्मूढो लोकोऽयं परिरोदिति' इति यदुक्तं तदादौ प्रपञ्चयति—लीलयेत्यादिना । प्रलयसुषुप्त्योरज्ञानावृतत्वान्निरतिशयानन्दरूपत्वात्परमप्रेमास्पदं स्वस्वरूपमपश्यति आत्मनि कामकर्मवासनापरिपाकक्रमप्राप्तेन सर्गजागरादिकालेन लीलया चिद्विलासेनैव वपुः सूक्ष्मस्थूलसमष्टिव्यष्टिशरीरं जायते । यथा रम्यस्य कान्तापुत्रादेर्वक्त्रमपश्यतो विरहिपुरुषस्य हृदि म्लानिकार्श्यादिदौरूप्यापादिका दौर्मनस्यधीर्निरन्तरं जायते तद्वदित्यर्थः ॥ १ ॥ तस्य देहद्वयस्य वशात्तदहंभावाध्यासेन तद्वशताप्राप्तेरियं निरतिशयानर्थरूपा माया मिथ्याभूतैव रागलोभमोहादिर्मदस्य महाशक्तिरायाता ॥ २ ॥ तयानया रागादिशक्त्या । प्रवृत्तिभोगपुण्यपापवासनाद्यनर्थपरम्पराविकारवत्या । तस्य परमात्मनः अतद्भावोऽन्यथाभावस्तेन भूतया लब्धसत्तया ॥ ३ ॥ एवं कलितानि नामान्यङ्कानि रूपाणि च यैस्तथाविधैः स्वस्वरूपाम्बुभिः ॥ ४ ॥ अनर्थप्राप्तिप्रकारमुक्त्वा तदुच्छेदोपायं वक्तुं प्रथममर्थचेतनाच्चित्तं तन्मननान्मनस्तदध्यवसायाद्बुद्धिस्तदभिमानादहंकार इति एकमेवान्तःकरणमङ्कुरकाण्डमूलप्ररोहशाखादिप्ररोहक्रमेण वृक्ष इव सर्वतः प्रसृतमवतिष्ठत

मुधैव कल्प्यते भेदश्चित्ताहंकारयोस्तथा ॥ ६
मनोहंकारयोरन्तर्द्वयोरेकतरक्षये ।
क्षीणे द्वे एव हि यथा पटशौक्ल्ये पटक्षये ॥ ७
तुच्छां मोक्षधियं त्यक्त्वा बन्धबुद्धिं तथैषणाम् ।
स्ववैराग्यविवेकाभ्यां केवलं क्षपयेन्मनः ॥ ८
मोक्षो मेऽस्त्विति चिन्तान्तर्जाता चेदुत्थितं मनः ।
मननोत्के मनस्युच्चैर्वपुर्दोषाय केवलम् ॥ ९
आत्मन्यतीते सर्वस्मात्सर्वभूतेऽथवा तते ।
को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ १०
वायुः स्पन्दनधर्मत्वाद्यदा चलति देहके ।
तदा स्फुरति हस्ताङ्गरसनापल्लवावली ॥ ११
पादपे पल्लवश्रेणीं चालयत्यनिलो यथा ।
तथैवाङ्गावलीं वायुर्देहे संचालयत्यलम् ॥ १२
चित्सर्वव्यापिनी सूक्ष्मा न चला नैव चाल्यते ।
न स्वतः स्पन्दमायाति देवाचल इवानिलैः ॥ १३
प्रतिबिम्बितसर्वार्था केवलं स्वात्मनि स्थिता ।
प्रकाशयति बोधेन जगन्तीमानि दीपवत् ॥ १४
तत्र कोऽयं मुधा मोहो भवतामतिदुःखदः ।
अयं सोऽहं ममाङ्गानि ममेदं चेति दुर्धियाम् ॥ १५
इति कल्लोलहतया दृशा नित्यमनित्यया ।
ज्ञत्वकर्तृत्वभोक्तृत्वक्रिया समुपलभ्यते ॥ १६
तत्रायमहमागन्ता भोक्ता कर्तेति जायते ।
मुधैवाज्ञाततापोत्था मृगतृष्णेव वासना ॥ १७
अज्ञतैषा मनोमत्तमृगं[1] विषयतर्षुलम् ।
असत्यैव हि सत्येव मृगतृष्णेव कर्षति ॥ १८
विज्ञाता सत्यरूपाङ्ग नाशं याति पलायते ।
विप्रमध्यात्परिज्ञाता यथा चाण्डालकन्यका ॥ १९
अविद्या संपरिज्ञाता न चैनं परिकर्षति ।
मृगतृष्णा परिज्ञाता तर्षुलं नावकर्षति ॥ २०
परमार्थावबोधेन समूलं राम वासना ।
दीपेनेवान्धकारश्रीर्गलत्यालोक एति च ॥ २१
नास्त्यविद्येति संजाते निश्चये शास्त्रयुक्तितः ।
गलत्यविद्या तापेन तुषारकणिका यथा ॥ २२
देहस्यास्य जडस्यार्थे किं भोगैरितिनिश्चयः ।
भिनत्त्याशामलं ज्ञाता पञ्जरं केसरी यथा ॥ २३
आशापरिकरे राम नूनं परिहृते हृदा ।
पुमानागतसौन्दर्यो ह्लादमायाति चन्द्रवत् ॥ २४
परां शीतलतामेति वृष्टिधौत इवाचलः ।
निर्वृतिं परमां धत्ते प्राप्तराज्य इवाधमः ॥ २५
शोभते परया लक्ष्म्या शरदीव नभस्तलम् ।
आत्मन्येव न मात्युच्चैः कल्पस्यान्त इवार्णवः ॥ २६
भवत्यपेतसंरम्भो वृष्टिमूक इवाम्बुदः ।
तिष्ठत्यात्मनि संवेत्ता प्रशान्त इव वारिधिः ॥ २७
परं धैर्यमुपादत्ते स्थैर्यं मेरुरिवाचलः ।
राजते स्वच्छया लक्ष्म्या शान्तेन्धन इवानलः ॥ २८
भवत्यात्मनि निर्वाणः प्रशान्त इव दीपकः ।
तृप्तिमायाति परमां नरः पीतामृतो यथा ॥ २९
अन्तर्दीपो घट इव मध्यज्वाल इवानलः ।
स्फुरद्दीप्तिर्मणिरिव प्रयात्यन्तः प्रकाशताम् ॥ ३०
सर्वात्मकं सर्वगतं सर्वेशं सर्वनायकम् ।
सर्वाकारं निराकारं स्वमात्मानं प्रपश्यति ॥ ३१

---

इत्याह—**चित्ते**ति द्वाभ्याम् ॥ ५ ॥ ६ ॥ ऐक्योक्तिफलमाह—**मन** इति ॥ ७ ॥ इदानीं तदुच्छेदोपायमाह—**तुच्छा**मिति ॥ ८ ॥ मोक्षेच्छा कुतस्त्याज्या तत्राह—**मोक्ष** इति । मनसि मननोत्के सति तदेव वपुः शरीराकारं भवति, तच्च पुनर्बहिर्मुखतापादनाद्दोषायेत्यर्थः ॥ ९ ॥ परिच्छिन्नवपुर्भाव एवास्य दोषो न शुद्धात्मभावो जगदात्मभावो वेत्याशयेनाह—**आत्मनी**ति । तस्मात्परिच्छेदमननमेव निर्मूलं कुर्वित्यर्थः ॥ १० ॥ प्राणादिवाय्वधीनचलनादिधर्मकदेहादिवैलक्षण्यमात्मनो दर्शयति—**वायु**रित्यादिना । स्फुरति संचलति ॥ ११ ॥ १२ ॥ देवाचलो मेरुः ॥ १३ ॥ नन्वस्तु शुद्धात्मभावे एवं, सर्वात्मभावे तु शाखाचलनाद्वृक्षस्येवात्मनश्चलनं दुर्वारमिति चेत्तत्राह—**प्रतिबिम्बिते**ति । तथाच चलदनेकप्रतिबिम्बात्मभावापन्नापि स्फटिकशिला यथा कूटस्था तथा आत्मापीति भावः ॥ १४ ॥ तत्रैवमत्यन्तवैधर्म्ये सति अयं देहः स प्रसिद्धोऽहम् । इदं बाह्यं स्त्रीपुत्रादि च मम इति मोहः । भवतामिति रामेतरजनान्प्रत्युक्तिः । दुस्थिता धीर्येषाम् । 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति ध्यायत्यर्थं प्रति दुरः अगतित्वात् 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इत्युक्तेर्न यण् ॥ १५ ॥ एवमत्यन्तवैधर्म्येऽपि देहे ज्ञत्वादय आत्मनि कर्तृत्वादयश्च विरुद्धधर्मा अविद्याकल्लोलरागाद्युपहतया देहादितादात्म्यसंसर्गाध्यासप्रयुक्तत्वादनित्यया भ्रान्तिदृशैवोपलभ्यन्त इत्यर्थः ॥ १६ ॥ उपलब्ध्यनुसारेणैवोत्तरोत्तरभ्रान्तिबीजभूता वासनापि जायत इत्याह—**तत्रे**ति । अज्ञातः तूलाज्ञानावृतस्तापो मरुदातपस्तदुत्था ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ आलोकः अपरिच्छिन्नात्मप्रकाशः । एति आविर्भवति ॥ २१ ॥ २२ ॥ इतिनिश्चय इति बहुव्रीहिः । ज्ञाता तत्त्वज्ञः । आशाप्रयोजकं मलमज्ञानं भिनत्ति ॥ २३ ॥ आशायाः परिकरे परिवारभूते देहाभिमानादौ ॥ २४ ॥ अधमो दरिद्रः ॥ २५ ॥ न माति न संमितो भवति । न परिच्छिद्यत इति यावत् ॥ २६ ॥ अपेतसंरम्भस्त्यक्तदुरभिनिवेशः । वर्षासु वृष्ट्या शरदि मूको गर्जनादिशून्यः ॥ २७ ॥ धैर्यं विषयैरप्रधृष्यताम् । स्थैर्यं भयस्थानैरप्रकम्प्यताम् ॥ २८ ॥ २९ ॥ ३० ॥ व्यवहारे सर्वाकारं परमा-

[1] पनं मनोमृगम्.

हसत्यलमतीतास्ताः पेलवा दिवसावलीः ।
यासु स्मरशरश्रेणीचपलं चित्तमास्थितम् ॥ ३२
सङ्गरङ्गविनिष्क्रान्तः शान्तमानमनोज्वरः ।
अध्यात्मरतिरासीनः पूर्णः पावनमानसः ॥ ३३
निर्मृष्टकामपङ्काङ्कश्छिन्नबन्धनिजभ्रमः ।
द्वन्द्वदोषभयोन्मुक्तस्तीर्णसंसारसागरः ॥ ३४
प्राप्तानुत्तमविश्रान्तिर्लब्धालभ्यपरास्पदः ।
अनिवृत्तिपदं प्राप्तो मनसा कर्मणा गिरा ॥ ३५
सर्वाभिवाञ्छितारम्भो न किंचिदपि वाञ्छति ।
सर्वानुमोदितानन्दो न किंचिदनुमोदते ॥ ३६
न ददाति न चादत्ते न स्तौति न च निन्दति ।
नास्तमेति न चोदेति न तुष्यति न शोचति ॥ ३७
सर्वारम्भपरित्यागी सर्वोपाधिविवर्जितः ।
सर्वाशासंपरित्यागी जीवन्मुक्त इति स्मृतः ॥ ३८
सर्वैषणाः परित्यज्य चेतसा भव मौनवान् ।
धारा निरवशेषेण यथा त्यक्त्वा पयोधरः ॥ ३९
न तथा सुखयत्यङ्ग संलग्ना वरवर्णिनी ।
यथा सुखयति स्वान्तसिन्दुशीता निराशता ॥ ४०
न तथेन्दुः सुखयति कण्ठलग्नोऽपि राघव ।
नैराश्यं सुखयत्यन्तर्यथा सकलशीतलम् ॥ ४१
पुष्पपूर्णनवलतो न तथा राजते मधुः ।
यथोदारमतिर्मौनी नैराश्यसममानसः ॥ ४२
न हिमाद्रेर्न मुक्ताभ्यो न रम्भाभ्यो न चन्दनात् ।
न च चन्द्रमसः शैत्यं नैराश्याद्यदवाप्यते ॥ ४३
अपि राज्यादपि स्वर्गादपीन्दोरपि माधवात् ।
अपि कान्तासमासङ्गान्नैराश्यं परमं सुखम् ॥ ४४
तृणवन्नोपकुर्वन्ति यत्र त्रिभुवनश्रियः ।
सा परा निर्वृतिः साधो नैराश्यादुपलभ्यते ॥ ४५
आपत्करञ्जपरशुं पराया निर्वृतेः पदम् ।
पुष्पगुच्छं शमतरोरालम्बस्व निराशताम् ॥ ४६
गोष्पदं पृथिवी मेरुः स्थाणुराशाः समुद्गिकाः ।
तृणं त्रिभुवनं राम नैराश्यालंकृताकृतेः ॥ ४७
दानादानसमाहारविहारविभवादिकाः ।
क्रिया जगति हस्यन्ते निराशैः पुरुषोत्तमैः ॥ ४८
पदं यस्य न बध्नाति कदाचित्कलना हृदि ।
तृणीकृतत्रिभुवनः केनासावुपमीयते ॥ ४९
इदमेवास्त्विदं मास्तु ममेति हृदि रञ्जना ।
न यस्यास्ति तमात्मेशं तोलयन्ति कथं जनाः ॥ ५०
सर्वसंकटपर्यन्तमसंकटमलं सुखम् ।
सौभाग्यं परमं बुद्धेर्नैराश्यमवलम्ब्यताम् ॥ ५१
नाशास्तेनत्वमाशानां विद्धि मिथ्याभ्रमं जगत् ।
वहद्रथस्थदिक्चक्रपरावर्तवदुत्थितम् ॥ ५२
किं मुह्यसि महाबाहो मूर्खवद्बोधितोऽपि सन् ।
ममेदं तदयं सोऽहमित्युद्भ्रान्तेन चेतसा ॥ ५३

थैतो निराकारम् ॥ ३१ ॥ ३२ ॥ विषयिजनसङ्गाद्विषयानुरञ्जनाच्च विनिष्क्रान्तः ॥ ३३ ॥ शीतोष्णसुखदुःखादयो द्वन्द्वदोषाः ॥ ३४ ॥ अनिवृत्तिपुनरावृत्तिशून्यं पदं साम्राज्यम् । मनसेत्यादेरुत्तरत्रान्वयः ॥ ३५ ॥ सर्वैर्जनैरुपादेयतया अभिवाञ्छित आरम्भश्चारित्र्यं यस्य । आनन्दश्चारित्र्यफलम् ॥ ३६ ॥ अस्तं स्वरूपतिरोधानं नैति नोदेति । उदयं पुनः स्वरूपाविर्भावं च नैति सकृद्विभातत्वादित्यर्थः ॥ ३७ ॥ ३८ ॥ रामं प्रति तल्लक्षणानि शिक्षयति—**सर्वैषणा** इत्यादिना । निरवशेषेण निःशेषतया धाराः जलानि त्यक्त्वा पयोधरो यथा भवति तथेत्यर्थः ॥ ३९ ॥ एषणात्यागमेव प्रशंसति—**न तथे**त्यादिना ॥ ४० ॥ सकलं जगच्छीतलं यस्मात्तत्सकलशीतलम् ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ स्थाणुश्छिन्नावशिष्टतरुः । आशा दिशः । समुद्गिकाः क्षुद्रसंपुटिकाः ॥ ४७ ॥ दानं लौकिकं शास्त्रीयं च । आदानं धनादेः स्वीकारः । समाहारः संग्रहेण कोशाद्युपचयः । विहारो धनव्ययेन पुत्रक्रीडनम् । विभवा वस्त्रालंकारान्नपानादिसंभारसंपत्तयस्तदादिकाः । हस्यन्ते बह्वायासतुच्छफलानर्थबीजस्य मूढैरन्यथाभिमतत्वेन हासयोग्यत्वादिति भावः ॥ ४८ ॥ कलना आशा ॥ ४९ ॥ आत्मनो मनस ईशं स्वाधीनचित्तम् । आत्मा स्वयमेवेशः सर्वेश्वरस्तं वा ॥ ५० ॥ पर्यन्तं पारम् । बुद्धेः परमं सौभाग्यं सार्थक्यम् ॥ ५१ ॥ हे राम, ते तव आशा न सन्ति । त्वं च आशानां संबन्धी नासि । अतो वैराग्यादिसाधनसंपत्त्या मुख्याधिकारित्वात्तत्त्वज्ञानसंपत्त्या जगत् वहति धावति, रथे स्थितस्य पुंस उभयपार्श्वदिशोर्भ्रान्त्या तरुगुल्मादेश्चक्राकारपरावर्तवन्मिथ्याभ्रममात्रं विद्धीत्यर्थः । अथवा न आशाऽवलम्ब्यताम् । आशानां स्तेनत्वं विवेकविज्ञानापहारेणात्मसुखविभ्रंशकत्वमेव । जागतं हि सुखं मूढैराशासहस्रैराशास्यते । जगत्तु मिथ्याभ्रमं वहति रथे स्थितयोश्चक्रयोरूर्ध्वाधोदिक्षु परावर्तौ यद्वन्नेम्यवलम्बिपिपीलिकादेः पतनपेषणाद्यनर्थहेतुस्तद्वत्स्वावलम्बिनां जननमरणाद्यनर्थार्थमेवोत्थितं विद्धीत्यर्थः । अथवा ननु उत्कृष्टसुखाशया निकृष्टसुखाशाप्रमोषदर्शनात्पूर्वपूर्वाशाप्रमोषार्थमाशान्तरोपादाने आशाभिवृद्धिरेव स्यान्न नैराश्यमिति रामशङ्कामालक्ष्याह—**नेति** । उत्कृष्टाशानां निकृष्टाशास्तेनत्वं अभिप्रेत्य नैराश्यं मयोक्तमिति न विद्धि । यतो जगन्मिथ्यावस्तुष्वेव आशापरम्पराजननेन भ्रमयति तथाविधम् । उत्कर्षनिरूपकापकर्षस्यैवाप्रसिद्धेः । यतो वहद्रथस्थस्य दिक्चक्रेषु पर्यायेण परावर्तौ भ्रमणं वहद्रथवेगेन दिङ्मोहो वा तद्वदुत्थितं तदित्यर्थः । अथवा न आशास्तेनत्वमाशानाम् । वित् हि इति च्छेदः । वित् आत्मवेत्ता किंचिदपि नाशास्ते न वाञ्छति । हि यस्माज्जगन्मिथ्याभ्रमम् । नाशास्यं पुरुषार्थरूपं जगत्यस्ति अतस्त्वं आशानां संबन्धी न भवेत्यर्थः । शेषं प्राग्वत् ॥ ५२ ॥ आत्यन्तिकनैराश्योपायमन्विष्य तददर्शनान्मुह्यमानमिव राम-

१ अतीताः स्वाः इत्यपि क्वचित्.

आत्मैवेदं जगत्सर्वं नानातेह न विद्यते ।
एकरूपं जगज्ज्ञात्वा धीरैर्नाम न खिद्यते ॥ ५४
यथाभूतपदार्थौघदर्शनादेव राघव ।
परमाश्वासनं बुद्धेर्नैराश्यमधिगच्छति ॥ ५५
भावाभावविसंवादमुक्तमाद्यन्तयोः स्थितम् ।
यद्रूपं तत्समालम्ब्य पदार्थानां स्थितिं कुरु ॥ ५६
वैराग्यवीरमनसो मायेयमतिमोहिनी ।
पलाय्य याति संसारी मृगी केसरिणो यथा ॥ ५७
कान्तामुद्दाममदनां लोलां वनलतामिव ।
जर्जरोपलपाञ्चालीसमां पश्यति धीरधीः ॥ ५८
भोगा नानन्दयन्त्यन्तः खेदयन्ति न चापदः ।
दृश्यश्रियो हरन्त्यङ्ग नतमद्रिमिवानिलाः ॥ ५९
रक्तबालाङ्गनस्यापि ज्ञस्योदारधिया मुनेः ।
कणशः पांसुतां यान्ति मनसः स्मरसायकाः ॥ ६०
रागद्वेषैः स्वरूपज्ञो नावशः परिकृष्यते ।
स्पन्द एवास्य नैताभ्यां किमुताक्रमणं भवेत् ॥ ६१
समदृष्टलतालोलवनितोऽद्रिशिलाकृतिः ।
रमते नैष भोगेषु पान्थो मरुमहीष्विव ॥ ६२
अयत्नोपनतं सर्वं लीलयाऽसक्तमानसः ।
भुङ्क्ते भोगभरं प्राज्ञस्त्वालोकमिव लोचनम् ॥ ६३
काकतालीयवत्प्राप्ता भोगाली ललनादिका ।
स्वादिताप्यङ्ग धीरस्य न दुःखाय न तुष्टये ॥ ६४
सम्यग्दृष्टपथं तज्ज्ञं सुखदुःखमती मनाक् ।
द्वे वीच्याविव शैलेन्द्रं क्षोभं नेतुं न शक्नुतः ॥ ६५
हेलयालोकयन्भोगान्भृदुर्दान्तो गतज्वरः ।
स्वमेव पदमालम्ब्य सर्वभूतान्तरस्थितम् ॥ ६६
ज्ञस्तिष्ठति गतव्यग्रो व्यग्रेणापि समन्वितः ।
जगन्ति जनयन्नेव ब्रह्मेवात्मपरायणः ॥ ६७
आपतत्सु यथाकालं यथादेशं यथाक्रमम् ।
सुखदुःखेषु न क्षोभमेति भूभृदृतुष्विव ॥ ६८
मज्जतोऽपि बहुज्ञस्य राम कर्मेन्द्रियभ्रमैः ।
असक्तमनसो नित्यं न किंचिदपि मज्जति ॥ ६९
कलङ्क्यन्तःकलङ्केन प्रोच्यते हेम नान्यथा ।
भावासक्त्या समासक्त उक्तो जन्तुर्हि नान्यथा ॥ ७०
शरीराद्व्यतिरिक्तं ज्ञं पश्यतः प्रविवेकिनः ।
निकर्तिताङ्गकस्यापि न किंचित्प्रविकर्तितम् ॥ ७१
सकृत्प्रभातं विमलं यज्ज्ञातं ज्ञातमेव तत् ।
नहि बन्धुः परिज्ञातः पुनरज्ञाततां व्रजेत् ॥ ७२
सर्पभ्रान्तौ निवृत्तायां न रज्ज्वां सर्पभावना ।
पुनरेति यथा प्रावृण्नदी गिरितटाच्च्युता ॥ ७३
न हेम तापशुद्धाङ्गं स्वभावमलमागतम् ।
कर्दमे मग्नमपि सत्समादत्ते मलं पुनः ॥ ७४
क्षीणे स्वहृदयग्रन्थौ न बन्धोऽस्ति पुनर्गुणैः ।
यत्नेनापि पुनर्बद्धं केन वृन्ते च्युतं फलम् ॥ ७५
अवच्छेदविचाराभ्यामभितः खण्डशो गतम् ।
पाषाणं च मणिं चैव संधातुं कस्य शक्तता ॥ ७६

---

मुपलक्ष्य देहादावहंममतात्याग एव प्रागुक्तस्तदुपाय इत्याग्रहेण स्मारयन्नाह—**किं मुह्यसी**ति। इदं देहसंबन्धि मम। तद्देहम्। स पूर्वोत्तरकालप्रसिद्धः अयं वर्तमानकाले प्रत्यक्ष अहमेवेति किं मुह्यसीत्यर्थः ॥ ५३ ॥ अस्त्वेवं तथापि कथमाशाखेदनिवृत्तिस्तत्राह—**आत्मैवे**ति ॥ ५४ ॥ यथाभूतानां यथार्थात्मभूतानां पदार्थौघानां दर्शनात् ॥ ५५ ॥ कीदृशं तर्हि सर्वपदार्थानां यथार्थरूपं तदाह—**भावे**ति । विसंवादो विकल्पः ॥ ५६ ॥ सर्वविकल्पपरित्यागलक्षणमहावैराग्येण वीरं मनो यस्य तस्मात् ॥ ५७ ॥ एवं कामादिदोषा अपि पलायन्त इत्याशयेनाह—**कान्ता**मिति । जर्जरा या उपलपाञ्चाली पाषाणप्रतिमा तत्समाम् ॥ ५८ ॥ हरन्ति धैर्यात्प्रच्यावयन्ति । अङ्गेति संबोधने ॥ ५९ ॥ रक्ता अनुरक्ता बालाङ्गना यस्मिंस्तथाविधस्यापि ॥ ६० ॥ स्वरूपमात्मतत्त्वं तज्ज्ञः ॥ ६१ ॥ समं तुल्यरूपं यथा स्यात्तथा दृष्टे लता च लोलवनिता च येन । अतएवाविकारत्वादद्रिशिलाकृतिः ॥ ६२ ॥ तर्हि किमाहाराद्यपि त्यजति तत्राह—**अयत्ने**ति । सर्वमनिषिद्धान्नपानादि । लीलया देहधारणमात्रानुकूलचेष्टया । असक्तमानसत्वे लोचनदृष्टान्तः ॥ ६३ ॥ गृहस्थस्य तत्त्वविदः स्वललनादिभोगास्वादेऽपि न कश्चिद्रागिवदतिशय[...] **काके**ति ॥ ६४ ॥ सम्यक् दृष्टः परिचितः पन्थाः प्रत्यग्दृष्टिमार्गो येन तम् । 'ऋक्पूरब्धूःपथाम्–' इति अप्रत्यये भस्य टेर्लोपः । शैलेन्द्रं मन्दरम् ॥ ६५ ॥ हेलया अवहेलनया । असत्यताबुद्ध्येत्यर्थः । आलोकयन् स्वमात्मपदमेवालम्ब्य तिष्ठतीति शेषः ॥ ६६ ॥ व्यग्रेण तत्तत्कालोचितक्रियाव्यापृतेनापि देहेन्द्रियादिना समन्वितो ज्ञस्तत्त्ववित् गतव्यग्रो निर्विक्षेप एव तिष्ठति । ब्रह्मा हिरण्यगर्भ इव ॥ ६७ ॥ भूभृत् पर्वतः । ऋतुषु वसन्तादिषु ॥ ६८ ॥ कर्मेन्द्रियाणां वागादीनां भ्रमैर्व्यापारैर्विषयेषु मज्जतोऽपि ॥ ६९ ॥ अन्तर्दोषसङ्गस्यैव दूषकत्वं न बहिःसङ्गस्येत्यत्र दृष्टान्तमाह—**कलङ्की**ति । हेम अन्तःकलङ्केनैव कलङ्कि उच्यते, अन्यथा बहिः पङ्कादिलेपेन तथा नोच्यते तद्वदित्यर्थः ॥ ७० ॥ अन्तःसङ्गत्यागे देहदुःखादेरपि न प्रसक्तिरित्याह—**शरीरादि**ति ॥ ७१ ॥ देहातिरिक्तात्मविस्मरणे तर्हि पुनर्दुःखं स्यात्तत्राह—**सकृदि**ति । न विस्मरणप्रसक्तिरित्यर्थः ॥ ७२ ॥ विस्मरणाप्रसक्तौ सदृष्टान्तोपपत्तिकं कारणमाह—**सर्पे**त्यादिना ॥ ७३ ॥ अलमत्यन्तं स्वभावं हेममात्रतामागतं प्राप्तम् ॥ ७४ ॥ वृक्षस्थवृन्ताच्च्युतं फलं पुनर्वृन्ते केन समर्थेनापि महतापि प्रयत्नेन पूर्ववद्बद्धम् । केनचिदित्यर्थः ॥ ७५ ॥ यथा पाषाणान्तर्गतं मणिं पाषाणच्छेदनेन मणितत्त्वविचारेण च अभितः अमण्यंशखण्डनतो गतं प्राप्तं पुनः पूर्ववत्तं पाषाणं मणिं च संधातुं कस्याभाग्यस्य

विज्ञातायामविद्यायां कः पुनः परिमज्जति ।
परिज्ञाय श्वपाकानां यात्रां कः प्रेक्षते द्विजः ॥ ७७
शुद्धाम्भसि यथा क्षीरधीर्विचारान्निवर्तते ।
संसारवासना तद्वद्धीविचारान्निवर्तते ॥ ७८
मध्वम्बुशङ्कया तावद्विप्रवर्यैः प्रपीयते ।
यावन्नात्र परिज्ञातं परिज्ञातं प्रहीयते ॥ ७९
रूपलावण्ययुक्तापि चित्रकान्तेव कामिनी ।
द्रव्यमात्रसमारम्भात्तत्त्वविद्भिर्विलोक्यते ॥ ८०
यथा मषीकुसुम्भादि स्त्रियाश्चित्रे तथैव हि ।
जीवत्या अपि केशोष्ठं कस्तां परि किल ग्रहः ॥ ८१
अनुभूतो गुडः स्वादुरपि दाहविकर्तनैः ।
न शक्यतेऽन्यथाकर्तुं तत्त्वालोकस्तथात्मनः ॥ ८२
परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।
तदेवास्वादयत्यन्तः परसङ्गरसायनम् ॥ ८३
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
न शक्यते चालयितुं देवैरपि सवासवैः ॥ ८४
परव्यसनिनी नारी केन भर्त्रा बलीयसा ।
विस्मारिता स्वसंकल्पकान्तसङ्गमहोत्सवम् ॥ ८५
जगत्समरसानन्दचिदालोकावलम्बनम् ।
केन विस्मार्यते बुद्धिस्तत्त्वज्ञस्य महात्मनः ॥ ८६
समग्रसुखदुःखाढ्यं व्यवहारमखण्डितम् ।
कुर्वन्कुलजनायत्तो भर्तृश्वशुरखेदितः ॥ ८७
यथा संकल्पकान्तेन भवत्यानन्दमन्थरः ।
वधूलोको व्यसनवान्दुःखवृन्दैर्न बाध्यते ॥ ८८
तथा विगलिताविद्यो व्यवहारपरोऽप्यलम् ।
सम्यग्दृष्टिः सदाचारो मुदमेत्यन्तरात्मना ॥ ८९
छिद्यते न निकृत्ताङ्गो गलदश्रुर्न रोदिति ।
दह्यते न प्रदग्धोऽपि नष्टोऽपि न विनश्यति ॥ ९०
व्यपगतसुखदुःखसंनिपातो
विधिविधुरेष्वपि संकटेष्वचित्तः ।
विलसतु सदने पुरोत्तमे वा
विततगिरौ विपिने तपोवने वा ॥ ९१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे वैराग्योपदेशो नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः ७५

श्रीवसिष्ठ उवाच ।
जनकः संस्थितो राज्ये व्यवहारपरोऽपि सन् ।
विगतज्वर एवान्तरनाकुलमतिः सदा ॥ १
पितामहो दिलीपस्ते सर्वारम्भपरोऽप्यलम् ।
वीतरागतयैवान्तर्बुभुजे मेदिनीं चिरम् ॥ २
निरञ्जनतया बुद्धो जनतां पालयंश्चिरम् ।
जीवन्मुक्ताकृतिर्नित्यं मनू राज्यमपालयत् ॥ ३
विचित्रबलयुद्धेषु व्यवहारेषु भूरिषु ।
मान्धाता सुचिरं तिष्ठन्प्राप्तवान्वै परं पदम् ॥ ४

शक्तास्तीत्यर्थः ॥ ७६ ॥ यात्रां उत्सवसमाजगमनम् ॥ ७७ ॥ क्षीरधीर्दुग्धभ्रान्तिः । धीविचाराद्धीस्थात्मदर्शनात् ॥ ७८ ॥ मधु मद्यम् । अम्बुशङ्कया जलभ्रान्त्या ॥ ७९ ॥ चित्रलिखिता कान्ता स्त्रीप्रतिमेव ॥ ८० ॥ यथा चित्रे स्त्रिया मषीकुसुम्भादिरङ्गभेदाः पञ्चभूतमात्रं तथा जीवत्याः केशोष्ठाद्यपीति तत्त्वतः साम्यमित्यर्थः । ग्रह उपादेयतेति यावत् ॥ ८१ ॥ ननु रूप्यादिविषयो यथा अनुभूयमानाद्रूपात्तत्त्वतोऽन्यथैव वर्तते तथा स्वात्मानुभवोऽपि परमप्रेमास्पदत्वेन प्रसिद्धादानन्दरूपादन्यथैव किं न स्यादिति चेत्तत्राह—**अनुभूत** इति । यथा गुडस्य स्वादुर्मधुररसोऽनुभूतस्य गुडस्य अनुभवकारणस्य जिह्वादेरनुभवितुर्देवदत्तादेर्वा दाहविकर्तनादियत्नशतैरपि नासौ माधुर्यानुभवः किंतु तिक्ताद्यनुभव इत्यन्यथाकर्तुं न शक्यते आत्मनस्तात्त्विकानन्दानुभवोऽपि तथैवेत्यर्थः ॥ ८२ ॥ यदा सकृदप्यनुभूतो नान्यथाकर्तुं शक्यस्तदा तदेकव्यसनितया सदैवानुभूयमानस्तु सुतरामित्याशयेनाह—**परव्यसनिनी**त्यादिना ॥ ८३ ॥ ८४ ॥ ८५ ॥ जगत्पदेन जागताः सर्वे विषयानन्दभेदा लक्ष्यन्ते । ते सर्वे नानापुष्परसा मधुभाव इव यत्र समरसा भवन्ति तादृशस्वात्मानन्दचिदालोकस्य अवलम्बनं निरन्तरास्वादधारां प्राप्ता तत्त्वज्ञस्य बुद्धिः केन विस्मारयितुं शक्यत इत्यर्थः । तथाचोक्तं शिवधर्मोत्तरे—'ज्ञानामृतरसो येन सकृदास्वादितो भवेत् । विहाय सर्वकार्याणि मनस्तत्रैव धावति ॥' इति ॥ ८६ ॥ व्यवहारं गृहकर्म अखण्डितं सदा कुर्वन् भर्त्रा श्वशुराभ्यां च खेदितः पीडितोऽपि परव्यसनवान्वधूलोक इति परेणान्वयः ॥ ८७ ॥ ८८ ॥ ८९ ॥ तत्रापि सप्तमभूमिकामारूढस्य स्थैर्यातिशयमाह—**छिद्यत** इति । नष्टः विनष्टदेहोऽपि ॥ ९० ॥ अचित्तो मनोनाशपर्यन्तभूमिकाप्रतिष्ठितः पुरुषधौरेयो विधिना प्राक्तनप्रारब्धफलेन कर्मणा विधुरेषु भोगशून्येषु दारिद्र्यादिषु माण्डव्यवच्छूलाधिरोहणादिसंकटेषु वा पुरोत्तमे सदने वा विततगिरौ विपिने तपोवने वा निवसतु तथापि सदा व्यपगतसुखदुःखसंनिपात एवास्ते न मनागपि सांसारिकैर्हर्षशोकैः स्पृश्यत इत्यर्थः ॥ ९१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे वैराग्योपदेशो नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥

महत्स्वप्यधिकारेषु हर्षशोकाद्यसङ्गिनः ।
इहोक्ता बहवो मुक्ता देवासुरनरादयः ॥ १ ॥

जनको वैदेहः ॥ १ ॥ २ ॥ निरञ्जनतया रागादिकालुष्यरहिततया । बुद्धः प्रबुद्धो मनुः ॥ ३ ॥ विचित्राणि बलानि सैन्यानि बाहुबलानि च येषु तथाविधेषु युद्धेषु ॥ ४ ॥ सव-

बलिः पातालपीठस्थः कुर्वन्सदिव संस्थितिम् ।
सदा त्यागी सदाऽसक्तो जीवन्मुक्त इति स्थितः ॥ ५
नमुचिर्दानवाधीशो देवद्वन्द्वपरः सदा ।
नानाचारविचारेषु कचिन्नान्तर्रतप्यत ॥ ६
वासवाजौ तनुत्यागी वृत्रो विततमानसः ।
अन्तःशान्तमना मानी चकार सुरसंगरम् ॥ ७
कुर्वन्दानवकार्याणि पातालतलपालकः ।
अनपायं निराक्रोशं प्रह्लादो ह्लादमागतः ॥ ८
शम्बरैकपरोऽप्यन्तःशम्बरैकतयोदितः ।
संसारशम्बरं राम शम्बरस्त्यक्तवानिदम् ॥ ९
असक्तबुद्धिर्हरिणा कुर्वन्दानवसंगरम् ।
परां संविदमासाद्य कुशलस्त्यक्तवानिदम् ॥ १०
सर्वामरमुखो वह्निः क्रियाजालपरो ह्यपि ।
यज्ञलक्ष्मीश्चिरं भुङ्क्ते मुक्त एवेह तिष्ठति ॥ ११
पीयमानः सुरैः सर्वैः सोमः समरसाशयः ।
कचिदेति न संसङ्गमाक्रान्तावम्बरं यथा ॥ १२
बृहस्पतिर्देवगुरुर्दारार्थं चन्द्रयोध्यपि ।
आचरन्दिवि चित्रेहां मुक्त एव ह्यवस्थितः ॥ १३
शुक्रोऽम्बरतलद्योती बुधः सर्वार्थपालकः ।
निर्विकारमतिः कालं नयत्यसुरदेशिकः ॥ १४
जगद्भूतगणाङ्गानि चिरं संचारयन्नपि ।
सर्वदा सर्वसंचारी मुक्त एव समीरणः ॥ १५
लोकार्जवं जवीभावप्रोद्वेगज्ञोऽप्यखिन्नधीः ।
ब्रह्मा समना राम क्षिपयत्यायुराततम् ॥ १६
जरामरणयुद्धादिद्विन्द्वसंगरलीलया ।
चैरती ह चिरं कालं मुक्तोऽपि भगवान्हरिः ॥ १७
मुक्तेनापि त्रिनेत्रेण सौन्दर्यतरुमञ्जरी ।
देहार्धे धार्यते गौरी कामुकेनेव कामिनी ॥ १८
मुक्तयापि गले बद्धो गौर्या गौरस्त्रिलोचनः ।
संशुद्ध इव मुक्तानां हारः शशिकलामलः ॥ १९
गुहो गहनधीर्वीरस्तारकादिरणक्रियाम् ।
मुक्तोऽपि कृतवान्सर्वं ज्ञानरत्नैकसागरः ॥ २०
भृङ्गीशो रक्तमांसं स्वं स्वमात्रे प्रवितीर्णवान् ।
मुक्तयैव धिया राम धीरया ध्यानधौतया ॥ २१
मुनिर्मुक्तस्वभावोऽपि जगज्जङ्गलखण्डकम् ।
नारदो विजहारेमं शीतया कार्यशीलया ॥ २२
जीवन्मुक्तमना मान्यो विश्वामित्रोऽप्ययं प्रभुः ।
वेदोक्तां मखनिर्माणक्रियां समधितिष्ठति ॥ २३
धारयत्यवनीं शेषः करोत्यर्को दिनावलीम् ।
यमो यमत्वं कुरुते जीवन्मुक्ततयैव हि ॥ २४
अन्येऽप्यस्मिंस्त्रिभुवने यक्षासुरनराः सुराः ।
शतशो मुक्ततां याताः सन्तस्तिष्ठन्ति संसृतौ ॥ २५
संस्थिता व्यवहारेषु विचित्राचारधारिषु ।
अन्तराशीतलाः केचित्केचिन्मूढाः शिलासमाः ॥ २६
परमं बोधमासाद्य केचित्काननमागताः ।
यथा भृगुभरद्वाजविश्वामित्रशुकादयः ॥ २७
केचिद्राज्येषु तिष्ठन्ति च्छत्रचामरपालिताः ।
यथा जनकशर्यातिमान्धातृसगरादयः ॥ २८
केचिद्व्योमनि तिष्ठन्ति धिष्ण्यचक्रान्तरस्थिताः ।
यथा बृहस्पत्युशनश्चन्द्रसूर्यमुनीश्वराः ॥ २९
केचित्सुरपदे याता विमानावलिमास्थिताः ।
यथाग्निवायुवरुणयमतुम्बुरुनारदाः ॥ ३०
केचित्पातालकुहरे जीवन्मुक्ता व्यवस्थिताः ।
यथा बलिसुहोत्रान्धप्रह्लादाह्लादपूर्वकाः ॥ ३१

यथार्थमिव संस्थितिं व्यवहारम् । 'दिवसस्थितिम्' इति पाठे सः दिवसानां पातालनिवासाय हरिणा नियमितानां स्थितिं पालनम् ॥५॥ देवैः सह द्वन्द्वे युद्धे मर्यादाव्युत्क्रमे वा परस्परः । नानाविधानां देवासुराचाराणां विचारेषु विमर्शेषु ॥६॥ संगरं युद्धम् ॥७॥ निराक्रोशं वाचामगोचरं ह्लादं सुखम् ॥८॥ शम्बरं माया तदेकपरोऽप्यन्तःशम्बरं हार्दचिदाकाशस्तदेकतया उदित आविर्भूतः ॥ ९ ॥ कुशलः स एव अन्यो वा कुशलनामा दानवः ॥ १० ॥ ११ ॥ समं ब्रह्मैव रसो रसायनं पुनरुज्जीवनामृतमन्तर्यस्य । संसङ्गं सुखदुःखादिसंसर्गम् । आक्रान्तौ पद्भ्यामाक्रमणे । अम्बरमाकाशम् ॥ १२ ॥ दारार्थं चित्रां ईहां देवपौरोहित्याधिकारचेष्टाम् ॥ १३ ॥ बुधो विद्वान् । नीतिशास्त्रप्रणयनेन सर्वेषामर्थानामभिमतानां पालकः ॥ १४ ॥ जगन्ति ऊर्ध्वभुवनानि भूतगणानां प्राणिनिकायानामङ्गानि च ॥ १५ ॥ लोकानां प्राणिनां आर्जवं जवीभावा ऊर्ध्वाधोमध्यगतिभिः परिवर्तास्तत्प्रयुक्ताः प्रोद्वेगाश्च तज्ज्ञोऽपि । आततं द्विपरार्धकालविस्तीर्णम् ॥ १६ ॥ मुक्तो नित्यमुक्तोऽपि ॥१७॥ इवकारेण न स कामुको नापि सा कामिनी किंतु ब्रह्मब्रह्मविदे एव ते इति ध्वनितम् ॥ १८ ॥ १९ ॥ गहनधीर्विचित्रदुरवगाहबुद्धिः ॥ २० ॥ भृङ्गीशोऽत्र भृङ्गिरिटिः, शिवगणविशेषः । स हि देवीमनादृत्य शिवस्यैवाराधनपरः कुपितया देव्या मातृपितृभागात्ममांसास्थिमयदेहस्य स्वीयं मातृभागं परावृत्य याचितः स्वमात्रे देव्यै स्वं रक्तमांसमुत्कृत्त्य ददाविति पुराणेषु प्रसिद्धम् ॥२१॥ कार्यं कलहकौतुकप्रवर्तनं तच्छीलया ॥ २२ ॥ ॥ २३ ॥ यमत्वं दण्डनम् ॥ २४ ॥ २५ ॥ विचित्रशोकमोहाद्यनर्थप्रसञ्जकेषु पुत्रदारधनभूत्यादिसंग्रहपूर्वकयुद्धवधबन्धाद्याचारधारिष्वपि राज्यादिव्यवहारेषु संस्थिता अन्तः आशीतलाः केचिन्मुक्ताः ॥ २६ ॥ केचित्तु चित्तविक्षेपनिवृत्त्यर्थं काननमाश्रिताः । तानुदाहरति—**यथे**त्यादिना ॥ २७ ॥ २८ ॥ ग्रहनक्षत्रादीनां धिष्ण्यमाधारभूतं ज्योतिश्चक्रं तदन्तरे स्थिताः । मुनीश्वराः सप्तर्षयः ॥ २९ ॥ ३० ॥ ३१ ॥ तिर्यग्योनिषु

१ नांतर्रलिप्यत इति पाठः. २ चरतीह्याचिरं इति पाठः. ३ अत्र लीलयेति पाठोऽपेक्षितः.

तिर्यग्योनिष्वपि सदा विद्यन्ते कृतबुद्धयः ।
देवयोनिष्वपि प्राज्ञा विद्यन्ते मूर्खबुद्धयः ॥ ३२
सर्वं सर्वेण सर्वत्र सर्वथा सर्वदैव हि ।
संभवत्येव सर्वात्मन्यात्मन्याततरूपिणि ॥ ३३
विधेर्विचित्रा नियतिरनन्तारम्भमन्थरा ।
संनिवेशांशवैचित्र्यात्सर्वं सर्वत्र दृश्यते ॥ ३४
विधिर्दैवं विधिर्धाता सर्वेशः शिव ईश्वरः ।
इति नामभिरात्मा नः प्रत्यक्चेतन उच्यते ॥ ३५
अस्त्यवस्तुनि वस्त्वन्तः काञ्चनं सिकतास्विव ।
अस्ति वस्तुन्यवस्त्वन्तर्मलं हेमकणेष्विव ॥ ३६
अयुक्ते युक्तता युक्त्या प्रेक्ष्यमाणा प्रदृश्यते ।
पापस्य हि भयाल्लोको राम धर्मे प्रवर्तते ॥ ३७
असत्ये सत्यता साधो शाश्वती परिलक्ष्यते ।
शून्येन ध्यानयोगेन शाश्वतं पदमाप्यते ॥ ३८
यन्नास्ति तदुदेत्याशु देशकालविलासतः ।
शशकाः शृङ्गवन्तो हि दृश्यन्ते शम्बरस्थितौ ॥ ३९
ये वज्रसाराः सुदृढा दृश्यन्ते ते क्षयं गताः ।
कल्पस्यान्ते यथेन्द्रार्कधराब्धिविबुधादयः ॥ ४०
इति पश्यन्महाबाहो भावाभावभवक्रमम् ।
हर्षामर्षविषादेहाः संत्यज्य समतां व्रज ॥ ४१
असत्सदेव भातीह सदसच्चापि दृश्यते ।
आस्थानास्थे परित्यज्य तेनाशु समतां व्रज ॥ ४२
मुक्तौ राघव लोकेऽस्मिन्न प्राप्तिः संभवत्यलम् ।
अप्रवृत्तौ विवेकस्य मग्ना हि जनकोटयः ॥ ४३
मुक्तौ राघव लोकेऽस्मिन्प्राप्तिरस्ति सदैव हि ।
प्रवृत्त्या हि विवेकस्य विमुक्ता भूतकोटयः ॥ ४४
प्रविवेकाविवेकाभ्यां सुलभालभ्यतां गता ।
मुक्तिर्मनःक्षयप्राप्त्या विवेकं तेन दीपय ॥ ४५
आत्मावलोकने यत्नः कर्तव्यो भूतिमिच्छता ।
सर्वदुःखशिरश्छेद आत्मालोकेन जायते ॥ ४६
नीरागा निरुपासङ्गा जीवन्मुक्ता महाधियः ।
संभवन्तीह बहुशः सुहोत्रजनका इव ॥ ४७
तस्मात्त्वमपि वैराग्यविवेकोदितधीरधीः ।
जीवन्मुक्तो विहर भो समलोष्टाश्मकाञ्चनः ॥ ४८
द्विविधा मुक्तता लोके विद्यते देहधारिणाम् ।
सदेहैका विदेहान्या विभागोऽयं तयोः शृणु ॥ ४९
असंसङ्गात्पदार्थानां मनःशान्तिर्विमुक्तता ।
सत्यसत्यपि देहे सा संभवत्यनघाकृते ॥ ५०
स्नेहसंक्षयमेवाङ्ग विदुः कैवल्यमुत्तमम् ।
तत्संभवति देहस्य भावे चाभाव एव च ॥ ५१
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ।
सस्नेहजीवितो बद्धो मुक्त एव तृतीयकः ॥ ५२
यत्नो यत्नेन कर्तव्यो मोक्षार्थं युक्तिपूर्वकम् ।
यत्नयुक्तिविहीनस्य गोष्पदं दुस्तरं भवेत् ॥ ५३
न त्वनध्यवसायस्य दुःखाय विपुलात्मने ।
आत्मा परवशः कार्यो मोहमाश्रित्य केवलम् ॥ ५४

---

गरुडहनुमज्जाम्बवदादयः ॥ ३२ ॥ ननु सात्त्विकतमत्वात्स्वभावतोऽभिव्यक्तज्ञानैश्वर्येषु देवयोनिषु कथं मूर्खाः संभवन्तीति चेत्सर्वशक्तेरीश्वरता[1] सर्वभावेन सर्वत्र सर्वप्रकारेण सर्वदा स्थितत्वात्सर्वात्मन्यात्मनि स्वप्नादावसंभावितसहस्रस्यापि दर्शनान्नासंभावना क्वापि कस्यचिदपि कार्येत्याह—**सर्वमिति** ॥ ३३ ॥ उक्तार्थं स्फुटमाह—**विधेरिति** ॥ ३४ ॥ कोऽसौ विधिस्तमाह—**विधिरिति** । आद्यं विधिपदं विरिञ्चिद्वारा द्वितीयं विष्णुद्वारा परमात्मनो नामेति न पौनरुक्त्यम् । नः अस्माकं सर्वेषामात्मा । 'अन्तः' इति पाठे तु कोशपञ्चकान्तस्थः । चिच्छक्तिशबलत्वाच्चेतनः ॥३५॥ यत्रात्यन्तमसंभाविते अपि वस्त्वस्तुनी परस्परान्तः संभाविते तत्र किमन्यदसंभावितं स्यादित्याशयेनाह—**अस्तीत्यादिना** ॥ ३६ ॥ अत्यन्तायुक्ते पापेऽपि फलतो भीषणतया धर्मे पुरुषप्रवर्तकतालक्षणो महान्गुणो युक्त्या विमर्शे दृश्यत इत्यर्थः ॥३७॥ फलतः सत्यता । सर्वशून्यताध्याने ध्यानसाक्षिणः स्वप्रकाशात्मनो दुरपह्नवत्वादर्थादेव यथार्थतन्मात्रपरिशेषसिद्धेरिति भावः ॥ ३८ ॥ शम्बरस्थितौ ऐन्द्रजालिकसर्गे ॥ ३९ ॥ वज्रसारा येषां कदाप्यसंभावितः क्षयस्तेऽपीत्यर्थः ॥ ४० ॥ प्रासङ्गिकस्य असंभावितसंभवोपपादनस्यापि प्रकृतमेव फलं दर्शयन्नुपसंहरति—**इतीति** ॥ ४१ ॥ ४२ ॥ नन्वेवं सति विदेहमुक्तावपि पुनः संसारप्राप्तिः संभाविता स्यात्तत्राह—**मुक्ताविति** । हि यस्माज्जनकोटयो विवेकस्य असंसार्यात्मविवेकस्य तत्त्वज्ञानस्याप्रवृत्तौ अज्ञानदशायामेवात्यन्तासंभावितानर्थकोटिसंभावनलक्षणे भ्रमे मग्नाः न मुक्तौ । तन्मज्जननिमित्ताज्ञानस्य नष्टत्वादिति भावः ॥ ४३ ॥ नित्यप्राप्तात्मरूपत्वादपि मुक्तेर्नापायशङ्कास्ति विस्मृतकण्ठचामीकरवद्विवेकमात्रेण तल्लाभादित्याह—**मुक्ताविति** ॥ ४४ ॥ प्रविवेकात्सुलभापि अविवेकादलभ्यतां गता मुक्तिः ॥४५॥ भूतिं मुक्तिमिच्छता ॥४६॥ पूर्वकालिकानां जीवन्मुक्तिसंभवेऽपि नेदानींतनानां सा संभावितेत्याशङ्कां वारयति—**नीरागा** इति । निरुपासङ्गा निरभिनिवेशाः । इहास्मिन्नपि काले ॥४७॥४८॥ इदानीं जीवन्मुक्तिविदेहमुक्त्योर्भेदनिमित्तं वक्तुमुपक्रमते—**द्विविधेत्यादिना** ॥४९॥ तत्रादौ उभयसाधारणमुक्तिशब्दार्थं दर्शयति—**असंसङ्गादिति** ॥ ५० ॥ तत्रोपपत्तिमाह—**स्नेहेति** । स्नेह आत्मताभ्रमात्प्रीतिस्तत्संक्षयम् ॥ ५१ ॥ ५२ ॥ साधनचतुष्टयमध्ये यत्नेन पूर्वपूर्वसिद्धौ उत्तरोत्तरजयेऽपि यत्नः कर्तव्यः । युक्तयः प्रमाणतात्पर्यप्रमेयतत्त्वावधारणानुकूलास्तर्कास्तत्पूर्वकम् ॥ ५३ ॥ युक्त्यन्वितो यत्न आत्मतत्त्वाध्यवसायपर्यन्तं कार्यो न सहसा अनध्यवसाये निर्वेदादन्तराले यत्नोपरमेण पुनरात्मा अनर्थवशे कार्य इत्याह—**न त्विति** । अनध्यवसायस्य अनध्यवसाये सति यत्ना-

---

१ ईश्वरस्य इति पाठः.

सुमहद्धैर्यमालम्ब्य मनसा व्यवसायिना ।
विचारयात्मनात्मानमात्मनश्चिरसिद्धये ।
विततध्यवसायस्य जगद्भवति गोष्पदम् ॥ ५५

यदुपगतः सुगतः पदं प्रधानं
यदपगतोऽध्रुवतां नृपश्च कश्चित् ।
यदुपगताः पदमुत्तमं महान्तः
प्रयतनकल्पतरोर्महाफलं तत् ॥ ५६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे मुक्तामुक्तविचारो नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## षट्सप्ततितमः सर्गः ७६

श्रीवसिष्ठ उवाच ।

ब्रह्मणः समुपायान्ति जगन्तीमानि राघव ।
स्थैर्यं यान्त्यविवेकेन शाम्यन्त्येव विवेकतः ॥ १
जगज्जालजलावर्तवृत्तयो ब्रह्मवारिधौ ।
संख्यातुं केन शक्यन्ते भासां च त्रसरेणवः ॥ २
असम्यक्प्रेक्षणं विद्धि कारणं जगतः स्थितौ ।
संसारशान्तये कान्त कारणं सम्यगीक्षणम् ॥ ३
अयं हि परदुष्पारो घोरः संसारसागरः ।
विना युक्तिप्रयत्नाभ्यामस्माद्राम न तीर्यते ॥ ४
यस्यायं सागरः पूर्णो मोहाम्बुभरपूरितः ।
अगाधमरणावर्तकल्लोलाकुलकोटरः ॥ ५
प्रभ्रमत्पुण्यडिण्डीरो ज्वलन्नरकवाडवः ।
तृष्णाविलोललहरिर्मनोजलमतङ्गजः ॥ ६
आलीनजीवितसरिद्भोगरत्नसमुद्गकः ।
क्षुब्धरोगोरगाकीर्ण इन्द्रियग्राहघर्घरः ॥ ७

पश्यास्मिन्प्रसृता राम वीचयश्चारुचञ्चलाः ।
इमा मुग्धाङ्गनानाड्यः शिखराकर्षणक्षमाः ॥ ८
छदश्रीपद्मरागाढ्या नेत्रनीलोत्पलाकुलाः ।
दन्तपुष्पफलाकीर्णाः स्मितफेनोपशोभिताः ॥ ९
केशेन्द्रनीलवलया भ्रूविलासतरङ्गिताः ।
नितम्बपुलिनस्फीताः कण्ठकम्बुविभूषिताः ॥ १०
ललाटमणिपट्टाढ्या विलासग्राहसंकुलाः ।
कटाक्षलोलगहना वर्णकाञ्चनवालुकाः ॥ ११
एवं विलोललहरीभीमात्संसारसागरात् ।
उत्तीर्यते चेन्मग्नेन तत्परं पौरुषं भवेत् ॥ १२
सत्यां प्रज्ञामहानावि विवेके सति नाविके ।
संसारसागरादस्माद्यो न तीर्णो धिगस्तु तम् ॥ १३
अपारावारमाक्रम्य प्रमेयीकृत्य सर्वतः ।
संसाराब्धिं गाहते यः स एव पुरुषः स्मृतः ॥ १४
विचार्यार्यैः सहालोक्य धिया संसारसागरम् ।

---

नादरादित्यर्थः । 'षष्ठी चानादरे' इति भावलक्षणे षष्ठी ॥५४॥ उक्तमेवार्थं स्फुटमाह—**सुमहदि**ति । व्यवसायिना फलपर्यन्तं प्रयत्नानुपरमदृढनिश्चयवता । **चिरसिद्धय** इति । सति प्रतिबन्धे बहुभिर्जन्मभिर्वा सिद्धिमुद्दिश्येत्यर्थः ॥ ५५ ॥ यत्स्वयंज्योतिरात्ममात्रपरिशेषाख्यं पदम् । सुगतो बुद्धः, शोभनं विवेकं गतः कपिलश्च बहु विचार्याप्यध्यवसातुमसामर्थ्याद्यस्मादपगतः सन्नात्मनोऽध्रुवतां क्षणिकविज्ञानसंतानात्मतां गुणत्रयसाम्यावस्थालक्षणं प्रधानं पदं वस्तु उपगतः । एवं कश्चिद्वेदनिन्दकत्वादग्राह्यनामा अर्हदाख्यो नृपः क्षत्रियोऽपि यदपगतः सन्नात्मानं चित्स्वभावमभ्युपगम्यापि देहपरिमाणत्वाभ्युपगमाद्धस्तिमशकशरीरानुप्रवेशे अवयवोपचयापत्त्या अध्रुवतामुपगत इत्यनुत्तमे एव मिथ्यापदे ते निमग्नाः । महान्तो वेदरहस्यनिष्णातास्तु उत्तमं सत्यादिलक्षणं यत्पदमुपगता यथार्थतः प्राप्तवन्तस्तन्महद्भिर्यत्प्राप्तं पदं वेदोक्तमार्गेण प्रयतनलक्षणस्य कल्पतरोर्महाफलमिति तथैवान्योऽपि प्रयतेतेत्यर्थः ॥५६॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे मुक्तामुक्तविचारो नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

इह संसारजलधिः स्त्रीवीचिरुपवर्ण्यते ।
ततस्तत्तरणोपायस्तीर्णे क्रीडा यथासुखम् ॥ १ ॥

अविज्ञाताद्ब्रह्मणः समुपायान्त्याविर्भवन्ति, अविवेकेन स्थैर्यं यान्ति । अनेनानर्थजन्मस्थित्योर्निमित्तं दर्शितम् । तन्निवृत्त्युपायमाह—**शाम्यन्ती**ति ॥ १ ॥ भासां जालसूर्यमरीचीनां संबन्धिनस्त्रसरेणवश्च संख्यातुं न शक्यन्ते ॥ २ ॥ हे कान्तेति रामसंबोधनम् ॥ ३ ॥ परं अत्यन्तं दुर्गमं पारं यस्य ॥ ४ ॥ तमेव संसारसागरं वर्णयति—**यस्ये**त्यादिना । अयं वक्ष्यमाणविविधविशेषणविशिष्टः संसारलक्षणः सागरो यस्य मोहाम्बुभरेण पूरितः सन् पूर्णस्तेनैव तन्निमग्ने न उत्तीर्यते चेदिति सप्तमेनान्वयः । अगाधैर्मरणलक्षणैरावर्तैः कल्लोलैर्बृहत्तरङ्गैश्च आकुलकोटरः ॥ ५ ॥ पुण्यान्येव डिण्डीराः फेना यस्य । वाडवो वडवानलः । जलोद्भवो मतङ्गजसदृशो यादोभेदः ॥६॥ आ समन्ताल्लीना उपक्षीणा जीवितसरितो यत्र । इन्द्रियग्राहैर्घर्घरः कृतविक्षोभध्वनिः ॥७॥ तत्र स्त्रियो वीचित्वेन वर्णयति—**पश्ये**त्यादिना । शिखरवद्धीराणामप्याकर्षणे क्षमाः ॥ ८ ॥ छदा रदनच्छदास्तच्छ्रीभिः पद्मरागाढ्याः । पुष्पफलैर्मुकुलैराकीर्णाः ॥ ९ ॥ कण्ठलक्षणैः कम्बुभिः शङ्खैर्विभूषिताः ॥ १० ॥ ललाटलक्षणैर्मणिपट्टैः रत्नफलकैराढ्याः । कटाक्षैर्लोलत्वाद्गहना दुरवगाहाः । वर्णा देहकान्तय एव काञ्चनवालुका यासाम् ॥११॥ ॥ १२ ॥ १३ ॥ आक्रम्य तत्त्वदर्शनेन बाधित्वा । अतएव तं प्रमेयवद्ब्रह्ममात्रं कृत्वा गाहते प्रविशति प्रत्यञ्चमपि तद्भावं नयतीति यावत् ॥ १४ ॥ तदनु तत्त्वबोधानन्तरम् । एतस्मिन्

एतस्मिंस्तदनु क्रीडा शोभते राम नान्यथा ॥ १५
इह भव्यो भवान्साधो विचारपरया धिया ।
त्वयाधुनैव तेनायं संसारः प्रविचार्यते ॥ १६
भवानिव विचार्यादौ संसारमतिकान्तया ।
मत्या यो गाहते लोको नेहासौ परिमज्जति ॥ १७
पूर्वं धिया विचार्यैते भोगा भोगिभयप्रदाः ।
भोक्तव्याश्चरमं राम गरुडेनेव पन्नगाः ॥ १८
विचार्य तत्त्वमालोक्य सेव्यन्ते या विभूतयः ।
ता उदर्कोदया जन्तोः शेषा दुःखाय केवलम् ॥ १९
बलं बुद्धिश्च तेजश्च दृष्टतत्त्वस्य वर्धते ।
सवसन्तस्य वृक्षस्य सौन्दर्याद्या गुणा इव ॥ २०

घनरसायनपूर्णसुशीतया
विमलया समया सततं श्रिया ।
शिशिररश्मिरिवातिविराजसे
विदितवेद्य सुखं रघुनन्दन ॥ २१

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे संसारसागरसाम्यप्रतिपादनं नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥

## सप्तसप्ततितमः सर्गः ७७

श्रीराम उवाच ।

समासेन मुने भूयो दृष्टतत्त्वचमत्कृतेः ।
कथयोदारवृत्तान्तं कस्ते वचसि तृप्यति ॥ १

श्रीवसिष्ठ उवाच ।

जीवन्मुक्तस्य बहुधा कथितं लक्षणं मया ।
भूयोऽपि त्वं महाबाहो कथ्यमानमिदं श्रृणु ॥ २
सुषुप्तवदिदं नित्यं पश्यत्यपगतैषणः ।
असद्रूपमिवासक्तं सर्वत्राखिलमात्मवान् ॥ ३
कैवल्यमिव संप्राप्तः परिसुप्तमना इव ।
घूर्णमान इवानन्दी तिष्ठत्यधिगतात्मदृक् ॥ ४
नादत्तमप्युपादत्ते गृहीतमपि पाणिना ।
अन्तर्मुखतयोदात्तरूपया समया धिया ॥ ५
यन्त्रपुत्रकसंचार इतीमं जनताक्रमम् ।
अन्तःसंलीनया दृष्ट्या पश्यन्हसति शान्तधीः ॥ ६
नापेक्षते भविष्यं च वर्तमाने न तिष्ठति ।
न संस्मरत्यतीतं च सर्वमेव करोति च ॥ ७
सुप्तः प्रबुद्धो भवति प्रबुद्धोऽपि च सुप्तवान् ।
सर्वं कर्म करोत्यन्तर्न करोति च किंचन ॥ ८
अन्तःसर्वपरित्यागी नित्यमन्तरनेषणः ।
कुर्वन्नपि बहिः कार्यं सममेवावतिष्ठते ॥ ९
बहिः प्रकृतसर्वेहो यथाप्राप्तक्रियोन्मुखः ।
स्वकर्मक्रमसंप्राप्तबन्धुकार्यानुवृत्तिमान् ॥ १०
समग्रसुखभोगात्मा सर्वाशास्विव संस्थितः ।
करोत्यखिलकर्माणि त्यक्तकर्तृत्वविभ्रमः ॥ ११

ब्रह्मत्वमापन्ने जगति ॥ १५ ॥ भवान् भव्यो धन्यः । यतस्त्वया तेन भव्यत्वेन अधुना अस्मिन्वयस्येव ॥ १६ ॥ गाहते प्रविशति ब्रह्मेति शेषः । लोकोऽधिकारिजनः ॥ १७ ॥ पूर्वं भोगा उपेक्ष्या इति शेषः । यथा गरुडेनामृताहरणात्पूर्वं पन्नगा उपेक्षिताः पश्चान्मातृशापमोचनानन्तरं निःशङ्कं भुज्यन्ते तद्वत् ॥ १८ ॥ लोकेऽप्ययं राजकीयविभूत्युपभोगे न्यायः प्रसिद्ध इत्याह—**विचार्येति**। तत्त्वं राजप्रसादानुग्रहादिरहस्यम्॥१९॥ तत्त्वबोधोत्तरमेव भोगजरणोपपादकविशेषणसंपत्तिर्न पूर्वमिति दर्शयति—**बलमिति** ॥ २० ॥ रामस्य भोगजरणासामर्थ्यशङ्कावारणाय तत्त्वबोधसंपत्तिं दर्शयति—**घनेति** । हे रघुनन्दन, त्वं विदितवेद्यतया हेतुना इदानीं घनेन रसायनेन आनन्दामृतेन पूर्णया सुशीतया निरस्तत्रिविधतापया श्रिया शिशिररश्मिः पूर्णचन्द्र इव अतिविराजसे। चन्द्रपक्षे समया अभितः पूर्णमण्डलत्वादवक्रया॥ २१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे संसारसागरसाम्यप्रतिपादनं नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥

धार्या मन्दारमालेव विबुधैः शिरसोरसा ।
जीवन्मुक्तगुणैर्माला वसिष्ठेनात्र गुम्फ्यते ॥ १ ॥

समासेन तत्रतत्रोक्तानामेकत्र संग्रहेण । उदारं वृत्तान्तं चरित्रम् । लक्षणभूतान्गुणानिति यावत् ॥ १ ॥ इदं संग्रहरूपम् ॥ २ ॥ व्यवहारदशा सुषुप्तवत्तमोमात्रम् । परमार्थदृशा तु बाधितानुवृत्तिमात्रत्वादसद्रूपमिव ॥ ३ ॥ ४ ॥ आदत्तं प्रथमं चक्षुरादिना उपात्तं पश्चात्पाणिना गृहीतमपि धनवस्त्रालंकारादि धिया नोपादत्ते । आदिकर्मणि निष्ठा । अतएव तादेशानिष्टिः॥५॥ जनतायाः क्रमं व्यवहारं असङ्गोदासीनात्मसंनिधिमात्रप्रवृत्तत्वात्काष्ठादिप्रतिमासंचारसदृश इति पश्यन् ॥ ६ ॥ न तिष्ठति न आस्थां करोति ॥ ७ ॥ व्यवहारविषये सुप्तप्रायोऽपि स्वात्मनि प्रबुद्धो भवति । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इति भगवद्वचनम् । व्यवहारे प्रबुद्धः कुशलतमोऽपि सुप्तवानेवास्ते न तत्कौशलफलेन रज्यत इत्यर्थः ॥ ८ ॥ अतएव तस्य सदैव समा स्थितिरित्याह—**अन्तरिति** ॥ ९ ॥ स्वकर्म तत्तद्देहवर्णाश्रमोचितं कर्म पितृपितामहादिक्रमसंप्राप्तं राज्यादिबन्धुकार्याणि दानमानादीनि च तन्मात्रानुवृत्तिमान् ॥ १० ॥ समस्ताः सुखभोगा आत्मैव यस्य, समस्तानां सुखभोगानां स्वयमात्मेति वा । अतएवाज्ञदृशा भोगकाले सर्वविषयाशासु संस्थित आस्थावानिव भाति नाज्ञवद्भोक्तृत्वाभिमानेनेत्यर्थः ॥ ११ ॥

उदासीनवदासीनः प्रकृतः क्रमकर्मसु।
नाभिवाञ्छति न द्वेष्टि न शोचति न हृष्यति ॥ १२
अनुबन्धपरे जन्तावसंसक्तेन चेतसा।
भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ १३
बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान्।
युवा यौवनवृत्तेषु दुःखितेष्वनु दुःखितः ॥ १४
प्रवृत्तवाक्पुण्यकथो दैन्याद्यपगताशयः।
धीरधीरुदितानन्दः पेशलः पुण्यकीर्तनः ॥ १५
प्राज्ञः प्रसन्नमधुरः पूर्णः स्वप्रतिभोदये।
निरस्तखेददौर्गत्यः सर्वस्मिन्स्निग्धबान्धवः ॥ १६
उदारचरिताकारः समः सौम्यसुखोदधिः।
सुस्निग्धः शीतलस्पर्शः पूर्णचन्द्र इवोदितः ॥ १७
न तस्य सुकृतेनार्थो न भोगैर्न च कर्मभिः।
न दुष्कृतैर्न भोगानां संत्यागेन न बन्धुभिः ॥ १८
न कार्यकारणारम्भैर्न निष्कृततया तथा।
न बन्धेन न मोक्षेण न पातालेन नो दिवा ॥ १९
यथावस्तु यथादृष्टं जगदेकमयात्मकम्।
तदा बन्धविमोक्षाणां न क्वचित्कृपणं मनः ॥ २०
सम्यग्ज्ञानाग्निना यस्य दग्धाः संदेहजालिकाः।
निःशङ्कमलमुड्डीनस्तस्य चित्तविहङ्गमः ॥ २१
यस्य भ्रान्तिविनिर्मुक्तं मनः समरसं स्थितम्।
नास्तमेति न चोदेति व्योमवत्सर्वदृष्टिषु ॥ २२
मञ्जूषायां निषण्णस्य यथा बालस्य चेष्टते।
अङ्गावल्यनुसंधानवर्जितं यस्य वै तथा ॥ २३
घूर्णन्क्षीव इवानन्दी मन्दीभूतपुनर्भवः।
अनुपादेयबुद्ध्या तु न स्मरत्यकृतं कृतम् ॥ २४
सर्वं सर्वप्रकारेण गृह्णाति च जहाति च।
अनुपादेयसर्वार्थो बालवच्च विचेष्टते ॥ २५
स तिष्ठन्नपि कार्येषु देशकालक्रियाक्रमैः।
न कार्यसुखदुःखाभ्यां मनागपि हि गृह्यते ॥ २६
बहिः प्रकृतसर्वार्थोऽप्यन्तः पुनरनीहया।
न सत्तां योजयत्यर्थे न फलान्यनुधावति ॥ २७
नोपेक्षते दुःखदशां न सुखाशामपेक्षते।
कार्योदये नैति मुदं कार्यनाशे न खिद्यते ॥ २८
अपि शीतरुचावर्के सुतप्तेऽपीन्दुमण्डले।
अप्यधः प्रसरत्यग्नौ विस्मयोऽस्य न जायते ॥ २९
चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः।
इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ ३०
न दयादैन्यमादत्ते न क्रौर्यमनुधावति।
न लज्जामनुसंधत्ते नालज्जत्वं च गच्छति ॥ ३१
न कदाचन दीनात्मा नोद्धतात्मा कदाचन।
न प्रमत्तो न खिन्नात्मा नोद्विग्नो न च हर्षवान् ॥ ३२
नास्य चेतसि सुस्फारे शरदम्बरनिर्मले।
कोपादयः प्रजायन्ते नभसीव नवाङ्कुराः ॥ ३३
अनारतपतज्जातभूतायां जगतः स्थितौ।
क्व कथं किल कासौ स्यात्सुखिताऽसुखिताथवा ॥ ३४
फेनाजवं जवीभावे जले भूतक्रमे तथा।
क्व किलेदं कुतः कोऽतः प्रसङ्गः सुखदुःखयोः ॥ ३५

कर्मसु प्राप्तमिष्टानिष्टफलमिति शेषः ॥ १२ ॥ अनुबन्ध आनुकूल्यप्रातिकूल्याचरणं तत्परे ॥ १३ ॥ १४ ॥ पूर्वोक्तबालादिसमवृत्ते यो विशेषस्तमाह—**प्रवृत्तेति**। प्रवृत्ता वाग्यस्य तथाविधः सन् पुण्याः कथाः कथयति न बालादिवद्वृथा प्रलपीत्यर्थः। एवमन्यदप्यूह्यम्। पुण्यानि कीर्तनानि चरित्रवर्णनानि लोके यस्य ॥ १५ ॥ सर्वस्मिन् जने ॥ १६ ॥ शीतलः सर्वतापहारी स्पर्शः सङ्गो यस्य ॥ १७ ॥ न दुष्कृतैरिति निषिद्धाचरणपरिहारार्थम्। अतएव भोगानामनिषिद्धानाम् ॥ १८ ॥ अवश्यकार्याणां ऐहिकामुष्मिकफलकारणानां कर्मणामारम्भैः। निष्कृततया भावे क्तः। 'निष्क्रियतया' इति वा पाठः। दिवा स्वर्गेण ॥ १९ ॥ बन्धानां सांसारिकसुखानां विमोक्षाणां सर्वदुःखतत्कारणनिवृत्तीनां च मध्येन क्वचित् कृपणं कार्पण्ययुक्तं मनो भवतीत्यर्थः ॥ २० ॥ संदेहलक्षणा जालिकाः पञ्जराणि। तथाच सति मनसि कार्पण्यसंभावना स्यात्तदेव तस्य नास्तीत्यर्थः ॥ २१ ॥ समरसं ब्रह्मीभूतम् ॥ २२ ॥ मनसोऽभावे कथं कायचेष्टाद्युपपत्तिस्तत्राह—**मञ्जूषायामिति**। दोलासुखशय्यायामित्यर्थः। तस्य हि स्वानन्दाविर्भावोल्लासादेवाङ्गचलनं 'तद्यथा महाराजो वा महाब्राह्मणो वा महाकुमारो वा अतिघ्नीमानन्दस्य गत्वा शयीत' इति श्रुत्यादिप्रसिद्धमीश्वरनृत्यवत् ॥ २३ ॥ अनुपादेयबुद्ध्या नियमेन कृताकृतस्मारिकायाः क्रियाफलोपादेयताबुद्धेरभावादित्यर्थः ॥ २४ ॥ सर्वमित्यादि बालपक्षेऽपि योज्यम् ॥ २५ ॥ कार्यप्रयुक्ताभ्यां सुखदुःखाभ्याम् ॥ २६ ॥ अर्थे बाह्यार्थे सत्तां सत्यताबुद्ध्या आस्थाम्। अतएव फलान्यनुधावति ॥ २७ ॥ उप समीपे संनिहितामपि दुःखदशां नेक्षते ॥ २८ ॥ अर्के शीतरुचौ जातेऽपि। इन्दुमण्डले सुतप्ते संपन्नेऽपि। अग्नौ अधः अधोमुखे प्रसरति ज्वलत्यपि। अस्य विस्मय आश्चर्यबुद्धिर्न जायते ॥ २९ ॥ कुतो न जायते तत्राह—**चिदात्मन** इति। शक्तयो मायाः ॥ ३० ॥ लज्जा अपमानभैक्षचर्यादौ। अकार्येष्वलज्जत्वं न गच्छति ॥ ३१ ॥ ३२ ॥ ३३ ॥ अनारतमविरतं पतन्ति म्रियन्ते जातान्युत्पन्नानि च भूतानि प्राणिनो यस्याम्। 'अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्' इति भगवद्दर्शितन्यायादिति भावः। किंवृत्तत्रयं देशकालतः प्रकारतः स्वरूपतश्च असंभावितत्वलाभाय ॥ ३४ ॥ उक्तं दृष्टान्तेन समर्थयति—**फेनेति**। फेनानां तरङ्गप्रयुक्तं आजवं जवीभावे भ्रमणे। इदं स्थैर्यं क्व कुतो वा। अतः

१ प्रतपति इति पाठः।

भावाभावैरपर्यन्तैरजस्रं जन्तुसंभवैः ।
न विशीर्यन्ति नोद्यन्ति दृष्टिसृष्टिक्षमा नराः ॥ ३६
निमेषं प्रति यामिन्यां यथान्याः स्वप्नदृष्टयः ।
क्षणोत्पत्तिविनाशिन्यस्तथैता लोकदृष्टयः ॥ ३७
अनारतसमुत्पत्तावनारतविनाशिनि ।
कः क्रमो दग्धसंसारे कारुण्यानन्दयोरिह ॥ ३८
शुभाभावात्सुखाभावे स्थितिं याते विलक्षणाः ।
कीदृश्यः कथमायाताः क वा ता दुःखसंविदः ॥ ३९
सुखसंवेदनान्तोत्था स्वबीजं वितनोति या ।
शान्ता दुःखदशा सेयं कथमन्तर्हिते सुखे ॥ ४०

क्षीणाभ्यां सुखदुःखाभ्यां हेयोपादेययोः क्षये ।
ईप्सितानीप्सिते क स्तो गलितेऽथ शुभाशुभे ॥ ४१
रम्यारम्यदृशोर्नाशायाते भोगाभिवाञ्छने ।
नैराश्ये संततं प्रौढे हिमवद्विगलेन्मनः ॥ ४२
आमूलान्मनसि क्षीणे संकल्पस्य कथा च का ।
तिलेष्विवातिदग्धेषु तैलस्य कलना कुतः ॥ ४३
भावेष्वभावघनभावनया महात्मा
निर्मुक्तसंकलनमम्बरवत्स्थितेषु ।
चित्तं प्रति स्वमुदितो विततैकरूपी
ज्ञस्तिष्ठति स्वपिति जीवति नित्यतृप्तः ॥ ४४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे जीवन्मुक्तस्वरूपवर्णनं नाम सप्तसप्ततितमः सर्गः ॥७७॥

## अष्टसप्ततितमः सर्गः ७८

श्रीवसिष्ठ उवाच ।

यथालातपरिस्पन्दादग्निचक्रं प्रदृश्यते ।
असदेव सदाभासं चित्तस्पन्दात्तथा जगत् ॥ १
यथा जलपरिस्पन्दाद्व्यतिरिक्त इवाम्भसः ।
दृश्यते वर्तुलावर्तश्चित्तस्पन्दात्तथा जगत् ॥ २
यथा व्योम्नीक्षणस्पन्दात्पिच्छमौक्तिकमण्डलम् ।
दृश्यते सदिवासत्यं चित्तस्पन्दात्तथा जगत् ॥ ३

श्रीराम उवाच ।

येन प्रस्पन्दते चित्तं येन न स्पन्दते तथा ।
तद्ब्रह्मन्ब्रूहि मे येन चिकित्सेयं तदेव हि ॥ ४

श्रीवसिष्ठ उवाच ।

यथा शौक्ल्यहिमे राम तिलतैलवौ यथा ।
यथा कुसुमसौगन्ध्ये तथौष्ण्यदहनौ यथा ॥ ५
तथा राघव संश्लिष्टौ चित्तस्पन्दौ तथैव हि ।
अभिन्नौ केवलं मिथ्या भेदः कल्पित एतयोः ॥ ६

सुखदुःखयोः कः प्रसङ्गः ॥ ३५ ॥ न विशीर्यन्ति न नश्यन्ति न खिद्यन्ति च । नोद्यन्ति न जायन्ते न हृष्यन्ति च । प्रातिभासिकस्य जगतो दृष्टिरेव सृष्टिस्तत्र क्षमाः अहमेवात्मनि जगन्मायां सृजामीति पश्यन्तो जीवन्मुक्ताः ॥ ३६ ॥ किंच 'प्रतिक्षणपरिणामिनो हि सर्वे भावाः' इति न्यायात्प्रतिक्षणं भिद्यमानेषु जगद्धर्मेष्वनुवर्तमानः स्थायी सदात्मा स्वप्न इव स्वात्मन्येव दृश्यान् षड्भावविकारान्प्रतिक्षणं कल्पयन्पश्यतीत्येव तेषां निश्चये कुतो हर्षादिप्रसक्तिरित्याशयेनाह—**निमेष**मित्यादिना। वीप्सायोती प्रतिशब्दः कर्मप्रवचनीयः। द्विर्वचनाव्ययीभावयोरन्यतरस्यावश्यं प्राप्तेस्तदकरणं छान्दसम् ॥ ३७ ॥ क्रमणं क्रमः प्रसङ्गः ॥ ३८ ॥ किंच शुभकर्मफलेषु प्रसिद्धेषु सत्सु तद्विरोधिनः पुत्रवियोगदुःखादयः पदं लभेरन् जीवन्मुक्तानां शुभस्यैवाभावादुभयाप्रसक्तिरित्याह—**शुभाभावा**दिति । विलक्षणाः शुभफलेभ्यो विलक्षणाः । किंवृत्तानि पूर्ववत् ॥ ३९ ॥ या दुःखदशा सुखसंवेदनस्य सुखानुभवस्य अन्ते उत्था लब्धसत्ताका सती स्वबीजं स्वकार्यं शोकमोहादि वितनोति विस्तारयति सेयं दुःखदशा शुभकर्माभावाच्छान्ते सुखे स्वयमपि शान्तैवेति निर्हेतुका कथं संभवेदिति पूर्वोक्तार्थस्यैव स्फुटीकरणम् ॥ ४० ॥ ४१ ॥ किं ततस्तत्राह—**रम्ये**ति । याते अपगते सति । नैराश्ये प्रौढे निरूढे सति ॥ ४२ ॥ अस्तु मनोनाशस्ततोऽपि किं तत्राह—**आमूला**दिति ॥४३॥ अभावघनभावनया स्वव्यतिरिक्तं नास्त्येवेति दृढनिश्चयेन सर्वेषु भावेषु दृश्यपदार्थेषु निर्मुक्तसंकलनं निःसंकल्पविकल्पं यथा स्यात्तथा अम्बरवत्सन्मात्रस्वभावेन स्थितेषु सत्सु परिच्छेदहेत्वभावाद्विततैकरूपी महात्मा ज्ञो नित्यतृप्तः सन् स्वेनैव निरतिशयानन्दात्मना मुदित आनन्दी सन् जाग्रत्स्वप्नयोर्यथाप्राप्तार्थालोचनमात्ररूपं चित्तं प्रति तिष्ठति तल्लये सुषुप्तौ स्वपिति यावत्प्रारब्धक्षयं च जीवतीत्यर्थः ॥ ४४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे जीवन्मुक्तस्वरूपवर्णनं नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥

चित्तस्पन्दाजगद्भ्रान्तिश्चित्तस्पन्दश्च यादृशः ।
योगश्च तन्निरोधार्थः सम्यगत्र निगद्यते ॥ १ ॥

अलातस्य ज्वलदुल्मुकस्य परिस्पन्दाद्भ्रमणाद्यात्रावभिमयं चक्रं भ्रान्त्या यथा दृश्यते तथेत्यर्थः ॥ १ ॥ वर्तुलनाभ्याकार आवर्तः ॥ २ ॥ ईक्षणयोर्नेत्रयोरातपसांमुख्येन स्पन्दात्पिच्छाकारसन्यतः स्पन्दान्मौक्तिकमण्डलमिव दृश्यते ॥३॥ येन स्वभावेन प्रस्पन्दते येनोपायेन न स्पन्दते ॥ ४ ॥ स्पन्दस्वभावश्चित्तात्पृथक्कृत्य वक्तुमशक्य इति दृष्टान्तैरेव तं दर्शयति—**यथे**त्यादिना । तिलश्च तैलवश्च तौ । यथाशब्दः समुच्चये ॥ ५॥ अत्राप्यायस्तथाशब्दः समुच्चये, द्वितीयो दार्ष्टान्तिकोपबन्धार्थः । सर्वत्र गुणगुण्यादावविचाराद्भेदसहिष्णुरभेद एव संश्लेषः । तत्र विचारे भेदांशो मिथ्या अभेदांशो वास्तव इति दर्शयति—

चित्तचित्तपरिस्पन्दपक्षयोरेकसंक्षये ।
स्वयं गुणगुणी स्थित्वा नश्यतो द्वौ न संशयः ॥ ७
द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ ८

श्रीराम उवाच ।

कदा कीदृक्कया युक्त्या प्राणापाननिबन्धया ।
योगनाम्न्या मनः शान्तिमेत्यनन्तसुखप्रदाम् ॥ ९

श्रीवसिष्ठ उवाच ।

देहेऽस्मिन्देहनाडीषु वातः स्फुरति योऽभितः ।
स्पन्देष्विव भुवो वारि स प्राण इति कीर्तितः ॥ १०
तस्य स्पन्दवशादन्तः क्रियावैचित्र्यमीयुषः ।
अपानादीनि नामानि कल्पितानि कृतात्मभिः ॥ ११
आमोदस्य यथा पुष्पं शौक्ल्यस्य तुहिनं यथा ।
तथैष रस आधारश्चित्तस्याभिन्नतां गतः ॥ १२
अन्तःप्राणपरिस्पन्दात्संकल्पकलनोन्मुखी ।
संवित्संजायते यैषा तच्चित्तं विद्धि राघव ॥ १३
प्राणस्पन्दाच्चितः स्पन्दस्तत्स्पन्दादेव संविदः ।
चक्रावर्तविधायिन्यो जलस्पन्दादिवोर्मयः ॥ १४
चित्तं प्राणपरिस्पन्दमाहुरागमभूषणाः ।
तस्मिन्संरोधिते नूनमुपशान्तं भवेन्मनः ॥ १५
मनःस्पन्दोपशान्त्यायं संसारः प्रविलीयते ।
सूर्यालोकपरिस्पन्दशान्तौ व्यवहृतिर्यथा ॥ १६

श्रीराम उवाच ।

अनिशं चरतां देहगेहे गगनगासिनाम् ।
प्राणादीनां परिस्पन्दो वायूनां रोध्यते कथम् ॥ १७

श्रीवसिष्ठ उवाच ।

शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ।
अनास्थायां कृतास्थायां पूर्वसंसारवृत्तिषु ॥ १८
यथाभिवाञ्छितध्यानाच्चिरमेकतयोदितात् ।
एकतत्त्वघनाभ्यासात्प्राणस्पन्दो निरुध्यते ॥ १९
पूरकादिनिजायामादृढाभ्यासादखेदजात् ।
एकान्तध्यानसंयोगात्प्राणस्पन्दो निरुध्यते ॥ २०
ओंकारोच्चारणप्रान्तशब्दतत्त्वानुभावनात् ।
सुषुप्ते संविदो जाते प्राणस्पन्दो निरुध्यते ॥ २१
रेचके नूनमभ्यस्ते प्राणे स्फारे खमागते ।
न स्पृशत्यङ्गरन्ध्राणि प्राणस्पन्दो निरुध्यते ॥ २२

**अभिन्नाविति** ॥ ६ ॥ अभेदांश एव कल्पितः किं न स्यादित्याशङ्कां परिहरन्येन न स्पन्दते तथेति प्रश्नांशस्योत्तरमाह—**चित्तेति** । यः स्वयं कारणात्मा गुणो गुणी चेति विकल्पितस्तदात्मना स्थित्वैव द्वावपि गुणगुणिविकल्पौ नश्यतो न निरन्वयेनेत्यर्थः । तथाचैककारणात्मना स्थित्वैव गुणगुणिभेदनाशदर्शनाद्भेदांश एव कल्पितो नाभेदांश इत्येतन्मनःस्पन्दयोरेकतरनाशाधीनात्यन्तिकोभयनिवृत्त्यैव चित्तं न स्पन्दते नतु जीवति मनसि तत्स्पन्दो वारयितुं शक्य इत्येतच्च सिद्धमिति भावः ॥७॥ अतएव स्पन्दनिरोधेनोभयनाशार्थं ज्ञानकमश्च शास्त्रे दर्शित इत्याह—**द्वौ क्रमाविति** ॥ ८ ॥ तत्रायं क्रमं प्रथमं जिज्ञासमानो रामः पृच्छति—**कदेति** । प्राणापानयोर्निबन्धनं प्राणापाननिबन्धा । भावे 'गुरोश्च हलः' इत्यप्रत्ययः । प्राणापाननिरोधलक्षणयेत्यर्थः ॥ ९ ॥ आसर्गसमाप्तेरस्यैव प्रश्नस्योत्तरं वर्णयिष्यंश्चित्तस्पन्दस्य प्राणस्पन्दाधीनतां वक्तुं प्रथमं प्राणस्वरूपमाह—**देहेस्मिन्नि**त्यादिना । 'देहनाडीषु द्वासप्ततिर्द्वासप्ततिः प्रतिशाखं नाडीसहस्राणि भवन्त्यासु व्यानश्चरति' इति श्रुतेरित्यर्थः । यथा भुवः स्पन्देषु स्पन्दनमार्गभूतेषु विवरेषु वारि जलं सर्वतो व्याप्य स्फुरति तद्वत् ॥ १० ॥ ननु प्राणो बहिरेव याति देहे त्वपानादयोऽन्ये वायवः संचरन्ति तत्राह—**तस्येति** । ते प्राणस्यैव वृत्तिभेदा नान्ये इत्यर्थः ॥११॥ वारिदृष्टान्तोपपत्तये रस इति विशेषणम् । 'आपोमयः प्राणः' इति, 'एतमेवाङ्गिरसं मन्यन्ते प्राणो वा अङ्गानां रसः' च श्रुतेरिति भावः । चित्तस्य कोशवत्सर्वतः संश्लेषेणाभिन्नतामिव गत आधारः । 'प्राणबन्धनं हि सोम्य मनः', 'तस्य पुरुषविधतामन्वयं पुरुषविधः' इत्यादिश्रुतेरिति भावः ॥ १२ ॥ अतएव तत्स्पन्दस्य चित्तस्पन्दहेतुतेत्याह—**अन्तरिति** । संकल्पग्रहणं वृत्तिमात्रोपलक्षणम् ॥ १३ ॥ चितः स्पन्दश्चिदाभासव्याप्तवृत्तिभेदः । संविदस्तत्तद्विषयाकारप्रथाः ॥ १४ ॥ प्राणपरिस्पन्दं प्राणाधीनपरिस्पन्दम् । आगमभूषणाः 'प्राणबन्धनं हि सोम्य मनः' 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रम्' इत्यादिश्रुतिरहस्यज्ञाः ॥ १५ ॥ अस्त्वेवं ततः किं तत्राह—**मन इति** ॥१६॥ देहलक्षणे स्वगेहे हृदयादिस्थानेषु द्वासप्ततिसहस्रनाडीभेदेषु च अनिशं चरतां गगनेषु मुखनासिकादिच्छिद्रेषु बाह्याकाशे च गमनशीलानाम् ॥ १७ ॥ प्राणस्पन्दनिरोधे निरालम्बनसालम्बनादिराजयोगोपायान्वक्तुमुपक्रमते—**शास्त्रेति** । पूर्वाभ्यस्तासु संसारवृत्तिषु सांसारिकव्यवहारेषु आत्यन्तिकपरित्यागायमनियमशमदमादिविरोध्यभ्यासाच्चात्यन्तमनास्थायां हृदि कृतप्रतिष्ठायां सत्याम् ॥ १८ ॥ प्रथमं स्थूले शिखरे चन्द्रबिम्बे मणिदेवतामूर्त्यादौ वा यत्रैव मनोऽस्य रमते तत्रैव निरोधोऽभ्यसनीय इत्याह—**यथाभिवाञ्छितेति** । एकतया एकाग्रतया उदितात् । एकाग्रतालक्षणं परिणामं प्राप्येत्यर्थः । तदनन्तरं यत्कार्यं तदाह—**एकतत्त्वेति** ॥ १९ ॥ पूरककुम्भकरेचकक्रमेण प्राणनिरोधसहिताद्वा दुर्दान्तचित्तस्पन्दनिरोधः कार्य इत्याह—**पूरकेति** । पूरकादिना निजस्य स्वस्य प्राणस्यायामात् ॥ २० ॥ दीर्घोच्चारितप्रणवतुर्यमात्रालम्बनयोगाद्वा संविदो बाह्यार्थसंवेदनस्य सुषुप्ते आत्यन्तिकोपरमे जाते सति ॥ २१ ॥ इदानीं रेचकपूरकयोरेकैकस्यापि श्वासप्रश्वासशिथिलीकरणे कालदैर्घ्याभिवर्धनसहितध्यानाभ्यासादपि तन्निरोध इत्याह—**रेचके इति**

१ गुणो गुणी इति युक्तम्.

पूरके नूनमभ्यस्ते पूराद्गिरिघनस्थिते।
प्राणे प्रशान्तसंचारे प्राणस्पन्दो निरुध्यते॥ २३
कुम्भके कुम्भवत्कालमनन्तं परितिष्ठति।
अभ्यासात्स्तम्भिते प्राणे प्राणस्पन्दो निरुध्यते॥ २४
तालुमूलगतां यत्नाज्जिह्वयाक्रम्य घण्टिकाम्।
ऊर्ध्वरन्ध्रगते प्राणे प्राणस्पन्दो निरुध्यते॥ २५
समस्तकलनोन्मुक्ते न किंचिन्नामसूक्ष्मखे।
ध्यानात्संविदि लीनायां प्राणस्पन्दो निरुध्यते॥ २६
द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलाम्बरे।
संविद्दृशि प्रशाम्यन्त्यां प्राणस्पन्दो निरुध्यते॥ २७
अभ्यासादूर्ध्वरन्ध्रेण तालूर्ध्वं द्वादशान्तगे।
प्राणे गलितसंवृत्ते प्राणस्पन्दो निरुध्यते॥ २८
भ्रूमध्ये तारकालोकशान्तावन्तमुपागते।
चेतने केतने बुद्धे प्राणस्पन्दो निरुध्यते॥ २९
झटित्येव यदुद्भूतं ज्ञानं तस्मिन्दृढाश्रिते।
असंश्लिष्टविकल्पांशे प्राणस्पन्दो निरुध्यते॥ ३०
चिरं कालं हृते कान्तव्योमसंवेदनान्मुने।
अवासनान्मनोध्यानात्प्राणस्पन्दो निरुध्यते॥ ३१

द्वाभ्याम्। स्फारे विपुलीभूते प्राणे छिन्नाभ्रवत् क्रमात् खं शून्यभावं बाह्याकाशं वा आगते अङ्गरन्ध्राणि नासाविवराणि न स्पृशति सति॥ २२॥ अन्तःपूरात्पूरणाद्गिरौ घना मेघा इव यावत्पूर्ति मन्दमुपचीयमाने स्थिते निश्चले सति॥ २३॥ पूर्णानन्तरं कुम्भके पूर्णकुम्भवदनन्तं कालं स्तम्भिते प्राणे परितिष्ठति सति। उक्तत्रिविधप्राणायामक्रमश्च पातञ्जले शास्त्रे प्रपञ्चितः 'तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः'। तस्मिन्प्रागुक्ते आसनजये सति बाह्यस्य वायोरायमनं श्वासः कौष्ठ्यस्य वायोर्निःसारणं प्रश्वासः तयोर्गतिविच्छेद उभयाभावलक्षणः प्राणायामः कार्य इत्यर्थः। स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः। यत्र प्रश्वासपूर्वको गतिनिरोधः स बाह्यः। यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः। तृतीयः स्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद्भवति। यथा तप्ते न्यस्तमुपले जलं सर्वतः संकोचमापद्यते तथा द्वयोर्युगपद्गत्यभाव इति। त्रयोऽप्येते देशपरिदृष्टाः बहिस्तूलवस्पन्दादिना अन्तर्नाभ्यादिस्पन्दादिना च ज्ञानस्य विषयो देश इति। कालेन परिदृष्टाः क्षणानामियत्तावधारणेन। संख्याभिः परिदृष्टा एतावत्संख्यश्वासप्रश्वासकालैः प्रथमो द्वितीयस्तृतीय उद्घोधित इति। एवं मृदुरेवं मध्य एवं तीव्र इति च। स खल्वेवमभ्यस्तः प्राणायामः प्रविकस्वरतूलपिण्डवन्मन्दाकृष्टबिसतन्तुवद्वा दैर्घ्यसौक्ष्म्यापन्नैः प्राणैर्दीर्घः सूक्ष्मश्च भवतीत्यर्थः। अभ्यासात्स्तम्भिते प्राणे इत्यनेन च तत्परिपाकलभ्यश्चतुर्थोऽपि प्रकारः सूचितः। सोऽपि पतञ्जलिना दर्शितः 'बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः' इति। पूर्वोक्तोभयजयात्तदाक्षेपपूर्वकः प्राणगत्यभावः स्थिरश्चतुर्थः प्राणायाम इत्यर्थः। प्राणायामप्रतिष्ठाफलमपि पतञ्जलिनोक्तम् 'ततः क्षीयते प्रकाशावरणम्। धारणासु च योग्यता मनसः' इति। 'तपो न परमं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्ये'ति भाष्यम्॥ २४॥ घण्टिकां व्यात्तास्यस्य जिह्वामूले स्तनवल्लम्बमानतया दृश्यमानामिन्द्रयोनिम्। 'अन्तरेण तालुके य एष स्तन इवावलम्बते सेन्द्रयोनिः' इति श्रुतेः। तां परिवृत्तया वर्धनाभ्यासादिप्रयत्नादन्तःप्राणसंचारमार्गे मूर्धरन्ध्रे प्रवेश्यमानया जिह्वया आक्रम्य निष्पीड्याधःकृत्य प्राणे ऊर्ध्वरन्ध्रे ब्रह्मरन्ध्रे गते प्रवेश्य धारिते सतीत्यर्थः। अनेन लम्बिकायोगसमुचिता नभोधारणा दर्शिता। तत्प्रकारश्च भगवता स्कन्देनोक्तः 'रसनां तालुविवरे निधायोर्ध्वमुखोऽमृतम्। धयन्निर्जरतां गच्छेदाषण्मासाच्च संशयः॥ ऊर्ध्वजिह्वः स्थिरो भूत्वा सोमपानं करोति यः। मासार्धेन न संदेहो मृत्युं जयति योगवित्॥', 'आकाशं च मरीचिवारिसदृशं यद्ब्रह्मरन्ध्रस्थितं यन्नाथेन सदाशिवेन सहितं शान्तं हकाराक्षरम्। प्राणं तत्र विलीय पञ्चघटिकं चित्तान्वितं धारयेदेषा मोक्षकवाटपाटनपटुः प्रोक्ता नभोधारणा॥' इति॥२५॥ समस्ताः कलना विकारास्तदुन्मुक्तेऽतएव न किंचिन्नामनि सूक्ष्मे हार्दाकाशे संविदि अन्तर्बाह्यसंवेदनवृत्तिमात्रे निर्विकल्पसमाधिना लीनायां सत्याम्॥२६॥ नासाग्रोपलक्षितद्वादशाङ्गुलपरिमितबाह्याकाशे चक्षुर्मनसोर्निरोधाद्वा तन्निरोध इत्याह—**द्वादशेति**॥२७॥ लम्बिकायोगाऽसमुचिताद्वा उपायान्तराभ्यस्तात्प्रागुक्तनभोधारणात्तन्निरोधसिद्धिरित्याह—**अभ्यासादिति**। द्वादशान्तं ब्रह्मरन्ध्रस्थानं तद्गे प्राणे गलितप्राये संवृत्ते सति॥ २८॥ एवं खेचरीमुद्रापि प्राणस्पन्दनिरोधहेतुरित्याह—**भ्रूमध्ये** इति। तारकयोश्चक्षुःकनीनिकयोरालोकस्य तेजसश्चक्षुरिन्द्रियस्येति यावत्। चिरनिरोधाच्छान्तौ उपरमे सति तथा जिह्वाग्रे प्राणे च प्रागुक्तरीत्या कपालकुहरप्रवेशादन्तं द्वादशान्तमुपागते सति केतने भ्रूमध्ये अविमुक्तस्थाने 'य एषोऽक्षरोऽनन्तः' इति जाबालश्रुत्यादिप्रसिद्धे चेतने चिन्मात्रस्वभावे परमेश्वरे आत्मतया बुद्धे सतीत्यर्थः। खेचरीमुद्रापि स्कन्देनोक्ता—'कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी॥ न पीड्यते स रोगेण न च लिप्येत कर्मणा। बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम्॥' इति॥ २९॥ गुरोरीश्वरस्य वा अनुग्रहात्काकतालीयन्यायेन झटित्येवोद्भूते ज्ञाने झटित्येव चित्तविकल्पोपशमाद्वा तन्निरोध इत्याह—**झटित्येवेति**॥ ३०॥ 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इत्यादिश्रुतिप्रसिद्धे दहराकाशे वा चिरं चित्तनिवेशात्तत्साक्षात्कारे तत्सिद्धिरित्याह—**चिरमिति**। तथा चोक्तं पातञ्जले—'हृदये चित्तसंवित्स्वार्थसंयमात्पुरुषज्ञानम्'

श्रीराम उवाच ।

ब्रह्मन् जगति भूतानां हृदयं तत्किमुच्यते ।
इदं सर्वं महादर्शे यस्मिंस्तत्प्रतिबिम्बति ॥ ३२

श्रीवसिष्ठ उवाच ।

साधो जगति भूतानां हृदयं द्विविधं स्मृतम् ।
उपादेयं च हेयं च विभागोऽयं तयोः शृणु ॥ ३३
इयत्तया परिच्छिन्ने देहे यद्वक्षसोऽन्तरम् ।
हेयं तद्धृदयं विद्धि तनावेकतटे स्थितम् ॥ ३४
संविन्मात्रं तु हृदयमुपादेयं स्थितं स्मृतम् ।
तदन्तरे च बाह्ये च न च बाह्ये न चान्तरे ॥ ३५
तत्तु प्रधानं हृदयं तत्रेदं समवस्थितम् ।
तदादर्शः पदार्थानां तत्कोशः सर्वसंपदाम् ॥ ३६
सर्वेषामेव जन्तूनां संविद्धृदयमुच्यते ।
न देहावयवैकांशो जडजीर्णोपलोपमः ॥ ३७
तस्मात्संविन्मये शुद्धे हृदये हृतवासनः ।
बलान्नियोजिते चित्ते प्राणस्पन्दो निरुध्यते ॥ ३८
एभिः क्रमैस्तथान्यैश्च नानासंकल्पकल्पितैः ।
नानादेशिकवक्त्रस्थैः प्राणस्पन्दो निरुध्यते ॥ ३९
अभ्यासेन निराबाधमेतास्ता योगयुक्तयः ।
उपायतामुपायान्ति भव्यस्य भवभेदने ॥ ४०
अभ्यासाद्दृढतां यातो वैराग्यपरिलाञ्छितः ।
यथावासनमायामः प्राणानां सफलः स्मृतः ॥ ४१
भ्रूनासातालुसंस्थासु द्वादशाङ्गुलिकोटिषु ।
अभ्यासाच्छाम्यति प्राणो दूरे गिरिनदी यथा ॥ ४२

भूयोभूयश्चिराभ्यासाज्जिह्वाप्रान्तेन तालुनि ।
घण्टिका स्पृश्यते प्राणो येनोर्ध्वैर्निवहत्यलम् ॥ ४३
विकल्पबहुलास्त्वेते स्वाभ्यासेन समाधयः ।
परमोपशमायाशु संप्रयान्त्यविकल्पताम् ॥ ४४
आत्मारामो वीतशोको भवत्यन्तःसुखः पुमान् ।
अभ्यासादेव नान्यस्मात्तस्मादभ्यासवान्भव ॥ ४५
अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ।
मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ४६
वासनावलितं जन्म मोक्षं निर्वासनं मनः ।
प्राणं च राम गृह्णाति यथेच्छसि तथा कुरु ॥ ४७
प्राणस्पन्दो मनोरूपं तस्मात्संसृतिविभ्रमः ।
तस्मिन्नेव शमं याते दीयते संसृतिज्वरः ॥ ४८
विकल्पांशक्षयाज्जन्तोः पदं तदवशिष्यते ।
यतो वाचो निवर्तन्ते समस्तकलनान्विताः ॥ ४९
यत्र सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत् ।
यत्र नेदं यतो नेदं यन्नेदं नेदृशं जगत् ॥ ५०
विनाशित्वाद्विकल्पत्वाद्गुणित्वान्निर्गुणात्मनः ।
यस्य नो सदृशो दृष्टो दृष्टान्तः कश्चिदेव हि ॥ ५१
स्वादनी सर्वशालीनां दीपिका सर्वतेजसाम् ।
कलना सर्वकामानामन्तश्चिच्चन्द्रिकोदिता ॥ ५२
यस्मात्कल्पतरोर्वृक्षः संसारफलपङ्क्तयः ।
अनारतं बहुरसा जायन्ते च पतन्ति च ॥ ५३
तत्पदं सर्वसीमान्तमवलम्ब्य महामतिः ।
यः स्थितः स्थिरधीस्तज्ज्ञः स जीवन्मुक्त उच्यते ॥५४

इति च ॥ ३१ ॥ हृदयशब्दस्य पुण्डरीकाकारमांसविशेषे मनसि परमात्मनि च प्रयोगदर्शनात्संदिहानस्य प्रश्नः । प्रतिबिम्बति आदर्शे प्रतिबिम्ब इव स्फुरति ॥ ३२ ॥ तत्र मांसमनसोः परिच्छिन्नत्वादैक्यमेव प्रकल्प्य द्वेधा विभागो बोध्यः ॥ ३३ ॥ ३४ ॥ ननु आत्मनि हृदयशब्दो हृदयमात्रस्थितिकत्वाद्गौणः किं न स्यादित्याशङ्क्याह—**तदन्तरे चे**ति ॥ ३५ ॥ 'अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' इति श्रुतेरिति भावः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ सहसा हठयोगे प्रवृत्तिं वारयितुमाह—**अभ्यासेने**ति । हठान्निरोधे तु रोगाद्या बाधा स्यादेवेति भावः ॥४०॥ यथावासनं यदा या या वासना उद्भवन्ति तदा तत्तन्निरोधायेत्यर्थः । अथवा मुमुक्षावासनायां मोक्षफलेन सफलो भोगवासनायां तु तत्तद्भोगसिद्धिवैचित्र्यफलेन सफल इत्यर्थः ॥ ४१ ॥ अतएव तत्तत्सिद्धिफलभेदार्थं पातञ्जलशास्त्रे भ्रूमध्यादिस्थानभेदेन धारणाभेदा दर्शिता इत्याशयेनाह—**भ्रूनासे**ति । तालुसंस्था तालुसंस्थानं कण्ठाग्रादारभ्य द्वादशाङ्गुलिमितप्रदेशकोटिः सीमा द्वादशान्तः । पुरुषभेदाद्बहुवचनम् । यथाह पतञ्जलिः 'नाभिचक्रे कायव्यूहज्ञानम्, कण्ठकूपे क्षुत्पिपासानिवृत्तिः, कूर्मनाड्यां स्थैर्यम्, कण्ठकूपादधः कूर्मपृष्ठवदुन्नतप्रदेशो कूर्मनाडी प्रसिद्धा, मूर्धज्योतिषि सिद्ध-दर्शनम्' इत्यादि । शिरःकपालच्छिद्रे भास्वरज्योतिर्मूर्धज्योतिः । गिरिनदी निर्झरः । सा यथा दूरे गत्वा तत्रैव लीयते तद्वत् ॥ ४२ ॥ 'जिह्वयाक्रम्य घण्टिकाम्' इति यत्प्रागुक्तं तत्रोपायमाह—**भूय** इति । स्पृश्यते आक्रम्यते ॥ ४३ ॥ एतेषां समाधिभेदानां तत्तत्सिद्धिफलेषु विकल्पबहुलत्वेऽपि निष्कामस्य परमोपशमफले अविकल्पतैव सर्वेषामित्याह—**विकल्पे**ति ॥ ४४ ॥ ४५ ॥ ४६ ॥ वासनावलितं मनो जन्मशरीरं तत्र प्राणं चाभिमानेन गृह्णाति । निर्वासनं तु मोक्षम् ॥४७॥ एवं उक्ताभ्यासप्रकारेण दीयते खण्ड्यते । चिकित्स्यत इति यावत् ॥४८॥ ॥४९॥ इदं दृश्यं यत्र नेत्याधेयतया, यतो नेत्युपादेयतया, यन्नेति तादात्म्येन च सच्चिदात्मसंबन्धनिषेधान्न केनाप्यंशेन जगद्ब्रह्मसदृशमित्यर्थः ॥ ५० ॥ अतएव विनाशित्वादिधर्मके जगति न कश्चिदपि ब्रह्मणो दृष्टान्तोऽस्तीत्याह—**विनाशित्वा**दिति ॥ ५१ ॥ यदि न कश्चिद्दृष्टान्तस्तर्हि कथं तत्परिचयस्तत्राह—**स्वादनी**ति । रसरूपादिगोचरबाह्यवृत्तित्रिपुटीनां कामाद्यान्तरवृत्तित्रिपुटीनां च भासकतया तत्परिचेयमित्यर्थः ॥५२॥ 'फलमत उपपत्तेः' इति न्यायाद्विचित्रकर्मफलोदयक्षयनिमित्ततया वा तत्परिचेयमित्याह—**यस्मा**दिति ॥ ५३ ॥ [illegible]ने पुरुषार्थसिद्धिं दर्शयन्नुपसंहरति—**तदि**ति

विगतसर्वसमीहितकौतुकः समुपशान्तहिताहितकल्पनः ।
सकलसंव्यवहारसमाशयो भवति मुक्तमनाः पुरुषोत्तमः ॥ ५५

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० देवदूतोक्ते मोक्षोपायेषूपशमप्रकरणे योगवर्णनं नामाष्टसप्ततितमः सर्गः ॥ ७८ ॥

## एकोनाशीतितमः सर्गः ७९

श्रीराम उवाच ।

योगयुक्तस्य चित्तस्य शम एव निरूपितः ।
सम्यग्ज्ञानमिदानीं मे कथयानुग्रहात्प्रभो ॥ १

श्रीवसिष्ठ उवाच ।

अनाद्यन्तावभासात्मा परमात्मेह विद्यते ।
इत्येको निश्चयः स्फारः सम्यग्ज्ञानं विदुर्बुधाः ॥ २
इमा घटपटाकाराः पदार्थशतपङ्क्तयः ।
आत्मैव नान्यदस्तीति निश्चयः सम्यगीक्षणम् ॥ ३
असम्यग्वेदनाज्जन्म मोक्षः सम्यगवेक्षणात् ।
असम्यग्वेदनाद्रज्जुः सर्पो नो सम्यगीक्षणात् ॥ ४
संकल्पांशविनिर्मुक्ता संवित्संवेद्यवर्जिता ।
संवित्त्याभिसमाख्याता मुक्तावस्तीह नेतरत् ॥ ५
सा शुद्धरूपा विज्ञाता परमात्मेति कथ्यते ।
शुद्धा त्वशुद्धरूपान्तरविद्येत्युच्यते बुधैः ॥ ६
संवित्तिरेव संवेद्यं नानयोर्द्वित्वकल्पना ।
चिनोत्यात्मानमात्मैव रामैवं नान्यदस्ति हि ॥ ७
यथाभूतात्मदर्शित्वमेतावद्भुवनत्रये ।
यदात्मैव जगत्सर्वमिति निश्चित्य पूर्णता ॥ ८
सर्वमात्मैव कौ दिष्टौ भावाभावौ क्व च स्थितौ ।
क्व बन्धमोक्षकलने किमन्यद्राम शोच्यते ॥ ९
न चेत्यमन्यन्नो चित्तं ब्रह्मैवेदं विजृम्भते ।
सर्वमेकं परं व्योम को मोक्षः कस्य बन्धता ॥ १०
ब्रह्मेदं बृंहिताकारं बृहद्बृहदवस्थितम् ।
ज्ञानादस्तमितद्वित्वं भवात्मैव त्वमात्मना ॥ ११
सम्यगालोकिते रूपे काष्ठपाषाणवाससाम् ।
मनागपि न भेदोऽस्ति क्वासि संकल्पनोन्मुखः ॥ १२
आदावन्ते च संशान्तं स्वरूपमविनाशि यत् ।
वस्तु नामात्मनश्चैव तन्मयो भव राघव ॥ १३
परं व्योमेदमखिलं जगत्स्थावरजङ्गमम् ।
सुखदुःखक्रमः कुत्र विज्वरो भव राघव ॥ १४
द्वैताद्वैतसमुद्भूतैर्जरामरणविभ्रमैः ।
स्फुरत्यात्मभिरात्मैव चित्रैरम्बिव वीचिभिः ॥ १५
शुद्धमात्मानमालिङ्ग्य नित्यमन्तस्थया धिया ।
यः स्थितस्तं क्व आत्मेहं भोगा बन्धयितुं क्षमाः ॥ १६
कृतस्फारविचारस्य मनोभोगादयोऽरयः ।
मनागपि न भिन्दन्ति शैलं मन्दानिला इव ॥ १७
अविचारिणमज्ञानं मूढमाशापरायणम् ।
निगिरन्तीह दुःखानि बका मत्स्यमिवाजलम् ॥ १८
जगदात्मैव सकलमविद्या नास्ति कुत्रचित् ।
इति दृष्टिमवष्टभ्य सम्यग्रूपः स्थिरो भव ॥ १९

द्वाभ्याम् ॥ ५४ ॥ विगतानि सर्वाणि समीहितकौतुकानि कामभोगोत्कण्ठा यस्य । अतएव तदनुकूलप्रतिकूलेषु समुपशान्ता हिताहितवासना यस्य । अतएव सकलेषु संव्यवहारेषु समो हर्षविषादशून्य आशयो यस्य । ईदृशो मुक्तमनाः पुरुषश्रेष्ठो भवति । भगवान्विष्णुरपि भवतीत्यर्थः ॥ ५५ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे योगवर्णनं नामाष्टसप्ततितमः सर्गः ॥ ७८ ॥

**उद्दिष्टौ चित्तनाशाय योगज्ञानक्रमौ हि यौ ।**
**तयोराद्ये परिज्ञाते द्वितीयोऽत्र निरूप्यते ॥ १ ॥**

'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव' इत्युद्दिष्टक्रमयोर्मध्ये आद्यश्चित्तस्य शमो नाशप्रकारो निरूपितस्त्वयेत्यर्थः ॥ १ ॥ लक्षणस्वरूपसाधनादिभिः सम्यग्ज्ञानं प्रपञ्चयिष्यन् प्रथममात्मपरिचयेन जगद्बाधात्मतालक्षणं तल्लक्षणमाह—**अनाद्यन्ते**ति । एकः असाधारणः । स्फारः अपरिच्छिन्नाकारः ॥ २ ॥ एवं जगद्बाधेनात्मपरिचयात्मता वा तल्लक्षणमित्याह—**इमा** इति ॥ ३ ॥ सम्यग्ज्ञानस्य मोक्षसमर्थतां दर्शयति—**असम्यगि**ति । सम्यगीक्षणान्नो सर्पः । सर्पभावान्मोक्ष इति यावत् ॥ ४ ॥ मुक्तौ तर्हि किं परिशिष्यते तदाह—**संकल्पे**ति । संवित्त्या स्वप्रकाशस्वभावेनैव अभितः सम्यक् आख्याता प्रथमाना । इह मुक्तौ ॥५॥ अप्यर्थे तुशब्दः ॥ ६ ॥ तथाचाविज्ञानकृत एव संवित्तिसंवेद्ययोर्भेदो न वास्तव इत्याह—**संवित्तिरेवे**ति । चिनोति अज्ञानात्संचिनोति ज्ञानात्तु परिचिनोतीत्यर्थः ॥ ७ ॥ निष्कृष्टं सम्यग्ज्ञानस्वरूपमाह—**यथाभूते**ति ॥ ८ ॥ दिष्टौ निर्दिष्टौ । निष्कृष्य निरूपितावित्यर्थः । किमन्यदस्ति यदर्थं शोच्यते मूढैरिति शेषः ॥ ९ ॥ ॥ १० ॥ बृहतोऽपि बृहद्ब्रह्म स्वात्मन्येव मायया नटवद्बृंहिताकारं इदं दृश्यं व्यवस्थितम् ॥ ११ ॥ सम्यक् अधिष्ठानसन्मात्ररूपेणालोकिते सति क्वासि । नह्येकरूपे हेयोपादेये संकल्पनं विकल्पनं वा संभवतीत्यर्थः ॥ १२ ॥ अविनाशि यत्स्वरूपं तदेव वस्तु । नामेति प्रसिद्धौ । आत्मनश्च स्वरूपमेवंविधमतस्तन्मयो भवेत्यर्थः ॥ १३ ॥ परं निरतिशयानन्दरूपं ब्रह्म ॥ १४ ॥ स्फुरति अज्ञस्येति शेषः ॥ १५ ॥ तं तत्त्वज्ञम् । के भोगाः ॥ १६ ॥ मनोभोगः कामस्तदादयः षडरयः ॥ १७ ॥ अजलं जलान्निर्गतमल्पजलस्थं वा ॥ १८ ॥ १९ ॥

नानात्वमस्ति कलनासु न वस्तुतोऽन्त-
र्नानाविधासु सरसीषु जलादि नान्यत् ।
इत्येकनिश्चयमयः पुरुषो विमुक्त
इत्युच्यते समवलोकितसम्यगर्थः ॥ २०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे सम्यग्ज्ञानलक्षणनिरूपणं नामैकोनाशीतितमः सर्गः ॥७९॥

## अशीतितमः सर्गः ८०

श्रीवसिष्ठ उवाच ।
इदमन्तः कलयतो भोगान्प्रति विवेकिनः ।
पुरःस्थितानपि सदा स्पृहैवाङ्ग न जायते ॥ १
चक्षुरालोकनायैव जीवस्तु सुखदुःखयोः ।
भारायैव बलीवर्दो भोक्ता द्रव्यस्य नायकः ॥ २
नयने रूपनिर्मग्ने क्षोभः क इव देहिनः ।
गर्दभे पल्वले मग्ने कैव सेनापतेः क्षतिः ॥ ३
रूपकर्दममेतन्मानयनास्वादयाधम ।
नश्यत्येतन्निमेषेण भवन्तमपि हिंसति ॥ ४
येनैव संख्या क्रियते येनैवाऽस्वाऽनुगम्यते ।
तदीयैः कर्मभिः क्षिप्रं प्राज्ञः क्रूरो निबध्यते ॥ ५
उत्पन्नध्वंसि चापातमात्रहृद्यमसन्मयम् ।
रूपमाश्रय मा नेत्र विनाशायाविनाशिने ॥ ६
साक्षिवत्त्वं स्थितं नेत्र रूपमात्मनि तिष्ठति ।
आलोकं कालवशतस्त्वमेकं किं प्रतप्यसे ॥ ७
सलिलस्पन्दवद्दृष्टिः पिच्छिकेवाम्बरोत्थिता ।
सुजातिबन्धा स्फुरति तव चित्त किमागतम् ॥ ८
कल्पाम्भसीव शफरी चित्ते स्फुरणधर्मिणि ।
स्वयं स्फुरत्यहंकारस्त्वमयं प्रोत्थितः कुतः ॥ ९
आलोकरूपयोर्नित्यं जडयोः स्फुरतोर्मिथः ।
आधाराधेययोश्चित्तं व्यर्थमाकुलता तव ॥ १०
रूपालोकमनस्काराः परस्परमसङ्गिनः ।
संपन्ना इव लक्ष्यन्ते वदनादर्शबिम्बवत् ॥ ११
अज्ञानजन्तुना ह्येते श्लिष्टा जाता निरन्तराः ।

जलादि आदिपदात्तरङ्गफेनबुद्बुदादि जलान्नान्यत् । यथेति शेषः । इति विविच्य समवलोकितसम्यगर्थस्तदेकनिश्चयप्रधानः पुरुष आत्यन्तिकचित्तनाशाद्विमुक्त इत्युच्यत इत्यर्थः ॥ २० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सम्यग्ज्ञानलक्षणनिरूपणं नामैकोनाशीतितमः सर्गः ॥ ७९ ॥

यस्मिन्विमर्शे सुदृढे दिव्यभोगेष्वपि स्पृहा ।
नोदेत्यपि पुरःस्थेषु स विमर्शोऽत्र वर्ण्यते ॥ १ ॥

इदं वक्ष्यमाणं विमर्शोपदर्शनम् । पुरःस्थितानपि भोगान्प्रति स्पृहा न जायत एवेत्यन्वयः ॥ १ ॥ तत्रादौ चक्षुषा इष्टानिष्टरूपे आलोचिते चक्षुरहंताभिनिवेशाज्जीवस्य सुखदुःखे दृश्येते तत्र चक्षुः प्रति स्वामितैवास्य नत्वहंतेति विमर्शेन दुःखादिप्रसक्तिरिति दर्शयति—**चक्षुरि**ति । बलीवर्द एव भारवहनदुःखाय न तस्य भारद्रव्यस्य च नायकः । नह्यसौ बलीवर्द इत्यर्थः ॥ २ ॥ स्वामित्वमपि तस्य न चक्षुर्मात्रे किंतु कार्यकरणसंघातकामकर्मवासनातत्फलभेदेष्वनन्तेषु । तत्र अहंकारबुद्धिमनःप्राणपरम्परया कथंचित्स्वत्वकोटिनिविष्टस्यैकस्य चक्षुषः कदाचिदनिष्टरूपसंप्रयोगे का वा गणना कुतो वास्य दुःखप्रसक्तिरित्याशयेनाह—**नयने** इति । गर्दभे सेनान्तर्गतरजकगर्दभे ॥ ३ ॥ स्वामित्वादेव तन्निवारयितुमपि शक्यमित्याशयेनाह—**रूपे**ति । एतत् स्त्रीपुत्रादिसौन्दर्यलक्षणं रूपम् । हिंसति नाशयति । छान्दसो विकरणव्यत्ययः । हे अधम मूढतम ॥ ४ ॥ प्राज्ञस्तर्हि कीदृशः क्वचिन्निबध्यते तत्राह—**येने**ति । क्रूरो निशितमतिः प्राज्ञस्तु येनान्तर्गतेन चिदात्मनैव सम्यक् ख्यानं संख्या प्रकाशो बाह्याभ्यन्तरार्थप्राप्त्या क्रियते येनैव अस्वा अनात्मभूता कोऽयमनया अन्तःकरण

तादात्म्यारोपेणानुगम्यते तदीयैः औदासीन्येन यथाप्राप्तार्थप्रकाशनलक्षणैः कर्मभिश्चरित्रैर्निबध्यते अभ्यासेन संबध्यते न मूढवद्रूपकर्दमास्वादनकर्मभिः । तथाच त्वमप्युदासीनं सद्रूपं प्रकाशय नतु तदास्वादयेत्यर्थः ॥ ५ ॥ उत्पन्नध्वंसि आपातमात्रहृद्यं चेति विशेषणे असन्मयमित्यस्योपपत्तये । अविनाशिने अनिवार्याय विनाशाय मृत्युमुखप्रवेशाय ॥ ६ ॥ किंच रूपविषये सदा सर्वार्थप्रकाशने निरपेक्षसमर्थेऽपि परमात्मनि उदासीने स्थिते सति हे नेत्र, कालवशतः कदाचिदेव दीपाद्यालोकं प्राप्य प्रकाशयत् त्वमेवैकं किं किमर्थं प्रतप्यसे, अतस्त्वमपि साक्षिवत्स्थितं सद्रूपं पश्येत्यर्थः ॥ ७ ॥ इदानीं चक्षुषा भ्रान्त्या रूपे आलोकितेऽपि चित्तस्य तदभिनिवेशे हेतुर्नास्तीत्याह—**सलिले**ति । हे चित्त, इयं विचित्ररूपदृष्टिर्नद्यादिसलिले नानाविधा नियतस्पन्दवैचित्र्यवदनियता । अम्बरे सूर्यालोकाभिमुखसाश्रुनेत्रनिरीक्षिता मयूरपिच्छिकेव मिथ्याभूता च गौरयमश्वोऽयं स्त्रीपिण्डोऽयमित्येवं नानाविधसुजातिदुर्जातिविकल्पानुबन्धा चक्षुषः स्फुरति तत्र तव किमागतं येन त्वं रज्यसे तप्यसे चेत्यर्थः ॥ ८ ॥ अस्तु वा चित्ते चक्षुर्दृष्टार्थाकारा वृत्तिस्तथाप्यभिनिवेशहेतोरहंकारस्य निमित्तं नास्तीत्याह—**कल्पे**ति । चित्ते स्वयं रूपाद्याकारः स्फुरति चेत्स्फुरतु नाम, अयमहंकारस्त्वं कुतः प्रोत्थितः ॥ ९ ॥ किंच स्त्रीपिण्डादिलक्षणं रूपं सूर्याद्यालोकमाश्रित्य स्फुरति सूर्यालोकश्च पिण्डाश्रित इत्यन्योन्यसंयोगे सौन्दर्यभ्रान्त्या कामादिना चित्तस्य व्याकुलता प्रसिद्धा, सा च तयोश्चित्तेनासंबन्धाद्व्यर्थेत्यर्थः ॥ १० ॥ असंबन्धमेव दृष्टान्तेन स्फुटयति—**रूपे**ति । चक्षुषा बहिः रूपालोकनं मनसा चान्तःसंकल्पादयो मनस्कारा इति भिन्नदेशत्वादेवेति भावः । संपन्नाः संश्लिष्टा इव ॥ ११ ॥ तत्संश्लेषभ्रान्तौ चाज्ञानमेव निमित्त-

अज्ञाने ज्ञानगिलिते पृथक्लिष्टान्यसन्मयाः ॥ १२
मनःकल्पनया ह्येते सुसंबद्धाः परस्परम् ।
रूपालोकमनस्कारा दारुणी जतुना यथा ॥ १३
स्वमनोमननं तन्तुर्मनोभ्यासेन यत्नतः ।
विचाराच्छेदमायाति छिन्नैवाज्ञानभावना ॥ १४
अज्ञानसंक्षयात्क्षीणे मनसीमे पुनर्मिथः ।
रूपालोकमनस्काराः संघट्टन्ते न केचन ॥ १५
सर्वेषां चित्तमेवान्तरिन्द्रियाणां प्रबोधकम् ।
तदेव तस्मादुच्छेद्यं पिशाच इव मन्दिरात् ॥ १६
चित्त वल्गसि मिथ्यैव दृष्टोऽन्तो भवतो मया ।
आद्यन्तयोः सुतुच्छं त्वं वर्तमाने विनश्यसि ॥ १७
मुधा पञ्चभिराकारैः किमन्तः परिवल्गसि ।
यस्त्वां स्वमिति जानाति तस्यैव परिवल्गसि ॥ १८
त्वद्वल्गनं मे कुमनो न मनागपि तुष्टये ।
मायामनःस्पन्द इव व्यर्थं वृत्तिषु दह्यसे ॥ १९
तिष्ठ वा गच्छ वा चित्त नासि मे न च जीवसि ।
प्रकृत्यासि मृतं नित्यं विचारात्सुमृतं स्मृतम् ॥ २०
निस्तत्त्वं त्वं जडं भ्रान्तं शठं नित्यमृताकृते ।
मूढ एव त्वयाज्ञेन बाध्यो न प्रविचारवान् ॥ २१
वयमज्ञातवन्तस्त्वां मौर्ख्येणाशु मृतं भवत् ।
मृतमस्माकमद्यासि दीपानां तिमिरं यथा ॥ २२
शठेन भवता दीर्घकालं देहगृहं मम ।
उपरुद्धमभूत्सर्वं साधुसंसर्गवर्जितम् ॥ २३
जडे प्रेतसमाकारे गते त्वयि मनःशठे ।
सर्वसज्जनसंसेव्यमिदं देहगृहं मम ॥ २४
पूर्वमेवासि नासीस्त्वं संप्रत्येव शठं जगत् ।
न भविष्यसि चेदानीं वेताल किं न लज्जसे ॥ २५
सह तृष्णापिशाचीभिः सह कोपादिगुह्यकैः ।
निर्गच्छ चित्तवेताल शरीरसदनान्मम ॥ २६
दिष्ट्या विवेकमात्रेण निर्गतो देहमन्दिरात् ।
प्रमत्तश्चित्तवेतालः कुवृकः कन्दरादिव ॥ २७
अहो नु चित्रं सुमहज्जडेन क्षणभङ्गिना ।
मनःशठेन सर्वोऽयं नीतो विवशतां जनः ॥ २८
कस्ते पराक्रमः किं ते बलं कस्ते समाश्रयः ।
यदि वल्गसि मामेकं जनानां बाधसे मृतम् ॥ २९
सर्वथैवासि न मया दीनचित्तक मार्यसे ।
मृतमित्यवबुद्धं त्वमद्य केवलमज्ञ हे ॥ ३०
एतावन्तमहं कालं त्वां ज्ञात्वा जीवदास्थिति ।
श्लिष्टः प्रभूतसङ्गासु चिरं संसृतिरात्रिषु ॥ ३१
चित्तं मृतं हि नास्तीदमित्यद्याधिगतं मया ।
तेन त्वदाशां संत्यज्य तिष्ठाम्यात्मनि केवलम् ॥ ३२
दिष्ट्या चित्तं मृतमिति ज्ञातमद्य मया स्वयम् ।
न शठेन समं नेयं समग्रं जीवितं निजम् ॥ ३३
उत्सार्य देहसदनान्मनःशठमहं क्षणात् ।
अहं स्वस्थः स्थितोऽस्म्यन्तर्वेतालपरिवर्जितः ॥ ३४
चित्तवेताललब्धेन चिरं कालं मयात्मना ।

---

मित्याह—**अज्ञाने**ति । पृथग्विश्लिष्टास्तु असन्मया बाधिताः सन्तः अधिष्ठानमात्रपरिशेषेण तिष्ठन्ति ॥१२॥ दारुणी काष्ठे । जतुना लाक्षया ॥१३॥ स्वमनोमननमेव तन्तुः कोशकारतन्तुवत्स्वबन्धनं स च मन्दमध्यमाधिकारिणोर्वैराग्यशमदमनिरोधादिमनोभ्यासेन यत्नतो विचाराच्छेदमायाति । मुख्याधिकारिणस्तु सहसोत्पन्नज्ञानेन तस्मिंश्छिन्ने सति स्वभावत एवाज्ञानभावना छिन्नैव नैव प्रवर्तेत इत्यर्थः ॥ १४ ॥ तत्र द्वितीयस्यानायास इत्याह—**अज्ञाने**ति ॥ १५ ॥ प्रथमेन तु यत्नेन चित्तमुच्छेद्यमित्याह—**सर्वेषा**मिति ॥ १६ ॥ इदानीं चित्तमेव संबोध्य बोधयति—**चित्ते**त्यादिना । अन्तो बाधोपायः । यत आद्यन्तयोः सुतुच्छं अतो वर्तमानकालेऽपि विनश्यसि असदसि । नहि पूर्वोत्तरकालयोस्तुच्छो वन्ध्यापुत्रो वर्तमानकाले संभवतीत्यर्थः ॥ १७ ॥ पञ्चभिरिन्द्रियोपनीतैः शब्दाद्याकारैः । यस्त्वदभिमानी प्रमाता त्वां स्वं मदीयमिति जानाति तस्यैव त्वमुपकरणतया परिवल्गसि न त्वसङ्गोदासीनचिदेकरसस्य ममेत्यर्थः ॥१८॥ तुष्टिग्रहणं विषादस्याप्युपलक्षणम् । ऐन्द्रजालिकमायाप्रयुक्ते मनसो नानाविषयदर्शनाकारस्पन्दे इव ॥ १९ ॥ प्रकृत्या स्वीयमिथ्यास्वभावेनैव मृतं निरात्मकमसि विचारात्तु तथा स्मृतं सत् सुमृतं अत्यन्तासदसीत्यर्थः ॥ २० ॥ २१ ॥ एतावत्कालं वयं त्वां मृतं भवत् नैरात्म्येन वर्तमानं अज्ञातवन्तो न ज्ञातवन्तः । अद्य आत्मतत्त्वदर्शनकाले ॥ २२ ॥ साधवः शमदमविचारबोधादयस्तत्संसर्गवर्जितम् ॥ २३ ॥ शमादय एव सज्जनाः ॥ २४ ॥ हे जगद्रूप चित्तवेताल, शठं त्वं पूर्वमेव नासीः संप्रति च नास्येव अग्रे च न भविष्यसि । एवं मया कालत्रये निषेध्यमानोऽपि इदानीमत्र स्थातुं किं न लज्जसे । अहो तव निर्लज्जतेत्यर्थः ॥ २५ ॥ यदि सलज्जोऽसि तर्हि निर्गच्छेत्याह—**सहे**ति ॥ २६ ॥ २७ ॥ चित्तवञ्चितजनाननुशोचति—**अहो** इति ॥ २८ ॥ जनानां मध्ये मृतं मरणधर्मकदेहात्मदर्शनात्स्वतो मृतं बाधसे अयं कस्ते पराक्रमः । एकमद्वितीयात्मभूतं मां प्रति यदि वल्गसि आगन्तुं शक्नोषि तदा ते पराक्रम इति शेषः ॥ २९ ॥ हे अज्ञ दीनचित्तक, मया अद्य न मार्यसे, यतः पूर्वमेव सर्वथैव त्वं मृतमिति अवबुद्धम् । अयमेव वध इत्यर्थः ॥ ३० ॥ जीवदास्थिति जीवत इव आस्थितिः स्वरूपसत्ता यस्य तथाविधं ज्ञात्वा श्लिष्टस्त्वया सह तादात्म्येन संगतः ॥ ३१ ॥ ३२ ॥ बोधोत्तरं जीवन्मुक्तानां निश्चित्तमेवायुःशेषनयनमुचितमित्याह—**न शठेने**ति ॥३३॥ शठानां कामक्रोधलोभादीनां महं उत्सवभूतं मनो देहसदनादुत्सार्य ॥ ३४ ॥ चित्तवेतालेन लब्धेन विप्रलब्धेन आत्मना

कृता विकारा विविधाः स्वयं स्मृत्वा हसाम्यहम् ॥ ३५
चिरान्निपातितो दिष्ट्या विचारासिपरार्दितः ।
हृद्गेहाच्चित्तवेतालस्तालोत्तालसमुन्नतिः ॥ ३६
प्रशान्ते चित्तवेताले पवित्रां पदवीं गते ।
दिष्ट्या शरीरनगरे सुखं तिष्ठामि केवलम् ॥ ३७
मृतं मनो मृता चिन्ता मृतोऽहंकारराक्षसः ।
विचारमन्त्रेण समः स्वस्थस्तिष्ठामि केवलम् ॥ ३८
किं मनो मे ममाशा का को मेऽहंकारको भवेत् ।
दिष्ट्या व्यर्थं कलत्रं मे नष्टमेतदशेषतः ॥ ३९
एकस्मै कृतकृत्याय नित्याय विमलात्मने ।
निर्विकल्पचिदाख्याय मह्यमेव नमो नमः ॥ ४०
न शोकोऽस्ति न मोहोऽस्ति न चैवाहमहं स्वयम् ।
नच नाहं नचान्योऽहं मह्यमेव नमो नमः ॥ ४१
न ममाशा न कर्माणि न संसारो न कर्तृता ।
न भोक्तृता न देहो मे मह्यमेव नमो नमः ॥ ४२
नाहमात्मा न वा कोऽन्यो नाहमस्मि न चेतरः ।
सर्वमेवाहमेतस्मै मह्यमेव नमो नमः ॥ ४३
अहमादिरहं धाता चिदहं भुवनान्यहम् ।
मम नास्ति व्यवच्छेदो मह्यमेव नमो नमः ॥ ४४
निर्विकाराय नित्याय निरंशाय महात्मने ।
सर्वस्मै सर्वकालाय मह्यमेव नमो नमः ॥ ४५
नीरूपाय निराख्याय प्रकाशाय महात्मने ।
स्वयमात्मैकसंस्थाय मह्यमेव नमो नमः ॥ ४६
समां सर्वगतां सूक्ष्मां जगदेकप्रकाशिनीम् ।
सत्तामुपगतोऽस्म्यन्तर्मह्यमेव नमो नमः ॥ ४७
साद्र्यब्ध्युर्वी नदी सेयं नाहमेवाहमेव वा ।
जगत्सर्वं पदार्थाढ्यं मह्यमेव नमो नमः ॥ ४८
व्यपगतमननं समाभिरामं
प्रकटितविश्वमविश्वमप्यनन्तम् ।
स्वयमजमजरं गुणादतीतं
वपुरहमच्युतमीश्वरं नमामि ॥ ४९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषूपशमप्रकरणे दृश्यदर्शनसंबन्धो नामाशीतितमः सर्गः ॥ ८० ॥

## एकाशीतितमः सर्गः ८१

श्रीवसिष्ठ उवाच ।

एवं विचार्य बुद्धान्तः पुनरित्थं विचार्यते ।
तत्त्वविद्भिर्महाबाहो ज्ञेय आत्मा महात्मभिः ॥ १
आत्मैवेदं जगदिति सत्यं चित्तेन मार्जितम् ।
उत्थितं स्यात्कुतश्चित्तमहो चित्तमवस्तु यत् ॥ २
अविद्यत्वादचित्तत्वान्मायात्वाच्चासदेव हि ।
ध्रुवं नास्त्येव वा चित्तं भ्रमादन्यत्खवृक्षवत् ॥ ३
सिद्धः स्थाणुपरिस्पन्दो नौगतस्य यथा शिशोः ।
अबुद्धस्य न बुद्धस्य तथा चित्तमसन्मयम् ॥ ४

तदात्मभूतेन मया । इदानीं स्वयं परमार्थात्मभूतोऽहं तान्विकारान्स्मृत्वा हसामीत्यर्थः ॥ ३५ ॥ निपातितो निपात्यैव मारितः ॥ ३६ ॥ कामादिमलाभावात्पवित्रां पदवीमिन्द्रियद्वारमार्गं गते प्राप्ते ॥ ३७ ॥ समो निरस्तवैषम्यः सन् ॥ ३८ ॥ कलत्रं पोष्यवर्गः ॥ ३९ ॥ इदानीं परिशिष्टं निरतिशयानन्दैकरसमात्मानमतिशयेन नमस्यति—**एकस्मै** इत्यादिना ॥ ४० ॥ अहमहं अहमभिमानप्रधानजडांशो नैव । नच नाहं अहंकारप्रत्यक्चिदात्मा नेति च न ॥ ४१ ॥ ४२ ॥ आत्मा आत्मशब्दप्रत्ययविषयो न । तथाच बृहदारण्यकभाष्ये तद्वार्तिके च 'आत्मेत्येवोपासीतेत्यत्र इतिशब्द आत्मशब्दप्रत्ययविषयत्वनिवारणार्थं' इत्युक्तम् । न वा अन्यः अनात्माहम् । कोऽन्यस्तत्त्वदृशा संभाव्यते यदहं स्याम् । एवमहंशब्दप्रत्ययविषयस्तदितरश्च नाहम । एवंच स्वेतराप्रसिद्धेः स्वयमेव सर्वमिति सर्वमेवाहमित्यर्थः ॥ ४३ ॥ आदिर्भुवनानां कारणम् । धाता धारयिता । व्यवच्छेदस्त्रिविधपरिच्छेदः ॥ ४४ ॥ सर्वकालाय सनातनाय ॥ ४५ ॥ ४६ ॥ ४७ ॥ अद्रयश्च अब्धयश्च उर्वी च नद्यश्च एतैः सहिता सा प्रसिद्धा इयं वर्तमाना दृश्यश्रीर्नाहम् । एवमतीतानागतपदार्थाढ्यं जगत्सर्वमपि नाहमहमेव चेति योज्यम् ॥ ४८ ॥ व्यपगतानि मननानि मनोविकल्पा यस्मादत एव समाभिरामं प्रकटितविश्वमनन्तं अच्युतम् । कुतः । उत्थितस्वरूपादप्रच्युतं ईष्टे अविद्यातत्कार्यनिरासे समर्थीभवतीतीश्वरं वपुः स्वरूपं नमामि । सर्वोत्कर्षेण प्रपन्नोऽस्मीत्यर्थः ॥ ४९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे दृश्यदर्शनसंबन्धो नामाशीतितमः सर्गः ॥ ८० ॥

यतैः प्राक्चित्तवेतालो देहगेहाद्विवासितः ।
इहानुभवयुक्तिभ्यां चित्तासत्तोपपाद्यते ॥ १ ॥

आत्मा ज्ञेयः अवश्यं ज्ञातव्य इति विचारतत्त्वविद्भिः पुनरित्थं वक्ष्यमाणप्रकारेण विचार्यते चित्तमिति शेषः ॥ १ ॥ येन चित्तेन आत्मैवेदमिति बोधेन जगन्मार्जितं तच्चित्तं कुत उत्थितं स्यात् यज्जगदन्तःपातेन स्वयमप्यवस्तु । अहो इत्याश्चर्ये ॥ २ ॥ अवस्तुत्वमेव साधयति—**अविद्यत्वा**दिति । जडत्वाच्चित्तान्तरशून्यत्वान्मायाकार्यत्वाच्च ध्रुवं निश्चयेन चित्तं नास्त्येवेत्यसदेव । अथवा खवृक्षवद्भ्रमादेवान्यद्वस्तुतस्तु शुद्धं खमिवात्मैव तदित्यर्थः ॥ ३ ॥ यथा नौकागतस्य शिशोर्बालस्य स्थाणुपरिस्पन्दो भ्रान्तिमात्रसिद्धस्तद्वदबुद्धस्य चित्तं सिद्धमपि

१ अरूपं इति पाठः.

मौर्ख्यमोहभ्रमे शान्ते चित्तं नोपलभामहे ।
चक्रारोहभ्रमस्यान्ते पर्वतस्पन्दनं यथा ॥ ५
एवं हि चित्तं नास्त्येव ब्रह्मैवास्ति तथात्मकम् ।
पदार्थभावनाश्चित्तात्तेनासत्या मयोज्झिताः ॥ ६
जातोऽस्मि शान्तसंदेहः स्थितोऽस्मि विगतज्वरः ।
तथा तिष्ठामि तिष्ठामि तथैव विगतैषणम् ॥ ७
चित्ताभावे परिक्षीणा बाल्यतृष्णादयो गुणाः ।
आलोकोपरमे चित्रा वर्णाख्या इव संविदः ॥ ८
मृतं चित्तं गता तृष्णा प्रक्षीणो मोहपञ्जरः ।
निरहंकारता जाता जाग्रत्यस्मिन्प्रबुद्धवान् ॥ ९
एकमेव जगच्छान्तं नानात्वं न सदित्यपि ।
किमन्यद्भिन्नशाम्यन्तः कथयैवालमेतया ॥ १०
निराभासमनाद्यन्तं पदं पावनमागतः ।
सौम्यः सर्वगतः सूक्ष्मः स्थित आत्मास्मि शाश्वतः ११
यदस्ति यच्च नास्तीह चित्ताद्यात्माद्यवस्तु च ।
तत्खादच्छतरं शान्तमनन्ताग्राह्यमाततम् ॥ १२
चित्तं भवतु मा वान्तर्म्रियतां स्थितिमेतु वा ।
को विचारणयार्थो मे चिरं साम्योदितात्मनः ॥ १३
विचाराकारको मौर्ख्यादहमासं मितस्थितिः ।
विचारेणामिताकारः क नामाहं विचारकः ॥ १४
मृतेऽपि मनसीयं मे विकल्पश्रीर्निरर्थिका ।
मनोवेतालवृत्त्यर्थं किमर्थमुपजायते ॥ १५
तामिमां प्रजहाम्यन्तः संकल्पकलनामिति ।
निर्णीयोमिति शान्तात्मा तिष्ठाम्यात्मनि मौनवत् १६
अश्नन्गच्छन्स्वपंस्तिष्ठन्निति राघव चेतसा ।
सर्वत्र प्रज्ञया तज्ज्ञः प्रत्यहं प्रविचारयेत् ॥ १७
प्रविचार्य स्वसंस्थेन स्वस्थेन स्वेन चेतसा ।
तिष्ठन्ति विगतोद्वेगं सन्तः प्रकृतकर्मसु ॥ १८
विगतमानमदा मुदिताशयाः
शरदुपोढशशाङ्कसमत्विषः ।
प्रकृतसंव्यवहारविहारिण-
स्त्विह सुखं विहरन्ति महाधियः ॥ १९

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे चित्तासत्ताप्रतिपादनं नामैकाशीतितमः सर्गः ॥ ८१ ॥

## द्व्यशीतितमः सर्गः ८२

श्रीवसिष्ठ उवाच ।
विचार एवं विदुषा संवर्तेन कृतः पुरा ।
कथितो मम विन्ध्याद्रौ तेनैव विदितात्मना ॥ १
एतां दृष्टिमवष्टभ्य विचारपरया धिया ।
संसारसागरादस्मात्तारतम्येन संतर ॥ २
अथेमामपरां राम शृणु दृष्टिं पदप्रदाम् ।
मुनिना वीतहव्येन ययाऽऽस्थितमशङ्कितम् ॥ ३

बुद्धस्यात्मविदो न सिद्धं किंत्वसन्मयमेवेत्यर्थः ॥ ४ ॥ तैलेक्ष्वादियन्त्रचक्रारोहणप्रयुक्तभ्रमस्यान्ते तदवरोहणोत्तरमित्यर्थः ॥ ५ ॥ यतो बाह्याभ्यन्तरपदार्थभावना असतश्चित्तात्प्रसृतास्तेन हेतुना असत्या इति मया उज्झितास्त्यक्ताः ॥ ६ ॥ यथा येन पारमार्थिकस्वभावेन तिष्ठामि तथैवेदानीं स्वानुभवेनापि तिष्ठामि नान्यथाभूत इत्यर्थः ॥ ७ ॥ बाल्यं बालस्य कर्म चापलम् । वर्णान् रूपभेदानाख्यान्ति प्रथयन्ति तथाविधाश्चाक्षुषसंविद इव ॥ ८ ॥ अस्मिन्नहमात्मनि जाग्रति अपगताज्ञाननिद्रे सति अहं प्रबुद्धवान् स्वाभाविकं स्वरूपमित्यर्थः ॥ ९ ॥ जगत् शान्तं सदेकं ब्रह्मैव। एतया असद्विषयिण्या कथयैवालम्। प्रयोजनं नास्तीत्यर्थः ॥ १० ॥ निर्गत आभासश्चिदाभासलक्षणा जीवता यत्र ॥ ११ ॥ यल्लोके व्यवहारदशा चित्तादिश्रुतिदशा च आत्मब्रह्मचैतन्यादि च अस्तीति च प्रसिद्धम् । यच्च रज्जुसर्पादि वन्ध्यापुत्रादि च नास्तीति प्रसिद्धं वस्त्ववस्तु च तत्सर्वं खादाकाशादप्यच्छतरं निर्मलतरं अग्राह्यं स्वप्रकाशं ब्रह्मैवाततं तस्मिन्नेव सदसद्रूपविकल्पारोपादित्यर्थः ॥ १२ ॥ १३ ॥ अहमेतावत्कालं मौर्ख्याद्विचारस्य अकारकः अकर्ता सन् मितस्थितिः परिच्छिन्नदेहादिस्वभाव आसम् । संप्रति विचारेण अमिताकारः सन् विचारकः अहं क नाम गत इति न निरूपयितुं शक्य इत्यर्थः ॥ १४ ॥ मनसि मृते सति विचारकोऽस्ति न वेति विकल्पश्रीरपि निरर्थिका मनोवेतालस्य वृत्त्यर्थं पुनर्जीवनार्थं किमर्थमुपजायते । अतस्तामिमां प्रजहामीति परेण संबन्धः ॥ १५ ॥ ओमिति ओंकारलक्ष्ये तुरीये आत्मनि मौनवदिति स्थितिक्रियादृष्टान्तः ॥ १६ ॥ कृतं विचारमुपसंहरंस्तस्य सदैव कर्तव्यतामाह— अश्नन्निति । यथाहुः 'गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा । न विचारपरं चेतो यस्यासौ मृत उच्यते ॥' इति ॥१७॥ प्रकृतकर्मसु स्वस्ववर्णाश्रमोचिताचारेषु ॥ १८ ॥ शरदा उपोढेन शशाङ्केन समा त्विट् प्रसन्नसुखकान्तिर्येषाम् ॥ १९ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे चित्तासत्ताप्रतिपादनं नामैकाशीतितमः सर्गः ॥ ८१ ॥

इहेन्द्रियाणि च मनो व्यर्थचेष्टादिहेतुभिः ।
वीतहव्येन बोध्यन्ते आत्मैकाउयप्रसिद्धये ॥ १ ॥

कृतस्य विचारस्य सांप्रदायिकत्वं दर्शयति—विचार इति । संवर्तेन बृहस्पतिभ्रात्रा ॥१॥ तारतम्येन उत्तरोत्तरचित्तविश्रान्तिप्रकर्षपरिपाकप्रयुक्तभूमिकारोहणक्रमेण ॥२॥ अपरां इन्द्रियमनःप्रबोधनरूपां यया दृष्ट्या वीतहव्येन मुनिना अशङ्कितं निःशङ्कं पदमास्थितमधिरूढमित्यर्थः । 'यथा' इति पाठे येन प्रकारेण ॥३॥

वीतहव्यो महातेजा विबभ्राम वने पुरा ।
विन्ध्यशैलदरीर्दीर्घा रविर्मेरुदरीरिव ॥ ४
अस्मात्क्रियाक्रमाद्घोरात्संसारभ्रमदायिनः ।
आधिव्याधिमयाकारात्कालेनोद्वेगमाययौ ॥ ५
निर्विकल्पसमाध्यंशलभ्योदारपरेच्छया ।
स जहार जगज्जीर्णां स्वव्यापारपरम्पराम् ॥ ६
विवेश रम्भारचितं निजं पर्णोटजान्तरम् ।
कृतगौरं सुसौगन्ध्यमलिनीलमिवोत्पलम् ॥ ७
तत्रासने समे शुद्धे स्वास्तीर्णेहरिणाजिने ।
विशश्रामाचले शान्ते वीतवर्ष इवाम्बुदः ॥ ८
बद्धपद्मासनस्तस्थौ पार्ष्णयोरधिकराङ्गुलिः ।
शृङ्गवच्छान्तचलनमतिष्ठत्स्पष्टकन्धरम् ॥ ९
स जहारालमालोकाद्दिग्विकीर्णं मनः शनैः ।
विशन्मेरुदरीं सायं भानुर्भास इवोत्करम् ॥ १०
बाह्यानाभ्यन्तरांश्चैव स्पर्शान्परिजहत्क्रमात् ।
इदमाकलयामास मनसा विगतैनसा ॥ ११
अहो नु चञ्चलमिदं प्रत्याहृतमपि क्षणात् ।
न मनः स्थैर्यमायाति तरङ्गप्रौढपर्णवत् ॥ १२
चक्षुरादिभिरुद्दामै रूपैराहितसंभ्रमैः ।
अजस्रमुत्पतत्येव वीटेव तलताडिता ॥ १३
त्यजदेवानुगृह्णाति वृत्तीरिन्द्रियवर्धिताः ।
यस्मान्निवार्यते तस्मिन्प्रोन्मत्त इव धावति ॥ १४
घटात्पटमुपायाति पटाच्छकटमुत्कटम् ।
चित्तमर्थेषु चरति पादपेष्विव मर्कटः ॥ १५
पञ्चद्वाराणि मनसश्चक्षुरादीन्यमून्यलम् ।
दग्धेन्द्रियाभिधानानि तावदालोकयाम्यहम् ॥ १६
हे हे हतेन्द्रियगणाः किं मे बोधाय नेह वः ।
वेला विलुलिताम्बूनामब्धीनामिव चञ्चलाः ॥ १७
मा कुरुध्वमनर्थाय चापलं चपलाशयाः ।
स्मरतातीतवृत्तीनि दुःखजालानि भूरिशः ॥ १८
रूपाणि मनसो यूयं जडा एव किलाधमाः ।
जडे तूत्सिक्तता व्यर्थं मृगतृष्णेव वल्गति ॥ १९
असारात्मस्वरूपाणामनालोकवती[1] सदा ।
अन्धानामुद्धतिर्येयं सा हृद्यायैव जायते ॥ २०
चिदात्मा भगवान्सर्वं साक्षित्वेन करोम्यहम् ।
हतेन्द्रियगणा यूयं किं निरर्थकमाकुलाः ॥ २१
मिथ्यैव मे विवल्गन्ति नीरूपा नयनादयः ।
अलातचक्रप्रतिमाः सर्परज्जुभ्रमोपमाः ॥ २२
तेनात्मना बहुज्ञेन निर्ज्ञाताश्चक्षुरादयः ।
मनागपि न संबन्धो द्युपातालतलाद्रिवत् ॥ २३
भीतः पान्थ इवाहिभ्यः पुक्कसेभ्य इव द्विजः ।
दूरे तिष्ठति चिन्मात्रमिन्द्रियेभ्यस्त्वनामयम् ॥ २४
चित्सत्तामात्रकेणालं संक्षोभो भवतां मिथः ।
तिष्ठति स्वैरमादित्ये दिनकार्यवतामिव ॥ २५
चित्त चारण चार्वाक चतुर्दिक्कुक्षिभिक्षुक ।
श्वेव व्यर्थमनर्थाय मैवं विहर हे जगत् ॥ २६

---

विन्ध्यशैलदरीः समाध्यनुकूला अन्वेषमाणो विबभ्राम ॥ ४ ॥ कुतस्तस्य समाधीच्छाभूत्तत्राह—**अस्मादि**ति ॥ ५ ॥ जहार उपसंजहार । संन्यस्तवानिति यावत् ॥ ६ ॥ रम्भारचितं कदलीदलनिर्मितम् । कृता गौराः श्वेताः पीताश्च कर्पूराः परागाश्च येन अतएव सुसौगन्ध्यम् ॥ ७ ॥ शान्ते निस्तापे । अचलेशस्य हिमवतोऽन्ते प्रान्ते वा ॥ ८ ॥ पार्ष्ण्योः पादतलमूलयोरधि उपरि कराङ्गुलयो यस्य तथाविधः सन् । असमर्थसमासश्छान्दसः । स्पष्टकन्धरं ऊर्ध्वीकृतग्रीवं यथा स्यात्तथा ॥ ९ ॥ दिक्षु इन्द्रियालोकान्निमित्ताद्विकीर्णं मनस्तन्निग्रहोपायेन जहार हृद्युपसंजहार । शनैर्वक्ष्यमाणप्रबोधनक्रमादित्यर्थः ॥ १० ॥ बाह्यानैन्द्रियकानाभ्यन्तरान्मानसांश्च विषयस्पर्शान्परिजहत्त्यजन्सन् । 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । इदं वक्ष्यमाणमाकलयामास विचारयामास ॥ ११ ॥ तरङ्गैः प्रौढेन प्रवाहितेन पर्णेन तुल्यं तरङ्गप्रौढपर्णवत् ॥ १२ ॥ चक्षुरादिभिराहितसंभ्रमैर्नानाविषयरूपैर्निमित्तैः उत्पतति नृत्यति । वीटेव कन्दुक इव ॥ १३ ॥ पूर्वपूर्ववृत्तीस्त्यजदेव तत्तदनुसारिणीरुत्तरोत्तरवृत्तीर्गृह्णाति ॥ १४ ॥ ॥ १५ ॥ एवं चित्तदोषानालोच्य तन्निर्गमद्वाराण्यालोचितवानित्याह—**पञ्चे**ति । दग्धशब्दो निन्दार्थः । छान्दसत्वात् 'कुत्सितानि कुत्सनैः' इति समासो नाश्रितः ॥ १६ ॥ इदानीमिन्द्रियाण्येव निर्भर्त्स्य बोधयति—**हे हे** इति । हे चञ्चलाः हतेन्द्रियगणाः, मे मम बोधाय समाधिना चिरमात्मदर्शनाय वः वेला अवसरो नास्ति किम् ॥ १७ ॥ ॥ १८ ॥ यूयं मनस एव द्वारभेदेन कल्पितानि स्वरूपाणि । जडे रलयोरभेदाज्जले च उत्सिक्तता तरङ्गोत्सेकवत्तेव व्यर्थं वल्गति ॥ १९ ॥ असारात्म अनृतं स्वरूपं येषां तथाविधानां भवतामनालोकवती आत्मज्ञानशून्या या समुद्धतिर्दुर्विनयादमार्गे प्रवृत्तिः सेयमन्धानां सादृश्याय उपमार्थमेव जायते । अमार्गे धावतामन्धानां कूपे पातस्योपमा जायत इत्यर्थः ॥ २० ॥ यदि वयं जडाः कस्तर्हि दर्शनादिना सर्वव्यवहारं करोति तत्राह—**चिदात्मे**ति ॥ २१ ॥ नीरूपाः सत्यस्वरूपशून्याः ॥ २२ ॥ येन साक्षिणा बहुज्ञेन सर्वावभासकेन नयनादयः परिज्ञातास्तेन सह एषां मनागपि संबन्धो नास्ति । यथा द्युपातालतलयोः पातालाद्रिभ्यां दिवो वा पातालतलाद्रिभिस्तद्वदित्यर्थः ॥ २३ ॥ चिन्मात्रं चिदेकरसः प्रत्यगात्मा पराग्भ्य इन्द्रियेभ्यो दूरं तिष्ठति । 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इति श्रुतेरिति भावः ॥ २४ ॥ तर्हि कथमिन्द्रियव्यापारे आत्मनो निमित्तताप्रसिद्धिस्तत्राह—**चित्सत्ते**ति । दिनकार्याणि श्राद्धकृष्यादीनि तद्वताम् ॥ २५ ॥ इदानीं चित्तं संबोध्य बोधयति—**चित्ते**त्यादिना । इन्द्रियाणां बहिर्मुखताप्रचारहेतुत्वाच्चारण । देहात्माभिमानित्वाच्चार्वाक । चतसृषु दिक्षु

---

[1] अनालोकवतामात्मज्ञानशून्यानां इति मूले टीकायां च पाठः

अहं चिद्वदिति व्यर्थमसत्या तव वासना ।
अत्यन्तभिन्नयोरैक्यं नास्ति चिन्मनसोः शठ ॥ २७
जीवाम्येवाहमित्येषा तवाहंकारदुर्मतिः ।
मिथ्यैव जाता दुःखाय न सत्या सत्यवर्जिता ॥ २८
अहंकारोदये सोऽस्मीत्येतां संरब्धतां त्यज ।
न किंचिदपि मूर्ख त्वं किं व्यर्थं तरलायसे ॥ २९
संविच्चित्त्वमनाद्यन्तं संविदोऽन्यन्न विद्यते ।
देहेऽस्मिंस्तन्महामूर्ख किं त्वं स्याश्चित्तनामकम् ॥ ३०
विषपर्यवसानेयं रसायनवदुत्थिता ।
भोक्तृताकर्तृताशङ्का बत चित्त मुधैव हि ॥ ३१
मोपहासपदं गच्छ मूर्खेन्द्रियगणाश्रयम् ।
न कर्ता त्वं न भोक्ता त्वं जडोऽस्यन्येन बोध्यसे ॥ ३२
कस्त्वं भवसि भोगानां के वा भोगा भवन्ति ते ।
जडस्यात्मैव ते नास्ति बन्धुमित्रादि तत्कुतः ॥ ३३
यज्जडं तद्धि नास्त्येव सदेवासत्तयान्वितम् ।
ज्ञत्वकर्तृत्वभोक्तृत्वमन्यत्वानामसंभवात् ॥ ३४
प्रत्यक्चेतनरूपश्चेत्त्वं तदात्मैव ते वपुः ।
भावाभावमयी चित्तसत्ता ते केव दुःखदा ॥ ३५
यथा कर्तृत्वभोक्तृत्वे मिथ्यैवाधिगते त्वया ।
मया ते हि प्रमार्ज्येते शृणु युक्त्या कथं शनैः ॥ ३६
स्वयं तावद्भवानेष जडो नास्त्यत्र संशयः ।
जडस्य कीदृक्कर्तृत्वं नृत्यन्तीह कथं शिलाः ॥ ३७
उपजीव चिरं तस्माच्छुद्धं तद्भागमैश्वरम् ।
जीवसीच्छसि हंसि त्वं वृथा यासि विवल्गसि ॥ ३८
क्रियते यत्तु यच्छक्त्या तत्तेनैव कृतं भवेत् ।
लुनाति दात्रं पुंशक्त्या लावकः प्रोच्यते पुमान् ॥ ३९
हन्यते यस्तु यच्छक्त्या स तेनैव हतो भवेत् ।
निहन्ति खड्गः पुंशक्त्या हन्तैव प्रोच्यते पुमान् ॥ ४०
पीयते यस्तु यच्छक्त्या पीतं तेनैव तद्भवेत् ।
पात्रेण पीयते पानं पाता यस्तूच्यते नरः ॥ ४१
प्रकृत्यैवासि सुजडः समस्तज्ञेन बोध्यसे ।
तेनात्मैवात्मनात्मानं चिनोतीदं हि नो भवत् ॥ ४२
अनारतं बोधयति त्वामात्मा परमेश्वरः ।
बोधनीया बुधैर्मूढाः किलावृत्तिशतैरपि ॥ ४३
आत्मसत्तैव बोधैकरूपिणी स्फुरतीह हि ।
तयैव चित्तशब्दार्थावङ्गीकृत्य त्वया स्थितम् ॥ ४४
एवं चित्त त्वमज्ञानादात्मशक्तेरुपागतम् ।
ज्ञाने त्वया विगलितं तीव्रे हिममिवातपे ॥ ४५
तस्मान्मृतं त्वं मूढं त्वं नासि त्वं परमार्थतः ।
तदेवाहमिति व्यर्थमतो मास्त्वसुखाय ते ॥ ४६
असत्या चित्तकलना इन्द्रजाललता इव ।
विज्ञानमात्रमेवेह ब्राह्ममङ्गं विजृम्भितम् ॥ ४७
नरामरजगद्रूपैर्ब्राह्मी शक्तिरुदेत्यलम् ।
सामुद्रकणकल्लोलजालैर्वेलेव वल्गति ॥ ४८
चिन्मयश्चेद्भवेर्मूढ तत्तस्मात्परमात्पदात् ।
नित्यमव्यतिरिक्तं[1] त्वं किमन्यत्परिशोचसि ॥ ४९

कुक्षिभरणाय भिक्षुक ॥ २६ ॥ चिद्वत् चेतनमिति वासनाभ्रान्तिः ॥ २७ ॥ **न सत्ये**ति । नह्यहंकाराधीनजीवनं सत्यम् । असत्यपि तस्मिन् सुषुप्तौ जीवनदर्शनात् । इतोऽपि मिथ्यैव सा यतः सत्येन परमात्मना वर्जिता । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इति श्रुतेरित्यर्थः ॥ २८ ॥ अहंकारस्य अभिमानाख्यपरिणामस्य उदये जाते स कार्यकारणसंघातात्मास्मीत्येतां संरब्धतामभिमानम् ॥ २९ ॥ तवैव स्वरूपं दुर्लभं त्वया अभिमानेनान्यरक्षणं तु दूरनिरस्तमित्याशयेनाह—**संविदि**ति ॥ ३० ॥ परिणामे विषपर्यवसाना । भोगकाले रसायनवदुत्थिता ॥ ३१ ॥ इन्द्रियगणानामाश्रयणमाश्रयं कृत्वेति शेषः । अन्येन साक्षिणा ॥ ३२ ॥ भोगानुभवशक्तिशून्यस्य जडस्य मिथ्याभूतस्य च तव भोगाशा व्यर्थेत्याह—**कस्त्व**मिति ॥ ३३ ॥ आत्मैव ते नास्तीत्येतदुपपादयति—**यदि**ति । सत् परसत्तावशाद्विद्यमानतया भासमानमेव स्फटिके लौहित्यमिव स्वतः असत्तयान्वितम् । ज्ञत्वं च कर्तृत्वं च भोक्तृत्वं च मन्यते पूर्वापरमनुसंधत्ते इति मन्यस्तत्त्वं च तेषां चैतन्यमन्तरेणासंभवात् ॥ ३४ ॥ तर्ह्यहं प्रत्यक्चैतन्यरूपमेव किं न स्यामिति चेत्तर्हि तव सदा निर्विकल्पैव स्थितिर्युक्ता नतु दुःखदा कर्तृत्वभोक्तृत्वभावाभावविकल्पमयीत्याह—**प्रत्यगि**ति । नच सर्वविकल्पलाभे चिन्तता तवा-

स्तीति भावः ॥ ३५ ॥ अचेतनत्वे तु अयत्नेनैव कर्तृत्वादिकं प्रमार्जितुं शक्यमित्याह—**यथे**ति ॥ ३६ ॥ शिलाः शिलापुत्रिकाः ॥ ३७ ॥ यदि ब्रूषे काष्ठप्रतिमा चेतनव्यापारमुपजीव्य नृत्यन्ती दृष्टेति, तर्हि त्वमपि तदैश्वरं चिदाभासभागमुपजीव । तथाच प्रतिमानृत्यफलभोक्ता यथा चेतन एव न प्रतिमा तथा त्वत्कृतजीवनादिफलभोक्ता चिदात्मैवेति त्वं वृथा जीवनाद्यर्थं धावसीत्यर्थः ॥ ३८ ॥ दात्रं शङ्कुला ॥ ३९ ॥ पुमानेव हन्ता प्रोच्यत इत्यन्वयः ॥ ४० ॥ यस्तु नरः स एव पाता उच्यते न पात्रम् ॥ ४१ ॥ चिनोति भोक्तृभोग्यकरणोपकरणादिभावेन स्वप्न इव संचिनोति । भवच्छब्दस्य सर्वनाम्नो नपुंसके भवदिति रूपम् ॥ ४२ ॥ बोधयति चिदाभासव्याप्त्या स्फोरयति । युक्तं चैतदित्याह—**बोधनीया** इति ॥ ४३ ॥ अतएव बोधसत्ताधीनस्तव नामरूपाभ्यामात्मलाभ इत्याह—**आत्मे**ति ॥ ४४ ॥ तथाचात्मैव स्वाज्ञानात्त्वमिव संपन्नः स्वज्ञानात्त्वद्भावान्मुच्यत इत्याह—**एवमि**ति । विगलितं भावे क्तः ॥ ४५ ॥ तदात्मैवाहमिति तादात्म्याध्यासो मास्तु । असुखाय जन्मादिदुःखाय ॥ ४६ ॥ ब्राह्मं अङ्गं स्वरूपम् ॥ ४७ ॥ शक्तिश्चिच्छक्तिसंवलिता माया । अतएव वेलेव ॥ ४८ ॥ हे मूढ, त्वं आत्मत्वबोधाच्चिन्मयश्चेद्भवेस्तत्तर्हि चितो भेदकारणाभावात्परमात्पदा-

[1] व्यतिरिक्तस्त्वमित्येव पाठो युक्तः।

सर्वगं सर्वभावस्थं सर्वरूपं हि तत्पदम्।
तत्प्राप्तौ सर्वमेवाङ्ग प्राप्तं भवति सर्वदा ॥ ५०
न त्वमस्ति न देहोऽस्ति ब्रह्मास्तीह महत्स्फुरत्।
अहंत्वमिति निःस्पन्दे स्फुरत्यार्तिर्हि कस्य का ॥ ५१
आत्मा चेत्त्वं तदात्मैव सर्वगोऽस्तीह नेतरः।
आत्मनोऽन्यज्जडत्वं चेत्तत्त्वं नास्त्यस्ति तद्वपुः ॥ ५२
आत्मैव सर्वं त्रिजगत्तदन्यत्तु न किंचन।
तत्त्वं किंचित्त्वमात्मान्यद्यदि तत्त्वं न किंचन ॥ ५३
अहं त्विदमहं तन्म इति व्यर्थं किमीहसे।
असद्वपुः किं स्फुरति शशशृङ्गेण को हतः ॥ ५४
तृतीया कलना नास्ति चिज्जडांशेतरा शठ।
छायातपनयोर्मध्ये तृतीयेवानुरञ्जना ॥ ५५
सत्यावलोकनाज्जाते चित्तजाड्यदृशोः क्षये।
संपद्यते यत्तु तज्ज्ञं स्वसंवेदनमात्रकम् ॥ ५६
तेन मूढ न कर्तृत्वं न भोक्तृत्वं तवापि हि।
तदेवासि परं ब्रह्म त्यज मौर्ख्यं भवात्मवान् ॥ ५७
केवलं ज्ञत्वविषयमुपदेशार्थसिद्धये।
त्वया करणभूतेन करोत्यात्मेति कथ्यते ॥ ५८
असत्स्वरूपं करणं जडं निरवलम्बनम्।
निःस्पन्दनं न स्पन्देत कर्तृसंबोधनं विना ॥ ५९
अकर्तुः करणस्यास्य शक्तिः काचिन्न विद्यते।
दात्रस्य लावकाभावे कर्तुं किमिव शक्तता ॥ ६०
खड्गप्रहारविच्छेदक्रियायां पुंसि शक्तता।
न खड्गे सुजडे चित्त सर्वाङ्गेष्वपि शक्तता ॥ ६१
तस्मान्नासि सखे कर्ता मा व्यर्थं दुःखभाग्भव।
परार्थं क्लेशिता मूर्ख प्राकृतेषु न शोभते ॥ ६२
ईश्वरो नेदृशः शोच्यो यस्त्वया सदृशो भवेत्।
नच तस्य कृतेनार्थो नाकृतेनेह कश्चन ॥ ६३
गर्वात्तूपकरोम्येनमिति केवलमल्पधीः।
क्लिश्यते वसतां त्वर्थो न किंचिदुपयुज्यते ॥ ६४
कर्तुर्भोगेश्वरस्यैवमर्थं चेदनुवर्तसे।
तदस्य काचिन्नेच्छेह तृप्तत्वात्सर्वदैव हि ॥ ६५
अकृत्रिमावभासेन सर्वगेन चिदात्मना।
एकेनैवेदमापूर्णं कल्पनैवास्ति नेतरा ॥ ६६
एकानेकावभासेन समस्तेन तदात्मना।
आत्मन्येवान्तरात्मान्तः क्रियते किं किमिष्यते ॥ ६७
त्वादृशस्य तु दृष्ट्वैव क्षुब्धता जायते मुधा।
आलोक्य राजमहिषीं यूनो मदमयी तथा ॥ ६८

नित्यमव्यतिरिक्त एव ॥ ४९ ॥ तदा अप्राप्तविषयाभावादनुशोको निर्विषयो न संभाव्य इत्याशयेनाह—सर्वगमिति। सर्वेष्वतीतानागतभावेष्वपि स्थितम्। कालकृतपरिच्छेदशून्यमिति यावत् ॥ ५० ॥ तदा त्वं पृथङ्नास्ति। छान्दसः पुरुषव्यत्ययः। अहंत्वमित्याभासो निःस्पन्दे आत्मनि स्फुरति अतः कस्य का वा आर्तिः ॥ ५१ ॥ उक्तकल्पद्वयं पुनः स्पष्टमाह—आत्मेति ॥ ५२ ॥ तत्तस्माद्यदि त्वं किंचिदात्मान्यद्यदि भवसि तदा किंचन तत्त्वं परमार्थरूपं नेत्यर्थः ॥ ५३ ॥ अहं तु इदं बालशरीरम्। अहं तद्वृद्धशरीरम्। तद्बालशरीरसंबन्धि क्रीडोपकरणादि वृद्धशरीरसंबन्धिपुत्रपौत्रादि च मे मम इति व्यर्थं किमीहसे। नह्यात्मभूतस्य शरीरता वास्तवीत्यसद्वपुः किं स्फुरतीत्यर्थः ॥ ५४ ॥ तर्हि चिदचिद्व्यतिरिक्तं तृतीयं स्वरूपमहं किं न स्यां तत्राह—तृतीयेति। यथा जगति च्छायातपान्यतरानुरञ्जना सर्ववस्तुष्वस्त्येव तृतीया विधा नास्ति तद्वदित्यर्थः ॥ ५५ ॥ तर्ह्यहं तत्त्वतः किंस्वरूपमिति चेच्चरमसाक्षात्कारवृत्त्या अविद्यया सह त्वदीयजाड्यस्य त्वदन्तर्गतचिदाभासस्य च क्षये चरमसाक्षात्कारवृत्त्याविर्भूतं यत्स्वप्रकाशपूर्णात्मरूपं तदेव त्वमित्याह—सत्येति। तज्ज्ञं तस्मात्सत्यावलोकनादाविर्भूतम् ॥ ५६ ॥ ५७ ॥ यद्यहमात्मैव तर्हि 'मनसैवानुद्रष्टव्यं' 'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन' इत्यादिश्रुतिषु मम आत्मोपकरणत्वं कथमुक्तं तत्राह—केवलमिति। अज्ञदशायामेवात्मशास्त्राचार्यकृतानां तत्त्वमसीत्याद्युपदेशानां प्रयोजनसिद्धये करणत्वेन कल्पितेन त्वया केवलं शुद्धं स्वतत्त्वं ज्ञत्वं चरमसाक्षात्कारवृत्तिविषयं करोति। यथा स्वमुखतत्त्वं दिदृक्षुर्दर्पणोपाध्यधिरूढेन स्वमुखेनैव करणेन मुखं पश्यति तद्वदिति भावः ॥ ५८ ॥ यदि त्वं करणस्वभावमेव स्वं मन्यसे तर्हि तव चलनेऽपि स्वतः सामर्थ्यं नास्तीति कर्तृत्वाभिमानस्तव वृथैवेत्येतदुपपादयति—असत्स्वरूपमित्यादिना। निःस्पन्दनं स्वतः स्पन्दनशक्तिरहितम्। कर्तृसंबोधनं चैतन्यकृतं कर्तव्यार्थप्रकाशम् ॥ ५९ ॥ अकर्तुः कर्त्रनधिष्ठितस्य ॥ ६० ॥ सर्वाङ्गेषु आमूलाग्रं सर्वावयवेषु सर्वेष्वङ्गेषु उपकरणेषु सत्स्वपीति वा ॥ ६१ ॥ प्राकृतेषु पामरतुल्येषु प्रकृतिकार्येषु। आत्मनस्तु शोभत एव ॥ ६२ ॥ नन्वीश्वर एव मोहाज्जीवतां प्राप्तः अशनायादिना पीड्यमानः कथं मयोपेक्षणीय इति तदर्थं सर्वप्रयत्नैर्घटमानमहं तमनुशोचामीति चेत्तत्राह—ईश्वर इति। यस्त्वया सदृशः स एव त्वया शोच्यः। ईश्वरस्तु नेदृश इत्यर्थः ॥ ६३ ॥ गर्वात्कार्यकारणसंघाताभिमानादेनमात्मानमुपकरोमीति भ्रान्त्या त्वया अल्पा परिच्छिन्ना धीर्बुद्धिः क्लिश्यते पीड्यते। संघाते वसतां पञ्चप्राणमनोबुद्धिदशेन्द्रियाणां सर्वेषामचेतनत्वाद्भोगैर्नार्थ इति न किंचित्कस्यचिदुपयुज्यत इत्यर्थः ॥ ६४ ॥ अतः परिशेषादीश्वरस्यार्थे त्वत्प्रवृत्तिर्वाच्या, तत्र तूक्तमेवोत्तरमित्याह—कर्तुरिति ॥ ६५ ॥ कुतस्तस्य नेच्छेति चेत्पूर्णत्वादद्वयत्वाच्चेत्याह—अकृत्रिमेति ॥ ६६ ॥ सर्वस्य जगतः स्वात्मनि तेनैव कल्पितत्वेनाप्राप्तत्वाभावादपि तत्र तस्य नेच्छेत्याह—एकेति। आत्मना आत्मन्येवाविद्यकेन एकानेकावभासेन तज्जगद्रूपं क्रियते तत्र किं किमलभ्यं यदिष्यते ॥ ६७ ॥ यदि सर्वमीश्वरस्वं तर्हि तत्र

आत्मना सह संबद्धं चेतः कथमसि सुन्दर ।
किंतु नास्यासि संबन्धि कुसुमस्य यथा फलम् ॥ ६९
द्वितीयेन समं येषा तत्तावद्भवनैकता ।
सा संबन्धगतिः प्रोक्ता प्राग्द्वित्वादधुनैकता ॥ ७०
नानाप्रकाररचना नानारूपक्रियोन्मुखी ।
सुखदुःखदशाऽहेतुर्भवान्नैकविधास्मृता ॥ ७१
संबन्धः समयोर्दृष्टस्तथाऽर्धसमयोरपि ।
न विलक्षणयोश्चान्यस्तस्मिन्सति जगत्त्रये ॥ ७२
द्रव्यान्तरगुणा द्रव्याण्याश्रयन्ति बहून्यलम् ।
संविदश्च्यवनं दुःखं संविदो मा च्युतो भव ॥ ७३
एतावतैकध्यानेन नित्यध्यानोऽथवात्मदृक् ।
अभावे दुःखदस्यान्तर्दशा दृश्यस्य वस्तुनः ॥ ७४
संकल्पोन्मुखतां विद्धि दुःखदां संविदश्च्युतिम् ।
जडेषूपलभूतेषु मनोदेहेन्द्रियादिषु ॥ ७५
कीदृशी कर्तृता चित्त पुष्पं व्योम्नि कथं भवेत् ।
निरस्तकलना पङ्के मननध्वंसरूपिणि ॥ ७६
नचैवात्मनि कर्तृत्वं संभवत्यम्बराङ्गवत् ।
अयं केवलमात्मैव नानानानातयात्मनि ॥ ७७
स्फुरत्यब्धिरिवाम्भोभिः फेनबुद्बुदवीचिभिः ।
आभासमात्रे सर्वस्मिन्स्फुरत्यस्मिश्चिदात्मनि ॥ ७८
द्वितीया नास्ति कलना तप्ताङ्गार इवाम्बुधौ ।
कलनारहिते देवे देहे मनसि वा जडे ॥ ७९
संवित्संवेद्यनिर्मुक्ता सारं सुन्दर नेतरत् ।
इदमन्यदिदं नान्यच्छुभं वाऽशुभमेव च ॥ ८०
इत्यसत्कल्पना नास्ति यथा नभसि काननम् ।
संवेद्यरहितं संविन्मात्रमेवेदमाततम् ।
तत्रायमहमन्योऽयमित्यसत्कलना कथम् ॥ ८१
अनादिमति नीरूपे सर्वगे विततात्मनि ।
आरोपयेत्कः कलनामृग्वेदं व्योम्नि को लिखेत् ॥ ८२

नित्योदिते सकलवस्तुपदार्थसारे
संवित्स्थिते भरितनिर्भरभूरिदिक्कम् ।
आत्मन्यसत्यमिव साधु गतेऽमलत्वात्
क्षीणौ सुखासुखलवौ मम वै स मोहः ८३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे इन्द्रियानुशासनयोगोपदेशो नाम द्व्यशीतितमः सर्गः ॥८२॥

---

कथं ममेच्छा तत्राह—**त्वादृशस्येति**। मूर्खस्येत्यर्थः ॥ ६८ ॥ तर्हि तेनेश्वरेणैव संबध्य तदनुग्रहाद्भोगान् लप्स्यामि तत्राह—**आत्मनेति**। आत्मसंबन्धेच्छाया रमणीयत्वात्सुन्दरेति। अस्यात्मनः संबन्धि संबन्धयोग्यं नासि। यथा कुसुमादुत्पन्नमपि फलं कुसुमबहिर्मुखत्वात्तत्सौगन्ध्याद्युपभोगसंबन्धयोग्यं न भवति तदभिवृद्धौ कुसुमस्यैव तिरोभावात्तद्वत्त्वमपीत्यर्थः ॥ ६९ ॥ संबन्धयोग्यतामुपपादयितुं मुख्यसंबन्धलक्षणमाह—**द्वितीयेनेति**। एकस्य द्वितीयेन समं एकतरक्रियया उभयक्रियया च मिलनात्तस्य पूर्वस्य तावद्भवनमपरान्तर्भावस्तेन एकता वा सा संबन्धगतिः संबन्धस्य फलतो लक्षणमित्यर्थः। तदेव संक्षिप्याह—**प्रागिति** ॥ ७० ॥ तादृशे च मुख्ये संबन्धे भवान् अहेतुः। यतस्तव स्वतो नैकविधा कार्यतश्च नानाप्रकाररचना नानारूपविहितनिषिद्धक्रियोन्मुखी सुखदुःखदशा आ समन्तात्स्मृता प्रसिद्धेत्यर्थः ॥ ७१ ॥ समयोः क्षीरयोः। अर्धसमयोः क्षीरनीरयोः। विलक्षणयोर्वारिवह्न्योरिवात्यन्तविरुद्धयोः, यतस्तस्मिन्विरुद्धसंनिपाते सति अन्य एकतरस्य नाश एव दृष्टो न संबन्धावस्थानमित्यर्थः ॥ ७२ ॥ ननु शब्दस्पर्शरूपादिविरुद्धगुणवतामपि सूक्ष्मभूतानां पञ्चीकरणेन संबन्धवन्मम आत्मसंबन्धः किं न स्यात्तत्राह—**द्रव्यान्तरेति**। तत्र न परस्परविरुद्धता, यतो द्रव्यान्तरगुणा अपि परस्परमेलने पञ्चीकृतद्रव्याण्याश्रयन्ति। तथा चाहुः 'शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत्। शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते। शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः। शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही ॥' इति। इह तु संविज्जाड्ययोर्विरोधाज्जडात्त्वत्तः संविदश्च्यवनं चेत्साधकाभावाज्जडांशो न सिध्यत्येवेति त्वदसिद्धिप्रसङ्गदुःखम्। संविदः सकाशात्तव च्यवनं चेत्त्वया स्वनाशार्थमेवात्मसंबन्धोऽपेक्षितः स्यात्। अत आत्मसंबन्धमपेक्षमाण उभयथापि त्वं संविदः सकाशान्मा च्युतो भवेत्यर्थः ॥ ७३ ॥ अथवा अन्तर्दृशा संविदा दुःखदस्य दृश्यस्य त्वदादेर्वस्तुनः अभावे नाशे सति निर्दुःखनिरतिशयानन्दात्ममात्रपरिशेषः। एतावता चेत्संतुष्यसि तदा एकाग्रेण ध्यानेन नित्यध्यानश्चिरमविच्छिन्नसमाधिः सन् आत्मदृगात्मदर्शी भवेत्यर्थः ॥ ७४ ॥ समाधावेव तव सुखं नतु संकल्पोन्मुखत्वे। यतः संकल्पैर्निर्झरोदकं शिलासु च्युतमिव देहादिषु च्युता संविदिन्द्रियद्वारैर्बहुधा विभज्यमाना विशीर्यत इवेति तदेव दुःखमित्याह—**संकल्पेति** ॥७५॥ ननु नाहं संकल्पयामि किंत्वात्मैव कर्तृतास्वभावात्संकल्पयतीतिं चेन्नैतदित्याह—**कीदृशी**त्यादिना ॥ ७६ ॥ त्वत्कल्पितया नानानानातया आत्मा केवलं स्फुरत्येव न कल्पयतीत्यर्थः ॥ ७७ ॥ ॥ ७८ ॥ यथा अम्बुधौ तप्ताङ्गारो नास्ति तद्वत्। एवमात्मदेवे कलनारहिते सति देहे मनसि च जडे सति विवेकदृशा इदमन्यदिदमशुभमिदं नान्यदिदं शुभमित्याद्यसत्कल्पना कल्पकाभावादेव नास्तीति संवेद्यरहिता संविदेव सा नेतरदिति सिद्धमिति परेणान्वयः ॥ ७९ ॥ ८० ॥ तदेव स्पष्टमाह—**संवेद्येति** ॥ ८१ ॥ ऋग्वेदग्रहणं लेख्यमात्रोपलक्षणम् ॥ ८२ ॥ हे चित्त, त्वया अमलत्वात्स्वनैर्मल्यात्सकलेषु वस्तुत्वेन प्रसिद्धेषु पदेष्वर्थेषु च सारभूते संविन्मात्रस्वभावस्थिते आत्मनि भरितनिर्भरभूरिदिक्कं यथा स्यात्तथा साधु असंदिग्धापरोक्षतया गते अवगते सति मम सुखासुखलवौ असत्यमिव मृगतृष्णोदकरज्जुसर्प-

सर्वगं सर्वभावस्थं सर्वरूपं हि तत्पदम् ।
तत्प्राप्तौ सर्वमेवाशु प्राप्तं भवति सर्वदा ॥ ५०
न त्वमस्ति न देहोस्ति ब्रह्मास्तीह महत्स्फुरत् ।
अहंत्वमिति निःस्पन्दे स्फुरत्यार्तिर्हि कस्य का ॥ ५१
आत्मा चेत्त्वं तदात्मैव सर्वगोऽस्तीह नेतरः ।
आत्मनोऽन्यज्जडस्त्वं चेत्तत्त्वं नास्त्यस्ति तद्वपुः ॥ ५२
आत्मैव सर्वं त्रिजगत्तदन्यत्तु न किंचन ।
तत्त्वं किंचित्त्वमात्मान्यद्यदि तत्त्वं न किंचन ॥ ५३
अहं त्विदमहं तन्म इति व्यर्थं किमीहसे ।
असद्वपुः किं स्फुरति शशशृङ्गेण को हतः ॥ ५४
तृतीया कलना नास्ति चिज्जडांशेतरा शठ ।
छायातपनयोर्मध्ये तृतीयेवानुरञ्जना ॥ ५५
सत्यावलोकनाज्जाते चित्तजाड्यदृशोः क्षये ।
संपद्यते यत्तु तज्जं स्वसंवेदनमात्रकम् ॥ ५६
तेन मूढ न कर्तृत्वं न भोक्तृत्वं तवापि हि ।
तदेवासि परं ब्रह्म त्यज मौर्ख्यं भवात्मवान् ॥ ५७
केवलं ज्ञत्वविषयमुपदेशार्थसिद्धये ।
त्वया करणभूतेन करोत्यात्मेति कथ्यते ॥ ५८
असत्स्वरूपं करणं जडं निरवलम्बनम् ।
निःस्पन्दनं न स्पन्देत कर्तृसंबोधनं विना ॥ ५९
अकर्तुः करणस्यास्य शक्तिः काचिन्न विद्यते ।
दात्रस्य लावकाभावे कर्तुं किमिव शक्तता ॥ ६०
खड्गप्रहारविच्छेदक्रियायां पुंसि शक्तता ।
न खड्गे सुजडे चित्त सर्वाङ्गेष्वपि शक्तता ॥ ६१
तस्मान्नासि सखे कर्ता मा व्यर्थं दुःखभाग्भव ।
परार्थं क्लेशिता मूर्ख प्राकृतेषु न शोभते ॥ ६२
ईश्वरो नेदृशः शोच्यो यस्त्वया सदृशो भवेत् ।
नच तस्य कृतेनार्थो नाकृतेनेह कश्चन ॥ ६३
गर्वात्तूपकरोष्येनमिति केवलमल्पधीः ।
क्लिश्यते वसतां त्वर्थो न किंचिदुपयुज्यते ॥ ६४
कर्तुर्भोगेश्वरस्यैवमर्थं चेदनुवर्तसे ।
तदस्य काचिन्नेच्छेह तृप्तत्वात्सर्वदैव हि ॥ ६५
अकृत्रिमावभासेन सर्वगेन चिदात्मना ।
एकेनैवेदमापूर्णं कल्पनैवास्ति नेतरा ॥ ६६
एकानेकावभासेन समस्तेन तदात्मना ।
आत्मन्येवान्तरात्मान्तः क्रियते किं किमिष्यते ॥ ६७
त्वादृशस्य तु दृष्ट्यैव क्षुब्धता जायते मुधा ।
आलोक्य राजमहिषीं यूनो मदमयीं तथा ॥ ६८

---

न्नित्यमव्यतिरिक्त एव ॥ ४९ ॥ तदा अप्राप्तविषयाभावादनुशोको निर्विषयो न संभाव्य इत्याशयेनाह—**सर्वगमिति** । सर्वेष्वतीतानागतभावेष्वपि स्थितम् । कालकृतपरिच्छेदशून्यमिति यावत् ॥ ५० ॥ तदा त्वं पृथङ्नास्ति । छान्दसः पुरुषव्यत्ययः। अहंत्वमित्याभासो निःस्पन्दे आत्मनि स्फुरति अतः कस्य का वा आर्तिः ॥ ५१ ॥ उक्तकल्पद्वयं पुनः स्पष्टमाह—**आत्मेति** ॥ ५२ ॥ तत्तस्माद्यदि त्वं किंचिदात्मान्यद्यदि भवसि तदा किंचन तत्त्वं परमार्थरूपं नेत्यर्थः ॥ ५३ ॥ अहं तु इदं बालशरीरम् । अहं तद्वृद्धशरीरम् । तद्बालशरीरसंबन्धि क्रीडोपकरणादि वृद्धशरीरसंबन्धिपुत्रपौत्रादि च मे मम इति व्यर्थं किमीहसे । नह्यात्मभूतस्य शरीरता वास्तवीत्यसद्वपुः किं स्फुरतीत्यर्थः ॥ ५४ ॥ तर्हि चिदचिद्व्यतिरिक्तं तृतीयं स्वरूपमहं किं न स्यां तत्राह—**तृतीयेति** । यथा जगति च्छायातपान्यतरानुरञ्जना सर्ववस्तुष्वस्त्येव तृतीया विधा नास्ति तद्वदित्यर्थः ॥ ५५ ॥ तर्ह्यहं तत्त्वतः किंस्वरूपमिति चेच्चरमसाक्षात्कारवृत्त्या अविद्यया सह त्वदीयजाड्यस्य त्वदन्तर्गतचिदाभासस्य च क्षये चरमसाक्षात्कारवृत्त्याविर्भूतं यत्स्वप्रकाशपूर्णात्मरूपं तदेव त्वमित्याह—**सत्येति** । तज्जं तस्मात्सत्यावलोकनादाविर्भूतम् ॥ ५६ ॥ ५७ ॥ यद्यहमात्मैव तर्हि 'मनसैवानुद्रष्टव्यं' 'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन' इत्यादिश्रुतिषु मम आत्मोपकरणत्वं कथमुक्तं तत्राह—**केवलमिति** । अज्ञदशायामेवात्मशास्त्राचार्यकृतानां तत्त्वमसीत्याद्युपदेशानां प्रयोजनसिद्धये करणत्वेन कल्पितेन त्वया केवलं शुद्धं स्वतत्त्वं ज्ञत्वं चरमसाक्षात्कारस्तद्विषयं करोति । यथा स्वमुखतत्त्वं दिदृक्षुर्दर्पणोपाध्यधिरूढेन स्वमुखेनैव करणेन मुखं पश्यति तद्वदिति भावः ॥ ५८ ॥ यदि त्वं करणस्वभावमेव स्वं मन्यसे तर्हि तव चलनेऽपि स्वतः सामर्थ्यं नास्तीति कर्तृत्वाभिमानस्तव वृथैवेत्येतदुपपादयति—**असत्स्वरूपमित्यादिना**। निःस्पन्दनं स्वतः स्पन्दनशक्तिरहितम् । कर्तृसंबोधनं चैतन्यकृतं कर्तव्यार्थप्रकाशम् ॥ ५९ ॥ अकर्तुः कर्त्रनधिष्ठितस्य ॥ ६० ॥ सर्वाङ्गेषु आमूलाग्रं सर्वावयवेषु सर्वेष्वङ्गेषु उपकरणेषु सत्स्वपीति वा ॥ ६१ ॥ प्राकृतेषु पामरतुल्येषु प्रकृतिकार्येषु । आत्मनस्तु शोभत एव ॥ ६२ ॥ नन्वीश्वर एव मोहाज्जीवतां प्राप्तः अशनायादिना पीड्यमानः कथं मयोपेक्षणीय इति तदर्थं सर्वप्रयत्नैर्घटमानसहं तमनुशोचामीति चेत्तत्राह—**ईश्वर** इति । यस्त्वया सदृशः स एव त्वया शोच्यः । ईश्वरस्तु नेदृश इत्यर्थः ॥ ६३ ॥ गर्वात्कार्यकारणसंघाताभिमानादेनमात्मानमुपकरोमीति भ्रान्त्या त्वया अल्पा परिच्छिन्ना धीर्बुद्धिः क्लिश्यते पीड्यते । संघाते वसतां पञ्चप्राणमनोबुद्धिदशेन्द्रियाणां सर्वेषामचेतनत्वाद्भोगैर्नार्थ इति न किंचित्कस्यचिदुपयुज्यत इत्यर्थः ॥ ६४ ॥ अतः परिशेषादीश्वरस्यार्थे त्वत्प्रवृत्तिर्वाच्या, तत्र तूक्तमेवोत्तरमित्याह–**कर्तुरिति** ॥ ६५ ॥ कुतस्तस्य नेच्छेति चेत्पूर्णत्वादद्वयत्वाच्चेत्याह—**अकृत्रिमेति** ॥ ६६ ॥ सर्वस्य जगतः स्वात्मनि तेनैव कल्पितत्वेनाप्राप्तत्वाभावादपि तत्र तस्य नेच्छेत्याह—**एकेति** । आत्मना आत्मन्येवाविद्यकेन एकानेकावभासेन तज्जगद्रूपं क्रियते तत्र किं किमलभ्यं यदिष्यते ॥ ६७ ॥ यदि सर्वमीश्वरस्वं तर्हि तत्र

आत्मना सह संबद्धं चेतः कर्त्रसि सुन्दर ।
किंतु नास्यासि संबन्धि कुसुमस्य यथा फलम् ॥ ६९
द्वितीयेन समं यैषा तत्तावद्भवनैकता ।
सा संबन्धगतिः प्रोक्ता प्राग्द्वित्वादधुनैकता ॥ ७०
नानाप्रकाररचना नानारूपक्रियोन्मुखी ।
सुखदुःखदशाऽहेतुर्भवान्नैकविधास्मृता ॥ ७१
संबन्धः समयोर्दृष्टस्तथाऽर्धसमयोरपि ।
न विलक्षणयोश्चान्यस्तस्मिन्सति जगत्रये ॥ ७२
द्रव्यान्तरगुणा द्रव्याण्याश्रयन्ति बहून्यलम् ।
संविदश्च्यवनं दुःखं संविदो मा च्युतो भव ॥ ७३
एतावतैकध्यानेन नित्यध्यानोऽथवात्मदृक् ।
अभावे दुःखदस्यान्तर्दृशा दृश्यस्य वस्तुनः ॥ ७४
संकल्पोन्मुखतां विद्धि दुःखदां संविदश्च्युतिम् ।
जडेषूपलभूतेषु मनोदेहेन्द्रियादिषु ॥ ७५
कीदृशी कर्तृता चित्त पुष्पं व्योम्नि कथं भवेत् ।
निरस्तकलना पङ्के मननध्वंसरूपिणि ॥ ७६
नचैवात्मनि कर्तृत्वं संभवत्यस्वराङ्गवत् ।
अयं केवलमात्मैव नानानानातयात्मनि ॥ ७७
स्फुरत्यब्धिरिवाम्भोभिः फेनबुद्बुदवीचिभिः ।
आभासमात्रे सर्वेस्मिन्स्फुरत्यस्मिंश्चिदात्मनि ॥ ७८
द्वितीया नास्ति कलना तप्ताङ्गार इवाम्बुधौ ।
कलनारहिते देवे देहे मनसि वा जडे ॥ ७९
संवित्संवेद्यनिर्मुक्ता सारं सुन्दर नेतरत् ।
इदमन्यदिदं नान्यच्छुभं वाऽशुभमेव च ॥ ८०
इत्यसत्कल्पना नास्ति यथा नभसि काननम् ।
संवेद्यरहितं संविन्मात्रमेवेदमाततम् ।
तत्रायमहमन्योऽयमित्यसत्कलना कथम् ॥ ८१
अनादिमति नीरूपे सर्वगे विततात्मनि ।
आरोपयेत्कः कलनामृग्वेदं व्योम्नि को लिखेत् ॥ ८२

नित्योदिते सकलवस्तुपदार्थसारे
संवित्स्थिते भरितनिर्भरभूरिदिक्कम् ।
आत्मन्यसत्यमिव साधु गतेऽमलत्वात्
क्षीणौ सुखासुखलवौ मम वै स मोहः ॥ ८३

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे इन्द्रियानुशासनयोगोपदेशो नाम द्व्यशीतितमः सर्गः ॥८२॥

---

कथं ममेच्छा तत्राह—**त्वादृशस्येति**। मूर्खस्येत्यर्थः ॥ ६८ ॥ तर्हि तेनेश्वरेणैव संबध्य तदनुग्रहाद्भोगान् लप्स्यामि तत्राह—**आत्मनेति**। आत्मसंबन्धेच्छाया रमणीयत्वात्सुन्दरेति। अस्यात्मनः संबन्धि संबन्धयोग्यं नासि। यथा कुसुमादुत्पन्नमपि फलं कुसुमबहिर्मुखत्वात्तत्सौगन्ध्याद्युपभोगसंबन्धयोग्यं न भवति तदभिवृद्धौ कुसुमस्यैव तिरोभावात्तद्वत्त्वमपीत्यर्थः ॥ ६९ ॥ संबन्धयोग्यतामुपपादयितुं मुख्यसंबन्धलक्षणमाह—**द्वितीयेनेति**। एकस्य द्वितीयेन समं एकतरक्रियया उभयक्रियया च मिलनात्तस्य पूर्वस्य तावद्भवनमपरान्तर्भावस्तेन एकता वा सा संबन्धगतिः संबन्धस्य फलतो लक्षणमित्यर्थः। तदेव संक्षिप्याह—**प्रागिति** ॥ ७० ॥ तादृशे च मुख्ये संबन्धे भवान् अहेतुः। यतस्तव स्वतो नैकविधा कार्यतश्च नानाप्रकाररचना नानारूपविहितनिषिद्धक्रियोन्मुखी सुखदुःखदशा आ समन्तात्स्मृता प्रसिद्धेत्यर्थः ॥ ७१ ॥ समयोः क्षीरयोः। अर्धसमयोः क्षीरनीरयोः। विलक्षणयोर्वारिवह्न्योरिवात्यन्तविरुद्धयोः, यतस्तस्मिन्विरुद्धसंनिपाते सति अन्य एकतरस्य नाश एव दृष्टो न संबन्धावस्थानमित्यर्थः ॥ ७२ ॥ ननु शब्दस्पर्शरूपादिविरुद्धगुणवतामपि सूक्ष्मभूतानां पञ्चीकरणेन संबन्धवन्मम आत्मसंबन्धः किं न स्यात्तत्राह—**द्रव्यान्तरेति**। तत्र न परस्परविरुद्धता, यतो द्रव्यान्तरगुणा अपि परस्परमेलने पञ्चीकृतद्रव्याण्याश्रयन्ति। तथा चाहुः 'शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत्। शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते। शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः। शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही ॥' इति। इह तु संविज्जाड्ययोर्विरोधा[illegible] संविदश्च्यवनं चेत्साधकाभावाज्जडांशो न सिद्ध्येदेवेति त्वदसिद्धिप्रसङ्गदुःखम्। संविदः सकाशात्तव च्यवनं चेत्त्वया स्वनाशार्थमेवात्मसंबन्धोऽपेक्षितः स्यात्। अत आत्मसंबन्धमपेक्षमाण उभयथापि त्वं संविदः सकाशान्मा च्युतो भवेत्यर्थः ॥ ७३ ॥ अथवा अन्तर्दृशा संविदा दुःखदस्य दृश्यस्य त्वदादेर्वस्तुनः अभावे नाशे सति निर्दुःखनिरतिशयानन्दात्ममात्रपरिशेषः। एतावता चेत्संतुष्यसि तदा एकाग्रेण ध्यानेन नित्यध्यानश्चिरमविच्छिन्नसमाधिः सन् आत्मदृगात्मदर्शी भवेत्यर्थः ॥ ७४ ॥ समाधावेव तव सुखं नतु संकल्पोन्मुखत्वे। यतः संकल्पैर्निर्झरोदकं शिलासु च्युतमिव देहादिषु च्युता संविदिन्द्रियद्वारैर्बहुधा विभज्यमाना विशीर्यत इवेति तदेव दुःखमित्याह—**संकल्पेति** ॥ ७५ ॥ ननु नाहं संकल्पयामि किंत्वात्मैव कर्तृतास्वभावात्संकल्पयतीति चेन्नैतदित्याह—**कीदृशी**त्यादिना ॥ ७६ ॥ त्वत्कल्पितया नानानानातया आत्मा केवलं स्फुरत्येव न कल्पयतीत्यर्थः ॥ ७७ ॥ ॥ ७८ ॥ यथा अम्बुधौ तप्ताङ्गारो नास्ति तद्वत्। एवमात्मदेवे कलनारहिते सति देहे मनसि च जडे सति विवेकदृशा इदमन्यदिदमशुभमिदं नान्यदिदं शुभमित्याद्यसत्कल्पना कल्पकाभावादेव नास्तीति संवेद्यरहिता संविदेव सा नेतरदिति सिद्धमिति परेणान्वयः ॥ ७९ ॥ ८० ॥ तदेव स्पष्टमाह—**संवेद्येति** ॥ ८१ ॥ ऋग्वेदग्रहणं लेख्यमात्रोपलक्षणम् ॥ ८२ ॥ हे चित्त, त्वया अमलत्वात्स्वनैर्मल्यात्सकलेषु वस्तुत्वेन प्रसिद्धेषु पदेष्वर्थेषु च सारभूते संविन्मात्रस्वभावस्थिते आत्मनि भरितनिर्भरभूरिदिक्कं यथा स्यात्तथा साधु असंदिग्धापरोक्षतया गते अवगते सति मम सुखासुखलवौ असत्यमिव मृगतृष्णोदकरज्जुसर्प-

## त्र्यशीतितमः सर्गः ८३

श्रीवसिष्ठ उवाच ।

भूयो मुनिवरो धीरो धिया धवलमेधया ।
खमिन्द्रियगणं गुप्तो बोधयामास साध्विदम् ॥ १
तच्चेन्द्रियगणस्यार्थे शृणु वक्ष्यामि ते स्फुटम् ।
श्रुत्वा तद्भावनामेत्य परां निर्दुःखतां व्रज ॥ २
भवतामात्मसत्तैषा दुःखायैवान्तदायिनी ।
असत्यामात्मनः सत्तां तद्भवन्तस्त्यजन्त्विति ॥ ३
मदीयेनोपदेशेन सत्तैषा भवतां क्षयम् ।
गतैवेति स्फुटं मन्ये यूयं ह्यज्ञानसंभवाः ॥ ४
खसत्ता स्फुटतां याति दुःखाय तव चित्तक ।
तप्तकाञ्चनरुल्लासो दाहायैव स्वपार्श्वयोः ॥ ५
पश्य त्वयि सति भ्रान्तजलकल्लोलसंकुलाः ।
विशन्ति कालजलधिं संसारसरितां गणाः ॥ ६
पतन्त्यहमहमिकाविहितान्योन्यचिन्तिताः ।
कुतोऽपि दुःखावलयो धारा आसारगा इव ॥ ७
परिस्फुरत्यपर्यन्ता हृदयोन्मूलनोद्यता ।
आक्रन्दकारिणी क्रूरा भावाभावविषूचिका ॥ ८
कासश्वासरणद्भृङ्गा कलेवरजरद्द्रुमे ।
विकसत्यमलोद्योता जरामरणमञ्जरी ॥ ९
कल्लोलव्यालवलिते शरीरश्वभ्रकोटरे ।
घननीहारखे स्वान्तश्चिन्ताचपलमर्कटी ॥ १०
लोभनाम्न्यारटत्पक्षी तीक्ष्णया द्वन्द्वतुण्डया ।
कायजीर्णद्रुमादस्माद्गुणखण्डं निकृन्तति ॥ ११
हृदयावकरं कीर्णमितश्चेतश्च कर्कशः ।
अपवित्रो दुराचारः कुरुते कामकुक्कुटः ॥ १२
महत्यां मोहयामिन्यामुल्बणोऽज्ञानकौशिकः ।
श्मशान इव वेतालः परिवल्गति हृद्द्रुमे ॥ १३
एताश्चान्याश्च बह्व्योऽपि त्वयीन्द्रियगणे सति ।
पिशाच्य इव शर्वर्यां प्रवल्गन्त्यशुभश्रियः ॥ १४
त्वयि त्वसति हे साधो सर्वा एव शुभश्रियः ।
प्रभात इव पद्मिन्यः सालोकं विलसन्त्यलम् ॥ १५
प्रशान्तमोहमिहिकं राजते हृदयाम्बरम् ।
निर्मलालोकवलितं नीरजस्कतरान्तरम् ॥ १६
अशङ्कितनभःकोशपतिताकुलपूरवत् ।
नापतन्ति विकल्पौघाश्चिरं वैकल्यकारिणः ॥ १७
सर्वस्याह्लादनी शान्ता मैत्री परमपावनी ।
अभ्युदेति हृदो ह्द्या सुतरोरिव मञ्जरी ॥ १८
अन्तश्छिद्रवती जाड्ययुक्तायुक्तगुणा स्वयम् ।
चिन्ता शोषमुपायाति हिमदग्धेव पद्मिनी ॥ १९
आलोकः स्फुटतामन्तरायात्यज्ञानसंक्षये ।

---

शुक्तिरजतादिकमिव क्षीणौ यतः वै इति निश्चयेन स प्राक्तनसुखदुःखप्रत्ययो मोहो भ्रान्तिरेव न यथार्थ इत्यर्थः ॥ ८३ ॥
इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे इन्द्रियानुशासनयोगोपदेशो नाम त्र्यशीतितमः सर्गः ॥ ८२ ॥

समस्तदोषानर्थाप्तिश्चित्तेन्द्रियगणे सति ।
समस्तगुणसौख्याप्तिस्तदसत्त्वेऽत्र कीर्त्यते ॥ १ ॥

धवला शुद्धा मेधा धारणा यस्यास्तथाविधया धिया । गुप्तो रहःस्थः ॥ १ ॥ इन्द्रियगणस्यार्थे तत्तेन कृतं रहसि प्रबोधनं ते स्फुटं वक्ष्यामि ॥ २ ॥ हे इन्द्रियादिगणाः, भवतामेषा अविचारदशा प्रसिद्धा आत्मसत्ता स्वीया विद्यमानता जीवनकाले बहुतरानर्थदुःखायैव तदूर्ध्वं चान्तदायिनी पुनःपुनर्मृत्युनरकादिदायिनी तत्तस्मादिति प्राग्दर्शितविचारेण तामात्मनः असत्यां सत्तां त्यजन्तु ॥ ३ ॥ मदीयेन प्राकृतेनात्मतत्त्वोपदेशेन । हि यतो यूयमज्ञानसंभवाः । उपदेशेनाज्ञाने नष्टे न सत्तां लप्स्यध्वे इत्यर्थः ॥ ४ ॥ इदानीं चित्तं प्रत्यपि तथैवाह—**खसत्ते**ति । तप्तकाञ्चनमिव ज्वलन् रौति ध्वनतीति तप्तकाञ्चनरुत् अग्निस्तस्मिन् लासः क्रीडा बालानां पक्षिणां वा पार्श्वयोर्दाहायैव ॥ ५ ॥ चित्तेन्द्रियगणसत्ताप्रयुक्तामनर्थपरम्परां दर्शयति—**पश्ये**त्यादिना । लडयोरभेदाज्जडानां मूर्खाणां रागद्वेषादिकल्लोलैः संकुलाः ॥ ६ ॥ अहमहमिकाः परस्पराहंकारास्ताभिर्विहितान्योन्यवधपराजयपीडनादिचिन्तनानि यासु ताः ॥७॥ भावाभावौ संपद्विपदौ ॥ ८ ॥ ९ ॥ कल्लोलैर्मनोरथतरङ्गैर्व्यालैर्वलिते शरीरश्वभ्रकोटरे हृदये । घननीहाराणि निबिडजाड्यानि खानीन्द्रियच्छिद्रद्वाराणि यस्य । चिन्तालक्षणा चपला जालरचनव्यग्रा मर्कटी ऊर्णनाभिकीटिका भ्रमतीति शेषः ॥ १० ॥ लोभलक्षणैर्नाम्नैः खविलासैरारटन् कूजन् पक्षी तीक्ष्णया सुखदुःखादिद्वन्द्वलक्षणया तुण्डया चञ्च्वा गुणखण्डं शान्तिदान्तिधर्मादिफलपुष्पलक्षणं गुणसमूहं निकृन्तति ॥ ११ ॥ कामलक्षणः कुक्कुटो रागादिवासनाकीर्णं हृदयं मनस्तल्लक्षणं अवकरं उत्करं कुरुते पुनःपुनः पादाभ्यां विकिरतीत्यर्थः ॥ १२ ॥ अज्ञानं भ्रान्तिज्ञानं तल्लक्षणः कौशिक उलूकः ॥ १३ ॥ १४ ॥ इदानीं चित्तेन्द्रियगणासत्त्वे सर्वगुणसंपत्तिं दर्शयति—**त्वयी**त्यादिना । असत्त्वे साधुरेवेति तथा संबोधनम् । शुभश्रियो वक्ष्यमाणगुणश्रियः सालोकं विवेकालोकसहितं यथा स्यात्तथा । प्रभातपक्षेऽपि यथायोग्यं योज्यम् । एवमग्रेऽपि ॥ १५ ॥ हृदयाम्बरं हार्दं ब्रह्म नीरजस्कतरमत्यन्तापगतरजोगुणमान्तरं मनो यस्मिन् ॥ १६ ॥ अशङ्कितं निःशङ्कमेव नभःकोशे पतिता निर्गता वाय्वादिना आकुलाश्च ये आसारपूरास्तद्वत् वैकल्यकारिणो विक्षेपहेतवो विकल्पौघा नापतन्ति ॥ १७ ॥ १८ ॥ अन्तश्छिद्रमपूर्णता । जाड्ययुक्तेषु मूर्खेष्वेव आयुक्ता उपयोजिता विद्याकौशलादिगुणा यया । पद्मिनीपक्षे स्पष्टम् ॥ १९ ॥ अन्तः

प्रशाम्यत्यम्बुदे व्योम्नि शरदीवार्कमण्डलम् ॥ २०
प्रसन्नं स्फारगाम्भीर्यमक्षुब्धमपराहतम् ।
हृदयं समतामेति शान्तवात इवार्णवः ॥ २१
अमृतापूरपूर्णेन नित्यानन्दमयेन च ।
स्थीयते पुरुषेणान्तः शीतेन शशिना यथा ॥ २२
संविदः स्फुटतामन्तरायान्त्यज्ञानसंक्षये ।
संविदंशैकविश्रान्तं समग्रं सचराचरम् ॥ २३
भाव्यते भरिताकारं वपुरानन्दमन्थरम् ।
न भवत्यसुसङ्गानामाशापाशविधायिनाम् ॥ २४
दग्धानामिव पर्णानां रसानां पुनरागतिः ।
पुंसां क्षपितसंसारजराजन्ममहाध्वनाम् ॥ २५
अपुनर्भ्रमणायात्मद्रुमे विश्रम्यते चिरम् ।
एवंप्रायास्तथान्याश्च भवन्ति गुणसंपदः ॥ २६
असति त्वयि सर्वाशिन्सर्वाशाक्षयसंक्षये ।
पक्षयोरेतयोश्चित्तसत्तासत्तास्वरूपयोः ॥ २७
येनैव पश्यसि श्रेयस्तमेवाङ्गीकुरु क्षणम् ।
स्वात्मभावस्तव सुखं मन्ये मानवतां वर ॥ २८
तमेव भावयाभावं सुखत्यागो हि मूढता ।
यदि त्वस्ति भवेत्सत्यमन्तर्भावितचेतनम् ॥ २९
जीवतस्तत्तवात्यन्तमभावं क इवेच्छति ।
किंतु नास्त्यसि सत्येन वदामि तव सुन्दर ॥ ३०
तेन मिथ्यैव जीवामीत्याशया मा सुखी भव ।
पूर्वमेवासि नास्त्येव यावद्भ्रान्त्या त्वदस्तिता ॥ ३१
सैवेदानीं विचारेण भृशं क्षयमुपागता ।
एतावदेव ते रूपं साधो यदविचारणम् ॥ ३२
विचारे विहिते सम्यक्समरूपं समं स्थितम् ।
अविचारात्प्रजातं त्वमनालोकात्तमो यथा ॥ ३३
विचारेणोपशान्तं त्वमालोकेन तमो यथा ।
एतावन्तं सखे कालं बभूवाल्पविवेकिता ॥ ३४
तवानेनाभिपीनत्वमभूद्दुःखैककारणम् ।
मोहसंकल्पमात्रेण बालवेतालवद्भवेत् ॥ ३५
द्वन्द्वं चाद्यन्तसंकल्पक्षीणं क्षयि भव स्थितम् ।
इदानीमुदितं नित्यं स्वप्राग्रूपे क्षयं गते ॥ ३६
विवेकस्य प्रसादेन विवेकाय नमो नमः ।
बहुधापि प्रबुद्धस्त्वं चित्तकाप्यनुबोधितः ॥ ३७
चित्ततायां प्रनष्टायां स्थितस्त्वं परमेश्वरः ।
प्राक्स्वरूपविलासस्ते श्रेयसे स्थितिमागतः ॥ ३८
समस्तवासनोन्मुक्तः संप्रत्यसि महेश्वरः ।
यस्याविवेकादुत्पत्तिः स विवेकाद्विनश्यति ॥ ३९
प्रकाशेन प्रयात्यन्तमनालोकोऽभवत्तमः ।
अनिच्छतोऽपि ते साधो विचारे स्थितिमागते ॥ ४०
सर्वतोऽयमुपायातो विनाशः सुखसिद्धये ।
तस्मान्नास्त्यसि निर्णीतमिति सिद्धान्तयुक्तिभिः ॥ ४१
चित्तेन्द्रियेश्वर स्वस्ति भवते त्वन्तमागतः ।
नित्यं पूर्वमभूताय नास्तिरूपाय संप्रति ॥ ४२

---

आलोकः स्वीयज्ञानप्रकाशः । स्फुटतां प्रकटताम् ॥ २० ॥ अपराहतं वैषम्यहेतुभिरपरिभूतं हृदयं मनः ॥ २१ ॥ २२ ॥ संविद आत्माकारवृत्तयः स्फुटतां पूर्णत्वापादकं विकासं यान्ति । तेन च सचराचरं समग्रं जगद्बाधितं सत् संविदंशैकविश्रान्तं भवतीति शेषः ॥ २३ ॥ वपुः आत्मस्वरूपं भरिताकारं पूर्णं भाव्यतेऽनुभूयते नतु आशापाशविधायिनां असुसङ्गानां प्राणसंबद्धानां देहादीनां पक्षे भवतीत्यर्थः । अथवा वपुः शरीरमानन्दाविर्भावमन्थरं सदमृतप्राशनेनेव भरिताकारं भाव्यते नत्वन्नपानाद्याशापाशविधायिनामसुसङ्गानां प्राणाद्यासङ्गपाप्मनां पक्षे भवतीत्यर्थः ॥ २४ ॥ यथा तरोर्दावदग्धानां पर्णानां पुनर्वर्षासु पल्लवोदयेन आगमो भवति तद्वत् ज्ञानाग्निक्षपितसंसारजराजन्मोपलक्षितमहाध्वनामपि पुंसां रसानामारोग्यतुष्टिपुष्टिकान्त्यादिगुणानां पुनरागमो भवतीत्यर्थः ॥ २५ ॥ निरतिशयानन्दात्मनि पुनरावृत्तिरहिता विश्रान्तिरेव सर्वगुणसीमा तदानुषङ्गिका अन्ये गुणास्त्वनन्ता न वर्णयितुं शक्या इत्याशयेनोपसंहरति—**अपुन**रिति ॥ २६ ॥ एतयोरत्यन्तात्मभावेन स्थितिरात्यन्तिकनैरात्म्यस्वीकारो वेत्येतयोः पक्षयोर्मध्ये ॥ २७ ॥ तत्र प्रथमपक्षो वरीयानित्याह—**स्वात्मे**ति ॥ २८ ॥ अभावं भावान्तरशून्यम् । ननु किमर्थमन्तर्भावितचेतनपूर्वसिद्धमनोरूपेणैव जीवनं मम नेच्छसि किमर्थं वा [illegible] च्छसि तत्राह—**यदी**त्यादिना । हे चित्त, तव अन्तर्भावितचेतनं यत्प्रसिद्धं रूपमस्ति तद्यदि सत्यं भवेत्तत्तर्हि तेन रूपेण जीवतस्तवाभावं क इच्छति । किंतु त्वं तेन रूपेण नास्त्यसि असदसि । अहं सत्येन श्रुतिशास्त्रानुभवादिना विचार्य वदामि नापातदर्शनेनेत्यर्थः ॥ २९ ॥ ३० ॥ एतदत्यन्तात्मभावेनावस्थानं तवापि हितमित्याह—**तेने**ति । पूर्वं प्राथमकल्पिकमेवासि यावत् यतः ॥ ३१ ॥ सैव भ्रान्तिः ॥ ३२ ॥ समरूपं सन्मात्ररूपं समं विक्षेपवैषम्यशून्यं स्थितम् । अनालोकात्प्रकाशाभावात् ॥ ३३ ॥ ३४ ॥ अनेन अल्पविवेकत्वेन हेतुना । नन्वसतः पीनत्वं कथं भवेत्तत्राह—**मोहे**ति ॥ ३५ ॥ पीनत्वं तत्प्रयुक्तं सुखदुःखादिद्वन्द्वं च अभूदिति पूर्वेणान्वयः । यतः स्रष्टुराद्यन्तसंकल्पेन संकल्पकाल एव क्षीणमतः क्षयीति द्वन्द्वविशेषणम् । यस्य विवेकस्य प्रसादेन इदानीं ज्ञानोदयकाले आविद्यके स्वप्राग्रूपे क्षयं गते सति नित्यमनाद्यन्तमात्मरूपमुदितं तस्मै विवेकाय नमो नम इति परेणान्वयः ॥ ३६ ॥ हे चित्तक, त्वं स्वतोऽपि बहुधा प्रबुद्धः शास्त्रेणाप्यनुबोधितः ॥ ३७ ॥ प्रागपि त्वं परमेश्वरः स्थितः संप्रत्यपि प्रबोधतस्ते स्वरूपविलासः स्थितिमागत इति महेश्वर एवेति परेणान्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ 'वित्त्वे'ति पाठे हे इन्द्रियेश्वर, सिद्धान्तयुक्तिभिः इति विदित्वा स्वरूपं लब्ध्वा अन्तं संसारपार-

भविष्यते च नोदर्कं स्वमनः स्वस्ति तेऽस्त्विति ।
परिनिर्वामि शान्तोऽस्मि दिष्ट्यास्मि विगतज्वरः ॥ ४३
स्वात्मन्येवावतिष्ठेऽहं तुर्यरूपपदे स्थितः ।
अतो नास्त्येव नास्त्येव संसारे चित्तसंस्थितिः ॥ ४४
आत्मा त्वस्त्येव चास्त्येव यस्मादन्यत्र विद्यते ।
अयमात्माहमेवासौ नास्त्यन्यन्मद्दते क्वचित् ॥ ४५
स्फुरच्चिदेव बोधात्मा सर्वत्राहं स्थितः सदा ।
अयमात्मेति कलना मन्ये नो निर्मलान्तरे ॥ ४६
प्रतियोगिव्यवच्छेदकलनैकस्य वै कुतः ।
अहं तेनायमात्मेति कलनामनुदाहरन् ।
मौनी स्वात्मनि तिष्ठामि तरङ्ग इव वारिणि ॥ ४७
संशान्तवासनमनाश्रितचेतनांश-
मप्राणसंचरणमस्तसितांशदोषम् ।
संवेद्यवर्जितमुपेत्य सुसंविदंशं
शाम्यामि मौनमहमेव निरीहमन्तः ॥ ४८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे चित्तासत्ताविचारयोगोपदेशो नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः ८४

श्रीवसिष्ठ उवाच ।

इति निर्णीय स मुनिर्वीतहव्यो विवासनः ।
आसीत्समाधावचलो विन्ध्यकन्दरकोटरे ॥ १
अपरिस्पन्दिताशेषसंविदानन्दसुन्दरः ।
बभावस्तंगतमनाः स्तिमिताम्भोधिशोभनः ॥ २
अन्तरेव शशामास्य क्रमेण प्राणसंततिः ।
ज्वालाजालपरिस्पन्दो दग्धेन्धन इवानलः ॥ ३
अनन्तर्निष्ठतां याते बाह्यार्थे चाप्यसंस्थिते ।
शेषेऽन्तर्लब्धसंस्थाने तस्यास्फुरितपक्ष्मणी ॥ ४
घ्राणप्रान्तगताल्पाल्पसमालोके इवेक्षणे ।
अर्धकुड्मलितैः पद्मैः श्रियमाययतुः समाम् ॥ ५
समकायशिरोग्रीवस्थानकः स महामतिः ।
आसीच्छैलादिवोत्कीर्णश्चित्रार्पित इवाथवा ॥ ६
तथाभितिष्ठतस्तस्य संवत्सरशतत्रयम् ।
कोटरे विन्ध्यकच्छस्य ययावर्धमुहूर्तवत् ॥ ७
एतावन्तमसौ कालं नाबुद्ध्यत किलात्मवान् ।
जीवन्मुक्ततया ध्यानी न च तत्याज तां तनुम् ॥ ८
तावत्कालं स सुभगो न प्राबुध्यत योगवित् ।
उदारैरम्बुदारावैरासारभरघर्घरैः ॥ ९
पर्यन्तमण्डलाधीशमृगयानतबृंहितैः ।
पक्षिवानरनिर्ह्रादैर्मातङ्गास्फोटनिःस्वनैः ॥ १०
सिंहसंरम्भरटितैर्निर्झरारावसीत्कृतैः ।
विषमाशनिसंपातैर्जनकोलाहलैर्घनैः ॥ ११
प्रमत्तशरभास्फोटैर्भूकम्पतटघट्टनैः ।
वनदाहधमध्वानैर्जलौघाहतिवल्गनैः ॥ १२

मागतो भव । ते तुभ्यं स्वस्ति अस्तु । मनसः कालत्रयेऽप्यसत्त्वमाह—**नित्य**मिति ॥४२॥ चित्तासत्त्वैव परमपुरुषार्थसिद्धिं दर्शयति—**परिनिर्वामी**त्यादिना ॥ ४३ ॥ ४४ ॥ ४५ ॥ शुद्धचिदेकरसे अयमात्मेति कलनापि यत्र दुर्लभा तत्र दूरेऽन्यकलनेत्याशयेनाह—**अय**मिति ॥ ४६ ॥ अतएव तद्वाचामविषय इत्याह—**अह**मिति । अनुदाहरन् अनभिलपन् ॥ ४७ ॥ अहं अन्तः स्वहृदि संवेद्येन जडांशेन वर्जितम् । तत्कारणाविद्याया अपि बाधात्संशान्तवासनम् । चिदाभासस्यापि पृथगनवस्थानादनाश्रितचेतनांशम् । तदधीनक्रियाशक्तेरप्युपरमादप्राणसंचरणम् । भेदकाभावादेव अस्तमितांशभेदम् । सममेकरसम् । चिदंशं चिन्मात्रलक्षणम् । जगद्बाधपरिशिष्टांशम् । उपेत्य निरीहं निर्मनश्चेष्टं मौनं निर्वाणव्यापारं च शाम्यामि । विश्रान्तोऽस्मीत्यर्थः ॥ ४८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे चित्तासत्ताविचारयोगोपदेशो नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥

समाधिर्वीतहव्यस्य धराविवरसंस्थितिः ।
हृदि विद्याधरेन्द्रत्वगणत्वाद्युपवर्ण्यते ॥ १ ॥

इति उक्तप्रकारेण निर्णीय निश्चित्य ॥ १ ॥ अपरिस्पन्दितो यः अशेषः पूर्णः स्वप्रकाशसंविद्रूप आनन्दस्तद्रूपः सन् सुन्दरः ॥ २ ॥ ३ ॥ तस्यार्धोन्मीलिते अक्षिणी वर्णयति—**अनन्त**रिति द्वाभ्याम् । नात्यन्तमन्तर्निष्ठतां निमीलनं याते । शेषे उन्मीलितांशातिरिक्तांशे ॥ ४ ॥ घ्राणप्रान्तो नासाग्रं तत्र गतः प्रसृतः अल्पादल्पः सम उभयतस्तुल्य आलोकः प्रकाशो ययोस्ते इव लक्ष्यमाणे ईक्षणे चक्षुषी ॥ ५ ॥ ६ ॥ कच्छस्य निम्नरसंनिहितदेशस्य ॥ ७ ॥ ८ ॥ आसारभराणां वर्षनिर्झरधारासंपातानां घर्घरैः स्वनैरपि ॥ ९ ॥ पर्यन्तवासिनां मण्डलाधीशानां सामन्तानां मृगयासु आनतानामागतानां गजानां बृंहितैर्गर्जितैः । सर्वत्र अपिशब्दो योज्यः ॥ १० ॥ सिंहानां संरम्भरटितैः सक्रोधगर्जनैः ॥ ११ ॥ भूकम्पेन विशीर्णानां तटानां गिरिवप्राणां घट्टनैरास्फालनैः । वनदाहेषु धमैरभिसंयोगैस्तत्प्रयुक्तध्वानैश्च । जलस्य ओघैराहतय आस्फालनानि वल्ग-

१ अनले इति पाठः.

२ तथापि तिष्ठतः इति पाठः. ३ आगत इत्युभयत्र पाठः.

महोपलतटाघातैर्धरणीतलसृज्जलैः ।
जलौघान्दोलनायातैस्तापैरनलकर्कशैः ॥ १३
केवलं वहति स्वैरं काले गलितकारणम् ।
परियान्तीषु वर्षासु लहरीष्विव वारिणि ॥ १४
स्वल्पेनैव हि कालेन तस्मिन्पर्वतकन्दरे ।
प्रावृडोघविनुन्नेन पङ्केनोर्वीतले कृतः ॥ १५
तत्रासाववसद्भूमौ कोटरे संकटोदरे ।
पङ्कसंपीडितस्कन्धः पर्वतेषु शिला यथा ॥ १६
शतत्रये स वर्षाणामथ याते स्वयंप्रभुः ।
व्यवुध्यतात्मरूपात्मा धराकोटरपीडितः ॥ १७
संविदेवास्य तं देहं जग्राहोर्वीनिपीडितम् ।
तनुः प्राणमयस्पन्दः प्राणसंसरणं विना ॥ १८
उत्पत्तिप्रौढिमासाद्य कलना हृदयान्तरे ।
स्वमनोरूपिणी तस्य हृद्येवानुबभूव सा ॥ १९
कैलासकानने कान्ते कदम्बस्य तरोस्तले ।
मुनित्वं शतमब्दानां जीवन्मुक्तात्मनिर्मलम् ॥ २०
विद्याधरत्वं वर्षाणां शतमाधिविवर्जितम् ।
युगपञ्चकमिन्द्रत्वं प्रणतं सुरचारणैः ॥ २१

श्रीराम उवाच ।

शक्रत्वादिषु तेष्वस्य प्रतिभासेषु भो मुने ।
नियमोऽनियमश्चैव दिक्कालनियतेः कथम् ॥ २२

श्रीवसिष्ठ उवाच ।

सर्वात्मिकैषा चिच्छक्तिर्यत्रोदेति यथा यथा ।
तथा तत्राशु भवति तथात्मैकस्वभावतः ॥ २३
यथा यत्र यदा बुद्धौ नियमः स तदा स्थितः ।
देशकालादिनियमक्रमाणां तन्मयात्मता ॥ २४
तेन नानाविधान्येष जगन्ति परिदृष्टवान् ।
हृदि संवेदनाकाशे वीतहव्यो विवासनः ॥ २५
सम्यग्बोधवतामेषा वासनैव न वासना ।
ज्ञानाग्निदग्धाऽदग्धस्य कैव बीजस्य बीजता ॥ २६
कल्पमेकं गणत्वं स चन्द्रमौलेश्चकार ह ।
समस्तविद्यानिपुणं त्रिकालामलदर्शनम् ॥ २७
यो यादृग्दृढसंस्कारः स तं पश्यति तादृशम् ।
जीवन्मुक्ततयैवैतद्वीतहव्योऽनुभूतवान् ॥ २८

श्रीराम उवाच ।

एवं स्थिते मुनिश्रेष्ठ जीवन्मुक्तमतेरपि ।
बन्धमोक्षदृशः सन्ति वीतहव्यात्मनो यथा ॥ २९

श्रीवसिष्ठ उवाच ।

यथास्थितमिदं विश्वं शान्तमाकाशनिर्मलम् ।
ब्रह्मैव जीवन्मुक्तानां बन्धमोक्षदृशः कुतः ॥ ३०
एतत्संविद्विभो भाति यत्र यत्र यथा यथा ।
तत्र तत्र तथा तावत्तावत्तद्विन्दते ततम् ॥ ३१
तेनानुभूतानि बहून्यनुभूयन्त एव च ।
जगन्ति सर्वात्मतया ब्रह्मरूपेण राघव ॥ ३२
धराकोटरनिर्मग्नवीतहव्यचिदात्मसु ।
जगत्सु तेष्वसंख्येषु नीरूपेषु महात्मसु ॥ ३३

---

नानि वहनानि च तैरपि ॥ १२ ॥ धरणीतलात्प्रसृतैर्मृत्पङ्किलजलैः । अनलवत्कर्कशैस्तापैर्ग्रीष्मादितापैरपि न प्राबुध्यतेति सर्वत्र योज्यम् ॥ १३ ॥ गलितकारणं निष्प्रयोजनं काले वहति सति असौ प्रावृडोघविनुन्नेन पङ्केन उपर्युपरि प्रचीयमानेन अल्पेनैव कालेन उर्वीतले धरणीविवरे भूगर्भे कृतः प्रवेशित इति द्वयोरन्वयः ॥ १४ ॥ १५ ॥ संपीडितः संश्लिष्टः स्कन्धो यस्येत्यर्थः । नहि तस्य समाधिसुखनिमग्नस्य पीडास्ति ॥ १६ ॥ ॥ १७ ॥ एवं संकटस्थस्य कथं जीवनमभूत्तत्राह—**संविदेवेति** । जीवनादृष्टलिङ्गदेहप्रतिबिम्बिता संविदेवास्य तं देहं जग्राह उपादाय पालितवती । प्राणमयः प्राणवृत्तिरूपः स्पन्दस्तु न जग्राह । यतस्तनुः सूक्ष्मः । प्राणसंसरणाभावादित्यर्थः ॥ १८ ॥ वर्षशतत्रयानन्तरं तस्य यद्वृत्तं तदाह—**उत्पत्तीति** । अथ तस्य कलना जीवसंवित् प्रारब्धशेषभोगाय हृदयान्तर उत्पत्त्या उन्मेषक्रमेण प्रौढिं स्थौल्यमासाद्य स्वमनोरूपिणी भूत्वा वक्ष्यमाणं सर्वं कल्पनया हृद्येव अनुबभूव अनुभूतवतीत्यर्थः ॥ १९ ॥ यदनुबभूव तदेवाह—**कैलासे**त्यादिना ॥ २० ॥ इन्द्रत्वं देवराजत्वम् ॥ २१ ॥ कैलासकानने इत्यादिर्दिङ्नियमः, युगपञ्चकमित्यादिः कालनियमः, अल्पकाल एव हृदयप्रदेश एव तदनुभवादनियमश्च कथमुपपद्यते । दिक्कालनियतेरन्यथाकर्तुमशक्यत्वादिति प्रश्नार्थः ॥ २२ ॥ असार्वात्म्येन ज्ञातायां चिति अल्पयोरपि देशकालयोर्विस्तृतदेशकालान्तरकल्पनासामर्थ्ये भवत्येव नियतिविरोधो ननु सर्वात्मिकायां सर्वशक्तिसंपन्नायां परिज्ञातायामित्याशयेन परिहरति—**सर्वात्मिकेति** । तादृशात्मैकस्वभावत्वादनुभवितृचित इत्यर्थः ॥ २३ ॥ स्वबुद्ध्या अनुभूयमानयोरेव देशकालयोः संकोचवैपुल्यनियमानियमौ विरुद्धौ नाननुभूयमानेन सह अनुभूयमानस्य तौ । अल्पतरनाडीकुहरे स्वल्पकाले विस्तृतदेशकालस्वप्नानुभवदर्शनादित्याशयेनाह—**यथेति** । यत्र यदा बुद्धौ यथा अनुभवस्तदा तथा नियमः स्थित इत्यर्थः । तन्मयात्मता बुद्धिमयात्मन्यध्यस्तता यत इत्यर्थः । 'तन्मयात्मनाम्' इति पाठे हेतुगर्भं विशेषणम् ॥ २४ ॥ तेनोक्तहेतुद्वयेन ॥ २५ ॥ बीजशक्तिनाशाद्दग्धस्य उपलभ्यमानत्वाददग्धस्य । भर्जितस्येति यावत् ॥ २६ ॥ शङ्कां समाधाय प्रस्तुतमेव वर्णयति—**कल्प**मित्यादिना । गणत्वं गाणपत्यम् ॥ २७ ॥ जीवन्मुक्तस्यापि तस्य भोजकप्रारब्धकर्मोद्बोधितदृढसंस्कार एव देहभोगादिवैचित्र्यप्रतिभासे हेतुरित्याह—**य इति** ॥ २८ ॥ रामशङ्का स्पष्टा ॥ २९ ॥ दग्धपटन्यायेनासतः प्रारब्धशेषेण प्रतिभासो बाधितानुवृत्तिमात्रं न बन्ध इत्याशयेन परिहरति—**यथास्थित**मित्यादिना ॥ ३० ॥ विदन्ते लभत इव ॥ ३१ ॥ ईश्वरस्यास्मदीयजगत्प्रतिभासवद्वा तस्य विनैव बन्धं तत्प्रतिभास इत्याशयेनाह—**तेनेति** ॥ ३२ ॥ वीतहव्यवदुपलक्षितचैत-

यः शक्रोऽनवबुद्धात्मा सोऽद्य दीनेषु पार्थिवः ।
कर्तुं प्रवृत्तो मृगयां क्षणेऽस्मिन्नपि कानने ॥ ३४
यो हंसोऽनवबुद्धात्मा पाद्मे पैतामहेऽभवत् ।
स्थितः स एव दाशेन्द्रः कैलासवनकुञ्जके ॥ ३५
यो राजानवबुद्धात्मा भूमेः सौराष्ट्रमण्डले ।
स एषोऽद्य स्थितोऽन्ध्राणां ग्रामे बहुलपादपे ॥ ३६

श्रीराम उवाच ।

मानसः किल सर्गोऽसौ वीतहव्यस्य तत्र ये ।
देहिनो भ्रान्तिपात्रं चेत्तद्देहाकारिणः कथम् ॥ ३७

श्रीवसिष्ठ उवाच ।

यदि भ्रान्त्येकमात्रात्म वीतहव्यस्य तज्जगत् ।
तदिदं नाम ते राम किं भूयः परिभासते ॥ ३८
इदमप्यङ्ग चिन्मात्रं मनोमात्रभ्रमोपमम् ।
तदपि व्योम चिन्मात्रं मनोमात्रं भ्रमोपमम् ॥ ३९
वस्तुतस्तु न तद्धाम जगन्नैवं न चेतरत् ।
तत्रापि न जगत्सत्ता ब्रह्मेदं भाति केवलम् ॥ ४०
भावि भूतं भविष्यच्च यथेदं च तथेतरत् ।
जगत्सर्वमिदं दृश्यं संविन्मात्रमनोमयम् ॥ ४१
एवंरूपमिदं यावन्न परिज्ञातमीदृशम् ।
वज्रसारदृढं तावज्ज्ञातं सत्परमाम्बरम् ॥ ४२
अज्ञानान्मन एवेदमित्थं संप्रविजृम्भते ।
प्रत्युल्लासविलासाभ्यां जलमम्बुनिधाविव ॥ ४३

यथास्थितेनैव चिदम्बरेण
स्वचित्तमेवैति मनोभिधानम् ।
स्फारं कृतं तेन जगच्च दृश्य-
मेवं ततं नैव ततं च किंचित् ॥ ४४

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे वीतहव्यमनोजगद्वर्णनं नाम चतुरशीतितमः सर्गः ॥ ८४

## पञ्चाशीतितमः सर्गः ८५

श्रीराम उवाच ।

अथ किं वीतहव्यः स्वं स्थितं तस्मिन्धरोदरे ।
कथमुद्धृतवान्देहं स संपन्नश्च किं कथम् ॥ १

श्रीवसिष्ठ उवाच ।

अनन्तरमनन्तात्म वीतहव्याभिधं मनः ।
स्वमेवात्मचमत्कारमात्रं समवबुद्धवान् ॥ २
शार्वस्यास्य गणस्याभूत्प्राग्ज्योतिःस्मरणे स्वयम् ।
इच्छा कदाचित्सकलप्राग्जन्मालोकनोन्मुखी ॥ ३
अशेषान्स ददर्शाथ नष्टानष्टान्स्वदेहकान् ।
अनष्टानां ततो मध्यात्तत्तत्कोटरसंस्थितम् ॥ ४
यदृच्छयैव प्रोद्धर्तुं देहं तस्याभवन्मतिः ।
अपश्यत्तत्तथा तत्र पङ्के कीटमिव स्थितम् ॥ ५
शरीरं वीतहव्याख्यं धराकोटरपीडितम् ।
प्रावृडोघोपनीतं तत्पृष्ठस्थपङ्कमण्डलम् ॥ ६
तृणजालावकीर्णत्वग्देहपृष्ठमृदं तथा ।
एतद्दृष्ट्वा महातेजा धराविवरयन्त्रितम् ॥ ७

न्यस्यैवास्मदादिसर्वात्मत्वात्सर्वजन्तूनां जगदनुभवोऽपि तस्यैवेत्यपि सुवचमित्याशयेनाह—धरेत्यादिना । नीरूपेषु निःस्वरूपेषु प्रतिभासतो महात्मसु विशालतमेषु जगत्सु भुवनेषु यः शक्रोऽभूत् सोऽद्य दीनेषु देशविशेषेषु । दीनानां निवासो जनपद इत्यर्थे जातस्य तद्धितस्य 'जनपदे लुप्' इति लुपि युक्तवद्भावाद्बहुवचनम् ॥ ३३ ॥ ३४ ॥ पैतामहे पाद्मे कल्पे वीतहव्यस्य गाणपत्यकाले कैलासवनकुञ्जके तत्क्रीडाहंसो योऽभवत् स एव इदानीं दाशेन्द्रो निषादराजो भूत्वा स्थितोऽस्तीत्यन्वयः । एवमग्रेऽपि ॥ ३५ ॥ ३६ ॥ गुरूक्तेः सर्वात्मताभिप्रायमप्रतिपद्यमानान् जनांस्तच्छङ्कोद्घाटनेन गुरुमुखेन बोधयिष्यन् रामः पृच्छति—मानस इति । तद्देहाकारिणः शक्रहंसादिदेहाकारिणः सचेतनाः कथमित्यर्थः ॥ ३७ ॥ सर्वस्यापि जगतो मनःकार्यत्वस्य भ्रान्तिमात्रत्वस्य च बहुश उक्तत्वात्तुल्यत्वे यदिदं नाम ते प्रसिद्धं जगत्किं कथं सचेतनैर्युक्तं प्रतिभासत इत्यर्थः ॥ ३८ ॥ द्वयोः साम्यमेव दर्शयति—इदमिति ॥ ३९ ॥ एवमेतज्जगत्सद्दशं न । इतरदेतद्विलक्षणं च न । सालक्षण्यवैलक्षण्ययोः प्रतियोगिसिद्धिमन्तरेणायोगादिति भावः ॥ ४० ॥ संविन्मात्रत्वेनावशिष्टं यन्मनस्तदेव तन्मयम् ॥ ४१ ॥ ४२ ॥ प्रत्युल्लास उत्पत्तिर्विलासो वृद्ध्यादिपरिणामस्ताभ्याम् ॥ ४३ ॥ उक्तमर्थं संक्षिप्याह—यथास्थितेनेति । अविकृतेनैव चिदाकाशस्वभावेन मायया किंचिच्चेतयदिवात्मानं कल्पयच्चित्तं सत्तस्यैव पुनःपुनर्मननान्मनोभिधानमेति तेन च स्फारं जगत्संपन्नमिति एवं दृश्यं जगत्ततम् । परमार्थतस्तु किंचिदपि नैव ततमित्यर्थः ॥ ४४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे वीतहव्यमनोजगद्वर्णनं नाम चतुरशीतितमः सर्गः ॥ ८४ ॥

मुनेः पिङ्गलमाविश्य समुद्धारस्तनोरिह ।
जीवन्मुक्तस्थितिश्चान्त्यः समाधिश्चोपवर्ण्यते ॥ १ ॥

समुद्धारस्य तत्प्रकारस्य तदुत्तरचर्याया विदेहमुक्तपरिशिष्टतद्रूपस्य च चतुर्भिः किंवृत्तैः क्रमात्प्रश्नः ॥ १ ॥ अनन्तात्म अपरिच्छिन्नब्रह्माकारं समवबुद्धवान् । समाधावित्यर्थः ॥ २ ॥ प्राक्तनं ज्योतिश्चिदात्मा तस्य स्मरणे ध्यानकाले ॥ ३ ॥ नष्टानष्टान् कांश्चिन्नष्टान् कांश्चिदनष्टान् । तत्तदनष्टदेहहृदयकोटरे जीवटोपाख्यानवक्ष्यमाणन्यायेन स्वकल्पनयैव संस्थितं वीतहव्यदेहमित्यर्थः ॥ ४ ॥ ५ ॥ प्रावृष ओघेन पूरेण उपनीतं किंचिद्दूरं प्रवाहितम् । पृष्ठस्थेत्युक्त्या अधोमुखतया पातितमि[illegible] ॥ ६ ॥ तृणानां काशादीनां जालैरवकीर्णा निबद्धा-

१ भ्रान्तिमात्रं इति पाठः.

भूयोऽपि चिन्तयामास धिया परमबोधया ।
सर्वसंपीडिताङ्गत्वात्कायो मे प्राणवायुभिः ॥ ८
मुक्तश्चलितुमाकर्तुं शक्नोति न मनागपि ।
तज्ज्ञात्वा प्रविशाम्याशु देहमेवं विवस्वतः ॥ ९
तदीयः पिङ्गलो देहमुद्धरिष्यति मे ततः ।
अथवा किं ममैतेन शाम्याम्यहमविघ्नतः ॥ १०
निर्वासि स्वं पदं यासि कोऽर्थो मे देहलीलया ।
इति संचिन्त्य मनसा वीतहव्यो महामते ॥ ११
तूष्णीं स्थित्वा क्षणं भूयश्चिन्तयामास भूतले ।
उपादेयो हि देहस्य न मे त्यागो न संश्रयः ॥ १२
यादृशो देहसंत्यागस्तादृशो देहसंश्रयः ।
तद्यावदस्ति देहोऽयं न यावदणुतां गतः ॥ १३
तावदेनमुपारुह्य किंचित्प्रविहराम्यहम् ।
पिङ्गलेन शरीरं स्वमुद्धर्तुं तापनं वपुः ॥ १४
प्रविशामि नभःसंस्थं मुकुरं प्रतिबिम्बवत् ।
इत्यसौ मुनिरादित्यं विवेशानिलरूपधृक् ॥ १५
पुर्यष्टकवपुर्भूत्वा भस्त्राखमिव चानलः ।
भगवान्मुनिरव्येनं हृद्गतं मुनिनायकम् ॥ १६
दृष्ट्वासौ चिन्तयन्कार्यं पौर्वापर्यमुदारधीः ।
विन्ध्यभूधरभूकोशमन्तर्मुनिकलेवरम् ॥ १७
तृणोपलपरिच्छन्नं ददर्श गतसंविदम् ।
ऋषेश्चिकीर्षितं ज्ञात्वा भानुर्गगनमध्यगः ॥ १८
धरातो मुनिमुद्धर्तुमादिदेशाग्रगं गणम् ।
वीतहव्यमुनेः संवित्सा पुर्यष्टकरूपिणी ॥ १९
रविं वातमयी पूज्यं प्रणनामाशु चेतसा ।
भानुनाप्यभ्यनुज्ञातो मानपूर्वकमग्रगम् ॥ २०
विवेश पिङ्गलाकारं विन्ध्यकन्दरगामिनम् ।
पिङ्गलोऽसौ नभस्त्यक्त्वा कुञ्जकुञ्जरसुन्दरम् ॥ २१
प्राप विन्ध्यवनं प्रावृण्मत्ताभ्राम्बरभासुरम् ।
उद्दधार धराकोशान्नखनिष्कृष्टभूतलः ॥ २२
कलेवरं मुनेः पङ्कान्मृणालमिव सारसः ।
मौनं पुर्यष्टकमथ स्वं विवेश कलेवरम् ॥ २३
नभस्तलपरिभ्रान्तो विहङ्गम इवालयम् ।
प्रणेमतुर्मिथो मूर्तवीतहव्यनभश्चरौ ॥ २४
बभूवतुः स्वकार्यैकतत्परौ तेजसां निधी ।
जगाम पिङ्गलो व्योम मुनिश्च विमलं सरः ॥ २५
तारकाकारकुमुदं सूर्यांशुकवदाकृति ।
वीतहव्यो ममज्जाशु सरस्युद्भिन्नपङ्कजे ॥ २६
पङ्कपल्वललीलान्ते वने कलभको यथा ।
तत्र स्नात्वा जपं कृत्वा पूजयित्वा दिवाकरम् ।
मनोभूषितया तन्वा पूर्ववत्पुनराबभौ ॥ २७

मैत्र्या तया समतया परया च शान्त्या
सत्प्रज्ञया मुदितया कृपया श्रिया च ।
युक्तो मुनिः सकलसङ्गविमुक्तचेता
विन्ध्ये सरित्तटगतो दिनमेव रेमे ॥ २८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे वीतहव्यसमाधियोगोपदेशो नाम पञ्चाशीतितमः सर्गः ८५

---

स्त्वग्देहपृष्ठमृदा[1] यस्य । देहपदेन तदवयवा लक्ष्यन्ते ॥ ७ ॥ प्राणवायुभिः । तत्संचारैरिति यावत् ॥ ८ ॥ आकर्तुमीषदपि कर्तुम् । क्रियामनाक्त्वात्तच्छक्तिमनाक्त्वमिति न पौनरुक्त्यम् । तत्तस्मात्तदुद्धारार्थमुपायं ज्ञात्वा । एवं परकायप्रवेशयोगप्रकारेण ॥ ९ ॥ तदीयस्तत्सेवकः । पिङ्गलाख्यो गणस्तदाज्ञया उद्धरिष्यति । तस्य चिन्तान्तरमाह—**अथवेति** । एतेन देहेन शाम्यामि विदेहमुक्तयेत्यर्थः ॥ १० ॥ ११ ॥ त्यागः संश्रयो वा नोपादेयो नापेक्षणीयो विशेषाभावात् ॥ १२ ॥ तदेवाह—**यादृश** इति । अणुतां धूलीभावम् ॥ १३ ॥ पिङ्गलेन पिङ्गलद्वारा उद्धर्तुम् । तापनं सौरं वपुः प्रविशामि ॥ १४ ॥ अनिलरूपधृक् सूक्ष्मीभूत इति यावत् ॥ १५ ॥ पुर्यष्टकं प्राग्व्याख्यातं लिङ्गशरीरं तद्वपुः । भस्त्राखं चर्मपेश्याकाशम् । मुनिर्मननशीलो भगवान् सूर्यो हृद्गतं हृदि प्रविष्टं तं मुनिनायकं दृष्ट्वा तस्य कार्यं तत्पौर्वापर्यं च दृष्ट्वा विन्ध्यभूधरकोशगतं गतसंविदं मृतप्रायं मुनिकलेवरं ददर्शेति व्यवहितेनान्वयः ॥ १६ ॥ १७ ॥ ततो रविः किं चकार तदाह—**ऋषेरिति** ॥ १८ ॥ मुनिं मुनिशरीरम् । गणं पिङ्गलाख्यम् । सूर्यहृत्प्रविष्टा मुनेः संवित्किं चकार तदाह—**वीतहव्येति** ॥ १९ ॥ स मुनिर्भानुना हृद्येव बहुमानपूर्वकमभ्यनुज्ञातः सन् स्वकार्यार्थं प्रस्थितं पिङ्गलस्य आकारं शरीरं विवेश ॥ २० ॥ कुञ्जैर्लतागृहैः कुञ्जरैश्च सुन्दरम् ॥ २१ ॥ प्रावृषि मत्तान्यभ्राणि यस्मिंस्तथाविधमम्बरमिव । तत्पक्षे कुञ्जैः कुञ्जरैरिव च सुन्दरमिति योज्यम् । नखैर्निष्कृष्टं खातं भूतलं येन तथाविधः पिङ्गलः ॥ २२ ॥ मुनेः संबन्धि मौनं पुर्यष्टकं पिङ्गलदेहात्स्वं कलेवरं विवेश ॥ २३ ॥ आलयं स्वनीडम् । मूर्तः प्राप्तमूर्तिर्वीतहव्यश्च नभश्चरपिङ्गलश्च मिथः अन्योन्यं प्रणेमतुः ॥ २४ ॥ सरः स्नानार्थम् ॥ २५ ॥ सूर्येण अंशुकवती पीतरक्ताम्बरालंकृतेव आकृतिर्यस्य । बालार्करागरञ्जितोदकमिति यावत् ॥ २६ ॥ पङ्कयुक्तेषु पल्वलेषु लीलया अन्ते अवसाने । मनोभूषितया मननादिव्यवहारवत्या ॥ २७ ॥ दिनं दिनमात्रमेव रेमे न चिरम् । समाधिप्रच्युतस्तस्थावित्यर्थः ॥ २८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे वीतहव्यसमाधियोगोपदेशो नाम पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

[1] अत्र मृदा इति रूपं टीकाकृदभिमतं तच्च हलन्तान्मृच्छब्दाट्टापि कृते भवति । वस्तुतस्तु 'द्वन्द्वाच्चुदषहान्तात्' इति टचि अवकीर्णे त्वग्देहपृष्ठमृद [illegible] समासः सुकरः ।

# षडशीतितमः सर्गः ८६

श्रीवसिष्ठ उवाच ।

दिनान्ते स समाधातुं पुनरेव मनो मुनिः ।
विवेश कांचिद्विततां विज्ञातां विन्ध्यकन्दराम् ॥ १
तदेवात्मानुसंधानमत्यजन्सममिन्द्रियैः ।
चेतसा कलयामास दृष्टलोकपरावरः ॥ २
पूर्वमेवेन्द्रियगणो मया परिहृतः स्फुटम् ।
इदानीं चिन्तया नार्थः पुनर्विततया मम ॥ ३
अस्तिनास्तीतिकलनां भङ्क्त्वा मृद्वीं लतामिव ।
शेषं तु बद्धसंस्थानस्तिष्ठाम्यचलशृङ्गवत् ॥ ४
उदितोऽस्तं गत इव स्वस्तं गत इवोदितः ।
समः समरसाभासस्तिष्ठामि स्वच्छतां गतः ॥ ५
प्रबुद्धोऽपि सुषुप्तस्थः सुषुप्तस्थः प्रबुद्धवत् ।
तुर्यमालम्ब्य कायान्तस्तिष्ठामि स्तम्भितस्थितिः ॥ ६
स्थितः स्थाणुरिवैकान्ते स्वान्तान्ते सर्वतः स्थिते ।
सत्त्वसामान्यसाम्ये हि तिष्ठाम्यपगतामयः ॥ ७
इति संचिन्त्य स ध्याने पुनस्तस्थौ दिनानि षट् ।
ततः प्रबोधमापन्नः क्षणसुप्त इवाध्वगः ॥ ८
ततः सिद्धः स भगवान्वीतहव्यो महातपाः ।
विजहार चिरं कालं जीवन्मुक्ततया तदा ॥ ९
वस्तु नाभिननन्दासौ निनिन्द न कदाचन ।
न जगाम तथोद्वेगं न च हर्षमवाप सः ॥ १०
गच्छतस्तिष्ठतश्चैव तस्यैवमभवद्धृदि ।
विनोदाय विचित्तस्य कथा स्वमनसा सह ॥ ११
अव्ययेन्द्रियवर्गेश मनः शमवता त्वया ।
पश्यानन्दसुखं कीदृग्विधमासादितं ततम् ॥ १२
एषैवाविरतं तस्मान्नीरागैव दशा त्वया ।
अवलम्ब्या परित्याज्यं चापलं चलतां वर ॥ १३
भो भो इन्द्रियचौरा हे हताशा हतनामकाः ।
युष्माकं नायमात्मास्ति न भवन्तस्तथात्मनः ॥ १४
व्रजतां वो विनाशांशमाशा वो विफलीकृताः ।
न समर्थाः समाक्रान्तौ भवन्तो भङ्गुराश्रयाः ॥ १५
वयमात्मेति यैषा वो बभूव किल वासना ।
तत्त्वविस्मृतिजाता हि दृष्टरज्जुभुजङ्गवत् ॥ १६
अनात्मन्यात्मता सैषा सैषा वस्तुन्यवस्तुता ।
अविचारेण वै जाता विचारेण क्षयं गता ॥ १७
भवन्तोऽन्ये वयं चान्ये ब्रह्मान्यत्कर्तृता परा ।
अन्यो भोक्तान्य आदत्ते को दोषः कस्य कीदृशः ॥ १८
वनेभ्यो दारु संजातं रज्जवो वेणुचर्मणः ।
वासी चायःफलान्येव तक्षा ग्रासार्थमुद्यतः ॥ १९
इत्थं यथेह सामग्र्या स्वशक्तिस्थपदार्थया ।
संपन्ना काकतालीया दृढा वरगृहाकृतिः ॥ २०
संपन्नाः काकतालीयात्स्वशक्तिनियतेन्द्रियाः ।
तथैव कलिका लोलं कैव कस्यात्र खण्डना ॥ २१

---

पुनः समाधिः षड्रात्रं जीवन्मुक्तस्थितिश्चिरम् ।
रागादिभ्योऽञ्जलिर्मुक्तौ समाधिश्चास्य वर्ण्यते ॥ १ ॥

विज्ञातां प्राक्परिचिताम् ॥ १॥ दृष्टो लोके परः सारः अवरः असारश्च येन ॥ २ ॥ यत्कलयामास तदाह—**पूर्व**मित्यादिना ॥ ३ ॥ अस्तिनास्तीति द्विविधां दृश्यकलनाम् । शेषमवशिष्टं तदुभयसाक्षिचिन्मात्रमवलम्ब्येति शेषः । बद्धसंस्थानः समकायशिरोग्रीवो दृढासनश्च ॥ ४ ॥ उदितो जीवन्नप्यस्तं गतो मृत इवाज्ञदृशा, तत्त्वदृशा तु तद्विपरीतः । समरसाभास एकरसचिन्मात्ररूपः ॥ ५ ॥ प्रबुद्धो जाग्रदपि सुषुप्तस्थो द्वैतजालमपश्यन् । एवं सुषुप्तोऽपि स्वस्वरूपस्फुटानुभवात्प्रबुद्धवत् । तुर्यं स्थूलसूक्ष्मकारणनिर्मुक्तं पदम् ॥ ६ ॥ स्वान्तस्यान्ते पारभूते निर्मनने सर्वतः स्थिते पूर्णे सत्तासामान्यलक्षणे परमसाम्ये ॥ ७ ॥ ८ ॥ सिद्धो व्युत्थानेऽपि समाहितस्थितिः ॥ ९ ॥ नाभिननन्द गुणदृशा । न निनिन्द दोषदृशा ॥ १० ॥ कथा वक्ष्यमाणविचारलक्षणा । बाधितानुवृत्तस्वमनसा सह ॥ ११ ॥ अव्ययस्य विषयोपभोगप्रयुक्तसामर्थ्यव्ययरहितस्येन्द्रियवर्गस्य ईश स्वामिन् हे मनः, आनन्दयत्याह्लादयति सर्वं जगदित्यानन्दं तथाविधं सुखम् । निरतिशयानन्दरूपं सु शोभनं खं आकाशमिति वा ॥ १२ ॥ त्वया अग्रेऽपि एषैव नीरागैव दशा अवलम्ब्या । द्वावेवकाराववधारणदार्ढ्याय ॥ १३ ॥ हे हताशा इति आशानां पृथक् संबोधनम् । अयं मयानुभूयमान आत्मा युष्माकं नास्ति ॥ १४ ॥ एवं सदात्मसंबन्धाभावाद्वः स्वरूपमवशिष्टं विनाशांशं असत्त्वपक्षं व्रजताम् । समाक्रान्तौ ममेति शेषः ॥ १५ ॥ प्राक्तर्ह्यस्माकं त्वत्समाक्रान्तौ कुतः सामर्थ्यमभूदिति चेदात्मतादात्म्याद्यध्यासबलादित्याह—**वय**मिति॥ १६॥ ॥ १७ ॥ एवं विवेकदर्शने कस्यापि भवत्प्रयुक्तदोषसंबन्धोऽपि नास्त्येवेत्याह—**भवन्त** इति । भवन्तः करणभूताः । वयमभिमन्तारः । ब्रह्म अद्वयम् । कर्तृता प्राणप्रयुक्तक्रियानिमित्तता । भोक्ता चिदाभासः । आदत्ते मनः ॥ १८ ॥ एवं चेत्कथं व्यवहारकार्यनिष्पत्तिरिति चेत्काकतालीयन्यायादिति गृहदृष्टान्तेनाह—**वनेभ्य** इत्यादिना । वेणुत्वचा काष्ठभारबन्धनम् । वासी प्रसिद्धा । चकारात्कुठारटङ्किकादयः । अयसः फलानि प्रयोजनानि । लोकक्कुदुदरभरणप्रयुक्तानीति यावत् । एवं तक्षा स्वग्रासार्थमुद्यतो न गृहसिद्धये ॥ १९ ॥ एवं च भिन्नप्रयोजनैः क्रियाकारकैरर्थान्निष्पद्यमाना गृहाकृतिः काकतालीयन्यायादेवेत्यर्थः ॥२०॥ तथा इहापि कार्यकरणसंघाते दर्शनश्रवणवचनादानादिफलकस्वस्वशक्तिभिर्नियतानि ज्ञानकर्मेन्द्रियाणि यासां तथा[illegible]कार्यकलिकाः काकतालीयादेव लोलं चलं यथा

विस्मृतिर्विस्मृता दूरं स्मृतिः स्फुटमनुस्मृता ।
सत्सज्ञातमसच्चासत्क्षतं क्षीणं स्थितं स्थितम् ॥ २२
एवंविधेन भगवान्विचारेण महातपाः ।
सोऽतिष्ठन्मुनिशार्दूलो बहून्वर्षगणानिह ॥ २३
अपुनर्भवनायैव यत्र चिन्तान्तमागता ।
मूढता च सुदूरस्था तत्रासावक्सत्सदा ॥ २४
यथाभूतपदार्थौघदर्शनोत्थमनर्थकम् ।
ध्यानाश्वासनमालम्ब्य सोऽवसत्सुखगः सदा ॥ २५
हेयादेयसमासङ्गत्यागादानदृशोः क्षये ।
वीतहव्यमुनेरासीदिच्छानिच्छातिगं मनः ॥ २६
विदेहकेवलीभावे सीमन्ते जन्मकर्मणाम् ।
संसारसङ्गसंत्यागरसासवनवेच्छया ॥ २७
विवेश स तयैवान्ते सह्याद्रौ हेमकन्दरम् ।
अपुनःसङ्गमायाशु जगज्जालमवेक्ष्य सः ॥ २८
बद्धपद्मासनः स्थित्वा तत्रोवाचात्मनात्मनि ।
राग नीरागतां गच्छ द्वेष निर्द्वेषतां व्रज ॥ २९
भवद्भ्यां सुचिरं कालमिह प्रक्रीडितं मया ।
भोगा नमोऽस्तु युष्मभ्यं जन्म कोटिशतान्यहम् ॥ ३०
भवद्भिर्लालितो लोके लालकैरिव बालकः ।
इमामपि परां पुण्यां निर्वाणपदवीमहम् ॥ ३१
येन विस्मारितस्तस्मै सुखायास्तु नमो नमः ।
त्वदुत्तप्तेन हे दुःख मयात्मान्विष्ट आदरात् ॥ ३२
तस्मात्त्वदुपदिष्टोऽयं मार्गो मम नमोऽस्तु ते ।
त्वत्प्रसादेन लब्धेयं शीतला पदवी मया ॥ ३३
दुःखनाम्ने दुःखतत्त्व सुखदात्मन्नमोस्तु ते ।
कल्याणमस्तु ते मित्र संसारासारजीवित ॥ ३४
देह स्थितिरियं यामो वयमात्मीयमास्पदम् ।
प्रयोजनानां जन्तूनामहो नु विषमा गतिः ॥ ३५
देहेनापि वियुज्येऽहं भूत्वा जन्मशतान्यपि ।
मित्रकाय मया यत्त्वं त्यज्यसे चिरबान्धवः ॥ ३६
त्वयैवात्मन्युपानीता सात्मज्ञानवशात्क्षतिः ।
अधिगम्यात्मविज्ञानमात्मनाशः कृतस्त्वया ॥ ३७
देह नान्येन भग्नोऽसि त्वयैवैतदुपासितम् ।
एकाकिन्यापि शुष्यन्त्या प्रशान्ते मयि दीनया ॥ ३८
त्वया दुःखं न कर्तव्यं मातस्तृष्णे व्रजाम्यहम् ।
क्षन्तव्याः काम भगवन्विपरीतापराधजाः ॥ ३९
दोषा उपशमैकान्तं व्रजाम्यादिश मङ्गलम् ।
चिराच्चिराय चेदानीमम्ब तृष्णे किलावयोः ॥ ४०
वियोगो योगदोषेण प्रणामोऽयं स पश्चिमः ।
नमः सुकृतदेवाय भवतेऽस्तु त्वया पुरा ॥ ४१
नरकेभ्यः समुत्तार्य स्वर्गेऽहमभियोजितः ।
कुकार्यक्षेत्ररूढाय नरकस्कन्धवाहिने ॥ ४२
शासनापुष्पभाराय नमो दुष्कृतशाखिने ।
येन सार्धं चिरं बद्धयो भुक्ताः प्राकृतयोनयः ॥ ४३
अद्यप्रभृत्यदृश्याय तस्मै मोहात्मने नमः ।
प्रध्वनद्वंशमधुरवचसे पत्रवाससे ॥ ४४
नमो गुहातपस्विन्यै वयस्यायै समाधिषु ।
संसाराध्वनि खिन्नस्य त्वं ममाश्वासकारणम् ॥ ४५

---

स्यात्तथा संपन्नाः । तत्र कस्य केव खण्डना क्षतिरस्ति । न काचित्कस्यचिदित्यर्थः ॥ २१ ॥ विस्मृतिरविद्या । स्मृतिरात्मविद्या । तत्फलमाह—सदिति ॥ २२ ॥ २३ ॥ अन्तं नाशमागता । तत्र तस्मिन् पूर्णानन्दस्वप्रकाशपदे ॥ २४ ॥ यथास्थिते वस्तुनि कदाचिद्भ्रान्त्या विचित्रपदार्थौघदर्शनादुत्थं प्रसक्तमनर्थकं व्यर्थमेवानाश्वासं वारयितुं पुनःपुनर्ध्यानाश्वासनमालम्ब्येत्यर्थः ॥ २५ ॥ तस्य प्रारब्धशेषक्षये कीदृशं मन आसीत्तदाह—हेयेति । हानयोग्यानामादानयोग्यानां च विषयाणां समासङ्गे प्राप्तावपि हानादानदृशोः क्षये ॥ २६ ॥ प्रतिभासमात्रेणापि स्थितस्य देहादिसंसारसङ्गस्य संत्यागे परिशिष्यमाणे ब्रह्मरसमकरन्दे नवेच्छया उत्कण्ठया विवेशेति परेणान्वयः । 'संत्यागे वाञ्छामापातिशायिनीं' इति पाठे तु स्पष्टम् ॥ २७ ॥ तया वाञ्छया ॥ २८ ॥ सहजशत्रुषु रागद्वेषादिष्वपि निर्द्वेषतां मैत्रीं च भावयन् गन्तुकाम इव हितमुपदिशन् प्रणम्य तानामन्त्रयते—रागेत्यादिना ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ सुखाय विषयसुखलवाय । त्वया उत्तप्तेन संतापितेन मया ॥ ३२ ॥ तस्माद्गुरुणेव त्वया उपदिष्टोऽयं विवेकमार्गः ॥ ३३ ॥ हे दुःखस्य तत्त्वभूत सुखद आत्मन्, इदानीं ज्ञानजननोपकारिणं देहं प्रार्थ्यामन्त्रयति—कल्याणमित्यादिना ॥ ३४ ॥ हे देह, इयमावयोर्वियुक्तिस्थितिरनादिनियतिस्वभावः । 'संयोगा विप्रयोगान्ताः' इति न्यायादिति भावः । जन्तूनां प्राणिनां संबन्धिनां प्रयोजनानां स्वार्थानामियं गतिः रीतिर्विषमा । यल्लिप्सया अत्यन्तमित्रस्वजनानपि विहाय पुरुषा धावन्तीति भावः ॥ ३५ ॥ तदेव स्वस्याप्युपस्थितमित्याह—देहेनापीति ॥ ३६ ॥ नायं ममापराधस्त्वया स्वनाशार्थमेव मदुपकारः कृत इत्यनुशोचन्निवाह—त्वयैवेति ॥ ३७ ॥ एतत्त्वयैवोपासितमनुष्ठितम् । इदानीं तृष्णां प्रार्थयते—एकाकिन्येति ॥ ३८ ॥ त्वज्जयार्थं त्वद्विपरीतवैराग्यसेवनाद्यपराधजा मद्दोषाः ॥ ३९ ॥ उपशमैकान्तं आत्यन्तिकोपशमम् । आदिश आशास्व । पुनरावृत्त्या तृष्णासुखदर्शनप्रसक्तिं वारयन्नाह—चिरादिति । चिरादपि चिराय । शाश्वत इति यावत् । इदानीं आरभ्येति शेषः ॥ ४० ॥ सुकृतं पुण्यं तल्लक्षणाय देवाय ॥ ४१ ॥ कुकार्यं निषिद्धाचरणं तल्लक्षणे क्षेत्रे भूमौ रूढाय । नरकलक्षणानां स्कन्धानां बृहच्छाखानां वहनशीलाय ॥ ४२ ॥ शासनाः यातना एव पुष्पभारो यस्य ॥ ४३ ॥ प्रध्वनद्भिर्वंशैः कीचकैर्मधुरवचसे । शीर्णपत्राण्येव वासांसि यस्यास्तथाविधायै गुहालक्षणायै तपस्विन्यै ॥ ४४ ॥ आश्वासकारणमित्यजहल्लिङ्गं गुहाविशेषणम् ।

---

१ तूष्णीं इति मुद्रितपुस्तके पाठः.

# षडशीतितमः सर्गः ८६

श्रीवसिष्ठ उवाच ।

दिनान्ते स समाधातुं पुनरेव मनो मुनिः ।
विवेश कांचिद्विततां विज्ञातां विन्ध्यकन्दराम् ॥ १
तदेवात्मानुसंधानमत्यजन्सममिन्द्रियैः ।
चेतसा कलयामास दृष्टलोकपरावरः ॥ २
पूर्वमेवेन्द्रियगणो मया परिहृतः स्फुटम् ।
इदानीं चिन्तया नार्थः पुनर्वितततया मम ॥ ३
अस्तिनास्तीतिकलनां भङ्क्त्वा मृद्वीं लतामिव ।
शेषं तु बद्धसंस्थानस्तिष्ठाम्यचलशृङ्गवत् ॥ ४
उदितोऽस्तं गत इव स्वस्तं गत इवोदितः ।
समः समरसाभासस्तिष्ठामि स्वच्छतां गतः ॥ ५
प्रबुद्धोऽपि सुषुप्तस्थः सुषुप्तस्थः प्रबुद्धवत् ।
तुर्यमालम्ब्य कायान्तस्तिष्ठामि स्तम्भितस्थितिः ॥ ६
स्थितः स्थाणुरिवैकान्ते स्वान्तान्ते सर्वतः स्थिते ।
सत्त्वसामान्यसाम्ये हि तिष्ठाम्यपगतामयः ॥ ७
इति संचिन्त्य स ध्याने पुनस्तस्थौ दिनानि षट् ।
ततः प्रबोधमापन्नः क्षणसुप्त इवाध्वगः ॥ ८
ततः सिद्धः स भगवान्वीतहव्यो महातपाः ।
विजहार चिरं कालं जीवन्मुक्ततया तदा ॥ ९
वस्तु नाभिननन्दासौ निनिन्द न कदाचन ।
न जगाम तथोद्वेगं न च हर्षमवाप सः ॥ १०
गच्छतस्तिष्ठतश्चैव तस्यैवमभवद्धृदि ।
विनोदाय विचित्तस्य कथा स्वमनसा सह ॥ ११
अव्ययेन्द्रियवर्गेश मनः शमवता त्वया ।
पश्यानन्दसुखं कीदृग्विधमासादितं ततम् ॥ १२
एषैवाविरतं तस्मान्नीरागैव दशा त्वया ।
अवलम्ब्या परित्याज्यं चापलं चलतां वर ॥ १३
भो भो इन्द्रियचौरा हे हताशा हतनामकाः ।
युष्माकं नायमात्मास्ति न भवन्तस्तथात्मनः ॥ १४
व्रजतां वो विनाशांशमाशा वो विफलीकृताः ।
न समर्थाः समाक्रान्तौ भवन्तो भङ्गुराश्रयाः ॥ १५
वयमात्मेति यैषा वो बभूव किल वासना ।
तत्त्वविस्मृतिजाता हि दृष्टरज्जुभुजङ्गवत् ॥ १६
अनात्मन्यात्मता सैषा सैषा वस्तुन्यवस्तुता ।
अविचारेण वै जाता विचारेण क्षयं गता ॥ १७
भवन्तोऽन्ये वयं चान्ये ब्रह्मान्यत्कर्तृता परा ।
अन्यो भोक्तान्य आदत्ते को दोषः कस्य कीदृशः ॥ १८
वनेभ्यो दारु संजातं रज्जवो वेणुचर्मणः ।
वासी चायःफलान्येव तक्षा ग्रासार्थमुद्यतः ॥ १९
इत्थं यथेह सामग्र्या स्वशक्तिस्थपदार्थया ।
संपन्ना काकतालीया दृढा वरगृहाकृतिः ॥ २०
संपन्नाः काकतालीयात्स्वशक्तिनियतेन्द्रियाः ।
तथैव कलिका लोलं केव कस्यात्र खण्डना ॥ २१

---

पुनः समाधिः षड्रात्रं जीवन्मुक्तस्थितिश्चिरम् ।
रागादिभ्योऽञ्जलिर्मुक्तौ समाधिश्चास्य वर्ण्यते ॥ १ ॥

विज्ञातां प्राक्परिचिताम् ॥ १ ॥ दृष्टो लोके परः सारः अवरः असारश्च येन ॥ २ ॥ यत्कलयामास तदाह—**पूर्व**मित्यादिना ॥ ३ ॥ अस्तिनास्तीति द्विविधां दृश्यकलनाम् । शेषमवशिष्टं तदुभयसाक्षिचिन्मात्रमवलम्ब्येति शेषः । बद्धसंस्थानः समकायशिरोग्रीवो दृढासनश्च ॥ ४ ॥ उदितो जीवन्नप्यस्तं गतो मृत इवाज्ञदृशा, तत्त्वदृशा तु तद्विपरीतः । समरसाभास एकरसचिन्मात्ररूपः ॥ ५ ॥ प्रबुद्धो जाग्रदपि सुषुप्तस्थो द्वैतजालमपश्यन् । एवं सुषुप्तोऽपि स्वस्वरूपस्फुटानुभवात्प्रबुद्धवत् । तुर्यं स्थूलसूक्ष्मकारणनिर्मुक्तं पदम् ॥ ६ ॥ स्वान्तस्यान्ते पारभूते निर्मनने सर्वतः स्थिते पूर्णे सत्तासामान्यलक्षणे परमसाम्ये ॥ ७ ॥ ८ ॥ सिद्धो व्युत्थानेऽपि समाहितस्थितिः ॥ ९ ॥ नाभिननन्द गुणदृशा । न निनिन्द दोषदृशा ॥ १० ॥ कथा वक्ष्यमाणविचारलक्षणा । बाधितानुवृत्तस्वमनसा सह ॥ ११ ॥ अव्ययस्य विषयोपभोगप्रयुक्तसामर्थ्यव्ययरहितस्येन्द्रियवर्गस्य ईश स्वामिन् हे मनः, आनन्दयत्याह्लादयति सर्वं जगदित्यानन्दं तथाविधं सुखम् । निरतिशयानन्दरूपं सु शोभनं खं आकाशमिति वा ॥ १२ ॥ त्वया अग्रेऽपि एषैव नीरागैव दशा अवलम्ब्या । द्वावेवकाराववधारणदार्ढ्याय ॥ १३ ॥ हे हताशा इति आशानां पृथक् संबोधनम् । अयं मयानुभूयमान आत्मा युष्माकं नास्ति ॥ १४ ॥ एवं सदात्मसंबन्धाभावाद्वः स्वरूपमवशिष्टं विनाशांशं असत्त्वपक्षं व्रजताम् । समाक्रान्तौ ममेति शेषः ॥ १५ ॥ प्राक्तर्ह्यस्माकं त्वत्समाक्रान्तौ कुतः सामर्थ्यमभूदिति चेदात्मतादात्म्याद्यध्यासबलादित्याह—**वय**मिति ॥ १६ ॥ ॥ १७ ॥ एवं विवेकदर्शने कस्यापि भवत्प्रयुक्तदोषसंबन्धोऽपि नास्त्येवेत्याह—**भवन्त** इति । भवन्तः करणभूताः । वयमभिमन्तारः । ब्रह्म अद्वयम् । कर्तृता प्राणप्रयुक्तक्रियानिमित्तता । भोक्ता चिदाभासः । आदत्ते मनः ॥ १८ ॥ एवं चेत्कथं व्यवहारकार्यनिष्पत्तिरिति चेत्काकतालीयन्यायादिति गृहदृष्टान्तेनाह—**वनेभ्य** इत्यादिना । वेणुत्वचा काष्ठभारबन्धनम् । वासी प्रसिद्धा । चकारात्कुठारटङ्किकादयः । अयसः फलानि प्रयोजनानि । लोकक्षुदुदरभरणप्रयुक्तानीति यावत् । एवं तक्षा स्वग्रासार्थमुद्यतो न गृहसिद्धये ॥ १९ ॥ एवं च भिन्नप्रयोजनैः क्रियाकारकैरर्थान्निष्पद्यमाना गृहाकृतिः काकतालीयन्यायादेवेत्यर्थः ॥ २० ॥ तथा इहापि कार्यकरणसंघाते दर्शनश्रवणवचनादानादिफलकस्वस्वशक्तिभिर्नियतानि ज्ञानकर्मेन्द्रियाणि यासां तथाविधाव्यवहारकार्यकलिकाः काकतालीयादेव लोलं चलं यथा

विस्मृतिर्विस्मृता दूरं स्मृतिः स्फुटमनुस्मृता ।
सत्सञ्जातमसच्चासत्क्षतं क्षीणं स्थितं स्थितम् ॥ २२
एवंविधेन भगवान्विचारेण महातपाः ।
सोऽतिष्ठन्मुनिशार्दूलो बह्वन्वर्षगणानिह ॥ २३
अपुनर्भवनायैव यत्र चिन्तान्तमागता ।
मूढता च सुदूरस्था तत्रासाववसत्सदा ॥ २४
यथाभूतपदार्थौघदर्शनोत्थमनर्थकम् ।
ध्यानाश्वासनमालम्ब्य सोऽवसत्सुखगः सदा ॥ २५
हेयादेयसमासङ्गत्यागादानदशोः क्षये ।
वीतहव्यमुनेरासीदिच्छानिच्छातिगं मनः ॥ २६
विदेहकेवलीभावे सीमन्ते जन्मकर्मणाम् ।
संसारसङ्गसंत्यागरसासवनवेच्छया ॥ २७
विवेश स तयैवान्ते सह्याद्रौ हेमकन्दरम् ।
अपुनःसङ्गमायाशु जगज्जालमवेक्ष्य सः ॥ २८
बद्धपद्मासनः स्थित्वा तत्रोवाचात्मनात्मनि ।
राग नीरागतां गच्छ द्वेष निर्द्वेषतां व्रज ॥ २९
भवद्भ्यां सुचिरं कालमिह प्रक्रीडितं मया ।
भोगा नमोस्तु युष्मभ्यं जन्मकोटिशतान्यहम् ॥ ३०
भवद्भिर्लालितो लोके लालकैरिव बालकः ।
इमामपि परां पुण्यां निर्वाणपदवीमहम् ॥ ३१
येन विस्मारितस्तस्मै सुखायास्तु नमो नमः ।
त्वदुत्तप्तेन हे दुःख मयात्मान्विष्ट आदरात् ॥ ३२
तस्मात्त्वदुपदिष्टोऽयं मार्गो मम नमोऽस्तु ते ।
त्वत्प्रसादेन लब्धेयं शीतला पदवी मया ॥ ३३
दुःखनाम्ने दुःखतत्त्व सुखदात्मन्नमोस्तु ते ।
कल्याणमस्तु ते मित्र संसारासारजीवित ॥ ३४
देह स्थितिरियं यामो वयमात्मीयमास्पदम् ।
प्रयोजनानां जन्तूनामहो नु विषमा गतिः ॥ ३५
देहेनापि वियुज्येऽहं भूत्वा जन्मशतान्यपि ।
मित्रकाय मया यत्त्वं त्यज्यसे चिरबान्धवः ॥ ३६
त्वयैवात्मन्युपानीता सात्मज्ञानवशात्क्षतिः ।
अधिगम्यात्मविज्ञानमात्मनाशः कृतस्त्वया ॥ ३७
देह नान्येन भग्नोऽसि त्वयैवैतदुपासितम् ।
एकाकिन्यापि शुष्यन्त्या प्रशान्ते मयि दीनया ॥ ३८
त्वया दुःखं न कर्तव्यं मातस्तृष्णे व्रजाम्यहम् ।
क्षन्तव्याः काम भगवन्विपरीतापराधजाः ॥ ३९
दोषा उपशमैकान्तं व्रजाम्यादिश मङ्गलम् ।
चिराच्चिराय चेदानीमम्ब तृष्णे किलावयोः ॥ ४०
वियोगो योगदोषेण प्रणामोऽयं स पश्चिमः ।
नमः सुकृतदेवाय भवतेऽस्तु त्वया पुरा ॥ ४१
नरकेभ्यः समुत्तार्य स्वर्गेऽहमभियोजितः ।
कुकार्यक्षेत्ररूढाय नरकस्कन्धवाहिने ॥ ४२
शासनापुष्पभाराय नमो दुष्कृतशाखिने ।
येन सार्धं चिरं बह्वयो भुक्ताः प्राकृतयोनयः ॥ ४३
अद्यप्रभृत्यदृश्याय तस्मै मोहात्मने नमः ।
प्रध्वनद्वंशमधुरवचसे पत्रवाससे ॥ ४४
नमो गुहातपस्विन्यै वयस्यायै समाधिषु ।
संसाराध्वनि खिन्नस्य त्वं ममाश्वासकारणम् ॥ ४५

स्यात्तथा संपन्नाः । तत्र कस्य केव खण्डना क्षतिरस्ति । न काचित्कस्यचिदित्यर्थः ॥ २१ ॥ विस्मृतिरविद्या । स्मृतिरात्मविद्या । तत्फलमाह—सदिति ॥ २२ ॥ २३ ॥ अन्तं नाशमागता । तत्र तस्मिन् पूर्णानन्दस्वप्रकाशपदे ॥ २४ ॥ यथास्थिते वस्तुनि कदाचिद्भ्रान्त्या विचित्रपदार्थौघदर्शनादुत्थं प्रसक्तमनर्थकं व्यर्थमेवानाश्वासं वारयितुं पुनःपुनर्ध्यानाश्वासनमालम्ब्येत्यर्थः ॥ २५ ॥ तस्य प्रारब्धशेषक्षये कीदृशं मन आसीत्तदाह—हेयेति । हानयोग्यानामादानयोग्यानां च विषयाणां समासङ्गे प्राप्तावपि हानादानदशोः क्षये ॥ २६ ॥ प्रतिभासमात्रेणापि स्थितस्य देहादिसंसारसङ्गस्य संत्यागे परिशिष्यमाणे ब्रह्मरसमकरन्दे नवेच्छया उत्कण्ठया विवेशेति परेणान्वयः । 'संत्यागे वाञ्छामापातिशायिनी' इति पाठे तु स्पष्टम् ॥ २७ ॥ तया वाञ्छया ॥ २८ ॥ सहजशत्रुषु रागद्वेषादिष्वपि निर्द्वेषतां मैत्रीं च भावयन् गन्तुकाम इव हितमुपदिशन् प्रणम्य तानामन्त्रयते—रागेत्यादिना ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ सुखाय विषयसुखलवाय । त्वया उत्तप्तेन संतापितेन मया ॥ ३२ ॥ तस्माद्गुरुणेव त्वया उपदिष्टोऽयं विवेकमार्गः ॥ ३३ ॥ हे दुःखस्य तत्त्वभूत सुखद आत्मन् । इदानीं ज्ञानजननोपकारिणं देहं प्रार्थ्यामन्त्रयति—कल्याणमित्यादिना ॥ ३४ ॥ हे देह, इयमावयोर्वियुक्तिस्थितिरनादिनियतिस्वभावः । 'संयोगा विप्रयोगान्ताः' इति न्यायादिति भावः । जन्तूनां प्राणिनां संबन्धिनां प्रयोजनानां स्वार्थानामियं गतिः रीतिर्विषमा । यल्लिप्सया अत्यन्तमित्रस्वजनानपि विहाय पुरुषा धावन्तीति भावः ॥ ३५ ॥ तदेव स्वस्याप्युपस्थितमित्याह—देहेनापीति ॥ ३६ ॥ नायं ममापराधस्त्वया स्वनाशार्थमेव मदुपकारः कृत इत्यनुशोचन्निवाह—त्वयैवेति ॥ ३७ ॥ एतत्त्वयैवोपासितमनुष्ठितम् । इदानीं तृष्णां[1] प्रार्थयते—एकाकिन्येति ॥ ३८ ॥ त्वज्जयार्थं त्वद्विपरीतवैराग्यसेवनाद्यपराधजा मद्दोषाः ॥ ३९ ॥ उपशमैकान्तं आत्यन्तिकोपशमम् । आदिश आशास्व । पुनरावृत्त्या तृष्णामुखदर्शनप्रसक्तिं वारयन्नाह—चिरादिति । चिरादपि चिराय । शाश्वत इति यावत् । इदानीं आरभ्येति शेषः ॥ ४० ॥ सुकृतं पुण्यं तल्लक्षणाय देवाय ॥ ४१ ॥ कुकार्ये निषिद्धाचरणं तल्लक्षणे क्षेत्रे भूमौ रूढाय । नरकलक्षणानां स्कन्धानां बृहच्छाखानां वहनशीलाय ॥ ४२ ॥ शासनाः यातना एव पुष्पभारो यस्य ॥ ४३ ॥ प्रध्वनद्भिर्वंशैः कीचकैर्मधुरवचसे । शीर्णपत्राण्येव वासांसि यस्यास्तथाविधायै गुहालक्षणायै तपस्विन्यै ॥ ४४ ॥ आश्वासकारणमित्यजहल्लिङ्गं गुहाविशेषणम् ।

[1] तृष्णीं इति मुद्रितपुस्तके पाठः ।

आसीद्वयस्या सुस्निग्धा सर्वलोभापहारिणी ।
सर्वसंकटखिन्नेन दोषेभ्यो द्रवता मया ॥ ४६
त्वमेका शोकनाशार्थमाश्रिता परमा सखी ।
संकटावटकुञ्जेषु हस्तालम्बनदायिने ॥ ४७
वार्धकैकान्तसुहृदे दण्डकाष्ठाय ते नमः ।
अस्थिपञ्जरमात्मीयं तथा रक्तान्त्रतन्तुकम् ॥ ४८
एतावन्मात्रसारैकं गृहीत्वा गच्छ देहक ।
पयःक्षोभप्रकारेभ्यः स्नानेभ्योऽपि नमोस्तु ते ॥ ४९
नमोस्तु व्यवहारेभ्यः संसृतिभ्यो नमोस्तु ते ।
एते भवन्तः सहजाः प्राक्तनाः सुहृदो मया ॥ ५०
क्रमेणाद्योत्कृताः प्राणाः स्वस्ति वोऽस्तु व्रजाम्यहम् ।
भवद्भिः सह चित्रासु मया बह्वीषु योनिषु ॥ ५१
विश्रान्तं गिरिकुञ्जेषु श्रान्तं लोकान्तरेषु च ।
क्रीडितं पुरपीठान्तरुषितं पर्वतेषु च ॥ ५२
स्थितं कार्यविलासेषु प्रस्थितं विविधाध्वसु ।
न तदस्ति जगत्कोशे भवद्भिः सह यन्मया ॥ ५३
न कृतं न हृतं यातं न दत्तं नावलम्बितम् ।
इदानीं स्वां दिशं यान्तु भवन्तो यास्यहं प्रियाः ॥ ५४
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ताः सर्वे संसारवर्त्मनि ॥ ५५
अयं चाक्षुष आलोको विशत्वादित्यमण्डलम् ।
विशन्तु वनपुष्पाणि सौगन्ध्यानन्दसंविदः ॥ ५६
प्राणानिलस्तथा स्पन्दं विशत्वद्य प्रभञ्जनम् ।
विशन्त्वाकाशकुहरं शब्दश्रवणशक्तयः ॥ ५७
इन्दुमण्डलमायान्तु रसनारसशक्तयः ।
निर्मन्दर इवाम्भोधिर्गतार्क इव वासरः ॥ ५८
शरदीव घनः स्वैरं प्राप्तः कल्पान्तसर्गवत् ।
ओंकारान्ते स्वमननं प्रशाम्याम्यात्मनात्मनि ।
दग्धेन्धन इवार्चिष्मान्निःस्नेह इव दीपकः ॥ ५९
व्यपगताखिलकार्यपरम्परः
सकलदृश्यदशातिगतस्थितिः ।
प्रणवशान्त्यनुसंसृतिशान्तधी-
र्विगतमोहमलोऽयमहं स्थितः ॥ ६०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे इन्द्रियवर्गनिराकरणोपदेशो नाम षडशीतितमः सर्गः ॥८६॥

## सप्ताशीतितमः सर्गः ८७

श्रीवसिष्ठ उवाच ।
एवं कलितवानन्तः प्रशान्तमननैषणः ।
शनैरुच्चारयंस्तारं प्रणवं प्राप्तभूमिकः ॥ १

॥ ४५ ॥ सुस्निग्धा अत्यन्तस्नेहवती वयस्या आसीः अभूः । पूर्णात्मविश्रान्तिदानेन सर्वलोभापहारिणी । दोषेभ्यः समाधिविघ्नेभ्यः ॥ ४६ ॥ इदानीं दण्डकाष्ठगुणान्वर्णयंस्तन्नमस्यति—**संकटेति**। संकटे श्वसर्पादिभयेषु विषमप्रदेशेषु च । तथा अवटेषु गर्तेषु कुञ्जेषु च हस्तस्य आलम्बनदायिने ॥४७॥ इदानीं देहभागं सर्वं देहाय निवेदयति—**अस्थीति** ॥ ४८ ॥ एतावन्मात्रमेव सारं तत्त्वं यस्य तथाविधमेकं स्वमसाधारणभागं गृहीत्वा गच्छ स्वाः प्रकृतीः । हे देहक, पयसो जलस्य त्वदीयमलदौर्गन्ध्यखेदादिना दूषणाद्ये क्षोभा अपराधास्तदीयप्रकारभेदरूपेभ्यस्ते स्नानेभ्यः शुचित्वसंपादनोपायेभ्योऽपि नमोऽस्तु ॥ ४९ ॥ तथा भोजनशयनाभ्यञ्जनालंकरणादिव्यवहारेभ्यस्तत्सामग्रीसंपादनायेतस्ततो धावनलक्षणाभ्यस्ते संसृतिभ्यश्च नमोऽस्तु। हे प्राणाः सहजाः सुहृदः, मया अद्य सुहृदां नमस्कारक्रमेण एते भवन्तोऽपि उत्कृता उत्क्रष्टाः कृताः । नमस्कृता इति यावत् ॥ ५० ॥ प्राक्तनसुहृत्त्वमेव वर्णयति—**भवद्भिरिति** ॥ ५१ ॥ पुराणां पीठानां सिद्धक्षेत्राणां चान्तः ॥ ५२ ॥५३ ॥ न कृतं न हृतं न दत्तं च हस्ताभ्याम् । न यातं पद्भ्याम् । नावलम्बितं मनसा च । भवन्तः स्वां दिशं प्रकृतिं यान्तु । अहं ब्रह्म यामि । हे प्रियाः ॥ ५४ ॥ किमर्थमस्मान्प्रकृतिषु विलापयसि कार्यकरणसंघातात्मनैव स्थित्वा भोगयनिचयानेव पूर्ववत्कुतो न प्राप्स्यामस्तत्राह—**सर्वे** इति । हे सर्वे प्राणादयः ॥ ५५ ॥ इदानीं प्रत्येकमिन्द्रियादीनां प्राप्तव्याः प्रकृतीर्विभज्य दर्शयति—**अयमित्यादिना** । सौगन्ध्यानन्दसंवित्पदेन तत्करणं घ्राणेन्द्रियं लक्ष्यते । वनपुष्पपदेन च गन्धमात्रसारा पृथिवी ॥ ५६ ॥ ५७ ॥ एवमिन्दुमण्डलपदेनापो ग्राह्या इति क्रमेण 'गताः कलाः पञ्चदश प्रतिष्ठाम्' इति श्रुतिप्रदर्शितदिशा सर्वे स्वां स्वां प्रकृतिं यान्त्वित्यर्थः । एवं युष्मासु उपाधिभूतेषु गतेषु भवत्प्रतिबिम्बितचिदाभासात्मा जीवभूतोऽहमपि स्वबिम्बभूते प्रणवार्धमात्रालक्ष्ये ब्रह्मात्मनि प्रशाम्यामीत्याह—**निर्मन्दर** इत्यादिना ॥ ५८ ॥ स्वं ईरयति जनयतीति स्वैरं स्वोपादानं विलयेन प्राप्तो घन इव कल्पान्ते प्रलयकाले सर्गवत्प्रपञ्च इव च । स्वमननं सुष्ठु अमननमात्यन्तिकमनःशान्तिर्यथा स्यात्तथा ॥ ५९ ॥ दीर्घोच्चारितस्य प्रणवस्य ब्रह्मरन्ध्रे शान्तिमनुसृत्य शान्ता ब्रह्माकारतामात्रप्राप्त्या उपरता धीर्यस्य । तत एव विगतप्रारब्धप्रतिबद्धशिष्टाविद्यालेशमला ॥ ६० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे इन्द्रियवर्गनिराकरणोपदेशो नाम षडशीतितमः सर्गः ॥ ८६ ॥

**येन क्रमेण संप्राप्तो वीतहव्यो विदेहताम् ।**
**प्रणवान्तं समालम्ब्य स क्रमोऽत्र निरूप्यते ॥ १ ॥**

एवं वक्ष्यमाणक्रमेण तारमत्युच्चैःस्वरं प्रणवं शनैर्दैर्घ्यापा-

मात्रादिपादभेदेन प्रणवं संस्मरन्यतिः ।
अध्यारोपापवादेन स्वरूपं शुद्धमव्ययम् ॥ २
सबाह्याभ्यन्तरान्भागान्स्थूलान्सूक्ष्मतरानपि ।
त्रैलोक्यसंभवांस्त्यक्त्वा संकल्पाकल्पकल्पितान् ॥ ३
तिष्ठन्नक्षुभिताकारश्चिन्तामणिरिवात्मनि ।
संपूर्ण इव शीतांशुर्विश्रान्त इव मन्दरः ॥ ४
कुम्भकारगृहे चक्रं संरोधित इव भ्रमात् ।
अम्भोधिरिव संपूर्णस्तिमितस्फारनिर्मलः ॥ ५
शान्ततेजस्तमःपुञ्जं विगतार्केन्दुतारकम् ।
अधूमाभ्ररजःस्वच्छमनन्तं शरदीव खम् ॥ ६
सहप्रणवपर्यन्तदीर्घनिःस्वनतन्तुना ।
जहाविन्द्रियतन्मात्रजालं गन्धमिवानिलः ॥ ७
ततो जहौ तमोमात्रं प्रतिभातमिवाम्बरे ।
उत्तिष्ठत्प्रस्फुरद्रूपं प्राज्ञः कोपलवं यथा ॥ ८
प्रतिभातं ततस्तेजो निमेषार्धं विचार्य सः ।
जहौ बभूव च तदा न तमो न प्रकाशकम् ॥ ९
तामवस्थामथासाद्य मनसा तन्मनस्तृणम् ।
मनागपि प्रस्फुरितं निमिषार्धादशातयत् ॥ १०
ततोऽङ्ग संविदं स्वस्थां प्रतिभासमुपागताम् ।
सद्यो जातशिशुज्ञानसमानकलनामलम् ॥ ११
निमेषार्धार्धभागेन कालेन कलनां प्रभुः ।
जहौ चितश्चैत्यदशां स्पन्दशक्तिमिवानिलः ॥ १२
पश्यन्तीपदमासाद्य सत्तामात्रात्मकं ततः ।
प्रसुप्तपदमालम्ब्य तस्थौ गिरिरिवाचलः ॥ १३
ततः सुषुप्तसंस्थानं स्थित्वा स्थित्वा निभुर्मनाक् ।
सुषुप्ते स्थैर्यमासाद्य तुर्यरूपमुपाययौ ॥ १४
निरानन्दोऽपि सानन्दः सच्चासच्चापि तत्र सः ।
आसीन्न किंचित्किंचित्तत्प्रकाशस्तिमिरं यथा ॥ १५
अचिन्मयं चिन्मयं च नेति नेति यदुच्यते ।
ततस्तत्संबभूवासौ यद्गिरामप्यगोचरः ॥ १६
तदसौ सुसमं स्फारं पदं परमपावनम् ।
सर्वभावान्तरगतमभूत्सर्वविवर्जितम् ॥ १७
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां वरम् ।
विज्ञानमात्रं विज्ञानविदां यदमलं पदम् ॥ १८
पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ।
शिवः शशिकलाङ्कानां कालः कालैकवादिनाम् ॥ १९
आत्मात्मनस्तद्विदुषां नैरात्म्यं तादृशात्मनाम् ।
मध्यं माध्यमिकानां च सर्वं सुसमचेतसाम् ॥ २०

दनेनोच्चारयन्सन् मननैषणाप्रशान्तिक्रमेण प्राप्तषष्ठसप्तमभूमिको भूत्वा अन्तः स्वहृदि ब्रह्म कलितवान्प्राप्तवान् ॥ १ ॥ यतिः संन्यासी वीतहव्यः । 'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव' इति माण्डूक्यश्रुतिदर्शितक्रमेण अकारोकारमकाराख्यमात्राभिरर्धमात्रया च कल्पितेन स्थूलसूक्ष्माव्याकृततुरीयलक्षणपादभेदेन प्रणवं संस्मरन्सन् पञ्चीकरणोक्तेन विराड्हिरण्यगर्भाव्याकृतलक्षणानां पादानां तुर्ये प्रथमं 'जागरितस्थानो बहिःप्रज्ञः' इत्यादिश्रुत्युक्तदिशा अध्यारोपेण 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनम्' इत्याद्यपवादेन च स्थूलसूक्ष्मकारणरूपानपि सबाह्याभ्यन्तरान्भागांस्त्यक्त्वा शुद्धमव्ययं स्वरूपं दृष्ट्वा 'प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति श्रुत्युक्ते तुर्ये तत्रात्मनि तिष्ठन्सन् प्रणवपर्यन्तं दीर्घनिःस्वनतन्तुना सह इन्द्रियतन्मात्रजालं जहाविति षष्ठेन संबन्धः ॥ २ ॥ ३ ॥ ॥ ४ ॥ भ्रमाद्भ्रमणात्संरोधिते सति कुम्भकारगृहे चक्रमिवाक्षुभिताकारः ॥ ५ ॥ तेजस्तमसोर्युगपच्छान्त्यप्रसिद्धेरभूतोपमेयम् ॥ ६ ॥ प्रणवस्य पर्यन्तोऽग्रभागस्तल्लक्षणेन दीर्घनिःस्वनतन्तुना सह जहावित्यादिसर्वैः स्थूलसूक्ष्मेतरानपि त्यक्त्वेत्यस्यैव प्रपञ्चः ॥ ७ ॥ तत उत्तिष्ठत् साक्षिणा प्रस्फुरद्रूपं तमोमात्रम् ॥ ८ ॥ ॥ ९ ॥ तां तमःप्रकाशशून्यामवस्थामासाद्य तत्कल्पनाहेतुं मनस्तृणं अशातयत् छिन्नवान् ॥ १० ॥ अङ्गेति संबोधने । प्रतिभासं निवातदीपवत्स्फुटप्रकाशतामालम्ब्य तामपि कलनां

तत्प्ररोहात्प्रागेव निमेषार्धार्धभागेन कालेन जहौ । स एव चितश्चैत्यदशात्याग इत्यर्थः ॥ ११ ॥ १२ ॥ अनया रीत्या साक्षिमात्रपरिशेषलक्षणं पश्यन्तीपदमासाद्य तदेव वियदादिबाधपरिशिष्टसत्तामात्रात्मकं कारणतत्त्वमिति तद्भावस्थितिलक्षणं सुषुप्तपदमालम्ब्येत्यर्थः ॥ १३ ॥ एते एव षष्ठसप्तमभूमिके सदेहावस्थे। ततः साक्षिसदैकरस्ये निरतिशयाखण्डानन्दाविर्भावात्प्रारब्धशेषेण सहात्यन्तिकप्रतिभासनाशे विदेहकैवल्यावाप्तिं दर्शयति—तुर्यरूपमिति ॥ १४ ॥ ततः किमासीदिति चतुर्थप्रश्नोत्तरमाह—निरानन्द इत्यादिना । विषयानन्दशून्योऽपि स्वरूपेणैव सानन्दः । स्वातिरिक्तसत्ताशून्योऽपि सद्रूप इत्येवं सर्वं योज्यम् । यथा नक्तं दृशां तिमिरमेव प्रकाशस्तद्वत् ॥ १५ ॥ चेत्याभावादचिन्मयं स्वतश्चिदेव चिन्मयम् ॥ १६ ॥ ॥ १७ ॥ सर्ववादिभिर्नानाविकल्पैः स्वस्वसिद्धान्ततया विकल्पितमपि तदेवेत्याह—यदित्यादिना ॥ १८ ॥ शशिकलाङ्कानां शैवानाम्। 'शिवमतस्थानाम्' इति पाठेऽपि स एवार्थः ॥ १९ ॥ तत् आत्मनो विदुषामात्मा । 'न लोके' ति निषेधविषये षष्ठी छान्दसी । नैरात्म्यं क्षणिकविज्ञानसंतानः । स हि स्थायित्वेन भासमानो नास्त्येवेति नैरात्म्यम्। तादृशात्मनां सौत्रान्तिकवैभाषिकाणाम्। माध्यमिकानां चिदचिन्मध्यमशून्यमात्रं तत्त्वमिति वादिनाम्। सुसमचेतसां जीवन्मुक्तानां सर्वं निरवशेषपूर्णम्। शून्यवादिभिरुपक्रम्य सर्ववादिभिरुपसंहारस्तयोः परिच्छेदापरिच्छेदवादे परमावधिता, इतरेषां तु आन्तरालिकमतानामुभयमिश्रणं तारतम्यवैचित्र्येणोत्थानमिति द्योतनायेति

आसीर्वयस्या सुस्निग्धा सर्वलोभापहारिणी।
सर्वसंकटखिन्नेन दोषेभ्यो द्रवता मया॥ ४६
त्वमेका शोकनाशार्थमाश्रिता परमा सखी।
संकटावटकुञ्जेषु हस्तालम्बनदायिने॥ ४७
वार्धकैकान्तसुहृदे दण्डकाष्ठाय ते नमः।
अस्थिपञ्जरमात्मीयं तथा रक्तान्त्रतन्तुकम्॥ ४८
एतावन्मात्रसारैकं गृहीत्वा गच्छ देहक।
पयःक्षोभप्रकारेभ्यः स्नानेभ्योऽपि नमोस्तु ते॥ ४९
नमोस्तु व्यवहारेभ्यः संसृतिभ्यो नमोस्तु ते।
एते भवन्तः सहजाः प्राक्तनाः सुहृदो मया॥ ५०
क्रमेणाद्योत्कृताः प्राणाः स्वस्ति वोऽस्तु व्रजाम्यहम्।
भवद्भिः सह चित्रासु मया बह्वीषु योनिषु॥ ५१
विश्रान्तं गिरिकुञ्जेषु श्रान्तं लोकान्तरेषु च।
क्रीडितं पुरपीठान्तरुषितं पर्वतेषु च॥ ५२
स्थितं कार्यविलासेषु प्रस्थितं विविधाध्वसु।
न तदस्ति जगत्कोशे भवद्भिः सह यन्मया॥ ५३
न कृतं न हृतं यातं न दत्तं नावलम्बितम्।
इदानीं स्वां दिशं यान्तु भवन्तो याम्यहं प्रियाः॥ ५४
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ताः सर्वे संसारवर्त्मनि॥ ५५
अयं चाक्षुष आलोको विशत्वादित्यमण्डलम्।
विशन्तु वनपुष्पाणि सौगन्ध्यानन्दसंविदः॥ ५६
प्राणानिलस्तथा स्पन्दं विशत्वद्य प्रभञ्जनम्।
विशन्त्वाकाशकुहरं शब्दश्रवणशक्तयः॥ ५७
इन्दुमण्डलमायान्तु रसनारसशक्तयः।
निर्मन्दर इवाम्भोधिर्गतार्क इव वासरः॥ ५८
शरदीव घनः स्वैरं प्राप्तः कल्पान्तसर्गवत्।
ओंकारान्ते स्वमननं प्रशाम्याम्यात्मनात्मनि।
दग्धेन्धन इवार्चिष्मान्निःस्नेह इव दीपकः॥ ५९
व्यपगताखिलकार्यपरम्परः
सकलदृश्यदशातिगतस्थितिः।
प्रणवशान्त्यनुसंसृतिशान्तधी-
र्विगतमोहमलोऽयमहं स्थितः॥ ६०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे इन्द्रियवर्गनिराकरणोपदेशो नाम षडशीतितमः सर्गः॥८६॥

## सप्ताशीतितमः सर्गः ८७

श्रीवसिष्ठ उवाच।
एवं कलितवानन्तः प्रशान्तमननैषणः।
शनैरुच्चारयंस्तारं प्रणवं प्राप्तभूमिकः॥ १

॥ ४५ ॥ सुस्निग्धा अत्यन्तस्नेहवती वयस्या आसीः अभूः। पूर्णात्मविश्रान्तिदानेन सर्वलोभापहारिणी। दोषेभ्यः समाधिविघ्नेभ्यः ॥ ४६ ॥ इदानीं दण्डकाष्ठगुणान्वर्णयंस्तन्नमस्यति—**संकटे**ति। संकटे श्वसर्पादिभयेषु विषमप्रदेशेषु च। तथा अवटेषु गर्तेषु कुञ्जेषु च हस्तस्य आलम्बनदायिने ॥४७॥ इदानीं देहभागं सर्वं देहाय निवेदयति—**अस्थी**ति ॥ ४८ ॥ एतावन्मात्रमेव सारं तत्त्वं यस्य तथाविधमेकं स्वमसाधारणभागं गृहीत्वा गच्छ स्वाः प्रकृतीः। हे देहक, पयसो जलस्य त्वदीयमलदौर्गन्ध्यखेदादिना दूषणाद्ये क्षोभा अपराधास्तदीयप्रकारभेदरूपेभ्यस्ते स्नानेभ्यः शुचित्वसंपादनोपायेभ्योऽपि नमोऽस्तु ॥ ४९ ॥ तथा भोजनशयनाभ्यञ्जनालंकरणादिव्यवहारेभ्यस्तत्सामग्रीसंपादनायेतस्ततो धावनलक्षणाभ्यस्ते संसृतिभ्यश्च नमोऽस्तु। हे प्राणाः सहजाः सुहृदः, मया अद्य सुहृदां नमस्कारक्रमेण एते भवन्तोऽपि उत्कृता उत्कृष्टाः कृताः। नमस्कृता इति यावत् ॥ ५० ॥ प्राक्तनसुहृत्त्वमेव वर्णयति—**भवद्भि**रिति ॥ ५१ ॥ पुराणां पीठानां सिद्धक्षेत्राणां चान्तः ॥ ५२ ॥५३॥ न कृतं न हृतं न दत्तं च हस्ताभ्याम्। न यातं पद्भ्याम्। नावलम्बितं मनसा च। भवन्तः स्वां दिशं प्रकृतिं यान्तु। अहं ब्रह्म यामि। हे प्रियाः ॥ ५४ ॥ किमर्थमस्मान्प्रकृतिषु विलापयसि कार्यकरणसंघातात्मनैव स्थित्वा भोगसमृद्धिकं प्र... यत्कुतो न प्राप्स्यामस्तत्राह—**सर्वे** इति। हे सर्वे प्राणादयः ॥ ५५ ॥ इदानीं प्रत्येकमिन्द्रियादीनां प्राप्तव्याः प्रकृतीर्विभज्य दर्शयति—**अयमि**त्यादिना। सौगन्ध्यानन्दसंवित्पदेन तत्करणं घ्राणेन्द्रियं लक्ष्यते। वनपुष्पपदेन च गन्धमात्रसारा पृथिवी ॥ ५६ ॥ ५७ ॥ एवमिन्दुमण्डलपदेनापो ग्राह्या इति क्रमेण 'गताः कलाः पञ्चदश प्रतिष्ठाम्' इति श्रुतिप्रदर्शितदिशा सर्वे स्वां स्वां प्रकृतिं यान्त्वित्यर्थः। एवं युष्मासु उपाधिभूतेषु गतेषु भवत्प्रतिबिम्बितचिदाभासात्मा जीवभूतोऽहमपि स्वबिम्बभूते प्रणवार्धमात्रालक्ष्ये ब्रह्मात्मनि प्रशाम्यामीत्याह—**निर्मन्दर** इत्यादिना ॥ ५८ ॥ स्वं ईरयति जनयतीति स्वैरं स्वोपादानं विलयेन प्राप्तो घन इव कल्पान्ते प्रलयकाले सर्गवत्प्रपञ्च इव च। स्वमननं सुष्ठु अमननमात्यन्तिकमनःशान्तिर्यथा स्यात्तथा ॥ ५९ ॥ दीर्घोच्चारितस्य प्रणवस्य ब्रह्मरन्ध्रे शान्तिमनुसृत्य शान्ता ब्रह्माकारतामात्रप्राप्त्या उपरता धीर्यस्य। तत एव विगतप्रारब्धप्रतिबद्धशिष्टाविद्यालेशमला ॥ ६० ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे इन्द्रियवर्गनिराकरणोपदेशो नाम षडशीतितमः सर्गः ॥ ८६ ॥

येन क्रमेण संप्राप्तो वीतहव्यो विदेहताम्।
प्रणवान्तं समालम्ब्य स क्रमोऽत्र निरूप्यते ॥ १ ॥

एवं वक्ष्यमाणक्रमेण तारमत्युच्चैःस्वरं प्रणवं शनैर्दैर्घ्योपा-

मात्रादिपादभेदेन प्रणवं संस्मरन्यतिः ।
अध्यारोपापवादेन स्वरूपं शुद्धमव्ययम् ॥ २
सबाह्याभ्यन्तरान्भागान्स्थूलान्सूक्ष्मतरानपि ।
त्रैलोक्यसंभवांस्त्यक्त्वा संकल्पाकल्पकल्पितान् ॥ ३
तिष्ठन्नक्षुभिताकारश्चिन्तामणिरिवात्मनि ।
संपूर्ण इव शीतांशुर्विश्रान्त इव मन्दरः ॥ ४
कुम्भकारगृहे चक्रं संरोधित इव भ्रमात् ।
अम्भोधिरिव संपूर्णस्तिमितस्फारनिर्मलः ॥ ५
शान्ततेजस्तमःपुञ्जं विगतार्केन्दुतारकम् ।
अधूमाभ्ररजःस्वच्छमनन्तं शरदीव खम् ॥ ६
सहप्रणवपर्यन्तदीर्घनिःस्वनतन्तुना ।
जहाविन्द्रियतन्मात्रजालं गन्धमिवानिलः ॥ ७
ततो जहौ तमोमात्रं प्रतिभातमिवाम्बरे ।
उत्तिष्ठत्प्रस्फुरद्रूपं प्राज्ञः कोपलवं यथा ॥ ८
प्रतिभातं ततस्तेजो निमेषार्धं विचार्य सः ।
जहौ बभूव च तदा न तमो न प्रकाशकम् ॥ ९
तामवस्थामथासाद्य मनसा तन्मनस्तृणम् ।
मनागपि प्रस्फुरितं निमिषार्धादशातयत् ॥ १०
ततोऽङ्ग संविदं स्वस्थां प्रतिभासमुपागताम् ।
सद्यो जातशिशुज्ञानसमानकलनामलम् ॥ ११
निमेषार्धार्धभागेन कालेन कलनां प्रभुः ।
जहौ चितश्चेत्यदशां स्पन्दशक्तिमिवानिलः ॥ १२
पश्यन्तीपदमासाद्य सत्तामात्रात्मकं ततः ।
प्रसुप्तपदमालम्ब्य तस्थौ गिरिरिवाचलः ॥ १३
ततः सुषुप्तसंस्थानं स्थित्वा स्थित्वा निमुर्मेनाक् ।
सुषुप्ते स्थैर्यमासाद्य तुर्यरूपमुपाययौ ॥ १४
निरानन्दोऽपि सानन्दः सच्चासच्चापि तत्र सः ।
आसीन्न किंचित्किंचित्तत्प्रकाशस्तिमिरं यथा ॥ १५
अचिन्मयं चिन्मयं च नेति नेति यदुच्यते ।
ततस्तत्संबभूवासौ यद्गिरामप्यगोचरः ॥ १६
तदसौ सुसमं स्फारं पदं परमपावनम् ।
सर्वभावान्तरगतमभूत्सर्वविवर्जितम् ॥ १७
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां वरम् ।
विज्ञानमात्रं विज्ञानविदां यदमलं पदम् ॥ १८
पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ।
शिवः शशिकलाङ्कानां कालः कालैकवादिनाम् ॥ १९
आत्मात्मनस्तद्विदुषां नैरात्म्यं तादृशात्मनाम् ।
मध्यं माध्यमिकानां च सर्वं सुसमचेतसाम् ॥ २०

दनेनोच्चारयन्सन् मननैषणाप्रशान्तिक्रमेण प्राप्तषष्ठसप्तमभूमिको भूत्वा अन्तः स्वहृदि ब्रह्म कलितवान्प्राप्तवान् ॥ १ ॥ यतिः संन्यासी वीतहव्यः । 'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव' इति माण्डूक्यश्रुतिदर्शितक्रमेण अकारोकारमकाराख्यमात्राभिरर्धमात्रया च कल्पितेन स्थूलसूक्ष्माव्याकृततुरीयलक्षणपादभेदेन प्रणवं संस्मरन्सन् पञ्चीकरणोक्तेन विराड्हिरण्यगर्भाव्याकृतलक्षणानां पादानां तुर्ये प्रथमं 'जागरितस्थानो बहिःप्रज्ञः' इत्यादिश्रुत्युक्तदिशा अध्यारोपेण 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनम्' इत्याद्यपवादेन च स्थूलसूक्ष्मकारणरूपानपि सबाह्याभ्यन्तरान्भागांस्त्यक्त्वा शुद्धमव्ययं स्वरूपं दृष्ट्वा 'प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति श्रुत्युक्ते तुर्ये तत्रात्मनि तिष्ठन्सन् प्रणवपर्यन्तं दीर्घनिःस्वनतन्तुना सह इन्द्रियतन्मात्रजालं जहाविति षष्ठेन संबन्धः ॥ २ ॥ ३ ॥ ॥ ४ ॥ भ्रमाद्भ्रमणात्संरोधिते सति कुम्भकारगृहे चक्रमिवाक्षुभिताकारः ॥ ५ ॥ तेजस्तमसोर्युगपच्छान्त्यप्रसिद्धेरभूतोपमेयम् ॥ ६ ॥ प्रणवस्य पर्यन्तोऽग्रभागस्तल्लक्षणेन दीर्घनिःस्वनतन्तुना सह जहावित्यादिसर्वैः स्थूलसूक्ष्मेतरानपि त्यक्त्वेत्यस्यैव प्रपञ्चः ॥ ७ ॥ तत उत्तिष्ठत् साक्षिणा प्रस्फुरद्रूपं तमोमात्रम् ॥ ८ ॥ ॥ ९ ॥ तां तमःप्रकाशशून्यामवस्थामासाद्य तत्कल्पनाहेतुं मनस्तृणं अशातयत् छिन्नवान् ॥ १० ॥ अङ्गेति संबोधने । प्रतिभासं निवातदीपवत्स्फुटप्रकाशतामालम्ब्य तामपि कलनां तत्प्ररोहात्प्रागेव निमेषार्धार्धभागेन कालेन जहौ । स एव चितश्चेत्यदशात्याग इत्यर्थः ॥ ११ ॥ १२ ॥ अनया रीत्या साक्षिमात्रपरिशेषलक्षणं पश्यन्तीपदमासाद्य तदेव वियदादिबाधपरिशिष्टसत्तामात्रात्मकं कारणतत्त्वमिति तद्भावस्थितिलक्षणं सुषुप्तपदमालम्ब्येत्यर्थः ॥ १३ ॥ एते एव षष्ठसप्तमभूमिके सदेहावस्थे। ततः साक्षिसदैकरस्ये निरतिशयाखण्डानन्दाविर्भावात्प्रारब्धशेषेण सहात्यन्तिकप्रतिभासनाशे विदेहकैवल्यावाप्तिं दर्शयति—**तुर्यरूप**मिति ॥१४॥ ततः किमासीदिति चतुर्थप्रश्नस्योत्तरमाह—**निरानन्द** इत्यादिना । विषयानन्दशून्योऽपि स्वरूपेणैव सानन्दः । स्वातिरिक्तसत्ताशून्योऽपि सद्रूप इत्येवं सर्वं योज्यम् । यथा नक्तं दृशां तिमिरमेव प्रकाशस्तद्वत् ॥ १५ ॥ चेत्याभावादचिन्मयं स्वतश्चिदेव चिन्मयम् ॥ १६ ॥ ॥ १७ ॥ सर्ववादिभिर्नानाविकल्पैः स्वस्वसिद्धान्ततया विकल्पितमपि तदेवेत्याह—**यदि**त्यादिना ॥१८॥ शशिकलाङ्कानां शैवानाम्। 'शिवमतस्थानाम्' इति पाठेऽपि स एवार्थः ॥ १९ ॥ तत् आत्मनो विदुषामात्मा । 'न लोके'ति निषेधविषये षष्ठी छान्दसी । नैरात्म्यं क्षणिकविज्ञानसंतानः । स हि स्थायित्वेन भासमानो नास्त्येवेति नैरात्म्यम्। तादृशात्मनां सौत्रान्तिकवैभाषिकाणाम्। माध्यमिकानां चिदचिन्मध्यमशून्यमात्रं तत्त्वमिति वादिनाम्। सुसमचेतसां जीवन्मुक्तानां सर्वं निरवशेषपूर्णम्। शून्यवादिभिरुपक्रम्य सर्ववादिभिरुपसंहारस्तयोः परिच्छेदापरिच्छेदवादे परमावधिता, इतरेषां तु आन्तरालिकमतानामुभयमिश्रणं तारतम्यवैचित्र्येणोत्थानमिति द्योतनायेति

यत्सर्वशास्त्रसिद्धान्तो यत्सर्वहृदयानुगम् ।
यत्सर्वं सर्वगं सार्वं यत्तत्तत्सदसौ स्थितः ॥ २१
यदनुत्तमनिःस्पन्दं दीप्यते तेजसामपि ।
स्वानुभूत्यैकमात्रं यद्यत्तत्तत्सदसौ स्थितः ॥ २२
यदेकं चाप्यनेकं च साञ्जनं च निरञ्जनम् ।
यत्सर्वं चाप्यसर्वं च यत्तत्तत्सदसौ स्थितः ॥ २३
अजमजरमनाद्यनेकमेकं
पदममलं सकलं च निष्कलं च ।
स्थित इति स तदा नभःस्वरूपा-
दपि विमलस्थितिरीश्वरः क्षणेन ॥ २४

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे वीतहव्यनिर्वाणो नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥

## अष्टाशीतितमः सर्गः ८८

श्रीवसिष्ठ उवाच ।
प्राप्य संसृतिसीमान्तं दुःखाब्धेः पारमागतः ।
वीतहव्यः शशामैवमपुनर्मनने मुनिः ॥ १
तस्मिंस्तथोपशान्ते हि परां निर्वृतिमागते ।
पयःकण इवाम्भोधौ स्वे पदे परिणामिनि ॥ २
तथैव तिष्ठन्निःस्पन्दः स कायो म्लानिमाययौ ।
अन्तर्विरसतां प्राप्य मार्गशीर्षान्तपद्मवत् ॥ ३
तस्य देहद्रुमान्तःस्थं त्यक्त्वा हृन्नीडमाययुः ।
प्रोड्डीय विहगायन्तो यन्त्रोन्मुक्ता इवासवः ॥ ४
भूतेष्वेव प्रतिष्ठानि भूतानि सकलान्यलम् ।
मांसास्थियन्त्रदेहस्तु वनावनितलेऽवसत् ॥ ५
चिदर्णवप्रतिष्ठा चिद्धातवो धातुषु स्थिताः ।
स्वे स्वरूपे स्थितं सर्वं मुनावुपशमं गते ॥ ६
एषा ते कथिता राम विचारशतशालिनी ।
विश्रान्तिर्वीतहव्यस्य प्रज्ञयैनां विवेचय ॥ ७
एवंप्रकारया चार्व्या स्वविचारणयेद्धया ।
तत्त्वमालोक्य तत्सारमातिष्ठोत्तिष्ठ राघव ॥ ८
यदेतदखिलं राम भवते वर्णितं मया ।
यदिदं वर्णयाम्यद्य वर्णयिष्यामि यच्च वा ॥ ९
त्रिकालदर्शिना नित्यं चिरं च किल जीवता ।
विचारितं च दृष्टं च मया तदखिलं स्वयम् ॥ १०
तदेताममलां दृष्टिमवलम्ब्य महामते ।
ज्ञानमासाद्य परं ज्ञानान्मुक्तिर्हि लभ्यते ॥ ११
ज्ञानान्निर्दुःखतामेति ज्ञानादज्ञानसंक्षयः ।
ज्ञानादेव परा सिद्धिर्नान्यस्माद्राम वस्तुतः ॥ १२
ज्ञानेन सकलामाशां विनिकृत्य समन्ततः ।

---

बोध्यम् ॥ २० ॥ सर्वस्य तत्त्वं सार्वं ईदृशं यत्सत् असौ तत्सत् तद्भूत्वा स्थित इत्यर्थः ॥ २१ ॥ यत् अनुत्तमनिःस्पन्दमत्यन्तनिष्क्रियम् । व्योम्न्यपि जन्मादिक्रियासत्त्वात्ततोऽपि कूटस्थमित्यर्थः । तेजसामपि भासकतयेति शेषः । यत्स्वानुभूत्यैकमात्रं यत्तत्प्रसिद्धं सत् तदसाविति प्राग्वत् ॥ २२ ॥ २३ ॥ स वीतहव्य इति उक्तक्रमेण मुक्तदृशा नभःस्वरूपादपि निर्मलस्थितिः सन्नजमजरमनाद्येकममलं निष्कलं पदं भूत्वा स्थितः । बद्धदृशा तु क्षणेन ईश्वरः सन् स्वकार्यभेदैरनेकं सकलं च भूत्वा स्थित इत्यर्थः ॥ २४ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे वीतहव्यनिर्वाणो नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥

वीतहव्ये विमुक्ते तत्प्राणानां हृदि सल्लयः ।
वर्ण्यते देहसंशोषः कलानां कारणे लयः ॥ १ ॥

एवमुक्तरीत्या अपुनर्मनने आत्यन्तिकमनोनाशे सति ॥ १ ॥ परिणामिनि परिनिष्ठिते सति । अपरिणामिनीति वा छेदः ॥ २ ॥ मार्गशीर्षस्यान्ते हेमन्ते पद्मवत् ॥ ३ ॥ सर्वदेहव्यापिनां प्राणानां हृद्युपसंहारमाह—**तस्येति** । तस्य असवः प्राणा देहद्रुमस्यान्तःस्थं तत्तन्नाडीस्थानं त्यक्त्वा हृल्लक्षणं नीडं प्रति आययुः । देहद्रुमान्तःस्थं हृन्नीडं त्यक्त्वा बहिराययुरिति तु न व्याख्येयम् । 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुतिविरोधापत्तेः सर्वकर्मवासनानाशेनोत्क्रमणे बीजप्रयोजनयोरभावाच्चेति । विहगायन्तो विहगवदाचरन्तः । लोहितादित्वात्क्यष् । यन्त्रेभ्य उन्मुक्ताः शिला इव ॥ ४ ॥ इति तु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति तद्यथा पेशस्कारी पेशसो मात्रामुपादाय' इत्यादिश्रुत्या 'तदनन्तरप्रतिपत्तौ रंहति परिष्वक्तः प्रश्ननिरूपणाभ्याम्' इति बादरायणोक्तन्यायाच्च पूर्वजन्मानुष्ठिताग्निहोत्रादिकर्मसमवाय्यप्शब्दवाच्यसोमाज्यपयःप्रभृतिभूतमात्रासहितस्यैव लिङ्गस्य चन्द्रमण्डलारूढस्य भोगान्ते आकाशादिक्रमेण पृथिव्यां व्रीहियवपुरुषयोषिदनुप्रवेशेन पुरुषाकारताप्राप्त्यवगमात्तासां भूतमात्राणां कारणानुप्रवेशमाह—**भूतेष्वेवेति** । सकलानि प्राणादिनामान्तषोडशकलासहितानि । यस्तु पितृमातृमलजः स्थूलतरांशः स तत्रैव स्थित इत्याह—**मांसेति** ॥ ५ ॥ चित् लिङ्गे बिम्बिता जीवचित्स्वबिम्बभूते चिदर्णवे प्रविष्टेव । धातवस्त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि । धातुषु स्वोपादानेषु ॥ ६ ॥ उपसंहरति—**एषेति** ॥ ७ ॥ चार्व्या रमणीयया । 'वोतो गुणवचनात्' इति ङीष् ॥ ८ ॥ इदानीं भगवान्वसिष्ठः कृपातिशयेनोक्तोच्यमानवक्ष्यमाणग्रन्थस्य चिरायुर्भिः सर्वदर्शिभिरस्मदादिभिः सर्वप्रकारैरसकृत्कृतानां विचाराणां लोकशास्त्रश्रुतिभिरन्वयव्यतिरेकाभ्यां च परीक्ष्य भूयोभूयो दर्शनस्य च ऐकात्म्यदृष्टिमवलम्ब्य ज्ञानप्रतिष्ठाप्राप्तिरेव फलं नातः परं पुरुषैः संपाद्यमस्तीति निर्णीतमिति विश्वासदार्ढ्यायाह—**यदेतदित्यादिना** ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ शातितः खण्डितः अशेषः संस्कार-

शातिताशेषचित्ताद्रिर्वीतहव्यो मुनीश्वरः ॥ १३
वीतहव्यात्मिका संवित्संकल्पजगतीति सा ।
अनुभूतवती दृश्यमिदमेव च तज्जगत् ॥ १४
वीतहव्यो मनोमात्रं मनोहंत्वमिवैन्द्रियः ।
मनो जगदिदं कृत्स्नमन्यतानन्यते तु के ॥ १५

अधिगतपरमार्थः क्षीणरागादिदोषः
सकलमलविकारोपाधिसङ्गाद्यपेतः ।
चिरमनुसृतमन्तः स्वं स्वभावं विवेकी
पदममलमनन्तं प्राप्तवान्शान्तशोकः ॥ १६

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे वीतहव्यविश्रान्तिर्नामाष्टाशीतितमः सर्गः ॥ ८८ ॥

---

## एकोननवतितमः सर्गः ८९

श्रीवसिष्ठ उवाच ।
वीतहव्यवदात्मानं नीत्वा विदितवेद्यताम् ।
वीतरागभयोद्वेगस्तिष्ठ राघव सर्वदा ॥ १
त्रिंशद्वर्षसहस्राणि विजहार यथासुखम् ।
वीतहव्यो वीतशोकस्तथा विहर राघव ॥ २
अन्ये च राजन्मुनयो ज्ञातज्ञेया महाधियः ।
यथावसन्स्वराष्ट्रे त्वं तथैवास्व महामते ॥ ३
सुखदुःखक्रमैरात्मा न कदाचन गृह्यते ।
सर्वगोऽपि महाबाहो किं मुधा परिशोचसि ॥ ४
बहवो विदितात्मानो विहरन्तीह भूतले ।
न केचन वशं यान्ति दुःखस्याङ्ग भवानिव ॥ ५
स्वस्थो भव भवोदारः समो भव सुखी भव ।
सर्वगस्त्वं त्वमात्मैव तव नास्ति पुनर्भवः ॥ ६
हर्षामर्षविकाराणां जीवन्मुक्ता भवादृशाः ।
न केचन वशं यान्ति मृगेन्द्राः शिखिनामिव ॥ ७

श्रीराम उवाच ।
अनेनैव प्रसङ्गेण संशयोऽयं ममोदितः ।
शरत्काल इवाम्भोदं तं मे त्वं तनुतां नय ॥ ८
जीवन्मुक्तशरीराणां कथमात्मविदां वर ।
शक्तयो नेह दृश्यन्ते आकाशगमनादिकाः ॥ ९
श्रीवसिष्ठ उवाच ।
आकाशगमनादीनि यान्येतानि रघूद्वह ।
प्रमाणिताः पदार्थानां सहजाः खलु शक्तयः ॥ १०
यद्विचित्रं क्रियाजालं दृश्यते गम्यते पुनः ।
राम वस्तुस्वभावोऽसौ न तदात्मविदां मतम् ॥ ११
अनात्मविदमुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यकर्मक्रियाकालशक्त्या प्राप्नोति राघव ॥ १२
नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्मवान्स्वयम् ।
आत्मनात्मनि संतृप्तो नाविद्यामनुधावति ॥ १३
ये केचन जगद्भावास्तानविद्यामयान्विदुः ।

---

शेषेणाप्यनवशेषितश्चित्ताद्रिर्येन तथाविधोऽभूरिति शेषः ॥१३॥ ननु वीतहव्येन स्वहृदि संकल्पमयं जगत्तत्र गुणत्वं चानुभूतमित्युक्तं तज्जगदन्तर्गतं सूर्यं प्रविश्य तत्रत्यपिङ्गलद्वारा एतज्जगद्रूपप्रतिष्ठस्वदेहोद्धारः कथं कृतः । नहि स्वाप्रकुद्दालैर्जाग्रन्निधिखननं दृष्टमिति रामाशङ्कां लिङ्गैरालक्ष्याह—**वीतहव्ये**ति । सा वीतहव्यात्मिका संवित् स्वहृदयोपलक्षिते ब्रह्मणि इदमस्मदादिसाधारणमेव दृश्यं स्वसंकल्पजगती इत्यनुभूतवती नापूर्वमित्यर्थः ॥१४॥ इतश्चेदमेव तज्जगदित्याह—**वीतहव्य** इति । ऐन्द्रियः अस्मदादिचक्षुरादिदृश्यो वीतहव्योऽस्मदीयमनोमात्रम् । यतोऽस्मन्मन एवाहमिव त्वमिव भासते । मन एवेदं कृत्स्नं जगत्तत्रान्यतानन्यते के । नहि वन्ध्याभेदेन तत्पुत्रा भिद्यन्ते, न भिद्यन्ते एवेत्यर्थः ॥१५॥ एवं रामं समाधाय प्रकृतमेवार्थमाह—**अधिगते**ति । सकलेभ्योऽविद्याकामकर्मादिमलेभ्यस्तत्प्रयुक्तेन्द्रियविकारेभ्यो देहत्रयोपाधिभ्यस्तत्प्रयुक्तप्रियसङ्गादिभ्यश्चापेतो विवेकी स वीतहव्यश्चिरं चित्तशुद्ध्युपायानुष्ठानैः श्रवणमनननिदिध्यासनसाक्षात्कारसमाधिभूमिकाभ्यासैरन्तः स्वहृद्यनुभूतमनुसरणेनाभिमुखीकृतं स्वस्वभावभूतममलमनन्तं मोक्षपदं प्राप्तवानित्यर्थः ॥१६॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे वीतहव्यविश्रान्तिर्नामाष्टाशीतितमः सर्गः ॥८८॥

अनिच्छाशान्तमोहानां नभोगत्यादिसिद्धिषु ।
श्वापदाद्यैरधृष्यत्वं तत्तनोश्चात्र कीर्त्यते ॥ १ ॥

आत्मानं स्वम् । 'नीवह्योर्हरतेश्च' इति कात्यायनवचनाद्द्विकर्मता ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अङ्गेति संबोधनम् ॥५॥ उदारः अन्तः सर्वत्यागशीलः ॥ ६ ॥ शिखिनां मयूराणाम् ॥ ७ ॥ ॥ ८ ॥ शरीराणामित्युक्तेः सति प्रारब्धे वीतहव्यस्य विद्याधरादिभोग इव मानस्यः सिद्धयः संभवन्त्येवेत्याशयः ॥ ९ ॥ प्रमाणिताः प्रमाणैरुपलब्धाः । ता अग्नेरूर्ध्वज्वलनमिव देवयोनीनां स्वभावसिद्धाः ॥ १० ॥ नभोगमनादिक्रियाजालं वस्तुस्वभावस्तत्तद्योनिदेहस्वभावः, मशकादीनामपि नभोगतिशक्तिदर्शनादिति भावः । मतं वाञ्छितम् ॥११॥ तर्हि मनुष्याणां योगसिद्ध्या नभोगमनादिप्राप्तिः कथं तत्राह—**अनात्मविदि**ति । मण्यौषधादिद्रव्यशक्त्या मन्त्रशक्त्या योगाभ्यासादिक्रियाशक्त्या तत्परिपाककालशक्त्या च कदाचिदेव प्राप्नोति । दृष्टान्तार्थं वा कालग्रहणम् । यथा पिपीलिका ग्रीष्मान्तकालशक्त्या पक्षोद्गमान्नभोगतिं प्राप्नोति तद्वत् ॥ १२ ॥ एष नभोगत्यादिर्न विषयोऽभिलाषयोग्यस्तुच्छत्वात् । आत्मवान् लब्धात्मा । अविद्या-

१ संतानसंवित् इति पाठः.

२ व्याख्यानुसारेण मन्त्रक्रियेति पाठो युक्त इत्यवगम्यते.

कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति ॥ १४
अविद्यामपि ये युक्त्या साधयन्ति सुखात्मिकाम्।
ते ह्यविद्यामया एव नत्वात्मज्ञास्तथाक्रमाः ॥ १५
तत्त्वज्ञोऽवाप्यतत्त्वज्ञो यः कालद्रव्यकर्मभिः।
यथाक्रमं प्रयतते तस्योर्ध्वत्वादि सिध्यति ॥ १६
आत्मवानिह सर्वस्मादतीतो विगतैषणः।
आत्मन्येव हि संतुष्टो न करोति न चेहते ॥ १७
न तस्यार्थो नभोगत्या न सिध्या न च भोगकैः।
न प्रभावेण नो मानैर्नाशामरणजीवितैः ॥ १८
नित्यतृप्तः प्रशान्तात्मा वीतरागो विवासनः।
आकाशसदृशाकारस्तज्ज्ञ आत्मनि तिष्ठति ॥ १९
अशङ्कितोपयातेन दुःखेन च सुखेन च।
तृप्यत्यपगतासङ्गो जीवेन मरणेन च ॥ २०
समुद्रः सरितेवान्तः क्रमसंप्राप्तवस्तुना।
समेन विषमेणापि तिष्ठत्यात्मानमर्चयन् ॥ २१
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ २२
यस्तु वाऽभावितात्मापि सिद्धिजालानि वाञ्छति।
स सिद्धिसाधकैर्द्रव्यैस्तानि साधयति क्रमात् ॥ २३
सिद्ध्यतीत्थमिदं युक्त्यैवेत्ययं नियतेः क्रमः।
त्र्यक्षादिभिः सुरवरैर्व्यर्थीकर्तुं न शक्यते ॥ २४
स्वभाव एष वस्तूनां स्वतःसिद्धिर्हि नान्यतः।
नियतिं न जहात्येव शशाङ्क इव शीतताम् ॥ २५
सर्वज्ञोऽपि बहुज्ञोऽपि माधवोऽपि हरोऽपि च।
अन्यथा नियतिं कर्तुं न शक्तः कश्चिदेव हि ॥ २६
द्रव्यकालक्रियामन्त्रप्रयोगाणां स्वभावजाः।
एतास्ताः शक्तयो राम यद्व्योमगमनादिकम् ॥ २७
यथा विषाणि निघ्नन्ति मदयन्ति मधूनि च।
वमयन्ति च शुक्तानि मदनानि फलानि च ॥ २८
तथा स्वभाववशतो द्रव्यकालक्रियाक्रमाः।
नियतं साधयन्त्याशु प्रयोगं युक्तियोजिताः[1] ॥ २९
एतस्मात्समतीतस्य त्यक्ताविद्यस्य राघव।
आत्मज्ञानस्य नास्त्यत्र कर्तृताकर्तृतानघ ॥ ३०
द्रव्यदेशक्रियाकालयुक्तयः साधुसंविदः।
परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ॥ ३१
यस्येच्छा विद्यते काचित्स सिद्धिं साधयत्यलम्।
आत्मज्ञस्य तु पूर्णस्य नेच्छा संभवति क्वचित् ॥ ३२
सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः।
तद्विरुद्धा कथं कस्मादिच्छा संजायतेऽनघ ॥ ३३
यथोदेति च यस्येच्छा स तया यतते तथा।
यथाकालं तदाप्नोति ज्ञो वाप्यज्ञतरोऽपि वा ॥ ३४
वीतहव्येन यतितं नो ज्ञानेच्छेन किंचन।
ज्ञानेच्छेनाशु यतितं प्रोत्थितोऽसौ यथा वने ॥ ३५
एवं कालक्रियाकर्मद्रव्ययुक्तिस्वभावजाः।
यथेच्छमेव सिध्यन्ति सिद्धयः स्वाः क्रमार्जिताः ॥ ३६
याः फलावलयो येन संप्राप्ताः सिद्धिनामिकाः।
तास्तेनाधिगता राम निजात्प्रयतनद्रुमात् ॥ ३७

---

माविद्यकं तुच्छफलम् ॥ १३ ॥ १४ ॥ युक्त्या योगाभ्यासादिश्रमसहस्रेण। तथाक्रमास्तथाविधाः ॥ १५ ॥ तर्हि किं तत्त्वज्ञानां तत्संपादनशक्तिर्नास्त्येव, नेत्याह—**तत्त्वज्ञ** इति। कालेन चिरकालप्रयत्नेन द्रव्यकर्मभिर्यथाशास्त्रोक्तक्रमं य एव प्रयतते तस्य ऊर्ध्वत्वं नभोगतिस्तदादि सिध्यति ॥ १६ ॥ ॥ १७ ॥ प्रभावेण सर्वाधिपत्यनिग्रहानुग्रहसामर्थ्येन। मानैः स्वोत्कर्षख्यापनगर्वैः ॥ १८ ॥ १९ ॥ तृप्यति स्वाभाविकीं तृप्तिं न जहाति। जीवेन जीवनेन ॥ २० ॥ समेन स्वानुकूलेन विषमेण प्रतिकूलेनापि प्रारब्धक्रमसंप्राप्तभोग्यवस्तुना। समुद्रपक्षे ओघतृणकाष्ठादिवस्तुना। अर्चयन् अखण्डाकारवृत्तिपुष्पैः पूजयन् ॥ २१ ॥ अर्थव्यपाश्रयः प्रयोजनोपजीवनम् ॥ २२ ॥ अभावितात्मा आत्मज्ञानलेशशून्योऽपि ॥ २३ ॥ मणिमन्त्रादियुक्त्यैव आकाशगमनादि इत्थं सिध्यतीति तत्तच्छास्त्रप्रसिद्धो नियतेः क्रमः तत्तन्नियतिकर्तृभिस्त्र्यक्षादिभिरपि व्यर्थीकर्तुं न शक्यते ॥ २४ ॥ या तु देवादीनां स्वतः खेचरत्वादिसिद्धिरेष वस्तुस्वभावः, अतएव सा उत्पत्तिमारभ्य यावज्जीवं स्थायिनीत्याह—**न जहात्येवेति** ॥ २५ ॥ २६ ॥ २७ ॥ विषघ्नौषधादिद्रव्यशक्तिवदेव मणिमन्त्रादिशक्तिरपि स्वस्वकार्यसमर्थेत्याह—**यथेति**। विषघ्नद्रव्यमणिमन्त्रादिशक्त्या यथा विषाणि निघ्नन्ति। मधूनि यथा मदयन्ति। यथा शुक्तानि माक्षिकमधूनि मदनफलानि वा स्वादितानि वमयन्ति उद्गिरणं कारयन्ति ॥ २८ ॥ प्रयुज्यत इति प्रयोगं सिद्धिजातं नियतमवश्यं साधयन्ति। युक्तैर्योगादिकुशलैः पुरुषैर्योजिताः प्रयुक्ताः ॥ २९ ॥ एतस्माद्द्रव्यकालक्रियाक्रमलक्षणादविद्याविषयात्समतीतस्य त्यक्ताविद्यस्य बाधिताज्ञानस्य आत्मज्ञानस्य अत्र नभोगमनादिसिद्धिजाले कर्तृता कारणता अकर्तृता विरोधिता वा नास्तीत्यर्थः ॥ ३० ॥ यथा आत्मज्ञानस्य क्रियाफले अनुपयोगस्तथा ज्ञानफले द्रव्यदेशक्रियादेरप्यनुपयोग इत्याह—**द्रव्येति**। साधुसंविदस्तत्त्वज्ञानस्य ॥ ३१ ॥ ३२ ॥ कुतो न संभवति तत्राह—**सर्वेति** ॥ ३३ ॥ निरिच्छोऽपि तत्त्ववित्कौतुकाद्यतते चेत्तस्य भवन्त्येव सिद्धय इत्याशयेनाह—**यथेति** ॥ ३४ ॥ वीतहव्यस्य तर्हि सिद्धयः कुतो न जातास्तत्राह—**वीतहव्येनेति**। सिद्धीच्छया नो यतितम्। तत्कुतस्तत्राह—**ज्ञानेच्छेनेति**। ज्ञानेच्छया इतरेच्छाप्रतिबन्धादित्यर्थः। ज्ञानेच्छया तु तेन यतितमेव। यथा असौ वने ज्ञानाभ्यासाय प्रोत्थित उद्युक्त इति प्राग्वर्णितमेवेत्यर्थः ॥ ३५ ॥ ३६ ॥ सिद्धिविषये ज्ञानविषये वा अनुपरतस्य प्रयत्नस्यावश्यफलवत्ता मुमुक्षुव्यवहारप्रकरणे विस्तरेण प्रपञ्चितेत्याह—**याः फलेति**। यच्छब्दो

---

[1] युक्तयोजिताः इति टीकानुगुणः पाठः.

महतां नित्यतृप्तानां तज्ज्ञानां भावितात्मनाम् ।
ईहितं संप्रयातानां नोपकुर्वन्ति सिद्धयः ॥ ३८

श्रीराम उवाच ।

अयं मे संशयो ब्रह्मन्वीतहव्यस्य सा तनुः ।
क्रव्यादैर्न कथं भुक्ता कथं क्लिन्ना न भूतले ॥ ३९
तदैव वीतहव्योऽसौ कथं वनगतः प्रभो ।
विदेहमुक्ततां शीघ्रं यथावदिति मे वद ॥ ४०

श्रीवसिष्ठ उवाच ।

या संविद्वलिता साधो वासनामलतन्तुना ।
सुखदुःखदशादाहभागिनी भवतीह सा ॥ ४१
निर्मुक्तवासना शुद्धसंविन्मात्रमयी तु सा ।
तनुस्तिष्ठति तच्छेदे शक्ता नेह हि केचन ॥ ४२
शृणु युक्त्या कया योगी तनुच्छेदादिविभ्रमैः ।
नाक्रम्यते महाबाहो बहुवर्षशतैरपि ॥ ४३
चेतः पदार्थे पतति यस्मिन्यस्मिन्यदा यदा ।
तन्मयं तद्भवत्याशु तस्मिंस्तस्मिंस्तदा तदा ॥ ४४
तथा दृष्टारि हि मनो विकारमुपगच्छति ।
दृष्टमित्रं सुहृद्यत्वं स्वयमित्यनुभूयते ॥ ४५
रागद्वेषविहीने तु पथिके पादपे गिरौ ।
भवत्यरागद्वेषं च स्वयमित्यनुभूयते ॥ ४६
मृष्टे लौल्यमुपादत्ते दुर्भोज्ये याति निःस्पृहम् ।
वैरस्यं याति कटुनि स्वयमित्यनुभूयते ॥ ४७
समसंविद्विलासाढ्ये यद्यदा यतिदेहके ।
हिंस्रचेतः पतत्याशु समतामेति तत्तदा ॥ ४८
समसङ्गविमुक्तत्वाच्छेदादौ न प्रवर्तते ।
पान्थो व्यर्थं पथि ग्रामे यथा ग्रामीणकर्मणि ॥ ४९
योगिदेहसमीपात्तु गत्वा प्राप्नोति हिंस्रताम् ।
यद्यद्भवति तत्राशु तथारूपं न संशयः ॥ ५०
इति हिंस्रैर्मृगव्याघ्रसिंहकीटसरीसृपैः ।
न च्छिन्ना वीतहव्यस्य तनुर्भूतलशालिनी ॥ ५१
सर्वत्र विद्यते संवित्काष्ठलोष्टोपलादिके ।
सत्तासामान्यरूपेण संस्थिता मूकबालवत् ॥ ५२
पोप्लूयमाना तरला केवलं परिदृश्यते ।
तन्वी पुर्यष्टकेष्वेव प्रतिबिम्बजलेष्विव ॥ ५३
तेन भूजलवाय्वग्निसंवित्त्या समरूपया ।
निर्विकारं तनुर्नीता वीतहव्यस्य राघव ॥ ५४
अन्यच्च शृणु मे राम स्पन्दो नाशस्य कारणम् ।
विकारः स च चित्तोत्थो वातजो वा जगत्स्थितौ ॥ ५५
प्राणानां प्राणनं स्पन्दस्तच्छान्तौ ते दृषत्समाः ।
यतः स्थिता धारणया तेनानष्टास्य सा तनुः ॥ ५६
सबाह्याभ्यन्तरं स्पन्दश्चित्तजो वातजोऽथवा ।
न यस्य विद्यते तस्य दूरस्थौ प्रकृतिक्षयौ ॥ ५७

वीप्सितो द्रष्टव्यः । संप्राप्ताः दृश्यन्त इति शेषः ॥ ३७ ॥ ईहितं सर्वाभिलषितं परमप्रेमास्पदमात्मसुखमिति यावत् ॥ ३८ ॥ क्लिन्ना पङ्कादिक्लेदान्न विशीर्णेत्यर्थः ॥ ३९ ॥ तदा भूप्रवेशकाले एव । इति एतत्प्रश्नद्वयोत्तरं यथावद्वद ॥ ४० ॥ तत्र प्रथमप्रश्नस्योत्तरं वक्तुं भूमिकां रचयति—येति । या अज्ञसंविद्देहाहंभाववासनारूपेण रागादिमलदूषितेन तन्तुना वलिता दृढं वेष्टिता भवति सैव देहच्छेदभेदादिप्रयुक्तसुखदुःखदशालक्षणदाहभागिनीत्यर्थः ॥ ४१ ॥ सा जीवन्मुक्ततनुर्बाधितत्वादधिष्ठानशुद्धसंविन्मात्रमयी तिष्ठति । तस्य संविन्मात्रस्य च्छेदे केऽपि क्रव्यादादयो न शक्ताः । 'अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च' इति भगवद्वचनादिति भावः ॥ ४२ ॥ उपपत्त्यन्तरं वक्तुं प्रतिजानीते—शृणिवति ॥ ४३ ॥ ४४ ॥ तथा हीति संबन्धः । दृष्टः अरिर्द्वेष्टा येन तथाविधं मनः अरिद्वेषप्रतिबिम्बमिव द्वेषादिविकारमुपगच्छति । दृष्टमित्रं तु मनस्तदीयहृदयप्रीतिप्रतिबिम्बमिव सुष्ठु हृद्यत्वमुपगच्छति । इत्ययमर्थः सर्वैः स्वयं प्रत्यक्षमनुभूयत इत्यर्थः ॥ ४५ ॥ अतएव एकस्य रागद्वेषशून्यत्वे अन्यस्यापि न दृश्यत इत्याह—रागेति । पथिके उदासीनपुरुषे पादपे गिरौ च विषये मनः अरागद्वेषं भवतीत्यर्थः ॥ ४६ ॥ एवमचेतनेषु भोज्यादिष्वपि प्रीत्यप्रीत्यौदासीन्यानि तद्गतगुणदोषतदुभयाभावप्रतिबिम्बनादेव मनसि प्रसिद्धानीत्याशयेनाह—मृष्टे इति । दुर्भोज्ये नीरसे निःस्पृहं स्पृहाभावम् । अर्थाभावेऽव्ययीभावे ह्रस्वः । वैरस्याभावस्याप्युपलक्षणमेतत् ॥ ४७ ॥ अस्त्वेवं प्रकृते किं ततस्तत्राह—समेति । समो रागद्वेषवैषम्यशून्यो यः संविद्विलासस्तेन आढ्ये संपन्नतमे यतिदेहके योगिशरीरे यत् हिंस्राणां क्रव्यादानां चेतो यदा पतति तत् तदा आशु तत्कालमेव योगिसंवित्समताप्रतिबिम्बनादिव समतामेति । अतो न तत्कृतहिंसाप्रसक्तिरित्यर्थः । तथाचाहिंसाप्रतिष्ठां प्रस्तुत्य पतञ्जलिनोक्तं 'तत्संनिधौ वैरत्यागः' इति ॥ ४८ ॥ हिंस्रोऽपि समस्य समदर्शिनो यतेः सङ्गेन द्वेषादिभ्यो विमुक्तत्वात्कस्यापि च्छेदनादौ न प्रवर्तते । यथा ग्रामीणकर्मणि ग्रामसन्निहितवनलताच्छेदादौ पान्थो न प्रवर्तते तद्वत् ॥ ४९ ॥ योगिदेहसमीपादन्यत्र गत्वा तत्र दोषादियुक्तं यद्यज्जन्तुजातं भवति तत्तदनुरूपां हिंस्रतां प्राप्नोति ॥ ५० ॥ इति एतस्मात्कारणद्वयात् ॥ ५१ ॥ 'कथं क्लिन्ना न भूतले' इति प्रश्नस्योत्तरमाह—सर्वत्रेत्यादिना ॥ ५२ ॥ तर्हि पुर्यष्टकेष्वेव कथं तदुपलम्भस्तत्राह—पोप्लूयमानेति । प्लवमानेव तरला परिणामसहस्रविषमा तन्वी परिच्छिन्ना च सा परिदृश्यते । असमाहितचित्तैरिति शेषः ॥ ५३ ॥ तेन वीतहव्यस्य पुर्यष्टकेन तत्त्वबोधसमाधिभ्यां समरूपया अविषमस्वभावं नीतया भूजलादिसंवित्त्या तनुर्निर्विकारं सर्वविकारशून्यब्रह्मभावं नीता, अतो न विकारं गतेत्यर्थः ॥ ५४ ॥ अन्यद्युक्त्यन्तरमपि शृणु । तदेवाह—स्पन्द इत्यादिना । जगत्स्थितौ लोकव्यवहारे प्रसिद्ध इत्यर्थः ॥ ५५ ॥ ते प्राणा देहे दृषत्समा दृढीभूता यतो हेतोः स्थितास्तेन हेतुना ॥ ५६ ॥ बाह्यो हस्तपादादि-

सबाह्याभ्यन्तरे शान्ते स्पन्दे तत्त्वविदां वर ।
धातवः संस्थितिं देहे न त्यजन्ति कदाचन ॥ ५८
संशान्ते देहप्रस्पन्दे चित्तवातमये तथा ।
धातवो मैरवं स्थैर्यं यान्ति संस्तम्भितात्मकाः ॥ ५९
तथा च दृश्यते लोके स्पन्दशान्तौ दृढा स्थितिः ।
दारूणामिव धीराणां शवाङ्गानामचोपता ॥ ६०
इति वर्षसहस्राणि देहा जगति योगिनाम् ।
न क्लियन्ते न भिद्यन्ते मग्नवज्जलदा इव ॥ ६१
तदैव वीतहव्योऽसौ शृणु किं नोपशान्तवान् ।
देहमुत्सृज्य तत्त्वज्ञो ज्ञातज्ञेयवतां वरः ॥ ६२
ये हि विज्ञातविज्ञेया वीतरागा महाधियः ।
विच्छिन्नग्रन्थयः सर्वे ते स्वतन्त्रास्तनौ स्थिताः ॥ ६३
दैवं वापि च कर्माणि प्राक्तनान्यैहिकानि च ।
वासना वा न तेषां तच्चेतो नियमयन्त्यलम् ॥ ६४
तेन तत्त्वविदां तात काकतालीयवन्मनः ।
यद्यद्भावयति क्षिप्रं तत्तदाशु करोत्यलम् ॥ ६५
काकतालीययोगेन वीतहव्यस्य संविदा ।
सांप्रतं जीवितं बुद्धं तदेवाशु स्थिरीकृतम् ॥ ६६
यदा तु तस्य प्रतिभा विदेहोन्मुक्ततां गता ।
तदा विदेहमुक्तोऽभूदसौ स्वातन्त्र्यसंस्थितिः ॥ ६७
विगतवासनमाशु विपाशता-
मुपगतं मन आत्मतयोदितम् ।
यदभिवाञ्छति तद्भवति क्षणा-
त्सकलशक्तिमयो हि महेश्वरः ॥ ६८

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे सद्विलासविचारयोगोपदेशो नामैकोननवतितमः सर्गः ८९

## नवतितमः सर्गः ९०

श्रीवसिष्ठ उवाच ।

यदा ह्यस्तंगतप्रायं जातं चित्तं विचारतः ।
तदा हि वीतहव्यस्य जाता मैत्र्यादयो गुणाः ॥ १

श्रीराम उवाच ।

विचाराभ्युदयाच्चित्तस्वरूपेऽन्तर्हिते मुने ।
मैत्र्यादयो गुणा जाता इत्युक्तं किं त्वया प्रभो ॥ २
ब्रह्मण्यस्तं गते चित्ते कस्य मैत्र्यादयो गुणाः ।
क्व वा परिस्फुरन्तीति वद मे वदतां वर ॥ ३

श्रीवसिष्ठ उवाच ।

द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
जीवन्मुक्तः सरूपः स्यादरूपो देहमुक्तिजः ॥ ४
चित्तसत्तेह दुःखाय चित्तनाशः सुखाय तु ।
चित्तसत्तां क्षयं नीत्वा चित्तं नाशमुपानयेत् ॥ ५
तामसैर्वासनाजालैर्व्याप्तं यज्जन्मकारणम् ।
विद्यमानं मनो विद्धि तद्दुःखायैव केवलम् ॥ ६
प्राक्तनं गुणसंभारं ममेति बहु मन्यते ।
यत्तु चित्तमतत्त्वज्ञं दुःखितं जीव उच्यते ॥ ७

राभ्यन्तरः प्राणादिस्तत्सहिते देहे । प्रकृतिर्वृद्ध्यादिः क्षयः अपक्षयादिश्च ॥ ५७ ॥ धातवस्त्वगादयः । संस्थितिं पूर्वावस्थाम् ॥ ५८ ॥ मैरवं मेरुसंबन्धि । मेरुतुल्यमिति यावत् ॥ ५९ ॥ स्पन्दयतीति स्पन्दः प्राणस्तच्छान्तौ । शवाङ्गानां च अचोपता अकम्पता । 'चुप मन्दायां गतौ' भावे घञ् ॥ ६० ॥ इति अनया युक्त्या । जलदा इव न क्लियन्ते भूमग्नशिलावन्न भिद्यन्ते इति व्युत्क्रमेणान्वयः ॥ ६१ ॥ चरमप्रश्नमनूद्योत्तरमाह—**तदैवे**त्यादिना । ज्ञातं ज्ञेयं ब्रह्म यैरुपायैस्तद्वतां परिज्ञातात्मवतां वा ॥ ६२ ॥ स्वतन्त्रा अपराधीनाः । 'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति'इति श्रुतेः ॥ ६३ ॥ स्वातन्त्र्यमेवोपपादयति—**दैव**मिति । प्राक्तनकर्मफलप्रदानोन्मुख ईश्वरो दैवं कर्मप्राधान्यवादे कर्माणि च तेषां प्रारब्धशेषभोगाय प्रवृत्तं चेतो न नियमयन्ति नान्यथा प्रवर्तयितुमीशते ॥ ६४ ॥ काकतालीयवदाकस्मिकं प्रारब्धोपनीतं यद्यज्जीवनं मरणं वा ॥ ६५ ॥ ६६ ॥ यदा तु प्रारब्धसमाप्तौ प्रतिभा संविद्रता भावितवती ॥ ६७ ॥ उक्तमेव संक्षिप्योपसंहरति—**विगते**ति । विपाशतामुपगतमतएव वास्तवात्मस्वभावेनोदितं मनस्तदुपाधिर्जीव एव । हि यस्मात्सकलशक्तिमयो महेश्वरः शिव एव स्वयं जात इत्यर्थः । तथाचाहुः 'तुषेण बद्धो व्रीहिः स्यात्तुषाभावे तु तण्डुलः । पाशबद्धः सदा जीवः पाशमुक्तः सदाशिवः ॥' इति ॥ ६८ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सद्विलासविचारयोगोपदेशो नामैकोननवतितमः सर्गः ॥ ८९ ॥

मैत्र्यादिगुणसंपन्नस्तथा निष्कलतां गतः ।
द्विविधश्चित्तनाशोऽत्र विस्तरेणोपवर्ण्यते ॥ १ ॥

अस्तंगतप्रायं भर्जितबीजवदङ्कुरशक्त्या अस्तं गतम्, प्रतिभासतस्तु नास्तं गतमित्यर्थः ॥ १ ॥ इति त्वया किं किमभिप्रायमुक्तम् ॥ २ ॥ अस्तं गते बाधिते सति । कस्य किं बाधितस्य उत अधिष्ठानस्य क्व वा किंचिदाभासे उत बिम्बचितिं स्फुरन्ति । नहि बाधिताया मृगतृष्णानद्या मरुभूमेर्वा शैत्यमाधुर्यपावनत्वादयो गुणाः संभवन्ति न वा तद्भासकं किंचिदस्तीति भावः ॥ ३ ॥ सरूपः स्फटिकभित्तिगतस्वप्रतिबिम्बे पुरुषान्तरभ्रमाभासवत्प्रतिभासमानतद्रूपसहितस्तद्रहितश्च ॥ ४ ॥ ५ ॥ चित्तस्य सत्ता तर्हि कीदृशी तामाह—**तामसै**रिति । तामसैः अबाधिताज्ञानप्रभवैः ॥ ६ ॥ प्राक्तनमनाद्यभ्याससिद्धं देहेन्द्रिय-

विद्यमानं मनो यावत्तावद्दुःखक्षयः कुतः ।
मनस्यस्तं गते जन्तोः संसारोऽस्तमुपागतः ॥ ८
दुःखमूलमवष्टब्धमस्मिन्नेव विनिश्चलम् ।
विद्यमानं मनो विद्धि दुःखवृक्षवनाङ्कुरम् ॥ ९
श्रीराम उवाच ।
नष्टं कस्य मनो ब्रह्मन्नष्टं वा कीदृशं भवेत् ।
कीदृशश्चास्य नाशः स्यात्सत्ता नाशस्य कीदृशी १०
श्रीवसिष्ठ उवाच ।
चेतसः कथिता सत्ता मया रघुकुलोद्वह ।
अस्य नाशमिदानीं त्वं शृणु प्रश्नविदां वर ॥ ११
सुखदुःखदशा धीरं साम्यान्न प्रोद्धरन्ति यम् ।
निःश्वासा इव शैलेन्द्रं चित्तं तस्य मृतं विदुः ॥ १२
अयं सोऽहमयं नाहमिति चिन्ता नरोत्तमम् ।
खर्वीकरोति यं नान्तर्नष्टं तस्य मनो विदुः ॥ १३
आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः ।
यं नयन्ति न वैरूप्यं तस्य नष्टं विदुर्मनः ॥ १४
एष साधो मनोनाशो नष्टं चेह मनो भवेत् ।
चित्तनाशदशा चैषा जीवन्मुक्तस्य विद्यते ॥ १५
मनस्तां मूढतां विद्धि यदा नश्यति सानघ ।
चित्तनाशाभिधानं हि तदा सत्त्वमुदेत्यलम् ॥ १६
तस्य सत्त्वविलासस्य चित्तनाशस्य राघव ।
जीवन्मुक्तस्वभावस्य कैश्चिच्चित्ताभिधा कृता ॥ १७
मैत्र्यादिभिर्गुणैर्युक्तं भवत्युत्तमवासनम् ।
भूयो जन्मविनिर्मुक्तं जीवन्मुक्तमनोऽनघ ॥ १८
व्याप्तं वासनया यत्स्याद्भूया जननमुक्तया ।
जीवन्मुक्तमनःसत्ता राम तत्सत्त्वमुच्यते ॥ १९
संप्रत्येवानुभूतत्वात्सत्त्वाख्या तन्वसंयुतः ।
सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥ २०
मैत्र्यादयोऽथ मुदिताः शशाङ्क इव दीप्तयः ।
जीवन्मुक्तमनोनाशे सर्वदा सर्वथा स्थिताः ॥ २१
जीवन्मुक्तमनोनाशे सत्त्वनाम्नि हिमालये ।
वसन्त इव मञ्जर्यः स्फुरन्ति गुणसंपदः ॥ २२
अरूपस्तु मनोनाशो यो मयोक्तो रघूद्वह ।
विदेहमुक्त एवासौ विद्यते निष्कलात्मकः ॥ २३
समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ।
विदेहमुक्ते विमले पदे परमपावने ॥ २४
विदेहमुक्तविषये तस्मिन्सत्त्वक्षयात्मके ।
चित्तनाशे विरूपाख्ये न किंचिदपि विद्यते ॥ २५
न गुणा नागुणास्तत्र न श्रीर्नाश्रीर्न लोलता ।
न चोदयो नास्तमयो न हर्षामर्षसंविदः ॥ २६
न तेजो न तमः किंचिन्न संध्या दिनरात्रयः ।
न दिशो न च वाकाशो नाधो नानर्थरूपता ॥ २७
न वासना न रचना नेहानीहे न रञ्जना ।
न सत्ता नापि वाऽसत्ता नच साध्यं हि तत्पदम् २८
अतमस्तेजसा व्योम्ना वितारेन्द्वर्कवायुना ।
तत्समं शरदच्छेन निःसंध्येनारजस्त्विषा ॥ २९
ये हि पारं गता बुद्धेः संसाराचरणस्य च ।
तेषां तदास्पदं स्फारं पवनानामिवाम्बरम् ॥ ३०
संशान्तदुःखमजडात्मकमेव सुप्त-
मानन्दमन्थरमपेतरजस्तमो यत् ।
आकाशकोशतनवोऽतनवो महान्त-
स्तस्मिन्पदे गलितचित्तलवा वसन्ति ॥ ३१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे चित्तोपदेशविचारयोगोपदेशो नाम नवतितमः सर्गः ॥९०॥

---

विषयादेर्गुणसंभारं धर्मजातमात्मसंसर्गाध्यासान्ममेत्यभिमन्यते ॥ ७ ॥ ८ ॥ अस्मिन्नज्ञजन्तावेव वासनाप्ररोहजालैरवष्टब्धं दृढप्रतिष्ठितं विद्यमानं मनो दुःखतरोर्मूलं विद्धि । दुःखवृक्षवनस्य अङ्कुराः प्ररोहा यस्मात्तथाविधम् ॥ ९ ॥ नाशस्य अभावतां गतस्य सत्ता विद्यमानता व्यवहारक्षमता कीदृशी किंलक्षणा ॥ १० ॥ कथिता 'तामसैर्वासनाजालैः' इत्यादिग्रन्थेन ॥ ११ ॥ यं धीरं बाह्या आभ्यन्तरा वा सुखदशाः साम्यात् समस्वभावपूर्णानन्दैकरसस्वात्मप्रतिष्ठायाः सकाशान्न प्रोद्धरन्ति न चालयन्ति तस्य चित्तं मृतं नष्टं विदुः ॥ १२ ॥ अयं सप्तवितस्तिमितो देहः स प्रसिद्धोऽहम् । अयं तदतिरिक्तः सर्वो नाहम् । इति चिन्ता भावना यं न खर्वीकरोति । न परिच्छिनत्तीत यावत् ॥ १३ ॥ वैरूप्यं मुखवैवर्ण्यम् ॥ १४ ॥ लक्षणोक्तिमुपसंहरति—एष इति ॥ १५ ॥ मनस्तां परमार्थताभ्रान्त्या दृश्यमननयोग्यताम् । सत्त्वं शुद्धसत्त्वस्वभावत्वम् ॥ १६ ॥ कैश्चित्तव्यवहाराभासदर्शिभिः ॥ १७ ॥ तदेव सत्त्वं परिष्कृत्याह—मैत्र्यादिभिर्गुणैर्युक्तं भवति ॥ १८ ॥ वासनया ब्रह्माकारवासनया । सत्त्वनाम्ना व्यवह्रियते ॥ १९ ॥ संप्रति व्युत्थानकाले । प्रतिभासतोऽनुभूतत्वात्सरूपः साकार इव सत्त्वस्य सन्मात्रस्वभावस्याख्या प्राप्त्या च तन्वसंयुतो देहादिपरिच्छेदमस्पृशन्मननीयाभावान्मनोनाशश्चासावित्यर्थः । अनेन 'सत्ता नाशस्य कीदृशी'ति प्रश्नांशः समाहितः ॥ २० ॥ अतएव मैत्र्यादिगुणा अपि प्रतिभासतस्तत्रोपपन्ना इत्याह—मैत्र्यादय इति । मुदिताः प्रसन्नाः ॥२१॥ हिमस्य संतोषशैत्यस्य आलये ॥२२॥ द्वितीयं मनोनाशं दर्शयति—अरूपस्त्विति ॥ २३ ॥ सत्त्वं प्रातिभासिकं मनः ॥ २४ ॥ न किंचिदपि दृश्यम् । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति श्रुतेरित्यर्थः ॥२५॥ उक्तमेव प्रपञ्चयति—न गुणा इत्यादिना ॥ २६ ॥ २७ ॥ सत्ता भावः । असत्ता अभावः ॥ २८ ॥ रजोभिस्त्विषा सूर्यज्योतिषा च रहितेन ॥ २९ ॥ आस्पदं प्रतिष्ठा ॥ ३० ॥ अजडात्मकमेव सत् सुप्तमिवोन्मेषादिक्रियारहितम् । अतनवो विदेहमुक्ताः । तस्मिन्पद गलितः प्राप्ते-



१ संसाराडम्बरस्य च इति पाठः.

# एकनवतितमः सर्गः ९१

श्रीराम उवाच ।

परमाकाशकोशाद्रिरूढलोकान्तरद्रुमम् ।
तारकापुष्पशबलं देवासुरविहंगमम् ॥ १
विद्युन्मञ्जरितोपान्तनीलनीरदपल्लवम् ।
सर्वर्तुरम्यचन्द्रार्कगणरम्यकदन्तुरम् ॥ २
सप्ताब्धिवापीवलितं सरिच्छतमनोहरम् ।
चतुर्दशविधानन्तभूतजातोपजीवितम् ॥ ३
जगत्काननमाक्रम्य स्थितायाः कृतजालकम् ।
ब्रह्मन्संसृतिमृद्वीकालतायाः वितताकृतेः ॥ ४
जरामरणपर्वायाः सुखदुःखफलावलेः ।
आरूढमूलमालाया मोहसेकजलाञ्जलेः ॥ ५
किं बीजमथ बीजस्य तस्य किं बीजमुच्यते ।
अथ तस्यापि किं बीजं बीजं तस्यापि किं भवेत् ॥ ६
सर्वमेतत्समासेन पुनर्बोधविवृद्धये ।
सिद्धये ज्ञानसारस्य वद मे वदतांवर ॥ ७

श्रीवसिष्ठ उवाच ।

अन्तर्लीनघनारम्भशुभाशुभमहाङ्कुरम् ।
संसृतिव्रततेर्बीजं शरीरं विद्धि राघव ॥ ८
शाखाप्रतानगहना फलपल्लवशालिनी ।
तेनेयं भवति स्फीता शरदीव वसुन्धरा ॥ ९
भावाभावदशाकोशं दुःखरत्नसमुद्गकम् ।
बीजमस्य शरीरस्य चित्तमाशावशानुगम् ॥ १०
चित्तादिदमुदेत्युच्चैः सदसच्चाङ्गजालकम् ।
तथा चैतत्स्वयं स्वप्नसंभ्रमेष्वनुभूयते ॥ ११
यथा गन्धर्वसंकल्पात्पुरमेवं हि चेतसः ।
सवातायनमाकारभासुरं जायते वपुः ॥ १२
यदिदं किंचिदाभोगि जागतं दृश्यतां गतम् ।
रूपं तच्चेतसः स्फारं घटादित्वं मृदो यथा ॥ १३
द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना ॥ १४
यदा प्रस्पन्दते प्राणो नाडीसंस्पर्शनोद्यतः ।
तदा संवेदनमयं चित्तमाशु प्रजायते ॥ १५
यदा न स्पन्दते प्राणः शिरासरणिकोटरे ।
असंवित्तिवशात्तेन चित्तमन्तर्न जायते ॥ १६
प्राणस्पन्दनमेवेदं चित्तद्वारेण दृश्यते ।
जगन्नामागतं व्योम्नि नीलत्वादिवदीदृशम् ॥ १७
प्राणस्पन्दनसुप्ता च तच्छान्तिः शान्तिरुच्यते ।
प्राणसंस्पन्दनात्संविद्याति वीटेव चोदिता ॥ १८

---

भासिकचित्तलवोऽपि येषां तथाविधाः सन्तस्तस्मिन्पदे वसन्ति । अपुनरावृत्त्या स्थिरीभवन्तीत्यर्थः ॥ ३१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे चित्तोपदेशविचारयोगोपदेशो नाम नवतितमः सर्गः ॥ ९० ॥

संसृतिव्रततेर्बीजं शरीरं तस्य मानसम् ।
प्राणस्पदो वासना च तद्बीजे इति वर्ण्यते ॥ १ ॥

ब्रह्मण्यध्यस्ते चतुर्दशभुवनाकारे जगति प्रसृताया जीवसंसरणलताया बीजपरम्परावधि मूलोच्छेदोपायजिज्ञासया प्रष्टुकामो रामः प्रथमं जगद्वनत्वेन वर्णयति—**परमे**त्यादिना । परमाकाशकोशस्य निर्विशेषब्रह्मणोऽद्रिवदवरोधकत्वादद्रौ अव्याकृते रूढानि लोकान्तराणि विचित्रभुवनब्रह्माण्डभेदा एव द्रुमा वृक्षा यस्मिन् । एवं तारकापुष्पशबलमित्यादिविशेषणान्यपि वनरूपकोपपादकानि ॥ १ ॥ विद्युद्भिर्मञ्जरितेषु संजातमञ्जरीकेषु दिक्शाखाग्रेषु नीलादिवर्णा नीरदा मेघा एव पल्लवास्ताम्रहरितादिवर्णपर्णानि यस्मिन् । चन्द्रार्कग्रहगणलक्षणै रम्यकैर्विकासरमणीयैः पुष्पैर्दन्तुरमुन्नतदन्तं प्रहसदिव स्थितम् ॥ २ ॥ लोकभेदाच्चतुर्दशविधैः प्रत्येकमनन्तैर्भूतजातैरुपजीवितम् ॥ ३ ॥ ईदृशं जगत्काननमाक्रम्य वासनाप्रतानैः सर्वतः संवेष्ट्य कृतजालकं यथा स्यात्तथा स्थितायाः संसृतिर्जीवसंसरणं तल्लक्षणाया मृद्वीका द्राक्षा तल्लतायाः ॥४॥ जरामरणान्येव पर्वाणि काण्डग्रन्थयो यस्याः । पर्वशब्दः अकारान्तोऽपि क्वचिदस्ति । मोहा एव सेकजलाञ्जलयो यस्याः ॥ ५ ॥ बीजपरम्पराचतुष्टयप्रश्नः ॥ ६ ॥ ७ ॥ अन्तर्लिङ्गदेहे लीनानि प्रच्छन्नानि घनारम्भाणि विचित्रानन्तकार्यारम्भकाणि शुभाशुभकर्माण्येव महान्तोऽङ्कुरा यस्मिन् ॥ ८ ॥ इयं संसृतिव्रततिस्तेन तादृशशरीरेण स्फीता अभिवृद्धा भवति । वसुन्धरा सस्यसंपदेति शेषः ॥ ९ ॥ 'तस्य किं बीजमुच्यते' इति द्वितीयप्रश्नस्योत्तरमाह—**भावे**ति । भावो विभवोपचयः । अभावस्तदपक्षयः । आशायाः वशं सदनुगं भृत्यभूतम् ॥ १० ॥ सद्वर्तमानमसदतीतानागतं च अङ्गजालकं शरीरजातम् । चित्ताच्छरीरोद्भवे स्वाप्नानुभवं प्रमाणयति—**तथा चैतद्**िति ॥११॥ यथा गन्धर्वाणां मुमूर्षोरुत्पादितप्रदर्शनसंकल्पाच्चेतसः सकाशादेव पुरं जायते तद्वद्वपुः शरीरमित्यर्थः ॥ १२ ॥ किंच नात्रासंभावना युक्ता सर्वस्य जगतो हैरण्यगर्भमनोविकारमात्रत्वस्य सर्वश्रुतिपुराणप्रसिद्धत्वादित्याह—**यदिद**मिति ॥ १३ ॥ अथ तस्यापि किं बीजमिति तृतीयप्रश्नस्योत्तरमाह—**द्वे** इति । दृढा भावना वासना ॥१४॥ आद्यमुपपादयति—**यदे**ति । संवेदनमयं चिद्विकारप्रायम्॥१५॥ शिरासरणयो द्वासप्ततिसहस्रनाडीमार्गास्तेषां कोटरे छिद्रे । असंवित्तिर्बाह्यसंवेदनसंस्कारानुद्बोधस्तद्वशात् ॥ १६ ॥ हैरण्यगर्भचितो जगदाकारभावोऽपि समष्टिप्राणस्पन्दनप्रयुक्त एवेति स्वचित्तस्पन्ददृष्टान्तेन लक्ष्यत इत्याह—**प्राणे**ति । दृश्यते लक्ष्यते ॥ १७ ॥ एवं समष्टिप्राणस्पन्दनविषये सुप्ता उपरता तस्या-

१ प्ररूढेति पाठः.

संवित्स्फुरति देहेषु प्राणस्पन्दप्रबोधिता ।
चक्रावर्तैरङ्गणेषु वीटेव करताडिता ॥ १९
सती सर्वगता संवित्प्राणस्पन्देन बोध्यते ।
सूक्ष्मात्सूक्ष्मतराकारा गन्धलेखेव वायुना ॥ २०
संवित्संरोधने श्रेयः परमं विद्धि राघव ।
कारणाक्रमणं यत्र क्षोभस्तत्र न विद्यते ॥ २१
संवित्समुदितैवाशु याति संवेद्यमादरात् ।
संवेदनादनन्तानि ततो दुःखानि चेतसः ॥ २२
संसुप्तान्तरबोधाय संवित्संतिष्ठते यदा ।
लब्धं भवति लब्धव्यं तदा तदमलं पदम् ॥ २३
तस्मात्प्राणपरिस्पन्दैर्वासनाचोदनैस्तथा ।
नो चेत्संविदमुच्छूनां करोषि तदजो भवान् ॥ २४
संविदुच्छूनतां चित्तं विद्धि तेनेदमाततम् ।
अनर्थजालमालूनविशीर्णजनजीवकम् ॥ २५
योगिनश्चित्तशान्त्यर्थं कुर्वन्ति प्राणरोधनम् ।
प्राणायामैस्तथा ध्यानैः प्रयोगैर्युक्तिकल्पितैः ॥ २६
चित्तोपशान्तिफलदं परमं साम्यकारणम् ।
सुभगं संविदः स्वास्थ्यं प्राणसंरोधनं विदुः ॥ २७
ज्ञानवद्भिः प्रकटितामनुभूतां च राघव ।
चित्तस्योत्पत्तिमपरां वासनाजीवितां शृणु ॥ २८
दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ २९
भावितस्तीव्रसंवेगादात्मना यत्तदेव सः ।
भवत्याशु महाबाहो विगतेतरसंस्मृतिः ॥ ३०
तादृग्रूपः स पुरुषो वासनाविवशीकृतः ।
यत्पश्यति तदेतत्तत्सद्वस्त्विति विमुह्यति ॥ ३१
वासनावेगवैवश्यात्स्वरूपं प्रजहाति तत् ।
भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥ ३२
असम्यग्ज्ञानवानेव भवत्याधिपरिप्लुतः ।
अन्तस्थया वासनया विषेणेव वशीकृतः ॥ ३३
असम्यग्दर्शनं यस्मादनात्मन्यात्मभावनम् ।
यदवस्तुनि वस्तुत्वं तच्चित्तं विद्धि राघव ॥ ३४
दृढाभ्यासपदार्थैकवासनादतिचञ्चलम् ।
चित्तं संजायते जन्मजरामरणकारणम् ॥ ३५
यदा न वास्यते किंचिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥ ३६
अवासनत्वात्सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥ ३७
यदा किंचिन्न संवित्तौ स्फुरत्यभ्रमिवाम्बरे ।
तदा पद्म इवाकाशे चित्तमन्तर्न जायते ॥ ३८
यदा न भाव्यते भावः क्वचिज्जगति वस्तुनि ।
तदा हृदम्बरे शून्ये कथं चित्तं प्रजायते ॥ ३९
एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ।
यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च ॥ ४०
न किंचित्कल्पनायोग्यं दृश्यं भावयतस्ततः ।
आकाशकोशस्वच्छस्य कुतश्चित्तोदयो भवेत् ॥ ४१

---

श्चितः शान्तिर्निष्क्रियतैव शान्तिर्जगत्प्रलयो मोक्षो वा उच्यत इत्यर्थः । वीटा कन्दुकः । चोदिता कराभिहता ॥ १८ ॥ १९ ॥ ॥ २० ॥ संविदः संरोधनमविक्षिप्तता । श्रेयो मोक्षः क्षोभकारणस्य प्राणस्पन्दस्य आक्रमणं प्राणायामाभ्यासेन नाशः ॥ २१ ॥ किमर्थं संरोधः संविदश्चित्ताकारेण समुद्भवे को दोषस्तत्राह—**संविदि**ति । संवेद्यं बाह्यविषयं प्रति आदराद्रागाद्याति । ततश्च तदुपभोगसंवेदनादनन्तानि दुःखानीत्यर्थः ॥ २२ ॥ यदा तु बाह्यविषये संसुप्तप्राया सती आन्तरस्यात्मनो बोधाय संतिष्ठते उद्युक्ता भवति तदेत्यर्थः ॥ २३ ॥ प्राप्तपरिस्पन्दैर्वासनानां चोदनै रागातिशयेनोद्भावनैश्च संविदमुच्छूनां मूढा यथा कुर्वन्ति तथा न करोषि चेत् । अथवा परिरत्र वर्जने । प्राणानां परिस्पन्दैः स्पन्दवर्जनैर्वासनानां चोदनैरपनोदनैश्च संविदं नोच्छूनामुच्छूनताप्रयुक्तमनस्त्वापत्तिशून्यां करोषि चेत्तर्हि भवानजो जन्मादिसर्वविक्रियाशून्यो मुक्त एवासीत्यर्थः ॥ २४ ॥ आलूनाः खण्डिता विशीर्णा झर्झरिताश्च जनजीवका येन ॥ २५ ॥ योगशास्त्रोक्तैः सद्गुरुसंप्रदायादिसिद्धयुक्तिकल्पितैस्तदुपायाभ्यासप्रयोगैः ॥ २६ ॥ प्राणसंरोधनमेव फलाभेदरूपेण प्रशंसति—**चित्तेति** ॥ २७ ॥ चित्तस्य बीजान्तरं वर्णयितुं प्रतिजानीते—**ज्ञानवद्भि**रिति । प्रकटितां सम्यगुपदिष्टां स्वयं चानुभूताम् । [illegible]मुज्जीविताम् ॥ २८ ॥ तत्रादौ वासनास्वरूपमाह—**दृढे**ति । प्राक्तन्या दृढभावनया देहादिपदार्थानामहंममेत्यादिरूपसंस्कारात्मना यदादानं तच्चेत्त्यक्तपूर्वापरविचारणं भवति तदा सा वासयति देहादिभावेनात्मानं भावयतीति व्युत्पत्त्या वासना प्रकीर्तितेत्यर्थः । तथाच पूर्वापरविचारवतां जीवन्मुक्तानां देहादिसंस्कारो न वासनाविरोधिविचारास्कन्दितत्वेन तेषां देहादिभावेन वासयितुमशक्यत्वादिति भावः ॥ २९ ॥ अज्ञात्मनस्तु विरोधाभावात्तीव्रसंवेगभावनादार्ढ्येन देहादिभावे वासयितुं शक्नोत्येवेत्याशयेनाह—**भावित** इति ॥ ३० ॥ सा देहादावात्मतामिव बाह्यार्थे सत्तामपि दर्शयतीत्याह—**तादृगि**ति । वसतीति वस्तु । तदात्मसत्तया वासयतीति वासनेति व्युत्पत्तेस्तत्रापि संभवादिति भावः ॥ ३१ ॥ तत् वासनोपस्थापितं जगद्रूपं सर्वम् ॥ ३२ ॥ त्यक्तपूर्वापरविचारणमित्यस्य व्यावर्त्यमाह—**असम्यगि**त्यादिना ॥ ३३ ॥ सैव चितेश्चित्तभावेन वासनाप्रयुक्ता उत्पत्तिरित्याशयेनाह—**असम्यगि**ति ॥ ३४ ॥ ॥ ३५ ॥ अतएव वासनानाशाच्चितः स्वास्थ्यलक्षणा मुक्तिरित्याह—**यदे**ति । न वास्यते न सत्तां प्राप्यते ॥ ३६ ॥ ३७ ॥ आकाशे पद्ममिव अन्तः चिति चित्तं न जायते ॥ ३८ ॥ ३९ ॥ [illegible] ॥ ४० ॥ कल्पनाया युक्तिभिः समर्थनाया अयो-

---

१ वेग इति पदं क्वचिन्न पठ्यते.

२ च्चितः इति मुद्रितपुस्तके न लभ्यते.

यदभावनमास्थाय यदभावस्य भावनम् ।
यद्यथावस्तुदर्शित्वं तदचित्तत्वमुच्यते ॥ ४२
सर्वमन्तः परित्यज्य शीतलाशयवर्ति यत् ।
वृत्तिस्थमपि तच्चित्तमसद्रूपमुदाहृतम् ॥ ४३
वासनाया रसाध्यानाद्रागो यस्य न विद्यते ।
तस्य चित्तमचित्तत्वं गतं सत्त्वं तदुच्यते ॥ ४४
घना न वासना यस्य पुनर्जननकारिणी ।
जीवन्मुक्तः स सत्त्वस्थश्चक्रभ्रमवदास्थितः ॥ ४५
भ्रष्टबीजोपमा येषां पुनर्जननवर्जिता ।
वासनारसनिर्हीना जीवन्मुक्ता हि ते स्थिताः ॥ ४६
सत्त्वरूपपरिप्राप्तचित्तास्ते ज्ञानपारगाः ।
अचित्ता इति कथ्यन्ते देहान्ते व्योमरूपिणः ॥ ४७
द्वे बीजे राम चित्तस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ ४८
मिथः कारणमेते हि बीजे जन्मनि चेतसः ।
जलाङ्गीकरणे राम जलाशयघटाविव ॥ ४९
घना न वासना यस्य पुनर्जननकारिणी ।
बीजाङ्कुरवदेते हि संस्थिते तिलतैलवत् ॥ ५०
अविनाभाविनी नित्यं कालाकाङ्क्षिक्रमे तथा ।
सर्वमुत्पादयत्येतच्चित्तकः संविदात्मकः ॥ ५१
यथाप्राणेन्द्रियानन्दमानन्दपवनावुभौ ।
चित्तस्योत्पादिके सार्धं यदैते वासने तदा ॥ ५२
आमोदपुष्पवत्तैलतिलवच्च व्यवस्थिते ।
वासनावशतः प्राणस्पन्दस्तेन च वासना ॥ ५३
जायते चित्तबीजस्य तेन बीजाङ्कुरक्रमः ।
वासनोत्प्लवमानत्वात्संवित्प्रक्षोभकर्मणा ॥ ५४
प्राणस्पन्दं बोधयति तेन चित्तं प्रजायते ।
प्राणः स्पन्दनधर्मित्वात्स्पन्दते स्पृष्टहृद्गुणः ॥ ५५
संविदं बोधयंस्तेन चित्तबालः प्रजायते ।
एवं हि वासनाप्राणस्पन्दौ द्वौ तस्य कारणम् ॥ ५६
तयोरेकक्षये नाशो द्वयोश्चित्तस्य राघव ।
सुखदुःखमनःस्पन्दं शारीरकबृहत्फलम् ॥ ५७
कार्यपल्लविताकारं कृतिव्रततिवेष्टितम् ।
तृष्णाकृष्णाहिवलितं रागरोगबकालयम् ॥ ५८
अज्ञानमूलं सुदृढं लीनेन्द्रियविहंगमम् ।
वासना क्षयमानीता चित्तवृक्षं क्षणेन हि ॥ ५९
प्रपातयति वातौघः कालपक्वफलं यथा ।
पाण्डुरीकृतसर्वाशं स्थगिताखिलदर्शनम् ॥ ६०
विलोलजलदाकारमज्ञानावकरोत्थितम् ।
तृष्णातृणलवव्याप्तं स्तम्भाकृति शारीरकम् ॥ ६१
स्फुरत्तनु तनुक्षुब्धं सुखमुत्प्लवनं प्रति ।
अन्तःस्थितमहालोकमपश्यत्प्रविलीयते ॥ ६२

---

ग्यम् ॥ ४१ ॥ इदानीमचित्ततां लक्षयति—**यदि**ति । अभावनं बाह्यार्थास्मरणं निरोधयोगमास्थाय सर्वदृश्यमार्जनलक्षणस्य अभावस्य यत्संपादकं परमार्थात्मदर्शनाविर्भूतस्वरूपं तदित्यर्थः ॥ ४२ ॥ तर्हि जीवन्मुक्तानां सवृत्तिके चित्ते सति कथमचित्तत्वं तत्राह—**सर्व**मिति । नहि दग्धपटाभासेन सपटत्वं वक्तुं शक्यमिति भावः ॥ ४३ ॥ विषयरसानामाध्यानप्रयुक्तो रागो रञ्जना । पटभस्मेव परिशिष्टमधिष्ठानं सत्त्वं तदुच्यत इत्यर्थः ॥ ४४ ॥ तर्हि जीवन्मुक्तः कथं व्यवहारमास्थित इति चेत्कृतकार्यकुलालचक्रभ्रमवदित्याह—**घने**ति ॥ ४५ ॥ ४६ ॥ देहान्ते प्रारब्धक्षये । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति श्रुतेरिति भावः ॥ ४७ ॥ ननु वासनाबीजनाशेपि बीजान्तराच्चित्तोदयः किं न स्यात्तत्राह—**द्वे** इति ॥ ४८ ॥ चेतसो जन्मनि एते मिथो मिलिते कारणं नैकैकमित्यर्थः । यथा घटाकाशेन जलाङ्गीकरणे जलाशयो घटश्च मिलितौ कारणं नैकैकं तद्वत् ॥४९॥ घना वासना एकैव आयस्य बलात्कृत्य पुनर्जननकारिणी नेत्यर्थः । 'बीजं तस्यापि किं भवेदि'ति चतुर्थप्रश्नस्याप्युत्तरमनवस्थां परिहरन्नाह—**बीजाङ्कुरवदि**ति । एते प्राणस्पन्दनवासने तिलेषु तैलवत्परस्परान्तःस्थे तथा बीजाङ्कुरन्यायेन कालाकाङ्क्षिक्रमे परस्परस्य कारणे इति परेणान्वयः ॥ ५० ॥ एवं चित्तस्यापि तदुभयं प्रति इन्द्रियसुखदुःखादिकं च प्रति कारणतास्तीत्याह—**सर्व**मिति ॥ ५१ ॥ यथाक्रमं प्रथमं प्राणं तत इन्द्रियाणि ततस्तत्प्रयुक्तमानन्दमिति सर्वमित्यर्थः ।

एवं पूर्वोपभुक्तस्य विषयानन्दस्य तात्कालिकजीवनलक्षणस्य पवनस्पन्दस्य च वासनात्मनापि चित्तोत्पादकत्वमस्तीत्याह—**आनन्दपवना**विति । यदा आनन्दपवनावुभौ वासने संपन्ने तदा सार्धं मिलित्वा चित्तस्योत्पादिके इत्यन्वयः ॥ ५२ ॥ अतः परस्पराश्रयत्वं परस्परहेतुत्वं चानयोरुपपन्नमिति नानवस्थादोषप्रसक्तिरित्याशयेनोक्तमेव पुनराह—**आमोदे**त्यादि ॥ ५३ ॥ बीजाङ्कुरक्रमो जायते । उपपन्न इति यावत् । उभयोश्चित्तोत्पादकत्वप्रकारं दर्शयति—**वासने**ति ॥५४॥ स्पृष्टा नुन्ना हृद्गुणा रागादिवासना येन ॥ ५५ ॥ ५६ ॥ अतएव 'एकस्मिंश्च तयोः क्षीणे' इति प्रागुक्तमुपपन्नमित्याह—**तयो**रिति । द्वयोस्तत्कार्यचित्तस्य च नाश इत्यर्थः । चित्तमेव वृक्षत्वेन वर्णयंस्तस्य वासनाक्षयादुन्मूलनमाह—**सुखे**त्यादिना । सुखदुःखाकुलं मननं मनस्तदेव स्पन्दो यस्य । शरीरमेव शारीरकम् ॥ ५७ ॥ ५८ ॥ क्षयमानीता वासना ईदृशं चित्तवृक्षं क्षणेन प्रपातयतीति परेणान्वयः ॥५९॥ तदेव चित्तं वात्यारजःपुञ्जत्वेन रूपयंस्तस्य पवननिरोधादिव प्राणस्पन्दनिरोधात्प्रविलयं दर्शयति—**पाण्डुरीकृते**त्यादिना । पाण्डुरीकृतेत्यादिविशेषणानि श्लेषादिना उभयत्र योज्यानि । आशा दिशः उपचारा तृष्णावन्तश्च । स्थगितमाच्छादितमखिलदर्शनं पूर्णचिद्रूपं सर्वजननेत्रं च येन ॥६०॥ अवकर उत्करः । स्तम्भप्रायं शरीरकं प्रसिद्धं वात्यासंस्थानं च यस्य ॥ ६१ ॥ स्फुरद्भिस्तनुतनुभिरल्पाल्पैर्वृत्तिभेदैर्वात्यापोतैश्च क्षुब्धम् । सर्वदिक्षु उत्प्लवनं प्रति सुखं अनायासदक्षम् । अन्तः

पवनस्पन्दरोधाच्च राम चित्तरजः क्षणात् ।
वासनाप्राणपवनस्पन्दयोरनयोर्द्वयोः ॥ ६३
संवेद्यं बीजमित्युक्तं स्फुरतस्तौ यतस्ततः ।
हृदि संवेद्यमाप्यैव प्राणस्पन्दोऽथ वासना ॥ ६४
उदेति तस्मात्संवेद्यं कथितं बीजमेतयोः ।
संवेद्यसंपरित्यागात्प्राणस्पन्दनवासने ॥ ६५
समूलं नश्यतः क्षिप्रं मूलच्छेदादिव द्रुमः ।
संविदं विद्धि संवेद्यं बीजं धीरतया विना ॥ ६६
न संभवति संवेद्यं तैलहीनस्तिलो यथा ।
न बहिर्नान्तरे किंचित्संवेद्यं विद्यते पृथक् ॥ ६७
संवित्स्फुरन्ती संकल्पात्संवेद्यं पश्यति स्वतः ।
स्वप्ने यथात्ममरणं तथा देशान्तरस्थितिः ॥ ६८
स्वचमत्कारयोगेन संवेद्यं संविदस्तथा ।
स्ववेदनं स्वसंकल्पात्संविदो यत्र वर्तते ॥ ६९
जगज्जालमतो भाति तदिदं रघुनन्दन ।
यथा बालस्य वेतालः स्वसंकल्पोद्भवाद्भवेत्[१] ॥ ७०
पुरुषत्वं यथा स्थाणोः संवेद्यं संविदस्तथा ।
यथा चन्द्रार्करश्मीनां दण्डता रेणुता तथा ॥ ७१
यथा नौस्थाचलस्पन्दः संवेद्यं संविदस्तथा ।
एतन्मिथ्या हि दुर्ज्ञानं सम्यग्ज्ञानाद्विलीयते ॥ ७२
रज्ज्वामिव भुजङ्गत्वं द्वीन्दुत्वं स्वीक्षितादिव ।
शुद्धैव संवित्त्रिजगत्संवेद्यं नान्यदस्त्यलम् ॥ ७३

इत्यन्तर्निश्चयो रूढः सम्यग्ज्ञानं विदुर्बुधाः ।
पूर्वं दृष्टमदृष्टं वा यदस्याः प्रतिभासते ॥ ७४
संविदस्तत्प्रयत्नेन मार्जनीयं विजानता ।
तदमार्जनमात्रं हि महासंसारसंगतम् ॥ ७५
तत्प्रमार्जनमात्रं तु मोक्ष इत्यनुभूयते ।
संवेदनमनन्ताय दुःखाय जननात्मने ॥ ७६
असंवित्तिरजाड्यस्था सुखायाजननात्मने ।
अजडो गलितानन्दस्त्यक्तसंवेदनो भव ।
असंवेद्यप्रबुद्धात्मा यस्तु स त्वं रघूद्वह ॥ ७७

श्रीराम उवाच ।

अजडश्चाप्यसंवित्तिः कीदृशो भवति प्रभो ।
असंवित्तौ च जाड्यं तत्कथं वा विनिवर्तते ॥ ७८

श्रीवसिष्ठ उवाच ।

यः सर्वत्रानवस्थास्थो विश्रान्तास्थो न कुत्रचित् ।
जीवो न विन्दते किंचिदसंविदजडो हि सः ॥ ७९
संविद्वस्तुदृशालम्बः स यस्येह न विद्यते ।
सोऽसंविदजडः प्रोक्तः कुर्वन्कार्यशतान्यपि ॥ ८०
संवेद्येन हृदाकाशो मनागपि न लिप्यते ।
यस्यासावजडा संविज्जीवन्मुक्तश्च कथ्यते ॥ ८१
यदा न भाव्यते किंचिन्निर्वासनतयात्मनि ।
बालमूकादिविज्ञानमिव च स्थीयते स्थिरम् ॥ ८२

स्थितं महालोकं ब्रह्म सौरालोकं च अपश्यत् द्रष्टुमक्षमम् । ईदृशं चित्तवात्यारजः पवनस्पन्दरोधात् क्षणात्प्रविलीयत इत्यन्वयः ॥ ६२ ॥ बीजान्तरमप्याह—**वासने**ति ॥ ६३ ॥ संवेद्यं प्रियाप्रियं शब्दादि । आप्य स्मृत्वा ॥ ६४ ॥ ६५ ॥ संविदभेदभावनमेव संवेद्यपरित्याग इत्याह—**संविद**मिति । तदेवोपपादयति—**बीज**मित्यादिना । संविदेव स्वीयां धीरतां परित्यज्य संवेद्यमिव संपन्नं सत् चित्तबीजम् ॥ ६६ ॥ नहि संविदं विना संवेद्यं संभवति । प्रसिद्ध्यतीत्यर्थः ॥ ६७ ॥ चार्थे तथाशब्दः । यथा स्वप्ने आत्मनो मरणं देशान्तरस्थितिश्च स्वचमत्कारयोगेनैव । जाग्रत्संवेद्यमपि संविदस्तथेत्युत्तरत्रान्वयः ॥ ६८ ॥ यत्र यस्यां विवेकदशायां स्वतत्त्ववेदनं वर्तते तत् स्वसंवेदनमपि स्वसंकल्पादिजन्यं तथा स्वप्नवदेव । नह्यद्वये स्वसंवेदनं विवेकविचारादयो वा परमार्थतः संभवन्तीति ॥ ६९ ॥ स्वसंकल्पोद्भवाद्भ्रमात् ॥ ७० ॥ चन्द्रार्करश्मीनां वातायनप्रविष्टानां दण्डाकारता तदन्तरे भ्रमत्त्रसरेण्वाकारता च भवेत्तथा ॥ ७१ ॥ दुर्ज्ञानं भ्रान्तिज्ञानम् । विलीयते बाध्यते ॥ ७२ ॥ स्वीक्षिता-न्निर्दोषदर्शनादिव । सम्यग्ज्ञानं तर्हि कीदृशं तदाह—**शुद्धैवे**ति ॥ ७३ ॥ तेन संमार्जनीयं यत्तद्दर्शयति—**पूर्व**मिति ॥ ७४ ॥ महता संसारेण संगतं संबन्ध आत्मनः ॥ ७५ ॥ संवेदनं वेद्यदर्शनम् । जननात्मने जन्मादिरूपाय दुःखाय ॥ ७६ ॥ असंवित्तिर्वेद्यादर्शनं अजाड्ये चिदेकरसस्वभावे प्रतिष्ठिता अजननात्मने नित्यात्मस्वरूपाय यतो भवति अतस्त्वमपि त्यक्तसंवेदनः सन् अजडः गलित एकरसीभूतः पूर्णानन्दो भवेत्यर्थः । यः असंवेद्योऽपि स्वतः प्रबुद्ध आत्मा स एव त्वं भवसि नान्यः ॥ ७७ ॥ जाड्यत्यागे संवेदनपरिशेषः संवेदनत्यागे जाड्यपरिशेषो वा अवश्यंभावीत्यजडः असंवित्तिश्चेति विरुद्धस्वभाव एकः कथं भवतीति प्रश्नः । विरोधमेव स्फुटीकृत्य दर्शयति—**असंवित्ता**विति ॥ ७८ ॥ सं सत्यतया बाह्यार्थवेदनं संविदिति व्युत्पत्तेर्बाधितार्थाभासैर्व्यवहाराभासं दर्शयन्नपि जीवन्मुक्तजीवः सर्वत्र वर्तमानविषये अनवस्थितास्थः कुत्रचित् अतीतानागतविषये च वासनाक्षयान्न विश्रान्तास्थ इति न किंचिद्वेद्यं विन्दत इति तदंशे काष्ठलोष्टवदसंविदित्युच्यते । स्वतस्तु स्वप्रकाशचिदेकरसपूर्णत्वादजडश्चेत्यर्थः ॥ ७९ ॥ संविच्छब्दस्य उक्तां व्युत्पत्तिं दर्शयन्नुक्तमेव समर्थयति—**संविदि**ति । वस्तुदृशा सत्यत्वबुद्ध्या चितो बाह्यार्थालम्बनमेव संविदित्युच्यत इत्यर्थः । एतेन सर्वत्रानवस्थास्थ इति पदस्य तात्पर्यमुद्घाटितम् ॥ ८० ॥ 'विश्रान्तास्थो न कुत्रचि'दित्यस्याप्यतीतविषये तात्पर्यमुद्घाटयंस्तदेवाह—**संवेद्ये**नेति । हृदाकाशो बुद्धिः ॥ ८१ ॥ अनागतविषयेऽपि तस्य

१ ससङ्कल्पोद्भवात् इति पाठः.

तदा जाड्यविनिर्मुक्तमच्छवेदनमाततम् ।
आश्रितं भवति प्राज्ञो यस्माद्भूयो न लिप्यते ॥ ८३
समस्तवासनात्यागी निर्विकल्पसमाधितः ।
नीलत्वमिव खात्स्फार आनन्दः संप्रवर्तते ॥ ८४
योगिनस्तत्र तिष्ठन्ति संवेदनमसंविदः ।
तन्मयत्वादनाद्यन्तं तदप्यन्तर्विलीयते ॥ ८५
गच्छंस्तिष्ठन्स्पृशञ्जिघ्रन्नपि तेन स उच्यते ।
अजडो गलितानन्दस्त्यक्तसंवेदनः सुखी ॥ ८६
एतां दृष्टिमवष्टभ्य कष्टया यत्नचेष्टया ।
तर दुःखाम्बुधेः पारमपारगुणसागर ॥ ८७
यथा बीजाद्बृहद्वृक्षो व्योम व्याप्नोति कालतः ।
तथैवेदं स्वसंकल्पात्संवेद्यमसदुत्थितम् ॥ ८८
यदा संकल्प्य संकल्प्य संवित्स्वं विन्दते वपुः ।
तदास्य जन्मजालस्य सैव गच्छति बीजताम् ॥ ८९
जनयित्वात्मनात्मानं मोहयित्वा पुनःपुनः ।
स्वयं मोक्षं नयत्यन्तः संवित्स्वं विद्धि राघव ॥ ९०
यदेव भावयत्येषा तदेव भवति क्षणात् ।
न भवद्भूमिकामुक्ता समायाति चिराद्वपुः ॥ ९१
देवो नासौ सुरो रक्षो यक्षः किं किन्नरो जनः ।
आत्मैवाद्यविलासिन्या जगन्नाट्यं प्रनृत्यति ॥ ९२
बद्ध्वात्मानं रुदित्वा च कोशकारकृमिर्यथा ।
चिरात्केवलतामेति स्वयं संवित्स्वभावतः ॥ ९३
जगज्जलधिजालानां संविज्जलमलं गता ।
एषैवापूर्वदिक्कक्रं स्फुरत्यभ्र्यादितां गता ॥ ९४
द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
इत्यस्या वीचयः प्रोक्ताः संवित्सलिलसंततेः ॥ ९५
संविन्मात्रं जगत्सर्वं द्वितीया नास्ति कल्पना ।
इत्येव सम्यग्ज्ञानेन संविद्गच्छति नान्यताम् ॥ ९६
यदा न विन्दते किंचित्स्पन्दते न न वेपते ।
स्वात्मन्येव स्थितिं याति संविन्नो लिप्यते तदा ॥ ९७
अथास्याः संविदो राम सन्मात्रं बीजमुच्यते ।
संविन्मात्रादुदेत्येषा प्राकाश्यमिव तेजसः ॥ ९८
द्वे रूपे तत्र सत्ताया एकं नानाकृति स्थितम् ।
द्वितीयमेकरूपं तु विभागोऽयं तयोः शृणु ॥ ९९
घटता पटता चैव त्वत्ता मत्तेति कथ्यते ।
सत्तारूपविभागेन यत्तन्नानाकृति स्थितम् ॥ १००
विभागं तु परित्यज्य सत्तैकात्मतया ततम् ।
सामान्येनैव सत्ताया रूपमेकमुदाहृतम् ॥ १०१
विशेषं संपरित्यज्य सन्मात्रं यदलेपकम् ।
एकरूपं महारूपं सत्तायास्तत्पदं विदुः ॥ १०२
रूपं नानाकृतित्वेन सत्ताया न कदाचन ।
असंवेद्यं संभवति तस्मादेतदवस्तुकम् ॥ १०३
एकरूपं तु यद्रूपं सत्ताया विमलात्मकम् ।
न कदाचन तद्याति नाशं नापि च विस्मृतिम् ॥ १०४

तमुद्घाटयति—**यदेति** द्वाभ्याम् ॥ ८२ ॥ ८३ ॥ शङ्कां समाधाय प्रकृतं समर्थयन्नाह—**समस्तेति** ॥ ८४ ॥ नन्वन्याकारसंवेदनाभावेपि ब्रह्माकारवृत्तिरूपं संवेदनं समाधावपि दुर्वारमिति कथमसंवित्त्वं तत्राह—**तन्मयत्वादिति** । अनाद्यन्तमपरिच्छिन्नब्रह्माकारं तत्संवेदनमपि स्वेद्धेन ब्रह्मज्योतिषा बाध्यमानं तदन्तरेव विलीयत इत्यर्थः ॥ ८५ ॥ ८६ ॥ कष्टया प्राणायामादिश्रमसाध्यया ॥ ८७ ॥ चिदात्मा स्वात्मनः स्वयमेव मिथ्याभूतं बन्धं मोक्षं कल्पयतीत्याह—**यथेत्यादिना** ॥ ८८ ॥ कदा कथमुत्थितं तदाह—**यदेति** । संकल्प्य संकल्प्य पुनःपुनः संकल्पं कृत्वा स्वं सांकल्पिकं वपुः स्वरूपं यदा विन्दते तदा ॥ ८९ ॥ अन्तः हृदिस्थं आत्मतत्त्वं वेत्तीति वित् पश्यत्सत् स्वयं स्वं मोक्षं नयति । हीति विद्वदनुभवप्रसिद्धौ ॥ ९० ॥ तर्हि इदानीमेव सर्वेषां संवित् स्वात्मभावनया स्वस्वरूपं स्वैरं कुतो नायाति तत्राह—**नेति** । भवन्तीति भवन्तो रागादयस्तद्भूमिकाभ्यः असुक्ता सती चिरादपि स्वं वपुर्नायाति ॥ ९१ ॥ अतएवास्य देवगन्धर्वादयः कल्पितवेषा न वास्तवा इत्याह—**देव** इति । आद्यया आदिसिद्धया विलासिन्या स्वमायया ॥९२॥ यथा मायावी नटः आत्मानं बध्नन्निव मोचयन्निव दर्शयति तद्वदित्याह—**बद्ध्वेति** ॥९३॥ अलं पर्याप्तिं गता संविदेव जगज्जलधिजालानां जलम् । अपूर्वं दिक्कक्रं दिक्चक्रमिति यावत् । अभ्र्यादितां पर्वतादिभावमेषैव गता ॥ ९४ ॥ ९५ ॥ नान्यतामनन्यतामद्वयतामित्यर्थः ॥ ९६ ॥ कदास्याः सम्यग्ज्ञानं भवति तत्राह—**यदेति** । किंचिच्चलनं स्पन्दः, सम्यक्कम्पनं वेपनमिति भेदः ॥ ९७ ॥ एवं परिशोध्य परिशेषिता संविदन्तःकरणप्रतिबिम्बसंविदेवेति श्रोतॄणां भ्रान्तिं वारयन्नग्निविस्फुलिङ्गन्यायेन तद्बीजभूतां सन्मात्ररूपां ब्रह्मसंविदं दर्शयति—**अथेति** । एषा प्रतिबिम्बसंवित् बिम्बभूतात्संविन्मात्ररूपाद्ब्रह्मणः सकाशादुदेति । यथा सूर्यादितेजसः सकाशात्प्रकाश एव प्राकाश्यं प्रभा उदेति तद्वत् ॥९८॥ सन्मात्रमित्युक्ते अर्थक्रियासामर्थ्यलक्षणं घटपटादिनिष्ठं व्यावहारिकसत्त्वमेव तद्बीजं दर्शितमिति भ्रान्तिर्मा भूदिति तद्विलक्षणं दर्शयितुं सत्ताद्वैविध्यमाह—**द्वे रूपे** इत्यादिना ॥ ९९ ॥ घटत्वपटत्वादयस्त्वत्तामत्ताद्युपाधयश्चार्थक्रियाभेदेषु स्वरूपयोग्यतालक्षणा व्यावहारिकसत्ताविशेषा एवेत्याशयः ॥ १०० ॥ सामान्येन सर्वजगदधिष्ठानतालक्षणेन साधारणस्वभावेनैव ॥१०१॥ पदं वस्तुतत्त्वम् ॥ १०२ ॥ व्यावहारिकसत्त्वं तु न वास्तवमित्याह—**रूपमिति** । यतस्तद्घटत्वादिरूपं कपालचूर्णधूल्याद्यवस्थास्वसंवेद्यं नानुवर्तमानतया दृश्यते अतः सत्यं न संभवतीत्यर्थः ॥१०३॥ सर्वावस्थानुगतं तु सद्रूपं न तथेत्याह—**एकरूपमिति** । नापि च विस्मृतिमित्यनेन सर्वदा स्फुरद्रूपतया नित्यचिदेकरसता दर्शिता

कालसत्ता कलासत्ता वस्तुसत्तेयमित्यपि ।
विभागकलनां त्यक्त्वा सन्मात्रैकपरो भव ॥ १०५
कालसत्ता खसत्ता च प्रोन्मुक्तकलना सती ।
यद्यप्युत्तमसद्रूपा तथाप्येषा न वास्तवी ॥ १०६
विभागकलना यत्र विभिन्नपददायिनी ।
नानाताकारणं दृष्टा तत्कथं पावनं भवेत् ॥ १०७
सत्तासामान्यमेवैकं भावयत्सकलं वपुः ।
परिपूर्णपरानन्दी तिष्ठाभरितदिग्भरः ॥ १०८
सत्ता सामान्यमात्रस्य या कोटिः कोविदेश्वर ।
सैवास्य बीजतां याता तत एव प्रवर्तते ॥ १०९
सत्तासामान्यपर्यन्ते यत्तत्कलनयोज्झितम् ।
पदमाद्यमनाद्यन्तं तस्य बीजं न विद्यते ॥ ११०
सत्ता लयं याति यत्र निर्विकारं च तिष्ठति ।
भूयो नावर्तते दुःखे तत्र लब्धपदः पुमान् ॥ १११
तद्धेतुः सर्वहेतूनां तस्य हेतुर्न विद्यते ।
संसारः सर्वसाराणां तस्मात्सारं न विद्यते ॥ ११२
तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ ११३
सर्वे भावा इमे तत्र स्वदन्ते साधुवारिधेः[1] ।
षड्रसा इव जिह्वायाः प्रकटत्वं प्रयान्ति च ॥ ११४
तस्मादच्छतरस्यापि चिदाकाशस्य वै पदम् ।
सर्वेषां स्वादुजातीनामलमास्वादनं च तत् ॥ ११५
जायते वर्तते चैव वर्धते स्पृश्यतेऽथ वा ।
तिष्ठन्ति च गलन्तीह तत्राङ्ग जगतां गणाः ॥ ११६
तत्तद्गुरु गरिष्ठानां तत्तल्लघु लघीयसाम् ।
तत्तत्स्थूलं स्थविष्ठानामणीयस्तदणीयसाम् ॥ ११७
दवीयसां दविष्ठं तदन्तिकानां तदन्तिकम् ।
कनीयसां कनीयस्तत्तज्ज्येष्ठं ज्यायसामपि ॥ ११८
तेजसामपि तत्तेजस्तमसामपि तत्तमः ।
वस्तूनामपि तद्वस्तु दिशामप्यङ्ग दिक्परा ॥ ११९
तत्र किंचिच्च किंचिच्च तत्तदस्तीव नास्ति च ।
तत्तद्दृश्यमदृश्यं च तत्तदस्मि न चास्मि च ॥ १२०
राम सर्वप्रयत्नेन तस्मिन्परमपावने ।
पदे स्थितिमुपायासि यथा कुरु तथानघ ॥ १२१
तदमलमजरं तदात्मतत्त्वं
तदवगतावुपशान्तिमेति चेतः ।
अवगतवितततैकतत्त्वरूपो
भवभयमुक्तपदोऽसि तच्चिराय ॥ १२२

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे संसृतिबीजविचारयोगोपदेशो नामैकनवतितमः सर्गः ९१

---

॥ १०४ ॥ अतीतानागतेष्वस्तीति व्यवहारादर्शनाद्वर्तमानकाल एव सर्ववस्तूनां सत्तेति केचित् । अवयवानामेव पुञ्जीभूयावयव्याकारेण स्फुरणात्कला अवयवा एव परमाणुरूपा जगत्सत्तेत्यपरे । अवयविष्वप्यनुगता सत्ता जातिरन्यास्तीत्यपरे । एवमन्येऽप्यन्यथान्यथा स्वस्वबुद्ध्यनुसारेण कल्पयन्ति तत्कल्पितां विभागकलनामित्यर्थः ॥ १०५ ॥ यद्यपि सर्वं जगदिव कालादिसत्ताप्यध्यस्तभेदकलनात्यागे सन्मात्रपरिशेषादुत्तमसत्त्वैव तथापि विभक्तरूपेण बाधार्हत्वान्न वास्तवीत्यर्थः ॥१०६॥१०७॥ आ समन्ताद्भरिताः पूरिता दिग्भरा दिशस्तदाधेयसर्वपदार्थाश्च येन सत्तासामान्यरूपेण तथाविधः सन् ॥ १०८ ॥ सामान्यमात्रस्य कोटिः परमावधिभूता या सत्ता सैव अस्य जगतः प्रतिबिम्बचितश्च बीजतां याता ॥ १०९ ॥ सत्तासामान्यस्य सर्वसत्तानां पर्यन्ते परावधौ ॥ ११० ॥ सत्ता सद्धर्मतापि यत्र धर्मधर्मिविभागविलयाल्लयं याति तत्र लब्धपदो यो भवति स एव पुरुषार्थसाधनसमर्थत्वात्पुमान् । अन्यस्तु स्त्रीप्राय इति भावः ॥ १११ ॥ तदेव परमपुरुषार्थतां दर्शयितुं प्रशंसति—**तदि**त्यादिना ॥ ११२ ॥ ११३ ॥ तत्र तस्मिन्प्रत्यग्रूपे अध्यस्तत्वात्स्वदन्ते इन्द्रियप्रीतिं जनयन्ति । स्वादुवारिधेरानन्दसमुद्रात्तस्मादेव । प्रकटत्वं सत्तां स्फूर्तिं च ॥११४॥ यस्मादस्वादुभूता अपि विषयास्तद्योगात्स्वदन्ते तस्मात्कारणात्तच्चिदाकाशस्य पदं स्वरूपं सर्वेषां स्वादुजातीनामानन्दानां प्रियाणां च मध्ये अलमत्यन्तमास्वादनमानन्दरूपं प्रियतमं चेत्यर्थः ॥ ११५ ॥ तस्मिन्नेव 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ती'ति श्रुत्युक्तजगज्जन्मादिकारणत्वलक्षणसमन्वयं दर्शयति—**जायते** इति । वर्तते अस्ति स्पृश्यते विपरिणामेन । तिष्ठन्त्यपक्षयोन्मुखाः । श्रुतौ जन्मादित्रयग्रहणं षड्भावविकारोपलक्षणमित्याशयः ॥ ११६ ॥ गुरुलघ्वादिवैचित्र्यस्यापि तदेव निर्वाहकमित्याशयेनाह—**तत्त**दिति । द्वितीयास्तच्छब्दाः प्रसिद्धिपराः ॥११७॥ दवीयसां दूरतराणां दविष्ठं दूरतमम् । दूरशब्दादिष्ठेयसुनोः 'स्थूलदूर–' इत्यादिना यणादिपरलोपः पूर्वस्य गुणश्च । एवं युवाल्पयोः कन् प्रशस्यवृद्धयोर्ज्यादेशः ॥ ११८ ॥ ११९ ॥ न किंचिल्लोकप्रसिद्धम् । किंचिदल्पतरमपि प्रसिद्धं तदेव । अस्तीव भावात्मकम् । नास्त्यभावात्मकम् । अस्मि प्रत्यक्तया । न चास्मि अहंतया । द्वितीयश्चकारो मम न ममेति चानुक्तसमुच्चयार्थः ॥ १२० ॥ यथा उपायासि । वर्तमानसामीप्ये भविष्यति लट् । तथा कुरु ॥ १२१ ॥ आत्मनस्तत्त्वं पारमार्थिकरूपं तदेव । तस्य अवगतौ साक्षादनुभवे सति च तत उपशान्तिं बाधमेति । अतस्त्वं यदा अवगतवितततैकतत्त्वरूपो भवसि तत्तदैव चिराय अपुनरावृत्तये भवभयमुक्तपरमपदस्वरूप एवासीत्यर्थः ॥१२२॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे संसृतिबीजविचारयोगोपदेशो नामैकनवतितमः सर्गः ॥ ९१ ॥

१ अत्र स्वादुवारिधेः इति टीकाकृदभिमतः पाठः स एव समीचीनः.

# द्विनवतितमः सर्गः ९२

श्रीराम उवाच ।

एतानि तानि प्रोक्तानि त्वया बीजानि मानद ।
कतमस्य प्रयोगेण शीघ्रं तत्प्राप्यते पदम् ॥ १

श्रीवसिष्ठ उवाच ।

एतेषां दुःखबीजानां प्रोक्तं यद्यन्मयोत्तरम् ।
तस्य तस्य प्रयोगेण शीघ्रमासाद्यते पदम् ॥ २
सत्तासामान्यकोटिस्थे द्रागित्येव पदे यदि ।
पौरुषेण प्रयत्नेन बलात्संत्यज्य वासनाम् ॥ ३
स्थितिं बध्नासि तत्त्वज्ञ क्षणमप्यक्षयात्मिकाम् ।
क्षणेऽस्मिन्नेव तत्साधु पदमासादयस्यलम् ॥ ४
सत्तासामान्यरूपे वा करोषि स्थितिमङ्ग चेत् ।
तत्किंचिदधिकेनेह यत्नेनाप्नोषि तत्पदम् ॥ ५
संवित्तत्त्वे कृतध्यानो यदि तिष्ठसि चानघ ।
तद्यत्नेनाधिकेनोच्चैरासादयसि तत्पदम् ॥ ६
संवेद्ये केवले ध्यानं न संभवति राघव ।
सर्वत्र संभवादस्याः संवित्तेरेव सर्वदा ॥ ७
यच्चिन्तयसि यद्यासि यत्तिष्ठसि करोषि च ।
तत्र तत्र स्थिता संवित्संविदेव तदेव सा ॥ ८
वासनासंपरित्यागे यदि यत्नं करोषि च ।
तत्ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ॥ ९
पूर्वेभ्यस्तु प्रयत्नेभ्यो विषमोऽयं हि संस्मृतः ।
दुःसाध्यो वासनात्यागः सुमेरून्मूलनादपि ॥ १०
यावद्विलीनं न मनो न तावद्वासनाक्षयः ।
न क्षीणा वासना यावच्चित्तं तावन्न शाम्यति ॥ ११
यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः ।
यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम् ॥ १२
यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः ।
यावन्न तत्त्वसंप्राप्तिर्न तावद्वासनाक्षयः ॥ १३
तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च ।
मिथः कारणतां गत्वा दुःसाध्यानि स्थितान्यतः ॥ १४
तस्माद्राघव यत्नेन पौरुषेण विवेकिना ।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत्समाश्रयेत् ॥ १५
सर्वथा ते समं यावन्न स्वभ्यस्ता मुहुर्मुहुः ।
तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः ॥ १६
वासनाक्षयविज्ञानमनोनाशा महामते ।
समकालं चिराभ्यस्ता भवन्ति फलदा मुने ॥ १७
एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम् ।
तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकीलिता इव ॥ १८
चिरकालोपरचिता अप्येते सुधियापि च ।
एकशः परमभ्येतुं न शक्ताः सैनिका इव ॥ १९
सममुद्योगमानीताः सन्त एते हि धीमता ।
संसाराब्धिं निकृन्तन्ति जलान्यद्रितटानिव ॥ २०
वासनाक्षयविज्ञानमनोनाशाः प्रयत्नतः ।
समं सेव्यास्तव चिरं तेन तात न लिप्यसे ॥ २१

---

इहोक्तस्थितिभेदेषु यत्नगौरवलाघवम् ।
वासनादिक्षयज्ञानसहाभ्यास उदीर्यते ॥ १ ॥

एतानि तानि पूर्वोक्तानि संसृतिव्रततेर्देहादीनि बीजानि त्वयोक्तानि तेषां कतमस्योपायस्य प्रयोगेण निवृत्त्या परमं पदं प्राप्यत इत्यर्थः । अथवा एतानि संनिहितानि 'अथास्याः संविदो राम सन्मात्रं बीजमुच्यते' इत्यादिना यानि भूमिकाभेदरूपाणि मोक्षबीजानि त्वयोक्तानि तेषु कतमस्य प्रयोगेण आश्रयणेन ॥ १ ॥ तत्र प्रथमव्याख्यानुसारेणोत्तरमाह—**एतेषा**मिति ॥ २ ॥ द्वितीयानुसारेणाप्याह—**सत्ते**त्यादिना । सत्तासामान्यं शोधिततत्पदार्थस्तस्य कोटिः पराकाष्ठा तत्स्थे चिद्रूपशोधितत्वंपदार्थैक्येनाखण्डैकरसे पदे स्थितिं निश्चलतां चित्तस्य बध्नासि चेदिति परेणान्वयः ॥ ३ ॥ किं भावनयैव नेत्याह—**तत्त्वज्ञे**ति । तत्त्वतः साक्षात्कृत्येति यावत् ॥ ४ ॥ तत्राशक्तावप्याह—**सत्ते**ति । शोधिते जगत्कारणतत्त्वे इत्यर्थः । **किंचिदि**ति । अखण्डैक्यबोधे यत्नापेक्षणादिति भावः ॥ ५ ॥ संवित्तत्त्वे शोधितत्वंपदार्थे । समानं पूर्वेण ॥ ६ ॥ ननु शोधनेन संविदंशस्य हाने संवेद्यांशस्यैव ध्यानमप्युपायः किं न स्यादिति चेदशक्यत्वादित्याह—**संवेद्ये** इति । संवेद्येभ्यः पुरः स्फुरन्त्याः संविदः पिधातुमशक्यत्वात्तत्पिधाने संवेद्यस्फूर्तेरेवाभावेन तद्ध्यानायोगाच्चेति भावः ॥ ७ ॥ चिन्तनचिन्तनीयादीनां संविदधीनसिद्धिकत्वं दर्शयति—**यदि**ति । यच्चिन्तयसि तत्संविदेव । या चिन्ता सापि संविदेव । संवित्तत्त्वकत्वात्सर्वस्येत्यर्थः ॥ ८ ॥ उपायान्तरमाह—**वासने**ति । चकारान्मनोनाशे च । तत्तर्हि ॥९॥ किमसौ पूर्वोक्तेभ्यः सुगमो नेत्याह—**पूर्वोक्तेभ्य** इति ॥ १० ॥ असुकरत्वमुपपादयितुं परस्पराधीनतामाह—**यावदि**ति ॥ ११ ॥ एवं तत्त्वज्ञानेनापि सह परस्पराश्रयता अनयोरस्तीत्याह—**यावदि**ति ॥ १२ ॥ १३ ॥ ॥ १४ ॥ कस्तर्हि तत्सिद्धावुपाय इति चेद्वैराग्यपूर्वकं सहैव त्रयाणामभ्यास इत्याह—**तस्मादि**ति ॥ १५ ॥ समं युगपत् । समाशतैर्वर्षशतैः ॥ १६ ॥ १७ ॥ संकीलिता मूर्च्छामरणादिमन्त्रशास्त्रोक्तदोषैः प्रतिबद्धाः ॥ १८ ॥ उपरचिताः सेवादिना वशीकृत्य स्वकार्ये उद्योजिताः । परं शत्रुं परमात्मानं च अभिमुखतया एतुं गन्तुम् । सैनिकाः सेनाभटा इव ॥ १९ ॥ जलानि पूरात्मना मिलितानि ॥ २० ॥ न लिप्यसे अलेपके

---

१ पूर्वोक्तेभ्यः प्रयत्नेभ्यो इति टीकाकृत्संमतः पाठः.

२ सर्वं एते इति पाठः.

त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निःशेषमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ २२
जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ २३
गच्छञ्शृण्वन्स्पृशञ्जिघ्रंस्तिष्ठञ्जाग्रत्स्वपंस्तथा ।
श्रेयसे परमायास्य त्रयस्याभ्यासवान्भव ॥ २४
वासनासंपरित्यागसमं प्राणनिरोधनम् ।
विदुस्तत्त्वविदस्तस्मात्तदाप्येवं समाहरेत् ॥ २५
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥ २६
प्राणायामचिराभ्यासैर्युक्त्या च गुरुदत्तया ।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥ २७
यथाभूतार्थदर्शित्वाद्वासना न प्रवर्तते ।
आदावन्ते च वस्तूनामविसंवादि यत्स्थितम् ॥ २८
रूपं तद्दर्शनं ज्ञानं क्षीयते तेन वासना ।
निःसङ्गव्यवहारित्वाद्भवभावनवर्जनात् ॥ २९
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते ।
वासनाविभवे नष्टे न चित्तं संप्रवर्तते ॥ ३०
संशान्ते पवनस्पन्दे यथा पांसुर्नभस्तले ।
यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हि ॥ ३१
तस्माज्जगति जायन्ते पांसवोऽवकरादिव ।
प्राणस्पन्दजये यत्नः कर्तव्यो धीमतोच्चकैः ॥ ३२
उपविश्योपविश्यैकचित्तकेन मुहुर्मुहुः ।
अथवैनं क्रमं त्यक्त्वा चित्ताक्रमणमेव चेत् ॥ ३३
रोचते तत्तदाप्नोषि कालेन बहुना पदम् ।
न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ ३४
अङ्कुशेन विना मत्तं यथा दुष्टं मतङ्गजम् ।
अध्यात्मविद्याधिगमः साधुसङ्गम एव च ॥ ३५
वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ।
एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥ ३६
याभिस्तज्जीयते क्षिप्रं धाराभिरिव भूरजः ।
सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये ॥ ३७
चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ।
विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् ॥ ३८
ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ।
चित्तं चित्तस्य वाऽदूरं संस्थितं स्वशरीरकम् ॥ ३९
साधयन्ति समुत्सृज्य युक्तिं ये तान्हठान्विदुः ।
भयाद्भयमुपायान्ति क्लेशात्क्लेशं व्रजन्ति ते ॥ ४०
निर्धृतिं नाधिगच्छन्ति दुर्भगा इव जन्तवः ।
भ्रमन्ति गिरिकूटेषु फलपल्लवभोजनाः ॥ ४१
मुग्धमुग्धधियो भीता वराका हरिणा इव ।
मतिरालूनशीर्णाङ्गी तदीया पेलवाङ्गिका ॥ ४२
न क्वचिद्याति विश्वासं मृगी ग्रामगता यथा ।
कल्लोलकलितं चेतस्तेषां जल इवाऽहिते ॥ ४३
प्रोह्यते प्रपतद्दूरं तृणं गिरिनदीष्विव ।
कालं यज्ञतपोदानतीर्थदेवार्चनभ्रमैः ॥ ४४
चिरमाधिशतोपेताः क्षपयन्ति मृगा इव ।
आत्मतत्त्वं विधिवशात्कदाचित्केचिदेव ते ॥ ४५

---

स्वभावे स्थास्यसि ॥ २१ ॥ हृदयग्रन्थयः अन्तःकरणतद्धर्मतादात्म्यसंसर्गाध्यासाः त्रुट्यन्ति च्छिद्यन्ते । गुणास्तन्तव इव ॥ २२ ॥ ननु त्रयाणामपि चिराभ्यासः किमर्थं तत्राह—**जन्मान्तरे**ति । शतशब्द आनन्त्ये । संसारसन्ततिर्द्वैतवासना ॥ २३ ॥ २४ ॥ त्रिभिः सह चतुर्थः प्राणायामोऽप्यभ्यसनीय इत्याह—**वासने**ति । समाहरेदभ्यसेत् ॥२५॥२६॥ योगाभ्यासकुशलगुरूपदिष्टयुक्त्या स्वस्तिकाद्यासनजयेन हितमितमेध्याशनैर्यमनियमादियोगेन चेत्यर्थः ॥ २७ ॥ सर्ववस्तूनामादावन्ते चकारान्मध्ये च अविसंवादि अविप्रलम्भि यत्सन्मात्ररूपं स्थितं स एव यथाभूतार्थस्तद्दर्शित्वादित्यर्थः ॥ २८ ॥ निःसङ्गं बहिर्मुखजनसङ्गरहितं निःसंकल्पं च यथा प्राप्तव्यवहारशीलत्वात् । भवभावनानि सांसारिकमनोरथास्तेषां वर्जनात् ॥२९॥ वासनालक्षणे विभवे धनसंचये नष्टे सति लज्जयेव न प्रवर्तते ॥ ३० ॥ पांसोरिव चित्तस्यापि पवनाधीनस्पन्दत्वादिति भावः ॥ ३१ ॥ अवकरात्पांसुराशेरिव ॥ ३२ ॥ हठयोगाभ्यासाशक्तौ राजयोगोऽभ्यसनीय इत्याह—**अथवे**ति ॥ ३३ ॥ बहु**ने**ति । दुर्दान्तस्य चित्तस्याल्पकालाभ्यासेन वशीकर्तुमशक्यत्वादिति भावः । युक्तिं अध्यात्मविद्यासाधुसंगसहितं दर्शितं द्विविधं योगं विना ॥३४॥ तदेवाह—**अध्यात्मे**ति ॥३५॥३६॥ यद्यपि प्राणसंरोधनं दुर्दान्तदमनोपायत्वाद्धठ एव तथापि सच्छास्त्रगुरूपदिष्टमार्गरहितोऽन्ये चोपवेशनशयनकायशोषणमन्त्रयन्त्रश्मशानसाधनादिसाहसरूपा हठा अत्र निवार्यन्त इति बोध्यम् ॥३७॥३८॥ उक्तलक्षणां चतुर्विधां युक्तिं समुत्सृज्य उपायान्तरेण चित्तं चित्तसन्निहितं शरीरं ये साधयन्ति स्थिरीकर्तुं यतन्ते तान्पुरुषान् हठान् वृथाश्रमान्विदुः सांप्रदायिका इत्यर्थः ॥ ३९ ॥ किंच तेषां सच्छास्त्रमार्गविभ्रंशादनर्थपरम्परैव फलति न चित्तादिजय इत्याह—**भयादि**ति ॥४०॥ निर्धृतिं सम्यग्धैर्यविश्रान्तिम् । दुर्भगाः पापिनो जन्तव इव ॥ ४१ ॥ ४२ ॥ आऽहिते भयस्थाने । अहिते इति वा च्छेदः ॥ ४३ ॥ प्रोह्यते रागादिना बलान्नीयते दूरम् । प्रपतद्विषयानुपातिस्वभावम् । बहुक्लेशानिश्चितमोक्षफलकधर्ममेघाख्यसमाध्यभ्यासं विहाय स्वल्पफलकसंदिग्धमोक्षफलकयज्ञदानाद्यनुष्ठानमपि क्लेशमात्रमिति

दुःखदोषशतादग्धा विदन्ति न विदन्ति वा ।
आगमापायिनोऽनित्या नरकस्वर्गमानुषैः ॥ ४६
पातोत्पातकराकाराः क्षीयन्ते कन्दुका इव ।
इतो गच्छन्ति नरकं ततः स्वर्गमिहैव च ॥ ४७
आवृत्तिभिर्निवर्तन्ते सरसीव तरङ्गकाः ।
तस्माच्चैतां परित्यज्य दुर्दृष्टिं रघुनन्दन ॥ ४८
शुद्धां संविदमाश्रित्य वीतरागः स्थिरो भव ।
ज्ञानवानेव सुखवान्ज्ञानवानेव जीवति ।
ज्ञानवानेव बलवांस्तस्माज्ज्ञानमयो भव ॥ ४९
संवेद्यवर्जितमनुत्तममाद्यमेकं
संवित्पदं विकलनं कलयन्महात्मन् ।
हृद्येव तिष्ठ कलनारहितः क्रियां तु
कुर्वन्नकर्तृपदमेत्य शमोदितश्रीः ॥ ५०

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषूपशमप्रकरणे संसृतिनिराकरणक्रमयोगोपदेशो नाम द्विनवतितमः सर्गः ९२

---

## त्रिनवतितमः सर्गः ९३

श्रीवसिष्ठ उवाच ।

मनागपि विचारेण चेतसः स्वस्य निग्रहः ।
मनागपि कृतो येन तेनाप्तं जन्मनः फलम् ॥ १
विचारकणिका यैषा हृदि स्फुरति पेलवा ।
एषैवाभ्यासयोगेन प्रयाति शतशाखताम् ॥ २
किंचित्प्रौढविचारं तु नरं वैराग्यपूर्वकम् ।
संश्रयन्ति गुणाः शुद्धाः सरः पूर्णमिवाण्डजः ॥ ३
सम्यग्विचारिणं प्राज्ञं यथाभूतावलोकिनम् ।
आसादयन्त्यपि स्फारा नाविद्याविभवा भृशम् ॥ ४
किं कुर्वन्तीह विषया मानस्यो वृत्तयस्तथा ।
आधयो व्याधयो वापि सम्यग्दर्शनसन्मतेः ॥ ५
क्व भ्रमत्पवनापूरास्तडित्पटलपाटलाः ।
पुष्करावर्तजलदा गृहीता बालमुष्टिभिः ॥ ६
क्व नभोमध्यसंस्थेन्दुर्मुग्धैर्मणिसमुद्गकैः ।
मुग्धयाऽङ्गनया बद्धो मुग्धेन्दीवरशङ्कया ॥ ७
क्व कटप्रोच्चलद्भृङ्गमण्डलोत्पलशेखराः ।
मुग्धस्त्रीश्वासमधुरैर्मशकैर्मथिता गजाः ॥ ८
क्वेभमुक्ताफलोल्लाससलसत्सन्नखपञ्जराः ।
सिंहाः समरसंरब्धा हरिणैः प्रविमर्दिताः ॥ ९
क्व विषोल्लासनिर्यासदग्धोन्नतवनद्रुमाः ।
क्षुधिताजगराः क्षुब्धैर्निगीर्णा बालदर्दुरैः ॥ १०

---

प्रकृतप्रशंसार्थमाह—कालमित्यादिना । कालं चिरं क्षपयन्तीति संवन्धः ॥४४॥४५॥ यतः दुःखानां रागादिदोषाणां च शतैरादग्धाः अतो न विदन्ति विदन्ति वा । अनित्या एकत्रास्थिराः । नरकस्वर्गमानुषैर्भोगभेदैर्निमित्तैः पातोत्पातकरा आकारा देहभेदा येषां तथाविधा भूत्वा क्षीयन्ते मरणादिना पीड्यन्ते ॥४६॥ इहैव दंशमशकादिजन्मावृत्तिभिर्निवर्तन्ते परिवर्तन्ते ॥ ४७ ॥ एतां वर्णितहठादिलक्षणाम् ॥ ४८ ॥ आश्रित्य ज्ञात्वा ॥ ४९ ॥ विकलनं निर्विकल्पं निर्वासनं निर्विकारं च कलना चेतसो बाह्योन्मुखता तद्रहितस्तन्निरोधशीलः सन् हृदि हार्दे ब्रह्मण्येव तिष्ठ । व्युत्थानकाले तु यथोचितां क्रियां कुर्वन्नपि असंगशमेन उदिता श्रीः प्रागुक्तजीवन्मुक्तगुणसंपद्यस्य तथाविधः सन् अकर्तृपदमेत्य तिष्ठेत्यर्थः ॥५०॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे संसृतिनिराकरणक्रमयोगोपदेशो नाम द्विनवतितमः सर्गः ॥ ९२ ॥

विचारप्रौढिवैराग्यसद्गुणैर्बोधसंस्थितौ ।
विषयैरप्रधृष्यत्वाद्वर्ण्यतेऽत्र समास्थितिः ॥ १ ॥

तत्रादावल्पतरस्यापि विचारस्य चित्तनिग्रहस्य च रुच्युत्पादनप्रवर्तनद्वारा क्रमान्मोक्षे पर्यवसानं भवतीत्याह—मनागिति । जन्मनः फलमित्यनेन विचारशून्यस्य जन्मैव निष्फलमिति ध्वनितम् ॥१॥ तस्य जन्मसाफल्योपयोगितामुपपादयति—विचारेत्यादिना । विचारकल्पवृक्षस्य कणिका अङ्कुरः ॥ २ ॥ गुणाः प्रागुक्तशमदमादयः । अण्डजाः पक्षिणो मत्स्याश्च ॥ ३ ॥ यथाभूतं यथार्थमात्मतत्त्वमवलोकयितुं शीलमस्य । स्फाराः प्रचयप्रकर्षाभ्यां ख्याता अपि हैरण्यगर्भपदान्ता अविद्याकार्यभूता विभवा नासादयन्ति न प्रलोभयन्ति ॥ ४ ॥ किं कुर्वन्ति कं विकारं जनयन्ति । निर्विकारात्मभूतत्वात्तस्येति भावः ॥५॥ तत्प्रलोभनासामर्थ्यमेवान्योक्तिभिर्द्रढयति—क्वेत्यादिना । पुष्करावर्ताख्याः प्रलयजलदा बालमुष्टिभिः क्व गृहीताः ॥ ६ ॥ मुग्धैर्विकाशरम्यैरिन्दीवरैः स्वनेत्रशोभापराभवशङ्कया तद्विकाशहेतुर्नभोमध्यसंस्थेन्दुर्मणिमयैः समुद्गकैः संपुटकैः क्व बद्धः ॥ ७ ॥ कटेभ्यो गण्डस्थलेभ्यः प्रोच्चलन्ति भृङ्गमण्डलान्येवोत्पलसादृश्यादुत्पलानि शेखरेषु येषां तथाविधा गजा मुग्धस्त्रीश्वासैरपि पराणुद्यमानत्वात्तेष्वपि मधुरैः सौम्यैर्निर्वीर्यैरिति यावत् । मशकैः क्व मथिता निहताः । मुग्धस्त्रीभिः श्वासेन गजवधाय प्ररणाद्वा मधुरैरुत्साहरम्यैः ॥ ८ ॥ इभानां स्वविदारितगजानां मुक्ताफलसंबन्धिभिरुल्लासैः कान्तिभिर्लसन्तो नखरपञ्जरा येषाम् ॥ ९ ॥ विषस्योल्लास उपचयस्तत्प्रयुक्तैर्निर्यासप्रायैर्विषबिन्दुभिर्दग्धा उन्नता वनद्रुमा यैः अथवा सृक्किदेशास्वदेहे मुहुः प्रसृतार्धशुष्कविषोल्लासा एव निर्यासा येषां तथाविधाः श्यामत्वादुत्थितत्वाच्च दग्धशाखखर्जूरद्रुमप्रायाः । देश-

१ कोभ्रमत् इति पाठः. २ सुन्दरैः.

क प्राप्तभूतिको धीरो ज्ञातज्ञेयो विवेकवान् ।
आक्रान्तः किल विक्रान्तो विषयेन्द्रियदस्युभिः ॥ ११
विचारधियमप्रौढां हरन्ति विषयारयः ।
प्रचण्डपवनामृद्वीं कृत्तवृन्तां लतामिव ॥ १२
न विवेकलवं प्रौढं भङ्क्तुं शक्ता दुराशयाः ।
कल्पक्षोभमहाधीरं शैलं मन्दानिला इव ॥ १३
अगृहीतमहापीठं विचारकुसुमद्रुमम् ।
चिन्तावात्याविधुन्वन्ति नास्थिरस्थितिसुस्थितम् १४
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
न विचारमयं चेतो यस्यासौ मृत उच्यते ॥ १५
किमिदं स्याज्जगत्किं स्याद्देहमित्यनिशं शनैः ।
विचारयाध्यात्मदृशा स्वयं वा सज्जनैः सह ॥ १६
अन्धकारहरेणाशु विचारेण परं पदम् ।
दृश्यते विमलं वस्तु प्रदीपेनेव भास्वता ॥ १७
ज्ञानेन सर्वदुःखानां विनाश उपजायते ।
कृतालोकविलासेन तमसामिव भानुना ॥ १८
ज्ञाने प्रकटतां याते ज्ञेयं व्ययमुदेत्यलम् ।
रवावभ्युदिते भूमावालोक इव निर्मलः ॥ १९
येन शास्त्रविचारेण ब्रह्मतत्त्वं प्रबुध्यते ।
तज्ज्ञानमुच्यते ज्ञेयादभिन्नमिव संस्थितम् ॥ २०
विचारोत्थात्मविज्ञानं ज्ञानमङ्ग विदुर्बुधाः ।
ज्ञेयं तस्यान्तरेवास्ति माधुर्यं पयसो यथा ॥ २१
सम्यग्ज्ञानसमालोकः पुमाञ्ज्ञेयमयः स्वयम् ।
भवत्यापीतमैरेयः सदा मदमयो यथा ॥ २२
समं स्वरूपममलं ज्ञेयं ब्रह्म परं विदुः ।
ज्ञानाभिगममात्रेण तत्स्वयं संप्रसीदति ॥ २३
ज्ञानवानुदितानन्दो न क्वचित्परिमज्जति ।
जीवन्मुक्तो गतासङ्गः सम्राडात्मेव तिष्ठति ॥ २४
ज्ञानवान्हृद्यशब्देषु वीणावंशरवादिषु ।
कामिन्याः कान्तगीतेषु संभोगमलिनेषु च ॥ २५
वसन्तमदमत्तानां षट्पदानां स्वनेषु च ।
प्रावृट्प्रसरपुष्पेषु जलदस्तनितेषु च ॥ २६
उत्ताण्डवशिखण्डेषु केकाकलरवेषु च ।
रणिताम्भोदखण्डेषु सारसक्वणितेषु च ॥ २७
कर्तर्यादिकरान्तेषु गम्भीरमुरजेषु च ।
ततावनद्धसुषिरचित्रवाद्यस्वनेषु च ॥ २८
केषुचिन्न निबध्नाति रूक्षेषु मधुरेषु च ।
रणितेषु रतिं राम पद्मेष्विव निशाकरः ॥ २९
ज्ञानवान्बालकदलीस्तम्भपल्लवपालिषु ।
सुरगन्धर्वकन्याङ्गलतानन्दनकेलिषु ॥ ३०
केषु कश्चिन्न बध्नाति स्वायत्तेष्वप्यसक्तधीः ।
राम स्पर्शरतिं धीरो हंसो मरुमहीष्विव ॥ ३१
ज्ञानवान्पिण्डखर्जूरकदम्बपनसादिषु ।
मृद्वीकौर्वारुकाक्षोटबिम्बजम्बीरजातिषु ॥ ३२
मदिरामधुमैरेयमाध्वीकासवभूमिषु ।
दधिक्षीरघृतामिक्षानवनीतौदनादिषु ॥ ३३

---

विशेषे द्रुमवदुत्थिता मनुष्यवत्कूजन्तः श्यामा अजगरविशेषा वृक्षभ्रान्त्या समीपगतान्मनुष्यादीन्परिवृत्तेन व्यात्तेन मुखेन झटिति ग्रसन्तीति प्रसिद्धम् । बालदर्दुरैः क्षुद्रभेकैः ॥ १० ॥ प्राप्तचतुर्थपञ्चमादिभूमिकः । विक्रान्त उत्तरभूमिकाजये उद्युक्तः ॥ ११ ॥ तत्पूर्वभूमिकास्वेवापक्वचित्तानां विघ्नप्रसक्तिर्नोत्तरत्रेत्याह—**विचारे**ति । कृत्तवृन्तां छिन्नप्रतानवतीम्[3] ॥ १२ ॥ दुष्टा आशयाः रागादिवृत्तयो भङ्क्तुं विनाशयितुं न शक्ताः । यथा अवान्तरकल्पक्षोभेषु महाधीरं मेर्वादिशैलं भङ्क्तुं मन्दानिला न शक्तास्तद्वत् ॥ १३ ॥ न गृहीतं महत् पीठं मूलबन्धनं येन तम् । विचाराः कादाचित्का आर्तवकुसुमप्राया एव नतु फलितास्तथाविधद्रुमप्रायम् ॥ १४ ॥ अतएव विचारविच्छित्तिकाले प्रमादाद्रागादिमृत्युनाऽसौ ग्रस्यत इत्याशयेनाह—**गच्छत** इति । यस्य यदा तदा असौ मृत इति योज्यम् । तथा चोक्तं लैङ्गे—'सा हानिस्तन्महच्छिद्रं सान्धता सा च मूकता । यत्क्षणं वा मुहूर्तं वा शिवमेकं न चिन्तयेत् ॥' इति ॥ १५ ॥ स्वयमेक एकान्ते वा सज्जनैर्गुरुसतीर्थ्यादिभिः सह वा ॥ १६ ॥ विचारस्य फलावश्यंभावमाह—**अन्धकारे**ति । प्रमादान्धकारहरेण ॥ १७ ॥ ज्ञानफले द्वे आह—**ज्ञानेने**ति द्वाभ्याम् ॥ १८ ॥ १९ ॥ ज्ञानलक्षणमाह—**येने**ति । ज्ञेयब्रह्माकारत्वाद्भेदबाधरूपत्वाच्चाभिन्नमिव संस्थितं दृढप्रतिष्ठितम् ॥ २० ॥ ॥ २१ ॥ सदा ज्ञेयमयः अनुभूयमानब्रह्मानन्दप्रचुरः ॥ २२ ॥ संप्रसीदति निरस्ताविद्यातत्कार्यपङ्कं भवति ॥ २३ ॥ सम्राट् राजाधिराजस्तदात्मेव पूर्णमनोरथः ॥ २४ ॥ तस्य रागिजनस्पृहणीयेषु भावेष्वनासङ्गं प्रपञ्चयति—**ज्ञानवानि**त्यादिना । सर्वेषां सप्तम्यन्तानां रतिं न निबध्नातीति व्यवहितेनान्वयः ॥ २५ ॥ प्रावृट्प्रसरप्रयुक्तपुष्पेषु ॥ २६ ॥ २७ ॥ कर्तरीसूचीशलाकासूत्रकण्टककरान्तोपायवादनीयेषु वाद्यभेदेषु । तन्त्रीभिस्ततं वीणादि । चर्मणा अवनद्धं मुरजादि । सुषिरमन्तश्छिद्रं वंशादि । चित्रं परिशेषाद्घनं कांस्यतालादि च यद्वाद्यं तत्स्वनेषु च ॥ २८ ॥ २९ ॥ बालकदलीस्तम्भानां पल्लवपङ्क्तयो यत्र । सुरगन्धर्वकन्यानामिवाङ्गानि अवयवा यासां तथाविधलताशालिनन्दने केलिषु क्रीडासु । तासामङ्गलताभिर्नन्दने केलिषु वा ॥ ३० ॥ स्पर्शरतिं भोगेच्छाम् ॥ ३१ ॥ पिण्डखर्जूरादयः फलजातिभेदाः ॥ ३२ ॥ मदिरादयो

---

१ महीपीठं इति पाठश्चिन्त्यः. २ राजिषु इति पाठः. ३ प्रतानबन्धनां इति पाठः.

षड्रसेषु विचित्रेषु लेह्यपेयविलासिषु।
फलेष्वन्येषु मूलेषु शाकेष्वप्यामिषेषु च॥ ३४

केषुचिन्नानुबध्नाति तृप्तमूर्तिरसक्तधीः।
आस्वादनरतिर्विप्रः स्वशरीरलवेष्विव॥ ३५

ज्ञानवान्यमचन्द्रेन्द्ररुद्रार्कानिलसद्मसु।
मेरुमन्दरकैलाससह्यदर्दुरसानुषु॥ ३६

कौशेयदलजालेषु चन्द्रबिम्बकलादिषु।
कल्पपादपकुञ्जेषु देहशोभाविलासिषु॥ ३७

रत्नकाञ्चनकुड्येषु मुक्तामणिमयेषु च।
तिलोत्तमोर्वशीरम्भामेनकाङ्गलतासु च॥ ३८

केषुचिद्दर्शनं श्रीमान्नाभिवाञ्छत्यसक्तधीः।
परिपूर्णमना मानी मौनी शत्रुषु चाचलः॥ ३९

ज्ञानवान्कुन्दमन्दारकह्लारकमलादिषु।
कुमुदोत्पलपुन्नागकेतक्यगुरुजातिषु॥ ४०

कदम्बचूतजम्ब्वाम्रकिंशुकाशोकशाखिषु।
जपातिमुक्तसौवीरबिम्बपाटलजातिषु॥ ४१

चन्दनागुरुकर्पूरलाक्षामृगमदेषु च।
काश्मीरजलवङ्गैलाकङ्कोलतगरादिषु॥ ४२

केषुचिन्न निबध्नाति सौगन्ध्यरतिमेकधीः।
समबुद्धिरविक्षोभो मद्यामोदेष्विव द्विजः॥ ४३

अब्धौ गुडगुडारावे प्रतिश्रुत्स्वस्वने गिरौ।
निनादे च मृगेन्द्राणां न क्षुभ्यति मनागपि॥ ४४

द्विषद्भेरीनिनादेन पटहारणितेन च।
कटुकोदण्डघोषेण न विभेति मनागपि॥ ४५

मत्तवारणबृंहासु वेतालकलनासु च।
पिशाचरक्षःक्ष्वेडासु मनागपि न कम्पते॥ ४६

अशनिस्वनघोषेण नगस्फोटरवेण च।
ऐरावणनिनादेन सम्यग्ध्यानी न कम्पते॥ ४७

वहत्क्रकचकाषेण सितासिदलनेन च।
शराशनिनिपातेन कम्पते न स्वरूपतः॥ ४८

नानन्दमेत्युपवने न खेदमुपगच्छति।
न खेदमेति मरुषु नानन्दमुपगच्छति॥ ४९

पूताङ्गारसमाकल्पसैकतेष्वपि धन्वसु।
पुष्पप्रकरसंछन्नमृदुशाद्वलभूमिषु॥ ५०

क्षुरधारासु तीक्ष्णासु शय्यासु च नवोत्पलैः।
उन्नताचलदेशेषु कूपकोशतलेषु च॥ ५१

शिलास्वर्कांशुरूक्षासु मृद्वीषु ललनासु च।
संपत्स्वापत्सु चोग्रासु रमणेषूत्सवेषु च॥ ५२

विहरन्नपि नोद्वेगी नानन्दमुपगच्छति।
अन्तर्मुक्तमना नित्यं कर्मैकर्तेव तिष्ठति॥ ५३

अयःसंकुचिताङ्गासु नरकारण्यभूमिषु।
परस्परेरितानन्तकुन्ततोमरवृष्टिषु॥ ५४

न बिभेति न वादत्ते वैवश्यं न च दीनताम्।
समः स्वस्थमना मौनी धीरस्तिष्ठति शैलवत्॥ ५५

अपवित्रमपथ्यं च विषसिक्तं मलाद्यपि।
भुक्त्वा जरयति क्षिप्रं क्लिन्नं नष्टं च मृष्टवत्॥ ५६

बिम्बप्रतिविषाकल्कक्षीरेक्षुसलिलान्धसाम्।
असक्तबुद्धिस्तत्त्वज्ञो भवत्यास्वादने समः॥ ५७

---

मद्यजातिभेदाः। तप्ते पयसि दधिसेकात्पिण्डीभूतं द्रव्यमामिक्षा॥ ३३॥ आमिषेषु मांसेषु॥ ३४॥ स्वशरीरलवेषु स्वमांसखण्डेष्विव॥ ३५॥ दिक्पालपङ्क्तिपाठाद्रुद्र ईशानः॥ ३६॥ कौशेयानीव मृदुस्निग्धानि दलजालानि पल्लवसमूहा येष्विति प्राक्तनसानुविशेषणम्। देहशोभया दिव्यशरीरसंपत्त्या विलसनशीलेषु॥ ३७॥ कुड्यपदेन तदवयविनो गृहा लक्ष्यन्ते॥ ३८॥ अचलः द्वेषाद्यप्रकम्प्यः॥ ३९॥ कुन्दादिषु पुष्पजातिषु॥ ४०॥ कदम्बादिवृक्षजातिषु। जपादिगुल्मवल्लीजातिषु॥ ४१॥ चन्दनादिष्वङ्गरागभेदेषु। लाक्षा अलक्तकरसः॥ ४२॥ द्विजो मद्यामोदेष्विव रतिं न निबध्नाति प्रियाप्रिययोः समबुद्धिः। अप्रियेष्वविक्षोभश्च॥ ४३॥ एवं भयहेतुध्वनिभ्यस्तस्य भयं न जायत इत्याह—अब्धावित्यादिना। प्रतिश्रुत्प्रतिध्वनिस्तद्रूपे स्वस्वने आकाशजशब्दे॥ ४४॥ पटह आडम्बराख्यो वाद्यविशेषः॥ ४५॥ मत्तवारणानां बृंहासु गर्जितेषु। बृंहेः 'गुरोश्च हलः' इत्यप्रत्ययः। वेतालानां कलनासु कलहादिध्वनिषु। पिशाचरक्षसां क्ष्वेडासु सिंहनादेषु॥ ४६॥ ऐरावण ऐरावतस्तस्य निनादेन॥ ४७॥ वहतश्चलतः क्रकचस्य काषेण घर्षणेन। स्वरूपतः स्वरूपस्थितिलक्षणात्समाधेर्न कम्पते न चलतीत्यर्थः॥ ४८॥ ४९॥ पूतैर्भस्मापसरणेनोज्ज्वलितैरङ्गारैः समानि अकल्पान्यसह्यानि सैकतानि येषु तथाविधेषु धन्वसु मरुदेशेषु॥ ५०॥ कूपकोशस्य कूपोदरस्य तलेष्वधोभूमिषु॥ ५१॥ अर्कांशुरूक्षासु प्रतप्तासु कठिनासु च। रमणेषु क्रीडनेषु॥ ५२॥ भारवहनादिकर्मकर्ता श्रान्तः पुरुषो भारोत्तारण इवान्तर्मुखमना विश्रान्तिसुखमनुभवन्नुदासीनस्तिष्ठतीत्यर्थः॥ ५३॥ अयोयन्त्रैः संकुचिताङ्गासु माण्डव्यस्येव प्रारब्धशेषोपनीतासु नरकारण्यभूमिषु॥ ५४॥ वैवश्यं व्याकुलताम्॥ ५५॥ मलादि गोमयाद्यपि। क्लिन्नं सार्द्रीभूतम्। नष्टं गतरसमपि। मृष्टं परिष्कृतमन्नं तद्वत्॥ ५६॥ सद्योबुद्धिहरत्वेन प्रसिद्धस्य बिम्बफलस्य प्रतिविषाणां विषप्रायाणामाकल्कानां सर्वतः कषायाणां क्षीरस्येक्षोः सलिलस्य अन्धस

मैरेयमदिराक्षीररक्तमेदोरसासवैः ।
रूक्षास्थितृणकेशान्तैर्न हृष्यति न कुप्यति ॥ ५८
जीवितस्यापि हर्तारं दातारं चैकरूपया ।
दृशा प्रसादमाधुर्यशालिन्या परिपश्यति ॥ ५९
स्थिरास्थिरशरीरेषु रम्यारम्येषु वस्तुषु ।
न हृष्यति ग्लायति वा सदा समतयेद्धया ॥ ६०
मुक्तास्थत्वादनास्थेयरूपत्वाज्जगतः स्थितौ ।
नूनं विदितवेद्यत्वान्नीरागत्वात्स्वचेतसः ॥ ६१
न कस्यचिन्नो कदाचिदक्षस्य विषयस्थितौ ।
ददाति प्रसरं साधुराधिप्रोज्झितया धिया ॥ ६२
अतत्त्वज्ञमविश्रान्तमलब्धात्मानमस्थितम् ।
निगिरन्तीन्द्रियाण्याशु हरिणा इव पल्लवम् ॥ ६३
उह्यमानं भवाम्भोधौ वासनावीचिवेल्लितम् ।
निगिरन्तीन्द्रियग्राहा महाक्रन्दपरायणम् ॥ ६४
विचारिणं भव्यपदं विश्रान्तधियमात्मनि ।
न हरन्ति विकल्पौघा जलौघा इव पर्वतम् ॥ ६५
सर्वसंकल्पसीमान्ते विश्रान्ता ये परे पदे ।
तेषां लब्धस्वरूपाणां मेरुरेव तृणायते ॥ ६६
जगज्जरत्तृणलवो विषं चामृतमेव च ।
क्षणः कल्पसहस्रं च सममाततचेतसाम् ॥ ६७
संविन्मात्रं जगदिति मत्वा मुदितबुद्धयः ।
संविन्मयत्वादन्तस्थजगत्का विहरन्त्यमी ॥ ६८

संविन्मात्रपरिस्पन्दे जागते वस्तुपञ्जरे ।
किं हेयं किमुपादेयमिह तत्त्वविदां मतम् ॥ ६९
संविदेवेदमखिलं भ्रान्तिमन्यां त्यजानघ ।
संविन्मयवपुः स्फारं किं जहाति किमीहते ॥ ७०
यदेतज्जायते भूमेर्भविष्यत्पल्लवाङ्कुरम् ।
तत्संविदेव प्रथते तथा तत्त्वाङ्कुरस्थितम् ॥ ७१
आदावन्ते च यन्नास्ति वर्तमानेऽपि तस्य च ।
कंचित्काललवं दृष्टा सत्तासौ संविदो भ्रमः ॥ ७२
इति मत्वा धियं त्यक्त्वा भावाभावानुपातिनीम् ।
निःसङ्गसंविद्रूपो भव भावान्तमागतः ॥ ७३
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
कर्म कुर्वन्नकुर्वन्वा निःसङ्गः सन्न लिप्यते ॥ ७४
गतसङ्गेन मनसा कुर्वन्नपि न लिप्यते ।
सुखदुःखैर्महाबाहो मनोरथदशास्विव ॥ ७५
गतसङ्गां मतिं कुर्वन्कुर्वन्नप्यङ्गयष्टिभिः ।
न लिप्यते सुखैर्दुःखैर्मनोरथदशास्विव ॥ ७६
गतसङ्गमना दृष्ट्या पश्यन्नपि न पश्यति ।
एतदन्यस्थचित्तत्वाद्बालेनाप्यनुभूयते ॥ ७७
गतसङ्गमना जन्तुः पश्यन्नेव न पश्यति ।
न शृणोत्यपि शृण्वंश्च न स्पृशत्यपि च स्पृशन् ॥ ७८
न जिघ्रत्यपि संजिघ्रन्नुन्मिषन्निमिषन्नपि ।
पदार्थे च पतत्येव बलात्पतति नाप्ययम् ॥ ७९

ओदनस्य च आस्वादने विषयसमस्तुल्यचित्तो भवतीत्यर्थः ॥५७॥ रक्षःपिशाचादिष्वपि जीवन्मुक्तानां संभवात्तत्साधारण्येनाह—**मैरेये**ति ॥५८॥ तस्य शत्रुमित्रयोरपि समदृष्टिमाह—**जीवितस्ये**ति । जीवितस्य दातारमित्यपि संबन्धः ॥ ५९ ॥ स्थिरेषु चिरस्थायिषु देवादिशरीरेष्वस्थिरेषु मर्त्यादिशरीरेषु च । रम्यारम्येषु तद्भोग्यवस्तुषु च । समतया इद्धया दीप्तया ॥ ६० ॥ चेतसो नीरागत्वाद्विदितवेद्यत्वाच्च हेतोर्जगतः स्थितौ मुक्तास्थत्वाद्विषयाणां च मिथ्यात्वेन आस्थायामयोग्यरूपत्वाच्च अक्षस्य विषयस्थितौ प्रसरं सदा विचाररससेवनात्कदाचिदपि न ददाति । कस्यचिदपि न ददातीति द्वयोरन्वयः ॥६१॥ ॥ ६२ ॥ किं तर्हि इन्द्रियाणि निगिरन्ति तमाह—**अतत्त्वज्ञ**मिति द्वाभ्याम् ॥ ६३ ॥ ६४ ॥ लोभादिविकल्पा अप्यात्मज्ञं न चालयन्तीत्याह—**विचारिण**मित्यादिना ॥६५॥६६॥ आततचेतसां पूर्णात्माकारविस्तृतचित्तानाम् ॥ ६७ ॥ सर्वस्य जगत आन्तरप्रत्यङ्मात्रत्वदर्शनादन्तस्थजगत्काः ॥ ६८ ॥ ॥ ६९ ॥ ईहते इच्छति । उपादत्ते इति यावत् ॥ ७० ॥ अतीते स्पृहाया अदर्शनादज्ञहरिणस्पृहणीयं वर्तमानं भूमेः सकाशा-

यत्पल्लवाङ्कुरप्रायं विषयजातं जायते यच्च भविष्यत्तत्सर्वं तत्त्वज्ञदृशा यथा संविदेव प्रथते तथा वियदादितत्त्वाङ्कुरमिव स्थितं शब्दस्पर्शादिविषयान्तरमपीत्यर्थः ॥ ७१ ॥ उक्तार्थसिद्धौ युक्तिमाह—**आदा**विति । चकारस्त्वर्थे । तस्य वर्तमाने मध्ये कंचित्काललवं दृष्टा सत्ता संविदो भ्रम एवेत्यर्थः ॥ ७२ ॥ इति उक्तमर्थं मत्वा मननेन दृढीकृत्य भावाभावविकल्पानुपातिनीं धियं त्यक्त्वा ॥ ७३ ॥ केवलैरासङ्गदोषशून्यैः । कुर्वन्व्युत्थानकाले । अकुर्वन्समाधिकाले ॥ ७४ ॥ मनोरथदशासु मनोराज्यविभवेषु नष्टेष्वनष्टेषु वा यथा सुखदुःखैर्न लिप्यते तद्वत् ॥ ७५ ॥ अकर्त्रभोक्त्रात्मदर्शनेन मतिं गतसङ्गां कुर्वन् । अङ्गयष्टिभिः शरीराद्युपकरणैः कुर्वन्व्यवहरन्नपि ॥ ७६ ॥ अन्यस्थचित्तत्वादिति अन्यव्यासक्तचित्तत्वात्पश्यन्नपि न पश्यतीत्येतद्बालेन, अपिशब्दादन्यैश्च सर्वैरनुभूयत इत्यर्थः । 'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्' इति श्रुतिरप्यत्र संवादिनीति भावः ॥७७॥७८॥ उन्मिषन्नेत्रे उन्मीलयन्नपि निमिषन्ननुन्मीलयन्नेव । एवं कर्मेन्द्रियगणे च पदार्थे स्वस्वविषये संस्कारबलात्पतत्यपि सति अयं न पतति ॥ ७९ ॥

१ अस्थितिं इति पाठः. २ जीयते इति पाठश्चिन्त्यः.

देशान्तरस्थचेतोभिरेतदात्मगृहस्थितैः ।
अप्रौढमतिभिः साधु मूर्खैरप्यनुभूयते ॥ ८०

सङ्गः कारणमर्थानां सङ्गः संसारकारणम् ।
सङ्गः कारणमाशानां सङ्गः कारणमापदाम् ॥ ८१

सङ्गत्यागं विदुर्मोक्षं सङ्गत्यागादजन्मता ।
सङ्गं त्यज त्वं भावानां जीवन्मुक्तो भवानघ ॥ ८२

श्रीराम उवाच ।

सर्वसंशयनीहारशरन्मारुत हे मुने ।
सङ्गः किमुच्यते ब्रूहि समासेन मम प्रभो ॥ ८३

श्रीवसिष्ठ उवाच ।

भावाभावे पदार्थानां हर्षामर्षविकारदा ।
मलिना वासना यैषा सा सङ्ग इति कथ्यते ॥ ८४

जीवन्मुक्तशरीराणामपुनर्जन्मकारिणी ।
मुक्ता हर्षविषादाभ्यां शुद्धा भवति वासना ॥ ८५

तामसङ्गाभिधां विद्धि यावद्देहं च भाविनी ।
तया यत्क्रियते कर्म न तद्बन्धाय वै पुनः ॥ ८६

अजीवन्मुक्तरूपाणां दीनानां मूढचेतसाम् ।
युक्ता[1] हर्षविषादाभ्यां बन्धनी वासना भवेत् ॥ ८७

सैवोक्ता सङ्गशब्देन पुनर्जननकारिणी ।
तया यत्क्रियते कर्म तद्बन्धायैव केवलम् ॥ ८८

एवं रूपं परित्यज्य सङ्गं स्वात्मविकारदम् ।
यदि तिष्ठसि निर्व्यग्रः कुर्वन्नपि न लिप्यसे ॥ ८९

हर्षामर्षविषादाभ्यां यदि गच्छसि नान्यताम् ।
वीतरागभयक्रोधस्तदसङ्गोऽसि राघव ॥ ९०

दुःखेन ग्लानिमायासि यदि हृष्यसि नो सुखैः ।
आशावैवश्यमुत्सृज्य तदसङ्गोऽसि राघव ॥ ९१

विहरन्व्यवहारेषु सुखदुःखदशासु च ।
न विमुञ्चसि सत्साम्यं तदसङ्गोऽसि राघव ॥ ९२

संवेद्यो यदि चैवात्मा वेदिते लक्ष्यते समः ।
यथाप्राप्तानुवर्ती च तदसङ्गोऽसि राघव ॥ ९३

असङ्गतामनायासाज्जीवन्मुक्तस्थितिं स्थिराम् ।
अवलम्ब्य समः स्वस्थो वीतरागो भवानघ ॥ ९४

जीवन्मुक्तमतिर्मौनी निगृहीतेन्द्रियग्रहः ।
अमानमदमात्सर्यमार्यस्तिष्ठति विज्वरम् ॥ ९५

सदा समग्रेऽपि हि वस्तुजाले
समाशयोऽप्यन्तरदीनसत्त्वः ।
व्यापारमात्रात्सहजात्क्रमस्थान्न
किंचिदप्यन्यदसौ करोति ॥ ९६

यदेव किंचित्प्रकृतं क्रमस्थं
कर्तव्यमात्मीयमसौ तदेव ।
संसर्गसंबन्धविहीनयैव
कुर्वन्न खेदं रमते धियान्तः ॥ ९७

अथापदं प्राप्य सुसंपदं वा
महामतिः स्वप्रकृतं स्वभावम् ।
जहाति नो मन्दरवेल्लितोऽपि
शौक्ल्यं यथा क्षीरमयाम्बुराशिः ॥ ९८

संप्राप्य साम्राज्यमथापदं वा
सरीसृपत्वं सुरनाथतां वा ।
तिष्ठत्यखेदोदयमस्तहर्षं
क्षयोदयेष्विन्दुरिवैकरूपः ॥ ९९

---

एतत्पश्यतोऽप्यदर्शनादिदेशान्तरस्थचेतोभिरन्यत्र गतमानसैरात्मनः स्वस्य गृहे स्थितैर्मूर्खैः पामरैरप्रौढमतिभिर्बालपश्वादिभिश्च साधु सम्यगनुभूयत इति नात्र विवाद इत्यर्थः ॥८०॥ तथाच संसक्तिपूर्वकं पदार्थदर्शनमेव बन्धहेतुर्नासंसक्तचित्तस्येत्याशयेनाह—सङ्ग इति ॥ ८१ ॥ मोक्षं वर्तमानदेहादिसंबन्धनिवृत्तिम् । अजन्मता भाविदेहादिबन्धनिवारणमिति भेदः ॥ ८२ ॥ किमिति सामान्ये नपुंसकम् । प्रश्नः स्पष्टः ॥ ८३ ॥ इष्टानिष्टपदार्थानां भावाभावे संयोगे वियोगे च हर्षामर्षविकारदा रागादिवासनैव सङ्ग इति कथ्यते इत्यर्थः ॥ ८४ ॥ ॥ ८५ ॥ यावद्देहं प्रारब्धशेषक्षयपर्यन्तम् ॥ ८६ ॥ ८७ ॥ ॥ ८८ ॥ निर्व्यग्रः स्वस्थः ॥ ८९ ॥ समाहारद्वन्द्वगर्भेतरेतरयोगद्वन्द्वविवक्षणाद्धर्षामर्षविषादाभ्यामिति द्विवचनम् । अन्यतां वैरूप्यम् ॥ ९० ॥ आशया वैवश्यं पारवश्यम् ॥ ९१ ॥ सत्साम्यं ब्रह्मैकरस्यं न विमुञ्चसि यदीत्यनुषङ्गः ॥ ९२ ॥ आत्मा चित्तस्वभावः ॥ ९३ ॥ ९४ ॥ निगृहीताः इन्द्रियलक्षणा गृह्णन्तीति ग्रहाः पाशा येन ॥ ९५ ॥ भोगविक्षेपादिहेतौ वस्तुजाले सदा समग्रे प्रचुरतरे सत्यपि समाशयः । अन्तर्बहिरप्यदीनं स्पृहा याञ्चादिदैन्यवर्जितं सत्त्वं यस्य स्ववर्णाश्रमोचितसहजक्रमस्थाद्व्यापारमात्रादन्यत्किंचिदप्यसौ न करोति ॥ ९६ ॥ संसर्गः क्रियाभिनिवेशः संबन्धः फलाभिलाषस्तद्विहीनयैव धिया अन्तः स्वात्मनि रमते ॥ ९७ ॥ स्वं स्वीयं प्रकृतं पूर्वसिद्धं शान्तिदान्तिप्रसादसमदर्शनादिस्वभावं नो जहाति । यथा मन्दरेण वेल्लितो मथितोऽपि क्षीरमयाम्बुराशिः सहजं शौक्ल्यं न जहाति तद्वत् ॥ ९८ ॥ आपदं दारिद्र्यादि । सरीसृपत्वं डुण्डुभादियोनिम् । अखेदोदयं अस्तहर्षं चेति स्थितिक्रियाविशेषणे । क्षयोदयेषु कलानामुपचयापचयकालेषु उदयास्तमयकालेषु वा ॥ ९९ ॥

---

[1] युक्तामर्षविषादाभ्यां इति पाठः.

निरस्तसंरम्भमपास्तभेदं
प्रशान्तनानाफलवल्गुवेषम् ।
विचारयात्मानमदीनसत्त्वो
यथा भवस्युत्तमकार्यनिष्ठः ॥ १००

तयोदितप्रसरविलासशुद्धया
गतज्वरं पदमवलम्बयामलम् ।
धियेद्धया पुनरिह जन्मबन्धनै-
र्न बध्यसे समधिगतात्मदृश्यया ॥ १०१

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते द्वात्रिंशत्साहस्र्यां संहितायां मोक्षोपायेषु उपशमप्रकरणे समदर्शनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

---

दर्शितलक्षणजीवन्मुक्तिसुखप्राप्तौ रागद्वेषभेदवासनाक्षयाभ्यासमहित आत्मविचार एवोपाय इति तमेव रामायोपदिशन्नुपसंहरति—**निरस्तेति**। संरम्भः क्रोधः। त्रीण्यपि क्रियाविशेषणानि। यथा येन विचारेण उत्तमकार्यमवश्यसंपाद्यं चरमपुरुषार्थस्तन्निष्ठो भवसि तथा विचारयेत्यर्थः ॥१००॥ तया विचारणया उदितप्रसरस्य समाधेर्विलासेन सर्ववासनाक्षयाच्छुद्धया समधिगतमात्मरूपं दृश्यमवश्यद्रष्टव्यं वस्तु यया तथाविधया अतएव अविद्यातत्कार्यदाहक्षमतया इद्धया दीप्तया धिया गतज्वरं निर्दुःखनिरतिशयानन्दरूपं परमपदमवलम्बय अध्यास्व। तदवलम्बने पुनरावृत्तिशङ्कावारणायाह—**पुनरिहेति**। तस्मात्तत्त्वसाक्षात्कारेणैवाविद्यातत्कार्यसर्वानर्थोपशमनान्नित्यनिरतिशयानन्दस्वरूपे प्रतिष्ठेति सिद्धम् ॥ १०१ ॥ इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे समदर्शनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरामचन्द्रसरस्वतीपूज्यपादशिष्यश्रीगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षोः शिष्येण श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणं संपूर्णम् ॥

॥ समाप्तमिदं उपशमप्रकरणम् ॥